भिः समा सीता आख्याति जानाति । अतो ज्ञायते भर्ता तद्धृदयस्थ इति ॥२८ ॥ अभिकामया स्वविषयेच्छावत्या स्वेच्छाविषयया च समेयिवान् संयुक्तः विभुः विभुत्वशक्तिमान् अमरेश्वरो [illegible] श्रियेव । तत्र द्वादशवर्षाणि राघवः सह सीतया । रमयामास धर्मात्मा नारायण इव श्रियेति पाद्मे उक्तम् । एकोनषोडशवर्षस्य विश्वामित्रेण नयनात् पंचदशवर्षसमाप्तौ विवाह इति बोध्यम् ॥ २९ ॥ [illegible]रमानः ।

तयासराजर्षिसुतोभिकामयासमेयिवानुत्तमराजकन्यया ॥ अतीवरामःशुशुभेमुदान्वितोविभुःश्रियाविष्णुरिवामरेश्वरः[1] ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्र्यांसंहितायां बालकांडे रामक्रीडाख्यानं नामसप्तसप्ततितमः[2]सर्गः ॥ ७७ ॥

ॐतत्सत् ॥ श्रीरामचन्द्रार्पणमस्तु ॥ बालकांडश्लोकाः २२५० ॥ बालकाण्डः समाप्तः ॥

॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे सप्तसप्ततितमः सर्गः ॥ ७७ ॥ ॥ ॥छ॥ ॥ बालकांडे तु सर्गाणां कथिता सप्तसप्ततिः । श्लोकानां द्वे सहस्रे च पंचाशच्च शतद्वयम् ॥ १ ॥ बाले बालेन कल्पेन कृत्वा संरक्षणं क्रतोः । सीता अंके धृता येन स रामः पातु नः सदा ॥ २ ॥ बालकांडव्याख्या समाप्ता ॥ ग्रंथसंख्या संहत्य मूलटीकयोः— ५०५० ॥ मूलग्रन्थसंख्या—२२५० ॥ टीकाग्रंथसंख्या—२८०० ॥ ॥ छ ॥ ॥ ॥

---

१ अत्रकपुस्तकात्सार्द्धत्रिश्लोको न्यूनः । २ एतद्बालकाण्डश्रवणमाहात्म्यं ब्रह्माण्डपुराणे १४७ सप्तचत्वारिंशदुत्तरशततमेऽध्याये स्पष्टमित्यादिकं प्रस्तावनादौ स्पष्टी भविष्यति ।

इदं श्रीमद्रामायणस्य सतिलकटीकस्य बालकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिनः स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्राक्षरमुद्रालये मुद्रयित्वा प्रकाशते शके १८२५, संवत् १९६०.



कांतम् ॥ २३ ॥ वाग्यतः अतिसंभ्रमवशाद्यतवाक् । प्रयतोऽतिनम्रः ॥ २४ ॥ पूजयामासेति । वंदनं स्तुतिः प्रणम्येति पृथगुक्तेः । एनमित्याद्युत्तरान्वयि ॥ एनं मुनिं ब्रह्मा निरामयम् आमयः पीडा तद्र हितम् । व्यथाहीनमिति यावत् तप इति शेषः । तत्पृष्ट्वा अनंतरं स्वयमासने उपविश्य ऋषये आसनं दिदेश आसने उपवेष्टुमनुमेने इत्यर्थः । वाल्मीकये च ऋषय इति पाठः । एतेन ब्राह्मणं कुशलं पृच्छे त्क्षत्रबंधुमनामयमित्युक्तेर्ब्राह्मणं प्रत्ययं प्रश्नः स्मार्ताचारविरुद्धः तं देवमित्यनेनैव सिद्धे एनमित्यस्य वैयर्थ्यापत्तिश्चेत्यपास्तम् ॥२५॥२६॥ लोकपितामहे उपविष्टे सति तदनुज्ञया स्वयमुपाविशदिति संबंधः ॥ २७ ॥ तद्गतेन क्रौंचगतेन वैरं गृह्णाति सा चासौ बुद्धिस्तद्वता । कर्तरि ल्युट् बाहुलकात् । निषादेनेति शेषः । कष्टं कृतं क्रौंचवधरूपं तपोनाशसंपादकशापनिःसारणेन कष्टं कृतम् । मयेति शेषः ॥ ॥ २८ ॥ कष्टमेवाह । य इति । हन्यात् हतवानित्यर्थे छांदसम् । अकारणात् दृश्यमानकारणं विना । उप समीपे ब्रह्मणः समीपे ॥ २९ ॥ शोकपरायणः क्रौंचवधकृतक्रौंचीदुःखदर्शनजेन स्वस्य मुखतस्तत्पोहानिकरशापार्थकश्लोकस्यावशतो निःसारणजेन च शोकेन व्याप्तः अत एवांतर्गतमनाः अंतर्गते श्लोकार्थ एव दत्तचित्तः श्लोकं जगाविति संबंधः । तं तथाशोकग्रस्तं प्रहसन् मदिच्छयावतीर्णां सरस्वतीं न जानातीति हासं कुर्वन् ॥ ३० ॥ तद्वचनमेवाह । श्लोक एवास्त्वयमिति । अयं त्वया बद्धः श्लोको यशोरूप एवास्तु । श्लोकशब्दस्य पद्यपरतया योजनेऽस्त्विति पाठस्यासंगत्यापत्तेः । अस्तीत्युक्तेरेव ब्रह्मणः औचित्यात् । मम तु अयशोरूपस्य यशोरूपताशीर्दानमिति नासंगतिः । श्लोक एव त्वयेति पाठेपि यशोरूप एवायं त्वया बद्धः । अत्र तव विचारः संदेहो मास्तु । मद्वचनात्त्वत्संकल्पाच्चास्य तथाभावमाप्ते

वाल्मीकिरथतंदृष्ट्वासहसोत्थायवाग्यतः ॥ प्रांजलिःप्रयतोभूत्वातस्थौपरमविस्मितः ॥ २४ ॥ पूजयामासतंदेवंपाद्यार्घ्यासनवंदनैः ॥ प्रणम्यविधिवच्चैनं पृष्ट्वाचैवनिरामयम् ॥ २५ ॥ अथोपविश्यभगवानासनेपरमार्चिते ॥ वाल्मीकयेचऋषयेसंदिदेशासनंततः ॥ २६ ॥ ब्रह्मणासमनुज्ञातःसोप्युपावि शदासने ॥ उपविष्टेतदातस्मिन्साक्षाल्लोकपितामहे ॥ २७ ॥ तद्गतेनैवमनसावाल्मीकिर्ध्यानमास्थितः ॥ पापात्मनाकृतंकष्टंवैरग्रहणबुद्धिना ॥ २८ ॥ यस्तादृशंचारुरवंक्रौंचंहन्यादकारणात् ॥ शोचन्नेवपुनःक्रौंचीमुपश्लोकमिमंजगौ ॥ २९ ॥ पुनरंतर्गतमनाभूत्वाशोकपरायणः ॥ तमुवाचततोब्रह्माप्रहस न्मुनिपुंगवम् ॥ ३० ॥ श्लोकएवास्त्वयंबद्धोनात्रकार्याविचारणा ॥ मच्छंदादेवतेब्रह्मन्प्रवृत्तेयंसरस्वती ॥ ३१ ॥ रामस्यचरितंकृत्स्नंकुरुत्वमृषिसत्तम ॥ धर्मात्मनोभगवतोलोकेरामस्यधीमतः ॥ ३२ ॥ वृत्तंकथयधीरस्ययथातेनारदाच्छ्रुतम् ॥ रहस्यंचप्रकाशंचयद्वृत्तंतस्यधीमतः ॥ ३३ ॥

रित्याशयः । ननु भवतु त्वदाशिषा तथात्वमस्याः । परं तु शांतस्वभावस्य ऋषेर्ममेदृशी वागत्यंतमनुचितेत्यपि मा विषादं कुर्वित्याह । मच्छंदादिति । मत्संकल्पादित्यर्थः । विष्णोरवतारभूतस्य रामस्य संक ल्पोपि स्वसंकल्पत्वेनोक्तः । एका मूर्तिस्त्रयो देवा रुद्रविष्णुपितामहा इति हरिवंशोक्तेः । नन्वीदृशसंकल्पो ब्रह्मणोपि किमर्थ इति चेच्छृणु । येषां परस्य दारवियोगादिजनकं कर्म स्वस्य दारवियोगादिकं जनयितुं नालं तेषामपि ब्रह्मशापस्तज्जननेऽलमिति लोके ब्राह्मणमाहात्म्यं सूचयितुम् । एवं राज्यादिसंत्त्वेपि कामजय एवोत्तमो न तु तद्भोगचापलमिति च स्वव्यवहारेण शिक्षयितुं तत्प्रायश्चित्तविधया स्वकीर्तिवर्णनेन मुनेर्यशोवृद्ध्यर्थं भगवद्विषयमहापापप्रायश्चित्तत्वात्कैमुतिकन्यायेनेतरजनानां सर्वपापप्रायश्चित्तं रामायणश्रवणादीत्यर्थतत्त्वं बोधयितुं चेति गृहाण । एतदप्यक्षरस्वारस्यबलेन मया योजित म । अतो निरीर्ष्यं सहृदया विचारयंतु ॥३१॥ एवं परवशप्रवृत्तस्यापि शापस्य भगवद्विषयतयेतरसकलमन्वाद्युक्तप्रायश्चित्तानिवर्त्यस्य यं प्रत्यसौ शापस्तच्चरितवर्णनरूपं प्रायश्चित्तमुपदिशति । रामस्य चरितमिति । लोके रामस्य रमते इति रामः । बाहुलकात्कर्तरि घञ् । तेन लोकाधिष्ठातुर्लोकांतर्यामिणश्चेत्यर्थः । कुरु वर्णयस्व । धर्मात्मन इत्यनेन रावणादिवधवत् क्रौंचवधोपि धर्मफलक एव । लोकव्य वहारेण लोकहितत्वात्त्वद्रक्षकत्वाच्चेति सूचितम् ॥ ३२ ॥ वृत्तमिति । अस्य नारदोक्तविशेषपरत्वादपौनरुक्त्यम् । धियमीरयतीति धीरः । तेन बुद्धिप्रेरकस्येत्यर्थः । तेन गायत्र्यर्थभूतस्येत्युक्तम् ॥ ३३ ॥

रामलक्ष्मणयोः राक्षसानां सीतायाश्च यत्प्रकाशं तदीयानां प्रकाशं तवाविदितं यदि वा यदपि तदीयानामपि रहः अविदितं तव तु सुतरामविदितं तदपि सर्वं ते विदितं भविष्यति । अनेन तत्करणयोग्यतादानम् । यच्च मा निषादेतिवदपर्यालोच्यापि वाक् त्वत्तो निःसरिष्यति सापि नान्यथा भविष्यति । तेनास्या अपि सत्यत्वं भावीति ध्वनितम् ॥ ३४ ॥ ३५ ॥ एवं सामर्थ्यं दत्त्वोपसंहरति । कुर्विति । यावदित्याद्युत्तरान्वयि ॥३६॥३७॥ तावदिति । यावत्त्वत्कृतकथाप्रचारस्तावदधश्च त्वं दयापूर्वमपि अतिमहति क्रोधकरणात् अधोगमनयोग्योपि त्वम् ऊर्ध्वं सर्वोर्ध्वं वर्तमानेषु मल्लोकेषु निवासं प्राप्स्यसि । ततो मया सह मोक्ष्यस इत्यर्थः । लोकेष्विति तदवयवाभिप्रायं बहुवचनम् । ऊर्ध्वमधश्च विद्यमानेषु मल्लोकेषु मन्निर्मितलोकेषु निवत्स्यसि सर्वत्राप्रतिहतगतिः संचरिष्यसि । ततः परं मुक्तिं प्राप्स्यसीति तीर्थः । तत्र मल्लोकेष्वित्यस्य चारितार्थ्यं चिंत्यम् । इतीति तत्रैवांतर्धानेनास्याप्यंतर्यामिरूपतोक्ता ॥ ३८ ॥ तत इति । विस्मयम् आश्चर्यम् । तस्येति । प्रीयमाणाः आश्चर्यमिदमस्मद्गुरोः

रामस्यसहसौमित्रेराक्षसानांचसर्वशः ॥ वैदेह्याश्चैवयद्वृत्तंप्रकाशंयदिवारहः ॥ ३४ ॥ तच्चाप्यविदितंसर्वंविदितंतेभविष्यति ॥ नतेवागनृताकाव्येकाचिदत्रभविष्यति ॥ ३५ ॥ कुरुरामकथांपुण्यांश्लोकबद्धांमनोरमाम् ॥ यावत्स्थास्यंतिगिरयः सरितश्चमहीतले ॥ ३६ ॥ तावद्रामायणकथालोकेषुप्रचरिष्यति ॥ यावद्रामस्यचकथात्वत्कृताप्रचरिष्यति ॥ ३७ ॥ तावदूर्ध्वमधश्चत्वंमल्लोकेषुनिवत्स्यसि ॥ इत्युक्त्वाभगवान्ब्रह्मातत्रैवांतरधीयत ॥ ३८ ॥ ततःसशिष्योभगवान्मुनिर्विस्मयमाययौ ॥ तस्यशिष्यास्ततःसर्वेजगुःश्लोकमिमंपुनः ॥ मुहुर्मुहुःप्रीयमाणाःप्राहुश्चभृशविस्मिताः ॥ ३९ ॥ समाक्षरैश्चतुर्भिर्यःपादैर्गीतोमहर्षिणा ॥ सोनुव्याहरणाद्भूयःशोकःश्लोकत्वमागतः ॥ ४० ॥ तस्यबुद्धिरियंजातामहर्षेर्भावितात्मनः ॥ कृत्स्नंरामायणंकाव्यमीदृशैः करवाण्यहम् ॥४१॥ उदारवृत्तार्थपदैर्मनोरमैस्तदास्यरामस्यचकारकीर्तिमान् ॥ समाक्षरैःश्लोकशतैर्यशस्विनोयशस्करंकाव्यमुदारदर्शनः ॥४२॥

पद्यं यद्ब्रह्मणाप्यनुमोदितम् । प्राहुश्च वक्ष्यमाणमित्यर्थः ॥ ३९ ॥ तदेवाह । समेति । साम्यं गुरुलघ्वक्षरराहित्यं यः ऋषिणा गीतः सः अनु अतिशयितशोकोत्पत्त्यनंतरं व्याहरणाद्भूयःशोकः विपुलशोक एव श्लोकत्वं प्राप्त इति वयं मन्यामहे इति प्राहुरिति संबंधः । उत्प्रेक्षा चेयम् । तेनास्य श्लोकस्य करुणरसमयत्वं ध्वनितम् । अत्र नष्टक्रौंचालंबनकः क्रौंचीविरावानुदीपितो निषादविषयक्रोधव्यभिचारिको मा निषादेत्यादिवाक्यानुभावकः करुणो रस इति बोध्यम् । यत्तु पूर्वश्लोके प्राहुरित्यस्य पठंतीत्यर्थकरणं पुनःपुनः पाठेनानंदवंतोऽभूवन्निति फलितार्थकथनम् । अत्र च श्लोके भूयोनुव्याहरणान्मुहुर्मुहुः शिष्यैः पुनः पाठाल्लोके शोकः श्लोकत्वेन प्रतिबद्धोभवत् श्लोकत्वं प्राप्त इति तीर्थादिव्याख्यानं तदतिनिःसारमिति स्पष्टमेव ॥ ४० ॥ तस्येति । ईदृशैर्मा निषादेतिवत्करुणारसप्रधानैरित्यर्थः । अनेनान्ये रसाः अत्र गुणीभूता इतिः ध्वनितम् ॥ ४१॥ उदारेति । उदारस्य यद्वृत्तं चारितम् उदारं वा यच्चरितं तद्रूपार्थबोधकैः पदैः मनोरमैः श्रुतिकटुत्वादिदोषरहितैः अस्य यशस्विनो रामस्य दाशरथेः

रामस्य नारदोपदिष्टस्य । श्लोकशतैरिति शतशब्दोनंतवाची ॥ ४२ ॥ एवं काव्यनिर्माणमुक्त्वा तत्र श्रोतॄनभिमुखीकरोति । तदिति । समासस्तत्पुरुषादिः संधिरेकादेशादिः योगः प्रकृतिप्रत्यययोः एते उपगताः यथाव्याकरणालंकारशास्त्रमर्यादं यस्मिन्काव्ये तादृशं काव्यं रघुवरचरितं तद्वर्णनरूपं समः पतत्प्रकर्षादिदोषरहितो मधुरः करुणारसयुक्तत्वेन माधुर्यगुणप्रधानः उपनतः प्रसन्नतयोपलभ्यमानो योऽर्थस्तद्बोधकवाक्यैर्निबद्धम्। उपनतत्वेन प्रसादगुणवत्ता दर्शिता।समुदायेन वैदर्भीरीतिमत्त्वं ध्वनितम्। रघेर्गत्यर्थान्निष्पन्नरघुशब्देन तस्य सर्वांतर्यामित्वं ध्वनितम् । ईदृशस्यापि मिथ्यार्थकत्वेऽनुपादेयत्वंस्यादत आह।मुनिप्रणीतं ब्रह्मानुग्रहप्राप्तसत्यवागृषिप्रणीतम्।पुरुषार्थस्वर्गमोक्षादिसाधनत्वं तु रघुवरचरितमित्यनेनोक्तप्रायमेव।दशशिरसश्च वधमित्यनेन वनांतमिदं श्रोतव्यमिति सूचितम्। तेनैव सूचितफलल।भाव।उत्तरकाण्डं त्वस्य खिलं भारतस्य हरिवंशवत्।अत एवाग्रिमसर्गे वनसंचरणपर्यंतवृत्तान्वेषणमेव समाधिना ऋषेर्वक्ष्यमीति प्राञ्चः।परे तु दशशिरसो वधं चेत्यन्वयः।चेन सीतात्यागादिरूपोत्तरकांडीयवृत्तांतसंग्रह इत्याहुः ॥४३॥लंघुमानः॥इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे द्वितीयः सर्गः ॥२॥ ॥छ॥ ॥ श्रुत्वेति। नारदात्काव्यविषयं रामचरितरूपं वस्तु श्रुत्वा समग्रं प्रकाशरहस्यसहितं कुर्विति च ब्रह्ममुखाच्छ्रुत्वा तस्य धीमतो रामस्य यद्वृत्तं चरितं सरहःप्रकाशं तत् भूयः पुनः व्यक्तं साक्षात्कारविषयो यथा भवति तथा कर्तुं अन्वेषते उद्युंक्ते।स्मेति शेषः।धर्मार्थेति त्रिवर्गोपलक्षणम्।

## तदुपगतसमाससंधियोगंसममधुरोपनतार्थवाक्यबद्धम् ॥ रघुवरचरितंमुनिप्रणीतंदशशिरसश्चवधंनिशामयध्वम् ॥४३॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येबालकांडेद्वितीयःसर्गः ॥ २ ॥ श्रुत्वावस्तुसमग्रंतद्धर्मार्थसहितंहितम् ॥ व्यक्तमन्वेषतेभूयोयद्वृत्तंतस्यधीमतः ॥ १ ॥ उपस्पृश्योदकंसम्यङ्मुनिःस्थित्वाकृतांजलिः ॥ प्राचीनाग्रेषुदर्भेषुधर्मेणान्वेषतेगतिम् ॥ २ ॥ रामलक्ष्मणसीताभीराज्ञादशरथेनच ॥ सभार्येणसराष्ट्रेणयत्प्राप्तंतत्रतत्त्वतः ॥ ३ ॥ हसितंभाषितंचैवगतिर्यावच्चचेष्टितम् ॥ तत्सर्वंधर्मवीर्येणयथावत्संप्रपश्यति ॥ ४ ॥ स्त्रीतृतीयेनचतथायत्प्राप्तंचरतावने ॥ सत्यसंधेनरामेणतत्सर्वंचान्ववेक्षत ॥ ५ ॥ ततःपश्यतिधर्मात्मातत्सर्वंयोगमास्थितः ॥ पुरायत्तत्रनिर्वृत्तंपाणावामलकंयथा ॥ ६ ॥ तत्सर्वंतत्त्वतोदृष्ट्वाधर्मेणसमहामतिः ॥ अभिरामस्यरामस्यतत्सर्वंकर्तुमुद्यतः ॥ ७ ॥ कामार्थगुणसंयुक्तंधर्मार्थगुणविस्तरम् ॥ समुद्रमिवरत्नाढ्यंसर्वश्रुतिमनोहरम् ॥ ८ ॥

फलत्वेन तत्सहितं हितं मोक्षफलकम् ॥१॥ उद्योगमेवाह।उपेति । आचम्येत्यर्थः । सम्यक् स्मृत्युक्ताचमनरीत्या । इदमन्येषामपि प्रायत्यसंपादकानामुपलक्षणम् । प्रागग्रेषु दर्भेषु स्थित्वा धर्मेण योगजेन ब्रह्मप्रसादरूपेण च गतिं रामादीनां चरितरूपाम् अन्वेषते अतियत्नेन पश्यति स्म ॥ २ ॥ रामेत्यादिश्लोकद्वयमेकं वाक्यम् भार्याः कौसल्याद्याः तत्सहितेन दशरथेन रामादिभिश्च यत्प्राप्तं संबद्धं चरितं राज्यपालनादिरूपं हसितादिरूपं च तत्सर्वं तत्र समाधौ तत्त्वतः धर्मवीर्येण योगजबलेन पश्यति स्म ॥ ३ ॥ ४ ॥ अयोध्यावासकालिकं वृत्तं निरीक्ष्य तदनंतरं वनकालिकं च निरीक्षितमित्याह । स्त्रीतृतीयेनेति । द्वितीयो लक्ष्मणः। तत्सर्वं चेति चस्य तदुत्तरकालिकमुत्तरकांडस्थं चेत्यर्थ इत्यपरे॥५॥नेदं दर्शनं स्वप्नवदित्याह । तत इति । पूर्वाचरितयोगाभ्यासादित्यर्थः । योगं समाधिम् । तत्र समाधौ । पुरा पश्यति अपश्यदित्यर्थः । यन्निर्वृत्तं जातम्। इदमुपलक्षणं यच्च भावि तच्चरित्रं पश्यति स्मेति यावत्॥६॥तदिति । धर्मेण योगजेन अत एव महामतिः तत्सर्वमतीतमनागतं च तद्विषयं काव्यम्। अभिरामस्येत्यनेन तादृशकाव्यकरणस्य रागप्राप्ततोक्ता ॥ ७ ॥ कामेति । कामरूपो योर्थः पुरुषार्थस्तद्रूपेण गुणेन फलेन युक्तं धर्मार्थरूपपुरुषार्थफलेन विस्तरवद् विस्तरेण तदुभयप्रतिपादकं तद्दातृ चेत्यर्थः । रत्नैः

काव्यगुणालंकारव्यंग्यैराढ्यं पूर्णं सर्वश्रुतीनां मनोभूताः सारभूताः उपनिषदः तासां हरं तदर्थप्रतिपादकम् । तेन मोक्षफलकत्वम् । व्याख्यानांतरं त्वचमत्कारीत्युपेक्षितम् ॥८॥ स इति । रघुवंशस्य तद्वं शावतीर्णरामस्य नारदकथनक्रमेणैव तच्चरितं तत्प्रतिपादकं काव्यं चकारेत्यर्थः ॥ ९ ॥ विस्तरेण वर्णनीयाननर्थान् इष्टं हि विदुषां लोके समासव्यासधारणमित्युक्तेः समासेन संक्षेपेणाह । जन्मेत्यादि ना । वीर्यं स्वयमक्षतस्य पराभिभवसामर्थ्यम् । सर्वानुकूलतां सर्वेषामनुवर्तनरूपां प्रियतां विद्वेषासहत्वपर्यवसायिनी वस्तुसौंदर्यबलाद्विषयलाभेप्यनिवर्त्या विद्यमानानामपि दोषाणामदर्शनकरी व्यसनसहस्रसं पातेप्यनिवर्त्या या अनुपस्कृतवस्तुमात्रालंबिनी इच्छा प्रेमपदवाच्या तद्विषयताम्। एवं भगवति रामे मायाशबले जातं प्रेम चित्तशुद्धिद्वारा शुद्धविषयं प्रेमोत्पाद्य निदिध्यासनद्वारा मुक्तिजनकज्ञानपर्यवसायीति बोध्यम् । क्षांतिम् उच्यमानोपि परुषं नोत्तरं प्रतिपद्यते इत्युक्तरूपाम्। सौम्यताम् अक्रूरदर्शनताम् ॥१०॥ नानेति । विश्वामित्रसहायने विश्वामित्रेण सहगमने तदुपस्थितिकाले सभायां मार्गे गमनकाले च चित्राः नानाकथाः अन्याश्च कथाः योगवासिष्ठोक्ताः ब्रह्मप्रतिपादिकाः कथाः अत्र ग्रन्थे उक्ताः गंगादिकथाश्चेत्यर्थः। एतेनात्र लोके नानेति अन्या इति च व्यर्थमित्यपास्तम् । जानक्याश्चेति चेनोर्मिलादिसं

सयथाकथितंपूर्वंनारदेनमहात्मना ॥ रघुवंशस्यचरितंचकारभगवान्मुनिः ॥ ९ ॥ जन्मरामस्यसुमहद्वीर्यंसर्वानुकूलताम् ॥ लोकस्यप्रियतांक्षांतिंसौ म्यतांसत्यशीलताम् ॥ १० ॥ नानाचित्राःकथाश्चान्याविश्वामित्रसहायने ॥ जानक्याश्चविवाहंचधनुषश्चविभेदनम् ॥ ११ ॥ रामरामविवादंचगुणा न्दाशरथेस्तथा ॥ तथाभिषेकंरामस्यकैकेय्यादुष्टभावताम् ॥ १२ ॥ विघातंचाभिषेकस्यरामस्यचविवासनम् ॥ राज्ञःशोकंविलापंचपरलोकस्यचा श्रयम् ॥ १३ ॥ प्रकृतीनांविषादंचप्रकृतीनांविसर्जनम् ॥ निषादाधिपसंवादंसूतोपावर्तनंतथा ॥ १४ ॥ गंगायाश्चापिसंतारंभरद्वाजस्यदर्शनम् ॥ भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्यदर्शनम् ॥ १५ ॥ वास्तुकर्मनिवेशंचभरतागमनंतथा ॥ प्रसादनंचरामस्यपितुश्चसलिलक्रियाम् ॥ १६ ॥ पादुकाग्र्या भिषेकंचनंदिग्रामनिवासनम् ॥ दंडकारण्यगमनंविराधस्यवधंतथा ॥ १७ ॥ दर्शनंशरभंगस्यसुतीक्ष्णेनसमागमम् ॥ अनसूयासमास्यांचअंगराग स्यचार्पणम् ॥ १८ ॥ दर्शनंचाप्यगस्त्यस्यधनुषोग्रहणंतथा ॥ शूर्पणख्याश्चसंवादंविरूपकरणंतथा ॥ १९ ॥ वधंखरत्रिशिरसोरुत्थानंरावणस्यच ॥ मारीचस्यवधंचैववैदेह्याहरणंतथा ॥ २० ॥ राघवस्यविलापंचगृध्रराजनिबर्हणम् ॥ कबंधदर्शनंचैवपंपायाश्चापिदर्शनम् ॥ २१ ॥ शबरीदर्शनंचै वफलमूलाशनंतथा॥प्रलापंचैवपंपायांहनूमद्दर्शनंतथा ॥ २२ ॥

ग्रहः ॥ ११ ॥ रामेति । द्वितीयः परशुरामः गुणान्विनयजयरूपान् ॥१२॥ विघातं चेति । विवासनं वनं प्रति प्रस्थापनम् । परलोकस्य चाश्रयं परलोकगमनम् । मरणमिति यावत् ॥ १३ ॥ प्रकृतीना मिति । प्रकृतीनां वंचनापूर्वकविसर्जनमयोध्यां प्रति परावर्तनम् । निषादाधिपो गुहः । सूतः सुमंत्रः ॥१४॥ गंगाया इति । अभ्यनुज्ञानं संमतिः ॥१५॥ वास्त्विति । वास्तुकर्म चित्रकूटे गृहनिर्माणम्। निवेशं तत्र गृहे अवस्थानम् । प्रसादनं भरतकर्तृकम् ॥ १६ ॥ पादुकेति । श्रेष्ठपादुकयोर्भरतकृतम् अभिषेकं नंदिग्रामस्य नितराम् अतिशयेन वासनम् । भरते तत्र गते सर्वप्रजास्तत्रैव वासं कृतवत्य इत्यर्थः ॥ १७ ॥ दर्शनमिति । अनसूयासमास्याम् अनसूयया सह सीतायाः समास्या सहासनम् । यद्यप्येतद्विराधवधात्पूर्वमेव । तथापि क्रमे तात्पर्याभा वात् व्यत्ययेनाभिधानम् । अंगरागः चन्दनादिः ॥ १८ ॥ दर्शनमिति । अगस्त्यसकाशाद्धनुषो ग्रहणम् ॥ १९ ॥ वधमिति । उत्थानं जानकीहरणोद्योगम् ॥ २० ॥ २१ ॥ २२ ॥

ऋष्येति । प्रत्ययोत्पादनं शालभेदादिभिः सुग्रीवस्य विश्वासजननं विग्रहं युद्धम् ॥ २३ ॥ वालीति । सुग्रीवप्रातपादनम् । सुग्रीवस्य राज्ये स्थापनं समय शरदि यात्रा कर्तव्येति रामसुग्रीवयोः संकेतम्। वर्षेति । वर्षाकालिकवासांगीकरणम् ॥ २४ ॥ कोपमिति । उपसंग्रहं वानराणां मेलनं पृथिव्याश्च निवेदनं सुग्रीवेण वानरान्प्रति पृथ्वीसंस्थानकथनम् ॥ २५ ॥ अंगुलीयकदानं रामकर्तृकं हनुमति प्रायो पवेशनं प्रायेण अनशनेन वानराणामुपवेशनं समुद्रसमीपे वासः ॥ २६ ॥ २७ ॥ २८ ॥ एकस्यापि विचिंतनम् असहायस्य कर्तव्यार्थविचारं चेत्यर्थः । अवरोधोंतःपुरम् ॥२९॥ यानं गमनम् ॥३०॥ अभिज्ञानं रामदत्तांगुलीयकम् ॥ ३१ ॥ ३२ ॥ ग्रहणमिति । लंकायाः दाहेन तत्रत्यानामाक्रंदनं लंकादाहे हनूमद्गर्जनमित्यर्थौ वा । अभिमर्दनमिति पाठे लंकायाः दाहेन अभितः मर्दनमित्यर्थः ।

ऋष्यमूकस्यगमनंसुग्रीवेणसमागमम् ॥ प्रत्ययोत्पादनंसख्यंवालिसुग्रीवविग्रहम् ॥ २३ ॥ वालिप्रमथनंचैवसुग्रीवप्रतिपादनम् ॥ ताराविलापंसमयं वर्षरात्रनिवासनम् ॥ २४ ॥ कोपंराघवसिंहस्यबलानामुपसंग्रहम् ॥ दिशःप्रस्थापनंचैवपृथिव्याश्चनिवेदनम् ॥ २५ ॥ अंगुलीयकदानंचऋक्षस्य बिलदर्शनम् ॥ प्रायोपवेशनंचैवसंपातेश्चापिदर्शनम् ॥ २६ ॥ पर्वतारोहणंचैवसागरस्यापिलंघनम् ॥ समुद्रवचनाच्चैवमैनाकस्यचदर्शनम् ॥ २७ ॥ राक्षसीतर्जनंचैवछायाग्राहस्यदर्शनम् ॥ सिंहिकायाश्चनिधनंलंकामलयदर्शनम् ॥ २८ ॥ रात्रौलंकाप्रवेशंचएकस्यापिविचिंतनम् ॥ आपानभूमिगमनमवरोधस्यदर्शनम् ॥ २९ ॥ दर्शनं रावणस्यापिपुष्पकस्यचदर्शनम् ॥ अशोकवनिकायानंसीतायाश्चापिदर्शनम् ॥ ३० ॥ अभिज्ञानप्रदानंचसीतायाश्चापिभाषणम् ॥ राक्षसीतर्जनंचैवत्रिजटास्वप्नदर्शनम् ॥ ३१ ॥ मणिप्रदानंसीतायावृक्षभंगंतथैवच ॥ राक्षसीविद्रवंचैवकिंकराणांनिबर्हणम् ॥ ३२ ॥ ग्रहणंवायुसूनोश्चलंकादाहाभिगर्जनम् ॥ प्रतिप्लवनमेवाथमधूनांहरणंतथा ॥ ३३ ॥ राघवाश्वासनंचैवमणिनिर्यातनंतथा ॥ संगमंचसमुद्रेणनलसेतोश्चबंधनम् ॥ ३४ ॥ प्रतारंचसमुद्रस्यरात्रौलंकावरोधनम् ॥ विभीषणेनसंसर्गंवधोपायनिवेदनम् ॥ ३५ ॥ कुंभकर्णस्यनिधनंमेघनादनिबर्हणम् ॥ रावणस्यविनाशंचसीतावाप्तिमरेः पुरे ॥ ३६ ॥ विभीषणाभिषेकंचपुष्पकस्यचदर्शनम् ॥ अयोध्यायाश्चगमनंभरद्वाजसमागमम् ॥ प्रेषणंवायुपुत्रस्यभरतेनसमागमम् ॥ ३७ ॥ रामाभिषेकाभ्युदयंसर्वसैन्यविसर्जनम् ॥ स्वराष्ट्ररंजनंचैववैदेह्याश्चविसर्जनम् ॥ ३८ ॥ अनागतंचयत्किंचिद्रामस्यवसुधातले ॥ तच्चकारोत्तरेकाव्येवाल्मीकिर्भगवानृषिः ॥ ३९ ॥ इत्यार्षेश्रीमद्रा०वा०आ०बा०तृतीयः सर्गः ॥ ३ ॥ प्राप्तराज्यस्यरामस्यवाल्मीकिर्भगवानृषिः ॥ चकारचरितंकृत्स्नंविचित्रपदमर्थवत् ॥ १ ॥

प्रतिप्लवनं पुनः सागरोत्तरणम् ॥ ३३ ॥ मणिनिर्यातनं सीतया दत्तस्य स्वशिरोरत्नस्य राघवे दानं नलसेतोः नलनिर्मितसेतोः ॥३४॥ प्रतारम् । सेनाया इति शेषः ॥ ३५ ॥ निबर्हणं मारणम् अरेः रावणस्य ॥ ३६ ॥ अयोध्यायाश्च गमनं तदुद्देश्यकं गमनम् ॥ ३७ ॥ रामाभिषेकाभ्युदयं रामाभिषेकोत्सवम् । सर्वत्र चकारेत्यनुकृष्यते ॥३८॥ अनागतं चेति । यत्किंचिदित्यनेन सीताविसर्जनात्पूर्वकालिकस्य भूयस्त्वम् अनंतरकालिकस्य अल्पता द्योत्यते । तत्सर्वमुत्तरे सर्वतोऽवशिष्टे काव्ये चकार निबबंधेत्यर्थः ॥३९॥ ३ँलमानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायण तिलके वाल्मीकीये आदिकाव्ये बालकांडे तृतीयः सर्गः ॥ ३ ॥ ॥ ७ ॥ प्राप्तेति । अनेन रावणवधोत्तरमेतत्काव्यकरणमिति सूचितम् । वाल्मीकिस्तद्विषयवासी ऋषिरित्यर्थादवगंतव्यम् । चारितं तत्प्रतिपादकं काव्यम् । अर्थवद्धन्यलं

कारादिप्रशस्तार्थम् । आत्मवानिति पाठे अवहितांतःकरणः । प्राशस्त्ये मतुप् । आत्मशब्दश्चांतःकरणवाची ॥१॥ चतुर्विंशदिति । चतुर्विंशतिरित्यर्थकश्छांदसः । शतानिति पुल्लिंगोप्येवम् । तत्र पंचशतरूप सर्गसंख्या षट्कांडानामेव । श्लोकसंख्या तु सोत्तराणामित्याहुः । कतककृतस्तु उक्तसंख्यापेक्षया षट्त्रिंशत्सर्गसंख्याधिक्यदर्शनात् चतुर्विंशतिसहस्रापेक्षया श्लोकसंख्याया अप्याधिक्यदर्शनाच्च उत्तरकांडीयसर्ग संख्यानुक्तेश्च प्रक्षिप्तोयं श्लोको न त्वार्ष इत्याहुः ॥ २ ॥ कृत्वा त्विति । सहशब्दः सहितपरः भविष्येण सह सहितं विशिष्टं यदुत्तरं तेन सहितमिदं काव्यं ब्रह्मनियोगात्तत्प्रसादाच्च कृत्वा को नु प्रभुः समर्थः एतत्प्रयुंजीयात् सभासु पठन् श्रावयेत् सभ्यानिति तु चिंतयामास । सहोत्तरमित्यत्रोत्तरपदार्थस्य सभविष्यमिति सविशेषणत्वेप्यार्षः समासः । भविष्यं च सीताविसर्जनमारभ्येत्येके । तस्याः भूप्रवेशोत्तरकालिकमिति परे । प्रयुंजीयादिति छांदसम् ॥ ३ ॥ तस्येति । भावितात्मनः रामचरितबंधनेन शुद्धचित्तस्य । अगृहीतामिति छांदसम् । आवां गातारावित्युक्त्वा पादग्रहणं कृतवंतौ मुनिवेषौ राजकुमारावप्याश्रमस्थितिवशात्तथाभूतौ कुशीलवौ कुशलवौ। कुशशब्दस्य कुशीभावः पृषोदरादित्वात् । ददर्श काव्यग्रहणे योग्यतयाऽपश्यदित्यर्थः ॥४॥५॥ स त्विति। धीर्धारणावती मेधा परिनिष्ठितौ जातवेदाध्ययनौ उपबृंहणं वेदस्य तत्तदर्थे तात्पर्यग्रहणं तद्रूपायार्थाय प्रयोजनाय । अनेन श्रुतितात्पर्यविषयीभूतार्थप्रतिपादकतया प्रामाण्यमस्योपादेयत्वं च सूचितम् ॥ ६ ॥

चतुर्विंशत्सहस्राणिश्लोकानामुक्तवानृषिः ॥ तथासर्गशतान्पंचषट्कांडानितथोत्तरम् ॥ २ ॥ कृत्वातुतन्महाप्राज्ञःसभविष्यसहोत्तरम् ॥ चिंतयामासको न्वेतत्प्रयुंजीयादितिप्रभुः ॥ ३ ॥ तस्यचिंतयमानस्यमहर्षेर्भावितात्मनः ॥ अगृहीतांततःपादौमुनिवेषौकुशीलवौ ॥ ४ ॥ कुशीलवौतुधर्मज्ञौराजपुत्रौ यशस्विनौ ॥ भ्रातरौस्वरसंपन्नौददर्शाश्रमवासिनौ ॥ ५ ॥ सतुमेधाविनौदृष्ट्वावेदेषुपरिनिष्ठितौ ॥ वेदोपबृंहणार्थायतावग्राहयतप्रभुः ॥६॥ काव्यंरामायणं कृत्स्नंसीतायाश्चरितंमहत् ॥ पौलस्त्यवधमित्येवंचकारचरितव्रतः ॥ ७ ॥ पाठ्येगेयेचमधुरंप्रमाणैस्त्रिभिरन्वितम् ॥ जातिभिःसप्तभिर्युक्तंतंत्रीलयसमन्वितम् ॥ ८ ॥ रसैःशृंगारकरुणहास्यरौद्रभयानकैः ॥ वीरादिभीरसैर्युक्तंकाव्यमेतदगायताम् ॥ ९ ॥ तौतुगांधर्वतत्त्वज्ञौस्थानमूर्छनकोविदौ ॥ भ्रातरौस्वरसंपन्नौगंधर्वाविवरूपिणौ ॥ १० ॥ रूपलक्षणसंपन्नौमधुरस्वरभाषिणौ ॥ बिंबादिवोत्थितौबिंबौरामदेहात्तथापरौ ॥ ११ ॥

काव्यमिति । रामस्यायनं चरितं तत्प्रतिपादकं च महत्काव्यं पौलस्त्यवधमित्येवं नामकं चकार । तत्तावदग्राहयतेति पूर्वेण संबंधः । यथा कृष्णचरितवर्णनरूपमाघकाव्यस्य शिशुपालवध इति नाम ॥७॥ पाठ्ये इति । इतः श्लोकचतुष्टयमेकान्वयम्।पाठ्यगेययोर्भावि ष्यद्यतौ । तेन पाठे गाने चेत्यर्थः।गानं तंत्रीनाडीसमुत्थश्रुतिभेदोपेतम्।उभयत्रापि मधुरं श्रोतृसुखजनकं प्रमाणानि द्रुतमध्यविलंबितानि सप्तजातयः षड्जादयः सप्तस्वराः। सप्तस्वरविशिष्टगानानुरोधीति यावत् ॥८॥ रसैरिति । वीरादीत्यादिना बीभत्साद्भुतशांतसंग्रहः।शृंगारादिरसैश्च युक्तम् । नवरसयोगीति यावत् । ईदृशं काव्यं तावगायताम्॥९॥ तौ विशेषयति । तौ त्विति । गांधर्वस्य समग्रनाट्यस्य तत्त्वज्ञौ स्थानं च मूर्छना च तयोः समाहारः स्थानमूर्छनं तत्र कोविदौ तत्तत्त्वज्ञौ । यदूर्ध्वं हृदयग्रंथेः कपोलफलकादधः॥प्राणसंचारणस्थानं स्थानमित्यभिधीयते ॥ उरः कंठः शिरश्चेति तत्स्थानात्रिविधं भवेत् । मंद्रं मध्यं च तारं चेति शांडिल्यः । तथा यत्रैव स्युः स्वराः पूर्णा मूर्छना सेत्युदाहृतेति च । यत्र गीतविशेषे इत्यर्थः । रूपिणौ प्रशस्तरूपवंतौ॥१०॥रूपेति । अत्र रूपमवयवसंस्थानम् । उक्तस्य स्वरसपन्नावित्यस्यैव विवरणं मधुरस्वरेति । बिंबात्सूर्यादेरुत्थितौ बिंबाविव प्रतिबिंबाविव तथा रामदेहात् उत्थितौ परौ रामदेहावित्यर्थः॥११॥

ताविति । धर्म्यं धर्मादनपेतं वाचो विधेयं विनापि पुस्तकं पाठयोग्यम् ॥ १२ ॥ ऋषीणां द्विजातीनामिति गोबलीवर्दन्यायेन साधूनां द्विजेतराणामपि यथोपदेशं जगतुः तत्त्वज्ञौ काव्यस्य गानादेश्च तत्त्वज्ञौ । सुसमाहितौ सुतरां स्थिरचित्तौ॥ १३ ॥लक्ष्यलक्षणेति पाठे सामुद्रिकविद्भिर्लक्ष्यं परीक्ष्यं लक्षणं सुलक्षणं तेन लक्षितौ युतौ।अत एव महात्मानौ महाभागौ च । भागो भाग्यमत्र। गीयतामिद माख्यानं भवद्भ्यामृषिसंसदि । राजर्षीणां पुण्यकृतां साधूनां च समागमे । गुरुणैवमनुज्ञातौ भक्त्या मधुरस्वराविति क्वचित्पठ्यते । तदनन्वयीति स्पष्टमेव । भावितात्मनां शुद्धचित्तानाम् ॥ १४ ॥ मध्ये सभमित्यव्ययीभावः । समीपस्थौ सहिताविल्यर्थः । तद् गानम् ॥ १५ ॥ १६ ॥ प्रशस्तव्याविति इडभावनलोपौ छांदसौ । अहो आश्चर्यम् ॥१७॥ चिरेति । एतत् रावणवधांतचरितम् । एवम् ऋषि

तौराजपुत्रौकात्स्न्र्येनधर्म्यमाख्यानमुत्तमम् ॥ वाचोविधेयंतत्सर्वंकृत्वाकाव्यमनिंदितौ ॥ १२॥ ऋषीणांचद्विजातीनांसाधूनांचसमागमे॥ यथोपदेशंतत्त्वज्ञौजगतुस्तौसमाहितौ ॥१३॥ महात्मानौमहाभागौसर्वलक्षणलक्षितौ॥ तौकदाचित्समेतानामृषीणांभावितात्मनाम् ॥ १४ ॥ मध्येसभंसमीपस्थाविदंकाव्यमगायताम् ॥ तच्छ्रुत्वामुनयःसर्वेबाष्पपर्याकुलेक्षणाः ॥ १५ ॥ साधुसाध्वितितावूचुःपरंविस्मयमागताः ॥ तेप्रीतमनसःसर्वेमुनयोधर्मवत्सलाः ॥ १६ ॥ प्रशशंसुःप्रशस्तव्यौगायमानौकुशीलवौ ॥ अहोगीतस्यमाधुर्यंश्लोकानांचविशेषतः ॥ १७ ॥ चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिवदर्शितम् ॥ प्रविश्यतावुभौसुष्ठुतथाभावमगायताम् ॥ १८॥ सहितौमधुरंरक्तंसंपन्नंस्वरसंपदा ॥ एवंप्रशस्यमानौतौतपःश्लाघ्यैर्महर्षिभिः ॥ १९ ॥ संरक्ततरमत्यर्थंमधुरंतावगायताम् ॥ प्रीतःकश्चिन्मुनिस्ताभ्यांसंस्थितःकलशंददौ ॥ २० ॥ प्रसन्नोवल्कलंकश्चिद्ददौताभ्यांमहायशाः ॥ अन्यःकृष्णाजिनमदाद्यज्ञसूत्रंतथापरः ॥ २१ ॥ कश्चित्कमंडलुंप्रादान्मौंजीमन्योमहामुनिः ॥ बृसीमन्यस्तदाप्रादात्कौपीनमपरोमुनिः ॥ २२ ॥ ताभ्यांददौतदाहृष्टःकुठारमपरोमुनिः ॥ काषायमपरोवस्त्रंचीरमन्योददौमुनिः ॥ २३ ॥ जटाबंधनमन्यस्तुकाष्ठरज्जुंमुदान्वितः ॥ यज्ञभांडमृषिःकश्चित्काष्ठभारंतथापरः ॥ २४ ॥ औदुंबरींबृसीमन्यःस्वस्तिकेचित्तदाऽवदन् ॥ आयुष्यमपरेप्राहुर्मुदातत्रमहर्षयः ॥ २५ ॥ ददुश्चैवंवरान्सर्वेमुनयःसत्यवादिनः ॥ आश्चर्यमिदमाख्यानंमुनिनासंप्रकीर्तितम् ॥ २६ ॥ परंकवीनामाधारंसमाप्तंचयथाक्रमम् ॥ अभिगीतमिदंगीतंसर्वगीतिषुकोविदौ ॥ २७ ॥

प्रशंसोत्तरं पुनस्तयोर्गानमाह भावं काव्याभिप्रायं तत्तद्रसरूपं प्रविश्य तन्मयीभूय सुष्ठु यथा श्रोतॄणां रसाविर्भावो भवति तथागायतामित्यर्थः ॥ १८ ॥ सहिताविति । मधुरं पाठतो गानतश्च रक्तम् उच्चैःस्वरसंपदा षड्जादिस्वरसंपदा संपन्नं यथा भवति तथाऽगायतामिति पूर्वेण संबंधः । एवम् अहो गीतस्येत्याद्युक्तरीत्या ॥ १९ ॥ संरक्ततरमत्युच्चतरं तथाप्यत्यर्थं मधुरं ततो रामायणगानश्रवणानंदपरवशानां मुनीनां चेष्टा आह । प्रीत इति । संस्थितः ।सभायामिति शेषः ॥ २० ॥ २१ ॥ बृसी ऋषीणामासनम् ॥२२॥२३॥२४॥ स्वस्तीत्याद्याशीः ॥२५॥ आश्चर्यमित्यादिमनोहरमित्यंतमेकं वाक्यम् ॥२६॥परमिति । कवीनामाधारं वर्णनीयार्थस्य प्रकारभेदलाभद्वारा हे सर्वगीतिषु कोविदौ कुशीलवौ इदं गीतं गायनयोग्यं वस्तु अभिगीतं सुष्ठु गीतं यथाक्रमं समाप्तं समापितं च । अविगीतमितिपठे

अनवद्यं यथा तथा गीतमित्यर्थः ॥ २७ ॥ आयुष्यम् आयुर्जनकं पुष्टिरभ्युदयः सर्वश्रुतिमनोहरं सर्वश्रुतीनां मनांसि उपनिषदस्तदर्थहरमित्यनेन मोक्षदं गीतमित्येवं सर्वत्र प्रशस्यमानौ। तत्रायोध्यायाम् ॥ २८ ॥ रथ्यासु स्वल्पवीथीषु राजमार्गेषु च गायमानौ तौ कदाचिद्भरताग्रजो रामो ददर्शेत्यन्वयः ॥ २९ ॥ ३० ॥ उपोपविष्टसचिव इति पाठे उप समीपे उपविष्टाः सचिवाः यस्येत्यर्थः । उपोपविष्टैः सचिवैरिति पाठे समीपस्थैर्मन्त्रिभिर्भ्रातृभिश्च समन्वित इत्यर्थः । आत्मरूपसंपन्नाविति पाठे आत्मसदृशावित्यर्थः । दृष्ट्वा तु रूपसंपन्नाविति प्रचुरः पाठः ॥ ३१॥ अनयोः सकाशादेतदाख्यानं श्रूयतामिति लक्ष्मणादीनुवाच ॥३२॥ विचित्रार्थपदमिति पूर्वान्वयि। ततो गायकौ गातुं प्रेरयत् स्वचित्तायतनिःस्वनं स्वस्य श्रोतृचित्तस्य च अनुरूपम् आयतः तारः निःस्वनो नादो यत्र तथा । स्वबलानुरूपं श्रोतृचित्ताह्लादकं च यथा भवति तावदुच्चस्वरमिति फलितम् ॥ ३३ ॥ तंत्रीलयवत् तंत्रीशब्दसदृशं विश्रुतार्थं विशेषतः श्रुतमात्रेण अर्थबोधजनकं यथा भवति तथा अतिशयेनागायतामित्यन्वयः । सर्वगात्राणि श्रोतृणां सर्वगात्राणि ह्लादयत् रोमांचादिप्रादुर्भावेण आनंदानुभावसमर्थानि कुर्वत् । मनसः आह्लादो नाम निद्रायामिव विस्मृतान्यव्यापारता हृदयानि हृदयमिति हृदयमित्युपनिषन्निर्वचनात् हृदयं प्रत्यगात्मा । उपाधिभेदाद्बहुवचनम् । तस्य ह्लादो नाम तत्सुखभोगः । श्रोत्रं कर्णशष्कुली तदाश्रयं श्रोत्रेंद्रियं तस्य सुखम् ॥ ३४ ॥ अथाख्यान

आयुष्यंपुष्टिजननंसर्वश्रुतिमनोहरम् ॥ प्रशस्यमानौसर्वत्रकदाचित्तत्रगायकौ ॥ २८ ॥ रथ्यासुराजमार्गेषुददर्शभरताग्रजः ॥ स्ववेश्मचानीयततो भ्रातरौसकुशीलवौ ॥ २९ ॥ पूजयामासपूजार्हौरामःशत्रुनिवर्हणः ॥ आसीनःकांचनेदिव्येसचसिंहासनेप्रभुः ॥ ३० ॥ उपोपविष्टैःसचिवैर्भ्रातृभिश्चसमन्वितः ॥ दृष्ट्वातुरूपसंपन्नौविनीतौभ्रातरावुभौ ॥ ३१ ॥ उवाचलक्ष्मणंरामःशत्रुघ्नंभरतंतथा ॥ श्रूयतामेतदाख्यानमनयोर्देववर्चसोः ॥ ३२ ॥ विचित्रार्थपदंसम्यग्गायकौसमचोदयत् ॥ तौचापिमधुरंरक्तंस्वचित्तायतनिःस्वनम् ॥ ३३ ॥ तंत्रीलयवदत्यर्थंविश्रुतार्थमगायताम् ॥ ह्लादयत्सर्वगात्राणिमनांसिहृदयानिच ॥ श्रोत्राश्रयसुखंगेयंतद्बभौजनसंसदि ॥ ३४ ॥ इमौमुनीपार्थिवलक्षणान्वितौकुशीलवौचैवमहातपस्विनौ ॥ ममापितद्भूतिकरंप्रचक्षतेमहानुभावंचरितंनिबोधत ॥ ३५ ॥ ततस्तुतौरामवचःप्रचोदितावगायतांमार्गविधानसंपदा ॥ सचापिरामःपरिषद्गतःशनैर्बुभूषयासक्तमनाबभूव ॥ ३६ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येबालकांडेचतुर्थःसर्गः ॥ ४ ॥ ॥ छ ॥

स्य श्रवणे प्रयोजनमुपदिशन् पुनरपि लक्ष्मणादीनत्यादरेण श्रवणार्थं प्रेरयति । इमाविति । तत् तस्मात् महातपस्विनौ आश्रमवासात्तपोयुक्तौ । स्वरूपतस्तु आजानुबाहुत्वादिपार्थिवलक्षणान्वितौ मुनिशिष्यत्वाच्च मुनी इमौ प्रबंधस्य गायकौ चरितं गेयं काव्यं च महानुभावं शब्दार्थालंकारललितसंदर्भत्वादिवैभवेन सार्वभौमविषयत्वेन च महावैभवम्। अतः निबोधत आदरेण शृणुत । किं च यतः तत् काव्यं तच्छ्रवणं च ममापि भूतिकरम् इहामुत्राभ्युदयकरं प्रचक्षते अनेककल्पजीविनो वृद्धाः । पूर्वपूर्वरामायणस्य तैस्तत्फलत्वोक्त्या अस्यापि तत्फलकत्वमिति भाव इति प्राञ्चः । वस्तुतो मम चरितं मत्संबंधि तच्चरितं मच्चरितार्थप्रतिपादकं तत् लोकोत्तरं काव्यं निबोधत । यतस्तत् श्रोतॄणां भूतिकरमपि भुक्तिमुक्तिदमपि प्रचक्षते । पूर्ववत् श्रवणमात्रेण सर्वगात्राह्लादाद्यपि शब्दग्राह्यम् । अत एव महानुभावं महाप्रभावम् । अस्य श्लोकस्य लक्ष्मणादीनामेतच्छ्रवणप्रवर्तकार्थकत्वेनैवमेवास्य व्याख्योचितेति द्रष्टव्यम् ॥ ३५ ॥ तत इति । रामवचःप्रेरितौ तौ मार्गविधानसंपदा गानं द्विविधं मार्गो देशी चेति । तत्र प्राकृतावलंबि गानं देशी संस्कृतावलंबि तु गानं मार्गः । तयोर्मध्ये मार्गाख्यगानमार्गावलंबनसामग्र्या अगायताम् । परिषद्गतः सभागतः स रामोपि बुभूषया स्वचरितस्य चिरकालं स्थितीच्छया प्रबंधस्य

गीतश्रवणे आसक्तमनाः बभूव । शनैःपदेन उत्तमपुरुषत्वात्स्वप्रशंसार्थके अत्र काव्ये शनैः प्रवृत्तिरिति ध्वन्यते । स्वयं श्रवणे चोत्तरोत्तरं लोकानामुपादेयत्वबुद्ध्या श्रवणे प्रवृत्तौ तस्य स्थिरत्वं भवतीति तदाशयः । स्वप्रवर्तितकविकृतत्वाच्चैवमिच्छा भगवत इति बोध्यम् । इहामुत्र स्वाभ्युदयेच्छयेति व्याख्यानं त्वयुक्तम् । भगवतः स्वाभ्युदयेच्छायाः बाधात् । एतेन राज्ञां कविकृतस्वकाव्यश्रवणमावश्यकमिति सूचितव् ॥ ३६ ॥ चलंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे चतुर्थः सर्गः ॥ ४ ॥ एवं सर्गचतुष्टयेनोपोद्घातं कृत्वा वस्तु निर्दिशति । सर्वेति । कृत्स्ना इयं वसुंधरा प्रजापतिं वैवस्वतं मनुमुपादाय उपक्रम्य जयशालिनां जयेन शोभावतां नृपाणां सर्वापूर्वम् ऐहिकामुष्मिकसर्वापूर्वसाधनं यथा भवति तथा आसीव् । सर्वापूर्वशब्दो ह्युपादेयपरो नियतनपुंसकलिंग इति केचिव् ॥ १ ॥ किं च येषां वंशे स सगरो नाम अभूत् । सागर इत्यादिना समुद्रे सागरशब्दप्रवृत्तिस्तदधीनेति सूचितम् । षष्टिगुणितानि पुत्रसहस्राणि षष्टिपुत्रसहस्राणि । कचित्तु षष्टिरिति पृथक्पदपाठः । अनेन तदुद्धारार्थं तद्वंश्येन जगत्पवित्रीकरणसमर्था गंगा यद्वंशेवतारितेति व्यज्यते । तेन चातिशयितं तद्वंशमाहात्म्यं सूचितम् । तद्वंशस्य गंगापरनामकभगवदवतारयोग्यता च तेन सूचिता ॥ २ ॥ तेषांम् इक्ष्वाकूणां वंशे वंशविषये रामायणमिति नाम्ना प्रसिद्धं महदाख्यानमुत्पन्नमिति योजना । इक्ष्वाकुपत्येषु इक्ष्वाकुत्वारोपादिक्ष्वाकूणामित्युक्ति. ॥ ३ ॥ तदिति

सर्वापूर्वमियंयेषामासीत्कृत्स्नावसुंधरा ॥ प्रजापतिमुपादायनृपाणांजयशालिनाम् ॥ १ ॥ येषांससगरोनामसागरोयेनखानितः ॥ षष्टिपुत्रसहस्राणियंयांतंपर्यवारयन् ॥ २ ॥ इक्ष्वाकूणामिदंतेषांराज्ञांवंशेमहात्मनाम् ॥ महदुत्पन्नमाख्यानंरामायणमितिश्रुतम् ॥ ३ ॥ तदिदंवर्तयिष्यावःसर्वंनिखिलमादितः ॥ धर्मकामार्थसहितंश्रोतव्यमनसूयया ॥ ४ ॥ कोसलोनाममुदितःस्फीतोजनपदोमहान् ॥ निविष्टःसरयूतीरेप्रभूतधनधान्यवान् ॥ ५ ॥ अयोध्यानामनगरीतत्रासील्लोकविश्रुता ॥ मनुनामानवेन्द्रेणयापुरीनिर्मितास्वयम् ॥ ६ ॥ आयतादशचद्वेचयोजनानिमहापुरी ॥ श्रीमतीत्रीणिविस्तीर्णासुविभक्तमहापथा ॥ ७ ॥ राजमार्गेणमहतासुविभक्तेनशोभिता ॥ मुक्तपुष्पावकीर्णेनजलसिक्तेननित्यशः ॥ ८ ॥ तांतुराजादशरथोमहाराष्ट्रविवर्धनः ॥ पुरीमावासयामासदिविदेवपतिर्यथा ॥ ९ ॥

तदिदं बुद्धिस्थम् आदितः आदिमारभ्य निखिलम् उत्तरकांडांतं सर्वम् । सर्वशब्दोऽवयवकार्त्स्न्ये । सर्वावयवकम् वर्णपदच्युतिरहितमिति यावत् । धर्मकामार्थाः सहिता यस्मात्तत् । सहिता इत्यत्र केनेत्याकांक्षायां मोक्षेणेति गम्यते । तेन पुरुषार्थचतुष्टयसाधनमिति फलितम् । वर्तयिष्यावः गास्यावः तत् अनसूयया असूयामकुर्वता श्रोतव्यम् । अनेन असूयाराहित्यमेव एतच्छ्रवणाधिकारिविशेषणमित्युक्तम् । सर्वपुरुषार्थसाधनत्वाच्च श्रवणे अत्यादरः सूचितः ॥४॥ कोसल इति । मुदितः राजभिर्धर्मतः परिपालनात् । स्फीतः उत्तरोत्तरं वृद्धिं प्राप्तः । सरयूतीरे तदुपलक्षितदेशे निविष्टः स्थितः जनपदः । अस्तीति शेषः ॥ ५ ॥ अयोध्येति । तत्र कोसलजनपदे अयोध्या नाम लोकविश्रुता नगरी अस्ति । या मानवेंद्रेण मनुना स्वयं निर्मिता आसीत् । पुरी सप्तपुर्यंतर्गता ॥ ६ ॥ आयतेति । सरयूतीरोपश्लेषेण द्वादशयोजनदीर्घा । त्रीणि योजनानीति शेषः । विस्तीर्णा तिर्यग्विस्तारवती । महापथो बहिर्मार्गः ॥७॥ राजेति । राजमार्गः सर्वपण्यशोभितो राजद्वारात्पुरः प्रवृत्तः । मुक्तपुष्पाणि विकसितपुष्पाणि ॥८॥ तां त्विति । दिवि देवपतिरिंद्रः पुरीम् अमरावतीं यथा आवासयामास एवं राजा दशरथस्तां पुरीम् आवासयामास पूर्वाधिकलोकवसतिमतीं चकार । धर्मन्यायबलेन पोषणात् महतो राष्ट्रस्य विशेषेण वर्धन

कर्ता ॥ ९ ॥ कपाटेति । तोरणं बहिर्द्वारालंकारदारुबंधः। सुविभक्तम् अतंर येषां तादृशाः आपणाः यस्यां सा सर्वयन्त्रायुधवतीम्। प्राकारोपरीति शेषः । उषितां कृतवासाम् ॥१०॥ सूतेति। सूताः स्तुति पाठकाः। मागधाः वंशावलिकथकाः। अट्टालाः उपरिगृहाः। शतघ्न्यो नाम प्राकारसंरक्षणार्थमयोभारानिर्मिताः प्राकारोपरि स्थापिताः आयुधविशेषाः ॥११॥ वध्विति । वधूनां नाटकशालासमुदायैः सर्वतो युक्ताम् । उद्यानानि क्रीडार्थं पुष्पवाटिकाः। सालः प्राकारः सालवनं वा ॥१२॥ दुर्गेति । जलदुर्गेण गंभीरा अगाधा परिखा यस्यां ताम् अत एव दुर्गा मित्रैरपि दुःखगम्याम् अन्यैः शत्रुभिर्दुरासदाम् अश क्यसमीपगमनामपि । वारणाः गजाः ॥१३॥ सामंतेति । समंताद्भवैः राजसमूहैः । बलिः करः तद्दानरूपं कर्म येषां तादृशैः ॥१४॥ रत्नविकृतैः रत्ननिर्मितैः पर्वतसदृशैः प्रासादैः शोभिताम्। कूटाख्यैः अगारैः गृहैः । स्त्रीणां क्रीडागृहैरिति यावत् । कूटाः शालाः अगारं गृहम् इत्यन्ये ॥ १५ ॥ चित्रामिति । अष्टापदं सुवर्णं तज्जलेन कृतः आकारः अलंकारो यस्याः इत्येके । द्यूतफलकाकारामित्यन्ये । विमानगृहं सप्तभूमिगृहम् । विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनीति निघंटुः ॥१६॥ गृहेति । गृहैः पौरकुटुंबिगृहैः गाढां निबिडाम् अत एव अविच्छिद्राम् । इक्षुकांडरससमानस्वादूदकवतीम् ॥१७॥

कपाटतोरणवतींसुविभक्तांतरापणाम् ॥ सर्वयंत्रायुधवतीमुषितांसर्वशिल्पिभिः ॥ १० ॥ सूतमागधसंबाधांश्रीमतीमतुलप्रभाम् ॥ उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११ ॥ वधूनाटकसंघैश्चसंयुक्तांसर्वतःपुरीम् ॥ उद्यानाम्रवणोपेतांमहतींसालमेखलाम् ॥ १२ ॥ दुर्गगंभीरपरिखांदुर्गामन्यैर्दुरासदाम् ॥ वाजिवारणसंपूर्णांगोभिरुष्ट्रैःखरैस्तथा ॥ १३ ॥ सामंतराजसंघैश्चबलिकर्मभिरावृताम् ॥ नानादेशनिवासैश्चवणिग्भिरुपशोभिताम् ॥ १४ ॥ प्रासादैरत्नविकृतैःपर्वतैरिवशोभिताम् ॥ कूटागारैश्चसंपूर्णामिंद्रस्येवामरावतीम् ॥ १५ ॥ चित्रामष्टापदाकारांवरनारीगणैर्युताम् ॥ सर्वरत्नसमाकीर्णांविमानगृहशोभिताम् ॥ १६ ॥ गृहगाढामविच्छिद्रांसमभूमौनिवेशिताम् ॥ शालितंडुलसंपूर्णामिक्षुकांडरसोदकाम् ॥ १७ ॥ दुंदुभीभिर्मृदंगैश्चवीणाभिःपणवैस्तथा ॥ नादितांभृशमत्यर्थंपृथिव्यांतामनुत्तमाम् ॥१८॥ विमानमिवसिद्धानांतपसाधिगतंदिवि ॥ सुनिवेशितवेश्मांतांनरोत्तमसमावृताम् ॥१९॥ येचबाणैर्नविध्यंतिविविक्तमपरापरम् ॥ शब्दवेध्यंचविततंलघुहस्ताविशारदाः ॥ २० ॥ सिंहव्याघ्रवराहाणांमत्तानांनदतांवने ॥ हंतारोनिशितैःशस्त्रैर्बलाद्बाहुबलैरपि ॥२१॥ तादृशानांसहस्रैस्तामभिपूर्णांमहारथैः ॥ पुरीमावासयामासराजादशरथस्तदा ॥ २२ ॥ तामग्निमद्भिर्गुणवद्भिरावृतांद्विजोत्तमैर्वेदषडंगपारगैः ॥ सहस्रदैःसत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्चकेवलैः ॥२३॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येबालकांडेपंचमःसर्गः ॥५॥

भृशं नादिताम् पृथिव्याम् अत्यर्थम् अत्यंतम् अनुत्तमामिति बहुव्रीहिः ॥१८॥ तपसा प्राप्तं दिवि सिद्धानां विमानमिव पृथिव्यामनुत्तमामिति संबंधः । सुष्ठु निवेशितः वेश्मनाम् अंतः बाह्यप्रदेशो यस्यां ताम् ॥१९॥ ये चेति । विविक्तं स्वसमूहाद्भ्रष्टं सहायरहितम् अपरापरं परे पित्रादयः अपरे पुत्रादयः तैर्हीनम् वंशस्यैकतंतुमित्येके । परकीयस्वकीयभिन्नं केवलप्रेक्षकमित्यन्ये । तथा शब्दमात्रानुमितसत्त्या वेधयोग्यम् । प्रच्छन्नमिति यावत् । तथा विततं च विरुध्य युद्धं कृत्वा पश्चात्ततं पलायितम् । ईदृशान् शक्यवेधानपि ये बाणैर्न विध्यंति ये च लघुहस्ताः शीघ्रवेधिनः विशारदाः अस्त्रशस्त्रप्रयोगसमर्थाः तेषां सहस्रैः पूर्णामित्युत्तरेण संबंधः ॥ २० ॥ सिंहेति। बाहुबलैरपि मल्लयुद्धैरपि ॥ २१ ॥ महारथैः । आत्मानं सारथिं चाश्वान् रक्षन्युध्येत यो नरः । स महारथसंज्ञः स्यात् । एको दशसहस्रैर्योद्धा च । आवासयामास तेषामावासेन तैः पूर्णां चकारेत्यर्थः ॥ २२ ॥ तामिति । अग्निमद्भिः आहिताग्निभिः । गणाः शमदमादयः । वेदानां षडंगानां च पारगैः महर्षिकल्पैः महर्षिसदृशैः केवलैः मुख्यैः

ऋषिभिर्मंत्रद्रष्टृभिश्च आवृता व्याप्ताम् ॥ २३ ॥ गैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रा॰बा॰आ॰बा॰पंचमः सर्गः ॥ ५ ॥ ॥ छ ॥ ॥ तस्यामिति । वेदवित् त्रैवर्णिकमात्रस्य आद्योयं गुणः । सर्वसंग्रहः सर्वेषामपरिमितचतुरंगबलराष्ट्रदुर्गादीनां संग्राहकः । एवं सामादिप्रयोगे एवं फलं भविष्यतीत्यादिदीर्घदर्शनशीलः । तेजः प्रतापः ॥१॥ अतिरथः दशसहस्रम हारथैर्योद्धा। वशी स्वाधीनः ॥ २ ॥ धनं हिरण्यादि। अन्यैः संचयैः धान्यादिसंचयैः ॥ ३ ॥४॥ तेनेति । सत्याभिसंधः सत्यप्रतिज्ञः धर्मकामार्थैस्त्रिवर्गः तत्संपादककर्मानुष्ठानप्राधान्येन पालिता अभ वदिति योजना ॥५॥ धर्मात्मानः धर्मवासनावच्चित्ताः । बहुश्रुता इति बहुव्रीहिः ॥६॥ नाल्पेति । सताम् उत्कृष्टवस्तूनां निचयः सन्निचयः अल्पः सन्निचयो यस्य स नास्ति । अभावमुखेन सर्वेषां बहुधनवत्ता सूच्यते । योपि अगवादिमान् । अर्थाभावेऽव्ययीभावे नञ्तत्पुरुषे वा ततो मतुप् । अत एवासिद्धार्थः असिद्धैहिकामुष्मिकप्रयोजनः ईदृशः कुटुंबी न कश्चिदासीदिति योजना । एवमग्रेपि ॥ ७ ॥

तस्यांपुर्यामयोध्यायांवेदवित्सर्वसंग्रहः ॥ दीर्घदर्शीमहातेजाःपौरजानपदप्रियः ॥ १ ॥ इक्ष्वाकूणामतिरथोयज्वाधर्मपरोवशी ॥ महर्षिकल्पोराजर्षिस्त्रिषुलोकेषुविश्रुतः ॥ २ ॥ बलवान्निहतामित्रोमित्रवान्विजितेंद्रियः ॥ धनैश्चसंचयैश्चान्यैःशक्रवैश्रवणोपमः ॥ ३ ॥ यथामनुर्महातेजालोकस्यपरिरक्षिता ॥ तथादशरथोराजालोकस्यपरिरक्षिता ॥ ४ ॥ तेनसत्याभिसंधेनत्रिवर्गमनुतिष्ठता ॥ पालितासापुरीश्रेष्ठाइंद्रेणेवामरावती ॥ ५ ॥ तस्मिन्पुरवरेहृष्टाधर्मात्मानोबहुश्रुताः ॥ नरास्तुष्टाधनैःस्वैःस्वैरलुब्धाःसत्यवादिनः ॥ ६ ॥ नाल्पसन्निचयःकश्चिदासीत्तस्मिन्पुरोत्तमे ॥ कुटुंबीयोह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७ ॥ कामीवानकदर्योवानृशंसःपुरुषःक्वचित् ॥ द्रष्टुंशक्यमयोध्यायांनाविद्वान्नचनास्तिकः ॥ ८ ॥ सर्वेनराश्चनार्यश्चधर्मशीलाःसुसंयताः ॥ मुदिताःशीलवृत्ताभ्यांमहर्षयइवामलाः ॥ ९ ॥ नाकुंडलीनामुकुटीनास्रग्वीनाल्पभोगवान् ॥ नामृष्टोननलिप्तांगोनासुगंधश्चविद्यते ॥ १० ॥ नामृष्टभोजीनादातानाप्यनंगदनिष्कधृक् ॥ नाहस्ताभरणोवापिदृश्यतेनाप्यनात्मवान् ॥ ११ ॥ नानाहिताग्निर्नायज्वानक्षुद्रोवानतस्करः ॥ कश्चिदासीदयोध्यायांनचावृत्तोनसंकरः ॥ १२ ॥ स्वकर्मनिरतानित्यंब्राह्मणाविजितेंद्रियाः ॥ दानाध्ययनशीलाश्चसंयताश्चप्रतिग्रहे ॥ १३ ॥ नास्तिकोनानृतीवापिनकश्चिदबहुश्रुतः ॥ नासूयकोनचाशक्तोनाविद्वान्विद्यतेक्वचित् ॥ १४ ॥

कामी कामिकतत्परः । कदर्यः । आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाढ्यः पितरौ भ्रातॄन्स कदर्य इति स्मृतः । नृशंसो घातुकः क्रूरः । शक्यमिति सामान्ये नपुंसकम् । अत्र नञ आवृत्त्या काम्यादिषु संबध्यते । तेनैकगुणवतां समुदितगुणवतां च तत्र सत्ता निषिध्यते॥८॥ सर्वे इति। सुसंयताः सुष्ठु निगृहीतेंद्रियाः॥९॥ भोगो धर्माविरुद्धः कामभोगः। अमृष्टोऽनिर्मलः । न नलिप्तांग इति पाठः। नलिप्तांग इति सुप्सुपेति समासः । लेपश्चंदनादिना । तदाह । नासुगंध इति ॥ १० ॥ निष्कः उरोभूषणम् । अनात्मवान् अजितांतःकरणः ॥११॥ अयज्वा सोमयागरहितः । क्षुद्रः अल्पविद्यैश्वर्यादिमान् । अवृत्तः सदाचाररहितः । न सकरः कुंडगोलकादिः । न च निर्वृत्तसंकर इति पाठे निर्वृत्तम् अनुष्ठितं सांकर्यं परक्षेत्रे बीजावापादिरूपं येन स इत्यर्थः । संकरशब्दो भावप्रधानः ॥१२॥ स्वेति । दानं नित्यमाप्तं यथाशक्ति विधिना परदत्तस्य स्वीकारः प्रतिग्रहस्तत्र संयताः संकुचिताः निषिद्धप्रतिग्रहरहिता इत्यर्थः ॥ १३ ॥ नास्तिकः नास्ति परलोक इति बुद्धिमान् । अनृती असत्यवचनः ।

अनृत इति पाठेपि अर्थआद्यचा स एवार्थः । अशक्तः स्वीयैहिकामुष्मिकार्थसाधनासमर्थः ॥ १४ ॥ नेति । व्रतमेकाश्यादिव्रतम् । क्षिप्तचित्त इति । उन्मादादिनेति शेषः। व्यथितः आधिव्याधिपीडितः ॥ १५ ॥ कश्चिदिति । नार्या नाश्रीमतीमित्याद्यूह्यम् । श्रीः शोभा । कांतिः रूपं गौरत्वादि । राजा दशरथः तस्मिन् भक्तिः स्नेहः तदभाववान् नाभूत् ॥ १६ ॥ प्रथमं राजानं स्तुत्वा तस्मिन्पुरवरे इत्यादिभिर्ब्राह्मणप्रशंसा कृता । इदानीं क्षत्रियादिसाधारण्येन वर्णाः प्रशंस्यंते । वर्णेष्विति त्रिभिः । अग्र्यचतुर्थेषु अग्र्यो ब्राह्मणः स चतुर्थो येषां तेषु। सर्वे वर्णा इति शेषः। वदान्यो दानशौंडः स्यादिति विश्वः । सर्वत्रासन्निति शेषः ॥ १७ ॥ १८ ॥ ब्रह्ममुखं ब्राह्मणप्रधानं तदाज्ञावर्तीत्यर्थः । शूद्राणां स्वकर्माह । त्रीनिति । उपचारः सेवा ॥ १९ ॥ २० ॥ योधानामिति । शौर्यातिशयात् अग्नितु ल्यानां पेशलानामकुटिलानाम् अमर्षिणां कृताभिभवासहिष्णूनां कृतविद्यानाम् अभ्यस्तास्त्रशस्त्रादिविद्यानां योधानां संघैः संपूर्णेति योजना ॥ २१ ॥ कांबोजविषये कांबोजदेशे । बाह्लीकैः तद्देशजैः ।

नापडंगविद्त्रास्तिनाव्रतोनाबहुश्रुतः ॥ नदीनःक्षिप्तचित्तोवाव्यथितोवापिकश्चन ॥ १५ ॥ कश्चिन्नरोवानारीवानाश्रीमान्नाप्यरूपवान् ॥ द्रष्टुं शक्यमयोध्यायांनापिराजन्यभक्तिमान् ॥ १६ ॥ वर्णेष्वग्र्यचतुर्थेषुदेवतातिथिपूजकाः ॥ कृतज्ञाश्चवदान्याश्चशूराविक्रमसंयुताः ॥ १७ ॥ दीर्घायुषोनराःसर्वेधर्मंसत्यंचसंश्रिताः ॥ सहिताःपुत्रपौत्रैश्चनित्यंस्त्रीभिःपुरोत्तमे ॥ १८ ॥ क्षत्रंब्रह्ममुखंचासीद्वैश्याःक्षत्रमनुव्रताः ॥ शूद्राःस्वकर्मनिरतास्त्रीन्वर्णानुपचारिणः ॥ १९ ॥ सातेनेक्ष्वाकुनाथेनपुरीसुपरिरक्षिता ॥ यथापुरस्तान्मनुनामानवेंद्रेणधीमता ॥ २० ॥ योधानामग्निकल्पानांपेशलानाममर्षिणाम् ॥ संपूर्णकृतविद्यानांगुहाकेसरिणामिव ॥ २१ ॥ कांबोजविषयेजातैर्बाह्लीकैश्चहयोत्तमैः ॥ वनायुजैर्नदीजैश्चपूर्णाहरिहयोत्तमैः ॥ २२ ॥ विंध्यपर्वतजैर्मत्तैःपूर्णाहैमवतैरपि ॥ मदान्वितैरतिबलैर्मातंगैःपर्वतोपमैः ॥ २३ ॥ ऐरावतकुलीनैश्चमहापद्मकुलैस्तथा ॥ अंजनादपिनिष्क्रांतैर्वामनादपिचद्विपैः ॥ २४ ॥ भद्रैर्मंद्रैर्मृगैश्चैवभद्रमंद्रमृगैस्तथा ॥ भद्रमंद्रैर्भद्रमृगैर्मृगमंद्रैश्चसापुरी ॥ २५ ॥ नित्यमत्तैःसदापूर्णानागैरचलसन्निभैः ॥ सायोजनेद्वेचभूयःसत्यनामाप्रकाशते ॥ २६ ॥ तांपुरींसमहातेजाराजादशरथोमहान् ॥ शशासशमितामित्रोनक्षत्राणीवचंद्रमाः ॥ २७ ॥ तांसत्यनामांदृढतोरणार्गलांगृहैर्विचित्रैरुपशोभितांशिवाम् ॥ पुरीमयोध्यांनृसहस्रसंकुलांशशासवैशक्रसमोमहीपतिः ॥ २८ ॥ इत्यार्षेश्रीमद्रामायणे वा० आ० बालकांडेषष्ठः सर्गः ॥ ६ ॥

तस्यामात्यागुणैरासन्निक्ष्वाकोःसुमहात्मनः ॥ मंत्रज्ञाश्चेंगितज्ञाश्चनित्यंप्रियहितेरताः ॥ १ ॥

बाह्लीजैरिति क्वचित्पाठः । वनायुर्देशविशेषः । हरिरिंद्रः तस्य हय उच्चैःश्रवाः तद्वदुत्तमैः नदीजैः सिंधुनदसमीपोद्भवैः ॥ २२ ॥ हैमवतैर्हिमवत्पर्वतजातैः मातंगैर्गजैः ॥ २३ ॥ ऐरावतादयो दिग्गजाः ॥ २४ ॥ भद्रैरिति । भद्रा मंद्रा मृगाश्चेति विज्ञेयास्त्रिविधा गजाः । क्रमेण हिमवद्विंध्यसह्यजाः भद्रमंद्रमृगाः त्रिस्वभावाः । संकीर्णा गजाः भद्रमंद्रादयो द्विस्वभावाः ॥ २५ ॥ नित्येति । द्वियोजने द्वयोर्योजनयोः । अत्यंतसंयोगे द्वितीया । भूयः अभ्यधिकम् । सत्यनामा योद्धुमशक्येत्यन्वर्थनामा । राज्ञो मूलधाम एतावत् ॥ २६ ॥ तामिति । शमिताः नाशिताः अमित्राः येन । नक्षत्राणि नक्षत्रलोकान् ॥ २७ ॥ तामिति । अर्गलं नाम कपाटावष्टंभकतिर्यक्स्थापितदारुविशेषः ॥ २८ ॥ दर्रमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे षष्ठः सर्गः॥ ६ ॥अथ तस्य मंत्रिसंपदुच्यते । तस्येति । गुणैरमात्यापेक्षितैर्गुणैर्युक्ताः। इक्ष्वाकोः तद्वंशजस्य दशरथस्यगुणानाह। मंत्रज्ञाः मंत्रः कार्यविचारः। इंगितं पराभिप्रायम्। प्रियस्य राज्ञः हित

तत्पराः ॥ १ ॥ अष्टाविति । शुचयः असत्यस्वामिद्रोहादिरूपवाङ्मनसाशुचित्वरहिताः नित्यशः आत्मप्रयोजनसमयेपि राजकृत्येषु तदनुष्ठानेषु अनुरक्ताः तत्पराः ॥२॥ तान्नामत आह । धृष्टिरित्यादि ॥३॥ अभिमतौ ऋत्विजौ मुख्यर्त्विजौ । अपरे उक्ताष्टप्रधानमंत्रिव्यतिरिक्ता इत्येके । परे मन्त्रिण इत्युक्त्या वसिष्ठवामदेवयोर्मंत्रित्वमपि सूच्यते इति तीर्थः । तन्न। मन्त्रिणश्च तथेति पाठे परेषामृत्विक्त्वलाभेपि वसिष्ठवामदेवयोर्मंत्रित्वस्य शब्दमर्यादया व्यंग्यमर्यादया चालाभात् । वस्तुतस्तथापरे इत्यस्य ऋत्विजः। इत्यर्थ मंत्रिणश्चेति अस्य वसिष्ठाद्या इति शेषः । अमात्याः देशादिकार्यनिर्वाहकाः मंत्रिणो व्यवहारद्रष्टार इति भेदः ॥ ४ ॥ परानेवाह । सुयज्ञ इत्यादि । सुयज्ञः ऋषिविशेषः ॥ ५ ॥ एतैर्ब्रह्मर्षिभिर्नित्यं सहितास्तस्य ऋत्विज इत्यनेन सर्वथा कर्मसाद्गुण्यं दर्शितम् । पौर्वकाः परंपरागता इत्यर्थकममात्यर्त्विजां विशेषणम् । विद्येति । विद्यया सह विनीताः विद्याविनयोभयसंपन्ना इत्यर्थः । यथायोग्यं वक्ष्यमाणानि विशेषणानि अमात्येषु मंत्रिषु च योजनीयानि ॥ ६ ॥ शस्त्रज्ञाः शस्त्रप्रतिपादकधनुर्वेदविदः । प्रणिहिताः सर्वराजकार्येषु सावधानाः । यथावचनकारिणः । राज्ञ इति शेषः ॥७॥ कामार्थहेतोरिति । द्वंद्वगर्भः कर्मधारयः॥८॥ स्वेषु मित्रेषु । परेषु शत्रुषु । चारेण करणेन कृतं क्रियमा

अष्टौवभूवुर्वीरस्यतस्यामात्यायशस्विनः ॥ शुचयश्चानुरक्ताश्चराजकृत्येषुनित्यशः ॥२॥ धृष्टिर्जयंतोविजयःसुराष्ट्रोराष्ट्रवर्धनः ॥ अकोपोधर्मपालश्चसुमंत्रश्चाष्टमोऽर्थवित् ॥ ३ ॥ ऋत्विजौद्वावभिमतौतस्यास्तामृषिसत्तमौ ॥ वसिष्ठोवामदेवश्चमंत्रिणश्चतथापरे॥ ४ ॥ सुयज्ञोप्यथजावालिःकाश्यपोप्यथगौतमः ॥ मार्कंडेयस्तुदीर्घायुस्तथाकात्यायनोद्विजः ॥ ५ ॥ एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्यपौर्वकाः ॥ विद्याविनीताह्रीमंतःकुशलानियतेंद्रियाः ॥ ६ ॥ श्रीमंतश्चमहात्मानःशस्त्रज्ञादृढविक्रमाः ॥ कीर्तिमंतःप्रणिहितायथावचनकारिणः ॥ ७ ॥ तेजःक्षमायशःप्राप्ताःस्मितपूर्वाभिभाषिणः ॥ क्रोधात्कामार्थहेतोर्वानब्रूयुरनृतंवचः ॥ ८ ॥ तेषामविदितंकिंचित्स्वेषुनास्तिपरेषुवा ॥ क्रियमाणंकृतंवापिचारेणापिचिकीर्षितम् ॥ ९ ॥ कुशलाव्यवहारेषुसौहृदेषुपरीक्षिताः ॥ प्राप्तकालंयथादंडंधारयेयुःसुतेष्वपि ॥ १० ॥ कोशसंग्रहणेयुक्तावलस्यचपरिग्रहे ॥ अहितंचापिपुरुषंनहिंस्युरविदूषकम् ॥ ११ ॥ वीराश्चनियतोत्साहाराजशास्त्रमनुष्ठिताः ॥ शुचीनांरक्षितारश्चनित्यंविषयवासिनाम् ॥ १२ ॥ ब्रह्मक्षत्रमहिंसंतस्तेकोशंसमपूरयन् ॥ सुतीक्ष्णदंडाःसंप्रेक्ष्यपुरुषस्यबलाबलम् ॥ १३ ॥ शुचीनामेकबुद्धीनांसर्वेषांसंप्रजानताम् ॥ नासीत्पुरेवाराष्ट्रेवामृषावादीनरःक्वचित् ॥ १४ ॥ कचिन्नदुष्टस्तत्रासीत्परदाररतिर्नरः ॥ प्रशांतंसर्वमेवासीद्राष्ट्रंपुरवरंचतत् ॥ १५ ॥ सुवाससःसुवेषाश्चतेचसर्वेशुचिव्रताः ॥ हितार्थाश्चनरेंद्रस्यजाग्रतोनयचक्षुषा ॥ १६ ॥

णमपि वा अपि चिकीर्षितं च तेषां न किंचिदविदितम् । अभूदिति शेषः ॥९॥ सौहृदं विषयविशेषगतदोषान् दोषत्वेनागृह्णंश्चित्तवृत्तिविशेषः तत्र परीक्षिताः । राज्ञेति शेषः । प्राप्तः सापराधत्वलक्षणः कालो यस्य तं धारयेयुः कुर्युरित्यर्थः ॥ १० ॥ कोशसंग्रहणं चतुरंगबलपरिग्रहे हेतुः । अहितं स्वहिताचरणरहितं शत्रुमपि अविदूषकम् अनपराधिनं न हिंस्युः ॥ ११ ॥ राजशास्त्रं नीतिशास्त्रम् अनुष्ठिताः अनुसारिणः । शुचीनामिति । स्तेयानृतरहिताः शुचयः । विषयो देशः॥१२॥ ब्रह्मेति । अभिपूरयन्निति पाठे अडभावः आर्षः । सुतीक्ष्णेति । बलाबलम् अपराधतारतम्यम् । पुरुषस्येत्युपलक्षणं देशादीनां च । बलाबलं सम्प्रेक्ष्येत्यर्थः । देशकालवयःशक्तीः संचिंत्या दंडकर्मणीति वचनात् । अयं कोशपूरणहेतुः ॥ १३ ॥ एकबुद्धीनां परस्परमेकबुद्धीनां सम्प्रजानतां पुरराष्ट्रवृत्तांतं विचारयतां तेषां विचारविषये पुरादौ मृषावादित्वगुणविशिष्टः कोपि नासीत् ॥ १४ ॥ प्रेति । मन्त्रिणां नीत्या सर्वं प्रशांतं निर्बाधमासीदित्यर्थः ॥ १५ ॥ नरेंद्रस्य हितार्थाः हितप्रयोजनाः । सर्वत्रासन्निति शेषः ॥ १६ ॥

गुरोः । संबंधसामान्ये षष्ठी । गुरुणा स्वस्वाचार्येण राज्ञा च । अर्श आद्यजंतगुणशब्देन गुणवत्तया गृहीता इत्यर्थः । तेन गुर्वनुग्रहप्राप्तसर्वैश्वर्यत्वं च सूचितम्। गुणागुणगृहीता इति पाठे गुणदोषग्रहीतार इत्यर्थः । बहुव्रीहिः। आहिताग्न्यादित्वात्परनिपातो निष्ठांतस्य । विदेशेष्वपि सर्वतो विज्ञातत्वे हेतुः । बुद्धिनिश्चयाः बुद्धिसंपन्नाः ॥ १७ ॥ अभितो गुणवंतः सर्वदेशे सर्वकाले च गुणवंतः। संधीति । संध्यादिविषयकशास्त्रतत्त्वज्ञाः प्रकृत्या त्रिगुणया सम्पदान्विताः। तत्र सात्विक्या सम्पदा शिष्टपालने तामस्या सम्पदा दुष्टनिग्रहकाले भोगकाले राजस्या सम्पदा धनधान्यदासीदासशिविकाश्वगजादिरुपया॥ १८॥ संवरणं रक्षणम् । बुद्धिषु विचारेषु ॥१९॥ ईदृशैः प्रागुक्तरूपैः अमात्यैश्च । चाहत्विङ्मंत्रिभिः अत एव गुणोपेतैः उपपन्न इति योजना ॥ २० ॥ चारेण स्वपरदेशवृत्तांतम् । प्रजाः धर्मेण युक्ताः यथा भवंति तथा पुरुषैः रक्षयन् । सर्वत्र हेतौ शता ॥२१॥ अतो हेतोर्विश्रुतः सत्यसंगरः रणे सत्यप्रतिज्ञः। तत्र अयोध्यायाम् ॥२२॥ आधिगमः प्राप्तिः। नताः सामंताः यस्य । कंटकाः शत्रवश्चोराश्च ॥२३॥

गुरोर्गुणगृहीताश्चप्रख्याताश्चपराक्रमैः ॥ विदेशेष्वपिविज्ञाताःसर्वतोबुद्धिनिश्चयाः ॥ १७ ॥ अभितोगुणवंतश्चनचासन्गुणवर्जिताः ॥ संधिविग्रहतत्त्वज्ञाःप्रकृत्यासंपदान्विताः ॥ १८ ॥ मंत्रसंवरणेशक्ताःशक्ताःसूक्ष्मासुबुद्धिषु ॥ नीतिशास्त्रविशेषज्ञाःसततंप्रियवादिनः ॥ १९ ॥ ईदृशैस्तैरमात्यैश्चराजादशरथोऽनघः ॥ उपपन्नोगुणोपेतैरन्वशासद्वसुंधराम् ॥ २० ॥ अवेक्षमाणश्चारेणप्रजाधर्मेणरक्षयन् ॥ प्रजानांपालनंकुर्वन्नधर्मंपरिवर्जयन् ॥२१॥ विश्रुतस्त्रिषुलोकेषुवदान्यःसत्यसंगरः ॥ सतत्रपुरुषव्याघ्रःशशासपृथिवीमिमाम् ॥ २२ ॥ नाध्यगच्छद्विशिष्टंवातुल्यंवाशत्रुमात्मनः ॥ मित्रवान्नतसामंतःप्रतापहतकंटकः ॥ सशशासजगद्राजादिविदेवपतिर्यथा ॥ २३ ॥ तैर्मंत्रिभिर्मंत्रहितेनिविष्टैर्वृतोऽनुरक्तःकुशलैःसमर्थैः ॥ सपार्थिवोदीप्तिमवापयुक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ २४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येबालकांडेसप्तमःसर्गः ॥७॥ ॥ तस्यचैवंप्रभावस्यधर्मज्ञस्यमहात्मनः॥ सुतार्थंतप्यमानस्यनासीद्वंशकरःसुतः ॥ १ ॥ चिंतयानस्यतस्यैवंबुद्धिरासीन्महात्मनः ॥ सुतार्थंवाजिमेधेनकिमर्थंनयजाम्यहम् ॥ २ ॥ सनिश्चितांमतिंकृत्वायष्टव्यमितिबुद्धिमान् ॥ मंत्रिभिःसहधर्मात्मासर्वैरपिकृतात्मभिः ॥ ३ ॥ ततोऽब्रवीन्महातेजाःसुमंत्रंमंत्रिसत्तमम् ॥ शीघ्रमानयमेसर्वान्गुरूंस्तान्सपुरोहितान् ॥ ४ ॥ ततःसुमंत्रस्त्वरितंगत्वात्वरितविक्रमः ॥ समानयत्सतान्सर्वान्समस्तान्वेदपारगान् ॥५॥ सुयज्ञंवामदेवंचजाबालिमथकाश्यपम् ॥ पुरोहितंवसिष्ठंचयेचाप्यन्येद्विजोत्तमाः ॥ ६ ॥

तैरिति । मन्त्रो विचारः तत्साध्यं हितम् । उभयत्र निविष्टैः कुशलैः सूक्ष्मार्थदर्शननिपुणैः समर्थैः तत्साधनशक्तैः तेजोमयैः प्रचुरतेजोवद्भिः । तेजः पराभिभवसामर्थ्यम् । गोभिः किरणैर्युक्तः उदितोऽर्क इव । गवामपि तेजोमयैरित्यत्यंतस्वार्थिकमयडंतं विशेषणमित्येके । तद्दुष्टम् ॥ २४ ॥ वैरंमानः ॥ ॥ इति श्रीरा० श्रीरा० रा० वा० आ० बालकांडे सप्तमः सर्गः ॥ ७ ॥ ॥ एवं समग्रगुणस्याप्यपुत्रत्वेनाजितपितृलोकत्वात्पुत्रार्थमश्वमेधप्रस्तावः। तस्येति । तप्यमानस्य तपः कुर्वतः ॥१॥ चिंतयानस्य । मुगभावश्छांदसः।तपसाप्यसाध्यपुत्रोत्पत्त्युपायं मार्गमाणस्य एवं वक्ष्यमाणा॥२॥स इति।यष्टव्यमिति मंत्रिभिः सह निश्चितां मतिं कृत्वेत्यन्वयः । सुमंत्रम् । आनयामासेति शेषः ॥३॥४॥ तत इति । विक्रमो गमनम् । सर्वान् तान् गुरून् समस्तान्वेदपारगान् अगुरूंश्च ॥५॥ सुयज्ञादयो विद्यागुरवः । वसि

ष्ठस्यैव पुरोहितत्वेनोपनेतृतयोपनेतुरेवाध्यापकतया गुरुत्वेपि स्वसमशिष्याणा स्वतपोव्याक्षेपभिया तेनैवाध्यापने नियोगात्तेषामपि विद्यागुरुत्वमक्षतम् । अन्ये अश्वमेधार्त्विज्याद्युपयुक्ताः ॥ ६ ॥ धर्मेणार्थेन च सहितं श्लक्ष्णं मधुरम् ॥ ७ ॥ ममेति । सुतार्थं सुतमुद्दिश्य लालप्यमानस्य पुनःपुनः भृशं च विलपतो राज्यादिनापि सुखं न भवति । तातप्यमानस्येति पाठे पुनःपुनर्भृशं च तपः कुर्वत इत्यर्थः । अयमेव पाठो युक्तः । पूर्वं सुतार्थं तप्यमानस्येत्युक्तेः । अतस्तदर्थं पुत्रार्थम् । मतिरध्यवसायः ॥८॥ तदिति । शास्त्रप्रोक्तेन कर्मणा विधिना केन प्रकारेणाचरणेन अहं कामं पुत्ररूपं प्राप्स्यामीत्यत्र बुद्धिरुपायविषया विचार्यतां क्रियताम् ॥ ९ ॥ तत इति । प्रतिपूजा स्तुतिः । पार्थिवस्य मुखेरितं साक्षाद्राज्ञा स्वयमेवोक्तम् ॥ १० ॥ संभाराः अश्वमेधप्रसिद्धाः एकविंशतियूपादिरूपाः संभ्रियंतां संपाद्यंताम् ॥ ११ ॥ सरय्वा इति । चौ त्वर्थे । अभिप्रेतान् मनोभिप्रेतगुणयुक्तान् ॥ धार्मिकी धर्मप्रयोजना सर्वथा प्राप्स्यसे इति प्रतिज्ञानात्संतोषः ॥ १२ ॥ १३ ॥ हर्षजनितानंदाश्रुपारिप्लवनेत्रः ॥ १४ ॥ सम

तान्पूजयित्वाधर्मात्माराजादशरथस्तदा ॥ इदंधर्मार्थसहितंश्लक्ष्णंवचनमब्रवीत् ॥ ७ ॥ ममलालप्यमानस्यसुतार्थंनास्तिवैसुखम् ॥ तदर्थंहयमेधेनयक्ष्यामीतिमतिर्मम ॥ ८ ॥ तदहंयष्टुमिच्छामिशास्त्रदृष्टेनकर्मणा ॥ कथंप्राप्स्याम्यहंकामंबुद्धिरत्रविचिन्त्यताम् ॥ ९ ॥ ततःसाध्वितितद्वाक्यंब्राह्मणाःप्रत्यपूजयन् ॥ वसिष्ठप्रमुखाःसर्वेपार्थिवस्यमुखेरितम् ॥ १० ॥ऊचुश्चपरमप्रीताःसर्वेदशरथंवचः ॥ संभाराःसंभ्रियंतांतेतुरगश्चविमुच्यताम् ॥ ११ ॥ सरय्वाश्चोत्तरेतीरेयज्ञभूमिर्विधीयताम् ॥ सर्वथाप्राप्स्यसेपुत्रानभिप्रेतांश्चपार्थिव ॥१२॥ यस्यतेधार्मिकीबुद्धिरियंपुत्रार्थमागता ॥ ततस्तुष्टोभवद्राजाश्रुत्वतद्द्विजभाषितम् ॥ १३ ॥ अमात्यानब्रवीद्राजाहर्षव्याकुललोचनः ॥ संभाराःसंभ्रियंतांमेगुरूणांवचनादिह ॥१४॥ समर्थाधिष्ठितश्चाश्वःसोपाध्यायोविमुच्यताम् ॥ सरय्वाश्चोत्तरेतीरेयज्ञभूमिर्विधीयताम् ॥१५॥ शांतयश्चापिवर्धंतांयथाकल्पंयथाविधि ॥ शक्यःप्राप्तुमयंयज्ञःसर्वेणापिमहीक्षिता॥१६॥ नापराधोभवेत्कष्टोयद्यस्मिन्क्रतुसत्तमे ॥ छिद्रंहिमृगयंतेस्मविद्वांसोब्रह्मराक्षसाः ॥ १७ ॥ विधिहीनस्ययज्ञस्यसद्यःकर्ताविनश्यति ॥ तद्यथाविधिपूर्वंमेक्रतुरेषसमाप्यते ॥ १८ ॥ तथाविधानंक्रियतांसमर्थाःसाधनेष्विति ॥ तथेतिचाब्रुवन्सर्वेमंत्रिणःप्रतिपूजिताः ॥ १९ ॥ पार्थिवेंद्रस्यतद्वाक्यंयथापूर्वंनिशम्यते ॥ तथाद्विजास्तेधर्मज्ञावर्धयंतोनृपोत्तमम् ॥२०॥ अनुज्ञातास्ततःसर्वेपुनर्जग्मुर्यथागतम् ॥ विसर्जयित्वातान्विप्रान्सचिवानिदमब्रवीत् ॥२१॥

र्थोति । चतुःशता रक्षंतीति श्रुतेः रक्षणसमर्थैश्चतुःशतराजपुत्रैः रक्षितः। सोपाध्यायः उपाध्यायपदेन प्रधानर्त्विजः अश्वस्य मेध्यस्य पदेपदे जुहोतीत्युक्तहोमनिर्वाहाय तत्साहित्यम् ॥ १५ ॥ शांतयः विघ्ननिवारककर्माणि वर्धंताम् । छांदसो णिलोपः।यथाकल्पं यथाक्रमम् । क्रमस्तु कथ्यते कल्पे इति भागुरिः।यथाविधिशास्त्रोक्तविध्यनतिक्रमेण शक्य इति काकुरत्र । सर्वेण सर्वगुणयुक्तेनापि राज्ञा अयं यज्ञः प्राप्तुं शक्यः अपि तु नेत्यर्थः ॥१६॥ तदेवाह । नेति । यद्यत्र यज्ञे कष्टो महाप्रायश्चित्तनाश्योपराधो विध्यपराधः क्रियालोपादिरूपो न स्यात् । स्यादपि अन्यप्राप्यः। स त्वत्रातियत्नसाध्यः।अतो न सर्वसुलभः। हि यतः यज्ञादिषु मंत्रक्रियालोपादिना राक्षसत्वं प्राप्ताः ब्राह्मणाः ब्रह्मराक्षसाः विद्वांसो यज्ञतंत्रज्ञाश्छिद्रमपचारं मृगयंते । ते चेषदपचारं दृष्ट्वा स्वयं तेषु प्रविश्यापचारधारां संपादयंते । अतो न सर्वप्राप्यः॥ १७॥ किंच विधिहीनस्य यज्ञस्य कर्ता यजमानः ऋत्विक्संघश्च सद्यो विनश्यति ॥१८॥ तत्ततो हेतोर्यथा मे एष यज्ञो विधिपूर्वं शास्त्रोक्तप्रकारेण न तु तदपचारेण यथा समाप्यते तथा विधानं यत्नः क्रियताम् । नन्वेवं चेदशक्यमेतत्तत्राह । यूयं तथा करणेषु समर्थाः शक्ता इति इत्येवंप्रकारोत्साहनानि राजा चक्र इत्यर्थः । ते प्रतिपूजिता मंत्रिणस्तथेत्यवदन् । प्रत्यपूजयन्निति पाठे चेति शेषः ॥१९॥पार्थिवेत्यर्धं पूर्वान्वयि । वर्ध

यंत इति। अस्य आशीर्भिरिति शेषः॥२०॥२१॥उपसंदिष्ट इति। त्रिपदम्।समित्यस्य आप्यतामित्यनेनान्वयः। व्यवहितप्रयोग आर्षः॥२२॥ताः पत्नीर्यज्ञार्हाः॥२३॥दीक्षां दीक्षाविषयदृढनिश्चयं विशत कुरुत। वर्चः कांतिः॥२४॥मुखपद्मानीति। रूपकं वसंतकालावच्छिन्नपद्मोपमा च॥२५॥मेखमानः॥ ॥इति श्रीरामाभिरामे श्रीरामीये श्रीरामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे अष्टमः सर्गः॥८॥एतदिति। हयमेधं सुतार्थं करिष्यामीति राजवाक्यम्। सूतः सुमंत्रः। स हि राज्ञः उभयधर्मा सूतो मंत्री च। पुरावृत्तमितिहासः। यः इतिहासः पुराणे च। येन ऋषिकथ्यमानकथासंग्रहः। मया श्रुतः स श्रूयताम्॥ १॥ ऋत्विगिति। ऋत्विग्भिरयमश्वमेधरूपः पुत्रोपायः उपदिष्टः। मया त्वितिहासविषयः किंचिद्विशेषविशिष्टः श्रुत इत्यर्थः। तमाह। सनदित्यादिना। कथां सर्वज्ञत्वाद्भविष्यद्विषयाम् ॥ २ ॥३॥ख्यातो–भविष्यतीति। ऋष्यशृंग इति ख्यास्यमानः। धातुसंबंधे इति साधुत्वम्। नित्यसंवृद्धः पित्रा वने नित्यं वर्धित इत्यर्थः। सर्वथा पौरादिव्यवहारानभिज्ञत्वं नित्यपदेन सूचितम्।अत एव पितुर्न कापि त्वया गंतव्यमि

ऋत्विग्भिरुपसंदिष्टोयथावत्क्रतुराप्यताम् ॥ इत्युक्त्वानृपशार्दूलःसचिवान्समुपस्थितान् ॥ २२ ॥ विसर्जयित्वास्वंवेश्मप्रविवेशमहामतिः ॥ ततः सगत्वाताःपत्नीर्नरेंद्रोहृदयंगमाः ॥२३॥ उवाचदीक्षांविशतयक्ष्येहंसुतकारणात् ॥ तासांतेनातिकांतेनवचनेनसुवर्चसाम् ॥ २४ ॥ मुखपद्मान्यशोभंतपद्मानीवहिमात्यये ॥२५॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० सा० बालकाण्डे अष्टमःसर्गः॥ ८ ॥ ॥एतच्छ्रुत्वारहःसूतोराजानमिदमब्रवीत् ॥ श्रूयतांतत्पुरावृत्तंपुराणेचमयाश्रुतम् ॥ १ ॥ ऋत्विग्भिरुपदिष्टोयंपुरावृत्तोमयाश्रुतः ॥ सनत्कुमारोभगवान्पूर्वंकथितवान्कथाम् ॥ २ ॥ ऋषीणांसन्निधौराजंस्तवपुत्रागमंप्रति ॥ काश्यपस्यचपुत्रोस्तिविभांडकइतिश्रुतः ॥ ३ ॥ ऋष्यशृंगइतिख्यातस्तस्यपुत्रोभविष्यति ॥ स वनेनित्यसंवृद्धोमुनिर्वनचरःसदा ॥ ४ ॥ नान्यंजानातिविप्रेंद्रोनित्यंपित्रनुवर्तनात् ॥ द्वैविध्यंब्रह्मचर्यस्यभविष्यतिमहात्मनः ॥ ५ ॥ लोकेषुप्रथितंराजन्विप्रैश्चकथितंसदा ॥ तस्यैवंवर्तमानस्यकालःसमभिवर्तत ॥ ६ ॥ अग्निंशुश्रूषमाणस्यपितरंचयशस्विनम् ॥ एतस्मिन्नेवकालेतुरोमपादःप्रतापवान् ॥७॥ अंगेषुप्रथितोराजाभविष्यतिमहाबलः ॥ तस्यव्यतिक्रमाद्राज्ञोभविष्यतिसुदारुणा ॥ ८ ॥ अनावृष्टिःसुघोरावैसर्वलोकभयावहा ॥ अनावृष्ट्यांतुवृत्तायांराजादुःखसमन्वितः ॥ ९ ॥ ब्राह्मणाञ्छ्रुतसंवृद्धान्समानीयप्रवक्ष्यति ॥ भवंतःश्रुतकर्माणोलोकचारित्रवेदिनः ॥ १० ॥ समादिशंतुनियमंप्रायश्चित्तंयथाभवेत् ॥ इत्युक्तास्तेततोराज्ञासर्वेब्राह्मणसत्तमाः ॥ ११ ॥ वक्ष्यंतितेमहीपालंब्राह्मणावेदपारगाः ॥ विभांडकसुतंराजन्सर्वोपायैरिहानय ॥ १२ ॥

त्याज्ञानुवर्तनाद्वनचरत्वम्॥ ४ ॥नान्यमिति। जानातीति। भविष्यति वर्तमानसामीप्यात् लट्। पित्रनुवर्तनात् पित्रा सह वासात्। ब्रह्मचर्यस्य द्वैविध्यं मेखलाजिनादिधारणरूपं मुख्यं ब्रह्मचर्यम्। दारेषु ऋतुगमनरूपं परं गौणम्। तत्प्रकारद्वयमपि अस्य भविष्यति। द्विविधशब्दाद्बहुव्रीहेः ष्यञ् ॥ ५ ॥ लोकेष्विति अर्धं पूर्वान्वयि। एवं पित्रग्न्यादिसेवया। समभिवर्ततेति भविष्यति लङ् अडभावश्चार्षः ॥६॥७॥ व्यतिक्रमात् राजोचितधर्मविलोपनात्। दारुणत्वं बहुकालव्यापित्वात् ॥ ८ ॥ घोरत्वं सर्वराष्ट्रव्यापनात्। वृत्तायां जातायाम्॥९॥ श्रुतेन वेदाध्ययनेन संवृद्धान्। श्रुतकर्माणः अनावृष्टिकरश्रुतमत्कर्माणः। यतो भवंतो लोकव्यवहारज्ञाः ॥ १० ॥ समेति। तस्य मत्पापस्य प्रायश्चित्तं यथा भवति तथा नियममनुष्ठेयांशं समादिशंत्वित्यन्वयः। उक्ताः पृष्टाः ॥ ११ ॥ ते च शुद्धब्रह्मचारिणे कन्यादानं प्रायश्चित्त

मूचुरित्याह । वक्ष्यंतीति ॥१२॥ आनाय्य त्विति पाठः । महीपाल ऋष्येति । मक्तिभावः ॥१३॥ १४ ॥ राज्ञश्चिन्ताभमिनयाति । केनेति । वीर्यं जितेंद्रियत्वं विद्यावृत्ततपोवीर्यं च ॥ १५ ॥ १६ ॥ ते त्विति । व्यथिता । अशक्यार्थनियोगतः खिन्नाः। वनताननाः नम्रमुखाः । अवस्यादेर्लोपः । ऋषेर्विभांडकात् भीताः न गच्छेमेत्युक्त्वा अशक्यार्थत्वादेतन्नियोगाकरणं क्षंतव्यमित्यनुनेष्यंति ॥१७॥ एवमनुनीय अथ क्षमानुचितान् गणिकाप्रेषणादिरूपानुपायान्विचार्य राजानं वक्ष्यंति । यद्यस्मदुक्तं श्रोष्यसि तदा तमानेष्यामः । दोषोस्माकं शापादिरूपस्तस्य तपोवैकल्यादिरूपो वा सर्वथा न भविष्यति ॥ १८ ॥ एवममात्यपुरोहितवचनाद्गणिकाभिः तद्द्वारा ऋषिसुतः आनीतः । देवः इंद्रः । पर्जन्यमवर्षयत् तद्देशे । शांता चास्मै प्रदीयते प्रदत्ता । वर्तमानसामीप्ये लट् । यद्यपि सनत्कुमारोक्त्यनुवादेन भविष्यन्निर्देश उचितः । तथापि राज्ञः संतोषाधिक्याय स्वप्रोच्यमानकाले वृत्तमेव तदिति बोधयितुं भूतनिर्देशः ॥ १९ ॥ ऋष्यशृंगेति । अंगराजमित्रत्वस्य राज्ञि वक्ष्यमाणत्वेन मित्रजामाता स्वस्यापि जामातैवेत्यतो जामातेत्युक्तिः । बीजांतरमप्यग्रे वक्ष्यते । एतावदुक्तम् । एवं सनत्कुमारकथितं पुत्रोत्पत्त्युपायरूपं वस्तु मया तुभ्यं व्याहृतम् । अग्रे देवः प्रमाणमिति शेषः ॥ २० ॥

आनाय्यतुमहीपालऋष्यशृंगंसुसत्कृतम् ॥ विभांडकसुतंराजन्ब्राह्मणंवेदपारगम् ॥ १३ ॥ प्रयच्छकन्यांशांतांवैविधिनासुसमाहितः ॥ तेषांतुवचनंश्रुत्वाराजाचिंतांप्रपत्स्यते ॥ १४ ॥ केनोपायेनवैशक्यइहानेतुंसवीर्यवान् ॥ १५ ॥ ततोराजाविनिश्चित्यसहमंत्रिभिरात्मवान् ॥ पुरोहितममात्यांश्चप्रेपयिष्यतिसत्कृतान् ॥ १६ ॥ तेतुराज्ञोवचःश्रुत्वाव्यथितावनताननाः ॥ नगच्छेमऋषेर्भीताअनुनेष्यंतितंनृपम् ॥ १७ ॥ वक्ष्यंतिचिंतयित्वातेतस्योपायांश्चतान्क्षमान् ॥ आनेष्यामोवयंविप्रंनचदोषोभविष्यति ॥ १८ ॥ एवमंगाधिपेनैवगणिकाभिर्ऋषेःसुतः ॥ आनीतोऽवर्षयद्देवःशांताचास्मैप्रदीयते ॥ १९ ॥ ऋष्यशृंगस्तुजामातापुत्रांस्तवविधास्यति ॥ सनत्कुमारकथितमेतावद्व्याहृतंमया ॥ २० ॥ अथहृष्टोदशरथःसुमंत्रंप्रत्यभाषत ॥ यथर्ष्यशृंगस्त्वानीतोयेनोपायेनसोच्यताम् ॥ २१ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकांडे नवमःसर्गः ॥ ९ ॥ ॥ सुमंत्रश्चोदितोराज्ञाप्रोवाचेदंवचस्तदा ॥ यथर्ष्यशृंगस्त्वानीतोयेनोपायेनमंत्रिभिः ॥ तन्मेनिगदितंसर्वंशृणुमेमंत्रिभिःसह ॥ १ ॥ रोमपादमुवाचेदंसहामात्यःपुरोहितः ॥ उपायोनिरपायोयमस्माभिरभिचिंतितः ॥ २ ॥ ऋष्यशृंगोवनचरस्तपःस्वाध्यायसंयुतः ॥ अनभिज्ञस्तुनारीणांविषयाणांसुखस्यच ॥ ३ ॥ इंद्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः ॥ पुरमानाययिष्यामःक्षिप्रंचाध्यवसीयताम् ॥ ४ ॥

अथेति । हृष्टः नियतपुत्रप्राप्त्युपायलाभात्तस्य सन्निहितत्वश्रवणाच्च तुष्टः । ये तु पूर्वोत्तरश्लोके आनयनादिसर्वं भविष्यत्त्वेनैव व्याचक्षते तेषां कथमानीत इति राजप्रश्नानुपपत्तिरित्याहुः । सोच्यतां स उच्यतामित्यर्थः । संधिरार्षः । यद्वा सा तद्विषया कथोच्यतामित्यर्थः ॥ २१ ॥ पेठमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे नवमः सर्गः ॥ ९ ॥ ॥ छ ॥ ॥ सुमंत्र इति । चोदितः तादृशतपस्विनो गणिकाभिरानयनमत्याश्चर्यमिति विस्तरेण कथनाय प्रेरितः । मंत्रिभिः सह संमंत्र्य रोमपादेन यथर्ष्यशृंगः आनीतो येन चोपायेनानीतः। तन्मया निगदितं सर्वं प्रकारं मे मत्तो मंत्रिभिः सह शृण्विति योजना ॥ १ ॥ रोमेति । सहामात्यः पुरोहितः तमुवाच । निरपायोऽव्यभिचारिफलः ॥ २ ॥ नारीणां नारीसंबंधिविषयाणां शब्दादीनां तत्संबंधिसुखस्य चेत्यर्थः ॥ ३ ॥ अभिमतैः । प्राणिमात्रस्येति शेषः । इंद्रियार्थैः । तद्विषयैर्दिव्यगीत्यादिभिः । अध्यवसीयताम् अस्मदुक्तकरणाय यत्यताम् ॥४॥

तदाह । गणिका इति । सत्कृताः विचित्रांबराभरणान्नपानादिभिः ॥५॥ श्रुत्वेति । राजा पुरोहितं तथेति त्वयैव तथा कर्तव्यमिति प्रत्युवाच । अत्यल्पविषयत्वाद्राज्ञ एवंवादः । अथ पुरोहितस्य विप्रत्वात् गणिकाभिः संवादोऽनुचित इति सोपि मंत्रिणः प्रत्युवाच । मंत्रिणश्च ते तथा चक्रुः साक्षाद्गणिकाः प्रैरयन् ॥ ६ ॥ वारेति । तन्मंत्रिवचः । अस्मिन्वने युष्मज्जनपदप्रांतवर्तिनि शृंगवेरपुरवने । आश्रमस्य विभांडकाश्रमस्य अविदूरे निकटे स्थित्वा ऋषिपुत्रस्य धीरत्वादिगुणविशिष्टस्य दर्शने यत्नं कुर्वंति स्म चक्रुः । पितुरुपलालनादिभिर्नित्यसंतुष्टः स आश्रमान्नातिचक्राम आश्रमाद्दूरं न निरगात् ॥ ७ ॥८ ॥ नेति । स्त्र्यादिकं जन्मप्रभृति दृष्टपूर्वं न भवति यथा तथा । व्यवह्रियत इति शेषः । नगरजं सत्त्वम् अश्वगजादि । राष्ट्रजं सूकरकुक्कुटादि॥९॥तत इति । तं देशं वारस्त्रीसंचारदेशम् । यदृच्छया दैववशात् ॥ १० ॥ ११ ॥ क इति । कस्त्वं किंजातिः कस्य पुत्र इति च किंनामा च-किं वर्तसे किंकर्मासि अपि च एकः संस्त्वं विजने दूरे जनवासरूपग्रामादिभ्यो दूरे वने किमर्थं चरसीति प्रश्नत्रयम् ॥ १२ ॥

गणिकास्तत्रगच्छंतुरूपवत्यःस्वलंकृताः ॥ प्रलोभ्यविविधोपायैरानेष्यंतीहसंत्कृताः ॥ ५ ॥ श्रुत्वातथेतिराजाचप्रत्युवाचपुरोहितम् ॥ पुरोहितो मंत्रिणश्चतदाचक्रुश्चतेतथा ॥ ६ ॥ वारमुख्यास्तुतच्छ्रुत्वावनंप्रविविशुर्महत् ॥ आश्रमस्याविदूरेस्मिन्यत्नंकुर्वंतिदर्शने ॥ ७ ॥ ऋषेःपुत्रस्यधीरस्य नित्यमाश्रमवासिनः ॥ पितुःसनित्यसंतुष्टोनातिचक्रामचाश्रमात् ॥८॥ नतेनजन्मप्रभृतिदृष्टपूर्वंतपस्विना ॥ स्त्रीवापुमान्वायच्चान्यत्सत्त्वंनगरराष्ट्रजम् ॥ ॥ ९ ॥ ततःकदाचित्तंदेशमाजगामयदृच्छया ॥ विभांडकसुतस्तत्रताश्चापश्यद्वरांगनाः ॥ १० ॥ ताश्चित्रवेषाःप्रमदागायंत्योमधुरस्वरम् ॥ ऋषिपुत्रमु पागम्यसर्वावचनमब्रुवन् ॥ ११ ॥ कस्त्वंकिंवर्तसेब्रह्मञ्ज्ञातुमिच्छामहेवयम् ॥ एकस्त्वंविजनेदूरेवनेचरसिशंसनः ॥ १२ ॥ अदृष्टरूपास्तास्ते नकाम्यरूपावनेस्त्रियः ॥ हार्दात्तस्यमतिर्जाताआख्यातुंपितरंस्वकम् ॥१३॥ पिताविभांडकोस्माकंतस्याहंसुतऔरसः ॥ ऋष्यशृंगइतिख्यातंनामकर्म चमेभुवि ॥ १४ ॥ इहाश्रमपदोस्माकंसमीपेशुभदर्शनाः ॥ करिष्येवोत्रपूजांवैसर्वेषांविधिपूर्वकम् ॥ १५ ॥ ऋषिपुत्रवचःश्रुत्वासर्वासांमतिरासवै ॥ तदाश्रमपदंद्रष्टुंजग्मुःसर्वास्ततोंगनाः ॥१६॥ गतानांतुततःपूजामृषिपुत्रश्चकारह ॥ इदमर्घ्यमिदंपाद्यमिदंमूलंफलंचनः ॥ १७ ॥ प्रतिगृह्यतुतांपूजांसर्वा एवसमुत्सुकाः ॥ ऋषेर्भीताश्चशीघ्रंतुगमनायमतिंदधुः ॥१८॥ अस्माकमपिमुख्यानिफलानीमानिहेद्विज ॥ गृहाणविप्रभद्रंतेभक्षयस्वचमाचिरम्॥१९॥

अदृष्टेति । स्त्रिय इति।अस्य दृष्टा इति शेषः । अनेन हार्दमूलभूता चलस्य चेतसो या स्यादुदासीनेषु वस्तुषु अवारणीया वृत्तिः सा दृष्टिशब्देन कथ्यत इत्युक्तलक्षणा दृष्टिरुक्ता । ततः सर्वांशेऽनुपेक्षात्मकज्ञानरूपः परिचयोपि मध्ये ज्ञेयः । अतस्तासु हार्दाद् दर्शनजस्नेहाद् दोषानालोकिनी।प्रीत्याख्यचित्तवृत्तिर्हार्दमित्युक्तेः । स्वकं स्वीयम्।अदृष्टरूपाः।प्रागदृष्टैवंरूपाः काम्यरूपाः कमनीयरूपाः।एतद्द्वयं च स्नेहकारणम् ॥ १३ ॥ पितेति । नामेत्यंतमाद्यप्रश्नोत्तरम् । द्वितीयप्रश्नोत्तरमाह । कर्म च मदीयं भुवि प्रसिद्धं तपोरूपमित्यर्थः ॥ १४ ॥ तृतीयप्रश्नोत्तरमाह । इहेति । इह वने आश्रमपदः । आर्षं पुंस्त्वम् । वर्तत इति शेषः । सर्वेषामिति निर्देशो वस्तुमात्राभिप्रायेण । अनेन स्त्रीस्वरूपापरिज्ञानं सूचितम् ॥ १५ ॥ ऋषीति । आसेत्यार्षम् । बभूवेत्यर्थः । तद्द्रष्टुं मतिर्बभूवेत्यन्वयः ॥१६॥ नोस्माकम् । भक्ष्यामिति शेषः ॥ १७ ॥ प्रतीति । समुत्सुकाः ऋष्यशृंगस्य तदाश्रमतो नयने । ऋषेर्विभांडकात् ॥१८॥ मुख्यानि प्रशस्तास्वादवंति । प्रतारणार्थं मोदका एव मुच्यंते । प्रतिगृहाण ते भद्रं कल्याणं भक्षयस्व च । फलानीति शेषः

मा चिरम् ऋष्यागमनात्पूर्वमेव भक्षणीयमित्याशयः ॥ १९ ॥ तत इति । समालिंग्य स्पर्शेनापि वशीकर्तुमालिंगनम् । हर्षसमन्विताः बालब्रह्मचारितो गाढतरालिंगनमाप्त्या स्वकार्यानुकूलस्पर्शप्राप्त्या च ॥ २० ॥ तानीति । ताभिः मीत्या दत्तानि । तेजस्वी वारवनितास्पर्शेप्यूर्ध्वरेतस्त्वाद्ब्रह्मज्ञत्वाच्चाहीनतेजाः । मन्यते यो मन्यते स इव व्यवहरतीत्यर्थः । पूर्वमनास्वादितानि अनास्वादितपूर्वाणि । नित्यनिवासिनामिति । कर्तरि शेषेवा षष्ठी ॥२१॥ व्रतचर्या मिथ्यैव किंचिद्व्रतमनुष्ठेयमस्माकमिति निवेद्य ज्ञापयित्वा तस्मादपदेशाद्व्याजाव तस्य पितुर्विभांडकाद्भीताः स्त्रियः गच्छंति स्म गताः ॥ २२ ॥ अस्वस्थहृदयः अप्रसन्नचित्तः आसीव । दुःखाद तादृशचाक्षुषादिविषयसुखविश्लेषजाव् । परिवर्तनम् एकदेशानवस्थितिः ॥२३॥ तत इति । उक्ताद्धेतोः मनसा चिंतयन् तासां दर्शनस्पर्शनगमनादिप्रकारान्स्मरन्नित्यर्थः । तत्र गमनमेतद्द्वारकमवश्यंभावीति चिंतयन्नित्यर्थश्च ॥२४॥ तं कं तत्राह । मनोज्ञा इति ॥ २५ ॥ उपसृत्य प्रत्युद्गम्य ॥२६॥ चित्राणीति । यद्यत्रैव चित्राणि मूलानि फलानि च भवेयुः ।

ततस्तास्तंसमालिंग्यसर्वाहर्षसमन्विताः ॥ मोदकान्प्रददुस्तस्मैभक्ष्यांश्चविविधाञ्छुभान् ॥ २० ॥ तानिचास्वाद्यतेजस्वीफलानीतिस्ममन्यते ॥ अनास्वादितपूर्वाणिवनेनित्यनिवासिनाम् ॥ २१ ॥ आपृच्छ्यचतदाविप्रंव्रतचर्यांनिवेद्यच ॥ गच्छंतिस्मापदेशात्ताभीतास्तस्यपितुःस्त्रियः ॥ २२ ॥ गतासुतासुसर्वासुकाश्यपस्यात्मजोद्विजः ॥ अस्वस्थहृदयश्चासीद्दुःखाच्चपरिवर्तते ॥ २३ ॥ ततोपरेद्युस्तंदेशमाजगामसवीर्यवान् ॥ विभांडकसुतः श्रीमान्मनसाचिंतयन्मुहुः ॥ २४ ॥ मनोज्ञायत्रताद्दृष्टावारमुख्याःस्वलंकृताः ॥ दृष्ट्वैवचततोविप्रमायांतंहृष्टमानसाः ॥ २५ ॥ उपसृत्यततः सर्वास्तास्तमूचुरिदंवचः ॥ एह्याश्रमपदंसौम्यअस्माकमितिचाब्रुवन् ॥ २६ ॥ चित्राण्यत्रबहूनिस्युर्मूलानिचफलानिच ॥ तत्राप्येषविशेषेणविधिर्हिभविताध्रुवम् ॥ २७ ॥ श्रुत्वातुवचनंतासांसर्वासांहृदयंगमम् ॥ गमनायमतिंचक्रेतंचनिन्युस्तथास्त्रियः ॥ २८ ॥ तत्रचानीयमानेतुविप्रेतस्मिन्महात्मनि ॥ ववर्षसहसादेवोजगत्प्रह्लादयंस्तदा ॥ २९ ॥ वर्षेणैवागतंविप्रंतापसंसनराधिपः ॥ प्रत्युद्गम्यमुनिंप्रह्वःशिरसाचमहींगतः ॥ ३० ॥ अर्घ्यंचप्रददौतस्मैन्यायतःसुसमाहितः ॥ वव्रेप्रसादंविप्रेंद्रान्माविप्रंमन्युराविशेत् ॥ ३१ ॥ अंतःपुरंप्रवेश्यास्मैकन्यांदत्त्वायथाविधि ॥ शांतांशांतेनमनसाराजाहर्षमवापसः ॥ ३२ ॥ एवंसन्यवसत्तत्रसर्वकामैःसुपूजितः ॥ ऋष्यशृंगोमहातेजाःशांतयासहभार्यया ॥ ३३ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये चतुर्विंशत्साहस्र्यां संहितायां बालकांडे दशमः सर्गः ॥ १० ॥

संभावनायां लिङ् । अतः तत्र गमनं व्यर्थमिति चेत्तत्रापि एष विधिः विचित्रफलमूलभक्षणविधिर्विशेषेण इतोप्याधिक्येन भविष्यति ॥ २७ ॥ श्रुत्वा त्विति । गंगायां पूर्वस्थापितां नावमारोप्य प्रवाहेणैव अंगदेशं निन्युरिति महाभारते ॥ २८ ॥ तत्रेति । अंगदेशे ॥ २९ ॥ वर्षेणेति । वर्षेण सहैव विषयं स्वदेशमागतं विप्रं प्रत्युद्गम्य प्रह्वः अंजल्यादिपूर्वं नम्रः । जात इति शेषः । शिरसा महीं गतश्च साष्टांगनमस्कारं च कृतवानित्यर्थः ॥ ३० ॥ अर्घ्यं चेति । अर्घ्यादिपूजिताद्विप्रेंद्रादृष्यशृंगाव प्रसादं मयि सापराधेपि भवान्नित्यप्रसन्नोस्त्वित्येवं सौमुख्यं वव्रे । किमर्थमित्यत आह । मेति । अतिजुगुप्सितं गणिकाभिः स्वानयनं व्यवहारकाले ज्ञात्वा तं विप्रम् ऋष्यशृंगं तत्पितरं विभांडकं च मन्युः क्रोधः आविशेत् स मा प्रविशत्वित्यर्थमिति भावः ॥३१॥ अंतरिति । प्रसन्नत्वादेव तदनुज्ञया अंतःपुरं प्रवेश्य हर्षं वृष्टिजम् पिसंबंधजं च ॥ ३२ ॥ एवमिति । ननु गणिकास्पर्शतत्स्पृष्टफलभक्षणादिभिरस्य तपोहानौ कथं तद्गमनमात्रेण वृष्टिः । न च स्त्रीत्वाद्यज्ञानान्न तपोहानिः । ईषद्दोषस्तु तपसैव दग्ध इति वाच्यम् । निर्मल

ब्रह्मचर्येण विदितनिखिलवेदशास्त्रतत्त्वस्य शास्त्रतः स्त्रीस्वरूपज्ञानस्य ब्रह्मचर्ये तत्परिहारज्ञानस्य च दुर्निवारत्वाद वने वनचरस्त्रीणामनुभवाच्च सर्वथा अज्ञत्वे अनुग्रहशक्त्यभावापत्तेश्चेति चेन्न।निर्मलब्रह्मचर्येण ब्रह्मज्ञतया सर्वत्र ब्रह्मदृष्टया च दोषलेशस्याप्यस्पर्शाद् । प्रारब्धवशात्क्षत्रियस्त्रीसंबंधं भाविनं तद्द्वारकं जानन्नेव गणिकाभिस्तथा व्यवजह्रे तासां भयानुत्पत्तये । अत एव न तेनेति नवमश्लोके तथा व्यवह्रियते इति शेषः पूरितोस्माभिः प्राक्। एतत्सर्वं जानन् पितापि तमनुयाय न शप्तवान् राजानमित्येवात्र तत्त्वम् ।अनेन तत्त्वज्ञस्य सर्वदोषासंबंधो ध्वनितः।ब्रह्मज्ञे दानसंकल्पमात्रेण फलसिद्धिरित्यादि च सूचितम् । यत्तु कश्चिद्विभांडकस्य पुत्रान्वेषणं क्रोधेन ततो मार्गे ऋष्यशृंगाय शांतादानादिवृत्तांतलाभेन पुनराश्रमं परावृत्यागमनवर्णनं-तदपि तत्त्वज्ञत्व एवोपपद्यते । अन्यथा स्वपुत्रस्य गणिकाद्वारकब्रह्मचर्यविलोपकृतो रोषो ज्ञस्य तस्य केनाप्युपायेन वारयितुमशक्य इत्यलम्॥ ३३॥ वैलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे दशमः सर्गः॥ १०॥ ॥छ॥ एवं सनत्कुमारोक्तकथां तत्प्रसंगे ऋष्यशृंगानयनकथां च सांप्रतिकीमुक्त्वा तदानयनार्थं महाराजेनैव गंतव्यमिति बोधयितुमनेकयुगवृद्धः सुमंत्रः पुनरपि तदर्थगर्भां सनत्कुमारोक्तां कथामाह । भूय एवे ति ।

भूयएवहिराजेंद्रशृणुमेवचनंहितम् ॥ यथासदेवप्रवरःकथयामासबुद्धिमान् ॥ १ ॥ इक्ष्वाकूणांकुलेजातोभविष्यतिसुधार्मिकः ॥ नाम्नादशरथोराजाश्रीमान्सत्यप्रतिश्रवः ॥ २ ॥ अंगराजेनसख्यंचतस्यराज्ञोभविष्यति ॥ कन्याचास्यमहाभागाशांतानामभविष्यति ॥ ३ ॥ पुत्रस्त्वंगस्यराज्ञस्तुरोमपाद इति श्रुतः ॥ तंसराजादशरथोगमिष्यतिमहायशाः ॥ ४ ॥ अनपत्योस्मिधर्मात्मञ्छांताभर्ताममक्रतुम् ॥ आहरेतत्वयाज्ञप्तःसंतानार्थंकुलस्यच ॥ ५ ॥ श्रुत्वाराज्ञोथतद्वाक्यंमनसाचविचिंत्यच ॥ प्रदास्यतेपुत्रवंतंशांताभर्तारमात्मवान् ॥ ६ ॥ प्रतिगृह्यचतंविप्रंसराजाविगतज्वरः ॥ आहरिष्यतितंयज्ञंप्रहृष्टेनांतरात्मना ॥ ७ ॥ तंचराजादशरथोयशस्कामःकृतांजलिः ॥ ऋष्यशृंगंद्विजश्रेष्ठंवरयिष्यतिधर्मवित् ॥ ८ ॥ यज्ञार्थंप्रसवार्थंचस्वर्गार्थंचनरेश्वरः॥ लभतेचसतंकामंद्विजमुख्याद्विशांपतिः ॥ ९ ॥ पुत्राश्चास्यभविष्यंतिचत्वारोमितविक्रमाः ॥ वंशप्रतिष्ठानकराःसर्वभूतेषुविश्रुताः ॥ १० ॥ एवंसदेवप्रवरःपूर्वंकथितवान्कथाम् ॥ सनत्कुमारोभगवान्पुरादेवयुगेप्रभुः ॥११॥ सत्वंपुरुषशार्दूलसमानयसुसत्कृतम् ॥ स्वयमेवमहाराजगत्वासबलवाहनः॥१२॥

देवप्रवरः सनत्कुमारः । यथेति यदित्यर्थे ॥ १ ॥ सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ २ ॥ अंगेति । अंगराजो रोमपादः । तस्य दशरथस्य। अस्य रोमपादस्य ॥३॥ कोसावंगराज इत्यत्राह । पुत्र इति । अंगस्य अंगनामकस्य । तं रोमपादम् गमिष्यति । ऋष्यशृंगानयनार्थमिति शेषः ॥४॥ गमनप्रयोजनमाह । अनपत्य इति । आहरेत निर्वहेत् । चकारेण धर्माद्यर्थं च ॥५॥ श्रुत्वेति । अस्य राज्ञो दशरथस्यैतद्वाक्यं श्रुत्वा मनसा च तस्य अवश्यकर्तव्यतां विचिंत्य निश्चित्य पुत्रवंतं शांताभर्तारं प्रदास्यते इत्यन्वयः । पुत्रवंतमित्यनेन जातपुत्रः कृष्णकेशोग्नीनादधीतेति विध्युक्तमग्न्याधानाधिकारित्वं सूचितम् । तेनाहिताग्नित्वेनार्त्विज्याधिकारस्तस्य उक्तः । शांतासहितं भर्तारमित्यर्थकेन शांताभर्तारमित्यनेन शांतासाहित्यमपि सूचितम् ॥ ६ ॥ तं यज्ञं पुत्रकामेष्टिरूपम् ॥ ७ ॥ वरयिष्यति वरणं करिष्यति । तत्करोतीति णिच् ॥ ८ ॥ वरणविषयमाह। यज्ञेति । यज्ञः प्रसवकारणं प्रसवः स्वर्गकारणमिति बोध्यम् । लभते लप्स्यते। तं कामं प्रार्थितं काम्ययज्ञम् ॥ ९ ॥ पुत्रा इति । वंशप्रतिष्ठानं वंशाविच्छेदः तत्कराः ॥ १०॥ एवमिति । पूर्वं पूर्वस्मिन्काले । कस्मिन्पूर्वकाले तत्राह ।पुरा देवयुगे एतच्चतुर्युगात्मकनचतुर्युग्याद्ये सत्ययुगे इत्यर्थः॥ ११ ॥एतत्कथाकथनस्य विवक्षितमर्थमाह। स इति । स्वयमेवेति।

नं तु पुरोहितादिद्वारा ॥ १२ ॥ अनुमान्य कृतानुमातिकं कृत्वा । अन्यथा मयि पुरोहिते स्थिते यज्ञार्थं कथमन्यानयनमिति तस्य क्रोधः स्यात् । अनुमतौ हेतुः सूतवाक्यं निशाम्येति । श्रावयित्वेत्यर्थः।
॥ १३ ॥ यत्र रोमपादराष्ट्रे ॥ १४ ॥ अभिचक्राम जगाम । तं देशम् आसाद्य प्राप्य अथो अनंतरं रोमपादसमीपे द्विजश्रेष्ठम् ऋषिपुत्रं ददर्श । ततः तदागमनानंतरं राजा रोमपादः तस्य राज्ञो दशरथस्य
यथान्यायं यथाविधि विशेषतः अत्यादरेण पूजां चक्रे इत्यन्वयः। आदरे हेतुः सखित्वम् ॥ १५ ॥ १६ ॥ सखित्वादिति । सख्यं स्वमैत्रीसंबंधकं यौनादिसंबंधः ऋषिपुत्राय रोमपादेन आख्यातं कथितं तदा तच्छ्र
वणान तरकाले तं दशरथं प्रत्यपूजयत् । ऋष्यशृंग इति शेषः । तेन सह रोमपादेन सह । संबंधश्चायं तादृशो येन दशरथस्यापि जामातृत्वव्यवहारयोग्य ऋष्यशृंगः । एतदेवाभिप्रेत्योक्तं प्राक् तव जामातेति ।
कचिच्चैवं पठ्यतेपि । अनेन मेऽनपत्याय दत्तेयं वरवर्णिनी । याचते पुत्रतुल्यैषा शांता प्रियतरात्मजा । सोयं ते श्वशुरो ब्रह्मन्यथैवाहं तथा नृप इति । अत्र याचते इति चतुर्थ्यंतम् । अत एव प्राक् सांतःपुरस्यां

सुमंत्रस्यवचःश्रुत्वाहृष्टोदशरथोऽभवत् ॥ अनुमान्यवसिष्ठंचसूतवाक्यंनिशाम्यच ॥ १३ ॥ सांतःपुरःसहामात्यःप्रययौयत्रसद्विजः ॥ वनानिसरित
श्चैवव्यतिक्रम्यशनैःशनैः ॥ १४ ॥ अभिचक्रामतंदेशंयत्रवैमुनिपुंगवः ॥ आसाद्यतंद्विजश्रेष्ठंरोमपादसमीपगम् ॥ १५ ॥ ऋषिपुत्रंददर्शाथोदीप्यमान
मिवानलम् ॥ ततोराजायथान्यायंपूजांचक्रेविशेषतः ॥ १६ ॥ सखित्वात्तस्यवैराज्ञःप्रहृष्टेनांतरात्मना ॥ रोमपादेनचाख्यातमृषिपुत्रायधीमते ॥ १७ ॥
सख्यंसंबंधकंचैवतदातंप्रत्यपूजयत् ॥ एवंसुसत्कृतस्तेनसहोषित्वानरर्षभः ॥ १८ ॥ सप्ताष्टदिवसान्राजाराजानमिदमब्रवीत् ॥ शांतातवसुताराजन्स
हभर्त्राविशांपते ॥ १९ ॥ मदीयंनगरंयातुकार्यंहिमहदुद्यतम् ॥ तथेतिराजासंश्रुत्यगमनंतस्यधीमतः ॥ २० ॥ उवाचवचनंविप्रंगच्छत्वंसहभार्यया ॥
ऋषिपुत्रःप्रतिश्रुत्यतथेत्याहनृपंतदा ॥ २१ ॥ सनृपेणाभ्यनुज्ञातःप्रययौसहभार्यया ॥ तावन्योन्यांजलिंकृत्वास्नेहात्संश्लिष्यचोरसा ॥ २२ ॥ ननं
दतुर्दशरथोरोमपादश्चवीर्यवान् ॥ ततःसुहृदमापृच्छ्यप्रस्थितोरघुनंदनः ॥ २३ ॥ पौरेषुप्रेषयामासदूतान्वैशीघ्रगामिनः ॥ क्रियतांनगरंसर्वंक्षिप्रमे
वस्वलंकृतम् ॥ २४ ॥ धूपितंसिक्तसंमृष्टंपताकाभिरलंकृतम् ॥ ततःप्रहृष्टाःपौरास्तेश्रुत्वाराजानमागतम् ॥ २५ ॥ तथाचक्रुश्चतत्सर्वंराज्ञायत्प्रेषितं
तदा ॥ ततःस्वलंकृतंराजानगरंप्रविवेशह ॥ २६ ॥ शंखदुंदुभिनिर्ह्रादैःपुरस्कृत्वाद्विजर्षभम् ॥ ततःप्रमुदिताःसर्वेदृष्ट्वावैनागराद्विजम् ॥ २७ ॥
प्रवेश्यमानंसत्कृत्यनरेंद्रेणेंद्रकर्मणा ॥ यथादिविसुरेंद्रेणसहस्राक्षेणकाश्यपम् ॥ २८ ॥ अंतःपुरंप्रवेश्यैनंपूजांकृत्वाचशास्त्रतः ॥ कृतकृत्यंतदात्मानंमे
नेतस्योपवाहनात् ॥ २९ ॥ अंतःपुराणिसर्वाणिशांतांदृष्ट्वातथागताम् ॥ सहभर्त्राविशालाक्षींप्रीत्यानंदमुपागमन् ॥ ३० ॥

गदेशे गमनमुक्तम् । कन्यास्नेहाद्धि तासां गमनमिति भाति ॥ १७ ॥ १८ ॥ १९ ॥ उद्यतम् उपक्रांतम् । संश्रुत्य प्रतिज्ञाय ॥ २० ॥ प्रतिश्रुत्य आकर्ण्य ॥ २१ ॥ सः ऋष्यशृंगः । तौ
रोमपाददशरथौ ॥ २२ ॥ सुहृदं रोमपादम् ॥ २३ ॥ २४ ॥ स्वलंकृतत्वप्रकारमाह । धूपितमित्यादि । आदौ सिक्तं तोयैः पश्चात्संमृष्टम् ॥ २५ ॥ प्रेषितामिति । अस्य उक्त्वेत्यादिः ॥ २६ ॥ द्विजम्
ऋष्यशृंगम् । इंद्रकर्मणा इंद्रसहायार्थं कर्म यस्य तादृशेन राज्ञा सत्कृत्य प्रवेश्यमानं द्विजं दृष्ट्वा देवेंद्रेण स्वनगरं प्रवेश्यमानं काश्यपं वामनं दृष्ट्वा यथा स्वर्गवासिनो मुदिताः तथात्र नागराः मुदिता इति
पूर्वेणान्वयः । इंद्रकर्मणेत्यनेन राज्ञः समग्रो महिमातिशयो ध्वनितः ॥ २७ ॥ २८ ॥ उपवाहनात् स्वसमीपानयनात् ॥ २९ ॥ तथागमनमेव व्याचष्टे । सह भर्त्रेति । प्रीत्या शांतायां प्रीत्या । बहुकालविश्ले

४

षोत्तरं मिलितत्वाच्चानंदातिरंतःपुरस्य ॥ ३० ॥ सहद्विजा । सपुत्रभर्तृकेति यावत् ॥ ३१ ॥ कंर्लमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे एकादशः सर्गः ॥ ११ ॥ ॥ ॥ ॥ एवं निश्चितमवगतं पुत्रदातृत्वं यस्य तादृशे ऋष्यशृंगे आनीते सकलपापक्षयकारितया पूर्वसंकल्पितत्वेन च अश्वमेधं मस्तौति । तत इति । बहुतिथे अनल्पे काले । गत इति शेषः । सुमनोहरे शास्त्रोक्तदोषरहिते । मनः अभवत्मावर्तत ॥ १ ॥ तत इति । देववर्णिनं देववर्चसम् । कुलस्य संतानार्थं कुलाविच्छेदरूपमयोजनमुद्दिश्य तेन स्वर्गार्थं च यज्ञाय यज्ञार्थं च । विप्रम्

पूज्यमानातुताभिःसाराज्ञाचैवविशेषतः ॥ उवासतत्रसुखिताकंचित्कालंसहद्विजा ॥ ३१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आ० बालकांडे एकादशःसर्गः ॥ ११ ॥ ॥ ततःकालेबहुतिथेकस्मिंश्चित्सुमनोहरे ॥ वसंतेसमनुप्राप्तेराज्ञोयष्टुंमनोभवत् ॥ १ ॥ ततःप्रणम्यशिरसातंविप्रंदेववर्णिनम् ॥ यज्ञायवरयामाससंतानार्थंकुलस्यच ॥ २ ॥ तथेतिचसराजानमुवाचवसुधाधिपम् ॥ संभाराःसंभ्रियंतांतेतुरगश्चविमुच्यताम् ॥ ३ ॥ सरय्वाश्चोत्तरेतीरेयज्ञभूमिर्विधीयताम् ॥ ततोब्रवीन्नृपोवाक्यंब्राह्मणान्वेदपारगान् ॥ ४ ॥ सुमंत्रावाहयक्षिप्रमृत्विजोब्रह्मवादिनः ॥ सुयज्ञंवामदेवंचजावालिमथकाश्यपम् ॥ ५ ॥ पुरोहितंवसिष्ठंचयेचान्येद्विजसत्तमाः ॥ ततःसुमंत्रस्त्वरितंगत्वात्वरितविक्रमः ॥ ६ ॥ समानयत्सतान्सर्वान्समस्तान्वेदपारगान् ॥ तान्पूजयित्वाधर्मात्माराजादशरथस्तदा ॥ ७ ॥ धर्मार्थसहितंयुक्तंश्लक्ष्णंवचनमब्रवीत् ॥ ममतातप्यमानस्यपुत्रार्थंनास्तिवैसुखम् ॥ ८ ॥ पुत्रार्थंहयमेधेनयक्ष्यामीतिमतिर्मम ॥ तदहंयष्टुमिच्छामिहयमेधेनकर्मणा ॥ ९ ॥ ऋषिपुत्रप्रभावेणकामान्प्राप्स्यामिचाप्यहम् ॥ ततःसाध्वितितद्वाक्यंब्राह्मणाःप्रत्यपूजयन् ॥ १० ॥ वसिष्ठप्रमुखाःसर्वेपार्थिवस्यमुखाच्च्युतम् ॥ ऋष्यशृंगपुरोगाश्चप्रत्यूचुर्नृपतिंतदा ॥ ११ ॥ संभाराःसंभ्रियंतांतेतुरगश्चविमुच्यताम् ॥ सरय्वाश्चोत्तरेतीरेयज्ञभूमिर्विधीयताम् ॥१२॥ सर्वथाप्राप्स्यसेपुत्रांश्चतुरोऽमितविक्रमान् ॥ यस्यतेधार्मिकीबुद्धिरियंपुत्रार्थमागता॥१३॥ ततःप्रीतोभवद्राजाश्रुत्वातुद्विजभाषितम् ॥ अमात्यानब्रवीद्राजाहर्षेणेदंशुभाक्षरम् ॥१४॥ गुरूणांवचनाच्छीघ्रंसंभाराःसंभ्रियंतुमे ॥समर्थाधिष्ठितश्चाश्वःसोपाध्यायोविमुच्यताम् ॥ १५ ॥ सरय्वाश्चोत्तरेतीरेयज्ञभूमिर्विधीयताम् ॥ शांतयश्चाभिवर्धंतांयथाकल्पंयथाविधि ॥ १६ ॥

ऋष्यशृंगम् ॥ २ ॥ ३ ॥ ४ ॥ आवाहय मत्समीपं मापय ॥ ५ ॥ तत इत्यादि । व्याख्यातमायम् ॥ ६ ॥ ७ ॥ ८ ॥ पुत्रार्थं हयमेधेन कर्मणा तदाख्येन कर्मणा । अनुष्ठानारंभाय च पुनरुपन्यासः ॥ ९ ॥ ऋषिपुत्रः ऋष्यशृंगः ॥ १० ॥ ११ ॥ १२ ॥ धार्मिकी मजासंरक्षणरूपधर्मप्रयोजना ॥ १३ ॥ १४ ॥ संभ्रियंतु संपाद्यंताम् । गुरूणामित्यादयो व्याख्यातमायाः ॥ १५ ॥ १६ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ गतानामिति । गतेषु द्विजादिष्वित्यर्थः । सप्तम्यर्थे षष्ठी । विसर्जयित्वा संवत्सरांते । यागार्थमिति शेषः ॥ २२ ॥ रेखामानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे द्वादशः सर्गः ॥ १२ ॥ ॥ ॥ अथ संवत्सरांते दीक्षेतेति सूत्राद् पूर्ववसंतविसृष्टाश्वस्य पुनः संवत्सरांते वसंते प्राप्ते दीक्षाप्रवृत्तिरुपादिश्यते । पुनरिति । प्रसवरूपफलं हयमेधेन भावयितुं गतः । वसिष्ठांतिकमिति शेषः ॥ १ ॥ वसिष्ठं च । चादरुंधतीम् । प्रश्रितं विनययुक्तम् ॥ २ ॥ यथोक्तं शास्त्रोक्तप्रकारानतिक्रमेण यज्ञांगेषु अश्वादिषु यथा ब्रह्मराक्षसादिभिर्विघ्नाः न क्रियंते तथा विधीयतां क्रियतामित्यर्थः ॥ ३ ॥ भवानिति । सुहृदः स्निग्धत्वाव्यभिचारादतिशयप्रतिपत्तये पुनः स्निग्धेति विशेषणम् । मह्यमिति षष्ठ्यर्थे ।

शक्यःकर्तुमयंयज्ञःसर्वेणापिमहीक्षिता ॥ नापराधोभवेत्कष्टोयद्यस्मिन्क्रतुसत्तमे ॥ १७ ॥ छिद्रंहिमृगयंत्येतेविद्वांसोब्रह्मराक्षसाः ॥ विधिहीनस्ययज्ञस्यसद्यःकर्ताविनश्यति ॥ १८ ॥ तद्यथाविधिपूर्वंमेक्रतुरेषसमाप्यते ॥ तथाविधानंक्रियतांसमर्थाःकरणेष्विह ॥ १९ ॥ तथेतिचततःसर्वेमंत्रिणःप्रत्यपूजयन् ॥ पार्थिवेंद्रस्यतद्वाक्यंयथाज्ञप्तमकुर्वत ॥ २० ॥ ततोद्विजास्तेधर्मज्ञमस्तुवन्पार्थिवर्षभम् ॥ अनुज्ञातास्ततःसर्वेपुनर्जग्मुर्यथागतम् ॥ २१ ॥ गतानांतेषुविप्रेषुमंत्रिणस्तान्नराधिपः ॥ विसर्जयित्वास्वंवेश्मप्रविवेशमहामतिः ॥ २२ ॥ इत्यार्षेश्रीमद्रामायणेवा० आ० बा० द्वादशः सर्गः ॥१२॥

पुनःप्राप्तेवसंतेतुपूर्णःसंवत्सरोभवत् ॥ प्रसवार्थंततोयष्टुंहयमेधेनवीर्यवान् ॥ १ ॥ अभिवाद्यवसिष्ठंचन्यायतःप्रतिपूज्यच ॥ अब्रवीत्प्रश्रितंवाक्यंप्रसवार्थंद्विजोत्तमम् ॥ २ ॥ यज्ञोमेक्रियतांब्रह्मन्यथोक्तंमुनिपुंगव ॥ यथानविघ्नाःक्रियंतेयज्ञांगेषुविधीयताम् ॥ ३ ॥ भवान्स्निग्धःसुहृन्मह्यंगुरुश्चपरमोमहान् ॥ वोढव्योभवताचैवभारोयज्ञस्यचोद्यतः ॥ ४ ॥ तथेतिचसराजानमब्रवीद्द्विजसत्तमः ॥ करिष्येसर्वमेवैतद्भवतायत्समर्थितम् ॥ ५ ॥ ततोब्रवीद्द्विजान्वृद्धान्यज्ञकर्मसुनिश्चितान् ॥ स्थापत्येनिष्ठितांश्चैववृद्धान्परमधार्मिकान् ॥ ६ ॥ कर्मांतिकाञ्छिल्पकारान्वर्धकीन्खनकानपि ॥ गणकाञ्छिल्पिनश्चैवतथैवनटनर्तकान् ॥ ७ ॥ तथाशुचीञ्छास्त्रविदःपुरुषान्सुवहुश्रुतान् ॥ यज्ञकर्मसमीहंतांभवंतोराजशासनात् ॥ ८ ॥ इष्टकावहुसाहस्रीःशीघ्रमानीयतामिति ॥ उपकार्याःक्रियंतांचराज्ञोवहुगुणान्विताः ॥ ९ ॥

परमो महानित्यपि स्निग्धपदवत् । विसृष्टपुनःप्राप्ताश्वकत्वादुद्यतः आरब्धो यज्ञसंबंध्यंगानुष्ठानरूपो भारः भवतैव सर्ववेदशास्त्रज्ञेन वोढव्यः वोढुमर्हः ॥ ४ ॥ समर्थितं सम्यक्प्रार्थितम् ॥ ५ ॥ अब्रवीदिति । वसिष्ठोऽत्र कर्ता । स्थापत्यं स्थपतेः रथकारस्य कर्म तत्र निष्ठितान्प्रवीणान् ॥ ६ ॥ कर्मांतिकान् आसमाप्ति कर्मनिर्वाहकान् भृत्यान् । शिल्पकारान् । शिल्पं चित्रादि । वर्धकीन् तक्ष्णः । खनकान् कूपवापीनिर्मातॄनः । गणकान् ज्योतिर्विदः । शिल्पिनश्चर्मकाराद्याः । नटाः सूत्रधाराः । नर्तकाः नृत्यकारिणः ॥ ७ ॥ समीहंतां कर्म कुर्वंतु इति अब्रवीदिति पूर्वेणान्वयः । यज्ञकर्मेति । अस्य निर्वर्तयितुमिति शेषः ॥ ८ ॥ इष्टका इति । वहुसाहस्री वहुसहस्रसंख्येया इत्यर्थः । जातावेकवचनम् । राज्ञो योग्याः उपकार्याः राजसद्मानि । गुणाः अन्नपानाद्युपकरणानि । सर्वत्र अब्रवीदि

त्यनुकर्षः ॥ ९ ॥ सुनिष्ठिताः महावर्षवातादिनिवारणक्षमाः ॥ १० ॥ कर्तव्या इति । अस्यावासा इति शेषः । पार्थिवानामल्पमांडलिकानाम् ॥ ११ ॥ वैदेशिकनिवासिनां वैदेशिकानां स्वदेशनिवासिनां चेत्यर्थः । महदावासा इति । अत्रात्वाभाव आर्षः ॥१२॥ सर्वकामैरुपस्थिताः काम्यमानैः सर्वपदार्थैर्युक्ताःजनस्य इतरक्षुद्रजनस्यापि बहुशोभा यथा भवति तथा आवासाः कार्या इत्यर्थः ॥१३॥ दातव्यमिति । सत्कृत्य परलोकप्रयोजनबुद्धया शास्त्रोक्तसत्कारपूर्वकं देयमित्यर्थः । न तु लीलया उत्सवमात्रबुद्धया अनादरेण । यथा पूजां प्राप्नुवंति पूजां मन्यंते तथा सुसत्कृताः कार्या इत्यर्थः ॥ १४ ॥ ॥ १५ ॥ तेषामपीति । अपिस्त्वर्थे । यथाक्रमं ज्येष्ठानुक्रमेण । तत्र उपपत्तिमाह । ये वसुभिर्धनैर्भोजनादिभिश्च पूजिताः सेवकाः तेषां सर्वं कार्यं सुविहितं भवति किंचिदपि कार्यं न परिहीयते न

ब्राह्मणावसथाश्चैवकर्तव्याःशतशःशुभाः ॥ भक्ष्यान्नपानैर्बहुभिःसमुपेताःसुनिष्ठिताः ॥ १० ॥ तथापौरजनस्यापिकर्तव्याश्चसुविस्तराः ॥ आगतानां सुदूराच्चपार्थिवानांपृथक्पृथक् ॥ ११॥ वाजिवारणशालाश्चतथाशय्यागृहाणिच ॥ भटानांमहदावासावैदेशिकनिवासिनाम् ॥१२॥ आवासाबहुभक्ष्यावै सर्वकामैरुपस्थिताः ॥ तथापौरजनस्यापिजनस्यबहुशोभनम् ॥ १३ ॥ दातव्यमन्नंविधिवत्सत्कृत्यनतुलीलया ॥ सर्वेवर्णायथापूजांप्राप्नुवंतिसुसत्कृताः ॥ १४ ॥ नचावज्ञाप्रयोक्तव्याकामक्रोधवशादपि ॥ यज्ञकर्मसुयेव्यग्राःपुरुषाःशिल्पिनस्तथा ॥ १५ ॥ तेषामपिविशेषेणपूजाकार्यायथाक्रमम् ॥ येस्युःसंपूजिताःसर्वेवसुभिर्भोजनेनच ॥ १६ ॥ यथासर्वंसुविहितंनकिंचित्परिहीयते ॥ तथाभवंतःकुर्वंतुप्रीतियुक्तेनचेतसा ॥ १७ ॥ ततःसर्वे समागम्यवसिष्ठमिदमब्रुवन् ॥ यथेष्टंतत्सुविहितंनकिंचित्परिहीयते ॥ १८ ॥ यथोक्तंतत्करिष्यामोनकिंचित्परिहास्यते ॥ ततःसुमंत्रमाहूयवसिष्ठो वाक्यमब्रवीत् ॥ १९ ॥ निमंत्रयस्वनृपतीन्पृथिव्यांयेचधार्मिकाः ॥ ब्राह्मणान्क्षत्रियान्वैश्याञ्छूद्रांश्चैवसहस्रशः ॥ २० ॥ समानयस्वसत्कृत्यसर्वदेशेषुमानवान् ॥ मिथिलाधिपतिंशूरंजनकंसत्यवादिनम् ॥ २१ ॥ तमानयमहाभागंस्वयमेवसुसत्कृतम् ॥ पूर्वसंबंधिनंज्ञात्वाततःपूर्वंब्रवीमिते ॥ २२ ॥ तथाकाशिपतिंस्निग्धंसततंप्रियवादिनम् ॥ सद्वृत्तंदेवसंकाशंस्वयमेवानयस्वह ॥ २३ ॥

हीनं भवति । तस्मान्मयि प्रीतियुक्तेन चित्तेन भवंतः तथा कुर्वंतु यथा सर्वे सुहृदः ते शिल्प्यादयश्च वस्त्रादिभिः पूजिताः स्युरिति ॥ १६ ॥ १७ ॥ यथेष्टमिति । यत्त्वया उक्तं तत् त्वदुक्तानतिक्रमेण सुविहितम् । न किंचिल्लुप्यते । तत्रेति शेषः ॥ १८ ॥ किं चोक्तम् । भावे क्तः । वचनं यथा कथयिष्यसि तच्च तथैव करिष्यामः । तत्रापि न किंचिद्धीनं भविष्यति । ततः नियोजनानंतरम् ॥१९॥२०॥ मानवाः चतुर्वर्णातिरिक्ताः संकरादयः ॥ २१ ॥ तमिति । मिथिलाधिपं स्वयमेव आनयेति संबंधः । न तु दूतमात्रप्रेषणेन । कुत एवं विशेषः कुतश्च तदानयनस्य प्रथममुपदेशस्तत्राह । पूर्वमिति । पूर्वसंबंधिनं पूर्वस्मिन्नेव काले भाविनं संबंधिनम् । समस्तपाठे मयूरव्यंसकादित्वात्समासः । तं योगबलेन ज्ञात्वा ततो हेतोः भाविसंबंधित्वाद्धेतोः सर्वेभ्यः पूर्वं पूर्वकाले तदानयनं ब्रवीमीत्यर्थः ॥२२॥२३॥

केकयराजानमिति । अनित्यत्वात्समासांताभावः ॥ २४ ॥ २५ ॥ सुसत्कृतं यथा भवति । तथा आनयस्वेति शेषः ॥ २६ ॥ २७ ॥ प्राचीनान्प्राग्देशवर्तिनः । सौराष्ट्रे भवानित्यर्थे ढगार्षः ॥ २८ ॥ २९ ॥ यथा यथायोग्यदूतप्रेषणेन ॥३०॥३१॥ स्वयमेवेति।वसिष्ठेन विशिष्योक्तानिति शेषः ॥३२॥ ते चेति । पूर्वनियुक्ता इत्यर्थः । वासिष्ठाय महर्षय इति पाठः॥३३॥अवज्ञया अनादरेण । लिलया अश्रद्धया । आवश्यकत्वादेतत्पुनः शिक्षितम् ॥ ३४ ॥ तदेवाह । अवज्ञयेति ॥३५॥ रत्नानि उत्तमवस्तूनि ॥ ३६ ॥ ३७ ॥ यज्ञियं यज्ञोपयोगि स्रुक्स्रुवादिसंभाररूपम् । अंतिकात्समीपे वर्तमान

तथाकेकयराजानंवृद्धंपरमधार्मिकम् ॥ श्वशुरंराजसिंहस्यसपुत्रंतमिहानय ॥ २४ ॥ अंगेश्वरंमहेष्वासंरोमपादंसुसत्कृतम् ॥ वयस्यंराजसिंहस्यसपुत्रंत मिहानय ॥ २५ ॥ तथाकोसलराजानंभानुमंतंसुसत्कृतम् ॥ मगधाधिपतिंशूरंसर्वशास्त्रविशारदम् ॥ २६ ॥ प्राप्तिज्ञंपरमोदारंसत्कृतंपुरुषर्षभम् ॥ राज्ञःशासनमादायचोदयस्वनृपर्षभान् ॥ २७ ॥ प्राचीनान्सिंधुसौवीरसौराष्ट्रेयांश्चपार्थिवान् ॥ २८ ॥ दाक्षिणात्यान्नरेंद्रांश्चसमस्तानानयस्वह ॥ संतिस्निग्धाश्चयेचान्येराजानःपृथिवीतले ॥ २९ ॥ तानानययथाक्षिप्रंसामगान्सहबांधवान् ॥ एतान्दूतैर्महाभागैरानयस्वनृपाज्ञया ॥ ३० ॥ वसिष्ठवाक्यं तच्छ्रुत्वासुमंत्रस्त्वरितंतदा ॥ व्यादिशत्पुरुषस्तत्रराज्ञामानयनेशुभान् ॥ ३१ ॥ स्वयमेवहिधर्मात्माप्रयातोमुनिशासनात् ॥ सुमंत्रस्त्वरितोभूत्वास मानेतुंमहामतिः ॥ ३२ ॥ तेचकर्मांतिकाःसर्वेवसिष्ठायमहर्षये ॥ सर्वंनिवेदयंतिस्मयज्ञेयदुपकल्पितम् ॥ ३३ ॥ ततःप्रीतोद्विजश्रेष्ठस्तान्सर्वान्मुनि रब्रवीत् ॥ अवज्ञयानदातव्यंकस्यचिल्लीलयापिवा ॥ ३४ ॥ अवज्ञयाकृतंहन्याद्दातारंनात्रसंशयः ॥ ततःकैश्चिदहोरात्रैरुपयातामहीक्षितः ॥ ३५ ॥ बहू निरत्नान्यादायराज्ञोदशरथस्यह ॥ ततोवसिष्ठःसुप्रीतोराजानमिदमब्रवीत् ॥ ३६ ॥ उपयातानरव्याघ्रराजानस्तवशासनात् ॥ मयापिसत्कृताःसर्वे यथार्हंराजसत्तम ॥ ३७ ॥ यज्ञियंचकृतंसर्वंपुरुषैःसुसमाहितैः ॥ निर्यातुचभवान्यष्टुंयज्ञायतनमंतिकात् ॥ ३८ ॥ सर्वकामैरुपहृतैरुपेतंवैसमंततः ॥ द्रष्टुमर्हसिराजेंद्रमनसैवविनिर्मितम् ॥ ३९ ॥ तथावसिष्ठवचनादृष्यशृंगस्यचोभयोः ॥ दिवसेशुभनक्षत्रेनिर्यातोजगतीपतिः ॥४०॥ ततोवसिष्ठप्रमुखाः सर्वएवद्विजोत्तमाः ॥ ऋष्यशृंगंपुरस्कृत्ययज्ञकर्मारभंस्तदा ॥ ४१ ॥ यज्ञवाटंगताःसर्वेयथाशास्त्रंयथाविधि ॥ श्रीमांश्चसहपत्नीभीराजादीक्षामुपावि शत् ॥४२॥ इत्यार्षेश्रीम० वा० आ० बा० त्रयोदशःसर्गः ॥१३॥ ॥ अथसंवत्सरेपूर्णेतस्मिन्प्राप्तेतुरंगमे ॥ सरय्वाश्चोत्तरेतीरेराज्ञोयज्ञोभ्यवर्तत ॥१॥

मित्यर्थः ॥ ३८ ॥ मनसैवेति । क्षिप्रसिद्धत्वोपकरणसौष्ठवज्ञापनायोत्प्रेक्षेयम् ॥ ३९ ॥ वसिष्ठवचनादिति । अत्र वसिष्ठेति लुप्तविभक्तिकं पृथक्पदम् । वसिष्ठस्य ऋष्यशृंगस्य च प्रत्येकम् उभयोश्च मिलि तयोर्वचनात् ॥ ४० ॥ आरभन्निति च्छांदसम् ॥ ४१ ॥ यज्ञवाटमित्यर्धं पूर्वान्वयि । शास्त्रं कल्पसूत्रादि । विधिस्तदुक्तप्रकारः ॥ ४२ ॥ रैवैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे त्रयोदशः सर्गः ॥ १३ ॥ ॥ छ ॥ अथेति । अश्वोत्सर्गानंतरं वर्षे पूर्णे तस्मिन् अश्वे सदः प्राप्ते सति कर्म प्रावर्ततेत्यर्थः । अत्र

त्रिंशद्दिनात्मकसावनमासपरिच्छिन्नो वत्सरः ॥ १ ॥ ऋष्यशृंगमिति । अनेन प्रधानार्त्विज्यं ब्रह्मत्वं तस्य गम्यते इति कतकः । अग्रे पुत्रेष्टौ इष्टिं तेहं करिष्यामीति ऋष्यशृंगोक्तेर्जुहावाग्नौ च तेजस्वीति ऋष्यशृंगं प्रक्रम्य वाल्मीक्युक्तेश्चाध्वर्यवमस्येति युक्तम् ॥ २ ॥ कर्मेति । वेदपारगाः अधीतस्य वेदस्य पारं फलवदर्थावबोधं गच्छंति प्राप्नुवंति ते याजकाः ऋत्विजः यथाविधि कल्पसूत्रार्थकश्रुत्यनतिक्रमेण । न्यायोत्र तन्निर्वाहिका पूर्वमीमांसा । तं चानतिक्रम्य परिकामंति शास्त्रोक्तस्वस्वाक्रियाक्रमकालमविस्मृत्य प्रवर्तंते ॥ ३ ॥ प्रवर्ग्यम् आरादुपकारकं कर्मविशेषम् । उपसदम् इष्टिविशेषम् । अधिकं प्रकृत्युपदिष्टांगातिदेशात् तत्तद्विकृत्यपेक्षितो विशेषोऽधिकं कर्म ॥ ४ ॥ आभिपूज्येति । तत्तत्कर्मपूज्यदेवतामिति शेषः । प्रातःसवनादिः कर्मविशेषः ॥ ५ ॥ ऐंद्रः इंद्रदेवताको हविर्भागो दत्तः । राजा सोमलता च अभिषुतः ग्रावभिः संक्षुद्य निःसारितसारः ॥ ६ ॥ तृतीयेति । यथेति । अस्य यथाविधीत्यर्थः ॥ ७ ॥

ऋष्यशृंगंपुरस्कृत्यकर्मचक्रुर्द्विजर्षभाः ॥ अश्वमेधेमहायज्ञेराज्ञोस्यसुमहात्मनः ॥ २ ॥ कर्मकुर्वंतिविधिवद्याजकावेदपारगाः ॥ यथाविधियथान्यायपीरिक्रामंतिशास्त्रतः ॥ ३ ॥ प्रवर्ग्यंशास्त्रतःकृत्वातथैवोपसदंद्विजाः ॥ चक्रुश्चविधिवत्सर्वमधिकंकर्मशास्त्रतः ॥ ४ ॥ अभिपूज्यतदाहृष्टाःसर्वेचक्रुर्यथाविधि ॥ प्रातःसवनपूर्वाणिकर्माणिमुनिपुंगवाः ॥ ५ ॥ ऐंद्रश्चविधिवद्दत्तोराजाचाभिषुतोनघः ॥ मध्यंदिनंचसवनंप्रावर्ततयथाक्रमम् ॥ ६ ॥ तृतीयसवनंचैवराज्ञोस्यसुमहात्मनः ॥ चक्रुस्तेशास्त्रतोदृष्ट्वायथाब्राह्मणपुंगवाः ॥ ७ ॥ आह्वयांचक्रिरेतत्रशक्रादीन्विबुधोत्तमान् ॥ ऋष्यशृंगादयोमंत्रैः शिक्षाक्षरसमन्वितैः ॥ ८ ॥ गीतिभिर्मधुरैःस्निग्धैर्मंत्राह्वानैर्यथार्हतः ॥ होतारोददुरावाह्यहविर्भागान्दिवौकसाम् ॥ ९ ॥ नचाहुतमभूत्तत्रस्खलितंवानकिंचन ॥ दृश्यतेब्रह्मवत्सर्वक्षेमयुक्तंहिचक्रिरे ॥ १० ॥ नतेष्वहःसुश्रान्तोवाक्षुधितोवानदृश्यते ॥ नाविद्वान्ब्राह्मणःकश्चिन्नाशतानुचरस्तथा ॥ ११ ॥ ब्राह्मणाभुंजतेनित्यंनाथवंतश्चभुंजते ॥ तापसाभुंजतेचापिश्रमणाश्चैवभुंजते ॥ १२ ॥ वृद्धाश्चव्याधिताश्चैवस्त्रीबालाश्चतथैवच ॥ अनिशंभुंजमानानांनतृप्तिरुपलभ्यते ॥ १३ ॥ दीयतांदीयतामन्नंवासांसिविविधानिच ॥ इतिसंचोदितास्तत्रतथाचक्रुरनेकशः ॥ १४ ॥ अन्नकूटाश्चदृश्यंतेबहवःपर्वतोपमाः ॥ दिवसेदिवसेतत्रसिद्धस्यविधिवत्तदा ॥ १५ ॥

शिक्षाक्षरसमान्वितैः शिक्षा अभ्यासकालः तत्र गृहीतानि अक्षराणि शिक्षाक्षराणि तत्समन्वितैः । स्वरतो वर्णतश्च अहीनैरिति यावत् । ऋष्यशृंगादय इति । अत्रादिशब्दः प्रधानवाची । भीष्मादिश्च सुयोधन इतिवत् ॥ ८ ॥ गीतिभिः सामभिः ॥ ९ ॥ न चेति । अहुतम् अन्यथाहुतम् । स्खलितम् अज्ञानतो न किमपि कर्म त्यक्तम् । ब्रह्मवत मंत्रवत् । क्षेमयुक्तं क्षेमो विघ्नापराधराहित्यम् । यद्वा क्षेमो विघ्नराहित्यम् ॥ १० ॥ नेति । श्रांतः स्वस्वार्त्विज्याशक्तः । अशतानुचरः शतसेवकरहितः ॥ ११ ॥ ब्राह्मणा इति । त्रैवर्णिकोपलक्षणम् । द्विजत्वात् । नाथवंतः दासाः । शूद्रा इति यावत् । तापसाः अदासाः शैवादिमार्गमाश्रिताः शूद्राः । श्रमणाः बौद्धसंन्यासिनः । यद्वा श्रमणपदं संन्यास्युपलक्षणम् ॥ १२ ॥ न तृप्तिरुपलभ्यते भोज्यसौष्ठवात् उदरपूर्तावपि रसातिशयलोभेन मानसी तृप्तिर्नोपलभ्यत इत्यर्थः । यद्वा अनिशं भुंजानेष्वपि जनेषु यजमानस्य तृप्तिरलंबुद्धिर्नासीदित्यर्थः ॥ १३ ॥ १४ ॥ अन्नेति लुप्तषष्ठीकं पृथक्पदम् । तस्य सिद्धस्येति पक्वस्येत्यर्थकं विशेषणम् । विधिवत्सूदशास्त्रोक्तप्रका-

रेण सिद्धस्येत्यन्वयः ॥ १५ ॥ सुविहिताः सुविहिततृप्तिकाः ॥ १६ ॥ अन्नमिति । स्वाद्वन्नम् । भुक्त्वेति शेषः । प्रशंसाकारमाह । अहो तृप्ताः स्म भद्रं त इति । इति प्रशंसां राघवः शुश्रावेत्यन्वयः । य
द्वा विधिवत् स्वादु इत्यपि प्रशंसाकारः ॥ १७ ॥ स्वलंकृता इति । अनेन राजकृतो यज्ञपरिचारकसत्कारो ध्वनितः । तान्परिवेषयितॄन् अन्ये तत्सहायभूताः भोक्तृबाहुल्येन परिवेषणस्य अल्पासाध्यत्वात्
पाकशालातोन्नमापकाः तत्सहायाः । अत एव तस्य रूयसाध्यत्वात्पुरुषकर्तृकत्वम् ॥ १८ ॥ कर्मांतरे इति । एकसवनं समाप्य पुनः सवनांतरारंभकालागमात् पूर्वस्मिन्नंतरालकाले हेतुवादान् हेतूपन्यास
पूर्वकान्वादांश्चक्रुः ॥ १९ ॥ संस्तरे यज्ञे । प्रचोदिताः शास्त्रीयैः व्रीहिभेष्यादिशब्दैः प्रेरिता इत्यर्थः ॥ २० ॥ सदस्या विधिदर्शिनः ॥ २१ ॥ यूपोच्छ्रये यूपोत्क्षेपणप्रैषकाले । तथा खादिराः । तावंतः
षट्संख्याकाः । बिल्वसहिताः एकैकबिल्वयूपसमीपे स्थिताः । परे अन्ये पर्णिनः पालाशा यूपाः । तेपि षडिति तथाशब्दार्थः ॥ २२ ॥ श्लेष्मातको रज्जुदालः । तन्मयः एको यूपः अश्वमेधे दिष्ट

नानादेशादनुप्राप्ताःपुरुषाःस्त्रीगणास्तथा ॥ अन्नपानैःसुविहितास्तस्मिन्यज्ञेमहात्मनः ॥ १६ ॥ अन्नंहिविधिवत्स्वादुप्रशंसंतिद्विजर्षभाः ॥ अहो
तृप्ताःस्मभद्रंतेइतिशुश्रावराघवः ॥ १७ ॥ स्वलंकृताश्चपुरुषाब्राह्मणान्पर्यवेषयन् ॥ उपासंतेचतानन्येसुमृष्टमणिकुंडलाः ॥ १८ ॥ कर्मांतरेतदा
विप्राहेतुवादान्बहूनपि ॥ प्राहुःसुवाग्मिनोधीराःपरस्परजिगीषया ॥ १९ ॥ दिवसेदिवसेतत्रसंस्तरेकुशलाद्विजाः ॥ सर्वकर्माणिचक्रुस्तेयथाशास्त्रंप्रचो
दिताः ॥ २० ॥ नाषडंगविदत्रासीन्नाव्रतोनावहुश्रुतः ॥ सदस्यास्तस्यवैराज्ञोनावादकुशलोद्विजः ॥ २१ ॥ प्राप्तेयूपोच्छ्रयेतस्मिन्षड्बैल्वाःखादि
रास्तथा ॥ तावंतोबिल्वसहिताःपर्णिनश्चतथापरे ॥ २२ ॥ श्लेष्मातकमयोदिष्टोदेवदारुमयस्तथा ॥ द्वावेवतत्रविहितौबाहुव्यस्तपरिग्रहौ ॥ २३ ॥ का
रिताःसर्वएवैतेशास्त्रज्ञैर्यज्ञकोविदैः ॥ शोभार्थंतस्ययज्ञस्यकांचनालंकृताभवन् ॥ २४ ॥ एकविंशतियूपास्तेएकविंशत्यरत्नयः ॥ वासोभिरेकविंशद्भिरे
कैकंसमलंकृताः ॥ २५ ॥ विन्यस्ताविधिवत्सर्वेशिल्पिभिःसुकृतादृढाः ॥ अष्टास्रयःसर्वएवश्लक्ष्णरूपसमन्विताः ॥ २६ ॥ आच्छादितास्तेवासोभिः
पुष्पैर्गंधैश्चपूजिताः ॥ सप्तर्षयोदीप्तिमंतोविराजंतेयथादिवि ॥ २७ ॥ इष्टकाश्चयथान्यायंकारिताश्चप्रमाणतः ॥ चितोग्निर्ब्राह्मणैस्तत्रकुशलैःशिल्पकर्म
णि ॥ २८ ॥ सचित्योराजसिंहस्यसंचितःकुशलैर्द्विजैः ॥ गरुडोरुक्मपक्षोवैत्रिगुणोष्टादशात्मकः ॥ २९ ॥

उपदिष्ट इत्यर्थः । श्लेष्मातकमयोग्निष्ठ इति पाठे अग्निष्ठः अग्न्यभिमुखः तथा देवदारुमयोप्यस्ति यूपः। स च नैको नापि षट् किं तु द्वौ । तौ च व्यस्तबाहुभ्यां प्रसारितभुजाभ्यां तावदायामेन परिग्रहः स्वी
कारो ययोस्तौ । एवं चैकविंशतिरश्वमेधे यूपा इत्युक्तम् । ते च तत्सूत्रश्रुत्योः प्रसिद्धा इत्यन्यत्र विस्तरः ॥ २३ ॥ कांचनालंकृता भवन्निति । अत्र अडभावश्छांदसः । शास्त्रज्ञैः शास्त्रं शिल्पशास्त्रं शुल्व
शास्त्रं च ॥ २४ ॥ महोच्छ्रायपरिणाहो यूपोन्यः सर्वकांचनः । यज्ञे समभवत्तत्र शोभार्थमुपकल्पित इति क्वचित्पाठः । एकेति । अरत्निर्नाम चतुर्विंशत्यंगुलयः ॥ २५ ॥ अष्टास्रय इति । अस्रिः कोणः ।
तक्षणविशेषेण श्लक्ष्णस्पर्शवता स्वरूपेण युक्ताः ॥ २६ ॥ यथा सप्तर्षयो विराजंते तथा यूपा व्यराजंतइत्यर्थः ॥ २७ ॥ इष्टका इति । यथान्यायं यथासूत्रम् अर्धेष्टका मंडलेष्टकादयश्च कारिताः । शुल्व
विद्भिरिति शेषः । अग्निः अग्न्याधारभूतो देशः । स ब्राह्मणैः इष्टकाभिश्चितो बद्ध इत्यर्थः । शुल्वकर्मणीति पाठे शुल्वसूत्रोक्तकर्मणीत्यर्थः ॥ केचित्तु तत्र इष्टकाबद्धे देशे अग्निश्चितः स्थापित इत्यर्थ इत्याहुः
॥ २८ ॥ स चित्यः अग्निः संचितः स्थापितः । कथं संचितः इत्यत्राह । गरुडः गरुडसंस्थानः रुक्मपक्षः सहस्रं हिरण्यशल्कैः प्रतिदिशमग्निं प्रोक्षतीति सूत्राद्रुक्मपक्षत्वमिति केचित् ॥ अत्र पक्षे त्रिगुणो

ष्टादशात्मक इत्यस्य असामंजस्यं मत्वा चितेदेशविशेषणानीमानि । स्वर्णेष्टकाभिः पक्षनिर्माणाद्रुक्मपक्षत्वमित्यन्ये ॥ त्रिगुणः प्रस्तारः । तदेवाह । अष्टादशात्मक इति । षट्चितयो भवंतीति प्रकृतौ बुक्तेरिति भावः ॥ २९ ॥ यथाशास्त्रम् इंद्राय राज्ञे इत्याद्यनुवाकैः प्रतिपादिताः ॥ ३० ॥ शामित्रे मारणविशसनादिकर्मणि ॥ ३१ ॥ नियतं बद्धम् । अश्वरत्नेपूत्तमं श्रेष्ठं नियतमित्यनुकर्षः ॥ ३२ ॥ कौसल्येति । परिचर्य प्रोक्षणादिना संस्कृत्य त्रिभिः कृपाणैः असिभिः एनम् अश्वं विशशास अस्य विशसनं कृतवती । महिष्यश्वासिना कल्पयंतीति सूत्रात् ॥ ३३ ॥ पतत्रिणेति । पुरा अश्वानां पक्षाः संतीति प्रसिद्ध्या एवं वादः । पतत्रिणा गरुडेनेवेत्यर्थ इत्यन्ये । सुस्थितेन स्थिरेण चेतसा उपलक्षिता सती कौसल्या धर्मेच्छया एकां रजनीम् अश्वेन सह अवसत् ॥ ३४ ॥ अथ होत्रादयः महिष्या कृताभिषेकया परिवृत्त्या राज्ञो भोगाद्बहिष्कृतया दास्या च सह वावातां राज्ञो वल्लभां भुजिष्याम् अश्वेन समयोजयन्निति संबंध इति केचित् । अपरे तु वावाताशब्दो राज्ञो मध्यमजातीयद्वितीयभार्यावाची । तदुक्तमैतरेयब्राह्मणभाष्ये तृतीयपंचिकास्थद्वाविंशतिखंडस्थवावातेतिप्रतीकव्याख्यानावसरे—राज्ञां हि त्रिविधाः स्त्रियः उत्तममध्यमाधमजातीयाः । तासां मध्ये उत्तमजातेः

नियुक्तास्तत्रपशवस्तत्तदुद्दिश्यदैवतम् ॥ उरगाःपक्षिणश्चैवयथाशास्त्रंप्रचोदिताः ॥ ३० ॥ शामित्रेतुहयस्तत्रतथाजलचराश्चये ॥ ऋषिभिःसर्वमेवैतन्नियुक्तंशास्त्रतस्तदा ॥ ३१ ॥ पशूनांत्रिशतंतत्रयूपेषुनियतंतदा ॥ अश्वरत्नोत्तमंतत्रराज्ञोदशरथस्यह ॥ ३२ ॥ कौसल्यातंहयंतत्रपरिचर्यसमंततः ॥ कृपाणैर्विशशासैनंत्रिभिःपरमयामुदा ॥ ३३ ॥ पतत्रिणातदासार्धंसुस्थितेनचचेतसा ॥ अवसद्रजनीमेकांकौसल्याधर्मकाम्यया ॥ ३४ ॥ होताऽध्वर्युस्तथोद्गाताहयेनसमयोजयन् ॥ महिष्यापरिवृत्त्याथवावातामपरांतथा ॥ ३५ ॥ पतत्रिणस्तस्यवपामुद्धृत्यनियतेंद्रियः ॥ ऋत्विक्परमसंपन्नःश्रपयामासशास्त्रतः ॥ ३६ ॥ धूमगंधंवपायास्तुजिघ्रतिस्मनराधिपः ॥ यथाकालंयथान्यायंनिर्णुदन्पापमात्मनः ॥ ३७ ॥ हयस्ययानिचांगानितानिसर्वाणिब्राह्मणाः ॥ अग्नौप्रास्यंतिविधिवत्समस्ताःषोडशर्त्विजः ॥ ३८ ॥ प्लक्षशाखासुयज्ञानामन्येषांक्रियतेहविः ॥ अश्वमेधस्ययज्ञस्यवैतसोभागइष्यते ॥ ३९ ॥ त्र्यहोऽश्वमेधःसंख्यातःकल्पसूत्रेणब्राह्मणैः ॥ चतुष्टोममहस्तस्यप्रथमंपरिकल्पितम् ॥ ४० ॥ उक्थ्यंद्वितीयंसंख्यातमतिरात्रंतथोत्तरम् ॥ कारितास्तत्रबहवोविहिताःशास्त्रदर्शनात् ॥ ४१ ॥ ज्योतिष्टोमायुषीचैवमतिरात्रौचनिर्मितौ ॥ अभिजिद्विश्वजिच्चैवमाप्तोर्यामोमहाक्रतुः ॥ ४२ ॥ प्राचींहोत्रेददौराजादिशंस्वकुलवर्धनः ॥ अर्ध्वयवेतीचींतुब्रह्मणेदक्षिणांदिशम् ॥ ४३ ॥

क्षत्रियायाः महिषीति नाम । मध्यमजातेर्वैश्यायाः वावातेति । अधमजातेः शूद्रायाः परिवृत्तिरिति । अत एवाश्वलायनसूत्रे दशमाध्यायेऽष्टमखंडस्थवावातेति प्रतीकं गृहीत्वा द्वितीया भार्येति व्याख्यातं नारायणवृत्तिकृता ॥ ३५ ॥ वपां चंद्राख्यं मेदः । चंद्रं नाम मेदोस्ति तदुद्धरति नास्य वपा विद्यते इति सूत्रात् । परमेण श्रौतप्रयोगचातुर्येण संपन्नो युक्तः ॥ ३६ ॥ नराधिपो दशरथः ॥ ३७ ॥ हयस्येति । सर्वाणि ब्राह्मणा इति । अत्र गुरोरपि लघूच्चारणतया लघुकार्यकरत्वस्य छंदःशास्त्रे उक्तत्वान्न छंदोभंगः ॥ ३८ ॥ प्लक्षेति । अन्येषाम् अश्वमेधातिरिक्तयज्ञानां पाशुकं हविः प्लक्षशाखासु निधाय अवधीयते । अश्वमेधे प्रधानस्य पशोरश्वस्य हविर्भागो वैतसे कटे निधाय अवदातव्यः इष्यते ॥ ३९ ॥ त्र्यह इति । अश्वमेधस्य त्रीणि सवनीयान्यहानि इति कल्पसूत्रेण तन्मूलब्राह्मणैश्च अश्वमेधस्त्र्यहः संख्यातः उक्तः । सवनीयाह्नां प्राधान्यात् । तानि त्र्यहोरात्राणि गणयति । चतुष्टोमशब्देन अग्निष्टोमः । उत्तरं तृतीयम् । शास्त्रदर्शनाद्विहिताः बहवः क्रतवः प्रधानाः तत्र कारिताः ॥ ४० ॥ ४१ ॥ ज्योतिरित्यादि । आयुरायुष्टोमः। अतिरात्राविति द्विवचनात् अतिरात्रस्य द्विः प्रयोगः यथा आप्तोर्यामाविति । महाक्रतुरिति । जातावेकवचनम् । एते महाक्रतव इत्यर्थः ॥ ४२ ॥ ४३ ॥

विनिर्मिताकल्पेषु विहिता । स्वयंभूविहिते । प्रजापतिरश्वमेधमसृजतेति श्रुतेः ॥४४॥ क्रतुमिति । धरां चतुर्दिगवच्छिन्नाम्॥४५॥४६॥भवानिति । भोगैकप्रयोजनत्वाद्भूमेः तया अस्माकं न किंचित्प्रयोजनम्। नापि चोरादिभ्यो रक्षणे वयं शक्ताः ॥ ४७ ॥ तत्र हेतुमाह । रता इति । स्वाध्यायो वेदाध्ययनम् । तेन दंडादावस्माकमधिकारोपि नेति ध्वनितम् । भूमिपेति । अनेन तवैवैषा योग्येति त्वमेव निष्क्रयेण पुनरिमां गृहाणेति सूचितम् । तदाह । निष्क्रयमिति । मूल्यमित्यर्थः ॥ ननु भुवो मूल्यं दातुमशक्यम्–अतः–किंचिदेवेति ॥ ४८ ॥ किंचित्पदार्थानाह । मणिरत्नम् अनर्घ्यरत्नम् । तस्यापि राजार्हत्वादाह । सुवर्णमिति । यद्वा समुद्यतम् उपस्थितं यत्किंचिदेव भवच्छक्यमित्यर्थः ॥ ४९ ॥ दशशतसहस्राणि दशलक्षमिति यावत् ॥ ५० ॥ सुवर्णं षोडशमाषकम् ।

उद्गात्रेतुतथोदीचींदक्षिणैषाविनिर्मिता ॥ अश्वमेधेमहायज्ञेस्वयंभूविहितेपुरा ॥ ४४ ॥ क्रतुंसमाप्यतुतदान्यायतःपुरुषर्षभः ॥ ऋत्विग्भ्योहिददौ राजाधरांतांकुलवर्धनः ॥ ४५ ॥ एवंदत्त्वाप्रहृष्टोभूच्छ्रीमानिक्ष्वाकुनंदनः ॥ ऋत्विजस्त्वब्रुवन्सर्वेराजानंगतकिल्बिषम् ॥ ४६ ॥ भवानेवमहीं कृत्स्नामेकोरक्षितुमर्हति ॥ नभूम्याकार्यमस्माकंनहिशक्ताःस्मपालने ॥ ४७ ॥ रताःस्वाध्यायकरणेवयंनित्यंहिभूमिप ॥ निष्क्रयंकिंचिदेवेहप्रय च्छतुभवानिति ॥ ४८ ॥ मणिरत्नंसुवर्णंवागावोयद्वासमुद्यतम् ॥ तत्प्रयच्छनृपश्रेष्ठधरण्यानप्रयोजनम् ॥ ४९ ॥ एवमुक्तोनरपतिर्ब्राह्मणैर्वेदपारगैः ॥ गवांशतसहस्राणिदशतेभ्योददौनृपः ॥ ५० ॥ दशकोटिंसुवर्णस्यरजतस्यचतुर्गुणम् ॥ ऋत्विजस्तुततःसर्वेप्रददुःसहितावसु ॥ ५१ ॥ ऋष्यशृं गायमुनयेवसिष्ठायचधीमते ॥ ततस्तेन्यायतःकृत्वाप्रविभागंद्विजोत्तमाः ॥ ५२ ॥ सुप्रीतमनसःसर्वेप्रत्यूचुर्मुदिताभृशम् ॥ ततःप्रसर्पकेभ्यस्तुहिरण्यं सुसमाहितः ॥ ५३ ॥ जांबूनदंकोटिसंख्यंब्राह्मणेभ्योददौतदा ॥ दरिद्रायद्विजायाथहस्ताभरणमुत्तमम् ॥ ५४ ॥ कस्मैचिद्याचमानायददौराघवनंदनः॥ ततःप्रीतेषुविधिवद्द्विजेषुद्विजवत्सलः ॥ ५५ ॥ प्रणाममकरोत्तेषांहर्षव्याकुलितेंद्रियः ॥ तस्याशिषोथविविधाब्राह्मणैःसमुदाहृताः ॥ ५६ ॥ उदारस्यनृवीरस्यधरण्यांपतितस्यच ॥ ततःप्रीतमनाराजाप्राप्ययज्ञमनुत्तमम् ॥ ५७ ॥ पापापहंस्वर्नयनंदुस्तरंपार्थिवर्षभैः ॥ ततोब्रवीदृष्यशृंगं राजादशरथस्तदा ॥५८॥ कुलस्यवर्धनंतत्तुकर्तुमर्हसिसुव्रत । तथेतिचसराजानमुवाचद्विजसत्तमः॥५९॥भविष्यंतिसुताराजंश्चत्वारस्तेकुलोद्वहाः॥६०॥

चतुर्गुणं चत्वारिंशत्कोटिम् । ततः सर्वे ऋत्विजः सहिताः दक्षिणामाप्तं सर्वं वसु धनमंगीकृत्य विभागाय ऋष्यशृंगवसिष्ठाभ्यां प्रददुः तस्य पुरो न्यस्तवंतः ॥ ५१ ॥ तदाह । ऋष्येति । प्रविभागं कृत्वा वसिष्ठादिद्वारा विभज्य गृहीत्वेत्यर्थः ॥ ५२ ॥ सुप्रीतेति । संतुष्टाः संतः अत्यंतं मुदिताः स्म इत्यूचुः । राजानमिति शेषः । प्रसर्पकेभ्यः अभ्यागतेभ्यः ॥ ५३ ॥ जांबूनदं जंबूनदीप्रभवं सुवर्णम् । कोटिशब्दोऽनंतवाची । अथ सर्वदक्षिणादानानंतरं याचमानाय दरिद्राय कस्मैचिद्दातव्यवस्त्वंतराभावात् हस्ताभरणमेव ददौ ॥ ५४ ॥ ततः तेन हस्ताभरणदानेने त्यर्थः ॥ ५५ ॥ विविधाः आशिषः आब्रह्मन्नायुष्मंतम इत्याद्याः ॥ ५६॥५७॥ स्वर्नयनं स्वर्गप्रापकम् । दुस्तरं प्राकृतैः राजभिः अप्राप्तसमाप्तिकम् ॥ ५८ ॥ कुलस्य वर्धनं तादृशं कर्म ॥५९॥६०॥

पुनरप्युवाच पुत्रजननकर्मणे पुनरपि मेरयामासेत्यर्थः । यद्यपि पुत्रकामेष्ट्यैव पुत्रावाप्तिः संभवति । तथापि तपोरतस्य वैश्यस्य श्रावणस्य वधे तद्वियोगातुरतपोरततन्मातापितृमरणेन च ब्रह्मवधसमपापोत्पत्त्या तत्मायश्चित्तत्वेनाश्वमेधानुष्ठानं बोध्यम् ॥ ६१ ॥ यांचमानः ॥ ॥ इति श्रीरामा० श्रीरा० रा० वा० आ० वा० चतुर्दशः सर्गः ॥ १४ ॥ ॥ ॥ मेधावीति । मेधावी अशेषवेदशाखाधारणयोग्यबुद्धिमान् वेदज्ञः स्वरूपतोर्थतश्च वेदतत्त्ववित् स ऋष्यशृंगः प्रतिश्रुतार्थनिर्वाहाय किं कर्तव्यमिति निश्चेतुं किंचित्कालं ध्यात्वा समाधिं कृत्वा इदमुत्तरम् इदमिह उत्तरानुष्ठेयकृत्यमिति निश्चित्य पश्चाल्लब्धसंज्ञः समाध्युत्थितः तं नृपमब्रवीत् ॥ १ ॥ किमब्रवीत्तदाह । इष्टिमिति । पुत्रीयां पुत्रप्राप्तिकारणभूतां पुत्रकारणात् पुत्रप्राप्तिहेतोः अथर्ववेदप्रोक्तैर्मंत्रैः विधानतः कल्पसूत्रतः सिद्धां नियतफलत्वेन प्रसिद्धामिष्टिम् करिष्यामीति । उक्त्वेति शेषः ॥ २ ॥ तत इति । मंत्रदृष्टेन मंत्रपूर्वकतया कल्पसूत्रे दृष्टेन ॥ ३ ॥ तत इति । तत्रेत्यर्थः ॥ ४ ॥ ता इति ।

सतस्यवाक्यंमधुरंनिशम्यप्रणम्यतस्मैप्रयतोनृपेंद्रः ॥ जगामहर्षंपरमंमहात्मातमृष्यशृंगंपुनरप्युवाच ॥६१॥ इति श्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये वालकांडे चतुर्दशः सर्गः ॥ १४ ॥ ॥ मेधावीतुततोध्यात्वासकिंचिदिदमुत्तरम् ॥ लब्धसंज्ञस्ततस्तंतुवेदज्ञोनृपमब्रवीत् ॥ १ ॥ इष्टिंतेऽहंकरिष्यामिपुत्रीयांपुत्रकारणात् ॥ अथर्वशिरसिप्रोक्तैर्मंत्रैःसिद्धांविधानतः ॥ २ ॥ ततःप्राक्रमदिष्टिंतांपुत्रीयांपुत्रकारणात् ॥ जुहावाग्नौचतेजस्वीमंत्रदृष्टेनकर्मणा ॥ ३ ॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ भागप्रतिग्रहार्थंवैसमवेतायथाविधि ॥ ४ ॥ ताःसमेत्ययथान्यायंतस्मिन्सदसिदेवताः ॥ अब्रुवल्लोककर्तारंब्रह्माणंवचनंततः ॥ ५ ॥ भगवंस्त्वत्प्रसादेनरावणोनामराक्षसः ॥ सर्वान्नोबाधतेवीर्याच्छासितुंतंनशक्नुमः ॥ ६ ॥ त्वयातस्मैवरोदत्तःप्रीतेनभगवंस्तदा ॥ मानयंतश्चतंनित्यंसर्वंतस्यक्षमामहे ॥ ७ ॥ उद्वेजयतिलोकांस्त्रीनुच्छ्रितान्द्वेष्टिदुर्मतिः ॥ शक्रंत्रिदशराजानंप्रधर्षयितुमिच्छति ॥ ८ ॥ ऋषीन्यक्षान्सगंधर्वान्ब्राह्मणानसुरांस्तदा ॥ अतिक्रामतिदुर्धर्षोवरदानेनमोहितः ॥ ९ ॥ नैनंसूर्यःप्रतपतिपार्श्वेवातिनमारुतः ॥ चलोर्मिमालीतंदृष्ट्वासमुद्रोपिनकंपते ॥ १० ॥ तन्महन्नोभयंतस्माद्राक्षसाद्घोरदर्शनात् ॥ वधार्थंतस्यभगवन्नुपायंकर्तुमर्हसि ॥ ११ ॥ एवमुक्तःसुरैःसर्वैश्चिंतयित्वाततोब्रवीत् ॥ हंतायंविदितस्तस्यवधोपायोदुरात्मनः ॥ १२ ॥ तेनगंधर्वयक्षाणांदेवतानांचरक्षसाम् ॥ अवध्योऽस्मीतिवागुक्तातथेत्युक्तंचतन्मया ॥ १३ ॥ नाकीर्तयदवज्ञानात्तद्रक्षोमानुषांस्तदा ॥ तस्मात्समानुषाद्वध्योमृत्युर्नान्योस्यविद्यते ॥ १४ ॥ एतच्छ्रुत्वाप्रियंवाक्यंब्रह्मणासमुदाहृतम् ॥ देवामहर्षयःसर्वेप्रहृष्टास्तेऽभवंस्तदा ॥ १५ ॥

समेत्य । अंतर्धानशक्त्या इतरानवलोकमिति शेषः ॥ ५ ॥ ६ ॥ कुतस्तस्य युष्मद्बाधनक्षमवीर्यलाभ इत्यत आह । त्वयेति । मानयंतः सर्वदेवतावध्यत्वरूपत्वद्दत्तवरं परिपालयंत इत्यर्थः ॥ ७ ॥ उच्छ्रितान्संपत्त्यादिभिरधिकान् । त्रिदशराजानमिति । समासांतोऽनित्यत्वान्न कृतः । प्रधर्षयितुमिच्छतीत्युक्तेरेतदुत्तरकालमिंद्रजित्कृत इंद्रबंध इति ज्ञायते ॥ ८ ॥ असुरान् राहुप्रमुखान् ॥ ९ ॥ प्रतपति प्रतापयतीत्यर्थः । क्रौर्यातिशयद्योतकम् । एतज्जातीयं न वाति नाधिकं वाति । चंचलोर्मिमालास्वभावोपि न कंपते इति विरोधालंकारः ॥१०॥ तत्तस्मात्कारणात् तस्मात् उक्तगुणविशिष्टात् ॥ ११ ॥ एवमिति । भगवान्ब्रह्मेति शेषः । हंतेति । अनुकंपायाम् ॥ १२ ॥ तेनेति । तत्तथास्त्वित्युक्तमिति योजना ॥ १३ ॥ नेति । तदा वरणसमये । मृत्युः मृत्युजनकः ॥ १४ ॥ १५ ॥

एतस्मिन्नंतरे सर्वदेवतासंतोषकाले । विष्णुः सदा भूभारोद्धारादिकर्ता ॥१६॥ वैनतेयो गरुडः । केयूरं बाहुभूषणम् ॥१७॥ब्रह्मणा चेति । वंद्यमान इत्यनुकृष्यते । समागत्येति । सब्रह्मभिर्देवैः । मिलि त्वा । समाहितो देवकार्यतत्परः । तमभिष्टूय सम्यक् स्तुत्वा । सन्नताः प्रणताः ॥ १८॥ त्वामिति । अस्मद्दुःखहरणस्य त्वदेकसाध्यत्वात् अवतर्तुं नियोक्ष्यामहे । तदेवाह । राज्ञ इत्यादिना ॥ १९ ॥ धर्मज्ञस्येत्यादिराजविशेषणानि ह्रीश्रीत्यादि राजपत्नीविशेषणं च अवतारयोग्यताध्वननाय ॥ २० ॥ आत्मानं सोपकरणमात्मानम् । अन्येद्युः पांचजन्यात्मा कैकेय्यां भरतोभवत् । तदन्येद्युः सुमित्रायामनंतात्मा च लक्ष्मणः । सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत्प्रिये इति पाद्मोक्तेः । अत्रात्मानमित्युक्त्या शंखचक्रानंतानामपि भगवद्रूपता सूचिता । हुंकारेण भवानिव पांचजन्यः

एतस्मिन्नंतरेविष्णुरुपयातोमहाद्युतिः ॥ शंखचक्रगदापाणिःपीतवासाजगत्पतिः ॥ १६ ॥ वैनतेयंसमारुह्यभास्करस्तोयदंयथा ॥ तप्तहाटककेयूरोवंद्यमानःसुरोत्तमैः ॥ १७ ॥ ब्रह्मणाचसमागत्यतत्रतस्थौसमाहितः ॥ तमब्रुवन्सुराःसर्वेतमभिष्टूयसन्नताः ॥ १८ ॥ त्वांनियोक्ष्यामहेविष्णोलोकानांहितकाम्यया ॥ राज्ञोदशरथस्यत्वमयोध्याधिपतेर्विभो ॥ १९ ॥ धर्मज्ञस्यवदान्यस्यमहर्षिसमतेजसः ॥ अस्यभार्यासुतिसृषुह्रीश्रीकीर्त्युपमासुच ॥ २० ॥ विष्णोपुत्रत्वमागच्छकृत्वात्मानंचतुर्विधम् ॥ तत्रत्वंमानुषोभूत्वाप्रवृद्धंलोककंटकम् ॥ २१ ॥ अवध्यंदैवतैर्विष्णोसमरेजहिरावणम् ॥ सहिदेवान्सगंधर्वान्सिद्धांश्चऋषिसत्तमान् ॥ २२ ॥ राक्षसोरावणोमूर्खोवीर्योद्रेकेणबाधते ॥ ऋषयश्चततस्तेनगंधर्वाप्सरसस्तथा ॥ २३ ॥ क्रीडंतोनंदनवनेरौद्रेणविनिपातिताः ॥ वधार्थंवयमायातास्तस्यवैमुनिभिःसह ॥ २४ ॥ सिद्धगंधर्वयक्षाश्चततस्त्वांशरणंगताः ॥ त्वंगतिःपरमादेवसर्वेषांनःपरंतप ॥ २५ ॥ वधायदेवशत्रूणांनृणांलोकेमनःकुरु ॥ एवंस्तुतस्तुदेवेशोविष्णुस्त्रिदशपुंगवः ॥ २६ ॥ पितामहपुरोगांस्तान्सर्वलोकनमस्कृतः ॥ अब्रवीत्त्रिदशान्सर्वान्समेतान्धर्मसंहितान् ॥ २७ ॥ भयंत्यजतभद्रंवोहितार्थंयुधिरावणम् ॥ सपुत्रपौत्रंसामात्यंसमंत्रिज्ञातिबांधवम् ॥ २८ ॥ हत्वाक्रूरंदुराधर्षंदेवर्षीणांभयावहम् ॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ २९ ॥ वत्स्यामिमानुषेलोकेपालयन्पृथिवीमिमाम् ॥ एवंदत्त्वावरंदेवोदेवानांविष्णुरात्मवान् ॥ ३० ॥ मनुष्येचिंतयामासजन्मभूमिमथात्मनः ॥ ततःपद्मपलाशाक्षःकृत्वात्मानंचतुर्विधम् ॥ ३१ ॥ पितरंरोचयामासतदादशरथंनृपम् ॥ ततोदेवर्षिगंधर्वाःसरुद्राःसाप्सरोगणाः ॥ स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ ३२ ॥ तमुद्धतंरावणमुग्रतेजसंप्रवृद्धदर्पंत्रिदशेश्वरद्विषम् ॥ विरावणंसाधुतपस्विकंटकंतपस्विनामुद्धरतंभयावहम् ॥ ३३ ॥

शब्दमात्रेण सकलभुवनक्षोभकत्वाद्विष्णुतुल्य एवेति बोध्यम् । चतुर्विधमिति । चातुर्विध्यविधानं रावणेंद्रजिल्लवणगंधर्ववधादीनां प्रत्येकं देवकार्यरूपाणां सद्भावात् ॥ २१ ॥ कुतो ममैव नियोगस्तत्राह । अवध्यमिति ॥ २२ ॥ २३ ॥ रौद्रेण कृत्याकृत्यविचारशून्येन । वधार्थं वधप्रार्थनार्थम् ॥ २४ ॥ २५ ॥ वधायेति । नृणां लोके इति । अस्य अवतरितुमिति शेषः ॥ २६ ॥ धर्मसंहितान् धर्मसहितानित्यर्थः । धर्मसंहितमिति वा पाठः ॥ २७ ॥ २८ ॥ हत्वेति । हत्वा वत्स्यामीति योजना ॥ २९ ॥ ३० ॥ मानुष्ये इति । मनुष्यलोके यथा देवैराज्ञप्तं तथा आत्मनो जन्म भूमिं चिंतयामास योग्यत्वेन विचारयामास । ततः विचारानंतरम् ॥ ३१ ॥ रोचयामास ऐच्छत् । स्तुतिभिस्तुष्टुवुः ॥३२ ॥ स्तुत्वा च यदूचुस्तदाह । तामिति । रावणम् उद्धर समूलमुन्मूलय । विरा

वर्णं विशेषेण त्रिलोकीक्रंदनं तपस्विनां भयावहमित्यन्वयः । रावणस्मरणेनातिभीतचित्तानां देवानामुक्तौ तमित्यस्य पुनरुक्तिर्न दोषाय । अत्र इंद्रादिदेवानां सपितामहानां नियोजकत्वं विभोश्च नियोज्यत्वं न दोषः । लीलात्वादित्यन्यत्र विस्तरः ॥२३॥ तमिति । तं हत्वैवेत्यन्वयः । सबांधवमिति । अनेन लवणादिवधसूचनम् । हे सुरेंद्र उपेंद्र गुप्तम् । अर्थात्त्वयेति शेषः । गतदोषकल्मषं दोषा रागादयः तद्रूपकल्मषहीनं स्वलोकं वैकुंठाख्यं गतज्वरः स्वभावतो निवृत्ताशेषतापः ॥ २४ ॥ वैलमानः ॥ ॥ इति श्रीरामाभि० श्रीरा० रा० वा० आ० बा० पंचदशः सर्गः ॥ १५ ॥ ॥ छ ॥ तत इति । नियुक्तः प्रार्थितः । यद्वा आज्ञप्त इत्यर्थः । अत एव जानन्नपि वधोपायमज्ञ इव तेषामविनीतत्वलज्जापरिहाराय तान्पप्रच्छेत्यर्थः । जानन्वधोपायमिति शेषः ॥ १ ॥ उपाय इति । यमुपायमास्थाय तमहं निहन्यां स तस्य वधे उपायः क इत्यन्वयः ॥ २ ॥ ३ ॥ स हीति । लोकपूर्वजः । सर्वलोकसमाष्टित्वात् । हिरण्यगर्भः समवर्तताग्रे इति श्रुतेश्च । यद्वा ब्रह्मा चतुर्मुखः । लोकपूर्वजत्वं च

तमेवहत्वासबलंसबांधवंविरावणंरावणमुग्रपौरुषम् ॥ स्वर्लोकमागच्छगतज्वरश्चिरंसुरेंद्रगुप्तंगतदोषकल्मषम् ॥ २४ ॥ इत्यार्षे श्रीम० वा० आ० बा० पंचदशःसर्गः ॥ १५ ॥ ॥ ततोनारायणोविष्णुर्नियुक्तःसुरसत्तमैः ॥ जानन्नपिसुरानेवंश्लक्ष्णंवचनमब्रवीत् ॥ १ ॥ उपायःकोवधेतस्यराक्षसाधिपतेःसुराः ॥ यमहंतंसमास्थायनिहन्यामृषिकंटकम् ॥ २ ॥ एवमुक्ताःसुराःसर्वेप्रत्यूचुर्विष्णुमव्ययम् ॥ मानुषंरूपमास्थायरावणंजहिसंयुगे ॥ ३ ॥ सहितेपतपस्तीव्रंदीर्घकालमरिंदमः ॥ येनतुष्टोभवद्ब्रह्मालोककृल्लोकपूर्वजः ॥ ४ ॥ संतुष्टःप्रददौतस्मैराक्षसायवरंविभुः ॥ नानाविधेभ्योभूतेभ्योभयंनान्यत्रमानुषात् ॥ ५ ॥ अवज्ञाताःपुरातेनवरदानेहिमानवाः ॥ एवंपितामहात्तस्माद्वरदानेनगर्वितः ॥ ६ ॥ उत्सादयतिलोकांस्त्रीन्स्त्रियश्चाप्युपकर्षति ॥ तस्मात्तस्यवधोदृष्टोमानुषेभ्यःपरंतप ॥ ७ ॥ इत्येतद्वचनंश्रुत्वासुराणांविष्णुरात्मवान् ॥ पितरंरोचयामासतदादशरथंनृपम् ॥ ८ ॥ सचाप्यपुत्रोनृपतिस्तस्मिन्कालेमहाद्युतिः ॥ अयजत्पुत्रियामिष्टिंपुत्रेप्सुररिसूदनः ॥ ९ ॥ सकृत्वानिश्चयंविष्णुरामंत्र्यचपितामहम् ॥ अंतर्धानंगतोदेवैःपूज्यमानोमहर्षिभिः ॥ १० ॥ ततोवैयजमानस्यपावकादतुलप्रभम् ॥ प्रादुर्भूतंमहद्भूतंमहावीर्यंमहाबलम् ॥ ११ ॥ कृष्णंरक्तांबरधरंरक्तास्यंदुंदुभिस्वनम् ॥ स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२ ॥ शुभलक्षणसंपन्नंदिव्याभरणभूषितम् ॥ शैलशृंगसमुत्सेधंदृप्तशार्दूलविक्रमम् ॥ १३ ॥

हिरण्यगर्भतादात्म्याध्यासेन ॥ ४ ॥ संतुष्ट इति । मानुषभिन्नेभ्यः प्राणिमात्रेभ्यो भयं न भवेदिति वरं ददावित्यन्वयः ॥ ५ ॥ ६ ॥ दृष्टः निश्चितः ॥ ७ ॥ ८ ॥ स चापीति । दशरथोपीत्यर्थः । तस्मिन्काले भगवदवतितीर्षाकाले । पुत्रियामिति । ह्रस्वश्छांदसः ॥ ९ ॥ स इति । निश्चयम् अवतारविषयम् । आमंत्र्य साधयामीत्युक्त्वेत्यर्थः । अंतर्धानं गत इति । तस्मादेव समाजादिति शेषः ॥ १० ॥ तत इति । अंतर्धानानंतरमित्यर्थः । अंतर्धाय भगवानेव स्वतेजः संभृतपायसमादाय हुताग्नेः सकाशात्प्रादुर्भवति स्म । न ह्यन्यस्य भगवत्तेजोधारणे शक्तिरस्ति । तदेवाह । महद्भूतमिति । एको विष्णुर्महद्भूतमित्युक्तेः । अतुलप्रभं विद्युदादिवत् दृष्टिप्रतिघातकतेजोवत् । भूतं प्राणी ॥ ११ ॥ कृष्णं कृष्णवर्णम् । स्निग्धाश्चिक्कणाः हर्यक्षस्य सिंहस्येव तनुजाः लोमानि श्मश्रुप्रवराः मूर्द्धजाः केशाश्च यस्य तत् । मुखस्थरोमाणि श्मश्रुप्रवरो मुखस्थं व्याप्तं रोम ॥ १२ ॥ समुत्सेधः उच्छ्रायः । दृप्तशार्दूलवत् विक्रमः पादविन्यासो यस्य तत् ॥ १३ ॥

दिवाकरेति । तद्वत्प्रभामंडलव्याप्तम् । तैक्ष्ण्ये दृष्टांतः-दीप्तानलेत्यादि । तप्तेति । राजतो रजतविकारः अंतपरिच्छदः पिधानपात्रं यस्याः ताम् ॥ १४ ॥ पात्रीमिति । लिंगसामान्यादुत्प्रेक्षते । पत्नीमिवेति । प्रगृह्येति । स्वयं दोर्भ्यां प्रगृह्य प्रादुर्भूतमित्यन्वयः । मायामयीमिव । इवशब्द एवार्थे । भगवतो मायैवेत्यर्थः ॥ १५ ॥ दशरथं समवेक्ष्येत्यन्वयः । प्राजापत्यं प्रजापतिना प्रेषितम् । प्रजापतेः प्रजापालकाद्विष्णोः संभूतं तद्रूपमित्यर्थः ॥ १६ ॥ ततः परं प्राजापत्यं मां विद्धीति तदुक्त्यनंतरं पूर्वं कृत्यात इव भीत एव तद्वचनश्रवणोत्तरं निर्भयः उवाचेत्यर्थः ॥ १७ ॥ देवानर्चयता । हयमेधेनेति शेषः ॥ १८ ॥ देवनिर्मितं देवेन प्रजापतिना निर्मितम् । धन्यं प्रशस्तम् ॥ १९ ॥ भार्याणाम् । संबंधसामान्ये षष्ठी । भार्याभ्य इत्यर्थः । आनुरूप्यं महिषीत्वयशःशीलगुणादिना ॥ २० ॥ हिरण्मयीं हिरण्यविकाराम् ॥ २१ ॥ मुदेति । अभिप्रदक्षिणं पुनःपुनः प्रदक्षिणम् ॥ २२ ॥ वित्तं धनम् ॥ २३ ॥ अद्भुतप्रख्यम् अद्भुताकारम् । संवर्तयित्वा समाप्य । कर्म पायसदानरूपम् ।

दिवाकरसमाकारंदीप्तानलशिखोपमम् ॥ तप्तजांबूनदमयींराजतांतपरिच्छदाम् ॥ १४॥ दिव्यपायससंपूर्णांपात्रींपत्नीमिवप्रियाम् ॥ प्रगृह्यविपुलांदोर्भ्यां स्वयंमायामयीमिव ॥ १५ ॥ समवेक्ष्याब्रवीद्वाक्यमिदंदशरथंनृपम् ॥ प्राजापत्यंनरंविद्धिमामिहाभ्यागतंनृप ॥ १६ ॥ ततःपरंतदाराजाप्रत्युवाचकृतांजलिः ॥ भगवन्स्वागतंतेस्तुकिमहंकरवाणिते ॥ १७ ॥ अथोपुनरिदंवाक्यंप्राजापत्योनरोब्रवीत् ॥ राजन्नर्चयतादेवानद्यप्राप्तमिदंत्वया ॥ १८ ॥ इदंतुनृपशार्दूलपायसंदेवनिर्मितम् ॥ प्रजाकरंगृहाणत्वंधन्यमारोग्यवर्धनम् ॥ १९ ॥ भार्याणामनुरूपाणामश्नीतेतिप्रयच्छवै ॥ तासुत्वंलप्स्यसेपुत्रान्यदर्थंयजसेनृप ॥ २० ॥ तथेतिनृपतिःप्रीतःशिरसाप्रतिगृह्यताम् ॥ पात्रींदेवान्नसंपूर्णांदेवदत्तांहिरण्मयीम् ॥ २१ ॥ अभिवाद्यचतद्भूतमद्भुतंप्रियदर्शनम् ॥ मुदापरमयायुक्तश्चकाराभिप्रदक्षिणम् ॥ २२ ॥ ततोदशरथःप्राप्यपायसंदेवनिर्मितम् ॥ बभूवपरमप्रीतःप्राप्यवित्तमिवाधनः ॥ २३ ॥ ततस्तदद्भुतप्रख्यंभूतंपरमभास्वरम् ॥ संवर्तयित्वातत्कर्मतत्रैवांतरधीयत ॥ २४ ॥ हर्षरश्मिभिरुद्द्योतंतस्यांतःपुरमाबभौ ॥ शारदस्याभिरामस्यचंद्रस्येवनभोंशुभिः ॥ २५ ॥ सोंतःपुरंप्रविश्यैवकौसल्यामिदमब्रवीत् ॥ पायसंप्रतिगृह्णीष्वपुत्रीयंत्विदमात्मनः ॥ २६ ॥ कौसल्यायैनरपतिःपायसार्धंददौतदा ॥ अर्धादर्धंददौचापिसुमित्रायैनराधिपः ॥ २७ ॥ कैकेय्यैचावशिष्टार्धंददौपुत्रार्थकारणात् ॥ प्रददौचावशिष्टार्धंपायसस्यामृतोपमम् ॥ २८ ॥ अनुचिंत्यसुमित्रायैपुनरेवमहामतिः ॥ एवंतासांददौराजाभार्याणांपायसंपृथक् ॥ २९ ॥

तत्रैव अग्निकुंड एव ॥ २४ ॥ हर्षरश्मिभिःहर्षोद्भूतमुखकांतिभिः उद्योतं द्योतमानम् अंतःपुरं तद्वर्तिस्त्रीजातं शारदचंद्रस्य अंशभिर्नभ इवेत्यन्वयः ॥ २५ ॥ २६ ॥ कौसल्यायै इति । अर्धशब्दोत्र समभागवाची । अर्धादर्धं तुरीयांशमित्यर्थः ॥ अवशिष्टार्धम् अवशिष्टस्य चतुर्थांशस्य अर्धम् अष्टमांशमित्यर्थः । पुनरवशिष्टार्धम् अष्टमांशम् ॥ अनुचिंत्येति । कैकेय्यपेक्षया ज्येष्ठत्वं कौसल्यापेक्षया कनिष्ठत्वं च सुमित्रायाः विचार्य पादोनांशार्धदानम् । तस्यै कनिष्ठत्वाच्च कैकेय्यै अष्टमांशदानम् । वल्लभायां संभोगकर्माणि पक्षपातो न धर्मविभागकर्माणि । एवं च भरतशत्रुघ्नौ पादस्यार्धमर्धमित्याहुः ॥ अपरे तु रामभरतौ प्रत्येकं त्र्यंशौ लक्ष्मणशत्रुघ्नौ च अष्टमांशौ । तथाहि । कौसल्यायै दत्तार्धस्य अर्धादर्धं चतुर्थांशरूपं सुमित्रायै दत्तवान् । कौसल्यया दापितवानित्यर्थः। एवं कैकेय्यै कौसल्यादत्तार्धावशिष्टमर्धं ददौ । ततः कौसल्यादत्तावशिष्टस्य कैकेय्यै दत्तस्य यदर्धं तदर्धं विचार्य पुनरपि सुमित्रायै ददौ । तया दापयामासेत्यर्थः । अत्रार्धपदावृत्तिर्बोध्या । तदुक्तं कालिदासेन-स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।

व्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् । अर्चिता तस्य कौसल्या प्रिया केकयवंशजा । अतः संभाविताां ताभ्यां सुमित्राभिच्छदीश्वरः । ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्मनीषितः । चरोरर्धार्धभागाभ्यां तामयो नयतामभे । सा हि प्रणयवत्यासीत्सपत्न्योरुभयोरपीति । अर्धार्धभागाभ्यामिति । अस्य स्वस्वलब्धांशसंबंध्यर्धार्धभागाभ्यामित्यर्थः । पृथगिति । विभज्येति शेषः । कनकस्यापीयं रीतिरेव संमतेत्याहुः । कश्चित्तु इत्युक्त्वा प्रददौ तस्यै हविषोर्धं नराधिपः । स्वयमेव समं कृत्वा भागं भागवतां वरः । अर्धादर्धं ददौ चापि कैकेय्यै स नराधिपः । चतुर्भागं द्विधा कृत्वा सुमित्रायै ददौ तदेति दृश्यमानः पाठः—स त्वसांप्रदायिक एव । तत्तद्दत्तभागजन्यस्य तत्तत्पुत्रैकवाक्यतौचित्येन अपरे तु व्याख्यैवात्र ज्यायसी । पाठांतरे व्याख्यांतरे च लक्ष्मणरामयोरेव भरतशत्रुघ्नयोरेवैकवाक्यतायां बीजालाभः । उक्तं च पाद्मे-युगं बभूवतुस्तत्र सुस्निग्धौ रामलक्ष्मणौ । तथा भरतशत्रुघ्नौ पायसांशवशात्स्वत इतीति दिक् ॥ २७ ॥ २८ ॥ २९ ॥ ताश्चेति । प्राप्य प्रहर्षेण उदितं विकसितं चेतो यासां ताः स्त्रियः नरेंद्रस्य संमानम् अपक्षपातेन यथो चितव्यवहारं मेनिरे इत्यन्वयः ॥ ३० ॥ तत इति । महीपतेः स्त्रिय इत्यन्वयः । उत्तमपायसम् । उत्तमत्वं च तस्य विष्णुतेजःसंभृतत्वात् । हुताशनादित्यसमानतेजस इति । गर्भाणां स्त्रीणां च तंत्रेण

ताश्चैवंपायसंप्राप्यनरेंद्रस्योत्तमास्त्रियः ॥ संमानंमेनिरेसर्वाःप्रहर्षोदितचेतसः ॥ ३० ॥ ततस्तुताःप्राश्यतमुत्तमास्त्रियोमहीपतेरुत्तमपायसंपृथक् ॥ हुताशनादित्यसमानतेजसोऽचिरेणगर्भान्प्रतिपेदिरेतदा ॥ ३१ ॥ ततस्तुराजाप्रतिवीक्ष्यताःस्त्रियःप्ररूढगर्भाःप्रतिलब्धमानसः ॥ बभूवहृष्टस्त्रिदिवेयथाहरिःसुरेंद्रसिद्धर्षिगणाभिपूजितः ॥३२॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकांडे षोडशः सर्गः ॥१६॥ ॥ पुत्रत्वंतुगतेविष्णौराज्ञस्तस्यमहात्मनः ॥ उवाचदेवताःसर्वाःस्वयंभूर्भगवानिदम् ॥ १ ॥ सत्यसंधस्यवीरस्यसर्वेषांनोहितैषिणः ॥ विष्णोःसहायान्बलिनःसृजध्वंकामरूपिणः ॥ २॥ मायाविदश्चशूरांश्चवायुवेगसमाञ्जवे ॥ नयज्ञान्बुद्धिसंपन्नान्विष्णुतुल्यपराक्रमान् ॥ ३ ॥ असंहार्यानुपायज्ञान्दिव्यसंहननान्वितान् ॥ सर्वास्त्रगुणसंपन्नानमृतप्राशनानिव ॥ ४ ॥ अप्सरःसुचमुख्यासुगंधर्वीणांतनूषुच ॥ यक्षपन्नगकन्यासुऋक्षविद्याधरीषुच ॥ ५ ॥ किन्नरीणांचगात्रेषुवानरीणांतनूषुच ॥ सृजध्वंहरिरूपेणपुत्रांस्तुल्यपराक्रमान् ॥ ६ ॥ पूर्वमेवमयासृष्टोजांबवानृक्षपुंगवः ॥ जृंभमाणस्यसहसाममवक्रादजायत ॥ ७ ॥

विशेषणम् ॥ ३१ ॥ प्रतिलब्धमानसः प्रतिलब्धशब्दः प्रतिलब्धस्वास्थ्यपरः तादृशं मानसं यस्येत्यर्थः । यद्वा पूर्णमनोरथ इत्यर्थः । यथाशब्दः चार्थे । त्रिदिवे हरिरिंद्रश्च हृष्ट इत्यर्थः । सुरेंद्रेत्यादि राजविशेषणम् । भगवदंशगर्भसंभवेन तैः अभिपूजितो मनसा स्तुतः ॥ ३२ ॥ स्वैरंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे षोडशः सर्गः ॥ १६ ॥ पुत्रत्वमिति । गते गंतुमुपक्रांते ॥ १ ॥ सहायान् सहायकरणसमर्थान् । ननु कदाचिद्भगवान्प्रतिज्ञायापि नावतरेदत उक्तम् । सत्यसंधस्येति । सत्यप्रतिज्ञस्येत्यर्थः ॥ २ ॥ मायाविदः असुरादिमाया संहारसमर्थदेवमायाशक्तिमतः । जवे वेगविषये ॥ ३ ॥ असंहार्यानिति । परैरिति शेषः । संहननं शरीरम् । सर्वास्त्रगुणसंपन्नान् सर्वास्त्रनिवारणसामर्थ्यरूपगुणयुक्तान् । यद्वा प्रयोगोपसंहारादय तद्गुणाः । अमृतप्राशनाः देवाः ॥ ४ ॥ गंधर्व्यो गंधर्वपत्न्यः ॥ ५ ॥ वानरीणां तनूषु वानरीशरीरसदृशशरीरासु अप्सरःप्रभृतिष्वित्यर्थः । हरिरूपेणेति । तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यंति वधार्थं तु कुलस्य तव वानरा इति रावणविषये नंदिकेश्वरशापादेवमुक्तम् । तुल्यपराक्रमान् । स्वस्वतुल्यपराक्रमानित्यर्थः ॥ ६ ॥ ननु त्वयापि स्वांशः स्रष्टव्य इति चेत्तत्राह । पूर्वमेवेति ।

पूर्वयुगे इत्यर्थः । तदुत्पत्तिप्रकारमाह । जृंभमाणस्येति । सहसा तत्क्षणे ॥ ७ ॥ एवं वक्ष्यमाणप्रकारेण ॥ ८ ॥ ९ ॥ वानरेंद्रमिति । ननु राघवसहायार्थं तत्तत्स्वावतारकरणप्रेरणाद्वालिनोवतारस्य तदसहायत्वात् किमर्थोयमवतार इति चेत् दुंदुभ्यादिवधार्थं तदवतारस्यावश्यकत्वात्पुत्रद्वारा तस्यापि राघवसहायार्थत्वाच्च दुंदुभ्यादिवधेनापि तत्साहाय्यकरणाच्च अस्यापि भगवदवतारात्पूर्वमुत्पत्तिर्ज्ञेया । तपनः सूर्यः ॥ १० ॥ ११ ॥ १२ ॥ पावकस्य अग्नेः । अत्यरिच्यत ततोऽधिकोभवदित्यर्थः ॥ १३ ॥ रूपेति । रूपलक्षणेन द्रविणेन युक्तौ । रूपसंमतौ रूपवत्त्वेन सर्वलोकसंमतावित्यर्थः ॥ १४ ॥ पर्जन्यः तदभिमानिनी देवता । धर्मपुत्रोऽपरः सुषेण इति युद्धकांडे वक्ष्यति । अत्र तु वरुणपुत्र उक्तः ॥ १५ ॥ वज्रसंहननं वज्रवदभेद्यं शरीरं तेनोपेतो युक्तः ॥ १६ ॥ दशग्रीववधोद्यता इति ।

तेतथोक्ताभगवतातत्प्रतिश्रुत्यशासनम् ॥ जनयामासुरेवंतेपुत्रान्वानररूपिणः ॥ ८ ॥ ऋषयश्चमहात्मानःसिद्धविद्याधरोरगाः ॥ चारणाश्चसुतान्वीरान्ससृजुर्वनचारिणः ॥ ९ ॥ वानरेंद्रंमहेंद्राभमिंद्रोवालिनमात्मजम् ॥ सुग्रीवंजनयामासतपनस्तपतांवरः ॥ १० ॥ बृहस्पतिस्त्वजनयत्तारंनाममहाकपिम् ॥ सर्ववानरमुख्यानांबुद्धिमंतमनुत्तमम् ॥ ११ ॥ धनदस्यसुतःश्रीमान्वानरोगंधमादनः ॥ विश्वकर्मात्वजनयन्नलंनाममहाकपिम् ॥ १२ ॥ पावकस्यसुतःश्रीमान्नीलोग्निसदृशप्रभः ॥ तेजसायशसावीर्यादत्यरिच्यतवीर्यवान् ॥ १३ ॥ रूपद्रविणसंपन्नावश्विनौरूपसंमतौ ॥ मैंदंचद्विविदंचैवजनयामासतुःस्वयम् ॥ १४ ॥ वरुणोजनयामाससुषेणंनामवानरम् ॥ शरभंजनयामासपर्जन्यस्तुमहाबलः ॥ १५ ॥ मारुतस्यौरसःश्रीमान्हनूमान्नामवानरः ॥ वज्रसंहननोपेतोवैनतेयसमोजवे ॥ १६ ॥ सर्ववानरमुख्येषुबुद्धिमान्बलवानपि ॥ तेसृष्टाबहुसाहस्रादशग्रीववधोद्यताः ॥ १७ ॥ अप्रमेयबलावीराविक्रांताःकामरूपिणः ॥ तेगजाचलसंकाशावपुष्मंतोमहाबलाः ॥ १८ ॥ ऋक्षवानरगोपुच्छाःक्षिप्रमेवाभिजज्ञिरे ॥ यस्यदेवस्ययद्रूपंवेषोयश्चपराक्रमः ॥ १९ ॥ अजायतसमंतेनतस्यतस्यपृथक्पृथक् ॥ गोलांगूलेषुचोत्पन्नाःकिंचिदुन्नतविक्रमाः ॥ २० ॥ ऋक्षीषुचतथाजातावानराःकिन्नरीषुच ॥ देवामहर्षिगंधर्वास्तार्क्ष्ययक्षायशस्विनः ॥ २१ ॥ नागाःकिंपुरुषाश्चैवसिद्धविद्याधरोरगाः ॥ बहवोजनयामासुर्हृष्टास्तत्रसहस्रशः ॥ २२ ॥ चारणाश्चसुतान्वीरान्ससृजुर्वनचारिणः ॥ वानरान्सुमहाकायान्सर्वान्वैवनचारिणः ॥ २३ ॥ अप्सरःसुचमुख्यासुतथाविद्याधरीषुच ॥ नागकन्यासुचतदागंधर्वीणांतनूषुच ॥ कामरूपबलोपेतायथाकामविचारिणः ॥ २४ ॥ सिंहशार्दूलसदृशादर्पेणचबलेनच ॥ शिलाप्रहरणाःसर्वेसर्वेपर्वतयोधिनः ॥ २५ ॥ नखदंष्ट्रायुधाःसर्वेसर्वेसर्वास्त्रकोविदाः ॥ विचालयेयुःशैलेंद्रान्भेदयेयुःस्थिरान्द्रुमान् ॥ २६ ॥

अस्य ये भविष्यंतीति शेषः ॥ १७ ॥ गजाचलसंकाशाः गजसदृशाः पर्वतसदृशाश्चेत्यर्थः ॥ १८ ॥ गोपुच्छाः वानरविशेषाः । क्षिप्रमेव तत्तद्योनौ देवानां रत्यव्यवहितोत्तरकालमेव । रूपं वर्णः । वेषः संस्थानविशेषः ॥ १९ ॥ तस्य तत्पुत्रस्य । तेन तदीयरूपवेषादिकं पृथक्पृथगसांकर्येणअजायत । किंचिदुन्नतविक्रमाः देवावस्थातोपि किंचिदाधिकपराक्रमा इत्यर्थः ॥ २० ॥ ऋक्षीषु ऋक्षशरीरासु । चस्त्वर्थे । किंनरीषु त्वित्यर्थः । एवमग्रेपि । तार्क्ष्याः तार्क्ष्यवंशजाः ॥ २१ ॥ नागाः सर्पाः ॥ २२ ॥ चारणाः देववंदिनः । वनचारिणः वनवासिन इत्येकत्र परत्र वनस्थफलभक्षकानित्यर्थः ॥ २३ ॥ ॥ २४ ॥ २५ ॥ सर्वास्त्रकोविदा इति । स्वयम्प्रतिभातसर्वास्त्रपरिहारोपाया इत्यर्थः । शिलाप्रहरणा इत्याद्युक्तेस्तेषामस्त्रप्रयोक्तृत्वाभावात् । विचालयेयुरित्यादौ शक्यार्थे लिङ् । विचालनशक्ता इत्यर्थः ॥ २६ ॥

आप्लवेयुः संतरेयुः ॥ २७ ॥ प्रव्रजतः स्वच्छंदगतीन् ॥ २८ ॥ नादेनेति । अस्य पातयेयुरित्यनेनान्वयः ॥ २९ ॥ शतं शतसहस्राणि कोटिरित्यर्थः ॥ ते प्रागुक्ताः हरीणां प्रधानेषु यूथेषु मध्ये हरियूथपाः बभूवुः । यूथपश्रेष्ठान्वीरांश्च हरीन् अजनयन्नित्यर्थः । ऋक्षवतः पर्वतविशेषस्य प्रस्थान्सानून् उपतस्थुः आसेवंते स्म ॥ ३० ॥ ३१ ॥ ३२ ॥ भ्रातरौ सुग्रीववालिनौ । सर्वे च सर्वेपि । केचित्साक्षात् केचिन्नलादिद्वारेत्याह । नलमित्यादि ॥ ३३ ॥ अर्दयन् आर्दयन्नित्यर्थः । आडभावः आर्षः ॥ ३४ ॥ वाली जुगोपेत्यन्वयः । देवराजावतारत्वादिति भावः ॥ ३५ ॥ विविधसंस्थानैः नानाप्रकार सन्निवेशैः । नानाव्यंजनलक्षणैः परस्परभेदव्यंजकतत्तल्लक्षणयुतैः ॥ ३६ ॥ अचलकूटः पर्वतशृंगम् । यूथपाधिपैः यथपानामधिपैरित्यर्थः । भीमशरीररूपैः भयजनकशरीराकृतिभिः ॥ ३७ ॥ सौलमानः ॥

क्षोभयेयुश्चवेगेनसमुद्रंसरितांपतिम् ॥ दारयेयुःक्षितिंपद्भ्यामाप्लवेयुर्महार्णवान् ॥ २७ ॥ नभस्तलंविशेयुश्चगृह्णीयुरपितोयदान् ॥ गृह्णीयुरपिमातंगान्मत्तान्प्रव्रजतोवने ॥ २८ ॥ नर्दमानांश्चनादेनपातयेयुर्विहंगमान् ॥ ईदृशानांप्रसूतानिहरीणांकामरूपिणाम् ॥ २९ ॥ शतंशतसहस्राणियूथपानांमहात्मनाम् ॥ तेप्रधानेषुयूथेषुहरीणांहरियूथपाः ॥ ३० ॥ बभूवुर्यूथपश्रेष्ठान्वीरांश्चाजनयन्हरीन् ॥ अन्येऋक्षवतःप्रस्थानुपतस्थुःसहस्रशः ॥ ३१ ॥ अन्येनानाविधाञ्छैलान्काननानिचभेजिरे ॥ सूर्यपुत्रंचसुग्रीवंशक्रपुत्रंचवालिनम् ॥ ३२ ॥ भ्रातरावुपतस्थुस्तेसर्वेचहरियूथपाः ॥ नलं नीलंहनूमंतमन्यांश्चहरियूथपान् ॥ ३३ ॥ तेतार्क्ष्यबलसंपन्नाःसर्वेयुद्धविशारदाः ॥ विचरंतोऽर्दयन्सर्वान्सिंहव्याघ्रमहोरगान् ॥ ३४ ॥ महाबलोमहाबाहुर्वालीविपुलविक्रमः॥ जुगोपभुजवीर्येणऋक्षगोपुच्छवानरान् ॥ ३५ ॥ तैरियंपृथिवीशूरैःसपर्वतवनार्णवा ॥ कीर्णाविविधसंस्थानैर्नानाव्यंजनलक्षणैः ॥ ३६ ॥ तैर्मेघवृंदाचलकूटसन्निभैर्महाबलैर्वानरयूथपाधिपैः ॥ बभूवभूर्भीमशरीररूपैःसमावृतारामसहायहेतोः ॥ ३७ ॥ इतिश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तदशः सर्गः ॥ १७ ॥ ॥ निर्वृत्तेतुक्रतौतस्मिन्हयमेधेमहात्मनः ॥ प्रतिगृह्यामराभागान्प्रतिजग्मुर्यथागतम् ॥ १ ॥ समाप्तदीक्षानियमःपत्नीगणसमन्वितः ॥ प्रविवेशपुरींराजासभृत्यबलवाहनः ॥ २ ॥ यथार्हंपूजितास्तेनराज्ञाचपृथिवीश्वराः ॥ मुदिताःप्रययुर्देशान्प्रणम्यमुनिपुंगवम् ॥ ३ ॥ श्रीमतांगच्छतांतेषांस्वगृहाणिपुरात्ततः ॥ बलानिराज्ञांशुभ्राणिप्रहृष्टानिचकाशिरे ॥ ४ ॥ गतेषुपृथिवीशेषुराजादशरथःपुनः ॥ प्रविवेशपुरींश्रीमान्पुरस्कृत्यद्विजोत्तमान् ॥ ५ ॥ शांतयाप्रययौसार्द्धमृष्यशृंगःसुपूजितः ॥ अनुगम्यमानोराज्ञाचसानुयात्रेणधीमता ॥ ६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे सप्तदशः सर्गः ॥ १७ ॥ ॥ छ ॥ प्रासंगिकदेवतावतारमुक्त्वा प्रकृतः प्रधानावतार उच्यते । निर्वृत्ते इत्यादि । निर्वृत्ते समाप्ते । पुत्रोत्पत्तिं विचिंतयान्नित्यंतो वृत्तानुवादः । हयमेधे इति । अस्य पुत्रेष्टियुते इति शेषः ॥ १ ॥ प्रविवेश प्रवेशाभिमुखो बभूव ॥ २ ॥ मुनिपुंगवं वसिष्ठम् ऋष्यशृंगं च ॥ ३ ॥ शुभ्राणि दशरथदत्तवस्त्राभरणादिनाऽत्युज्ज्वलानि अत एव प्रहृष्टानि ॥ ४ ॥ द्विजोत्तमान् वसिष्ठादीन् ॥ ५ ॥ सानुयात्रेण सभृत्येन राज्ञा दशरथेन अनुगम्यमानः ऋष्यशृंगः प्रययौ । स्वस्थानमिति शेषः ॥ ६ ॥

सर्वान् वसिष्ठादीनपि । तत्र पुरे ॥ ७ ॥ ऋतूनामिति । प्रथमार्थे षष्ठी । समत्ययुः समतीताः । नावामिके नवम्यां तिथौ । स्वार्थे ठक् ॥ ८ ॥ अदितिदैवत्ये पुनर्वसौ । पंचसु रविभौमशनि गुरुशुक्रेषु उच्चसंस्थेषु मेषमकरतुलाकर्कमीनस्थेषु । सचंद्रगुरौ कर्कटे लग्ने स्थिते सति ॥ ९ ॥ प्रोद्यमाने तत्र लग्ने उदयं गच्छति सतीत्यर्थः । सर्वलोकनमस्कृतम् । अस्य सर्वलोकरूपश्चासौ नमस्कृतश्च तमित्यप्यर्थः । तेनादौ प्रादुर्भावसमये मात्रा विराड्रूपस्य दर्शनं ततस्तद्रूपदर्शनविस्मयात्तया नमस्कृतः सन्मायया बालभावं दधाविति सूचितम् ॥ १० ॥ विष्णोः शंखचक्रानंतविशिष्टस्य विष्णोरित्यर्थः। शंखचक्रादेरभावादिति भावः ॥ ११ ॥ देवानां वरेण देवश्रेष्ठेन ॥ १२ ॥ चतुर्भागः चतुर्न्यूनो भागः । चतुर्भागः पायसार्धस्य चतुर्थांशन्यूनो भागः अत एव साक्षाद्विष्णोः सर्वैर्गुणैः समुदितः युक्तः । अस्य पांचजन्यावतारतया स्वधारकस्य विष्णोः साक्षाद्विष्णुत्वमुक्तम् । अनेन पांचजन्यस्यापि विष्णुत्वमेवेति सूचितम् । तदीयसर्वगुणवत्तासूचनेन अस्यापि रामतुल्यत्वं रामपायसांशसमपायसांशजन्यत्वं च

**एवंविसृज्यतान्सर्वान्राजासंपूर्णमानसः ॥ उवाससुखितस्तत्रपुत्रोत्पत्तिंविचिंतयन् ॥७॥ ततोयज्ञेसमाप्तेतुऋतूनांपट्समत्ययुः ॥ ततश्चद्वादशेमासेचैत्रेनावमिकेतिथौ ॥ ८ ॥ नक्षत्रेऽदितिदैवत्येस्वोच्चसंस्थेषुपंचसु ॥ ग्रहेषुकर्कटेलग्नेवाक्पताविंदुनासह ॥ ९ ॥ प्रोद्यमानेजगन्नाथंसर्वलोकनमस्कृतम् ॥ कौसल्याऽजनयद्रामंदिव्यलक्षणसंयुतम् ॥ १० ॥ विष्णोरर्धंमहाभागंपुत्रमिक्ष्वाकुनंदनम् ॥ लोहिताक्षंमहाबाहुंरक्तोष्ठंदुंदुभिस्वनम् ॥ ११ ॥ कौसल्याशुशुभेतेनपुत्रेणामिततेजसा ॥ यथावरेणदेवानामदितिर्वज्रपाणिना ॥ १२ ॥ भरतोनामकैकेय्यांजज्ञेसत्यपराक्रमः ॥ साक्षाद्विष्णोश्चतुर्भागःसर्वैःसमुदितोगुणैः ॥ १३ ॥ अथलक्ष्मणशत्रुघ्नौसुमित्राऽजनयत्सुतौ ॥ वीरौसर्वास्त्रकुशलौविष्णोरर्धसमन्वितौ ॥ १४ ॥ पुष्येजातस्तुभरतोमीनलग्नेप्रसन्नधीः ॥ सार्पेजातौतुसौमित्रीकुलीरेभ्युदितेरवौ ॥ १५ ॥ राज्ञःपुत्रामहात्मानश्चत्वारोजज्ञिरेपृथक् ॥ गुणवंतोनुरूपाश्चरुच्याप्रोष्ठपदोपमाः ॥ १६ ॥ जगुःकलंचगंधर्वाननृतुश्चाप्सरोगणाः ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिश्चखात्पतत् ॥ १७ ॥ उत्सवश्चमहानासीदयोध्यायांजनाकुलः ॥ रथ्याश्चजनसंबाधानटनर्तकसंकुलाः ॥१८॥ गायनैश्चविराविण्योवादनैश्चतथापरैः ॥ विरेजुर्विपुलास्तत्रसर्वरत्नसमन्विताः ॥ १९ ॥ प्रदेयांश्चददौराजासूतमागधवंदिनाम् ॥ ब्राह्मणेभ्योददौवित्तंगोधनानिसहस्रशः ॥ २० ॥**

सूचितम् ॥ १३ ॥ विष्णोरर्धेति । विष्णोः रामस्य । अर्धशब्दोत्र भागवाची न समांशवाची । तेन पायसाष्टमांशौ लक्ष्मणशत्रुघ्नाविति बोध्यम् ॥ १४ ॥ सार्पः आश्लेषा । कुलीरः कर्कटः । अभ्युदिते इति । अस्य उच्चस्थे इत्यर्थः । सौमित्री इति । द्विवचनेन तयोर्यमजत्वं सूच्यते ॥ १५ ॥ राज्ञ इति । पृथक् गुणवंतः प्रत्येकम् अनन्यसाधारणगुणवंतः । अनुरूपाः ज्येष्ठकनिष्ठत्वादियोग्यव्यहारवंतः । रुच्या कांत्या । प्रोष्ठपदेति । पूर्वाभाद्रपदोत्तराभाद्रपदयोर्नाम । तयोश्च प्रत्येकं द्वे द्वे तारे इति ज्योतिःशास्त्रे प्रसिद्धम् । तैत्तिरीयश्रुतिरपि-चत्वार एकमभिकर्मदेवाः-प्रोष्ठपदास इति यान्वदंतीति । तदुपमा इत्यर्थः॥ १६ ॥जगुरिति।रामाद्युत्पत्तिकाले इति शेषः। पतदिति। अत्र अडभावश्छांदसः॥ १७॥गायनैःगायकैः।वादनैःवादकैः।विराविण्यःसशब्दाः।रथ्या इति विशेष्यम्।सर्वरत्नसमन्विताःनटाद्युद्देशेन क्षिप्तैः रत्नैर्युक्ताः ॥१८॥१९॥ प्रदेयान् पारितोषिकान्। सूताः पौराणिकाः । मागधाः वंशावलीकीर्तकाः। वंदिनःस्तुतिपाठकाः।संबंधसामान्ये षष्ठी। सूतादिसंबंधि यद्देयं पारितोषिकं तत्तेभ्यो ददावित्यन्वयः॥ २० ॥

अतीत्येति । एकादशाहशब्दः सूतकांतोपलक्षणम् । अन्यथा क्षत्रियस्य द्वादशाहं सूतकमिति स्मृतिविरोधः स्यात् । तथा च रामजन्मतस्त्रयोदशे दिने नामकरणमकरोदित्यर्थः । अस्य निरुक्तिः पूर्वं दर्शिता । श्रियः कमलवासिन्या रमणोयं यतो हरिः । तस्माच्छ्रीराम इत्यस्य नाम सिद्धं पुरातनम् । सहस्रनामसदृशं स्मरणान्मुक्तिदं नृणामिति पाद्मे उक्तम् ॥ २१ ॥ नामानि कुरुते नामकरणमकारयदित्यर्थः । वर्तमानसामीप्ये लट् अंतर्भावितण्यर्थता च ॥ यत्तु कतकेन राज्ञो नामकरणादावनधिकार इत्युक्तम् अकरोदित्यत्र च पुरोहितद्वारेति शेषपूरणं कृतं—तत्र मानं चिंत्यम् ॥ २२ ॥ ब्राह्मणान्भोजयामासेति । राजाज्ञयेति शेषः । बहु बहुमानपूर्वकमित्यर्थः ॥ २३ ॥ जन्मक्रियादीनि । तदाद्युपनयनांतानीत्यर्थः । अकारयत् । वसिष्ठो राज्ञेति शेषः । केतुः विरुदध्वजः । स यथा अन्नदानादि कीर्तिं ख्यापयति एवं इक्ष्वाकुकुलवैभवप्रकाशकः । रातिः प्रीतिः ॥ २४ ॥ स्वयंभूः हिरण्यगर्भः स इव सर्वशक्तिमत्त्वेन संमतः ॥ २५ ॥ ज्ञानोपसंपन्नाः तत्त्वज्ञानयुक्ता इति केचित् । गुणैः साधारणैः

अतीत्यैकादशाहंतुनामकर्मतथाऽकरोत् ॥ ज्येष्ठंराममहात्मानंभरतंकैकयीसुतम् ॥ २१ ॥ सौमित्रिंलक्ष्मणमितिशत्रुघ्नमपरंतथा ॥ वसिष्ठःपरमप्रीतो नामानिकुरुतेतदा ॥ २२ ॥ ब्राह्मणान्भोजयामासपौरजानपदानपि ॥ अददद्ब्राह्मणानांचरत्नौघममलंबहु ॥२३॥ तेषांजन्मक्रियादीनिसर्वकर्माण्यकारयत्॥ तेषांकेतुरिवज्येष्ठोरामोरतिकरःपितुः ॥ २४ ॥ बभूवभूयोभूतानांस्वयंभूरिवसंमतः॥ सर्वेवेदविदःशूराःसर्वेलोकहितेरताः ॥ २५ ॥ सर्वेज्ञानोपसंपन्नाःसर्वे समुदितागुणैः ॥ तेषामपिमहातेजारामःसत्यपराक्रमः ॥ २६ ॥ इष्टःसर्वस्यलोकस्यशशांकइवनिर्मलः ॥ गजस्कंधेश्वपृष्ठेचरथचर्यासुसंमतः ॥ २७ ॥ धनुर्वेदेचनिरतःपितुःशुश्रूषणेरतः ॥ बाल्यात्प्रभृतिसुस्निग्धोलक्ष्मणोलक्ष्मिवर्धनः ॥ २८ ॥ रामस्यलोकरामस्यभ्रातुर्ज्येष्ठस्यनित्यशः ॥ सर्वप्रियकरस्तस्यरामस्यापिशरीरतः ॥ २९ ॥ लक्ष्मणोलक्ष्मिसंपन्नोबहिःप्राणइवापरः ॥ नचतेनविनानिद्रांलभतेपुरुषोत्तमः ॥३०॥ मृष्टमन्नमुपानीतमश्नातिनहितंविना ॥ यदाहिहयमारूढोमृगयांयातिराघवः ॥ ३१ ॥ अथैनंपृष्ठतोऽभ्येतिसधनुःपरिपालयन्॥ भरतस्यापिशत्रुघ्नोलक्ष्मणावरजोहिसः॥ ३२ ॥ प्राणैः प्रियतरोनित्यंतस्यचासीत्तथाप्रियः ॥ सचतुर्भिर्महाभागैःपुत्रैर्दशरथःप्रियैः ॥ ३३ ॥ बभूवपरमप्रीतोदेवैरिवपितामहः ॥ तेयदाज्ञानसंपन्नाःसर्वेसमुदितागुणैः ॥ ३४ ॥ ह्रीमंतःकीर्तिमंतश्चसर्वज्ञादीर्घदर्शिनः ॥ तेषामेवंप्रभावाणांसर्वेषांदीप्ततेजसाम् ॥ ३५ ॥ पितादशरथोहृष्टोब्रह्मालोकाधिपो यथा ॥ तेचापिमनुजव्याघ्रावैदिकाध्ययनेरताः ॥ ३६ ॥

क्षत्रासाधारणैश्च सद्गुणैरित्यर्थः । तेषामिति । निर्धारणे षष्ठी । रामः । सर्वसद्गुण इति शेषः ॥ २६ ॥ इष्टः सर्वस्येत्यादि । गुणकथने पौनरुक्त्यं दार्ढ्याय । रथचर्यासु रणोचितरथप्रचारेषु ॥ २७ ॥ लक्ष्मिवर्धन इति । ह्रस्व आर्षः ॥ २८ ॥ रामस्य । सुस्निग्ध इति प्राक्तनेनान्वयः । स्वशरीरादपि । तस्य स्वात्मभूतस्य रामस्य प्रियकरः॥ २९ ॥ रामस्य अपरः बहिः संचरन् प्राण इव लक्ष्मणः प्रियः। तदेवाह । न चेति ॥३०॥ मृगयाम् आखेटमुद्दिश्येत्यर्थः ॥३१॥ परिपालयन्। रामशरीरमिति शेषः । अनेन लक्ष्मणस्य भक्त्यतिशय उक्तः । हि यतः शत्रुघ्नो लक्ष्मणावरजोऽतो रामावरजस्य भरतस्य। प्रिय इति शेषः। रामलक्ष्मणाविव भरतशत्रुघ्नौ परस्परप्रियावित्यर्थः ॥३२॥ तस्य शत्रुघ्नस्य । स भरत इति शेषः । तथा तस्य भरतस्य शत्रुघ्नः प्रियः आसीत् ॥३३॥ देवैः चतुर्भिर्दिक्पालैः यद्वा वसुरुद्रादित्यविश्वेदेवैः । ते सर्वे रामादयः गुणैः समुदिताः युक्ताः । आसन्निति शेषः ॥३४॥ एवम्प्रभावाणां प्रागुक्तप्रभाववताम् । लाभेनेति शेषः । पिता हृष्ट इत्यन्वयः ॥३५॥ वैदिकाध्ययने वेदसंबंध्यध्ययने॥ ३६ ॥

दारक्रिया विवाहः–कुमारस्य विशालाक्षं पांडुतां मुखमाददे । कपोलतलसंलीनपाणिः पद्मासनस्थित इत्यादियोगवासिष्ठोक्तरीत्या संसारासारत्वदर्शनेन जातानां मुखपांडुतादीनां कामकृतत्वसंभा वनया विवाहक्रियाचिंतनमिति बोध्यम् ॥ ३७ ॥ सोपाध्यायः सपुरोहितः ॥ ३८ ॥ ३९ ॥ कौशिकं कुशिकगोत्रापत्यम् । विलंबे शापत्रासाव द्वाराध्यक्षाः राजवेश्म त्वरया प्रविविशुः । तदागमननिवेदना येति शेषः ॥ ४० ॥ संभ्रांतमनसः क्षुभितचित्ताः । तेन तदीयेन विश्वामित्रसंबंधिना ॥ ४१ ॥ इक्ष्वाकवे तद्वंशजत्वात्ताच्छब्द्यम् । समाहितः एकाग्रचित्तः ॥ ४२ ॥ ब्रह्माणं बृहस्पतिम् । बृहस्पतिर्देवानां ब्रह्मेति श्रुतेः । संशितव्रतं तीक्ष्णनियमम ॥ ४३ ॥ उपहारयदिति । वसिष्ठेनेति शेषः । अडभावः आर्षः । राज्ञः अर्घ्यं राजप्रेरणया वसिष्ठानीतम् ॥ ४४ ॥ कुशलपदम् अनामयोपलक्षणम् । क्षत्रबंधुमनामयमिति स्मृतेः । अव्ययं वृद्धिम् ॥४५॥ पुनर्विशिष्य पृच्छति । कुशलमिति । विशेषप्रकारमाह । अपि ते इति । अपिः प्रश्ने । एवमग्रेपि । सामंताः सन्नताः नम्रा अपि । रिपवो जिताः अपि॥४६॥

पितृशुश्रूषणरताधनुर्वेदेचानिष्ठिताः ॥ अथराजादशरथस्तेषांदारक्रियांप्रति ॥३७॥ चिंतयामासधर्मात्मासोपाध्यायःसबांधवः ॥ तस्यचिंतयमानस्यमंत्रिमध्येमहात्मनः ॥ ३८ ॥ अभ्यागच्छन्महातेजाविश्वामित्रोमहामुनिः ॥ सराज्ञोदर्शनाकांक्षीद्वाराध्यक्षानुवाचह ॥ ३९ ॥ शीघ्रमाख्यातमांप्राप्तंकौशिकंगाधिनःसुतम ॥ तच्छ्रुत्वावचनंतस्यराज्ञोवेश्मप्रदुद्रुवुः ॥४०॥ संभ्रांतमनसःसर्वेतेनवाक्येनचोदिताः ॥ तेगत्वाराजभवनंविश्वामित्रमृषिंतदा ॥४१॥ प्राप्तमावेदयामासुर्नृपायेक्ष्वाकवेतदा ॥ तेषांतद्वचनंश्रुत्वासपुरोधाःसमाहितः ॥ ४२ ॥ प्रत्युज्जगामसंहृष्टोब्रह्माणमिववासवः ॥ सदृष्ट्वाज्वलितंदीप्त्यातापसंसंशितव्रतम् ॥ ४३ ॥ प्रहृष्टवदनोराजाततोर्घ्यमुपहारयत् ॥ सराज्ञःप्रतिगृह्यार्घ्यंशास्त्रदृष्टेनकर्मणा ॥ ४४ ॥ कुशलंचाव्ययंचैवपर्यपृच्छन्नराधिपम् ॥ पुरेकोशेजनपदेबांधवेषुसुहृत्सुच ॥ ४५ ॥ कुशलंकौशिकोराज्ञःपर्यपृच्छत्सुधार्मिकः ॥ अपितेसन्नताःसर्वेसामंतरिपवोजिताः ॥ ४६ ॥ दैवंचमानुषंचैवकर्मतेसाध्वनुष्ठितम् ॥ वसिष्ठंचसमागम्यकुशलंमुनिपुंगवः ॥४७॥ (वसिष्ठश्च समागम्य प्रहसन्मुनिपुंगवः ॥ यथार्हंपूजयित्वैनं पप्रच्छ कुशलं तदा ॥) ऋषींश्चतान्यथान्यायंमहाभागउवाचह ॥ तेसर्वेहृष्टमनसस्तस्यराज्ञोनिवेशनम् ॥ ४८ ॥ विविशुःपूजितास्तेननिषेदुश्चयथार्हतः ॥ अथहृष्टमनाराजाविश्वामित्रंमहामुनिम् ॥ ४९ ॥ उवाचपरमोदारोहृष्टस्तमभिपूजयन् ॥ यथाऽमृतस्यसंप्राप्तिर्यथावर्षमनूदके ॥ ५० ॥ यथासदृशदारेषुपुत्रजन्माप्रजस्यवै ॥ प्रनष्टस्ययथालाभोयथाहर्षोमहोदयः ॥ ५१ ॥ तथैवागमनंमन्येस्वागतंतेमहामुने ॥ कंचतेपरमंकामंकरोमिकिमुहर्षितः ॥ ५२ ॥

दैवं कर्म होमदेवतार्चनादिकम् । मानुषं कर्म सामभेदादिकम् । प्रथमतो राज्ञोऽनामयादि पृष्ट्वा राज्ञः प्रेरितार्घ्यदातृत्वेन ततो वसिष्ठेन समागम्य आलिंगनादि कृत्वा । कुशलमिति । अस्य पप्रच्छेति शेषः । अनेन राजपुरोहितत्वकृतः पूर्वस्पर्धयेषदपमानो वसिष्ठस्य विश्वामित्रकृतः सूचितः । वसिष्ठश्च समागम्य प्रहसन्मुनिपुंगवः । यथार्हं पूजयित्वैनं पप्रच्छ कुशलं तदेति क्वचित्पाठः । तत्र पूर्वं मां स्पर्धमानोपि मद्राजसन्निधौ आगत इति हासः ॥ ऋषीन्वामदेवादीन्यथान्यायं संगत्य कुशलं चोवाच । अत्र वामदेवादिभिः स्वस्थानस्थैरेव समागम्य स्वकार्यसिद्धये तान् गृहीत्वैव ते स्वयं च राजसदनं विविशुरित्यन्वयः ॥ ४७ ॥ ४८ ॥ पूजिता इति । अस्य राज्ञेति शेषः ॥ ४९ ॥ परमोदारः परमदाता । हृष्टः पुलकितः । अनूदके इति । आर्षं दीर्घत्वम् ॥ ५० ॥ सदृशदारेषु जातिवयोरूपगुणतुल्येषु । प्रनष्टस्य । निध्यादेरिति शेषः । महः पुत्रजन्माद्युत्सवः तस्मादुदयो यस्य स हर्षो यथा तथा ते आगमनं मन्ये । अत्र स्वकार्यहर्षसादृश्यस्य आगमने उक्त्या तवागमनजहर्षस्य अ

निर्वाच्यत्वं व्यज्यते । स्वागतं ते इति । भिन्नं वाक्यम् । च परं कं कामं किमु केन प्रकारेण करोमि कुर्यामित्यर्थः । वर्तमानसामीप्ये लट् ॥ ५१ ॥ ५२ ॥ पात्रभूतः सर्वसेवायोग्यः । दिष्ट्या शुभा दृष्टेन । सुजीवितम् । अद्यैव तत्फललाभादिति भावः ॥ ५३ ॥ पूर्वमिति । राजर्षिशब्दसाधकेन तपसा पूर्वम् अतिशयितकांतिमान् ॥ ५४ ॥ अनु पश्चात् ब्रह्मर्षित्वसाधकेन तपसा ब्रह्मर्षित्वं प्राप्तः । अतो मया बहुधा बहुप्रकारेण राजर्षिब्रह्मर्षिप्रकारेण पूज्योसीत्यन्वयः । तदिति । परमं पवित्रमिदं त्वदागमनं यन्मम पुरोऽभूत् तदद्भुतम् अत्याश्चर्यमित्यर्थः ॥ ५५ ॥ हे प्रभो तव संदर्शनात् शुभक्षेत्रं सकलपापाभावविशिष्टसकलशुभसाधनपुण्यवद्देहं गतः प्राप्तवान् । तेन सफलजन्मता निष्पापता च ध्वनिता । इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते इति भगवद्गीतोक्तेः । तुभ्यमिति । षष्ठ्यर्थे चतुर्थी । ते यत्कार्यं प्रति यत्कार्यार्थमागमनं तन्मया प्रार्थितः सन् ब्रूहि कथय ॥ ५६ ॥ स्वाभिमतकार्ययोगेन अनुगृहीतोहं त्वत्प्रयोजनस्य परिवृद्धिं निष्पत्तिं कर्तुमिच्छामि । विमर्शं करिष्यति न वेति संदेहम् ॥ ५७ ॥ तत्र

पात्रभूतोसिमेब्रह्मन्दिष्ट्याप्राप्तोसिमानद ॥ अद्यमेसफलंजन्मजीवितंचसुजीवितम् ॥ ५३ ॥ यस्माद्विप्रेंद्रमद्राक्षंसुप्रभातानिशामम ॥ पूर्वंराजर्षिशब्देनतपसाद्योतितप्रभः ॥ ५४ ॥ ब्रह्मर्षित्वमनुप्राप्तःपूज्योसिबहुधामया ॥ तदद्भुतमभूद्विप्रपवित्रंपरमंमम ॥ ५५ ॥ शुभक्षेत्रगतश्चाहंतवसंदर्शनात्प्रभो ॥ ब्रूहियत्प्रार्थितंतुभ्यंकार्यमागमनंप्रति ॥ ५६ ॥ इच्छाम्यनुगृहीतोहंत्वदर्थपरिवृद्धये ॥ कार्यस्यनविमर्शंचगंतुमर्हसिसुव्रत ॥ ५७ ॥ कर्ताचाहमशेषेणदैवतंहिभवान्मम ॥ ममचायमनुप्राप्तोमहानभ्युदयोद्विज ॥ तवागमनजःकृत्स्नोधर्मश्चानुत्तमोद्विज ॥५८॥ इतिहृदयसुखंनिशम्यवाक्यंश्रुतिसुखमात्मवताविनीतमुक्तम् ॥ प्रथितगुणयशागुणैर्विशिष्टःपरमऋषिःपरमंजगामहर्षम् ॥५९॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येच० वालकाण्डे अष्टादशः सर्गः ॥ १८ ॥ तच्छ्रुत्वाराजसिंहस्यवाक्यमद्भुतविस्तरम् ॥ हृष्टरोमामहातेजाविश्वामित्रोभ्यभाषत ॥ १ ॥ सदृशंराजशार्दूलतवैवभुविनान्यतः ॥ महावंशप्रसूतस्यवसिष्ठव्यपदेशिनः ॥ २ ॥ यत्तुमेहृद्गतंवाक्यंतस्यकार्यस्यनिश्चयम् ॥ कुरुष्वराजशार्दूलभवसत्यप्रतिश्रवः ॥ ३ ॥ अहंनियममातिष्ठेसिद्ध्यर्थंपुरुषर्षभ ॥ तस्यविघ्नकरौद्वौतुराक्षसौकामरूपिणौ ॥४ ॥ व्रतेतुबहुशश्चीर्णेसमाप्त्यांराक्षसाविमौ ॥ मारीचश्चसुबाहुश्चवीर्यवंतौसुशिक्षितौ ॥५॥

हेतुमाह । दैवतं हीति । इतश्च न संदेह इत्याह । मम चेति । तवागमनजः कृत्स्नो धर्मः मम महानभ्युदयः प्राप्तः । हर्षातिशयाद्द्विजेति पुनरुक्तिर्न दोषाय ॥ ५८ ॥ इतीति । यतो हृदयसुखम् अत एव श्रुतिसुखम् । आत्मवता स्वाधीनेन । विनीतं विनययुक्तम् । प्रथितैः त्रिशंकुस्वर्गारोहणादिभिर्यशो यस्य । गुणैः शमदमादिभिः । परमऋषिः । ऋत्यक इति प्रकृतिभावः ॥ ५९ ॥ धौंममानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये वालकांडेऽष्टादशः सर्गः ॥ १८ ॥ ॥ छ ॥ तादिति । अद्भुतविस्तरं दैवतं हि भवान्ममेत्याद्युक्तिरूपमाश्चर्यप्रपंचम् ॥ १ ॥ एतत्तवैव सदृशं नान्यतः नान्यस्य । तत्र हेतुगर्भं विशेषणं—महावंशेत्यादि । वसिष्ठव्यपदेशिनः वसिष्ठनियोगवर्तिनः ॥ २ ॥ यत्त्विति । तस्य तत्प्रतिपाद्यस्य कार्यस्य निश्चयं कर्तव्यत्वनिश्चयं सर्वथा करिष्यामीत्यंगीकारं कुरुष्व । कृत्वा च सत्यप्रतिश्रवः सत्यप्रतिज्ञो भव ॥ ३ ॥ अहमिति । सिद्ध्यर्थं यागार्थं नियमदीक्षाम् आतिष्ठे आस्थितोऽस्मि । तस्य यज्ञस्य ॥ ४ ॥ व्रते त्विति । बहुशश्चीर्णे समाप्तिकल्पे ।

(१) अत्रैकः सार्धश्लोकोधिकः कपुस्तकापेक्षया ।

समाप्त्यां समाप्तिसमये ॥ ५ ॥ नियमनिश्चये व्रतसंकल्पे अवधूते नाशिते तस्मिन् तत्संकल्पविषये यज्ञे च तथाभूते नाशिते सति ॥ ६ ॥ कृतश्रमः कृतवृथाप्रयासः अत एव निरुत्साहः तस्माद्देशा
दपाक्रमे निर्गतोस्मि । ननु भवद्भिः शापेनैव कुतस्तौ न नाशितौ तत्राह । न चेति । क्रोधमुत्स्रष्टुं शप्तुम् ॥ ७ ॥ तत्र हेतुमाह । तथाभूतेति । शापादिप्रवृत्त्यनर्हेत्यर्थः । अतः स्वपुत्रमित्यादि ॥ ८ ॥
बालानां कपोलसमीपशिखा काकपक्षः । नन्वनेन बालेन किं करिष्यसीत्यत्राह । शक्त इत्यादि । मया । पितृस्थानीयेनेति शेषः । दिव्यं तेजो वैष्णवं तेन । युक्त इति शेषः ॥ ९ ॥ ये विकर्तारः विघ्नक
र्तारः तेषां विनाशनेपि शक्तः किं पुनर्मद्यज्ञरक्षणे । मारीचसुबाहुसेनाभिप्रायेण तेषामिति बहुवचनम् । राज्ञो दानप्ररोचनायाह । श्रेयश्चेति । बहुरूपम अस्त्रदानविवाहादिरूपम् । किं च मुखपांडुत्वादिनि
वर्तकं बहुरूपं विपुलतरं परमार्थरूपं च श्रेयः आत्मस्वरूपं प्रदास्यामि वसिष्ठद्वारा दापयिष्यामि बोधयिष्यामीत्यर्थः । रामस्य शुद्धमुक्तस्वभावत्वेपि लोकानां तत्त्वबोधनमेव रामबोधनस्य फलं सनत्कुमार
शापवशात्तिरोहितस्य ज्ञानस्य प्रादुर्भूतिश्च फलमिति बोध्यम् । तदुक्तमादित्यपुराणे-विज्ञानमेतदखिलं विश्वाकारमबुद्धयः । पश्यंति ज्ञानिनस्त्वेकमात्मरूपमिदं जगत् । दुर्विज्ञेयं वसिष्ठेन रामाय कथितं
पुरेति स्कंदं प्रति शिवोक्तेः । योगवासिष्ठे स्फुटतरमेतत् । मुख्यश्रेयश्च विष्णुपुराणे द्वितीयांशे-तन्मह्यं प्रणताय त्वं यच्छ्रेयः परमं द्विज । तद्वदाखिलविज्ञानजलवीच्युदधिर्भवानिति राजप्रश्ने पुत्रस्वर्गादिना

तौमांसरुधिरौघेणवेदिंतामभ्यवर्षताम् ॥ अवधूतेतथाभूतेतस्मिन्नियमनिश्चये ॥ ६ ॥ कृतश्रमोनिरुत्साहस्तस्माद्देशादपाक्रमे ॥ नचमेक्रोधमुत्स्रष्टुं
बुद्धिर्भवतिपार्थिव ॥ ७ ॥ तथाभूताहिसाचर्यानशापस्तत्रमुच्यते ॥ स्वपुत्रंराजशार्दूलरामंसत्यपराक्रमम् ॥ ८ ॥ काकपक्षधरंवीरंज्येष्ठंमेदातुमर्हसि ॥
शक्तोह्येपमयागुप्तोदिव्येनस्वेनतेजसा ॥ ९ ॥ राक्षसायेविकर्तारस्तेषामपिविनाशने ॥ श्रेयश्चास्मैप्रदास्यामिबहुरूपंनसंशयः ॥ १० ॥ त्रयाणामपिलो
कानांयेनख्यातिंगमिष्यति ॥ नचतौराममासाद्यशक्तौस्थातुंकथंचन ॥ ११ ॥ नचतौराघवादन्योहंतुमुत्सहतेपुमान् ॥ वीर्योत्सिक्तौहितौपापौकाल
पाशवशंगतौ ॥ १२ ॥ रामस्यराजशार्दूलनपर्याप्तौमहात्मनः ॥ नचपुत्रगतंस्नेहंकर्तुमर्हसिपार्थिव ॥ १३ ॥ अहंतेप्रतिजानामिहतौतौविद्धिराक्षसौ ॥
अहंवेद्मिमहात्मानंरामंसत्यपराक्रमम् ॥ १४ ॥ वसिष्ठोपिमहातेजायेचेमेतपसिस्थिताः ॥ यदितेधर्मलाभंतुयशश्चपरमंभुवि ॥ १५ ॥

मापेक्षिकश्रेयस्त्वेपि न परमार्थरूपं श्रेयस्त्वमित्युक्त्वा- एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः । परं ज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः । न योग
वान्न युक्तोभून्नैव पार्थिव योक्ष्यते । तस्यात्मपरदेहेषु सतोप्येकमयं हि यत् । विज्ञानं परमार्थोसाविति जडभरतोक्त्यात्मस्वरूपमेव परमार्थश्रेयस्त्वेन दर्शितम् । तथात्रैव-आत्मा ध्येयः सदा भूप योगयुक्तै
स्तथा परम् । श्रेयस्तस्यैव संयोगः श्रेयो यः परमात्मात्मनेति उक्तं प्रपट्टकांतरे । तथा जीवपरमात्मनोर्यः संयोगः उपाधिनिर्गमरूपः स परं श्रेय इति तदर्थः । विभेदजनकेऽज्ञाने नाशमात्यंतिकं गते ।
आत्मनो ब्रह्मणो भेदमसंतं कः करिष्यतीति प्रपट्टकांतरोक्तेः । परमात्मात्मनोर्योगः परमार्थ इतीर्यते इति तेनैवोक्तत्वाच्चेत्यलम् ॥ १० ॥ त्रयाणां त्रिष्वित्यर्थः । येन मद्दत्तास्त्रादिना । आसाद्य । युद्धे इति
शेषः ॥ ११ ॥ न चेति । तत्र हेतुमाह । वीर्येत्यादि । रामस्तर्हि कथं हन्यादित्यत्राह । कालेति ॥ १२ ॥ रामस्य रामवीर्यस्य । पुत्रगतं पुत्रविषयम् । राम इति शेषः । नायं तव पुत्रः । किं तर्हि ।
दिव्यमेतत्तेन इति तात्पर्यम् ॥ १३ ॥ तत्र हेतुमाह । अहमिति । हताविति । भूतप्रत्ययेन वधस्य सुकरत्वं ध्वन्यते । रामं निरतिशयवैभवविष्णुतेजोंशावताररूपम् ॥ १४ ॥ स्वज्ञाने संवादमाह ।

वसिष्ठोपीत्यादि । तेप्येवं विदुरिति शेषः । ते इति । त्वमित्यर्थे । धर्मलाभं परमं यशश्च यदि स्थिरमिच्छसीत्यन्वयः । तेन रामदानं तवापि फलदमित्याशयः ॥ १५ ॥ मे मह्यम् । किं च मंत्रिणा संमतेपि दातुमर्हसीत्याह । यदीत्यादि । अभ्यनुज्ञां रामदानविषयकानुमतिम् ॥ १६ ॥ ततः तदा । अभिमतं ममेष्टं तव च । असंसक्तम् अतीतबाल्यत्वान्मातापितृसक्तिरहितम् । ईश्वरत्वात् कापि अनासक्तमिति व्यंग्यम् ॥ १७ ॥ नापि नातिचिरविप्रयोगस्ते पुत्रेणेत्याह । दशेति । यज्ञसंबंधिदशरात्रात्मकः काल एव रामम् । अपेक्षत इति शेषः । हे राघव मम अयं यज्ञस्य कालः यथा यथोक्तं कालं नात्येति नातिक्रामति ततोऽधिको विलंबो न भवतीत्यर्थः ॥ १८ ॥ तथेति । अत्रापि पूर्वश्लोकांत्यार्धमावृत्त्या संबध्यते । हे राघव ममायं यज्ञस्य कालो नात्येति नातिपतेत् तथा कुरुष्वेत्यन्वयः । धर्मार्थसहितम् । अर्थो रामस्यास्त्रादिलाभरूपः ॥ १९ ॥ २० ॥ चलनं कंपः । ततोत्थायेति । छांदसम् । व्यषीदतेत्यप्येवम् । भयान्वितः रक्षोनिमित्तपुत्रवियोगभयान्वितः ॥ २१ ॥ इतीति ।

स्थिरमिच्छसिराजेंद्ररामंमेदातुमर्हसि ॥ यद्यभ्यनुज्ञांकाकुत्स्थददतेतवमंत्रिणः॥ १६ ॥ वसिष्ठप्रमुखाःसर्वेततोरामंविसर्जय ॥ अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि ॥१७॥दशरात्रंहियज्ञस्यरामंराजविलोचनम् ॥ नात्येतिकालोयज्ञस्ययथायंममराघव ॥१८॥ तथाकुरुष्वभद्रंतेमाचशोकेमनःकृथाः ॥ इत्येवमुक्त्वाधर्मात्माधर्मार्थसहितंवचः ॥ १९ ॥ विररामहातेजाविश्वामित्रोमहामतिः ॥ सतन्निशम्यराजेंद्रोविश्वामित्रवचःशुभम् ॥ २० ॥ शोकेनमहताविष्टश्चचालचमुमोहच ॥ लब्धसंज्ञस्ततोत्थायव्यषीदतभयान्वितः ॥ २१ ॥ इति हृदयमनोविदारणंमुनिवचनंतदतीवशुश्रुवान् ॥ नरपतिरभवन्महान्महात्माव्यथितमनाःप्रचचालचासनात् ॥ २२ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये च० आदिकाव्ये बालकाण्डे एकोनविंशःसर्गः ॥ १९ ॥ तच्छ्रुत्वाराजशार्दूलोविश्वामित्रस्यभाषितम् ॥ मुहूर्तमिवनिःसंज्ञः संज्ञावानिदमब्रवीत् ॥ १ ॥ ऊनषोडशवर्षोमेरामोराजीवलोचनः ॥ नयुद्धयोग्यतामस्यपश्यामिसहराक्षसैः ॥ २ ॥

अतीव अत्यर्थं हृदयस्य हृदयपुंडरीकवर्त्यात्मनः मनसोंतःकरणस्य च विदारणं पीडाजनकं शुश्रुवान् शुश्राव महान्नरपतिः । सार्वभौम इति यावत् । महात्मा महाबुद्धिः व्यथितमनाः मूर्च्छितचित्तः अभवत् । अवस्थातुमशक्तः आसनात्प्रचचाल च । निःसंज्ञः पपातेत्यर्थः ॥ २२ ॥ रेफैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रा० वा० आ० बा० एकोनविंशः सर्गः ॥ १९ ॥ ॥ छ ॥ तदिति । निःसंज्ञ इव निष्प्राण इव रामे प्राकृतत्वबुद्ध्या राक्षसेभ्यो भयसंभावनया दानप्रतिज्ञया च व्याकुलत्वान्मूर्च्छित इत्यर्थः । ततः संज्ञावान् गतमूर्च्छः इदं वक्ष्यमाणमब्रवीत्॥ १ ॥ऊनेति । किंचिदूनानि षोडशवर्षाणि यस्य सः इदं च युद्धायोग्यत्वं प्रतिपादयति । षोडशवर्षः क्षत्रियकुमार एव कवचधरो युद्धार्ह इति शास्त्रादिति कतककृतः ॥ अन्ये तु ऊनषोडशवर्षशब्दस्य द्वादशवर्ष इत्यर्थः ।कौशिकयागरक्षणार्थमागतस्य रामस्य वयोविशेषमुद्दिश्य बालो द्वादशवर्षीयमकृतास्त्रश्च राघव इत्यरण्यकांडे रावणं प्रति मारीचोक्तेरित्याहुः। अरण्ये बालःषोडशवर्षीयमित्येव पाठः।रावणस्य भयातिशयार्थं वा मारीचस्यात्युक्तिः सेति कतकाशयः॥ २ ॥

(१) कपुस्तकादत्र सर्गेप्यर्धश्लोकोधिकः ।

इयमिति । एको रथो गजश्चैको नराः पंच पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते । पत्तिं तु त्रिगुणामेकं विदुः सेनामुखं बुधाः । त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते । त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः । चमूस्तु पृतनास्तिस्रश्चम्वस्तिस्रस्त्वनीकिनी । अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधा इति । यस्याहमिति । संधिरार्षः । पतिः पालकः । ईश्वरः स्वामी । योद्धेति । अस्य अस्मीति शेषः ॥ ३ ॥ ४ ॥ गोप्ता । यज्ञस्येति शेषः । प्राणान् धरिष्यामि जीविष्यामीत्यर्थः ॥ ५ ॥ ६ ॥ रामगमने अनुपपत्तिमाह । बाल इत्यादि । ऊनषोडशवर्षत्वादेव बालत्वव्यवहारः स्नेहातिशयेन च । तेनैव अकृतविद्यत्वव्यवहारः । अन्यथा सर्वे वेदविदः शूराः सर्वे ज्ञानोपसंपन्ना इति पूर्वोक्त्या विरोधः स्यात् ॥ ७ ॥ न चेति । रक्षसामिति । अस्य रणे इति शेषः । कटं कपटम् । रामनयने बाधकमप्याह । विप्रेत्यादि ॥ ८ ॥ उक्तानुपपत्तिपरिहारायाह । यदि वेति ॥ ९ ॥ इतोपि रामनयनमयुक्तमित्याह । षष्टिरिति । अती

इयमक्षौहिणीसेनायस्याहंपतिरीश्वरः ॥ अनयासहितोगत्वायोद्धाहंतैर्निशाचरैः ॥ ३ ॥ इमेशूराश्चविक्रांताभृत्यामेऽस्त्रविशारदाः ॥ योग्यारक्षोगणैर्योद्धुं नरामंनेतुमर्हसि ॥ ४ ॥ अहमेवधनुष्पाणिर्गोप्तासमरमूर्धनि ॥ यावत्प्राणान्धरिष्यामितावद्योत्स्येनिशाचरैः ॥ ५ ॥ निर्विघ्नाव्रतचर्यासाभविष्यतिसुरक्षिता ॥ अहंतत्रगमिष्यामिनरामंनेतुमर्हसि ॥ ६ ॥ वालोह्यकृतविद्यश्चनचवेत्तिवलावलम् ॥ नचास्त्रवलसंयुक्तोनचयुद्धविशारदः ॥ ७ ॥ नचासौरक्षसां योग्यःकूटयुद्धाहिराक्षसाः ॥ विप्रयुक्तोहिरामेणमुहूर्तमपिनोत्सहे ॥ ८ ॥ जीवितुंमुनिशार्दूलनरामंनेतुमर्हसि ॥ यदिवाराघवंब्रह्मन्नेतुंमिच्छसिसुव्रत ॥ ९ ॥ चतुरंगसमायुक्तंमयासहचतंनय ॥ षष्टिर्वर्षसहस्राणिजातस्यममकौशिक ॥ १० ॥ कृच्छ्रेणोत्पादितश्चायंनरामंनेतुमर्हसि ॥ चतुर्णामात्मजानांहिप्रीतिः परमिकामम ॥ ११ ॥ ज्येष्ठेधर्मप्रधानेचनरामंनेतुमर्हसि ॥ किंवीर्याराक्षसास्तेचकस्यपुत्राश्चकेचते ॥ १२ ॥ कथंप्रमाणाःकेचैतान्रक्षंतिमुनिपुंगव ॥ कथंचप्रतिकर्तव्यंतेषांरामेणरक्षसाम् ॥ १३ ॥ मामकैर्वावलैर्ब्रह्मन्मयावाकूटयोधिनाम् ॥ सर्वंमेशंसभगवन्कथंतेषांमयारणे ॥ १४ ॥ स्थातव्यं दुष्टभावानांवीर्योत्सिक्ताहिराक्षसाः ॥ तस्यतद्वचनंश्रुत्वाविश्वामित्रोऽभ्यभाषत ॥ १५ ॥ पौलस्त्यवंशप्रभवोरावणोनामराक्षसः ॥ सब्रह्मणादत्तवरस्त्रैलोक्यंवाधतेभृशम् ॥ १६ ॥ महावलोमहावीर्योराक्षसैर्बहुभिर्वृतः ॥ श्रूयतेचमहाराजरावणोराक्षसाधिपः ॥ १७ ॥ साक्षाद्वैश्रवणभ्रातापुत्रोविश्रवसो मुनेः ॥ यदानखलुयज्ञस्य विघ्नकर्तामहावलः ॥ १८ ॥ तेनसंचोदितौतौतुराक्षसौचमहावलौ ॥ मारीचश्चसुवाहुश्चयज्ञविघ्नंकरिष्यतः ॥ १९ ॥

तानीति शेषः ॥ १० ॥ कृच्छ्रेण दुःखेन । कचिद्दुःखेनेत्येव पाठः । यज्ञदीक्षादिलक्षणेन । चतुर्णामिति । निर्धारणे षष्ठी । परमिका अतिशयिता । स्वार्थे कः । तेषां मध्ये अस्मिन्मम प्रीतिरधिकेत्यर्थः ॥ ११ ॥ प्रीत्याधिक्ये कारणमाह । ज्येष्ठे इति । अनेन राज्ययोग्यता ध्वनिता । धर्मप्रधाने त्रिषु पुरुषार्थेषु धर्माधीनप्रवृत्तिके राक्षसैर्युद्धे हि पाक्षिकनाशसंभावनया राज्यविच्छेद एव भवेत् । धर्मेण प्रजापालनं च नान्यतो निर्वहेत् । अतो रामो नेतुमयोग्यः । अथ रामनयनस्य सर्वथा अयोग्यत्वं प्रतिपादयितुं रक्षःस्वरूपं पृच्छति । किं वीर्या इति । के च ते । किं नामानः ॥ १२ ॥ कथम्प्रमाणाः कीदृक्छरीरप्रमाणाः । रक्षंति । स्वामित्वेनेति शेषः । प्रतिकर्तव्यं प्रतिविधेयम् । संहारः कथं कर्तव्य इत्यर्थः ॥ १३ ॥ मया रणे इति । अत्र प्रतिकर्तव्यमित्यनुषंगः ॥ १४ ॥ स्थातव्यमिति । दुष्टभावानां तेषां संबंधिनि रणे कथं स्थातव्यमिति च शंसेति संबंधः । तत्र हेतुः । वीर्येत्यादि ॥ १५ ॥ १६ ॥ प्रसिद्धश्चायं रावण इत्याह । श्रूयते इत्यादि ॥ यतो महावलः ततो यदा

अनादरात्स्वयं यज्ञस्य विघ्नकर्ता न खलु अनादरात्स्वयं विज्ञाय नागच्छति तदा तेन रावणेन प्रेरितौ मारीचसुबाहू यज्ञविघ्नं करिष्यत इति संबंधः ॥ १७ ॥ १८ ॥ १९ ॥ अथ रावणनाम श्रुत्वा स्वयमेव निवृत्तप्रतीकारप्रत्याशो राजा आह । इत्युक्त इति ॥ २० ॥ अल्पभाग्यस्य । त्वन्नियोगाकरणादिति शेषः । प्रसादयितुमाह । दैवतमित्यादि ॥ २१ ॥ २२ ॥ स त्विति । वीर्यमादत्ते नाशयतीत्यर्थः । अतस्तत्संग्रामाद्वैमुख्यमपि न दोषायेति भावः । तस्य बलैः मारीचादिभिः ॥ २३ ॥ हे मुनिश्रेष्ठ सबलः ससैन्यः मम पुत्रैः सहितो वा भवानपि तेन योद्धुं न शक्त इत्यनुषंगः । अस्तु वा कथंचिद्रनतः तथा सामर्थ्य-पुत्रं तु सर्वथा न दास्यामीत्याह । कथमपीत्यादि । अमरप्रख्यम् अमरतुल्यरूपमेव न त्वमरमिति तात्पर्यम् । नैव दास्यामीत्यन्वयः ॥ २४ ॥ अतिदुःखितोक्तित्वात्तस्य पुत्रकशब्दयोः पौनरुक्त्यं न दोषः । पुत्रकमित्यनुकंपायां कन् । अदाने हेत्वंतरमप्याह । अथेत्यादि । यतः सुंदोपसुंदपुत्रौ कालोपमौ यमतुल्यौ मारीचसुबाहू दैत्यकुलजसुंदोपसुंदाभ्यां यक्षकन्यायां जातत्वेन

इत्युक्तोमुनिनातेनराजोवाचमुनिंतदा ॥ नहिशक्तोस्मिसंग्रामेस्थातुंतस्यदुरात्मनः ॥ २० ॥ सत्वंप्रसादंधर्मज्ञकुरुष्वममपुत्रके ॥ ममचैवाल्पभाग्यस्यदैवतंहिभवान्गुरुः ॥ २१ ॥ देवदानवगंधर्वायक्षाःपतगपन्नगाः ॥ नशक्तारावणंसोढुंकिंपुनर्मानवायुधि ॥ २२ ॥ सतुवीर्यवतांवीर्यमादत्तेयुधिरावणः ॥ तेनचाहंनशक्तोस्मिसंयोद्धुंतस्यवाबलैः ॥ २३ ॥ सबलोवामुनिश्रेष्ठसहितोवाममात्मजैः ॥ कथमप्यमरप्रख्यंसंग्रामाणामकोविदम् ॥ २४ ॥ बालंमेतनयंब्रह्मन्नैवदास्यामिपुत्रकम् ॥ अथकालोपमौयुद्धेसुतौसुंदोपसुंदयोः ॥ २५ ॥ यज्ञविघ्नकरौतौतेनैवदास्यामिपुत्रकम् ॥ मारीचश्चसुबाहुश्चवीर्यवंतौसुशिक्षितौ ॥ २६ ॥ तयोरन्यतरंयोद्धुंयास्यामिससुहृद्गणः ॥ अन्यथात्वनुनेष्यामिभवंतंसहबांधवः ॥ २७ ॥ इतिनरपतिजल्पनाद्द्विजेंद्रंकुशिकसुतंसुमहान्विवेशमन्युः ॥ सुहुतइवमखेग्निराज्यसिक्तःसमभवदुज्वलितोमहर्षिवह्निः ॥२८॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येबालकांडेविंशःसर्गः २०॥

तच्छ्रुत्वावचनंतस्यस्नेहपर्याकुलाक्षरम् ॥ समन्युःकौशिकोवाक्यंप्रत्युवाचमहीपतिम् ॥ १ ॥ पूर्वमर्थंप्रतिश्रुत्यप्रतिज्ञांहातुमिच्छसि ॥ राघवाणामयुक्तोयंकुलस्यास्यविपर्ययः ॥ २ ॥ यदीदंतेक्षमंराजन्गमिष्यामियथागतम् ॥ मिथ्याप्रतिज्ञःकाकुत्स्थसुखीभवसुहृद्वृतः ॥ ३ ॥ तस्यरोषपरीतस्यविश्वामित्रस्यधीमतः ॥ चचालवसुधाकृत्स्नादेवानांचभयंमहत् ॥ ४ ॥

अगस्त्यशापेन च अतिक्रूरतमौ राक्षसत्वं प्राप्तौ यतस्तौ यज्ञविघ्नकरौ अतः सुतं नैव दास्यामीत्यन्वयः ॥ २५ ॥ २६ ॥ अन्यथा भवता ममानयने। अनुनेष्यामि । रामागमनायेति शेषः ॥२७॥ इतीति। सुहुतः प्रथमं शुष्कसमिद्भिर्हुतः पश्चादाज्यसिक्तोऽग्निरिवेति योजना । उज्ज्वलितो रोषज्वालाख्यचित्तवृत्तियुक्तः ॥ २८ ॥ हरिः ॐ मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे विंशः सर्गः ॥ २० ॥ ॥ छ ॥ ॥ तदिति । स्नेहेन पुत्रस्नेहेन पर्याकुलानि गद्गदानि अक्षराणि यस्मिन् तत् तस्य वचनं श्रुत्वेत्यन्वयः ॥ १ ॥ अयं विपर्ययः प्रतिज्ञाहानिरूपो राघवाणाम् अयुक्तः । यतः अयम् अस्य कुलस्य विपर्ययो नाशः । विपर्ययपदावृत्तिर्बोध्या ॥ २ ॥ यदि इदं प्रतिज्ञाहानिरूपं क्षमं युक्तम् इदं तत्फलं च यदि क्षमं सह्यं तदा यथागतं गमिष्यामि । मिथ्यावादी त्वं सुहृद्वृतः सुखी भवेति विपरीतलक्षणयोक्तिः ॥ ३ ॥ धीमत इति । अत्र रोषं दृष्ट्वेति शेषः। जगदन्यथाकरणसमर्थोयम् अद्य क्रुद्धः किं करिष्यतीति देवानां भयम् ॥ ४ ॥

१ अत्र सर्गेऽर्धश्लोकोधिकः कपुस्तकात् ।

त्रस्तरूपम् अतिशयेन त्रस्तम् ।जगत् त्रैलोक्यम्॥५॥साक्षाद्धर्म इव। इवशब्द एवार्थे। दृढारोपं रूपकमिदम् ॥६॥ स्वधर्मं सत्यप्रतिज्ञत्वरूपम् ॥७॥ इष्टम् अश्वमेधांतयागः-आपूर्तं वापीकूपादिनिर्माणं तद्वधः
तत्फलनाशः भूयात् भवेद्। भविष्यतीति यावत् । करिष्ये इति प्रतिश्रुत्य प्रतिज्ञाय । संधिरार्षः । उक्तवाक्यम् अकुर्वतः अननुतिष्ठतः॥८॥ कृतास्त्रं शिक्षितास्त्रम् । शक्ष्यंति सहिष्यंते । प्रधर्षयितुमिति शेषः।
अग्निना रक्षितममृतमिवेत्युपमा । अनेन पुत्रविपत्तिभीत्यपनयः ॥ ९ ॥ न केवलं विश्वामित्रकृतसंरक्षणेनैव रामस्य दुर्धर्षत्वं किं तु स्वतोपीत्याह रामविश्वामित्रयोः श्लिष्टवर्णनेन । एष इति । एष रामो वि
श्वामित्रश्च । रामपक्षे विद्याधिकः सहजज्ञानशक्तिः तपसः मननादेः परायणं प्राप्यः । विश्वामित्रपक्षे तपसः आश्रयः॥१०॥रामपक्षे अन्यः पुमान् । अविद्यावृतः पुमानित्यर्थः विश्वामित्रपक्षे । एनम् अस्त्रगणम्

त्रस्तरूपंतुविज्ञायजगत्सर्वंमहानृषिः ॥ नृपतिंसुव्रतोधीरोवसिष्ठोवाक्यमब्रवीत् ॥५॥ इक्ष्वाकूणांकुलेजातःसाक्षाद्धर्मइवापरः ॥ धृतिमान्सुव्रतःश्रीमान्न
धर्मंहातुमर्हसि॥ ६॥ त्रिषुलोकेषुविख्यातोधर्मात्माइतिराघवः॥स्वधर्मंप्रतिपद्यस्वनाधर्मंवोढुमर्हसि ॥ ७ ॥ प्रतिश्रुत्यकरिष्येतिउक्तंवाक्यमकुर्वतः ॥
इष्टापूर्तवधोभूयात्तस्माद्रामंविसर्जय ॥ ८ ॥ कृतास्त्रमकृतास्त्रंवानैनंशक्ष्यंतिराक्षसाः ॥ गुप्तंकुशिकपुत्रेणज्वलनेनामृतंयथा ॥ ९ ॥ एषविग्रहवान्धर्म
एषवीर्यवतांवरः ॥ एषविद्याधिकोलोकेतपसश्चपरायणम् ॥ १० ॥ एषोऽस्त्रान्विविधान्वेत्तित्रैलोक्येसचराचरे ॥ नैनमन्यःपुमान्वेत्तिनचवेत्स्यंतिकेचन
॥ ११ ॥ नदेवानर्षयःकेचिन्नामरानचराक्षसाः ॥ गंधर्वयक्षप्रवराःसकिन्नरमहोरगाः ॥ १२ ॥ सर्वास्त्राणिकृशाश्वस्यपुत्राःपरमधार्मिकाः ॥ कौशिकायपुरा
दत्तायदाराज्यंप्रशासति ॥ १३॥ तेपिपुत्राःकृशाश्वस्यप्रजापतिसुतासुताः ॥ नैकरूपामहावीर्यादीप्तिमंतोजयावहाः ॥ १४ ॥ जयाचसुप्रभाचैवदक्षकन्ये
सुमध्यमे ॥ तेसूतेऽस्त्राणिशस्त्राणिशतंपरमभास्वरम् ॥ १५ ॥ पंचाशतंसुताँल्लेभेजयालब्धवरावरान् ॥ वधायासुरसैन्यानामप्रमेयानरूपिणः ॥ १६ ॥
सुप्रभाऽजनयच्चापिपुत्रान्पंचाशतंपुनः ॥ संहारान्नामदुर्धर्षान्दुराक्रामान्बलीयसः ॥ १७॥ तानिचास्त्राणिवेत्त्येषयथावत्कुशिकात्मजः ॥ अपूर्वाणांचजनने
शक्तोभूयश्चधर्मवित् ॥ १८ ॥ तेनास्यमुनिमुख्यस्यधर्मज्ञस्यमहात्मनः ॥ नकिंचिदस्यविदितंभूतंभव्यंचराघव ॥ १९ ॥ एवंवीर्योमहातेजाविश्वामित्रो
महायशाः ॥ नरामगमनेराजन्संशयंगंतुमर्हसि॥ २० ॥तेषांनिग्रहणेशक्तःस्वयंचकुशिकात्मजः ॥ तवपुत्रहितार्थायत्वामुपेत्याभियाचते ॥ २१ ॥

॥ ११ ॥ १२ ॥ ननु देवाद्यनवगतसर्वास्त्रप्राप्तिः ऋषेः कथमित्यत आह । सर्वेति । कृशाश्वः प्रजापतिष्वेकः । परमधार्मिका इति पाठे परमधार्मिकप्रतिष्ठावंत इत्यर्थः । एतेनापि दुर्लभत्वं ध्वनितम् ।
दत्ताः । शिवेनेति शेषः । प्रशासति प्रशास्ति स्मेत्यर्थः । शबार्षः ॥ १३ ॥ अस्त्राणां मातृप्राशस्त्यमप्याह । तेपीति । प्रजापतिसुते दक्षकन्ये तयोः सुताः । नैकरूपाः अनेकरूपाः ॥ १४ ॥ ते
सूते सुवाते इत्यर्थः। शस्त्राणि परविशसनकर्तॄणि ॥ १५ ॥ वरान् श्रेष्ठान् अप्रमेयान् गुणेयत्तया अपरिच्छेद्यान् । अरूपिणः अदृश्यमानरूपान् ॥१६॥ संहारान् अन्वर्थ संहारनामकान् । दुर्धर्षान् परैः
सोढुमशक्यान् । दुराक्रामान् अमोघान् । दीर्घ आर्षः ॥ १७ ॥ अपूर्वाणाम् । अस्त्रविद्याविशेषाणामिति शेषः ॥ १८ ॥ ॥ १९ ॥ २० ॥ वस्तुतो रक्षोनिग्रहे शक्तोपि विश्वामित्रस्त्वत्पुत्रानुग्रहायैव

६

तं च याचते इत्याह। तेषामिति । हितम् । अतिरहस्यानन्यदुर्लभानेकविद्यादानादिरूपम् ॥ २१ ॥ मुमोदेति । परस्मैपदमार्षम् । चस्त्वर्थः प्रसन्नचित्त इत्युत्तरं योज्यः।राघवस्य रामस्य। कुशिकात्मजाय रामं दातुं बुद्धया । अचिंतयदिति शेषः ॥ २२ ॥ रेफैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रा०वा० आ० बा० एकविंशः सर्गः ॥२१॥ छ ॥ तथेति । सलक्ष्मणं रामम् आजुहाव । तयोरविनाभावज्ञानादिति शेषः ॥ १ ॥ कृतस्वस्त्ययनं कृतमंगलाचरणम् । मंगलैः मंगलसूचकैर्मंत्रैः । किं च तत्त्वज्ञानप्रतिपादकवाक्यैः अभिमंत्रितं बोधितमित्यर्थः । तद्बोधनं च योगवासिष्ठप्रसिद्धम् ॥ २ ॥ राजापि तद्वाक्यश्रवणेन सुप्रीतमनाः सन् रामं ददौ ॥ ३ ॥ यात्रायां शकुनमाह । तत इति । ववौ इति । अस्य पृष्ठत इति शेषः । विश्वामित्रगतं तत्संबद्धम् । राजीवं पद्मम् ॥४॥ प्रयाते प्रयाणोन्मुखे स्वप्रयोजनोपक्रमाद्देवानां दुंदुभिस्वनसहिता पुष्पवृष्टिः । शंखादिघोषस्तु स्वनगरजः ॥ ५ ॥ धन्वी धनुर्विद्याकृतश्रमः ॥ ६ ॥ कलापिनौ सतूणीरौ । शोभयानौ प्रकाशयंतौ

इतिमुनिवचनात्प्रसन्नचित्तोरघुवृषभश्चमुमोदपार्थिवः ॥ गमनमभिरुरोचराघवस्यप्रथितयशाःकुशिकात्मजायबुद्ध्या ॥ २२ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआदिकाव्येचतुर्विं०सा०बालकांडे एकविंशःसर्गः ॥ २१ ॥ तथावसिष्ठेब्रुवतिराजादशरथःस्वयम् ॥ प्रहृष्टवदनोराममाजुहावसलक्ष्मणम् ॥ ॥ १ ॥ कृतस्वस्त्ययनंमात्रापित्रादशरथेनच ॥ पुरोधसावसिष्ठेनमंगलैरभिमंत्रितम् ॥ २ ॥ स पुत्रंमूर्ध्न्युपाघ्रायराजादशरथस्तदा ॥ ददौकुशिकपुत्राय सुप्रीतेनांतरात्मना ॥ ३ ॥ ततोवायुःसुखस्पर्शोनीरजस्कोववौतदा ॥ विश्वामित्रगतंरामंदृष्ट्वाराजीवलोचनम् ॥ ४ ॥ पुष्पवृष्टिर्महत्यासीद्देवदुंदुभिनिःस्वनैः ॥ शंखदुंदुभिनिर्घोषःप्रयातेतुमहात्मनि ॥ ५ ॥ विश्वामित्रोययावग्रेततोरामोमहायशाः ॥ काकपक्षधरोधन्वीतंचसौमित्रिरन्वगात् ॥ ६ ॥ कलापिनौधनुष्पाणीशोभयानौदिशोदश ॥ विश्वामित्रंमहात्मानंत्रिशीर्षाविवपन्नगौ ॥ ७ ॥ अनुजग्मतुरक्षुद्रौपितामहमिवाश्विनौ ॥ अनुयातौश्रियादीप्तौशोभयंतावनिंदितौ ॥ ८ ॥ तदाकुशिकपुत्रंतुधनुष्पाणीस्वलंकृतौ ॥ बद्धगोधांगुलित्राणौखड्गवंतौमहाद्युती ॥ ९ ॥ कुमारौचारुवपुषौभ्रातरौरामलक्ष्मणौ ॥ अनुयातौश्रियादीप्तौशोभयेतामनिंदितौ ॥ १० ॥ स्थाणुंदेवमिवाचिंत्यंकुमाराविवपावकी ॥ अध्यर्धयोजनंगत्वासरय्वादक्षिणेतटे ॥ ११ ॥ रामेतिमधुरां वाणींविश्वामित्रोऽभ्यभाषत ॥गृहाणवत्ससलिलंमाभूत्कालस्यपर्ययः ॥ १२ ॥

शस्त्रतेजसा । मुगभावः आर्षः । त्रिशीर्षाविव पन्नगौ स्कंधस्थितधनुषा पृष्ठबद्धतूणीरेण मस्तकेन च त्रिशीर्षत्वम् । यद्वा प्रत्येकं तूणीरद्वयधारणात्त्रिशीर्षत्वम् । धनुषः पाणावुक्तत्वात् । अत्रेदं तूणीरादि वैष्णवं गरुडेन दत्तं रामाय ताटकासुबाहुवधाय मारीचस्य समुद्रे पातनाय च । न हि प्राकृतशस्त्रसाध्यमेतत् । तदुक्तं पाद्मे–पक्षी तार्क्ष्यः समागम्य त्रीणि चास्त्राणि कार्मुकम् । सर्वभूतैरदृश्यः सन् दत्त्वा ताभ्यां पुनर्ययाविति । अस्त्राणि शस्त्राणि खड्गचर्मतूणीररूपाणि ॥ ७ ॥ अक्षुद्रौ अनल्परूपवीर्यादिमंतौ । शोभयंतौ । विश्वामित्रमिति शेषः ॥ ८ ॥ बद्धं गोधाचर्मकृतम् अंगुलित्राणं ययोस्तौ । गोधा हस्तत्राणमिति कश्चित् । अंगुलित्राणस्य पौनरुक्त्यापत्तेः तच्चिंत्यम् ॥ ९ ॥ शोभयेतामिति । अडभावश्छांदसः ॥ १० ॥ स्थाणुं रुद्रम् । पावकी स्कंदविशाखौ । अध्यर्धयोजनम् अर्धाधिकयोजनम् । षट्क्रोशमिति यावत् ॥११॥ तावद्दूरगमने बालकयोः क्षुत्तृट्पीडाप्रादुर्भावस्यावश्यकत्वान्महर्षिर्विनाप्यन्नं परमतृप्तये दिव्ये विद्ये उपदेष्टुमाह। रामेतीत्यादि । सलिलं गृहाण शुद्धाचमनं कुरु ।

( १ ) प्रमोद भास्वराङ्ग इति पुस्तकान्तरे पाठः । ( २ ) अत्रैकः श्लोकः कपुस्तकादधिकः।

कालस्य । अन्नभोजनकालस्य । पर्ययः अतिक्रमः ॥ १२ ॥ मंत्रग्रामं बलाविद्यासंज्ञकं मंत्रसमूहं तथा अतिबलासंज्ञकं च ॥ अन्ये तु प्रागुक्तदिव्यास्त्रशतरूपं मंत्रसमूहम् । तथा प्रकृतोपयोगिन्यौ बलातिबलाख्ये च विद्ये इत्यर्थः । परं तु अत्र बलातिबलयोरेव दानम् अन्येषां तु दानमग्रे भविष्यतीत्याहुः ॥ ग्रहाण त्वामिति । उपलक्षणं लक्ष्मणस्यापि । क्षुत्पिपासाक्षांतिरूपफलस्य उभयोरपि दर्शनात् अपेक्षणाच्च । न श्रमो बहुदूरगमनादौ । तन्मूलको ज्वरोपि न । विपर्ययः अन्यथाभावः । तद्विद्याजपेन भविष्यतीति शेषः ॥ १३ ॥ प्रमत्तम् अकृताचमनादिकम् । धर्षणम् अभिभवः । अस्तीति । वर्तमानसामीप्ये भविष्यति लट् । सर्वत्र तद्विद्यालाभो हेतुः ॥ १४ ॥ न केवलं पृथिव्यामेवेत्याह । त्रिष्वित्यादि ॥ १५ ॥ ज्ञानं तत्त्वज्ञानम् । बुद्धिनिश्चयः ऐहिकविषयः । वादिनं प्रति वक्तव्ये उत्तरे इत्यर्थः ॥ १६ ॥ तव सदृशो न । केनापि गुणेनेति शेषः । सर्वज्ञानस्य मातराविति । अप्रतिभामूलक्षुधादिनिवृत्तिसामर्थ्यवत्त्वात् । सर्वज्ञानजनके इत्यर्थः ॥ १७ ॥ १८ ॥ विद्याद्वयमधीयाने । त्वयीति शेषः । यशश्चाप्यतुलं भुवीति पाठे भविष्यतीत्यपि शेषः । तयोर्विद्ययोः तादृशसामर्थ्ये कारणमाह । पितामहेत्यादि । तन्निर्मितत्वात्तत्सुते ॥ १९ ॥ प्रदातुम् । मम बुद्धिरिति शेषः । सदृशः

**मंत्रग्रामंगृहाणत्वंबलामतिबलांतथा ॥ नश्रमोनज्वरोवातेनरूपस्यविपर्ययः ॥ १३ ॥ नचसुप्तंप्रमत्तंवाधर्षयिष्यंतिनैर्ऋताः ॥ नबाह्वोःसदृशोवीर्येपृथिव्यामस्तिकश्चन ॥ १४ ॥ त्रिषुलोकेषुवारामनभवेत्सदृशस्तव ॥ बलामतिबलांचैवपठतस्तातराघव ॥ १५ ॥ नसौभाग्येनदाक्षिण्येनज्ञानेबुद्धिनिश्चये ॥ नोत्तरेप्रतिवक्तव्येसमोलोकेतवानघ ॥ १६ ॥ एतद्विद्याद्वयेलब्धेनभवेत्सदृशस्तव ॥ बलाचातिबलाचैवसर्वज्ञानस्यमातरौ ॥ १७ ॥ क्षुत्पिपासेनतेरामभविष्येतेनरोत्तम ॥ बलामतिबलांचैवपठतस्तातराघव ॥ १८ ॥ विद्याद्वयमधीयानेयशश्चाथभवेद्भुवि ॥ पितामहसुतेह्येतेविद्येतेजःसमन्विते ॥ १९ ॥ प्रदातुंतवकाकुत्स्थसदृशस्त्वंहिपार्थिव ॥ कामंबहुगुणाःसर्वेत्वय्येतेनात्रसंशयः ॥ २० ॥ तपसासंभृतेचैतेबहुरूपेभविष्यतः ॥ ततोरामोजलंस्पृष्ट्वाप्रहृष्टवदनःशुचिः ॥ २१ ॥ प्रतिजग्राहतेविद्येमहर्षेर्भावितात्मनः ॥ विद्यासमुदितोरामःशुशुभेभीमविक्रमः ॥ २२ ॥ सहस्ररश्मिर्भगवाञ्छरदीवदिवाकरः ॥ गुरुकार्याणिसर्वाणिनियुज्यकुशिकात्मजः ॥ ऊषुस्तांरजनींतत्रसरय्वांससुखंत्रयः ॥२३॥ दशरथनृपसूनुसत्तमाभ्यांतृणशयनेऽनुचितेतदोषिताभ्याम् ॥ कुशिकसुतवचोनुलालिताभ्यांसुखमिवसाविबभौविभावरी ॥ २४॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआदिकाव्येचतुर्विं०सा० बालकांडेद्वाविंशःसर्गः ॥ २२ ॥**

तद्दानयोग्य इत्यर्थः । एते एतद्विद्याप्रदानयोग्याः । बह्विति । लुप्तविभक्तिकम् । बहव इत्यर्थः । विपुला इति यावत् ॥ २० ॥ तपसा मदीयेन संभृते पूर्णे बहुरूपे शास्त्रोक्तफलादधिकफलप्रदे । यद्वा तपसा सर्वतपःप्राप्यत्वेन तपोरूपेण भवता संभृते धृते इत्यर्थः । जलं स्पृष्ट्वा आचम्य ॥ २१ ॥ विद्यासमुदितः विद्यासंबद्धः । स्वतो विक्रमवानपि विद्यासंबंधादधिकविक्रम इत्यर्थः ॥ २२ ॥ सहस्रेत्यादि । पूर्वान्वयि । कुशिकात्मजो विश्वामित्रः गुरुकार्याणि गुरुविषयाणि कार्याणि पूर्वोत्थायी पश्चात्संनिवेशीत्यादीनि तानि सर्वाणि नियुज्य उपदिश्येत्यर्थः । सप्तम्यंतपाठे गुरुकार्याणि पादोपसंग्रहणादीनि कुशिकात्मजे नियुज्य कृत्वेत्यर्थः । सरय्वां तत्तीरे ॥ २३ ॥ दशरथेत्यादि । षष्ठ्यर्थे चतुर्थी । तृणाद्यनुचितशयनोषितयोरपि रात्रेः सुखव्युष्टत्वे हेतुः कुशिकसुतवचोनुलालितत्वम् । विबभौ । व्युष्टेति यावत् ॥ २४ ॥ वैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे द्वाविंशः सर्गः ॥ २२ ॥ ॥ छ ॥ ॥

१ अत्र सर्गे एकः श्लोकोधिकः कपुस्तकात् ।

प्रभाता यामिति । पर्णसंस्तरे मृदुपर्णादिपरिकल्पिते शयनीये । पूर्वश्लोके तृणशयन इत्युपलक्षणं बोध्यम् ॥ १ ॥ कौसल्येति । हे राम त्वया पुत्रेण कौसल्या सुपुत्रा शोभनपुत्रवती अतः तादृशस्य सुपुत्रस्य तव अस्मिन्समये निद्रा अनुचिता । यतः पूर्वा संध्या प्रवर्तते प्रातःसंध्या प्रवर्तते । अतः उत्तिष्ठ । दैवं देवताध्यानम् । आह्निकं शौचादिक्रिया ॥ २ ॥ स्नात्वा कृतोदकौ कृतार्घ्यदानौ । इदं तावत्पर्यंतकर्तव्यक्रियामात्रोपलक्षणम् । परमं जपं सावित्रीम् ॥ ३ ॥ अभितस्थतुः संमुखौ स्थितावित्यर्थः ॥ ४ ॥ प्रयांतौ गच्छंतौ ॥ ५ ॥ तत्र गंगासरयूसंगमप्रदेशे । तप्यतां तपताम् । यक्छांदसः ऋषीणामाश्रमपदम् । ददृशाते इत्यनुकर्षः ॥ ६ ॥ तं परमरमणीयम् ॥ ७ ॥ वसते वसति । तङ् छांदसः ॥ ८ ॥ प्रहस्य बालकवचनश्रवणजसंतोषात् हासः । सर्वज्ञोप्येवं नाटयतीति वा । यस्य पूर्वकालोधिष्ठेयः अभूद् स श्रूयतामित्यन्वयः ॥ ९ ॥ मूर्तिमान् शरीरधरः । समाहितं समाहितचित्तम् । स्थाणुं रुद्रम् ॥ १० ॥ कृतोद्वाहं समाधेः कृतव्युत्थानं कालोचितविलासदेशं गच्छंतं

प्रभातायांतुशर्वर्यांविश्वामित्रोमहामुनिः ॥ अभ्यभाषतकाकुत्स्थौशयानौपर्णसंस्तरे ॥ १ ॥ कौसल्यासुप्रजारामपूर्वासंध्याप्रवर्तते ॥ उत्तिष्ठनरशार्दूलकर्तव्यंदैवमाह्निकम् ॥ २ ॥ तस्यर्षेःपरमोदारंवचःश्रुत्वानरोत्तमौ ॥ स्नात्वाकृतोदकौवीरौजेपतुःपरमंजपम् ॥ ३ ॥ कृताह्निकौमहावीर्यौविश्वामित्रंतपोधनम् ॥ अभिवाद्यातिसंहृष्टौगमनायाभितस्थतुः ॥ ४ ॥ तौप्रयांतौमहावीर्यौदिव्यांत्रिपथगांनदीम् ॥ ददृशातेततस्तत्रसरय्वाःसंगमेशुभे ॥ ५ ॥ तत्राश्रमपदंपुण्यमृषीणांभावितात्मनाम् ॥ बहुवर्षसहस्राणितप्यतांपरमंतपः ॥ ६ ॥ तं दृष्ट्वापरमप्रीतौराघवौपुण्यमाश्रमम् ॥ ऊचतुस्तंमहात्मानंविश्वामित्रमिदंवचः ॥ ७ ॥ कस्यायमाश्रमःपुण्यःकोन्वस्मिन्वसतेपुमान् ॥ भगवञ्छ्रोतुमिच्छावःपरंकौतूहलं हि नौ ॥ ८ ॥ तयोस्तद्वचनंश्रुत्वाप्रहस्यमुनिपुंगवः ॥ अब्रवीच्छ्रूयतांरामयस्यायंपूर्वआश्रमः ॥ ९ ॥ कंदर्पोमूर्तिमानासीत्कामइत्युच्यतेबुधैः ॥ तपस्यंतमिहस्थाणुंनियमेनसमाहितम् ॥ १० ॥ कृतोद्वाहंतुदेवेशंगच्छंतंसमरुद्गणम् ॥ धर्षयामासदुर्मेधाहुंकृतश्चमहात्मना ॥ ११ ॥ अवध्यातश्चरुद्रेणचक्षुषारघुनंदन ॥ व्यशीर्यंतशरीरात्स्वात्सर्वगात्राणिदुर्मतेः ॥ १२ ॥ तत्रगात्रंहतंतस्यनिर्दग्धस्यमहात्मनः ॥ अशरीरःकृतःकामःक्रोधाद्देवेश्वरेणह ॥ १३ ॥ अनंगइतिविख्यातस्तदाप्रभृतिराघव ॥ स चांगविषयःश्रीमान्यत्रांगंसमुमोचह ॥ १४ ॥ तस्यायमाश्रमःपुण्यस्तस्येमेमुनयःपुरा ॥ शिष्याधर्मपरावीरतेषांपापंनविद्यते ॥ १५ ॥ इहाद्यरजनींरामवसेमशुभदर्शन ॥ पुण्ययोःसरितोर्मध्येश्वस्तरिष्यामहेवयम् ॥ १६ ॥ अभिगच्छामहेसर्वेशुचयःपुण्यमाश्रमम् ॥ इहवासःपरोस्माकंसुखंवत्स्यामहेनिशाम् ॥ १७ ॥ स्नाताश्चकृतजप्याश्चहुतहव्यानरोत्तम ॥ तेषांसंवदतांतत्रतपोदीर्घेणचक्षुषा ॥ १८ ॥

देवेशं दुर्मेधाः कामो धर्षयामास चित्तविकारोत्पादनेन अभिभूतवान् । ततो महात्मना रुद्रेण ज्ञातापराधेन हुंकृतः चक्षुषा अवध्यातो दृष्टश्चेत्युत्तरेणान्वयः ॥ ११ ॥ व्यशीर्यंत विशीर्णानि । सर्वगात्राणि सर्वे अवयवाः ॥ १२ ॥ तत्र प्रसिद्धतरे अस्मिन्नाश्रमे । हतं नष्टम् । हशब्दः प्रसिद्धौ ॥ १३ ॥ ततो भयात्पलायमानः यत्र देशे स कामः अंगं मुमोच सः अंगविषयः अंगदेशः । इति विख्यात इति शेषः ॥ १४ ॥ तस्य स्थाणोः । इमे मुनयः इदानीमिह तपस्यंतः । तस्य रुद्रस्य । पुरा पूर्वकाले । संतानपरंपरया शिष्याः अत एव धर्मपराः । अत एव तेषां पापं न विद्यते ॥ १५ ॥ सरितोः गंगासरय्वोः ॥ १६ ॥ स्नानादिना शुचयो भूत्वा पुण्यमाश्रममभिगच्छामहे । व्यत्ययात्तङ् । हे इति पृथक्पदं वा । परः युक्ततरः ॥ १७ ॥ स्नाता इत्यादीनि तदाश्रममुनिविशेषणानि । तेषां संवदतां तेषु संवदत्सु

तान् अदृष्ट्वापि तपोमहिमजातदीर्घत्ववता अत एव विप्रकृष्टार्थग्राहिणा चक्षुषा रामाद्यागमनं विज्ञायेत्युत्तरेणान्वयः ॥१८॥ आतिथ्यम् अतिथ्यर्हं भोजनादि । पश्चाद् भगवतोपि मनुष्यरूपधारित्वेन विश्वामित्रे गुरुत्वनाटनेन च आदौ विश्वामित्रे अर्घ्यादि दत्त्वा पश्चात् रामे ददुः । अभिरंजयन् । अडभावः आर्षः । तदाश्रमस्थानृषीनिति शेषः । यद्वा सत्कारं समनुप्राप्य तं प्रापय्य विश्वामित्रादीन् तदाश्रमस्थाः ऋषयः अभ्यरंजयन्नित्यर्थः ॥ १९ ॥ २० ॥ अजपन् नदीतीरे ते विश्वामित्राद्याः ऋषयश्च तद्वासिभिर्मुनिभिः सह स्वसाहित्येन आनीताः संवेशनाय स्वाश्रमं प्रापिताः ॥२१॥ कामाश्रमपदे सर्वकामपरिपूरके भर्गाश्रमे ॥ २२ ॥ २३ ॥ ईक्षमाणः ॥ इति श्रीरा० श्रीरा० रा० वा० आ० बालकांडे त्रयोविंशः सर्गः ॥ २३ ॥ ॥ ७ ॥ ॥ तत इति । नद्याः गंगायाः ॥ १ ॥ उपस्थाप्य आनाय्य ॥ २ ॥ राजपुत्र

विज्ञायपरमप्रीतामुनयोहर्षमागमन् ॥ अर्घ्यंपाद्यंतथातिथ्यंनिवेद्यकुशिकात्मजे ॥ १९ ॥ रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् ॥ सत्कारंसमनुप्राप्य कथाभिरभिरंजयन् ॥ २० ॥ यथार्हमजपन्संध्यामृषयस्तेसमाहिताः ॥ तत्रवासिभिरानीतामुनिभिःसुव्रतैःसह ॥ २१ ॥ न्यवसत्ससुखंतत्रकामाश्रमपदेतथा ॥ कथाभिरभिरामाभिरभिरामौनृपात्मजौ ॥ २२ ॥ रमयामासधर्मात्माकौशिकोमुनिपुंगवः ॥ २३ ॥ इत्यार्षे श्रीम० वा० आ० च० विं० सा० बालकांडे त्रयोविंशः सर्गः ॥ २३ ॥ ततःप्रभातेविमलेकृताह्निकमरिंदमौ ॥ विश्वामित्रंपुरस्कृत्यनद्यास्तीरमुपागतौ ॥ १ ॥ तेचसर्वेमहात्मानोमुनयः संशितव्रताः ॥ उपस्थाप्यशुभांनावंविश्वामित्रमथाब्रुवन् ॥ २ ॥ आरोहतुभवान्नावंराजपुत्रपुरस्कृतः ॥ अरिष्टंगच्छपंथानंमाभूत्कालस्यपर्ययः ॥ ३ ॥ विश्वामित्रस्तथेत्युक्त्वातानृषीन्प्रतिपूज्य च ॥ ततारसहितस्ताभ्यांसरितंसागरंगमाम् ॥ ४ ॥ तत्र शुश्राववैशब्दंतोयसंरंभवर्धितम् ॥ मध्यमागम्यतोयस्यतस्यशब्दस्यनिश्चयम् ॥ ५ ॥ ज्ञातुकामोमहातेजाःसहरामःकनीयसा ॥ अथ रामःसरिन्मध्येपप्रच्छमुनिपुंगवम् ॥ ६ ॥ वारिणोभिद्यमानस्य किमयंतुमुलोध्वनिः ॥ राघवस्यवचःश्रुत्वाकौतूहलसमन्वितम् ॥ ७ ॥ कथयामासधर्मात्मातस्यशब्दस्यनिश्चयम् ॥ कैलासपर्वतेराममनसानिर्मितंपरम् ॥ ८ ॥ ब्रह्मणानरशार्दूलतेनेदंमानसंसरः ॥ तस्मात्सुस्रावसरसः साऽयोध्यामुपगूहते ॥ ९ ॥ सरःप्रवृत्तासरयूः पुण्याब्रह्मसरश्च्युता ॥ तस्यायमतुलः शब्दोजाह्नवीमभिवर्तते ॥ १० ॥

पुरस्कृत इति । तृतीयातत्पुरुषः । तीर्त्वेति शेषः । अरिष्टं शुभं यथा भवति तथा । रिषेर्हिंसार्थत्वात् ॥ ३ ॥ ततार तर्तुमुपक्रांतः । सरितं गंगाम् । सागरं गच्छति जलपूर्णत्वरूपस्वरूपं प्रापयति ताम् । अंतर्भावितण्यर्थः । अगस्त्यशोषितस्य समुद्रस्य गंगया पूरणं कृतमिति प्रसिद्धेः ॥४॥ तोयसंरंभेण परस्परं तरंगसंघट्टक्षोभेण वर्धितम् अतिप्रवृद्धम् । निश्चयं सहजः औपाधिको वेत्त्येतदन्यतरनिश्चयम्॥५॥ ज्ञातुकाम इति । अस्य जात इति शेषः ॥ ६ ॥ भिद्यमानस्य परस्परसंघट्टमानस्य ॥ ७ ॥ निश्चयं निश्चयजनकहेतुम् ॥ ८ ॥ तेन मनोनिर्मितत्वेन । तस्मात्सरसो या सुस्राव सेत्यन्वयः ॥ ९ ॥ सरसो यातीति प्रवर्तत इति सरयूः । सरःप्रवृत्तेति । तद्योगनिर्वचनम् । पुण्यत्वे हेतुर्ब्रह्मसरश्च्युतत्वम् ।तस्याः । अयं संधिरार्षः । या जाह्नवीमभिवर्तते तया सह संगच्छते तस्याः अयं शब्द इत्यर्थः॥ १०॥

(१) अत्र सर्गे अर्धश्लोकोधिकः कपुस्तकात् ।

ताभ्यां सरयूगंगाभ्याम् ॥ ११ ॥ विक्रमः पादविक्षेपः । घोरसंकाशं भयंकरदर्शनम् ॥ १२ ॥ अविप्रहतं सार्थगमागमाभावात् अक्षुण्णम् । झिल्लिका कीटविशेषः ॥ १३ ॥ भैरवैः भयंकरैः । श्वापदानि दुष्टमृगाः । दारुणारवैः दारुणशब्दैः शकुंतैः भासैः । शकुनैः सर्वपक्षिभिः । भैरवस्वनैः वाश्यद्भिः अतिभैरवं शब्दं कुर्वद्भिः ॥ १४ ॥ शोभितं युक्तम् । धवादयो वृक्षविशेषाः ॥ १५ ॥ किं नु कुतो नु ॥ १६ ॥ यस्य प्राणिनः स श्रूयतामित्यन्वयः । स्फीतौ समृद्धौ ॥ १७ ॥ मलदाः करूषा इति बहुवचनं शब्दस्वभावकृतम् । देवनिर्माणेन देवयत्नेन निर्मितौ । मलेन अशुच्याचारेण

वारिसंक्षोभजोरामप्रणामंनियतः कुरु ॥ ताभ्यां तु तावुभौकृत्वा प्रणाममतिधार्मिकौ ॥ ११ ॥ तीरंदक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ सवनंघोरसंकाशं दृष्ट्वानरवरात्मजः ॥१२॥ अविप्रहतमैक्ष्वाकःपप्रच्छमुनिपुंगवम् ॥ अहोवनमिदंदुर्गंझिल्लिकागणसंयुतम् ॥१३॥ भैरवैःश्वापदैःकीर्णं शकुन्तैर्दारुणारवैः ॥ नानाप्रकारैःशकुनैर्वाश्यद्भिर्भैरवस्वनैः ॥ १४ ॥ सिंहव्याघ्रवराहैश्चवारणैश्चापिशोभितम् ॥ धवाश्वकर्णककुभैर्बिल्वातिंदुकपाटलैः ॥ १५ ॥ संकीर्णंबदरीभिश्चकिंन्विदंदारुणंवनम् ॥ तमुवाचमहातेजाविश्वामित्रोमहामुनिः ॥ १६ ॥ श्रूयतांवत्सकाकुत्स्थयस्यैतद्दारुणंवनम् ॥ एतौजनपदौस्फीतौपूर्वमास्तांनरोत्तम ॥ १७ ॥ मलदाश्चकरूषाश्चदेवनिर्माणनिर्मितौ ॥ पुरावृत्रवधेराममलेनसमभिप्लुतम् ॥ १८ ॥ क्षुधाचैवसहस्राक्षंब्रह्महत्यासमाविशत् ॥ तमिंद्रंमलिनंदेवाऋषयश्चतपोधनाः ॥ १९ ॥ कलशैःस्नापयामासुर्मलंचास्यप्रमोचयन् ॥ इह भूम्यांमलंदत्त्वादेवाःकारूषमेव च ॥ २० ॥ शरीरजंमहेंद्रस्यततोहर्षंप्रपेदिरे ॥ निर्मलोनिष्करूषश्चशुद्धइंद्रोयथाभवत् ॥ २१ ॥ ततोदेशस्यसुप्रीतोवरंप्रादादनुत्तमम् ॥ इमौजनपदौस्फीतौख्यातिंलोकेगमिष्यतः ॥२२॥ मलदाश्चकरूषाश्चममांगमलधारिणौ ॥ साधुसाध्वितितं देवाःपाकशासनमब्रुवन् ॥ २३ ॥ देशस्यपूजांतांदृष्ट्वाकृतांशक्रेणधीमता ॥ एतौजनपदौस्फीतौदीर्घकालमरिंदम ॥ २४ ॥ मलदाश्चकरूषाश्चमुदिताधनधान्यतः ॥ कस्यचित्त्वथकालस्ययक्षिणीकामरूपिणी ॥ २५ ॥ बलं नागसहस्रस्यधारयंतीतदाह्यभूत् ॥ ताटकानामभद्रंतेभार्यासुंदस्यधीमतः ॥ २६ ॥

॥ १८ ॥ क्षुधा बुभुक्षया समभिप्लुतमित्यनुकृष्यते । ब्रह्महत्या । वृत्रस्य ब्रह्मसंतानत्वात् । देवाः वस्वादयः ॥ १९ ॥ कलशैः गंगाजलपूर्णघटैः । प्रमोचयन् प्रामोचयन् । कारूषं क्षुद् । दत्त्वा त्यक्त्वेत्यर्थः ॥ २० ॥ शरीरजमिति । पूर्वान्वयि । प्रपेदिरे । देवा इति शेषः ॥ २१ ॥ ततः तदेत्यर्थः ॥ २२ ॥ यस्मात् मम अंगमलधारिणौ तस्मात् ख्यातिं गमिष्यत इति पूर्वेणान्वयः ॥ २३ ॥ शक्रेण कृतां देशस्य पूजां दृष्ट्वा पाकशासनं साध्विति अब्रुवन्निति पूर्वेणान्वयः ॥ २४ ॥ कस्यचित् कियतः कालस्य । अपगमे इति शेषः ॥ २५ ॥ भद्रं ते इति । विश्वामित्रस्य आशीर्वचनं बालकत्वेन

तादृशयक्षिणीनामश्रवणेन त्रासो मा भूदिति । यद्वा ताटका नाम ते भद्रम् । प्रथमशौर्यस्थानत्वेन शौर्यप्रसिद्धिकरत्वरूप भद्रत्वमस्या इति बोध्यम् ॥२६॥ २७॥ २८॥ सेयं या विनाशयति सेत्यर्थः । आवृत्य निरुध्य । अर्धम् अतिक्रांतमत्यर्धं तादृशे योजने ॥ २९ ॥ यतश्च इदं ताटकावनम् अस्माभिः गतव्यम् अत एव च हेतोः हे राम स्वबाहुबलमाश्रित्य इमां जहि ॥३० ॥ ननु स्त्री कथं हंतव्या तत्राह । मन्नियोगादिति । मदाज्ञया स्त्रीवधशंकां त्यज । ईदृशं ताटकाक्रांतम् ॥ ३१ ॥ अद्यापि न निवर्तते । अत्र पूर्वस्थितो जन इति शेषः ॥ ३२ ॥ फलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे चतुर्विंशः सर्गः ॥ २४ ॥ ॥छ॥ ॥ अथेति । अप्रमेयस्य अप्रमेयप्रभावस्य । शार्दूलः श्रेष्ठः ॥१॥ यदा यतः । यक्षी यक्षजातिः । श्रूयते ।

मारीचोराक्षसःपुत्रोयस्याः शक्रपराक्रमः ॥ वृत्तबाहुर्महाशीर्षोविपुलास्यतनुर्महान् ॥ २७ ॥ राक्षसोभैरवाकारोनित्यंत्रासयतेप्रजाः ॥ इमौजनपदौ नित्यंविनाशयतिराघव ॥ २८ ॥ मलदांश्चकरूषांश्चताटकादुष्टचारिणी ॥ सेयंपंथानमावृत्यवसत्यत्यर्धयोजने ॥ २९ ॥ अतएवचगंतव्यंताटकायावनं यतः ॥ स्वबाहुबलमाश्रित्यजहीमांदुष्टचारिणीम् ॥ ३० ॥ मन्नियोगादिमंदेशंकुरुनिष्कंटकंपुनः ॥ नहिकश्चिदिमंदेशंशक्तोह्यागंतुमीदृशम् ॥ ३१ ॥ यक्षिण्याघोरयारामउत्सादितमसह्यया ॥ एतत्तेसर्वमाख्यातंतथैतद्दारुणंवनम् ॥ यक्ष्याचोत्सादितंसर्वमद्यापिननिवर्तते ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्र्यां संहितायांबालकांडे चतुर्विंशःसर्गः ॥ २४ ॥ अथतस्याप्रमेयस्यमुनेर्वचनमुत्तमम् ॥ श्रुत्वापुरुषशार्दूलः प्रत्युवाचशुभांगिरम् ॥ १ ॥ अल्पवीर्यायदायक्षीश्रूयतेमुनिपुंगव ॥ कथंनागसहस्रस्यधारयत्यबलाबलम् ॥ २ ॥ इत्युक्तवचनंश्रुत्वाराघवस्यामितौजसः ॥ हर्षयञ्श्लक्ष्णयावाचासलक्ष्मणमरिंदमम् ॥ ३ ॥ विश्वामित्रोऽब्रवीद्वाक्यंशृणुयेनबलोत्कटा ॥ वरदानकृतंवीर्यंधारयत्यबलाबलम् ॥ ४ ॥ पूर्वमासीन्महायक्षःसुकेतुर्नामवीर्यवान् ॥ अनपत्यःशुभाचारःसचतेपेमहत्तपः ॥ ५ ॥ पितामहस्तुसुप्रीतस्तस्ययक्षपतेस्तदा ॥ कन्यारत्नंददौरामताटकांनामनामतः ॥ ६ ॥ ददौनागसहस्रस्यबलंचास्याःपितामहः ॥ नत्वेवपुत्रंयक्षायददौचासौमहायशाः ॥ ७॥ तांतुबालांविवर्धंतींरूपयौवनशालिनीम् ॥ जंभपुत्रायसुंदायददौभार्यांयशस्विनीम् ॥ ८ ॥ कस्यचित्त्वथकालस्ययक्षीपुत्रंव्यजायत ॥ मारीचंनामदुर्धर्षंयःशापाद्राक्षसोभवत् ॥ ९ ॥ सुंदेतु निहतेरामअगस्त्यमृषिसत्तमम् ॥ ताटकासहपुत्रेणप्रधर्षयितुमिच्छति ॥ १० ॥

पुराणादीविति शेषः । अबलेति । साभिप्रायम् ॥ २ ॥ ३ ॥ वीर्यं शौर्यादि । बलमात्रमश्ने वीर्याभिधानं शौर्यादयोन्येपि गुणाः तस्यां संतीति ज्ञापनार्थम् ॥ ४ ॥ वरप्राप्तिमूलमाह । पूर्वमिति । तेपे । पुत्रार्थं पितामहमुद्दिश्येति शेषः ॥ ५ ॥ कन्यारत्नं दिव्यरूपवतीं कन्याम् ॥ ६ ॥ तदभिसंहितगुणवता पुत्रेण अत्यंतं जनपीडा भवेदिति विचार्य पुत्रं न ददौ ॥ ७ ॥ विवर्धंतीं वर्धमानाम् । जंभपुत्रायेति । अत्र खंजुपुत्रायेति पाठे खंजोः पुत्रः खंजुपुत्रः । असुरयक्षयोर्देवयोनित्वेनोचितः संबंधः ॥ ८ ॥ व्यजायत प्रासोष्ट असूत ॥ ९ ॥ शापं दर्शयति । सुंदे त्विति । निहते । अगस्त्येन शापं दत्त्वेति शेषः ।

इच्छति इच्छति स्म ॥ १० ॥ जातसंरंभा स्वभर्तृवधजकोपवती ॥११॥ भजस्व ! शुद्धदेवयोनिस्वरूपं मुक्त्वेति शेषः । शप्तवान् राक्षसत्वं भजस्वेति ॥१२॥ तदेव विस्तरेणाह । पुरुषादीति । भवेति शेषः । तदेवोपपादयति । इदमिति । इदं रूपं यक्षीरूपं विहाय त्याजयित्वा दारुणं रूपं राक्षसीरूपम् अस्तु भवतु । एतदेवाभिमेत्य पाद्मे उक्तं—तौ रामलक्ष्मणौ वीरावायांतीं पथि राक्षसीम् ॥ ताटकां नाम घोरां तां सुंदभार्यां सुकेतुजामिति ॥ १३ ॥ अमर्षाद् असहनाद् । देशोत्सादने हेतुगर्भ विशेषणम् अगस्त्याचरितामिति । अगस्त्यतपःस्थानमित्यर्थः ॥ १४ ॥ गोब्राह्मणहितार्थायेति । स्त्रीवधशंकानिरासाय तद्धिताय क्रियमाणं पापवदाभासमानमपि धर्मायेति भावः॥१५ ॥ शापसंसृष्टाम् अगस्त्यशापव्याप्ताम् ॥ १६॥ हे नरोत्तम ते स्त्रीवधनिमित्ता घृणा न कार्या । अत्र नरोत्तमेत्यनेन पुरुषोत्तमेश्वररूपत्वात्तव पापसंबंधाभाव इति ध्वनितम् । चातुर्वर्ण्यहितार्थं तद्धिताय ! कर्तव्यमिति । अस्य नृशंसमित्याद्युत्तरेणान्वयः ॥१७॥ वाशब्द इवार्थे । अनृशंसमिव नृशंसं क्रूरमपि कार्यमित्यर्थः । प्रजारक्षणकारणाद् प्रजारक्षणाद्धेतोः।रक्षता

भक्षार्थंजातसंरंभागर्जंतीसाभ्यधावत ॥ आपतंतींतुतांदृष्ट्वाअगस्त्योभगवानृषिः ॥ ११ ॥ राक्षसत्वंभजस्वेतिमारीचंव्याजहारसः ॥ अगस्त्यःपरमामर्षस्ताटकामपिशप्तवान् ॥ १२ ॥ पुरुषादीमहायक्षीविकृताविकृताननना ॥ इदंरूपंविहायाशुदारुणंरूपमस्तुते ॥ १३ ॥ सैषाशापकृतामर्षाताटकाक्रोधमूर्छिता ॥ देशमुत्सादयत्येनमगस्त्याचरितंशुभम् ॥ १४ ॥ एनांराघवदुर्वृत्तांयक्षींपरमदारुणाम् ॥ गोब्राह्मणहितार्थायजहिदुष्टपराक्रमाम् ॥ १५ ॥ नह्येनांशापसंसृष्टांकश्चिदुत्सहतेपुमान् ॥ निहंतुंत्रिषुलोकेषुत्वामृतेरघुनंदन ॥ १६ ॥ नहितेस्त्रीवधकृतेघृणाकार्यानरोत्तम ॥ चातुर्वर्ण्यहितार्थंहिकर्तव्यंराजसूनुना ॥ १७ ॥ नृशंसमनृशंसंवाप्रजारक्षणकारणात् ॥ पातकंवासदोषंवाकर्तव्यंरक्षतासदा ॥ १८ ॥ राज्यभारनियुक्तानामेषधर्मःसनातनः ॥ अधर्म्यांजहिकाकुत्स्थधर्मोह्यस्यांनविद्यते ॥ १९ ॥ श्रूयतेहिपुराशक्रोविरोचनसुतांनृप ॥ पृथिवींहंतुमिच्छंतींमंथरामभ्यसूदयत् ॥ २० ॥ विष्णुनाचपुरारामभृगुपत्नीपतिव्रता ॥ अनिंद्रंलोकमिच्छंतीकाव्यमातानिषूदिता ॥ २१ ॥ एतैश्चान्यैश्चबहुभीराजपुत्रैर्महात्मभिः ॥ अधर्मसहितानार्योहताःपुरुषसत्तमैः ॥ तस्मादेनांघृणांत्यक्त्वाजहिमच्छासनान्नृप ॥ २२ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येच०विं० सा०बालकांडे पंचविंशःसर्गः ॥ २५ ॥ मुनेर्वचनमक्लीवंश्रुत्वानरवरात्मजः ॥ राघवःप्रांजलिर्भूत्वाप्रत्युवाचदृढव्रतः ॥ १ ॥ पितुर्वचननिर्देशात्पितुर्वचनगौरवात् ॥ वचनंकौशिकस्येतिकर्तव्यमविशंकया ॥ २ ॥

सदेति । रक्षाधर्मसमृद्धिशेषत्वेनेति भावः । पातकं वा मुख्यपातकं वा ! सदोषं वा यज्ञादिवत्सदोषम् ईषत्पापयुतं धर्मं वा । सदोषवधरूपमिति यावत् ॥ १८ ॥ एष धर्म इति । धर्ममूलकत्वादिति भावः । अतोप्यस्याः वधो न्याय्य इत्याह । अधर्म्यामिति । धर्मादनपेताम् । तदेवोपपादयति । धर्मो हीति ॥ १९ ॥ अधर्म्यः स्त्रीवधोपि धर्म एवेत्यर्थ संमतिभिरुपपादयति । श्रूयत इति । पृथिवीं तदधिष्ठात्रीं देवतां यद्वा तस्याः प्रजा इत्यर्थः ॥ २० ॥ अनिद्रं निद्रासुखरहितम् । अनिंद्रमिति पाठे इंद्ररहितम् । काव्यः शुक्रः ॥ २१ ॥ एतैः एतादृशैः । यद्वा आर्षं बहुत्वम् । एताभ्यां शक्रविष्णुभ्यामित्यर्थः । मच्छासनादिति । यथा परशुरामस्य जमदग्नेः गुरोराज्ञया मातृवधेपि न दोषः तथा । बलादिदातृत्वेन गुरोः मम आज्ञया स्त्रीवधे तव न दोष इति भाव. ॥ २२ ॥ रेखांमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकिये आदिकाव्ये बालकांडे पंचविंशः सर्गः ॥ २५ ॥ ॥ छ ॥ ॥ मुनेरिति । अक्लीबं धृष्टम् ॥ १ ॥ पितुरिति । कौशिकस्य वचनम् अविशंकया क

(१) अत्र सर्गेऽर्धश्लोकोधिकः कपुस्तकात् ।

र्तव्यं त्वयेत्येवंरूपान्निर्देशान्नियोगात् । पितुर्वचनगौरवात परमाप्तवाक्यत्वेन अतिप्रमाणत्वात् । त्वद्वचनम् अवश्यं कर्तव्येन निश्चितमिति शेषः ॥ २ ॥ कदैवं नियोगः कृत इत्यत्राह । अन्विति। गुरवो वसिष्ठवामदेवाद्याः । अनवज्ञानहेतुरुक्त एव । तद्वचो विश्वामित्रवचः । इति अनुशिष्ट इत्यन्वयः॥ ३ ॥सोहमिति । ब्रह्मवादिनः। तस्य अपापस्पर्शेन तत्संकल्पादन्यस्यापि पापमपापं पुण्यं चेत्याह। उत्तममिति । उत्कृष्टधर्ममित्यर्थः ॥ ४ ॥ पुण्यत्वमेवोपपादयति । गोब्राह्मणेति । अप्रमेयस्य तव च हिताय । अस्य हितं स्वाज्ञापरिपालनेन संतोषरूपम् । इदमावर्तते । तव वचनं कर्तुमुद्यतो विचिकित्सारहितोहं ताटकावधं करिष्यामीति पूर्वेणान्वयः ॥ ५ ॥ तीव्रं परुषश्रवणम् ॥ ६ ॥ वित्रस्ताः भीताः । मोहिता व्याकुलचित्ता जाता ॥ ७ ॥ तं शब्दं श्रुत्वा च क्रुद्धा । स शब्दो यत्र यतो विनिःसृतः तमभिनिध्याय शब्दनिःसरणावधिदेशं लक्षीकृत्य अभ्यद्रवदिति योजना ॥ ८ ॥ प्रमाणेन शरीरप्रमाणेन ॥ ९ ॥ भैरवं भयंकरम् । दारुणं घोरम् । अस्य वपुषः । चोप्यर्थः । अभीरूणामपीत्यर्थः ॥ १० ॥

अनुशिष्टोस्म्ययोध्यायांगुरुमध्येमहात्मना ॥ पित्रादशरथेनाहंनावज्ञेयंहितद्वचः ॥ ३ ॥ सोहंपितुर्वचःश्रुत्वाशासनाद्ब्रह्मवादिनः ॥ करिष्यामि नसंदेहस्ताटकावधमुत्तमम् ॥ ४ ॥ गोब्राह्मणहितार्थायदेशस्यचहितायच ॥ तवचैवाप्रमेयस्यवचनंकर्तुमुद्यतः ॥ ५ ॥ एवमुक्त्वाधनुर्मध्येबद्ध्वामुष्टिमरिंदमः ॥ ज्याघोषमकरोत्तीव्रंदिशःशब्देननादयन् ॥ ६ ॥ तेनशब्देनवित्रस्तास्ताटकावनवासिनः ॥ ताटकाचसुसंक्रुद्धातेनशब्देनमोहिता ॥ ७ ॥ तं शब्दमभिनिध्यायराक्षसीक्रोधमूर्च्छिता ॥ श्रुत्वाचाभ्यद्रवत्क्रुद्धायत्रशब्दोविनिःसृतः ॥ ८ ॥ तांदृष्ट्वाराघवःक्रुद्धांविकृतांविकृताननाम् ॥ प्रमाणेनातिवृद्धांचलक्ष्मणंसोभ्यभाषत ॥ ९ ॥ पश्यलक्ष्मणयक्षिण्याभैरवंदारुणंवपुः ॥ भिद्येरन्दर्शनादस्याभीरूणांहृदयानिच ॥ १० ॥ एतांपश्यदुराधर्षांमायाबलसमन्विताम् ॥ विनिवृत्तांकरोम्यद्यहृतकर्णाग्रनासिकाम् ॥ ११ ॥ नह्येनामुत्सहेहंतुंस्त्रीस्वभावेनरक्षिताम् ॥ वीर्यंचास्यागतिंचैवहन्यामितिहिमेमतिः ॥ १२ ॥ एवंब्रुवाणेरामेतुताटकाक्रोधमूर्च्छिता ॥ उद्यम्यबाहुंगर्जंतीराममेवाभ्यधावत ॥ १३ ॥ विश्वामित्रस्तुब्रह्मर्षिर्हुंकारेणाभिभर्त्स्यताम् ॥ स्वस्तिराघवयोरस्तु जयंचैवाभ्यभाषत ॥ १४ ॥ उद्धुन्वानारजोघोरं ताटकाराघवावुभौ ॥ रजोमेघेनमहतामुहूर्तंसाव्यमोहयत् ॥ १५ ॥ ततोमायांसमास्थायशिलावर्षेणराघवौ ॥ अवाकिरत्सुमहताततश्चुक्रोधराघवः ॥ १६ ॥ शिलावर्षंमहत्तस्याःशरवर्षेणराघवः ॥ प्रतिवार्योपधावंत्याःकरौचिच्छेदपत्रिभिः ॥ १७ ॥ ततश्छिन्नभुजांश्रांतामभ्याशेपरिगर्जतीम् ॥ सौमित्रिरकरोत्क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ १८ ॥ कामरूपधरासातुकृत्वारूपाण्यनेकशः ॥ अंतर्धानंगतायक्षीमोहयंतीस्वमायया ॥ १९ ॥

एतामिति । विनिवृत्ताम् अस्मत्संमुखागमनात्परावृत्ताम् । पलायितामिति यावत् ॥ ११ ॥ कर्णादिहरणमात्रे हेतुमाह । न हीति । वीर्यं परपराभवशक्तिम् । गतिम् आकाशादिगतिम् । पाणिपादच्छेदेनेति शेषः । तावतैव देशहितस्य गुरुवचनानुष्ठानस्य च सिद्ध्या शूरविगर्हितः स्त्रीवधोनुचित इति भावः ॥ १२ ॥ राममेव विश्वामित्रस्य दुर्धर्षत्वेन तं विसृज्य मानुषबुद्ध्या राममेवेत्यर्थः ॥ १३ ॥ तां रामसंमुखमभिधावंतीम् । जयं च जयविषयकाशिषं च ॥ १४ ॥ घोरं रजः उद्धुन्वानेत्यन्वयः । रजोमेघेन रजोन्धकारेण ॥ १५ ॥ मायां समास्थाय । अंतर्धानं गत्वेति यावत् । चुक्रोध । स्त्रीत्वमयुक्तदाक्षिण्यं विसृज्येति शेषः ॥ १६ ॥ पत्रिभिरिति । एकैकस्य बहुधा खंडनाभिप्रायेण ॥ १७ ॥ हृते कर्णाग्रे नासिका च यस्याः ताम् ॥ १८ ॥ अनेकशः रूपाणि कृत्वा अंतर्धानं गता सती स्वमायया राघवौ

मोहयंती ॥ १९ ॥ भैरवम् अश्मवर्षमित्यन्वयः ॥ २० ॥ घृणया अलं स्त्री इति घृणा मास्त्वित्यर्थः । दुष्टचारिणी मायाशक्त्या अंतर्धानेन पाषाणादिवृष्टिकर्त्री । अतो घृणा अनुचिता ॥ २१ ॥ घृणा नोचिते त्यत्र हेत्वंतरमाह । यज्ञविघ्नकरीति । मायया पुरा यावद्वर्धेत तावत्तत्कालात्पुरैव पूर्वमेव एषा वध्यताम् । सायंसंध्या पुरा प्रवर्तते प्रवर्तिष्यत इत्यर्थः ॥ २२ ॥ किं तत्र इत्याह । रक्षांसीति । अश्मवृष्ट्येति । करणे तृतीया ॥ २३ ॥ शब्दमात्रेण लक्ष्यं सम्यङ्निश्चित्य वेधकर्तृत्वसामर्थ्यं दर्शयन्नित्यर्थः ॥ २४ ॥ अभिदुद्रावेति । अंतर्धानं हित्वेति शेषः ॥ २५ ॥ भीमसंकाशां भीम रूपाम् ॥ २६ ॥ अभिपूजयन् । अडभावः आर्षः । सहस्राक्षः विश्वामित्रमुवाचेत्यन्वयः ॥ २७ ॥ किमुक्तवंतः तदाह । मुने इति ॥ २८ ॥ तोषिताः । वयमिति शेषः । अनेन कर्मणा

अश्मवर्षंविमुंचंतीभैरवंविचचारसा ॥ ततस्तावश्मवर्षेणकीर्यमाणौसमंततः ॥ २० ॥ दृष्ट्वागाधिसुतःश्रीमानिदंवचनमब्रवीत् ॥ अलंतेघृणयारामपापै षादुष्टचारिणी ॥ २१ ॥ यज्ञविघ्नकरीयक्षीपुरावर्धेतमायया ॥ वध्यतांतावदेवैषापुरासंध्याप्रवर्तते ॥ २२ ॥ रक्षांसिसंध्याकालेतुदुर्धर्षाणिभवंतिहि ॥ इत्युक्तःसतुतांयक्षीमश्मवृष्ट्याभिवर्षिणीम् ॥ २३ ॥ दर्शयञ्छब्दवेधित्वंतांरुरोधससायकैः ॥ सारुद्धाबाणजालेनमायाबलसमन्विता ॥ २४ ॥ अभिदुद्रा वकाकुत्स्थंलक्ष्मणंचविनेदुषी ॥ तामापतंतींवेगेनविक्रांतामशनीमिव ॥ २५ ॥ शरेणोरसिविव्याधपपातचममारच ॥ तांहतांभीमसंकाशांदृष्ट्वासुरपति स्तदा ॥ २६ ॥ साधुसाध्वितिकाकुत्स्थंसुराश्चाप्यभिपूजयन् ॥ उवाचपरमप्रीतःसहस्राक्षःपुरंदरः ॥ २७ ॥ सुराश्चसर्वेसंहृष्टाविश्वामित्रमथाब्रुवन् ॥ मुनेकौशिकभद्रंतेसेंद्राःसर्वेमरुद्गणाः ॥ २८ ॥ तोषिताःकर्मणाऽनेनस्नेहंदर्शयराघवे ॥ प्रजापतेःकृशाश्वस्यपुत्रान्सत्यपराक्रमान् ॥ २९ ॥ तपोबलभृतो ब्रह्मन्राघवायनिवेदय ॥ पात्रभूतश्चतेब्रह्मंस्तवानुगमनेरतः ॥ ३० ॥ कर्तव्यंसुमहत्कर्मसुराणांराजसूनुना ॥ एवमुक्त्वासुराःसर्वेजग्मुर्हृष्टाविहायसम् ॥ ३१ ॥ विश्वामित्रंपूजयंतस्ततःसंध्याप्रवर्तते ॥ ततोमुनिवरःप्रीतस्ताटकावधतोषितः ॥ ३२ ॥ मूर्ध्निराममुपाघ्रायइदंवचनमब्रवीत् ॥ इहाद्यरजनीं रामवसामशु भदर्शन ॥ ३३ ॥ श्वःप्रभातेगमिष्यामस्तदाश्रमपदंमम ॥ विश्वामित्रवचःश्रुत्वाहृष्टोदशरथात्मजः ॥ ३४ ॥ उवासरजनींतत्रताटकायावनेसुखम् ॥ मुक्तशापंवनंतच्चतस्मिन्नेवतदाहनि ॥ रमणीयंविबभ्राजयथाचैत्ररथंवनम् ॥ ३५ ॥ निहत्यतांयक्षसुतांसरामःप्रशस्यमानःसुरसिद्धसंघैः ॥ उवासतस्मिन्मु निनासहैवप्रभातवेलांप्रतिबोध्यमानः ॥ ३६ ॥ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे षड्विंशः सर्गः ॥ २६ ॥

त्वत्प्रवर्तितताटकावधरूपेण । स्नेहं दर्शय मदीयोयमाप्तः शिष्य इति स्नेहमूलं व्यापारं प्रवर्तय । तमेव व्यापारमाह । प्रजापतेरिति ॥ २९ ॥ तपसा ज्ञानेन बलेन च भृतः पूर्णः ते तव दानस्य पात्रभूतश्च राघवः । अतः तस्मै कृशाश्वपुत्रान्निवेदय । तथालब्धानामेवास्त्राणां कार्यक्षमत्वमिति भावः (?) । अनुगमने शुश्रूषणे दृढनिश्चयः ॥ ३० ॥ पूजयंतस्तुवंतो जग्मुरित्यन्वयः । प्रवर्तते इति । अस्य स्मेति शेषः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ मुक्तशापम् अपगतोपद्रवम् । यद्वा लब्धशापया ताटकया मुक्तम् ॥ ३५ ॥ प्रभातवेलां प्रतिबोध्यमान इति । विश्वामित्रेणेत्यादिः । जजागारेति शेषः ॥ ३६ ॥ चैळ्ळैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे षड्विंशः सर्गः ॥ २६ ॥ ॥ ॥ ॥ ॥श्री॥

उष्येति । आर्षम् । प्रहस्य विजयशालि रामदर्शनसंतोषजो हासः ॥१॥ सर्वशः सर्वाणि ॥२॥ देवासुरगणान्वापि । वाशब्दश्चार्थे । गंधर्वोरगसहितदेवासुरगणरूपशत्रूनपि प्रसह्य बलेन जयिष्यसि जेष्यसि । यदि वधे दया तदा वशीकृत्य संमोहनास्त्रादिना जेष्यसि । अन्येषां तु का गणनेति भावः ॥ ३ ॥ दंडचक्रादयः अस्त्रभेदाः ॥ ४ ॥ ५ ॥ शूलवतं शूलवतनामकम् । कचित्तु शूलवरमिति पाठः । ब्रह्मशिरोस्त्रं ब्रह्मास्त्रादन्यत् ॥ ६ ॥ गदे द्वे मोदकीशिखरीसंज्ञे द्वे गदे गदासंज्ञके अस्त्रे ॥ ७ ॥ ८ ॥ अस्त्रं च वारुणास्त्रं चेत्यर्थः । शुष्कार्द्रसंज्ञके द्वे अशनी अशनिसंज्ञके अस्त्रे ॥ ९ ॥ पिनाकिन

अथतांरजनीमुष्यविश्वामित्रोमहायशाः ॥ प्रहस्यराघवंवाक्यमुवाचमधुरस्वरम् ॥ १ ॥ परितुष्टोस्मिभद्रंतेराजपुत्रमहायशः ॥ प्रीत्यापरमयायुक्तो ददाम्यस्त्राणिसर्वशः ॥ २ ॥ देवासुरगणान्वापिसगंधर्वोरगान्भुवि ॥ यैरमित्रान्प्रसह्याजौवशीकृत्यजयिष्यसि ॥ ३ ॥ तानिदिव्यानिभद्रंतेददाम्यस्त्राणिसर्वशः ॥ दंडचक्रंमहद्दिव्यंतवदास्यामिराघव ॥ ४ ॥ धर्मचक्रंततोवीरकालचक्रंतथैवच ॥ विष्णुचक्रंतथात्युग्रमैंद्रंचक्रंतथैवच ॥ ५ ॥ वज्रमस्त्रंनरश्रेष्ठशैवंशूलवतंतथा ॥ अस्त्रंब्रह्मशिरश्चैवऐषीकमपिराघव ॥ ६ ॥ ददामितेमहाबाहोब्राह्ममस्त्रमनुत्तमम् ॥ गदेद्वेचैवकाकुत्स्थमोदकीशिखरीशुभे ॥ ७ ॥ प्रदीतेनरशार्दूलप्रयच्छामिनृपात्मज ॥ धर्मपाशमहंरामकालपाशंतथैवच ॥ ८ ॥ वारुणंपाशमस्त्रंचददाम्यहमनुत्तमम् ॥ अशनीद्वेप्रयच्छामिशुष्कार्द्रेरघुनंदन ॥ ९ ॥ ददामिचास्त्रंपैनाकमस्त्रंनारायणंतथा ॥ आग्नेयमस्त्रंदयितंशिखरंनामनामतः ॥ १० ॥ वायव्यंप्रथमंनामददामितवचानघ ॥ अस्त्रंहयशिरोनामक्रौंचमस्त्रंतथैवच ॥ ११ ॥ शक्तिद्वयंचकाकुत्स्थददामितवराघव ॥ कंकालंमुसलंघोरंकापालमथकिंकिणीम् ॥ १२ ॥ वधार्थंरक्षसांयानिददाम्येतानिसर्वशः ॥ वैद्याधरंमहास्त्रंचनंदनंनामनामतः ॥ १३ ॥ असिरत्नंमहाबाहोददामिनृवरात्मज ॥ गांधर्वमस्त्रंदयितंमोहनंनामनामतः ॥ १४ ॥ प्रस्वापनंप्रशमनंदद्मिसौम्यंचराघव ॥ वर्षणंशोषणंचैवसंतापनविलापने ॥ १५ ॥ मादनंचैवदुर्धर्षंकंदर्पदयितंतथा ॥ गांधर्वमस्त्रंदयितंमानवंनामनामतः ॥ १६ ॥ पैशाचमस्त्रंदयितंमोहनंनामनामतः ॥ प्रतीच्छनरशार्दूलराजपुत्रमहायशः ॥ १७ ॥ तामसंनरशार्दूलसौमनंचमहाबलम् ॥ संवर्तंचैवदुर्धर्षमौसलंचनृपात्मज ॥ १८ ॥ सत्यमस्त्रंमहाबाहोतथामायामयंपरम् ॥ सौरंतेजःप्रभंनामपरतेजोपकर्षणम् ॥ १९ ॥ सोमास्त्रंशिशिरंनामत्वाष्ट्रमस्त्रंसुदारुणम् ॥ दारुणंचभगस्यापिशीतेषुमथमानवम् ॥ २० ॥ एतान्नाममहाबाहोकामरूपान्महाबलान् ॥ गृहाणपरमोदारान्क्षिप्रमेवनृपात्मज ॥ २१ ॥

इदं पैनाकम् । दयितम् । अग्नेरिति शेषः । शिखरं नाम शिखरमिति प्रसिद्धम् ॥१०॥ प्रथमं मुख्यम् ॥ ११ ॥ कंकालादीनि असुरधार्यास्त्राणि ॥ १२ ॥ यानि रक्षसां वधार्थं समर्थानि एतानि ददामीत्यन्वयः । वैद्याधरं विद्याधरसंबंधि । नंदनं नाम असिरत्नमित्यन्वयः । यतः अस्त्रादर्शीनां प्रादुर्भाव इति भावः ॥ १३ ॥ १४ ॥ दद्मीत्यार्षम् । प्रशमनं रिपूणां क्रोधशामकमस्त्रम् । विलापनं परिदेवनकारकम् ॥ १५ ॥ मादनं शत्रूणां मदजनकम् । दुर्धर्षमित्यादि अस्य विशेषणम् ॥ १६ ॥ प्रतीच्छ गृहाण ॥ १७ ॥ मौसलम् आसुरमुसलादन्यत् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

मन्त्रग्रामम् । अस्त्राणां मंत्रमूर्तित्वात् । ननु बलातिबलादानप्रसंगेपि मंत्रग्रामं गृहाणेत्युक्तमिति पुनरत्र दानं विफलमिति चेन्न । गृहाणेत्येव तत्रोक्तत्वात् न तु ददाविति । तेन तत्कालोपयोगिबलातिबलयोरेव तत्र दानम् । इतरेषां त्वत्रेति विवेक इति कतककृतः । वस्तुतो बलातिबले मंत्रसमूहात्मके इति तद्रूपं मंत्रग्राममिति तत्रार्थ इति न दोष इति परे ॥ २२ ॥ सर्वेति । येषाम् उक्तदिव्यास्त्राणां सर्वसंग्रहणं सर्वधारणं कर्तुं दैवतैरपि दुर्लभं दुष्करम् । देवा अपि यत्किंचिदस्त्रमेव जानंतीति भावः । तानि सर्वाण्यस्त्राणि राघवाय रामाय विश्वामित्रो न्यवेदयत् दत्तवान् । राघवाय रामाय लक्ष्मणाय चेत्यपि योज्यम् । युगपद्देवोभयोरुपदेश इति बोध्यम् ॥ २३ ॥ जपतः रामाय दातुं तेषां वीर्यवत्तासंपादनाय तान्यस्त्राणि जपत इत्यर्थः । उपतस्थुः गृहीतभामंडलवपूंषि उपतस्थुः । उपस्थितानि विश्वामित्रनियोगेन रामं च उपतस्थुः ॥ २४ ॥ सर्वेस्त्रदेवाः मुदिताः स्वाधिदैवतरामसंबंधेन तुष्टाः । किंकराः अंगीकृतदासत्वाः ॥ २५ ॥ २६ ॥ समालभ्य उपस्पृश्य । मानसाः सदा मनःस्थिताः । यद्यपि भगवतो रामस्य

स्थितस्तुप्राङ्मुखोभूत्वाशुचिर्मुनिवरस्तदा ॥ ददौरामायसुप्रीतो मंत्रग्राममनुत्तमम् ॥ २२ ॥ सर्वसंग्रहणंयेषांदैवतैरपिदुर्लभम् ॥ तान्यस्त्राणितदाविप्रो राघवायन्यवेदयत् ॥ २३ ॥ जपतस्तुमुनेस्तस्यविश्वामित्रस्यधीमतः ॥ उपतस्थुर्महार्हाणिसर्वाण्यस्त्राणिराघवम् ॥ २४ ॥ ऊचुश्चमुदितारामंसर्वेप्रांजलयस्तदा ॥ इमेचपरमोदारकिंकरास्तवराघव ॥ २५ ॥ यद्यदिच्छसिभद्रंतेतत्सर्वंकरवामवै ॥ ततोरामःप्रसन्नात्मातैरित्युक्तोमहाबलः ॥ २६ ॥ प्रतिगृह्यचकाकुत्स्थःसमालभ्यचपाणिना ॥ मानसामेभविष्यध्वमितितान्यभ्यचोदयत् ॥ २७॥ ततः प्रीतमनारामोविश्वामित्रंमहामुनिम् ॥ अभिवाद्यमहातेजागमनायोपचक्रमे ॥ २८ ॥ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसा० बालकांडे सप्तविंशः सर्गः ॥ २७ ॥ प्रतिगृह्यततोस्त्राणिप्रहृष्टवदनःशुचिः ॥ गच्छन्नेवचकाकुत्स्थोविश्वामित्रमथाब्रवीत् ॥ १ ॥ गृहीतास्त्रोऽस्मिभगवन्दुराधर्षःसुरैरपि ॥ अस्त्राणांत्वहमिच्छामिसंहारान्मुनिपुंगव ॥२॥ एवंब्रुवतिकाकुत्स्थेविश्वामित्रोमहातपाः ॥ संहारान्व्याजहाराथधृतिमान्सुव्रतःशुचिः ॥ ३ ॥ सत्यवंतंसत्यकीर्तिंधृष्टंरभसमेवच ॥ प्रतिहारतरंनामपराङ्मुखमवाङ्मुखम् ॥४॥ लक्ष्यालक्ष्याविमौचैवदृढनाभसुनाभकौ ॥ दशाक्षशतवक्त्रौचदशशीर्षशतोदरौ ॥ ५ ॥ पद्मनाभमहानाभौदुंदुनाभस्वनाभकौ ॥ ज्योतिषंशकुनंचैवनैरास्यविमलावुभौ ॥ ६ ॥ यौगंधरविनिद्रौचदैत्यप्रमथनौतथा ॥ शुचिबाहुर्महाबाहुर्निष्कलिर्विरुचस्तथा ॥ सार्चिमालीधृतिमालीवृत्तिमान्रुचिरस्तथा ॥ ७ ॥ पित्र्यःसौमनसश्चैवविधूतमकरावुभौ ॥ करवीरंरतिंचैवधनधान्यौचराघव ॥ ८ ॥ कामरूपंकामरुचिंमोहमावरणंतथा ॥ जृंभकंसर्पनाथंचपंथानवरुणौतथा ॥ ९ ॥ कृशाश्वतनयान्रामभास्वरान्कामरूपिणः ॥ प्रतीच्छममभद्रंतेपात्रभूतोसिराघव ॥ १० ॥

सर्वं विदितमेव । तथापि विद्या गुरूपदेशगृहीतैव फलदा नान्यथेति लोकान् बोधयितुं विश्वामित्रोपदेशग्रहणमिति बोध्यम् ॥ २७ ॥ २८ ॥ हरंमानः ॥ ॥ इति श्रीरामाभि० श्रीरामी० रा० वा० आ० बा०सप्तविंशः सर्गः ॥ २७ ॥ ॥ छ ॥ ॥ गच्छन् गमिष्यन् ॥ १ ॥ संहारान् । ज्ञातुमिति शेषः । उपसंहारापरिज्ञाने पुनः प्रयोगानर्हतया अप्राप्तप्रायत्वात्तज्ज्ञानेच्छा । संहारो नाम प्रयुक्तस्यास्त्रस्य मंत्रविशेषेण पुनः स्वात्मनि स्थापनम् ॥ २ ॥ एवमिति । उक्तास्त्राणां संहारमार्गमुपदिश्य अथ अनंतरं तत्प्रश्नसंतुष्टः परमर्षिः अन्यान्यपि अस्त्राणि उपदिशति स्म ॥ ३ ॥ तदाह । सत्यवंतमित्यादि । ददामीति सर्वत्र शेषः ॥ ४ ॥ ५ ॥ ६ ॥ सार्चिमाल्यादयः अन्ये । तांश्च ददामीत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ भास्वरान् तेजोमयान् । प्रतीच्छ गृहाण । पात्रभूतः अस्त्रदानस्येति

शेषः । मम मत्तः ॥ १० ॥ बाढमिति । अंगीकारे । प्रहृष्टेनांतरात्मना । प्रत्यग्रहीदिति शेषः । मूर्तिमंतः स्वस्वदेवतारूपेण ॥ ११ ॥ प्रह्वांजलिपुटाः प्रह्वाः नम्राः ते च ते अंजलेः पुटं संश्लेषो येषां तादृशाः ॥ १२ ॥ इमे स्म सन्निहिताः । वयमिति शेषः । शाधि आज्ञापय ॥ १३ ॥ गम्यताम् । इदानीमिति शेषः । कार्यकालेषु मानसाः मनसि संनिहिताः भूत्वा साहाय्यं करिष्यथ ॥ १४ ॥ प्रदक्षिणं सकलस्वदेवताधिदैवतरूपत्वाद्रामस्य प्रदक्षिणकरणम् ॥ १५ ॥ एतदुत्तरं–ततस्तु रामः काकुत्स्थः शासनाद्ब्रह्मवादिनः । लक्ष्मणाय च तान्सर्वान्स स चास्त्रान् रघुनंदनः । ससंहारान्सुसंहृष्टः श्रीमांस्तस्मै न्यवेदयदित्यधिकं दृश्यते । तत्प्रक्षिप्तम् ॥ बलातिबलयोरिवास्त्राणामपि युगपदुभयोर्विश्वामित्रेणैवोपदेशदानसंभवात् । स तान् उपदिष्टान् अस्त्रान् राघवो रामः ज्ञात्वा । मंत्रतो मूर्तितः प्रयोगतश्चेति शेषः ॥ १६ ॥ मेघसंकाशं कार्ष्ण्यात् नैबिडयाच्च । वृक्षषंडं वृक्षसमूहः । किं वनसंबंधि उत आश्रमसंबंधीति प्रश्नः ॥ १७ ॥ वल्गुभाषैः मधुरभाषैः ॥ १८ ॥ रोमहर्षणात् ताटकया

बाढमित्येवकाकुत्स्थःप्रहृष्टेनांतरात्मना ॥ दिव्यभास्वरदेहाश्चमूर्तिमंतःसुखप्रदाः ॥ ११ ॥ केचिदंगारसदृशाःकेचिद्धूमोपमास्तथा ॥ चंद्रार्कसदृशाःकेचित्प्रह्वांजलिपुटास्तथा ॥ १२ ॥ रामंप्रांजलयोभूत्वाऽब्रुवन्मधुरभाषिणः ॥ इमेस्मनरशार्दूलशाधिकिंकरवामते ॥ १३ ॥ गम्यतामितितानाहयथेष्टं रघुनंदनः ॥ मानसाःकार्यकालेषुसाहाय्यंमेकरिष्यथ ॥ १४ ॥ अथतेराममामंत्र्यकृत्वाचापिप्रदक्षिणम् ॥ एवमस्त्वितिकाकुत्स्थमुक्त्वाजग्मुर्यथागतम् ॥ १५ ॥ सचतान्राघवोज्ञात्वाविश्वामित्रंमहामुनिम् ॥ गच्छन्नेवाथमधुरंश्लक्ष्णंवचनमब्रवीत् ॥ १६ ॥ किमेतन्मेघसंकाशंपर्वतस्याविदूरतः ॥ वृक्षषंडमितोभातिपरंकौतूहलंहिमे ॥ १७ ॥ दर्शनीयंमृगाकीर्णंमनोहरमतीवच ॥ नानाप्रकारैःशकुनैर्वल्गुभाषैरलंकृतम् ॥ १८ ॥ निःसृताःस्ममुनिश्रेष्ठकांताराद्रोमहर्षणात् ॥ अनयात्ववगच्छामिदेशस्यसुखवत्तया ॥ १९ ॥ सर्वंमेशंसभगवन्कस्याश्रमपदंत्विदम् ॥ संप्राप्तायत्रतेपापाब्रह्मघ्नादुष्टचारिणः ॥ २० ॥ तवयज्ञस्यविघ्नायदुरात्मानोमहामुने ॥ भगवंस्तस्यकोदेशःसायत्रतवयाज्ञिकी ॥ २१ ॥ रक्षितव्याक्रियाब्रह्मन्मयावध्याश्चराक्षसाः॥एतत्सर्वंमुनिश्रेष्ठश्रोतुमिच्छाम्यहंप्रभो ॥२२॥ इत्यार्षे श्रीमद्रा॰वा॰आ॰चतु॰सा॰बालकांडे अष्टाविंशः सर्गः ॥२८॥ अथतस्याप्रमेयस्यवचनंपरिपृच्छतः ॥ विश्वामित्रोमहातेजाव्याख्यातुमुपचक्रमे ॥ १ ॥ इहराममहाबाहोविष्णुर्देवनमस्कृतः ॥ वर्षाणिसुबहूनीहतथायुगशतानिच ॥ २ ॥ तपश्चरणयोगार्थमुवाससुमहातपाः ॥ एषपूर्वाश्रमोरामवामनस्यमहात्मनः ॥ ३ ॥

निर्जनीकरणात् तस्य भयानकत्वेन रोमहर्षणत्वम् । अनया देशस्य सुखवत्तया इदमाश्रमपदं त्ववगच्छामि ॥ १९ ॥ आश्रमपदं निर्णीय तत्कस्येति शंसेति पृच्छति । सर्वमिति । सर्वं च शंस । सर्वशब्दविवक्षितं जिज्ञासातरं स्वयमेवाह । स प्राप्ता इति । ते ब्रह्मघ्नाः । तव यज्ञस्य विघ्नाय यत्र संप्राप्ताः स देशः कः ॥२०॥ यत्र च तव याज्ञिकी क्रिया मया रक्षितव्या यत्र च राक्षसाः वध्याः भगवन् तस्य त्वदाश्रमस्य को देशः प्रदेश इत्यन्वयः ॥ २१ ॥ २२ ॥ रेखोंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण॰ वा॰ आदिकाव्ये बालकांडे अष्टाविंशः सर्गः ॥ २८ ॥ ॥ तस्य रामस्य परिपृच्छतो वचनम् । श्रुत्वेति शेषः । व्याख्यातुम् पृष्टोत्तरमिति शेषः ॥ १ ॥ इह वने । इह प्रदेशे ॥ २ ॥ तपश्चरणयोगार्थं स्वाचारेण लोकप्रवर्तनाय स्वतपश्चरणम् ।

वामनस्य करिष्यमाणवामनावतारस्य विष्णोः पूर्वाश्रमः वामनावतारात्पूर्वकाले तपोयोगार्थं परिगृहीतः आश्रमः ॥ ३ ॥ सिद्धाश्रमत्वव्यवहारे बीजमाह । हि यस्मात् अत्र महातपाः विष्णुः तपःसिद्धो जात इति । एतस्मिन्काले विष्णोः तपःकाले ॥ ४ ॥ मरुद्गणान् आवहादिवायुगणान् कारयामास । स्वार्थे णिच् । चकारेत्यर्थः । यद्वा इंद्रादिराज्यं स्वीयैः कैश्चि देव कारयामासेत्यन्वयः ॥ ५ ॥ बलेः यजमानस्य । व्यवहारं द्रष्टेति शेषः । साग्निपुरोगमाः पुरोगमेनाग्निना सहिता इत्यर्थः । अग्निमुखत्वाच्च देवानां तस्मिन्पुरोगमत्वम् । स्वयमेवागम्य न तु दूतमुखेन ॥ ६ ॥ यजते कर्त्रभिप्रायत्वादात्मनेपदम् । नन्वसुरस्य बलेर्देवद्विषो यागाद्यनुपपत्तिः । यागतर्पणीयदेवताभावात् । इंद्रादीनां तद्द्वेष्यत्वात् । न च शब्दमात्रं देवतेति युक्तम् । अर्थवादप्रामाण्येन देवतायाः विग्रहवत्त्वस्योत्तरमीमांसायां सिद्धांतितत्त्वादिति चेन्न । कर्मदेवाजानदेवभेदेन देवानां द्वैविध्यात् । तत्र ये कर्मणा देवत्वं प्राप्ताः ते कर्मदेवाः । आजानदेवास्तु यज्ञमंत्रार्थभूताः मंत्रेण नित्य संबद्धाः कर्मदेवेभ्यः प्राचीना एव । तत्कर्मदेवानां द्वेष्यत्वेपि आजानदेवानां यज्ञे तर्प्यत्वेन न दोषः । विघ्नकर्तारोप्यत्र कर्मदेवा एव । यज्ञाद्यधिकाराभावोप्याजानदेवानामेव । स्वयष्टव्यदेवतांतराभावात् । कर्मदेवानां त्वस्त्येव । अत एवेंद्रादीनां यज्ञादिश्रवणं नानुपपन्नमित्यन्यत्र विस्तरः । असमाप्तव्रते असमाप्तयज्ञे । स्वकार्यम् आत्मीयानां देवानां कार्यम् । अभिपद्यतां संपाद्यताम् ॥ ७ ॥ असमाप्तव्रत इत्युक्तेः प्रयो

सिद्धाश्रमइतिख्यातःसिद्धोह्यत्रमहातपाः ॥ एतस्मिन्नेवकालेतुराजावैरोचनिर्बलिः ॥ ४ ॥ निर्जित्यदैवतगणान्सेंद्रान्सहमरुद्गणान् ॥ कारयामासतद्राज्यं त्रिषुलोकेषुविश्रुतः ॥ ५ ॥ यज्ञंचकारसुमहानसुरेंद्रोमहाबलः ॥ बलेस्तुयजमानस्यदेवाःसाग्निपुरोगमाः ॥ समागम्यस्वयंचैवविष्णुमूचुरिहाश्रमे ॥ ६ ॥ बलिर्वैरोचनिर्विष्णोयजतेयज्ञमुत्तमम् ॥ असमाप्तव्रतेतस्मिन्स्वकार्यमभिपद्यताम् ॥ ७ ॥ ये चैनमभिवर्ततेयाचितारइतस्ततः ॥ यच्चयत्रयथावच्चसर्वंतेभ्यःप्रयच्छति ॥ ८ ॥ सत्वंसुरहितार्थायमायायोगमुपाश्रितः ॥ वामनत्वंगतोविष्णोकुरुकल्याणमुत्तमम् ॥ ९ ॥ एतस्मिन्नंतरेरामकश्यपोग्निसमप्रभः ॥ अदित्यासहितोरामदीप्यमानइवौजसा ॥ १० ॥ देवीसहायोभगवान्दिव्यंवर्षसहस्रकम् ॥ व्रतंसमाप्यवरदंतुष्टावमधुसूदनम् ॥ ११ ॥ तपोमयंतपोराशिं तपोमूर्तिंतपात्मकम् ॥ तपसात्वांसुतप्तेनपश्यामिपुरुषोत्तमम् ॥१२॥ शरीरेतवपश्यामिजगत्सर्वमिदंप्रभो ॥ त्वमनादिरनिर्देश्यस्त्वामहंशरणंगतः ॥१३॥ तमुवाचहरिःप्रीतःकश्यपंधूतकल्मषम् ॥ वरंवरयभद्रंतेवरार्होसिमतोमम ॥ १४ ॥

जनं दर्शयंतः । तत्संपादने उपायमपि स्वयमेव वदंति । ये चेति । अभिवर्तंते प्राप्नुवंति । इतस्ततः नानादेशेभ्यः यत्र गोभूहिरण्यादिविषये यच्च वस्तु याचंते तेभ्यः तत्सर्वं यथावत् यज्ञसाद्गुण्याय अवमानादिरहितं सत्कारपूर्वं प्रयच्छति । च एवार्थे ॥ ८ ॥ माया स्वतत्त्वाच्छादनेन प्राकृतमर्त्यादिभावप्रकाशिका शक्तिः । तस्याः योगः संबंधः । तमाश्रितः । वामनत्वप्राप्तौ अयं हेतुः । वामनरूपस्यात्याश्चर्यत्वेन तत्प्रार्थनाविषयस्यावश्यं यजमानकर्तव्यतया तद्रूपप्रार्थनम् ॥ ९ ॥ एतस्मिन्नंतरे देवैर्वामनावतारप्रार्थनसमये । रामेति । द्विःसंबोधनं स्वाश्रमसंविधानेन रामपृष्टतन्महत्त्वकथनेन हर्षातिशयाच्च बोध्यम् ॥ १० ॥ अदित्या सहितो व्रतं समाप्य देवीसहायः । तुष्टावेत्यन्वयः । देवी अदितिरेव । यद्वा देवी सरस्वती । वरदं विष्णुरूपपुत्रप्राप्त्युद्देशेन कृतव्रतांते वरदानोन्मुखम् ॥ ११ ॥ स्तोत्रप्रकारमाह । तपोमयमित्यादि । अन्नमयो यज्ञ इतिवत्प्रचुरतपोयुक्तमित्यर्थः । तावता परेषां किमत आह । तपोराशिं द्रष्टॄणां सकलतपोजन्यफलप्राप्त्या भगवतः तपोराशित्वम् । ननु तपसोन्यत्वे अद्वैतश्रुतिबाधोऽत आह । तपोमूर्तिमिति । एवं च तपसः तदनन्यत्वेन नाद्वैतहानिः । तपात्मकमिति । घञर्थे कविधानकमिति कप्रत्यये तपनं तपः ज्ञानम् । तप आलोचन इति धात्वनुसारात् । तदात्मकं ज्ञानस्वरूपमित्यर्थः । अत एव अतप्ततपसा द्रष्टुमशक्य इत्यतः तपसा त्वामिति ॥ १२ ॥ दृश्यमानं च वैराजं रूपमित्याह । शरीरे इत्यादि । अनिर्देश्यः अशक्यपरिच्छेदः ॥ १३ ॥ वरम् अभीष्टम् । वरा

र्हः दिव्यवर्षसहस्रतपसा वरदानयोग्यः ॥ १४ ॥ मारीचः मरीचिपुत्रः । अदित्या इत्यादेः—याचमानाया इत्यादि शेषः ॥ १५ ॥ याच्यमानवरमाह । पुत्रत्वमित्यादि ॥ १६ ॥ यवीयान् कनिष्ठः । साहाय्यं बलिच्छलरूपम् ॥ १७ ॥ अयं यत्र आश्रमे तपोमयः । त्वं मया देवैश्च अनुभूयसे इत्यर्थः । सिद्धे एतदाश्रमस्थितिसाध्ये तपःकर्मणि सिद्धे सति निष्पन्ने सति प्रयोजनाभावात् इतः उत्तिष्ठ । देवकार्येति शेषः ॥ १८ ॥ अथ देवकार्यनियोगानंतरम् ॥ १९ ॥ आक्रम्य । त्रिभिः पदैरिति शेषः । लोकार्थी त्रैलोक्याक्रमणार्थी ॥ २० ॥ नियम्य बद्ध्वा ॥ २१ ॥ तेनैन वामनावतारकर्त्रा । मया

तच्छ्रुत्वावचनंतस्यमारीचःकश्यपोऽब्रवीत् ॥ अदित्यादेवतानांचममचैवानुयाचितम् ॥ १५ ॥ वरंवरदसुप्रीतोदातुमर्हसिसुव्रत ॥ पुत्रत्वंगच्छभगवन्नदित्याममचानघ ॥ १६ ॥ भ्राताभवयवीयांस्त्वंशक्रस्यासुरसूदन ॥ शोकार्तानांतुदेवानांसाहाय्यंकर्तुमर्हसि ॥ १७ ॥ अयंसिद्धाश्रमोनामप्रसादात्तेभविष्यति ॥ सिद्धेकर्मणिदेवेशउत्तिष्ठभगवन्नितः ॥ १८ ॥ अथविष्णुर्महातेजाअदित्यांसमजायत ॥ वामनंरूपमास्थायवैरोचनिमुपागमत् ॥ १९ ॥ त्रीन्पदानथभिक्षित्वाप्रतिगृह्यचमेदिनीम् ॥ आक्रम्यलोकाँल्लोकार्थीसर्वलोकहितेरतः ॥ २० ॥ महेंद्रायपुनःप्रादान्नियम्यबलिमोजसा ॥ त्रैलोक्यंसमहातेजाश्चक्रेशक्रवशंपुनः ॥ २१ ॥ तेनैवपूर्वमाक्रांतआश्रमःश्रमनाशनः ॥ मयापिभक्त्यातस्यैववामनस्योपभुज्यते ॥ २२ ॥ एनमाश्रममायांतिराक्षसाविघ्नकारिणः ॥ अत्रतेपुरुषव्याघ्रहंतव्यादुष्टचारिणः ॥ २३ ॥ अद्यगच्छामहेरामसिद्धाश्रममनुत्तमम् ॥ तदाश्रमपदंतातत्तवाप्येतद्यथामम ॥ २४ ॥ इत्युक्त्वापरमप्रीतोगृह्यरामंसलक्ष्मणम् ॥ प्रविशन्नाश्रमपदंव्यरोचतमहामुनिः ॥ शशीवगतनीहारःपुनर्वसुसमन्वितः ॥ २५ ॥ तंदृष्ट्वामुनयःसर्वेसिद्धाश्रमनिवासिनः ॥ उत्पत्योत्पत्यसहसाविश्वामित्रमपूजयन् ॥२६॥ यथार्हंचक्रिरेपूजांविश्वामित्रायधीमते ॥ तथैवराजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ २७ ॥ मुहूर्तमथविश्रांतौराजपुत्रावरिंदमौ ॥ प्रांजलीमुनिशार्दूलमूचतूरघुनंदनौ ॥ २८ ॥ अद्यैवदीक्षांप्रविशभद्रंतेमुनिपुंगव ॥ सिद्धाश्रमोयंसिद्धःस्यात्सत्यमस्तुवचस्तव ॥ २९ ॥ एवमुक्तोमहातेजाविश्वामित्रोमहानृषिः ॥ प्रविवेशतदादीक्षांनियतोनियतेंद्रियः ॥ ३० ॥ कुमारावपितांरात्रिमुषित्वासुसमाहितौ ॥ प्रभातकालेचोत्थायपूर्वांसंध्यामुपास्यच ॥ ३१ ॥

विश्वामित्रेण ॥ २२ ॥ पूर्वसर्गांतकृतद्वितीयप्रश्नोत्तरमाह । एनमिति ॥ २३ ॥ अनुत्तमं सर्वोत्तमम् । हे तात तदेतदाश्रमपदं यथा मम स्वभूतं तथा तवापि विष्ण्ववतारत्वादिति गूढोभिसंधिः ॥ २४ ॥ पुनर्वसू द्वे तारे ॥ २५ ॥ उत्पत्योत्पत्य । संतोषातिशयादिति शेषः ॥ २६ ॥ २७ ॥ २८ ॥ अद्यैव प्रवेशदिन एव । कालविलंबे फलाभावात् । सिद्धः त्वद्यज्ञसिद्ध्या अन्वर्थसिद्धसंज्ञः । तव वचः-अत्रैव पुरुषव्याघ्र हंतव्या दुष्टचारिण इति यत् तत् सत्यमस्तु । राक्षसान् सर्वथा हनिष्ये इति भावः ॥ २९ ॥ नियतः निगृहीतांतःकरणः ॥ ३० ॥ कुमाराविव स्कंदविशाखाविव ॥ ३१ ॥

मशुची अवतारत्वादशुचित्वसंभावनाराहित्येन मकर्षतः शुची । नियमेन कर्तव्यं जाप्यं समाप्येत्यन्वयः । दीक्षामध्ये नाग्निहोत्रमिति निषेधादग्निहोत्रपदम् । औपासनहोमपरमिति केचित्॥ ३२॥ खंगमानः॥ इति श्रीरामाभि०श्रीरा० रामायणतिलके वाल्मीकीये आ० बालकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ ॥ अथेति । कौशिकं वचः अब्रूतामित्यन्वयः ॥ १ ॥ तौ निशाचरौ । संरक्षणीयौ यज्ञसंरक्षणाय निवारणीयौ । गहादित्वाच्छः । तत्क्षणं स क्षणः यथा नातिवर्तेत नातिक्रमेत तथा ब्रूहीत्यन्वयः ॥ २ ॥ ३ ॥ एवं विश्वामित्रे पृष्टे दीक्षया तस्य मौनित्वात ऋषयः ऊचुः । अद्येति । मौनित्वं च गमिष्यति । अद्यापि दीक्षितत्वात् मौन्येव–अतः परमपि षड्रात्रपर्यंतं मौनित्वं माप्स्यतीत्यर्थः ॥ ४ ॥ ५ ॥ यत्तौ सन्नद्धौ । परमधन्विनावित्यार्षम् । विश्वामित्रं तद्यज्ञम् ॥ ६ ॥ काले पंचाहोरात्रलक्षणे । षष्ठेऽहनि । आगते इति छेदः । माप्ते इत्यर्थः । यद्वा षष्ठेऽहनि गते रात्रावित्यर्थः । यत्तः सज्जः । समाहितः एकाग्रचित्तः ॥ ७ ॥ उपाध्यायः ब्रह्मा । पुरोहितः उपद्रष्टा । इदम् ऋत्विगंतराणामप्युपलक्षणन् । इदं ज्वलनं राक्षसागमनसूचकः उत्पातः इत्याहुः ॥ ८ ॥ दर्भसहितचमसस्रुग्वती समित्कुसुमोच्चयैश्च सहिता । इदं वेदिज्वलनं यज्ञोद्देश्यकम् ॥ ९ ॥ संमवर्तते स्म आकाशे महान् शब्दः मादुरासीच्च ॥ १० ॥ यथा मावृषि गगनम् आवार्य गगनम् आवृत्त्य महाशनिमहागर्जनमहावर्षादिविचित्रकारी दृश्यते तथा मायां मकटीकुर्वाणौ राक्षसौ अभ्यधावताम् ॥ ११ ॥ कौ तौ का च सा मायेत्यत्राह । मारीच इत्यादि । अवासृजन् ववृषुः ॥ १२ ॥ समुक्षितम् । अभ्याशे इति शेषः । अभिद्रुतः अभितः शालां मधावन् तत्र अदृष्ट्वा ततो दिवि तानपश्यत् ॥ १३ ॥

प्रशुचीपरमंजाप्यंसमाप्यनियमेनच ॥ हुताग्निहोत्रमासीनंविश्वामित्रं[1]मवंदताम् ॥ ३२ ॥ इत्यार्षे श्रीमद्रा०वा०आ०चतु०सा०वालकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ अथतौदेशकालज्ञौराजपुत्रावरिंदमौ ॥ देशेकालेचवाक्यज्ञावब्रूतांकौशिकंवचः ॥ १ ॥ भगवञ्छ्रोतुमिच्छावोयस्मिन्कालेनिशाचरौ ॥ संरक्षणीयौतौब्रूहिनातिवर्तेततत्क्षणम् ॥ २ ॥ एवंब्रुवाणौकाकुत्स्थौत्वरमाणौयुयुत्सया ॥ सर्वेतेमुनयःप्रीताःप्रशशंसुर्नृपात्मजौ ॥३॥ अद्यप्रभृतिषड्रात्रंरक्षतांराघवौयुवाम् ॥ दीक्षांगतोह्येषमुनिर्मौनित्वंचगमिष्यति ॥ ४ ॥ तौतुतद्वचनंश्रुत्वाराजपुत्रौयशस्विनौ ॥ अनिद्रंषडहोरात्रंतपोवनमरक्षताम् ॥५॥ उपासांचक्रतुर्वीरौयत्तौपरमधन्विनौ ॥ ररक्षतुर्मुनिवरंविश्वामित्रमरिंदमम् ॥ ६ ॥ अथकालेगतेतस्मिन्षष्ठेहनितथागते ॥ सौमित्रिमब्रवीद्रामोयत्तोभवसमाहितः ॥ ७ ॥ रामस्यैवंब्रुवाणस्यत्वरितस्ययुयुत्सया ॥ प्रजज्वालततोवेदिःसोपाध्यायपुरोहिता ॥ ८ ॥ सदर्भचमसस्रुक्कासससमित्कुसुमोच्चया॥ विश्वामित्रेणसहितावेदिर्जज्वालसर्त्विजा ॥ ९ ॥ मंत्रवच्चयथान्यायंयज्ञोऽसौसंप्रवर्तते ॥ आकाशेचमहाञ्छब्दःप्रादुरासीद्भयानकः ॥१०॥ आवार्यगगनंमेघोयथाप्रावृषिदृश्यते ॥ तथामायांविकुर्वाणौराक्षसावभ्यधावताम् ॥ ११ ॥ मारीचश्चसुबाहुश्चतयोरनुचरास्तथा ॥ आगम्यभीमसंकाशारुधिरौघानवासृजन् ॥ १२॥ तांतेनरुधिरौघेणवेदिंवीक्ष्यसमुक्षिताम् ॥ सहसाभिद्रुतोरामस्तानपश्यत्ततोदिवि ॥ १३ ॥

१ कपुस्तकादर्धश्लोकोत्राधिकः ।

आपतंतौ स्वसंमुखमागच्छंतौ ॥ १४ ॥ मानवास्त्रसमाधूतान्करिष्यामि पश्येति योजना । ईदृशान् स्थितायुःशेषान् दुर्बलान्वा ॥ १५ ॥ १६ ॥ परमोदारं परमश्रेष्ठम् ॥ १७ ॥ स तेनेति । स मारीचः । सागरसंप्लवे समुद्रमध्ये ॥ १८ ॥ विचेतनं चैतन्यरहितम् अत एव विघूर्णमानम् । शीतेषुरिति मानवास्त्रनामांतरम् । दृश्य दृष्ट्वा ॥ १९ ॥ शीतेषुं शीतेष्वित्यपरनामकं मानवास्त्रं मनुसंहितं मनुप्रयुक्तं वियुज्यते । वियोजयतीति यावत् ॥ २० ॥ २१ ॥ २२ ॥ निजघान । दूरोत्सारणपूर्वकं नाशनं वायव्यास्त्रफलं बोध्यम् ॥ २३ ॥ २४ ॥ २५ ॥ निरीतिकाः निराबाधाः ॥ २६ ॥ सत्यं

तावापतंतौसहसादृष्ट्वाराजीवलोचनः ॥ लक्ष्मणंत्वभिसंप्रेक्ष्यरामोवचनमब्रवीत् ॥ १४ ॥ पश्यलक्ष्मणदुर्वृत्तान्राक्षसान्पिशिताशनान् ॥ मानवास्त्रसमाधूताननिलेनयथाघनान् ॥ १५ ॥ करिष्यामिनसंदेहोनोत्सहेहंतुमीदृशान् ॥ इत्युक्त्वावचनंरामश्चापेसंधायवेगवान् ॥ १६ ॥ मानवंपरमोदारमस्त्रंपरमभास्वरम् ॥ चिक्षेपपरमक्रुद्धोमारीचोरसिराघवः ॥ १७ ॥ सतेनपरमास्त्रेणमानवेनसमाहतः ॥ संपूर्णंयोजनशतंक्षिप्तःसागरसंप्लवे ॥ १८ ॥ विचेतनंविघूर्णंतंशीतेषुबलपीडितम् ॥ निरस्तंदृश्यमारीचंरामोलक्ष्मणमब्रवीत् ॥ १९ ॥ पश्यलक्ष्मणशीतेषुंमानवंमनुसंहितम् ॥ मोहयित्वानयत्येनंनचप्राणैर्वियुज्यते ॥ २० ॥ इमानपिवधिष्यामिनिर्घृणान्दुष्टचारिणः ॥ राक्षसान्पापकर्मस्थान्यज्ञघ्नान्रुधिराशनान् ॥ २१ ॥ इत्युक्त्वालक्ष्मणंचाशुलाघवंदर्शयन्निव ॥ विगृह्यसुमहच्चास्त्रमाग्नेयंरघुनंदनः ॥ २२ ॥ सुबाहूरसिचिक्षेपसविद्धःप्रापतद्भुवि ॥ शेषान्वायव्यमादायनिजघानमहायशाः ॥ २३ ॥ राघवःपरमोदारोमुनीनांमुदमावहन् ॥ सहत्वाराक्षसान्सर्वान्यज्ञघ्नान्रघुनंदनः ॥ २४ ॥ ऋषिभिःपूजितस्तत्रयथेंद्रोविजयेपुरा ॥ अथयज्ञेसमाप्तेतुविश्वामित्रोमहामुनिः ॥ २५ ॥ निरीतिकादिशोदृष्ट्वाकाकुत्स्थमिदमब्रवीत् ॥ कृतार्थोस्मिमहाबाहोकृतंगुरुवचस्त्वया ॥ २६ ॥ सिद्धाश्रममिदंसत्यंकृतंवीरमहायशः ॥ सहिरामंप्रशस्यैवंताभ्यांसंध्यामुपागमत्॥२७॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्येचतुर्विंशतिसा॰बालकांडे त्रिंशःसर्गः॥३०॥

अथतांरजनींतत्रकृतार्थौरामलक्ष्मणौ ॥ ऊषतुर्मुदितौवीरौप्रहृष्टेनांतरात्मना ॥ १ ॥ प्रभातायांतुशर्वर्यांकृतपौर्वाह्णिकक्रियौ ॥ विश्वामित्रमृषींश्चान्यान्सहितावभिजग्मतुः ॥ २ ॥ अभिवाद्यमुनिश्रेष्ठंज्वलंतमिवपावकम् ॥ ऊचतुःपरमोदारंवाक्यंमधुरभाषिणौ ॥ ३ ॥

कृतम् अन्वर्थनामकं कृतमित्यर्थः ॥ २७ ॥ सँरेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे त्रिंशः सर्गः ॥ ३० ॥ ॥छ॥ ॥छ॥

एवं स्वयज्ञविघ्नविनाशफलकं सर्वास्त्रसंबंधानुग्रहं कृत्वा भगवान् विश्वामित्रः सहजलक्ष्मीशक्तिसंबंधानुग्रहाय प्रवर्तत इत्याह । अथेति । तत्र यज्ञशालायाम् ॥ १ ॥ कृता पौर्वाह्णिकी क्रिया याभ्यां तौ अभिजग्मतुः । अभिवादार्थमिति शेषः । तदुक्तं पूर्वसर्गांते-संध्यामुपागमादिति । सहगतो विश्वामित्रो होमार्थं त्वरया शालामागत इति बोध्यम् ॥ २ ॥ मुनिश्रेष्ठ विश्वामित्रम् ॥ ३ ॥

१ अत्रसर्गे त्रयःश्लोकाःपुस्तकादधिकाः ।

स्मेति अव्ययम् ॥४॥ तयोरिति ताभ्यामित्यर्थे । विश्वामित्रं पुरस्कृत्य । कृतविश्वामित्रानुमतिका इति यावत् ॥५॥ मैथिलस्य मैथिलाधिपतेः । परमधर्मिष्ठः उत्कटातिशयितधर्मवान् । परमेति पृथक्प दं वा परा मा यस्मिन्नित्यर्थकम्—रामसंबोधनम् ॥ ६ ॥ ७ ॥ पूर्वं पूर्वस्मिन्काले देवराताख्यप्राचीनजनकस्य यज्ञे सदसि दैवतैः दक्षयज्ञवधे प्रसादितात् शिवाल्लब्धं यज्ञप्रसादितैः शिवसहितैः दैवैः दत्तम् । अतस्तत्र तिष्ठतीति शेषः ॥ ८ ॥ तस्याद्भुतत्वमाह । नास्येति । आरोपणं शरप्रक्षेपयोग्यज्यासंबंधः । न कथं चन न कथमपीत्यर्थः ॥ ९ ॥१० ॥ तत्र मिथिलायाम् । यज्ञं चेति । यज्ञं द्र क्ष्यसि चेत्यन्वयः । चकारेण जानकीस्वीकारसमुच्चयः ॥११॥ कुतः तादृशधनुषः तत्र स्थितिः । तत्राह । तद्धीति । उत्तमं तद्धनुः मैथिलेन निजयज्ञप्रीतदेवेभ्यो यज्ञफलत्वेन याचितम् । युद्धे रिपूणां जयाय सर्वदैवतैः शिवसहितैः सर्वदैवतैः दत्तम् । अतः तत्र तिष्ठतीत्यर्थः । तदुक्तं पाद्मे-चापं शंभोर्दयादत्तमिति । कौर्मेपि-प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः ॥ प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनु

इमौस्ममुनिशार्दूलकिंकरौसमुपागतौ ॥ आज्ञापयमुनिश्रेष्ठशासनंकरवावकिम् ॥ ४ ॥ एवमुक्तेतयोर्वाक्येसर्वएवमहर्षयः॥ विश्वामित्रंपुरस्कृत्यरामं वचनमब्रुवन् ॥ ५ ॥ मैथिलस्यनरश्रेष्ठजनकस्यभविष्यति ॥ यज्ञःपरमधर्मिष्ठस्तत्रयास्यामहेवयम् ॥ ६ ॥ त्वंचैवनरशार्दूलसहास्माभिर्गमिष्यसि ॥ अद्भुतंचधनूरत्नंतत्रत्वंद्रष्टुमर्हसि ॥ ७ ॥ तद्धिपूर्वंनरश्रेष्ठदत्तंसदसिदैवतैः ॥ अप्रमेयबलंघोरंमखेपरमभास्वरम् ॥ ८ ॥ नास्यदेवानगंधर्वानासुरानचराक्षसाः ॥ कर्तुमारोपणंशक्तानकथंचनमानुषाः ॥ ९ ॥ धनुषस्तस्यवीर्यंहिजिज्ञासंतोमहीक्षितः ॥ नशेकुरारोपयितुंराजपुत्रामहाबलाः ॥ १० ॥ तद्धनुर्नरशार्दूलमैथिलस्यमहात्मनः ॥ तत्रद्रक्ष्यसिकाकुत्स्थयज्ञंचपरमाद्भुतम् ॥ ११ ॥ तद्धियज्ञफलंतेनमैथिलेनोत्तमंधनुः ॥ याचितंनरशार्दूलसुनाभं सर्वदैवतैः ॥ १२ ॥ आयागभूतंनृपतेस्तस्यवेश्मनिराघव ॥ अर्चितंविविधैर्गंधैर्धूपैश्चागुरुगंधिभिः ॥ १३ ॥ एवमुक्त्वामुनिवरःप्रस्थानमकरोत्तदा ॥ सर्षिसंघःसकाकुत्स्थआमंत्र्यवनदेवताः ॥ १४ ॥ स्वस्तिवोस्तुगमिष्यामिसिद्धःसिद्धाश्रमादहम् ॥ उत्तरेजाह्नवीतीरेहिमवंतंशिलोच्चयम् ॥ १५ ॥ इत्युक्त्वामुनिशार्दूलःकौशिकःसतपोधनः ॥ उत्तरांदिशमुद्दिश्यप्रस्थातुमुपचक्रमे ॥ १६ ॥ तंव्रजंतंमुनिवरमन्वगादनुसारिणाम् ॥ शकटीशतमात्रंतुप्रयाणेब्रह्मवादिनाम् ॥ १७ ॥ मृगपक्षिगणाश्चैवसिद्धाश्रमनिवासिनः ॥ अनुजग्मुर्महात्मानोविश्वामित्रंतपोधनम् ॥ १८ ॥ निवर्तयामासततःसर्षिसंघःसपक्षिणः ॥ तेगत्वादूरमध्वानंलंबमानेदिवाकरे ॥ १९ ॥

रिति । सुनाभं शोभनमुष्टिबंधनस्थानम् ॥ १२ ॥ आयागभूतं यजनीयदेवताभूतमित्यर्थः । वेश्मनीति । अस्य तिष्ठतीति शेषः । अत एवाह । अर्चितमित्यादि । न्यासभूतं नरपतेरिति क्वचित्पाठः । तत्रापि न्यस्यते अस्मिन् देवतेति व्युत्पत्त्या स एवार्थः । देवतान्यासश्च यागार्थ एव प्रतिमादौ ॥ १३ ॥ एवमुक्त्वेति । महर्षिगणद्वारेति शेषः । मुनिवरः विश्वामित्रः । वनदेवताः वनदुर्गा द्याः ॥ १४ ॥ सिद्धः । निर्विघ्नयज्ञसिद्ध्येति भावः । क्व गमिष्यसीत्यत्राह । उत्तरेति ॥ १५ ॥ १६ ॥ अनुसारिणाम् उक्तदिगनुसारिणां पश्चाद्गामिनामिति वा । शकटीशतमात्रं शतपरिच्छिन्नशक ट्यारोपिताग्निहोत्रसंभारादिमत् ब्रह्मवादिनां यूथम् अन्वगादिति संबंधः ॥ १७ ॥ १८ ॥ पक्षिणो निवर्तयामासेत्यनेन ऋषीणामनिवर्तनमुक्तम् । तदेवाह । ते गत्वेति ॥ १९ ॥

शोणनदस्यैव शोणा इत्यपि नामेत्याहुः । वस्तुतः शोणा इति गिरिव्रजसमीपस्थः नदीविशेष इत्येतदुत्तरसर्गे स्पष्टम् । अस्तं गते अस्तं जिगमिषतीत्यर्थः ॥२०॥२१॥२२॥ अयं देशः शोणाकूलस्थः ॥२३॥ निखिलम् । वैभवमिति शेषः ॥२४॥ वर्द्धमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे एकत्रिंशः सर्गः॥ ३१॥ शोणाकूलदेशवैभवप्रश्ने मद्वंश्यानामयं देश इत्युत्त रमाह । ब्रह्मयोनिरिति । ब्रह्मपुत्र इत्यर्थः । अक्लिष्टव्रतश्चासौ धर्मज्ञश्चेति विग्रहः ॥ १ ॥ युक्तायाम् अशेषस्त्रीगुणयुक्तायामित्यर्थः॥२॥ असूर्तरजसं न विद्यते सूर्तं प्रसूतं रजो यस्य तम् ।अजिति योगविभागादच् ।

वासंचक्रुर्मुनिगणाःशोणाकूलेसमाहिताः ॥ तेऽस्तंगतेदिनकरेस्नात्वाहुतहुताशनाः ॥ २० ॥ विश्वामित्रंपुरस्कृत्यनिषेदुरमितौजसः ॥ रामोपिसहसौमित्रिर्मुनींस्तानभिपूज्यच ॥ २१ ॥ अग्रतोनिषसादाथविश्वामित्रस्यधीमतः ॥ अथरामोमहातेजाविश्वामित्रंतपोधनम् ॥ २२ ॥ पप्रच्छमुनिशार्दूलंकौतूहलसमन्वितम् ॥ भगवन्कोन्वयंदेशःसमृद्धवनशोभितः ॥ २३ ॥ श्रोतुमिच्छामिभद्रंतेवक्तुमर्हसितत्त्वतः ॥ चोदितोरामवाक्येनकथयामाससुव्रतः ॥ तस्यदेशस्यनिखिलमृषिमध्येमहातपाः॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे एकत्रिंशः सर्गः ॥ ३१ ॥

ब्रह्मयोनिर्महानासीत्कुशोनाममहातपाः॥ अक्लिष्टव्रतधर्मज्ञःसज्जनप्रतिपूजकः ॥१॥ समहात्माकुलीनायांयुक्तायांसुमहाबलान् ॥ वैदर्भ्यांजनयामासचतुरःसदृशान्सुतान् ॥२॥ कुशांबंकुशनाभंचअसूर्तरजसंवसुम् ॥ दीप्तियुक्तान्महोत्साहान्क्षत्रधर्मचिकीर्षया ॥३॥ तानुवाचकुशःपुत्रान्धर्मिष्ठान्सत्यवादिनः ॥ क्रियतांपालनंपुत्राधर्मंप्राप्स्यथपुष्कलम् ॥ ४ ॥ कुशस्यवचनंश्रुत्वाचत्वारोलोकसत्तमाः ॥ निवेशंचक्रिरेसर्वेपुराणांनृवरास्तदा ॥ ५ ॥ कुशांबस्तुमहातेजाः कौशांबीमकरोत्पुरीम् ॥ कुशनाभस्तुधर्मात्मापुरंचक्रेमहोदयम् ॥ ६ ॥ असूर्तरजसोनामधर्मारण्यंमहामतिः ॥ चक्रेपुरवरंराजावसुर्नामगिरिव्रजम् ॥ ७ ॥ एषावसुमतीनामवसोस्तस्यमहात्मनः ॥ एतेशैलवराःपंचप्रकाशंतेसमंततः ॥ ८ ॥ सुमागधीनदीरम्यामगधान्विश्रुताययौ ॥ पंचानांशैलमुख्यानांमध्येमालेवशोभते ॥ ९ ॥ सैषाहिमागधीरामवसोस्तस्यमहात्मनः ॥ पूर्वाभिचरितारामसुक्षेत्रासस्यमालिनी ॥ १० ॥ कुशनाभस्तुराजर्षिःकन्याशतमनुत्तमम् ॥ जनयामासधर्मात्माघृताच्यांरघुनंदन ॥ ११॥ तास्तुयौवनशालिन्योरूपवत्यःस्वलंकृताः ॥ उद्यानभूमिमागम्यप्रावृषीवशतह्रदाः ॥ १२ ॥ गायंत्योनृत्यमानाश्चवादयंत्यस्तुराघव ॥ आमोदंपरमंजग्मुर्वराभरणभूषिताः ॥ १३ ॥ अथताश्चारुसर्वांग्योरूपेणाप्रतिमाभुवि ॥ उद्यानभूमिमागम्यताराइवघनांतरे ॥ १४ ॥ ताःसर्वागुणसंपन्नारूपयौवनसंयुताः ॥ दृष्ट्वासर्वात्मकोवायुरिदंवचनमब्रवीत् ॥१५॥ अहंवःकामयेसर्वाभार्याममभविष्यथ॥ मानुषस्त्यज्यतांभावोदीर्घमायुरवाप्स्यथ ॥ १६ ॥

क्षत्रधर्मचिकीर्षया तद्धर्मवृद्धिकरणेच्छया॥ ३ ॥पालनं प्रजापालनम्॥ ४ ॥निवेशं सन्निवेशम्॥ ५ ॥महोदयं महोदयनामकम्॥ ६ ॥ ॥ ७ ॥एषा गिरिव्रजापरपर्या॥ ८ ॥सुमागधी तत्संज्ञा । आययाविति पदच्छेदः॥ ९ ॥ सा मागधी मगधादागततया मागधीत्वेन प्रसिद्धा सा एषा शोणा तस्य मद्वंश्यस्य वसोः भवति । पूर्वाभिचरिता पूर्वदिग्गामिनी । सुक्षेत्रा । पार्श्वद्वयेपीति शेषः॥ १० ॥ घृताच्यां तन्नामिकाप्सरःसु ॥ ११ ॥ ताः शतं कन्याः॥ १२॥ आमोदं संतोषम् ॥ १३॥ घनांतरे मेघमध्ये तारा इव । रेजुरिति शेषः ॥ १४ ॥ १५ ॥ मत्कामनापूरणे मम देवस्य मानुष्योपि भार्याः भविष्यथ इत्यादिः वशीकरणाय अर्थवादः ।

नतु मानुषीणां देवसंबंधोऽनुचितः तत्राह । मानुषस्त्यज्यतां भाव इति । मदंगीकारमात्रेण विलक्षणशक्त्याविर्भावात मानुषभावत्यागे स्वत एव भवतीनां सामर्थ्यं भविष्यति । तत्फलमाह । दीर्घमिति॥ १६॥ मानुषेषु हि यतः विशेषेण नित्यमनुक्षणं यौवनं चलं चंचलम् । क्षीयमाणमिति यावत् । अतो मत्संबंधेन अक्षयं यौवनमित्याद्यन्वयः ॥ १७ ॥ अपहास्य हासपूर्वकम् अपमान्य ॥ १८ ॥ अंतश्चरसीति । पूर्वार्धेन स्वभावज्ञता वायोः सूचिता । ननु युष्मत्प्रभावापेक्षया मत्प्रभावोऽधिक इति चेत्तत्राह । प्रभावज्ञाश्च ते सर्वाः । तथा भ्रमं मा कार्षीरिति भावः । तस्मादेवमनुचितप्रार्थनया अस्मदवमाननमनुचितमित्याह । किमर्थमित्यादि ॥ १९ ॥ स्वप्रभावं दर्शयंति । कुशनाभेत्यादि । स्थानात् वायुपदात् देवमपि त्वां च्यावयितुम् । समर्था इति शेषः । रक्षामस्त्विति । शापेन तथाकरणे हि तत्क्षयः स्यादिति भावः ॥ २० ॥ हे दुर्मेधः दुर्बुद्धे यत्र काले पितरमवमन्य अपमानविषयं कृत्वा स्वधर्मेण कामेन स्वयं वरमुपास्महे आत्मना स्वातंत्र्येण वयं वरमंगीकुर्मः स कालः कदाचिदपि माभूदित्यन्वयः । नावमान्येति पाठस्तु क्वाचित्कोऽपपाठः । तथापाठे न इति छेदः । छांदसं दीर्घत्वम् । नः अस्माकं स कालो मा भूदित्यन्वयः । क्वचित्तु नोवमन्यस्वेति पाठः । अत एव-मा भूत्स

चलंहियौवनंनित्यंमानुषेषुविशेषतः ॥ अक्षयंयौवनंप्राप्ताअमर्यश्चभविष्यथ ॥ १७ ॥ तस्यतद्वचनंश्रुत्वावायोरक्लिष्टकर्मणः ॥ अपहास्यततोवाक्यं कन्याशतमथाब्रवीत् ॥ १८ ॥ अंतश्चरसिभूतानांसर्वेषांसुरसत्तम ॥ प्रभावज्ञाश्चतेसर्वाःकिमर्थमवमन्यसे ॥१९॥ कुशनाभसुतादेवसमस्ताःसुरसत्तम ॥ स्थानाच्च्यावयितुंदेवंरक्षामस्तुतपोवयम् ॥ २० ॥ माभूत्सकालोदुर्मेधःपितरंसत्यवादिनम् ॥ अवमन्य स्वधर्मेणस्वयंवरमुपास्महे ॥ २१ ॥ पिताहि प्रभुरस्माकंदैवतंपरमंचसः ॥ यस्यनोदास्यतिपितासनोभर्ताभविष्यति ॥ २२ ॥ तासांतुवचनंश्रुत्वाहरिःपरमकोपनः ॥ प्रविश्यसर्वगात्राणिबभंजभगवान्प्रभुः ॥ २३ ॥ ताःकन्यावायुनाभग्नाविविशुर्नृपतेर्गृहम् ॥ प्रविश्यचसुसंभ्रांताःसलज्जाःसास्रलोचनाः ॥ २४ ॥ सचतादयिताभग्नाःकन्याःपरमशोभनाः ॥ दृष्ट्वादीनास्तदाराजासंभ्रांतइदमब्रवीत् ॥ २५ ॥ किमिदंकथ्यतांपुत्र्यःकोधर्ममवमन्यते ॥ कुब्जाःकेनकृताःसर्वाश्चेष्टंत्योनाभिभाषथ ॥ २६ ॥ एवंराजाविनिःश्वस्यसमाधिंसंदधेततः ॥ २७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये च० विं० सा० बालकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ तस्यतद्वचनंश्रुत्वाकुशनाभस्यधीमतः ॥ शिरोभिश्चरणौस्पृष्ट्वाकन्याशतमभाषत ॥ १ ॥ वायुःसर्वात्मकोराजन्प्रधर्षयितुमिच्छति ॥ अशुभंमार्गमास्थायनधर्मंप्रत्यवेक्षते ॥ २ ॥ पितृमत्यःस्मभद्रंतेस्वच्छंदेनवयंस्थिताः ॥ पितरंनोवृणीष्वत्वंयदिनोदास्यतेतव ॥ ३ ॥

कालो यद्वा नो पितरं सत्यवादिनम् । कामतः समतिक्रम्य वरयेम स्वयं वरमित्येतदर्थविवरणश्लोको दृश्यते क्वचित् ॥ २१ ॥ तत्र बीजमाह । पिता हीति ॥ २२ ॥ हरिः वायुः । क्वचित्तु वायुरित्येव पाठः ॥ २३ ॥ सलज्जाः अन्याय्यपतिप्रसंगतः सलज्जाः ॥ २४ ॥ भग्नाः भग्नांगाः ॥ २५ ॥ धर्ममवमन्यते । बलात्कारं करोतीति यावत् । रोदनादिना चेष्टंत्यः किं नाभिभाषथेत्यन्वयः ॥ २६ ॥ एवम् । पृष्ट्वेति शेषः । समाधिं संदध इति । तद्वचःश्रवणैकाग्रचित्तोभूदित्यर्थः ॥ २७ ॥ सर्ग्[1]मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वा० आ० वा० द्वात्रिंशः सर्गः ॥ ३२ ॥ ॥ छ ॥ तस्येति । चरणौ स्पृष्ट्वा नमस्कृत्य ॥ १ ॥ प्रधर्षयितुम् अभिभवितुम् इच्छति स्म । अशुभं बलात्काररूपम् अवेक्षते स्म ॥ २ ॥ पितृमत्यः पित्रधीनाः स्वच्छंदे पतिस्वीकारविषये स्वातंत्र्येन स्थिताः न वर्तामहे यतः अतो नः पितरं वृणीष्व त्वम् । यदि नः अस्मान् तुभ्यं स दास्यति तदा तव त्वदीयाः भविष्यामः । ते तव भद्रमस्तु इति योजना ॥ ३ ॥

१ अत्र सर्गे कपुस्तकादेकःश्लोको न्यूनः ।

एवं ब्रुवंतीनां नो वचनं न प्रतीच्छता अनंगीकुर्वता पापानुबंधेन अधर्मबद्धचित्तेन वायुना एवं धर्मं ब्रुवंत्यः सर्वाः अभिहताः स्म इति योजना ॥ ४ ॥ ५ ॥ हे पुत्र्यः क्षमावतां क्षमावद्भिः कर्तुमर्हं यत् क्षांतं क्षमा तत् सुमहत् कृतम् । महती क्षमा कृतेति यावत् । गात्रभंगोत्थक्रोधवेगसहनम् अतिदुष्करमिति भावः । यच्च कुलम् अवेक्षितं कामवेगसहनं कृतं-तदपि सुमहत् ॥ ६ ॥ पुरुषस्य वेति । अविशेषेणेति शेषः । तत्तु दुष्करम् । यत् त्रिदशविषये क्षांतं कामवेगसहनं कृतं तत् अतिदुष्करम् । तेषां अभिरूपादिकमनीयगुणबाहुल्यात् ॥ ७ ॥ स्वकन्यानां क्षमां श्लाघयन् तादृशीं क्षमां स्वकुले प्रार्थयते । यादृशीति । भो पुत्र्यः यादृशी युष्माकं क्षमा तादृशी अस्मत्कुले सर्वासाम् । अस्त्विति शेषः । अथवा अविशेषतः सकलस्त्रीपुरुषाविशेषेणेत्यर्थः । क्षमायाः प्रार्थनीयत्वे निमित्तमाह । क्षमेत्यादि । दानसत्यवचनयज्ञसमाधिजसकलधर्मफला क्षमा । सकलजगदाधारभूता च क्षमा । अतः सा उपादेयेत्यर्थः ॥ ८ ॥ ९ ॥ प्रदानं कन्याप्रदानम् उचिते देशे काले सदृशे स्वकुलादिसदृशे पात्रे प्रदानं कर्तव्यमिति मंत्रणप्रक्रमः ॥ १० ॥ ऊर्ध्वरेताः ब्रह्मचारी । ब्राह्मं तपः ब्रह्मविषये चित्तैकाग्र्यम् । मनसश्चेंद्रियाणां च ऐकाग्र्यं परमं तप इति स्मृतिः ॥ ११ ॥ यदा चूली तपः चरति तदा ऊर्मिलातनया सोमदा

तेनपापानुबंधेनवचनंनप्रतीच्छता ॥ एवंब्रुवंत्यःसर्वाःस्मवायुनाभिहताभृशम् ॥ ४ ॥ तासांतुवचनंश्रुत्वाराजापरमधार्मिकः ॥ प्रत्युवाचमहातेजाः कन्याशतमनुत्तमम् ॥५॥ क्षांतंक्षमावतांपुत्र्यःकर्तव्यंसुमहत्कृतम् ॥ ऐकमत्यमुपागम्यकुलंचावेक्षितंमम ॥ ६ ॥ अलंकारोहिनारीणांक्षमातुपुरुषस्यवा ॥ दुष्करंतच्चवैक्षांतंत्रिदशेषुविशेषतः ॥ ७ ॥ यादृशीवःक्षमापुत्र्यःसर्वासामविशेषतः ॥ क्षमादानंक्षमासत्यंक्षमायज्ञाश्चपुत्रिकाः ॥ ८ ॥ क्षमायशःक्षमाधर्मः क्षमयाविष्टितंजगत् ॥ विसृज्यकन्याःकाकुत्स्थराजात्रिदशविक्रमः ॥ ९ ॥ मंत्रज्ञोमंत्रयामासप्रदानंसहमंत्रिभिः ॥ देशेकालेचकर्तव्यंसदृशेप्रतिपादनम्॥ ॥ १० ॥ एतस्मिन्नेवकालेतुचूलीनाममहाद्युतिः ॥ ऊर्ध्वरेताःशुभाचारोब्राह्मंतपउपागमत् ॥ ११॥ तपस्यंतमृषिंतत्रगंधर्वीपर्युपासते ॥ सोमदानामभद्रंते ऊर्मिलातनयातदा ॥ १२ ॥ साचतंप्रणताभूत्वाशुश्रूषणपरायणा ॥ उवासकालेधर्मिष्ठातस्यास्तुष्टोभवद्गुरुः ॥१३॥ सचतांकालयोगेनप्रोवाचरघुनंदन ॥ परितुष्टोस्मिभद्रंतेकिंकरोमितवप्रियम् ॥ १४ ॥ परितुष्टंमुनिंज्ञात्वागंधर्वीमधुरस्वरम् ॥ उवाचपरमप्रीतावाक्यज्ञावाक्यकोविदम् ॥ १५ ॥ लक्ष्म्यासमुदितोब्राह्म्याब्रह्मभूतोमहातपाः ॥ ब्राह्मेणतपसायुक्तंपुत्रमिच्छामिधार्मिकम् ॥ १६ ॥ अपतिश्चास्मिभद्रंतेभार्याचास्मिनकस्यचित् ॥ ब्राह्मेणोपगतायाश्चदातुमर्हसिमेसुतम् ॥ १७॥ तस्याःप्रसन्नोब्रह्मर्षिर्ददौब्राह्ममनुत्तमम् ॥ ब्रह्मदत्तइतिख्यातंमानसंचूलिनःसुतम् ॥ १८ ॥

नाम गंधर्वी तं पर्युपास्ते स्म मयि अनुग्रहं कुर्विति प्रार्थनया सेवते स्म । पर्युपासत इति शबलुगार्षः ॥ १२ ॥ तमिति । प्रतियोगे द्वितीया । तत्समीपे आसेत्यर्थः ॥ १३ ॥ कालयोगेन शुश्रूषाजनितधर्मपरिपाकार्हकालसंबंधेन । अनेन दिव्ययोगिनीयोगिनोः अकल्मषतपःप्रवृत्तिः सूचिता ॥ १४ ॥ १५ ॥ ब्राह्मया लक्ष्म्या ब्रह्मवर्चसेन । ब्रह्मभूतः ब्रह्मात्मभावनया । अत एव महातपाः । यतः त्वम् ईदृशः अतः ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि । ब्राह्मं तपः ब्रह्मविषयमैकाग्र्यम् । यद्वा ब्राह्मं तपः स्वाध्यायः ॥ १६ ॥ ननु पुत्रप्रार्थना पत्यौ उचिता तत्राह । अपतिश्चास्मि । इतः परमपि अस्मि अहं न कस्यचिद्भार्या । भविष्यामीति शेषः । अनेन नैष्ठिकब्रह्मचारिणीत्वं सूचितम् । अथापि यथा पुत्रावाप्तिः भवति तथा ते भद्रम् अनुग्रहोस्तु । नन्वेवं नैष्ठिकब्रह्मचर्ये कथं पुत्रलाभः संभाव्येत अत आह । ब्राह्मेणेति । उपगतायाः किंकरत्वं प्राप्तायाः । ब्राह्मेण ब्रह्मसंबंधिना उपायेन मे सुतं दातुमर्हसि । सनकादय इव मानसपुत्रः देय इति भावः ॥ १७ ॥ तस्याः सोमदायाः प्रसन्नः चूलिननामा ब्रह्मर्षिः ब्राह्मं

ब्रह्मतपसा युक्तं ब्राह्मणदत्तत्वात् ब्रह्मदत्त इति ख्यातं मानसं सुतं ददावित्यन्वयः । फली फलिन इतिवत् चूली चूलिन इति ऋषेः नामद्वयं साधु ॥१८॥ राजा गंधर्व्याः सोमदायाः क्षत्रियत्वात् । कांपिल्यां कंपिलेन निर्वृत्ताम् ॥ १९ ॥ २० ॥ २१ ॥ देवपतिर्यथा इंद्रसदृशो महीपाल इत्यर्थः ॥ २२ ॥ तदा तेन राज्ञा पाणौ स्पृष्टमात्रे ताः कन्याः विकुब्जाः कुब्जत्वरहिताः । आसन्निति शेषः । ब्राह्मतपोयुक्तत्वादेवं सामर्थ्यं राज्ञः । एवं च सति तत्कन्याशतं परमया लक्ष्म्या बभावित्यन्वयः ॥ २३ ॥ स राजा वायुना मुक्ता दृष्ट्वेत्यन्वयः ॥ भग्ना इति पाठस्तु चिंत्यः । केचित्तु तत्पाठे पूर्वं भग्ना इति व्याचख्युः ॥२४॥ प्रेषयामास । कांपिल्यं प्रतीति शेषः ॥ २५ ॥ सदृशीं क्रियां दारक्रियामित्यर्थः । प्रतिनंदनप्रकारमाह । स्पृष्ट्वेत्यादि । प्रशस्य च गतेत्यर्थः । आश्चर्यमासां धैर्यं-देवश्रेष्ठस्याप्यनादरः-धन्योयं राजा यस्य कन्या ईदृश्यः-अहो मे भाग्यं यस्या मे ईदृश्यःस्नुषाः इत्येवं प्रतिनंदनम् । अनेन स्त्रीमाहात्म्यं तपोमाहात्म्यं च दर्शितम् ॥ २६ ॥ २७ ॥ ३४ख्मानः ॥ ॥ इति श्रीरामाभिरामे श्री

सराजाब्रह्मदत्तस्तुपुरीमध्यवसत्तदा ॥ कांपिल्यांपरयालक्ष्म्यादेवराजोयथादिवम् ॥ १९ ॥ सबुद्धिंकृतवान्राजाकुशनाभःसुधार्मिकः ॥ ब्रह्मदत्तायकाकुत्स्थदातुंकन्याशतंतदा ॥ २० ॥ तमाहूयमहातेजाब्रह्मदत्तंमहीपतिः ॥ ददौकन्याशतंराजासुप्रीतेनांतरात्मना ॥ २१ ॥ यथाक्रमंतदापाणिजग्राहरघुनंदन ॥ ब्रह्मदत्तोमहीपालस्तासांदेवपतिर्यथा ॥ २२ ॥ स्पृष्टमात्रेतदापाणौविकुब्जाविगतज्वराः ॥ युक्तंपरमयालक्ष्म्याबभौकन्याशतंतदा ॥ २३ ॥ सदृष्ट्वावायुनामुक्ताःकुशनाभोमहीपतिः ॥ बभूवपरमप्रीतोहर्षंलेभेपुनःपुनः ॥ २४ ॥ कृतोद्वाहंतुराजानंब्रह्मदत्तंमहीपतिम् ॥ सदारंप्रेषयामाससोपाध्यायगणंतदा ॥ २५ ॥ सोमदापिसुतंदृष्ट्वापुत्रस्यसदृशींक्रियाम् ॥ यथान्यायंचगंधर्वीस्नुषास्ताःप्रत्यनंदत ॥ २६ ॥ स्पृष्ट्वास्पृष्ट्वाचताःकन्याःकुशनाभंप्रशस्यच ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आ० च० विं० सा० बालकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ कृतोद्वाहेगतेतस्मिन्ब्रह्मदत्तेचराघव ॥ अपुत्रःपुत्रलाभायपौत्रीमिष्टिमकल्पयत् ॥ १ ॥ इष्ट्यांतुवर्तमानायांकुशनाभंमहीपतिम् ॥ उवाचपरमोदारःकुशोब्रह्मसुतस्तदा ॥ २ ॥ पुत्रस्तेसदृशःपुत्रभविष्यतिसुधार्मिकः ॥ गाधिंप्राप्स्यसितेनत्वंकीर्तिंलोकेचशाश्वतीम् ॥३॥ एवमुक्त्वाकुशोरामकुशनाभंमहीपतिम् ॥ जगामाकाशमाविश्यब्रह्मलोकंसनातनम् ॥ ४ ॥ कस्यचित्त्वथकालस्यकुशनाभस्यधीमतः ॥ जज्ञेपरमधर्मिष्ठोगाधिरित्येवनामतः ॥ ५ ॥ सपितामममकाकुत्स्थगाधिःपरमधार्मिकः ॥ कुशवंशप्रसूतोस्मिकौशिकोरघुनंदन ॥ ६ ॥ पूर्वजाभगिनीचापिममराघवसुव्रता ॥ नाम्नासत्यवतीनामऋचीकेप्रतिपादिता ॥ ७ ॥

रामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ ॥ छ ॥ ॥ ब्रह्मदत्ते चेति । चस्त्वर्थः कन्याशतसमुच्चयार्थो वा । पुत्रलाभाय पुत्रप्राप्तये ॥ १ ॥ कुशिः कुशनाभपिता ॥ २ ॥ कुशवाक्यमाह । पुत्र इत्यादि । सदृशः त्वत्सदृशः । कोसौ तत्राह । गाधिं गाधिनामानं प्राप्स्यसि । तेन लोके शाश्वतीं कीर्तिं च प्राप्स्यसि ॥ ३ ॥ कुशो नामेति पाठे एतत्कुशवृत्तं नाम प्रसिद्धमित्यर्थः । आकाशमाविश्य आकाशरूपः भूत्वा । अनेन तस्य मुक्तत्वं सूचितम् । तेन स्ववंशस्य माहात्म्यातिशयः सूचितः ॥४॥ कस्य चित्त्वथ कालस्य कस्य चित्कालस्य अनंतरमित्यर्थः ॥५॥ मम विश्वामित्रस्य कुशवंशप्रसूतत्वात् अहं कौशिकः ॥६॥ न केवलमहमेव गाधेः पुत्रः । मम पूर्वजा ज्येष्ठा नाम्ना सत्यवतीति प्रसिद्धा ऋचीके प्रतिपादिता ऋचीकाय दत्ता इति नाम प्रसिद्धम् ॥ ७ ॥

सशरीरस्वर्गगतौ हेतुः-भर्तारमनुवर्तिनीति । सहगमनं कृतवतीत्यर्थः । अपि च अन्यदपि तस्याश्चरितं कौशिकीनाम्नी महानदी तद्रूपा प्रवृत्ता च जाता ॥ ८ ॥ हितकार्यार्थम् । हितकामार्थमिति पाठे हितम् आमुष्मिकं कामः ऐहिकं तदुभयदानार्थम् ॥ ९ ॥ यतो भगिन्यां स्नेहसंयुक्तः अतः हिमवत्पार्श्वे कौशिक्यां नियतः नित्यं सुखं वसामीत्यन्वयः ॥१० ॥ इतश्च तस्यां वास इत्याह । सा त्विति । सत्ये धर्मे प्रतिष्ठिता । तज्जलपानादिना सत्यात् मनो न निवर्तत इति भावः ॥ ११॥ नन्वेवं कथं सिद्धाश्रमे स्थितिरत आह । अहं हीति । नियमात् गयापिंडदानवत् सिद्धाश्रमैकसाध्ययागजन्य सिद्धिहेतोः । आगमनकार्यं च त्वदनुग्रहात्सिद्धमित्याह । सिद्धाश्रममित्यादि ॥ १२ ॥ उपसंहरति । एषेति । मम गाधेः सकाशादुत्पत्तिः कीर्तिता । स्वस्य वंशस्य उत्पत्तिर्ब्रह्मपुत्रात् कुशात् कीर्तिता । देशस्य शोणाकूलीयगिरिव्रजदेशस्य पृच्छसि पर्यपृच्छः । तत्सर्वमुक्तमिति शेषः ॥ १३ ॥ अतः परं न प्रष्टव्यमित्याह । गत इति । विघ्नः गंतव्याध्वनि निद्राभावप्रयुक्तजाड्यमूलः ॥ १४ ॥ अर्धरात्रचि

सशरीरागतास्वर्गंभर्तारमनुवर्तिनी ॥ कौशिकीपरमोदाराप्रवृत्ताचमहानदी ॥ ८ ॥ दिव्यापुण्योदकारम्याहिमवंतमुपाश्रिता ॥ लोकस्यहितकार्यार्थं प्रवृत्ताभगिनीमम ॥ ९ ॥ तेनाहंहिमवत्पार्श्वेवसामिनियतःसुखम् ॥ भगिन्यांस्नेहसंयुक्तःकौशिक्यांरघुनंदन ॥ १० ॥ सातुसत्यवतीपुण्यासत्येधर्मेप्रतिष्ठिता ॥ पतिव्रतामहाभागाकौशिकीसरितांवरा ॥ ११ ॥ अहंहिनियमाद्रामहित्वातांसमुपागतः ॥ सिद्धाश्रममनुप्राप्तःसिद्धोस्मितवतेजसा ॥ १२ ॥ एषारामममोत्पत्तिःस्वस्यवंशस्यकीर्तिता ॥ देशस्यहिमहाबाहोयन्मांत्वंपरिपृच्छसि ॥ १३ ॥ गतोर्धरात्रःकाकुत्स्थकथाःकथयतोमम ॥ निद्रामभ्येहिभद्रंतेमाभूद्विघ्नोध्वनीहनः ॥ १४ ॥ निष्पंदास्तरवःसर्वेनिलीनामृगपक्षिणः ॥ नैशेनतमसाव्याप्तादिशश्चरघुनंदन ॥ १५ ॥ शनैर्विसृज्यतेसंध्यानभोनेत्रैरिवावृतम् ॥ नक्षत्रतारागहनंज्योतिर्भिरवभासते ॥१६॥ उत्तिष्ठतेचशीतांशुःशशीलोकतमोनुदः ॥ ह्लादयन्प्राणिनांलोकेमनांसिप्रभयास्वया ॥१७॥ नैशानिसर्वभूतानिप्रचरंतिततस्ततः ॥ यक्षराक्षससंघाश्चरौद्राश्चपिशिताशनाः ॥ १८ ॥ एवमुक्त्वामहातेजाविरराममहामुनिः ॥ साधुसाध्वितितेसर्वेमुनयोह्यभ्यपूजयन् ॥ १९ ॥ कुशिकानामयंवंशोमहान्धर्मपरः सदा ॥ ब्रह्मोपमामहात्मानःकुशवंश्यानरोत्तमाः ॥ २० ॥ विशेषेणभवानेवविश्वामित्रमहायशः ॥ कौशिकीसरितांश्रेष्ठाकुलद्योतकरीतव॥२१॥मुदितैर्मुनिशार्दूलैःप्रशस्तःकुशिकात्मजः ॥ निद्रामुपागमच्छ्रीमानस्तंगतइवांशुमान्॥२२॥

हान्याह । निष्पंदा इति । पक्षिचलनाभावादिति भावः । तदाह । निलीना इति ॥ १५ ॥ शनैर्विसृज्यते व्ययुंक्तेत्यर्थः । वर्तमानसामीप्ये भूते लट् । संध्याशब्देन तदुपासनयोग्यगौणकालराहित्येन सा ध्यामरूपोच्यते । नक्षत्रतारागहनं नभः सहस्राक्षवत् नेत्रैरावृतमिव तज्ज्योतिर्भिः तद्रश्मिभिः अवभासते ॥१६॥ उत्तिष्ठते । उदोनूर्ध्वकर्मणि इति तङ् ॥१७॥ नैशानि निशाप्रभवाणि । तान्येवाह । यक्षे त्यादि ॥ १८ ॥ अभ्यपूजयन् अस्तुवन् ॥ १९ ॥ स्तुतिप्रकारमाह । कुशिकानामित्यादि । ब्रह्मोपमाः ब्रह्मर्षितुल्याः ॥ २० ॥ हे महायशः विश्वामित्र भवानेव विशेषेण । महात्मेति शेषः । यः तप सा ब्राह्मणत्वं प्राप्त इति भावः । किं च यस्य तव भगिनी तव कुलस्य द्योतकरी उद्धारकर्त्री सरितां श्रेष्ठा । अनेन सकलजगदुद्धारकत्वं सूचितम् ॥ २१ ॥ प्रशस्तः स्तुतः । अस्तं गत इवांशुमा

निति पाठः ॥ २२ ॥सेवते सेवते स्म ॥ २३ ॥ गैरंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे चतुस्त्रिंशः सर्गः ॥ ३४ ॥ ॥ छ ॥ ॥ रात्रिशेषम् उपास्य निद्रया अतिवाह्य ॥ १॥ गमनाय गमनं कर्तुम् ॥२॥३॥ अयं शोण इति । शोणैव शोण इति व्यपदिष्टः । कतरेण पथा संतरिष्यामहे इत्यन्वयः। मश्नवीजम्–अगाध इति।अतलस्पर्श इत्यर्थः॥४॥ उद्दिष्टः गंतव्यत्वेन निश्चितः ॥ ५ ॥ ६ ॥ सारसः पक्षिविशेषः ॥ ७ ॥ वासपरिग्रहं संमार्जनादिना आवासस्थानं चक्रुरित्यर्थः ॥ ८ ॥ अमृतवत् अमृततुल्यं पंचयज्ञाद्यवशिष्टमन्नम् । यद्वाऽमृतवत् तत्सदृशं गंगाजलं हविश्च मागुक्तं भाशयेत्यर्थः ॥ ९ ॥ विष्ठिताः विशेषेण स्थिताः । यथार्हतः यथा अवस्थानमर्हतः तथा स्थितावित्यर्थः ॥ १० ॥ गंगां श्रोतुं गंगाविषयकं किंचिच्छ्रोतुमित्यर्थः ।

रामोपिसहसौमित्रिःकिंचिदागतविस्मयः ॥ प्रशस्यमुनिशार्दूलंनिद्रांसमुपसेवते ॥ २३ ॥ इत्यार्षे श्रीमद्रा०वा०आदिकाव्ये च०विं०सा० बालकांडेचतुस्त्रिंशःसर्गः ॥ ३४ ॥ उपास्यरात्रिशेषंतुशोणाकूलेमहर्षिभिः ॥ निशायांसुप्रभातायांविश्वामित्रोऽभ्यभाषत ॥ १ ॥ सुप्रभातानिशारामपूर्वासंध्याप्रवर्तते ॥ उत्तिष्ठोत्तिष्ठभद्रंतेगमनायाभिरोचय ॥ २ ॥ तच्छ्रुत्वावचनंतस्यकृतपूर्वाह्णिकक्रियः ॥ गमनंरोचयामासवाक्यंचेदमुवाचह ॥ ३ ॥ अयंशोणःशुभजलोऽगाधःपुलिनमंडितः ॥ कतरेणपथाब्रह्मन्संतरिष्यामहेवयम् ॥ ४ ॥ एवमुक्तस्तुरामेणविश्वामित्रोब्रवीदिदम् ॥ एषपंथामयोद्दिष्टोयेनयांतिमहर्षयः ॥ ५ ॥ तेगत्वादूरमध्वानंगतेऽर्धदिवसेतदा ॥ जाह्नवींसरितांश्रेष्ठांददृशुर्मुनिसेविताम् ॥ ६ ॥ तांदृष्ट्वापुण्यसलिलांहंससारससेविताम् ॥ बभूवुर्मुनयःसर्वेमुदिताःसहराघवाः ॥ ७ ॥ तस्यास्तीरेतदासर्वेचक्रुर्वासपरिग्रहम् ॥ ततःस्नात्वायथान्यायंसंतर्प्यपितृदेवताः ॥ ८ ॥ हुत्वाचैवाग्निहोत्राणिप्राश्यचामृतवद्धविः ॥ विविशुर्जाह्नवीतीरेशुभामुदितमानसाः ॥ ९ ॥ विश्वामित्रंमहात्मानंपरिवार्यसमंततः ॥ विष्ठिताश्चयथान्यायंराघवौचयथार्हतः ॥ संप्रहृष्टमनारामोविश्वामित्रमथाब्रवीत् ॥ १० ॥ भगवञ्छ्रोतुमिच्छामिगंगांत्रिपथगांनदीम् ॥ त्रैलोक्यंकथमाक्रम्यगतानदनदीपतिम् ॥ ११ ॥ चोदितोरामवाक्येनविश्वामित्रोमहामुनिः ॥ वृद्धिंजन्मचगंगायावक्तुमेवोपचक्रमे ॥ १२ ॥ शैलेंद्रोहिमवान्नामधातूनामाकरोमहान् ॥ तस्यकन्याद्वयंरामरूपेणाप्रतिमंभुवि ॥ १३ ॥ यामेरुदुहितारामतयोर्मातासुमध्यमा ॥ नाम्नामेनामनोज्ञावैपत्नीहिमवतःप्रिया ॥ १४ ॥ तस्यांगंगेयमभवज्ज्येष्ठाहिमवतःसुता ॥ उमानामद्वितीयाभूत्कन्यातस्यैवराघव॥१५॥अथज्येष्ठांसुराःसर्वेदेवकार्यचिकीर्षया ॥ शैलेंद्रंवरयामासुर्गंगांत्रिपथगांनदीम्॥१६॥ददौधर्मेणहिमवांस्तनयांलोकपावनीम् ॥ स्वच्छंदपथगांगंगांत्रैलोक्यहितकाम्यया॥१७॥प्रतिगृह्यत्रिलोकार्थंत्रिलोकहितकांक्षिणः॥ गंगामादायतेऽगच्छन्कृतार्थेनांतरात्मना॥१८॥

श्रोतव्यं विषयमाह । त्रैलोक्यमित्यादि ॥ ११ ॥ वृद्धिं त्रैलोक्यव्याप्तिरूपाम् ॥ १२ ॥ धातूनां स्वर्णादीनाम् ॥ १३ ॥ या मेरुदुहिता मेना नाम सा तयोः कन्ययोर्मातेत्यन्वयः ॥ १४ ॥ तस्यां मेनायां या ज्येष्ठा हिमवतः सुता कुटिला नाम सा इयं गंगा अभवदित्यर्थः । तस्यैव हिमवतः ॥ १५ ॥ देवकार्य वक्ष्यमाणं भववीर्यधारणम् । त्रिपथगां स्वर्गभूपातालमार्गगाम् । इदं वर्तमानापदेशेन वरणं चास्याः शिवभार्यात्वाय ॥ १६ ॥ धर्मेण कन्यादानधर्मेण । स्वच्छंदपथगामित्यपि वर्तमानापदेशेन स्वेच्छामात्रेण प्रवहादिवायुमार्गगमनशीलाम् ॥ १७ ॥ त्रिलोकार्थं तारकतो भीतत्रिलोकरक्ष

कपुत्रोत्पत्त्यर्थम् अगच्छन् ब्रह्मलोकम् । तत्र ब्रह्मशापवशाज्जलरूपतामाप्तिरितीत्यादिवामनपुराणोक्तदिशा मध्ये ऊह्यम् । वामनपुराणवृत्तांतस्य प्रायेणात्र प्रत्यभिज्ञानात् । एवं हि तत्राख्यायिका—उमा ज्येष्ठा कुटिला नाम हिमवत्कन्या देवैः शिववीर्यधारणाय हिमवंतं प्रार्थिता । तेन दत्तया तया सह देवाः ब्रह्मलोकं गत्वा ब्रह्मणे निवेदितवंतः । ब्रह्मणा चासमर्थेयं तद्धारणे इत्युक्ता अवश्यं धारयामीति कथितवाक्याऽवज्ञानेन ब्रह्मणा जलरूपा भवेति शप्ता । तत्रैव ब्रह्मांडोर्ध्वकटाहे जलरूपेण लग्ना स्थिता । तस्यामेवाग्निना शिववीर्यं क्षिप्तमिति । विष्ण्वंघ्रिणा प्रसरता कटाहे भेदितेंबरात् । कुटिला विष्णुपादांतात्पपाताकुलिता ततः । तस्माद्विष्णुपदी ख्यातेति वामनपुराणोक्तेरेव ब्रह्मांडोर्ध्वकटाहे लग्नेति ज्ञायते । पतनसमये च ब्रह्मांडबाह्यजलेन सहैव पतितं तज्जलं ब्रह्मणा कमंडलुधृतं बाह्यजलं च शिवानंदबाष्पजातं नारायणात्मकमिति कामिकासंहितादौ स्पष्टम् । ततो भगवता पदारोपणे तेनैव कमंडलुजलेन तत्पादप्रक्षालनं कृत्वा तज्जलं कमंडलावेव क्षिप्तम् । शंकरसंहितोक्तरीत्या गौरीविवाहोत्तरं लीलया गौर्या पाणिभ्यां शिवनयनाच्छादने कृते शिवेन ललाटनेत्रं प्रकाशितम् । ततो भयाद्गौरीपाणिस्वेदजलं स्रुतं तदपि ब्रह्मणा कमंडलौ स्थापितमित्यप्यत्रोह्यम्। गौरीविवाहकथनेन सूचितं च ।

याचान्याशैलदुहिताकन्यासीद्रघुनंदन ॥ उग्रंसुव्रतमास्थायतपस्तेपेतपोधना ॥ १९ ॥ उग्रेणतपसायुक्तांददौशैलवरःसुताम् ॥ रुद्रायाप्रतिरूपायउमांलोकनमस्कृताम् ॥ २० ॥ एतेतेशैलराजस्यसुतेलोकनमस्कृते ॥ गंगाचसरितांश्रेष्ठाउमादेवीचराघव ॥ २१ ॥ एतत्तेसर्वमाख्यातंयथात्रिपथगामिनी ॥ खंगताप्रथमंतातगतिंगतिमतांवर ॥ २२ ॥ सुरलोकंसमारूढाविपापाजलवाहिनी ॥२३॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा० बालकांडे पंचत्रिंशः सर्गः ॥३५॥ उक्तवाक्येमुनौतस्मिन्नुभौराघवलक्ष्मणौ ॥ प्रतिनंद्यकथांवीरावूचतुर्मुनिपुंगवम् ॥ १ ॥ धर्मयुक्तमिदंब्रह्मन्कथितंपरमंत्वया ॥ दुहितुःशैलराजस्यज्येष्ठायावक्तुमर्हसि ॥ विस्तरंविस्तरज्ञोसिदिव्यमानुषसंभवम् ॥ २ ॥ त्रीन्पथोहेतुनाकेनप्लावयेल्लोकपावनी ॥ कथंगंगात्रिपथगाविश्रुतासरिदुत्तमा ॥ ३ ॥ त्रिषुलोकेषुधर्मज्ञकर्मभिःकैःसमन्विता ॥ तथाब्रुवतिकाकुत्स्थेविश्वामित्रस्तपोधनः ॥ ४ ॥ निखिलेनकथांसर्वामृषिमध्येन्यवेदयत् ॥ पुरारामकृतोद्वाहःशितिकंठोमहातपाः ॥ ५ ॥

भगीरथप्रार्थनया च ब्रह्मरूपः सर्वपवित्रजलसमूहस्तस्मै दत्तः । सर्वमुक्तजलमुपक्रम्य पुराणेषु भगीरथसंबंधश्रवणात् । विस्तरस्त्वस्मत्कृतगंगामाहात्म्यप्रकाशे द्रष्टव्यः ॥ १८ ॥ कन्या अवृतपतिः । अग्रे शिववीर्यस्खलनादि वक्तुं चैतद्वर्णनम् । उग्रं सुव्रतं पर्णभोजनस्यापि त्यागसंकल्परूपम् । तपः शिवध्यानरूपम्॥१९॥२०॥२१॥यथा त्रिपथगामिनी गंगा । तथा प्रतिपादयामीति शेषः । तदेव विवृणोति खमित्यादि । प्रथमं खं गता आकाशमार्गं गता॥२२॥पश्चात्सुरलोकं समारूढाऽभवत् । जलवाहिनी तत्स्वभावा जाता । विपापा सकलपापहंत्री॥२३॥[१]गैरमानः॥ ॥इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ ॥ छ ॥ ॥ उक्तवाक्ये इति।उपरते इत्यर्थः॥१॥वक्तुमर्हसीति।अस्य विस्तरमित्यनेनान्वयः।दिव्यमानुषसंभवं दिव्यलोकनिबंधनं च ॥२॥ शुश्रूषितं विस्तरमाह । त्रीनित्यादि । भूर्भुवःस्वर्मार्गानित्यर्थः । प्लावयेत् व्याप्नुयात् इत्येको विस्तरः । द्वितीयमाह । कथमिति । त्रिपथगेति प्रसिद्धिः किं निबंधनेति द्वितीयः ॥३॥ कैः कर्मभिः चरितैः समन्वितेति तृतीयः । द्वयोर्हिमवत्कन्ययोः प्रस्तावेपि स्ववंशोद्धारकत्वाद्गंगाविषयक एव भगवतः प्रश्न इत्यूह्यम् ॥ ४ ॥ निखिलेन कार्त्स्न्येन । विस्तरेणेति यावत् । उद्वाहो विवाहः ॥ ५ ॥

१ कपुस्तके इतः सार्धश्लोकोधिकोत्र ।

गतम् । क्रीडयेति शेषः ॥ ६ ॥ समुद्युक्ताः सेनानीप्राप्त्यर्थं परमयत्नेन रुद्रोमयोः संयोजनं कृत्वापि तस्यां रौद्रतेजसो मोचनं वारयितुं समुद्युक्ताः बभूवुरित्यर्थः । समुद्विग्ना इति पाठस्तु सुगम एव ॥७॥ पुत्रार्थं संयोजनोद्योगवतां तन्निवारणोद्योगोनुचितः । तत्राह । यदिहेति । इह उमायाम् । उत्पद्यत उत्पत्स्यते । अब्रुवन्निति । विचार्येत्यादिः ॥ ८ ॥ ९ ॥ प्रसादविषयमाह । न लोका इति । भूरादिलोकाः तत्स्थप्रजाश्चेत्यर्थः । ब्राह्मेण तपसा ब्रह्मानन्यताळक्षणेन तपसेत्यर्थः॥ १० ॥तजो रेतः तेजांसि आत्मानि मत्तेजांसि मया धृते । को लाभस्तत्राह । रक्ष सर्वानिति । धृत्वेति शेषः । ननु रुद्रेण स्वतेजोधारणं कथं लोकरक्षेति चेच्छृणु । यदेतत्पुरुषे रेतो भवति आदित्यस्य तद्रूपमिति श्रुतेस्तद्रेतोरूपं तेज एव आदित्यमंडलम् । तद्धृतौ सकलं जगद्रक्षितं भवति विपर्यये विपर्यय इत्याहुः । तदेवाह । नालोकामीति । आदित्यविनाशे हि सर्वलोकविनाशप्रसंग इति भावः ॥ ११ ॥ १२ ॥ धारयिष्यामीति । सहोमया । उमापि स्वरजोरूपं तेजोऽग्निं स्वस्वरूपेण तेजसा धारयिष्यति । यदेतत्स्त्रियां लोहितं

दृष्ट्वाचभगवान्देवींमैथुनायोपचक्रमे ॥ तस्यसंक्रीडमाणस्यमहादेवस्यधीमतः ॥ शितिकंठस्यदेवस्यदिव्यंवर्षशतंगतम् ॥६॥ नचापितनयोरामतस्यामासीत्परंतप ॥ सर्वेदेवाःसमुद्युक्ताःपितामहपुरोगमाः ॥ ७ ॥ यदिहोत्पद्यतेभूतंकस्तत्प्रतिसहिष्यति ॥ अभिगम्यसुराःसर्वेप्रणिपत्येदमब्रुवन् ॥ ८ ॥ देवदेवमहादेवलोकस्यास्यहितेरत ॥ सुराणांप्रणिपातेनप्रसादंकर्तुमर्हसि ॥ ९ ॥ नलोकाधारयिष्यंतितवतेजःसुरोत्तम ॥ ब्राह्मेणतपसायुक्तोदेव्यासहतपश्चर ॥ १० ॥ त्रैलोक्यहितकामार्थंतेजस्तेजसिधारय ॥ रक्षसर्वानिमाँल्लोकान्नालोकंकर्तुमर्हसि ॥ ११ ॥ देवतानांवचःश्रुत्वासर्वलोकमहेश्वरः ॥ बाढमित्यब्रवीत्सर्वान्पुनश्चेदमुवाचह ॥ १२ ॥ धारयिष्याम्यहंतेजस्तेजसैवसहोमया ॥ त्रिदशाःपृथिवीचैवनिर्वाणमधिगच्छतु ॥ १३ ॥ यदिदंक्षुभितंस्थानान्ममतेजोह्यनुत्तमम् ॥ धारयिष्यतिकस्तन्मेब्रुवंतिसुरसत्तमाः ॥१४॥ एवमुक्तास्ततोदेवाःप्रत्यूचुर्वृषभध्वजम् ॥ यत्तेजः क्षुभितंह्यद्यतद्धराधारयिष्यति॥१५॥ एवमुक्तःसुरपतिःप्रमुमोचमहाबलः ॥ तेजसापृथिवीयेनव्याप्तासगिरिकानना ॥ १६ ॥ ततोदेवाःपुनरिदमूचुश्चापिहुताशनम् ॥ आविशत्वंमहातेजोरौद्रंवायुसमन्वितः ॥ १७ ॥ तदग्निनापुनर्व्याप्तंसंजातंश्वेतपर्वतम् ॥ दिव्यंशरवणंचैवपावकादित्यसन्निभम् ॥ १८ ॥

भवति अग्नेस्तद्रूपमिति श्रुतेः । भो त्रिदशाः अनेन तेजोधारणेन पृथिवी चकारात् सर्वो लोको निर्वाणं सुखं प्राप्नोतु । अन्यथा ऐश्वरतेजोजन्यस्य दुर्धार्यत्वेन दुर्दर्शत्वेन च पृथिव्याः लोकस्य च पीडा स्यादिति भावः ॥ १३ ॥ दिव्यवर्षशतभोगवशात्स्थानतश्च्युतस्य शुक्रांशस्य धारणासंभवेन तद्धारणसमर्थं मोक्षस्थानं निरूपयंत्वित्याह । यदिदमिति । स्थानात् हृदयपुंडरीकलक्षणात् क्षुभितं चिरकालभोगवशात्स्खलितम् अनुत्तमं देवकार्यार्हसुतसमर्थत्वेन सर्वोत्तमं भवत्प्रार्थनया उमागर्भानर्हं को धारयिष्यति ॥ १४ ॥ उत्तरमाहुः । एवमिति । धरा धारयिष्यतीति । तस्याः अशेषधारणशक्तिमत्त्वादिति भावः ॥ १५ ॥ १६ ॥ पृथिव्यां मुक्तस्य तेजसो धारणार्थमग्नेः पृथिव्यधिपतित्वेन पृथिव्यभिमानित्वात्तं नियुंजते । तत इति । पुनःशब्दो वाक्यालंकारे । हुताशनं देवीक्लेदांशरूपम् । अन्यादृशाग्नेः रौद्रतेजःप्रवेशासंभवात् । वायुसमन्वित इति । अनेन चालनलक्षणः प्रवेशोपायः उक्तः ॥ १७ ॥ तदग्निनेति । उक्ताग्निना चालनपूर्वकप्रवेशात्तत्तेजोबद्धं सत्केवलश्वेतपर्वतरूपं जातम् । तद्रूपं

तेजःप्रवेशप्रदेशे तन्महिम्ना दिव्यं पावकादित्यसंनिभं शरवणं चाभूत् ॥ १८ ॥ यत्रेति । किंचित्कालं धृतत्वान्कार्तिकेयत्ववदेव अग्निसंभवत्वं बोध्यम् ॥१९॥ सुप्रीतमनसः लोकानुग्रहाय मूलतेजसो धृतत्वाद्देवकार्याय स्कन्नतेजसश्च दत्तत्वात्संतोषः । क्रियमाणामपि पूजाम् उमा देवी नांगी करोति स्म । प्रत्युत क्रुद्धैवाभूदित्याह । अथ शैलेति ॥ २० ॥ किमब्रवीत्तदाह । अशपदिति । शापरूपं वचोब्रवीदित्यर्थः । मन्युकारणमाह । यस्मादिति ॥ २१ ॥ शापस्वरूपमाह । अपत्यमित्यादि ॥ २२ ॥ एवमुक्त्वा । शपथरूपं वच इति शेषः । हे अवने पृथ्वि नैकरूपा एकत्रैव क्षेत्रे अनेकबीजजफलजनकत्वात् बहुभार्या अनेकभूपतिभोग्या ॥ २३ ॥ न च पुत्रकृतां प्रीतिम् । वराहादुत्पन्नस्यापि नरकासुरस्य भौमस्य कृष्णावतारे तेनैव हननात् । सुदुर्मेध इति । नित्यमसिच् प्रजामेधयोरित्यसिच् । सुतरां दुष्टा मेधा यस्यास्तत्संबोधनं सुदुर्मेधः । मम पुत्रमनिच्छती तेजोधारणानुमत्या । यद्येषा तत्तेजोधारणं नानुमन्येत तर्हि स पुत्रो ममैव स्यादित्याशयः ॥ २४ ॥ पीडितान्देवीशापदुःखितान् । उपचक्राम

यत्रजातोमहातेजाःकार्तिकेयोग्निसंभवः ॥ अथोमांचशिवंचैवदेवाःसर्षिगणास्तथा ॥ १९ ॥ पूजयामासुरत्यर्थंसुप्रीतमनसस्तदा ॥ अथशैलसुतारामत्रिदशानिदमब्रवीत् ॥ २० ॥ समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना ॥ यस्मान्निवारिताचाहंसंगतापुत्रकाम्यया ॥ २१ ॥ अपत्यंस्वेषुदारेषुनोत्पादयितुमर्हथ ॥ अद्यप्रभृतियुष्माकमप्रजाःसंतुपत्नयः ॥ २२ ॥ एवमुक्त्वासुरान्सर्वाञ्छशापपृथिवीमपि ॥ अवनेनैकरूपात्वंबहुभार्याभविष्यसि ॥ २३ ॥ नचपुत्रकृतांप्रीतिंमत्क्रोधकलुषीकृता ॥ प्राप्स्यसेत्वंसुदुर्मेधोममपुत्रमनिच्छती ॥ २४ ॥ तान्सर्वान्पीडितान्दृष्ट्वासुरान्सुरपतिस्तदा ॥ गमनायोपचक्रामदिशंवरुणपालिताम् ॥ २५ ॥ सगत्वातपआतिष्ठत्पार्श्वेतस्योत्तरेगिरेः ॥ हिमवत्प्रभवेशृंगेसहदेव्यामहेश्वरः ॥ २६ ॥ एषतेविस्तरोरामशैलपुत्र्यानिवेदितः ॥ गंगायाःप्रभवंचैवशृणुमेसहलक्ष्मण ॥ २७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये च० विं० सा० बालकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥

तप्यमाने तदादेवेसेंद्राःसाग्निपुरोगमाः ॥ सेनापतिमभीप्संतःपितामहमुपागमन् ॥ १ ॥ ततोऽब्रुवन्सुराःसर्वेभगवंतंपितामहम् ॥ प्रणिपत्यसुरारामसेंद्राःसाग्निपुरोगमाः ॥ २ ॥ येनसेनापतिर्देव दत्तोभगवतापुरा ॥ सतपःपरमास्थायतप्यतेस्मसहोमया ॥ ३ ॥ यदत्रानंतरंकार्यंलोकानांहितकाम्यया ॥ संविधत्स्वविधानज्ञत्वंहिनःपरमागतिः ॥ ४ ॥ देवतानांवचःश्रुत्वासर्वलोकपितामहः ॥ सांत्वयन्मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥५॥ शैलपुत्र्यायदुक्तंतन्नप्रजाःस्वासुपत्निषु ॥ तस्यावचनमक्लिष्टंसत्यमेवनसंशयः ॥ ६ ॥

पादन्यासं कृतवान् ॥ २५ ॥ तस्य गिरेः हिमालयस्य उत्तरपार्श्वे हिमवत्प्रभवाख्ये शृंगे ॥ २६ ॥ उपसंहरति । एष इति । त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्वितेति प्रश्नोत्तरतया वक्तव्यस्य धारणरूपगंगाचरितस्य शेषतया शैलपुत्र्या विस्तारो निवेदितः । प्रकृतं प्रश्नोत्तरं वक्तुं प्रतिजानीते । गंगाया इति । प्रभवमिति । छांदसो ह्रस्वः । ऐशतेजोधारणरूपं प्रभावमित्यर्थः ॥ २७ ॥ इति श्रीरा० श्रीरा० रा० वा० आ० बालकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ ॥ छ ॥ ॥ देवे शिवे । सेंद्राः । देवा इति शेषः । साग्निपुरोगमाः अग्निना पुरोगमेन सहिता इत्यर्थः । सेंद्राः सर्षिगणाः पुरा इति क्वचित्पाठः ॥ १ ॥ अत्र सुराः सर्वे इति पुनरुक्तम् । अतः पाठांतरमन्वेषणीयम् । द्वितीयार्धे सुरा रामेति पाठः । रामसंबोधनं चैतत् ॥ २ ॥ येन रुद्रेण सेनापतिर्बीजात्मना दत्तः स परमास्थाय परं मौनमंगीकृत्य तपः तप्यते अनुतिष्ठति ॥ ३ ॥ अनंतरं बीजदातुरुपरमानंतरं यत्कार्यं पुत्राकारसंपत्तये विधेयं तत्संविधत्स्व ॥ ४ ॥ सांत्वयन् । इष्टकार्यालाभखिन्नानिति शेषः ॥ ५ ॥ यत यस्मात् शैलपुत्र्या अप्रजाः

भविष्यथेत्युक्तं तत्तस्मात् युष्माकं स्वासु पत्नीषु न प्रजाः । संतीति शेषः । पत्निष्विति । ह्रस्वत्वं छांदसम् । यतः तस्याः वचनमक्लिष्टम् अमोघम् । एवं च प्रजास्यथेति पाठकल्पना छांदसत्वकल्पना च विफलैव ॥ ६ ॥ तर्हि का गतिः तत्राह । इयमिति । यस्यां हुताशनः पुत्रं जनयिष्यति सेयम् आकाशगंगा । आस्ते इति शेषः ॥ ७ ॥ ज्येष्ठा उमा स्वकनिष्ठापत्यत्वात्स्वापत्यव न्मानयिष्यतीत्यर्थ इति कतकः ॥ तन्न ॥ पूर्वं गंगाया एव ज्येष्ठत्वोक्त्या तेन विरोधात् । तस्माज्ज्येष्ठा गंगा स्वकनिष्ठामापत्यत्वान्मानयिष्यतीत्यर्थः । उमाशिवसंयोगेन च्युतरेतोरजोभ्यामुत्पत्तेरुमा पत्यत्वम् । अत एवाह । उमाया इति । तव स्वापत्यसंमाननम् ॥ ८ ॥ ९ ॥ कैलासपर्वतं गत्वेत्यन्वयः ॥ १० ॥ समाधत्स्व कुरु । महातेज इति । संबुद्धिः । शैलपुत्र्यां गंगायाम् ऐशं तेजः उत्सृजे त्यन्वयः ॥ ११ ॥ प्रतिज्ञाय तथा करोमीति प्रतिज्ञाय । इदं गर्भधारणं देवतानां प्रियमित्यन्वयः ॥ १२ ॥ दिव्यं रूपम् अधारयत् । स्रोतोरूपं मुक्त्वेति शेषः । तस्याः महिमां दिव्यरूपवैभवं सः ऐश्वर

इयमाकाशगंगाचयस्यांपुत्रंहुताशनः ॥ जनयिष्यतिदेवानांसेनापतिमरिंदमम् ॥ ७ ॥ ज्येष्ठाशैलेंद्रदुहितामानयिष्यतितंसुतम् ॥ उमायास्तद्बहुमतंभवि ष्यतिनसंशयः ॥ ८ ॥ तच्छ्रुत्वावचनंतस्यकृतार्थारघुनंदन ॥ प्रणिपत्यसुराःसर्वेपितामहमपूजयन् ॥ ९ ॥ तेगत्वापरमंरामकैलासंधातुमंडितम् ॥ अग्निंनियोजयामासुःपुत्रार्थंसर्वदेवताः ॥ १० ॥ देवकार्यमिदंदेवसमाधत्स्वहुताशन ॥ शैलपुत्र्यांमहातेजोगंगायांतेजउत्सृज ॥ ११ ॥ देवतानांप्रति ज्ञायगंगामभ्येत्यपावकः ॥ गर्भंधारयवैदेविदेवतानामिदंप्रियम् ॥ १२ ॥ इत्येतद्वचनंश्रुत्वादिव्यंरूपमधारयत् ॥ सतस्यामहिमांदृष्ट्वासमंतादवशीर्यत ॥ १३ ॥ समंततस्तदादेवीमभ्यषिंचतपावकः ॥ सर्वस्रोतांसिपूर्णानिगंगायारघुनंदन ॥ १४ ॥ तमुवाचततोगंगासर्वदेवपुरोगमम् ॥ अशक्ताधारणेदेवतेजस्तवसमु द्धतम् ॥ १५ ॥ दह्यमानाग्निनातेनसंप्रव्यथितचेतना ॥ अथाब्रवीदिदंगंगांसर्वदेवहुताशनः ॥ १६ ॥ इहहैमवतेपार्श्वेगर्भोयंसन्निवेश्यताम् ॥ श्रुत्वात्व ग्निवचोगंगातंगर्भमतिभास्वरम् ॥ १७ ॥ उत्ससर्जमहातेजाःस्रोतोभ्योहितदानघ ॥ यदस्यानिर्गतंतस्मात्तप्तजांबूनदप्रभम् ॥ १८ ॥ कांचनंधरणींप्राप्तं हिरण्यमतुलप्रभम् ॥ ताम्रंकार्ष्णायसंचैवतैक्ष्ण्यादेवाभिजायत ॥ १९ ॥

तेजोराशिः पारदः अवशीर्यत शीर्णः । उत्तमस्त्रीदर्शने रसेश्वरस्य तद्ग्रहणाय उच्छलनं द्वियोजनपर्यंतामिति सुप्रसिद्धम् ।यद्वा सः अग्निः अवशीर्यत ऐश्वरं तेजः । त्यक्तवानित्यर्थः॥ १३ ॥ अभ्यषिंचतेति । रसेश्वरेणेति शेषः । स्रोतांसि नाड्यः ॥ १४ ॥ पुरोगमः पुरोयायी हितकरश्च । तत्र आग्नेयेन तेजसा संबंधाव समुद्धतम् अत्युग्रं तेजः शैवं यतः अतस्तस्य धारणेऽहमशक्तेत्यन्वयः ॥ १५ ॥ संप्रव्यथितचेतना । अस्मीति शेषः । सर्वदेवहुताशनः सर्वदेवोद्देशेन हुतस्य भक्षकः ॥ १६ ॥ सन्निवेश्यतां स्थाप्यताम् ॥ १७ ॥ स्रोतोभ्यः उत्कृष्य तत्तेजः हिमवत्पार्श्वे उत्ससर्जेत्यन्वयः । यत् यस्मात् अस्याः निर्गतं तत् तस्मात् गंगागर्भतो निर्गमात् तत्तेजः जांबूनदाकारसुमेरुकन्यापत्यत्वाद्गंगायाः तप्तं जांबूनदं सुवर्णं तेन सममभम् । आसीदिति शेषः ॥ १८ ॥ अत एव धरणीं प्राप्तं साक्षात्तत्संबद्धधरणीस्थं वस्तु कांचनमकरोत् । तत्समीपवर्तिभूसंस्थम् अतुलप्रभं हिरण्यं रजतम् अकरोत् । तत्तेजःसंबंधितैक्ष्ण्यादेव तद्व्यवहितभूस्थं वस्तुजातं ताम्रं कार्ष्णायसं लोहम्

अभिजायत । अधभावः आर्षः ॥ १९ ॥ तत्तस्य गर्भस्य मलं त्रपु सीसं च अभवत । अयं भावः । तैक्ष्ण्यमलगंधयुक्तेन शुद्धेन स्पर्शतो विद्धं स्वर्णं गंधयुक्तेन विद्धं रजतं तैक्ष्ण्ययुक्तेन विद्धं ताम्र लोहं च मलयुक्तेन विद्धं त्रपुसीसे इति । नानाधातुः तद्रूपम् ॥ २० ॥ न च स्पर्शवेधित्वमेव तस्य अपि तु रूपवेधित्वमपीत्याह । निक्षिप्तेत्यादि । सन्नद्धं संबद्धम् ॥ २१ ॥ जातरूपं रूपेण जातमित्यर्थः ॥ २२ ॥ तं कुमारमिति । ततः रुद्रतेजसः जातं क्रमेण साकारतां प्राप्तम् । क्षीरसंभवनार्थाय क्षीरपानप्रयोजनसिद्ध्ये । कृत्तिकाः कृत्तिकाभिः । यद्वा समयोजयन्निति पाठः । अस्य प्रैरयन्नित्यर्थः ॥ २३ ॥ अथ ताः कृत्तिकाः अस्माकं सर्वासां पुत्रो भवत्वित्युत्तमं समयं कृत्वा निश्चिताः तद्विषयकनिश्चयवत्यः जातमात्रस्य तस्य क्षीरं ददुरित्यन्वयः ॥ २४ ॥ ततः सर्वदेवताः युष्माकमयं पुत्रः कार्तिकेय इति त्रैलोक्यविख्यातो भविष्यति अत्र संदेहः न इति ब्रुवन् अब्रुवन्नित्यर्थः । अडभावः आर्षः ॥ २५ ॥ तेषां देवानां तत् स्वेष्टानुकूलं वचनं श्रुत्वा स्कन्नम्

मलंतस्याभवत्तत्रत्रपुसीसकमेवच ॥ तदेतद्धरणींप्राप्यनानाधातुरवर्धत ॥ २० ॥ निक्षिप्तमात्रेगर्भेतुतेजोभिरभिरंजितम् ॥ सर्वंपर्वतसन्नद्धंसौवर्णमभवद्वनम् ॥ २१ ॥ जातरूपमितिख्यातंतदाप्रभृतिराघव ॥ सुवर्णंपुरुषव्याघ्रहुताशनसमप्रभम् ॥ २२ ॥ तंकुमारंततोजातंसेंद्राःसहमरुद्गणाः ॥ क्षीरसंभावनार्थायकृत्तिकाःसमपूजयन् ॥ २३ ॥ ताःक्षीरंजातमात्रस्यकृत्वासमयमुत्तमम् ॥ ददुःपुत्रोयमस्माकंसर्वासामितिनिश्चिताः ॥ २४ ॥ ततस्तुदेवताःसर्वाःकार्तिकेयइतिब्रुवन् ॥ पुत्रस्त्रैलोक्यविख्यातोभविष्यतिनसंशयः ॥ २५ ॥ तेषांतद्वचनंश्रुत्वास्कन्नंगर्भपरिस्रवे ॥ स्नापयन्परयालक्ष्म्यादीप्यमानंयथानलम् ॥ २६ ॥ स्कंदइत्यब्रुवन्देवाःस्कन्नंगर्भपरिस्रवे ॥ कार्तिकेयंमहाबाहुंकाकुत्स्थज्वलनोपमम् ॥२७॥ प्रादुर्भूतंततःक्षीरंकृत्तिकानामनुत्तमम् ॥ षण्णांषडाननोभूत्वाजग्राहस्तनजंपयः ॥ २८ ॥ गृहीत्वाक्षीरमेकाह्नासुकुमारवपुस्तदा ॥ अजयत्स्वेनवीर्येणदैत्यसैन्यगणान्विभुः ॥ २९ ॥ सुरसेनागणपतिमभ्यषिंचन्महाद्युतिम् ॥ ततस्तममराःसर्वेसमेत्याग्निपुरोगमाः॥३०॥एषतेरामगंगायाविस्तरोभिहितोमया ॥ कुमारसंभवश्चैवधन्यःपुण्यस्तथैवच ॥ ३१ ॥ भक्तश्चयःकार्तिकेयेकाकुत्स्थभुविमानवः ॥ आयुष्मान्पुत्रपौत्रैश्चस्कंदसालोक्यतांव्रजेत् ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं० सा० बालकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥

आदौ ईश्वरयोः सकाशात्स्कन्नं पश्चाद्गंगायाः । गर्भात् परिस्रवे सति परया लक्ष्म्या दीप्यमानमनलमिव दुःस्पर्शं दुःस्पर्शतानिवृत्तिप्रयोजनकशैत्यसिद्ध्ये ताः स्नापयन् अस्नापयन्नित्यर्थः॥ २६॥ततः स्कन्नपरिस्रुतत्वहेतोः पूर्वं कार्तिकेयत्वेनोक्तं स्कंद इत्यन्वर्थनाम्ना अब्रुवन्नित्यन्वयः । स्कन्नपरिस्रुत इत्यर्थे स्कंद इति पृषोदरादित्वात्साधु ॥ २७ ॥ ततः कृत्तिकानां क्षीरं प्रादुर्भूतम् । आसीदिति शेषः । ततः षण्णामपि स्तनजं पयः क्षुधातिशयेन षडाननो भूत्वा जग्राह॥२८॥एवं तदा षड्भिर्मुखैर्यावदपेक्षितं क्षीरं गृहीत्वा एकाह्ना एकदिनेनैव सुकुमारवपुरपि स्वतेजसैव दैत्यसैन्यगणान् अजयत् ॥ २९॥ ततः सकलासुरजयाद्धिताः सर्वे अग्निपुरोगमाः देवाः समेत्य सुरसेनागणपतिं तम् अभ्यषिंचन्नित्यन्वयः ॥ ३० ॥ उपसंहरति । एष इत्यादिना ॥ ३१ ॥ धन्यत्वपुण्यत्वे विवृणोति । भक्तश्चेति । ऐहलौकि–

१ अत्र सर्गे कपुस्तकात् अर्धश्लोकोधिकः ।

कफलेन धन्यत्वमामुष्मिकेन पुण्यत्वम् । पुत्रपौत्रैश्चेति । अस्य युक्तः सन् देहत्यागे इति शेषः ॥ ३२ ॥ फैलमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ ॥ छ ॥ ॥ अथ त्रीन्पथो हेतुना केनेत्यादि प्रश्नस्योत्तरं वक्तुमाह । तां कथामिति । अपरं वाक्यं वक्ष्यमाणं प्रश्नोत्तरम् ॥ १ ॥ यस्मादप्रजः तस्मात्प्रजाकामोऽभूदित्यन्वयः ॥ २ ॥ ३ ॥ अरिष्टनेमिः कश्यपः । अस्यां सुपर्णभगिनीत्यनुपदप्रयोगात् ॥ ४ ॥ भृगुप्रस्रवणे भृग्वधिष्ठितं प्रस्रवणं प्रवाहो यस्मिन्गिरौ हिमवत्पादपर्वते ॥ ५ ॥ ६ ॥ ७ ॥ ताते

तांकथांकौशिकोरामेनिवेद्यमधुराक्षराम् ॥ पुनरेवापरंवाक्यंकाकुत्स्थमिदमब्रवीत् ॥ १ ॥ अयोध्याधिपतिर्वीरपूर्वमासीन्नराधिपः ॥ सगरोनामधर्मात्माप्रजाकामःसचाप्रजः ॥ २ ॥ वैदर्भदुहितारामकेशिनीनामनामतः ॥ ज्येष्ठासगरपत्नीसाधर्मिष्ठासत्यवादिनी ॥ ३ ॥ अरिष्टनेमेर्दुहितासुपर्णभगिनीतुसा ॥ द्वितीयासगरस्यासीत्पत्नीसुमतिसंज्ञिता ॥ ४ ॥ ताभ्यांसहमहाराजःपत्नीभ्यांतप्तवांस्तपः ॥ हिमवंतंसमासाद्यभृगुप्रस्रवणेगिरौ ॥ ५ ॥ अथवर्षशतेपूर्णेतपसाराधितोमुनिः ॥ सगरायवरंप्रादाद्भृगुःसत्यवतांवरः ॥६॥ अपत्यलाभःसुमहान्भविष्यतितवानघ ॥ कीर्तिंचाप्रतिमांलोकेप्राप्स्यसेपुरुषर्षभ ॥ ७ ॥ एकाजनयितातातपुत्रंवंशकरंतव ॥ षष्टिंपुत्रसहस्राणिअपराजनयिष्यति ॥ ८ ॥ भाषमाणंनरव्याघ्रंराजपुत्र्यौप्रसाद्यतम् ॥ ऊचतुःपरमप्रीतेकृतांजलिपुटेतदा ॥ ९ ॥ एकःकस्याःसुतोब्रह्मन्कावह्वूञ्जनयिष्यति ॥ श्रोतुमिच्छावहेब्रह्मन्सत्यमस्तुवचस्तव ॥ १० ॥ तयोस्तद्वचनंश्रुत्वाभृगुःपरमधार्मिकः ॥ उवाचपरमांवाणींस्वच्छंदोत्रविधीयताम् ॥ ११ ॥ एकोवंशकरोवास्तुवहवोवामहावलाः ॥ कीर्तिमंतोमहोत्साहाःकावाकंवरमिच्छति ॥ १२ ॥ मुनेस्तुवचनंश्रुत्वाकेशिनीरघुनंदन ॥ पुत्रंवंशकरंरामजग्राहनृपसन्निधौ ॥ १३ ॥ षष्टिंपुत्रसहस्राणिसुपर्णभगिनीतदा ॥ महोत्साहान्कीर्तिमतोजग्राहसुमतिःसुतान् ॥ १४ ॥ प्रदक्षिणमृषिंकृत्वाशिरसाभिप्रणम्यतम् ॥ जगामस्वपुरंराजासभार्योरघुनंदन ॥१५॥ अथकालेगतेतस्यज्येष्ठापुत्रंव्यजायत ॥ असमंजइतिख्यातंकेशिनीसगरात्मजम् ॥ १६ ॥ सुमतिस्तुनरव्याघ्रगर्भतुंबंव्यजायत ॥ षष्टिःपुत्रसहस्राणितुंबभेदाद्विनिःसृता ॥ १७ ॥ घृतपूर्णेषुकुंभेषुधात्र्यस्तान्समवर्धयन् ॥ कालेनमहतासर्वेयौवनंप्रतिपेदिरे ॥१८॥ अथदीर्घेणकालेनरूपयौवनशालिनः ॥ षष्टिपुत्रसहस्राणिसगरस्याभवंस्तदा ॥ १९ ॥ सचज्येष्ठोनरश्रेष्ठःसगरस्यात्मसंभवः ॥ बालान्गृहीत्वातुजलेसरय्वारघुनंदन ॥ २० ॥

ति । उपलालने । जनयिता जनयिष्यति । षाष्टिमिति । नित्यैकवचनांतत्वात्सहस्राणीत्यनेन सामानाधिकरण्यम् ॥ ८ ॥ राजपुत्र्याविति । अत्र छत्रिन्यायेन प्रयोगः ॥ ९ ॥ इच्छावहे इच्छावः ॥ १० ॥ स्वच्छंदः स्वेच्छा विधीयतां ज्ञाप्यताम् । स्वेच्छयैव एकपुत्रता बहुपुत्रता वा व्रियतामिति तात्पर्यम् ॥ ११ ॥ तदेवाह । एको वंशकरो वेति । वंशकरः वंशवृद्धिहेतुः ॥ १२ ॥ नृपसन्निधाविति ॥ अनेन तस्यापि साक्षित्वमात्रं न तु वरणनियमकर्तृतेति सूचितम् ॥ १३ ॥ सुपर्णः गरुडः ॥ १४ ॥ १५ ॥ व्यजायत प्रसूतवती ॥ १६ ॥ गर्भतुंबं तुंबफलाकारगर्भपिंडं व्यजायत प्रसूतवती। कथं ततः पुत्रोदय इत्यत आह । षष्टिरित्यादि ॥ १७ ॥ १८ ॥ दीर्घेण कालेन । यौवनशालित्वे हेतुत्वात्तृतीया ॥ १९ ॥ ज्येष्ठः असमंजः बालान्गृहीत्वा जले प्रक्षिप्य मज्जतः तान्समीक्ष्य नित्यं प्राहसत् ।

प्रहसन्निति पाठे स्थितो भवतीति शेषः । सज्जनप्रतिबाधकः सज्जनपीडकः ॥ २० ॥ २१ ॥ निर्वासितो निष्कासितः । तस्य असमंजस्य । एतद्वाची असमंजशब्दोऽदंतः सांतश्चेति बोध्यम् ॥ २२ ॥
समभिजायत । अडभावः आर्षः ॥ २३ ॥ २४ ॥ यज्ञकर्मणीति । अस्य निश्चयं कृत्वेति प्राक्तनेनान्वयः ॥ २५ ॥ शेरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये
आदिकाव्ये बालकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥ ॥ छ ॥ ॥ कथांते यज्ञोपक्रमकथांते इत्यर्थः ॥ १ ॥ इमां यज्ञसंबंधिनीम् ॥ २ ॥ प्रहसन्निव विकसितवदनः । स्वपूर्वजवृत्तांततया श्रवणकौतुकेन
रामभद्रस्यायं प्रश्नः । अत एव मुनेर्हासः स्ववंश्य इति रामस्यापि लोकवत्स्नेहः संपन्न इति ॥ ३ ॥ सगरस्य सगरयज्ञस्येत्यर्थः ॥ ४ ॥ मध्ये महापर्वतयोः । विरोधाभावाद्विंध्यपर्वतं हिमवान् तथा
विंध्योपि हिमवंतम् इत्येवं परस्परमासाद्य उच्चत्वेन साम्यं प्राप्य औन्नत्यातिशयेन वीक्षानिरोधकाभावात् परस्परं निरीक्षेते पश्यत इत्यर्थः । तयोर्मध्ये आर्यावर्तभूमौ । आर्यावर्तः पुण्यभूमिर्मध्यं विंध्यहि

प्रक्षिप्यप्राहसन्नित्यंप्रज्ञतस्तान्निरीक्ष्यवै ॥ एवंपापसमाचारःसज्जनप्रतिबाधकः ॥ २१ ॥ पौराणामहितेयुक्तःपित्रानिर्वासितःपुरात् ॥ तस्यपुत्रोंशुमान्नामअसमंजस्यवीर्यवान् ॥ २२ ॥ संमतःसर्वलोकस्यसर्वस्यापिप्रियंवदः ॥ ततःकालेनमहतामतिःसमभिजायत ॥ २३ ॥ सगरस्यनरश्रेष्ठयजेयमितिनिश्चिता ॥ सकृत्वानिश्चयंराजासोपाध्यायगणस्तदा ॥ २४ ॥ यज्ञकर्मणिवेदज्ञोयष्टुंसमुपचक्रमे ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥ विश्वामित्रवचःश्रुत्वाकथांतेरघुनंदनः ॥ उवाचपरमप्रीतोमुनिंदीप्तमिवानलम् ॥ १ ॥ श्रोतुमिच्छामिभद्रंतेविस्तरेणकथामिमाम् ॥ पूर्वजोमेकथंब्रह्मन्यज्ञंवैसमुपाहरत् ॥ २ ॥ तस्यतद्वचनंश्रुत्वाकौतूहलसमन्वितः ॥ विश्वामित्रस्तुकाकुत्स्थमुवाचप्रहसन्निव ॥ ३ ॥ श्रूयतांविस्तरोरामसगरस्य महात्मनः ॥ शंकरश्वशुरोनाम्नाहिमवानितिविश्रुतः ॥४॥ विंध्यपर्वतमासाद्यनिरीक्षेतेपरस्परम् ॥ तयोर्मध्येसमभवद्यज्ञःसपुरुषोत्तम ॥ ५ ॥ सहिदेशोनरव्याघ्रप्रशस्तोयज्ञकर्मणि ॥ तस्याश्वचर्यांकाकुत्स्थदृढधन्वामहारथः ॥ ६ ॥ अंशुमानकरोत्तातसगरस्यमतेस्थितः ॥ तस्यपर्वणितंयज्ञंयजमानस्यवासवः ॥ ७ ॥ राक्षसींतनुमास्थाययज्ञियाश्वमपाहरत् ॥ ह्रियमाणेतुकाकुत्स्थतस्मिन्नश्वेमहात्मनः ॥ ८ ॥ उपाध्यायगणाःसर्वेयजमानमथाब्रुवन् ॥ अयंपर्वणिवेगेनयज्ञियाश्वोऽपनीयते ॥ ९ ॥ हर्तारंजहिकाकुत्स्थहयश्चैवोपनीयताम् ॥ यज्ञच्छिद्रंभवत्येतत्सर्वेषामशिवायनः ॥१०॥ तत्तथाक्रियतांराजन्यज्ञोऽच्छिद्रःकृतोभवेत् ॥ सोपाध्यायवचःश्रुत्वातस्मिन्सदसिपार्थिवः ॥११॥ षष्टिंपुत्रसहस्राणिवाक्यमेतदुवाचह ॥ गतिंपुत्रानपश्यामिरक्षसांपुरुषर्षभाः ॥१२॥ मंत्रपूतैर्महाभागैरास्थितोपिमहाक्रतुः ॥ तद्गच्छथविचिन्वध्वंपुत्रकाभद्रमस्तुवः ॥१३॥

मागयोरिति वचनात् ॥ ५ ॥ प्रशस्तः प्रशस्तत्वेन प्रसिद्धः । उक्तवचनात् । अश्वचर्यारक्षार्थमश्वानुगमनम् ॥ ६ ॥ मते शासने । पर्वणि उक्थ्याहे । अश्वमेधे उक्थ्यसंस्थात्रयम् । तत्र द्वितीये अश्वालं-
भनदिवसे अश्वविशसनात्प्राक् तं यज्ञम् । विहंतुमिति शेषः ॥ ७ ॥ यज्ञियाश्वं यज्ञार्हमश्वम् ॥ ८ ॥ अयं यज्ञियोश्वः पर्वणि वेगेन अपनीयते अपह्रियते ॥ ९ ॥ अतः हर्तारम् अश्वहर्तारं जहि ।
अश्वश्च शीघ्रमुपनीयताम् । यज्ञच्छिद्रं यज्ञस्य विघ्नः ॥ १० ॥ अच्छिद्र इति छेदः । यथा यज्ञः अच्छिद्रो भवेदित्यन्वयः । सोपाध्यायवचः उपाध्यायसहितर्त्विग्गणवचः ॥ ११ ॥ भो पुरुषर्षभाः
पुत्रकाः मंत्रपूतैर्महाभागैः यद्यपि महाक्रतुः आस्थितः अधिष्ठितः । तथापि रक्षसां मायया यदि च्छिद्रं स्यात्तदा आत्मनो गतिं न पश्यामि । तस्मात् गच्छथ विचिन्वध्वम् अन्वेषयतेत्यर्थ इति केचित् ।

परे तु आस्थितो हीति पाठः । हि यस्माद ईदृशैर्महाभागैः आस्थितोयं क्रतुः अतः अत्र क्रतौ रक्षसां गातिं न पश्याभि । तत्तस्मात्केनापि देवेन हृत इति तमन्वेषयतेत्यर्थ इत्याहुः ॥ १२ ॥ १३ ॥ अनुगच्छत अन्वेषयत । थस्य तादृशाभावः आर्षत्वात् ॥ १४ ॥ यदि भूमौ न लभ्यते तदा आह । यावत्तुरगेत्यादि ॥ १५ ॥ स्वस्य तुरगानुगमनमयुक्तमित्याह । दीक्षित इत्यादि । तस्य मवासनिषेधात पौत्रस्य बालकत्वाच्चेति भावः ॥१६॥ यंत्रिताः नियुक्ताः ॥१७॥ आयामः दैर्घ्यम् । विस्तारः विशालता । तद्युक्तं धरणीतलमेकैकोन्वेषयामासेत्यर्थः । बिभिदुरिति । पृथिव्यामदृष्ट्वेति शेषः॥१८॥

समुद्रमालिनींसर्वांपृथिवीमनुगच्छत ॥ एकैकंयोजनंपुत्राविस्तारमभिगच्छत ॥ १४ ॥ यावत्तुरगसंदर्शस्तावत्खनतमेदिनीम् ॥ तमेवहयहर्तारंमार्गमाणाममाज्ञया ॥ १५ ॥ दीक्षितःपौत्रसहितःसोपाध्यायगणस्त्वहम् ॥ इहस्थास्यामिभद्रंवोयावत्तुरगदर्शनम् ॥ १६ ॥ तेसर्वेहृष्टमनसोराजपुत्रामहाबलाः ॥ जग्मुर्महीतलंरामपितुर्वचनयंत्रिताः ॥ १७ ॥ योजनायामविस्तारमेकैकोधरणीतलम् ॥ बिभिदुःपुरुषव्याघ्रावज्रस्पर्शसमैर्भुजैः ॥ १८ ॥ शूलैरशनिकल्पैश्चहलैश्चापिसुदारुणैः ॥ भिद्यमानावसुमतीननादरघुनंदन ॥ १९ ॥ नागानांवध्यमानानामसुराणांचराघव ॥ राक्षसानांदुराधर्षसत्त्वानांनिनदोभवत् ॥ २० ॥ योजनानांसहस्राणिषष्टिंतुरघुनंदन ॥ विभिदुर्धरणींरामरसातलमनुत्तमम् ॥ २१ ॥ एवंपर्वतसंबाधंजंबूद्वीपंनृपात्मजाः ॥ खनंतोनृपशार्दूलसर्वतःपरिचक्रमुः ॥ २२ ॥ ततोदेवाःसगंधर्वाःसासुराःसहपन्नगाः ॥ संभ्रांतमनसःसर्वेपितामहमुपागमन् ॥ २३ ॥ तेप्रसाद्यमहात्मानंविषण्णवदनास्तदा ॥ ऊचुःपरमसंत्रस्ताःपितामहमिदंवचः ॥२४॥ भगवन्पृथिवीसर्वाखन्यतेसगरात्मजैः ॥ बहवश्चमहात्मानोवध्यंतेजलचारिणः ॥२५॥ अयंयज्ञहरोस्माकमनेनाश्वोऽपनीयते ॥ इतितेसर्वभूतानिहिंसंतिसगरात्मजाः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ देवतानांवचःश्रुत्वाभगवान्वैपितामहः ॥ प्रत्युवाचसुसंत्रस्तान्कृतांतबलमोहितान् ॥ १ ॥ यस्येयंवसुधाकृत्स्नावासुदेवस्यधीमतः ॥ महिषीमाधवस्यैषासएवभगवान्प्रभुः ॥ २ ॥ कापिलंरूपमास्थायधारयत्यनिशंधराम् ॥ तस्यकोपाग्निनादग्धाभविष्यंतिनृपात्मजाः ॥ ३ ॥

भिद्यमाना । सर्वत इति शेषः ॥ १९ ॥ २० ॥ अनुत्तमं रसातलं विचेतुमिव धरणीं योजनानां षष्टिसहस्राणि विभिदुरित्यन्वयः ॥ २१ ॥ पर्वतसंबाधं पर्वतनिबिडम् ॥२२॥२३॥२४॥ महात्मानः सिद्धगंधर्वादयः॥२५॥यज्ञहन इति पाठे हंतीति हनः । अपनीयते अपनीयते स्म । सर्वभूतानि तत्प्रसंगरहितान्यपि ॥२६॥ चरमानः॥ इति श्रीरामाभिरामे श्रीरा०रा०वा०आ०बा०एकोनचत्वारिंशःसर्गः॥३९॥ कृतांतबलमोहितान् कृतः सर्वलोकस्य अंतः नाशः यैः तादृशानि यानि बलानि सगरसुतबलानि तैर्मोहितान्मूर्च्छितचित्तान् ॥ १ ॥ एषा वसुधा ॥ २ ॥ धारयति । योगबलेनेति शेषः ॥ ३ ॥

१ कचुस्तकादर्धश्लोकोत्राधिकः ।

पृथिव्याः विभेदश्च सनातनः प्रतिकल्पमवश्यं भाव्यः श्रौतस्मार्तसागरादिशब्दैर्दृष्ट एव । अतस्तत्र न शोकः कार्य इति भावः । एवं दीर्घदर्शिनां दीर्घदर्शिभिः सगरपुत्रविनाशोयं दृष्ट एव । अतस्तत्रापि शोकोनुचितः । शेषे षष्ठी । यद्वा अदीर्घदर्शिनामिति छेदः ॥ ४ ॥ त्रयस्त्रिंशत्–अष्टौ वसवः–एकादश रुद्राः–द्वादशादित्याः–अश्विनौ च ॥ ५ ॥ निर्घातसमनिःस्वनः निर्घातनिःस्वनसदृश इत्यर्थः ॥ ६ ॥ ततो भित्त्वेति पाठः ॥ ७ ॥ सत्त्ववंतः बलवंतः ॥ ८ ॥ ते अस्मासु परमनुग्रहबुद्धिरस्तु । वयं किं करिष्याम । सलोपश्छांदसः । बुद्धिरुपायः ॥ ९ ॥ १० ॥ भूयो विभेद्येत्यन्वयः ।

पृथिव्याश्चापिनिर्भेदोदृष्टएवसनातनः ॥ सगरस्यचपुत्राणांविनाशोदीर्घदर्शिनाम् ॥ ४ ॥ पितामहवचःश्रुत्वात्रयस्त्रिंशदरिंदमाः ॥ देवाःपरमसंहृष्टाः पुनर्जग्मुर्यथागतम् ॥ ५ ॥ सगरस्यचपुत्राणांप्रादुरासीन्महास्वनः ॥ पृथिव्यांभिद्यमानायांनिर्घातसमनिःस्वनः ॥ ६ ॥ ततोभित्त्वामहींसर्वांकृत्वाचापि प्रदक्षिणम् ॥ सहिताःसागराःसर्वेपितरंवाक्यमब्रुवन् ॥ ७ ॥ परिक्रांतामहीसर्वासत्त्ववंतश्चसूदिताः ॥ देवदानवरक्षांसिपिशाचोरगपन्नगाः ॥ ८ ॥ नचपश्यामहेऽश्वंतेअश्वहर्तारमेवच ॥ किंकरिष्यामभद्रंतेबुद्धिरत्रविचार्यताम् ॥ ९ ॥ तेषांतद्वचनंश्रुत्वापुत्राणांराजसत्तमः ॥ समन्युरब्रवीद्वाक्यंसगरोरघुनंदनः ॥ १० ॥ भूयःखनतभद्रंवोविभेद्यवसुधातलम् ॥ अश्वहर्तारमासाद्यकृतार्थाश्चनिवर्तत ॥ ११ ॥ पितुर्वचनमासाद्यसगरस्यमहात्मनः ॥ षष्टिःपुत्रसहस्राणिरसातलमभिद्रवन् ॥ १२ ॥ खन्यमानेततस्तस्मिन्ददृशुःपर्वतोपमम् ॥ दिशागजंविरूपाक्षंधारयंतंमहीतलम् ॥ १३ ॥ सपर्वतवनांकृत्स्नांपृथिवींरघुनंदन ॥ धारयामासशिरसाविरूपाक्षोमहागजः ॥१४॥ यदापर्वणिकाकुत्स्थविश्रमार्थंमहागजः॥ खेदाच्चालयतेशीर्षंभूमिकंपस्तदाभवेत् ॥१५॥ तेतंप्रदक्षिणंकृत्वादिशापालंमहागजम् ॥ मानयंतोहितेरामजग्मुर्भित्त्वारसातलम् ॥ १६ ॥ ततःपूर्वांदिशंभित्त्वादक्षिणांबिभिदुःपुनः ॥ दक्षिणस्यामपिदिशिददृशुस्तेमहागजम् ॥ १७ ॥ महापद्मंमहात्मानंसुमहत्पर्वतोपमम् ॥ शिरसाधारयंतंगांविस्मयंजग्मुरुत्तमम् ॥ १८ ॥ तेतंप्रदक्षिणंकृत्वासगरस्यमहात्मनः॥ षष्टिःपुत्रसहस्राणिपश्चिमांबिभिदुर्दिशम् ॥१९॥ पश्चिमायामपिदिशिमहांतमचलोपमम् ॥ दिशागजंसौमनसंददृशुस्तेमहाबलाः ॥२०॥ तेतंप्रदक्षिणंकृत्वापृष्ट्वाचापिनिरामयम् ॥ खनंतःसमुपाक्रांतादिशंसोमवतींतदा ॥ २१ ॥ उत्तरस्यांरघुश्रेष्ठददृशुर्हिमपांडुरम् ॥ भद्रंभद्रेणवपुषाधारयंतंमहीमिमाम् ॥ २२॥ समालभ्यततःसर्वेकृत्वाचैनंप्रदक्षिणम् ॥ षष्टिःपुत्रसहस्राणिविभिदुर्वसुधातलम् ॥ २३ ॥

कृतार्थाश्च कृतार्थाश्चेत्तदा निवर्तत । निवर्तध्वमित्यर्थे आर्षमेतत् । अन्यथा न निवृत्तिरित्यर्थः ॥ ११ ॥ १२ ॥ खन्यमाने इति । षष्टियोजनसहस्रपरमपीति शेषः । दिशा इत्यावंतम् ॥ १३ ॥ कृत्स्नाम् । तदेकप्रदेशावच्छिन्नामिति शेषः ॥ १४ ॥ यदा पर्वणि यस्मिन् काले यस्मिन् क्षणे । तिथिभेदे क्षणे पर्व इत्यमरः ॥ १५ ॥ मानयंतः । दिग्गजमिति शेषः । हिस्त्वर्थे ॥ १६ ॥ १७ ॥ १८ ॥ प्रदक्षिणं कृत्वा । दिग्गजमिति शेषः ॥ १९ ॥ २० ॥ निरामयं कुशलम् । सोमवतीम् उदीचीम् ॥ २१ ॥ भद्रं भद्राख्यम् ॥ २२ ॥ समालभ्य स्पृष्ट्वा ॥ २३ ॥

प्रागुत्तराम् ऐशानीम् । प्रथितां सर्वकर्माहंत्वेन प्रसिद्धाम् ॥२४॥ कपिलं कपिलरूपधारिणम् ॥२५॥ तस्य कपिलस्य ॥२६॥ तं कपिलम् । हंतीति हनः । पचाद्यच् । अविचारतस्तमेव अश्वापहारद्वारा यज्ञहंतारं ज्ञात्वेत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ नंलं मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे चत्वारिंशः सर्गः ॥ ४० ॥ ॥ छ ॥



ततःप्रागुत्तरांगत्वासागराःप्रथितांदिशम् ॥ रोषादभ्यखनन्सर्वेपृथिवींसगरात्मजाः ॥ २४ ॥ तेतुसर्वेमहात्मानोभीमवेगामहाबलाः ॥ ददृशुःकपिलं तत्रवासुदेवंसनातनम् ॥ २५ ॥ हयंचतस्यदेवस्यचरंतमविदूरतः ॥ प्रहर्षमतुलंप्राप्ताःसर्वेतेरघुनंदन ॥ २६ ॥ तेतंयज्ञहनंज्ञात्वाक्रोधपर्याकुलेक्षणाः ॥ खनित्रलांगलधरानानावृक्षशिलाधराः ॥ २७ ॥ अभ्यधावंतसंक्रुद्धास्तिष्ठतिष्ठेतिचाब्रुवन् ॥ अस्माकंत्वंहितुरगंयज्ञियंहृतवानसि ॥ २८ ॥ दुर्मेधस्त्वंहि संप्राप्तान्विद्धिनःसगरात्मजान् ॥ श्रुत्वातद्वचनंतेषांकपिलोरघुनंदन ॥ २९॥ रोषेणमहताविष्टोहुंकारमकरोत्तदा ॥ ततस्तेनाप्रमेयेणकपिलेनमहात्मना ॥ भस्मराशीकृताःसर्वेकाकुत्स्थसगरात्मजाः ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा०बालकांडे चत्वारिंशः सर्गः ॥ ४० ॥ पुत्रांश्चिरगताञ्ज्ञात्वासगरोरघुनंदन ॥ नप्तारमब्रवीद्राजादीप्यमानंस्वतेजसा ॥ १ ॥ शूरश्चकृतविद्यश्चपूर्वैस्तुल्योऽसितेजसा ॥ पितॄणांगतिमन्विच्छये नचाश्वोपवाहितः ॥ २ ॥ अंतर्भौमानिसत्त्वानिवीर्यवंतिमहांतिच ॥ तेषांतुप्रतिघातार्थंसासिंगृह्णीष्वकार्मुकम् ॥ ३ ॥ अभिवाद्याभिवाद्यांस्त्वंहत्वावि घ्नकरानपि ॥ सिद्धार्थःसन्निवर्तस्वममयज्ञस्यपारगः ॥ ४ ॥ एवमुक्तोंशुमान्सम्यक्सगरेणमहात्मना ॥ धनुरादायखड्गंचजगामलघुविक्रमः ॥ ५ ॥ सखातंपितृभिर्मार्गमंतर्भौमंमहात्मभिः ॥ प्रापद्यतनरश्रेष्ठतेनराज्ञाभिचोदितः ॥ ६ ॥ देवदानवरक्षोभिःपिशाचपतगोरगैः ॥ पूज्यमानंमहातेजा दिशागजमपश्यत ॥ ७ ॥

चिरगतान् । अमत्यागच्छत इति शेषः । नप्तारं पौत्रम् ॥ १ ॥ पूर्वैः पितृभिः । गतिं वृत्तातं येन च अश्वोपवाहितः देशांतरं प्रापितः तद्गतिं च अन्विच्छ अन्वेषय ॥ २ ॥ अंतर्भौमानि भूमेरंतर्जातानि सत्त्वानि प्राणिनः ॥ ३ ॥ अभिवाद्यान् नमस्कारार्हान् । मम यज्ञस्य पारगः पारप्रापकश्च भवेत्यर्थः ॥ ४ ॥ ५ ॥ पितृभिः खातं भूमेरंतर्विद्यमानं मार्गं पितृवृत्तांतपरिज्ञानाय प्रापद्यत प्राप्तः ॥ ६ ॥ ७ ॥

१ कपुस्तकादर्धश्लोकोत्राधिकः ।

निरामयं कुशलम् ॥ ८ ॥ आसमंज । असमंजपुत्र इति संबोधनम् । इत्रभावः आर्षः ॥९॥१०॥ वाक्यं वक्तुमर्हम् । कालदेशोचितवक्तव्यतत्त्वज्ञैः तदुचितवचनसमर्थैश्चेत्यर्थः । द्वितीयवाक्ये कृत्यः । सहयः आगंतासीत्यभिचोदितश्च बोधितश्च ॥ ११ ॥ यत्र पितरः सागराः भस्मराशी कृताः तत्र देशे जगामेत्यन्वयः ॥ १२ ॥ चुक्रोश । भस्मीभूतपितॄनिति शेषः ॥ १३ ॥ १४ ॥ १५ ॥ विसार्य समंतात्प्र सार्येत्यर्थः । निपुणां दूरविवेचनसमर्थाम् । पितॄणां मातुलम् । सुपर्णभागिनी सुमतिरिति प्रागुक्तत्वात् । अनिलोपमं वेगेन वायूपमम् ॥ १६ ॥ लोकसंमतः लोकहितः । एतन्मूलकतया सर्वलोकहितगंगायाः भूलोके अवतारणात् ॥ १७ ॥ हि यस्मात्कपिलेन दग्धाः यतश्च महाबलाः महाबलवत्त्वेन प्रायश्चित्तमर्यादातिक्रांतपापवंतः । अतो लौकिकं सलिलं दातुं नार्हसि । चंडालादुदकात्सर्पाद्विद्युताद्ब्राह्मणादपि ।

सतंप्रदक्षिणंकृत्वापृष्ट्वाचैवनिरामयम् ॥ पितॄन्सपरिपप्रच्छवाजिहर्तारमेवच ॥ ८ ॥ दिशागजस्तुतच्छ्रुत्वाप्रत्युवाचमहामतिः ॥ आसमंजकृतार्थस्त्वं सहाश्वःशीघ्रमेष्यसि ॥ ९ ॥ तस्यतद्वचनंश्रुत्वासर्वानेवदिशागजान् ॥ यथाक्रमंयथान्यायंप्रष्टुंसमुपचक्रमे ॥ १० ॥ तैश्चसर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदैः ॥ पूजितःसहयश्चैवागंतासीत्यभिचोदितः ॥ ११ ॥ तेषांतद्वचनंश्रुत्वाजगामलघुविक्रमः ॥ भस्मराशीकृतायत्रपितरस्तस्यसागराः ॥ १२ ॥ सदुःखवशमापन्नस्त्वसमंजसुतस्तदा ॥ चुक्रोशपरमार्तस्तुवधात्तेषांसुदुःखितः ॥ १३ ॥ यज्ञियंचहयंतत्रचरंतमविदूरतः ॥ ददर्शपुरुषव्याघ्रोदुःखशोकसमन्वितः ॥ १४ ॥ सतेषांराजपुत्राणांकर्तुकामोजलक्रियाम् ॥ सजलार्थीमहातेजानचापश्यज्जलाशयम् ॥ १५ ॥ विसार्यनिपुणांदृष्टिंततोऽपश्यत्खगाधिपम् ॥ पितॄणांमातुलंरामसुपर्णमनिलोपमम् ॥ १६ ॥ सचैनमब्रवीद्वाक्यंवैनतेयोमहाबलः ॥ माशुचःपुरुषव्याघ्रवधोयंलोकसंमतः ॥ १७ ॥ कपिलेनाप्रमेयेणदग्धाहीमेमहाबलाः ॥ सलिलंनार्हसेप्राज्ञदातुमेषांहिलौकिकम् ॥ १८ ॥ गंगाहिमवतोज्येष्ठादुहितापुरुषर्षभ ॥ तस्यांकुरुमहाबाहोपितॄणांसलिलक्रियाम् ॥ १९ ॥ भस्मराशीकृतानेतान्प्लावयेल्लोकपावनी ॥ तयाक्लिन्नमिदंभस्मगंगयालोककांतया ॥ २० ॥ षष्टिंपुत्रसहस्राणिस्वर्गलोकंगमिष्यति ॥ निर्गच्छाश्वंमहाभागसंगृह्यपुरुषर्षभः ॥ २१ ॥ यज्ञंपैतामहंवीरनिर्वर्तयितुमर्हसि ॥ सुपर्णवचनंश्रुत्वासोंशुमानतिवीर्यवान् ॥ २२ ॥ त्वरितंहयमादायपुनरायान्महातपाः ॥ ततोराजानमासाद्यदीक्षितंरघुनंदन ॥ २३ ॥

दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् । उदकं पिंडदानं च न तेषां तु विधीयते इति स्मृतेः । प्रकृते ब्राह्मणाद्वधो महापापित्वं च ॥१८॥ १९ ॥ तर्हि देवलोकं गत्वा गंगोदकेन क्रिया कार्या-नेत्याह । भस्मेति । यदा प्लावयेत् तदा गंगया क्लिन्नं सिक्तमिदं भस्म हे पुत्र षष्टिं सहस्राणि सागरान् स्वर्गलोकं गमिष्यति प्रापयिष्यतीत्यर्थः । नयिष्यतीति पाठे नेष्यतीत्यर्थः । अनेन सगरपुत्राणां मन्वाद्युक्तप्रायश्चित्ताविषयत्वं सूचितम् । तत्प्रायश्चित्तविषयाणामपि पापिनां पुद्गलस्य गंगाजलस्पर्शः सर्वपापप्रायश्चित्तमिति सूचितम् । अकृतप्रायश्चित्तानामपि महापातकिनामौर्ध्वदेहिकायोग्यानां गंगाजलस्पृष्टदुग्धानां

विनापि मायश्चित्तांतरं तत्काले एव सकलौर्ध्वदेहिकक्रियायोग्यत्वं च सूचितम् । अश्वं गृहीत्वा निर्गच्छ निर्वर्तयितुं समापयितुम् ॥२०॥ २१ ॥ २२ ॥ २३ ॥ वृत्तं पितृव्यवृत्तं तथा सुपर्णवचनं च यथ. तथा न्यवेदयत् ॥ २४ ॥ इष्टयज्ञ इति । बहुव्रीहिः ॥ २५ ॥ आगमे भूमौ आगमे । निश्चयम् उपायविषयम् । नाध्यगच्छतेति । तङार्षः ॥ २६ ॥ २७ ॥ सरमौनः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे एकचत्वारिंशः सर्गः॥४१॥ ॥ कालधर्मो मृत्युः । प्रकृतिजनाः अमात्यवर्गाः । दीर्घश्छांदसः । रोचयामासुः न्यायप्राप्तत्वादेव ऐच्छन् ॥१॥ २ ॥



न्यवेदयद्यथावृत्तंसुपर्णवचनंतथा ॥ तच्छ्रुत्वाघोरसंकाशंवाक्यमंशुमतोनृपः ॥ २४ ॥ यज्ञंनिर्वर्तयामासयथाकल्पंयथाविधि ॥ स्वपुरंत्वगमच्छ्रीमानिष्टयज्ञोमहीपतिः ॥ २५ ॥ गंगायाश्चागमेराजानिश्चयंनाध्यगच्छत ॥ अगत्वानिश्चयंराजाकालेनमहतामहान् ॥ २६ ॥ त्रिंशद्वर्षसहस्राणिराज्यंकृत्वादिवंगतः ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥ कालधर्मंगतेरामसगरेप्रकृतीजनाः ॥ राजानंरोचयामासुरंशुमंतंसुधार्मिकम् ॥ १ ॥ सराजासुमहानासीदंशुमान्रघुनंदन ॥ तस्यपुत्रोमहानासीद्दिलीपइतिविश्रुतः ॥ २ ॥ तस्मैराज्यंसमादिश्यदिलीपेरघुनंदन ॥ हिमवच्छिखरेरम्येतपस्तेपेसुदारुणम् ॥ ३ ॥ द्वात्रिंशच्छतसाहस्रंवर्षाणिसुमहायशाः ॥ तपोवनगतोराजास्वर्गंलेभेतपोधनः ॥ ४ ॥ दिलीपस्तुमहातेजाःश्रुत्वापैतामहंवधम् ॥ दुःखोपहतयाबुद्ध्यानिश्चयंनाध्यगच्छत ॥ ५ ॥ कथंगंगावतरणंकथंतेषांजलक्रिया ॥ तारयेयंकथंचैतानितिचिंतापरोभवत् ॥ ६ ॥ तस्यचिंतयतोनित्यंधर्मेणविदितात्मनः ॥ पुत्रोभगीरथोनामजज्ञेपरमधार्मिकः ॥७॥ दिलीपस्तुमहातेजायज्ञैर्बहुभिरिष्टवान् ॥ त्रिंशद्वर्षसहस्राणिराजाराज्यमकारयत् ॥ ८ ॥ अगत्वानिश्चयंराजातेषामुद्धरणंप्रति ॥ व्याधिनानरशार्दूलकालधर्मंसुपेयिवान् ॥ ९ ॥ इंद्रलोकंगतोराजास्वार्जितेनैवकर्मणा ॥ राज्येभगीरथंपुत्रमभिषिच्यनरर्षभः ॥ १० ॥ भगीरथस्तुराजर्षिर्धार्मिकोरघुनंदन ॥ अनपत्योमहाराजःप्रजाकामःसचाप्रजः ॥ ११ ॥ मंत्रिष्वाधायतद्राज्यंगंगावतरणेरतः ॥ तपोदीर्घंसमातिष्ठद्गोकर्णेरघुनंदन ॥ १२ ॥

दिलीपे दिलीपाय । तपः तेपे । पितृगतये । गंगाया भूलोकावतारणायेति शेषः ॥३॥४॥ पैतामहं वधं पितामहानां सागराणामपमृत्युम् ॥५॥ निश्चयानधिगममभिनयति। कथमिति ॥६॥ धर्मेण विदितेति । धर्मेण प्रसिद्धेत्यर्थः ॥ ७ ॥ अकारयत् कृतवान् ॥ ८ ॥ व्याधिना पितॄणामुद्धरणालाभजन्यदुःखजेन । तद्दिलीपवंशजो रघुपुत्रको दिलीपः कालिदासोक्तोऽन्य एवेति बोध्यम् ॥ ९ ॥ १० ॥ स च प्रजा इति । अस्य मंत्रिष्वाधायेत्युत्तरेणान्वयः ॥ ११ ॥ प्रजाः । तद्राज्यं च मंत्रिष्वाधाय गंगावतरणेच्छुः तप आतिष्ठत् । गोकर्णो हिमवत्पादविशेषः दक्षिणदिक्स्थतीर्थविशेषो वा ॥ १२ ॥

पंचतपाः पंचाग्निमध्ये तपो यस्य । मासाहारः मासे गते आहारो यस्य । वर्षसहस्राणि अतीतानीत्यन्वयः । तस्य राज्ञः सुप्रीत इत्यन्वयः ॥ १३ ॥ १४ ॥ १५ ॥ तपसा चेति । चस्त्वर्थे ॥ १६ ॥ १७ ॥ यद्यस्तीत्यादि । असंदिग्धे संदिग्धवचनं वेदाश्चेत्प्रमाणं स्युरितिवत् । सलिलं स्पर्शमात्रेण स्वर्गतिसाधनं सलिलम् ॥ १८ ॥ अभीष्टोक्तगुणकसलिलप्राप्तिं दर्शयति । गंगाया इति । एषां भस्मनि गंगायाः सलिलेन क्लिन्ने सति एते अत्यंतम् अक्षय्यं यथा भवति तथा स्वर्गं गच्छेयुर्नान्यथेत्यर्थः ॥ १९ ॥ इक्ष्वाकूणां कुले जातस्य मम संततिर्देया यथा नः कुलं नावसीदेत् । संतत्यै इति । चतुर्थी प्रथमार्थे । एष परो वरः द्वितीयवर इत्यर्थः ॥ परे तु संतत्यै तदर्थं कुलं नावसीदेदिति च याचे । मत्कुलेऽसंततिः कोपि मा भूदित्यर्थः ॥ उपसंहरति । इक्ष्वाकूणामेति । तत्कुले जातस्य एष

ऊर्ध्ववाहुःपंचतपामासाहारोजितेंद्रियः ॥ तस्यवर्षसहस्राणिघोरेतपसितिष्ठतः ॥ १३ ॥ अतीतानिमहावाहोतस्यराज्ञोमहात्मनः ॥ सुप्रीतोभगवान्ब्रह्माप्रजानांप्रभुरीश्वरः ॥१४॥ ततःसुरगणैःसार्धमुपागम्यपितामहः ॥ भगीरथंमहात्मानंतप्यमानमथाब्रवीत् ॥ १५ ॥ भगीरथमहाराजप्रीतस्तेऽहंजनाधिप ॥ तपसाचसुतप्तेनवरंवरयसुव्रत ॥ १६ ॥ तमुवाचमहातेजाःसर्वलोकपितामहम् ॥ भगीरथोमहावाहुःकृतांजलिपुटःस्थितः ॥ १७ ॥ यदिमेभगवान्प्रीतोयद्यस्तितपसःफलम् ॥ सगरस्यात्मजाःसर्वेमत्तःसलिलमाप्नुयुः ॥ १८ ॥ गंगायाःसलिलक्लिन्नेभस्मन्येषांमहात्मनाम् ॥ स्वर्गंगच्छेयुरत्यंतंसर्वेचप्रपितामहाः ॥१९॥ देवयाचेहसंतत्यैनावसीदेत्कुलंचनः ॥ इक्ष्वाकूणांकुलेदेवएषमेस्तुवरःपरः ॥ २० ॥ उक्तवाक्यंतुराजानंसर्वलोकपितामहः ॥ प्रत्युवाचशुभांवाणींमधुरांमधुराक्षराम् ॥ २१ ॥ मनोरथोमहानेषभगीरथमहारथ ॥ एवंभवतुभद्रंतेइक्ष्वाकुकुलवर्धन ॥ २२ ॥ इयंहैमवतीज्येष्ठागंगाहिमवतःसुता ॥ तांवैधारयितुंराजन्हरस्तत्रनियुज्यताम् ॥२३॥ गंगायाःपतनंराजन्पृथिवीनसहिष्यते ॥ तांवैधारयितुंराजन्नान्यंपश्यामिशूलिनः ॥२४॥ तमेवमुक्त्वाराजानंगंगांचाभाष्यलोककृत् ॥ जगामत्रिदिवंदेवैःसर्वैःसहमरुद्गणैः ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा० वालकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ देवदेवेगतेतस्मिन्सोंगुष्ठाग्रनिपीडिताम् ॥ कृत्वावसुमतींरामवत्सरंसमुपासत ॥ १ ॥ अथसंवत्सरेपूर्णेसर्वलोकनमस्कृतः ॥ उमापतिःपशुपतीराजानमिदमब्रवीत् ॥२॥ प्रीतस्तेहंनरश्रेष्ठकरिष्यामितवप्रियम् ॥ शिरसाधारयिष्यामिशैलराजसुतामहम् ॥३॥ ततोहैमवतीज्येष्ठासर्वलोकनमस्कृता ॥ तदासातिमहद्रूपंकृत्वावेगंचदुःसहम् ॥ ४ ॥ आकाशादपतद्रामशिवेशिवशिरस्युत ॥ अचिंतयच्चसादेवीगंगापरमदुर्धरा॥५॥

एष परो वरांस्तु नातोधिकं तृतीयं वरांतरं याचे इत्यर्थः । एतेन पूर्वपरोपकारिता भगीरथस्य दर्शितेत्याहुः ॥ २० ॥ २१ ॥ मनोरथः । तावक इति शेषः ॥ २२ ॥ स्वसमीपे स्थितत्वादियमिति निर्देशः ॥ २३ ॥ हरनियोगहेतुमाह । गंगाया इति । तां गंगाम् ॥ २४ ॥ गंगामाभाष्य राजानं यथाकालमनुगृहाणेत्युक्त्वा । देवैः आजानजैः। मरुद्गणैः कर्मदेवैः ॥२५॥ मंखमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ॥ छ ॥ ॥ देवदेवे आजानजानामपि देवानां देवे पूज्ये । अंगुष्ठाग्रेण निपीडिताम् । समुपासतेति । आर्षं बहुवचनम्। समुपास्तेत्यर्थः।उमापतिमिति शेषः॥ १ ॥ २ ॥ ३ ॥तदा सातीति। ईश्वरेण धारणांगीकारे कृते गर्वादित्यर्थः॥ ४ ॥शिवे शोभने। तादृशरूपकरणे हेतुमाह।अचिंतयदित्यादि॥ ५ ॥

तस्यावलेपनामिति । संधिरार्षः। अवलेपनं स्वस्यापि स्रोतसा अभिभवनचिंतारूपं गर्वम्॥ ६ ॥ तिरोभावयितुं जटामंडले तिरोधानेन अभिभूतां कर्तुम्॥ ७ ॥ जटामंडलेन गह्वरे दुष्प्रवेशे । निर्गमे यत्नमास्थितापि महीं गंतुं नाशकोदित्यन्वयः॥ ८॥ नैवेति। जटामंडलं भ्रांत्वा प्रांतमागतापि अंततः तत्प्रांतभागतोपि निर्गमं न लेभे। प्रांतभागेपि तन्मध्यत्वभ्रमस्य मायया भगवतोत्पादनात् । यद्यपि ब्रह्मैव मायया गंगाजलरूपमिति पुराणेतिहासादिषु प्रसिद्धम् । तस्य चाहम्ममेत्यभिमानहीनस्यायमहंकारः अनुचितः । शिवस्य च तादृशस्य तत्पराभवाहंकारोऽत्यंतमनुचितः । तथा तादृश्याः गंगायाः प्रांतभागे मध्यत्वभ्रमोप्यत्यंतमनुचितः । अत एवोक्तमन्यत्र—परमात्मा शिवो ह्यन्यस्तस्मादन्या च जाह्नवी । इति यः सेवते गंगां न स मोक्षस्य भाजनमिति ॥ तथापि लीलामात्रत्वाददोषः—शिवविष्ण्वोः परस्परमुपास्योपासकभाववदिति बोध्यम् । तर्हि किं कृतवती तत्राह । तत्रैवेति । अवभ्रमत । आर्षत्वात्सन्वदित्त्वं न ॥ ९ ॥ अथ तां जटाटवीतिरोहितां गंगां भगीरथः अपश्यत । पुनश्च तत्र तत्प्राप्तिविषये

विशाम्यहंहिपातालंस्रोतसागृह्यशंकरम् ॥ तस्यावलेपनंज्ञात्वाक्रुद्धस्तुभगवान्हरः ॥ ६ ॥ तिरोभावयितुंबुद्धिंचक्रेत्रिणयनस्तदा ॥ सातस्मिन्पतितापुण्यापुण्येरुद्रस्यमूर्धनि ॥७॥ हिमवत्प्रतिमेरामजटामंडलगह्वरे ॥ साकथंचिन्महींगंतुंनाशक्नोद्यत्नमास्थिता ॥ ८ ॥ नैवसानिर्गमंलेभेजटामंडलमंततः ॥ तत्रैवाबभ्रमदेवीसंवत्सरगणान्बहून् ॥९॥ तामपश्यत्पुनस्तत्रतपःपरममास्थितः ॥ सतेनतोषितश्चासीदत्यंतंरघुनंदन ॥ १० ॥ विससर्जततोगंगांहरोबिंदुसरःप्रति ॥ तस्यांविसृज्यमानायांसप्तस्रोतांसिजज्ञिरे ॥ ११ ॥ ह्लादिनीपावनीचैवनलिनीचतथैवच ॥ तिस्रःप्राचींदिशंजग्मुर्गंगाःशिवजलाःशुभाः ॥ १२ ॥ सुचक्षुश्चैवसीताचसिंधुश्चैवमहानदी ॥ तिस्रश्चैतादिशंजग्मुःप्रतीचींतुदिशंशुभाः ॥ १३ ॥ सप्तमीचान्वगात्तासांभगीरथरथंतदा ॥ भगीरथोपिराजर्षिर्दिव्यंस्यंदनमास्थितः ॥ १४ ॥ प्रायादग्रेमहातेजागंगातंचाप्यनुव्रजत् ॥ गगनाच्छंकरशिरस्ततोधरणिमागता ॥ १५ ॥ असर्पतजलंतत्रतीव्रशब्दपुरस्कृतम् ॥ मत्स्यकच्छपसंघैश्चशिशुमारगणैस्तथा ॥१६॥ पतद्भिःपतितैश्चैवव्यरोचतवसुंधरा ॥ ततोदेवर्षिगंधर्वायक्षसिद्धगणास्तथा ॥१७॥ व्यलोकयंतततेतत्रगगनाद्गांगतांतदा ॥ विमानैर्नगराकारैर्हयैर्गजवरैस्तदा ॥ १८ ॥ पारिप्लवगताश्चापिदेवतास्तत्रविष्ठिताः ॥ तदद्भुततमंलोकेगंगावतरमुत्तमम् ॥ १९ ॥ दिदृक्षवोदेवगणाःसमीयुरमितौजसः ॥ संपतद्भिःसुरगणैस्तेषांचाभरणौजसा ॥ २० ॥ शतादित्यमिवाभातिगगनंगततोयदम् ॥ शिशुमारोरगगणैर्मीनैरपिचचंचलैः ॥ २१ ॥ विद्युद्भिरिवविक्षिप्तैराकाशमभवत्तदा ॥ पांडुरैःसलिलोत्पीडैःकीर्यमाणैःसहस्रधा ॥ २२ ॥

हरमुद्दिश्य परमं तपः आस्थितः । सः हरः । तेन तपसा ॥ १० ॥ ततः तुष्टः सन् हरः विंदुसरः प्रति हिमवत्स्थितब्रह्मनिर्मितसरोविशेषं प्रति गंगां विससर्जेत्यन्वयः ॥ ११ ॥ १२ ॥ १३ ॥ सप्तमीति । एतेन भगीरथतपोहेतुकं त्रिपथगमनमुक्तम् । अथ चरितप्रश्नोत्तरमाह । भगीरथोपीति ॥ १४ ॥ अनुव्रजादिति । अडभावः आर्षः ॥ १५ ॥ तीव्रशब्दपुरस्कृतामिति । अत्र हेतुर्गगनादित्यादिना उक्तः । शिशुमारः कप्याकारो जलचरविशेषः ॥ १६ ॥ १७ ॥ गगनात् गां गतां रुद्रजटाकाशात् भुवमित्यर्थः । विमानैरित्यादेः—चरंत इति शेषः ॥ १८ ॥ पारिप्लवगताः संभ्रमं गताः । संभ्रमं प्राप्ता इत्यर्थ इत्येके । पारिप्लवः यानभेदः शिबिकादिरूपः । शिबिकादियानस्था इत्यर्थ इत्यन्ये ॥ १९ ॥ देवगणाः वस्वादयः संपतद्भिः आगच्छद्भिः ॥ २० ॥ तन्मूलिकामुपमामाह । शतादित्यमिवेति ॥ २१ ॥ विक्षिप्तैः निःसृतैः । विद्युच्छब्दः पुँल्लिंगोपि । एतत्प्रामाण्यात् । सलिलोत्पीडैः फेनैः । सहस्रधा किरणं वाय्वाद्युपाधितः । आकाशमभवत् । व्याप्तमिति शेषः ॥ २२ ॥

शारदाभ्रैरिव हंससंप्लवैर्हंससमूहैः संकीर्णं गगनम् अभवदिति पूर्वेणान्वयः । आयतं विस्तृतप्रवाहम् ॥ २३ ॥ विनतम् अगाधदेशे संकुचितम् । उद्धूतं पाषाणादियोगात् ॥ २४ ॥ मुहुरिति । ऊर्ध्वपथगमने सलिलयोरभ्याघातो निमित्तम् । शंकरशिरसि भ्रष्टम् ॥ २५ ॥ निर्मलम् । नैर्मल्ये प्रागुक्तभ्रंशद्वयं हेतुः । गतकल्मषं स्वजलस्पर्शवतां प्राणिनां नाशितपापम् ॥ भवांगं शिवमूर्धा । पस्पृशुः सस्नुः । न केवलं पापसंहारमात्रं गंगायाः कृत्यम् । अपि तु पुण्यलोकप्रापणमपीत्याह । शापादित्यादि । गगनात् उच्चस्थानात् ॥ गतकल्मषाः मुक्तशापाः । अनेन ब्रह्मशापपरिहारोपि गंगास्नानफलमिति कृततत्पापानां तज्जलस्पर्शे तत्पापनाशपूर्वकं स्वर्गप्राप्तिः कैमुतिकन्यायेनैव सिद्धेति बोध्यम् ॥ मुदितः दर्शनमात्रेण । मुमुदे स्नानपानादिना ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ भगीरथरथानुगाः संतो गंगामन्वगमन्नि

शारदाभ्रैरिवाकीर्णंगगनंहंससंप्लवैः ॥ क्वचिद्द्रुततरंयातिकुटिलंक्वचिदायतम् ॥ २३ ॥ विनतंक्वचिदुद्धूतंक्वचिद्यातिशनैःशनैः ॥ सलिलेनैवसलिलंक्वचिदभ्याहतंपुनः ॥ २४ ॥ मुहुरूर्ध्वपथंगत्वापपातवसुधांपुनः ॥ तच्छंकरशिरोभ्रष्टंभ्रष्टंभूमितलेपुनः ॥ २५ ॥ व्यरोचततदातोयंनिर्मलंगतकल्मषम् ॥ तत्रर्षिगणगंधर्ववसुधातलवासिनः ॥ २६ ॥ भवांगपतितंतोयंपवित्रमितिपस्पृशुः ॥ शापात्प्रपतितायेचगगनाद्वसुधातलम् ॥ २७ ॥ कृत्वातत्राभिषेकंतेबभूवुर्गतकल्मषाः ॥ धूतपापाःपुनस्तेनतोयेनाथशुभान्विताः ॥ २८ ॥ पुनराकाशमाविश्यस्वाँल्लोकान्प्रतिपेदिरे ॥ मुमुदेमुदितोलोकस्तेनतोयेनभास्वता ॥ २९ ॥ कृताभिषेकोगंगायांबभूवगतकल्मषः ॥ भगीरथोहिराजर्षिर्दिव्यंस्यंदनमास्थितः ॥ ३० ॥ प्रायादग्रेमहाराजस्तंगंगापृष्ठतोऽन्वगात् ॥ देवाःसर्षिगणाःसर्वेदैत्यदानवराक्षसाः ॥ ३१ ॥ गंधर्वयक्षप्रवराःसकिन्नरमहोरगाः ॥ सर्पाश्चाप्सरसोरामभगीरथरथानुगाः ॥ ३२ ॥ गंगामन्वगमन्प्रीताःसर्वेजलचराश्चये ॥ यतोभगीरथोराजाततोगंगायशस्विनी ॥ ३३ ॥ जगामसरितांश्रेष्ठासर्वपापप्रणाशिनी ॥ ततोहियजमानस्यजह्नोरद्भुतकर्मणः ॥ ३४ ॥ गंगासंप्लावयामासयज्ञवाटंमहात्मनः ॥ तस्यावलेपनंज्ञात्वाक्रुद्धोजह्नुश्चराघव ॥ ३५ ॥ अपिबत्तुजलंसर्वंगंगायाःपरमाद्भुतम् ॥ ततोदेवाःसगंधर्वाऋषयश्चसुविस्मिताः ॥ ३६ ॥ पूजयंतिमहात्मानंजह्नुंपुरुषसत्तमम् ॥ गंगांचापिनयंतिस्मदुहितृत्वेमहात्मनः ॥ ३७ ॥ ततस्तुष्टोमहातेजाःश्रोत्राभ्यामसृजत्प्रभुः ॥ तस्माज्जह्नुसुतागंगाप्रोच्यतेजाह्नवीतिच ॥ ३८ ॥ जगामचपुनर्गंगाभगीरथरथानुगा ॥ सागरंचापिसंप्राप्तासासरित्प्रवरातदा ॥ ३९ ॥ रसातलमुपागच्छत्सिद्ध्यर्थंतस्यकर्मणः ॥ भगीरथोपिराजर्षिर्गंगामादाययत्नतः ॥ ४० ॥ पितामहान्भस्मकृतानपश्यद्गतचेतनः ॥ अथतद्भस्मनांराशिंगंगासलिलमुत्तमम् ॥ ४१ ॥

त्यन्वयः । यतः येन मार्गेण ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अद्भुतकर्मणः । वक्ष्यमाणगंगोपसंहाराभिप्रायमेतत् ॥ ३४ ॥ तस्यावलेपनं तस्याः अवलेपनं गर्वमित्यर्थः ॥ ३५ ॥ अपिबत् । अगस्त्यः समुद्रजलमिव । योगशक्त्येति भावः । परमाद्भुतं तदभवत् । लोकस्येति शेषः ॥ ३६ ॥ पूजयंति । स्तोत्रादिनेति शेषः । अनुनयंतीति पाठे शैलराजदुहितुः कथमन्यदुहितृत्वमिति विमतिवारणाय गंगानुनयः ॥ ३७ ॥ तुष्टः गंगायाः स्वदुहितृत्वप्रापणात् । तस्मात् यतः पीतां पुनरसृजत्तस्मादित्यर्थः ॥ ३८ ॥ सागरं सगरसुतखातं संप्राप्ता । तत्पूरणायेति शेषः । क्षारत्वं तु तस्यागस्त्येन पानोत्तरमित्यन्यत्र स्फुटम् ॥ ३९ ॥ तस्य कर्मणः सिद्ध्यर्थं भगीरथस्य स्ववंशोद्धारकर्मणः । यत्नतः प्रागुक्तयत्नैः ॥ ४० ॥ भस्मकृतान् कपिलकोपाग्निना भस्मभावं प्राप्तान् ॥ ४१ ॥

प्लावयत्सेचयति स्म । अत एव पूतपाप्मानः ॥ ४२ ॥ रंभमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ ॥ छ ॥ उक्तमेव विस्तरेणाह । स गत्वेति । भस्मसात्कृताः कात्स्न्येंन भस्मीकृताः । भूमेः तलं पातालम् ॥ १ ॥ २ ॥ तारिताः प्रेतत्वात् देववत्स्वर्गं प्राप्ताश्च । अनेन प्रेतत्वविमुक्तिस्वर्गप्राप्ती भस्मनोपि गंगास्पर्शस्य फलं किमुतास्थिपुद्गलादेरित्युक्तम् ॥ ३ ॥ यावत्सागरस्य जलं स्थास्यति तावद्दिवि स्थास्यंतीत्यर्थः । तन्निमित्तमपि तया गंगया तत्खातस्य सागरस्य पूरणमिति भावः ॥ ४ ॥ ५ ॥ त्वत्कृतनाम्नोर्विश्रुतत्वमेव दर्शयति । गंगेत्यादि । त्रिपथगेति । नाम्नोऽन्वर्थत्वं दर्शयति । त्रीनित्यादि । अनेन कथं गंगा त्रिपथगेत्यस्य उत्तरं संवृत्तम् ॥ ६ ॥ कुरुष्वेति । गंगाजलसेकतो जातप्रायश्चित्तत्वात् सलिलदानयोग्यतासंपत्तेः । प्रतिज्ञां गंगासलिलप्रदानेन सागरांस्तारये इत्येवंरूपां गरुत्मदुपदिष्टाम् अपवर्जय समाप्तां कुर्वित्यर्थः ॥ ७ ॥ पूर्वकेण सगरेण । एषः गंगालाभरूपः । पूर्वकेणेति कमत्ययेन एषैव कुत्सा द्योत्यते

प्लावयत्पूतपाप्मानःस्वर्गंप्राप्तारघूत्तम ॥ ४२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं०सा०बालकांडे त्रिचत्वारिंशः सर्गः ॥४३॥ सगत्वासागरंराजागंगयानुगतस्तदा ॥ प्रविवेशतलंभूमेर्यत्रतेभस्मसात्कृताः ॥ १ ॥ भस्मन्यथाप्लुतेरामगंगायाःसलिलेनवै ॥ सर्वलोकप्रभुर्ब्रह्माराजानमिदमब्रवीत् ॥ २ ॥ तारितानरशार्दूलदिवंयाताश्चदेववत् ॥ षष्टिःपुत्रसहस्राणिसगरस्यमहात्मनः ॥ ३ ॥ सागरस्यजलंलोकेयावत्स्थास्यतिपार्थिव ॥ सगरस्यात्मजाःसर्वेदिविस्थास्यंतिदेववत ॥ ४ ॥ इयंचदुहिताज्येष्ठातवगंगाभविष्यति ॥ त्वत्कृतेनचनाम्नाथलोकेस्थास्यतिविश्रुता ॥ ५ ॥ गंगात्रिपथगानामदिव्याभागीरथीतिच ॥ त्रीन्पथोभावयंतीतितस्मात्रिपथगास्मृता ॥ ६ ॥ पितामहानांसर्वेषांत्वमत्रमनुजाधिप ॥ कुरुष्वसलिलंराजन्प्रतिज्ञामपवर्जय ॥ ७ ॥ पूर्वकेणहितेराजंस्तेनातियशसातदा ॥ धर्मिणांप्रवरेणाथनैषप्राप्तोमनोरथः ॥ ८ ॥ तथैवांशुमतावत्सलोकेऽप्रतिमतेजसा ॥ गंगांप्रार्थयतानेतुंप्रतिज्ञानापवर्जिता ॥ ९ ॥ राजर्षिणागुणवतामहर्षिसमतेजसा ॥ मत्तुल्यतपसाचैवक्षत्रधर्मस्थितेनच ॥ १० ॥ दिलीपेनमहाभागतवपित्रातितेजसा ॥ पुनर्नशकितानेतुंगंगांप्रार्थयतानघ ॥ ११ ॥ सात्वयासमतिक्रांताप्रतिज्ञापुरुषर्षभ ॥ प्राप्तोसिपरमंलोकेयशःपरमसंमतम् ॥ १२ ॥ तच्चगंगावतरणंत्वयाकृतमरिंदम ॥ अनेनचभवान्प्राप्तोधर्मस्यायतनंमहत् ॥ १३ ॥ प्लावयस्वत्वमात्मानंनरोत्तमसदोचिते ॥ सलिलेपुरुषश्रेष्ठशुचिःपुण्यफलोभव ॥ १४ ॥

॥ ८ ॥ गंगां नेतुं भूलोकं प्रापयितुं प्रार्थयता प्रतिज्ञा न अपवार्जिता न फलपर्यवसायिनी कृता ॥ ९ ॥ मत्तुल्येति । ब्रह्मतुल्येत्यर्थः ॥ १० ॥ गंगां नेतुं प्रार्थयता सा गंगा नेतुं न शकितेत्यर्थः ॥ यत्तु गंगामानेतुं न शकिता न विचारिता । प्रतिज्ञेति शेषः । चिंताविषयमपि न प्रापितेत्यर्थ इति—तत्प्रार्थयतेति पदस्वरसविरोधाच्चिंत्यम ॥ ११ ॥ समतिक्रांता निस्तीर्णा ।परमसंमतं परममुत्कृष्टं च तत्संमतं सर्वलोकसंमतमित्यर्थः ॥ १२ ॥ धर्मस्यायतनं धर्मप्राप्यस्थानं महत् ब्रह्मलोकरूपम् ॥ १३ ॥ यथा अस्याः ब्रह्मलोकप्रापकत्वं तदाह । प्लावयस्वेति । आत्मानं स्वदेहम् । सदोचिते सिंहकर्कटमध्येपि स्नानादिव्यवहारोचिते । भूमवहनदीनामेव तत्काले भौममूलरजःसंबंधात्स्नानाद्यनर्हत्वम् । पुण्यफल इति । मत्वर्थीयाजंतो बहुव्रीहिर्वा । अनेन स्नानमात्रेण गंगा ब्रह्मलोकप्रातिकरीति सूचितम् ॥ १४ ॥

सागराणां जातप्रायश्चित्तत्वसंदेहापनुत्तये गंगाजलसंबंधस्य सर्वपापप्रायश्चित्तत्वबोधनाय च पुनस्तेषां सलिलं कार्यमित्याह । पितामहानामित्यादि । स्वं लोकं ब्रह्मलोकम् । गम्यतां कृतोदकक्रियेण । स्वपुरमिति शेषः । अयं नियोगो राजधर्मपरिपालनाय ॥ १५ ॥ यथा आगतमिति छेदः । देवलोकं ब्रह्मलोकम् ॥ १६ ॥ यथाक्रमं ज्येष्ठक्रमेण । यथान्यायं स्मृत्युक्तक्रमेण । उत्तमम् उत्तमलोकप्रापकम् ॥ १७ ॥ कृतोदक इति । अन्येषामपीति शेषः ॥ १८ ॥ नष्टशोकः नष्टतद्वियोगजशोकः। विगतज्वरः कथमस्मत्पालनं भविष्यतीति विगतचिंतः ॥ १९ ॥ उपसंहरति । एष इति । स्वस्ति भद्रयोः तत्प्रीत्यादरसूचनार्थं ग्रहणम् ॥ २० ॥ आख्यानश्रवणफलमाह । धन्यमित्यादि ॥ २१ ॥ २२ ॥ २३ ॥ ३२ लैखमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये

पितामहानांसर्वेषांकुरुष्वसलिलक्रियाम् ॥ स्वस्तितेऽस्तुगमिष्यामिस्वंलोकंगम्यतांनृप ॥ १५ ॥ इत्येवमुक्त्वादेवेशःसर्वलोकपितामहः ॥ यथाऽऽगतंतथाऽगच्छद्देवलोकंमहायशाः ॥ १६ ॥ भगीरथस्तुराजर्षिःकृत्वासलिलमुत्तमम् ॥ यथाक्रमंयथान्यायंसागराणांमहायशाः ॥ १७ ॥ कृतोदकःशुचीराजास्वपुरंप्रविवेशह ॥ समृद्धार्थोनरश्रेष्ठस्वराज्यंप्रशशासह ॥१८॥ प्रमुमोदचलोकस्तंनृपमासाद्यराघव ॥ नष्टशोकःसमृद्धार्थोबभूवविगतज्वरः॥१९॥ एषतेरामगंगायाविस्तरोऽभिहितोमया ॥ स्वस्तिप्राप्नुहिभद्रंतेसंध्याकालोतिवर्तते ॥ २० ॥ धन्यंयशस्यमायुष्यंपुत्र्यंस्वर्ग्यमथापिच ॥ यःश्रावयतिविप्रेषुक्षत्रियेष्वितरेषुचं ॥२१॥ प्रीयंतेपितरस्तस्यप्रीयंतेदैवतानिच ॥ इदमाख्यानमायुष्यंगंगावतरणंशुभम् ॥२२॥ यःशृणोतिचकाकुत्स्थसर्वान्कामानवाप्नुयात् ॥ सर्वेपापाःप्रणश्यंतिआयुःकीर्तिश्चवर्धते॥२३॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा०वालकांडे चतुश्चत्वारिंशःसर्गः॥४४॥

विश्वामित्रवचःश्रुत्वाराघवःसहलक्ष्मणः ॥ विस्मयंपरमंगत्वाविश्वामित्रमथाब्रवीत् ॥ १ ॥ अत्यद्भुतमिदंब्रह्मन्कथितंपरमंत्वया ॥ गंगावतरणंपुण्यंसागरस्यापिपूरणम् ॥ २ ॥ क्षणभूतेवनौरात्रिःसंवृत्तेयंपरंतप ॥ इमांचिंतयतःसर्वांनिखिलेनकथांतव ॥ ३ ॥ तस्यसाशर्वरीसर्वाममसौमित्रिणासह ॥ जगामचिंतयानस्यविश्वामित्रकथांशुभाम् ॥ ४ ॥ ततःप्रभातेविमलेविश्वामित्रंतपोधनम् ॥ उवाचराघवोवाक्यंकृताह्निकमरिंदमः ॥ ५ ॥ गताभगवतीरात्रिःश्रोतव्यंपरमाद्भुतम् ॥ तरामसरितांश्रेष्ठांपुण्यांत्रिपथगांनदीम् ॥ ६ ॥ नौरेषाहिसुखास्तीर्णाऋषीणांपुण्यकर्मणाम् ॥ भगवंतमिहप्राप्तंज्ञात्वात्वरितमागता ॥ ७ ॥ तस्यतद्वचनंश्रुत्वाराघवस्यमहात्मनः ॥ संतारंकारयामाससर्षिसंघस्यकौशिकः ॥ ८ ॥ उत्तरंतीरमासाद्यसंपूज्यर्षिगणंततः ॥ गंगाकूलेनिविष्टास्तेविशालांददृशुःपुरीम् ॥ ९ ॥

आदिकाव्ये वालकांडे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ ॥ ७ ॥ ॥ अब्रवीत् । रात्र्यंते इति शेषः॥१॥पूरणं गंगयेति शेषः ॥ २ ॥ इमां तव कथां त्वदुक्तां कथां चिंतयतो मम रामस्य च रात्रिः क्षणभूतेव संवृत्ता अतीता । एवमाश्चर्यभूता त्वदुक्ता गंगाकथेति भावः ॥ ३ ॥ विश्वामित्रेति । संबोधनम् । उक्तस्यैवार्थस्य आदरातिशयबोधनाय पुनरुपादानम् ॥ ४ ॥ ५ ॥ भगवती गंगाकथाश्रवणात्पूज्या ॥ ६ ॥ सुखास्तीर्णा सुखं शुभम् आस्तीर्णं यस्यां सा । त्वरितमागता सर्वैः तव सेवार्थमित्याशयः ॥ ७ ॥ कारयामास । नाविकैरिति शेषः ॥ ८ ॥ संपूज्य ऋषिगणम् । तत्तीरस्थामिति शेषः ॥९॥

विशालां जगाम । पूर्वदृष्टामिति शेषः ॥ १० ॥ विशालां पप्रच्छ विशालाविषये प्रश्नं कृतवानित्यर्थः ॥ ११ ॥ विशालायाम् । संप्रतिवर्तत इति शेषः ॥ १२ ॥ विशालायाः पुरातनमिति पाठः । पुरातनं तत्पुरीनिर्मितेः प्राक्तनं वृत्तांतम्।विशालस्येति पाठे तन्नगरीनिर्माता राजा विशालो नाम।यद्वा विशालस्य विशालानगर्यधिष्ठानदेशस्येत्यर्थः ॥१३॥कथां विशालाविभवप्रतिपादिकां कथां कथयतः शक्रस्य सकाशान्मया श्रुताम् । अस्मिन्देशे विशालानगर्यधिष्ठानदेशे यद्वृत्तं पुरातनं तद्विषयां तत्त्वेन शृण्विति योजना ॥ १४ ॥ सुधार्मिका इति । अदितिपुत्रविशेषणम् । आसन्निति शेषः ॥ १५ ॥ अमराः

ततोमुनिवरस्तूर्णंजगामसहराघवः ॥ विशालांनगरींरम्यांदिव्यांस्वर्गोपमांतदा ॥ १० ॥ अथरामोमहाप्राज्ञोविश्वामित्रंमहामुनिम् ॥ पप्रच्छप्रांजलिर्भूत्वाविशालामुत्तमांपुरीम् ॥ ११ ॥ कतमोराजवंशोयंविशालायांमहामुने ॥ श्रोतुमिच्छामिभद्रंतेपरंकौतूहलंहिमे ॥ १२ ॥ तस्यतद्वचनंश्रुत्वारामस्यमुनिपुंगवः ॥ आख्यातुंतत्समारेभेविशालायाःपुरातनम् ॥ १३ ॥ श्रूयतांरामशक्रस्यकथांकथयतःश्रुताम्॥अस्मिन्देशेहियद्वृत्तंशृणुतत्त्वेनराघव॥ १४ ॥ पूर्वंकृतयुगेरामदितेःपुत्रामहाबलाः ॥ अदितेश्चमहाभागावीर्यवंतःसुधार्मिकाः ॥ १५ ॥ ततस्तेषांनरव्याघ्रबुद्धिरासीन्महात्मनाम् ॥ अमराविजराश्चैवकथंस्यामोनिरामयाः ॥ १६ ॥ तेषांचिंतयतांतत्रबुद्धिरासीद्विपश्चिताम् ॥ क्षीरोदमथनंकृत्वारसंप्राप्स्यामतत्रवै ॥ १७ ॥ ततोनिश्चित्यमथनंयोक्रंकृत्वाचवासुकिम् ॥ मंथानंमंदरंकृत्वाममंथुरमितौजसः ॥ १८ ॥ ( अथवर्षसहस्रेणयोक्रसर्पशिरांसिच ॥ वमंतोतिविषंतत्रददंशुर्दशनैःशिलाः ॥ १९ ॥ उत्पपाताग्निसंकाशंहालाहलमहाविषम् ॥ तेनदग्धंजगत्सर्वंसदेवासुरमानुषम् ॥ २० ॥ अथदेवामहादेवंशंकरंशरणार्थिनः ॥ जग्मुःपशुपतिंरुद्रंत्राहित्राहीतितुष्टुवुः ॥ २१ ॥ एवमुक्तस्ततोदेवैर्देवदेवेश्वरःप्रभुः ॥ प्रादुरासीत्ततोऽत्रैवशंखचक्रधरोहरिः ॥ २२ ॥ उवाचैनंस्मितंकृत्वारुद्रंशूलधरंहरिः ॥ दैवतैर्मथ्यमानेतुयत्पूर्वंसमुपस्थितम् ॥ २३ ॥ तत्त्वदीयंसुरश्रेष्ठसुराणामग्रतोहियत् ॥ अग्रपूजामिहस्थित्वागृहाणेदंविषंप्रभो ॥२४॥ इत्युक्त्वाचसुरश्रेष्ठस्तत्रैवांतरधीयत॥ देवतानांभयंदृष्ट्वाश्रुत्वावाक्यंतुशार्ङ्गिणः ॥२५॥ हालाहलंविषंघोरंसंजग्राहामृतोपमम् ॥ देवान्विसृज्यदेवेशोजगामभगवान्हरः ॥२६॥

मरणरहिताः । विजराः जरारहिताः । निरामयाः रोगरहिताः ॥१६॥ रसम् अमृतरूपं रसायनम् ॥१७॥ योक्रं मंथनरज्जुम् ॥१८॥ ( योक्रसर्पः मंथनरज्जुभूतः सर्पः । वमंत इति । पुंस्त्वमार्षम् । अतिविषम् अतिशयितं विषम् ॥ १९ ॥ उत्पपातेति । तत इत्यादिः । शिलादशनादित्यर्थः । दष्टशिलाखंडा एव महाविषरूपं भूत्वा उत्पपात ॥ २० ॥ २१ ॥ प्रभुः महादेवः । ततः महादेवप्रादुर्भावानंतरम्॥ ॥ २२ ॥ स्मितं छलेन विषदानात्स्मितम् ॥ २३ ॥ यत् यतो भवान्सुराणामग्रतः तेषां मध्ये श्रेष्ठ इत्यर्थः ॥ २४ ॥ सुरश्रेष्ठः विष्णुः ॥ २५ ॥ अमृतोपमं यथा भवति तथा संजग्राहेत्यन्वयः । पूर्वं देवेषु

१ एते कुण्डलीस्थाः श्लोकाः त्रयोदश प्रक्षिप्ता इति बहव इति अग्रेत्रैव ४५ म श्लोके तिलकटीकायाम् ।

मंथनसहायतया स्थितोपि विषपानानंतरं तत्पीडया तांस्त्यक्त्वा जगाम । अमृतकुंडमिति शेषः ॥ २६ ॥ मंथानः पर्वतोत्तमः मंदरः ॥ २७ ॥ २८ ॥ कामठं काच्छपम् ॥ २९ ॥ शिश्ये स्थितवान् । जले शय इत्यादौ स्थित्यर्थस्य शेर्तेर्दर्शनात्॥ ३० ॥ममंथ पुरुषोत्तमः । अनेन शक्तिवैचित्र्यं प्रकटीकृतम् ॥ ३१ ॥ धन्वंतरिरुदतिष्ठदित्यन्वयः । अप्सराः इति । आर्षम् । उदतिष्ठन्नित्यनुकर्षः॥ ३२ ॥ अप्सु क्षीररूपासु तस्मात्क्षीरोदसारभूतादित्यर्थः॥ ३३ ॥षष्टिः कोट्यः षष्टिकोटिसंख्याः प्रधानाः अप्सरसामभवन् अपरिमितपरिचारिकोपेताः षष्टिकोट्यप्सरसो जाता इत्यर्थः ॥ ३४ ॥ ताः उक्ताप्सरसः न प्रतिगृह्णंति ममैव इमाः नान्यस्येति नांगी कुर्वंति सर्वे देवाः दानवाश्चेत्यर्थः ॥ तासां विशिष्य पत्यनिच्छयैव संमुग्धाकारतया स्थितत्वात् तासां विशिष्य प्रतिग्रहाभावः । अत एव तासां साधारण्यम् ॥ ३५ ॥

ततोदेवाःसुराःसर्वेममंथूरघुनंदन ॥ प्रविवेशाथपातलंमंथानःपर्वतोत्तमः ॥ २७ ॥ ततोदेवाःसगंधर्वास्तुष्टुवुर्मधुसूदनम् ॥ त्वंगतिःसर्वभूतानांविशेषेणदिवौकसाम् ॥ २८ ॥ पालयास्मान्महाबाहोगिरिमुद्धर्तुमर्हसि ॥ इतिश्रुत्वाहृषीकेशःकामठंरूपमास्थितः ॥ २९ ॥ पर्वतंपृष्ठतःकृत्वाशिश्येतत्रोदधौहरिः ॥ पर्वताग्रंतुलोकात्माहस्तेनाक्रम्यकेशवः ॥३०॥ देवानांमध्यतःस्थित्वाममंथपुरुषोत्तमः ॥ अथवर्षसहस्रेणआयुर्वेदमयःपुमान् ॥३१॥ ) उदतिष्ठत्सधर्मात्मासदंडःसकमंडलुः ॥ अथधन्वंतरिर्नामअप्सराश्चसुवर्चसः ॥ ३२ ॥ अप्सुनिर्मथनादेवरसात्तस्माद्वरस्त्रियः ॥ उत्पेतुर्मनुजश्रेष्ठतस्मादप्सरसोऽभवन् ॥ ३३ ॥ षष्टिःकोट्योऽभवंस्तासामप्सराणांसुवर्चसाम् ॥ असंख्येयास्तुकाकुत्स्थयास्तासांपरिचारिकाः ॥ ३४ ॥ नताःस्मप्रतिगृह्णंतिसर्वेतेदेवदानवाः ॥ अप्रतिग्रहणादेवतावैसाधारणाःस्मृताः ॥ ३५ ॥ वरुणस्यततःकन्यावारुणीरघुनंदन ॥ उत्पपातमहाभागमार्गमाणापरिग्रहम् ॥ ३६ ॥ दितेःपुत्रानतांरामजगृहुर्वरुणात्मजाम् ॥ अदितेस्तुसुतावीरजगृहुस्तामनिंदिताम् ॥ ३७ ॥ असुरास्तेनदैतेयाःसुरास्तेनादितेःसुताः ॥ हृष्टाःप्रमुदिताश्चासन्वारुणीग्रहणात्सुराः ॥ ३८ ॥ उच्चैःश्रवाहयश्रेष्ठोमणिरत्नंचकौस्तुभम् ॥ उदतिष्ठन्नरश्रेष्ठतथैवामृतमुत्तमम् ॥ ३९ ॥ अथतस्यकृतेराममहानासीत्कुलक्षयः ॥ अदितेस्तुततःपुत्रावितिपुत्रानयोधयन् ॥४०॥ एकतामगमन्सर्वेअसुराराक्षसैःसह ॥ युद्धमासीन्महाघोरंवीरत्रैलोक्यमोहनम् ॥ ४१ ॥ यदाक्षयंगतंसर्वंतदाविष्णुर्महाबलः ॥ अमृतंसोहरत्तूर्णमायामास्थायमोहिनीम् ॥४२॥ येगताभिमुखंविष्णुमक्षरंपुरुषोत्तमम् ॥ संपिष्टास्तेतदायुद्धेविष्णुनाप्रभविष्णुना ॥४३॥

वारुणी सुराधिदेवता परिग्रहं केन चिदसाधारण्येनांगीकारम् ॥ ३६ ॥ अदितिसुतांगीकारे हेतुः—अनिंदितामिति । निषेधशास्त्रं तु मानुषविषयम् । शास्त्रे देवतानामधिकारात् ॥ ३७ ॥ असुराः सुरापरिग्रहराहित्यात् । सुराः सुरापरिग्रहसत्त्वात् ॥ ३८ ॥ ३९ ॥ तस्य अमृतस्य कृते ग्रहणनिमित्तम् ॥ ४० ॥ कलहप्रवृत्त्यनंतरमसुराः राक्षसैः सह एकतामगमन् । बलसिद्ध्यर्थमिति शेषः । वीरेति । संबुद्धिः । परमिति क्वचित्पाठः ॥ ४१ ॥ सर्वं परस्परप्रहारेण देवासुरात्मकं क्षयं गतं क्षयप्रायं गतं तदा दैत्याः राक्षसैरेकत्वेन बलवत्त्वान्मा हरंत्विति बुद्ध्या मोहिनीं काममोहजननीं मायां मायातनुम् आस्थाय तूर्णं शीघ्रम् अमृतमहरत् ॥ ४२ ॥ गताभिमुखमिति । संधिरार्षः । ये सुराः असुरा वा मायामूर्त्या गृहीतामृतं विष्णुम् अमृतजिघृक्षया अभिमुखं गताः प्राप्ताः ते सर्वे मूर्त्यंतरास्थानेन प्रभवि

ष्णुना विष्णुना युद्धे संपिष्टाः ॥ ४३ ॥ दितेः पुत्रान्निजघ्निरे । धार्मिकत्वात् विष्ण्वनुग्रहाच्च । दैतेयादित्ययोः सुरासुरवर्गयोः ॥ ४४ ॥ तुश्चार्थे । राज्यमित्यनंतरं योज्यः । राज्यममृतं च प्राप्येत्यर्थः । अत्र ममंथुरमितौजस इति ( १८ ) श्लोकानंतरम् अथ वर्षेत्यादि आयुर्वेदमयः पुमानित्यंतं त्रयोदश श्लोकाः प्रक्षिप्ता इति बहवः। अमृतदानराहुशिरच्छेदाद्यवर्णनवत् हालाहलोत्पत्त्याद्यवर्णनमिति तदाशयः ॥ ४५ ॥ शिवैर्मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ ॥ छ ॥ ॥ किं तत इत्यत्राह । हतेष्वित्यादि । मारीचं मरीचेरपत्यम् ॥ १ ॥ दीर्घेण तपसा अर्जितम् ॥ २ ॥ ईश्वरं त्रैलोक्यनाथम् । ईदृशमिति पाठांतरम् । तत्र ईदृशमित्यस्यैव विवरणं शक्रहंतारमिति ॥ ३ ॥ ४ ॥ शुचिर्भव । पुत्रोत्पत्तिं

अदितेरात्मजावीरादितेःपुत्रान्निजघ्निरे ॥ अस्मिन्घोरेमहायुद्धेदैतेयादित्ययोर्भृशम् ॥ ४४ ॥ निहत्यदितिपुत्रांस्तुराज्यंप्राप्यपुरंदरः ॥ शशासमुदितोलोकान्सर्षिसंघान्सचारणान् ॥ ( ४५ ) ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ हतेषुतेषुपुत्रेषुदितिःपरमदुःखिता ॥ मारीचंकश्यपंनामभर्तारमिदमब्रवीत् ॥ १ ॥ हतपुत्रास्मिभगवंस्तवपुत्रैर्महात्मभिः ॥ शक्रहंतारमिच्छामिपुत्रंदीर्घतपोर्जितम् ॥ २ ॥ साहंतपश्चरिष्यामिगर्भंमेदातुमर्हसि ॥ ईश्वरंशक्रहंतारंत्वमनुज्ञातुमर्हसि ॥ ३ ॥ तस्यास्तद्वचनंश्रुत्वामारीचःकश्यपस्तदा ॥ प्रत्युवाचमहातेजादितिंपरमदुःखिताम् ॥ ४ ॥ एवंभवतुभद्रंतेशुचिर्भवतपोधने ॥ जनयिष्यसिपुत्रंत्वंशक्रहंतारमाहवे ॥ ५ ॥ पूर्णेवर्षसहस्रेतुशुचिर्यदिभविष्यसि ॥ पुत्रंत्रैलोक्यहंतारंमत्तस्त्वंजनयिष्यसि ॥ ६ ॥ एवमुक्त्वामहातेजापाणिनासंममार्जताम् ॥ तामालभ्यततःस्वस्तिइत्युक्त्वातपसेययौ ॥ ७ ॥ गतेतस्मिन्नरश्रेष्ठदितिःपरमहर्षिता ॥ कुशप्लवंसमासाद्यतपस्तेपेसुदारुणम् ॥८॥ तपस्तस्यांहिकुर्वत्यांपरिचर्यांचकारह ॥ सहस्राक्षोनरश्रेष्ठपरयागुणसंपदा ॥९॥ अग्निंकुशान्काष्ठमपःफलंमूलंतथैवच ॥ न्यवेदयत्सहस्राक्षोयच्चान्यदपिकांक्षितम् ॥ १० ॥ गात्रसंवाहनैश्चैवश्रमापनयनैस्तथा ॥ शक्रःसर्वेषुकालेषुदितिंपरिचचारह ॥ ११ ॥ पूर्णेवर्षसहस्रेसादशोनेरघुनंदन ॥ दितिःपरमसंहृष्टासहस्राक्षमथाब्रवीत् ॥ १२ ॥ तपश्चरंत्यावर्षाणिदशवीर्यवतांवर ॥ अवशिष्टानिभद्रंतेभ्रातरंद्रक्ष्यसेततः ॥ १३ ॥ यमहंत्वत्कृतेपुत्रतमाधास्येजयोत्सुकम् ॥ त्रैलोक्यविजयंपुत्रसहभोक्ष्यसिविज्वरः ॥१४॥ याचितेनसुरश्रेष्ठपित्रातवमहात्मना ॥ वरोवर्षसहस्रांतेममदत्तःसुतंप्रति ॥ १५ ॥

यावदिति शेषः ॥ ५ ॥ पूर्णे वर्षसहस्रे त्विति । जनयिष्यसीत्यनेनान्वयः । शुचिर्यदि भविष्यसीति । वत्सरसहस्रमपीति शेषः । त्रैलोक्यहंतारं तदधिपशक्रहंतारम् ॥ ६ ॥ पाणिना संममार्ज । तादृशपुत्रमति बंधहेतुपापक्षयार्थमिति शेषः । अथ तामालभ्य स्पृष्ट्वा स्वस्ति गर्भभद्रं तवास्तु इत्युक्त्वा स कश्यपः तपसे ययावित्यन्वयः ॥ ७ ॥ कुशप्लवं विशालाख्यं पूर्वदेशस्थतपोवनम् ॥८॥ गुणसंपदा शुश्रूषोपयोगिगुणसंपदा ॥ ९ ॥ तामेव गुणसंपदमाह । अग्निमित्यादि ॥ १० ॥ पुत्रत्वाद्गात्रसंवाहनादि सर्वेषु कालेषु । तस्याः अशुचित्वमतीक्षयेति भावः । ननु तद्धंतृपुत्रप्रेप्सोर्दितेः कथं तत्परिचर्यांगीकार इति चेत्–देवमाययैवेति गृहाण ॥ ११ ॥ दशोने दशभिर्न्यूने ॥ १२ ॥ १३ ॥ हे पुत्र यं पुत्रम् अहं त्वत्कृते त्वन्नाशार्थं याचितवती तं तव जयोत्सुकम् आधास्ये विगतवैरं भ्रातृस्नेहवंतमेव करिष्ये इत्यन्वयः । त्रैलोक्य

१ अत्र सर्गे प्रक्षिप्तैः कुण्डलीस्थत्रयोदशभिः श्लोकैस्सह पञ्चचत्वारिंशच्छ्लोकाः ।

विजयं भ्रातृकृतम् । सह तेन भ्रात्रा सह॥१४॥१५॥दिनेश्वरे सूर्ये मध्यं प्राप्ते सति शय्यायां शीर्षस्थाने पादौ कृत्वा दितिर्निद्रया अपहृता गृहीतेत्यर्थः । अनेन दिवास्वापरूपपापेन शय्यापादस्थाने मस्तकक रणेन चाशुचित्वं सूचितम् ॥ केचित्तु उपविष्टाया एव भद्रतया पादपर्यंतं शिरःसंबंधेन शीर्षे पादसंबंधः । तेन ब्राह्मणस्य शूद्रस्पर्श इव शिरसः पादस्पर्शे अशुचित्वं सूचितम् । तपासि स्थितायाः शय्यासंबंधाभावेन पूर्वव्याख्यायाः अयुक्तत्वादित्याहुः ॥ परे तु भूशयनेपि दक्षिणपूर्वदिशोः शिरःस्थापनयोग्यतायाः स्मृतिषूक्तेस्तद्वैपरीत्येन शयनस्याशुचित्वसूचकत्वमस्त्येवेत्याहुः ॥ १६ ॥ पादयोः तत्स्थापनदेशे कृतमूर्धजां मूर्धजसंबंधे मूर्धसंबंधोपि जात एव । अत एवाशुचिम् । तथा शिरः स्थाने तया पादौ कृतौ । अतस्तामशुचिं दृष्ट्वेत्यर्थः । अत्रैकेनैवोभयलाभे उभयोपादानं स्पष्टार्थम् । वस्तुतो वक्र ग्रीवतया वक्रपादतया वा शयने परस्परस्थानव्यत्ययाभावेन तथा अशुचित्वमित्यत्यंताशुचित्वप्रतिपादनायोभयोपादानामिति बोध्यम् । मुमोद । प्राप्तच्छिद्रत्वादिति भावः । मोदवशादेव जहास च ॥ १७ ॥ शरीरविवरं योनिविवरम् । आत्मवान् सावधानः ॥१८॥ शतपर्वणा शतकोटिना । अबुध्यत भिद्यमानगर्भस्य रोदनशब्देनेत्यर्थः ॥१९॥२०॥ न हंतव्यमिति । विभागेपि प्राणवियोजनं मा कुर्वित्यर्थः ॥

**इत्युक्त्वाचदितिस्तत्रप्राप्तेमध्यंदिनेश्वरे ॥ निद्रयापहृतादेवीपादौकृत्वाथशीर्षतः ॥ १६ ॥ दृष्ट्वातामशुचिंशक्रःपादयोःकृतमूर्धजाम् ॥ शिरःस्थाने कृतौपादौजहासचमुमोदच ॥ १७ ॥ तस्याःशरीरविवरंप्रविवेशपुरंदरः ॥ गर्भंचसप्तधारामचिच्छेदपरमात्मवान् ॥ १८ ॥ भिद्यमानस्ततोगर्भोवज्रेण शतपर्वणा ॥ रुरोदसुस्वरंरामततोदितिरबुध्यत ॥ १९ ॥ मारुदोमारुदश्चेतिगर्भंशक्रोऽभ्यभाषत ॥ बिभेदचमहातेजारुदंतमपिवासवः ॥ २० ॥ नहंतव्यंनहंतव्यमित्येवंदितिरब्रवीत् ॥निष्पपाततत:शक्रोमातुर्वचनगौरवात् ॥२१ ॥ प्रांजलिर्वज्रसहितोदितिंशक्रोभ्यभाषत ॥ अशुचिर्देविसुप्तासिपादयोः कृतमूर्धजा ॥ २२ ॥ तदंतरमहंलब्ध्वाशक्रहंतारमाहवे ॥ अभिदंसप्तधादेवितन्मेत्वंक्षंतुमर्हसि ॥ २३॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥ ॥ सप्तधातुकृतेगर्भेदितिःपरमदुःखिता ॥ सहस्राक्षंदुराधर्षवाक्यंसानुनयाब्रवीत् ॥ १ ॥ ममापराधाद्गर्भो यंसप्तधाशकलीकृतः ॥ नापराधोहिदेवेशतवात्रबलसूदन ॥ २ ॥ प्रियंत्वत्कृतमिच्छामिममगर्भविपर्यये ॥ मरुतांसप्तसप्तानांस्थानपालाभवंतुते ॥ ३ ॥ वातस्कंधाइमेसप्तचरंतुदिविपुत्रक ॥ मारुताइतिविख्यातादिव्यरूपाममात्मजाः ॥ ४ ॥ ब्रह्मलोकंचरत्वेकइंद्रलोकंतथापरः ॥ दिव्यवायुरितिख्यातस्तृ तीयोपिमहायशाः ॥ ५ ॥**

॥२१॥२२॥ तदंतरं छिद्रम् । आहवे शक्रस्य मम हंतारम् अंकुरच्छेदनन्यायेनाभिंदम् तव् मे अपराधकर्म त्वं क्षंतुमर्हसि । पूर्वतनीं सेवां स्मृत्वेति शेषः ॥ २३ ॥ ३३लक्षमानः ॥ ॥ इति श्रीरा माभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥ ॥ छ ॥ ॥ सप्तधा त्विति । दुराधर्षम् । न्यायोपायेन जेतृत्वादित्याशयः ॥ १ ॥ ममापराधात् अशुचित्वरूपात् ॥ २ ॥ गर्भविपर्यये गर्भविपत्तौ यत्त्वया कृतं कर्म तत्तत्र च मम च यथा प्रियं भवति तथा इच्छामि । तत्प्रकारमाह । मरुतामिति । सप्तानां मरुतां वा तत्स्थानवि शेषाणां सप्त इमे ते त्वदधीनाः स्थानपालाः लोकरक्षिणः भवंत्वित्यन्वयः ॥ तदर्थमेव हे पुत्रक मारुता इति नाम्ना प्रसिद्धाः दिव्यरूपाः ममः पुत्राः । ये इमे वातस्कंधा इति सप्त प्रसिद्धाः । दिवि चरंत्वित्यन्वयः ॥ ३ ॥ ४ ॥ एक इति । एको गण इत्यर्थः । प्रथमं सप्तधा विभज्य पुनरेकशः सप्तधा करणमित्यस्यार्थस्य पुराणांतरे स्पष्टमुक्तत्वादिहापि बिभेद च महातेजा रुदंतमपीत्यादिना ध्व

नितत्वाच्चेति बोध्यम् । एवमपर इत्याद्यपि व्याख्येयम् । इंद्रलोकमिति । रुद्रलोकमिति प्रचुरः पाठः । दिव्यवायुः दिवि अंतरिक्षे भव इत्यर्थः ॥ ५ ॥ दिशः पूर्वादिमहादिशः ॥ ६ ॥ त्वत्कृतेन मा रुदो मा रुद इति वचनमूलेन ॥ ७ ॥ यथोक्तं ब्रह्मादिस्थानपालकत्वम् ॥ ८ ॥ मातापुत्रौ दितींद्रौ ॥ ९ ॥ वर्णितेंद्रचरितस्य प्रकृतशेषत्वमाह । एष इति । स एष इत्यन्वयः ॥ १० ॥ एवं प्रागुक्तरीत्या एवंभूते देशे विशालोत्पत्तिप्रकारमाह । इक्ष्वाकोस्त्विति॥ ११ ॥अलमिति।विशालेति कृत्वा आसीदित्यन्वयः॥ १२ ॥कतरोत्र वंश इति प्रश्नस्य उत्तरमाह।विशालस्येत्यादि ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

चत्वारस्तुसुरश्रेष्ठदिशोवैतवशासनात् ॥ संचरिष्यंतिभद्रंतेकालेनहिममात्मजाः ॥ ६ ॥ त्वत्कृतेनैवनाम्नावैमारुताइतिविश्रुताः ॥ तस्यास्तद्वचनं श्रुत्वासहस्राक्षःपुरंदरः ॥७॥ उवाचप्रांजलिर्वाक्यमितीदंवलसूदनः ॥ सर्वमेतद्यथोक्तंतेभविष्यतिनसंशयः ॥८॥ विचरिष्यंतिभद्रंतेदेवरूपास्तवात्मजाः॥ एवंतौनिश्चयंकृत्वामातापुत्रौतपोवने ॥ ९ ॥ जग्मतुस्त्रिदिवंरामकृतार्थावितिनःश्रुतम् ॥ एषदेशःसकाकुत्स्थमहेंद्राध्युषितःपुरा ॥ १० ॥ दितिंयत्रतपःसिद्धामेवंपरिचचारसः ॥ इक्ष्वाकोस्तुनरव्याघ्रपुत्रःपरमधार्मिकः ॥ ११ ॥ अलंवुसायामुत्पन्नोविशालइतिविश्रुतः ॥ तेनचासीदिहस्थानेविशालेतिपुरीकृता ॥ १२ ॥ विशालस्यसुतोरामहेमचंद्रोमहावलः ॥ सुचंद्रइतिविख्यातोहेमचंद्रादनंतरः ॥ १३ ॥ सुचंद्रतनयोरामधूम्राश्वइतिविश्रुतः ॥ धूम्राश्वतनयश्चापिसृंजयःसमपद्यत ॥ १४ ॥ सृंजयस्यसुतःश्रीमान्सहदेवःप्रतापवान् ॥ कुशाश्वःसहदेवस्यपुत्रःपरमधार्मिकः ॥ १५ ॥ कुशाश्वस्यमहातेजाःसोमदत्तःप्रतापवान् ॥ सोमदत्तस्यपुत्रस्तुकाकुत्स्थइतिविश्रुतः ॥ १६ ॥ तस्यपुत्रोमहातेजाःसंप्रत्येषपुरीमिमम् ॥ आवसत्परमप्रख्यःसुमतिर्नामदुर्जयः ॥ १७ ॥ इक्ष्वाकोस्तुप्रसादेनसर्वेवैशालिकानृपाः ॥ दीर्घायुषोमहात्मानोवीर्यवंतःसुधार्मिकाः ॥१८॥ इहाद्यरजनीमेकांसुखंस्वप्स्यामहेवयम् ॥ श्वःप्रभातेनरश्रेष्ठजनकंद्रष्टुमर्हसि ॥१९॥ सुमतिस्तुमहातेजाविश्वामित्रमुपागतम् ॥ श्रुत्वानरवरश्रेष्ठःप्रत्यागच्छन्महायशाः॥२०॥ पूजांचपरमांकृत्वासोपाध्यायःसवांधवः ॥ प्रांजलिःकुशलं पृष्ट्वाविश्वामित्रमथाब्रवीत् ॥२१॥ धन्योस्म्यनुगृहीतोस्मियस्यमेविषयंमुने ॥ संप्राप्तोदर्शनंचैवनास्तिधन्यतरोमम ॥ २२ ॥ इत्यार्षे श्रीम० वा० आ० च० विं०सा०वालकांडे सप्तचत्वारिंशः सर्गः ॥४७॥ ॥ पृष्ट्वातुकुशलंतत्रपरस्परसमागमे॥ कथांतेसुमतिर्वाक्यंव्याजहारमहामुनिम् ॥ १ ॥ इमौकुमारौभद्रंतेदेवतुल्यपराक्रमौ ॥ गजसिंहगतीवीरौशार्दूलवृषभोपमौ ॥ २ ॥ पद्मपत्रविशालाक्षौखड्गतूणधनुर्धरौ ॥ अश्विनाविवरूपेणसमुपस्थितयौवनौ ॥ ३ ॥

इमां पुरीं संप्रति आवसदित्यन्वयः॥ १७ ॥वैशालिकाः विशालायां निवासो येषां ते इत्यर्थः।अनेन त्वत्समानवंश्योयमिति सूचितम्॥ १८ ॥अत एवाह । इहाद्येति ॥ १९ ॥ २० ॥ २१ ॥मम मत्त इत्यर्थः॥ २२ ॥रेखांमानः॥ ॥इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आ०बालकांडे सप्तचत्वारिंशःसर्गः॥ ४७ ॥छ॥पृष्ट्वेति।सुमतिर्नाम विशालराजःमहामुनिं विश्वामित्रं कथांते विश्वामित्रेण कथ्यमानकथांते ॥ १ ॥ गजसिंहगती गजवद्धीरमंदगती सिंहवदप्रतिहतगती । यद्वा प्रभुत्वाद्गजगती रामः । अन्यगतिर्लक्ष्मणः । तथा शार्दूलाकृती रामः । वृषभाकृतिर्लक्ष्मणः ॥ २ ॥ पद्मपत्रविशालाक्षाविति । अनेन भाग्य

संपत्सूचिता । वीरधर्मसूचकं-खङ्गीत्यादि ॥ ३ ॥ यदृच्छया दैववशसंपन्ननिमित्तविशेषेण यया कयाचित्स्वेच्छयेत्यर्थो वा । देवलोकात् गां भुवं प्राप्तौ अवतीर्णौ अमराविव स्थितौ । किमर्थं किं वा प्रयोजनमुद्दिश्य कथम् अतिसुकुमारचरणत्वात्केन प्रकारेण पद्भ्यामिह प्राप्तौ । कस्य वा । सुताविति शेषः ॥४॥ भूषयंतौ । स्वतेजसेति शेषः । प्रमाणं शरीरौन्नत्यादि । इंगितम् आंतराशयबोधकम् । चेष्टितं वचनगमानादि । तैः। तादृशपुरुषांतराभावात्परस्परसदृशौ ॥५॥ आदरातिशयात्पुनः पृच्छति । किमर्थं चेत्यादि । दुर्गमे । कांतारसंबंधात् ॥ ६ ॥ यथावृत्तं न्यवेदयत् दशरथकुमारौ । अस्मद्यज्ञविघ्ननिवारणाय मदाकारणात् मदुपलालनात् । सिद्धाश्रमं प्राप्य तत्र विघ्नकर्तृराक्षसादीन् हत्वा पथि ताटकां च हत्वा जनकदिदृक्षया एतद्देशमागताविति न्यवेदयत् ॥ ७ ॥ परमत्यंतमादरणीयौ प्राप्तौ । अतिथी तौ पूजयामासेत्यन्वयः ॥ ८ ॥ सुमतेरिति । पंचमी । उष्य उषित्वा । आर्षमेतत् ॥ ९ ॥ पूजाप्रकारः साधुसाध्विति शंसनम् ॥ १० ॥ मिथिलोपवने मिथिलासमीपवने । दृश्य दृष्ट्वा । पुराणमि

यदृच्छयेवगांप्राप्तौदेवलोकादिवामरौ ॥ कथंपद्भ्यामिहप्राप्तौकिमर्थंकस्यवामुने ॥ ४ ॥ भूषयंताविमंदेशंचंद्रसूर्याविवांबरम् ॥ परस्परेणसदृशौप्रमाणेंगितचेष्टितैः ॥ ५ ॥ किमर्थंचनरश्रेष्ठौसंप्राप्तौदुर्गमेपथि ॥ वरायुधधरौवीरौश्रोतुमिच्छामितत्त्वतः ॥ ६ ॥ तस्यतद्वचनंश्रुत्वायथावृत्तंन्यवेदयत् ॥ विश्वामित्रवचःश्रुत्वाराजापरमविस्मितः ॥ ७ ॥ अतिथीपरमंप्राप्तौपुत्रौदशरथस्यतौ ॥ पूजयामासविधिवत्सत्कारार्हौमहाबलौ ॥ ८ ॥ ततःपरमसत्कारंसुमतेःप्राप्यराघवौ ॥ उष्यतत्रनिशामेकांजग्मतुर्मिथिलांततः ॥९॥ तांदृष्ट्वामुनयःसर्वेजनकस्यपुरींशुभाम् ॥ साधुसाध्वितिशंसंतोमिथिलांसमपूजयन् ॥ १० ॥ मिथिलोपवनेतत्रआश्रमंदृश्यराघवः ॥ पुराणंनिर्जनंरम्यंपप्रच्छमुनिपुंगवम् ॥ ११ ॥ इदमाश्रमसंकाशंकिंन्विदंमुनिवर्जितम् ॥ श्रोतुमिच्छामिभगवन्कस्यायंपूर्वआश्रमः ॥१२॥ तच्छ्रुत्वाराघवेणोक्तंवाक्यंवाक्यविशारदः ॥ प्रत्युवाचमहातेजाविश्वामित्रोमहामुनिः ॥ १३ ॥ हंततेकथयिष्यामिशृणुतत्त्वेनराघव ॥ यस्यैतदाश्रमपदंशप्तंकोपान्महात्मनः ॥ १४ ॥ गौतमस्यनरश्रेष्ठपूर्वमासीन्महात्मनः ॥ आश्रमोदिव्यसंकाशःसुरैरपिसुपूजितः ॥ १५ ॥ सचात्रतपआतिष्ठदहल्यासहितःपुरा ॥ वर्षपूगान्यनेकानिराजपुत्रमहायशः ॥ १६ ॥ तस्यांतरंविदित्वाचसहस्राक्षःशचीपतिः ॥ मुनिवेषधरोभूत्वाअहल्यामिदमब्रवीत् ॥ १७ ॥ ऋतुकालंप्रतीक्षंतेनार्थिनःसुसमाहिते ॥ संगमंत्वहमिच्छामित्वयासहसुमध्यमे ॥१८॥ मुनिवेषंसहस्राक्षंविज्ञायरघुनंदन ॥ मतिंचकारदुर्मेधादेवराजकुतूहलात् ॥ १९ ॥

त्यादित्रयमाश्रमविशेषणम् ॥ ११ ॥ मुनिराहित्यात् आश्रमवत् अस्याशक्यत्वम् अत एवाश्रमसंकाशम् आश्रमवत् अवभासमानम् अत इदं किं नु । तस्यैव विवरणं-कस्यायं पूर्वः पूर्वस्वभूतः ॥ १२ ॥ १३ ॥ अहल्यानुग्रहे तु कालस्मृतिजसंतोषे हंतेति । यस्यैतदाश्रमपदं भवति महात्मनः कोपात् यथाशप्तं प्राप्तशापं तत् ते कथयिष्यामीत्यन्वयः ॥ १४ ॥ दिव्यसंकाशः। शुभवाश्रमतुल्यः ॥ १५ ॥ अनेकानि वर्षपूगानि अनेकवर्षसमूहान् ॥ १६ ॥ तस्य आश्रमस्य अंतरं मुनिसंनिधानरहितं कालम् । शचीपतिरिति । अनेन शचीतोपि सौंदर्यमहल्यायाः ध्वनितम् । मुनिवेषधरः गौतमवेषधरः । मम रूपं समास्थायेति वक्ष्यमाणत्वात् ॥ १७ ॥ ऋतुकालं शास्त्रोक्तरतिकालम् । अर्थिनः रत्यर्थिनः । सुसमाहितेः संगमोचितरूपप्रसाधनवति अतिसुंदरीति वा । तेन स्वाभिलष्यदिव्यस्त्रीत्वं सूचितम् ॥ १८ ॥ सहस्राक्षं विज्ञाय । ऋतुकालं प्रतीक्षंते नार्थिन इति वचनात् । तपसा चाश्रमवर्तिसर्वप्राणिजातस्य शंकाभावाय गौतमवेषोयमिंद्र इति ज्ञात्वेत्यर्थः ।

देवराजकुतूहलात् समामभिलषतीति कौतुकात् दिव्यरतिकौतुकाच्चेत्यर्थः । दुर्मेधाः अहल्या तेन सह रत्यर्थं मतिं चकारेत्यन्वयः ॥ १९ ॥ कृतार्था तादृशदिव्यपुरुषलाभात्प्राप्ततपःफला ॥ २० ॥ शीघ्रगमने हेतुः मम अहल्यायाः आत्मनः इंद्रस्य च शापतः रक्षणं-तदाह । आत्मानमित्यादि । प्रहसन्निति । विशिष्टस्त्रीचारितेन महासः-रक्षणस्य दुर्लभत्वाद्वा-गौतमतपोभंगस्य स्वेष्टस्य करणेन अग्रिमशापादिभयमल्पमिति वा ॥ २१ ॥ संगम्य । अहल्यया सहेति शेषः ॥ २२ ॥ सः इंद्रः संभ्रमात् गौतमभयात् त्वरन् निश्चक्रामेत्यन्वयः । निर्गमसमये गौतमं प्रति तदागमनं प्रति शंकितश्च । आसीदिति शेषः । अथ निष्क्रमणसमनंतरमेव ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ मम गौतमस्य । कृतवानसि मद्भार्याभोगरूपमकार्यम् । तस्मात् विफलः विगतवृषणः ॥ २७ ॥ २८ ॥ २९ ॥ शापस्वरूपं—वातभक्षेत्यादि । तप्यंती स्वकृताकार्यस्मरणेन पीडिता । पुराणादिप्रसिद्धशिलारूपप्राप्तिशापस्तु कल्पांतरीय इति न विरोधः । अत्र शिला

अथाब्रवीत्सुरश्रेष्ठंकृतार्थेनांतरात्मना ॥ कृतार्थास्मिसुरश्रेष्ठगच्छशीघ्रमितःप्रभो ॥ २० ॥ आत्मानंमांचदेवेशसर्वथारक्षगौतमात् ॥ इंद्रस्तुप्रहसन्वाक्य महल्यामिदमब्रवीत् ॥२१॥ सुश्रोणिपरितुष्टोस्मिगमिष्यामियथागतम् ॥ एवंसंगम्यतुतदानिश्चक्रामोटजात्ततः ॥ २२ ॥ ससंभ्रमात्त्वरन्राामशंकितो गौतमंप्रति ॥ गौतमंसददर्शाथप्रविशंतंमहामुनिम् ॥ २३ ॥ देवदानवदुर्धर्षंतपोबलसमन्वितम् ॥ तीर्थोदकपरिक्लिन्नंदीप्यमानमिवानलम् ॥ २४ ॥ गृहीतसमिधंतत्रसकुशंमुनिपुंगवम् ॥ दृष्ट्वासुरपतिस्त्रस्तोविषण्णवदनोभवत् ॥ २५ ॥ अथदृष्ट्वासहस्राक्षंमुनिवेषधरंमुनिः ॥ दुर्वृत्तंवृत्तसंपन्नोरोषा द्वचनमब्रवीत् ॥२६॥ ममरूपंसमास्थायकृतवानसिदुर्मते ॥ अकर्तव्यमिदंयस्माद्विफलस्त्वंभविष्यसि ॥ २७ ॥ गौतमेनैवमुक्तस्यसुरोषेणमहात्मना ॥ पेततुर्वृषणौभूमौसहस्राक्षस्यतत्क्षणात् ॥ २८ ॥ तथाशप्त्वाचवैशक्रंभार्यामपिचशप्तवान् ॥ इहवर्षसहस्राणिबहूनिनिवसिष्यसि ॥ २९ ॥ वातभक्षानि राहारातप्यंतीभस्मशायिनी ॥ अदृश्यासर्वभूतानामाश्रमेऽस्मिन्वसिष्यसि ॥ ३० ॥ ( यदा[1]त्वेतद्वनंघोरंरामोदशरथात्मजः ॥ आगमिष्यतिदुर्धर्षस्तदापू ताभविष्यसि ॥ ३१ ॥

रूपत्वे तात्पर्यकल्पने वातभक्षेत्यनेन विरोधः स्पष्ट एवेति केचित् । वस्तुतस्तु अदृश्येत्यस्य स्वरूपेणादृश्या शिलाप्रतिमारूपेण सर्वदृश्येत्यर्थः । न च तावता चैतन्यहानिरिति क्षुधादिपीडा स्यादेवेत्यतो वातभक्षा तदतिरिक्ताहाराभावाच्च निराहारा तप्यंती । स्वकर्मणेति शेषः । तादृश्यपि भस्मशायिनी न तु स्थिता इति न कश्चिद्विरोधः । इंद्रशापोप्युपलक्षणमत्र अनंतभगवतः शापस्य । तदुक्तं पाद्मे शापदग्धा पुरा भर्त्रा राम शक्रापराधतः ॥ अहल्याख्या शिला जज्ञे शतलिंगः कृतः स्वराडिति । शिला तत्प्रतिमाकारा । शतशब्दोनंतवाची । लिंगशब्देन भगाकारं चिह्नम् । स्वराडिंद्रः ॥ ३० ॥ शापांतमाह । यदेति । घोरमिति । अनेन मुनिराहित्यसूचनम् । रामः यदा आगमिष्यति तदा आगमनकाले जायमानचरणविन्यासेन अनायासतः तत्पादस्पर्शात् पूता व्यभिचारकृतपापनाशेन पवित्रा

१ इमौ द्वौ श्लोकौ प्रक्षिप्ताविति कतककृतः ।

भविष्यसि पावित्र्येण च तपस्विनां दृश्या भविष्यसि ॥ ३१ ॥ ततो मत्सकाशं मत्सान्निध्यं प्राप्ता स्वं वपुः पूर्ववत्सर्वदृश्यं भस्मना अनावृतं धारयिष्यसि प्राप्स्यसीत्यर्थः । इतरत्स्पष्टम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ कतककारस्तु यदा त्वित्यादि शापांतप्रतिपादकं स्वं वपुर्धारयिष्यसीत्यंतं श्लोकद्वयं प्रक्षिप्तमित्याह । एवमुक्त्वेत्यादि सार्धश्लोकस्तु प्रामाणिक एव । एवं च द्वात्रिंशत् श्लोका एवात्रेत्याहुः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ ॥ छ ॥ ॥ धर्मधुरंधरस्यापि शक्रस्य अधर्मे प्रवृत्तौ बीजं दर्शयितुमाह । अफल इति । अवृषण इत्यर्थः । त्रस्तेति । त्रासेन स्वकारणं दैन्यं व्यजते ॥ १ ॥ सुरकार्यमिति । अन्यथा ह्युग्रतपसा सकलदेवस्थानापहारः तेन कृतः स्यादिति भावः ॥ २ ॥ सा अहल्या दुष्ट चारित्रेति निराकृता उक्तशापपूर्वं त्यक्ता । एवमपि सुरकार्यनिष्पत्तिः कथं तत्राह । शापेति । स्वस्मिन् गौतमकर्तृकशापमोक्षणेन अस्य तपः मया हृतम् । महतः शापेन विना न तपोव्यय इति भावः ।

तस्यातिथ्येनदुर्वृत्तेलोभमोहविवर्जिता ॥ मत्सकाशंमुदायुक्तास्वंवपुर्धारयिष्यसि ॥ ३२ ॥ ) एवमुक्त्वामहातेजागौतमोदुष्टचारिणीम् ॥ इममाश्रममुत्सृज्यसिद्धचारणसेविते ॥३३॥ हिमवच्छिखरेरम्येतपस्तेपेमहातपाः(॥३४॥) ॥३२॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे अष्टचत्वारिंशःसर्गः ॥४८॥ ॥छ॥ अफलस्तुततःशक्रोदेवानग्निपुरोगमान् ॥ अब्रवीत्त्रस्तनयनःसिद्धगंधर्वचारणान् ॥१॥ कुर्वतातपसोविघ्नंगौतमस्यमहात्मनः ॥ क्रोधमुत्पाद्यहिमयासुरकार्यमिदंकृतम् ॥ २ ॥ अफलोस्मिकृतस्तेनक्रोधात्साचनिराकृता ॥ शापमोक्षेणमहतातपोस्यापहृतंमया ॥ ३ ॥ तन्मांसुरवराःसर्वेसर्षिसंघाःसचारणाः ॥ सुरकार्यकरंयूयंसफलंकर्तुमर्हथ ॥ ४ ॥ शतक्रतोर्वचःश्रुत्वादेवाःसाग्निपुरोगमाः ॥ पितृदेवानुपेत्याहुःसर्वेसहमरुद्गणैः ॥ ५ ॥ अयंमेषःसवृषणःशक्रोह्यवृषणःकृतः ॥ मेषस्यवृषणौगृह्यशक्रायाशुप्रयच्छत ॥ ६ ॥ अफलस्तुकृतोमेषःपरांतुष्टिंप्रदास्यति ॥ भवतांहर्षणार्थंचयेचदास्यंतिमानवाः ॥ अक्षयंहिफलंतेषांयूयंदास्यथपुष्कलम् ॥ ७ ॥ अग्नेस्तुवचनंश्रुत्वापितृदेवाःसमागताः ॥ उत्पाट्यमेषवृषणौसहस्राक्षेन्यवेशयन् ॥ ८ ॥ तदाप्रभृतिकाकुत्स्थपितृदेवाःसमागताः ॥ अफलान्भुंजतेमेषान्फलैस्तेषामयोजयन् ॥९॥ इंद्रस्तुमेषवृषणस्तदाप्रभृतिराघव ॥ गौतमस्यप्रभावेणतपसाचमहात्मनः ॥ १० ॥ तदागच्छमहातेजआश्रमंपुण्यकर्मणः ॥ तारयैनांमहाभागामहल्यांदेवरूपिणीम् ॥ ११ ॥

तपोव्ययसंपादकक्रोधोत्पादनमेव कार्यं मया कृतमिति तात्पर्यम् ॥ ३ ॥ सफलं मां सवृषणम् । सर्वे इति । अस्य वारद्वयपाठे हे सर्वे सुरवराः सर्वे यूयमित्यन्वयो ज्ञेयः । परत्र यूयमित्येव पाठः प्रायेण ॥ ४ ॥ पितृदेवाः कव्यवाहनादयः तान् उपेत्य हव्यवाहनाग्निमुखेनाहुः । अग्नेस्तु वचनं श्रुत्वेति वक्ष्यमाणत्वात् ॥५॥ अयं मेषः यो भवतां हविष्ट्वेन कल्पितः । गृह्य गृहीत्वा ॥ ६ ॥ अफलस्त्विति ॥ नन्विदमयुक्तम् । न हि मेषा अवृषणा दृश्यंत इति चेन्न ॥ भवदुद्देशेन कृतो हविष्ट्वेन कल्पितो यः अफलः षंढो मेषः—यद्वा वृषणभिन्नो यो मेषो मेषावयवो भवद्धविष्ट्वेन कल्पितः—स भवतां परां तुष्टिं दास्यतीत्यन्वयात् । ये वा अफलं मेषं भवतां हर्षणार्थं तोषाय भवद्भ्यो दास्यंति-तेषामक्षयं फलं यूयं दास्यथेत्यन्वयः ॥ ७ ॥ समागताः मिलिताः ॥ ८ ॥ अफलान् षंडान् तदंशरहितान्वा । यतः तेषां फलैः फलाभ्यां वृषणाभ्यामिंद्रमयोजयन् ॥ ९ ॥ तदाप्रभृति ततो हेतोः इंद्रो मेषवृषण इत्यन्वयः । तपसा प्रभावेण तपःकृतप्रभावेण च स्वापचारेण च ॥१०॥ महातेज इति । रामसंबो

धनम् । पुण्यकर्मणः गौतमस्य ॥ ननु ताटकयेव घोररूपया अहल्ययावष्टब्धमाश्रमं कथं गच्छेयमत आह । देवरूपिणीमिति । शापस्यैतदवधिकत्वात् अद्य त्वत्पादस्पर्शनान्मुक्तशापतया देवरूपिणीमित्यर्थः । एनां तारय भर्तृप्रत्यापत्तिफलकमातिथ्यं गृहीत्वा भर्तृप्रापणेनैनामनुगृहाण ॥ ११ ॥ १२ ॥ ददर्शेति । आश्रमप्रवेशकाले अनायासतः स्वचरणस्पर्शाद्व्यभिचारकृतपापनाशेन शापनिवृत्त्या शापवशात्सुरासुरैः समागम्य मिलित्वापि सर्वलोकैर्दुर्निरीक्ष्यां यथावत् देवरूपिणीमिति विश्वामित्रो यथा ददर्शेत्यर्थः । तदुक्तं-तपसा द्योतितप्रभामिति । एवं दर्शनं तत्समये रामलक्ष्मणविश्वामित्राणामेव । सर्वदृश्यत्वं तु भगवदातिथ्यकार्यमिति बोध्यम् ॥ १३ ॥ प्रयत्नादित्यादिना दिव्यरूपत्वमुक्तम् । रामादेरपि दर्शनं नात्यंतस्पष्टतया-किं त्वेवंरूपेण । भर्तृसंतोषकरस्य भर्तृसान्निध्यस्य शापांतकरणस्याभावादित्याह । धूमेनेति । धूमेनाभिपरीतानि व्याप्तानि अंगानि यस्याः सा ॥ १४ ॥ उपमात्रयं भस्मावृतत्वेन । अंभसः लक्षणया तद्युक्तमेघस्य मध्यस्थां रविप्रभामिव ददर्श। दुराधर्षा स्प्रष्टुमशक्याम् ॥ १५ ॥ तथादर्शने हेतुमाह । सा हीति । त्रयाणामपि लोकानां दुर्निरीक्ष्यत्वशापवशाद्रामादीनामप्येवं दर्शनविषया जाता । अन्येषां त्वदृश्यैव । रामादीनां तु दुःखदृश्येत्यर्थः .॥ १६ ॥ शापस्यांतं तदंतस्यावधिकालं प्राप्य तेषां रामादीनां दर्शनं पूर्वोक्तप्रकारेण दर्शनविषयत्वं प्राप्तेत्यर्थः । तथा च पाद्मे-गच्छतस्तस्य रामस्य पादस्पर्शान्महाशिला ॥ काचिद्योषाभवत्सो

**विश्वामित्रवचःश्रुत्वाराघवःसहलक्ष्मणः ॥ विश्वामित्रंपुरस्कृत्यआश्रमंप्रविवेशह ॥ १२ ॥ ददर्शचमहाभागांतपसाद्योतितप्रभाम् ॥ लोकैरपिसमागम्यदुर्निरीक्ष्यांसुरासुरैः ॥ १३ ॥ प्रयत्नान्निर्मितांधात्रादिव्यांमायामयीमिव ॥ धूमेनाभिपरीतांगींदीप्तामग्निशिखामिव ॥ १४ ॥ सतुषारावृतांसाभ्रांपूर्णचंद्रप्रभामिव ॥ मध्येंभसोदुराधर्षांदीप्तांसूर्यप्रभामिव ॥१५॥ साहिगौतमवाक्येनदुर्निरीक्ष्यावभूवह ॥ त्रयाणामपिलोकानांयावद्रामस्यदर्शनम् ॥ १६ ॥ शापस्यांतमुपागम्यतेषांदर्शनमागता ॥ राघवौतुतदातस्याःपादौजगृहतुर्मुदा ॥ १७ ॥ स्मरंतीगौतमवचःप्रतिजग्राहसाहितौ ॥ पाद्यमर्घ्यंतथातिथ्यंचकारसुसमाहिता ॥ १८ ॥ प्रतिजग्राहकाकुत्स्थोविधिदृष्टेनकर्मणा ॥ पुष्पवृष्टिर्महत्यासीद्देवदुंदुभिनिःस्वनैः ॥ १९ ॥ गंधर्वाप्सरसांचैवमहानासीत्समुत्सवः ॥ साधुसाध्वितिदेवास्तामहल्यांसमपूजयन् ॥ २० ॥**

पि विस्मितो मुनिरब्रवीत् । शिला तत्प्रतिमाकारा । सोपि रामः विस्मितः सन्नेवासीत् । तथाभूतं तं दृष्ट्वा मुनिरवददित्यर्थः-शापदग्धा पुरा भर्त्रा राम शक्रापराधतः ॥ अहल्याख्या शिला जज्ञे शतलिंगः कृतः स्वराट् ॥ त्वदंघ्रिस्पर्शनात्तस्यै शापांतं प्राह गौतमः ॥ तस्मादियं ते पादाब्जस्पर्शाच्छुद्धाभवत्प्रभो इति ॥ यदुद्धारार्थं त्वं मयेहानीतः सा । एषैवेति शेषः ॥ एवं मदुक्तरीत्या सर्वेषामविरोधे संभवति कल्पांतरपरत्वेनाविरोधवर्णनं कतकाद्युक्तं चिंत्यम् ॥ यदपि तेन धूमेनेत्यादिसार्धश्लोके तामेव दुर्निरीक्ष्यामिति शेषं पूरयित्वा दुर्निरीक्ष्यत्वे हेतुमाह । सा हीति । तेषां दर्शनमिति । अत्र तेषां त्रयाणां लोकानामिति व्याख्यातं-तदपि क्लिष्टम् ॥ तदा स्वपदस्पर्शमात्रेण शिलारूपतापरित्यागे गौतमवचः स्मरंती मदाश्रमप्राप्तराघवपूजया पुनर्भर्तृसंबंध इत्येवं तद्वचः स्मरंतीत्यर्थः । स्वशिलारूपतापरित्यागमात्रेण तु तस्मिन् रामत्वनिश्चयोस्याः । तौ रामपादौ प्रतिजग्राह स्पृष्ट्वा प्रणनाम॥ यत्तु तौ रामलक्ष्मणौ प्रतिजग्राह पूज्यत्वबुद्धिमकरोदिति-तन्न ॥ अग्रे काकुत्स्थ इत्येकवचनप्रयोगात् ॥ सुसमाहिता अप्रमत्ता ॥ १७ ॥ १८ ॥ काकुत्स्थः रामः । तस्यैव मुख्यतया पूजनात् ॥ देवदुंदुभिनिःस्वनैः सह पुष्पवृष्टिरासीत् । रामस्य अहल्यायाश्चेत्यर्थः ॥ १९ ॥ रामपूजया निष्पापत्वादह

१ कपुस्तकादत्र सर्गे अर्धश्लोकोऽधिकोऽत्र ।

ल्यायाः पूजा ॥ २० ॥ तपोबलविशुद्धांगीं तद्बललब्धरामस्पर्शेन शुद्धांगीम् । अत एव गौतमस्य वशां तद्गतचित्ताम् । अतएव यथापूर्वं परत्र काले शरीरेणापि तदनुगाम् ॥ अहल्यासहितःसुखीति । अनेन योगबलाद्रामागमनं ज्ञात्वा तद्बलादेव झटिति तदाश्रममाप्तिर्गौतमस्येति बोध्यम् ॥ २१ ॥ २२ ॥ २३ ॥ खेंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वा० आ० बा० एकोनपंचाशः सर्गः ॥ ४९ ॥ प्रागुत्तरां ऐशानीम् । ततः गौतमाश्रमात् ॥ १ ॥ २ ॥ बहूनीति । दृश्यंत इति शेषः ॥ ३ ॥ शकटीशतम् अग्निहोत्रसंभारवाहकम् । ऋषिवाटाः यज्ञार्थमागतानां साग्निहोत्रऋषीणां निवासाः । एवं नैविड्यात्स्वावासदेशविचारः–देश इत्यादि । देशः निवासस्थानम् । विधीयतां विचार्यताम् ॥ ४ ॥ विविक्ते सलिलान्वित इति । अनेनानुष्ठानसौकर्यम् ॥ ५ ॥ ६ ॥

तपोबलविशुद्धांगींगौतमस्यवशानुगाम् ॥ गौतमोपिमहातेजाअहल्यासहितःसुखी ॥ २१॥ रामंसंपूज्यविधिवत्तपस्तेपेमहातपाः ॥ रामोपिपरमांपूजांगौतमस्यमहामुनेः ॥ २२ ॥ सकाशाद्विधिवत्प्राप्यजगाममिथिलांततः ॥ २३ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं०सा० बालकांडे एकोनपंचाशः सर्गः ॥ ४९ ॥ ततःप्रागुत्तरांगत्वारामःसौमित्रिणासह ॥ विश्वामित्रंपुरस्कृत्ययज्ञवाटमुपागमत् ॥ १ ॥ रामस्तुमुनिशार्दूलमुवाचसहलक्ष्मणः ॥ साध्वीयज्ञसमृद्धिर्हिजनकस्यमहात्मनः ॥ २ ॥ बहूनीहसहस्राणिनानादेशनिवासिनाम् ॥ ब्राह्मणानांमहाभागवेदाध्ययनशालिनाम् ॥३॥ ऋषिवाटाश्चदृश्यंतेशकटीशतसंकुलाः ॥ देशोविधीयतांब्रह्मन्यत्रवत्स्यामहेवयम् ॥ ४ ॥ रामस्यवचनंश्रुत्वाविश्वामित्रोमहामुनिः ॥ निवासमकरोद्देशेविविक्तेसलिलान्विते ॥ ५ ॥ विश्वामित्रमनुप्राप्तंश्रुत्वानृपवरस्तदा ॥ शतानंदंपुरस्कृत्यपुरोहितमनिंदितः ॥ ६ ॥ ऋत्विजोपिमहात्मानस्त्वर्घ्यमादायसत्वरम् ॥ प्रत्युज्जगामसहसाविनयेनसमन्वितः ॥ ७ ॥ विश्वामित्रायधर्मेणददौधर्मपुरस्कृतम् ॥ प्रतिगृह्यतुतांपूजांजनकस्यमहात्मनः ॥ ८ ॥ पप्रच्छकुशलंराज्ञोयज्ञस्यचनिरामयम् ॥ सतांश्चाथमुनीन्पृष्ट्वासोपाध्यायपुरोधसः ॥ ९ ॥ यथार्हमृषिभिःसर्वैःसमागच्छत्प्रहृष्टवत् ॥ अथराजामुनिश्रेष्ठंकृतांजलिरभाषत ॥ १० ॥ आसनेभगवानास्तांसहैभिर्मुनिपुंगवैः ॥ जनकस्यवचःश्रुत्वानिषसादमहामुनिः ॥ ११ ॥ पुरोधाऋत्विजश्चैवराजाचसहमंत्रिभिः ॥ आसनेषुयथान्यायमुपविष्टाःसमंततः ॥ १२ ॥ दृष्ट्वासनृपतिस्तत्रविश्वामित्रमथाब्रवीत् ॥ अद्ययज्ञसमृद्धिर्मेसफलादैवतैःकृता ॥ १३ ॥ अद्ययज्ञफलंप्राप्तंभगवद्दर्शनान्मया ॥ धन्योस्म्यनुगृहीतोस्मियस्यमेमुनिपुंगव ॥ १४ ॥ यज्ञोपसदनंब्रह्मन्प्राप्तोऽसिमुनिभिःसह ॥ द्वादशाहंतुब्रह्मर्षेदीक्षामाहुर्मनीषिणः ॥ १५ ॥

ऋत्विजोपीति । अत्र पुरस्कृत्येत्यनुकर्षः ॥ ७ ॥ धर्मेण शास्त्रमार्गेण । ददौ । अर्घ्यमिति शेषः । धर्मपुरस्कृतमिति । अर्घ्यविशेषणम् । महाजं वा महोक्षं वा श्रोत्रियायोपकल्पयेदिति शास्त्रोक्तेन धर्मसाधनेन पुरस्कृतम् । तत्सहितमिति यावत् ॥ ८ ॥ राज्ञः कुशलं निरामयम् । यज्ञस्य निरामयं कुशलम् । निर्विघ्नत्वमविकलत्वं वा यज्ञस्य कुशलम् । सः विश्वामित्रः । तान् अर्घ्यदातॄन् । पृष्ट्वा कुशलमिति शेषः ॥ ९ ॥ यथार्हं यथान्यायम् । प्रहृष्टवत् महर्षवत् तोषसहितं यथा भवति तथेत्यर्थः । समागच्छत् संतोषसहितमालिंगनं यथा भवति तथा सर्वैः संगतो बभूवेत्यर्थः ॥ १० ॥ ॥ ११ ॥ १२ ॥ यज्ञसमृद्धिः अंगवैकल्यराहित्यं साद्गुण्यं च । अत एव सफला कृता । इष्टिरिति शेषः ॥ १३ ॥ १४ ॥ तत्रहेतुमाह । यज्ञोपसदनमिति । यज्ञस्थानम् । द्वादशाहं द्वादश दिनानि

दीक्षां कर्तव्यत्वेनाहुः।दीक्षायास्तावंति दिनानि अवशिष्टानि ऋत्विजः आहुः॥१५॥विश्वामित्रस्य योगेन सर्वसामर्थ्यादाह। देवान् द्रष्टुमर्हसीति॥१६॥इमौ कुमारावित्यादि।व्याख्यातमायम्॥१७॥ १८ ॥ पद्भ्यां वाहनरहिताभ्यां पद्मपत्रकोमलत्वात्कथमेतद्दूरं प्राप्ताविति विस्मयः। किमर्थमिति प्रयोजनप्रश्नः। कस्य वेति। पुत्राविति शेषः। उत्तरश्लोको यदि प्रमाणं तर्ह्यस्यैव विवरणं बोध्यम् ॥ के चित्तु कस्येत्यस्य कार्यं साधयितुमिति शेषमाहुः—तत्प्रयोजनप्रश्नेनैव गतार्थम् ॥ १९ ॥ २० ॥ २१ ॥ निवेदयदिति पाठेऽडभावः आर्षः ॥ २२ ॥ तत्र अव्यग्रम् आगमनं रक्षःसमाक्रांतेपि मार्गे भयरहितमागमनम् ॥ २३ ॥ महाधनुषि जिज्ञासां तद्विषयां रामस्य दिदृक्षाम्। ज्ञानमिह दर्शनरूपम्। यद्वा धनुर्निष्ठसारजिज्ञासां तथा दृष्टस्य तस्य सज्जीकरणादिकं च कर्तुमागमनमित्येतत्सर्वं निवेद्य वि

ततोभागार्थिनोदेवान्द्रष्टुमर्हसिकौशिक ॥ इत्युक्त्वामुनिशार्दूलंप्रहृष्टवदनस्तदा ॥ १६ ॥ पुनस्तंपरिपप्रच्छप्रांजलिःप्रयतोनृपः ॥ इमौकुमारौभद्रंतेदेवतुल्यपराक्रमौ ॥ १७ ॥ गजतुल्यगतीवीरौशार्दूलवृषभोपमौ ॥ अश्विनाविवरूपेणसमुपस्थितयौवनौ ॥ १८ ॥ यदृच्छयैवगांप्राप्तौदेवलोकादिवामरौ ॥ कथंपद्भ्यामिहप्राप्तौकिमर्थंकस्यवामुने ॥ १९ ॥ (वरायुधधरौवीरौकस्यपुत्रौमहामुने ॥ भूषयंताविमंदेशंचंद्रसूर्याविवांबरम् ॥२०॥) परस्परस्यसदृशौप्रमाणेंगितचेष्टितैः ॥ काकपक्षधरौवीरौश्रोतुमिच्छामितत्त्वतः ॥ २१ ॥ तस्यतद्वचनंश्रुत्वाजनकस्यमहात्मनः ॥ न्यवेदयदमेयात्मापुत्रौदशरथस्यतौ ॥ २२ ॥ सिद्धाश्रमनिवासंचराक्षसानांवधंतथा ॥ तत्रागमनमव्यग्रंविशालायाश्चदर्शनम् ॥ २३ ॥ अहल्यादर्शनंचैवगौतमेनसमागमम् ॥ महाधनुषिजिज्ञासांकर्तुमागमनंतथा ॥ २४ ॥ एतत्सर्वंमहातेजाजनकायमहात्मने ॥ निवेद्यविररामाथविश्वामित्रोमहामुनिः (॥ २५ ॥) ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये च० विं० सा० बालकांडे पंचाशःसर्गः ॥ ५० ॥ तस्यतद्वचनंश्रुत्वाविश्वामित्रस्यधीमतः ॥ हृष्टरोमामहातेजाःशतानंदोमहातपाः ॥ १ ॥ गौतमस्यसुतोज्येष्ठस्तपसाद्योतितप्रभः ॥ रामसंदर्शनादेवपरंविस्मयमागतः ॥ २ ॥ एतौनिषण्णौसंप्रेक्ष्यशतानंदोनृपात्मजौ ॥ सुखासीनौमुनिश्रेष्ठंविश्वामित्रमथाब्रवीत् ॥ ३ ॥ अपितेमुनिशार्दूलममामातायशस्विनी ॥ दर्शिताराजपुत्रायतपोदीर्घमुपागता ॥ ४ ॥ अपिरामेमहातेजाममामातायशस्विनी ॥ वन्यैरुपाहरत्पूजांपूजार्हेसर्वदेहिनाम् ॥ ५ ॥ अपिरामायकथितंयद्वृत्तंतत्पुरातनम् ॥ ममामातुर्महातेजोदेवेनदुरनुष्ठितम् ॥ ६ ॥ अपिकौशिकभद्रंतेगुरुणाममसंगता ॥ ममामातामुनिश्रेष्ठरामसंदर्शनादितः ॥ ७ ॥

रराम। तदेति पाठेऽर्थश्चित्यः ॥ २४ ॥ २५ ॥ मैखमानः ॥ ॥ इति श्रीरामाभिरामीये श्रीरा० रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे पंचाशः सर्गः ॥ ५० ॥ ॥ छ ॥ तस्येति। हृष्टरोमा स्वमातुः शापोद्धारश्रवणजसंतोषेण जातरोमांचः ॥ १ ॥ परं विस्मयमिति। भगवद्दर्शनस्यान्यासुलभत्वात् ॥ २ ॥ निषण्णौ आसने ॥ ३ ॥ उक्तमप्यर्थमुत्कंठातिशयेन पुनः पृच्छति दार्ढ्याय। अपि ते इति। अपिः प्रश्ने। ते त्वया ॥ ४ ॥ रामे रामविषये। पूजार्हे इति। रामविशेषणम् ॥ ५ ॥ देवेन इंद्रेण दुरनुष्ठितं गौतमवेशधारणपूर्वकं तत्कर्तृकदुरनुष्ठानरूपं मातुर्यद्वृत्तं चरितं पुरातनं तद्रामाय कथितमित्यन्वयः। महातेज इति। विश्वामित्रसंबोधनम् ॥ ६ ॥ मम गुरुणा मम मातेत्यन्वयः। अत्र वारद्वयं ममेति प्रयोगो हर्षातिशयात्। रामसंदर्शनादित इति। अस्य गतशापेति

---

१ कुण्डलीस्थोयं श्लोकः प्रक्षिप्त इति ध्वनितं तिलके। २ कपुस्तकादर्धश्लोकोऽधिकोऽत्र।

शेषः । आदिना पूजापादस्पर्शौ ॥ ७ ॥ महातेजाः रामः मद्गुरोः सकाशात् पूजां प्राप्य इह यज्ञभूमौ आगत इति पृष्टस्यैवार्थस्य भंग्यंतरेण प्रश्नः ॥ ८ ॥ शांतेन मनसा उपलक्षितो मे गुरुः इह आगतेन गौतमाश्रमे आगतेन गौतमपूजितेन रामेण अभिवादितः न तु मन्मातृदोषात्तिरस्कृतः इति प्रश्नांतरम् । पूजांगीकारवंदने अतिरस्कारचिह्नमिति भावः ॥ ९ ॥ १० ॥ यत्कर्तव्यं तन्ना तिक्रांतं न विस्मृतं किं तु मया कृतमेवेत्यर्थः । भार्गवो जमदग्निः। तत्कोपहता रेणुका परशुराममाता यथा जमदग्निना संगता तद्वदित्यर्थः ॥ ११ ॥ १२ ॥ दिष्ट्या भाग्येन ॥१३॥ विश्वामित्रयत्नत एव तेन सह प्राप्तिः । तत एव च मातुः शापोद्धार इति तं स्तौति । अचिंत्येत्यादिना । मनसापि अन्येन अशक्यचिंतनमातिसृष्ट्यादिकर्ता । परमां गतिं जगतः परमहितमदम् ॥ अन्ये तव मम चेत्याहुः॥ १४॥

अपिमेगुरुणारामःपूजितःकुशिकात्मज ॥ इहागतोमहातेजाःपूजांप्राप्यमहात्मनः ॥ ८ ॥ अपिशांतेनमनसागुरुर्मेकुशिकात्मज ॥ इहागतेनरामेणपूजिते नाभिवादितः ॥ ९ ॥ तच्छ्रुत्वावचनंतस्यविश्वामित्रोमहामुनिः ॥ प्रत्युवाचशतानंदंवाक्यज्ञोवाक्यकोविदम् ॥ १० ॥ नातिक्रांतंमुनिश्रेष्ठयत्कर्तव्यंकृतं मया ॥ संगतामुनिनापत्नीभार्गवेणेवरेणुका ॥ ११ ॥ तच्छ्रुत्वावचनंतस्यविश्वामित्रस्यधीमतः ॥ शतानंदोमहातेजारामंवचनमब्रवीत् ॥ १२ ॥ स्वागतंतेनरश्रेष्ठदिष्ट्याप्राप्तोसिराघव ॥ विश्वामित्रंपुरस्कृत्यमहर्षिमपराजितम् ॥ १३ ॥ अचिंत्यकर्मातपसाब्रह्मर्षिरमितप्रभः ॥ विश्वामित्रोमहातेजावे त्स्येनंपरमांगतिम् ॥ १४ ॥ नास्तिधन्यतरोरामत्वत्तोन्योभुविकश्चन ॥ गोप्ताकुशिकपुत्रस्तेयेनतप्तंमहत्तपः ॥१५॥ श्रूयतांचाभिधास्यामिकौशिकस्य महात्मनः ॥ यथाबलंयथातत्त्वंतन्मेनिगदतःशृणु ॥ १६ ॥ राजासीदेषधर्मात्मादीर्घकालमरिंदमः ॥ धर्मज्ञःकृतविद्यश्चप्रजानांचहितेरतः ॥ १७ ॥ प्रजापतिसुतस्त्वासीत्कुशोनाममहीपतिः ॥ कुशस्यपुत्रोबलवान्कुशनाभःसुधार्मिकः ॥ १८ ॥ कुशनाभसुतस्त्वासीद्गाधिरित्येवविश्रुतः ॥ गाधेःपुत्रो महातेजाविश्वामित्रोमहामुनिः ॥ १९ ॥ विश्वामित्रोमहातेजाःपालयामासमेदिनीम् ॥ बहुवर्षसहस्राणिराजाराज्यमकारयत् ॥ २० ॥ कदाचित्तुमहाते जायोजयित्वावरूथिनीम् ॥ अक्षौहिणीपरिवृतःपरिचक्राममेदिनीम् ॥२१॥ नगराणिचराष्ट्राणिसरितश्चमहागिरीन् ॥ आश्रमान्क्रमशोराजाविचरन्नाजगा मह ॥ २२ ॥ वसिष्ठस्याश्रमपदंनानापुष्पलताद्रुमम् ॥ नानामृगगणाकीर्णंसिद्धचारणसेवितम् ॥ २३ ॥ देवदानवगंधर्वैःकिन्नरैरुपशोभितम् ॥ प्रशां तहरिणाकीर्णंद्विजसंघनिषेवितम् ॥ २४ ॥ ब्रह्मर्षिगणसंकीर्णंदेवर्षिगणसेवितम् ॥ तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५ ॥ सततंसंकुलंश्री मद्ब्रह्मकल्पैर्महात्मभिः ॥ अब्भक्षैर्वायुभक्षैश्चशीर्णपर्णाशनैस्तथा ॥ २६ ॥

गोप्ता अन्नदानादिना ॥ १५ ॥ बलं तपोबलं यथा यादृशं तत्त्वं ब्रह्मर्षित्वं च यथा तच्छृणिवित्यर्थः । वृत्तमिति क्वचित्पाठः । वृत्तं चरितम् ॥ १६ ॥ १७ ॥ स राजा कस्य पुत्रस्तत्राह । प्रजापतीत्यादि ॥ १८ ॥ १९ ॥ अकारयत् । स्वार्थे णिच् ॥ २० ॥ वरूथिनीं चतुरंगबलम् । योजयित्वा समुपस्थाप्य तद्रूपाक्षौहिणीसंख्यसेनापरिवृतो भूत्वा ॥ २१ ॥२२॥ २३ ॥ तपोतिशयात्प्रशांतहरिणत्वम्॥२४॥ ज्ञानमात्राधिकृताः नारदाद्याः देवलोकसंचारिणो देवर्षयः । ज्ञानकर्मोभयाधिकृताः ब्रह्मर्षयः भूप्रतिष्ठाः । अग्नितुल्यैर्ऋषिभिः संकुलं व्याप्तमित्यन्वयः ॥ तथा ब्रह्मकल्पैः चतुर्मुखतुल्यैः । तस्यैव सहज

तपोवैभवात् । अब्भक्षैः तन्मात्रभक्षैः संकुलम् ॥ २५ ॥ २६ ॥ ब्रह्मरोमनखजाः वालखिल्याः वैखानसाश्च ये नखास्ते वैखानसाः ये वालास्ते वालखिल्या इति श्रुतेरिति कतकः ॥ परमकल्याण स्वभावाद्ब्रह्मलोकोपमा आश्रमस्य ॥ २७ ॥ २८ ॥ जयतां शूराणाम् ॥ २९ ॥ धर्मात्मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आ० बा० एकपंचाशः सर्गः ॥५१॥ ॥ छ ॥ ॥ वसिष्ठं प्रणतः वसिष्ठेन स्वागतमित्युक्तश्चेति योजना ॥ १ ॥ व्यादिदेश अदापयत् ॥ २ ॥ फलमूलमिति । जातित्वादेकवत्त्वम् ॥ ३ ॥ वनस्पतिशब्देन वृक्षमात्रं न तु विना पुष्प फलवंत एव । तद्विषयेपि कुशलं पर्यपृच्छत । सर्वत्र तत्पृष्टसर्वविषये ॥४॥ ५ ॥ जपतां तपस्विनाम् ॥ ६॥ कच्चिदिति । प्रश्ने । हे धार्मिक धर्मेण तदनुष्ठानेन प्रजाः रंजयन् । राजवृत्तेन—न्यायेनार्जन

फलमूलाशनैर्दान्तैर्जितदोषैर्जितेंद्रियैः ॥ ऋषिभिर्वालखिल्यैश्चजपहोमपरायणैः ॥२७॥ अन्यैर्वैखानसैश्चैवसमंतादुपशोभितम् ॥ वसिष्ठस्याश्रमपदंब्रह्मलोकमिवापरम् ॥ २८ ॥ ददर्शजयतांश्रेष्ठोविश्वामित्रोमहाबलः ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं० सा० बालकांडे एकपंचाशः सर्गः ॥ ५१ ॥ तंदृष्ट्वापरमप्रीतोविश्वामित्रोमहाबलः ॥ प्रणतोविनयाद्वीरोवसिष्ठंजपतांवरम् ॥ १ ॥ स्वागतंतववचेत्युक्तोवसिष्ठेनमहात्मना ॥ आसनंचास्यभगवान्वसिष्ठोव्यादिदेशह ॥ २ ॥ उपविष्टायचतदाविश्वामित्रायधीमते ॥ यथान्यायंमुनिवरःफलमूलमुपाहरत् ॥ ३ ॥ प्रतिगृह्यतुतांपूजांवसिष्ठाद्राजसत्तमः ॥ तपोग्निहोत्रशिष्येषुकुशलंपर्यपृच्छत ॥४॥ विश्वामित्रोमहातेजावनस्पतिगणेतदा ॥ सर्वत्रकुशलंप्राहवसिष्ठोराजसत्तमम् ॥५॥ सुखोपविष्टंराजानंविश्वामित्रंमहातपाः ॥ पप्रच्छजपतांश्रेष्ठोवसिष्ठोब्रह्मणःसुतः ॥ ६ ॥ कच्चित्तेकुशलंराजन्कच्चिद्धर्मेणरंजयन् ॥ प्रजाःपालयसेराजन्राजवृत्तेनधार्मिक ॥ ७ ॥ कच्चित्तेसंभृताभृत्याःकच्चित्तिष्ठंतिशासने ॥ कच्चित्तेविजिताःसर्वेरिपवोरिपुसूदन ॥ ८ ॥ कच्चिद्बलेषुकोशेषुमित्रेषुचपरंतप ॥ कुशलंतेनरव्याघ्रपुत्रपौत्रेतथानघ ॥ ९ ॥ सर्वत्रकुशलंराजावसिष्ठंप्रत्युदाहरत् ॥ विश्वामित्रोमहातेजावसिष्ठंविनयान्वितम् ॥ १० ॥ कृत्वातौसुचिरंकालंधर्मिष्ठौताःकथास्तदा ॥ मुदापरमयायुक्तौप्रीयेतांतौपरस्परम् ॥ ११ ॥ ततोवसिष्ठोभगवान्कथांतेरघुनंदन ॥ विश्वामित्रमिदंवाक्यमुवाचप्रहसन्निव ॥ १२ ॥ आतिथ्यंकर्तुमिच्छामिबलस्यास्यमहाबल ॥ तवचैवाप्रमेयस्ययथार्हंसंप्रतीच्छमे ॥ १३ ॥ सत्क्रियांहिभवानेतांप्रतीच्छतुमयाकृताम् ॥ राजंस्त्वमतिथिश्रेष्ठःपूजनीयःप्रयत्नतः ॥ १४ ॥ एवमुक्तोवसिष्ठेनविश्वामित्रोमहामुनिः ॥ कृतमित्यब्रवीद्राजापूजावाक्येनमेत्वया ॥ १५ ॥

मर्थस्य वर्धनं पालनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधमित्युक्तेन राजवृत्तेन पालयसे इत्यन्वयः ॥ ७ ॥ संभृताः वेतनदानादिना ॥ ८ ॥ बलेषु चतुरंगेषु । कोशेषु अर्थसमूहेषु । पुत्रपौत्रे । गवाश्वप्रभृतित्वादेकवत्त्वम् ॥ ९ ॥ एको वसिष्ठशब्दः वरिष्ठवाची ॥ १० ॥ तौ उक्तविशेषणकौ वसिष्ठविश्वामित्रौ । ताः कथाः अन्योन्यकुशलप्रश्नोत्तरादिरूपाः । प्रीयेताम् । अडभावः आर्षो लङि ॥ ११ ॥ प्रहसन्निव उत्तमातिथिलाभजहर्षेण ॥ १२ ॥ संप्रतीच्छ मे मत्कृतम् आतिथ्यम् अंगीकुरु ॥ १३ ॥ हेतुगर्भ विशेषणम्—अतिथिश्रेष्ठ इति ॥ १४ ॥ पूजावाक्येन आतिथ्यं करिष्यामीत्ये

१ कपुस्तकादर्धश्लोकोऽधिकोत्र ।

वंरूपेणैव मम पूजनं कृतमिति राजाब्रवीत् ॥ १५ ॥ विद्यते यत्तवाश्रमे फलमूलं तेन पूजित इत्यनेन राजभोज्याभावादनेनैव वयं संतुष्टा इति ध्वनिः ॥ १६ ॥ पूजार्हेण । त्वयेति शेषः । मैत्रेण स्नेहयुक्तेन । मत्वर्थीयाजंतम् ॥ १७ ॥ निमंत्रणं भोजनांगीकाराय प्रार्थनम् ॥ १८ ॥ बाढमिति । अस्य विवरणं—यथा प्रियमित्यादि ॥ १९ ॥ तेन विश्वामित्रेण । कल्माषीं चित्रवर्णां होमधेनुम् ॥ २० ॥ शबले तन्नामे अस्य राजर्षेः महार्हेण भोजनेन सत्कारं कर्तुं व्यवसितोस्मि उद्युक्तोस्मि तं मे व्यवसायं संविधत्स्व संपादय । तदुपयोगिपदार्थदानेनेति शेषः ॥ षड्रसेषु मधुरादिषु यस्य यस्य यदभिपूजितम् अभीष्टं तत्सर्वं यथाकामं तत्प्रीत्यनतिक्रमेण मम कृते मत्तोषार्थम् । रसेन अन्नेन रसयुतान्नेन भक्ष्यशष्कुल्यादिना । रसेनेति सर्वान्वयि । पानेन पानकरसादिना । लेह्यं जिह्वाग्राह्यं क्षौद्रादि। चोष्यम् अधरपुटग्राह्यम् आम्रफलादि । अन्नानां शाल्यन्नादीनां निचयं राशिम् ॥ २१ ॥ २२ ॥ २३ ॥ गौरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे द्विपंचाशः

फलमूलेनभगवन्विद्यतेयत्तवाश्रमे ॥ पाद्येनाचमनीयेनभगवद्दर्शनेनच ॥ १६ ॥ सर्वथाचमहाप्राज्ञपूजार्हेणसुपूजितः ॥ नमस्तेस्तुगमिष्यामिमैत्रेणेक्षस्वचक्षुषा ॥ १७ ॥ एवं ब्रुवंतंराजानंवसिष्ठःपुनरेवहि ॥ न्यमंत्रयतधर्मात्मापुनःपुनरुदारधीः ॥ १८ ॥ बाढमित्येवगाधेयोवसिष्ठंप्रत्युवाचह ॥ यथाप्रियंभगवतस्तथास्तुमुनिपुंगव ॥ १९ ॥ एवमुक्तस्तथानेनवसिष्ठोजपतांवरः ॥ आजुहावततःप्रीतःकल्माषींधूतकल्मषाम् ॥ २० ॥ एह्येहिशबलेक्षिप्रंशृणुचापिवचोमम ॥ सबलस्यास्यराजर्षेःकर्तुंव्यवसितोस्म्यहम् ॥ २१ ॥ भोजनेनमहार्हेणसत्कारंसंविधत्स्वमे ॥ यस्ययस्ययथाकामंषड्रसेष्वभिपूजितम् ॥ २२ ॥ तत्सर्वंकामधुग्दिव्येअभिवर्षकृतेमम ॥ रसेनान्नेनपानेनलेह्यचोष्येणसंयुतम् ॥ अन्नानांनिचयंसर्वंसृजस्वशबलेत्वर ॥ २३ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्साहस्र्यांसंहितायां बालकांडे द्विपंचाशःसर्गः ॥ ५२ ॥ ॥ एवमुक्तावसिष्ठेनशबलाशत्रुसूदन ॥ विदधेकामधुक्कामान्यस्ययस्येप्सितंयथा ॥ १ ॥ इक्षून्मधूंस्तथालाजान्मैरेयांश्चवरासवान् ॥ पानानिचमहार्हाणिभक्ष्यांश्चोच्चावचानपि ॥ २ ॥ उष्णाढ्यस्यौदनस्यात्रराशयःपर्वतोपमाः ॥ मृष्टान्यन्नानिसूपाश्चदधिकुल्यास्तथैवच ॥ ३ ॥ नानास्वादुरसानांचखां(षा)डवानांतथैवच ॥ भोजनानिसुपूर्णानिगौडानिचसहस्रशः ॥ ४ ॥ सर्वमासीत्सुसंतुष्टंहृष्टपुष्टजनायुतम् ॥ विश्वामित्रबलंरामवसिष्ठेनसुतर्पितम् ॥ ५ ॥ विश्वामित्रोहिराजर्षिर्हृष्टपुष्टस्तदाभवत् ॥ सांतःपुरवरोराजासब्राह्मणपुरोहितः ॥ ६ ॥ सामात्योमंत्रिसहितःसभृत्यःपूजितस्तदा ॥ युक्तःपरमहर्षेणवसिष्ठमिदमब्रवीत् ॥ ७ ॥

सर्गः ॥ ५२ ॥ यस्ययस्य यथायथा ईप्सितं तथातथा सर्वान्कामान् विदधे इत्यर्थः ॥ १ ॥ तदेव प्रपंचयति । इक्षूनिति । सविकारानिक्षून् । मधून् क्षौद्राणि । मैरेयं च धात्रीधातकीगुडवारिभिः कृतं मद्यम् । भक्ष्यान् अपूपादीन् । उच्चावचान् अनेकविधान् ॥ २ ॥ उष्णाढ्यस्य उष्णत्वगुणयुक्तस्य । राशयः । आसन्निति शेषः । मृष्टानि अन्नानि पायसभेदाः । दधिकुल्या इति । उपलक्षणं दुग्धादेरपि ॥ ३ ॥ अनेकविधस्वादुरसयुतानां खां(षा)डवानां भक्ष्यविशेषाणाम् । शेषे षष्ठी । तैः पूर्णानि भोजनानि भोजनपात्राणि गौडानि राजतानि । आसन्निति शेषः । रजते गुड इत्यभिधानामिति कतककृत् ॥ ४ ॥ हर्षः चित्तसंतोषः। पुष्टिः देहपुष्टिः तद्युक्तजनैः आसमंतायुक्तम् ॥ ५ ॥ सान्तःपुरवरः अंतःपुरश्रेष्ठैः सहितः ॥ ६ ॥ अमात्याः कर्मसचिवाः । मंत्रिणो मंत्रस्य सचिवाः । पूजितः आतिथ्येन सत्कृतः ॥ ७ ॥

पूजार्हेण माहशपूजाकरणयोग्येन । पूजित इति । अस्यैव विवरणम् । आदरातिशयद्योतनाय-सुसत्कृत इति । हर्षाद्वा पुनरुक्तिरदोषः॥८॥शतसहस्रेण।निष्क्रयभूतेनेति शेषः॥९॥धर्मतः न्यायतः । पार्थिवस्य रत्नस्वामित्वात् रत्नहरत्वाच्च ममैषा । योग्येति शेषः ॥ १० ॥ ११ ॥ १२ ॥ कुत इयं परित्यागं नार्हेत्यत्राह । शाश्वतीति । यथा आत्मवतः राजयोगवतः विद्यादिजा कीर्तिः शाश्वती नित्यसंबद्धा एवं मह्यं ब्रह्मदत्ता शबला नित्यं मत्संबद्धा । एवमादरे बीजमाह । हव्यं दैवम् । कव्यं पित्र्यम् । प्राणयात्रा जीवनम्॥१३॥आयत्तम् । अधीनम् । बलिः भूतबलिः । होमः वैश्वदेवादिः । आयत्त इत्यस्य सर्वत्रानुकर्षः । स्वाहाकारवषट्कारौ तत्साध्ययज्ञौ । विद्या इति । एतत्पयःप्राशनेन चित्तशुद्धेः प्राणतृप्तेर्देहपाटवाच्च तत्साध्यविद्यानामेतदायत्तत्वम् ॥ १४ ॥ एतत्सर्वम् आतिथ्यादि । एतत्

पूजितोहंत्वयाब्रह्मन्पूजार्हेणसुसत्कृतः ॥ श्रूयतामभिधास्यामिवाक्यंवाक्यविशारद ॥ ८ ॥ गवांशतसहस्रेणदीयतांशबलामम ॥ रत्नंहिभगवन्नेतद्रत्नहारीचपार्थिवः ॥ ९ ॥ तस्मान्मेशबलांदेहिममैषाधर्मतोद्विज ॥ एवमुक्तस्तुभगवान्वसिष्ठोमुनिपुंगवः ॥ १० ॥ विश्वामित्रेणधर्मात्माप्रत्युवाचमहीपतिम् ॥ नाहंशतसहस्रेणनापिकोटिशतैर्गवाम् ॥ ११ ॥ राजन्दास्यामिशबलांराशिभीरजतस्यवा ॥ नपरित्यागमर्हेयंमत्सकाशादरिंदम ॥ १२ ॥ शाश्वतीशबलामह्यंकीर्तिरात्मवतोयथा ॥ अस्यांहव्यंचकव्यंचप्राणयात्रातथैवच ॥ १३ ॥ आयत्तमग्निहोत्रंचबलिहोमस्तथैवच ॥ स्वाहाकारवषट्कारौविद्याश्चविविधास्तथा ॥ १४ ॥ आयत्तमत्रराजर्षेसर्वमेतन्नसंशयः ॥ सर्वस्वमेतत्सत्येनममतुष्टिकरीतथा ॥ १५ ॥ कारणैर्बहुभीराजन्नदास्येशबलांतव ॥ वसिष्ठेनैवमुक्तस्तुविश्वामित्रोब्रवीत्तदा ॥ १६ ॥ संरब्धतरमत्यर्थंवाक्यंवाक्यविशारदः ॥ हैरण्यकक्ष्याग्रैवेयान्सुवर्णांकुशभूषितान् ॥ १७ ॥ ददामिकुंजराणांतेसहस्राणिचतुर्दश ॥ हैरण्यानांरथानांचश्वेताश्वानांचतुर्युजाम् ॥ १८ ॥ ददामितेशतान्यष्टौकिंकिणीकविभूषितान् ॥ हयानांदेशजातानांकुलजानांमहौजसाम् ॥ १९ ॥ सहस्रमेकंदशचददामितवसुव्रत ॥ नानावर्णविभक्तानांवयःस्थानांतथैवच ॥ २० ॥ ददाम्येकांगवांकोटिंशबलादीयतांमम ॥ यावदिच्छसिरत्नानिहिरण्यंवाद्विजोत्तम ॥ २१ ॥ तावद्ददामितेसर्वंदीयतांशबलामम ॥ एवमुक्तस्तुभगवान्विश्वामित्रेणधीमता ॥ २२ ॥ नदास्यामीतिशबलांप्राहराजन्कथंचन ॥ एतदेवहिमेरत्नमेतदेवहिमेधनम् ॥ २३ ॥

शबलारूपमेव मे सर्वस्वम् । सत्येन । शपे इति शेषः । तथा दर्शनादिना मम तुष्टिकरी च ॥ १५ ॥ कारणैः उक्तैः । साभिप्रायं चैतद्बोध्यम् ॥ १६ ॥ संरब्धतरम् अत्याग्रहयुक्तम् । हैरण्याः हिरण्यविकाराः । कक्षाः घंटोपेतमध्यबंधनार्थशृंखलाः । ग्रैवेयं ग्रीवालंकारशृंखलादि ॥ १७ ॥ श्वेताश्वानां चतुर्युजां चतुःसंख्याकश्वेताश्वयुतानामित्यर्थः । आर्षः समासः । रथानां चेति पाठः ॥१८॥ किंकिणीकविभूषितानिति । षष्ठ्यर्थे द्वितीया । रथानां विशेषणमेतत् । देशः बाह्लीकादिः । कुलमुच्चैःश्रवआदीनां गंधर्वकुलं वा । गंधर्वकुलजातस्त्वमिति पुराणवचनात् ॥१९॥ अनेकवर्णैः विभक्तानां प्राप्तभेदानाम् । वयःस्थानां तरुणीनाम् । वयःस्थस्तरुणो युवेति कोशात् ॥ २० ॥ एकां कोटिमित्यन्वयः । यावदिति । इतोप्यधिकं वा यावदिच्छसीत्यर्थः ॥ २१ ॥ २२ ॥ एतत् शबलारूपं वस्तु ॥ २३ ॥

आप्तदक्षिणा इति । अनेन हव्यादिवद्दक्षिणाप्येतदधीनेति सूचितम्॥२४॥एतदेव क्रिया इत्यस्यैव विवरणम् । अदोमूलाः एतन्मूला इत्यर्थः ॥२५॥ सर्वथा दानाभावे हेतुगर्भं विशेषणं कामदोहिनीम् इच्छावि
षयदोहनशीलाम् ।(काव्यलिंगमलंकारः) ॥२६॥ चैरमानः॥ इति श्री०श्रीरा०रा०वा०आ०वा० त्रिपंचाशः सर्गः॥५३॥अथ दंडोपायमवृत्तिमाह । कामधेनुमिति।न त्यजते नात्यजत्।अन्वकर्षत।बलादिति शेषः॥
॥१॥२॥ राजभृतैः राजसेवकैः। भटैरिति कचित्पाठः। ह्रियेय । कर्मणि लिङ् । भृशदुःखिता भृशेन अतिशयेन दुःखिता । अस्मीति शेषः । भृशशब्दो बहुपर्यायो वा ॥३॥ अपकृतम् अपराधम् । दृष्ट्वा
ज्ञात्वापि भक्तां सेवापराम् ॥ ४ ॥ ५ ॥ शतशो भृत्यान् स्वकर्षकान् । पादमूलं पादसमीपम् । महात्मनः वासिष्ठस्य ॥ ६ ॥ रोदनम् अश्रुपातः । क्रोशनम् आर्तशब्दः । रुदंत्या एव ऋषिसमीपगमनं
रुदंत्यैव च कथनमित्येतदर्थं द्विः रुदंतीति ॥ ७ ॥ सकाशः समीपम् ॥ ८ ॥ स्वसा भगिनी ॥ ९ ॥ बलात् क्षात्रात् । मत्तः अविवेकी ॥१०॥ मह्यं मम । न हि तद्बलेन तुल्यामित्यर्थः । तपोबलेन

एतदेवहिसर्वस्वमेतदेवहिजीवितम् ॥ दर्शश्चपौर्णमासश्चयज्ञाश्चैवाप्तदक्षिणाः ॥ २४ ॥ एतदेवहिमेराजन्विविधाश्चक्रियास्तथा ॥ अदोमूलाःक्रियाःसर्वा ममराजन्नसंशयः ॥ २५ ॥ बहुनाकिंप्रलापेननदास्येकामदोहिनीम् ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥ कामधेनुंवसिष्ठोपियदानत्यजतेमुनिः ॥ तदाऽस्यशबलांरामविश्वामित्रोन्वकर्षत ॥१॥ नीयमानातुशबलारामराज्ञा महात्मना ॥ दुःखिताचिंतयामासरुदंतीशोककर्शिता ॥ २ ॥ परित्यक्तावसिष्ठेनकिमहंसुमहात्मना ॥ याहंराजभृतैर्दीनाह्रियेयभृशदुःखिता ॥ ३ ॥ किंमयापकृतंतस्यमहर्षेर्भावितात्मनः ॥ यन्मामनागसंदृष्ट्वाभक्तांत्यजतिधार्मिकः ॥४॥ इतिसंचिंतयित्वातुनिःश्वस्यचपुनःपुनः ॥ जगामवेगेनतदावसिष्ठं परमौजसम् ॥ ५ ॥ निर्धूयतांस्तदाभृत्याञ्छतशःशत्रुसूदन ॥ जगामानिलवेगेनपादमूलंमहात्मनः ॥ ६ ॥ शबलासारुदंतीचक्रोशंतीचेदमब्रवीत् ॥ वसिष्ठस्याग्रतःस्थित्वारुदंतीमेघनिःस्वना ॥ ७ ॥ भगवन्किंपरित्यक्तात्वयाहंब्रह्मणःसुत ॥ यस्माद्राजभटामांहिनयंतेत्वत्सकाशतः ॥ ८ ॥ एवमुक्तस्तुब्रह्मर्षिरिदंवचनमब्रवीत् ॥ शोकसंतप्तहृदयांस्वसारमिवदुःखिताम् ॥ ९ ॥ नत्वांत्यजामिशबलेनापिमेऽपकृतंत्वया ॥ एषत्वांनयतेराजाबलान्मत्तो महाबलः ॥ १० ॥ नहितुल्यंबलंमह्यंराजात्वद्यविशेषतः ॥ बलीराजाक्षत्रियश्चपृथिव्याःपतिरेवच ॥११॥ इयमक्षौहिणीपूर्णागजवाजिरथाकुला ॥ हस्तिध्वजसमाकीर्णातेनासौबलवत्तमः ॥ १२ ॥ एवमुक्तावसिष्ठेनप्रत्युवाचविनीतवत् ॥ वचनंवचनज्ञासाब्रह्मर्षिमतुलप्रभम् ॥ १३ ॥ नबलंक्षत्रियस्याहुर्ब्राह्मणाबलवत्तराः ॥ ब्रह्मन्ब्रह्मबलंदिव्यंक्षात्राच्चबलवत्तरम् ॥ १४ ॥ अप्रमेयंबलंतुभ्यंनत्वयाबलवत्तरः ॥ विश्वामित्रोमहावीर्यस्तेजस्तवदुरासदम् ॥१५ ॥

नहिं दंड्यतां तत्राह । राजा त्वित्यादि । राजत्वात्तपोबलेन न दंड्य इति भावः । तद्वक्ष्यति किष्किंधायां—दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च । राजानो वानरश्रेष्ठ प्रदातारो न संशयः । तान्न
हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् । देवा मानुषरूपेण चरंत्येते महीतले इति । अद्य विशेषतः । अवध्य इति शेषः । अद्य कृतातिथ्यके दिने । तेनातिथित्वाद्विशेषतोऽवध्य इति भावः । बली राजेति ।
अनेन युद्धाजेयत्वमुक्तम् । पृथिवीपतिक्षत्रियत्वेन तद्वधस्य महापातकसमता बोधिता ॥ ११ ॥ बलित्वमेव उपपादयति । इयमिति । हस्तिस्थैः ध्वजैः समाकीर्णा ॥ १२ ॥ विनीतवत् विनयोपेतम् ।
॥ १३ ॥ न बलम् अल्पबलम् । बलवत्तराः क्षत्रियादिभ्यः । क्षात्रात् क्षत्रियबलादपि । बलवत्तरम् अधिकम् ॥ १४ ॥ तुभ्यं तव । न त्वया । सदृशोपीति शेषः । बलवत्तरः । इति दूरे इति शेषः ।

महावीर्यः महावीर्योऽपि । तत्र हेतुः—तेजस्तवेत्यादि ॥ १५ ॥ ननु त्वमेव तस्य बलं नाशय तत्राह । नियुंक्ष्वेति । कामधेनुत्वान्नियोगापेक्षापरकाम्यार्थसृष्टावेव तस्याः सामर्थ्याद् ब्रह्मबलसंभृतां तादृशकार्य समर्थत्वेन मां ध्यायस्वेत्यर्थः ॥ १६ ॥ १७ ॥ हुंभा नाम गवां शब्दः । पह्लवशकयवनकांबोजबर्बराः म्लेच्छजातिविशेषाः ॥ १८ ॥ पश्यत इति । अनादरे षष्ठी । विस्फारितं विवृतम् ॥ १९ ॥ अर्दिताः पीडिताः ॥ २० ॥ २१ ॥ प्रभादुर्निरीक्ष्यं तेजः । हेम्नः किंजल्कस्य च सदृशैः । हेमवर्णांबरं पीतांबरम् ॥ २२ ॥ २३ ॥ २४ ॥ वैरमानः ॥ इति श्रीरा० श्रीरा० रामा० वा० आ० बाल०



नियुंक्ष्वमांमहातेजस्त्वंब्रह्मबलसंभृताम् ॥ तस्यदर्पंबलंयत्नंनाशयामिदुरात्मनः ॥ १६ ॥ इत्युक्तस्तुतयारामवसिष्ठस्तुमहायशाः ॥ सृजस्वेतितदोवाचबलं परबलार्दनम् ॥१७॥ तस्यतद्वचनंश्रुत्वासुरभिःसासृजत्तदा ॥ तस्याहुंभारवोत्सृष्टाःपह्लवाःशतशोनृप ॥ १८ ॥ नाशयंतिबलंसर्वंविश्वामित्रस्यपश्यतः ॥ सराजापरमक्रुद्धःक्रोधविस्फारितेक्षणः ॥ १९ ॥ पह्लवान्नाशयामासशस्त्रैरुच्चावचैरपि ॥ विश्वामित्रार्दितान्दृष्ट्वापह्लवाञ्छतशस्तदा ॥ २० ॥ भूयएवासृजद्घोराञ्छकान्यवनमिश्रितान् ॥ तैरासीत्संवृताभूमिःशकैर्यवनमिश्रितैः ॥ २१ ॥ प्रभावद्भिर्महावीर्यैर्हेमकिंजल्कसन्निभैः ॥ तीक्ष्णासिपट्टिशधरैर्हेमवर्णांबरावृतैः ॥ २२ ॥ निर्दग्धंतद्बलंसर्वंप्रदीप्तैरिवपावकैः ॥ ततोस्त्राणिमहातेजाविश्वामित्रोमुमोचह ॥ २३ ॥ तैस्तेयवनकांबोजाबर्बराश्चाकुलीकृताः ॥२४॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये च० विं० सा० आदिकाव्ये बालकांडे चतुष्पंचाशः सर्गः ॥ ५४ ॥ ततस्तानाकुलान्दृष्ट्वाविश्वामित्रास्त्रमोहितान् ॥ वसिष्ठश्चोदयामासकामधुक्सृजयोगतः ॥ १ ॥ तस्याहुंकारतोजाताःकांबोजारविसन्निभाः ॥ ऊधसश्चाथसंभूताबर्बराःशस्त्रपाणयः ॥ २ ॥ योनिदेशाच्चयवनाःशकृद्देशाच्छकाःस्मृताः ॥ रोमकूपेषुम्लेच्छाश्चहारीताःसकिरातकाः ॥ ३ ॥ तैस्तन्निषूदितंसर्वंविश्वामित्रस्यतत्क्षणात् ॥ सपदातिगजंसाश्वंसरथंरघुनंदन ॥ ४ ॥ दृष्ट्वानिषूदितंसैन्यंवसिष्ठेनमहात्मना ॥ विश्वामित्रसुतानांतुशतंनानाविधायुधम् ॥ ५ ॥ अभ्यधावत्सुसंक्रुद्धंवसिष्ठंजपतांवरम् ॥ हुंकारेणैवतान्सर्वान्निर्ददाह महानृषिः ॥ ६ ॥ तेसाश्वरथपादातावसिष्ठेनमहात्मना ॥ भस्मीकृतामुहूर्तेनविश्वामित्रसुतास्तथा ॥ ७ ॥ दृष्ट्वाविनाशितान्सर्वान्बलंचसुमहायशाः ॥ सव्रीडंचिंतयाविष्टोविश्वामित्रोभवत्तदा ॥ ८ ॥

चतुष्पंचाशः सर्गः ॥ ५४ ॥ ॥ छ ॥ ॥ आकुलान् पलायमानान् । कामधुगिति । संबोधनम् । योगतः योगमहिम्ना ॥ १ ॥ २ ॥ रोमकूपेषु रोमकूपेभ्यः म्लेच्छहारीतकिराताः जातिविशेषाः ॥ ३ ॥ विश्वामित्रस्य तव सैन्यम् ॥ ४ ॥ विश्वामित्रसुतानां शतम् ऋषिरेव धेनोर्बलम् अतः अयमेव नाशनीय इत्याशयेन वसिष्ठमभ्यधावत् । हुंकारेण तपोबलसंभृतेन । क्षत्रियत्वेपि पृथिवीपातित्वाभावात्तद्वधे अल्पमायश्चित्तम् । आततायित्वाच्चेति भावः ॥ ५ ॥ ६ ॥ भस्मीकृता मुहूर्तेनेति । अपवर्गे तृतीया मासेनानुवाकोऽधीत इतिवत्॥७॥सर्वान् पुत्रान् । सव्रीडमिति । क्रियाविशेषणम्[१] ॥ ८ ॥

१ अत्र सर्गे कपुस्तकादर्धश्लोकोधिकः ।

निर्वेगत्वे समुद्रोपमा । निष्प्रभत्वे इतरे उपमे । उपरक्तो राहुग्रस्तः ॥ ९ ॥ हतसर्वबलोत्साहः सर्वाणि बलानि शारीरबौद्धास्त्रादीनि तज्जन्योत्साहहीनः । निर्वेदं सर्वत्र निष्फलत्वबुद्धिजं चित्तखेदम् ॥ १० ॥ एकम् । अवशिष्टमिति शेषः। राज्याय राज्यं रक्षितुं पृथिवीं क्षत्रधर्मेण पालयेति नियुज्येत्यन्वयः ॥ ११ ॥ १२ ॥ दर्शयामास । आत्मानमिति शेषः ॥ १३ ॥ १४ ॥ १५ ॥ साक्षादुपकारकाणि अंगानि । आराद् उपकारकाणि उपांगानि । मंत्राः उपनिषदः । समाहारद्वंद्वे द्वंद्वाच्चुदेति टच् । तेन सहितो धनुर्वेद इत्यर्थः । रहस्यम् आचार्यमुखैकगम्यं विद्याजातम् ॥ १६ ॥ १७ ॥ प्रसादात् । न तूपदेशापेक्षेति भावः ॥ १८ ॥ क्षत्रियत्वात् सहज एव दर्पः । तस्य पूर्तिः अस्त्रलाभात् ॥ १९ ॥ २० ॥ यैः अस्त्रैः । अस्त्रतेजसा स्वीयतेजसा तपोवनं निर्दग्धं भवेत् तानि, अस्त्राणि

समुद्रइवनिर्वेगोभग्नदंष्ट्रइवोरगः ॥ उपरक्तइवादित्यःसद्योनिष्प्रभतांगतः ॥ ९ ॥ हतपुत्रबलोदीनोलूनपक्षइवद्विजः ॥ हतसर्वबलोत्साहोनिर्वेदं समपद्यत ॥१०॥ सपुत्रमेकंराज्यायपालयेतिनियुज्यच ॥ पृथिवींक्षत्रधर्मेणवनमेवाभ्यपद्यत ॥ ११ ॥ सगत्वाहिमवत्पार्श्वेकिन्नरोरगसेविते ॥ महादेवप्रसादार्थंतपस्तेपेमहातपाः ॥ १२ ॥ केनचित्त्वथकालेनदेवेशोवृषभध्वजः ॥ दर्शयामासवरदोविश्वामित्रंमहामुनिम् ॥ १३ ॥ किमर्थंतप्यसेराजन्ब्रूहियत्तेविवक्षितम् ॥ वरदोस्मिवरोयस्तेकांक्षितःसोभिधीयताम् ॥ १४ ॥ एवमुक्तस्तुदेवेनविश्वामित्रोमहातपाः ॥ प्रणिपत्यमहादेवंविश्वामित्रोऽब्रवीदिदम् ॥ १५ ॥ यदितुष्टोमहादेवधनुर्वेदोममानघ ॥ सांगोपांगोपनिषदःसरहस्यःप्रदीयताम् ॥ १६ ॥ यानिदेवेषुचास्त्राणिदानवेषुमहर्षिषु ॥ गंधर्वयक्षरक्षःसुप्रतिभांतुममानघ ॥ १७ ॥ तवप्रसादाद्भवतुदेवदेवममेप्सितम् ॥ एवमस्त्वितिदेवेशोवाक्यमुक्त्वागतस्तदा ॥ १८ ॥ प्राप्यचास्त्राणिदेवेशाद्विश्वामित्रोमहाबलः ॥ दर्पेणमहतायुक्तोदर्पपूर्णोभवत्तदा ॥ १९ ॥ विवर्धमानोवीर्येणसमुद्रइवपर्वणि ॥ हतंमेनेतदारामवसिष्ठमृषिसत्तमम् ॥ २० ॥ ततोगत्वाश्रमपदंमुमोचास्त्राणिपार्थिवः ॥ यैस्तत्तपोवनंनामनिर्दग्धंचास्त्रतेजसा ॥ २१ ॥ उदीर्यमाणमस्त्रंतद्विश्वामित्रस्यधीमतः ॥ दृष्ट्वाविप्रद्रुताभीतामुनयःशतशोदिशः ॥ २२ ॥ वसिष्ठस्यचयेशिष्यायेचवैमृगपक्षिणः ॥ विद्रवंतिभयाद्भीतानानादिग्भ्यःसहस्रशः ॥ २३ ॥ वसिष्ठस्याश्रमपदंशून्यमासीन्महात्मनः ॥ मुहूर्तमिवनिःशब्दमासीदिरिणसन्निभम् ॥ २४ ॥ वदतोवैवसिष्ठस्यमाभैरितिमुहुर्मुहुः ॥ नाशयाम्यद्यगाधेयंनीहारमिवभास्करः ॥ २५ ॥ एवमुक्त्वामहातेजावसिष्ठोजपतांवरः ॥ विश्वामित्रंतदावाक्यंसरोषमिदमब्रवीत् ॥२६॥ आश्रमंचिरसंवृद्धंयद्विनाशितवानसि ॥ दुराचारोहियन्मूढस्तस्मात्त्वंनभविष्यसि ॥ २७ ॥

मुमोच मुमुचे इत्यन्वयः ॥ २१ ॥ विश्वामित्रस्य । शेषे षष्ठी । तेन उदीर्यमाणं विसृज्यमानम् ॥ २२ ॥ भयात् भयहेतोः अस्त्रजालात् । नानादिग्भ्यः । व्यत्ययेन द्वितीयार्थे चतुर्थी पंचमी वा । शून्यं सर्वप्राणिपलायनात् । अत एव निःशब्दमिव । इरिणम् ऊषरम् । निर्वृक्षनिर्मानुषकांतारसदृशमिति यावत् । वदतो वै वदतोपीत्यर्थः । तादृशस्यापि वसिष्ठस्य वचनम् अनादृत्य दुद्रुवुरित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ एवमुक्त्वा । पलायमानप्राणिजातं प्रतीति शेषः। इदं वक्ष्यमाणम् ॥ २६ ॥ यत् यस्मात् मे आश्रमं विनाशितवानसि—यत् यस्माच्च हि प्रसिद्धं दुराचारो मूढः त्वं-तस्मान्न भवि

प्यासि नंक्ष्यसीत्यर्थः ॥ २७ ॥ विधूमः कालाग्निरिव क्रोधात् वसिष्ठः अपरं यमदंडमिव दंडमुद्यम्य । तस्थाविति शेषः ॥ २८ ॥ दंरैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मी० आदिकाव्ये बालकांडे पंचपंचाशः सर्गः ॥ ५५ ॥ ॥ छ ॥ ॥ एवमुक्तः न भविष्यसीत्युक्तः ॥ १ ॥ २ ॥ तिष्ठतिष्ठेति भीषयंतं प्रति स्वभीत्यभावमाह । स्थितोस्म्येष इति । तव शस्त्रस्य दर्पं त्वया लब्धं यद् अस्त्ररूपं शस्त्रं तत्मापिजं ते तव दर्पम् ॥ ३ ॥ ४ ॥ क्षत्रियपांसनेत्युक्त्वा स्थितस्य तस्य वसिष्ठस्य ब्रह्मदंडेन गाधिपुत्रस्य आग्नेयं शांतमासीत् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ दयि

इत्युक्त्वापरमक्रुद्धोदंडमुद्यम्यसत्वरः ॥ विधूमइवकालाग्निर्यमदंडमिवापरम्[१] ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे पंचपंचाशः सर्गः ॥ ५५ ॥ एवमुक्तोवसिष्ठेनविश्वामित्रोमहाबलः ॥ आग्नेयमस्त्रमुद्दिश्यतिष्ठतिष्ठेतिचाब्रवीत् ॥ १ ॥ ब्रह्मदंडंसमुद्यम्यकालदंडमिवापरम् ॥ वसिष्ठोभगवान्क्रोधादिदंवचनमब्रवीत् ॥ २ ॥ क्षत्रबंधोस्थितोस्म्येषयद्बलंतद्विदर्शय ॥ नाशयाम्यद्यतेदर्पंशस्त्रस्यतवगाधिज ॥ ३ ॥ क्वचतेक्षत्रियबलंक्वचब्रह्मबलंमहत् ॥ पश्यब्रह्मबलंदिव्यंममक्षत्रियपांसन ॥ ४ ॥ तस्यास्त्रंगाधिपुत्रस्यघोरमाग्नेयमुत्तमम् ॥ ब्रह्मदंडेनतच्छांतमग्नेर्वेगइवांभसा ॥ ५ ॥ वारुणंचैवरौद्रंचऐंद्रंपाशुपतंतथा ॥ ऐषीकंचापिचिक्षेपकुपितोगाधिनंदनः ॥ ६ ॥ मानवंमोहनंचैवगांधर्वंस्वापनंतथा ॥ जृंभणंमोहनंचैवसंतापनविलापने ॥ ७ ॥ शोषणंदारणंचैववज्रमस्त्रंसुदुर्जयम् ॥ ब्रह्मपाशंकालपाशंवारुणंपाशमेवच ॥ ८ ॥ पिनाकमस्त्रंदयितंशुष्कार्द्रेअशनीतथा ॥ दंडास्त्रमथपैशाचंक्रौंचमस्त्रंतथैवच ॥ ९ ॥ धर्मचक्रंकालचक्रंविष्णुचक्रंतथैवच ॥ वायव्यंमथनंचैवअस्त्रंहयशिरस्तथा ॥ १० ॥ शक्तिद्वयंचचिक्षेपकंकालंमुसलंतथा ॥ वैद्याधरंमहास्त्रंचकालास्त्रमथदारुणम् ॥ ११ ॥ त्रिशूलमस्त्रंघोरंचकापालमथकंकणम् ॥ एतान्यस्त्राणिचिक्षेपसर्वाणिरघुनंदन ॥ १२ ॥ वसिष्ठेजपतांश्रेष्ठेतदद्भुतमिवाभवत् ॥ तानिसर्वाणिदंडेनग्रसतेब्रह्मणःसुतः ॥ १३ ॥ तेषुशांतेषुब्रह्मास्त्रंक्षिप्तवान्गाधिनंदनः ॥ तदस्त्रमुद्यतंदृष्ट्वादेवाःसाग्निपुरोगमाः ॥ १४ ॥ देवर्षयश्चसंभ्रांतागंधर्वाःसमहोरगाः ॥ त्रैलोक्यमासीत्संत्रस्तंब्रह्मास्त्रेसमुदीरिते ॥ १५ ॥ तदप्यस्त्रंमहाघोरंब्राह्मंब्राह्मेणतेजसा ॥ वसिष्ठोग्रसतेसर्वंब्रह्मदंडेनराघव ॥ १६ ॥ ब्रह्मास्त्रंग्रसमानस्यवसिष्ठस्यमहात्मनः ॥ त्रैलोक्यमोहनंरौद्रंरूपमासीत्सुदारुणम् ॥ १७ ॥ रोमकूपेषुसर्वेषुवसिष्ठस्यमहात्मनः ॥ मरीच्यइवनिष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ १८ ॥

तम् । शिवस्येति शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ग्रसते स्म ॥ १३ ॥ अग्निपुरोगमः वायुः तत्सहिताः अग्निसहितो वायुः पुरोगमो येषां युद्ध इति वा ॥ १४ ॥ समुदीरिते प्रयुक्ते ॥ १५ ॥ ब्राह्मेण तेजसा ब्रह्मविद्याभ्यासजेन तेजसा युक्तेन ब्रह्मदंडेन करधृतेन ग्रसते स्मेत्यन्वयः । ब्राह्मेणैव तेजसा ब्राह्मतेजःशमनस्य साध्यत्वादिति भावः ॥ १६ ॥ त्रैलोक्यमोहनं भयात्रिलोकीचित्तमूर्च्छाकरम् । रौद्रं स्मरणेपि भयदम् । सुदारुणं दुर्दर्शं नृसिंहवीरभद्रादिवत् । घोरमिति पाठांतरम् । तुल्योर्थः ॥ १७ ॥ रौद्रदारुणत्वे उपपादयति । रोमेत्यादि । रोमकूपेषु रोमकूपेभ्यः मरीच्यः विष्फुलिंगाः ।

१ अत्र सर्गे कपुस्तके एकश्लोकोधिकः ।

ऋषेः विश्वामित्रब्रह्मास्त्राकुलत्वात् । धूम्राकुलार्चिष्कमग्नेर्विशेषणम् ॥ १८ ॥ विधूमः कालाग्निरिव ब्रह्मदंडश्च प्राज्वलत् । तत्समर्पितब्रह्मतेजसेति भावः ॥ १९ ॥ ततः अस्तुवन् साधुसाध्वित्युपश्लोकितवंतः । हे ब्रह्मन् ते बलं अमोघम् अस्तु अरातौ अविसर्जनेन अक्षीणम् अस्तु । मतिब्रह्मास्त्रं मा प्रयुंक्ष्वेति यावत् । पारक्यं तेजः स्वतेजसा सहनेन धारय विलाप्यैकीकुरु ॥ २० ॥ नन्वरौ स्थिते कथमप्रतियोगोत आह । निगृहीत इति । ब्रह्मास्त्रग्रासेन नष्टसामर्थ्यः स्वत एव मृतप्रायो जात इत्यर्थः ॥ २१ ॥ शमं चक्रे प्रतियोगतः अरातिनाशनादुपरत इत्यर्थः । विनिकृतः निरस्तसर्वशक्तिः ॥ २२ ॥ क्षत्रियबलं धिक् केवलं निंद्यं बलमित्यर्थः । ब्रह्मतेजोबलं प्रशस्तं बलम् ॥ २३ ॥ प्रसन्नेंद्रियमानसः। परित्यक्तक्षत्रस्वभाव इति यावत् ॥ २४ ॥ वैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरा

प्राज्वलद्ब्रह्मदंडश्चवसिष्ठस्यकरोद्यतः ॥ विधूमइवकालाग्निर्यमदंडइवापरः ॥ १९ ॥ ततोऽस्तुवन्मुनिगणावसिष्ठंजपतांवरम् ॥ अमोघंतेबलंब्रह्मंस्तेजो धारयतेजसा ॥२०॥ निगृहीतस्त्वयाब्रह्मन्विश्वामित्रोमहाबलः ॥ प्रसीदजपतांश्रेष्ठलोकाःसंतुगतव्यथाः ॥ २१ ॥ एवमुक्तोमहातेजाःशमंचक्रेमहातपाः ॥ विश्वामित्रोविनिकृतोविनिःश्वस्येदमब्रवीत् ॥ २२ ॥ धिग्बलंक्षत्रियबलंब्रह्मतेजोबलंबलम् ॥ एकेनब्रह्मदंडेनसर्वास्त्राणिहतानिमे ॥ २३ ॥ तदेतत्प्रसमीक्ष्याहंप्रसन्नेंद्रियमानसः ॥ तपोमहत्समास्थास्येयद्वैब्रह्मत्वकारणम् ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ ततःसंतप्तहृदयःस्मरन्निग्रहमात्मनः ॥ विनिःश्वस्यविनिःश्वस्यकृतवैरोमहात्मना ॥ १ ॥ सदक्षिणांदिशंगत्वामहिष्यासहराघव ॥ तताापपरमंघोरंविश्वामित्रोमहातपाः ॥ २ ॥ फलमूलाशनोदांतश्चचारपरमंतपः ॥ अथास्यजज्ञिरेपुत्राःसत्यधर्मपरायणाः ॥ ३ ॥ हविष्यंदो मधुष्यंदोदृढनेत्रोमहारथः ॥ पूर्णेवर्षसहस्रेतुब्रह्मालोकपितामहः ॥ ४ ॥ अब्रवीन्मधुरंवाक्यंविश्वामित्रंतपोधनम् ॥ जितारा‌जर्षिलोकास्तेतपसाकुशिकात्मज ॥ ५ ॥ अनेनतपसात्वांहिराजर्षिरितिविद्महे ॥ एवमुक्त्वामहातेजाजगामसहदेवतैः ॥ ६ ॥ त्रिविष्टपंब्रह्मलोकंलोकानांपरमेश्वरः ॥ विश्वामित्रोपितच्छ्रुत्वाह्रियाकिंचिदवाङ्मुखः ॥ ७ ॥ दुःखेनमहताविष्टःसमन्युरिदमब्रवीत् ॥ तपश्चसुमहत्तप्तंराजर्षिरितिमांविदुः ॥ ८ ॥ देवाःसर्षिगणाः सर्वेनास्तिमन्येतपःफलम् ॥ एवंनिश्चित्यमनसाभूयएवमहातपाः ॥ ९ ॥ तपश्चचारधर्मात्माकाकुत्स्थपरमात्मवान् ॥ एतस्मिन्नेवकालेतुसत्यवादीजितेंद्रियः ॥ १० ॥ त्रिशंकुरितिविख्यातइक्ष्वाकुकुलवर्धनः ॥ तस्यबुद्धिःसमुत्पन्नायजेयमितिराघव ॥ ११ ॥ गच्छेयंस्वशरीरेणदेवतानांपरांगतिम् ॥ वसिष्ठंससमाहूयकथयामासचिंतितम् ॥ १२ ॥ अशक्यमितिचाप्युक्तोवसिष्ठेनमहात्मना ॥ प्रत्याख्यातोवसिष्ठेनसययौदक्षिणांदिशम् ॥ १३ ॥

मीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ ॥ छ ॥ ॥ तत इति । कृतवैर इति । इदमेव तपोनाशकमस्य ॥ १ ॥ तताप तपश्चकारेत्यर्थः ॥२॥ तपसो घोरत्वं दर्शयति । फलेत्यादि । दांतः जितेंद्रियः। पुत्राः हविष्यंदादयः ॥ ३ ॥ ब्रह्मर्षित्वाय ब्रह्मविद्यया तपःकरणात्तदधिदैवतत्वात् ब्रह्माब्रवीत् ॥ देवैः सह त्रिविष्टपं स्वर्ग गत्वा तदनु स्वं लोकं गतः । लोकानां भूरादीनाम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ समन्युः सदैन्यः स्वं मत्येव इदं वचः सुमहति तपसि कृतेपि सर्षिगणाः देवाः मां राजर्षिरित्येव विदुः अवगच्छंति । तस्मादस्य तपसस्तद्ब्राह्मणत्वं फलं नास्ति न भवतीति मन्ये ॥ ८ ॥ ९ ॥ परमात्मवान् परमात्मध्यानवान् परमधीरश्च ॥ १० ॥ ११ ॥ गच्छेयम् । यज्ञबलेनेति शेषः । देवतानां परा गतिः स्वर्गः ॥ १२ ॥ अशक्यत्वकथन

पूर्वकं प्रत्याख्यानबीजं च प्रसिद्धं त्रिशंकुत्वमेवेति पुराणेषु स्पष्टम् ॥ १३ ॥ तत्कर्म सशरीरस्वर्गप्रापकयज्ञकर्म । तस्य वसिष्ठस्य पुत्राः यत्र तेपिरे । तत्र गत्वेति शेषः । तस्य पुत्रान् गतः प्राप्तः ॥ १४ ॥ शतशब्देन स्वावयवगतबहुत्वेन बहुवचनं न । अनभिधानात् । शतशब्दः संख्यावाची संख्येयवाची च विंशत्यादिवत् । अत्र तु संख्येयवाची । शतं वसिष्ठपुत्रान् शतसंख्याकानित्यर्थः । अत्रावयवप्राधान्येन तद्बहुत्वेन बहुवचनं प्राप्तं–तदनभिधानान्न भवति एकवचनमेव भवति । यथा विंशतिर्ब्राह्मणाः । संख्यावाचिनोपि एकवचनं ब्राह्मणानां शतमिति यथा । अतः वसिष्ठपुत्रानित्यनेन च सामानाधिकरण्यम् ॥१५॥ ह्रिया तत्पितृकृतप्रत्याख्यानजया॥१६॥महात्मान इति । द्वितीयार्थे महात्मान इत्यार्षम् । शरण्यान् । रक्षणसमर्थान् शरणं गतः अन्येषां रक्ष्याणां शरणं गतोपि शरणत्वं प्राप्तोपीत्यर्थः ।

ततस्तत्कर्मसिद्ध्यर्थंपुत्रांस्तस्यगतोनृपः ॥ वासिष्ठादीर्घतपसस्तपोयत्रहितेपिरे ॥ १४ ॥ त्रिशंकुस्तुमहातेजाःशतंपरमभास्वरम् ॥ वसिष्ठपुत्रान्ददृशे तप्यमानान्मनस्विनः ॥ १५ ॥ सोभिगम्यमहात्मानःसर्वानेवगुरोःसुतान् ॥ अभिवाद्यानुपूर्व्येणह्रियाकिंचिदवाङ्मुखः ॥ १६ ॥ अब्रवीत्समहात्मानः सर्वानेवकृतांजलिः ॥ शरणंवःप्रपन्नोहंशरण्याञ्छरणंगतः ॥ १७ ॥ प्रत्याख्यातोहिभद्रंवोवसिष्ठेनमहात्मना ॥ यष्टुकामोमहायज्ञंतदनुज्ञातुमर्हथ ॥१८॥ गुरुपुत्रानहंसर्वान्नमस्कृत्यप्रसादये ॥ शिरसाप्रणतोयाचेब्राह्मणांस्तपसिस्थितान् ॥१९॥ तेमांभवंतःसिद्ध्यर्थंयाजयंतुसमाहिताः ॥ सशरीरोयथाहंवैदेवलोकमवाप्नुयाम् ॥ २० ॥ प्रत्याख्यातोवसिष्ठेनगतिमन्यांतपोधनाः ॥ गुरुपुत्रानृतेसर्वान्नाहंपश्यामिकांचन ॥ २१ ॥ ( इक्ष्वाकूणांहिसर्वेषांपुरोधाः परमागतिः ॥ तस्मादनंतरंसर्वेभवंतोदैवतंमम ॥२२॥ ) ॥ २१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ ततस्त्रिशंकोर्वचनंश्रुत्वाक्रोधसमन्वितम् ॥ ऋषिपुत्रशतंरामराजानमिदमब्रवीत् ॥१॥ प्रत्याख्यातोसिदुर्मेधोगुरुणासत्यवादिना ॥ तंकथं समतिक्रम्यशाखांतरमुपेयिवान् ॥ २ ॥ इक्ष्वाकूणांहिसर्वेषांपुरोधाःपरमागतिः ॥ नचातिक्रमितुंशक्यंवचनंसत्यवादिनः ॥ ३ ॥ अशक्यमितिसोवाचवसिष्ठोभगवानृषिः ॥ तंवयंवैसमाहर्तुंक्रतुंशक्ताःकथंचन ॥४॥ बालिशस्त्वंनरश्रेष्ठगम्यतांस्वपुरंपुनः ॥याजनेभगवाञ्छक्तस्त्रैलोक्यस्यापिपार्थिव ॥५॥

॥ १७ ॥ १८ ॥ ब्राह्मणान् अन्वर्थब्राह्मणान् ॥ १९ ॥ सिद्ध्यर्थं स शरीरस्वर्गगमनसिद्ध्यर्थम् ॥ २० ॥ गुरुपुत्रानृते तान्विना अन्यां कांचन गतिमहं न पश्यामीत्यन्वयः ॥ २१ ॥ ॥ अयं श्लोकः प्रक्षिप्त इति कतकस्वरसः । तस्मात् इक्ष्वाकूणां परमगतिरूपात्पुरोधसो वसिष्ठादनंतरमित्यर्थः ॥ २२ ॥ रेफैमानः ॥ ॥ इतिश्रीरा०श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ ॥ छ ॥ क्रोधसमन्वितमिति । ऋषिपुत्रशतविशेषणम् ॥ १ ॥ दुर्मेधः दुर्बुद्धे । शाखांतरं याजनादिना रक्षकांतरम् ॥ २ ॥ न चातिक्रमितुं शक्यम् । इक्ष्वाकुभिरिति शेषः ॥ ३ ॥ सोवाचेति । सोचि लोपे चेदिति साधु । तं क्रतुं यमशक्यमित्युवाच तं यज्ञमित्यर्थः । कथं च न कथमपि न शक्ता इत्यर्थः ॥ ४ ॥ बालिशः अज्ञः । त्रैलोक्यस्यापि सिद्ध्यर्थं याजने इत्यर्थः ।

१ अयं श्लोकः प्रक्षिप्त इति तकः । २ कपुस्तके कतकस्वरसात् ।

भगवान् वसिष्ठः ॥ ९ ॥ अवमानं तेनासाध्यतयोक्तार्थस्य साधनरूपम् ॥ ६ ॥ एतान् वासिष्ठान् ॥ ७ ॥ अन्यां गतिं याजकांतरम् । घोराभिसंहितं घोराभिप्रायसंयुक्तम् । कुलगुर्वतिक्रमेण अन्याश्रयस्य कुलनाशहेतुतया तदभिप्रायस्य घोरत्वम् ॥८॥ चंडालत्वं गमिष्यसीति शेपुरिति योजना । तादृशपापिष्ठदर्शनस्य पापजनकत्वात्स्वस्वाश्रमप्रवेशस्तेषाम् ॥ ९ ॥ परुषो रूक्षांगः । ध्वस्तमूर्धजः खर्वकेशः ॥१०॥चिता श्मशानं तत्र भवं पुष्पभस्मादि माल्यांगरागं यस्य । अयोविकारः आयसं तदाभरणः। त्यज्य त्यक्त्वा ॥११॥ अनुगामिनः सहगताः प्राद्रवन् तं त्यक्त्वा गताः । परमात्मवान् धीरः॥१२॥ दह्यमान इति । अस्य दुःखेनेत्यादिः । विश्वामित्रं जगामेति पूर्वेणान्वयः । वसिष्ठवैरित्वात विफलीकृतं वसिष्ठतत्पुत्रैर्विनाशितैहिकामुष्मिकार्थम् ॥ १३ ॥ १४ ॥ यः त्वं शापाच्चंडालतां गतः तस्य

अवमानंकथंकर्तुंतस्यशक्ष्यामहेवयम् ॥ तेषांतद्वचनंश्रुत्वाक्रोधपर्याकुलाक्षरम् ॥ ६ ॥ सराजापुनरेवैतानिदंवचनमब्रवीत् ॥ प्रत्याख्यातोभगवतागुरुपुत्रैस्तथैवहि ॥ ७ ॥ अन्यांगतिंगमिष्यामिस्वस्तिवोस्तुतपोधनाः ॥ ऋषिपुत्रास्तुतच्छ्रुत्वावाक्यंघोराभिसंहितम् ॥ ८ ॥ शेपुःपरमसंक्रुद्धाश्चंडालत्वंगमिष्यसि ॥ इत्युक्त्वातेमहात्मानोविविशुःस्वंस्वमाश्रमम् ॥९॥ अथरात्र्यांव्यतीतायांराजाचंडालतांगतः ॥ नीलवस्त्रधरोनीलःपुरुषोध्वस्तमूर्धजः॥१०॥ चित्यमाल्यांगरागश्चआयसाभरणोऽभवत् ॥ तंदृष्ट्वामंत्रिणःसर्वेत्यज्यचंडालरूपिणम् ॥ ११ ॥ प्राद्रवन्सहितारामपौरायेस्यानुगामिनः ॥ एकोहिराजाकाकुत्स्थजगामपरमात्मवान् ॥ १२ ॥ दह्यमानोदिवारात्रंविश्वामित्रंतपोधनम् ॥ विश्वामित्रस्तुतंदृष्ट्वाराजानंविफलीकृतम् ॥ १३ ॥ चंडालरूपिणंरामसुनिःकारुण्यमागतः ॥ कारुण्यात्समहातेजावाक्यंपरमधार्मिकः ॥ १४ ॥ इदंजगादभद्रंतेराजानंघोरदर्शनम् ॥ किमागमनकार्यंतेराजपुत्रमहाबल ॥ १५ ॥ अयोध्याधिपतेवीरशापाच्चंडालतांगतः ॥ अथतद्वाक्यमाकर्ण्यसराजाचंडालतांगतः ॥१६॥ अब्रवीत्प्रांजलिर्वाक्यंवाक्यज्ञोवाक्यकोविदम् ॥ प्रत्याख्यातोस्मिगुरुणागुरुपुत्रैस्तथैवच ॥ १७ ॥ अनवाप्यैवतंकामंमयाप्राप्तोविपर्ययः ॥ सशरीरोदिवंयायामितिमेसौम्यदर्शन ॥ १८ ॥ मयाचेष्टंक्रतुशतंतच्चनावाप्यतेफलम् ॥ अनृतंनोक्तपूर्वंमेनचवक्ष्येकदाचन ॥ १९ ॥ कृच्छ्रेष्वपिगतःसौम्यक्षत्रधर्मेणतेशपे ॥ यज्ञैर्बहुविधैरिष्टंप्रजाधर्मेणपालिताः ॥ २० ॥ गुरवश्चमहात्मानःशीलवृत्तेनतोषिताः ॥ धर्मेप्रयतमानस्ययज्ञंचाहर्तुमिच्छतः ॥ २१ ॥ परितोषंनगच्छंतिगुरवोमुनिपुंगव ॥ दैवमेवपरंमन्येपौरुषंतुनिरर्थकम् ॥ २२ ॥

ते इहागमनकार्यं किमित्यन्वयः ॥ १५ ॥ १६ ॥ १७ ॥ यं काममुद्दिश्य गतः तं काममनवाप्य । नैतावदेव । अपि तु विपर्ययः जातिभ्रंशः एवं वेषरूपः । काममाह । सशरीर इत्यादि । इतीति । अस्य काम इति शेषः । सौम्यदर्शनेति । संबोधनम् ॥ १८ ॥ तच्च तथापि तत्फलं सशरीरस्वर्गप्राप्तिरूपं नावाप्यत इत्यन्वयः । क्रतुशतं न कृतं त्वयेति चेत्तत्राह । अनृतमिति । कृच्छ्रेष्वपि गतोऽनृतं न वक्ष्ये इत्यन्वयः । क्षत्रधर्मेण तत्साक्षितया ॥ १९ ॥ २० ॥ शीलं सद्गुणः । वृत्तम् आचारः । इच्छतः । ममेति शेषः ॥ २१ ॥ न गच्छंति न गच्छंति स्म । यदेवम् अतो दैवमेव प्रारब्धफलम्

दृष्टमेव परं श्रेष्ठं हिताहितमापणे । पौरुषम् इदानींतनधर्मानुष्ठानं निरर्थकम् । प्रारब्धतिरस्कारे दुर्बलमित्यर्थः ॥ २२ ॥ दैवम् उक्तम् । आक्रम्यते अभिभूयते । परमा गतिः साक्षादितरतिरस्कारेण ऐहिक सुखदुःखदम् । प्रसादं दैवानुकूल्यसमर्थं त्वदीयं प्रसादम् इच्छतः मे प्रसादं कर्तुम् अर्हसि । दैवेनोपहतं तिरस्कृतम् इहानुष्ठीयमानं कर्म यस्य ॥ २३ ॥ २४ ॥ वीरैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे अष्टपंचाशः सर्गः ॥ ५८ ॥ ॥ उक्तेति ॥ १ ॥ २ ॥ यज्ञसाह्यं यज्ञसाहाय्यम् ॥ ३ ॥ अनेन रूपेण गुरुपुत्रशापकृतेन चंडालरूपेण । ऋषिशापस्यान्यथाकर्तुमशक्यत्वात् । गमिष्यसि । स्वर्गमिति शेषः । जातिचंडालत्वाभावाच्च यज्ञप्रवृत्तिः ॥ ४ ॥ हस्तप्राप्तं अनायासलभ्यम् । तत्र हेतुः-यस्त्वमित्यादि ॥ ५ ॥ यज्ञसंभारकारणात्

दैवेनाक्रम्यतेसर्वंदैवंहिपरमागतिः ॥ तस्यमेपरमार्तस्यप्रसादमभिकांक्षतः ॥ कर्तुमर्हसिभद्रंतेदैवोपहतकर्मणः ॥२३॥ नान्यांगतिंगमिष्यामिनान्यच्छरण मस्तिमे ॥ दैवंपुरुषकारेणनिवर्तयितुमर्हसि ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा०बालकांडे अष्टपंचाशः सर्गः ॥५८॥ उक्तवाक्यंतुराजानंकृपयाकुशिकात्मजः ॥ अब्रवीन्मधुरंवाक्यंसाक्षाच्चंडालतांगतम् ॥ १ ॥ इक्ष्वाकोस्वागतंवत्सजानामित्वांसुधार्मिकम् ॥ शरणंते प्रदास्यामिमाभैषीर्नृपपुंगव ॥ २ ॥ अहमामंत्रयेसर्वान्महर्षीन्पुण्यकर्मणः ॥ यज्ञसाह्यकराञ्राजंस्ततोयक्ष्यसिनिर्वृतः ॥ ३ ॥ गुरुशापकृतंरूपंयदिदंत्व यिवर्तते ॥ अनेनसहरूपेणसशरीरोगमिष्यसि ॥ ४ ॥ हस्तप्राप्तमहंमन्येस्वर्गंतवनराधिप ॥ यस्त्वंकौशिकमागम्यशरण्यंशरणागतः ॥ ५ ॥ एवमु क्त्वामहातेजाःपुत्रान्परमधार्मिकान् ॥ व्यादिदेशमहाप्राज्ञान्यज्ञसंभारकारणात् ॥ ६ ॥ सर्वाञ्छिष्यान्समाहूयवाक्यमेतदुवाचह ॥ सर्वान्नृषीन्सवासि ष्ठानानयध्वंममाज्ञया ॥ ७ ॥ सशिष्यान्सुहृदश्चैवसर्त्विजःसुबहुश्रुतान् ॥ यदन्योवचनंब्रूयान्मद्वाक्यबलचोदितः ॥ ८ ॥ तत्सर्वमखिलेनोक्तंममाख्ये यमनादृतम् ॥ तस्यतद्वचनंश्रुत्वादिशोजग्मुस्तदाज्ञया ॥९॥ आजग्मुरथदेशेभ्यःसर्वेभ्योब्रह्मवादिनः ॥ तेचशिष्याःसमागम्यमुनिंज्वलिततेजसम् ॥१०॥ ऊचुश्चवचनंसर्वंसर्वेषांब्रह्मवादिनाम् ॥ श्रुत्वातेवचनंसर्वेसमायांतिद्विजातयः ॥११॥ सर्वदेशेषुचागच्छन्वर्जयित्वामहोदयम् ॥ वासिष्ठंयच्छतंसर्वंक्रोधपर्या कुलाक्षरम् ॥ १२ ॥ यथाहवचनंसर्वंशृणुत्वंमुनिपुंगव ॥ क्षत्रियोयाजकोयस्यचंडालस्यविशेषतः ॥ १३ ॥ कथंसदसिभोक्तारोहविस्तस्यसुरर्षयः ॥ ब्राह्मणावामहात्मानोभुक्त्वाचांडालभोजनम् ॥ १४ ॥

यज्ञसामग्रीसंपादनार्थम् ॥ ६ ॥ शिष्याणाम् ऋष्यानयने आज्ञा ॥ ७ ॥ सुहृदः स्वस्य स्वस्वऋत्विक्सहितान् । तद्विशेषणं—सुबहुश्रुतानिति । यदिति । आहूतः अन्यो वा अनादृतम् उपेक्षारूपं चंडालयाजनरूपं निंदात्मकं वा यद्वाक्यं ब्रूयात् तत्सर्वम् उक्तम् अखिलेन मम आख्येयम् ॥ ८ ॥ ९ ॥ १० ॥ तेतव ॥ ११ ॥ सर्वदेशेष्विति । अस्य स्थिता इति शेषः । आगच्छन्निति । अस्य केचिदिति शेषः । महोदयं तन्नामानमृषिं वासिष्ठं यच्छतं सर्वं तच्च वर्जयित्वेति योजना । तद्वासिष्ठशतं क्रोधपर्याकुलाक्षरं यथा येन प्रकारेण वचनमाह तत्सर्वं शृण्वित्यर्थः । क्षत्रिय इत्यादि । ब्राह्मणस्यैव याजनाधिकारात् चंडालस्य यज्ञेऽनधिकाराच्च ॥ १२ ॥ १३ ॥ सुराणां देवतात्वेन भोक्तृत्वम् । ऋत्विक्त्वेन यज्ञशिष्टभोक्तृत्वम् ॥ १४ ॥

पालिता इति । व्यंग्योक्तिः । वचननैष्ठुर्यम् । अर्शआद्यजंतम् । नैष्ठुर्यवद्वचनमित्यर्थः ॥ १५ ॥ वासिष्ठाँ इति । आद्यर्ध पूर्वान्वयि । सहमहोदयाः महोदयेन सहिताः ॥ १६ ॥ अदुष्टत्वे हेतुः तप उग्रमिति । तपस्तेजसा क्षत्रियस्य चंडालयाजनमपि न दोषायेति ज्ञात्वापि यत् दूषयंति स्म तस्मात्–भस्मीभूता इत्यादि ॥ १७ ॥ १८ ॥ सप्तजातिशतानि सप्तजन्मशतानि । मृतपाः शवव स्त्रादिहारिणः । मुष्टिका नाम तन्नामानः इदानीं डोंबा इति प्रसिद्धाः ॥ १९ ॥ विकृताः विकृतव्यापाराः । विरूपाः विकृताकाराः । अदूष्यं ह्यदूषयदिति । प्राग्वत् ॥२०॥ प्राणातिपातानिरतः प्राणिनां प्राणनाशोद्यतः । अनुक्रोशः दया ॥ २१ ॥ वर्तयिष्यति प्राप्स्यति ॥ अत्रेदं बोध्यं–क्षत्रियत्वेपि याजने प्रवृत्तिः-तत्रापि शापदूषितचंडालयाजने प्रवृत्तिः–ब्राह्मणेषु वासिष्ठेषु वधादिकृच्छ्रापंक्त्याप्रवृत्तिः–

कथंस्वर्गंगमिष्यंतिविश्वामित्रेणपालिताः ॥ एतद्वचननैष्ठुर्यमूचुःसंरक्तलोचनाः ॥ १५ ॥ वासिष्ठामुनिशार्दूलसर्वेसहमहोदयाः ॥ तेषांतद्वचनंश्रुत्वासर्वेषां मुनिपुंगवः ॥ १६ ॥ क्रोधसंरक्तनयनःसरोषमिदमब्रवीत् ॥ यद्दूषयंत्यदुष्टंमांतपउग्रंसमास्थितम् ॥ १७ ॥ भस्मीभूतादुरात्मानोभविष्यंतिनसंशयः॥ अद्यतेकालपाशेननीतावैवस्वतक्षयम् ॥ १८ ॥ सप्तजातिशतान्येवमृतपाःसंभवंतुते ॥ श्वमांसनियताहारामुष्टिकानामनिर्घृणाः ॥ १९ ॥ विकृताश्चवि रूपाश्चलोकाननुचरंत्विमान् ॥ महोदयश्चदुर्बुद्धिर्मामदूष्यंह्यदूषयत् ॥२०॥ दूषितःसर्वलोकेषुनिषादत्वंगमिष्यति ॥ प्राणातिपातनिरतोनिरनुक्रोशतां गतः ॥२१॥ दीर्घकालंममक्रोधाद्दुर्गतिंवर्तयिष्यति ॥ एतावदुक्त्वावचनंविश्वामित्रोमहातपाः ॥ विरराममहातेजाऋषिमध्येमहामुनिः ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं०सा०वालकांडे एकोनषष्टितमः सर्गः ॥५९॥ ॥ तपोबलहताञ्ज्ञात्वावासिष्ठान्समहोदयान् ॥ ऋषि मध्येमहातेजाविश्वामित्रोऽभ्यभाषत ॥ १ ॥ अयमिक्ष्वाकुदायादस्त्रिशंकुरितिविश्रुतः ॥ धर्मिष्ठश्चवदान्यश्चमांचैवशरणंगतः ॥ २ ॥ स्वेनानेनशरीरे णदेवलोकजिगीषया ॥ यथायंस्वशरीरेणदेवलोकंगमिष्यति ॥ ३ ॥ तथाप्रवर्त्यतांयज्ञोभवद्भिश्चमयासह ॥ विश्वामित्रवचःश्रुत्वासर्वएवमहर्षयः ॥ ४ ॥ ऊचुःसमेताःसहसाधर्मज्ञाधर्मसंहितम् ॥ अयंकुशिकदायादोमुनिःपरमकोपनः ॥ ५ ॥ यदाहवचनंसम्यगेतत्कार्यंनसंशयः ॥ अग्निकल्पोहिभगवाञ्छापं दास्यतिरोषतः ॥६॥ तस्मात्प्रवर्त्यतांयज्ञःसशरीरोयथादिवि ॥ गच्छेदिक्ष्वाकुदायादोविश्वामित्रस्यतेजसा ॥ ७ ॥ ततःप्रवर्त्यतांयज्ञःसर्वेसमधितिष्ठत॥ एवमुक्त्वामहर्षयःसंजह्रुस्ताःक्रियास्तदा ॥ ८ ॥ याजकश्चमहातेजाविश्वामित्रोऽभवत्क्रतौ ॥ ऋत्विजश्चानुपूर्व्येणमंत्रवन्मंत्रकोविदाः ॥ ९ ॥

एतत्सर्वं ब्राह्मणत्वेच्छया प्रवर्तमानतपसो विनाशाय दैवकृतमिति ॥ २२ ॥ खैरमानः ॥ ॥ इति श्री० श्रीरा० रामा० रा० वा० आ० बाल० एकोनषष्टितमः सर्गः ॥ ५९ ॥ ज्ञात्वा योगबलेन ॥ १ ॥ इक्ष्वाकुदायादः तद्वंश्यः । एवमादिगुणैर्यागाधिकारित्वं सूचितम् ॥ २ ॥ स्वं प्रति शरणमागमने हेतुमाह । स्वेनेत्यादि ॥ ३ ॥ प्रवर्त्यताम् आरभ्यताम् ॥ ४ ॥ धर्मसंहितमिति । क्रियावि शेषणम् । ऊचुरिति । अस्य अन्योन्यमिति शेषः । यदूचुस्तदाह । अयमित्यादि ॥ ५ ॥ अग्निकल्पः अजितकामक्रोधत्वात् शापं दास्यति यतः । तस्मादिति ॥ ६ ॥ ७ ॥ ततः सशरीरस्य स्वर्गगम नाय यज्ञः प्रवर्त्यताम् । सर्वे भवंतः स्वस्वकृत्यम् अधितिष्ठत प्रारभध्वम् । ताः क्रियाः स्वस्वार्त्विज्यकर्माणि ॥ ८ ॥ याजकः । अध्वर्युरिति यावत् । अत एव वक्ष्यति-स्रुवमुद्यम्येति ॥ ९ ॥

१ अत्रैकः श्लोकोधिकः कपुस्तकात् ।

यथाकल्पं शाखानुसारेण । यथाविधि यथासंप्रदायानुष्ठानम् । कल्पशास्त्रे नानापक्षोपन्यासस्थले अनुष्ठेयांशे संप्रदायस्यैव शरणत्वात् । महता कालेन अधिककालसाध्ययत्नपूर्वकमंत्रपाठेन ॥ १० ॥ सर्वदेवताः। प्रतीति शेषः । तदा तथापि । अनधिकारिणा याजनायजनाच्च ॥ ११ ॥ उद्यम्य ऊर्ध्वं क्रोधेन प्रक्षिप्य । कोपस्यैवाधिकावस्था क्रोधः ॥ १२ ॥ पश्य मे इति । भागार्थं देवानामनागमनेन असाध्यत्वेपि स्वतपोव्ययेन त्वामभीष्टं स्वर्गं नयामीति भावः ॥ १३ ॥ स्वशरीरेण दुष्प्रापमित्यन्वयः । हि यदि मया स्वार्जितं यत्किंचिदपि तपसः फलं सुकृतमस्ति ॥ १४ ॥ तदाह । हे राजन् त्वं तस्य तेजसा वैभवेन सशरीरो दिवं गच्छ । क्रुद्धत्वात्पुनरुक्त्यादि न दोषः ॥ १५ ॥ मुनीनां पश्यतां मुनिषु पश्यत्सु ॥ १६ ॥ स्वर्गकृतालयः स्वर्गे निजपुण्यकर्मणा कृतः आलयः यस्य तादृशः स्वर्गवासार्हः नासीत्यर्थः ॥ १७ ॥ तत्र हेतुः—गुरुशापेत्यादि ॥ १८ ॥ १९ ॥ आहारयत् अकरोत् ॥ २० ॥ सृजन्निति । यथा उत्तरतः ध्रुवः अचलस्तिष्ठति एवं त्रिशंकुस्तिष्ठतु । तस्य

चक्रुःसर्वाणिकर्माणियथाकल्पंयथाविधि ॥ ततःकालेनमहताविश्वामित्रोमहातपाः ॥ १० ॥ चकारावाहनंतत्रभागार्थंसर्वदेवताः ॥ नाभ्यागमंस्तदातत्रभागार्थंसर्वदेवताः ॥ ११ ॥ ततःकोपसमाविष्टोविश्वामित्रोमहामुनिः ॥ स्रुवमुद्यम्यसक्रोधस्त्रिशंकुमिदमब्रवीत् ॥ १२ ॥ पश्यमेतपसोवीर्यंस्वार्जितस्यनरेश्वर ॥ एषत्वांस्वशरीरेणनयामिस्वर्गमोजसा ॥ १३ ॥ दुष्प्रापंस्वशरीरेणस्वर्गंगच्छनरेश्वर ॥ स्वार्जितंकिंचिदप्यस्तिमयाहितपसःफलम् ॥ ॥ १४ ॥ राजंस्त्वंतेजसातस्यसशरीरोदिवंव्रज ॥ उक्तवाक्येमुनौतस्मिन्सशरीरोनरेश्वरः ॥ १५ ॥ दिवंजगामकाकुत्स्थमुनीनांपश्यतांस्तदा ॥ स्वर्गलोकंगतंदृष्ट्वात्रिशंकुंपाकशासनः ॥ १६ ॥ सहसर्वैःसुरगणैरिदंवचनमब्रवीत् ॥ त्रिशंकोगच्छभूयस्त्वंनासिस्वर्गकृतालयः ॥ १७ ॥ गुरुशापहतोमूढपतभूमिमवाक्छिराः ॥ एवमुक्तोमहेंद्रेणत्रिशंकुरपतत्पुनः ॥ १८ ॥ विक्रोशमानस्त्राहीतिविश्वामित्रंतपोधनम् ॥ तच्छ्रुत्वावचनंतस्यक्रोशमानस्यकौशिकः ॥ १९ ॥ रोषमाहारयत्तीव्रंतिष्ठतिष्ठेतिचाब्रवीत् ॥ ऋषिमध्येसतेजस्वीप्रजापतिरिवापरः ॥ २० ॥ सृजन्दक्षिणमार्गस्थान्सप्तर्षीनपरान्पुनः ॥ नक्षत्रवंशमपरमसृजत्क्रोधमूर्च्छितः ॥ २१ ॥ दक्षिणांदिशमास्थायऋषिमध्येमहायशाः ॥ सृष्ट्वानक्षत्रवंशंचक्रोधेनकलुषीकृतः ॥ २२ ॥ अन्यमिंद्रंकरिष्यामिलोकोवास्यादनिंद्रकः॥ दैवतान्यपिसक्रोधात्स्रष्टुंसमुपचक्रमे ॥२३॥ ततःपरमसंभ्रांताःसर्षिसंघाःसुरासुराः ॥ विश्वामित्रंमहात्मानमूचुःसानुनयंवचः ॥ २४ ॥ अयंराजामहाभागगुरुशापपरिक्षतः ॥ सशरीरोदिवंयातुंनार्हत्येवतपोधन ॥ २५ ॥ तेषांतद्वचनंश्रुत्वादेवानांमुनिपुंगवः ॥ अब्रवीत्सुमहद्वाक्यंकौशिकःसर्वदेवताः ॥ २६ ॥ सशरीरस्यभद्रंवस्त्रिशंकोरस्यभूपतेः ॥ आरोहणंप्रतिज्ञातंनानृतंकर्तुमुत्सहे ॥ २७ ॥ स्वर्गोस्तुसशरीरस्यत्रिशंकोरस्यशाश्वतः ॥ नक्षत्राणिचसर्वाणिमामकानिध्रुवाण्यथ ॥ २८ ॥

परितो यथा सप्तर्षिमंडलं तथा अस्यापि भवत्वित्याशयः । सृजन्निति । हेतौ शतृप्रत्ययः । सृष्टिं कुर्वन् तद्धेतोः दक्षिणमार्गस्थान् अपरान् असृजत । पुनः सप्तविंशतिनक्षत्रमालाम् असृजत् ॥ २१ ॥ नक्षत्रवंशं क्षुद्रनक्षत्रगणम् ॥ २२ ॥ अन्यमिंद्रम् । स्वसृज्यमानस्वर्गस्येति शेषः । अथवा मया सृज्यमानः स्वर्गः अनिंद्र एवास्तु । त्रिशंकुरेव तत्रेंद्रो भवत्वित्याशयः। एवमिंद्रस्थाने त्रिशंकुं प्रतिष्ठाप्य तस्य परिवारभूतदैवतानि स्रष्टुमुपचक्रमे ॥ २३ ॥ तत इति । देवमतिस्वर्गवत् स्वस्यापि प्रतिस्वर्गं कुर्यात् इति हेतोः सुराः असुराश्च संभ्रांताः पर्याकुलचित्ता इत्यर्थः ॥ २४ ॥ अनुनयप्रकारमाह । अयं राजेत्यादि । गुरुशापेन परिक्षतः चंडालत्वं प्राप्तः दिवं ब्रह्मसृष्टं त्वत्सृष्टं वा स्वर्गम् ॥२५॥२६॥ भद्रं व इति । अनेन अनुनयः ॥२७॥ स्वर्गोस्तु स्वर्गपदवाच्यसुखविशेषानुभवोस्तु॥२८॥

लोकाः भूरादिसत्यांताः ॥ २९ ॥ ३० ॥ वैश्वानरपथात् ज्योतिःशास्त्रप्रसिद्धानादिज्योतिश्चक्रमार्गात् बहिः बहिर्देशे एतानि तानि नक्षत्राणि तिष्ठंत्विति पूर्वेणान्वयः । तेषु त्वदीयेषु ज्योतिःषु नक्षत्रेषु जाज्वलन् भृशं ज्वलन् ॥ ३१ ॥ अवाक्छिराः अस्मद्युक्तावाक्छिरस्त्ववानेव त्रिशंकुः देवतुल्यसुखवान् तिष्ठतु । एतानि तव ज्योतींषि तम् अनुयास्यंति च ॥ ३२ ॥ स्वर्गलोकगतं यथा स्वर्गलोकगतमिवेत्यंतं पूर्वान्वयि ॥ ३३ ॥ बाढमित्येवेति । आहेति शेषः । दुराग्रहस्य अनर्थहेतुतां प्रतिसंधाय देवतावचनमंगीचकार ॥ ३४ ॥ भोंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण० वा० आदिकाव्ये बालकांडे षष्टितमः सर्गः ॥ ६० ॥ ॥ छ ॥ ॥ वनवासिनः तपोवनवासिनः तान् स्वाज्ञया यज्ञार्थमागतान् प्रस्थितान् वीक्ष्य सर्वांस्तानब्रवीदित्यन्वयः । वनवासिन इति अस्य स्थाने विनयान्वितानिति पठांतरम् ॥ १ ॥ दक्षिणां दिशम् आ समंतात् व्याप्य आस्थितोयं त्रिशंकुरूपो महाविघ्नः अस्माकं तपोनाशकत्वात् प्रवृत्तः । तच्छायाक्रांतत्वाच्चायं देशः अतः परं तपसोऽयोग्य इति भावः ॥ २ ॥

यावल्लोकाधरिष्यंतितिष्ठंत्वेतानिसर्वशः ॥ मत्कृतानिसुराःसर्वेतदनुज्ञातुमर्हथ ॥ २९ ॥ एवमुक्ताःसुराःसर्वेप्रत्यूचुर्मुनिपुंगवम् ॥ एवंभवतुभद्रंतेतिष्ठंत्वेतानिसर्वशः ॥ ३० ॥ गगनेतान्यनेकानिवैश्वानरपथाद्बहिः ॥ नक्षत्राणिमुनिश्रेष्ठतेषुज्योतिःषुजाज्वलन् ॥ ३१ ॥ अवाक्छिरास्त्रिशंकुश्चतिष्ठत्वमरसन्निभः ॥ अनुयास्यंतिचैतानिज्योतींषिनृपसत्तमम् ॥ ३२ ॥ कृतार्थंकीर्तिमंतंचस्वर्गलोकगतंयथा ॥ विश्वामित्रस्तुधर्मात्मासर्वदेवैरभिष्टुतः ॥ ३३ ॥ ऋषिमध्येमहातेजाबाढमित्येवदेवताः ॥ ततोदेवामहात्मानोऋषयश्चतपोधनाः ॥ जग्मुर्यथागतंसर्वेयज्ञस्यांतेनरोत्तम ॥ ३४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा०बालकांडे षष्टितमः सर्गः ॥ ६० ॥ विश्वामित्रोमहातेजाःप्रस्थितान्वीक्ष्यतानृषीन् ॥ अब्रवीन्नरशार्दूलसर्वांस्तान्वनवासिनः ॥ १ ॥ महाविघ्नःप्रवृत्तोयंदक्षिणामास्थितोदिशम् ॥ दिशमन्यांप्रपत्स्यामस्तत्रतप्स्यामहेतपः ॥ २ ॥ पश्चिमायांविशालायांपुष्करेषुमहात्मनः ॥ सुखंतपश्चरिष्यामःसुखंतद्धितपोवनम् ॥ ३ ॥ एवमुक्त्वामहातेजाःपुष्करेषुमहामुनिः ॥ तपउग्रंदुराधर्षंतेपेमूलफलाशनः ॥ ४ ॥ एतस्मिन्नेवकालेतुअयोध्याधिपतिर्महान् ॥ अंबरीषइतिख्यातोयष्टुंसमुपचक्रमे ॥ ५ ॥ तस्यवैयजमानस्यपशुमिंद्रोजहारह ॥ प्रनष्टेतुपशौविप्रोराजानमिदमब्रवीत् ॥ ६ ॥ पशुरभ्याहृतोराजन्प्रनष्टस्तवदुर्नयात् ॥ अरक्षितारंराजानंघ्नंतिदोषानरेश्वर ॥ ७ ॥ प्रायश्चित्तंमहद्ध्येतन्नरंवापुरुषर्षभ ॥ आनयस्वपशुंशीघ्रंयावत्कर्मप्रवर्तते ॥ ८ ॥ उपाध्यायवचःश्रुत्वासराजापुरुषर्षभः ॥ अन्वियेषमहाबुद्धिःपशुंगोभिःसहस्रशः ॥ ९ ॥ देशाञ्जनपदांस्तांस्तान्नगराणिवनानिच ॥ आश्रमाणिचपुण्यानिमार्गमाणोमहीपतिः ॥ १० ॥ सपुत्रसहितंतातसभार्यंरघुनंदन ॥ भृगुतुंगेसमासीनमृचीकंसंददर्शह ॥ ११ ॥ तमुवाचमहातेजाःप्रणम्याभिप्रसाद्यच ॥ महर्षिंतपसादीप्तंराजर्षिरमितप्रभः ॥ १२ ॥ पृष्ट्वासर्वत्रकुशलमृचीकंतमिदंवचः ॥ गवांशतसहस्रेणविक्रीणीषेसुतंयदि ॥ १३ ॥

विशालायां विशालतपोवनवत्यां पश्चिमायां वर्तमानेषु पुष्करेषु तत्तीरे तपोवनेष्वित्यर्थः । महात्मन इति । महात्मान इत्यर्थकम् ऋषिसंबोधनम् । अदीर्घत्वमार्षम् ॥ ३ ॥ ४ ॥ ५ ॥ विप्रः पुरोहितः ॥ ६ ॥ अभ्याहृतः इदानीम् अस्माभिः आनीतः पशुः तव दुर्नयात् त्वत्पापवशात् तावकरक्षिणां प्रमादाच्च प्रनष्ट इत्यन्वयः । राजपापमाह । अरक्षितारम् । प्रजानामिति शेषः ॥ ७ ॥ एतत् पशुनाशरूपं महत्प्रायश्चित्तं महतः प्रायश्चित्तस्य कारणं प्रक्रांतं कर्म यावत्प्रवर्तते प्रवर्तिष्यते तावत् ततः प्रागेव नष्टं पशुम् अन्विष्य आनय तत्प्रतिनिधित्वेन क्रीत्वा नरं वा पशुमानयेत्यर्थः ॥ ८ ॥ सहस्रशो गोभिः निष्क्रयभूताभिरित्यर्थः ॥ ९ ॥ १० ॥ स पुत्रेति । स इति पृथक्पदम् । स अंबरीषः । भृगुतुंगं पर्वतशृंगविशेषः ॥ ११ ॥ १२ ॥ तं प्रसिद्धतपसम् ऋचीकम् । इदं वक्ष्यमाणं वचः ।

अब्रवीदिति शेषः। यदि विक्रीणीषे तदा कृतकृत्यः अस्मि भवेयम् । यतो यज्ञियं यज्ञे पूर्वं परिकल्पितं पशुं कापि न लभे ॥ १३ ॥ १४ ॥ इतः एतेषु । सार्वविभक्तिकस्तासिः ॥ १५ ॥ कथंचन बहुनापि मूल्येन । अनेनेतरयोरनुमतिः सूचिता । अप्रतिषिद्धमनुमतमिति न्यायात् ॥ १६ ॥ १७ ॥ शुनक इति कनिष्ठपुत्रनाम ॥ १८ ॥ पितृषु पितॄणाम् । रक्षिष्यामीत्यर्थे रक्ष्ये इत्यार्षम् ॥ १९ ॥ रामेति । संबुद्धिः ॥ २० ॥ मध्यमं मध्यमपुत्रं विक्रेयं मातापित्रोः विक्रेयत्वेन संमतं मन्ये । अर्थादिति शेषः ॥ २१ ॥ ब्रह्मवादिनः मध्यमपुत्रस्य ॥ २२ ॥ गृहीत्वा क्रीत्वा । यद्यप्यपत्यस्य दानक्रयौ शास्त्रनिषिद्धौ । तथापि अनेन कुलहानौ धर्मार्थमपत्यदानामिव यज्ञाय अपत्यक्रयो नाविगीत इति सूचितम् । पुत्रस्य चैवं पित्रधीनता उचितेति च बोधितम् ॥ २३ ॥ शुनःशेपं रथमारोप्येत्यन्वयः ॥ २४ ॥

पशोरर्थेमहाभागकृतकृत्योऽस्मिभार्गव ॥ सर्वेपरिगतादेशायज्ञियंनलभेपशुम् ॥ १४ ॥ दातुमर्हसिमूल्येनसुतमेकमितो मम ॥ एवमुक्तोमहातेजाऋचीकस्त्वब्रवीद्वचः ॥ १५ ॥ नाहंज्येष्ठंनरश्रेष्ठविक्रीणीयांकथंचन ॥ ऋचीकस्यवचःश्रुत्वातेषांमातामहात्मनाम् ॥१६॥ उवाचनरशार्दूलमंबरीषमिदंवचः ॥ अविक्रेयंसुतंज्येष्ठंभगवानाहभार्गवः ॥१७॥ ममापिदयितंविद्धिकनिष्ठंशुनकंप्रभो ॥ तस्मात्कनीयसंपुत्रंनदास्येतवपार्थिव ॥ १८॥ प्रायेणहिनरश्रेष्ठज्येष्ठाःपितृषुवल्लभाः ॥ मातॄणांचकनीयांसस्तस्माद्रक्ष्येकनीयसम् ॥ १९ ॥ उक्तवाक्येमुनौतस्मिन्मुनिपत्न्यांतथैवच ॥ शुनःशेपःस्वयंराममध्यमोवाक्यमब्रवीत् ॥ २० ॥ पिताज्येष्ठमविक्रेयंमाताचाहकनीयसम् ॥ विक्रेयंमध्यमंमन्येराजपुत्रनयस्वमाम् ॥ २१ ॥ अथराजामहाबाहुर्वाक्यांतेब्रह्मवादिनः ॥ हिरण्यस्यसुवर्णस्यकोटिभीरत्नराशिभिः ॥ २२ ॥ गवांशतसहस्रेणशुनःशेपंनरेश्वरः ॥ गृहीत्वापरमप्रीतोजगामरघुनंदन ॥ २३ ॥ अंबरीषस्तुराजर्षीरथमारोप्यसत्वरः ॥ शुनःशेपंमहातेजाजगामाशुमहायशाः ॥ २४ ॥ इत्यार्षे श्रीम० वा० आ० च० विं० सा० बालकांडे एकषष्टितमः सर्गः ॥ ६१ ॥

शुनःशेपंनरश्रेष्ठगृहीत्वातुमहायशाः ॥ व्यश्रमत्पुष्करेराजामध्याह्नेरघुनंदन ॥ १ ॥ तस्यविश्रममाणस्यशुनःशेपोमहायशाः ॥ पुष्करंक्षेत्रमागम्यविश्वामित्रंददर्शह ॥ २ ॥ तप्यंतमृषिभिःसार्धंमातुलंपरमातुरः ॥ विषण्णवदनोदीनस्तृष्णयाचश्रमेणच ॥ ३ ॥ पपातांकेमुनेरामवाक्यंचेदमुवाचह ॥ नमेस्तिमातानपिताज्ञातयोबांधवाःकुतः ॥ ४ ॥ त्रातुमर्हसिमांसौम्यधर्मेणमुनिपुंगव ॥ त्रातात्वंहिनरश्रेष्ठसर्वेषांत्वंहिभावनः ॥ ५ ॥

वर्तमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे एकषष्टितमः सर्गः ॥ ६१ ॥ ॥ व्यश्रमत् । व्यश्राम्यदिति पाठांतरम् ॥ १ ॥ विश्रममाणस्येति । विश्रामत इत्यर्थे आर्षम् ॥२॥ तृष्णया पिपासया जिजीविषया च श्रमेण चेति विषण्णवदनत्वे दीनत्वे परमातुरत्वे च हेतुः ॥३॥ अंके उत्संगे । मातुलत्वात्तत्र पातः । बांधवाः कुतः दूरादेव । सर्वथा न संत्येवेत्यर्थः ॥ ४ ॥ धर्मेण स्वार्जितेन । सर्वेषां शरणागतानाम् । भावनः सर्वेष्टसाधनम् । एको हिस्त्वर्थे ॥ ५ ॥

१ अत्रैकः २२ तमः श्लोकोधिकः कपुस्तकात् ।

कामस्याप्यकरणं संकल्प्य अत्युत्कटब्रह्मचर्यविषयां बुद्धिं दृढनिश्चयम् । जेतुकामः । काममिति शेषः ॥ १४ ॥ कौशिकी विश्वामित्रभगिनी नदी ॥ १५ ॥ उत्तरे पर्वते इति । एतत्पूर्वान्वयि । समागम्य । ब्रह्मणेति शेषः ॥ १६ ॥ लभताम् । भगवन्निति शेषः ॥ १७ ॥ देवमार्थनया महर्षिशब्देनैव संबोधयति । महर्षे इति ॥ १८ ॥ महत्त्वस्य विवरणम्–ऋषिमुख्यत्वमिति ॥ १९ ॥ प्रत्युवाचेति । पितामहमिति शेषः । अतुलं सर्वोत्तमं ब्रह्मर्षिशब्दं मदभीष्टं स्वार्जितैः कर्मभिः प्राप्यं यदि यतो भगवान्नाह न वदति ततो मन्ये अहं विजितेंद्रियः । अत्र काकुः । न विजितेंद्रिय इत्यर्थः । न तावदिति । विकारहेतुसंनिधाने विकाराभावे हि तत्त्वमिति भावः । न तावदिति लोकोक्तौ ॥ २० ॥ २१ ॥ २२ ॥ घर्मे ग्रीष्मे । आकाशं निरावरणदेशः ॥ २३ ॥ २४ ॥ २५ ॥ आत्महितम् ।

कौशिकीतीरमासाद्यतपस्तेपेदुरासदम् ॥ तस्यवर्षसहस्राणिघोरंतपउपासतः ॥ १५ ॥ उत्तरेपर्वतेरामदेवतानामभूद्भयम् ॥ अमंत्रयन्समागम्यसर्वे सर्षिगणाः सुराः ॥ १६ ॥ महर्षिशब्दंलभतांसाध्वयंकुशिकात्मजः ॥ देवतानांवचःश्रुत्वासर्वलोकपितामहः ॥ १७ ॥ अब्रवीन्मधुरंवाक्यंविश्वामित्रंतपोधनम् ॥ महर्षेस्वागतंवत्सतपसोग्रेणतोषितः ॥ १८ ॥ महत्त्वमृषिमुख्यत्वंददामितवकौशिक ॥ ब्रह्मणस्तुवचःश्रुत्वाविश्वामित्रस्तपोधनः ॥ १९ ॥ प्रांजलिःप्रणतोभूत्वाप्रत्युवाचपितामहम् ॥ ब्रह्मर्षिशब्दमतुलंस्वार्जितैःकर्मभिःशुभैः ॥ २० ॥ यदिमेभगवान्नाहततोहंविजितेंद्रियः ॥ तमुवाचततोब्रह्मानतावत्त्वंजितेंद्रियः ॥ २१ ॥ यतस्वमुनिशार्दूलइत्युक्त्वात्रिदिवंगतः ॥ विप्रस्थितेषुदेवेषुविश्वामित्रोमहामुनिः ॥ २२ ॥ ऊर्ध्वबाहुर्निरालंबोवायुभक्षस्तपश्चरन् ॥ घर्मेपंचतपाभूत्वावर्षास्वाकाशसंश्रयः ॥ २३ ॥ शिशिरेसलिलेशायीरात्र्यहानितपोधनः ॥ एवंवर्षसहस्रंहितपोघोरमुपागमत् ॥ २४ ॥ तस्मिन्संतप्यमानेतुविश्वामित्रेमहामुनौ ॥ संतापःसुमहानासीत्सुराणांवासवस्यच ॥ २५ ॥ रंभामप्सरसंशक्रःसर्वैःसहमरुद्गणैः ॥ उवाचात्महितंवाक्यमहितंकौशिकस्यच ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० सं०बालकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥

सुरकार्यमिदंरंभेकर्तव्यंसुमहत्त्वया ॥ लोभनंकौशिकस्येहकाममोहसमन्वितम् ॥ १ ॥ तथोक्तासाप्सरारामसहस्राक्षेणधीमता ॥ व्रीडिताप्रांजलिर्वाक्यंप्रत्युवाचसुरेश्वरम् ॥ २ ॥ अयंसुरपतेघोरोविश्वामित्रोमहामुनिः ॥ क्रोधमुत्स्रक्ष्यतेघोरंमयिदेवनसंशयः ॥ ३ ॥ ततोहिमेभयंदेवप्रसादंकर्तुमर्हसि ॥ एवमुक्तस्तयारामसभयंभीतयातदा ॥ ४ ॥ तामुवाचसहस्राक्षोवेपमानांकृतांजलिम् ॥ माभैषीरंभेभद्रंतेकुरुष्वममशासनम् ॥ ५ ॥ कोकिलोहृदयग्राही-माधवेरुचिरद्रुमे ॥ अहंकंदर्पसहितः स्थास्यामितवपार्श्वतः ॥ ६ ॥ त्वंहिरूपंबहुगुणंकृत्वापरमभास्वरम् ॥ तमृषिंकौशिकंभद्रेभेदयस्वतपस्विनम् ॥ ७ ॥ साश्रुत्वावचनंतस्यकृत्वारूपमनुत्तमम् ॥ लोभयामासललिताविश्वामित्रंशुचिस्मिता ॥ ८ ॥

आत्मा इंद्रः ॥ २६ ॥ [1]चैरमानः ॥ ॥ इति श्रीरा० श्रीरा० रा० वा० आ० बालकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥ ॥ छ ॥ ॥ लोभनं प्रतारणम् । काममोहेन कामज्वलितचित्तवैवश्येन समन्वितं युक्तम् ॥ १ ॥ व्रीडिता असामर्थ्यवचननिमित्ता व्रीडा ॥ २ ॥ उत्सृज्यते इति पाठेपि उत्स्रक्ष्यत इत्येवार्थः ॥ ३ ॥ हि यतः । अतः प्रसादम् एवं नियोगाभावरूपम् ॥ ४ ॥ ५ ॥ माधवे वसंते कोकिलो भूत्वाअहमित्यन्वयः ॥ ६ ॥ बहुगुणं हावभावादिगुणोपेतं रूपं रूपपरिष्कारम् । भेदयस्व कामोत्पादनेन तपसश्चालय ॥ ७ ॥ ललिता ललिताख्यभावयुक्ता ॥ ८ ॥

१ कपुस्तके इतोर्द्धश्लोकोधिकः ।

वल्गु मनोहरम् । कमनीयविषयलाभाच्चेतसो हर्षः ॥ ९ ॥ तस्य कोकिलस्य । गीतेन । रंभाया इति शेषः । संदेहं स्वत एवास्याः यदृच्छया आगमनम्-उत-इंद्रप्रेरितायाः मत्तपोभंगार्थमित्येवंरूपम् ॥ १० ॥ तत्सर्वं रंभागमनं तत्कृतप्रलोभनं च सहस्राक्षप्रेरणामूलमिति युक्त्या ध्यानेन च विज्ञाय निश्चित्य रंभां शशापेत्यन्वयः ॥ ११ ॥ शैली शिलाप्रतिमारूपा ॥ १२ ॥ यद्यपि स्वामिनियोगतः प्रवृत्तायाः रंभायाः शापदानमनुचितम् । इंद्रे एव तद्दानमुचितम् । तथापि क्रोधावेशेन युक्तायुक्तविवेकाभावः । अत एव पश्चाद्विवेकं लब्ध्वा तामनुगृह्णाति । ब्राह्मण इति । वसिष्ठ इत्यर्थ इति कतकः । एतेन कामादपि क्रोधो दुर्जय इति सूचितम् । आत्मनः कोपं धारयितुम् अशक्नुवन् तां शप्त्वा तपोव्ययजन्यदुःखेन संतापं पश्चात्तापम् । उपागत इति शेषः ॥ १३ ॥ १४ ॥ महर्षेः वचः श्रुत्वा कंदर्पः स च इंद्रश्च निर्गत इत्यन्वयः ॥ १५ ॥ कोपेन चात्कामेन च तपोपहरणे कृते सति कामक्रोधहतत्वादेव अजितैः इंद्रियैरित्यन्वयः । आपाततो रंभादर्शनप्रवृत्त्या कामेनापि तपःक्षयः । आत्मनो मनसः शांतिं दुःखोपशमम् ॥ १६ ॥

**कोकिलस्यतुशुश्राववल्गुव्याहरतःस्वनम् ॥ संप्रहृष्टेनमनसासचैनामन्ववैक्षत ॥ ९ ॥ अथतस्यचशब्देनगीतेनाप्रतिमेनच ॥ दर्शनेनचरंभायामुनिः संदेहमागतः ॥१०॥ सहस्राक्षस्यतत्सर्वंविज्ञायमुनिपुंगवः ॥ रंभांक्रोधसमाविष्टःशशापकुशिकात्मजः ॥११॥ यन्मांलोभयसेरंभेकामक्रोधजयैषिणम् ॥ दशवर्षसहस्राणिशैलीस्थास्यसिदुर्भगे ॥ १२ ॥ ब्राह्मणःसुमहातेजास्तपोबलसमन्वितः ॥ उद्धरिष्यतिरंभेत्वांमत्क्रोधकलुषीकृताम् ॥ १३ ॥ एवमुक्त्वामहातेजाविश्वामित्रोमहामुनिः ॥ अशक्नुवन्धारयितुंकोपंसंतापमात्मनः ॥ १४ ॥ तस्यशापेनमहतारंभाशैलीतदाभवत् ॥ वचःश्रुत्वाचकंदर्पोमहर्षेःसच निर्गतः ॥१५॥ कोपेनचमहातेजास्तपोपहरणेकृते ॥ इंद्रियैरजितैरामनलेभेशांतिमात्मनः ॥ १६ ॥ बभूवास्यमनश्चिंतातपोपहरणेकृते ॥ नैवंक्रोधंगमिष्यामिनचवक्ष्येकथंचन ॥१७॥ अथवानोच्छ्वसिष्यामिसंवत्सरशतान्यपि ॥ अहंहिशोषयिष्यामिआत्मानंविजितेंद्रियः ॥ १८ ॥ तावद्यावद्धिमेप्राप्तंब्राह्मण्यंतपसार्जितम् ॥ अनुच्छ्वसन्नभुंजानस्तिष्ठेयंशाश्वतीःसमाः ॥ १९ ॥ नहिमेतप्यमानस्यक्षयंयास्यंतिमूर्तयः ॥ एवंवर्षसहस्रस्यदीक्षांसमुनिपुंगवः ॥ चकाराप्रतिमांलोकेप्रतिज्ञांरघुनंदन ॥ २० ॥ इत्यार्षे श्रीम० वा० आ० च० विं० सा० बा० चतुःषष्टितमः सर्गः ॥ ६४ ॥ अथहैमवतींरामदिशंत्यक्त्वामहामुनिः ॥ पूर्वांदिशमनुप्राप्यतपस्तेपेसुदारुणम् ॥ १ ॥ मौनंवर्षसहस्रस्यकृत्वाव्रतमनुत्तमम् ॥ चकाराप्रतिमंरामतपःपरमदुष्करम् ॥२॥ पूर्णेवर्षसहस्रेतुकाष्ठभूतंमहामुनिम् ॥ विघ्नैर्बहुभिराधूतंक्रोधोनांतरमाविशत् ॥ ३ ॥ सकृत्वानिश्चयंरामतपआतिष्ठताव्ययम् ॥ तस्यवर्षसहस्रस्यव्रतेपूर्णेमहाव्रतः ॥ ४ ॥ भोक्तुमारब्धवानन्नंतस्मिन्कालेरघूत्तम ॥ इंद्रोद्विजातिर्भूत्वातंसिद्धमन्नमयाचत ॥ ५ ॥**

न च वक्ष्ये । शापादिवचनमिति शेषः ॥१७॥ आत्मानं शरीरम् ॥१८॥ यावत् यावता कालेन ब्राह्मण्यं प्राप्तं भवेत् तावत् शाश्वतीः समाः बहून् वत्सरान् ॥१९॥ मूर्तयः शरीरावयवाः तपोर्थत्वादनुच्छ्वासाभोजनयोः तद्बलेन स्थास्यंत्येवेति भावः । दीक्षाम् अनुच्छ्वासाभोजने उद्दिश्य अप्रतिमां प्रतिज्ञां सर्वथैवं करिष्य इत्यध्यवसायम् ॥ २० ॥ नरैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥ ॥ श्री ॥ ॥ अथ प्रतिज्ञोत्तरं हैमवतीम् उत्तराम् ॥ १ ॥ मौनरूपं व्रतं वर्षसहस्रसंबंधि । मौनं चात्र काष्ठमौनम् ॥ २ ॥ आधूतम् आकुलीकृतमपि । अंतरम् अंतःकरणम् ॥ ३ ॥ निश्चयं क्रोधाकरणविषयकम् । वर्षसहस्रसंबंधिनि व्रते पूर्णे सति ॥ ४ ॥ तस्मिन्काले व्रतपारणाकाले । सिद्धं पक्वम् ॥ ५ ॥

यथा च राजा कृतकार्यः स्यात् अहं च अव्ययः धर्मलोपाभाववान् दीर्घायुः तपः तप्त्वा स्वर्गं प्राप्नुयाम् । तथा कुर्विति शेषः ॥ ६ ॥ किल्बिषात् जीवविपत्तिरूपात् । भव्येन प्रसन्नेन । पुत्रं
ज्येष्ठम् ॥ ७ ॥ ८ ॥ यत्कृते यत्प्रयोजनाय । तदेवप्रयोजनमाह । परलोकहितार्थाय परलोकहितरूपप्रयोजनाय । तस्य प्रयोजनस्य ॥ ९ ॥ परलोकहितं प्रयोजनमाह ।
अयमिति । शरणं रक्षणम् । जीवितमात्रेण जीवितप्रदानमात्रेण । प्रियमिति । अस्य मम स्वस्य--जीवतो वाक्यकरणादिति स्मृतेः । शुनकवत्परलोकसाधनत्वेन प्रियमित्यर्थः ॥ १० ॥
तत्र प्रवृत्त्यर्थं स्तौति । सर्वे इति । पशुभूताः अस्य राज्ञः पशुत्वेन ग्रहणात् एतत्प्रतिनिधित्वेन पशुभूताः नरेंद्रस्य यज्ञे अग्नेः तृप्तिं प्रयच्छथेत्यर्थः ॥ ११ ॥ नाथवान् मया रक्षकवान् ।
मम युष्मत्पितुः जीवतः वाक्यकरणात् वचः कृतं भवति ॥ १२ ॥ साभिमानं साहंकारम् । सलीलं सपरिहासम् ॥ १३ ॥ लोकतः शास्त्रतश्चानुचितानुष्ठातृत्वे दृष्टांतमाह । श्वमांसमिवेति ॥ १४ ॥

राजाचकृतकार्यःस्यादहंदीर्घायुरव्ययः ॥ स्वर्गलोकमुपाश्नीयांतपस्तप्त्वाह्यनुत्तमम् ॥ ६ ॥ समेनाथोह्यनाथस्यभवभव्येनचेतसा ॥ पितेवपुत्रंधर्मा
त्मंस्त्रातुमर्हसिकिल्बिषात् ॥ ७ ॥ तस्यतद्वचनंश्रुत्वाविश्वामित्रोमहातपाः ॥ सांत्वयित्वाबहुविधंपुत्रानिदमुवाचह ॥ ८ ॥ यत्कृतेपितरःपुत्राञ्जनयंति
शुभार्थिनः ॥ परलोकहितार्थायतस्यकालोयमागतः ॥ ९ ॥ अयंमुनिसुतोबालोमत्तःशरणमिच्छति ॥ अस्यजीवितमात्रेणप्रियंकुरुतपुत्रकाः ॥ १० ॥
सर्वेसुकृतकर्माणःसर्वेधर्मपरायणाः ॥ पशुभूतानरेंद्रस्यतृप्तिमग्नेःप्रयच्छत ॥ ११ ॥ नाथवांश्चशुनःशेपोयज्ञश्चाविघ्नतोभवेत् ॥ देवतास्तर्पिताश्चस्युर्म
मचापिकृतंवचः ॥ १२ ॥ मुनेस्तद्वचनंश्रुत्वामधुच्छंदादयःसुताः ॥ साभिमानंनरश्रेष्ठसलीलमिदमब्रुवन् ॥ १३ ॥ कथमात्मसुतान्हित्वात्रायसेऽन्यसुतं
विभो ॥ अकार्यमिवपश्यामःश्वमांसमिवभोजने ॥ १४ ॥ तेषांतद्वचनंश्रुत्वापुत्राणांमुनिपुंगवः ॥ क्रोधसंरक्तनयनोव्याहर्तुमुपचक्रमे ॥ १५ ॥ निः
साध्वसमिदंप्रोक्तंधर्मादपिविगर्हितम् ॥ अतिक्रम्यतुमद्वाक्यंदारुणंरोमहर्षणम् ॥ १६ ॥ श्वमांसभोजिनःसर्वेवासिष्ठाइवजातिषु ॥ पूर्णवर्षसहस्रंतुपृथि
व्यामनुवत्स्यथ ॥ १७ ॥ कृत्वाशापसमायुक्तान्पुत्रान्मुनिवरस्तदा ॥ शुनःशेपमुवाचार्तंकृत्वारक्षांनिरामयाम् ॥ १८ ॥ पवित्रपाशैराबद्धोरक्तमाल्यानुले
पनः ॥ वैष्णवंयूपमासाद्यवाग्भिरग्निमुदाहर ॥ १९ ॥ इमेचगाथेद्वेदिव्येगायेथामुनिपुत्रक ॥ अंबरीषस्ययज्ञेस्मिंस्ततःसिद्धिमवाप्स्यसि ॥ २० ॥
शुनःशेपोगृहीत्वातेद्वेगाथेसुसमाहितः ॥ त्वरयाराजसिंहंतमंबरीषमुवाचह ॥ २१ ॥ राजसिंहमहाबुद्धेशीघ्रंगच्छावहेवयम् ॥ निवर्तयस्वराजेंद्रदीक्षां
चसमुपाहर ॥ २२ ॥ तद्वाक्यमृषिपुत्रस्यश्रुत्वाहर्षसमन्वितः ॥ जगामनृपतिःशीघ्रंयज्ञवाटमतंद्रितः ॥ २३ ॥ सदस्यानुमतेराजापवित्रकृतलक्षणम् ॥
पशुंरक्तांबरंकृत्वायूपेतंसमबंधयत् ॥ २४ ॥

॥ १५ ॥ साध्वसं भयम् । पितृत्वप्रयुक्तभीतिरहितम् । जीवतः वाक्याकरणात् धर्मादपि विगर्हितं भ्रष्टम् । एवं मद्वाक्यम् अतिक्रम्य यतः दारुणं परुषं रोमहर्षणम् रोमांचरूपविकारजनकम् उक्तम् ।
तस्मादिति शेषः ॥ १६ ॥ जातिषु मुष्टिकजातिषु ॥ १७ ॥ निरामयां सर्वदुःखनाशिकां रक्षां कृत्वा शुनःशेपम् उवाच ॥ १८ ॥ वाक्यमाह ।पवित्रेति । पवित्रपाशाः दर्भरशनाः वैष्णवं विष्णुदैव
त्यम् । वैष्णवो वै देवतया यूप इति श्रुतेः । वाग्भिः आग्नेयमंत्रैः । अग्निम् उदाहर स्तुहि ॥ १९ ॥ इमे मयोपदिश्यमाने इंद्रोपेंद्रदैवत्ये । सिद्धिं जीवितसिद्धिम् ॥ २० ॥ २१ ॥ गच्छावहे इति ।
आर्षस्तङ् । निवर्तयस्व । यज्ञमिति शेषः । समुदाहर कुरु ॥ २२ ॥ २३ ॥ पवित्रैः दर्भरज्जुभिः कृतपशुत्वज्ञापनं पशुं कृत्वा यज्ञपशुत्वेन संपाद्य अबंधयत् । राजेति शेषः ॥ २४ ॥

इंद्रानुजः विष्णुः । यूपेदवः । अत्र पूर्वम् अग्निं स्तुत्वा ततः एतौ । उपदेशकाले तयोक्तत्वात् ॥२५॥ सहस्राक्ष इत्युपलक्षणं विष्णोरपि । रहस्यस्तुतिः विश्वामित्रोपदिष्टा ॥२६॥ समाप्तवान् फलं सम्यगा प्तवानित्यर्थः । यद्यपि बह्वृचब्राह्मणे हरिश्चंद्रो ह वैधस ऐक्ष्वाको राजेत्यादिना हरिश्चंद्रयज्ञे शुनःशेपस्याजीगर्तिसुतस्य पशुत्वं प्राजापत्यादिस्तुत्या च मोक्षः श्रूयते । तथापि अंबरीषविषयमप्येतत् । एतत्प्रा माण्यात् । तन्मूलश्रुतिश्चान्वेष्येति बहवः ॥ केचित्तु हरिश्चंद्रपदं सादृश्यादंबरीष एव प्रयुक्तम् । अजीगर्तिपदं च ऋचीके प्रयुक्तं श्रुतौ । अस्मादेवोपबृंहणादित्याहुः ॥ २७ ॥ भूयः पूर्वतपसः पुत्रेषु कोपेन नाशात् क्रोधं न करिष्यामीति संकल्प्य पुनः तपः अकरोत् ॥ २८ ॥ हरेंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे द्विषष्टितमः

सवद्धोवाग्भिरग्र्याभिरभितुष्टाववैसुरौ ॥ इंद्रमिंद्रानुजंचैवयथावन्मुनिपुत्रकः ॥ २५ ॥ ततःप्रीतःसहस्राक्षोरहस्यस्तुतितोषितः ॥ दीर्घमायुस्तदाप्रादा च्छुनःशेपायवासवः ॥ २६ ॥ सचराजानरश्रेष्ठयज्ञस्यचसमाप्तवान् ॥ फलंबहुगुणंरामसहस्राक्षप्रसादजम् ॥ २७ ॥ विश्वामित्रोपिधर्मात्माभूयस्तेपे महातपाः ॥ पुष्करेषुनरश्रेष्ठदशवर्षशतानिच ॥२८॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा०बालकांडे द्विषष्टितमः सर्गः ॥६२॥ पूर्णेवर्षसहस्रेतुव्रतस्नातंमहामुनिम् ॥ अभ्यगच्छन्सुराःसर्वेतपःफलचिकीर्षवः ॥ १ ॥ अब्रवीत्सुमहातेजाब्रह्मासुरुचिरंवचः ॥ ऋषिस्त्वमसिभद्रंतेस्वा र्जितैःकर्मभिःशुभैः ॥२॥ तमेवमुक्त्वादेवेशस्त्रिदिवंपुनरभ्यगात् ॥ विश्वामित्रोमहातेजाभूयस्तेपेमहत्तपः ॥ ३ ॥ ततःकालेनमहतामेनकापरमाप्सराः ॥ पुष्करेषुनरश्रेष्ठस्नातुंसमुपचक्रमे ॥ ४ ॥ तांददर्शमहातेजामेनकांकुशिकात्मजः ॥ रूपेणाप्रतिमांतत्रविद्युतंजलदेयथा ॥ ५ ॥ कंदर्पदर्पवशगोमुनिस्ता मिदमब्रवीत् ॥ अप्सरःस्वागतंतेस्तुवसचेहममाश्रमे ॥ ६ ॥ अनुगृह्णीष्वभद्रंतेमदनेनविमोहितम् ॥ इत्युक्तासावरारोहातत्रावासमथाकरोत् ॥ ७ ॥ तपसोहिमहाविघ्नोविश्वामित्रमुपागमत् ॥ तस्यांवसंत्यांवर्षाणिपंचपंचचराघव ॥ ८ ॥ विश्वामित्राश्रमेसौम्येसुखेनव्यतिचक्रमुः ॥ अथकालेगतेतस्मि न्विश्वामित्रोमहामुनिः ॥ ९ ॥ सव्रीडइवसंवृत्तश्चिंताशोकपरायणः ॥ बुद्धिर्मुनेःसमुत्पन्नासामर्षारघुनंदन ॥ १० ॥ सर्वेसुराणांकर्मैतत्तपोपहरणंमहत् ॥ अहोरात्रापदेशेनगताःसंवत्सरादश ॥११॥ काममोहाभिभूतस्यविघ्नोयंप्रत्युपस्थितः॥सनिःश्वसन्मुनिवरःपश्चात्तापेनदुःखितः ॥१२॥ भीतामप्सरसंदृष्ट्वा वेपंतींप्रांजलिंस्थिताम् ॥ मेनकांमधुरैर्वाक्यैर्विसृज्यकुशिकात्मजः॥१३॥उत्तरंपर्वतंरामविश्वामित्रोजगामह॥सकृत्वानैष्ठिकींबुद्धिंजेतुकामोमहायशाः॥१४॥

सर्गः ॥ ६२ ॥ ॥ छ ॥ ॥ व्रतस्नातं समाप्तव्रतम् । तपःफलचिकीर्षवः तपःफलं दातुकामाः ॥ १ ॥ ऋषिः त्वमसि । अत्र राजशब्दानुपादानेन क्षत्रजातिविश्लेषः सूचितः ॥ २ ॥ ३ ॥ परमा रूपादिभिः सर्वोत्तमा । अप्सरा इति । आर्षम् ॥ ४ ॥ तत्र सरसि जलदे विद्युतमिव ॥ ५ ॥ कंदर्पकृतः दर्पः मदः ॥ ६ ॥ अनुगृह्णीष्व । भोगदानेनेति शेषः । वरारोहा श्रेष्ठजघना ॥ ७ ॥ पंच पंच दश वर्षाणि ॥ ८ ॥ ९ ॥ सामर्षा देवेषु । विघ्नस्य तत्कृतत्वज्ञानात् ॥ १० ॥ तदाह । सर्वेमिति । अहोरात्रापदेशेन एकाहोरात्रतुल्यतया ॥ ११ ॥ १२ ॥ वेपंतीं वेपमानाम् । मधुरैः मत्प्रार्थनया स्थितासीति तव न कश्चन दोष इत्यादिवाक्यैः । क्रोधस्य संकल्पपूर्वं त्यक्तत्वादत्र शापादानम् । तेनास्य क्रोधजयो जात इत्युक्तम् ॥ १३ ॥ ततस्तत्र बहुविघ्नदर्शनादुत्तरगमनम् । नैष्ठिकीं

निःशेषिते निरवशेषतो दत्ते अभुक्त्वैव पुनः पाकाकरणादभुक्त्वैव ॥ ६ ॥ मौनं कृत्वा आसीदित्यन्वयः ॥७॥ नोच्छ्वसन् श्वासोच्छ्वासरहितः । धूम इति । धूमकेतुरित्यर्थः । अग्निरिति यावत् । अत एवाग्रे आतापितमिवेति वक्ष्यति । अयं शुद्धसत्त्वगुणप्रभवोग्निः इतरेषां रजस्तमःप्रधानानां तन्मिश्रसत्त्वप्रधानानां च देवादीनां तापजनक इति बोध्यम् ॥८॥ येन वह्निना यथा आतापितः पुमान् संभ्रांतःव्याकुलः भवति तद्वद् त्रैलोक्यं संभ्रांतम् अभूदित्यर्थः ॥९॥ तपसा तेजसा तपोरूपेण तेजसा । मोहिताः विषयाग्राहिचित्ताः कृताः । मंदरश्मयः क्षीणतेजसः । कश्मलं दुःखम् ॥ १० ॥ तत्तद्विषयैः लोभितः क्रोधितोपि निर्विघ्नमेव तौ त्यक्त्वा तपसा अभिवर्धत इत्यन्वयः ॥ ११ ॥ सूक्ष्ममपि वृजिनम् अल्पमपि कामक्रोधरूपम् । यदभीप्सितं ब्रह्मर्षित्वम् ॥ १२ ॥ अन्यथा लोकनाश इत्याह । विनाशयतीति । तेर्लघुतरपाठान्न छंदोभंगः । नाशप्रकारमाह । व्याकुला इति ॥ १३ ॥ १४ ॥ न प्रतिजानीमः प्रतिक्रियां न जानीम इत्यर्थः । नास्तिकः जायते जगत्क्षोभवशात् नास्तिक इव कर्मानुष्ठानशून्य इत्यर्थः ।

तस्मैदत्त्वातदासिद्धंसर्वंविप्रायनिश्चितः ॥ निःशेषितेऽन्नेभगवानभुक्त्वैवमहातपाः ॥ ६ ॥ नकिंचिदवदद्विप्रंमौनव्रतमुपास्थितः ॥ तथैवासीत्पुनर्मौनमनुच्छ्वासंचकारह ॥ ७ ॥ अथवर्षसहस्रंचनोच्छ्वसन्मुनिपुंगवः ॥ तस्यानुच्छ्वसमानस्यमूर्ध्निधूमोव्यजायत ॥ ८ ॥ त्रैलोक्यंयेनसंभ्रांतमातापितमिवाभवत् ॥ ततोदेवर्षिगंधर्वाःपन्नगोरगराक्षसाः ॥ ९ ॥ मोहितास्तपसातस्यतेजसामंदरश्मयः ॥ कश्मलोपहताःसर्वेपितामहमथाब्रुवन् ॥ १० ॥ बहुभिःकारणैर्देवविश्वामित्रोमहामुनिः ॥ लोभितःक्रोधितश्चैवतपसाचाभिवर्धते ॥ ११ ॥ नह्यस्यवृजिनंकिंचिद्दृश्यतेसूक्ष्ममप्युत ॥ नदीयतेयदित्वस्यमनसायदभीप्सितम् ॥ १२ ॥ विनाशयतित्रैलोक्यंतपसासचराचरम् ॥ व्याकुलाश्चदिशःसर्वानचकिंचित्प्रकाशते ॥ १३ ॥ सागराःक्षुभिताःसर्वेविशीर्यंतेचपर्वताः ॥ प्रकंपतेचवसुधावायुर्वातीहसंकुलः ॥ १४ ॥ ब्रह्मन्नप्रतिजानीमोनास्तिकोजायतेजनः ॥ संमूढमिवत्रैलोक्यंसंप्रक्षुभितमानसम् ॥ १५ ॥ भास्करोनिष्प्रभश्चैवमहर्षेस्तस्यतेजसा ॥ बुद्धिंनकुरुतेयावन्नाशेदेवमहामुनिः ॥ १६ ॥ तावत्प्रसाद्योभगवन्नग्निरूपोमहाद्युतिः ॥ कालाग्निनायथापूर्वंत्रैलोक्यंदह्यतेऽखिलम् ॥ १७ ॥ देवराज्यंचिकीर्षेतदीयतामस्ययन्मनः ॥ ततःसुरगणाःसर्वेपितामहपुरोगमाः ॥ १८ ॥ विश्वामित्रंमहात्मानंवाक्यंमधुरमब्रुवन् ॥ ब्रह्मर्षेस्वागतंतेऽस्तुतपसास्मसुतोषिताः ॥ १९ ॥ ब्राह्मण्यंतपसोग्रेणप्राप्तवानसिकौशिक ॥ दीर्घमायुश्चतेब्रह्मन्ददामिसमरुद्गणः ॥ २० ॥ स्वस्तिप्राप्नुहिभद्रंतेगच्छसौम्ययथासुखम् ॥ पितामहवचःश्रुत्वासर्वेषांत्रिदिवौकसाम् ॥ २१ ॥ कृत्वाप्रणामंमुदितोव्याजहारमहामुनिः ॥ ब्राह्मण्यंयदिमेप्राप्तंदीर्घमायुस्तथैवच ॥ ॥२२॥ ओंकारोथवषट्कारोवेदाश्चवरयंतुमाम् ॥ क्षत्रवेदविदांश्रेष्ठोब्रह्मवेदविदामपि ॥ २३ ॥

तदाह । संमूढमिवेति । संप्रक्षुभितमानसं व्याकुलचित्तम् ॥ १५ ॥ नाशे जगन्नाशे ॥ १६ ॥ पूर्वं युगांतकाले ॥ १७ ॥ यदि असौ देवराज्यमपि चिकीर्षेत तदा तदप्यस्य दीयतामित्यर्थ इति केचित् ॥ यदि अस्य अभीष्टं न दीयते तदासौ देवराज्यं चिकीर्षेत । अतोऽस्य यत् मनः तत्स्थं ब्रह्मर्षित्वं तद्दीयतामित्यर्थ इत्यन्ये ॥१८॥ स्वागतं भद्रम् । स्मेति । विसर्गलोपः आर्षः ॥१९ ॥ दीर्घायुर्दानं स्वदर्शनफलम् ॥ २० ॥ स्वस्ति सुखम् । यथासुखम् । तपसः उपरत इति शेषः ॥२१॥ यदि इत्यसंदिग्धे सांदिग्धवचनं वेदाः प्रमाणं चेदितिवत् ॥२२ ॥ ओमिति ब्रह्मज्ञानसाधनम् वषडिति यज्ञसाधनं वेदाश्च तदपेक्षितांगोपांगादिप्रतिपादकाः वरयंतु यथा वसिष्ठादीन् सहजब्राह्मणान् वरयंति तथा । वरणं चाध्यापनयाजनयोरनुमतिः। ब्रह्माद्यनुग्रहेपि जातिब्राह्मण्याभावात् वसिष्ठेन अनंगीकारे व्यर्थमेव सर्वं

मत आह । क्षत्रेत्यादि । सूर्यवंशानादिपुरोहितत्वात् तदध्यापकत्वाच्च तेषां युद्धजयादिप्रयोजनसंपत्तये क्षत्रवेदविदाम् उक्तप्रयोजनधनुर्वेदविदां श्रेष्ठः ब्रह्मवेदाः वेदचतुष्टयी । ब्रह्मप्रतिपादकोपनिषद्भागवत्त्वात ॥२३॥अन्यदपि श्रैष्ठ्यबीजं-ब्रह्मपुत्र इति । एवं ब्रह्मर्षे इत्येव वासिष्ठमुखेन ब्रह्मर्षित्ववादरूपे मम परमः कामः मनोरथः यदि कृतः तदा मद्विषये कृतकृत्याः सुरर्षभाः यांतु नान्यथेति भावः। अन्यथा पुनः तपश्चरिष्यामीति तात्पर्यम् ॥ २४ ॥ ततः विश्वामित्रोक्त्यनंतरम् । प्रसादितः विश्वामित्रस्य ब्रह्मर्षित्वानुमतये । एवं ब्रह्मर्षित्वम् । सख्यं विश्वामित्रेण ॥ २५ ॥ सर्वं ब्राह्मण्यप्रयोजकं ब्राह्मणाज्जन्मतत्संस्कारादि संपद्यते संपन्नम् । अनेन त्रिपुरुषपर्यंतं विश्वामित्रस्य ब्राह्मण्यलाभः सूचितः । एतच्चानृष्यानंतर्य इति सूत्रे महाभाष्ये स्पष्टम् । इति वसिष्ठोक्तं देवता अपि उक्त्वा जग्मुरित्यन्वयः ॥ २६ ॥ पूजयामास

ब्रह्मपुत्रो वसिष्ठोमामेवंवदतुदेवताः ॥ यद्येवं परमःकामःकृतोयांतुसुरर्षभाः ॥ २४ ॥ ततःप्रसादितोदेवैर्वसिष्ठोजपतांवरः ॥ सख्यंचकारब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥ २५ ॥ ब्रह्मर्षिस्त्वंनसंदेहःसर्वंसंपद्यतेतव ॥ इत्युक्त्वादेवताश्चापिसर्वाजग्मुर्यथागतम् ॥ २६ ॥ विश्वामित्रोपिधर्मात्मालब्ध्वाब्राह्मण्यमुत्तमम् ॥ पूजयामासब्रह्मर्षिंवसिष्ठंजपतांवरम् ॥ २७ ॥ कृतकामोमहींसर्वांचचारतपसिस्थितः ॥ एवंत्वनेनब्राह्मण्यंप्राप्तंराममहात्मना ॥ २८ ॥ एषराममुनिश्रेष्ठएषविग्रहवांस्तपः ॥ एषधर्मःपरोनित्यंवीर्यस्यैषपरायणम् ॥ २९ ॥ एवमुक्त्वामहातेजाविररामद्विजोत्तमः ॥ शतानंदवचःश्रुत्वारामलक्ष्मणसन्निधौ ॥ ३० ॥ जनकःप्रांजलिर्वाक्यमुवाचकुशिकात्मजम् ॥ धन्योस्म्यनुगृहीतोस्मियस्यमेमुनिपुंगव ॥ ३१ ॥ यज्ञंकाकुत्स्थसहितःप्राप्तवानसिकौशिक ॥ पावितोहंत्वयाब्रह्मन्दर्शनेनमहामुने ॥ ३२ ॥ गुणाबहुविधाःप्राप्तास्तवसंदर्शनान्मया ॥ विस्तरेणचवैब्रह्मन्कीर्त्यमानंमहत्तपः ॥ ३३ ॥ श्रुतंमयामहातेजोरामेणचमहात्मना ॥ सदस्यैःप्राप्यचसदःश्रुतास्तेबहवोगुणाः ॥ ३४ ॥ अप्रमेयंतपस्तुभ्यमप्रमेयंचतेबलम् ॥ अप्रमेयागुणाश्चैवनित्यंतेकुशिकात्मज ॥ ३५ ॥ तृप्तिराश्चर्यभूतानांकथानांनास्तिमेविभो ॥ कर्मकालोमुनिश्रेष्ठलंबतेरविमंडलम् ॥ ३६ ॥ श्वःप्रभातेमहातेजोद्रष्टुमर्हसिमांपुनः ॥ स्वागतंजपतांश्रेष्ठमामनुज्ञातुमर्हसि ॥ ३७ ॥ एवमुक्तोमुनिवरःप्रशस्यपुरुषर्षभम् ॥ विससर्जाशुजनकंप्रीतंप्रीतमनास्तदा ॥३८॥ एवमुक्त्वामुनिश्रेष्ठंवैदेहोमिथिलाधिपः ॥ प्रदक्षिणंचकाराशुसोपाध्यायःसबांधवः ॥३९॥ विश्वामित्रोपिधर्मात्मासहरामःसलक्ष्मणः ॥ स्ववासमभिचक्रामपूज्यमानोमहात्मभिः ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसा० बालकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥

सपरिवारस्य मम सत्कारकरणेन ब्रह्मर्षितापापकसाधनौन्मुख्यसंपादनेन कृतार्थीकृतोस्मि भगवतेति पूजयामासेत्यर्थः ॥ २७ ॥ चचारेति । विश्वामित्र इति शेषः । अथ प्रकृतं शतानंदवचनम्–एवंत्वित्यादि ॥ २८ ॥ नित्यम् इदानीमपि वीर्यस्य तपोवीर्यस्य ॥ २९ ॥ ३० ॥ ३१ ॥ पावितः पवित्रः कृतः ॥ ३२ ॥ गुणाः कर्मश्रैष्ठ्यज्ञातिश्रैष्ठ्यलक्षणाः ॥ ३३ ॥ महातेज इति । संबुद्धिः । मया जनकेन रामेण च सदः प्राप्य स्थितैः सदस्यैश्च ते गुणाः श्रुताः ॥ ३४ ॥ तुभ्यमिति । तवेत्यर्थे । अप्रमेयम् इयत्ताज्ञानाविषयम् ॥ ३५ ॥ कथानामिति । शृण्वत इति शेषः । कर्मकाल इति। अतिवर्तत इति शेषः । तदेवाह । लंबत इति ॥ ३६ ॥ स्वागतं भद्रम् । अनुज्ञातुम् । कर्मणे इति शेषः ॥ ३७ ॥ ३८ ॥ ३९ ॥ स्ववासं स्वनिवेशम् । स्ववाटमिति पाठेप्ययमेवार्थः ॥ ४० ॥ नंभे

१ कपुस्तके इतः एकः श्लोकोधिकः पठ्यते ।

मानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे पंचषष्टितमः सर्गः ॥६५॥ कृतकर्मा कृतनित्यक्रियः ॥१॥ कर्मणा अर्घ्यपाद्यादिलक्षणेन राघवौ च संपूज्य वाक्यमुवाच । विश्वामित्रं प्रतीति शेषः ॥ २ ॥ आज्ञाप्यः आज्ञापयितुं योग्यः । भवतेति । कृत्यानां कर्तरि षष्ठीविकल्पात्तृतीया । आगमनप्रयोजनं बोधनीय इति तात्पर्यम् ॥ ३ ॥ ४ ॥ द्रष्टुकामौ ! आगताविति शेषः ॥ ५ ॥ कृतकामौ प्राप्तकामौ ॥६॥ ततो धनुर्वृत्तांतमाह जनकः । एवमिति । अस्य दिदृक्षितस्य धनुषः श्रूयताम् । आगमनादिवृत्तांत इति शेषः । यदर्थं यत्प्रयोजनाय तिष्ठति तच्च श्रूयताम् ॥ ७ ॥ निमिः कूटस्थः । तस्य ज्येष्ठः पुत्रो देवरातः । न्यासो निक्षेपः अयं धनूरूपः । अपरे तु नितराम् आस्ते देवता यत्रेति व्युत्पत्त्या न्यासः देवपूजास्थानम् । तत्पूजार्थं शत्रुवधार्थं च दत्त इत्यर्थः। निक्षेपपरतया व्याख्याने तु निक्षेपस्य शुल्कीकरणम् अनुचितम् । भगवता तद्भंगे च निक्षेपारक्षणप्रयुक्तदोषभागिता जनकस्य स्यादिति प्राहुः ॥ ८ ॥ कैर्दत्तः तत्राह । दक्षेत्यादि । दक्षयज्ञवधे इति । निमित्तसप्तमी आयम्य नमनसज्जीकरणपूर्वम् आकृष्य । सलीलमिति–वधविषयाप्रयासः द्योत्यते ॥९॥ भागार्थिनः स्विष्टकृदादियज्ञभागार्थिनः मम भागं यतः नाकल्पयंत सुराः अतः वरांगानि शिरांसि ।

ततःप्रभातेविमलेकृतकर्मानराधिपः ॥ विश्वामित्रंमहात्मानमाजुहावसराघवम् ॥ १ ॥ तमर्चयित्वाधर्मात्माशास्त्रदृष्टेनकर्मणा ॥ राघवौचमहात्मानौ तदावाक्यमुवाचह ॥२॥ भगवन्स्वागतंतेस्तुकिंकरोमितवानघ ॥ भवानाज्ञापयतुमामाज्ञाप्योभवताह्यहम् ॥ ३ ॥ एवमुक्तःसधर्मात्माजनकेनमहात्मना ॥ प्रत्युवाचमुनिश्रेष्ठोवाक्यंवाक्यविशारदः ॥ ४ ॥ पुत्रौदशरथस्येमौक्षत्रियौलोकविश्रुतौ ॥ द्रष्टकामौधनुःश्रेष्ठंयदेतत्त्वयितिष्ठति ॥ ५ ॥ एतद्दर्शयभद्रंते कृतकामौनृपात्मजौ ॥ दर्शनादस्यधनुषोयथेष्टंप्रतियास्यतः ॥ ६ ॥ एवमुक्तस्तुजनकःप्रत्युवाचमहामुनिम् ॥ श्रूयतामस्यधनुषोयदर्थमिहतिष्ठति ॥७॥ देवरातइतिख्यातोनिमेर्ज्येष्ठोमहीपतिः ॥ न्यासोयंतस्यभगवन्हस्तेदत्तोमहात्मनः ॥८॥ दक्षयज्ञवधेपूर्वंधनुरायम्यवीर्यवान् ॥ विध्वस्यत्रिदशान्रोषात्सलीलमिदमब्रवीत् ॥ ९ ॥ यस्माद्भागार्थिनोभागान्नाकल्पयतमेसुराः ॥ वरांगानिमहार्हाणिधनुषाशातयामिवः ॥ १० ॥ ततोविमनसःसर्वेदेवावैमुनिपुंगव ॥ प्रसादयंतदेवेशंतेषांप्रीतोभवद्भवः ॥ ११ ॥ प्रीतियुक्तस्तुसर्वेषांददौतेषांमहात्मनाम् ॥ तदेतद्देवदेवस्यधनूरत्नंमहात्मनः ॥ १२ ॥ न्यासभूतंतदान्यस्तमस्माकंपूर्वजेविभौ ॥ अथमेकृषतःक्षेत्रंलांगलादुत्थितातततः ॥१३॥ क्षेत्रंशोधयतालब्धानाम्नासीतेतिविश्रुता ॥ भूतलादुत्थितासातुव्यवर्धतममात्मजा ॥१४॥

अकल्पयतेति । एकवचनमार्षम् । महार्हाणि महापूजायोग्यानि ॥१०॥ विमनसः दीनाः । भवः रुद्रः ॥११॥ ददौ । संहारार्थं गृहीतं धनुरिति शेषः । देवदेवस्य रुद्रस्य । देवैर्लब्धं धनूरत्नम् ॥१२॥ अस्मत्पूर्वजे देवराते तैः शिवसहितैः देवैः न्यासभूतं देवपूजास्थानभूतं न्यस्तं दत्तम् । तदुक्तं कौर्मे एकविंशेऽध्याये–प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः । प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुरिति । पाद्मेपि च–चापं शंभोर्दयादत्तं कन्याशुल्कीकृतं मयेति । यदर्थमिह तिष्ठतीत्यस्याप्युत्तरं न्यासभूतमित्येतेन जातम् । पूजास्थानत्वेन पूजार्थमित्यर्थलाभात् । कृषत इति । अग्निचयनार्थमिति शेषः । षड्गवेन कृषतीत्यादिशास्त्रात । लांगलात लांगलपद्धतेः । उत्थिता । कन्येति शेषः ॥ १३ ॥ यतः क्षेत्रं शोधयता सीतायाः लांगलपद्धतेः मया लब्धा अतो नाम्ना सीतेति प्रसिद्धा । भूतलात् यज्ञियात व्यवर्धत वृद्धिं प्राप्ता । पाद्मेपि–अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे स्वतः । शुभक्षेत्रे हलोत्खाते तारे चोत्तरफाल्गुने । अयोनिजा पद्मकरा बालार्कशतसन्निभा । सीतामुखे समुत्पन्ना

बालभावेन सुंदरी । सीतामुखोद्भवात्सीता इत्यस्यै नाम चाकरोत् । ततोभूदौरसी तस्य ऊर्मिला नाम कन्यकेति ॥ १४ ॥ वीर्यशुल्का धनुःसज्जीकरणादिक्षमं वीर्यमेव शुल्कं मूल्यं यस्याः ॥ १५ ॥ ॥ १६ ॥ न ददामि न प्रादाम् ॥ १७ ॥ वीर्यं धनुषः सारम् । जिज्ञासव इति । अस्याभूवन्निति शेषः । उपाहृतं दर्शितम् । आनीयेत्यर्थः ॥१८ ॥ ग्रहणं धारणम् । तोलनं भारपरीक्षणार्थं हस्तेन चालनम् ॥१९॥ प्रत्याख्याताः । कन्या न दत्तेति यावत् । तदिति । अव्ययम् । ततोनंतरं यद्वृत्तं तन्निबोध जानीहि । तत इति । उत्तरान्वयि ॥२०॥ अरुंधन् उपरुद्धवंतः । वीर्यसंदेहं धनुरारोपणलक्षणवीर्यविषये अन्येषां संदेहविषयत्वं गताः। अतो बलेनैव कन्यां ग्रहीष्याम इत्यरुंधन्नित्यर्थः। न च । सर्वे नृपाः आत्मानं स्वं स्वम् आत्मानं मे मया अवधूतं वीर्यशुल्ककरणेन तिरस्कृतं विज्ञाय ॥२१॥ रोषेणाविष्टाः मिथिलां पीडयन् । अडभावः आर्षः । क्षयं यातानि दुर्गस्थित्या । युद्धवशादिति शेषः ॥ २२ ॥ साधनानि रक्षणसाधनानि प्रसादयं प्रसादितवान् । लङ्यडभावः आर्षः ॥ २३ ॥ सुराः ददुः ।

वीर्यशुल्केतिमेकन्यास्थापितेयमयोनिजा ॥भूतलादुत्थितांतांतुवर्धमानांममात्मजाम् ॥ १५ ॥ वरयामासुरागत्यराजानोमुनिपुंगव ॥ तेषांवरयतांकन्यां सर्वेषांपृथिवीक्षिताम् ॥१६॥ वीर्यशुल्केतिभगवन्नददामिसुतामहम् ॥ ततःसर्वेनृपतयःसमेत्यमुनिपुंगव ॥१७॥ मिथिलामप्युपागम्यवीर्यंजिज्ञासवस्तदा॥ तेषांजिज्ञासमानानांशैवंधनुरुपाहृतम् ॥१८॥ नशेकुर्ग्रहणेतस्यधनुषस्तोलनेपिवा ॥ तेषांवीर्यवतांवीर्यमल्पंज्ञात्वामहामुने ॥१९॥ प्रत्याख्यातानृपतयस्तन्निबोधतपोधन ॥ ततःपरमकोपेनराजानोमुनिपुंगव ॥ २० ॥ अरुंधन्मिथिलांसर्वेवीर्यसंदेहमागताः ॥ आत्मानमवधूतंमेविज्ञायनृपपुंगवाः ॥ २१ ॥ रोषेणमहताविष्टाःपीडयन्मिथिलांपुरीम् ॥ ततःसंवत्सरेपूर्णेक्षयंयातानिसर्वशः ॥ २२ ॥ साधनानिमुनिश्रेष्ठततोऽहंभृशदुःखितः ॥ ततोदेवगणान्सर्वांस्तपसाऽहंप्रसादयम् ॥ २३ ॥ ददुश्चपरमप्रीताश्चतुरंगबलंसुराः ॥ ततोभग्नानृपतयोहन्यमानादिशोययुः ॥ २४ ॥ अवीर्यावीर्यसंदिग्धाःसामात्याःपापकारिणः ॥ तदेतन्मुनिशार्दूलधनुःपरमभास्वरम् ॥ २५ ॥ रामलक्ष्मणयोश्चापिदर्शयिष्यामिसुव्रतः ॥ यद्यस्यधनुषोरामःकुर्यादारोपणंमुने ॥२६ ॥ सुतामयोनिजांसीतांदद्यांदाशरथेरहम् ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे षट्षष्टितमः सर्गः ॥६६॥

जनकस्यवचःश्रुत्वाविश्वामित्रोमहामुनिः ॥ धनुर्दर्शयरामायइतिहोवाचपार्थिवम् ॥ १ ॥ ततःसराजाजनकःसचिवान्व्यादिदेशह ॥ धनुरानीयतांदिव्यंगंधमाल्यानुलेपितम् ॥ २ ॥ जनकेनसमादिष्टाःसचिवाःप्राविशन्पुरम् ॥ तद्धनुःपुरतःकृत्वानिर्जग्मुरमितौजसः ॥ ३ ॥ नृणांशतानिपंचाशद्व्यायतानांमहात्मनाम् ॥ मंजूषामष्टचक्रांतांसमूहुस्तेकथंचन ॥ ४ ॥

जगन्मातुः रक्षणार्थं स्वकार्यसिद्ध्यर्थं च इदं बलदानम् । दिशो ययुः । समूहं विसृज्येति शेषः ॥ २४ ॥ अवीर्याः अल्पवीर्याः स्ववीर्यसंदिग्धाः संदिग्धस्ववीर्याः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । तदेतत् उक्तवृत्तांतकम् ॥ २५ ॥ २६ ॥ २७ ॥ सँरमानः ॥ ॥ इति श्रीरा० श्रीरा० रा० वा० आ० बा० षट्षष्टितमः सर्गः ॥ ६६ ॥ ॥ छ ॥ ॥ रामाय इति हेति । असंधिरैच्छिकः । आरोपयिष्यति सीतां ग्रहीष्यति चेति भावः ॥ १ ॥ सचिवान् समीपे विद्यमानान् । अनुलेपितं युक्तम् ॥ २ ॥ प्राविशन् पुरम् । यज्ञवाटादित्यर्थः ॥ ३ ॥ शतानि पंचाशत् पंचसहस्राणीत्यर्थः । अनेन धनुषो दुर्ग्रहत्वादि दर्शितम् । आयताः दीर्घाः । महात्मानो हृष्टपुष्टशरीराः । अष्टचक्रां रथांगाष्टक युक्ताम् । तां दृढत्वेन प्रसिद्धाम् । कथंचन तत्संख्या अपि महता प्रयत्नेनेत्यर्थः ॥ ४ ॥

आयसीम् अष्टलोहानिर्मिताम्  सुरोपमामिति । जनकविशेषणम् ॥ ५ ॥ यदि दर्शनीयामिति इच्छसि तदा दर्शयेत्यर्थः ॥ ६ ॥ उभौ रामलक्ष्मणौ । तदाश्रयधनुःप्रदर्शनम् उद्दिश्य विश्वामित्रम् । अभाषतेति योजना ॥ ७ ॥ पूरितुम् अशक्तैः । तोलनादिवक्ष्यमाणव्यापाराशक्तैः राजभिस्तु जनकैः देवरातातिरिक्तैः पूजितम् । ऐश्वरत्वात् ईश्वरवदेव केवलं पूजितमित्यर्थः ॥ ८ ॥ नैतदिति । एतद्धनुः सुरादयः न । सज्जीकर्तुं शक्ता इति शेषः॥९॥गतिः शक्तिः सामर्थ्यम्।चस्त्वर्थे।प्रपूरणम्आकर्णाकर्षणम्।आरोपणं सज्जीकरणम्।समायोगः शरेण योजनम्।वेपनं ज्यास्फालनम्।तोलनम् उत्क्षेपणम्॥१०॥ आनीतम् । अथापि त्वदाज्ञयेत्यादि ॥ ११ ॥ १२ ॥ यत्र धनुस्तिष्ठति तां मंजूषाम् अपावृत्य अपगतावरणां कृत्वा ॥ १३ ॥ संस्पृशामीति । दर्शनौत्सुक्यस्य निवृत्तेः । वा चार्थे । यत्नवान् भविष्या

तामादायसुमंजूषामायसींयत्रतद्धनुः ॥ सुरोपमंतेजनकमूचुर्नृपतिमंत्रिणः ॥ ५ ॥ इदंधनुर्वरंराजन्पूजितंसर्वराजभिः ॥ मिथिलाधिपराजेंद्रदर्शनीयंयदीच्छसि ॥ ६ ॥ तेषांनृपोवचःश्रुत्वाकृतांजलिरभाषत ॥ विश्वामित्रंमहात्मानंतावुभौरामलक्ष्मणौ ॥ ७ ॥ इदंधनुर्वरंब्रह्मञ्जनकैरभिपूजितम् ॥ राजभिश्चमहावीर्यैरशक्तैःपूरितुंतदा ॥ ८ ॥ नैतत्सुरगणाःसर्वेसासुरानचराक्षसाः ॥ गंधर्वयक्षप्रवराःसकिन्नरमहोरगाः ॥ ९ ॥ क्वगतिर्मानुषाणांचधनुषोस्यप्रपूरणे ॥ अरोपणेसमायोगेवेपनेतोलनेतथा॥१०॥ तदेतद्धनुषांश्रेष्ठमानीतंमुनिपुंगव ॥ दर्शयैतन्महाभागअनयोराजपुत्रयोः ॥ ११ ॥ विश्वामित्रःसरामस्तुश्रुत्वाजनकभाषितम् ॥ वत्सरामधनुःपश्यइतिराघवमब्रवीत् ॥ १२ ॥ महर्षेर्वचनाद्रामोयत्रतिष्ठतितद्धनुः ॥ मंजूषांतामपावृत्यदृष्ट्वाधनुरथाब्रवीत् ॥ १३ ॥ इदंधनुर्वरंदिव्यंसंस्पृशामीहपाणिना ॥ यत्नवांश्चभविष्यामितोलनेपूरणेपिवा ॥ १४ ॥ बाढमित्यब्रवीद्राजामुनिश्चसमभाषत ॥ लीलयासधनुर्मध्येजग्राहवचनान्मुनेः ॥१५॥ पश्यतांनृसहस्राणांबहूनांरघुनंदनः ॥ आरोपयत्सधर्मात्मासलीलमिवतद्धनुः ॥ १६ ॥ आरोपयित्वामौर्वींचपूरयामासतद्धनुः ॥ तद्बभंजधनुर्मध्येनरश्रेष्ठोमहायशाः॥१७॥ तस्यशब्दोमहानासीन्निर्घातसमनिःस्वनः ॥ भूमिकंपश्चसुमहान्पर्वतस्येवदीर्यतः॥१८॥ निपेतुश्चनराःसर्वेतेनशब्देनमोहिताः ॥ वर्जयित्वामुनिवरंराजानंतौचराघवौ ॥ १९ ॥ प्रत्याश्वस्तेजनेतस्मिन्राजाविगतसाध्वसः ॥ उवाचप्रांजलिर्वाक्यंवाक्यज्ञोमुनिपुंगवम् ॥ २० ॥

मि किम्—इत्यब्रवीद् अपृच्छदित्यर्थः ॥ १४ ॥ तं राजा मुनिश्च बाढमित्येव चाब्रवीत् समभाषतेति प्रत्येकमन्वयः । मध्ये मध्यप्रदेशे लीलया अनायासेन जग्राह पादांगुलिनोन्नतं कृत्वा करेण जग्राह । तदुक्तं पाद्मे—रामोपि तद्धनुःकोटिं स्पृष्ट्वा पादांगुलात्ततः । उन्नतं चापमारोप्य बभंजे मोहिता जना इति । अतिभारवद्वस्तुनः पादांगुल्या मध्यभागपर्यंतम् उन्नमनं मध्ये गृहीत्वोद्धारश्च महाबलसाध्य इति महाबलवत्त्वमनेन सूचितम् ॥ १५ ॥ पश्यताम् । अनादरे षष्ठी ॥ १६ ॥ पूरणम् आकर्षणम् ॥ १७ ॥ निर्घातः अशनिध्वनिः । तन्निःस्वनसमः शब्दः आसीत् दीर्यतः पर्वतस्य समीपदेशे यथा भूमिकंपः तथा भूकंपः आसीत् ॥ १८ ॥ मुनिवरः विश्वामित्रः । राजा जनकः ॥ १९ ॥ विगतसाध्वसः रामेण धनुरनारोपणे कन्या अविवाहितैव स्थास्यतीति या भीः स्थिता सा गतेत्यर्थः ॥२०॥

अतर्कितमिदं मया--एतदारोपणमित्यर्थः ॥ २१ ॥ आहरिष्यति संपादयिष्यति ॥ २२ ॥ मम प्रतिज्ञा सत्या । जातेति शेषः । प्राणैः प्राणेभ्यः ॥ २३ ॥ मम मंत्रिण इत्यन्वयः । अनुमते अनुमतकृत्यसाधननिमित्तमित्यर्थः । भवतः अनुमत्येति वार्थः ॥ २४ ॥ प्रश्रितैः विनयसहितैः । सर्वशश्च सर्वमपि अत्रत्यं वृत्तांतमित्यर्थः ॥ २५ ॥ गुप्तौ रक्षितौ । प्रीतियुक्तामिति । क्रियाविशेषणम् ॥ २६॥ आभाष्य आहूय कृतशासनान् दत्तकल्याणसंदेशपत्रान् ॥ २७ ॥ २८ ॥ हर्मीनः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणातिलके वाल्मीकीये आदिकाव्ये बालकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥ ॥ छ ॥ ॥ छ ॥ त्रिरात्रं रात्रित्रयम् उषिताः मार्गे कृतवासाः ॥ तावद्वासकरणे निमित्तं क्लांतवाहनत्वम् । तेदूतकर्मणि नियुक्ताः मंत्रिणः । तदनंतरं ते अयोध्यायां प्रावि

भगवन्दृष्टवीर्योमेरामोदशरथात्मजः ॥ अत्यद्भुतमचिंत्यंचअतर्कितमिदंमया ॥ २१ ॥ जनकानांकुलेकीर्तिमाहरिष्यतिमेसुता ॥ सीताभर्तारमासाद्यरामं दशरथात्मजम् ॥ २२ ॥ ममसत्याप्रतिज्ञासावीर्यशुल्केतिकौशिक ॥ सीताप्राणैर्बहुमतादेयारामायमेसुता ॥ २३ ॥ भवतोनुमतेब्रह्मञ्छीघ्रंगच्छंतुमंत्रिणः ॥ ममकौशिकभद्रंतेअयोध्यांत्वरितारथैः ॥ २४ ॥ राजानंप्रश्रितैर्वाक्यैरानयंतुपुरंमम ॥ प्रदानंवीर्यशुल्कायाःकथयंतुचसर्वशः ॥२५॥ मुनिगुप्तौचकाकुत्स्थौकथयंतुनृपायवै ॥ प्रीतियुक्तंतुराजानमानयंतुसुशीघ्रगाः ॥ २६ ॥ कौशिकस्तुतथेत्याहराजाचाभाष्यमंत्रिणः ॥ अयोध्यांप्रेषयामासधर्मात्माकृतशासनान् ॥ २७ ॥ यथावृत्तंसमाख्यातुमानेतुंचनृपंतथा ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥ जनकेनसमादिष्टादूतास्तेक्लांतवाहनाः ॥ त्रिरात्रमुषितामार्गेतेऽयोध्यांप्राविशन्पुरीम् ॥ १ ॥ तेराजवचनाद्गत्वाराजवेश्मप्रवेशिताः ॥ ददृशुर्देवसंकाशंवृद्धंदशरथंनृपम् ॥ २ ॥ बद्धांजलिपुटाःसर्वेदूताविगतसाध्वसाः ॥ राजानंप्रश्रितंवाक्यमब्रुवन्मधुराक्षरम् ॥ ३ ॥ मैथिलोजनकोराजासाग्निहोत्रपुरस्कृतः ॥ मुहुर्मुहुर्मधुरयास्नेहसंरक्तयागिरा ॥ ४ ॥ कुशलंचाव्ययंचैवसोपाध्यायपुरोहितम् ॥ जनकस्त्वांमहाराजाऽऽपृच्छतेसपुरःसरम् ॥ ५ ॥ पृष्ट्वाकुशलमव्यग्रंवैदेहोमिथिलाधिपः ॥ कौशिकानुमतेवाक्यंभवंतमिदमब्रवीत् ॥ ६ ॥ पूर्वंप्रतिज्ञाविदितावीर्यशुल्काममात्मजा ॥ राजानश्चकृतामर्षानिर्वीर्याविमुखीकृताः ॥७॥ सेयंममसुताराजन्विश्वामित्रपुरस्कृतैः ॥ यदृच्छयागतैराजन्निर्जितातवपुत्रकैः ॥ ८ ॥

न ॥ १ ॥ राजवचनात् जनकः अस्मान् इह प्रेषितवानिति स्वराजनामसंकीर्तनात् राजवेश्म दशरथवेश्म प्रवेशिताः । तदीयैर्द्वारपालैरिति शेषः ॥ २ ॥ विगतसाध्वसाः महाराजदूतत्वेन तद्भृत्यवत् तत्सन्निधौ भयरहिताः ॥ ३ ॥ साग्निहोत्रपुरस्कृतः पुरस्कृताग्निहोत्रसहितः । आहिताग्न्यादिः । पुरस्कृताः मंत्र्यादयः । आग्निहोत्रपदेन सत्साधनऋत्विजः तैः सहित इत्यर्थ इत्यन्ये ॥ ४ ॥ कुशलं क्षेमम् अव्ययम् अनपायं हे महाराज आपृच्छते । आङि नुपृच्छ्योरित्यात्मनेपदम् । पुरःसराः भृत्याः तत्सहितम् ॥ ५ ॥ अनुमते अनुमतकृत्यसाधननिमित्तम् ॥ ६ ॥ वीर्यशुल्केति । प्रतिज्ञा पूर्वं युष्माकं विदितेत्यन्वयः । विमुखीकृता इत्यपि विदितम् ॥ ७ ॥ तव पुत्रकैरिति । तव पुत्रेण रामेणेत्यर्थः । कप्रत्ययेन अल्पार्थकेन बाल्यद्योतनम् । जामातृबुद्ध्या महाबलत्वेन ईश्वरबुद्ध्या च पूज्यत्वेन

१ कपुस्तकादर्धश्लोको न्यूनोत्र ।

बहुवचनप्रयोग. । ॥ ८ ॥ तच्च पूर्वं दक्षाध्वरध्वंससमये रुद्रेण यद्बलात् शक्रादिपुरःसरसकलसुरजयः कृतः तच्चेत्यर्थः । रत्नं धनुः उत्तमं धनुः ॥ ९ ॥ प्रतिज्ञां वीर्यशुल्कतया सीतादानप्रतिज्ञाम् कर्तुं पूरयितुम् ॥ १० ॥ ११ ॥ उभयोरेव उभयोरपि पुत्रयोः न केवलं रामस्यैवेत्यर्थः । प्रीतिं विवाहजाम् । एतेन लक्ष्मणायोर्मिलाप्रदानं सूचितम् ॥ १२ ॥ अभ्यनुज्ञातः अभ्यनुज्ञातकन्याप्रदानकृत्यः ॥ १३ ॥ एवं वक्ष्यमाणम् ॥ १४ ॥ विदेहेषु विदेहानां निवासभूते जनपदे ॥ १५ ॥ १६ ॥ यदि वो रोचते वृत्तं यौनसंबंधयोग्यमित्यर्थः । पर्ययः अतिक्रमः ॥ १७ ॥ श्वो यात्रेति मंत्रिणोऽब्रवीदित्यन्वयः । तदर्थः उद्यमः क्रियतामिति शेषः ॥ १८ ॥ मंत्रिणः जनकमंत्रिणः गुणैः सत्कारातिशयैः । नरेंद्रश्चेति पाठे स च मुदितः उवासेति विपरिणामः । नरेंद्रस्येति पाठे जनकस्येत्यर्थः

तच्चरत्नंधनुर्दिव्यंमध्येभग्नंमहात्मना ॥ रामेणहिमहाबाहोमहत्यांजनसंसदि ॥ ९ ॥ अस्मैदेयामयासीतावीर्यशुल्कामहात्मने ॥ प्रतिज्ञांतर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ १० ॥ सोपाध्यायोमहाराजपुरोहितपुरस्कृतः ॥ शीघ्रमागच्छभद्रंतेद्रष्टुमर्हसिराघवौ ॥ ११ ॥ प्रतिज्ञांममराजेंद्रनिर्वर्तयितुमर्हसि ॥ पुत्रयोरुभयोरेवप्रीतिंत्वमुपलप्स्यसे ॥ १२ ॥ एवंविदेहाधिपतिर्मधुरंवाक्यमब्रवीत् ॥ विश्वामित्राभ्यनुज्ञातःशतानंदमतेस्थितः ॥ १३ ॥ दूतवाक्यं तुतच्छ्रुत्वाराजापरमहर्षितः ॥ वसिष्ठंवामदेवंचमंत्रिणश्चैवमब्रवीत् ॥ १४ ॥ गुप्तःकुशिकपुत्रेणकौसल्यानंदवर्धनः ॥ लक्ष्मणेनसहभ्रात्राविदेहेषुवसत्यसौ ॥१५॥ दृष्टवीर्यस्तुकाकुत्स्थोजनकेनमहात्मना ॥ संप्रदानंसुतायास्तुराघवेकर्तुमिच्छति ॥१६॥ यदिवोरोचतेवृत्तंजनकस्यमहात्मनः ॥ पुरींगच्छामहे शीघ्रंमाभूत्कालस्यपर्ययः ॥ १७ ॥ मंत्रिणोबाढमित्याहुःसहसर्वैर्महर्षिभिः ॥ सुप्रीतश्चाब्रवीद्राजाश्वोयात्रेतिचमंत्रिणः ॥ १८ ॥ मंत्रिणस्तुनरेंद्रस्यरात्रिंपरमसत्कृताः ॥ ऊषुःप्रमुदिताःसर्वेगुणैःसर्वैःसमन्विताः ॥ ॥१९॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा०बालकांडे अष्टषष्टितमः सर्गः ॥ ६८॥ ततोरात्र्यांव्यतीतायांसोपाध्यायःसबांधवः ॥ राजादशरथोहृष्टःसुमंत्रमिदमब्रवीत् ॥ १ ॥ अद्यसर्वेधनाध्यक्षाधनमादायपुष्कलम् ॥ व्रजंत्वग्रेसुविहितानानारत्नसमन्विताः ॥ २ ॥ चतुरंगबलंचापिशीघ्रंनिर्यातुसर्वशः ॥ ममाज्ञासमकालंचयानंयुग्यमनुत्तमम् ॥ ३ ॥ वसिष्ठोवामदेवश्चजाबालिरथकश्यपः ॥ मार्कंडेयस्तुदीर्घायुर्ऋषिःकात्यायनस्तथा ॥ ४ ॥ एतेद्विजाःप्रयांत्वग्रेस्यंदनंयोजयस्वमे ॥ यथाकालात्ययोनस्याद्दूताहित्वरयंतिमाम् ॥ ५ ॥ वचनाच्चनरेंद्रस्यसेनाचचतुरंगिणी ॥ राजानमृषिभिःसार्धंव्रजंतंपृष्ठतोन्वयात् ॥ ६ ॥ गत्वाचतुरहंमार्गेविदेहानभ्युपेयिवान् ॥ राजा चजनकःश्रीमाञ्छ्रुत्वापूजामकल्पयत् ॥ ७ ॥

॥ १९ ॥ धुंकमानः ॥ ॥ इति श्रीरामाभिराम श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे अष्टषष्टितमः सर्गः ॥ ६८ ॥ ॥ ७ ॥ ॥ १ ॥ धनाध्यक्षाः कोशरक्षाधिकारिणः । पुष्कलं बहुश्रेष्ठं च सुविहिताः सुरक्षिताः सुसंपादितकल्याणोचितकर्माणो वा ॥ २ ॥ यानं शिबिकादि । युग्यम् अश्वादि । अनुत्तमानि श्रेष्ठानि यानानि युग्यानि च यांतु । वसिष्ठाद्यर्थमिति शेषः ॥ ३ ॥ ४ ॥ अग्रे द्विजप्रयाणं प्रयाणे कल्याणाय । प्रयांतु उक्तयानयुग्यैरिति शेषः । दूताः जनकदूताः ॥ ५ ॥ चद्वयं चिंत्यफलं पादपूरणमात्रार्थम् ॥ ६ ॥ दूतानां त्रिदिनगम्योपि मार्गः

चतुरंगबलोपेतमयाणत्वाच्चतुर्दिनं वासः मध्ये । श्रुत्वा दशरथागमनम् ॥ ७ ॥ राजानम् आसाद्य मुदितः हर्षं ययौ । मोदस्यैवाधिकावस्था हर्ष इति भेदः ॥ ८ ॥ ९ ॥ वीर्यं शौर्यम् । वसिष्ठे इंद्रसाद्दश्यं पूर्णधर्मत्वेन । विघ्नाः कन्यादानप्रतिबंधाः ॥ राघवैः सह संबंधं प्राप्य पूजितं मे कुलम् । नरेंद्र सर्वराजश्रेष्ठ । संवर्तयितुं निर्वर्तयितुं विवाहमित्यग्रिमेणान्वयः ॥ १० ॥ ११ ॥ १२ ॥ यज्ञांते अवभृथे ॥ १३ ॥ प्रतिग्रहः कन्यागवादीनां दातृवशः।यदि दाता ददाति तदा प्रतिग्राह्यं प्रतिग्रहीत्रेति स्थितः। एतत वाक्यं मया श्रुतम्। क्षत्रियतया प्रतिग्रहधर्मस्य अद्याप्यज्ञानमेव । सांप्रतमेव अनुभवो भविष्यतीति श्रुतमित्युक्तम् १४ अतः यथा त्वं वक्ष्यसि तद्वयं करिष्यामहे॥ १५॥ विस्मयं कन्यायाः वीर्येण शुल्केन जितत्वात् मदनुमत्यनपेक्षायामपि राज्ञः विनयेन तादृशवचनात् विस्मयम्॥ १६ ॥ निशाम्य दृष्ट्वा ॥ १७॥ यज्ञस्य अवशिष्टाः क्रियाः सुताभ्यां दुहितृभ्यां कन्यादानशेषतया यत्कर्तव्यम् अंकुरारोपणादि लौकिकालौकिकं तत्सर्वं कृत्वा उवास॥ १८॥ जेयमानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे एकोनसप्ततितमः सर्गः ॥ ६९ ॥ ७० ॥

ततोराजानमासाद्यवृद्धंदशरथंनृपम् ॥ मुदितोजनकोराजाप्रहर्षंपरमंययौ ॥ ८ ॥ उवाचवचनंश्रेष्ठोनरश्रेष्ठंमुदान्वितम् ॥ स्वागतंतेनरश्रेष्ठदिष्ट्याप्राप्तोसिराघव ॥९॥ पुत्रयोरुभयोःप्रीतिंलप्स्यसेवीर्यनिर्जिताम् ॥ दिष्ट्याप्राप्तोमहातेजावसिष्ठोभगवानृषिः ॥१०॥ सहसर्वैर्द्विजश्रेष्ठैर्देवैरिवशतक्रतुः ॥ दिष्ट्यामेनिर्जिताविघ्नादिष्ट्यामेपूजितंकुलम् ॥ ११ ॥ राघवैःसहसंबंधाद्वीर्यश्रेष्ठैर्महाबलैः ॥ श्वःप्रभातेनरेंद्रत्वंसंवर्तयितुमर्हसि ॥ १२ ॥ यज्ञस्यांतेनरश्रेष्ठविवाहमृषिसत्तमैः ॥ तस्यतद्वचनंश्रुत्वाऋषिमध्येनराधिपः ॥ १३ ॥ वाक्यंवाक्यविदांश्रेष्ठःप्रत्युवाचमहीपतिम् ॥ प्रतिग्रहोदातृवशःश्रुतमेतन्मयापुरा ॥१४॥ यथावक्ष्यसिधर्मज्ञतत्करिष्यामहेवयम् ॥ तद्धर्मिष्ठंयशस्यंचवचनंसत्यवादिनः ॥ १५ ॥ श्रुत्वाविदेहाधिपतिःपरंविस्मयमागतः ॥ ततःसर्वेमुनिगणाःपरस्परसमागमे ॥ १६ ॥ हर्षेणमहतायुक्तास्तांरात्रिमवसन्सुखम् ॥ राजाचराघवौपुत्रौनिशाम्यपरिहर्षितः ॥ १७ ॥ उवासपरमप्रीतोजनकेनाभिपूजितः ॥ जनकोपिमहातेजाःक्रियाधर्मेणतत्त्ववित् ॥ यज्ञस्यचसुताभ्यांचकृत्वारात्रिमुवासह ॥ १८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे एकोनसप्ततितमः सर्गः ॥ ६९ ॥ ७० ॥ ततःप्रभातेजनकःकृतकर्मामहर्षिभिः ॥ उवाचवाक्यंवाक्यज्ञःशतानंदंपुरोहितम् ॥ १ ॥ भ्रातामममहातेजावीर्यवानतिधार्मिकः ॥ कुशध्वजइतिख्यातःपुरीमध्यवसच्छुभाम् ॥ २ ॥ वार्याफलकपर्यंतांपिबन्निक्षुमतींनदीम् ॥ सांकाश्यांपुण्यसंकाशांविमानमिवपुष्पकम् ॥ ३ ॥ तमहंद्रष्टुमिच्छामियज्ञगोप्तासमेततः ॥ प्रीतिंसोपिमहातेजाइमांभोक्तामयासह ॥ ४ ॥ एवमुक्तेतुवचनेशतानंदस्यसन्निधौ ॥ आगताःकेचिदव्यग्राजनकस्तान्समादिशत् ॥ ५ ॥

॥ ६९ ॥ ७० ॥ अथ ब्राह्मसंबंधसदृशे यौनसंबंधे वध्वपेक्षितः परस्परकुलाचारः सर्गाभ्याम् । तत इति । कृतकर्मा कृतनित्यक्रियः ॥ १ ॥ पुरीम् अध्यवसत् । उपान्वध्याङ्वस इति कर्मत्वम् ॥ २ ॥ परबलं वारयितुम् अर्हः वार्यः प्राकारः तत्स्थाः आफलकाः यंत्रफलकाः । तद्युक्तः पर्यंतः परिसरो यस्याः सा तथा भूताम् इक्षुमतीं पिबन् तज्जलं पिबन् सांकाश्यां तदाख्यां नगरीम् । वार्यामलकपर्यंतामिति पाठे वार्यामलकाः आमलकविशेषाः पर्यंतेषु यस्या इत्यर्थः। पुण्यसंकाशां पुण्यशब्देन तत्फलं स्वर्गः तत्संकाशां तदुपमामित्यर्थः । पुष्पकं विमानं कौबेरं प्रसिद्धम् ॥ ३॥ तम् उक्तपुरवासिनम्। यज्ञगोप्ता मिथिलायां क्रियमाणयज्ञस्य सांकाश्यायामेव स्थित्वा अस्मद्यज्ञापेक्षितसामग्रीसंपादकत्वेन रक्षिता । इमां प्रीतिं जानकीपरिणयजाम् ॥ ४ ॥ अव्यग्राः समर्थाः । समादिशत् शतानंदेन गंतुं प्रैरयत् ॥५॥

नरेंद्रशासनात् शतानंदमेरिताः प्रययुः । दूता इति शेषः ॥ ६ ॥ ७ ॥ नृपतिः कुशध्वजः ॥ ८ ॥ पूर्वं शतानंदम् अभिवाद्य ततः जनकं चाभिवाद्येत्यर्थः ॥ ९ ॥ अध्यारोहत । पुरोहित जनकयोः अनुमत्येति शेषः ॥ १० ॥ सुदामनं सुदामनाख्यम् ॥ ११ ॥ औपकार्याम् । उपकार्याशब्दात्स्वार्थेऽण् । दशरथशिबिरसन्निवेशमित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ इदं वाक्यं वक्ष्य माणम् । वसिष्ठमुखेन कन्यां वरयितुम् । इक्ष्वाकुकुलदैवतं भगवान्वसिष्ठः इक्ष्वाकूणां सर्वेषु कृत्येषु वक्तेति ते विदितमित्यन्वयः । अतो विश्वामित्राभ्यनुज्ञया ऋषिभिः सह कुलप्रभवधर्मक्रमम् अनतिक्रम्य

शासनात्तुनरेंद्रस्यप्रययुःशीघ्रवाजिभिः ॥ समानेतुंनरव्याघ्रंविष्णुमिंद्राज्ञयायथा ॥६॥ सांकाश्यांतेसमागम्यददृशुश्चकुशध्वजम् ॥ न्यवेदयन्यथावृत्तं जनकस्यचचिंतितम् ॥ ७ ॥ तद्वृत्तंनृपतिःश्रुत्वादूतश्रेष्ठैर्महाजवैः ॥ आज्ञयातुनरेंद्रस्यआजगामकुशध्वजः ॥८॥ सददर्शमहात्मानंजनकंधर्मवत्सलम्॥ सोऽभिवाद्यशतानंदंजनकंचातिधार्मिकम् ॥ ९ ॥ राजार्हंपरमंदिव्यमासनंसोऽध्यरोहत ॥ उपविष्टावुभौतौतुभ्रातरावमितद्युती ॥ १० ॥ प्रेषयामासतुर्वीरौ मंत्रिश्रेष्ठंसुदामनम् ॥ गच्छमंत्रिपतेशीघ्रमिक्ष्वाकुममितप्रभम् ॥११॥ आत्मजैःसहदुर्धर्षमानयस्वसमंत्रिणम् ॥ औपकार्यांसगत्वातुरघूणांकुलवर्धनम् ॥ ॥१२॥ ददर्शशिरसाचैनमभिवाद्येदमब्रवीत् ॥ अयोध्याधिपतेवीरवैदेहोमिथिलाधिपः ॥१३॥ सत्वांद्रष्टुंव्यवसितःसोपाध्यायपुरोहितम् ॥ मंत्रिश्रेष्ठवचः श्रुत्वाराजासर्षिगणस्तथा ॥ १४ ॥ सबंधुरगमत्तत्रजनकोयत्रवर्त्तते ॥ राजाचमंत्रिसहितःसोपाध्यायःसबांधवः ॥ १५ ॥ वाक्यंवाक्यविदांश्रेष्ठोवैदेह मिदमब्रवीत ॥ विदितंतेमहाराजइक्ष्वाकुकुलदैवतम् ॥ १६ ॥ वक्तासर्वेषुकृत्येषुवसिष्ठोभगवानृषिः ॥ विश्वामित्राभ्यनुज्ञातःसहसर्वैर्महर्षिभिः ॥ १७ ॥ एषवक्ष्यतिधर्मात्मावसिष्ठोमेयथाक्रमम् ॥ तूष्णींभूतेदशरथेवसिष्ठोभगवानृषिः ॥१८॥ उवाचवाक्यंवाक्यज्ञोवैदेहंसपुरोधसम् ॥ अव्यक्तप्रभवोब्रह्माशाश्वतो नित्यअव्ययः ॥ १९ ॥ तस्मान्मरीचिःसंजज्ञेमरीचेःकश्यपःसुतः ॥ विवस्वान्कश्यपाज्जज्ञेमनुर्वैवस्वतःस्मृतः ॥२०॥ मनुःप्रजापतिःपूर्वमिक्ष्वाकुश्चमनोः सुतः ॥ तमिक्ष्वाकुमयोध्यायांराजानंविद्धिपूर्वकम् ॥ २१ ॥ इक्ष्वाकोस्तुसुतःश्रीमान्कुक्षिरित्येवविश्रुतः ॥ कुक्षेरथात्मजःश्रीमान्विकुक्षिरुदपद्यत ॥२२॥ विकुक्षेस्तुमहातेजाबाणःपुत्रःप्रतापवान् ॥ बाणस्यतुमहातेजाअनरण्यःप्रतापवान् ॥ २३ ॥ अनरण्यात्पृथुर्जज्ञेत्रिशंकुस्तुपृथोरपि ॥ त्रिशंकोरभवत्पुत्रोधुंधुमारोमहायशाः ॥ २४ ॥ धुंधुमारान्महातेजायुवनाश्वोमहारथः ॥ युवनाश्वसुतश्चासीन्मांधातापृथिवीपतिः ॥ २५ ॥ मांधातुस्तुसुतःश्रीमान्सुसंधिरुदपद्यत ॥ सुसंधेरपिपुत्रौद्वौध्रुवसंधिःप्रसेनजित् ॥२६॥ यशस्वीध्रुवसंधेस्तुभरतोनामनामतः ॥ भरतात्तुमहातेजाअसितोनामजा (यत) तवान् ॥२७॥

क्रमं ज्येष्ठानुक्रमं च अनतिक्रम्य दशपुरुषविख्यातादिति न्यायेन यौनसंबंधोपेक्षितवंशपारंपर्यमेष वक्ष्यति ॥ १६ ॥ १७ ॥ १८ ॥ अव्यक्तशब्देन मायाशबलं ब्रह्म । ब्रह्मा चतुर्मुखः । शाश्वतत्वनित्य त्वाव्ययत्वानि अस्य आपेक्षिकाणि द्रष्टव्यानि ॥ १९ ॥ २० ॥ मनोः प्रजापतित्वं प्रजासर्गाधिकारित्वेन । पूर्वकं आद्यम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

यस्य असितस्य प्रतिराजानः शत्रुभूताः राजानः॥२८॥सः असितः प्रतियुध्यन् प्रतिपक्षतया युध्यन् प्रवासितः राज्यान्निःसारितः॥२९॥इति श्रुतिः पुरातनकथेत्यर्थः॥३०॥सगरं गरसहितं भक्ष्यम् । शैलवरे हिमवति अभिरतः बभूव॥३१॥तत्र हिमवति।एका प्राशितगरा॥३२॥कालिंदी तस्याः नाम—अभ्युपागम्य शरणं गत्वा अभ्यवादयच्च।येन शुश्रूषणमपि अकरोत॥३३॥पुत्रजन्मनि तद्विषये अभ्यवदत् उक्तवान्॥३४॥गरेण सहितः जनिष्यतीत्यन्वयः।मा शुचःपतिमरणजं गरदानजं च शोकं त्यज पुत्रेणैव सुखिनी भविष्यसीति भावः॥३५॥पतिना रहितेतिं पाठे नाभावः आर्षः।तस्मात् च्यवनप्रसादात्।व्यजायत असुत३६

यस्यैतेप्रतिराजानउदपद्यंतशत्रवः ॥ हैहयास्तालजंघाश्चशूराश्चशशबिंदवः ॥ २८ ॥ तांश्चसप्रतियुध्यन्वैयुद्धेराजाप्रवासितः ॥ हिमवंतमुपागम्यभार्याभ्यांसहितस्तदा ॥ २९ ॥ असितोल्पबलोराजाकालधर्ममुपेयिवान् ॥ द्वेचास्यभार्येगर्भिण्यौबभूवतुरितिश्रुतिः ॥३०॥ एकागर्भविनाशार्थंसपत्न्यैसगरंददौ ॥ ततःशैलवरेरम्येबभूवाभिरतोमुनिः ॥ ३१ ॥ भार्गवश्च्यवनोनामहिमवंतमुपाश्रितः ॥ तत्रचैकामहाभागाभार्गवंदेववर्चसम् ॥ ३२ ॥ ववंदेपद्मपत्राक्षीकांक्षंतीसुतमुत्तमम् ॥ तमृषिंसाभ्युपागम्यकालिंदीचाभ्यवादयत् ॥ ३३ ॥ सतामभ्यवदद्विप्रःपुत्रेप्सुंपुत्रजन्मनि ॥ तववकुक्षौमहाभागेसुपुत्रःसुमहाबलः ॥ ३४ ॥ महावीर्योमहातेजाअचिरात्संजनिष्यति ॥ गरेणसहितःश्रीमान्माशुचःकमलेक्षणे ॥ ३५ ॥ च्यवनंचनमस्कृत्यराजपुत्रीपतिव्रता ॥ पत्याविरहितातस्मात्पुत्रंदेवीव्यजायत ॥ ३६ ॥ सपत्न्यातुगरस्तस्यैदत्तोगर्भजिघांसया ॥ सहतेनगरेणैवसंजातःसगरोभवत् ॥ ३७ ॥ सगरस्यासमंजस्तुअसमंजादथांशुमान् ॥ दिलीपोंशुमतःपुत्रोदिलीपस्यभगीरथः ॥ ३८ ॥ भगीरथात्ककुत्स्थश्चककुत्स्थाच्चरघुस्तथा ॥ रघोस्तुपुत्रस्तेजस्वीप्रवृद्धःपुरुषादकः ॥ ३९ ॥ कल्माषपादोप्यभवत्तस्माज्जातस्तुशंखणः ॥ सुदर्शनःशंखणस्यअग्निवर्णःसुदर्शनात् ॥ ४० ॥ शीघ्रगस्त्वग्निवर्णस्यशीघ्रगस्यमरुःसुतः ॥ मरोःप्रशुश्रुकस्त्वासीदंबरीषःप्रशुश्रुकात् ॥ ४१ ॥ अंबरीषस्यपुत्रोभून्नहुषश्चमहीपतिः ॥ नहुषस्ययय़ातिस्तुनाभागस्तुययातिजः ॥ ४२ ॥ नाभागस्यबभूवाजअजाद्दशरथोभवत् ॥ अस्माद्दशरथाज्जातौभ्रातरौरामलक्ष्मणौ ॥ ४३ ॥ आदिवंशविशुद्धानांराज्ञांपरमधर्मिणाम् ॥ इक्ष्वाकुकुलजातानांवीराणांसत्यवादिनाम् ॥ ४४ ॥ रामलक्ष्मणयोरर्थेत्वत्सुतेवरयेनृप ॥ सदृशाभ्यांनरश्रेष्ठसदृशेदातुमर्हसि ॥ ४५ ॥ इत्यार्षे श्रीम० वा० आ० च० विं० सा० बालकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

यतः गरेण सह जातः अतः सगरनाम्ना अभवत् ॥ ३७ ॥ ३८ ॥ प्रवृद्धः तन्नामा । पुरुषादकः वसिष्ठशापवशात् राक्षसः अभवत् । वसिष्ठाय प्रतिशापं दातुम् उद्धृतं जलं स्वपत्न्यनुनयेन स्वपादयोर्निविष्टवान् । ततः कल्माषवर्णपादः तदाख्यश्च अभवत् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ यद्यपि वंशपरंपरा पुराणादिष्वन्यथा दृश्यते । तथापि तत्र कल्पभेदेन विरोधपरिहारः—एकस्यानेकनामकत्वाद्वा ॥ ४३ ॥ आदीति । आदितः ब्रह्माणम् आरभ्य वंशेन शुद्धानां वीराणां सत्यवादिनां संबंधिनोः रामलक्ष्मणयोरित्यर्थः ॥ ४४ ॥ ४५ ॥ मेघेमानः ॥ ॥ इति श्रीरा० श्रीरा० रा० वा०

१ कपुस्तकादेकः श्लोको न्यूनोत्र।

आ० बा० सप्ततितमः सर्गः ॥ ७० ॥ ॥ छ ॥ ॥ अथ जनकः कन्यापितृत्वात् जामातृवर्गे प्रभुतायाः अनौचित्येन स्ववंशं स्वयमेवाह । एवम् इतिब्रुवाणं वसिष्ठम् । अस्माभिः परिकीर्तितं नः अस्माकं कुलं श्रोतुमर्हसि ॥ १ ॥ कुलजातेन सत्कुलप्रसूतेन । प्रदाने कन्यादानविषये कुलं वक्तव्यमित्यन्वयः ॥ २ ॥ ३ ॥ तस्य निमेः । मिथिनाम्ना च मिथिलेति प्रथमो जनकः सर्वेषामस्माकं जनकशब्दव्यवहारार्थत्वे मूलभूतः ॥४॥ नाम प्रसिद्धम् । नामतः सुकेतुरित्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ तस्य ह्रस्वरोम्णः ज्येष्ठोहम्—ममानुजः कुशध्वजः" ॥१३॥

एवंब्रुवाणंजनकःप्रत्युवाचकृतांजलिः ॥ श्रोतुमर्हसिभद्रंतेकुलंनःपरिकीर्तितम् ॥ १ ॥ प्रदानेहिमुनिश्रेष्ठकुलंनिरवशेषतः ॥ वक्तव्यंकुलजातेनतन्निबोधमहामते ॥ २ ॥ राजाभूत्रिषुलोकेषुविश्रुतःस्वेनकर्मणा ॥ निमिःपरमधर्मात्मासर्वसत्त्ववतांवरः ॥ ३ ॥ तस्यपुत्रोमिथिर्नामजनकोमिथिपुत्रकः ॥ प्रथमोजनकोराजाजनकादप्युदावसुः ॥ ४ ॥ उदावसोस्तुधर्मात्माजातोवैनंदिवर्धनः ॥ नंदिवर्धसुतःशूरःसुकेतुर्नामनामतः ॥ ५॥ सुकेतोरपिधर्मात्मादेवरातोमहाबलः ॥ देवरातस्यराजर्षेर्बृहद्रथइतिस्मृतः ॥ ६ ॥बृहद्रथस्यशूरोभून्महावीरःप्रतापवान् ॥ महावीरस्यधृतिमान्सुधृतिःसत्यविक्रमः ॥७ ॥ सुधृतेरपिधर्मात्माधृष्टकेतुःसुधार्मिकः ॥ धृष्टकेतोश्चराजर्षेर्हर्यश्वइतिविश्रुतः ॥८॥ हर्यश्वस्यमरुःपुत्रोमरोःपुत्रःप्रतींधकः ॥ प्रतींधकस्यधर्मात्माराजाकीर्तिरथःसुतः॥ ९ ॥ पुत्रःकीर्तिरथस्यापिदेवमीढइतिश्रुतः ॥ देवमीढस्यविबुधोविबुधस्यमहीध्रकः ॥ १० ॥ महीध्रकसुतोराजाकीर्तिरातोमहाबलः ॥ कीर्तिरातस्यराजर्षेर्महारोमाव्यजायत ॥ ११ ॥ महारोम्णस्तुधर्मात्मास्वर्णरोमाव्यजायत ॥ स्वर्णरोम्णस्तुराजर्षेर्ह्रस्वरोमाव्यजायत ॥ १२ ॥ तस्यपुत्रद्वयंराज्ञोधर्मज्ञस्यमहात्मनः ॥ ज्येष्ठोहमनुजोभ्राताममवीरःकुशध्वजः ॥ १३ ॥ मांतुज्येष्ठंपिताराज्येसोभिषिच्यपिता मम ॥ कुशध्वजंसमावेश्यभारंमयिवनंगतः ॥१४॥ वृद्धेपितरिस्वर्यातेधर्मेणधुरमावहम् ॥ भ्रातरंदेवसंकाशंस्नेहात्पश्यन्कुशध्वजम् ॥ १५ ॥ कस्यचित्त्वथकालस्यसांकाश्यादागतःपुरात् ॥ सुधन्वावीर्यवान्राजामिथिलामवरोधकः ॥१६॥ सचमेप्रेषयामासशैवंधनुरनुत्तमम् ॥ सीताचकन्यापद्माक्षीमह्यंवैदीयतामिति ॥ १७ ॥ तस्याप्रदानान्महर्षेयुद्धमासीन्मयासह ॥ सहतोविमुखोराजासुधन्वातुमयारणे ॥ १८ ॥ निहत्यतंमुनिश्रेष्ठसुधन्वानंनराधिपम् ॥ सांकाश्येभ्रातरंशूरमभ्यषिंचंकुशध्वजम् ॥१९॥ कनीयानेषमेभ्राताअहंज्येष्ठोमहामुने ॥ ददामिपरमप्रीतोवध्वौतेमुनिपुंगव ॥२०॥ सीतांरामायभद्रंतेऊर्मिलांलक्ष्मणायवै ॥ वीर्यशुल्कांममसुतांसीतांसुरसुतोपमाम् ॥२१॥ द्वितीयामूर्मिलांचैवत्रिर्वदामिनसंशयः ॥ ददामिपरमप्रीतोवध्वौतेमुनिपुंगव ॥२२॥ रामलक्ष्मणयोराजन्गोदानंकारयस्वह ॥ पितृकार्यंचभद्रंतेततोवैवाहिकंकुरु ॥ २३ ॥

सः मम पिता मां ज्येष्ठं तु राज्ये अभिषिच्य कुशध्वजं भारं भरणीयम् । यद्वा कुशध्वजं भारं राज्यभारं च मयि समावेश्य स्थापयित्वा वनं गत इत्यन्वयः ॥ १४ ॥ धुरं राज्यभारम् । स्नेहात् पश्यन् पालयन् ॥ १५ ॥ सांकाश्यमिति । सुधन्वनगरनाम । अवरोधकः अगमत् अवरोद्धुमागतवानित्यर्थः॥१६॥ शैवं धनुः सीता च कन्या मह्यं दीयतामिति दूतान् प्रेषयामास मे इत्यन्वयः ॥ १७॥ तस्य अप्रदानस्य । विमुखः युद्धे विमुखः ॥ १८ ॥ सांकाश्ये सुधन्वनगरे ॥ १९ ॥ २० ॥ ऊर्मिलां योनिजां निजपुत्रीम् ॥२१॥ त्रिर्वदामि ।उक्तमपि दार्ढ्यायेत्याशयः ॥२२॥ गोदानं समावर्तनम् ।

वैवाहिकं विवाहादौ कर्तव्यम् । पितृकार्यं नांदीमुखश्राद्धम् ॥ २३ ॥ अद्य तृतीयदिवसे तत्र मिथिलाप्रवेशात्तृतीयदिवसे यज्ञसमाप्तेस्तृतीयदिवसे वा । अद्य मघानक्षत्रम् । फल्गुन्यां पूर्वफल्गुनीनक्षत्रे । उत्तरे श्रेष्ठे । अत एव भगो यत्र प्रजापतिरित्यनेन अविरोधः । भगोहि पूर्वफल्गुनीदेवः-उत्तरफल्गुन्यास्त्वर्यमेति बोध्यम् । वैवाहिकं विवाहम् । विनयादित्वाद् ठक् । मघानक्षत्रं पितरो देवता फल्गुनीनक्षत्रमर्यमा देवता फल्गुनीनक्षत्रं भगो देवतेति तैत्तिरीयसंहितायाम् । अर्यम्णः पूर्वे फल्गुनी भगस्योत्तरे इति तद्ब्राह्मणे चोक्तत्वेन यथाश्रुतमेव सम्यगिति तत्त्वम् । उत्तरे इति । पुंस्त्वमार्षम् । यद्यप्युत्तराफल्गुनी सीतायाः जन्मर्क्षम् । तथापि तदृक्षे प्रथमचरणं विहाय तज्जन्मप्रसत्त्वेन तस्याः कन्याराशित्वात्तु तृतीयैकादशरूपभकूटशुद्धेः तस्य न दोषः । भकूटशुद्धौ तन्न दुष्टमिति ज्योतिःशास्त्रे प्रसिद्धम् । किं च पूर्वासु तस्याः द्वादशः चंद्र इति तत्र विवाहोऽनुष्ठित एव । एकनाडीदोषेण च रामसीतयोर्वियोग इति ध्येयम् ॥ २४ ॥ रामलक्ष्मणयोरर्थे तदभ्युदयाय सुखोदयं सुखोदर्कं दानं गोभूतिलहिरण्यादेः दानं कार्यम् । त्वयेति शेषः ॥ २५ ॥ शं३मान ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे एकसप्ततितमः सर्गः ॥ ७१ ॥ ॥ छ ॥ ॥ वीरं जनकम् ॥ १ ॥

मघाह्यद्यमहाबाहोतृतीयदिवसेप्रभो ॥ फल्गुन्यामुत्तरेराजंस्तस्मिन्वैवाहिकंकुरु ॥ २४ ॥ रामलक्ष्मणयोरर्थेदानंकार्यंसुखोदयम् ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च०विं०सा० बालकांडे एकसप्ततितमः सर्गः ॥७१॥ तमुक्तवंतंवैदेहंविश्वामित्रोमहामुनिः ॥ उवाचवचनंवीरंवसिष्ठसहितोनृपम् ॥ १ ॥ अचिंत्यान्यप्रमेयाणिकुलानिनरपुंगव ॥ इक्ष्वाकूणांविदेहानांनैषांतुल्योस्तिकश्चन ॥ २ ॥ सदृशोधर्मसंबंधःसदृशोरूपसंपदा ॥ रामलक्ष्मणयोराजन्सीताचोर्मिलयासह ॥ ३ ॥ वक्तव्यंचनरश्रेष्ठश्रूयतांवचनंमम ॥ भ्रातायवीयान्धर्मज्ञएषराजाकुशध्वजः ॥ ४ ॥ अस्यधर्मात्मनो राजन्रूपेणाप्रतिमंभुवि ॥ सुताद्वयंनरश्रेष्ठपत्न्यर्थंवरयामहे ॥ ५ ॥ भरतस्यकुमारस्यशत्रुघ्नस्यचधीमतः ॥ वरयेतेसुतेराजंस्तयोरर्थेमहात्मनोः ॥ ६ ॥ पुत्रादशरथस्येमेरूपयौवनशालिनः ॥ लोकपालसमाःसर्वेदेवतुल्यपराक्रमाः ॥ ७ ॥ उभयोरपिराजेंद्रसंबंधेनानुबध्यताम् ॥ इक्ष्वाकुकुलमव्यग्रंभवतः पुण्यकर्मणः ॥ ८ ॥ विश्वामित्रवचःश्रुत्वावसिष्ठस्यमतेतदा ॥ जनकःप्रांजलिर्वाक्यमुवाचमुनिपुंगवौ ॥ ९ ॥ कुलंधन्यमिदंमन्येयेषांतौमुनिपुंगवौ ॥ सदृशंकुलसंबंधंयदाज्ञापयतःस्वयम् ॥ १० ॥एवंभवतुभद्रंवःकुशध्वजसुतेइमे ॥ पत्न्यौभजेतांसहितौशत्रुघ्नभरतावुभौ ॥ ११ ॥ एकाह्नाराजपुत्रीणां चतसृणांमहामुने ॥ पाणीन्गृह्णंतुचत्वारोराजपुत्रामहाबलाः ॥ १२ ॥

एषां तुल्यः परस्परव्यतिरेकेण अपरो नास्ति ॥ २ ॥ धर्मसंबंधः युवयोः । विवाहसंबंधः सदृशः अनुरूपः । किं चोर्मिलया सह वर्तमाना या सीता तस्याः यथायोग्ययोः रामलक्ष्मणयोः यः संबंधः स्वरूपसंपदा सदृशः । सीतयोर्मिलयेति पाठस्तु सुगम एव ॥ ३ ॥ किंचिदन्यद्वक्तव्यमस्ति तच्छ्रूयतामित्यन्वयः ॥ ४ ॥ ५ ॥ कयोः पत्नीत्वार्थं तत्राह । भरतस्येत्यादि । आद्यार्धं पूर्वान्वयि । तथा ते सुते सीतोर्मिले । तयोरर्थे रामलक्ष्मणयोरर्थे ॥ ६ ॥ दशरथपुत्रेषु न कस्मिन्नपि वरगुणन्यूनतेत्याह । पुत्रा इति ॥ ७ ॥ उभयोः भ्रात्रोः संबंधेन इक्ष्वाकुकुलं संबध्यताम् । तत्र च संबंधे पुण्यकर्मणः भवतः अव्यग्रं चित्तम् । भवत्विति शेषः । कथमीदृशेन महाराजेन युगपद् मया संबंधचतुष्टयं कार्यमिति व्यग्रता मास्त्वित्यर्थः ॥ ८ ॥ ९ ॥ स्वयं न तु शिष्यादिमुखतः । यद् यस्मात् आज्ञापयतः तस्माद् इदं कुलं धन्यं मन्ये ॥ १० ॥ सहितौ नित्यसहचरौ । अत्र क्रमे न तात्पर्यम् ॥ ११ ॥ एकाह्नेति । टजभावोऽनित्याः समासांता इति । सप्तम्यर्थे तृतीया । एकदिवसे इत्यर्थः ।

चतसृणामिति । दीर्घत्वमार्षम् ॥ १२ ॥ फल्गुनीभ्याम उत्तरफल्गुनीभ्याम् उपलक्षिते उत्तरे दिवसे द्वितीये दिवसे । प्रजापतिदेवताप्राशस्त्यं च विवाहप्रजोत्पत्तिसाधनयोनिलिंगाधिष्ठातृभगदैवत्यत्वे नेति कतकः ॥ १३ ॥ प्रत्युत्थाय आसनादुत्थाय ॥ १४ ॥ परः धर्मः कन्यादानरूपः । अहं भवतोः शिष्योस्मि । तथा यथा दशरथश्च युवयोः शिष्यः । स्वैस्य शिष्यत्वे कनीयसः कुशध्वजस्य शिष्यत्वमर्थसिद्धम् । आसनमुख्यानि त्रयाणां त्रीणि सिंहासनानि । आस्यतामिति । आर्षं परिपालयेतामित्यर्थकम् । राज्यत्रयमपि युष्मदीयमित्यर्थः ॥ १५ ॥ ननु दशरथसिंहासनं कथं त्वया शक्यदानमत आह । यथेति । यथा इयं मिथिला दशरथस्य यथेष्टविनियोगार्हा एवम् अयोध्या पुरी मम । अतः युष्माकं त्रिसिंहासनप्रभुत्वे नास्ति संदेहः। अतः यथायोग्यं प्रभुत्वं कर्तुम् अर्हथ । पूजायां बहुवचनम् । वयं सर्वे भवदधीना इत्याशयः ॥ १६ ॥ हृष्टः। एवम् ऐक्यवादेनेति शेषः ॥ १७ ॥ ऋषिरूपाः भवद्वंश्याः राजसंघाः ते भवद्भ्यामभिपूजिताः । अनेन विनयेन सर्वोत्कर्षं प्रापिताः भवद्वंश एव एवं

उत्तरेदिवसेब्रह्मन्फल्गुनीभ्यांमनीषिणः ॥ वैवाहिकंप्रशंसंतिभगोयत्रप्रजापतिः ॥ १३ ॥ एवमुक्त्वावचःसौम्यंप्रत्युत्थायकृतांजलिः ॥ उभौमुनिवरौ राजाजनकोवाक्यमब्रवीत् ॥ १४ ॥ परोधर्मःकृतोमह्यंशिष्योस्मिभवतोस्तथा ॥ इमान्यासनमुख्यानिआस्यतांमुनिपुंगवौ ॥१५॥ यथादशरथस्येयं तथाऽयोध्यापुरीमम ॥ प्रभुत्वेनास्तिसंदेहोयथार्हंकर्तुमर्हथ ॥ १६ ॥ तथाब्रुवतिवैदेहेजनकेरघुनंदनः ॥ राजादशरथोहृष्टःप्रत्युवाचमहीपतिम् ॥ १७ ॥ युवामसंख्येयगुणौभ्रातरौमिथिलेश्वरौ ॥ ऋषयोराजसंघाश्चभवद्भ्यामभिपूजिताः ॥ १८ ॥ स्वस्तिप्राप्नुहिभद्रंतेगमिष्यामःस्वमालयम् ॥ श्राद्धकर्माणि विधिवद्विधास्यइतिचाब्रवीत् ॥ १९ ॥ तमापृष्ट्वानरपतिंराजादशरथस्तदा ॥ मुनींद्रौतौपुरस्कृत्यजगामाशुमहायशाः ॥ २० ॥ सगत्वानिलयंराजाश्राद्धं कृत्वाविधानतः ॥ प्रभातेकाल्यमुत्थायचक्रेगोदानमुत्तमम् ॥२१॥ गवांशतसहस्रंचब्राह्मणेभ्योनराधिपः ॥ एकैकशोददौराजापुत्रानुद्दिश्यधर्मतः॥२२॥ सुवर्णशृंग्यःसंपन्नाःसवत्साःकांस्यदोहनाः ॥ गवांशतसहस्राणिचत्वारिपुरुषर्षभ ॥ २३ ॥ वित्तमन्यच्चसुबहुद्विजेभ्योरघुनंदनः ॥ ददौगोदानमुद्दिश्यपुत्राणांपुत्रवत्सलः ॥ २४ ॥ ससुतैःकृतगोदानैर्वृतःसन्नृपतिस्तदा ॥ लोकपालैरिवाभातिवृतःसौम्यःप्रजापतिः ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकांडे द्विसप्ततितमः सर्गः ॥ ७२ ॥

विनीतः नायम अपूर्वोर्थः त्वयीति भावः ॥ १८ ॥ क्षत्रियत्वेपि प्रतिग्रहीतृत्वात् दातरि जनके आशीः स्वस्तीत्यादि ॥ १९ ॥ आपृष्ट्वा आपृच्छ्य ॥ २० ॥ प्रभाते उत्थाय काल्यं प्रातःकालकर्तव्यं गोदानाख्यं कर्म चक्रे ॥ २१ ॥ तदंगत्वेन प्रसिद्धगोदानमाह। गवामित्यादि। एकैकश इति। आर्षम ॥ २२ ॥ संपन्नाः बहुदुग्धाः ईदृश्यः याः गावः तासां गवां चत्वारि लक्षाणि ददावित्युत्तरेणान्वयः ॥ २३ ॥ गोदानं तदाख्यं कर्मविशेषम । गोदानं चौलवत्कार्यं षोडशेब्दे तदुच्यते । अंकोपवेशनं नास्ति श्मश्रूणां मुंडनं भवेत । स्नात्वा च वाग्यतस्तिष्ठन्नहःशेषं नयेदथ । आदित्येस्तमिते वाचं विसृजेतांति के गुरोः । अहं वरं ददामीति दद्याद्गोमिथुनं ततः—इत्याश्वलायनकारिकायाम् । इदं समावर्तनपूर्वांगम्। वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा । गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञयेति याज्ञवल्क्याव ॥ २४ ॥ सौम्यः, सोम इव सोम्यः सोम्य एव सौम्यः ॥ २५ ॥ शर्मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे द्विसप्ततितमः सर्गः ॥ ७२ ॥

समुपेयिवान्। दशरथमिति शेषः॥१॥२॥केकयाधिपतिः युधाजित्पिता। कुशलमब्रवीदिति।युष्मान्प्रतीति शेषः।येषाम् अस्माकं त्वं कुशलकामोसि तेषाम् अस्माकं संप्रत्यनामयमिति चाब्रवीत्॥३॥आगमनप्रयोजनमाह। स्वस्रीयमिति। स्वस्रीयं भरतम् ॥ ४ ॥ ५ ॥ अयोध्यायामदृष्ट्वा भरतं द्रष्टुकामः इह अभ्युपयात इत्यन्वयः ॥६॥७॥ यज्ञवाटं यज्ञशालाद्वारम् ॥८॥ युक्ते इत्यादि। सार्धश्लोकस्य उपागमदिति पूर्वेणान्वयः। युक्ते शुभलग्नादियुक्ते। विजये तदाख्ये ॥ ९ ॥ एत्य यज्ञवाटांतर्वर्तिनं वैदेहम् ॥ १० ॥ दातारं दातुः तवाज्ञां प्रवेष्टुम् आकांक्षते ॥११॥ दातृप्रतिग्रहीतृभ्याम्। योगे इति शेषः। सर्वार्थाः दानधर्माः। हि यतःअतः उत्तमं वैवाह्यम्।आर्षः ष्यञ्। विवाहोपयोगिलौकिकालौकिकं कर्म कृत्वा ततः स्वधर्मं प्रवेशाज्ञादानरूपं प्रतिपद्यस्व। तावद् द्वार्येव तिष्ठाम इति भावः॥१२॥परमोदारः परम

यस्मिंस्तुदिवसेराजाचक्रेगोदानमुत्तमम् ॥ तस्मिंस्तुदिवसेवीरोयुधाजित्समुपेयिवान् ॥ १ ॥ पुत्रःकेकयराजस्यसाक्षाद्भरतमातुलः ॥ दृष्ट्वापृष्ट्वाचकुशलं राजानमिदमब्रवीत् ॥ २ ॥ केकयाधिपतीराजास्नेहात्कुशलमब्रवीत् ॥ येषांकुशलकामोसितेषांसंप्रत्यनामयम् ॥ ३ ॥ स्वस्रीयंममराजेंद्रद्रष्टुकामोमहीपतिः ॥ तदर्थमुपयातोहमयोध्यांरघुनंदन ॥ ४ ॥ श्रुत्वात्वहमयोध्यायांविवाहार्थंतवात्मजान् ॥ मिथिलामुपयातांस्तुत्वयासहमहीपते ॥ ५ ॥ त्वरयाभ्युपयातोहंद्रष्टुकामःस्वसुःसुतम् ॥ अथराजादशरथःप्रियातिथिमुपस्थितम् ॥ ६ ॥ दृष्ट्वापरमसत्कारैःपूजनार्हमपूजयत् ॥ ततस्तामुषितोरात्रिंसहपुत्रैर्महात्मभिः ॥७॥ प्रभातेपुनरुत्थायकृत्वाकर्माणितत्त्ववित् ॥ ऋषींस्तदापुरस्कृत्ययज्ञवाटमुपागमत् ॥ ८ ॥ युक्तेमुहूर्तेविजयेसर्वाभरणभूषितैः ॥ भ्रातृभिःसहितोरामःकृतकौतुकमंगलः ॥ ९ ॥ वसिष्ठंतुपुरःकृत्वामहर्षीनपरानपि ॥ वसिष्ठोभगवानेत्यवैदेहमिदमब्रवीत् ॥ १० ॥ राजादशरथोराजन्कृतकौतुकमंगलैः ॥ पुत्रैर्नरवरश्रेष्ठोदातारमभिकांक्षते ॥ ११ ॥ दातृप्रतिगृहीतृभ्यांसर्वार्थाःसंभवंतिहि ॥ स्वधर्मंप्रतिपद्यस्वकृत्वावैवाह्यमुत्तमम् ॥ १२ ॥ इत्युक्तःपरमोदारोवसिष्ठेनमहात्मना ॥ प्रत्युवाचमहातेजावाक्यंपरमधर्मवित् ॥ १३ ॥ कःस्थितःप्रतिहारोमेकस्याज्ञांसंप्रतीक्षते ॥ स्वगृहेकोविचारोस्तियथाराज्यमिदंतव ॥ १४ ॥ कृतकौतुकसर्वस्वावेदिमूलमुपागताः ॥ ममकन्यामुनिश्रेष्ठदीप्तावह्नेरिवार्चिषः ॥ १५ ॥ सद्योहंत्वत्प्रतीक्षोस्मिवेद्यामस्यांप्रतिष्ठितः ॥ अविघ्नंक्रियतांसर्वंकिमर्थंहिविलंब्यते ॥ १६ ॥ तद्वाक्यंजनकेनोक्तंश्रुत्वादशरथस्तदा ॥ प्रवेशयामाससुतान्सर्वानृषिगणानपि ॥ १७ ॥ ततोराजाविदेहानांवसिष्ठमिदमब्रवीत् ॥ कारयस्वऋषेसर्वामृषिभिःसहधार्मिक ॥ १८ ॥ रामस्यलोकरामस्यक्रियांवैवाहिकींप्रभो ॥ तथेत्युक्त्वातुजनकंवसिष्ठोभगवानृषिः ॥ १९ ॥

दाता ॥ १३ ॥ प्रतिहारो द्वारपालः। येन राजागमनं प्रतिबध्यते इति शेषः। यथेदं मम राज्यं तथा तव। तत्र स्वगृहे प्रवंशे को विचार इत्यर्थः ॥ १४ ॥ अपि च कृतस्वकर्तव्येन मयैव युष्मत्प्रतीक्षा क्रियत इत्याह। कृतेति। कृतं कौतुकसर्वस्वं वैवाहिककृत्स्नमंगलानुष्ठानं यासां ताः। वेदिमूलं वेदिसमीपम् ॥१५॥ सद्यः अस्मिन्काले त्वां प्रतीक्षत इति त्वत्प्रतीक्षः। अविघ्नमविलंबं यथा तथा सर्वं विवाहकर्म भवता क्रियताम्। किमर्थं द्वार्यवस्थानेन विलंब्यते। भवतेति शेषः ॥ १६ ॥ श्रुत्वा वसिष्ठमुखाद् ॥१७॥ सर्वा वैवाहिकीमित्युत्तरेणान्वयः ॥ १८ ॥ लोकरामस्य। लोकप्रियस्येति यावत् ॥१९॥

प्रपामध्ये यज्ञशालामध्ये इति कतकः । प्रपा मंडप इत्यन्ये । तृष्णाशामकत्वेन प्रपात्वारोपः । वेदिं विवाहवेदिम् । इयं वेदिरग्न्यर्था॥२०॥ सुवर्णपालिकाभिः। सांकुराभिरित्यनुकर्षः। चित्रकुंभैः नानावर्णादियुतकुंभैः । अच्छिद्रकुंभैरिति पाठे स्फुटनादिदोषरहितैः स्वर्णकुंभैरित्यर्थ इति कतकः । अच्छिद्रकुंभैः करकैरिति तीर्थः॥२१॥ अर्घ्यादिपूजितैः तद्युक्तैः॥२२॥ लाजपूर्णैश्च पात्रीभिरिति । आर्षम् । संस्कृतैः हरिद्रालेपादिसंस्कारवद्भिः। समैः समप्रमाणैः। समास्तीर्य। वेदिमिति शेषः ॥२३॥ विधिना कल्पोक्ततंत्रकलापेन मंत्रैश्च पुरस्कृतम्। हविरिति शेषः । विवाहहोमादीनां वरकृत्यत्वात् तत्पुरोहितो वसिष्ठो जुहाव ॥ २४ ॥ अग्नेः समक्षं राघवाभिमुखे देशे संस्थाप्येत्यन्वयः ॥ २५ ॥ इयं त्वद्भुजवीर्यनिर्जिता मम सुतेत्याभिजात्यसूचनम् । सहधर्मचरी । अनेन यत् कर्तव्यं तदनया सहेति स्मारितम् ॥ २६ ॥

विश्वामित्रंपुरस्कृत्यशतानंदंचधार्मिकम् ॥ प्रपामध्येतुविधिवद्वेदिंकृत्वामहातपाः ॥ २० ॥ अलंचकारतांवेदिंगंधपुष्पैःसमंततः ॥ सुवर्णपालिकाभिश्च चित्रकुंभैश्चसांकुरैः ॥ २१ ॥ अंकुराढ्यैःशरावैश्चधूपपात्रैःसधूपकैः ॥ शंखपात्रैःस्रुवैःस्रुग्भिःपात्रैरर्घ्यादिपूजितैः ॥ २२ ॥ लाजपूर्णैश्चपात्रीभिरक्षतैरपि संस्कृतैः ॥दर्भैःसमैःसमास्तीर्यविधिवन्मंत्रपूर्वकम् ॥ २३ ॥ अग्निमाधायतंवेद्यांविधिमंत्रपुरस्कृतम् ॥ जुहावाग्नौमहातेजावसिष्ठोमुनिपुंगवः ॥ २४ ॥ ततःसीतांसमानीयसर्वाभरणभूषिताम् ॥ समक्षमग्नेःसंस्थाप्यराघवाभिमुखेतदा ॥ २५ ॥ अब्रवीज्जनकोराजाकौसल्यानंदवर्धनम् ॥ इयंसीताममसुता सहधर्मचरीतव ॥२६॥ प्रतीच्छचैनांभद्रंतेपाणिंगृह्णीष्वपाणिना ॥ पतिव्रतामहाभागाछायेवानुगतासदा ॥२७॥ इत्युक्त्वाप्राक्षिपद्राजामंत्रपूतंजलंतदा ॥ साधुसाध्वितिदेवानामृषीणांवदतांतदा ॥२८॥ देवदुंदुभिनिर्घोषःपुष्पवर्षोमहानभूत् ॥ एवंदत्त्वासुतांसीतांमंत्रोदकपुरस्कृताम् ॥२९॥ अब्रवीज्जनको राजाहर्षेणाभिपरिप्लुतः ॥ लक्ष्मणागच्छभद्रंतेऊर्मिलामुद्यतांमया ॥ ३० ॥ प्रतीच्छपाणिंगृह्णीष्वमाभूत्कालस्यपर्ययः ॥ तमेवमुक्त्वाजनकोभरतं चाभ्यभाषत ॥ ३१ ॥ गृहाणपाणिंमांडव्याःपाणिनारघुनंदन ॥ शत्रुघ्नंचापिधर्मात्माअब्रवीन्मिथिलेश्वरः ॥ ३२ ॥ श्रुतकीर्तेर्महाबाहोपाणिंगृह्णीष्वपाणिना ॥ सर्वेभवन्तःसौम्याश्चसर्वेसुचरितव्रताः ॥३३॥ पत्नीभिःसंतुकाकुत्स्थामाभूत्कालस्यपर्ययः ॥जनकस्यवचःश्रुत्वापाणीन्पाणिभिरस्पृशन् ॥३४॥ चत्वारस्तेचतसृणांवसिष्ठस्यमतेस्थिताः ॥ अग्निंप्रदक्षिणंकृत्वावेदिंराजानमेवच ॥ ३५ ॥ ऋषींश्चापिमहात्मानःसहभार्यारघूद्वहाः ॥ यथोक्तेनततश्चक्रुर्विवाहंविधिपूर्वकम् ॥३६॥ पुष्पवृष्टिर्महत्यासीदंतरिक्षात्सुभास्वरा ॥ दिव्यदुंदुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ॥३७॥ ननृतुश्चाप्सरःसंघागंधर्वाश्चजगुः कलम् ॥ विवाहेरघुमुख्यानांतदद्भुतमदृश्यत ॥ ३८ ॥ ईदृशेवर्तमानेतुतूर्योद्घुष्टनिनादिते ॥ त्रिरग्निंतेपरिक्रम्यऊहुर्भार्यामहौजसः ॥ ३९ ॥

प्रतीच्छ प्रतिगृहाण तदुपयोगित्वेन पाणिना पाणिं गृह्णीष्व ।पाणिगृहीती हि सर्वथा अनतिक्रमणीयेति एवमुक्तम्। छायेवानुगता भविष्यतीत्यन्वयः॥२७॥ मंत्रपूतं कन्यादानमंत्रेण पूतं जलं प्राक्षिपत् । रामहस्ते इति शेषः । वदताम्। शब्दः आसीदिति शेषः॥२८॥ दानीयमंत्रोदकाभ्यां पुरस्कृताम् ॥२९॥ उद्यतां दातुं कृतनिश्चयाम् ॥३०॥ प्रतीच्छेत्यादि । प्राग्व्याख्यातम् । ज्येष्ठात् भरतात् पूर्वं लक्ष्मणपाणिग्रहस्तु भिन्नोदरत्वान्न दोषाय ॥ ३१ ॥ ३२ ॥ सुचरितं व्रतं ब्रह्मचर्यादि यैः ॥ ३३ ॥ पत्नीभिः सहिताः संतु भवंतु इत्यप्यर्थः ॥ ३४ ॥ वेदिं विवाहवेदिम् । राजानं जनकम् ॥ ३५ ॥ ऋषींश्चापि । प्रदक्षिणं कृत्वेति शेषः । यथोक्तेन शास्त्रोक्तेन प्रकारेण विवाहं तत्कृत्यशेषं होमादि ॥३६ ॥ ३७॥ तदद्भुतं दुंदुभिनिर्घोषादिसाहितपुष्पवृष्ट्यादि ॥ ३८ ॥ तूर्याणां यत् उद्घुष्टं घोषः तन्निनादिते

काले । त्रिराग्निमिति।उपसंहारेण पुनर्वादः ॥३९ ॥ उपकार्यां शिबिरम् ।पश्यन् वधूवरसंबंधकल्याणम् ॥ ४० ॥ नर्मैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ ॥ ॥ आपृष्ट्वा आपृच्छ्य । तौ दशरथजनकौ । उत्तरपर्वतं कौशिकीतटावच्छिन्नम् ॥ १ ॥ जगाम गंतुमुद्यतोभूव ॥ २ ॥ कन्याधनं विवाहकाले कन्यायै देयं धनं यौतकाख्यम् । तस्यैव प्रपंचः—गवामित्यादि॥ ३॥मुख्यानां कंबलानां नेपालादिभवानां कंबलानां बहूनि इति संबंधः । क्षौमान् । बहूनिति विपरिणामः । कोट्यंबराणि कोटिसंख्यानि सामान्यवासांसि ॥ ४ ॥ कन्याशतं सखीत्वेन। तासां राजकुमारीणाम्। प्रत्येकमिति शेषः।दासीदासामिति। गवाश्वादित्वादेकवत्त्वम्। हिरण्यं रजतम्। सुवर्णं हेम।षष्ठ्यंतानां कोटिपदाध्याहारेणान्वयः॥५॥पार्थिवं दशरथम्।

अथोपकार्यांजग्मुस्तेसभार्यारघुनंदनाः ॥ राजाप्यनुययौपश्यन्सर्षिसंघःसबांधवः ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकांडे त्रिसप्ततितमः सर्गः ॥ ७३ ॥अथरात्र्यांव्यतीतायांविश्वामित्रोमहामुनिः ॥ आपृष्ट्वातौचराजानौजगामोत्तरपर्वतम् ॥ १ ॥ विश्वामित्रेगतेराजावैदेहंमिथिलाधिपम् ॥ आपृष्ट्वैवजगामाशुराजादशरथःपुरीम् ॥ २ ॥ अथराजाविदेहानांददौकन्याधनंबहु ॥ गवांशतसहस्राणिबहूनिमिथिलेश्वरः ॥ ३ ॥ कंबलानां चमुख्यानांक्षौमान्कोट्यंबराणिच ॥ हस्त्यश्वरथपादातंदिव्यरूपंस्वलंकृतम् ॥ ४ ॥ ददौकन्याशतंतासांदासीदासमनुत्तमम् ॥ हिरण्यस्यसुवर्णस्यमुक्तानांविद्रुमस्यच ॥ ५ ॥ ददौराजासुसंहृष्टःकन्याधनमनुत्तमम् ॥ दत्त्वाबहुविधंराजासमनुज्ञाप्यपार्थिवम् ॥ ६ ॥ प्रविवेशस्वनिलयंमिथिलांमिथिलेश्वरः ॥ राजाप्ययोध्याधिपतिःसहपुत्रैर्महात्मभिः ॥ ७ ॥ ऋषीन्सर्वान्पुरस्कृत्यजगामसबलान्वितः ॥ गच्छंतंतुनरव्याघ्रंसर्षिसंघंसराघवम् ॥ ८ ॥ घोरास्तुपक्षिणोवाचोव्याहरंतिसमंततः ॥ भौमाश्चैवमृगाःसर्वेगच्छंतिस्मप्रदक्षिणम् ॥ ९ ॥ तान्दृष्ट्वाराजशार्दूलोवसिष्ठंपर्यपृच्छत ॥ असौम्याःपक्षिणोघोरामृगाश्चापिप्रदक्षिणाः ॥ १० ॥ किमिदंहृदयोत्कंपिमनोममविषीदति ॥ राज्ञोदशरथस्यैतच्छ्रुत्वावाक्यंमहानृषिः ॥ ११ ॥ उवाचमधुरांवाणीं श्रूयतामस्ययत्फलम् ॥ उपस्थितंभयंघोरंदिव्यंपक्षिमुखाच्च्युतम् ॥ १२ ॥ मृगाःप्रशमयंत्येतेसंतापस्त्वज्यतामयम् ॥ तेषांसंवदतांतत्रवायुःप्रादुर्बभूवह ॥ १३ ॥ कंपयन्मेदिनींसर्वांपातयंश्चमहाद्रुमान् ॥ तमसासंवृतःसूर्यःसर्वेनावेदिषुर्दिशः ॥ १४ ॥ भस्मनाचावृतंसर्वंसंमूढमिवतद्बलम् ॥ वसिष्ठऋषयश्चान्येराजाचससुतस्तदा ॥ १५ ॥ ससंज्ञाइवतत्रासन्सर्वमन्यद्विचेतनम् ॥ तस्मिंस्तमसिघोरेतुभस्मच्छन्नेवसाचमूः ॥ १६ ॥ ददर्शभीमसंकाशंजटामंडलधारिणम् ॥ भार्गवंजामदग्न्यंतंराजाराजविमर्दनम् ॥ १७ ॥

॥६॥७॥ बलैः चतुरंगैरनुगैः किंकरैश्च सहितः । तथा गच्छंतम्। दशरथमिति शेषः॥८॥ पक्षिणः करटादयः। तत्र पक्षिणां घोरव्याहरणम् आदौ दुर्निमित्तम् । ततो मृगप्रदक्षिणगमनं सुनिमित्तम् ॥९॥ तान् शुभाशुभसूचकोत्पातान्।असौम्याः पक्षिणो घोराः । घोरशब्दा इत्यर्थः॥१०॥इदं हृदयकंपजनकं किमिदं दुःखोदर्कं सुखोदर्कं वेति प्रश्नः । अनिश्चयात् मे मनो विषीदति ॥११॥ दिवि खेभवं दिव्यं पक्षिमुखात् च्युतं वचनं घोरं भयम् उपस्थितं प्राप्तम् । आशु वेदयतीति शेषः॥ १२॥प्रशमयंति प्रशमं सूचयंतीत्यर्थः।तेषां संवदतामिति।अस्य पुर इति शेषः॥ १३॥तमो भस्म च उभयमप्युत्पातजम्॥ १४॥ १५॥ ससंज्ञा इव ईषत्संज्ञा इत्यर्थः।अन्यत्तु बलं निःसंज्ञमेव । भस्मच्छन्नेव । अभूदिति शेषः॥ १६॥भीमसंकाशं भयंकरदर्शनम् ॥ १७ ॥

कैलासमिवेति । अनेन महाकारत्वम् । दुर्धर्षम् अशक्यातिक्रमम् । पृथग्जनःपामरजनः ॥ १८ ॥ प्रभातिशयेन विद्युद्गणोपमं धनुः । उग्रं शरं च प्रगृह्य त्रिपुरघ्नं शिवमिव स्थितमित्यर्थः ॥१९॥ जपहोमपरायणाः । आसन्निति शेषः । यद्यपि होमोग्न्यधिकरणः तदा पथि चलनसमये बाधितः । तथाप्यपाने जुह्वति प्राणमित्यादिर्बोध्य इति केचित् ॥ परे तु जपहोमपरायणत्वमुपलक्षणम् । अत एवाग्रे संजजल्पुरिति संगच्छते । अन्यथा तादृशहोमादिपरायणानां जल्पासंभवादित्याहुः ॥ २० ॥ ऋषीणां परस्परं जल्पमाह । कच्चिदित्यादि । श्लोकद्वयेपि नशब्दः ननुशब्दैकदेशः नन्वित्यर्थकः वितर्के ॥ ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ वैरमानः ॥ ॥ इति श्रीरामाभिरामे श्री० रा० वा० आ० बा० चतुःसप्ततितमः सर्गः ॥ ७४ ॥ ॥ छ ॥ ॥ किमभाषतेत्यत्राह । रामेति । निखिलेन

कैलासमिवदुर्धर्षंकालाग्निमिवदुःसहम् ॥ ज्वलंतमिवतेजोभिर्दुर्निरीक्ष्यंपृथग्जनैः ॥१८॥ स्कंधेचासज्यपरशुंधनुर्विद्युद्गणोपमम् ॥ प्रगृह्यशरमुग्रंचत्रिपुरघ्नं यथाशिवम् ॥ १९ ॥ तंदृष्ट्वाभीमसंकाशंज्वलंतमिवपावकम् ॥ वसिष्ठप्रमुखाविप्राजपहोमपरायणाः ॥ २० ॥ संगतामुनयःसर्वेसंजजल्पुरथोमिथः ॥ कच्चित्पितृवधामर्षीक्षत्रंनोत्सादयिष्यति ॥२१॥ पूर्वंक्षत्रवधंकृत्वागतमन्युर्गतज्वरः ॥ क्षत्रस्योत्सादनंभूयोनखल्वस्यचिकीर्षितम् ॥ २२ ॥ एवमुक्त्वार्घ्यमादायभार्गवंभीमदर्शनम् ॥ ऋषयोरामरामेतिमधुरंवाक्यमब्रुवन् ॥२३॥ प्रतिगृह्यतुतांपूजामृषिदत्तांप्रतापवान् ॥ रामंदाशरथिंरामोजामदग्न्योभ्यभाषत ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे चतुःसप्ततितमः सर्गः ॥ ७४ ॥ रामदाशरथेवीरवीर्यंतेश्रूयतेऽद्भुतम् ॥ धनुषोभेदनंचैवनिखिलेनमयाश्रुतम् ॥ १ ॥ तदद्भुतमचिंत्यंचभेदनंधनुषस्तथा ॥ तच्छ्रुत्वाहमनुप्राप्तोधनुर्गृह्यापरंशुभम् ॥ २ ॥ तदिदंघोरसंकाशंजामदग्न्यंमहद्धनुः ॥ पूरयस्वशरेणैवस्वबलंदर्शयस्वच ॥ ३ ॥ तदहंतेबलंदृष्ट्वाधनुषोप्यस्यपूरणे ॥ द्वंद्वयुद्धंप्रदास्यामिवीर्यश्लाघ्यमहंतव ॥ ४ ॥ तस्यतद्वचनंश्रुत्वाराजादशरथस्तदा ॥ विषण्णवदनोदीनःप्रांजलिर्वाक्यमब्रवीत् ॥ ५ ॥ क्षत्ररोषात्प्रशांतस्त्वंब्राह्मणश्चमहातपाः ॥ बालानांममपुत्राणामभयंदातुमर्हसि ॥६॥ भार्गवाणांकुलेजातःस्वाध्यायव्रतशालिनाम् ॥ सहस्राक्षेप्रतिज्ञायशस्त्रंप्रक्षिप्तवानसि ॥ ७ ॥ सत्वंधर्मपरोभूत्वाकश्यपायवसुंधराम् ॥ दत्त्वावनमुपागम्यमहेंद्रकृतकेतनः ॥ ८ ॥ ममसर्वविनाशायसंप्राप्तस्त्वंमहामुने ॥ नचैकस्मिन्हतेरामेसर्वेजीवामहेवयम् ॥ ९ ॥ ब्रुवत्येवंदशरथेजामदग्न्यःप्रतापवान् ॥ अनादृत्यतुतद्वाक्यंराममेवाभ्यभाषत ॥ १० ॥

कार्त्स्न्येन । चेन ताटकावधादिसमुच्चयः ॥ १ ॥ यत् त्वया तथा अनायासेन धनुषोभेदनं कृतं तत् अद्भुतम् अचिंत्यं च अन्येन मनसापि अशक्यम् अतः । तच्छ्रुत्वेत्यादि । गृह्य गृहीत्वा ॥ २ ॥ जामदग्न्यं जमदग्नेः स्वपितुः आगतम् । अत्रार्थे ष्यञ् आर्षः । शरेण युक्तं पूरयस्वैव आकर्षयस्व ॥ ३ ॥ अस्यापि धनुषः पूरणे सति वीर्यश्लाघ्यं वीर्यवत् श्लाघ्यं च । वीर्येण तद्वत्तया श्लाघ्यमित्यन्ये ॥ ४ ॥ तद्वचनं द्वंद्वयुद्धवचनम् ॥ ५ ॥ क्षत्ररोषात तज्जक्षत्रवधात् ॥ ६ ॥ सहस्राक्षे तत्सन्निधौ । प्रतिज्ञाय अतः परं शस्त्रं न ग्रहीष्यामि इत्येवं प्रक्षेपः त्यागः ॥ ७ ॥ तपसे महेंद्रकृतकेतनत्वम् ॥ ८ ॥ त्वं तथा त्यक्तशस्त्रादिः मम सर्वविनाशाय कुतः संप्राप्त इत्यन्वयः । सर्वनाशमेवोपपादयति । न चेत्यादि ॥ ९ ॥ १० ॥

---

१ अत्र कपुस्तकादर्द्धश्लोको न्यूनः ।

इमे वक्ष्यमाणलक्षणे यत् त्वया भग्नं यच्च मया धृतं ते इत्यर्थः । बलवती बलवन्नाम्ये । सुकृते यत्ननिर्मिते ॥ ११ ॥ युयुत्सवे । त्रिपुरवासिभिरिति शेषः । त्रिपुरघ्नं तद्धननसाध
नम् ॥ १२ ॥ वैष्णवं विष्णवे दत्तम् । तदिदं वैष्णवं वैष्णवत्वेन प्रसिद्धम् ॥ १३ ॥ रौद्रेण शैवेन । शैवस्य इदानीमसारत्वमाह । तदा त्विति ॥ विष्णोः त्रिपुरसंहारे शरत्वेन रुद्रपरिकरांतर्भावश्रवणात्
अयं रुद्रात् दुर्बलः । उत सम इत्येवं शितिकंठविष्ण्वोः बलाबलज्ञानाय देवताः पितामहं पृच्छंति स्म । स च पितामहः तेषां देवानाम् उक्तमभिप्रायं विज्ञाय ॥ १४ ॥ १५ ॥ सत्यवतां वरः सत्यसं
कल्पः स्वसंकल्पेन देवानां मोहं निरसितुम् एकात्मनोरपि रुद्रविष्ण्वोः विरोधं जनयामास । तावपि तत्संकल्पसिद्ध्यर्थमेव विरोधं चक्रतुः । इदं युद्धं दक्षयज्ञवधे बोध्यम् । अतः पूर्वेण न विरोधः
॥ १६ ॥ तदा हुंकारेण विष्णुना शैवं धनुः विजृंभितं शिथिलीकृतं महादेवश्च स्तंभितः ॥ १७ ॥ १८ ॥ याचिताविति । एतावत्यर्थे दृष्ट्वा प्राप्तनिश्चयैः देवैः युद्धादुपरतिं याचितौ देवतानुग्रहाय प्रशमं जग्म
तुः ॥ १९ ॥ विष्णुम् अधिकं श्रेष्ठं सेव्यत्वेन मेनिरे ज्ञातवंतः । वस्तुतस्तु प्रकृतयुद्धे विष्णोराधिक्यदर्शनात्त्रिपुरवधे शिवस्याधिक्यदर्शनात्तयोः साम्यग्रहणमिति तात्पर्यम् । अधिकमित्यस्य स्वीयपूर्वज्ञानविषय

इमेद्वेधनुषीश्रेष्ठेदिव्येलोकाभिपूजिते ॥ दृढेबलवतीमुख्येसुकृतेविश्वकर्मणा ॥ ११ ॥ अनुसृष्टंसुरैरेकंत्र्यंबकाययुयुत्सवे ॥ त्रिपुरघ्नंनरश्रेष्ठभग्नंकाकुत्स्थ यत्त्वया ॥ १२ ॥ इदंद्वितीयंदुर्धर्षंविष्णोर्दत्तंसुरोत्तमैः ॥ तदिदंवैष्णवंरामधनुःपरपुरंजयम् ॥ १३ ॥ समानसारंकाकुत्स्थरौद्रेणधनुषात्विदम् ॥ तदातुदेवताःसर्वाःपृच्छंतिस्मपितामहम् ॥ १४ ॥ शितिकंठस्यविष्णोश्चबलाबलनिरीक्षया ॥ अभिप्रायंतुविज्ञायदेवतानांपितामहः ॥ १५ ॥ विरोधं जनयामासतयोःसत्यवतांवरः ॥ विरोधेतुमहद्युद्धमभवद्रोमहर्षणम् ॥ १६ ॥ शितिकंठस्यविष्णोश्चपरस्परजयैषिणोः ॥ तदातुजृंभितंशैवंधनुर्भीमपरा क्रमम् ॥ १७ ॥ हुंकारेणमहादेवःस्तंभितोथत्रिलोचनः ॥ देवैस्तदासमागम्यसर्षिसंघैःसचारणैः ॥ १८ ॥ याचितौप्रशमंतत्रजग्मतुस्तौसुरोत्तमौ ॥ जृंभितंतद्धनुर्दृष्ट्वाशैवंविष्णुपराक्रमैः ॥ १९ ॥ अधिकंमेनिरेविष्णुंदेवाःसर्षिगणास्तथा ॥ धनूरुद्रस्तुसंक्रुद्धोविदेहेषुमहायशाः ॥ २० ॥ देवरातस्यराजर्षे र्ददौहस्तेससायकम् ॥ इदंचवैष्णवंरामधनुःपरपुरंजयम् ॥ २१ ॥ ऋचीकेभार्गवेप्रादाद्विष्णुःसन्यासमुत्तमम् ॥ ऋचीकस्तुमहातेजाःपुत्रस्याप्रतिकर्मणः ॥ २२ ॥ पितुर्ममददौदिव्यंजमदग्नेर्महात्मनः ॥ न्यस्तशस्त्रेपितरिमेतपोबलसमन्विते ॥ २३ ॥ अर्जुनोविदधेमृत्युंप्राकृतांबुद्धिमास्थितः ॥ वधमप्रतिरू पंतंपितुःश्रुत्वासुदारुणम् ॥ क्षत्रमुत्सादयंरोषाज्जातंजातमनेकशः ॥ २४ ॥ पृथिवींचाखिलांप्राप्यकश्यपायमहात्मने ॥ यज्ञस्यांतेददांरामदक्षिणां पुण्यकर्मणे ॥ २५ ॥ दत्त्वामहेंद्रनिलयस्तपोबलसमन्वितः ॥ श्रुत्वातुधनुषोभेदंततोहंद्रुतमागतः ॥ २६ ॥

स्वरूपापेक्षया अधिकमित्यर्थः । धनू रुद्रस्त्विति । एवं युद्धदशायां क्रुद्धः पश्चात् देवप्रार्थनया प्रसन्नः शिवः देवेभ्यः दत्त्वा ततः सर्वैः देवैः सह युद्धार्थं धनुरिच्छतः देवरातस्य ददौ । अत एव वरुणेन दत्त
मिति वक्ष्यमाणेन रुद्रेण देवानां दत्तमित्युक्तग्रंथेन च न विरोध इत्याहुः ॥ २० ॥ एवं च शैवस्य धनुषः तदारभ्य शिथिलत्वेन तद्भंगकृतं न ते वीर्याधिक्यमिति भार्गवाभिप्रायः । अथ स्वधनुषः आगम
माह । इदं चेत्यादि । परपुरंजयमिति । आर्षमसंज्ञायाम् ॥ २१ ॥ भार्गवे भृगुपुत्रे सः उक्तरूपः विष्णुः न्यासं प्रादात् । अप्रतिकर्मणः स्वहंतर्यपि शापादिप्रतिक्रियारहितस्य ॥ २२ ॥
न्यस्तशस्त्रे न्यस्तं त्यक्तं विष्णुधनूरूपं शस्त्रं येन तथाभूते तपोबलयुतेपि पितरि प्राकृतां बुद्धिम् आस्थितः अर्जुनः कार्तवीर्यः मत्पितुः मृत्युं विदधे । तम् अयोग्यं पितुः वधं श्रुत्वा अहं रोषात्
क्षत्रम् उत्सादयम् उत्सादितवान् । अडभावः आर्षः ॥ २३ ॥ २४ ॥ प्राप्य । स्वबलेनेति शेषः । पुण्यकर्मणे यज्ञरूपपुण्यसाद्गुण्यार्थम् ॥ २५ ॥ दत्त्वा । भूमिमिति शेषः । महेंद्रः महेंद्रपर्वतः । धनुषः

शिवस्य ॥ २६ ॥ पितृपैतामहं पितृपितामहक्रमाद् आगतम् । उत्तरपदवृद्धिरार्षी । क्षत्त्रधर्मं मद्वर्तिनं मया पूर्वमंगीकृतं क्षत्त्रधर्मं न तु ब्राह्मणधर्ममाश्रित्य त्यजेत्यर्थः । ब्राह्मणवत् शांतिम् आस्थाय नाहं शक्त इति मा ब्रूहीत्यर्थ इति कतकः ॥ २७ ॥ शक्तोसि । शरयोजने इति शेषः । तावतापि न त्वां त्यक्ष्यामि । अपि तु द्वंद्वं दास्यामीत्यर्थः। अन्यथा मां शरणं व्रजेति तात्पर्यम् ॥ २८॥ दर्शमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकांडे पंचसप्ततितमः सर्गः ॥ ७५ ॥ ॥ छ ॥ पितुः गौरवाद् पितृसंनिधिवशाद् । यंत्रिता नियमिता कथा उच्चैः कथनं येन सः ॥ १ ॥ पितुः आनृण्यं पितृहंतृक्षत्त्रवधेन पितृवैरशुद्धिम् आस्थितः सन् यत्कर्म त्रिःसप्तकृत्वः क्षत्त्रियवधरूपं कृतवानासि तद् अनुरुध्यामहे अंगी कुर्मः । शूरेण अवश्यं वैरशुद्धेः कर्तव्यत्वात् ॥ २ ॥ यन्मां क्षत्त्रधर्मेण युक्तं वीर्यहीनम् अशक्तमिव मन्यमानः अवजानासि तद् नानुरुध्यामहे । अतः अद्य मे तेजः पराभिभवासहनं तन्मूलं मे पराक्रमं च पश्य ॥ ३ ॥ क्रुद्धः माग्

तदेवंवैष्णवंरामपितृपैतामहंमहत् ॥ क्षत्रधर्मंपुरस्कृत्यगृह्णीष्वधनुरुत्तमम् ॥ २७ ॥ योजयस्वधनुःश्रेष्ठेशरंपरपुरंजयम् ॥ यदिशक्तोसिकाकुत्स्थद्वंद्वं दास्यामितेततः ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे पंचसप्ततितमः सर्गः ॥ ७५ ॥ श्रुत्वातुजाम दग्न्यस्यवाक्यंदाशरथिस्तदा ॥ गौरवाद्यंत्रितकथःपितूराममथाब्रवीत् ॥ १ ॥ श्रुतवानसियत्कर्मकृतवानसिभार्गव ॥ अनुरुध्यामहेब्रह्मन्पितुरानृण्यमा स्थितः ॥ २ ॥ वीर्यहीनमिवाशक्तंक्षत्त्रधर्मेणभार्गव ॥ अवजानासिमेतेजःपश्यमेद्यपराक्रमम् ॥ ३ ॥ इत्युक्त्वाराघवःक्रुद्धोभार्गवस्यवरायुधम् ॥ शरंचप्रतिजग्राहहस्ताल्लघुपराक्रमः ॥ ४ ॥ आरोप्यसधनूरामःशरंसज्यंचकारह ॥ जामदग्न्यंततोरामंरामःक्रुद्धोब्रवीदिदम् ॥ ५ ॥ ब्राह्मणोसीतिपूज्योमे विश्वामित्रकृतेनच ॥ तस्माच्छक्तोनतेराममोक्तुंप्राणहरंशरम् ॥ ६ ॥ इमांवात्वद्गतिंरामतपोबलसमर्जितान् ॥ लोकानप्रतिमान्वापिहनिष्यामीतिमे मतिः ॥ ७ ॥ नह्ययंवैष्णवोदिव्यःशरःपरपुरंजयः ॥ मोघःपततिवीर्येणबलदर्पविनाशनः ॥ ८ ॥ वरायुधधरंरामंद्रष्टुंसर्षिगणाःसुराः ॥ पितामहं पुरस्कृत्यसमेतास्तत्रसर्वशः ॥ ९ ॥ गंधर्वाप्सरसश्चैवसिद्धचारणकिन्नराः ॥ यक्षराक्षसनागाश्चतद्द्रष्टुंमहदद्भुतम् ॥ १० ॥ जडीकृतेतदाऽऽलोकेरामे वरधनुर्धरे ॥ निर्वीर्योजामदग्न्योसौरामोराममुदैक्षत ॥ ११ ॥

—

करूपावमानवचनेन क्रोधादेव तद्धस्ताद् स्वयमेव धनुः–चात् भार्गवनिष्ठां वैष्णवीं शक्तिं जग्राह । तदुक्तं पाद्मे–इत्युक्त्वा देवि वैष्णव्या शक्त्या तद्गतया सह । जग्राह वैष्णवं चापं विनयेन च ली लयेति । अत्राप्यग्रे वक्ष्यति–निर्वीर्यो जामदग्न्योसाविति । लघुः शीघ्रः पराक्रमः यस्य सः ॥ ४ ॥ आरोप्य ज्यारोपं कृत्वा शरं सज्यं ज्यायुक्तं चकार ॥ ५ ॥ जमदग्निपुत्रत्वेन ब्राह्मणोसीति विश्वा मित्रभगिन्याः पौत्रोसीति पूज्यः। त्वं मे असि वधानर्हः असि। अतस्ते प्राणहरं शरं मोक्तुं न शक्तः। अस्मीति शेषः॥ ६॥ इमां मत्यक्षसिद्धां गतिं गतिसाधनं पादौ तच्छक्तिं च आकाशगमनादिरूपाम् लोकान् लोकप्राप्तिसाधनं धर्मम् । त्वत्पादकमले हन्मि ब्रूहि तेद्याथवा वृषमिति पाद्मोक्तेः । वृषो धर्मः । उभयोः मध्ये यदिच्छसि यत्तवेष्टं तद्वदेत्यर्थः ॥ ७ ॥ कुत एवमत आह । न हीति । वीर्येण स्वश क्त्या शत्रूणां बलदर्पविनाशनः । मोघः व्यर्थः ॥ ८ ॥ वरायुधं वैष्णवं धनुः । समेताः मिलिताः ॥ ९ ॥ तद्द्रष्टुम् । आगता इति शेषः ॥ १० ॥ वरधनुर्धरे रामे अधिकरणे तस्य भार्गवस्य

१ कपुस्तके सार्द्धश्लोकोत्र न्यूनः।

आलोके तेजसि । संक्रांति सतीति शेषः । ततः परशुरामस्य देहान्निर्गत्य वैष्णवम् । पश्यतां सर्वदेवानां तेजो राममुपागमदिति नृसिंहपुराणात्--पूर्वोक्तपाठाच्च । अत एव भार्गवे जडीकृते सति निवीर्यः सः रामः रामम् उदैक्षत उद्भूतविष्णुतेजस्कम् अपश्यदित्यर्थः ॥ ११ ॥ तदेव विवृणोति । तेजोभिरित्यादि । रामसंक्रांतैः तेजोभिः हेतुभिः गतवीर्यतया जडीकृतः परशुराम उवाच । शरव्यमप्रोत्तरमिति शेषः ॥१२॥ विषये देशे । एवमुक्तिश्च क्षत्त्रभीत्यादिनिवृत्तये॥ १३॥गुरुवचः काश्यपवचः। निशां रात्रिम् । न वसे । तदर्थः । तदा यदा दत्ता यदा च न वस्तव्यामित्युक्तं तदाप्रभृतीति शेषः । पृथिव्यां न वसे इत्यर्थः । यतः ह प्रसिद्धं काश्यपस्य अग्रे प्रतिज्ञा कृता इति शेषः । पृथिव्यां रात्रौ न वसामीत्येवंरूपा प्रतिज्ञा कृता ॥ १४ ॥ यदेवम् अतः तामिमामित्यादि । तां मद्गतिम् आकाशगमनसाधनौ पादौ चेन्न हनिष्यसि तदा मनोजवं पादम् आस्थाय काश्यपेन समुद्रेण च दत्तं महेंद्रं गमिष्यामि। अन्यथा प्रतिज्ञाहान्या महत्संकटं स्यादिति भावः॥ १५॥तपसा यज्ञादिरूपेण निर्जिताः अर्जिताः।अत्र पुण्यार्जितलोकहननाभ्यनुज्ञया स्वस्य तत्त्वज्ञत्वं व्यंग्यम्। रामस्य लोकदानप्रतिबंधयोः स्वातंत्र्यदर्शनेन परेशत्वबोधनं च ।पाद्मेपि शतयज्ञकृतं पुण्यं तदस्मै न्यवेदय दिति ॥१६॥

तेजोभिर्गतवीर्यत्वाज्जामदग्न्योजडीकृतः ॥ रामंकमलपत्राक्षंमंदंमंदमुवाचह ॥ १२ ॥ काश्यपायमयादत्तायदापूर्ववसुंधरा ॥ विषयेमेनवस्तव्यमितिमां काश्यपोऽब्रवीत् ॥१३॥ सोहंगुरुवचःकुर्वन्पृथिव्यांनवसेनिशाम् ॥ तदाप्रभृतिकाकुत्स्थकृतामेकाश्यपस्यह ॥१४॥ तामिमांमद्गतिंवीरहंतुंनार्हसिराघव ॥ मनोजवंगमिष्यामिमहेंद्रंपर्वतोत्तमम् ॥१५॥ लोकास्त्वप्रतिमारामनिर्जितास्तपसामया ॥ जहिताञ्छरमुख्येनमाभूत्कालस्यपर्ययः ॥ १६ ॥ अक्षय्यं मधुहंतारंजानामित्वांसुरेश्वरम् ॥ धनुषोस्यपरामर्शात्स्वस्तितेस्तुपरंतप ॥ १७ ॥ एतेसुरगणाःसर्वेनिरीक्षंतेसमागताः ॥ त्वामप्रतिमकर्माणमप्रतिद्वंद्वमाहवे ॥१८॥ नचेयंतवकाकुत्स्थव्रीडाभवितुमर्हति ॥ त्वयात्रैलोक्यनाथेनयदहंविमुखीकृतः ॥१९॥ शरमप्रतिमंराममोक्तुमर्हसिसुव्रत ॥ शरमोक्षेगमिष्यामिमहेंद्रंपर्वतोत्तमम् ॥ २० ॥ तथाब्रुवतिरामेतुजामदग्न्येप्रतापवान् ॥ रामोदाशरथिःश्रीमांश्चिक्षेपशरमुत्तमम् ॥२१॥ सहतान्दृश्यरामेणस्वाँल्लोकांस्तपसार्जितान् ॥ जामदग्न्योजगामाशुमहेंद्रंपर्वतोत्तमम् ॥२२॥ ततोवितिमिराःसर्वादिशश्चोपदिशस्तथा ॥ सुराःसर्षिगणारामंप्रशशंसुरुदायुधम्॥२३॥ रामंदाशरथिंरामोजामदग्न्यःप्रपूजितः ॥ ततःप्रदक्षिणीकृत्यजगामात्मगतिंप्रभुः॥ २४॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये च० विं० सा० बालकांडे षट्सप्ततितमः सर्गः ॥ ७६ ॥

यतः उतामृतत्वस्येशान इति श्रुतिप्रसिद्धं ब्रह्मैव त्वमित्याह।अक्षय्यामिति। अक्षय्यम् अनाद्यंतं केनापि पराजयं नेतुम् अशक्यं च।एवं निश्चये हेतुः—धनुष इत्यादि।अस्य वैष्णवस्य इतरदुरारोपस्य परामर्शः ग्रहणाकर्षणादिः ॥१७॥ अप्रतिद्वंद्वं प्रतिभटरहितम् ॥१८॥ इयं त्वद्विषये अशक्तिः व्रीडा व्रीडार्हा न । तत्र हेतुः—त्वयेत्यादि । विमुखीकृतस्वशक्तेः स्वस्मिन् योजनेन अशक्तः कृतः । एतेन स्वस्य भगवदंशत्वं रामस्य च पूर्णभगवदवतारत्वं सूचितम् । स्वातिरिक्तेन विमुखीकरणे हि व्रीडा न तु स्वात्मना मायया तथाकरणे इति भावः। एतद्व्यवहारप्रयोजनं च दयया दशरथादीन्प्रति स्वरूपबोधनं रामस्य पूर्णतेजोवत्त्वसंपादनं चेति भाति । वैष्णवतेजसः अंशेन अन्यत्र सत्त्वे रावणवधस्य दुष्करत्वात् । एतदर्थमेव रावणवधेच्छुदेवगंधर्वादीनां द्रष्टुम् आगमनं पूर्वमुक्तम् ॥१९॥ शरमोक्षे गमिष्यामि पापस्य तपसा दग्धत्वात्पुण्यस्य च शरमोक्षेण फलप्रतिबंधे जीवन्मुक्तः भूत्वा गमिष्यामीत्यर्थः । अनेन लोकावरोधः स्वेष्ट एवेति दर्शितम् ॥ २० ॥ २१ ॥ दृश्य दृष्ट्वा ॥ २२ ॥ २३ ॥ रामः दाशरथिना ब्राह्मण

त्वात् पूजितः नमस्कृतश्च । प्रशस्य हेति पाठांतरम् । दाशरथिं प्रदक्षिणीकृत्य । अंतर्यामित्वेन ज्ञानात् प्रदक्षिणकरणं च क्षत्रियत्वाच्च तस्य प्रणत्यकरणं कार्येणेति बोध्यम् । आत्मगतिं तत्त्वज्ञानं स्वस्थानं जगामेत्यर्थः । प्रभुरिति । ब्रह्मत्वेन सर्वलोकप्रभुत्वम् ॥ २४ ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वा० आदिकाव्ये बा० षट्सप्ततितमः सर्गः ॥ ७६ ॥ रामे परशुरामे प्रशांतः गतक्रोधः आत्मा चित्तं यस्य । हस्ते स्वहस्ते स्थितं धनुः वरुणाय देवैः सह कौतुकदर्शनार्थम् अंतरिक्षे स्थिताय ददौ । न्यासात्मनेति शेषः । वरुणस्य अप्रमेयत्वम् । भृगवे साक्षाद्ब्रह्मविद्याप्रदत्वात् । इदं च तैत्तिरीयोपनिषदि स्पष्टम् ॥ १ ॥ विकलं परशुरामभयेन धनुर्दानवृत्तांतस्य मायया तिरोधानमन्यान्प्रति ॥ २ ॥ ३ ॥ ४ ॥ हर्ष एव अधिकावस्थः प्रमोदः ॥ ५ ॥ तां सेनां प्रथमं क्षुभितां पश्चात् प्राप्ताश्वासां चेत्यर्थः । जगाम । सेनेति शेषः । पताका ध्वजपटः । ध्वजो दंडः । पताकायुक्तध्वजवतीम् । पताकाः क्षुद्रध्वजाः । ध्वजाः महांत इत्यन्ये । रम्यां स्वभावतः । उद्घुष्टं घोषः ॥ ६ ॥

गतेरामेप्रशांतात्मारामोदाशरथिर्धनुः ॥ वरुणायाप्रमेयायददौहस्तेमहायशाः ॥ १ ॥ अभिवाद्यततोरामोवसिष्ठप्रमुखानृषीन् ॥ पितरंविकलंदृष्ट्वाप्रोवाचरघुनंदनः ॥ २ ॥ जामदग्न्योगतोरामःप्रयातुचतुरंगिणी ॥ अयोध्याभिमुखीसेनात्वयानाथेनपालिता ॥ ३ ॥ रामस्यवचनंश्रुत्वाराजादशरथःसुतम् ॥ बाहुभ्यांसंपरिष्वज्यमूर्ध्न्युपाघ्रायराघवम् ॥ ४ ॥ गतोरामइतिश्रुत्वाहृष्टःप्रमुदितोनृपः ॥ पुनर्जातंतदामेनेपुत्रमात्मानमेवच ॥ ५ ॥ चोदयामासतांसेनांजगामाशुततःपुरीम् ॥ पताकाध्वजिनींरम्यांतूर्योद्घुष्टनिनादिताम् ॥ ६ ॥ सिक्तराजपथाऽऽरम्यांप्रकीर्णकुसुमोत्कराम् ॥ राजप्रवेशसुमुखैःपौरैर्मंगलपाणिभिः ॥ ७ ॥ संपूर्णांप्राविशद्राजाजनौघैःसमलंकृताम् ॥ पौरैःप्रत्युद्गतोदूरंद्विजैश्चपुरवासिभिः ॥ ८ ॥ पुत्रैरनुगतःश्रीमाञ्छ्रीमद्भिश्चमहायशाः ॥ प्रविवेशगृहंराजाहिमवत्सदृशंप्रियम् ॥ ९ ॥ ननंदस्वजनैराजागृहेकामैःसुपूजितः ॥ कौसल्याचसुमित्राचकैकेयीचसुमध्यमा ॥ १० ॥ वधूप्रतिग्रहेयुक्तायाश्चान्याराजयोषितः ॥ ततःसीतांमहाभागामूर्मिलांचयशस्विनीम् ॥ ११ ॥ कुशध्वजसुतेचोभेजगृहुर्नृपयोषितः ॥ मंगलालापनैर्होमैःशोभिताःक्षौमवाससः ॥ १२ ॥ देवतायतनान्याशुसर्वास्ताःप्रत्यपूजयन् ॥ अभिवाद्याभिवाद्यांश्चसर्वाराजसुतास्तदा ॥ १३ ॥ रेमिरेमुदिताःसर्वाभर्तृभिर्मुदितारहः ॥ कृतदाराःकृतास्त्राश्चसधनाःससुहृज्जनाः ॥ १४ ॥ शुश्रूषमाणाःपितरंवर्तयंतिनरर्षभाः ॥ कस्यचित्त्वथकालस्यराजादशरथःसुतम् ॥ १५ ॥ भरतंकैकयीपुत्रमब्रवीद्रघुनंदनः ॥ अयंकेकयराजस्यपुत्रोवसतिपुत्रक ॥ १६ ॥

सिक्तेन राजपथेन आसमंतात् रम्याम् ॥ ७ ॥ ८ ॥ श्रीमद्भिः दारपरिग्रहात् अधिकलक्ष्मीवद्भिः पुत्रैः । सुधालेपजधावल्यात् औन्नत्याच्च हिमवत्सादृश्यं गृहे ॥ ९ ॥ कामैः विषयभोगपरिकरस्रक्चंदनादिभिः सुपूजितः प्राप्तपूजः ननंद ॥ १० ॥ वधूनां स्नुषाणां प्रतिग्रहे मंगलाचरणपूर्वकं दर्शनस्पर्शने ॥ ११ ॥ मंगलालापनैः मंगलार्थम् आलापनैः । आशीर्वादैः । उपलक्षिता इति शेषः । होमैः गृहप्रवेशनीयहोमैः प्राप्तशोभनाः ॥ १२ ॥ देवतायतनानि पुरगृहदेवतायतनानि ताः सर्वाः राजसुताः स्नुषाः राजपत्न्यः प्रत्यपूजयन् प्रणामयंति स्म । अभिवाद्यान् अभिवादनार्हान् अभिवाद्य नमस्कार्य ॥ १३ ॥ कृतास्त्राः लब्धास्त्राः । कृताज्ञा इति पाठे अनुष्ठितपित्रभियोगाः ॥ १४ ॥ वर्तयंति पितुः कं कुर्वंति । नरर्षभाः रामादयः । कस्यचित्कालस्य । अत्यये इति शेषः ॥ १५ ॥ १६ ॥

मातुलस्तवेति अतः तन्नगरं गत्वा आगच्छेति शेषः । एतत् वाक्यम् ॥ १७ ॥ अक्लिष्टं कस्यापि दुःखं यथा न भवति तथा कर्तुं शीलम् अस्य तं रामम् ॥ १८ ॥ १९ ॥ २० ॥ ॥२१॥प्रियाणि हितानि। हितानि पर्यंते इष्टजनकानि पौराणाम्। परयम् अत्यंतं यंत्रितः श्रुतिस्मृतिमर्यादाऽलंघी॥२२॥गुरूणां तद्विषये परमयंत्रितः।गुरुकार्याणि गुरुसंबंधिशुश्रूषादीनि।नैगमाः वणिजः॥२३॥ विषयवासिनः । प्रीता इति शेषः । तेषां चतुर्णां पुत्राणां मध्ये सत्यपराक्रमः राम एव अतियशाः भूतानां मध्ये स्वयंभूरिव गुणवत्तरः बभूवेत्युत्तरेणान्वयः ॥ २४ ॥ बहून् ऋतून् द्वादशवर्षाणीत्यर्थ इति



त्वांनेतुमागतोवीरोयुधाजिन्मातुलस्तव ॥ श्रुत्वादशरथस्यैतद्भरतःकैकयीसुतः ॥ १७ ॥ गमनायाभिचक्रामशत्रुघ्नसहितस्तदा ॥ आपृच्छ्यपितरं शूरोरामंचाक्लिष्टकारिणम् ॥ १८ ॥ मातॄश्चापिनरश्रेष्ठःशत्रुघ्नसहितोययौ ॥ युधाजित्प्राप्यभरतंसशत्रुघ्नंप्रहर्षितः ॥ १९ ॥ स्वपुरंप्राविशद्वीरःपिता तस्यतुतोषह ॥ गतेचभरतेरामोलक्ष्मणश्चमहाबलः ॥ २० ॥ पितरंदेवसंकाशंपूजयामासतुस्तदा ॥ पितुराज्ञांपुरस्कृत्यपौरकार्याणिसर्वशः ॥२१॥ चकाररामःसर्वाणिप्रियाणिचहितानिच ॥ मातृभ्योमातृकार्याणिकृत्वापरमयंत्रितः ॥ २२ ॥ गुरूणांगुरुकार्याणिकालेकालेन्ववैक्षत ॥ एवंदशरथः प्रीतोब्राह्मणानैगमास्तथा ॥२३॥ रामस्यशीलवृत्तेनसर्वेविषयवासिनः ॥ तेषामतियशालोकेरामःसत्यपराक्रमः ॥ २४ ॥ स्वयंभूरिवभूतानांबभूवगुणवत्तरः ॥ रामश्चसीतयासार्धंविजहारबहूनृतून् ॥ २५ ॥ मनस्वीतद्गतमनास्तस्याहृदिसमर्पितः ॥ प्रियातुसीतारामस्यदाराःपितृकृताइति ॥ २६ ॥ गुणाद्रूपगुणाच्चापिप्रीतिर्भूयोभिवर्धते ॥ तस्याश्चभर्ताद्विगुणंहृदयेपरिवर्तते ॥ २७ ॥ अंतर्गतमपिव्यक्तमाख्यातिहृदयंहृदा ॥ तस्यभूयोविशेषेणमैथिलीजनकात्मजा ॥ देवताभिःसमारूपेसीताश्रीरिवरूपिणी ॥ २८ ॥

बहवः ॥ २५ ॥ मनस्वी अनुकूलमनस्कः । अत एव तद्गतमनाः नित्यं सीतागतमनाः । तस्या हृदि समर्पितः । संबंधसामान्ये षष्ठी । तयेत्यर्थः । एतेन परस्परानुरागो दर्शितः । पितृकृ[illegible]विवाह सदृशविवाहेन पितृदत्ताः । स विवाह एव सर्वथा श्लाघ्य इति भावः ॥ २६ ॥ नैतावदेव किं तु गुणात् हितकारित्वपातिव्रत्यादिरूपात् रूपं सौंदर्यं तद्रूपाद्गुणाच्च भूयोधिकं रामस्य प्रीतिर्वर्धते स्म । तस्याश्च हृदये गुणात् रूपगुणाच्च भर्ता द्विगुणं परिवर्तते स्म ॥ २७ ॥ तस्य रामस्य अंतर्गतं हृदयं हृदयाभिप्रायं मैथिली हृदा स्वच्छहृदयेन भूयः अधिकं विशेषेण मैथिली जनकात्मजा रूपिणी श्रीरिव रूपेदेवता

श्रीगणेशाय नमः ॥ ॥ अयोध्याख्ये तु गुर्वर्थे त्यक्त्वा राज्यं गिरौ वसन् ॥ पादुके भरतायादात्स रामः शरणं मम ॥ १ ॥ अथ रामस्य राज्याभिषेकार्हगुणान् प्रतिपादयितुं राज्याभिषेकादि च प्रतिपाद
यितुमेतदारंभः । मातुलकुलं मातुलगृहम् । अनघः सोदरस्य लक्ष्मणस्य बलवद्रामाश्रयप्रयुक्तेर्ष्यारहितः । नित्यशत्रवः कामादयः । तद्धंता । नीतः अनेन विना मातुलग्रहभुज्यमानसुखम् । असत्कल्पमिति धिया
नीत इत्यर्थः । प्रीत्या भरतविषयस्नेहेन पुरस्कृतः युक्तः । तेन भरतनिर्बंधेन गमनशंका वारिता । किं च भरतेन प्रीत्या पुरस्कृतः अग्रेसरः कृतः । तेन परस्परानुरागसूचनम् ॥ १ ॥ भरतः तत्र मातुल
कुले विशिष्टवस्त्राभरणभोजनादिरूपसत्कारेण सत्कृतः । पुत्रस्नेहेन पुत्रादपि अधिकस्नेहेनेत्यर्थ इत्येके ॥ २ ॥ तत्रापि तादृशसत्कारवत्यपि मातुलगृहे कामतः कामैः अभिमतविषयैः । सार्वविभक्तिकस्तसिः ।
तर्प्यमाणौ । अनेन सार्वदिकी विषयसुखानिवृत्तिर्बोधिता । वृद्धम् । अनेन शुश्रूषाकालात्ययेन धर्मलोपभयात्पितृस्मरणमिति सूचितम् । स्मरताम् अस्मरताम् । अडभावः आर्षः ॥ ३ ॥ प्रोषितौ विदेश
गतौ ॥ ४ ॥ विनिर्वृत्ताः विनिर्गताः । अनेन राज्ञः विष्णुरूपकध्वनिः ॥ ५ ॥ तत्रापि रामस्य अत्यंताभिमतत्वमुत्कर्षं चाह । तेषामिति । तेषामपि मध्ये पितुः रामः रतिकरः बभूव । भूतानां प्राणिनां

श्रीगणेशायनमः ॥ ॥ ॐगच्छतामातुलकुलंभरतेनतदानघः॥शत्रुघ्नोनित्यशत्रुघ्नोनीतःप्रीतिपुरस्कृतः॥१॥सतत्रन्यवसत्भ्रात्रासहसत्कारसत्कृतः॥
मातुलेनाश्वपतिनापुत्रस्नेहेनलालितः ॥२॥ तत्रापिनिवसंतौतौतर्प्यमाणौचकामतः॥ भ्रातरौस्मरतांवीरौवृद्धंदशरथंनृपम् ॥३॥ राजापितौमहातेजाः
सस्मारप्रोषितौसुतौ ॥ उभौभरतशत्रुघ्नौमहेंद्रवरुणोपमौ ॥ ४ ॥ सर्वएवतुतस्येष्टाश्चत्वारःपुरुषर्षभाः ॥ स्वशरीराद्विनिर्वृत्ताश्चत्वारइवबाहवः ॥ ५ ॥
तेषामपिमहातेजारामोरतिकरःपितुः ॥ स्वयंभूरिवभूतानांबभूवगुणवत्तरः॥६॥सहिदेवैरुदीर्णस्यरावणस्यवधार्थिभिः ॥ अर्थितोमानुषेलोकेजज्ञेविष्णुः
सनातनः॥७॥ कौसल्याशुशुभेतेनपुत्रेणामिततेजसा ॥ यथावरेणदेवानामदितिर्वज्रपाणिना ॥८॥ सहिरूपोपपन्नश्चवीर्यवाननसूयकः ॥ भूमावनुपमः
सूनुर्गुणैर्दशरथोपमः ॥ ९ ॥ सचनित्यंप्रशांतात्मामृदुपूर्वंचभाषते ॥ उच्यमानोपिपरुषंनोत्तरंप्रतिपद्यते ॥१०॥ कदाचिदुपकारेणकृतेनैकेनतुष्यति ॥
नस्मरत्यपकाराणांशतमप्यात्मवत्तया ॥११॥ शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्चसज्जनैः ॥ कथयन्नास्तवैनित्यमस्त्रयोग्यांतरेष्वपि ॥१२॥ बुद्धिमान्मधुराभा
षीपूर्वभाषीप्रियंवदः॥वीर्यवान्नचवीर्येणमहतास्वेनविस्मितः॥१३॥नचानृतकथोविद्वान्वृद्धानांप्रतिपूजकः॥अनुरक्तःप्रजाभिश्चप्रजाश्चाप्यनुरज्यते१४॥

मध्ये स्वयंभूः चतुर्मुख इव गुणवत्तरश्च बभूव ॥ ६ ॥ गुणवत्तरत्वे हेतुः । सहीति । उदीर्णस्य दृप्तस्य । अर्थितः प्रार्थितः जज्ञे आविर्भूतः ॥ ७ ॥ देवानां वरेणेति वज्रपाणिविशेषणम् । वज्रपाणिना
प्रार्थितेन देवानां वरेण वामनेन अदितिरिवेत्यर्थ इत्यन्ये ॥ ८ ॥ गुणवत्तर इत्युक्तगुणानेवाह । स हीति । रूपं लावण्यं सौंदर्यं च । असूया गुणेषु दोषत्वाविष्करणं तद्रहितः । भूमौअनुपमः उक्तगुणविषये
सूनुः । कौसल्याया इति शेषः । दशरथोपमत्वं वक्ष्यमाणगुणैर्बोध्यम् ॥ ९ ॥ मृदुपूर्वं मृदूक्तिपूर्वम् । स्वजनेन परुषमुच्यमानोपि परुषम् उत्तरं न प्रतिपद्यते न प्रयच्छति ॥ १० ॥ शतम् अनंतम् । आ
त्मवत्तया स्वाधीनांतःकरणतया ॥ ११ ॥ शीलं सुचरितम् । ज्ञानम् आत्मानात्मविवेकज्ञानं वेदतदर्थज्ञानं च । अस्त्रयोग्यांतरेष्वपि अस्त्रशस्त्रपरिश्रमयोग्यकालस्य यदंतरं मध्यं तेष्वपि सज्जनैरेव शास्त्ररहस्यं
कथयन् आस्ते । अन्यदा तु कैमुतिकन्यायसिद्धं सज्जनैकसंभाषणम् ॥१२॥ मधुराभाषी मधुरम् आभाषितुं शीलम् अस्य । पूर्वभाषी आगतान्प्रति प्रथमभाषणेन स्वाभिमुख्यप्रदर्शकः । मधुरं शब्दतः । प्रियंअर्थतः ।
न च विस्मितः अप्राप्तगर्वः ॥ १३ ॥ न चानृतकथः । तेन सदा सत्यवचनायोगव्यवच्छेदो बोध्यते । अनुरक्तः । अनुरंजितः । अंतर्भावितण्यर्थः । अनुरज्यते अनुरंजयति । तेन परस्परानुरागः ॥ १४ ॥

अनुक्रोशः दया दुःखिषु तद्वान् । दीनानुकंपी दीनानुकंपया तदभिलषितप्रापकः । अतो न पौनरुक्त्यम् । प्रग्रहः-दुष्टनिग्रहः । इंद्रियनिग्रहश्च ॥ १५ ॥ कुलोचितमतिः स्वकुलोचितदयादाक्षिण्यशरणागतसंरक्षणा दिधर्मैकप्रवणबुद्धिः । अत एव क्षात्रं धर्मं प्रजापालनादि बहु मन्यते । ततः क्षात्रधर्मात्प्रजापालनजन्यया शत्रुसंहारजन्यया च कीर्त्या महत्स्वर्गरूपं फलं साध्यं मन्यते यतः-अतः क्षात्रं धर्मं बहु मन्यत इवेत्य र्थः ॥ १६ ॥ अश्रेयसि अश्रेयस्करे निषिद्धकर्मणीत्यर्थः । धर्मविरुद्धकथारुचिः । न । वादादिषु बृहस्पतिरिव स्वोक्तनिर्वाहकयुक्तिवक्ता ॥ १७ ॥ अरोग इति । अनेन सत्कर्मानुष्ठानसामर्थ्यं च । वपुष्मान् । विपुलांसत्वादिलक्षणवपुर्विशेषवान् । देशकालविदिति । तत्तत्कर्मयोग्यदेशकालज्ञाता । पुरुषसारज्ञः । निग्रहानुग्रहाय पुरुषाणां धर्मिष्ठत्वाधर्मिष्ठत्वरूपसारज्ञाता सः एक एव रामः लोके साधुः सर्वगुणयुक्तः ब्रह्मणा कृतः ॥ १८ ॥ एवं श्रेष्ठगुणैः । युक्तत्वोपदेशेपि दार्ढ्याय सत्यत्वप्रत्यापनाय च पुनरुपदिशति । स त्विति । श्रेष्ठगुणैः उक्तैः । वक्ष्यमाणैश्च । प्राणसादृश्यकथनात् । प्रजा नां रामाधिकम् । इष्टं नास्तीति सूचितम् । गुणतः गुणैः ॥ १९ ॥ सर्वविद्येति । तत्तद्विद्यापेक्षितब्रह्मचर्यव्रतानंतरमेव स्नातः कृतसमावर्तनः । अत एव यथावदित्यादि । इषवः मंत्रहीनाः । समंत्राः

सानुक्रोशोजितक्रोधोब्राह्मणप्रतिपूजकः ॥ दीनानुकंपीधर्मज्ञोनित्यंप्रग्रहवाञ्छुचिः ॥ १५ ॥ कुलोचितमतिःक्षात्रंस्वधर्मंबहुमन्यते ॥ मन्यतेपर याप्रीत्यामहत्स्वर्गफलंततः ॥१६॥ नाश्रेयसिरतोयश्चनविरुद्धकथारुचिः ॥ उत्तरोत्तरयुक्तीनांवक्तावाचस्पतिर्यथा ॥ १७ ॥ अरोगस्तरुणोवाग्मीवपु ष्मान्देशकालवित् ॥ लोकेपुरुषसारज्ञःसाधुरेकोविनिर्मितः॥१८॥ सतुश्रेष्ठैर्गुणैर्युक्तःप्रजानांपार्थिवात्मजः॥बहिश्चरइवप्राणोबभूवगुणतःप्रियः॥१९॥ सर्वविद्याव्रतस्नातोयथावत्सांगवेदवित् ॥ इष्वस्त्रेचपितुःश्रेष्ठोबभूवभरताग्रजः ॥२०॥ कल्याणाभिजनःसाधुरदीनःसत्यवागृजुः ॥ वृद्धैरभिविनीतश्चद्वि जैर्धर्मार्थदर्शिभिः ॥२१॥ धर्मकामार्थतत्त्वज्ञःस्मृतिमान्प्रतिभानवान् ॥ लौकिकेसमयाचारेकृतकल्पोविशारदः ॥ २२ ॥ निभृतःसंवृताकारोगुप्तमंत्रः सहायवान् ॥ अमोघक्रोधहर्षश्चत्यागसंयमकालवित् ॥२३॥ दृढभक्तिःस्थिरप्रज्ञोनासद्ग्राहीनदुर्वचाः ॥ निस्तन्द्रिरप्रमत्तश्चस्वदोषपरदोषवित्॥२४॥ शास्त्रज्ञश्चकृतज्ञश्चपुरुषांतरकोविदः ॥ यःप्रग्रहानुग्रहयोर्यथान्यायंविचक्षणः ॥ २५ ॥ सत्संग्रहानुग्रहणेस्थानविन्निग्रहस्यच ॥ आयकर्मण्युपायज्ञः संदृष्टव्ययकर्मवित् ॥ २६ ॥

ते अस्त्राणि । समाहारे द्वंद्वः । पितुः श्रेष्ठः । तदपेक्षया श्रेष्ठः ॥२०॥ कल्याणानाम् । अभिजनः जन्मभूमिः । अदीनः क्षोभहेतावपि अक्षुब्धांतःकरणः । सत्यवाक् कृच्छ्रेपि सत्यवक्ता अभिविनीतःशिक्षितः ॥२१॥ स्मृतिप्रतिभानयोः भेदः संक्षेपे व्याकृतः । लौकिके कृतकल्पः संपादितसामर्थ्यः । समयाचारे धर्मे विशारदः कुशलः ॥ २२ ॥ निभृतः विनीतः । संवृताकारः गूढाभिप्रायः । गुप्तमंत्र इति पाठे फलपर्यंतमन्यावि दितमंत्रः । गुप्तैर्मित्रैरिति पाठः प्रचुरः । गुप्तैः मित्रत्वेन सर्वाज्ञातैः । तादृशा हि परराष्ट्रभेदादौ मुख्यसहायाः। त्यागः वित्तादेः सत्पात्रे दानं संयमः न्यायेनार्जनं तत्समयज्ञः ॥ २३ ॥ दृढभक्तिर्गुर्वादिषु । स्थिरप्रज्ञः विस्मृतिहीनः । नासद्ग्राही असद्वस्तुग्रहणशीलः न । न दुर्वचः परोद्वेजकवचनहीनः निस्तंद्रिः निरालस्यः । स्वीयानां दोषः स्वदोषः ॥ २४ ॥ कृतज्ञः परेण अल्पमपि कृतम् उपकारं जानाति तथा पुरुषाणाम् अंतरं तारतम्यं तद्विवेचने कोविदः । यद्वा पुरुषणाम् अंतरंअभिप्रायः । तज्ज्ञः । प्रग्रहः । निग्रहः यथान्यायं यथोचितं कर्तुं विचक्षणः ॥ २५ ॥ उक्तमर्थमेव विवृणोति । सत्संग्रहानुग्रहणे इति । संग्रहः स्वीकारः । ततोनुग्रहणं सपरिवारस्य पालनम् । प्रग्रहणे इति पाठेपिअयमेवार्थः। तत्र निग्रहस्य दुष्टनिग्रहस्य च करणे स्थानवित् देशकालज्ञः। आयकर्मणि उपायज्ञः पुष्पेभ्यो मधुकर इव प्रजाभ्यः करेण धनग्रहणकर्मणि चतुर

इत्यर्थः । कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः ॥ पादभागैस्त्रिभिर्वापि व्ययः कार्यो नृपैरिहेति शास्त्रसंदृष्टव्ययकर्मज्ञः ॥ २६ ॥ व्यामिश्रकेषु प्राकृतादिभाषामिश्रितनाटकादिषु । श्रैष्ठ्यं निपुणताम् । अर्थधर्मौ संगृह्य तदविरोधेन सुखतंत्रः कामसेवीत्यर्थः । कर्तव्येषुआलस्यरहितः ॥ २७ ॥ वैहारिकाणां क्रीडांप्रयोजनानां शिल्पानां गीतवाद्यचित्रकर्मादीनां विज्ञाता । अर्थविभागवित् । धर्माय यशसेऽर्थाय आत्मने स्वजनाय च । पंचधा विभजन्वित्तमिहामुत्र च शोभते इत्युक्तरीत्या तद्विभजनज्ञः । विनयःविविधगत्या नयनं शिक्षणं वा ॥ २८ ॥ अभियाता परसेनाभिमुखं याता । प्रहर्ता शत्रूणाम् । सेनानयः चक्रादिव्यूहेन सेनान्यासः । तत्र विशारदः निपुणः ॥ २९ ॥ मत्सरः परसंपद्द्वेषः ॥ ३० ॥ भूतानां प्राणिनाम् । सिद्धानामिति पाठे सिद्धाः देवभेदा इति कतककृत् । कालवशः कालपारतंत्र्यं प्राकृतवत् तदनुसारी न । स्वायत्तसर्वपरिकर इति यावत् ॥ ३१ ॥ एवं द्विवारं गुणश्रैष्ठ्यमुपपाद्य पुनरतिदार्ढ्याय तदुपपादयति । संमत इत्यादि । क्षमाप्रधानैः । गुणैः । वसुधायाः । तुल्य इति परेणान्वयः ॥ ३२ ॥ तथेति ।

श्रैष्ठ्यंचास्त्रसमूहेषुप्राप्तोव्यामिश्रकेषुच ॥ अर्थधर्मौचसंगृह्यसुखतंत्रोनचालसः ॥ २७ ॥ वैहारिकाणांशिल्पानांविज्ञातार्थविभागवित् ॥ आरोहेविनयेचैवयुक्तोवारणवाजिनाम् ॥ २८ ॥ धनुर्वेदविदांश्रेष्ठोलोकेऽतिरथसंमतः ॥ अभियाताप्रहर्ताचसेनानयविशारदः ॥ २९ ॥ अप्रधृष्यश्चसंग्रामेक्रुद्धैरपिसुरासुरैः ॥ अनसूयोजितक्रोधोनदृप्तोनचमत्सरी ॥ ३० ॥ नावज्ञेयश्चभूतानांनचकालवशानुगः ॥ एवंश्रेष्ठैर्गुणैर्युक्तःप्रजानांपार्थिवात्मजः ॥ ३१ ॥ संमतस्त्रिषुलोकेषुवसुधायाः क्षमागुणैः ॥ बुध्याबृहस्पतेस्तुल्योवीर्येचापिशचीपतेः ॥ ३२ ॥ तथासर्वप्रजाकांतैःप्रीतिसंजननैः पितुः ॥ गुणैर्विरुरुचेरामोदीप्तःसूर्यइवांशुभिः ॥ ३३ ॥ तमेवंवृत्तसंपन्नमप्रधृष्यपराक्रमम् ॥ लोकनाथोपमंनाथमकामयतमेदिनी ॥ ३४ ॥ एतैस्तुबहुभिर्युक्तंगुणैरनुपमैःसुतम् ॥ दृष्ट्वादशरथोराजाचक्रेचिंतांपरंतपः ॥ ३५ ॥ अथराज्ञोबभूवैववृद्धस्यचिरजीविनः ॥ प्रीतिरेषाकथंरामोराजास्यान्मयिजीवति ॥ ३६ ॥ एषाह्यस्यपराप्रीतिर्हृदिसंपरिवर्तते ॥ कदानामसुतंद्रक्ष्याम्यभिषिक्तमहंप्रियम् ॥ ३७ ॥ वृद्धिकामोहिलोकस्यसर्वभूतानुकंपकः ॥ मत्तःप्रियतरोलोकेपर्जन्यइववृष्टिमान् ॥ ३८ ॥ यमशक्रसमोवीर्येबृहस्पतिसमोमतौ ॥ महीधरसमोधृत्यांमत्तश्चगुणवत्तरः ॥ ३९ ॥ महीमहमिमांकृत्स्नामधितिष्ठंतमात्मजम् ॥ अनेनवयसादृष्ट्वायथास्वर्गमवाप्नुयाम् ॥ ४० ॥ इत्येवंविविधैस्तैस्तैरन्यपार्थिवदुर्लभैः ॥ शिष्टैरपरिमेयैश्चलोकेलोकोत्तमैर्गुणैः ॥ ४१ ॥ तंसमीक्ष्यतदाराजायुक्तंसमुदितैर्गुणैः ॥ निश्चित्यसचिवैःसार्धंयौवराज्यममन्यत ॥ ४२ ॥

कांतैः इष्टैः । तथा पितुः प्रीतिसंजननैः । गुणैः करणैः विरुरुचे इत्यन्वयः ॥ ३३ ॥ एवमभिषेकोपयोगिगुणश्रैष्ठ्यमुक्त्वा राज्ञोभिषेकेच्छां दर्शयति । तमेवमिति । मेदिनी तद्देवता तद्वर्तिप्रजाश्च ॥ ३४ ॥ ३५ ॥ चिंताप्रकारमाह । अथेति । मयि जीवति रामः राजा कथं भवेत् । तादृशस्य तस्य दर्शनजा याएषा अत्युत्कटाअनिर्वचनीया प्रीतिः । मेकथं स्यादिति चिन्ता बभूवेत्यन्वयः ॥ ३६ ॥ प्रीतिः अभिलाषः । अभिलाषाकारमाह । कदा नामेति । पूर्वपद्ये प्रीतिः आनंदः॥ ३७ ॥ पर्जन्यः मेघः ॥ ३८ ॥ ३९ ॥ अनेन वयसा वार्धकेन तथाभूतम् आत्मजं दृष्ट्वा यथास्वर्गं यथाकालं यथायोग्यं वा स्वर्गम्अवाप्नुयामिति चिंतां चक्रे इत्यनुकर्षेणान्वयः ॥ ४० ॥ तैस्तैः । उक्तैः । एतैरिति पाठेप्येवमेव । शिष्टैः । उक्तादन्यैश्चअपरिच्छिन्नैः । लोके लोकोत्तमत्वेन प्रसिद्धैः । गुणैः उपलक्षितम् ॥ ४१ ॥ तम् उक्तानुक्तैः समुदितैः । गुणैः ।

युक्तं पुत्रं समीक्ष्य दृष्ट्वा सचिवैः सार्धं निश्चित्य तादृशगुणवत्वेन पुत्रस्य यौवराज्यम् अमन्यत विचारितवान् ॥ ४२ ॥ दिवि उत्पाताः ग्रहनक्षत्रादिवैकृतम् अंतरिक्षे महावातदिग्दाहादयः भूम्युत्पाताः भूकंपादयः तज्जं तत्सूचितं भयम् आत्मनिष्ठं मंत्रिभ्यः संचचक्षे उक्तवान् । तथा रामाभिषेककारणांतरंआत्मनः शरीरे जरां च अवोचत् । अनेनउत्पातसूचितानिष्टयोग्यताध्वननम् ॥ ४३ ॥ अथआत्मनः शोकापनुदं शोकहर्तृ पूर्णचंद्रमुखस्य महात्मनो रामस्य संप्रियत्वं राज्याभिषेकेण सर्वानंदकरत्वं बुबुधे ज्ञातवान् ॥४४॥ अतः आत्मनश्च श्रेयसे प्रजानांचश्रेयसे प्रियेण च प्रजानिष्ठरामविषयप्रीतिरूपहेतुना च भक्त्या च रामपालनेन प्रजाः धन्याः भवंत्विति प्रजाविषयस्नेहेन च स नृपः मंत्रिणः रामाभिषेकाय त्वरितवान् ॥४५॥ त्वरयित्वा च नानानगरवासिनः तत्राधिकृतान् भिन्नभिन्नजनपदस्वामिनश्च मंत्रिद्वारा समानिनाय ॥४६॥ वेश्मनानाभरणैः । तद्दानैः । प्रजापतिः । ब्रह्मा ॥४७॥ केकयाद्यनानयने हेतुः त्वरया चेति । चस्त्वर्थे । अभिषेकविषयत्वरया त्वित्यर्थः । प्रियं रामाभिषेकम् । अस्येति । विचार्येति शेषः । अत्र भरतजनकयोः आगमने विघ्नभिया देवाः तथाबुद्धिं

दिव्यंतरिक्षेभूमौचघोरमुत्पातजंभयम् ॥ संचचक्षेथमेधावीशरीरेचात्मनोजराम् ॥ ४३ ॥ पूर्णचंद्राननस्याथशोकापनुदमात्मनः ॥ लोकेरामस्यबुबुधे संप्रियत्वंमहात्मनः ॥ ४४ ॥ आत्मनश्चप्रजानांचश्रेयसेचप्रियेणच ॥ प्राप्तेकालेसधर्मात्माभक्त्यात्वरितवान्नृपः ॥ ४५ ॥ नानानगरवास्तव्यान्पृथग्जानपदानपि ॥ समानिनायमेदिन्यांप्रधानान्पृथिवीपतिः ॥४६॥ तान्वेश्मनानाभरणैर्यथार्हंप्रतिपूजितान् ॥ ददर्शालंकृतोराजाप्रजापतिरिवप्रजाः ॥ ४७ ॥ नतुकेकयराजानंजनकंवानराधिपः ॥ त्वरयाचानयामासपश्चात्तौश्रोष्यतःप्रियम् ॥ ४८ ॥ अथोपविष्टेनृपतौतस्मिन्परपुरार्दने ॥ ततःप्रविविशुःशेषाराजानोलोकसंमताः ॥ ४९ ॥ अथराजवितीर्णेषुविविधेष्वासनेषुच ॥ राजानमेवाभिमुखानिषेदुर्नियतानृपाः ॥ ५० ॥ सलब्धमानैर्विनयान्वितैर्नृपैःपुरालयैर्जानपदैश्चमानवैः ॥ उपोपविष्टैर्नृपतिर्वृतोबभौसहस्रचक्षुर्भगवानिवामरैः ॥ ५१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विं० सा० सं० अयोध्याकांडे प्रथमः सर्गः ॥ १ ॥ ॥ ततःपरिषदंसर्वामामंत्र्यवसुधाधिपः ॥ हितमुद्धर्षणंचैवमुवाचप्रथितंवचः ॥ १ ॥ दुंदुभिस्वरकल्पेनगंभीरेणानुनादिना ॥ स्वरेणमहताराजाजीमूतइवनादयन् ॥ २ ॥ राजलक्षणयुक्तेनकांतेनानुपमेनच ॥ उवाचरसयुक्तेनस्वरेणनृपतिर्नृपान् ॥ ३ ॥ विदितंभवतामेतद्यथामेराज्यमुत्तमम् ॥ पूर्वकैर्ममराजेंद्रैःसुतवत्परिपालितम् ॥ ४ ॥

राज्ञे दत्तवंत इति तात्पर्यम् ॥ ४८ ॥ शेषाः केकयजनकव्यतिरिक्ताः आसन्नाः ॥ ४९ ॥ राजवितीर्णेषु राजदर्शितेषु नियताः नियतदेशाधिपत्याः । यद्वा राजमुखमात्रनिरीक्षकाः ॥ ५० ॥ मानः सत्कारः । पुरालयैः राजसेवार्थं सदायोध्यास्थितैः । जानपदैः स्वस्वदेशस्थैः । उपोपविष्टैः सभायां स्वसमीपोपविष्टैः । सहस्रचक्षुः । इंद्रः । राज्ञोपि चारैस्तथा तैरेव च सर्वप्रजाराजचित्तस्य ज्ञानम् ॥ ५१ ॥ कोमंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे प्रथमः सर्गः ॥ १ ॥ ॥ छ ॥ ॥ अथ राज्याभिषेकस्य सर्वप्रजार्थत्वात् तदनुमतये राजेत्याह । तत इति । आमंत्र्य अभिमुखीकृत्य हितं श्रेयस्करम् अत एवोद्धर्षणम् उत्कृष्टहर्षजनकम् प्रथितं सर्वजनश्राव्यं यथा भवति तथा उवाच ॥ १ ॥ तदेवाह । दुंदुभीति । अनुनादः प्रतिध्वनिः । नादयन् । दिश इति शेषः ॥ २ ॥ स्वरे राजलक्षणयुक्तत्वं स्निग्धगंभीरत्वादियुक्तत्व कांतत्वम् । मृदुमधुरत्वादिना । रसयुक्तेन अद्भुतरसयुक्तेन ॥ ३ ॥ मे राज्यं मया संप्रति पाल्यमानं मम पूर्वैर्मन्वादिभिः पालितमिति विदितमित्यन्वयः ॥ ४ ॥

ततः किं तत्राह । सोहमिति । श्रेयसा रामराज्याभिषेकद्वारा विशिष्टेन सुखेन । यतःइक्ष्वाकुभिः प्रतिपालितम् अत एव सुखार्हम् ॥ ५ ॥ पूर्वैः । मन्वादिभिः । पंथानं प्रजापालनमार्गम् । अनिद्रेण स्वसुखानि रपेक्षेण । यथाशक्तीति । विनयप्रदर्शनम् ॥ ६ ॥ जरितं प्रापितजरं कृतम् । न कदापि प्रजापालनविरोधेन विषयासक्तिः कृतेति भावः ॥ ७ ॥ वर्षसहस्राणि षष्टिर्वर्षसहस्राणि बहून्यायूंषि वत्सरशतरूपानेक पुरुषायूंषि विश्रांतिं प्रजाचिंताराहित्यरूपिणीम् ॥ ८ ॥ राजप्रभावाः शौर्यादयः तद्युक्तैः । जुष्टाम् । वहन्निति । हेतौ शता ॥ ९ ॥ प्रजाहिते पुत्रं कृत्वा तं नियुज्य । अनुमान्य कृतानुमतिकान् कृत्वा ॥ १० ॥ राज्यार्हत्वं पुत्रस्य दर्शयति । अनुजात इति । मत्संबंधिसर्वगुणविशिष्टः जातः इत्यर्थः । इत्थंभूताख्यानविषयेऽनुः कर्मप्रवचनीय इति मामिति द्वितीया । स्वत्रिगुणाधिकगुणवत्तामप्याह । पुरंदरेति ॥ ११ ॥ पुष्येण युक्तं चंद्रमिव सर्वकार्यसिद्धिदक्षम् । यौवराज्ये तत्पदे प्रातः नियोक्ताअस्मीतिलुट् । पुंगवं श्रेष्ठम् ॥ १२ ॥ सः वः युष्माकं राजा अनुरूपः योग्यः । येन राजा न केवलं यूयमेव नाथवंतः

सोहमिक्ष्वाकुभिःसर्वैर्नरेंद्रैःप्रतिपालितम् ॥ श्रेयसायोक्तुमिच्छामिसुखार्हमखिलंजगत् ॥ ५ ॥ मयाप्याचरितंपूर्वैःपंथानमनुगच्छता ॥ प्रजानित्यमनिद्रेणयथाशक्त्याभिरक्षिताः ॥ ६ ॥ इदंशरीरंकृत्स्नस्यलोकस्यचरताहितम् ॥ पांडुरस्यातपत्रस्यच्छायायांजरितंमया ॥ ७ ॥ प्राप्यवर्षसहस्राणिबहून्यायूंषिजीवतः ॥ जीर्णस्यास्यशरीरस्यविश्रांतिमभिरोचये ॥ ८ ॥ राजप्रभावजुष्टांचदुर्वहामजितेंद्रियैः ॥ परिश्रांतोस्मिलोकस्यगुर्वींधर्मधुरंवहन् ॥ ९ ॥ सोहंविश्राममिच्छामिपुत्रंकृत्वाप्रजाहिते ॥ सन्निकृष्टानिमान्सर्वाननुमान्यद्विजर्षभान् ॥ १० ॥ अनुजातोहिमांसर्वैर्गुणैःश्रेष्ठोममात्मजः ॥ पुरंदरसमोवीर्येरामःपरपुरंजयः ॥ ११ ॥ तंचंद्रमिवपुष्येणयुक्तंधर्मभृतांवरम् ॥ यौवराज्येनियोक्तास्मिप्रातःपुरुषपुंगवम् ॥ १२ ॥ अनुरूपःसवोनाथोलक्ष्मीवाँल्लक्ष्मणाग्रजः ॥ त्रैलोक्यमपिनाथेनयेनस्यान्नाथवत्तरम् ॥ १३ ॥ अनेनश्रेयसासद्यःसंयोक्ष्येहमिमांमहीम् ॥ गतक्लेशोभविष्यामिसुतेतस्मिन्निवेश्यवै ॥ १४ ॥ यदिदंमेनुरूपार्थंमयासाधुसुमंत्रितम् ॥ भवंतोमेनुमन्यंतांकथंवाकरवाण्यहम् ॥ १५ ॥ यद्यप्येषाममप्रीतिर्हितमन्यद्विचिंत्यताम् ॥ अन्यामध्यस्थचिंतातुविमर्दाभ्यधिकोदया ॥ १६ ॥ इति ब्रुवंतंमुदिताःप्रत्यनंदन्नृपान्नृपम् ॥ वृष्टिमंतंमहामेघंनर्दंतइवबर्हिणः ॥ १७ ॥ स्निग्धोनुनादःसंजज्ञेततोहर्षसमीरितः ॥ जनौघोद्घुष्टसन्नादोमेदिनींकंपयन्निव ॥ १८ ॥

अपितु त्रैलोक्यमपि नाथवत्तरम् । एवं प्रभावोराम इति भावः ॥ १३ ॥ श्रेयसा प्रशस्ततरेण रामेण महीं संयोक्ष्ये राज्याभिषेकद्वारेणेत्यर्थः । एवं सति तस्मिन् सुते तत्पालनभारं निवेश्य गतक्लेशः भविष्यामि ॥ १४ ॥ मे इदम् अभिषेकरूपं कार्यं यत् यदि मया साधु सुमंत्रितं भवताम् अनुरूपार्थम् अनुकूलप्रयोजनावहं च तदा भवंतो मे मम अनुमन्यंताम् अनुमतिं प्रयच्छंतु । हर्षयुक्तत्वात् वक्तुरस्मच्छब्दपौनरुक्त्यं न अदोषाय । इतोतिरिक्तं वा कथं केन प्रकारेण किं करवाणि । तद्वदंत्विति शेषः ॥ १५ ॥ ननु त्वदधिकः कः हिताहितविचारसमर्थः अत आह । यद्यपीति । एषाचिन्ता । यद्यपि मम प्रीतिः । तद्विषया । तथापि अन्यत् हितं यदि अस्ति तदा विचिन्त्यताम् । यतः मध्यस्थानां रागद्वेषहीनानां चिंता तु विचारस्तु तद्वतां चिंतापेक्षया अन्या विलक्षणा । तदेवाह विमर्देति । विमर्देन पूर्वापरपक्षसंघर्षेणाभ्यधिकोदया अधिकार्थप्रादुर्भाववती ॥ १६ ॥ वृष्टिमंतं महामेघं दृष्ट्वा नर्दंतः बर्हिण इव मुदिताः नृपाः नृपं प्रत्यनंदन् प्रशंसापूर्वकमंगीचक्रुः ॥ १७ ॥ अनुनादः सामंतकृतहर्षजवाक्यप्रतिध्वनिः संजज्ञे । सभायामिति शेषः । जनौघानाम् उद्घुष्टेन

शब्देन सन् संभवन् नादः प्रतिध्वनिः पृथिवीं कंपयन्निव संजज्ञे । बहिरिति शेषः । विमानमिति पाठे राजस्थानमित्यर्थः ॥ १८ ॥ भावं धर्मविषयम् अभिप्रायम् । बलं सेना तपोबलं वा । चातनृपाः ॥ १९ ॥ समताम् एकरूपतां गताः प्राप्ताः बुद्धयः येषां ते । मंत्रयितुम् । प्रवृत्ता इति शेषः । मंत्रेण उत्तरं ज्ञात्वा पुनः पुनः पर्यालोचनेन निश्चित्य ॥ २० ॥ अनेकेत्यादिपदे बहुव्रीहिः । साहस्रे स्वार्थिकोण् । युवराजानमिति । समासांतविधेरनित्यत्वाट्टजभावः ॥ २१ ॥ इच्छामः । कृताभिषेकं द्रष्टुमिति शेषः ॥ २२ ॥ अजानन्निव तदभिषेकस्य सर्वमनःप्रियत्वं जानन्नपि अजानन्निव प्रजामुखात् स्पष्टं जिज्ञासुः ॥ २३ ॥ हे राजानः मे वचनं श्रुत्वा तन्निर्बंधादेव केवलं रामं पतिम् इच्छथ न वस्तुत इति संशयः ॥ २४ ॥ संशयबीजमाह । कथं न्विति । युवराजम् । तेन युवत्वात् तत्र नानाविधाधर्माणाम् अभिसंभव इति भावः

तस्यधर्मार्थविदुषोभावमाज्ञायसर्वशः ॥ ब्राह्मणाबलमुख्याश्चपौरजानपदैःसह ॥ १९ ॥ समेत्यतेमंत्रयितुंसमतागतबुद्धयः ॥ ऊचुश्चमनसाज्ञात्वावृद्धंदशरथंनृपम् ॥ २० ॥ अनेकवर्षसाहस्रोवृद्धस्त्वमसिपार्थिव ॥ सरामंयुवराजानमभिषिंचस्वपार्थिवम् ॥ २१ ॥ इच्छामोहिमहाबाहुंरघुवीरंमहाबलम् ॥ गजेनमहतायांतंरामंछत्रावृताननम् ॥ २२ ॥ इतितद्वचनंश्रुत्वाराजातेषांमनःप्रियम् ॥ अजानन्निवजिज्ञासुरिदंवचनमब्रवीत् ॥ २३ ॥ श्रुत्वैतद्वचनंयन्मेराघवंपतिमिच्छथ ॥ राजानःसंशयोयंमेतदिदंब्रूततत्त्वतः ॥२४॥ कथंनुमयिधर्मेणपृथिवीमनुशासति ॥ भवंतोद्रष्टुमिच्छंतियुवराजंमहाबलम् ॥ २५ ॥ तेतमूचुर्महात्मानःपौरजानपदैःसह ॥ बहवोनृपकल्याणगुणाःसंतिसुतस्यते ॥ २६ ॥ गुणान्गुणवतोदेवदेवकल्पस्यधीमतः ॥ प्रियानानंदनान्कृत्स्नान्प्रवक्ष्यामोद्यतान्छृणु ॥ २७ ॥ दिव्यैर्गुणैःशक्रसमोरामःसत्यपराक्रमः ॥ इक्ष्वाकुभ्योपिसर्वेभ्योह्यतिरिक्तोविशांपते ॥ २८ ॥ रामःसत्पुरुषोलोकेसत्यःसत्यपरायणः ॥ साक्षाद्रामाद्विनिर्वृत्तोधर्मश्चापिश्रियासह ॥ २९ ॥ प्रजासुखत्वेचंद्रस्यवसुधायाःक्षमागुणैः ॥ बुद्ध्याबृहस्पतेस्तुल्योवीर्येसाक्षाच्छचीपतेः ॥ ३० ॥ धर्मज्ञःसत्यसंधश्चशीलवाननसूयकः ॥ क्षांतःसांत्वयिताश्लक्ष्णःकृतज्ञोविजितेंद्रियः ॥ ३१ ॥ मृदुश्चस्थिरचित्तश्चसदाभव्योनसूयकः ॥ प्रियवादीचभूतानांसत्यवादीचराघवः ॥ ३२ ॥

॥ २५ ॥ अस्मिन्नाधर्मलेशसंभावनापि इत्याशयेन उत्तरयति । त इति । ते नृपाः कल्याणगुणाः प्रजाकल्याणजनकाः गुणाः ॥ २६ ॥ देवकल्पस्य देवतुल्यस्य रामस्य प्रियान् शत्रूणामपि आनंदनाव अनिष्टनिवारणपूर्वकेष्टप्रापकत्वेनआनंदजनकान् ॥ २७ ॥ दिव्यैः अमानुषैः इक्ष्वाकुभ्यः तद्वंश्येभ्यः अतिरिक्तः अधिकः ॥ २८ ॥ साक्षात् रामाद्विनिर्वृत्तः रामेणैव प्रतिष्ठापित इत्यर्थः । श्रिया अर्थेन ॥ २९ ॥ सुखत्व इत्यादेः तुल्य इत्यनेनान्वयः । प्रत्येकगुणेषु एकैकस्य उपमानत्वदर्शनेन रामनिष्ठगुणानाम् अन्यत्र एकत्र वासासंभवः दर्शितः ॥ ३० ॥ संधा प्रतिज्ञा । अनसूयकः अन्यविषयासूयारहितः । सांत्वयिता दुःखितानां दुःखशमयिता । श्लक्ष्णः प्रियवचनः ॥ ३१ ॥ मृदुः सुकरोपासनः । स्थिरचित्तत्वम् अतिसंकटेऽपि । अंगीकृतापरित्यागः । भव्यो दृश्यः । अनसूयकः अन्यनिष्ठासूयायाः अविषयः ।

भूतानां प्राणिनाम् ॥ ३२ ॥ तेनउक्तगुणसमूहेन । कीर्तिः शौर्यादिजा । यशः दानादिजा प्रसिद्धिः । तेजः शौर्यम् ॥ ३३ ॥ देवासुरेत्यादि । निर्धारणे षष्ठी ॥ ३४ ॥ गांधर्वे संगीतशास्त्रे । कल्याणा नाम अभिजनः वासस्थानम् । अदीनः क्षोभहेतावपिअक्षुभितः आत्मा चित्तं यस्य ॥ ३५ ॥ अभिविनीतः शिक्षितः । धर्मे अर्थे च नैपुणं येषां तैः । ग्रामेति । लुप्तषष्ठीकं पृथक्पदम् । ग्रामस्य नगरस्य वा रक्षार्थं संग्रामं यदा व्रजतीत्यर्थः ॥ ३६ ॥ ॥ ३७ ॥ ॥ ३८ ॥ पिता औरसानपुत्रानिव पौरानकुशलं पृच्छतीत्यन्वयः । शुश्रूषंते च वः शिष्या इति । ब्राह्मणान्प्रति प्रश्नः । वर्मसु दंशिताः । अवहिताः । भृत्याः । वः सेवंत इति क्षत्रियान्प्रति प्रश्नः । कच्चिदिति । प्रश्ने । कच्चिद्धर्मेषु दंशिता इति पाठः ॥ व्यसनं दुःखम् ॥ ३९ ॥ ४० ॥ यथा पुत्रसुखेन पिता आनंदवान् भवति तथा प्रजासुखेन

बहुश्रुतानांवृद्धानांब्राह्मणानामुपासिता ॥ तेनास्येहातुलाकीर्तिर्यशस्तेजश्चवर्धते ॥ ३३ ॥ देवासुरमनुष्याणांसर्वास्त्रेषुविशारदः ॥ सम्यग्विद्याव्रतस्नातोयथावत्सांगवेदवित् ॥ ३४ ॥ गांधर्वेचभुविश्रेष्ठोबभूवभरताग्रजः ॥ कल्याणाभिजनःसाधुरदीनात्मामहामतिः ॥ ३५ ॥ द्विजैरभिविनीतश्चश्रेष्ठैर्धर्मार्थनैपुणैः ॥ यदाव्रजतिसंग्रामंग्रामार्थेनगरस्यवा ॥ ३६ ॥ गत्वासौमित्रिसहितोनाविजित्यनिवर्तते ॥ संग्रामात्पुनरागत्यकुंजरेणरथेनवा ॥ ॥ ३७ ॥ पौरान्स्वजनवन्नित्यंकुशलंपरिपृच्छति ॥ पुत्रेष्वग्निषुदारेषुप्रेष्यशिष्यगणेषुच ॥ ३८ ॥ निखिलेनानुपूर्व्याचपितापुत्रानिवौरसान् ॥ शुश्रूषंतेचवःशिष्याःकच्चिद्वर्मसुदंशिताः ॥ ३९ ॥ इतिवःपुरुषव्याघ्रःसदारामोभिभाषते ॥ व्यसनेषुमनुष्याणांभृशंभवतिदुःखितः ॥ ४० ॥ उत्सवेषुचसर्वेषुपितेवपरितुष्यति ॥ सत्यवादीमहेष्वासोवृद्धसेवीजितेंद्रियः ॥ ४१ ॥ स्मितपूर्वाभिभाषीचधर्मंसर्वात्मनाश्रितः ॥ सम्यग्योक्ताश्रेयसांचनविगृह्यकथारुचिः ॥ ४२ ॥ उत्तरोत्तरयुक्तौचवक्तावाचस्पतिर्यथा ॥ सुभ्रूरायतताम्राक्षःसाक्षाद्विष्णुरिवस्वयम् ॥ ४३ ॥ रामोलोकाभिरामोयंशौर्यवीर्यपराक्रमैः ॥ प्रजापालनसंयुक्तोनरागोपहतेंद्रियः ॥ ४४ ॥ शक्तस्त्रैलोक्यमप्येषभोक्तुंकिंनुमहीमिमाम् ॥ नास्यक्रोधःप्रसादश्चनिरर्थोस्तिकदाचन ॥ ॥ ४५ ॥ हंत्येष नियमाद्वध्यानवध्येषुनकुप्यति ॥ युनक्त्यर्थैःप्रहृष्टश्चतमसौयत्रतुष्यति ॥ ४६ ॥ दांतैःसर्वप्रजाकांतैःप्रीतिसंजननैर्नृणाम् ॥ गुणैर्विरोचतेरामोदीप्तःसूर्यइवांशुभिः ॥ ४७ ॥ तमेवंगुणसंपन्नंरामंसत्यपराक्रमम् ॥ लोकपालोपमंनाथमकामयतमेदिनी ॥ ४८ ॥ वत्सःश्रेयसिजातस्तेदिष्ट्यासौतवराघवः ॥ दिष्ट्यापुत्रगुणैर्युक्तोमारीचइवकश्यपः ॥ ४९ ॥ बलमारोग्यमायुश्चरामस्यविदितात्मनः ॥ देवासुरमनुष्येषुसगंधर्वोरगेषुच ॥ ॥ ५० ॥ आशंसतेजनःसर्वोराष्ट्रेपुरवरेतथा ॥ आभ्यंतरश्चबाह्यश्चपौरजानपदोजनः ॥ ५१ ॥

राम इति भावः ॥ ४१ ॥ न विगृह्यकथारुचिः विग्रहः वृथाकलहः तं कृत्वा जल्पवितंडादिकथारुचिः । यथा प्राकृतः । तथा नेत्यर्थः । न विगर्ह्यकथारुचिरिति पाठे निंद्यकथारुचिर्नेत्यर्थः ॥ ४२ ॥ ४३ ॥ शौर्यं युद्धे निर्भयप्रवेशसामर्थ्यम् । वीर्यं स्वस्यअविकारे एव परस्य विकारापादनम् । पराक्रमः युद्धे लघुसंचारः । रागः विषयेच्छा ॥ ४४ ॥ ४५ ॥ क्रोधप्रसादसार्थक्यमेवउपपादयति । हंतीत्यादि । यत्र यस्मिन् । विषये संतोषः । तमअर्थैः पूरयतीत्यर्थः ॥ ४६ ॥ दांतैः स्वमनोदमनैः ॥ ४७ ॥ मेदिनी तत्स्थः जनः ॥ ४८ ॥ असौ ते वत्सः दिष्ट्या अस्मद्भाग्येन श्रेयसि प्रजारक्षणरूपे समर्थः जातः । किं च असौ राघवः तव दिष्ट्या भाग्येन मरीचिप्रजापतेः पुत्रः कश्यप इव पुत्रगुणैः । युक्तः जात इत्यर्थः ॥ ४९ ॥ देवासुरादिषु राष्ट्रे पुरवरे च वर्तमानः सर्वोपि जनः रामस्य बलादि आशंसते । आभ्यंतरः

सेवकः ॥ ५० ॥ ५१ ॥ रामस्यार्थे रामस्य बलादिप्रयोजनार्थे ॥ ५२ ॥ याचितम् अभिप्रार्थितं रामाभिषेकरूपं समृद्ध्यतां संपद्यताम् ॥ ५३ ॥ राजोत्तमेति । संबोधनम् ॥ ५४ ॥ देवदेवः विष्णुः । तत्सदृशम् अत एव सर्वलोकहिते निविष्टम् । उदारैः । गुणैः । जुष्टं युक्तम् उदारैः महद्भिश्च परिगृहीतम् ॥ ५५ ॥ शेमेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीराममीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्वितीयः सर्गः ॥ २ ॥ अंजलिपद्मानि अंजलिरूपाणि पद्मानि । पद्माकारान् अंजलीनिति यावत् । प्रगृहीतानि प्रकर्षेण शिरसि बद्धानि । प्रतिगृह्य वीक्षणवचनप्रत्यंजलिभिः । यथायोगं तासां प्रतिग्रहः ॥ १ ॥ २ ॥ इति प्रत्यर्चितान् पौरजानपदान् कृत्वा ब्राह्मणान् इदम् अब्रवीत् । तेषां पौरादीनां शृण्वतां पुर इत्यर्थः । चकारसंग्राह्यम् अपेक्ष्य ब्राह्मणानिति बहुवचनम् ॥ ३ ॥ ४ ॥ जनघोषः

स्त्रियोवृद्धास्तरुण्यश्चसायंप्रातःसमाहिताः ॥ सर्वान्देवान्नमस्यंतिरामस्यार्थेमनस्विनः ॥ ५२ ॥ तेषांतद्याचितंदेवत्वत्प्रसादात्समृद्ध्यताम् ॥ राममिंदीवरश्यामंसर्वशत्रुनिबर्हणम् ॥ ५३ ॥ पश्यामोयौवराज्यस्थंतवराजोत्तमात्मजम् ॥ ५४ ॥ तंदेवदेवोपममात्मजंतेसर्वस्यलोकस्यहितेनिविष्टम् ॥ हितायनःक्षिप्रमुदारजुष्टंमुदाभिषेक्तुंवरदत्वमर्हसि ॥ ५५ ॥ इत्यार्षे श्रीमद्रामायणे वा॰ आ॰ चतुर्विं॰ सा॰ सं॰ अयोध्याकाण्डे द्वितीयः सर्गः ॥२॥ तेषामंजलिपद्मानिप्रगृहीतानिसर्वशः ॥ प्रतिगृह्याब्रवीद्राजातेभ्यःप्रियहितंवचः ॥ १ ॥ अहोस्मिपरमप्रीतःप्रभावश्चातुलोमम ॥ यन्मेज्येष्ठंप्रियंपुत्रंयौवराज्यस्थमिच्छथ ॥ २ ॥ इतिप्रत्यर्चितान्राजाब्राह्मणानिदमब्रवीत् ॥ वसिष्ठंवामदेवंचतेषामेवोपशृण्वताम् ॥ ३ ॥ चैत्रःश्रीमानयंमासःपुण्यःपुष्पितकाननः ॥ यौवराज्यायरामस्यसर्वमेवोपकल्प्यताम् ॥४॥ राज्ञस्तूपरतेवाक्येजनघोषोमहानभूत् ॥ शनैस्तस्मिन्प्रशांतेचजनघोषेजनाधिपः ॥ ॥ ५ ॥ वसिष्ठंमुनिशार्दूलंराजावचनमब्रवीत् ॥ अभिषेकायरामस्ययत्कर्मसपरिच्छदम् ॥ ६ ॥ तदद्यभगवन्सर्वमाज्ञापयितुमर्हसि ॥ तच्छ्रुत्वाभूमिपालस्यवसिष्ठोमुनिसत्तमः ॥ ७ ॥ आदिदेशाग्रतोराज्ञःस्थितान्युक्तान्कृतांजलीन् ॥ सुवर्णादीनिरत्नानिबलीन्सर्वौषधीरपि ॥ ८ ॥ शुक्लमाल्यानिलाजांश्चपृथक्चमधुसर्पिषी ॥ अहतानिचवासांसिरथंसर्वायुधान्यपि ॥ ९ ॥ चतुरंगबलंचैवगजंचशुभलक्षणम् ॥ चामरव्यजनेचोभेध्वजंछत्रंचपांडुरम् ॥ १० ॥ शतंचशातकुंभानांकुंभानामग्निवर्चसाम् ॥ हिरण्यशृंगमृषभंसमग्रंव्याघ्रचर्मच ॥ ११ ॥ यच्चान्यत्किंचिदेष्टव्यंतत्सर्वमुपकल्प्यताम् ॥ उपस्थापयतप्रातरग्न्यागारेमहीपतेः ॥ १२ ॥

रामाभिषेकसंभारोपकल्पनाज्ञाश्रवणजः ॥ ५ ॥ वसिष्ठमिति । वामदेवोपलक्षणम् अग्रे एवं व्यादिश्य विप्रौ त्वित्युक्तेः । परिच्छदः उपकरणम् ॥ ६ ॥ ७ ॥ युक्तान् सावधानान् । मंत्रिण इति शेषः । बलीन् पूजाद्रव्याणि विघ्नशामकबल्यर्थानि ॥ ८ ॥ पृथक् पृथक्पात्रगृहीते । अहतानि सदशानि तदानीमेव तंतुवाययंत्रादुद्धृतानि ॥ ९ ॥ चामरव्यजने चमरपुच्छनिर्मिते व्यजने ॥ १० ॥ शातकुंभानां सौवर्णानाम् अग्निवर्चसामित्यनेन सुवर्णस्यअत्युत्तमत्वं ध्वनितम् । समग्रं नखादिसहितम् अखंडम् ॥ ११ ॥ अन्यत् अनुक्तमपि लोकप्रसिद्धं गंधपुष्पादि । एष्टव्यम् अवश्यापेक्षितं तदित्यर्थः । अग्न्यगारे

अग्निहोत्रगृहे । उपस्थापयत मापयत ॥ १२ ॥ अंतःपुरं राजवेश्म । घ्राणहारिभिः अतिसुगंधैः ॥ १३ ॥ प्रशस्तं द्रव्यम् । गुणवत् युक्तसंस्कारम् दध्ना क्षीरेण चोपसेचनं संस्कारो यस्य तत् । द्विजानां शतसाहस्रं प्रति यत् प्रकामम् अभिमतम्अलं पर्याप्तं च भवेत् तत्संपाद्य द्विजमुख्यानां तेभ्यः सत्कृत्य प्रातः । दीयताम् ॥ १४ ॥ १५ ॥ १६ ॥ तालापचराः तालजीविनः ॥ १७ ॥ कक्ष्यां द्वितीयाम् । अंतः कक्ष्यायामभिषेकस्थाने ब्राह्मणानामेव वासादिति भावः । चैत्याः । रथ्याः वृक्षाः । अन्नम् ओदनं भक्ष्यं च तत्सहिताः । गौः स्वर्णादिकं वा दक्षिणा तत्सहिताः ॥ माल्ययोग्याः मालाम् अर्हति माल्यम् अर्चनं तद्योग्याः गंधपुष्पादयः देवायतनचैत्ययोः पृथक्पृथक् उपस्थापयितव्याः । तत्तद्देवतापूजापूर्वकं तत्रतत्र ब्राह्मणतर्पणं कार्यमिति तात्पर्यम् । दीर्घाः असयः येषां ते बद्धगोधाचर्माणश्चेति द्वंद्वः । दीर्घा

अंतःपुरस्यद्वाराणिसर्वस्यनगरस्यच ॥ चंदनस्रग्भिरर्च्यंतांधूपैश्चघ्राणहारिभिः ॥ १३ ॥ प्रशस्तमन्नंगुणवद्दधिक्षीरोपसेचनम् ॥ द्विजानांशतसाहस्रं यत्प्रकाममलंभवेत् ॥ १४ ॥ सत्कृत्यद्विजमुख्यानांश्वःप्रभातेप्रदीयताम् ॥ घृतंदधिचलाजाश्चदक्षिणाश्चापिपुष्कलाः ॥ १५ ॥ सूर्येभ्युदितमात्रेश्वोभवितास्वस्तिवाचनम् ॥ ब्राह्मणाश्चनिमंत्र्यंतांकल्प्यंतामासनानिच ॥ १६ ॥ आबध्यंतांपताकाश्चराजमार्गश्चसिच्यताम् ॥ सर्वेचतालापचारागणिकाश्चस्वलंकृताः ॥ १७ ॥ कक्ष्यांद्वितीयामासाद्यतिष्ठंतुनृपवेश्मनः ॥ देवायतनचैत्येषुसान्नभक्ष्याःसदक्षिणाः ॥ १८ ॥ उपस्थापयितव्याःस्युर्माल्ययोग्याःपृथक्पृथक् ॥ दीर्घासिबद्धगोधाश्चसन्नद्धामृष्टवाससः ॥ १९ ॥ महाराजांगणंशूराःप्रविशंतुमहोदयम् ॥ एवंव्यादिश्यविप्रौतुक्रियास्तत्रविनिष्ठितौ ॥ २० ॥ चक्रतुश्चैवयच्छेषंपार्थिवायनिवेद्यच ॥ कृतमित्येवचाब्रूतामभिगम्यजगत्पतिम् ॥ २१ ॥ यथोक्तंवचनंप्रीतौहर्षयुक्तौद्विजोत्तमौ ॥ ततःसुमंत्रंद्युतिमान्राजावचनमब्रवीत् ॥ २२ ॥ रामःकृतात्माभवताशीघ्रमानीयतामिति ॥ सतथेतिप्रतिज्ञायसुमंत्रोराजशासनात् ॥ २३ ॥ रामंतत्रानयांचक्रेरथेनरथिनांवरम् ॥ अथतत्रसहासीनास्तदादशरथंनृपम् ॥ २४ ॥ प्राच्योदीच्याःप्रतीच्याश्चदाक्षिणात्याश्चभूमिपाः ॥ म्लेच्छाश्चार्याश्चयेचान्येवनशैलांतवासिनः ॥ २५ ॥ उपासांचक्रिरेसर्वेतंदेवावासवंयथा ॥ तेषांमध्येसराजर्षिर्मरुतामिववासवः ॥ २६ ॥ प्रासादस्थोदशरथोददर्शायांतमात्मजम् ॥ गंधर्वराजप्रतिमंलोकेविख्यातपौरुषम् ॥ २७ ॥ दीर्घबाहुंमहासत्त्वंमत्तमातंगगामिनम् ॥ चंद्रकांताननंराममतीवप्रियदर्शनम् ॥ २८ ॥

सिबद्धायोधा इति पाठे बद्धदीर्घासय योधा इत्यर्थः । मृष्टवासस इति उपलक्षणम् अलंकाराणाम् ॥ १८ ॥ १९ ॥ महोदयं महोत्सवविशिष्टमंगनं विप्रौ वसिष्ठवामदेवौ व्यादिश्य । अधिकारिण इति शेषः । तत्र नृपवेश्मनि स्थितौ क्रियाः पुरोहितकर्तव्याः । चक्रतुरित्युत्तरेणान्वयः ॥ २० ॥ यच्चैव शेषं राजोक्तान् अन्यत् अवश्यकर्तव्यं तदपि पार्थिवाय निवेद्य चक्रतुः । ततो जगत्पतिम् अभिगम्य यथोक्तवचनम् उक्तवचनम् अनतिक्रम्य सर्वं कृतं सिद्धं जातमिति अब्रूताम् । प्रीतिः मानसः आनंदः । तदुन्नायकः मुखविकासादिःहर्षः ॥ २१ ॥ २२ ॥ कृतात्मा धर्मे कृतबुद्धिः । प्रतिज्ञाय उक्त्वा ॥ २३ ॥ तत्र प्रासादे । प्रासादस्थो ददर्शेति वक्ष्यमाणत्वात् ॥ २४ ॥ आर्याः मध्यदेशवासिनः ॥ २५ ॥ २६ ॥ गंधर्वराजप्रतिमत्वं सौंदर्यवत्त्वेन सुस्वरत्वेन च विख्यातपौरुषत्वेन वीरत्वम् ॥ २७ ॥ वीरानुगुणं दीर्घबाहुत्वं महासत्त्वं महाबलवत्त्वं च ।

तदनुमापकं मत्तेत्यादि तेन सगर्वसलीलगमनमुक्तम् । चंद्रकाताननमिति । वाचकमात्रलुप्तोपमा । अत एवातीव प्रियदर्शनम् । रामं जनान् रमयंतम् ॥ २८ ॥ रूपौदार्यगुणैः क्रमात् दृष्टिचित्तहरम् । ग्रीष्मतप्ताः प्रजाः ह्लादयुतं पर्जन्यमिव स्थितम् ॥ २९ ॥ न ततर्पेति अनेनानुक्षणं नवनवप्रेमास्पदत्वम् पश्यमान इति आर्षम् ॥ ३० ॥ ३१ ॥ सहसा वेगेन । तेन सुमंत्रेण । संहेति शेषः । सप्रांजलिः सांजलिः । अभिप्रेत्य प्राप्य । प्रणतः कृतसाष्टांगनमस्कारः ॥ ३२ ॥ स्वं नाम श्रावयन् रामवर्माअहमस्मीति एवं प्रणम्य पार्श्वेवस्थानं पुत्रधर्मः ॥ ३३ ॥ अंजलौ अंजलिप्रदेशे रामं स्वयमेव गृह्य गृहीत्वा समाकृष्य स्वसंमुखमानीय । अभ्युदितम् उपस्थापितम् ॥ ४४ ॥ परम् उत्कृष्टं व्यदीपयत अशोभयत । अत्रआसनं कर्म ॥ ३५ ॥ स्वयैव प्रभयेति । स्वप्रभैव दीपने करणम् उदयकाले रविः मेरुमिव सा वसिष्ठ दशरथादिभ्राजिता सभापि न केवलम् आसनमेवेत्यर्थः । व्यरोचत विशेषेण चकाशे ॥ ३६ ॥ ग्रहनक्षत्रादियुक्तमपि आकाशम् इन्दुनेव ॥ ३७ ॥ आदर्शतलप्रतिबिंबितम् अलंकृतम् आत्मानं पश्यन्निव तं

रूपौदार्यगुणैःपुंसांदृष्टिचित्तापहारिणम् ॥ घर्माभितप्ताःपर्जन्यंह्लादयंतमिवप्रजाः ॥२९॥ नततर्पसमायांतंपश्यमानोनराधिपः ॥ अवतार्यसुमंत्रस्तुराघवंस्यंदनोत्तमात् ॥ ३० ॥ पितुःसमीपंगच्छंतंप्रांजलिःपृष्ठतोन्वगात् ॥ सतंकैलासशृंगाभंप्रासादंरघुनंदनः ॥ ३१ ॥ आरुरोहनृपंद्रष्टुंसहसातेनराघवः ॥ सप्रांजलिरभिप्रेत्यप्रणतःपितुरंतिके ॥ ३२ ॥ नामस्वंश्रावयन्रामोववंदेचरणौपितुः ॥ तंदृष्ट्वाप्रणतंपार्श्वेकृतांजलिपुटंनृपः ॥ ३३ ॥ गृह्यांजलौसमाकृष्यसस्वजेप्रियमात्मजम् ॥ तस्मैचाभ्युदितंसम्यङ्मणिकांचनभूषितम् ॥३४॥ दिदेशराजारुचिरंरामायपरमासनम् ॥ तथासनवरंप्राप्यव्यदीपयतराघवः ॥ ३५ ॥ स्वयैवप्रभयामेरुमुदयेविमलोरविः ॥ तेनविभ्राजितातत्रसासभापिव्यरोचत ॥ ३६ ॥ विमलग्रहनक्षत्राशारदीद्यौरिवेंदुना ॥ तंपश्यमानोनृपतिस्तुतोषप्रियमात्मजम् ॥ ३७ ॥ अलंकृतमिवात्मानमादर्शतलसंस्थितम् ॥ सतंसुस्थितमाभाष्यपुत्रंपुत्रवतांवरः ॥ ३८ ॥ उवाचेदंवचोराजादेवेंद्रमिवकश्यपः ॥ ज्येष्ठायामसिमेपत्न्यांसदृश्यांसदृशःसुतः ॥ ३९ ॥ उत्पन्नस्त्वंगुणज्येष्ठोममरामात्मजःप्रियः ॥ त्वयायतःप्रजाश्चेमाःस्वगुणैरनुरंजिताः ॥ ४० ॥ तस्मात्त्वंपुष्ययोगेनयौवराज्यमवाप्नुहि ॥ कामतस्त्वंप्रकृत्यैवनिर्णीतोगुणवानिति ॥ ४१ ॥ गुणवत्यपितुस्नेहात्पुत्रवक्ष्यामितेहितम् ॥ भूयोविनयमास्थायभवनित्यंजितेंद्रियः ॥ ४२ ॥ कामक्रोधसमुत्थानित्यजस्वव्यसनानिच ॥ परोक्षयावर्त्तमानोवृत्त्याप्रत्यक्षयातथा ॥ ४३ ॥ अमात्यप्रभृतीःसर्वाःप्रजाश्चैवानुरंजय ॥ कोष्ठागारायुधागारैःकृत्वासन्निचयान्बहून् ॥ ४४ ॥

पश्यन्तुतोष । तेन पितृसदृशावयवत्वं सूचितं रामस्य । आभाष्य रामेति संबोध्य ॥ ३८ ॥ तदाह यदुवाच । ज्येष्ठायामिति ॥ ३९ ॥ गुणैः । ज्येष्ठः अतएव मम प्रियः यतः त्वयेत्यन्वयः ॥ ४० ॥ पुष्ययोगेन चंद्रस्य पुष्ययोगोपलक्षितकाले । अधिकरणस्य करणत्वविवक्षया तृतीया । प्रकृत्या स्वभावेन । कामतः प्रकामम् । अत्यर्थमिति यावत् ॥ ४१ ॥ गुणवति सत्यपि स्नेहात्तु स्नेहादेव । विनीत एव सन् भूयः अधिकं विनयम् आस्थाय ॥ ४२ ॥ कामजानि स्त्रीद्यूतमृगयामधुसेवनादीनि क्रोधजानि वाक्पारुष्योग्रदंडत्वार्थदूषणानि व्यसनानि त्यजेथाः । तत्र अर्थदूषणं पित्रादिसंचितार्थस्य नाशनम् । परोक्षया चारमुखतः परोक्षानुभवसिद्धया वृत्त्या स्वपरराष्ट्रवृत्तांतविचारेण प्रत्यक्षया सदा सभायां स्थित्वा स्वप्रत्यक्षया वृत्त्या प्रजान्यायादिविचारेण युक्तो भव ॥ ४३ ॥ तेन अमात्यप्रभृतीः अमात्यसेनापतिपुरराष्ट्रादिरक्षक

पौरजानपदसर्वप्रजाः अनुरंजय च । अयुतनियुतादिसंख्यखार्यादिपरिच्छिन्नधान्यग्राहीणि कोष्ठरूपाणिअगाराणि आयुधागाराणि शस्त्रगृहाणि तैः सह सम्यक्निचीयंतेअस्मिन्निति सन्निचयाः रत्नहेमाभरणरजतवस्त्रा दिकोशगृहाणि बहूनि विपुलानि कृत्वा संपूर्य प्रजाः अनुरंजयेति पूर्वेणान्वयः ॥ ४४ ॥ इष्टाः स्वस्य अनुरक्ताः स्वस्मिन्प्रकृतयः प्रजाः यस्य तस्य मित्राणि अमृतं लब्ध्वाअमरा इव तं लब्ध्वा नंदंति ॥ ४५ ॥ तत् अभिषेकप्रयोजनं पितृुपदेशम् ॥ ४६ ॥ ॥ ४७ प्रियाख्येभ्यः रामाभिषेकरूपप्रियवक्तृभ्यः ॥ ४८ ॥ इष्टं लाभमिव स्वेष्टवस्तुप्राप्तिरूपमिव । आनर्चुः रामाभिषेकनिर्विघ्नतायै ॥ ४९ ॥ धर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे तृतीयः सर्गः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ निश्चयज्ञः तत्तत्कार्यार्हदेशकालनियमज्ञः । निश्चयं रामाभिषेककालविषयम् ॥ १ ॥

इष्टानुरक्तप्रकृतिर्यःपालयतिमेदिनीम् ॥ तस्यनंदंतिमित्राणिलब्ध्वामृतमिवामराः ॥ ४५ ॥ तस्मात्पुत्रत्वमात्मानंनियम्यैवंसमाचर ॥ तच्छ्रुत्वासु हृदस्तस्यरामस्यप्रियकारिणः ॥ ४६ ॥ त्वरिताःशीघ्रमागत्यकौसल्यायैन्यवेदयन् ॥ साहिरण्यंचगाश्चैवरत्नानिविविधानिच ॥ ४७ ॥ व्यादिदेश प्रियाख्येभ्यःकौसल्याप्रमदोत्तमा ॥ अथाभिवाद्यराजानंरथमारुह्यराघवः ॥ ययौस्वंद्युतिमद्वेश्मजनौघैःप्रतिपूजितः ॥ ४८ ॥ तेचापिपौरानृपतेर्व चस्तच्छ्रुत्वातदालाभमिवेष्टमाशु ॥ नरेंद्रमामंत्र्यगृहाणिगत्वादेवान्समानर्चुरभिप्रहृष्टाः ॥ ४९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विं० सा० सं० अयोध्यकांडे तृतीयः सर्गः ॥ ३ ॥ गतेष्वथनृपोभूयःपौरेषुसहमंत्रिभिः ॥ मंत्रयित्वाततश्चक्रेनिश्चयज्ञःसनिश्चयम् ॥ १ ॥ श्वएवपुष्योभविताश्वोभिषेच्यस्तुमेसुतः ॥ रामोराजीवपत्राक्षोयुवराजइतिप्रभुः ॥ २ ॥ अथांतर्गृहमाविश्यराजादशरथस्तदा ॥ सूतमामंत्रयामासरामं पुनरिहानय ॥ ३ ॥ प्रतिगृह्यतुतद्वाक्यंसूतःपुनरुपाययौ ॥ रामस्यभवनंशीघ्रंराममानयितुंपुनः ॥४॥ द्वाःस्थैरावेदितंतस्यरामायागमनंपुनः ॥ श्रुत्वै वचापिरामस्तंप्राप्तंशंकान्वितोभवत् ॥ ५ ॥ प्रवेश्यचैनंत्वरितोरामोवचनमब्रवीत् ॥ यदागमनकृत्यंतेभूयस्तद्ब्रूह्यशेषतः ॥ ६ ॥ तमुवाचततःसूतो राजात्वांद्रष्टुमिच्छति ॥ श्रुत्वाप्रमाणंतत्रत्वंगमनायेतरायवा ॥ ७ ॥ इतिसूतवचःश्रुत्वारामोपित्वरयान्वितः ॥ प्रययौराजभवनंपुनर्द्रष्टुंनरेश्वरम् ॥ ॥ ८ ॥ तंश्रुत्वासमनुप्राप्तंरामंदशरथोनृपः ॥ प्रवेशयामासगृहंविवक्षुःप्रियमुत्तमम् ॥ ९ ॥ प्रविशन्नेवचश्रीमान्राघवोभवनंपितुः ॥ ददर्शपितरंदूरात्प्र णिपत्यकृतांजलिः ॥ १० ॥ प्रणमंतंसमुत्थाप्यसंपरिष्वज्यभूमिपः ॥ प्रदिश्यचासनंचास्मैरामंचपुनरब्रवीत् ॥ ११ ॥ रामवृद्धोस्मिदीर्घायुर्भुक्ताभो गायथेप्सिताः ॥ अन्नवद्भिःक्रतुशतैर्यथेष्टंभूरिदक्षिणैः ॥ १२ ॥

तदाह । श्व एवेति । युवराज इति प्रभुरिति । निश्चयमिति पूर्वेणान्वयः । उभाभ्यां प्रजान्यायदर्शनदेहादिष्वयमेवाधिकारीति सूचितम् ॥ २ ॥ आमंत्रयामास आनयेति आज्ञापयामास ॥ ३ ॥ पूर्वागमनापेक्षया पूर्वानयनापेक्षया पुनस्त्वम् ॥ ४ ॥ आवेदितं विज्ञापितम् । प्राप्तं पुनरागतम् । शंकान्वितः राज्ञः आपच्छंकान्वितः ॥ ५ ॥ ॥ ६ ॥ ततः रामोक्तिश्रवणानंतरम् श्रुत्वा राजोक्तार्थानुवादिनीं मदुक्तिम् । तत्र राजसन्निधौ । इतरायअगमनाय । असर्वनामत्वमार्षम् । प्रमाणं निर्णेता ॥ ७ ॥ ८ ॥ प्रियं स्वप्रियम् ॥ ९ ॥ दूरात्प्रणिपातः किं वदिष्यतीति भीत्या ॥ १० ॥ प्रणमंतं समुत्थाप्य तं परिष्वज्येत्यन्वयः । प्रदिश्य हस्तेन दर्शयित्वा । चात्वचसापिउक्त्वा अस्मै रामाय चात्सुमंत्राय । रामं च रामं तु ॥ ११ ॥ यथा ईप्सिताः तथा भुक्ताः । विधिहीनप्रमृष्टान्नं

मंत्रहीनमदक्षिणम् ॥ श्रद्धाविरहितं यज्ञं तामसं परिचक्षत इत्युक्तेः अन्नवदादि विशेषणम् । यथा यथावत् इष्टं देवानां पूजनं कृतम् इष्टं वस्तु दत्तम् यागाध्ययनपुत्रदानोपभोगैः पंचभिः देवर्षिपितृविप्राणाम् आत्मनश्चइत्येवं पंचानाम्अनृणः अस्मि । आत्मा सेंद्रियग्रामः जीवः तस्य तत्तत्सुखाधिकारिणः तददाने ऋणित्वम् । अर्थसिद्धम् । तेन सर्वऋणात्निर्मुक्तः अस्मीतिभावः । ऋष्यृणे विप्रर्णस्यदेवर्णे जीवर्णस्य अंतर्भावं कृत्वा ऋणानि त्रीण्यपाकृत्येति स्मृतिवादः ॥ १२ ॥ १३ ॥ १४ ॥ यद्ब्रूयां तन्मे वचः कर्तुमर्हसि । अविलंबेनेति शेषः ॥ १५ ॥ १६ ॥ अविलंबकरणे हेत्वंतरमाह । अपि चेति । अशुभान् अशुभसूचकान् । सनिर्घाताः अशनिपातसहिताः । दिवोल्काः दिवः उल्काः । संधिरार्षः । दिवा दिवसे इत्यन्ये । उल्काः ज्वालाः पतंति ॥ १७ ॥ नक्षत्रं जन्मर्क्षम् । अवष्टब्धम्आक्रांतम् ॥ १८ ॥ घोराम् आपदम्ऋच्छति पूर्वं ततः मृत्युं चाप्नोतीत्यर्थः ॥ १९ ॥ तत् तस्मात्यावत् मे चेतः न विमुह्यति त्वदभिषेकविमुखं न भवति तावत् ततः पूर्वमेवअभिषिंचस्व कृताभिषेकम्आत्मानं कुरु । ननु ते चेतसः का

जातमिष्टमपत्यंमेत्वमद्यानुपमंभुवि ॥ दत्तमिष्टमधीतंचमयापुरुषसत्तम ॥ १३ ॥ अनुभूतानिचेष्टानिमयावीरसुखान्यपि ॥ देवर्षिपितृविप्राणामनृणोस्मितथात्मनः ॥ १४ ॥ नकिंचिन्ममकर्तव्यंतवान्यत्राभिषेचनात् ॥ अतोयत्त्वामहंब्रूयांतन्मेत्वंकर्तुमर्हसि ॥ १५ ॥ अद्यप्रकृतयःसर्वास्त्वामिच्छंतिनराधिपम् ॥ अतस्त्वांयुवराजानमभिषेक्ष्यामिपुत्रक ॥ १६ ॥ अपिचाद्याशुभान्रामस्वप्नान्पश्यामिराघव ॥ सनिर्घातादिवोल्काश्चपतंतिहिमहास्वनाः ॥ १७ ॥ अवष्टब्धंचमेरामनक्षत्रंदारुणग्रहैः ॥ आवेदयंतिदैवज्ञाःसूर्यांगारकराहुभिः ॥ १८ ॥ प्रायेणचनिमित्तानामीदृशानांसमुद्भवे ॥ राजाहिमृत्युमाप्नोतिघोरांचापदमृच्छति ॥ १९ ॥ तद्यावदेवमेचेतोनविमुह्यतिराघव ॥ तावदेवाभिषिंचस्वचलाहिप्राणिनांमतिः ॥ २० ॥ अद्यचंद्रोभ्युपगमत्पुष्यात्पूर्वंपुनर्वसुम् ॥ श्वःपुष्ययोगंनियतंवक्ष्यंतेदैवचिंतकाः ॥ २१ ॥ तत्रपुष्येभिषिंचस्वमनस्त्वरयतीवमाम् ॥ श्वस्त्वाहमभिषेक्ष्यामियौवराज्येपरंतप ॥ २२ ॥ तस्मात्त्वयाद्यप्रभृतिनिशेयंनियमात्मना ॥ सहवध्वोपवस्तव्यादर्भप्रस्तरशायिना ॥ २३ ॥ सुहृदश्चाप्रमत्तास्त्वांरक्षंत्वद्यसमंततः ॥ भवंतिवहुविघ्नानिकार्याण्येवंविधानिहि ॥ २४ ॥ विप्रोषितश्चभरतोयावदेवपुरादितः ॥ तावदेवाभिषेकस्तेप्राप्तकालोमतोमम ॥ २५ ॥ कामंखलुसतांवृत्तेभ्रातातेभरतःस्थितः ॥ ज्येष्ठानुवर्तीधर्मात्मासानुक्रोशोजितेंद्रियः ॥ २६ ॥ किंनुचित्तंमनुष्याणामनित्यमितिमेमतम् ॥ सतांचधर्मनित्यानांकृतशोभिचराघव ॥ २७ ॥

मदभिषेकवैमुख्यचिंता तत्राह । चला हीति । त्वद्विमातृतत्पुत्रोपजापस्य संभावितत्वात्तदेव वक्ष्यति—विप्रोषितश्च भरत इत्यादिना ॥ २० ॥ पुष्ययोगं चंद्रस्य नियतं शुद्धगणितनिश्चितम् अभिषेके प्रशस्तं वा दैवचिंतकाः ज्योतिर्विदः वक्ष्यंते । वदंतीत्यर्थेआर्षम् ॥ २१ ॥ अभिषिंचस्व अभिषिक्तः भव । मे मनः चित्तं मां त्वरयतीव । त्वदभिषेकार्थमिति शेषः ॥ २२ ॥ अद्यप्रभृति प्रदोषम्आरभ्य । अनेनअद्भिर्भोजनरूपः प्राग्दिननियमः दर्शितः ॥ २३ ॥ रक्षणे हेतुः-भवंतीत्यादि । एवंविधानि शुभोदर्काणि । वहुविघ्नानीति । वहुव्रीहिः ॥ २४ ॥ इतः पुरात् अस्मात्पुरात् यावद्विप्रोषित एव तिष्ठति तावदेव विप्रोषितस्य तस्यआगमनात्पूर्वमेव प्राप्तकालः योग्यः । अन्यथा भरतः प्रतिबध्नीयादिति भावः ॥ २५ ॥ ननु भरते एषा शंका न युक्तेत्यत आह काममिति । काममिति यद्यपीत्यर्थे ॥ २६ ॥ किंनु इति तथापीत्यर्थे । मनुष्याणां चित्तं स्नेहादिमदपि अनित्यं

विकारनिमित्ते सति विक्रियेतवेत्यर्थः । यतः सतां धर्मनित्यानामपि चित्तं तत्तन्निमित्तकृतेन रागद्वेषादिना शोभते युज्यते तथा । न तु सर्वथा स्वतः नियतकिंचित्स्वभावमित्यर्थः ॥ २७ ॥ अभिषेचने अभिषेचनविषये इत्युक्तः व्रजेतिअभ्यनुज्ञात इति संबंधः । अभिभाष्य आमंत्र्य ॥ २८ ॥ राज्ञाआदिष्टे आज्ञप्ते अभिषेचने । सीतायै तदपेक्षितराजोपदिष्टसभार्योपवासानुष्ठाननिवेदनाय स्वगृहं प्रविश्य तत्र सीताम्अदृष्ट्वा तत्क्षणादेव मातुः अंतःपुरं ययौ ॥ २९ ॥ प्रवणां देवताराधनतत्पराम् । आ याचतीमिति छेदः । श्रियं रामाय राज्यलक्ष्मीम् ॥ ३० ॥ आनायिता । कौसल्ययेति शेषः ॥ ३१ ॥ तस्मिन्कालेपि रामागमनविशिष्टे कालेपि आमीलितेक्षणा । ध्यानवशात् अन्वास्यमानाउपास्यमाना ॥ ३२ ॥ पुष्येणेति पाठे तद्युक्तकालस्य अधिकरणस्यापि करणत्वविवक्षा बोध्या ॥ ३३ ॥ वरं श्रेष्ठम् अत

इत्युक्तःसोभ्यनुज्ञातःश्वोभाविन्यभिषेचने ॥ व्रजेतिरामःपितरमभिभाष्याभ्ययाद्गृहम् ॥ २८ ॥ प्रविश्यचात्मनोवेश्मराज्ञादिष्टेभिषेचने ॥ तत्क्षणादेव निष्क्रम्यमातुरंतःपुरंययौ ॥ २९ ॥ तत्रतांप्रवणामेवमातरंक्षौमवासिनीम् ॥ वाग्यतांदेवतागारेददर्शायाचतींश्रियम् ॥ ३० ॥ प्रागेवचागतातत्रसुमित्रा लक्ष्मणस्तथा ॥ सीताचानायिताश्रुत्वाप्रियंरामाभिषेचनम् ॥ ३१ ॥ तस्मिन्कालेऽपिकौसल्यातस्थावामीलितेक्षणा ॥ सुमित्रयान्वास्यमानासी तयालक्ष्मणेनच ॥ ३२ ॥ श्रुत्वापुष्येचपुत्रस्ययौवराज्येभिषेचनम् ॥ प्राणायामेनपुरुषंध्यायमानाजनार्दनम् ॥ ३३ ॥ तथासनियमामेवसोभिगम्या भिवाद्यच ॥ उवाचवचनंरामोहर्षयंस्तामिदंवरम् ॥ ३४ ॥ अंबपित्रानियुक्तोस्मिप्रजापालनकर्मणि ॥ भविताश्वोभिषेकोमेयथामेशासनंपितुः ॥ ॥ ३५ ॥ सीतयाप्युपवस्तव्यारजनीयंमयासह ॥ एवमुक्तमुपाध्यायैःसहिमामुक्तवान्पिता ॥ ३६ ॥ यानियान्यत्रयोग्यानिश्वोभाविन्यभिषेचने ॥ तानिमेमंगलान्यद्यवैदेह्याश्चैवकारय ॥ ३७ ॥ एतच्छ्रुत्वातुकौसल्याचिरकालाभिकांक्षितम् ॥ हर्षवाष्पाकुलंवाक्यमिदंराममभाषत ॥ ३८ ॥ वत्स रामचिरंजीवहतास्तेपरिपंथिनः ॥ ज्ञातीन्मेत्वंश्रियायुक्तःसुमित्रायाश्चनंदय ॥ ३९ ॥ कल्याणेवतनक्षत्रेमयाजातोसिपुत्रक ॥ येनत्वयादशरथोगुणै राराधितःपिता ॥ ४० ॥ अमोघंवतमेक्षांतंपुरुषेपुष्करेक्षणे ॥ येयमिक्ष्वाकुराज्यश्रीःपुत्रत्वांसंश्रयिष्यति ॥ ४१ ॥ इत्येवमुक्तोमात्रातुरामोभ्रातरमब्रवीत् ॥ प्रांजलिंप्रह्वमासीनमभिवीक्ष्यस्मयन्निव ॥ ४२ ॥ लक्ष्मणेमांमयासार्धंप्रशाधित्वंवसुंधराम् ॥ द्वितीयंमेंतरात्मानंत्वामियंश्रीरुपस्थिता ॥ ४३ ॥

एव हर्षयन् ॥ ३४ ॥ यथा मे पितुः स्वसंबंधेन राज्ञः दशरथस्यअत्युत्कृष्टत्वध्वननम् । शासनम्आज्ञा तथा श्वः मे अभिषेकः भवितेति संबंधः ॥ ३५ ॥ सहीति । हिरप्यर्थे । सः पितापि माम्एवम्उक्तवा नित्यर्थः ॥ ३६ ॥ मंगलानि महार्हगंधमाल्याभरणादिरूपाणि मंगलस्नानादीनिच ॥ ३७ ॥ चिरकालाभिकांक्षितम् एतदभिषेकरूपम् । हर्षजवाष्पेणआकुलम् अव्यक्तमधुरम् ॥ ३८ ॥ हताः । भवन्तिति शेषः । मे मम सुमित्रायाश्च ज्ञातीन् बंधून् अभिनंदय ॥ ३९ ॥ कल्याणे नक्षत्रे शुभयुक्ते काले जातः जनितः । येन शुभकालजननेन ॥ ४० ॥ पुष्करनेत्रे पुरुषे विष्णौ यन्मे क्षांतं कामं परित्यज्य तत्प्रीतिमात्रफलकं व्रतोपवासादिकृतं तत् अमोघं सफलं जायते । वतेति हर्षे । साफल्ये हेतुः । येयमित्यादि । इदम् अभाषतेत्यन्वयः ॥ ४१ ॥ स्मयन्निव ईषद्धसन्निवेत्यर्थः ॥ ४२ ॥ स्वनिविष्टं राज्यं सौभ्रात्रेण साधारणं

करोति । लक्ष्मणेति ॥ ४३ ॥ राज्यफलरूपान् इष्टान् । मनोनुकूलान् भोगान् विषयान् । यद्वा राज्यफलानि धर्मार्थौ । तौ च प्राप्नुहि । त्वदर्थं न स्वप्रयोजनाय ॥ ४४ ॥ सीतां च स्वं च । अभ्यनुज्ञाप्य सीतायै स्वस्मै च मातृभ्याम् अनुज्ञां दापयित्वा निवेशनं स्वगृहं ययौ । चस्त्वर्थे ॥ ४५ ॥ मौर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुर्थः सर्गः ॥ ४ ॥ ॥ छ ॥ संदिश्य रामं उपवासादि कुरु इत्युक्त्वा ॥ १ ॥ गच्छेति । उपवाससंकल्पादेः पुरोहितसाध्यत्वादिति भावः । श्रेयसे विघ्ननिवृत्तिरूपश्रेयोर्थम् ॥ २ ॥ ३ ॥ ब्राह्मं ब्राह्मणारोहणयोग्यम् ।

सौमित्रेभुंक्ष्वभोगांस्त्वमिष्टान्राज्यफलानिच ॥ जीवितंचापिराज्यंचत्वदर्थमभिकामये ॥ ४४ ॥ इत्युक्त्वालक्ष्मणंरामोमातरावभिवाद्यच ॥ अभ्यनुज्ञाप्यसीतांचययौस्वंचनिवेशनम् ॥४५॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये चतुर्विं० सा० सं० अयोध्याकांडे चतुर्थः सर्गः ॥ ४ ॥

संदिश्यरामंनृपतिःश्वोभाविन्यभिषेचने ॥ पुरोहितंसमाहूयवसिष्ठमिदमब्रवीत् ॥ १ ॥ गच्छोपवासंकाकुत्स्थंकारयाद्यतपोधन ॥ श्रेयसेराज्यलाभायवध्वासहयतव्रत ॥ २ ॥ तथेतिचसराजानमुक्त्वावेदविदांवरः ॥ स्वयंवसिष्ठोभगवान्ययौरामनिवेशनम् ॥ ३ ॥ उपवासयितुंवीरंमंत्रविन्मंत्रकोविदम् ॥ ब्राह्मंरथवरंयुक्तमास्थायसुधृतव्रतः ॥ ४ ॥ सरामभवनंप्राप्यपांडुराभ्रघनप्रभम् ॥ तिस्रःकक्ष्यारथेनैवविवेशमुनिसत्तमः ॥ ५ ॥ तमागतमृषिंरामस्त्वरन्निवससंभ्रमम् ॥ मानयिष्यन्समानार्हंनिश्चक्रामनिवेशनात् ॥ ६ ॥ अभ्येत्यत्वरमाणोथरथाभ्याशंमनीषिणः ॥ ततोवतारयामासपरिगृह्यरथात्स्वयम् ॥ ७ ॥ सचैनंप्रश्रितंदृष्ट्वासंभाष्याभिप्रसाद्यच ॥ प्रियार्हंहर्षयन्राममित्युवाचपुरोहितः ॥ ८ ॥ प्रसन्नस्तेपितारामयत्त्वंराज्यमवाप्स्यसि ॥ उपवासंभवानद्यकरोतुसहसीतया ॥ ९ ॥ प्रातस्त्वामभिषेक्ताहियौवराज्येनराधिपः ॥ पितादशरथःप्रीत्याययातिंनहुषोयथा ॥ १० ॥ इत्युक्त्वासतदारामसुपवासंयतव्रतः ॥ मंत्रवत्कारयामासवैदेह्यासहितंशुचिः ॥ ११ ॥ ततोयथावद्रामेणसराज्ञोगुरुरर्चितः ॥ अभ्यनुज्ञाप्यकाकुत्स्थंययौरामनिवेशनात् ॥ १२ ॥ सुहृद्भिस्तत्ररामोपिसहासीनःप्रियंवदैः ॥ सभाजितोविवेशाथताननुज्ञाप्यसर्वशः ॥ १३ ॥ हृष्टनारीनरयुतंरामवेश्मतदावभौ ॥ यथामत्तद्विजगणंप्रफुल्लनलिनंसरः ॥ १४ ॥ सराजभवनप्रख्यात्तस्माद्रामनिवेशनात् ॥ निर्गत्यददृशेमार्गंवसिष्ठोजनसंवृतम् ॥ ॥ १५ ॥ वृंदवृंदैरयोध्यायांराजमार्गाःसमंततः ॥ बभूवुरभिसंबाधाःकुतूहलजनैर्वृताः ॥ १६ ॥

युक्तं अश्वैः । ययाविति पूर्वेणान्वयः ॥ ४ ॥ पांडुराभ्रवत्निविडप्रभम् । कक्ष्याः द्वाराणि ॥५॥ त्वरन्निव त्वरन्नेव । ससंभ्रमं सादरम् ॥६॥ परिगृह्य हस्तेन हस्ते धृत्वा ॥७॥ संभाष्य वत्सेत्यादि संबोध्य । अभिप्रसाद्य । स्तुतिभिरिति शेषः । प्रियार्हं प्रियोक्त्यर्हम् ॥ ८ ॥ ९ ॥ अभिषेक्ता लुट् ॥ १० ॥ रामम् उपवासं तत्संकल्पं कारयामासेति । हृक्रोरिति द्विकर्मकत्वम् ॥ ११ ॥ राज्ञः दशरथस्य ॥ १२ ॥ प्रियंवदैः सुहृद्भिः सभाजितः पूजितः विवेश स्ववेश्म तान् सुहृदः ॥ १३ ॥ १४ ॥ राजभवनं मूलराजभवनम् । प्रख्यं सदृशम् ॥ १५ ॥ वृंदानां वृंदैः अभिसंबाधाः संमर्दयुक्ताः कुतूहलजनैः रामाभिषे

कदर्शनजनकौतुकसंपन्नैः जनैः ॥ १६ ॥ जनवृंदान्येवऊर्मयः तेषां संघर्षः अन्योन्यसंघर्षणं तेन हर्षेण जातः यः स्वनः तद्वृतः ॥ १७ ॥ सिक्ताः सुगंधिजलसिक्ताः संमृष्टाः शोधिताः रथ्याः यस्याम् । तदहः तस्मिन् अहनि । तथा च तथैव वनमालिनी तोरणमालावती । समुच्छ्रिताः गृहेषु ध्वजाः यस्यां सा ॥ १८ ॥ स्त्रीबालैः सहितश्चासौ आकुलः संतोषात्संभ्रांतचित्तः । सस्त्रीबालाबल इति पाठे अबलाः वृद्धाः स्त्रीबालवृद्धसहितः जनः इत्यर्थः । रामाभिषेकम् आकांक्षन् द्रष्टुम् इच्छन् रवेः उदयम् आकांक्षन् । अभूदिति शेषः ॥ १९ ॥ महोत्सवं रामाभिषेकसंभूतम् ॥ २० ॥ व्यूहन्निव राजमार्गं व्याप्य स्थितान् एकतः कुर्वन्निव ॥ २१ ॥ सिताभ्रसदृशहिमगिरिशिखरसदृशम ॥ २२ ॥ राजासन हित्वा प्रत्युत्थायेत्यर्थः । स्वमतं स्वानुमतं कृत्यं पप्रच्छ । स च यत् आज्ञप्तं तत् कृतमिति न्यवेदयत् ॥ २३ ॥ तुल्यं

जनवृंदोर्मिसंघर्षहर्षस्वनवृतस्तदा ॥ बभूवराजमार्गस्यसागरस्येवनिःस्वनः ॥ १७ ॥ सिक्तसंमृष्टरथ्याहितथाचवनमालिनी ॥ आसीदयोध्यातदहः समुच्छ्रितगृहध्वजा ॥ १८ ॥ तदाह्ययोध्यानिलयःसस्त्रीबालाकुलोजनः ॥ रामाभिषेकमाकांक्षन्नाकांक्षन्नुदयंरवेः ॥ १९ ॥ प्रजालंकारभूतंच जनस्यानंदवर्धनम् ॥ उत्सुकोभूज्जनोद्रष्टुंतमयोध्यामहोत्सवम् ॥ २० ॥ एवंतज्जनसंबाधंराजमार्गंपुरोहितः ॥ व्यूहन्निवजनौघंतंशनैराजकुलंययौ ॥ २१ ॥ सिताभ्रशिखरप्रख्यंप्रासादमधिरुह्यच ॥ समीयायनरेंद्रेणशक्रेणेवबृहस्पतिः ॥ २२ ॥ तमागतमभिप्रेक्ष्यहित्वाराजासनंनृपः ॥ पप्रच्छ स्वमतंतस्मैकृतमित्यभिवेदयत् ॥ २३ ॥ तेनचैवतदातुल्यंसहासीनाःसभासदः ॥ आसनेभ्यःसमुत्तस्थुःपूजयंतःपुरोहितम् ॥ २४ ॥ गुरुणात्वभ्यनुज्ञातोमनुजौघंविसृज्यतम् ॥ विवेशांतःपुरंराजासिंहोगिरिगुहामिव ॥ २५ ॥ तदग्र्यवेषप्रमदाजनाकुलंमहेंद्रवेश्मप्रतिमंनिवेशनम् ॥ व्यदीपयंश्चारु विवेशपार्थिवःशशीवतारागणसंकुलंनभः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वा० आ० चतुर्विं० सा०सं० अयोध्याकाण्डे पंचमःसर्गः ॥ ५ ॥ गतेपुरोहितेरामःस्नातोनियतमानसः ॥ सहपत्न्याविशालाक्ष्यानारायणमुपागमत् ॥ १ ॥ प्रगृह्यशिरसापात्रींहविषोविधिवत्ततः ॥ महतेदैवतायाज्यं जुहावज्वलितानले ॥२॥ शेषंचहविषस्तस्यप्राश्याशास्यात्मनःप्रियम् ॥ ध्यायन्नारायणंदेवंस्वास्तीर्णेकुशसंस्तरे ॥३॥ वाग्यतःसहवैदेह्याभूत्वानियतमानसः ॥ श्रीमत्यायतनेविष्णोःशिश्येनरवरात्मजः ॥४॥ एकयामावशिष्टायांरात्र्यांप्रतिविबुद्धचसः ॥ अलंकारविधिंसम्यक्कारयामासवेश्मनः ॥५॥

तुल्यकालम् ॥ २४ ॥ अभ्यनुज्ञातः सर्वस्य कर्तव्यस्य कृतत्वात् विश्रम्यताम इत्युक्तः ॥ २५ ॥ अग्र्यःउत्तमः ॥ २६ ॥ चैरंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मी०आदिका०अयो० पंचमःसर्गः ॥ ५ ॥ ॥ ६ ॥ आदरात् पुनः अभिषेकसामग्रीवर्णनम् उपागमत् उपासांचक्रे । नारं जीवसमूहः अयनम् अंतर्यामितया स्थानं यस्य । तेन अंतर्यामिणमित्यर्थः ॥ १ ॥ शिरसा पात्रीं प्रगृह्य नमस्कारपूर्वमित्यर्थः । महते दैवताय नारायणाय ॥२॥ आशास्य प्रार्थ्य आत्मनः प्रियं राज्याभिषेकाविघ्नरूपम् । वस्तुतःरावणवधफलकवनगमनरूपम् आशास्य संकल्प्येत्यर्थः । वैदेह्या सहेति अत्रापि अपकृष्टव्यम् । नहि चतुर्दशभुवनाधिपतेः एतद्यौवराज्यं प्रियं भवति । सकलतद्देशमनुष्यप्रियत्वात् आत्मन इत्यस्य वैफल्यं च अत्र व्याख्याने प्राप्नोतीति दिक् । कुशसंस्तरेकुशमये शयनीये ॥३॥ नियतम् ईश्वरमात्रविषयं विष्णोः आयतने निजभवन

वर्तिनि देवपूजालये ॥ ४ ॥ ५ ॥ सूताः पौराणिकाः । मागधाः । वंशावलीकीर्तकाः बंदिनः स्तुतिपाठकाः । पूर्वां संध्याम् उपासीनः तदुपासनं कुर्वन् जजाप । गायत्रीजपस्यैव तदुपासनरूपत्वात् ॥ ६ ॥ वाचयामास स्वस्तिवाचनं पुण्याहं च ॥ ७ ॥ तूर्यघोषानुनादितः तूर्यघोषेण संजातानुनादः ॥ ८ ॥ ९ ॥ शोभयितुम् अलंकर्तुं चक्रे । बुद्धिमिति शेषः ॥ १० ॥ अट्टालकाः प्राकारोपरितनयुद्धस्थानानीति केचित् ॥ ११ ॥ १२ ॥ आलक्षितेषु सर्वतो लक्षितेषु अत्युच्चेष्विति यावत् । ध्वजाः सचिह्नाः पताकाः चिह्नरहिताः इत्याहुः ॥ १३ ॥ नटाः सूत्रधाराः । जनता जनसमूहः । ततः तत्र अयोध्यायाम्

तत्रशृण्वन्सुखावाचःसूतमागधवंदिनाम् ॥ पूर्वांसंध्यामुपासीनोजजापसुसमाहितः ॥ ६ ॥ तुष्टावप्रणतश्चैवशिरसामधुसूदनम् ॥ विमलक्षौमसंवीतोवाचयामाससद्द्विजान् ॥ ७ ॥ तेषांपुण्याहघोषोथगंभीरमधुरस्तथा ॥ अयोध्यांपूरयामासतूर्यघोषानुनादितः ॥ ८ ॥ कृतोपवासंतुतदावैदेह्यासहराघवम् ॥ अयोध्यानिलयःश्रुत्वासर्वःप्रमुदितोजनः ॥ ९ ॥ ततःपौरजनःसर्वःश्रुत्वारामाभिषेचनम् ॥ प्रभातांरजनींदृष्ट्वाचक्रेशोभयितुंपुरीम् ॥ ॥ १० ॥ सिताभ्रशिखराभेषुदेवतायतनेषुच ॥ चतुष्पथेपुरथ्यासुचैत्येष्वट्टालकेषुच ॥ ११ ॥ नानापण्यसमृद्धेषुवणिजामापणेषुच ॥ कुटुंबिनासमृद्धेषुश्रीमत्सुभवनेषुच ॥ १२ ॥ सभासुचैवसर्वासुवृक्षेष्वालक्षितेषुच ॥ ध्वजाःसमुच्छ्रिताःसाधुपताकाश्चाभवंस्तथा ॥ १३ ॥ नटनर्तकसंघानांगायकानांचगायताम् ॥ मनःकर्णसुखावाचःशुश्रावजनताततः ॥ १४ ॥ रामाभिषेकयुक्ताश्चकथाश्चक्रुर्मिथोजनाः ॥ रामाभिषेकेसंप्राप्तेचत्वरेषुगृहेषुच ॥ १५ ॥ बालाअपिक्रीडमानागृहद्वारेषुसंघशः ॥ रामाभिषवसंयुक्ताश्चक्रुरेवकथामिथः ॥ १६ ॥ कृतपुष्पोपहारश्चधूपगंधाधिवासितः ॥ राजमार्गःकृतःश्रीमान्पौरैरामाभिषेचने ॥ १७ ॥ प्रकाशीकरणार्थंचनिशागमनशंकया ॥ दीपवृक्षांस्तथाचक्रुरनुरथ्यासुसर्वशः ॥ १८ ॥ अलंकारंपुरस्यैवंकृत्वातत्पुरवासिनः ॥ आकांक्षमाणारामस्ययौवराज्याभिषेचनम् ॥ १९ ॥ समेत्यसंघशःसर्वेचत्वरेषुसभासुच ॥ कथयंतोमिथस्तत्रप्रशशंसुर्जनाधिपम् ॥ २० ॥ अहोमहात्माराजायमिक्ष्वाकुकुलनंदनः ॥ ज्ञात्वावृद्धंस्वमात्मानंरामंराज्येभिषेक्ष्यति ॥ २१ ॥ सर्वेह्यनुगृहीताःस्मयन्नोरामोमहीपतिः ॥ चिरायभवितागोप्तादृष्टलोकपरावरः ॥ २२ ॥ अनुद्धतमनाविद्वान्धर्मात्माभ्रातृवत्सलः ॥ यथाचभ्रातृषुस्निग्धस्तथास्मास्वपिराघवः ॥ २३ ॥ चिरंजीवतुधर्मात्माराजादशरथोनघः ॥ यत्प्रसादेनाभिषिक्तंरामंद्रक्ष्यामहेवयम् ॥ २४ ॥ एवंविधंकथयतांपौराणांशुश्रुवुः परे ॥ दिग्भ्योविश्रुतवृत्तांताःप्राप्ताजानपदाजनाः ॥ २५ ॥ तेतुदिग्भ्यःपुरींप्राप्ताद्रष्टुंरामाभिषेचनम् ॥ रामस्यपूरयामासुःपुरींजानपदाजनाः ॥ २६ ॥ जनौघैस्तैर्विसर्पद्भिःशुश्रुवेतत्रनिःस्वनः ॥ पर्वसूदीर्णवेगस्यसागरस्येवनिःस्वनः ॥ २७ ॥

॥ १४ ॥ १५ ॥ रामाभिषवः रामाभिषेकः ॥ १६ ॥ १७ ॥ अभिषेकानंतरं गजस्कंधाधिरूढस्य नगरालंकारदर्शनार्थनिर्गमनात् पूर्वं यदि निशा न याति तदा तदलंकारप्रदर्शनार्थं स्वयं रामं द्रष्टुं च दीपवृक्षान् वृक्षवत् नानाशाखान्दीपस्तंभान् । अनुरथ्यासु रथ्यापार्श्वयोः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ अनुगृहीताः ईश्वरेण । दृष्टलोकपरावरः भावप्रधानो निर्देशः । यथावत् अवगततज्जनप्राशस्त्याप्राशस्त्यः ॥२२॥२३॥२४॥ शुश्रुवुः । कथा इति शेषः । श्रुतवृत्तांताः श्रुतरामाभिषेकवृत्तांताः ॥२५॥ ते जानपदाः । रामस्य पुरीमित्यन्वयः ॥२६॥ विसर्पद्भिः प्रवेशार्थम् ॥ २७ ॥

इंद्रक्षयः इंद्रनिवासः अमरावती । आहितैः आगतैरित्यर्थः । हि गतावित्यस्य रूपम् । समुद्रयादोभिः समुद्रतुल्यैः महाद्भिः यादोभिरित्यर्थः ॥ २८ ॥ दर्शमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षष्ठः सर्गः ॥६॥ अथ सीतायाः लंकापुरप्रवेशं विना रावणवधस्यअशक्यतया तत्सिद्ध्ये देवैः प्रेरितायाःकृतकुब्जावेषायाः मंथरायाः रामाभिषेकविघ्नप्रवृत्तिं तद्द्वारागतं कैकेयीवृत्तांतं च वक्तुम्उपक्रमते । ज्ञातीत्यादि । ज्ञातिदासी यतो नित्यमितिपाठे यतः कैकेय्याः ज्ञातेः मातृकुलस्य दासी यतश्च कैकेय्या नित्यं सहोषिता अतो जनकोलाहलं श्रुत्वा कैकेय्यै तदर्थं निवेदयितुं यदृच्छया स्वयमेव नत्वन्यप्रेरणया प्रासादम् आरुरोहेत्यन्वयः । यत्तु अतः कुब्जा क्षिप्रममर्षितेत्यनेन द्वादशश्लोकस्थपदेनान्वयः । स्वीयाभ्युदयस्य सर्वेष्टत्वात् रामाभ्युदयजदुःखेन तद्विघटकःअमर्ष इति कतकः ॥ तन्न ॥ रामाभ्युदयस्यअग्रे धात्रीमुखेन श्रवणस्य वक्ष्यमाणतया तस्यैव च अमर्षहेतुत्वस्य च वक्ष्यमाणतयाअत्रत्यस्य तत्रअन्वयानौचित्यात् । यतो जातेतिपाठे यतो यत्रकुत्रचित्जाता अविज्ञातवेश्ममातापितृकेत्यर्थः । एवं च कैकेयी ज्ञातिदासीत्वमपि कार्यार्थम् उदरभरणव्याजेन स्वकृतम्अस्या इति बोध्यम् । इदं तु युक्तम् । मंथरा नाम कार्यार्थमप्सराः प्रेषिता सुरैः ॥ दासी काचन कैकेय्यै दत्ता केकयभूभृतेति पाद्मोक्तेः ।

ततस्तांदिद्रक्षयसन्निभंपुरंदिदृक्षुभिर्जानपदैरुपाहितैः ॥ समंततःसस्वनमाकुलंबभौसमुद्रयादोभिरिवार्णवोदकम् ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विं० सा० सं० अयोध्याकांडे षष्ठः सर्गः ॥ ६ ॥ ॥ ७ ॥ ज्ञातिदासीयतोजाताकैकेय्यातुसहोषिता ॥ प्रासादंचंद्रसंकाशमारुरोहयदृच्छया ॥ १ ॥ सिक्तराजपथांकृत्स्नांप्रकीर्णकमलोत्पलाम् ॥ अयोध्यांमंथरातस्मात्प्रासादादन्ववैक्षत ॥ २ ॥ पताकाभिर्वराहाभिर्ध्वजैश्चसमलंकृताम् ॥ "कृतांछन्नपथैश्चापिस्वच्छंदकपथैर्वृताम्" ॥ सिक्तांचंदनतोयैश्चशिरःस्नातजनैर्युताम् ॥ ३ ॥ माल्यमोदकहस्तैश्चद्विजेंद्रैरभिनादिताम् ॥ शुक्लदेवगृहद्वारांसर्ववादित्रनादिताम् ॥ ४ ॥ संप्रहृष्टजनाकीर्णांब्रह्मघोषनिनादिताम् ॥ प्रहृष्टवरहस्त्यश्वांसंप्रणर्दितगोवृषाम् ॥५॥ हृष्टप्रमुदितैःपौरैरुच्छ्रितध्वजमालिनीम् ॥ अयोध्यांमंथराहृष्ट्वापरंविस्मयमागता ॥ ६ ॥ साहर्षोत्फुल्लनयनांपांडुरक्षौमवासिनीम् ॥ अविदूरेस्थितांदृष्ट्वाधात्रींपप्रच्छमंथरा ॥ ७॥ उत्तमेनाभिसंयुक्ताहर्षेणार्थपरासती ॥ राममाताधनंकिंनुजनेभ्यःसंप्रयच्छति ॥ ८ ॥ अतिमात्रंप्रहर्षःकिंजनस्यास्यचशंसमे ॥ कारयिष्यतिकिंवापिसंप्रहृष्टोमहीपतिः ॥ ९ ॥

कार्यार्थं रावणवधरूपकार्यार्थं दासी स्वयम्आगत्य केकयराजस्य । जातेति शेषः । नित्यमितिपाठेपि जातेति शेषपूरणेनैव व्याख्योचिता । पाद्मैकवाक्यत्वात् । चंद्रसंकाशम्सुधाधवलितत्वात् ॥ १ ॥ प्रकीर्णानि कमलानि उत्पलानि च यस्याम् तस्मात्सर्वोत्कृष्टात् प्रासादात् प्रासादे स्थित्वेत्यर्थः । ल्यब्लोपे पंचमी ॥ २ ॥ वराहाभिः श्रेष्ठयोग्याभिः । राजयोग्याभिरिति यावत् । एतदुत्तरं कृतां छन्नपथैश्चापि स्वच्छंदकपथैर्वृतामित्यर्धं पठंति । छन्नपथैः निम्नोन्नतप्रदेशमार्गैः कृताम्अलंकृताम् । स्वच्छंदकपथैः उत्सवादिषु जनभूयस्त्वेन प्रवेशनिर्गमार्थं प्राकारादिभंगेन कृतैः मार्गैरिति व्याचक्षते च केचित् । चंदनयुक्ततोयैः सिक्ताम् शिरःस्नातजनैः कृताभ्यंगस्नानैः ॥ ३ ॥ माल्यमोदकहस्तैः दानमाप्तमाल्यमोदकहस्तैः रामोपायनमाल्यमोदकरूपमंगलद्रव्यहस्तैरित्यर्थो वा । सुधाचंदनादिलेपेन शुक्लानि देवगृहद्वाराणि यस्याम् ॥ ४ ॥ ब्रह्मघोषः वेदघोषः प्रहृष्टेत्यादिना तिरश्चामपि रामाभिषेकाद्धर्ष इति सूचितम् ॥ ५ ॥ हृष्टैः जातरोमांचादिभिः मुदितैः आनंदयुक्तैः पौरैः उपलक्षिताम् ॥ ६ ॥ अविदूरे स्वाधिरूढहर्म्यात्यासन्नहर्म्ये । धात्रीम् रामस्येति शेषः । अत एव हर्षोत्फुल्लनयनत्वादि तस्याः वक्ष्यति च हर्षेण विदीर्यमाणेत्यादि ॥७॥ अर्थपरा स्वेष्टार्थपरा । स्वेष्टार्थकामेवेति शेषः । किं नु कस्मात् ॥ ८ ॥ किं कुतः जनस्य प्रहर्षः । अभिषेकप्राग्दिनीयसायंकाले मंथरायाः । तद्दर्शनेन

राजा संप्रहृष्ट इत्युक्तिः ॥ ९ ॥ विदीर्यमाणा अंतर्गतानंदौत्कट्यात् देहपोषमुखविकासादिना तस्याः आनंदस्य बहिःप्रसारणात् विदीर्यमाणत्वोत्प्रेक्षा । राघवे राज्ञा न्यस्यमानां भूयसीं श्रियं राज्यलक्ष्मीम् ॥ १० ॥ अनघं कापि अकारणेर्ष्यादिरहितम् ॥ ११ ॥ अवरोहत अवारुहत् ॥ १२ ॥ क्रोधेन दह्यमाना सैव पापदर्शिनी रामाभिषेके कैकेय्यै भरतविषयपापप्रदर्शिका ॥ १३ ॥ अघौघेन दुःखसमूहेन उपप्लुतं पीडितम् । कारणकार्ययोः पौर्वापर्यविपर्ययरूपाअतिशयोक्तिः । अघं दुरितदुःखयोरितिकोशः ॥ १४ ॥ सुभगाकारे त्वद्विषये सौभाग्यद्योतकाकारवति आकारेणैव तव सौभाग्यादेवस्तुतोऽनिष्टेअप्रियकर्तरि किं सौभाग्येन विकत्थसे मय्येवअनुरक्तः मे स्वामी मदाज्ञावशंवद इत्यादि प्रकारेण वृथा श्लाघसे । उष्णगे ग्रीष्मगे रवौ सति नद्याः स्रोत इव सौभाग्यं चलं रामाभिषेकात् क्षीणप्रायमित्याशयः ॥१५॥ पापदर्शिन्या पापं दर्शयंत्या । विषादम् अगमत् । स्वस्मिन् राजवैरस्योद्भावनात् ॥ १६ ॥ कच्चित् क्षेमं न । मह्यमिति शेषः ॥ १७ ॥ १८ ॥ विषण्णतरा भूत्वा तदाकारेव भूत्वा । अप्सरस्त्वे सर्वज्ञत्वाद्वास्तव

विदीर्यमाणाहर्षेणधात्रीतुपरयामुदा ॥ आचचक्षेथकुब्जायैभूयसींराघवेश्रियम् ॥ १० ॥ श्वःपुष्येणजितक्रोधंयौवराज्येनचानघम् ॥ राजादशरथो राममभिषेक्ताहिराघवम् ॥ ११ ॥ धात्र्यास्तुवचनंश्रुत्वाकुब्जाक्षिप्रममर्षिता ॥ कैलासशिखराकारात्प्रासादादवरोहत ॥ १२ ॥ सादह्यमानाक्रोधेनमंथरापापदर्शिनी ॥ शयानामेवकैकेयीमिदंवचनमब्रवीत् ॥ १३ ॥ उत्तिष्ठमूढेकिंशेषेभयंत्वामभिवर्तते ॥ उपप्लुतमघौघेननात्मानमवबुद्ध्यसे ॥ १४ ॥ अनिष्टेसुभगाकारेसौभाग्येनविकत्थसे ॥ चलंहितवसौभाग्यंनद्याःस्रोतइवोष्णगे ॥ १५ ॥ एवमुक्तातुकैकेयीरुष्टयापरुषंवचः ॥ कुब्जयापापदर्शिन्याविषादमगमत्परम् ॥ १६ ॥ कैकेयीत्वब्रवीत्कुब्जांकच्चित्क्षेमंनमंथरे ॥ विषण्णवदनांहित्वांलक्षयेभृशदुःखिताम् ॥ १७ ॥ मंथरातुवचः श्रुत्वाकैकेय्यामधुराक्षरम् ॥ उवाचक्रोधसंयुक्तावाक्यंवाक्यविशारदा ॥ १८ ॥ साविषण्णतराभूत्वाकुब्जातस्यांहितैषिणी ॥ विषादयंतीप्रोवाचभेदयंतीचराघवम् ॥ १९ ॥ अक्षयंसुमहद्देविप्रवृत्तंत्वद्विनाशनम् ॥ रामंदशरथोराजायौवराज्येभिषेक्ष्यति ॥ २० ॥ सास्म्यगाधेभयेमग्नादुःखशोकसमन्विता ॥ दह्यमानाऽनलेनेवत्वद्धितार्थमिहागता ॥ २१ ॥ तवदुःखेनकैकेयिममदुःखंमहद्भवेत् ॥ त्वद्वृद्धौममवृद्धिश्चभवेदिहनसंशयः ॥ २२ ॥ नराधिपकुलेजातामहिषीत्वंमहीपतेः ॥ उग्रत्वंराजधर्माणांकथंदेविनबुद्ध्यसे ॥ २३ ॥ धर्मवादीशठोभर्ताश्लक्ष्णवादीचदारुणः ॥ शुद्धभावेनजानीषेतेनैवमतिसंधिता ॥ २४ ॥

विषादाभावात् । विषादयंती राज्यश्रियःअन्यगामित्वरूपानिष्टप्रकाशेन कैकेय्याःविषादं जनयंती । भेदयंती राघवं प्रति पुत्रत्वप्रयुक्तं तस्याः स्नेहं नाशयंती ॥ १९ ॥ अक्षयं क्षयः प्रतीकारःअशक्यप्रतीकारमित्यर्थः । त्वद्विनाशनं त्वत्सौभाग्यनाशकारणं प्रवृत्तम् । तदेवाह । राममिति ॥ २० ॥ शत्रोःराज्यलाभात् दुःखम् । स्वेष्टस्य तदलाभात् शोकः । शत्रुराज्यलाभ एव ततो भयम् । त्वद्धितार्थं त्वद्धितबोधनार्थम् ॥ २१ ॥ ननु दास्याः तव कुतो भयम् अत आह तवेत्यादि ॥ २२ ॥ किं मे दुःखम् तत्राह । नराधिपेति । एतद्विशेषणद्वयम् अग्रेपि राजमातृत्वाप्रच्युतये यत्नावश्यकत्वद्योतनाय । ननु रामराज्येपि महिषीत्वं मे दुष्परिहरमित्यत आह । उग्रत्वमिति । सापत्नो हिंसः राज्यलाभे त्वां त्वत्पुत्रं च नाशयिष्यतीति भावः ॥ २३ ॥ ननु राज्ञः रामस्य च अत्यंतं मदनुरक्तत्वात् स मत्पुत्रस्यैव राज्यलाभोत आह ।

धर्मवादीति । वाङ्मात्रेण धार्मिकः श्लक्ष्णवादी च सस्मितमधुरभाषी । अंततस्तु शठः असूयावान् । अत एव दारुणः क्रूरहृदयः । आंतरक्रौर्यगोपनायैव सस्मितमृदुमधुरभाषी । एवंभूतं तं शुद्धभावेनउपलक्षितं जानीषे । सर्वथा तेन एवम् उक्तरीत्या अतिसंधिता वंचिता । असीति शेषः ॥ २४ ॥ उपस्थितः कौशल्यार्थसाधने हृदयेन सावधानः त्वत्समीपे स्थितो वा । उपस्थितमिति पाठे तत्कालोचितसांत्वमित्यर्थः । अनर्थकं फलरहितम् । सांत्वं प्रियवचनं त्वयि प्रयुंजानः अर्थेन राज्यरूपेण कौसल्यामेव योजयिष्यतीत्यन्वयः ॥ २५ ॥ कौसल्यार्थप्रापणार्थमेव तेनउपायांतरमपि अनुष्ठितमित्याह । अपवाह्येति । उद्वास्येत्यर्थः । काल्ये अन्यत्र उपसंक्रमणकालार्हे । कौल्य इति पाठः कुलक्रमागत इत्यर्थे आर्षः ॥ २६ ॥ आत्मनः हितेच्छया त्वया मात्रेव भोजनदानादिना पोषितः आशीविष इव क्रूरः शत्रुः पतिप्रवादेन पतिव्यपदेशेन त्वयाअङ्केन परिधृत इत्यन्वयः ॥ २७ ॥ तद्धरणेन च तेअनर्थः संवृत्त इत्याह । यथेति । प्रत्युपेक्षितः उपेक्षितनाशः ॥ २८ ॥ कथं कृतेत्यत्राह । पापेनेति । अनुबंधः पुत्रादिपरिकरः ॥ २९ ॥ सा त्वं प्राप्तकालं प्राप्तानुष्ठान कालं यत् तव हितं तत् कुरु । विस्मयदर्शने अतिदुःखजनकवार्ताश्रवणेपि स्वेष्टाद्भुतवार्ताश्रवणेनैव विस्मयसूचकदर्शने । एवं विस्मयं हित्वा स्वेष्टं विभावयेति तात्पर्यम् ॥ ३० एवं मंथराया अनर्थत्वेन प्रकाशिते

उपस्थितःप्रयुंजानस्त्वयिसांत्वमनर्थकम् ॥ अर्थेनैवाद्यतेभर्ताकौसल्यांयोजयिष्यति ॥ २५ ॥ अपवाह्यतुदुष्टात्माभरतंतवबंधुषु ॥ काल्येस्थापयितारामंराज्येनिहतकंटके ॥ २६ ॥ शत्रुःपतिप्रवादेनमात्रेवहितकाम्यया ॥ आशीविषइवांगेनबालेपरिधृतस्त्वया ॥ २७ ॥ यथाहिकुर्याच्छत्रुर्वासर्पोवाप्रत्युपेक्षितः ॥ राज्ञादशरथेनाद्यसपुत्रात्वंतथाकृता ॥ २८ ॥ पापेनानृतसांत्वेनबालेनित्यंसुखोचिता ॥ रामंस्थापयताराज्येसानुबंधाहताह्यसि ॥ २९ ॥ साप्राप्तकालंकैकेयिक्षिप्रंकुरुहितंतव ॥ त्रायस्वपुत्रमात्मानंमांचविस्मयदर्शने ॥ ३० ॥ मंथरायावचःश्रुत्वाशयनात्साशुभानना ॥ उत्तस्थौहर्षसंपूर्णाचंद्रलेखेवशारदी ॥ ३१ ॥ अतीवसातुसंतुष्टाकैकेयीविस्मयान्विता ॥ दिव्यमाभरणंतस्यैकुब्जायैप्रददौशुभम् ॥ ३२ ॥ दत्त्वात्वाभरणंतस्यैकुब्जायैप्रमदोत्तमा ॥ कैकेयीमंथरांहृष्टापुनरेवाब्रवीदिदम् ॥ ३३ ॥ इदंतुमंथरेमह्यमाख्यातंपरमंप्रियम् ॥ एतन्मेप्रियमाख्यातंकिंवाभूयःकरोमिते ॥ ३४ ॥ रामेवाभरतेवाहंविशेषंनोपलक्षये ॥ तस्मात्तुष्टास्मियद्राजारामंराज्येऽभिषेक्ष्यति ॥ ३५ ॥ नमेपरंकिंचिदितोवरंपुनःप्रियंप्रियार्हेसुवचंवचोऽमृतम् ॥ तथाह्यवोचस्त्वमतःप्रियोत्तरंवरंपरंतेप्रददामितंवृणु ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये चतुर्विं० सा० सं० अयोध्याकांडे सप्तमःसर्गः ॥ ७ ॥ ॥ छ ॥

रामाभिषेके महाकुलप्रसूता निसर्गकल्याणगुणा सर्वथा तं स्वेष्टार्थमेव मन्यते स्मेत्याह । मंथराया इत्यादि ॥ ३१ ॥ विस्मयः अत्यद्भुतस्वेष्टश्रवणात् । कौसल्यावदेवेति भावः ॥ ३२ ॥ ३३ ॥ प्रियमाख्यातमिति । अस्य पुनरुक्तिः । वक्त्या हर्षातिशयत्वात् न दोषावहा । भूयः अभ्यधिकं किं प्रीतिदानं करोमि । त्वच्छ्रावितप्रियसमाभ्यधिकप्रियवस्त्वभावादित्यर्थः ॥ ३४ ॥ ननु सापत्नश्रेयःश्रुतिः कथं ते प्रियमित्यत्राह । रामे वेति । विशेषं पुत्रत्वप्रयुक्तस्नेहविशेषम् ॥ ३५ ॥ प्रियार्हे प्रियदानार्हे । इतः उक्तात् रामाभिषेकात् वरम् अधिकं प्रियं वचोऽमृतं परम्अन्यत् न सुवचम् । तादृशं हि त्वम् अवोचः यतःअधिकं प्रियं न सुवचम् । अतः प्रियोत्तरं प्रियाख्यानोत्तरं पारितोषिकरूपं परं श्रेष्ठं वरं वृणु । ते तव तं वरं प्रददामि । मया तु स्वबुद्ध्या एतत्प्रियाख्यानपारितोषिकयोग्यं वस्तु न दृश्यते । अतः त्वं यत् वरयिष्यसे तत् दास्यामीत्यर्थः ॥ ३६ ॥ नीलमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तमः सर्गः ॥ ७ ॥ ॥ छ ॥

अथ चलं चित्तं मनुष्याणामिति न्यायेन द्विः त्रिः मंथरया हितवत् उपदेशात् कल्याणमतेरपि कैकेय्याः चित्तं चलितमित्याह । मंथरा त्विति । अभ्यसूय्य असूयाविषयां कृत्वा । हिताश्रवणात् कोपः । एतदहितं जायते इति दुःखम् । तत्समन्वितेव ॥ १ ॥ अस्थाने तदनुचितकाले । बालिशे मूर्खे । शोककाले हर्षोदयात् ॥ २ ॥ मनसेति । अतःइत्यादि । दुःखार्दिता सती तावकदुःखेन पीडिता सती महसामीत्यन्वयः । व्यसनं विपदम् ॥ ३ ॥ मतेःदुष्टत्वं अनर्थकरे प्रियताविषयत्वम् । प्रहर्षयेत् प्रहृष्येत् । अरित्वे हेतुः–सपत्नीपुत्रत्वम् । मृत्योः । वृद्धिमिव तस्य वृद्धिम् । दृष्ट्वेति शेषः ॥ ४ ॥ मृत्योरिवेति व्युत्पादयति । भरतादिति । रामस्य भरतादेव भयम् अस्ति । तत्र हेतुः–राज्यसाधारणात् राज्यरूपसाधारणभोग्यादिति । तत् भरतहेतुकं रामभयम् । हि यतः भीतात् भयं जायते यः यस्मात् भीतः तस्मात् पदस्थात् तस्य भयं भवत्येव । एवं च राज्यस्य निष्कंटकत्वाय स्वभयहेतुं भरतं राज्यं प्राप्य रामः सर्वथा नाशयिष्यतीति भावः ॥ ५ ॥ ननु भरतादेवेति अवधारणम् अयुक्तमत आह । लक्ष्मणो हीति । सर्वात्मना गतः मनोवाक्कायव्यापारैः रामेणऐक्यं गतः । अतः न ततः भीप्रसंगः । शत्रुघ्नस्यापि भरतशेषतया न ततः पृथक् भीप्रसंगः । तन्नाशेनैव तन्नाशादिति भावः ॥ ६ ॥ भरतादेवेति अवधारणे हेत्वंतरमाह । प्रत्यासन्नेति ।

मंथरात्वभ्यसूय्यैनामुत्सृज्याभरणंहितत ॥ उवाचेदंततोवाक्यंकोपदुःखसमन्विता ॥ १ ॥ हर्षंकिमर्थमस्थानेकृतवत्यसिबालिशे ॥ शोकसागरमध्यस्थंनात्मानमवबुध्यसे ॥ २ ॥ मनसाप्रहसामित्वांदेविदुःखार्दितासती ॥ यच्छोचितव्येहृष्टासिप्राप्यत्वंव्यसनंमहत् ॥ ३ ॥ शोचामिदुर्मतित्वंते काहिप्राज्ञाप्रहर्षयेत् ॥ अरेःसपत्नीपुत्रस्यवृद्धिंमृत्योरिवागताम् ॥ ४ ॥ भरतादेवरामस्यराज्यसाधारणाद्भयम् ॥ तद्विचिंत्यविषण्णास्मिभयंभीताद्धिजायते ॥ ५ ॥ लक्ष्मणोहिमहाबाहूरामंसर्वात्मनागतः ॥ शत्रुघ्नश्चापिभरतंकाकुत्स्थंलक्ष्मणोयथा ॥ ६ ॥ प्रत्यासन्नक्रमेणापिभरतस्यैवभामिनि॥ राज्यक्रमोविसृष्टस्तुतयोस्तावद्यवीयसोः ॥ ७ ॥ विदुषःक्षत्रचारित्रेप्राज्ञस्यप्राप्तकारिणः ॥ भयात्प्रवेपेरामस्यचिंतयंतीतवात्मजम् ॥ ८ ॥ सुभगाकिलकौसल्यायस्याःपुत्रोभिषेक्ष्यते ॥ यौवराज्येनमहताश्वःपुष्येणद्विजोत्तमैः ॥ ९ ॥ प्राप्तांवसुमतींप्रीतिंप्रतीतांहतविद्विषम् ॥ उपस्थास्यसिकौसल्यांदासीवत्त्वंकृतांजलिः ॥ १० ॥ एवंचत्वंसहास्माभिस्तस्याःप्रेष्याभविष्यसि ॥ पुत्रश्चतवरामस्यप्रेष्यत्वंहिगमिष्यति ॥ ११ ॥हृष्टाःखलुभविष्यंतिरामस्यपरमाःस्त्रियः ॥ अप्रहृष्टाभविष्यंतिस्नुषास्तेभरतक्षये ॥१२॥ तांदृष्ट्वापरमप्रीतांब्रुवन्तींमंथरांततः ॥ रामस्यैवगुणान्देवीकैकेयीप्रशशंसह ॥ ॥ १३ ॥ धर्मज्ञोगुणवान्दांतःकृतज्ञःसत्यवाञ्छुचिः ॥ रामोराजसुतोज्येष्ठोयौवराज्यमतोर्हति ॥ १४ ॥

प्रत्यासन्नः यः क्रमः उत्पत्तिक्रमः । तेनापि हेतुना भरतस्यैव राज्यक्रमः तदाक्रमणं प्रसक्तम् । तयोस्तु यवीयस्त्वात् स विसृष्टः दूरत्यक्त इत्यर्थः ॥ ७ ॥ पुनः रामात् भयमुपसंहरति । विदुष इति । विदुषः सर्वशास्त्रज्ञस्य विशिष्य क्षत्रचारित्रे बलसंपाद्ये संधिविग्रहादिप्रयोगे च प्राज्ञस्य प्राप्तकारिणः अविलंबेन कालोचितकर्तव्यार्थकारिणः रामस्य त्वदात्मजं प्रति भाव्यनर्थं चिंतयंती तन्निमित्तात् भयात् प्रवेपे चकंपे ॥ ८ ॥ एवं पुत्रानर्थं प्रदर्श्य तस्या अपि अनर्थं दर्शयितुं कौसल्यार्थमाह । सुभगेति । यौवराज्येनेति । हेतौ तृतीया । पुष्येण पुष्ये ॥ ९ ॥ वसुमतीं प्राप्तां तत्प्राप्तिनिमित्तां प्रीतिं च प्राप्ताम् हताःयुष्मदादिसपत्नीरूपाः विद्विषः यया ताम् । अत एव प्रतीतां प्रसिद्धाम् उपस्थास्यसि गत्वा सेविष्यसे ॥ १० ॥ अयम् अनर्थः ममापीत्याह । एवंचेति ॥ ११ ॥ परमाः स्त्रिय इति । बहुवचनेन सीतासख्यः । भरतक्षये भरतप्रभावनाशे ॥ १२ ॥ एवं द्विःकृतोपतापापि कैकेयी निसर्गपुण्यस्वभावात् न चचालेत्याह । तामित्यादि ॥ परमप्रीतां परं रामेअप्रीतामित्यर्थः । देवी पुण्यस्वभावा ॥ १३ ॥ मंथरोक्तयुक्तीः प्रतिक्षिपति ।

धर्मज्ञ इति दांतः शिक्षितः । कृतज्ञ इति । अनेन बाल्ये स्वकृतपालनाद्युपकारस्मरणेन स्वानिष्टशंकानिरासः । ज्येष्ठ इति । अनेन तस्यैव राज्ययोग्यतेति साधारण्यं परिहृतम् ॥ १४ ॥ भरतानर्थोपि नेत्याह । भ्रातॄनिति । कथं व्यर्थमेवेत्यर्थः ॥ १५ ॥ पितृवत् भ्रातॄन् अविभागेन पालयतः रामस्य वर्षशतात् परमपि यदा विभागेच्छा तदा भरतः राज्यम्अवाप्स्यति । ध्रुवापिशब्दाभ्यां लक्ष्मणशत्रुघ्नयोरपि राज्यप्राप्तिः ध्रुवेति सूचितम् ॥ १६ ॥ अभ्युदये रामाभिषेकरूपे उत्सवे । कल्याणे भरताभिषेकरूपे । कियता कालेन भविष्यति ॥ १७ ॥ मान्यः प्रार्थनीयश्रेयस्कः । तथा तद्वत । यद्वा भूयोपि अभ्यधिकमपि । तत्र हेतुः—कौसल्यात इति । अतिरिक्तम् अधिकम् ॥ १८ ॥ संप्रत्यपि भरतस्य राज्यम् अस्त्येवेत्याह राज्यमिति ॥ १९ ॥ एवं राज्यापहारं परिहृतवतीं कैकेयीं मंथरा तृतीयपर्यायेण पुनर्भेदयति । कैकेय्या इति ॥ २० ॥ अनर्थदर्शिनी अर्थस्यैव अनर्थत्वेन दर्शनशीला । शोकः इष्टवियोगजः । अनिष्टाप्तिजं दुःखं व्यसनम् ।

भ्रातॄन्भृत्यांश्चदीर्घायुःपितृवत्पालयिष्यति ॥ संतप्यसेकथंकुब्जेश्रुत्वारामाभिषेचनम् ॥ १५ ॥ भरतश्चापिरामस्यध्रुवंवर्षशतात्परम् ॥ पितृपैतामहं राज्यमवाप्स्यतिनरर्षभः ॥१६॥ सात्वमभ्युदयेप्राप्तेदह्यमानेवमंथरे ॥ भविष्यतिचकल्याणेकिमिदंपरितप्यसे ॥ १७॥ यथावैभरतोमान्यस्तथाभूयोपिराघवः ॥ कौसल्यातोतिरिक्तंचममशुश्रूषतेबहु ॥ १८ ॥ राज्यंयदिहिरामस्यभरतस्यापितत्तदा ॥ मन्यतेहियथात्मानंतथाभ्रातॄंस्तुराघवः ॥१९॥ कैकेय्यावचनंश्रुत्वामंथराभृशदुःखिता ॥ दीर्घमुष्णंविनिःश्वस्यकैकेयीमिदमब्रवीत् ॥ २० ॥ अनर्थदर्शिनीमौर्ख्यान्नात्मानमवबुद्ध्यसे ॥ शोकव्यसनविस्तीर्णेमज्जंतीदुःखसागरे ॥ २१ ॥ भविताराघवोराजाराघवस्यचयःसुतः ॥ राजवंशात्तुभरतःकैकेयिपरिहास्यते ॥ २२ ॥ नहिराजसुताःसर्वेराज्येतिष्ठंतिभामिनि ॥ स्थाप्यमानेषुसर्वेषुसुमहाननयोभवेत् ॥ २३ ॥ तस्माज्ज्येष्ठेहिकैकेयिराज्यतंत्राणिपार्थिवाः ॥ स्थापयंत्यनवद्यांगिगुणवत्स्वितरेष्वपि ॥ २४ ॥ असावत्यंतनिर्भग्नस्तवपुत्रोभविष्यति ॥ अनाथवत्सुखेभ्यश्चराजवंशाच्चवत्सले ॥ २५ ॥ साहंत्वदर्थेसंप्राप्तात्वंतुमांनावबुध्यसे ॥ सपत्निवृद्धौयामेत्वंप्रदेयंदातुमर्हसि ॥ २६ ॥ ध्रुवंतुभरतंरामःप्राप्यराज्यमकंटकम् ॥ देशांतरंनाययितालोकांतरमथापिवा ॥ २७ ॥ बालएवतुमातुल्यंभरतोनायितस्त्वया ॥ सन्निकर्षाच्चसौहार्दंजायतेस्थावरेष्विव ॥ २८ ॥

ताभ्यां विस्तीर्णे व्याप्ते सकलदुःखसमष्टिः दुःखसागरः तत्र मज्जंती त्वम् आत्मानं नावबुद्ध्यसे इत्यर्थः ॥ २१ ॥ कुतः एवं वारं वारं कथयसीत्यत्राह । भवितेति । परिहास्यते हीनो भविष्यति । भरतत्सुतादेः राज्यहान्याएवं दुःखं कथयामीति भावः ॥ २२ ॥ तत्र हेतुमाह । न हीति । सर्वेषां राज्ये स्थितौ बाधकमाह । स्थाप्यमानेष्विति । अनयः अन्यायः ईर्ष्यया परस्परप्रजापीडनरूपः ॥ २३ ॥ राज्यतंत्राणि राज्यनिर्वहणक्षमाधिकारप्राधान्यानि । सर्वनिरूपितप्राधान्याश्रयत्वम् एकस्यैवेति भावः । ज्येष्ठस्यअगुणवत्वे तु गुणवत्कनीयःस्वपि ॥ २४ ॥ यदेवम् अतः असाविति । निर्भग्नः हीनः सुखेभ्यो राजवंशाच्च निर्भग्नः भविष्यतीत्यन्वयः । वत्सले सर्वत्र दयाशीले ॥ २५ ॥ त्वदर्थे त्वत्पुत्रराज्यभ्रंशे प्राप्ते तत्परिहारकथनार्थम् । सपत्निवृद्धाविति । आर्षःह्रस्वः । प्रदेयं पारितोषिकम् अतः मांत्वम्अलुब्धा स्वहिते इति न बुद्ध्यसे इत्यर्थः ॥ २६ ॥ नाययिता । लुट् । लोकांतरमिति । हनिष्यतीति यावत् ॥ २७ ॥ यस्तु रामे राज्ञः पक्षपातः सः भरतासन्निधानतः । तच्च त्वयैव कृतमित्याह बाल एवेति । मातुल्यं

मातुलगृहम् । ननु किं तावता अत आह सन्निकर्षादिति । स्थावरेषु तृणगुल्मलतावृक्षादिषु तत्र सौहार्दम् अन्योन्याश्लेषरूपम् । एवं च भरतस्थितौ विभज्य समं राज्यलाभः स्यादिति भावः ॥ २८ ॥ शत्रुघ्न स्थितौ वा भरतकार्यस्य न नाशः स्यात सोपि दैववशाद्गत इत्याह । भरतानुवशादिति । शत्रुघ्नोपि समं गत इति पाठे अनुवशात् अनुरोधवशादित्यर्थः । आद्योपिरत्रैव योज्यः । अनुवशादपि । अपिना दैववशा च्चेत्यर्थः । गतः एकहृदयतयेति शेषः ॥ २९ ॥ कस्यचित् सन्निकर्षात् कस्यचिदनर्थनिवृत्तिः लोकदृष्टेत्यत आह । श्रूयते हीति । छेत्तव्यः माप्तच्छेदनकालः । इषीकाभिः कंटकबहुलगुल्मैः सन्निकर्षात् परितः परिवारणरूपात् । भयात् छेदनरूपात् स्वस्य सदांतःपुरवर्तित्वेन श्रूयते हीति उक्तिः ॥ ३० ॥ नन्वेष दोषः लक्ष्मणस्यापि समानः अत आह गोप्ता हीति ॥ ३१ ॥ पापं वधम् ॥ ३२ ॥ तस्मात् वधसंभावनासत्वात् राजगृहात् राजगृहाख्यातमातुलनगरात् । एतदेव मह्यं रोचतेत्वदिष्टत्वात् । एकपुत्रायाः पुत्रमरणापेक्षया वने पुत्रजीवनं सम्यक् । तदेवाह भृशं तव हितमेतत् । जीवन्भद्राणि पश्यतीति न्यायात् ॥ ३३ ॥ एवम् एवं सति मातुलगृहादेव वनगमने सति ते ज्ञातिपक्षस्यअस्मदादेः श्रेयश्च भविष्यत्येव । श्रेयः जीवनरूपं कल्याणं चात्सुखम् । भरतात्वनस्थादपि । भयशंकयाअस्मदादिपीडायाः कर्तुम्

भरतानुवशात्सोपिशत्रुघ्नस्तत्समंगतः ॥ लक्ष्मणोहियथारामंतथायंभरतंगतः ॥ २९ ॥ श्रूयतेहिद्रुमःकश्चिच्छेत्तव्योवनजीवनैः ॥ सन्निकर्षादिषीकाभिर्मोचितःपरमाद्भयात् ॥ ३० ॥ गोप्ताहिरामंसौमित्रिर्लक्ष्मणंचापिराघवः ॥ अश्विनोरिवसौभ्रात्रंतयोर्लोकेषुविश्रुतम् ॥ ३१ ॥ तस्मान्नलक्ष्मणे रामःपापंकिंचित्करिष्यति ॥ रामस्तुभरतेपापंकुर्यादेवनसंशयः ॥ ३२ ॥ तस्माद्राजगृहादेववनंगच्छतुराघवः ॥ एतद्धिरोचतेमह्यंभृशंचापिहितंतव ॥ ३३ ॥ एवंतेज्ञातिपक्षस्यश्रेयश्चैवभविष्यति ॥ यदिचेद्भरतोधर्मात्पित्र्यंराज्यमवाप्स्यति ॥ ३४ ॥ सतेसुखोचितोबालोरामस्यसहजोरिपुः ॥ समृद्धार्थस्यनष्टार्थोजीविष्यतिकथंवशे ॥ ३५ ॥ अभिद्रुतमिवारण्येसिंहेनगजयूथपम् ॥ प्रच्छाद्यमानंरामेणभरतंत्रातुमर्हसि ॥ ३६ ॥ दर्पान्निराकृतापूर्वं त्वयासौभाग्यवत्तया ॥ राममातासपत्नीतेकथंवैरंनयापयेत् ॥ ३७ ॥ यदाचरामःपृथिवीमवाप्स्यतेप्रभूतरत्नाकरशैलसंयुताम् ॥ तदागमिष्यस्यशुभं पराभवंसहैवदीनाभरतेनभामिनि ॥ ३८ ॥ यदाहिरामःपृथिवीमवाप्स्यतेध्रुवंप्रणष्टोभरतोभविष्यति ॥ अतोहिसंचिंतयराज्यमात्मजेपरस्यचैवास्य विवासकारणम् ॥ ३९ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये चतुर्विं० सा० सं० अयोध्याकांडे अष्टमःसर्गः ॥ ८ ॥ ॥ छ ॥ ॥

अशक्यत्वादिति भावः । यदि चेदिति । यदि वेत्यर्थः । धर्मात् पितृक्रियमानत्वरूपात् तदावा ज्ञातिपक्षस्य श्रेय इत्यर्थः । यद्वा एवमेव ते पक्षस्य श्रेयः भविष्यति । एवमेवेति एतदुपपादयति । यदि चेति ॥ ३४ ॥ अन्यथा दुःखमेवेत्याह सते इति । समृद्धार्थस्य रामस्य वशे स्थितो नष्टार्थः कथं जीविष्यतीत्यर्थः ॥ ३५ ॥ तस्मात् अरण्ये सिंहेनअभिद्रुतं गजयूथपमिव राज्यप्राप्त्या प्रबलेन रामेण प्रच्छाद्य मानम्अभिभूयमानं भरतं तदभिषेकनिरोधेन त्रातुमर्हसि ॥ ३६ ॥ अन्यथा तवाप्यनर्थ इत्याह । दर्पादिति । सौभाग्यवत्ता पतिवात्सल्यम् । वैरयापनं वैरशुद्धिं त्वयि दास्यसंपादनेन कथं न कुर्यादित्यर्थः । पातयेदिति पाठेपिअयमेवार्थः ॥ ३७ ॥ अशुभं पराभवं दास्यम् ॥ ३८ ॥ एवं, यतः सपुत्रायाः तेअनर्थः । अत एवाआत्मजे राज्यं राज्यप्राप्तिकारणं संचिंतय । शत्रुशेषो न स्थाप्य इति न्यायेन परस्य अस्य रामस्य । चात्लक्ष्मणसीतयोः । विवासकारणं च चिंतय ॥ ३९ ॥ धेलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टमः सर्गः ॥ ८ ॥

एवं त्रिवारोपदेशेन दुष्टे असत्ये एव अर्थे उपादेयत्वसत्वनिश्चयात् स्वकार्याय देवैश्च क्षुभितचित्तायाः । तदुपायमश्नमाह एवमिति ॥ १ ॥ प्रस्थापयामि प्रस्थापनोद्यमं करोमि । एवम् अभिषेचये इत्यपि ॥ २ ॥ अथ तदुपायं पृच्छति । इदं त्विति । उत्तरार्धार्थे केनउपायेन साधये। इदम् इदानीं संपश्य विचारय । उत्साहमात्रेण नेदं साध्यमितिभावः ॥ ३ ॥रामार्थं लोकदृष्ट्या रामहितम् अभिषेकरूपम् अर्थम् । ॥ ४ ॥ त्वं प्रपश्य । मत्सामर्थ्यमिति शेषः । प्रवक्ष्यामीतिपाठांतरम् । श्रूयतां मद्वच इति शेषः । चस्त्वर्थे । केवलं भरतः न तु राम इत्यर्थः। यद्वाहं वक्ष्याम्येवोपायंत्वमपि प्रपश्य विचारय ॥ ५ ॥ ननु मम न प्रतिभाति तदुपाय इति तत्राह । किं नेति । स्मृत्वा वा संमतये मन्मुखात् श्रवणाय निगूहसे । यत् यतः आत्मार्थमात्मप्रयोजनोपायं उच्यमानम् । वर्तमानसामीप्ये लट् । त्वयाअनेकशः उक्तमपि

एवमुक्तातुकैकेयीक्रोधेनज्वलितानना ॥ दीर्घमुष्णंविनिःश्वस्यमंथरामिदमब्रवीत् ॥ १ ॥ अद्यराममितःक्षिप्रंवनंप्रस्थापयाम्यहम् ॥ यौवराज्ये नभरतंक्षिप्रमद्याभिषेचये ॥ २ ॥ इदंत्विदानींसंपश्यकेनोपायेनसाधये ॥ भरतःप्राप्नुयाद्राज्यंनतरामःकथंचन ॥ ३ ॥ एवमुक्तातुसादेव्यामंथरा पापदर्शिनी ॥ रामार्थमुपहिंसंतीकैकेयीमिदमब्रवीत् ॥ ४ ॥ हंतेदानींप्रपश्यत्वंकैकेयिश्रूयतांवचः ॥ यथातेभरतोराज्यंपुत्रःप्राप्स्यतिकेवलम् ॥ ५ ॥ किंनस्मरसिकैकेयिस्मरंतीवानिगूहसे ॥ यदुच्यमानमात्मार्थमत्तस्त्वंश्रोतुमिच्छसि ॥ ६ ॥ मयोच्यमानंयदितेश्रोतुंछंदोविलासिनि ॥ श्रूयताम भिधास्यामिश्रुत्वाचैतद्विधीयताम् ॥ ७ ॥ श्रुत्वैवंवचनंतस्यामंथरायास्तुकैकयी ॥ किंचिदुत्थायशयनात्स्वास्तीर्णादिदमब्रवीत् ॥ ८ ॥ कथयस्व ममोपायंकेनोपायेनमंथरे ॥ भरतःप्राप्नुयाद्राज्यंनतुरामःकथंचन ॥ ९ ॥ एवमुक्तातदादेव्यामंथरापापदर्शिनी ॥ रामार्थमुपहिंसंतीकैकेयी मिदमब्रवीत् ॥ १० ॥ पुरादेवासुरेयुद्धेसहराजर्षिभिःपतिः ॥ आगच्छत्त्वामुपादायदेवराजस्यसाह्यकृत् ॥ ११ ॥ दिशमास्थायकैकेयिदक्षिणां दंडकान्प्रति ॥ वैजयंतमितिख्यातंपुरंयत्रातिमिध्वजः ॥ १२ ॥ सशंबरइतिख्यातःशतमायोमहासुरः ॥ ददौशक्रस्यसंग्रामंदेवसंघैरनिंदितः ॥ १३ ॥ तस्मिन्महतिसंग्रामेपुरुषान्क्षतविक्षतान् ॥ रात्रौप्रसुप्तान्घ्नंतिस्मतरसाऽपास्यराक्षसाः ॥ १४ ॥ तत्राकरोन्महायुद्धंराजादशरथस्तदा ॥ असुरै श्चमहाबाहुःशस्त्रैश्चशकलीकृतः ॥ १५ ॥ अपवाह्यत्वयादेविसंग्रामान्नष्टचेतनः ॥ तत्रापिविक्षतःशस्त्रैःपतिस्तेरक्षितस्त्वया ॥ १६ ॥

मत्तः श्रोतुमिच्छसि ॥ ६ ॥ छंदः इच्छा । विधीयतां क्रियतां विमृश्य युक्तं चेत्क्रियताम् ॥ ७ ॥ श्रवणे अनुष्ठाने च उत्साहं दर्शयति । उत्थायेत्यादि ॥ ८ ॥ ९ ॥ १० ॥ देवासुरे देवासुरसंबंधिनि । उपादाय गृहीत्वा । साह्यं सहायत्वम् ॥ ११ ॥ दक्षिणां दिशम्आस्थाय स्थितान्दंडकान् जनपदान्प्रति तत्संबंधि वैजयंतमिति पुरं ख्यातम् यत्र तिमिध्वजो नाम राजा अभवत् ॥ १२ ॥ स एव लोके शंबर इति ख्यातः । देवसंघैः सहितस्य शक्रस्य ॥ १३ ॥ क्षतैः अस्त्रशस्त्रवेधैः विक्षतान्विशेषेण विद्धान् रात्रौ प्रसुप्तान् दिनकृतयुद्धश्रांत्या । अपास्य आस्तरणात् आकृष्य ॥ १४ ॥ तत्र तद्राक्षसैः शकलीकृतः सर्वांगेषु विक्षतः ॥ १५ ॥ त्वया सारथ्यं कुर्वाणया अपवाह्य संग्रामात् अन्यत्र नीत्वा तत्रापि तादृशापत्कालेपि शस्त्रैर्विक्षतः अत एव नष्टचेतनः मूर्च्छितः ते पतिः त्वया रक्षित इत्यन्वयः । केचित्तु संग्रामात्

अपवाह्य मूर्च्छितः ते पतिः त्वया रक्षितः । तत्रापि दूरपातिभिः असुरीयैः शस्त्रैः विक्षतः ततोऽपिअन्यत्रअपवाह्य रक्षितः । एवं द्विःप्राणरक्षणतोषेण वरद्वयदानमित्याहुः ॥ १६ ॥ तेन राज्ञा यत् यदा इच्छेयं भर्तः तदा वरं गृह्णीयां तु इत्यन्वयः ॥ १७ ॥ तदा महात्मना राज्ञा तथेति उक्तम् । अनभिज्ञा । अस्याः कथाया इति शेषः ॥ १८ ॥ निगृह्य भर्तारं वरबलेन निगृह्य अभिषेकसंभारात् निवर्तय । अभिषेकरूपफलादिति शेषः ॥ १९ ॥ निवृत्तिप्रकारमाह । ताविति । तेन च दाने अनुमते ताभ्यां क्रमेण भरताभिषेचनरामप्रव्राजने । वृणु इति शेषः ॥ २० चतुर्दशसंख्याफलमाह । चतुर्दशेति । प्रजानां भावें अन्तःकरणे गतः प्राप्तः स्नेहः यस्य तादृशः ते पुत्रः स्थिरः राज्ये भविष्यति ॥ २१ ॥ वरदानप्रवर्तनोपायमाह । क्रोधागारमिति । क्रोधवतीनां शयनस्थानं क्रोधागारम् । क्रुद्धेव इवशब्दः एवार्थे । क्रुद्धैव सती उक्तं क्रोधहेतुं शतशः अन्यथा तत्सांत्वनेपि अविस्मरंती । तदेव विवृणोति । शेष्वेति । अनास्तृतायां भूमौ शेष्वेत्यर्थः । मलिनवासिनी मलिनवस्त्रधरा सती ॥ २२ ॥ रुदंतीति । अस्य

तुष्टेनतेनदत्तौतेद्वौवरौशुभदर्शने ॥ सत्वयोक्तःपतिर्देवियदिच्छेयंतदावरम् ॥ १७ ॥ गृह्णीयांतुतदाभर्तस्तथेत्युक्तंमहात्मना ॥ अनभिज्ञाह्यहंदेवि त्वयैवकथितंपुरा ॥ १८ ॥ कथैषातवतुस्नेहान्मनसाधार्यतेमया ॥ रामाभिषेकसंभारान्निगृह्यविनिवर्तय ॥ १९ ॥ तौचयाचस्वभर्तारंभरतस्याभिषेचनम् ॥ प्रव्राजनंचरामस्यवर्षाणिचचतुर्दश ॥ २० ॥ चतुर्दशहिवर्षाणिरामेप्रव्राजितेवनम् ॥ प्रजाभावगतस्नेहःस्थिरःपुत्रोभविष्यति ॥२१॥ क्रोधागारंप्रविश्याद्यक्रुद्धेवाश्वपतेःसुते ॥ शेष्वानंतर्हितायांत्वंभूमौमलिनवासिनी ॥ २२ ॥ मास्मैनंप्रत्युदीक्षेथामाचैनमभिभाषथाः ॥ रुदंतीपार्थिवंदृष्ट्वाजगत्यांशोकलालसा ॥ २३ ॥ दयितात्वंसदाभर्तुरत्रमेनास्तिसंशयः ॥ त्वत्कृतेचमहाराजोविशेदपिहुताशनम् ॥ २४ ॥ नत्वांक्रोधयितुंशक्तोनक्रुद्धांप्रत्युदीक्षितुम् ॥ तवप्रियार्थंराजातुप्राणानपिपरित्यजेत् ॥ २५ ॥ नह्यतिक्रमितुंशक्तस्तववाक्यंमहीपतिः ॥ मंदस्वभावेबुध्यस्वसौभाग्यबलमात्मनः ॥ २६ ॥ मणिमुक्तासुवर्णानिरत्नानिविविधानिच ॥ दद्याद्दशरथोराजामास्मतेप्रुमनःकृथाः ॥ २७ ॥ यौतौदेवासुरेयुद्धेवरौदशरथोददौ ॥ तौस्मारयमहाभागेसोर्थोनत्वाक्रमेदति ॥ २८ ॥ यदातुतेवरंदद्यात्स्वयमुत्थाप्यराघवः ॥ व्यवस्थाप्यमहाराजंत्वमिमंवृणुयावरम् ॥ २९ ॥ रामप्रव्रजनंदूरंनववर्षाणिपंचच ॥ भरतःक्रियतांराजापृथिव्याःपार्थिवर्षभ ॥ ३० ॥ चतुर्दशहिवर्षाणिरामेप्रव्राजितेवनम् ॥ रूढश्चकृतमूलश्चशेषंस्थास्यतितेसुतः ॥ ३१ ॥

भवेति शेषः । तं दृष्ट्वेति पूर्वार्धान्वयि ॥ २३ ॥ एवं सति सर्वथा कार्यसिद्धिः भवत्येवेत्याह । दयितेति । त्वत्कृते त्वत्प्रीणननिमित्तम् ॥ २४ ॥ २५ ॥ ननु उक्तमपि वाक्यं राजा चेत् न शृणुयात् तदा महती हानिः स्यात् । तत्राह न हीति । स्वसौभाग्यवैभवविस्मरणमूलिका ते एषा मदाशंकेति भावः ॥ २६ ॥ वरदानातिरिक्तमनुनयं मा स्वीकुर्वित्याह । मणीत्यादि ॥ २७ ॥ सर्वानुनयानंगीकारे तर्हि दासेन मया किं कर्तव्यमिति राजप्रश्ने उत्तरमुपदिशति । याविति । सोर्थः रामविवासनभरताभिषेकरूपोर्थः त्वा त्वामित्यर्थः । मा त्वेति पाठे मा अतिक्रमेत् तम् अर्थं मा विस्मरेत्यर्थः । नातिक्रामेदतीति पाठे सर्वथा सिद्ध्यत्येव । राज्ञः सत्यप्रतिज्ञत्वात् इत्याशय इति कतकः ॥ २८ ॥ राघवः दशरथः । उत्थाप्य । त्वामिति शेषः । ते तुभ्यम् । तदा त्वं महाराजं व्यवस्थाप्य शपथैः सत्ये स्थापयित्वा ॥ २९ ॥ वरमभिनयति । रामेति ॥ ३० ॥ सर्वथा प्रव्राजनस्य अतिघोरतया लोकविरुद्धत्वं मत्वाह । चतुर्दशेति । यथा चतुर्दशवर्षं पालितः प्ररूढशाखः कृतमूलः दृढमूलः वृक्षः दुरुन्मूलः

भवति । एवं भरतः तावता कालेन रूढः दृढराज्यः कृतमूलः वशीकृतमूलबलः चतुर्दशोत्तरशेषायुःकालं स्थास्यत्येव न तु पुनरागतेनापि रामेण शक्योन्मूलनः भविष्यति । न च रामस्य राज्यप्रत्याशेति तात्पर्यम् ॥ ३१ ॥ तं राजानम् ॥ ३२ ॥ रामः अराम इति छेदः । अप्रियः प्रजानां भविष्यतीत्यर्थः ॥ ३३ ॥ अंतर्बहिश्च । प्रकृतीनामिति शेषः । चिरसंयोगात् भरते स्नेहानां वृद्धिः चिरविप्रयोगतश्च रामे स्नेहनाश इति भावः ॥ ३४ ॥ कृतमूलत्वमेव विवृणोति । संगृहीतेति । सम्यक् पालनेन अनुरंजितमनुष्य इत्यर्थः । सुहृद्भिः साकं कृतमूलः भविष्यतीति पूर्वेणान्वयः । अभिषेकतः निवर्तनं प्राप्तकालं मन्ये इत्यर्थः । अभिषेकनिवर्तनस्य अयमेव काल इति भावः । तस्मात् राजानं तदभिषेकात् निवर्तयेत्यन्वयः ॥ ३५ ॥ ३६ ॥ प्रतीता अंगीकृततदर्था कैकेयी केकयराजकन्या किशोरी बालवत्सा वडवा सा यथा स्वकिशोरार्थे उत्पथं गच्छति कशाहस्तेन आरूढापि तथाइयं राजाधीनापि भरतार्थे उन्मार्गं गतेत्यर्थः ॥ ३७ ॥ परं विस्मयं प्राप्ता परमदर्शना अत्यंतविशेषदर्शनवती । यद्वा परम् अत्यर्थम् अदर्शना विरुद्धदर्शना मंथराम् इदम् अब्रवीदित्यन्वयः । अत्र कैकेयी तन्नामिका । हे श्रेष्ठाभिधायिनि । हितोपदेशकुशले इति यावत् । अत एव ते प्रज्ञां नावजानामीत्यर्थः । कुब्जे त्वां नाभिजानामीति पाठे श्रेष्ठा

रामप्रव्राजनंचैवदेवियाचस्वतंवरम् ॥ एवंसेत्स्यंतिपुत्रस्यसर्वार्थास्तवकामिनि ॥ ३२ ॥ एवंप्रव्राजितश्चैवरामोऽरामोभविष्यति ॥ भरतश्चगतामित्रस्तवराजाभविष्यति ॥ ३३ ॥ येनकालेनरामश्चवनात्प्रत्यागमिष्यति ॥ अंतर्बहिश्चपुत्रस्तेकृतमूलोभविष्यति ॥ ३४ ॥ संगृहीतमनुष्यश्चसुहृद्भिःसाकमात्मवान् ॥ प्राप्तकालंनुमन्येहंराजानंवीतसाध्वसा ॥ ३५ ॥ रामाभिषेकसंकल्पान्निगृह्यविनिवर्तय ॥ अनर्थमर्थरूपेणग्राहितासाततस्तया ॥ ॥ ३६ ॥ हृष्टाप्रतीताकैकेयीमंथरामिदमब्रवीत् ॥ साहिवाक्येनकुब्जायाःकिशोरीवोत्पथंगता ॥ ३७ ॥ कैकेयीविस्मयंप्राप्यपरंपरमदर्शना ॥ प्रज्ञांतेनावजानामिश्रेष्ठेश्रेष्ठाभिधायिनि ॥ ३८ ॥ पृथिव्यामसिकुब्जानामुत्तमाबुद्धिनिश्चये ॥ त्वमेवतुममार्थेषुनित्ययुक्ताहितैषिणी ॥ ३९ ॥ नाहंसमवबुद्ध्येयंकुब्जेराज्ञश्चिकीर्षितम् ॥ संतिदुःसंस्थिताःकुब्जेवक्राःपरमपापिकाः ॥ ४० ॥ त्वंपद्ममिववातेनसन्नताप्रियदर्शना ॥ उरस्तेभिनिविष्टंवैयावत्स्कंधात्समुन्नतम् ॥ ४१ ॥ अधस्ताच्चोदरंशांतंसुनाभमिवलज्जितम् ॥ प्रतिपूर्णंचजघनंसुपीनौचपयोधरौ ॥ ४२ ॥

भिधायिनीत्यादिविशिष्टां नाज्ञासिषमित्यर्थः ॥ ३८ ॥ कुब्जानां कुब्जत्वविशिष्टराजदासीनां मध्ये बुद्धिनिश्चये बुद्धिविषयकार्याकार्यनिश्चये उत्तमा । ईदृश्य एव दास्यः राजपत्नीनाम् इष्टाः । सुरूपासु सापत्न्यस्फूर्तेः । श्रेष्ठत्वमभिधाय श्रेष्ठाभिधायिनीत्वमुपपादयति । त्वमेवेति । हितैषिणी इच्छापूर्वं हितवक्त्री ॥ ३९ ॥ समवबुद्ध्येयम् । त्वत्कृतबोधनाभावे इति शेषः । चिकीर्षितं रामाभिषेकाय भरतस्य विवासनादि । कैकेय्याः एवं मतिकारणं कश्चित्पठ्यते—न हि तद्बुधे पापं शापदोषेण मोहिता ॥ केकयेषु हि सा बाल्ये ब्राह्मणं रूक्षरूपिणम् ॥ असूयितवती बाला तेन शप्ता महात्मना ॥ यस्मादसूयसे विप्रं त्वं रूपमददर्पिता ॥ तस्मादसूयां त्वमपि लोके प्राप्स्यसि कुत्सिताम् ॥ इति शापसमाच्छन्ना मंथरावशमागतेति ॥ असूयां असूयाविषयताम् ॥ अथ कुब्जां कुब्जांतरवैलक्षण्येन स्तौति । संतीत्यादि । त्वद्व्यतिरिक्ता इति शेषः । दुःसंस्थिताः दुःसंस्थावयवसन्निवेशाः । अत एव परमपापिकाः परमपापदर्शनाः ॥ ४० ॥ नैवं त्वमित्याह । त्वमिति । वातेन सन्नतं पद्ममिव त्वं सन्नतापि प्रियदर्शना । ते उरः वक्षः अभिनिविष्टं स्थगुना व्याप्तम् अत एव यावत्स्कंधात् स्कंधपर्यंतम् उन्नतम् उरः । यावत्संस्थानमुन्नतमिति पाठे स्तनावधि, समस्थानरूपसर्वसाधारणसंस्थानं यावत्समुन्नतम् एतेन स्थगुमत् कुब्जात्वं प्रतिपादितम् ॥ ४१ ॥ अधस्तात् वक्षसः

अधस्तात् शोभननाभिमत् उदरं लज्जितमिव शांतम् उरसः उन्नतिं दृष्ट्वा लज्जितमिव कृशमित्यर्थः । प्रतिपूर्णं विस्तीर्णम् ॥ ४२ ॥ हर्षातिशयात् वर्णितमपि जघनं पुनः वर्णयति । जघनमिति । निर्मृष्टं रोमादिकश्मलहीनम् । निघुष्टमिति पाठे रशनास्थक्षुद्रघंटाभिः शब्दायमानम् ॥ ४३ ॥ उपन्यस्ते । जान्वोरिति शेषः । यद्वा लोकैः स्तुते सुंदरत्वेन सक्थिनी पृष्ठफलके इति कतकः ॥ ४४ ॥ राजहंसीव राजसे इति क्वचित्पाठः । स्थगुं स्तोतुमुत्प्रेक्षते । आसन्निति ॥ ४५ ॥ याःताःतव हृदये निविष्टाः मायाः तदेव इदं यत् दीर्घं स्थगु इत्यन्वयः । रथघोणं रथचक्रपिंडिका तद्वत् आयतं विस्तीर्णम् ॥ ४६ ॥ अतः अत्र मत्यादिकं वसति यतः एवम् अतःअत्र मालां प्रमोक्ष्यामि । मतयःमतिस्मृतिबुद्धयःस्मृतिर्व्यतीतविषया । मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेयेति । क्षत्रविद्या राजनीतिःमायाःप्रसिद्धाः । अत्र स्थगुनि हृदिस्थविकृतोन्नतमांसास्थिपिंडे ४७

विमलेंदुसमंवक्त्रमहोराजसिमंथरे ॥ जघनंतवनिर्मृष्टंरशनादामभूषितम् ॥ ४३ ॥ जंघेभृशमुपन्यस्तेपादौचव्यायतावुभौ ॥ त्वमायताभ्यांसक्थिभ्यांमंथरेक्षौमवासिनि ॥ ४४ ॥ अग्रतोममगच्छंतीराजसेऽतीवशोभने ॥ आसन्याःशंबरेमायाःसहस्रमसुराधिपे ॥ ४५ ॥ हृदयेतेनिविष्टास्ताभूयश्चान्याःसहस्रशः ॥ तदेवस्थगुयद्दीर्घंरथघोणमिवायतम् ॥ ४६ ॥ मतयःक्षत्रविद्याश्चमायाश्चात्रवसंतिते ॥ अत्रतेहंप्रमोक्ष्यामिमालांकुब्जेहिरण्मयीम् ॥ ४७ ॥ अभिषिक्तेचभरतेराघवेचवनंगते ॥ जात्येनचसुवर्णेनसुनिष्टप्तेनसुंदरि ॥ ४८ ॥ लब्धार्थाचप्रतीताचलेपयिष्यामितेस्थगु ॥ मुखेचतिलकंचित्रंजातरूपमयंशुभम् ॥ ४९ ॥ कारयिष्यामितेकुब्जेशुभान्याभरणानिच ॥ परिधायशुभेवस्त्रेदेवतेवचरिष्यसि ॥ ५० ॥ चंद्रमाह्वयमानेनमुखेनाप्रतिमानना ॥ गमिष्यसिगतिंमुख्यांगर्वयंतीद्विषज्जने ॥ ५१ ॥ तवापिकुब्जाःकुब्जायाःसर्वाभरणभूषिताः ॥ पादौपरिचरिष्यंतियथैवत्वंसदामम ॥ ५२ ॥ इतिप्रशस्यमानासाकैकेयीमिदमब्रवीत् ॥ शयानांशयनेशुभ्रेवेद्यामग्निशिखामिव ॥ ५३ ॥ गतोदकेसेतुबंधोनकल्याणिविधीयते ॥ उत्तिष्ठकुरुकल्याणंराजानमनुदर्शय ॥ ५४ ॥ तथाप्रोत्साहितादेवीगत्वामंथरयासह ॥ क्रोधागारंविशालाक्षीसौभाग्यमदगर्विता ॥ ५५ ॥ अनेकशतसाहस्रंमुक्ताहारंवरांगना ॥ अवमुच्यवरार्हाणिशुभान्याभरणानिच ॥ ५६ ॥ तदाहेमोपमातत्रकुब्जावाक्यवशंगता ॥ संविश्यभूमौकैकेयीमंथरामिदमब्रवीत् ॥ ५७ ॥ इहवामांमृतांकुब्जेनृपायावेदयिष्यसि ॥ वनंतुराघवेप्राप्तेभरतःप्राप्स्यतेक्षितिम् ॥ ५८ ॥ सुवर्णैर्नममेह्यर्थोनरत्नैर्नचभोजनैः ॥ एषमेजीवितस्यांतोरामोयद्यभिषिच्यते ॥ ५९ ॥

जात्येन उत्तमेन सुनिष्टप्तेन संद्रुतेन सुवर्णेन निर्मितां हिरण्यमयीं मालामिति संबंधः ॥ ४८ ॥ लब्धार्था लब्धोक्तार्था अत एव प्रतीता संतुष्टा लेपयिष्यामि । उत्तमचंदनेनेति शेषः । यद्वा जात्याद्युतस्वर्णकृतभूषणेन ते स्थगु लेपयिष्यामि गुप्तं करिष्यामीत्यर्थः ॥ ४९ ॥ ५० ॥ आह्वयमानेन स्पर्धमानेन द्विषज्जने गर्वयंती गर्वं कुर्वती मुख्यां गतिं श्रैष्ठ्यम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ एवं वृथा वार्ताभिः कालात्ययो न कार्य इत्याह । गतेत्यादि । रामाभिषेके वृत्ते वरग्रहणादिव्यर्थमिति भावः । राजानमनुदर्शय । क्रोधागारे आत्मानमिति शेषः ॥ ५४ ॥ ५५ ॥ अनेकशतसाहस्रं तावत्स्वर्णमूल्यम् । वरार्हाणि बहुमूल्यानि ॥ ५६ ॥ हेमोपमा स्वर्णवर्णा कैकेयी ॥ ५७ ॥ इह क्रोधागारे । मदभीष्टासिद्धौ मदुपेक्षकाय राज्ञे दशरथाय मां मृताम् आवेदयिष्यसि । तुर्वार्थे । राघवे वनं प्राप्ते भरतः क्षितिं प्राप्स्यते

वा । न तु पक्षांतरमस्तीति भावः ॥ ५८ ॥ ५९ ॥ महापराक्रमैः अतिक्रूरैः । भरतस्येति । आवृत्या हितान्यप्यपि । रामम् उपेत्य तं प्राप्य अहितम् । रामविषये लोकदृष्ट्या अहितमिति यावत् ॥ ६० ॥ ॥ ६१ ॥ कुब्जया मुहुर्मुहुः इति वागिषुभिः पूर्वोक्तैः वचनरूपैः बाणैः समाहता ताडिता अतिविद्धा च अतिविस्मिता । राजा माम् एवं प्रतारितवानिति शेषः । शशंस उवाच ॥ ६२ ॥ निशम्य दृष्ट्वा प्रतिवेदयिष्यसि । दशरथायेति शेषः ॥ ६३ ॥ नांजनपानभोजनमिति समाहारद्वंद्वः ॥ ६४ ॥ अथ क्रोधागारप्रवेशानंतरम् । निधाय त्यक्त्वा । पुण्यक्षयात् भूमौ पतिता किन्नरीव ॥ ६५ ॥ उदीर्णः उत्कटः संरंभः कोप एव तमः । तेन वृतं व्याप्तम् आननं यस्याः । अवमुक्तानि त्यक्तानि उत्तममाल्यभूषणानि यया सा । विमनाः दुर्मनाः । मग्नतारका अस्तमिततारका द्यौः आकाशम् ॥ ६६ ॥ चतुर्वर्तमानः ॥ ॥

अथोपुनस्तांमहिषींमहीक्षितोवचोभिरत्यर्थमहापराक्रमैः ॥ उवाचकुब्जाभरतस्यमातरंहितंवचोराममुपेत्यचाहितम् ॥ ६० ॥ प्रपत्स्यतेराज्यमिदंहिराघवोयदिध्रुवंत्वंससुताचतप्स्यसे ॥ ततोहिकल्याणियतस्वतत्तथायथासुतस्तेभरतोभिषेक्ष्यते ॥ ६१ ॥ तथातिविद्धामहिषीतिकुब्जया समाहतावागिषुभिर्मुहुर्मुहुः ॥ विधायहस्तौहृदयेऽपिविस्मिताशशंसकुब्जांकुपितापुनःपुनः ॥ ६२ ॥ यमस्यवामांविषयंगतामितोनिशाम्यकुब्जे प्रतिवेदयिष्यसि ॥ वनंगतेवासुचिरायराघवेसमृद्धकामोभरतोभविष्यति ॥ ६३ ॥ अहंहिनैवास्तरणानिनस्रजोनचंदनंनाजनपानभोजनम् ॥ नकिंचिदिच्छामिनचेहजीवनंनचेदितोगच्छतिराघवोवनम् ॥ ६४ ॥ अथैवमुक्त्वावचनंसुदारुणंनिधायसर्वाभरणानिभामिनी ॥ असंस्कृतामास्तरणेनमेदिनींतदाधिशिश्येपतितेवकिन्नरी ॥ ६५ ॥ उदीर्णसंरंभतमोवृताननातदावमुक्तोत्तममाल्यभूषणा ॥ नरेंद्रपत्नीविमनाबभूवसातमोवृताद्यौरिवमग्नतारका ॥ ६६ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये चतुर्विं० सा०सं० अयोध्याकांडे नवमःसर्गः ॥ ९ ॥ ॥ छ ॥ विदर्शितायदादेवी कुब्जयापापयाभृशम् ॥ तदाशेतेस्मसाभूमौदिग्धविद्धेवकिन्नरी ॥ १ ॥ निश्चित्यमनसाकृत्यंसासम्यगितिभामिनी ॥ मंथरायैशनैःसर्वमाचचक्षे विचक्षणा ॥ २ ॥ सादीनानिश्चयंकृत्वामंथरावाक्यमोहिता ॥ नागकन्येवनिःश्वस्यदीर्घमुष्णंचभामिनी ॥ ३ ॥ मुहूर्तंचिंतयामासमार्गमात्मसुखावहम् ॥ सासुहृच्चार्थकामाचतंनिशम्यविनिश्चयम् ॥ ४ ॥ बभूवपरमप्रीतासिद्धिंप्राप्येवमंथरा ॥ अथसारुषितादेवीसम्यक्कृत्वाविनिश्चयम् ॥ ५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे नवमः सर्गः ॥ ९ ॥ छ ॥ छ ॥ अथोक्तानुवादपूर्वं राज्ञः कैकेयीदर्शनाद्याह । विदर्शिता विपरीतं बोधिता । दिग्धविद्धेव विषदिग्धबाणविद्धेव किन्नरी कामरूपप्रधानः जातिविशेषः ॥ १ ॥ मंथरोपदिष्टं निश्चित्य युक्तमेतदिति निर्धार्य यत् त्वया उक्तं तत्सर्वं सम्यगिति मंथरायै आविष्टदुःखत्वात् शनैः आचचक्षे ॥ २ ॥ तदेव प्रपंचयति । सा दीनेत्यादि ॥ ३ ॥ मार्गं मंथरोक्तम् आत्मसुखावहमिति चिंतयामास । सा मंथरा सुहृत् कैकेय्याः तस्या एव अर्थकामा च कैकेय्याः तं निश्चयं निशम्य ज्ञात्वा ॥ ४ ॥ सिद्धिं रसरसायनादिसिद्धिम् । निधिमिति पाठे धनं प्राप्येव परमप्रीता बभूव ॥ वस्तुतो यद्देवकार्यार्थं स्वयं भूलोकमागता दासी च जाता तद्विषयां सिद्धिं प्राप्येवेत्यर्थः । रामागमनस्य

संभावनामात्रविषयत्वादितिभावः ॥ ५ ॥ मुखे भ्रुकुटिनिवेशः क्रोधातिशयेन ॥ ६ ॥ यानि कैकेय्या अपविद्धानि उत्सृष्टानि तानि भूमिमित्यन्वयः ॥ यानि अपविद्धानि तानीत्यन्वयः ॥ ७ ॥ ८ ॥ एकवेणीं पुरोभागीयवेणीद्वयमुन्मुच्य पृष्ठैकवेणीम् । गतसत्वा क्षीणबला । कैकेयीवृत्तांतं प्रदोषकालिकम् उपवर्ण्य राजवृत्तांतमाह । आज्ञाप्येति ॥ ९ ॥ उपस्थानं कृताऽऽज्ञापनाविषयस्य मंत्रिपुरोहितादेः स्वस्वगृहं प्रतिगमनम् अनुज्ञाप्य स्वनिवेशनं प्रविवेश । यद्वा उपस्थानं सदः सभा ताम् अनुज्ञाप्य स्वगृहगमने तदनुज्ञां गृहीत्वा अद्यैव रामाभिषेकः प्रसिद्धः निश्चित इति । इतः पूर्वं कैकेय्याः न श्रुतिगोचर इति जज्ञिवान् ज्ञातवान् ॥ १० ॥ अतः तत्प्रियम् आख्यातुं ताम् अंतःपुरं प्रविवेश । वशी । स्वस्त्रीव्यतिरिक्तविषये इति बोध्यम् ॥ ११ ॥ अत्र गृहस्य रुष्टकैकेयीयुक्ततया सुधाधवलतया च राहुयुक्तपांडुराभ्राकाशसादृश्यम् । रुतायुतं रुतयुक्तम् ॥ १२ ॥ न्हस्वाः

संविवेशावलाभूमौनिवेश्यभ्रुकुटिंमुखे ॥ ततश्चित्राणिमाल्यानिदिव्यान्याभरणानिच ॥ ६ ॥ अपविद्धानिकैकेय्यातानिभूमिंप्रपेदिरे ॥ तयातान्यपविद्धानिमाल्यान्याभरणानिच ॥ ७ ॥ अशोभयंतवसुधांनक्षत्राणियथानभः ॥ क्रोधागारेचपतितासावभौमालिनांवरा ॥ ८ ॥ एकवेणींदृढांबद्ध्वागतसत्त्वेवकिन्नरी ॥ आज्ञाप्यतुमहाराजोराघवस्याभिषेचनम् ॥ ९ ॥ उपस्थानमनुज्ञाप्यप्रविवेशनिवेशनम् ॥ अद्यरामाभिषेकोवैप्रसिद्धइतिजज्ञिवान् ॥ १० ॥ प्रियार्हांप्रियमाख्यातुंविवेशांतःपुरंवशी ॥ सकैकेय्यागृहंश्रेष्ठंप्रविवेशमहायशाः ॥ ११ ॥ पांडुराभ्रमिवाकाशंराहुयुक्तंनिशाकरः ॥ शुकबर्हिसमायुक्तंक्रौंचहंसरुतायुतम् ॥ १२ ॥ वादित्ररवसंघुष्टंकुब्जावामनिकायुतम् ॥ लतागृहैश्चित्रगृहैश्चंपकाशोकशोभितैः ॥ १३ ॥ दांतराजतसौवर्णवेदिकाभिःसमायुतम् ॥ नित्यपुष्पफलैर्वृक्षैर्वापीभिरुपशोभितम् ॥ १४ ॥ दांतराजतसौवर्णैःसंवृतंपरमासनैः ॥ विविधैरन्नपानैश्चभक्ष्यैश्चविविधैरपि ॥ १५ ॥ उपपन्नंमहार्हैश्चभूषणैस्त्रिदिवोपमम् ॥ सप्रविश्यमहाराजःस्वमंतःपुरमृद्धिमत् ॥ १६ ॥ नददर्शस्त्रियंराजाकैकेयींशयनोत्तमे ॥ सकामबलसंयुक्तोरत्यर्थीमनुजाधिपः ॥ १७ ॥ अपश्यन्दयितांभार्यांपप्रच्छविषसादच ॥ नहितस्यपुरादेवीतांवेलामत्यवर्तत ॥ १८ ॥ नचराजागृहंशून्यंप्रविवेशकदाचन ॥ ततोगृहगतोराजाकैकेयींपर्यपृच्छत ॥ १९ ॥ यथापुरमविज्ञायस्वार्थलिप्सुमपंडिताम् ॥ प्रतिहारीत्वथोवाचसंत्रस्तातुकृतांजलिः ॥ २० ॥ देवदेवीभृशंक्रुद्धाक्रोधागारमभिद्रुता ॥ प्रतीहार्यावचःश्रुत्वाराजापरमदुर्मनाः ॥ २१ ॥ विषसादपुनर्भूयोलुलितव्याकुलेंद्रियः ॥ तत्रतांपतितांभूमौशयानामतथोचिताम् ॥ २२ ॥

वामनिकाः । कुब्जाश्च वामनिकाश्च ताभिर्युतम् । सुरूपदासीनां सापत्न्यसंभावनया अंतःपुरे अवासात् । चित्रगृहैः चित्रयुक्तगृहैः ॥ १३ ॥ गजदंतरजतस्वर्णनिर्मितवेदिकाभिः । वृक्षाणां नित्यपुष्पफलत्वं च देवराजसाहाय्यकरणेन तत्प्रसादात् ॥ १४ ॥ १५ ॥ १६ ॥ कामबलसंयुक्तः कामबलं तदुद्रेकः । तत्संयुक्तः । अत एव रत्यर्थी ॥ १७ ॥ अपश्यन् रत्यर्थम् अन्विष्य अपश्यन् । विषादहेतुमाह । न हीति । तां वेलां कामवशात् स्वशयनागमवेलां नात्यवर्तत नातिक्रांतवती । अद्य च ताम् अतिक्रांतेति विषादः ॥ १८ ॥ शून्यं कैकेयीरहितम् ॥ १९ ॥ अपंडितां कार्याकार्यविवेकरहितां स्वार्थलिप्सुं भरताभिषेकेच्छावतीम् अविज्ञाय यथापुरं यथापूर्वं पूर्वम् अदर्शनकाले यथा आपृच्छत तथा आपृच्छतेत्यन्वयः । प्रतिहारी दौवारिकी ॥ २० ॥ अभिद्रुतेति उवाचेति संबंधः ॥ २१ ॥ अदर्शनमात्रेण विषण्णस्य क्रोधादिश्रवणात् भूयः अधिकः

विषादः । इष्टादर्शनजविषादेन चक्षुरादेः लुलितत्वम् अतिचंचलत्वं चित्तस्य किंनिमित्तः क्रोध इति शंकया व्याकुलत्वम् । तत्र क्रोधागारे अतथोचितां तथा शयनानुचिताम् ॥ २२ ॥ इवशब्दः एवार्थे ॥ २३ ॥ पापसंकल्पां रामाभिषेकविघातादिमनोरथाम् । विनिष्कृत्तां छिन्नाम् ॥ २४ ॥ निर्धूतां पुण्यक्षये स्वर्लोकात् पतिताम् । च्युतां स्वर्गात् । परिभ्रष्टां परमोहनाय प्रयुक्तां मध्ये एव स्थितां मायामिव स्थिताम् । संयतां वागुराबद्धाम् ॥ २५ ॥ मृगयुना व्याधेन दिग्धेन विषलिप्तेन बाणेन विद्धां करेणुमिव स्थितां ददर्शेति पूर्वेणान्वयः । अरण्ये महागजः पूर्वोक्तां करेणुमिव स्थिताम् ॥ २६ ॥ पाणिभ्यां परिमृज्य स्पृष्ट्वा किं वक्ष्यति किं करिष्यतीति शंकया त्रस्तबुद्धिः उवाच ॥ २७ ॥ आत्मनि मयि संश्रितं ते क्रोधं क्रोधकारणं नाभिजानामि । अभियुक्ता कृतपराभवा । विमानः निंदा ॥ २८ ॥ यत् यतः इदं एवंप्रकारेण कल्याणि मम दुःखाय पांसुषु शेषे । किं च कल्याणचेतसि अनपकारिणि मयि जीवति सति किमर्थं भूमौ शेषे ॥ २९ ॥ भूतोपहतचित्तेव ग्रहाविष्टेव कुशलाः सर्वव्याधिनिवारणकुशलाः । अभितुष्टाः । मत्कृतसत्कारैरिति

प्रतप्तइवदुःखेनसोपश्यज्जगतीपतिः ॥ सवृद्धस्तरुणींभार्यांप्राणेभ्योपिगरीयसीम् ॥ २३ ॥ अपापःपापसंकल्पांददर्शधरणीतले ॥ लतामिवविनिष्कृत्तांपतितांदेवतामिव ॥ २४ ॥ किन्नरीमिवनिर्धूतांच्युतामप्सरसंयथा ॥ मायामिवपरिभ्रष्टांहरिणीमिवसंयताम् ॥ २५ ॥ करेणुमिवदिग्धेनविद्धांमृगयुनावने ॥ महागजइवारण्येस्नेहात्परमदुःखिताम् ॥ २६ ॥ परिमृज्यचपाणिभ्यामभिसंत्रस्तचेतनः ॥ कामीकमलपत्राक्षीमुवाचवनितामिदम् ॥ २७ ॥ नतेहमभिजानामिक्रोधमात्मनिसंश्रुतम् ॥ देविकेनाभियुक्तासिकेनवासिविमानिता ॥ २८ ॥ यदिदंममदुःखायशेषेकल्याणिपांसुषु ॥ भूमौशेषेकिमर्थंत्वंमयिकल्याणचेतासि ॥ २९ ॥ भूतोपहतचित्तेवममचित्तप्रमाथिनि ॥ संतिमेकुशलावैद्यास्त्वभितुष्टाश्चसर्वशः ॥ ३० ॥ सुखितांत्वांकरिष्यंतिव्याधिमाचक्ष्वभामिनि ॥ कस्यवापिप्रियंकार्यंकेनवाविप्रियंकृतम् ॥ ३१ ॥ कःप्रियंलभतामद्यकोवासुमहदप्रियम् ॥ मारौत्सीर्माचकार्षीस्त्वंदेविसंपरिशोषणम् ॥ ३२ ॥ अवध्योवध्यतांकोवावध्यःकोवाविमुच्यताम् ॥ दरिद्रःकोभवेदाढ्योद्रव्यवान्वाप्यकिंचनः ॥ ३३ ॥ अहंचहिमदीयाश्चसर्वेतववशानुगाः ॥ नतेकंचिदभिप्रायंव्याहंतुमहमुत्सहे ॥ ३४ ॥ आत्मनोजीवितेनापिब्रूहियन्मनसिस्थितम् ॥ बलमात्मनिजानंतीनमांशंकितुमर्हसि ॥ ३५ ॥ करिष्यामितवप्रीतिंसुकृतेनापितेशपे ॥ यावदावर्ततेचक्रंतावतीमेवसुंधरा ॥ ३६ ॥ द्राविडाःसिंधुसौवीराःसौराष्ट्रादक्षिणापथाः ॥ वंगांगमगधामत्स्याःसमृद्धाःकाशिकोशलाः ॥ ३७ ॥

शेषः ॥ ३० ॥ व्याधिमाचक्ष्व । व्याधिकृतं चेच्छयनमिति शेषः । प्रियं कार्यं कर्तव्यम् इति मनसि वर्तते इति शेषः । विप्रियं कृतं तव । कस्य अप्रियं कर्तव्यत्वेन तव मनसि वर्तते इति भावः ॥ ३१ ॥ पक्षद्वयनिमित्तोपि क्रोधो मास्तु इत्याह । कः प्रियमिति । त्वत्प्रियो दरिद्र इति शेषः । अप्रियं लभताम् । त्वद्विप्रियकारीति शेषः । मा रौत्सीः आत्मनः अभिप्रायं रुद्धं गुप्तं मा कार्षीरित्यर्थः । संपरिशोषणम् कायस्येति शेषः ॥ ३२ ॥ तदेव प्रपंचयति । अवध्य इत्यादि ॥ ३३ ॥ आत्मनः जीवितेन हेतुनापि ते कंचित् अभिप्रायं तद्विषयं व्याहंतुं नोत्सहे । अतः मनसि यत् स्थितं यद्विषयेच्छास्ति तत् ब्रूहि । आत्मनि स्वस्मिन् बलं मत्प्रेमरूपं जानती अयं मदुक्तं करिष्यति न वेति मां शंकितुं नार्हसि ॥ ३४ ॥ ३५ ॥ सुकृतेनापि स्वपुण्येनापि ते तव शपे शपथं ददामि । यदि त्वदुक्तं न कुर्यां तर्हि सर्वं सुकृतं मे वृथेति शपथं ददामीत्यर्थः । अथआत्मनि दुष्करसंपादनसामर्थ्यं दर्शयति । यावदिति । चक्रं सूर्यमंडलम् आवर्तते प्रकाशयति तावती सर्वापि वसुंधरा मे मदधीना ॥ ३६ ॥ द्राविडासिंध्वादयो देशाः सर्वे मदधीना एव ॥ ३७ ॥

अतः--तत्रेत्यादि । तत्र जातं द्रव्यमपि मदधीनमेव ॥ ३८ ॥ ३९ ॥ रश्मिवान् सूर्यः ॥ ४० ॥ भूयः परिपीडयितुं निजभूशयनादिना पूर्वं पीडितमेव अप्रियवचनादिना पुनः पीडयितुमित्यर्थः ॥ ॥ ४१ ॥ येवमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे दशमः सर्गः ॥ १० ॥ ॥ छ ॥ तमिति-स्पष्टम् ॥ १ ॥ विप्रकृता प्रियया पराभूता । अवमानः शब्देन तिरस्कारः । मे मम अभिप्रायः । अभिप्रार्थनीयः अस्ति त्वदेकसंपाद्यः । तं त्वया कृतं संपादितम् इच्छामि ॥ २ ॥ यदि त्वं कर्तुम् इच्छसि मदभिप्रेतं तदा तद्विषयावश्यकर्तव्यतारूपां प्रतिज्ञां प्रतिजानीष्व कुरु । अथ अनंतरं मया अभिप्रेतं स्वप्रार्थितं यथा यत्प्रकारवत्तथा वक्ष्यामीत्यर्थः ॥ ३ ॥ आज्ञाकारिणि मयि शपथाकांक्षा वृथेति उत्स्मयः । मूर्धजेषु संगृह्य शिरः अंके कृत्वेति यावत् ॥ ४ ॥ स्त्रीणां मध्ये त्वत्तः पुंसां मध्ये रामात् अन्य इति योज्यम् । यद्वा रामात् अन्यः । त्वत्तो अधिकः प्रियतरो नेत्यर्थः । रामे अस्याः द्वेषम् अजानतः एवमुक्तिः । राम एव त्वत्तः अधिकः प्रिय इत्याशयः ॥ ५ ॥ तदाह । तेनेति । त्वत्तोपि प्रियतरे

तत्रजातंबहुद्रव्यंधनधान्यमजाविकम् ॥ ततोवृणीष्वकैकेयियत्तत्त्वंमनसेच्छसि ॥ ३८ ॥ किमायासेनतेभीरुउत्तिष्ठोत्तिष्ठशोभने ॥ तत्त्वंमेब्रूहिकैकेयियतस्तेभयमागतम् ॥ ३९ ॥ तत्तेव्यपनयिष्यामिनीहारमिवरश्मिवान् ॥ तथोक्तासासमाश्वस्तावक्तुकामातदप्रियम् ॥ ४० ॥ परिपीडयितुंभूयोभर्तारमुपचक्रमे ॥ ४१ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये चतुर्विं० सा०सं० अयोध्याकांडे दशमःसर्गः ॥ १० ॥ ॥ छ ॥

तंमन्मथशरैर्विद्धंकामवेगवशानुगम् ॥ उवाचपृथिवीपालंकैकेयीदारुणंवचः ॥ १ ॥ नास्मिविप्रकृतादेवकेनचिन्नावमानिता ॥ अभिप्रायस्तुमेकश्चित्तमिच्छामित्वयाकृतम् ॥ २ ॥ प्रतिज्ञांप्रतिजानीष्वयदित्वंकर्तुमिच्छसि ॥ अथतेव्याहरिष्यामियथाभिप्रार्थितंमया ॥ ३ ॥ तामुवाचमहाराजःकैकेयीमीषदुत्स्मयः ॥ कामीहस्तेनसंगृह्यमूर्धजेषुभुविस्थिताम् ॥ ४ ॥ अवलितेनजानासित्वत्तःप्रियतरोमम ॥ मनुजोमनुजव्याघ्राद्रामादन्योनविद्यते ॥ ५ ॥ तेनाजय्येनमुख्येनराघवेणमहात्मना ॥ शपेतेजीवनार्हेणब्रूहियन्मनसेप्सितम् ॥ ६ ॥ यंमुहूर्तमपश्यंस्तुनजीवेतमहंध्रुवम् ॥ तेनरामेणकैकेयिशपेतेवचनक्रियाम् ॥ ७ ॥ आत्मनाचात्मजैश्चान्यैर्वृणेयंमनुजर्षभम् ॥ तेनरामेणकैकेयिशपेतेवचनक्रियाम् ॥ ८ ॥ भद्रेहृदयमप्येतदनुमृश्योद्धरस्वमे ॥ एतत्समीक्ष्यकैकेयिब्रूहियत्साधुमन्यसे ॥ ९ ॥ बलमात्मनिपश्यंतीनविशंकितुमर्हसि ॥ करिष्यामितवप्रीतिंसुकृतेनापितेशपे ॥ १० ॥ सातदर्थमनादेवीतमभिप्रायमागतम् ॥ निर्माध्यस्थ्याच्चहर्षाच्चबभाषेदुर्वचंवचः ॥ ११ ॥

णेत्यर्थः । अत एव मुख्येन अजय्येन, अरीणाम् अशक्यजयेन जीवनार्हेण मज्जीवनसाधनीभूतेन । अनेन परमप्रियत्वं दर्शयति । शपे शपथेन त्वदभिप्रेतकर्तव्यताविषयं स्वाभिप्रायं ज्ञापये । ते तुभ्यम् ॥ ६ ॥ भाव्यर्थं सूचयन् परमप्रियत्वमेव दर्शयति । यमिति । अनेन तद्विषयकदुष्टप्रार्थना न कार्येति सूचयति । वचनक्रियां त्वद्वचनकरणं प्रति ॥ ७ ॥ आत्मना स्वेन अन्यैः आत्मजैः पुत्रैरपि यं वृणे असमं जाने । सर्वतः अधिकं प्रियं जाने इति यावत् ॥ ८ ॥ यन्मनसा ध्यायति तद्वाचा वदतीत्युक्तेः । वागिव हृदयमपि त्वद्वचनानुष्ठानप्रवणम् अनुमृश्य विचार्य स्वाभीष्टकथनेन माम् अस्मात दुःखात् उद्धर । एतत् रामस्य प्रियतमत्वं समीक्ष्य यत् साधु मन्यसे तत् ब्रूहि त्वमेव युक्तं विचार्य वद । मम तु त्वद्वचनमात्रं कर्तव्यमेवेत्याशयः ॥ ९ ॥ अत्र शंका न कार्येत्याह । बलमिति । बलं मत्प्रेमरूपं तथा त्वयि मे प्रेमाअस्ति येन त्वदुक्तं न कुर्यामितिअसंभावितम् । सर्वथा तव प्रीतिं प्रीतिविषयं करिष्यामि । यदि अन्यथाइदं तदा मे धर्मः न फलदः भवेदिति भावः ॥ १० ॥ तदर्थमनाः तस्मिन् निजाभिमते अर्थे

मनः यस्याः सा तदभिप्रायं स्वाभिमतार्थसंपादनाभिप्रायम् आगतं मात्रविषयं ज्ञात्वा निर्माध्यस्थ्यात् माध्यस्थ्याभावम् अवलंब्य ल्यब्लोपे अव्ययीभावात् पंचमी । स्वपुत्रपक्षपातेनेति यावत् । हर्षात्
राज्ञः स्ववशत्वदर्शनजात् दुर्वचं शत्रुभिरपि वक्तुम् अशक्यम् ॥ ११ ॥ तेन वाक्येन त्रिवाचा रामशपथपूर्वकस्ववचनक्रियावाक्येन अभ्यागतम् अंतकमिव घोरं राज्ञः प्राणहरं तम् आत्मनः अभिप्रायं व्याजहार व्याहर्तुं
निश्चितवती ॥ १२ ॥ राजप्रतिज्ञायाः दुष्करार्थविषयत्वेन वैपरीत्यम् आशंक्य तां प्रतिज्ञाम् अशेषसाक्षीकरणेन स्थिरयति । यथा क्रमेणेति । अतिप्रियपुत्रसुकृतादि क्रमेण शपसि शपथं करोषि तत्पूर्वकं वरं च मम ददासि
दातुं निश्चितवानसि तत् तव वाक्यम् ॥ १३ ॥ जगत् परोक्षस्वर्गादिभुवनदेवता । पृथिवी प्रत्यक्षभुवनदेवता ॥ १४ ॥ १५ ॥ सर्वे दैवताः देवाः । दैवतानि वा पुंसीति कोशः ॥ १६ ॥ परिगृह्य परिवर्तनान् निवर्त्य ।

तेनवाक्येनसंहृष्टातमभिप्रायमात्मनः ॥ व्याजहारमहाघोरमभ्यागतमिवांतकम् ॥ १२ ॥ यथाक्रमेणशपसेवरंममददासिच ॥ तच्छृण्वंतुत्रयस्त्रिंशद्दे
वाःसेंद्रपुरोगमाः ॥ १३ ॥ चंद्रादित्यौनभश्चैवग्रहाराज्यहनीदिशः ॥ जगच्चपृथिवीचेयंसगंधर्वासराक्षसा ॥ १४ ॥ निशाचराणिभूतानिगृहेषुगृहदे
वताः ॥ यानिचान्यानिभूतानिजानीयुर्भाषितंतव ॥ १५ ॥ सत्यसंधोमहातेजाधर्मज्ञःसत्यवाक्छुचिः ॥ वरंममददात्येषसर्वेशृण्वंतुदैवताः ॥ १६ ॥
इतिदेवीमहेष्वासंपरिगृह्याभिशस्यच ॥ ततःपरमुवाचेदंवरदंकाममोहितम् ॥ १७ ॥ स्मरराजन्पुरावृत्तंतस्मिन्देवासुरेरणे ॥ तत्रत्वांच्यावयच्छत्रुस्त
वजीवितमंतरा ॥ १८ ॥ तत्रचापिमयादेवयत्त्वंसमभिरक्षितः ॥ जाग्रत्यायतमानायास्ततोमेप्रददौवरौ ॥ १९ ॥ तौदत्तौचवरौदेवनिक्षेपौमृगयाम्य
हम् ॥ तवैवपृथिवीपालसकाशेरघुनंदन ॥ २० ॥ तत्प्रतिश्रुत्यधर्मेणनचेद्दास्यसिमेवरम् ॥ अद्यैवहिप्रहास्यामिजीवितंत्वद्विमानिता ॥ २१ ॥
वाङ्मात्रेणतदाराजाकैकेय्यास्ववशंकृतः ॥ प्रचस्कंदविनाशायपाशंमृगइवात्मनः ॥ २२ ॥ ततःपरमुवाचेदंवरदंकाममोहितम् ॥ वरौदेयौत्वयादे
वतदादत्तौमहीपते ॥ २३ ॥ तौतावदहमद्यैववक्ष्यामिशृणुमेवचः ॥ अभिषेकसमारंभोराघवस्योपकल्पितः ॥ २४ ॥ अनेनैवाभिषेकेणभरतोमेऽभि
षिच्यताम् ॥ योद्वितीयोवरोदेवदत्तःप्रीतेनमेत्वया ॥२५॥ तदादेवासुरेयुद्धेतस्यकालोयमागतः ॥ नवपंचचवर्षाणिदंडकारण्यमाश्रितः ॥२६॥ चीरा
जिनधरोधीरोरामोभवतुतापसः ॥ भरतोभजतामद्ययौवराज्यमकंटकम्॥२७॥एषमेपरमःकामोदत्तमेववरंवृणे ॥ अद्यचैवाहिपश्येयंप्रयांतंराघवंवने २८

अभिशस्य सत्यसंध इत्यादिना स्वकार्यस्थैर्याय स्तुत्वा च ॥ १७ ॥ तद्वाक्यमाह । स्मरेत्यादि । तत्र रात्रियुद्धे शत्रुः शंबरः । तव जीवितम् अंतरा प्राणं विना त्वां च्यावयत् प्रच्युतवीर्यम् अकरोत् । अडभावः आर्षः ॥१८॥
जाग्रत्या मया यत् यतःत्वं समभिरक्षितस्ततः स्वजीवनाय यतमानायाःमम भवान् वरौ प्रददौ ॥ १९ ॥ तौ वरौ तवैव सकाशे निक्षेपभूतौ त्वय्येव स्थापितौ । इदानीं त्वया दत्तौ स्वीकर्तुं मृगयामि अन्वेष
यामि ॥ २० ॥ धर्मेण प्रतिश्रुत्य धर्मशपथपूर्वकं दानप्रतिज्ञां कृत्वा ॥ २१ ॥ कैकेय्या स्वसौंदर्यनिमित्तकाममोहेन स्ववशे कृतः राजा वाङ्मात्रेण पूर्वकालिकवरदानप्रतिवचनमात्रेण स्वविनाशाय मृग इव तत्प्रति
वचनदानरूपं पाशं प्रचस्कंद प्रगतवान् । प्रकृत्यादित्वात्प्रातिपदिकार्थेपि तृतीया वाङ्मात्रेणेति ॥ २२ ॥ २३ ॥ वक्ष्यामि मम दातव्यौ वराविमाविति विभज्य वक्ष्यामि । तद्वच आह । अभिषेकेति ॥ २४ ॥
यः कल्पितः अनेनेति योजना ॥ २५ ॥ २६ ॥ २७ ॥ दत्तमेव वृणे न त्वपूर्वम् । न ह्युत्तमर्णेनअधमर्णात् स्वार्थग्रहणे तस्य पीडा भवतीति न कश्चिद्दोषः । अद्य चैवेत्यनेन कालविलंबः निराकृतः ॥ २८ ॥

सत्यसंगरः सत्यवचाः । संपूर्वात् गिरतेः कथनार्थात् कर्मण्यप् । तेनैव हेतुना कुलादिकं रक्ष । जन्मअत्र भावि । तदेवाह । परत्रेति ॥ २९ ॥ धेंरेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वा०आ०अ० एकादशः सर्गः ॥ ११ ॥ ॥ छ ॥ ॥ दारुणं वज्रपाततुल्यम् । श्रुतार्थस्य वास्तवत्वासंभावनया भ्रम इत्येव निश्चित्य किं दोषजः अयं इति चिंतां प्रपेदे । युक्त्या भ्रमत्वज्ञानेपि तदधिष्ठानापरोक्ष्यं यावत् अहि भ्रमादेः । तत्कार्यभयादिकारिताया दृष्टत्वात् प्रतताप च ॥ १ ॥ अथ भ्रमत्वनिश्चयाय त्यक्ततापः भ्रमहेतून् चिंतयति । स्वप्नार्थस्य स्वक्रियाकरणासामर्थ्यात् । भ्रमविषयत्वम् । स्वप्नदृष्टः अयमर्थः मिथ्यैव । न कदापि भवतीति भावः । स्वप्नोपि कदाचित् संवादीत्यतः दिवेति । दिवा स्वप्नः न कदापि संवादीति भावः । अपि वा अथवा मम जाग्रत्यपि दूरदृष्टजचित्तमोहः वैचित्यापरपर्यायः वस्तुतत्त्वज्ञानासामर्थ्यम् । अनु पश्चात् जातः । सभास्थितिपर्यंतम् असत्त्वात् भूतोपसर्गो वा ग्रहावेशजचित्तवैकल्यं वा यत्तुअनुभूतोपसर्गः अनुभूतनाशः सुषुप्तिरित्यर्थ इति ॥ तन्न ॥ सुषुप्तौ ज्ञानाभावात् । मनस उपद्रवो वा आधिव्याधिजनितोपप्लवो वा॥ २ ॥

सराजराजोभवसत्यसंगरःकुलंचशीलंचहिजन्मरक्षच ॥ परत्रवासेहिवदंत्यनुत्तमंतपोधनाःसत्यवचोहितंनृणाम् ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विं०सा०सं०अयोध्याकांडे एकादशःसर्गः ॥ ११ ॥ ॥ छ ॥ ॥ ततःश्रुत्वामहाराजःकैकेय्यादारुणंवचः ॥ चिंताम भिसमापेदेमुहूर्तंप्रततापच ॥ १ ॥ किंनुमेऽयंदिवास्वप्नश्चित्तमोहोपिवामम ॥ अनुभूतोपसर्गोवामनसोवाप्युपद्रवः ॥ २ ॥ इतिसंचिंत्यतद्राजा नाध्यगच्छत्तदासुखम् ॥ प्रतिलभ्यततःसंज्ञांकैकेयीवाक्यतापितः ॥ ३ ॥ व्यथितोविक्लवश्चैवव्याघ्रींदृष्ट्वायथामृगः ॥ असंवृतायामासीनोजग त्यांदीर्घमुच्छ्वसन् ॥ ४ ॥ मंडलेपन्नगोरुद्धोमंत्रैरिवमहाविषः ॥ अहोधिगितिसामर्षोवाचमुक्त्वानराधिपः ॥ ५ ॥ मोहमापेदिवान्भूयःशोकोपहतचे तनः ॥ चिरेणतुनृपःसंज्ञांप्रतिलभ्यसुदुःखितः ॥ ६ ॥ कैकेयीमब्रवीत्क्रुद्धोनिर्दहन्निवतेजसा ॥ नृशंसेदुष्टचारित्रेकुलस्यास्यविनाशिनि ॥ ७ ॥ किंकृतंतववरामेणपापेपापंमयापिवा ॥ सदातेजननीतुल्यांवृत्तिंवहतिराघवः ॥ ८ ॥ तस्यैवंत्वमनर्थायकिंनिमित्तमिहोद्यता ॥ त्वंमयात्मविनाशाय भवनंस्वंनिवेशिता ॥ ९ ॥ अविज्ञानान्नृपसुताव्यालातीक्ष्णविषायथा ॥ जीवलोकोयदासर्वोरामस्याहगुणस्तवम् ॥ १० ॥ अपराधंकमुद्दिश्य त्यक्ष्यामीष्टमहंसुतम् ॥ कौसल्यांचसुमित्रांचत्यजेयमपिवाश्रियम् ॥ ११ ॥

राजा इति संचिंत्य तत् भ्रमकारणं नाध्यगच्छत् । अतःतदा असुखं मूर्च्छाकरं महदुःखं च अध्यगच्छत् । ततः संज्ञां स्मृतिं लब्ध्वा कैकेयीवाक्यस्मरणतापितः ॥ ३ ॥ अत एव व्यथितत्वादिगुणविशिष्टः । विक्लवः दीनः ॥ ४ ॥ मंडले यंत्रमंडले मंत्रकृते । अहो धिगिति वाचम् उक्त्वा भूयः पुनः । मोहम् आपेदिवान् ॥ ५ ॥ ६ ॥ तेजसा दुःखजेन निर्दहन्निव ज्वलन्निव । अनेन मृगदुःखशमनस्य व्याघ्रीदंडेनेव कैकेयीदंडेन स्वदुःखशमनस्यअशक्यता ध्वन्यते । नृशंसे क्रूरे । दुष्टचारित्रे दुष्टव्यापारे ॥ ७ ॥ पापम् अनिष्टम् । पापे पापमते । ते त्वयि वृत्तिं शुश्रूषाम् वहति करोति ॥ ८ ॥ तस्यअनर्थचिंतानर्हस्य एवम् अनर्थाय किं निमित्तं केन निमित्तेन । अयं स्वकृत एव अनर्थ इत्याह । त्वमिति ॥ ९ ॥ अविज्ञानात् इष्टसाधनत्वभ्रांत्या । यदा यतः ॥ १० ॥ उद्दिश्य व्याजीकृत्य त्यक्ष्यामि । श्रियं राज्यम् ॥ ११ ॥

आत्मना स्वव्यापारेण जीवितं तत्साधनं रामं न त्वेव त्यजेयम् परा उत्कृष्टा ॥ १२ ॥ चेतनं चैतन्यम् ॥ १३ ॥ यतः मद्विनाशे वैधव्यप्राप्तिः । तत् तस्मात् एषः निश्चयः रामविवासनरूपः । त्यज्यताम् ॥ १४ ॥ अपि ते चरणाविति । धर्मशास्त्रतः अत्यनुचितमपि कामशास्त्रमर्यादया त्वत्प्रीत्यर्थमिति शेषः ॥ १५ ॥ अथेत्यादि । अथ भरतस्य प्रियाप्रियविषये मां त्वं जिज्ञाससे भरतः राज्ञः प्रियः न वेति तत् अस्तु राघवं भरतं प्रति यत्त्वया व्याहृतं तत् सर्वं भरतस्य । रामविवासनंतु अयोग्यमेवेति शेषः । त्वयापि पूर्वं तस्य बहुशः गुणानां कथनादित्याशयः ॥ १६ ॥ इतीव इत्येतत्प्रकारं यत्त्वया कथितं पूर्वं तत् मच्चित्तावर्जनेन सेवार्थमेव मया स्वसेवाकरणार्थमेव भवेदिति वितर्कः । संप्रतिअन्यथोक्तेरिति भावः ॥ १७ ॥ यतःतद्रामाभिषेचनं श्रुत्वा इदानीं शोकसंतप्ताअसि मां च वरनिर्बंधेन ततः निवारयंती भृशं तापयसि । अतः मया स्वसेवाकरणाय मद्वंचनार्थं एव ते रामसाधुत्ववाद इत्याशयः । अथवा एवंविधचिंतापि महाकुलजायां त्वयि असंभावितैव । किं तर्हिइदं तत्राह । शून्ये गृहे भूतादिभिः आविष्टाअसि तत्तुल्येन वाक्येन स्विदावेशितदुष्ट

जीवितंचात्मनारामंनत्वेवपितृवत्सलम् ॥ पराभवतिमेप्रीतिर्दृष्ट्वातनयमग्रजम् ॥ १२ ॥ अपश्यतस्तुमेरामंनष्टंभवतिचेतनम् ॥ तिष्ठेल्लोकोविनासूर्यंसस्यंवासलिलंविना ॥ १३ ॥ नतुरामंविनादेहेतिष्ठेत्तुममजीवितम् ॥ तदलंत्यज्यतामेषनिश्चयःपापनिश्चये ॥ १४ ॥ अपितेचरणौमूर्ध्ना स्पृशाम्येषप्रसीदमे ॥ किमर्थंचिंतितंपापेत्वयापरमदारुणम् ॥ १५ ॥ अथजिज्ञाससेमांत्वंभरतस्यप्रियाप्रिये ॥ अस्तुयत्तत्त्वयापूर्वंव्याहृतंराघवंप्रति ॥ १६ ॥ समेज्येष्ठसुतःश्रीमान्धर्मज्येष्ठइतीवमे ॥ तत्त्वयाप्रियवादिन्यासेवार्थंकथितंभवेत् ॥ १७ ॥ तच्छ्रुत्वाशोकसंतप्तासंतापयसिमांभृशम् ॥ आविष्टासिगृहेशून्येसात्वंपरवशंगता ॥ १८ ॥ इक्ष्वाकूणांकुलेदेविसंप्राप्तःसुमहानयम् ॥ अनयोनयसंपन्नेयत्रतेविकृतामतिः ॥ १९ ॥ नहिकिंचिदयुक्तंवाविप्रियंवापुरामम ॥ अकरोस्त्वंविशालाक्षितेननश्रद्दधामिते ॥ २० ॥ ननुतेराघवस्तुल्योभरतेनमहात्मना ॥ बहुशोहिस्मबालेत्वंकथाःकथयसेमम ॥ २१ ॥ तस्यधर्मात्मनोदेविवनेवासंयशस्विनः ॥ कथंरोचयसेभीरुनववर्षाणिपंचच ॥२२॥ अत्यंतसुकुमारस्यतस्यधर्मेकृतात्मनः ॥ कथंरोचयसेवासमरण्येभृशदारुणे ॥ २३ ॥ रोचयस्यभिरामस्यरामस्यशुभलोचने ॥ तवशुश्रूषमाणस्यकिमर्थंविप्रवासनम् ॥ २४ ॥ रामोहिभरताद्भूयस्तवशुश्रूषतेसदा ॥ विशेषंत्वयितस्मात्तुभरतस्यनलक्षये ॥ २५ ॥ शुश्रूषांगौरवंचैवप्रमाणंवचनक्रियाम् ॥ कस्तुभूयस्तरंकुर्यादन्यत्रपुरुषर्षभात् ॥२६॥ बहूनांस्त्रीसहस्राणांबहूनांचोपजीविनाम् ॥ परिवादोपवादोवाराघवेनोपपद्यते ॥ २७ ॥

मतिःअसि । अतः परवशंगता एवं वदसीत्यर्थः ॥ १८ ॥ तदेवाह । इक्ष्वाकूणामिति । यतः इक्ष्वाकुकुले महान् अयं अनयः ज्येष्ठाभिषकनिवृत्तिरूपः संप्राप्तः । हे नयसंपन्ने यत्रअनये ते तव विकृता मतिः । कारणमिति शेषः । अतः । त्वं ग्रहाविष्टेति भावः ॥ १९ ॥ ननुअनाविष्टैवअहं वदामि नेत्याह । नहीति । न श्रद्धधामि । अस्यअनयस्यअनाविष्टत्वद्बुद्धिकृतत्वमिति शेषः ॥ २० ॥ तदेवउपपादयति । नन्विति । नन्विनिआमंत्रणे । एतत्कथयसे । वर्तमानसामीप्ये लट् । अनेन यामात् पूर्वं तथा कथनं ध्वन्यते ॥ २१ ॥ तस्य भरततुल्यप्रियस्य ॥ २२ ॥ २३ ॥ २४ ॥ शुश्रूषते सेवते तस्मात् रामक्रियमाणगौरवात् भरतस्य त्वयि विशेषम् अधिकं गौरवं न लक्षये ॥ २५ ॥ शुश्रूषां सेवाम् गौरवं बहुमानम् । प्रमाणं प्रतिपत्तिः । प्रामाण्यबुद्धिरित्यन्ये । वचनक्रिया उक्तकरणम् । पुरुषर्षभात् रामात् ॥ २६ ॥ बहूनां स्त्रीसहस्राणां मध्ये

एकयापि कृतः परिवादः । अकार्यकरणनिमित्तं समूलम् अयशः उपजीविनां मध्ये एकेनापि कथितः । अपवादः असूयाकल्पितं निर्मूलम् अयशः राघवे नोपपद्यते न विद्यते ॥२७॥ कुतस्तत्राह । सांत्वयन्निति । प्रियैः इष्टसंपादनैः गृह्णाति वशी करोति॥२८॥ जयति । जयोत्र स्वाधीनकरणम् ॥२९॥सत्यं सत्यवचः । दानं पारलौकिकम् । त्यागः ऐहिकप्रयोजनं दानम् । मित्रता सत्सु । शौचं बाह्यांतरशुद्धिः । आर्जवं वंचनाराहित्यम् ॥ ३०॥ पापं वनवासरूपं स्वस्य पापजनकम् आशंससे प्रार्थयसे । शमदमादिसंपत्त्या महर्षिसमतेजस्त्वम् ॥ ३१ ॥ लोकस्य लोकं प्रति प्रियवादिनः स्वस्य कं प्रत्यपिउक्तम् अप्रियं वाक्यं न स्मरामि । सोहं त्वत्कृते त्वद्वचनक्रियासंपादननिमित्तं प्रियं राममप्रियं कथं वक्ष्यामीति संबंधः । प्रियवादिनः रामस्य त्वत्कर्तृकं तद्विषयकं चेत्यर्थ इति कश्चित् ॥ ३२ ॥ ३३ ॥ गतांतस्य प्राप्तचरमकालस्य तपस्विनः शोचनीयावस्थस्य दीनस्य कारुण्यं दयाम् ॥ ३४ ॥ मृत्युं मन्मृत्युसंपादकानिष्टाभिनिवेशम् ॥ ३५ ॥ कुर्मि करोमि शरणं रक्षिका । अधर्मः ज्येष्ठातिक्रमेण कनीयसः । अभिषेककृतः निरपराधस्य त्यागकृतश्च ॥३६॥ अचेतनं मूर्च्छांप्राप्तम् ।

सांत्वयन्सर्वभूतानिरामःशुद्धेनचेतसा ॥ गृह्णातिमनुजव्याघ्रःप्रियैर्विषयवासिनः ॥ २८ ॥ सत्त्वेनलोकाञ्जयतिद्विजान्दानेनराघवः ॥ गुरूञ्छुश्रूषयावीरोधनुषायुधिशात्रवान् ॥ २९ ॥ सत्यंदानंतपस्त्यागोमित्रताशौचमार्जवम् ॥ विद्याचगुरुशुश्रूषाध्रुवाण्येतानिराघवे ॥ ३० ॥ तस्मिन्नार्जवसंपन्नेदेविदेवोपमेकथम् ॥ पापमाशंससेरामेमहर्षिसमतेजसि ॥ ३१ ॥ नस्मराम्यप्रियंवाक्यंलोकस्यप्रियवादिनः ॥ सकथंत्वत्कृतेरामंवक्ष्यामिप्रियमप्रियम् ॥ ३२ ॥ क्षमायस्मिंस्तपस्त्यागःसत्यंधर्मःकृतज्ञता ॥ अप्यहिंसाचभूतानांतमृतेकागतिर्मम ॥ ३३ ॥ ममवृद्धस्यकैकेयिगतांतस्यतपस्विनं ॥ दीनंलालप्यमानस्यकारुण्यंकर्तुमर्हसि ॥ ३४ ॥ पृथिव्यांसागरांतायांयत्किंचिदधिगम्यते ॥ तत्सर्वंतवदास्यामिमाचत्वंमृत्युमाविश ॥ ॥ ३५ ॥ अंजलिंकुर्मिकैकेयिपादौचापिस्पृशामिते ॥ शरणंभवरामस्यमाधर्मोमामिहस्पृशेत् ॥ ३६ ॥ इतिदुःखाभिसंतप्तंविलपंतमचेतनम् ॥ घूर्णमानंमहाराजंशोकेनसमभिप्लुतम् ॥ ३७ ॥ पारंशोकार्णवस्याशुप्रलपंतंपुनःपुनः ॥ प्रत्युवाचाथकैकेयीरौद्राद्रौद्रतरंवचः ॥ ३८ ॥ यदिदत्त्वावरौराजन्पुनःप्रत्यनुतप्यसे ॥ धार्मिकत्वंकथंवीरपृथिव्यांकथयिष्यसि ॥ ३९ ॥ यदासमेताबहवस्त्वयाराजर्षयःसह ॥ कथयिष्यंतिधर्मज्ञतत्रकिंप्रतिवक्ष्यसि ॥ ४० ॥ यस्याःप्रसादेजीवामियाचमामभ्यपालयत् ॥ तस्याःकृतामयामिथ्याकैकेय्याइतिवक्ष्यसि ॥ ४१ ॥ किल्बिषंत्वंनरेंद्राणांकरिष्यसिनराधिप ॥ योदत्वावरमद्यैवपुनरन्यानिभाषसे ॥ ४२ ॥ शैब्यःश्येनकपोतीयेस्वमांसंपक्षिणेददौ ॥ अलर्कश्चक्षुषीदत्वाजगामगतिमुत्तमाम् ॥ ४३ ॥

घूर्णमानं घूर्णमानशरीरम् ॥ ३७ ॥ पारं निस्तारं प्रलपंतं प्रार्थयंतम् । रौद्रतरं दारुणतरम् ॥ ३८ ॥ प्रत्यनुतप्यसे उक्तकरणाशक्त्या कथयिष्यसि लोकैरिति शेषः । स्वार्थण्यंताद्धेतुमण्णौ रूपम् ॥ ३९ ॥ यदा बहवः मिलिताः राजर्षयः त्वया सह मद्विषयवरदानादिविषयगोष्ठीं करिष्यंति तत्र तत्प्रश्ने किं प्रतिवक्ष्यसि किमुत्तरयिष्यसि ॥४०॥ न किमपि उत्तरं शक्यामित्याह । यस्या इति।प्रसादे शंबरमायानिवर्तनलक्षणानुग्रहे सति । प्रयत्नेइति पाठे स्थापनयनादिप्रयत्ने इत्यर्थः । या माम्अभ्यपालयत् । शीतोपचरादिना ररक्ष । मया मिथ्या कृता । प्रतिज्ञेति शेषः । इति वक्ष्यसि किम् इति सोपहासं वाक्यम् ॥ ४१ ॥ नरेंद्राणां स्ववंश्यानां किल्बिषम् अयशोरूपं मालिन्यं करिष्यसि । तत्र हेतुः-य इत्यादि । यद्वंशस्थः ईदृशः पापी तद्वंशः सर्वोपि ईदृश एवेति वदिष्यंति लोका इति भावः ॥४२॥ प्रतिज्ञायाः अपालनस्य अधर्मत्वं बोधयंती पूर्वेषां दुष्कर

प्रतिज्ञापालनं दर्शयति । शैब्य इति । अत्रेयं कथा-इंद्राग्नी श्येनकपोतरूपौ शैब्यस्यौदार्यजिज्ञासया भक्ष्यभक्षकभावापन्नौ शैब्यसमीपं गतौ । ततः कपोतः अभयार्थी शैब्यांकं प्रविवेश । तस्मै च सः अभयं ददौ । ततः श्येनेन मद्भक्ष्यं देवविहितं त्यज इत्युक्ते नाहं तं त्यजेयम्अपितु तत्प्रतिनिधिभूतं स्वमांसमेव ददामीति उक्त्वा सर्वं स्वमांसं श्येनाय दत्तवानिति । अलर्कश्च राजर्षिः । ब्राह्मणायअंधाय वरं प्रतिश्रुत्य तेन राजचक्षुषा स्व चक्षुस्संधानरूपे वरे उक्ते स्वचक्षुषी दत्तवानिति ॥ ४३ ॥ सागरः समुद्रः वेलाऽनतिलंघनाय देवैः प्रार्थितः । तेभ्यः । तत्प्रतिश्रुत्य न वेलाम्अतिवर्तते । एवं पूर्वेषां शैब्यादीनां वृत्तं स्मरन् । समयं प्रतिज्ञाम्अनृतां मा कार्षीः ॥ ४४ ॥ ४५ ॥ सिद्धांतमाह । भवत्विति । मदुक्तः रामविवासनपूर्वकः भरताभिषेकः धर्मो वा अधर्मो वा भवतु । ननु इयं रत्यर्थं मिथ्यैव मे प्रतिज्ञा तत्काले मिथ्यावचनस्य शास्त्रानुमतत्वादिति चेत्-तत्राह । यदिति । त्वया यत्मह्यं सत्यम् अनृतं वा संश्रुतं तस्य व्यतिक्रमः अकरणं नास्ति ॥ ४६ ॥ विपक्षे बाधकमाह । अहमित्यादि । पश्यतः पश्यंतं

सागरःसमयंकृत्वानवेलामतिवर्तते ॥ समयंमाऽनृतंकार्षीःपूर्ववृत्तमनुस्मरन् ॥ ४४ ॥ सत्वंधर्मंपरित्यज्यरामंराज्येभिषिच्यच ॥ सहकौसल्यया नित्यंरंतुमिच्छसिदुर्मते ॥ ४५ ॥ भवत्वधर्मोधर्मोवासत्यंवायदिवानृतम् ॥ यत्त्वयासंश्रुतंमह्यंतस्यनास्तिव्यतिक्रमः ॥ ४६ ॥ अहंहिविषमद्यैवपीत्वावहुतवाग्रतः ॥ पश्यतस्तेमरिष्यामिरामोयद्यभिषिच्यते ॥ ४७ ॥ एकाहमपिपश्येयंयद्यहंराममातरम् ॥ अंजलिंप्रतिगृह्णंतींश्रेयोननुमृतिर्मम ॥४८॥ भरतेनात्मनाचाहंशपेतेमनुजाधिप ॥ यथानान्येनतुष्येयमृतेरामविवासनात ॥४९॥ एतावदुक्त्वावचनंकैकेयीविरराम ह ॥ विलपंतंचराजानं नप्रतिव्याजहारसा ॥५०॥ कृत्वातुराजाकैकेय्यावाक्यंपरमशोभनम् ॥ रामस्यचवनेवासमैश्वर्यंभरतस्यच ॥ ५१ ॥ नाभ्यभाषतकैकेयींमुहूर्तं व्याकुलेंद्रियः ॥ प्रैक्षतानिमिषोदेवींप्रियामप्रियवादिनीम् ॥ ५२ ॥ तांहिवज्रसमांवाचमाकर्ण्यहृदयाप्रियाम् ॥ दुःखशोकमयींश्रुत्वाराजानसुखिताऽभवत् ॥ ५३ ॥ सदेव्याव्यवसायंचघोरंचशपथंकृतम् ॥ ध्यात्वारामेतिनिःश्वस्यच्छिन्नस्तरुरिवापतत् ॥ ५४ ॥ नष्टचित्तोयथोन्मत्तो विपरीतोयथातुरः ॥ हततेजायथासर्पोवभूवजगतीपतिः ॥ ५५ ॥ दीनयातुरयावाचाइतिहोवाचकैकयीम् ॥ अनर्थमिममर्थाभंकेनत्वमुपदेशिता ॥ ॥ ५६ ॥ भूतोपहतचित्तेवब्रुवंतीमांनलज्जसे ॥ शीलव्यसनमेतत्तेनाभिजानाम्यहंपुरा ॥ ५७ ॥ वालायास्तत्त्विदानींतेलक्षयेविपरीतवत् ॥ कुतो वातेभयंजातंयात्वमेवंविधंवरम् ॥ ५८ ॥

त्वाम्अनादृत्य ॥ ४७ ॥ अंजलिं प्रतिगृह्णंतीम् । राजमातृत्वेन सर्वलोकानामिति शेषः । नन्विति निश्चये । न क्रियां समुपाददे इति पाठेपि मरिष्यामीत्येव फलति ॥ ४८ ॥ ते तव समीपे आत्मना प्राणभूतेन भरतेन शपे तच्छपथपूर्वकं कथयामि रामविवासनादृतेअन्येन रत्नादिना न तुष्ये इति ॥ ४९ ॥ ५० ॥ अशोभनंपरं रामवनवासभरतैश्वर्यविषयं वाक्यं श्रुत्वेत्यन्वयः ॥ ५१ ॥ प्रैक्षत । कोपादिति शेषः ॥ ५२ ॥ ५३ ॥ व्यवसायं रामविवासनविषयं निश्चयम् । घोरं शपथं भरतशपथरूपं स्वकृतरामसुकृतादिशपथं वा ॥ ५४ ॥ विपरीतः सन्निपातादिना विपरीतप्रकृतिः । आतुरः व्याधिग्रस्तः हततेजाः । मन्त्रेणेति शेषः ॥ ५५ ॥ उपदेशिता उपदिष्टा ॥ ५६ ॥ मां न लज्जसे पतिसमक्षम् ईदृशलोकव्यवहारस्य लोकविगीतत्वात् । शीलव्यसनं सद्वृत्तस्य विशेषेणासनं त्यागः । अत एवेदानीं भूतोपघातोत्प्रेक्षा ॥ ५७ ॥ वालाया इति । वालाया अपीत्यर्थकं पूर्वन्वियि । तत्तु शीलं तु । इदानीं प्रौढत्वावस्थायामपि । विपरीतवत् विपरीतार्हं दुःशीलार्हं लक्षये । कुतो निमित्तात्केन निमित्तेन रामादीदृशं

भयं जातमित्यर्थः ॥ ५८ ॥ वरमाह । राष्ट्रे इति । राष्ट्रे भरतमासीनं वने राघवमासीनं वृणीषे । एतेन निर्धूतपातिव्रत्यलक्षणेन भावेनउपलक्षिता । किं च एतेनअशक्यवरद्वारकेण अनृतेन ममअनृततासंपादकेन कर्मणाउपलक्षिता त्वमेवं वरात् विरम ॥ यदि भर्तुःमम लोकस्य भरतस्य च प्रियं कार्यं कर्तव्यं तदाविरमेति संबंधः ॥ दुःखं तत्साधनम् अलीकं अपराधम् अयं तव क्लेशः सर्वो वृथैव-त्वदिष्टस्य भरताभिषेकस्यासिद्धेरित्याह । नेति । रामं विना राज्यं नावसेत् । अनेन चतुर्णामपि यथाभागं राज्यम्अनुमन्यस्व । यद्वाअस्तु भरत एव राजा । रामस्तु वृद्धस्य मम समीपे तिष्ठत्विति मन्यस्व नान्यथा त्वदिष्टसिद्धिरित्युपदेशः ॥ ५९ ॥ ६० ॥ ६१ ॥ तत्र हेतुः- रामादपीति । हि यतः । तं भरतं रामादपिधर्मतः बलवत्तरम् अतिशयेन धर्मवंतं मन्ये । भाषिते मयाउक्ते सत्यपि त्वं कथं वक्ष्यासि तव तस्यअतिप्रियत्वादिति भावः ॥ ६२ ॥ उपप्लुतम् इंदुं यथा तमिव विवर्णं मुखवर्णम्आदर्शादौ कथं द्रक्ष्यामि इति संबंधः । किं च सुकृतां सम्यक्प्रवर्तितां तां बुद्धिं रामाभिषेकविषयाम् । तत्र हेतुः-सुहृद्भिः सह निश्चिताम् ॥ ६३ ॥ अपावृत्तां पराभूताम् नानादिग्भ्यः समागताः राजानः ॥ अयं बालः ऐक्ष्वाकः किं कथं राज्यम्अकारयत् अपालयदिति मां वक्ष्यंतीति योजना बतेति खेदः ॥ ६४ ॥ ६५ ॥ परिप्र

राष्ट्रेभरतमासीनंवृणीषेराघवंवने ॥ विरमैतेनभावेनत्वमेतेनानृतेनच ॥ ५९ ॥ यदिभर्तुःप्रियंकार्यंलोकस्यभरतस्यच ॥ नृशंसेपापसंकल्पेक्षुद्रेदुष्कृतकारिणि ॥ ६० ॥ किन्नुदुःखमलीकंवामयिरामेचपश्यसि ॥ नकथंचिदृतेरामाद्भरतोराज्यमावसेत् ॥ ६१ ॥ रामादपिहितंमन्येधर्मतोबलवत्तरम् ॥ कथंवक्ष्यसिरामस्यवनंगच्छेतिभाषिते ॥ ६२ ॥ मुखवर्णंविवर्णंतुयथैवेंदुमुपप्लुतम् ॥ तांतुमेसुकृतांबुद्धिंसुहृद्भिःसहनिश्चिताम् ॥ ६३ ॥ कथंद्रक्ष्याम्यपावृत्तांपरैरिवहतांचमूम् ॥ किंमांवक्ष्यंतिराजानोनानादिग्भ्यःसमागताः ॥ ६४ ॥ बालोबतायमैक्ष्वाकश्चिरंराज्यमकारयत् ॥ यदाहिबहवोवृद्धागुणवंतोबहुश्रुताः॥६५॥परिप्रक्ष्यंतिकाकुत्स्थंवक्ष्यामीहकथंतदा॥कैकेय्याक्लिश्यमानेनपुत्रःप्रव्राजितोमया ॥ ६६ ॥ यदिसत्यंब्रवीम्यतत्तदसत्यंभविष्यति ॥ किंमांवक्ष्यतिकौसल्याराघवेवनमास्थिते ॥ ६७ ॥ किंचैनांप्रतिवक्ष्यामिकृत्वाविप्रियमीदृशम् ॥ यदायदाचकौशल्यादासीवचसखीवच ॥ ६८ ॥ भार्यावद्भगिनीवच्चमातृवच्चोपतिष्ठति ॥ सततंप्रियकामामेप्रियपुत्राप्रियंवदा ॥ ६९ ॥ नमयासत्कृतादेवीसत्कारार्हाकृतेतव ॥ इदानींतत्तपतिमांयन्मयासुकृतंत्वयि ॥ ७० ॥ अपथ्यव्यंजनोपेतंभुक्तमन्नमिवातुरम् ॥ विप्रकारंचरामस्यसंप्रयाणंवनस्यच ॥ ७१ ॥

क्ष्यंति । क राम इति मातारिति शेषः । कैकेय्याः वरार्थं क्लिश्यमानेन क्लेश्यमानेन तां प्रति कृतप्रतिज्ञायाः सत्यत्वरक्षणाय प्रव्राजितः इत्युत्तरं लोकः न ग्रहीष्यतीत्याह । कैकेय्येति । पूर्वदत्तेनइदानीं रामप्रव्राजनपरतया तया प्रकटीकृतेन वरेणेति शेषः ॥ ६६ ॥ यदि यद्यपि तत् तथापि एतत् असत्यं भविष्यति । तस्यां कामहतः तद्वचसा प्रव्राजितवानिति लोकः वदिष्यतीति भावः ॥ ६७ ॥ किं चैनामिति । मया मत्पुत्रेण वा ते किम् अपराद्धमिति यदा वक्ष्यति तदैनां प्रति निरुत्तर एवेत्यर्थः । यदायदा च । यतोयतश्चेत्यर्थः । दासीवत् रतिव्यवहारे सखीवत् रहस्यकथने भार्यावत् धर्माचरणे भगिनीवत् हिताशंसने मातृवत् भोजनदाने उपतिष्ठति सेवते ॥ केचित्तु दासीवत् गृहकार्यकरणे—सखीवत् क्रीडायां—भार्यावत् उक्त एव—भगिनीवत् ज्ञानयोगानुष्ठाने—मातृवत् तत्त्वकथने इत्याहुः ॥ अतः उत्तरम्अशक्यदानमिति बोध्यम् प्रियः पुत्रो यस्यां सा मम उक्तप्रकारैः सत्कारार्हापि तव कृते त्वद्वैमनस्यपरिहाराय न सत्कृता । तदिदानीं रामविवासनवरे त्वया उक्ते सति यत् त्वयि मया सुकृतं शोभनं कर्म त्वदनुसरणरूपं कृतं तत् मां तपति पीडयति ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ किमिव । आतुरं रुग्णम् अपथ्यव्यंजनोपेतं भुक्तम् अन्नं यथा तपति पीडयति । रामस्य विप्रकारम् अभिषेकनिवृत्तिं वनस्य तदुद्देश्यकं संप्रयाणं च

प्रेक्ष्येत्यन्वयः ॥ ७१ ॥ राज्ञो न किंचित् अकर्तव्यम् अस्तीति विचार्य स्वपुत्रविषये मम विश्वासं न करिष्यति । कृपणं कष्टम् ॥ ७२ ॥ अप्रियद्वयमेवाह । मां चेति । मे मदर्थम् । उपलक्षणमेतत् । रामार्थं च शोचंती स्वस्य प्राणान् क्षपयिष्यति ॥ ७३ ॥ किन्नरेण श्वशुरभूतेन भर्तृभूतेन च । तव मरणं कुतःतत्राह । न हीति ॥ ७४ ॥ नूनं ध्रुवम् ॥ ७५ ॥ असतीमेव सतीं पतिमारिकात्वेन असती त्ववतीमेव सतीं सर्वदा विद्यमानां सतीम् आपाततः सतीं व्यवस्यामि निश्चिनोमि । रूपिणीं दृष्टिप्रियां मदिरां पीत्वा पश्चात् विकारेण विषसंयुक्तां यथा जानाति तथेत्यर्थः ॥ ७६ ॥ यच्च त्वम् अनृतैः सांत्वैः इष्टवचनैः सांत्वयंती यत् मां भाषसे तत् गीतशब्देन मृगं संरुद्ध्य लुब्ध इव माम् अवधीः ॥ ७७ ॥ पुत्रविक्रायकं पुत्रेण मूल्येन स्त्रीसुखक्रेतारम् अनार्यः पापीति रथ्यासु विकरिष्यंति विगर्हिष्यंति ॥ ७८ ॥

सुमित्राप्रेक्ष्यवैभीताकथंमेविश्वसिष्यति ॥ कृपणंवतवैदेहीश्रोष्यातिद्वयमप्रियम् ॥ ७२ ॥ मांचपंचत्वमापन्नंरामंचवनमास्थितम् ॥ वैदेहीवतमे प्राणान्शोचंतीक्षपयिष्यति ॥ ७३ ॥ हीनाहिमवतःपार्श्वेकिन्नरेणेवकिन्नरी ॥ नहिराममहंदृष्ट्वाप्रवसंतंमहावने ॥ ७४ ॥ चिरंजीवितुमाशंसेरुदंतीं चापिमैथिलीम् ॥ सानूनंविधवाराज्यंसपुत्राकारयिष्यासि ॥ ७५ ॥ सतींत्वामहमत्यंतंव्यवस्याम्यसतींसतीम् ॥ रूपिणींविषसंयुक्तांपीत्वेवमदिरांनरः ॥ ७६ ॥ अनृतैर्वतमांसांत्वैःसांत्वयंतीस्मभाषसे ॥ गीतशब्देनसंरुद्ध्यलुब्धोमृगमिवावधीः ॥ ७७ ॥ अनार्यइतिमामार्याःपुत्रविक्रायकं ध्रुवम् ॥ विकरिष्यंतिरथ्यासुसुरापंत्राह्मणंयथा ॥ ७८ ॥ अहोदुःखमहोकृच्छ्रंयत्रवाचःक्षमेतव ॥ दुःखमेवंविधंप्राप्तंपुराकृतमिवाशुभम् ॥ ७९ ॥ चिरंखलुमयापापेत्वंपापेनाभिरक्षिता ॥ अज्ञानादुपसंपन्नारज्जुरुद्बंधनीयथा ॥ ८० ॥ रममाणस्त्वयासार्धंमृत्युंत्वांनाभिलक्षये ॥ बालोरहसिहस्ते नकृष्णसर्पमिवास्पृशम् ॥ ८१ ॥ तंतुमांजीवलोकोयंनूनमाक्रोष्टुमर्हति ॥ मयाह्यपितृकःपुत्रःसमहात्मादुरात्मना ॥ ८२ ॥ बालिशोवतकामात्मा राजादशरथोभृशम् ॥ स्त्रीकृतेयःप्रियंपुत्रंवनंप्रस्थापयिष्यति ॥८३॥ वेदैश्वब्रह्मचर्यैश्वगुरुभिश्चोपकर्शितः ॥ भोगकालेमहत्कृच्छ्रंपुनरेवप्रपत्स्यते ॥ ॥ ८४ ॥ नालंद्वितीयंवचनंपुत्रोमांप्रतिभाषितुम् ॥ सवनंप्रव्रजेत्युक्तोवाढमित्येववक्ष्यति ॥ ८५ ॥ यदिमेराघवःकुर्याद्वनंगच्छेतिचोदितः ॥ प्रतिकूलंप्रियंमेस्यान्नतुवत्सःकरिष्यति ॥ ८६ ॥

दुःखं कष्टम् । कृच्छ्रं कष्टम् । अहो कष्टमहो कष्टमिति यावत् । यत्र वरविषये रामविवासनवरविषयाः तव वाचः क्षमे यतःअतः पुराकृतम् अशुभमिव तत्फलमिव । इवशब्दः एवार्थे । एवंविधम् अपरिहार्यत्वेन अवश्यानुभाव्यं दुःखं प्राप्तमिति संबंधः ॥ ७९ ॥ पापेन मया उपसंपन्ना कंठसंलग्ना । सौख्याय कृतं त्वद्रक्षणं स्वनाशाय परिणतमित्याशयः ॥ ८० ॥ बाल इवेति योजना ॥ ८१ ॥ तंत्वयि अनुरक्तम् । जीवतापि मया सः महात्मा पुत्रः अपितृकः पितृप्रयुक्तराज्यरहितः कृतः । यतः अतः आक्रोष्टुं निंदितुम् ॥ ८२ ॥ निंदाप्रकारमाह । बालिश इति । प्रस्थापयिष्यतीति । उपलक्षणं–त्रिकालनिंदायाः ॥ ८३ ॥ उपकर्शितः कार्श्यं प्रापितः । कृच्छ्रं जटाभ्युपेततया वनेवासक्लेशम् ॥ ८४ ॥ द्वितीयं वचनं परिहासरूपं वचनम् । अलं समर्थः । अहमिव धर्मयंत्रितत्वात् ॥ ८५ ॥ यदि मे राघवः प्रतिकूलं

कुर्यात् । तन्मे प्रियं स्यादिति संबंधः ॥ ८६ ॥ ततः किम्—अत आह । राघवेहीति । अक्षमणीयं दुःसहवृत्तम् । अत एव सर्वलोकस्य धिक्कृतम् ॥ ८७ ॥ शेषे अवशिष्टे मम इष्टे कौसल्यादिरूपे जने किं पापं मनोवागगोचरं दुःखसाधनं प्रतिपत्स्यसे करिष्यसि ॥ ८८ ॥ यदि कौसल्या मां रामं च हास्यति ताभ्यां हीना भविष्यति । चात् सुमित्रा यदि पुत्रौ च । चात् रामं मां च एतैः यदि हीना भविष्यति तदा दुःखानि असहती देवी कौसल्या सुमित्रा च मामेव अनुमरिष्यति । लक्ष्मणस्य रामेण सह नियतं गमनात् । शत्रुघ्नस्य भरतानुयायित्वेपि अतीव त्वदनुरंजनं कुर्वतः रामस्येव तस्यापि त्वया क्रूरतया निराकरणात् पुत्रौ हास्यतीत्युक्तम् । तेन तस्याः क्रौर्यातिशयः व्यंग्यः । राज्ञः शोकातिशयवत्त्वात् विसंकुलवाक्यप्रयोगः न दोषाय ॥ ८९ ॥ पुत्राणां नरकवासः राज्यहान्या राज्याः राज्ञश्च शोकरूपपापमृत्युमरणादित्याहुः ॥ ९० ॥ मया रामेणेत्यादि व्यंग्योक्तिः । आकुलं क्षुभितम् ॥ ९१ ॥ रामप्रव्रजनस्य भरतसंमतत्वे स मे पुत्र एव नेत्याशयेनाह । प्रियं चेत्यादि ॥ ९२ ॥ ९३ ॥ राजपुत्रि दैवेन मामकदुर

राघवेहिवनंप्रातेसर्वलोकस्यधिक्कृतम् ॥ मृत्युरक्षमणीयंमांनयिष्यतियमक्षयम् ॥ ८७ ॥ मृतेमयिगतेरामेवनंमनुजपुंगवे ॥ इष्टेममजनेशेषेकिंपापंप्रतिपत्स्यसे ॥ ८८ ॥ कौशल्यामांचरामंचपुत्रौचयदिहास्यति॥दुःखान्यसहतीदेवीमामेवानुगमिष्यति ॥ ८९ ॥ कौसल्यांचसुमित्रांचमांचपुत्रैस्त्रिभिःसह ॥ प्रक्षिप्यनरकेसात्वंकैकेयीसुखिताभव ॥ ९० ॥ मयारामेणच त्यक्तंशाश्वतंसत्कृतंगुणैः ॥ इक्ष्वाकुकुलमक्षोभ्यमाकुलंपालयिष्यसि॥ ॥ ९१ ॥ प्रियंचेद्भरतस्यैतद्रामप्रव्राजनंभवेत् ॥ मास्ममेभरतःकार्षीत्प्रेतकृत्यंगतायुषः ॥ ९२ ॥ मृतेमयिगतेरामेवनंपुरुषपुंगवे ॥ सेदानींविधवाराज्यंसपुत्राकारयिष्यसि ॥ ९३ ॥ त्वंराजपुत्रिदैवेनन्यवसोममवेश्मनि ॥ अकीर्तिश्चातुलालोकेध्रुवःपरिभवश्चमे ॥ ९४ ॥ सर्वभूतेषुचावज्ञायथापापकृतस्तथा ॥ कथंरथैर्विभुर्यात्वागजाश्वैश्चमुहुर्मुहुः ॥ पद्भ्यांरामोमहारण्येवत्सोमेविचरिष्यति ॥ ९५ ॥ यस्यचाहारसमयेसूदाःकुंडलधारिणः ॥ अहंपूर्वाःपचंतिस्मप्रसन्नाःपानभोजनम् ॥ ९६ ॥ सकथंनुकषायाणितिक्तानिकटुकानिच ॥ भक्षयन्वन्यमाहारंसुतोमेवर्तयिष्यति ॥९७॥ महार्हवस्त्रसंवद्धोभूत्वाचिरसुखोचितः ॥ काषायपरिधानस्तुकथंरामोभविष्यति ॥ ९८ ॥ कस्येदंदारुणंवाक्यमेवंविधमपीरितम् ॥ रामस्यारण्यगमनंभरतस्याभिषेचनम् ॥ ९९ ॥ धिगस्तुयोषितोनामशठाःस्वार्थपरायणाः ॥ नब्रवीमिस्त्रियःसर्वाभरतस्यैवमातरम् ॥ १०० ॥ अनर्थभावेर्थपरेनृशंसेममानुतापायनिवेशितासि ॥ किमप्रियंपश्यसिमन्निमित्तंहितानुकारिण्यथवापिरामे ॥ १०१ ॥

दृष्टवशेन मम वेश्मनि न्यवसः । राजपुत्रीवादेनेति पाठे राजपुत्रीव्यपदेशमात्रेणेत्यर्थः । मे अकीर्तिः परोक्षापयशोत्राकीर्तिः । महाजनसमक्षं धिक्कारः परिभवः । सर्वभूतेष्ववज्ञा क्षुद्रत्वेन प्रतिपत्तिः । यतोन्यवसः । अतः एतत्सर्वं भविष्यतीति शेषः ॥ ९४ ॥ ९५ ॥ ॥ ९६ ॥ स कथमिति । कषायादीनि कंदमूलानीत्यध्याहारः । तद्रूपं वन्यमाहारम् । वर्तयिष्यति जीविष्यति ॥ ९७ ॥ ९८ ॥ कस्येति । इदमेवंविधं दारुणम् । एतदुत्तरार्धरूपं रामस्यारण्यगमनमित्यादिवाक्यं वाक्यश्रवणं कस्यापीरितम् अनिर्वचनीयस्य मम दुष्कर्मणः फलमित्यर्थः ॥ ९९ ॥ कैकेयीदौर्जन्यं दृष्ट्वा राजा शोकेन स्त्रीमात्रं निंदति । धिगिति । निंद्यत्वमस्त्वित्यर्थः । पुनः स्वाभाविकविवेकेनाह । नेति । कौसल्यादीनां निंदानर्हत्वादिति भावः ॥ १०० ॥ अनर्थे जगदनर्थसाधने भावो यस्याः । अर्थपरे स्वार्थसाधनपरे । ममानुतापाय मदनुतापार्थं

निवेशितासि निवेशितदुर्भावासि । ईश्वरेणेति शेषः । मन्निमित्तमिति । बहुव्रीहिः । रामे वा जगद्धितानुकारिणि किमप्रियं तत्साधनं पश्यसीत्यर्थः ॥ १०१ ॥ राममरण्यवासरूपे व्यसने निमग्नं दृष्ट्वा कृत्स्नं जगत्कुपितं स्यात् विपरीतं स्यात् । कोपप्रकारमाह । कृतानुरागाः पितरः पुत्रांस्तादृशान् बालानपि त्यजेयुः रामेण सह गमनार्थम् । अपिना विभक्तिविपरिणामेनात्रापि तत्संबंधात् तादृशाः पुत्राः तादृशान्वृद्धान् तादृश्यो भार्याः तादृशान्पतीन् अपिना तादृशाः पतयः तादृशीर्भार्या अपि त्यजेयुः । एतेन जगदनर्थसाधनभाववत्तोपपादिता ॥ १०२ ॥ स्वस्य रामं विना जीवनव्यतिरेकं दर्शयिष्यन् तदन्वये स्वजीवनान्वयं दर्शयति । अहमिति । आव्रजंतं मत्समीपे आगच्छंतम् । अस्य श्रुत्वेति शेषः । आगच्छंतं श्रुत्वा दर्शनेन चक्षुषा पश्यन्निव नंदामि श्रवणमात्रेण दर्शनजन्यं सुखमुक्तम् । दृष्ट्वैव दृष्ट्वा तु पुनश्चिरवृद्धोपि पुनर्युवेव हृष्टपुष्टांतर्बहिःपरिकरो भवामि ॥ १०३ ॥ हिरपीत्यर्थे । सूर्येण विनापि लोकस्य प्रवृत्तिर्व्यवहारः स्यात् वज्रधरेण अवर्षतापि प्रवृत्तिर्लोकस्य जीवनं स्यात् । वाशब्द इति । अथवा इंद्रेण स्वरूपसत्तां विनापि प्रवृत्तिर्भवेत् । रामं तु विना न कस्यापि जीवनमिति मे मतिः । अंतर्यामिणं विना कस्यापि व्यवहारस्यासिद्धेः । एवं च स्वाजीवनं कैमुतिकन्यायसिद्धमिति भावः ॥ १०४ ॥ किं च त्वाम्

परित्यजेयुःपितरोपिपुत्रान्भार्याःपतींश्चापिकृतानुरागाः ॥ कृत्स्नंहिसर्वंकुपितंजगत्स्याद्दृष्ट्वैवरामंव्यसनेनिमग्नम् ॥ १०२ ॥ अहंपुनर्देवकुमाररूपमलं कृतंतंसुतमाव्रजंतम् ॥ नंदामिपश्यन्निवदर्शनेनभवामिदृष्ट्वैवपुनर्युवेव ॥ १०३ ॥ विनाहिसूर्येणभवेत्प्रवृत्तिरवर्षतावज्रधरेणवापि ॥ रामंतुगच्छंत मितःसमीक्ष्यजीवेन्नकश्चित्त्वितिचेतनामे ॥ १०४ ॥ विनाशकामामहितामभित्रामावासयंमृत्युमिवात्मनस्त्वाम् ॥ चिरंवतांकेनधृतासिसर्पीमहा विषातेनहतोस्मिमोहात् ॥ १०५ ॥ मयाचरामेणसलक्ष्मणेनप्रशास्तुहीनोभरतस्त्वयासह ॥ पुरंचराष्ट्रंचनिहत्यबांधवान्ममाहितानांचभवाभिभा षिणी ॥ १०६ ॥ नृशंसवृत्तेव्यसनप्रहारिणिप्रसह्यवाक्यंयदिहाद्यभाषसे ॥ ननामतेकेनमुखात्पतंत्ययोविशीर्यमाणादशनाःसहस्रधा ॥ १०७ ॥ नकिंचिदाहाहितमप्रियंवचोनवेत्तिरामःपरुषाणिभाषितुम् ॥ कथंतुरामेह्यभिरामवादिनिब्रवीषिदोषान्गुणनित्यसंमते ॥ १०८ ॥ प्रताम्यवाप्रज्वल वाप्रणश्यवासहस्रशोवास्फुटितामहींव्रज ॥ नतेकरिष्यामिवचःसुदारुणंसमाहितंकेकयराजपांसने ॥ १०९ ॥ क्षुरोपमांनित्यमसत्प्रियंवदांप्रदुष्ट भावांस्वकुलोपघातिनीम् ॥ नजीवितुंत्वांविषहेऽमनोरमांदिधक्षमाणांहृदयंसबंधनम् ॥ ११० ॥

त्मनो मृत्युमिव स्वगृहेहमावासयम् । किं च त्वं महाविषा सर्पी मयाअंकेन मोहात् तत्त्वेनाज्ञानात् धृतासि । तेनांकधारणेनाहं हतोस्मि ॥ १०५ ॥ पुरं च राष्ट्रं चेति अस्य प्रशास्त्वित्यनेन सहान्वयः । त्वं च बांधवान् पतिपुत्रादीन् निहत्य ममाहितानां शत्रूणामभिभाषणशीला भव । वार्ताकरणयोग्यबांधवाभावादिति भावः । अभिहर्षिणीति पाठे तेषां हर्षदा भव ॥ १०६ ॥ व्यसनप्रहारिणि वार्धकरूपापदि पुत्रवियोगरूपप्रहारकारिणि प्रसह्य पतिपत्नीभावं तिरस्कृत्य इह देशे अद्य काले यद्भाषसे क्रूरम् अतः ते मुखादवश्यपाताः दंताः केन नाम हेतुना सहस्रधा विशीर्यमाणाः संतो न पतंतीति । न जाने इति शेषः ॥ १०७ ॥ अप्रियवचोऽकथने हेतुः न वेत्तीत्यादि । दोषान् जटाचीरधारणवनवासादीनात्मनो दोषजनकान् । गुणैर्नित्यं सर्वेषां संमते ॥ १०८ ॥ प्रताम्य ग्लायस्व । प्रज्वल अग्निप्रवेशेन । प्रणश्य विषेण । कुद्दालप्रहारैः सहस्रशः स्फुटितां कृतगर्तां वा महीं व्रज । अथापि ते वचो न करिष्य इति संबंधः ॥ १०९ ॥ असत्प्रियंवदां मिथ्याप्रियभाषिणीम् प्रदुष्टभावां दुष्टांतःकरणाम् अत एव अमनोरमाम् सबंधनं सप्राणं हृदयं दिधक्षमाणां त्वां जीवितुं न विषहे नोत्सहे तव नाशमेवाशासे इत्यर्थः । प्राणबंधनं हि सोम्यमन इति छांदोग्यश्रुतिः ॥ ११० ॥

दंडवाक्यमुक्त्वा पुनः सामाह । नेति । आत्मवताम् आत्मज्ञानाम् । अत्रापिः पूरणीयः । यदेवमतो ममेत्यादिः ॥ १११ ॥ अतिमात्रया अतिक्रांतसौंदर्यपरिच्छेदया । यद्वातिक्रांतमर्यादया हृदये मर्मणि गृहीतः प्रसारिताविल्यनेन पत्यावपिअधमर्णदृष्टिर्द्योत्यते । असंप्राप्येत्यनेन पिस्पृक्षोरपि चित्तमूर्छाजनितवैवश्यं द्योतितम् । तदेवाह । यथातुर इति । आतुरो यथा किंचित्स्प्रष्टुकामोऽस्पृष्ट्वैवमध्ये यथा मूर्च्छया पतति तथेत्यर्थः ॥ ११२ ॥ रंयकेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्वादशःसर्गः ॥ १२ ॥ ॥ छ ॥ अथ सत्यपाशबद्धतया प्रणामवाक्येन च न ते वचः करिष्यामीति वचसि दाढर्याभावं निश्चित्य पुनरप्याह । अतदर्हं स्त्रीप्रणामानर्हम् । अतथोचितं भूशयनानर्हम् ॥ १ ॥ अनर्थरूपा । कुलस्येतिशेषः । असिद्धोर्थः प्रयोजनं यस्याः । अभीता जनापवादादभीता । भयदर्शिनी । रामाद्भरतस्येति शेषः । तमेव वरं पूर्वदत्तमेव वरम् उद्दिश्य राजानमाकारयामास संबोधयामास ॥ २ ॥ कत्थसे श्लाघसे । पूर्वार्धांते इतिरध्याहार्यः । विधारयितुम् । ऋणत्वेनेति

नजीवितंमेस्तिकुतःपुनःसुखंविनात्मजेनात्मवतांकुतोरतिः ॥ ममाहितंदेविनकर्तुमर्हसिस्पृशामिपादावपितेप्रसीदमे ॥ १११ ॥ सभूमिपालोविलपन्ननाथवत्स्त्रियागृहीतोहृदयेतिमात्रया ॥ पपातदेव्याश्चरणौप्रसारितावुभावसंप्राप्ययथातुरस्तथा ॥ ११२ ॥ इत्यार्षेश्रीमद्रामायणेवा० आदिकाव्ये चतुर्विं० सा० सं० अयोध्याकांडेद्वादशःसर्गः ॥ १२ ॥ ॥ अतदर्हंमहाराजंशयानमतथोचितम् ॥ ययातिमिवपुण्यांतेदेवलोकात्परिच्युतम् ॥१॥ अनर्थरूपाऽसिद्धार्थाह्यभीताभयदर्शिनी ॥ पुनराकारयामासतमेववरमंगना ॥ २ ॥ त्वंकत्थसेमहाराजसत्यवादीदृढव्रतः ॥ ममचेदंवरंकस्माद्विधारयितुमिच्छसि ॥ ३ ॥ एवमुक्तस्तुकैकेय्याराजादशरथस्तदा ॥ प्रत्युवाचततःक्रुद्धोमुहूर्तंविह्वलन्निव ॥ ४ ॥ मृतेमयिगतेरामेवनंमनुजपुंगवे ॥ हंतानार्येममामित्रेसकामासुखिनीभव ॥५॥ स्वर्गेपिखलुरामस्यकुशलंदैवतैरहम् ॥ प्रत्यादेशादभिहितंधारयिष्येकथंवत ॥ ६॥ कैकेय्याःप्रियकामेनरामःप्रव्राजितोवनम् ॥ यदिसत्यंब्रवीम्येतत्तदसत्यंभविष्यति ॥ ७ ॥ अपुत्रेणमयापुत्रःश्रमेणमहतामहान् ॥ रामोलब्धोमहातेजाःसकथंत्यज्यते मया ॥ ८ ॥ शूरश्चकृतविद्यश्चजितक्रोधःक्षमापरः ॥ कथंकमलपत्राक्षोमयारामोविवास्यते ॥ ९ ॥ कथमिंदीवरश्यामंदीर्घबाहुंमहाबलम् ॥ अभिराममहंरामंस्थापयिष्यामिदंडकान् ॥ १० ॥ सुखानामुचितस्यैवदुःखैरनुचितस्यच ॥ दुःखंनामानुपश्येयंकथंरामस्यधीमतः ॥ ११ ॥ यदिदुःखमकृत्वातुममसंक्रमणंभवेत् ॥ अदुःखार्हस्यरामस्यततःसुखमवाप्नुयाम् ॥ १२ ॥

शेषः ॥ ३ ॥ ४ ॥ ५ ॥ रामप्रवासदुःखेन मृत्वा स्वर्गं गतस्यापि मे सुखं नास्तीत्याह । स्वर्गे इति । रामस्य कुशलं दैवतैः पृष्टोहं किमुत्तरं वदिष्य इति शेषः । वनं प्रत्यादिष्ट इत्युत्तरं देयं चेत्प्रत्यादेशात तद्रूपादुत्तरादूर्ध्वं यद्दैवैरभिहितं भविष्यति ज्येष्ठं श्रेष्ठगुणैर्युक्तं कथं प्रत्याख्यातवानसीत्येवंरूपं वाक्यं तत्कथं धारयिष्ये । हृदये इति शेषः । अतस्तदप्रत्याख्यानमेव वरमिति भावः ॥ ६ ॥ ननु सत्यवशात्प्रत्यादिष्ट इत्युत्तरं तत्राह । कैकेय्या इति । प्रियकामेन प्रियेण वरेण एतत्सत्यं यदि यद्यपि ब्रवीमि । तत्तथापि एतत् मे वाक्यम् असत्यं भविष्यतिअसत्यं मंस्यंतीत्यर्थः । कामुकतया प्रत्याख्यात इत्येव मस्यंत इत्याशयः ॥ ७ ॥ त्यज्यते त्यक्ष्यते ॥ ८ ॥ ॥ ९ ॥ स्थापयिष्यामि प्रस्थापयिष्यामि ॥ १० ॥ दुःखैरिति । षष्ठ्यर्थे तृतीया । दुःखं वनगमनरूपं दुःखसाधनम् ॥ ११ ॥ सर्वथा रामस्यादुःखकरणमेव मे श्रेय

इत्याह । यदीति । अदुःखार्हस्य रामस्य दुःखमकृत्वा यदि मम संक्रमणं स्वर्गे प्रतिगमनं भवेत् तदा स्वर्गे सुखमाप्नुयामित्यन्वयः मरणे वराप्रदानजन्यदोषोपि न । जीवतो हि सा प्रतिज्ञेति भावः ॥ १२ ॥
मम प्रियं रामंविप्रियेण किं योजयसे इत्यन्वयः ॥ १३ ॥ अकीर्तिः स्त्रीजित इत्यकीर्तिःजन्मसंपादितां कीर्तिं परिभविष्यतीत्यर्थः ॥ १४ ॥ यत्संबंधिप्रदोषे स्वनिवेशप्रवेशात्पूर्वं सूर्योस्तमगमत् रजनी चाभ्यवर्तत
सा त्रियामा चंद्रमंडलमंडितापि आर्तस्य दुःखवतो विलपमानस्य च न व्यभासत न प्रकाशेन सुखदाऽभूत । विलापेनैव रात्रिकालो व्यतीत इति भावः । यतः सा शर्वरी हिंसिका । तस्येति शेषः ।
शृणातीति योगात् ॥ १५ ॥ १६ ॥ आर्तवत् रोगपीडितवत् । यद्वा स्वार्थे वतिः । शृण्वतां दुःखं यथा भवति तथा विललाप । यद्वा दुःखम् । प्राप्येति शेषः । अथ दुःखवशाद्राज्ञः अव्युष्टिं
प्रार्थयते । न प्रभातमिति । त्वयेति पाठे त्वया गतया जायमानं प्रातःकालमित्यर्थः । तवेति पाठे त्वत्संबंधिप्रातःकालमित्यर्थः ॥ १७ ॥ मे मह्यम् । भद्रे निशे । एवं हि तस्याः कल्याणदत्वंप्रभाते

नृशंसेपापसंकल्पेरामंसत्यपराक्रमम् ॥ किंविप्रियेणकैकेयिप्रियंयोजयसेमम ॥ १३ ॥ अकीर्तिरतुलालोकेध्रुवंपरिभविष्यति ॥ तथाविलपतस्तस्यप
रिभ्रमितचेतसः ॥ १४ ॥ अस्तमभ्यागमत्सूर्योरजनीचाभ्यवर्तत ॥ सात्रियामातदार्तस्यचंद्रमंडलमंडिता ॥ १५ ॥ राज्ञोविलपमानस्य
नव्यभासतशर्वरी ॥ सदैवोष्णंविनिःश्वस्यवृद्धोदशरथोनृपः ॥ १६ ॥ विललापार्तवद्दुःखंगगनासक्तलोचनः ॥ नप्रभातंत्वयेच्छामिनिशेनक्षत्रभूषिते ॥
॥ १७ ॥ क्रियतांमेदयाभद्रेमयायंरचितोंजलिः ॥ अथवागम्यतांशीघ्रंनाहमिच्छामिनिर्घृणाम् ॥ १८ ॥ नृशंसांकैकयींद्रष्टुंयत्कृतेव्यसनंमम ॥
एवमुक्त्वाततोराजाकैकेयींसंयतांजलिः ॥ १९ ॥ प्रसादयामासपुनःकैकेयींराजधर्मवित् ॥ साधुवृत्तस्यदीनस्यत्वद्गतस्यगतायुषः ॥ २० ॥
प्रसादःक्रियतांभद्रेदेविराज्ञोविशेषतः ॥ शून्येनखलुसुश्रोणिमयेदंसमुपागतम् ॥ २१ ॥ कुरुसाधुप्रसादंमेबालेसहृदयाह्यसि ॥ प्रसीददेविरामोमे
त्वद्दत्तंराज्यमव्ययम् ॥ २२ ॥ लभतामसितापांगेयशःपरमवाप्स्यसि ॥ ममरामस्यलोकस्यगुरूणांभरतस्यच ॥ प्रियमेतत्गुरुश्रोणिकुरुचारुमुखे
क्षणे ॥ २३ ॥ विशुद्धभावस्यहिदुष्टभावादीनस्यताम्राश्रुकलस्यराज्ञः ॥ श्रुत्वाविचित्रंकरुणंविलापंभर्तुर्नृशंसानचकारवाक्यम् ॥ २४ ॥ ततः
सराजापुनरेवमूर्छितःप्रियामतुष्टांप्रतिकूलभाषिणीम् ॥ समीक्ष्यपुत्रस्यविवासनंप्रतिक्षितौविसंज्ञोनिपपातदुःखितः ॥ २५ ॥

रामविवासनभयमिति भावः । गम्यतां त्रियामया त्वया । रात्र्यपगमे प्रजासन्निधानेनैतद्दर्शनाभाव इति भावः । यद्वा प्रभाते रामगमनेन झटिति मरणे सति अस्याः अदर्शनमिति भावः । नाहमिच्छामि
द्रष्टुमित्यन्वयः ॥ १८ ॥ १९ ॥ त्वद्गतस्य सत्यवशत्वात्त्वद्वशं गतस्येत्यर्थः । गतायुषः अल्पावशिष्टायुषः ॥ २० ॥ राज्ञो विशेषतः राजत्वाद्विशेषेण प्रसादः उचितः । इदं पूर्वोक्तकटुक
वाक्यं शून्येन दुःखवशाद्वक्तव्यावक्तव्यविवेकरहितेन । यद्वा इदं रामाभिषेचनं शून्ये एकांते निर्जने नोक्तं--किं तु सभायाम् । अतः प्रसादं कुरु सभ्योपहासो यथा न भवति तथेत्यर्थः ॥ २१ ॥
सहृदया मदंचनशून्यहृदया-तदेवाह । प्रसीदेति । त्वया वरलाभाद्गृहीतमेव राज्यं मत्प्रीतये रामाय देहीत्याशयः गुरूणां वसिष्ठादीनाम् । गुरुश्रोणीति पाठे उर्विति पाठांतरे च उर्वी महती श्रोणिर्यस्यास्तादृशि
॥ २२ ॥ २३ ॥ रोदनेनअक्ष्णोः ताम्रत्वात ताम्रस्य अश्रुकलस्य अश्रुपूर्णस्य । हिरण्यर्थे ॥ २४ ॥ तद्रात्रिः प्राक्प्रसदाप्रियाम् अतुष्टाम एवंविधविनयवाक्येनापि संतोषमप्राप्ताम् विवासनं प्रति याच्यमानं वरं

समीक्ष्य दुःखितः चिरपरिचितप्रेमत्वात्तां धिक्कर्तुमशक्नुवन् प्रयासलब्धं पुत्रं च त्यक्तुमशक्नुवन् कर्तव्यमूढतया दुःखितो विसंज्ञो मूर्छितः क्षितौ पपात ॥ २५ ॥ घोरम् दीर्घम् उष्णंच श्वसतः सा निशा जगाम । प्रति बोधनं तत्साधनमंगलगीतादिकम् दुःखवशादिति भावः ॥ २६ ॥ चैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्रयोदशः सर्गः ॥ १३ ॥ ॥ छ ॥ एवं दशां प्राप्तेपि राजनि कैकेयी मन्निमित्ततो राजा म्रियते चेत् म्रियतां वृद्धः न तु मयोक्तमन्यथा कार्यमिति निश्चित्याह । पुत्रेत्यादि । पापा कैकेयी विचेष्टमानं मरणकाल इव विकृतमुत्प्रेक्ष्य सम्यक् दृष्ट्वापीत्यर्थः ॥ १ ॥ मम संश्रवं वरदानरूपं संश्रुत्य प्रतिश्रुत्य अंगीकृत्य पापं कृत्वेव सन्नः पीडितः सन् शेषे-इदं किं-इदं नोचितमित्यर्थः । अतःस्थित्यां सत्यपालनरूपायां सतां मर्यादायाम् ॥ २ ॥ सत्यरूपं धर्ममाश्रित्य उद्दिश्य त्वं च त्वं तु मया प्रतिचोदितो वरदानविषये प्रेरितः । तत्र सत्यं रक्षितुमेषा मे प्रेरणा । अन्यथा प्रतिज्ञातदानं विनैव मरणे तवाधर्मः स्यादिति भावः ॥ ३ ॥ यद्यपि सत्यपालने प्राणसंशयः तथापि तमंगीकृत्य

इतीवराज्ञोव्यथितस्यसानिशाजगामघोरंश्वसतोमनस्विनः ॥ विबोध्यमानःप्रतिबोधनंतदानिवारयामाससराजसत्तमः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणेवा० आदिकाव्ये चतुर्विं०सा०सं० अयोध्याकांडेत्रयोदशःसर्गः ॥ १३ ॥ ॥ पुत्रशोकार्दितंपापाविसंज्ञंपतितंभुवि ॥ विचेष्टमानमुत्प्रेक्ष्यऐक्ष्वाकमिदमब्रवीत् ॥ १ ॥ पापंकृत्वेवकिमिदंममसंश्रुत्यसंश्रवम् ॥ शेषेक्षितितलेसन्नःस्थित्यांस्थातुंत्वमर्हसि ॥ २ ॥ आहुःसत्यंहिपरमंधर्मंधर्मविदोजनाः ॥ सत्यमाश्रित्यचमयात्वंधर्मंप्रतिचोदितः ॥ ३ ॥ संश्रुत्यशैब्यःश्येनायस्वांतनुंजगतीपतिः ॥ प्रदायपक्षिणेराजाजगामगतिमुत्तमाम् ॥ ४ ॥ तथाह्यलर्कस्तेजस्वीब्राह्मणेवेदपारगे ॥ याचमानेस्वकेनेत्रेउद्धृत्याविमनाददौ ॥ ५ ॥ सरितांतुपतिःस्वल्पांमर्यादांसत्यमन्वितः ॥ सत्यानुरोधात्समयेवेलांस्वांनातिवर्तते ॥ ६ ॥ सत्यमेकपदंब्रह्मसत्येधर्मःप्रतिष्ठितः ॥ सत्यमेवाक्षयावेदाःसत्येनावाप्यतेपरम् ॥ ७ ॥ सत्यंसमनुवर्तस्वयदिधर्मेधृतामतिः ॥ सवरःसफलोमेस्तुवरदोह्यसिसत्तम ॥ ॥ ८ ॥ धर्मस्यैवाभिकामार्थममचैवाभिचोदनात् ॥ प्रव्राजयसुतंरामंत्रिःखलुत्वांब्रवीम्यहम् ॥ ॥ ९ ॥ समयंचममार्यैमंयदित्वंनकरिष्यसि ॥ अग्रतस्तेपरित्यक्तापरित्यक्ष्यामिजीवितम् ॥ १० ॥ एवंप्रचोदितोराजाकैकेय्यानिर्विशंकया ॥ नाशकत्पाशमुन्मोक्तुंबलिरिंद्रकृतंयथा ॥ ११ ॥

सत्यरक्षणमेव न्याय इत्याह । संश्रुत्येत्यादि ॥ ४ ॥ ५ ॥ सरितां पतिः सत्यमन्वितः सत्यं प्राप्तः सत्यानुरोधात् सत्यत्यागभयात् स्वल्पां मर्यादां सुलंघ्यामपि वेलां समये चंद्रोदयरूपे वृद्धिसमयेपि नातिवर्तते ॥ ६ ॥ प्रणवरूपैकपदवाच्यत्वाद्वाच्यवाचकयोश्चाभेदाद्यत् प्रणवरूपं ब्रह्म शास्त्रे तत्सत्यवाक्यमेव अक्षया वेदाः अक्षयं तज्ज्ञानफलं सत्येनैव परं पदं ब्रह्मस्वरूपं प्राप्यते चित्तशुद्धिद्वारेति भावः ॥ ७ ॥ तस्मात्सत्यमिति ॥ ८ ॥ धर्मस्य परलोकसिद्धिफलकस्य अभिकामार्थं प्रार्थनीयफलसिद्ध्यर्थं क्रियमाणान्मम अभिचोदनात् प्रेरणाच्च त्वं सुतं रामं प्रव्राजय एवं त्वां त्रिर्ब्रवीमि अतो नाहमस्माद्वरग्रहणान्निवर्तयितुं शक्येति भावः ॥ ९ ॥ विपक्षे स्त्रीवधदोषश्चाधिकस्ते इत्याह समयं चेति । मद्वरविषयमर्थं परित्यक्ता त्वयोपेक्षिता ते अग्रतो जीवितं त्यक्ष्यामि ॥ १० ॥ एवं न्यायोपेतप्रकारेण पाशं सत्यपाशबंधनम् इंद्रकृतम् इंद्र प्रेरितोपेंद्रकृतं

पदत्रयमितदेयमतिश्रवरूपं पाशम् ॥ ११ ॥ युगचक्रयोरंतरं मध्यं माप्य पारिस्पंदन् तिर्यक् चेष्टमानो धुर्य इव उद्भ्रांतहृदयत्वादिविशिष्टोऽभवत् ॥ १२ ॥ संस्तभ्य विकलं चित्त मिति शेषः ॥ १३ ॥ ईदृश्याः सपुत्रायास्त्याग एवोचित इत्याशयेनाह यस्ते इति । मंत्रकृतः । गृभ्णामीति । मंत्रेण संस्कृतः संत्यजामि तत्मत्युक्तं व्यवहारं त्यजामि स्वजं स्वस्माज्जातं तव पुत्रं च त्वया सह त्यजामि॥१४॥ किं च रामाभिषेको मयाऽशंक्यनिवारण इत्याह मयातेत्यादि । उदयनं मति उदयं मतिलभ्य तदर्थं अभिषेकार्थं कल्पितै रामाभिषेकसंभारैरभिषेकं कर्तुं गुरुजनो मां त्वरयिष्यति । अतो गुरुजनानुरोधेन मया रामः कारयितव्यः कृताभिषेकः कारयितव्यः । एवं सति रुष्टया मत्सलिलक्रिया न कार्येत्याह मृतस्येत्यादि । मा कुर्विति शेषः ॥ १५ ॥ १६ ॥ क्रोधातिशयेनोक्तमेवार्थं पुनराह सपुत्रयेति इति कतकतीर्थौ । मम तु प्रतिभाति सूर्योदयं मतिलभ्याभिषेकं कर्तुं त्वरयिष्यति अतः स एव मया कर्तव्य इत्याद्यार्थः त्वं तु त्याज्यैवेति भावः । ननु मयि जीवंत्यां कथं रामाभिषेको भविष्यति तत्राह यदि गुरूनप्यवज्ञाय रामाभिषेचनं व्याहंतासि तद्विघातं करिष्यसि तदाभिषेकार्थं कल्पितै रामाभिषेकसंभारैर्मृतस्य मे सलिलक्रियां मया रामः कारयितव्यः क्रोधादाह सपुत्रयेति ॥ १७ ॥ ननु किमनेनात्मवैधव्यव्यवसायेन पुत्रादप्यात्मनः प्रियत्वादात्मनः कामाय सर्वं प्रियं भवतीति

उद्भ्रांतहृददयश्चापिविवर्णवदनोभवत् ॥ सधुर्योवैपरिस्पंदन्युगचक्रांतरंयथा ॥ १२ ॥ विकलाभ्यांचनेत्राभ्यामपश्यन्निवभूमिपः ॥ कृच्छ्राद्धैर्येणसंस्तभ्यकैकेयीमिदमब्रवीत् ॥ १३ ॥ यस्तेमंत्रकृतःपाणिरग्नौपापेमयाधृतः॥ संत्यजामिस्वजंचैवतवपुत्रंसहत्वया॥ १४ ॥ प्रयातारजनीदेविसूर्यस्योदयनंप्रति ॥ अभिषेकायहिजनस्त्वरयिष्यतिमांध्रुवम् ॥ १५ ॥ रामाभिषेकसंभारैस्तदर्थमुपकल्पितैः ॥ रामःकारयितव्योमेमृतस्यसलिलक्रियाम् ॥ ॥ १६ ॥ सपुत्रयात्वयानैवकर्तव्यासलिलक्रिया ॥ व्याहंतास्यशुभाचारेयादिरामाभिषेचनम् ॥ १७ ॥ नशक्तोद्यास्म्यहंद्रष्टुंदृष्ट्वापूर्वंतथासुखम् ॥ हतहर्षंतथानंदंपुनर्जनमवाङ्मुखम् ॥ १८ ॥ तांतथाब्रुवतस्तस्यभूमिपस्यमहात्मनः ॥ प्रभाताशर्वरीपुण्याचंद्रनक्षत्रमालिनी ॥ १९ ॥ ततःपापसमाचाराकैकेयीपार्थिवंपुनः ॥ उवाचपरुषंवाक्यंवाक्यज्ञारोषमूर्च्छिता ॥ २० ॥ किमिदंभापसेराजन्वाक्यंगररुजोपमम् ॥ आनाययितुमक्लिष्टंपुत्रंराममिहार्हसि ॥ २१ ॥ स्थाप्यराज्येममसुतंकृत्वारामंवनेचरम् ॥ निःसपत्नांचमांकृत्वाकृतकृत्योभविष्यसि ॥ २२ ॥ सतुन्नइवतीक्ष्णेनप्रतोदेनहयोत्तमः ॥ राजाप्रचोदितोऽभीक्ष्णंकैकेय्यावाक्यमब्रवीत् ॥२३॥ धर्म्मबंधेनबद्धोस्मिनष्टाचममचेतना ॥ ज्येष्ठंपुत्रंप्रियंरामंद्रष्टुमिच्छामिधार्मिकम् ॥२४॥

शुनेरत आह न शक्त इति । तथामुखं तादृशमुखवंतमूर्ध्वविकसितमुखं दृष्ट्वा पुनरिदानीमवाङ्मुखं म्लानं द्रष्टुं नशक्नोमि एवंच तादृशजीवनापेक्षया मरणं मे श्रेय इति सर्वथा मया मर्तव्यमिति भावः ॥ १८ ॥ तां कैकेयीं पुण्या प्रभाता पुण्यसाधनप्रभातकालावच्छिन्ना जातेत्यर्थः । यद्वा निरंतररामचिंतासमतत्वात्पुण्या शर्वरी तथा जातेत्यर्थः ॥ १९ ॥ रोषमूर्छिता क्रोधव्याप्ता परुषं मदीयमृणं दत्वा इत उत्तिष्ठेत्येवंरूपम् ॥ २० ॥ गरो विषं रुजा शूलादि तद्वद्दुःखदं किं भाषसे व्यर्थमेवेति भावः । वाक्यमंगरुजोपमामिति पाठे अंगेति राजामंत्रणम् । इहानाययितुं मदृणदानं विना इतो बहिर्गमनमशक्यमिति तात्पर्यम् ॥२१॥ कृतकृत्यः कृतशोचादिकृत्यः कृत्यइत्यावश्ये कृत्यप्रत्ययः ॥ २२ ॥ तुन्नः व्यथां प्रापितः । नुन्न इतिपाठे प्रेरितः । तीक्ष्णप्रतोदप्रेरितो हयो यथाश्वारोहाधीनस्तथा तद्वाक्यप्रेरितो राजा तदधीनो भूत्वाहेत्यर्थः ॥ २३ ॥ तदाह धर्मेति । एवं च ममाचेतनत्वात्त्वमेव स्वाभीष्टं यथा सिध्यति तथा कुरु अहं न किमपि वक्ष्यामीति भावः । सर्वथा चेतनानाशात्प्रागामं द्रष्टुं परमिच्छामि तद्यथा संपद्यते तथा कुरु । एतावद्वा मदिष्टं कुर्विति भावः ॥ २४ ॥

प्रभातां रजनीं दृष्ट्वा सरय्वां कृतस्नानादिनित्यक्रिय इति शेषः । वसिष्ठः पुरोत्तमं प्रविवेशेति उत्तरश्लोकेनान्वयः । कवेरपि वर्णनीयमयीभावेन शोकाविष्ट त्वान्न्यूनपदादिकमदोषः ॥ २५ ॥ संभारान्कुशादीन् ॥२६॥ संमार्जनं मार्जन्या धूलिनिराकरणं समृद्धा विपणाः क्रेयपदार्था येषु तादृशा आपणा यस्यां सा ॥ २७ ॥ समुत्सुकां समुत्सुकजनाम् ॥ २८ ॥ २९ ॥ यष्टिमद्भिरिति ब्राह्मणविशेषणं धारयेद्वैणवीं यष्टिमिति स्नातकधर्मप्रकरणोक्तेः यद्वा यष्टिमद्भिरित्यस्य तद्बरै राजसेवकैरित्यर्थः ॥ ३० ॥ ३१ ॥ विनिष्क्रांतं अंतःपुरात् द्वारेंऽतःपुरद्वारे ॥ ३२ ॥ वसिष्ठः सूतपुत्रमुवाच किमुवाचेत्याह क्षिप्रमित्यादि ॥ ३३ ॥

ततःप्रभातांरजनीमुदितेचदिवाकरे ॥ पुण्येनक्षत्रयोगेचमुहूर्तेचसमागते ॥ २५ ॥ वसिष्ठोगुणसंपन्नःशिष्यैःपरिवृतस्तथा ॥ उपगृह्याशुसंभारान्प्रविवेशपुरोत्तमम् ॥ २६ ॥ सिक्तसंमार्जितपथांपताकोत्तमभूषिताम् ॥ संहृष्टमनुजोपेतांसमृद्धविपणापणाम् ॥ २७ ॥ महोत्सवसमायुक्तांराघवार्थेसमुत्सुकाम् ॥ चंदनागुरुधूपैश्चसर्वतःपरिधूपिताम् ॥ २८ ॥ तांपुरींसमतिक्रम्यपुरंदरपुरोपमाम् ॥ ददर्शांतःपुरंश्रीमान्नानाध्वजगणायुतम् ॥ २९ ॥ पौरजानपदाकीर्णंब्राह्मणैरुपशोभितम् ॥ यष्टिमद्भिःसुसंपूर्णंसदश्वैःपरमार्चितैः ॥ ३० ॥ तदंतःपुरमासाद्यव्यतिचक्रामतंजनम् ॥ वसिष्ठःपरमप्रीतःपरमर्षिभिरावृतः ॥ ३१ ॥ सत्वपश्यद्विनिष्क्रांतंसुमंत्रंनामसारथिम् ॥ द्वारेमनुजसिंहस्यसचिवंप्रियदर्शनम् ॥ ३२ ॥ तमुवाचमहातेजाःसूतपुत्रंविशारदम् ॥ वसिष्ठःक्षिप्रमाचक्ष्वनृपतेर्मामिहागतम् ॥ ३३ ॥ इमेगंगोदकघटाःसागरेभ्यश्चकांचनाः ॥ औदुंवरंभद्रपीठमभिषेकार्थमाहृतम् ॥ ३४ ॥ सर्ववीजानिगंधाश्चरत्नानिविविधानिच ॥ क्षौद्रंदधिघृतंलाजादर्भाःसुमनसःपयः ॥ ३५ ॥ अष्टौचकन्यारुचिरामत्तश्चवरवारणः ॥ चतुरश्वोरथःश्रीमान्निस्त्रिंशोधनुरुत्तमम् ॥ ३६ ॥ वाहनंनरसंयुक्तंछत्रंचशशिसन्निभम् ॥ श्वेतेचवालव्यजनेभृंगारंचहिरण्मयम् ॥ ३७ ॥ हेमदामपिनद्धश्चककुद्मान्पांडुरोवृषः ॥ केसरीचचतुर्दंष्ट्रोहरिश्रेष्ठोमहावलः ॥ ३८ ॥ सिंहासनंव्याघ्रतनुःसमिधश्चहुताशनः ॥ सर्वेवादित्रसंघाश्चवेश्याश्चालंकृताःस्त्रियः ॥ ३९ ॥ आचार्याब्राह्मणागावःपुण्याश्चमृगपक्षिणः ॥ पौरजानपदश्रेष्ठानैगमाश्चगणैःसह ॥ ४० ॥ एतेचान्येचवहवःप्रीयमाणाःप्रियंवदाः ॥ अभिषेकायरामस्यसहतिष्ठंतिपार्थिवैः ॥ ४१ ॥ त्वरयस्वमहाराजंयथासमुदितेऽहनि ॥ पुष्येनक्षत्रयोगेचरामोराज्यमवाप्नुयात् ॥ ४२ ॥ इतितस्यवचःश्रुत्वासूतपुत्रोमहावलः ॥ स्तुवन्नृपतिशार्दूलंप्रविवेशनिवेशनम् ॥ ४३ ॥

कांचनाः सौवर्णाः गंगोदकघटाः तदुदकपूर्णा घटाः सागरेभ्यश्च तज्जलपूर्णा घटा आहृता इति शेषः । औदुंबरं भद्रपीठं औदुंवर्यासंदीतस्यै प्रादेशमात्राः पादा इति बह्वृचब्राह्मणप्रसिद्धम् ॥ ३४ ॥ क्षौद्रं मधु सुमनसः पुष्पाणि ॥ ३५ ॥ कन्याः कुमार्यः निस्त्रिंशः खड्गः ॥ ३६ ॥ नरसंयुक्तं वाहनं शिविका भृंगारं कनकालुका स्वर्णकरकपात्रम् ॥ ३७ ॥ चतुर्दंष्ट्रत्वादेव हरिश्रेष्ठः । यद्वा हरिश्रेष्ठ उत्तमाश्वः ॥ ३८ ॥ व्याघ्रतनुर्व्याघ्रचर्म ॥ ३९ ॥ नैगमाः वणिजः गणैः स्वस्वगणैः ॥ ४० ॥ प्रीयमाणाः प्रीतियुक्ताः पार्थिवैः सहेत्यन्वयः ॥ ४१ ॥ समुदिते मुहूर्तगुणैः यथा रामो राज्यमवाप्नुयात्तथा राजानं त्वरयस्वेति संबंधः ॥ ४२ ॥ ४३ ॥

पूर्वोदितं अयं कदापि न निवारणीय इति पूर्वमेव राज्ञाज्ञापितं एवमाज्ञायां हेतुर्वृद्धमिति ॥४४॥ तामवस्थां कैकेयीकृता घोरामवस्थां अजज्ञिवान् न ज्ञातवान् यतोऽतो वाग्भिरित्यादि । परमतुष्टाभिः तोषकृताभिः तोषजनिका भिश्चेति यावत् ॥ ४५ ॥ ४६ ॥ भास्करोदये तत्कालमत्यूर्मिमतिफलितरवितेजसा तेजस्वी सागरो यथा स्नातुकामान् नंदति नंदयति तथा नोस्मान्प्रीतेन तुष्टेन मनसा प्रीतोऽस्मद्विषयकप्रीत्याश्रयः सन् नंदय । यत्तु भास्करश्चंद्र इति तत्प्रसिद्धिविरुद्धम् । तथानंदयन इतिपाठे आनंदघनः आनंदपूर्णस्त्वं नंद नंदय प्रजा इति शेषः । नंदानंदेति च तंत्रेण बोध्यम ॥ ४७ ॥ अस्यां वेलायाम् उदयवेलायां तया स्तुत्या चोत्साहयुक्तः सन् यथा दानवान् सोजयत् तथा रिपुजयफलकं बोधनं ते करोमीत्यर्थः ॥ ४८ ॥ अंगैः सहिता वेदा विद्याश्च मीमांसादयो यथा ब्रह्माणं सृष्ट्यै बोधयंति एवं त्वां बोधयामि वेदेभ्य एव भूरादीन् पदार्थान् ज्ञात्वा वेधास्तान् सृजतीति श्रुतिस्मृतिप्रसिद्धम् ॥ ४९ ॥ यथा चंद्रसहितो रविरुदयास्तमयाभ्यां पृथिवीं तत्स्थं जनं बोधयति तद्वत् ॥ ५० ॥ कृतकौतुकमंगलः कृतानि कौतुके

तंतुपूर्वोदितंवृद्धंद्वारस्थाराजसंमताः ॥ नशेकुरभिसंरोद्धुंराज्ञःप्रियचिकीर्षवः ॥ ४४ ॥ ससमीपस्थितोराज्ञस्तामवस्थामजज्ञिवान् ॥ वाग्भिःपरमतुष्टा भिरभिष्टोतुंप्रचक्रमे ॥ ४५ ॥ ततःसूतोयथापूर्वंपार्थिवस्यनिवेशने ॥ सुमंत्रःप्रांजलिर्भूत्वातुष्टावजगतीपतिं ॥४६॥ यथानंदतितेजस्वीसागरोभास्करो दये ॥ प्रीतःप्रीतेनमनसातथानंदयनस्ततः ॥ ४७ ॥ इंद्रमस्यांतुवेलायामभितुष्टावमातलिः ॥ सोजयद्दानवान्सर्वांस्तथात्वांबोधयाम्यहम् ॥ ४८ ॥ वेदाःसहांगाविद्याश्चयथाह्यात्मभुवंप्रभुम् ॥ ब्रह्माणंबोधयंत्यद्यतथात्वांबोधयाम्यहम् ॥ ४९ ॥ आदित्यःसहचंद्रेणयथाभूतधरांशुभाम् ॥ बोधयत्यद्य पृथिवींतथात्वांबोधयाम्यहम् ॥ ५० ॥ उत्तिष्ठसुमहाराजकृतकौतुकमंगलः ॥ विराजमानोवपुपामेरोरिवदिवाकरः ॥ ५१ ॥ उदतिष्ठतरामस्यसमग्र मभिषेचनम् ॥ पौरजानपदाश्चापिनैगमश्चकृतांजलिः ॥ ५२ ॥ अयंवसिष्ठोभगवान्ब्राह्मणैःसहतिष्ठति ॥ क्षिप्रमाज्ञाप्यतांराजन्राघवस्याभिषे चनम् ॥ ५३ ॥ यथाह्यपालाःपशवोयथासेनाह्यनायका ॥ यथाचंद्रंविनारात्रिर्यथागावोविनावृषम् ॥ ५४ ॥ एवंहिभविताराष्ट्रंयत्रराजानदृश्यते ॥ एवंतस्यवचःश्रुत्वासांत्वपूर्वमिवार्थवत् ॥ ५५ ॥ अभ्यकीर्यतशोकेनभूयएवमहीपतिः ॥ ततस्तुराजातंसूतंसन्नहर्षःसुतंप्रति ॥ ५६ ॥ शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाचधार्मिकः ॥ वाक्यैस्तुखलुमर्माणिममभूयोनिकृंतसि ॥ ५७ ॥ सुमंत्रःकरुणंश्रुत्वादृष्ट्वादीनंचपार्थिवम् ॥ प्रगृहीतांजलिःकिंचि त्तस्माद्देशादपाक्रमत् ॥ ५८ ॥ यदावक्तुंस्वयंदैन्यान्नशशाकमहीपतिः ॥ तदासुमंत्रंमंत्रज्ञाकैकेयीप्रत्युवाचह ॥ ५९ ॥ सुमंत्रराजारजनींराम हर्षसमुत्सुकः ॥ प्रजागरपरिश्रांतोनिद्रावशमुपागतः ॥ ६० ॥

अभिषेकोत्सवे मंगलानि विचित्रवस्त्राभरणधारणादिरूपाणि येन । कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः । अतएव वपुषा विराजमानस्त्वं मेरोर्दिवाकर इवोत्तिष्ठ ॥ ५१ ॥ कर्तव्यं यद्यदाज्ञप्तं तत्सर्वं कृतमित्याह उदतिष्ठतेति । उदतिष्ठत उत्थितं संपन्नमभूदित्यर्थः । अभिषेचनं तदुपकरणं नैगमो वणिग्वर्गः ॥ ५२ ॥ ५३ ॥ ५४ ॥ भविता लुट् । तस्माच्छीघ्रमुत्तिष्ठेति भावः । इवशब्द एवार्थे ॥ ५५ ॥ अभ्यकीर्यत व्याप्तोभवत् सन्नहर्षः नष्टहर्षः ॥५६॥ शोकरक्तेक्षणः शोकजरोदनेन रक्तनेत्रः भूयः कैकेयीवाक्यैः कृत्तानि मर्माणि पुनरधिकं स्तुतिवाक्यैरित्यर्थः । अनुचितकालप्रयुज्यमानत्वादिति भावः ॥५७॥ अपाक्रमत् बद्धांजलिः सन् भीतोऽपाक्रमत् ॥ ५८ ॥ दैन्यं सत्यपाशबंधनजं मंत्रज्ञा स्वकार्ये वक्तव्यज्ञा ॥ ५९ ॥ अतएव मिथ्याप्याह रामहर्षेति । रामाभिषेकहर्षेत्यर्थः ॥ ६० ॥

॥ ६१ ॥ ६२ ॥ कल्याणं मन्यमानः कदाचिद्रामं दृष्ट्वा तस्मिन्प्रीतिं करिष्यतीति मन्यमानः । यद्वा अस्मिन्नवसरे रामदर्शनमेव कल्याणं मन्यमानः मृतिसमयत्वात् । यद्वा देवानामृषीणां च कल्याणं मन्यमानः । अतएव हृदयेन ननंद न तु बहिस्तच्चिह्नमिति भावः ॥ ६३ ॥ निर्गमनकाले पुनस्त्वरितमानयेति तया कैकेय्या प्रेरितः चिंतयामास । किमित्येषा भूयस्त्वरयतीति चिंता ॥ ६४ ॥ व्यक्तं रामाभिषेकार्थं एव एषा त्वरयति । इह धर्मराट् दशरथः आयस्यति आयासवान्भवति । प्रयासबाहुल्येन प्रायो बहिर्नागमिष्यतीति मतिं कृत्वेत्यन्वयः ॥ ६५ ॥ पुरांतर्वर्तित्वादंतःपुरस्य सागरांतर्वर्तिह्रदतुल्यत्वम् ॥ ६६ ॥ तत इति । महीपतेर्द्वारगतानधिकारिणो विलोकयन् पौरान्महाजनान्पुरस्तादग्रे ददर्श । ततः निर्गमनोत्तरम् ॥ ६७ ॥ संर्चमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये अयोध्याकांडे चतुर्दशः सर्गः ॥ १४ ॥ ॥ छ ॥

तद्गच्छत्वरितंसूतराजपुत्रंयशस्विनम् ॥ राममानयभद्रंतेनात्रकार्याविचारणा ॥ ६१ ॥ अश्रुत्वाराजवचनंकथंगच्छामिभामिनि ॥ तच्छ्रुत्वामंत्रिणो वाक्यंराजामंत्रिणमब्रवीत् ॥६२॥ सुमंत्ररामंद्रक्ष्यामिशीघ्रमानयसुंदरम् ॥ समन्यमानःकल्याणंहृदयेनननंदच ॥६३ ॥ निर्जगामचसप्रीत्यात्वरितो राजशासनात् ॥ सुमंत्रश्चिंतयामासत्वरितोचोदितस्तया ॥ ६४ ॥ व्यक्तंरामाभिषेकार्थेइहायस्यतिधर्मराट् ॥ इतिसूतोमतिंकृत्वाहर्षेणमहतापुनः ॥ ॥ ६५ ॥ निर्जगाममहातेजाराघवस्यदिदृक्षया ॥ सागरह्रदसंकाशात्सुमंत्रोंतःपुराच्छुभात् ॥ ६६ ॥ ततःपुरस्तात्सहसाविनिःसृतोमहीपतेर्द्वारगता न्विलोकयन् ॥ ददर्शपौरान्विविधान्महाधनानुपस्थितान्द्वारमुपेत्यविष्ठितान् ॥ ६७ ॥ इत्यार्षेश्रीम०वा०आ०चतुर्विं०सा०सं० अयोध्याकांडे चतुर्दशःसर्गः ॥ १४ ॥

॥ तेतुतांरजनीमुष्यब्राह्मणावेदपारगाः ॥ उपतस्थुरुपस्थानंसहराजपुरोहिताः ॥ १ ॥ अमात्याबलमुख्याश्चमुख्याये निगमस्यच ॥ राघवस्याभिषेकार्थेप्रीयमाणाःसुसंगताः ॥ २ ॥ उदितेविमलेसूर्येपुष्येचाभ्यागतेहनि ॥ लग्नेकर्कटकेप्राप्तेजन्मरामस्यचस्थिते ॥ ३ ॥ अभिषेकायरामस्यद्विजेन्द्रैरुपकल्पितम् ॥ कांचनाजलकुंभाश्चभद्रपीठंस्वलंकृतम् ॥ ४ ॥ रथश्चसम्यगास्तीर्णोभास्वताव्याघ्रचर्मणा ॥ गंगायमुनयोःपुण्यात्संगमादाहृतंजलम् ॥ ५ ॥ याश्चान्याःसरितःपुण्याह्रदाःकूपाःसरांसिच ॥ प्राग्वहाश्चोर्ध्ववाहाश्चतिर्यग्वाहाश्चक्षीरिणः ॥ ६ ॥ ताभ्यश्चैवाहृतंतोयंसमुद्रेभ्यश्चसर्वशः ॥ क्षौद्रंदधिघृतंलाजादर्भाःसुमनसःपयः ॥ ७ ॥

॥ अथ कैकेय्या राज्ञा च गुप्तहृदयतया प्रवर्तितस्य सुमंत्रस्य यथापूर्वं प्रवृत्तिं वदन् राजाज्ञया राजद्वारि मिलितानां जनानां परस्परसंभाषणप्रकारमाह ते त्वित्यादि । ते राजप्रेरिताः उष्य उषित्वा उपस्थानं राजद्वारं । अधिकरणे ल्युट् ॥ १ ॥ निगमो वणिक्समूहः ॥ २ ॥ अहनि पुष्यनक्षत्रे आगते रामस्य जन्मजन्मनि स्थिते जन्मकालस्थे कर्कटलग्ने च प्राप्ते ॥ ३ ॥ भाविनि इति शेषः अभिषेकाय अभिषेकार्थमुपकरणमुपकल्पितं सिद्धं कृतमित्यर्थः । कांचन जलकुंभा आनीताः । अलंकृतं भद्रपीठं स्थापितम् ॥ ४ ॥ ५ ॥ प्राग्वहा इत्यादर्नद्य इति शेषः । पर्वतघटनादिनोर्ध्वप्रवाहवत्प्रदेशवत्य ऊर्ध्ववाहाः । तिर्यग्वाहा दक्षिणोत्तरप्रवाहाः । क्षीरिणः क्षीरपूर्णाः । क्षीरमत्र जलं । ङीबभाव आर्षः ॥ ६ ॥ ॥ ७ ॥

क्षीरिभिः क्षीरिवृक्षपल्लवैः ॥ ८ ॥ ९ ॥ १० ॥ अभिषेकपुरःसरं अभिषेकसामग्रीमुख्यम् ॥ ११ ॥ इक्ष्वाकूणां राज्येऽभिषेचनमुद्दिश्य यथा वस्तुजातं संभ्रियत संभ्रियते ॥ १२ ॥ तथा जातीयं वस्तुजातंरामाभि
षेकमुद्दिश्यादाय गृहीत्वा राजवचनात् राजद्वारे समवेता मिलिता ब्राह्मणादयो महीपतिमपश्यंतो नोस्मान् राज्ञः कः प्रतिवेदयेदित्यब्रुवन् ॥ १३ ॥ १४ ॥ यौवराज्याभिषेकस्तत्सामग्री । सर्वान् जनान्महीपतींश्च
अब्रवीदित्यन्वयः ॥ १५ ॥ रामं आनेतुमिति शेषः ॥ १६ ॥ यद्यपि प्रस्थितस्तथापि भवंतो राज्ञो रामस्य च पूज्या इति कृत्वा आयुष्मतां युष्माकं वचनात्सर्वे राजानो ब्राह्मणादयश्च महाराजं सुखं सुखशयनं

अष्टौचकन्यारुचिरामत्तश्चवरवारणः ॥ सजलाःक्षीरिभिश्छन्नाघटाःकांचनराजताः ॥ ८ ॥ पद्मोत्पलयुताभांतिपूर्णाःपरमवारिणा ॥ चंद्रांशु
विकचप्रख्यंपांडुरंरत्नभूषितम् ॥ ९ ॥ सज्जंतिष्ठतिरामस्यवालव्यजनमुत्तमम् ॥ चंद्रमंडलसंकाशमातपत्रंचपांडुरम् ॥ १० ॥ सज्जंद्युतिकरंश्रीमद
भिषेकपुरःसरम् ॥ पांडुरश्चवृषःसज्जःपांडुराश्वश्चसंस्थितः ॥ ११ ॥ वादित्राणिचसर्वाणिवंदिनश्चतथापरे ॥ इक्ष्वाकूणांयथाराज्येसंभ्रियेताभिषेचनम्
॥ १२ ॥ तथाजातीयमादायराजपुत्राभिषेचनम् ॥ तेराजवचनात्तत्रसमवेतामहीपतिम् ॥ १३ ॥ अपश्यंतोऽब्रुवन्कोनुराज्ञोनःप्रतिवेदयेत् ॥
नपश्यामश्चराजानमुदितश्चदिवाकरः ॥ १४ ॥ यौवराज्याभिषेकश्चसज्जोरामस्यधीमतः ॥ इतितेषुब्रुवाणेषुसर्वांस्तांश्चमहीपतीन् ॥ १५ ॥ अब्रवी
त्तानिदंवाक्यंसुमंत्रोराजसत्कृतः ॥ रामंराज्ञोनियोगेनत्वरयाप्रस्थितोह्यहम् ॥ १६ ॥ पूज्याराज्ञोभवंतश्चरामस्यतुविशेषतः ॥ अयंपृच्छामिव
चनात्सुखमायुष्मतामहम् ॥ १७ ॥ राज्ञःसंप्रतिबुद्धस्यचानागमनकारणम् ॥ इत्युक्त्वांतःपुरद्वारमाजगामपुराणवित् ॥ १८ ॥ सदासक्तंचतद्वे
श्मसुमंत्रःप्रविवेशह ॥ तुष्टावास्यतदावंशंप्रविश्यसविशांपतेः ॥ १९ ॥ शयनीयंनरेंद्रस्यतदासाद्यव्यतिष्ठत ॥ सोत्यासाद्यतुतद्वेश्मतिरस्करणिमं
तरा ॥ २० ॥ आशीर्भिर्गुणयुक्ताभिरभितुष्टावराघवम् ॥ सोमसूर्यौचकाकुत्स्थशिववैश्रवणावपि ॥ २१ ॥ वरुणश्चाग्निरिंद्रश्चविजयंप्रदिशंतुते ॥
गताभगवतीरात्रिरहःशिवमुपस्थितम् ॥ २२ ॥ बुद्ध्यस्वराजशार्दूलकुरुकार्यमनंतरम् ॥ ब्राह्मणाबलमुख्याश्चनैगमाश्चागतास्त्विह ॥ २३ ॥ दर्श
नंतेऽभिकांक्षंतेप्रतिबुद्ध्यस्वराघव ॥ स्तुवंतंतंतदासूतंसुमंत्रंमंत्रकोविदम् ॥ २४ ॥ प्रतिबुद्ध्यततोराजाइदंवचनमब्रवीत् ॥ राममानयसूतेतियदस्य
भिहितोमया ॥ २५ ॥ किमिदंकारणंयेनममाज्ञाप्रतिवाह्यते ॥ नचैवसंप्रसुप्तोहमानयेहाशुराघवम् ॥ २६ ॥ इतिराजादशरथःसूतंतत्रान्वशात्पुनः
सराजवचनंश्रुत्वाशिरसाप्रतिपूज्यतम् ॥ २७ ॥

पृच्छंतीति विज्ञापयामि नाग्रतोऽपि बहिरनागमनकारणं किमिति च पृच्छंतीति विज्ञापयामि ॥ १७ ॥ पुराणवित् चिरकालकथाभिज्ञोऽतिवृद्ध इतियावत् ॥ १८ ॥ सदाऽसक्तम् अवारितद्वारम् ॥ १९ ॥ शयनीयं शयनगृहम् । तिरस्क
रणीं जवनिकामंतरा कृत्वेति शेषः । एतेन तावत्पर्यंतं गमनं सूचितम् । अत्यासाद्य अतिसमीपं गत्वा ॥ २० ॥ राजविज्ञापनस्य स्तुतिपूर्वकत्वात्पुनः स्तुतिप्रवृत्तिः ॥ २१ ॥ २२ ॥ निगमो वाणिज्यं तत्संबंधिनो नैगमाः
॥ २३ ॥ ॥ २४ ॥ प्रतिबुध्य जवनिकांतर्हितमपि सुमंत्रं ध्वनिना ज्ञात्वा । यदस्यभिहितोनयेतिपाठे अनयेत्युपलक्षणम् । मयाचेत्यर्थः । अतएव ममाज्ञेति संगच्छते । पूर्वं राजा स्वयमप्युक्तेः । कतकाद्यस्तु

कैकेय्याज्ञैव अप्रतिषिद्धमनुमतमिति न्यायेन ममाज्ञा । ननु निद्रापरवशत्वेन राज्ञोनुमतं न वेति मे संदेहस्तत्राह नन्वेति । इति व्याचक्षते । तेषामितिराजेतिश्लोके पुनः पदासंगतिः स्पष्टैव । पूर्वसर्गांते अश्रुत्वा राजवचनमित्यादि ननंदत्येत्यंतश्लोकद्वयस्य सर्वपुस्तकेष्वनुपलंभाच्च तद्व्याख्यानमसंगतमिति ध्येयम् ॥ २५ ॥ २६ ॥ २७ ॥ प्रियं मन्यमानः हार्दाभिप्रायज्ञानात् ॥ २८ ॥ हृष्टः पुलकितगात्रः प्रमुदित आनंदचित्तः राजमार्गं विलोकयन्निति संबंधः । रामाधिकरणाः रामविषयाः ॥ २९ ॥ हृष्टवत् हृष्टानां जनानां । स्वार्थे वतिरार्षः ॥ ३० ॥ प्रातःसमयत्वान्महाकपाटेन पिहितं स्वल्पद्वारस्यैवोद्घाटितत्वात् । वितर्दिर्वेदिका ॥ ३१ ॥ कांचनीभिः प्रतिमाभिर्युक्तम् एकं प्रधानमग्रं पुरोभागो यस्य तत् । मणिविद्रुमयुक्तं तोरणं बहिर्द्वारं यस्य तत् । शारदाभ्रवत् घनप्रख्यं निबिडप्रभम् ॥ ३२ ॥ वरमाल्यानां स्वर्णपुष्प

निर्जगामनृपावासान्मन्यमानःप्रियंमहत् ॥ प्रपन्नोराजमार्गंचपताकाध्वजशोभितम् ॥ २८ ॥ हृष्टःप्रमुदितःसूतोजगामाशुविलोकयन् ॥ ससूतस्तत्रशुश्रावरामाधिकरणाःकथाः ॥ २९ ॥ अभिषेचनसंयुक्ताःसर्वलोकस्यहृष्टवत् ॥ ततोददर्शरुचिरंकैलाससदृशप्रभम् ॥ ३० ॥ रामवेश्मसुमंत्रस्तुशक्रवेश्मसमप्रभम् ॥ महाकपाटपिहितंवितर्दिशतशोभितम् ॥ ३१ ॥ कांचनप्रतिमैकाग्रंमणिविद्रुमतोरणम् ॥ शारदाभ्रघनप्रख्यंदीप्तंमेरुगुहासमम् ॥ ३२ ॥ मणिभिर्वरमाल्यानांसुमहद्भिरलंकृतम् ॥ मुक्तामणिभिराकीर्णंचंदनागुरुभूपितम् ॥ ३३ ॥ गंधान्मनोज्ञान्विसृजद्दार्दुरंशिखरंयथा ॥ सारसैश्चमयूरैश्चविनदद्भिर्विराजितम् ॥ ३४ ॥ सुकृतेहामृगाकीर्णंसूत्कीर्णंभक्तिभिस्तथा ॥ मनश्चक्षुश्चभूतानामाददत्तिग्मतेजसा ॥ ३५ ॥ चंद्रभास्करसंकाशंकुबेरभवनोपमम् ॥ महेंद्रधामप्रतिमंनानापक्षिसमाकुलम् ॥ ३६ ॥ मेरुशृंगसमंसूतोरामवेश्मददर्शह ॥ उपस्थितैःसमाकीर्णंजनैरंजलिकारिभिः ॥ ३७ ॥ उपादायसमाक्रांतैस्तदाजानपदैर्जनैः ॥ रामाभिषेकसुमुखैरुन्मुखैःसमलंकृतम् ॥ ३८ ॥ महामेघसमप्रख्यमुदग्रंसुविराजितम् ॥ नानारत्नसमाकीर्णंकुब्जकैरपिचावृतम् ॥ ३९ ॥ सवाजियुक्तेनरथेनसारथिःसमाकुलंराजकुलंविराजयन् ॥ वरूथिनाराजगृहाभिपातिनापुरस्यसर्वस्यमनांसिहर्षयन् ॥ ४० ॥ ततःसमासाद्यमहाधनंमहत्प्रहृष्टरोमासबभूवसारथिः ॥ मृगैर्मयूरैश्चसमाकुलोल्बणंगृहंवरार्हस्यशचीपतेरिव ॥ ॥ ४१ ॥ सतत्रकैलासनिभाःस्वलंकृताःप्रविश्यकक्ष्यास्त्रिदशालयोपमाः ॥ प्रियान्वरान्राममतेस्थितान्बहून्व्यपोह्यशुद्धांतमुपस्थितोरथी ॥ ४२ ॥

मालानामंतरालवर्तिभिर्महद्भिर्महादीप्तिमद्भिर्मणिभिरलंकृतम् ॥ ३३ ॥ दार्दुरं दर्दुरो मलयसंनिकृष्टश्चंदनगिरिः ॥ ३४ ॥ सुकृतैः स्वर्णादिना सुष्ठु निर्मितैरीहामृगैर्वृकैराकीर्णं व्याप्तम् । कोकस्त्वीहामृगो वृकः । भक्तिभिः वर्धकीनां सूक्ष्मचित्रशिल्पैरुत्कीर्णं चित्रवत् । तिग्मतेजसा अतिशयितशोभया । यद्वा प्रतिबिंबितसूर्यकिरणैः ॥ ३५ ॥ ३६ ॥ उपस्थितैरागतैः । अंजलिकारिभिः नमस्कारार्थम् ॥ ३७ ॥ उपादाय उपायनानीति शेषः । आगतैरिति च शेषः । समाक्रांतैर्द्वारपालनिरुद्धैः । उन्मुखैरुत्सुकैः ॥ ३८ ॥ उदग्रं प्रशस्तं कुब्जकैर्दासैः ॥ ३९ ॥ राजकुलं राजमार्गं विराजयन् शोभयन् वरूथो रथगुप्तिस्तद्युतेन रामगृहं समासददिति शेषः ॥ ४० ॥ महाधनं महता धनेन युक्तम् । समाकुलैरितस्ततः प्रसृतैरुल्बणम् अधिकशोभावत् । वरार्हस्य उत्तमवस्त्वर्हस्य ॥ ४१ ॥ व्यपोह्य अतिक्रम्य । शुद्धांतमंतःपुरम् ॥ ४२ ॥

रामस्याभिषेकार्थम् अभिषेकप्रयोजनकं कर्म कुर्वतां जनानां गिरो नरेंद्रसूनोः रामस्याभितो मगलं तत्प्रतिपादनमर्थो यासां ताः शुश्राव स तथा लोकस्य च गिरस्तादृशीः शुश्राव ॥ ४३ ॥ ४४ ॥
कोट्या तत्संख्यया परार्धैस्तत्संख्ययोपलक्षितैर्जनैः । अनेनातिसंमर्दो दर्शितः ॥ ४५ ॥ महामेघाधिरूढपर्वतसदृशम् । प्रभिन्नं मत्तम् । शत्रुंजयं तद्गुणकं तन्नामानं च राम उपवाह्यो यस्य तम् ॥४६॥ वल्लभान्
राज्ञ इति शेषः । व्यपोह्य रथागमनेन मार्गादेकदेशे कृत्वा ॥ ४७ ॥ अद्रिकूटे अद्रिशृंगे आरूढोऽचलो यो महामेघस्तत्सदृशमौन्नत्येन तदेंद्रकूटेतिपाठे तन्नामा पर्वतविशेषस्तदारूढेत्यादि प्राग्वत् । महाविमानो
पमवेश्मभिः संयुतम् महाविमानानां तत्संज्ञकानामुत्तमवेश्मनां संघो यत्र महाविमानेभ्य उत्तमानां वेश्मनां संघो यत्रेति वा । विमानोत्तमवेश्मसंघवदितिपाठांतरेऽर्थः । विमानोस्त्री देवयाने सप्तभूमौ च सद्मनि

सतत्रशुश्रावचहर्षयुक्तारामाभिषेकार्थकृतांजनानाम् ॥ नरेंद्रसूनोरभिमंगलार्थाःसर्वस्यलोकस्यगिरःप्रहृष्टाः ॥ ४३ ॥ महेंद्रसद्मप्रतिमंचवेश्मराम स्यरम्यंमृगपक्षिजुष्टम् ॥ ददर्शमेरोरिवशृंगमुच्चंविभ्राजमानंप्रभयासुमंत्रः ॥ ४४ ॥ उपस्थितैरंजलिकारिभिश्चसोपायनैर्जानपदैर्जनैश्च ॥ कोट्यापरार्धैश्चविमुक्तयानैःसमाकुलंद्वारपदंददर्श ॥ ४५ ॥ ततोमहामेघमहीधराभंप्रभिन्नमत्यंकुशमत्यसह्यम् ॥ रामोपवाह्यंरुचिरंददर्शशत्रुंजयंनागमुदग्रकायम् ॥ ४६ ॥ स्वलंकृतान्साश्वरथान्सकुंजरानमात्यमुख्यांश्चददर्शवल्लभान् ॥ व्यपोह्यसूतःसहितान्समंततःसमृद्धमंतःपुरमाविवेशह ॥ ४७ ॥ ततोद्रिकूटाचलमेघसन्निभंमहाविमानोपमवेश्मसंयुतम् ॥ अवार्यमाणःप्रविवेशसारथिःप्रभूतरत्नंमकरोयथाऽर्णवम् ॥ ४८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्येचतुर्विं०सा०सं०अयोध्यकांडेपंचदशःसर्गः ॥ १५ ॥ ॥ सतदंतःपुरद्वारंसमतीत्यजनाकुलम् ॥ प्रविविक्तांततःकक्ष्यामाससादपुराणवित् ॥ १ ॥ प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुंडलैः ॥ अप्रमादिभिरेकाग्रैःस्वानुरक्तैरधिष्ठिताम् ॥ २ ॥ अत्रकाषायिणोवृद्धान्वेत्रपाणीन्स्वलंकृतान् ॥ ददर्शविष्ठितान्द्वारिस्त्र्यध्यक्षान्सुसमाहितान् ॥ ३ ॥ तेसमीक्ष्यसमायांतंरामप्रियचिकीर्षवः ॥ सहसोत्पतिताःसर्वेह्यासनेभ्यःससंभ्रमाः ॥ ॥ ४ ॥ तानुवाचविनीतात्मासूतपुत्रःप्रदक्षिणः ॥ क्षिप्रमाख्यातरामायसुमंत्रोद्वारितिष्ठति ॥ ५ ॥ तेराममुपसंगम्यभर्तुःप्रियचिकीर्षवः ॥ सहभार्यायरामायक्षिप्रमेवाचचक्षिरे ॥ ६ ॥ प्रतिवेदितमाज्ञायसूतमभ्यंतरंपितुः ॥ तत्रैवानाययामासराघवःप्रियकाम्यया ॥ ७ ॥ तंवैश्रवणसंकाशमुपविष्टंस्वलंकृतम् ॥ ददर्शसूतःपर्यंकेसौवर्णेसोत्तरच्छदे ॥ ८ ॥ वराहरुधिराभेणशुचिनाचसुगंधिना ॥ अनुलिप्तंपरार्ध्येनचंदनेनपरंतपम् ॥ ९ ॥

॥ ४८ ॥ अर्णवमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचदशः सर्गः ॥ १५ ॥ ॥ छ ॥ ॥ प्रविविक्तां जनासंबाधाम् ॥ १ ॥
प्रासकार्मुकानां बिभ्रद्भिः तेषां धारकैरित्यर्थः । एकाग्रैरेकाग्रचित्तैः ॥ २ ॥ काषायिणः कौसुंभादिकषायरक्तवस्त्रधारिण इत्यर्थः ॥ ३ ॥ ४ ॥ प्रदक्षिणः प्रकर्षेण सेवादौ निपुणः आख्यात कथयत ॥ ५ ॥
॥ ६ ॥ प्रतिवेदितं द्वाःस्थैर्विज्ञापितम् पितुरभ्यंतरं अत्यंतमंतरंगम् तत्रैव सीतावस्थितिदेश एव प्रियकाम्यया पितुरिति शेषः ॥ ७ ॥ ८ ॥ वराहरुधिरवदतिरक्तेन परार्ध्येन श्रेष्ठेन ॥ ९ ॥

भूयो वारंवारं ददर्शेत्यन्वयः तथाभूतस्य दर्शने तृप्त्यभावात् । चित्रया सहितं शशिनं यथा लोको भूयो भूयः पश्यति तथेत्यर्थः ॥१०॥ वंदी सुमंत्रः विनीतवद्विनीतः सन् ॥११॥ सुमुखं प्रसन्नवदनम् विहारशयन स्थानरूपे आसने विद्यमानं राजपुत्रमित्यन्वयः । यद्वा विहारशयनासने समाहारद्वंद्वः । तेषु राज्ञा सत्कृतः सुमंत्र इत्यन्वयः ॥ १२ ॥ सुप्रजाः सुपुत्रेण त्वयेति शेषः ॥ १३ ॥ संमानयामास सुमंत्रवचांगी चकारेत्यर्थः ॥ १४ ॥ देवश्च देवी च मातापितरौ मदंतरे मदर्थे समागम्य मिलित्वा अभिषेचनस्य सम्यक् हितं किंचित् ध्रुवं निश्चयेन मंत्रयेते विचारयतः । अत्राभिषेचनसंहितं तत्संबद्धम् अभिषेक द्वारकमिति यावत् । किंचिद्वनगमनरूपं तद्विरुद्धं संमत्येवास्माभिश्चित्यमानं मंत्रयेते इत्यप्यर्थो गर्भितो ज्ञेयः ॥ १५ ॥ तत्र तर्कयति लक्षयित्वेति । राज्ञोभिप्रायं मदभिषेकविषयं लक्षयित्वा ज्ञात्वा सुदक्षिणा समर्था अतएव राज्ञः प्रियकामा अतएव प्रहृष्टा हितवचनेन कामेन च राजानमनुवर्तितुं शीलं यस्यास्तादृशी मे जननी मदर्थकामा महाराजं राजानमिति हर्षवशात्पुनरुक्तिरदोषाय

स्थितयापार्श्वतश्चापिवालव्यजनहस्तया ॥ उपेतंसीतयाभूयश्चित्रयाशशिनंयथा ॥ १० ॥ तंतपंतमिवादित्यमुपपन्नंस्वतेजसा ॥ ववंदेवरदंवंदी विनयज्ञोविनीतवत् ॥ ११ ॥ प्रांजलिःसुमुखंदृष्ट्वाविहारशयनासने ॥ राजपुत्रमुवाचेदंसुमंत्रोराजसत्कृतः ॥ १२ ॥ कौसल्यासुप्रजारामपितात्वांद्रष्टु मिच्छति ॥ महिष्यापिहिकैकेय्यागम्यतांतत्रमाचिरम् ॥ १३ ॥ एवमुक्तस्तुसंहृष्टोनरसिंहोमहाद्युतिः ॥ ततःसंमानयामाससीतामिदमुवाचह ॥ १४ ॥ देविदेवश्चदेवीचसमागम्यमदंतरे ॥ मंत्रयेतेध्रुवंकिंचिदभिषेचनसंहितम् ॥ १५ ॥ लक्षयित्वाह्यभिप्रायंप्रियकामासुदक्षिणा ॥ संचोदयतिराजानंमदर्थं मसितेक्षणा ॥ १६ ॥ साप्रहृष्टामहाराजंहितकामानुवर्तिनी ॥ जननीचार्थकामामेकेकयाधिपतेःसुता ॥ १७ ॥ दिष्ट्याखलुमहाराजोमहिष्याप्रिययासह ॥ सुमंत्रंप्राहिणोद्दूतमर्थकामकरंमम ॥ १८ ॥ यादृशीपरिषत्तत्रतादृशोदूतआगतः ॥ ध्रुवमद्यैवमांराजायौवराज्येऽभिषेक्ष्यति ॥ १९ ॥ हंतशीघ्रमितोगत्वा द्रक्ष्यामिचमहीपतिम् ॥ सहत्वंपरिवारेणसुखमास्स्वरमस्वच ॥ २० ॥ पतिसंमानितासीताभर्तारमसितेक्षणा ॥ आद्वारमनुवव्राजमंगलान्यभिदध्युषी ॥ २१ ॥ राज्यंद्विजातिभिर्जुष्टंराजसूयाभिषेचनम् ॥ कर्तुमर्हतितेराजावासवस्येवलोककृत् ॥ २२ ॥ दीक्षितंव्रतसंपन्नंवराजिनधरंशुचिम् ॥ कुरंगशृं गपाणिंचपश्यंतीत्वांभजाम्यहम् ॥ २३ ॥ पूर्वांदिशंवज्रधरोदक्षिणांपातुतेयमः ॥ वरुणःपश्चिमामाशांधनेशस्तूत्तरांदिशम् ॥ २४ ॥

मदर्थं मदभिषेकार्थं राजानं संचोदयति त्वरयति भरतासन्निधौ रामाभिषेकस्त्वत्संमतो न वेति राज्ञा पृष्टे सर्वथा मत्संमतस्त्वरया क्रियतां भरतः पश्चाच्छ्रोष्यतीति मन्ये इत्याशयः ॥ १६ ॥ ॥ १७ ॥ कुत एवं ज्ञायते तत्राह दिष्ट्येति । मम कामविषयमर्थं करोति तादृशं सुमंत्रं यतो दूतं प्राहिणोदत एवं ज्ञायत इति भावः ॥ १८ ॥ तदेव विवृणोति यादृशी मदर्थपरा तत्र राजांतःपुरे परि षत्सभा ॥ १९ ॥ परिवारेण सखीसमूहेन ॥ २० ॥ अभिदध्युषी अभिध्यायंतीत्यर्थे आर्षमिदम् ॥ २१ ॥ द्विजातिभिर्जुष्टं राज्यं यौवराज्याभिषेकं कृत्वा कालांतरेण राजसूयार्हं महाराज्याभिषेचनं कर्तु मर्हति । लोककृत् इंद्रस्येव ॥ २२ ॥ २३ ॥ लक्षयित्वेत्यादिभिरष्टभिः श्लोकैरर्थांतरमपि गर्भितम् । तथाहि अभिप्रायं मम रावणवधरूपमभिप्रायमंतर्यामिप्रेरणया लक्षयित्वा अनेन मत्प्रेरणयैव तस्या एवं प्रवृत्तिरिति सूचितम् । मम देवानां जगतश्च प्रियकामा राज्ञश्चांतकाले निरंतरं मद्ध्यानसंपादनेन प्रियकामा अतएव सुदक्षिणा समर्था राज्ञ आपाततो विपरीतत्वेपि जगतः प्रियत्वेन राज्ञोपि पर्यंतसुख

दृत्वेन तद्वाक्यकथने समर्था अतएव महृष्टा मम हितकामा तदर्थमवतारग्रहणाद्धितं काम्यं च तदनुवर्तनशीला अतएव मेऽर्थकामा मदवतारप्रयोजनसिद्धिकामा । महाराजं राजानं मदर्थं मदवतारप्रयोजन रावणवधफलकवनगमनार्थं त्वरयतीत्यर्थः ॥ १६ ॥ १७ ॥ अर्थकामकरं मत्कामविषयार्थकरं यथा भवति तथा प्राहिणोत् ॥ १८ ॥ तादृशः हृष्टोद्विग्नचित्तः एतदीयेनैव हृष्टोद्विग्नचित्तत्वेन तत्परिष दृस्तत्त्वानुमानम् यौवराज्ये देवर्षिपरिपालनफलके ॥ १९ ॥ २० ॥ मंगलान्यभिदध्युषी प्रस्थानमंगलान्यभिध्यायंती ॥ २१ ॥ तदेवाह राज्यमिति । द्विजातिभिराश्रमस्थैर्ऋषिभिर्जुष्टम् राज्यं वने राज्यम् तथा राजसूयाभिषेचनं सर्वतो बलवान् सर्वपीडको राजा सूयते कंड्यते यत्र तादृशकर्मणि अभिषेकं कर्तुमर्हति । तदेव मनसाभिलषति । दीक्षितमित्यादि । तत्र राजसूये दीक्षितत्वादिधर्मकं त्वां पश्यंती अहं त्वां भजिष्ये इत्यर्थः । अनेनाहमपि त्वया सह वनं यास्यामीति सूचितम् । अत्र राजसूयाभिषेचनं कर्तुमर्हतीत्यनेन संकल्पेन दीक्षितमित्यादिसंकल्पेन मदुक्तार्थगर्भितत्वमेषां श्लोकानां सूचितम् । अन्यथा सत्यसंकल्पाया भगवत्या अग्रे कदापि रामेण राजसूयाननुष्ठानादीदृशसंकल्पविपयार्थासिद्ध्या तत्त्वं भज्येत वक्तृश्रोत्रोः सीतारामयोर्विशिष्याचेदृशार्थावगतिर्बोध्या ॥ २२ ॥ २३ ॥ २४ ॥

अथसीतामनुज्ञाप्यकृतकौतुकमंगलः॥ निश्चक्रामसुमंत्रेणसहरामोनिवेशनात॥ २५ ॥ पर्वतादिवनिष्क्रम्यसिंहोगिरिगुहाशयः ॥ लक्ष्मणंद्वारिसोऽपश्यत्प्रह्वांजलिपुटंस्थितम् ॥ २६ ॥ अथमध्यमकक्ष्यायांसमागच्छत्सुहृज्जनैः ॥ ससर्वानर्थिनोदृष्ट्वासमेत्यप्रतिनंद्यच ॥२७॥ ततःपावकसंकाशमारुरोहरथोत्तमम् ॥ वैयाघ्रंपुरुषव्याघ्रोराजितंराजनंदनः ॥ २८ ॥ मेघनादमसंबाधंमणिहेमविभूषितम् ॥ मुष्णंतमिवचक्षूंषिप्रभयामेरुवर्चसम् ॥ २९ ॥ करेणुशिशुकल्पैश्चयुक्तंपरमवाजिभिः ॥ हरियुक्तंसहस्राक्षोरथमिंद्रइवाशुगम् ॥ ३० ॥ प्रययौतूर्णमास्थायराघवोज्वलितःश्रिया ॥ सपर्जन्यइवाकाशेस्वनवानभिनादयन् ॥ ३१ ॥ निकेतान्निर्ययौश्रीमान्महाभ्रादिवचंद्रमाः ॥ चित्रचामरपाणिस्तुलक्ष्मणोराघवानुजः ॥ ॥ ३२ ॥ जुगोपभ्रातरंभ्रातारथमास्थायपृष्ठतः॥ ततोहलहलाशब्दस्तुमुलःसमजायत ॥ ३३ ॥ तस्य निष्क्रममाणस्य जनौघस्यसमंततः ॥ ततोहयवरामुख्यानागाश्चगिरिसंनिभाः ॥ ३४ ॥ अनुजग्मुस्तथारामंशतशोऽथसहस्रशः ॥ अग्रतश्चास्यसन्नद्धाश्चंदनागुरुभूषिताः ॥ ३५ ॥ खड्गचापधराःशूराजग्मुराशंसवोजनाः ॥ ततोवादित्रशब्दाश्चस्तुतिशब्दाश्चवंदिनाम् ॥ ३६ ॥ सिंहनादाश्चशूराणांततःशुश्रुविरेपथि ॥ हर्म्यवातायनस्थाभिर्भूषिताभिःसमंततः ॥ ३७ ॥

कृतकौतुकमंगलः अनुष्ठिताभिषेकोत्सवार्थमंगलः ॥ २५ ॥ प्रह्वांजलिपुटं प्रह्वत्वसूचकांजलिपुटवंतम् ॥ २६ ॥ अर्थिनः स्वदर्शनस्वाभिषेकाद्यर्थिनः ॥ २७ ॥ वैयाघ्रं व्याघ्रचर्मपरिवृतम् अतएव राजितं शोभावंतम् ॥ २८ ॥ मेघनादसदृशनादम् असंबाधं विपुलम् प्रभया रविकिरणसंयुक्तत्वप्रभया मेरुवर्चसमित्यनेन रथस्य सौवर्णत्वं ध्वन्यते ॥ २९ ॥ करेणुशिशवः कलभाः अनेन हृष्टपुष्टोन्नतमहाबलवत्त्वं सूचितम् । इंद्रः परमैश्वर्यवान् सहस्राक्ष इव नानाविधदेहवर्त्याभरणस्थरत्नसमूहैः रामस्य सहस्राक्षत्वं बोध्यम् ॥ ३० ॥ ज्वलितः दीपित उज्ज्वलित इति वा तदा संधिरार्षः । आकाशे स्वनवान् नादवान् पर्जन्यो मेघ इव रथस्वनेन दिशो नादयन् प्रययावित्यन्वयः ॥ ३१ ॥ चंद्रचामरेतिपाठे चंद्रवच्छ्वेतचामरेत्यर्थः । चित्रचामरेतिपाठे चित्रदंडयुतचामरेत्यर्थः ॥ ३२ ॥ हलहलेत्यनुकरणम् ॥ ३३ ॥ तस्य निष्क्रममाणस्य पुरत इति शेषः तस्मिन्निष्क्रममाणे इति यावत् । जनौघस्य हलहलाशब्द इत्यन्वयः ॥ ३४ ॥ ३५ ॥ आशंसवः भद्रमिति शेषः ॥ ३६ ॥ तत इत्यावर्तते ततस्ततः तत्र तत्र देशे

शुश्रुविर वातायनं बहिरवलोकनयोग्यानि सूक्ष्मद्वाराणि ॥ ३७ ॥ पिप्रीषा प्रीणनेच्छा ॥ ३८ ॥ ववंदिरे अस्तुवन् स्तुतिप्रकारमाह नूनमिति ॥ ३९ ॥ सिद्धयात्रं सफलगमनम् उपस्थितं प्राप्तवंतम् सीता सीमंतिनीषु वरा श्रेष्ठा इति अमन्यंतेत्यन्वयः ॥ ४० ॥ हि यत एवममन्यंत अतस्तयेत्यादि तदुच्चारिता वाचः शुश्रावेत्यन्वयः ॥ ४१ ॥ ४२ ॥ आत्माधिकारा आत्मानमधिकृत्य प्रवृत्ताः ॥ ४३ ॥ श्रियं गमिष्यन्प्राप्स्यन् गच्छति पितृगृहमिति शेषः । सर्वसमृद्धकामाः समृद्धसर्वकामा इत्यर्थः । प्रशास्ता राजा ॥४४॥ सर्वं राष्ट्रमेष प्रपत्स्यत इति यत अयमेव लाभः । अस्मिन् रामे मनुजाधिपे सति कश्चित्कश्चिदपि किंचन स्वल्पमपि अप्रियं प्रियाभावं दुःखमनिष्टप्राप्तिं जातु कदापि न पश्येत् न प्राप्नुयात् ॥ ४५ ॥ स्वास्तिका जयजयेति वादिनो वंदिनः सूता इतरस्तुतिपाठकाः मागधा वंशपाठकाः एतैर्वादिकैस्तत्तच्छन्द

कीर्यमाणःसुपुष्पौघैर्ययौस्त्रीभिररिंदमः ॥ रामंसर्वानवद्यांग्योराममपिप्रीषयाततः ॥ ३८ ॥ वचोभिरग्र्यैर्हर्म्यस्थाःक्षितिस्थाश्चववंदिरे ॥ नूनंनंदतिते माताकौसल्यामातृनंदन ॥ ३९ ॥ पश्यंतीसिद्धयात्रंत्वां पित्र्यंराज्यमुपस्थितम् ॥ सर्वसीमंतिनीभ्यश्चसीतासीमंतिनीवरा ॥ ४० ॥ अमन्यंत हितानार्योरामस्यहृदयप्रियाम् ॥ तयासुचरितंदेव्यापुरानूनंमहत्तपः ॥ ४१ ॥ रोहिणीवशशांकेनरामसंयोगमापया ॥ इतिप्रासादशृंगेषुप्रमदा भिर्नरोत्तमः ॥ शुश्रावराजमार्गस्थःप्रियावाचउदाहृताः ॥ ४२ ॥ सराघवस्तत्रतदाप्रलापाञ्छुश्रावलोकस्यसमागतस्य ॥ आत्माधिकाराविवि धाश्चवाचःप्रहृष्टरूपस्यपुरेजनस्य ॥ ४३ ॥ एषश्रियंगच्छतिराघवोद्यराजप्रसादाद्विपुलांगमिष्यन् ॥ एतेवयंसर्वसमृद्धकामायेषामयंनोभवताप्रशास्ता ॥ ४४ ॥ लाभोजनस्यास्ययदेषसर्वंप्रपत्स्यतेराष्ट्रमिदंचिराय ॥ नह्यप्रियंकिंचनजातुकश्चित्पश्येन्नदुःखंमनुजाधिपेऽस्मिन् ॥ ४५ ॥ सघोषवद्भिश्चहयैः सनागैःपुरःसरैःस्वस्तिकसूतमागधैः ॥ महीयमानःप्रवरैश्चवादिकैरभिष्टुतोवैश्रवणोयथाययौ ॥ ४६ ॥ करेणुमातंगरथाश्वसंकुलंमहाजनौघैःपरिपूर्ण चत्वरम् ॥ प्रभूतरत्नंबहुपण्यसंचयंददर्शरामोविमलंमहापथम् ॥ ४७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मी० आ०का० चतुर्विं०सा०सं०अयोध्याकांडे षोडशः सर्गः ॥ १६ ॥ ॥ सरामोरथमास्थायसंप्रहृष्टसुहृज्जनः ॥ पताकाध्वजसंपन्नंमहार्हागुरुधूपितम् ॥ १ ॥ अपश्यन्नगरंश्रीमान्नानाजनसम न्वितम् ॥ सगृहैरभ्रसंकाशैःपांडुरैरुपशोभितम ॥ २ ॥ राजमार्गंययौरामोमध्येनागुरुधूपितम् ॥ चंदनानांचमुख्यानामगुरूणांचसंचयैः ॥ ३ ॥ उत्तमानांचगंधानांक्षौमकौशांबरस्यच ॥ आविद्धाभिश्चमुक्ताभिरुत्तमैःस्फाटिकैरपि ॥ ४ ॥ शोभमानमसंबाधंतंराजपथमुत्तमम् ॥ संवृतंविविधैः पुष्पैर्भक्ष्यैरुच्चावचैरपि ॥५॥ ददर्शतंराजपथंदिविदेवपतिर्यथा ॥ दध्यक्षतहविर्लाजैर्धूपैरगुरुचंदनैः ॥६॥ नानामाल्योपगंधैश्चसदाभ्यर्चितचत्वरम् ॥ आशीर्वादान्बहूञ्छृण्वन्बहुभिःसमुदीरितान् ॥ ७ ॥ यथार्हंचापिसंपूज्यसर्वानेवनरान्ययौ ॥ पितामहैराचरितंतथैवप्रपितामहैः ॥ ८ ॥

प्रयोक्तृभिः ॥ ४६ ॥ ४७ ॥ संभ्रमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षोडशः सर्गः ॥ १६ ॥ ॥ श्री ॥ ॥ स राम इति ॥ १ ॥२ ॥ मध्येन उभयश्रेणीमध्येन ॥ ३ ॥ उत्तमानां गंधवद्द्रव्याणां संचयैः क्षौमकौशांबरस्य च संचयैरित्यन्वयः । क्षौममतसीजं कौशं पट्टवस्त्रम् आविद्धाभिः कृतच्छिद्राभिः । अविद्धाभिरिति पाठे अकृतच्छिद्राभिः ॥४॥ असंबाधं विस्तीर्णं संवृतं व्याप्तम । अत्रत्यराजपथमित्यस्य ददर्शेत्यनेनान्वयः ॥५॥ एवं दृष्टवांस्तं राजपथं ययाविति संबंधः ॥ ६ ॥ ७ ॥ यथार्हं दर्शनभ्रूक्षेपवचनादिभिर्यथोचितमित्यर्थः । आचरितमनुष्ठितम् ॥ ८ ॥

अनुपाल्यत्यादिर्वृद्धानां वादः ॥ ९ ॥ यदि राज्ये प्रतिष्ठितं प्राप्तराज्याभिषेकं रामं यथागतं पितुर्गेहान्निर्यांतं निःसरंतं पश्यामस्तर्हि नोऽस्माकं भुक्तेन ऐहिकविषयभोगजसुखेन तथा परमार्थैः परमार्थस्वर्गसाधनैश्च कर्मभिरलम् न किंचित्तैः फलं सर्वसुखस्यैतेनैवलब्धत्वात् । अत्र यद्यंतर्भावेण विपरीतसंभावनासूचनम् ॥ १० ॥ तदेवाह ततो हीति । अमिततेजसो रामस्य राज्येन राज्यफलकोभिषेको यथा प्रियतरस्तथा ततोन्यत्र किंचित्प्रियतरं प्रेमास्पदमित्यन्वयः सद्राजमूलकत्वात्सर्वसुखस्येति भावः ॥ ११ ॥ उदासीनः स्तुतिजहर्षविकाररहितः ॥ १२ ॥ अतिक्रांते दृष्टिपथमिति शेषः । अत्यंतासक्त्या पुर इव परिस्फुरणात् ॥ १३ ॥ एवं लोकानुरागे कविर्हेतुं दर्शयति यश्चेति । रामं न पश्येत् आत्मस्वरूपत्वेनांतर्यामित्वेन वा न पश्येत् यथास्थितवेषधारिणं वा तद्देशस्थं न पश्येत् रामोयं न पश्येत् यन्नि ष्ठज्ञानविषयतां न प्राप्नुयात् ज्ञानविषयत्वप्राप्तिरत्र दृश्यत इत्यर्थः । अत्यंतं तद्विषयज्ञानाय यतमानोपि यस्तं न लभेदित्यर्थः । यथास्थितवेषधारीवायं स्वदेशस्थं न पश्येत् यद्विषयकज्ञानवान्

अद्योपादायतंमार्गमभिषिक्तोऽनुपालय ॥ यथास्मपोषिताःपित्रायथासर्वैःपितामहैः ॥ ततःसुखतरंसर्वेरामेवेत्स्यामराजनि ॥ ९ ॥ अलमद्यहि भुक्तेनपरमार्थैरलंचनः ॥ यदिपश्यामनिर्यांतंरामंराज्येप्रतिष्ठितम् ॥ १० ॥ ततोहिनःप्रियतरंनान्यत्किंचिद्भविष्यति ॥ यथाभिषेकोरामस्यराज्येनामिततेजसः ॥ ११ ॥ एताश्चान्याश्चसुहृदामुदासीनःशुभाःकथाः ॥ आत्मसंपूजनीःशृण्वन्ययौरामोमहापथम् ॥ १२ ॥ नहितस्मान्मनःकश्चिच्चक्षुषीवानरोत्तमात् ॥ नरःशक्नोत्यपाक्रष्टुमतिक्रांतेपिराघवे ॥ १३ ॥ यश्चरामंनपश्येत्तुयंचरामोनपश्यति ॥ निंदितःसर्वलोकेपुस्वात्माप्येनंविगर्हते ॥ ॥ १४ ॥ सर्वेषुसहिधर्मात्मावर्णानांकुरुतेदयाम् ॥ चतुर्णांहिवयःस्थानांतेनतेतमनुव्रताः ॥ १५ ॥ चतुष्पथान्देवपथांश्चैत्यांश्चायतनानिच ॥ प्रदक्षिणंपरिहरञ्जगामनृपतेःसुतः ॥१६॥ सराजकुलमासाद्यमेघसंघोपमैःशुभैः ॥ प्रासादशृंगैर्विविधैःकैलासशिखरोपमैः ॥ १७ ॥ आवारयद्भिर्गगनंविमानैरिवपांडुरैः ॥ वर्धमानगृहैश्चापिरत्नजालपरिष्कृतैः ॥ १८ ॥ तत्पृथिव्यांगृहवरंमहेंद्रसदनोपमम् ॥ राजपुत्रःपितुर्वेश्मप्रविवेशश्रियाज्वलन् ॥ ॥ १९ ॥ सकक्ष्याधन्विभिर्गुप्तास्तिस्रोऽतिक्रम्यवाजिभिः ॥ पदातिरपरेकक्ष्येद्वेजगामनरोत्तमः ॥ २० ॥ ससर्वाःसमतिक्रम्यकक्ष्यादशरथात्मजः ॥ सन्निवर्त्यजनंसर्वंशुद्धांतःपुरमत्यगात् ॥ २१ ॥ तस्मिन्प्रविष्टेपितुरंतिकंतदाजनःससर्वोमुदितोनृपात्मजे ॥ प्रतीक्षतेतस्यपुनःस्मनिर्गमंयथोदयंचंद्रमसःसरित्पतिः ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येचतुर्विं०सा० सं० अयोध्याकांडेसप्तदशःसर्गः ॥ १७ ॥

न भवेत् स सर्वलोकनिंदास्पदम् । स्वात्मा स्वांतःकरणमपि एनं विगर्हते धिङ्मां भगवज्ज्ञानायोग्यमिति । रामज्ञानं विना सर्वोपि निंद्य इति विनोक्तिरलंकारोत्र व्यंग्यः । अनेन भगवद्विषयकज्ञानवानेव धन्य इति वस्तु व्यज्यते ॥ १४ ॥ किंच हि यतः स धर्मात्मा चतुर्णां हि चतुर्णामपि वर्णानां सर्वेष्वप्याश्रमेषु वयःस्थानां वयोरूपं स्थानं यस्यास्तां वयोरूपां दयां कुरुते इत्यर्थः । तेन ते सर्वे लोकास्तं रामं कायवाङ्मनोभिरनुव्रतास्तत्परा इत्यर्थः ॥ १५ ॥ प्रदक्षिणं परिहरन्निति । चतुष्पथाद्यपेक्षया स्वस्य दक्षिणभागगमनं परिहरन्नित्यर्थः ॥ १६ ॥ प्रासादशृंगैः प्रासादस्य शृंगैः ॥ १७ ॥ आवारयद्भिः आक्रमद्भिः वर्धमानगृहैः क्रीडागृहैः रत्नसमूहालंकृतैरेतैः परिवृतम् ॥ १८ ॥ पितुर्वेश्म पृथिव्यां सर्वगृहेषु श्रेष्ठं प्रविवेशेत्यन्वयः ॥ १९ ॥ वाजिभिः रथयुक्तैः ॥ २० ॥ सर्वाः उक्तपंचकक्ष्याः ॥ २१ ॥ अंतिकं समीपदेशम् ॥ २२ ॥ रेफैर्मीनः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तदशः सर्गः ॥ १७ ॥ ॥ छ ॥

शुभे आसने पर्यंके परिशुष्यता मुखेनोपलक्षितम् ॥ १ ॥ विनीतवत् विनीतः सन्निति यावत् । सुसमाहितः तस्या अतिस्त्रेष्टकरत्वेन जगद्धितकरत्वेन च तस्यां प्रसन्नचित्तः ॥ २ ॥ नाभिभाषितुं रामेत्यक्षरद्वया धिकमिति शेषः ॥ ३ ॥ रामोपि भयमापन्नः दशरथविषादस्य स्वापराधजन्यत्वशंकया ॥ ४ ॥ इंद्रियैरित्यादिश्लोकद्वये दृष्ट्वा भयमापन्न इत्यनुकृष्यते अप्रहृष्टैः खिन्नैः उपलक्षितं व्यथितं खिन्नं आकुलं संभ्रांतं चेतो यस्य तम् ॥ ५ ॥ ऊर्मिमालायुतमक्षोभ्यमपि क्षुभ्यंतं सागरमिव स्थितं उपप्लुतं राहुग्रस्तं उक्तमनृतं येन तद्वृषिस्तेजस्कम् ॥ ६ ॥ अचिंत्यकल्पमत्यंतमसंभावितं उपधारयन् । किंहेतुकोयं शोक इति चिंतयन् । संरब्धतरोऽत्यंतं क्षुभितः यद्यपि पर्वणि समुद्रस्य चंद्रोदयात्क्षोभस्तथापि क्षोभमात्रे दृष्टांतः ॥ ७ ॥ किंस्वित् किंतु ॥ ८ ॥ अद्यैवेत्येवकारव्यवच्छेद्यमाह अन्यदेत्यादि । तस्य मद्दर्शनेऽतिप्रीतिमतः

सददर्शासनेरामोविषण्णंपितरंशुभे ॥ कैकेय्यासहितंदीनंमुखेनपरिशुष्यता ॥ १ ॥ सपितुश्चरणौपूर्वमभिवाद्यविनीतवत् ॥ ततोववंदेचरणौकैकेय्याः सुसमाहितः ॥ २ ॥ रामेत्युक्त्वातुवचनंवाष्पपर्याकुलेक्षणः ॥ शशाकनृपतिर्दीनोनेक्षितुंनाभिभाषितुम् ॥ ३ ॥ तदपूर्वंनरपतेर्दृष्ट्वारूपंभयावहम् ॥ रामोपिभयमापन्नःपदास्पृष्ट्वेवपन्नगम् ॥ ४ ॥ इंद्रियैरप्रहृष्टैस्तंशोकसंतापकर्शितम् ॥ निःश्वसंतंमहाराजंव्यथिताकुलचेतसम् ॥ ५ ॥ ऊर्मिमालिनमक्षोभ्यंक्षुभ्यंतमिवसागरम् ॥ उपप्लुतमिवादित्यमुक्तानृतमृषिंयथा ॥ ६ ॥ अचिंत्यकल्पंनृपतेस्तंशोकमुपधारयन् ॥ बभूवसंरब्धतरःसमुद्र इवपर्वणि ॥ ७ ॥ चिंतयामासचतुरोरामःपितृहितेरतः ॥ किंस्विदद्यैवनृपतिर्नमांप्रत्यभिनंदति ॥ ८ ॥ अन्यदामांपितादृष्ट्वाकुपितोपिप्रसीदति ॥ तस्यमामद्यसंप्रेक्ष्यकिमायासःप्रवर्तते ॥ ९ ॥ सदीनइवशोकार्तोविषण्णवदनद्युतिः ॥ कैकेयीमभिवाद्यैवरामोवचनमब्रवीत् ॥ १० ॥ कच्चिन्मयानापराद्धमज्ञानाद्येनमेपिता ॥ कुपितस्तन्ममाचक्ष्वत्वमेवैनंप्रसादय ॥ ११ ॥ अप्रसन्नमनाःकिंनुसदामांप्रतिवत्सलः ॥ विषण्णवदनोदीनःसदामांप्रतिभाषते ॥ १२ ॥ शारीरोमानसोवापिकश्चिदेनंनबाधते ॥ संतापोवाभितापोवादुर्लभंहिसदासुखम् ॥ १३ ॥ कच्चिन्नकिंचिद्भरतेकुमारेप्रियदर्शने ॥ शत्रुघ्नेवामहासत्त्वेमातृणांवाममाशुभम् ॥ १४ ॥ अतोषयन्महाराजमकुर्वन्वापितुर्वचः ॥ मुहूर्तमपिनेच्छेयंजीवितुंकुपितेनृपे ॥ १५ ॥ यतोमूलंनरःपश्येत्प्रादुर्भावमिहात्मनः ॥ कथंतस्मिन्नवर्तेतप्रत्यक्षेसतिदैवते ॥ १६ ॥ कच्चित्तेपरुषंकिंचिदभिमानात्पितामम ॥ उक्तोभवत्यारोषेणयेनास्यलुलितंमनः ॥ १७ ॥ एतदाचक्ष्वमेदेवितत्त्वेनपरिपृच्छतः ॥ किंनिमित्तमपूर्वोयंविकारोमनुजाधिपे ॥ १८ ॥

आयासः खेदः ॥ ९ ॥ दीन इव विषण्णवदनद्युतिरिव स रामः शोकार्त इव वचनमब्रवीदिति संबंधः ॥ १० ॥ नापराद्धं काकुः अपराद्धम् अज्ञानात्प्रमादात् प्रसादय मत्कृतापराधशांत्यै इति शेषः ॥ ११ ॥ सदा मां प्रति वत्सलोप्यद्य किमप्रसन्नमनाः हि यतो मां न भाषतेऽतोऽप्रसन्नमनस्त्वनिर्णयः ॥ १२ ॥ शारीरः शरीरव्याधिजः संतापः मानसो मनोनिष्ठाधिजोभितापः न बाधत इत्यत्र काकुः कुत एतत्तत्राह दुर्लभं हीति । मनुष्यशरीरस्य पापपुण्यारब्धत्वादिति भावः ॥ १३ ॥ भरते शत्रुघ्ने वा मातॄणां मम मातृषु वा किंचिदशुभं न पश्यति कच्चिदित्यन्वयः ॥ १४ ॥ कुपिते अतोषणवचनाकरणाद्वा ॥ १५ ॥ यतो मूलं यन्मूलमित्यर्थे आर्षमेतत् । प्रादुर्भावं जन्म यत्कारणकं पश्येज्जानीयात्तस्मिन्प्रत्यक्षे दैवते सति तस्मिन्कथमानुकूल्येन न वर्तेतेत्यर्थः ॥ १६ ॥ तं संबंधसामान्ये षष्ठी त्वयाभिमानाद्गर्वान्मम

पिता परुषमुक्तोथवा भवत्या कोपेन किंचिन्निमित्तकोपेन परुषमुक्तो येनास्य मनो लुलितं कलुषितं दुःखितोक्तित्वादधिकपदत्वादि न दोषः ॥ १७ ॥ १८ ॥ सुनिर्लज्जा पत्युरेवंविधक्लेशकरणल ज्जारहिता धृष्टं प्रत्यक्षतो वनं गच्छेत्येवंरूपम् ॥ १९ ॥ मनोगतं त्वदप्रियकरमिति शेषः ॥ २० ॥ तदेवाह प्रियमिति । श्रुतं प्रतिज्ञातंतदप्रियमपि त्वयावश्यं कार्यं यदि पितृभक्तोसीति शेषः ॥ २१ ॥ किं तत्राह एष इति । अभिपूज्य तेनैव वरदानेन पश्चात्प्रतिज्ञातवरदानकाले ॥ २२ ॥ अतिसृज्य प्रतिज्ञाय गतजले नद्यादौ दानस्य पूर्वमेव वृत्तत्वात्तद्विषयव्यवहारपरिहारचिंता व्यर्थेत्यर्थः ॥ २३ ॥ इदं सत्यं धर्मस्य मूलं अपि च सतामपि सत्यं धर्ममूलमित्येतद्विदितं त्वत्कृते त्वत्प्रयोजनांतरायवशेन मयि कुपितो राजा कोपदोषेण यथा न त्यजेत्तथा कुर्विति शेषः । एतेन पितुरधर्मात्त्राणं पित्राज्ञाप रिपालनं च पुत्रस्य महान्धर्म इति सूचितम ॥ २४ ॥ दशरथमिव राममपि निर्वध्नाति यदीति । राजा यद्वक्ष्यते तद्यदि करिष्यसि ततोहं सर्वं पुनर्विशिष्याख्यास्यामि ॥ २५ ॥ राज्ञा राजानुमत्या मया

एवमुक्तातुकैकेयीराघवेणमहात्मना ॥ उवाचेदंसुनिर्लज्जाधृष्टमात्महितंवचः ॥ १९ ॥ नराजाकुपितोरामव्यसनंनास्यकिंचन ॥ किंचिन्मनोगतं त्वस्यत्वद्भयान्नानुभाषते ॥ २० ॥ प्रियंत्वामप्रियंवक्तुंवाणीनास्यप्रवर्तते ॥ तदवश्यंत्वयाकार्यंयदनेनश्रुतंमम ॥ २१ ॥ एषमह्यंवरंदत्त्वापुरा मामभिपूज्यच ॥ सपश्चात्तप्यतेराजायथाऽन्यःप्राकृतस्तथा ॥ २२ ॥ अतिसृज्यददानीतिवरंममविशांपतिः ॥ सनिरर्थंगतजलेसेतुंबंधितुमिच्छ ति ॥ २३ ॥ धर्ममूलमिदंरामविदितंचसतामपि ॥ तत्सत्यंनत्यजेद्राजाकुपितस्त्वत्कृतेयथा ॥ २४ ॥ यदितद्वक्ष्यतेराजाशुभंवायदिवाशुभम् ॥ करिष्यसिततःसर्वमाख्यास्यामिपुनस्त्वहम् ॥ २५ ॥ यदित्वभिहितंराज्ञात्वयितन्नविपत्स्यते ॥ ततोहमभिधास्यामिनह्येषत्वयिवक्ष्यति ॥ २६ ॥ एतत्तुवचनंश्रुत्वाकैकेय्यासमुदाहृतम् ॥ उवाचव्यथितोरामस्तांदेवींनृपसन्निधौ ॥ २७ ॥ अहोधिङ्नार्हसेदेविवक्तुंमामीदृशंवचः ॥ अहंहिवचनाद्राज्ञः पतेयमपिपावके ॥ २८ ॥ भक्षयेयंविषंतीक्ष्णंपतेयमपिचार्णवे ॥ नियुक्तोगुरुणापित्रानृपेणचहितेनच ॥ २९ ॥ तद्ब्रूहिवचनंदेविराज्ञोयद भिकांक्षितम् ॥ करिष्येप्रतिजानेचरामोद्विर्नाभिभाषते ॥ ३० ॥ तमार्जवसमायुक्तमनार्यासत्यवादिनम् ॥ उवाचरामंकैकेयीवचनंभृशदारुणम् ॥ ॥ ३१ ॥ पुरादेवासुरेयुद्धेपित्रातेममराघव ॥ रक्षितेनवरौदत्तौसशल्येनमहारणे ॥ ३२ ॥ तत्रमेयाचितोराजाभरतस्याभिषेचनम् ॥ गमनंदं डकारण्येतवचाद्यैवराघव ॥ ३३ ॥ यदिसत्यप्रतिज्ञंत्वंपितरंकर्तुमिच्छसि ॥ आत्मानंचनरश्रेष्ठममवाक्यमिदंशृणु ॥ ३४ ॥

यदभिहितं तत्त्वयि न विपत्स्यते व्यर्थं न भविष्यति तदाहं वक्ष्यामि । राजैव वदतु तत्राह नहीत्यादि । त्वदप्रियत्वात्त्वत्समक्षं साक्षादिति शेषः ॥ २६ ॥ रामोपि दशरथवदेव घोरत्वं ज्ञात्वापि महापुरु षत्वाद्धीरोदात्तत्वात् सर्वमेव करिष्यामीति प्रतिजानीते । एतदिति । व्यथितः गुरुवचनोल्लंघनमनयापि शंकितमिति संतप्तः ॥ २७ ॥ ईदृशम् अकरणशंकावचनम् यदि तद्वक्ष्यत इत्यादिकमित्यर्थः ॥ २८ ॥ गुरुणा इहामुत्र हितोपदेष्ट्रा ॥ २९ ॥ प्रतिजाने कृतसुकृतादिसाक्षिकतयेति शेषः । तदेव स्फिरयति रामो द्विरिति । यदुक्तं तदुक्तमेव तद्विरुद्धः न पुनर्वदतीत्यर्थः । तत्तदभावविषयतया द्विरावृत्तं भाषणं न करोतीति यावत ॥ ३० ॥ ३१ ॥ पूर्वं सशल्येन पश्चाच्छल्यापाकरणपूर्वं मया रक्षितेन ॥ ३२ ॥ तत्र तयोर्वरयोरेकेन अद्यैव एतत्क्षण एव ॥ ३३ ॥ यदीति । राज्ञा त्वया च मदुक्तकृतेः सशपथं

प्रतिज्ञातत्वादिति भावः ॥ ३४ ॥ सन्निदेशे पितृप्रतिज्ञासंपादने ॥ ३५ ॥ अभिषेचनम् अभिषेकोपकरणम् ॥ ३६ ॥ अभिषेकं तदुप करणम् ॥ ३७ ॥ ३८ ॥ एतेन वरद्वयप्रदानेन निमित्तेन ॥ ३९ ॥ सत्येन सत्यपरिपालनेन ॥ ४० ॥ शोकं तत्सूचकं विकारं न प्रविव्यथे च मनसेति शेषः । राजा च राजा तु पुत्रव्यसनाभितप्तो भावितद्वियोगव्यसनेनाभितप्तो बभूवेति शेषः ॥ ४१ ॥ यैर्वमानः ॥ ॥
॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टादशः सर्गः ॥ १८ ॥ ॥ ७ ॥ ॥ अथाभिषेकवनवासयोः समचित्ततया धीरोदात्तमहापुरुषत्वं रामस्याह तदिति । मरणोपमं लोकदृशा ॥ १ ॥ न द्विर्भाषत इत्युक्तत्वादेवमस्त्वित्येव केवलमाह । यद्वा एवमस्तु भरताभिषेकोस्तु ॥ २ ॥ ३ ॥ मन्युर्नेति राजाभिप्रायज्ञानेच्छया प्रश्नेनेति शेषः । ब्रूमि ब्रवीमि

सन्निंदेशेपितुस्तिष्ठयथानेनप्रतिश्रुतम् ॥ त्वयारण्यंप्रवेष्टव्यंनववर्षाणिपंचच ॥ ३५ ॥ भरतश्चाभिषिच्येतयदेतदभिषेचनम् ॥ त्वदर्थेविहितंराज्ञातेनसर्वेणराघव ॥ ३६ ॥ सप्तसप्तचवर्षाणिदंडकारण्यमाश्रितः ॥ अभिषेकमिदंत्यक्त्वाजटाचीरधरोभव ॥ ३७ ॥ भरतःकोसलपतेःप्रशास्तुवसुधामिमाम् ॥ नानारत्नसमाकीर्णांसवाजिरथसंकुलाम् ॥ ३८ ॥ एतेनत्वांनरेंद्रोऽयंकारुण्येनसमाप्लुतः ॥ शोकैःसंक्लिष्टवदनोनशक्नोतिनिरीक्षितुम् ॥ ॥ ३९ ॥ एतत्कुरुनरेंद्रस्यवचनंरघुनंदन ॥ सत्येनमहतारामतारयस्वनरेश्वरम् ॥ ४० ॥ इतीवतस्यांपरुषंवदंत्यांनचैवरामःप्रविवेशशोकम् ॥ प्रविव्यथेचापिमहानुभावोराजाचपुत्रव्यसनाभितप्तः ॥ ४१ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येचतुर्विं०सा०सं०अयोध्याकांडेअष्टादशः सर्गः ॥ १८ ॥ ॥ ७ ॥ ॥ तदप्रियममित्रघ्नोवचनंमरणोपमम् ॥ श्रुत्वानविव्यथेरामःकैकेयींचेदमब्रवीत् ॥ १ ॥ एवमस्तुगमिष्यामिवनंवस्तुमहंत्वितः ॥ जटाचीरधरोराज्ञःप्रतिज्ञामनुपालयन् ॥ २ ॥ इदंतुज्ञातुमिच्छामिकिमर्थंमांमहीपतिः ॥ नाभिनंदतिदुर्धर्षोयथापूर्वमरिंदमः ॥ ३ ॥ मन्युर्नचत्वयाकार्योदेविब्रूमितवाग्रतः ॥ यास्यामिभवसुप्रीतावनंचीरजटाधरः ॥ ४ ॥ हितेनगुरुणापित्राकृतज्ञेननृपेणच ॥ नियुज्यमानोविस्रब्धःकिंनकुर्यामहंप्रियम् ॥ ५ ॥ अलीकंमानसंत्वेकंहृदयंदहतेमम ॥ स्वयंयन्नाहमांराजाभरतस्याभिषेचनम् ॥ ६ ॥ अहंहिसीतांराज्यंचप्राणानिष्टान्धनानि च ॥ हृष्टोभ्रात्रेस्वयंदद्यांभरतायप्रचोदितः ॥ ७ ॥ किंपुनर्मनुजेंद्रेणस्वयंपित्राप्रचोदितः ॥ तवचप्रियकामार्थंप्रतिज्ञामनुपालयन् ॥ ८ ॥ तथाश्वासयह्रीमंतंकिंत्विदंयन्महीपतिः ॥ वसुधासक्तनयनोमंदमश्रूणिमुंचति ॥ ९ ॥

एतावत् ज्ञात्वा सर्वथा यास्याम्येव नत्वन्यथा शंकितव्यमिति भावः ॥ ४ ॥ कृतज्ञेन त्वत्कृतस्वापत्राणज्ञेन विस्रब्धः निर्विशंकः ॥ ५ ॥ किंत्विदं मानसं मनसि वर्तमानं अलीकं दुःखं किं तत्राह स्वयमित्यादि ॥ ६ ॥ अयमर्थस्त्वद्दुःखावहत्वाद्राज्ञा तव साक्षाद्वक्तुमशक्य इति चेत्तत्राह अहं हीति । प्रचोदितः त्वयापीति शेषः । प्रतिज्ञाकरणं विनापि त्वदुक्तिमात्रेण राज्यादि दद्याम् । तत्र किं वक्तव्यं त्वत्प्रियार्थं राज्ञा प्रेरितः स्वकृतप्रतिज्ञामनुपालयन् हेतौ शता । तत्पालनाद्धेतो राज्यं दद्यामित्यर्थः ॥ ७ ॥ ८ ॥ मद्विषयकनियोगसंकोचेन ह्रीमंतं राजानमाश्वासय इदं किं किंहेतुकं तदेवाह यदित्यादि ॥ ९ ॥

अनिर्वृत्तस्वकार्यां कथमाश्वासयामीत्यत आह गच्छंत्वित्यादि ॥ १० ॥ अविचार्य युक्तायुक्तविचारमकृत्वैवेत्यर्थः ॥ ११ ॥ प्रस्थानं वनगमनं श्रद्दधाना अवश्यमयं प्रस्थानं करिष्यतीति निश्चयवती ॥ १२ ॥ १३ ॥ उत्सुकस्य वनगमनोत्सुकस्य क्षमं युक्तम् ॥ १४ ॥ राजानभिनंदनहेतुमाह व्रीडेति । स्वसत्यस्य पारमाप्त्यदर्शनजलज्जायुक्तः चोहेतौ अतस्त्वां नाभिभाषते एतदनभिभाषणं न किंचित् नान्यकारणकं त्वदविलंबगमनाभाव एवास्य कारणमत एव मन्युः राज्ञो दैन्यं स्वाविलंबगमनेनापनीयतां त्वयेति शेषः ॥ १५ ॥ इतोपि न युक्तो विलंब इत्याह यावदिति । मया दरिद्राधमर्णत्वेन तथा शपथैः प्रतिबंधादिति भावः ॥ १६ ॥ १७ ॥ कृतत्वरोभूदिति शेषः ॥ १८ ॥ दारुणोदयं दारुणार्थकं प्रश्नोत्तरम् ॥ १९ ॥ लोकमावस्तुंलोके वस्तुं नोत्सहे अर्थपरो धनपरः विमलं धर्ममास्थितं

गच्छंतुचैवानयितुंदूताःशीघ्रजवैर्हयैः ॥ भरतंमातुलकुलादद्यैवनृपशासनात् ॥ १० ॥ दंडकारण्यमेषोहंगच्छाम्येवहिसत्वरः ॥ अविचार्यपितुर्वाक्यं समावस्तुंचतुर्दश ॥ ११ ॥ साहृष्टातस्यतद्वाक्यंश्रुत्वारामस्यकैकयी ॥ प्रस्थानंश्रद्दधानासात्वरयामासराघवम् ॥ १२ ॥ एवंभवतुयास्यंतिदूताः शीघ्रजवैर्हयैः ॥ भरतंमातुलकुलादिहावर्तयितुंनराः ॥ १३ ॥ तवत्वहंक्षमंमन्येनोत्सुकस्यविलंबनम् ॥ रामतस्मादितःशीघ्रंवनंत्वंगतुमर्हसि ॥ १४ ॥ व्रीडान्वितःस्वयंयच्चनृपस्त्वांनाभिभाषते ॥ नैतत्किंचिन्नरश्रेष्ठमन्युरेषोपनीयताम् ॥ १५ ॥ यावत्त्वंनवनंयातःपुरादस्मादतित्वरन् ॥ पितातावन्नतेरामस्नास्यतेभोक्ष्यतेपिवा ॥ १६ ॥ धिक्कष्टमितिनिःश्वस्यराजाशोकपरिप्लुतः ॥ मूर्च्छितोन्यपतत्तस्मिन्पर्यंकेहेमभूषिते ॥ १७ ॥ रामोप्युत्थाप्यराजानंकैकेय्याभिप्रचोदितः ॥ कशयेवहतोवाजीवनंगतुंकृतत्वरः ॥ १८ ॥ तदप्रियमनार्यायावचनंदारुणोदयम् ॥ श्रुत्वागतव्यथोरामःकैकेयीं वाक्यमब्रवीत् ॥ १९ ॥ नाहमर्थपरोदेविलोकमावस्तुमुत्सहे ॥ विद्धिमामृषिभिस्तुल्यंविमलंधर्ममास्थितम् ॥ २० ॥ यत्तत्रभवतःकिंचिच्छक्यंकर्तुं प्रियंमया ॥ प्राणानपिपरित्यज्यसर्वथाकृतमेवतत् ॥ २१ ॥ नह्यतोधर्मचरणंकिंचिदस्तिमहत्तरम् ॥ यथापितरिशुश्रूषातस्यवावचनक्रिया ॥ ॥ २२ ॥ अनुक्तोप्यत्रभवताभवत्यावचनादहम् ॥ वनंवत्स्यामिविजनेवर्षाणीहचतुर्दश ॥ २३ ॥ ननूनंमयिकैकेयिकिंचिदाशंससेगुणान् ॥ यद्राजानमवोचस्त्वंममेश्वरतरासती ॥ २४ ॥ यावन्मातरमापृच्छेसीतांचानुनयाम्यहम् ॥ ततोद्यैवगमिष्यामिदंडकानांमहद्वनम् ॥ २५ ॥

तत्त्वज्ञानरूपं धर्ममाश्रितं ऋषयोत्र तत्त्वज्ञाः एतेन स्वस्य सुखदुःखयोः समता निवृत्तिमार्गस्थता च स्वाभाविकीति ध्वनितम् ॥ २० ॥ तत्रभवतः पूज्यस्य पितुः वनगमनं कियत् यत्किंचिदतोधिकमपि प्रियं कर्तुं शक्यं तत्कृतमेव विद्धीति शेषः ॥ २१ ॥ तथा निश्चये हेतुमाह नहीति । हिर्हेतौ । शुश्रूषा पादसंवाहनादिरूपा वचनक्रिया आज्ञाकरणम् ॥ २२ ॥ अत्रभवता पूज्येन पित्रा भवत्या वचनात् पितृवचनवत्पत्नीवचनस्याप्यवश्यकर्तव्यत्वात् । अनेन सापत्नमातुरप्यनिष्टनिष्टमपि वचनमेव परिपाल्यं किमुत मातापित्रोरिति सूचितम् ॥ २३ ॥ हे कैकेयि नूनं मयि किंचित् कमपि गुणं नाशंससेन जानासि तत्र हेतुर्यदित्यादि । मुख्यानितिपाठे पितृपत्न्याद्याज्ञापरिपालनादिरूपानित्यर्थः ॥ २४ ॥ यावदिति पूर्वार्धे तावत्क्षमां कुर्विति शेषः । ततस्तदनंतरं दंडकानां तन्नामकक्षत्रियाणां तन्नामकजनपदरूपं शापवशाद्वनत्वं

मामम् ॥ २५ ॥ स हि पितृशुश्रूषारूपः ॥ २६ ॥ वाष्पं रोद्धुमशक्नुवन् ॥ २७ ॥ अनार्यायाः लोकदृष्ट्या तादृश्या अपि स्वयं तद्दोषमगणयन्निति शेषः । निष्पपात निश्चक्राम ॥ २८ ॥ कैकेयी प्रदक्षिणं सम्यगाचरितं मदिष्टं त्वयेत्यत्यंतसंतोषात् शिष्टाचाराच्चेति बोध्यम् ॥ २९ ॥ बाष्पपरिपूर्णाक्षः ॥ समीपस्थित्यावगतवृत्तांतत्वात् परमक्रुद्ध इत्यनेन लक्ष्मणेऽविद्या विक्षेपशक्तिमती दर्शिता रामे च न सा इति ध्वनितम् ॥ ३० ॥ आभिषेचनिकं अभिषेकप्रयोजनकं भांडमुपकरणजातं तद्युक्ताभिषेकशालामिति यावत् । सन्निहितगंगादिपुण्यतीर्थकत्वात् ॥ । तत्र अभिषेकशालायां दृष्टिमविचालयन् अप्रवर्तयन्सापेक्षः वनं प्रतीति शेषः । यद्वा लोकसमाधानाय तदनुग्रहाय नटवदात्मगोपनाय लोकव्यवहारात्यागाय च सापेक्षः स इव तत्र दृष्टिमविचालयन् अत्यजन् अतएव शनैर्जगाम ॥ ३१ ॥ धीरोदात्तत्वाच्च न, तद्विघातप्रयुक्तोपद्रुःखादीत्याह न चेति । लक्ष्मीं सहजां शोभां कांतत्वात् अविनाशिकांतियुक्तत्वात् लोककांतस्य शीतरश्मेरिंदोः क्षयो यथा लक्ष्मीं नापकर्शति तद्वत् ॥ ३२ ॥ सर्वलोकातिगस्येव जीवन्मुक्तस्येव

भरतःपालयेद्राज्यंशुश्रूषेच्चपितुर्यथा ॥ तथाभवत्याकर्तव्यंसहिधर्मःसनातनः ॥ २६ ॥ रामस्यतुवचःश्रुत्वाभृशंदुःखगतःपिता ॥ शोकादशक्नुवन्वक्तुंप्ररुरोदमहास्वनम् ॥ २७ ॥ वंदित्वाचरणौराज्ञोविसंज्ञस्यपितुस्तदा ॥ कैकेय्याश्चाप्यनार्यायानिष्पपातमहाद्युतिः ॥ २८ ॥ सरामःपितरंकृत्वाकैकेयींचप्रदक्षिणम् ॥ निष्क्रम्यांतःपुरात्तस्मात्स्वंददर्शसुहृज्जनम् ॥ २९ ॥ तंबाष्पपरिपूर्णाक्षःपृष्ठतोनुजगामह ॥ लक्ष्मणःपरमक्रुद्धःसुमित्रानंदवर्धनः ॥ ३० ॥ आभिषेचनिकंभांडंकृत्वारामःप्रदक्षिणम् ॥ शनैर्जगामसापेक्षोदृष्टिंतत्राविचालयन् ॥ ३१ ॥ नचास्यमहतींलक्ष्मींराज्यनाशोऽपकर्षति ॥ लोककांतस्यकांतत्वाच्छीतरश्मेरिवक्षयः ॥ ३२ ॥ नवनंगंतुकामस्यत्यजतश्चवसुंधराम् ॥ सर्वलोकातिगस्येवलक्ष्यतेचित्तविक्रिया ॥ ३३ ॥ प्रतिषिद्धयशुभंछत्रंव्यजनेचस्वलंकृते ॥ विसर्जयित्वास्वजनंरथंपौरांस्तथाजनान् ॥ ३४ ॥ धारयन्मनसादुःखमिंद्रियाणिनिगृह्यच ॥ प्रविवेशात्मवान्वेश्ममातुरप्रियशंसिवान् ॥ ३५ ॥ सर्वोप्यभिजनःश्रीमान्श्रीमतःसत्यवादिनः ॥ नालक्षयतरामस्यकंचिदाकारमानने ॥ ३६ ॥ उचितंचमहाबाहुर्नजहौहर्षमात्मवान् ॥ शारदःसमुदीर्णांशुश्चंद्रस्तेजइवात्मजम् ॥ ३७ ॥ वाचामधुरयारामःसर्वंसंमानयन्जनम् ॥ मातुःसमीपंधर्मात्माप्रविवेशमहायशाः ॥ ३८ ॥ तंगुणैःसमतांप्राप्तोभ्रातावि‌पुलविक्रमः ॥ सौमित्रिरनुवव्राजधारयन्दुःखमात्मजम् ॥ ३९ ॥

॥ ३३ ॥ छत्रादि प्रतिज्ञाविरोधात् व्यजने चामरे ॥ ३४ ॥ मनसा दुःखं धारयन् इंद्रियाणि निगृह्य मनस्थदुःखाभिव्यंजकचेष्टारहितानि कृत्वा आत्मवान् धीरोदात्तः मनसाऽदुखं परमसुखं दुःखलेशेनापि रहितं वनगमनजं धारयन् इंद्रियाणि निगृह्य तस्य सुखस्य लोकदृश्या राज्यभंगजदुःखस्य वा । यथा यथाभिव्यक्तिर्न भवति तथा मध्यस्थतया स्थापयित्वा आत्मवान्साक्षात्कृतानित्यनिर्दुःखस्वतत्व इत्यप्यर्थांतरमत्र व्यंग्यं बोध्यं । दुःखमित्यस्य कैकेय्या लोकापवादजमित्यर्थ इति कश्चित् । अप्रियशंसिवान् अप्रियं शंसिष्यन् कसुरार्षः ॥ ३५ ॥ अभिजनोभितो वर्तमानो जनः श्रीमान् रामाभिषेकप्रसंगेन कृतैरलंकरणैः शोभावान् आकारं नालक्षयत असत्त्वादेवेत्यर्थः ॥ ३६ ॥ उचितं सहजसत्वगुणोचितं वनगमनलाभोचितं च आत्मजं हर्षं आत्मनि शरीरे जातं स्वभावसिद्धं हर्षचिह्नम् ॥ ३७ ॥ ३८ ॥ ३९ ॥

लोकदृष्ट्या अर्थविपत्तिमर्थभ्रंशं वीक्ष्यापि रामो विक्रियां न जगाम किंतु सुहृज्जनस्य कौसल्यादशरथादिरूपस्यात्मनां प्राणानां विपत्तिशंकया चिंतां जगामेति शेषः ॥ ४० ॥ अनंर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनविंशः सर्गः ॥ १९ ॥ ॥ ७ ॥ ॥ तस्मिन्निति ॥ १ ॥ यः पित्राऽचोदितोपि सर्वस्य जनस्यांतःपुरस्य च कृत्येषु प्रवर्तत इति शेषः । यो गतिः प्राप्यस्य वस्तुनः प्राप्तिमार्गः शरणं रक्षणम् ॥ २ ॥ युक्तः सेवातत्परः ॥ ३ ॥ अभिशप्तोपि अन्येन कृतवाक्पारुष्योपि न क्रुध्यति क्रोधनीयानि अन्यस्य क्रोधोत्पादकानि अनुकंपया वर्जयन् । अनेन क्रोधक्रियाकर्तृत्वकर्मत्वयोः प्रतिषेधः यत्र कुत्रापि क्रुद्धान् स्वयं प्रसादयन् तिष्ठतीति शेषः ॥ ४ ॥ जीवलोकं सर्वप्रजारूपं चरति भक्षयति नाशयतीति यावत् ॥ ५ ॥ पतिमाचुक्रुशुः

प्रविश्यवेश्मातिभृशंसुदायुतंसमीक्ष्यतांचार्थविपत्तिमागताम् ॥ नचैवरामोत्रजगामविक्रियांसुहृज्जनस्यात्मविपत्तिशंकया ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणेवा० आदिकाव्येअ० कांडेएकोनविंशःसर्गः ॥ १९ ॥ ॥ तस्मिंस्तुपुरुषव्याघ्रेनिष्क्रामतिकृतांजलौ ॥ आर्तशब्दोमहाञ्जज्ञेस्त्रीणामंतःपुरेतदा ॥ १ ॥ कृत्येष्वचोदितःपित्रासर्वस्यांतःपुरस्यच ॥ गतिश्चशरणंचासीत्सरामोद्यप्रवत्स्यति ॥ २ ॥ कौसल्यायांयथायुक्तोजनन्यांवर्ततेसदा ॥ तथैववर्ततेस्मासुजन्मप्रभृतिराघवः ॥ ३ ॥ नक्रुध्यत्यभिशप्तोपिक्रोधनीयानिवर्जयन् ॥ क्रुद्धान्प्रसादयन्सर्वान्सइतोद्यप्रवत्स्यति ॥ ४ ॥ अबुद्धिर्वतनोराजाजीवलोकंचरत्ययम् ॥ योगतिंसर्वभूतानांपरित्यजतिराघवम् ॥ ५ ॥ इतिसर्वामहिष्यस्ताविवत्साइवधेनवः ॥ पतिमाचुक्रुशुश्चापिसस्वनंचापिचुक्रुशुः ॥ ६ ॥ सहिचांतःपुरेघोरमार्तशब्दंमहीपतिः ॥ पुत्रशोकाभिसंतप्तःश्रुत्वाव्यालीयतासने ॥ ७ ॥ रामस्तुभृशमायस्तोनिःश्वसन्निवकुंजरः ॥ जगामसहितोभ्रात्रामातुरंतःपुरंवशी ॥ ८ ॥ सोपश्यत्पुरुषंतत्रवृद्धंपरमपूजितम् ॥ उपविष्टंगृहद्वारितिष्ठतश्चापरान्बहून् ॥ ९ ॥ दृष्ट्वैवतुतदारामंतेसर्वेसमुपस्थिताः ॥ जयेनजयतांश्रेष्ठंवर्धयंतिस्मराघवम् ॥ १० ॥ प्रविश्यप्रथमांकक्ष्यांद्वितीयायांददर्शसः ॥ ब्राह्मणान्वेदसंपन्नान्वृद्धान्राज्ञाभिसत्कृतान् ॥ ११ ॥ प्रणम्यरामस्तान्वृद्धांस्तृतीयायांददर्शसः ॥ स्त्रियोबालाश्चवृद्धाश्चद्वाररक्षणतत्पराः ॥ १२ ॥ वर्धयित्वाप्रहृष्टास्ताःप्रविश्यचगृहंस्त्रियः ॥ न्यवेदयंतत्वरितंराममातुःप्रियंतदा ॥ १३ ॥ कौसल्यापितदादेवीरात्रिंस्थित्वासमाहिता ॥ प्रभातेचाकरोत्पूजांविष्णोःपुत्रहितैषिणी ॥ १४ ॥ साक्षौमवसनाहृष्टानित्यंव्रतपरायणा ॥ अग्निंजुहोतिस्मतदामंत्रवत्कृतमंगला ॥१५॥ प्रविश्यतुतदारामोमातुरंतःपुरंशुभम्॥ ददर्शमातरंतत्रहावयंतींहुताशनम् ॥ १६ ॥

निनिदुः सस्वनं चुक्रुशुः रुरुदुः ॥ ६ ॥ व्यालीयत देहमवगुंठ्यावाङ्मुखो विलीन इवाभूदित्यर्थः ॥ ७ ॥ आयस्तः स्वजनदुःखतः प्राप्तखेदः कुंजर इव निःश्वसन् । आयत्तः इतिपाठे आयत्तः पराधीनो यः कुंजरः स यथा निःश्वसिति तद्वदित्यर्थः ॥ ८ ॥ पुरुषं द्वाराध्यक्षम् ॥ ९ ॥ जयेन विजयी भवेति शब्देनेत्यर्थः । जयेतीतिपाठे जयेतिशब्देनेत्यर्थः ॥ १० ॥ ११ ॥ स रामः तृणीकृतराज्यो रामः ॥ १२ ॥ वर्धयित्वा जयशब्देनेत्यर्थः । प्रियं रामागमनम ॥ १३ ॥ १४ ॥ अग्निं अग्निहोत्रं मंत्रवत् जुहोतिस्म ज्येष्ठपत्नीत्वाद्दक्षिणेति शेषः ॥ १५ ॥ तदाह हावयंतीमिति ॥ १६ ॥

हविषः हवींषि ॥१७॥ कृसरं तिलमुद्गतंडुलौदनम् ॥१८॥ व्रतयोगेन पुत्राभ्युदयकामनया तद्देवोपवासव्रतयोगेनेत्यर्थः । देवतां तर्पयंतीं व॰वर्णिनीं तां ददर्शेत्यन्वयः ॥ १९ ॥ अभिचक्राम अभिमुखं जगाम । किशोरोऽश्वबालकः ॥ २० ॥ उपसंगृह्य अभिवाद्य स्थितस्तयापरिष्वक्त इत्यन्वयः ॥ २१ ॥ २२ ॥ कुले उचितं कुलस्योचितमिति यावत् ॥ २३ ॥ राजानं पश्य गत्वेति शेषः । कौसल्याया राजगृहगमनादिव्यापारापरिज्ञानादेवमुक्तिः ॥ २४ ॥ अत्रोपविश्य भुक्त्वा राजानं द्रष्टुं गच्छेति भोजनेन फलेन निमंत्रितो राघवः केवलमासनमालभ्य स्पृष्ट्वा नतूपविष्टो व्रीडया किंचिदंजलिं प्रसार्यावाङ्मुख एवाब्रवीत् । प्रसार्यांजलिरितिपाठे प्रकर्षेण सन्नांजलिर्विशीर्णांजलिरित्यर्थ इति कश्चित् । मातुः प्रसादनयोग्यांजलिरित्यर्थ उचितः । किंचिदित्यस्य चावाङ्मुख इति शेषः ॥ २५ ॥ गौरवाच्च

देवकार्यनिमित्तंचतत्रापश्यत्समुद्यतम् ॥ दध्यक्षतघृतंचैवमोदकान्हविषस्तथा ॥ १७ ॥ लाजान्माल्यानिशुक्लानिपायसंकृसरंतथा ॥ समिधःपूर्णकुंभांश्चददर्शरघुनंदनः ॥ १८॥ तांशुक्लक्षौमसंवीतांव्रतयोगेनकर्शिताम् ॥ तर्पयंतींददर्शाद्भिर्देवतांवरवर्णिनीम् ॥ १९ ॥ साचिरस्यात्मजंदृष्ट्वामातृनंदनमागतम् ॥ अभिचक्रामसंहृष्टाकिशोरंवडवायथा ॥ २० ॥ समातरमुपक्रांतामुपसंगृह्यराघवः ॥ परिष्वक्तश्चबाहुभ्यामवघ्रातश्चमूर्धनि ॥ २१ ॥ तमुवाचदुराधर्षंराघवंसुतमात्मनः ॥ कौसल्यापुत्रवात्सल्यादिदंप्रियहितंवचः ॥ २२ ॥ वृद्धानांधर्मशीलानाराजर्षीणामहात्मनाम् ॥ प्राप्नुह्यायुश्चकीर्तिंचधर्मंचाप्युचितंकुले ॥ २३ ॥ सत्यप्रतिज्ञंपितरंराजानंपश्यराघव ॥ अद्यैवत्वांसधर्मात्मायौवराज्येभिषेक्ष्यति ॥ २४ ॥ दत्तमासनमालभ्यभोजनेननिमंत्रितः ॥ मातरंराघवःकिंचित्प्रसार्यांजलिमब्रवीत् ॥ २५ ॥ सस्वभावविनीतश्चगौरवाच्चतथानतः ॥ प्रस्थितोदंडकारण्यमाप्रष्टुमुपचक्रमे ॥ २६ ॥ देविनूनंनजानीषेमहद्भयमुपस्थितम् ॥ इदंतवचदुःखायवैदेह्यालक्ष्मणस्यच ॥ २७ ॥ गमिष्येदंडकारण्यंकिमनेनासनेनमे ॥ विष्टरासनयोग्योहिकालोयंमामुपस्थितः ॥ २८ ॥ चतुर्दशहिवर्षाणिवत्स्यामिविजनेवने ॥ कंदमूलफलैर्जीवन्हित्वामुनिवदामिषम् ॥ २९ ॥ भरतायमहाराजोयौवराज्यंप्रयच्छति ॥ मांपुनर्दंडकारण्यंविवासयतितापसम् ॥ ३० ॥ सषट्चाष्टौचवर्षाणिवत्स्यामिविजनेवने ॥ आसेवमानोवन्यानिफलमूलैश्चवर्तयन् ॥ ३१ ॥ सानिकृत्तेवसालस्ययष्टिःपरशुनावने ॥ पपातसहसादेवीदेवतेवदिवश्च्युता ॥ ३२ ॥ तामदुःखोचितांदृष्ट्वापतितांकदलीमिव ॥ रामस्तूत्थापयामासमातरंगतचेतसम् ॥ ३३ ॥

मातृत्वप्रयुक्तगौरवाच्च आनतः सन् प्रस्थितः प्रस्थातुमुपक्रांतः आप्रष्टुं अनुज्ञां कारयितुं उपचक्रमे ॥ २६ ॥ तव च तवैव अज्ञत्वात् लोकदृष्ट्याह वैदेह्या इत्यादि ॥ २७ ॥ विष्टरस्तपस्विनामासनविशेषः । पंचाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टर इत्युक्तेः ॥ २८ ॥ मुनिवदामिषं सूदैर्विशिष्टसंस्कारसंस्कृतं मांसम् तेनेदं मेध्यमिदं स्वादुनिष्टप्तमिदमग्निनेति वक्ष्यमाणेन न विरोधः तस्य शुद्धमांसपरत्वात् मुनिवदित्युक्त्या श्राद्धीयादिमांसपरत्वाच्च ॥ २९ ॥ ३० ॥ वन्यानि वानप्रस्थयोग्यकर्माणि आसेवमानः आचरन् । यद्वा वन्यानि वल्कलानि दधानः वर्तयन् जीवयन् ॥ ३१ ॥ यष्टिः शाखा ॥ ३२ ॥ ३३ ॥

वाहितां पूर्वं वाहितभारां ततः श्रमनिवृत्तये उपावृत्य भुवि लुंठनं कृत्वोत्थितां वडवामिव ॥ ३४ ॥ असुखेन सुखनाशेनार्ता उपासीनं समीपे स्थितम् ॥ ३५ ॥ अप्रजाः वंध्या अतः वंध्यात्वात् भूयः वंध्याधिकं पुत्रवियोगदुःखं न पश्येयम् ॥ ३६ ॥ वंध्यात्वदुःखमितः सुसहमित्याह एक एवेति । अप्रजास्मीति मानसशोकाभिनयः समासांताभावोऽनित्यत्वात् संधिर्वार्षत्वात् ॥ ३७ ॥ स्वस्य सदा दुःखित्वमिति शोचति नेति । पत्युः पौरुषं अनुरागकृतं रंजनं तस्मिन्यत्प्राप्यं कल्याणं प्रशस्तवस्त्राभरणादिजसौभाग्याधिक्यं सुखं वा पतिसंभोगजं तन्मया न दृष्टपूर्वम् । अपीति । लोकोक्तौ पुत्रे जाते तदुभयम् उक्तकल्याणं पुत्रदर्शनजं सुखं च पश्येयमित्याशया राम मया आस्थितं जीवनं स्थापितम् ॥ ३८ ॥ साहं अवराणां कनिष्ठानां सपत्नीनां त्वद्गलादिदानीं परा सती हृदयच्छिदां हृदयविदारिकाणां तासाम मनोज्ञानि वाक्यान्येवं जीर्णापि श्रोष्ये ॥ ३९ ॥ अतः सपत्नीधिक्कारवाक्यश्रवणजात् परं दुःखं स्त्रीणां नास्ति । ममायमनंतकोऽपारः शोको यादृशस्तादृशो वाचापि वक्तुमशक्य इति शेषः ॥ ४० ॥ निराकृता सपत्न्येति शेषः ध्रुवं मरणमिति शेषः । शोकग्रस्तत्वान्न्यूनपदता न दोषः ॥ ४१ ॥ निगृहीता भर्तृकृतनिग्रहप्रकारमाह परिवारेणेति । कैकेय्या दासीजनेन समा अथवाऽवरा ततोपि निकृष्टा

उपावृत्योत्थितांदीनांवडवामिववाहिताम् ॥ पांसुगुंठितसर्वांगींविममर्शचपाणिना ॥ ३४ ॥ साराघवमुपासीनमसुखार्तासुखोचिता ॥ उवाचपुरुषव्याघ्रमुपशृण्वतिलक्ष्मणे ॥ ३५ ॥ यदिपुत्रनजायेथाममशोकायराघव ॥ नस्मदुःखमतोभूयःपश्येयमहमप्रजा ॥ ३६ ॥ एकएवहिवंध्यायाःशोकोभवतिमानसः ॥ अप्रजास्मीतिसंतापोनह्यन्यःपुत्रविद्यते ॥ ३७ ॥ नदृष्टपूर्वंकल्याणंसुखंवापतिपौरुषे ॥ अपिपुत्रेविपश्येयमितिरामास्थितंमया ॥ ३८ ॥ साबहून्यमनोज्ञानिवाक्यानिहृदयच्छिदाम् ॥ अहंश्रोष्येसपत्नीनामवराणांपरासती ॥ ३९ ॥ अतोदुःखतरंकिंनुप्रमदानांभविष्यति ॥ ममशोकोविलापश्चयादृशोयमनंतकः ॥ ४० ॥ त्वयिसन्निहितेप्येवमहमासंनिराकृता ॥ किंपुनःप्रोषितेतातध्रुवंमरणमेवहि ॥ ४१ ॥ अत्यंतंनिगृहीतास्मिभर्तुर्नित्यमसंमता ॥ परिवारेणकैकेय्याःसमावाप्यथवावरा ॥ ४२ ॥ योहिमांसेवतेकश्चिदपिवाप्यनुवर्तते ॥ कैकेय्याःपुत्रमन्वीक्ष्यसजनोनाभिभापते ॥ ४३ ॥ नित्यक्रोधतयातस्याःकथंनुखरवादिनम् ॥ कैकेय्यावदनंद्रष्टुंपुत्रशक्ष्यामिदुर्गता ॥ ४४ ॥ सप्तदशचवर्षाणिजातस्यतवराघव ॥ अतीतानिप्रकांक्षंत्यामयादुःखपरिक्षयम् ॥ ४५ ॥

कृतास्मीति शेषः । प्यथवावरेतिपाठे वरा श्रेष्ठापि अधरा निकृष्टा कृतास्मीत्यर्थः ॥ ४२ ॥ स सर्वोपि इष्टः जनः कदाचिदागतं कैकेय्याः पुत्रमवलोक्य मां नाभिभाषते । इदानीमप्येवमवस्था मम वर्तते त्वयि गते तु किं वक्तव्यमिति भावः ॥ ४३ ॥ खरवादिनं लुगभाव आर्षः । खरवादिपरुषवदनशीलं तस्या वदनं कथं द्रष्टुं शक्ष्यामि दुर्गता त्वद्वियोगेन दुर्दशामापन्ना ॥ ४४ ॥ जातस्य उपनयनाख्यद्वितीयजन्मनेति शेषः । ऊनषोडशवर्षो मे रामो राजीवलोचन इति विश्वामित्रमुद्दिश्य दशरथोक्त्या विवाहकाले पंचदशवर्षत्वोक्तेः । तत्र द्वादश वर्षाणि राघवः सह सीतया ॥ रमयामास धर्मात्मा नारायण इव श्रिया ॥ तस्मिन्काले महाराजः प्रीतो रामस्य सद्गुणैः ॥ ज्येष्ठं राज्येन संयोक्तुमैच्छत्सर्वनृपाज्ञयेति पाद्मोक्तेश्च । उपनयनं च गर्भैकादशे एकादशे वा राजन्यमितिस्मृतेर्दशमे वर्षे इति बोध्यम् । एवमुपनयनोत्तरं सप्तदश वर्षाणि अतीतानि जातस्य तव अतः परं यौवराज्येन दुःखपरिक्षयं प्रकांक्षंत्या मया तद्विघाते तस्या वदनं कथं नु द्रष्टव्यमित्यनुकर्षः वस्तुतस्तु इग्यणः संप्रसारणमिति सूत्रस्थभाष्योक्तरीत्या प्रविश पिंडीमित्यादौ यथा प्रविश गृहं पिंडीं भक्षयेति वाक्यार्थे प्रविशेति पिंडीमिति च वाक्यैकदेशस्य प्रयोगस्तथा द्विर्दशेतिवाक्यस्यार्थे वाक्यैकदेशप्रयोगोयं द्विरावृत्ता दश विंशतिः सप्तचेत्यर्थः ।

अत्र तात्पर्यग्राहिका विश्वामित्रं प्रति दशरथोक्तिः पात्रोक्तिश्च । तादृशप्रयोगश्च कौसल्यायाः पुत्रवियोगदुःखार्ततया वाल्मीकेश्च वर्णनीयमयीभावेन न दोषायेति ध्येयम् ॥ ४५॥ दुःखं त्वद्वियोगजम् अक्षयं तव राज्य नाशात् क्षयसंभावनारहितमपि । अपिच एवं जीर्णा सपत्नीनां विप्रकारं सहितं सोढुं नोत्सहे ॥ ॥ ४६ ॥ कृपणजीविका शोच्यजीवना ॥ ४७ ॥ दुर्गतया भाग्यहीनया मया बहुपरिश्रमजनकैरुपवासैर्योगैर्देवता ध्यानैर्दुःखं यथा तथा मोघं वर्धितोसि यदि विप्रवत्स्यसीति शेषः । त्वद्वर्धनजफलालाभादिति भावः ॥ ४८ ॥ न दीर्यते त्वद्विप्रयोगश्रवणेपीति शेषः ॥ ४९ ॥ ममैवेति लौकिक्यातिवृद्धोक्तिजातिरियम् । मरणं न विद्यत एव न जिहीर्षत्येवेत्यन्वयः । अवकाशः अवस्थितये स्थलम् ॥ ५० ॥ आयसमयसा निर्मितं यत् यतो न भिद्यते भुवि पतित्वा नो विदीर्यते भेदो द्विधाभवनम् । विदारणं अनेकच्छिद्ररेखावत्त्वम् । अनेन दुःखेनार्पितं व्याप्तं देहं देहो न भिद्यत इत्याद्यन्वयः । अर्धर्चादिर्देहशब्दः । हि यतो न भिद्यतेऽतोऽकाले मरणं न विद्यत इति जाने इति शेषः ॥ ५१ ॥ यद्व्रतादीन्यनर्थकानि तादिदं महद्दुःखम् । ऊषरे

तदक्षयंमहद्दुःखंनोत्सहेसहितुंचिरात् ॥ विप्रकारंसपत्नीनामेवंजीर्णापिराघव ॥ ४६ ॥ अपश्यंतीतवमुखंपरिपूर्णशशिप्रभम् ॥ कृपणावर्तयिष्यामिकथंकृपणजीविका ॥ ४७॥ उपवासैश्चयोगैश्चवहुभिश्चपरिश्रमैः ॥ दुःखसंवर्धितोमोघंत्वंहिदुर्गतयामया ॥४८॥ स्थिरंतुहृदयंमन्येममेदंयन्नदीर्यते॥ प्रावृषीवमहानद्याःस्पृष्टंकूलंनवांभसा ॥ ४९ ॥ ममैवनूनंमरणंनविद्यतेनचावकाशोस्तियमक्षयेमम ॥ यदंतकोऽद्यैवनमांजिहीर्षतिप्रसह्यसिंहोरुदतींमृगीमिव ॥ ५० ॥ स्थिरंहिनूनंहृदयंममायसंनभिद्यतेयद्भुविनोविदीर्यते ॥ अनेनदुःखेनचदेहमर्पितंध्रुवंह्यकालेमरणंनविद्यते ॥ ५१ ॥ इदंतुदुःखंयदनर्थकानिमेव्रतानिदानानिचसंयमाश्चहि ॥ तपश्चतप्तंयदपत्यकाम्ययासुनिष्फलंबीजमिवोप्तमूषरे ॥ ५२ ॥ यदिह्यकालेमरणंयदृच्छयालभेतकश्चिद्गुरुदुःखकर्शितः ॥ गताहमद्यैवपरेतसंसदंविनात्वयाधेनुरिवात्मजेनवै ॥ ५३॥ अथापिकिंजीवितमद्यमेवृथात्वयाविनाचंद्रनिभाननप्रभ ॥ अनुव्रजिष्यामिवनंत्वयैवगौःसुदुर्बलावत्समिवाभिकांक्षया ॥५४ ॥ भृशमसुखममर्षितायदावहुविललापसमीक्ष्यराघवम् ॥ व्यसनमुपनिशाम्यसामहत्सुतमिवबद्धमवेक्ष्यकिंनरी ॥ ५५ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेविंशःसर्गः ॥ २० ॥ तथातुविलपंतींतांकौसल्यांराममातरम् ॥ उवाचलक्ष्मणोदीनस्तत्कालसदृशंवचः ॥ १ ॥ नरोचतेममाप्येतदार्येयद्राघवोवनम् ॥ त्यक्त्वाराज्यश्रियंगच्छेत्स्त्रियावाक्यवशंगतः ॥ ॥ २ ॥ विपरीतश्चवृद्धश्चविषयैश्चप्रधर्षितः ॥ नृपःकिमिवनब्रूयाच्चोद्यमानःसमन्मथः ॥ ३ ॥

ऊषमत एव निष्फलं बीजमिव ॥ ५२ ॥ गुरुदुःखेन कर्शितः पीडितः परेतसंसदं यमसभाम् अहं गता स्याम् । तत्तु न लभ्यत इति शेषः ॥ ५३ ॥ अथापि मरणाभावेपि त्वया विना त्वत्सन्निधिं विना किंजीवितं कुत्सितं जीवितं वृथा व्यर्थमतोऽनुव्रजिष्यामि अभिकांक्षया वात्सल्येन ॥ ५४ ॥ भृशमसुखं दुःखममर्षिता असहमाना रामवियोगमूलं सपत्न्यादिकृतं महद्व्यसनं दुःखं निशाम्य पर्यालोच्य सत्यपाशबद्धं सुतम् अवेक्ष्य यथोक्तनिमित्तवती किन्नरी विललाप ॥ ५५ ॥ शंमंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे विंशः सर्गः ॥ २० ॥ ॥ ७ ॥ ॥ तत्कालसदृशं रामवियोगहेतुककौसल्यादुःखप्रवृत्तिकालोचितम् ॥ १ ॥ आर्ये कौसल्ये गच्छेदिति यत्तन्ममापि न रोचते स्त्रिया इत्याद्युत्तरान्वयि ॥ २ ॥ अत एव विपरीतः प्राप्तप्रकृतिवैपरीत्यः चोद्यमानः स्त्रिया ।

क्रोधवशात्पुनरुक्तिर्न दोषाय । किमिव न ब्रूयादनुचितशतमपि ब्रूयात् अतस्तद्वचो न श्रद्धेयमिति । एतेन राजाज्ञाभंगः कथं कार्य इति शंका समाहिता ॥ ३ ॥ ननु रामदोषमयुक्तं विवासनं स्यात्तत्राह नास्येति रामस्ये त्यर्थः । अपराधं पितृविषयकं दोषमसमंजसादेरिव प्रजावधादिपातकम् ॥४॥ सुतराममित्रोपि शत्रुरपि निरस्तोपि महापातकादिवशं गत्वा त्यक्तोपि परोक्षमपि रामस्य दोषं यो वदेत्तं पश्यामि ॥५॥ यदेवमतो देवतुल्यं दांतं गुरुभिः शिक्षितम् एवमुक्तगुणं पुत्रं धर्ममवेक्षमाणः कस्त्यजेदित्यन्वयः । रिपूणां कैकेय्यादीनां विषयेपि वत्सलं स्निग्धम् ॥ ६ ॥ बाल्यं बालभावमविमृश्यकारित्वं कामपरवशत्वं वोपेयुषः प्राप्तस्य राजवृत्तं पूर्वराजाचरितम् ॥ ७ ॥ अतो यावदिममर्थं त्वत्प्रवासनरूपं कश्चिदपि न जानाति तावत्ततः पूर्वमेव शासनं राज्यमभिषेकेणात्मस्थं आत्माधीनं कुरु । शोभनमितिपाठे राज्यफलकमभिषेकम् ॥ ८ ॥ कथमेवं शक्यं तत्राह मयेति । अधिकं त्वदाज्ञोल्लंघनपूर्वमाभिषेकाविघ्नम् ॥ ९ ॥ विप्रिये तव विपक्षभावे ॥ १० ॥ पक्ष्यो मातुलादिः यो वान्यः कश्चिदस्य हितमिच्छति । मृदुर्हीति । अतो मार्दवं न युक्तम् । मार्दवानुचि

नास्यापराधंपश्यामिनापिदोषंतथाविधम् ॥ येननिर्वास्यतेराष्ट्राद्वनवासायराघवः ॥ ४ ॥ नतंपश्याम्यहंलोकेपरोक्षमपियोनरः ॥ स्वमित्रोपि निरस्तोपियोऽस्यदोषमुदाहरेत ॥ ५ ॥ देवकल्पमृजुंदांतंरिपूणामपिवत्सलम् ॥ अवेक्षमाणःकोधर्मंत्यजेत्पुत्रमकारणात् ॥ ६ ॥ तदिदंवचनंराज्ञः पुनर्बाल्यमुपेयुषः ॥ पुत्रःकोहृदयेकुर्याद्राजवृत्तमनुस्मरन् ॥ ७ ॥ यावदेवनजानातिकश्चिदर्थमिमंनरः ॥ तावदेवमयासार्धमात्मस्थंकुरुशासनम् ॥ ॥ ८ ॥ मयापार्श्वेसधनुषातवगुप्तस्यराघव ॥ कःसमर्थोधिकंकर्तुंकृतांतस्येवतिष्ठतः ॥ ९ ॥ निर्मनुष्यामिमांसर्वामयोध्यांमनुजर्षभ ॥ करिष्यामिशरैस्तीक्ष्णैर्यदिस्थास्यतिविप्रिये ॥१०॥ भरतस्याथपक्ष्योवायोवाऽस्यहितमिच्छति ॥ सर्वांस्तांश्चवधिष्यामिमृदुर्हिपरिभूयते ॥ ११ ॥ प्रोत्साहितोऽयं कैकेय्यासंतुष्टोयदिनःपिता ॥ अमित्रभूतोनिःसंगंवध्यतांबध्यतामपि ॥१२॥ गुरोरप्यवलिप्तस्यकार्याकार्यमजानतःउत्पथंप्रतिपन्नस्यकार्यंभवतिशासनम्॥१३॥बलमेषकिमाश्रित्यहेतुंवापुरुषोत्तम ॥ दातुमिच्छतिकैकेय्यैउपस्थितमिदंतव॥१४॥त्वयाचैवमयाचैवकृत्वावैरमनुत्तमम् ॥ काऽस्यशक्तिः श्रियंदातुंभरतायारिशासन ॥१५॥ अनुरक्तोस्मिभावेनभ्रातरंदेवितत्त्वतः ॥ सत्येनधनुषाचैवदत्तेनेष्टेनतेशपे ॥ १६ ॥ दीप्तमग्निमरण्यंवायदिरामःप्रवेक्ष्यति ॥ प्रविष्टंतत्रमांदेवित्वंपूर्वमवधारय॥१७॥हरामिवीर्याद्दुःखंतेतमःसूर्यइवोदितः ॥ देवीपश्यतुमेवीर्यंराघवश्चैवपश्यतु॥१८॥हरिष्येपितरंवृद्धंकैकेय्यासक्तमानसम् ॥ कृपणंचस्थितंबाल्येवृद्धभावेनगर्हितम्॥१९॥एतत्तुवचनंश्रुत्वालक्ष्मणस्यमहात्मनः ॥ उवाचरामंकौसल्यारुदतीशोकलालसा२०

तकाल इति भावः ॥ ११ ॥ ननु राजा राज्यस्य भरताय दीयमानत्वादपरिहार्योयमर्थस्तत्राह प्रेति । कैकेय्या प्रोत्साहितस्तस्यां संतुष्टो यदि पिता नोस्माकं अमित्रभूतो जायते तदाऽसौ बंधनं प्राप्यतां अथवा स्य वध एव क्रियताम् । त्रेताद्वापरयोः संधावयमवतारस्तदा च किंचिदधिकपादेनाधर्मप्रवेश इति तदनुसारेण लक्ष्मणस्यैवमुक्तिः । कैकेय्याश्च परोपदेशैनवं मतिच्छलेन वालिवधे प्रवृत्तिश्च भगवत इति बोध्यम् ॥ १२ ॥ नन्वेवं दोषः स्यात्तत्राह गुरोरिति । एवं च शास्त्रसंमतत्वान्नात्र दोष इति भावः ॥ १३॥ ननु राज्ञो बलवत्त्वाद्बंधनाद्यशक्यमत आह बलमिति । उपस्थितं ज्येष्ठत्वेन न्यायतस्तवैव प्राप्तमिदं राज्यम् । एवं च बलहेत्वोरभावाद्बंधनादिशक्यमेवेति भावः ॥ १४ ॥ बलाभावमेवाह त्वयेत्यादि ॥१५॥ ननु तवाप्येवं वदतो न विश्वासो ज्ञातित्वाविशेषादत आह अनुरक्त इति । भाव आंतरोभिप्रायः ॥ १६ ॥ संमत्येवानुरागनिर्णय इत्याह दीप्तमिति । दीप्तमग्निम् क्रोधमित्यर्थः । अरण्यं वा पित्राज्ञया ॥ १७ ॥ राघवश्चेति । चात्सर्वो जनश्च ॥ १८ ॥ कैकेय्या सक्तमानसमतएव कृपणं बृद्धभावेन वृद्धत्वेन गर्हितं यथा

भवति तथा बाल्ये कामुकत्वे स्थितम् ॥ १९ ॥ २० ॥ अनंतरं युक्तं कार्यं तत्त्वं कुरुष्व यदि रोचते तर्हि लक्ष्मणवाक्यं कुरुष्वेति शेषः । अनेन कौसल्याया गूढं स्वानभिमतत्वं लक्ष्मणोक्तस्य सूचितम् ॥ २१ ॥ पुनः रामाभिप्रायनिर्णयाय लक्ष्मणवाक्यमेवोपोद्बलयितुमेतद्राजवाक्यमपि न येन तव दोषः स्यात् । किंतु मत्सपत्न्या इत्याह नचेति । अधर्म्यम् ॥ कनिष्ठस्य राज्यरूपं मम सपत्न्या भाषितं वचः श्रुत्वा मां विहायेतो वनं गंतुं नार्हसि ॥ २२ ॥ अथ यदि सापत्नमातृवाक्योल्लंघनेप्यधर्मबुद्ध्या तत्राप्यादरस्तर्हि राज्यं परित्यज्यैवेह तिष्ठेत्याह धर्मज्ञ इति ॥ २३ ॥ शुश्रूषुः शुश्रूषां कुर्वन् पुत्रेति रामसंबोधनम् । त्रिदिवं गतः मातृसेवया प्राजापत्यपदं प्राप्त इति भावः । तथाहि ततोपि गौरवेणाहं पूज्येत्यर्थः । पितुर्दशगुणं माता गौरवेणातिरिच्यत इति स्मृतेः ॥ २४ ॥ नानुजानामि वनं गंतुमिति शेषः । किंच प्रतिषेधाभीत्याह न गंतव्यमित्यादि ॥ २५ ॥ अथ वनगमनपर्यंतं तदाज्ञासत्त्वादत्र सर्वथा स्थातुमशक्यमिति चेत्तत्राप्याह त्वद्वियोगादिति ।

भ्रातुस्तेवदतःपुत्रलक्ष्मणस्यश्रुतंत्वया ॥ यदत्रानन्तरंतत्त्वंकुरुष्वयदिरोचते ॥ २१ ॥ नचाधर्म्यंवचःश्रुत्वासपत्न्याममभाषितम् ॥ विहायशोकसंतप्तांगंतुमर्हसिमामितः ॥ २२ ॥ धर्मज्ञइतिधर्मिष्ठधर्मंचरितुमिच्छसि ॥ शुश्रूषमामिहस्थस्त्वंचरधर्ममनुत्तमम् ॥ २३ ॥ शुश्रूषुर्जननींपुत्रस्वगृहेनियतोवसन् ॥ परेणतपसायुक्तःकाश्यपस्त्रिदिवंगतः ॥ २४ ॥ यथैवराजापूज्यस्तेगौरवेणतथाह्यहम् ॥ त्वांसाहंनानुजानामिनगंतव्यमितोवनम् ॥ ॥ २५ ॥ त्वद्वियोगान्नमेकार्यंजीवितेनसुखेनच ॥ त्वयासहममश्रेयस्तृणानामपिभक्षणम् ॥ २६ ॥ यदित्वंयास्यसिवनंत्यक्त्वामांशोकलालसाम् ॥ अहंप्रायमिहासिष्येनचशक्ष्यामिजीवितुम् ॥ २७ ॥ ततस्त्वंप्राप्स्यसेपुत्रनिरयंलोकविश्रुतम् ॥ ब्रह्महत्यामिवाधर्मात्समुद्रःसरितांपतिः ॥ २८ ॥ विलपंतींतथादीनांकौसल्यांजननींततः ॥ उवाचरामोधर्मात्मावचनंधर्मसंहितम् ॥ २९ ॥ नास्तिशक्तिःपितुर्वाक्यंसमतिक्रमितुंमम ॥ प्रसादयेत्वांशिरसागंतुमिच्छाम्यहंवनम् ॥ ३० ॥ ऋषिणाचपितुर्वाक्यंकुर्वतावनचारिणा ॥ गौर्हताजानताधर्मंकंडुनाचविपश्चिता ॥ ३१ ॥ अस्माकंतुकुलेपूर्वंसागरस्याज्ञयापितुः ॥ खनद्भिःसागरैर्भूमिमवाप्तःसुमहान्वधः ॥ ३२ ॥

त्वद्वियोगात्परं जीवितादिना मे न किंचित्कार्यं अतस्त्वयेत्यादि एवं च मामपि सह नयेति भावः ॥ २६ ॥ प्रायं अनशनदीक्षां चो हेतौ यतो जीवितुं न शक्ष्यामि ॥ २७ ॥ ततः मातुर्मरणांतदुःखदानात् समुद्रो हि कस्मिंश्चित्कल्पे मातुर्दुःखजननरूपाधर्मात्पिप्पलादब्रह्मर्षिकृतां कृत्यां प्राप्य नरकवासतुल्यं दुःखं प्राप्तवानिति कचित्पुराणे प्रसिद्धमित्याहुः ॥ २८ ॥ २९ ॥ तद्वचनस्य कर्तव्यत्वेपि युगपदनुष्ठानासंभवात्पितृवचसः प्रथमप्राप्तत्वेन प्राबल्यात्तदतिक्रमोऽशक्यइत्याह नास्तीति ॥ ३० ॥ किंच पितुर्वाक्येन गोमातृवधोपि पूर्वैर्महात्मभिः कृतो मया तु दुःखमात्रं मातुः संपाद्यत इति न किंचिदेतदित्याह ऋषिणेति । अधर्मं जानतापि ऋषिणापि मंत्रद्रष्ट्रापि पितृवाक्यतो गौर्हता तस्मात्पितृवाक्याकरणे महानधर्म इति सूचितम् ॥ ३१ ॥ महान्वधः ब्राह्मणसकाशादतिनिंद्यो वधः अनेन प्राणत्यागेनापि पितृवाक्यं

पालनीयमिति सूचितम् ॥ ३२ ॥ परशुना स्वयं स्वहस्तेन छित्त्वा अरण्ये तपोवने एवं पित्राज्ञया मातृवधेऽपि यद्यधर्मो न तदा दुःखमात्रं न तथेति किं वक्तव्यम् ॥ ३३ ॥ अक्लीबं कातर्यरहितं अतः पितुर्हितं करिष्यामि ॥ ३४ ॥ ३५ ॥ ते प्रतिकूलमपूर्वं पूर्वैरनाचरितं धर्मं नाहं प्रवर्तये उक्तस्यैवार्थस्यान्वयेन प्रतिपादनं पूर्वैरिति । अयमभिप्रेतो धर्मजनकत्वेनेष्टः पितृवाक्यपालनरूपः पूर्वैरयं मार्गो गतः प्राप्तो मयापि तेषामनु पश्चाद्गम्यते ॥ ३६ ॥ तस्माद्धेतोर्भुवि भूलोके कार्यं कर्तुं योग्यमेव तत् एतत्पितृवाक्यं मया क्रियते नान्यथाऽकृत्यं न क्रियत इत्यर्थः । नाम प्रसिद्धं कश्चिन्न हीयते मातुः किंचिद्दुःखोत्पादनेपि धर्मेणेति शेषः ॥ ३७ ॥ पुनः अनंतरम् ॥ ३८ ॥ ३९ ॥ मम मातुर्यन्महद्दुःखं तत्सत्यशमयोरभिप्रायं तद्विषयमदभिप्रायमज्ञात्वेत्यतस्त्वेदृशं वाक्यं तत्त्वज्ञस्यानुचितमिति भावः ॥ ४० ॥ तदेवाह धर्मः इति । धर्मः

जामदग्न्येनरामेणरेणुकाजननीस्वयम् ॥ कृत्तापरशुनाऽरण्येपितुर्वचनकारणात् ॥ ३३ ॥ एतैरन्यैश्चबहुभिर्देविदेवसमैःकृतम् ॥ पितुर्वचनमक्लीबंकरिष्यामिपितुर्हितम् ॥ ३४ ॥ नखल्वेतन्मयैकेनाक्रियतेपितृशासनम् ॥ एतैरपिकृतंदेवियेमयापरिकीर्तिताः ॥ ३५ ॥ नाहंधर्ममपूर्वंतेप्रतिकूलंप्रवर्तये ॥ पूर्वैरयमभिप्रेतोगतोमार्गोऽनुगम्यते ॥ ३६ ॥ तदेतत्तुमयाकार्यंक्रियतेभुविनान्यथा ॥ पितुर्हिवचनंकुर्वन्नकश्चिन्नामहीयते ॥ ३७ ॥ तामेवमुक्त्वाजननींलक्ष्मणंपुनरब्रवीत् ॥ वाक्यंवाक्यविदांश्रेष्ठःश्रेष्ठःसर्वधनुष्मताम् ॥ ३८ ॥ तवलक्ष्मणजानामिमयिस्नेहमनुत्तमम् ॥ विक्रमंचैवसत्त्वंचतेजश्चसुदुरासदम् ॥ ३९ ॥ ममममातुर्महद्दुःखमतुलंशुभलक्षण ॥ अभिप्रायंनविज्ञायसत्यस्यचशमस्यच ॥ ४० ॥ धर्मोहिपरमोलोकेधर्मेसत्यंप्रतिष्ठितम् ॥ धर्मसंश्रितमप्येतत्पितुर्वचनमुत्तमम् ॥ ४१ ॥ संश्रुत्यचपितुर्वाक्यंमातुर्वाब्राह्मणस्यवा ॥ नकर्तव्यंवृथावीरधर्ममाश्रित्यतिष्ठता ॥ ॥ ४२ ॥ सोहंनशक्ष्यामिपुनर्नियोगमतिवर्तितुम् ॥ पितुर्हिवचनाद्वीरकैकेय्याहंप्रचोदितः ॥ ४३ ॥ तदेतांविसृजानार्यांक्षत्रधर्माश्रितांमतिम् ॥ धर्ममाश्रयमातैक्ष्ण्यंमद्बुद्धिरनुगम्यताम् ॥ ४४ ॥ तमेवमुक्त्वासौहार्दाद्भ्रातरंलक्ष्मणाग्रजः ॥ उवाचभूयःकौसल्यांप्रांजलिःशिरसानतः ॥ ४५ ॥ अनुमन्यस्वमांदेविगमिष्यंतमितोवनम् ॥ शापितासिममप्राणैःकुरुस्वस्त्ययनानिमे ॥ ४६ ॥ तीर्णप्रतिज्ञश्चवनात्पुनरेष्याम्यहंपुरीम् ॥ ययातिरिवराजर्षिःपुराहित्वापुनर्दिवम् ॥ ४७ ॥ शोकःसंधार्यतांमातर्हृदयेसाधुमाशुचः ॥ वनवासादिहैष्यामिपुनःकृत्वापितुर्वचः ॥ ४८ ॥ त्वयामयाचवैदेह्यालक्ष्मणेनसुमित्रया ॥ पितुर्नियोगेस्थातव्यमेषधर्मःसनातनः ॥ ४९ ॥ अंबसंभृत्यसंभारान्दुःखंहृदिनिगृह्यच ॥ वनवासकृताबुद्धिर्ममधर्म्यानुवर्त्यताम् ॥ ५० ॥

सर्वपुरुषार्थेषूत्तमः श्रेष्ठः प्रतिष्ठितं प्रशस्तं कारणं एतदुत्तमं पितुर्वचनं धर्मसंश्रितमपि वने तपस्यया तपस्विरक्षणेन च धर्मलाभात् अतोऽवश्यं कर्तव्यं तद्वच इति भावः । अत्रोत्तममित्यस्य त्रैलोक्यसुखदत्वेनोत्तममिति व्यंग्यम् ॥ ४१ ॥ पितृवाक्यकरणस्य प्रतिज्ञातत्वादपि तदुल्लंघनमनुचितमित्याह संश्रुत्येति । प्रतिज्ञाय वृथा मोघम् ॥ ४२ ॥ इदं सपत्न्याः कैकेय्या वचनं न पितुस्तत्राह सोहमित्यादि ॥ ४३ ॥ अनार्यां मतिं पितरं बद्ध्वा हत्वा वा राज्यं कर्तव्यमित्येवमधर्मविषयां मतिं मद्बुद्धिः पितृवाक्यकरणरूपा अनुगम्यतां अनुवर्त्यताम् ॥ ४४ ॥ ४५ ॥ शापितासि शपथं प्रापितासि गमनविरोधं मा कुर्विति शेषः ॥ ४६ ॥ दिवं हित्वा भूमौ पतितः पुनर्दिवं यथा गतस्तथेत्यर्थः ॥ ४७ ॥ पुनरेष्यामीत्यन्वयः ॥ ४८ ॥ पितुः राज्ञो दशरथस्य ॥ ४९ ॥ संभारानभिषेकसंभारान् निगृह्य निवार्य अनुवर्त्यतां त्वयाऽ

नुमन्यतामित्यर्थः ॥ ५० ॥ सुधर्म्यं धर्मयुक्तं अव्यग्रं धैर्ययुक्तं अविक्लवं अकातरं मृतेव मूर्छितेति यावत् ॥ ५१ ॥ स्वधर्मेण पालनादिरूपमातृधर्मेण सुहृत्तया पितुरिव स्नेहवत्तया ॥ ५२ ॥ लोकेन इतरबंधुजनेन स्वधया पितृपूजनेन इदमुपलक्षणं देवपूजादेरपि अमृतेन अमृतत्वसाधनेन तत्वज्ञानेनापि किं कृत्स्नादपि जीवलोकात् कृत्स्नलोकसान्निध्यात् मुहूर्तमपि तव सन्निधानमेव श्रेयः ॥ ५३ ॥ नरैरुल्काभिरलातैरपोह्यमानस्तुद्यमानो निशि ध्वांतमभिप्रविष्टो गज इव भूयः प्रजज्वाल किमिदं यन्मामधर्मे प्रवर्तयितुं विलपतीति क्रोधः ॥ ५४ ॥ तत्र रामस्य धर्मे निष्ठां वाल्मीकिः श्लाघते यथा स एवेति । तत्र तथाविधघोरदशायां अनन्वयालंकारोत्र ॥ ५५ ॥ ममाभिप्रायं धर्मैकनिष्ठत्वरूपं अभ्यर्दयसि पीडयसि । अभ्यर्थयसीतिपाठे प्रेरयसीत्यर्थः । सर्वथांतर्भावितण्यर्थता । एवं सुतरां दुःखं मा मा कुर्वित्यर्थः ॥ ५६ ॥ धर्मफलोदयेषु पूर्वकृतधर्मफलोत्पत्तिकालेषु ये धर्मार्थकामास्त्रयोपि लोके समीक्षिताः दृष्टाः मन्वादिभिर्धर्मफलत्वेन ये त्रयोपि दृष्टास्ते सर्वे तत्र धर्मे सति अवश्यं भवेयुरिति मे मतिः । न तु तत्र मे कश्चित्संदेह

एतद्वचस्तस्यनिशम्यमातासुधर्म्यमव्यग्रमविक्लवंच ॥ मृतेवसंज्ञांप्रतिलभ्यदेवीसमीक्ष्यरामंपुनरित्युवाच ॥ ५१ ॥ यथैवतेपुत्रपितातथाहंगुरुःस्वधर्मेणसुहृत्तयाच ॥ नत्वानुजानामिनमांविहायसुदुःखितामर्हसिपुत्रगंतुम् ॥ ५२ ॥ किंजीवितेनेहविनात्वयामेलोकेनवाकिंस्वधयाऽमृतेन ॥ श्रेयोमुहूर्तंतवसन्निधानंममेवकृत्स्नादपिजीवलोकात् ॥ ५३॥ नरैरिवोल्काभिरपोह्यमानोमहागजोध्वांतमभिप्रविष्टः ॥ भूयःप्रजज्वालविलापमेवंनिशम्यरामःकरुणंजनन्याः ॥ ५४ ॥ समातरंचैवविसंज्ञकल्पामार्तंचसौमित्रिमभिप्रतप्तम् ॥ धर्मेस्थितोधर्म्यमुवाचवाक्यंयथासएवार्हतितत्रवक्तुम् ॥ ५५ ॥ अहंहितेलक्ष्मणनित्यमेवजानामिभक्तिंचपराक्रमंच ॥ ममत्वभिप्रायमसंनिरीक्ष्यमात्रासहाभ्यर्दसिमासुदुःखम् ॥ ५६ ॥ धर्मार्थकामाःखलुजीवलोकेसमीक्षिताधर्मफलोदयेषु ॥ येतत्रसर्वेस्युरसंशयंमेभार्येववश्याभिमतासपुत्रा ॥ ५७ ॥ यस्मिंस्तुसर्वेस्युरसन्निविष्टाधर्मोयतःस्यात्तदुपक्रमेत ॥ द्वेष्योभवत्यर्थपरोहिलोकेकामात्मताखल्वतिनप्रशस्ता ॥ ५८ ॥ गुरुश्चराजाचपिताचवृद्धःक्रोधात्प्रहर्षादथवापिकामात् ॥ यद्व्यादिशेत्कार्यमवेक्ष्यधर्मंकस्तंनकुर्यादनृशंसवृत्तिः ॥ ५९ ॥ नतेनशक्नोमिपितुःप्रतिज्ञामिमांनकर्तुंसकलांयथावत् ॥ सह्यावयोस्तातगुरुर्नियोगेदेव्याश्चभर्तासगतिश्चधर्मः ॥ ६० ॥

इति भावः । एकतोऽनेककार्यलाभे दृष्टांतमाह भार्येवेति । वश्या अनुकूला अतिथिपूजादिधर्मसाधनं अभिमताऽभिप्रिया कामसाधनं सपुत्रा परमलोकगमनरूपार्थसाधनं च भवति तद्वत् तस्माद्धर्म एव मुख्य इति स एव रक्ष्य इति भावः ॥ ५७ ॥ अमुमेवार्थं भंग्यंतरेण द्रढयति यस्मिन्निति । यस्मिन्कर्मणि सर्वे धर्मादयोऽसन्निविष्टा असंबद्धास्तन्नोपक्रमेत नारभेतैवेति शेषः । एकैकफलकानेककर्मसंभवेपि यतो धर्मः स्यात्तदुपक्रमेत तदेव कुर्यान्नापरम् । कुतस्तत्राह द्वेष्य इति । अर्थपरः धर्मविरुद्धकेवलार्थपरः कामात्मता धर्मविरुद्धकामपरता न प्रशस्ता गर्हिता राज्ञ इव ॥ ५८ ॥ यदेवमतो गुरुश्चेत्यादि गुरुरुपनेता धनुर्वेदाद्युपदेष्टा च स यत्कार्यं व्यादिशेत् तद्धर्ममवेक्ष्य पितृवचनकरणं धर्म इति ज्ञात्वा को न कुर्यात् ॥ ५९ ॥ इमां सकलां संपूर्णां न कर्तुं न शक्नोमि नियोगे प्रभुरिति शेषः । मातुः स्वेन सहगमननिषधायाह देव्याश्चेति । भर्तृत्वात्स एवास्या गतिर्नतु पुत्रः स गतिः । सधर्म इतिपाठे तेन सगतिः समानगतिरेषा । सः तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्तेन सह वास एवास्या धर्मः नतु मया सह वास इत्यर्थः ॥ ६० ॥

तदेवाह तस्मिन्निति । स्वे पथि इष्टपुत्रं परित्यज्यापि सत्यं रक्षणीयमित्येवंरूपे सत्यमार्गे । अन्येत्यस्य विवरणं विधवेति ॥ ६१ ॥ मा मामित्यर्थः । पुनर्ययातिः स्वर्गमापेति शेषः ॥ ६२ ॥ केवलराज्यकारणात् धर्महीनराज्यहेतोः महोदयं महाफलम् यशः प्राप्तमपि राज्यं त्यक्त्वा पितृवाक्यपालनं कृतवानित्येवं यशः पृष्ठतः कर्तुं नालम् । जीविते मनुष्यजीवनेऽदीर्घकालेऽल्पकालतया निश्चिते सति तदर्थमवराम् अवरप्रयोजनिकां महीमधर्मतः परमपुरुषार्थत्यागेन नतु वृणे इति संबंधः ॥ ६३ ॥ पराक्रमात् धैर्यात् दर्शनं स्वसंमतं धर्मरहस्यं अनुशास्य उपदिश्य तां जननीं प्रदक्षिणं कृत्वा हृदि चकार गंतुं मनश्चकारेत्यर्थः ॥ ६४ ॥ वाचमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकविंशः सर्गः ॥ २१ ॥ ॥ ७ ॥ ॥ अथ रामः सौमित्रेः कैकेयीविषयं रोषं शमयनीत्याह अथेति । व्यथया रामस्य राज्यहानिजन्यया सविशेषं रामेष्टजनांतरापेक्षयेति शेषः । अमर्षितं प्राप्तासहनं विस्फारणं विस्तारः ॥ १ ॥ आसाद्य अभिमुखीकृत्य धैर्येण सत्त्वं चित्तं अवि

तस्मिन्पुनर्जीवतिधर्मराजेविशेषतःस्वेपथिवर्तमाने ॥ देवीमयासार्धमितोऽभिगच्छेत्कथंस्विदन्याविधवेवनारी ॥ ६१ ॥ सामानुमन्यस्ववनंव्रजंतंकुरुष्वनःस्वस्त्ययनानिदेवि॥यथासमातेपुनराव्रजेयंयथाहिसत्येनपुनर्ययातिः ॥ ६२ ॥ यशोह्यहंकेवलराज्यकारणान्नपृष्ठतःकर्तुमलंमहोदयम् ॥ अदीर्घकालेनतुदेविजीवितेवृणेऽवरामद्यमहीमधर्मतः ॥ ६३ ॥ प्रसादयन्नरवृषभःसमातरंपराक्रमाज्जिगमिषुरेवदंडकान् ॥ अथानुजंभृशमनुशास्यदर्शनंचकारतांहृदिजननींप्रदक्षिणम् ॥ ६४ ॥ ॥ इत्यार्षे श्रीमद्रामायणेवा०आ०का०अ०कां०एकविंशःसर्गः ॥ २१ ॥ अथतंव्यथयादीनंसविशेषममर्षितम् ॥ श्वसंतमिवनागेंद्रंरोषविस्फारितेक्षणम् ॥ १ ॥ आसाद्यरामःसौमित्रिंसुहृदंभ्रातरंप्रियम् ॥ उवाचेदंसधैर्येणधारयन्सत्त्वमात्मवान् ॥ २ ॥ निगृह्यरोषंशोकंचधैर्यमाक्रम्यकेवलम् ॥ अवमानंनिरस्यैनंगृहीत्वाहर्षमुत्तमम् ॥३॥ उपक्लृप्तंयदेतन्मेअभिषेकार्थमुत्तमम् ॥ सर्वंनिवर्तयक्षिप्रंकुरुकार्यंनिरव्ययम् ॥ ४ ॥ सौमित्रेयोऽभिषेकार्थेममसंभारसंभ्रमः ॥ अभिषेकनिवृत्त्यर्थेसोऽस्तुसंभारसंभ्रमः ॥ ५ ॥ यस्यामदभिषेकार्थेमानसंपरितप्यति ॥ मातानःसायथानस्यात्सविशंकातथाकुरु ॥ ६ ॥ तस्याःशंकामयंदुःखंमुहूर्तमपिनोत्सहे ॥ मनसिप्रतिसंजातंसौमित्रेऽहमुपेक्षितुम् ॥७॥ नबुद्धिपूर्वंनाबुद्धंस्मरामीहकदाचन ॥ मातृणांवापितुर्वाहंकृतमल्पंचविप्रियम् ॥ ८ ॥

कारितया धारयन् प्रकटयन् ॥ २ ॥ किमुवाचेत्यत्राह निगृह्येति । रोषं पित्रादिवधहेतुम् अवमानं वनप्रवासनरूपं निरस्य शत्रुकृतत्वाभावात् उत्तमं हर्षं सत्यपालनेन पितुः पुण्यलोकसिद्धिजं हर्षम् ॥ ३ ॥ तादृशहर्षसिद्ध्यर्थमेव हे लक्ष्मण । अभिषेकप्रयोजनकं निवर्तय कार्यं वनगमनोपयुक्तम् ॥ ४ ॥ तदेवाह सौमित्रे इति । संभारसंपादनाय यः संभ्रमस्त्वरा साभिषेकनिवृत्त्यर्थेस्तु वनगमनपरिकरसंपादनायास्त्विति यावत् ॥ ५ ॥ किंच यस्यामदभिषेकार्थे मदभिषेकनिवृत्तौ । अर्थशब्दो निवृत्तिवचन इह । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः । सविशंका कथमयं वने स्थास्यतीति शंकया सदुःखा तथा कुरु अल्पेनैव कालेन रामं द्रक्ष्यसि पित्राज्ञाभंगश्चातिनिंद्य इत्यादि वाक्यैरिति शेषः । यद्वा यस्याः कैकेय्याः नो माता कैकेयी सशंका अयं वनं न गमिष्यतीति शंकासहिता ॥ ६ ॥ कुत एवं तत्राह तस्या इति । तस्या मनसि प्रतिसंजातं शंकामयं दुःखं मुहूर्तमपि उपेक्षितुं नोत्सहे । उदीक्षितुमितिपाठे द्रष्टुमित्यर्थः ॥ ७ ॥ तदेवोपपादयति न बुद्धीति । अबुद्धं अज्ञानपूर्वं वा अल्पं च अल्पमपि

विप्रियं विप्रियकरं कदाचन कदापि कृतं न स्मरामीत्यन्वयः । समारब्धमितिपाठेनारब्धवानस्मीत्यर्थः ॥ ८ ॥ सत्यः सत्यवचनस्वभावः सत्याभिसंधः सत्यप्रतिज्ञः परलोकभयात् परलोकभयहेतोरसत्याद्भीतः पिता निर्भयोस्तु । मया तत्कृतसत्यपरिपालनात् ॥ ९ ॥ अस्मिन्कर्मणि अभिषेकविषये कर्मणि अप्रतिसंहृते अनिवर्तिते मम वचः सत्यं न वृत्तमिति मनस्तापो भवेत् तस्य च मनस्तापो मामपि तपेत् पितृहितमकुर्वतो मम जन्म व्यर्थमिति पीडयेत् ॥ १० ॥ यत एवमतोभिषेकेति । संहृत्य त्यक्त्वा अन्वगेव शीघ्रमेव इतः पुरः अस्मान्नगरात् ॥ ११ ॥ नृपात्मजा कैकेयी । अव्यग्रं अव्याकुलम् ॥ १२ ॥ गते गते एव ॥ १३ ॥ कैकेय्या अत्र नापराधः अन्यप्रेरितत्वात्तर्हि स एव दंड्यस्तत्राह बुद्धिरिति । येनेश्वरेण विधात्रेयं बुद्धिः कैकेय्याः प्रणीता मंथराद्वारा दत्ता मनश्च तद्बुद्धिविषयेर्थे सुसमाहितं स्थिरीकृतं तं संक्लेष्टुं मत्कृतमन्यथाजातमिति क्लेशयितुं नार्हामि । तस्य मदधिकारित्वान्मद्रूपत्वाद्वेति गूढ आशयः । मत्संकल्पकृतमेव तदिति गूढं व्यंग्यम् । अशक्यत्वादित्यापाततोर्थः । अतो वनं प्रव्रजिष्यामि चिरं विलंबो मा मास्त्वित्यर्थः ॥ १४ ॥ तत्प्रेरयितारमाह कृतांत इत्यादि । मद्विवासने मद्विवासनप्रेरणायां एवमभिषेकनिवर्तनप्रेरणायां कृतांतो दैवमेवेंद्रादीनां दुःखनिवर्तकादृष्टमेवेति गूढम् । मत्प्रजानां मत्कृतपरिपालनलाभाभावजनकमदृ

सत्यःसत्यभिसंधश्चनित्यंसत्यपराक्रमः ॥ परलोकभयाद्भीतोनिर्भयोस्तुपितामम ॥ ९ ॥ तस्यापिहिभवेदस्मिन्कर्मण्यप्रतिसंहृते ॥ सत्यंनेति मनस्तापस्तस्यतापस्तपेच्चमाम् ॥ १० ॥ अभिषेकविधानंतुतस्मात्संहृत्यलक्ष्मण ॥ अन्वगेवाहमिच्छामिवनंगंतुमितःपुरः ॥ ११ ॥ ममप्रव्राजनाद्यकृतकृत्यानृपात्मजा ॥ सुतंभरतमव्यग्रमभिषेचयतांततः ॥ १२ ॥ मयिचीराजिनधरेजटामंडलधारिणि ॥ गतेरण्यंचकैकेय्याभविष्यातिमनःसुखम् ॥ १३ ॥ बुद्धिःप्रणीतायेनेयंमनश्चानुसमाहितम् ॥ तंनुनार्हामिसंक्लेष्टुंप्रव्रजिष्यामिमाचिरम् ॥ १४ ॥ कृतांतएवसौमित्रेद्रष्टव्योमत्प्रवासने॥ राज्यस्यचवितीर्णस्यपुनरेवनिवर्तने ॥ १५ ॥ कैकेय्याःप्रतिपत्तिर्हिकथंस्यान्ममवेदने ॥ यदितस्यानभावोयंकृतांतविहितोभवेत् ॥ १६ ॥ जानासिहियथासौम्यनमातृषुममांतरम् ॥ भूतपूर्वंविशेषोवातस्यामयिसुतेपिवा ॥ १७ ॥ सोभिषेकनिवृत्त्यर्थैःप्रवासार्थैश्चदुर्वचैः ॥ उग्रैर्वाक्यैरहंतस्यानान्यदैवात्समर्थये ॥१८॥ कथंप्रकृतिसंपन्नाराजपुत्रीतथागुणा ॥ ब्रूयात्साप्राकृतेवस्त्रीमत्पीड्यंभर्तृसन्निधौ ॥१९॥ यदचिंत्यंतुतद्दैवंभूतेष्वपिनहन्यते ॥ व्यक्तंमयिचतस्यांचपतितोहिविपर्ययः ॥ २० ॥

ष्टमिति स्फुटम् । द्रष्टव्यः कारणत्वेन द्रष्टव्यः । यत्तु रामस्य प्राकृतदुरदृष्टं दैवमिति तन्न भगवतस्तस्याभावात् ॥ १५ ॥ तदुपपादयति कैकेय्या इति । प्रतिपत्तिरध्यवसायः । यदि कृतांतविहितस्तत्प्रेरितोऽयं भावोभिप्रायो न भवेत् ॥ १६ ॥ ईदृशस्य कैकेय्या भावस्य दैवकारणकत्वसिद्ध्ये तस्याः सहजभावमाह जानासीत्यादि । अंतरं वैषम्यम् । भूतपूर्वं तस्या वा मयि सुते भरतेपि वा न विशेषो भूतपूर्वस्तस्माद्दैवकृतमेव वैषम्यमिति भावः ॥ १७ ॥ तस्मात्स इति सोहं रामः दुर्वचैः सामान्येनापि नं वक्तुं शक्यैः किं पुनर्वाच्यं दशरथपत्न्या केकयकन्यया । तादृशैर्वाक्यै राज्ञः कैकेय्या प्रेरणे दैवादन्यत्कारणं सोहं रामो न समर्थय इत्यन्वयः ॥ १८ ॥ तदेव द्रढयति कथमिति । प्रकृतिसंपन्ना सत्त्वप्रकृतियुक्ता तथागुणा प्रागनुभूततादृक्कल्याणगुणा तत्रापि भर्तृसन्निधौ मत्पीड्यं मत्पीडाजनकं तदेव । मदघमितिपाठेप्ययमेवार्थः । वाक्यं ब्रूयात् यदि न दैवप्रेरितेति भावः ॥ १९ ॥ ननु तद्दैवं कास्ति कीदृक्चेत्यत आह यदिति । देशकालवृत्तितया यदचिंत्यं ईदृग्विधमिति चिंतयितुमशक्यं तद्दैवं यद्भूतेषु भूताधिष्ठातृषु ब्रह्मादिष्वपि न हन्यते न

प्रतिहतं भवति । हि अतस्तत्कृत एव तस्यां मयि च विपर्ययः पूर्वस्थितवात्सल्यापगमरूपः हस्तगतराज्यभ्रंशरूपश्च पतितः॥ २० ॥ ननु शौर्येण दैवं हनिष्यामीति चेत्तत्राह कश्चेति । यस्य दैवस्य ग्रहणं ज्ञानं ज्ञान जनकं कर्मणः फलादन्यत्र दृश्यते । एवं च नित्यकार्यानुमेयतया प्रागज्ञातत्वात् । योद्धुमशक्यम् । जाते तु फले विफलं युद्धम् । फलेन तस्य नाशाच्चेति भावः ॥ २१ ॥ सर्वतो दैवमेव प्रबलं पौरुषं तु काकतालीय मित्याह सुखेत्यादि । भवाभवौ बंधमोक्षौ एषां मध्ये यस्य यत् तथाभूतं अचिंत्यकारणकं किंचित्कार्यं तत् ननु निश्चयेन दैवस्य कर्मफलम् ॥ २२ ॥ दैवप्राबल्यमेव द्रढयति ऋषय इति । विश्वामित्रादयः । मन्युः क्रोधः । बहुवचनं व्यक्तिबहुत्वात् तैर्भ्रश्यंते अभिभूयंते ॥ २३ ॥ पुनरपि स्ववनवासस्य दैवजत्वं द्रढयितुं दैवकार्यलक्षणमाह असंकल्पितमिति । आरंभैर्यत्नैः आरब्धमुपक्रांतं कार्यं निवर्त्य यदसंकल्पितमेवाचिंतित मेवाकस्मात् दृष्टहेतुं विना प्रवर्तते तद्दैवस्य कर्म ननु ॥ २४ ॥ उपसंहरति एतयेति । तत्त्वया यथार्थया बुद्ध्या बुद्धियोगेन आत्मना अंतःकरणस्थेनात्मानमंतःकरणं संस्तभ्य यदि तिष्ठसीति शेषः । तदा मेभिषेके व्याहतेपि तव परितापो न विद्यते न भवति ॥ २५ ॥ अथ तत्कालकर्तव्यं नियुंक्ते तस्मादिति । उपादिष्टबुद्धियोगबलादित्यर्थः । अपरितापः परितापहीनः संस्त्वमपि

कश्चदैवेनसौमित्रेयोद्धुमुत्सहतेपुमान् ॥ यस्यनुग्रहणंकिंचित्कर्मणोन्यत्रदृश्यते ॥२१॥ सुखदुःखेभयक्रोधौलाभालाभौभवाभवौ ॥ यस्यकिंचित्तथाभूतं ननुदैवस्यकर्मतत् ॥ २२ ॥ ऋषयोप्युग्रतपसोदैवेनाभिप्रचोदिताः ॥ उत्सृज्यनियमांस्तीव्रान्भ्रश्यंतेकाममन्युभिः ॥ २३ ॥ असंकल्पितमेवेहयद कस्मात्प्रवर्तते ॥ निवर्त्यारब्धमारंभैर्ननुदैवस्यकर्मतत् ॥ २४ ॥ एतयातत्त्वयाबुद्ध्यासंस्तभ्यात्मानमात्मना ॥ व्याहतेप्यभिषेकेमेपरितापोनविद्यते ॥ २५ ॥ तस्मादपरितापःसंस्त्वमप्यनुविधायमाम् ॥ प्रतिसंहारयक्षिप्रमाभिषेचनिकींक्रियाम् ॥ २६ ॥ एभिरेवघटैःसर्वैरभिषेचनसंभृतैः ॥ ममल क्ष्मणतापस्यव्रतस्नानंभविष्यति ॥ २७ ॥ अथवाकिंममैतेनराज्यद्रव्यमयेनतु ॥ उद्धृतंमेस्वयंतोयंव्रतादेशंकरिष्यति ॥ २८ ॥ माचलक्ष्मणसंतापं कार्षीर्लक्ष्म्याविपर्यये ॥ राज्यंवावनवासोवावनवासोमहोदयः ॥ २९॥ नलक्ष्मणास्मिन्ममराज्यविघ्नेमातायवीयस्यभिशंकितव्या ॥ दैवाभिपन्नान पिताकथंचिज्जानासिदैवंहितथाप्रभावम् ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे वा०आ०अ०कां०द्वाविंशः सर्गः ॥ २२ ॥ इतिब्रुवतिरामेतुलक्ष्मणोऽवाक् शिराइव ॥ ध्यात्वामध्यंजगामाशुसहसादैन्यहर्षयोः ॥ १ ॥

मामनुविधाय मामनुसृत्याभिषेचनिकीं तत्प्रयोजनिकां क्रियामलंकारं प्रतिसंहारय निवर्तय । अनेन गूढं लक्ष्मणस्यापि वनगमनं सूचितम् ॥ २६ ॥ तापस्यैतद्रूपव्रतस्य संकल्पे व्रतस्नानं व्रत संकल्पापेक्षितं स्नानं व्रतस्नानं तदेभिर्भविष्यतीति योजना ॥ २७ ॥ तापस्य व्रतस्नानेप्येभिः क्रियमाणे राज्यलिप्सया स्नानं कृतवानिति कैकेय्याः शंका माभूदिति तन्निषेधति अथवेति । राज्यद्रव्यमयेन राज्याभिषेकसाधनमंगलद्रव्यप्रचुरेण । स्वयं स्वहस्तेनोद्धृतं तोयं मे व्रतादेशं व्रतसंकल्पाधिकारम् ॥ २८ ॥ राज्यवनवासयोर्वनवासो महोदयः महाफलः प्रजानां कृत्याकृत्य चिंताव्याक्षेपराहित्येन सततं तपःप्रवृत्त्या पितृवाक्यपरिपालनेन चेति भावः ॥ २९ ॥ उपदेशस्य परमप्रयोजनमाह नेति । न माताभिशंकितव्या न पिताभिशंकितव्यो यतो दैवाभिपन्नाः दैवग्रस्ताः एवमभिशंकेत इति शेषः । यद्वा दैवाभिपन्नत्वं मातापित्रोर्विशेषणम् । त्वं च दैवं तथाप्रभावमिति जानासि अतो नातिशंकनीया ॥ ३० ॥ नैगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण तिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्वाविंशः सर्गः ॥ २२ ॥ ॥ छ ॥ दुःखहर्षयोर्मध्यं जगाम रामस्य धर्मे धैर्यं दृष्ट्वा हर्षः तस्य राज्यभ्रंशात् दुःखमित्येषा मध्यगतिः । लक्ष्मणस्य शेषावतारत्वेन तमो

गुणप्रधानता ज्येष्ठस्य विवेकवाक्यश्रवणेन सत्त्वोदयश्चेति भावः । अधः शिरस्त्वेनोक्तार्थस्यार्धांगीकारध्वननम् । इवेन तमसः स्वाभाविकत्वात्तस्य स्थिरता ध्वन्यते ॥ १ ॥ तामेवदर्शयति तथा त्विति । तथा भयं करामित्यर्थः । बिलमत्र परबिलम् ॥ २ ॥ दुष्प्रतिवीक्ष्यं संमुखतया द्रष्टुमशक्यम् । सादृश्यं दुर्दर्शत्वेन ॥ ३ ॥ अग्रहस्तं हस्ताग्रम् रामेण क्षमापनाय गृहीतमित्यर्थः तिर्यगित्यादिक्रोधातिशयेन विविधं शिरो धूननं कृत्वेत्यर्थः । चादध इत्यपि ॥ ४ ॥ अग्राक्ष्णा कटाक्षेण तिर्यग्वक्रं भ्रातरमीक्षमाणः धर्मदोषो धर्मविरोधस्तत्प्रसंगेन तत्परिहारशेषतया पितृवचनमकुर्वन् कथमस्मान् धर्मेण पालयिष्यतीति या लोकस्यातिशंका तदभावसंपादनहेतुना मयापि पितृवचसाऽकरणऽन्योपि पितृवचो न करिष्यतीति लोकनाशशंकाहेतुना च यस्य ते सुमहान् अयं वनगमनं प्रति संभ्रमो जातः सोऽस्थानेऽयुक्तो भ्रांतिमूल एव । भ्रांतिमूलत्वमेवाह कथं हीति । अशौंडीरं असमर्थं दैवमिति किंचिद्वस्तु प्रबलमिति एवं जातीयकं यथा हि यथैव त्वं वदसि । एतत् एतज्जातीयं त्वद्विधः शौंडीरः दैवनिराकरणेपि समर्थः क्षत्रियर्षभो यद्यसंभ्रांतः स्यात् । कथमेत द्वक्तुमर्हति न कथमपि अतः कृपणं असमर्थैकपरिग्राह्यतया शोच्यं अशक्तं पौरुषसन्निधौ कार्यासमर्थं दैवपदार्थं प्राकृतवत् किमभिशंससि अभिष्टौषि ॥ ५ ॥ ६ ॥ ७ ॥ एवं दैवावलंबनं प्रतिक्षिप्य धर्मदोषप्रसंगं परिहरति पापयोरिति । पापात्मनोस्तयोः कैकेयीदशरथयोर्विषये ते कथं नाम शंका पापात्मत्वशंका न विद्यते न जायते । ननु धर्मव्यवहारवतोः कथमेषा शंका तत्राह संतीति । हे धर्मात्मन् धर्मैकस्वभाव धर्म

तथातुवद्ध्वाभ्रुकुटींभ्रुवोर्मध्येनरर्षभः ॥ निशश्वासमहासर्पोबिलस्थइवरोषितः ॥ २ ॥ तस्यदुष्प्रतिवीक्ष्यंतद्भ्रुकुटीसहितंतदा ॥ बभौक्रुद्धस्यसिंहस्य मुखस्यसदृशंमुखम् ॥ ३ ॥ अग्रहस्तंविधुन्वंस्तुहस्तीहस्तमिवात्मनः ॥ तिर्यगूर्ध्वंशरीरेचपातयित्वाशिरोधराम् ॥ ४ ॥ अग्राक्ष्णावीक्षमाणस्तु तिर्यग्भ्रातरमब्रवीत् ॥ अस्थानेसंभ्रमोयस्यजातोवैसुमहानयम् ॥५॥ धर्मदोषप्रसंगेनलोकस्यानतिशंकया ॥ कथंह्येतदसंभ्रांतस्त्वद्विधोवक्तुमर्हति ॥ ६ ॥ यथाह्येवमशौंडीरंशौंडीरःक्षत्रियर्षभः ॥ किंनामकृपणंदैवमशक्तमभिशंससि ॥ ७ ॥ पापयोस्तेकथंनामतयोःशंकानविद्यते ॥ संतिधर्मो पधासक्ताधर्मात्मन्किंनबुध्यसे ॥ ८ ॥ तयोःसुचिरितंस्वार्थंशाठ्यात्परिजिहीर्षतोः ॥ यदिनैवंव्यवसितंस्याद्धिप्रागेवराघव ॥ ९ ॥ तयोःप्रागेवदत्त श्चस्याद्वरःप्रकृतश्चसः ॥ १० ॥ लोकविद्विष्टमारब्धंत्वदन्यस्याभिषेचनम् ॥ नोत्सहेसहितुंवीरतत्रमेक्षंतुमर्हसि ॥ ११ ॥ येनैवमागताद्वैधंतवबुद्धिर्म हामते ॥ सोपिधर्मोममद्वेष्योयत्प्रसंगाद्विमुह्यसि ॥ १२ ॥

उपधा छलं तत्रासक्तमासक्तिर्लोकप्रतारणाय येषां तादृशा बहिर्धर्मपराः अंतः पापासक्ताः संति तान् किं कथं न बुध्यसे ॥ ८ ॥ तयोर्धर्मोपधात्वं दर्शयति तयोरिति । स्वार्थं स्वकार्यसिद्ध्यर्थं सुचरितं त्वां शाठ्यात् मृषा कृप्तधर्मव्यवहारात् परिजिहीर्षतोस्त्यक्तुमिच्छतोस्तयोः कृत्यं किं न बुध्यस इत्यनुकर्षः । अमुमर्थमर्थापत्त्या साधयति यदीति । यदि तयोरेवंशाठ्येन त्वदर्थप्रच्यावनं व्यवसितमभिप्रेतं न स्यात् तदाभिषेकारंभं कृत्वा तद्विघ्नकरणं न स्यादिति शेषः । हि यस्मात्प्रागेव पूर्वकाल एव तयोः दातृप्रतिग्रहीतृभावेन संबद्धः स वरः प्रकृतः प्रवृत्तप्रसंगस्तथ्यः स्यात्तदा प्रागेवाभिषेकारंभात्पूर्वमेव दत्तः स्यात् त्वदभिषेकारंभं विनैव भरताभिषेकत्वद्वनवासौ कृतौ स्यातां तस्माद्वरप्रदानकथा मिथ्यैवेति भावः । यद्यपि दत्तोपि वरो राज्ञा विस्मृत इति तेन मदभिषेकारंभः कृत इत्यादि समाधानं शक्यं तथापि ईदृशवरदानस्य लोकविद्विष्टत्वेना नौचित्यादनुचितकर्तृत्वेन राजा त्याज्य एवेत्याह लोकेति । ज्येष्ठे श्रेष्ठगुणे जाग्रति कनिष्ठविषयकत्वात्तदभिषेचनस्य लोकविद्विष्टत्वं प्रत्यक्षव्यवहारविरोधाच्छास्त्रविरोधाच्चेति भावः ॥ ९ ॥ १० ॥ मेऽपराधमिति शेषः । त्वद्विषये प्रतिवचनदानरूपं ममापराधं क्षंतुमर्हसि ॥ ११ ॥ प्रतिवचनमेवाह येनेत्यादि । यत्प्रसंगात् यस्य पितृवचनस्य प्रसंगात् धर्मत्वप्रसंगकल्पनाद्धेतोर्विमुह्यसि तदकरणे प्रत्यवायः स्यादिति मोहं प्राप्नोसि

येन च मोहेन तव बुद्धिरेवं द्वैधमागता पूर्वं राज्यग्रहणविषयत्वमधुना तत्त्यागविषयत्वरूपं प्रकारद्वयं प्राप्ता । स धर्मोपि मम द्वेष्यः धर्माभासत्वादिति भावः ॥ १२ ॥ तस्य धर्माभासत्वमेवाह कथमिति । कर्मणा अचिंत्यवैभवस्वक्रियाशक्त्या कर्तुमकर्तुमन्यथाकर्तुं च शक्तः समर्थस्त्वं कैकेयीवशवर्त्तिनः स्त्रीजितस्य अतएव गर्हितं लोकनिंद्यं अधर्मिष्ठं च वचः करिष्यसि ॥ १३ ॥ एवं स्पष्टेप्यधर्मे तवाधर्मबुद्धिर्न जायत इति मे दुःखमित्याह यदिति । अयं भेदोऽभिषेकविघटनात्मा किल्बिषात् मृषा वरप्रकल्पनात्कृतोपि यत् यतस्त्वया एवं मृषा वरप्रकल्पितत्वेन न गृह्यतेऽतो मे तत्र तद्विषये दुःखं जायते कपटकृतमप्यर्थमसौ साधुं तया गृह्णातीति मम व्यथेति भावः । किंचैवंविधधर्मसंग एवंविधधर्मासक्तिर्निंद्या ॥१४॥ तदेवाह तवेत्यादिना । अयं वनवासरूपः दोषस्य दोषत्वाग्रहमेव शोचति । त्वां त्वां विना तत्कृते कर्मणि दैवकृतत्वबुद्धिं त्वा विना अन्यः कामवृत्तयोरहितयोर्नित्यं पितृनामकशत्र्वोः कामं मनोरथं मनसापि कथं कुर्यात् अनुष्ठानं तु दूरत इति भावः ॥ १५ ॥ वरस्य वास्तवं दैवकृतत्वमभ्युपेत्याप्याह यद्यपीति । तयोः पित्रोः प्रतिपत्तिस्त्वदभिषेकविघटनविषया बुद्धिरपि दैवी च दैव्येवेति यद्यपि ते मतं तथापि ते त्वया स्वमतमप्येतदुपेक्षणीयं यतस्तदपि ईदृशं विरुद्धकारि दैवमपि न रोचते । एवं च प्रियभ्रातुर्ममासंमतत्वादिदं त्वया त्याज्यमिति भावः॥ १६॥

कथंत्वंकर्मणाशक्तःकैकेयीवशवर्तिनः ॥ करिष्यसिपितुर्वाक्यमधर्मिष्ठंविगर्हितम् ॥ १३ ॥ यदयंकिल्बिषाद्भेदःकृतोप्येवंनगृह्यते ॥ जायतेतत्रमेदुःखंधर्मसंगश्चगर्हितः ॥ १४ ॥ तवायंधर्मसंयोगोलोकस्यास्यविगर्हितः ॥ मनसापिकथंकामंकुर्यात्त्वांकामवृत्तयोः ॥ तयोस्त्वहितयोर्नित्यंशत्र्वोः पित्रभिधानयोः ॥ १५ ॥ यद्यपिप्रतिपत्तिस्तेदैवीचापितयोर्मतम् ॥ तथाप्युपेक्षणीयंतेनमेतदपिरोचते ॥ १६ ॥ विक्लवोवीर्यहीनोयःसदैवमनुवर्तते ॥ वीराःसंभावितात्मानोनदैवंपर्युपासते ॥ १७ ॥ दैवंपुरुषकारेणयःसमर्थःप्रबाधितुम् ॥ नदैवेनविपन्नार्थःपुरुषःसोवसीदति ॥ १८ ॥ द्रक्ष्यंतित्वद्यदैवस्यपौरुषंपुरुषस्यच ॥ दैवमानुषयोरद्यव्यक्ताव्यक्तिर्भविष्यति ॥ १९ ॥ अद्यमेपौरुषहतंदैवंद्रक्ष्यंतिवैजनाः ॥ यैर्दैवादाहतंतेऽद्यदृष्टंराज्याभिषेचनम् ॥ २० ॥ अत्यंकुशमिवोद्दामंगजंमदजलोद्धतम् ॥ प्रधावितमहंदैवंपौरुषेणनिवर्तये ॥ २१ ॥ लोकपालाःसमस्तास्तेनाद्यरामाभिषेचनम् ॥ नचकृत्स्नास्त्रयोलोकाविहन्युःकिंपुनःपिता ॥ २२ ॥ यैर्विवासस्तवारण्येमिथोराजन्समर्थितः ॥ अरण्येतोविवत्स्यंतिचतुर्दशसमास्तथा ॥ २३ ॥ अहंतदाशांधक्ष्यामिपितुस्तस्याश्चयातव ॥ अभिषेकविघातेनपुत्रराज्यायवर्तते ॥ २४ ॥ मद्बलेनविरुद्धायनस्याद्दैवबलंतथा ॥ प्रभविष्यतिदुःखाययथोग्रंपौरुषंमम ॥ २५ ॥

किं च त्वादृशस्य दैवालंबनवादोप्ययुक्त इत्याह विक्लव इति । लोकाप्रसिद्ध इत्यर्थः । संभावितात्मानः सर्वलोकश्लाघ्यशौर्यादिमंतः ॥ १७ ॥ समर्थस्त्वादृशः विपन्नार्थः हतप्रयोजनः स त्वादृशः ॥ १८ ॥ ननु दैवबाधनसामर्थ्यं न कस्यापि इति चेत्तत्राह द्रक्ष्यंतीति । पौरुषं बलं द्रक्ष्यंति लोका इति शेषः । व्यक्तिः प्रबलदुर्बलत्वविवेकः । अद्य मत्पौरुषेणेति शेषः ॥ १९ ॥ तदेवाह अद्येति । यैर्दैवादाहतं राज्याभिषेचनं ते दृष्टं ते जना अद्य मत्पौरुषहतं दैवं द्रक्ष्यंति । यद्दैवादितिपाठे यस्माद्दैवादाहतं येन दैवेनाहतमिति यावत् । दृष्टं यैर्जनैर्दृष्टं ते जनास्तद्दैवं मत्पौरुषहतं द्रक्ष्यंतीत्यर्थः ॥ २० ॥ अत्यंकुशं अतिक्रांतांकुशव्यापारम् उद्दामं उत्कृष्टदामम् निश्शृंखलमिति यावत् । प्रधावितं अभिमुखं धावितं पौरुषेण स्वगतबलेन निवर्तये ॥२१॥ दैवनिवर्तनं स्वबलस्येषत्करमित्याह लोकेत्यादि॥२२॥ मिथः परस्परैकवाक्यतया स्वपौरुषेण राजत्वं सिद्धवत्कृत्याह राजन्निति ॥ २३ ॥ तदाशां तामाशाम् तां काम् या तवाभिषेकविघातेन पुत्रराज्याय पुत्रराज्यप्रापणार्थं वर्तते तामित्यर्थः ॥ २४ ॥ मद्बलत्वपक्षभूतेन मया विरुद्धाय जनाय यथा ममोग्रं पौरुषं

दुःखायमभविष्यति तथा देवबलं न स्यात्तन्निरासससमर्थमिति शेषः ॥ २५ ॥ अथ वनवासोचितं कालं स्वयमेवाह ऊर्ध्वमिति । एतद्विवरणं वर्षसहस्रांते इति तस्मिन्नतीते त्वयि वनवासं गतेऽनंतरं आर्यपुत्रा आर्यस्य तव पुत्राः प्रजापाल्यं प्रजापालनरूपं राज्यं कारेष्यंति । तदानीमप्यन्येषां नावकाश इति भावः ॥ २६ ॥ इदमेव युक्तमित्याह पूर्वेति । हि यतः पुत्रवत्परिपालननिमित्तं पुत्रेषु प्रजा निक्षिप्य पश्चाद्वनवासः पूर्वराजर्षिवृत्त्या तदचारेण अभिधीयते । विधीयत इत्येव कचित्पाठः ॥ २७ ॥ राजनि दशरथे अनेकाग्रे कामवशादुक्तवानप्रस्थधर्मानुष्ठानैकाग्रताराहित्येन चलचित्ततया प्रतिकूले इति । राज्यविभ्रमशंकया तद्वचोविरोधिना राज्यग्रहणे सकललोकक्षोभेण स्वस्मिन् राज्यस्य विभ्रमशंकया चलनशंकयाऽस्थैर्यशंकया स वनवासधर्मस्त्वया चेदंगीक्रियते इति शेषः । किं च हे राम एवं श्रेष्ठत्वाद्धर्मतः प्राप्तं राज्यं तयैव शंकया यद्यात्मनि नेच्छसि तदा तां शंकां त्यजेति शेषः । राज्यकामत्वमिति पाठे एवं प्राप्तं राज्यभोक्तृत्वं राज्यरूपभोग्यसंबंधं वा यदि नेच्छसीत्यादि प्राग्वत् ॥ २८ ॥ तत्र हेतुः प्रतिजाने इत्यादि । अहं वेला सागरमिव राज्यं च त्वां च रक्षेयम् । अन्यथा वीरलोकभाक् मा भूवमिति ते तवाग्रे प्रतिजाने ॥ २९ ॥ तस्मात्त्वं मंगलैरभिषेकसाधनै

ऊर्ध्वंवर्षसहस्रांतेप्रजापाल्यमनंतरम् ॥ आर्यपुत्राःकरिष्यंतिवनवासंगतेत्वयि ॥ २६ ॥ पूर्वराजर्षिवृत्त्याहिवनवासोभिधीयते ॥ प्रजानिक्षिप्यपुत्रेषुपुत्रवत्परिपालने ॥ २७ ॥ सचेद्राजन्यनेकाग्रेराज्यविभ्रमशंकया ॥ नैवमिच्छसिधर्मात्मन्राज्यंरामत्वमात्मनि ॥२८॥ प्रतिजानेचतेवीरमाभूवंवीरलोकभाक् ॥ राज्यंचतवरक्षेयमहंवेलेवसागरम् ॥२९॥ मंगलैरभिषिंचस्वतत्रत्वंव्यापृतोभव ॥ अहमेकोमहीपालानलंवारयितुंवलात् ॥३०॥ नशोभार्थाविमौवाहूनधनुर्भूषणायमे ॥ नासिरावंधनार्थायनशराःस्तंभहेतवः ॥ ३१ ॥ अमित्रमथनार्थायसर्वमेतच्चतुष्टयम् ॥ नचाहंकामयेत्यर्थंयःस्याच्छत्रुर्मतोमम ॥३२॥ असिनातीक्ष्णधारेणविद्युच्चलितवर्चसा ॥ प्रगृहीतेनवैशत्रुंवज्रिणंवानकल्पये ॥ ३३ ॥ खड्गनिष्पेषनिष्पिष्टैर्गहनादुश्चराचमे ॥ हस्त्यश्वरथिहस्तोरुशिरोभिर्भवितामही ॥ ३४ ॥ खड्गधाराहतामेद्यदीप्यमानाइवाग्नयः ॥ पतिष्यंतिद्विषोभूमौमेघाइवसविद्युतः ॥ ३५ ॥ वद्धगोधांगुलित्राणेप्रगृहीतशरासने ॥ कथंपुरुषमानीस्यात्पुरुषाणांमयिस्थिते ॥ ३६ ॥ वहुभिश्चैकमत्यस्यन्नेकेनचवहून्जनान् ॥ विनियोक्ष्याम्यहंवाणान्नृवाजिगजमर्मसु ॥ ३७ ॥

रात्मानमभिषिंचस्व वसिष्ठादिभिरिति शेषः । तत्राभिषेकव्यापारे व्यापृतो व्यापृतचित्तो भव । तत्प्रतिबंधकानहं वारयिष्यामीत्याह अहमेति । अलं समर्थः ॥ ३० ॥ तदेव दर्शयति नेति । आवंधनार्थाय काष्ठानां परस्परं बंधनहेतुच्छिद्रादिकरणाय स्तंभः कस्यचित्काष्ठादेरधःपतनप्रतिबंधः ॥३१॥ न चेत्यादिसार्धश्लोक एकं वाक्यम् । योऽत्यर्थं मम मतः संमतः शत्रुः स्यात्तं यं कंचिच्छत्रुं वज्रिणं वा इंद्ररूपं वा प्रगृहीतेन तीक्ष्णधारत्वादिविशिष्टेनासिना न कल्पये न खंडशः कल्पये एवमहं न कामये च एवं कामनामपि न करोमि सर्वथा खंडयाम्येवेति भावः॥ ३२ ॥ ३३ ॥खड्गनिष्पेषनिष्पिष्टैः खड्गकृताघातेन खंडितैः मही गहना निरंतरत्वात् अतएव दुश्चरा हस्त्यादीनां हस्तादिभिः क्रमात्संबंधः । भवितेति लुट् ॥ ३४ ॥ हताः विच्छिन्नाः अग्नय इव दीप्यमानाः रक्तधारया अतएव सविद्युतो मेघा इव ॥ ३५ ॥ उक्तधर्मविशिष्टे मयि स्थिते सति पुरुषाणां मध्ये कश्चिदपि कथं पुरुषमानी आत्मानं पुरुषं मन्यमानः शूराभिमानी कथं स्यादित्यर्थः ॥ ३६ ॥ अत्यस्यन्पातयन् बहुभिः बाणैः एकेन बाणेन विनियोक्ष्यामि त्यक्ष्यामि ॥३७॥

अस्त्रप्रभावस्य अस्त्रसामर्थ्यस्य प्रभावः प्रतापः राज्ञो दशरथस्य प्रभविष्यति उज्जृंभितो भविष्यति ॥ ३८ ॥ चंदनसारस्य चंदनसारानुलेपनस्य केयूरामोक्षणस्य अंगदधारणस्य वसूनां मोक्षणस्य दानस्य सुहृज्जनपालनस्य अनुरूपौ अर्हौ मे बाहू इमौ पीनप्रलंबौ तेऽभिषेचनविघ्नस्य कर्तॄणां निवारणे कर्म स्वानुरूपं कर्म करिष्यतः ॥ ३९ ॥ ४० ॥ ब्रवीहीत्यार्ष ईट् । वियुज्यतां वियोज्यताम् ॥ ४१ ॥ एवंवादिनं लक्ष्मणं रामो नायमेतस्य काल इत्याह विमृज्येति । बाष्पं लक्ष्मणनयनजं विमृज्य परिमृज्य विसृज्येतिपाठे अंतर्भावितण्यर्थतया विसर्जयित्वा चक्षुषी परिमृज्येति यावदिति कतकः । पित्रोर्वचने व्यव स्थितं प्रतिष्ठितं मां निबोध । हे सौम्य एष हि सत्पथः 'जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिंडदानाच्च त्रिभिः पुत्रस्य पुत्रता' इतिन्यायादिति भावः । निबोधेत्यस्य नितरामतिशयेनावतरणकालिकवृत्तां तत्स्मरणपूर्वकं जानीहि । एष हि एष एव सत्पथः सतां रक्षकः पंथा इत्यप्यर्थोऽत्र गूढः ॥ ४२ ॥ रभमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये अयोध्याकांडे त्रयोविंशः

अद्यमेस्त्रप्रभावस्यप्रभावःप्रभविष्याति ॥ राज्ञश्चाप्रभुतांकर्तुंप्रभुत्वंचतवप्रभो ॥ ३८ ॥ अद्यचंदनसारस्यकेयूरामोक्षणस्यच ॥ वसूनांचविमो क्षस्यसुहृदापालनस्यच ॥ ३९ ॥ अनुरूपाविमौबाहूरामकर्मकरिष्यतः ॥ अभिषेचनविघ्नस्यकर्तॄणांतेनिवारणे ॥ ४० ॥ ब्रवीहिकोद्यैवमयावियुज्य तांतवासुहृत्प्राणयशःसुहृज्जनैः ॥ तथातवेयंवसुधावशाभवेत्तथैवमांशाधितवास्मिकिंकरः ॥ ४१ ॥ विमृज्यबाष्पंपरिसांत्व्यचासकृत्सलक्ष्मणं राघववंशवर्धनः ॥ उवाचपित्रोर्वचनेव्यवस्थितंनिबोधमामेषहिसौम्यसत्पथः ॥ ४२ ॥ इत्यार्षे श्रीम०वा० आ०अ०कां० त्रयोविंशःसर्गः ॥२३॥ तंसमीक्ष्यव्यवसितंपितुर्निर्देशपालने ॥ कौसल्याबाष्पसंरुद्धावचोधर्मिष्ठमब्रवीत् ॥ १ ॥ अदृष्टदुःखोधर्मात्मासर्वभूतप्रियंवदः ॥ मयिजातोदशर थात्कथमुंछेनवर्तयेत् ॥ २॥ यस्यभृत्याश्चदासाश्चमृष्टान्यन्नानिभुंजते ॥ कथंसभोक्ष्यतेरामोवनेमूलफलान्ययम् ॥ ३ ॥ कएतच्छ्रद्दधेच्छ्रुत्वाकस्यवा नभवेद्भयम् ॥ गुणवान्दयितोराज्ञःकाकुत्स्थोयद्विवास्यते ॥ ४ ॥ नूनंतुबलवाँल्लोकेकृतांतःसर्वमादिशन् ॥ लोकेरामाभिरामस्त्वंवनंयत्रग मिष्यसि ॥ ५ ॥ अयंतुमामात्मभवस्तवादर्शनमारुतः ॥ विलापदुःखसमिधोरुदिताश्रुहुताहुतिः ॥ ६ ॥ चिंताबाष्पमहाधूमस्तवागमनचिंतजः ॥ कर्शयित्वाधिकंपुत्रनिःश्वासायाससंभवः ॥ ७॥ त्वयाविहीनामिहमांशोकाग्निरतुलोमहान् ॥ प्रधक्ष्यतियथाकक्ष्यंचित्रभानुर्हिमात्यये ॥ ८॥

सर्गः ॥ २३ ॥ ॥ छ ॥ व्यवसितं निश्चितमतिं निर्देशो निदेश आज्ञा बाष्पसंरुद्धा बाष्पसंरुद्धवाक् धर्मिष्ठं रामम् ॥ १ ॥ उंछः क्षेत्रपतितकणशो ग्रहणं वर्तयेत् जीवेत् भवानिति शेषः ॥ २ ॥ भृत्याः भर्तव्याः अयं उपस्कृतमांसादिभोजनशीलः ॥ ३ ॥ विवास्यत इति यत् एतच्छ्रुत्वा कः श्रद्दधेत् सत्यं मन्वीत । सत्यमिति वा ज्ञात्वा कस्य स्वपित्रादिभ्यो भयं न भवेत् ॥ ४ ॥ सर्वमादिशन् सुखदुःखेन योजयन् कृतांतो दैवं बलवानिति नूनमहं मन्ये । यत्र यस्मात् हे राम । अभिरामस्त्वं लोके कर्मलोकस्थितो वनं गमिष्यसि ॥ ५ ॥ आत्मभवः आत्मजः स्वमनःसंभूतः तवादर्शनमेव वर्धकत्वान्मारुतो यस्य सः विलापदुःखैः समिधः समिंधनं यस्य सः । धत्रर्थेकः । रुदिताश्रूण्येव हुता आहुतयो यस्मिन्सः चिंताहेतुकबाष्पमेव महाधूमो यस्य सः तवागमनचिंतजः । चिंतज इति बाहुलकात् ह्रस्वः । तव या आगमनचिंता तया जनितः । अदर्शन चिंतन इति पाठेपि अदर्शनजातचिंताजनित इत्यर्थः । परे त्वदर्शनस्य मारुतत्वेन निरूपणात्स चिंत्य इत्याहुः । निःश्वासरूपायासेन संधुक्षणात्संभवो वृद्धिर्यस्य सः । त्वया विहीनां मामधिकं कर्शयित्वा कृशां कृत्वा

अतुलः युक्तगुणः शोकाग्निर्मां धक्ष्यति हिमात्यये ग्रीष्मे चित्रभानुर्वह्निः सूर्यो वा ॥ ६ ॥ ७ ॥ ८ ॥ कथमिति । यथेत्यर्थः । क्वचित्तथैव पाठः ॥ ९ ॥ यथानिगदितं येनप्रकारेण निगदितं तद्वाक्यं श्रुत्वा आत्मानुगमनं श्रुत्वेति यावत् ॥ १० ॥ वंचितः वंचनया मद्वियोजनाद्दुःखं भापितः न वर्तयिष्यति न जीविष्यति ॥ ११ ॥ केवलं नृशंसः क्रौर्यमेव नतु तेनेहामुत्र सुखमित्यर्थः । मनसापि न कर्तव्यः न चिंतनीयः यतो विगर्हितः महापापहेतुत्वादतिनिंदितः ॥ १२ ॥ अतः यावदिति ॥ १३ ॥ १४ ॥ एवं वचनमुक्तः भर्तृशुश्रूषांगीकारवचनमुक्तः श्रावितः ॥ १५ ॥ उभयोस्तद्वचनावश्यकर्तव्यत्वे हेतुर्भर्ता गुरुरिति च यथायोग्यम् ॥ १६ ॥ पितृवाक्यकरणानंतरं त्वच्छुश्रूषापि कार्येत्याह इमानीति । विहृत्येत्यनेन वनवासस्य मृगयावल्लीलात्वं दर्शितम् । वचने स्थास्यामि वचनमनुष्ठास्यामि ॥ १७ ॥ एवमुक्ता पुत्रेणेति शेषः ॥ १८ ॥ अंगी

कथंहिधेनुःस्वंवत्संगच्छंतमनुगच्छति ॥ अहंत्वानुगमिष्यामियत्रवत्सगमिष्यसि ॥ ९ ॥ यथानिगदितंमात्रातद्वाक्यंपुरुषर्षभः ॥ श्रुत्वारामोऽब्रवीद्वाक्यंमातरंभृशदुःखिताम् ॥ १० ॥ कैकेय्यावंचितोराजामयिचारण्यमाश्रिते ॥ भवत्याचपरित्यक्तोननूनंवर्तयिष्यति ॥ ११ ॥ भर्तुःपुनःपरित्यागोनृशंसःकेवलंस्त्रियाः ॥ सभवत्यानकर्तव्योमनसापिविगर्हितः ॥ १२ ॥ यावज्जीवतिकाकुत्स्थःपितामेजगतीपतिः ॥ शुश्रूषाक्रियतांतावत्सहिधर्मःसनातनः ॥ १३ ॥ एवमुक्तातुरामेणकौसल्याशुभदर्शना ॥ तथेत्युवाचसुप्रीतारामम‌क्लिष्टकारिणम् ॥ १४ ॥ एवमुक्तस्तुवचनंरामोधर्मभृतांवरः ॥ भूयस्तामब्रवीद्वाक्यंमातरंभृशदुःखिताम् ॥ १५ ॥ मयाचैवभवत्याचकर्तव्यंवचनंपितुः ॥ राजाभर्तागुरुःश्रेष्ठःसर्वेषामीश्वरःप्रभुः ॥ १६ ॥ इमानितुमहारण्येविहृत्यनवपंचच ॥ वर्षाणिपरमप्रीत्यास्थास्यामिवचनेतव ॥ १७ ॥ एवमुक्ताप्रियंपुत्रंबाष्पपूर्णाननातदा ॥ उवाचपरमार्तातुकौसल्यासुतवत्सला ॥ १८ ॥ आसांराममसपत्नीनांवस्तुंमध्येनमेक्षमम् ॥ नयमामपिकाकुत्स्थवनंवन्यांमृगीमिव ॥ १९ ॥ यदितेगमनेबुद्धिःकृतापितुरपेक्षया ॥ तांतथारुदतींरामोऽरुदन्वचनमब्रवीत् ॥ २० ॥ जीवंत्याहिस्त्रियाभर्तादैवतंप्रभुरेवच ॥ भवत्याममचैवाद्यराजाप्रभवतिप्रभुः ॥ २१ ॥ नह्यनाथावयंराज्ञालोकनाथेनधीमता ॥ भरतश्चापिधर्मात्मासर्वभूतप्रियंवदः ॥ २२ ॥ भवतीमनुवर्तेतसहिधर्मरतःसदा ॥ यथामयितुनिष्क्रांतेपुत्रशोकेनपार्थिवः ॥ २३ ॥ श्रमंनावाप्नुयात्किंचिदप्रमत्तातथाकुरु ॥ दारुणश्चाप्ययंशोकोयथैनंनविनाशयेत् ॥ २४ ॥ राज्ञोवृद्धस्यसततंहितंचरसमाहिता ॥ व्रतोपवासनिरतायानारीपरमोत्तमा ॥ २५ ॥ भर्तारंनानुवर्तेतसाचपापगतिर्भवेत् ॥ भर्तुःशुश्रूषयानारीलभतेस्वर्गमुत्तमम् ॥ २६ ॥

कृतभर्तृसेवापि सपत्नीदुःखस्मरणात्पुना रामानुगमनमभिलषति आसामित्यादि । वन्यां वने भवाम् ॥ १९ ॥ यदि ते इत्याद्यर्थं पूर्वान्वायि । तां तथारुदतीं दृष्ट्वापि स्वयमरुदन् वचोऽब्रवीत् । रोदने कातर्यप्रकटनेन मातुः पुनरप्यनुगमनप्रत्याशाप्रसंगात् ॥ २० ॥ प्रभवति दंडादौ समर्थो भवति ॥ २१ ॥ धीमतेति । सनाथा इति शेषः । अथ सपत्नीमध्यवासो दुष्कर इत्यत्र परिहारमाह भरत इति ॥ २२ ॥ भवतीमिति । अतः कैकेयीकोपोऽकिंचित्कर इति भावः । यथा मयि निष्क्रांते श्रमं नाप्नुयात्तथा कुरु यथा चैनं राजानं शोको न विनाशयेत्तथा च कुरु ॥ २३ ॥ २४ ॥ द्विजस्य गायत्रीजपवत् स्त्रिया भर्तृशुश्रूषैव परं नित्या नान्यत्किंचिदित्युत तद्विरोध्यन्यदाचर्यमाणं प्रत्यवायजनकमपीत्याह व्रतेत्यादि । नित्याकरणजप्रत्यवायानर्थं सांगाप्यनित्यधर्मकृतिः परिहर्तुं न शक्नोतीतिभावः ॥ २५ ॥ २६ ॥

नित्यानुष्ठाने सत्यनित्याकरणेपि न परलोकनाश इत्याह अपि येति । निर्नमस्कारा भर्तृव्यतिरिक्तदेवादेर्नमस्काराद्युपचाररहिता देवपूजनात् विष्ण्वादिदेवपूजनात् सापि स्वर्गं लभते इति प्राक्तनेनान्वयः । एतमेवार्थं नियमविधिद्वारेण द्रढयति शुश्रूषामेवेति । तत्प्रीतिजनकं कर्मैवेत्यर्थः । तदेवाह प्रियहिते रतेति । हितपदेन पश्चादुक्तेनैतद्धनयति आपाततोऽप्रियमपि हितं कुर्यात् आपाततः प्रियमप्यहितं त्यजेदिति ॥ २७ ॥ तत्रमानमाह एष भर्तृसेवारूपो धर्मः स्त्रिया नित्य इति वेदे श्रुतः । लोके स्मृतौ स्मृतः तर्हि किं कर्मांतरं सर्वथा त्याज्यं नेत्याह अग्नीत्यादि । भर्तृसंमतेषु अग्निकार्येषु तेष्वेव च एवकारार्थः ॥२८॥ एवं भर्तृसेवा तत्परतया कालं ममागमनकालम् ॥ २९ ॥ कामम् ऐहिकविषयसुखम् ॥ ३० ॥ तस्यपुत्रमात्रासाध्यत्वादाह यदीति । अनेन दशरथ मरणस्य सन्निहितत्वं सूचितम् ॥ ३१ ॥ सुकृतां सुष्ठुकृतनिश्चयाम् ॥ ३२॥

अपियानिर्नमस्कारानिवृत्तादेवपूजनात् ॥ शुश्रूषामेवकुर्वीतभर्तुःप्रियहितेरता ॥ २७ ॥ एषधर्मःस्त्रियानित्योवेदेलोकेश्रुतःस्मृतः ॥ अग्निकार्येषुचसदासुमनोभिश्चदेवताः ॥ २८ ॥ पूज्यास्तेमत्कृतेदेविब्राह्मणाश्चैवसत्कृताः ॥ एवंकालंप्रतीक्षस्वममागमनकांक्षिणी ॥ २९ ॥ नियतानियताहाराभर्तृशुश्रूषणेरता ॥ प्राप्स्यसेपरमंकाममंमयिपर्यागतेसति ॥ ३० ॥ यदिधर्मभृतांश्रेष्ठोधारयिष्यतिजीवितम् ॥ एवमुक्तातुरामेणवाष्पपर्याकुलेक्षणा ॥ ३१ ॥ कौसल्यापुत्रशोकार्तारामंवचनमब्रवीत् ॥ गमनेसुकृतांबुद्धिंनतेशक्नोमिपुत्रक ॥ ३२ ॥ विनिवर्तयितुंवीरनूनंकालोदुरत्ययः ॥ गच्छपुत्रत्वमेकाग्रोभद्रंतेऽस्तुसदाविभो ॥ ३३ ॥ पुनस्त्वयिनिवृत्तेतुभविष्यामिगतक्लमा ॥ प्रत्यागतेमहाभागेकृतार्थेचरितव्रते ॥ ३४ ॥ पितुरानृण्यतांप्राप्तेस्वपिष्येपरमंसुखम् ॥ कृतांतस्यगतिःपुत्रदुर्विभाव्यासदाभुवि ॥ ३५ ॥ यत्त्वांसंचोदयतिमेवचआविद्धयराघव ॥ गच्छेदानींमहाबाहोक्षेमेणपुनरागतः ॥ ३६ ॥ नंदयिष्यसिमांपुत्रसाम्नाश्लक्ष्णेनचारुणा ॥ अपीदानींसकालःस्याद्वनात्प्रत्यागतंपुनः ॥ यत्त्वांपुत्रकपश्येयंजटावल्कलधारिणम् ॥ ३७॥ तथाहिरामंवनवासनिश्चितंददर्शदेवीपरमेणचेतसा ॥ उवाचरामंशुभलक्षणंवचोबभूवचस्वस्त्ययनाभिकांक्षिणी ॥ ३८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येअयोध्याकांडे चतुर्विंशःसर्गः॥ २४ ॥ ॥ छ ॥ ॥ साविनीयतमायाससुपस्पृश्यजलंशुचि ॥ चकारमातारामस्यमंगलानिमनस्विनी ॥ १ ॥

काल इष्टवियोगादिजनकः ॥ ३३ ॥ ३४ ॥ आनृण्यतां स्वार्थेष्यञ् ॥ ३५ ॥ मे वच आविध्य आच्छिद्य त्वां संचोदयति वनायेति शेषः । इति यत् अतः कृतांतस्य गतिर्दुर्विभाव्या ॥ ३६ ॥ श्लक्ष्णेन निर्मलेन चारुणा मनोहरेण साम्ना सांत्वेन वचनेन । शुक्लेनेति पाठांतरम् । अदर्शनासहिष्णुत्वात्प्रत्यागमनकाल इदानीमेव भवेदिति प्रार्थयते अपीति । येन कालेन प्रत्यागतं प्रत्यागमनं भवेत्स इत्यर्थः । अपीदानीमिति लोकोक्त्योवाच ॥ ३७॥ परमेण आदरवता धर्मशीलत्वाद्देवपरिरक्षणोद्यतत्वाच्च भगवत्संकल्पेनैव तथा तथा ज्ञानं तस्या इति बोध्यम् । स्वस्त्ययनं मंगलमभिकांक्षितुं शीलमस्त्यस्याः सा ॥ ३८ ॥ ॥ हलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुर्विंशः सर्गः॥ २४ ॥ ॥ छ ॥ ॥ मंगलकरणमेवाह सेति । आयासं तज्जनकं शोकं उपस्पृश्य आचम्य मंगलानि मंगलवचनानि ॥ १॥

सतां क्रमे सतां मार्गे ॥ २ ॥ ३ ॥ देवेष्वायतनेषु देवालयेषु प्रणमसे च चाद्रक्षितुमिच्छसि च ते च देवाः चादृषयः ॥ ४ ॥ गुणः सद्गुणः ॥ ५ ॥ मातृशुश्रूषयेति मातात्र कैकेयी ॥ ६ ॥ समिदादिपदेन तदधिष्ठात्र्यो देवता उपलक्ष्यंते क्षुपाः ह्रस्वशाखास्तरवः । शिफायुक्तवृक्षाः क्षुपा इत्यन्ये । ह्रदा इति जलाशयमात्रोपलक्षणम् त्वां रक्षंत्वित्यग्रिमेण संबंधः ॥७॥ पतंगाः पक्षिणः स्वस्ति इत्यस्य कुर्वंत्वित्यग्रिमेण संबंधः ॥८॥ धाता विराट् विधाता सृष्टिविधायकः ॥९॥ १०॥ ११॥ १२॥ १३॥ नक्षत्राणि रेवत्यादिनक्षत्राधिष्ठात्र्यो देवताः ग्रहाः सूर्यादयः ग्रहदेवताः तत्तदधिदेवताः । पुनरुक्तिरत्र पुत्रप्रेमपारवश्यान्न दोषाय । पाठांतरे

नशक्यतेवारयितुंगच्छेदानींरघूत्तम ॥ शीघ्रंचविनिवर्तस्ववर्तस्वचसतांक्रमे ॥ २ ॥ यंपालयसिधर्मंत्वंप्रीत्याचनियमेनच ॥ सवैराघवशार्दूलधर्मस्त्वामभिरक्षतु ॥ ३ ॥ येभ्यःप्रणमसेपुत्रदेवेष्वायतनेषुच ॥ तेचत्वामभिरक्षंतुवनेसहमहर्षिभिः ॥ ४ ॥ यानिदत्तानितेस्त्राणिविश्वामित्रेणधीमता ॥ तानित्वामभिरक्षंतुगुणैःसमुदितंसदा ॥ ५ ॥ पितृशुश्रूषयापुत्रमातृशुश्रूषयातथा ॥ सत्येनचमहाबाहोचिरंजीवाभिरक्षितः ॥ ६ ॥ समित्कुशपवित्राणिवेद्यश्चायतनानिच ॥ स्थंडिलानिचविप्राणांशैलावृक्षाःक्षुपाह्रदाः ॥ ७ ॥ पतंगाःपन्नगाःसिंहास्त्वांरक्षंतुनरोत्तम ॥ स्वस्तिसाध्याश्चविश्वेचमरुतश्चमहर्षिभिः ॥ ८ ॥ स्वस्तिधाताविधाताचस्वस्तिपूषाभगोर्यमा ॥ लोकपालाश्चतेसर्वेवासवप्रमुखास्तथा ॥ ९ ॥ ऋतवःषट्चतेसर्वेमासाःसंवत्सराःक्षपाः ॥ दिनानिचमुहूर्ताश्चस्वस्तिकुर्वंतुतेसदा ॥ १० ॥ श्रुतिःस्मृतिश्चधर्मश्चपातुत्वांपुत्रसर्वतः ॥ स्कंदश्चभगवान्देवःसोमश्चसबृहस्पतिः ॥ ११ ॥ सप्तर्षयोनारदश्चतेत्वांरक्षंतुसर्वतः ॥ तेचापिसर्वतःसिद्धादिशश्चसदिगीश्वराः ॥१२॥ स्तुतामयावनेतस्मिन्पांतुत्वांपुत्रनित्यशः ॥ शैलाःसर्वेसमुद्राश्चराजावरुणएवच ॥ १३ ॥ द्यौरंतरिक्षंपृथिवीवायुश्चसचराचरः ॥ नक्षत्राणिचसर्वाणिग्रहाश्चसहदैवतैः ॥ १४ ॥ अहोरात्रेतथासंध्येपांतुत्वांवनमाश्रितम ॥ ऋतवश्चापिषट्चान्येमासाःसंवत्सरास्तथा ॥ १५ ॥ कलाश्चकाष्ठाश्चतथातवशर्मदिशंतुते ॥ महावनेपिचरतोमुनिवेषस्यधीमतः ॥१६॥ तथादेवाश्चदैत्याश्चभवंतुसुखदाःसदा ॥ राक्षसानांपिशाचानांरौद्राणांक्रूरकर्मणाम् ॥ १७ ॥ क्रव्यादानांचसर्वेषांमाभूत्पुत्रकतेभयम् ॥ प्लवगावृश्चिकादंशामशकाश्चैवकानने ॥ १८॥ सरीसृपाश्चकीटाश्चमाभूवन्गहनेतव ॥ महाद्विपाश्चसिंहाश्चव्याघ्राऋक्षाश्चदंष्ट्रिणः ॥ १९ ॥ महिषाःशृंगिणोरौद्रानतेद्रुह्यंतुपुत्रक ॥ नृमांसभोजनारौद्रायेचान्येसर्वजातियाः ॥ २० ॥ माचत्वांहिंसिषुःपुत्रमयासंपूजितास्त्विह ॥ आगमास्तेशिवाःसंतुसिध्यंतुचपराक्रमाः ॥ २१ ॥ सर्वसंपत्तयोरामस्वस्तिमान्गच्छपुत्रक ॥ स्वस्तितेऽस्त्वांतरिक्षेभ्यःपार्थिवेभ्यःपुनःपुनः ॥ २२ ॥

प्ययमेवार्थः ॥ १४ ॥ १५ ॥ १६ ॥ ॥ १७ ॥ सर्वक्रव्यादसंबंधि भयं पुत्रक ते मा भूदित्यन्वयः ॥ १८ ॥ प्लवगाः वानराः दंशा वनमक्षिकाः गहने तव मा भूवन् मा संतु ऋक्षा भल्लूकाः ॥ १९ ॥ ते तुभ्यं सर्वजातियाः सर्वजातीयाः । सर्वजातय इतिपाठे क्रूरजंतव इति फलितार्थः ॥ २० ॥ आगमाः मार्गाः ते झटिति त्वदागमनयोग्या भवंत्वित्यभिप्रायेणैवमुक्तिः ॥ २१ ॥ सर्वसंपत्तयः वनवासापेक्षिताः फलमूलादिरूपाः संत्विति शेषः ।

पार्थिवेभ्यः पृथिवीभवसत्त्वेभ्यः ॥ २२ ॥ देवेभ्यः ये च ते परिपंथिनस्तेभ्यश्च स्वस्त्यस्तु इति योजना ॥ २३ ॥ ऋषिमुखाच्च्युता निर्गतास्त्वया गृहीताश्चेति शेषः ॥ २४ ॥ भूतकर्तृ ब्रह्म जगत्कारणं ब्रह्मेत्यर्थः ॥ २५ ॥ २६ ॥ ॥२७॥ २८ ॥ उपसंपादयामास होमायेति शेषः । अनामयमारोग्यमुद्दिश्येतिशेषः ॥ २९॥ बाह्यं बलिं होमस्थानाद्बहिर्भूतं लोकपालादिबलिम् । स्वस्तिवाच्यं स्वस्तिवाचनमुद्दिश्य मध्वादिभिरुपलक्षितान् द्विजान्कृत्वा ॥ ३० ॥ रामस्य वने स्वस्त्यस्त्वित्येवंरूपां वने स्वस्त्ययनक्रियां वाचयामासेत्यन्वयः ॥ ३१ ॥ काम्यां इच्छाविषयाम् ॥ ३२ ॥ वृत्रनाशे तद्रूपनिमित्ते ॥ ३३ ॥ प्रार्थयानस्य आर्षत्वान्मुगभावः । अनेन भावि महद्युद्धं तत्र जयश्च सूचितः ॥ ३४ ॥ विक्रमः पादविक्षेपः ॥ ३५ ॥ ३६ ॥ शुभमंगलं मंगलानामपि मंगलम् इति उक्त्वेति शेषः पुत्रस्य शिरसि शेषा अक्षताः शेष

सर्वेभ्यश्चैवदेवेभ्योयेचतेपरिपंथिनः ॥ शुक्रःसोमश्चसूर्यश्चधनदोथयमस्तथा ॥ २३ ॥ पातुत्वामर्चितारामदंडकारण्यवासिनम् ॥ अग्निर्वायुस्तथाधूमो मंत्राश्चर्षिमुखच्युताः ॥ २४ ॥ उपस्पर्शनकालेतुपांतुत्वांरघुनंदन ॥ सर्वलोकप्रभुर्ब्रह्माभूतकर्तृतथर्षयः ॥२५॥ येचशेषाःसुरास्तेतुरक्षंतुवनवासिनम् ॥ इतिमाल्यैःसुरगणान्गंधैश्चापियशस्विनी ॥ २६ ॥ स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना ॥ ज्वलनंसमुपादायब्राह्मणेनमहात्मना ॥ २७ ॥ हाव यामासविधिनाराममंगलकारणात् ॥ घृतंश्वेतानिमाल्यानिसमिधश्चैवसर्षपान् ॥ २८ ॥ उपसंपादयामासकौसल्यापरमांगना ॥ उपाध्यायःसवि धिनाहुत्वाशांतिमनामयम् ॥ २९ ॥ हुतहव्यावशेषेणबाह्यंबलिमकल्पयत् ॥ मधुदध्यक्षतघृतैःस्वस्तिवाच्यंद्विजांस्ततः ॥ ३० ॥ वाचयामासराम स्यवनेस्वस्त्ययनक्रियाम् ॥ ततस्तस्मैद्विजेंद्रायराममातायशस्विनी ॥ ३१ ॥ दक्षिणांप्रददौकाम्यांराघवंचेदमब्रवीत् ॥ यन्मंगलंसहस्राक्षेसर्वदे वनमस्कृते ॥ ३२ ॥ वृत्रनाशेसमभवत्तत्तेभवतुमंगलम् ॥ यन्मंगलंसुपर्णस्यविनताऽकल्पयत्पुरा ॥ ३३ ॥ अमृतंप्रार्थयानस्यतत्तेभवतुमंगलम् ॥ अमृतोत्पादनेदैत्यान्घ्नतोवज्रधरस्ययत् ॥ ३४ ॥ अदितिर्मंगलंप्रादात्तत्तेभवतुमंगलम् ॥ त्रिविक्रमान्प्रक्रमतोविष्णोरतुलतेजसः ॥ ३५ ॥ यदासी न्मंगलंरामतत्तेभवतुमंगलम् ॥ ऋषयःसागराद्वीपावेदालोकादिशश्चताः ॥ ३६ ॥ मंगलानिमहाबाहोदिशंतुशुभमंगलम् ॥ इतिपुत्रस्यशेषाश्चकृत्वा शिरसिभामिनी ॥ ३७ ॥ गंधैश्चापिसमालभ्यराममायतलोचना ॥ ओषधींचसुसिद्धार्थांविशल्यकरणींशुभाम् ॥ ३८ ॥ चकाररक्षांकौसल्यामंत्रैर भिजजापच ॥ उवाचापिप्रहृष्टेवसादुःखवशवर्तिनी ॥ ३९ ॥ वाङ्मात्रेणनभावेनवाचासंसज्जमानया ॥ आनम्यमूर्ध्निचाघ्रायपरिष्वज्ययशस्विनी ॥ ॥ ४० ॥ अवदत्पुत्रमिष्टार्थोगच्छरामयथासुखम् ॥ अरोगंसर्वसिद्धार्थमयोध्यांपुनरागतम् ॥ ४१ ॥ पश्यामित्वांसुखंवत्ससंधितंराजवर्त्मसु ॥ मंगलैरुपसंपन्नोवनवासादिहागतः ॥ वध्वाश्चममनित्यंत्वंकामान्संवर्धयाहिभो ॥ ४२ ॥

इत्यक्षतनामेति कतकः ॥ ३७ ॥ समालंभो विलेपनम् सिद्धार्थां दृष्टवीर्यां विशल्यकरणीमित्यन्वर्थनाभिकामोषधीं गुलकीकृत्य शुभां रक्षां चकार रक्षाहेतुत्वेन हस्तेबबंधेत्यर्थः ॥ ३८ ॥ तां मंत्रैरतिशयितां कर्तुं जजाप मंत्रानिति शेषः । उवाचापि मंत्रानिति शेषः । जपोत्तरं स्पष्टमपि मंत्रानुच्चारयामासेत्यर्थः । एतच्च तन्मंत्रार्थानुसंधानेन रामस्य हृत्प्रसादार्थम् प्रहृष्टेवेति हर्षापारमार्थ्यद्योती इवशब्दः ॥ ३९ ॥ तदेवाह वाङ्मात्रेणेति । संसज्जमानया आंतरखेदगद्गदया आनम्येति उच्चत्वात्पुत्रस्य ॥ ४० ॥ यद्वा वाल्मीकेरपि वर्णनीयमर्यादाभावात् उवाचेत्युक्तावपि पुनरवददित्युक्तिर्न दोषाय ॥ ४१ ॥ संधितं राजवर्त्मसु प्राप्तराज्य

मिति यावत् । मंगलै राज्ञोचितवस्त्राभरणैः वध्वाः सीतायाः संवर्ध संवर्धय याहि भो गच्छ भो । भो इति निपात आमंत्रणे ॥ ४२ ॥ ४३ ॥ मात्रा प्रदक्षिणकरणं रक्षार्थम् ॥ ४४ ॥ निपीड्य नमस्कृत्य तया श्रिया मातृकृतमंगलजशोभया ॥ ४५ ॥ मॉर्थेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचविंशः सर्गः ॥ २५ ॥ ॥ छ ॥ धर्मिष्ठे अतिशयेन धर्मवति ॥ १ ॥ आममंथ क्षोभयति स्म तत्र हेतुर्गुणवत्ता ॥ २ ॥ तत्सर्वं वनगमनवृत्तांतम् । तस्याश्च तस्यास्तु हृदि तदेव यौवराज्याभिषेचनं स्थितमभूदिति शेषः ॥ ३ ॥ देवकार्यं देवपूजाम् । देवकार्यकरणे हेतुः कृतज्ञत्वं राजधर्माभिज्ञत्वं च देवैरेवं राज्यप्रदानोपकृतत्वेन कृतज्ञतया तत्पूजा ॥ ४ ॥ ह्रिया सीतायै कथमिदमन्याय्यं स्वमातापितृकृतं कथयामीति लज्जयाऽवाङ्मुख इव ॥ ५ ॥ वेपमाना भर्तुर्विगतहर्षत्वावाङ्मुखत्वादिदर्शनात्कंपमाना ॥ ६ ॥ सोढुं गूढं कर्तुम् शोकम् अन्येषां प्राकृतानां शोकजनकं वस्तु शोकरूपकार्याजनकं कर्तुं न शशाक ततस्तदनंतरं सशोकस्तच्छोकजनकं वस्तु विवृततां प्रकटकार्यत्वं गतः । यद्वा स रामो

मयार्चितादेवगणाःशिवादयोमहर्षयोभूतगणाःसुरोरगाः ॥ अभिप्रयातस्यवनंचिरायतेहितानिकांक्षंतुदिशश्चराघव ॥ ४३ ॥ अतीवचाश्रुप्रतिपूर्णलोचनासमाप्यचस्वस्त्ययनंयथाविधि ॥ प्रदक्षिणंचापिचकारराघवंपुनःपुनश्चापिनिरीक्ष्यसस्वजे ॥ ४४ ॥ तयाहिदेव्याचकृतप्रदक्षिणोनिपीड्यमातुश्चरणौपुनःपुनः ॥ जगामसीतानिलयंमहायशाःसराघवःप्रज्वलितस्तयाश्रिया ॥ ४५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचविंशतितमःसर्गः ॥ २५ ॥ ॥ छ ॥ ॥ अभिवाद्यतुकौसल्यांरामःसंप्रस्थितोवनम् ॥ कृतस्वस्त्ययनोमात्राधर्मिष्ठेवर्त्मनिस्थितः ॥ १ ॥ विराजयन्राजसुतोराजमार्गंनरैर्वृतम् ॥ हृदयान्याममंथेवजनस्यगुणवत्तया ॥ २ ॥ वैदेहीचापितत्सर्वंनशुश्रावतपस्विनी ॥ तदेवहृदितस्याश्चयौवराज्याभिषेचनम् ॥ ३ ॥ देवकार्यंस्मसाकृत्वाकृतज्ञाहृष्टचेतना ॥ अभिज्ञाराजधर्माणांराजपुत्रीप्रतीक्षती ॥ ४ ॥ प्रविवेशाथरामस्तुस्ववेश्मसुविभूषितम् ॥ प्रहृष्टजनसंपूर्णं ह्रियाकिंचिदवाङ्मुखः ॥ ५ ॥ अथसीतासमुत्पत्यवेपमानाचतंपतिम् ॥ अपश्यच्छोकसंतप्तंचिंताव्याकुलितेंद्रियम् ॥ ६ ॥ तांदृष्ट्वासहिधर्मात्मानशशाकमनोगतम् ॥ तंशोकंराघवःसोढुंततोविवृततांगतः ॥ ७ ॥ विवर्णवदनंदृष्ट्वातंप्रस्विन्नममर्षणम् ॥ आहदुःखाभिसंतप्ताकिमिदानीमिदंप्रभो ॥ ८ ॥ अद्यबार्हस्पतःश्रीमान्युक्तःपुष्येणराघव ॥ प्रोच्यतेब्राह्मणैःप्राज्ञैःकेनत्वमसिदुर्मनाः ॥ ९ ॥ नतेशतशलाकेनजलफेननिभेनच ॥ आवृतंवदनंवल्गुच्छत्रेणाभिविराजते ॥ १० ॥ व्यजनाभ्यांचमुख्याभ्यांशतपत्रनिभेक्षणम् ॥ चंद्रहंसप्रकाशाभ्यांवीज्यतेनतवाननम् ॥ ११ ॥ वाग्मिनोबंदिनश्चापिप्रहृष्टास्त्वांनरर्षभ ॥ स्तुवंतोनाद्यदृश्यंतेमंगलैःसूतमागधाः ॥ १२ ॥

विवृताभिप्रायं गतः शुद्धमुक्तस्वभावोपि मायाख्यप्रकृत्यवतारसीतासान्निध्यादुद्बुद्धविक्षेपशक्तिरिव जात इत्यर्थः । अनेन हि नाट्येन प्रियाया अग्रे न किंचित्पुंसो गोप्यमिति लोकव्यवहारो दर्शितः ॥ ७ ॥ प्रस्विन्नं प्राप्तदुःखजस्वेदम् अमर्षणं शोकधारणाक्षममिव । यत्तु सीताया दुःखेन कथमेष कालं नयिष्यतीति धिया दुःखित इति विवर्णवदनत्वादिकमिति । तदनुचितं भगवति कथमपि दुःखासंबंधात्तादृशधियोप्यभावाच्च । व्यसनेषु मनुष्याणां भृशं भवति दुःखित इवेत्येवार्थ इति ममाभाति ॥ ८ ॥ बार्हस्पतो बृहस्पतिदेवताकः युक्तः चंद्रेणेति शेषः । युक्तस्तेन पुष्येणाभिषेक इति ब्राह्मणैः प्रोच्यते इत्यन्वयः । तज्जन्यसंतोषं विहाय दुर्मनाः केनासि ॥ ९ ॥ शतं शलाका यस्मिंश्छत्रे तेन छत्रेणावृतं सन्नविराजत इति योजना वल्गु सुंदरम् ॥ १० ॥ व्यजनाभ्यां वालव्यजनाभ्याम् शतपत्रं पद्मं तत्समेक्षणम् ॥ ११ ॥ १२ ॥

क्षौद्रं च दधि च तीर्थोदकमिश्रितमिति शेषः । मूर्धाभिषिक्तस्य शिरःस्नातस्य ॥ १३ ॥ श्रेणीमुख्याःपरिषन्मुख्याःसर्वत्र तत्कुत इति शेषः ॥ १४ ॥ पुष्परथः लीलागमनप्रयोजनो रथो नतु युद्धार्ह इत्यर्थः । तादृग्रथो निर्जिग मिषो राज्ञोग्रे भवति तस्मिन्सत्यामिच्छायामारोहति नोचेदग्रतो गच्छति ॥ १५ ॥ हस्ती कृष्णमेघप्रभो गिरिप्रभश्च ॥ १६ ॥ भद्रासनं पुरस्कृत्य पूजायुक्तं यथा भवति तथा गृहीत्वा यांतं ते पुरःसरं अग्रगं सेवकं न पश्यामि ॥ १७ ॥ यदाभिषेकः सज्जः इदानीं तस्मिन्नेवैतस्मिन्वर्तमानकाले उक्तराजचिह्नाभावो मुखवर्णश्चापूर्वः कदाप्यननुभूतो हर्षकाले हर्षाभावश्चेति इदं किमित्यर्थः ॥ १८ ॥ विलपंतीं दुःखेन भाषमाणाम् तत्रभवान्पूज्यस्तातो दशरथः अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ ॥ १९ ॥ उत्कटाप्रियश्रवणेन सीताया अत्यंतमोहो मा भूदिति विविधगुणकीर्तनेन संबोधयति कुले इत्यादि । येन क्रमेण हेतुना इदं प्रव्राजनमागतं तच्छृणु ॥ २० ॥ २१ ॥ नृपेणोद्यते प्रस्ताविते ममाभिषेके सज्जे सति तयाद्य स समयः प्राचीनो वरसंकेतः प्रचोदितः प्रवर्तितस्तेन प्रवर्तनेन राजा धर्मेण धर्ममार्गेण प्रतिनिर्जितः स्ववशः कृतः ॥ २२ ॥

नतेक्षौद्रंचदधिचब्राह्मणावेदपारगाः ॥ मूर्ध्निमूर्धाभिषिक्तस्यददतिस्मविधानतः ॥१३॥ नत्वांप्रकृतयःसर्वाःश्रेणीमुख्याश्चभूषिताः ॥ अनुव्रजितुमिच्छंतिपौरजानपदास्तदा ॥ १४ ॥ चतुर्भिर्वेगसंपन्नैर्हयैःकांचनभूषणैः ॥ मुख्यःपुष्परथोयुक्तःकिंनगच्छतितेग्रतः ॥ १५ ॥ नहस्तीचाग्रतःश्रीमान्सर्वलक्षणपूजितः ॥ प्रयाणेलक्ष्यतेवीरकृष्णमेघगिरिप्रभः ॥ १६ ॥ नचकांचनचित्रंतेपश्यामिप्रियदर्शन ॥ भद्रासनंपुरस्कृत्ययांतंवीरपुरःसरम् ॥१७॥ अभिषेकोयदासज्जःकिमिदानीमिदंतव ॥ अपूर्वोमुखवर्णश्चनप्रहर्षश्चलक्ष्यते ॥ १८ ॥ इतीवविलपंतींतांप्रोवाचरघुनंदनः ॥ सीतेतत्रभवांस्तातःप्रव्राजयतिमांवनम् ॥ १९ ॥ कुलेमहतिसंभूतेधर्मज्ञेधर्मचारिणि ॥ शृणुजानकियेनेदंक्रमेणाद्यागतंमम ॥ २० ॥ राज्ञासत्यप्रतिज्ञेनपित्रादशरथेनवै ॥ कैकेय्यैममात्रेतुपुरादत्तौमहावरौ ॥ २१ ॥ तयाद्यममसज्जेस्मिन्नभिषेकेनृपोद्यते ॥ प्रचोदितःससमयोधर्मेणप्रतिनिर्जितः ॥ २२ ॥ चतुर्दशहिवर्षाणिवस्तव्यंदंडकेमया ॥ पित्रामेभरतश्चापियौवराज्येनियोजितः ॥ २३ ॥ सोहंत्वामागतोद्रष्टुंप्रस्थितोविजनंवनम् ॥ भरतस्यसमीपेतेनाहंकत्थ्यःकदाचन ॥ २४ ॥ ऋद्धियुक्ताहिपुरुषानसहंतेपरस्तवम् ॥ तस्मान्नतेगुणाःकत्थ्याभरतस्याग्रतोमम ॥ २५ ॥ अहंतेनानुवक्तव्योविशेषेणकदाचन ॥ अनुकूलतयाशक्यंसमीपेतस्यवर्तितुम् ॥ २६ ॥

अस्तु प्रकृते किं तत्राह चतुर्दशेत्यादि । पित्रा वरनिर्जितपितृनियोगेन आद्यवरपालनरूपेण भरतश्च द्वितीयवरपालनरूपपितृनियोगेन यौवराज्ये नियोजितः मयेति शेषः । ज्येष्ठाज्ञां विना तस्य तल्लाभासंभवात ॥ २३ ॥ अथ सीताया गृहेऽवस्थितौ सुखजनकबुद्धिरुपदिश्यते भरतस्येत्यादिना । न कत्थ्यो न श्लाघनीयः ॥ २४ ॥ ते प्रसिद्धाः मम गुणाः ॥ २५ ॥ अहं ते नानुवक्तव्यो विशेषेण कदाचनेति प्राचीनः पाठः कतकेन दर्शितः । अहमस्मत्स्वरूपं ते त्वया विशेषेण विशिष्य कदाचन कदापि नानुवक्तव्यः सखीभिर्वार्ताप्रसंग इति शेषः । भरतस्याग्रत इत्यनुकर्षः । तत्र हेतुरनुकूलतयेति । मत्स्वरूपवर्णनं च तस्य प्रतिकूलमिति भावः । नापि त्वं तेन भर्तव्या विशेषेण कदाचनेति आधुनिकपाठस्तु न तथा चमत्कारी । विशेषेण न भर्तव्या किंतु बंधुसाधारण्येनेत्यर्थेऽनुकूलतयेत्युत्तरार्धस्य तथोपयो

गाभावात् ॥ २६ ॥ तदनुकूलाचरणं किमर्थमत आह तस्मा इति । नृपतिना दशरथेन स त्वया विशेषतः प्रसाद्यः चो हेतौ यतो नृपतिः ॥ २७ ॥ २८ ॥ याते गते ॥ २९ ॥ कल्यं उपसि ॥ ३० ॥ त्वयि गते त्वन्मातुर्नमस्कारेण किं फलम् सति तु त्वत्प्रातिकूल्याकरणे तत्फलमिति चेत्तत्राह धर्ममेवाग्रतः कत्वा धर्म एव तत्फलं मुख्यं बुद्धौ कृत्वा तत्संमानः कार्य इति भावः ॥ ३१ ॥ स्नेहेन मातृत्वप्रयुक्तेन प्रणयेन प्रकृष्टः स्नेहः प्रणयः संभोगः सेवा अन्नपानादिविशेषप्रदानम् ॥ ३२ ॥ भ्रात्रा पुत्रेण च समौ प्राणैः प्राणेभ्यः प्रियतरौ ॥ ३३ ॥ ३४ ॥ विपर्यये शीलादिविपर्यये ॥ ३५ ॥ जनान्प्राकृतान् संबंधले शहीनानिति यावत् ॥ ३६ ॥ ३७ ॥ यथा कस्यचिन्मद्वचसो व्यलीकं व्यलीकत्वं अनृतत्वं न कुरुषे तथेदमपि मे वचः कार्यं अनुष्ठेयमित्यर्थः । वचसोनृतत्वकरणं चाननुष्ठाने भवति ॥ ३८ ॥ ह्लैमानः ॥

तस्मैदत्तंनृपतिनायौवराज्यंसनातनम् ॥ सप्रसाद्यस्त्वयासीतेनृपतिश्चविशेषतः ॥ २७ ॥ अहंचापिप्रतिज्ञांतांगुरोःसमनुपालयन् ॥ वनमद्यैवयास्यामिस्थिरीभवमनस्विनि २८ ॥ यातेचमयिकल्याणिवनंमुनिनिषेवितम् ॥ व्रतोपवासपरयाभवितव्यंत्वयानघे ॥ २९ ॥ कल्यमुत्थायदेवानाकृत्वापूजांयथाविधि ॥ वंदितव्योदशरथःपितामममजनेश्वरः ॥ ३० ॥ माताचममकौसल्यावृद्धासंतापकर्शिता ॥ धर्ममेवाग्रतःकृत्वात्वत्तःसंमानमर्हति ॥ ३१ ॥ वंदितव्याश्चतेनित्यंयाःशेषाममममातरः ॥ स्नेहप्रणयसंभोगैःसमाहिममममातरः ॥ ३२ ॥ भ्रातृपुत्रसमौचापिद्रष्टव्यौचविशेषतः ॥ त्वयाभरतशत्रुघ्नौप्राणैःप्रियतरौमम ॥ ३३ ॥ विप्रियंचनकर्तव्यंभरतस्यकदाचन ॥ सहिराजाचवैदेहिदेशस्यचकुलस्यच ॥३४॥ आराधिताहिशीलेनप्रयत्नैश्चोपसेविताः ॥ राजानःसंप्रसीदंतिप्रकुप्यंतिविपर्यये ॥ ३५ ॥ औरस्यानपिपुत्रान्हित्यजंत्यहितकारिणः ॥ समर्थान्संप्रगृह्णंतिजनानपिनराधिपाः ॥ ३६ ॥ सात्वंवसेहकल्याणिराज्ञःसमनुवर्तिनी ॥ भरतस्यरताधर्मेसत्यव्रतपरायणा ॥ ३७ ॥ अहंगमिष्यामिमहावनंप्रियेत्वयाहिवस्तव्यमिहैवभामिनि ॥ यथाव्यलीकंकुरुषेनकस्यचित्तथात्वयाकार्यमिदंवचो मम ॥ ३८ ॥ इत्यार्षेश्रीम० वा० आ० अ० षड्विंशः सर्ग ॥२६॥ ॥ छ ॥

एवमुक्तातुवैदेहीप्रियार्हाप्रियवादिनी ॥ प्रणयादेवसंक्रुद्धाभर्तारमिदमब्रवीत् ॥ १ ॥ किमिदंभाषसेरामवाक्यंलघुतयाध्रुवम् ॥ त्वयायदपहास्यंमेश्रुत्वानरवरोत्तम ॥ २ ॥ वीराणांराजपुत्राणांशस्त्रास्त्रविदुषांनृप ॥ अनर्हमयशस्यंचनश्रोतव्यंत्वयेरितम् ॥ ३ ॥ आर्यपुत्रपितामाताभ्रातापुत्रस्तथास्नुषा ॥ स्वानिपुण्यानिभुंजानाःस्वंस्वंभाग्यमुपासते ॥ ४ ॥ भर्तुर्भाग्यंतुनार्येकाप्राप्नोतिपुरुषर्षभ ॥ अतश्चैवाहमादिष्टावनेवस्तव्यमित्यपि ॥ ५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वा० आ० अ० षड्विंशः सर्गः ॥ २६ ॥ ॥ छ ॥ ॥ एवं रामेण गृहवासे नियुक्ता ममापि वनवास एव धर्मतो न्यायप्राप्त इति सीताह एवमित्यादि । प्रणयात्स्नेहादेव संक्रुद्धा कथं मम पृथक्स्थितिमादिशतीत्यमर्षवती ॥ १ ॥ स एवामर्षो दर्श्यते किमिति । लघुतया मयि क्षुद्रत्वालंबनेन इदं किं भाषसे किंच हे नरवरोत्तम त्वया यदुक्तं तच्छ्रुत्वा मे मम अपहास्यं अतिशयितो हासो जायते ॥ २ ॥ यत् त्वयेरितं तत् वीराणां अनर्हमयशस्यं चातो न श्रोतव्यं श्रोतुमयोग्यम् ॥ ३ ॥ कुत एवं तत्राह आर्यपुत्रेत्यादि । पित्रादयः स्वानि पुण्यानि स्वस्य कर्मफलानि भुंजानाः स्वं स्वं भाग्यं स्वानुष्ठितं कर्मैवोपासते उपजीवंति न पुत्राद्यनुष्ठितं तत्र तेषां सहाधिकाराभावात् ॥ ४ ॥ एका नारी तु भर्त्रा सहाधिकाराद्भर्तुर्भाग्यं भर्त्रनुष्ठितं कर्मफलं प्राप्नोति अतस्तव वनवासादेशेनैव

त्वत्पितृभ्यां सर्वकर्मणि सहाधिकारादहमपि वने वस्तव्यमित्यादिष्टैव तथैव ममापि गुरुत्वात्स आदेशोनुल्लंघ्य एवेति भावः ॥ ५ ॥ यदेवमतो न पित्रादिरिहलोके प्रेत्य परलोके च नारीणां गतिः किंतु एकः पतिरेव सदा गतिः ॥ ६ ॥ अतो यदि त्वमिति । मृद्नंती कुशेत्यनेन पद्भ्यामेव गमिष्यामीति न च ते दुःखं दास्यामीति च ध्वनितम् ॥ ७ ॥ स्त्रिया वनगमनसाहसं कथमित्यक्षांतिरीर्ष्या तां स्ववाक्योल्लंघनेन रोषं च बहिष्कृत्य त्यक्त्वा विस्रब्धो निःशंको मां नय । तत्र हेतुगर्भं विशेषणम् वीरेति । स्ववीरत्वस्य लोके ख्यापनाय अन्यथा कुतस्तत्ख्यातिरिति ध्वनिरत्र । त्यागप्रयोजकं पापं च मयि न विद्यते । ननु भुक्तभोगया त्वया वने किं प्रयोजनमत आह भुक्तशेषमुदकमिव । यथा दुष्प्रापपानीयकांतारयायिना पीतशेषं कमंडलुनिष्ठमुदकमवश्यं नेयमेव तथाहमपि त्वया नेयैव तरुणत्वादिति गूढहासोक्तिः ॥ ८ ॥ अतोपि मे वनगमनमेवोचितमित्याह प्रासादाग्रे स्थितापेक्षयेति शेषः । विमानैर्वा वैहायसगतेन वा आकाशगमनेन उपलक्षिताणिमाद्यष्टसिद्ध्यपेक्षयेति शेषः । सर्वावस्थागताभर्तुः अपीति शेषः । विष्णोरभक्तिकावस्था सर्वावस्थेति गीयत इत्यभिधानात् । तां गतस्यात एव आ ईषद्भर्तुः । भर्तुरित्यंतमेकं पदम् । अथवा पृथक्पदे श्रुत्युक्तधर्माननुष्ठानरूपां तां गतापीति योजना । सकलभर्तृधर्मरहितस्यापि पत्युः पादच्छाया पादसेवनमेवेतरधर्मा

नपितानात्मजोवात्मानमातानसखीजनः ॥ इहप्रेत्यचनारीणांपतिरेकोगतिःसदा ॥ ६ ॥ यदित्वंप्रस्थितोदुर्गंवनमद्यैवराघव ॥ अग्रतस्तेगमिष्यामिमृद्नंतीकुशकंटकान् ॥ ७ ॥ ईर्ष्यारोषंवहिष्कृत्यभुक्तशेषमिवोदकम् ॥ नयमांवीरविस्रब्धःपापंमयिनविद्यते ॥ ८ ॥ प्रासादाग्रेविमानैर्वावैहायसगतेनवा ॥ सर्वावस्थागताभर्तुःपादच्छायाविशिष्यते ॥ ९ ॥ अनुशिष्टास्मिमात्राचपित्राचविविधाश्रयम् ॥ नास्मिसंप्रतिवक्तव्यावर्तितव्यंयथामया ॥ १० ॥ अहंदुर्गंगमिष्यामिवनंपुरुषवर्जितम् ॥ नानामृगगणाकीर्णंशार्दूलगणसेवितम् ॥ ११ ॥ सुखंवनेनिवत्स्यामियथैवभवनेपितुः ॥ अचिंतयंतीत्रींल्लोकांश्चिंतयंतीपतिव्रतम् ॥ १२ ॥ शुश्रूषमाणातेनित्यंनियताब्रह्मचारिणी ॥ सहरंस्येत्वयावीरवनेषुमधुगंधिषु ॥ १३ ॥ त्वंहिकर्तुंवनेशक्तोरामसंपरिपालनम् ॥ अन्यस्यापिजनस्येहकिंपुनर्ममर्मानद ॥ १४ ॥ साहंत्वयागमिष्यामिवनमद्यनसंशयः ॥ नाहंशक्यामहाभागनिवर्तयितुमुद्यता ॥ १५ ॥ फलमूलाशनानित्यंभविष्यामिनसंशयः ॥ नतेदुःखंकरिष्यामिनिवसंतीत्वयासदा ॥ १६ ॥ अग्रतस्तेगमिष्यामिभोक्ष्येभुक्तवतित्वयि ॥ इच्छामिपरतःशैलान्पल्वलानिसरांसिच ॥ १७ ॥ द्रष्टुंसर्वत्रनिर्भीतात्वयानाथेनधीमता ॥ हंसकारंडवाकीर्णाःपद्मिनीःसाधुपुष्पिताः ॥ ॥ १८ ॥ इच्छेयंसुखिनीद्रष्टुंत्वयावीरेणसंगता ॥ अभिषेकंकरिष्यामितासुनित्यमनुव्रता ॥ १९ ॥

पेक्षया स्त्रिया विशिष्यते अधिकं भवति । श्रुतिस्मृत्योः सर्वपरित्यागेन भर्तृसेवाया एव स्त्रीणां नित्यत्वबोधनादिति भावः ॥ ९ ॥ मद्गुरूपदेशोप्येवमेवेत्याह अनुशिष्टेत्यादि । विविधाश्रयं नानाविधावस्थभर्तृनित्याश्रयमनुशिष्टास्मि अतो भर्तरि मया यथोपदिष्टं वर्तितव्यं तथा संप्रति नो वक्तव्यास्मि नोपदेष्टव्यास्मि ॥ १० ॥ यदेवमतोहमिति । गमिष्यामि त्वद्गमनमन्विति शेषः ॥ ११ ॥ त्रींल्लोकानचिंतयंती त्रैलोक्यैश्वर्यमप्यगणयंती पतिव्रतं पत्या सह वासरूपं व्रतं चिंतयंती अपेक्षमाणा ॥ १२ ॥ ब्रह्मचारिणी तपश्चरणशीला नियता त्वदुपदिष्टनियमयुक्ता मधुगंधिषु मकरंदसुरभिषु ॥ १३ ॥ अन्यस्यापि जनस्य जीवसमूहस्य ॥ १४ ॥ न निवर्तयितुं शक्या न्यायप्राप्तानुगमनत्वात् । त्वच्छक्तिरूपत्वादिति गूढोभिप्रायः । उद्यता वनं गंतुमिति शेषः ॥ १५ ॥ दुःखं न करिष्यामि विशिष्टान्नपानादीच्छयेति शेषः । त्वया सह शक्तिरूपत्वात्सदा वसंती दुःखमयकार्यापि यथापूर्वं न कदापि दुःखं कृतवती एवमग्रेपि न करिष्यामीति भावः ॥ १६ ॥ सरांसि चेत्यस्य द्रष्टुमित्यनेनान्वयः ॥ १७ ॥ कारंडवाः जलकुक्कुटाः ॥ १८ ॥ अभिषेकं करिष्यामि तासु

पद्मिनीषु इति शेषः ॥ १९ ॥ वर्षसहस्राणि शतं वा त्वया सह वसंती तेषां व्यतिक्रमं वनवासदुःखं न वेत्स्यामि किंतु क्षणमिव तावंतं कालं नेष्यामीति भावः ॥ २० ॥ स्वर्गोपि न मे मतः त्वया विनेति शेषः । तदेव विवृणोति स्वर्गेपि चेति ॥ २१ ॥ मृगैरायुतं मृगैरासमंताद्युतं युक्तम् वानरवारणैश्च युक्तमिति शेषः । संमता तवेति शेषः । त्वदाज्ञा वर्तिनीति यावत् ॥ २२ ॥ त्वया वियुक्तामित्यादि त्वद्वियोगे मरणविषयनिश्चितमतिं याचनां मामिकां वनानुगमनयाचनां साधु कुरुष्व चारितार्थां संपादय मया क्रियमाणादतोनुगमनात्ते गुरुता भारो न भविष्यति ॥ २३ ॥ तथा न्याययुक्तं न निनीषति स्म न नेतुमैच्छत् । अतएवास्या निवर्तने निवर्तनरूपप्रयोजननिमित्तं वनवासस्य दुःखतां दुःखजनकतां प्रति सत्संभवात् बहुहेतुजातमुवाचेत्यर्थः ॥ २४ ॥ ॥ वैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तविंशः सर्गः ॥ २७ ॥ ॥ छ ॥ ॥ छ ॥ स इति । न नेतुं कुरुते बुद्धिं न नेतुं कुरुते इव ॥ १ ॥ २ ॥ महाकुलीनेत्याद्युक्तिः स्ववाक्यांगीकारप्रयोजना

सहत्वयाविशालाक्षरंस्येपरमनंदिनी ॥ एवंवर्षसहस्राणिशतंवापित्वयासह ॥ २० ॥ व्यतिक्रमंनवेत्स्यामिस्वर्गोपिहिनमेमतः ॥ स्वर्गेपिचविनावासो भवितायदिराघव ॥ त्वयाविनानरव्याघ्रनाहंतदपिरोचये ॥ २१ ॥ अहंगमिष्यामिवनंसुदुर्गमंमृगायुतंवानरवारणैश्च ॥ वनेनिवत्स्यामियथापितुर्गृहे तवैवपादावुपगृह्यसंमता ॥ २२ ॥ अनन्यभावामनुरक्तचेतसंत्वयावियुक्तांमरणायनिश्चिताम् ॥ नयस्वमांसाधुकुरुष्वयाचनांनातोमयातेगुरुताभ विष्यति ॥ २३ ॥ तथाब्रुवाणामपिधर्मवत्सलांनचस्मसीतांनृवरोनिनीषति ॥ उवाचचैनांबहुसन्निवर्तनेवनेनिवासस्यचदुःखितांप्रति ॥ २४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेसप्तविंशःसर्गः ॥ २७ ॥ सएवंब्रुवतींसीतांधर्मज्ञांधर्मवत्सलः ॥ ननेतुंकुरुतेबुद्धिंवनेदुःखा निचिंतयन् ॥ १ ॥ सांत्वयित्वाततस्तांतुबाष्पदूषितलोचनाम् ॥ निवर्तनार्थेधर्मात्मावाक्यमेतदुवाचह ॥ २ ॥ सीतेमहाकुलीनासिधर्मेचनिरतासदा ॥ इहाचरस्वधर्मंत्वंयथामेमनसःसुखम् ॥ ३ ॥ सीतेयथात्वांवक्ष्यामितथाकार्यंत्वयाऽबले ॥ वनेदोषाहिबहवोवसतस्तान्निबोधमे ॥ ४ ॥ सीतेविमुच्यतामेषावनवासकृतामतिः ॥ बहुदोषंहिकांतारंवनमित्यभिधीयते ॥ ५ ॥ हितबुद्ध्याखलुवचोमयैतदभिधीयते ॥ सदासुखंनजानामिदुः खमेवसदावनम् ॥ ६ ॥ गिरिनिर्झरसंभूतागिरिनिर्दरिवासिनाम् ॥ सिंहानांनिनदादुःखाःश्रोतुंदुःखमतोवनम् ॥ ७ ॥ क्रीडमानाश्चविस्रब्धामत्ताः शून्येतथामृगाः ॥ दृष्ट्वासमभिवर्ततेसीतेदुःखमतोवनम् ॥ ८ ॥ सग्राहाःसरितश्चैवपंकवत्यस्तुदुस्तराः ॥ मत्तैरपिगजैर्नित्यमतोदुःखतरंवनम् ॥ ९ ॥ लताकंटकसंकीर्णाःकृकवाकूपनादिताः ॥ निरपाश्चसुदुःखाश्चमार्गादुःखमतोवनम् ॥ १० ॥

इहैव स्थित्वा यथा मे मम मनसः सुखं भवति तथा मदागमनमुद्दिश्य स्वधर्मं चर धर्ममेवाचर ॥ ३ ॥ हि यतो वने बहवो दोषाः क्लेशा अतो मदुक्तं कार्यमित्यन्वयः ॥ ४ ॥ कांतारं गहनत्वाद्दुष्प्रवेशं वनं बहुदोषमित्यभिधीयत इति योजना । सीते इति कलत्रनामग्रहणमपि दुःखाकुलचित्तत्वनाटनेन न दोषाय ॥ ५ ॥ हितबुद्ध्या एतदभिधीयते न तु त्वद्धरणादिभयासोपाधिनेत्यर्थः । सदा सर्वकालं सुखं वने नास्ति सुखं सुखदं न भवति किंतु दुःखं दुःखदमेवेत्येव जानामि निश्चिनोमि ॥ ६ ॥ गिरिनिर्झरा गिरिनद्यस्तन्निनदैः संभूताः प्रभूताः गिरिनिर्दरिवासिनां सिंहानां निनदाः श्रोतुं दुःखा अतो वनं दुःखं दुःख जनकम् ॥ ७ ॥ विस्रब्धाः निःशंकाः दृष्ट्वा मनुष्यं दृष्ट्वा समभिवर्तंते हंतुं संमुखमायांति ॥ ८ ॥ सग्राहकत्वं पंकवत्त्वं च दुस्तरत्वे हेतुः । नित्यं गजैरित्यस्य युक्तमिति शेषः ॥ ९ ॥ कृकवाकुर्वनकुक्कुटः ।

सरट इत्यन्ये । निरपाः निर्गतोदकाः । ऋक्पूरित्यप्समासांतः ॥ १० ॥ स्वयंभग्नासु स्वयंपतितशीर्णपर्णमयशय्यास्विति यावत् । श्रमखिन्नेन दिवा फलाद्यानयनश्रमखिन्नेन सुप्यते वनवासिना जनेनेति शेषः । तेन तत्रापि स श्रमस्तदेव शयनं चेति सममेवेति ध्वनितम् ॥ ११ ॥ वृक्षावपतितैः वृक्षेभ्यः स्वयमेव पतितैः । अहोरात्रं प्रातःसायम् ॥ १२ ॥ यथाप्राणेन यथाबलानुसारेण । केशसंस्काराभावाज्जटाभारकरणम् ॥ १३ ॥ प्रतिपूजनं कार्यं तेन तदर्थसामग्रीसंपादनक्लेशो ध्वनितः ॥ १४ ॥ कालेकाले प्रातःकालादौ नियमेनैव चरतां कालक्षेपं कुर्वतां त्रिरभिषेकः कार्यः त्रिषवणस्नानं कर्तव्यमित्यर्थः ॥ १५ ॥ उपहारः पूजा आर्षों विधिरुंछादिवृत्तिः । वेद्यामित्यनेन तत्करणदुःखं ध्वनितम् ॥ १६ ॥ तेन वन्यपदार्थेन यथाहारैः यथालब्धाहारैः ॥ १७ ॥ तिमिरं रात्रिष्विति शेषः ॥ १८ ॥ बहुरूपाः सरीसृपाः संति

सुप्यतेपर्णशय्यासुस्वयंभग्नासुभूतले ॥ रात्रिषुश्रमखिन्नेनतस्माद्दुःखमतोवनम् ॥११॥ अहोरात्रंचसंतोषःकर्तव्योनियतात्मना ॥ फलैर्वृक्षावपातितैः सीतेदुःखमतोवनम् ॥१२॥ उपवासश्चकर्तव्योयथाप्राणेनमैथिलि ॥ जटाभारश्चकर्तव्योवल्कलांबरधारणम् ॥ १३ ॥ देवतानांपितॄणांचकर्तव्यंविधिपूर्वकम् ॥ प्राप्तानामतिथीनांचनित्यशःप्रतिपूजनम् ॥ १४ ॥ कार्यस्त्रिरभिषेकश्चकालेकालेचनित्यशः ॥ चरतांनियमेनैवतस्माद्दुःखतरंवनम् ॥ ॥ १५ ॥ उपहारश्चकर्तव्यःकुसुमैःस्वयमाहृतैः ॥ आर्षेणविधिनावेद्यांसीतेदुःखमतोवनम् ॥ १६ ॥ यथालब्धेनकर्तव्यःसंतोषस्तेनमैथिलि ॥ यथाहारैर्वनचरैःसीतेदुःखमतोवनम् ॥१७॥ अतीववातस्तिमिरंबुभुक्षाचास्तिनित्यशः ॥ भयानिचमहांत्यत्रअतोदुःखतरंवनम् ॥१८॥ सरीसृपाश्चबहवोबहुरूपाश्चभामिनि ॥ चरंतिपथितेदर्पात्ततोदुःखतरंवनम् ॥१९॥ नदीनिलयनाःसर्पानदीकुटिलगामिनः ॥ तिष्ठंत्यावृत्त्यपंथानमतोदुःखतरंवनम् ॥ ॥ २० ॥ पतंगावृश्चिकाःकीटादंशाश्चमशकैःसह ॥ बाधंतेनित्यमबलेसर्वंदुःखमतोवनम् ॥ २१ ॥ द्रुमाःकंटकिनश्चैवकुशाःकाशाश्चभामिनि ॥ वनेव्याकुलशाखाग्रास्तेनदुःखमतोवनम् ॥ २२ ॥ कायक्लेशाश्चबहवोभयानिविविधानिच ॥ अरण्यवासेवसतोदुःखमेवसदावनम् ॥ २३ ॥ क्रोधलोभौविमोक्तव्यौकर्तव्यातपसेमतिः ॥ नभेतव्यंचभेतव्येदुःखंनित्यमतोवनम् ॥ २४ ॥ तदलंतेवनंगत्वाक्षेमंनहिवनंतव ॥ विमृशन्निवपश्यामिबहुदोषकरंवनम् ॥ २५ ॥ वनंतुनेतुंनकृतामतिर्यदाबभूवरामेणतदामहात्मना ॥ नतस्यसीतावचनंचकारतंततोऽब्रवीद्राममिदंसुदुःखिता ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टाविंशः सर्गः ॥ २८ ॥ ॥ छ ॥ एतत्तुवचनंश्रुत्वासीतारामस्यदुःखिता ॥ प्रसक्ताश्रुमुखी मंदमिदंवचनमब्रवीत् ॥ १ ॥ ये त्वयाकीर्तितादोषावनेवस्तव्यतांप्रति ॥ गुणानित्येवतान्विद्धितवस्नेहपुरस्कृता ॥ २ ॥

ते च मार्गमध्ये दर्पाच्चरंति ॥ १९ ॥ निलयनं वासस्थानं । नदीवत्कुटिलगतयः ॥ २० ॥ अबले इत्यनेन तन्निवारणासामर्थ्यं ध्वनितम् ॥ २१ ॥ व्याकुलशाखाग्रत्वं यथायोगं द्रुमेषु कुशकाशयोश्च बोध्यम् ॥ २२ ॥ २३ ॥ भेतव्ये भेतव्यविषये ॥ २४ ॥ अलं गत्वा न गंतव्यमित्यर्थः । विमृशन्दोषान्विचारयन् तान्दोषानिहस्थोऽपि पश्यामीवातो बहुदोषकरं वनमिति ब्रवीमीति शेषः ॥ २५ ॥ रामेण यदा वने नेतुं मति र्न कृता बभूव तदा सीता तस्य वचनं न चकार नांगीचकार ततो हेतोरिदमब्रवीत् ॥ २६ ॥ चरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टाविंशः सर्गः ॥ २८ ॥ ॥ छ ॥ ॥ एतदिति ॥ १ ॥ वने वस्तव्यतां वासं प्रति त्वया ये दोषाः कीर्तितास्तान्मां प्रति गुणानेव विद्धि यतोऽहं तव स्नेहेन पुरस्कृता त्वन्निष्ठस्नेहविषया । अनेन त्वत्स्नेह

विषयस्य दोषपदार्थो न कोपीति भावः । यद्वा यतस्त्वद्विषयकस्नेहेनाग्रगा इत्यर्थः ॥ २ ॥ तदेवाह मृगा इत्यादि ॥ ३ ॥ अदृष्टपूर्वं तावकं रूपं येषां तत्त्वात् रूपं दृष्ट्वेति । स्थाने हृषीकेश तव प्रकीर्त्यैति न्याया येरामन्यकर्तृकत्वत्स्मरणेन भयं तेषां साक्षात्त्वद्दर्शने भयमित्यर्थसिद्धमिति ध्वनितम् । तव सर्वे हि बिभ्यति अनेन यद्भीषोदेति सूर्य इत्यर्थो ध्वनितः ॥ ४ ॥ गुरुजनाज्ञया इयं सीता मम सुता छायेवानुगता सदेति सूचितपित्राद्याज्ञया उक्तरीत्या त्वत्पित्राद्याज्ञया त्वद्वियोगेन हेतुना ॥ ५ ॥ आद्योपिर्लोकोक्तौ ॥ ६ ॥ एवंविधं पतिहीनाया जीवनमशक्यमित्येवंरूपं त्वया दर्शितं भरतानुकूलतयात्र वासस्थित्युपदेशेनातोहं त्वया सह यास्यामि त्वदुपदिष्टभरतानुकूल्येन स्थातुमशक्यत्वादिति भावः । केचित्तु एवंविधं वनवासदुःखं कामं त्वया मम दर्शितं यद्यपि तथापि तादृशवने पतिहीना प्रबलभर्तृहीना न जीवितुं शक्ष्यति न तु मादृशी प्रबलभर्तृकेति अहं वनं यास्याम्येवेति भाव इत्याहुः ॥ ७ ॥ अथापि वनस्य सदोषत्वेपि वने त्वया वस्तव्यं किलेति ब्राह्मणानां सत्यं वचनं पूर्वं पितृगेहे निवसंत्या मया श्रुतमतोऽवश्यंभावित्वान्मम वनवासस्य न दोषगणनेति भावः ॥ ८ ॥ तदेव पुनर्द्रढयति लक्षणिभ्य इति । सामुद्रिकलक्षणविद्भ्यः वचनं वनवाससंपादकलक्षणसत्ताविषयकं वचनम् । नित्यमेव इतः प्रागपि ॥ ९ ॥ स वनवासस्यादेशो ब्राह्मणोक्तो मया

मृगाःसिंहागजाश्चैवशार्दूलाःशरभास्तथा ॥ चमराःसृमराश्चैवयेचान्येवनचारिणः ॥ ३ ॥ अदृष्टपूर्वरूपत्वात्सर्वेतेतवराघव ॥ रूपंदृष्ट्वापसर्पेयुस्तवसर्वेहिबिभ्यति ॥ ४ ॥ त्वयाचसहगंतव्यंमयागुरुजनाज्ञया ॥ त्वद्वियोगेनमेरामत्यक्तव्यमिहजीवितम् ॥ ५ ॥ नहिमांत्वत्समीपस्थामपिशक्तोपिराघव ॥ सुराणामीश्वरःशक्रःप्रधर्षयितुमोजसा ॥ ६ ॥ पतिहीनातुयानारीनसाशक्ष्यतिजीवितुम् ॥ काममेवंविधंरामत्वयाममनिदर्शितम् ॥ ७ ॥ अथापिचमहाप्राज्ञब्राह्मणानांमयाश्रुतम् ॥ पुरापितृगृहेसत्यंवस्तव्यंकिलमेवने ॥ ८ ॥ लक्षणिभ्योद्विजातिभ्यःश्रुत्वाहंवचनंगृहे ॥ वनवासकृतोत्साहानित्यमेवमहाबल ॥ ९ ॥ आदेशोवनवासस्यप्राप्तव्यःसमयाकिल ॥ सात्वयासहभर्त्राहंयास्यामिप्रियनान्यथा ॥ १० ॥ कृतादेशाभविष्यामिगमिष्यामित्वयासह ॥ कालश्चायंसमुत्पन्नःसत्यवान्भवतुद्विजः ॥ ११ ॥ वनवासेहिजानामिदुःखानिबहुधाकिल ॥ प्राप्यंतेनियतंवीरपुरुषैरकृतात्मभिः ॥ १२ ॥ कन्ययाचपितुर्गेहेवनवासःश्रुतोमया ॥ भिक्षिण्याःशमवृत्तायाममातुरिहाग्रतः ॥ १३ ॥ प्रसादितश्चैवपूर्वंत्वंमेबहुतिथंप्रभो ॥ गमनंवनवासस्यकांक्षितंहिसहत्वया ॥ १४ ॥

प्राप्तव्यः किल भाविनोन्यथाभावाभावात् । तस्मात्त्वया सह यास्यामि इदमन्यथा न कथमप्यन्यथा न भविष्यतीत्यर्थः । अत्राज्ञापर्यायादेशशब्देन ब्राह्मणोक्तिस्त्वदाज्ञैव तव सर्वांतर्यामित्वादिति सूचितम् । किंचावतारकरणसमकालिकोयं तवादेशोद्यतनरात्रिशेषकालिकश्चादेश इति ध्वनितम् ॥ १० ॥ तदेवाह कृतेति । कृतादेशा अनुष्ठिताज्ञा अन्यथा प्रतिज्ञाताचरणाभावे दोषाभावो ममापि तवैव स्यादिति भावः । अतस्त्वया सह गमिष्यामि समुत्पन्नः संप्राप्तः पूर्वकल्पितवनवासस्येति शेषः । द्विज इति जात्यभिप्रायेण अत्र द्विजपदेन रावणोपि तेन यच्छ्रेतद्वीपे तेनोक्तं लक्ष्मीनिमित्तं त्वत्तो मे वधोस्त्विति तत्सत्यं भवत्वित्यपि गूढं सूचितम् ॥ ११ ॥ इति तात्त्विकमर्थमुक्त्वा पुनर्लोकानुसारेणाह वनेत्यादि । हिरवार्थे । किलेति निश्चये । वनवासे बहुधा दुःखानि संतीति निश्चितं जानाम्येव तथापि तान्यकृतात्मभिरजितेंद्रियैः पुरुषैः स्त्रीसाहित्यवशात्प्राप्यंते अत्र पुरुषप्रकरणाभावेपि तदुक्तिस्त्वयापि सा बुद्धिर्वनवासदुःखं दृष्ट्वा न निवर्तनीयेति ध्वनयितुम् ॥ १२ ॥ ननु लक्षणज्ञानां भ्रमो भवेत्तत्राह कन्यया चेति । भिक्षिण्याः शमवृत्तायाः शमवदाचारायास्तापस्याः तपोयुक्तत्वेन तस्या भ्रमो न संभवतीति भावः । अत्रत्यमिहेत्युत्तरश्लोकान्वयि ॥ १३ ॥ इह अस्मिन्गृहे पूर्वमेव त्वंमे मया बहुतिथं बहुवारं वनवासस्य लीलार्थं वनगमनं प्रतिप्रसादितः अतस्त्वया

सह वनगमनं मे कांक्षितम् हि निश्चयेन इति जानीहीति शेषः ॥ १४ ॥ हे राघव ! ते भद्रम् अहं गमनंप्रति कृतक्षणास्मि कृतानुमतिकास्मि वने वासो यस्य तादृशस्य शूरस्य तव चर्या शुश्रूषा मम रोचते हि तादृशस्य शूरस्य तव चर्या रक्षोवधादिरूपा मम रोचते तत्संबंधेनैव शोभते संपद्यते हि यत इति गूढम् ॥ १५ ॥ प्रेमभावाद्भर्तारमनुगच्छंती विकल्मषा भविष्यामीत्यन्वयः । त्वया विनात्र स्थितौ हि लोकः कल्मषं संभावयिष्यतीति भावः ॥ १६ ॥ प्रेत्यभावे मृत्वा शरीरांतरपरिग्रहेपि परलोकेपीति यावत् । त्वया सह संगमः कल्याणः दिव्यसुखहेतुः अत इह संगमस्य कल्याणत्वं कैमुतिकन्यायसिद्धमिति भावः । प्रेत्य संगमसत्त्वे मानमाह ब्राह्मणानां मुखात्पुण्या किल श्रुतिर्यत उक्तार्थप्रतिपादिका श्रूयते ॥ १७ ॥ तां श्रुतिं पठति इहेति । या स्त्री पितृभिः पितृपितामहमात्रादिभिर्यस्याद्भिः स्वधर्मेण स्वस्वजातीयकन्यादानधर्मेण दत्ता सा इहलोके च तस्यैव प्रेत्यभावेपि तस्यैव भवतीति ॥ १८ ॥ एवं श्रुतिन्यायतो नित्यसंबंधे सतीत्यर्थः । अस्मान्नगरात् स्वकां स्वीयाम् सुवृत्तामित्यस्य विवरणं पतिव्रतामिति ॥ १९ ॥ सुख

कृतक्षणाहंभद्रंतेगमनंप्रतिराघव ॥ वनवासस्यशूरस्यममचर्याहिरोचते ॥ १५ ॥ शुद्धात्मन्प्रेमभावाद्धिभविष्यामिविकल्मषा ॥ भर्तारमनुगच्छंती भर्ताहिपरदैवतम् ॥ १६ ॥ प्रेत्यभावेहिकल्याणःसंगमोमेसदात्वया ॥ श्रुतिर्हिश्रूयतेपुण्याब्राह्मणानांयशस्विनाम् ॥ १७ ॥ इहलोकेचपितृभिर्यास्त्री यस्यमहाबल ॥ अद्भिर्दत्तास्वधर्मेणप्रेत्यभावेपितस्यसा ॥ १८ ॥ एवमस्मात्स्वकांनारींसुवृत्तांहिपतिव्रताम् ॥ नाभिरोचयसेनेतुंत्वंमांकेनेहहेतुना ॥ १९ ॥ भक्तांपतिव्रतांदीनांमांसमांसुखदुःखयोः ॥ नेतुमर्हसिकाकुत्स्थसमानसुखदुःखिनीम् ॥ २० ॥ यदिमांदुःखितामेवंवनंनेतुंनचेच्छसि ॥ विषमग्निंजलंवाहमास्थास्येमृत्युकारणात् ॥ २१ ॥ एवंबहुविधंतंसायाचतेगमनंप्रति ॥ नानुमेनेमहाबाहुस्तांनेतुंविजनंवनम् ॥ २२ ॥ एवमुक्तातुसाचिंतांमैथिलीसमुपागता ॥ स्नापयंतीवगामुष्णैरश्रुभिर्नयनच्युतैः ॥ २३ ॥ चिंतयंतींतदातांतुनिवर्तयितुमात्मवान् ॥ क्रोधाविष्टांतुवैदेहीं काकुत्स्थोबहुसांत्वयत् ॥ २४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेएकोनत्रिंशःसर्गः ॥ २९ ॥ ॥ छ ॥ ॥ सांत्व्यमाना तुरामेणमैथिलीजनकात्मजा ॥ वनवासनिमित्तार्थंभर्तारमिदमब्रवीत् ॥ १ ॥ सातमुत्तमसंविग्नासीताविपुलवक्षसम् ॥ प्रणयाच्चाभिमानाच्चपरिचिक्षेप राघवम् ॥ २ ॥ किंत्वामन्यतवैदेहःपितामेमिथिलाधिपः ॥ रामजामातरंप्राप्यस्त्रियंपुरुषविग्रहम् ॥ ३ ॥ अनृतंबतलोकोयमज्ञानाद्यदिवक्ष्यति ॥ तेजोनास्तिपरंरामेतपतीवदिवाकरे ॥ ४ ॥

दुःखयोः समाम् अस्यैव विवरणं समानसुखदुःखिनीम् । नेतुम् वनमिति शेषः ॥ २० ॥ न चेच्छसि नैवेच्छसीत्यर्थः ॥ २१ ॥ अननुमतौ हेतुर्विजनत्वं श्वश्रूप्रभृतिरक्षकजनरहितत्वम् ॥ २२ ॥ एवमुक्ता अननुमतिबोधकवाक्यमुक्ता स्नापयंतीवेत्युक्त्या तस्या अपि वास्तवदुःखाभावो ध्वनितः रामवाक्यस्य नाट्यतया ज्ञानात् ॥ २३ ॥ सांत्वयत् सांत्ववाक्यान्युवाचेत्यर्थः ॥ २४ ॥ भैरेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ वनवासनिमित्तार्थम् वनवासनिमित्तानुमतिसिद्ध्यर्थम् ॥ १ ॥ उत्तमसंविग्ना अतिभीता सैव प्रणयात्स्नेहात् अभिमानोत्यंतमिष्टत्वेन रहसि कोपमीत्यादिप्रयुक्तसकलवचनार्हा इत्येवंरूपः परिचिक्षेप सोपहासवचनमुक्तवती ॥ २ ॥ पुरुषविग्रहम् आकारेण पुरुषं क्रियया तु स्त्रियमेव त्वां जामातरं प्राप्य मे पिता किममन्यत तव तत्त्वं न ज्ञातवानित्यर्थः । यदि जानीयान्मां तुभ्यं न प्रयच्छेदिति शेषः ॥ ३ ॥ यदि मां विहाय भवान्वनगमनभारं वक्ष्यति प्राप्स्यति । वहप्रापणेऽस्य रूपम् । तदा यदिदं लोको वदति रामे

यत्तेजस्तत्तपति दिवाकरे नास्तीवेति तदज्ञानादिव गदितमनृतं भविष्यतीति शेषः । बतेति खेदे खेदातिशयव्यंजकतया च न्यूनपदत्वादि न दोषः ॥ ४ ॥ किं हि कृत्वा किं मनसि विचार्येत्यर्थः । विषण्णः प्राप्त विषादः ॥ ५ ॥ द्युमत्सेनसुतं सत्यवंतमनुव्रतां तत्पत्नीं सावित्रीमिव मां विद्धि ॥ ६ ॥ यथान्या कुलपांसनी अन्यं पश्यति एवमहं मनसाप्यन्यं न द्रष्टास्मि अतस्त्वदृते त्वां विना नात्र स्थास्येऽतो हे राघव त्वया सह गच्छेयम् ॥७॥ एवमप्यननुमतिमेव दृष्ट्वा पुनराक्षिपति स्वयं त्विति । कौमारीम् अन्यापूर्वेण विवाहितामन्यापूर्वां च चिरमध्युषितामनेन तरुणीत्वमुक्तम् । शैलूष इव जायाजीव इव ॥८॥ तदेव दर्शयति यस्य भरतस्य मां पथ्यंचरामिष्टानुवर्तिनीमात्थ संमत्येव कथितवानसि । पथ्यंचरामित्यत्र मुमार्षः । यस्य च भरतस्यार्थे तदभिषेकरूपप्रयोजननिमित्तम् अवरुध्यसे निरुद्धाभिषेकोसि तस्य त्वमेव वश्य इष्टानुवर्ती विधेयो नियोज्यश्च

किंहिकृत्वाविषण्णस्त्वंकुतोवाभयमस्तिते ॥ यत्परित्यक्तुकामस्त्वंमामनन्यपरायणाम् ॥ ५ ॥ द्युमत्सेनसुतंवीरंसत्यवंतमनुव्रताम् ॥ सावित्रीमिवमांविद्धित्वमात्मवशवर्तिनीम् ॥ ६ ॥ नत्वहंमनसात्वन्यंद्रष्टास्मित्वदृतेऽनघ ॥ त्वयाराघवगच्छेयंयथान्याकुलपांसनी ॥७॥ स्वयंतुभार्यांकौमारींचिरमध्युषितांसतीम् ॥ शैलूषइवमांरामपरेभ्योदातुमिच्छसि ॥ ८ ॥ यस्यपथ्यंचरामात्थयस्यचार्थेऽवरुध्यसे ॥ त्वंतस्यभववश्यश्चविधेयश्चसदानघ ॥ ९ ॥ समामनादायवनंनत्वंप्रस्थितुमर्हसि ॥ तपोवायदिवारण्यंस्वर्गोवास्यात्त्वयासह ॥ १० ॥ नचमेभवितातत्रकश्चित्पथिपरिश्रमः ॥ पृष्ठतस्तवगच्छंत्याविहारशयनेष्विव ॥ ११ ॥ कुशकाशशरेषीकायेचकंटकिनोद्रुमाः ॥ तूलाजिनसमस्पर्शामार्गेममसहत्वया ॥ १२ ॥ महावातसमुद्धूतंयन्मामवकरिष्यति ॥ रजोरमणतन्मन्येपरार्ध्यमिवचंदनम् ॥१३॥ शाद्वलेषुयदाशिश्येवनांतर्वनगोचरा ॥ कुथास्तरणयुक्तेषुकिंस्यात्सुखतरंततः ॥ १४ ॥ पत्रंमूलंफलंयत्तुअल्पंवायदिवाबहु ॥ दास्यसेस्वयमाहृत्यतन्मेऽमृतरसोपमम् ॥ १५ ॥ नमातुर्नपितुस्तत्रस्मरिष्यामिनवेश्मनः ॥ आर्तवान्युपभुंजानापुष्पाणिचफलानिच ॥ १६ ॥ नचतत्रततःकिंचिद्द्रष्टुमर्हसिविप्रियम् ॥ मत्कृतेनचतेशोकोनभविष्यामिदुर्भरा ॥ १७ ॥ यस्त्वयासहसस्वर्गोनिरयोयस्त्वयाविना ॥ इतिजानन्परांप्रीतिंगच्छराममयासह ॥ १८ ॥ अथमामेवमव्यग्रांवनंनैवनयिष्यसे ॥ विषमद्यैवपास्यामिमावशंद्विषतांगमम् ॥ १९ ॥

भव नाहं तदिष्टानुवर्तिनी तद्विधेया चेह वसामीत्याशयः ॥९॥१०॥ विहारशयनेषु सुप्ताया इवारण्ये गच्छंत्या न मे परिश्रम इति योजना ॥११॥ तूलैरजिनैः प्रियकादिमृगाजिनैश्च समः स्पर्शो येषां तादृशा भविष्यंतीति शेषः ॥१२॥ अवकरिष्यति विक्षेप्स्यति व्याप्स्यतीति यावत् । परार्ध्यम् अत्युत्तमम् ॥१३॥ वनांतः वनमध्ये शिश्ये त्वया सहेति शेषः । कुथाश्चित्रकंबलास्तद्रूपास्तरणयुक्तेषु मंचेषु सुप्ताया मम ततः शाद्वलशयनात् किं सुखतरं स्यात् किमधिकं सुखं स्यात् न किमपीत्यर्थः ॥१४॥ स्वयमाहृत्य दास्यसे इत्यनेन स्वस्य तदाहरणप्रयुक्तश्रमाभावः सूचितः ॥१५॥ मातुरित्यादि कर्मणः शेषत्वविवक्षया षष्ठी । आर्तवानि तत्तदृतुभवानि ॥१६॥ ततः उक्तहेतोः ॥१७॥ त्वत्साहित्येन नरकोपि स्वर्गस्त्वद्राहित्येन स्वर्गो नरकइति मम निश्चयं जानन् ॥१८॥ कैकेयीवन्मथितासिद्धांतमाह अथेति । अव्यग्रां वनवासे दोषानगणयंतीम् द्विषतां भरतादीनाम् ॥१९॥

पश्चात्त्वद्गमनोत्तरकालम् अतस्तदैव त्वद्वियोगकाल एव ॥ २० ॥ किमिति विगृह्य कथनेन वनवासकालसंख्याया अतिदुस्तरत्वं ध्वनयति ॥ २१ ॥ आयस्ताआयासं प्राप्ता सस्वरं सशब्दम् ॥ ॥२२॥ दिग्धैर्विषलिप्तबाणैः चिरसंनियतं बहुकालं सन्निरुद्धम् ॥ २३ ॥ २४ ॥ सिता पूर्णमासी तत्संबंधी अमलो राह्वाद्यनुपरक्तो यश्चंद्रस्तत्सदृशम् । जलोद्धृतं जलमुद्धृतं यस्मात् । आहिताग्न्यादिः ॥२५॥ परिविश्वासयन् उज्जीवयन् ॥२६॥ तव दुःखेन त्वद्वियोगदुःखेन प्राप्तमपीति शेषः । स्वयंभोः ब्रह्मणः स्वव्यतिरिक्ततत्त्ववस्त्वंतराभावेन पूर्णबलत्वेन च यथा भयाभावस्तद्वदेव ममापि सर्वतो भयाभावः॥२७॥ सर्वं समग्रमांतरमभिप्रायमविज्ञाय तत एव हेतोः तव वनवासं न रोचये नांगीकृतवानितः प्रागिति शेषः ॥ २८ ॥ यत्सृष्टासि निश्चितासि मया सार्धं वनवासाय गंतुमिति शेषः । यद्वा सृष्टासि अवतीर्णासि अतस्त्वं मया विहातुं न शक्या । आत्मवता आत्मज्ञेन यथा प्रीतिर्दया हातुमशक्या ॥ २९ ॥ सर्वथा त्वां सह नेष्यामीत्याह धर्मस्त्विति । वानप्रस्थधर्म इत्यर्थः । तं पूर्वाचरितधर्मम् । त्वं च यथा सूर्यं सुवर्चलाऽ

पश्चादपिहिदुःखेनममनैवास्तिजीवितम् ॥ उज्झितायास्त्वयानाथतदैवमरणंवरम् ॥ २० ॥ इमंहिसाहितुंशोकंमुहूर्तमपिनोत्सहे ॥ किंपुनर्दशवर्षाणित्रीणिचैकंचदुःखिता ॥ २१ ॥ इतिसाशोकसंतप्ताविलप्यकरुणंबहु ॥ चुक्रोशपतिमायस्ताभृशमालिंग्यसुस्वरम् ॥ २२ ॥ साविद्धाबहुभिर्वाक्यैर्दिग्धैरिवगजांगना ॥ चिरसंनियतंबाष्पंसुमोचाग्निमिवारणिः ॥ २३ ॥ तस्याःस्फटिकसंकाशंवारिसंतापसंभवम् ॥ नेत्राभ्यांपरिसुस्रावपंकजाभ्यामिवोदकम् ॥ २४ ॥ तत्सितामलचंद्राभंमुखमायतलोचनम् ॥ पर्यशुष्यतबाष्पेणजलोद्धृतमिवांबुजम् ॥ २५ ॥ तांपरिष्वज्यबाहुभ्यांविसंज्ञामिवदुःखिताम् ॥ उवाचवचनंरामःपरिविश्वासयंस्तदा ॥ २६ ॥ नदेवितवदुःखेनस्वर्गमप्यभिरोचये ॥ नहिमेस्तिभयंकिंचित्स्वयंभोरिवसर्वतः ॥ २७ ॥ तवसर्वमभिप्रायमविज्ञायशुभानने ॥ वासंनरोचयेऽरण्येशक्तिमानपिरक्षणे ॥ २८ ॥ यत्सृष्टासिमयासार्धंवनवासायमैथिलि ॥ नविहातुंमयाशक्याप्रीतिरात्मवतायथा ॥ २९ ॥ धर्मस्तुगजनासोरुसद्भिराचरितःपुरा ॥ तंचाहमनुवर्तिष्येयथासूर्यंसुवर्चला ॥ ३० ॥ नखल्वहंनगच्छेयंवनंजनकनंदिनि ॥ वचनंतन्नयतिमांपितुःसत्योपबृंहितम् ॥ ३१ ॥ एषधर्मश्चसुश्रोणिपितुर्मातुश्चवश्यता ॥ आज्ञांचाहंव्यतिक्रम्यनाहंजीवितुमुत्सहे ॥ ॥ ३२ ॥ अस्वाधीनंकथंदैवंप्रकारैरभिराध्यते ॥ स्वाधीनंसमतिक्रम्यमातरंपितरंगुरुम् ॥ ३३ ॥ यत्रत्रयंत्रयोलोकाःपवित्रंतत्समंभुवि ॥ नान्यदस्तिशुभापांगेतेनेदमभिराध्यते ॥ ३४ ॥

नुवर्तते तथा मामनुवर्तस्व ॥ ३० ॥ मम तु गमनं निश्चितमेवेत्याह न खल्विति । अहं वनं न गच्छेयमिति न किंतु सर्वथा गच्छेयमेव यतस्तत्पितुर्वचनं मां नयति ॥ ३१ ॥ ननु यदि तव नेच्छा तदा पितृवच उल्लंघ्यापि तिष्ठेत्याह एष धर्म इति । एतत्पदार्थः पितुर्मातुश्च वश्यता इष्टानुवर्तिता । अतोहं तदाज्ञां व्यतिक्रम्य जीवितुं नोत्सहे इति मया निश्चितम् ॥ ३२ ॥ अस्वाधीनमप्रत्यक्षत्वात् तादृशं दैवं प्रकारैर्भावनामात्रसाध्याराधनप्रकारैः स्वाधीनं प्रत्यक्षदृश्यमानत्वात् ॥ ३३ ॥ यत्र पित्राद्याराधने सति त्रयं धर्मार्थकामरूपं भवति त्रयो लोकाश्चाराधिता भवंति अनेन तदाराधनेन लोकत्रयांतर्गतसकलदेवताराधनफलं दर्शितम् । अनस्तत्सममन्यत्पवित्रं पुण्यजनकम् । यद्वा पविर्महाभयरूपः संसारः । पविर्वित्रं महाभयमित्यभिधानात् । तस्मात्त्रायते तत्तेन संसारतारकमित्यर्थः । तेन अन्यत्त्रैलोक्येनास्ति भुवि स्थिते

यत्तेजस्तत्तपति दिवाकरे नास्तीवेति तदज्ञानादिव गदितमनृतं भविष्यतीति शेषः । बतेति खेदे खेदातिशयव्यंजकतया च न्यूनपदत्वादि न दोषः ॥ ४ ॥ किं हि कृत्वा किं मनसि विचार्येत्यर्थः । विषण्णः प्राप्त विषादः ॥ ५ ॥ द्युमत्सेनसुतं सत्यवंतमनुव्रतां तत्पत्नीं सावित्रीमिव मां विद्धि ॥ ६ ॥ यथान्या कुलपांसनी अन्यं पश्यति एवमहं मनसाप्यन्यं न द्रष्टास्मि अतस्त्वदृते त्वां विना नात्र स्थास्येऽतो हे राघव त्वया सह गच्छेयम् ॥७॥ एवमप्यननुमतिमेव दृष्ट्वा पुनराक्षिपति स्वयं त्विति । कौमारीम् अन्यापूर्वेण विवाहितामन्यापूर्वां च चिरमध्युषितामनेन तरुणीत्वमुक्तम् । शैलूष इव जायाजीव इव ॥८॥ तदेव दर्शयति यस्य भरतस्य मां पथ्यंचरामिष्टानुवर्तिनीमात्थ संमत्येव कथितवानसि । पथ्यंचरामित्यत्र मुमार्षः । यस्य च भरतस्यार्थे तदभिषेकरूपप्रयोजननिमित्तम् अवरुध्यसे निरुद्धाभिषेकोसि तस्य त्वमेव वश्य इष्टानुवर्ती विधेयो नियोज्यश्च

किंहिकृत्वाविषण्णस्त्वंकुतोवाभयमस्तिते ॥ यत्परित्यक्तुकामस्त्वंमामनन्यपरायणाम् ॥ ५ ॥ द्युमत्सेनसुतंवीरंसत्यवंतमनुव्रताम् ॥ सावित्रीमिवमांविद्धित्वमात्मवशवर्तिनीम् ॥ ६ ॥ नत्वहंमनसात्वन्यंद्रष्टास्मित्वदृतेऽनघ ॥ त्वयाराघवगच्छेयंयथान्याकुलपांसनी ॥७॥ स्वयंतुभार्यांकौमारींचिरमध्युषितांसतीम् ॥ शैलूषइवमांरामपरेभ्योदातुमिच्छसि ॥ ८ ॥ यस्यपथ्यंचरामात्थयस्यचार्थेऽवरुध्यसे ॥ त्वंतस्यभववश्यश्चविधेयश्चसदानघ ॥ ९ ॥ समामनादायवनंनत्वंप्रस्थितुमर्हसि ॥ तपोवायदिवारण्यंस्वर्गोवास्यात्त्वयासह ॥ १० ॥ नचमेभवितातत्रकश्चित्पथिपरिश्रमः ॥ पृष्ठतस्तवगच्छंत्याविहारशयनेष्विव ॥ ११ ॥ कुशकाशशरेषीकायेचकंटकिनोद्रुमाः ॥ तूलाजिनसमस्पर्शामार्गेममसहत्वया ॥ १२ ॥ महावातसमुद्धूतंयन्मामवकरिष्यति ॥ रजोरमणतन्मन्येपरार्ध्यमिवचंदनम् ॥१३॥ शाद्वलेषुयदाशिश्येवनांतर्वनगोचरा ॥ कुथास्तरणयुक्तेषुकिंस्यात्सुखतरंततः ॥ १४ ॥ पत्रंमूलंफलंयत्तुअल्पंवायदिवाबहु ॥ दास्यसेस्वयमाहृत्यतन्मेऽमृतरसोपमम् ॥ १५ ॥ नमातुर्नपितुस्तत्रस्मरिष्यामिनवेश्मनः ॥ आर्तवान्युपभुंजानापुष्पाणिचफलानिच ॥ १६ ॥ नचतत्रततःकिंचिद्द्रष्टुमर्हसिविप्रियम् ॥ मत्कृतेनचतेशोकोनभविष्यामिदुर्भरा ॥ १७ ॥ यस्त्वयासहसस्वर्गोनिरयोयस्त्वयाविना ॥ इतिजानन्परांप्रीतिंगच्छराममयासह ॥ १८ ॥ अथमामेवमव्यग्रांवनंनैवनयिष्यसे ॥ विषमद्यैवपास्यामिमावशंद्विषतांगमम् ॥ १९ ॥

भव नाहं तदिष्टानुवर्तिनी तद्विधेया चेह वसामीत्याशयः ॥९॥१०॥ विहारशयनेषु सुप्ताया इवारण्ये गच्छंत्या न मे परिश्रम इति योजना ॥११॥ तूलैरजिनैः प्रियकादिमृगाजिनैश्च समः स्पर्शो येषां तादृशा भविष्यंतीति शेषः ॥१२॥ अवकरिष्यति विक्षेप्स्यति व्याप्स्यतीति यावत् । परार्ध्यम् अत्युत्तमम् ॥१३॥ वनांतः वनमध्ये शिश्ये त्वया सहेति शेषः । कुथाश्चित्रकंबलास्तद्रूपास्तरणयुक्तेषु मंचेषु सुप्ताया मम ततः शाद्वलशयनात् किं सुखतरं स्यात् किमधिकं सुखं स्यात् न किमपीत्यर्थः॥१४॥स्वयमाहृत्य दास्यसे इत्यनेन स्वस्य तदाहरणप्रयुक्तश्रमाभावः सूचितः॥१५॥मातुरित्यादि कर्मणः शेषत्वविवक्षया षष्ठी । आर्तवानि तत्तदृतुभवानि॥१६॥ ततः उक्तहेतोः ॥१७॥ त्वत्साहित्येन नरकोपि स्वर्गस्त्वद्राहित्येन स्वर्गो नरकइति मम निश्चयं जानन् ॥१८॥ कैकेयीवन्मथितासिद्धांतमाह अथेति । अव्यग्रां वनवासे दोषानगणयंतीम् द्विषतां भरतादीनाम् ॥१९॥

पश्चात्त्वद्गमनोत्तरकालम् अतस्तदैव त्वद्वियोगकाल एव ॥ २० ॥ किमिति विगृह्य कथनेन वनवासकालसंख्याया अतिदुस्तरत्वं ध्वनयति ॥ २१ ॥ आयस्ताआयासं प्राप्ता सस्वरं सशब्दम् ॥ ॥२२॥ दिग्धैर्विषलिप्तबाणैः चिरसंनियतं बहुकालं सन्निरुद्धम् ॥ २३ ॥ २४ ॥ सिता पूर्णमासी तत्संबंधी अमलो राह्वाद्यनुपरक्तो यश्चंद्रस्तत्सदृशम् । जलोद्धृतं जलमुद्धृतं यस्मात् । आहिताग्न्यादिः ॥२५॥ परिविश्वासयन् उज्जीवयन् ॥२६॥ तव दुःखेन त्वद्वियोगदुःखेन प्राप्तमपीति शेषः । स्वयंभोः ब्रह्मणः स्वव्यतिरिक्ततत्त्ववस्त्वंतराभावेन पूर्णबलत्वेन च यथा भयाभावस्तद्वदेव ममापि सर्वतो भयाभावः॥२७॥ सर्वं समग्रमांतरमभिप्रायमविज्ञाय तत एव हेतोः तव वनवासं न रोचये नांगीकृतवानितः प्रागिति शेषः ॥ २८ ॥ यत्सृष्टासि निश्चितासि मया सार्धं वनवासाय गंतुमिति शेषः । यद्वा सृष्टासि अवतीर्णासि अतस्त्वं मया विहातुं न शक्या । आत्मवता आत्मज्ञेन यथा प्रीतिर्दया हातुमशक्या ॥ २९ ॥ सर्वथा त्वां सह नेष्यामीत्याह धर्मस्त्विति । वानप्रस्थधर्म इत्यर्थः । तं पूर्वाचरितधर्मम् । त्वं च यथा सूर्यं सुवर्चलाऽ

पश्चादपिहिदुःखेनममनैवास्तिजीवितम् ॥ उज्झितायास्त्वयानाथतदैवमरणंवरम् ॥ २० ॥ इमंहिसहितुंशोकंमुहूर्तमपिनोत्सहे ॥ किंपुनर्दशवर्षाणित्रीणिचैकंचदुःखिता ॥ २१ ॥ इतिसाशोकसंतप्ताविलप्यकरुणंबहु ॥ चुक्रोशपतिमायस्ताभृशमालिंग्यसुस्वरम् ॥ २२ ॥ साविद्धाबहुभिर्वाक्यैर्दिग्धैरिवगजांगना ॥ चिरसंनियतंबाष्पंसुमोचाग्निमिवारणिः ॥ २३ ॥ तस्याःस्फटिकसंकाशंवारिसंतापसंभवम् ॥ नेत्राभ्यांपरिसुस्रावपंकजाभ्यामिवोदकम् ॥ २४ ॥ तत्सितामलचंद्राभंमुखमायतलोचनम् ॥ पर्यशुष्यतबाष्पेणजलोद्धृतमिवांबुजम् ॥ २५ ॥ तांपरिष्वज्यबाहुभ्यांविसंज्ञामिवदुःखिताम् ॥ उवाचवचनंरामःपरिविश्वासयंस्तदा ॥ २६ ॥ नदेवितवदुःखेनस्वर्गमप्यभिरोचये ॥ नहिमेस्तिभयंकिंचित्स्वयंभोरिवसर्वतः ॥ २७ ॥ तवसर्वमभिप्रायमविज्ञायशुभानने ॥ वासंनरोचयेऽरण्येशक्तिमानपिरक्षणे ॥ २८ ॥ यत्सृष्टासिमयासार्धंवनवासायमैथिलि ॥ नविहातुंमयाशक्याप्रीतिरात्मवतायथा ॥ २९ ॥ धर्मस्तुगजनासोरुसद्भिराचरितःपुरा ॥ तंचाहमनुवर्तिष्येयथासूर्यंसुवर्चला ॥ ३० ॥ नखल्वहंनगच्छेयंवनंजनकनंदिनि ॥ वचनंतन्नयतिमांपितुःसत्योपबृंहितम् ॥ ३१ ॥ एषधर्मश्चसुश्रोणिपितुर्मातुश्चवश्यता ॥ आज्ञांचाहंव्यतिक्रम्यनाहंजीवितुमुत्सहे ॥ ॥ ३२ ॥ अस्वाधीनंकथंदैवंप्रकारैरभिराध्यते ॥ स्वाधीनंसमतिक्रम्यमातरंपितरंगुरुम् ॥ ३३ ॥ यत्रत्रयंत्रयोलोकाःपवित्रंतत्समंभुवि ॥ नान्यदस्तिशुभापांगेतेनेदमभिराध्यते ॥ ३४ ॥

नुवर्तते तथा मामनुवर्तस्व ॥ ३० ॥ मम तु गमनं निश्चितमेवेत्याह न खल्विति । अहं वनं न गच्छेयमिति न किंतु सर्वथा गच्छेयमेव यतस्तत्पितुर्वचनं मां नयति ॥ ३१ ॥ ननु यदि तव नेच्छा तदा पितृवच उल्लंघ्यापि तिष्ठेत्याह एष धर्म इति । एतत्पदार्थः पितुर्मातुश्च वश्यता इष्टानुवर्तिता । अतोहं तदाज्ञां व्यतिक्रम्य जीवितुं नोत्सहे इति मया निश्चितम् ॥ ३२ ॥ अस्वाधीनमप्रत्यक्षत्वात् तादृशं दैवं प्रकारैर्भावनामात्रसाध्याराधनप्रकारैः स्वाधीनं प्रत्यक्षदृश्यमानत्वात ॥ ३३ ॥ यत्र पित्राद्याराधने सति त्रयं धर्मार्थकामरूपं भवति त्रयो लोकाश्चाराधिता भवंति अनेन तदाराधनेन लोकत्रयांतर्गतसकलदेवताराधनफलं दर्शितम् । अतस्तत्समन्यत्पवित्रं पुण्यजनकम् । यद्वा पविर्महाभयरूपः संसारः । पविर्वज्रं महाभयमित्यभिधानात् । तस्मात्त्रायते तत्तेन संसारतारकमित्यर्थः । तेन अन्यत्त्रैलोक्येनास्ति भुवि स्थितं

रिदमाराध्यते ॥ ३४ ॥ बलकराः परलोकबलकरास्तद्धितावहा इति यावत् ॥ ३५ ॥ गुरुवृत्तिः गुरुचित्तवृत्तिः ॥ ३६ ॥ ३७ ॥ मा माम् ॥ ३८ ॥ यतो वने वसिष्यामीति दृढनिश्चयेन त्वं मामनुयातुं निश्चिता अतस्त्वां दंडकावनं नेतुं मम या अमतिस्तद्विरुद्धा मतिरासीत्सा इदानीं सन्ना विशीर्णा ॥ ३९ ॥ सा त्वं हि यतोऽधुना वनाय वनगमनाय दिष्टा मया अनुज्ञाताऽतो मामनुगच्छस्व । सहधर्मचरी भवेत्यनेन वनवाससाध्यस्य स्वधर्मस्य रक्षोवधजस्य त्वया विनाऽसंभव इति सूचितम् ॥ ४० ॥ व्यवसायं भर्त्रनुसरणनिश्चयं अनुक्रांता प्रकर्षेण प्राप्ता । प्रीत्यतिशयात्संबोधनद्वयम् ॥ ४१ ॥ क्रियाः दानादिक्रियाः इदानीमेवंदृढनिश्चये ॥ ४२ ॥ रत्नानि उत्तमवस्तूनि भोजनमाशंसमानेभ्यो भिक्षुकेभ्यो भोजनं देहि ॥ ४३ ॥ क्रीडार्थी उपस्कराः स्वर्णमयपुत्रिकाद्युपकरणानि ॥ ४४ ॥ शयनीयानि मम च चात्स्वस्य अन्यानि

नसत्यंदानमानौवायज्ञोवाप्याप्तदक्षिणः ॥ तथाबलकराःसीतेयथासेवापितुर्मता ॥ ३५ ॥ स्वर्गोधनंवाधान्यंवाविद्याःपुत्राःसुखानिच ॥ गुरुवृत्त्यनुरोधेननकिंचिदपिदुर्लभम् ॥ ३६ ॥ देवगंधर्वगोलोकान्ब्रह्मलोकांस्तथापरान् ॥ प्राप्नुवंतिमहात्मानोमातापितृपरायणाः ॥ ३७ ॥ समापितायथाशास्तिसत्यधर्मपथेस्थितः ॥ तथावर्तितुमिच्छामिसहिधर्मःसनातनः ॥ ३८ ॥ ममसन्नामतिःसीतेनेतुंत्वांदंडकावनम् ॥ वसिष्यामीतिसात्वंमामनुयातुंसुनिश्चिता ॥ ३९ ॥ साहिदिष्टानवद्यांगिवनायमदिरेक्षणे ॥ अनुगच्छस्वमांभीरुसहधर्मचरीभव ॥ ४० ॥ सर्वथासदृशंसीतेममस्वस्यकुलस्यच ॥ व्यवसायमनुक्रांताकांतेत्वमतिशोभनम् ॥ ४१ ॥ आरभस्वशुभश्रोणिवनवासक्षमाःक्रियाः ॥ नेदानींत्वदृतेसीतेस्वर्गोपिममरोचते ॥ ४२ ॥ ब्राह्मणेभ्यश्चरत्नानिभिक्षुकेभ्यश्चभोजनम् ॥ देहिचाशंसमानेभ्यःसंत्वरस्वचमाचिरम् ॥ ४३ ॥ भूषणानिमहार्हाणिवरवस्त्राणियानिच ॥ रमणीयाश्चयेकेचित्क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥ शयनीयानियानानिममचान्यानियानिच ॥ देहिस्वभृत्यवर्गस्यब्राह्मणानामनंतरम् ॥ ४५ ॥ अनुकूलंतुसाभर्तुर्ज्ञात्वागमनमात्मनः ॥ क्षिप्रंप्रमुदितादेवीदातुमेवप्रचक्रमे ॥ ४६ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेत्रिंशःसर्गः ॥ ३० ॥

एवंश्रुत्वासंवादंलक्ष्मणःपूर्वमागतः ॥ बाष्पपर्याकुलमुखःशोकंसोढुमशक्नुवन् ॥ १ ॥ सभ्रातुश्चरणौगाढंनिपीड्यरघुनंदनः ॥ सीतामुवाचातिशयांराघवंचमहाव्रतम् ॥ २ ॥ यदिगंतुंकृताबुद्धिर्वनंमृगगजायुतम् ॥ अहंत्वाऽनुगमिष्यामिवनमग्रेधनुर्धरः ॥ ३ ॥ मयासमेतोऽरण्यानिरम्याणिविचरिष्यसि ॥ पक्षिभिर्भृंगयूथैश्चसंघुष्टानिसमंततः ॥ ४ ॥

यानि च वस्तूनीति शेषः । ब्राह्मणानामनंतरं ब्राह्मणदानोत्तरमवशिष्टानि भृत्यवर्गेभ्यो देहीत्यर्थः ॥ ४५ ॥ अनुकूलमिष्टं गमनं वनानुगमनम् ॥ ४६ ॥ उच्चावर्चमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्यकांडे त्रिंशः सर्गः ॥ ३० ॥ ॥ छ ॥ ॥ संवाद रामसीतयोरिति शेषः । पूर्वमागतः कौसल्यागृहाद्रामसीतासंवादप्रवृत्तेः पूर्वमेवागतः । शोकं स्वस्य वनगमनमंगीकरोति न वेति शंकया संभावितरामविरहजम् ॥ १ ॥ भ्रातुश्चरणौ गाढं निपीड्य प्रणम्येति यावत् । अतिशयामुत्कृष्टकीर्तिमतीं सीतां चक्षुरादिभिः प्रार्थयन् महाव्रतं वनवासलक्षणमहाव्रतकृतनिश्चयं रामं तु उवाच । चस्त्वर्थे । स्वाभिमतप्राप्तौ सीताशरणगमनमेव मद्गमनमंगीकारयत्येव मुख्य उपाय इति मत्वा [illegible] ॥ २ ॥ [illegible] शेषः । त्वा त्वा वनगंतारं अनुगमिष्यामि । अनुः सहार्थे ।

...मद्दर्शनमंगीकारयत्येव मुख्य उपाय इति मत्वा तत्प्रार्थना ॥ २ ॥ बुद्धिर्युवाभ्यामिति शेषः । त्वा त्वा वनगंतारं अनुगमिष्यामि । अनुः सहार्थे ।

गमनकाले चाग्रत एव धनुर्धरो गमिष्यामि ॥ ३ ॥ ४ ॥ नन्विहैव भोगान्भुक्त्वा स्थातव्यमित्यत्राह नेति । आक्रमणमारोहः ॥ ५ ॥ ६ ॥ पूर्वमेव भवतानुज्ञातः तस्मादपरितापःसंस्त्वमप्यनुविधाय मां प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियामित्युक्तेः । किंच पूर्वम् अवतरणसमये इत्यप्यर्थः ॥ ७ ॥ एतत्प्रतिषेधप्रयोजनं संशयः पूर्वं केनाभिप्रायेणानुमतिरिदानीं केनाभिप्रायेण प्रतिषेध इति संदेहः ॥ ८ ॥ प्राग्गामिनं वनं प्रति प्रथमगमनाभिप्रायवंतं याचमानं तत्रानुमातिमिति शेषः ॥ ९ ॥ वश्यविधेयावसकृद्व्याख्यातौ ॥ १० ॥ को भजिष्यतीति । भारिष्यतीति पाठांतरम् । एवं च मातृसेवार्थमेव प्रतिषिद्ध्यते । अलंकारप्रतिसंहारोक्तिश्च उत्सवार्थधृताधिकालंकारविषया मदनुविधानं च मदिष्टप्रतिबंधरूपमिति भावः ॥ ११ ॥ कामैरिष्टान्नपानैः । ननु । भर्तैवास्या रक्षकस्तत्राह स इति । स कामपाशेन पर्यस्तः कैकेय्यनुरागेण

नदेवलोकाक्रमणंनामरत्वमहंवृणे ॥ ऐश्वर्यंचापिलोकानांकामयेनत्वयाविना ॥ ५ ॥ एवंब्रुवाणःसौमित्रिर्वनवासाय निश्चितः ॥ रामेणबहुभिःसांत्वैर्निषिद्धःपुनरब्रवीत् ॥६॥ अनुज्ञातस्तुभवतापूर्वमेवयदस्म्यहम् ॥ किमिदानींपुनरपिक्रियतेमेनिवारणम् ॥७॥ यदर्थंप्रतिषेधोमेक्रियतेगंतुमिच्छतः॥ एतदिच्छामिविज्ञातुंसंशयोहिममानघ ॥ ८ ॥ ततोब्रवीन्महातेजारामोलक्ष्मणमग्रतः ॥ स्थितंप्राग्गामिनंधीरंयाचमानंकृतांजलिम् ॥ ९ ॥ स्निग्धोधर्मरतोधीरःसततंसत्पथेस्थितः ॥ प्रियःप्राणसमोवश्योविधेयश्चसखाचमे ॥ १० ॥ मयाद्यसहसौमित्रेत्वयिगच्छतितद्वनम् ॥ कोभजिष्यतिकौसल्यांसुमित्रांवायशस्विनीम् ॥ ११ ॥ अभिवर्षतिकामैर्यःपर्जन्यःपृथिवीमिव ॥ सकामपाशपर्यस्तोमहातेजामहीपतिः ॥ १२ ॥ साहिराज्यमिदंप्राप्यनृपस्याश्वपतेःसुता ॥ दुःखितानांसपत्नीनांनकरिष्यतिशोभनम् ॥ १३ ॥ नस्मरिष्यतिकौसल्यांसुमित्रांचसुदुःखिताम् ॥ भरतोराज्यमासाद्यकैकेय्यांपर्यवस्थितः ॥ १४ ॥ तामार्यांस्वयमेवेहराजानुग्रहणेनवा ॥ सौमित्रेभरकौसल्यामुक्तमर्थममुंचर ॥ १५ ॥ एवंमयिचतेभक्तिर्भविष्यतिसुदर्शिता ॥ धर्मज्ञगुरुपूजायांधर्मश्चाप्यतुलोमहान् ॥१६॥ एवंकुरुष्वसौमित्रेमत्कृतेरघुनंदन ॥ अस्माभिर्विप्रहीणायामातुर्नोनभवेत्सुखम् ॥१७॥ एवमुक्तस्तुरामेणलक्ष्मणःश्लक्ष्णयागिरा ॥ प्रत्युवाचतदारामंवाक्यज्ञोवाक्यकोविदम् ॥ १८ ॥ तवैवतेजसावीरभरतःपूजयिष्यति ॥ कौसल्यांचसुमित्रांचप्रयतोनास्तिसंशयः ॥१९॥ यदिदुःस्थोनरक्षेतभरतोराज्यमुत्तमम् ॥ प्राप्यदुर्मनसावीरगर्वेणचविशेषतः ॥ २० ॥ तमहंदुर्मतिंक्रूरंवधिष्यामिनसंशयः॥तत्पक्षानपितान्सर्वांस्त्रैलोक्यमपिकिंतुसा॥२१॥कौसल्याबिभृयादार्यासहस्रंमद्विधानपि॥यस्याःसहस्रंग्रामाणांसंप्राप्तमुपजीविनाम् ॥२२॥

बद्ध इत्यर्थः ॥ १२ ॥ १३ ॥ पुत्रत्वाद्भरतो रक्षिष्यतीत्यत्राह न स्मरिष्यतीति कैकेय्यां तन्नियोगे सपत्नीतिरस्कारविषयके पर्यवस्थितः प्रतिष्ठितः ॥ १४ ॥ तर्हि मयापि कथं रक्षणं कर्तुं शक्यमत आह राजानुग्रहणेन वा दशरथानुग्रहसंपादनेनेत्यर्थः ॥ १५ ॥ मयि भक्तिः मदाज्ञायाः पालनात् गुरुः कौसल्यादिः ॥ १६ ॥ विप्रहीणाया वियुक्तायाः नः अस्माकम् ॥ १७ ॥ १८ ॥ मातृसेवायां भरत एवास्तीत्याह तवैवेति । अनेन गमोक्तानुपपत्तिपरिहारः अप्रमेयबलराममातृसेवायां मम महानर्थ इति मत्वा भरत एव तां पूजयिष्यतीत्यर्थः ॥ १९ ॥ तदेव कालांतरभवं भयं दर्शयति यदीति । दुःस्थः दुर्मार्गस्थः राज्यं प्राप्येत्यन्वयः । दुर्मनसा कैकेय्यनुरोधाद्दुष्टमनसा॥२०॥त्रैलोक्यमपि तत्पक्षं वधिष्यामीत्यनुकर्षः । किं तु सेत्युत्तरश्लोकान्वयि ॥२१॥ किं च स्वात्मभरणे कौसल्यायाः कस्याप्यपेक्षा नेत्याह किं तु सा कौसल्येत्यादि

कुतस्तस्या एवं शक्तिस्तत्राह यस्या इति । यस्या उपजीविनाम् उपजीविभिः सहस्रं ग्रामाणां प्राप्तं वर्तते ॥ २२ ॥ यदेवं तादिति ॥ २३ ॥ यदेवमतो ममानुचरं कुरुष्व मत्सेवामनुमन्यस्व । इह मत्सेवानुमतौ वैधर्म्यं वैपरीत्यसाधकं न विद्यते । त्वदुक्तहेतोरन्यथासिद्धेर्दर्शितत्वात् । तवार्थः फलमूलाद्याहरणरूपस्त्वत्प्रयासं विना प्रकल्प्यते प्रसिद्ध्यति । अहं च तेन कृतार्थो भवामि अत उभयहितं मदनुगमनमिति भावः॥२४॥ तदेव दर्शयति धनुरित्यादिना । श्वापदादिभ्यो रक्षार्थं धनुर्ग्रहः पिटका फलमूलाद्याहरणयोग्यावंशपेटी ॥२५॥ स्वाहार्हाणि होमयोग्यानि हविर्भूतानि । स्वाहाराणीतिपाठे सुष्ठु आहारयोग्यानि ॥ २६ ॥ स्वपतश्चेत्यनेन रात्रौ स्वस्य निर्निद्रत्वं ध्वनयति॥२७॥अनेन वाक्येन स्वपतश्चेत्यंतेन व्रज अनुव्रज आपृच्छस्व सुहृज्जनानामाज्ञां गृहाण॥२८॥महायज्ञे तुष्टो वरुणो राज्ञो जनकस्य धनुरादिकं ददौ । तच्च जनकेनास्माकं यौतकत्वेन दत्तं तत्सर्वमाचार्यसद्मनि

तदात्मभरणेचैवममममातुस्तथैवच ॥ पर्याप्तामद्विधानांचभरणायमनस्विनी ॥ २३ ॥ कुरुष्वमामनुचरंवैधर्म्यंनेहविद्यते ॥ कृतार्थोहंभविष्यामितवचार्थःप्रकल्प्यते ॥ २४ ॥ धनुरादायसगुणंखनित्रपिटकाधरः ॥ अग्रतस्तेगमिष्यामिपंथानंतवदर्शयन् ॥ २५ ॥ आहरिष्यामितेनित्यंमूलानिचफलानिच ॥ वन्यानिचतथान्यानिस्वाहार्हाणितपस्विनाम् ॥ २६ ॥ भवांस्तुसहवैदेह्यागिरिसानुषुरंस्यते ॥ अहंसर्वंकरिष्यामिजाग्रतःस्वपतश्चते ॥ २७ ॥ रामस्त्वनेनवाक्येनसुप्रीतःप्रत्युवाचतम् ॥ व्रजापृच्छस्वसौमित्रेसर्वमेवसुहृज्जनम् ॥ २८ ॥ येचराज्ञोददौदिव्येमहात्मावरुणःस्वयम् ॥ जनकस्यमहायज्ञेधनुषीरौद्रदर्शने ॥ २९ ॥ अभेद्येकवचेदिव्येतूणीचाक्षय्यसायकौ ॥ आदित्यविमलाभौद्वौखड्गौहेमपरिष्कृतौ ॥ ३० ॥ सत्कृत्यनिहितंसर्वमेतदाचार्यसद्मनि ॥ सर्वमायुधमादायक्षिप्रमाव्रजलक्ष्मण ॥ ३१ ॥ ससुहृज्जनमामंत्र्यवनवासायनिश्चितः ॥ इक्ष्वाकुगुरुमागम्यजग्राहायुधमुत्तमम् ॥ ३२ ॥ तद्दिव्यंराजशार्दूलःसत्कृतंमाल्यभूषितम् ॥ रामायदर्शयामाससौमित्रिःसर्वमायुधम् ॥ ३३ ॥ तमुवाचात्मवान्रामःप्रीत्यालक्ष्मणमागतम् ॥ कालेत्वमागतःसौम्यकांक्षितेममलक्ष्मण ॥ ३४ ॥ अहंप्रदातुमिच्छामियदिदंमामकंधनम् ॥ ब्राह्मणेभ्यस्तपस्विभ्यस्त्वयासहपरंतप ॥ ३५ ॥ वसंतीहदृढंभक्त्यागुरुषुद्विजसत्तमाः ॥ तेषामपिचमेभूयःसर्वेषांचोपजीविनाम् ॥ ३६ ॥ वसिष्ठपुत्रंतुसुयज्ञमार्यंत्वमानयाशुप्रवरंद्विजानाम् ॥ अपिप्रयास्यामिवनंसमस्तानभ्यर्च्यशिष्टानपरान्द्विजातीन् ॥ ३७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेएकत्रिंशःसर्गः ॥ ३१ ॥ ततःशासनमाज्ञायभ्रातुःप्रियकरंहितम् ॥ गत्वासप्रविवेशाशुसुयज्ञस्यनिवेशनम् ॥ १ ॥ तंविप्रमग्न्यगारस्थंवंदित्वालक्ष्मणोब्रवीत् ॥ सखेभ्यागच्छपश्यत्वंवेश्मदुष्करकारिणः ॥ २ ॥

आचार्यं सत्कृत्य निहितं तदादाय क्षिप्रमाव्रज आगच्छ । अत्रैवमनुवादादेव तत्र जनकाय वरुणकर्तृकधनुरादिदानं रामलक्ष्मणाभ्यां च तत्कर्तृकतद्दानं बोध्यम् ॥ २९ ॥ ३० ॥ आयुधमिति जात्या ॥ ३१ ॥ स लक्ष्मणः ॥ ३२ ॥ राजशार्दूलः क्षत्रियश्रेष्ठः ॥ ३३ ॥ मम कांक्षिते मदभीष्टप्रयोजननिमित्तसंपादनोचितकाले आगतः ॥ ३४ ॥ ३५ ॥ इह मत्समीपे गुरुषु दृढभक्त्योपेताः एतेन पूर्णविद्यतया दानपात्रत्वं सूचितम् ॥ ३६ ॥ वसिष्ठपुत्रं सुयज्ञमानयेत्यनेन मूलप्रभोर्दशरथस्य वसिष्ठः पुरोहितस्तत्पुत्रस्यतत्पुत्र इति न्यायेन सुयज्ञस्य विशिष्यानयननियोगः । अस्यैव गृहे आयुधस्थापनमिति शेषः ॥ ३७ ॥ छंलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ ॥ छ ॥ ॥ तत इति ॥ १ ॥ अग्न्यगारं अग्निहोत्रशाला । हे सखे

रामस्य वेश्म आगच्छ । दुष्करकारिणो रामस्य प्राप्तराज्यत्यागपूर्वं वनं जिगमिषोः कृत्यं च पश्येति शेषः ॥ २ ॥ संध्यां माध्याह्निकीम् ॥ ३ ॥ अभिचक्राम प्रत्युत्थानादिकृतवान् अर्चितमग्निमिव होमकाले इति शेषः ॥ ४ ॥ अंगदं बाहुमूलधार्यं भूषणं । केयूरं तदधोभागस्थं । सहेमसूत्रैर्मणिभिः स्वर्णसूत्रस्यूतैर्मुक्तादिरत्नमालाभिः ॥ ५ ॥ सीताप्रचोदितः सीतया सुयज्ञपत्न्यै सखीत्वाद्दिव्याभरणदानाय प्रचोदितः ॥ ६ ॥ हेमसूत्रं उरोभूषणविशेषः हारय सेवकद्वारा प्रापय रशना कांची सा मदनुगामिनी सखी तव भार्या या इति शेषः ॥ ७ ॥ तुभ्यं भार्यायै च गच्छती । नुमभाव आर्षः ॥ ८ ॥ त्वयि त्वद्गृहे प्रतिष्ठापयितुं दानपूर्वकं प्रापयितुं ॥ ९ ॥ शत्रुंजयो नाम तथा प्रसिद्धं यं गज मातुलो मम ददौ तं गजं ते ददामि । निष्कसहस्रेण स्वनामांकितनिष्कसहस्रदक्षिणया ॥ १० ॥ ११ ॥ ब्रह्मा त्रिदशेश्वरमिव नियोक्तृनियोज्ययोः परापर

ततःसंध्यामुपास्थायगत्वासौमित्रिणासह ॥ ऋद्धंसप्राविशल्लक्ष्म्यारम्यंरामनिवेशनम् ॥ ३ ॥ तमागतंवेदविदंप्रांजलिःसीतयासह ॥ सुयज्ञमभिचक्रामराघवोग्निमिवार्चितम् ॥ ४ ॥ जातरूपमयैर्मुख्यैरंगदैःकुंडलैःशुभैः ॥ सहेमसूत्रैर्मणिभिःकेयूरैर्वलयैरपि ॥ ५ ॥ अन्यैश्चरत्नैर्बहुभिःकाकुत्स्थःप्रत्यपूजयत् ॥ सुयज्ञंसतदोवाचरामःसीताप्रचोदितः ॥ ६ ॥ हारंचहेमसूत्रंचभार्यायैसौम्यहारय ॥ रशनांचाथसासीतादातुमिच्छतितेसखी ॥ ७ ॥ अंगदानिचचित्राणिकेयूराणिशुभानिच ॥ प्रयच्छतिसखीतुभ्यंभार्यायैगच्छतीवनम् ॥ ८ ॥ पर्यंकमग्र्यास्तरणंनानारत्नविभूषितम् ॥ तमपीच्छतिवैदेहीप्रतिष्ठापयितुंत्वयि ॥ ९ ॥ नागःशत्रुंजयोनाममातुलोयंददौमम ॥ तंतेनिष्कसहस्रेणददामिद्विजपुंगव ॥ १० ॥ इत्युक्तःसतुरामेणसुयज्ञःप्रतिगृह्यतत् ॥ रामलक्ष्मणसीतानांप्रयुयोजाशिषःशिवाः ॥ ११ ॥ अथभ्रातरमव्यग्रंप्रियरामःप्रियंवदम् ॥ सौमित्रिंतमुवाचेदंब्रह्मेवत्रिदशेश्वरम् ॥ १२ ॥ अगस्त्यंकौशिकंचैवताबुभौब्राह्मणोत्तमौ ॥ अर्चयाहूयसौमित्रेरत्नैःसस्यमिवांबुभिः ॥ १३ ॥ तर्पयस्वमहाबाहोगोसहस्रेणराघव ॥ सुवर्णरजतैश्चैवमणिभिश्चमहाधनैः ॥ १४ ॥ कौसल्यांचयआशीर्भिर्भक्तःपर्युपतिष्ठति ॥ आचार्यस्तैत्तिरीयाणामभिरूपश्चवेदवित् ॥ १५ ॥ तस्ययानंचदासीश्चसौमित्रेसंप्रदापय ॥ कौशेयानिचवस्त्राणियावत्तुष्यतिसद्विजः ॥ १६ ॥ सूतश्चित्ररथश्चार्यःसचिवःसुचिरोषितः ॥ तोषयैनंमहार्हैश्चरत्नैर्वस्त्रैर्धनैस्तथा ॥ १७ ॥ पशुकाभिश्चसर्वाभिर्गवांदशशतेनच ॥ येचमेकठकालापाबहवोदंडमाणवाः ॥ १८ ॥ नित्यस्वाध्यायशीलत्वान्नान्यत्कुर्वंतिकिंचन ॥ अलसाःस्वादुकामाश्चमहतांचापिसंमताः ॥ १९ ॥ तेषामशीतियानानिरत्नपूर्णानिदापय ॥ शालिवाहसहस्रंचद्वेशतेभद्रकांस्तथा ॥२०॥

प्रभुत्वे दृष्टांतः ॥ १२ ॥ कौशिको विश्वामित्रः आहूयार्चय अनंतरं रत्नैस्तर्पय ॥ १३ ॥ १४ ॥ तैत्तिरीयाणां तैत्तिरीयशाखाध्येतॄणामाचार्यः । यो द्विजः कौसल्यामाशीर्भिः पर्युपतिष्ठति सेवते । अभिरूपः श्लाघ्यगुणः ॥ १५ ॥ यावत यावता धनेन तुष्यति तावद्दापय । कौशेयानि कृमिकोशोत्थानि ॥ १६ ॥ चित्ररथनामा सुमंत्रादन्यः सूतः सुचिरोषितः चिरकालवृद्धः ॥ १७ ॥ पशुका अजादयो यज्ञपशवो महिष्यादयश्च । कठकालापाः कठकालापसंबंधिशाखाध्यायिनः । दंडमाणवा दंडप्रधाना माणवा उपकुर्वाणब्रह्मचारिणः ॥ १८ ॥ अन्यद्व्रतोपवासादि अलसाः भिक्षादौ स्वादुकामाः सदन्नकामाः तेषां दानयोग्यत्वायाह महतामिति । तपो हि स्वाध्याय इति श्रुतेर्नित्यतपस्वित्वेन महतां संमताः ॥ १९ ॥ यानानि उष्ट्राः शालीन् वहंतीति तादृशबलीवर्दानां सहस्रं भद्रकांस्तदाख्यान् धान्यविशेषांश्चणकमुद्गादिरूपान् व्यंज

नार्हान्दापय ॥ २० ॥ व्यंजनार्थं दधिघृतार्थं उपाकुरु देहि मेखलीनां ब्रह्मचारिणां । दीर्घआर्षः । समुपस्थितः विवाहार्थमिति शेषः ॥२१॥ सहस्रं गवां निष्काणां वा नोस्माकमंबा कौसल्या यथा मम दक्षिणा मया तदाश्रितब्रह्मचारिवर्गस्य दापितां नंदेत्तथा तानर्चयेत्यन्वयः ॥२२॥२३॥ बाष्पगलान्बाष्पगद्गदान् ॥२४॥ उपजीवनं जीवनसाधनम् ॥ २५ ॥ एकैकं प्रत्येकं यावन्ममागममशून्यंकार्यं पर्यायेणैकशः स्थित्वा पूर्ववद्रक्षणीयमित्यर्थः ॥२६॥२७॥ २८ ॥ कृपणेभ्यः दीनेभ्यः तत्र गार्ग्यः गर्गगोत्रः ॥ २९ ॥ क्षतेन खननेन वृत्तिर्जीविका यस्य क्षीणवृत्तिरिति वा । उंछवृत्तिरिति पाठांतरं । फालं हलावयवविशेषस्तत्सदृशं मृत्खननार्थं लोहमयमत्र विवक्षितं कुद्दालकं खननसाधनं लांगलं हलाकारो दंडः फलापकर्षणार्थः दारकाः पुत्राः ॥ ३० ॥ स्त्रीणां भर्ताहि देवतेतिपाठे यद्यपि देवतात्वादाज्ञानर्हस्तथापि प्रीत्या मद्वचनं कुरुष्वे

व्यंजनार्थंचसौमित्रेगोसहस्रमुपाकुरु ॥ मेखलीनांमहासंघःकौसल्यांसमुपस्थितः ॥ २१ ॥ तेषांसहस्रंसौमित्रेप्रत्येकंसंप्रदापय ॥ अंबायथानोनंदेच्चकौसल्याममदक्षिणाम् ॥ २२ ॥ तथाद्विजातींस्तान्सर्वांल्लक्ष्मणार्चयसर्वशः ॥ ततःपुरुषशार्दूलस्तद्धनंलक्ष्मणःस्वयम् ॥ २३ ॥ यथोक्तंब्राह्मणेंद्राणामददाद्धनदोयथा ॥ अथाब्रवीद्बाष्पगलांस्तिष्ठतश्चोपजीविनः ॥ २४ ॥ संप्रदायबहुद्रव्यमेकैकस्योपजीवनम् ॥ लक्ष्मणस्यचयद्वेश्मगृहंचयदिदंमम ॥ २५ ॥ अशून्यंकार्यमेकैकंयावदागमनंमम ॥ इत्युक्त्वादुःखितंसर्वंजनंतमुपजीविनम् ॥ २६ ॥ उवाचेदंधनाध्यक्षंधनमानीयतांमम ॥ ततोस्यधनमाजह्रुःसर्वएवोपजीविनः ॥ २७ ॥ सराशिःसुमहांस्तत्रदर्शनीयोह्यदृश्यत ॥ ततःसपुरुषव्याघ्रस्तद्धनंसहलक्ष्मणः ॥ २८ ॥ द्विजेभ्योबालवृद्धेभ्यःकृपणेभ्योह्यदापयत् ॥ तत्रासीत्पिंगलोगार्ग्यस्त्रिजटोनामवैद्विजः ॥ २९ ॥ क्षतवृत्तिर्वनेनित्यंफालकुद्दाललांगली ॥ तंवृद्धंतरुणीभार्याबालानादायदारकान् ॥ ३० ॥ अब्रवीद्ब्राह्मणंवाक्यंस्त्रीणांभर्ताहिदेवता ॥ अपास्यफालंकुद्दालंकुरुष्ववचनंमम ॥ ३१ ॥ रामंदर्शयधर्मज्ञंयदिकिंचिदवाप्स्यसे ॥ सभार्यायावचःश्रुत्वाशाटीमाच्छाद्यदुश्छदाम् ॥ ३२ ॥ सप्रातिष्ठतपंथानंयत्ररामनिवेशनम् ॥ भृग्वंगिरःसमंदीप्त्यात्रिजटंजनसंसदि ॥ ३३ ॥ आपंचमायाःकक्ष्यायानैतंकश्चिदवारयत् ॥ सराममासाद्यतदात्रिजटोवाक्यमब्रवीत् ॥ ३४ ॥ निर्धनोबहुपुत्रोस्मिराजपुत्रमहाबल ॥ क्षतवृत्तिर्वनेनित्यंप्रत्यवेक्षस्वमामिति ॥ ३५ ॥ तमुवाचततोरामःपरिहाससमन्वितम् ॥ गवांसहस्रमप्येकंनचविश्राणितंमया ॥ ३६ ॥ परिक्षिपसिदंडेनयावत्तावदवाप्स्यसे ॥ सशाटींपरितःकव्यांसंभ्रांतःपरिवेष्टयताम् ॥ ३७ ॥

त्यर्थः ॥३१॥ यदीत्यस्य दर्शयसि तदा सर्वथेति शेषः । दुश्छदां अतिजीर्णत्वादाच्छादनायोग्याम् ॥ ३२ ॥ यत्र रामनिवेशनं यस्मिन् पथ्याश्रिते रामवेशनं प्राप्यते तं पंथानमास्थाय प्रातिष्ठत । दीप्त्या ब्रह्मवर्चसेन ॥३३॥३४॥ प्रत्यवेक्षस्व मां मयि कृपां कुर्वित्यर्थः ॥३५॥ परिहाससमन्वितं क्रीडाप्रयोजनव्यवहारविशेषसमान्वितं । अस्त्येकमितिपाठे तावदेव शिष्टमस्तीत्यर्थः अप्येकमिति पाठे गवामसंख्यातानां मध्ये एकमपि सहस्रं मया न विश्राणितं दत्तमतोत्रैव स्थित्वा दंडेन यावद्गवाकीर्णं यावंतं देशं परिक्षिपसि परिगृह्णासि तावत् तावद्देशावस्थिता गा अवाप्स्यसे ब्राह्मणस्य गोग्रहणचापलकौतुकदर्शनार्थमेतावद्ग

वद्वचनं संभ्रांतस्त्वरितः ॥ ३६ ॥ ३७ ॥ सर्वप्राणेन सर्वबलेन आविद्ध्य भ्रामयित्वा वेगतः वेगेन स दंडस्तस्य कराच्युतः सरयूपारं तीर्त्वाऽतिक्रम्योक्षाणसन्निधौ उक्ष्णां वृषभाणा सन्निधिर्यत्र । आर्ष आनङ् । तादृशे गोव्रजे पपात । आतस्मात्सरयूतटात् परपारस्थसरयूमभिव्याप्य या गावः स्थितास्ता आनयामास । त्रिजटाश्रमं प्रति नाययामास चेति शेषः ॥ ३८ ॥ ३९ ॥ ४० ॥ अयं दंडपरिक्षेपवचनरूपः परिहास एवेत्यर्थः ॥ ४१ ॥ इदं हीति । इदं दूरपरिक्षेपजनकं तेजः शक्तिस्तव वृद्धस्यापि यत्तदेव जिज्ञासितुं ज्ञातु । स्वार्थे सन् आर्षः । इच्छता इममर्थं दंडप्रक्षेपरूपमर्थं भवान्प्रचोदितोसि । अपरं गोभ्योन्यदपि किंचिद्बहुमूल्यमपि वस्तु वरीतुं व्यवस्यसि चेत्तदपि वृणीष्व ॥ ४२ ॥ इदमुपचारमात्रमिति न मंतव्यमित्याह ब्रवीमीति । यंत्रणा संकोचः हि यतः मम यद्धनं तद्विप्रकारणात् विप्रप्रयोजनसंपादनार्थं कथं तथात्वमत आह भवत्सु विप्रेषु सम्यग्यथाशास्त्रं प्रतिपादनेन दानेन तत्फलरूपेण हेतुना दानरूपफलार्थं मयार्जितं धनं मे यशस्करं भवेत् न तु भूमिनिक्षेपफलकम् ॥ ४३ ॥ मोदितः संजातमोदः । यश

आविध्यदंडंचिक्षेपसर्वप्राणेनवेगतः ॥ सतीर्त्वासरयूपारंदंडस्तस्यकराच्युतः ॥ ३८ ॥ गोव्रजेबहुसाहस्रेपपातोक्षाणसान्निधौ ॥ तंपरिष्वज्यधर्मात्मा आवाप्यसरयूतटात् ॥ ३९ ॥ आनयामासतागावस्त्रिजटस्याश्रमंप्रति ॥ उवाचचतदारामस्तंगार्ग्यमभिसांत्वयन् ॥ ४० ॥ मन्युर्नखलुकर्तव्यः परिहासोह्ययंमम ॥ ४१ ॥ इदंहितेजस्तवयद्दुरत्ययंतदेवजिज्ञासितुमिच्छतामया ॥ इदंभवानर्थमभिप्रचोदितोवृणीष्वकिंचिदपरंव्यवस्यसि ॥ ४२ ॥ ब्रवीमिसत्येननतेस्मयंत्रणाधनंहियद्यन्ममविप्रकारणात् ॥ भवत्सुसम्यक्प्रतिपादनेनमयार्जितंचैवयशस्करंभवेत् ॥ ४३ ॥ ततःसभार्यस्त्रिजटोमहामुनिर्गवामनीकंप्रतिगृह्यमोदितः ॥ यशोबलप्रीतिसुखोपबृंहिणीस्तथाशिषःप्रत्यवदन्महात्मनः ॥ ४४ ॥ सचापिरामःप्रतिपूर्णपौरुषोमहाधनंधर्मबलैरुपार्जितम् ॥ नियोजयामाससुहृज्जनेचिराद्यथार्हसंमानवचःप्रचोदितः ॥ ४५ ॥ द्विजःसुहृद्भृत्यजनोथवातदादरिद्रभिक्षाचरणश्चयोभवेत् ॥ नतत्रकश्चिन्नबभूवतर्पितोयथार्हसंमाननदानसंभ्रमैः ॥ ४६ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेद्वात्रिंशःसर्गः ॥ ३२ ॥ ॥ ७ ॥

दत्वातुसहवैदेह्याब्राह्मणेभ्योधनंबहु ॥ जग्मतुःपितरंद्रष्टुंसीतयासहराघवौ ॥ १ ॥ ततोगृहीतेप्रेष्याभ्यामशोभेतांतदायुधे ॥ मालादामभिरासक्तेसीतयासमलंकृते ॥ २ ॥ ततःप्रासादहर्म्याणिविमानशिखराणिच ॥ अभिरुह्यजनःश्रीमानुदासीनोव्यलोकयत् ॥ ३ ॥ नहिरथ्याःसुशक्यंतेगंतुंबहुजनाकुलाः ॥ आरुह्यतस्मात्प्रासादादीनाःपश्यंतिराघवम् ॥ ४ ॥ पदातिंसानुजंदृष्ट्वाससीतंचजनास्तदा ॥ ऊचुर्बहुजनावाचःशोकोपहतचेतसः ॥ ५ ॥ यंयांतमनुयातिस्मचतुरंगबलंमहत् ॥ तमेकंसीतयासार्धमनुयातिस्मलक्ष्मणः ॥ ६ ॥

आदीनां उपबृंहिणीर्विवर्धनीर्महात्मनो रामस्य तदा आशिषः प्रत्यवदत् ॥ ४४ ॥ धर्मबलैर्धर्मयुक्तपराक्रमैः चिराद्यथार्हं कृतैः संमानवचोभिः सुहृज्जनीयैः प्रचोदितः प्रेरितः प्रेरितदानव्यापारः ॥ ४५ ॥ सुहृद्भृत्यजनः तद्युक्तः । अर्थआद्यंतमेतत् । दरिद्रः सन् भिक्षाचरणकर्ता संभ्रम आदरः ॥ ४६ ॥ तुर्भ्रमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्वात्रिंशःसर्गः ॥ ३२ ॥ दत्वेति ॥ १ ॥ आयुधे इति जात्यभिप्रायेण सीतयालंकृते पूजार्थचंदनादिभिः ॥ २ ॥ विमानशिखराणि सप्तभूमिकागृहाग्रभागाः प्रासादस्त्रिभूमिकः हर्म्यं राजगृहम् उदासीनः अरक्षितृत्वेन निरुत्सुकः व्यलोकयत् । राममिति शेषः ॥ ३ ॥ यतो बहुजनाकुलत्वाद्रथ्या गंतुं न सुखेन शक्यंते तस्मात्प्रासादमारुह्य प्रासादात्तत्र प्रासादे संस्थाय ॥ ४ ॥ दीनत्वे हेतुमाह पदातिमिति ॥ ५ ॥ ६ ॥

रसज्ञः सुखज्ञः कामानां भोग्यवस्तूनाम् वचनं पितृवचनम्॥७॥भूतैः प्राणिभिः वनप्रयाणानुमत्यर्थं राजसन्निधौ गमनसमये ॥८॥९॥ सत्त्वं पिशाचम् राजा स्वस्वभावे वर्तमानः हि यतः न पुत्रं विवासयितुमर्हति ॥ १० ॥ तदेवाह निर्गुणस्यापीति । वृत्तेन चारित्रेण तस्मात्पिशाचग्रस्त एवेति भावः ॥ ११ ॥ आनृशंस्यमहिंसा अनुक्रोशो दया श्रुतं अनुष्ठानपर्यवसायि शास्त्राध्ययनम् शीलं सत्स्वभावः दमो बाह्येंद्रियनिग्रहः शमश्चित्तनिग्रहः ॥ १२ ॥ तस्मात्तस्य षड्गुणवत्त्वात् उपघातः पीडनम् पाठांतरेपि स एवार्थः ॥ १३ ॥ जगत्पालकत्वादपि तस्यौपघातेनजगत्पीडितमित्याह पीडयेति । पुष्पफलोपगः पुष्पफलसहितः । मूलस्येवेत्यनेन सर्वजगदधिष्ठानत्वमस्य सूचितम् ॥ १४ ॥ मनुष्याणामित्युपलक्षणं प्राणिमात्रस्य वस्तुमात्रस्य च धर्म एवांतः सारो यस्य सः ॥ १५ ॥ सपत्न्यः पत्नीसहिताः ते रामोपघातमसहंतो वयम् येन

ऐश्वर्यस्यरसज्ञःसन्कामानांचाकरोमहान् ॥ नेच्छत्येवानृतंकर्तुंवचनंधर्मगौरवात् ॥ ७ ॥ यानशक्यापुराद्रष्टुंभूतैराकाशगैरपि ॥ तामद्यसीतांपश्यंतिराजमार्गगताजनाः ॥ ८ ॥ अंगरागोचितांसीतांरक्तचंदनसेविनीम् ॥ वर्षमुष्णंचशीतंचनेष्यत्याशुविवर्णताम् ॥ ९ ॥ अद्यनूनंदशरथःसत्त्वमाविश्यभाषते ॥ नहिराजाप्रियंपुत्रंविवासयितुमर्हति ॥ १० ॥ निर्गुणस्यापिपुत्रस्यकथंस्याद्विनिवासनम् ॥ किंपुनर्यस्यलोकोयंजितोवृत्तेनकेवलम् ॥ ॥ ११ ॥ आनृशंस्यमनुक्रोशःश्रुतंशीलंदमःशमः ॥ राघवंशोभयंत्येतेषड्गुणाःपुरुषर्षभम् ॥ १२ ॥ तस्मात्तस्योपघातेनप्रजाःपरमपीडिताः ॥ औदकानीवसत्त्वानिग्रीष्मेसलिलसंक्षयात् ॥ १३ ॥ पीडयापीडितंसर्वंजगदस्यजगत्पतेः ॥ मूलस्येवोपघातेनवृक्षःपुष्पफलोपगः ॥ १४ ॥ मूलंह्येषमनुष्याणांधर्मसारोमहाद्युतिः ॥ पुष्पंफलंचपत्रंचशाखाश्चास्येतरेजनाः ॥ १५ ॥ तेलक्ष्मणइवक्षिप्रंसपत्न्यःसहबांधवाः ॥ गच्छंतमनुगच्छामोयेनगच्छतिराघवः ॥१६॥ उद्यानानिपरित्यज्यक्षेत्राणिचगृहाणिच ॥ एकदुःखसुखाराममनुगच्छामधार्मिकम् ॥ १७ ॥ समुद्धृतनिधानानिपरिध्वस्ताजिराणिच ॥ उपात्तधनधान्यानिहृतसाराणिसर्वशः ॥ १८ ॥ रजसाभ्यवकीर्णानिपरित्यक्तानिदैवतैः ॥ मूषकैःपरिधावद्भिरुद्बिलैरावृतानिच ॥ १९ ॥ अपेतोदकधूमानिहीनसंमार्जनानिच ॥ प्रणष्टबलिकर्मेज्यामंत्रहोमजपानिच ॥ २० ॥ दुष्कालेनेवभग्नानिभिन्नभाजनवंतिच ॥ अस्मत्त्यक्तानिकैकेयीवेश्मानिप्रतिपद्यताम् ॥ २१ ॥ वनंनगरमेवास्तुयेनगच्छतिराघवः ॥ अस्माभिश्चपरित्यक्तंपुरंसंपद्यतांवनम् ॥ २२ ॥ बिलानिदंष्ट्रिणःसर्वेसानूनिमृगपक्षिणः ॥ त्यजंत्वस्मद्भयाद्भीतागजाःसिंहावनान्यपि ॥ २३ ॥ अस्मत्त्यक्तंप्रपद्यंतुसेव्यमानंत्यजंतुच ॥ तृणमांसफलादानंदेशंव्यालमृगद्विजम् ॥ २४ ॥ प्रपद्यतांहिकैकेयीसपुत्रासहबांधवैः ॥ राघवेणवयंसर्वेवनेवत्स्यामनिर्वृताः ॥ २५ ॥

मार्गेण ॥ १६ ॥ एकदुःखसुखाः समानदुःखसुखाः ॥ १७ ॥ समुद्धृतनिधानत्वादिधर्मकाणि गृहाणि कैकेयी प्रतिपद्यतामित्यन्वयः निधानानि निक्षेपाः । अजिरमंगणं परिध्वस्तं मार्जनादिरहितं येषु । धनं गवादि अनिक्षिप्तभूषणादि च उपात्तं गृहीतं येभ्योऽतएव हृतसाराणि ॥ १८ ॥ उद्बिलैः उद्भिन्नबिलैः ॥१९॥ अपेतोदकत्वादिना मनुष्यराहित्यं सूच्यते ॥ २० ॥ दुष्कालो राजिकदैविकक्षोभकालः॥२१॥ येन वनेन हेतुना ॥ २२ ॥ दंष्ट्रिणः सर्पाः मृगपक्षिणो गिरिस्थाः ॥ २३ ॥ अस्मत्त्यक्तं पुरमिति शेषः । सेव्यमानं अस्माभिः सेव्यमानं वनमित्यर्थः । कर्तारोत्र पूर्वोक्ता दंष्ट्र्यादयः तृणमांसफलानामादानं

यस्मात्तम् व्यालमृगद्विजं तद्वंतम् । अर्शआद्यच् । तादृशं देशमिमं कैकेयी मपद्यतामित्यन्वयः ॥ २४ ॥ २५ ॥ न विचक्रे न विकारं माप्तम् ॥ २६ ॥ पुनः तद्वार्ताश्रवणानंतरमपि मातुः कैकेय्याः ॥ ॥ २७ ॥ २८ ॥ आर्तं खिन्नम् अभिजनं देशम् तत्स्थजनमिति यावत् मतीक्षमाणः पश्यन्नपि निदेशमाज्ञाम् ॥ २९ ॥ तत्पूर्वं सः स्वाकारणार्थः गमनकालः पूर्वो यस्यार्तरूपत्ववतस्तादृशम् तदारभ्यार्तरूप मिति यावत् । सुमंत्रं मेक्ष्य मतिहारणार्थं स्वागमननिवेदनार्थं व्यतिष्ठत द्वार्येवेति शेषः ॥ ३० ॥ तदेव सुमंत्रमाह पितुरिति ॥ ३१ ॥ कौलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ ॥ छ ॥ निरुदर इतिपाठे तनुमध्य इत्यर्थः । श्यामः श्यामवर्णस्तरुणश्च अत्र कवेरपि करुणारसमग्नत्वेन वर्णितस्यैव पुनःपुनः कथनम

इत्येवंविविधावाचोनानाजनसमीरिताः ॥ शुश्रावराघवःश्रुत्वानविचक्रेऽस्यमानसम् ॥ २६ ॥ सतुवेश्मपुनर्मातुःकैलासशिखरप्रभम् ॥ अभिचक्रा मधर्मात्मामत्तमातंगविक्रमः ॥ २७ ॥ विनीतवीरपुरुषंप्रविश्यतुनृपालयम् ॥ ददर्शावस्थितंदीनंसुमंत्रमविदूरतः ॥ २८ ॥ प्रतीक्षमाणोभिजनंतदार्त मनार्तरूपःप्रहसन्निवाथ ॥ जगामरामःपितरंदिदृक्षुःपितुर्निदेशंविधिवच्चिकीर्षुः ॥ २९ ॥ तत्पूर्वमैक्ष्वाकसुतोमहात्मारामोगमिष्यन्नृपमार्तरूपम् ॥ व्यतिष्ठतप्रेक्ष्यतदासुमंत्रंपितुर्महात्माप्रतिहारणार्थम् ॥ ३० ॥ पितुर्निदेशेनतुधर्मवत्सलोवनप्रवेशेकृतबुद्धिनिश्चयः ॥ सराघवःप्रेक्ष्यसुमंत्रमब्रवीन्नि वेदयस्वागमनंनृपायमे ॥ ३१ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्या०त्रयस्त्रिंशःसर्गः ॥ ३३ ॥ ततःकमलपत्राक्षःश्यामोनिरुपमो महान् ॥ उवाचरामस्तंसूतंपितुराख्याहिमामिति ॥ १ ॥ सरामप्रेषितःक्षिप्रंसंतापकलुषेंद्रियम् ॥ प्रविश्यनृपतिंसूतोनिःश्वसंतंददर्शह ॥ २ ॥ उपरक्त मिवादित्यंभस्मच्छन्नमिवानलम् ॥ तटाकमिवनिस्तोयमपश्यज्जगतीपतिम् ॥ ३ ॥ आबोध्यचमहाप्राज्ञःपरमाकुलचेतनम् ॥ राममेवानुशोचंतंसूतः प्रांजलिरब्रवीत् ॥ ४ ॥ तंवर्धयित्वाराजानंपूर्वंसूतोजयाशिषा ॥ भयविक्लवयावाचामंदयाश्लक्ष्णयाब्रवीत् ॥ ५ ॥ अयंसपुरुषव्याघ्रोद्वारितिष्ठतिते सुतः ॥ ब्राह्मणेभ्योधनंदत्वासर्वंचैवोपजीविनाम् ॥ ६ ॥ सत्वांपश्यतुभद्रंतेरामःसत्यपराक्रमः ॥ सर्वान्सुहृदआपृच्छ्यत्वांहीदानींदिदृक्षते ॥ ७ ॥ गमिष्यतिमहारण्यंतंपश्यजगतीपते ॥ वृतंराजगुणैःसर्वैरादित्यमिवरश्मिभिः ॥ ८ ॥ ससत्यवाक्योधर्मात्मागांभीर्यात्सागरोपमः ॥ आकाशइव निष्पंकोनरेंद्रःप्रत्युवाचतम् ॥ ९ ॥ सुमंत्रानयमेदारान्येकेचिदिहमामकाः ॥ दारैःपरिवृतःसर्वैर्द्रष्टुमिच्छामिराघवम् ॥ १० ॥ सोंतःपुरमतीत्यैव स्त्रियस्तावाक्यमब्रवीत् ॥ आर्योह्वयतिवोराजागम्यतांतत्रमाचिरम् ॥ ११ ॥

दोषाय ॥ १ ॥ २ ॥ उपरक्तं राहुग्रस्तम् पुनरपश्यदिति वाल्मीकेः मयोगो वर्णनीयमयीभावेन तस्यापि शोकग्रस्तत्वात् ॥ ३ ॥ आबोध्य महाराज इति संबोध्य राममेव उद्दिश्य शोचंतम् ॥ ४ ॥ वर्धयित्वा संपूज्य भयविक्लवया रामो वनमयाणोद्युक्त इतीदं परमनिष्टं कथं राज्ञो वदिष्यामीति भयेन विक्लवया कातरया अश्लक्ष्णयेति च्छेदः ॥ ५ ॥ उपजीविनां च तेभ्यश्च दत्वा सर्वं धनं दत्वेत्यनेन सर्वथा तिष्ठासाभावो ध्वन्यते ॥ ६ ॥ ७ ॥ ८ ॥ स दशरथः निष्पंको निष्पापः । निष्पंद इतिपाठे निश्चल इत्यर्थः ॥ ९ ॥ इह मद्वेश्मनि ये केचिन्मामका दाराः स्त्रियः संति तान्दारानिहानय ॥ १० ॥ अतीत्य अतिवेगेनं

प्राप्य ह्वयति आह्वयति वो युष्माकं राजा अवैधव्यदत्वात् नतु प्रजानां तासां दुःखदत्वात् आगम्यतामितिपदम् ॥ ११ ॥ प्रचक्रमुः गच्छंति स्म तद्भवनं तस्य राज्ञो भवनम् ॥ १२ ॥ अर्धसप्तशताः एकदेशिस मासः सप्तशतस्यार्धं संख्या यासां ता इत्यर्थः । अर्शआद्यनंतः । अतएवाग्रे वक्ष्यति त्रयः शतशतार्धा हीति । ताम्रलोचनाः रामप्रयाणश्रवणजदुःखजातरोदनेनेति शेषः । कौसल्यां परिवार्येत्यनेन प्राग्लक्ष्मणोक्तं तस्याः सर्वप्रभ्वीत्वं ध्वनितम् ॥ १३ ॥ समवेक्ष्य दारानिति शेषः ॥ १४ ॥ १५ ॥ आराद्दूरतः उत्पपात आलिंगनार्थम् ॥ १६ ॥ तं आलिलिंगिषितं रामम् अप्राप्य मध्ये एव दुःखितः पपात ॥ १७ ॥ अभ्यपतदभ्यागतवान् विसंज्ञमिव विसंज्ञमेव ॥ १८ ॥ भूषणध्वनिमिश्रितः उरःशिरस्ताडनादिना चंचलतरभ्रश्यद्भूषणध्वनिमिलितः । मूर्छित इतिपाठेपि स एवार्थः व्याप्त इत्यर्थो वा ॥ १९ ॥ तौ सीतया सार्धं तं राजानं बाहुभ्यां परिष्वज्य यथा पीडा न भवति तथालिंगितमुत्थाप्य पर्यंके समवेशयन् स्थापितवंतः ॥ २० ॥ मुहूर्तस्य संबंधसामान्ये षष्ठी मुहूर्तेन लब्धसंज्ञमित्यर्थः ॥ २१ ॥ कुशलेन मां पश्य

एवमुक्ताःस्त्रियःसर्वाःसुमंत्रेणनृपाज्ञया ॥ प्रचक्रमुस्तद्भवनंभर्तुराज्ञायशासनम् ॥ १२ ॥ अर्धसप्तशतास्तत्रप्रमदास्ताम्रलोचनाः ॥ कौसल्यांपरिवार्याथशनैर्जग्मुर्धृतव्रताः ॥ १३ ॥ आगतेषुचदारेषुसमवेक्ष्यमहीपतिः ॥ उवाचराजातंसूतंसुमंत्रानयमेसुतम् ॥ १४ ॥ ससूतोराममादायलक्ष्मणंमैथिलींतथा ॥ जगामाभिमुखस्तूर्णंसकाशंजगतीपतेः ॥ १५ ॥ सराजापुत्रमायांतंदृष्ट्वाचारात्कृतांजलिम् ॥ उत्पपातासनात्तूर्णमार्तःस्त्रीजनसंवृतः ॥ १६ ॥ सोऽभिदुद्राववेगेनरामंदृष्ट्वाविशांपतिः ॥ तमसंप्राप्यदुःखार्तःपपातभुविमूर्छितः ॥ १७ ॥ तंरामोभ्यपतत्क्षिप्रंलक्ष्मणश्चमहारथः ॥ विसंज्ञमिवदुःखेनसशोकंनृपतिंतथा ॥ १८ ॥ स्त्रीसहस्रनिनादश्चसंजज्ञेराजवेश्मनि ॥ हाहारामेतिसहसाभूषणध्वनिमिश्रितः ॥ १९ ॥ तंपरिष्वज्यबाहुभ्यांतावुभौरामलक्ष्मणौ ॥ पर्यंकेसीतयासार्धंरुदंतःसमवेशयन् ॥ २० ॥ अथरामोमुहूर्तस्यलब्धसंज्ञंमहीपतिम् ॥ उवाचप्रांजलिर्बाष्पशोकार्णवपरिप्लुतम् ॥ ॥ २१ ॥ आपृच्छेत्वांमहाराजसर्वेषामीश्वरोसिनः ॥ प्रस्थितंदंडकारण्यंपश्यत्वंकुशलेनमाम् ॥ २२ ॥ लक्ष्मणंचानुजानीहिसीताचान्वेतुमांवनम् ॥ कारणैर्बहुभिस्तथ्यैर्वार्यमाणौनचेच्छतः ॥ २३ ॥ अनुजानीहिसर्वान्नःशोकमुत्सृज्यमानद ॥ लक्ष्मणंमांचसीतांचप्रजापतिरिवात्मजान् ॥ २४ ॥ प्रतीक्षमाणमव्यग्रमनुज्ञांजगतीपतेः ॥ उवाचराजासंप्रेक्ष्यवनवासायराघवम् ॥ २५ ॥ अहंराघवकैकेय्यावरदानेनमोहितः ॥ अयोध्यायांत्वमेवाद्यभवराजानिगृह्यमाम् ॥ २६ ॥ एवमुक्तोनृपतिनारामोधर्मभृतांवरः ॥ प्रत्युवाचांजलिंकृत्वापितरंवाक्यकोविदः ॥ २७ ॥ भवान्वर्षसहस्रायपृथिव्यानृपतेपतिः ॥ अहंत्वरण्येवत्स्यामिनमेराज्यस्यकांक्षिता ॥ २८ ॥

सौम्येन चक्षुषा मामनुगृहाणेत्यर्थः ॥ २२ ॥ वनं प्रति प्रस्थितं मां सीता चान्वेतु गच्छत्विति लक्ष्मणं च प्रस्थितमनुजानीहीत्यर्थः । ननु लक्ष्मणसीतयोः कुतो वनवासकष्टप्राप्तिर्नह्यसौ वरनिर्बंधस्तयोरत आह कारणैरिति । हेतुभिः तथ्यैः व्यवहारदशया सत्यैः न चेच्छतः इह स्थातुमिति शेषः ॥ २३ ॥ अनुजानीहि अनुज्ञां देहि प्रजापतिर्ब्रह्मा आत्मजान्सनकादीन् तपांसि चारितुमुद्युक्तान्यथानुज्ञां दत्तवांस्तद्वदित्यर्थः ॥ २४ ॥ वनवासाय जगतीपतेः स्वस्यानुज्ञामनुमतिं प्रतीक्षमाणं प्रार्थयमानं अव्यग्रं लेशतोपि विषादरहितं राघवं प्रेक्ष्य उवाच ॥ २५ ॥ हे राघव यतोहं कैकेय्या वरदानेन मोहितो निरुत्तरतया शोकपरवशो जातोऽतो राज्यानर्हः अतोमां निगृह्य बद्धाऽयोध्यायां त्वमेव स्वभुजवैभवेन राजा भव प्रवृत्तमभिषेकं समापयेति यावत् ॥ २६ ॥ २७ ॥ भवान्वर्षसहस्राय पतिर्भवतु अतः परमप्यनेककालं राजा भवेत्यर्थः ।

त्वया यो वरो दत्तस्तमनृतं कर्तुमहं न योग्यस्तव नरकपातप्रसंगादतोहमरण्ये वत्स्यामि मे राज्यस्य कांक्षिता इच्छा न ॥ २८ ॥ प्रतिज्ञान्ते प्रतिज्ञासमाप्तौ ते पादौ ग्रहीष्यामीत्यन्वयः ॥ २९ ॥ कैकेय्या अद्यैव गमनमनुमन्यस्वेति मिथो रहसि चोद्यमानः ॥ ३० ॥ श्रेयसे परलोकहिताय वृद्धये इह लोकेऽभ्युदयाय अरिष्टं पापदुःखभिन्नं पुण्यं सुखं च तेऽस्तु। अव्यग्रः सन् अकुतोभयं पंथानं गच्छस्वेत्यार्षम् ॥ ३१ ॥ सत्यात्मनः सत्यप्रतिष्ठितस्वभावस्य धर्माभिमनसः धर्मसंपादनाभिनिविष्टमनसः ॥ ३२ ॥ मातरेव कैकेय्या प्रस्थितस्य मात्राद्यनुनयदानादिना आचतुर्थप्रहरं व्यापृतस्य तुर्ययामे राजानुमत्यर्थमागतस्य राज्ञा तत्कालसमीपमेव भवत्स्यमानरजनीसहवासः प्रार्थ्यते अद्येत्यादि इदानीमिति। समोपलक्षकं रजनीमावस सर्वथा मा गच्छ। किमर्थं तत्राह चरामि त्वया सह भोक्ष्यामि ॥ ३३ ॥ साधयिष्यसि गमिष्यसि ॥ ३४ ॥ मत्प्रियार्थं मम परलोकहितार्थम् ॥ ३५ ॥ तदेव दर्शयंति नचेत्यादि। छन्नया गूढक्रूराभिप्रायया चलितोस्मि भ्रंशितोस्मि त्वदभिषेकमनोरथात् भस्माग्निकल्पया भस्मच्छन्नाग्नितुल्यया ॥ ३६ ॥ वंचनासामान्येन

नवपंचचवर्षाणिवनवासेविहृत्यते ॥ पुनःपादौगृहीष्यामिप्रतिज्ञांतेनराधिप ॥ २९ ॥ रुदन्नार्तःप्रियंपुत्रंसत्यपाशेनसंयुतः ॥ कैकेय्याचोद्यमानस्तु मिथोराजातमब्रवीत् ॥ ३० ॥ श्रेयसेवृद्धयेतातपुनरागमनायच ॥ गच्छस्वारिष्टमव्यग्रःपंथानमकुतोभयम् ॥ ३१ ॥ नहिसत्यात्मनस्तातधर्माभिमनसस्तव ॥ सन्निवर्तयितुंबुद्धिःशक्यतेरघुनंदन ॥ ३२ ॥ अद्यत्विदानींरजनींपुत्रमागच्छसर्वथा ॥ एकाहंदर्शनेनापिसाधुतावच्चराम्यहम् ॥ ३३ ॥ मातरंमांचसंपश्यन्वसेमामद्यशर्वरीम् ॥ तर्पितःसर्वकामैस्त्वंश्वःकाल्येसाधयिष्यसि ॥ ३४ ॥ दुष्करंक्रियतेपुत्रसर्वथाराघवप्रिय ॥ त्वयाहि मत्प्रियार्थंतुवनमेवमुपाश्रितम् ॥ ३५ ॥ नचैतन्मेप्रियंपुत्रशपेसत्येनराघव ॥ छन्नयाचलितस्त्वस्मिस्त्रियाभस्माग्निकल्पया ॥ ३६ ॥ वंचनायातु लब्धामेतांत्वंनिस्तर्तुमिच्छसि ॥ अनयावृत्तसादिन्याकैकेय्याभिप्रचोदितः ॥ ३७ ॥ नचैतदाश्चर्यतमंयत्त्वंज्येष्ठःसुतोमम ॥ अपानृतकथंपुत्रपितरं कर्तुमिच्छसि ॥ ३८ ॥ अथरामस्तदाश्रुत्वापितुरार्तस्यभाषितम् ॥ लक्ष्मणेनसहभ्रात्रादीनोवचनमब्रवीत् ॥ ३९ ॥ प्राप्स्यामियानद्यगुणान्कोमे श्वस्तान्प्रदास्यति ॥ अपक्रमणमेवातःसर्वकामैरहंवृणे ॥ ४० ॥ इयंसराष्ट्रासजनाधनधान्यसमाकुला ॥ मयाविसृष्टावसुधाभरतायप्रदीयताम् ॥ ॥ ४१ ॥ वनवासकृताबुद्धिर्नचमेद्यचलिष्यति ॥ यस्तुयुद्धेवरोदत्तःकैकेय्यैवरदत्वया ॥ ४२ ॥ दीयतांनिखिलेनैवसत्यस्त्वंभवपार्थिव ॥ अहंनिदेशं भवतोयथोक्तमनुपालयन् ॥ ४३ ॥ चतुर्दशसमावत्स्येवनेवनचरैःसह ॥ माविमर्शोवसुमतीभरतायप्रदीयताम् ॥ ४४ ॥

प्रतिश्रुतवरयोर्भरताभिषेकत्वद्विवासनरूपविशेषपर्यवसायित्वरूपा या मे लब्धा यतोऽनया वृत्तसादिन्या कुलोचितचारित्रनाशिन्याऽभिप्रचोदितोस्मि एवमिति शेषः। अतो या वंचना मया लब्धा तां निस्तर्तुमिच्छसीति यावत् ॥ ३७ ॥ एतदाश्चर्यतमं न अपानृतकथम् अपगतानृतवचनम् एतच्च नाश्चर्यं यतो ज्येष्ठो गुणैर्वयसा च सुतोसि ॥ ३८ ॥ आर्तस्य पितुर्भाषितं श्रुत्वा एकाहदर्शनेनापीत्युक्तरूपं दीनः कैकेय्या अद्य गच्छेतिनियोगस्यावश्यानुष्ठेयत्वप्रतिज्ञानात्तावन्मात्रपितृमनोरथपूरणाशक्तया प्राप्तशोक इव ॥ ३९ ॥ तर्पितः सर्वकामैरित्यस्योत्तरमाह प्राप्स्यामीति। गुणान्मृष्टान्नादीन् अतः सर्वकामैः सर्वकामप्रतिनिधित्वेनापक्रमणं इतो गमनमेव वृणे इत्यर्थः। यद्वाऽद्य प्रयाणे सतीमान् गुणान्प्रतिज्ञापालनजधर्मरूपान्प्राप्स्यामि श्वोगमने कस्तान्दास्यति प्रत्युताधर्म एव अतः सर्वकामैरित्यादिप्राग्वदेव ॥ ४० ॥ ४१ ॥ अद्य वनवासकृता तदर्था बुद्धिर्न चलिष्यति अतो गमनानुज्ञामेव कुर्वित्याशयः अतिदानशूरस्य भवतोऽनुचितमप्येतदित्याह य इति ॥ ४२ ॥ निखिलेन अद्यैव मत्प्रस्थापनात् निदेशं शासनम् ॥ ४३ ॥ वनचरैस्तपस्विभिः मा विमर्शः

भरताय राज्यदाने मास्तु संदेहः सर्वथा तस्मै वसुमती दीयताम् ॥ ४४ ॥ कथमेवमत आह नहीति । आत्मनि स्वमनसि सुखं स्वीयानां प्रियं चोद्दिश्य राज्यं न कांक्षितम् अपि तु तव निदेशे यथावत्कर्तुमेव कांक्षितम् इच्छामि ॥ ४५ ॥ क्षुभ्यति मर्यादां त्यजति ॥ ४६ ॥ ४७ ॥ अनृतं अनृतयुक्तं एवं सत्यं सत्ययुक्तं तव प्रत्यक्षं तव सन्निधौ सत्येन सुकृतेन ते त्वया च शपे शपथं करोमीत्यर्थः ॥ ४८ ॥ क्षणमपि इह पुरे इति शेषः । स त्वमिमं मद्गमनसंभवं शोकं धारयस्व विपर्ययः इहाद्यस्थितिरूपं प्रतिज्ञातार्थविपरीतानुष्ठानम् ॥ ४९ ॥ ५० ॥ उत्कंठां दर्शनादिविषयोत्कंठाजन्यं दुःखम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ येन त्वया ॥ ५४ ॥ केवला कृत्स्ना चिराय वनं सेवितुं गमिष्यामि ॥५५॥ शिवासु सीमास्विति स्थित इति शेषः । मया विना तेनात्र पुरे स्थातुमशक्यत्वादिति भावः । केवलमनुशास्तु रक्षणमात्रं करोतु नतु राज

नहिमेकांक्षितंराज्यंसुखमात्मनिवाप्रियम् ॥ यथानिदेशंकर्तुंवैतवैवरघुनंदन ॥ ४५ ॥ अपगच्छतुतेदुःखंमाभूर्बाष्पपरिप्लुतः ॥ नहिक्षुभ्यातिदुर्धर्षः समुद्रःसरितांपतिः ॥ ४६ ॥ नैवाहंराज्यमिच्छामिनसुखंनचमेदिनीम् ॥ नैवसर्वानिमान्कामान्नस्वर्गंनचजीवितुम् ॥ ४७ ॥ त्वामहंसत्यमिच्छामिनानृतंपुरुषर्षभ ॥ प्रत्यक्षंतवसत्येनसुकृतेनचतेशपे ॥ ४८ ॥ नचशक्यंमयातातस्थातुंक्षणमपिप्रभो ॥ सशोकंधारयस्वेमंनहिमेस्तिविपर्ययः ॥ ॥ ४९ ॥ अर्थितोह्यस्मिकैकेय्यावनंगच्छेतिराघव ॥ मयाचोक्तंव्रजामीतितत्सत्यमनुपालये ॥ ५० ॥ माचोत्कंठाकृतादेववनेरंस्यामहेवयम् ॥ प्रशांतहरिणाकीर्णेनानाशकुनिनादिते ॥ ५१ ॥ पिताहिदैवतंतातदेवतानामपिस्मृतम् ॥ तस्माद्दैवतमित्येवकरिष्यामिपितुर्वचः ॥ ५२ ॥ चतुर्दशसुवर्षेषुगतेषुनृपसत्तम ॥ पुनर्द्रक्ष्यासिमांप्राप्तंसंतापोयंविमुच्यताम् ॥ ५३ ॥ येनसंस्तंभनीयोयंसर्वोबाष्पकलोजनः ॥ सत्वंपुरुषशार्दूलकिमर्थंविक्रियांगतः ॥ ५४ ॥ पुरंचराष्ट्रंचमहीचकेवलामयाविसृष्टाभरतायदीयताम् ॥ अहंनिदेशंभवतोनुपालयन्वनंगमिष्यामिचिरायसेवितुम् ॥ ५५ ॥ मयाविसृष्टांभरतोमहीमिमांसशैलखंडांसपुरोपकाननाम् ॥ शिवासुसीमास्वनुशास्तुकेवलंत्वयायदुक्तंनृपतेतथास्तुतत् ॥ ५६ ॥ नमेतथापार्थिवदीयतेमनोमहत्सुकामेषुनचात्मनःप्रिये ॥ यथानिदेशेतवशिष्टसंमतेव्यपैतुदुःखंतवमत्कृतेऽनघ ॥ ५७ ॥ तदद्यनैवानघराज्यमव्ययंनसर्वकामान्वसुधांनमैथिलीम् ॥ नचिंतितंत्वामनृतेनयोजयन्वृणीयसत्यंव्रतमस्तुतेतथा ॥ ५८ ॥ फलानिमूलानिचभक्षयन्वनेगिरींश्चपश्यन्सरितःसरांसिच ॥ वनंप्रविश्यैवविचित्रपादपंसुखीभविष्यामितवास्तुनिर्वृतिः ॥ ५९ ॥

त्वाभिमानो राज्यसुखं वा तस्येति ध्वनितम् । अनेन राज्ञो जीवनं भरतस्य नंदिग्रामवासश्च ध्वनितः । शिवासु सीमासु रममाण इत्यापाततोर्थः । त्वया यदुक्तं कैकेयीं प्रतीति शेषः ॥ ५६ ॥ यथा शिष्टसंमते तव निदेशे मया मनो दीयते तथा महत्सु कामेषु काम्यवस्तुषु मनः संकल्पात्मकं मे मया न दीयते न च नाप्यात्मनोंतःकरणस्य प्रियेऽतो मत्कृते दुःखं व्यपैतु ॥ ५७ ॥ त्वामनृतेन योजयन् राज्यादिकं चिंतितं मद्विषयचिंतावंतं त्वामपि न वृणीय न वरिष्यामि इति मे सत्यं व्रतं तथा ते व्रतं कैकेयीवरदानसंकल्पः सत्यमस्तु अत्र चिंतितं त्वामित्यनेन चिंतया तव मरणेपि मया न स्थेयं मरणादपि परलोकनाशकानृतत्व

स्यातिकष्टत्वं सूचितम् । तेन तव मरणेन मे दुःखं नापि पापं यथा तवानृतत्वकरणे इति सूचितम् ॥ ५८ ॥ ५९ ॥ तापस्त्वग्दाहोत्पादकः दुःखमंतर्व्यथोत्पादकम् ॥ ६० ॥ समेता मिलिताः तां कैकेयीं हाहाइति शब्दः कृतो येन तथाभूतं सर्वं परिचारिकादिजनजातम् ॥ ६१ ॥ केचमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुस्त्रिंशः सर्गः ॥ ३४ ॥
॥ एवं सपरिकरस्य राज्ञः परमशोके प्राप्ते सुमंत्रः कैकेयीं प्रत्याह तत इति । शिरोनिर्धूननादिकोपविकाराभिनयः कटकटाय्य कटकटाशब्दवतः कृत्वा ॥ १ ॥ कोपसंरक्ते कृत्वेति शेषः । वर्णं मुखकांतिं पूर्वोचितं पूर्वकालस्थितं राजमंत्रिण उचितं च ॥ २ ॥ दशरथस्य मनः समीक्षमाणः कैकेयीविषयस्नेहरहितं जानन् ॥ ३ ॥ ४ ॥ यस्यास्तव यया त्वया ॥ ५ ॥ अतो नहीति । हे देवि तवातिशयेन कर्तुमशक्यं न

एवंसराजाव्यसनाभिपन्नस्तापेनदुःखेनचपीड्यमानः ॥ आलिंग्यपुत्रंसुविनष्टसंज्ञोभूमिंगतोनैवविचष्टकिंचित् ॥ ६० ॥ देव्यःसमस्तारुरुदुःसमेतास्तां वर्जयित्वानरदेवपत्नीम् ॥ रुदन्सुमित्रोपिजगाममूर्छांहाहाकृतंतत्रबभूवसर्वम् ॥ ६१ ॥ इत्यार्षेश्रीम०वा०आ०अयोध्याकांडेचतुस्त्रिंशःसर्गः ॥ ३४ ॥
ततोनिधूयसहसाशिरोनिःश्वस्यचासकृत् ॥ पाणिंपाणौविनिष्पिष्यदंतान्कटकटाय्यच ॥ १ ॥ लोचनेकोपसंरक्तेवर्णंपूर्वोचितंजहत् ॥ कोपाभिभूतः सहसासंतापमशुभंगतः ॥ २ ॥ मनःसमीक्षमाणश्चसूतोदशरथस्यच ॥ कंपयन्निवकैकेय्याहृदयंवाक्शरैःशितैः ॥ ३ ॥ वाक्यवज्रैरनुपमैर्निर्भिंदन्निवचाशुभैः ॥ कैकेय्याःसर्वमर्माणिसुमंत्रःप्रत्यभाषत ॥४॥ यस्यास्तवपतिस्त्यक्तोराजादशरथःस्वयम् ॥ भर्तासर्वस्यजगतःस्थावरस्यचरस्यच ॥ ॥ ५ ॥ नह्यकार्यतमंकिंचित्तवदेवीहविद्यते ॥ पतिघ्नींत्वामहंमन्येकुलघ्नीमपिचांततः ॥ ६ ॥ यन्महेंद्रमिवाजय्यंदुष्प्रकंप्यमिवाचलम् ॥ महोदधिमिवाक्षोभ्यंसंतापयसिकर्मभिः ॥ ७ ॥ मावमंस्थादशरथंभर्तारंवरदंपतिम् ॥ भर्तुरिच्छाहिनारीणांपुत्रकोट्याविशिष्यते ॥ ८ ॥ यथावयोहिराज्यानिप्राप्नुवंतिनृपक्षये ॥ इक्ष्वाकुकुलनाथेऽस्मिंस्तंलोपयितुमिच्छसि ॥ ९ ॥ राजाभवतुतेपुत्रोभरतःशास्तुमेदिनीम् ॥ वयंतत्रगमिष्यामोयत्ररामोगमिष्यति ॥ १० ॥ नचतेविषयेकश्चिद्ब्राह्मणोवस्तुमर्हति ॥ तादृशंत्वममर्यादमद्यकर्मकरिष्यसि ॥ ११ ॥ नूनंसर्वेगमिष्यामोमार्गंरामनिषेवितम् ॥ त्यक्तायावांधवैःसर्वैर्ब्राह्मणैःसाधुभिःसदा ॥ १२ ॥ काप्रीतीराज्यलाभेनतवदेविभविष्यति ॥ तादृशंत्वममर्यादंकर्मकर्तुंचिकीर्षसि ॥ १३ ॥ आश्चर्यमिवपश्यामियस्यास्तेवृत्तमीदृशम् ॥ आचरंत्यानविदृतासद्योभवतिमेदिनी ॥ १४ ॥ महाब्रह्मर्षिसृष्टावाज्वलंतोभीमदर्शनाः ॥ धिग्वाग्दंडानहिंसंतिरामप्रव्राजनेस्थिताम् ॥ १५ ॥

किंचिद्विद्यते इह संसारे अंततः सर्वांते त्वत्कृत्यसाध्यफलविचारे इत्यर्थः । पतिघ्नीमिति । रामगमने राजमरणस्यावश्यकत्वादिति भावः । रामस्य विवासनात् राज्ञो मरणाच्च कुलघ्नीम् ॥ ६ ॥ अचलमिव दुष्प्रकंप्यं कर्मभिः क्रूरैः संतापयसि राजानमिति शेषः ॥ ७ ॥ भर्तुरिच्छा भर्तुरिच्छाविषयानुसरणम् ॥ ८ ॥ यथा वयः वयःक्रममनतिक्रम्य नृपक्षये राजभूतपितृक्षये राज्यानि प्राप्नुवंति ज्येष्ठक्रमेणेति यावत् । तमिममनादिप्रवृत्तमाचारमिक्ष्वाकुकुलनाथे दशरथे जीवत्येव लोपयितुमिच्छसीति योजना ॥ ९ ॥ १० ॥ विषये देशे तादृशंब्राह्मणवासानर्हम् । अमर्यादंअतिक्रमितज्येष्ठराज्यादिव्यवहारं करिष्यसीत्यनेनाद्यापि रामं निवर्तयेति सूचयति ॥ ११ ॥ १२ ॥ १३ ॥ यस्यास्ते ईदृशं घोरं वृत्तमस्ति तया त्वया तदाचरंत्या हेतुभूतया पृथिवी यन्न विदृता न विदीर्णा तदाश्चर्यमिव पश्यामि ॥ १४ ॥ किंच महाब्रह्मर्षिभिःसृष्टाः

प्रयुक्ताः ज्वलंतः अग्निवद्भस्मकरणसमर्थाः भीमदर्शनाः भीमं फलं दृश्यते येषु तादृशा धिगिति वाग्रूपा दंडाः त्वां न हिंसंति इदमप्याश्चर्यमित्यनुकर्षः । स्थितां कृतनिश्चयाम् अनेन सर्वे त्वां धिक्कुर्वंतीति ध्वनयति ॥१५॥ अथान्यापदेशेन राजानं निंदति आम्रमिति । परिचरेत् आलवालादिकरणेन रोपयेदाम्रस्थाने तं च पुनः पयसा सिंचेत् । अस्यैवं निंबसेवां कुर्वतः प्रीतये स मधुरो न भवेत् । अतो वृथैवेदं कैकेय्यनुवर्तनं राज्ञ इत्याशयः ॥१६॥ इदानीं कैकेय्या मर्मवचनान्यप्याह आभिजात्यमिति । यथा ते मातुराभिजात्यं प्रशस्तमातापितृजत्वोचितव्यवहाररूपं तथैव ते तव मन्ये । कारणानुसारित्वात्कार्यस्येति भावः । तदुपपादयति दृष्टांतेन नहीति । निंबात्क्षौद्रं न स्रवेदिति वचो लोकप्रसिद्धं किलेत्यर्थः ॥१७॥ ननु मे मातुः कथमाभिजात्यक्षतिस्तत्राह तवेति । असद्ग्राहं घोरपापकर्माभिनिवेशम् पूर्वं वृद्धेभ्यो यथा येन प्रकारेण श्रुतं तथा संप्रति विप्र स्मराम । तदेवाह पितुरित्यादि । कश्चिदृषिः ॥ १८ ॥ तस्माद्वरदानात्सर्वभूतानां व्यक्ताव्यक्तवाचां रुतं शब्दं तद्बोध्यमर्थं संजज्ञे जानीतेस्म तेन सर्वभूतरुतज्ञत्वेन तिर्यग्गतानां तिर्यक्स्रोतसां पशुपक्ष्यादीनां वचो विदितं ज्ञातार्थं भवति॥१९॥ ततस्तत एव हेतोः शयने शयानस्य ते पितुः भूरिवर्चसः सुवर्णकांतेर्जृंभस्य जृंभाख्यस्य पक्षिणो भावोऽभिप्रायः विरुतात्तदीयशब्दाद्विदितः । अथ स ते पिता तत्र शयने शयान एव तद्भावपरिज्ञा

आम्रंछित्त्वाकुठारेणनिंबंपरिचरेत्तुकः ॥ यश्चैनंपयसासिंचेन्नैवास्यमधुरोभवेत ॥ १६॥ आभिजात्यंहितेमन्येययामातुस्तथैवच ॥ नहिनिंबात्स्रवेत्क्षौद्रंलोकेनिगदितंवचः ॥ १७ ॥ तवमातुरसद्ग्राहंविद्मपूर्वंयथाश्रुतम् ॥ पितुस्तेवरदःकश्चिद्ददौवरमनुत्तमम् ॥ १८ ॥ सर्वभूतरुतंतस्मात्संजज्ञेवसुधाधिपः ॥ तेनतिर्यग्गतानांचभूतानांविदितंवचः ॥ १९ ॥ ततोजृंभस्यशयनेविरुताद्भूरिवर्चसः ॥ पितुस्तेविदितोभावःसतत्रबहुधाहसत् ॥ २० ॥ तत्रतेजननीक्रुद्धामृत्युपाशमभीप्सती॥ हासंतेनृपतेसौम्याजिज्ञासामीतिचाब्रवीत् ॥२१॥ नृपश्चोवाचतांदेवींहासंशंसामितेयदि ॥ ततोमेमरणंसद्योभविष्यतिनसंशयः ॥ २२ ॥ मातातेपितरंदेवीपुनःकेकयमब्रवीत् ॥ शंसमेजीववामावानमांत्वंप्रहसिष्यसि ॥ २३ ॥ प्रिययाचतथोक्तःसकेकयःपृथिवीपतिः॥ तस्मैतंवरदायार्थंकथयामासतत्त्वतः ॥ २४ ॥ ततःसवरदःसाधूराजानंप्रत्यभापत ॥ म्रियतांध्वंसतांवेयंमाशंसीस्त्वंमहीपते ॥२५॥ सतच्छ्रुत्वावचस्तस्यप्रसन्नमनसोनृपः ॥ मातरंतेनिरस्याशुविजहारकुबेरवत् ॥ २६ ॥ तथात्वमपिराजानंदुर्जनाचरितेपथि ॥ असद्ग्राहमिमंमोहात्कुरुषेपापदर्शिनी ॥ २७ ॥ सत्यश्चात्रप्रवादोयंलौकिकःप्रतिभातिमा ॥ पितृन्समनुजायंतेनरामातरमंगनाः ॥ २८ ॥

नजसंतोषेण बहुधा द्वित्रिर्बहुप्रकारेण चाहसत् ॥२०॥ तत्र शयने शयाना ते जननी मामयं हसतीति क्रुद्धा सती मृत्युरूपं पाशमिच्छंती हे नृपते ते हासं हासकारणं ज्ञातुमिच्छामीति ते पितरमब्रवीत् । वरं ते इतिपाठे ते जननीमामयं हसतीति बुद्ध्या क्रुद्धाभवत् । ततो राज्ञा त्वद्विषयोयं न हासः किंतु वरबलान्मे सर्वरुतज्ञानसामर्थ्यमस्ति अतः किंचिज्जंतुं विदिततद्भावोऽहासिषमित्युक्ते तद्वरस्वरूपं तद्दातारं च जिज्ञासामीत्यर्थः ॥ २१ ॥ हासं तत्कारणम् । वरमितिपाठे तद्दातारम् ॥ २२ ॥ सर्वथा शंस जीव वा मा वा म्रियस्व वा तस्मिन्नवगते इतःपरं मां कदापि न हसिष्यसि । त्वत्कर्तृकमत्कर्मकभाविहासाभावं निश्चेष्यामीत्यर्थः ॥२३॥ तस्मै वरदाय ऋषये तमर्थं कथननिर्बंधरूपं कथयामासेत्यन्वयः ॥ २४ ॥ ततः साधुः स वरदः प्रत्यभापत ध्वंसतां वा स्वपित्रादिसमीपं गच्छतु वा । माकृथा इतिपाठे अस्या वच इति शेषः ॥ २५ ॥ निरस्य भद्रे त्वमितो गच्छेति ते मातरं परित्यज्य ॥ २६ ॥ तथा त्वमपि दुर्जनाचरिते पथि स्थितेति शेषः । अत इमं राजानं मोहान्मोहमुत्पाद्य असद्ग्राहं असत्कार्यग्राहकं कुरुषे ॥ २७ ॥ कन्यानां मातृतुल्यत्वं न्याय

मामामित्याह सत्यमिति । मा माम् नराः पुत्ररूपाः समनुजायंते पितृस्वभावानुवर्तिनो जायंत ॥ २८ ॥ नैवं भव मातृवन्मा भव । यद्वसुधाधिप आह तद्गृहाण रामाभिषेकरूपं वचः । नयेतिपाठे विधया भवं त्यर्थः । भर्तुरिच्छां तद्विषयं उपास्य तदनुवर्तिनी भूत्वास्य जनस्यास्मदादेर्गतिः शरणं भव ॥ २९ ॥ मोत्साहिताः प्रेरिता असद्धर्मं कनिष्ठाभिषेकपूर्वं ज्येष्ठस्य विवासनरूपं उपादध ग्राहय । उपावहतिपाठेप्यय मेवार्थः ॥३०॥ तव मिथ्या प्रतिज्ञातं लीलयोक्तं वरद्वयदानरूपं वचोतो राजा न करिष्यति तत् ॥३१॥ अतो ज्येष्ठत्वादिगुणको रामोऽभिषिच्यतां तदभिषेकेऽनुमतिः क्रियताम् । कर्मण्यः कर्मणि साधुः ॥३२॥ विपक्षे बाधकमाह परिवाद इति । परिवादः अपवादः चरिष्यति प्रचरिष्यति ॥ ३३ ॥ राघवाद्रामादन्यः पुरवरे वसन् ते क्षमोनुकूलो नहि भवेदित्यर्थः । भरतस्त्वत्प्रतिकूल एव भविष्यतीति भावः ॥ ३४ ॥

नैवंभवगृहाणेदंयदाहवसुधाधिपः ॥ भर्तुरिच्छामुपास्येहजनस्यास्यगतिर्भव ॥ २९ ॥ मात्वंप्रोत्साहितापापैर्देवराजसमप्रभम् ॥ भर्तारंलोकभर्तारमसद्धर्ममुपादध ॥ ३० ॥ नहिमिथ्याप्रतिज्ञातंकरिष्यतितवानघः ॥ श्रीमान्दशरथोराजादेविराजीवलोचनः ॥ ३१ ॥ ज्येष्ठोवदान्यःकर्मण्यःस्वधर्मस्यापिरक्षिता ॥ रक्षिताजीवलोकस्यबलीरामोभिषिच्यताम् ॥ ३२ ॥ परिवादोहितेदेविमहाँल्लोकेचरिष्यति ॥ यदिरामोवनंयातिविहायपितरंनृपम् ॥ ३३ ॥ स्वराज्यंराघवःपातुभवत्वंविगतज्वरा ॥ नहितेराघवादन्यःक्षमःपुरवरेवसन् ॥ ३४ ॥ रामेहियौवराज्यस्थेराजादशरथोवनम् ॥ प्रवेक्ष्यतिमहेष्वासःपूर्ववृत्तमनुस्मरन् ॥ ३५ ॥ इतिसांत्वैश्चतीक्ष्णैश्चकैकेयींराजसंसदि ॥ भूयःसंक्षोभयामाससुमंत्रस्तुकृतांजलिः ॥ ३६ ॥ नैवसाक्षुभ्यतेदेवीनचस्मपरिदूयते ॥ नचास्यामुखवर्णस्यलक्ष्यतेविक्रियातदा ॥ ३७ ॥ इत्यार्षेश्रीमद्रामायणेवा०आ०अयो०पंचत्रिंशः सर्गः ॥ ३५ ॥

ततःसुमंत्रमैक्ष्वाकःपीडितोत्रप्रतिज्ञया ॥ सबाष्पमतिनिःश्वस्यजगादेदंपुनर्वचः ॥ १ ॥ ॥ सूतरत्नसुसंपूर्णाचतुर्विधबलाचमूः ॥ राघवस्यानुयात्रार्थंक्षिप्रंप्रतिविधीयताम् ॥ २ ॥ रूपाजीवाश्चवादिन्योवणिजश्चमहाधनाः ॥ शोभयंतुकुमारस्यवाहिनीःसुप्रसारिताः ॥ ३ ॥ येचैनमुपजीवंतिरमतेयैश्चवीर्यतः ॥ तेषांबहुविधंदत्वातानप्यत्रनियोजय ॥४॥ आयुधानिचमुख्यानिनागराःशकटानिच ॥ अनुगच्छंतुकाकुत्स्थंव्याधाश्चारण्यकोविदाः ॥ ५ ॥ निघ्नन्मृगान्कुंजरांश्चपिबंश्चारण्यकंमधु ॥ नदीश्चविविधाःपश्यन्नराज्यंसंस्मरिष्यति ॥ ६ ॥ धान्यकोशश्चयःकश्चिद्धनकोशश्चमामकः ॥ तौराममनुगच्छेतांवसंतंनिर्जनेवने ॥ ७ ॥

अतो रामे हीति । पूर्ववृत्तं पूर्वराजाचारम् ॥ ३५ ॥ भूयोत्यर्थम् ॥ ३६ ॥ सांत्वैः न क्षुभ्यते । तीक्ष्णैः न परिदूयते ॥ ३७ ॥ सैलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ ॥ छ ॥ एवं सुमंत्रेण राजप्रतिज्ञाया मिथ्यात्वोक्तावपि राजा तस्या वास्तवत्वं जानन् रामस्य वन एव सुखवासोपायमादिशति तत इति । कैकेय्यनंगीकारानंतरं प्रतिज्ञया कैकेयीमुद्दिश्य कृतया वास्तव्या इदं वक्ष्यमाणम् ॥ १ ॥ चतुर्विधबला रथादिचतुर्विधबलवती चमूः सेना । अनुयात्रार्थं सेवार्थं प्रतिविधीयतां नियुज्यतां प्रस्थाप्यताम् ॥ २ ॥ वादिन्यः परचित्ताकर्षणचतुराः । रूपाजीवाः वेश्याः सुप्रसारिताः सुप्रसारितापणाः ॥ ३ ॥ यैर्मल्लैः वीर्यतः वीर्यपरीक्षया रमते इत्यर्थः ॥४॥ नागरा जनाः अरण्ये कोविदाः अरण्यमर्मज्ञाः ॥५॥ राज्यं राज्यस्थितिं देशस्थितिम् ॥ ६ ॥ ७ ॥

आप्तदक्षिणाः उक्तदक्षिणाः ॥ ८ ॥ पालयिष्यतीति सोपालंभोक्तिः । संसाध्यतां प्रस्थाप्यताम् ॥ ९ ॥ स्वरश्च व्यरुंध्यत रुद्धो जातः । भयकार्यमेतत् ॥ १० ॥ ११ ॥ मंडः सुरासारांशः । निरास्वाद्यं निर्गतास्वाद्यतमम् । शून्यं अवस्तुकम् ॥१२॥१३॥ हे अहिते मा मां धुरि दासवत् वरहेतुकरामविवासनभरताभिषेकरूपभारे नियुज्य तं च भारं वहंतं मां किं तुदसि व्यथयसि । हे अनार्ये यदिदानीमारब्धं कृत्यं सार्वभौमभोगसहितस्य प्रस्थापनप्रतिबंधरूपं तत् तादृशं गमनं पूर्वमेव वनवासप्रार्थनकाले एव नोपारुधः सर्वं त्यक्त्वा केवलो यात्विति किं न प्रार्थितवत्यसि । तत एतन्निरोधे तव सामर्थ्यं नास्तीति भावः कुद्धदीनोक्तित्वात्सर्वदोषपरिहारः ।१४। द्विगुणं कुद्धा प्रकारांतरेण प्रत्ययोजनं नाशयतीत्याशयेन ॥ १५ ॥ पूर्वमनुक्तमपि केवलत्वं वनगमनत्वादेव सिद्धमिति दृष्टांतबलेनाह तवैवेति । उपारुधत् राज्यभोगेभ्यो इति शेषः ॥ १६ ॥ एवमुक्तः असमंज

यजन्पुण्येषुदेशेषुविसृजंश्चाप्तदक्षिणाः ॥ ऋषिभिश्चापिसंगम्यप्रवत्स्यतिसुखंवने ॥ ८ ॥ भरतश्चमहाबाहुरयोध्यांपालयिष्यति ॥ सर्वकामैःपुनः श्रीमान्रामःसंसाध्यतामिति ॥ ९ ॥ एवंब्रुवतिकाकुत्स्थेकैकेय्याभयमागतम् ॥ मुखंचाप्यगमच्छोषंस्वरश्चापिव्यरुध्यत ॥ १० ॥ साविषण्णाचसंत्रस्तामुखेनपरिशुष्यता ॥ राजानमेवाभिमुखीकैकेयीवाक्यमब्रवीत् ॥ ११ ॥ राज्यंगतधनंसाधोपीतमंडांसुरामिव ॥ निरास्वाद्यतमंशून्यंभरतो नाभिपत्स्यते ॥ १२ ॥ कैकेय्यांमुक्तलज्जायांवदंत्यामतिदारुणम् ॥ राजादशरथोवाक्यमुवाचायतलोचनाम् ॥ १३ ॥ वहंतंकिंतुदसिमांनियुज्यधुरिमाहिते ॥ अनार्येकृत्यमारब्धंकिंनपूर्वमुपारुधः ॥ १४ ॥ तस्यैतत्क्रोधसंयुक्तमुक्तंश्रुत्वावरांगना ॥ कैकेयीद्विगुणंकुद्धाराजानमिदमब्रवीत् ॥ १५ ॥ तवैववंशेसगरोज्येष्ठपुत्रमुपारुधत् ॥ असमंजइतिख्यातंतथाऽयंगंतुमर्हति ॥ १६ ॥ एवमुक्तोधिगित्येवराजादशरथोब्रवीत् ॥ व्रीडितश्चजनःसर्वःसाचतन्नावबुध्यत ॥ १७ ॥ तत्रवृद्धोमहामात्रःसिद्धार्थोनामनामतः ॥ शुचिर्बहुमतोराज्ञःकैकेयीमिदमब्रवीत् ॥ १८ ॥ असमंजोगृहीत्वातुक्रीडतःपथिदारकान् ॥ सरय्वांप्रक्षिपन्नप्सुरमतेतेनदुर्मतिः ॥ १९ ॥ तंदृष्ट्वानागराःसर्वेक्रुद्धाराजानमब्रुवन् ॥ असमंजंवृणीष्वैकमस्मान्वाराष्ट्रवर्धन ॥ २० ॥ तानुवाचततोराजाकिंनिमित्तमिदंभयम् ॥ ताश्चापिराज्ञासंपृष्टावाक्यंप्रकृतयोऽब्रुवन् ॥ २१ ॥ क्रीडतस्त्वेषनःपुत्रान्बालानुद्भ्रांतचेतसः ॥ सरय्वांप्रक्षिपन्मौर्ख्यादतुलांप्रीतिमश्नुते ॥ २२ ॥ सतासांवचनंश्रुत्वाप्रकृतीनांनराधिपः ॥ तंतत्याजाहितंपुत्रंतासांप्रियचिकीर्षया ॥ २३ ॥ तंयानंशीघ्रमारोप्यसभार्यंसपरिच्छदम् ॥ यावज्जीवंविवास्योयमितितानन्वशात्पिता ॥ २४ ॥ सफालपिटकंगृह्यगिरिदुर्गाण्यलोकयत ॥ दिशःसर्वास्त्वनुचरन्सयथापापकर्मकृत् ॥ २५ ॥

तुल्यतया गमने उक्तः । स्वमतिश्रुतातिरिक्तप्रलापात् राज्ञो धिगित्युक्तिः । जनः कैकेयीसेवकजनः सर्वस्वामिन्या असंबद्धप्रलापात् नावबुध्यत क्रोधवशादिति भावः ॥ १७ ॥ तद्वद्गमनस्य नात्र प्रसंगं इति महामात्र आह तत्रेति । महामात्रः प्रधानः ॥ १८ ॥ सरय्वाम् अप्सु प्रक्षिपन् रमते तेन कारणेन दुर्मतिः सः । न तादृशोयमिति भावः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ तं प्रकृतीनामहितं पुत्रं तत्याजेत्यन्वयः ॥ २३ ॥ शीघ्रं यानमारोप्य स्वेच्छया गमने विलंबकरणसंभवात्सपरिच्छदं वनयोग्यफालपिटकादिपरिच्छदसहितम् । तान्विवासनाधिकारिणः अन्वशात् उक्तवान् ॥ २४ ॥ यथापापकर्मकृत् यथोक्तपापकर्मकृत्सः फालसहितं पिटकं गृहीत्वा कंदाद्यर्थं सर्वा दिशः सर्वदिक्षु गिरिदुर्गाणि अनुचरन् भ्रममाणः कंदाद्यलोकयत् । सर्वा दिशस्त्वनुचरन्नतिप्रपापकर्मकृदितिपाठे गिरिदुर्गाणि वासार्थमेव विलोकयन्सर्वा

दिशश्च कंदाद्यर्थमनुचरन् अतिष्ठत् यावज्जीवम् । निजापराधाद्वने इति शेषः ॥ २५ ॥ प्रकृते तदप्रसग इत्याह रामः किमिति ॥२६॥ अगुणं दोषं व्यसनरूपम् । निरयः पापम् कल्मषं मालिन्यम् ॥२७॥२८॥ ॥ २९ ॥ त्वया विहतया रामस्य श्रिया तेन किंचित्फलमिति शेषः । भरतस्य त्वदनुरूपमतित्वाभावात्तदलं वृथा श्रमेण । हि यतो लोकतः प्राप्तः परिवादश्च ते रक्ष्यः परिहार्यो भवति । एवं च लोकापवादमात्रमस्य फलं नान्यत्किंचिदिति भावः ॥ ३० ॥ ३१ ॥ एतद्वचः सिद्धार्थवचः हि यतः कृपणं मार्गमास्थाय येयं त्वया कुचेष्टारूपा चेष्टा कृता सा साधुपथादपेता ॥ ३२ ॥ सर्वेच अयोध्यावासिनो जनाः राज्ञा भरतेन च । चस्त्वर्थे ॥ ३३ ॥ ३वें ३लैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये अयोध्याकांडे षड्त्रिंशः सर्गः ॥ ३६ ॥ ॥ छ ॥ ॥ रामो

इत्येनमत्यजद्राजासगरोवैसधार्मिकः ॥ रामःकिमकरोत्पापंयेनैवमुपरुध्यते ॥ २६ ॥ नहिकंचनपश्यामोराघवस्यागुणंवयम् ॥ दुर्लभोह्यस्यनिरयःशशांकस्येवकल्मषम् ॥ २७॥ अथवादेवित्वंकंचिद्दोषंपश्यसिराघवे ॥ तमद्यब्रूहितत्त्वेनतदारामोविवास्यते ॥ २८ ॥ अदुष्टस्यहिसंत्यागःसत्पथेनिरतस्यच ॥ निर्दहेदपिशक्रस्यद्युतिंधर्मविरोधवान् ॥ २९ ॥ तदलंदेविरामस्यश्रियाविहतयात्वया ॥ लोकतोपिहितेरक्ष्यःपरिवादःशुभानने ॥ ॥३०॥ श्रुत्वातुसिद्धार्थवचोराजाश्रांततरस्वरः ॥ शोकोपहतयावाचाकैकेयीमिदमब्रवीत् ॥ ३१ ॥ एतद्वचोनेच्छसिपापरूपेहितंनजानासिममात्मनोथवा ॥ आस्थायमार्गंकृपणंकुचेष्टाचेष्टाहितेसाधुपथादपेता ॥ ३२ ॥ अनुव्रजिष्याम्यहमद्यरामंराज्यंपरित्यज्यसुखंधनंच ॥ सर्वेचराज्ञाभरतेनचत्वंयथासुखंभुंक्ष्वचिरायराज्यम् ॥ ३३ ॥ इत्यार्षेश्रीमद्रामायणेवा०आ०अ०षट्त्रिंशः सर्गः ॥ ३६ ॥ महामात्रवचःश्रुत्वारामोदशरथंतदा ॥ अभ्यभाषतवाक्यंतुविनयज्ञोविनीतवत् ॥ १ ॥ त्यक्तभोगस्यमेराजन्वनेवन्येनजीवतः ॥ किंकार्यमनुयात्रेणत्यक्तसंगस्यसर्वतः ॥ २ ॥ योहिदत्वाद्विपश्रेष्ठंकक्ष्यायांकुरुतेमनः ॥ रज्जुस्नेहेनकिंतस्यत्यजतःकुंजरोत्तमम् ॥ ३ ॥ तथाममसतांश्रेष्ठकिंध्वजिन्याजगत्पते ॥ सर्वाण्येवानुजानामिचीराण्येवानयंतुमे ॥ ४ ॥ खनित्रपिटकेचोभेसमानयतगच्छत ॥ चतुर्दशवनेवासंवर्षाणिवसतोमम ॥ ५ ॥ अथचीराणिकैकेयीस्वयमाहृत्यराघवम् ॥ उवाचपरिधत्स्वेतिजनौघेनिरपत्रपा ॥ ६ ॥ सचीरेपुरुषव्याघ्रःकैकेय्याःप्रतिगृह्यते ॥ सूक्ष्मवस्त्रमवक्षिप्यमुनिवस्त्राण्यवस्तह ॥ ७ ॥ लक्ष्मणश्चापितत्रैवंविहायवसनेशुभे ॥ तापसाच्छादनेचैवजग्राहपितुरग्रतः ॥८॥ अथात्मपरिधानार्थंसीताकौशेयवासिनी ॥ संप्रेक्ष्यचीरंसंत्रस्तापृषतीवागुरामिव ॥९॥

धीरोदात्तत्वेन कैकेयीपरितोषायाह महामात्रेति । महामात्रः सिद्धार्थः विनीतवत् विनीतः सन् ॥ १ ॥ अनुयात्रेण अनुयात्रावता सैन्येन त्यक्तसंगस्य सर्वतः । असंगोह्ययमात्मेति श्रुतेः ॥ २ ॥ असंगतं चेदं ससैन्यस्य वनगमनमित्याह यो हीति । कक्ष्या गजमध्यबंधनरज्जुः ॥ ३ ॥ ध्वजिन्या कक्ष्यातुल्यया । अनुजानामि मातृप्रीतये भरताय ददामि । चीराणि वनोपयुक्तवासांसि आनयंतु कैकेयीदास्यः ॥ ४ ॥ चतुर्दशवर्षाणि वने वसतो मम फलाद्यानयनसाधने उभे खनित्रपिटके भो कैकेयीदास्यः समानयत गच्छत शीघ्रं तदानयनायेति शेषः ॥ ५ ॥ एतत्पर्यंतं मंथरामेरितं सिद्धं कृत्वा ब्राह्मणशापप्राप्तलोकासूयाविषयत्वसंपादकं कर्म कैकेय्यारभते अथेति । स च शापोध्यात्मरामायणे स्पष्टः ॥ ६ ॥ स रामः चीरे अंतरीयोत्तरीयरूपे अवक्षिप्य परित्यज्य अवस्त धृतवान् । वस आच्छादने ॥ ७ ॥ ८ ॥ अथात्मनः परिधा

नार्थं तया दत्तं चीरं सीता संप्रेक्ष्य वागुरां संप्रेक्ष्य पृषती मृगीव संत्रस्ता सेवाभूत् ॥ ९ ॥ व्यपत्रपमाणेव लज्जमानेव कैकेय्याः सकाशात् ते कुशचीरे प्रगृह्य भर्तुरीदृश्यवस्थेति सुतरां दुर्मना इव ॥ १० ॥ अतएवाश्रुपूर्णनेत्रा ॥ ११ ॥ अकुशला अपरिचयाच्चीरबंधनेऽनिपुणा मुमोह बंधनस्थलनिश्चयं न प्रापेव ॥ १२ ॥ कृत्वा कंठे अनेनेदृश्यां राजकुमार्यामस्या ईदृशो व्यवहार इति कैकेय्यां तत्रत्यजनस्यात्यंतमसूया सूचिता ॥ १३ ॥ कौशेयस्योपरीति । तस्याः कौशेयत्यागमसक्त्यभावात् ॥ १४ ॥ सीतायाश्चीरं बध्नंतमुत्तमं रामं संप्रेक्ष्येत्यन्वयः ॥ १५ ॥ परमायत्ताः परमखिन्नाः यत्तः खेदोपस्करयोः एवं त्वद्वत् इयं नियुक्ता न ॥ १६ ॥ विजनं वनं गतस्य यावदागमनं तावदस्या दर्शनं नोस्तु तेन च नो जीवनं सफलं भवतु ॥ १७ ॥ १८ ॥ तिष्ठतु अत्रैवेति शेषः । हि यद्यपि धर्मनित्यस्त्वमिदानीं स्वयं स्थातुं नेच्छसि तथापीयं तिष्ठतु ॥१९॥ तुल्यशीलया अनंगीकृतनगरास्थित्या सीतया प्रेरितः सन् चीरं बबंधेत्यन्वयः ॥२०॥ चीरे गृहीते समीक्ष्येति शेषः सबाष्प इति पाठे । पाठांतरं तु सम्यगेव ॥२१॥ अतिप्रवृत्ते

साव्यपत्रपमाणेवप्रगृह्यचसुदुर्मनाः ॥ कैकेय्याःकुशचीरेतेजानकीशुभलक्षणा ॥ १० ॥ अश्रुसंपूर्णनेत्राचधर्मज्ञाधर्मदर्शिनी ॥ गंधर्वराजप्रतिमंभर्तारमिदमब्रवीत् ॥ ११ ॥ कथंनुचीरंबध्नंतिमुनयोवनवासिनः ॥ इतिह्यकुशलासीतासामुमोहमुहुर्मुहुः ॥१२॥ कृत्वाकंठेस्मसाचीरमेकमादायपाणिना ॥ तस्थौह्यकुशलातत्रव्रीडिताजनकात्मजा ॥ १३ ॥ तस्यास्तत्क्षिप्रमागत्यरामोधर्मभृतांवरः ॥ चीरंबबंधसीतायाःकौशेयस्योपरिस्वयम् ॥ १४ ॥ रामंप्रेक्ष्यतुसीतायाबध्नंतंचीरमुत्तमम् ॥ अंतःपुरचरानार्योमुमुचुर्वारिनेत्रजम् ॥ १५ ॥ ऊचुश्चपरमायत्तारामंज्वलिततेजसम् ॥ वत्सनैवंनियुक्तेयंवनवासेमनस्विनी ॥ १६ ॥ पितुर्वाक्यानुरोधेनगतस्यविजनंवनम् ॥ तावद्दर्शनमस्यानःसफलंभवतुप्रभो ॥ १७ ॥ लक्ष्मणेनसहायेनवनंगच्छस्वपुत्रक ॥ नेयमर्हतिकल्याणीवस्तुंतापसवद्वने ॥ १८ ॥ कुरुनोयाचनांपुत्रसीतातिष्ठतुभामिनी ॥ धर्मनित्यःस्वयंस्थातुंनहीदानींत्वमिच्छसि ॥१९॥ तासामेवंविधावाचःशृण्वन्दशरथात्मजः ॥ बबंधैवतथाचीरंसीतयातुल्यशीलया ॥ २० ॥ चीरेगृहीतेतुतयासबाष्पोनृपतेर्गुरुः ॥ निवार्यसीतांकैकेयींवसिष्ठोवाक्यमब्रवीत् ॥ २१ ॥ अतिप्रवृत्तेदुर्मेधेकैकेयिकुलपांसनि ॥ वंचयित्वातुराजानंनप्रमाणेऽवतिष्ठसि ॥ २२ ॥ नगंतव्यंवनंदेव्यासीतयाशीलवर्जिते ॥ अनुष्ठास्यतिरामस्यसीताप्रकृतमासनम् ॥ २३ ॥ आत्माहिदाराःसर्वेषांदारसंग्रहवर्तिनाम् ॥ आत्मेयमितिरामस्यपालयिष्यतिमेदिनीम् ॥ २४ ॥ अथयास्यतिवैदेहीवनंरामेणसंगता ॥ वयमत्रानुयास्यामःपुरंचेदंगमिष्यति ॥ २५ ॥ अंतपालाश्चयास्यंतिसदारोयत्रराघवः ॥ सहोपजीव्यंराष्ट्रंचपुरंचसपरिच्छदम् ॥ २६ ॥

मर्यादातिक्रमेण प्रवृत्ते यावद्वरस्तावत्प्रमाणेन अवतिष्ठसि । कुतः । अस्या वनगमनस्य त्वयावृतत्वादिति भावः । सप्रमाणेवेतिपाठस्तद्व्याख्यानं च न प्रकृतोपयोगीति चिंत्यम् ॥ २२ ॥ अतएव न गंतव्यमिति । रामस्य प्रकृतं प्रस्तुतमासनं सीता अनुष्ठास्यति अधिष्ठास्यति राज्यं करिष्यति यावद्रामागमनमित्यर्थः ॥ २३ ॥ ननु स्त्रियाः कथं राज्याधिष्ठानमत आह आत्मा हीति । दारसंग्रहवर्तिनां गृहस्थानां सर्वेषामात्मा दाराः । अर्धो वा एष आत्मनो यत्पत्नीति श्रुतेः । अनेन स्त्रीपुरुषोपाध्योः परस्परावयवमेलनं सूचितम् । अतएव लोकेपि सर्वतस्तयोः परस्परप्रियत्वं दृश्यते ॥ २४ ॥ अथ यास्यति त्वन्निर्बंधादिति शेषः । वयं मदाद्या ब्राह्मणाः अत्र यत्र रामोऽत्र स्थातुमेनमनुगमिष्यामः ॥ २५ ॥ अंतपालाः शुद्धांतरक्षकाः राष्ट्रांतस्थितदंडनायका इत्यन्ये । उपजीव्यं जीवनसाधनं धनं तेन सहितं राष्ट्रं सपरिच्छदं दासीदा

सादिसहितं पुरं च यास्यति ॥ २६ ॥ भरतश्च पूर्वजमनुवत्स्याति तत्सदृशावस्थयैव स्थास्यति । दशरथजातस्य तत्स्वभावताया एवौचित्यमिति भावः ॥ २७ ॥ पादपैः सहेत्यनेनाटवीभूतामिति द्योत्यते ॥ २८ ॥ ॥ २९ ॥ सर्वथैव तव भरतराज्यप्रयासो व्यर्थ इत्याह नहीति । अदत्तां प्रीतिपूर्वमदत्तां किंतु त्वन्निर्बंधनेन दत्तां त्वयि वा परंपराप्राप्तधर्मनाशिकायां अतःपरं पुत्रवद्धस्तुं नार्हति । कुतस्तत्राह यदीति । महीपतेर्दशरथाज्जातो यदि पितॄन्समनुजायंते नरा इति न्यायादित्याशयः । यदि इत्यसंदेहे संदिग्धवचनं वेदाश्चेत्प्रमाणमितिवत् । यद्वा कैकेय्या धिक्कारांतरमिदम् ॥ ३० ॥ पितृवंशचरित्रं ज्येष्ठे विद्यमाने कनिष्ठस्य राज्यानर्हत्वरूपं तज्ज्ञः ॥ ३१ ॥ पुत्रगर्धिन्या पुत्रराज्याभिलाषवत्या लोके स न विद्येत तत्सत्ता न संभाविता यो रामं नानुव्रतः ॥ ३२ ॥ तत्र प्रत्यक्षं मानमाह द्रक्ष्यसीति । पादपांश्चेति किमु वक्तव्यं मनुष्यानिति शेषः ॥ ३३ ॥ एवं वसिष्ठो भाव्यर्थजातमुक्त्वा प्रकृतमनुष्ठेयमुपदिशति अथेति । प्रविधीयते इति च्छेदः । इकारलोप आर्षः । दातुं युज्यते इत्यर्थः । इत्युक्त्वा तद्वसनं परिधानंन्यवारयत् जानक्या

भरतश्चसशत्रुघ्नश्चीरवासावनेचरः ॥ वनेवसंतंकाकुत्स्थमनुवत्स्यतिपूर्वजम् ॥ २७ ॥ ततःशून्यांगतजनांवसुधांपादपैःसह ॥ त्वमेकाशाधिदुर्वृत्ताप्रजानामहितेस्थिता ॥ २८ ॥ नहितद्भविताराष्ट्रंयत्ररामोनभूपतिः ॥ तद्वनंभविताराष्ट्रंयत्ररामोनिवत्स्यति ॥ २९ ॥ नह्यदत्तांमहींपित्राभरतःशास्तुमिच्छति ॥ त्वयिवापुत्रवद्वस्तुंयदिजातोमहीपतेः ॥ ३० ॥ यद्यपित्वंक्षितितलाद्गगनंचोत्पतिष्यासि ॥ पितृवंशचरित्रज्ञःसोऽन्यथानकरिष्यति ॥ ३१ ॥ तत्त्वयापुत्रगर्धिन्यापुत्रस्यकृतमप्रियम् ॥ लोकेनहिसविद्येतयोनराममनुव्रतः ॥३२॥ द्रक्ष्यस्यद्यैवकैकेयिपशुव्यालमृगद्विजान् ॥ गच्छतःसहरामेणपादपांश्चतदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानिदेविदेहिस्नुषायैव्यपनीयचीरम् ॥ नचीरमस्याःप्रविधीयतेतिन्यवारयत्तद्वसनंवसिष्ठः ॥ ३४ ॥ एकस्यरामस्यवनेनिवासस्त्वयावृतःकेकयराजपुत्रि ॥ विभूषितेयंप्रतिकर्मनित्यावसत्वरण्येसहराघवेण ॥ ३५ ॥ यानैश्चमुख्यैःपरिचारकैश्चसुसंवृतागच्छतुराजपुत्री ॥ वस्त्रैश्चसर्वैःसहितैर्विधानैर्नेयंवृतातेवरसंप्रदाने ॥ ३६ ॥ तस्मिंस्तथाजल्पतिविप्रमुख्येगुरौनृपस्याप्रतिमप्रभावे ॥ नैवस्मसीताविनिवृत्तभावाप्रियस्यभर्तुःप्रतिकारकामा ॥ ३७ ॥ इत्यार्षे श्रीम० वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ तस्यांचीरंवसानायांनाथवत्यामनाथवत् ॥ प्रचुक्रोशजनःसर्वोधिक्त्वांदशरथंत्विति ॥ १ ॥ तेनतत्रप्रणादेनदुःखितःसमहीपतिः ॥ सानिःश्वस्योष्णमैक्ष्वाकस्तांभार्यामिदमब्रवीत् ॥ २ ॥ सुकुमारीचबालाचसततंचसुखोचिता ॥ नेयंवनस्ययोग्येतिसत्यमाहगुरुर्मम ॥ ३ ॥ इयंहिकस्यापकरोतिकिंचित्तपस्विनीराजवरस्यपुत्री ॥ याचीरमासाद्यवनस्यमध्येजाताविसंज्ञाश्रमणीवकाचित् ॥ ४ ॥

इति शेषः ॥ ३४ ॥ दानयोग्यत्वमुपपादयति एकस्येति । प्रतिकर्म प्रसाधनव्यापारः स नित्यं यस्याः सा अतएव विभूषिता वसत्वरण्ये स्वभर्तृशुश्रूषार्थम् ॥ ३५ ॥ विधानैः उपकरणैः ॥ ३६ ॥ तस्मिन्गुरौ तथाजल्पत्यपि भर्तुः प्रतिकारकामा वेषादिभिस्तदवस्थासदृशावस्थासंपादनकामा सती चीरपरिग्रहाद्विनिवृत्तभावा नैव बभूव स्म ॥ ३७ ॥ सौँल्ँमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ ॥ छ ॥ तस्यामिति । तद्वरानंतर्गतायामीदृशमनिष्टव्यवहारमनिवारयंस्तूष्णीं तिष्ठतीति जनाक्रोशः ॥ १ ॥ तेन प्रणादेन जनाक्रोशेन तां भार्यां कैकेयीम् ॥ २ ॥ ३ ॥ वनस्य वनगमनयोग्यचीरस्य कस्यापि किंचित्करोति काकुः अपि तु नेत्यर्थः किंचिद्राज्यप्रतिबंधादि विसंज्ञा अपरिचिताशक्यार्थानुष्ठानप्रसंगतः प्राप्तमोह

श्रमणीव भिक्षुकीव ॥ ४ ॥ अपास्यात्त्यजतु इयं प्रतिज्ञा चीरवासिनी सीता वनं यात्विति त्वदीया प्रतिज्ञा न मम दत्तपूर्वा न मया पूर्वमनुमता वरदानसमये अतो यथासुखं गच्छत्वित्यन्वयः ॥ ५ ॥ अजीवनार्हेण मुमूर्षुणा अनेन मतिभ्रंशः सूच्यते । नृशंसा अतिक्रूरा प्रतिज्ञा रामवनवासविषया नियमेन शपथपूर्वं सा तावत्कृता यदेतत् हि यतोधिकं सीताचीरग्रहणं त्वया प्रतिपन्नं आरब्धं तद्बाल्यादज्ञानादेव नात्र ते सामर्थ्यम् । तस्माद्वेणुमात्मपुष्पमिव त्वत्कृतातिप्रवृत्तिस्त्वां मा दहेत् मा नाशयतु । यद्वा एषा तव प्रवृत्तिस्तव वैधव्यप्राप्तये मां दहेत् नाशयेत् ॥ ६ ॥ अशोभनमपराधः वैदेह्या ते कोऽपकारः चीरग्रहणपूर्वक वनवासप्रयोजनको दर्शितः संपादितः ॥ ७ ॥ ८ ॥ ते तव एवं रामविवासनं चीरादिवैशिष्ट्येन रामवनगमनं पर्याप्तं सकलनरकानुभवायालम् । ते त्वया कृतैः एभिरपि कृपणरनिर्वाच्यदुःखप्रदैः सीताप्रव्राजनादिरूपैः पातकैः किं किमनुभविष्यसि वा न जानामीति शेषः ॥ ९ ॥ अभिषेकाय मया कृतनिश्चयं पश्चात्तत्प्रतिबंधे त्वया कृते मत्प्रेरणयेहागतं रामं प्रति यत्त्वमब्रवीर्जटाचीरधरो वनं गच्छेति तत्त्वयोक्तं शृण्वता

चीराण्यपास्याज्जनकस्यकन्यानेयंप्रतिज्ञाममदत्तपूर्वा ॥ यथासुखंगच्छतुराजपुत्रीवनंसमग्रासहसर्वरत्नैः ॥ ५ ॥ आजीवनार्हेणमयानृशंसाकृताप्रतिज्ञानियमेनतावत् ॥ त्वयाहिबाल्यात्प्रतिपन्नमेतत्तन्मादहेद्वेणुमिवात्मपुष्पम् ॥ ६ ॥ रामेणयदितेपापेकिंचित्कृतमशोभनम् ॥ अपकारःकइहतेवैदेह्यादर्शितोऽधमे ॥ ७ ॥ मृगीवोत्फुल्लनयनामृदुशीलामनस्विनी ॥ अपकारंकमिवतेकरोतिजनकात्मजा ॥८॥ ननुपर्याप्तमेवंतेपापेरामविवासनम् ॥ किमेभिःकृपणैर्भूयःपातकैरपितेकृतैः ॥ ९ ॥ प्रतिज्ञातंमयातावत्त्वयोक्तंदेविशृण्वता ॥ रामंयदभिषेकायत्वमिहागतमब्रवीः ॥ १० ॥ तत्त्वेतत्समतिक्रम्यनिरयंगंतुमिच्छसि ॥ मैथिलीमपियाहित्वमीक्षसेचीरवासिनीम् ॥ ११ ॥ एवंब्रुवंतंपितरंरामःसंप्रस्थितोवनम् ॥ अवाक्शिरसमासीनमिदंवचनमब्रवीत् ॥ १२ ॥ इयंधार्मिककौसल्यामममातायशस्विनी ॥ वृद्धाचाक्षुद्रशीलाचनचत्वांदेवगर्हते ॥ १३ ॥ मयाविहीनांवरदप्रपन्नांशोकसागरम् ॥ अदृष्टपूर्वव्यसनांभूयःसंमंतुमर्हसि ॥ १४ ॥ इमांमहेंद्रोपमजातगर्धिनींतथाविधातुंजननींममार्हसि ॥ यथावनस्थेमयिशोककर्शितानजीवितंन्यस्ययमक्षयंव्रजेत् ॥ १५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥

मया तावदेव प्रतिज्ञातं तथास्त्वित्यनुमतं न तु सीताप्रव्राजनादि ॥ १० ॥ एतत्त्वोक्तं तदतिक्रम्य अधिकार्थे प्रवृत्तत्वान्निरयं गंतुमर्हसि । कोत्र मेऽतिक्रमोत आह मैथिलीमिति । ईक्षसे वांछसि । स ऐक्षत बहु स्यां प्रजायेयेत्यादाविच्छार्थस्येक्षतेर्दर्शनात् ॥ ११ ॥ एवं ब्रुवंतं सीता यथासुखं गच्छत्विति ब्रुवंतम् संप्रस्थितः एवं वादात्तया सह गमने कृतानुमतिकत्वात्तया गंतुं प्रवृत्तः ॥ १२ ॥ न च गर्हते त्वदाज्ञया मयि वनं गच्छत्यपीति शेषः । सत्यरक्षणं धर्म इति ज्ञात्वेति भावः ॥१३॥ प्रपन्नां प्राप्तां भूयः संमंतुं प्रधानपत्नीत्वात्क्रियमाणसंमानामपि भूयोधिकं संमंतुमर्हसि संमंतुं तस्याः संमानं कर्तुं मत्प्रार्थनयेति शेषः ॥ १४ ॥ जातगर्धिनीं त्वत्समीपे जातो मद्दर्शनविषयो गर्धोभिलाषो यस्यास्ताम् न्यस्य त्यक्त्वा ॥ १५ ॥ शेयेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥ ॥ छ ॥

रामस्यति । विगतचेतनोऽभूदिति शेषः ॥ १ ॥ न प्रत्यवैक्षत द्रष्टुं नाशक्नोत् ॥ २ ॥ ३ ॥ विवत्सा इति धेनव इति शेषः ॥ ४ ॥ कैकेय्या क्लिश्यमानस्यापि मम यतो मृत्युर्न विद्यते तत्प्राप्तिर्नदृश्यतेऽतः कालेऽ
नागते देहाज्जीवितं नैव च्यवत इति जाने इति शेषः ॥ ५ ॥ आच्छाद्यतेऽनेनेत्याच्छादः तापसानामाच्छादो यस्य तादृशमात्मजं पश्यामि यस्तस्य मे मृत्युर्न विद्यत इत्यन्वयः ॥ ६ ॥ जनः कैकेयीव्यतिरिक्तः सर्वोपि
इमां निकृतिं वरलक्षणशाठ्यं संश्रित्येत्यस्य स्थिताया इति शेषः ॥ ७ ॥ ८ ॥ नेत्राभ्याम् उपलक्षितः ॥९॥ औपवाह्यं वाहनमात्रोपयुक्तं युद्धानर्हमित्यर्थः । युक्त्वा योजयित्वा । योज्येतिपाठेप्येवमेव परं दक्षिणस्यामिति शेषः
॥१०॥ साधुर्वीरो रामः पित्रा मात्रा च वनं निर्वास्यते यत् अतः गुणवतां पुंसां गुणानां फलं एवं निर्वासनरूपमुच्यते शास्त्रेणेति मन्ये इति दुःखातिशयादुक्तिः उत्प्रेक्षालंकारः॥ ११ ॥ रथं योजयित्वा तत्र रामसन्निधौ ययौ॥ १२॥

रामस्यतुवचःश्रुत्वामुनिवेषधरंचतम् ॥ समीक्ष्यसहभार्याभीराजाविगतचेतनः ॥ १ ॥ नैनंदुःखेनसंतप्तःप्रत्यवैक्षतराघवम् ॥ नचैनमभिसंप्रे
क्ष्यप्रत्यभाषतदुर्मनाः ॥ २ ॥ समुहूर्तमिवासंज्ञोदुःखितश्चमहीपतिः ॥ विललापमहाबाहूराममेवानुचिंतयन् ॥ ३ ॥ मन्येखलुमयापूर्वंविवत्साबहवः
कृताः ॥ प्राणिनोहिंसितावापितन्मामिदमुपस्थितम् ॥ ४ ॥ नत्वेवानागतेकालेदेहाच्च्यवतिजीवितम् ॥ कैकेय्याक्लिश्यमानस्यमृत्युर्ममनविद्यते ॥५॥
योहंपावकसंकाशंपश्यामिपुरतःस्थितम् ॥ विहायवसनेसूक्ष्मेतापसाच्छादमात्मजम् ॥ ६ ॥ एकस्याःखलुकैकेय्याःकृतेऽयंखिद्यतेजनः ॥ स्वार्थे
प्रयतमानायाःसंश्रित्यनिकृतिंत्विमाम् ॥ ७ ॥ एवमुक्त्वातुवचनंबाष्पेणविहतेंद्रियः ॥ रामेतिसकृदेवोक्त्वाव्याहर्तुंनशशाकसः ॥ ८ ॥ संज्ञांतुप्र
तिलभ्यैवमुहूर्तात्समहीपतिः ॥ नेत्राभ्यामश्रुपूर्णाभ्यांसुमंत्रमिदमब्रवीत् ॥ ९ ॥ औपवाह्यंरथंयुक्त्वात्वमायाहिहयोत्तमैः ॥ प्रापयैनंमहाभागमितो
जनपदात्परम् ॥१०॥ एवंमन्येगुणवतांगुणानांफलमुच्यते ॥ पित्रामात्राचयत्साधुर्वीरोनिर्वास्यतेवनम् ॥११॥ राज्ञोवचनमाज्ञायसुमंत्रःशीघ्रविक्रमः ॥
योजयित्वाययौतत्ररथमश्वैरलंकृतम् ॥१२॥ तंरथंराजपुत्रायसूतःकनकभूषितम् ॥ आचचक्षेऽञ्जलिंकृत्वायुक्तंपरमवाजिभिः ॥१३॥ राजासत्वरमाहूय
व्यापृतंवित्तसंचये ॥ उवाचदेशकालज्ञोनिश्चितंसर्वतःशुचिः ॥१४॥ वासांसिचवरार्हाणिभूषणानिमहांतिच ॥ वर्षाण्येतानिसंख्यायवैदेह्याःक्षिप्रमानय ॥
॥१५॥ नरेंद्रेणैवमुक्तस्तुगत्वाकोशगृहंततः ॥ प्रायच्छत्सर्वमाहृत्यसीतायैक्षिप्रमेवतत् ॥१६॥ सासुजातासुजातानिवैदेहीप्रस्थितावनम् ॥ भूषयामास
गात्राणितैर्विचित्रैर्विभूषणैः ॥ १७ ॥ व्यराजयतवैदेहीवेश्मतत्सुविभूषिता ॥ उद्यतोंऽशुमतःकालेखंप्रभेवविवस्वतः ॥१८॥ तांभुजाभ्यांपरिष्वज्यश्वश्रूर्व
चनमब्रवीत् ॥ अनाचरंतींकृपणंमूर्ध्न्युपाघ्रायमैथिलीम् ॥१९॥ असत्यःसर्वलोकेऽस्मिन्सततंसत्कृताःप्रियैः ॥ भर्तारंनाभिमन्यंतेविनिपातगतांस्त्रियः ॥२०॥

आचचक्षे रथ उपस्थित इत्युक्तवान् ॥ १३ ॥ वित्तसंचयेव्यापृतंधनाध्यक्षमित्यर्थः । निश्चितं वच उवाचेत्यन्वयः । सर्वतः शुचिः इहामुत्रानृणः ॥ १४ ॥ एतानि वर्षाणि चतुर्दश वर्षाणि एतेन एतावानेव वन
वासो नाधिक इति पुनर्दार्ढ्याय ध्वनितम् ॥ १५ ॥ प्रायच्छत् धनाध्यक्षः । सममेवेतिपाठे वचनसमकालमेवेत्यर्थः ॥ १६ ॥ सुजाता अयोनिजा सुजातानि सामुद्रिकोक्तलक्षणवंति गात्राणीत्यन्वयः ॥ १७ ॥
उद्यतः उदयं प्राप्नुवतः काले प्रातःकाले अनेन लेशतोपि विषादराहित्यं तस्याः सूचितम् ॥ १८ ॥ कृपणं अनाचरंतीं क्षुद्राचारहीनां तां भर्तृशुश्रूषापरां सीताम् ॥ १९ ॥ सततं प्रियैः सत्कृता अपि विनिपातगतं

कृच्छ्रगतं भर्तारं याः शुश्रूषितुं नानुमन्यंते ताः सर्वलोके परलोके इह लोके चासत्यः असतीत्वेन गणिताः ॥ २० ॥ नारीणां प्रकृतत्वादसतीनां यत्पुरा अनापदवस्थायां सुखं भर्तृदत्तमनुभूय तस्य अल्पामपि रोगदा रिद्र्यादिलक्षणामापदं प्राप्य दृष्ट्वा तं दुष्यंति दूषयंति नानादूषणयुक्तत्वेन वदंति नैतावदेव प्रजहत्यपि ॥२१॥ असत्यशीलाः असत्यवचनशीलाः विकृताः विकृतोपेताक्ष्यादिव्यापाराः दुर्गाः दुरभिसरणा दुर्गतिशीलाः अहृदयाः स्वभर्तरि विरसाः असत्यः कुलटाः पापे परपुरुषप्रसंगादौ संकल्पो मनोव्यापारो यासां क्षणमात्रविरागिणः क्षणमात्रविरागिण्यः इत्यर्थः । अल्पनिमित्ततः क्षणमात्रेण त्यक्तनुरागाः अविश्वसनीयस्नेहा इति यावत् । विरागिण इत्यत्र ङीबभाव आर्षः । ता असत्य इति विधेयम् ॥२२॥ कुलं प्रशस्तं कृतमुपकारः विद्या गुरूपदिष्टधर्मविद्या दत्तं भूषणादिदानं संग्रहः दृष्टेपि दोषे स्वीकारः । यद्वा संग्रहो बंधनादि एतत्सर्वमपि स्त्रीणाम सतीनां हृदयं न गृह्णाति पापवृत्तेर्न प्रतिबध्नाति नञ्बाहुल्यमप्रतिबंधदार्ढ्यप्रतिपादनाय । 'कामातुराणां न भयं नलज्जेति न्यायात्' । कुलाद्युचितं कृत्यं पृष्ठे कृत्वा लोकगर्हितकृत्ये एव प्रवर्तंते कुतः यतोऽनित्यहृदयाः

एषस्वभावोनारीणामनुभूयपुरासुखम् ॥ अल्पामप्यापदंप्राप्यदुष्यंतिप्रजहत्यपि ॥ २१ ॥ असत्यशीलाविकृतादुर्गाअहृदयाःसदा ॥ असत्यःपापसंकल्पाःक्षणमात्रविरागिणः ॥ २२ ॥ नकुलंनकृतंविद्यानदत्तंनापिसंग्रहः ॥ स्त्रीणांगृह्णातिहृदयमनित्यहृदयाहिताः ॥ २३ ॥ साध्वीनांतुस्थितानांतुशीलेसत्येश्रुतेस्थिते ॥ स्त्रीणांपवित्रंपरमंपतिरेकोविशिष्यते ॥ २४ ॥ सत्वयानावमंतव्यःपुत्रःप्रव्राजितोवनम् ॥ तवदेवसमस्त्वेषनिर्धनःसधनोपिवा ॥ २५ ॥ विज्ञायवचनंसीतातस्याधर्मार्थसंहितम् ॥ कृत्वांजलिमुवाचेदंश्वश्रूमाभिमुखेस्थिता ॥ २६ ॥ करिष्येसर्वमेवाहमार्यायदनुशास्तिमाम् ॥ अभिज्ञास्मियथाभर्तुर्वर्तितव्यंश्रुतंचमे ॥ २७ ॥ नमामसज्जनेनार्यासमानयितुमर्हति ॥ धर्माद्विचलितुंनाहमलंचंद्रादिवप्रभा ॥ २८ ॥ नातंत्रीविद्यतेवीणानाचक्रोविद्यतेरथः ॥ नापतिःसुखमेधेतयास्यादपिशतात्मजा ॥ २९ ॥ मितंददातिहिपितामितंभ्रातामितंसुतः ॥ अमितस्यतुदातारंभर्तारंकानपूजयेत् ॥ ३० ॥ साहमेवंगताश्रेष्ठाश्रुतधर्मपरावरा ॥ आर्येकिमवमन्येयंस्त्रियाभर्ताहिदैवतम् ॥ ३१ ॥ सीतायावचनंश्रुत्वाकौसल्याहृदयंगमम् ॥ शुद्धसत्त्वामुमोचाश्रुसहसादुःखहर्षजम् ॥ ३२ ॥ तांप्रांजलिरभिप्रेक्ष्यमातृमध्येऽतिसत्कृताम् ॥ रामःपरमधर्मात्मामातरंवाक्यमब्रवीत् ॥ ३३ ॥

अव्यवस्थितचित्ताः ॥ २३ ॥ साध्वीनां तु पतिव्रतानां तु शीले सच्चारित्रे सत्ये सत्यवचने श्रुते गुरुजनोपदेशे स्थिते स्वकुलोचितमर्यादावस्थितौ तु तुरेवार्थे । एष्वेव स्थितानां स्त्रीणां परमं पवित्रं उत्तमं पुण्यसाधनं पतिरेक एव अतएव स्त्रियाःसर्वधर्मसाधनेभ्यो विशिष्यते ॥२४॥ यदेवमतः किमत आह स इति । देवसमः देवतुल्यः एषः पतिः ॥२५॥२६॥ यथा भर्तुः भर्तृविषये वर्तितव्यं तथा अभिज्ञास्मि किंच तथा श्रुतं मे स्वमातापितृभ्यामिति शेषः ॥ २७ ॥ असज्जनेन असतीजनेन समानयितुं समानां कर्तुमार्या नार्हति नाहमलं न समर्था ॥ २८ ॥ विद्यते वादनसमर्था इति गमनसमर्थ इति शेषः । शतात्मजेति बहुव्रीहिः शतपुत्रा ॥ २९ ॥ अमितस्य ऐहिकामुष्मिकसकलसुखस्य । कर्मणि षष्ठी ॥ ३० ॥ एवंगता भर्ता परमपूज्य इति ज्ञानवती । श्रेष्ठाश्रुतधर्मेतिपाठे श्रेष्ठाभ्यः श्वश्रूमातृप्रमुख्याभ्यः श्रुतः परावरः सामान्यविशेषरूपो धर्मो यया । श्रेष्ठे इतिपाठः क्वचित् । किमवमन्येयं कस्मादवमंस्यामि ॥ ३१ ॥ शुद्धसत्त्वा शुद्धचित्ता पुत्रादेर्वनगमनेन दुःखं सीतावाक्यश्रवणेन च हर्षः ॥ ३२ ॥ अभिप्रेक्ष्य दृष्ट्वा अति

सत्कृतां सर्वजनैरिति शेषः ॥ ३३ ॥ वनवासस्य वनवासकालस्य ॥ ३४ ॥ सुप्तायाः सुप्ताया इव चतुर्दशवर्षीवद्गमिष्यंति समग्रं भ्रातृभार्यासहितं समग्रश्रेयस्कं च पुनरपि सुहृद्भिर्वृतं राजत्वेन ॥ ३५ ॥ अभिनीतार्थं निर्णीतार्थं त्रयः शतानि त्रीणि शतानि शतार्धं च संख्या यासां ताः । त्रेत्रयसादेश आर्षः । एवंभूता या मातरः संति ताः अवेक्ष्य विविच्य ददर्शेत्यर्थः । तथा मातरश्च तं ददृशुरिति शेषः ॥ ३६ ॥ तथैव कौसल्यावदेवार्तास्ता मातॄः प्रति इदं जगादेत्यन्वयः ॥ ३७ ॥ संवासः सहवासः परुषमुक्तमिति शेषः । अज्ञानादपि यत्कृतं परुषं कर्म समुपजानीत क्षांतमित्यनुजानीतेत्यर्थः ॥ ३८ ॥ समाहितं धीरम् ॥ ३९ ॥ अथ रामवचःश्रवणानंतरं सन्नादः शोकजः शब्दः ॥ ४० ॥ मेघो वाद्यविशेषः मुरजपणवा एव मेघा इति रूपकं वा । विलपितं रामगुणकैकेयीदुर्गुणप्रतिपादकं वाक्यं परिदेवनं रोदनं व्यसनगतं प्राप्तेष्टवियोगम् ॥ ४१ ॥ येवेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ ॥ छ ॥ उपसंगृह्य पादपतनपूर्वकं प्रणम्य दीनाः

अंबमादुःखिताभूत्वापश्येस्त्वांपितरंमम ॥ क्षयोपिवनवासस्यक्षिप्रमेवभविष्यति ॥ ३४ ॥ सुप्तायास्तेगमिष्यंतिनववर्षाणिपंचच ॥ समग्रमिहसंप्राप्तं मांद्रक्ष्यसिसुहृद्वृतम् ॥ ३५ ॥ एतावदभिनीतार्थमुक्त्वासजननींवचः ॥ त्रयःशतशतार्धाहिददर्शावेक्ष्यमातरः ॥ ३६ ॥ ताश्चापिसतथैवार्ता मातॄर्दशरथात्मजः ॥ धर्मयुक्तमिदंवाक्यंनिजगादकृतांजलिः ॥ ३७ ॥ संवासात्परुषंकिंचिदज्ञानादपियत्कृतम् ॥ तन्मेसमुपजानीतसर्वाश्चामंत्रयामिवः ॥ ३८ ॥ वचनंराघवस्यैतद्धर्मयुक्तंसमाहितम् ॥ शुश्रुवुस्ताःस्त्रियःसर्वाःशोकोपहतचेतसः ॥ ३९ ॥ जज्ञेऽथतासांसन्नादःक्रौंचीनामिवनिःस्वनः ॥ मानवेंद्रस्यभार्याणामेवंवदतिराघवे ॥ ४० ॥ मुरजपणवमेघघोषवद्दशरथवेश्मबभूवयत्पुरा ॥ विलपितपरिदेवनाकुलंव्यसनगतंतदभूत्सुदुःखितम् ॥ ४१ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेएकोनचत्वारिंशः सर्गः ॥ ३९ ॥ अथरामश्चसीताचलक्ष्मणश्चकृतांजलिः ॥ उपसंगृह्यराजानंचक्रुर्दीनाःप्रदक्षिणम् ॥ १ ॥ तंचापिसमनुज्ञाप्यधर्मज्ञःसहसीतया ॥ राघवःशोकसंमूढोजननीमभ्यवादयत् ॥ २ ॥ अन्वक्षंलक्ष्मणोभ्रातुःकौसल्यामभ्यवादयत् ॥ अपिमातुःसुमित्रायाजग्राहचरणौपुनः ॥ ३ ॥ तंवंदमानंरुदतीमातासौमित्रिमब्रवीत ॥ हितकामामहाबाहुंमूर्ध्न्युपाघ्रायलक्ष्मणम् ॥ ४ ॥ सृष्टस्त्वंवनवासायस्वनुरक्तःसुहृज्जने ॥ रामेप्रमादंमाकार्षीःपुत्रभ्रातरिगच्छति ॥ ५ ॥ व्यसनीवासमृद्धोवागतिरेषतवानघ ॥ एषलोकेसतांधर्मोयज्ज्येष्ठवशगोभवेत् ॥ ६ ॥ इदंहिवृत्तमुचितंकुलस्यास्यसनातनम् ॥ दानंदीक्षाचयज्ञेषुतनुत्यागोमृधेषुहि ॥ ७ ॥ लक्ष्मणंत्वेवमुक्त्वासौसंसिद्धंप्रियराघवम् ॥ सुमित्रागच्छगच्छेतिपुनःपुनरुवाचतम् ॥ ८ ॥

मातापित्रोः शोकदर्शनाद्दीना इव ॥ १ ॥ समनुज्ञाप्य कृतानुमतिकं कृत्वा शोकसंमूढः मातृदुःखदर्शनात्स इव ॥ २ ॥ अन्वक्षं अनुपदं रामेण कौसल्यावंदनानंतरम् भ्रातुः जननीमिति शेषः । कौसल्यामभ्यवादयत् पुनः कौसल्यावंदनानंतरम् मातुः सुमित्रायाः अपिनाऽन्यासां च ॥ ३ ॥ ४ ॥ अत्रत्यसुहृज्जने स्वनुरक्तोपि त्वं मया वनवासाय सृष्टोऽनुमतः वनं गच्छति भ्रातरि रामे प्रमादमनवधानं माकार्षीः भ्रातरीत्यनेन सोदरवदेवायं द्रष्टव्य इति सूचितम् ॥ ५ ॥ कनीयसो ज्येष्ठानुवर्तनं परमो धर्म इत्याह व्यसनी वेति । राज्याभावेन ॥ ६ ॥ इदं ज्येष्ठानुवर्तनरूपम् धर्मांतरमपि क्षत्रोचितमाह दानमित्यादि । मृधेषु युद्धेषु तनुत्यागस्तनावनास्थापूर्वकं युद्धकरणम् ॥ ७ ॥ असौ एवं स्वपुत्रं लक्ष्मणमुक्त्वा संसिद्धं वनं गंतुं निश्चितमनस्कं प्रियराघवं प्रियरूपं राघवं गच्छ गच्छेति पुनःपुनरुवाच शकुनसंपत्तये इति भावः । तं

लक्ष्मणं पुनरुवाचेत्यनुकर्षः ॥ ८ ॥ तद्वचनमाह राममिति एवं च पितृमातृनगरस्मरणेन मनश्चांचल्यं मा कुर्विति ध्वनितम् । रामस्य पितृवत्सेव्यत्वम् । सीतायां मातृवद्भावकरणम् अटव्या अयोध्यावत्पाल्यत्वम् तेन तत्रत्यजंतूनामनुद्वेगकरणं च ध्वनितम् ॥ ९ ॥ १० ॥ यत्र यद्देशप्रापणे मां वक्ष्यसे नियोजयसि तं देशं क्षिप्रं प्रापयिष्यामि नेह रजन्यां वस्तव्यमिति शेषः ॥ ११ ॥ कुतस्तत्राह चतुर्दशेति । यानि चतुर्दशवर्षाणि वने वस्तव्यानि तान्यद्यैवोपक्रमितव्यानि । आरंभणीयानि यतो देव्या कैकेय्या अद्यैव वनं गच्छेति प्रेरितोस्मि ॥ १२ ॥ हृष्टेन चेतसेत्यनेनांगिरा मनउत्साहमित्युक्तो मुख्यः शकुनो ध्वनितः ॥ ॥ १३ ॥ अलंकारकरणोपायमुक्तं स्मारयति वनवासं हीति । यानि ददौ तानि रथोपस्थे विन्यस्येत्यन्वयः । अग्रिमश्लोके तथैवेति पदस्वरसात् ॥ १४ ॥ भ्रातृभ्यां भ्रात्रोरित्यर्थः । सचर्म चर्म पिनद्धं पेटकम्

रामंदशरथंविद्धिमांविद्धिजनकात्मजाम् ॥ अयोध्यामटवींविद्धिगच्छतातयथासुखम् ॥ ९ ॥ ततःसुमंत्रःकाकुत्स्थंप्रांजलिर्वाक्यमब्रवीत् ॥ विनीतो विनयज्ञश्चमातालिर्वासवंयथा ॥ १० ॥ रथमारोहभद्रंतेराजपुत्रमहायशः ॥ क्षिप्रंत्वांप्रापयिष्यामियत्रमांरामवक्ष्यसे ॥ ११ ॥ चतुर्दशहिवर्षाणिवस्तव्यानिवनेत्वया ॥ तान्युपक्रमितव्यानियानिदेव्याप्रचोदितः ॥१२॥ तंरथंसूर्यसंकाशंसीताहृष्टेनचेतसा ॥ आरुरोहवरारोहाकृत्वालंकारमात्मनः ॥ ॥ १३ ॥ वनवासंहिसंख्यायवासांस्याभरणानिच ॥ भर्तारमनुगच्छंत्यैसीतायैश्वशुरोददौ ॥ १४ ॥ तथैवायुधजातानिभ्रातृभ्यांकवचानिच ॥ रथोपस्थेप्रविन्यस्यसचर्मकठिनंचयत् ॥ १५ ॥ अथोज्वलनसंकाशंचामीकरविभूषितम् ॥ तमारुरुहतुस्तूर्णंभ्रातरौरामलक्ष्मणौ ॥ १६ ॥ सीतातृतीयानारूढान्दृष्ट्वारथमचोदयत् ॥ सुमंत्रःसंमतानश्वान्वायुवेगसमाञ्जवे ॥ १७ ॥ प्रयातेतुमहारण्यंचिररात्रायराघवे ॥ बभूवनगरेमूर्च्छाबलमूर्च्छाजनस्यच ॥ १८ ॥ तत्समाकुलसंभ्रांतंमत्तसंकुपितद्विपम् ॥ हयसिंजितनिर्घोषंपुरमासीन्महास्वनम् ॥ १९ ॥ ततःसबालवृद्धासापुरीपरमपीडिता ॥ राममेवाभिदुद्रावघर्मार्तःसलिलंयथा ॥ २० ॥ पार्श्वतःपृष्ठतश्चापिलंबमानास्तदुन्मुखाः ॥ बाष्पपूर्णमुखाःसर्वेतमूचुर्भृशनिःस्वनाः ॥ २१ ॥ संयच्छवाजिनांरश्मीन्सूतयाहिशनैःशनैः ॥ मुखंद्रक्ष्यामरामस्यदुर्दर्शनोभविष्यति ॥ २२ ॥ आयसंहृदयंनूनंराममातुरसंशयम् ॥ यद्देवगर्भप्रतिमेवनंयातिनभिद्यते ॥ २३ ॥ कृतकृत्याहिवैदेहीछायेवानुगतापतिम् ॥ नजहातिरताधर्मेमेरुमर्कप्रभायथा ॥ २४ ॥ अहोलक्ष्मणसिद्धार्थःसततांप्रियवादिनम् ॥ भ्रातरंदेवसंकाशंयस्त्वंपरिचरिष्यसि ॥ २५ ॥ महत्येषाहितेबुद्धिरेषचाभ्युदयोमहान् ॥ एषस्वर्गस्यमार्गश्चयदेनमनुगच्छसि ॥ २६ ॥ एवंवदंतस्तेसोढुंनशेकुर्बाष्पमागतम् ॥ नरास्तमनुगच्छंतिप्रियमिक्ष्वाकुनंदनम् ॥ २७ ॥

कठिनं खनित्रम् प्रविन्यस्य स्थापयित्वा ॥ १५ ॥ अथो अनंतरं आरुरुहतुः ॥ १६ ॥ संमतान् संमतसर्वलक्षणान् ॥ १७ ॥ चिररात्रायेत्यव्ययम् चिरकालावस्थित्यर्थमित्यर्थः । नगरे विद्यमानस्य सर्वमनुष्यस्य बलस्य अश्वगजादेर्मूर्च्छा जनस्य तिर्यग्जंतुरूपस्य च मूर्च्छा बभूवेत्यर्थः ॥ १८ ॥ तदेव प्रपंचयति तदिति । समाकुलमितिकर्तव्यतामूढं च तत्संभ्रांतं रामानुगमनाय त्वरायुक्तम् मत्ता रामवियोगेन संकुपिता द्विपा यस्मिन् हयानां दुःखेन सिंजितानां शब्दवतां पर्याकुलप्राणिभूषणानां निर्घोषो यस्मिन् ॥ १९ ॥ परमपीडिता रामवियोगदुःखेनेति शेषः ॥ २० ॥ तं सुमंत्रम् ॥ २१ ॥ २२ ॥ देवगर्भप्रतिमे स्कंदतुल्ये । यद्वा देवगर्भो देवनिधिर्हिरण्यगर्भस्तत्प्रतिमे याति गच्छति सति ॥ २३ ॥ मेरुमित्यादि नित्यं तत्प्रदक्षिणसंचारात् ॥ २४ ॥ यस्त्वं भ्रातरं परिचरिष्यसि स त्वं सिद्धार्थः कृतार्थः ॥ २५ ॥ तदेवाह महतीत्यादि । अभ्युदय ऐहिकः ॥ २६ ॥ २७ ॥

॥ २८ ॥ करेणूनां तत्पालकवृद्धकारिणीनाम् ॥ २९ ॥ सन्नः खिन्नः ग्रहेण राहुणा ॥ ३० ॥ अचिंत्यात्मा अहंममताभिमानराहित्येन तद्वद्भिरज्ञेयस्वरूपः । एतेन सर्वथा ममताराहित्यं सूचितम् । तदेव स्वस्य ध्वनयन्नाह त्वरितं वाह्यतामिति ॥ ३१ ॥ तं सुमंत्रम् आहेति शेषः । उभयं नाशकत् एवं च नातिमंदं नातिवेगमवाहयदित्यर्थः ॥ ३२ ॥ अभ्यवहितं रथनेम्युद्धतम् ॥ ३३ ॥ रुदिताश्रुपरिद्यूनं अनुत्साहवत् ॥ ३४ ॥ आयासः खेदः चलितैस्तिर्यग्भूतैः पंकजैः वर्षसंभूतोदकैरिति बोध्यम् । अपादानस्यैव करणत्वविवक्षा ॥ ३५ ॥ एकचित्तगतं दुःखेनैकचित्ततां प्राप्तम् ॥ ३६ ॥ सीदंतं मूर्छंतम् ॥ ३७॥ अंतःपुरसमृद्धं अंतःपुरसहितं क्रोशंतं उच्चैःशब्देन रुदंतं राजानं दृष्ट्वा केचिन्नरा हा रामेति केचिद्धा राममातेति पर्यदेवयन् शुशुचुः उपलक्षणमेतत् केचिद्धाराजन्नित्यपि । राममातेत्यार्षम् ॥ ३८ ॥ अनु पश्चाद्भागे

अथराजावृतस्त्रीभिर्दीनाभिर्दीनचेतनः ॥ निर्जगामप्रियंपुत्रंद्रक्ष्यामीतिब्रुवन्गृहात् ॥ २८ ॥ शुश्रुवेचाग्रतःस्त्रीणांरुदतीनांमहास्वनः ॥ यथानादःकरेणूनांबद्धेमहतिकुंजरे ॥ २९ ॥ पिताहिराजाकाकुत्स्थःश्रीमान्सन्नस्तदावभौ ॥ परिपूर्णःशशीकालेग्रहेणोपप्लुतोयथा ॥ ३० ॥ सचश्रीमानाचिंत्यात्मारामोदशरथात्मजः ॥ सूतंसंचोदयामासत्वरितंवाह्यतामिति ॥ ३१ ॥ रामोयाहीतितंसूतंतिष्ठेतिचजनस्तथा ॥ उभयंनाशकत्सूतःकर्तुमध्वनिचोदितः ॥ ३२ ॥ निर्गच्छतिमहाबाहौरामेपौरजनाश्रुभिः ॥ पतितैरभ्यवहितंप्रणनाशमहीरजः ॥ ३३ ॥ रुदिताश्रुपरिद्यूनंहाहाकृतमचेतनम् ॥ प्रयाणेराघवस्यासीत्पुरंपरमपीडितम् ॥ ३४ ॥ सुस्रावनयनैःस्त्रीणामस्रमायाससंभवम् ॥ मीनसंक्षोभचलितैःसलिलंपंकजैरिव ॥ ३५ ॥ दृष्ट्वातुनृपतिःश्रीमानेकचित्तगतंपुरम् ॥ निपपातैवदुःखेनकृत्तमूलइवद्रुमः ॥ ३६ ॥ ततोहलहलाशब्दोजज्ञेरामस्यपृष्ठतः ॥ नराणांप्रेक्ष्यराजानंसीदंतंभृशदुःखितम् ॥ ३७ ॥ हारामेतिजनाःकेचिद्राममातेतिचापरे ॥ अंतःपुरसमृद्धंचक्रोशंतंपर्यदेवयन् ॥ ३८ ॥ अन्वीक्षमाणोरामस्तुविषण्णंभ्रांतचेतसम् ॥ राजानंमातरंचैवददर्शानुगतौपथि ॥ ३९ ॥ सबद्धइवपाशेनकिशोरोमातरंयथा ॥ धर्मपाशेनसंयुक्तःप्रकाशंनाभ्युदैक्षत ॥ ४० ॥ पदातिनौचयानार्हावदुःखार्हौसुखोचितौ ॥ दृष्ट्वासंचोदयामासशीघ्रंयाहीतिसारथिम् ॥ ४१ ॥ नहितत्पुरुषव्याघ्रोदुःखजंदर्शनंपितुः ॥ मातुश्चसहितुंशक्तस्तोत्रैर्नुन्नइवद्विपः ॥ ४२ ॥ प्रत्यगारमिवायांतीसवत्सावत्सकारणात् ॥ बद्धवत्सायथाधेनूराममाताऽभ्यधावत ॥ ४३ ॥ तथारुदंतींकौसल्यांरथंतमनुधावतीम् ॥ क्रोशंतींरामरामेतिहासीतेलक्ष्मणेतिच ॥ ४४ ॥ रामलक्ष्मणसीतार्थंस्रवंतींवारिनेत्रजम् ॥ असकृत्प्रैक्षतसतांनृत्यंतीमिवमातरम् ॥ ४५ ॥

ईक्षमाणो रामो मातरं राजानं च स्वमनुगतौ ददर्श ॥ ३९ ॥ पाशेन निबद्धः किशोरोऽश्ववालो मातरं यथा न पश्यति एवं धर्मपाशेन संयुक्तः संबद्ध इव नित्यमुक्तस्वभावत्वादेवमुक्तिः । प्रकाशं नाभ्युदैक्षत संकुचितदर्शनव्यापारोभूदित्यर्थः ॥ ४० ॥ यानार्हत्वादिगुणविशिष्टौ पितरौ दृष्ट्वेत्यन्वयः ॥ ४१ ॥ दुःखजं दुःख जायतेऽस्मात्तादृशम् । अन्यत्रापि दृश्यत इति डः । दुःखदमिति पाठांतरम् । लोकदृष्ट्येदं सहितुम् । नापसेहेति वेद । दुःखितौ पितरौ द्रष्टुं न शक्तइति यावत् । तोत्रमंकुशस्तत्पीडितो द्विपो यथा स्वपृष्ठवर्तिवस्तुदर्शनाशक्तस्तद्वत् अस्य च कैकेयीवाक्यमेवांकुशः ॥ ४२ ॥ वत्सकारणात् प्रत्यगारंवत्सावस्थितिमहद्गमुद्दिश्यागच्छंती सवत्सा बद्धवत्सा धेनुर्यथा धावति एवं राममाता अधावत । एषु सवत्सेत्याद्यधिककथनं कवेरपि शोकाविष्टत्वान्नदोषाय ॥ ४३ ॥ ४४ ॥ रामलक्ष्मणसीतार्थं तद्वियोगजशोक

वशात् नेत्रजं वारि स्रवंतीं मुंचंतीं नृत्यंतीमिवेतस्ततः परिभ्रमंतीम् असकृत्मैक्षत राम इति शेषः ॥ ४५ ॥ चक्रयोर्युयुत्सुसेनयारंतरा स्थित उदासीनः पुरुष इव सुमंत्रस्यात्मा दोलायितो बभूव ॥ ४६ ॥ ननु राजवचनातिक्रमे दोषः स्यादत आह नेति । उपालब्धोपि मया बहुशस्तिष्ठ तिष्ठेत्युक्तोपि मद्वचनं नाकार्षीरिति पुनर्गमनानंतरं राज्ञोपालब्धोपि नाश्रौषमिति वक्ष्यसि दुःखस्य मद्दुःखस्य हेतुभूतम् पापिष्ठम् अतिदुःखजनकत्वात् पापिष्ठं चिरविलंबनमिति हेतोः शीघ्रं गच्छेति रामस्तमब्रवीत् ॥ ४७ ॥ तं जनं अनुव्रजत्पौरजनं अनुज्ञाप्य रामेण कृतां पुनः परावृत्य गमनानुज्ञां प्राप्य व्रजतोपि स्वतो गच्छतोपि पुनः शीघ्रं शीघ्रगत्यर्थम् ॥ ४८ ॥ राज्ञो जनः राजसंबंधी जनः अवरोधजनः उपजीविजनश्च रामं मनसा प्रदक्षिणं कृत्वा न्यवर्तत देहमात्रेणेति शेषः । रथस्य शीघ्रगत्वादिति भावः । आशुवेगेन मनसा तु न न्यवर्तत मानुषं इतरमनुष्यसमूहः आशुवेगेन मनसापि न न्यवर्तत अपिना देहेन च न न्यवर्तत। मनसाप्यश्रुवेगैश्चेति पाठांतरम् । अत्रपाठे मनसोऽनिवृत्तेरश्रुवेगो ज्ञापकः ॥ ४९ ॥ उत्कटदिदृक्षावतो राज्ञस्तु सचिववचनान्निवृत्तिरित्याह

तिष्ठेतिराजाचुक्रोशयाहियाहीतिराघवः ॥ सुमंत्रस्यबभूवात्माचक्रयोरिवचांतरा ॥ ४६ ॥ नाश्रौषमितिराजानमुपालब्धोपिवक्ष्यासि ॥ चिरंदुःखस्यपापिष्ठमितिरामस्तमब्रवीत् ॥ ४७ ॥ सरामस्यवचःकुर्वन्ननुज्ञाप्यचतंजनम् ॥ व्रजतोपिहयाञ्शीघ्रंचोदयामाससारथिः ॥ ४८ ॥ न्यवर्ततजनोराज्ञोरामंकृत्वाप्रदक्षिणम् ॥ मनसाप्याशुवेगेननन्यवर्ततमानुषम् ॥ ४९ ॥ यमिच्छेत्पुनरायातंनैनंदूरमनुव्रजेत् ॥ इत्यमात्यामहाराजमूचुर्दशरथंवचः ॥ ५० ॥ तेषांवचःसर्वगुणोपपन्नंप्रस्विन्नगात्रःप्रविषण्णरूपः ॥ निशम्यराजाकृपणःसभार्योव्यवस्थितस्तंसुतमीक्षमाणः ॥ ५१ ॥ इत्यार्षे श्रीम० वा०आ०अ०चत्वारिंशः सर्गः ॥ ४० ॥ तस्मिंस्तुपुरुषव्याघ्रेनिष्क्रामतिकृतांजलौ ॥ आर्तशब्दोहिसंजज्ञेस्त्रीणामंतःपुरेमहान् ॥ १ ॥ अनाथस्यजनस्यास्यदुर्बलस्यतपस्विनः ॥ योगतिःशरणंचासीत्सनाथःक्वनुगच्छति ॥ २ ॥ नक्रुध्यत्यभिशस्तोपिक्रोधनीयानिवर्जयन् ॥ क्रुद्धान्प्रसादयन्सर्वान्समदुःखःक्वगच्छति ॥ ३ ॥ कौसल्यायांमहातेजायथामातरिवर्तते ॥ तथायोवर्ततेऽस्मासुमहात्माक्वनुगच्छति ॥ ४ ॥ कैकेय्याक्लिश्यमानेनराज्ञासंचोदितोवनम् ॥ परित्राताजनस्यास्यजगतःक्वनुगच्छति ॥ ५ ॥ अहोनिश्चेतनोराजाजीवलोकस्यसंक्षयम् ॥ धर्म्यंसत्यव्रतंरामंवनवासेप्रवत्स्यति ॥ ॥ ६ ॥ इतिसर्वामहिष्यस्ताविवत्साइवधेनवः ॥ रुरुदुश्चैवदुःखार्ताःसस्वरंचविचुक्रुशुः ॥ ७ ॥ सतमंतःपुरेघोरमार्तशब्दंमहीपतिः ॥ पुत्रशोकाभिसंततःश्रुत्वाचासीत्सुदुःखितः ॥ ८ ॥ नाग्निहोत्राण्यहूयंतसूर्यश्चांतरधीयत ॥ व्यसृजन्कवलान्नागागावोवत्सान्नपाययन् ॥ ९ ॥

यमिच्छेदिति ॥ ५० ॥ व्यवस्थितः अवस्थितः ॥ ५१ ॥ कौममेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चत्वारिंशः सर्गः ॥ ४० ॥ ॥ छ ॥ ॥ इदानीं तत्प्रयाणनिमित्तः सर्वप्रजाशोक उच्यते तस्मिन्निति । मातृवेष्टितपित्रुद्देशेन कृतांजलौ निष्क्रामति नगरान्निर्गच्छति सति ॥ १ ॥ तदेवाह अनाथस्येति। तपस्विनः शोच्यस्य गतिः सकलसुखावाप्तिहेतुः शरणं सर्वापद्भ्यो रक्षिता ॥ २ ॥ अभिशस्तः मिथ्याभिशंसनं प्रापितः क्रोधनीयानि प्रजाक्रोधकराणि ॥ ३ ॥ ४ ॥ वनं गंतुमिति शेषः । अस्य जनस्येत्युक्त्वा किं विशिष्यकथनेन सर्वस्य जगतः परित्रातेति भगवत्स्वरूपज्ञायाः कस्याश्चिद्वचः ॥ ५ ॥ संक्षयं आधारत्वेन गृहभूतं वनवासे तन्निमित्तं प्रवत्स्यति प्रवासयति ॥ ६ ॥ ७ ॥ ८ ॥ नाहूयंत अग्निहोत्रिभी रामदुःखादिति शेषः । अंतरधीयत रामव्यसनात्तद्वंश्यतया दिवसशेषे सत्यप्यंतर्हितोभूत् अकाले दुर्दिनमभूदिति भावः । व्यसृजन् त्यक्तवंतः नागाः गजाः न पाययन् नापाययन् । अडभाव आर्षः । दुर्दिनाद्युत्पाता राज्ञो रावणस्य च नाशसूचका इति बोध्यम् ॥ ९ ॥

त्रिशंकुर्दक्षिणदिक्स्थः लोहितांगो भौमः गुरुबुधौ अन्ये सर्वे ग्रहाः शनिशुक्रादयः सोममभ्येत्य रात्रौ वक्रगत्या चंद्रं प्राप्य दारुणाः क्रूरार्चिषः संतो व्यवस्थिताः ॥ १० ॥ गतार्चींषि, त्यक्तस्वाभाविककांतीनि ग्रहाः शन्यादयः विशाखाः विमार्गस्थाः सधूमाश्च नभसि दृश्यंते ॥ ११ ॥ कालिका मेघपंक्तिः अनिलवेगेन आकाशे उत्थित उदधिरिव दृश्यते नगरं प्रचचालेत्यनेन भूकंपः ॥ १२ ॥ १३ ॥ अकस्माद्दैन्यहेतुकारणाभावेपि दैन्यं रामवियोगदैन्यादधिकं दैन्यम् ॥ १४ ॥ शोकेन रामवियोगजेन पर्यायसंतप्तः पुनः पुनः संतप्तः प्रतिज्ञापालनरूपधर्मवत्यपि कोप उत्पातः ॥ १५ ॥ पूर्वं तु केषांचित्तत्त्वज्ञानां हर्ष आसीत्संप्रति तु सर्वोप्यहृष्टः ॥ १६ ॥ १७ ॥ सुता अनर्थिनोऽनपेक्षिणो मातापित्रोरिति शेषः । स्त्रीणां भर्तारोऽनर्थिनः भ्रातरो भ्रातॄणामनर्थिन इति शेषः । राममेवान्वचिंतयन् तद्ध्यानेन सर्वो जनः सर्वत्र विरक्तोभूदित्याशयः ॥ १८ ॥ १९ ॥ पुरंदरेण रहिता सपर्वता समेरुर्यथा मही चलति तस्य त्रिलोकीपातित्वात् तथा रामेण रहिताऽयोध्या चचाल रक्षकाभावात् नानद च दुःखाक्रंदेत्यर्थः ॥ २० ॥ नरैस्मानः

त्रिशंकुर्लोहितांगश्चबृहस्पतिबुधावपि ॥ दारुणाःसोममभ्येत्यग्रहाःसर्वेव्यवस्थिताः ॥ १० ॥ नक्षत्राणिगतार्चींषिग्रहाश्चगततेजसः ॥ विशाखाश्चसधूमाश्चनभसिप्रचकाशिरे ॥ ११ ॥ कालिकानिलवेगेनमहोदधिरिवोत्थितः ॥ रामेवनंप्रव्रजितेनगरंप्रचचालतत् ॥ १२ ॥ दिशःपर्याकुलाःसर्वास्तिमिरेणेवसंवृताः ॥ नग्रहोनापिनक्षत्रंप्रचकाशेनकिंचन ॥ १३ ॥ अकस्मान्नागरःसर्वोजनोदैन्यमुपागमत् ॥ आहारेवाविहारेवानकश्चिदकरोन्मनः ॥ १४ ॥ शोकपर्यायसंतप्तःसततंदीर्घमुच्छ्वसन् ॥ अयोध्यायांजनःसर्वश्चुक्रोशजगतीपतिम् ॥ १५ ॥ बाष्पपर्याकुलमुखोराजमार्गगतोजनः ॥ नहृष्टोलभ्यतेकश्चित्सर्वःशोकपरायणः ॥ १६ ॥ नवातिपवनःशीतोनशशीसौम्यदर्शनः ॥ नसूर्यस्तपतेलोकंसर्वंपर्याकुलंजगत् ॥१७॥ अनर्थिनःसुताःस्त्रीणांभर्तारोभ्रातरस्तथा ॥ सर्वेसर्वंपरित्यज्यराममेवान्वचिंतयन् ॥ १८ ॥ येतुरामस्यसुहृदःसर्वेतेमूढचेतसः ॥ शोकभारेणचक्रांताःशयनंनैवभेजिरे ॥ १९ ॥ ततस्त्वयोध्यारहितामहात्मनापुरंदरेणेवमहीसपर्वता ॥ चचालघोरंभयशोकदीपितासनागयोधाश्वगणाननादच ॥२०॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥

॥ यावत्तुनिर्यतस्तस्यरजोरूपमदृश्यत ॥ नैवेक्ष्वाकुवरस्तावत्संजहारात्मचक्षुषी ॥ १ ॥ यावद्राजाप्रियंपुत्रंपश्यत्यत्यंतधार्मिकम् ॥ तावद्व्यवर्धतेवास्यधरण्यांपुत्रदर्शने ॥ २ ॥ नपश्यतिरजोप्यस्ययदारामस्यभूमिपः ॥ तदार्तश्चविषण्णश्चपपातधरणीतले ॥ ३ ॥ तस्यदक्षिणमन्वागात्कौसल्याबाहुमंगना ॥ परंचास्यान्वगात्पार्श्वंकैकेयीसासुमध्यमा ॥ ४ ॥ तांनयेनचसंपन्नोधर्मेणविनयेनच ॥ उवाचराजाकैकेयींसमीक्ष्यव्यथितेंद्रियः ॥ ५ ॥

॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥ ॥ छ ॥ निर्यतस्तस्य रामस्य संबंधि रजसो रूपं रथ्याधूलेः स्वरूपं यावत्तेनादृश्यत तावदात्मनश्चक्षुषी न संजहार इदं रामरथोद्धतं रज इति प्रीत्या तत्पश्यन्नेवासीदिति भावः ॥ १ ॥ यावत्प्रियं पुत्रं राजा पश्यति रथधूलिदर्शनद्वारेति शेषः । तावत्पुत्रदर्शने तन्निमित्तं धरण्यां स्थितोस्य देहो व्यवर्धतेव उत्थाय स्थित एवाभूदित्यर्थः ॥ २ ॥ रजसोप्यदर्शने तच्छरीरं पतितमभूदित्याह नेति । रामस्य रजः रामरथोद्धतं रज इत्यर्थः ॥ ३ ॥ तस्येति । पतितमुत्थाप्य तस्य दक्षिणं बाहुं धृत्वा कौसल्याऽनु आगात् स्वपुरं प्रति गम्यमानमनु आ सहैव ससार । कैकेयी त्वस्य वामं पार्श्वमेव केवलमन्वगात् । तथात्वं च राज्ञोस्यां परमवैरस्यात् ॥ ४ ॥ तदेवाहतामिति ॥ ५ ॥

न च बांधवी बंधूनां स्नेहपात्रदास्यादिरूपापि नेत्यर्थः । अण्णंतत्वान्ङीप् ॥६॥७॥ न केवलमैहिकव्यवहारस्य त्यागः किंतु पारलौकिकस्यापीत्याह अगृह्णामिति । यच्चते पाणिं पर्यगृह्णाम् यच्च त्वामग्निं पर्यणयं प्रदक्षिणमनयम् अग्निहोत्रसंबंधं वा कार्यं तत्सर्वं अस्मिल्लोके पाणिग्रहणसाध्यक्रीडादि परलोकेऽग्निहोत्रादिसाध्यस्वर्गादि चानुजानामि त्यजामि ॥ ८ ॥ ननु मम त्यागेपि मत्पुत्रादेः कथं त्यागो ये च त्वामनुजीवंतीत्यादिनोक्तस्तत्राह भरत इति । यदि त्वया प्रापितं राज्यं प्राप्य भरतः प्रतीतः स्यात्तुष्टः स्यात्तर्हि मे मरणानंतरं स भरतः पित्रर्थं पितृत्वप्रयुक्तश्राद्धार्थं यद्द्यात्तत्तद्दत्तं मां मा आगमत् मा प्राप्नोत्वित्यर्थः । अन्यथा तु तं न त्यजामीत्यर्थः । कतकस्तु अनुजानामीत्यादिसार्धश्लोक एकं वाक्यम् । तत्पूर्वार्धे त्यजामीत्यस्यानुकर्षः । तत्तृतीयार्धे यन्मे स दद्यात्पित्रर्थं मामतद्दत्तमागमादिति पाठः । स दद्यादिति चावर्तते भरतस्त्वया प्रापितं राज्यं प्राप्य प्रतीतः विवेकवान्सन् यत्प्राप्तं राज्यं तत्स पित्रर्थं पितुर्मम प्रीतिसंपादनाय यदि दद्यात् त्यजेत् मां चातद्दत्तं न कृतं तस्मै दत्तं दानं राज्यस्य येन तादृशं मां प्रीत्या पूर्ववदागमत्प्रा

कैकेयिमामकांगानिमास्प्राक्षीःपापनिश्चये ॥ नहित्वांद्रष्टुमिच्छामिनभार्यानचबांधवी ॥६॥ येचत्वामनुजीवंतिनाहंतेषांनतेमम ॥ केवलार्थपरांहित्वां त्यक्तधर्मांत्यजाम्यहम् ॥ ७ ॥ अगृह्णांयच्चतेपाणिमग्निंपर्यणयंचयत् ॥ अनुजानामितत्सर्वमस्मिंल्लोकेपरत्रच ॥ ८ ॥ भरतश्चेत्प्रतीतःस्याद्राज्यंप्राप्यैतदव्ययम् ॥ यन्मेसदद्यात्पित्रर्थंमामांतद्दत्तमागमत् ॥ ९ ॥ अथरेणुसमुद्ध्वस्तंसमुत्थाप्यनराधिपम् ॥ न्यवर्ततततदादेवीकौसल्याशोककर्शिता ॥ ॥ १० ॥ हत्वेवब्राह्मणंकामात्स्पृष्ट्वाग्निमिवपाणिना ॥ अन्वतप्यतधर्मात्मापुत्रंसंचिंत्यराघवम् ॥ ११ ॥ निवृत्यैवनिवृत्यैवसीदतोरथवर्त्मसु ॥ राज्ञो नातिबभौरूपंग्रस्तस्यांशुमतोयथा ॥ १२ ॥ विललापसदुःखार्तःप्रियंपुत्रमनुस्मरन् ॥ नगरांतमनुप्राप्तंबुद्ध्वापुत्रमथाब्रवीत् ॥ १३ ॥ वाहनानांचमुख्यानांवहतांतंममात्मजम् ॥ पदानिपथिदृश्यंतेसमहात्मानदृश्यते ॥ १४ ॥ यःसुखेनोपधानेषुशेतेचंदनरूषितः ॥ वीज्यमानोमहार्हाभिःस्त्रीभिर्ममसुतोत्तमः ॥ १५ ॥ सनूनंक्वचिदेवाद्यवृक्षमूलमुपाश्रितः ॥ काष्ठंवायदिवाश्मानमुपधायशयिष्यते ॥ १६ ॥ उत्थास्यतिचमेदिन्याःकृपणःपांसुगुंठितः ॥ विनिःश्वसन्प्रस्रवणात्करेणूनामिवर्षभः ॥ १७ ॥ द्रक्ष्यंतिनूनंपुरुषादीर्घबाहुंवनेचराः ॥ राममुत्थायगच्छंतंलोकनाथमनाथवत् ॥ १८ ॥ सानूनंजनकस्येष्टासुतासुखसदोचिता ॥ कंटकाक्रमणक्लांतावनमद्यगमिष्यति ॥ १९ ॥

प्नुयाच्चेत्तदा यत्स मे दद्यादस्मिन् लोके विहारशय्याभोजनादि परत्र च परलोके पिंडदानादि तत्सर्वं अनुजानामि अंगीकरोमि अन्यथा तं त्यजाम्येवेत्यर्थ इत्याह ॥ ९ ॥ रेणुसमुद्ध्वस्तं भुवि लुंठनाद्रजोव्याप्तम् न्यवर्तत राज्ञा सहेति शेषः ॥ १० ॥ यथा पाणिनाऽग्निं स्पृष्ट्वा स्वकर्तृकदोषेण तत्पीडयानुतप्तो भवति तथा स्वकृतमेतद्दुःखमित्यनुतापः ॥११॥ निवृत्त्य निवृत्त्य पुनः पुनरित्यर्थः । रथवर्त्मसु सीदतः रथमार्गदर्शने क्लिश्यतः ग्रस्तस्य राहुणा ॥ १२ ॥ आत्मानं नगरांतं नगरसमीपं प्राप्तं बुद्ध्वा पुत्रं चाप्राप्तं बुद्ध्वाऽब्रवीदिति कतकः । यद्वा पुत्रं नगरांतं नगरबाह्यं देशं प्राप्तं मत्वेत्यर्थः ॥ १३ ॥ १४ ॥ महार्हाभिः उत्तमरूपालंकारवतीभिः ॥ १५ ॥ क्वचिन्नदीतीरादौ अश्मा पाषाणः ॥ १६ ॥ बंदिस्तुत्यादिराहित्येन कृपण इव प्रस्रवणाद्गिरिप्रस्थादिप्रदेशात् ॥ १७ ॥ १८ ॥ सुखसदोचिता सुखस्य सदा उचिता तादृश्यपि

कंटकेष्वाक्रमणेन पादविक्षेपेण क्लांता पीडिता ॥ १९ ॥ श्वापदानां व्याघ्रादीनामासमंतान्नर्दितम् ॥ २० ॥ सकामा भवेति वक्रोक्त्या अनपकारिणां दुःखदानात्ते कामपूर्तिर्न कदापीति भावः । विधवात्वे हेतुः । नहीत्यादि ॥ २१ ॥ अपस्नातः मृतस्नानस्नातः अरिष्टं कश्मलमयम् ॥ २२॥ तदेवाह शून्य इति । शून्या निर्मनुष्याश्चत्वरा गृहप्रांतभागाः वेश्मांता वेश्ममध्यभागाश्च यस्याम् । सर्वजनानां रामपृष्ठे गतत्वात् । संवृतापणवेदिकां संवृताः आवृताः पण्यस्थापनवेदिका यस्याम् । देवतामितिपाठे पिहितापणदेवतागृहामित्यर्थः । क्लांताः गंतुमशक्ताः अतएव दुर्बलाः दुःखार्ताः रामवियोगपीडार्ता यस्याम् । नात्याकीर्णोत्यंतसंमर्दरहितो महापथो यस्यां ताम् ॥ २३ ॥ २४ ॥ सुपर्णेन हृतोरगं महाह्रदमिवेति रिपूणां निर्भयप्रवेशद्योतकम् ॥ २५ ॥ मृदुमंदोच्चारणात् अतएव मंदार्थमबुद्धार्थम् । दीनं शोच्यम् । अस्वरं शुद्धकंठध्वनिरहितम् ॥ २६ ॥ नयंतु ये केचिदत्र मनुष्या इति शेषः । अन्यत्र ह्यंतरगृहे आश्वासः खेदापगमः ॥ २७ ॥ द्वारदर्शिनो वेत्रिणः कौसल्याया गृहमनयन् । तत्र गृहे तैर्विनीतवत् पर्यंके

अनभिज्ञावनानांसानूनंभयमुपैष्यति ॥ श्वापदानर्दितंश्रुत्वागंभीरंरोमहर्षणम् ॥ २० ॥ सकामाभवकैकेयिविधवाराज्यमावस ॥ नहितंपुरुषव्याघ्रंविनाजीवितुमुत्सहे ॥ २१ ॥ इत्येवंविलपन्राजाजनौघेनाभिसंवृतः ॥ अपस्नातइवारिष्टंप्रविवेशगृहोत्तमम् ॥ २२॥ शून्यचत्वरवेश्मांतांसंवृतापणवेदिकाम् ॥ क्लांतदुर्बलदुःखार्तांनात्याकीर्णमहापथाम् ॥ २३ ॥ तामवेक्ष्यपुरींसर्वांराममेवानुचिंतयन् ॥ विलपन्प्राविशद्राजागृहंसूर्यइवांबुदम् ॥२४॥ महाह्रदमिवाक्षोभ्यंसुपर्णेनहृतोरगम् ॥ रामेणरहितंवेश्मवैदेह्यालक्ष्मणेनच ॥ २५ ॥ अथगद्गदशब्दस्तुविलपन्वसुधाधिपः ॥ उवाचमृदुमंदार्थंवचनंदीनमस्वरम् ॥ २६ ॥ कौसल्यायागृहंशीघ्रंराममातुर्नयंतुमाम् ॥ नह्यन्यत्रममाश्वासोहृदयस्यभविष्यति ॥ २७॥ इतिब्रुवंतंराजानमनयन्द्वारदर्शिनः ॥ कौसल्यायागृहंतत्रन्यवेश्यतविनीतवत् ॥ २८ ॥ ततस्तत्रप्रविष्टस्यकौसल्यायानिवेशनम् ॥ अधिरुह्यापिशयनंबभूवलुलितंमनः ॥ २९ ॥ पुत्रद्वयविहीनंचस्नुषयाचविवर्जितम् ॥ अपश्यद्भवनंराजानष्टचंद्रमिवांबरम् ॥ ३० ॥ तच्चदृष्ट्वामहाराजोभुजमुद्यम्यवीर्यवान् ॥ उच्चैःस्वरेणप्राक्रोशद्धारामविजहासिनौ ॥ ३१ ॥ सुखितावततंकालंजीविष्यंतिनरोत्तमाः ॥ परिष्वजंतोयेरामंद्रक्ष्यंतिपुनरागतम् ॥ ३२ ॥ अथरात्र्यांप्रपन्नायांकालरात्र्यामिवात्मनः ॥ अर्धरात्रेदशरथःकौसल्यामिदमब्रवीत् ॥ ३३ ॥ नत्वांपश्यामिकौसल्येसाधुमांपाणिनास्पृश ॥ रामंमेऽनुगतादृष्टिरद्यापिननिवर्तते ॥ ३४ ॥ तंराममेवानुविचिंतयंतंसमीक्ष्यदेवीशयनेनरेंद्रम् ॥ उपोपविश्याधिकमार्तरूपाविनिःश्वसंतंविललापकृच्छ्रम् ॥ ३५ ॥

न्यवेश्यत राजेति शेषः यद्वा तन्निवेशनोत्तरं राजा विनीतवत् अधोमुख आसेति शेषः ॥ २८ ॥ कौसल्याया निवेशनं प्रविष्टस्य स्वापस्थानभूतं शयनं मंचमारुह्यापि लुलितं कलुषं बभूव ॥ २९ ॥ ॥ ३० ॥ नौ आवां मातापितरावित्यर्थः ॥ ३१ ॥ ये ब्रत तं कालं तावत्कालं रामपरावृत्तिकालपर्यंतं जीविष्यंति पुनरागतं रामं परिष्वजंतो रामं द्रक्ष्यंति ते सुखिता नरोत्तमाश्च तेन स्वस्याधमत्वादि व्यंग्यम् ॥ ३२ ॥ अथ कौसल्यागृहप्रवेशानंतरं आत्मनः कालरात्र्यामिव संहाररात्र्यामिव रात्र्यां प्रपन्नायां मध्यं प्राप्तायाम् ॥ ३३ ॥ मां स्पृश स्वसत्ताज्ञापनार्थमिति भावः । कौसल्याऽदर्शने हेतुमाह राममिति । काव्यलिंगमत्रालंकारः । दृष्टेर्दर्शनशक्ते रामविषये समनस्काया विलीनत्वात्पदार्थांतरं न स्फुरतीति व्यंग्यम् । परं गुणीभूतम् ॥ ३४ ॥ विनिःश्वसंतं राजानं उपोपविश्य शयनसमीपे उपविश्य ॥ ३५ ॥

॥ शैलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ॥ छ ॥ ॥ सन्नं खिन्नम् ॥ १ ॥ अहिजिह्मगा सर्पवत्कुटिलगतिः कुटिलचारित्रा । जिह्मतामितिपाठे जिह्मतां कौटिल्यरूपं विषं मुक्त्वेत्यर्थः । निर्मुक्ता त्यक्तकंचुका ॥२ ॥ ३॥ भवतु भरतराज्यवरणम् अथापि इहैव नगरे रामो भैक्षं चरन्गृहे वसेदिति यदि अनया वृतं स्यात्तं वरं दातुं ममापि कामकार इष्टाचरणम् अपि आत्मजं रामम् अस्या दासमपि दातुं वरं मम कामकार इष्टमेव तद्वियोगशोकाभावात् । एवं चैवं वरयाचनं ममातित्रासनार्थमेवेति व्यंग्यम् ॥ ४ ॥ कैकेय्या कर्त्र्या रामं स्थानात्स्व स्थानाद्यथेष्टतः स्वेच्छानुसारेण पातयित्वा भ्रंशय्य । पर्वण्याहिताग्निना रक्षसां भागस्तुषादिरूपः विप्रविद्धः प्रक्षिप्तः । इतः परं तद्दर्शनमसंभावितं रक्षोभिर्नाशादिति व्यंग्यम् ॥५ ॥६ ॥ कैकेय्यनुमते स्थितेनेति शेषः ।

इत्यार्षे श्रीमद्रामायणे वा०आ०अयोध्याकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ततःसमीक्ष्यशयनेसन्नंशोकेनपार्थिवम् ॥ कौसल्यापुत्रशोकार्ता तमुवाचमहीपतिम् ॥ १ ॥ राघवेनरशार्दूलविषंमुक्त्वाहिजिह्मगा ॥ विचरिष्यतिकैकेयीनिर्मुक्तेवहिपन्नगी ॥ २ ॥ विवास्यरामंसुभगालब्धकामा समाहिता ॥ त्रासयिष्यतिमांभूयोदुष्टाहिरिववेश्मनि ॥ ३ ॥ अथास्मिन्नगरेरामश्चरन्भैक्षंगृहेवसेत् ॥ कामकारोवरंदातुमपिदासंममात्मजम् ॥ ४ ॥ पातयित्वातुकैकेय्यारामंस्थानाद्यथेष्टतः ॥ प्रविद्धोरक्षसांभागःपर्वणीवाहिताग्निना ॥ ५ ॥ नागराजगतिर्वीरोमहाबाहुर्धनुर्धरः ॥ वनमाविशतेनूनंसभार्यःसहलक्ष्मणः ॥ ६ ॥ वनेत्वदृष्टदुःखानांकैकेय्यनुमतेत्वया ॥ त्यक्तानांवनवासायकान्याऽवस्थाभविष्यति ॥ ७ ॥ तेरत्नहीनास्तरुणाःफलकालेविवासिताः ॥ कथंवत्स्यंतिकृपणाःफलमूलैःकृताशनाः ॥८॥ अपीदानींसकालःस्यान्ममशोकक्षयःशिवः ॥ सहभार्यंसहभ्रात्रापश्येयमिहराघवम् ॥ ९ ॥ श्रुत्वैवोपस्थितौवीरौकदाऽयोध्याभविष्यति ॥ यशस्विनीहृष्टजनासूच्छ्रितध्वजमालिनी ॥ १० ॥ कदाप्रेक्ष्यनरव्याघ्रावरण्यात्पुनरागतौ ॥ भविष्यतिपुरीहृष्टासमुद्रइवपर्वणि ॥ ११ ॥ कदाऽयोध्यांमहाबाहुःपुरींवीरःप्रवेक्ष्यति ॥ पुरस्कृत्यरथेसीतांवृषभोगोवधूमिव ॥ १२ ॥ कदाप्राणिसहस्राणिराजमार्गेममात्मजौ ॥ लाजैरवकरिष्यंतिप्रविशंतावरिंदमौ ॥ १३ ॥ प्रविशंतौकदाऽयोध्यांद्रक्ष्यामिशुभकुंडलौ ॥ उदग्रायुधनिस्त्रिंशौसशृंगाविवपर्वतौ ॥ १४ ॥ कदासुमनसःकन्याद्विजातीनांफलानिच ॥ प्रदिशंतःपुरींहृष्टाःकरिष्यंतिप्रदक्षिणम् ॥ १५ ॥ कदापरिणतोबुद्ध्यावयसाचामरप्रभः ॥ अभ्युपैष्यतिधर्मात्मासुवर्षइवलालयन् ॥ १६ ॥

कान्याऽवस्था रक्षोभक्षणातिरिक्ता न कापि जीवनं सर्वथा न संभावितमिति भावः ॥ ७ ॥ रत्नहीना उत्तमवस्तुहीनाः तरुणौ च तरुणी च तरुणाः फलकाले युवावस्थत्वेन राज्यभोगकाले ॥ ८ ॥ शोकक्षयः शोकस्य क्षयो यस्मिन्सः अपीदानीं स्यात् इदानीमेव स्यात्स काल इत्यर्थः । अपीदानीमिति लोकोक्तौ वा ॥ ९ ॥ १० ॥ ११ ॥ गोरूपां वधूम् ॥ १२ ॥ १३ ॥ उदग्रायुधनिस्त्रिंशौ आयुधं धनुरादि निस्त्रिंशः खड्गः ॥ १४ ॥ कन्याद्विजातीनामिति द्वंद्वः । तत्र कन्यानां सुमनसः पुष्पाणि द्विजानां फलानि च प्रदिशंतः प्रगृह्णंतो हृष्टा भूत्वा सकलपौरजनोत्सवाय कदा पुरीं प्रदक्षिणं करिष्यंति ॥ १५ ॥बुद्ध्या परिणतः ज्ञानेन वृद्धः वयसा चामरप्रभस्तरुणतर इव देवानां सदा तरुणत्वात् । सुवर्ष इव कालिकः कालिकसुवृष्टिरिव जनांल्लाययन् । त्रिवर्ष इव लालयन्निति पाठे मामिति शेषः ॥ मां लालयन्निति पाठे प्रतिक्रीडां कुर्वन्नित्यर्थः॥ १६॥

कदर्यया क्षुद्राचारया पातुं कामो येषां तेषु पातुकामेषु शातिताः कृत्ताः ॥ १७ ॥ वत्सला पुत्रवत्सला सिंहेन गौरिव त्वया विवत्सा कृता उक्तपातकेनेति शेषः । एवं कैकेय्या सिंह्या बालवत्सा गौरिव बलाद्विवत्सा कृता ॥ १८ ॥ अतो नहीति । गुणैः सर्वकल्याणगुणैः ॥ १९ ॥ कल्प्यते दैवेनेति शेषः । कल्पत इति पाठे विद्यत इत्यर्थः ॥ २० ॥ दीपयते संतापयति ॥ २१ ॥ कौरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ ॥छ॥ ॥ एवं दुःखितां कौसल्यां सुमित्रा समाश्वासयतीत्याह विलपंतीमिति । इदं वाक्यमित्यन्वयः ॥ १ ॥ कृपणं यथा तथा रुदितेन वा किम् अयुक्तमेवेत्यर्थः । तत्र हेतुः सद्गुणैर्युक्त इति । तादृशस्य च न काप्यपाय इति भावः । पुरुषोत्तम इत्यनेन तस्येश्वरत्वं व्यंग्यम् । एवं च सर्वव्यापकत्वेनात्रापि सन्निधानाद्विलापादि व्यर्थमिति च व्यंग्यम् ॥ २ ॥ तदेवाह य इति । श्लोकद्वयमेकं वाक्यं साधु सिद्धसंकल्पं कुर्वन्गतः वनमिति शेषः । सत्यवादिनं तत्त्वेन प्रसिद्धम् ॥ ३ ॥ शश्वत् सर्वथा नित्यं प्रेत्य फलस्य

निःसंशयंमयामन्येपुरावीरकदर्यया ॥ पातुकामेषुवत्सेषुमातॄणांशातिताःस्तनाः ॥१७॥ साहंगौरिवसिंहेनविवत्सावत्सलाकृता ॥ कैकेय्यापुरुषव्याघ्रबालवत्सेवगौर्बलात् ॥ १८ ॥ नहितावद्गुणैर्जुष्टंसर्वशास्त्रविशारदम् ॥ एकपुत्राविनापुत्रमहंजीवितुमुत्सहे ॥ १९ ॥ नहिमेजीवितेकिंचित्सामर्थ्यमिहकल्प्यते ॥ अपश्यंत्याःप्रियंपुत्रंलक्ष्मणंचमहाबलम् ॥ २० ॥ अयंहिमांदीपयतेऽग्न्यवह्निस्तनूजशोकप्रभवोमहाहितः ॥ महीमिमांरश्मिभिरुत्तमप्रभोयथानिदाघेभगवान्दिवाकरः ॥ २१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये अयोध्याकांडेत्रिचत्वारिंशः सर्गः ॥ ४३ ॥ विलपंतींतथातांतुकौसल्यांप्रमदोत्तमाम् ॥ इदंधर्मेस्थिताधर्म्यंसुमित्रावाक्यमब्रवीत् ॥ १ ॥ तवार्येसद्गुणैर्युक्तःसपुत्रःपुरुषोत्तमः ॥ किंतेविलपितेनैवंकृपणंरुदितेनवा ॥ २ ॥ यस्तवार्येगतःपुत्रस्त्यक्त्वाराज्यंमहाबलः ॥ साधुकुर्वन्महात्मानंपितरं सत्यवादिनम् ॥ ३ ॥ शिष्टैराचरितेसम्यक्शश्वत्प्रेत्यफलोदये ॥ रामोधर्मेस्थितःश्रेष्ठोनसशोच्यःकदाचन ॥ ४ ॥ वर्ततेचोत्तमांवृत्तिंलक्ष्मणोस्मिन्सदानघः ॥ दयावान्सर्वभूतेषुलाभस्तस्यमहात्मनः ॥ ५ ॥ अरण्यवासेयद्दुःखंजानंत्येवसुखोचिता ॥ अनुगच्छतिवैदेहीधर्मात्मानंतवात्मजम् ॥ ६ ॥ कीर्तिभूतांपताकांयोलोकेभ्रामयतिप्रभुः ॥ धर्मःसत्यव्रतपरःकिंनप्राप्तस्तवात्मजः ॥ ७ ॥ व्यक्तंरामस्यविज्ञायशौचंमाहात्म्यमुत्तमम् ॥ नगात्रमंशुभिःसूर्यःसंतापयितुमर्हति ॥ ८ ॥

आमुष्मिकसुखस्योदयो यस्मात्तत्र धर्मे स्थितोऽतो न शोच्यः ॥ ४ ॥ सुसहायसंपत्तेश्च न शोच्य इत्याह वर्तते चेति । उत्तमां वृत्तिं पितृतुल्यशुश्रूषाव्यापारं वर्तते वर्तयते करोतीति यावत् । लाभः सुखमेव ॥ ५ ॥ एवं वैदेह्यप्यनुगच्छति तेन लाभ एव तस्य । अनेन सर्वभूतदयावत्त्वेन लक्ष्मणस्य सर्वभूताधारभूधारकशेषावतारत्वं धर्मानुगत्या च जानक्याः श्रीत्वं ध्वनितम् । तेन रामस्य भगवत्त्वं ध्वनितम् ॥ ६ ॥ तदेवाह कीर्तीति । यः कीर्त्यात्मना संभूतां पताकां ध्वजं लोके त्रैलोक्येपि भ्रामयति प्रवर्तयति प्रभुः सर्वभूतपालको दयया स तवात्मजः साक्षाद्धर्मस्तद्रूपो यतः सत्यव्रतपरोऽतः किं न प्राप्तः किं तच्छ्रेयो यन्न प्राप्तः अनेन तदेव व्यंग्यं दृढीकृतं सर्वश्रेयःस्थानत्वस्य भगवदतिरिक्तेऽभावात् ॥ ७ ॥ एतदेव ध्वनयंती सकलदेवसेव्यत्वं तस्याह व्यक्तमिति । शौचं अपहतपाप्मत्वादिलक्षणं माहात्म्यं सर्वनियंतृत्वम् । यद्भीषोदेति सूर्यः

इति श्रुतेः ॥ ८ ॥ युक्तशीतोष्णः अतएव सुखः सुखस्पर्श इत्यर्थः ॥ ९ ॥ चंद्रमाश्चंद्रः ह्लादयिष्यति सुखयिष्यति ॥ १० ॥ ब्रह्मा ब्राह्मणो विश्वामित्रः ब्रह्मेव सृष्टिकर्ता वा तिमिध्वजः शंबरस्तत्सुतः । सुबाहुरित्यर्थ इति कतककृतः । तीर्थस्तु कदाचिद्रामो वैजयंतं नगरं निरुध्य तत्रत्यतिमिध्वजाख्यशंबरपुत्रस्य दानवस्य पुत्रं हतवांस्तेन प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददावित्येतद्बलात्कल्पयति । कतकोक्तं तु न युक्तं ताटकावधोत्तरं सुबाहुवधात्प्रागेव विश्वामित्रेणास्त्रोपदेशस्य प्रागुक्तत्वात्सुबाहोर्मारीचभ्रातृत्वस्य पूर्वमुक्तत्वेन शंबरपुत्रत्वानौचित्याच्च ॥ ११ ॥ १२ ॥ तस्य शासने पृथिवी तत्स्थाः प्राणिनः कथं न शासने स्थास्यंति अतस्तस्य कुतोपि न भयमिति भावः ॥ १३ ॥ या यादृशी श्रीः शरीरशोभा यादृशं च शौर्यं यादृशी च कल्याणसत्त्वता दृश्यते तया ज्ञायते निवृत्तवनवासः क्षिप्रमेव स्वं राज्यं प्राप्स्यति ॥ १४ ॥

शिवःसर्वेषुकालेषुकाननेभ्योविनिःसृतः ॥ राघवंयुक्तशीतोष्णःसेविष्यतिसुखोऽनिलः ॥ ९ ॥ शयानमनघंरात्रौपितेवाभिपरिष्वजन् ॥ घर्मघ्नः संस्पृशन्शीतश्चंद्रमाह्लादयिष्यति ॥ १० ॥ ददौचास्त्राणिदिव्यानियस्मैब्रह्मामहौजसे ॥ दानवेंद्रंहतंदृष्ट्वातिमिध्वजसुतंरणे ॥ ११ ॥ सशूरः पुरुषव्याघ्रःस्वबाहुबलमाश्रितः ॥ असंत्रस्तोह्यरण्येसौवेश्मनीवनिवत्स्यते ॥ १२ ॥ यस्येषुपथमासाद्यविनाशंयांतिशत्रवः ॥ कथंनपृथिवी तस्यशासनेस्थातुमर्हति ॥ १३ ॥ याश्रीःशौर्यंचरामस्ययाचकल्याणसत्त्वता ॥ निवृत्तारण्यवासःस्वंक्षिप्रंराज्यमवाप्स्यति ॥ १४ ॥ सूर्यस्यापिभवेत्सूर्योह्यग्नेरग्निःप्रभोःप्रभुः ॥ श्रियाःश्रीश्चभवेदग्र्याकीर्त्याःकीर्तिःक्षमाक्षमा ॥ १५ ॥ दैवतंदेवतानांचभूतानांभूतसत्तमः ॥ तस्यकेह्यगुणादेविवने वाप्यथवापुरे ॥ १६ ॥ पृथिव्यासहवैदेह्याश्रियाचपुरुषर्षभः ॥ क्षिप्रंतिसृभिरेताभिःसहरामोभिषेक्ष्यते ॥ १७ ॥ दुःखजंविसृजत्यश्रुनिष्क्रामंतमुदीक्ष्ययम् ॥ अयोध्यायांजनःसर्वःशोकवेगसमाहतः ॥ १८ ॥ कुशचीरधरंवीरंगच्छंतमपराजितम् ॥ सीतेवानुगतालक्ष्मीस्तस्यकिंनामदुर्लभम् ॥ ॥ १९ ॥ धनुर्ग्रहवरोयस्यबाणखड्गास्त्रभृत्स्वयम् ॥ लक्ष्मणोव्रजतिह्यग्रेतस्यकिंनामदुर्लभम् ॥ २० ॥ निवृत्तवनवासंतंद्रष्टासिपुनरागतम् ॥ जहि शोकंचमोहंचदेविसत्यंब्रवीमिते ॥ २१ ॥ शिरसाचरणावेतौवंदमानमनिंदिते ॥ पुनर्द्रक्ष्यसिकल्याणिपुत्रंचंद्रमिवोदितम् ॥ २२ ॥ पुनःप्रविष्टं दृष्ट्वातमभिषिक्तंमहाश्रियम् ॥ समुत्स्रक्ष्यसिनेत्राभ्यांशीघ्रमानंदजंजलम् ॥ २३ ॥ माशोकोदेविदुःखंवानरामेदृश्यतेऽशिवम् ॥ क्षिप्रंद्रक्ष्यसिपुत्रंत्वं ससीतंसहलक्ष्मणम् ॥ २४ ॥

इदानीं साक्षादेव सर्वांतर्यामित्वं रामस्य दर्शयति सूर्यस्यापीति । सर्वस्यापि स्वस्वकार्यजनकत्वं एतदधीनमेवेति भावः । क्षमाक्षमेति षष्ठीतत्पुरुषः ॥ १५ ॥ अगुणाः दोषजनका इत्यर्थः ॥ १६ ॥ राम एताभिस्तिसृभिः सह अभिषेक्ष्यते वसिष्ठादिभिरिति शेषः । श्रिया विजयलक्ष्म्या ॥ १७ ॥ कालांतरेपि राज्यार्हतां जनानुरागप्रदर्शनेनाह दुःखजमिति । यतः अयोध्यायां विद्यमानः सर्वो जनोयं निष्क्रामंतमुदीक्ष्य दुःखजमश्रु विसृजति अतस्तस्य राज्यमवश्यंभावीति शेषः ॥ १८ ॥ अथ तस्य वने विषयसुखं नास्तीति शोचंतीमाह कुशचीरादिधरमपि यं लक्ष्मीरिव सीतानुगता तस्य किं दुर्लभम् । इवशब्द एवार्थे सीतारूपेण लक्ष्मीरेवैषेति भावः । एतेन स विष्णुरेवेति ध्वनितम् ॥ १९ ॥ धनुर्ग्रहाणां शूराणां वरः श्रेष्ठः पुरुषोत्तमत्वं विना न लक्ष्मणोऽग्रेसरः स्यादिति भावः ॥ २० ॥ द्रष्टासि लुट् ॥ २१ ॥ २२ ॥ २३ ॥ रामे रामविषये शोकः प्रलापादिदुःखं

व्यथा मास्तु । यतस्तस्मिन्नशिवम् अशुभं न दृश्यते ॥२४॥ हे अनघे यस्मात्त्वयाऽशेषोयं जनः त्वत्परिवाररूपत्वात्त्वया समाश्वास्यः अतो देवि त्वं हृदि विक्लवं दुःखं किं करोषि ॥ २५ ॥ २६ ॥ मेघरेखा मेघ
पंक्तिः ॥ २७ ॥ २८ ॥ अभिवाद्य चरणौ स्पृष्ट्वा मोक्षसे । उक्ष सेचने वर्तमानसामीप्ये लट् ॥ २९ ॥ वाक्योपचारे वाक्यरचनायां रामा रमणीया ॥ ३० ॥ ३१ ॥ कौलैमानः ॥ ॥ इति श्रीरा०
श्रीरा०रा०वा० आ०अ० चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ ॥७॥ इदानीं दूरमनुगच्छत्पौरजननिवर्तनमाह अन्विति । वनवासाय प्रयांतमित्यन्वयः ॥ १ ॥ सुहृद्धर्मेण यमिच्छेत्पुनरायातं नैव दूरमनुव्रजेदित्यु
क्तिरूपेण ते अनुरक्ताः पौराः ॥२॥ तदनिवृत्तौ हेतुमाह अयोध्येति ॥३॥ याच्यमानः प्रतिनिवृत्तिमिति शेषः । ताभिः प्रकृतिभिः अनुरक्ततमप्रजाभिः । सत्यं सत्यवंतम् ॥४॥ स्वाः प्रजा इव स्वपुत्रानिव॥५॥

त्वयाशेषोजनश्चायंसमाश्वास्योयतोऽनघे ॥ किमिदानीमिदंदेविकरोषिहृदिविक्लवम् ॥ २५ ॥ नार्हात्वंशोचितुंदेवियस्यास्तेराघवःसुतः ॥ नहिरामा
त्परोलोकेविद्यतेसत्पथेस्थितः ॥ २६ ॥ अभिवादयमानंतंदृष्ट्वाससुहृदंसुतम् ॥ मुदाश्रुमोक्ष्यसेक्षिप्रंमेघरेखेववार्षिकी ॥२७॥ पुत्रस्तेवरदःक्षिप्रमयो
ध्यांपुनरागतः ॥ कराभ्यांमृदुपीनाभ्यांचरणौपीडयिष्यति ॥ २८ ॥ अभिवाद्यनमस्यंतंशूरंससुहृदंसुतम् ॥ मुदास्रैःप्रोक्षसेपुत्रंमेघराजिरिवाचलम् ॥
॥ २९॥ आश्वासयंतीविविधैश्चवाक्यैर्वाक्योपचारेकुशलाऽनवद्या ॥ रामस्यतांमातरमेवमुक्त्वादेवीसुमित्राविररामरामा ॥ ३० ॥ निशम्यतल्लक्ष्मण
मातृवाक्यंरामस्यमातुर्नरदेवपत्न्याः ॥ सद्यःशरीरेविननाशशोकःशरद्गतोमेघइवाल्पतोयः ॥ ३१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आ०अ०
चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ अनुरक्तामहात्मानंरामंसत्यपराक्रमम् ॥ अनुजग्मुःप्रयांतंतंवनवासायमानवाः ॥ १ ॥ निवर्तितेऽतीवबलात्सुहृद्धर्मे
णराजनि ॥ नैवतेसंन्यवर्ततरामस्यानुगतारथम् ॥ २ ॥ अयोध्यानिलयानांहिपुरुषाणांमहायशाः ॥ बभूवगुणसंपन्नःपूर्णचंद्रइवप्रियः ॥ ३ ॥ सया
च्यमानःकाकुत्स्थस्ताभिःप्रकृतिभिस्तदा ॥ कुर्वाणःपितरंसत्यंवनमेवान्वपद्यत ॥ ४ ॥ अवेक्षमाणःसस्नेहंचक्षुषाप्रपिबन्निव ॥ उवाचरामःसस्नेहंताः
प्रजाःस्वाःप्रजाइव ॥ ५ ॥ याप्रीतिर्बहुमानश्चमय्ययोध्यानिवासिनाम् ॥ मत्प्रियार्थंविशेषेणभरतेसाविधीयताम् ॥ ६ ॥ सहिकल्याणचारित्रःकैके
य्यानंदवर्धनः ॥ करिष्यतियथावद्वःप्रियाणिचहितानिच ॥ ७ ॥ ज्ञानवृद्धोवयोबालोमृदुर्वीर्यगुणान्वितः ॥ अनुरूपःसवोभर्ताभविष्यतिभयापहः ॥
॥ ८ ॥ सहिराजगुणैर्युक्तोयुवराजःसमीक्षितः ॥ अपिचापिमयाशिष्टैःकार्यंवोभर्तृशासनम् ॥ ९ ॥ नसंतप्येद्यथाचासौवनवासंगतेमयि ॥ महाराजस्त
थाकार्योममप्रियचिकीर्षया ॥ १० ॥ यथायथादाशरथिर्धर्ममेवाश्रितोभवत् ॥ तथातथाप्रकृतयोरामंपतिमकामयन् ॥ ११ ॥ बाष्पेणपिहितंदीनं
रामःसौमित्रिणासह ॥ चकर्षेवगुणैर्बद्धंजनंपुरनिवासिनम् ॥ १२ ॥

अयोध्यानिवासिनां युष्माकमिति शेषः ॥ ६ ॥ प्रियाणि ऐहलौकिकसुखजनकानि । हितानि परलोकसुखजनकानि ॥ ७ ॥ वयसा बालोपि ज्ञानवृद्धः । वीर्यगुणान्वितोपि मृदुः ॥ ८ ॥ समीक्षितः राज्ञा
निश्चितः । मया शिष्टैः मत्तोधिकैरिति यावत् ईदृशो राजगुणैर्युक्तः । हि यतः अपिचापि अस्मादपि हेतोः भरते प्रीतिर्विधीयताम् । यतो वो युष्माकं भर्तृशासनं राजाज्ञा कार्या अवश्यकार्या भवति ॥ ९ ॥ तथा
कार्यः अनुकूलाचरणेन सदा समाश्वासनीयः ॥१०॥ धर्मं राजवाक्यपरिपालनरूपम् अकामयन् चित्ते स्वीकृतवंतः अत्यंतधर्मशालित्वात् ॥११॥ बाष्पेण पिहितं पिहितनेत्रं रज्जुरूपैः स्वगुणैर्बद्धं पुरनिवासिनं सौमि

त्रिसहितो रामश्चकर्षेव । उत्प्रेक्षालंकारः गुणैरित्यंशे श्लोकः ॥ १२ ॥ ओजसा तपोबलेन एवं त्रिविधं यथा तथा वृद्धाः तेषां मध्ये वयःप्रकंपशिरसः वयस आधिक्यात्कंपयुक्तशिरसः अतिवृद्धत्वादनुधावनाशक्त्या दूरादिदमूचुः क्वचित्तु प्रभुग्नशिरस इति पाठः ॥ १३ ॥ किमूचुस्तदाह वहंत इति । रथेन प्रापयंत इत्यर्थः । जात्याः उत्तमजातीयाः । भर्तरि रामविषये हिता भवत वनमानयतेति यावत् । ब्राह्मणयाच्ञामतिक्रम्य युष्मद्गमनं भर्तुरहितमिति भावः ॥ १४ ॥ विशेषेण यूयं कर्णवंत इत्यनुकर्षतस्तस्माद्बधिरवन्न गंतव्यं अपि तु याचनामस्मदीयां प्रति वेदिताः ज्ञातवंतो निवर्तध्वम् ॥ १५ ॥ उपवाह्यः पुरसमीपं प्रापणीयः । वः युष्माकं न तु पुरादपनीय वनं वाह्यः प्रापणीयः ॥ १६ ॥ आर्तप्रलापान् आर्तवाक्यानि प्रलपतः कथयतः ॥ १७ ॥ द्विजानां संगमार्थं सन्निकृष्टपदन्यासो भूत्वा वनपरायण एव शनैर्जगाम न तु निवृत्तो नापि स्थितः । रथेन गमने ब्राह्मणक्लेशेन दोषः । प्रतिनिवृत्त्य ब्राह्मणाश्वासने व्रतभंगो भवतीति धिया पद्भ्यां मंदगमनोभूत् । यावद्वृद्धसन्निधानमिति भावः ॥ १८ ॥ रथेन परिमोक्तुं न शशाक अत्यंतं रथवेगाल्लं

तेद्विजास्त्रिविधंवृद्धाज्ञानेनवयसौजसा ॥ वयःप्रकंपशिरसोदूरादूचुरिदंवचः ॥ १३ ॥ वहंतोजवनारामंभोभोजात्यास्तुरंगमाः ॥ निवर्तध्वंनगंतव्यंहिता भवतभर्तरि ॥ १४ ॥ कर्णवंतिहिभूतानिविशेषेणतुरंगमाः ॥ यूयंतस्मान्निवर्तध्वंयाचनांप्रतिवेदिताः ॥१५॥ धर्मतःसविशुद्धात्मावीरःशुभदृढव्रतः ॥ उपवाह्यस्तुवोभर्तानापवाह्यःपुराद्वनम् ॥ १६ ॥ एवमार्तप्रलापांस्तान्वृद्धान्प्रलपतोद्विजान् ॥ अवेक्ष्यसहसारामोरथादवततारह ॥ १७ ॥ पद्भ्यामेवजगामाथससीतःसहलक्ष्मणः ॥ सन्निकृष्टपदन्यासोरामोवनपरायणः ॥ १८ ॥ द्विजातीन्हिपदातींस्तान्रामश्चारित्रवत्सलः ॥ नशशाकघृणाचक्षुःपरिमोक्तुंरथेनसः ॥ १९ ॥ गच्छंतमेवतंदृष्ट्वारामंसंभ्रांतमानसाः ॥ ऊचुःपरमसंतप्तारामंवाक्यमिदंद्विजाः ॥ २० ॥ ब्राह्मण्यंकृत्स्नमेतत्त्वांब्रह्मण्यमनुगच्छति ॥ द्विजस्कंधाधिरूढास्त्वामग्नयोप्यनुयांत्वमी ॥ २१ ॥ वाजपेयसमुत्थानिच्छत्राण्येतानिपश्यनः ॥ पृष्ठतोनुप्रयातानिमेघानिवजलात्यये ॥ २२ ॥ अनवाप्तातपत्रस्यरश्मिसंतापितस्यते ॥ एभिश्छायांकरिष्यामःस्वैश्छत्रैर्वाजपेयकैः ॥२३॥ याहिनःसततंबुद्धिर्वेदमंत्रानुसारिणी ॥ त्वत्कृतेसाकृतावत्सवनवासानुचारिणी ॥ २४ ॥ हृदयेष्ववतिष्ठंतेवेदायेनःपरंधनम् ॥ वत्स्यंत्यपिगृहेष्वेवदाराश्चारित्ररक्षिताः ॥ २५ ॥ पुनर्ननिश्चयःकार्यस्त्वद्गतौसुकृतामतिः ॥ त्वयिधर्मव्यपेक्षेतुकिंस्याद्धर्मपथेस्थितम् ॥ २६ ॥

वनेन निवर्तयितुं न शशाकेत्यर्थः । तत्र घृणाचक्षुष्ट्वं हेतुः । घृणा दया तत्सूचकचक्षुष्मानित्यर्थः ॥ १९ ॥ गच्छंतमेव स्वमार्थनानंतरमपि न स्थितं नापि निवृत्तमित्यर्थः ॥ २० ॥ ब्राह्मण्यं ब्राह्मणसमूहः ब्रह्मण्यं ब्रह्महितम् । द्विजस्कंधाधिरूढाः पात्रारणिद्वारेणेति शेषः ॥ २१ ॥ वाजपेयसमुत्थानि वाजपेययाजिनो राजवच्छत्रादिसंबंधस्य श्रुतावुक्तेः । मेघानिव जलात्यये शारदमेघवत्पांडुराणि च्छत्राणीत्यर्थः ॥ २२ ॥ अनवाप्तातपत्रस्य अप्राप्तश्वेतच्छत्रस्य । वाजपेयकैः वाजपेययागप्राप्तैः ॥ २३ ॥ वेदमंत्रानुसारिणी तदभ्यासानुसरणशीला त्वत्कृते त्वन्निमित्तं वनवासानुसारिणी वेदाभ्यासादि परित्यज्य वनवासोन्मुखी कृतेत्यर्थः ॥ २४ ॥ अस्माकं त्वया सह वनानुगमने न काप्यनुपपत्तिरित्याहुः हृदयेष्विति ॥ ये नोस्माकं परं धनं वेदास्तेऽस्माकं हृदये एवावतिष्ठंते । चारित्रं पातिव्रत्यम् ॥ २५ ॥ पुनरिति । यद्यपि त्वद्गतौ त्वदनुगमनेऽस्माकं मतिः सुकृता निश्चिता अतः पुनर्वनगमननिश्चयोऽस्माकं न कार्योस्ति कृतत्वादेव तथापि किंचिद्ब्रूम इति शेषः । त्वयि धर्मव्यपेक्षे ब्राह्मणवचनरूपधर्मनिरपेक्षे सति किंभूतं धर्मपथे स्थितं स्यात् न किमपि सर्वे धर्ममार्गं व्यतिक्रमेयुः ॥ २६ ॥

तस्माद् अस्माभिर्हंसशुक्लशिरोरुहैः पलितकेशैः शिरोभिः साष्टांगप्रणामेन महीपतनपांसुलैः महीपतनेन पांसुलैः रजोव्याप्तैर्देहैश्च याचितस्त्वं निभृताचार निश्चलधर्मानुष्ठान निवर्तस्व । अत्र ब्राह्मणैर्नमस्कारः क्षत्रियस्य कथमिति न शंक्यम् । तत्त्वज्ञतया भगवदवतारत्वदृष्ट्या नमस्कारेणादोषात् । यद्वा राज्ञो विष्ण्वंशत्वेन नतौ न दोष इत्याहुः ॥ २७ ॥ एवमपि गच्छंतमेव दृष्ट्वाहुः बहूनामिति । ये द्विजा इहागतास्तेषां बहूनां यज्ञाः इह काले विततः संति तेषां समाप्तिस्त्वन्निवर्तनायत्तां । अनिवृत्तौ सर्वयज्ञविघ्नकर्तृत्वं त्वय्यापत्स्यतीति भावः ॥ २८ ॥ न केवलमस्मत्प्रार्थनैवापितु सर्वभूतप्रार्थनाऽपीत्याहुः भक्तीति । जंगमा जंगमानि सर्वाण्यपि भूतानि भक्तिमंति स्नेहवंति तेषु त्वन्निवृत्तिं याचमानेषु भक्तेषु त्वमपि भक्तिं स्नेहं प्रदर्शय । निवृत्त्येति शेषः ॥ २९ ॥ तेषां याच्ञाप्रकारमाह । मूलैः स्थावरत्वादुद्धत् अत्यंतं हतवेगा अतस्त्वामनुगंतुमशक्ता उन्नता उच्छ्रिताः पादपाः वायुवेगेन वायुवेगजशाखाचलनशब्दैर्विक्रोशंतीव । त्वन्निवर्तनायेति शेषः ॥ ३० ॥ चेष्टागात्रचलनादिरूपा आहारार्थसंचारश्च तेभ्यो निर्गतास्तद्रहिताः वृक्षरूपैकस्थान एव निश्चिता निश्चयेन स्थिताः न त्वाहारायापि भुवमवतीर्णाः । एवं मरणपर्यंतव्यापारेण त्वां याचंते । निवृत्तिमिति शेषः ॥ ३१ ॥ निवर्तने निवर्तननिमित्तम् । विक्रो

याचितोनोनिवर्तस्वहंसशुक्लशिरोरुहैः ॥ शिरोभिर्निभृताचारमहीपतनपांसुलैः ॥ २७ ॥ बहूनांविततायज्ञाद्विजानांयइहागताः ॥ तेषांसमाप्तिरायत्ता तववत्सनिवर्तने ॥ २८ ॥ भक्तिमंतीहभूतानिजंगमाजंगमानिच ॥ याचमानेषुतेषुत्वंभक्तिंभक्तेषुदर्शय ॥ २९ ॥ अनुगंतुमशक्तास्त्वांमूलैरुद्धतवेगिनः ॥ उन्नतावायुवेगेनविक्रोशंतीवपादपाः ॥ ३० ॥ निश्चेष्टाहारसंचारावृक्षैकस्थाननिश्चिताः ॥ पक्षिणोपिप्रयाचंतेसर्वभूतानुकंपनम् ॥ ३१ ॥ एवंविक्रोशतांतेषांद्विजातीनांनिवर्तने ॥ ददृशेतमसातत्रवारयंतीवराघवम् ॥ ३२ ॥ ततःसुमंत्रोपिरथाद्विमुच्यश्रांतान्हयान्संपरिवर्त्यशीघ्रम् ॥ पीतोदकांस्तोयपरिप्लुतांगानचारयद्वैतमसाविदूरे ॥ ३३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ ततस्तुतमसातीरंरम्यमाश्रित्यराघवः ॥ सीतामुद्वीक्ष्यसौमित्रिमिदंवचनमब्रवीत् ॥ १ ॥ इयमद्यनिशापूर्वासौमित्रेप्रहितावनम् ॥ वनवासस्यभद्रंते नचोत्कंठितुमर्हसि ॥ २ ॥ पश्यशून्यान्यरण्यानिरुदंतीवसमंततः ॥ यथानिलयमायद्भिर्निलीनानिमृगद्विजैः ॥ ३ ॥ अद्यायोध्यातुनगरीराजधानी पितुर्मम ॥ सस्त्रीपुंसागतानस्मान्शोचिष्यतिनसंशयः ॥ ४ ॥ अनुरक्ताहिमनुजाराजानंबहुभिर्गुणैः ॥ त्वांचमांचनरव्याघ्रशत्रुघ्नभरतौतथा ॥ ५ ॥ पितरंचानुशोचामिमातरंचयशस्विनीम् ॥ अपिनांधौभवेतांनौरुदंतौतावभीक्ष्णशः ॥ ६ ॥

शतां तेषामनुग्रहाय मार्गे निर्यक्प्रवाहत्वाद्रावनं वारयंतीव तमसा ददृशे दृष्टा ॥ ३२ ॥ संपरिवर्त्य श्रमापनुत्त्यै कृतविलुंठनान्विधाय तोयपरिप्लुतांगान्स्नापितांस्तमसाया अविदूरे अचारयत् भक्षिततृणानकारयत् ॥ ३३ ॥ ऌलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ ॥ छ ॥ ॥ सीतामुद्वीक्ष्य सौमित्रिमब्रवीदित्यनेन सीतोद्देश्यकताप्यस्य वचसो ध्वनिता ॥ १ ॥ हे सौमित्रे वनवाससंबंधिनिशानां मध्येऽद्य प्रवृत्ता इयं निशा वनं वनवासं प्रति पूर्वा प्रहिता प्राप्ता । वनवासकालस्यैतन्निशामारभ्य गणनीयत्वात् । अतस्त्वमुत्कंठितुमद्यप्रभृति पुरोत्सुक्येनायोध्यादिस्मरणं कर्तुं नार्हसि ॥ २ ॥ यथायोगं स्वस्वनिलयमायाद्भिरागच्छद्भिर्मृगद्विजैर्निलीनानि सशब्दमंतर्लीनतया व्याप्तानि अतएव शून्यानि अरण्यानि रुदंतीव अस्मान्दृष्ट्वा खिन्नानीव वर्तंते तानि पश्य ॥ ३ ॥ सस्त्रीपुंसा स्त्रीपुंसैः सहिता । अद्य अद्यप्रभृति ॥ ४ ॥ कुतस्तत्राह अनुरक्ता इति । बहुभिर्गुणैरिति सर्वान्वयि ॥ ५ ॥ नौ अस्मदर्थे अस्मन्निमित्तं अभीक्ष्णं मुहुर्मुहुः रुदंतौ पितरौ अंधौ

न भवेतामपि भवेतामेवातः शोचामि तौ ॥ ६ ॥ अथवा तदनुशोकोस्माकं वृथेत्याह भरत इति ॥ ७ ॥ अनृशंसत्वमक्रूरत्वम् ॥ ८ ॥ अथ लक्ष्मणानुगमनेन संतुष्ट आह त्वयेति । मामनुव्रजता त्वया तु यत्कार्यं कर्तव्यं तत्कृतमेव । हि यतस्त्वदनुव्रजनाभावे वैदेहीरक्षणार्थं सहायता सहायसमूहोन्वेष्टव्यः स्यात् त्वमेकोपि सहायसमूहस्थानीय इति भावः । अतस्त्वस्यै अद्यारभ्यैव सुखाहारादिकं संपादयेति शेषः ॥ ९ ॥ अहं तु अत्र तमसातीरे इमां निशामद्भिरेव कृतप्राणरक्षणो वत्स्यामि । प्रथमदिनत्वात् वनवाससंकल्पांगत्वेनेति शेषः । तदेवाह एतद्धीति । वन्ये सत्यपीत्यन्वयः ॥ १० ॥ ११ ॥ संयम्य यथायोग्यं बंधनं कृत्वा प्रभूतयवसान् प्रभूतघासान् । प्रत्यनंतरः प्रत्यासन्नः ॥ १२ ॥ शयनं शयनस्थलम् । शर्करापांसूत्क्षेपणादिना चक्रे इत्यन्वयः ॥ १३ ॥ वृक्षदलैर्वृक्षपर्णैः सौमित्रिणा सार्धं सूतेन कृतां शय्यां

भरतःखलुधर्मात्मापितरंमातरंचमे ॥ धर्मार्थकामसहितैर्वाक्यैराश्वासयिष्यति ॥ ७ ॥ भरतस्यानृशंसत्वंसंचिंत्याहंपुनःपुनः ॥ नानुशोचामिपित रंमातरंचमहाभुज ॥ ८ ॥ त्वयाकार्यंनरव्याघ्रमामनुव्रजताकृतम् ॥ अन्वेष्टव्याहिवैदेह्यारक्षणार्थंसहायता ॥ ९ ॥ अद्भिरेवहिसौमित्रेवत्स्याम्यद्य निशामिमाम् ॥ एतद्धिरोचतेमह्यंवन्येपिविविधेसति ॥ १० ॥ एवमुक्त्वातुसौमित्रिंसुमंत्रमपिराघवः ॥ अप्रमत्तस्त्वमश्वेषुभवसौम्येत्युवाचह ॥११॥ सोश्वान्सुमंत्रःसंयम्यसूर्येऽस्तंसमुपागते ॥ प्रभूतयवसान्कृत्वाबभूवप्रत्यनंतरः ॥ १२ ॥ उपास्यतुशिवांसंध्यांदृष्ट्वारात्रिमुपागताम् ॥ रामस्यशयनं चक्रेसूतःसौमित्रिणासह ॥१३॥ तांशय्यांतमसातीरेवीक्ष्यवृक्षदलैर्वृताम् ॥ रामःसौमित्रिणासार्धंसभार्यःसंविवेशह ॥ १४ ॥ सभार्यंसंप्रसुप्तंतुभ्रांतं संप्रेक्ष्यलक्ष्मणः ॥ कथयामाससूतायरामस्यविविधान्गुणान् ॥ १५ ॥ जाग्रतोरेवतांरात्रिंसौमित्रेरुदितोरविः ॥ सूतस्यतमसातीरेरामस्यब्रुवतो गुणान् ॥१६॥ गोकुलाकुलतीरायास्तमसायाविदूरतः ॥ अवसत्तत्रतांरात्रिंरामःप्रकृतिभिःसह ॥१७॥ उत्थायचमहातेजाःप्रकृतीस्तानिशाम्यच ॥ अब्रवीद्भ्रातरंरामोलक्ष्मणंपुण्यलक्षणम् ॥ १८ ॥ अस्मद्व्यपेक्षान्सौमित्रेनिर्व्यपेक्षान्गृहेष्वपि ॥ वृक्षमूलेषुसंसक्तान्पश्यलक्ष्मणसांप्रतम् ॥ १९ ॥ यथैतेनियमंपौराःकुर्वंत्यस्मन्निवर्तने ॥ अपिप्राणान्न्यसिष्यंतिनतुत्यक्ष्यंतिनिश्चयम् ॥२०॥ यावदेवतुसंसुप्तास्तावदेववयंलघु ॥ रथमारुह्यगच्छामः पंथानमकुतोभयम् ॥ २१ ॥ अतोभूयोपिनेदानीमिक्ष्वाकुपुरवासिनः ॥ स्वपेयुरनुरक्तामांवृक्षमूलेषुसंश्रिताः ॥ २२ ॥

वीक्ष्य सभार्यः संविवेश ॥ १४ ॥ गुणान्कथमायास जागरणार्थमिति भावः ॥ १५ ॥ तां रात्रिमित्यत्यंतसंयोगे द्वितीया । उदितो रविः अरुणोदयकालो जात इत्यर्थः ॥ १६ ॥ गोकुलैराकुलं व्याप्तं तीरं यस्यास्तस्यास्तमसायास्तीरे विदूरतः द्विजसंवेशदेशादतिदूरदेशेऽतिसंधाय गमनसौकर्यार्थमवसत् प्रकृतिसाहित्यं तमसातीरवासमात्रे बोध्यम् ॥ १७ ॥ निशाम्य अवलोक्य निद्राणा इति शेषः ॥ १८ ॥ अस्मद्व्यपेक्षान् अस्मास्वेव विशेषणापेक्षावतः । अतएव गृहेषु निर्व्यपेक्षान् निरपेक्षान् श्रमात्सांप्रतम् अरुणोदयेपि सुप्तान् ॥ १९ ॥ एते पौरा अस्मन्निवर्तने यथा नियमं यत्नं कुर्वंति तथा जाने अपि प्राणान्न्य सिष्यंति त्यक्ष्यंति नतु अस्मन्निवर्तननिश्चयं त्यक्ष्यंतीत्यर्थः ॥ २० ॥ अतो यावदिति । लघु शीघ्रम् ॥ २१ ॥ शीघ्रगमने हेतुमाह अत इति । एतदनंतरमेते यतो मामनुरक्ता अतो भूयोपि न स्वपेयुरतो वया

न्नोत्तिष्ठंति तावच्छीघ्रं गच्छाम इत्याशयः ॥ २२ ॥ तत्र हेत्वंतरमाह पौरा हीति । आत्मकृतात् आत्मनिमित्तकात् आत्मना आत्मनिमित्तकेन योज्याः संयोज्याः ॥ २३ ॥ आरुह्यतां रथ इति शेषः ॥ २४ ॥
ततः संयोजितेन तेन रथेनेत्यर्थः । शीघ्रं गच्छ रथयोजनायेति शेषः । प्रभो समर्थ ॥ २५ ॥ २६ ॥ युक्तः सज्जः ॥ २७ ॥ परिच्छदो धनुःकवचादि आकुलावर्तां निबिडावर्तां आवर्तैराकुलामिति वा ॥ २८ ॥
भयदर्शिनामप्यभयं मार्गं राजमार्गमित्यर्थः ॥ २९ ॥ त्वमेव रथमास्थायोदङ्मुखः प्रयाहि मत्प्रतिनिवृत्तिबुद्ध्युत्पादनेन जनमोहनाय नतु वयं व्रतभंगापत्तेः ॥ ३० ॥ तदेवाह मुहूर्तमिति । न विद्युर्वनमेव
गत इति न जानीयुः ॥ ३१ ॥ तथा चक्रे उदङ्मुखतया गत्वा मार्गांतरेण निवृत्तिपूर्वकमागत्य एवं हि रामः प्रतिनिवृत्त इति पौरभ्रमः सिध्यति । महामायाधिष्ठातुर्भगवत इयत्या क्रियया पौरमोहनं नाश्चर्यायेति

पौराह्यात्मकृताद्दुःखाद्विप्रमोच्यानृपात्मजैः ॥ नतुखल्वात्मनायोज्याद्दुःखेनपुरवासिनः ॥ २३ ॥ अब्रवील्लक्ष्मणोरामंसाक्षाद्धर्ममिवास्थितम् ॥
रोचतेमेतथाप्राज्ञक्षिप्रमारुह्यतामिति ॥ २४ ॥ अथरामोब्रवीत्सूतंशीघ्रंसंयुज्यतांरथः ॥ गमिष्यामिततोऽरण्यंगच्छशीघ्रमितःप्रभो ॥२५॥ सूतस्ततः
संत्वरितःस्यंदनंतैर्हयोत्तमैः ॥ योजयित्वातुरामस्यप्रांजलिःप्रत्यवेदयत् ॥ २६ ॥ अयंयुक्तोमहाबाहोरथस्तेरथिनांवर ॥ त्वरयारोहभद्रंतेससीतः
सहलक्ष्मणः ॥ २७ ॥ तंस्यंदनमधिष्ठायराघवःसपरिच्छदः ॥ शीघ्रगामाकुलावर्तांतमसामतरन्नदीम् ॥ २८ ॥ ससंतीर्यमहाबाहुःश्रीमाञ्शिवमकं
टकम् ॥ प्रापद्यतमहामार्गमभयंभयदर्शिनाम् ॥ २९ ॥ मोहनार्थंतुपौराणांसूतंरामोब्रवीद्वचः ॥ उदङ्मुखःप्रयाहित्वंरथमारुह्यसारथे ॥ ३० ॥ मुहूर्तं
त्वरितंगत्वानिवर्तयरथंपुनः ॥ यथानविद्युःपौरामांतथाकुरुसमाहितः ॥ ३१ ॥ रामस्यतुवचःश्रुत्वातथाचक्रेचसारथिः ॥ प्रत्यागम्यचरामस्यस्यं
दनंप्रत्यवेदयत् ॥ ३२ ॥ तौसंप्रयुक्तंतुरथंसमास्थितौतदाससीतौरघुवंशवर्धनौ ॥ प्रचोदयामासततस्तुरंगमान्ससारथिर्येनपथातपोवनम् ॥ ३३ ॥
ततःसमास्थायरथंमहारथःससारथिर्दाशरथिर्वनंययौ ॥ उदङ्मुखंतंतुरथंचकारप्रयाणमांगल्यनिमित्तदर्शनात् ॥ ३४ ॥ इत्यार्षे श्रीमद्रामा
यणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥ ॥ प्रभातायांतुशर्वर्यांपौरास्तेराघवंविना ॥ शोकोपहतनिश्चेष्टाबभूवुर्ह
तचेतसः ॥ १ ॥ शोकजाश्रुपरिद्यूनावीक्षमाणास्ततस्ततः ॥ आलोकमपिरामस्यनपश्यंतिस्मदुःखिताः ॥ २ ॥ तेविषादार्तवदनारहितास्तेनधी
मता ॥ कृपणाःकरुणावाचोवदंतिस्ममनीषिणः ॥ ३ ॥ धिगस्तुखलुनिद्रांतांययाऽपहतचेतसः ॥ नाद्यपश्यामहेरामंपृथूरस्कंमहाभुजम् ॥ ४ ॥

मंतव्यम् । प्रत्यवेदयत् आरोहणार्थमज्ञापयत् ॥ ३२ ॥ संप्रयुक्तं सम्यगानीय दर्शितं समास्थितावारूढौ अभूतामिति शेषः । येन पथा मार्गेण तपोवनं प्राप्यत इति शेषः । ततस्तेन मार्गेण तुरंगमान् प्रचोदयामास
॥ ३३ ॥ उक्तं निगमयति तत इति । प्रयाणापेक्षितं मांगल्यं शुभं यन्निमित्तं शकुनं तद्दर्शनात्तदनुभवहेतोरुदङ्मुखं रथं चकार स्थापयामास तत आरुह्य दक्षिणाभिमुखतया वनं ययौ ॥ ३४ ॥ वैलमानः ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥ ॥ छ ॥ ॥छ॥ ॥ शोकेनोपहता अतएव निश्चेष्टाः हतचेतसो मूर्च्छिताः ॥ १ ॥
परिद्यूनाः खिन्नाः आलोकं आलोकसाधनं रथोद्धतधूल्याद्यपि ॥ २ ॥ ३ ॥ यया निद्रया । निद्रां भगवतीं विष्णोरित्यादिना मार्कंडेयेन तस्या भगवन्मायारूपत्वाभिधानात् । तदावरणादेव च विषयाविष्टानां

भगवद्दर्शनं प्रसिद्धं श्रुतिशिरःसु । पश्यामह इति तङार्षः । हे इति संबोधनं वा परस्परम् ॥ ४ ॥ तथाऽवितथाऽमोघा क्रिया यस्य सः त्यक्त्वा गत इदमनुचितं तस्येति भावः ॥ ५ ॥ ६ ॥ निधनं प्रायोपवेशेन मरणम् महाप्रस्थानं मरणदीक्षापूर्वकमुत्तराभिमुखागमनम् तद्रहितानां जीवितं किमर्थं कस्मै फलाय हितम् न कस्मा अपीत्यर्थः । अतो मरणमेव श्रेयः॥ ७ ॥ ८ ॥रामवृत्तांतं पृच्छंतं जनं प्रति किं वक्ष्यामः अस्माभी राघवो वनं नीतः प्रापित इति उत्तरं देयमिति चेदिदं वक्तुं कथं क्षमम् वक्तुमशक्यमयोग्यं चैतत् अन्यच्च न सदुत्तरमिति भावः ॥ ९ ॥ १० ॥ ११ ॥ अग्रे भवा अग्र्याः पुरोगामिन्यस्ताश्च ता गाश्चेत्यर्थः । यद्वा अग्र्या मुख्याः पुष्टत्वदुग्धवत्त्वादिगुणा गाव इवेत्यर्थः गा इत्यार्षम् ॥ १२ ॥ ततः मार्गानुसारेण अतिसंधानप्रवर्तितमार्गानुसारेण किंचित्क्षणं किंचित्कालं गत्वा ततो मार्गनाशाद्वंचनया मार्गी

कथंरामोमहाबाहुःसतथावितथक्रियः ॥ भक्तंजनमभित्यज्यप्रवासंतापसोगतः ॥ ५ ॥ योनःसदापालयतिपितापुत्रानिवौरसान् ॥ कथंरघूणांसश्रेष्ठस्त्यक्त्वानोविपिनंगतः ॥ ६ ॥ इहैवनिधनंयाममहाप्रस्थानमेववा ॥ रामेणरहितानांनोकिमर्थंजीवितंहितम् ॥ ७ ॥ संतिशुष्काणिकाष्ठानिप्रभूतानिमहांतिच ॥ तैःप्रज्वाल्यचितांसर्वेप्रविशामोथवावयम् ॥ ८ ॥ किंवक्ष्यामोमहाबाहुरनसूयःप्रियंवदः ॥ नीतःसराघवोस्माभिरितिवक्तुंकथंक्षमम् ॥ ॥ ९ ॥ सानूनंनगरीदीनादृष्ट्वास्मान्राघवंविना ॥ भविष्यतिनिरानंदासस्त्रीबालवयोधिका ॥ १० ॥ निर्यातास्तेनवीरेणसहनित्यंमहात्मना ॥ विहीनास्तेनचपुनःकथंद्रक्ष्यामतांपुरीम् ॥ ११ ॥ इतीवबहुधावाचोबाहुमुद्यम्यतेजनाः ॥ विलपंतिस्मदुःखार्ताहृतवत्साइवाग्र्यगाः ॥ १२ ॥ ततोमार्गानुसारेणगत्वाकिंचित्ततःक्षणम् ॥ मार्गनाशाद्विषादेनमहतासमभिप्लुताः ॥ १३ ॥ रथमार्गानुसारेणन्यवर्ततमनस्विनः ॥ किमिदंकिंकरिष्यामोदैवेनोपहताइति ॥ १४ ॥ तदायथागतेनैवमार्गेणक्लांतचेतसः ॥ अयोध्यामगमन्सर्वेपुरींव्यथितसज्जनाम् ॥ १५ ॥ आलोक्यनगरींतांचक्षयव्याकुलमानसाः ॥ आवर्तयंततेऽश्रूणिनयनैःशोकपीडितैः ॥ १६ ॥ एषारामेणनगरीरहितानातिशोभते ॥ आपगागरुडेनेवह्रदादुद्धृतपन्नगा ॥ १७ ॥ चंद्रहीनमिवाकाशंतोयहीनमिवार्णवम् ॥ अपश्यन्निहतानंदंनगरंतेविचेतसः ॥ १८ ॥ तेतानिवेश्मानिमहाधनानिदुःखेनदुःखोपहताविशंतः ॥ नैवप्रजग्मुःस्वजनंपरंवानिरीक्षमाणाःप्रविनष्टहर्षाः ॥ १९ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आ० अ० सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ तेषामेवंविषण्णानांपीडितानामतीवच ॥ बाष्पविप्लुतनेत्राणांसशोकानांमुमूर्षया ॥ १ ॥ अभिगम्यनिवृत्तानांरामंनगरवासिनम् ॥ उद्गतानीवसत्त्वानिबभूवुरमनस्विनाम् ॥ २ ॥

तरे प्रवृत्त्या रथमार्गादर्शनात् महता विषादेन समभिप्लुताः व्याप्ताः ॥ १३ ॥ किमिदं यद्रथमार्गादर्शनं इतः परं किं करिष्यामः । अहो दैवेनोपहता वयमिति वदंतो न्यवर्ततेत्यन्वयः ॥ १४ ॥ व्यथिताः सज्जना यस्यां तां सत्पदेन कैकेय्या व्यावृत्तिः ॥ १५ ॥ क्षयो हर्षक्षयस्तेन व्याकुलमानसाः यद्वा क्षयं गृहं प्रतिव्याकुलं गंतव्यं नवत्येवंरूपं मानसं येषां तादृशाः आवर्तयंत अमुंचन् ॥ १६ ॥ १७ ॥ १८ ॥ दुःखेन रामवियोगदुःखेनोपहताः कथं गृहं प्रवेष्टव्यमिति दुःखेन विशंतोपि नैव प्रजग्मुः स्ववेश्मपरवेश्मविवेकं नाज्ञासिषुः तथा निरीक्षमाणा अपि स्वजनपरजनविवेकं न प्राप्तवंतः ॥ १९ ॥ धर्षमानः ॥ ॥ इति श्रीरामा० श्रीरा० वा० आ० अ० सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ ॥छ॥ तेषामित्यादिपद्यद्वयमेकं वाक्यम् । मुमूर्षयोपलक्षितानाम् अमनस्विनां दुर्मनसां खिन्नानामिति यावत् सत्त्वान्यसवः उद्गतानीव उत्क्रांतानीव मृत

माया जाता इति भावः ॥ १ ॥ २ ॥ बाष्पेण पिहिताननाः अश्रुव्याप्तमुखा इत्यर्थः ॥ ३ ॥ हर्षः शारीरो मुखविकासादिरूपः मोद आंतरो हर्षः । परस्मैपदमार्षम् । प्रसारयन् प्रासारयन्नित्यर्थः । प्रसारिता न्यपि नाशोभंत ॥ ४ ॥ नष्टमिति । चिरनष्टधनस्य विपुलस्यागमं लाभं दृष्ट्वापि नाभ्यनंदन् वा शब्द एवार्थे । नाभ्यनंदन्नेवेत्यर्थः ॥ ५ ॥ व्यगर्हयंत राघवमप्रतिनिवर्त्य किमर्थं यूयमागता इत्येवंवाग्रूपैः तोत्रैः अंकुशैः ॥ ६ ॥ तेषां रामं विना आगतानाम् रामं राजानं विना सर्वस्यास्थिरत्वात् । किंच भगवंतं राममादरेणापश्यंतो ये गृहपुत्रदारसुखादिष्वासक्त्या प्रतिनिवृत्तास्तेषां पुनः पुनः संसारप्राप्तिरेव नतु कदापि मोक्ष इत्याशयः । तस्य मायिकरूपदर्शनेपि चित्तशुद्धिद्वारा मोक्षोपयोगिज्ञानाधिकारो भवति ॥ ७ ॥ सत्पुरुषः भाग्यवान्पुरुषः सीता च भाग्यवती । यो वने रामं परिचरन् अनुगच्छति ॥ ८ ॥ सीतालक्ष्मणावेवेति किं वाच्यं अचेतना आपगादयोपि सभाग्या नतु यूयमित्याहुः आपगा इति । विगाह्य स्नात्वा ॥ ९ ॥ रम्यकाननाः चारुवृक्षसंघाः अनूपो जलप्रायदेशः ॥ १० ॥ ते शैलादयः अनर्चितुं न शक्ष्यंति अर्चितुमेव शक्ष्यंती

स्वंस्वंनिलयमागम्यपुत्रदारैःसमावृताः ॥ अश्रूणिमुमुचुःसर्वेबाष्पेणपिहिताननाः ॥ ३ ॥ नचाहृष्यन्नचामोदन्वणिजोनप्रसारयन् ॥ नचाशोभं तपण्यानिनापचन्गृहमेधिनः ॥ ४ ॥ नष्टंदृष्ट्वानाभ्यनंदन्विपुलंवाधनागमम् ॥ पुत्रंप्रथमजंलब्ध्वाजननीनाप्यनंदत ॥ ५ ॥ गृहेगृहेरुदत्यश्चभर्तारं गृहमागतम् ॥ व्यगर्हयंतदुःखार्तावाग्भिस्तोत्रैरिवद्विपान् ॥ ६ ॥ किंनुतेषांगृहैःकार्यंकिंदारैःकिंधनेनवा ॥ पुत्रैर्वापिसुखैर्वापियेनपश्यंतिराघवम् ॥ ॥ ७ ॥ एकःसत्पुरुषोलोकेलक्ष्मणःसहसीतया ॥ योनुगच्छतिकाकुत्स्थंरामंपरिचरन्वने ॥ ८ ॥ आपगाःकृतपुण्यास्ताःपद्मिन्यश्चसरांसिच ॥ येषुयास्यतिकाकुत्स्थोविगाह्यसलिलंशुचि ॥ ९ ॥ शोभयिष्यंतिकाकुत्स्थमटव्योरम्यकाननाः ॥ आपगाश्चमहानूपाःसानुमंतश्चपर्वताः ॥ १० ॥ काननंवापिशैलंवायंरामोऽनुगीमष्यीत ॥ प्रियातिथिमिवप्राप्तंनैनंशक्ष्यंत्यनर्चितुम् ॥ ११ ॥ विचित्रकुसुमापीडाबहुमंजरिधारिणः ॥ राघवंदर्शयिष्यंतिनगाभ्रमरशालिनः ॥ १२ ॥ अकालेचापिमुख्यानिपुष्पाणिचफलानिच ॥ दर्शयिष्यंत्यनुक्रोशाद्गिरयोराममागतम् ॥ १३ ॥ प्रस्रविष्यंतितोयानिविमलानिमहीधराः ॥ विदर्शयंतोविविधान्भूयश्चित्रांश्चनिर्झरान् ॥ १४ ॥ पादपाःपर्वताग्रेषुरमयिष्यंतिराघवम् ॥ यत्ररामोभयंनात्रनास्तितत्रपराभवः ॥ १५ ॥ सहिशूरोमहाबाहुःपुत्रोदशरथस्यच ॥ पुराभवतिनोदूरादनुगच्छामराघवम् ॥ १६ ॥ पादच्छायासुखंभर्तुस्तादृशस्यमहात्मनः ॥ सहिनाथोजनस्यास्यसगतिःसपरायणम् ॥ १७ ॥ वयंपरिचरिष्यामःसीतांयूयंचराघवम् ॥ इतिपौरस्त्रियोभर्तॄन्दुःखार्तास्तत्तदब्रुवन् ॥ ॥ १८ ॥ युष्माकंराघवोरण्येयोगक्षेमंविधास्यति ॥ सीतानारीजनस्यास्ययोगक्षेमंकरिष्यति ॥ १९ ॥

त्यर्थः ॥ ११ ॥ तदेव दर्शयति विचित्रेत्यादि । विचित्रैः कुसुमैरापीडः शिरोभूषणमेषाम् बह्वीर्मंजरीः पुष्पस्तवकान् धर्तुं शीलमेषाम् । छांदसो ह्रस्वः । नगाः वृक्षाः दर्शयिष्यंति आत्मानमिति शेषः । एवं च पुष्पांजलिरूपार्चायां ते शक्ता इति भावः ॥ १२ ॥ गिरयो दर्शयिष्यंति स्वगतवृक्षद्वारेति शेषः ॥ १३ ॥ १४ ॥ पादपा रमयिष्यंति स्वमूलाकीर्यमाणपल्लवकुसुमरचितशय्यास्विति शेषः । यत्र रामः वसतीति शेषः ॥ १५ ॥ भयाभावादौ हेतुः स हि शूर इत्यादि । नोस्माकमदूरात्पुरा भवति । यावत्पुरेति भविष्यति लट् । आसन्नो भविष्यतीत्यर्थः । अतो राघवमनुगच्छाम । प्रार्थनायां लोट् ॥ १६ ॥ पादच्छाया छायापदेनानुग्रहहेतुभूता सेवा लक्ष्यते । भर्तुः रामचंद्रस्य पादसेवैव नः परमसुखं सुखसाधनम् गतिः शरणम् परायणं शाश्वतप्रतिष्ठा ॥ १७ ॥ वयं स्त्रियः यूयं पुरुषाः ॥ १८ ॥ अप्राप्तप्राप्तिर्योगः प्राप्तरक्षणं

क्षेमम् ॥१९॥ अप्रतीतेन असुखेन सोत्कंठितजनेन उत्कंठितजनसहितेन अतएवामनोज्ञेन हृतचेतसा चित्तनाशकेन वासेन को नु संप्रीयेतेत्यर्थः ॥ २० ॥ यदिचेदिति समुदायो यद्यर्थः । अधर्म्यमधर्मयुक्तं अतएवा नाथवन्नाथवद्भिन्नम् जीवितेनार्थः जीविताभिन्नोऽर्थोपि न पुत्रादिरूपस्तु सुतरां नेत्यर्थः॥२१॥पुत्रो रामः परिहरेत् त्यागात्परिहरेत् पुत्रभर्तृत्यागिन्या इतरत्यागः कियानिति भावः॥२२॥जीवंत्याः कैकेय्या राज्ये तया भृतकाः पोषिता हि अपि जीवंत्यो न वसेमहि न वसेम । इममर्थं प्रति पुत्रैरपि शपामहे ॥२३॥ अधर्म्यां अधर्मयुताम् ॥२४॥ अनालंभं अयज्ञं तत्र हेतुरनायकमिति । कृते तन्निमित्तम्॥२५॥विलोपो नाशः॥२६॥ ते यूयं पुरुषाः सस्त्रीका इति शेषः । आलोड्य पेषयित्वा अश्रुतिं वापि यत्र देशे कैकेय्या नामश्रवणमपि न भवति तादृशं दूरदेशं वा गच्छतेत्यर्थः ॥ २७ ॥ मिथ्या प्रव्राजितः मिथ्या वरकल्पनया प्रव्राजितोभूत् ।

कोन्वनेनाप्रतीतेनसोत्कंठितजनेनच ॥ संप्रीयेतामनोज्ञेनवासेनहृतचेतसा ॥ २० ॥ कैकेय्यायदिचेद्राज्यंस्यादधर्म्यमनाथवत् ॥ नहिनोजीविते नार्थःकुतःपुत्रैःकुतोधनैः ॥ २१ ॥ ययापुत्रश्चभर्ताचत्यक्तावैश्वर्यकारणात् ॥ कंसापरिहरेदन्यंकैकेयीकुलपांसनी ॥ २२ ॥ कैकेय्यानवयंराज्ये भृतकाहिवसेमहि ॥ जीवंत्याजातुजीवंत्यःपुत्रैरपिशपामहे ॥ २३ ॥ यापुत्रंपार्थिवेंद्रस्यप्रवासयतिनिर्घृणा ॥ कस्तांप्राप्यसुखंजीवेदधर्म्यांदुष्टचारि णीम् ॥ २४ ॥ उपद्रुतमिदंसर्वमनालंभमनायकम् ॥ कैकेय्यास्तुकृतेसर्वंविनाशमुपयास्यति ॥ २५ ॥ नहिप्रव्रजितेरामेजीविष्यतिमहीपतिः ॥ मृते दशरथेव्यक्तंविलोपस्तदनंतरम् ॥ २६ ॥ तेविषंपिवतालोड्यक्षीणपुण्याःसुदुःखिताः ॥ राघवंवानुगच्छध्वमश्रुतिंवापिगच्छत ॥ २७ ॥ मिथ्याप्रव्रा जितोरामःसभार्यःसहलक्ष्मणः ॥ भरतेसन्निवद्धाःस्मःसौनिकेपशवोयथा ॥ २८ ॥ पूर्णचंद्राननःश्यामोगूढजत्रुररिंदमः ॥ आजानुवाहुःपद्माक्षोरामो लक्ष्मणपूर्वजः ॥ २९ ॥ पूर्वाभिभाषीमधुरःसत्यवादीमहावलः ॥ सौम्यश्चसर्वलोकस्यश्चचंद्रवत्प्रियदर्शनः ॥३०॥ नूनंपुरुषशार्दूलोमत्तमातंगविक्रमः॥ शोभयिष्यत्यरण्यानिविचरन्समहारथः ॥ ३१ ॥ तास्तथाविलपंत्यस्तुनगरेनागरस्त्रियः ॥ चुक्रुशुर्दुःखसंतप्ताम्रृत्योरिवभयागमे ॥ ३२ ॥ इत्येवं विलपंतीनांस्त्रीणांवेश्मसुराघवम् ॥ जगामास्तंदिनकरोरजनीचाभ्यवर्तत ॥ ३३ ॥ नष्टज्वलनसंतापाप्रशांताध्यायसत्कथा ॥ तिमिरेणानुलिप्तेवतदा सानगरीवभौ ॥ ३४ ॥

ततः कैकेयीवशगे भरते राजनि वसति सौनिके सूना पशुवधस्थानं तत्र भवे हिंसके तत्समीपे पशवो यथा निश्चितमरणास्तथा संनिवद्धाः स्मः सन्निविष्टा भवामः ॥ २८ ॥ इदानीं तद्गुणवर्णनेनात्मानमाप्याययंति पूर्णेत्यादि ॥ २९ ॥ पूर्वाभिभाषी सौहार्दप्रदर्शनाय परभयापगमाय च सर्वत्र पूर्वभाषणशीलः ॥ ३० ॥ ३१ ॥ मृत्योरिव भयागमे मृत्युहेतुकभयागम इवेत्यर्थः ॥ ३२ ॥ विलपंतीनां दुःखं दृष्ट्वेति शेषः । रविरस्तं जगाम तदीयदुःखदर्शनासहिष्णुतया रविरपि शीघ्रगतिरभूदित्याशयः ॥ ३३ ॥ नष्टो होमाद्यर्थोपि ज्वलनसंतापो ज्वलनसंगमो यस्य। प्रशाता अध्याया अध्ययनानि सत्कथाश्च यस्यां सा ॥ ३४ ॥

निराश्रया रामरूपाश्रयराहित्यात् ॥ ३५ ॥ सुतैः तृतीयार्षी । सुतेभ्योपि तासां सः अधिकोऽभवत् ॥ ३६ ॥ वादनं वादित्रं प्रशांतानि गीतोत्सववादित्राणि यस्यां सा पिहित आपणानां पण्यवस्तूनामुदयः प्रसारणं यस्यां सा संक्षपितोदकः क्षीणोदकः । संक्षुभितोदक इतिपाठे क्षैण्यात्संक्षुभितोदक इत्यर्थः ॥ ३७ ॥ छैलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ ॥ छ ॥ ॥ अथ राम वृत्तांतमाह रामोपीति । तेनैव यत्र रात्रिशेषे द्विजा वंचितास्तेनैव महदंतरं बहुदूरम् ॥ १ ॥ व्यपायात् गता विषयो देशः ॥ २ ॥ विशेषेण कृष्टाः सीमांता येषु अनेन सौराज्यं ध्वनितम् । तान्यतिक्रामन् शनैरिव शीघ्रं ययौ रमणीयदेशादिदर्शनपारवश्यात् अतिशीघ्रमपि गमनं शनैरिव प्रत्यभादित्यर्थ इति तीर्थः । शनैरिवेति पाठः । शरसदृशवेगवद्भिरश्वो

उपशांतवणिक्पण्यानष्टहर्षानिराश्रया ॥ अयोध्यानगरीचासीन्नष्टतारमिवांवरम् ॥ ३५ ॥ तदास्त्रियोरामनिमित्तमातुरायथासुतेभ्रातरिवाविवासिते ॥ विलप्यदीनारुरुदुर्विचेतसःसुतैर्हितासामधिकोपिसोऽभवत ॥ ३६ ॥ प्रशांतगीतोत्सवनृत्यवादनाविभ्रष्टहर्षापिहितापणोदया ॥ तदाह्ययोध्यानगरीवभूवसामहार्णवःसंक्षपितोदकोयथा ॥ ३७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टचत्वारिंशः सर्गः ॥४८॥

रामोपिरात्रिशेषेणतेनैवमहदंतरम् ॥ जगामपुरुषव्याघ्रःपितुराज्ञामनुस्मरन् ॥ १ ॥ तथैवगच्छतस्तस्यव्यपायाद्रजनीशिवा ॥ उपास्यतुशिवांसंध्यांविषयानत्यगाहत ॥ २ ॥ ग्रामान्विकृष्टसीमान्तान्पुष्पितानिवनानिच ॥ पश्यन्नतिययौशीघ्रंशनैरिवहयोत्तमैः ॥ ३ ॥ शृण्वन्वाचोमनुष्याणांग्रामसंवासवासिनाम् ॥ राजानंधिग्दशरथंकामस्यवशमास्थितम् ॥ ४ ॥ हानृशंसाद्यकैकेयीपापापापानुवंधिनी ॥ तीक्ष्णासंभिन्नमर्यादातीक्ष्णकर्मणिवर्तते ॥ ५ ॥ यापुत्रमीदृशंराज्ञःप्रवासयतिधार्मिकम् ॥ वनवासेमहाप्राज्ञंसानुक्रोशंजितेंद्रियम् ॥ ६ ॥ अहोदशरथोराजानिःस्नेहःस्वसुतंप्रति ॥ प्रजानामनघंरामंपरित्यक्तुमिहेच्छति ॥ ७ ॥ एतावाचोमनुष्याणांग्रामसंवासवासिनाम् ॥ शृण्वन्नतिययौवीरःकोमलान्कोसलेश्वरः॥ ८ ॥ ततोवेदश्रुतिंनामशिववारिवहांनदीम् ॥ उत्तीर्याभिमुखःप्रायादगस्त्याध्युषितांदिशम् ॥ ९ ॥ गत्वातुसुचिरंकालंततःशीतवहांनदीम् ॥ गोमतींगोयुतानूपामतरत्सागरंगमाम् ॥ १० ॥ गोमतींचाप्यतिक्रम्यराघवःशीघ्रगैर्हयैः ॥ मयूरहंसाभिरुतांततारस्यंदिकांनदीम् ॥११॥ समहींमनुनाराज्ञादत्तामिक्ष्वाकवेपुरा ॥ स्फीतांराष्ट्रवृतांरामोवैदेहीमन्वदर्शयत् ॥ १२ ॥

त्तमैरित्यर्थः इति कतकः ॥ ३ ॥ ग्रामाः महांतः संवासाः स्वल्पग्रामाः शृण्वन्ययावित्यन्वयः । ता वाच आह राजानं धिगित्यादि । आस्थितं प्राप्तम् ॥ ४ ॥ पापा पापकर्मारब्धशरीरा पापानुबंधिनी पापकर्मनिरता तीक्ष्णा क्रूरदर्शना संभिन्नमर्यादा त्यक्तमर्यादा ॥ ५ ॥ ईदृशं अनेककल्याणगुणवंतं सानुक्रोशं सदयम् ॥ ६ ॥ प्रजानां प्रियमिति शेषः यद्वा प्रजाविषयेऽनघं पापरहितम् ॥ ७ ॥ कोसलानति अतिक्रम्य ययौ ॥ ८ ॥ शिववारिवहां शिवानि वारीणि वहंतीम् ॥ ९ ॥ गोभिर्युतान्यनूपानि जलप्रायदेशा यस्यां सागरंगमामित्यनेन यमुनावत्तस्या अपि पृथक्सागरप्रवेशं सूचयति ॥ १० ॥ स्यंदिकां तदाख्याम् ॥ ११ ॥ सः अतीतस्यंदिकः महीं स्यंदिकासीमां कोसलदेशरूपां राष्ट्रवृतां अवांतरजनपदावृतां वैदेहीमन्वदर्शयत् इक्ष्वाकवे मनुना दत्तकोसलदेशस्य दक्षिणसीमां कथयामसेत्यर्थः । यद्यपीक्ष्वाकादयः सार्वभौमास्त

थापि तेषां स्वराजधानीत्वात्स्यंदः कोसलदेश एव सार्वभौमत्वं तु तद्दशसिंहासनाधिष्ठातृसकलाराजपालनीयाज्ञत्वमेवेत्यलम् ॥ १२ ॥ सूत ३ ष्ठुतः शृणु इत्यादिः आभाष्य संबोध्य हंसमत्तस्वरः मत्तहंसस्वरः ॥ १३ ॥ अथ परिगृहीतमनुष्यदेहस्य तद्देहग्रहणानुरूपोऽभिनयः कदेति आगम्य अतिक्रांतं स्वदेशमिति शेषः ॥ १४ ॥ ननु मृगयायाः स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदंडताः ॥ अर्थस्य दूषणं चेति राज्ञां व्यसनसप्तकमित्युक्तेर्व्यसनानां निषेधाच्च कथं तदिच्छेत्यत आह नात्यर्थमिति । प्रजान्यायचिंतादिवैमुख्यापादकतया अत्यंतरतेरेव तस्यां निषेधात् । ननु सर्वथैव निषेधोऽस्त्यत आह एषा रतिः क्रीडा लोके राजर्षिगणसंमताऽतोऽतुला न सर्वथा निषिद्धेत्यर्थः । गजादयो न हंतव्या मृगयायां महेषुभिरित्यादिनास्या अप्यनुमतत्वमिति भावः ॥ १५ ॥ राजर्षीणां हीति श्लोकः पुनरुक्तार्थक इव कतकासंमतश्चेति बोध्यम् । एवं हि तद्याख्या हि यतः अस्मिन्लोके राजर्षीणां वने मृगया रत्यर्थमासीत् । अतोहमपि काले श्राद्धादिकाले मनुजैर्मनुपुत्रैः सदाचारपरैरपि कृतां स्वीकृतां धान्विनां चंचललक्ष्येषु इषुसिद्धचर्थमभिकांक्षितां नात्यर्थमभिकांक्षामीति संबंधः ॥ १६ ॥ तं तमर्थमभिप्रेत्य विषयीकृत्य मधुरया गिरा सूतं प्रति वाक्य मुदीरयन् स ऐक्ष्वाको रामस्तमध्वानं

सूत३इत्येवचाभाष्यसारथिंतमभीक्ष्णशः ॥ हंसमत्तस्वरःश्रीमानुवाचपुरुषोत्तमः ॥ १३ ॥ कदाहंपुनरागम्यसरय्वाःपुष्पितेवने ॥ मृगयांपर्यटिष्यामिमात्रापित्राचसंगतः ॥ १४ ॥ नात्यर्थमभिकांक्षामिमृगयांसरयूवने ॥ रतिर्ह्येषाऽतुलालोकेराजर्षिगणसंमता ॥ १५ ॥ राजर्षीणांहिलोकेऽस्मिन् रत्यर्थंमृगयावने ॥ कालेकृतांतांमनुजैर्धन्विनामभिकांक्षिताम् ॥ १६ ॥ सतमध्वानमैक्ष्वाकःसूतंमधुरयागिरा ॥ तंतमर्थमभिप्रेत्यययौवाक्यमुदीरयन् ॥ १७ ॥ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्येअयोध्याकांडेएकोनपंचाशःसर्गः ॥ ४९ ॥ छ ॥ विशालान्कोसलान्रम्यान्यात्वालक्ष्मणपूर्वजः ॥ अयोध्यामुन्मुखोधीमान्प्रांजलिर्वाक्यमब्रवीत् ॥ १ ॥ आपृच्छेत्वांपुरिश्रेष्ठेकाकुत्स्थपरिपालिते ॥ दैवतानिचयानित्वांपालयंत्यावसंतिच ॥ २ ॥ निवृत्तवनवासस्त्वामनृणोजगतीपतेः ॥ पुनर्द्रक्ष्यामिमात्राचपित्राचसहसंगतः ॥ ३ ॥ ततोरुचिरताम्राक्षोभुजमुद्यम्यदक्षिणम् ॥ अश्रुपूर्णमुखोदीनोऽब्रवीज्जानपदंजनम् ॥ ४ ॥ अनुक्रोशोदयाचैवयथार्हंमयिवःकृतः ॥ चिरंदुःखस्यपापीयोगम्यतामर्थसिद्धये ॥ ५ ॥ तेभिवाद्यमहात्मानंकृत्वाचापिप्रदक्षिणम् ॥ विलपंतोनराघोरंव्यतिष्ठंश्चक्वचित्क्वचित् ॥ ६ ॥ तथाविलपतांतेषामतृप्तानांचराघवः ॥ अचक्षुर्विषयंप्रायाद्यथार्कःक्षणदामुखे ॥ ७ ॥

ययाविति संबंधः ॥ १७ ॥ सँकेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनपंचाशः सर्गः ॥ ४९ ॥ ॥ छ ॥ ॥ अथ जन्मभूमिप्रयुक्तस्नेहेन निर्गमनकाले शिष्टाचारपरिप्राप्ततया च स्वदेशमापृच्छति स्वस्वरूपगोपनाय विशालानिति । यात्वा तदंतं गत्वा ॥ १ ॥ हे पुरि श्रेष्ठे त्वां त्वत्संबंधिदैवतानि च आपृच्छे प्रार्थयामि ॥ २ ॥ प्रार्थनाप्रकारमाह निवृत्तेति ॥ ३ ॥ जानपदं जनं स्वदर्शनार्थं तत्रागतम् तेषामश्रुपूर्णमुखत्वात् लोकव्यवहारानुसारेण नट इव स्वयमप्यश्रुपूर्णमुखः ॥ ४ ॥ अनुक्रोशः आदरोनुतापो वा दया कारुण्यम् यथायोग्यं मयि वः युष्माकं युष्माभिरिति यावत् कृतः कृता च दुःखस्य चिरमनुभव इति शेषः । पापीयः अशोभनम् अतो युष्माभिर्गम्यताम वयमप्यर्थसिद्धये पित्रनुज्ञातार्थसिद्धये अवतारप्रयोजनार्थसिद्धये इति हस्तस्थम् गच्छाम इति शेषः । व्याख्यानांतरं त्वप्रयोजकत्वान्नोक्तम् ॥ ५ ॥ ते एवं रामेण बोधिताः ॥ ६ ॥ अतृप्तानां दर्शनतृप्तिरहितानाम् क्षणदामुखे सायंकालेऽर्को यथा तथा अचक्षुर्विषयं देशं गतः ॥ ७ ॥

तदेवाह वाल्मीकिः तत इति दानशीला जना येषु तान् चैत्यैर्देवताधिष्ठानवृक्षैर्यूपैश्च समावृतान् ॥ ८ ॥ गोकुलैराकुलतया सेवितान् ॥ ९ ॥ नरेंद्राणां रक्षणीयान् ग्रामश इति शेषः । नरेंद्ररक्षणयोग्यैकैकग्रामान् इतरनरेंद्रराज्यतुल्यैकैकग्रामानिति यावत् ॥ १० ॥ मध्येन मध्यगत्या नरेंद्राणामितरेषां भोज्यं राज्यं देशं ययौ । स्वदेशत्वाभावेन तज्जनानुयानशंकाभावात् शनैर्देशसौभाग्यं पश्यन् अगमदित्यर्थः ॥ ११ ॥ तत्र अयोध्याराज्याद्दक्षिणराज्ये ॥ १२ ॥ काले क्रीडाकाले सेविता अंभःपूर्णह्रदा यस्यां ताम् ॥ १३ ॥ नागपत्नीभिर्गंधर्वपत्नीभिश्च सेविताम् सततं शिवामित्यनेन महानिशायामपि तस्यां स्नानाद्यधिकारः सूचितः । तदुक्तं भारते । भुक्त्वा वा यदि वाऽभुक्त्वा रात्रौ वा यदि वा दिवा ॥ न कालनियमः कश्चिद्गंगां प्राप्य सरिद्वरामिति ॥ १४ ॥ देवानामाक्रीडैः क्रीडापर्वतैर्हिमवत उभयतीरवर्तिभिर्युक्ताम् देवार्थं देवानां स्नानपानादिप्रयोजनाय । तत्प्रार्थनया आकाशगताम् देवपद्मिनीं देवभोग्यहेमपद्मवतीम् ॥ १५ ॥ शिलामयस्थले यो जलाघातशब्दस्तद्रूपाट्टहासेनोग्राम् । पाठांतरे जलेनाधूताः प्रक्षालिताः गुहाग्राः गुहा

ततोधान्यधनोपेतान्दानशीलजनाञ्शिवाम् ॥ अकुतश्चिद्भयान्रम्यांश्चैत्ययूपसमावृतान् ॥ ८ ॥ उद्यानाम्रवणोपेतान्संपन्नसलिलाशयान् ॥ तुष्टपुष्टजनाकीर्णान्गोकुलाकुलसेवितान् ॥ ९ ॥ रक्षणीयान्नरेंद्राणांब्रह्मघोषाभिनंदितान् ॥ रथेनपुरुषव्याघ्रःकोसलानत्यवर्तत ॥ १० ॥ मध्येन मुदितंस्फीतंरम्योद्यानसमाकुलम् ॥ राज्यंभोज्यंनरेंद्राणांययौधृतिमतांवरः ॥ ११ ॥ तत्रत्रिपथगांदिव्यांशीततोयामशैवलाम् ॥ ददर्शराघवोगंगांरम्यामृषिनिषेविताम् ॥ १२ ॥ आश्रमैरविदूरस्थैःश्रीमद्भिःसमलंकृताम् ॥ कालेऽप्सरोभिर्हृष्टाभिःसेवितांभोह्रदांशिवाम् ॥ १३ ॥ देवदानवगंधर्वैःकिन्नरैरुपशोभिताम् ॥ नागगंधर्वपत्नीभिःसेवितांसततंशिवाम् ॥ १४ ॥ देवाक्रीडशताकीर्णांदेवोद्यानयुतांनदीम् ॥ देवार्थमाकाशगतांविख्यातांदेवपद्मिनीम् ॥ १५ ॥ जलाघाताट्टहासोग्रांफेननिर्मलहासिनीम् ॥ क्वचिद्वेणीकृतजलांक्वचिदावर्तशोभिताम् ॥ १६ ॥ क्वचित्स्तिमितगंभीरांक्वचिद्वेगसमाकुलाम् ॥ क्वचिद्गंभीरनिर्घोषांक्वचिद्भैरवनिःस्वनाम् ॥ १७ ॥ देवसंघाप्लुतजलांनिर्मलोत्पलसंकुलाम् ॥ क्वचिदाभोगपुलिनांक्वचिन्निर्मलवालुकाम् ॥ १८ ॥ हंससारससंघुष्टांचक्रवाकोपशोभिताम् ॥ सदामत्तैश्चविहगैरभिपन्नामनिंदिताम् ॥ १९ ॥ क्वचित्तीररुहैर्वृक्षैर्मालाभिरिवशोभिताम् ॥ क्वचित्फुल्लोत्पलच्छन्नांक्वचित्पद्मवनाकुलाम् ॥ २० ॥ क्वचित्कुमुदखंडैश्चकुड्मलैरुपशोभिताम् ॥ नानापुष्परजोध्वस्तांसमदामिवचक्वचित् ॥ २१ ॥ व्यपेतमलसंघातांमणिनिर्मलदर्शनाम् ॥ दिशागजैर्वनगजैर्मत्तैश्चवरवारणैः ॥ २२ ॥ देवराजोपवाह्यैश्चसन्नादितवनांतराम् ॥ प्रमदामिवयत्नेनभूषितांभूषणोत्तमैः ॥ २३ ॥

मुखानि यया ताम् फेनरूपो यो निर्मलो हासो मंदहासस्तद्वतीम् एवमादिना स्त्रीरूपेण वर्णनं प्रवाहरूपाया गंगाया इति बोध्यम् । वेणीकृतजलां द्वित्रिजलसंयोगात् ॥ १६ ॥ स्तिमिता निश्चला सा चासौ गंभीरा च ताम् गंभीरनिर्घोषां मृदंगादिवत् भैरवनिःस्वनाम् अशन्यादिवत् ॥ १७ ॥ आभोगपुलिनां विशालसैकताम् ॥ १८ ॥ १९ ॥ २० ॥ कुड्मलरूपैः कुमुदखंडैः समूहैरित्यर्थः । पुष्परजसा ध्वस्तां संयुक्ताम् समदामिव मदसहितां प्रमदामिव स्थिताम् ॥ २१ ॥ व्यपेतो दूरीकृतो मलसंघातः पापसंघातो यया ताम् । व्यपेतजलसंघातामितिपाठे तीरे क्रूरप्रवाहरहितामित्यर्थः । मणिर्मुक्तामणिः अनेनाति स्वच्छशुभ्रजलत्वं दिग्गजाद्यालोडनेपि निर्मलत्वमित्यतिशयोक्तिरलंकारः । वरवारणैरुत्तमगजैः ॥ २२ ॥ देवराजानस्ते उपवाह्या येषां तैश्चवरगजैः । औपवाह्यैरितिपाठे तेषां क्रीडार्थयानभूतैरित्यर्थः ॥ २३ ॥

भूषणान्येवाह फलेत्यादि द्विजैः पक्षिभिः । विष्णुपादस्पर्शेन ब्रह्मलोकाद्ब्रह्मांडबाह्यजलदेशाच्च च्युतां अपापां कर्मनाशादिवत् केनापि प्रकारेण पापजनकत्वाभाववतीमिति कतकस्तन्न । पापजनकत्वसंभावनाया एवाभावात् वस्तुतोऽपापां पापवज्जंतुरहिताम् । तत्र हेतुः पापनाशिनीं दर्शनमात्रेण तादृशीम् ॥ २४ ॥ शिंशुमारो जलकपिरिति वैजयंतीकोशकर्ता । नक्रैर्मकरैः । सागरतेजसा भगीरथतपसा ॥ २५ ॥ शृंगवेरपुरंप्र स्थितामिति शेषः ॥ २६ ॥ ऊर्मिभिः कलिलाः संपृक्ता आवर्ता यस्यां सा ताम् । इह गंगातीरे ॥ २७ ॥ नद्यविदूरत्वं बहुपुष्पप्रवालवत्त्वे हेतुः इंगुदी तापसतरुः ॥ २८ ॥ देवादीनां संमान्यं सलिलं यस्यास्ताम् । अनेन गंगाजलं प्रवाहादन्यत्रानीतमपि सकलपापक्षयसमर्थमिति ध्वनितम् ॥२९॥ तत्र गंगातीरे स्थितं इंगुदीवृक्षं हयैर्ययतुः ॥३०॥ तम् अभियाय तत्समीपं गत्वेति यावत् अवतरत् अवातरत् ॥ ३१ ॥ उपतस्थे

फलपुष्पैःकिसलयैर्वृतांगुल्मैर्द्विजैस्तथा ॥ विष्णुपादच्युतांदिव्यामपापांपापनाशिनीम् ॥२४॥ शिंशुमारैश्चनक्रैश्चभुजंगैश्चसमन्विताम् ॥ शंकरस्य जटाजूटाद्भ्रष्टांसागरतेजसा ॥ २५ ॥ समुद्रमहिषींगंगांसारसक्रौंचनादिताम् ॥ आससादमहाबाहुःशृंगवेरपुरंप्रति ॥२६॥ तामूर्मिकलिलावर्तामन्ववेक्ष्यमहारथः ॥ सुमंत्रमब्रवीत्सूतमिहैवाद्यवसामहे ॥ २७ ॥ अविदूरादयंनद्याबहुपुष्पप्रवालवान् ॥ सुमहानिंगुदीवृक्षोवसामोऽत्रैवसारथे ॥ २८ ॥ प्रेक्षामिसरितांश्रेष्ठांसंमान्यसलिलांशिवाम् ॥ देवमानवगंधर्वमृगपन्नगपक्षिणाम् ॥ २९ ॥ लक्ष्मणश्चसुमंत्रश्चबाढमित्येवराघवम् ॥ उक्त्वातमिंगुदीवृक्षंतदोपययतुर्हयैः ॥ ३० ॥ रामोऽभियायतंरम्यंवृक्षमिक्ष्वाकुनंदनः ॥ रथादवतरत्तस्मात्सभार्यःसहलक्ष्मणः ॥ ३१ ॥ सुमंत्रोप्यवतीर्याथमोचयित्वाहयोत्तमान् ॥ वृक्षमूलगतंराममुपतस्थेकृतांजलिः ॥ ३२ ॥ तत्रराजागुहोनामरामस्यात्मसमःसखा ॥ निषादजात्योबलवान्स्थपतिश्चेतिविश्रुतः ॥ ३३ ॥ सश्रुत्वापुरुषव्याघ्रंरामंविषयमागतम् ॥ वृद्धैःपरिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ॥ ३४ ॥ ततोनिषादाधिपतिंदृष्ट्वादूरादुपस्थितम् ॥ सहसौमित्रिणारामःसमागच्छद्गुहेनसः ॥ ३५ ॥ तमार्तःसंपरिष्वज्यगुहोराघवमब्रवीत् ॥ यथायोध्यातथेदंतेरामकिंकरवाणिते ॥ ३६ ॥ ईदृशंहिमहाबाहोकःप्राप्स्यत्यतिथिंप्रियम् ॥ ततोगुणवदन्नाद्यमुपादायपृथग्विधम् ॥ ३७ ॥ अर्घ्यंचोपानयच्छीघ्रंवाक्यंचेदमुवाचह ॥ स्वागतंतेमहाबाहोतवेयमखिलामही ॥ ३८ ॥

समीपे सेवार्थं प्राप्तः ॥ ३२ ॥ आत्मसमः प्राणसमः । निषादजात्यः तज्जातौ भवः । बलवान्प्राणतः सेनातश्च । स्थपतिर्निषादाधिपतिः । निषादजात्यः स्थपतिरित्यनेन निषादस्थपतिं याजयेदित्यत्र कर्मधारय इति सूचितम् । यद्यपीदृशसख्यं हीनप्रेष्यं हीनसख्यमित्यादिनोपपातकेषु गणितं तथापि तद्विप्रविषयम् राज्ञामाटविकबलेन प्रयोजनवत्त्वात् । षड्विधबलसंग्रहस्य राजधर्मत्वाच्च तत्सख्यमेवेति दिक् । अत्रेदं बोध्यम् । निषादगुहविषये रामस्यात्मसमः सखेत्येवंवदता वाल्मीकिना रामसमत्वरामसमानख्यातित्वोक्त्या भगवद्भक्तत्वेन निषादत्वेपि पूर्वकृतश्रवणादिमत्त्वेन तस्य तत्त्वज्ञत्वं सूचितम् ॥ ३३ ॥ उपागतः रामसमीपं प्राप्तः । विषयं स्वदेशम् ॥ ३४ ॥ समागच्छत् क्षेमालिंगनादिना संगतोऽभूत् ॥ ३५ ॥ आर्तः रामीयवल्कलादिधारणदर्शनेन तमः । इदमस्मत्पुरम् ॥ ३६ ॥ ईदृशवचने कारणमाह ईदृशं हीति । अनेन भगवत्स्व

रूपज्ञत्वमात्मनो ध्वनितम् । अन्नाद्यं अन्नमोदनस्तदाद्यन् । भोज्यादीत्यर्थः ॥३७॥३८ ॥ नो राज्यं भक्ष्यादिकं च प्रशाधि स्वी कुरु ॥ ३९ ॥ वाजिनां खादनं घासादि ॥ ४० ॥ महाप्रभुरपि सन्स्वगृहादिह दूरं यत्पद्यामागतोसि यच्च तवेयमखिला महीत्यनेन स्नेहं दर्शयसि तेन त्वया वयमर्चिता एव हृष्टाश्च वयमित्युवाचेत्यर्थः । सर्वदा वयमर्चिता इत्यनेन मद्ध्यानमेव मे महती पूजा तच्च सर्वदा तवास्ते इत्यप्यर्थो गर्भितः । अतएव वयं त्वयि सदा हृष्टाः ॥ ४१ ॥ अतएव पुनरालिंगति अत्यंतप्रेमास्पदत्वं बोधयितुं भुजाभ्यामिति ॥ ४२ ॥ वनेषु चेति तस्याटविकत्वाद्वनकुशलप्रश्नः । कच्चिद्वनेष्विति पाठः ॥ ४३ ॥ अनुजानामि अंगीकृत्य ददामि प्रतिग्रहे भोगफलके ॥ ४४ ॥ धर्मे प्रणिहितं पित्राज्ञापालनलक्षणे धर्मे सावधानम् अत्र तद्दत्तस्याग्रहे प्रतिग्रहे अप्रतिग्रहीतृत्वरूपक्षत्रधर्मोपन्यासेन अन्नभोजनायोग्यत्वे व्रतस्थत्वरूप

वयंप्रेष्याभवान्भर्तासाधुराज्यंप्रशाधिनः ॥ भक्ष्यंभोज्यंचपेयंचलेह्यंचैतदुपस्थितम् ॥ ३९ ॥ शयनानिचमुख्यानिवाजिनांखादनंचते ॥गुहमेवं ब्रुवाणंतुराघवःप्रत्युवाचह ॥ ४० ॥ अर्चिताश्चैवहृष्टाश्चभवतासर्वदावयम् ॥ पद्भ्यामभिगमाच्चैवस्नेहसंदर्शनेनच ॥ ४१ ॥ भुजाभ्यांसाधुवृत्ताभ्यांपीडयन्वाक्यमब्रवीत् ॥ दिष्ट्यात्वांगुहपश्यामिह्यरोगंसहबांधवैः ॥ ४२ ॥ अपितेकुशलंराष्ट्रेमित्रेषुचवनेषुच ॥ यत्त्विदंभवताकिंचित्प्रीत्यासमुपकल्पितम् ॥ ४३ ॥ सर्वंतदनुजानामिनहिवर्तेप्रतिग्रहे ॥ कुशचीराजिनधरंफलमूलाशनंचमाम् ॥ ४४ ॥ विद्धिप्रणिहितंधर्मेतापसंवनगोचरम् ॥ अश्वानांखादनेनाहमर्थीनान्येनकेनचित् ॥ ४५ ॥ एतावतात्रभवताभविष्यामिसुपूजितः ॥ एतेहिदयितारा‌ज्ञःपितुर्दशरथस्यमे ॥ ४६ ॥ एतैः सुविहितैरश्वैर्भविष्याम्यहमर्चितः ॥ अश्वानांप्रतिपानंचखादनंचैवसोन्वशात् ॥ ४७ ॥ गुहस्तत्रैवपुरुषांस्त्वरितंदीयतामिति ॥ ततश्चीरोत्तरासंगःसंध्यामन्वास्यपश्चिमाम् ॥ ४८ ॥ जलमेवाददेभोज्यंलक्ष्मणेनाहृतंस्वयम् ॥ तस्यभूमौशयानस्यपादौप्रक्षाल्यलक्ष्मणः ॥ ४९ ॥ सभार्यस्यततोभ्येत्यतस्थौवृक्षमुपाश्रितः ॥ गुहोपिसहसूतेनसौमित्रिमनुभाषयन् ॥ अन्वजाग्रत्ततोराममप्रमत्तोधनुर्धरः ॥ ५० ॥ तथाशयानस्यततोयशस्विनोमनस्विनोदाशरथेर्महात्मनः ॥ अदृष्टदुःखस्यसुखोचितस्यसातदाव्यतीतासुचिरेणशर्वरी ॥ ५१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडेपंचाशःसर्गः ॥ ५० ॥

हेतू पन्यासेन च तदन्नस्य भोजनयोग्यत्वं सूचयता तस्य तत्त्वज्ञत्वं सूचितम् । अन्यथा निषादत्वेनाभोज्यान्नतया तमेव हेतुमुपन्यसेत् सवाकथंपकान्नमाहरेत् । एतेन तत्त्वज्ञः सर्वोपि भोज्यान्न एवेति ध्वनितम् ॥४५॥ एते अश्वाः ॥४६॥ प्रतिपानं जात्याश्वानां राजोपवाह्यानां घासदानानंतरं यत्पाय्यते क्षीरादि तत्प्रतिपानम् यच्च घृतशर्करादियुतयवचूर्णादि खाद्यते तत्खादनम् ॥४७॥ त्वरितं दीयतामित्यन्वशादित्यन्वयः॥४८॥ जलमेवाददे तीर्थप्राप्तिनिमित्तकोपवासस्यावश्यकत्वात् ॥४९॥ अभ्येत्य ततोन्यत्र समीपदेशे आगत्य तस्थावित्यनेन तस्य निद्राभावः सूचितः । अन्वजाग्रदित्यार्षम् । अजागरीदित्यर्थः ॥ ५० ॥ सुचिरेण शर्वरीति निद्रागमनाच्चिरत्वप्रतिभासस्तस्याम् ॥ ५१ ॥ कोर्मेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचाशः सर्गः ॥ ५० ॥

॥ एवं रामे शयाने तद्रक्षार्थं जाग्रल्लक्ष्मणगुहसंवादः तमित्यादि । अदंभेन अकृत्रिमानुरागेण भ्रातुरर्थाय भ्रातू रक्षार्थं राघवं रघुकुलजम् संतापसंतप्तो रामस्य भूशय्यादिजेन संतापेन पीडितः ॥ १ ॥ इयमिति प्रत्याश्वसिहि विश्रांतो भव ॥ २ ॥ अयं जनः आटविकः ॥ ३ ॥ नहि रामादिति सर्वात्मभूतात् ॥ ४ ॥ ५ ॥ ६ ॥ अविदितमज्ञातम् किंच चतुरंगमिति परकीयमिति शेषः । तादृशमपि परकीयं बलं संतरेमहि युद्धेन जयेम ॥७॥ ततोवाच तत उवाचेति च्छेदः । आर्षः संधिः । अत्र देशे वयं न भीताः यतो धर्ममेवानुपश्यता त्वया रक्ष्यमाणा भवामः ॥८॥ तथापि जागरणे कारणमाह कथमिति । जीवितं विशिष्टसुखजीवितजनकं भोजनादि ॥ ९ ॥ १० ॥ मंत्रो गायत्र्यादिः । तपः कृच्छ्रादि । पराक्रमैः तज्जन्यैर्ऋष्यशृंगाद्यानयनाश्वमेधाद्यनुष्ठानैः । एको मुख्यः तत्र हेतुः सदृशलक्षणः पुरुषोत्तमसदृशलक्षणः

तंजाग्रतमदंभेनभ्रातुरर्थायलक्ष्मणम् ॥ गुहःसंतापसंतप्तोराघववंवाक्यमब्रवीत् ॥ १ ॥ इयंतातसुखाशय्यात्वदर्थमुपकल्पिता ॥ प्रत्याश्वसिहिसाध्व स्यांराजपुत्रयथासुखम् ॥ २ ॥ उचितोयंजनःसर्वःक्लेशानांत्वंसुखोचितः ॥ गुप्त्यर्थंजागरिष्यामःकाकुत्स्थस्यवयंनिशाम् ॥ ३ ॥ नहिरामात्प्रियतमो ममास्तेभुविकश्चन ॥ ब्रवीम्येवचतेसत्यंसत्येनैवचतेशपे ॥ ४ ॥ अस्यप्रसादादाशंसेलोकेऽस्मिन्सुमहद्यशः ॥ धर्मावाप्तिंचविपुलामर्थकामौ चपुष्कला ॥ ५ ॥ सोहंप्रियसखंरामंशयानंसहसीतया ॥ रक्षिष्यामिधनुष्पाणिःसर्वथाज्ञातिभिःसह ॥ ६ ॥ नमेऽस्त्यविदितंकिंचिद्वनेस्मिंश्चरतः सदा ॥ चतुरंगंह्यतिबलंसुमहत्संतरेमहि ॥ ७ ॥ लक्ष्मणस्तुततोवाचरक्ष्यमाणास्त्वयानघ ॥ नात्रभीतावयंसर्वेधर्ममेवानुपश्यता ॥ ८ ॥ कथं दाशरथौभूमौशयानेसहसीतया ॥ शक्यानिद्रामयालब्धुंजीवितंवासुखानिवा ॥ ९ ॥ योनदेवासुरैःसर्वैःशक्यःप्रसहितुंयुधि ॥ तंपश्यसुखसंसुप्तंतृणे षुसहसीतया ॥ १० ॥ योमंत्रतपसालब्धोविविधैश्चपराक्रमैः ॥ एकोदशरथस्यैषपुत्रःसदृशलक्षणः ॥ ११ ॥ अस्मिन्प्रव्रजितेराजानचिरंवर्त यिष्यति ॥ विधवामेदिनीनूनंक्षिप्रमेवभविष्यति ॥ १२ ॥ विनद्यसुमहानादंश्रमेणोपरताःस्त्रियः ॥ निर्घोषोपरतंतातमन्येराजनिवेशनम् ॥ १३ ॥ कौसल्याचैवराजाचतथैवजननीमम ॥ नाशंसेयदिजीवंतिसर्वेतेशर्वरीमिमाम् ॥ १४ ॥ जीवेदपिहिमेमाताशत्रुघ्नस्यान्ववेक्षया ॥ तद्दुःखंयदिकौ सल्यावीरसूर्विनशिष्यति ॥ १५ ॥ अनुरक्तजनाकीर्णासुखालोकप्रियावहा ॥ राजव्यसनसंसृष्टासापुरीविनशिष्यति ॥ १६ ॥ कथंपुत्रंमहात्मानं ज्येष्ठपुत्रमपश्यतः ॥ शरीरंधारयिष्यंतिप्राणाराज्ञोमहात्मनः ॥ १७ ॥ विनष्टेनृपतौपश्चात्कौसल्याविनशिष्यति ॥ अनंतरंचमातापिममनाशमुपै ष्यति ॥ १८ ॥ अतिक्रांतमतिक्रांतमनवाप्यमनोरथम् ॥ राज्येराममनिक्षिप्यपितामेविनशिष्यति ॥ १९ ॥

दशरथसदृशलक्षण इत्यापाततोर्थः ॥ ११ ॥ विधवा विगतपतिका ॥ १२ ॥ श्रमेणोपरता राजभवनेऽयोध्यानगरे च भविष्यंतीति शेषः । निर्घोषोपरतं उपरतनिर्घोषं भवतीति मन्ये ॥ १३ ॥ जीवंतीति नाशंसे न संभावयामि यदि वा जीवंति एतावत्पर्यंतं तदेमां शर्वरीमेव जीविष्यंति नाग्रे अन्नपानाद्यभावादिति संभावयामीति शेषः ॥ १४ ॥ जीवेदपि एतद्भ्रात्र्याः परमपीति शेषः । यदि यत् वीरसूः कौसल्या एकपुत्रत्वाद्विनशिष्यत्येव तदतिदुःखमित्यर्थः ॥ १५ ॥ अनुरक्तैः रामानुरक्तैर्जनैराकीर्णा व्याप्ता सुखा लोकरूपं प्रियमावहति सा सदा सुखवल्लोका इदानीं राजव्यसनेन दशरथमरणदुःखेन संसृष्टा युक्ता ॥ १६ ॥ राजव्यसनमेव दर्शयति कथमिति ॥ १७ ॥ मातापि भर्तृपुत्रवियोगात् सत्यप्येकपुत्रसन्निधौ ॥ १८ ॥ मनोरथं रामराज्याभिषेकमनवाप्य अतिक्रांतमतिक्रांतं नष्टं नष्टमिति क्रोशन्निति शेषः मत्यागतं रामं राज्ये

ऽनिक्षिप्यैव मे पिता विनशिष्यतीत्यन्वयः ॥ १९ ॥ तस्मिन्काले मरणकाले उपस्थिते ये वृत्तं मृतं पितरं रघुकुलजं सर्वप्रेतकार्येषु संस्करिष्यंति ते सिद्धार्थाः भाग्यवंतः प्राप्तराज्याश्च भरतादय इति शेषः । क्रोधात्तन्नामाग्रहणम् ॥ २० ॥ २१ ॥ २२ ॥ विचरिष्यंति भरतादय इति शेषः ॥ २३ ॥ अपि जीवेदिति संभावने लिङ् । अपि च अपि पश्याम अपि द्रक्ष्यामः ॥ २४ ॥ सत्यप्रतिज्ञेन रामेण ॥२५॥ परिदेवयमानस्येति । इत्थमित्यादिः तिष्ठतः जाग्रतः ॥ २६ ॥ गुरौ रामे सौहृदादित्युभयान्वयि । अतिस्नेहाज्ज्वरातुरो गुहः व्यथातुरो नागो गज इव ॥ २७ ॥ सौरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकपंचाशः सर्गः ॥ ५१ ॥ ॥ ७ ॥ ॥ प्रभातायामिति ॥ १ ॥ सुकृष्णो विहगः काकः कोकिलपालकत्वाच्च कोकिलपदेनोक्तः । काक

सिद्धार्थाःपितरंवृत्तंतस्मिन्कालेह्युपस्थिते ॥ प्रेतकार्येषुसर्वेषुसंस्करिष्यंतिराघवम् ॥ २० ॥ रम्यचत्वरसंस्थानांसंविभक्तमहापथाम् ॥ हर्म्यप्रासादसं पन्नांगणिकावरशोभिताम् ॥ २१ ॥ रथाश्वगजसंबाधांतूर्यनादनिनादिताम् ॥ सर्वकल्याणसंपूर्णांहृष्टपुष्टजनाकुलाम् ॥ २२ ॥ आरामो द्यानसंपन्नांसमाजोत्सवशालिनीम् ॥ सुखिताविचरिष्यंतिराजधानींपितुर्मम ॥ २३ ॥ अपिजीवेद्दशरथोवनवासात्पुनर्वयम् ॥ प्रत्यागम्यमहात्मानम पिपश्यामसुव्रतम् ॥ २४ ॥ अपिसत्यप्रतिज्ञेनसार्धंकुशलिनोवयम् ॥ निवृत्तेवनवासेऽस्मिन्नयोध्यांप्रविशेमहि ॥ २५ ॥ परिदेवयमानस्यदुः खार्तस्यमहात्मनः ॥ तिष्ठतोराजपुत्रस्यशर्वरीसाऽत्यवर्तत ॥ २६ ॥ तथाहिसत्यंब्रुवतिप्रजाहितेनरेंद्रसूनौगुरुसौहृदाद्गुहः ॥ मुमोचबाष्पंव्यसनाभिपी डितोज्वरातुरोनागइवव्यथातुरः ॥ २७ ॥ इत्यार्षेश्रीमद्रामायणेवा० आ० अ० एकपंचाशःसर्गः ॥ ५१ ॥ प्रभातायांतुशर्वर्यांपृथुवक्षामहायशाः ॥ उवाचरामःसौमित्रिंलक्ष्मणंशुभलक्षणम् ॥ १ ॥ भास्करोदयकालोसौगताभगवतीनिशा ॥ असौसुकृष्णोविहगःकोकिलस्तातकूजति ॥ २ ॥ बर्हि णानांचनिर्घोषःश्रूयतेनदतांवने ॥ तरामजाह्नवींसौम्यशीघ्रगांसागरंगमाम् ॥ ३ ॥ विज्ञायरामस्यवचःसौमित्रिर्मित्रनंदनः ॥ गुहमामंत्र्यसूतंचसो तिष्ठद्भ्रातुरग्रतः ॥ ४ ॥ सतुरामस्यवचनंनिशम्यप्रतिगृह्यच ॥ स्थपतिस्तूर्णमाहूयसचिवानिदमब्रवीत् ॥ ५ ॥ अस्यवाहनसंयुक्तांकर्णग्राहवतींशुभाम् ॥ सुप्रतारांदृढांतीर्थेशीघ्रंनावमुपाहर ॥ ६ ॥ तंनिशम्यगुहादेशंगुहामात्योगतोमहान् ॥ उपोह्यरुचिरांनावंगुहायप्रत्यवेदयत् ॥ ७ ॥ ततःसप्रांजलिर्भू त्वागुहोराघवमब्रवीत् ॥ उपस्थितेयंनौर्देवभूयःकिंकरवाणिते ॥ ८ ॥ तवामरसुतप्रख्यतर्तुंसागरगामिनीम् ॥ नौरियंपुरुषव्याघ्रशीघ्रमारोहसुव्रत ॥ ९ ॥

तिनाम ग्रहणस्य प्रातर्निंद्यत्वादेवमुक्तिः ॥ २ ॥ ३ ॥ विज्ञाय तरणसाधनं शीघ्रमानेयमित्येवं रामवचनतात्पर्यं ज्ञात्वा गुहं सूतं चामंत्र्य आमंत्रणेनैव तत्तात्पर्यं बोधयित्वा यथापूर्वं भ्रातुरग्रतोतिष्ठत् ॥ ४ ॥ स तु गुहस्तु रामस्य वचनं तराम जाह्नवीमित्येव निशम्य तात्पर्यतो ज्ञात्वा प्रतिगृह्य नमस्कारपूर्वं प्रतिगृह्य सचिवानाहूय तन्मध्ये कंचित्प्रति अब्रवीत् ॥ ५ ॥ अस्य वाहनसंयुक्तां अस्य जलं निरस्य नावं तीरं प्रापयतीत्यस्य वाहनमरित्रम् । मयूरव्यंसकादित्वात्समासः । कर्णग्राहः कर्णधारः । सुखेन प्रतारः प्रतरणं यया तां दृढां दृढसंधिबंधां तीर्थेऽवतारमार्गे उपाहर समीपं प्रापय ॥ ६ ॥ उपोह्य समीपं प्रापय्य ॥ ७ ॥ ८ ॥ ९ ॥

आरोप्य तां खनित्रपिटकैर्वैदेहीवस्त्राभरणादिकमिति शेषः ॥ १० ॥ सन्नह्य कवचम् कलापान् तूणीरान् येन अवतरणमार्गेण नावमारुह्य तामनिर्वाच्यगुणां गंगां लोकास्तरंति तमवतारं तर्तुं जग्मतुः ॥ ११ ॥ एवं तु एवंभूतं तु रथादिनिरपेक्षं गच्छंतं तु ॥ १२ ॥ उत्तमश्चासौ दक्षिणश्च तेन स्पर्शादिव्यापारे उत्तमेन स्पर्शमात्रेण सकलदुःखहारकत्वाद्दक्षिणेनेदृशेन करेण दक्षिणकरेण ॥१३॥ गमनप्रत्याशानिवृत्तये पुनः सावधारणां निवृत्तिमाह निवर्तस्वेति । एतावत्पर्यंतं राजाज्ञया यानेन गमनं कृतं हि अतःपरं ममानेन न प्रयोजनं यतो रथं विहाय पद्भ्यामेव महावनं गमिष्यामोऽतस्त्वं सर्वथा निवर्तस्व ॥ १४ ॥ अभ्यनुज्ञातं प्रतिनिवृत्त्यै इति शेषः ॥ १५ ॥ तदादौ लोकदृष्ट्या शोकापनुदं वचनमाह नातीति । सभ्रातृभार्यस्य तव प्राकृतवत् क्षुद्रवद्वने वासो येन दैवेन कृतस्तादिदं दैवमिह लोके केनाप्यतिक्रांतं लंघितं न अतो हृदये मा शुच इत्यर्थः । यद्वा ते वनवासो जात इति यदिदं इह लोके अयोध्यास्थलोकमध्ये केनापि पुरुषेण न हृदि अत्यंतं क्रांतं स्वीकृतं सर्वासंमतमेवातोऽस्मदादीन् दोषेण मा गृह्णीया इति

अथोवाचमहातेजारामोगुहमिदंवचः ॥ कृतकामोऽस्मिभवताशीघ्रमारोप्यतामिति ॥ १० ॥ ततःकलापान्सन्नह्यखड्गौबद्ध्वाचधन्विनौ ॥ जग्मतुर्येनतांगंगांसीतयासहराघवौ ॥ ११ ॥ राममेवंतुधर्मज्ञमुपागत्यविनीतवत् ॥ किमहंकरवाणीतिसूतःप्रांजलिरब्रवीत् ॥ १२ ॥ ततोऽब्रवीद्दाशरथिः सुमंत्रंस्पृशन्करेणोत्तमदक्षिणेन ॥ सुमंत्रशीघ्रंपुनरेवयाहिराज्ञःसकाशेभवचाप्रमत्तः ॥१३॥ निवर्तस्वेत्युवाचैनमेतावद्धिकृतंमम ॥ रथंविहायपद्भ्यांतुगमिष्यामोमहावनम् ॥ १४ ॥ आत्मानंत्वभ्यनुज्ञातमवेक्ष्यार्तःससारथिः ॥ सुमंत्रःपुरुषव्याघ्रमैक्ष्वाकमिदमब्रवीत् ॥ १५ ॥ नातिक्रांतमिदंलोकेपुरुषेणेहकेनचित् ॥ तवसभ्रातृभार्यस्यवासःप्राकृतवद्वने ॥ १६ ॥ नमन्येब्रह्मचर्येवास्त्वधीतेवाफलोदयः ॥ मार्दवार्जवयोर्वापित्वांचेद्व्यसनमागतम् ॥ ॥ १७ ॥ सहराघववैदेह्याभ्रात्राचैववनेवसन् ॥ त्वंगतिंप्राप्स्यसेवीरत्रीँल्लोकांस्तुजयन्निव ॥ १८ ॥ वयंखलुहताराममयत्त्वयाह्युपवंचिताः ॥ कैकेय्यावशमेष्यामःपापायादुःखभागिनः ॥ १९ ॥ इतिब्रुवन्नात्मसमंसुमंत्रःसारथिस्तथा ॥ दृष्ट्वादूरगतंरामंदुःखार्तोरुरुदेचिरम् ॥ २० ॥ ततस्तुविगतेबाष्पेसूतंस्पृष्टोदकंशुचिम् ॥ रामस्तुमधुरंवाक्यंपुनःपुनरुवाचतम् ॥ २१ ॥ इक्ष्वाकूणांत्वयातुल्यंसुहृदंनोपलक्षये ॥ यथादशरथोराजामांनशोचेत्तथाकुरु ॥ २२ ॥ शोकोपहतचेताश्चवृद्धश्चजगतीपतिः ॥ कामभारावसन्नश्चतस्मादेतद्ब्रवीमिते ॥ २३ ॥ यद्यथाज्ञापयेत्किंचित्समहात्मामहीपतिः ॥ कैकेय्याःप्रियकामार्थंकार्यंतदविकांक्षया ॥ २४ ॥

तात्पर्यम् ॥ १६ ॥ किंच यदि त्वामीदृशं व्यसनमागतं तदा ब्रह्मचर्यादिनिष्फलमिति मन्ये ॥ १७ ॥ इदानीं रामं भगवंतं मत्वाह सहेति । गतिमुत्कर्षम् एकस्यैव त्रिलोकीजेतुर्जयेन पितृवाक्यपरिपालनेन च त्रीँल्लोकाञ्जयन्निव एवं च तवायं वनवासोपि महाफल एव ॥ १८ ॥ वयं तु सर्वथा पीडिता इत्याह वयमिति । उपवंचिताः केचिद्रात्रावविदितगमनेन अहं बलान्निवर्तनेन एवं सर्वे त्यक्ताः ॥ १९ ॥ आत्मसममतिबुद्धिमन्मंत्रियोग्यम् । दरगमितिपाठे दूरदेशावस्थानवंतं निश्चित्य तत्समीपे दुःखार्तश्चिरं रुरोद ॥ २० ॥ स्पृष्टोदकमाचामंतं शुचिं पवित्रम् ॥ २१ ॥ सुहृदं व्यसनापनोदकं यत एवमतो यथेत्यादि ॥ २२ ॥ कामभारावसन्नः कामवेगेन पीडितः । यद्वावसन्नः मदभिषेकादिमनोरथसमूहः तस्मादेतदुक्तं वक्ष्यमाणं च ॥ २३ ॥ कैकेय्याः प्रियो यः कामो विषयो भरताभिषेकादिस्तदर्थं यथा येन प्रकारेण

यद्वस्तु आज्ञापयेत् तत् अविकांक्षयाऽस्मदादीनामविशंकया कार्यं सादरमनुष्ठेयम् ॥ २४ ॥ एतच्छब्दार्थमाह यदेषामिति । प्रशासतीत्यभ्यस्तत्वाद्दत् । सर्वकृत्येष्वपि कामक्रोधप्रवृत्तेष्वपि ॥ २५ ॥ यत्कार्यं प्रति यथा येन प्रकारेण अलीकमप्रियं ताम्यति ग्लायति ॥ २६ ॥ अभिवाद्य मत्प्रातिनिधितया मदीयनमस्कारं कृत्वा ॥ २७ ॥ इदंपदार्थमाह नचेति । वने वत्स्यामहेति वेति संधिरार्षः । वत्स्यामहे इति वा । नानुशोचामीति संबंधः ॥२८॥ पुनरागतानस्मान्पुनस्त्वंद्रक्ष्यसीति संबंधः । पुनःपुनरभीक्ष्णं द्रक्ष्यसिवा ॥२९॥ सहिताः मम मात्रेति शेषः । पुनःपुनरभीक्ष्णं पूर्वोक्तं वाक्यमुक्त्वा कौसल्यामित्युपलक्षणम् । सर्वाः प्रति कैकेयीं चारोग्यं अहमरोगोऽदुःख इति ब्रूहि । कैकेयीमिति न व्यंग्योक्तिः किंतु दैवकृतत्वेनास्या अनपराधित्वमित्याशयेन ॥३०॥ अथ आरोग्यकथनानंतरं सर्वान्प्रति आर्यस्य ज्येष्ठस्य मम सीताया लक्ष्मणस्य च वचनात्पादाभिवंदनं ब्रूहि ॥ ३१ ॥ एवं पितरं मातरं प्रति संदिश्य पुनः पितरं प्रति संदिशति ब्रूया इति । महाराजं दशरथम् । नृपमते राजसंमते पदे राज्ये ॥३२॥ अथ सुमंत्रं प्रत्याह भरतं चेति

एतदर्थंहिराज्यानिप्रशासतिनराधिपाः ॥ यदेषांसर्वकृत्येषुमनोनप्रतिहन्यते ॥ २५ ॥ यद्यथासमहाराजोनालीकमधिगच्छति ॥ नचताम्यतिशोकेनसुमंत्रकुरुतत्तथा ॥ २६ ॥ अदृष्टदुःखंराजानंवृद्धमार्यंजितेंद्रियम् ॥ ब्रूयात्स्वमभिवाद्यैवममहेतोरिदंवचः ॥२७॥ नचाहमनुशोचामिलक्ष्मणोनचशोचति ॥ अयोध्यायाश्च्युताश्चेतिवनेवत्स्यामहेतिवा ॥ २८ ॥ चतुर्दशसुवर्षेषुनिवृत्तेषुपुनःपुनः ॥ लक्ष्मणंमांचसीतांचद्रक्ष्यसेशीघ्रमागतान् ॥ ॥ २९ ॥ एवमुक्त्वातुराजानंमातरंचसुमंत्रमे ॥ अन्याश्चदेवीःसहिताःकैकेयींचपुनःपुनः ॥ ३० ॥ आरोग्यंब्रूहिकौसल्यामथपादाभिवंदनम् ॥ सीतायाममचार्यस्यवचनाल्लक्ष्मणस्यच ॥ ३१ ॥ ब्रूयाश्चापिमहाराजंभरतंक्षिप्रमानय ॥ आगतश्चापिभरतःस्थाप्योनृपमतेपदे ॥ ३२ ॥ भरतंचपरिष्वज्ययौवराज्येऽभिषिच्यच ॥ अस्मत्संतापजंदुःखंनत्वामभिभविष्यति ॥ ३३ ॥ भरतश्चापिवक्तव्योयथाराजनिवर्तसे ॥ तथामातृषुवर्तेथाःसर्वास्वेवाविशेषतः ॥ ३४ ॥ यथाचतवकैकेयीसुमित्राचाविशेषतः ॥ तथैवदेवीकौसल्याममाताविशेषतः ॥३५॥ तातस्यप्रियकामेनयौवराज्यमवेक्षता ॥ लोकयोरुभयोःशक्यंनित्यदासुखमेधितुम् ॥ ३६ ॥ निवर्त्यमानोरामेणसुमंत्रःप्रतिबोधितः ॥ तत्सर्ववचनंश्रुत्वास्नेहात्काकुत्स्थमब्रवीत् ॥ ॥ ३७ ॥ यदहंनोपचारेणब्रूयाःस्नेहादविक्लवम् ॥ भक्तिमानितितत्तावद्वाक्यंत्वंक्षंतुमर्हसि ॥३८॥ कथंहित्वद्विहीनोहंप्रतियास्यामितांपुरीम् ॥ तवतातवियोगेनपुत्रशोकातुरामिव ॥३९॥ सराममपितावन्मेरथंदृष्ट्वातदाजनः ॥ विनारामंरथंदृष्ट्वाविदीर्येतापिसापुरी ॥४०॥ दैन्यंहिनगरीगच्छेद्दृष्ट्वाशून्यमिमंरथम् ॥ सूतावशेषंस्वंसैन्यंहतवीरमिवाहवे ॥ ४१ ॥

अभिषिच्य अभिषेच्य ॥ ३३ ॥ राजनि दशरथे ॥ ३४ ॥ अविशेषतः शत्रुघ्नसंबंधात्कैकेय्याविशेषतः कैकेय्यविशेषेत्यर्थः । एवं मम मातापि कैकेय्यविशेषाद्द्रष्टव्येत्यर्थः ॥ ३५ ॥ अवेक्षता अंगीकुर्वता उभयोर्लोकयोरिहपरलोकयोः नित्यदा सर्वदा । छांदसो दाप्रत्ययः । सुखं वर्धयितुं शक्यं तेन तथा वर्तस्व येन लोकद्वयेपि सुखं भवतीति व्यंग्यः । पर्यायोक्तमत्रालंकारः ॥ ३६ ॥ ३७ ॥ उपचारः स्वामिभृत्योचितः सत्कारः तेन न ब्रूयाः ब्रूयाम । छांदसमेतत् । अपितु स्नेहात् विक्लवं वाक्यं ब्रवीमि तद्वाक्यं भक्तिमानिति ज्ञात्वा क्षंतुमर्हसीति संबंधः ॥ ३८ ॥ पुत्रशोकः पुत्रवियोगजः शोकः ॥ ३९ ॥ मे रथं मत्प्रवर्त्यं रथं दूरात् दृष्ट्वा तदा दर्शनकाले सराममपि । अपिः संभावने । सरामं संभावयमानो जनः पुरी च निकटगतं रथं विना रामं दृष्ट्वा विदीर्येतापि । अपिः संभावनायाम् ॥ ४० ॥ सूतावशेषं हतवीरं

रथं दृष्ट्वा स्वसैन्यमिव ॥ ४१ ॥ दूरेपि निवसंतं त्वां मानसेन व्यापारेणाग्रतः पुरःस्थितमिव त्वां चिंतयंत्यो रथेनागतप्रायो राम इति चिंतयंत्यः प्रजाजना अद्य एकस्य मम गमनदिनेनूनं निश्चयेन निराहाराः कृता निराहारसंकल्पवत्यः कृताः मरिष्यंतीति यावत् ॥ ४२ ॥ तस्यैव युक्तया साधनं करोति दृष्टमित्यादिना । संकुलं आर्तनादादि ॥ ४३ ॥ सरथं मामेव निशाम्येत्यन्वयः ॥ ४४ ॥ पुना रामं विना स्वगमनेऽनुपपत्तिमाह अहमिति । अपि च अहं देवीं किं वक्ष्यामि देवीं कौसल्याम् तव सुतो मया मातुलकुलं प्रापित इति ब्रूहि तत्राह ईदृशं वचनं प्रियमपि असत्यं नैवाहं ब्रूयाम् । वनं प्रापित इत्येव तर्हि ब्रूहि तत्राह इदं सत्यमपि अप्रियमेव अतः कथं ब्रूयाम् । सत्यं ब्रूयात्प्रियं ब्रूयान्नब्रूयात्सत्यमप्रियमिति स्मृतेः । तस्मात्तव मातरं प्रति वक्तुं योग्यस्योत्तरस्याभावादहं न गमिष्यामीति भावः । एतदेव ध्वनयन्व क्ष्यति तन्न शक्ष्याम्यहं गंतुमिति । यत्तु कतकेनासत्यमपि मातुलकुलगमनं वक्ष्यामि नतु सत्यमपि वनगमनमप्रियत्वादित्युक्तम् तत्तु तन्न शक्ष्यामीत्यादिनोक्तवचसां नगरगमनाभावप्रतिपादकत्वस्यैव लाभाच्चिंत्यम् ॥ ४५ ॥ ४६ ॥ रथोपि नेतुमशक्य इत्यनुपपत्त्यंतरमाह ममेति । एतेऽश्वा मम नियोगस्था मत्प्रेरणमात्राधीना मत्प्रेरणया त्वद्बंधुजनवहनशीला एव नत्वन्यवहनशीला नापि त्वद्बंधुरहितरथवहनशीलाः । अत

दूरेपिनिवसंतंत्वांमानसेनाग्रतःस्थितम् ॥ चिंतयंतोऽद्यनूनंत्वांनिराहाराःकृताःप्रजाः ॥ ४२ ॥ दृष्टंतद्धित्वयारामयादृशंत्वत्प्रवासने ॥ प्रजानांसं कुलंवृत्तंत्वच्छोकक्लांतचेतसाम् ॥ ४३ ॥ आर्तनादोहियःपौरैरुन्मुक्तस्त्वत्प्रवासने ॥ सरथंमांनिशाम्यैवकुर्युःशतगुणंततः ॥४४॥ अहंकिंचापिवक्ष्या मिदेवींतवसुतोमया ॥ नीतोसौमातुलकुलंसंतापंमाकृथाइति ॥ ४५ ॥ असत्यमपिनैवाहंब्रूयांवचनमीदृशम् ॥ कथमप्रियमेवाहंब्रूयांसत्यमिदंवचः ॥ ॥ ४६ ॥ ममतावन्नियोगस्थास्त्वद्बंधुजनवाहिनः ॥ कथंरथंत्वयाहीनंप्रवाह्यंतिहयोत्तमाः ॥ ४७ ॥ तन्नशक्ष्याम्यहंगंतुमयोध्यांत्वदृतेऽनघ ॥ वनवा सानुयानायमामनुज्ञातुमर्हसि ॥ ४८ ॥ यदिमेयाचमानस्यत्यागमेवकरिष्यसि ॥ सरथोऽग्निंप्रवेक्ष्यामित्यक्तमात्रइहत्वया ॥ ४९ ॥ भविष्यंतिवनेया नितपोविघ्नकराणिते ॥ रथेनप्रतिबाधिष्येतानिसर्वाणिराघव ॥ ५० ॥ त्वत्कृतेनमयाप्राप्तंरथचर्याकृतंसुखम् ॥ आशंसेत्वत्कृतेनाहंवनवासकृतंसुखम् ॥ ५१ ॥ प्रसीदेच्छामितेऽरण्येभवितुंप्रत्यनंतरः ॥ प्रीत्याभिहितमिच्छामिभवमेप्रत्यनंतरः ॥५२॥ इमेपिचहयावीरयदितेवनवासिनः ॥ परिचर्यांक रिष्यंतिप्राप्स्यंतिपरमांगतिम् ॥५३॥ तवशुश्रूषणंमूर्ध्नाकरिष्यामिवनेवसन् ॥ अयोध्यांदेवलोकंवासर्वथाप्रजहाम्यहम् ॥५४॥ नहिशक्याप्रवेष्टुंसामया ऽयोध्यात्वयाविना ॥ राजधानीमहेंद्रस्ययथादुष्कृतकर्मणा ॥ ५५ ॥ वनवासेक्षयंप्राप्तेममैषहिमनोरथः ॥ यदनेनरथेनैवत्वांवहेयंपुरींपुनः ॥ ५६ ॥

स्त्वया हीनं रथमेते कथं प्रवाह्यंति न कथमपि वहंति अतो रथनयनं दुःशक्यमिति भावः ॥ ४७ ॥ उपसंहरति तन्नेति ॥ ४८ ॥ त्यक्तमात्रे त्यागक्षण एव ॥ ४९ ॥ भविष्यंति संभावितानि रथेन साधने नाहमेव रथी भूत्वा प्रतिबाधिष्ये ॥ ५० ॥ ननु सूतेन त्वया कथं रथिकृत्यं कर्तुं शक्यं तत्राह त्वत्कृतेनेति । न केवलमहं सूतः किंतु प्रधानभूतो मंत्री सूतत्वं तु त्वत्कृतानुग्रहरूपफलेन तदर्थफलस्यापि हेतु त्वांगीकारान्मयांगीकृतमिति शेषः । तत्फलं च त्वदीयरथचर्यया त्वदनुग्रहकृतं सुखं मया प्राप्तमिदानीं त्वत्कृतेन त्वदंगीकृतवनानुगमनानुग्रहेण वनवासकृतं सुखं राज्यचिंतादुःखाभावान्महत्सुखमाशंसे प्रार्थयामि। एतेन त्वदवतारं ज्ञात्वैव त्वद्रथचर्यासौभाग्याय सूतत्वं मयांऽगीकृतमिति ध्वनितम् ॥ ५१ ॥ प्रत्यनंतरः प्रत्यासन्नोऽनुकूल इति यावत् । प्रत्यनंतरो भवेति त्वया प्रीत्याभिहितं वाक्यं श्रोतुमिच्छामि ॥ ५२ ॥ ॥ ५३ ॥ देवलोकं वेत्यनेन त्वद्भक्तानां भक्त्यंतरायभूतदेवलोकप्राप्तिरपि हेयैवेति सूचितम् ॥ ५४ ॥ ५५ ॥ वनवासे क्षयं प्राप्ते वनवासकाले समाप्ते पुरीं वहेयं प्रापयेयमिति यत् एष मे मनोरथः ॥ ५६ ॥

अन्यथा त्वया रहितस्य स्थितिपक्षे ॥ ५७ ॥ भर्तृपुत्रगते राजपुत्राश्रिते पथि यथा भृत्येन स्थातव्यं तथा त्वद्विषये तिष्ठंतं सर्वभृत्यमध्ये भक्तिमंतं भृत्यं स्थित्या भृत्ययोग्यया स्थित्या सर्वदा स्थितं नियुक्तं कार्य विषये कदाप्यपराधरहितमिति यावत् ॥ ५८ ॥ ५९ ॥ ६० ॥ रामो वनं गत इति प्रत्ययं निश्चयं कैकेयी गच्छेदित्यन्वयः ॥ ६१ ॥ अतिशंका अन्यथाशंका तां न कुर्यात् ॥ ६२ ॥ इत्येष मे प्रथमः कल्पो मुख्यं प्रयोजनं त्वद्गमनस्येत्यन्वयः । भरतेनारक्षितं समंताद्रक्षितमीदृशं पुत्रराज्यं तज्जन्यं सुखं प्राप्नुयादिति च मम त्वद्गमनस्य प्रयोजनं भरतानयनस्य त्वदधीनत्वात् ॥ ६३ ॥ ६४ ॥ ६५ ॥ सजने वने वासो न योग्य इत्युक्तिरत्रैव वने स्थेयमिति कदाचिद्गुहः प्रार्थयेत्तत्प्रातिबंधाय आश्रमे जनपदरहिते वासो योग्योतस्तद्गत आश्रमवासोचितो विधिर्जटाधारणादिरूप इदानीं कर्तव्य इत्यन्वयः ॥ ६६ ॥ सोहं

चतुर्दशहिवर्षाणिसहितस्यत्वयावने ॥ क्षणभूतानियास्यंतिशतसंख्यानिचान्यथा ॥ ५७ ॥ भृत्यवत्सलतिष्ठंतंभर्तृपत्रगतेपथि ॥ भक्तंभृत्यंस्थितं स्थित्यानमांत्वंहातुमर्हसि ॥ ५८ ॥ एवंबहुविधंदीनंयाचमानंपुनःपुनः ॥ रामोभृत्यानुकंपीतुसुमंत्रमिदमब्रवीत् ॥५९ ॥ जानामिपरमांभक्तिमहंतेभर्तृ वत्सल ॥ शृणुचापियदर्थंत्वांप्रेषयामिपुरीमितः ॥ ६० ॥ नगरींत्वांगतंदृष्ट्वाजननीमेयवीयसी ॥ कैकेयीप्रत्ययंगच्छेदितिरामोवनंगतः ॥ ६१ ॥ विपरीततुष्टिहीनावनवासंगतेमयि ॥ राजानंनातिशंकेतमिथ्यावादीतिधार्मिकम् ॥ ६२ ॥ एषमेप्रथमःकल्पोयदंबामेयवीयसी ॥ भरतारक्षितंवृत्तं पुत्रराज्यमवाप्स्यते ॥ ६३ ॥ ममप्रियार्थंराज्ञश्चसुमंत्रत्वंपुरींव्रज ॥ संदिष्टश्चापियानर्थांस्तांस्तान्ब्रूयास्तथातथा ॥ ६४ ॥ इत्युक्त्वावचनंसूतंसांत्व यित्वापुनःपुनः ॥ गुहंवचनमक्लीबोरामोहेतुमदब्रवीत् ॥ ६५ ॥ नेदानींगुहयोग्योयंवासोमेसजनेवने ॥ अवश्यमाश्रमेवासःकर्तव्यस्तद्गतोविधिः ॥ ॥ ६६ ॥ सोहंगृहीत्वानियमंतपस्विजनभूषणम् ॥ हितकामःपितुर्भूयःसीतायालक्ष्मणस्यच ॥ ६७ ॥ जटाःकृत्वागमिष्यामिन्यग्रोधक्षीरमानय ॥ तत्क्षीरंराजपुत्रायगुहःक्षिप्रमुपाहरत् ॥ ६८ ॥ लक्ष्मणस्यात्मनश्चैवरामस्तेनाकरोज्जटाः ॥ दीर्घबाहुर्नरव्याघ्रोजटिलत्वमधारयत् ॥ ६९ ॥ तौ तदाचीरसंपन्नौजटामंडलधारिणौ ॥ अशोभेतामृषिसमौभ्रातरौरामलक्ष्मणौ ॥७०॥ ततोवैखानसंमार्गमास्थितःसहलक्ष्मणः ॥ व्रतमादिष्टवान्रामः सहायंगुहमब्रवीत ॥ ७१ ॥ अप्रमत्तोबलेकोशेदुर्गेजनपदेतथा ॥ भवेथागुहराज्यंहिदुरारक्षतमंमतम् ॥ ७२॥ ततस्तंसमनुज्ञाप्यगुहमिक्ष्वाकुनंदनः ॥ जगामतूर्णमव्यग्रःसभार्यःसहलक्ष्मणः ॥ ७३ ॥ सतुदृष्ट्वानदीतीरेनावमिक्ष्वाकुनंदनः ॥ तितीर्षुःशीघ्रगांगंगामिदंवचनमब्रवीत् ॥ ७४ ॥

नियमं वन्याहारभूशयनादिरूपं गृहीत्वा सीताया लक्ष्मणस्य चानुमत्या तपस्विजनभूषणं जटाः कृत्वा गमिष्यामि अतो न्यग्रोधक्षीरमानय । भूयोतिशयेन पितुर्हितकामस्तत्प्रतिज्ञारक्षणेन । यत्तु सीताया हितकाम इति तन्न । जटाधारणेन सीताहिताप्रसिद्धेः । अनुमतिस्त्वपेक्षितैव अन्यथा संन्यासबुद्ध्या परमदुःखापत्तेः ॥ ६७ ॥ ६८ ॥ लक्ष्मणस्याकरोत् तेनापि रामवद्वस्थानस्य संकल्पितत्वात् ॥ ६९ ॥ ७० ॥ वैखानसं मार्गं वानप्रस्थाश्रमधर्मम् आस्थितः प्राप्तुं कृतबुद्धिः सन् व्रतं वानप्रस्थव्रतं आदिष्टवानंगीकृतवान् । अत्र गंगारूपतीर्थप्राप्तावग्रे प्रयागरूपतीर्थप्राप्तौ तदग्रे पितृमरणश्रवणेपि यन्मुंडनाकरणं रामलक्ष्मणयोस्ते नानेन परकृतिरूपार्थवादेन क्षत्रियाणां तीर्थादिषु मुंडननिषेधं प्रतीम इत्यलम् । सहायं गंगातरणादिकृतसहायम् ॥ ७१ ॥ किमब्रवीत्तदाह अप्रमत्त इति । दुःखेनारक्षा रक्षणं यस्य तद्दुरारक्षं अतिशयेन दुरारक्षं

दुरारक्षतमम् । दुरारक्ष्यतममितिपाठे अतिशयेन दुःखेन रक्षितुं योग्यतममित्यर्थः ॥ ७२ ॥ ७३ ॥ ७४ ॥ स्थितामिमां नावं परिगृह्य हस्ते गृहीत्वा सीतामारोपय अन्वक्षं पश्चात्त्वमारोह ॥ ७५ ॥ अप्रति कूलयन् अनुकूलयन् ॥ ७६ ॥ ७७ ॥ ब्रह्मवत् क्षत्रियवद ब्राह्मणक्षत्रियार्हं ब्रह्मक्षत्रदेवताकमित्यर्थौ वा आत्मनो हितमुद्दिश्य जजाप सुत्रामाणमृचा नावमारोहेदिति स्मृतेः क्षत्रियाधिकारे । पाठात् ब्रह्मक्षत्रदे वताकत्वं चास्य ब्राह्मणे उक्तमिति कतकः । दैवीं नावमित्यादिर्ब्रह्मक्षत्रसाधारणो मंत्र इत्यन्ये ॥ ७८ ॥ प्रणमत् अडभाव आर्षः ॥ ७९ ॥ ८० ॥ कर्णधारेण नाविकेन समाहिता सञ्जीकृता स्फ्यमरित्रं तेन वेगादभिहता प्रणुन्ना ॥ ८१ ॥ गंगाया महादेवतात्वात् स्त्रीदेवतात्वाच्च सीता प्रार्थितवतीत्याह मध्यमिति ॥ ८२ ॥ पालयतु पारयतु समापयत्विति यावत् । रलयोः समानश्रुतित्वात् ॥ ८३ ॥ पुनः

आरोहत्वंनरव्याघ्रस्थितांनावमिमांशनैः ॥ सीतांचारोपयान्वक्षंपरिगृत्ह्यमनस्विनीम् ॥ ७५ ॥ सभ्रातुःशासनंश्रुत्वासर्वमप्रतिकूलयन् ॥ आरोप्यमैथिलींपूर्वमारुरोहात्मवांस्ततः ॥ ७६ ॥ अथारुरोहतेजस्वीस्वयंलक्ष्मणपूर्वजः ॥ ततोनिषादाधिपतिर्गुहोज्ञातीनचोदयत् ॥ ७७ ॥ राघवोपिमहातेजानावमारुह्यतांततः ॥ ब्रह्मवत्क्षत्रवच्चैवजजापहितमात्मनः ॥ ७८ ॥ आचम्यचयथाशास्त्रंनदींतांसहसीतया ॥ प्रणमत्प्रीतिसंतुष्टोलक्ष्मणश्चमहारथः ॥ ७९ ॥अनुज्ञायसुमंत्रंचसबलंचैवतंगुहम् ॥ आस्थायनावंरामस्तुचोदयामासनाविकान् ॥ ८० ॥ ततस्तैश्चालितानौकाकर्णधारसमाहिता ॥ शुभस्फ्यवेगाभिहताशीघ्रंसलिलमत्यगात् ॥ ८१ ॥ मध्यंतुसमनुप्राप्यभागीरथ्यास्त्वनिंदिता ॥ वैदेहीप्रांजलिर्भूत्वातांनदीमिदमब्रवीत् ॥ ॥ ८२ ॥ पुत्रोदशरथस्यायंमहाराजस्यधीमतः ॥ निदेशंपालयत्वेनंगंगेत्वदभिरक्षितः ॥ ८३ ॥ चतुर्दशहिवर्षाणिसमग्राण्युष्यकानने ॥ भ्रात्रासहमयाचैवपुनःप्रत्यागमिष्यति ॥ ८४ ॥ ततस्त्वांदेविसुभगेक्षेमेणपुनरागता ॥ यक्ष्येप्रमुदितागंगेसर्वकामसमृद्धिनी ॥ ८५ ॥ त्वंहित्रिपथगेदेविब्रह्मलोकंसमक्षसे ॥ भार्याचोदधिराजस्यलोकेस्मिन्संप्रदृश्यसे ॥ ८६ ॥ सात्वांदेविनमस्यामिप्रशंसामिचशोभने ॥ प्राप्तराज्येनरव्याघ्रेशिवेनपुनरागते ॥ ८७ ॥ गवांशतसहस्रंचवस्त्राण्यन्नंचपेशलम् ॥ ब्राह्मणेभ्यःप्रदास्यामितवप्रियचिकीर्षया ॥ ८८ ॥ सुराघटसहस्रेणमांसभूतौदनेनच ॥ यक्ष्येत्वांप्रीयतांदेविपुरींपुनरुपागता ॥ ८९ ॥ यानित्वत्तीरवासीनिदैवतानिचसंतिहि ॥ तानिसर्वाणियक्ष्यामितीर्थान्यायतनानिच ॥ ९० ॥ पुनरेवमहाबाहुर्मयाभ्रात्राचसंगतः ॥ अयोध्यांवनवासात्तुप्रविशत्वनघोऽनघे ॥ ९१ ॥ तथासंभाषमाणासासीतागंगामनिंदिता ॥ दक्षिणादक्षिणंतीरंक्षिप्रमेवाभ्युपागमत् ॥ ९२ ॥ तीरंतुसमनुप्राप्यनावंहित्वानरर्षभः ॥ प्रातिष्ठतसहभ्रात्रावैदेह्याचपरंतपः ॥ ९३ ॥ अथाब्रवीन्महाबाहुःसुमित्रानंदवर्धनम् ॥ भवसंरक्षणार्थायसजनेविजनेपिवा ॥ ९४ ॥ अवश्यंरक्षणंकार्यमद्विधैर्विजनेवने ॥ अग्रतोगच्छसौमित्रेसीतात्वामनुगच्छतु ॥ ९५ ॥

प्रत्यागमिष्यति स्वदेशं यद्वीति शेषः ॥ ८४ ॥ सर्वकामसमृद्धिनी सर्वकामसमृद्धं सर्वकामपूरणमस्या अस्ति दातव्यत्वेनेत्यर्थः ॥ ८५ ॥ समक्षसे व्याप्नोषि । अक्षूव्याप्तौ संघाते च तत्त्वं चास्या बालकांडे निरूपितम् ॥ ८६ ॥ प्रशंसामि स्तौमि शिवेन क्षेमेण ॥ ८७ ॥ ८८ ॥ मांसभूतौदनेन यक्ष्ये महाबलिदानेनेति शेषः ॥ ८९ ॥ तीर्थानि प्रयागादीनि । आयतनानि काश्यादीनि ॥ ९० ॥ ९१ ॥ दक्षिणा भर्तुरनुकूला ॥ ९२ ॥ ९३ ॥ संरक्षणार्थं सीताया इति शेषः । भव सावधान इति शेषः ॥ ९४ ॥ यदेवमतोऽग्रत इति । एवं च कार्यवशाल्लघोरप्यग्रतो गमनमदोषायेति ध्वनितम् । मार्गे एव लघोरग्रतो

गमनमदोषायेत्यन्ये । एवं रूयविश्वसनीयेति च ध्वनितम् ॥ ९५ ॥ नः अस्माकम् । सीतयापिप्रातित्रत्यमहिम्नेतररक्षणम् ॥ ९६ ॥ कुत एवमतियत्नोऽत आह नहीति । असुकरा दुष्करा काचन कापि क्रियाऽति क्रांता न किंतु इतःप्रभृति दुष्करक्रियारंभ इति भावः । यद्वा काचन क्रिया अपायलक्षणा अतिक्रांता अस्माननतिक्रम्य प्राप्ता चेत्ततो रक्षा सुकरा नहि प्रहृतं प्रहृतमेवेति न्यायादित्यर्थः । अद्येत्यादिसार्धश्लोक एकं वाक्यम् ॥ ९७ ॥ दुःखज्ञाने हेतुः प्रणष्टेति । क्षेत्रं शाल्यादिक्षेत्रम् । विषमं निम्नोन्नतम् । प्रपातं गर्तादि तद्युक्तम् ॥ ९८ ॥ ९९ ॥ १०० ॥ वत्सान्वत्सदेशान् ॥ १०१ ॥ ऋश्यादयो हरिणभेदाः । काले सायंकाले । मांसस्य च वन्याहारांतर्गतत्वान्नदोषः । मृगयाधर्मकत्वाच्च न मृगहनने दोषः । बुभुक्षितौ हत्वा तानादाय गताविल्यनेन भोजनसर्थसिद्धमेवेति नोक्तम् ॥ १०२ ॥ रैनुंपमानः ॥ ॥ इति श्रीरा

पृष्ठतोनुगमिष्यामिसीतांत्वांचानुपालयन् ॥ अन्योन्यस्यहिनोरक्षाकर्तव्यापुरुषर्षभ ॥ ९६ ॥ नहितावदतिक्रांताऽसुकराकाचनक्रिया ॥ अद्यदुःखंतुवैदेहीवनवासस्यवेत्स्यति ॥ ९७ ॥ प्रणष्टजनसंबाधंक्षेत्रारामविवर्जितम् ॥ विषमंचप्रपातंचवनमद्यप्रवेक्ष्यति ॥ ९८ ॥ श्रुत्वारामस्यवचनंप्रतस्थेलक्ष्मणोग्रतः ॥ अनंतरंचसीतायाराघवोरघुनंदनः ॥ ९९ ॥ गतंतुगंगापरपारमाशुरामंसुमंत्रःसततंनिरीक्ष्य ॥ अध्वप्रकर्षाद्विनिवृत्तदृष्टिर्मुमोचवाष्पंव्यथितस्तपस्वी ॥ १०० ॥ सलोकपालप्रतिमप्रभावस्तीर्त्वामहात्मावरदोमहानदीम् ॥ ततःसमृद्धाञ्छुभसस्यमालिनःक्षणेनवत्सान्मुदितानुपागमत ॥ १०१ ॥ तौतत्रहत्वाचतुरोमहामृगान्वराहमृश्यंपृषतंमहारुरुम् ॥ आदायमेध्यंत्वरितंबुभुक्षितौवासायकालेययतुर्वनस्पतिम् ॥ ॥ १०२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्विपंचाशः सर्गः ॥ ५२ ॥ सतंवृक्षंसमासाद्यसंध्यामन्वास्यपश्चिमाम् ॥ रामोरमयतांश्रेष्ठइतिहोवाचलक्ष्मणम् ॥ १ ॥ अद्येयंप्रथमारात्रिर्याताजनपदाद्बहिः ॥ यासुमंत्रेणरहितातांनोत्कंठितुमर्हसि ॥ २ ॥ जागर्तव्यमतंद्रिभ्यामद्यप्रभृतिरात्रिषु ॥ योगक्षेमौहिसीतायावर्तेतेलक्ष्मणावयोः ॥ ३ ॥ रात्रिंकथंचिदेवेमांसौमित्रेवर्तयामहे ॥ अपवर्तामहेभूमावास्तीर्यस्वयमर्जितैः ॥ ४ ॥ सतुसंविश्यमेदिन्यांमहार्हशयनोचितः ॥ इमाःसौमित्रयेरामोव्याजहारकथाःशुभाः ॥ ५ ॥ ध्रुवमद्यमहाराजोदुःखंस्वपितिलक्ष्मण ॥ कृतकामातुकैकेयीतुष्टाभवितुमर्हति ॥ ६ ॥ साहिदेवीमहाराजंकैकेयीराज्यकारणात् ॥ अपिनच्यावयेत्प्राणान्दृष्ट्वाभरतमागतम् ॥ ७ ॥ अनाथश्चहिवृद्धश्चमयाचैवविनाकृतः ॥ किंकरिष्यतिकामात्माकैकेय्यावशमागतः ॥ ८ ॥ इदंव्यसनमालोक्यराज्ञश्चमतिविभ्रमम् ॥ काममेवार्थधर्माभ्यांगरीयानितिमेमतिः ॥ ९ ॥

माभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्विपंचाशः सर्गः ॥ ५२ ॥ ॥ छ ॥ ॥ स तमिति ॥ १ ॥ आ जनपदादितिच्छेदः । आ इति यातेल्यनेन संबध्यते । अस्मज्जनपदाद्बहिर्देशेऽद्य इयं या रात्रिरायाता प्राप्ता येयं वनवासरात्रिषु प्रथमा सुमंत्रेण रहिता च तामिमां प्राप्य नोत्कंठितुं नगरादिस्मर्तुम् ॥ २ ॥ न विद्यते तंद्री ययोस्ताभ्याम् । इडभावो ह्रस्वत्वं चार्षम् । कचित्तु अनंद्राभ्यामित्येव पाठः । आवयोर्वर्तेतेऽस्मदायत्तावित्यर्थः । अप्राप्तप्राप्तिर्योगः । लब्धपरिपालनं क्षेमः ॥ ३ ॥ कथंचिदेवेमां उटजादिनिर्माणाभावात् । स्वयमर्जितैस्तृणपर्णादिभिरिति शेषः । अपवर्तामहे यथा कथंचिच्छयनं कुर्मः ॥ ४ ॥ कथाः वार्ताः ॥ ५ ॥ कृतकामा संपन्नमनोरथा ॥ ६ ॥ राज्यकारणात् महाराज्यपदाभिषेककारणात्प्राणानपि न च्यावयेत् । अपि तु च्यावयेदित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥

कामस्य गरीयस्त्वं साधयति को हीत्यादिना । अत्यज्ञोपि कः पुमान् मामिव छंदानुवर्तिनम् आज्ञाकारिणं पुत्रं प्रमदायाः कृते प्रमदातोषनिमित्तं त्यजेत् किं पुनः सर्वज्ञो राजा तस्मात्सर्वतः प्रबलः काम इति भावः ॥ १० ॥ एवं वादो हि भगवतो लक्ष्मणमतिपरीक्षार्थम् अयोध्यां त्वं प्रविशेति लक्ष्मणं प्रति वक्तुं तदाशयं ज्ञातुं च न वास्तव इति बोध्यम् ॥ ११ ॥ एकं मुख्यं सुखं अनुभवितेति शेषः । ईदृशो भविष्यति सुखमेक इति वा पाठः । एक एव राजा भविष्यतीत्यर्थ इति तीर्थः ॥ १२ ॥ यो भरतः काममनुवर्तते स यथा राजा दशरथो विपदमापन्न एवं विपदमापद्यते प्राप्नोतीत्यर्थः । अन्ये तु राजा दशरथो यथा राजत्वमापन्नस्तथा भरतो राजत्वमापद्यते इत्यर्थमाहुः ॥ १३ ॥ १४ ॥ मत्कृते मम दुःखसंपादननिमित्तम् ॥ १५ ॥ माता तवेति शेषः । काले प्रातःकाले उत्थायेत्यर्थः ॥ १६ ॥ नाथो रक्षकः ॥ १७ ॥ क्षुद्रकर्मा कैकेयी द्वेषादन्यायमाचरेत् । हि निश्चितम् तदेवाह हे धर्मज्ञ ते मम च मातरं सुमित्रां कौसल्यां चोद्दिश्य गरं विषं हि तु दद्यात् ॥ १८ ॥ जात्यंतरे जन्मांतरे । एतत्पुत्रवियोगदुःखम् ॥ १९ ॥

कोह्यविद्वानपिपुमान्प्रमदायाःकृतेत्यजेत् ॥ छंदानुवर्तिनंपुत्रंतातोमामिवलक्ष्मण ॥ १० ॥ सुखीवतसभार्यश्चभरतःकैकयीसुतः ॥ मुदितान्कोसलानेकोयोभोक्ष्यत्याधिराजवत् ॥ ११ ॥ सहिराज्यस्यसर्वस्यसुखमेकंभविष्यति ॥ तातेतुवयसातीतेमयिचारण्यमाश्रिते ॥ १२ ॥ अर्थधर्मौपरित्यज्ययःकाममनुवर्तते ॥ एवमापद्यतेक्षिप्रंराजादशरथोयथा ॥ १३ ॥ मन्येदशरथांतायममप्रव्राजनायच ॥ कैकेयीसौम्यसंप्राप्ताराज्यायभरतस्यच ॥ १४ ॥ अपीदानींतुकैकेयीसौभाग्यमदमोहिता ॥ कौसल्यांचसुमित्रांचसाप्रबाधेतमत्कृते ॥ १५ ॥ मातास्मत्कारणाद्देवीसुमित्रादुःखमावसेत् ॥ अयोध्यामितएवत्वंकालेप्रविशलक्ष्मण ॥ १६ ॥ अहमेकोगमिष्यामिसीतयासहदंडकान् ॥ अनाथायाहिनाथस्त्वंकौसल्याया भविष्यसि ॥ १७ ॥ क्षुद्रकर्माहिकैकेयीद्वेषादन्यायमाचरेत् ॥ परिदद्याद्धिधर्मज्ञगरंतेममममातरम् ॥ १८ ॥ नूनंजात्यंतरेतातस्त्रियःपुत्रैर्वियोजिताः ॥ जनन्याममसौमित्रेतदप्येतदुपस्थितम् ॥ १९ ॥ मयाहिचिरपुष्टेनदुःखसंवर्धितेनच ॥ विप्रयुज्यतकौसल्याफलकालेधिगस्तुवाम् ॥ २० ॥ मास्मसीमंतिनीकाचिज्जनयेत्पुत्रमीदृशम् ॥ सौमित्रेयोहमंबायाददाग्निशोकमनंतकम् ॥ २१ ॥ मन्येप्रीतिविशिष्टासामत्तोलक्ष्मणसारिका ॥ यत्तस्याःश्रूयतेवाक्यंशुकपादमरेर्दश ॥ २२ ॥ शोचंत्याश्चाल्पभाग्यायानकिंचिदुपकुर्वता ॥ पुत्रेणकिमपुत्रायामयाकार्यमरिंदम ॥ २३ ॥ अल्पभाग्याहिमेमाताकौसल्यारहितामया ॥ शेतेपरमदुःखार्तापतिताशोकसागरे ॥ २४ ॥ एकोह्यहमयोध्यांचपृथिवींचापिलक्ष्मण ॥ तरेयमिषुभिःक्रुद्धोननुवीर्यमकारणम् ॥ २५ ॥

फलकाले सुखानुभवकाले ॥ २० ॥ कुत इत्यतः सौमित्रे इति ॥ २१ ॥ हे लक्ष्मण अंबया पालिता कृतवचनशिक्षा च सारिका मत्तोऽस्वायां प्रीतिविशिष्टा अधिकप्रीतियुक्ता इति मन्ये । यद्यस्मात्तस्याः सारिकायाः सकाशात् एवं शत्रुनिग्रहविषयं शुकपादमरेर्दंशेति वाक्यं श्रूयते । कौसल्ययेति शेषः । अस्मत्तस्तु तदपि नेति भावः । अत्रेदं वाक्यं अरेर्बिडालस्य पादं हे शुक दशेत्यर्थकतया लोकप्रसिद्धम् अरेर्मत्पालयितुः कौसल्यायाः शत्रोः पादं दशेत्यर्थकतया रामेण योजितमिति वक्रोक्तिरलंकारः ॥ २२ ॥ अपुत्रायाः पुत्रकृतप्रयोजनरहितायाः ॥ २३ ॥ शेते इदानीमिति शेषः ॥ २४ ॥ नन्वेवं हृदये शोकस्तर्हि मया सर्वनिवारणसहायेनोक्तं राज्यमेव कुतो नांगीकृतमिति चेन्न राज्यकरणे त्वदपेक्षापि मे न किंत्वधर्मभयादेव मया तन्नांगीकृतमित्याह एकम् इत्यादि । तरेयम् निरस्तारातिकां कर्तुं शक्त इत्यर्थः । ननु वीर्यमकारणं पर

लोकहितेपि तु धर्म एवेति शेषः ॥ २५ ॥ अधर्मात् कैकेय्यै पितृदत्तवरपालनप्रतिज्ञाक्षतिरूपादधर्माद्भीतः अतएव परलोकस्य च नाशाद्भीत इति शेषः ॥ २६ ॥ अन्यच्च एतज्जातीयम् । विजने इत्यनेन स्वविलापेन लोकदुःखाभावो ध्वनितः । अश्रुपूर्णमुखत्वं नटवल्लोकव्यवहारानुसारेणेति बोध्यम् ॥ २७ ॥ २८ ॥ आयुधिनामिति च्छेदः ॥ २९ ॥ औपयिकं युक्तम् यतस्त्वत्परितापेन सीताया मम च विषादो भवति ॥ ३० ॥ अथ गंतव्यमिति यदुक्तं तदुत्तरं सीतावदहमप्यवर्जनीय इति वक्तुमात्मनः सीतासाधर्म्यमाह नचेति । त्वया हीना सीता त्वया हीनोहं च जलादुद्धृतौ मत्स्याविव न जीवावो न जीवाव इति जीवाव इत्यस्यावृत्त्या नञ्द्वयान्वयः । जीवनाभावस्य सर्वथा सत्यत्वप्रतिपादनाय द्विरुक्तिः ॥ ३१ ॥ अत्र नोत्कंठितुमर्हसीत्यस्योत्तरम् नहीति नञ्त्रयस्य नेच्छेयं नेच्छेयं नेच्छेयमिति प्रकारेण इच्छेयमिति पदावृत्त्यान्वयः । स्वर्गं चाप्यद्य प्राप्तं द्रष्टुं त्वया विना नेच्छेयं किमुत गंतुमिति भावः ॥ ३२ ॥ ततो लक्ष्मणवचनानंतरम् तत्र तस्मिन्नेव न्यग्रोधमूले समासीनौ सीतारामौ न्यग्रोधमूले स्वावस्थानदेशादतिसमीपे लक्ष्म

अधर्मभयभीतश्चपरलोकस्यचानघ ॥ तेनलक्ष्मणनाद्याहमात्मानमभिषेचये ॥ २६ ॥ एतदन्यच्चकरुणंविलप्यविजनेबहु ॥ अश्रुपूर्णमुखोदीनोनिशितूष्णीमुपाविशत् ॥ २७ ॥ विलापोपरतंरामंगतार्चिषमिवानलम् ॥ समुद्रमिवनिर्वेगमाश्वासयतलक्ष्मणः ॥ २८ ॥ ध्रुवमद्यपुरीरामअयोध्यायुधिनांवर ॥ निष्प्रभात्वयिनिष्क्रांतेगतचंद्रेवशर्वरी ॥ २९ ॥ नैतदौपयिकंरामयदिदंपरितप्यसे ॥ विषादयसिसीतांचमांचैवपुरुषर्षभ ॥ ३० ॥ नचसीतात्वयाहीनानचाहमपिराघव ॥ मुहूर्तमपिजीवावोजलान्मत्स्याविवोद्धृतौ ॥ ३१ ॥ नहितातंनशत्रुघ्नंनसुमित्रांपरंतप ॥ द्रष्टुमिच्छेयमद्याहंस्वर्गंचापित्वयाविना ॥ ३२ ॥ ततस्तत्रसुखासीनौनातिदूरेनिरीक्ष्यताम् ॥ न्यग्रोधेसुकृतांशय्यांभेजातेधर्मवत्सलौ ॥ ३३ ॥ सलक्ष्मणस्योत्तमपुष्कलंवचोनिशम्यचैवंवनवासमादरात् ॥ समाःसमस्ताविदधेपरंतपःप्रपद्यधर्मंसुचिरायराघवः ॥ ३४ ॥ ततस्तुतस्मिन्विजनेमहाबलौमहावनेराघववंशवर्धनौ ॥ नतौभयंसंभ्रममभ्युपेयतुर्यथैवसिंहौगिरिसानुगोचरौ ॥ ३५ ॥ इत्यार्षे श्रीमद्रा० वा० आ० अयोध्याकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥

तेतुतस्मिन्महावृक्षेऽषित्वारजनींशुभाम् ॥ विमलेभ्युदितेसूर्येतस्माद्देशात्प्रतस्थिरे ॥ १ ॥ यत्रभागीरथींगंगांयमुनाऽभिप्रवर्तते ॥ जग्मुस्तंदेशमुद्दिश्यविगाह्यसुमहद्वनम् ॥ २ ॥ तेभूमिभागान्विविधान्देशांश्चापिमनोहरान् ॥ अदृष्टपूर्वान्पश्यंतस्तत्रतत्रयशस्विनः ॥ ३ ॥ यथाक्षेमेणसंपश्यन्पुष्पितान्विविधान्द्रुमान् ॥ निर्वृत्तमात्रेदिवसेरामःसौमित्रिमब्रवीत् ॥ ४ ॥

णेन सुकृतां सम्यग्रचितां शय्यां भेजाते वत्सला च वत्सलश्च वत्सलौ । पुमान्स्त्रियेत्येकशेषः ॥ ३३ ॥ स रामः लक्ष्मणस्य वनवासं प्रत्यादरादुच्यमानमेवंभूतमतएवोत्तमपुष्कलमत्यंतश्रेष्ठं वचो निशम्य सुचिराय स्वयं वनवासरूपं धर्मं प्रपद्यांगीकृत्य समस्ताः समाः वनवासं प्रति विदधे लक्ष्मणस्यानुमतिमिति शेषः ॥ ३४ ॥ भयं तत्कार्यं इतस्तत ईक्षणरूपं संभ्रमं च नोपेयतुः ॥ ३५ ॥ शैलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥ ॥ छ ॥ ते इति ॥ १ ॥ गंगामभि यमुना प्रवर्तते तद्देशं प्रयागम् गंगाया अतिपुण्यत्वध्वननायैव मुक्तिः ॥ २ ॥ भूमिभागाः भूमिप्रदेशाः ते पश्यंतो जग्मुरिति संबंधः ॥ ३ ॥ यथा यथासुखम् जनानुमानशंकाभावात्क्षेमेण उपविश्योत्थायं च शनैः शनैः स्वेच्छानुरोधेन संपश्यन्समपश्यन् निर्वृत्तमात्रेऽर्ध

मंडलकाले ॥ ४ ॥ भगवतोग्नेः केतुं लिंगं धूमं पश्य यदेवमतोऽत्र मुनिः सन्निहित इति मन्ये ॥ ५ ॥ संभेदं संगमम् वारिणोर्गंगायमुनाजलयोः वारिघर्षो विजातीयवारिसंबंधः । घट्ट इतिपाठेप्येवमेव ॥ ६ ॥ येषां दारूणि भिन्नानि ते द्रुमा दृश्यंत इत्यन्वयः ॥ ७ ॥ धन्विनां विततावितिपाठे तेषां मध्ये वितती मुख्याविति यावत् संधौ अंतर्वेदिदेशे निलयम् आवासं तत्समीपदेशम् ॥ ८ ॥ आश्रमं तत्समीपवनप्रदेशम् त्रासयन् धनुर्धरत्वादिस्वरूपमात्रेण केवलं त्रासयन् भरद्वाजं तदाश्रमम् ॥ ९ ॥ आश्रमं भरद्वाजस्य दूरादेवावतस्थतुः कार्यवशनिर्गतशिष्यद्वारा विज्ञापनपूर्वकानुमतिलाभार्थमिति भावः ॥ १० ॥ सः तथालब्धानुमतिः प्रविश्य उटजमिति शेषः । संशितव्रतं तीक्ष्णव्रतम् तपसा लब्धचक्षुषं त्रैकालिकसर्वजगद्वृत्तांताभिज्ञम् ॥ ११ ॥ दृष्ट्वा अवसरं ज्ञात्वा सौमित्रिणा सार्धमभ्यवंददिति शेषः । सीतया च नमस्कारं कारित

प्रयागमभितःपश्यसौमित्रेधूममुत्तमम् ॥ अग्नेर्भगवतःकेतुंमन्येसन्निहितोमुनिः ॥ ५ ॥ नूनंप्राप्ताःस्मसंभेदंगंगायमुनयोर्वयम् ॥ तथाहिश्रूयतेशब्दो वारिणोर्वारिघर्षजः ॥ ६ ॥ दारूणिपरिभिन्नानिवनजैरुपजीविभिः ॥ छिन्नाश्चाप्याश्रमेचैतेदृश्यंतेविविधाद्रुमाः ॥ ७ ॥ धन्विनौतौसुखंगत्वालंबमाने दिवाकरे ॥ गंगायमुनयोःसंधौप्रापतुर्निलयंमुनेः ॥ ८ ॥ रामस्त्वाश्रममासाद्यत्रासयन्मृगपक्षिणः ॥ गत्वामुहूर्तमध्वानंभरद्वाजमुपागमत् ॥ ९ ॥ ततस्त्वाश्रममासाद्यमुनेर्दर्शनकांक्षिणौ ॥ सीतयानुगतौवीरौदूरादेवावतस्थतुः ॥ १० ॥ सप्रविश्यमहात्मानमृषिंशिष्यगणैर्वृतम् ॥ संशितव्रतमेकाग्रंतपसालब्धचक्षुषम् ॥ ११ ॥ हुताग्निहोत्रंदृष्ट्वैवमहाभागःकृतांजलिः ॥ रामःसौमित्रिणासार्धंसीतयाचाभ्यवादयत् ॥ १२ ॥ न्यवेदयतचात्मानं तस्मैलक्ष्मणपूर्वजः ॥ पुत्रौदशरथस्यावांभगवन्रामलक्ष्मणौ ॥ १३ ॥ भार्याममेयंकल्याणीवैदेहीजनकात्मजा ॥ मांचानुयातविजनंतपोवनमनिंदिता ॥ १४ ॥ पित्राप्रव्राज्यमानंमांसौमित्रिरनुजःप्रियः ॥ अयमन्वगमद्भ्रातावनमेवधृतव्रतः ॥ १५ ॥ पित्रानियुक्ताभगवन्प्रवेक्ष्यामतपोवनम् ॥ धर्ममेवाचरिष्यामस्तत्रमूलफलाशनाः ॥ १६ ॥ तस्यतद्वचनंश्रुत्वाराजपुत्रस्यधीमतः ॥ उपानयतधर्मात्मागामर्घ्यमुदकंततः ॥ १७ ॥ नानाविधानन्नरसान्वन्यमूलफलाश्रयान् ॥ तेभ्योददौततप्तपावासंचैवाभ्यकल्पयत् ॥ १८ ॥ मृगपक्षिभिरासीनोमुनिभिश्चसमंततः ॥ राममागतमभ्यर्च्य स्वागतेनागतंमुनिः ॥ १९ ॥ प्रतिगृह्यतुतामर्चामुपविष्टंसराघवम् ॥ भरद्वाजोब्रवीद्वाक्यंधर्मयुक्तविदंतदा ॥ २० ॥ चिरस्यखलुकाकुत्स्थपश्याम्यहमुपागतम् ॥ श्रुतंतवमयाचैवविवासनमकारणम् ॥ २१ ॥ अवकाशोविविक्तोयंमहानद्योःसमागमे ॥ पुण्यश्चरमणीयश्चवसत्विहभवान्सुखम् ॥ २२ ॥ एवमुक्तस्तुवचनंभरद्वाजेनराघवः ॥ प्रत्युवाचशुभंवाक्यंरामःसर्वहितेरतः ॥ २३ ॥

वान् तदाह अभ्यवादयत् ॥ १२ ॥ तत्र मूलफलाशना इत्यंतेन स्ववृत्तांतसहितमात्मानं भरद्वाजाय न्यवेदयत ॥ १३ ॥ १४ ॥ १५ ॥ धर्ममेव वानप्रस्थधर्ममेव मूलफलग्रहणं मांसस्याप्युपलक्षणम् ॥ १६ ॥ १७ ॥ गां मधुपर्कांगं महोक्षम् अन्नमत्रादनीयमात्रम् अतएव मूलफलाश्रयान् इति वक्ष्यति । रसाः पानीयविशेषाः वासं वासस्थानम् ॥ १८ ॥ आगतम् आगतं तेजोविशेषात् मर्यादारक्षणाय मध्ये मध्ये स्थित्वा निकटं प्राप्तं रामं मृगपक्षिभिर्मुनिभिश्च सह स्वागतेनाभ्यर्च्य मुनिभिः सह मुनिः रामं समंतत आसीनोभवदिति योजना मृगपक्षिणामर्चा च प्रदक्षिणगमनादिरूपा वर्णिता ॥ १९ ॥ २० ॥ चिरस्य चिरकालस्य इहाश्रमे आगतं त्वां पश्यामि अनेन पूर्वमपि कदाचिदागमनं ध्वनितम् । पूर्वरामावतारकालिकमागमनं मनसि निधाय वैषोक्तिः । पश्यामि चक्षुषा एवंरूपं पश्यामि यः केवलं ध्यानगोचर एव सोप्येवंभूत इत्याश्चर्यं व्यंग्यम्

अकारणं निर्निमित्तम् ॥ २१ ॥ २२ ॥ २३ ॥ इत आसन्नः एतदाश्रमाददूरवर्ती पौरजानपदो जनः मां सुदर्शं सुखेन द्रष्टुं शक्यं प्रेक्ष्य ज्ञात्वा वैदेहीं मां च प्रेक्षको जनः वैदेह्यादिदर्शनार्थी जनस्तदर्थमि ममाश्रममागमिष्यतीत्यहं मन्ये इत्यन्वयः ॥ २४ ॥ २५ ॥ यत्र यस्मिन्नाश्रमस्थाने तादृशमेकांते वर्तमानं पश्य ज्ञात्वा निर्दिशेत्यर्थः । अत्र भगवन्नित्यादिश्लोकत्रयस्य तीर्थेन वास्तवस्त्वर्थो रावणवधार्थं गूढम वतीर्णं मां मा प्रकटी कुरु । अन्यथा सर्वोंपि जनः सुदर्शं विष्णुं मां ज्ञात्वा वैदेहीं च मां लक्ष्मीं प्रेक्ष्य ज्ञात्वा तां मां च प्रेक्षकः सन्निहागमिष्यति अत एवंविधं प्रकटवासं न रोचयेऽतो यत्र वैदेही रमते तं आश्र यतीत्याश्रमं जगत्तस्य स्थानं सर्वोत्तमं मां त्वमेवैकांते पश्य मत्स्वरूपं न प्रकटयेत्यंतेन व्याख्यातम् । तदयुक्तम् । मुनिना रामस्वरूपप्रकटनस्य सर्ववेद्यं यथा भवति तथा प्राक् काप्यकरणात् अक्षरमर्यादयापि तादृशा र्थालाभाच्च पौरजानपदो जन इति पदस्वारस्याच्चेति सुधियो विभावयंतु ॥ २६ ॥ एतदिति राघवस्यार्थग्राहकं तदुक्तप्रयोजनप्रतिपादकं तद्वक्ष्यमाणमब्रवीत् ॥ २७ ॥ दशक्रोशे इति सप्तम्यंतं इतो मदाश्रमात् ॥

भगवन्नितआसन्नःपौरजानपदोजनः ॥ सुदर्शमिहमांप्रेक्ष्यमन्येहमिममाश्रमम् ॥२४ ॥ आगमिष्यतिवैदेहींमांचापिप्रेक्षकोजनः ॥ अनेनकारणेनाह मिहवासंनरोचये ॥ २५॥ एकांतेपश्यभगवन्नाश्रमस्थानमुत्तमम् ॥ रमतेयत्रवैदेहीसुखार्हाजनकात्मजा ॥ २६ ॥ एतच्छ्रुत्वाशुभंवाक्यंभरद्वाजो महामुनिः ॥ राघवस्यतुतद्वाक्यमर्थग्राहकमब्रवीत् ॥ २७ ॥ दशक्रोशइतस्तातगिरिर्यस्मिन्निवत्स्यसि ॥ महर्षिसेवितःपुण्यःपर्वतःशुभदर्शनः ॥ ॥ २८ ॥ गोलांगूलानुचरितोवानरर्क्षनिषेवितः ॥ चित्रकूटइतिख्यातोगंधमादनसन्निभः ॥ २९ ॥ यावताचित्रकूटस्यनरःशृंगाण्यवेक्षते ॥ कल्याणा निसमाधत्तेनमोहेकुरुतेमनः ॥ ३० ॥ ऋषयस्तत्रबहवोविहृत्यशरदांशतम् ॥ तपसादिवमारूढाःकपालशिरसासह ॥ ३१ ॥ प्रविविक्तमहंमन्येतंवासं भवतःसुखम् ॥ इहवावनवासायवसराममयासह ॥ ३२ ॥ सरामंसर्वकामैस्तंभरद्वाजःप्रियातिथिम् ॥ सभार्यंसहचभ्रात्राप्रतिजग्राहहर्षयन् ॥ ३३ ॥ तस्यप्रयागेरामस्यतंमहर्षिमुपेयुषः ॥ प्रपन्नारजनीपुण्याचित्राःकथयतःकथाः ॥ ३४ ॥ सीतातृतीयःकाकुत्स्थःपरिश्रांतःसुखोचितः ॥ भरद्वाजा श्रमेरम्येतांरात्रिमवसत्सुखम् ॥३५॥ प्रभातायांतुशर्वर्यांभरद्वाजमुपागमत् ॥ उवाचनरशार्दूलोमुनिंज्वलिततेजसम् ॥ ३६ ॥ शर्वरींभगवन्नद्यसत्यशी लतवाश्रमे ॥ उषिताःस्मोहवसतिमनुजानातुनोभवान् ॥३७॥ राज्यांतुतस्यांव्युष्टायांभरद्वाजोब्रवीदिदम् ॥ मधुमूलफलोपेतंचित्रकूटंव्रजेतिह ॥ ३८ ॥

॥ २८ ॥ २९ ॥ यावता यदा शृंगाण्यवेक्षते तदेति शेषः । समाधत्ते मनसा कर्तुमाशास्ते ॥ ३० ॥ तदुपपादयति ऋषय इति । बहुदिनमृतनृकपालवत् शुक्लं शिरस्तेन सह तेन विद्यमानेनोपलक्षितास्तपसा शरदां शतं विहृत्य अतिवार्धकेपि तपसा क्रीडित्वा दिवं स्वर्गमारूढाः । केचित्तु कपालशिरसेति शरीरोपलक्षणं सशरीराः स्वर्गं गता इत्याहुः । तन्न । धर्मपुत्रादीनामपि कियद्दूरमेव धर्मवैभवदर्शनायैतच्छरीरेण गमनं ततस्तन्निरासपू र्वकमेव स्वर्गगमनश्रवणादिति कतकः ॥ ३१ ॥ वनवासाय वनवासनियमसिद्धये इह वेति शिष्टाचारमात्रम् ॥ ३२ ॥ रामं तद्वजन्यां तत्र वसंतं प्रतिजग्राह अतिथियोग्यसत्कारैर्वशीकृतवान् ॥ ३३ ॥ रजनी प्रपन्ना प्राप्ता ॥३४॥३५॥३६॥ इहाश्रमे शर्वरीमुषिताः स्मः अह अथेत्यर्थे वसतिं गंतव्यां चित्रकूटरूपां तद्गमनं प्रत्यनुजानातु ॥ ३७ ॥ भरद्वाजः तथा रामेण प्रार्थित इति शेषः । व्रज इत्यनुजगाविति शेषः ॥ ३८ ॥

औपयिकमुचितं नगाः वृक्षाः ॥ ३९ ॥ ४० ॥ ४१ ॥ विचरंति इदं शत्रंतम् । सरितो नद्यः प्रस्रवणास्तनुतरजलप्रवाहास्तद्युताः प्रस्थाः सानूनि दरीपाषाणनिर्भेदः कंदरा गिरिगुहाः निर्झराः घन प्रवाहाः तान्द्रक्ष्यसीत्यन्वयः ॥ ४२ ॥ एते कुंजरादयः सीतया सार्धं चरतस्तवेत्यन्वयः ॥ ४३ ॥ कोयष्टिभष्टिट्टिभः ॥ ४४ ॥ भैर्वमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुष्पंचाशः सर्गः ॥ ५४ ॥ ॥ छ ॥ ॥ अथ भरद्वाजेन मार्गोपदेशः उषित्वेति ॥ १ ॥ औरसान्पुत्रान्पितेव तान्प्रस्थितान्प्रेक्ष्य तेषां स्वस्त्ययनं चकार चैवौपादपूरणार्थौ ॥ २ ॥ प्रचक्रमे मार्गोपदेशार्थमिति शेषः ॥ ३ ॥ पश्चान्मुखाश्रितां गंगाजलवेगाभिघातेन किंचिद्दूरं पश्चान्मुखंगतामिति तीर्थः । संधिः संगमतीर्थं संगमात्पाश्चिमप्रदेश एवाश्रितस्वप्रयुक्तव्यवहारां संगमपूर्वभागे तु

वासमौपयिकंमन्येतवराममहावल ॥ नानानगगणोपेतःकिन्नरोरगसेवितः ॥३९॥ मयूरनादाभिरतोगजराजनिषेवितः ॥ गम्यतांभवताशैलश्चित्रकूटः सविश्रुतः ॥ ४० ॥ पुण्यश्चरमणीयश्चवहुमूलफलैर्युतः ॥ तत्रकुंजरयूथानिमृगयूथानिचैवहि ॥ ४१ ॥ विचरंतिवनांतेषुतानिद्रक्ष्यसिराघव ॥ सरित्प्रस्रवणप्रस्थान्दरीकंदरनिर्झरान् ॥४२॥ चरतःसीतयासार्धंनंदिष्यतिमनस्तव ॥४३॥ प्रहृष्टकोयष्टिभकोकिलस्वनैर्विनोदयंतंचसुखंपरंशिवम् ॥ मृगैश्चमत्तैर्वहुभिश्चकुंजरैःसुरम्यमासाद्यसमावसाश्रयम् ॥ ४४ ॥ इत्यार्षेश्रीम०वा०आ० अयोध्याकांडेचतुष्पंचाशः सर्गः ॥ ५४ ॥ उषित्वारजनीं तत्रराजपुत्रावरिंदमौ ॥ महर्षिमभिवाद्याथजग्मतुस्तंगिरिंप्रति ॥ १ ॥ तेषांस्वस्त्ययनंचैवमहर्षिःसचकारह ॥ प्रस्थितान्प्रेक्ष्यतांश्चैवपितापुत्रानिवौरसान् ॥ २ ॥ ततःप्रचक्रमेवक्तुंवचनंसमहामुनिः ॥ भरद्वाजोमहातेजारामंसत्यपराक्रमम् ॥ ३ ॥ गंगायमुनयोःसंधिमादायमनुजर्षभ ॥ कालिंदीमनुगच्छेतांनदींपश्चान्मुखाश्रिताम् ॥ ४ ॥ अथासाद्यतुकालिंदींप्रतिस्रोतःसमागताम् ॥ तस्यास्तीर्थंप्रचारितंप्रकामंप्रेक्ष्यराघव ॥ ५ ॥ तत्रयूयंप्लवं कृत्वातरतांशुमतींनदीम् ॥ ततोन्यग्रोधमासाद्यमहांतंहरितच्छदम् ॥ ६ ॥ परितंवहुभिर्वृक्षैःश्यामंसिद्धोपसेवितम् ॥ तस्मिन्सीतांजलिंकृत्वाप्रयुंजीताशिषांक्रियाम् ॥ ७ ॥ समासाद्यचतंवृक्षंवसेद्वातिक्रमेतवा ॥ क्रोशमात्रंततोगत्वानीलंप्रेक्ष्यचकाननम् ॥ ८ ॥ सल्लकीवदरीमिश्रंरामवन्यैश्चयामुनैः ॥ सपंथाश्चित्रकूटस्यगतस्यवहुशोमया ॥ ९ ॥ रम्योमार्दवयुक्तश्चदावैश्चैवविवर्जितः ॥ इतिपंथानमादिश्यमहर्षिःसंन्यवर्तत ॥ १० ॥ अभिवाद्यतथेत्युक्त्वारामेणविनिवर्तितः ॥ उपावृत्तेमुनौतस्मिन्रामोलक्ष्मणमब्रवीत् ॥ ११ ॥ कृतपुण्याःस्मभद्रंतेमुनिर्यन्नोऽनुकंपते ॥ इतितौपुरुषव्याघ्रौमंत्रयित्वामनस्विनौ ॥ १२ ॥ सीतामेवाग्रतःकृत्वाकालिंदींजग्मतुर्नदीम् ॥ अथासाद्यतुकालिंदींशीघ्रस्रोतस्विनींनदीम् ॥ १३ ॥

गंगाया एव व्यवहार इति भाव इति कतकः । अन्ये तु पश्चान्मुखया गंगया श्रितां कालिंदीमनुगच्छेतामित्यर्थः अतएवाग्रे कालिंदीमासाद्येत्युक्तिरित्याहुः ॥ ४ ॥ अथ शुद्धां कालिंदीं प्रतिस्रोतो यथा भवति तथा समागतां विपरीतप्रवाहामासाद्य तस्यास्तीर्थमवतरणप्रदेशं प्रचारितं गमनागमनाभ्यामतिक्षुण्णं दृष्ट्वा ॥ ५ ॥ प्लवं तरणसाधनं अंशुमतीं सूर्यतनयाम् ॥ ६ ॥ श्यामं श्यामनामकं आशिषां क्रियां करणं प्रयुंजीत अस्माकं पुनरागमनं भवत्विति सीता वृक्षं नत्यादिना प्रार्थयेत् ॥ ७ ॥ वसेद्वातिक्रमेत वेत्येकवचनं सीताभिप्रायकं आश्रमे वसेत् अन्यथाग्रे गच्छेदित्यर्थः । ततः कालिंदीदक्षिणतीरवर्तिन्यग्रोधात् ॥ ८ ॥ यामुनैर्यमुनातीरजैः ॥ ९ ॥ मार्दवयुक्तः वालुकोपेतत्वात् कंटकपाषाणादिरहितत्वाच्च दावैर्विवर्जितः वनाग्निरहितः ॥ १० ॥ तथेत्युक्त्वा त्वदुपदिष्टमार्गेणैव गमिष्याम इत्युक्त्वा ॥ ११ ॥ १२ ॥ १३ ॥

काष्ठसंघाटः काष्ठसंघातस्तद्रूपं महाप्लवं उडुपम् ॥ १४ ॥ उशीरैर्नलदैः । वेतसैरित्यर्थ इति कतकोक्तमयुक्तम् ॥ १५ ॥ अचिंत्यां अचिंत्यप्रभावाम् ॥ १६ ॥ सः रामः ॥ १७ ॥ कठिनं खनित्रं काजं पेटकं द्वंद्वे एकवद्भावः । कठिनकं खनित्रं आजं अजचर्मापिनद्धं पेटकमित्यर्थमन्ये । संघाटं प्लवम् ॥ १८ ॥ १९ ॥ पतिः व्रतं चतुर्दशवर्षावधिकं पारयेत समापयेत् ॥ २० ॥ स्वस्ति प्रत्यागते यस्य इति संबंधः ॥ २१ ॥ उक्तमेवोपसंहरति तत इति ॥ २२ ॥ तीरजैर्वृक्षैरुपलक्षिताम् यमुनातीरसंबंधिवनात् ॥ २३ ॥ २४ ॥ २५ ॥ पर्यगच्छत्परितोगच्छत् प्रदक्षिणं चकारेति यावत् ॥ २६ ॥ विधेयामनुकूलां

चिंतामापेदिरेसद्योनदीजलतितीर्षवः ॥ तौकाष्ठसंघाटमथोचक्रतुःसुमहाप्लवम् ॥१४॥ शुष्कैर्वंन्यैःसमाकीर्णमुशीरैश्चसमावृतम् ॥ ततोवैतसशाखाश्चजंबुशाखाश्चवीर्यवान् ॥ १५ ॥ चकारलक्ष्मणश्छित्त्वासीतायाःसुखमासनम् ॥ तत्रश्रियमिवाचिंत्यांरामोदाशरथिःप्रियाम् ॥ १६ ॥ ईषत्सलज्जमानांतामध्यारोपयतप्लवम् ॥ पार्श्वेतत्रचवैदेह्यावसनेभूषणानिच ॥ १७॥ प्लवेकठिनकाजंचरामश्चक्रेसमाहितः ॥ आरोप्यसीतांप्रथमंसंघाटंपरिगृह्यतौ ॥ ॥ १८ ॥ ततःप्रतेरतुर्यत्तौप्रीतौदशरथात्मजौ ॥ कालिंदीमध्यमायातासीतात्वेनामवंदत ॥ १९ ॥ स्वस्तिदेवितरामित्वांपारयेन्मेपतिर्व्रतम् ॥ यक्ष्येत्वांगोसहस्रेणसुराघटशतेनच ॥ २० ॥ स्वस्तिप्रत्यागतेरामेपुरीमिक्ष्वाकुपालिताम् ॥ कालिंदीमथसीतातुयाचमानाकृतांजलिः ॥२१॥ तीरमेवाभिसंप्राप्तादक्षिणंवरवर्णिनी ॥ ततःप्लवेनांशुमतींशीघ्रगामूर्मिमालिनीम् ॥ २२ ॥ तीरजैर्बहुभिर्वृक्षैःसंतेरुर्यमुनांनदीम् ॥ तेषुतेप्लवमुत्सृज्यप्रस्थाययमुनावनात् ॥ २३ ॥ श्यामंन्यग्रोधमासेदुःशीतलंहरितच्छदम् ॥ न्यग्रोधंसमुपागम्यवैदेहीचाभ्यवंदत ॥ २४ ॥ नमस्तेस्तुमहावृक्षपारयेन्मेपतिर्व्रतम् ॥ कौसल्यांचैवपश्येमसुमित्रांचयशस्विनीम् ॥ २५ ॥ इतिसीतांजलिंकृत्वापर्यगच्छन्मनस्विनी ॥ अवलोक्यततःसीतामायाचंतीमनिंदिताम् ॥ २६ ॥ दयितांचविधेयांचरामोलक्ष्मणमब्रवीत् ॥ सीतामादायगच्छत्वमग्रतोभरतानुज ॥ २७ ॥ पृष्ठतोनुगमिष्यामिसायुधोद्विपदांवर ॥ यद्यत्फलंप्रार्थयतेपुष्पंवाजनकात्मजा ॥ २८ ॥ तत्तत्प्रयच्छवैदेह्यायत्रास्यारमतेमनः ॥ एकैकंपादपंगुल्मंलतांवापुष्पशालिनीम् ॥ २९ ॥ अदृष्टरूपांपश्यंतीरामंपप्रच्छसाऽबला ॥ रमणीयान्बहुविधान्पादपान्कुसुमोत्करान् ॥३०॥ सीतावचनसंरब्धआनयामासलक्ष्मणः ॥ विचित्रवालुकजलांहंससारसनादिताम् ॥ ३१ ॥ रेमेजनकराजस्यसुताप्रेक्ष्यतदानदीम् ॥ क्रोशमात्रंततोगत्वाभ्रातरौरामलक्ष्मणौ ॥ बहून्मेध्यान्मृगान्हत्वाचेरतुर्यमुनावने ॥३२॥ विहृत्यतेबर्हिणपूगनादितेशुभेवनेवारणवानरायुते ॥ समंनदीवप्रमुपेत्यसत्वरंनिवासमाजग्मुरदीनदर्शनाः ॥ ३३ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआ०अयोध्याकांडे पंचपंचाशःसर्गः ॥ ५५ ॥ अथरात्र्यांव्यतीतायामवसुप्तमनंतरम् ॥ प्रबोधयामासशनैर्लक्ष्मणंरघुपुंगवः ॥ १ ॥

सीतामायाचंतीं प्रार्थयंतीमवलोक्याब्रवीदित्यन्वयः ॥ २७ ॥ २८ ॥ २९ ॥ साऽबला सीता पप्रच्छ कोयं वृक्ष इत्यादि । रमणीयान् रम्यान् कुसुमोत्करान्पादपान् कुसुमस्तोमविशिष्टवृक्षावयवान् ॥ ३० ॥ सीतावचनेन संरब्धस्त्वरावानानयामासेत्यन्वयः । आनयामासेत्यानिन्ये इत्यर्थे आर्षम् । विचित्रेत्यादि नदीविशेषणम् ॥ ३१ ॥ नदीं यमुनाम् चेरतुः भुक्तवंतौ ॥ ३२ ॥ वप्रं तीरम् ॥ ३३ ॥ लैलमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचपंचाशः सर्गः ॥ ॥ ५५ ॥ अथावसुप्तं स्वप्रबोधानंतरमपि ईषत्सुप्तम् एतेन चतुर्दशवर्षपर्यंतं लक्ष्मणः स्वापहीनोऽनाहारश्चेति लोक

प्रवादोऽप्यास्तः ॥ १ ॥ वन्यानां शुकपिकादीनां स्वनं शृणु प्रस्थानस्य कालो जातोऽतः संप्रतिष्ठामहे गच्छामः । संप्रतीक्षामहे कालमितिपाठे प्रस्थानकालं जानीम इत्यर्थः ॥ २ ॥ समये प्रबोधसमये तंद्रां आलस्यम् ॥ ३ ॥ नद्याः कालिंद्या जलं स्पृष्ट्वा स्नानाद्यंतं नित्यकृत्यं कृत्वा ॥ ४ ॥ ५ ॥ आदीप्तानिव ज्वलितानिव मालिनः स्वैः पुष्पैर्मालावत इव स्थितान् शिशिरात्यये वसंते ॥ ६ ॥ शक्ष्याम जीवितुम् जीवनसाधनफलादिसंपत्तेः ॥ ७ ॥ आढकचतुष्टयं द्रोणस्तत्प्रमाणमधुपूर्णानि मधूनि मधुपटलानि मधुकारीभिः मधुमक्षिकाभिः नगे वृक्षे ॥ ८ ॥ नत्यूहः दात्यूहः पुष्पसंस्तरसंकटे पुष्पैः कृतेन संस्तरेण आच्छादनेन संकटे

सौमित्रेशृणुवन्यानांवल्गुव्याहरतांस्वनम् ॥ संप्रतिष्ठामहेकालःप्रस्थानस्यपरंतप ॥ २ ॥ प्रसुप्तस्तुततोभ्रात्रासमयेप्रतिबोधितः ॥ जहौनिद्रांचतंद्रांचप्रसक्तंचपरिश्रमम् ॥ ३ ॥ ततउत्थायतेसर्वेस्पृष्ट्वानद्याःशिवंजलम् ॥ पंथानमृषिभिर्जुष्टंचित्रकूटस्यतंययुः ॥ ४ ॥ ततःसंप्रस्थितःकालेरामःसौमित्रिणासह ॥ सीतांकमलपत्राक्षीमिदंवचनमब्रवीत् ॥ ५ ॥ आदीप्तानिववैदेहिसर्वतःपुष्पितान्नगान् ॥ स्वैःपुष्पैःकिंशुकान्पश्यमालिनःशिशिरात्यये ॥ ॥ ६ ॥ पश्यभल्लातकान्बिल्वान्नरैरनुपसेवितान् ॥ फलपुष्पैरवनतान्नूनंशक्ष्यामजीवितुम् ॥ ७ ॥ पश्यद्रोणप्रमाणानिलम्बमानानिलक्ष्मण ॥ मधूनिमधुकारीभिःसंभृतानिनगेनगे ॥ ८ ॥ एषक्रोशतिनत्यूहस्तंशिखीप्रतिकूजति ॥ रमणीयेवनोद्देशेपुष्पसंस्तरसंकटे ॥ ९ ॥ मातंगयूथानुसृतंपक्षिसंघानुनादितम् ॥ चित्रकूटमिमंपश्यप्रवृद्धशिखरंगिरिम् ॥ १० ॥ समभूमितलेरम्येद्रुमैर्बहुभिरावृते ॥ पुण्येरंस्यामहेतातचित्रकूटस्यकानने ॥ ११ ॥ ततस्तौपादचारेणगच्छंतौसहसीतया ॥ रम्यमासेदतुःशैलंचित्रकूटंमनोरमम् ॥ १२ ॥ तंतुपर्वतमासाद्यनानापक्षिगणायुतम् ॥ बहुमूलफलंरम्यंसंपन्नसरसोदकम् ॥ १३ ॥ मनोज्ञोयंगिरिःसौम्यनानाद्रुमलतायुतः ॥ बहुमूलफलोरम्यःस्वाजीवःप्रतिभातिमे ॥ १४ ॥ मुनयश्चमहात्मानोवसंत्यस्मिन्शिलोच्चये ॥ अयंवासोभवेत्तातवयमत्रवसेमहि ॥ १५ ॥ इतिसीताचरामश्चलक्ष्मणश्चकृतांजलिः ॥ अभिगम्याश्रमंसर्वेवाल्मीकिमभिवादयन् ॥ ॥ १६ ॥ तान्महर्षिःप्रमुदितःपूजयामासधर्मवित् ॥ आस्यतामितिचोवाचस्वागतंतंनिवेद्यच ॥ १७ ॥ ततोब्रवीन्महाबाहुर्लक्ष्मणंलक्ष्मणाग्रजः ॥ संनिवेद्ययथान्यायमात्मानमृषयेप्रभुः ॥ १८ ॥ लक्ष्मणानयदारूणिदृढानिचवराणिच ॥ कुरुष्वावसथंसौम्यवासेमेऽभिरतंमनः ॥ १९ ॥ तस्यतद्वचनंश्रुत्वासौमित्रिर्विविधान्द्रुमान् ॥ आजहारततश्चक्रेपर्णशालामरिंदमः ॥ २० ॥ तांनिष्ठितांबद्धकटांदृष्ट्वारामःसुदर्शनाम् ॥ शुश्रूषमाणमेकाग्रमिदंवचनमब्रवीत् ॥ २१ ॥

निबिडे वनोद्देशे ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ संपन्नसरसोदकं स्वादूदकसहितम् ॥ १३ ॥ सुतरां आजीवो जीवनोपायो यस्मिन् ॥ १४ ॥ अयं वासो भवेत् वासयोग्यो भवेत् ॥ १५ ॥ वाल्मीकिमभिवादयन् अभ्यवादयन् चित्रकूटे स्थित एव वाल्मीकी रामराज्यप्राप्तिसमये तमसातीरं गत इति न विरोध इति प्राञ्चः । प्राचेतसादयं वाल्मीकिरन्य एवेति तत्त्वम् ॥ १६ ॥ तं रामं प्रति स्वागतं स्वागतप्रश्नं निवेद्य विज्ञाप्य ॥ १७ ॥ आत्मानं संनिवेद्य अमुकपुत्रः अमुकहेतोरागतोस्मीत्युक्त्वा ॥ १८ ॥ १९ ॥ २० ॥ निष्ठितां अंतर्बहिः काष्ठभित्त्या सुप्रतिष्ठापिताम् बद्धकटां बद्धकवाटां छांदसो वर्णलोपः । यद्व

बद्धच्छदिषम् बद्धः कटो वर्षावारको यस्यामित्यर्थात् एकाग्रं लक्ष्मणम् ॥ २१ ॥ शालां पर्णशालाधिष्ठातृदेवतात् ॥ २२ ॥ वास्तुशमनं वास्तुशांतिः चिरजीविभिः चिरजीवित्वेच्छावद्भिः ॥ २३ ॥ पशुवधदोष शंकां वारयति कर्तव्य इति । यज्ञार्थपशुहिंसा न दोष इति भावः । शास्त्रदृष्टः शास्त्रबोधितः धर्मशास्त्रबोधितकर्तव्यत्वरूपः ॥ २४ ॥ ऐणेयं मृगमांसम् एतच्छालां एनां शालां तदधिष्ठातृशिखिपर्जन्यादिपंचाशद्देवताः ॥२५॥ अयं सौम्यो मुहूर्तः दिवसश्चायं ध्रुवसंज्ञकः ॥ २६ ॥ निष्टप्तं नितरां तप्तं छिन्नशोणितं उपरतरुधिरस्यंदम् ॥ २७ ॥ सर्वः सर्वकर्मार्हः समस्तांगः शिरःपादादिसर्वांगोपेतः श्रितः पक्वः ॥ २८ ॥ गुणवान् कर्मापेक्षितमायत्यादिगुणवान् ॥ २९ ॥ सत्रावसानिकान् यागसमाप्तिप्रयोजनान्मंत्रान् गृहीत्वा संग्रहेण वास्तुशांत्याद्यकरोत् ॥ ३० ॥ एवं गृहाधिष्ठितदेवतापूजामुक्त्वा पुनः स्नानपूर्वकं वैश्वदेवादिप्रकारमाह वैश्वदे

ऐणेयंमांसमाहृत्यशालांयक्ष्यामहेवयम् ॥ २२॥ कर्तव्यंवास्तुशमनंसौमित्रेचिरजीविभिः ॥ मृगंहत्वानयक्षिप्रंलक्ष्मणेहशुभेक्षण ॥ २३ ॥ कर्तव्यः शास्त्रदृष्टोहिविधिर्धर्ममनुस्मर ॥ भ्रातुर्वचनमाज्ञायलक्ष्मणःपरवीरहा ॥ २४ ॥ चकारचयथोक्तंहितंरामःपुनरब्रवीत् ॥ ऐणेयंश्रपयस्वैतच्छालां यक्ष्यामहेवयम् ॥ २५ ॥ त्वरसौम्यमुहूर्तोयंध्रुवश्चदिवसोह्ययम् ॥ सलक्ष्मणःकृष्णमृगंहत्वामेध्यंप्रतापवान् ॥ २६ ॥ अथचिक्षेपसौमित्रिःसमिद्धे जातवेदसि॥तत्तुपक्वंसमाज्ञायनिष्टप्तंछिन्नशोणितम् ॥ २७ ॥ लक्ष्मणःपुरुषव्याघ्रमथराघवमब्रवीत्॥अयंसर्वःसमस्तांगःश्रितःकृष्णमृगोमया ॥ २८॥ देवतादेवसंकाशयजस्वकुशलोह्यसि ॥ रामःस्नात्वातुनियतोगुणवाञ्जपकोविदः ॥ २९ ॥ संग्रहेणाकरोत्सर्वान्मंत्रान्सत्रावसानिकान्॥ इष्ट्वादेवगणा न्सर्वान्विवेशावसथंशुचिः ॥ ३० ॥ बभूवचमनोह्लादोरामस्यामिततेजसः ॥ वैश्वदेवबलिंकृत्वारौद्रंवैष्णवमेवच ॥ ३१ ॥ वास्तुसंशमनीयानिमं गलानिप्रवर्तयन् ॥ जपंचन्यायतःकृत्वास्नात्वानद्यांयथाविधि ॥ ३२ ॥ पापसंशमनंरामश्चकारबलिमुत्तमम् ॥ वेदिस्थलविधानानिचैत्यान्यायतना निच ॥ आश्रमस्यानुरूपाणिस्थापयामासराघवः ॥ ३३ ॥ तांवृक्षपर्णच्छदनांमनोज्ञांयथाप्रदेशंसुकृतांनिवाताम् ॥ वासायसर्वेविविशुःसमेताःसभां यथादेवगणाःसुधर्माम् ॥ ३४ ॥ सुरम्यमासाद्यतुचित्रकूटंनदींचतांमाल्यवतींसुतीर्थाम् ॥ ननंदहृष्टोमृगपक्षिजुष्टांजहौचदुःखंपुरविप्रवासात् ॥ ३५॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येअयोध्याकांडेषट्पंचाशःसर्गः ॥ ५६ ॥ कथयित्वातुदुःखार्तःसुमंत्रेणचिरंसह ॥ रामेदक्षिणकूलस्थे जगामस्वगृहंगुहः ॥ १ ॥ भरद्वाजाभिगमनंप्रयागेचसभाजनम् ॥ आगिरेर्गमनंतेषांतत्रस्थैरभिलक्षितम् ॥ २ ॥

वेत्यादि ॥ ३१ ॥ वास्तुसंशमनीयानि वास्तुदोषशमनार्थं मंगलानि मंगलपाठादीनि ॥ ३२ ॥ पापसंशमनं पापशमनसाधनं बलिं वैश्वदेवबलिमित्युपसंहारेण वादः वेदिस्थलानां बलिहरणवेदिस्थलानां अष्टदिग्वर्तिनां विधानानि चैत्यं गणपत्यायतनम् आयतनानि विष्ण्वादेः अनुरूपाणि सूक्ष्ममार्गेणेति यावत् ॥ ३३ ॥ वृक्षपर्णैः कृतं छदनं छादनं यस्यां ताम् ॥ ३४ ॥ मृगपक्षिजुष्टां तां नदीमासाद्य हृष्टः ॥ ३५ ॥ मेंगै मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ ॥ छ ॥ ॥ एवं रामव्यापारमुक्त्वा विसृष्टसुमंत्रव्यापारमाह कथयित्वेति । रामेदक्षिणतीरस्थे सुमंत्रेण सह दुःखार्तो गुहश्चिरं रामगुणान्कथयित्वा रामभद्रे दृष्टिपथादतिक्रांते तेन सह स्वगृहं जगाम ॥ १ ॥ भरद्वाजाभिगमनं रामादीनां भरद्वाजमुद्दिश्य गमनम् सभाजनं भरद्वाजेनेति शेषः ।

सहासनमिति पाठांतरम् । तत्रस्थैः शृंगवेरपुरस्थैर्गुहप्रेषितचारैः करणभूतैस्तन्मुखेनाभिलक्षितं ज्ञातं कृत्वागुहानुज्ञातः सुमंत्रो ययौ इत्यन्वयः । गंगोत्तरणतृतीयदिवसे भरद्वाजाश्रमात्प्रतिनिवृत्तदूतमुखात्तावत्पर्यंतं तद्वृत्तं ज्ञात्वा तद्दिन एव शृंगवेरपुरात्सुमंत्रस्य प्रतिनिवृत्तिरिति बोध्यम् । अतएव रामस्य निर्गमदिनाद्दिने षष्ठेर्धरात्रके । हा हा लक्ष्मण हा सीते हा रामेति मृतो नृप इति पाश्चं संगच्छते । दिनद्वयेन शृंगवेरपुरे रामागमनं तद्द्वितीयदिने गंगोत्तरणं तदा दिनत्रयं सुमंत्रस्य तत्र स्थितिः तत्र तृतीयदिवसे मध्याह्ने प्रयागत आगतचारेभ्यो रामवृत्तांतं लब्ध्वा ततः प्रस्थायमध्येऽवस्थानंततः षष्ठेपराह्णेऽयोध्याप्रवेशः सुमंत्रस्य तदर्धरात्रे राज्ञो मरणमिति ॥ २ ॥ अनुज्ञातः गुहेनेति शेषः ॥ ३ ॥ यत्तः सावधानः शीघ्रमतिवेगेन ॥ ४ ॥ द्वितीयेहनि शृंगवेरपुरतः प्रतिनिवृत्तिदिवसात् ॥ ५ ॥ शून्यामिव शून्यनगरीमिव ॥ ६ ॥ चिंताप्रकारमाह कच्चिदिति । नशब्दो वितर्के ॥ ७ ॥ ८ ॥ अभ्यद्रवन्सूतसंमुखमाजग्मुः ॥ ९ ॥ गंगायां शृंगवेरपुरे रामेणानुज्ञातस्तमापृच्छ्य निवृत्तोस्मि ततः परं वृत्तांतं न जानामीति शशंस ॥ १० ॥ तीर्णाः गंगामुत्तीर्य गताः

अनुज्ञातःसुमंत्रोथयोजयित्वाहयोत्तमान् ॥ अयोध्यामेवनगरींप्रययौगाढदुर्मनाः ॥ ३ ॥ सवनानिसुगंधीनिसरितश्चसरांसिच ॥ पश्यन्यत्तोययौ शीघ्रंग्रामाणिनगराणिच ॥ ४ ॥ ततःसायाह्नसमयेद्वितीयेऽहनिसारथिः ॥ अयोध्यांसमनुप्राप्यनिरानंदांददर्शह ॥ ५ ॥ सशून्यामिवनिःशब्दांदृष्ट्वा परमदुर्मनाः ॥ सुमंत्रश्चिंतयामासशोकवेगसमाहतः ॥ ६ ॥ कच्चिन्नसगजाश्वासासजनासजनाधिपा ॥ रामसंतापदुःखेनदग्धाशोकाग्निनापुरी ॥ ७ ॥ इतिचिंतापरःसूतोवाजिभिःशीघ्रयायिभिः ॥ नगरद्वारमासाद्यत्वरितःप्रविवेशह ॥ ८ ॥ सुमंत्रमभिधावंतःशतशोथसहस्रशः ॥ क्वरामइतिपृच्छंतःसूतमभ्यद्रवन्नराः ॥ ९ ॥ तेषांशशंसगंगायामहमापृच्छ्यराघवम् ॥ अनुज्ञातोनिवृत्तोस्मिधार्मिकेणमहात्मना ॥ १० ॥ तेतीर्णाइतिविज्ञायबाष्पपूर्णमुखानराः ॥ अहोधिगितिनिःश्वस्यहारामेतिविचुक्रुशुः ॥ ११ ॥ शुश्रावचवचस्तेषांवृंदंवृंदंचतिष्ठताम् ॥ हताःस्मखलुयेनेहपश्यामइतिराघवम् ॥ ॥ १२ ॥ दानयज्ञविवाहेषुसमाजेषुमहत्सुच ॥ नद्रक्ष्यामःपुनर्जातुधार्मिकंराममंतरा ॥ १३ ॥ किंसमर्थंजनस्यास्यकिंप्रियंकिंसुखावहम् ॥ इतिरामेणनगरंपित्रेवपरिपालितम् ॥ १४ ॥ वातायनगतानांचस्त्रीणामन्वंतरापणम् ॥ राममेवाभितप्तानांशुश्रावपरिदेवनाम् ॥ १५ ॥ सराजमार्गमध्येनसुमंत्रःपिहिताननः ॥ यत्रराजादशरथस्तदेवोपययौगृहम् ॥ १६ ॥ सोवतीर्यरथाच्छीघ्रंराजवेश्मप्रविश्यच ॥ कक्ष्याःसप्ताभिचक्रामममहाजनसमाकुलाः ॥ ॥ १७ ॥ हर्म्यैर्विमानैःप्रासादैरवेक्ष्याथसमागतम् ॥ हाहाकारकृतानार्योरामादर्शनकर्शिताः ॥ १८ ॥ आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः ॥ अन्योन्यमभिवीक्षंतेव्यक्तमार्ततराःस्त्रियः ॥ १९ ॥

॥ ११ ॥ वृंदंवृंदं संघशस्तिष्ठतां तेषां जनानां ये इह रथे रामं न पश्यामस्ते हताः खलु इति वचः शुश्राव ॥ १२ ॥ दानादिव्यवहारेषु धार्मिकं रामं वयमंतरा दानादिव्यवहारमध्ये जातु पुनर्न द्रक्ष्याम इति च शुश्राव ॥ १३ ॥ पित्रेव रामेण परिपालितं नगरं अस्य जनस्य किं समर्थमुचितं किं प्रियं तत्करं वस्तु किमिहामुत्र सुखावहं वस्त्विति चिंताव्याप्तं बभूवेति शेषः ॥ १४ ॥ अनु अनंतरम् वातायनगतानां स्त्रीणां राममुद्दिश्य अभितप्तानां परिदेवनां अंतरापणं आपणमध्ये गच्छन् शुश्राव ॥ १५ ॥ १६ ॥ कक्ष्या द्वाराणि ॥ १७ ॥ हाहाकारः कृतो याभिस्ताः हर्म्यं धनिकगृहम् विमानं सप्तभूमिकं गृहम् प्रासादो राजगृहम् त्रिभूमिकं गृहमित्यन्ये तदुपलक्षितामयोध्यां समागतमवेक्ष्येत्यन्वयः । यद्वा तैः करणैरवेक्ष्य तत्रारोहणपूर्वकमवेक्ष्येत्यन्वयः ॥ १८ ॥ अन्योन्यं अव्यक्तं यथा भवति तथा वीक्षंते । इति कर्तव्यतामौढ्या

दिति शेषः ॥ १९ ॥ प्रासादेभ्यः सुमंत्रस्य राजवेश्मप्रवेशं दृष्ट्वा प्रासादेभ्योवतीर्णानामित्यर्थः मंदं राजसान्निध्यान्मंदत्वम् ॥ २० ॥ किं नाम प्रतिवक्ष्यति । अतिघोरत्वान्न किमपि वक्तुं शक्यमिति भावः ॥२१॥ अथ प्रत्येकं राममातॄणां दुःखप्रलापः यथा चेति । यथा जीवं जीवनं दुःखजनकं मन्ये एवं ध्रुवं निश्चयेन सुकरं सुकरनाशं नेति मन्ये यत्र यतः पुत्रे रामे आच्छिद्य न्यायप्राप्तमभिषेकमाच्छिद्य त्यक्त्वा निर्याते स त्यपि कौसल्या जीवति मन्ये इत्येकैकव्यक्त्यपेक्षयैकवचनम् ॥ २२ ॥ सत्यरूपं परमार्थरूपं तत् स्त्रीणां वाक्यं निशामयन् शोकेन प्रदीप्त इव सन्राजगृहं विवेश । अत्र श्लोकद्वये तीर्थकतकादिव्याख्या नात्यंतं समं जसेत्युपेक्षिता ॥ २३ ॥ स इति परिद्यूनं म्लानम् ॥ २४ ॥ प्रत्यवेदयत् । विस्तरेण प्रतिपादनमग्रे भविष्यति ॥ २५ ॥ २६ ॥ आविद्धं दुखाभिहतम् ॥ २७ ॥ २८ ॥ २९ ॥ अद्येति इमं दुःखसाधनं

ततोदशरथस्त्रीणांप्रासादेभ्यस्ततस्ततः ॥ रामशोकाभितप्तानांमंदंशुश्रावजल्पितम् ॥२०॥ सहरामेणनिर्यातोविनाराममिहागतः ॥ सूतःकिंनामकौसल्यांक्रोशंतींप्रतिवक्ष्यति ॥ २१ ॥ यथाचमन्येदुर्जीवमेवंनसुकरंध्रुवम् ॥ आच्छिद्यपुत्रेनिर्यातेकौसल्यायत्रजीवति ॥ २२ ॥ सत्यरूपंतुतद्वाक्यं राजस्त्रीणांनिशामयन् ॥ प्रदीप्तइवशोकेनविवेशसहसागृहम् ॥ २३ ॥ सप्रविश्याष्टमींकक्ष्यांराजानंदीनमातुरम् ॥ पुत्रशोकपरिद्यूनमपश्यत्पांडुरे गृहे ॥ २४ ॥ अभिगम्यतमासीनंराजानमभिवाद्यच ॥ सुमंत्रोरामवचनंयथोक्तंप्रत्यवेदयत् ॥ २५ ॥ सतूष्णीमेवतच्छ्रुत्वाराजाविद्रुतमानसः ॥ मूर्च्छितोन्यपतद्भूमौरामशोकाभिपीडितः ॥ २६ ॥ ततोंतःपुरमाविद्धंमूर्च्छितेपृथिवीपतौ ॥ उच्छ्रित्यबाहूचुक्रोशनृपतौपतितेक्षितौ ॥ २७ ॥ सुमित्रयातुसहिताकौसल्यापतितंपतिम् ॥ उत्थापयामासतदावचनंचेदमब्रवीत् ॥ २८ ॥ इमंतस्यमहाभागदूतंदुष्करकारिणः ॥ वनवासादनुप्राप्तंकस्मान्नप्रतिभाषसे ॥ २९ ॥ अद्येममनयंकृत्वाव्यपत्रपसिराघव ॥ उत्तिष्ठसुकृतंतेस्तुशोकेनस्यात्सहायता ॥ ३० ॥ देवयस्याभयाद्रामंनानुपृच्छसिसारथिम् ॥ नेहतिष्ठतिकैकेयीविश्रब्धंप्रतिभाष्यताम् ॥ ३१ ॥ सातथोक्त्वामहाराजंकौसल्याशोकलालसा॥ धरण्यांनिपपाताशुबाष्पविप्लुतभाषिणी ॥३२॥ विलपंतींतथादृष्ट्वाकौसल्यांपतितांभुवि ॥ पतिंचावेक्ष्यताःसर्वाःसमंताद्रुरुदुःस्त्रियः ॥३३॥ ततस्तमंतःपुरनादमुत्थितंसमीक्ष्यवृद्धास्तरुणाश्चमानवाः ॥ स्त्रियश्चसर्वारुरुदुःसमंततःपुरंतदासीत्पुनरेवसंकुलम् ॥ ३४ ॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ प्रत्याश्वस्तोयदाराजामोहात्प्रत्यागतस्मृतिः ॥ तदाजुहावतंसूतंरामवृत्तांतकारणात् ॥ १ ॥ तदासूतोमहाराजंकृतांजलिरुपस्थितः ॥ राममेवानुशोचंतंदुःखशोकसमन्वितम् ॥ २ ॥

पुत्रप्रवासनरूपमनयं कृत्वा अद्य किं व्यपत्रपसि लज्जसे । यन्न प्रतिभाषसे तस्माच्छोकं विधूयोत्तिष्ठ । ते सुकृतं सत्यपरिपालनरूपं पुण्यमस्तु । किंच एवं शोके त्वया क्रियमाणे तव सहायता सहायसमूहः परिजनः सर्वोपि न स्यात् त्वच्छोकेन सर्वोपि नश्येदित्यर्थः ॥३०॥ कैकेयीभयान्न पृच्छामीति चेत्तत्राह देवेति । विश्रब्धं निःशंकम् ॥ ३१ ॥ विप्लुतभाषिणी गद्गदभाषिणी ॥ ३२ ॥ ३३ ॥ ३४ ॥ वैगैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ प्रत्याश्वस्त इति । प्रत्याश्वस्तः कृतोपचारः मोहात् मोहं परित्यज्य प्रत्यागतस्मृतिः प्रत्याग

तसंज्ञः प्रत्यागतः पुनरितिपाठेप्ययमेवार्थः । रामवृत्तांतकारणात् आजुहाव रामवृत्तांतं प्रष्टुम् ॥ १ ॥ २ ॥ नवग्रहं नवो नूतनो ग्रहो ग्रहणं यस्य तं द्विपमिव विनिःश्वसंतं अस्वस्थं स्वीयमध्यन स्थित कुंजरमिव ध्यायंतम् ॥ ३ ॥ रजसा मार्गरजसा परमार्तवत्परमार्तार्हं वच उवाच ॥ ४ ॥ वत्स्यति वनवासकालस्य बहुदीर्घत्वाद्भविष्यत्प्रयोगः ॥ ५ ॥ दुःखस्यानुचितोपि दुःखं प्राप्तः । शयनमुत्तमम् ॥ ६ ॥ ७ ॥ व्यालैरजगरैः । मृगैर्व्याघ्रादिभिः ॥ ८ ॥ रथादवरुह्य कथं पादैर्गतौ ॥९॥ अश्विनाविव मंदरम् । मंदरस्य कार्ष्ण्यमात्राद्वनसादृश्यम् ॥ १० ॥ ११ ॥ आसितादयो भावे निष्ठांताः । एतेन आसनादिव्यापार श्रवणेन । ययातिरिव साधुषु । स्वर्गात्पतन्ययातिर्मां साधुषु पातयेतींद्रं प्रार्थयित्वा यथा साधुषु पतितस्तद्वार्तया सुखजीवनो जातः एवं स्वर्गतुल्यात्पुत्रसंयोगाद्भ्रष्टस्य भवल्लक्षणसाधुसमागमात्पुत्रवार्ताश्रवणेन जीवि

वृद्धंपरमसंतप्तंनवग्रहमिवद्विपम् ॥ विनिःश्वसंतंध्यायंतमस्वस्थमिवकुंजरम् ॥ ३ ॥ राजातुरजसासूतंध्वस्तांगंसमुपस्थितम् ॥ अश्रुपूर्णमुखंदीनमुवाचपरमार्तवत् ॥ ४ ॥ क्वनुवत्स्यतिधर्मात्मावृक्षमूलमुपाश्रितः ॥ सोत्यंतसुखितःसूतकिमशिष्यतिराघवः ॥ ५ ॥ दुःखस्यानुचितोदुःखंसुमंत्रशयनोचितः ॥ भूमिपालात्मजोभूमौशेतेकथमनाथवत् ॥ ६ ॥ यंयांतमनुयांतिस्मपदातिरथकुंजराः ॥ सवत्स्यतिकथंरामोविजनंवनमाश्रितः ॥ ॥७॥ व्यालैर्मृगैराचरितंकृष्णसर्पनिषेवितम् ॥ कथंकुमारौवैदेह्यासार्धंवनमुपाश्रितौ ॥ ८ ॥ सुकुमार्यातपस्विन्यासुमंत्रसहसीतया ॥ राजपुत्रौकथंपादैरवरुह्यरथाद्गतौ ॥ ९ ॥ सिद्धार्थःखलुसूतत्वंयेनदृष्टौममात्मजौ ॥ वनांतंप्रविशंतौतावश्विनाविवमंदरम् ॥ १० ॥ किमुवाचवचोरामःकिमुवाचलक्ष्मणः ॥ सुमंत्रवनमासाद्यकिमुवाचचमैथिली ॥ ११ ॥ आसितंशयितंभुक्तंसूतरामस्यकीर्तय ॥ जीविष्याम्ययमेतेनययातिरिवसाधुषु ॥१२॥ इतिसूतोनरेंद्रेणचोदितःसज्जमानया ॥ उवाचवाचाराजानंसबाष्पपरिबद्धया ॥ १३ ॥ अब्रवीन्मेमहाराजधर्ममेवानुपालयन् ॥ अंजलिंराघवःकृत्वाशिरसाभिप्रणम्यच ॥ १४ ॥ सूतमद्वचनात्तस्यतातस्यविदितात्मनः ॥ शिरसावंदनीयस्यवंद्यौपादौमहात्मनः ॥ १५ ॥ सर्वमंतःपुरंवाच्यंसूतमद्वचनात्त्वया ॥ आरोग्यमविशेषेणयथार्हमभिवादनम् ॥ १६ ॥ माताचममकौसल्याकुशलंचाभिवादनम् ॥ अप्रमादंचवक्तव्याब्रूयाश्चैनामिदंवचः ॥ ॥ १७ ॥ धर्मनित्यायथाकालमग्न्यगारपराभव ॥ देविदेवस्यपादौचदेववत्परिपालय ॥ १८ ॥ अभिमानंचमानंचत्यक्त्वावर्तस्वमातृषु ॥ अनुराजानमार्यांचकैकेयीमंबकारय ॥ १९ ॥

ष्यामीति भावः ॥ १२ ॥ सज्जमानया स्खलंत्या बाष्पपरिबद्धया कंठगतबाष्पनिरुद्धया ॥ १३ ॥ हे महाराज राघवो धर्ममेवानुपालयंस्तत्पालनाद्धेतोरब्रवीद्वक्ष्यमाणं वचः । तदाह हे सूत मत्प्रतिनिधित्वेन राज्ञेऽजलिं कृत्वा तथैव शिरसा नत्वा विदितात्मनः लोके धर्मिष्ठत्वेन प्रसिद्धस्य शिरसा वंदनयोग्यस्य राज्ञः पादौ मद्वचनाद्रामोभिवादयत इत्युक्त्वा मत्प्रतिनिधित्वेन वंद्यौ ॥ १४ ॥ १५ ॥ ततः सर्वमंतःपुरं त्वया मद्वचनात् रामो वः सर्वा अविशेषेणारोग्यं पृच्छतीति वाच्यं यथार्हं यथायोग्यं तासां मदभिवादनं च वाच्यम् ॥ १६ ॥ ततो मम माता कौसल्या मद्वचनात्कुशलं प्रणामं धर्मेऽप्रमादं च वक्तव्या । किंचैनामिदं वक्ष्यमाणं विशिष्य ब्रूयाः । किं तदित्याह धर्मेत्यादि ॥ १७ ॥ १८ ॥ अभिमानः प्रधानमहिषीत्वप्रयुक्तोऽहंकारः । मानस्तत्प्रयुक्तइतरतिरस्कारकश्चित्तविकारः मातृष्वित्यस्य मदीयास्विति शेषः । अनुगतो राजा

यस्यास्तां कैकेयीं हे अंब आर्यां श्लाघ्यां कारय । धारयेतिपाठेप्ययमेवार्थः । तया सह मा विरोत्सीरित्यर्थः ॥ १९ ॥ भरते च राजवद्वृत्तिः कार्या तत्र हेतुः अज्यष्ठा अपि राजानो हि निश्चयेन पूज्या इति यावत राजधर्ममनुस्मर । अर्थज्येष्ठा हीतिपाठे अर्थेन राज्यरूपार्थेन ज्येष्ठा हि यतोऽतः पूज्या इति शेषः । इति राजधर्ममनुस्मरेति । कतकस्तु राजानमनु राज्ञः पश्चात् । आर्यां कैकेयीमभिवादयेत्यर्थः । कैकेयीमभिवादये तिपाठः कुमारेचेत्यादि प्राग्वत् । वरबलेनाधिकत्वात् भरतस्य च राजदत्तार्थवत्वेन ज्येष्ठत्वात्तयोरभिवादनमंबाया युक्तम् । तद्वैमुख्यनिवृत्तये च राजधर्ममनुस्मरेत्याह ॥ २० ॥ भरतो मद्वचनेन कुशलं वाच्यः । सर्वा सु मातृषु न्यायमनतिक्रम्य वृत्तिं वर्तस्वेति वाच्यः ॥ २१ ॥ वक्तव्यश्चेति भरत इति शेषः । राज्यस्थं प्रधानराज्यस्थम् ॥ २२ ॥ व्यपरोरुधः राज्याद्भ्रंशयेत्यर्थः । तस्यैवाज्ञाप्रवर्तनात् मदनुग्रहाय तस्यैवाज्ञां प्रवर्तयन् कुमार राज्ये जीवस्व तोषं कुरु ॥ २३ ॥ अब्रवीदित्यादिवाक्यं भरतं प्रत्यव । अब्रवीदित्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः ॥ २४ ॥ २५ ॥ अथ लक्ष्मणवाक्यमाह लक्ष्मण इति । केनेत्यादिसार्ध सप्तश्लोकास्तद्वचः ॥ २६ ॥ येन विवासनेन वयं पीडितास्तद्विवासनं राज्ञा तु कार्यं वा कार्यमिवाकार्यं कृतम् । कैकेय्या लघु शासनं आश्रुत्य प्रतिज्ञाय कृतम् । यद्वा तद्विवासनं कृतं कार्यं कर्तुं योग्यं वा भवतु

कुमारेभरतेवृत्तिर्वर्तितव्याचराजवत् ॥ अप्यज्येष्ठाहिराजानोराजधर्ममनुस्मर॥ २० ॥ भरतःकुशलंवाच्योवाच्योमद्वचनेनच॥ सर्वास्वेवयथान्यायं वृत्तिंवर्तस्वमातृषु ॥ २१ ॥ वक्तव्यश्चमहाबाहुरिक्ष्वाकुकुलनंदनः ॥ पितरंयौवराज्यस्थोराज्यस्थमनुपालय ॥ २२ ॥ अतिक्रांतवयाराजामास्मैनं व्यपरोरुधः ॥ कुमारराज्येजीवस्वतस्यैवाज्ञाप्रवर्तनात् ॥ २३ ॥ अब्रवीच्चापिमांभूयोभृशमश्रूणिवर्तयन् ॥ मातेवममातातेद्रष्टव्यापुत्रगर्धिनी ॥ ॥ २४ ॥ इत्येवंमांमहाबाहुर्ब्रुवन्नेवमहायशाः ॥ रामोराजीवपत्राक्षोभृशमश्रूण्यवर्तयत ॥२५॥ लक्ष्मणस्तुसुसंक्रुद्धोनिःश्वसन्वाक्यमब्रवीत् ॥ केनाय मपराधेनराजपुत्रोविवासितः ॥ २६ ॥ राज्ञातुखलुकैकेय्यालघुचाश्रुत्यशासनम् ॥ कृतंकार्यमकार्यंवावयंयेनाभिपीडिताः ॥ २७ ॥ यदिप्रव्राजितो रामोलोभकारणकारितम् ॥ वरदाननिमित्तंवासर्वथादुष्कृतंकृतम् ॥ २८ ॥ इदंतावद्यथाकाममीश्वरस्यकृतेकृतम् ॥ रामस्यतुपरित्यागेनहेतुमुपल क्षये ॥ २९ ॥ असमीक्ष्यसमारब्धंविरुद्धंबुद्धिलाघवात्॥ जनयिष्यतिसंक्रोशंराघवस्यविवासनम्॥ ३० ॥ अहंतावन्महाराजेपितृत्वंनोपलक्षये॥ भ्राताभर्ताचबंधुश्चपिताचममराघवः ॥ ३१ ॥ सर्वलोकप्रियंत्यक्त्वासर्वलोकहितेरतम् ॥ सर्वलोकोनुरज्येतकथंचानेनकर्मणा ॥ ३२ ॥

अकार्यमकर्तुं योग्यं वा भवतु अस्माकं तु पीडा सर्वथैवेत्यर्थः ॥ २७ ॥ उक्तमेवार्थं प्रकारांतरेणाह यदीति । यदि यद्रामः प्रव्राजितस्तल्लोभरूपेण कारणेन कैकेय्या कारितम् । यद्वा कैकेय्यै प्रतिश्रुतवरदाननि मित्तकं वा भवतु । सर्वथा दुष्कृतं कृतं अनुचितं कृतम् एतद्व्यतिरिक्तं वरयेति सुवचत्वात् । वरदानकाले विशिष्यानियोगाभावाच्च पतित्वेन भार्याशिक्षणे समग्राधिकाराच्च ॥ २८ ॥ ननु दैवप्रेरणयेदं जातमिति न दोषो राज्ञ इत्याशंक्य निरपराधपुत्रत्यागे दोषस्त्ववश्यं राज्ञ इत्याह इदमिति । ईश्वरस्य कृते ईश्वरप्रेरणायां सत्यां यथाकामं ईश्वरेच्छामनतिक्रम्येदं तावत्कृतं भवतु नाम तथापि तु रामस्य परित्यागे हेतुभूतं दोषं न पश्यामि अतः केवलं बुद्धिलाघवात् असमीक्ष्य उचितानुचितमनवेक्ष्य विरुद्धं धर्मशास्त्रविरुद्धमारब्धं रामविवासनं संक्रोशं इह परत्र च दुःखं जनयिष्यत्येव । निर्हेतुकपुत्रदारत्यागस्योपपातकेषु गणनादिति भावः ॥ २९ ॥ ३० ॥ गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ इतिवचनार्थं हृदि निधायाह अहमिति । भर्ता स्वामी पिता चेति ज्येष्ठो भ्राता पितुःसम इत्युक्तेः । वस्तुतस्तु केव लमायिकत्वाल्लक्ष्मणादिशरीराणां तेषामेवमुक्तौ न दोष इति बोध्यम् ॥ ३१ ॥ सर्वलोकप्रियं रामं त्यक्त्वा स्थिते त्वयि प्राक्सर्वलोकहिते रते संप्रति सर्वलोकाहिते अरते वा अनेन क्रूरेण कर्मणा सर्वलोकः कथमनुरज्येत ।

सर्वलोकहिते रतमितिपाठे रामविशेषणं सर्वलोकप्रियत्वे हेतुतयेति बोध्यम् ॥३२॥ कथं राजा भविष्यति पितेति शेषः । इत्येवं राजानं ब्रूहीति लक्ष्मणोऽवोचदित्यर्थः ॥३३॥ विस्मृता विस्मृतसर्वप्रयोजनेव स्थिता आश्चर्यं मन्यमानेव विष्ठिता स्थिता ॥३४॥३५॥३६॥ लक्ष्मणबाहुपालितः लक्ष्मणेन सेव्यमानः अब्रवीत् उक्तमिति शेषः । निरीक्षते राज्ञस्तव रथं मां च ॥३७॥ छंलैमानः ॥ इति श्रीरामाभिरामे श्रीरा० रामा० वा० आ० अयो० अष्टपंचाशः सर्गः ॥ ५८ ॥ एवं रामवृत्तांतमुक्त्वा प्रत्यागतिसमयानुभूतस्वदेशपुरवृत्तांतमाह मम त्विति । ममाश्वाः मन्त्रियम्याश्वाः न प्रावर्तंत यथापूर्वं रथवहनोन्मुखा नाभूवन्नित्यर्थः । जात्या अश्वस्वभाववर्णनेन स्वभावोक्तिरत्रालंकारः ॥ १ ॥ तद्दुःखं तद्वियोगदुःखम् ॥ २ ॥ बहून् रामस्य गंगोत्तरणदिनादिदिनत्रयं यद्यपि भरद्वाजाश्रमाच्चारप्रतिनिवृत्तिमतृतीयदिवस एव सुमंत्रप्रस्थानं तथापि तद्दिनेऽ

सर्वप्रजाभिरामंहिरामंप्रव्राज्यधार्मिकम् ॥ सर्वलोकविरोधेनकथंराजाभविष्यति ॥३३॥ जानकीतुमहाराजनिःश्वसंतीतपस्विनी ॥ भूतोपहतचित्तेव विष्ठिताविस्मृतास्थिता ॥ ३४ ॥ अदृष्टपूर्वव्यसनाराजपुत्रीयशस्विनी ॥ तेनदुःखेनरुदतीनैवमांकिंचिदब्रवीत् ॥ ३५ ॥ उद्वीक्षमाणाभर्तारंमुखे नपरिशुष्यता ॥ मुमोचसहसावाष्पंप्रयांतमुपवीक्ष्यसा ॥ ३६ ॥ तथैवरामोश्रुमुखःकृतांजलिःस्थितोब्रवील्लक्ष्मणबाहुपालितः ॥ तथैवसीतारुदती तपस्विनीनिरीक्षतेराजरथंतथैवमाम् ॥ ३७ ॥ इ०श्रीम०वा०आ०अ०अष्टपंचाशः सर्गः ॥५८॥ ममत्वश्वानिवृत्तस्यनप्रावर्ततवर्त्मनि ॥ उष्णमश्रु विमुंचंतोरामेसंप्रस्थितेवनम् ॥ १ ॥ उभाभ्यांराजपुत्राभ्यामथकृत्वाहमंजलिम् ॥ प्रस्थितोरथमास्थायतद्दुःखमपिधारयन् ॥ २ ॥ गुहेनसार्धंतत्रैव स्थितोस्मिदिवसान्बहून् ॥ आशयायदिमांरामःपुनःशब्दापयेदिति ॥ ३ ॥ विषयेतेमहाराजमहाव्यसनकर्शिताः ॥ अपिवृक्षाःपरिम्लानाःसपुष्पां कुरकोरकाः ॥ ४ ॥ उपतप्तोदकानद्यःपल्वलानिसरांसिच ॥ परिशुष्कपलाशानिवनान्युपवनानिच ॥ ५ ॥ नचसर्पंतिसत्त्वानिव्यालानप्रसरंति च ॥ रामशोकाभिभूतंतंनिष्कूजमिवतद्वनम् ॥ ६ ॥ लीनपुष्करपत्राश्चनद्यश्चकलुषोदकाः ॥ संतप्तपद्माःपद्मिन्योलीनमीनविहंगमाः ॥ ७ ॥ जलजानिचपुष्पाणिमाल्यानिस्थलजानिच ॥ नातिभांत्यल्पगंधीनिफलानिचयथापुरम् ॥८॥ अत्रोद्यानानिशून्यानिप्रलीनविहगानिच ॥ नचाभिरामाना रामान्पश्यामिमनुजर्षभ ॥ ९ ॥

ल्पावशिष्टदिनपर्यंतं स्थित्या बहूनित्युक्तम् । किमर्थं तत्र स्थितिस्तत्राह शब्दापयेदिति । तत्समीपचरद्गुहमनुष्यमुखेनाकारयेदित्यर्थः ॥ ३ ॥ कैकेयीनिमित्तं रामविवासनंसर्वक्षोभकरमभूदित्याह विषये ते इति । तव देशे पुष्पमपि न विकसितम् । अंकुरः शाखासु पल्लवोद्भेदः । कोरकाः पुष्पमुकुलानि तैः सहिताः वृक्षाः । अत्र सर्वत्र हेत्वंशे चोत्प्रेक्षा बोध्या ॥ ४ ॥ उपतप्तोदकाः शुष्कोदकाः । पलाशः पर्णम् ॥ ५ ॥ सत्त्वानि प्राणिनः न सर्पंति न प्रसरंतीत्यादावाहारार्थमपीति शेषः । यतस्तत्प्राणिजातं रामशोकाभिभूतम् तद्वनं मार्गस्थमत्यंतं पक्षिशब्दवन्निष्कूजमिव पक्षिशब्दरहितम् ॥ ६ ॥ लीनं संकुचितं पुष्करपत्रं नलिनीदलं यासु ताः संतप्तपद्माः शुष्कपद्माः पद्मिन्यः सरांसि । विहंगमा अत्र जलपक्षिणः ॥ ७ ॥ स्थलजानि माल्यानि पुष्पाणि यथापुरं यथापूर्वम् ॥ ८ ॥ उद्यानानि पुष्पवाटिकाः आरामान् कृत्रिमवनानि अनेन मनुष्याणां सर्वशोत्यं

तदुःखवत्त्वं कैमुतिकन्यायेनैव प्रतिपादितं बोध्यम् ॥ ९ ॥ तदेवाह प्रविशंतमिति ॥ १० ॥ देवेति संबुद्धिः । राजरथं राज्ञस्तव रथं अश्रुमुखः अभूदिति शेषः ॥ ११ ॥ १२ ॥ अव्यक्तमिति च्छेदः । रामप्रवासजनितपीडयार्ताः परस्परं सम्यक् नेक्षंते इत्यर्थः ॥ १३ ॥ अन्योन्यं शत्रूणां तथा मित्राणां उदासीनजनस्य चार्ततयार्तत्वगुणसाम्येन विशेषं नोपलक्षये इत्यन्वयः । यद्यपि रामस्य स्वतोऽमित्रासंभवः कैकेयीकुब्जयोस्तत्त्वस्य दैववशात्संभवेपि तयोरार्तत्वभावः । तथाप्यनयोः शत्रुत्वमनयोर्मित्रत्वमयमुदासीन इति भेदोनज्ञायत इति तात्पर्यन् ॥ १४ ॥ आर्तस्वरपरिम्लानविनिःश्वसितनिःस्वना दीर्घशब्दवन्निःश्वासयुक्तेति यावत ॥ १५ ॥ पुत्रहीना पुत्रवियुक्ता कौसल्येव । अनेन सर्वेषां रामे पुत्रवत्प्रेम ध्वनितम् ॥१६॥१७॥ राजा सर्वथा त्वया महदकार्यं कृतमिति सुमंत्राभिप्रायं तदीयात्युक्तिवचनैर्निर्णीयांगीकारेणोत्तरमाह कैकेय्येति ।

प्रविशंतमयोध्यायांनकश्चिदभिनंदति॥ नरारामम पश्यंतोनिःश्वसतिमुहुर्मुहुः ॥१०॥ देवराजरथंदृष्ट्वाविनाराममिहागतम्॥ दूरादश्रुमुखःसर्वोराजमार्गेगतोजनः ॥ ११ ॥ हर्म्यैर्विमानैःप्रासादैरवेक्ष्यरथमागतम् ॥ हाहाकारकृतानार्योरामादर्शनकर्शिताः ॥ १२ ॥ आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः ॥ अन्योन्यमभिवीक्षंतेव्यक्तमार्ततराःस्त्रियः ॥ १३ ॥ नामित्राणांनमित्राणामुपासीनजनस्यच ॥ अहमार्ततयाकंचिद्विशेषंनोपलक्षये ॥ १४ ॥ अप्रहृष्टमनुष्याचदीननागतुरंगमा ॥ आर्तस्वरपरिम्लानविनिःश्वसितनिःस्वना ॥ १५ ॥ निरानंदामहाराजरामप्रव्राजनातुरा ॥ कौसल्यापुत्रहीनेवअयोध्याप्रतिभातिमे ॥ १६ ॥ सूतस्यवचनंश्रुत्वावाचापरमदीनया ॥ बाष्पोपहतयासूतमिदंवचनमब्रवीत् ॥ १७ ॥ कैकेय्याविनियुक्तेनपापाभिजनभावया ॥ मयानमंत्रकुशलैर्वृद्धैःसहसमर्थितम्॥ १८॥ नसुहृद्भिर्नचामात्यैर्मंत्रयित्वासनैगमैः ॥मयायमर्थःसंमोहात्स्त्रीहेतोःसहसाकृतः ॥ ॥ १९ ॥ भवितव्यतयानूनमिदंवाव्यसनंमहत् ॥ कुलस्यास्यविनाशायप्राप्तंसूतयदृच्छया ॥ २० ॥ सूतयद्यस्तितेकिंचिन्मयापिसुकृतंकृतम् ॥ त्वंप्रापयाशुमांरामंप्राणाःसंत्वरयंतिमाम् ॥ २१ ॥ यद्यद्यापिममैवाज्ञानिवर्तयतुराघवम् ॥ नशक्ष्यामिविनारामंमुहूर्तमपिजीवितुम् ॥ २२ ॥ अथवापिमहाबाहुर्गतोदूरंभविष्यति ॥ मामेवरथमारोप्यशीघ्रंरामायदर्शय ॥ २३ ॥ वृत्तदंष्ट्रोमहेष्वासःक्वासौलक्ष्मणपूर्वजः ॥ यदिजीवामिसाध्वेनंपश्येयंसीतयासह ॥ २४ ॥

पापाभिजनभावया पापकुलजया पापदेशजया पापाभिप्रायया च । कुलेप्यभिजनो जन्मभूम्यामित्यमरः । विनियुक्तेन रामप्रव्राजने इति शेषः । नसमर्थितं न विचारितम् ॥ १८ ॥ नञोऽनेकधाप्रयोगः शोकेन चित्तवैक्लव्यात् । सहसा झटित्यविचारेणैव ॥ १९ ॥ भवितव्यतया अवश्यमापकदुरदृष्टवशात् । वा इति वैशब्दसमानार्थम् । यदृच्छया दैवेच्छया ॥ २० ॥ यदि यदि वा अथवेति यावत् । सुकृतं प्रियम् संत्वरयंति निष्क्रमितुमिच्छंतीति यावत ॥ २१ ॥ मदाज्ञया भवान्गत्वा राघवं निवर्तयतु । ननु भरताय त्वया राज्यस्य दत्तत्वात्त्वदाज्ञया मया कथं गंतव्यं तत्राह अद्यापि ममैवाज्ञा यावद्भरतागमनमिति भावः । निवृत्तौ हेतुर्नेत्यादि ॥ २२ ॥ पुनरपि रामनिवर्तनस्याशक्यत्वात्स्वनयनमेवाह अथवापीति ॥ २३ ॥ वृत्तदंष्ट्रः कुंदकुड्मलाकारदंष्ट्रः । यदि जीवामीति तत्समीपगमनपर्यंतमपि

जीवने संदेह इति भावः ॥ २४ ॥ अतो न्वित्यतःशब्दार्थमाह इमामिति । एवमत्यंतसन्निहितमरणकाले । उत्तमलोकस्वस्मरणाभ्याससंपादनाय भगवतात्मवियोगः पितुः संपादित इति तत्त्वम् ॥ २५ ॥ ॥ २६ ॥ अर्पितचेतनः गतचेतनः सुदुष्पारं शोकसागरमवगाढः प्रविष्टः अब्रवीत् । शोकं सागरत्वेनावर्णयदित्यर्थः ॥ २७ ॥ तदाह रामेत्यादि । रामशोकरूपो महानावेगो वैपुल्यं यस्य सीताविरह रूपपारगतः तत्पारसंबंधः । श्वसितरूप ऊर्मियुक्तो महावर्तो यस्य सः बाष्पवेगरूपनदीजलैः आविलः ॥ २८ ॥ शोचितॄणां प्रकीर्णकेशा एव शैवालं यत्र कैकेय्येव वडवामुखं यत्र ॥ २९ ॥ अश्रुवेगप्रभवः षष्ठीतत्पुरुषः अश्रुवेगोत्पादक इत्यर्थः । नृशंसायाः कैकेय्याः वर एव वेला मर्यादा यस्य । यतः रामप्रव्राजनसमुद्रात्कालकूटमिव जातेति कतकः । अन्ये तु रामप्रव्राजनमेव आयतम् विस्तारो

अतोनुकिंदुःखतरंयोहमिक्ष्वाकुनंदनम् ॥ इमामवस्थामापन्नोनेहपश्यामिराघवम् ॥ २५ ॥ हारामरामानुजहाहावैदेहितपस्विनि ॥ नमांजानीतदुःखे नम्रियमाणमनाथवत् ॥ २६ ॥ सतेनराजादुःखेनभृशमर्पितचेतनः ॥ अवगाढःसुदुष्पारंशोकसागरमब्रवीत ॥ २७ ॥ रामशोकमहावेगःसीताविरहपारगः ॥ श्वसितोर्मिमहावर्तोबाष्पवेगजलाविलः ॥२८॥ बाहुविक्षेपमीनोसौविक्रंदितमहास्वनः ॥ प्रकीर्णकेशशैवालःकैकेयीवडवामुखः ॥२९॥ ममाश्रुवेगप्रभवःकुब्जावाक्यमहाग्रहः ॥ वरवेलोनृशंसायारामप्रव्राजनायतः ॥ ३० ॥ यस्मिन्बतनिमग्नोहंकौसल्येराघवंविना ॥ दुस्तरोजीवतादेविमयायंशोकसागरः ॥३१॥ अशोभनंयोहमिहाद्यराघवंदिदृक्षमाणोनलभेसलक्ष्मणम् ॥ इतीवराजाविलपन्महायशाःपपाततूर्णंशयनेसमूर्च्छितः ॥ ॥ ३२ ॥ इतिविलपतिपार्थिवेप्रनष्टेकरुणतरंद्विगुणंचरामहेतोः ॥ वचनमनुनिशम्यतस्यदेवीभयमगमत्पुनरेवराममाता ॥ ३३ ॥ इत्यार्षे श्रीम० वा० आ० अयोध्याकांडे एकोनषष्टितमःसर्गः ॥ ५९ ॥ ततोभूतोपसृष्टेववेपमानापुनःपुनः ॥ धरण्यांगतसत्त्वेवकौसल्यासूतमब्रवीत् ॥१॥ नयमांयत्रकाकुत्स्थःसीतायत्रचलक्ष्मणः ॥ तान्विनाक्षणमप्यद्यजीवितुंनोत्सहेह्यहम् ॥ २ ॥ निवर्तयरथंशीघ्रंदंडकान्नयमामपि ॥ अथतान्नानुगच्छामिगमिष्यामियमक्षयम् ॥ ३ ॥ बाष्पवेगोपहतयासवाचासज्जमानया ॥ इदमाश्वासयन्देवींसूतःप्रांजलिरब्रवीत् ॥ ४ ॥ त्यजशोकंचमोहंचसंभ्रमंदुःखजंतथा ॥ व्यवधूयचसंतापंवनेवत्स्यतिराघवः ॥५॥ लक्ष्मणश्चापिरामस्यपादौपरिचरन्वने ॥ आराधयतिधर्मज्ञःपरलोकंजितेंद्रियः ॥६॥ विजनेपिवनेसीतावासंप्राप्यगृहेष्विव ॥ विस्रंभंलभतेऽभीतारामेविन्यस्तमानसा ॥७॥ नास्यादैन्यंकृतंकिंचित्सुसूक्ष्ममपिलक्ष्यते ॥ उचितेवप्रवासानांवैदेहीप्रतिभातिमे ॥८॥ नगरोपवनंगत्वायथास्मरमतेपुरा ॥ तथैवरमतेसीतानिर्जनेषुवनेष्वपि ॥ ९ ॥

यस्य स रामप्रव्राजनायत इत्यर्थमाहुः ॥ ३० ॥ ३१ ॥ दिदृक्षमाणो यद्राघवं द्रष्टुं न लभे तदशोभनम् मम महत्पापम् पापजन्यं तददर्शनमिति यावत् ॥ ३२ ॥ रामहेतो रिति विलपति पार्थिवे प्रणष्टे मूर्च्छिते सति तस्य करुणतरम् वचनम् निशम्य देवी द्विगुणं भयमुपागमत् भर्तृवियोगदुःखस्यापारस्य संभावनया ॥ ३३ ॥ ॐॐमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥ तत इति । भूतोपसृष्टेव भूताविष्टेव गतसत्त्वेव गतासुरिव धरण्यां पतितेति शेषः ॥ १ ॥ २ ॥ अथ यदि ॥ ३ ॥ ४ ॥ संभ्रममावेगम् ॥ ५ ॥ रामस्य पादौ परिचरन् परलोकमाराधयति संपादयति ॥ ६ ॥ अभीतेति च्छेदः । विस्रंभः प्रणयः ॥ ७ ॥ कृतं वनवासकृतम् दैन्यमित्यर्थः ॥ ८ ॥ ९ ॥

बालेवेति । दुःखापरिज्ञानेनोपमा तस्या देहाद्यभिमानाभावान्नाधिजम् दुःखमिति भावः।अबालचंद्रेत्यादि च्छेदः ।रामारामे रामस्वरूपे आरामे इत्यर्थः । भिन्नपदे वा॥ १० ॥रामहीनाऽयोध्या यथा वनम् तथा भवेदि त्यन्वयः ॥ ११ ॥ नदीनां गतिं रामनगरवृक्षांश्च दृष्ट्वा रामं वा लक्ष्मणं वा पृच्छति पृष्ट्वा च जानाति । अयोध्यातः क्रोशमात्रे विद्यमानं विहारं संश्रिता यथा रमते स्म तथैव वनेपि अरमतेत्यर्थः ॥ १२ ॥ ॥ १३ ॥ इदमेव सीतायाः संबंधि इदमेव मस्तुतवृत्तांतजातमेव । स्मरामि कैकेयीसंश्रितं कैकेयीमुद्दिश्य मवृत्तम् । सहसा हठेन सीतया तस्याः परमदुःखकारिणीत्वात् मां मति यत्तद्विषयम् जल्पम् वाक्यमुपजल्पित मुक्तम् तदिदानीम् मां न मतिभात्येव । इत्येवंरूपेण ममादात् पर्युपस्थितम् मुखान्निर्गतम् कैकेयीविषयम् सीतावाक्यम् ध्वंसयित्वा व्यवहारांतरेणानुक्तमायमिव कृत्वा देव्याः कौसल्याया ह्लादनम् मधुरम् वचनम् सूतोऽब्रवीदित्याह कविः ॥ १४ ॥ १५ ॥ १६ ॥ वदान्यायाः दात्र्याः । वल्गुवाचश्चवदान्यो वल्गुवागपि । न विकंपते म्लानतां न याति ॥ १७ ॥ अलक्तरसवर्जितावपि तद्रसरक्तकांती स्वभावरक्ततया पद्मको

बालेवरमतेसीताबालचंद्रनिभानना ॥रामारामेह्यदीनात्माविजनेपिवनेसती ॥ १० ॥ तद्गतंहृदयंयस्यास्तदधीनंचजीवितम् ॥ अयोध्याहिभवेदस्यारामहीनातथावनम् ॥ ११ ॥ परिपृच्छतिवैदेहीग्रामांश्चनगराणिच ॥ गतिंदृष्ट्वानदीनांचपादपान्विविधानपि ॥ १२ ॥ रामंवालक्ष्मणंवापिदृष्ट्वाजानातिजानकी ॥ अयोध्याक्रोशमात्रेतुविहारमिवसंश्रिता ॥ १३ ॥ इदमेवस्मराम्यस्याःसहसैवोपजल्पितम् ॥ कैकेयीसंश्रितंजल्पंनेदानींप्रतिभातिमाम् ॥ १४ ॥ ध्वंसयित्वातुतद्वाक्यंप्रमादात्पर्युपस्थितम् ॥ ह्लादनंवचनंसूतोदेव्यामधुरमब्रवीत् ॥ १५ ॥ अध्वनावातवेगेनसंभ्रमेणातपेनच ॥ नविगच्छतिवैदेह्याश्चंद्रांशुसदृशीप्रभा ॥१६॥ सदृशंशतपत्रस्यपूर्णचंद्रोपमप्रभम् ॥ वदनंतद्वदान्यायावैदेह्यानविकंपते ॥१७॥ अलक्तरसरक्ताभावलक्तरसवर्जितौ ॥ अद्यापिचरणौतस्याःपद्मकोशसमप्रभौ ॥१८॥ नूपुरोत्कृष्टलीलेवखेलंगच्छतिभामिनी ॥ इदानीमपिवैदेहीतद्रागान्यस्तभूषणा॥१९॥ गजंवावीक्ष्यसिंहंवाव्याघ्रंवावनमाश्रिता ॥ नाहारयतिसंत्रासंबाहूरामस्यसंश्रिता ॥२०॥ नशोच्यास्तेनचात्मातेशोच्योनापिजनाधिपः ॥ इदंहिचरितंलोकेप्रतिष्ठास्यतिशाश्वतम् ॥२१॥ विधूयशोकंपरिहृष्टमानसामहर्षियातेपथिसुव्यवस्थिता ॥ वनेरतावन्यफलाशनाःपितुःशुभांप्रतिज्ञांप्रतिपालयंतिते ॥२२॥ तथापिसूतेनसुयुक्तवादिनानिवार्यमाणासुतशोककर्शिता ॥ नचैवदेवीविररामकूजितात्प्रियेतिपुत्रेतिचराघवेतिच॥२३॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे षष्टितमः सर्गः ॥ ६० ॥ वनंगतेधर्मरतेरामेरमयतांवरे ॥ कौसल्यारुदतीचार्ताभर्तारमिदमब्रवीत् ॥ १ ॥

शसमप्रभौ नतु मार्गगतिप्रयुक्तकाठिन्यभाजौ ॥ १८ ॥ नूपुरेणोत्कृष्टा तिरस्कृता हंसादिलीला यया सेव खेलं विलासयुतम् । अर्शआद्यजंतम् । तद्रागेण भर्तृप्रीतियोजकभूषणानुरागेणान्यस्तानि अत्यक्तानि भूषणानि यया ॥ १९ ॥ नाहारयति न करोति न संप्राप्नोतीति वा ॥ २० ॥ अतस्ते रामादयो न शोच्याः ते तवाप्यतएव न शोच्यः । न राजापि तेषां सुखश्रवणेन तस्यापि जीवनसंभवान् । इतोपि न शोच्यांश इत्याह इदं हीत्यादि । प्राप्तमपि राज्यं महाबलोपि परित्यज्य पितृवचनमपालयदित्येवमादिरामचरितम् । स्वार्थमुद्दिश्य भर्तारमपि परित्यज्यातिघोरम् कृतवती । कैकेयीत्यादि इदं रामचरितम् शाश्वतम् प्रतिष्ठास्यती त्यनेन तन्नामवदेवास्य सुस्थिरत्वम् वदता तस्येश्वरत्वम् ध्वनितम् । नह्यन्यचारित्रम् शाश्वतम् प्रतिष्ठाम् लभते ॥ २१ ॥ महर्षिभिर्याते ॥ २२ ॥ तथापीति । सूतेन निवार्यमाणा सूतोक्तं गृहीतवत्यपि न विरराम दुःखमावल्यादिति शेषः ॥ २३ ॥ गैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षष्टितमः सर्गः ॥ ६० ॥ परमपतिव्रतापि कौसल्या दुःखातिशया

त्पूर्वं जानत्यपि त्रेताश्रयव्यवहारवल्लोकाश्रयेण राजानमुपालभते वनामिति । आर्ता खिन्ना । स्वार्तेतिपाठे सुतरामार्ता । रुदतीवेतिपाठे इव एवार्थे । यद्वा उक्तार्थध्वननायेव शब्दः ॥ १ ॥ अनुक्रोशादिविशिष्टो राघव इति ते महद्यशः प्रथितमिति योजना ॥ २ ॥ अथापि हे नरवरश्रेष्ठ सीतया सह तौ पुत्रौ कथं त्यक्तवानिति शेषः । अथतान् शोचति दुःखितावित्यादि दुखं प्राप्तावित्यर्थः ॥ ३ ॥ तरुणी अतिक्रांतकौमारा । श्यामा प्राप्तयौवना ॥४॥ सूपदंशान्वितं शोभनव्यंजनसहितम् । नैवारम् नीवारसंबंधिनम् ॥५॥६॥ महेंद्रध्वजसंकाशः तद्वत्सर्वलोकस्योत्सवदः ॥ ७ ॥ पद्मवर्णं पद्मदलवर्णं पद्मनिःश्वासं पद्मपत्रगंधिनिःश्वासम् ॥८॥ यद्यतस्तमपश्यंत्या इदं सहस्रधा न फलति न विशीर्यतेऽतस्तद्वज्रसारं वज्रवत्कठिनम् । नूनमित्युत्प्रेक्षा ॥९॥ त्वया व्यपोह्य वृद्धैरविचार्य यत्करुणं शोचनीयं कर्मानुचितवरदानरूपं कृतं तेन हेतुना मम बांधवाः कैकेय्या निरस्ताः सुखार्हाः अपि कृपणाः संतो वने धावंति । यद्वा व्यपोह्य अनादृत्य राज्यात्प्रभ्रंश्य वा त्वया निरस्ता वने परिधावंतीति यत्तदकरुणं क्रूरं कर्म त्वया कृतमित्यर्थः ॥१०॥ ननु चतुर्दशवर्षानंतरं तव पुत्रस्यैव राज्यं

यद्यपित्रिषुलोकेषुप्रथितंतेमहद्यशः ॥ सानुक्रोशोवदान्यश्चप्रियवादीचराघवः ॥ २ ॥ कथंनरवरश्रेष्ठपुत्रौतौसहसीतया ॥ दुःखितौसुखसंवृद्धौकथंदुःखं सहिष्यतः ॥ ३ ॥ सानूनंतरुणीश्यामासुकुमारीसुखोचिता ॥ कथमुष्णंचशीतंचमैथिलीविसहिष्यते ॥ ४ ॥ भुक्त्वाशनंविशालाक्षीसूपदंशान्वितं शुभम् ॥ वन्यंनैवारमाहारंकथंसीतोपभोक्ष्यते ॥ ५ ॥ गीतवादित्रनिर्घोषंश्रुत्वाशुभसमन्विता ॥ कथंक्रव्यादसिंहानांशब्दंश्रोष्यत्यशोभनम् ॥ ६ ॥ महेंद्रध्वजसंकाशःक्वनुशेतेमहाभुजः ॥ भुजंपरिघसंकाशमुपाधायमहाबलः ॥ ७ ॥ पद्मवर्णंसुकेशांतंपद्मनिःश्वासमुत्तमम् ॥ कदाद्रक्ष्यामिरामस्यवदनं पुष्करेक्षणम् ॥ ८ ॥ वज्रसारमयंनूनंहृदयंमेनसंशयः ॥ अपश्यंत्यानतंयद्वैफलतीदंसहस्रधा ॥ ९ ॥ यत्त्वयाकरुणंकर्मव्यपोह्यममबांधवाः ॥ निरस्ताः परिधावंतिसुखार्हाःकृपणावने ॥ १० ॥ यदिपंचदशेवर्षेराघवःपुनरेष्यति ॥ जह्याद्राज्यंचकोशंचभरतोनोपलक्ष्यते ॥ ११ ॥ भोजयंतिकिलश्राद्धे केचित्स्वानेवबांधवान् ॥ ततःपश्चात्समीक्षंतेकृतकार्याद्विजोत्तमान् ॥ १२ ॥ तत्रयेगुणवंतश्चविद्वांसश्चद्विजातयः ॥ नपश्चात्तेऽभिमन्यंतेसुधामपिसुरोपमाः ॥ १३ ॥ ब्राह्मणेष्वपिवृत्तेषुभुक्तशेषंद्विजोत्तमाः ॥ नाभ्युपेतुमलंप्राज्ञाःशृंगच्छेदमिवर्षभाः ॥ १४ ॥ एवंकनीयसाभ्रात्राभुक्तंराज्यंविशांपते ॥ भ्राताज्येष्ठोवरिष्ठश्चकिमर्थंनावमन्यते ॥ १५ ॥

भविष्यति तत्राह यदीति । तावत्पर्यंतं वने जीवनमेव न संभाव्यते तथापि यदि जीवन्पुनरेष्यति तथापि भरतो राज्यं जह्यादिति नोपलक्ष्यते न संभाव्यत इत्यर्थः ॥ ११ ॥ अथापि कदाचिद्भरतो जह्यात्तथापि रामस्तन्नांगीकरिष्यतीति सदृष्टांतमाह भोजयंतीत्यादिना । केचिच्छ्राद्धकर्तारो वयोगुणैरधिकान्विप्रान् श्राद्धे निमन्त्र्य वयोगुणहीनानपि स्वान्बान्धवान् श्राद्धे भोजयंति । ततः कृतकार्याः संतो निमंत्रितान् द्विजर्षभान् पश्चादिष्टपंक्तौ भोजयितुं समीक्षंते विचारयंति॥ १२॥ तत्र निमंत्रितेषु ये गुणवंतः श्राद्धापेक्षितगुणवंतस्ते सुरोपमाः पश्चात्पंक्तौ सुधासदृशं स्वाद्वन्नमपिनानुमन्यंते॥ १३ ॥ननु कुतो नानुमन्यंते ब्राह्मणशेषभोजने शूद्रशेषभोजनवद्दोषाभावादत आह ब्राह्मणेष्वपीति ब्राह्मणेषु वृत्तेषु भुक्तवत्सु तद्भुक्तशेषमपि यतो द्विजोत्तमाः प्राज्ञाश्चातस्तद्भोजनमभ्युपेतुमंगीकर्तुम् नालम् अवमाननात् । ऋषभाः स्वशृंगच्छेदमिव । शृंगस्थानीयो हि सतां मानः ॥ १४ ॥दार्ष्टांतिके योजयति एवमिति । कनीयोभुक्तत्वात् स्वयं ज्येष्ठो वयसा गुणैश्च वरिष्ठः संस्तेन त्यक्तमपि राज्यं किमर्थं नावमंस्यते सर्वथा तिरस्करिष्यत्येवेत्यर्थः मद्दर्शनानुरोधेनागतो मज्जीवनपर्यंतमेव स्थास्यति तूष्णीं न पुना राज्यं करि

ष्यतीत्यर्थः ॥ १५ ॥ परेणाहृतम् क्रोष्ट्रादिखादितशेषं परलीढं परास्वादितम् न मन्यते न मंस्यते ॥ १६ ॥ एतानि हविरादीनि एकत्राध्वरे विनियोगाद्यातयामानि पुनरध्वरे अध्वरांतरे विनियुक्तानि न कुर्वंति । जीर्णंच परिभुक्तं च यातयाममिदं द्वयमित्यमरः । यद्यपि मंत्राः कृष्णाजिनं दर्भा इति स्मृत्या कुशानां यातयामत्वदोषो नेत्युक्तं तथापि तज्जीर्णत्वरूपयातयामत्वदोषाभावपरम् न तु विनियुक्तविनियोगपरम् । ब्रह्मयज्ञेषु येदर्भा विनियुक्ता न तेऽन्यत इत्यनेन विनियुक्तविनियोगनिषेधस्य न्यायेन सर्वत्र लाभादित्याहुः ॥ १७ ॥ तथैवान्येनात्तमुपभुक्तपूर्वमिदं राज्यम् रामोभिमंतुमंगीकर्तुम् नालम् । नष्टसोमम् भुक्तसोमं अध्वरं तत्स्थम् सोमरूपं हविः ॥ १८ ॥ वालधेः पुच्छस्य ॥ १९ ॥ शार्दूलवद्बलवत्त्वमेव दर्शयति नैतस्येति । सहिताः सुरासुरैः सहिताः लोकाः मतियोधाः । किमर्थं तर्हि मामाक्रम्य राज्यं न कृतवांस्तत्राह अधर्मं त्विति । अधर्मं तु मत्वा न तथा कृतवानिति भावः । नन्वेवं तस्य धर्मनिष्ठता कथमत आह इहेति । यो धर्मात्मा इह मनुष्यलोके लोकं धर्मेण योजयेत् एवं धर्मप्रवर्तकस्य तस्य धर्मनिष्ठता अनुक्तिसिद्धैवेति भावः । यद्वा तुरप्यर्थे । अधर्ममधर्मप्रवृत्तमपि लोकं दंडादिना यो धर्मेण योजयेत्स कथं स्वयमधर्मं कुर्यादित्यर्थः ॥ २० ॥ रामेऽशक्तिशंकापि नेत्याह नन्विति । कांचनैः कांचनभूषितपुंखैः युगांते युगांतकाले ईश्वर इव भूतानि समुद्रांश्च निर्दहेत्

नपरेणाहृतंभक्ष्यंव्याघ्रःखादितुमिच्छति ॥ एवमेवनरव्याघ्रःपरलीढंनमन्यते ॥ १६ ॥ हविराज्यंपुरोडाशःकुशायूपाश्चखादिराः ॥ नैतानियातयामानिकुर्वंतिपुनरध्वरे ॥ १७ ॥ तथाह्यात्तमिदंराज्यंहृतसारांसुरामिव ॥ नाभिमंतुमलंरामोनष्टसोममिवाध्वरम् ॥ १८ ॥ नैवंविधमसत्कारंराघवोमर्षयिष्यति ॥ बलवानिवशार्दूलोवालधेरभिमर्शनम् ॥ १९ ॥ नैतस्यसहितालोकाभयंकुर्युर्महामृधे ॥ अधर्मंत्विहधर्मात्मालोकंधर्मेणयोजयेत् ॥ २० ॥ नन्वसौकांचनैर्बाणैर्महावीर्योमहाभुजः ॥ युगांतइवभूतानिसागरानपिनिर्दहेत् ॥ २१ ॥ सताहृशःसिंहबलोवृषभाक्षोनरर्षभः ॥ स्वयमेवहतःपित्राजलजेनात्मजोयथा ॥ २२ ॥ द्विजातिचरितोधर्मःशास्त्रेहृष्टःसनातनैः ॥ यदितेधर्मनिरतेत्वयापुत्रेविवासिते ॥ २३ ॥ गतिरेकापतिर्नार्याद्वितीयागतिरात्मजः ॥ तृतीयाज्ञातयोराजंश्चतुर्थीनैवविद्यते ॥ २४ ॥ तत्रत्वंममनैवासिरामश्चवनमाहितः ॥ नवनंगंतुमिच्छामिसर्वथाहाहतात्वया ॥ २५ ॥ हतंत्वयाराष्ट्रमिदंसराज्यंहताःस्मसर्वाःसहमंत्रिभिश्च ॥ हतासपुत्रास्मिहताश्चपौराःसुतश्चभार्याचतवप्रहृष्टौ ॥ २६ ॥ इमांगिरंदारुणशब्दसंहितांनिशम्यरामेतिमुमोहदुःखितः ॥ ततःसशोकंप्रविवेशपार्थिवःस्वदुष्कृतंचापिपुनस्तथास्मरत् ॥ २७ ॥ इत्यार्षे श्रीम॰वा॰आ॰अयोध्याकांडे एकषष्टितमःसर्गः ॥ ६१ ॥ एवंतुक्रुद्धयाराजारामभमात्रासशोकया ॥ श्रावितःपरुषंवाक्यंचिंतयामासदुःखितः ॥ १ ॥

नाशयेच्छोषयेच्च ॥ २१ ॥ पित्रा त्वया स्वयमेव स्वपुत्रो हतः भ्रष्टराज्यः कृतः । जलजेन मत्स्येन स यथात्मजानेव भक्षयति तद्वदित्यर्थः ॥ २२ ॥ एवं चाहमेव हतेत्याह श्लोकत्रयेण द्विजातीत्यादि । सनातनैर्ऋषिभिः शास्त्रे वेदे दृष्टस्त्रैवर्णिकैर्द्विजातिभिश्चरितो धर्मो यदि ते स सत्यः स्यात्तर्हि पुत्रो न विवासितः स्यादिति शेषः । एवं धर्ममुपेक्ष्य धर्मनिरते पुत्रे त्वया विवासिते सति ॥ २३ ॥ शास्त्रेणोच्यमानः स्त्रियास्तिस्रो गतयः तत्र तासु प्रथमगतिभूतस्त्वं मम नास्येव सपत्नीवशत्वात् । नास्तीतिपाठे आर्षत्वं बोध्यम् । द्वितीयगतिभूतो रामश्च वनमाहितः वनं प्रति प्रहितस्त्वया न च तत्प्राप्तये वनं गंतुमिच्छामि सपत्निकात्वात् । तृतीया ज्ञातयस्त्वसंनिहिताः तस्मात्सर्वथा हता त्वया ॥ २४ ॥ २५ ॥ सुतश्च भार्या च भरतकैकेय्यौ प्रहृष्टौ ॥ २६ ॥ दारुणशब्दसंहितां दारुणशब्दयुक्तां स्वदुष्कृतं वक्ष्यमाणम् ॥ २७ ॥ संरंभानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकषष्टितमः सर्गः ॥ ६१ ॥ एवं कौसल्याक्रूरवचोभीतस्य राज्ञोंजलिपर्यंतं दैन्यं दृष्ट्वा राजान

मनुनयति एवं त्विति । चिंतयामास अनयोच्यमानं सर्वं सत्यं किमिह कर्तव्यमिति विचारयामास ॥ १ ॥ मोहव्याकुलितेंद्रियो जात इति शेषः ॥ २ ॥ चिंतामुपागमत् पुत्रविश्लेषजदुःखसाधनं कर्म ममेति चिंतामाप ॥ ३ ॥ प्रत्यभात्प्रतिभातं दुष्कृतं कर्म मुनिकुमारवधरूपम् । शब्दमेव लक्ष्यदेशस्थं प्राप्य विध्यतीति शब्दवेधी ॥ ४ ॥ अमना दुर्मनाः । तेन शोकेन मुनिकुमारवधजेन शोकेन ॥ ५ ॥ अवाङ्मुखःस्वकृततदप्रियस्मरणाल्ल ज्जया ॥ ६ ॥ परेष्वपि शत्रुष्वपि ॥ ७ ॥ विमृशमानानां जानतीनाम् ॥ ८ ॥ दृष्टौलोकेपरावरावुत्कर्षापकर्षौ यया सा । अपकृष्टा अपि भर्तारमेवं न वदंतीति भावः ॥ ९ ॥ प्रणाली प्रासादादौ जलनिर्गममार्गः । नवोदकं वर्षजलम् ॥ १० ॥ स्वानुनयाय राज्ञा कृतं राज्ञोंजलिं पाणिभ्यां गृहीत्वा पद्ममिव मूर्ध्नि बद्ध्वा रुदती त्रस्ता अहमपि कैकेयीवत् पतिशोककारिवचनादिकं प्राप्तवतीति भीता संभ्रमाद्राज्ञि अत्यादरात् वच आह ॥ ११ ॥ भूमौ निपतितास्मि साष्टांगं प्रणमामि हे देव त्वया याचिताहं अनुनीताहं हतास्मि ईश्वरेप्सितवैपरीत्यस्यान्याय्यत्वात् अतस्त्वया क्षंतव्या न किंतु दासीवत्प्रहर्तव्येत्यर्थः ॥ १२ ॥ एषा हि लोके सा

## चिंतयित्वासचनृपोमोहव्याकुलितेंद्रियः ॥ अथदीर्घेणकालेनसंज्ञामापपरंतपः ॥ २ ॥ ससंज्ञामुपलभ्यैवदीर्घमुष्णंचनिःश्वसन् ॥ कौसल्यांपार्श्वतो दृष्ट्वाततश्चिंतामुपागमत् ॥ ३ ॥ तस्यचिंतयमानस्यप्रत्यभात्कर्मदुष्कृतम् ॥ यदनेनकृतंपूर्वमज्ञानाच्छब्दवेधिना ॥४॥ अमनास्तेनशोकेनरामशो केनचप्रभुः ॥ द्वाभ्यामपिमहाराजःशोकाभ्यामभितप्यते ॥ ५ ॥ दह्यमानस्तुशोकाभ्यांकौसल्यामाहदुःखितः ॥ वेपमानोंजलिंकृत्वाप्रसादार्थ मवाङ्मुखः ॥ ६ ॥ प्रसादयेत्वांकौसल्येरचितोयंमयांजलिः ॥ वत्सलाचानृशंसाचत्वंहिनित्यंपरेष्वपि ॥ ७ ॥ भर्तातुखलुनारीणांगुणवान्निर्गुणो पिवा ॥ धर्मंविमृशमानानांप्रत्यक्षंदेविदैवतम् ॥ ८ ॥ सात्वंधर्मपरानित्यंदृष्टलोकपरावरा ॥ नार्हसेविप्रियंवक्तुंदुःखितापिसुदुःखितम् ॥९॥ तद्वाक्यं करुणंराज्ञःश्रुत्वादीनस्यभाषितम् ॥ कौसल्याव्यसृजद्बाष्पंप्रणालीवनवोदकम् ॥ १० ॥ सामूर्ध्निबद्ध्वारुदतीराज्ञःपद्ममिवांजलिम् ॥ संभ्रमादब्रवी त्त्रस्तात्वरमाणाक्षरंवचः ॥११॥ प्रसीदशिरसायाचेभूमौनिपतितास्मिते ॥ याचितास्मिहतादेवक्षंतव्याहंनहित्वया ॥१२॥ नैषाहिसास्त्रीभवतिश्लाघनी येनधीमता ॥ उभयोर्लोकयोर्लोकेपत्यायासंप्रसाद्यते ॥ १३ ॥ जानामिधर्मंधर्मज्ञत्वांजानेसत्यवादिनम् ॥ पुत्रशोकार्तयातत्तुमयाकिमपिभाषितम् ॥ ॥ १४ ॥ शोकोनाशयतेधैर्यंशोकोनाशयतेश्रुतम् ॥ शोकोनाशयतेसर्वंनास्तिशोकसमोरिपुः ॥ १५ ॥ शक्यमापतितःसोढुंप्रहारोरिपुहस्ततः ॥ सो ढुमापतितःशोकःसुसूक्ष्मोपिनशक्यते ॥ १६ ॥ वनवासायरामस्यपंचरात्रोत्रगण्यते ॥ यःशोकहतहर्षायाःपंचवर्षोपमोमम ॥ १७ ॥

स्त्री कुलस्त्री न भवति या उभयोर्लोकयोः श्लाघनीयेन पत्या संप्रसाद्यते ॥ १३ ॥ किमपि अत्यनुचितं भाषितं तत्क्षंतव्यमिति शेषः ॥ १४ ॥ शोक एवमाद्यनुचितव्यवहारप्रवर्तक इत्याह शोक इत्यादि ॥ १५ ॥ सुसूक्ष्मोपि शोकः सोढुं न शक्यते किं पुनर्महानिति शेषः ॥ १६ ॥ स्वशोकस्य महत्त्वं दर्शयति वनेति । पंचरात्र इत्यस्य गत इति शेषः । तत्र प्रथमा तमसातीरे । द्वितीया गुहपुरे । तृतीया गंगातीरे । चतुर्थी प्रयागे । पंचमी यमुनातीरे । षष्ठी चित्रकूटे । तद्दिने सुमंत्रस्यायोध्याप्राप्तिः । अतएवाग्रे षष्ठीति दशरथोक्तिः । अथवाद्यदिने संपूर्णदिनं स्वनिकटे स्थितत्वेन स्वदेशे तमसातीरे एव स्थितत्वेन तद्दिनमगणय्य कौस ल्ययाद्य पंचरात्रो गण्यत इत्युक्तम् । राजा तु तमपि गृहीत्वा षष्ठीति वक्ष्यति । यत्तु कतकेन निर्गमनात्सप्तरात्रः सुमंत्रागमनदिने इत्युक्तम् तदज्ञानात् । गंगोत्तरणदिनात्तृतीयेहनि चारप्रतिनिवृत्त्युत्तरं सायाह्ने

तद्दिने एव सुमंत्रप्रस्थानस्य वक्तुं शक्यत्वात् । रामस्य निर्गमदिनाद्दिने षष्ठे इति पूर्वलिखितपाठाविरोधाच्च ॥ १७ ॥ नदीनां वेगेन समुद्रसलिलमिवत्युत्प्रेक्षामात्रं न तु तस्य तेन वृद्धिरि त्याहुः । परे तु महत्समुद्रसलिलं वेगेन चंद्रोदयवृद्धिवेगेन नदीनां ह्रदि तटद्वयांतरे यथा वर्धत इत्यर्थः । समुद्रगामिनदीनां चंद्रोदयकालिकसमुद्रवृद्ध्या वृद्धेः कियद्दूरमप्याप्युपलंभादित्याहुः ॥ १८ ॥ शुभं वचः अतिदुःखिताया अपि पत्यनुनयपरत्वाद्वचसः शुभत्वम् ॥ १९ ॥ २० ॥ नरेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्विषष्टितमःसर्गः ॥ ६२ ॥ प्रतिबुद्ध इति ॥ १ ॥ वासवोपमं तं दशरथम् उपसर्गः उपप्लवः शोक इति यावत् । आसुरं तमः असुरस्य राहोः संबंधि तम आवरणशक्तिर्यथा सूर्यमावृणोति तद्वत् ॥ २ ॥ आत्मनो दुष्कृतं स्मृत्वाऽसितापांगीं विवक्षुरभवत् ॥ ३ ॥ षष्ठीं रजनीं प्राप्योति शेषः ॥ ४ ॥ ५ ॥ तदेव लभते तल्लभत एवेति च ॥ ६ ॥ अर्थानामैहिकानां कर्मणां पारलौकिकानामारंभे आरंभकाले फलं प्रति यो गुरुलाघवं गौरवं लाघवं च

तंहिचिंतयमानायाःशोकोयंह्रदिवर्धते ॥ नदीनामिववेगेनसमुद्रसलिलंमहत् ॥ १८ ॥ एवंहिकथयंत्यास्तुकौसल्यायाःशुभंवचः ॥ मंदरश्मिरभूत्सूर्यो रजनीचाभ्यवर्तत ॥१९॥ अथप्रह्लादितोवाक्यैर्देव्याकौसल्ययानृपः ॥ शोकेनचसमाक्रांतोनिद्रायावशमेयिवान् ॥२०॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये अयोध्याकांडे द्विषष्टितमः सर्गः ॥६२॥ प्रतिबुद्धोमुहूर्तेनशोकोपहतचेतनः ॥ अथराजादशरथःसचिंतामभ्यपद्यत ॥१॥ रामलक्ष्मणयोश्चैवविवासाद्वासवोपमम् ॥ आपेदेउपसर्गस्तंतमःसूर्यमिवासुरम् ॥ २ ॥ सभार्येहिगतेरामेकौसल्यांकोसलेश्वरः ॥ विवक्षुरसितापांगींस्मृत्वा दुष्कृतमात्मनः ॥ ३ ॥ सराजारजनींषष्ठींरामेप्रव्राजितेवनम् ॥ अर्धरात्रेदशरथःसोऽस्मरद्दुष्कृतंकृतम् ॥ ४ ॥ सराजापुत्रशोकार्तःस्मृत्वादुष्कृतमात्मनः ॥ कौसल्यांपुत्रशोकार्तामिदंवचनमब्रवीत् ॥ ५ ॥ यदाचरतिकल्याणिशुभंवायदिवाशुभम् ॥ तदेवलभतेभद्रेकर्ताकर्मजमात्मनः ॥ ६ ॥ गुरुलाघवमर्थानामारंभेकर्मणांफलम् ॥ दोषंवायोनजानातिसबालइतिहोच्यते ॥ ७ ॥ कश्चिदाम्रवणंछित्त्वापलाशांश्चनिषिंचति ॥ पुष्पंदृष्ट्वाफले गृध्नुःसशोचतिफलागमे ॥ ८ ॥ अविज्ञायफलंयोहिकर्मत्वेवानुधावति ॥ सशोचेत्फलवेलायांयथाकिंशुकसेवकः ॥ ९ ॥ सोहमाम्रवणंछित्त्वापलाशांश्चन्यषेचयम् ॥ रामंफलागमेत्यक्त्वापश्चाच्छोचामिदुर्मतिः ॥ १० ॥ लब्धशब्देनकौसल्येकुमारेणधनुष्मता ॥ कुमारःशब्दवेधीतिमयापापमिदं कृतम् ॥ ११ ॥ तदिदंमेऽनुसंप्राप्तंदेविदुःखंस्वयंकृतम् ॥ संमोहादिहबालेनयथास्याद्भक्षितंविषम् ॥ १२ ॥

दोषं वाऽदोषं गुणं वा न जानाति केनचिदल्पेन हत्यादिना महदनिष्टं केनचिन्महतापि यागादिनाऽल्पफलं तथा इदं कर्माल्पदोषं बहुगुणं इदं च बहुदोषमल्पगुणमित्येवं न जानाति स बाल इत्युच्यते न स्तनंधयः ॥ ७ ॥ छित्त्वा पलाशोपरोधनिवृत्त्यर्थमिति शेषः । पुष्पं दृष्ट्वा पुष्पमहत्त्वंदृष्ट्वाफलमहत्त्वमनुमायेत्यर्थः । गृध्नुः लिप्सुः शोचति स्वतर्कितफलाभावात् ॥ ८ ॥ दृष्टांतं दार्ष्टांतिके योजयति अविज्ञायेति । फलं क्रियमाणकर्मणो भावि फलं अविज्ञायाविचार्य कर्मत्वेव कर्मैव तु लौकिकं वैदिकं वा अनुधावति अनुतिष्ठति शोचेत्तप्येदित्यर्थः ॥ ९ ॥ अस्तु प्रकृते किं तत्राह सोहमिति । फलागमे रामकृतस्वोत्तरक्रियया लभ्यपारलौकिकफलप्राप्तिसमये रामाभिषेकजसुखप्राप्तिसमये वा ॥ १० ॥ यदाचरतीत्याद्युक्तविषयमाह लब्धेति । कुमारोऽजकुमारः शब्दवेधीति लब्धः शब्दो येन तादृशेन मया शब्दवेधीत्येवंलब्धकीर्तिनेति यावत् कुमारेण जीवत्पितृकेण इदं वक्ष्यमाणम् ॥ ११ ॥ तदिदं तत्फलमिदं दुःखम् अज्ञानकृतकर्मणः कथमेवं फलं तत्राह संमोहादिति । आज्ञानेनापि भक्षितं विषं यथा बालमपि हंति तद्वदित्यर्थः ॥ १२ ॥

शब्दवेध्यं शब्दवेधित्वमित्यर्थे आर्षम् । इदं फलम् एवं दुष्टफलमिति मयाप्यविज्ञातम् । अय भावः यथान्यः प्राकृतः पुरुषः पलाशैः पलाशपुष्पैर्मोहितस्तत्फलं न जानाति तथाऽहमपि शब्दवेधित्वं लोकपूज्यं ज्ञात्वा तत्फलमेवं क्रूरमिति न ज्ञातवानिति । कतकस्तु यथा पलाशपुष्पैरन्यो मोहितो भवति तथाहं कैकेयीवाक्यैरिति शेषः । अथाज्ञानकृतस्यापि विषपानवदावश्यकं फलमित्युपसंहरति एवमिति । शब्दवेधित्वरूपं सामर्थ्यं प्राप्य यत्कर्माविज्ञातं सत्कृतं तस्य कर्मण इदं फलं कैकेयीवाक्यकृतो मोह इत्यर्थ इत्याह ॥ १३ ॥ तादृशदुष्कर्मप्राप्तिः कदेत्यत्राह देवीति ॥ १४ ॥ प्रावृषं वर्णयति अपास्येति । भौमान् रसानपास्य निरस्य शोषयित्वेति यावत् तेनैव हेतुना जगत्तप्त्वा परेताचरितां अतएव भीमां दिशं दक्षिणां दिशं आचरते गच्छति । अविशत इति पाठांतरम् । उपास्येतिपाठेपि सेवित्वेत्यर्थद्वारा शोषयित्वेत्यत्रैव पर्यवसानं बोध्यम् ॥ १५ ॥ सारंगा हरिणाश्चातका वा ॥ १६ ॥ क्लिन्नाः पक्षोत्तराः पक्षोपरिभागा येषाम् अतएव कृच्छ्रात्कृच्छ्राद्याचरणनिमित्तं स्नाता इव वृष्टियुक्तवातेन कंपिताग्रान् ॥ १७ ॥ पतमानेन पतता मत्ताः सारंग

यथान्यःपुरुषःकश्चित्पलाशैर्मोहितोभवेत् ॥ एवंमयाप्यविज्ञातंशब्दवेध्यमिदंफलम् ॥ १३ ॥ देव्यनूढात्वमभवोयुवराजोभवाम्यहम् ॥ ततःप्रावृडनुप्राताममकामविवर्धिनी ॥ १४ ॥ अपास्यहिरसान्भौमांस्तप्त्वाचजगदंशुभिः ॥ परेताचरितांभीमांरविराचरतेदिशम् ॥ १५ ॥ उष्णमंतर्दधेसद्यः स्निग्धाददृशिरेघनाः ॥ ततोजहृषिरेसर्वेभेकसारंगबर्हिणः ॥१६॥ क्लिन्नपक्षोत्तराःस्नाताःकृच्छ्रादिवपतत्रिणः ॥ वृष्टिवातावधूताग्रान्पादपानभिपेदिरे॥ ॥ १७ ॥ पतितेनांभसाच्छन्नःपतमानेनचासकृत् ॥ आबभौमत्तसारंगस्तोयराशिरिवाचलः ॥ १८ ॥ पांडुरारुणवर्णानिस्रोतांसिविमलान्यपि ॥ सुस्रुवुर्गिरिधातुभ्यःसभस्मानिभुजंगवत ॥ १९ ॥ तस्मिन्नतिसुखेकालेधनुष्मानिषुमान्रथी ॥ व्यायामकृतसंकल्पःसरयूमन्वगांनदीम् ॥ २० ॥ निपानेमहिषंरात्रौगजंवाभ्यागतंमृगम् ॥ अन्यद्वाश्वापदंकिंचिज्जिघांसुरजितेंद्रियः ॥ २१ ॥ अथांधकारेत्वश्रौषंजलेकुंभस्यपूर्यतः ॥ अचक्षुर्विषयेघोषंवारणस्येवनर्दतः ॥ २२ ॥ ततोहंशरमुद्धृत्यदीप्तमाशीविषोपमम् ॥ शब्दंप्रतिगजप्रेप्सुरभिलक्ष्यमपातयम् ॥ २३ ॥ अमुंचंनिशितंबाणमहमाशीविषोपमम् ॥ तत्रवागुषसिव्यक्ताप्रादुरासीद्वनौकसः ॥ २४ ॥ हाहेतिपततस्तोयेबाणाद्व्यथितमर्मणः ॥ तस्मिन्निपतितेभूमौवागभूत्तत्रमानुषी ॥ ॥ २५ ॥ कथमस्मद्विधेशस्त्रंनिपतेच्चतपस्विनि ॥ प्रविविक्तांनदींरात्रावुदाहारोहमागतः ॥ २६ ॥ इषुणाभिहतःकेनकस्यवापकृतंमया ॥ ऋषेर्हिन्यस्तदंडस्यवनेवन्येनजीवतः ॥ २७ ॥ कथंनुशस्त्रेणवधोमद्विधस्यविधीयते ॥ जटाभारधरस्यैववल्कलाजिनवाससः ॥ २८ ॥ कोवधेनममार्थी स्यात्किंवास्यापकृतंमया ॥ एवंनिष्फलमारब्धंकेवलानर्थसंहितम् ॥ २९ ॥

यस्मिंस्तादृशोऽचलस्तोयराशिरिवाबभौ ॥ १८ ॥ गिरिधातुभ्यः धातुरूपहेतुभ्यः । कचित्पांडुरधातुसंयोगात्पांडुराणि कचिदरुणधातुसंयोगादरुणानि कचित्सभस्मानि भस्मसंबंधाद्भुजंगवत कुटिलानीति शेषः ॥ १९ ॥ व्यायामो मृगयाविहारः ॥ २० ॥ जिघांसुरन्वगामित्यन्वयः ॥ २१ ॥ पूर्यतः शत्रंतत्वमार्षम् ॥ २२ ॥ शब्दं प्रतिशब्दं लक्ष्यं कृत्वा यद्वा शब्दावगतवेध्यं प्रति । गजप्रेप्सुर्गजरूपं वध्यं प्राप्तुमिच्छुः तज्जिघांसया शरमुद्धृत्य अभिलक्ष्यं संमुखमपातयम् ॥ २३ ॥ यत्र निशितं बाणममुंचं तत्र वनौकस आरण्यकमनुष्यस्य बाणाभिहतमर्मणस्तोये पततो हाहेतिव्यक्ता वागुषसि प्रादुरासीत् । तत्र भूमौ तस्मिन्निपतिते सति मानुषी वागभूत् ॥ २४ ॥ २५ ॥ तामेव वाणीमाह कथमित्यादि । अस्मद्विधे तपस्विन्यजातशत्रौ । प्रविविक्तां निर्जनाम् । रात्रौ अपररात्रे । उदाहार इत्यत्र दीर्घ आर्षः ॥ २६ ॥ न्यस्तदंडस्य त्यक्तपरपीडस्य ॥ २७ ॥ जटाभारेत्यादिना हंतुरपि लाभाभावः सूचितः ॥ २८ ॥ मम वधेन कः पुमानर्थी मनुष्यमांसेन न कस्यापि प्रयोजनमिति व्यर्थ एव

मद्वध इति भावः । परलोकनाशकत्वात्केवलानर्थसंहितम् इहलोके च फलरहितम् ॥ २९ ॥ कश्चित् इह लोके परत्र वा यथा गुरुतल्पगम् न साधु मन्यंते एवमेनं न मन्येत कोपीत्यर्थः । आत्मन इमं जीवितक्षयम् नानुशोचामि ॥ ३० ॥ ३१ ॥ एकेनेषुणावृद्धौ हतौ अहं च हतः । मद्वधेन तयोर्वधस्य सिद्धत्वादित्याशयः ॥ ३२ ॥ अकृतात्मना अजितेंद्रियेण । धर्मानुकांक्षिणः धर्मप्रतीक्षाशीलस्य मम करा भ्यामित्यन्वयः ॥ ३३ ॥ करुणं करुणाजनकं वचः श्रुत्वा विलपतः । लालप्यत इतिपाठे तु यङन्ताच्छता आर्षः ॥ ३४ ॥ ३५ ॥ प्रविद्धम् ध्वस्तम् पर्यस्तं वा ॥ ३६ ॥ त्रस्तम् नेत्राभ्यामुद्वीक्ष्य ॥ ३७॥ ॥ ३८ ॥ ३९ ॥ जनयिता पिता नूनं निश्चयेन मत्प्रतीक्षौ ॥ ४० ॥ कृतामाशाम् पुत्रो जलमानेष्यतीत्येवंरूपाम ममागमनात् तृष्णां पिपासां च चिरं धारयिष्यतः तपसः श्रुतस्य वेत्यत्र मामकस्य पित्र्युस्य

नकश्चित्साधुमन्येतयथैवगुरुतल्पगम् ॥ नेमंतथानुशोचामिजीवितक्षयमात्मनः ॥ ३० ॥ मातरंपितरंचोभावनुशोचामिमद्वधे ॥ तदेतन्मिथुनंवृद्धं चिरकालभृतंमया ॥ ३१ ॥ मयिपंचत्वमापन्नेकांवृत्तिंवर्तयिष्यति ॥ वृद्धौचमातापितरावहंचैकेषुणाहतः ॥ ३२ ॥ केनस्मनिहताःसर्वेसुबालेनाकृतात्मना ॥ तांगिरंकरुणंश्रुत्वाममधर्मानुकांक्षिणः ॥ ३३ ॥ कराभ्यांसशरंचापंव्यथितस्यापतद्भुवि ॥ तस्याहंकरुणांश्रुत्वाऋषेर्विलपतोनिशि॥३४॥ संभ्रांतःशोकवेगेनभृशमासंविचेतनः ॥ तंदेशमहमागम्यदीनसत्त्वःसुदुर्मनाः ॥ ३५ ॥ अपश्यमिषुणातीरेसरय्वास्तापसंहतम् ॥ अवकीर्णजटाभारं प्रविद्धकलशोदकम् ॥ ३६ ॥ पांसुशोणितदिग्धांगंशयानंशल्यवेधितम् ॥ समामुद्वीक्ष्यनेत्राभ्यांत्रस्तमस्वस्थचेतनम् ॥ ३७ ॥ इत्युवाचवचःक्रूरंदिधक्षन्निवतेजसा ॥ किंतवापकृतंराजन्वनेनिवसतामया ॥ ३८ ॥ जिहीर्षुरंभोगुर्वर्थंयदहंताडितस्त्वया ॥ एकेनखलुबाणेनमर्मण्यभिहतेमयि ॥ ३९॥ द्वावंधौनिहतौवृद्धौमाताजनयिताचमे ॥ तौनूनंदुर्बलावंधौमत्प्रतीक्षौपिपासितौ ॥ ४० ॥ चिरमाशांकृतांकष्टांतृष्णांसंधारयिष्यतः ॥ ननूनंतपसोवास्तिफलयोगःश्रुतस्यवा ॥ ४१ ॥ पितायन्मांनजानीतेशयानंपतितंभुवि ॥ जानन्नपिचकिंकुर्यादशक्तश्चापरिक्रमः ॥४२॥ भिद्यमानमिवाशक्तिस्त्रातुमन्योनगोनगम् ॥ पितुस्त्वमेवमेगत्वाशीघ्रमाचक्ष्वराघव ॥ ४३ ॥ नत्वामनुदहेत्क्रुद्धोवनमग्निरिवैधितः ॥ इयमेकपदीराजन्यतोमेपितुराश्रमः ॥ ॥ ४४ ॥ तंप्रसादयगत्वात्वंनत्वासंकुपितःशपेत् ॥ विशल्यंकुरुमांराजन्मर्ममेनिशितःशरः ॥ ४५ ॥ रुणद्धिमृदुसोत्सेधंतीरमंबुरयोयथा ॥ सशल्यःक्लिश्यतेप्राणैर्विशल्योविनशिष्यति ॥ ४६ ॥ इतिमामविशच्चिंतातस्यशल्यापकर्षणे ॥ दुःखितस्यचदीनस्यममशोकातुरस्यच ॥ ४७ ॥ लक्षयामाससऋषिश्चिंतांमुनिसुतस्तदा ॥ ताम्यमानंसमांकृच्छ्रादुवाचपरमार्थवित् ॥ ४८ ॥

चेति शेषः । फलयोगः फलसंबंधो नास्ति ॥ ४१ ॥ अपरिक्रमःसंचाराक्षमोंऽधत्वात् ॥ ४२ ॥ अशक्तिर्वृद्धत्वात् वातादिना भिद्यमानं नगं वृक्षमन्यो नग इव मा त्रातुमशक्तः त्वमेव मे पितुराचक्ष्व ॥ ४३ ॥ एधितो वर्धितो वह्निर्वनमिव त्वां न दहेत मा दहत्वित्यर्थः । एकपदी सूक्ष्ममार्गः यतः यया एकपद्या मे पितुराश्रमः प्राप्यते सेयमेकपदी ॥ ४४ ॥ तया गत्वा तथा प्रसादय यथा त्वां न शपेत् । मां विशल्यं कुरु ते शरो मे मर्म ॥ ४५ ॥ रुणद्धि पीडयति मृदु सिकतामायम सोत्सेधमुच्छ्रायवत्तीरम् अंबुरयो नदीवेग इव ॥ ४६ ॥ ४७ ॥ मम चिंतां लक्षयामासेत्यन्वयः । एवं चिंतया शल्यं नोद्धरतीति

ज्ञातवान् परमार्थः शाश्वतत्त्वम् । परमार्तवदितिपाठे परमार्तः सन्नित्यर्थः ॥ ४८ ॥ क्षयं शक्तिक्षयं गतः प्राप्तः । विवृत्तांगः परावृत्तनेत्रः । अचेष्टमानः हस्तपादादिचेष्टारहितः । धैर्येण शोकं संस्तभ्याहं स्थिरचित्तो भवामि मम चित्ते मोहो नास्तीत्यर्थः । अतो यद्वदामि तत् शृणु इत्यर्थः । शोकं ब्रह्महत्याप्तिजम् । संस्तभ्य त्यक्त्वा अधुना स्थिरचित्तो भवेतिपाठांतरेऽर्थः ॥ ४९ ॥ अतो ब्रह्महत्याकृतं तापं भयम् । अर्थर्चादिस्तापशब्दः ॥ ५० ॥ वैश्येन शूद्रायां जातः करणः इतीव इत्येवंजातीयकम् ॥ ५१ ॥ आताम्यमानस्य ताम्यतः व्यथया संकुचितांगस्येति यावत् । उद्धरम अडभाव आर्षः ॥ ५२ ॥ संत्रस्तः प्राणहरत्वात् तपोधनस्तत्कुमारः ॥ ५३ ॥ कृच्छ्रं मर्मव्रणं प्राप्य विलप्य च संततमुच्छ्वसंतं सरयूतीरे मृत्वा शयानं वीक्ष्याहं भृशम् विषण्णोभवमिति कौसल्यां प्रति उक्तानुवादः ॥ ५४ ॥ वैशंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥ ॥ वधमिति । राघवो दशरथः वधं स्मृत्वा पुत्रं प्रति विलपन्नेव कौसल्यामिदमब्रवीदवदत् ॥ १ ॥

सीदमानोविवृत्तांगोचेष्टमानोगतःक्षयम् ॥ संस्तभ्यशोकंधैर्येणस्थिरचित्तोभवाम्यहम् ॥ ४९ ॥ ब्रह्महत्याकृतंतापंहृदयादपनीयताम् ॥ नद्विजातिरहंराजन्माभूत्तेमनसोव्यथा ॥ ५० ॥ शूद्रायामस्मिवैश्येनजातोनरवराधिप ॥ इतीववदतःकृच्छ्राद्बाणाभिहतमर्मणः ॥ ५१ ॥ विघूर्णतोविचेष्टस्यवेपमानस्यभूतले ॥ तस्यत्वाताम्यमानस्यतंबाणमहमुद्धरम् ॥ ५२ ॥ समामुद्वीक्ष्यसंत्रस्तोजहौप्राणांस्तपोधनः ॥ ५३ ॥ जलार्द्रगात्रंतुविलप्यकृच्छ्रंमर्मव्रणंसंततमुच्छ्वसंतम् ॥ ततःसरय्वांतमहंशयानंसमीक्ष्यभद्रेसुभृशंविषण्णः ॥५४॥ इत्यार्षे श्रीमद्रा०वा०आ०अयो० त्रिषष्टितमः सर्गः ॥ ६३ ॥

वधमप्रतिरूपंतुमहर्षेस्तस्यराघवः ॥ विलपन्नेवधर्मात्माकौसल्यामिदमब्रवीत् ॥ १ ॥ तदज्ञानान्महत्पापंकृत्वासंकुलितेंद्रियः ॥ एकस्त्वाचिंतयंबुद्ध्याकथंनुसुकृतंभवेत् ॥ २ ॥ ततस्तंघटमादायपूर्णंपरमवारिणा ॥ आश्रमंतमहंप्राप्ययथाख्यातपथंगतः ॥ ३ ॥ तत्राहंदुर्बलावंधौवृद्धावपरिणायकौ ॥ अपश्यंतस्यपितरौलूनपक्षाविवद्विजौ ॥ ४ ॥ तन्निमित्ताभिरासीनौकथाभिरपरिश्रमौ ॥ तामाशांमत्कृतेहीनावुपासीनावनाथवत् ॥ ५ ॥ शोकोपहतचित्तश्चभयसंत्रस्तचेतनः ॥ तच्चाश्रमपदंगत्वाभूयःशोकमहंगतः ॥ ६ ॥ पदशब्दंतुमेश्रुत्वामुनिर्वाक्यमभाषत ॥ किंचिरायसिमेपुत्रपानीयंक्षिप्रमानय ॥ ७ ॥ यन्निमित्तमिदंतातसलिलेक्रीडितंत्वया ॥ उत्कंठितातेमातेयंप्रविशक्षिप्रमाश्रमम् ॥ ८ ॥ यद्व्यलीकंकृतंपुत्रमात्रातेयदिवामया ॥ नतन्मनसिकर्तव्यंत्वयातततपस्विना ॥ ९ ॥

संकुलितेंद्रियः क्षुभितेंद्रियः कथं नु सुकृतं भवेदिति आचिंतयम् ॥ २ ॥ ततः एवं चिंतानंतरम् यथाख्यातपथं मुनिकुमारोपदिष्टं मार्गं प्राप्यारुह्य आश्रमं गतः ॥ ३ ॥ तत्राश्रमे अपरिणायकौ संचारयितृपुरुषांतररहितौ ॥ ४ ॥ तन्निमित्ताभिः पुत्रनिमित्ताभिः कथाभिर्हेतुभिरपरिश्रमावासीनौ पुत्रो जलमानेष्यतीत्येवंरूपाम् तामाशां उपासीनौ सेवमानौ मत्कृते मत्कृतदुष्कर्मनिमित्तम् तामाशां प्रतिहीनावपि तां सेवमानावपश्यमिति पूर्वेणान्वयः । उदासीनाविति पाठेऽनाथवदुदासीनौ दुःखिताविव ॥ ५ ॥ तौ दृष्ट्वा शोकोपहताचित्त इत्यादि भूयः अधिकम् ॥ ६ ॥ चिरायसि विलंबयासि ॥ ७ ॥ यन्निमित्तं येन हेतुना एतावत्कालं त्वया सलिले क्रीडितं तेन ते माता उत्कंठिता सशोकस्मरणवत्यभूत् । यन्नदत्तमितिपाठे यत्त्वया शीघ्रं जलमावयोर्नदत्तं तत्त्वया सलिले क्रीडितं तेन ते मातोत्कंठितेत्यन्वयः ॥ ८ ॥ व्यलीकमप्रियम् ॥ ९ ॥

अगतीनांत्वं गतिः । हीनचक्षुषा त्वं चक्षुः । अतो यन्न भाषसे तत्कथं कस्मात् ॥ १० ॥ सुतपदशब्दित इव सुतधिया सज्जमानया गद्गदया अतएव हीनव्यंजनया व्यंजनाक्षरव्यक्तिरहितया अतएवाव्यक्तया वाचा वदंतं मुनिं प्रेक्ष्य भीतचित्त इवाहं तादृश्यैव वाचाऽब्रुवमित्यन्वयः ॥ ११ ॥ मनस इति । मनसः कर्मभीतिरूपं वाग्बलमाश्रित्य चेष्टाभिरभीतिसाध्यव्यवहारैरभि अभितः संस्तभ्य भीताकारतामाच्छाद्य अभीत इवाचचक्षे ॥ १२ ॥ महात्मनस्तव पुत्रोनाहमिति योजना । सज्जनावमतं सज्जनगर्हितम् मया भवता चेति शेषः ॥ १३ ॥ तदेवाह भगवन्निति । निपाने आगतं श्वापदं व्याघ्रादिं गजं वा जिघांसुरित्यन्वयः ॥ ॥ १४ ॥ अयंशब्दहेतुः पदार्थ इत्यर्थः । द्विपइति मत्वाहं स्थितस्ततो मया स बाणेन हतः ॥ १५ ॥ गतप्राणं गतकल्पप्राणम् ॥ १६ ॥ तस्यैवत्वत्पुत्रस्यैव वचनाद्बाण उद्धृत इत्यन्वयः ॥ १७ ॥ अंधौ मातापितरौ कोतःपरं रक्षिष्यतीति भगवंतौ शोचन् विलप्य च स्वर्गमास्थित इत्यन्वयः ॥ १८ ॥ युष्मद्रक्षके पुत्रे एवंगते सति शेषं कर्तव्यम यत्स्यात् तत्तत्र मह्यं भगवान् प्रसीदतु तदुद्दिश्य मामाज्ञापयत्वि

त्वंगतिस्त्वगतीनांचचक्षुस्त्वंहीनचक्षुषाम् ॥ समासक्तास्त्वयिप्राणाःकथंत्वंनाभिभाषसे ॥ १० ॥ मुनिमव्यक्तयावाचातमहंसज्जमानया ॥ हीनव्यंजनयाप्रेक्ष्यभीतचित्तइवाब्रुवम् ॥ ११ ॥ मनसःकर्मचेष्टाभिरभिसंस्तभ्यवाग्बलम् ॥ आचचक्षेत्वहंतस्मैपुत्रव्यसनजंभयम् ॥ १२ ॥ क्षत्रियोहंदशरथोनाहंपुत्रोमहात्मनः ॥ सज्जनावमतंदुःखमिदंप्राप्तंस्वकर्मजम् ॥ १३ ॥ भगवंश्चापहस्तोहंसरयूतीरमागतः ॥ जिघांसुःश्वापदंकिंचिन्निपानेवागतंगजम् ॥ १४ ॥ ततःश्रुतोमयाशब्दोजलेकुंभस्यपूर्यतः ॥ द्विपोयमितिमत्वाहंबाणेनाभिहतोमया ॥ १५ ॥ गत्वातस्यास्ततस्तीरमपश्यमिषुणाहृदि ॥ विनिर्भिन्नंगतप्राणंशयानंभुवितापसम् ॥ १६ ॥ ततस्तस्यैववचनादुपेत्यपरितप्यतः ॥ समयासहसावाणउद्धृतोमर्मतस्तदा ॥ १७ ॥ सचोद्धृतेनवाणेनसहसास्वर्गमास्थितः ॥ भगवंतावुभौशोचन्वृद्धावितिविलप्यच ॥१८॥ अज्ञानाद्भवतःपुत्रःसहसाभिहतोमया ॥ शेषमेवंगतेयत्स्यात्तत्प्रसीदतुमेमुनिः ॥ १९ ॥ सतच्छ्रुत्वावचःक्रूरंमयातदघशंसिना ॥ नाशकत्तीव्रमायासंसकर्तुंभगवानृषिः ॥ २० ॥ सबाष्पपूर्णवदनोनिःश्वसञ्शोकमूर्छितः ॥ मामुवाचमहातेजाःकृतांजलिमुपस्थितम् ॥ २१ ॥ यद्येतदशुभंकर्मनस्ममेकथयेःस्वयम् ॥ फलेन्मूर्धास्मतेराजन्सद्यःशतसहस्रधा ॥ २२ ॥ क्षत्रियेणवधोराजन्वानप्रस्थेविशेषतः ॥ ज्ञानपूर्वंकृतःस्थानाच्च्यावयेदपिवज्रिणम् ॥ २३ ॥ सप्तधातुभवेन्मूर्धामुनौतपसितिष्ठति ॥ ज्ञानाद्विसृजतःशस्त्रंतादृशेब्रह्मवादिनि ॥ २४ ॥ अज्ञानाद्धिकृतंयस्मादिदंतेतेनजीवसे ॥ अपिह्यकुशलंनस्याद्राघवाणांकुतोभवान् ॥ २५ ॥

त्यन्वयः । युष्मद्रक्षणमपि मया कर्तुं शक्यमिति भावः ॥ १९ ॥ एवमज्ञानकृतत्वबोधनात् शेषायुःपर्यंतं रक्षणस्यापि कर्तव्यताबोधनाच्च मां दैवान्न भस्मसादकरोदित्याह स इति । तीव्रमायासं भस्मीभावफलकशापदानम ॥ २० ॥ २१ ॥ स्मशब्दो वाक्यालंकारे । फलेत् विशीर्येत ॥ २२ ॥ ज्ञानपूर्वत्वेसद्योनर्थप्राप्तिः स्यादित्याह क्षत्रियेणेति विशेषतः अंधत्वानाथत्वादेः ज्ञानपूर्वं कृतो यद्ययं वधः स्यात्तदा तच्छ्रवणजो मत्कोपो वज्रिणमपि स्थानात् च्यावयेत्पातयेत्किमु त्वादृशमित्यर्थः ॥ २३ ॥ पुत्रकोपेनापि तत्कालनाशाभावोऽज्ञानादेवेत्याह सप्तधा त्विति । स्वापेक्षया तपोन्यूनत्वात्सप्तधेति ब्रह्मवादिनि ब्रह्मवादिसमे । ब्रह्मचारिणीतिपाठांतरम ॥ २४ ॥ जीवसे जीवसि ते तव यस्मादिदं कर्माज्ञानात्कृतं तेन जीवसि । हिः पादपूणार्थः । यदि ज्ञानपूर्वं कृतमिदम स्यात्तदा राघवाणां कुलमेव न स्यात्कुतो भवान् जीवेदिति शेषः ॥२५॥

पश्चिमदर्शनमंतदर्शनं द्रष्टुमिच्छावोतस्तं देशं नयेति मामभाषत ॥ २६ ॥ २७ ॥ अहं तं देशंनीत्वा तं पुत्रमस्पर्शयम् ॥ २८ ॥ तं तदवस्थमात्मनः पुत्रमासाद्य स्पृष्ट्वास्य शरीरे निपततुः पितैनमुवाच ॥ २९ ॥ कुपितो जातकोपः ॥ ३० ॥ नन्वहमितिपाठः । अप्रिय इति च्छेद इति कतकः । नत्वहमिति पाठः । अहं यदि तव प्रियो न तथापि मातरं पश्येति संबंध इति तीर्थः ॥ ३१ ॥ अन्यदा पुराणम् वैश्याच्छूद्रयां जातत्वेन संकरत्वाद्वेदप्रसंगो नोक्तः ॥ ३२ ॥ संध्यामिति । तंत्रमार्गेणेति शेषः । हुतहुताशनः नमस्कारेण मंत्रेण पंचयज्ञान्समापयेदित्युक्तरीत्या श्लाघयिष्यति श्लाघनमुद्वर्तनं तत्पूर्वकं स्नापयिष्यति नाप्सु श्लाघमानः स्नायादिति ब्रह्मचारिप्रकरणस्थापस्तंबस्मृतौ तथा व्याख्यानात् ॥ ३३ ॥ कंदं जलोद्भवपद्मादीनाम् मूलं स्थलोद्भवानामिति तीर्थः । अकर्मण्यं कर्मानुष्ठानाक्षमम् अप्रग्रहं नीवारादिसंग्रहरहितम् अनायकं पालकहीनमित्यर्थ तीर्थः । कर्मणि साधुं कर्मण्यमित्यतिथिविशेषणम् । भोजयिष्यति कर्मण्यमित्येव च पाठः अप्रग्रहं यष्टिग्रहणपूर्वकमार्गप्रदर्शकरहितम् अतएवानायकं स्नानादिकर्मप्रवर्तकहीनमित्यर्थ कतकः ॥ ३४ ॥ भ

नयनौनृपतंदेशमितिमांचाभ्यभाषत ॥ अद्यतंद्रष्टुमिच्छावःपुत्रंपश्चिमदर्शनम् ॥ २६ ॥ रुधिरेणावसिक्तांगंप्रकीर्णाजिनवाससम् ॥ शयानंभुविनिःसंज्ञंधर्मराजवशंगतम् ॥ २७ ॥ अथाहमेकस्तंदेशंनीत्वातौभृशदुःखितौ ॥ अस्पर्शयमहंपुत्रंतंमुनिंसहभार्यया ॥ २८ ॥ तौपुत्रमात्मनःस्पृष्ट्वातमासाद्यतपस्विनौ ॥ निपेततुःशरीरेऽस्यपिताचैनमुवाचह ॥ २९ ॥ नाभिवादयसेमाद्यनचमामभिभाषसे ॥ किंचशेषेतुभूमौत्वंवत्सकिंकुपितोह्यसि ॥ ३० ॥ नन्वहंतेप्रियःपुत्रमातरंपश्यधार्मिकीम् ॥ किंचनालिंगसेपुत्रसुकुमारवचोवद ॥ ३१ ॥ कस्यवापररात्रेऽहंश्रोष्यामिहृदयंगमम् ॥ अधीयानस्यमधुरंशास्त्रंवान्यद्विशेषतः ॥ ३२ ॥ कोमांसंध्यामुपास्यैवस्नात्वाहुतहुताशनः ॥ श्लाघयिष्यत्युपासीनःपुत्रशोकभयार्दितम् ॥ ३३ ॥ कंदमूलफलंहृत्वायोमांप्रियमिवातिथिम् ॥ भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३४ ॥ इमामंधांचवृद्धांचमातरंतेतपस्विनीम् ॥ कथंपुत्रभरिष्यामिकृपणांपुत्रगर्धिनीम् ॥ ३५ ॥ तिष्ठमामागमःपुत्रयमस्यसदनंप्रति ॥ श्वोमयासहगंतासिजनन्याचसमेधितः ॥ ३६ ॥ उभावपिचशोकार्तावनाथौकृपणौवने ॥ क्षिप्रमेवगमिष्यावस्त्वयाहीनौयमक्षयम् ॥ ३७ ॥ ततोवैवस्वतंदृष्ट्वातंप्रवक्ष्यामिभारतीम् ॥ क्षमतांधर्मराजोमेबिभृयात्पितरावयम् ॥ ३८ ॥ दातुमर्हतिधर्मात्मालोकपालोमहायशाः ॥ ईदृशस्यममाक्षय्यामेकामभयदक्षिणाम् ॥ ३९ ॥ अपापोसियथापुत्रनिहतःपापकर्मणा ॥ तेनसत्येनगच्छाशुयेलोकास्त्वस्त्रयोधिनाम् ॥ ४० ॥

रिष्यामि स्वयमंध इति शेषः ॥ ३५ ॥ मामेत्याबाधे द्विर्वचनम् । मामुद्दिश्य तिष्ठ मागमः मा गच्छेति वा समेधितः संगतः ॥ ३६ ॥ यमक्षयं यमगृहम् ॥ ३७ ॥ यमगृहगमने स्वप्रयोजनमाह तत इति । धर्मराजो मे क्षमता पुत्रवियोगजनकं पूर्वकृतापराधं अयं मे पुत्रः पितरौ विभृयात्पालयतु ॥ ३८ ॥ ननु त्वया याचितेपि कथमेतल्लभ्यं तेऽत आह दातुमिति । लोकपालोपमः ईदृशस्य अनाथस्य अभयदक्षिणां पुत्रदानेन तदभावेन महाभयप्राप्तेरिति भावः । कतकस्तु यतोऽयं मे पुत्रः पितरौ बिभृयात् अतोस्य धर्मराजो भवान्क्षमताम् शस्त्रघातजन्यदुर्मरणजनकम् पापं क्षमतामेवं मया प्रार्थितो दुर्मरणजां दुर्गतिं दूरीकृत्य त्वां स्वर्गं नयिष्यति । ईदृशस्य तपस्विनो ममैकां पुत्रतारणरूपाभयदक्षिणां लोकपालत्वाद्दातुमर्हतीत्यर्थमाह ॥ ३९ ॥ अथ मृतस्य पुनर्लाभमशक्यं मत्वा विश्वामित्र इव त्रिशंकुं स्वमहिम्ना सुतं स्वर्गं प्रापयाति

अपापोसीत्यादि । अपापस्त्वं पुत्र पापकर्मणाऽनेन क्षत्रियेण यथा निहतोसि तेन हननेन प्रायश्चित्तरूपेण शुद्धः सत्येन मदीयेनास्त्रयोधिनां शूराणां लोकान्गच्छेत्यर्थः । यद्वा हे पुत्र पापेन कर्मणा शस्त्रवधलक्षणेन निहतो यथा यद्यपि त्वमसि तथापि तेन मदीयेन सत्येनापापो भूत्वाऽस्त्रयोधिनां लोकान्गच्छ ॥ ४० ॥ उक्तमेवार्थं पुनराह यामिति ॥ ४१ ॥ तमेवार्थं विशेषत आह यां गतिमिति ॥ ४२ ॥ सर्वभूतानां गतिराश्रयो ब्रह्म एकपत्नीव्रता रामादयः ॥ ४३ ॥ गुरुसेवाभृतः तत्सेवाकर्तारः देहन्यासकृतः महाप्रस्थानादिना परलोकार्थं तनुत्यजः ॥ ४४ ॥ अस्मिन्कुले मदीये नित्यतपस्विकुले यास्यति । अकुशलां गतिमित्यनुकर्षः ॥ ४५ ॥ उदकं संस्कारपूर्वकम् ॥ ४६ ॥ स्वर्गमध्यारुहत् तेन सत्येनाशु गच्छेति वचनानंतरमेवेति शेषः । शक्रेण सहेत्यनेन मुनिपुत्रं स्वर्गं नेतुं शक्रः समागत इति ध्वनितम् ॥ ४७ ॥

यांहिशूरागतिंयांतिसंग्रामेष्वनिवर्तिनः ॥ हतास्त्वभिमुखाःपुत्रगतिंतांपरमांव्रज ॥ ४१ ॥ यांगतिंसगरःशैब्योदिलीपोजनमेजयः ॥ नहुषोधुंधुमारश्चप्राप्तास्तांगच्छपुत्रक ॥ ४२ ॥ यागतिःसर्वभूतानांस्वाध्यायात्तपसश्चया ॥ भूमिदस्याहिताग्नेश्चएकपत्नीव्रतस्यच ॥ ४३ ॥ गोसहस्रप्रदातॄणांगुरुसेवाभृतामपि ॥ देहन्यासकृतांयाचतांगतिंगच्छपुत्रक ॥ ४४ ॥ नहित्वस्मिन्कुलेजातोगच्छत्यकुशलांगतिम् ॥ सतुयास्यतियेनत्वंनिहतोममबांधवः ॥ ४५ ॥ एवंसकृपणंतत्रपर्यदेवयतासकृत् ॥ तथोक्त्वाकर्तुमुदकंप्रवृत्तःसहभार्यया ॥४६॥ सतुदिव्येनरूपेणमुनिपुत्रःस्वकर्मभिः ॥ स्वर्गमध्यारुहत्क्षिप्रंशक्रेणसहधर्मवित् ॥ ४७ ॥ आबभाषेचतौवृद्धौशक्रेणसहतापसः ॥ आश्वस्यचमुहूर्तंतुपितरंवाक्यमब्रवीत् ॥ ४८ ॥ स्थानमस्मिमहत्प्राप्तोभवतोःपरिचारणात् ॥ भवंतावपिचक्षिप्रंममूलमुपैष्यथः ॥ ४९ ॥ एवमुक्त्वातुदिव्येनविमानेनवपुष्मता ॥ आरुरोहदिवंक्षिप्रंमुनिपुत्रोजितेंद्रियः ॥ ५० ॥ सकृत्वाऽथोदकंतूर्णंतापसःसहभार्यया ॥ मामुवाचमहातेजाःकृतांजलिमुपस्थितम् ॥५१॥ अद्यैवजहिमांराजन्मरणेनास्तिमेव्यथा॥ यःशरेणैकपुत्रंमांत्वमकार्षीरपुत्रकम् ॥ ५२ ॥ त्वयापिचयदज्ञानान्निहतोमेसवालकः ॥ तेनत्वामपिशप्स्येहंसुदुःखमतिदारुणम् ॥ ५३ ॥ पुत्रव्यसनजंदुःखंयदेतन्ममसांप्रतम् ॥ एवंत्वंपुत्रशोकेनराजन्कालंकरिष्यसि ॥ ५४ ॥ अज्ञानात्तुहतोयस्मात्क्षत्रियेणत्वयामुनिः ॥ तस्मात्त्वांनाविशत्याशुब्रह्महत्यानराधिप ॥ ५५ ॥ त्वामप्येतादृशोभावःक्षिप्रमेवगमिष्यति ॥ जीवितांतकरोघोरोदातारमिवदक्षिणाम् ॥५६॥ एवंशापंमयिन्यस्यविलप्यकरुणंबहु ॥ चितामारोप्यदेहंतन्मिथुनंस्वर्गमभ्ययात् ॥५७॥ तदेतच्चिन्तयानेनस्मृतंपापंमयास्वयम् ॥ तदाबाल्यात्कृतंदेविशब्दवेध्यनुकर्षिणा॥५८॥

आरुह्य पुनः शक्रेण सहागत्याबभाषे इत्यन्वयः । अस्यैव प्रपंच आश्वस्येत्यादि । अत्र वक्तुः शोकग्रस्ततयाबभाषेऽब्रवीदिति पौनरुक्त्यं न दोषाय ॥ ४८ ॥ भवतोरिति । अनेन मातापितृसेवाधर्मांतराभावेपि सेंद्रसालोक्यदेति ध्वनितं मूलं समीपम् ॥ ४९ ॥ वपुष्मता पुष्पकादिवत् प्रशस्ताकारेण ॥ ५० ॥ ५१ ॥ जहि प्राणैर्वियोजय ॥ ५२ ॥ यदज्ञानान्निहतोऽतः शप्स्ये ननु प्रत्यक्षमेव भस्मीकरोमि सुदुःखमतिदारुणमिति क्रियाविशेषणे ॥ ५३ ॥ दुःखं मरणपर्यवसायि सांप्रतं वर्तते त्वन्निमित्तमिति शेषः । कालं करिष्यसि मृत्युं प्राप्स्यसि ॥ ५४ ॥ ब्रह्महत्या तत्समं पापम् ॥ ५५ ॥ एतादृशो भावः। पुत्रशोकेन मरणरूपः यथा तत्तद्वस्तुदक्षिणां दातारं यथा सा दक्षिणान्यतः प्राप्ता भवति तद्वत् ॥ ५६ ॥ देहं देहौ ॥ ५७ ॥ शब्दवेध्यनुकर्षिणा प्रथमं शब्दवेधिना पश्चाद्विद्धशरानुकर्षणमपि कृतवता पापं

मुनिकुमारवधरूपम् । तीर्थस्तु शब्दवेध्यानुशिक्षिणेतिपाठम् शब्देन वेद्धुं योग्यं शब्दवेध्यं तदनु शिक्षितं शीलं यस्य तेनेत्यर्थं चाह । तदसमंजसमिति स्पष्टमेव ॥५८॥ विपाकः फलं अपथ्यैर्व्यंजनैः सह भुक्तेऽन्न रसे व्याधिर्यथोपतिष्ठते । व्याधिमन्नरसो यथेतिपाठे उपस्थापयतीति शेषः ॥ ५९ ॥ उदारस्य श्रेष्ठस्य तद्वचः तद्वचःफलं त्रस्तो मरणभयादिति शेषः । रुदन् जीवितं त्यक्ष्यामीति भार्यामाहेति संबंधः ॥६०॥ चक्षुर्भ्यां न पश्यामि मुमूर्षुत्वादिति भावः ॥ ६१ ॥ नहि द्रक्ष्यंतीति । इह विद्यमानान्स्वेष्टबंधूनिति शेषः । इतः परं त्वत्स्पर्शादिकं मे दुर्लभमिति भावः । यदि मामद्य रामः सकृदपि स्पृशेत् अन्वारभेत किंचिद्वाग वा स्पृशेत् ॥ ६२ ॥ यदि वा धनं कोशं यौवराज्यं वा लभेत तदा जीवेयं राघवे यन्मया कृतं विवासनरूपं तन्मे वृत्तस्य सदृशं न ॥ ६३ ॥ अनेन रामेण यन्मयि कृतं राज्यं त्यक्त्वा मद्वचः

तस्यायंकर्मणोदेविविपाकःसमुपस्थितः ॥ अपथ्यैःसहसंभुक्तेव्याधिरन्नरसेयथा ॥५९॥ तस्मान्मामागतंभद्रेतस्योदारस्यतद्वचः ॥ इत्युक्त्वासरुदंस्त्रस्तोभार्यामाहतुभूमिपः ॥ ६० ॥ यदहंपुत्रशोकेनसंत्यजिष्यामिजीवितम् ॥ चक्षुर्भ्यांत्वांनपश्यामिकौसल्येत्वंहिमांस्पृश ॥ ६१ ॥ यमक्षयमनुप्राप्ताद्रक्ष्यंतिनहिमानवाः ॥ यदिमांसंस्पृशेद्रामःसकृदन्वारभेतवा ॥६२॥ धनंवायौवराज्यंवाजीवेयमितिमेमतिः ॥ नतन्मेसदृशंदेवियन्मयाराघवेकृतम् ॥६३॥ सदृशंतत्तुतस्यैवयदनेनकृतंमयि ॥ दुर्वृत्तमपिकःपुत्रंत्यजेद्भुविविचक्षणः ॥ ६४ ॥ कश्चप्रव्राज्यमानोवानासूयेत्पितरंसुतः ॥ चक्षुषात्वांनपश्यामिस्मृतिर्ममविलुप्यते ॥ ६५ ॥ दूतावैवस्वतस्यैतेकौसल्येत्वरयंतिमाम् ॥ अतस्तुकिंदुःखतरंयदहंजीवितक्षये ॥ ६६ ॥ नहिपश्यामिधर्मज्ञंरामंसत्यपराक्रमम् ॥ तस्यदर्शनजःशोकःसुतस्याप्रतिकर्मणः ॥ ६७ ॥ उच्छोषयतिवैप्राणान्वारिस्तोकमिवातपः ॥ नतेमनुष्यादेवास्तेयेचारुशुभकुंडलम् ॥ ६८ ॥ मुखंद्रक्ष्यंतिरामस्यवर्षेपंचदशेपुनः ॥ पद्मपत्रेक्षणंसुभ्रुसुदंष्ट्रंचारुनासिकम् ॥ ६९ ॥ धन्याद्रक्ष्यंतिरामस्यताराधिपसमंमुखम् ॥ सदृशंशारदस्येंदोःफुल्लस्यकमलस्यच ॥ ७० ॥ सुगंधिममरामस्यधन्याद्रक्ष्यंतियेमुखम् ॥ निवृत्तवनवासंतमयोध्यापुनरागतम् ॥ ७१ ॥ द्रक्ष्यंतिसुखिनोरामंशुक्रंमार्गगतंयथा ॥ कौसल्येचित्तमोहेनहृदयंसीदतेतराम् ॥ ७२ ॥ वेदयेनचसंयुक्ताञ्शब्दस्पर्शरसानहम् ॥ चित्तनाशाद्विपद्यंतेसर्वाण्येवेंद्रियाणिहि ॥ ७३ ॥

परिपालनरूपं तत्तस्यैव सदृशं अनन्वयोत्रालंकारः । मत्सदृशोऽन्यायकृत् रामसदृश उचितकर्ता च भुवि नाभूदस्ति भविष्यति वान्य इत्याह दुर्वृत्तमपीति ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ स्तोकमल्पं वारि आतपो यथा शुष्कं करोति ये द्रक्ष्यंति न ते मनुष्याः किंतु देवांशा एव ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ शुक्रं मार्गगतं यथा मौढ्यादि विहाय स्वोच्चमार्गगतं शुक्रमिवेत्यर्थः । कतकस्तु शुकं मार्गगतं यथेतिपाठः । हस्तात्पंजराद्वाऽन्यदेशगतं पुनश्च मार्गे यथास्थानं गतं प्राप्तं शुकं क्रीडाशुकमिवेत्यर्थ इत्याह ॥ चित्तमोहेन दुःखातिशयप्राप्तमूर्छया सीदतेतरामतिशयेन शीर्यतीव ॥ ७२ ॥ वेदये जानामि संयुक्तानिं

द्रियसंयुक्तान् ॥ ७३ ॥ संरक्ता भस्मतां प्राप्ता यथा दीपस्य रश्मयो विपद्यंते तथेंद्रियाणीत्यर्थः ॥ ७४ ॥ संसाधयति नाशयति ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ह्रांसमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥ ॥ छ ॥ अथेति ॥ १ ॥ परमसंस्काराः व्याकरणादिशिक्षावंतः परमालंकारा वा मागधाः वंशावलीकीर्तकाः । मंगला इतिपाठेपि मंगलपाठकास्त एव उत्तमश्रुताः उत्तमं श्रुतं वंशपरंपराश्रवणमेषां ते मागधाः । श्रुतिशीला गायकाः तंत्रीनादविभाजनशीला गायकाः । पृथक्पृथक् निगदंतः स्वस्वमार्गानुसारेणेति शेषः ॥ २ ॥ उदात्तम् उच्चैः स्वरेणाभिहिता आशिषो येस्तेषाम् । प्रासादानामाभोगेषु मध्येषु विस्तीर्णः । प्रतिध्वनिनेति शेषः ॥ ३ ॥ पाणिवादकाः पाणिवादनशीलाः अपदानानि राज्ञां वृत्ताद्भुतकर्माणि उदाहृत्य तदनुगतं पाणिवादान्यवादयन् ॥ ४ ॥ सस्वनुः फणादित्वात्पक्षे एत्वाभ्यासलोपाभावः । ये राजकुलगोचराः राजकुलवासयोग्या ये शुकादयः ॥ ५ ॥ तैः पूर्वश्लोकोक्तैः शुकादिभिर्व्याहृताः पुण्यशब्दाः

क्षीणस्नेहस्यदीपस्यसंरक्तारश्मयोयथा ॥ अयमात्मभवःशोकोमामनाथमचेतनम् ॥ ७४ ॥ संसाधयतिवेगेनयथाकूलंनदीरयः ॥ हाराघवमहाबाहो हाममायासनाशन ॥ ७५ ॥ हापितृप्रियमेनाथहाममासिगतःसुत ॥ हाकौसल्येनपश्यामिहासुमित्रेतपस्विनी ॥ ७६ ॥ हानृशंसेममामित्रेकैकेयिकुलपांसनि ॥ इतिमातुश्चरामस्यसुमित्रायाश्चसन्निधौ ॥ राजादशरथःशोचञ्जीवितांतमुपागमत् ॥ ७७ ॥ तथातुदीनःकथयन्नराधिपःप्रियस्यपुत्रस्यविवासनातुरः ॥ गतेऽर्धरात्रेभृशदुःखपीडितस्तदाजहौप्राणमुदारदर्शनः ॥ ७८ ॥ इत्यार्षे श्रीम॰वा॰आ॰अ॰चतुःषष्टितमः सर्गः ॥ ६४ ॥ अथरात्र्यांव्यतीतायांप्रातरेवापरेऽहनि ॥ वंदिनःपर्युपातिष्ठंस्तत्पार्थिवनिवेशनम् ॥ १ ॥ सूताःपरमसंस्कारामागधाश्चोत्तमश्रुताः ॥ गायकाःश्रुतिशीलाश्चनिगदंतःपृथक्पृथक् ॥ २ ॥ राजानंस्तुवतांतेषामुदात्ताभिहिताशिषाम् ॥ प्रासादाभोगविस्तीर्णःस्तुतिशब्दोह्यवर्तत ॥ ३ ॥ ततस्तुस्तुवतांतेषांसूतानांपाणिवादकाः ॥ अपदानान्युदाहृत्यपाणिवादान्यवादयन् ॥ ४ ॥ तेनशब्देनविहगाःप्रतिबुद्धाश्चसस्वनुः ॥ शाखास्थाःपंजरस्थाश्चयेराजाकुलगोचराः ॥ ५ ॥ व्याहृताःपुण्यशब्दाश्चवीणानांचापिनिःस्वनाः ॥ आशीर्गेयंचगाथानांपूरयामासवेश्मतत् ॥ ६ ॥ ततःशुचिसमाचाराःपर्युपस्थानकोविदाः ॥ स्त्रीवर्षवरभूयिष्ठाउपतस्थुर्यथापुरा ॥ ७ ॥ हरिचंदनसंपृक्तमुदकंकांचनैर्घटैः ॥ आनिन्युःस्नानशिक्षाज्ञायथाकालंयथाविधि ॥ ८ ॥ मंगलालंभनीयानिप्राशनीयान्युपस्करान् ॥ उपानिन्युस्तथापुण्याःकुमारीबहुलाःस्त्रियः ॥९॥ सर्वलक्षणसंपन्नंसर्वंविधिवदर्चितम् ॥ सर्वंसुगुणलक्ष्मीवत्तदभूदाभिहारिकम् ॥ १० ॥

काशीगंगादिरूपाः गाथानां केवलगायकानामाशीर्गेयमाशीर्वादप्रधानं गानम् । यद्वा गाथा राज्ञां चरित्रादिप्रतिपादिकास्तासामाशीर्वादघटितं गानमित्यर्थः ॥ ६ ॥ पर्युपस्थानं परिचर्या स्त्रीभिः वर्षवरैः षंढैश्च भूयिष्ठाः षंढो वर्षवरस्तुल्यौ परिचारका इति शेषः ॥ ७ ॥ स्नानशिक्षाज्ञाः स्नानविधिज्ञाः । यद्वाऽरुणोदयात्पूर्वमेव उषसि स्नानार्थं जलाद्यानेतव्यमिति शिक्षाज्ञाः ॥ ८ ॥ मंगलालंभनीयानि मंगलार्थमालंभनीयानि स्पर्शनीयानि गवादीनि आलंभः स्पर्शहिंसयोः प्राशनीयानि गंगोदकादीनि दंतधावनानंतरं गंडूषत्वेन प्राशनीयानि यानि नारिकेलोदकनीरकोदकानि च उपस्कारा दर्पणवस्त्राभरणादयः कुमारीबहुलाः कुमार्यो बहुला यासु ताः स्त्रियो वरनार्यः ॥९॥ आभिहारिकं प्रातःसमये राज्ञो यदभिहर्तव्यं मंगलार्थमानेतव्यम् तत्सर्वं सर्वलक्षणयुक्तम् सर्वं विधिवदर्चितं यथायोग्यं बहूकृतम् सुगुणं च तल्लक्ष्मीवच्च ॥ १० ॥

परिसमुत्सुकम् राजदर्शनं प्रतीति शेषः । तस्थौ ततोनुपसंप्राप्तं अप्राप्तराजदर्शनमतएव किंस्विदित्युपशंकितमभूत् ॥ ११ ॥ शयनं प्रति अनंतराः आसन्नाः कौसल्यादिव्यतिरिक्ताः प्रत्यवो धयन्प्रतिबोधनोचितमृदुविनीतवचनैः स्पर्शैश्च ॥ १२ ॥ उचितवृत्ताः स्पर्शनादिव्यापारोचिताः । किंचिदपि जीवच्चेष्टादि ॥ १३ ॥ स्वप्नशीलज्ञाः स्वप्नभावज्ञाः संचलनाडीषु हृदयकरमूलनाडीषु चेष्टां नोपले भिरे । ततो वेपथुयुक्ता राज्ञः प्राणेषु शंकिता आसन् ॥ १४ ॥ प्रतिस्रोत इति स्रोतोभिमुखस्थितवेतसादितृणाग्राणां सदृशं कंपं संचकाशिरे प्रकाशितवत्यः प्राप्ता इति यावत् । संदेहमानानां संदिहानानाम् ॥ १५ ॥ यदा शंकितं पापं मरणं पूर्वं राज्ञेति शेषः । तस्य निश्चयो जज्ञे जातः ॥ १६ ॥ यथाकालसमन्विते मृते इव । यद्वाऽयथाकालसमन्विते बह्वीषु रात्रिषु दुःखतो जागरणात् अयथाकाले प्रत्युषसि निद्रयासमन्विते इत्यर्थः । शोकेन सन्ना उपहता । सन्नता सुप्तिवशसंकुचितहस्तपादादिकरणा ॥ १७ ॥ कौसल्येति अत्र सुप्तेति शेषः ॥ १८ ॥ न विभ्राजते न विशेषेण भ्राजते तत्र हेतुः शोकेत्यादि । ते

ततःसूर्योदयंयावत्सर्वंपरिसमुत्सुकम् ॥ तस्थावनुपसंप्राप्तंकिंस्विदित्युपशंकितम् ॥ ११ ॥ अथयाःकोसलेंद्रस्यशयनंप्रत्यनंतराः ॥ ताःस्त्रियस्तुसमागम्यभर्तारंप्रत्यबोधयन् ॥ १२ ॥ अथाप्युचितवृत्तास्ताविनयेननयेनच ॥ नह्यस्यशयनंस्पृष्ट्वाकिंचिदप्युपलेभिरे ॥ १३ ॥ ताःस्त्रियःस्वप्नशीलज्ञाश्चेष्टांसंचलनाडिषु ॥ तावेपथुपरीताश्चराज्ञःप्राणेषुशंकिताः ॥ १४ ॥ प्रतिस्रोतस्तृणाग्राणांसदृशंसंचकाशिरे ॥ अथसंदेहमानानांस्त्रीणांदृष्ट्वाचपार्थिवम् ॥ १५ ॥ यत्तदाशंकितंपापंतदाजज्ञेविनिश्चयः ॥ कौसल्याचसुमित्राचपुत्रशोकपराजिते ॥ १६ ॥ प्रसुप्तेनप्रबुद्धयेतेयथाकालसमन्विते ॥ निष्प्रभासाविवर्णाचसन्नाशोकेनसन्नता ॥ १७ ॥ नव्यराजतकौसल्यातारेवतिमिरावृता ॥ कौसल्यानंतरंराज्ञःसुमित्रातदनंतरम् ॥ १८ ॥ नस्मविभ्राजतेदेवीशोकाश्रुलुलितानना ॥ तेचदृष्ट्वातदासुप्तेउभेदेव्यौचतंनृपम् ॥ १९ ॥ सुप्तमेवोद्गतप्राणमंतःपुरमदृश्यत ॥ ततःप्रचुक्रुशुर्दीनाःसस्वरंतावरांगनाः ॥ २० ॥ करेणवइवारण्येस्थानप्रच्युतयूथपाः ॥ तासामाक्रंदशब्देनसहसोद्गतचेतने ॥ २१ ॥ कौसल्याचसुमित्राचत्यक्तनिद्रेबभूवतुः ॥ कौसल्याचसुमित्राचदृष्ट्वास्पृष्ट्वाचपार्थिवम् ॥ २२ ॥ हाभर्तेतिपरिक्रुश्यपेततुर्धरणीतले ॥ साकोसलेंद्रदुहिताचेष्टमानामहीतले ॥ २३ ॥ नभ्राजतेरजोध्वस्तातारेवगगनच्युता ॥ नृपेशांतगुणेजातेकौसल्यांपतितांभुवि ॥ २४ ॥ अपश्यंस्ताःस्त्रियःसर्वाहतांनागवधूमिव ॥ ततःसर्वानरेंद्रस्यकैकेयीप्रमुखाःस्त्रियः ॥ २५ ॥ रुदत्यःशोकसंतप्तानिपेतुर्गतचेतनाः ॥ ताभिःसबलवान्नादःक्रोशंतीभिरनुद्रुतः ॥ २६ ॥ येनस्फीतीकृतोभूयस्तद्गृहंसमनादयत् ॥ तत्परित्रस्तसंभ्रांतपर्युत्सुकजनाकुलम् ॥ २७ ॥

उभे देव्यौ प्रश्वासादिना सुप्ते दृष्ट्वा नृपं च तं सुप्तमेव संतं तदवस्थायामेवोद्गतप्राणं लक्षणतो दृष्ट्वा सर्वमेवांतःपुरमुद्गतप्राणं तत्कल्पमदृश्यत । अमन्यतेतिपाठेंतःपुरं कर्तृ । नृपमुद्गतप्राणममन्यतेत्यर्थः । तीर्थस्तु अदृश्यतेत्येतत् परस्परमपश्यदित्यर्थं व्याचष्टे ॥ १९ ॥ २० ॥ स्थानाद्वासस्थानात्प्रच्युतो यूथपो महागजो यासां ताः करेणव इव प्रचुक्रुशुरित्यन्वयः ॥ २१ ॥ २२ ॥ हा भर्तेति हा भर्तरितीत्यर्थः । अयोध्या जनपदवाची कोशलशब्दस्तालव्यमध्यः । कौसल्यापितृदेशवाची तु दंत्यमध्यः ॥ २३ ॥ शांतगुणे उपशांतजीवनधर्मे ॥ २४ ॥ २५ ॥ ताभिः कैकेयीप्रभृतिभिः पश्चादंतःपुरं प्रविष्टाभिः स्वनादेन प्रथमप्रविष्टानां स्त्रीणां बलवान्नादोऽनुद्रुतः युक्तः अभूदिति शेषः ॥ २६ ॥ येनानुद्रवणेन स्फीतीकृतो वर्धितः स नादो भूयोधिकं तद्गृहं समनादयत् व्याप्तवान् । तीर्थस्तु येन स्थिरीकृतं भूय इति पठित्वा येन नादेन स्थिरी

कृतं मुखरितं तद्गृहं कर्तृ भूयोत्यर्थं समनादयत् अनददित्यर्थमाह । पर्युत्सुकजनाकुलं पूर्ववृत्तांतज्ञानाय पर्युत्सुकजननिविडम् ॥ २७ ॥ दिष्टांतं कालधर्मम् उपेयुषः प्राप्तस्य सद्म परित्रस्तसंभ्रांतत्वादिगुणविशिष्टं बभूव ॥ २८ ॥ अतीतं मृतं पत्नयः पत्न्यः बाहू प्रगृह्य अभिहत्य अनाथवत् अनाथार्हम् ॥ २९ ॥ धीरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥ ॥ ६६ ॥ तमिति ॥ १ ॥ राज्ञः शिर उपगृह्य अंके कृत्वेत्यर्थः ॥ २ ॥ एकाग्रा पुत्रराज्यैकाग्रचित्ता ॥ ३ ॥ राज्यस्याकंटकत्वं दर्शयति विहायेति । विपथे कांतारे सार्थहीना सहायभूतपथिकसंचररहिता ॥ ४ ॥ आत्मनो दैवतं भर्तारं परित्यज्य त्यक्तधर्मणः त्यक्तः स्त्रीधर्मो यया तादृश्याः कैकेय्या अन्यत्र अन्या पुत्रराज्ये का जीवितुमिच्छेत् । परिष्वज्येतिपाठे भर्तारं परिष्वज्य तेन सह भोगान् भुक्त्वा तं कालांतरे परित्यज्येति शेषः ॥ ५ ॥ एवं साहसकरणे हेतुमाह नेति । किंपाको निंबः । कतकस्तु किंपाको विषभेदस्तं कोपादिना भक्षयन् आत्महत्यादोषं न बुध्यते तद्वदित्यर्थ इत्याह ।

सर्वतस्तुमुलाक्रंदंपरितापार्तबांधवम् ॥ सद्योनिपतितानंदंदीनंविक्लवदर्शनम् ॥ बभूवनरदेवस्यसद्मदिष्टांतमीयुषः ॥ २८ ॥ अतीतमाज्ञायतुपार्थिवर्षभंयशस्विनंतंपरिवार्यपत्नयः ॥ भृशंरुदंत्यःकरुणंसुदुःखिताःप्रगृह्यबाहूव्यलपन्ननाथवत् ॥ २९ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेपंचषष्टितमःसर्गः ॥ ६५ ॥ तमग्निमिवसंशांतमंबुहीनमिवार्णवम् ॥ गतप्रभमिवादित्यंस्वर्गस्थंप्रेक्ष्यभूमिपम् ॥ १ ॥ कौसल्याबाष्पपूर्णाक्षीविविधंशोककर्शिता ॥ उपगृह्यशिरोराज्ञःकैकेयींप्रत्यभाषत ॥ २ ॥ सकामाभवकैकेयिभुंक्ष्वराज्यमकंटकम् ॥ त्यक्त्वाराजानमेकाग्रानृशंसेदुष्टचारिणि ॥ ३ ॥ विहायमांगतोरामोभर्ताचस्वर्गतोमम ॥ विपथेसार्थहीनेवनाहंजीवितुमुत्सहे ॥ ४ ॥ भर्तारंतुपरित्यज्यकास्त्रीदैवतमात्मनः ॥ इच्छेज्जीवितुमन्यत्रकैकेय्यास्त्यक्तधर्मणः ॥ ५ ॥ नलुब्धोबुध्यतेदोषान्किंपाकमिवभक्षयन् ॥ कुब्जानिमित्तंकैकेय्याराघवाणांकुलंहतम् ॥ ६ ॥ अनियोगेनियुक्तेनराज्ञारामंविवासितम् ॥ सभार्यंजनकःश्रुत्वापरितप्स्यत्यहंयथा ॥ ७ ॥ समामनाथांविधवांनाद्यजानातिधार्मिकः ॥ रामःकमलपत्राक्षोजीवन्नाशमितोगतः ॥ ८ ॥ विदेहराजस्यसुतातथाचारुतपस्विनी ॥ दुःखस्यानुचितादुःखंवनेपर्युद्विजिष्यति ॥ ९ ॥ नदतांभीमघोषाणांनिशासुमृगपक्षिणाम् ॥ निशम्यमानासंत्रस्ताराघवंसंश्रयिष्यति ॥ १० ॥ वृद्धश्चैवाल्पपुत्रश्चवैदेहीमनुचिंतयन् ॥ सोपिशोकसमाविष्टोननुत्यक्ष्यतिजीवितम् ॥ ११ ॥ साहमद्यैवदिष्टांतंगमिष्यामिपतिव्रता ॥ इदंशरीरमालिंग्यप्रवेक्ष्यामिहुताशनम् ॥ १२ ॥ तांततःसंपरिष्वज्यविलपंतींतपस्विनीम् ॥ व्यपनिन्युःसुदुःखार्ताःकौसल्यांव्यावहारिकाः ॥ १३ ॥

तत्र लुब्ध इति नात्यंतं समंजसम् । धनलोभादिना परस्य विषभक्षणं कारयन् यथा हत्यादोषं न बुध्यत इति वक्तुमुचितम् । यत् कैकेय्या राघवाणां कुलं हतं तत्कुब्जानिमित्तं [illegible] ॥ ६ ॥ [illegible] चितनियोगे वरव्याजात कैकेय्या नियुक्तेन राज्ञा सभार्यं रामं विवासितं श्रुत्वा जनकोहमिव परितप्स्यति ॥ ७ ॥ जीवन्नेव नाशमदर्शनं गतः । [illegible] गत इत्यर्थः ॥ ८ ॥ चारुतपस्विनी भर्तृसेवनादित्याशयः । पर्युद्वेगो भयं वने दुःखं प्राप्स्येति शेषः ॥ ९ ॥ निशम्यमाना नादमिति शेषः । [illegible] ॥ १० ॥ [illegible] शेषः । अल्पपुत्र इत्यस्य कन्यामात्रसंततिरित्यर्थ इति तीर्थः ॥ ११ ॥ दिष्टांतं मरणं शरीरालिंगनपूर्वकमग्निप्रवेशे हेतुः पतिव्रतेति ॥ १२ ॥ [illegible]

त्याः व्यपनिन्युः अंतःपुराध्यक्षस्त्रीद्वारा भर्त्रालिंगनाद्विमोच्यान्यतो निन्युरित्यर्थः ॥ १३ ॥ तैलद्रोणी तैलपूर्णकटाहः आदिष्टा वसिष्ठादिभिराज्ञप्ता अमात्यास्तस्यां नृपं संवेश्य स्थापयित्वाऽनंतरं कर्तव्यानि दुःखप रिपालनादीनि कर्माणि चक्रुः ॥ १४ ॥ पुत्रेण विना संकालनं प्रेतनिर्हारं न कर्तुमीषुः यतः सर्वज्ञाः ततो हेतोस्तैलद्रोण्यां भूपं रक्षंति ॥ १५ ॥ शायितं ज्ञात्वा हा मृतोयमिति पर्यदेवयन् ॥ १६ ॥ नेत्राणां प्रस्तवणमश्रुप्रवाहो येषु मुखेषु तैः ॥ १७ ॥ १८ ॥ १९ ॥ तव प्रभुः तव जीवनस्य प्रभुः ॥ २० ॥ विदूषिताः राज्यगंवात्तिरस्कृताः ॥ २१ ॥ २२ ॥ राघवस्य दशरथस्य ॥ २३ ॥ न अराजतेति च्छेदः ॥२४॥ शून्यचत्वरवेश्मांता संमार्जनालेपवल्ल्यादिशून्यचत्वराद्यंता । यथापुरं यथापूर्वम् ॥२५॥ राज्ञि शोकात् पुत्रशोकात्त्रिदिवं स्वर्गं गते नृपांगनासु च शोकादेव महीतलस्थासु महीतले लुठंतीषु । निवृत्तचारः

तैलद्रोण्यांतदामात्याःसंवेश्यजगतीपतिम् ॥ राज्ञःसर्वाण्यथादिष्टाश्चक्रुःकर्माण्यनंतरम् ॥ १४ ॥ नतुसंकालनंराज्ञोविनापुत्रेणमंत्रिणः ॥ सर्वज्ञाः कर्तुमीषुस्तेततोरक्षंतिभूमिपम् ॥ १५ ॥ तैलद्रोण्यांशायितंतंसचिवैस्तुनराधिपम् ॥ हामृतोयमितिज्ञात्वास्त्रियस्ताःपर्यदेवयन् ॥ १६ ॥ बाहूनु च्छ्रित्यकृपणानेत्रप्रस्रवणैर्मुखैः ॥ रुदत्यःशोकसंतप्ताःकृपणंपर्यदेवयन् ॥ १७ ॥ हामहाराजरामेणसंततंप्रियवादिना ॥ विहीनाःसत्यसंधेनकिमर्थं विजहासिनः ॥ १८ ॥ कैकेय्यादुष्टभावायाराघवेणविवर्जिताः ॥ कथंसपत्न्यावत्स्यामःसमीपेविधवावयम् ॥ १९ ॥ सहिनाथःसचास्माकंतवच प्रभुरात्मवान् ॥ वनंरामोगतःश्रीमान्विहायनृपतिश्रियम् ॥ २० ॥ त्वयातेनचवीरेणविनाव्यसनमोहिताः ॥ कथंवयंनिवत्स्यामःकैकेय्याचविदू पिताः ॥ २१ ॥ ययाचराजारामश्चलक्ष्मणश्चमहाबलः ॥ सीतयासहसंत्यक्ताःसाकमन्यंनहास्यति ॥ २२ ॥ ताबाष्पेणचसंवीताःशोकेनविपुले नच ॥ व्यचेष्टंतिनिरानंदाराघवस्यवरस्त्रियः ॥ २३ ॥ निशानक्षत्रहीनेवस्त्रीवभर्तृविवर्जिता ॥ पुरीनाराजतायोध्याहीनाराज्ञामहात्मना ॥ २४ ॥ बाष्पपर्याकुलजनाहाहाभूतकुलांगना ॥ शून्यचत्वरवेश्मांतानबभ्राजयथापुरम् ॥ २५ ॥ गतेतुशोकात्त्रिदिवंनराधिपेमहीतलस्थासुनृपांगनासुच ॥ निवृत्तचारःसहसागतोरविःप्रवृत्तचारारजनीह्युपस्थिता ॥ २६ ॥ ऋतेतुपुत्राद्दहनंमहीपतेर्नारोचयंस्तेसुहृदःसमागताः ॥ इतीवतस्मिन्शयनेन्यवेशय न्विचिंत्यराजानमचिंत्यदर्शनम् ॥ २७ ॥ गतप्रभाद्यौरिवभास्करंविनाव्यपेतनक्षत्रगणेवशर्वरी ॥ पुरीबभासेरहितामहात्मनाकंठास्रकंठाकुलमा र्गचत्वरा ॥ २८ ॥ नराश्चनार्यश्चसमेत्यसंघशोविगर्हमाणाभरतस्यमातरम् ॥ तदानगर्यांनरदेवसंक्षयेबभूवुरार्तानचशर्मलेभिरे ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे षट्षष्टितमः सर्गः ॥ ६६ ॥ आक्रंदितानिरानंदासास्रकंठजनाविला ॥ अयोध्यायामवततासा व्यतीयायशर्वरी ॥ १ ॥ व्यतीतायांतुशर्वर्यामादित्यस्योदयेततः ॥ समेत्यराजकर्तारःसभामीयुर्द्विजातयः ॥ २ ॥

निवृत्तकिरणप्रचारः । प्रवृत्तचारा प्रवृत्ततमःप्रचारा ॥२६॥ सुहृदो वसिष्ठाद्याः । पर्युषितदाहनिषेधवचनानि तु विप्रविषयाणीति न विरोधः । तस्मिन् शयने तैलद्रोण्याम् ॥ २७ ॥ आकंठं धारारूपेण प्रवहद्भिर स्रैरुपलक्षिताः कंठा येषां तैराकुला मार्गाश्चत्वराश्च यस्यां सा ॥ २८ ॥ २९ ॥ एकः श्लोकोत्र सर्गे कतकसंख्यया भ्रष्ट इति ज्ञायते ॥ धर्मात्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मी कीये आदिकाव्ये अयोध्याकांडे षट्षष्टितमः सर्गः ॥ ६६ ॥ ॥ संजाताक्रंदा अतएव निरानंदा विद्यमानास्रकंठैर्जनैराविला आकुला अवतता दुःखवशाद्दीर्घीभूता ॥१॥ राजकर्तारः राज्ञोशेषकार्यकर्तारः ॥२॥

॥ ३ ॥ पृथग्वाचं राजकार्यविषये भिन्नाभिन्नप्रस्थाना वाचोब्रुवन् एवं च कार्यसिद्धेरयोगाद्वसिष्ठमेवाभिमुखा बभूवुः ॥ ४ ॥ पुत्रशोकेनास्मिन्पार्थिवे पंचत्वम् मरणमापन्ने सति दुःखं यथा तथाः वर्षशतोपमा शर्वरी अतीतेति संबंधः ॥ ५ ॥ ६ ॥ केकयेषु । अवांतरभेदापेक्षया बहुवचनमिति कतकः । वस्तुतोंगा इत्यादिवद्बहुवचनांत एव जनपदवाचीत्यन्ये । राजगृहे राजगृहाख्ये पुरे ॥ ७ ॥ इक्ष्वाकूणां उक्ष्वाकूणां मध्ये विपक्षे बाधकमाह अराजकं हीति । हि यतो राजकं नो राष्ट्रं विनाशमवाप्नुयादतः कश्चिद्राजा विधीयताम् । राजकं सद्धि राष्ट्रं नो नाशं नावाप्नुयाद्यथेति कतकसंमतः पाठः । नोस्माकं राष्ट्रं राजकं राजयुतं सन्नाशं नाप्नुयाद्यथा तथा कश्चिद्राजा विधीयतामित्यन्वयः । हिर्वाक्यालंकारे ॥ ८ ॥ ९ ॥ बीजमुष्टिर्न प्रकीर्यते बीजानामारोपो न क्रियते फलकाले लुंटाकशंकया पितुर्वशे पुत्रो भार्या वा पत्युर्वशे न वर्तते अतिक्रमे दंडयितृभावात् ॥ १० ॥ धनाद्यभावश्च परिपालकाभावात् इदमुक्तरूपमत्याहितं महद्भयमराजके प्रथमं प्राप्नोति । अत्याहितं महाभीतिरित्यमरः । अन्यत्सत्यं पितापुत्रपति

मार्कंडेयोथमौद्गल्योवामदेवश्चकश्यपः ॥कात्यायनोगौतमश्चजावालिश्चमहायशाः ॥ ३ ॥ एतेद्विजाःसहामात्यैःपृथग्वाचमुदीरयन् ॥ वसिष्ठमेवाभिमुखाःश्रेष्ठंराजपुरोहितम् ॥ ४ ॥ अतीताशर्वरीदुःखंयानोवर्षशतोपमा ॥ अस्मिन्पंचत्वमापन्नेपुत्रशोकेनपार्थिवे ॥ ५ ॥ स्वर्गस्थश्चमहाराजोरामश्चारण्यमाश्रितः ॥ लक्ष्मणश्चापितेजस्वीरामेणैवगतःसह ॥ ६ ॥ उभौभरतशत्रुघ्नौकेकयेषुपरंतपौ ॥ पुरेराजगृहेरम्येमातामहनिवेशने ॥ ७ ॥ इक्ष्वाकूणामिहाद्यैवकश्चिद्राजाविधीयताम् ॥ अराजकंहिनोराष्ट्रंविनाशंसमवाप्नुयात् ॥ ८ ॥ नाराजकेजनपदेविद्युन्मालीमहास्वनः ॥ अभिवर्षतिपर्जन्योमहींदिव्येनवारिणा ॥ ९ ॥ नाराजकेजनपदेबीजमुष्टिःप्रकीर्यते ॥ नाराजकेपितुःपुत्रोभार्यावावर्ततेवशे ॥ १० ॥ अराजकेधनंनास्तिनास्तिभार्याप्यराजके ॥ इदमत्याहितंचान्यत्कुतःसत्यमराजके ॥ ११ ॥ नाराजकेजनपदेकारयंतिसभांनराः ॥ उद्यानानिचरम्याणिहृष्टाःपुण्यगृहाणिच ॥ १२ ॥ नाराजकेजनपदेयज्ञशीलाद्विजातयः ॥ सत्राण्यन्वासतेदांताब्राह्मणाःसंशितव्रताः ॥ १३ ॥ नाराजकेजनपदेमहायज्ञेषुयज्वनः ॥ ब्राह्मणावसुसंपूर्णाविसृजंत्याप्तदक्षिणाः ॥ १४ ॥ नाराजकेजनपदेप्रहृष्टनटनर्तकाः ॥ उत्सवाश्चसमाजाश्चवर्धंतेराष्ट्रवर्धनाः ॥ १५ ॥ नाराजकेजनपदेसिद्धार्थाव्यवहारिणः ॥ कथाभिरभिरज्यंतेकथाशीलाःकथाप्रियैः ॥ १६ ॥

भार्यारूपप्रधानसत्यादन्यत् क्रयविक्रयादिलक्षणं कुतः ॥ ११ ॥ सभां न कारयंति न्यायविचारायेति शेषः । केपि यंतीतिपाठांतरम् । उद्यानानीत्यादौ न यांतीत्यनुकर्षः । वस्त्राद्यपहारभयात् । न कारयंति वा भयादेव पुण्यगृहाणि पुण्यसंपादकगृहाणि विमाद्यर्थानि ॥ १२ ॥ सत्रं यत्र सर्वे ऋत्विजः सर्वे च यजमानाः नान्वासते नानुतिष्ठंति ॥ १३ ॥ वसुसंपूर्णाः बहुधनाः आप्तदक्षिणाः शास्त्रेण यथाप्राप्तदक्षिणाः यज्वनो ऋत्विजः प्रति न विसृजंति ॥ १४ ॥ नर्तकः सूत्रधारः नटाश्च प्रहृष्टा यत्र तादृशा उत्सवा देवाद्युत्सवाः समाजास्तत्तद्राष्ट्रकार्यसिद्धिप्रयोजनाः समूहाः ते उभयेऽपि दृष्टादृष्टशांतिद्वारा राष्ट्रवना भवंति तेन वर्धते ॥ १५ ॥ व्यवहारिणः कमप्यर्थमुद्दिश्यान्योन्यं विवदमानाः सिद्धार्थाः निर्णीतार्थाः । यद्वा व्यवहारिणः पण्यजीविनः असिद्धार्था अनिष्पन्नप्रयोजनाः ॥ कथाशीलाः पुराणादिकथाश्रवणशीलाः कथा

प्रियैः कथाकथनप्रियैः पौराणिकैरुक्ताभिः कथाभिर्न रज्यंते वक्तृश्रोतृणां स्वास्थ्याभावात् ॥ १६ ॥ समागताः मिलिताः ॥ १७ ॥ १८ ॥ १९ ॥ विषाणिनः प्रशस्तदंताः ॥२०॥ उपासने अभ्यासे ॥२१॥
॥ २२ ॥ एकोऽसहाय एव चरतीत्येकचरो यतिः वशी जितेंद्रियः आत्मना मनसा आत्मानं ब्रह्म ॥ २३ ॥ २४ ॥ प्रतिमण्डिताः भूषिताः । प्रतिमंडितैरितिपाठांतरम् ॥ २५ ॥ संवदंत उपतिष्ठंते । संधि
स्त्वार्षः ॥ २६ ॥ कल्प्यंते प्रवर्त्यंते ॥ २७ ॥ २८ ॥ २९ ॥ प्रज्ञानं अनुमापकः तेषां राज्यकर्तॄणां नोस्माकं यो राजा ध्वजः अस्मासु राज्यभारप्रतिष्ठाज्ञापकः स इतो देवत्वं गतः एवं चास्मानितः परं
केपि जना न मंस्यंतीति भावः ॥ ३० ॥ स्वकं जीवनमित्यर्थः ॥ ३१ ॥ ये संभिन्नमर्यादा उल्लंघितस्वजातवर्णाश्रममर्यादाः अतएव पूर्वं राजदंडनिपीडिता नास्तिकाः संति तेपीदानीं छिन्नसंशया राजदं

नाराजकेजनपदेतूद्यानानिसमागताः ॥ सायाह्नेक्रीडितुंयांतिकुमार्योहेमभूषिताः ॥ १७ ॥ नाराजकेजनपदेधनवंतःसुरक्षिताः ॥ शेरतेविवृतद्वाराः
कृषिगोरक्षजीविनः ॥ १८ ॥ नाराजकेजनपदेवाहनैःशीघ्रवाहिभिः ॥ नरानिर्यांत्यरण्यानिनारीभिःसहकामिनः ॥ १९ ॥ नाराजकेजनपदेबद्धघंटा
विषाणिनः ॥ अटंतिराजमार्गेषुकुंजराःषष्टिहायनाः ॥ २० ॥ नाराजकेजनपदेशरान्संततमस्यताम् ॥ श्रूयतेतलनिर्घोषइष्वस्त्राणामुपासने ॥२१॥
नाराजकेजनपदेवणिजोदूरगामिनः ॥ गच्छंतिक्षेममध्वानंबहुपण्यसमाचिताः ॥ २२ ॥ नाराजकेजनपदेचरत्येकचरोवशी ॥ भावयन्नात्मनात्मानं
यत्रसायंगृहोमुनिः ॥ २३ ॥ नाराजकेजनपदेयोगक्षेमःप्रवर्तते ॥ नचाप्यराजकेसेनाशत्रून्विषहतेयुधि ॥ २४ ॥ नाराजकेजनपदेहृष्टैःपरमवाजि
भिः ॥ नराःसंयांतिसहसारथैश्चप्रतिमंडिताः ॥ २५ ॥ नाराजकेजनपदेनराःशास्त्रविशारदाः ॥ संवदंतोपतिष्ठंतेवनेषूपवनेषुवा ॥२६॥ नाराजकेजन
पदेमाल्यमोदकदक्षिणाः ॥ देवताभ्यर्चनार्थायकल्प्यंतेनियतैर्जनैः ॥२७॥ नाराजकेजनपदेचंदनागुरुरूषिताः ॥ राजपुत्राविराजंतेवसंतइवशालिनः ॥
॥ २८ ॥ यथाह्यनुदकानद्योयथावाप्यतृणंवनम् ॥ अगोपालायथागावस्तथाराष्ट्रमराजकम् ॥ २९ ॥ ध्वजोरथस्यप्रज्ञानंधूमोज्ञानंविभावसोः ॥
तेषांयोनोध्वजोराजासदेवत्वमितोगतः ॥ ३० ॥ नाराजकेजनपदेस्वकंभवतिकस्यचित ॥ मत्स्याइवजनानित्यंभक्षयंतिपरस्परम् ॥ ३१ ॥ येहिसं
भिन्नमर्यादानास्तिकाश्छिन्नसंशयाः ॥ तेपिभावायकल्पंतेराजदंडनिपीडिताः ॥ ३२ ॥ यथादृष्टिःशरीरस्यनित्यमेवप्रवर्तते ॥ तथानरेंद्रोराष्ट्रस्य
प्रभवःसत्यधर्मयोः ॥ ३३ ॥ राजासत्यंचधर्मश्चराजाकुलवतांकुलम् ॥ राजामातापिताचैवराजाहितकरोनृणाम् ॥ ३४ ॥ यमोवैश्रवणःशक्रोवरुणश्च
महाबलः ॥ विशिष्यंतेनरेंद्रेणवृत्तेनमहताततः ॥ ३५ ॥ अहोतमइवेदंस्यान्नप्रज्ञायेतकिंचन ॥ राजाचेन्नभवेल्लोकेविभजन्साध्वसाधुनी ॥ ३६ ॥

डशंकारहिताः संतो भावाय प्रभुत्वाय कल्पंते ॥ ३२ ॥ दृष्टिश्चक्षुः यथा शरीरस्य हितसाधने अहितानिवारणे च नित्यमेव प्रवर्तते तथा राजा राष्ट्रस्य सत्यधर्मयोः प्रभवः प्रवर्तको राजा प्रजानां हितसाधनेऽहित
निवारणे च नित्यमेव प्रवर्तते ॥ ३३ ॥ राजा सत्यं च धर्मश्च सत्यधर्मयोः प्रवर्तक इत्यर्थः । कुलवतां क्षेत्रबीजशुद्धिमताम् कुलं तत्प्रवर्तकः ॥ ३४ ॥ यमादयो महता वृत्तेन युक्तेन राज्ञा विशिष्यंते अति
शय्यंते तिरस्क्रियंते यमस्य दंडमात्रं कुबेरस्य धनदत्वमेवेंद्रस्य पालनमेव वरुणस्य सदाचारे नियमनमेव गुणचतुष्टयवता राज्ञा ते तिरस्क्रियंते इति भावः ॥३५॥ साध्वसाधुनी विभजन्व्यवस्थापयन् राजा चेन्न स्यात
तदाहो सूर्याभावे तम इव तमसीव न किंचन कर्तव्याकर्तव्ये प्रज्ञायेत प्रतीयेत। तम इति प्रथमासप्तम्यर्थे अकारांततमशब्दस्य तमे इति सप्तम्यंतं वा तमस्यापि तमं तथेति द्विरूपकोशात् ॥ ३६ ॥

राजनि जीवत्यपि तव वचनं वयं नातिक्रमाम । अत इदानीमपि त्वमेव गतिरिति वसिष्ठं प्रति सर्वेषामुक्तिः ॥३७॥ स त्वं नोऽस्माकं वृत्तं कृत्यं नृपं विना प्रमुष्टमिति शेषः । तादृशं वीक्ष्य राष्ट्रं चेदं तं विनारण्यभूतं समीक्ष्येक्ष्वाकु सुतं भरतं तथान्यं वा कंचिद्राजानमभिषेचय ॥३८॥ हैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणंतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तषष्टितमः सर्गः ॥६७॥ मित्रामात्यजनाः सुमंत्रादयः । ब्राह्मणा मार्कंडेयादयः ॥ १ ॥ यद्यस्माद्राज्ञा कैकेयीवचनाद्दत्तराज्यो भरतो मातुलकुले वसति ॥ २ अतस्तावानेतुं दूता गच्छंतु वयं किं समीक्षामहे विचारयामहे राज्ञैव भरतराज्यस्य निश्चितत्वादितिभावः ॥ ३ ॥ मंत्रिणो वसिष्ठवाक्यमनुजानंति गच्छंत्विति ॥ ४ ॥ सिद्धार्थादयो मंत्रिसमाननामानो दूता न मंत्रिण इत्याहुः । अन्ये तु मंत्रिणो दूताश्चेमे इत्याहुः । इति कर्तव्यं गतैर्युष्माभिरनुष्ठेयकृत्यजातम् ॥ ५ ॥ शीघ्रजवैरतिवेगैः मम शासनाद्भरतो वाच्य इत्यन्वयः ॥ ६ ॥ कथं वाच्यस्तदाह पुरोहित इति । अत्ययं असह्यकालातिक्रमं तदेवात्ययिकं अतिक्रमे एतीत्यव्ययम् । कालातिक्रमे एति

जीवत्यपिमहाराजेतवैववचनंवयम् ॥ नातिक्रमामहेसर्वेवेलांप्राप्येवसागरः ॥ ३७ ॥ सनःसमीक्ष्यद्विजवर्यवृत्तंनृपंविनाराष्ट्रमरण्यभूतम् ॥ कुमारमिक्ष्वाकुसुतंतथान्यंत्वमेवराजानमिहाभिषेचय ॥३८॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तषष्टितमः सर्गः ॥६७॥

तेषांतद्वचनंश्रुत्वावसिष्ठःप्रत्युवाचह ॥ मित्रामात्यजनान्सर्वान्ब्राह्मणांस्तानिदंवचः ॥ १ ॥ यदसौमातुलकुलेदत्तराज्यःपरंसुखी ॥ भरतोवसतिभ्रात्राशत्रुघ्नेनमुदान्वितः ॥ २ ॥ तच्छीघ्रंजवनादूतागच्छंतुत्वरितंहयैः ॥ आनेतुंभ्रातरौवीरौकिंसमीक्षामहेवयम् ॥ ३ ॥ गच्छंत्वितिततःसर्वेवसिष्ठंवाक्यमब्रुवन् ॥ तेषांतद्वचनंश्रुत्वावसिष्ठोवाक्यमब्रवीत् ॥ ४ ॥ एहिसिद्धार्थविजयजयंताशोकनंदन ॥ श्रूयतामितिकर्तव्यंसर्वानेवब्रवीमिवः ॥ ५ ॥ पुरंराजगृहंगत्वाशीघ्रंशीघ्रजवैर्हयैः ॥ त्यक्तशोकैरिदंवाच्यःशासनाद्भरतोमम ॥ ६ ॥ पुरोहितस्त्वांकुशलंप्राहसर्वेचमंत्रिणः ॥ त्वरमाणश्चनिर्याहिकृत्यमात्ययिकंत्वया ॥ ७ ॥ माचास्मैप्रोषितंराममंमाचास्मैपितरंमृतम् ॥ भवंतःशंसिषुर्गत्वाराघवाणामितःक्षयम् ॥ ८ ॥ कौशेयानिचवस्त्राणिभूषणानिवराणिच ॥ क्षिप्रमादायराज्ञश्चभरतस्यचगच्छत ॥ ९ ॥ दत्तपथ्यशनादूताजग्मुःस्वंस्वंनिवेशनम् ॥ केकयांस्तेगमिष्यंतोहयानारुह्यसंमतान् ॥ १० ॥ ततःप्रास्थानिकंकृत्वाकार्यशेषमनंतरम् ॥ वसिष्ठेनाभ्यनुज्ञातादूताःसंत्वरितंययुः ॥ ११ ॥ न्यंतेनापरतालस्यप्रलंबस्योत्तरंप्रति ॥ निषेवमाणास्तेजग्मुर्नदींमध्येनमालिनीम् ॥ १२ ॥ तेहास्तिनपुरेगंगांतीर्त्वाप्रत्यङ्मुखाययुः ॥ पंचालदेशमासाद्यमध्येनकुरुजांगलम् ॥ १३ ॥

नश्यतीति वाच्योऽर्थः । विनयादित्वात् ठक् । तादृशं कृत्यमस्ति अतस्त्वरमाणो निर्याहि इति वाच्यमित्यनुकर्षः ॥ ७ ॥ इतः स्त्रीरूपान्मूलात्क्षयं मा शंसिषुः मा कथयंतु ॥ ८ ॥ राज्ञः केकयराजस्य ॥ ९ ॥ दत्तपथ्यशनाः दत्तं पथ्यशनसाधनं द्रव्यं येषां ते । तथा बाहुलकात् सप्तम्या अलुक् । जग्मुः स्त्रीपुत्रादेः स्वप्रयाणकथनार्थं संमतान्वेगवत्त्वेनेति शेषः ॥ १० ॥ प्रास्थानिकं कार्यशेषं प्रस्थानप्रयोजनकं कार्यशेषं विशिष्टपाथेयादिसंपादनलक्षणं कृत्वाऽनंतरं ययुः ॥ ११ ॥ अपरतालस्य तदाख्यदेशस्य न्यंतेन पश्चिमभागेन प्रलंबाख्यदेशस्योत्तरं भागं प्रति निषेवमाणां मालिनीं नदीं मध्येनातीत्य जग्मुः । अपरतालप्रलंबौ पर्वताविति कतकतीर्थौ । अयोध्यायाः पश्चिमाभिमुखं गच्छंतस्तयोरन्योन्यं पूर्वापरस्थयोरपरतालप्रलंबयोर्मध्येन मालिनीं निषेवमाणा उदङ्मुखाः कियद्दूरं गत्वा ततः प्रलंबस्योत्तरभागेन पश्चिमाभिमुखा जग्मुरित्यर्थं तीर्थ आह ॥ १२ ॥ ते प्रत्यगुदीचीं दिशं यांतस्तं पंचालदेशमासाद्य आग्नेयीदिङ्मुखप्रवाहां गंगां हास्तिनापुरसमीपे तीर्त्वा प्रत्यङ्मुखाः संतो मध्येन कुरुजांगलं कुरुजांगलस्य मध्यमार्गमाश्रित्य ययुः ॥ १३ ॥

॥ १४ ॥ शरदंडां तदाख्यां नदीं उपगम्यातिजग्मुः अतिचक्रमुः ॥ १५ ॥ निकूलवृक्षं शरदंडापाश्चिमतीरवृक्षं दिव्यं विशिष्टदेवताधिष्ठितं सत्योपयाचनं तन्नामकं अन्वर्थनामकत्वादिष्टदातारं अतएवाभि वाद्यं सर्वनमस्कार्यं वृक्षमभिगम्य प्रदक्षिणीकृत्य कुलिंगाख्यां नगरीं प्राविशन् ॥ १६ ॥ अभिकालतेजोभिभवनौ ग्रामौ । ततोयोधिवनच्युता इति पाठांतरं पितृपैतामहीमित्यार्षम् । इक्ष्वाकूणां पितृपिता महसंबंधिनीमिक्षुमतीं तेरुः ॥ १७ ॥ अंजलिपानान् अंजलिपात्रप्रमाणजलाहारान् इक्षुमतीतीरस्थान् वाह्लीकान् जनपदान् इत्येके । तद्देशस्थानंजलिपानान् ब्राह्मणानवेक्ष्येत्यन्वयः । अंजलिना पिबंति तादृशान् वेदपारगान् ब्राह्मणान् दृष्ट्वेत्यनेन वाह्लीकदेशस्यात्यनाचारत्वं सूचितम् । यत्र वेदपारगा ब्राह्मणा अपि ईदृशाः का कथाऽन्येषामिति । तथा भारते कर्णपर्वणि वाह्लीका नाम ते देशा न तत्र दिवसं वसेदिति परे ॥ १८ ॥ विष्णोः पदं सुदामपर्वतस्थं विष्णुपदांकितस्थानम् । विपाशाशाल्मल्यौ नद्यौ । ते प्रेक्ष्येत्यनुकर्षः ॥ १९ ॥ २० ॥ विकृष्टेन विप्रकृष्टेनातिदूरेणेत्यर्थः । सता निरुपद्रवेण गिरिव्रजं केकय

सरांसिचसुफुल्लानिनदीश्चविमलोदकाः ॥ निरीक्षमाणाजग्मुस्तेदूताःकार्यवशाद्द्रुतम् ॥ १४ ॥ तेप्रसन्नोदकांदिव्यांनानाविहगसेविताम् ॥ उपाति जग्मुर्वेगेनशरदंडांजलाकुलाम् ॥ १५ ॥ निकूलवृक्षमासाद्यदिव्यंसत्योपयाचनम् ॥ अभिगम्याभिवाद्यंतंकुलिंगांप्राविशन्पुरीम् ॥ १६ ॥ अभिकालं ततःप्राप्यतेजोभिभवनाच्च्युताः ॥ पितृपैतामहींपुण्यांतेरुरिक्षुमतींनदीम् ॥ १७ ॥ अवेक्ष्यांजलिपानांश्चब्राह्मणान्वेदपारगान् ॥ ययुर्मध्येनवाह्लीकान्सुदामानंचपर्वतम् ॥ १८ ॥ विष्णोःपदंप्रेक्षमाणाविपाशांचापिशाल्मलीम् ॥ नदीर्वापीतटाकानिपल्वलानिसरांसिच ॥ १९ ॥ पश्यंतोविविधांश्चापिसिंहान्व्याघ्रान्मृगान्द्विपान् ॥ ययुःपथातिमहताशासनंभर्तुरीप्सवः ॥ २० ॥ तेश्रांतवहनादूताविकृष्टेनसतापथा ॥ गिरिव्रजंपुरवरंशीघ्रमासेदुरंजसा ॥ २१ ॥ भर्तुःप्रियार्थंकुलरक्षणार्थंभर्तुश्चवंशस्यपरिग्रहार्थम् ॥ अहेडमानास्त्वरयास्मदूताराञ्यांतुतेतत्पुरमेवयाताः ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टषष्टितमः सर्गः ॥ ६८ ॥ यामेवरात्रिंतेदूताःप्रविशंतिस्मतांपुरीम् ॥ भरतेनापितांरात्रिंस्वप्नोदृष्टोऽयमप्रियः ॥ १ ॥ व्युष्टामेवतुतांरात्रिंदृष्ट्वातंस्वप्नमप्रियम् ॥ पुत्रोराजाधिराजस्यसुभृशंपर्यतप्यत ॥ २ ॥ तप्यमानंतमाज्ञायवयस्याःप्रियवादिनः ॥ आयासंविनयिष्यंतःसभायांचक्रिरेकथाः ॥ ३ ॥ वादयन्तितदाशांतिंलासयंत्यापिचापरे ॥ नाटकान्यपरेस्माहुर्हास्यानिविविधानिच ॥ ४ ॥

राजगृहापरनामकम् । सप्तरात्रेण गत्वा वै दूतास्ते श्रांतवाहना इति क्वचित्पाठस्तु दृश्यते ॥ २१ ॥ भर्तुरिति । भर्तुर्नियोक्तुर्वसिष्ठस्य प्रियार्थं शीघ्रगमनेन प्रीतिसंपादनार्थम् । यद्वा भर्तुर्दशरथस्य प्रियार्थं शीघ्रानीतभरतकृतौर्ध्वदेहिकेन परलोकप्राप्तेः कुलस्य प्रजाकुलस्य रक्षणार्थम् भर्तुर्दशरथस्य वंशो वंशपरंपरागतराज्यं तस्य परिग्रहार्थम् भरतेन स्वीकारार्थम् अहेडमानाः उपेक्षारहिताः हेडृ अनादरे । अतएव त्वरया युक्ता दूता राञ्यामेव तत्पुरं याताः ॥ २२ ॥ अत्र कतकोक्तसंख्यारीत्या षट्श्लोकास्त्रुटिताः ॥ २२ फ्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टषष्टितमः सर्गः ॥ ६८ ॥ ॥ यामिति । यामेव रात्रिं प्राप्य दूताः पुरीं प्रविशंति स्मेति योजना । अयं वक्ष्यमाणः ॥ १ ॥ व्युष्टां प्रभातरूपां तां रात्रिं प्राप्याप्रियं स्वप्नं दृष्ट्वा पर्यतप्यतेत्यन्वयः । प्रातःकालिकत्वेन शीघ्रफलता स्वप्नस्य सूचिता ॥ २ ॥ आयासं दुःस्वप्नदर्शनजं दुःखं विनयिष्यंतः अपनेष्यन्तः ॥ ३ ॥ अन्ये तद्दरीकर्वंतो वीणादि वादयंति । अपरे शांतिं तस्य खेदशांतिमुद्दिश्य लासयंति नर्तयंति

वेद्याः । शांतिं लेलयंतीतिपाठे तस्य शांतिं तूष्णीमवस्थानं लेलयंति चालयंति । श्लोकाद्यर्थप्रश्नव्याजेनेत्यर्थः । अपरे हास्यानि हास्यरसप्रधानानि विविधानि नाटकान्याहुः ॥ ४ ॥ गोष्ठीहास्यानि गोष्ठ्युचि तानि हास्यानि नर्माणि ॥ ५ ॥ प्रियसखः सखिमात्रस्य प्रियत्वाविवादाद्भूयो गतिर्ज्ञेया अत्यंतप्रिय इति नानुमोदसे गानादीति शेषः ॥ ६ ॥ ७ ॥ गोमये ह्रदे गोमयपूर्णे ह्रदे ॥ ८ ॥ ९ ॥ तिलौदनं तिलमिश्रमोदनं अन्वगाहतेत्यंतः प्रथमः स्वप्नः ॥ १० ॥ स्वप्नांतरमाह स्वप्नेपीति । तमसा समावृतामेवोपरुद्धां तिरोहिताम् । यद्वाऽसुररक्षोभिरुपरुद्धाम् ॥ ११ ॥ औपवाह्यस्य राजवाहनस्य नागस्य दंतिनः विषाणं दंतः । ज्वलिता अग्नयोऽकस्माच्छांता दृष्टाः ॥ १२ ॥ अवदीर्णां विदीर्णाम् ॥ १३ ॥ कृष्णाश्च पिंगलाश्च प्रमदाः ॥ १४ ॥ १५ ॥ रक्तवासिनी रक्तवस्त्रा प्रहसंतीव ॥ १६ ॥ इमां भयावहां रात्रिं प्राप्य एवमेतद्दृष्टं अहं मरिष्यामीति विपरिणामः ॥ १७ ॥ दृष्टदुःस्वप्नफलं निगमयति नर इत्यादि धूम्राग्रं धूमशिखा ॥ १८ ॥ एतदुक्तं निमित्तं स्वप्नरूपं दृष्ट्वेति शेषः । वचः युष्माकं न प्रतिपूजये ।

संतंमहात्माभरतःसखिभिःप्रियवोधिभिः॥ गोष्ठीहास्यानिकुर्वद्भिर्नप्राहृष्यतराघवः ॥५ ॥ तमब्रवीत्प्रियसखोभरतंसखिभिर्वृतम् ॥ सुहृद्भिःपर्युपासीनःकिंसखेनानुमोदसे ॥ ६ ॥ एवंब्रुवाणंसुहृदंभरतःप्रत्युवाचह ॥ शृणुत्वंयन्निमित्तंमेदैन्यमेतदुपागतम् ॥ ७ ॥ स्वप्नेपितरमद्राक्षंमलिनंमुक्तमूर्धजम्॥ पतंतमद्रिशिखरात्कलुषेगोमयेह्रदे ॥ ८ ॥ प्लवमानश्चमेदृष्टःसतस्मिन्गोमयेह्रदे॥ पिबन्नंजलिनातैलंहसन्निवमुहुर्मुहुः॥ ९ ॥ ततस्तिलौदनंभुक्त्वापुनःपुनरधःशिराः ॥ तैलेनाभ्यक्तसर्वांगस्तैलमेवान्वगाहत ॥ १० ॥ स्वप्नेपिसागरंशुष्कंचंद्रंचपतितंभुवि ॥ उपरुद्धांचजगतींतमसेवसमावृताम् ॥ ११ ॥ औपवाह्यस्यनागस्यविषाणंशकलीकृतम् ॥ सहसाचापिसंशांताज्वलिताजातवेदसः ॥१२॥ अवदीर्णांचपृथिवींशुष्कांश्चविविधान्द्रुमान् ॥ अहंपश्यामिविध्वस्तान्सधूमांश्चैवपर्वतान् ॥ १३ ॥ पीठेकार्ष्णायसेचैवनिषण्णंकृष्णवाससम् ॥ प्रहरंतिस्मराजानंप्रमदाःकृष्णपिंगलाः ॥ १४ ॥ त्वरमाणश्चधर्मात्मारक्तमाल्यानुलेपनः ॥ रथेनखरयुक्तेनप्रयातोदक्षिणामुखः ॥ १५ ॥ प्रहसंतीवराजानंप्रमदारक्तवासिनी ॥ प्रकर्षंतीमयादृष्टाराक्षसीविकृतानना ॥ १६ ॥ एवमेतन्मयादृष्टमिमांरात्रिंभयावहाम् ॥ अहंरामोथवाराजालक्ष्मणोवामरिष्यति ॥ १७ ॥ नरोयानेनयःस्वप्नेखरयुक्तेनयातिहि ॥ अचिरात्तस्यधूम्राग्रंचितायांसंप्रदृश्यते ॥ १८ ॥ एतन्निमित्तंदीनोहंनवचःप्रतिपूजये ॥ शुष्यतीवचमेकंठोनस्वस्थमिवमेमनः ॥ १९ ॥ नपश्यामिभयस्थानंभयंचैवोपधारये ॥ भ्रष्टश्चस्वरयोगोमेछायाचापगतामम ॥ २० ॥ जुगुप्सइवचात्मानंनचपश्यामिकारणम् ॥ २१ ॥ इमांचदुःस्वप्नगतिंनिशम्यहित्वनेकरूपामवितर्कितापुरा ॥ भयंमहत्तद्धृदयान्नयातिमेविचिंत्यराजानमचिंत्यदर्शनम् ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनसप्ततितमः सर्गः ॥ ६९ ॥ भरतेब्रुवतिस्वप्नंदूतास्तेक्लांतवाहनाः ॥ प्रविश्यासह्यपरिखंरम्यंराजगृहंपुरम् ॥ १ ॥

न प्रतिपेप्रिय इतिपाठे युष्माकं वचः प्रति नयेन भृशं प्रीतो भवामीत्यर्थः । यङंताल्लडिति कतकः ॥ १९ ॥ भयस्थानं भयकारणम् । उपधारये अवशतो बिभर्मि । छाया कांतिः अपगता पूर्वरूपं त्यक्तवती मलिनेत्यर्थः ॥ २० ॥ आत्मानं जुगुप्स इव किमर्थं मम जन्मेत्येवमादिरूपेण कारणं जुगुप्सकारणम् । जुगुप्सन्निवेतिपाठे जुगुप्सन्निव तिष्ठामि तत्कारणं च न पश्यामीत्यर्थः ॥ २१ ॥ पुरा पूर्वमतर्कितां अनेकरूपां दुःस्वप्नगतिं निशम्य हि दुःस्वप्नं स्मृत्वा हि स्मृत्वैव चिंताया अविषयदर्शनमपि राजानं विचिंत्य राजदर्शनविषयां चिंतां प्राप्य महद्भयं मे हृदयान्न यातीत्यर्थः ॥ २२ ॥ रैफमानः ॥ इति श्रीरामाभिरामे श्रीरामीय रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनसप्ततितमः सर्गः ॥ ६९ ॥ ॥ असह्या दुःसहाः परिखाः परिखाप्रदेशवर्तिप्राकारयंत्रसमूहो यस्य तत । असह्यपरिखमिति

यातुं महाशैलानत्यगादितिपाठांतरेऽर्थः ॥ ४ ॥ सरस्वतीम् इयमत्र पश्चिमप्रवाहा गंगापदेनात्र सुचक्षुसीताद्यन्यतमाः पश्चिमप्रवाहा ग्राह्याः एतास्तिस्रो गंगाप्रवाहा एवेति पुराणप्रसिद्धम् । तां युग्मेन संगमेन प्रतिपद्य प्राप्य वीरमत्स्यानां देशानामुत्तरान्देशान्प्राप्य भारुंडाख्यं वनं प्राविशत् । उत्तरमितिपाठे वनविशेषणं तत् ॥ ५ ॥ ततो वेगिनीत्वादिविशेषवतीं कुलिंगाख्यां नदीं संतीर्णो यमुनां प्राप्य बलमाश्वासयत् ॥ ६ ॥ गात्राणि वाजिनां शीतीकृत्वा स्नपनादिना आश्वास्य छायायां घासादिदानेन उदकमादाय तीर्थबुद्ध्या ॥ ७ ॥ अनभीक्ष्णोपसेवितं बहुधा जनैरनुपसेवितं भद्रेण प्रशस्तेन रथेन भद्रजातीयेन गजेन वा ॥ ८ ॥ अंशुधाने ग्रामे महानदीं गंगां दुष्प्रतरां ज्ञात्वा प्राग्वटे पुरे आगत्य तत्र तां तीर्त्वा कुटिकोष्टिकां आयात्तां तीर्त्वा धर्मवर्धनं ग्राममगात् ॥ ९ ॥ १० ॥ तोरणं दक्षिणार्धेन तोरणग्रामस्य दक्षि

सरस्वतींचगंगांचयुग्मेनप्रतिपद्यच ॥ उत्तरान्वीरमत्स्यानांभारुंडंप्राविशद्वनम् ॥५॥ वेगिनींचकुलिंगाख्यांह्रादिनींपर्वतावृताम् ॥ यमुनांप्राप्यसंतीर्णोबलमाश्वासयतदा ॥ ६ ॥ शीतीकृत्वातुगात्राणिक्लांतानाश्वास्यवाजिनः ॥ तत्रस्नात्वाचपीत्वाचप्रायादादायचोदकम् ॥ ७ ॥ राजपुत्रोमहारण्यमनभीक्ष्णोपसेवितम् ॥ भद्रोभद्रेणयानेनमारुतःखमिवात्यगात् ॥८॥ भागीरथींदुष्प्रतरांसोंऽशुधानेमहानदीम् ॥ उपायाद्राघवस्तूर्णंप्राग्वटेविश्रुतेपुरे ॥ ९ ॥ सगंगांप्राग्वटेतीर्त्वासमायात्कुटिकोष्टिकाम् ॥ सबलस्तांसतीर्त्वाथसमगाद्धर्मवर्द्धनम् ॥१०॥ तोरणंदक्षिणार्धेनजंबूप्रस्थंसमागमत् ॥ वरूथंचययौरम्यंग्रामंदशरथात्मजः ॥ ११ ॥ तत्ररम्येवनेवासंकृत्वासौप्राङ्मुखोययौ ॥ उद्यानमुज्जिहानायाःप्रियकायत्रपादपाः ॥ १२ ॥ सतांस्तुप्रियकान्प्राप्यशीघ्रानास्थायवाजिनः ॥ अनुज्ञाप्याथभरतोवाहिनींत्वरितोययौ ॥ १३ ॥ वासंकृत्वासर्वतीर्थेतीर्त्वाचोत्तरगांनदीम् ॥ अन्यानदीश्चविविधैःपार्वतीयैस्तुरंगमैः ॥ १४ ॥ हस्तिपृष्ठकमासाद्यकुटिकामप्यवर्तत ॥ ततारचनरव्याघ्रोलोहित्येचकपीवतीम् ॥ १५ ॥ एकसालेस्थाणुमतींविनतेगोमतींनदीम् ॥ कलिंगनगरेचापिप्राप्यसालवनंतदा ॥१६॥ भरतःक्षिप्रमागच्छत्सुपरिश्रांतवाहनः ॥ वनंचसमतीत्याशुशर्वर्यामरुणोदये ॥१७॥ अयोध्यांमनुनाराज्ञानिर्मितांसददर्शह ॥ तांपुरींपुरुषव्याघ्रःसप्तरात्रोषितःपथि ॥ १८ ॥ अयोध्यामग्रतोदृष्ट्वासारथिंचेदमब्रवीत् ॥ एषानातिप्रतीतामेपुण्योद्यानायशस्विनी ॥ १९ ॥ अयोध्यादृश्यतेदूरात्सारथेपांडुमृत्तिका ॥ यज्विभिर्गुणसंपन्नैर्ब्राह्मणैर्वेदपारगैः ॥ २० ॥ भूयिष्ठमृद्धैराकीर्णाराजर्षिवरपालिता ॥ अयोध्यायांपुराशब्दःश्रूयतेतुमुलोमहान् ॥ २१ ॥

णभागेन जंबूप्रस्थाख्यं ग्राममागतः वरूथं तदाख्यम् ॥ ११ ॥ उज्जिहानायास्तन्नामकनगर्याः प्रियकास्तन्नामानो वृक्षाः ॥ १२ ॥ सालांस्तु प्रियकानितिपाठे सालशब्दो वृक्षपर्यायः । स तांस्त्विति पाठे स भरत इत्यर्थः । शीघ्रान्वाजिन आस्थाय रथे संयोज्य अनुज्ञाप्य मया शीघ्रं गम्यते भवद्भिर्मंदमागंतव्यमित्येवं उज्जिहानाया अर्वाक्स्वदेशत्वेन भयाभावात् ॥ १३ ॥ सर्वतीर्थे तदाख्यग्रामे पार्वतीयैः पर्वतोद्भवैः । स्वार्थिकाणंतमित्याहुः ॥ १४ ॥ हस्तिपृष्ठकं ग्रामः कुटिका नदी लोहित्ये ग्रामे कपीवतीं नदीम् ॥ १५ ॥ हस्तिपृष्ठेति एकसालेति श्लोकद्वयं प्रक्षिप्तमिति कतकः ॥ १६ ॥ भरत इति ॥ १७ ॥ १८ ॥ नातिप्रतीता नातिहृषिता । प्रतीतो हृषितःख्यात इति वैजयंती ॥ १९ ॥ पांडुमृत्तिका सुधाधवलितत्वान्निरानंदत्वाच्च पांडुमृत्तिकारूपकम् । यज्वादिभिर्व्याप्तापि राजपालितापि पांडुमृत्तिकासमूह इव निःसारा ॥ २० ॥ २१ ॥

सायाह्ने उद्यानानि प्रविश्य रात्रौ क्रीडित्वोपरतैर्नरैः प्रातः समंताद्विप्रधावद्भिर्यानि पूर्वमत्यंतं प्रकाशंते तान्यद्य कामिभिः परित्यक्तानि । अनु मां लक्षीकृत्य रुदंतीव ममान्यथा महारण्यानीव प्रकाशंते ॥ २२ ॥ २३ ॥ यानैः शिबिकादिभिः अभियांतः प्रविशंतः ॥ २४ ॥ मत्तप्रमुदितानि मत्तप्रमुदितभृंगकोकिलादिमंति तादृशस्त्रीपुरुषवंति च । रत्यर्थसंयोगे विविधकुसुमलतागृहदीर्घिकाक्रीडपर्वतादियुक्ततया यान्यत्यंतगुणवंति अत्यंतमनुकूलानि तान्यद्य निरानंदानि पश्यामि ॥ २५ ॥ यतो विक्रोशद्भिरिव द्रुमैरुपलक्षितानि ॥ २६ ॥ अद्यापि उदितेपि सूर्ये अस्मासु प्रत्यासन्नेष्वपि कलमव्यक्तम् ॥ २७ ॥ संमूर्छितो व्याप्तः ॥ २८ ॥ कोणो भेर्यादिवादनदंडस्तेन संघट्टितस्तदाघातजनितो यः पुरा सदा अदीनगतिरनुभूतः स किं विरतः ॥ २९ ॥ अनिष्टानि अनिष्टसूचकानि पापानि क्रूराणि काकादयः ।

समंतान्नरनारीणांतमद्यनशृणोम्यहम् ॥ उद्यानानिहिसायाह्नेक्रीडित्वोपरतैर्नरैः ॥ २२ ॥ समंताद्विप्रधावद्भिःप्रकाशंतेममान्यथा ॥ तान्यद्यानुरुदंतीवपरित्यक्तानिकामिभिः ॥ २३ ॥ अरण्यभूतेवपुरीसारथेप्रतिभातिमाम् ॥ नह्यत्रयानैर्दृश्यंतेनगजैर्नचवाजिभिः ॥ निर्यांतोवाभियांतोवानरमुख्यायथापुरा ॥ २४ ॥ उद्यानानिपुराभांतिमत्तप्रमुदितानिच ॥ जनानांरतिसंयोगेष्वत्यंतगुणवंतिच ॥ २५ ॥ तान्येतान्यद्यपश्यामिनिरानंदानिसर्वशः ॥ स्रस्तपर्णैरनुपथंविक्रोशद्भिरिवद्रुमैः ॥२६॥ नाद्यापिश्रूयतेशब्दोमत्तानांमृगपक्षिणाम् ॥ सरक्तांमधुरांवाणींकलंव्याहरतांबहु ॥२७॥ चंदनागुरुसंपृक्तधूपसंमूर्च्छितोमलः ॥ प्रवातिपवनःश्रीमान्किंनुनाद्ययथापुरा ॥ २८ ॥ भेरीमृदंगवीणानांकोणसंघट्टितःपुनः ॥ किमद्यशब्दोविरतःसदादीनगतिःपुरा ॥ २९ ॥ अनिष्टानिचपापानिपश्यामिविविधानिच ॥ निमित्तान्यमनोज्ञानितेनसीदतिमेमनः ॥ ३० ॥ सर्वथाकुशलंसूतदुर्लभंममबंधुषु ॥ तथाह्यसतिसंमोहेहृदयंसीदतीवमे ॥ ३१ ॥ विषण्णःश्रांतहृदयस्त्रस्तःसंलुलितेंद्रियः ॥ भरतःप्रविवेशाशुपुरीमिक्ष्वाकुपालिताम् ॥ ३२ ॥ द्वारेणवैजयंतेनप्राविशच्छ्रांतवाहनः ॥ द्वाःस्थैरुत्थायविजयंपृष्टस्तैःसहितोययौ ॥ ३३ ॥ सत्वनेकाग्रहृदयोद्वाःस्थंप्रत्यर्च्यतंजनम् ॥ सूतमश्वपतेःक्लांतमब्रवीत्तत्रराघवः ॥ ३४ ॥ किमहंत्वरयानीतःकारणेनविनानघ ॥ अशुभाशंकिहृदयंशीलंचपततीवमे ॥ ३५ ॥ श्रुतानुयादृशाःपूर्वंनृपतीनांविनाशने ॥ आकारांस्तानहंसर्वानिहपश्यामिसारथे ॥३६॥ संमार्जनविहीनानिपरुषाण्युपलक्षये ॥ असंयतकवाटानिश्रीविहीनानिसर्वशः ॥३७॥ वलिकर्मविहीनानिधूपसंमोदनेनच ॥ अनाशितकुटुंबानिप्रभाहीनजनानिच ॥ ३८ ॥

पापं स्यात्क्रूरपाप्मनोः । अमनोज्ञानि अशुभसूचकानि निमित्तानि वामाक्षिस्पंदादीनि ॥ ३० ॥ असति संमोहे तत्कारणे ॥ ३१ ॥ विषण्णो दीनः श्रांतहृदयः खिन्नचित्तः संलुलितानि क्षुभितानि इंद्रियाणि यस्य सः ॥ ३२ ॥ वैजयंतेन इंद्रप्रासादद्वारतुल्यद्वारेण तन्नामकेन वा विजयं पृष्टः कृतविजयप्रश्नः । विजयमुक्त इतिपाठांतरम् ॥ ३३ ॥ अनेकाग्रहृदयः व्याकुलहृदयः द्वाःस्थं जनं प्रत्यर्च्य सोपचारं निवर्त्य अश्वपतेः केकयस्य ॥ ३४ ॥ आनीतः दूतद्वारेति शेषः कारणेन विना कारणोक्तिं विना अतएव मे हृदयमशुभाशंकि शीलं धैर्यादिस्वभावः पतति गलति ॥ ३५ ॥ श्रुताः कथास्विति शेषः । तांस्तादृशान् ॥ ३६ ॥ तानाकारानाह संमार्जनेत्यादि । ईदृशानि कुटुंबिभवनान्युपलक्षये इति संबंधः । असंयतकवाटानि अनाशितकुटुंबानीति वक्ष्यमाणत्वेन तद्बंधनसामर्थ्याभावात् ॥ ३७ ॥ धूपसंमोदनेन परिमलेन हीनानीति

शेषः । अनाशितकुटुंबानि अभोजितकुटुंबानि प्रभा शोभा ॥३८॥ अलक्ष्मीकानि विचित्रध्वजतोरणाद्यभावात् ॥३९॥ देवतार्चाः प्रतिमाः प्रविद्धाः निरस्तपूजनाः यज्ञगोष्ठास्तथाविधाः प्रविद्धाः यज्ञरहिताः॥४०॥ माल्यापणेषु माल्यविक्रयापणेषु पण्यानि माल्यरूपाणि ॥ ४१ ॥ नष्टेन व्यापारेण क्रयविक्रयादिव्यापारेण यंत्रिताः निरुद्धापणाः ॥ ४२ ॥ मलिनत्वादिगुणकं स्त्रीपुंसं पश्यापि ॥ ४३ ॥ ४४ ॥ शृंगाटकं चतुष्पथः रजसारुणानि धूसराणि द्वारकवाटानि द्वारयंत्राणि च यस्याम् ॥ ४५ ॥ अन्यदा राजजीवने ॥ ४६ ॥ चैर्वैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये

अलक्ष्मीकानिपश्यामिकुटुंबिभवनान्यहम् ॥ अपेतमाल्यशोभानिअसंमृष्टाजिराणिच ॥ ३९ ॥ देवागाराणिशून्यानिनभांतीहयथापुरा ॥ देवतार्चाः प्रविद्धाश्चयज्ञगोष्ठास्तथैवच ॥ ४० ॥ माल्यापणेषुराजंतेनाद्यपण्यानिवातथा ॥ दृश्यंतिवणिजोप्यद्यनयथापूर्वमत्रवै ॥ ४१ ॥ ध्यानसंविग्नहृदयानष्ट व्यापारयंत्रिताः ॥ देवायतनचैत्येषुदीनाःपक्षिमृगास्तथा ॥४२॥ मलिनंचाश्रुपूर्णाक्षंदीनंध्यानपरंकृशम् ॥ सस्त्रीपुंसंचपश्यामिजनमुत्कंठितंपुरे ॥ ॥४३॥ इत्येवमुक्त्वाभरतःसूतंतंदीनमानसः ॥ तान्यनिष्टान्ययोध्यायांप्रेक्ष्यराजगृहंययौ ॥ ४४ ॥ तांशून्यशृंगाटकवेश्मरथ्यांरजोरुणद्वारकवाटयं त्राम् ॥ दृष्ट्वापुरीमिंद्रपुरीप्रकाशांदुःखेनसंपूर्णतरोबभूव ॥४५॥ बभूवपश्यन्मनसोप्रियाणियान्यन्यदानास्यपुरेबभूवुः ॥ अवाक्शिरादीनमनानहृष्टः पितुर्महात्माप्रविवेशवेश्म ॥ ४६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकसप्ततितमः सर्गः ॥७१॥ अपश्यंस्तुततस्तत्र पितरंपितुरालये ॥ जगामभरतोद्रष्टुंमातरंमातुरालये ॥ १ ॥ अनुप्राप्तंतुतंदृष्ट्वाकैकेयीप्रोषितंसुतम् ॥ उत्पपाततदाहृष्टात्यक्त्वासौवर्णमासनम् ॥२॥ सप्रविश्यैवधर्मात्मास्वगृहंश्रीविवर्जितम् ॥ भरतःप्रेक्ष्यजग्राहजनन्याश्चरणौशुभौ ॥ ३ ॥ तंमूर्ध्निसमुपाघ्रायपरिष्वज्ययशस्विनम् ॥ अंकेभरतमारो प्यप्रष्टुंसमुपचक्रमे ॥ ४ ॥ अद्यतेकतिचिद्रात्र्यश्च्युतस्यार्यकवेश्मनः ॥ अपिनाध्वश्रमःशीघ्रंरथेनापततस्तव ॥ ५ ॥ आर्यकस्तेसुकुशलीयुधाजिन्मा तुलस्तव ॥ प्रवासाच्चसुखंपुत्रसर्वंमेवक्तुमर्हसि ॥ ६॥ एवंपृष्टस्तुकैकेय्याप्रियंपार्थिवनंदनः ॥ आचष्टभरतःसर्वंमात्रेराजीवलोचनः ॥७॥ अद्यमेसप्तमी रात्रिश्च्युतस्यार्यकवेश्मनः ॥ अंबायाःकुशलीतातोयुधाजिन्मातुलश्चमे ॥ ८ ॥ यन्मेधनंचरत्नंचददौराजापरंतपः ॥ परिश्रांतंपथ्यभवत्ततोहंपूर्व मागतः ॥ ९ ॥ राजवाक्यहरैर्दूतैस्त्वर्यमाणोहमागतः ॥ यदहंप्रष्टुमिच्छामितदंबावक्तुमर्हति ॥ १० ॥ शून्योयंशयनीयस्तेपर्यंकोहेमभूषितः ॥ नचायमिक्ष्वाकुजनःप्रहृष्टःप्रतिभातिमे ॥ ११ ॥

आदिकाव्ये अयोध्याकांडे एकसप्ततितमः सर्गः ॥ ७१ ॥ ॥ अपश्यन्निति ॥ १ ॥ २ ॥ स्वगृहं स्वमातृगृहम् ॥ ३ ॥ ४ ॥ आर्यकवेश्मनः मातामहगृहाच्च्युतस्य ते मार्गे कतिचित्कति रात्र्यो लग्नास्त द्वक्तुमर्हसीत्यन्वयः । रथेन शीघ्रमागच्छतस्तवाध्वनि श्रमो न खलु तद्वद ॥ ५ ॥ आर्यको मातामहः मातुलश्च कुशली नवेति इतः प्रवासादारभ्य मातुलगृहे सुखं नवेत्येतत्सर्वं वक्तुमर्हसि ॥ ६ ॥ ७ ॥ च्युतस्य चलितस्य सप्तमी रात्रिः एतद्दिनात्पूर्वा रात्रिः सप्तमीत्यर्थः । तेन सप्तरात्रोषितः पथीत्यनेन न विरोधः ॥८॥ परिश्रांतं परिश्रांतवाहनम् ॥९॥१०॥ शून्यः पित्रेति शेषः । ते शयनीयः शयनार्हः॥११॥

द्रष्टुमिच्छन्निहागतः प्रायेणेह तस्यावस्थानात् ॥ १२ ॥ अंबानां मध्ये या ज्येष्ठा तस्याः निवेशने तिष्ठतीति शेषः ॥ १३ ॥ अजानंतमिति राजवृत्तांतमिति शेषः । प्रियवत्प्रजानंतीति योजना तत्र हेतू राज्यलोभनेति ॥ १४ ॥ यायजूको यज्ञशीलः ॥ १५ ॥ धर्माभिजनवान् धर्मयुक्तवंशवान् ॥ १६ ॥ बाहू विक्षिप्य भूमावाहत्य ॥ १७ ॥ शोकेन संवीतआवृतचित्तः मरणदुःखितः मरणश्रवणेन संजातदुःखः भ्रांता अनवस्थिता आकुलिता खिन्ना चेतना यस्य स तादृशो विललाप ॥ १८ ॥ विलापं दर्शयति एतदिति । पुरा भाति स्म ॥ १९ ॥ अपशुष्कः आपः शुष्का यस्मिन्कालाग्निना सः । अप् शुष्कमिव सागरमितिपाठे सागरस्वरूपमित्यर्थः । शुष्काप इतिपाठांतरम् ॥ २० ॥ श्रीमद्वदनं वस्त्रेणाच्छाद्य कंठेन कंठस्वरेण सह बाष्पं नेत्रजलमुत्सृज्य भूमौ पतित्वा विललापेति शेषः ॥ २१ ॥ सालस्य

राजाभवतिभूयिष्ठमिहांबायानिवेशने॥तमहंनाद्यपश्यामिद्रष्टुमिच्छन्निहागतः ॥१२॥ पितुर्ग्रहीष्येपादौचतंममाख्याहिपृच्छतः ॥ अहोस्विदंबाज्ये ष्ठायाःकौसल्यायानिवेशने ॥ १३ ॥ तंप्रत्युवाचकैकेयीप्रियवद्धोरमप्रियम् ॥ अजानंतंप्रजानंतीराज्यलोभेनमोहिता ॥ १४॥ यागतिःसर्वभूतानां तांगतिंतेपितागतः ॥ राजामहात्मातेजस्वीयायजूकःसतांगतिः ॥ १५॥ तच्छ्रुत्वाभरतोवाक्यंधर्माभिजनवाञ्छुचिः ॥ पपातसहसाभूमौपितृशो कबलार्दितः ॥ १६॥ हाहतोस्मीतिकृपणंदीनांवाचमुदीरयन् ॥ निपपातमहाबाहुर्बाहूवीक्षिप्यवीर्यवान् ॥ १७ ॥ ततःशोकेनसंवीतःपितुर्मरणदुः खितः॥ विललापमहातेजाभ्रांताकुलितचेतनः ॥ १८ ॥ एतत्सुरुचिरंभातिपितुर्मेशयनंपुरा ॥ शशिनेवामलंरात्रौगगनंतोयदात्यये ॥ १९॥ तादिदं नविभात्यद्यविहीनंतेनधीमता ॥ व्योमेवशशिनाहीनमप्शुष्कइवसागरः ॥ २० ॥ बाष्पमुत्सृज्यकंठेनस्वात्मनापरिपीडितः ॥ प्रच्छाद्यवदनंश्री मद्वस्त्रेणजयतांवरः॥ २१ ॥ तमार्तंदेवसंकाशंसमीक्ष्यपतितंभुवि ॥ निकृत्तमिवसालस्यस्कंधंपरशुनावने॥ २२ ॥ मातामातंगसंकाशंचंद्रार्कसदृशं सुतम् ॥ उत्थापयित्वाशोकार्तंवचनंचेदमब्रवीत् ॥ २३ ॥ उत्तिष्ठोत्तिष्ठकिंशेषेराजन्नत्रमहायशः ॥ त्वद्विधानहिशोचंतिसंतःसदसिसंमताः ॥ २४ ॥ दानयज्ञाधिकाराहिशीलश्रुतितपोनुगा॥ बुद्धिस्तेबुद्धिसंपन्नप्रभेवार्कस्यमंदिरे ॥ २५ ॥ सरुदित्वाचिरंकालंभूमौपरिविवृत्यच ॥ जननींप्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६ ॥ अभिषेक्ष्यतिरामंतुराजायज्ञंनुयक्ष्यते ॥ इत्यहंकृतसंकल्पोहृष्टोयात्रामयासिषम् ॥ २७ ॥ तदिदंह्यन्यथाभूतं व्यवदीर्णमनोमम ॥ पितरंयोनपश्यामिनित्यंप्रियहितेरतम् ॥ २८ ॥ अंबकेनात्यगाद्राजाव्याधिनामय्यनागते ॥ धन्यारामादयःसर्वैयैःपितासं स्कृतःस्वयम् ॥ २९ ॥

सालवृक्षस्य स्कंधं शाखाम् ॥ २२ ॥ २३ ॥ राजन्नत्रेति राजपुत्रेति वा पाठः । सदसि संमताः सभ्याः ॥ २४ ॥ शीलं सद्वृत्तम् श्रुतम् तपश्चांद्रायणादि तदनुगा । शीलश्रुतिमनोनुगेतिपाठे तदुभयपरिशी लनविषयं यन्मनःसंकल्पात्मकं तदनुगा बुद्धिरध्यवसायात्मिका अर्कस्य मंदिरे अर्कमंडले । तदेव हि तस्य गृहम् । तीर्थस्तु मंदर इति पाठं मत्वाऽत्युन्नतमंदरपर्वतेऽर्कप्रभायाश्चिरावस्थानादेवमुक्तिरिति व्याचख्यौ ॥ २५ ॥ २६ ॥ यक्ष्यते करिष्यति यात्रामयासिषं यात्रामकार्षं अयाचिषमितिपाठे मातामहायेति शेषः ॥ २७ ॥ अन्यथाभूतं चिंतितविपरीतं जातम् ॥ २८ ॥ रामेणौर्ध्वदेहिकं कृतमिति मन्वान आह

धन्या इत्यादि ॥ २९ ॥ पुनः शोचति नेति । प्राप्तम् इहागतम् सन्नाम्य मूर्धानमिति शेषः ॥ ३० ॥ परिमार्जेति परिमार्ष्टि ॥ ३१ ॥ आख्याहि आगतमिति शेषः ॥ ३२ ॥ धर्मं जानत आर्यस्य श्रेष्ठस्य विवेकिनः पुरुषस्य ज्येष्ठो ज्येष्ठभ्राता पिता भवति अतस्तस्य पादौ ग्रहीष्यामि यतः स इदानीं मम गतिः ॥ ३३ ॥ ३४ ॥ पश्चिमं संदेशं अंत्यकालिकम् ॥ ३५ ॥ विलपन्परलोकं गतः ननु किंचिदपि संदेशमवोचदित्यर्थः ॥ ३६ ॥ इमां वाचं सिद्धार्थास्त्वित्यादिवक्ष्यमाणाम् ॥ ३७ ॥ ३८ ॥ एवं द्वितीयेति राजमरणापेक्षया रामवनगमनरूपाप्रियस्य द्वितीयत्वम् ॥ ३९ ॥ क चेदानीं गत इति शेषः ।

ननूनंमांमहाराजःप्राप्तंजानातिकीर्तिमान् ॥ उपजिघ्रेत्तुमांमूर्ध्नितातःसन्नाम्यसत्वरम् ॥ ३० ॥ क्वसपाणिःसुखस्पर्शस्तातस्याक्लिष्टकर्मणः ॥ योहि मांरजसाध्वस्तमभीक्ष्णंपरिमार्जति ॥ ३१ ॥ योमेभ्रातापितावंधुर्यस्यदासोस्मिसंमतः ॥ तस्यमांशीघ्रमाख्याहिरामस्याक्लिष्टकर्मणः ॥ ३२ ॥ पिताहिभवतिज्येष्ठोधर्ममार्यस्यजानतः ॥ तस्यपादौग्रहीष्यामिसहीदानींगतिर्मम ॥ ३३ ॥ धर्मविद्धर्मशीलश्चमहाभागोदृढव्रतः ॥ आर्येकिमब्रवीद्राजापितामेसत्यविक्रमः ॥ ३४ ॥ पश्चिमंसाधुसंदेशमिच्छामिश्रोतुमात्मनः ॥ इतिपृष्टायथातत्त्वंकैकेयीवाक्यमब्रवीत् ॥ ३५ ॥ रामेतिराजाविलपन्हासीतेलक्ष्मणेतिच ॥ समहात्मापरंलोकंगतोगतिमतांवरः ॥ ३६ ॥ इतीमांपश्चिमांवाचंव्याजहारपितातव ॥ कालधर्मपरिक्षिप्तःपाशैरिवमहागजः ॥ ३७ ॥ सिद्धार्थास्तुनरारामभागतंसहसीतया ॥ लक्ष्मणंचमहाबाहुंद्रक्ष्यंतिपुनरागतम् ॥ ३८ ॥ तच्छ्रुत्वाविषसादैवंद्वितीयाप्रियशंसनात ॥ विषण्णवदनोभूत्वाभूयःपप्रच्छमातरम् ॥ ३९ ॥ क्वचेदानींसधर्मात्माकौसल्यानंदवर्धनः ॥ लक्ष्मणेनसहभ्रात्रासीतयाचसमागतः ॥ ४० ॥ तथापृष्टायथान्यायमाख्यातुमुपचक्रमे ॥ मातास्ययुगपद्वाक्यंविप्रियंप्रियशंसया ॥ ४१ ॥ सहिराजसुतःपुत्र चीरवासामहावनम् ॥ दंडकान्सहवैदेह्यालक्ष्मणानुचरोगतः ॥ ४२ ॥ तच्छ्रुत्वाभरतस्त्रस्तोभ्रातुश्चारित्रशंकया ॥ स्वस्यवंशस्यमाहात्म्यात्प्रष्टुंसमुपचक्रमे ॥ ४३ ॥ कच्चिन्नब्राह्मणधनंहृतंरामेणकस्यचित् ॥ कच्चिन्नाढ्योदरिद्रोवातेनापापोविहिंसितः ॥ ४४ ॥ कच्चिन्नपरदारान्वाराजपुत्रोभिमन्यते ॥ कस्मात्सदंडकारण्येभ्रातारामोविवासितः ॥ ४५ ॥ अथास्यचपलामातातत्स्वकर्मयथातथम् ॥ तेनैवस्त्रीस्वभावेनव्याहर्तुमुपचक्रमे ॥ ४६ ॥ एवमुक्तातुकैकेयीभरतेनमहात्मना ॥ उवाचवचनंहृष्टावृथापंडितमानिनी ॥ ४७ ॥

समागतो मिलितः ॥ ४० ॥ विप्रियं रामविवासनरूपम् प्रियशंसया प्रियशंकया एतच्छ्रवणे भरतस्य सुखं भविष्यतीति तर्केण युगपद्राजमरणकथनसमकालमेव ॥ ४१ ॥ ४२ ॥ चारित्रशंकया रामस्य धर्मच्युतिशंकया त्रस्तः स्ववंशस्य माहात्म्यं असदाचाराभावपूर्वकं सदाचारनिरतत्वं असदाचारत्यागित्वं च तत्संस्मृत्य प्रष्टुं दंडकारण्यगमनकारणमिति शेषः ॥ ४३ ॥ कस्यचिद्धेतोरिति शेषः । अपापो निरपराधः ॥ ४४ ॥ भ्रूणहेव । विवासित इतिपाठे सर्वशाखाध्यायी भ्रूणस्तस्य हंतेत्यर्थ इति तीर्थः । भ्रूणो गर्भ इत्यन्ये ॥ ४५ ॥ स्त्रीस्वभावेन धर्माधर्महिताहितोचितानुचितविवेकशून्यतारूपेण ॥ ४६ ॥ ४७ ॥

॥ ४८ ॥ इह राज्ये ॥ ४९ ॥ ते राज्यं रामस्य च विवासनं ते पिता याचित इति संबंधः । स्ववृत्तिं स्वस्य सत्यस्थितिलक्षणां तथाकरोत् । तुभ्यं राज्यं दत्तवानित्यर्थः ॥ ५० ॥ ५१ ॥ परिद्यूनः क्षीणः विलपन्वा । धर्मज्ञ रामस्येव पित्राज्ञापालनरूपधर्मज्ञ ॥ ५२ ॥ मा शोकं कुर्विति शेषः ॥ ५३ ॥ अनामयं निरुपद्रवं राज्यं चैतत्त्वदधीनम् ॥ ५४ ॥ संकाल्य प्रेतसंस्कारेण संस्कृत्य ॥ ५५ ॥ शंमंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्विसप्ततितमः सर्गः ॥ ७२ ॥ ॥ अथ सर्वानर्थमूलत्वं मातुस्तद्वचनादेव ज्ञात्वा तामुपालभते श्रुत्वेति । वृत्तम् अत्ययः ॥ १ ॥ हतस्य त्वयाऽपारदुःखं प्रापितस्य ॥ २ ॥ दुःखे दुःखकरणे दृष्टांतः व्रणे क्षारमिव क्षारं खरसूत्रसहितचूर्णम् ॥ ३ ॥ कालरात्रिः संहाररात्रिः मे पितांगारमुपगुह्यालिंग्य नावबुद्धवान् स्मेति

नब्राह्मणधनंकिंचिद्धृतंरामेणकस्यचित् ॥ कश्चिन्नाढ्योदरिद्रोवातेनापापोविहिंसितः ॥ ४८ ॥ नरामःपरदारान्सचक्षुर्भ्यामपिपश्यति ॥ मया तुपुत्रश्रुत्वैवरामस्येहाभिषेचनम् ॥ ४९ ॥ याचितस्तेपिताराज्यंरामस्यचविवासनम् ॥ सस्ववृत्तिंसमास्थायपितातेतत्तथाकरोत् ॥ ५० ॥ रामस्तु सहसौमित्रिःप्रोषितःसहसीतया ॥ तमपश्यन्प्रियंपुत्रंमहीपालोमहायशाः ॥ ५१ ॥ पुत्रशोकपरिद्यूनःपंचत्वमुपपेदिवान् ॥ त्वयात्विदानींधर्मज्ञरा जत्वमवलंब्यताम् ॥ ५२ ॥ त्वत्कृतेहिमयासर्वमिदमेवंविधंकृतम् ॥ माशोकंमाचसंतापंधैर्यमाश्रयपुत्रक ॥ ५३ ॥ त्वदधीनाहिनगरीराज्यंचैतदना मयम् ॥ ५४ ॥ तत्पुत्रशीघ्रंविधिनाविधिज्ञैर्वसिष्ठमुख्यैःसहितोद्विजेंद्रैः ॥ संकाल्यराजानमदीनसत्त्वमात्मानमुर्व्यामभिषेचयस्व ॥ ५५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्विसप्ततितमः सर्गः ॥ ७२ ॥ श्रुत्वाचसपितुर्वृत्तंभ्रातरौचविवासितौ ॥ भरतोदुःखसंतप्तइदं वचनमब्रवीत् ॥ १ ॥ किंनुकार्यंहतस्येहममराज्येनशोचतः ॥ विहीनस्याथपित्राचभ्रात्रापितृसमेनच ॥ २ ॥ दुःखेमेदुःखमकरोर्व्रणेक्षारमिवाददाः ॥ राजानंप्रेतभावस्थंकृत्वारामंचतापसम् ॥ ३ ॥ कुलस्यत्वमभावायकालरात्रिरिवागता ॥ अंगारमुपगुह्यस्मपितामेनावबुद्धवान् ॥ ४ ॥ मृत्युमापा दितोराजात्वयामेपापदर्शिनि ॥ सुखंपरिहृतंमोहात्कुलेस्मिन्कुलपांसनि ॥ ५ ॥ त्वांप्राप्यहिपितामेऽद्यसत्यसंधोमहायशाः ॥ तीव्रदुःखाभिसंतप्तोवृत्तो दशरथोनृपः ॥ ६ ॥ विनाशितोमहाराजःपितामेधर्मवत्सलः ॥ कस्मात्प्रव्राजितोरामःकस्मादेववनंगतः ॥ ७ ॥ कौसल्याचसुमित्राचपुत्रशोकाभिपीडिते ॥ दुष्करंयदिजीवेतांप्राप्यत्वांजननींमम ॥ ८ ॥ नन्वार्योपिचधर्मात्मात्वयिवृत्तिमनुत्तमाम् ॥ वर्ततेगुरुवृत्तिज्ञोयथामातरिवर्तते ॥ ९ ॥ तथाज्येष्ठाहिमेमाताकौ सल्यादीर्घदर्शिनी ॥ त्वयिधर्मंसमास्थायभगिन्यामिववर्तते ॥ १० ॥ तस्याःपुत्रंमहात्मानंचीरवल्कलवाससम् ॥ प्रस्थाप्यवनवासायकथंपापेनशोचसे ११ ॥

लोकोक्तौ ॥ ४ ॥ मे राजेति योजना अस्मिन् कुले सुखं त्वया परिहृतम् ॥ ५ ॥ वृत्तोऽतीतः ॥ ६ ॥ कस्माद्विनाशितः कस्मात्प्रव्राजितः स वा कस्माद्वनं गतः निष्प्रयोजनमेवेत्यर्थः ॥ ७ ॥ न केवलं पितृभ्रातृपीडा अपितु मात्रोरपीत्याह कौसल्येत्यादि । मम जननीं त्वामेवमृत्युं प्राप्य यदि जीवेतां तदपि दुष्करं दुर्लभमेव ॥ ८ ॥ आर्यो रामः गुरुषु कर्तव्यां वृत्तिं जानाति तादृशः ॥ ९ ॥ राममात्रापि न कश्चिदपराधस्त्वयि कृत इत्याह तथेति । दीर्घदर्शिनी त्वत्तो दूरकालभाव्यनर्थं जानती त्वयि धर्मं त्वच्चित्तानुवर्तनरूपं धर्ममास्थाय यथा भगिन्यां वर्तते तथा त्वयि वर्तते इत्यर्थः ॥ १० ॥ तस्यास्तादृशधर्मयु

काया: । चीरपर्यायं वल्कलं वासो यस्य तम् ॥ ११ ॥ किं कारणं फलं पश्यसि ॥ १२ ॥ अहं राघवं प्रति यथा यादृशः यादृशभक्तिमान् तथा लुब्धाया राज्यलुब्धायास्ते न विदितो मन्ये तत्र हेतुः तथाहि तत एव राज्यार्थं महानयमनर्थः पितृनाशराज्यार्हज्येष्ठवनवासादिरूप आनीतः संपादितः ॥ १३ ॥ उक्तानर्थमात्रमेव त्वदुश्रेष्टाफलं न तु त्वदिष्टसिद्धिरित्याह अहं हीति । न कथमपीति भावः ॥ १४ ॥ न केवलं ममैव रामशक्त्यपेक्षा किंतु पितुरपीत्याह तं हीति । मेरुः स्वजनितमेरुवनं यथा स्वरक्षणार्थमाश्रितः अन्यथा परैराक्रमणीय एव स्यात् एवं राजा इहामुत्रार्थसिद्धये राममाश्रितः ॥ १५ ॥ सोहं ज्येष्ठरा मैकबलः भारं राज्यभारं महाधुर्येण समुद्यतं वृतं धुरमासाद्य दम्यो वत्सतर इव कथं सहेयं केन चौजसा बलेन सहेयं रामं विनेति शेषः ॥ १६ ॥ तर्हि त्वं षढकल्पस्तत्राह अथवेति । शक्तिः राज्यभरणसामर्थ्यं योगैः योगः संहननोपायध्यानसंगतियुक्तिष्वित्युक्तयोगैर्बुद्धियुक्तमहाप्राणत्वलक्षणबलेन यद्यपि भवेत्संभावितैवाथापि पुत्रगर्धिनीं पुत्रराज्याभिलाषवतीं त्वां सकामां पूर्णकामनां न करिष्यामि । अन्यथा त्वमिवाहमपि लोके दूषितः स्यामिति भावः ॥ १७ ॥ किंच त्यजेदेकं कुलस्यार्थे इति न्यायेन तव विवासनमेव सांप्रतं तथापि रामस्य त्वयि मातृवद्व्यवहारात्तन्न कर्तुं शक्यमित्याह नेति । त्वां त्यक्तुं विकांक्षा इच्छाभावो नैव

अपापदर्शिनंशूरंकृतात्मानंयशस्विनम् ॥ प्रव्राज्यचीरवसनंकिंनुपश्यसिकारणम् ॥१२॥ लुब्धायाविदितोमन्येनतेहंराघवंयथा ॥ तथाह्यनर्थोराज्यार्थेत्वयानीतोमहानयम् ॥ १३ ॥ अहंहिपुरुषव्याघ्रावपश्यन्रामलक्ष्मणौ ॥ केनशक्तिप्रभावेणराज्यंरक्षितुमुत्सहे ॥ १४ ॥ तंहिनित्यंमहाराजोबलवंतंमहौजसम् ॥ उपाश्रितोभूद्धर्मात्मामेरुर्मेरुवनंयथा ॥ १५ ॥ सोहंकथमिमंभारंमहाधुर्यसमुद्यतम् ॥ दम्योधुरमिवासाद्यसहेयंकेनचौजसा ॥ १६ ॥ अथवामेभवेच्छक्तिर्योगैर्बुद्धिबलेनवा ॥ सकामांनकरिष्यामित्वामहंपुत्रगर्धिनीम् ॥ १७ ॥ नमेविकांक्षाजायेतत्यक्तुंत्वांपापनिश्चयाम् ॥ यदिरामस्यनावेक्षात्वयिस्यान्मातृवत्सदा ॥ १८ ॥ उत्पन्नातुकथंबुद्धिस्तवेयंपापदर्शिनी ॥ साधुचारित्रविभ्रष्टेपूर्वेषांनोविगर्हिता ॥ १९ ॥ अस्मिन्कुलेहिसर्वेषांज्येष्ठोराज्येऽभिषिच्यते ॥ अपरेभ्रातरस्तस्मिन्प्रवर्तंतेसमाहिताः ॥ २० ॥ नहिमन्येनृशंसेत्वंराजधर्ममवेक्षसे ॥ गतिंवानविजानासिराजवृत्तस्यशाश्वतीम् ॥२१॥ सततंराजपुत्रेषुज्येष्ठोराजाभिषिच्यते ॥ राज्ञामेतत्समंतत्स्यादिक्ष्वाकूणांविशेषतः ॥ २२ ॥ तेषांधर्मैकरक्षाणांकुलचारित्रशोभिनाम् ॥ अद्यचारित्रशौटीर्यंत्वांप्राप्यविनिवर्तितम् ॥ २३ ॥ तवापिसुमहाभागेजनेंद्रकुलपूर्वके ॥ बुद्धिमोहःकथमयंसंभूतस्त्वयिगर्हितः ॥ २४ ॥

जायेत यदि रामस्य मातृवदवेक्षा त्वयि न स्यात् ॥ १८ ॥ इयं बुद्धिः कनिष्ठस्याभिषेकबुद्धिः ॥ १९ ॥ अस्या बुद्धेः पूर्वगर्हितत्वमेव दर्शयति अस्मिन्निति । अस्मदीये कुले सर्वेषां ज्येष्ठोभिषिच्यते नत्वापेक्षितज्येष्ठः अपरे भ्रातरस्तस्मिन्समाहितास्तदधीनाः प्रवर्तंते एवं किल नः सर्वेषामाचार इति शेषः । स्मरति च मनुः । ज्येष्ठ एव तु गृह्णीयात्सकलं पैतृकं धनम् ॥ अन्ये तमनुजीवेयुर्यथैव पितरं तथेति ॥ ॥ २० ॥ राजधर्मं नावेक्षसे न जानासि राजवृत्तस्य राजधर्मस्य शाश्वतीमव्यभिचरितां गतिं फलमपि न जानासि इति मन्ये ॥ २१ ॥ एतद्राज्ञां सर्वराज्ञां समं यद्राजपुत्रेषु ज्येष्ठस्याभिषेकः इक्ष्वाकूणां तत् ज्येष्ठाभिषेचनं विशेषतः स्यात् संभाव्यते । राज्ञा सर्वमितिपाठे सर्वमित्यत्र छांदसी षष्ठ्यर्थे द्वितीया । सर्वेषामित्यर्थः ॥ २२ ॥ धर्मेणैकेन रक्षा रक्षणं येषां तेषां धर्मैकरक्षाणां धर्ममेकं रक्षंति तेषां वा कुलक्रमागतचारित्रेण शोभावतां यत् चारित्रविषयकं शौटीर्यं गर्वस्तदद्य त्वां प्राप्य त्वत्संबंधान्निवर्तितमित्यर्थः ॥ २३ ॥ तथा त्वय्यपि महाकुलप्रसूतायामेवंविधबुद्धिकारणं न पश्यामीत्याह तवापीति । हे सुमहाभागे तदुपपादकं विशेषणं जनेंद्रकुलपूर्वक इति । जनेंद्रः कैकेयकुलकूटस्थः पूर्वकः कारणं यस्यास्तथाभूतेऽतो महाकुलप्रसूतायास्तव गर्हितोयं बुद्धिमोहस्त्वयि कथं संभृत इत्यन्वयः । जनेंद्राः कुलपूर्वगा इतिपाठे तव पितृवंशराजा

नोपि कुलपूर्वं कुलज्येष्ठं गच्छंति राजत्वेन तादृशा इत्यर्थः । शेषं माग्वत् ॥ २४ ॥ सवथा त्वद्बुद्धिमहं नानुवर्तिष्ये इत्याह नत्विति ॥ २५ ॥ न केवलं त्वदिष्टाकरणं किंत्वनिष्टमपि करिष्यामीत्याह एष इति । अप्रियार्थं तत्संपादनार्थम् ॥ २६ ॥ दासभूतो दासत्वं प्राप्तः मद्राज्येच्छोस्तवानिष्टसंपादनार्थमित्याशयः । न केवलंत्वत्कोपादेवैतदाचरणमपि तु परमार्थत एवेत्याह सुस्थितेनेति । सुखप्रतिष्ठेन चित्तेनेत्यर्थः । ज्येष्ठानुवर्तनस्यैव शाश्वतः परमहितत्वादिति भावः ॥ २७ ॥ प्रियेतरैः दुःखकरैः ॥ २८ ॥ हरैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ ॥ छ ॥ ॥ तामिति ॥ १ ॥ भ्रंशस्व भ्रष्टा भव वनं गच्छेत्यर्थः । मृतं भर्तारमुद्दिश्य रुदती मा भव धर्मत्यागेन भार्यापतिभावस्य नष्टत्वादिति भावः । केचित्तु परित्यक्तधर्मेणस्ते पुत्रजीवनमसंभावितमतो मा मां मृतं दृष्ट्वा रुदती भवेत्यर्थः । तव पुत्रमरणकृतः शोकोस्त्विति भाव इत्याहुः ॥ २ ॥ अदूषयत् त्वत्संबंधि किं गुणादिकमदूषयत् । तुल्यं युगपत् ॥ ३ ॥ तस्माद्भ्रूणहत्यां शाखाध्येतृ

नतुकामंकरिष्यामितवाहंपापनिश्चये ॥ ययाव्यसनमारब्धंजीवितांतकरंमम ॥ २५ ॥ एषत्विदानीमेवाहमप्रियार्थंतवानघे ॥ निवर्तयिष्यामिवनाद्भ्रातरंस्वजनप्रियम् ॥ २६ ॥ निवर्तयित्वारामंचतस्याहंदीप्ततेजसः ॥ दासभूतोभविष्यामिसुस्थितेनांतरात्मना ॥ २७ ॥ इत्येवमुक्त्वाभरतोमहात्माप्रियेतरैर्वाक्यगणैस्तुदंस्ताम् ॥ शोकार्दितश्चापिननादभूयःसिंहोयथामंदरकंदरस्थः ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ तांतथागर्हयित्वातुमातरंभरतस्तदा ॥ रोषेणमहताविष्टःपुनरेवाब्रवीद्वचः ॥ १ ॥ राज्याद्भ्रंशस्वकैकेयिनृशंसेदुष्टचारिणि ॥ परित्यक्तासिधर्मेणमामृतंरुदतीभव ॥ २ ॥ किंनुतेदूषयद्रामाराजावाभृशधार्मिकः ॥ ययोर्मृत्युर्विवासश्चत्वत्कृतेतुल्यमागतौ ॥ ३ ॥ भ्रूणहत्यामसिप्राप्ताकुलस्यास्यविनाशनात् ॥ कैकेयिनरकंगच्छमाचतातसलोकताम् ॥ ४ ॥ यत्त्वयाहीदृशंपापंकृतंघोरेणकर्मणा ॥ सर्वलोकप्रियंहित्वानमाप्यापादितंभयम् ॥ ५ ॥ त्वत्कृतेमेपितावृत्तोरामश्चारण्यमाश्रितः ॥ अयशोजीवलोकेचत्वयाहंप्रतिपादितः ॥ ६ ॥ मातृरूपेममामित्रेनृशंसेराज्यकामुके ॥ नतेहमभिभाष्योऽस्मिदुर्वृत्तेपतिघातिनि ॥ ७ ॥ कौसल्याचसुमित्राचयाश्चान्याममातरः ॥ दुःखेनमहताविष्टास्त्वांप्राप्यकुलदूषिणीम् ॥ ८ ॥ नत्वमश्वपतेःकन्याधर्मराजस्यधीमतः ॥ राक्षसीतत्रजातासिकुलप्रध्वंसिनीपितुः ॥ ९ ॥ यत्त्वयाधार्मिकोरामोनित्यंसत्यपरायणः ॥ वनंप्रस्थापितोवीरःपितापित्रिदिवंगतः ॥ १० ॥

ब्रह्महत्यां प्राप्तासि उत्तमक्षत्रियस्य राज्ञो भर्तुर्वधाद्रामादीनां विवासनाच्चेति भावः । नरकं गच्छ । प्राप्तकाले लोट् । नरक एव ते न्यायप्राप्त इत्यर्थः ॥ ४ ॥ ईदृशं भर्तृमरणरामविवासनरूपम् । घोरेण कर्मणा कर्मणो घोरत्वं च सामान्यविषयवरद्वयस्येदृशविशेषविषयत्वकरणम् । सर्वलोकप्रियं रामं हित्वा विवास्य भयं कैकेयीपुत्रोयं तद्वदेव दुष्टस्वभाव इति लोककलंकरूपम् । यद्वा त्वद्दोषतो रामो मां त्यक्ष्यतीति भयम् । यद्वा महापातकयुतायास्तव संसर्गेण पंचमपातकित्वरूपभयम् ॥ ५ ॥ तदेवाह त्वदिति । जीवलोकेच चात्परलोके च प्रतिपादितः प्रापितः ॥ ६ ॥ न तेहमभिभाष्यः मत्संभाषणं त्वया न कार्यमित्यर्थः ॥ ७ ॥ ॥ ८ ॥ न त्वमश्वपतेः कन्या तत्कुलोत्पन्ना कन्या न भवसीत्यर्थः । पितुरित्यस्य ममेति शेषः । यद्वा स्वपितुः कुलस्य प्रध्वंसिनी दुश्चरित्रत्वव्यवस्थापिका ॥ ९ ॥ पिता मम गतः गमितः ॥ १० ॥

यत्प्रधाना यत्पापप्रधाना तत्पापं तत्पापफलं पितृभ्रातृरहितेऽतएव त्वन्निमित्तं सर्वलोकाप्रिये मयि वृत्तं तद्राहित्यरूपं सर्वलोकाप्रियत्वरूपं च ॥११॥ हे पापनिश्चये वियुक्तां पतिपुत्रवियुक्तां कृत्वा कं लोकं कं नरकलोकम् ॥१२॥ बंधुसंश्रयं बंधूनामाश्रयभूतं कौसल्याया आत्मसंभवम् औरसम् । संधिस्त्वार्षः । एवंगुणविशिष्टं किं नावबुध्यसे न जानासीत्यर्थः ॥१३॥ अस्त्वौरसस्ततः किं तत्राह अंगेत्यादि । अंगानि मुखवक्षउदरपाणिपादरूपाणि प्रत्यंगानि नेत्रांगुल्यादीनिएतेनांगादंगात्संभवतीति श्रुतौ वीप्सयांगप्रत्यंगग्रहणं सूचितम् । एतेन तस्य सर्वांगतेजःसंभूतत्वं दर्शितम् यदेतद्रेतस्तत्सर्वेभ्योंगेभ्यस्तेजःसंभूतमिति श्रुतेः । स्त्रिया रक्तमेव रेतः । हृदयं हृदयपुंडरीकम् आत्माधिष्ठानम् अनेन हृदयादधिजायसे इति श्रुत्यर्थ उक्तः । यदेवं तस्मान्मातुरौरसः पुत्रः प्रियतरः । आत्मा वै पुत्रनामासीति श्रुतेः निरुपाधिप्रेमास्पदत्वं चात्मनः सर्वलोकसिद्धमेव । बांधवाः पितृमात्रादयः प्रिया एव ननु प्रियतराः एवं चौरसवियोगदुःखमतिदुःसहमिति भावः । प्रियत्वान्नतु बांधव इतिपाठं मत्वा तीर्थेनेत्थं व्याख्यातं प्रियत्वादेव न बांधवः बंधुदत्तपुत्रादिवन्न भवतीति । तत्र

यत्प्रधानासितत्पापंमयिपित्राविनाकृते ॥ भ्रातृभ्यांचपरित्यक्तेसर्वलोकस्यचाप्रिये ॥ ११ ॥ कौसल्यांधर्मसंयुक्तांवियुक्तांपापनिश्चये ॥ कृत्वाकंप्राप्स्यसेह्यद्यलोकंनिरयगामिनी ॥ १२ ॥ किंनावबुध्यसेक्रूरेनियतंबंधुसंश्रयम् ॥ ज्येष्ठंपितृसमंरामंकौसल्यायात्मसंभवम् ॥ १३ ॥ अंगप्रत्यंगजःपुत्रोहृदयाच्चाभिजायते ॥ तस्मात्प्रियतरोमातुःप्रियाएवतुबांधवाः ॥ १४ ॥ अन्यदाकिलधर्मज्ञासुरभिःसुरसंमता ॥ वहमानौददर्शोर्व्यांपुत्रौविगतचेतसौ ॥ १५ ॥ तावर्धदिवसंश्रांतौदृष्ट्वापुत्रौमहीतले ॥ रुरोदपुत्रशोकेनवाष्पपर्याकुलेक्षणम् ॥ १६ ॥ अधस्ताद्व्रजतस्तस्याःसुरराज्ञोमहात्मनः ॥ बिंदवःपतितागात्रेसूक्ष्माःसुरभिगंधिनः ॥ १७ ॥ निरीक्षमाणस्तांशक्रोददर्शसुरभिंस्थिताम् ॥ आकाशेविष्ठितांदीनांरुदतींभृशदुःखिताम् ॥ १८ ॥ तांदृष्ट्वाशोकसंतप्तांवज्रपाणिर्यशस्विनीम् ॥ इंद्रःप्रांजलिरुद्विग्नःसुरराजोब्रवीद्वचः ॥ १९ ॥ भयंकच्चिन्नचास्मासुकुतश्चिद्विद्यतेमहत् ॥ कुतोनिमित्तःशोकस्तेब्रूहिसर्वहितैषिणि ॥ २० ॥ एवमुक्तातुसुरभिःसुरराजेनधीमता ॥ प्रत्युवाचततोधीरावाक्यंवाक्यविशारदा ॥ २१ ॥ शांतंपापंनवःकिंचित्कुतश्चिदमराधिप ॥ अहंतुमग्नौशोचामिस्वपुत्रौविषमेस्थितौ ॥ २२ ॥ एतौदृष्ट्वाकृशौदीनौसूर्यरश्मिप्रतापितौ ॥ वध्यमानौबलीवर्दौकर्षकेणदुरात्मना ॥ २३ ॥ ममकायात्प्रसूतौहिदुःखितौभारपीडितौ ॥ यौदृष्ट्वापरितप्येहंनास्तिपुत्रसमःप्रियः ॥ २४ ॥ यस्याःपुत्रसहस्रैस्तुकृत्स्नंव्याप्तमिदंजगत् ॥ तांदृष्ट्वारुदतींशक्रोनसुतान्मन्यतेपरम् ॥ २५ ॥

नार्थसामंजस्यमिति कतकसंमतपाठ एव ज्यायान् ॥ १४ ॥ अत्रार्थे इतिहासमाह अन्यदेति । कस्मिंश्चित्पूर्वकाले इत्यर्थः । सुरभिः कामधेनुः किलेत्यैतिह्ये धर्मज्ञाः पुराविदो वृद्धा एवं वदंति किलेत्यर्थः । वहमानौ हलम् ॥ १५ ॥ अर्धदिवसं दिवसस्यार्धं व्याप्य वहनेन श्रांतौ दृष्ट्वा पुत्रौ स्वांगजौ कुतोपि हेतोर्भुवं गतौ वक्ष्यति च मम कायात्प्रसूताविति ॥१६॥ सुरराज्ञः सुरराजस्य । अनित्यत्वान्न टच् ॥१७॥१८॥ ॥ १९ ॥ अस्मासु अमरेषु कुतो निमित्तः किंनिमित्तकः कुत इत्याद्यादित्वात्प्रथमार्थे तसिल् । न चास्मासु इति नञि काकुर्द्रष्टव्यः ॥ २० ॥ २१ ॥ किंचिदपि भयं कुतोपि हेतोर्युष्माकं नास्ति शांतं पापमित्यादिकं अनुचितश्रवणजदोषनिवर्तको वचनविशेषो युष्मद्दुःखजनकं पापं शांतमित्यर्थकः । किंतु अहं मग्नौ दुःखमग्नौ विषमे देशे स्थितौ कर्षकेण प्रतोदादिना वध्यमानौ ताड्यमानौ दृष्ट्वा शोचामि ॥ २२ ॥ ॥ २३ ॥ नास्ति पुत्रसमः प्रिय इति सुरभिवचनोपसंहारः ॥ २४ ॥ अथेंद्रव्यापारमाह यस्या इति । पुत्रसहस्रैः साक्षात्पुत्रसंतानपतितैः तां रुदतीं दृष्ट्वा इंद्रोपि सुतात्परमधिकं किमपि न मन्यते ॥ २५ ॥

इह संसारे भूयसीं सर्वोत्कृष्टाम् ॥ २६ ॥ समं सर्वप्राण्यनुग्रहे वैषम्यरहितमप्रतिमं सर्वोत्तमं वृत्तं चरित्रं यस्याः श्रीमत्याः इष्टदानैश्वर्यशक्तिमत्याः गुणमुख्यायाः सत्यरूपमुख्यगुणवत्याः लोकधारणकाम्यया प्रवृत्ताया इति शेषः । स्वभावपरिचेष्टया । आहारनिद्राभयमैथुनानि सामान्यमेतत्पशुभिर्नराणामिति सामान्यप्राप्तमिथुनीभावलक्षणया ॥२७॥ यस्याः पुत्रसहस्राणि संतानपरंपराद्वारेण संति सापि शोचति किं पुन र्मानुषी एकपुत्रा कौसल्या रामं विना वर्तयिष्यति जीविष्यति शोकेन विशिष्टा सतीति शेषः । इदं किं वक्तव्यमित्यर्थः ॥ २८ ॥ विवत्सा विवत्सेव यदेवं तस्मादिति ॥ २९ ॥ अपचितिं पूजां पितुरिमां वक्ष्यमाणौर्ध्वदेहिकक्रियारूपां पूजां करिष्यामीत्यपकर्षः ॥ ३० ॥ अथ यशोवर्धनं भ्रातृपूजां चाह आनाय्येत्यादि । महाबाहुं रामं वनं प्रवेक्ष्यामि तद्व्रतसमाप्तये तत्प्रतिनिधितयेति भावः ॥ ३१ ॥ पापं ज्येष्ठ विवासनपूर्वकं कनिष्ठराज्यरूपम् ॥ ३२ ॥ अस्य मरणांतमेव प्रायश्चित्तमित्याह सेति । बुद्धिपूर्वकृतमहापापेत्यर्थः । कंठे रज्जुं बद्ध्वेत्यस्य म्रियस्वेति शेषः । परायणं गतिः ॥ ३३ ॥ विप्रवासितकल्मषः दूरी

इंद्रोह्यश्रुनिपातंतंस्वगात्रेपुण्यगंधिनम्॥सुरभिंमन्यतेदृष्ट्वाभूयसींतामिहेश्वरः ॥२६॥ समाप्रतिमवृत्तायालोकधारणकाम्यया ॥श्रीमत्यागुणमुख्यायाः स्वभावपरिचेष्टया ॥ २७॥ यस्याःपुत्रसहस्राणिसापिशोचतिकामधुक् ॥ किंपुनर्यांविनारामंकौसल्यावर्तयिष्यति ॥ २८ ॥ एकपुत्राचसाध्वीचवि वत्सेयंत्वयाकृता ॥ तस्मात्त्वंसततंदुःखंप्रेत्यचेहचलप्स्यसे ॥ २९ ॥ अहंत्वपचितिंभ्रातुःपितुश्चसकलामिमाम् ॥ वर्धनंयशसश्चापिकरिष्यामिनसं शयः ॥ ३० ॥ आनाय्यचमहाबाहुंकोशलेंद्रंमहाबलम् ॥ स्वयमेवप्रवेक्ष्यामिवनंमुनिनिषेवितम् ॥ ३१ ॥ नह्यहंपापसंकल्पेपापेपापंत्वयाकृतम् ॥ शक्तोधारयितुंपौरैरश्रुकंठैर्निरीक्षितः॥ ३२ ॥ सात्वमग्निंप्रविशवास्वयंवाविशदंडकान् ॥ रज्जुंबद्ध्वाथवाकंठेनहितेन्यत्परायणम् ॥ ३३ ॥ अहमप्यव नींप्राप्तेरामेसत्यपराक्रमे ॥ कृतकृत्योभविष्यामिविप्रवासितकल्मषः ॥ ३४ ॥ इतिनागइवारण्येतोमरांकुशतोदितः ॥ पपातभुविसंक्रुद्धोनिःश्वसन्नि वपन्नगः ॥ ३५ ॥ संरक्तनेत्रःशिथिलांबरस्तथाविधूतसर्वाभरणःपरंतपः ॥ बभूवभूमौपतितोनृपात्मजःशचीपतेःकेतुरिवोत्सवक्षये ॥ ३६ ॥ इ० श्री०वा०आ० अ० चतुःसप्ततितमः सर्गः ॥ ७४ ॥ दीर्घकालात्समुत्थायसंज्ञांलब्ध्वासवीर्यवान् ॥ नेत्राभ्यामश्रुपूर्णाभ्यांदीनामुद्वीक्ष्यमातरम् ॥ ॥ १ ॥ सोऽमात्यमध्येभरतोजननीमभ्यकुत्सयत् ॥ राज्यंनकामयेजातुमंत्रयेनापिमातरम् ॥ २ ॥

कृतकलंकः ॥ ३४ ॥ इतीत्यस्यविलप्येति शेषः । नाग इवारण्यस्तोमरेतिपाठांतरम् । संक्रुद्धः पन्नग इव श्वसन्नित्यन्वयः । पाठांतरे अरण्ये तत्संबंधिनि बंधनस्थाने तोमरांकुशतोदितो नाग इवेत्यर्थः । भुवि पपात भरत इति शेषः ॥ ३५ ॥ शचीपतेः केतुरिंद्रध्वज उत्सवक्षये उत्सवांते ॥ ३६ ॥ चैलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुःसप्ततितमः सर्गः ॥ ७४ ॥ ॥ दीनां स्वमनीषितभंगतः ॥ १ ॥ अमात्याः भरतागमनं श्रुत्वा प्राप्ताः सुमंत्रादयः अभ्यकुत्सयत् लोकस्येव स्वस्यापि कैकेयीकृतव्यवहारे परमानिष्टताख्यापनायोक्तरीत्यैव सर्वलोकसमक्षं जगर्ह इत्यर्थः । अथ प्रयोजककर्तृत्वानुमंतृत्वाद्यपि स्वस्य प्रकृतविषये नास्तीति मंत्रिणः प्रत्यापयति राज्यमित्यादि । मातरं नैव मंत्रये अपिरेवार्थे राज्यग्रहणार्थं न प्रेरयामि तत्र हेतू राज्यं न कामये इति ॥ २ ॥

योभिषेको राज्ञा समीक्षितश्चिंतितः अज्ञाने हेतुमाह विप्रकृष्टे इति । अतिदूरतरे इत्यर्थः ॥ ३ ॥ ४ ॥ तथैव प्राग्वदेव ॥ ५ ॥ दीर्घदर्शिनं ऐहिकामुष्मिककर्मणः कालांतरभाविफलज्ञानक्षमबुद्धिमंतम् अतएव तं द्रष्टुमिच्छामि ॥ ६ ॥ ७ ॥ चापिभ्यां सुमंत्रादयः येन मार्गेण निवेशनं प्राप्यत इति शेषः ॥ ८ ॥ कौसल्यां स्वगृहात्प्रस्थिताम् ॥ ९ ॥ समेत्य आलिंग्य तादृशसमयेप्यालिंगनकरणयोग्यं विशेषणम् मनस्विनीति ॥ १० ॥ राज्यं प्राप्तम् भुंक्ष्वेति शेषः । राज्यप्राप्तिप्रकारमाह क्रूरेण रामविवासनरूपेण कर्मणा कैकेय्याः तयेत्यर्थे शेषत्वविवक्षायाम् । संप्राप्तं राजतः ततश्च त्वया प्राप्तमिति भावः ॥ ११ ॥ त्वमपि मे पुत्र इति तव राज्यदाने न किमपि मे दुःखमपितु चीरवसनं वनचारिणं चीरवसनत्वादिवनचारिवेषं मे पुत्रं रामं त्वदागमनादपि पूर्वं शीघ्रं वनं प्रति प्रस्थाप्य राजानं मारितवती कैकेयी तत्र तादृशप्रस्थापने कं गुणं पश्यति इति न जाने इति दुःखमिति शेषः । स्थिते तु राज्ञे स एव पितृवाक्यात्त्वामेवाभिषिच्य रक्षेदतो व्यर्थोयं तत्प्रयास इति भावः ॥ १२ ॥ मामपि प्रस्तापयितुमर्हति मां प्रति तस्या

अभिषेकंनजानामियोभूद्राज्ञासमीक्षितः ॥ विप्रकृष्टेह्यहंदेशेशत्रुघ्नसहितोभवम् ॥ ३ ॥ वनवासंनजानामिरामस्याहंमहात्मनः ॥ विवासनंचसौमित्रेःसीतायाश्चयथाभवत ॥ ४ ॥ तथैवक्रोशतस्तस्यभरतस्यमहात्मनः ॥ कौसल्याशब्दमाज्ञायसुमित्रांचेदमब्रवीत् ॥ ५ ॥ आगतःक्रूरकार्यायाःकैकेय्याभरतःसुतः ॥ तमहंद्रष्टुमिच्छामिभरतंदीर्घदर्शिनम् ॥ ६ ॥ एवमुक्त्वासुमित्रांतांविवर्णवदनाकृशा ॥ प्रतस्थेभरतोयत्रवेपमानाविचेतना ॥ ७ ॥ सतुराजात्मजश्चापिशत्रुघ्नसहितस्तदा ॥ प्रतस्थेभरतोयेनकौसल्यायानिवेशनम् ॥ ८ ॥ ततःशत्रुघ्नभरतौकौसल्यांप्रेक्ष्यदुःखितौ ॥ पर्यष्वजेतांदुःखार्तांपतितांनष्टचेतनाम् ॥ ९ ॥ रुदंतौरुदतीदुःखात्समेत्यार्यामनस्विनी ॥ भरतंप्रत्युवाचेदंकौसल्याभृशदुःखिता ॥ १० ॥ इदंतेराज्यकामस्यराज्यंप्राप्तमकंटकम् ॥ संप्राप्तंवतकैकेय्याशीघ्रंक्रूरेणकर्मणा ॥ ११ ॥ प्रस्थाप्यचीरवसनंपुत्रंमेवनवासिनम् ॥ कैकेयीकंगुणंतत्रपश्यतिक्रूरदर्शिनी ॥ १२ ॥ क्षिप्रंमामपिकैकेयीप्रस्थापयितुमर्हति ॥ हिरण्यनाभोयत्रास्तेसुतोमेसुमहायशाः ॥ १३ ॥ अथवास्वयमेवाहंसुमित्रानुचरासुखम् ॥ अग्निहोत्रंपुरस्कृत्यप्रस्थास्येयेनराघवः ॥ १४ ॥ कामंवास्वयमेवाद्यतत्रमांनेतुमर्हसि ॥ यत्रासौपुरुषव्याघ्रस्तप्स्यतेमेसुतस्ततः ॥ १५ ॥ इदंहितवविस्तीर्णंधनधान्यसमाचितम् ॥ हस्त्यश्वरथसंपूर्णंराज्यंनिर्यातितंतया ॥ १६ ॥ इत्यादिबहुभिर्वाक्यैःक्रूरैःसंभर्त्सितोऽनघः ॥ विव्यथेभरतोतीवव्रणेतुद्येवसूचिना ॥ १७ ॥ पपातचरणौतस्यास्तदासंभ्रांतचेतनः ॥ विलप्यबहुधाऽसंज्ञोलब्धसंज्ञस्तदाभवत् ॥ १८ ॥ एवंविलपमानांतांप्रांजलिर्भरतस्तदा कौसल्यांप्रत्युवाचेदंशोकैर्बहुभिरावृताम् ॥ १९ ॥ आर्येकस्मादजानंतंगर्हसेमामकल्मषम् ॥ विपुलांचममप्रीतिंस्थितांजानासिराघवे ॥ २० ॥

दुःखहेतुत्वमकृतेरिति भावः । हिरण्यनाभः हिरण्यवर्णनाभियुक्तः इदमसाधारणम् रामलक्ष्मणम् ॥ १३ ॥ कैकेयीचित्तानुवृत्तेस्तव राजसंस्कारेऽधिकारो नास्तीति ध्वनयंत्याह अथवेति । अग्निहोत्रमिति । राजदेहस्याप्युपलक्षणम् कैकेयीवर्त्मगमने भरतो मे प्रेतकार्यं न कुर्यादिति राज्ञा निषेधादिति भावः ॥ १४ ॥ अथवा तवातत्पक्षत्वे राजसंस्कारादि कृत्वा पश्चान्मां तत्र नयेत्याह कामं वेति । तप्स्यते तप्यते चेत्यपि बोध्यम् ॥ १५ ॥ समाचितं व्याप्तम् निर्यातितं दत्तम् । निर्यातनं वैरशुद्धौ दाने न्यासार्पणे मतम् ॥ १६ ॥ व्रणे प्राचीने सूचिना प्रतुद्येव संभर्त्सितः कैकेयीपक्षत्वधिया गर्हितो विव्यथे पितृभ्रातृवियोगखिन्नेनाश्वासार्थमागतस्थलेपि खेदहेतुवचनश्रवणादिति भावः ॥ १७ ॥ असंज्ञ इति च्छेदः ॥ १८ ॥ विलपमानाम् इदं ते राज्यकामस्येत्यादिभाषमाणाम् ॥ १९ ॥ अजानंतं अत्रत्यवृत्तांतमिति शेषः । राघवे तद्विषये मम हृदि पूर्वं स्थितां

विपुलां प्रीतिं जानास्येव इदानीं तु ततोधिका पितृबुद्धेरपि तत्रैवोपसंहारात् ॥ २० ॥ इममर्थं परबुद्धरप्रत्यक्षत्वात् शपथैः प्रत्यापयति कृतेति । सत्यसंधत्वादिगुणविशिष्ट आर्यो रामो यस्यानुमते संमते सति वनं गतः तस्य कृतशास्त्रानुगा गुरुशिक्षितश्रुतिस्मृतिमार्गगा बुद्धिर्मा भूत् इतोधिकानर्थाभावादयं परमः शपथः अतःपरं प्रपंचः सामान्येन शपथकरणमपि विशेषतः स्वस्मिन्नापि पर्यवस्यतीति बोध्यम् ॥२१॥ प्रैष्यं प्रेष्यत्वं प्रति मेहतु अभिमुखं मूत्रादि करोतु ॥ २२ ॥ यो भर्ता भृत्यं महत्कर्म कारयित्वा अनर्थकं भृतिरहितं करोति तस्य योऽधर्मः सोस्यास्तु इत्यन्वयः ॥ २३ ॥ ततस्तस्मै आद्यादित्वाच्चतुर्थ्यर्थेतासिः । यस्यानुमते गतस्तस्यास्त्विति शेषः ॥२४॥ बलिः करस्तद्रूपं षड्भागमुद्धृत्यादाय प्रजा अरक्षितुर्योऽधर्मः सोस्यास्तु ॥ २५ ॥ सत्रे यागे संश्रुत्य प्रतिज्ञाय अपलपतां तपस्विभ्यो ऋत्विग्भ्यः ॥२६॥ सतां धर्मं अपराङ्मुख तया युद्धम् ॥२७॥ सुसूक्ष्मार्थं शास्त्रं वेदः धीमता आचार्येणेति शेषः । ब्रह्मोज्झत्वरूपं पापं प्राप्नोत्वित्यर्थः ॥ २८ ॥ व्यूढौ विशालौ बाहू अंसौ च यस्य तं रामं राज्यस्थम् अतएवासीनं सिंहासने मा द्राक्षीत

कृतशास्त्रानुगाबुद्धिर्माभूत्तस्यकदाचन ॥ सत्यसंधःसतांश्रेष्ठोयस्यार्योनुमतेगतः ॥ २१ ॥ प्रैष्यंपापीयसांयातुसूर्यंचप्रतिमेहतु ॥ हंतुपादेनगांसुप्तां यस्यार्योनुमतेगतः ॥ २२ ॥ कारयित्वामहत्कर्मभर्ताभृत्यमनर्थकम् ॥ अधर्मोयोस्यसोस्यास्तुयस्यार्योनुमतेगतः ॥ २३ ॥ परिपालयमान स्यराज्ञोभूतानिपुत्रवत् ॥ ततस्तुद्रुह्यतांपापंयस्यार्योनुमतेगतः ॥२४॥ बलिषड्भागमुद्धृत्यनृपस्यारक्षितुःप्रजाः ॥ अधर्मोयोस्यसोस्यास्तुयस्यार्यो नुमतेगतः ॥ २५ ॥ संश्रुत्यचतपस्विभ्यःसत्रेवैयज्ञदक्षिणाम् ॥ तांचापलपतांपापंयस्यार्योनुमतेगतः ॥२६॥ हस्त्यश्वरथसंबाधेयुद्धेशस्त्रसमाकुले मास्मकार्षीत्सतांधर्मंयस्यार्योनुमतेगतः ॥ २७ ॥ उपदिष्टंसुसूक्ष्मार्थंशास्त्रंयत्नेनधीमता ॥ सनाशयतुदुष्टात्मायस्यार्योनुमतेगतः ॥ २८ ॥ माचतं व्यूढबाहुंसंचंद्रभास्करतेजसम् ॥ द्राक्षीद्राज्यस्थमासीनंयस्यार्योनुमतेगतः ॥ २९ ॥ पायसंकृसरंछागंवृथासोश्नातुनिर्घृणः ॥ गुरूंश्चाप्यवजाना तुयस्यार्योनुमतेगतः ॥ ३० ॥ गवांस्पृशतुपादेनगुरून्परिवदेतच ॥ मित्रेद्रुह्येतसोत्यर्थंयस्यार्योनुमतेगतः ॥ ३१ ॥ विश्वासात्कथितंकिंचित्परिवा दंमिथःक्वचित् ॥ विवृणोतुसदुष्टात्मायस्यार्योनुमतेगतः ॥३२॥ अकर्ताचाकृतज्ञश्चत्यक्तश्चनिरपत्रपः ॥ लोकेभवतुविद्विष्टोयस्यार्योनुमतेगतः ॥ ३३ ॥ पुत्रैर्दासैश्चभृत्यैश्चस्वगृहेपरिवारितः ॥ सएकोमृष्टमश्नातुयस्यार्योनुमतेगतः ॥ ३४ ॥ अप्राप्यासदृशान्दारानपत्यःप्रमीयताम् ॥ अनवाप्याक्रियां धर्म्यांयस्यार्योनुमतेगतः ॥ ३५ ॥ मात्मनःसंततिंद्राक्षीत्स्वेषुदारेषुदुःखितः ॥ आयुःसमग्रमप्राप्ययस्यार्योनुमतेगतः ॥३६॥ राजस्त्रीबालवृद्धानांवधे यत्पापमुच्यते ॥ भृत्यत्यागेचयत्पापंतत्पापंप्रतिपद्यताम् ॥ ३७ ॥

तादृशरामदर्शनभाग्यरहितो भवत्वित्यर्थः । तावत्पर्यंतं जीवनं मा भूदिति वा ॥ २९ ॥ कृसरं तिलमुद्गतंडुलात्मकम् छागं छागमांसं वृथा श्राद्धादिनिमित्तं विना अश्नातु अशनजं पापं प्राप्नोतु ॥ ३० ॥ गवामिति । अंगमिति शेषः । परिवदेत अपवदेत् मित्रे मित्राय ॥ ३१ ॥ विश्वासात् अयं क्वापि न प्रकटयिष्यतीति विश्वासात् मिथः रहसि मिथोन्योन्यरहस्ययोः । किंचित्परिवादं कस्यचित्सुरापानादिदोषम् ॥ ३२ ॥ अकर्ता प्रत्युपकाराकर्ता अतएवाकृतज्ञः अतएव त्यक्तः सज्जनैः । त्यक्तात्मेतिपाठे सज्जनैस्त्यक्त आत्मा स्वरूपं यस्येत्येवार्थः । उद्बंधनादिना त्यक्तदेह इत्यर्थं तीर्थः । अतएव लोके विद्विष्टश्च भवतु ॥ ३३ ॥ एको मृष्टमश्नातु इतरेष्व शोचितेषु ॥ ३४ ॥ प्रमीयतां म्रियताम् । धर्म्यां क्रियाम् अग्निहोत्रादिकाम् म्रियतामित्यनुकर्षः ॥ ३५ ॥ दुःखित इत्यस्य भवत्विति शेषः । अप्राप्येत्यस्य म्रियतामिति शेषः ॥ ३६ ॥ राजस्त्रीत्यादौ यस्यार्य

इत्याद्यनुषंगः ॥ ३७ ॥ लाक्षयेति पतनीयतासंपादकवस्तुविक्रयेणेत्यर्थः । भृत्यान्भरणीयान्पुत्रदारादीन् ॥ ३८ ॥ समुपोढे माते ॥ ३९ ॥ चीरं जीर्णमलिनवस्त्रं ब्रह्महा भवत्विति शेषः । तादृशी निषिद्धाचरणा प्रव्रज्या भवत्विति वा भावः ॥ ४० ॥ ४१ ॥ अपात्रवर्षी अपात्रे दाता ॥ ४२ ॥ दस्युभिर्विप्रलुप्यंतां त्यागभोगविहीनानि भवंत्विति भावः ॥ ४३ ॥ उभे संध्ये व्याप्येति शेषः ॥ ४४ ॥ ४५ ॥ देवतानामिति देवतादिशुश्रूषारहितस्य यत्पापं तत्पापं स प्रतिपद्यतामित्यर्थः ॥ ४६ ॥ सतां कीर्त्याः सद्भिः क्रियमाणश्लाघायाः भ्रश्यतु सा मा भूत्तस्येत्यर्थः ॥ ४७ ॥ अनर्थे स्त्रीवशत्वाद्यनर्थे ॥ ४८ ॥ समायात्प्राप्नुयात् ॥ ४९ ॥

लाक्षयामधुमांसेनलोहेनचविषेणच ॥ सदैवबिभृयाद्भृत्यान्यस्यार्योऽनुमतेगतः ॥ ३८ ॥ संग्रामेसमुपोढेचशत्रुपक्षभयंकरे ॥ पलायमानोवध्येतयस्यार्योऽनुमतेगतः ॥ ३९ ॥ कपालपाणिःपृथिवीमटतांचीरसंवृतः ॥ भिक्षमाणोयथोन्मत्तोयस्यार्योऽनुमतेगतः ॥ ४० ॥ मद्यप्रसक्तोभवतुस्त्रीष्वक्षेषुचनित्यशः ॥ कामक्रोधाभिभूतश्चयस्यार्योऽनुमतेगतः ॥ ४१ ॥ मास्यधर्मेमनोभूयादधर्मंसनिषेवताम् ॥ अपात्रवर्षीभवतुयस्यार्योऽनुमतेगतः ॥ ४२ ॥ संचितान्यस्यवित्तानिविविधानिसहस्रशः ॥ दस्युभिर्विप्रलुप्यंतांयस्यार्योऽनुमतेगतः ॥ ४३ ॥ उभेसंध्येशयानस्ययत्पापंपरिकल्प्यते ॥ तच्चपापंभवेत्तस्ययस्यार्योऽनुमतेगतः ॥ ४४ ॥ यदग्निदायकेपापंयत्पापंगुरुतल्पगे ॥ मित्रद्रोहेचयत्पापंतत्पापंप्रतिपद्यताम् ॥ ४५ ॥ देवतानांपितृणांचमातापित्रोस्तथैवच ॥ मास्मकार्षीत्सशुश्रूषांयस्यार्योऽनुमतेगतः ॥ ४६ ॥ सतांलोकात्सतांकीर्त्याःसज्जुष्टात्कर्मणस्तथा ॥ भ्रश्यतुक्षिप्रमद्यैवयस्यार्योऽनुमतेगतः ॥ ४७ ॥ अपास्यमातृशुश्रूषामनर्थेसोवतिष्ठताम् ॥ दीर्घबाहुर्महावक्षायस्यार्योऽनुमतेगतः ॥ ४८ ॥ बहुभृत्योदरिद्रश्चज्वररोगसमन्वितः ॥ समायात्सततंक्लेशंयस्यार्योऽनुमतेगतः ॥ ४९ ॥ आशामाशंसमानानांदीनानामूर्ध्वचक्षुषाम् ॥ अर्थिनांवितथांकुर्याद्यस्यार्योऽनुमतेगतः ॥ ५० ॥ मायारमतांनित्यंपुरुषःपिशुनोशुचिः ॥ राज्ञोभीतस्त्वधर्मात्मायस्यार्योऽनुमतेगतः ॥ ५१ ॥ ऋतुस्नातांसतींभार्यामृतुकालानुरोधिनीम् ॥ अतिवर्तेतदुष्टात्मायस्यार्योऽनुमतेगतः ॥ ५२ ॥ विप्रलुप्तप्रजातस्यदुष्कृतंब्राह्मणस्ययत् ॥ तदेतत्प्रतिपद्येतयस्यार्योऽनुमतेगतः ॥ ५३ ॥ ब्राह्मणायोद्यतांपूजांविहंतुकलुषेंद्रियः ॥ बालवत्सांचगांदोग्धुयस्यार्योऽनुमतेगतः ॥ ५४ ॥ धर्मदारान्परित्यज्यपरदारान्निषेवताम् ॥ त्यक्तधर्मरतिर्मूढोयस्यार्योऽनुमतेगतः ॥ ५५ ॥ पानीयदूषकेपापंतथैवविषदायके ॥ यत्तदेकःसलभतांयस्यार्योऽनुमतेगतः ॥ ५६ ॥ तृषार्तेसतिपानीयेविप्रलंभेनयोजयन् ॥ यत्पापंलभतेतत्स्याद्यस्यार्योऽनुमतेगतः ॥ ५७ ॥

अर्थिनामाशामिति संबंधः आशंसमानानां स्तुवतां ऊर्ध्वचक्षुषां दातृमुखनिरीक्षकाणाम् ॥ ५० ॥ मायया वंचनया राज्ञो भीत इति भयकारणं पिशुनत्वाद्येव ॥ ५१ ॥ ऋतुकालानुरोधिनीं ऋतुस्नानकालत्वात्स्वसन्निहिताम् ॥ ५२ ॥ विप्रलुप्तप्रजातस्य अन्नाद्यदानेन प्रनष्टसंतानस्य स्त्रीद्वेषाद्वा तथाभूतस्य । यद्वा विप्रलुप्ता विवर्जिता प्रजाता जातापत्या जाया येन तस्य ॥ ५३ ॥ विहंतु विघ्नयतु । बालवत्सां दोग्धुः शास्त्रोक्तदोहनाधिकं दोग्धुः ॥ ५४ ॥ परदारान्निषेवतां यत्पापं तत्पापं प्रतिपद्यतां मूढः भूयादिति शेषः ॥ ५५ ॥ एकः यत्पापद्वयं तदेक एव लभतामित्यर्थः ॥ ५६ ॥ विप्रलंभेन वंचनया योजयन् अप्रयच्छन्निति यावत् ॥ ५७ ॥

प्रकृतिमान् सत्त्वप्रकृतिः वैद्यः सर्वज्ञभिषजौ वैद्यौ ॥२१॥ वृत्तस्य कृतदाहस्य सावशेषास्थिनिचये अस्थिसंचयनाख्यकर्मण आशौचांतराकृतस्याप्यवशेषो भूशुद्धिभस्मोद्धारलक्षणस्तेन सहितः सावशेषस्तस्मिन्कर्तव्ये सति इत्यर्थः । एतेन त्रयोदशेहन्यस्थिसंचयनं स्मृतिविरुद्धमित्यपास्तम् ॥ २२ ॥ त्रीणि द्वंद्वानि बुभुक्षापिपासे शोकमोहौ जरामृती जन्ममरणे सुखदुःखे लाभालाभौ चेति तीर्थः । अस्ति जायते वर्धतेपक्षीयते विपरिणमते विनश्यतीत्येवंरूपाणीति कतकः । भूतेषु प्राणिषु एवं भवितुमतिशोकाक्रांततया भवितुम् ॥ २३ ॥ सर्वभूतभवाभवौ उत्पत्तिविनाशौ ॥२४॥२५॥ परिमृद्नंतौ मार्जयंतौ तनयौ राजपुत्रौ अपराः क्रियाः भस्मोद्धारादिक्रिया उद्दिश्येति शेषः ॥ २६ ॥ चर्रमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तसप्ततितमः सर्गः ॥ ७७ ॥ यात्रां रामसमीपयात्रां समीहंतं समीहमानं विचारयंतमित्यर्थः ॥ १ ॥ दुःखे दुःखजनकसंकटे प्राप्ते यः सर्वभूतानां गतिः स्मरणमात्रेण सर्वदुःखनाशकः आत्मनः स्वस्य आवयोश्च गतिरिति किं वक्तव्यम् । अनेनातिसंकटे भगवत्स्मरण

ततःप्रकृतिमान्वैद्यःपितुरेषांपुरोहितः ॥ वसिष्ठोभरतंवाक्यमुत्थाप्यतमुवाचह ॥ २१ ॥ त्रयोदशोयंदिवसःपितुर्वृत्तस्यतेविभो ॥ सावशेषास्थिनिचये किमिहत्वंविलंबसे ॥ २२ ॥ त्रीणिद्वंद्वानिभूतेषुप्रवृत्तान्यविशेषतः ॥ तेषुचापरिहार्येषुनैवंभवितुमर्हसि ॥ २३ ॥ सुमंत्रश्चापिशत्रुघ्नमुत्थाप्याभिप्रसाद्यच ॥ श्रावयामासतत्त्वज्ञःसर्वभूतभवाभवौ ॥२४॥ उत्थितौतौनरव्याघ्रौप्रकाशेतेयशस्विनौ ॥ वर्षातपपरिग्लानौपृथगिंद्रध्वजाविव ॥ २५ ॥ अश्रूणिपरिमृद्नंतौरक्ताक्षौदीनभाषिणौ ॥ अमात्यास्त्वरयंतिस्मतनयौचापराःक्रियाः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेसप्तसप्ततितम :सर्गः ॥ ७७ ॥ अथयात्रांसमीहंतंशत्रुघ्नोलक्ष्मणानुजः ॥ भरतंशोकसंतप्तमिदंवचनमब्रवीत् ॥ १ ॥ गतिर्यःसर्वभूतानांदुःखे किंपुनरात्मनः ॥ सरामःसत्त्वसंपन्नःस्त्रियाप्रव्राजितोवनम् ॥ २ ॥ बलवान्वीर्यसंपन्नोलक्ष्मणोनामयोप्यसौ ॥ किंनमोचयतेरामंकृत्वापिपितृनिग्रहम् ॥ ३ ॥ पूर्वमेवतुनिग्राह्यःसमवेक्ष्यनयानयौ ॥ उत्पथंयःसमारूढोनार्याराजावशंगतः ॥ ४ ॥ इतिसंभाषमाणेतुशत्रुघ्नेलक्ष्मणानुजे ॥ प्राग्द्वारेभूत्तदाकुब्जासर्वाभरणभूषिता ॥ ५ ॥ लिप्ताचंदनसारेणराजवस्त्राणिबिभ्रती ॥ विविधंविविधैस्तैस्तैर्भूषणैश्चविभूषिता ॥ ६ ॥ मेखलादामभिश्चित्रैरन्यैश्चवरभूषणैः ॥ बभासेबहुभिर्बद्धारज्जुभिरिववानरी ॥ ७ ॥

मेव दुःखनाशे समर्थं नान्यदिति सूचितम् । स रामः स्त्रिया प्रव्राजितः स च गत इत्येतदनुचितम् तेन कृतम् सामर्थ्ये सतीति शेषः ॥ २ ॥ किंवा रामो राज्यलोभात्पित्राज्ञामुल्लंघितवानिति अयशोभयादेवं करोतु लक्ष्मणः सर्वथानुचितं कृतवानित्याह बलवानिति । लक्ष्मणो नाम अनुचितकर्तृत्वेन शोच्यः योपि अस्मद्भ्राता असौ पितृनिग्रहं कृत्वा रामं न मोचयते स्म वनवासात् ॥३॥ कथं पितृनिग्रह उचितस्तत्राह पूर्वमिति । यो राजा नार्या वशं गतः सन् उत्पथम् अन्यायमार्गम् आरूढः प्राप्तः अतः लक्ष्मणः स्वयं नयानयौ न्यायान्यायौ अभिषेकविषयौ समीक्ष्य विचार्य गुरोरप्यवलिप्तस्येति शास्त्रानुसारेण वनप्रव्राजनात्पूर्वमेव तत्प्रसंगकाल एव निग्राह्यो नेदमनुचितमिति भावः ॥ ४ ॥ प्राग्द्वारे शत्रुघ्नाधिष्ठितद्वारे कुब्जा दैवादागताभूत् ॥ ५ ॥ राजवस्त्राणि राजार्हवस्त्राणि ॥ ६ ॥ वानरी कुरूपत्वात् । अत्र गुरुलघुप्रयुक्तच्छंदोभंग आर्षः । पाठां

इत्याद्यनुषंगः ॥३७॥ लाक्षयेति पतनीयतासंपादकवस्तुविक्रयेणेत्यर्थः । भृत्यान्भरणीयान्पुत्रदारादीन् ॥३८॥ समुपोढे प्राप्ते ॥३९॥ चीरं जीर्णमलिनवस्त्रं ब्रह्महा भवत्विति शेषः । तादृशी निषिद्धाचरणा प्रव्रज्या भवत्विति वा भावः ॥ ४० ॥४१ ॥ अपात्रवर्षी अपात्रे दाता ॥ ४२ ॥ दस्युभिर्विप्रलुप्यंतां त्यागभोगविहीनानि भवंत्विति भावः ॥ ४३ ॥ उभे संध्ये व्याप्येति शेषः ॥ ४४ ॥ ४५ ॥ देवतानामिति देवतादिशुश्रूषारहितस्य यत्पापं तत्पापं स प्रतिपद्यतामित्यर्थः ॥४६॥ सतां कीर्त्याः सद्भिः क्रियमाणश्लाघायाः भ्रश्यतु सा मा भूत्तस्येत्यर्थः ॥ ४७ ॥ अनर्थे स्त्रीवशत्वाद्यनर्थे ॥४८॥ समायात्स्नाप्नुयात् ॥४९॥

लाक्षयामधुमांसेनलोहेनचविषेणच ॥ सदैवबिभृयाद्भृत्यान्यस्यार्योनुमतेगतः ॥ ३८ ॥ संग्रामेसमुपोढेचशत्रुपक्षभयंकरे ॥ पलायमानोवध्येतयस्यार्योनुमतेगतः ॥ ३९ ॥ कपालपाणिःपृथिवीमटतांचीरसंवृतः ॥ भिक्षमाणोयथोन्मत्तोयस्यार्योनुमतेगतः ॥ ४० ॥ मद्यप्रसक्तोभवतुस्त्रीष्वक्षेषुचनित्यशः ॥ कामक्रोधाभिभूतश्चयस्यार्योनुमतेगतः ॥ ४१ ॥ मास्यधर्मेमनोभूयादधर्मंसनिषेवताम् ॥ अपात्रवर्षीभवतुयस्यार्योनुमतेगतः ॥ ४२ ॥ संचितान्यस्यवित्तानिविविधानिसहस्रशः ॥ दस्युभिर्विप्रलुप्यंतांयस्यार्योनुमतेगतः ॥ ४३ ॥ उभेसंध्येशयानस्ययत्पापंपरिकल्प्यते ॥ तच्चपापंभवेत्तस्ययस्यार्योनुमतेगतः ॥ ४४ ॥ यदग्निदायकेपापंयत्पापंगुरुतल्पगे ॥ मित्रद्रोहेचयत्पापंतत्पापंप्रतिपद्यताम् ॥ ४५ ॥ देवतानांपितॄणांचमातापित्रोस्तथैवच ॥ मास्मकार्षीत्सशुश्रूषांयस्यार्योनुमतेगतः ॥४६॥ सतांलोकात्सतांकीर्त्याःसज्जुष्टात्कर्मणस्तथा ॥ भ्रश्यतुक्षिप्रमद्यैवयस्यार्योनुमतेगतः ॥ ४७ ॥ अपास्यमातृशुश्रूषामनर्थेसोवतिष्ठताम् ॥ दीर्घबाहुर्महावक्षायस्यार्योनुमतेगतः ॥ ४८ ॥ बहुभृत्योदरिद्रश्चज्वररोगसमन्वितः ॥ समायात्सततंक्लेशंयस्यार्योनुमतेगतः ॥ ४९ ॥ आशामाशंसमानानांदीनानामूर्ध्वचक्षुषाम् ॥ अर्थिनांवितथांकुर्याद्यस्यार्योनुमतेगतः ॥ ५० ॥ मायारमतांनित्यंपुरुषःपिशुनोशुचिः ॥ राज्ञोभीतस्त्वधर्मात्मायस्यार्योनुमतेगतः ॥ ५१ ॥ ऋतुस्नातांसतींभार्यामृतुकालानुरोधिनीम् ॥ अतिवर्तेतदुष्टात्मायस्यार्योनुमतेगतः ॥ ५२ ॥ विप्रलुप्तप्रजातस्यदुष्कृतंब्राह्मणस्ययत् ॥ तदेतत्प्रतिपद्येतयस्यार्योनुमतेगतः ॥ ५३ ॥ ब्राह्मणायोद्यतांपूजांविहंतुकलुषेंद्रियः ॥ बालवत्सांचगांदोग्धुर्यस्यार्योनुमतेगतः ॥ ५४ ॥ धर्मदारान्परित्यज्यपरदारान्निषेवताम् ॥ त्यक्तधर्मरतिर्मूढोयस्यार्योनुमतेगतः ॥ ५५ ॥ पानीयदूषकेपापंतथैवविषदायके ॥ यत्तदेकःसलभतांयस्यार्योनुमतेगतः ॥ ५६ ॥ तृषार्तेसतिपानीयेविप्रलंभेनयोजयन् ॥ यत्पापंलभतेतत्स्याद्यस्यार्योनुमतेगतः ॥ ५७ ॥

अर्थिनामाशामिति संबंधः आशंसमानानां स्तुवतां ऊर्ध्वचक्षुषां दातृमुखनिरीक्षकाणाम् ॥५०॥ मायया वंचनया राज्ञो भीत इति भयकारणं पिशुनत्वाद्येव ॥५१॥ ऋतुकालानुरोधिनीं ऋतुस्नानकालत्वात्स्वसन्निहिताम् ॥५२॥ विप्रलुप्तप्रजातस्य अन्नाद्यदानेन प्रनष्टसंतानस्य स्त्रीद्वेषाद्वा तथाभूतस्य । यद्वा विप्रलुप्ता विवर्जिता प्रजाता जातापत्या जाया येन तस्य ॥५३॥ विहंतु विघ्नयतु । बालवत्सां दोग्धुः शास्त्रोक्तदोहनाधिकं दोग्धुः ॥ ५४ ॥ परदारान्निषेवतां यत्पापं तत्पापं प्रतिपद्यतां मूढः भूयादिति शेषः ॥ ५५ ॥ एकः यत्पापद्वयं तदेक एव लभतामित्यर्थः ॥ ५६ ॥ विप्रलंभेन वंचनया योजयन् अप्रयच्छन्निति यावत् ॥ ५७ ॥

भक्त्या शिवविष्ण्वादिदेवताभक्त्या मार्गं तत्तदुपोद्बलकशैववैष्णवादिशास्त्रमाश्रित्यायमुत्कृष्टोयं नेति विवदमानेषु यत्पापं यच्च तयोर्विवादं पश्यतः शृण्वतः पापं तेन पापेन स युज्येतेत्यर्थः । तस्य पापेनेतिपाठे तेषां यत्पापं तेन यस्यानुमते गतस्तस्य योगः संबंधो भूयादित्यर्थः । भावे च युज्येतेति प्रयोगः । अयं परस्त्वयं नेति संरक्षाभिनिवेशिनः ॥ यातुधाना भवंत्येव पिशाचाश्च न संशय इति शिवपुराणोक्तः । यो ब्रह्मविष्णुरुद्राणां भेदं युक्तिनिवेशतः ॥ साधयेदुदरव्याधियुक्तो भवति मानव इति कर्मविपाकशास्त्रोक्तेश्च । अत्र विवदमानानां जयोपायं ज्ञात्वा तदकथयतः पापमिति तीर्थव्याख्या । द्वयोः साम्यस्थापनपूर्वकं तेषां कलहशमनमकुर्वतः कलहप्रियस्य यत्पापमिति कतकव्याख्या ॥ ५८ ॥ ५९ ॥ ६० ॥ भूयः अभ्यधिकं दुःखम् हि यत् एवं कष्टैः शपथैः शपमानो मे प्राणानुपरुणत्सि पीडयसे ॥ ६१ ॥ अथ विशुद्धभावं ज्ञात्वानुगृह्णाति दिष्ट्येति । आत्मा अंतःकरणम् । लक्षणैः शुभलक्षणैः सहितः सहलक्षणस्ते आत्मेत्यर्थः । हे वत्स हि यदि सत्यप्रतिज्ञो भविष्यसि तदा सतां लोकानवाप्स्यसि । कैकेय्यग्रे कृतां

भक्त्याविवदमानेषुमार्गमाश्रित्यपश्यतः ॥ तेनपापेनयुज्येतयस्यार्योनुमतेगतः ॥५८॥ एवमाश्वासयन्नेवदुःखार्तोनुपपातह ॥ विहीनांपतिपुत्राभ्यांकौसल्यांपार्थिवात्मजः ॥ ५९ ॥ तदातंशपथैःकष्टैःशपमानमचेतनम् ॥ भरतंशोकसंतप्तंकौसल्यावाक्यमब्रवीत् ॥६०॥ ममदुःखमिदंपुत्रभूयःसमुपजायते ॥ शपथैःशपमानोहिप्राणानुपरुणत्सिमे ॥ ६१ ॥ दिष्ट्यानचलितोधर्मादात्मातेसहलक्षणः ॥ वत्ससत्यप्रतिज्ञोहिसतांलोकानवाप्स्यसि ॥६२॥ इत्युक्त्वाचांकमानीयभरतंभ्रातृवत्सलम् ॥ परिष्वज्यमहाबाहुंरुरोदभृशदुःखिता ॥ ६३ ॥ एवंविलपमानस्यदुःखार्तस्यमहात्मनः ॥ मोहाच्चशोकसंरंभाद्बभूवलुलितंमनः ॥६४॥ लालप्यमानस्यविचेतनस्यप्रनष्टबुद्धेःपतितस्यभूमौ ॥ मुहुर्मुहुर्निःश्वसतश्चदीर्घंसातस्यशोकेनजगामरात्रिः ॥ ६५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचसप्ततितमः सर्गः ॥ ७५ ॥ तमेवंशोकसंतप्तंभरतंकैकयीसुतम् ॥ उवाचवदतांश्रेष्ठोवसिष्ठःश्रेष्ठवाग्‌ऋषिः ॥ १ ॥ अलंशोकेनभद्रंतेराजपुत्रमहायशः ॥ प्राप्तकालंनरपतेःकुरुसंयानमुत्तमम् ॥ २ ॥ वसिष्ठस्यवचःश्रुत्वाभरतोधरणींगतः ॥ प्रेतकृत्यानिसर्वाणिकारयामासधर्मवित् ॥ ३ ॥ उद्धृत्यतैलसंसेकात्सतुभूमौनिवेशितम् ॥ आपीतवर्णवदनंप्रसुप्तमिवभूमिपम् ॥ ४ ॥ संवेश्यशयनेचाग्र्येनानारत्नपरिष्कृते ॥ ततोदशरथंपुत्रोविललापसुदुःखितः ॥ ५ ॥ किंतेव्यवसितंराजन्प्रोषितेमय्यनागते ॥ विवास्यरामंधर्मज्ञंलक्ष्मणंचमहाबलम् ॥ ६ ॥

रामानयनप्रतिज्ञां सत्यां कुर्विति व्यंग्यम् ॥ ६२ ॥ एवमनुगृह्य पुत्रोचितकृत्येनाश्वासयति इत्युक्तेति ॥ ६३ ॥ शोकसंरंभात् शोकाविक्यात् तत एव मोहः विलुलितं क्षुभितम् ॥ ६४ ॥ दीर्घं यथा भवति तथा रात्रिः रात्रिशेषः । पाठांतरे घर्मं उष्णं यथा भवति तथा ॥ ६५ ॥ अत्रैकश्लोकोधिक इति कतकसंख्यया ज्ञायते ॥ शतैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचसप्ततितमः सर्गः ॥ ७५ ॥ ॥ ७ ॥ ॥ तमिति वसिष्ठः भरतागमनं श्रुत्वा आगत इति शेषः ॥ १ ॥ संयानं प्रेतनिर्हारम् ॥ २ ॥ धरणीं गतः वसिष्ठं साष्टांगं नमस्कृत्वेत्यर्थः । धारणां गत इतिपाठे धैर्यं प्राप्त इत्यर्थः । कारयामास तत्करणार्थं मंत्रिणः प्रेरयामासेत्यर्थः ॥ ३ ॥ बहुदिवसतैलावस्थानोपाधिना आपीतवर्णं वदनं यस्य तम् ॥ ४ ॥ दशरथमिति उद्दिश्येति शेषः ॥ ५ ॥ व्यवसितं मनोर्पितम् ।

प्रोषिते देशांतरगते ॥ ६ ॥ रामेण हीनामिमं दुःखितं जनं हित्वा क्व यास्यसीत्यन्वयः ॥७॥ ते तव अस्मिन्पुरे अयोध्यायाम् । योगक्षेमं प्रजानाम् । अव्यग्रं परित्यक्तदुःखपारवश्यम् । यथा तथा । स्वः स्वर्गम् ॥ ८ ॥ ९ ॥ १० ॥ अविचारितं प्राचीनवैभवादिस्मरणरहितं यथा तथा ॥ ११ ॥ ऋत्विजो यज्ञकर्मणि वृताः । पुरोहितः सर्वहितप्रवर्तकः । तदुक्तम् मंत्रे च धर्मकृत्ये च शांतिकर्मणि पौष्टिके ॥ अध्वरे यश्च कुशलः स स्याद्राजपुरोहित इति । उपनीयवेदाध्यापक आचार्यः ॥ १२ ॥ अग्न्यगाराद्बहिष्कृताः अंतः शवसत्त्वाद्बहिःप्रदेशे प्रतिष्ठापिताः । याजकैरुपद्रष्टृभिः हूयंते स्म ॥ १३ ॥ १४ ॥ हिरण्यं रजतं स्वर्णं रजतपुष्पाणीति यावत् ॥ १५ ॥ निर्यासो गुग्गुल्वादिः । सरलपद्मके काष्ठभेदः । देवदारूणि देवदारुकाष्ठानि क्षेपयंति चिताग्नाविति शेषः ॥ १६ ॥ तत्र चितादेशे गत्वा तं चितामध्ये संवेशयामासुः स्थापया

कयास्यसेमहाराजहित्वेमंदुःखितंजनम् ॥ हीनंपुरुषसिंहेनरामेणाक्लिष्टकर्मणा ॥ ७ ॥ योगक्षेमंतुतेव्यग्रंकोस्मिन्कल्पयितापुरे ॥ त्वयिप्रयाते स्वस्तातरामेचवनमाश्रिते ॥ ८ ॥ विधवापृथिवीराजंस्त्वयाहीनानराजते ॥ हीनचंद्रेवरजनीनगरीप्रतिभातिमाम् ॥ ९ ॥ एवंविलपमानंतंभरतंदीनमानसम् ॥ अब्रवीद्वचनंभूयोवासिष्ठस्तुमहामुनिः ॥ १० ॥ प्रेतकार्याणियान्यस्यकर्तव्यानिविशांपतेः ॥ तान्यव्यग्रंमहाबाहोक्रियतामविचारितम् ॥ ॥ ११ ॥ तथेतिभरतोवाक्यंवासिष्ठस्याभिपूज्यतत् ॥ ऋत्विक्पुरोहिताचार्यांस्त्वरयामाससर्वशः ॥ १२ ॥ येत्वग्नयोनरेंद्रस्यअग्न्यगाराद्बहिष्कृताः ॥ ऋत्विग्भिर्याजकैश्चैवतेहूयंतेयथाविधि ॥ १३ ॥ शिविकायामथारोप्यराजानंगतचेतनम् ॥ बाष्पकंठाविमनसस्तमूचुःपरिचारकाः ॥ १४ ॥ हिरण्यंचसुवर्णंचवासांसिविविधानिच ॥ प्रकिरंतोजनामार्गेनृपतेरग्रतोययुः ॥ १५ ॥ चंदनागुरुनिर्यासान्सरलंपद्मकंतथा ॥ देवदारूणिचाहृत्यक्षेपयंतितथापरे ॥ १६ ॥ गंधानुच्चावचांश्चान्यांस्तत्रगत्वाथभूमिपम् ॥ तत्रसंवेशयामासुश्चितामध्येतमृत्विजः ॥ १७ ॥ तदाहुताशनंहुत्वाजेपुस्तस्यतदृत्विजः ॥ जगुश्चतेयथाशास्त्रंतत्रसामानिसामगाः ॥ १८ ॥ शिविकाभिश्चयानैश्चयथार्हंतस्ययोषितः ॥ नगरान्निर्ययुस्तत्रवृद्धैःपरिवृतास्तथा ॥ १९ ॥ प्रसव्यंचापितंचक्रुर्ऋत्विजोग्निचितंनृपम् ॥ स्त्रियश्चशोकसंतप्ताःकौसल्याप्रमुखास्तदा ॥ २० ॥ क्रौंचीनामिवनारीणांनिनादस्तत्रशुश्रुवे ॥ आर्तानांकरुणंकालेक्रोशंतीनांसहस्रशः ॥ २१ ॥ ततोरुदंत्योविवशाविलप्यचपुनःपुनः ॥ यानेभ्यःसरयूतीरमवतेरुर्नृपांगनाः ॥ २२ ॥ कृत्वोदकंतेभरतेनसार्धंनृपांगनामंत्रिपुरोहिताश्च ॥ पुरंप्रविश्याश्रुपरीतनेत्राभूमौदशाहंव्यनयंतदुःखम् ॥ २३ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेषट्सप्ततितमःसर्गः ॥ ७६ ॥ ततोदशाहेतिगतेकृतशौचोनृपात्मजः ॥ द्वादशेहनिसंप्राप्तेश्राद्धकर्माण्यकारयत् ॥ १ ॥ ब्राह्मणेभ्योधनंरत्नंददावन्नंचपुष्कलम् ॥ बास्तिकंबहुशुक्लंचगाश्चापिबहुशस्तदा ॥ २ ॥

मासुः ॥ १७ ॥ जेपुः पैतृमेधिकमंत्रान् तस्य परलोकशुद्ध्यर्थमिति शेषः । तदृत्विजः तद्यज्ञप्रवर्तकाः ॥ १८ ॥ १९ ॥ प्रसव्यमप्रदक्षिणं अग्निचितं अग्निं चितवंतम् अश्वमेधांतयज्ञकर्तारं स्त्रियश्च प्रसव्यं चक्रुरित्यन्वयः ॥ २० ॥२१॥२२॥ दशाहम् । अत्यंतसंयोगे द्वितीया । दुःखमाशौचं भूमौ शयाना इति शेषः । इदं ब्रह्मचर्यमात्रोपलक्षणम् । ननु द्वादशाहेन भूपालः क्षत्रियः षोडशेहनीति स्मृतेः । कथं क्षत्रियस्य दशाहेनाशौचात्यय इति चेन्न । क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिरिति पराशरोक्तेरिति दिक् ॥२३॥ गैरेमानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षट्सप्ततितमः सर्गः ॥ ७६ ॥ ॥ तत इति दशाहेतिगते एकादशेह्नि कृतशौचः अनुष्ठितप्रेतविमुक्तिदैकादशाहश्राद्धः श्राद्धकर्माणि द्वितीयमासिकादिसपिंडीकरणांतश्राद्धानि ॥१॥ बास्तिकं छागसमूहम् । आर्षष्ठक्।

वस्तोनः शुक्लं रजतम् । शुक्लो योगांतरे श्वेते शुक्लं च रजते मतम् ॥ २ ॥ ऊर्ध्वंदेहोद्भवमौर्ध्वदैहिकं पारलौकिकम् ॥३॥ त्रयोदशे त्रयोदशेहनि शोधनार्थमुपागतो विललापेत्यन्वयः । दशाहाभ्यंतरेऽस्थिसंचयनं कृत्वा सकलश्राद्धानंतरं त्रयोदशेहनि चिताभस्मोद्धारपूर्वकं स्थलशुद्धिः कर्तव्येति क्षत्रियधर्म इति वाल्मीक्युक्तेर्ज्ञायते इति कतकः । तीर्थस्तु शोधनं अस्थिसंचयनमित्याह । शब्देन रोदनशब्देन पिहित आवृतः कंठो यस्य चितामूले इदं वाक्यमाह ॥४॥५॥ तदेवाह तातेति । निसृष्टः दत्तः प्रव्राजिते प्रव्राजिते अहं शून्ये त्यक्तः निरवलंबतया निरस्तः ॥ ६ ॥ यस्या अनाथाया गतिरवलंबः पुत्र इत्यर्थः ॥७॥ भस्मारुणं भस्मयुतं अति दाहादरुणं च दग्धास्थिदग्धान्यस्थीनि यस्मिन्स्थानमंडलं चितास्थानमंडलं पितुः शरीरनिर्वाणं शरीरनाशस्थानं तद्दृष्ट्वा निष्टनन् अत्यंतं विलपन्विषसाद ॥८॥ दीनः दुःखितो भूत्वा पपात उत्थाप्यमानः पुरुषैः यंत्रबद्धो

दासीर्दासांश्चयानानिवेश्मानिसुमहांतिच ॥ ब्राह्मणेभ्योददौपुत्रोराज्ञस्तस्यौर्ध्वदैहिकम् ॥३॥ ततःप्रभातसमयेदिवसेचत्रयोदशे ॥ विललापमहाबाहुर्भरतःशोकमूर्च्छितः ॥ ४ ॥ शब्दापिहितकंठश्चशोधनार्थमुपागतः ॥ चितामूलेपितुर्वाक्यमिदमाहसुदुःखितः ॥ ५ ॥ तातयस्मिन्निसृष्टोहंत्वयाभ्रातरिराघवे ॥ तस्मिन्वनंप्रव्रजितेशून्येत्यक्तोस्म्यहंत्वया ॥ ६ ॥ यस्यागतिरनाथायाःपुत्रःप्रव्राजितोवनम् ॥ तामंबांतातकौसल्यांत्यक्त्वात्वंक्वगतो नृप ॥ ७ ॥ दृष्ट्वाभस्मारुणंतच्चदग्धास्थिस्थानमंडलम् ॥ पितुःशरीरनिर्वाणंनिष्टनन्विषसादह ॥ ८ ॥ सतुदृष्ट्वारुदन्दीनःपपातधरणीतले ॥ उत्थाप्यमानःशक्रस्ययंत्रध्वजइवोच्छ्रितः ॥ ९ ॥ अभिपेतुस्ततःसर्वेतस्यामात्याःशुचिव्रतम् ॥ अंतकालेनिपतितंययातिमृषयोयथा ॥ १० ॥ शत्रुघ्नश्चापि भरतंदृष्ट्वाशोकपरिप्लुतम् ॥ विसंज्ञोन्यपतद्भूमौभूमिपालमनुस्मरन् ॥ ११ ॥ उन्मत्तइवनिश्चित्तोविललापसुदुःखितः ॥ स्मृत्वापितुर्गुणांगानितानितानि तदातदा ॥ १२ ॥ मंथराप्रभवस्तीव्रःकैकेयीग्राहसंकुलः ॥ वरदानमयोक्षोभ्योमज्जयच्छोकसागरः ॥ १३ ॥ सुकुमारंचबालंचसततंलालितंत्वया ॥ क्वतातभरतंहित्वाविलपंतंगतोभवान् ॥ १४ ॥ ननुभोज्येषुपानेषुवस्त्रेष्वाभरणेषुच ॥ प्रवारयतिसर्वान्नस्तन्नःकोद्यकरिष्यति ॥ १५ ॥ अवदारणकाले तुपृथिवीनावदीर्यते ॥ विहीनायात्वयाराज्ञाधर्मज्ञेनमहात्मना ॥ १६ ॥ पितरिस्वर्गमापन्नेरामेचारण्यमाश्रिते ॥ किंमेजीवितसामर्थ्यंप्रवेक्ष्यामि हुताशनम् ॥ १७ ॥ हीनोभ्रात्राचपित्राचशून्यामिक्ष्वाकुपालिताम् ॥ अयोध्यांनप्रवेक्ष्यामिप्रवेक्ष्यामितपोवनम् ॥ १८ ॥ तयोर्विलपितंश्रुत्वाव्यसनं चाप्यवेक्ष्यतत् ॥ भृशमार्ततराभूयःसर्वएवानुगामिनः ॥ १९ ॥ ततोविषण्णौश्रांतौचशत्रुघ्नभरतावुभौ ॥ धरायांस्मव्यचेष्टेतांभग्नशृंगाविवर्षभौ ॥२०॥

ध्वजो यंत्रध्वजः स इव पपात । शक्रयंत्रध्वजस्याकाशस्थस्य भूमौ पातायोगात् । गृहाद्यलंकारार्थं ध्वजयंत्ररूपेण ध्वजसदृशरूपेण निर्मित इत्यर्थ इति कतकः । उत्पाततः पतितेन तेनोपमेत्यन्ये ॥ ९ ॥ अंतकाले पुण्यक्षयकाले ॥ १० ॥ ११ ॥ गुणांगानि उपलालनगुणस्यांगभूतानि विचित्रवस्त्राभरणादिदानादिकर्माणि स्मृत्वा विललाप ॥ १२ ॥ वरदानमयत्वादक्षोभ्यः अमज्जयत् अस्मानिति शेषः ॥ १३ ॥ १४ ॥ नन्विति महार्ह्यन्याभरणादीनि दिव्यवस्तून्युपस्थाप्यांग एषु किं तेऽपेक्षितं गृहाणेति प्रकर्षेणास्मदिष्टवरणं कारयति भवान् तदद्य नः कः करिष्यति त्वयि गते इति शेषः ॥ १५ ॥ या त्वया विहीना सा पृथिवी अवदारणकाले तु तस्मिन्नपि नावदीर्यते ॥ १६ ॥ १७ ॥ १८ ॥ अनुगामिनोऽनुचरा आर्ततरा अभूवन्निति शेषः ॥ १९ ॥ व्यचेष्टेतां व्यलुठेताम् । विश्रांताविति पाठे विशेषेण श्रांतावित्यर्थः ॥ २० ॥

प्रकृतिमान् सत्त्वप्रकृतिः वैद्यः सर्वज्ञभिषजौ वैद्यौ ॥२१॥ वृत्तस्य कृतदाहस्य सावशेषास्थिनिचये अस्थिसंचयनाख्यकर्मण आशौचांतराकृतस्याप्यवशेषो भूशुद्धिभस्मोद्धारलक्षणस्तेन सहितः सावशेषस्तस्मिन्कर्तव्ये सति इत्यर्थः । एतेन त्रयोदशेहन्यस्थिसंचयनं स्मृतिविरुद्धमित्यपास्तम् ॥ २२ ॥ त्रीणि द्वंद्वानि बुभुक्षापिपासे शोकमोहौ जरामृती जन्ममरणे सुखदुःखे लाभालाभौ चेति तीर्थः । अस्ति जायते वर्धतेपक्षीयते विपरिणमते विनश्यतीत्येवंरूपाणीति कतकः । भूतेषु प्राणिषु एवं भवितुमतिशोकाक्रांततया भवितुम् ॥ २३ ॥ सर्वभूतभवाभवौ उत्पत्तिविनाशौ ॥२४॥२५॥ परिमृद्नंतौ मार्जयंतौ तनयौ राजपुत्रौ अपराः क्रियाः भस्मोद्धारादिक्रिया उद्दिश्येति शेषः ॥ २६ ॥ चर्रमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तसप्ततितमः सर्गः ॥ ७७ ॥ यात्रां रामसमीपयात्रां समीहंतं समीहमानं विचारयंतमित्यर्थः ॥ १ ॥ दुःखे दुःखजनकसंकटे प्राप्ते यः सर्वभूतानां गतिः स्मरणमात्रेण सर्वदुःखनाशकः आत्मनः स्वस्य आवयोश्च गतिरिति किं वक्तव्यम् । अनेनातिसंकटे भगवत्स्मरण

ततःप्रकृतिमान्वैद्यःपितुरेषांपुरोहितः ॥ वसिष्ठोभरतंवाक्यमुत्थाप्यतमुवाचह ॥ २१ ॥ त्रयोदशोयंदिवसःपितुर्वृत्तस्यतेविभो ॥ सावशेषास्थिनिचये किमिहत्वंविलंबसे ॥ २२ ॥ त्रीणिद्वंद्वानिभूतेषुप्रवृत्तान्यविशेषतः ॥ तेषुचापरिहार्येषुनैवंभवितुमर्हसि ॥ २३ ॥ सुमंत्रश्चापिशत्रुघ्नमुत्थाप्याभिप्रसाद्य च ॥ श्रावयामासतत्त्वज्ञःसर्वभूतभवाभवौ ॥२४॥ उत्थितौतौनरव्याघ्रौप्रकाशेतेयशस्विनौ ॥ वर्षातपपरिग्लानौपृथगिंद्रध्वजाविव ॥ २५ ॥ अश्रूणिपरिमृद्नंतौरक्ताक्षौदीनभाषिणौ ॥ अमात्यास्त्वरयंतिस्मतनयौचापराःक्रियाः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेसप्तसप्ततितमः सर्गः ॥ ७७ ॥ अथयात्रांसमीहंतंशत्रुघ्नोलक्ष्मणानुजः ॥ भरतंशोकसंतप्तमिदंवचनमब्रवीत् ॥ १ ॥ गतिर्यःसर्वभूतानांदुःखे किंपुनरात्मनः ॥ सरामःसत्त्वसंपन्नःस्त्रियाप्रव्राजितोवनम् ॥ २ ॥ बलवान्वीर्यसंपन्नोलक्ष्मणोनामयोप्यसौ ॥ किंनमोचयतेरामंकृत्वापिपितृनिग्रहम् ॥ ३ ॥ पूर्वमेवतुनिग्राह्यःसमवेक्ष्यनयानयौ ॥ उत्पथंयःसमारूढोनार्याराजावशंगतः ॥ ४ ॥ इतिसंभाषमाणेतुशत्रुघ्नेलक्ष्मणानुजे ॥ प्राग्द्वारेभूत्तदा कुब्जासर्वाभरणभूषिता ॥ ५ ॥ लिप्ताचंदनसारेणराजवस्त्राणिबिभ्रती ॥ विविधंविविधैस्तैस्तैर्भूषणैश्चविभूषिता ॥ ६ ॥ मेखलादामभिश्चित्रैरन्यैश्चवरभूषणैः ॥ बभासेबहुभिर्बद्धारज्जुभिरिववानरी ॥ ७ ॥

मेव दुःखनाशे समर्थं नान्यदिति सूचितम् । स रामः स्त्रिया प्रव्राजितः स च गत इत्येतदनुचितम् तेन कृतम् सामर्थ्ये सतीति शेषः ॥ २ ॥ किंवा रामो राज्यलोभात्पित्राज्ञामुल्लंघितवानिति अयशोभयादेवं करोतु लक्ष्मणः सर्वथानुचितं कृतवानित्याह बलवानिति । लक्ष्मणो नाम अनुचितकर्तृत्वेन शोच्यः योपि अस्मद्भ्राता असौ पितृनिग्रहं कृत्वा रामं न मोचयते स्म वनवासात् ॥ ३ ॥ कथं पितृनिग्रह उचितस्तत्राह पूर्वमिति । यो राजा नार्या वशं गतः सन् उत्पथम् अन्यायमार्गम् आरूढः प्राप्तः अतः लक्ष्मणः स्वयं नयानयौ न्यायान्यायौ अभिषेकविषयौ समीक्ष्य विचार्य गुरोरप्यवलिप्तस्येति शास्त्रानुसारेण वनप्रव्राजनात्पूर्वमेव तत्प्रसंगकाल एव निग्राह्यो नेदमनुचितमिति भावः ॥ ४ ॥ प्राग्द्वारे शत्रुघ्नाधिष्ठितद्वारे कुब्जा दैवादागताभूत् ॥ ५ ॥ राजवस्त्राणि राजार्हवस्त्राणि ॥ ६ ॥ वानरी कुरूपत्वात् । अत्र गुरुलघुप्रयुक्तच्छंदोभंग आर्षः । पाठां

तरे चः पादपूरणे ॥७॥ अकरुणं निर्दयम् ॥८॥ वने रामस्तिष्ठतीति शेषः यथामतिनिग्रहमिति शेषः॥९॥ धृतव्रतः कर्तव्यत्वेन अवधृतव्रत इत्यर्थः । द्रुतं वच इति पाठांतरम् ॥१०॥ अश्रुतां मामुतां तथा कर्तव्यं मयेतिशेषः ॥११॥१२॥१३॥ समुपक्रांतः आरब्धपराक्रमः ॥१४॥ अतः सानुक्रोशामिति सा नोस्माकं ध्रुवा गतिरस्ति अतस्तां शरणं याम इत्यमंत्रयतेत्यन्वयः॥१५॥पृथिवीतले पातयित्वेति शेषः ॥१६॥ भांडं भूषणमात्रेपि ॥ १७ ॥ १८ ॥ गृहीत्वा कुब्जां कैकेयीमभिनिर्भर्त्स्य कुब्जामोचनार्थमागतामिति शेषः । निर्भर्त्सनमत्र हस्तेन दूरीकरणम् ॥ १९ ॥ परुषैः मर्मग्राहिभिः अतएव दुःखैः । पुत्रं शरणमागता

तांसमीक्ष्यतदाद्वाःस्थोभृशंपापस्यकारिणीम् ॥ गृहीत्वाकरुणंकुब्जांशत्रुघ्नायन्यवेदयत् ॥ ८ ॥ यस्याःकृतेवनेरामोन्यस्तदेहश्चवःपिता ॥ सेयंपापा नृशंसाचतस्याःकुरुयथामति ॥ ९ ॥ शत्रुघ्नश्चतदाज्ञायवचनंभृशदुःखितः ॥ अंतःपुरचरान्सर्वानित्युवाचधृतव्रतः ॥ १० ॥ तीव्रमुत्पादितंदुःखं भ्रातॄणांमेतथापितुः ॥ यथासेयंनृशंसस्यकर्मणःफलमश्नुताम् ॥ ११ ॥ एवमुक्त्वाचतेनाशुसखीजनसमावृता ॥ गृहीताबलवत्कुब्जासातद्गृहमनाद यत् ॥ १२ ॥ ततःसुभृशसंतप्तस्तस्याःसर्वःसखीजनः ॥ क्रुद्धमाज्ञायशत्रुघ्नंव्यपलायतसर्वशः ॥ १३ ॥ अमंत्रयतकृत्स्नश्चतस्याःसर्वःसखीजनः ॥ यथायंसमुपक्रांतोनिःशेषंनःकरिष्यति ॥ १४ ॥ सानुक्रोशांवदान्यांचधर्मज्ञांचयशस्विनीम् ॥ कौसल्यांशरणंयामःसाहिनोस्तिध्रुवागतिः ॥१५॥ सचरोषेणसंवीतःशत्रुघ्नःशत्रुशासनः ॥ संचकर्षतदाकुब्जांक्रोशंतींपृथिवीतले ॥ १६ ॥ तस्यांह्याकृष्यमाणायांमंथरायांततस्ततः ॥ चित्रंबहुविधं भांडंपृथिव्यांतद्व्यशीर्यत ॥ १७ ॥ तेनभांडेनविस्तीर्णंश्रीमद्राजनिवेशनम् ॥ अशोभततदाभूयःशारदंगगनंयथा ॥ १८ ॥ सबलीबलवत्क्रोधाद्गृही त्वापुरुषर्षभः ॥ कैकेयीमभिनिर्भर्त्स्यबभाषेपरुषंवचः ॥ १९ ॥ तैर्वाक्यैःपरुषैर्दुःखैःकैकेयीभृशदुःखिता ॥ शत्रुघ्नभयसंत्रस्तापुत्रंशरणमागता॥२०॥ तंप्रेक्ष्यभरतःक्रुद्धंशत्रुघ्नमिदमब्रवीत् ॥ अवध्याःसर्वभूतानांप्रमदाःक्षम्यतामिति ॥ २१ ॥ हन्यामहमिमांपापांकैकेयींदुष्टचारिणीम् ॥ यदिमांधा र्मिकोरामोनासूयेन्मातृघातकम् ॥ २२ ॥ इमामपिहतांकुब्जांयदिजानातिराघवः ॥ त्वांचमांचैवधर्मात्मानाभिभाषिष्यतेध्रुवम् ॥ २३ ॥ भरतस्यव चःश्रुत्वाशत्रुघ्नोलक्ष्मणानुजः ॥ न्यवर्ततततोदोषात्तांमुमोचचमूर्च्छिताम् ॥२४॥ सापादमूलेकैकेय्यामंथरानिपपातह ॥ निःश्वसंतीसुदुःखार्ताकृपणं विललापह ॥ २५ ॥ शत्रुघ्नविक्षेपविमूढसंज्ञांसमीक्ष्यकुब्जांभरतस्यमाता ॥ शनैःसमाश्वासयदार्तरूपांक्रौंचींविलग्नामिववीक्षमाणाम् ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टसप्ततितमः सर्गः ॥ ७८ ॥ ततःप्रभातसमयेदिवसेथचतुर्दशे ॥ समेत्यराजकर्ता रोभरतंवाक्यमब्रुवन् ॥ १ ॥ गतोदशरथःस्वर्गंयोनोगुरुतरोगुरुः ॥ रामंप्रव्राज्यवैज्येष्ठंलक्ष्मणंचमहाबलम् ॥ २ ॥

कुब्जामोचनार्थमिति शेषः ॥ २० ॥ यतःसर्वभूतानामवध्याः अतः क्षम्यतामित्यब्रवीत् ॥ २१ ॥ मातृघातकं मां मति यदि रामा नासूयेत् न कुप्येत् तदाहमिमां मातरमपि हन्याम् ॥ २२ ॥ जानाति ज्ञास्यते नाभिभाषिष्यते स्त्रीघातिनाविति मत्वा इत्यब्रवीदिति पूर्वेण संबंधः ॥ २३ ॥ २४ ॥ २५ ॥ शत्रुघ्नविक्षेपः शत्रुघ्नेनेतस्ततः कर्षणं तेन मनष्टज्ञानां विलग्नां यंत्रादिना संयताम् ॥ २६ ॥ तंरमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टसप्ततितमः सर्गः ॥ ७८ ॥ ॥ तत इति ॥१॥ रक्षासाधनत्वाद्राजा गुरुः तत्राप्ययं गुरुतरः । ज्येष्ठं राज्यार्हम् ॥२॥

यत एतद्राज्यमनायकं ततो राजा भव । ननु ज्येष्ठे विद्यमाने कथमहं राजा तत्राह संगत्या ज्येष्ठस्य वनवासं प्रति पितुराज्ञासंगत्या तव च राज्यं प्रति तदाज्ञासंगत्या राज्यं कुर्वन्नपि भवान्नापराध्नोति । धर्मविरोधज्येष्ठविरोधलोकविरोधाद्य प्राप्नोति । पित्राज्ञाया उभाभ्यामपि पालनीयत्वादिति बहवः । एतद्राज्यम् अनायकमपि अमात्यादीनां संगत्यैकमत्येन दैवगत्या वा नापराध्नोति न नश्यति अतो नो राजा भवेत्यर्थं तीर्थ आह ॥ ३ ॥ आभिषेचानिकं अभिषेचनप्रयोजनं वस्तुजातं रामाभिषेकाय विततम् । स्वजनो मंत्र्यादिः । श्रेणयः पौराः ॥ ४ ॥ ५ ॥ भांडम् उपकरणम् ॥६॥ राजता राजत्वम् ॥ ७ ॥ पूर्वो ज्येष्ठः । अरण्ये वत्स्यामि रामप्रतिनिधित्वेनेति शेषः ॥ ८ ॥ आनयिष्यामि इडार्षः ॥ ९ ॥ रामहेतोः रामाभिषेकार्थम् ॥ १० ॥ पुरस्कृतं अग्रतःकृतम् अध्वरात् महायज्ञशालायाः स्वाग्निहोत्रगृहमित्यर्थः ॥ ११ ॥ मातृगंधिनीं केवलमातृव्यपदेशां मातृसंज्ञामात्रामित्यर्थ इति तीर्थः । कतकस्तु पुत्रगृद्धिनीमिति पांक्तः पाठः पुत्रगर्धिनीमित्यर्थ इत्याह ॥ १२ ॥ शिल्पिनः खनकाः यत्र पथोऽभावः तत्र पंथा गमनमार्गः क्रियताम् विषमाणि च निम्नोन्नतानि च समानि क्रियंताम् रथादिसुखगत्यर्थमिति भावः । पथि विद्यमानेषु दुर्गेषु विशेषेण जनान् चारयंतीति पथिदुर्गविचारकाः । पथिदुर्गविशारदा इतिपाठे तत्र वर्तमानदुर्गे चोरादिभी

त्वमद्यभवनोराजाराजपुत्रमहायशः ॥ संगत्यानापराध्नोतिराज्यमेतदनायकम् ॥ ३ ॥ आभिषेचनिकंसर्वमिदमादायराघव ॥ प्रतीक्षतेत्वांस्वजनः श्रेणयश्चनृपात्मज ॥ ४ ॥ राज्यंगृहाणभरतपितृपैतामहंध्रुवम् ॥ अभिषेचयचात्मानंपाहिचास्मान्नरर्षभ ॥ ५ ॥ आभिषेचनिकंभांडंकृत्वासर्वंप्रदक्षिणम् ॥ भरतस्तंजनंसर्वंप्रत्युवाचधृतव्रतः ॥ ६ ॥ ज्येष्ठस्यराजतानित्यमुचिताहिकुलस्यनः ॥ नैवंभवंतोमांवक्तुमर्हंतिकुशलाजनाः ॥ ७ ॥ रामः पूर्वोहिनोभ्राताभविष्यतिमहीपतिः ॥ अहंत्वरण्येवत्स्यामिवर्षाणिनवपंचच ॥ ८ ॥ युज्यतांमहतीसेनाचतुरंगमहाबला ॥ आनयिष्याम्यहंज्येष्ठंभ्रातरं राघवंवनात् ॥ ९ ॥ आभिषेचनिकंचैवसर्वमेतदुपस्कृतम् ॥ पुरस्कृत्यगमिष्यामिरामहेतोर्वनंप्रति ॥ १० ॥ तत्रैवतंनरव्याघ्रमभिषिच्यपुरस्कृतम् ॥ आनयिष्यामिवैरामंहव्यवाहमिवाध्वरात् ॥ ११ ॥ नसकामांकरिष्यामिस्वामिमांपुत्रगृद्धिनीम् ॥ वनेवत्स्याम्यहंदुर्गेरामोराजाभविष्यति ॥ १२ ॥ क्रियतांशिल्पिभिःपंथाःसमानिविषमाणिच ॥ रक्षिणश्चानुसंयांतुपथिदुर्गविचारकाः ॥ १३ ॥ एवंसंभाषमाणंतंरामहेतोर्नृपात्मजम् ॥ प्रत्युवाचजनः सर्वःश्रीमद्वाक्यमनुत्तमम् ॥ १४ ॥ एवंतेभाषमाणस्यपद्माश्रीरुपतिष्ठताम् ॥ यस्त्वंज्येष्ठेनृपसुतेपृथिवींदातुमिच्छसि ॥ १५ ॥ अनुत्तमंतद्वचनं नृपात्मजःप्रभाषितंसंश्रवणेनिशम्यच ॥ प्रहर्षजास्तंप्रतिबाष्पबिंदवोनिपेतुरार्याननेत्रसंभवाः ॥ १६ ॥

त्या गंतुमशक्यप्रदेशे रक्षणविशारदा इत्यर्थः ॥ १३ ॥ एवं संभाषमाणं तं प्रति सर्वोपि जनः श्रीमच्छुभमनुत्तमं वाक्यमुवाच ॥ १४ ॥ तदेवाह एवमिति । एवं रामराज्यविषयं भाषमाणस्य ते पद्मा तदाख्या पद्मचिह्ना च श्रीरुपतिष्ठताम् ज्येष्ठानुसरणादिति भावः । तदेवाह यस्त्वामिति । ज्येष्ठे ज्येष्ठाय पृथिवीं दातुमिच्छसि अतः श्रीस्त्वामुपतिष्ठताम् ॥१५॥ संश्रवणे रामानयनप्रतिज्ञाविषयेऽनुत्तमं नृपात्मजेन प्रभाषितं तद्वचनं निशम्य स्थितानां जनानां प्रति भरतमुद्दिश्य प्रहर्षजा आर्याननेत्रसंभवाः हर्षयुक्तमुखस्थनेत्रजबिंदवो निपेतुरिति तीर्थः । अत्र आननपदमधिकम् । कतकस्तु नृपात्मजः प्रभाषितमिति सविसर्गपाठः । नृपात्मजो जनैः प्रभाषितमनुत्तमं तद्वचनं आशीर्वचनं संश्रवणे सम्यक्श्रवणविषये प्राप्तं निशम्य श्रुत्वा हृष्टोभूदिति शेषः । अथ तं प्रति तं जनं लक्षीकृत्य । कर्मप्रवचनीयत्वाद्द्वितीया आर्यस्य पूज्यस्य भरतस्यार्यं पूज्यं यदाननं मुखम् । जनाशीर्वादश्रवणजसंतोषेण पूज्यत्वं मुखस्य तद्वर्तिनेत्रसंभवाः अतएव प्रहर्षजा बिंदवो निपेतुः । अनुक्तभरतसौमुख्यकथनं चास्य श्लोकस्य प्रयोजनमित्याह ।

अत्र कतकपाठिस्तद्व्याख्या च ज्यायसी ॥१६॥ इदं वचनं रामानयनवचनम् । वियातः विशेषेण यातो गतः शोको येषां ते जना इति विशेष्यम् । विधूतशोका इति पाठांतरम् । हे नरवर तव वचनात् रामे त्वयि च भक्तिमान् शिल्पिवर्गः पंथानं कर्तुं व्यादिष्टः जनो रक्षकजनश्च रक्षणं कर्तुं व्यादिष्टः ॥ १७ ॥ छँकंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनाशीतितमः सर्गः ॥ ७९ ॥ ॥ भूमिप्रदेशज्ञाः अंतःसजलनिर्जलादिभूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः शिबिरादिनिर्माणे सूत्रग्रहणकुशलाः । निर्जलेष्वगाधवापीकूपादिनिर्माणं सूत्रकर्मेति कतकः । खनकाः स्वकर्मणि खननेभिरताः परसेनयावष्टंभेपि खनने दक्षाः अतएव शूराः यंत्रकाः जलप्रवाहादियंत्रणसमर्थाः ॥ १ ॥ कर्मांतिकाः वेतनजीविनः । स्थपतयो रथादिकर्तारः । प्रधानवर्धकयः यंत्रकोविदाः क्षेपणीयादियंत्रकरणकुशलाः । पथदर्शनकोविदा इतिपाठांतरम् । वर्धकयस्तक्षाणः । मार्गिणः तत्तद्वनमार्गविशेषरक्षानियुक्ताः । वृक्षतक्षकाः मार्गावरोधिवृक्षच्छेत्तारः ॥ २ ॥ सूपकाराः सूदाः । सुधा अवलेपः । वंशचर्म

ऊचुस्तेवचनमिदंनिशम्यहृष्टाःसामात्याःसपरिषदोवियातशोकाः ॥ पंथानंनरवरभक्तिमान्जनश्चव्यादिष्टस्तववचनाच्चशिल्पिवर्गः ॥ १७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेएकोनाशीतितमःसर्गः ॥ ७९॥ अथभूमिप्रदेशज्ञाःसूत्रकर्मविशारदाः ॥ स्वकर्माभिरताः शूराःखनकायंत्रकास्तथा ॥ १ ॥ कर्मांतिकाःस्थपतयःपुरुषायंत्रकोविदाः ॥ तथावर्धकयश्चैवमार्गिणोवृक्षतक्षकाः ॥२॥ सूपकाराःसुधाकारावंशचर्मकृतस्तथा ॥ समर्थायेचद्रष्टारःपुरतश्चप्रतस्थिरे ॥ ३ ॥ सतुहर्षात्तमुद्देशंजनौघोविपुलःप्रयान् ॥ अशोभतमहावेगःसागरस्येवपर्वणि ॥ ४ ॥ तेस्ववारं समास्थायवर्त्मकर्मणिकोविदाः ॥ करणैर्विविधोपेतैःपुरस्तात्संप्रतस्थिरे ॥ ५ ॥ लतावल्लीश्चगुल्मांश्चस्थाणूनश्मनएवच ॥ जनास्तेचक्रिरेमार्गं छिंदंतोविविधान्द्रुमान् ॥ ६ ॥ अवृक्षेषुचदेशेषुकेचिद्वृक्षानरोपयन् ॥ केचित्कुठारैष्टंकैश्चदात्रैश्छिंदन्क्वचित्क्वचित् ॥ ७ ॥ अपरेवीरणस्तंवान्बलिनो बलवत्तराः ॥ विधमंतिस्मदुर्गाणिस्थलानिचततस्ततः ॥ ८ ॥ अपरेपूरयन्कूपान्पांसुभिःश्वभ्रमायतम् ॥ निम्नभागांस्तथैवाशुसमांश्चक्रुःसमंततः ॥ ९ ॥ बबंधुर्बंधनीयांश्चक्षोद्यान्संचुक्षुदुस्तथा ॥ बिभिदुर्भेदनीयांश्चतांस्तान्देशान्नरास्तदा ॥ १० ॥ अचिरेणतुकालेनपरिवाहान्बहूदकान् ॥ चक्रुर्बहुविधाकारान्सागरप्रतिमान्बहून् ॥ ११ ॥ निर्जलेषुचदेशेषुखानयामासुरुत्तमान् ॥ उदपानान्बहुविधान्वेदिकापरिमंडितान् ॥ १२ ॥

कृतः वंशदलैः कटशूर्पादिकृतः चर्मकृतः अवस्थानार्थमश्वपृष्ठारोप्यमाणपल्ययनादिकृतः । समर्था द्रष्टारः पूर्वानुभूतमार्गामार्गद्रष्टारः ॥ ३ ॥ स त्विति एवं मार्गसन्नाहप्रवृत्तौ जनौघो रामदर्शनकौतुकजहर्षान्महावेगः महावेगवान्प्रयान्गच्छन्पर्वणि सागरस्य महावेगो जलौघ इवाशोभत ॥ ४ ॥ ते मार्गशोधकाः स्ववारं स्वसमूहं समास्थाय । वारसंघातसंचया इत्यमरः । विविधोपेतैर्नानाप्रकारयुक्तैः पिटकखनित्रदात्रादिकरणैर्युक्ता इति शेषः ॥ ५ ॥ लताः शाखाः स्थाणून् शंकून् अपसारयंत इति शेषः ॥ ६ ॥ अरोपयन् छायार्थमिति शेषः । टंकः पाषाणभेदनः । छिंदन् अडभाव आर्षः ॥ ७ ॥ बलिनः रूढमूलान् वीरणस्तंबान् विधमन्ति हस्ताभ्यामेव निःसारयंति दुर्गाणि स्थलानि उन्नतान् प्रदेशान्विधमंति खननेन समीकुर्वंति ॥ ८॥ कूपान् मार्गमध्यवर्तिनः तादृशमायतं श्वभ्रं गर्तं च पांसुभिरपूरयन् ॥९॥ बंधनीयान्सेतून् क्षोद्यान् क्षोदनीयान् शर्कराभूयिष्ठप्रदेशान् संचुक्षुदुः चूर्णयामासुः । भेदनीयान् जलनिर्गमार्थं भेद्यान् ॥ १० ॥ परिवाहान् अल्पप्रवाहान् बंधनेन बहूदकान् चक्रुः ॥ ११ ॥ खानयामासुः अखनन् उदपानान् कूपवाप्यादीन्

वेदिकाभिः परितोलंकृतान् ॥ १२ ॥ ससुधाकुट्टिमतलः तत्र तत्र सच्छायजलाशयसमीपे विश्रमार्थं निवासाय ससुधातलः सुधानिबद्धभूदेशः सकुट्टिमतलश्च । कुट्टिमोस्त्री निबद्धा भूः । कचित् सुधाभिः कचिन्मृत्तिकाभिरेव बद्धचत्वर इत्यर्थः ॥ १३ ॥ १४ ॥ अथ मार्गकरणानंतरं अधिकृताः मार्गशिबिरादिनिवेशाधिकारिणः यथाज्ञप्ति यथाभरताज्ञापनम् शिबिरादिनिवेशे अनुचरानाज्ञाप्य यो यादृशो भरतस्याभिमतो निवेशस्तं तथा कृत्वा भूयोधिकभूषाभिः शोभयामासुः वितानकनककलशरत्नध्वजादिभिर्भूषयामासुः । निवेशः शिबिरं भूषणोपमं मार्गस्यालंकारसदृशं अतिरमणीयमिति यावत् ॥ १५ ॥ १६ ॥ निवेशान् शिबिराणि ॥ १७ ॥ बहुपांसुचया इत्यनेन शर्करादिराहित्यसूचनम् । परिखाः सगर्ताः पर्यंतभित्तयः तत्र परिखावच्छेदेनेत्यर्थः । इंद्रनीलमणिनिर्मिताः प्रतिमाश्चित्रप्रतिमा येषु निवेशेषु । इंद्रकीलप्रतिमा इति पाठे इंद्रकीलपर्वतसदृश इत्यर्थः । एवमुत्ताः परिखा इति यावत् । प्रतोली रथ्या ॥ १८ ॥ सौधसदृशैः प्राकारैः संवृताः ॥ १९ ॥ आकाशे वितर्दिभिरिव विधिधिष्ण्यैरिव स्थितैरुपलक्षिताः । विटंकं कपोत

ससुधाकुट्टिमतलःप्रपुष्पितमहीरुहः ॥ मत्तोद्घुष्टद्विजगणःपताकाभिरलंकृतः ॥ १३॥ चंदनोदकसंसिक्तोनानाकुसुमभूषितः ॥ बह्वशोभतसेनायाः पंथाःसुरपथोपमः ॥ १४ ॥ आज्ञाप्याथयथाज्ञप्तियुक्तास्तेधिकृतानराः ॥ रमणीयेषुदेशेषुबहुस्वादुफलेषुच ॥ १५ ॥ योनिवेशस्त्वभिप्रेतो भरतस्यमहात्मनः ॥ भूयस्तंशोभयामासुर्भूषाभिर्भूषणोपमम् ॥ १६ ॥ नक्षत्रेषुप्रशस्तेषुमुहूर्तेषुचतद्विदः ॥ निवेशान्स्थापयामासुर्भरतस्यमहात्मनः ॥ १७ ॥ बहुपांसुचयाश्चापिपरिखाःपरिवारिताः॥ तत्रेंद्रनीलप्रतिमाःप्रतोलीवरशोभिताः ॥ १८॥ प्रासादमालासंयुक्ताःसौधप्राकारसंवृताः पताकाशोभिताःसर्वेसुनिर्मितमहापथाः ॥ १९ ॥ वितर्दिभिरिवाकाशेविटंकाग्रविमानकैः ॥ समुच्छ्रितैर्निवेशास्तेबभुःशक्रपुरोपमाः ॥ २० ॥ जाह्नवींतुसमासाद्यविविधद्रुमकाननाम् ॥ शीतलामलपानीयांमहामीनसमाकुलाम् ॥२१ ॥ सचंद्रतारागणमंडितंयथानभःक्षपायाममलंविराजते ॥ नरेंद्रमार्गःसतदाव्यराजतक्रमेणरम्यःशुभशिल्पिनिर्मितः ॥ २२॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आ०अयो०अशीतितमः सर्गः ॥ ८० ॥

ततोनांदीमुखींरात्रिंभरतंसूतमागधाः ॥ तुष्टुवुःसविशेषज्ञाःस्तवैर्मंगलसंस्तवैः ॥ १ ॥ सुवर्णकोणाभिहतःप्राणदद्यामदुंदुभिः ॥ दध्मुःशंखांश्चशतशो वाद्यांश्चोच्चावचस्वरान् ॥ २ ॥ सतूर्यघोषःसुमहान्दिवमापूरयन्निव ॥ भरतंशोकसंतप्तंभूयःशोकैररंधयत ॥३॥ ततःप्रबुद्धोभरतस्तंघोषंसन्निवर्त्यच॥ नाहंराजेतिचोक्त्वातंशत्रुघ्नमिदमब्रवीत् ॥ ४ ॥ पश्यशत्रुघ्नकैकेय्यालोकस्यापकृतंमहत् ॥ विसृज्यमयिदुःखानिराजादशरथोगतः ॥ ५ ॥

पालिका तद्युक्तैश्वैर्विमानकैः सप्तभूमिकगृहैरत्युन्नतैरुपलक्षिता इत्यर्थ इति कतकः । विसर्पद्भिरिवाकाशे इतिपाठांतरम् । तदोर्ध्वमूर्ध्वं गच्छद्भिरिवेत्यर्थः कथंचिद्योज्यः ॥ २० ॥ जाह्नवीं समासाद्य अभिव्याप्य प्रवर्तितो नरेंद्रमार्गो व्यराजत इत्यन्वयः ॥ २१ ॥ २२ ॥ रेफैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अशीतितमः सर्गः ॥ ८० ॥ ॥ छ ॥ नांदीमुखीं भरताभिषेकाय वासिष्ठेन करिष्यमाणनांदीमुखाद्यभ्युदयप्राग्वर्तिनीम् । रामानयनाभ्युदयमारंभयुक्ता नांदीमुखीति कश्चित् । रात्रिं अल्पावशेषां दृष्ट्वेति शेषः । सविशेषज्ञाः राजनि राजपुत्रे चापेक्षितविशेषस्तवं जानंति तादृशाः । मंगलसस्तवैः मंगलप्रतिपादकैः ॥ १ ॥सुवर्णकोणः सुवर्णदंडः । यामदुंदुभिः यामावसानसूचको दुंदुभिः उच्चावचानुच्चावचस्वरान् वाद्यान् वाद्यविशेषान् दध्मुः । नांद्यान् इतिपाठः । मंगलादीनित्यर्थ इति तीर्थः ॥ २ ॥ शोकैः शोकोत्पादनैः अरंधयत् हिनस्ति स्म । रध पाकहिंसनयोः ॥ ३ ॥ ४ ॥ कैकेय्या हेतुना मद्विषये जायमानं लोकस्य सूतमागधादेरपकृतमनुचितं कर्म पश्य एवं

रूपाणि दुःखानि दुःखकराणि मयि विसृज्य राजा गतः ॥ ५ ॥ तस्य यो गतस्तस्येत्यर्थः । अकर्णिका अकर्णधारा । अकंटकेतिपाठः । कंटको नाविकस्तद्रहितेत्यर्थ इति कतकः ॥ ६ ॥ ७ ॥ ८ ॥ राजधर्म वित् राजपुरोहितकर्तव्यधर्मवेत्ता अतः स्वकृत्यं स्वयं संपादयतीत्याह सभामित्यादि ॥ ९ ॥ तद्विशेषणं शातकुंभमयीत्यादि । सगणः सशिष्यगणः ॥ १० ॥ स्वस्त्यास्तरण संवृतं स्वस्तिकाकारमंडलवदास्तरण संवृतं पीठमध्यास्त ततो दूताननुशशास च ॥ ११ ॥ गणवल्लभाः सेनानायकाः । आत्ययिकं कालविलंबासहिष्णु ॥ १२ ॥ स राजपुत्रं राजपुत्रैरितरैः सहितं शत्रुघ्नं युधाजिन्नामा कश्चिन्मंत्री ये च हिता जनास्तांश्चानयत ॥ १३ ॥ हलहलेति शब्दानुकरणम् ॥ १४ ॥ १५ ॥ ह्रद इव सभा ह्रदोत्र सामुद्रः भिन्नलिंगत्वेपि सहृदयोद्वेगाभावात् । चंद्र इव मुखमितिवन्न दुष्टोपमा । तिमिरनेकयोजनायामविस्तारो मत्स्यः नागा जलगजाः सर्पाश्च मणयो मुक्ताद्याः शर्कराः सुवर्णखनिमृत्तिकाः सभायां जलस्थाने सभातेजः एतदेव ध्वनयता स्तिमितजल इत्युक्तम् । चित्रस्थतिमिनागसंवृतत्वं मणयश्च स्तंभादिषु विद्यंते एव

तस्यैषाधर्मराजस्यधर्ममूलामहात्मनः ॥ परिभ्रमतिराजश्रीर्नौरिवाकर्णिकाजले ॥ ६ ॥ योहिनःसुमहान्नाथःसोपिप्रव्राजितोवने ॥ अनयाधर्ममुत्सृ ज्यमात्रामेराघवःस्वयम् ॥ ७ ॥ इत्येवंभरतंवीक्ष्यविलपंतमचेतनम् ॥ कृपणारुरुदुःसर्वाःसुस्वरंयोषितस्तदा ॥ ८ ॥ तथातस्मिन्विलपतिवसिष्ठो राजधर्मवित् ॥ सभामिक्ष्वाकुनाथस्यप्रविवेशमहायशाः ॥ ९ ॥ शातकुंभमयींरम्यांमणिहेमसमाकुलाम् ॥ सुधर्मामिवधर्मात्मासगणःप्रत्यपद्यत ॥ ॥ १० ॥ सकांचनमयंपीठंस्वस्त्यास्तरणसंवृतम् ॥ अध्यास्तसर्ववेदज्ञोदूताननुशशासच ॥ ११ ॥ ब्राह्मणान्क्षत्रियान्योधानमात्यान्गणवल्लभान् ॥ क्षिप्रमानयताव्यग्राःकृत्यमात्ययिकंहिनः ॥ १२ ॥ सराजपुत्रंशत्रुघ्नंभरतंचयशस्विनम् ॥ युधाजितंसुमंत्रंचयेचतत्रहिताजनाः ॥ १३ ॥ ततो हलहलाशब्दोमहान्समुदपद्यत ॥ रथैरश्वैर्गजैश्चापिजनानामुपगच्छताम् ॥ १४ ॥ ततोभरतमायांतंशतक्रतुमिवामराः ॥ प्रत्यनंदन्प्रकृतयोयथाद शरथंतथा ॥ १५ ॥ ह्रदइवतिमिनागसंवृतस्तिमितजलोमणिशंखशर्करः ॥ दशरथसुतशोभितासभासदशरथेवबभूवसापुरा ॥ १६ ॥ इत्यार्षे श्रीमद्रामा यणेवाल्मीकीये आदिकाव्येअयोध्याकांडेएकाशीतितमः सर्गः ॥ ८१ ॥ तामार्यगणसंपूर्णांभरतःप्रग्रहांसभाम् ॥ ददर्शबुद्धिसंपन्नःपूर्णचंद्रांनिशामिव ॥ १ ॥ आसनानियथान्यायमार्याणांविशतांतदा ॥ वस्त्रांगरागप्रभयाद्योतितासासभोत्तमा ॥ २ ॥ साविद्वज्जनसंपूर्णासभासुरुचिरातथा ॥ अदृश्यत घनापायेपूर्णचंद्रेवशर्वरी ॥ ३ ॥ राज्ञस्तुप्रकृतीःसर्वाःससंप्रेक्ष्यचधर्मवित् ॥ इदंपुरोहितोवाक्यंभरतंमृदुचाब्रवीत् ॥ ४ ॥

शंखाश्चित्रेषु स्वर्णशर्करास्थाने कुट्टिमादौ स्वर्णलेपः मकारांतरेण जलादिवर्णने तु कवेर्न्यूनतादोषः । मम तु विभक्तिपरिणामेनैषामेव सभायामप्यन्वयान्न दोषः । एतेन वसिष्ठो जलं तिमिनागौ भरतशत्रुघ्नौ मण्यादयोऽमात्यपौरजानपदा इति कतकोक्तमपास्तम् । दशरथसुतशोभिता सभा पुरा सदशरथा सभेव बभाविति योजना । पितृसमानाकारत्वात्पुत्रस्येदानीमपि सदशरथेवेत्युत्प्रेक्षा । पुरा यथेत्यंशे उपमेति तयो रत्र संसृष्टिः ॥ १६ ॥ चर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकाशीतितमः सर्गः ॥ ८१ ॥ ॥ प्रग्रहा प्रकृष्टैर्वसिष्ठादिभिर्ग्रहः परिग्रहोधि ष्ठानं यस्यां सा निशापक्षे प्रकृष्टगुर्वादिग्रहवतीम् ॥ १ ॥ आर्याणां त्रैवर्णिकानां आसनानि विशतां आसनेषूपविशताम् ॥ २ ॥ घनापाये शरदि ॥ ३ ॥ स वसिष्ठः संप्रेक्ष्य च चात कृतानुमतिकांश्च कृत्वा ॥ ४ ॥

धर्मं सत्यपरिपालनरूपम् ॥ ५ ॥ तसां धर्मं जीवतो वाक्यकरणादित्येवंरूपम् ॥ ६ ॥ निहतकंटकं रामस्य वनवासदानात्तथा ॥ ७ ॥ उदीच्यादयस्तत्तद्दिशि प्रत्येकसिंहासनाधीश्वरा ये च केवलाः सिंहासनरहिताः चाप्राच्या अपरांताः द्वीपवासिनः सामुद्राः पोतवणिजः कोट्योसंख्यातानि रत्नानि हरंतु । कोट्योपरांता इति पाठांतरम् । कोट्यो रत्नानि अनेककोटिसंख्यरत्नानि । यद्वा परांतास्तत्तद्दिगंतवासिनः सामुद्राः समुद्रद्वीपवासिनः ॥ ८ ॥ धर्मज्ञः ज्येष्ठाभिषेकरूपधर्मज्ञः धर्मकांक्षया ज्येष्ठानुवर्तनरूपधर्मलिप्सया मनसा जगाम सस्मार ॥ ९ ॥ जगर्हे सर्वज्ञोपि कथमेवमनुचिते मां प्रवर्तयसीत्युक्तवानित्यर्थः ॥ १० ॥ विद्यास्नातस्य सर्वविद्यानंतरभाविस्नानयुतस्य रामस्य मद्विधः चरितब्रह्मचर्यादिः ॥ ११ ॥ रामस्य स्वमिति शेषः । हे भगवन्नेवं विज्ञाय धर्मं न्याय्यं वक्तुम् इह सभायामर्हसि नेदृशमन्याय्यमित्यर्थः ॥ १२ ॥

तातराजादशरथःस्वर्गतोधर्ममाचरन् ॥ धनधान्यवतींस्फीतांप्रदायपृथिवींतव ॥५॥ रामस्तथासत्यवृत्तिःसतांधर्ममनुस्मरन् ॥ नाजहात्पितुरादेशं शशीज्योत्स्नामिवोदितः ॥६॥ पित्राभ्रात्राचतेदत्तंराज्यंनिहतकंटकम् ॥ तद्भुंक्ष्वमुदितामात्यःक्षिप्रमेवाभिषेचय ॥ ७ ॥ उदीच्याश्चप्रतीच्याश्चदाक्षिणात्याश्चकेवलाः ॥ कोट्यापरांताःसामुद्रारत्नान्युपहरंतुते ॥ ८ ॥ तच्छ्रुत्वाभरतोवाक्यंशोकेनाभिपरिप्लुतः ॥ जगाममनसारामंधर्मज्ञोधर्मकांक्षया ॥ ॥९॥ सबाष्पकलयावाचाकलहंसस्वरोयुवा ॥ विललापसभामध्येजगर्हेचपुरोहितम् ॥१०॥ चरितब्रह्मचर्यस्यविद्यास्नातस्यधीमतः ॥ धर्मेप्रयतमानस्यकोराज्यंमद्विधोहरेत् ॥११॥ कथंदशरथाज्जातोभवेद्राज्यापहारकः ॥ राज्यंचाहंचरामस्यधर्मंवक्तुमिहार्हसि ॥१२॥ ज्येष्ठःश्रेष्ठश्चधर्मात्मादिलीपनहुषोपमः ॥ लब्धुमर्हतिकाकुत्स्थोराज्यंदशरथोयथा ॥ १३ ॥ अनार्यजुष्टमस्वर्ग्यंकुर्यांपापमहंयदि ॥ इक्ष्वाकूणामहंलोकेभवेयंकुलपांसनः ॥ १४ ॥ यद्धिमात्राकृतंपापंनाहंतदपिरोचये ॥ इहस्थोवनदुर्गस्थंनमस्यामिकृतांजलिः ॥ १५ ॥ राममेवानुगच्छामिसराजाद्विपदांवरः ॥ त्रयाणामपिलोकानांराघवोराज्यमर्हति ॥ १६ ॥ तद्वाक्यंधर्मसंयुक्तंश्रुत्वासर्वेसभासदः ॥ हर्षान्मुमुचुरश्रूणिरामेनिहितचेतसः ॥ १७ ॥ यदित्वार्यंनशक्ष्यामिविनिवर्तयितुंवनात् ॥ वनेतत्रैववत्स्यामियथार्योलक्ष्मणस्तथा ॥ १८ ॥ सर्वोपायंतुवर्तिष्येविनिवर्तयितुंबलात् ॥ समक्षमार्यमिश्राणांसाधूनांगुणवर्तिनाम् ॥ १९ ॥ विष्टिकर्मांतिकाःसर्वेमार्गशोधकदक्षकाः ॥ प्रस्थापितामयापूर्वंयात्राचममरोचते ॥२०॥ एवमुक्त्वातुधर्मात्माभरतोभ्रातृवत्सलः ॥ समीपस्थमुवाचेदंसुमंत्रंमंत्रकोविदम् ॥२१॥ तूर्णमुत्थायगच्छत्वंसुमंत्रममशासनात् ॥ यात्रामाज्ञापयाक्षिप्रंबलंचैवसमानय ॥२२॥ एवमुक्तःसुमंत्रस्तुभरतेनमहात्मना ॥ प्रहृष्टःसोदिशत्सर्वंयथासंदिष्टमिष्टवत् ॥२३॥ ताःप्रहृष्टाःप्रकृतयोबलाध्यक्षाबलस्यच ॥ श्रुत्वायात्रांसमाज्ञप्तांराघवस्यनिवर्तने ॥२४॥

॥१३॥१४॥ ननु त्वन्मात्रा प्रयासेन राज्यसंपादनादस्माभिरेवमुक्तमत आह यद्धीति । वनदुर्गस्थम् वनरूपदुर्गस्थम् ॥ १५ ॥ द्विपदां मनुष्याणां वरः श्रेष्ठो राजास्य राज्यस्येति शेषः ॥१६॥ मध्ये कविवाक्यम् तद्वाक्यमिति ॥१७॥ सर्वथा स्वस्य राज्यचिंता नास्तीति प्रतिपादकं पुनर्भरतवाक्यम् यदि त्विति ॥१८॥ आर्यास्त्रैवर्णिकास्ते च ते मिश्राः पूज्यास्तेषां युष्माकं समक्षमित्यन्वयः ॥१९॥ विष्टयो भृतिं विना कर्मकरा कर्मांतिका उक्ताः ॥२०॥२१॥२२॥ अदिशत् आज्ञापयति स्म इष्टवत् इष्टार्हम् इष्टानुरूपमिति यावत् ॥२३॥ निवर्तने निवर्तननिमित्तं बलस्य यात्रां समाज्ञप्तां श्रुत्वा प्रकृतयो बलाध्यक्षाश्च प्रहृष्टा इत्यन्वयः ॥२४॥

यात्रागमनं रामयात्रार्थं गमनम् ॥ २५ ॥ गोरथैः शकटैरित्यर्थः ॥ २६ ॥ सज्जं गमनाय सन्नद्धाम् । गुरुर्वसिष्ठः ॥ २७ ॥ २८ ॥ गुरुं रामं प्रसादयिष्यन् निवृत्तये ॥ २९ ॥ बलस्य योगाय बल संमेलनाय बलप्रधानान् आज्ञापयेति शेषः ॥ ३० ॥ स परिपूर्णकामस्तस्यापि रामदर्शने उत्कटेच्छत्वात ॥ ३१ ॥ कुलेकुले गृहेगृहे । कुलं जनपदे गृहे । कुलप्रसूतानुत्तमान् ॥ ३२ ॥ रंगंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्व्यशीतितमः सर्गः ॥ ८२ ॥ ॥ कल्यं प्रातःकाले ॥१॥२॥ यथाविधिकल्पितानि गजसंनहनोक्तविधिना कृतसंनाहानि ॥३॥४॥

ततोयोधांगनाःसर्वाभर्तॄन्सर्वान्गृहेगृहे ॥ यात्रागमनमाज्ञायत्वरयंतिस्महर्षिताः ॥ २५ ॥ तेहयैर्गोरथैःशीघ्रंस्यंदनैश्चमनोजवैः ॥ सहयोषिद्बलाध्यक्षाबलंसर्वमचोदयन् ॥२६॥ सज्जंतुतद्बलंदृष्ट्वाभरतोगुरुसन्निधौ ॥ रथंमेत्वरयस्वेतिसुमंत्रंपार्श्वतोब्रवीत् ॥ २७ ॥ भरतस्यतुतस्याज्ञांपरिगृह्यप्रहर्षितः ॥ रथंगृहीत्वोपययौयुक्तंपरमवाजिभिः ॥ २८ ॥ सराघवःसत्यधृतिःप्रतापवान्ब्रुवन्सुयुक्तंदृढसत्यविक्रमः ॥ गुरुंमहारण्यगतंयशस्विनंप्रसादयिष्यन्भरतोब्रवीत्तदा ॥ २९ ॥ तूर्णंत्वमुत्थायसुमंत्रगच्छबलस्ययोगायबलप्रधानान् ॥ आनेतुमिच्छामिहितंवनस्थंप्रसाद्यरामंजगतोहिताय ॥ ३० ॥ ससूतपुत्रोभरतेनसम्यगाज्ञापितःसंपरिपूर्णकामः ॥ शशाससर्वान्प्रकृतिप्रधानान्बलस्यमुख्यांश्चसुहृज्जनंच ॥ ३१ ॥ ततःसमुत्थायकुलेकुलेतेराजन्यवैश्यावृषलाश्चविप्राः ॥ अयूयुजन्नुष्ट्ररथान्खरांश्चनागान्हयांश्चैवकुलप्रसूतान् ॥ ३२ ॥ इत्यार्षे श्रीम० वा० आ० अयो० द्व्यशीतितमः सर्गः ॥ ८२ ॥

ततःसमुत्थितःकल्यमास्थायस्यंदनोत्तमम् ॥ प्रययौभरतःशीघ्रंरामदर्शनकाम्यया ॥ १ ॥ अग्रतःप्रययुस्तस्यसर्वेमंत्रिपुरोहिताः ॥ अधिरुह्यहयैर्युक्तान्रथान्सूर्यरथोपमान् ॥ २ ॥ नवनागसहस्राणिकल्पितानियथाविधि ॥ अन्वयुर्भरतंयांतमिक्ष्वाकुकुलनंदनम् ॥ ३ ॥ षष्टीरथसहस्राणिधन्विनोविविधायुधाः ॥ अन्वयुर्भरतंयांतंराजपुत्रंयशस्विनम् ॥४॥ शतंसहस्राण्यश्वानांसमारूढानिराघवम् ॥ अन्वयुर्भरतंयांतंराजपुत्रंयशस्विनम् ॥ ५ ॥ कैकेयीचसुमित्राचकौसल्याचयशस्विनी ॥ रामानयनसंतुष्टाययुर्यानेनभास्वता ॥६॥ प्रयाताश्चार्यसंवातारामंद्रष्टुंसलक्ष्मणम् ॥ तस्यैवचकथाश्चित्राःकुर्वाणाहृष्टमानसाः ॥ ७ ॥ मेघश्याममहाबाहुंस्थिरसत्त्वंदृढव्रतम् ॥ कदाद्रक्ष्यामहेरामंजगतःशोकनाशनम् ॥ ८ ॥ दृष्टएवहिनःशोकमपनेष्यतिराघवः ॥ तमःसर्वस्यलोकस्यसमुद्यन्निवभास्करः ॥ ९ ॥ इत्येवंकथयंतस्तेसंप्रहृष्टाःकथाःशुभाः ॥ परिष्वजानाश्चान्योन्यंययुर्नागरिकास्तदा ॥ १० ॥ येचतत्रापरेसर्वेसंमतायेचनैगमाः ॥ रामंप्रतिययुर्हृष्टाःसर्वाःप्रकृतयःशुभाः ॥ ११ ॥

समारूढानि सादिभिरिति शेषः ॥५॥ कैकेयी च स्वकृतेः पुत्रं प्रत्यहिततया जातत्वान्मया किं कृतमिति खिन्ना पुनः प्रकृतिमापन्ना हर्षेण ययौ अतएव मध्यमत्वेपि आदौ तदुल्लेखः यानेनेत्येकवचनम् । प्रत्येकापेक्षया सौहार्दैकयानेनैव त्रिसृणां गमनं वा ॥६॥ आर्यसंघाताः त्रैवर्णिकसमूहाः ॥७॥८॥९॥ परिष्वजानाः परिष्वजमानाः । नगरे चरंतीति नागरिकाः । चरतीति ठक् ॥ १० ॥ तत्र नगरे संमताः प्रसिद्धाः नैगमा वणिजः

प्रकृतयः श्रेणयः ॥ ११ ॥ श्रेणीर्विविच्याह मणिकारा इति । शाणादौ मणिशोधकाः । सूत्रकर्मविशेषज्ञास्तंतुवायाः । शस्त्रोपजीविनः शस्त्रनिर्माणोपजीविनः ॥ १२ ॥ मायूरकाः लीलामयूरग्राहिणः । इदमु पलक्षणं शुकादिकग्राहिणाम् । यद्वा मयूरपिच्छैः छत्रादिव्यंजनकारिणः क्रकचः करपत्रं तेन जीवंति ते क्राकचिकाः वेधका मणिमुक्तादिवेधकर्तारः रोचकाः काचकुप्यादिकर्तार इति कतकः । दंतकाराः गजदंतादिभिः समुद्गकादिकर्तारः दंतलेखकाश्च । सुधाकाराः सुधालेपकाराः । गंधोपजीविनः गंधद्रव्यविक्रयिकाः ॥ १३ ॥ स्नापकाः उष्णोदकस्नापकाः उष्णोदकाः अंगमर्दकाः । उष्णोदकं समुल्लेखोद्वाहनोद्वर्तनेषु च । धूपकाः धूपक्रियया जीविनः । शौंडिकाः मद्यकृतः । शुंडा करिकरे मद्ये ॥ १४ ॥ तुन्नवायाः सूच्या सीवनकर्तारः । ग्रामे घोषे च वर्तमाना महत्तराः । शैलूषाः नटाः । कैवर्तकाः कैवर्तकारवा इतिपाठे कारवाः कर्माराः ॥ १५ ॥ गोरथैः शकटैः ॥ १६ ॥ गोरोचनकुंकुमादिसंबंधात्ताम्रवर्णं मृष्टं संपूर्णमनुलेपोनुलेपनं येषां ते ॥ १७ ॥ प्रहर्षः कायिकरोमांचादिरूपः । मोदो मानसः ॥ १८ ॥ शृंगवेरपुरं प्रति

मणिकाराश्चयेकेचित्कुंभकाराश्चशोभनाः ॥ सूत्रकर्मविशेषज्ञायेचशस्त्रोपजीविनः ॥ १२ ॥ मायूरकाःक्राकचिकावेधकारोचकास्तथा ॥ दंतकाराः सुधाकारायेचगंधोपजीविनः ॥ १३ ॥ सुवर्णकाराःप्रख्यातास्तथाकंबलकारकाः ॥ स्नापकोष्णोदकावैद्याधूपिकाःशौंडिकास्तथा ॥ १४ ॥ रजकास्तुन्नवायाश्चग्रामघोषमहत्तराः ॥ शैलूषाश्चसहस्त्रीभिर्यांतिकैवर्तकास्तथा ॥ १५ ॥ समाहितावेदविदोब्राह्मणावृत्तसंमताः ॥ गोरथैर्भरतंयांतमनुजग्मुःसहस्रशः ॥ १६ ॥ सुवेषाःशुद्धवसनास्ताम्रमृष्टानुलेपिनः ॥ सर्वेतेविमलैर्यानैःशनैर्भरतमन्वयुः ॥ १७ ॥ प्रहृष्टमुदितासेनासान्वयात्कैकयीसुतम् ॥ भ्रातुरानयनेयांतंभरतंभ्रातृवत्सलम् ॥ १८ ॥ तेगत्वादूरमध्वानंरथयानाश्वकुंजरैः ॥ समासेदुस्ततोगंगांशृंगवेरपुरंप्रति ॥ १९ ॥ यत्ररामसखावीरोगुहोज्ञातिगणैर्वृतः ॥ निवसत्यप्रमादेनदेशंतंपरिपालयन् ॥ २० ॥ उपेत्यतीरंगंगायाश्चक्रवाकैरलंकृतम् ॥ व्यवतिष्ठतसासेनाभरतस्यानुयायिनी ॥ २१ ॥ निरीक्ष्यानुत्थितांसेनांतांचगंगांशिवोदकाम् ॥ भरतःसचिवान्सर्वानब्रवीद्वाक्यकोविदः ॥२२॥ निवेशयतमेसैन्यमभिप्रायेणसर्वतः ॥ विश्रांताःप्रतरिष्यामःश्वइमांसागरंगमाम् ॥ २३ ॥ दातुंचतावदिच्छामिस्वर्गतस्यमहीपतेः ॥ और्ध्वदेहनिमित्तार्थमवतीर्योदकंनदीम् ॥ २४ ॥ तस्यैवंब्रुवतोमात्यास्तथेत्युक्त्वासमाहिताः ॥ न्यवेशयंस्तांछंदेनस्वेनस्वेनपृथक्पृथक् ॥२५॥ निवेश्यगंगामनुतांमहानदींचमूंविधानैःपरिबर्हशोभिनीम् ॥ उवासरामस्यतदामहात्मनोविचिंतमानोभरतोनिवर्तनम् ॥२६॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेत्र्यशीतितमःसर्गः ॥८३॥

शृंगवेरपुर इत्यर्थः ॥ १९ ॥ अप्रमादेन सावधानतया ॥ २० ॥ २१ ॥ अनुत्थितां गमनेऽनुद्योगाम् ॥ २२ ॥ अद्य विश्रांताः श्वः प्रतरिष्याम इत्यभिप्रायेण इति मदभिप्रायज्ञापनेन निवेशयतेत्यर्थः ॥ ॥ २३ ॥ और्ध्वदेहनिमित्तार्थं एतच्छरीरपातोत्तरकालिकदेहभवसुखप्रयोजनायेत्यर्थः । यद्वा एतद्देहपात‌ऊर्ध्वं जातदेहो निमित्तं यस्य परलोकस्य स ऊर्ध्वदेहनिमित्तः परलोकः । स्वार्थिकोण् । तदर्थमित्यर्थः । मध्ये मिलितनद्यंतरे एवमुक्त्या गंगायास्तर्पणेन पितृस्वर्गप्राप्तिकरत्वं सूचितम् ॥ २४ ॥ स्वेनस्वेन च्छंदेन स्वस्वेच्छया ॥ २५ ॥ गंगामनु गंगां लक्षीकृत्येत्यर्थः । परिबर्हो यात्रोपयुक्तपटवेश्माद्युपकरणजातं विधानैर्वासव्यवस्थाकल्पनैः रामस्य निवर्तनं चिंतमानः चिंतयमान इत्यर्थः ॥२६॥ तैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे त्र्यशीतितमः सर्गः ॥ ८३ ॥

गंगामनु आश्रितां निविष्टां कचित्कार्येभिनिवेशवतीम् ॥ १ ॥ इतः इह गंगातीरे । नास्या अंतमित्यर्थे संधिरार्षः ॥ २ ॥ यदा नु खलु यस्माद्धेतोर्दुर्बुद्धिर्भरतः स्वयमागतस्ततो महती सेना प्रदृश्यत इत्यन्वयः । रामपीडार्थं प्रवृत्त इत्याशयेन दुर्बुद्धितावादः । भरतागमनचिह्नमाह स इति । महाकायः महाप्रमाणः इक्ष्वाकुकुलचिह्नभूतः कोविदारध्वजो रथे दृश्यतेऽतो भरत एवायमिति भावः ॥ ३ ॥ नन्वा यातु भरतः किमस्माकमत आह बंधयिष्यतीति । स्वामात्यैरिति शेषः वधिष्यतीति वा अनु ततः पश्चाद्रामं वधिष्यति इति मन्ये इति शेषः ॥ ४ ॥ ननु रामवधेऽस्य किं फलमतआह संपन्नामिति । संपूर्णामित्यर्थः । सार्वकालिकीमिति यावत् तस्य राज्ञः रामस्य सुदुर्लभां तस्मिन् जीवति दुष्प्रापाम् अतो रामं हंतुं समधिगच्छति बुद्धिं प्राप्नोति ॥ ५ ॥ नन्वेवमपि तव का भीतिरत आह भर्तेत्यादि । एवं च तत्पक्षत्वादस्माकं भीतिरिति भावः । अस्माभिश्च सखित्वादेव रामेष्टं कर्तव्यमतो नास्माभिरेते गंगां तारयितव्या अतो यूयं तस्य रामस्य अर्थकामाः प्रयोजनेच्छवः सन्नद्धा अत्र गंगानूपे मत्सन्निधौ तिष्ठत

ततोनिविष्टांध्वजिनींगंगामन्वाश्रितांनदीम् ॥ निषादराजोदृष्ट्वैवजातीन्सपरितोब्रवीत् ॥ १ ॥ महतीयमितःसेनासागराभाप्रदृश्यते ॥ नास्यांतमवगच्छामिमनसापिविचिंतयन् ॥ २ ॥ यदानुखलुदुर्बुद्धिर्भरतःस्वयमागतः ॥ सएषहिमहाकायःकोविदारध्वजोरथे ॥ ३ ॥ बंधयिष्यतिवापाशैरथवास्मान्वधिष्यति ॥ अनुदाशरथिंरामंपित्राराज्याद्विवासितम् ॥ ४ ॥ संपन्नांश्रियमन्विच्छंस्तस्यराज्ञःसुदुर्लभाम् ॥ भरतःकैकयीपुत्रोहंतुंसमुपगच्छति ॥ ५ ॥ भर्ताचैवसखाचैवरामोदाशरथिर्मम ॥ तस्यार्थकामाःसन्नद्धागंगानूपेत्रतिष्ठत ॥ ६ ॥ तिष्ठंतुसर्वदाशाश्चगंगामन्वाश्रितानदीम् ॥ बलयुक्तानदीरक्षामांसमूलफलाशनाः ॥ ७ ॥ नावांशतानांपंचानांकैवर्तानांशतंशतम् ॥ सन्नद्धानांतथायूनांतिष्ठंत्वित्यभ्यचोदयत् ॥ ८ ॥ यदितुष्टस्तुभरतोरामस्येहभविष्यति ॥ इयंस्वस्तिमतीसेनागंगामद्यतरिष्यति ॥ ९ ॥ इत्युक्त्वोपायनंगृह्यमत्स्यमांसमधूनिच ॥ अभिचक्रामभरतंनिषादाधिपतिर्गुहः ॥ १० ॥ तमायांतंतुसंप्रेक्ष्यसूतपुत्रःप्रतापवान् ॥ भरतायाचचक्षेऽथसमयज्ञोविनीतवत् ॥ ११ ॥ एषज्ञातिसहस्रेणस्थपतिःपरिवारितः ॥ कुशलोदंडकारण्येवृद्धोभ्रातुश्चतेसखा ॥ १२ ॥ तस्मात्पश्यतुकाकुत्स्थत्वांनिषादाधिपोगुहः ॥ असंशयंविजानीतेयत्रतौरामलक्ष्मणौ ॥ १३ ॥ एतत्तुवचनंश्रुत्वासुमंत्राद्भरतःशुभम् ॥ उवाचवचनंशीघ्रंगुहःपश्यतुमामिति ॥ १४ ॥ लब्ध्वानुज्ञांसंप्रहृष्टोज्ञातिभिःपरिवारितः ॥ आगम्यभरतंप्रह्वोगुहोवचनमब्रवीत् ॥ १५ ॥ निष्कुटश्चैवदेशोयंवंचिताश्चापितवयम् ॥ निवेदयामतेसर्वेस्वकेदाशगृहेवस ॥ १६ ॥

॥ ६ ॥ सर्वे मामका दाशास्तु गंगां नदीमेवान्वाश्रिताः नदीरक्षाः नदीतरणमार्गविघ्नवंतः मांसमूलफलाशनाः एतद्धीत्या तीरे आगंतुमशक्यतया नावारोपितमांसाद्यशनाः बलवंतः संतस्तिष्ठंतु ॥ ७ ॥ बलवत्तामेवाह नावामिति । पंचशतसंख्याकनावां प्रत्येकं सन्नद्धानां युद्धसन्नाहवतां यूनां युद्धार्हाणां कैवर्तानां शतं शतमारुह्य तिष्ठंत्वित्यभ्यचोदयत् ॥ ८ ॥ एवं स्थितैरपि युद्धे त्वरा न कार्येत्याह यदीति । यदि रामविषये तुष्टस्तदेयं सेना स्वस्तिमती तरिष्यति अन्यथा नौकासु स्थित्वा एतान्निहन्म इति भावः । यदा दुष्ट इतिपाठेऽदुष्ट इति च्छेदः ॥ ९ ॥ अभिचक्राम दर्शनार्थम् ॥ १० ॥ ११ ॥ स्थपतिः प्रभुः दंडकारण्ये कुशलः निग्रहानुग्रहसमर्थः चारैस्तत्रत्यवृत्तांतज्ञः ॥ १२ ॥ अपिचानेन प्रयोजनमस्तीत्याह असंशयमिति ॥ १३ ॥ १४ ॥ १५ ॥ अयं देशो निष्कुटः गृहारामकल्पः वयं वंचिताः ।

प्रस्थानसमयेऽप्रेषितनियागदेशत्वात् इयमुपचारोक्तिः । सर्वं राज्यं ते निवेदयाम वयं त्वदीया अतः स्वीयदाशगृहे वस ॥ १६ ॥ वन्यं नीवारश्यामाकादि ॥ १७ ॥ स्वाशिता सुष्ठु भोजिता वत्स्यतीत्या शंसे प्रार्थये । वसत्वेनामिति पाठांतरम् । तत्राशंसे इति पुनरुक्तम् ॥ १८ ॥ ईर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुरशीतितमः सर्गः ॥ ८४ ॥ ॥ एवमिति । हेत्वर्थसंहितं हेत्वर्थाभ्यां उपपत्तिप्रयोजनाभ्यां संयुक्तम् ॥ १ ॥ ऊर्जितः महांस्तेऽयं कामः कामनाविषयो मत्सत्कारः मम कृत एव खलु कथं तत्राह यो मे इति । तव श्रद्धयैव सर्वं कृतमि त्यर्थः ॥ २ ॥ पंथानं दर्शयन्गंतव्यपथि संमुखं हस्तं कुर्वन्पुनःपुनरब्रवीदित्यन्वयः । आदरेण वारंवारं कथनम् । गुहं वचनमुत्तमं निषादाधिपतिं पुनरिति । द्वितीयचतुर्थपादौ पाठांतरे ॥ ३ ॥ कतरेण पथा

अस्तिमूलफलंचैतन्निषादैःस्वयमर्जितम् ॥ आर्द्रंशुष्कंयथामांसंवन्यंचोच्चावचंतथा ॥१७॥ आशंसेस्वाशितासेनावत्स्यत्येनांविभावरीम् ॥अर्चितो विविधैःकामैःश्वःससैन्योगमिष्यसि ॥ १८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुरशीतितमः सर्गः ॥ ८४ ॥ ॥ एवमुक्तस्तुभरतोनिपादाधिपतिंगुहम् ॥ प्रत्युवाचमहाप्राज्ञोवाक्यंहेत्वर्थसंहितम् ॥ १ ॥ ऊर्जितःखलुतेकामःकृतोममगुरोःसखे ॥ योमेत्वमीदृशींसे नामभ्यर्चयितुमिच्छसि ॥ २ ॥ इत्युक्त्वासमहातेजागुहंवचनमुत्तमम् ॥ अब्रवीद्भरतःश्रीमान्पंथानंदर्शयन्पुनः ॥ ३ ॥ कतरेणगमिष्यामिभर द्वाजाश्रमंपथा ॥ गहनोयंभृशंदेशोगंगानूपोदुरत्ययः ॥ ४ ॥ तस्यतद्वचनंश्रुत्वाराजपुत्रस्यधीमतः ॥ अब्रवीत्प्रांजलिर्भूत्वागुहोगहनगोचरः ॥ ५ ॥ दाशास्त्वनुगमिष्यंतिदेशज्ञाःसुसमाहिताः ॥ अहंचानुगमिष्यामिराजपुत्रमहाबल ॥ ६ ॥ कच्चिन्नदुष्टोव्रजसिरामस्याक्लिष्टकर्मणः ॥ इयंतेमहतीसे नाशंकांजनयतिवमे ॥ ७ ॥ तमेवमभिभाषंतमाकाशइवनिर्मलः ॥ भरतःश्लक्ष्णयावाचागुहंवचनमब्रवीत् ॥ ८ ॥ माभूत्सकालोयत्कष्टंनमांशंकितुमर्ह सि ॥ राघवःसहिमेभ्राताज्येष्ठःपितृसमोमतः ॥ ९ ॥ तंनिवर्तयितुंयामिकाकुत्स्थंवनवासिनम् ॥ बुद्धिरन्यानमेकार्यागुहसत्यंब्रवीमिते ॥ १० ॥ सतुसंहृष्टवदनःश्रुत्वाभरतभाषितम् ॥ पुनरेवाब्रवीद्वाक्यंभरतंप्रतिहर्षितः ॥ ११ ॥ धन्यस्त्वंनत्वयातुल्यंपश्यामिजगतीतले ॥ अयत्नादागतंराज्यं यस्त्वंत्यक्तुमिहेच्छसि ॥ १२ ॥ शाश्वतीखलुतेकीर्तिर्लोकाननुचरिष्यति ॥ यस्त्वंकृच्छ्रगतंरामंप्रत्यानयितुमिच्छसि ॥ १३ ॥ एवंसंभाषमाणस्य गुहस्यभरतंतदा ॥ बभौनष्टप्रभःसूर्योरजनीचाभ्यवर्तत ॥१४॥ सन्निवेश्यसतांसेनांगुहेनपरितोषितः ॥ शत्रुघ्नेनसमंश्रीमाञ्छयनंपुनरागमत् ॥१५॥

गहनो दुष्प्रवेशः ॥ ४ ॥ गहनगोचरः गहनं वनं गोचरो देशो यस्य सः ॥ ५ ॥ दाशास्त्विति । अतो गहनविषया न काचिच्छंकेति भावः ॥ ६ ॥ अपि तु अक्लिष्टकर्मणो रामस्य विषये दुष्टो दुष्ट भावो न व्रजसि कच्चिद्राममद्रोहं कर्तुं न व्रजसि कच्चिदित्यर्थः ननु का ते दोषशंका तत्राह इयं ते इति । रामसंदर्शनमात्राय गमने एतावत्सेनाया व्यर्थत्वान्मम संदेह इति भावः ॥ ७ ॥ आकाश इवेत्युपमया त्रैकालिकमलसंबंधाभावो दर्शितः ॥ ८ ॥ यत् अत्र काले कष्टं त्वदाशंकितं रामद्रोहरूपं जायते स कालो माभूत् । हि यतो राघवो ज्येष्ठो भ्राता पितृसमोऽतो मां शंकितुं नार्हसि ॥ ९ ॥ तदेवाह तमिति । मे मयि न ते कार्येति पाठांतरम् ॥ १० ॥ ११ ॥ १२ ॥ चरिष्यति प्रचारिष्यति ॥ १३ ॥ नष्टप्रभो मंदीभूतरश्मिः ॥ १४ ॥ गुहेन परिरक्षित इतिपाठे परिहृतचोरबाध इत्यर्थः ॥ १५ ॥

अनर्हस्य दुःखानर्हस्य धर्मप्रेक्षस्य धर्मदृष्टेः तादृशो वागगोचरः उपस्थितः प्राप्तः ॥१६॥ दहनः शोकाग्निः । राघवं भरतम् । वनदाहकोग्निर्वनदाहाग्निर्दावाग्निस्तेन संतप्तं शुष्कम् । गूढोग्निः कोटरसंसक्तोग्निः ॥१७॥ स्वेदं प्रसृतः कर्तरि निष्ठा गत्यर्थत्वात् ॥ १८ ॥ दुःखे पर्वतरूपकम् रामविषयध्यानान्येव । निर्दरशैलाः विदारणरहितशिलासमूहा यस्मिन् निःशेषतोदीर्णशिलासमूहा यस्मिन्निति वा । विनिःश्वसितमेव गैरिकादिधातुर्यस्मिन् श्वाससंपर्केण भूषणानामन्यवर्णजननात् दैन्यं करणानां स्वस्वविषयप्रवृत्तिवैमुख्यं स एव पादपसंघो यस्मिन् शोकजा आयासाश्चित्तश्रांतयः ता एव अधि अधिरूढानि शृंगाणि तद्वता ॥ १९ ॥ प्रमोहा एव अनंतसत्त्वानि वन्यप्राणिनो यस्मिंस्तेन संतापः अंतर्बहिःकरणसंताप एव ओषधयो वेणवश्च यस्मिन् । मज्जता मग्नं कुर्वता सकरणग्राममात्मानमधो नयता एवंभूतेन दुःखरूपशैलेनाक्रांतोभूदिति

रामचिंतामयःशोकोभरतस्यमहात्मनः ॥ उपस्थितोह्यनर्हस्यधर्मप्रेक्ष्यस्यतादृशः ॥ १६ ॥ अंतर्दाहेनदहनःसंतापयतिराघवम् ॥ वनदाहाग्निसंतप्तं गूढोग्निरिवपादपम् ॥ १७ ॥ प्रसृतःसर्वगात्रेभ्यःस्वेदंशोकाग्निसंभवम् ॥ यथासूर्याग्निसंतप्तोहिमवान्प्रसृतोहिमम् ॥ १८ ॥ ध्याननिर्दरशैलेनविनिःश्वसितधातुना ॥ दैन्यपादपसंघेनशोकायासाधिशृंगिणा ॥ १९ ॥ प्रमोहानंतसत्त्वेनसंतापौषधिवेणुना ॥ आक्रांतोदुःखशैलेनमज्जताकैकयीसुतः ॥ ॥ २० ॥ विनिःश्वसन्वैभृशदुर्मनास्ततःप्रमूढसंज्ञःपरमापदंगतः ॥ शमंनलेभेहृदयज्वरार्दितोनरर्षभोयूथहतोयथर्षभः ॥ २१ ॥ गुहेनसार्धंभरतःसमागतोमहानुभावःसजनःसमाहितः ॥ सुदुर्मनास्तंभरतंतदापुनःशनैःसमाश्वासयदग्रजंप्रति ॥ २२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मी०आदिकाव्ये अयोध्याकांडेपंचाशीतितमःसर्गः ॥ ८५ ॥ आचचक्षेऽथसद्भावंलक्ष्मणस्यमहात्मनः ॥ भरतायाप्रमेयायगुहोगहनगोचरः ॥ १ ॥ तंजाग्रतंगुणैर्युक्तंवरचापेषुधारिणम् ॥ भ्रातृगुप्त्यर्थमत्यंतमहंलक्ष्मणमब्रुवम् ॥ २ ॥ इयंतातसुखाशय्यात्वदर्थमुपकल्पिता ॥ प्रत्याश्वसिहिशेष्वास्यांसुखंराघवनंदन ॥ ३ ॥ उचितोयंजनःसर्वोदुःखानांत्वंसुखोचितः ॥ धर्मात्मंस्तस्यगुप्त्यर्थंजागरिष्यामहेवयम् ॥ ४ ॥ नहिरामात्प्रियतरोममास्तिभुविकश्चन ॥ मोत्सुकोभूर्ब्रवीम्येतदथसत्यंतवाग्रतः ॥ ५ ॥ अस्यप्रसादादाशंसेलोकेस्मिन्सुमहद्यशः ॥ धर्मावाप्तिंचविपुलामर्थकामौचकेवलौ ॥ ६ ॥ सोहंप्रियसखंरामंशयानंसहसीतया ॥ रक्षिष्यामिधनुष्पाणिःसर्वैःस्वैर्ज्ञातिभिःसह ॥ ७ ॥ नहिमेऽविदितंकिंचिद्वनेस्मिंश्चरतःसदा ॥ चतुरंगंह्यपिबलंप्रसहेमवयंयुधि ॥ ८ ॥

शेषः ॥ २० ॥ प्रकर्षेण मूढा संज्ञा चेतना यस्य । यूथहतः यूथभ्रष्टः ॥ २१ ॥ समाहितः एकाग्रचित्तः सजनः सपरिवारः गुहेन सार्धं समागतो मिलितो भरतोऽग्रजं प्रति सुदुर्मना बभूव तादृशं तं भरतं गुहः पुनराश्वासयत् ॥ २२ ॥ रेकैंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचाशीतितमः सर्गः ॥ ८५ ॥ ॥ छ ॥ ॥ सद्भावं ज्येष्ठानुवर्तनरूपं साधुत्वम् ॥ ॥ १ ॥ तदेवाह तमिति । भ्रातृगुप्त्यर्थं जाग्रतं विनिद्रम् गुणैः स्नेहसौशील्यादिगुणैः क्षत्रगुणैश्च युक्तम् ॥ २ ॥ इयं तातेत्यादिरुक्तानुवादः पूर्वमेव व्याख्यातः ॥३॥ तस्य रामस्य ॥४॥५॥६॥ ७ ॥८॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ पंचविंशति श्लोका अत्र सर्गे ॥ शेरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षडशीतितमः सर्गः ॥ ८६ ॥ ॥ छ ॥ भृशमप्रियं जटाधारणरूपं यत्र तत्रैव यत्र क्षणे इत्यर्थः ।



एवमस्माभिरुक्तेनलक्ष्मणेनमहात्मना ॥ अनुनीतावयंसर्वेधर्ममेवानुपश्यता ॥ ९ ॥ कथंदाशरथौभूमौशयानेसहसीतया ॥ शक्यानिद्रामयालब्धुं जीवितानिसुखानिवा ॥ १० ॥ योनदेवासुरैःसर्वैःशक्यःप्रसहितुंयुधि ॥ तंपश्यगुहसंविष्टंतृणेषुसहसीतया ॥ ११ ॥ महतातपसालब्धोविविधै श्चपरिश्रमैः ॥ एकोदशरथस्यैषपुत्रःसदृशलक्षणः ॥ १२ ॥ अस्मिन्प्रव्राजितेराजानचिरंवर्तयिष्यति ॥ विधवामेदिनीनूनंक्षिप्रमेवभविष्यति ॥१३॥ विनद्यसुमहानादंश्रमेणोपरताःस्त्रियः ॥ निर्घोषोविरतोनूनमद्यराजनिवेशने ॥ १४ ॥ कौसल्याचैवराजाचतथैवजननीमम ॥ नाशंसेयदितेसर्वेजीवे युःशर्वरीमिमाम् ॥ १५ ॥ जीवेदपिचमेमाताशत्रुघ्नस्यान्ववेक्षया ॥ दुःखिताया हिकौसल्यावीरसूर्विनशिष्यति ॥ १६ ॥ अतिक्रांतमतिक्रांतमनवाप्य मनोरथम् ॥ राज्येराममनिक्षिप्यपितामेविनशिष्यति ॥ १७ ॥ सिद्धार्थापितरंवृत्तंतस्मिन्कालेह्युपस्थिते ॥ प्रेतकार्येषुसर्वेषुसंस्करिष्यंतिभूमिपम् ॥ ॥ १८ ॥ रम्यचत्वरसंस्थानांसुविभक्तमहापथाम् ॥ हर्म्यप्रासादसंपन्नांसर्वरत्नविभूषिताम् ॥ १९ ॥ गजाश्वरथसंबाधांतूर्यनादविनादिताम् ॥ सर्व कल्याणसंपूर्णांहृष्टपुष्टजनाकुलाम् ॥ २० ॥ आरामोद्यानसंपूर्णांसमाजोत्सवशालिनीम् ॥ सुखिताविचरिष्यंतिराजधानींपितुर्मम ॥ २१ ॥ अपि सत्यप्रतिज्ञेनसार्धंकुशलिनावयम् ॥ निवृत्तेसमयेह्यस्मिन्सुखिताःप्रविशेमहि ॥२२॥ परिदेवयमानस्यतस्यैवंहिमहात्मनः ॥ तिष्ठतोराजपुत्रस्यशर्व रीसात्यवर्तत ॥ २३ ॥ प्रभातेविमलेसूर्येकारयित्वाजटाउभौ ॥ अस्मिन्भागीरथीतीरेसुखंसंतारितौमया ॥ २४ ॥ जटाधरौतौद्रुमचीरवाससौ महाबलौकुंजरयूथपोपमौ ॥ वरेषुधीचापधरौपरंतपौव्यपेक्षमाणौसहसीतयागतौ ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयो ध्याकांडे षडशीतितमः सर्गः ॥ ८६ ॥ गुहस्यवचनंश्रुत्वाभरतोभृशमप्रियम् ॥ ध्यानंजगामतत्रैवयत्रतच्छ्रुतमप्रियम् ॥ १ ॥ सुकुमारोमहासत्त्वः सिंहस्कंधोमहाभुजः ॥ पुंडरीकविशालाक्षस्तरुणःप्रियदर्शनः ॥२॥ प्रत्याश्वस्यमुहूर्तंतुकालंपरमदुर्मनाः ॥ ससादसहसातोत्रैर्हृदिविद्धइवद्विपः ॥३॥ भरतंमूर्च्छितंदृष्ट्वाविवर्णवदनोगुहः ॥ बभूवव्यथितस्तत्रभूमिकंपेयथाद्रुमः ॥ ४ ॥ तदवस्थंतुभरतंशत्रुघ्नोनंतरस्थितः ॥ परिष्वज्यरुरोदोच्चैर्विसंज्ञः शोककर्शितः ॥ ५ ॥ ततःसर्वाःसमापेतुर्मातरोभरतस्यताः ॥ उपवासकृशादीनाभर्तृव्यसनकर्शिताः ॥ ६ ॥

ध्यानं जगाम स्वाभिलषितकार्यसंकटं जातमितिचिंतां प्रापेत्यर्थः ॥ १ ॥ सुकुमारत्वादिगुणेन जटादिकं धृतम् अतो निवृत्तिर्दुर्लभेति चिंतां जगाम ॥ २ ॥ ततो मुहूर्तं कालं परमदुर्मनाः परम खिन्नः प्रत्याश्वस्य पुनश्च सहसा दुःखवेगेन ससाद अवशोभूत् । तोत्रैरंकुशैः । हृदि हृदयदेशे ॥ ३ ॥ ४ ॥ तदवस्थं अचेतनावस्थम् । अनंतरस्थितः समीपस्थितः ॥ ५ ॥ ६ ॥

अनुसृत्य समीपं प्राप्य ॥ ७ ॥ स्वं वत्सं स्वपुत्रं यथा तथोपगुह्य ॥ ८ ॥ व्याधिः पित्तप्रकोपादिलक्षणो भ्रममूर्छादिः ॥९॥१०॥ भ्रममूर्छादेः कारणांतरं पृच्छति कच्चिदिति । अप्रियं प्राणात्ययरूपम् । एकपुत्राया ममेति शेषः ॥ ११ ॥ मुहूर्तं विसंज्ञः सन्पश्चात्समाश्वास्येत्यर्थः । परिसांत्व्य त्वच्छंकितं किमपि नास्ति किंतु तयोर्जटाधारणश्रवणजदुःखेन मूर्छितोस्मि इत्युक्त्वा ॥ १२ ॥ १३ ॥ हृष्टः लक्ष्मणवद्भरतस्यापि पूर्णभ्रातृभक्तिदर्शनेन तुष्टः यद्विधं यादृशं व्यवहारं रामे प्रतिपेदे कृतवांस्तमब्रवीद्रामकृतं च इत्यन्वयः ॥ १४ ॥ तमेवाह अन्नमित्यादि ॥ १५ ॥ प्रत्यनुज्ञासीत् मदनुग्रहार्थं केवल मंगीकृत्य पुनर्मह्यमेव दत्तवान् क्षत्रधर्ममप्रतिग्रहरूपम् न प्रत्यगृह्णात् अभ्यवहाराय न स्वीकृतवान् ॥१६॥ तमेवधर्ममाह नहीति । नन्वेवं भरद्वाजादिदत्तांगीकारः कथमिति चेन्न मधुपर्कादिना राजपूजाया ब्राह्मणं

ताश्चतंपतितंभूमौरुदत्यःपर्यवारयन् ॥ कौसल्यात्वनुसृत्यैनंदुर्मनाःपरिषस्वजे ॥ ७ ॥ वत्सलास्वंयथावत्समुपगुह्यतपस्विनी ॥ परिपप्रच्छभरतंरुदती शोकलालसा ॥ ८ ॥ पुत्रव्याधिर्नतेकच्चिच्छरीरंप्रतिबाधते ॥ अस्यराजकुलस्याद्यत्वदधीनंहिजीवितम् ॥ ९ ॥ त्वांदृष्ट्वापुत्रजीवामिरामेसभ्रातृकेगते वृत्तेदशरथेराज्ञिनाथएकस्त्वमद्यनः ॥ १० ॥ कच्चिन्नलक्ष्मणेपुत्रश्रुतंतेकिंचिदप्रियम् ॥ पुत्रेवाह्येकपुत्रायाःसहभार्येवनंगते ॥ ११ ॥ समुहूर्तंसमाश्वस्यरुदन्नेवमहायशाः ॥ कौसल्यांपरिसांत्व्येदंगुहंवचनमब्रवीत् ॥ १२ ॥ भ्रातामेक्वावसद्रात्रिंक्वसीताक्वचलक्ष्मणः ॥ अस्वपच्छयनेकस्मिन्किंभुक्त्वागुहशंसमे ॥ १३ ॥ सोब्रवीद्भरतंहृष्टोनिषादाधिपतिर्गुहः ॥ यद्विधंप्रतिपेदेचरामेप्रियहितेतिथौ ॥ १४ ॥ अन्नमुच्चावचंभक्ष्याःफलानिविविधानिच ॥ रामायाभ्यवहारार्थंबहुशोपहृतंमया ॥ १५ ॥ तत्सर्वंप्रत्यनुज्ञासीद्रामःसत्यपराक्रमः ॥ नहितत्प्रत्यगृह्णात्सक्षत्रधर्ममनुस्मरन् ॥ १६ ॥ नह्यस्माभिःप्रतिग्राह्यंसखेदेयंतुसर्वदा ॥ इतितेनवयंसर्वेअनुनीतामहात्मना ॥ १७ ॥ लक्ष्मणेनयदानीतंपीतंवारिमहात्मना ॥ औपवास्यंतदाकार्षीद्राघवःसहसीतया ॥ १८ ॥ ततस्तुजलशेषेणलक्ष्मणोप्यकरोत्तदा ॥ वाग्यतास्तेत्रयःसंध्यांसमुपासन्तसंहिताः ॥ १९ ॥ सौमित्रिस्तुततःपश्चादकरोत्स्वास्तरंशुभम् ॥ स्वयमानीयबर्हींषिक्षिप्रंराघवकारणात् ॥ २० ॥ तस्मिन्समाविशद्रामःस्वास्तरेसहसीतया ॥ प्रक्षाल्यचतयोःपादौव्यपाक्रामत्सलक्ष्मणः ॥ २१ ॥ एतत्तदिंगुदीमूलमिदमेवचतत्तृणम् ॥ अस्मिन्रामश्चसीताचरात्रिंतांशयितावुभौ ॥ २२ ॥ नियम्यपृष्ठेतुतलांगुलित्रवान्शरैःसुपूर्णाविषुधीपरंतपः ॥ महद्धनुःसज्जमुपोह्यलक्ष्मणोनिशामतिष्ठत्परितोस्यकेवलम् ॥ २३ ॥ ततस्त्वहंचोत्तमबाणचापभृत्स्थितोभवंतत्रसयत्रलक्ष्मणः ॥ अतंद्रितैर्ज्ञातिभिरात्तकार्मुकैर्महेंद्रकल्पंपरिपालयंतदा ॥ २४ ॥ इत्यार्षे श्रीम० वा० आ० अ० सप्ताशीतितमः सर्गः ॥ ८७ ॥

प्रतिविधानेन तद्दत्तांगीकारस्य स्वाभ्युदयफलकत्वेन च तस्य युक्तत्वात् गुहस्य निषादत्वेन राजपूजानधिकारात् अस्वदेश्यत्वेन करग्रहणायोग्यत्वाच्च तदीयानंगीकार इति न दोषः । यद्यपि गुहस्य तत्त्वज्ञत्वेनास्त्येव भगवत्पूजाधिकारस्तथापि व्रतस्थत्वात्तद्भोजनमिति तत्त्वम ॥ १७ ॥ औपवास्यमुपवासम् स्वार्थे ष्यञ् ॥ १८ ॥ अकरोत्पानक्रियामिति शेषः । त्रयः सुमंत्रेण । संहिताः समाहितचित्ताः ॥ १९ ॥ ततः पश्चात्संध्यावंदनोत्तरम् बर्हींषि दर्भान् स्वास्तरं शयनम् ॥ २० ॥ व्यपाक्रामच्छयनप्रदेशाद्बहिर्दूरमिति शेषः ॥ २१ ॥ २२ ॥ इषुधी पृष्ठे बद्ध्वा तलयोः करतलयोरंगुलित्राणवान् सज्जं धनुरुपोह्य धृत्वा अस्य परितो भ्रमन्नतिष्ठत् केवलं निद्रारहितः ॥ २३ ॥ परिपालयं पर्यपालयन् ॥ २४ ॥ भरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्ताशीतितमः सर्गः ॥ ८७ ॥

नावां पंचशतानि समानिन्युः॥ १०॥अन्याः पंचशतनौकाभ्योन्याः स्वस्तिकविज्ञेयाः स्वस्तिकाख्यया लोकप्रसिद्धा राजार्हनौभेदाः महाघंटां धारयंति ता महाघंटाधराः पताकास्ता धारयंतीत्यर्थः। शोभमानाः।स्वर्णादि रूपितचित्रैः शोभमानाः पताकिन्यः बह्वरित्रवत्यः । अरित्रं नावाकर्षणदंडः। युक्तवाहाः नौवहने नाविकवत्यः । युक्तवाता इतिपाठे युक्तगतयः । सुसंहताः दृढसंधिबंधाः ॥ ११ ॥ सनंदिघोषाम् उपरि प्रतिष्ठि तमंगलवादित्रघोषसहितां ततः इतरस्वस्तिकाभ्यो विलक्षणां स्वस्तिकाख्यां पांडुकंबलो राजास्तरणकंबलः तद्वतीं राजार्हां नावं गुहः स्वयमेवोपाहरत् ॥ १२ ॥ १३ ॥ तत्पूर्वं समातृकभरतारोहात्पूर्वं अनंतरं तेषां तासांचानंतरं राजदाराः अनुचरप्रभुस्त्रियः शकटानि आपणाः पण्यानि इतरनौषु आरोपिता इति शेषः ॥ १४ ॥ आवासं उषितावासं आदीपयतामग्निसात्कुर्वताम् । अयं सेनाधर्मः तीर्थं नद्यवतार

तेतथोक्ताःसमुत्थायत्वरिताराजशासनात् ॥ पंचनावांशतान्येवसमानिन्युःसमंततः ॥ १० ॥ अन्याःस्वस्तिकविज्ञेयामहाघंटाधराधराः ॥ शो भमानाःपताकिन्योयुक्तवाहाःसुसंहताः ॥ ११ ॥ ततःस्वस्तिकविज्ञेयांपांडुकंवलसंवृताम् ॥ सनंदिघोषांकल्याणींगुहोनावमुपाहरत् ॥ १२ ॥ तामारुरोहभरतःशत्रुघ्नश्चमहाबलः ॥ कौसल्याचसुमित्राचयाश्चान्याराजयोषितः ॥ १३ ॥ पुरोहितश्चतत्पूर्वंगुरवोब्राह्मणाश्चये ॥ अनंतरंराजदारा स्तथैवशकटापणाः ॥ १४ ॥ आवासमादीपयतांतीर्थंचाप्यवगाहताम् ॥ भांडानिचाददानानांघोषस्तुदिवमस्पृशत् ॥ १५ ॥ पताकिन्यस्तु तानावःस्वयंदाशैरधिष्ठिताः ॥ वहंत्योजनमारूढंतदासंपेतुराशुगाः ॥ १६ ॥ नारीणामभिपूर्णास्तुकाश्चित्काश्चित्तुवाजिनाम् ॥ काश्चित्तत्रवहं तिस्मयानयुग्यंमहाधनम् ॥ १७ ॥ तास्तुगत्वापरंतीरमवरोप्यचतंजनम् ॥ निवृत्ताःकांडचित्राणिक्रियंतेदाशबंधुभिः ॥ १८ ॥ सवैजयंतास्तुगजा गजारोहैःप्रचोदिताः ॥ तरंतःस्मप्रकाशंतेसपक्षाइवपर्वताः ॥ १९ ॥ नावश्चारुरुहुस्त्वन्येप्लवैस्तेरुस्तथापरे ॥ अन्येकुंभघटैस्तेरुरन्येतेरुश्चबाहु भिः ॥ २० ॥ सापुण्याध्वजिनीगंगादाशैःसंतारितास्वयम् ॥ मैत्रेमुहूर्तेप्रययौप्रयागवनमुत्तमम् ॥ २१ ॥

मवगाहतामहमहमिकया प्रविशताम् । भांडानि उपकरणानि ॥ १५ ॥ आशुगाः शीघ्राः ॥ १६ ॥ नारीणामित्यादौ तृतीयार्थस्य शेषत्वविवक्षायां षष्ठी । नारीभिः पूर्णा इत्याद्यर्थः । यानानि शकटादीनि युग्या अश्वाश्वतरबलीवर्दाद्याः । महाधनं बहुमूल्यम् । यद्वा महाधनं जीवाजीवरूपनानाप्रकारम् ॥ १७ ॥ तं जनमवरोप्य निवृत्ता नावः समारुह्य दाशबंधुभिः क्रीडार्थं कांडचित्राणि कांडे जले चित्राणि चित्रगमनानि लघुत्वात्क्रियंते स्मेत्यर्थः । कांडोस्त्री दंडबाणार्ववर्गावसरवारिषु इत्यमरः ॥ १८ ॥ सवैजयंताः सध्वजाः ॥ १९ ॥ प्लवाः वेणुतृणादिनिर्मिताः । कुंभा महांतः । घटाः स्वल्पाः विपरीतं वा ॥२०॥ मैत्रे मुहूर्ते उदयात्तृतीयमुहूर्ते । नाडीद्वयं मुहूर्तः । रौद्रः सार्पस्तथा मैत्रः पैत्रो वासव एव च ॥ आर्यो वैश्यस्तथा ब्राह्मः प्राजो रौद्राग्निरेव च ॥ ऐंद्रोथ निर्ऋतिश्चैव वारुणो यमसाधकौ ॥ एते क्रमेण विज्ञेया

मुहूर्ता दश पंच चेत्युक्तः ॥ २१ ॥ यथोपजोषं यथासुखं आश्वासयित्वा विश्राम्य निवेशयित्वा प्रयागवने स्थापयित्वा ॥ २२ ॥ देवपुरोहितस्य भरद्वाजो उतथ्यभार्यायां ममतायां बृहस्पतेर्जात इति पुराणे प्रसिद्धं तं च भर्तृभिया त्यक्तुकामां ममतां देवा ऊचुः उतथ्यस्य क्षेत्रजत्वेन बृहस्पतेरौरसत्वेन भरद्वाजानममुं भरेति तस्माद्भरद्वाज इति तस्य नाम ॥ २३ ॥ ३ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोननवतितमः सर्गः ॥ ८९ ॥ ॥ जगाम द्रष्टुमिति शेषः । अवस्थाप्य आश्रमोपरोधनिवृत्तये इति शेषः ॥ १ ॥ पद्भ्यामिति विनयप्रदर्शनार्थम् ॥ ॥ २ ॥ ततः संदर्शने आश्रमप्रवेशानंतरमृषिदर्शनावसरे । अनुपुरोहितं पुरोहितस्य पश्चात् ॥ ३ ॥ शिष्यान्प्रति अर्घ्यमानयतेति ब्रुवन् ॥ ४ ॥ अबुध्यत वसिष्ठेन सहागमनादिति शेषः ॥ ५ ॥ ताभ्यां वसि

आश्वासयित्वाचचमूंमहात्मानिवशेयित्वाचयथोपजोषम् ॥ द्रष्टुंभरद्वाजमृषिप्रवर्यंऋत्विक्सदस्यैर्भरतःप्रतस्थे॥ २२ ॥ सब्राह्मणस्याश्रममभ्युपै त्यमहात्मनोदेवपुरोहितस्य ॥ ददर्शरम्योटजवृक्षदेशंमहद्वनंविप्रवरस्यरम्यम् ॥२३॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोननवतितमः सर्गः ॥ ८९ ॥ भरद्वाजाश्रमंगत्वाक्रोशादेवनरर्षभः ॥ जनंसर्वमवस्थाप्यजगामसहमंत्रिभिः ॥ १ ॥ पद्भ्यामेवतुधर्मज्ञोन्यस्त शस्त्रपरिच्छदः ॥ वसानोवाससीक्षौमेपुरोधायपुरोहितम् ॥ २ ॥ ततःसंदर्शनेतस्यभरद्वाजस्यराघवः॥ मंत्रिणस्तानवस्थाप्यजगामानुपुरोहितम् ॥ ३ ॥ वसिष्ठमथदृष्ट्वैवभरद्वाजोमहातपाः ॥ संचचालासनात्तूर्णंशिष्यानर्घ्यमितिब्रुवन् ॥ ४ ॥ समागम्यवसिष्ठेनभरतेनाभिवादितः ॥ अबुध्यतम हातेजाःसुतंदशरथस्यतम् ॥ ५ ॥ ताभ्यामर्घ्यंचपाद्यंचदत्त्वापश्चात्फलानिच ॥ आनुपूर्व्याचधर्मज्ञःपप्रच्छकुशलंकुले ॥ ६ ॥ अयोध्यायांबलेकोशे मित्रेष्वपिचमंत्रिषु ॥ जानन्दशरथंवृत्तंनराजानमुदाहरत् ॥ ७ ॥ वसिष्ठोभरतश्चैनंपप्रच्छतुरनामयम् ॥ शरीरेग्निषुशिष्येषुवृक्षेषुमृगपक्षिषु ॥ ८ ॥ तथेतितुप्रतिज्ञायभरद्वाजोमहायशाः ॥ भरतंप्रत्युवाचेदंराघवस्नेहबंधनात् ॥ ९ ॥ किमिहागमनेकार्यंतवराज्यंप्रशासतः ॥ एतदाचक्ष्वसर्वंमेनहिमे शुध्यतेमनः ॥ १० ॥ सुषुवेयममित्रघ्नंकौसल्यानंदवर्धनम् ॥ भ्रात्रासहसभार्योयश्चिरंप्रव्राजितोवनम् ॥ ११ ॥ नियुक्तःस्त्रीनिमित्तेनपित्रायोसौमहाय शाः ॥ वनवासीभवेतीहसमाःकिलचतुर्दश ॥ १२ ॥ कच्चिन्नतस्यापापस्यपापंकर्तुमिहेच्छसि ॥ अकंटकंभोक्तुमनाराज्यंतस्यानुजस्यच ॥ १३ ॥ एवमुक्तोभरद्वाजंभरतःप्रत्युवाचह ॥ पर्यश्रुनयनोदुःखाद्वाचासंसज्जमानया ॥ १४ ॥ हतोस्मियदिमामेवंभगवानपिमन्यते ॥ मत्तोनदोषमाशं केमैवंमामनुशाधिहि ॥ १५ ॥

ष्ठभरताभ्याम् । आनुपूर्व्यात्क्रमेण प्रथमं ब्राह्मणस्य पश्चात्क्षत्रियस्य । कुले गृहे ॥ ६ ॥ वृत्तं अतीतं अतएव राजानं न उदाहरत् राजकुशलं न पृष्टवान् ॥ ७ ॥ शरीरादित्रयस्य यथायोगं तपःसाधनत्वात्तदना मयप्रश्नः । मृगपक्षिणामभयावस्थानद्वारा धर्मसाधनत्वाच्छिष्यवत्प्रियत्वाच्च तदनामयप्रश्नः ॥ ८ ॥ तथेति प्रतिज्ञाय अनामयमित्युक्त्वा । राघवो रामः ॥ ९ ॥ न शुध्यते न विश्वसिति ॥ १० ॥ अविश्वास बीजमाह सुषुवे इति । कौसल्या यं सुषुवे चिरं चिरकालमुद्दिश्य प्रव्राजितः ॥ ११ ॥ वनवासी भवेति नियुक्तः ॥ १२ ॥ इह वने तस्य रामस्य तस्यानुजस्य लक्ष्मणस्य च पापं कर्तुमिहेच्छसीत्यन्वयः तत्र हेतुरकंटकं असपत्नम् ॥ १३ ॥ पर्यश्रुनयनः परिस्रुतनयनः । संसज्जमानयास्खलंत्या ॥ १४ ॥ मामेवं पापमसक्तं यदि भगवान्सर्वज्ञो मन्यते तदा हतोस्मि व्यर्थजन्मास्मि । दोषं प्रव्राजनदोषं मत्तो मद्रूपनिमित्ततो नेति

माशंके स्वानुभवतो जानामि अतो मामेवं मानुशाधि मैवं कर्णकठोरं ब्रूहि ॥१५॥ ननु कथमपलापः क्रियते अत आह न चेति । मदंतरे मद्विषये यत्तु मया विनेत्यर्थइति तत्र अंतरेणेत्यव्ययस्यैव तदर्थत्वात् । मम त्ववसरवाची अंतरशब्द इति न दोषः । यन्मे मातावोचत् मदभिषेकरामवनवासादि तन्मे नेष्टम् । तदेव विवृणोति नाहमिति । एतेन मातृकृतव्यापारेण नच तद्वचनमाददे अंगीकरोमि इदानीमपीति शेषः ॥ १६ ॥ अथ स्वागमनकारणमाह अहं त्विति । प्रसादक उपयातः प्रसादयितुमागत इत्यर्थः ॥ १७ ॥ एवंगतं एवंबुद्धिं क संप्रति कस्मिन्प्रदेशे ॥ १८ ॥ याचितो भरताय प्रसन्नो भवेति प्रार्थितः । प्रसादात्प्रसादं प्राप्य ॥ १९ ॥ एतदुक्तरूपं वचस्त्वयि युक्तं तवोचितं तदेव समर्थयति गुर्विति । गुरुवृत्तिर्गुरुसेवा यतो गुरुसेवादित्रयं राघववंशजे प्रायो दृष्टमिति शेषः, यद्वा एतत्त्रयं त्वयि युक्तमि त्यन्वयः ॥ २० ॥ दृढीकरणं अन्यथाभावान्निवृत्तिः । बहूनामग्रे उक्तो ह्यर्थो नान्यथाकर्तुं शक्यते । मुख्यप्रयोजनमाह कीर्तिं समभिवर्धयन् असर्वज्ञजनं प्रतीति शेषः । हेतौ शता । कीर्त्यभिवृद्धिहेतवेऽपृच्छ

नचैतदिष्टंमातामेयदवोचन्मदंतरे ॥ नाहमेतेनतुष्टश्चनतद्वचनमाददे ॥ १६ ॥ अहंतुतंनरव्याघ्रमुपयातःप्रसादकः ॥ प्रतिनेतुमयोध्यायांपादौचास्याभिवंदितुम् ॥ १७ ॥ तंमामेवंगतंमत्वाप्रसादंकर्तुमर्हसि ॥ शंसमेभगवन्रामःक्वसंप्रतिमहीपतिः ॥ १८ ॥ वसिष्ठादिभिर्ऋत्विग्भिर्याचितोभगवांस्ततः ॥ उवाचतंभरद्वाजःप्रसादाद्भरतंवचः ॥ १९ ॥ त्वय्येतत्पुरुषव्याघ्रयुक्तंराघववंशजे ॥ गुरुवृत्तिर्दमश्चैवसाधूनांचानुयायिता ॥ २० ॥ जानेचैतन्मनःस्थंतेदृढीकरणमस्त्विति ॥ अपृच्छंत्वांतवात्यर्थंकीर्तिंसमभिवर्धयन् ॥ २१ ॥ जानेचरामंधर्मज्ञंससीतंसहलक्ष्मणम् ॥ अयंवसतितेभ्राताचित्रकूटेमहागिरौ ॥ २२ ॥ श्वस्तुगंतासितंदेशंवसाद्यसहमंत्रिभिः ॥ एतंमेकुरुसुप्राज्ञकामंकामार्थकोविद ॥ २३ ॥ ततस्तथेत्येवमुदारदर्शनःप्रतीतरूपोभरतोऽब्रवीद्वचः ॥ चकारबुद्धिंचमहाश्रमेतदानिशानिवासायनराधिपात्मजः ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे नवतितमः सर्गः ॥ ९० ॥ कृतबुद्धिंनिवासायतत्रैवसमुनिस्तदा ॥ भरतंकेकयीपुत्रमातिथ्येनन्यमंत्रयत् ॥ १ ॥ अब्रवीद्भरतस्त्वेनंनन्विदंभवताकृतम् ॥ पाद्यमर्घ्यमथातिथ्यंवनेयदुपपद्यते ॥ २ ॥ अथोवाचभरद्वाजोभरतंप्रहसन्निव ॥ जानेत्वांप्रीतिसंयुक्तंतुष्येस्त्वंयेनकेनचित् ॥ ३ ॥ सेनायास्तुतवैतस्याःकर्तुमिच्छामिभोजनम् ॥ ममप्रीतिर्यथारूपात्वमर्होमनुजर्षभ ॥ ४ ॥ किमर्थंचापिनिक्षिप्यदूरेबलमिहागतः ॥ कस्मान्नेहोपयातोसिसबलः पुरुषर्षभ ॥ ५ ॥ भरतःप्रत्युवाचेदंप्रांजलिस्तंतपोधनम् ॥ नसैन्येनोपयातोस्मिभगवन्भगवद्भयात् ॥ ६ ॥

मित्यर्थः ॥ २१ ॥ अथ रामः क्वेति प्रश्नस्योत्तरमाह जाने चेति ॥ २२ ॥ एतम् अद्य वासरूपम् । कामार्थकोविद वांछितार्थप्रदानसमर्थ ॥ २३ ॥ प्रतीतरूपः प्रसिद्धयशाः । रूपं यशस्याभिरूप्ये वर्णे चैव निरूपणे इति कोशात् । तदाश्रमे भरद्वाजाश्रमे ॥ २४ ॥ भरंनानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे नवतितमः सर्गः ॥ ९० ॥ ॥ छ ॥ कृतबुद्धिं कृतनिश्चयं आतिथ्येन विशिष्टभोजनोपेतातिथिसत्काररूपहेतुना फलमपि हेतुः ॥ १ ॥ वने यदुपपद्यते तेनातिथ्यं कृतं नन्वित्यब्रवीदित्यन्वयः ॥ २ ॥ वनवासित्वेन दरिद्रत्वादेतदधिकातिथ्यकरणेऽसामर्थ्यं मन्यत इत्याशयेन प्रहसन्निवेति । येनकेनचिदपि तुष्येः तुष्टो भवेरिति मन्ये वन्येनाप्यातिथ्येन प्रीतियुक्त इति जाने ॥ ३ ॥ अथापि सेनाया इत्यादि मम प्रीतिर्यथारूपा ममेच्छा यादृशी तथारूपां तां त्वमर्होसि अंगीकर्तुमिति शेषः ॥४॥ बलं दूरे निक्षिप्य एकाकी किमर्थमागतः [illegible] भरत इति । भगवद्भयाद्भगवदाश्रमपीडाप्रसंगभयादित्यर्थः॥६॥

त्वमहासि अंगीकर्तुमिति शेषः ॥४॥ बलं दूरं निक्षिप्य एकाकी किमर्थमागतः अयमेवार्थो व्यतिरेकमुखेन दर्श्यते कस्मादिति ॥ ५ ॥ अत्रोत्तरमाह भरत इति । भगवद्भयाद्भगवदाश्रमपीडाप्रसंगभयादित्यर्थः॥ ६॥

विषयेषु देशेषु परिहर्तव्याः तदाश्रमवर्तिवृक्षोदकादिबाधाप्रसंगनिमित्तमनुपरोध्याः ॥ ७ ॥ तदेवाह वाजीत्यादि ॥ ८ ॥ ९ ॥ परमर्षिणा श्रुतभरतवचसा । समुपागमं समीपानयनम् ॥ १० ॥ पीत्वापः परिमृज्येति । हृदयंगमाभिः द्विरोष्ठौ परिमृज्येत्सकृदाचम्येत्युक्तरीत्याचम्य । आतिथ्यक्रियाहेतोः आतिथ्यसंपादननिमित्तम् । विश्वकर्मा सृष्टिकर्तृविशेषः ॥ ११ ॥ आह्वानप्रकारमाह आह्वये इति । त्वष्टारं तक्षणादिव्यापारोपेतं विश्वकर्माणम् । संविधीयतां विश्वकर्मसाध्यगृहादि सर्वं सिद्धं क्रियताम् ॥ १२ ॥ त्रीन्यमवरुणकुबेरानिति तीर्थैः । कार्यविशेषेष्वेषामपि नियोगो बोध्यः ॥ १३ ॥ अंतरिक्षे नदी आकाशगंगा ॥ १४ ॥ तासां कृत्यमाह अन्या इति । मैरेयं मद्यभेदः । धात्री धातकीप्रभृतिनिर्मितः । सुरा गौडी माध्वी पैष्टीचेति त्रिविधा । सुनिष्ठितां सुनिष्पादिताम् । इक्षुकांडरसोपमं तद्वन्मधुरम् ॥ १५ ॥

राज्ञाहिभगवन्नित्यंराजपुत्रेणवातथा ॥ यत्नतःपरिहर्तव्याविषयेषुतपस्विनः ॥ ७ ॥ वाजिमुख्यामनुष्याश्चमत्ताश्चवरवारणाः ॥ प्रच्छाद्यभगवन्भूमिंमहतीमनयांतिमाम् ॥ ८ ॥ तेवृक्षानुदकंभूमिमाश्रमेषूटजांस्तथा ॥ नहिंस्युरितितेनाहमेकएवागतस्ततः ॥ ९ ॥ आनीयतामितःसेनेत्याज्ञप्तः परमर्षिणा ॥ तथानुचक्रेभरतःसेनायाःसमुपागमम् ॥ १० ॥ अग्निशालांप्रविश्याथपीत्वापःपरिमृज्यच ॥ आतिथ्यस्यक्रियाहेतोर्विश्वकर्माणमाह्वयत ॥ ११ ॥ आह्वयेविश्वकर्माणमहंत्वष्टारमेवच ॥ आतिथ्यंकर्तुमिच्छामितत्रमेसंविधीयताम् ॥ १२ ॥ आह्वयेलोकपालांस्त्रीन्देवाञ्छक्रपुरोगमान् ॥ आतिथ्यंकर्तुमिच्छामितत्रमेसंविधीयताम् ॥ १३ ॥ प्राक्स्रोतसश्चयानद्यस्तिर्यक्स्रोतसएवच ॥ पृथिव्यामंतरिक्षेचसमायांत्वद्यसर्वशः ॥ १४ ॥ अन्याःस्रवंतुमैरेयंसुरामन्याःसुनिष्ठिताम् ॥ अपराश्चोदकंशीतमिक्षुकांडरसोपमम् ॥ १५ ॥ आह्वयेदेवगंधर्वान्विश्वावसुहहाहुहून् ॥ तथैवाप्सरसोदेवगंधर्वीश्चापिसर्वशः ॥ १६ ॥ घृताचीमथविश्वाचींमिश्रकेशीमलंबुषाम् ॥ नागदत्तांचहेमांचसोमामद्रिकृतस्थलीम् ॥ १७ ॥ शक्रंयाश्चोपतिष्ठंतिब्रह्माणंयाश्चभामिनीः ॥ सर्वास्तुंबुरुणासार्धमाह्वयेसपरिच्छदाः ॥ १८ ॥ वनंकुरुषुयद्दिव्यंवासोभूषणपत्रवत् ॥ दिव्यनारीफलंशश्वत्तत्कौबेरमिहैवतु ॥ १९ ॥ इहमेभगवान्सोमोविधत्तामन्नमुत्तमम् ॥ भक्ष्यंभोज्यंचचोष्यंचलेह्यंचविविधंबहु ॥ २० ॥ विचित्राणिचमाल्यानिपादपप्रच्युतानिच ॥ सुरादीनिचपेयानिमांसानिविविधानिच ॥ २१ ॥ एवंसमाधिनायुक्तस्तेजसाप्रतिमेनच ॥ शिक्षास्वरसमायुक्तंसुव्रतश्चाब्रवीन्मुनिः ॥ २२ ॥

हहा हाहुः । छंदोवशात् ह्रस्वपाठः ॥ १६ ॥ १७ ॥ सपरिच्छदाः सालंकाराः । नृत्यगीताद्यपेक्षितपरिकरोपेताश्च । ब्राह्मणमितिपाठे बृहस्पतिं या उपतिष्ठंतीत्यनुकर्षं इति कतकः । ताः सर्वा भामिनीराह्वये इति संबंधः ॥ १८ ॥ कुरुषु उत्तरकुरुषु यद्दिव्यं वनं चैत्ररथाख्यम् । दिव्यत्वोपपादकं वासो भूषणान्येव पत्राणि यद्वर्तिवृक्षाणां तद्दिव्यनार्य एव फलानि यत्र तत् । इहैव तु इह वने एवागच्छतु इति शेषः । इहैतु वै इति पाठांतरम् । तद्देवताधिष्ठानादिदमेव वनं तथा भवत्वित्यर्थः ॥ १९ ॥ २० ॥ पादपप्रच्युतानि वृक्षेभ्यः स्वयंजातानि ॥ २१ ॥ शिक्षास्वरसमायुक्तं शिक्षाप्रतिपाद्यवर्णोच्चारणलक्षणोपेतम् । तथा व्याकरणोपदिश्यमानप्रकृतिप्रत्ययस्वरोपेतम् । स्वरेत्युपलक्षणम् । एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीत्युक्तेः । समाधितेजस्तपोभिर्युक्त एवंगुणोपेतमाह्वानवाक्यमब्रवीदित्यर्थः ।

महर्षेस्तपोबलात्स्वर्गे कामधुक्त्वेन प्रसिद्धादपि वचनादिहैव सर्वं सिद्धमिति भावः ॥ २२ ॥ मनसा ध्यायतः मनसा ध्यानपूर्वककृताह्वानस्य तानि आहूतानि ॥ २३ ॥ मलयदर्दुरौ चंदनपर्वतौ । उपस्पृश्य स्पृष्ट्वा युक्त्या यथोचितवृत्त्या शैत्यमांद्यसौरभयोगेन सुप्रियात्मा सुप्रियस्वरूपः अतएव शिवः सुखदः ईदृशोऽनिलः सुखं ववौ ॥ २४ ॥ घना मेघाः ॥ २५ ॥ वीणा वाद्यमाना इति शेषः स्वरान् षड्जादीन् ॥ २६ ॥ लयो वृत्तगीतानुगततालप्रमाणम् ॥ २७ ॥ भरतस्येदं भारतं सैन्यं विश्वकर्मणो विधानं ददर्श ॥ २८ ॥ तदेव विधानं दर्शयति बभूवेत्यादि छन्ना बभूवेत्यनुकर्षः । शाद्वलं कोमलतृणमत्र ॥ २९ ॥ तस्मिन्पंचयोजनमिते देशे फलभूषिताः कपित्थादयो बभूवुरित्यन्वयः ॥ ३० ॥ वनं चैत्ररथम् नदी जातावेकवचनम् । तीरजैर्वृक्षैः ॥ ३१ ॥ चतुःशालानि शुभ्राणि गृहाणि जातानीति शेषः । तथा गजादीनां शालाश्च जाताः तोरणानि पुरद्वाराणि ॥ ३२ ॥ सितमेघनिभं सुधालेपेन शुक्लमाल्यैः कृत आकारो यस्य दिव्यैर्गंधैर्गंधवज्जलैरुक्षितं सिक्तम् ॥ ३३ ॥ यानं शिबिकादि ॥ ३४ ॥ धौतत्वेनः

मनसाध्यायतस्तस्यप्राङ्मुखस्यकृतांजलेः ॥ आजग्मुस्तानिसर्वाणिदैवतानिपृथक्पृथक् ॥ २३ ॥ मलयंदर्दुरंचैवततःस्वेदनुदोऽनिलः ॥ उपस्पृश्यववौयुक्त्यासुप्रियात्मासुखंशिवः ॥ २४ ॥ ततोभ्यवर्षंतघनादिव्याःकुसुमवृष्टयः ॥ देवदुंदुभिघोषश्चदिक्षुसर्वासुशुश्रुवे ॥ २५ ॥ प्रववुश्चोत्तमावातानन्नृतुश्चाप्सरोगणाः ॥ प्रजगुर्देवगंधर्वावीणाःप्रमुमुचुःस्वरान् ॥ २६ ॥ सशब्दोद्यांचभूमिंचप्राणिनांश्रवणानिच ॥ विवेशोच्चावचःश्लक्ष्णःसमोलयगुणान्वितः ॥ २७ ॥ तस्मिन्नेवंगतेशब्देदिव्येश्रोत्रसुखेनृणाम् ॥ ददर्शभारतंसैन्यंविधानंविश्वकर्मणः ॥ २८ ॥ बभूवहिसमाभूमिःसमंतात्पंचयोजनम् ॥ शाद्वलैर्बहुभिश्छन्नानीलवैदूर्यसन्निभैः ॥ २९ ॥ तस्मिन्बिल्वाःकपित्थाश्चपनसाबीजपूरकाः ॥ आमलक्योबभूवुश्चचूताश्चफलभूषिताः ॥ ॥ ३० ॥ उत्तरेभ्यःकुरुभ्यश्चवनंदिव्योपभोगवत् ॥ आजगामनदीसौम्यातीरजैर्बहुभिर्वृता ॥ ३१ ॥ चतुःशालानिशुभ्राणिशालाश्चगजवाजिनाम् ॥ हर्म्यप्रासादसंयुक्ततोरणानिशुभानिच ॥ ३२ ॥ सितमेघनिभंचापिराजवेश्मसुतोरणम् ॥ शुक्लमाल्यकृताकारंदिव्यगंधसमुक्षितम् ॥ ३३ ॥ चतुरस्रमसंबाधंशयनासनयानवत् ॥ दिव्यैःसर्वरसैर्युक्तंदिव्यभोजनवस्त्रवत् ॥ ३४ ॥ उपकल्पितसर्वान्नंधौतनिर्मलभाजनम् ॥ क्लृप्तसर्वासनंश्रीमत्स्वास्तीर्णशयनोत्तमम् ॥ ३५ ॥ प्रविवेशमहाबाहुरनुज्ञातोमहर्षिणा ॥ वेश्मतद्रत्नसंपूर्णंभरतःकैकयीसुतः ॥ ३६ ॥ अनुजग्मुश्चतेसर्वेमंत्रिणःसपुरोहिताः ॥ बभूवुश्चमुदायुक्तास्तंदृष्ट्वावेश्मसंविधिम् ॥ ३७ ॥ तत्रराजासनंदिव्यंव्यजनंछत्रमेवच ॥ भरतोमंत्रिभिःसार्धमभ्यवर्ततराजवत् ॥ ३८ ॥ आसनंपूजयामासरामायाभिप्रणम्यच ॥ वालव्यजनमादायन्यषीदत्साचिवासने ॥ ३९ ॥

प्रक्षालितत्वेन निर्मलानि भाजनानि यस्मिन् ॥ ३५ ॥ ३६ ॥ वेश्मसंविधिं वेश्मसंविधानम् ॥ ३७ ॥ राजासनं सिंहासनम् राजवद्राजयोग्यम् तदभ्यवर्तत प्रदक्षिणीकृतवान् ॥ ३८ ॥ ननु तत्रोपविष्ट इत्याह आसनं पूजयामासेति । रामचंद्रीयमेतदितिबुद्ध्या रामाय प्रणम्य आसनोपरि प्रतिष्ठितं रामं ध्यात्वेति शेषः । वालव्यजनमादाय रामसेवाशेषतयेति शेषः । सचिवासने सचिवार्थक्लृप्तासने सिंहासनाधस्तले अत्रेदं बोध्यम् भरतेन वाचोक्तमपि राज्यानभिलाषं लोका न श्रद्दध्युरतः क्रिययापि सर्वलोकप्रत्यायनाय महर्षिणा तपोव्ययेनापीदृशमातिथ्यकरणम् किंच पुष्पादिभिः पूजेवेयमपि क्रिया विष्णोरंशभूतभरततुष्टये इति तत्करणम् किंच भरतं प्रति त्वं दुष्टबुद्ध्यागतोसि किमिति प्रश्ने तस्य ऋषेरसर्वज्ञत्वासामर्थ्यादिशंकावारणाय स्वसामर्थ्यदर्शनम् । अपिच भगवदेकचित्तानां स्वर्गसुखमिहापि भवतीति भगवद्रामप्रीति

माहात्म्यं प्रदर्शयितुं तद्दर्शनेन च तेषां तत्राधिकां प्रीतिमुत्पादयितुं तथाकरणं मुनेरिति दिक् ॥ ३९ ॥ आनुपूर्व्याद्यथोचितोपवेशनप्रकारेण प्रशास्ताशिबिररक्षकः ॥ ४० ॥ ४१ ॥ उभयतः कूलं उभयोः कूलयोः पांडुमृत्तिकालेपनाः सुधालिप्ताः ब्राह्मणस्य भरद्वाजस्य ॥ ४२ ॥ आगुरागतवत्यः ॥ ४३ ॥ सुवर्णमणिमुक्तेनेति समाहारद्वंद्वः ॥ ४४ ॥ गृहीतो दर्शनादिनात्मवशीकृतः सोन्मादः उद्भूतसंतोषसहित इत्यर्थः । नंदनमिंद्रवनम् ॥ ४५ ॥ नारदादयो गंधर्वराजाः कांत्या सूर्यसमा ययुः ॥ ४६ ॥ ४७ ॥ प्रयागे प्रयागक्षेत्रे ॥ ४८ ॥ बिल्वा बिल्ववृक्षा मार्दंगिका मृदंगवादकरूपधराः एवं बिभीतकाः शम्याख्यतालग्राहकाः । वह्नौ तालविशेषे च शमे तालक्रियांतरे शम्या यज्ञायुधे इति ॥ ४९ ॥ सरलो देवदारुविशेषः ॥ ५० ॥ शिंशपादयो ये स्त्रीलिंगशब्दवाच्या वृक्षाः लता मल्लिकामालत्यादयः मुनेस्त

आनुपूर्व्यान्निषेदुश्चसर्वेमंत्रिपुरोहिताः ॥ ततःसेनापतिःपश्चात्प्रशास्ताचन्यषीदत ॥ ४० ॥ ततस्तत्रमुहूर्तेननद्यःपायसकर्दमाः ॥ उपातिष्ठंतभरतं भरद्वाजस्यशासनात् ॥ ४१ ॥ आसामुभयतःकूलंपांडुमृत्तिकलेपनाः ॥ रम्याश्चावसथादिव्याब्राह्मणस्यप्रसादजाः ॥ ४२ ॥ तेनैवचमुहूर्तेनदि व्याभरणभूषिताः ॥ आगुर्विंशतिसाहस्राब्रह्मणाप्रहिताःस्त्रियः ॥ ४३ ॥ सुवर्णमणिमुक्तेनप्रवालेनचशोभिताः ॥ आगुर्विंशतिसाहस्राःकुबेरप्रहिताः स्त्रियः ॥ ४४ ॥ याभिर्गृहीतःपुरुषःसोन्मादइवलक्ष्यते ॥ आगुर्विंशतिसाहस्रानंदनादप्सरोगणाः ॥ ४५ ॥ नारदस्तुंबुरुर्गोपःप्रभयासूर्यवर्चसः ॥ एतेगंधर्वराजानोभरतस्याग्रतोजगुः ॥ ४६ ॥ अलंबुषामिश्रकेशीपुंडरीकाथवामना ॥ उपानृत्यंतभरतंभरद्वाजस्यशासनात् ॥ ४७ ॥ यानिमाल्या निदेवपुयानिचैत्ररथेवने ॥ प्रयागेतान्यदृश्यंतभरद्वाजस्यतेजसा ॥ ४८ ॥ बिल्वामार्दंगिकाआसन्शम्याग्राहाबिभीतकाः ॥ अश्वत्थानर्तकाश्चासन् भरद्वाजस्यतेजसा ॥ ४९ ॥ ततःसरलतालाश्चतिलकाःसतमालकाः ॥ प्रहृष्टास्तत्रसंपेतुःकुब्जाभूत्वाथवामनाः ॥ ५० ॥ शिंशपामलकीजंबूर्याश्चा न्याःकाननेलताः ॥ प्रमदाविग्रहंकृत्वाभरद्वाजाश्रमेऽवसन् ॥ ५१ ॥ सुरांसुरापाःपिबतपायसंचबुभुक्षिताः ॥ मांसानिचसुमेध्यानिभक्ष्यंतांयोय दिच्छति ॥ ५२ ॥ उच्छोद्यस्नापयंतिस्मनदीतीरेषुवल्गुषु ॥ अप्येकमेकंपुरुषंप्रमदाःसप्तचाष्टच ॥ ५३ ॥ संवाहंत्यःसमापेतुर्नार्योविपुललोचनाः ॥ परिमृज्यतदान्योन्यंपाययंतिवरांगनाः ॥ ५४ ॥ हयान्गजान्खरानुष्ट्रांस्तथैवसुरभेःसुतान् ॥ अभोजयन्वाहनपास्तेषांभोज्यंयथाविधि ॥ ५५ ॥ इक्षूंश्चमधुलाजांश्चभोजयंतिस्मवाहनान् ॥ इक्ष्वाकुवरयोधानांचोदयंतोमहाबलाः ॥ ५६ ॥ नाश्वबंधोश्वमाजानान्नगजंकुंजरग्रहः ॥ मत्तप्रमत्तमु दितासाचमूस्तत्रसंबभौ ॥ ५७ ॥

पोमाहात्म्यादेव वृक्षादीनां तत्तद्रूपतापत्तिः पुनर्लतादिरूपप्रत्यापत्तिश्चेति मंतव्यम् ॥ ५१ ॥ तत्र प्रमदारूपं धृत्वा किं कुर्युस्तदाह सुरामिति । एवमूचुरिति शेषः ॥ ५२ ॥ उच्छोद्य उद्वर्तनं कृत्वा एकमेकं पुरुषम् । अत्रैकं बहुव्रीहिवदिति बहुव्रीहिवद्भावाभाव आर्षः ॥ ५३ ॥ संवाहंत्यः पादसंवाहनादि कर्वत्यः परिमृज्य जलार्द्रमंगं वस्त्रादिना परिमृज्य अलंकृत्य च पाययंति मध्वादिकमिति शेषः ॥ ५४ ॥ सुरभेः सुता वृषभाः तेषां हयादीनां भोज्यं तांस्तत्तत्पालकाः अभोजयन्नित्यर्थः ॥ ५५ ॥ इक्ष्वाकुवरयोधानां वाहनानि चोदयंतः भक्षणाय प्रेरयंतः तान् इक्ष्वादीन् भोजयंति स्म ॥ ५६ ॥ मत्ता मदकरद्रव्यसेवया प्रमत्ता

मधुपानेन कार्याकार्यविवेकशून्या मुदिता स्रक्चंदनस्त्र्यादिभोगेन ॥५७॥ सैन्याः सेनासमवेताः उदीरयन् उदैरयन् ॥ ५८॥ तां वाचमाह नैवेति । न गमिष्यामेत्यार्षः सलोपः । भरतस्य कुशलमस्तु यत्संगत्या भूमौ स्वर्गसुखलाभः ॥५९॥ हस्त्यश्वारोहास्तद्बंधकाश्च पादातरूपयोधाः चेन रथिकसंग्रहः । तं विधिं तादृशसत्कारं अनाथा अपरतंत्रा इवेत्यर्थ इति कतकः । अयाचका इत्यर्थ इत्यन्ये । वक्तॄणामतिहर्षयुक्ततया कवेरपि वर्णनीयमयी भावात्पुनरुक्तिर्न दोषाय ॥ ६० ॥ विनादः प्रहृष्टानां शब्दविशेषः ॥ ६१ ॥ ६२ ॥ अभवद्भक्षणे मतिः कृप्तानामपि भक्ष्यसौष्ठवात्पुनराकांक्षाभूदित्यर्थः ॥६३॥ प्रेष्याः सेवकाः चेट्यो दास्यः बलस्थाः सेनास्थाः अहतवाससः नूतनवस्त्रपरीधानाः ॥ ६४ ॥ अतो मुनिदत्तादन्यपदार्थं नाकल्पयन् नाभुंजन्नित्यर्थः । नान्योह्यन्यमकल्पयदितिपाठे हिरप्यर्थे । अन्योपि सेनामंतर्गतोपि मार्गस्थः प्रसंगात्तद्देशमागतः अन्यं ऋषिकल्पितादन्यं पदार्थं नाकल्पयत् न भुक्तवानित्यर्थः । अनेनात्याधिक्यं सामग्र्याः सूचितम् ॥ ६५ ॥ ६६ ॥ निष्ठानं व्यंजनं ज्ञेयमिति हलायुधः । आम्रादिफलसंबंधिकथितरससिद्धैरिति आजादिविशेषणं

तर्पिताःसर्वकामैश्चरक्तचंदनरूषिताः ॥ अप्सरोगणसंयुक्ताःसैन्यावाचमुदीरयन् ॥ ५८ ॥ नैवायोध्यांगमिष्यामोनगमिष्यामदंडकान् ॥ कुशलं भरतस्यास्तुरामस्यास्तुतथासुखम् ॥ ५९ ॥ इतिपादातयोधाश्चहस्त्यश्वारोहबंधकाः ॥ अनाथास्तंविधिंलब्ध्वावाचमेतामुदीरयन् ॥ ६० ॥ संप्रहृष्टाविनेदुस्तेनरास्तत्रसहस्रशः ॥ भरतस्यानुयातारःस्वर्गोयमितिचाब्रुवन् ॥ ६१ ॥ नृत्यंतश्चहसंतश्चगायंतश्चैवसैनिकाः ॥ समंतात्परिधावंतोमाल्योपेताःसहस्रशः ॥ ६२ ॥ ततोभुक्तवतांतेषांतदन्नममृतोपमम् ॥ दिव्यानुद्वीक्ष्यभक्ष्यांस्तानभवद्भक्षणेमतिः ॥ ६३ ॥ प्रेष्याश्चेट्यश्चवध्वश्चबलस्थाश्चापिसर्वशः ॥ बभूवुस्तेभृशंप्रीताःसर्वेचाहतवाससः ॥ ६४ ॥ कुंजराश्चखरोष्ट्राश्चगोश्वाश्चमृगपक्षिणः ॥ बभूवुःसुभृतास्तत्रनातोह्यन्यमकल्पयन् ॥ ॥ ६५ ॥ नाशुक्लवासास्तत्रासीत्क्षुधितोमलिनोपिवा ॥ रजसाध्वस्तकेशोवानरःकश्चिददृश्यत ॥ ६६ ॥ आजैश्चापिचवाराहैर्निष्ठानवरसंचयैः ॥ फलनिर्यूहसंसिद्धैःसूपैर्गंधरसान्वितैः ॥ ६७ ॥ पुष्पध्वजवतीःपूर्णाःशुक्लस्यान्नस्यचाभितः ॥ ददृशुर्विस्मितास्तत्रनरालौहीःसहस्रशः ॥ ६८ ॥ बभूवुर्वनपार्श्वेषुकूपाःपायसकर्दमाः ॥ ताश्चकामदुघागावोद्रुमाश्चासन्मधुश्च्युतः ॥६९॥ वाप्योमैरेयपूर्णाश्चमृष्टमांसचयैर्वृताः ॥ प्रतप्तपैठरैश्चापिमार्गमायूरकौक्कुटैः ॥ ७० ॥ पात्रीणांचसहस्राणिस्थालीनांनियुतानिच ॥ न्यर्बुदानिचपात्राणिशातकुंभमयानिच ॥ ७१ ॥ स्थाल्यःकुंभ्यःकरंभ्यश्चदधिपूर्णाःसुसंस्कृताः ॥ यौवनस्थस्यगौरस्यकपित्थस्यसुगंधिनः ॥ ७२ ॥

गंधरसान्वितैरिति च । वार्यापींडे क्वाथरसे निर्यूहो नागदंतके इति वैजयंती । एतै राजादिभिः पूर्णा लौहीः स्वर्णरजतादिपात्रीर्ददृशुरित्यन्वयः । लोहशब्दः पंचलोहसाधारणः पात्रीणां विशेषणं शोभार्थम् कल्पितपुष्पध्वजयुक्ताः अभितः शुक्लस्यान्नस्यौदनस्य च पूर्णाः पात्रीर्ददृशुः ॥ ६७ ॥ ६८ ॥ वनपार्श्वेषु चैत्ररथवनवत् प्रतिभासमानः वनप्रदेशेषु पंचयोजनमितेषु तत्रत्याः कूपाः पायसकर्दमा बभूवुः तत्रत्या गावश्च कामदुघाः बभूवुः ॥ ६९ ॥ निषादादिबलतृप्त्यर्थं प्रतापमात्रेण संस्कार्याः प्रतप्तास्तथा पिठरः कपालं तेतु संस्कृताः पक्वा पैठरास्तैर्मृगादिसंबंधिमांसचयैर्वृताः ॥ ७० ॥ पात्रीणां अन्नाधाराणाम् स्थालीनाम् व्यंजनस्थालीनाम् पात्राणि भोजनपात्राणीति कतकः । पात्राणां हस्तप्रक्षालनाद्युपयुक्तानाम् स्थालीनां क्षुद्रजनपानपात्राणामिति तीर्थः ॥ ७१ ॥ कुंभ्यः स्थाल्यः जलपानपात्रविशेषाः करंभ्यो दधिमंथनपात्राणि यौवनस्थस्य

मथनोत्तरं यामांतरितस्य सुपक्वस्यच केशरादिसंबंधात् गौरस्य पीतवर्णस्य । पीतो गौरो हरिद्राभः । कपित्थस्य तक्रस्य सुगंधिनः तादृशद्रव्यसंयुक्तस्य ॥ ७२ ॥ ह्रदाः पूर्णा इति पूर्वान्वयि । तथा रसालस्य तक्रविशेषस्य । अपक्वतक्रं सव्योषं चतुर्जातं गुडार्द्रकम् । सजीरकं रसालं स्यान्मंजिका शिखरिण्यपीति वैजयंती । तक्रमत्र निर्जलम् व्योषं शुंठीमरीचिपिप्पल्यः । चतुर्जातम् त्रिगंधमेलात्वक्पत्रैश्चतुर्जातं सकेसरैरिति शार्ङ्गधरे । पत्रं तजपत्रम् गुडः खंडशर्करा आर्द्रकं प्रसिद्धम् तस्य च पूर्णा ह्रदाः श्वेतस्य दध्नश्चापरे पयसोन्ये पूर्णा ह्रदा इत्यनुषंगः । शर्कराणां च संचयाः राशयः ॥ ७३ ॥ कल्कान् आमलकादीनाम् चूर्णकषायान्सुरभिचूर्णानि कषायोथ सुरभौ लोहितेपि च । चूर्णकषायानलदादिचूर्णकथितकषाया इति कतकः । स्नानानि स्नानार्थानि उष्णोदकानि तदर्थान्यन्यद्रव्याणि च सरितां तीर्थेषु स्नानघटेषु ॥ ७४ ॥ शुक्लान्निर्मलानंशुमतः अग्रे कूर्चवतो दंतधावनानां अपामार्गादिकाष्ठानां संचयान् चंदनकल्कान् घृष्टचंदनान् समुद्गेषु संपुटेषु ददृशुरिति संबंधः ॥ ७५ ॥ पादुकोपानहम् पादुका दार्वादिनिर्मिताः उपानहश्चर्मादि

ह्रदाःपूर्णारसालस्यदध्नःश्वेतस्यचापरे ॥ बभूवुःपयसश्चान्येशर्कराणांचसंजयाः ॥ ७३ ॥ कल्कांश्चूर्णकषायांश्चस्नानानिविविधानिच ॥ ददृशुर्भाजनस्थानितीर्थेषुसरितांनराः ॥ ७४ ॥ शुक्लानंशुमतश्चापिदंतधावनसंचयान् ॥ शुक्लांश्चंदनकल्कांश्चसमुद्गेष्ववतिष्ठतः ॥ ७५ ॥ दर्पणान्परिमृष्टांश्चवाससांचापिसंचयान् ॥ पादुकोपानहंचैवयुग्मान्यत्रसहस्रशः ॥ ७६ ॥ आंजनीःकंकतान्कूर्चांश्छत्राणिचधनूंषिच ॥ मर्मत्राणानिचित्राणिशयनान्यासनानिच ॥ ७७ ॥ प्रतिपानह्रदान्पूर्णान्खरोष्ट्रगजवाजिनाम् ॥ अवगाह्यसुतीर्थांश्चह्रदान्सोत्पलपुष्करान् ॥ ७८ ॥ आकाशवर्णप्रतिमान्स्वच्छतोयान्सुखाप्लवान् ॥ नीलवैदूर्यवर्णांश्चमृदून्यवससंचयान् ॥ ७९ ॥ निर्वापार्थंपशूनांतेददृशुस्तत्रसर्वशः ॥ व्यस्मयंतमनुष्यास्तेस्वप्नकल्पंतदद्भुतम् ॥ ८० ॥ दृष्ट्वातिथ्यंकृतंतावद्भरद्वाजमहर्षिणा ॥ इत्येवंरममाणानांदेवानामिवनंदने ॥ ८१ ॥ भरद्वाजाश्रमेरम्येसारात्रिर्व्यत्यवर्तत ॥ प्रतिजग्मुश्चताःसर्वागंधर्वाश्चयथागतम् ॥ भरद्वाजमनुज्ञाप्यताश्चसर्वावरांगनाः ॥८२॥ तथैवमत्तामदिरोत्कटानरास्तथैवदिव्यागुरुचंदनोक्षिताः ॥ तथैवदिव्याविविधाःस्रगुत्तमाःपृथग्विकीर्णामनुजैःप्रमर्दिताः ॥ ८३ ॥ इत्यार्षे श्रीमद्रामायणे वा०आ०अयोध्याकांडे एकनवतितमः सर्गः ॥९१॥

ततस्तांरजनींव्युष्यभरतःसपरिच्छदः ॥ कृतातिथ्योभरद्वाजंकामादभिजगामह ॥ १ ॥ तमृषिःपुरुषव्याघ्रंप्रेक्ष्यप्रांजलिमागतम् ॥ हुताग्निहोत्रोभरतंभरद्वाजोभ्यभाषत ॥ २ ॥ कच्चिदत्रसुखारात्रिस्तवास्मद्विषयेगता ॥ समग्रस्तेजनःकच्चिदातिथ्येशंसमेनघ ॥ ३ ॥

कृताः । समाहारे टच् समासांतः ॥ ७६ ॥ आंजनीः अंजनयुक्तकरंडिकाः कंकतान्केशमार्जनानि कुर्चान् श्मश्रुप्रसाधकान् मर्मत्राणानि कवचानि ॥ ७७ ॥ भुक्तजरणार्थं यत्पीयते तत्प्रतिपानं खरादीनामवगाहनयोग्यसुखावतारान्सोत्पलसहितान् ह्रदान्ददृशुरिति संबंधः ॥ ७८ ॥ आकाशेत्याद्यर्धं पूर्वान्वयि । उपाधिविशेषान्नीलवर्णानित्यर्थः । सुखेनाप्लवः स्नानं येषु तान् यवसं तृणम् ॥ ७९ ॥ निर्वापार्थं भक्षणार्थं स्वप्नकल्पं मर्त्यदुर्लभं द्रागुत्पन्नविचित्रपदार्थत्वात् ॥ ८० ॥ ८१ ॥ ताः सर्वा अप्सरसः अनुज्ञाप्य दत्तानुमतिकं कृत्वा ॥ ८२ ॥ स्वप्नादिवदेतद्दर्पिकृतमातिथ्यं मिथ्या नेति दर्शयाति तथैवेति । मत्ताः हृष्टाः मदिरया उत्कटाः प्रमत्ताः । मत्ते शौंडोत्कटक्षीबाः । तथैव अनुभवकाल इव वर्तंत इति शेषः । स्रक्षूत्तमाः स्रगुत्तमाः उपभोगवशात्प्रकीर्णाः प्रमर्दिताश्च ॥ ८३ ॥ गर्जमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकनवतितमः सर्गः ॥ ९१ ॥ व्युष्य उषित्वा सपरिच्छदः सपरिवारः कामाद्ग्रामप्राप्तिकामात् ॥ १ ॥ २ ॥ अस्मद्विषये अस्मदाश्रमे सुखा सुखकरा

आतिथ्ये ते जनः समग्रः सम्यक्तृप्तिकः अभूदिति शेषः । अनेन हि तप एव महत्सर्वेष्टसाधनम् नतु राज्यादीति ऋषिणा बोधितो भरतः ॥ ३ ॥ जनसमूहस्य बहुत्वात्सर्वेषां स्वदर्शनेन कृतकृत्यत्वायाश्रमान्नि ष्क्रांतमृषिमुवाच ॥ ४ ॥ बलवदत्यंतं बलवान्सेनासहितः ॥ ५ ॥ क्लमो ग्लानिः संतापो देहौष्ण्यं अपि मेष्यानुपादाय मेष्यानप्यादाय तैरपि सहेत्यर्थः । सुभिक्षाः सुसमृद्धान्नपानाः सुप्रतिश्रयाः शोभनावासाः ॥ ६ ॥ आमंत्रये पृच्छामि कामं अधिकं मैत्रेण स्निग्धेन ॥ ७ ॥ तस्य रामस्य कियान्कियद्दूरदेशे कतमस्तस्य मार्ग इति शंस ॥ ८ ॥ ९ ॥ अर्धतृतीययोजनेषु सार्धयोजनद्वयेतीते इत्यर्थः । निर्दरा विदीर्णाः पाषाणाः । वर्तत इति शेषः ॥ १० ॥ मंदाकिनी तदाख्या काचिन्नदी चित्रकूटोत्तरपार्श्वे प्राप्य तिष्ठतीति शेषः ॥ ११ ॥ तस्या अनंतरं तत्परपार्श्वे चित्रकूटं पर्वतं तयो रामलक्ष्मणयोः पर्णकुटीं च द्रक्ष्यसि

तमुवाचांजलिंकृत्वाभरतोभिप्रणम्यच ॥ आश्रमादुपनिष्क्रांतमृषिमुत्तमतेजसम् ॥ ४ ॥ सुखोषितोस्मिभगवन्समग्रबलवाहनः ॥ बलवत्तर्पितश्चाहं बलवान्भगवंस्त्वया ॥ ५ ॥ अपेतक्लमसंतापाःसुभिक्षाःसुप्रतिश्रयाः ॥ अपिप्रेष्यानुपादायसर्वेस्मसुसुखोषिताः ॥ ६ ॥ आमंत्रयेहंभगवन्कामंत्वामृषिसत्तम ॥ समीपंप्रस्थितंभ्रातुर्मैत्रेणेक्षस्वचक्षुषा ॥ ७ ॥ आश्रमंतस्यधर्मज्ञधार्मिकस्यमहात्मनः ॥ आचक्ष्वकतमोमार्गःकियानितिचशंससे ॥ ॥ ८ ॥ इतिपृष्टस्तुभरतंभ्रातुर्दर्शनलालसम् ॥ प्रत्युवाचमहातेजाभरद्वाजोमहातपाः ॥ ९ ॥ भरतार्धतृतीयेषुयोजनेष्वजनेवने ॥ चित्रकूटगिरिस्तत्ररम्यनिर्दरकाननः ॥ १० ॥ उत्तरंपार्श्वमासाद्यतस्यमंदाकिनीनदी ॥ पुष्पितद्रुमसंछन्नारम्यपुष्पितकानना ॥ ११ ॥ अनंतरंतत्सरिताश्चित्रकूटंचपर्वतम् ॥ तयोःपर्णकुटींताततत्रतौवसतोध्रुवम् ॥ १२ ॥ दक्षिणेनचमार्गेणसव्यदक्षिणमेवच ॥ गजवाजिसमाकीर्णांवाहिनींवाहिनीपते ॥ १३ ॥ वाहयस्वमहाभागततोद्रक्ष्यसिराघवम् ॥ प्रयाणमितिचश्रुत्वाराजराजस्ययोषितः ॥ १४ ॥ हित्वायानानियानार्हाब्राह्मणंपर्यवारयन् ॥ वेपमाना कृशादीनासहदेव्यासुमित्रया ॥ १५ ॥ कौसल्यातत्रजग्राहकराभ्यांचरणौमुनेः ॥ असमृद्धेनकामेनसर्वलोकस्यगर्हिता ॥ १६ ॥ कैकेयीतत्रजग्राहचरणौसव्यपत्रपा ॥ तंप्रदक्षिणमागम्यभगवंतंमहामुनिम् ॥ १७ ॥ अदूराद्भरतस्यैवतस्थौदीनमनास्तदा ॥ तत्रपप्रच्छभरतंभरद्वाजोमहामुनिः ॥ १८ ॥ विशेषंज्ञातुमिच्छामिमातॄणांतवराघव ॥ एवमुक्तस्तुभरतोभरद्वाजेनधार्मिकः ॥ १९ ॥ उवाचप्रांजलिर्भूत्वावाक्यंवचनकोविदः ॥ यामिमांभगवन्दीनांशोकानशनकर्शिताम् ॥ २० ॥ पितुर्हिमहिषींदेवींदेवतामिवपश्यसि ॥ एषातंपुरुषव्याघ्रंसिंहविक्रांतगामिनम् ॥ २१ ॥ कौसल्यासुषुवेरामंधातारमदितिर्यथा ॥ अस्यावामभुजंश्लिष्टायासातिष्ठतिदुर्मनाः ॥ २२ ॥

तत्र पर्वते वसतः ध्रुवं निश्चयेन ॥ १२ ॥ दक्षिणेनैव मार्गेण यमुनाया दक्षिणतीरमार्गेणैव गत्वा किंचिद्दूरं ततः पश्चात्सव्यदक्षिणं तस्य मार्गस्य शाखामार्गयोः सव्यभागवर्ती यो दक्षिणदिग्गामी मार्गोस्ति तं मार्गं वाहिनीं वाहयस्व नत्वन्यं शाखामार्गं तस्याल्पत्वात् वनमार्गत्वाच्च ॥ १३ ॥ राजराजस्य दशरथस्य ॥ १४ ॥ ब्राह्मणं भरद्वाजं पर्यवारयन्नमस्कारार्थं स्त्रिय इति शेषः । वेपमानत्वादिगुणविशिष्टा कौसल्या ॥ १५ ॥ असमृद्धेन फलसमृद्धिरहितेन कामेन मनोरथेनोपलक्षिता इत्यादिकैकेयीविशेषणम् ॥ १६ ॥ सव्यपत्रपा अतएव सलज्जा ॥ १७ ॥ दीनमनाः अप्राप्तमनोरथत्वात् । कैकेयीति विशेष्यम् ॥ १८ ॥ विशेषं तत्तन्नामरूपम् ॥ १९ ॥ शोकानशनकर्शितां शोकवशप्राप्तानशनेन कृशीकृताम् ॥ २० ॥ यां पश्यसि एषेत्यन्वयः । सिंहवद्विक्रांतगमनशीलम् ॥ २१ ॥ धातारं उपेंद्रम् ॥ २२ ॥

कर्णिकारो वृक्षविशेषः ॥२३॥ देववर्णिनौ देवतुल्यरूपौ ॥२४॥ यस्याः कैकेय्याः जीवनाशं गतौ तादृशापदं प्राप्तौ ॥२५॥ दृप्तां गर्वितां अकृतप्रज्ञां आशिक्षितबुद्धिं आर्यरूपिणीं सतीमिव प्रतिभासमानाम् ॥२६॥ यतो मूलं यन्मूलम् ॥ २७ ॥ २८ ॥ २९ ॥ दोषेण दुष्टकृत्यकर्तृत्वेन सुखोदर्कं देवानामृषीणां च सुखफलम् ॥ ३० ॥ तदेवाह देवानामित्यादि । भविष्यदिति शत्रंतं जानीहीति शेषः । एवं देवादिकृतोऽयं मंथराद्वारा कैकेय्या बुद्धिमोह इति भावः । अतएवनैषा दोषभाग्भागिति बोध्यं देवादीनां सुखदत्वात् ॥ ३१ ॥ संसिद्धः प्राप्ताशीर्वादरूपानुग्रहः स्वमातृकृत्यस्य ज्ञातिहितावहत्वाच्च युज्यतां गमनाय संनह्यताम् ॥ ३२ ॥ ॥ ३३ ॥ गजकन्याः करेणवः सघोषाः घंटाघोषसहिताः ॥ ३४ ॥ सुमहार्हाणि यानान्यारुह्य तद्योग्याः प्रययुः पदातयस्तु पादैरेव प्रययुः ॥ ३५ ॥

इयंसुमित्रादुःखार्तादेवीराज्ञश्चमध्यमा ॥ कर्णिकारस्यशाखेवशीर्णपुष्पावनांतरे ॥ २३ ॥ एतस्यास्तौसुतौदेव्याःकुमारौदेववर्णिनौ ॥ उभौलक्ष्मणशत्रुघ्नौवीरौसत्यपराक्रमौ ॥ २४ ॥ यस्याःकृतेनरव्याघ्रौजीवनाशमितोगतौ ॥ राजापुत्रविहीनश्चस्वर्गंदशरथोगतः ॥२५॥ क्रोधनामकृतप्रज्ञांदृप्तांसुभगमानिनीम् ॥ ऐश्वर्यकामांकैकेयीमनार्यामार्यरूपिणीम् ॥२६॥ ममैतांमातरंविद्धिनृशंसांपापनिश्चयाम् ॥ यतोमूलंहिपश्यामिव्यसनंमहदात्मनः ॥ ॥ २७ ॥ इत्युक्त्वानरशार्दूलोबाष्पगद्गदयागिरा ॥ विनिःश्वस्यसताम्राक्षःक्रुद्धोनागइवश्वसन् ॥ २८ ॥ भरद्वाजोमहर्षिस्तंब्रुवंतंभरतंतदा ॥ प्रत्युवाचमहाबुद्धिरिदंवचनमर्थवित् ॥ २९ ॥ नदोषेणावगंतव्याकैकेयीभरतत्वया ॥ रामप्रव्राजनंह्येतत्सुखोदर्कंभविष्यति ॥ ३० ॥ देवानांदानवानांचऋषीणांभावितात्मनाम् ॥ हितमेवभविष्यद्धिरामप्रव्राजनादिह ॥ ३१ ॥ अभिवाद्यतुसंसिद्धःकृत्वाचैनंप्रदक्षिणम् ॥ आमंत्र्यभरतःसैन्यंयुज्यतामितिचाब्रवीत् ॥ ३२ ॥ ततोवाजिरथान्युक्त्वादिव्यान्हेमविभूषितान् ॥ अध्यारोहत्प्रयाणार्थंबहून्बहुविधोजनः ॥ ३३ ॥ गजकन्यागजाश्चैवहेमकक्ष्याःपताकिनः ॥ जीमूताइवघर्मांतेसघोषाःसंप्रतस्थिरे ॥ ३४ ॥ विविधान्यपियानानिमहांतिचलघूनिच ॥ प्रययुःसुमहार्हाणिपादैरपिपदातयः ॥ ३५ ॥ अथयानप्रवेकैस्तुकौसल्याप्रमुखाःस्त्रियः ॥ रामदर्शनकांक्षिण्यःप्रययुर्मुदितास्तदा ॥३६॥ चंद्रार्कतरुणाभासांनियुक्तांशिबिकांशुभाम् ॥ आस्थायप्रययौश्रीमान्भरतःसपरिच्छदः ॥ ३७ ॥ साप्रयातामहासेनागजवाजिसमाकुला ॥ दक्षिणांदिशमावृत्यमहामेघइवोत्थितः ॥ ३८ ॥ वनानिचव्यतिक्रम्यजुष्टानिमृगपक्षिभिः ॥ गंगायाःपरवेलायांगिरिष्वथनदीष्वपि ॥ ३९ ॥ सासंप्रहृष्टद्विपवाजियूथावित्रासयंतीमृगपक्षिसंघान् ॥ महद्वनंतत्प्रविगाहमानाररराजसेनाभरतस्यतत्र ॥ ४० ॥ इत्यार्षे श्रीम०वा०आ०अ०द्विनवतितमः सर्गः ॥९२॥ तयामहत्यायायिन्याध्वजिन्यावनवासिनः ॥ अर्दितायूथपामत्ताःसयूथाःसंप्रदुद्रुवुः ॥ १ ॥ ऋक्षापृषतमुख्याश्चरुरवश्चसमंततः ॥ दृश्यंतेवनवाटेषुगिरिष्वपिनदीषुच ॥ २ ॥

यानप्रवेकैः यानोत्तमैः ॥ ३६ ॥ चंद्रार्कतरुणाभासां तरुणचंद्रार्कसदृशीं कचिद्भागे स्फटिकादिनिर्मितां कचिद्भागे पद्मरागादिनिर्मितामिति यावत् नियुक्तां वाहकैरिति शेषः ॥ ३७ ॥ ३८ ॥ गंगायाः परवेलायां पश्चिमतीरे स्थिता सेना गिरिषु नदीषु च वर्तमानवनान्यतिक्रम्य प्रयाता बभूवेति शेषः ॥ ३९ ॥ सेति ॥ ४० ॥ नंर्भमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्विनवतितमः सर्गः ॥ ९२ ॥ ॥ यायिन्या गच्छंत्या यूथपाः यूथनाथाः ॥ १ ॥ पृषताः सबिंदवो रुरवोऽबिंदवः अर्दिता दृश्यंत इत्यर्थः ॥ २ ॥

नादिन्या घोषवत्या ॥ ३ ॥ ४ ॥ तस्मिन्काले मार्गगमनकाले सा मही ॥ ५ ॥ मंत्रिणां मंत्रविदां वरं श्रेष्ठम् ॥ ६ ॥ भरद्वाजोयं देशं चित्रकूटं यादृशमब्रवीत् यथा चास्माभिः श्रुतं तथैवास्य देशस्य रूपं लक्ष्यते तस्माद्व्यक्तं तं देशं प्राप्ताः स्म । छांदसो विसर्गलोपः ॥ ७ ॥ माम्निमेव विवृणोति अयमिति ॥ ८ ॥ अवमृद्यंते पीड्यंते ॥ ९ ॥ अतएवैते नगा वृक्षाः गजानामाघातेन चलितशाखाः पर्वतसानुषु कुसुमानि मुंचंति ॥ १० ॥ ॥ ११ ॥ प्रचोदिताः सैनिकैः वायुप्रविद्धाः वायुप्रेरिताः मेघजालाः मेघसमूहाः । मेघराज्य इति पाठांतरम् ॥ १२ ॥ अमी भटाः मेघप्रकाशैः फलकैः शस्त्रनिवारणचर्मभिरुपलक्षिताः । दाक्षिणात्या नरा इव शिरस्सु कुसुमापीडान् कुसुमनिर्मितभूषणविशेषान्कुर्वंति धारयंतीति तीर्थः । अमी वृक्षाः निबिडमत्यग्रपलाशभूयिष्ठतया मेघवदवभासमानैः फलकैर्महास्कंधशाखाभिरुपलक्षिताः दाक्षि

ससंप्रतस्थेधर्मात्माप्रीतोदशरथात्मजः ॥ वृतोमहत्यानादिन्यासेनयाचतुरंगया ॥ ३ ॥ सागरौघनिभासेनाभरतस्यमहात्मनः ॥ महींसंछादयामासप्रावृषिद्यामिवांबुदः ॥ ४ ॥ तुरंगौघैरवततावारणैश्चमहाबलैः ॥ अनालक्ष्याचिरंकालंतस्मिन्कालेबभूवसा ॥ ५ ॥ सगत्वादूरमध्वानंसंपरिश्रांतवाहनः ॥ उवाचवचनंश्रीमान्वसिष्ठंमंत्रिणांवरम् ॥ ६ ॥ यादृशंलक्ष्यतेरूपंयथाचैवमयाश्रुतम् ॥ व्यक्तंप्राप्ताःस्मतंदेशंभरद्वाजोयमब्रवीत् ॥ ७ ॥ अयंगिरिश्चित्रकूटस्तथामंदाकिनीनदी ॥ एतत्प्रकाशतेदूरान्नीलमेघनिभंवनम् ॥ ८ ॥ गिरेःसानूनिरम्याणिचित्रकूटस्यसंप्रति ॥ वारणैरवमृद्यंतेमामकैःपर्वतोपमैः ॥ ९ ॥ मुंचंतिकुसुमान्येतेनगाःपर्वतसानुषु ॥ नीलाइवातपापायेतोयेतोयधराघनाः ॥ १० ॥ किन्नराचरितंदेशंपश्यशत्रुघ्नपर्वतेहयैःसमंतादाकीर्णंमकरैरिवसागरम् ॥ ११ ॥ एतेमृगगणाभांतिशीघ्रवेगाःप्रचोदिताः ॥ वायुप्रविद्धाःशरदिमेघजालाइवांबरे ॥ १२ ॥ कुर्वंतिकुसुमापीडान्शिरःसुसुरभीनमी ॥ मेघप्रकाशैःफलकैर्दाक्षिणात्यानरायथा ॥ १३ ॥ निष्कूजमिवभूत्वेदंवनंघोरप्रदर्शनम् ॥ अयोध्येवजनाकीर्णासंप्रतिप्रतिभातिमे ॥ १४ ॥ खुरैरुदीरितोरेणुर्दिवंप्रच्छाद्यतिष्ठति ॥ तंवहत्यनिलःशीघ्रंकुर्वन्निवममप्रियम् ॥ १५ ॥ स्यंदनांस्तुरगोपेतान्सूतमुख्यैरधिष्ठितान् ॥ एतान्संपततःशीघ्रंपश्यशत्रुघ्नकानने॥१६॥एतान्वित्रासितान्पश्यबर्हिणःप्रियदर्शनान् ॥ एवमापततःशैलमधिवासंपतत्रिणाम् ॥१७॥ अतिमात्रमयंदेशोमनोज्ञःप्रतिभातिमे ॥ तापसानांनिवासोयंव्यक्तंस्वर्गपथोनघ ॥ १८ ॥ मृगामृगीभिःसहिताबहवःपृषतावने ॥ मनोज्ञरूपालक्ष्यंतेकुसुमैरिवचित्रिताः ॥१९॥ साधुसैन्याःप्रतिष्ठंतांविचिन्वंतुचकाननम् ॥ यथातौपुरुषव्याघ्रौदृश्येतेरामलक्ष्मणौ ॥२०॥ भरतस्यवचःश्रुत्वापुरुषाःशस्त्रपाणयः ॥ विविशुस्तद्वनंशूराधूमाग्रंददृशुस्ततः ॥ २१ ॥ तेसमालोक्यधूमाग्रमूचुर्भरतमागताः ॥ नामनुष्येभवत्यग्निर्व्यक्तमत्रैवराघवौ ॥२२॥

णात्याः दक्षिणदिग्भवाः शशिप्रभान्सुरभीन्कुसुमापीडान्स्तवकशेखरान्कुर्वंति । दाक्षिणात्याः शशिप्रभानिति पाठ इति कतकः ॥ १३ ॥ इदं वनं पूर्वं निष्कूजं जनशब्दरहितं अतएव घोरदर्शनं भूत्वा सांप्रतमस्मदागमने जनाकीर्णायोध्येव भाति । पाठांतरे जनाकीर्णमिदं वनमयोध्येव भाति ॥ १४ ॥ वहति अपनयति मम प्रियं कुर्वन्निव चित्रकूटदर्शनेन निरोधनिवर्तकत्वादिति भावः ॥ १५ ॥ संपततः गच्छतः ॥ १६ ॥ ॥ १७ ॥ व्यक्तं स्पष्टं स्वर्गपथः स्वर्गप्रदेशः ॥ १८ ॥ पृषतानां सबिंदुत्वात्कुसुमैश्चित्रिता इवेत्युक्तिः ॥ १९ ॥ साधु यथोचितं प्रतिष्ठंतां गच्छंतु गमनफलं विचिन्वंत्वित्यादि ॥ २० ॥ धूमाग्रं धूमशिखां तेन वह्निमनुमाय तत्संपादकत्वेन राघवावनुमाय भरतमूचुः ॥ २१ ॥ नामनुष्य वनदाहाभावविशिष्टतया प्रत्यक्षं दृश्यमाने इतिशेषः । तस्मान्मनुष्यकारणकवह्न्यनुपपत्त्या अत्रैव राघवाविति जानीमः ॥ २२ ॥

राजभीत्या निश्चयेन तथा वक्तुमशक्नुवंतः । पक्षांतरमाहुः अथेति । अत्र नं तौ तथाप्यन्ये तपस्विनोत्र भविष्यंति तन्मुखात्तद्वासस्थानलाभो भविष्यंतीति भावः ॥ २३ ॥ साधुसंमतं न्यायवित्संमतं तेषां वचनं श्रुत्वा तत्र प्रदेशे रामावस्थितिं निश्चित्य सर्वान्सैन्यानुवाच ॥ २४ ॥ वचनमाह यत्ता इति । यत्ताः सावधानाः कोलाहलमकुर्वंतः धृतिरित्यशोकमंत्रिणो नामांतरम् ॥ २५ ॥ २६ ॥ अपि च या चमूर्भरतेन व्यवस्थिता भरतेन व्यवस्थापिता सा वासाय अग्रतो भूमिं निरीक्षमाणा न चिरेण शीघ्रम् ॥ २७ ॥ सारंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्या कांडे त्रिनवतितमः सर्गः ॥ ९३ ॥ ॥ अथ कविस्तत्र स्थितरामवृत्तांतं वर्णयति दीर्घेत्यादि । प्रियं संतोषम् आकांक्षन् इच्छन् स्वानुरोधेन घोरं वनमागतायाश्चित्तखेदस्योपशमनीयतया चित्रकूटरामणीयकदर्श

अथनात्रनरव्याघ्रौराजपुत्रौपरंतपौ ॥ अन्येरामोपमाःसंतिव्यक्तमत्रतपस्विनः ॥ २३ ॥ तच्छ्रुत्वाभरतस्तेषांवचनंसाधुसंमतम् ॥ सैन्यानुवाचसर्वांस्तानमित्रबलमर्दनः ॥ २४ ॥ यत्ताभवंतस्तिष्ठंतुनेतोगंतव्यमग्रतः ॥ अहमेवगमिष्यामिसुमंत्रोधृतिरेवच ॥ २५ ॥ एवमुक्तास्ततःसैन्यास्तत्रतस्थुःसमंततः ॥ भरतोयत्रधूमाग्रंतत्रदृष्टिंसमादधत् ॥ २६ ॥ व्यवस्थितायाभरतेनसाचमूर्निरीक्षमाणापिचभूमिमग्रतः ॥ बभूवहृष्टानचिरेणजानतीप्रियस्यरामस्यसमागमंतदा ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेत्रिनवतितमःसर्गः ॥ ९३ ॥ दीर्घकालोषितस्तस्मिन्गिरौगिरिवरप्रियः ॥ वैदेह्याःप्रियमाकांक्षन्स्वंचचित्तंविलोभयन् ॥ १ ॥ अथदाशरथिश्चित्रंचित्रकूटमदर्शयत् ॥ भार्याममरसंकाशःशचीमिवपुरंदरः ॥ २ ॥ नराज्यभ्रंशनंभद्रेनसुहृद्भिर्विनाभवः ॥ मनोमेबाधतेदृष्ट्वारमणीयमिमंगिरिम् ॥ ३ ॥ पश्येममचलंभद्रेनानाद्विजगणायुतम् ॥ शिखरैःखमिवोद्विद्धैर्धातुमद्भिर्विभूषितम् ॥ ४ ॥ केचिद्रजतसंकाशाःकेचित्क्षतजसन्निभाः ॥ पीतमांजिष्ठवर्णाश्चकेचिन्मणिवरप्रभाः ॥ ५ ॥ पुष्पार्ककेतकाभाश्चकेचिज्ज्योतीरसप्रभाः ॥ विराजंतेऽचलेंद्रस्यदेशाधातुविभूषिताः ॥ ६ ॥ नानामृगगणैर्द्वीपितरक्ष्वृक्षगणैर्वृतः ॥ अदुष्टैर्भात्ययंशैलोबहुपक्षिसमाकुलः ॥ ७ ॥ आम्रजंब्वसनैर्लोध्रैःप्रियालैःपनसैर्धवैः ॥ अंकोलैर्भव्यतिनिशैर्बिल्वतिंदुकवेणुभिः ॥ ८ ॥ काश्मर्यारिष्टवरणैर्मधूकैस्तिलकैरपि ॥ बदर्यामलकैर्नीपैर्वेत्रधन्वनबीजकैः ॥ ९ ॥ पुष्पवद्भिःफलोपेतैश्छायावद्भिर्मनोरमैः ॥ एवमादिभिराकीर्णःश्रियंपुष्यत्ययंगिरिः ॥ १० ॥ शैलप्रस्थेषुरम्येषुपश्येमान्कामहर्षणान् ॥ किन्नरान्द्वंद्वशोभद्रेरममाणान्मनस्विनः ॥ ११ ॥ शाखावसक्तान्खड्गांश्चप्रवराण्यंबराणिच ॥ पश्यविद्याधरस्त्रीणांक्रीडोद्देशान्मनोरमान् ॥ १२ ॥

नेन तच्चित्तमुपलालयन् स्वं च चित्तं वनवासादिखिन्नं तथाकुर्वन् चित्रकूटमदर्शयदित्यन्वयः ॥ १ ॥ २ ॥ विनाभवः विनावस्थानम् मे मनो न बाधत इत्यन्वयः । दृष्ट्वा स्थितस्येति शेषः ॥ ३ ॥ खमिवोद्विद्धैः । शीलितादिवत्कर्तरि निष्ठा । खस्य वेधकैरित्यर्थः अभ्रंलिहैरिति यावत् ॥ ४ ॥ क्षतजं रुधिरम् पीतवर्णा मांजिष्ठवर्णाश्च ॥ ५ ॥ पुष्पः पुष्परागः अर्कः स्फटिकः केतकानि केतकपुष्पाणि ज्योतिर्नक्षत्रम् रसः पारदरसः ॥ ६ ॥ द्वीपी महाव्याघ्रः तरक्षुः क्षुद्रव्याघ्रः अदुष्टैस्तपस्विवैभवाद्धिंसादिदोषरहितैः ॥ ७ ॥ असनः पीतसारः प्रियालः राजादनम् धवांकोलभव्यतिनिशा वृक्षविशेषाः ॥ ८ ॥ अरिष्टो निंबः धन्वन इंद्रयवः बीजमचुरफलविशेषा दाडिमादयः ॥ ९ ॥ पुष्यति वर्धयति ॥ १० ॥ कामहर्षणान् देशानिति शेषः । तत्र रममाणान्किन्नरान्पश्य ॥ ११ ॥ खड्गान्किन्नराणामिति शेषः । तथा विद्याधरीणां

क्रीडोद्देशान्पश्य तासां शाखावसक्तान्यंबराणि च पश्य ॥ १२ ॥ जलप्रपातैः उच्चप्रदेशात्पतद्भिर्जलप्रवाहैरुद्भेदैर्भुवमुद्भिद्य निर्गतैर्निष्पंदैरल्पनिर्झरैः स्रवद्भिरित्युभयाविशेषणं प्रवहद्भिरित्यर्थकम् ॥ १३ ॥ गुहासमीरणः गुहाद्वारप्रवृत्तः समीरणः घ्राणतर्पणम् कुर्वाण इति शेषः । अभ्येत्य प्राप्य ॥ १४ ॥ शरदः संवत्सरान् ॥ १५ ॥ रतवान् रतिमान् रतिः प्रीतिः ॥ १६ ॥ धर्मे सत्यपालनलक्षणे ॥ १७ ॥ मनोवाक्कायसंमताम् तत्प्रियान्वर्णने वाक्प्रियता भावाः पदार्थाः । संयतेति पाठे सम्यक् नियमितकरणत्रयेत्यर्थः । संयता इति बहुवचनांतपाठे भावानित्यस्य विशेषणम् । लिंगव्यत्यय आर्ष इति तीर्थस्तत्र न कंचिद्युक्तमर्थं पश्यामः ॥ १८ ॥ इदमेव नियमसहितं वनेवस्थानमेव अमृतं प्राहुः मोक्षसाधनं प्राहुः । मे प्रपितामहा मन्वादयः वनवासे प्रेत्यैतच्छरीरत्यागोत्तरं भवार्थाय भवः शिवो हिरण्यगर्भस्तल्लोकप्राप्तिरूपार्थाय प्रयोजनायाहुरित्येके । भवार्थाय संसारक्लेशनिवृत्तये इति कतको व्याचष्टे ॥ १९ ॥ अभित इति पदम् ॥ २० ॥ अचलेंद्रसंबंध्योषध्यः स्वकांतिसंपदा शोभमाना अग्निशिखा इव निशि भांति ॥

जलप्रपातैरुद्भेदैर्निष्पंदैश्चक्वचित्क्वचित् ॥ स्रवद्भिर्भात्ययंशैलःस्रवन्मदइवद्विपः ॥ १३ ॥ गुहासमीरणोगंधान्नानापुष्पभवान्बहून् ॥ घ्राणतर्पणमभ्येत्यकंनरंनप्रहर्षयेत् ॥ १४ ॥ यदीहशरदोनेकांस्त्वयासार्धमनिंदिते ॥ लक्ष्मणेनचवत्स्यामिनमांशोकःप्रधर्षति ॥ १५ ॥ बहुपुष्पफलेरम्येनानाद्विजगणायुते ॥ विचित्रशिखरेह्यस्मिन्रतवानस्मिभामिनि ॥ १६ ॥ अनेनवनवासेनममप्राप्तंफलद्वयम् ॥ पितुश्चानृण्यताधर्मेभरतस्यप्रियंतथा ॥ ॥ १७ ॥ वैदेहिरमसेकच्चिच्चित्रकूटेमयासह ॥ पश्यंतीविविधान्भावान्मनोवाक्कायसंमतान् ॥ १८ ॥ इदमेवामृतंप्राहूराज्ञिराजर्षयःपरे ॥ वनवासंभवार्थायप्रेत्यमेप्रपितामहाः ॥ १९ ॥ शिलाःशैलस्यशोभंतेविशालाःशतशोऽभितः ॥ बहुलाबहुलैर्वर्णैर्नीलपीतसितारुणैः ॥ २० ॥ निशिभांत्यचलेंद्रस्यहुताशनशिखाइव ॥ ओषध्यःस्वप्रभालक्ष्म्याभ्राजमानाःसहस्रशः ॥ २१ ॥ केचित्क्षयनिभादेशाःकेचिदुद्यानसन्निभाः ॥ केचिदेकशिलाभांतिपर्वतस्यास्यभामिनि ॥ २२ ॥ भित्त्वेववसुधांभातिचित्रकूटःसमुत्थितः ॥ चित्रकूटस्यकूटोयंदृश्यतेसर्वतःशुभः ॥२३॥ कुष्ठस्थगरपुन्नागभूर्जपत्रोत्तरच्छदान् ॥ कामिनांस्वास्तरान्पश्यकुशेशयदलायुतान् ॥२४॥ मृदिताश्चापविद्धाश्चदृश्यंतेकमलस्रजः ॥ कामिभिर्वनितेपश्यफलानिविविधानिच ॥ २५ ॥ वस्वौकसारांनलिनीमतीत्यैवोत्तरान्कुरून् ॥ पर्वतश्चित्रकूटोसौबहुमूलफलोदकः ॥ २६ ॥ इमंतुकालंवनितेविजह्रिवांस्त्वयाचसीतेसहलक्ष्मणेन ॥ रतिंप्रपत्स्येकुलधर्मवर्धिनींसतांपथिस्वैर्नियमैःपरैःस्थितः ॥ २७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ०अयो०चतुर्नवतितमः सर्गः ॥ ९४ ॥ अथशैलाद्विनिष्क्रम्यमैथिलींकोसलेश्वरः ॥ अदर्शयच्छुभजलांरम्यांमंदाकिनींनदीम् ॥ १ ॥

॥ २१ ॥ क्षयनिभाः गृहसदृशाः अतिनिबिडबहुपलाशवृक्षकत्वात् । उद्यानसन्निभाः चंपकमालत्यादिबाहुल्यात् । एकशिलाः अनेकजनावस्थानक्षमैकशिलायुक्ताः ॥ २२ ॥ कूटोग्रभागः ॥ २३ ॥ कुष्ठमुत्पलमिति तीर्थः । स्थगरः पुत्रजीवकः भूर्जः भूर्जपत्रवृक्षः एतेषां पत्राण्युत्तरच्छदा येषां तान् कामिनां स्वास्तरान् आस्तरणानि कुशेशयं पद्मं तद्दलैरासमंताद्युतान् पश्य ॥ २४ ॥ फलानि भुक्तानीति शेषः ॥ २५ ॥ वस्वौकसारा कुबेरनगरी नलिनी शक्रनगरी । वस्वौकसारा श्रीदस्य शक्रस्य नलिनीपुरीति हरिः । अतीत्य शोभते इति शेषेणान्वयः ॥ २६ ॥ हे वनिते सीते परैः श्रेष्ठैः स्वैः स्वीयैर्नियमैः सह संतां पथि स्थितः सन् इमं कालं चतुर्दशवर्षमितं त्वया लक्ष्मणेन च सह विजह्रिवान् प्राप्तविहारो यदि भविष्यामि तदा कुलधर्मवर्धिनीं रतिं सौख्यं प्रपत्स्ये प्राप्स्यामि ॥ २७ ॥ अष्टाविंशतिश्लोका अत्रेति कतकः ॥ सुँरैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुर्नवतितमः सर्गः ॥ ९४॥ अथ नदीप्रदर्शनेनोपलालयति अथेति ॥ १ ॥

वरारोहां उत्तमस्त्रीम् ॥ २ ॥ कुसुमैः पद्मादिभिः ॥ ३ ॥ पुष्पफलयुतैर्द्रुमैस्तीरभवै राजंतीं शोभमानां राजराजः । कुबेरस्तस्य नलिनी सौगंधिकाख्या ॥ ४ ॥ तीर्थानि अवतारमार्गाः रतिं
प्रीतिम् ॥ ५ ॥ ६ ॥ उपतिष्ठते मंत्रैरुपस्थानं कुर्वते एते परे मुनयः प्रकाशंते जपपरा इति शेषः ॥ ७ ॥ प्रनृत्त इव नृत्तं कर्तुमुपक्रांत इव अतएव पुष्पाजलिकरणं पादपैः ॥८॥ मणिनिकाशं मुक्तानिकाशमुदके
यस्यास्ताम् ॥ ९ ॥ अंभसि पोप्लूयमानान् पुनः पुनः प्लवमानान् पुष्पसंचयान्पश्य । पश्येहाचलमध्यमे इति पाठः । कृशत्वाच्चलनाशक्तमध्यवतीत्यर्थ इति कतकः ॥१०॥ रथांगाह्वयनाः चक्रवाकाः रथांगं तद्वाचकः

अब्रवीच्चवरारोहांचंद्रचारुनिभाननाम् ॥ विदेहराजस्यसुतांरामोराजीवलोचनः ॥ २ ॥ विचित्रपुलिनांरम्यांहंससारससेविताम् ॥ कुसुमैरुपसं
पन्नांपश्यमंदाकिनींनदीम् ॥ ३ ॥ नानाविधैस्तीररुहैर्वृतांपुष्पफलद्रुमैः ॥ राजंतींराजराजस्यनलिनीमिवसर्वतः ॥ ४ ॥ मृगयूथनिपीतानिकलुषां
भांसिसांप्रतम् ॥ तीर्थानिरमणीयानिरतिंसंजनयंतिमे ॥ ५ ॥ जटाजिनधराःकालेवल्कलोत्तरवाससः ॥ ऋषयस्त्ववगाहंतेनदींमंदाकिनींप्रिये ॥
॥ ६ ॥ आदित्यमुपतिष्ठंतेनियमादूर्ध्वबाहवः ॥ एतेपरेविशालाक्षिमुनयःसंशितव्रताः ॥ ७ ॥ मारुतोद्धूतशिखरैःप्रनृत्तइवपर्वतः ॥ पादपैःपुष्पपत्रा
णिसृजद्भिरभितोनदीम् ॥८॥ क्वचिन्मणिनिकाशोदांक्वचित्पुलिनशालिनीम् ॥ क्वचित्सिद्धजनाकीर्णांपश्यमंदाकिनींनदीम् ॥ ९ ॥ निर्धूतान्वायुना
पश्यविततान्पुष्पसंचयान् ॥ पोप्लूयमानानपरान्पश्यत्वंतनुमध्यमे ॥१०॥ पश्यैतद्वल्गुवयसोरथांगाह्वयनाद्विजाः ॥ अधिरोहंतिकल्याणिनिष्कूजं
तःशुभागिरः ॥ ११ ॥ दर्शनंचित्रकूटस्यमंदाकिन्याश्चशोभने ॥ अधिकंपुरवासाच्चमन्येतवचदर्शनात् ॥ १२ ॥ विधूतकल्मषैःसिद्धैस्तपोदमशमा
न्वितैः ॥ नित्यविक्षोभितजलांविगाहस्वमयासह ॥१३॥ सखीवच्चविगाहस्वसीतेमंदाकिनींनदीम् ॥ कमलान्यवमज्जंतीपुष्कराणिचभामिनि ॥१४॥
त्वंपौरजनवद्व्यालानयोध्यामिवपर्वतम् ॥ मन्यस्ववनितेनित्यंसरयूवदिमांनदीम् ॥१५॥ लक्ष्मणश्चैवधर्मात्मामन्निदेशेव्यवस्थितः ॥ त्वंचानुकूला
वैदेहिप्रीतिंजनयतीमम ॥ १६ ॥ उपस्पृशंस्त्रिषवणंमधुमूलफलाशनः ॥ नायोध्यायैनराज्यायस्पृहयेचत्वयासह ॥ १७ ॥ इमांहिरम्यांगजयूथलो
डितांनिपीततोयांगजसिंहवानरैः ॥ सुपुष्पितांपुष्पभरैरलंकृतांनसोस्तियःस्यान्नगतक्लमःसुखी ॥ १८ ॥ इतीवरामोबहुसंगतंवचःप्रियासहायः
सरितंप्रतिब्रुवन् ॥ चचाररम्यंनयनांजनप्रभंसचित्रकूटंरघुवंशवर्धनः ॥ १९ ॥ इत्यार्षे श्रीम० वा० आ० अयो० पंचनवतितमः सर्गः ॥ ९५ ॥
रामस्तुनलिनींरम्यांचित्रकूटंचपर्वतम् ॥ उत्तरेतुगिरेःपादेचित्रकूटस्यराघवः ॥ १ ॥

शब्दो ह्वयने नामनि येषामिति विग्रहः अधिरोहंति पुलिनानीतिशेष ॥ ११ ॥ तव दर्शनाच्चाधिकं अधिकसुखावहम् ॥ १२ ॥ १३ ॥ सखीवन्मंदाकिन्या इति शेषः । कमलपुष्करे रक्तसितपद्मे तानि अवमज्जंती
प्रक्षिपंती ॥ १४ ॥ १५ ॥ १६ ॥ उपस्पृशन्स्नानं कुर्वन् ॥ १७ ॥ सुपुष्पितां सुपुष्पितवनांतामवगाह्य यः सुखी न स्यात्स नास्तीत्यन्वयः ॥ १८ ॥ सरितं प्रति सरितं वर्णयन् नयनयोग्यां जनवन्नी
लप्रभम् ॥ १९ ॥ धैर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचनवतितमः सर्गः ॥ ९५ ॥ ॥ अग्रिमाध्यायो मूलमेव ॥

ददर्शकंदरंरम्यंशिलाधातुसमन्वितम् ॥ सुखप्रसेकैस्तरुभिःपुष्पभारावलंबिभिः ॥ २ ॥ संवृतंचरहस्यंचमत्तद्विजगणायुतम् ॥ तदृष्ट्वासर्वभूतानांमनो
दृष्टिहरंवनम् ॥३॥ उवाचसीतांकाकुत्स्थोवनदर्शनविस्मितः ॥ वैदेहिरमतेचक्षुस्तवास्मिन्गिरिकंदरे ॥४॥ परिश्रमविघातार्थंसाधुतावदिहास्यताम् ॥
त्वदर्थमिहविन्यस्तात्वियंश्लक्ष्णसमाशिला ॥ ५ ॥ यस्याःपार्श्वेतरुःपुष्पैःप्रविष्टइवकेसरैः ॥ राघवेणैवमुक्तासासीताप्रकृतिदक्षिणा ॥ ६ ॥ उवाच
प्रणयस्निग्धमिदंश्लक्ष्णतरंवचः ॥ अवश्यकार्यंवचनंतवमेरघुनंदन ॥ ७ ॥ वहुशोभ्रमितश्चाद्यतवचैवंमनोरथः ॥ एवमुक्त्वावरारोहाशिलांतामुपसर्पह॥
॥८॥ सहभर्त्रानवद्यांगीरंतुकामामनस्विनी ॥ तामेवंब्रुवतींसीतांरामोवचनमब्रवीत् ॥ ९ ॥ रम्यंपश्यसिभूतार्थंवनंपुष्पितपादपम् ॥ पश्यदेविगिरौ
रम्येरम्यपुष्पांकितानिमान् ॥ १० ॥ गजदंतक्षतान्वृक्षान्पश्यनिर्यासवर्षिणः ॥ झिल्लिकाविरुतैर्दीर्घैरुदतीवसमंततः ॥ ११ ॥ पुत्रप्रियोसौशकुनिः
पुत्रपुत्रेतिभाषते ॥ मधुरांकरुणांवाचंपुरेवजननीमम ॥ १२ ॥ विहगोभृंगराजोयंशालस्कंधसमास्थितः ॥ संगीतमिवकुर्वाणःकोकिलेनावकूजति ॥
॥ १३ ॥ अयंवावालकःशंकेकोकिलानांविहंगमः ॥ सुखवद्धमसंवद्धंतथाह्येषप्रभाषते ॥ १४ ॥ एषाकुसुमितानूनंपुष्पभारानतालता ॥ दृश्यतेमा
मिवात्यर्थंश्रमाद्देवित्वमाश्रिता ॥ १५ ॥ एवमुक्ताप्रियस्यांकेमैथिलीप्रियभाषिणी ॥ भूयस्तरांत्वनिंद्यांगीसमारोहतभामिनी ॥ १६ ॥ अंकेतुपरिवर्तं
तीसीतासुरसुतोपमा ॥ हर्षयामासरामस्यमनोमनसिजार्पितम् ॥ १७ ॥ सनिघृष्यांगुलिंरामोधौतेमनःशिलोच्चये ॥ चकारतिलकंतस्याललाटेरु
चिरंतदा ॥ १८ ॥ बालार्कसमवर्णेनतेजसागिरिधातुना ॥ चकासेविनिविष्टेनससंध्येवनिशासिता ॥ १९ ॥ केसरस्यचपुष्पाणिकरेणामृद्यराघवः ॥
अलकंपूरयामासमैथिल्याःप्रीतमानसः ॥ २० ॥ अभिरम्यतदातस्यांशिलायांरघुनंदनः ॥ अन्वीयमानोवैदेह्यादेशमन्यंजगामह ॥ २१ ॥
विचरंतीतदासीताददर्शहरियूथपम् ॥ वनेवहुमृगाकीर्णेवित्रस्तारामामाश्लिषत् ॥ २२ ॥ रामस्तांपरिरब्धांगींपरिरभ्यमहाभुजः ॥ सांत्वयामासवामो
रूमवभत्स्याथवानरम् ॥ २३ ॥ मनःशिलायास्तिलकःसीतायाःसोथवक्षसि ॥ समदृश्यतसंक्रांतोरामस्यविपुलौजसः ॥ २४ ॥ प्रजहासतदासी
तागतेवानरपुंगवे ॥ दृष्ट्वाभर्तरिसंक्रांतमपांगंसमनःशिलम् ॥२५॥ नातिदूरेत्वशोकानांप्रदीप्तमिवकाननम् ॥ ददर्शपुष्पस्तवकैस्तर्जद्भिरिववानरैः
॥ २६ ॥ वैदेहीत्वब्रवीद्राममशोककुसुमार्थिनी ॥ वयंतदभिगच्छामोवनमिक्ष्वाकुनंदन ॥ २७ ॥ तस्याःप्रियेस्थितोरामोदेव्यादिव्यार्थरूपया ॥
सहितस्तदशोकानांविशोकःप्रययौवनम् ॥ २८ ॥ तदशोकवनंरामःसभार्योव्यचरत्तदा ॥ गिरिपुत्र्यापिनाकीवसहहैमवतंवनम् ॥ २९ ॥

तावन्योन्यमशोकस्यपुष्पैःपल्लवधारिभिः ॥ समलंचक्रतुरुभौकामिनौनीललोहितौ ॥ ३० ॥ आवद्धवनमालौतौकृतापीडावतंसकौ ॥ भार्यापता
तावचलंशोभयांचक्रतुर्भृशम्॥ ३१ ॥ एवंसविविधान्देशान्दर्शयित्वाप्रियांप्रियः ॥ आजगामाश्रमदंसुसंश्लिष्टमलंकृतम् ॥ ३२ ॥ प्रत्युज्जगामतं
भ्रातालक्ष्मणोगुरुवत्सलः ॥ दर्शयन्विविधंधर्मसौमित्रिःसुकृतंतदा ॥ ३३ ॥ शुद्धवाणहतांस्तत्रमेध्यान्कृष्णमृगान्दश ॥ राशीकृतान्शुष्यमाणान
न्यान्कांश्चनकांश्चन ॥ ३४ ॥ तद्दृष्ट्वाकर्मसौमित्रेर्भ्राताप्रीतोभवत्तदा ॥ क्रियंतांवलयश्चेतिरामःसीतामथान्वशात् ॥ ३५ ॥ अग्रंप्रदायभूतेभ्यः
सीताथवरवर्णिनी ॥ तयोरुपददद्भ्रात्रोर्मधुमांसंचतद्भृशम् ॥ ३६ ॥ तयोस्तुष्टिमथोत्पाद्यवीरयोःकृतशौचयोः ॥ विधिवज्जानकीपश्चाच्चक्रेसाप्राणधा
रणम् ॥ ३७ ॥ शिष्टंमांसंनिकृष्टंयच्छोषणायावकल्पितम् ॥ तद्रामवचनात्सीताकाकेभ्यःपर्यरक्षत ॥३८॥ तांददर्शतदाभर्ताकाकेनायासितांदृढम् ॥
यस्याहारांतरचरःकामचारीविहंगमः ॥ ३९ ॥ काकेनारोध्यमानांतांसासुमोहतदातुरम् ॥ साचुकोपानवद्यांगीभर्तृप्रणयदर्पिता ॥ ४० ॥
इतश्चेतश्चतांकाकोवारयंतींपुनःपुनः ॥ पक्षतुंडनखाग्रैश्चकोपयामासकोपनाम् ॥ ४१ ॥ तस्याःप्रस्फुरमाणौष्ठंभ्रुकुटीपुटसूचितम् ॥ मुखमालोक्यकाकु
त्स्थस्तंकाकंप्रत्यपेधयत् ॥ ४२ ॥ सधृष्टमानोविहगोरामवाक्यमचिंतयन् ॥ सीतामभिपपातैवततश्चुक्रोधराघवः ॥ ४३ ॥ सोभिमंत्र्यशरैषीकामैषी
कास्त्रेणवीर्यवान् ॥ काकंतमभिसंधायससर्जपुरुषर्षभः ॥ ४४ ॥ सतेनाभिद्रुतःकाकस्त्रींल्लोकान्पर्यगात्ततः ॥ देवैर्दत्तवरःपक्षीहारांतरचरोलघुः ॥४५॥
यत्रयत्रागमत्काकस्तत्रतत्रददर्शह ॥ इषीकांभूतसंकाशांसरामंपुनरागमत् ॥ ४६ ॥ समूर्ध्नान्यपतत्काकोराघवस्यमहात्मनः ॥ सीतायास्तत्रपश्यं
त्यामानुपीमैरयद्गिरम् ॥ ४७ ॥ प्रसादंकुरुमेरामप्राणैःसामग्र्यमस्तुमे ॥ अस्त्रस्यास्यप्रभावेणशरणंनलभेक्वचित् ॥ ४८ ॥ तंकाकमब्रवीद्रामःपादयोः
शिरसागतम् ॥ सानुक्रोशतयाधीमानिदंवचनमर्थवत् ॥४९॥ मयारोषपरीतेनसीताप्रियहितार्थिना ॥ अस्त्रमेतत्समाधायत्वद्वधायाभिमंत्रितम् ॥५०॥
यत्तुमेचरणौमूर्ध्नागतस्त्वंजीवितेप्सया ॥ अत्रास्त्यवेक्षात्वयिमेरक्ष्योहिशरणागतः ॥ ५१ ॥ अमोघंक्रियतामस्त्रमेकमंगंपरित्यज ॥ किमंगंशातयतुते
शरैपीकाब्रवीहिमे ॥५२॥ एतावद्धिमयाशक्यंतवकर्तुंप्रियंखग ॥ एकांगहीनंह्यस्त्रेणजीवितंमरणाद्वरम् ॥ ५३ ॥ एवमुक्तस्तुरामेणसंप्रधार्यसवायसः ॥
अभ्यगच्छद्द्वयोरक्षणस्त्यागमेकस्यपंडितः ॥ ५४ ॥ सोब्रवीद्राघवंकाकोनेत्रमेकंत्यजाम्यहम् ॥ एकनेत्रोपिजीवेहंत्वत्प्रसादान्नराधिप ॥ ५५ ॥
रामानुज्ञातमस्त्रंतत्काकस्यनयनेपतत् ॥ वैदेहीविस्मितातत्रकाकस्यनयनेहते ॥ ५६ ॥ निपत्यशिरसाकाकोजगामाशुयथेप्सितम् ॥ लक्ष्मणानुचरो
रामश्चकारानंतरक्रियाः ॥ ५७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेअयंप्रक्षिप्तः सर्गः ॥ १ ॥

मांसेन च्छंदयन् मांसविशेषप्रदर्शनेन लालयन्सांत्वयन् गिरिनिम्नगां मंदाकिनीम् ॥ १ ॥ तेन लालनप्रकारमाह इदमिति । एवमित्यस्य ब्रुवन्निति शेषः ॥ २ ॥ आसतः गिरिप्रदेशे असीनस्य उपयायिनो राम समीपे आगच्छतो भरतस्य सैन्यरेणुः सैन्यशब्दश्च प्रादुरास्तां प्रादुर्बभूवतुः ॥ ३ ॥ एतस्मिन्नंतरे सेनाशब्दप्रवृत्तिसमये ॥ ४ ॥ स राघवो रामः सैन्यसमुद्धृतं तदुत्पादितम् ॥ ५ ॥ स निःस्वनमितिपाठे स इति पदम् ॥ ६ ॥ भीमं भयंकरं यत्स्तनितं मेघशब्दस्तद्वद्गंभीरं यथा भवति तथा योयं स्वनः श्रूयतेऽस्य कारणं पश्येति योजना ॥ ७ ॥ यत्सहसा मृगाः प्रद्रुताः दिशस्तस्य कारणं तथा सिंहैर्वित्रासितानि गजयूथानि वा अथ तैर्वित्रासिता महिषा वा दिशः प्रद्रुतास्तत्कारणं च पश्य । वा शब्दौ चार्थे ॥ ८ ॥ तत्कारणमुन्नयन्स्वयमाह राजा वेति । राजादिर्मृगयामटते ज्ञातुमर्हसि अन्यद्वा श्वापदं दुष्टजंतुः वनं

तांतदादर्शयित्वातुमैथिलींगिरिनिम्नगाम् ॥ निषसादगिरिप्रस्थेसीतांमांसेनछंदयन् ॥ १ ॥ इदंमेध्यमिदंस्वादुनिष्टप्तमिदमग्निना ॥ एवमास्तेसधर्मात्मासीतयासहराघवः ॥२॥ तथातत्रासतस्तस्यभरतस्योपयायिनः ॥ सैन्यरेणुश्चशब्दश्चप्रादुरास्तांनभःस्पृशौ ॥३॥ एतस्मिन्नंतरेत्रस्ताःशब्देनमहताततः ॥ अर्दितायूथपामत्ताःस्वयूथाद्दुद्रुवुर्दिशः ॥ ४ ॥ सतंसैन्यसमुद्भूतंशब्दंशुश्रावराघवः ॥ तांश्चविप्रद्रुतान्सर्वान्यूथपानन्ववैक्षत ॥ ५ ॥ तांश्चविप्रद्रुतान्दृष्ट्वातंचश्रुत्वामहास्वनम् ॥ उवाचरामःसौमित्रिंलक्ष्मणंदीप्ततेजसम् ॥ ६ ॥ हंतलक्ष्मणपश्येहसुमित्रासुप्रजास्त्वया ॥ भीमस्तनितगंभीरंतुमुलःश्रूयतेस्वनः ॥ ७ ॥ गजयूथानिवारण्येमहिषावामहावने ॥ वित्रासितामृगाःसिंहैःसहसाप्रद्रुतादिशः ॥ ८ ॥ राजावाराजपुत्रोवामृगयामटतेवने ॥ अन्यद्वाश्वापदंकिंचित्सौमित्रेज्ञातुमर्हसि ॥ ९ ॥ सुदुश्चरोगिरिश्चायंपक्षिणामपिलक्ष्मण ॥ सर्वमेतद्यथातत्त्वमभिज्ञातुमिहार्हसि ॥ १० ॥ सलक्ष्मणःसंत्वरितःसालमारुह्यपुष्पितम् ॥ प्रेक्षमाणोदिशःसर्वाःपूर्वांदिशमवैक्षत ॥ ११ ॥ उदङ्मुखःप्रेक्षमाणोददर्शमहतींचमूम् ॥ गजाश्वरथसंबाधांयत्तैर्युक्तांपदातिभिः ॥ १२ ॥ तामश्वरथसंपूर्णांरथध्वजविभूषिताम् ॥ शशंससेनांरामायवचनंचेदमब्रवीत् ॥ १३ ॥ अग्निंसंशमयत्वार्यःसीताचभजतांगुहाम् ॥ सज्जंकुरुष्वचापंचशरांश्चकवचंतथा ॥१४॥ तंरामःपुरुषव्याघ्रोलक्ष्मणंप्रत्युवाचह ॥ अंगावेक्षस्वसौमित्रेकस्येमांमन्यसेचमूम् ॥ ॥ १५ ॥ एवमुक्तस्तुरामेणलक्ष्मणोवाक्यमब्रवीत् ॥ दिधक्षन्निवतांसेनांरुषितःपावकोयथा ॥ १६ ॥ संपन्नंराज्यमिच्छंस्तुव्यक्तंप्राप्याभिषेचनम् ॥ आवांहंतुंसमभ्येतिकैकेय्याभरतःसुतः ॥ १७ ॥ एषवैसुमहाञ्छ्रीमान्विटपीसंप्रकाशते ॥ विराजत्युज्ज्वलस्कंधःकोविदारध्वजोरथे ॥ १८ ॥ भजंत्येतेयथाकाममश्वानारुह्यशीघ्रगान् ॥ एतेभ्राजंतिसंहृष्टागजानारुह्यसादिनः ॥ १९ ॥

क्षोभयतीति शेषः ॥ ९ ॥ १० ॥ सालो वृक्षः ॥ ११ ॥ यत्तैः सज्जैः ॥ १२ ॥ सेनां शशंस सेनां श्रुतशब्दकारणमुक्तवान् ॥ १३ ॥ अग्निं संशमयतु परसेनादर्शनजक्षोभकालिकोयं व्यापारः सर्वजनासिद्धः गुहाम् अंतर्गृहं शरांश्च गृहाणेति शेषः ॥ १४ ॥ तं युद्धसन्नाहवादिनं रामो विमृश्यकारित्वादाह अंगेति । यामिमां चमूं भयहेतुं मन्यसे सा कस्येत्यवेक्षस्वेत्यर्थः ॥ १५ ॥ रुषितः क्रुद्धः ॥ १६ ॥ अभिषेचनं राज्यं प्राप्य संपन्नम् अकंटकम् ॥ १७ ॥ तच्चिह्नमाह एष इति । य एष वृक्षो महान्संप्रकाशते तत्समीपे तं लक्षीकृत्य रथे कोविदारध्वजो विराजते ॥ १८ ॥ भजंति एतद्देशमागच्छंति सादिनो गृहीतसादिचिह्ना

गजारोहाः ॥ १९ ॥ अतो गृहीतधनुषाविति ॥ २० ॥ अपि नौ वशमागच्छेदिति काममवेदने लिङ् । महद्व्यसनं त्वया प्राप्तमित्युत्तरेणान्वयः ॥ २१ ॥ यन्निमित्तं यस्माद्धेतोः ॥ २२ ॥ वध्यत्वे अयमेव हेतुः ॥ २३ ॥ त्यागे वधे ॥ २४ ॥ संख्ये युद्धे मया पश्येदित्युत्तरेणान्वयः । मृधमास्कंदनं संख्यं समीकं सांपरायिकम् ॥ २५ ॥ सानुबंधां सकुल्याम् ॥ २६ ॥ कलुषेण पापेन कैकेयीरूपेण असत्कारं कैकेयीकृतम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ भरतलक्ष्मणयोः समतया रामोपकरणत्वाल्लक्ष्मणस्य भरतविषये एवं वादः । रामस्य तूभयोरपि स्वोपकरणत्वान्न कापि क्रोध इति तत्त्वमत्र ॥ ३१ ॥ कोलैमानः

गृहीतधनुषावावांगिरिंवीरश्रयावहे ॥ अथवेहैवतिष्ठावःसन्नद्धावुद्यतायुधौ ॥ २० ॥ अपिनौवशमागच्छेत्कोविदारध्वजोरणे ॥ अपिद्रक्ष्यामिभरतं यत्कृतेव्यसनंमहत् ॥ २१ ॥ त्वयाराघवसंप्राप्तंसीतयाचमयातथा ॥ यन्निमित्तंभवान्राज्याच्च्युतोराघवशाश्वतात् ॥ २२ ॥ संप्राप्तोयमरिर्वीरभरतो वध्यएवहि ॥ भरतस्यवधेदोषंनाहंपश्यामिराघव ॥ २३ ॥ पूर्वापकारिणंहत्वानह्यधर्मेणयुज्यते ॥ पूर्वापकारीभरतस्त्यागेधर्मश्चराघव ॥ २४ ॥ एतस्मिन्निहतेकृत्स्नामनुशाधिवसुंधराम् ॥ अद्यपुत्रंहतंसंख्येकैकेयीराज्यकामुका ॥ २५ ॥ मयापश्येत्सुदुःखार्ताहस्तिभिन्नमिवद्रुमम् ॥ कैकेयींचवधिष्यामिसानुबंधांसबांधवाम् ॥ २६ ॥ कलुषेणाद्यमहतामेदिनीपरिमुच्यताम् ॥ अद्येमंसंयतंक्रोधमसत्कारंचमानद ॥ २७ ॥ मोक्ष्यामिशत्रुसैन्येषुकक्षेष्विवहुताशनम् ॥ अद्यैवचित्रकूटस्यकाननंनिशितैःशरैः ॥ २८ ॥ छिंदञ्छत्रुशरीराणिकरिष्येशोणितोक्षितम् ॥ शरैर्निर्भिन्नहृदयान्कुंजरांस्तुरगांस्तथा ॥ २९ ॥ श्वापदाःपरिकर्षंतुनरांश्चनिहतान्मया ॥ शराणांधनुषश्चाहमनृणोस्मिन्महावने ॥ ३० ॥ ससैन्यंभरतंहत्वाभविष्यामिनसंशयः ॥ ३१॥ इत्यार्षेश्रीम०वा०आ०अयो०षण्णवतितमः सर्गः ॥९६॥ सुसंरब्धंतुभरतंलक्ष्मणंक्रोधमूर्छितम् ॥ रामस्तुपरिसांत्व्याथवचनंचेदमब्रवीत् ॥ १ ॥ किमत्रधनुषाकार्यमसिनावासचर्मणा ॥ महाबलेमहोत्साहेभरतेस्वयमागते ॥ २ ॥ पितुःसत्यंप्रतिश्रुत्यहत्वाभरतमाहवे ॥ किंकरिष्यामिराज्येनसापवादेनलक्ष्मण ॥ ३ ॥ यद्द्रव्यंबांधवानांवामित्राणांवाक्षयेभवेत् ॥ नाहंतत्प्रतिगृह्णीयांभक्ष्यान्विषकृतानिव ॥ ४॥ धर्ममर्थंचकामंचपृथिवींचापिलक्ष्मण ॥ इच्छामिभवतामर्थेएतत्प्रतिशृणोमिते ॥ ५ ॥ भ्रातॄणांसंग्रहार्थंचसुखार्थंचापिलक्ष्मण ॥ राज्यमप्यहमिच्छामिसत्येनायुधमालभे ॥ ६ ॥नेयंमममहीसौम्यदुर्लभासागरांबरा ॥ नहीच्छेयमधर्मेणशक्रत्वमपिलक्ष्मण ॥७॥ यद्विनाभरतंत्वांचशत्रुघ्नंवापिमानद ॥ भवेन्ममसुखंकिंचिद्भस्मतत्कुरुतांशिखी ॥ ८ ॥

॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षण्णवतितमः सर्गः ॥ ९६ ॥ ॥ अथ तत्क्रोधमपनयति भगवान्सर्वभूतभावज्ञस्तदागमनप्रयोजनकथनेन सुसंरब्धमिति । भरतं प्रति सुसंरब्धं अत्यंतं युद्धोद्योगवंतम् ॥ १ ॥ अत्र भरतविषये ॥ २ ॥ पितुः सत्यं पालयिष्यामीति प्रतिज्ञाय सापवादेन पित्रा भरताय दत्तं रामोपहृतवानित्येवं रूपापवादसहितेन ॥ ३ ॥ क्षये नाशे कृत इति शेषः ॥ ४ ॥ एतदुक्तार्थजातमुद्दिश्य प्रतिशृणोमि प्रतिजाने ॥५॥ तमेवार्थं शपथेन द्रढयति भ्रातॄणामिति । संग्रहार्थं सम्यक्पालनार्थं अतएव तेषां सुखार्थम् च ॥ ६ ॥ दुर्लभेति नापि तु सुलभैव

किंतु तां नेच्छामि शक्तत्वमपि नेच्छेयं इमां महोमेव नेच्छामि इति नेत्यर्थः ॥ ७ ॥ ८ ॥ मन्येहमिति द्रष्टुमभ्यागत इति मन्ये इत्यन्वयः । आगतो मातुलगृहादिति शेषः । कुलधर्मं ज्येष्ठस्य राज्यमित्येवं रूपम् ॥ ९ ॥ १० ॥ ११ ॥ रुष्य तद्विषयरोषं कृत्वेत्यर्थः । प्रसाद्य त्वद्दत्तं राज्यं मया प्राप्तं तन्मया रामाय दीयते अतो न ते सत्यभ्रंशदोष इति तदनुमन्यस्वेति प्रसाद्य ॥ १२ ॥ यथैष भरतस्तथा एतत्कर्तृकमस्मद्दर्शनयोग्यत्वं प्राप्तकालम् उचितम् ॥ १३ ॥ कृतपूर्वं यत् अद्य भरतं शंकसे ईदृशं वा भयं भयजनकं वाक्यं कृतपूर्वम् उक्तपूर्वं वा यदद्य भरतं शंकसे इत्यन्वयः ॥ १४ ॥ अतस्ते त्वया भरतोऽप्रियं निष्ठुरं न वाच्यः । यतो भरतस्याप्रिये अप्रियवचने कृते उक्ते अहमपि अप्रियमुक्तः स्यां त्वया ॥ १५ ॥ आत्मनः प्राणं प्राणसमं भ्रातरमित्यन्वयः ॥ १६ ॥ इमां वाचं भरतवधविषयाम् । प्रदीयता

मन्येहमागतोयोध्यांभरतोभ्रातृवत्सलः ॥ ममप्राणैःप्रियतरःकुलधर्ममनुस्मरन् ॥ ९ ॥ श्रुत्वाप्रव्राजितंमांहिजटावल्कलधारिणम् ॥ जानक्यासहितंवीरत्वयाचपुरुषोत्तम ॥ १० ॥ स्नेहेनाक्रांतहृदयःशोकेनाकुलितेंद्रियः ॥ द्रष्टुमभ्यागतोह्येषभरतोनान्यथागतः ॥ ११ ॥ अंबांचकेकयींरुष्यभरतश्चाप्रियंवदन् ॥ प्रसाद्यपितरंश्रीमान्राज्यंमेदातुमागतः ॥ १२ ॥ प्राप्तकालंयथैषोस्मान्भरतोद्रष्टुमर्हति ॥ अस्मासुमनसाप्येषनाहितंकिंचिदाचरेत् ॥ १३ ॥ विप्रियंकृतपूर्वंतेभरतेनकदानुकिम् ॥ ईदृशंवाभयंतेद्यभरतंयद्विशंकसे ॥ १४ ॥ नहितेनिष्ठुरंवाच्योभरतोनाप्रियंवचः ॥ अहंह्यप्रियमुक्तःस्यांभरतस्याप्रियेकृते ॥ १५ ॥ कथंनुपुत्राःपितरंहन्युःकस्यांचिदापदि ॥ भ्रातावाभ्रातरंहन्यात्सौमित्रेप्राणमात्मनः ॥ १६ ॥ यदिराज्यस्यहेतोस्त्वमिमांवाचंप्रभाषसे ॥ वक्ष्यामिभरतंदृष्ट्वाराज्यमस्मैप्रदीयताम् ॥ १७ ॥ उच्यमानोहिभरतोमयालक्ष्मणतद्वचः ॥ राज्यमस्मैप्रयच्छेतिबाढमित्येवमंस्यते ॥ १८ ॥ तथोक्तोधर्मशीलेनभ्रात्रातस्यहितेरतः ॥ लक्ष्मणःप्रविवेशेवस्वानिगात्राणिलज्जया ॥ १९ ॥ तद्वाक्यंलक्ष्मणःश्रुत्वाव्रीडितःप्रत्युवाचह ॥ त्वांमन्येद्रष्टुमायातःपितादशरथःस्वयम् ॥ २० ॥ व्रीडितंलक्ष्मणंदृष्ट्वाराघवःप्रत्युवाचह ॥ एषमन्येमहाबाहुरिहास्मान्द्रष्टुमागतः ॥ २१ ॥ अथवानौध्रुवंमन्येमन्यमानःसुखोचितौ ॥ वनवासमनुध्यायगृहायप्रतिनेष्यति ॥ २२ ॥ इमांचाप्येषवैदेहीमत्यंतसुखसेविनीम् ॥ पितामेराघवःश्रीमान्वनादादास्यति ॥ २३ ॥ एतौतौसंप्रकाशेतेगोत्रवंतौमनोरमौ ॥ वायुवेगसमौवीरौजवनौतुरगोत्तमौ ॥ २४ ॥ सएषसुमहाकायःकंपतेवाहिनीमुखे ॥ नागःशत्रुंजयोनामवृद्धस्तातस्यधीमतः ॥ २५ ॥

मिति वक्ष्यामीत्यन्वयः ॥ १७ ॥ ननु त्वदुक्तेपि स न दद्यात्तत्राह उच्यमान इति । प्रयच्छेत्युच्यमान इत्यर्थः । राज्यलिप्सा चेत्तदेव दापयिष्यामि किं भ्रातृवधेनेत्याशयः ॥ १८ ॥ लज्जया गात्राणि प्रविवेशेव अत्यंतसंकुचितोभूदित्यर्थः । तस्य रामस्य हिते रतः ॥ १९ ॥ एवमनुचितोक्तिलज्जापरिहारायोचितं वाक्यमाह तदिति । भरतप्रसंगस्तु त्वदाशयपरिज्ञानायैव केवलमुपन्यस्त इत्याशयः ॥ २० ॥ एवं पितृप्रसंगो लक्ष्मणस्य व्रीडापरिहारमूल इति ज्ञात्वा तदेवानुकुर्वन्नाह व्रीडितमिति । एषः लक्ष्मणप्रस्तावितः पिता ॥ २१ ॥ नौ सुखोचितौ मन्यमानः वनवासं अनुध्याय कष्टं विचिंत्य ॥ २२ ॥ इमां सीताम् ॥ २३ ॥ गोत्रवंतौ प्रशस्तनामानौ प्रशस्तकुलौ वा । गात्रवंतावितिप ॥ २४ ॥ [illegible] एष इति । कंपते चलति आगच्छति अयं शत्रुंजयो रामेण सुयज्ञाय

॥ २३ ॥ गोत्रवंतौ प्रशस्तनामानौ प्रशस्तकुलौ वा । गात्रवंताविति पाठे प्रशस्तशरीरौ । जवनौ वेगवंतौ ॥ २४ ॥ पितुरागमने चिह्नांतरमाह एष इति । कंपते चलति आगच्छति अयं शत्रुंजयो रामेण सुयज्ञाय

दत्तादन्य एव अतएव तातस्य शत्रुंजय इत्युक्तम् ॥ २५ ॥ इह छत्रविषये ॥ २६ ॥ इतीव इत्येव सौमित्रिं वृक्षाग्रस्थितम् । अथ वृक्षावरोहणमाज्ञापयति वृक्षाग्रादिति । मद्वचः कुरु शंकां विहाय मद्वचसा सालावरोहणं कुर्वित्यर्थः ॥ २७ ॥ अवतीर्येति । रामाज्ञयेत्यादिः ॥ २८ ॥ रामाश्रमस्य संमर्दो न भवेदिति संदिष्टा आज्ञप्ता सेना शैलस्य समंताद्दूरभागे वासमकल्पयत् ॥ २९ ॥ अध्यर्धं सार्धयोजनम् ॥ ३० ॥ धर्मं पुरस्कृत्य दर्पं विधूय प्रणीता शिक्षिता सेना ॥ ३१ ॥ पेलमानः ॥ इति श्रीरामाभिरामे श्रीरामीय रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तनवतितमः सर्गः ॥ ९७ ॥ पादवतां चरणाणिनां वरः श्रेष्ठो विभुर्भरतः गुरुवर्तकं गुरुशुश्रूषापरम् ॥ १ ॥ यथोद्देशं अमुकस्यामुकदिशि वास इति स्वाम्युपदिष्टप्रदेशमनतिक्रम्य निविष्टे सैन्ये इत्यर्थः विनीतवत् विनीतार्हे ॥ २ ॥ लुब्धाः

नतुपश्यामितच्छत्रंपांडुरंलोकविश्रुतम् ॥ पितुर्दिव्यंमहाभागसंशयोभवतीहमे ॥ २६ ॥ वृक्षाग्रादवरोहत्वंकुरुलक्ष्मणमद्वचः ॥ इतीवरामोधर्मात्मासौमित्रिंतमुवाचह ॥ २७ ॥ अवतीर्यतुसालाग्रात्तस्मात्ससमितिंजयः ॥ लक्ष्मणःप्रांजलिर्भूत्वातस्थौरामस्यपार्श्वतः ॥ २८ ॥ भरतेनाथसंदिष्टासंमर्दोनभवेदिति ॥ समंतात्तस्यशैलस्यसेनावासमकल्पयत् ॥ २९ ॥ अध्यर्धमिक्ष्वाकुचमूर्योजनंपर्वतस्यह ॥ पार्श्वेन्यविशदावृत्यगजवाजिनराकुला ॥ ३० ॥ साचित्रकूटेभरतेनसेनाधर्मंपुरस्कृत्यविधूयदर्पम् ॥ प्रसादनार्थंरघुनंदनस्यविरोचतेनीतिमताप्रणीता ॥ ३१ ॥ इत्यार्षेश्रीम० वाल्मी० आ० अयो० सप्तनवतितमः सर्गः ॥ ९७ ॥ निवेश्यसेनांतुविभुःपद्भ्यांपादवतांवरः ॥ अभिगंतुंसकाकुत्स्थमियेषगुरुवर्तकम् ॥ १ ॥ निविष्टमात्रेसैन्येतुयथोद्देशंविनीतवत् ॥ भरतोभ्रातरंवाक्यंशत्रुघ्नमिदमब्रवीत् ॥ २ ॥ क्षिप्रंवनमिदंसौम्यनरसंघैःसमंततः ॥ लुब्धैश्चसहितैरेभिस्त्वमन्वेषितुमर्हसि ॥ ३ ॥ गुहोज्ञातिसहस्रेणशरचापासिपाणिना ॥ समन्वेषतुकाकुत्स्थावस्मिन्परिवृतःस्वयम् ॥ ४ ॥ अमात्यैःसहपौरैश्चगुरुभिश्चद्विजातिभिः ॥ सहसर्वंचरिष्यामिपद्भ्यांपरिवृतःस्वयम् ॥ ५ ॥ यावन्नरामंद्रक्ष्यामिलक्ष्मणंवामहाबलम् ॥ वैदेहींवामहाभागांनमेशांतिर्भविष्यति ॥ ६ ॥ यावन्नचंद्रसंकाशंतद्द्रक्ष्यामिशुभाननम् ॥ भ्रातुःपद्मविशालाक्षंनमेशांतिर्भविष्यति ॥ ७ ॥ सिद्धार्थःखलुसौमित्रिर्यश्चंद्रविमलोपमम् ॥ मुखंपश्यतिरामस्यराजीवाक्षंमहाद्युति ॥ ८ ॥ यावन्नचरणौभ्रातुःपार्थिवव्यंजनान्वितौ ॥ शिरसाप्रग्रहीष्यामिनमेशांतिर्भविष्यति ॥ ९ ॥ यावन्नराज्येराज्यार्हःपितृपैतामहेस्थितः ॥ अभिषिक्तोजलक्लिन्नोनमेशांतिर्भविष्यति ॥ १० ॥ कृतकृत्यामहाभागावैदेहजिनकात्मजा ॥ भर्तारंसागरांतायाःपृथिव्यायानुगच्छति ॥ ११ ॥ सुशुभश्चित्रकूटोसौगिरिराजसमोगिरिः ॥ यस्मिन्वसतिकाकुत्स्थःकुबेरइवनंदने ॥ १२ ॥ कृतकार्यमिदंदुर्गंवनंव्यालनिषेवितम् ॥ यदध्यास्तेमहाराजोरामःशस्त्रभृतांवरः ॥ १३ ॥ एवमुक्त्वामहाबाहुर्भरतःपुरुषर्षभः ॥ पद्भ्यामेवमहातेजाःप्रविवेशमहद्वनम् ॥ १४ ॥ सतानिद्रुमजालानिजातानिगिरिसानुषु ॥ पुष्पिताग्राणिमध्येनजगामवदतांवरः ॥ १५ ॥

निषादाः एभिः आसन्नैर्गुहभृत्यैः ॥ ३ ॥ ज्ञातिसहस्रेण परिवृत इत्यन्वयः ॥ ४ ॥ चरिष्यामि अहमन्वेषयन्निति शेषः । पौरैः सहवर्तमानैरमात्यैर्द्विजातिभिः सहवर्तमानैर्गुरुभिश्च परिवृतः ॥ ५ ॥ ६ ॥ शुभाननमिति कर्मधारयः । शांतिर्दुःखशांतिः ॥ ७ ॥ चंद्रविमलोपमं विमलचंद्रसदृशम् ॥ ८ ॥ पार्थिवव्यंजनं रेखाध्वजकुलिशातपत्रादि तावन्मे न शांतिरित्यन्वयः ॥ ९ ॥ १० ॥ ११ ॥ गिरिराजसमः हिमवत्सदृशः ॥ १२ ॥ कृतकार्यं कृतार्थं स्थावरत्वमोचकरामपादरजोव्याप्ततयेति भावः । दुर्गं दुष्प्रवेशम् । व्यालाः सर्पाः ॥ १३ ॥ १४ ॥ मध्येनेत्येनबंतम् तद्योगे तानीति द्वितीया । द्रुमजलानां मध्ये इत्यर्थः ॥ १५ ॥

अग्नेर्ध्वजं धूमम् । रामाश्रमगतस्यांते इति पाठे तदाश्रमगतस्य सालस्यांते उपरिबद्धं उच्छ्रितं ध्वजं कोविदारध्वजं दृष्टेत्यर्थः । धूमदर्शनस्य पूर्वमेव जातत्वेन तस्यानिर्णायकत्वादिति कतकः ॥ १६ ॥ तं ध्वजम् ॥ १७ ॥ पुण्यजनास्तपस्विनः पुनर्निवेश्य अन्वेषणनियोजितामपि चमूं स्थापयित्वा गुहेनेति प्रधानजनोपलक्षणम् ॥ १८ ॥ जयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टनवतितमः सर्गः ॥ ९८ ॥ ॥ निविष्टायामिति । शत्रुघ्नमिति प्रतियोगे द्वितीया । शत्रुघ्नस्य रामाश्रमप्रत्यासत्तिचिह्नादि दर्शयन्नित्यर्थः ॥ १ ॥ आनयेति संदिश्य स्वयं त्वरितः सन्नग्रे जगाम नतु मातॄः प्रतीक्ष्य स्थित इत्यर्थः ॥ २ ॥ रामदर्शनजस्तर्षः रामदर्शनमुद्दिश्य जनितोभिलाषः स भरतवत्तस्य च शत्रुघ्नस्य सुमंत्रस्य च अतः शत्रुघ्नं भरतमनुधावंतं अदूरात्तत्समीपं यथा भवति तथान्वपद्यत अन्वधावत् ॥ ३ ॥ तापसानामालयैः सह संस्थिताम् । यद्वा तापसालयसमानसंस्थानां पर्णकुटीं पर्णप्राधान्येन निर्मितां कुटीं शालाम् इयं दर्शनार्थमागततपस्व्यादिसंव्यवहार

सगिरेश्चित्रकूटस्यसालमारुह्यसत्वरम् ॥ रामाश्रमगतस्याग्नेर्ददर्शध्वजमुच्छ्रितम् ॥ १६ ॥ तंदृष्ट्वाभरतःश्रीमान्मुमोदसहबांधवः ॥ अत्ररामइति ज्ञात्वागतःपारमिवांभसः ॥ १७ ॥ सचित्रकूटेतुगिरौनिशम्यरामाश्रमंपुण्यजनोपपन्नम् ॥ गुहेनसार्धंत्वरितोजगामपुनर्निवेश्यैवचमूंमहात्मा ॥ १८ ॥ इत्यार्षेश्रीम०वा०आ०अयोध्याकांडेअष्टनवतितमः सर्गः ॥ ९८ ॥ निविष्टायांतुसेनायामुत्सुकोभरतस्ततः ॥ जगामभ्रातरंद्रष्टुंशत्रुघ्नमनुदर्शयन् ॥ ॥ १ ॥ ऋषिंवसिष्ठंसंदिश्यमातॄर्मेशीघ्रमानय ॥ इतित्वरितमग्रेसजगामगुरुवत्सलः ॥ २ ॥ सुमंत्रस्त्वपिशत्रुघ्नमदूरादन्ववर्तत ॥ रामदर्शनजस्तर्षो भरतस्येवतस्यच ॥ ३ ॥ गच्छन्नेवाथभरतस्तापसालयसंस्थिताम् ॥ भ्रातुःपर्णकुटींश्रीमानुटजंचददर्शह ॥ ४ ॥ शालायास्त्वग्रतस्तस्याददर्श भरतस्तदा ॥ काष्ठानिचावभग्नानिपुष्पाण्यपचितानिच ॥५॥ सलक्ष्मणस्यरामस्यददर्शाश्रममेयुषः ॥ कृतंवृक्षेष्वभिज्ञानंकुशचीरैःक्वचित्क्वचित् ॥ ॥ ६ ॥ ददर्शभवनेतस्मिन्महतःसंचयान्कृतान् ॥ मृगाणांमहिषाणांचकरीषैःशीतकारणात् ॥ ७ ॥ गच्छन्नेवमहाबाहुर्द्युतिमान्भरतस्तदा ॥ शत्रुघ्नं चाब्रवीद्धृष्टस्तानमात्यांश्चसर्वशः ॥ ८ ॥ मन्येप्राप्ताःस्मतंदेशंभरद्वाजोयमब्रवीत् ॥ नातिदूरेहिमन्येहंनदींमंदाकिनीमितः ॥ ९ ॥ उच्चैर्बद्धानिचीराणिलक्ष्मणेनभवेदयम् ॥ अभिज्ञानकृतःपंथाविकालेगंतुमिच्छता ॥ १० ॥ इतश्चोदात्तदंतानांकुंजराणांतरस्विनाम् ॥ शैलपार्श्वेपरिक्रांतमन्योन्यमभिगर्जताम् ॥ ११ ॥ यमेवाधातुमिच्छंतितापसाःसततंवने ॥ तस्यासौदृश्यतेधूमःसंकुलःकृष्णवर्त्मनः ॥ १२ ॥ अत्राहंपुरुषव्याघ्रंगुरुसत्कारकारिणम् ॥ आर्यंद्रक्ष्यामिसंहृष्टंमहर्षिमिवराघवम् ॥ १३ ॥

प्रयोजना । उटजबहिःस्था उटजं सभित्तिकवाटं दारुबद्धं गृहं सीतानिवेशार्थं कृतम् ॥ ४ ॥ तस्याः शालायाः पर्णकुटीसंज्ञायाः अवभग्नानि होमार्थं अपचितानि बल्यर्थं संपादितानि ॥ ५ ॥ एयुषः आङ्पूर्वाद्दिणः क्वसुः । कुशैर्वल्कलैश्च मार्गपरिज्ञानार्थं कृतम् अभिज्ञानं चिह्नं ददर्श ॥ ६ ॥ शीतकारणाच्छीतनिवृत्तिकारणात् तद्रूपप्रयोजनार्थं मृगादीनां करीषैः कृतान्संचयान् ददर्श । चैत्रशुक्लदशम्यां प्रस्थानेन तत्र काले वैशाखांतमपररात्रे शीतस्य जायमानत्वात् ॥ ७ ॥ एवमेतान्पदार्थान्पश्यन्गच्छन्नेव शत्रुघ्नमब्रवीत् ॥ ८ ॥ मंदाकिनीमित इति । आश्रम इति शेषः ॥ ९ ॥ यत उच्चैर्बद्धानि चीराणि तस्मात् विकाले मार्गस्य स्पष्टदर्शनायोग्ये काले जलाहरणाद्यर्थं गंतुमिच्छता लक्ष्मणेनाभिज्ञानकृतः कृताभिज्ञानः आश्रमपंथा अयमेव भवेत् ॥ १० ॥ अभिज्ञानकरणकारणं वनमार्गं दर्शयति इतश्चेति । इदं चेति पाठांतरम् उदात्तदंतानां महादंतानाम् परिक्रांतं परिक्रमणं स्यात् गमनमार्ग इति यावत् । तत्र गमननिवृत्त्यर्थं चेदमभिज्ञानकरणमिति भावः ॥ ११ ॥ तापसा वने यमाधातुं सायंप्रातर्होमार्थमिच्छंति तस्यायं दृश्यते

धूमः ॥ १२ ॥ १३ ॥ स राघवः भरतः मंदाकिनीमनुचित्रकूटं प्राप्त इत्यन्वयः । तं जनममात्यादिजनम् ॥ १४ ॥ वीरासने योगिनामासने ॥ १५ ॥ १६ ॥ इति लोकेन समाकृष्टः निंदितो यस्मादतो मे जन्म धिक् सोहमेतदपयशः परिहाराय रामं प्रसादयन् रामप्रसादहेतवे तस्य रामस्य पादेषु पूजायां बहुवचनम् सीताया लक्ष्मणस्य च पादयोः पतिष्यामि । स्वापराधप्रसादनाय कनीयःस्वपि प्रणामो लोकप्रसिद्ध इति कतकः । अन्यस्तु श्रद्धाजाड्यात्सीतायाश्च पुनःपुनारितिपाठं कल्पयति ॥ १७ ॥ १८ ॥ सालाः वटपलाशादिदृढविशालपर्णवंतो वृक्षाः । अश्वकर्णो वृक्षविशेषः ॥ १९ ॥ भारसाधनैः अति गुरुकार्यसाधनैः । सारो बले स्थिरांशे च ॥ २० ॥ भोगवती नागलोकः ॥ २१ ॥ महारजतवासोभ्यां स्वर्णमयकोशाभ्यां चर्मफलकम् ॥ २२ ॥ कांचनभूषितैर्गोधांगुलित्रैरुपलक्षितामिति शेषः । सिंहगु

अथगत्वामुहूर्तंतुचित्रकूटंसराघवः ॥ मंदाकिनीमनुप्राप्तस्तंजनंचेदमब्रवीत् ॥ १४ ॥ जगत्यांपुरुषव्याघ्रआस्तेवीरासनेरतः ॥ जनेंद्रोनिर्जनंप्राप्य धिङ्मेजन्मसजीवितम् ॥ १५ ॥ मत्कृतेव्यसनंप्राप्तोलोकनाथोमहाद्युतिः ॥ सर्वान्कामान्परित्यज्यवनेवसतिराघवः ॥ १६ ॥ इतिलोकसमाकृष्टः पादेष्वद्यप्रसादयन् ॥ रामंतस्यपतिष्यामिसीतायालक्ष्मणस्यच ॥ १७ ॥ एवंसविलपंस्तस्मिन्वनेदशरथात्मजः ॥ ददर्शमहतींपुण्यांपर्णशालां मनोरमाम् ॥ १८ ॥ सालतालाश्वकर्णानांपर्णैर्बहुभिरावृताम् ॥ विशालांमृदुविस्तीर्णांकुशैर्वेदिमिवाध्वरे ॥ १९ ॥ शक्रायुधनिकाशैश्चकार्मुकैर्भारसाधनैः ॥ रुक्मपृष्ठैर्महासारैःशोभितांशत्रुबाधकैः ॥ २० ॥ अर्करश्मिप्रतीकाशैर्घोरैस्तूणगतैःशरैः ॥ शोभितांदीप्तवदनैःसर्पैर्भोगवतीमिव ॥ ॥ २१ ॥ महारजतवासोभ्यामसिभ्यांचविराजिताम् ॥ रुक्मबिंदुविचित्राभ्यांचर्मभ्यांचापिशोभिताम् ॥ २२ ॥ गोधांगुलित्रैरासक्तैश्चित्रकांचनभूषितैः ॥ अरिसंघैरनाधृष्यांमृगैःसिंहगुहामिव ॥ २३ ॥ प्रागुदक्प्रवणांवेदिंविशालांदीप्तपावकाम् ॥ ददर्शभरतस्तत्रपुण्यांरामनिवेशने ॥ २४ ॥ निरीक्ष्यसमुहूर्तंतुददर्शभरतोगुरुम् ॥ उटजेराममासीनंजटामंडलधारिणम् ॥ २५ ॥ कृष्णाजिनधरंतंतुचीरवल्कलवाससम् ॥ ददर्शराममासीनमभीतःपावकोपमम् ॥ २६ ॥ सिंहस्कंधंमहाबाहुंपुंडरीकनिभेक्षणम् ॥ पृथिव्याःसागरांतायाभर्तारंधर्मचारिणम् ॥ २७ ॥ उपविष्टंमहाबाहुंब्रह्माणमिवशाश्वतम् ॥ स्थंडिलेदर्भसंस्तीर्णेसीतयालक्ष्मणेनच ॥ २८ ॥ तंदृष्ट्वाभरतःश्रीमान्दुःखमोहपरिप्लुतः ॥ अभ्यधावतधर्मात्माभरतःकैकयीसुतः ॥ ॥ २९ ॥ दृष्ट्वैवविललापार्तोबाष्पसंदिग्धयागिरा ॥ अशक्नुवन्वारयितुंधैर्याद्वचनमब्रुवन् ॥ ३० ॥ यःसंसदिप्रकृतिभिर्भवेद्युक्तउपासितुम् ॥ वन्यैर्मृगैरुपासीनःसोयमास्तेममाग्रजः ॥ ३१ ॥

हामिव पर्णशालां ददर्शेत्यन्वयः ॥ २३ ॥ प्रागुदक्प्रवणां ईशानभागे निम्नाम् ॥ २४ ॥ निरीक्ष्येति अग्निमिति शेषः । गुरुं रामं ददर्श कृष्णाजिनेत्याद्युच्यमानविशेषणं रामम् ॥ २५ ॥ अभितः समीपे ददर्श ॥ २६ ॥ २७ ॥ शाश्वतं ब्रह्माणं हिरण्यगर्भम् ॥ २८ ॥ अभ्यधावत धावन्निव त्वरया जगाम । अत्र भरतस्येव कवेरपि वर्णनीयमयीभावेनातिहर्षाविष्टत्वादत्र प्रकरणे द्विरुक्तिर्न दोषाय ॥ २९ ॥ दृष्ट्वैव दर्शनमात्रेणैवार्तः खिन्नः सन् तां चार्तिं धैर्याद्धारयितुमशक्नुवन् अतएव बाष्पसंदिग्धवर्णया गिरा वागिंद्रियेण वचनमब्रुवन्नव्यक्तं वदन्विललाप ॥ ३० ॥ विलापप्रकारमाह यः संसदीति ॥ ३१ ॥

बहुमहस्रद्रव्यमूल्यैर्वासोभिरलंकर्तुं यः पुरे उचितः स मृगाजिने अंतरीयोत्तरीयरूपे मृगचर्मणी प्रवस्ते । धर्मं पितृवचनपरिपालनरूपम् ॥ ३२ ॥ ३३ ॥ यथादिष्टैर्यथाविहितैः ऋत्विक्क्लेशसाध्यैर्यस्य धर्मसंचयो युक्तः स स्वशरीरक्लेशेन संभूतमुत्पन्नं धर्मं मार्गते ॥ ३४ ॥ मलेन दंडवत्त्रिषवणाप्लवमात्रान्मलस्थितिरंगे ॥ ३५ ॥ ३६ ॥ पादावप्राप्येति दुःखातिशयवशात् ॥ ३७ ॥ तत एव पुनर्नोवाच ॥ ३८ ॥ ततः बाष्पावरुद्धकंठत्वात् ॥ ३९ ॥ ४० ॥ राजसुतौ रामलक्ष्मणौ ॥ ४१ ॥ अश्रूण्यमुंचन् प्रविहाय हर्षं पूर्वं तद्दर्शनजसंतोषः पश्चात्तद्दुःखदर्शनजदुःखादश्रुपाताश्च ॥ ४२ ॥ रेभेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे नवनवतितमः सर्गः ॥ ९९ ॥ ॥ जटिलमिति । अद्यप्रभृति भूमौ तु शयिष्ये । जटाचीराणि धारयन्नित्यष्टाशीतितमे भरतोक्तेर्भरतस्य जटि

वासोभिर्बहुसाहस्रैर्योमहात्मापुरोचितः ॥ मृगाजिनेसोयमिहप्रवस्तेधर्ममाचरन् ॥ ३२ ॥ अधारयद्योविविधाश्चित्राःसुमनसःसदा ॥ सोयंजटाभारमिमंसहतेराघवःकथम् ॥ ३३ ॥ यस्ययज्ञैर्यथादिष्टैर्युक्तोधर्मस्यसंचयः ॥ शरीरक्लेशसंभूतंसधर्मंपरिमार्गते ॥ ३४ ॥ चंदनेनमहार्हेणयस्यांगमुपसेवितम् ॥ मलेनतस्यांगमिदंकथमार्यस्यसेव्यते ॥३५॥ मन्निमित्तमिदंदुःखंप्राप्तोरामःसुखोचितः ॥ धिग्जीवितंनृशंसस्यममलोकविगर्हितम् ॥३६॥ इत्येवंविलपन्दीनःप्रस्विन्नमुखपंकजः ॥ पादावप्राप्यरामस्यपपातभरतोरुदन् ॥ ३७ ॥ दुःखाभितप्तोभरतोराजपुत्रोमहाबलः ॥ उक्त्वार्येतिसकृद्दीनंपुनर्नोवाचकिंचन ॥ ३८ ॥ बाष्पैःपिहितकंठश्चप्रेक्ष्यरामंयशस्विनम् ॥ आर्येत्येवाभिसंक्रुश्यव्याहर्तुंनाशकत्ततः ॥ ३९ ॥ शत्रुघ्नश्चापिरामस्यववंदेचरणौरुदन् ॥ तावुभौचसमालिंग्यरामोप्यश्रूण्यवर्तयत् ॥ ४० ॥ ततःसुमंत्रेणगुहेनचैवसमीयतूराजसुतावरण्ये ॥ दिवाकरश्चैवनिशाकरश्चयथांबरेशुक्रबृहस्पतिभ्याम् ॥ ४१ ॥ तान्पार्थिवान्वारणयूथपार्हान्समागतांस्तत्रमहत्यरण्ये ॥ वनौकसस्तेभिसमीक्ष्यसर्वेत्वश्रूण्यमुंचन्प्रविहायहर्षम् ॥ ४२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे नवनवतितमः सर्गः ॥ ९९ ॥ जटिलंचीरवसनंप्रांजलिंपतितंभुवि ॥ ददर्शरामोदुर्दर्शंयुगांतेभास्करंयथा ॥१॥ कथंचिदभिविज्ञायविवर्णवदनंकृशम् ॥ भ्रातरंभरतंरामःपरिजग्राहपाणिना ॥ २ ॥ आघ्रायरामस्तंमूर्ध्निपरिष्वज्यचराघवम् ॥ अंकेभरतमारोप्यपर्यपृच्छतसादरम् ॥ ३ ॥ क्वनुतेभूत्पितातातयदरण्यंत्वमागतः ॥ नहित्वंजीवतस्तस्यवनमागंतुमर्हसि ॥ ४ ॥ चिरस्यवतपश्यामिदूराद्भरतमागतम् ॥ दुष्प्रतीकमरण्येस्मिन्किंतातवनमागतः ॥ ५ ॥ कच्चिन्नुधरतेतातराजायत्त्वमिहागतः ॥ कच्चिन्नदीनःसहसाराजालोकांतरंगतः ॥ ६ ॥

लत्वम् । यद्यपि नवतितमे सर्गे वसानो वाससी क्षौमे इति भरद्वाजदर्शनवेलायां श्रूयते तथापि गुहग्रामे प्रतिज्ञातस्य भरद्वाजाश्रमनिर्गमनानंतरं धारणमिति न विरोधः । युगांते भास्करं यथेति भुवि पतितमिति शेषः ॥ १ ॥ २ ॥ पर्यपृच्छत्समाहित इतिपाठे समाहितः कुशलप्रश्नद्वारा धर्मबोधने सावधानचित्तः ॥ ३ ॥ हे तात ते पिता क्वाभूत् इह परत्र वेत्यर्थः । कुत एवं संशयस्तत्राह नहीति । जीवतस्तस्य सेवां हित्वेति शेषः नार्हसि मदसन्निधौ तवैव पितृशुश्रूषाया अवश्यकर्तव्यत्वादिति भावः ॥ ४ ॥ दूरान्मातामहदेशात् चिरस्यागतं भरतं पश्यामि । बतेति हर्षे । दुष्प्रतीकमिति भरतविशेषणं वनविशेषणं च । आद्ये कार्श्यवैवर्ण्यादिना दुर्ज्ञेयाकारं वनमपि भीषणतया तथा ईदृशं वनं किमागतः किमागमनप्रयोजनमीदृशारण्ये इत्यर्थः । अरण्यं गजाद्युपभोग्यम् । तद्वर्तिवनमाम्रादियुतं मनुष्यभोग्यम् ॥ ५ ॥ अथ भरता

गमनं राजाज्ञया वा स्यात् राजमरणे दुःखाद्वा तत्राद्यमुपन्यस्यति कच्चिन्नु इति । भरते प्राणान् धारयति अथवा लोकांतरं गतः यत्त्वमिहागत इत्यनुकर्षः ॥ ६ ॥ अंत्यमेवं पक्षमवलंब्याह न ते राज्यं भ्रष्टमिति । मूलमभोरत्ययात्प्राप्तभ्रंशकम् । अनिश्चयाल्लोकप्रतारणाय वा पुनर्जीवनपक्षमवलंब्याह कच्चिच्छुश्रूषस इति ॥ ७ ॥ धर्मनिश्चितः धर्मे निश्चितं निश्चयो यस्य सः ॥ ८ ॥ उपाध्यायो वसिष्ठः ॥ ९ ॥ नंदति मद्वनवासत्वाद्राज्यलाभाभ्यामिति व्यंग्यम् ॥ १० ॥ कुलपुत्रो महाकुलप्रसूतस्ते पुरोहितस्तावकसकलहितकृत्यानुष्ठाता । एतेन वसिष्ठपुत्रः कश्चिदुक्तः ॥ ११ ॥ विधिज्ञः सकलहोमविधिज्ञः युक्तो नियुक्तः काले होमकाले वेदयते हुतं होष्यमाणं चाग्निम् ॥ १२ ॥ वैद्याः विद्यासु सर्वासु निपुणास्तान् ब्राह्मणानभिमन्यसे बहुमन्यसे । ब्राह्मणसामान्यविषयः प्रश्नोग्रे भविष्यति । यद्वा वैद्यान् चिकित्साप्रवीणान् ब्राह्मणानित्यर्थः । अपूतो ह्येषोमध्यो योभिषज्यतीति श्रुत्युक्तनिंदा तु शास्त्रानभिज्ञचिकित्साप्रवृत्तपरा । शास्त्राभिज्ञस्य भैषज्यं महते पुण्याय तन्नीविकापरो वा निषेध इति दिक् ॥ १३ ॥ इषुरमंत्रो बाणप्रयोगः ।

कच्चित्सौम्यनतेराज्यंभ्रष्टंबालस्यशाश्वतम् ॥ कच्चिच्छुश्रूषसेतातपितुःसत्यपराक्रम ॥ ७ ॥ कच्चिद्दशरथोराजाकुशलीसत्यसंगरः ॥ राजसूयाश्वमेधानामाहर्ताधर्मनिश्चितः ॥ ८ ॥ सकच्चिद्ब्राह्मणोविद्वान्धर्मनित्योमहाद्युतिः ॥ इक्ष्वाकूणामुपाध्यायोयथावत्तातपूज्यते ॥ ९ ॥ तातकच्चिच्चकौसल्यासुमित्राचप्रजावती ॥ सुखिनीकच्चिदार्याचदेवीनंदतिकैकयी ॥ १० ॥ कच्चिद्विनयसंपन्नःकुलपुत्रोबहुश्रुतः ॥ अनसूयुरनुद्रष्टासत्कृतस्तेपुरोहितः ॥ ११ ॥ कच्चिदग्निषुतेयुक्तोविधिज्ञोमतिमानृजुः ॥ हुतंचहोष्यमाणंचकालेवेदयतेसदा ॥ १२ ॥ कच्चिद्देवान्पितॄन्भृत्यान्गुरून्पितृसमानपि ॥ वृद्धांश्चतातवैद्यांश्चब्राह्मणांश्चाभिमन्यसे ॥ १३ ॥ इष्वस्त्रवरसंपन्नमर्थशास्त्रविशारदम् ॥ सुधन्वानमुपाध्यायंकच्चित्त्वंतातमन्यसे ॥ १४ ॥ कच्चिदात्मसमाःशूराःश्रुतवंतोजितेंद्रियाः ॥ कुलीनाश्चेंगितज्ञाश्चकृतास्तेतातमंत्रिणः ॥ १५ ॥ मंत्रोविजयमूलंहिराज्ञांभवतिराघव ॥ सुसंवृतोमंत्रिधुरैरमात्यैःशास्त्रकोविदैः ॥ १६ ॥ कच्चिन्निद्रावशंनैषिकच्चित्कालेवबुध्यसे ॥ कच्चिच्चापररात्रेषुचिंतयस्यर्थनैपुणम् ॥ १७ ॥ कच्चिन्मंत्रयसेनैकःकच्चिन्नबहुभिःसह ॥ कच्चित्तेमंत्रितोमंत्रोराष्ट्रंनपरिधावति ॥ १८ ॥ कच्चिदर्थंविनिश्चित्यलघुमूलंमहोदयम् ॥ क्षिप्रमारभसेकर्मनदीर्घयसिराघव ॥ १९ ॥ कच्चिन्नुसुकृतान्येवकृतरूपाणिवापुनः ॥ विदुस्तेसर्वकार्याणिनकर्तव्यानिपार्थिवाः ॥ २० ॥ कच्चिन्नतर्कैर्युक्त्यावायेचाप्यपरिकीर्तिताः ॥ त्वयावातववामात्यैर्बुध्यतेतातमंत्रितम् ॥ २१ ॥

अस्त्रं समंत्रः सः । वरशब्द उभयसंबद्धः । अर्थशास्त्रम् राजनीतिशास्त्रम् तत्र विशारदं पंडितं सुधन्वानं तन्नामानमुपाध्यायं धनुर्वेदाचार्यम् ॥ १४ ॥ १५ ॥ मंत्रिधुरैः मंत्रिश्रेष्ठैः शास्त्रकोविदैर्नीतिशास्त्रज्ञैः सुसंवृत्तः सुतरां गुप्तः ॥ १६ ॥ अर्थनैपुणमर्थप्राप्त्युपायम् ॥ १७ ॥ नैकः एकेन मंत्रे क्रियमाणे स्वकार्याभिनिवेशेन गुणागुणयोर्याथार्थ्यग्रहणम् न सिद्ध्यति । बहुभिर्मंत्रणे प्रथममैकमत्यमेव न घटेत मंत्रभेदश्च भवेदिति भावः । राष्ट्रं न परिधावति लोकैर्न ज्ञायत इत्यर्थः ॥ १८ ॥ लघुमूलमल्पयत्नसाध्यं महोदयं महाफलं न दीर्घयसि न विलंबयसि ॥ १९ ॥ पार्थिवाः सामंतास्ते मंत्रितानि सर्वकार्याणि सुकृतानि निष्पन्नान्येव कृतरूपाणि कृतकल्पानि वा विदंति न कर्तव्यानि भावित्वेनेत्यर्थः ॥ २० ॥ ये त्वदीया मंत्रास्त्वयामात्यैश्चापरिकीर्तिता अपि युक्त्यार्थापत्त्या तर्कैस्तत्साध्यैरनुमानैर्वा यद्वा तर्कास्तत्कारणा

नुमापकाः यत्कर्यः साक्षात्तदनुमापिकाः परैर्न बुध्यंते किल । किंच परकृतं मंत्रितं त्वया त्वदमात्यैर्वा बुध्यते किल ॥ २१ ॥ सहस्रैस्त्यक्त्वैरपीति शेषः । पंडितपरिग्रहे हेतुमाह पंडित इति । अर्थकृच्छ्रेषु अथसर्के ष्टेषु [illegible]ःश्रेयसं कुयात् । अव्यभिचरितनिस्तारोपायबोधनेनेति शेषः ॥ २२ ॥ सहायता सहायकार्यक्षमता ॥ २३ ॥ विचक्षणोऽभ्यस्तनीतिशास्त्रः ॥ २४ ॥ मुख्या महांतः ॥ २५ ॥ उपधा उत्कोचस्तमतीतान् तदग्राहिणः । यद्वोपाधिमयुक्तसंश्रयरहितान् अतएव पितृपैतामहान् । शुचीन् बाह्यांतरेंद्रियशुद्धान् ॥२६॥ उद्वेजिताः प्रजा मंत्रिणश्च राष्ट्रे तव त्वां नावजानंति नावमन्यंते ॥२७॥ याजकाः किंचि त्पापानुसंधानेन पतितमिव त्वामयाज्योयमिति मत्वा नावजानंति किल । तत्र दृष्टांतः उग्रेत्यादि । स्त्रियः कुलस्त्रियः उग्राख्यहीनजातीयस्त्रीप्रतिग्रहीतारं तां च कामयानं कामयमानं तस्यामत्यंतासक्तं यथावजानंतीत्यर्थ इति कतकः । उग्रमतीतिपाठः । उग्रेण कर्मणा बलात्कारादिना प्रतिग्रहीतारं कामयानं कामुकं स्त्रिय इव याजकाः पतितमिव च नावजानंति प्रजा इति शेषः । प्रजातिक्रमणमुग्रकरग्रहणं च त्वयि नास्ति कच्चिदिति भाव इति तीर्थः । परे तु उग्रप्रतिग्रहीतारं उग्रः शिवस्तत्प्रतिग्रहीतारमल्पपुंस्त्वं तत्प्रतिग्रहीतुरीदृशषंढतायाः कर्मविपाकशास्त्रे उक्तेरित्याहुः ॥ २८ ॥ उपायकुशलं सामाद्युपायचतुरं वैद्यं विद्याविदं राजनीतिशा

कच्चित्सहस्रैर्मूर्खाणामेकमिच्छसिपंडितम् ॥ पंडितोह्यर्थकृच्छ्रेषुकुर्यान्निःश्रेयसंमहत् ॥ २२ ॥ सहस्राण्यपिमूर्खाणांयद्युपास्तेमहीपतिः ॥ अथवाप्ययुतान्येवनास्तितेषुसहायता ॥ २३ ॥ एकोप्यमात्योमेधावीशूरोदक्षोविचक्षणः ॥ राजानंराजपुत्रंवाप्रापयेन्महतींश्रियम् ॥२४॥ कच्चिन्मुख्यामहत्स्वेवमध्यमेषुचमध्यमाः ॥ जघन्याश्चजघन्येषुभृत्यास्तेतातयोजिताः ॥ २५ ॥ अमात्यानुपधातीतान्पितृपैतामहाञ्छुचीन् ॥ श्रेष्ठाञ्छ्रेष्ठेषुकच्चित्त्वंनियोजयसिकर्मसु ॥ २६ ॥ कच्चिन्नोग्रेणदंडेनभृशमुद्वेजिताःप्रजाः ॥ राष्ट्रेतवावजानंतिमंत्रिणःकैकयीसुत ॥ २७ ॥ कच्चित्त्वांनावजानंतियाजकाःपतितंयथा ॥ उग्रप्रतिग्रहीतारंकामयानमिवस्त्रियः ॥ २८ ॥ उपायकुशलंवैद्यंभृत्यंसंदूषणेरतम् ॥ शूरमैश्वर्यकामंचयोनहंतिसहन्यते ॥ २९ ॥ कच्चिद्धृष्टश्चशूरश्चधृतिमान्मतिमाञ्छुचिः ॥ कुलीनश्चानुरक्तश्चदक्षःसेनापतिःकृतः ॥३०॥ बलवंतश्चकच्चित्तेमुख्यायुद्धविशारदाः ॥ दृष्टापदानाविक्रांतास्त्वयासत्कृत्यमानिताः ॥ ३१ ॥ कच्चिद्बलस्यभक्तंचवेतनंचयथोचितम् ॥ संप्राप्तकालंदातव्यंददासिनविलंबसे ॥ ३२ ॥ कालातिक्रमणेह्येवभक्तवेतनयोभृताः ॥ भर्तुरप्यतिकुप्यंतिसोनर्थःसुमहान्कृतः ॥ ३३ ॥ कच्चित्सर्वेनुरक्तास्त्वांकुलपुत्राःप्रधानतः ॥ कच्चित्प्राणांस्तवार्थेषुसंत्यजंतिसमाहिताः ॥ ॥ ३४ ॥ कच्चिज्ज्ञानपदोविद्वान्दक्षिणःप्रतिभानवान् ॥ यथोक्तवादीदूतस्तेकृतोभरतपंडितः ॥ ३५ ॥ कच्चिदष्टादशान्येषुस्वपक्षेदशपंचच ॥ त्रिभिस्त्रिभिरविज्ञातैर्वेत्सितीर्थानिचारणैः ॥ ३६ ॥

स्त्रज्ञं भृत्यं संदूषणे रतं येन केनापि हेतुना आप्तभृत्यविघटने रतं शूरं मरणनिर्भयम् ऐश्वर्यकामं राज्याभिलाषिणं यो न हंति स वध्यते हन्यत इति तीर्थः । उपायकुशलं राज्ञः सकाशादर्थग्रहणार्थं व्याधिवर्धनोपायकुशलं वैद्यं भिषजं स्वामिसंदूषणे रतं भृत्यं सेवकं च राजानमपच्छिद्य तदैश्वर्यकामम् शूरं सेवकरूपं प्रभुं च यो न हंति स राजा तैरेव भिषजादिभिर्हन्यते इत्यर्थं कतक आह ॥ २९ ॥ शूराः परयोधाभिभवनसमर्थाः । धृतिमान् विपदि प्रशस्तधैर्यः । दक्षश्चतुरः ॥ ३० ॥ मुख्याः गणमुख्याः दृष्टापदानाः दृष्टं द्वित्रिवारानुभूतं अपदानं पूर्ववृत्तं पौरुषं येषां ते । विक्रांताः शूराः ॥ ३१ ॥ भक्तं दैनंदिनदेयान्नं । वेतनं प्रतिमासदेयम् ॥ ३२ ॥ भृताः भृतिजीविनो भृत्याः ॥ ३३ ॥ कुलपुत्राः ज्ञातयः । प्रधानतः प्रधानाः ॥ ३४ ॥ प्रतिभानवान् प्रत्युत्पन्नमतिः । यथोक्तवादी यथोक्तसंदेशप्रतिसंदेशवक्ता । पंडितः परिच्छेत्ता दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ॥ इंगिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्भवमिति मनोः ॥ ३५ ॥ कच्चिदष्टादशेति । तानि च मंत्री १ पुरोहितः २ युवराजा ३ सेनापतिः ४ दौवारिकः ५ अंतःपुराधिकृतः ६

बंधनागाराधिकृतः ७ धनाध्यक्षः ८ राजाज्ञया आज्ञाप्येषु वक्ता ९ प्राड्विवाकसंज्ञो व्यवहारप्रष्टा १० धर्मासनाधिकृतः ११ व्यवहारनिर्णेता सभ्याख्यः १२ सेनाया जीवितभृतिदानाध्यक्षः १३ कर्मांते वेतनग्राहि
णः १४ नगराध्यक्षः १५ राष्ट्रांतपालः अयमेवाटविकः १६ दुष्टानां दंडनाधिकारी १७ जलगिरिवनस्थलदुर्गपालाः १८ एतान्येव स्वपक्षे मंत्रिपुरोहितयुवराजान्हित्वा च पंचदश । एकैकस्मिन्विषये त्रिभिस्त्रिभिरभि
ज्ञातैः परस्परमितरैश्चाभिज्ञातैः एतान्यष्टादशतीर्थानि वेत्सि कच्चित् । यो नौ जलावतारे च मंत्र्यायष्टादशस्वपि ॥ पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपीति । स्वदेशेप्येतैर्न्यायतो व्यवहारः । प्रवर्त्यते न वेति विचार
णीयं परदेशे चेति भावः ॥ ३६ ॥ व्यपास्तान्निष्कासिताम् प्रतियातान्पुनरागतान् दुर्बलान्दुर्बलानपि अनवज्ञायेति दुर्बलोयमहितः किमस्माकं करिष्यतीत्युपेक्षां न करोषि कच्चित् ॥ ३७ ॥ लोकायतिकान् चार्वाक
मतानुचारिणः प्रत्यक्षमात्रप्रमाणकान् अपरे लोकायतिकाः शुष्कतर्कवावदूकाः । ब्राह्मणत्वेपि तदपरिग्रहहेतुमाह अनर्थेति । परलोकतत्साधनाभावरूपानर्थप्रतिपादनकुशलाः अतएव बालाः अज्ञाः वेदज्ञसन्निधाविति
शेषः । पंडितमानिनः स्वयूथ्येष्वेव केवलमात्मनः पंडितान्मन्यंते नान्यत्र ॥ ३८ ॥ द्वितीयलोकायतानां त्यागे हेतुमाह धर्मेत्यादि । मुख्येषु मुख्यप्रमाणभूतेषु आन्वीक्षिकीं तर्कविद्या शुष्कतर्कविद्याजनितां बुद्धिमव

कच्चिद्व्यपास्तानहितान्प्रतियातांश्चसर्वदा ॥ दुर्बलाननवज्ञायवर्तसेरिपुसूदन ॥ ३७ ॥ कच्चिन्नलोकायतिकान्ब्राह्मणांस्तातसेवसे ॥ अनर्थकुशलाह्ये
तेबालाःपंडितमानिनः ॥ ३८ ॥ धर्मशास्त्रेषुमुख्येषुविद्यमानेषुदुर्बुधाः ॥ बुद्धिमान्वीक्षिकींप्राप्यनिरर्थंप्रवदंतिते ॥ ३९ ॥ वीरैरध्युषितां
पूर्वमस्माकंतातपूर्वकैः ॥ सत्यनामांदृढद्वारांहस्त्यश्वरथसंकुलाम् ॥ ४० ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःस्वकर्मनिरतैःसदा ॥ जितेंद्रियैर्महोत्साहैर्वृतामार्यैः
सहस्रशः ॥ ४१ ॥ प्रासादैर्विविधाकारैर्वृतांवैद्यजनाकुलाम् ॥ कच्चित्समुदितांस्फीतामयोध्यांपरिरक्षसे ॥ ४२ ॥ कच्चिच्चैत्यशतैर्जुष्टःसुनिविष्टजना
कुलः ॥ देवस्थानैःप्रपाभिश्चतटाकैश्चोपशोभितः ॥ ४३ ॥ प्रहृष्टनरनारीकःसमाजोत्सवशोभितः ॥ सुकृष्टसीमापशुमान्हिंसाभिरभिवर्जितः
॥ ४४ ॥ अदेवमातृकोरम्यःश्वापदैःपरिवर्जितः ॥ परित्यक्तोभयैःसर्वैःखनिभिश्चोपशोभितः ॥ ४५ ॥ विवर्जितोनरैःपापैर्ममपूर्वैःसुरक्षितः ॥
कच्चिज्जनपदःस्फीतःसुखंवसतिराघव ॥ ४६ ॥ कच्चित्तेदयिताःसर्वेकृषिगोरक्ष्यजीविनः ॥ वार्तायांसांप्रतंतातलोकोयंसुखमेधते ॥ ४७ ॥ तेषांगु
प्तिपरीहारैःकच्चित्तेभरणंकृतम् ॥ रक्ष्याहिराज्ञाधर्मेणसर्वेविषयवासिनः ॥ ४८ ॥ कच्चित्स्त्रियःसांत्वयसेकच्चित्तास्तेसुरक्षिताः ॥ कच्चिन्नश्रद्दधास्यासां
कच्चिद्गुह्यंनभाषसे ॥ ४९ ॥

लंब्य निरर्थं निष्प्रयोजनं वदंति यथात्मनो ज्ञानाश्रयत्वं ईशो जगन्निमित्तकारणं नित्यज्ञानादि गुणकश्चेत्यादिश्रुतिविरुद्धवादाभिप्रायमिदम् ॥ ३९ ॥ सत्यनामामयोध्येत्यन्वर्थनामाम् ॥ ४० ॥ आर्यैरुक्तत्रैवर्णिकैः ॥
॥ ४१ ॥ समुदितां सिद्धां स्फीतां समृद्धाम् ॥ ४२ ॥ चैत्यशतैरश्वमेधांतयागानेकचयनप्रदेशैः । कच्चिच्चैत्यशतैरिति पाठः । सुनिविष्टैः सुप्रतिष्ठितैर्जनैराकुलो निबिडः ॥ ४३ ॥ प्रभिन्ननरनारीक इतिपाठे प्रभेदः
संतोषः सुकृष्टाः सीमास्तत्तत्क्षेत्रप्रांतदेशाः पशवश्च यस्मिन्स तथा ॥ ४४ ॥ अदेवमातृक इति । नदीमातृक इत्यर्थः नद्यंबुजीवनो देशो नदीमातृक उच्यते । वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृक इति । खनिः
स्वर्णरत्नाद्याकरः ईदृशो जनपदः सर्वैर्भयैः परित्यक्तः कच्चिदस्ति ॥ ४५ ॥ स च सुखं वसति कच्चिदित्यर्थः ॥ ४६ ॥ कृषिगोरक्ष्यजीविनो वैश्याः । वार्ता कृषिगोरक्ष्यवाणिज्यकेयं वार्तेत्युदाहृतम् । तत्र सांप्रतं वर्त
ते इति शेषः । लोको जीवलोकः कृष्यादौ स्थितः सुखमेधते कच्चित ॥ ४७ ॥ गुप्तिपरीहारैः गुप्तिरिष्टप्रापणं परिहारोऽनिष्टपरिहारस्तैस्तेषां कृष्यादिजीविनां भरणं कृतं कच्चिदिति तीर्थः । गुप्तपरीहारैरितिपाठः ।
गुप्त्यर्थनियुक्तै राजमनुष्यैः क्रियमाणतस्कराद्यनर्थपरिहारैस्ते त्वया भरणं कृतं कश्चिदिति कतकः ॥ ४८ ॥ ताः स्त्रियः सुरक्षितास्त्वयेत्यर्थः न श्रद्दधास्यासामिति वचनादिकं वास्तवमिति शेषः । गुह्यमप्रकाश्यत्व

त्तांतमिष्टेति मत्वा न भाषसे कच्चित् ॥ ४९ ॥ नागवनं गजोत्पत्तिस्थानभूतं वनम् धेनुका धेनवः स्वार्थे कः । गणिकाः करिण्यः वेश्याकरिण्योर्गणिका करिण्यादिसंपादनविषये तृप्तिं नाप्नोषि कच्चित् ॥ ५० ॥ भूषितं सभायां स्थित्वात्मानमिति शेषः । तथा महापथे चात्मानं दर्शयसे ॥ ५१ ॥ कर्मांताः कर्मकराः अविशंकया निर्भयतया ते प्रत्यक्षा न किल वा अथवा सर्वे ते उत्सृष्टाः परित्यक्तदर्शना न अत्र कर्मकरविषये मध्यमेव नातिदर्शनादर्शनयोर्मध्यरीत्या करणमेव कारणमर्थप्राप्तिकारणम् ॥ ५२ ॥ ५३ ॥ आयोधनागमः व्ययो भोगबलरक्षाद्यर्थं त्यागः अपात्रेषु नटगायकादिषु ॥ ५४ ॥ अभ्यागतोऽतिथिर्यैः कच्चित् व्ययः आयात्र्यूनं इति शेषः ॥ ५५ ॥ आर्यः साधुः शुद्धात्मापि सन् अपकर्मणा स्तेयागम्यागमनादिदोषेण क्षारितोऽभिशस्तः शास्त्रकुशलैर्धर्मशास्त्रकुशलैरदृष्ट एवानिर्णीतदोष एव लोभाद्धनलोभाच्छुचिरपि न बध्यते न दंड्यते कच्चित् ॥ ५६ ॥ गृहीतः पालकैर्धनस्वामिना वा सकारणो दृष्टः चोरत्वेन ग्रहणकारणैर्युक्तो दृष्टः पृष्टः प्रश्नेनापि निश्चितचौर्यः धनलोभाच्चोरैर्णैवोत्कोचतया दीयमानधनलोभात्पालकैर्न मुच्यते कच्चित् ॥ ५७ ॥ आढ्यस्य धनिकस्य दुर्बलस्य दरिद्रस्य च व्यसने विवादरूपसंकटे राजकीयैकनिवर्त्ये प्राप्ते तवामात्या विरागाः संतः विगतधनरागाः संतः अर्थं तयोर्व्यवहारं पश्यंति कच्चित् ॥ ५८ ॥ मिथ्याभिशस्तानां राज्ञा विचार्य

कच्चिन्नागवनंगुप्तंकच्चित्तेसंतिधेनुकाः ॥ कच्चिन्नगणिकाश्वानांकुंजराणांचतृप्यसि ॥ ५० ॥ कच्चिद्दर्शयसेनित्यंमानुषाणांविभूषितम् ॥ उत्थायोत्थायपूर्वाह्णेराजपुत्रमहापथे ॥ ५१ ॥ कच्चिन्नसर्वेकर्मांताःप्रत्यक्षास्तेऽविशंकया ॥ सर्वेवापुनरुत्सृष्टामध्यमेवात्रकारणम् ॥ ५२ ॥ कच्चिद्दुर्गाणिसर्वाणिधनधान्यायुधोदकैः ॥ यंत्रैश्चप्रतिपूर्णानितथाशिल्पिधनुर्धरैः ॥ ५३ ॥ आयस्तेविपुलःकच्चित्कच्चिदल्पतरोव्ययः ॥ अपात्रेषुनतेकच्चित्कोशोगच्छतिराघव ॥ ५४ ॥ देवतार्थेचपित्रर्थेब्राह्मणाभ्यागतेषुच ॥ योधेषुमित्रवर्गेषुकच्चिद्गच्छतितेव्ययः ॥ ५५ ॥ कच्चिदार्योपिशुद्धात्माक्षारितश्चापकर्मणा॥ अदृष्टःशास्त्रकुशलैर्नलोभाद्बध्यतेशुचिः ॥ ५६ ॥ गृहीतश्चैवपृष्टश्चकालेदृष्टःसकारणः ॥ कच्चिन्नमुच्यतेचोरोधनलोभान्नरर्षभ ॥ ५७ ॥ व्यसनेकच्चिदाढ्यस्यदुर्बलस्यचराघव ॥ अर्थंविरागाःपश्यंतितवामात्याबहुश्रुताः ॥ ५८ ॥ यानिमिथ्याभिशस्तानांपतंत्यश्रूणिराघव ॥ तानिपुत्रपशून्घ्नंतिप्रीत्यर्थमनुशासतः ॥ ५९ ॥ कच्चिद्वृद्धांश्चबालांश्चवैद्यान्मुख्यांश्चराघव ॥ दानेनमनसावाचात्रिभिरेतैर्बुभूषसे ॥ ६० ॥ कच्चिद्गुरूंश्चवृद्धांश्चतापसान्देवतातिथीन् ॥ चैत्यांश्चसर्वान्सिद्धार्थान्ब्राह्मणांश्चनमस्यसि ॥ ६१ ॥ कच्चिदर्थेनवाधर्ममर्थंधर्मेणवापुनः ॥ उभौवाप्रीतिलोभेनकामेननविबाधसे ॥ ॥ ६२ ॥ कच्चिदर्थंचकामंचधर्मंचजयतांवर ॥ विभज्यकालेकालज्ञसर्वान्वरदसेवसे ॥ ६३ ॥ कच्चित्तेब्राह्मणाःशर्मसर्वशास्त्रार्थकोविदाः ॥ आशंसंतेमहाप्राज्ञपौरजानपदैःसह ॥ ६४ ॥

निर्वर्तितमिथ्याभियोगानां प्रजानां यान्यश्रूणि पतंति । पादन्यासानीति पाठांतरम् । तदा जायंते इति शेषः । आर्षं नपुंसकत्वम् । तानि प्रीत्यर्थं राज्ययोगजप्रीतिमात्रार्थं राज्यमनुशासतो राज्ञः पुत्रादीन् घ्नंति ॥ ५९ ॥ वद्याः भिषजः दानमभिमतवस्तुनः मनः स्नेहयुतम् वाक्सांत्वयुता एतैस्त्रिभिः प्रत्येकं बुभूषसे प्राप्तुमिच्छसि वशी कर्तुमिच्छसि संभावयितुमिच्छसि वा कच्चित् ॥ ६० ॥ चैत्यान् चतुष्पथस्थमहावृक्षान् देवतावासभूतान् सिद्धार्थान्विद्यावृत्ततपोभिः कृतार्थितजन्मनो ब्राह्मणान् ॥ ६१ ॥ कच्चिदर्थेनेति । धर्मार्जनयोग्यपूर्वाह्णे अर्थार्जनेन धर्मबाधः तथा तद्योग्यमध्याह्ने धर्मार्जनेन तद्बाधः प्रीतिलोभेन कामेन विषयसंतोषलोभरूपेण कामेन तदुभयकालसेवितेन तयोर्बाध इति तीर्थः । अर्थप्राप्तिरूपेण हेतुना धर्मं न बाधसे धर्मं हित्वार्थं न गृह्णासीत्यर्थः । धर्मेण धर्मप्राप्तिहेतुना अर्थं कुटुंबनिर्वाहापेक्षितमर्थं न बाधसे । उभयमपि विषयसंतोषलोभेन गणिकाद्यासक्त्या बाधसे नेत्यथ इति कतकः ॥ ६२ ॥ विभज्य सेवसे काले पूर्वाह्णतदुत्तरकालसार्धयामोत्तररात्रिरूपेण क्रमेण धर्मार्थकामसेवाकाले ॥ ६३ ॥ शर्म सुखमाशं

सते मार्थयते ॥ ६४ ॥ ममादोऽनवधानतादीर्घसूत्रश्चिरक्रियस्तद्भावः अवश्यकर्तव्यस्य विचारादिना कालविलंबनम् ज्ञानवतां विदुषामदर्शनम् आलस्यं नित्यकृत्यालस्यम् पंचवृत्तितां चक्षुरादिपंचेंद्रियपरवशताम् ॥ ॥ ६५ ॥ अर्थानां राज्यमयोजनानामेकेन चिंतनम् अनर्थज्ञैर्विपरीतदर्शिभिः निश्चितानां मंत्रिभिः सह कर्तव्यत्वेन निश्चितानामनारंभम् ॥ ६६ ॥ मंगलस्यादौ मातःकाले अमयोगमननुष्ठानम् सर्वतः मत्युत्थानं सर्वदिगवस्थितरिपूद्देशेन युगपद्दंडयात्रामित्यर्थ इति तीर्थः । कंचन मत्युत्थानायोग्यं पुरुषमुद्दिश्यापि मभावमुक्त्वा चापल्यादासनाच्चलनमित्यर्थ इति कतकः ॥ ६७ ॥ दशवर्गादीन्बुध्वा यथावदनुमन्यसे तेषु त्याज्यांशमुपादेयांशं च ज्ञात्वानुजानासीति तृतीयस्थेन संबंधः । दशवर्गस्तु मृगयाक्षौ २ दिवास्वापः ३ परिवादः ४ स्त्रियो ५ मदः ६ ॥ तौर्यत्रिकम् ९ वृथाट्या च १० कामजो दशको गण इति मनूक्तः । तौर्यत्रिकं नृत्यगीतवाद्यम् । वृथाट्या वृथापर्यटनम् । पंचवर्गस्तु औदकं पार्वतं वार्क्षमैरिणं धान्वतं तथा ॥ इति दुर्गं पंचविधं पंचवर्ग उदाहृतः । ईरिणं सर्वसस्यशून्यमदेशः तत्संबंधिदुर्गमैरिणं तस्यापि परैर्गंतुमशक्यत्वात् । धान्वनं उष्णकाले दुर्गं भवति । चतुर्वर्गस्तु साम दानं च भेदश्च दंडश्चेति चतुर्गुणः । सप्तवर्गस्तु स्वाम्यमात्यश्च राष्ट्रं च दुर्गकोशौ बलं सुहृत् ॥ परस्परोपकारीदं राज्यं सप्तांगमुच्यते । अष्टवर्गस्तु पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम् ॥ वाग्दंडयोश्च पारुष्यं क्रोधजोपि गणोष्टक इति । कृषिवाणिज्यदुर्गसेतुकुंजरबंधनखन्याकरकरादानशून्यानिवेशनान्यष्टवर्ग इति तीर्थः । त्रिवर्गो धर्मार्थकामाः उत्साहमभुमंत्रशक्तित्रयं वा । तिस्रो विद्याः त्रयीवार्ता दंडनीतिः त्रयी वेदत्रयी वार्ता कृष्यादि दंडनीतिर्नीतिशास्त्रम् ॥६८॥ इंद्रियाणां जयं जयोपायं स च योगाभ्यास एव षाड्गुण्यं षड्गुणाः संधिर्ना विग्रहो यानमासनं द्वैधमाश्रय इति द्वैधं शत्रुवर्ग्याणामुपजापः दैवमानुषं दैवं मानुषं च व्यसनमित्यर्थः । हुताशनो जलं व्याधिर्दुर्भिक्षो मरकस्तथेत्येतद्दैवं मरको मरणनिमित्तं मार्यादि । मानुषं तु आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् ॥ पृथिवी

नास्तिक्यमनृतंक्रोधंप्रमादंदीर्घसूत्रताम् ॥ अदर्शनंज्ञानवतामालस्यंपंचवृत्तिताम् ॥६५॥ एकचिंतनमर्थानामनर्थज्ञैश्चमंत्रणम् ॥ निश्चितानामनारंभमंत्रस्यापरिरक्षणम् ॥ ६६ ॥ मंगलाद्यप्रयोगंचप्रत्युत्थानंचसर्वतः ॥ कच्चित्त्वंवर्जयस्येताश्राजदोषांश्चतुर्दश ॥ ६७ ॥ दशपंचचतुर्वर्गान्सप्तवर्गंचतत्त्वतः ॥ अष्टवर्गंत्रिवर्गंचविद्यास्तिस्रश्चराघव ॥६८॥ इंद्रियाणांजयंबुद्ध्याषाड्गुण्यंदैवमानुषम् ॥ कृत्यंविंशतिवर्गंचतथाप्रकृतिमंडलम् ॥६९॥

पतिलोभाच्च व्यसनं मानुषं त्विदमिति आयुक्तका अधिकारिणः । कृत्यं तु अलब्धवेतनो लुब्धो मानी चाप्यवमानितः ॥ क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः ॥ भेद्याः शत्रौ तु चत्वारो नृपकृत्यामिदं स्मृतम् । विंशतिवर्गस्तु असंधेयो विग्राह्य एव स च–बालो १ वृद्धो २ दीर्घरोगी ३ तथा ज्ञातिबहिष्कृतः ४ । भीरुको ५ भीरुजनको ६ लुब्धो ७ लुब्धजनस्तथा ८ ॥ विरक्तमकृति ९ श्चैव विषयेष्वतिसक्तिमान् १० ॥ अनेकचित्तमंत्रश्च ११ देवब्राह्मणनिंदकः १२ । दैवोपहतक १३ श्चैव दैवचिंतक एव च १४ ॥ दुर्भिक्षव्यसनोपेतो १५ बलव्यसनसंयुतः १६ । अदेशस्थो १७ बहुरिपु १८ र्युक्तो कालेन यश्च वै १९ ॥ सत्यधर्मरतश्चैव २० विंशतिः पुरुषा अमी । एतैः संधिं न कुर्वीत विग्रही स्यात्तु केवलमिति । कतकस्तु राज्यस्त्रीस्थानदेशानां ज्ञातिधनयोश्च यस्यापहारस्ते षट् ६ मदमानदेशपीडावंतस्त्रयः ९ ज्ञानार्थशक्तिधर्माणां येषां विघातस्ते चत्वारः १३ दैवचिंतकः १४ रिपुमित्रावमंतारौ १६ बंधुविनाशनं यस्य १७ लोकानुग्रहरहितः १८ दूषितमंडलः १९ एकार्थाभिनिवशित्वं यस्य २० एते विग्राह्या एवेत्याह प्रकृतयश्च मंडलं च प्रकृतिमंडलम् । प्रकृतिवर्गस्तु अमात्यो राष्ट्रदुर्गाणि कोशो दंडश्च पंचमः ॥ एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृता इति ॥ मंडलं द्वादशराजमंडलं तत्रविजिगीषुर्मध्ये अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् ॥ मित्रारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रंदस्तदनंतरम् ॥ आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ आसारौ पार्ष्णिग्राहासाराक्रंदासाराविति आसारपृष्ठभागस्थो मध्यमोदासीनाविति । अरेश्च विजिगीषोश्च मध्यमो भूम्यनंतरः ॥ अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुरिति । मंडलाद्बहिरेतेषामुदासीनो बलाधिकः ॥ अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुरिति ॥ ६९ ॥

किंचेदं त्वदुपदिष्टं वृत्तं कस्य किंसंबंधि अहं यास्यामि यत्पित्रादिषु न कस्यापि पित्रादिवृत्तानुसरणमेव च येनास्य पितरो याता इति शास्त्रविहितमिति भावः ॥ ८ ॥ किं च त्वदुपदिष्टमार्गे तिष्ठन्नहं प्रथमतः कामवृत्तो यथेष्टचारी स्याम् तदनु अयं कृत्स्नो लोकस्तथा समुपवर्तते इत्यर्थः । एवं निर्बंधे कारणमाह यद्वृत्ता इति ॥ ९ ॥ तस्मात्त्वदुपदिष्टस्य मार्गस्य सर्वलोकनाशकत्वेन शास्त्रीयमार्गालंबनमेवोचितमि त्याह सत्यमिति । अनृशंसं भूतानुकंपाप्रधानं सनातनं अनादिशास्त्रसिद्धं राजवृत्तं च सत्यमेव सत्यवचनमेव मुख्यो राजाचार इत्यर्थः । यतो राजवृत्तं सत्यात्मकं तस्मात्तेषां राज्यमपि सत्यात्मकं सत्यैकप्रतिष्ठितं न केवलं राज्यमेवापि तु सर्वोपि लोकः सत्ये प्रतिष्ठितः ॥ १० ॥ सत्यमेव हि मेनिरे सत्यलोकांतसकललोकप्रदमिति शेषः । परमक्षयं ब्रह्मलोकम् ॥ ११ ॥ अनृतवादिनो नरात्तथोद्विजंते यथा सर्पात् सत्यं परं श्रेष्ठं यस्य सः धर्मः सर्वस्य मूलमुच्यते ॥ १२ ॥ लोके ईश्वरः सत्यमेव सत्यपदवाच्य इति प्रसिद्ध इत्यर्थः । तथा सद्भिराश्रितो धर्मः सत्ये सत्यपदवाच्ये ईश्वरे प्रतिष्ठितः आदौ तस्यैव धर्मोपदेष्टृत्वा दित्यर्थः । सत्ये पद्मा प्रतिष्ठितेति पाठांतरम् पद्मा लक्ष्मीः सत्यमूलानि सर्वाणि इत्यनेन जगदुपादानप्रवर्तकत्वेन सर्वाधिष्ठानत्वेन च तत्सिद्धिर्दर्शिता । तस्यैव तत्त्वे हेतुमाह सत्यात्परं पदं नास्ति अनेन तदि तरस्य सर्वस्य मिथ्यात्वमचेतनत्वं च दर्शितम् । एतेन चेतनानधिष्ठिता मायैव जगदुपादानकारणमिति निरस्तम् । चेतनाधिष्ठानं विना तत्परिणामासंभवात तस्याः परिणामित्वेन मिथ्यात्वेन चेतनाधिष्ठानत्वा

कामवृत्तोन्वयंलोकःकृत्स्नःसमुपवर्तते ॥ यद्वृत्ताःसंतिराजानस्तद्वृत्ताःसंतिहिप्रजाः ॥ ९ ॥ सत्यमेवानृशंसंचराजवृत्तंसनातनम् ॥ तस्मात्सत्यात्मकंराज्यंसत्येलोकःप्रतिष्ठितः ॥ १० ॥ ऋषयश्चैवदेवाश्चसत्यमेवहिमेनिरे ॥ सत्यवादीहिलोकेस्मिन्परंगच्छतिचाक्षयम् ॥ ११ ॥ उद्विजंतेयथासर्पान्नरादनृतवादिनः ॥ धर्मःसत्यपरोलोकेमूलंसर्वस्यचोच्यते ॥ १२ ॥ सत्यमेवेश्वरोलोकेसत्येधर्मःसदाश्रितः ॥ सत्यमूलानिसर्वाणिसत्यान्नास्तिपरंपदम् ॥ १३ ॥ दत्तमिष्टंहुतंचैवतप्तानिचतपांसिच ॥ वेदाःसत्यप्रतिष्ठानास्तस्मात्सत्यपरोभवेत् ॥ १४ ॥ एकःपालयतेलोकमेकःपालयतेकुलम् ॥ मज्जत्येकोहिनिरयएकःस्वर्गेमहीयते ॥ १५ ॥ सोहंपितुर्निदेशंतुकिमर्थंनानुपालये ॥ सत्यप्रतिश्रवःसत्यंसत्येनसमयीकृतम् ॥ १६ ॥ नैवलोभान्नमोहाद्वानचाज्ञानात्तमोन्वितः ॥ सेतुंसत्यस्यभेत्स्यामिगुरोःसत्यप्रतिश्रवः ॥ १७ ॥

संभवाच्च ॥ १३ ॥ एवं नास्तिकं प्रति ईश्वरं प्रसाध्य वेदप्रामाण्यं साधयति दत्तमित्यादि । दत्तादीनि प्रतिपादयंतो वेदाः सत्यप्रतिष्ठानाः सत्यादीश्वरात् श्वासप्रश्वासवत् आविर्भूता इति वक्तृदोषशंकाकलंकराहि त्येन तत्प्रतिपादितदानादीनां फलसंवाददर्शनेन च सर्वत्राप्रामाण्यशंकाराहिताः किंतु स्वतःप्रमाणभूता एवेति भावः । तस्मात्सत्यस्येश्वरवाचकवाच्यत्वेन तदभेदात् सत्यपरः सत्यपालनतत्परो भवेदित्यर्थः ॥१४॥ वेदोक्तधर्माधर्मफलस्य प्रत्यक्षमनुभूयमानत्वेन तत्प्रामाण्यं सिद्धमित्याह एक इति । लोकं राज्यम् स्वकुलमात्रम् एतेन पालनसाधनधर्मफलतारतम्यस्य वेदोक्तस्यानुभवो दर्शितः । निरयोत्र दुःखम् स्वर्गश्चसुखम् तेन धर्माधर्मफलानुभवो दर्शितः ॥ १५ ॥ सोहं उक्तरीत्या एवं विवेकवानित्यर्थः । ननु स्त्रीवशतया पितृकृते नियोगे किमियता निर्बंधनेन तत्राह सत्येति । यतो मे पिता सत्यप्रतिश्रवः सत्यप्रतिज्ञः स्वप्रति ज्ञातसत्यांगीकारवान् समयी सदाचारवान् अतस्तेन सत्येन सत्यपरिपालनेन हेतुना सत्यमेव मां प्रति कृतम् उक्तमित्यर्थः ॥ १६ ॥ अतो लोभाद्राज्यस्य मोहादुक्तस्य विस्मरणात् प्रतिज्ञात्यागे दोषस्या ज्ञानाद्वा त्वदुक्तवाक्यात् शास्त्रादावश्रद्धारूपतमो युक्तो वा पूर्वं सत्यप्रतिश्रवः शपथपूर्वकं कृतप्रतिज्ञः सन्नैव भेत्स्यामि न भेत्स्यामि न च भेत्स्यामीति त्रिवारोक्त्या सर्वथा दार्ढ्यं सूचितम् ॥ १७ ॥

एवं सत्ये दृढस्थितौ हेतुमाह असत्यसंधस्य प्रतिज्ञाविषयसत्यहीनस्य चलस्य चंचलस्वभावस्य तस्यैव विवरणमस्थिरेत्यादि । ईदृशस्य सतः एतैर्गुणैर्युक्तस्य देवादयो हव्यकव्यादि न गृह्णंतीति नः श्रुतम् ॥ १८ ॥ प्रत्यगात्मनो जीवातुद्दिश्य । प्रवृत्तमित्यर्थे प्रत्यगात्ममित्यार्षत्वात्साधुः । इमं सत्यं सत्यपालनरूपं धर्मम् अहं ध्रुवं सर्वधर्मेषु मुख्यं पश्यामि । अयं भारः वनवासे जटावल्कलादिभारः सत्यपालनरूपो वा पूर्वैः सत्पुरुषैराचीर्णस्तदर्थं मयाप्यभिनंद्यते आद्रियते ॥ १९ ॥ ननु स्वधर्मो राज्यपालनमेव किमिति नाभिनंद्यते तत्राह क्षात्रमिति । धर्मसंहितं धर्मवत्प्रतिभासमानं वस्तुतोऽधर्मं क्षुद्रादिभिः सेवितमीदृशं क्षात्रधर्मं पित्राज्ञाभंगेन राज्यकरणरूपम् अहं त्यक्ष्ये न तु न्याय्यं क्षात्रधर्ममिति भावः ॥ २० ॥ अस्य पापस्य शरीरसाध्यत्वेपि कायिकवाचिकमानसिकसकलपापप्रसक्तिरित्याह कायेनेति । आदौ मनसा एवं कर्म करिष्य इति तत्पापं संप्रधार्य ततो जिह्वया ऋतं धर्मजनकं ततो भिन्नमनृतं तत्कर्म कर्तव्यत्वेन जिह्वया तत्सहायभूतेषु पुरुषेषु आह ततः कायेन कुरुते अतः पापं कर्म क्रियारूपं पापं त्रिविधं कायिकवाचिकमानसिकरूपत्रिविधजनकमित्यर्थः । तेन कायिकं पापं बहुदुःखजनकमितिभावः । कलौ तु पापसंकल्पादितो न दोष इत्युक्तं भागवते । नानुद्वेष्टि कलिं सम्राट् सारंग इव सारभुक् । कुशलान्याशु सिद्ध्यंति

असत्यसंधस्यसतश्चलस्यास्थिरचेतसः ॥ नैवदेवानपितरःप्रतीच्छंतीतिनःश्रुतम् ॥ १८ ॥ प्रत्यगात्ममिमंधर्मंसत्यंपश्याम्यहंध्रुवम् ॥ भारःसत्पुरुषैश्चीर्णस्तदर्थमभिनंद्यते ॥ १९ ॥ क्षात्रंधर्ममहंत्यक्ष्येह्यधर्मंधर्मसंहितम् ॥ क्षुद्रैर्नृशंसैर्लुब्धैश्चसेवितंपापकर्मभिः ॥ २० ॥ कायेनकुरुतेपापंमनसासंप्रधार्यतत् ॥ अनृतंजिह्वयाचाहत्रिविधंकर्मपातकम् ॥ २१ ॥ भूमिःकीर्तिर्यशोलक्ष्मीःपुरुषंप्रार्थयंतिहि ॥ सत्यंसमनुवर्ततेसत्यमेवभजेत्ततः ॥२२॥ श्रेष्ठंह्यनार्यमेवस्याद्यद्भवानवधार्यमाम् ॥ आहयुक्तिकरैर्वाक्यैरिदंभद्रंकुरुष्वह ॥ २३ ॥ कथंह्यहंप्रतिज्ञायवनवासमिमंगुरोः ॥ भरतस्यकरिष्यामिवचोहित्वागुरोर्वचः ॥ २४ ॥ स्थिरामयाप्रतिज्ञाताप्रतिज्ञागुरुसंनिधौ ॥ प्रहृष्टमानसादेवीकैकेयीचाभवत्तदा ॥ २५ ॥ वनवासंवसन्नेवशुचिर्नियतभोजनः ॥ मूलपुष्पफलैःपुण्यैःपितॄन्देवांश्चतर्पयन् ॥ २६ ॥ संतुष्टपंचवर्गोहंलोकयात्रांप्रवाहये ॥ अकुहःश्रद्दधानःसन्कार्याकार्यविचक्षणः ॥ २७ ॥ कर्मभूमिमिमांप्राप्यकर्तव्यंकर्मयच्छुभम् ॥ अग्निर्वायुश्चसोमश्चकर्मणांफलभागिनः ॥ २८ ॥

नेतराणि कृतानि यत् । सम्राट् परीक्षित् सारमाह कुशलानि पुण्यानि आशु संकल्पमात्रात्सिध्यंति यथा मानसपूजा इतराणि पापानि संकल्पमात्रान्न फलंति यत् यतस्तानि कृतान्येव फलंतीति तदर्थः ॥ २१ ॥ अथ सत्यस्य सर्वार्थसाधनत्वमाह भूमिरिति । प्रार्थयंतीति सत्यवंतमिति शेषः । समनुवर्तते इति शिष्टा इति शेषः । यदेवं ततः सत्यमेव भजेदित्यर्थः ॥ २२ ॥ यद्भवान् अवधार्य युक्तत्वेन निश्चित्य मां प्रति युक्तिरेव करः करणं येषां तैर्वाक्यैरिदं भद्रं राज्यं ह निश्चयेन कुरुष्व स्वीकुरुष्वेति श्रेष्ठं हि श्रेष्ठमिवाह तदनार्यमन्याय्यमेव स्याद्भवेत् ॥ २३ ॥ अनार्यत्वमेव दर्शयन् राज्यं त्वं प्रतिगृह्णीष्व । भरतेन प्रसादितइत्यस्योत्तरमाह कथमिति । गुरोः पुरत इमं गुर्वाज्ञप्तं गुरोर्वचो हित्वेत्यन्वयः ॥ २४ ॥ कैकेयी चेति । एवं च तस्या हर्षदस्य पुनरहर्षदत्वमत्यंतमनुचितमिति भावः ॥ २५ ॥ तर्पयन्प्रतिज्ञां पालयिष्यामीति शेषः ॥ २६ ॥ संतुष्टपंचवर्गः मूलादिभिस्तुष्टपंचेंद्रियवर्गः लोकयात्रां पितृवचनपालनव्यवहारम् प्रवाहये प्रवाहरूपेण प्रवर्तयामीत्यर्थः । अकुहः अकपटशीलः । श्रद्दधानः आस्तिकः ॥ २७ ॥ शुभकरणे हेतुर

श्रेयोध्याराज्यपरंपरावचनेन ज्येष्ठस्यैवाभिषेक इति सूचितम् ॥ १४ ॥ १५ ॥ यस्य असितस्य एते प्रतिशत्रव उदपद्यंत सोभवदित्यन्वयः ॥ १६ ॥ तान्हैहयादिचतुर्विधशत्रून् युद्धे स्वसैन्यं प्रतिव्यूह्यावस्थितोपि शत्रुबाहुल्यात्तज्जयोऽशक्य इतिबुद्ध्या प्रवासितः संजातप्रवासो बभूव । शत्रुजयोद्देशेन हिमवद्गिरिं तपसे जगामेत्यन्वयः ॥ १७ ॥ इति श्रुतिः प्रसिद्धिः तत्र चेत्यादि बालकांडे व्याख्यातप्रायम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ तेनैव सह जात इति शेषः ॥ २४ ॥ अखानयत्स्वपुत्रैरिति शेषः इष्ट्वा दीक्षितो भूत्वा वेगेन खननवेगेन

यस्यैतेप्रतिराजानउदपद्यंतशत्रवः ॥ हैहयास्तालजंघाश्चशूराश्चशशाविंदवः ॥ १६ ॥ तांस्तुसर्वान्प्रतिव्यूह्ययुद्धेराजाप्रवासितः ॥ सचशैलवरेरम्ये बभूवाभिरतोमुनिः ॥ १७ ॥ द्वेचास्यभार्येगर्भिण्यौबभूवतुरितिश्रुतिः ॥ तत्रचैकामहाभागाभार्गवंदेववर्चसम् ॥ १८ ॥ ववंदेपद्मपत्राक्षीकांक्षिणी पुत्रमुत्तमम् ॥ एकागर्भविनाशायसपत्न्यैगरलंददौ ॥ १९ ॥ भार्गवश्च्यवनोनामहिमवंतमुपाश्रितः ॥ तमृषिंसाभ्युपागम्यकालिंदीत्वभ्य वादयत् ॥ २० ॥ सतामभ्यवदत्प्रीतोवरेप्सुंपुत्रजन्मनि ॥ पुत्रस्तेभवितादेविमहात्मालोकविश्रुतः ॥ २१ ॥ धार्मिकश्चसुभीमश्चवंशकर्तारिसूदनः ॥ श्रुत्वाप्रदक्षिणंकृत्वामुनितमनुमान्यच ॥ २२ ॥ पद्मपत्रसमानाक्षंपद्मगर्भसमप्रभम् ॥ ततःसागृहमागम्यपत्नीपुत्रमजायत ॥ २३ ॥ सपत्न्यातु गरस्तस्यैदत्तोगर्भजिघांसया ॥ गरेणसहतेनैवतस्मात्ससगरोभवत् ॥२४॥ सराजासगरोनामयःसमुद्रमखानयत् ॥ इष्ट्वापर्वणिवेगेनत्रासयानइमाः प्रजाः ॥ २५ ॥ असमंजस्तुपुत्रोभूत्सगरस्येतिनःश्रुतम् ॥ जीवन्नेवसपित्रातुनिरस्तःपापकर्मकृत् ॥ २६ ॥ अंशुमानपिपुत्रोभूदसमंजस्यवीर्यवान् ॥ दिलीपोंशुमतःपुत्रोदिलीपस्यभगीरथः ॥ २७ ॥ भगीरथात्ककुत्स्थश्चकाकुत्स्थायेनतुस्मृताः ॥ काकुत्स्थस्यतुपुत्रोभूद्रघुर्येनतुराघवाः ॥ २८ ॥ रघोस्तुपुत्रस्तेजस्वीप्रवृद्धःपुरुषादकः ॥ कल्माषपादःसौदासइत्येवंप्रथितोभुवि ॥ २९ ॥ कल्माषपादपुत्रोभूच्छंखणस्त्वितिनःश्रुतम् ॥ यस्तुतद्वीर्य मासाद्यसहसैन्योव्यनीनशत् ॥ ३० ॥ शंखणस्यतुपुत्रोभूच्छूरःश्रीमान्सुदर्शनः ॥ सुदर्शनस्याग्निवर्णअग्निवर्णस्यशीघ्रगः ॥ ३१ ॥ शीघ्रगस्यमरुः पुत्रोमरोःपुत्रःप्रशुश्रुवः ॥ प्रशुश्रुवस्यपुत्रोभूदंबरीषोमहामतिः ॥ ३२ ॥ अंबरीषस्यपुत्रोभून्नहुषःसत्यविक्रमः ॥ नहुषस्यचनाभागःपुत्रःपरमधार्मिकः ॥ ३३ ॥ अजश्चसुव्रतश्चैवनाभागस्यसुतावुभौ ॥ अजस्यचैवधर्मात्माराजादशरथःसुतः ॥ ३४ ॥ तस्यज्येष्ठोसिदायादोरामइत्यभिविश्रुतः ॥ तद्गृहा णस्वकंराज्यमवेक्षस्वजगन्नृप ॥ ३५ ॥

त्रासयानः उद्वेजयन् ॥ २५ ॥ २६ ॥ २७ ॥ येन कूटस्थेन ककुत्स्थेन येन रघुणा राघवपदवाच्याः ॥ २८ ॥ रघोः पुत्रः प्रवृद्धादिनामचतुष्टयेन प्रसिद्धः ॥ २९ ॥ कल्माषपादपुत्रः शंखणनामा । यः शंखणस्तु तत्प्रसिद्धं वीर्यं पराक्रमं युद्धे प्राप्य दैवात्सहसैन्यो व्यनीनशत् नष्टोभूत् । स्वार्थे णिरिति कतकः । तीर्थस्तु यः शंखणस्तद्वीर्यं वसिष्ठवीर्यं आसाद्य तच्छापात् राक्षसत्वं प्राप्य कल्माषपादो राक्षस भावेन स्वसैन्यं स्वपुत्रं शंखणं च भक्षितवानिति कथेत्याह ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अजो नाभागज्येष्ठपुत्रः ॥ ३४ ॥ दायादः सुतः दायादौ सुतबांधवौ । तत्तस्मात्स्वकं राज्यं गृहाण ॥ ३५ ॥

पूर्वजे विद्यमानेऽवरः कनिष्ठो नाभिषिच्यते अपि तु ज्येष्ठ एवाभिषिच्यते ॥ ३६ ॥ कुलधर्मं कुलक्रमागतं ज्येष्ठाभिषेकधर्मं विहंतुं नार्हसि प्रभूतराष्ट्रां प्रभूतावांतरदेशाम् ॥ ३७ ॥ छंलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे दशोत्तरशततमः सर्गः ॥ ११० ॥ ॥ मनुमारभ्य त्वत्पर्यंतं ज्येष्ठेनैव राज्यं पाल्यते इति न्यायेन निवर्त्यमानस्यापि तदनंगीकारमालोच्य पितृवचनादपि मद्वचनं गरीय इति वाक्यमुपक्रमते वसिष्ठ इति ॥ १ ॥ गुरवः उपास्याः ॥ २ ॥ जनयति शरीरमात्रेण प्रज्ञां ददाति उपनयनसंस्कारपूर्वं वेदविषयां प्रज्ञां ददाति तस्मादाचार्य एव गुरुसमवाये गुरुरुच्यते तदुक्तमापस्तंबेन । आचार्यः श्रेष्ठो गुरूणां स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्मशरीरमेव मातापितरौ जनयतः शीर्यत्स्वभावं सर्वयोनिसुलभं प्राकृतं मलजं शरीरमिति ॥ ३ ॥ नातिवर्तेः नातिवर्तेथाः सद्गतिभ्रंशो न भवतीत्यर्थः ॥ ४ ॥ परिषदः त्वत्संबंधिन्यः श्रेणयः ज्ञातयो बांधवाः नृपाः सेवकनृपाः एषु रक्षारूपं धर्मं चरन्ननुतिष्ठन्नित्यर्थः ॥ ५ ॥ मातुः शुश्रूषणे वचनकरणे च

इक्ष्वाकूणांहिसर्वेषांराजाभवतिपूर्वजः ॥ पूर्वजेनावरःपुत्रोज्येष्ठोराजाभिषिच्यते ॥ ३६ ॥ सराघवाणांकुलधर्ममात्मनःसनातनंनाद्यविहंतुमर्हसि ॥ प्रभूतरत्नामनुशाधिमेदिनींप्रभूतराष्ट्रांपितृवन्महायशाः ॥ ३७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे दशोत्तरशततमः सर्गः ॥ ११० ॥ वसिष्ठःसतदारामसुक्काराजपुरोहितः ॥ अब्रवीद्धर्मसंयुक्तंपुनरेवापरंवचः ॥ १ ॥ पुरुषस्येहजातस्यभवंतिगुरवःसदा ॥ आचार्यश्चैवकाकुत्स्थपितामाताचराघव ॥ २ ॥ पिताह्येनंजनयतिपुरुषंपुरुषर्षभ ॥ प्रज्ञांददातिचाचार्यस्तस्मात्सगुरुरुच्यते ॥ ३ ॥ सतेहंपितुराचार्यस्तवचैवपरंतप ॥ ममत्वंवचनंकुर्वन्नातिवर्तेःसतांगतिम् ॥ ४ ॥ इमाहितेपरिषदोज्ञातयश्चनृपास्तथा ॥ एषुतातचरन्धर्मंनातिवर्तेःसतांगतिम् ॥ ५ ॥ वृद्धायाधर्मशीलायामातुर्नार्हस्यवर्तितुम् ॥ अस्याहिवचनंकुर्वन्नातिवर्तेःसतांगतिम् ॥ ६ ॥ भरतस्यवचःकुर्वन्याचमानस्यराघव ॥ आत्मानंनातिवर्तेस्त्वंसत्यधर्मपराक्रम ॥ ७ ॥ एवंमधुरमुक्तःसगुरुणाराघवःस्वयम् ॥ प्रत्युवाचसमासीनंवसिष्ठंपुरुषर्षभः ॥ ८ ॥ यन्मातापितरौवृत्तंतनयेकुरुतःसदा ॥ नसुप्रतिकरंतत्तुमात्रापित्राचयत्कृतम् ॥ ९ ॥ यथाशक्तिप्रदानेनस्वापनोच्छादनेनच ॥ नित्यंचप्रियवादेनतथासंवर्धनेनच ॥ १० ॥ सहिराजादशरथःपिताजनयितामम ॥ आज्ञापयन्मांयत्तस्यनतन्मिथ्याभविष्यति ॥ ११ ॥ एवमुक्तेनरामेणभरतःप्रत्यनंतरम् ॥ उवाचविपुलोरस्कःसूतंपरमदुर्मनाः ॥ १२ ॥ इहतुस्थंडिलेशीघ्रंकुशानास्तरसारथे ॥ आर्यंप्रत्युपवेक्ष्यामियावन्मेसंप्रसीदति ॥ १३ ॥

अवर्तितुं नार्हसीत्यर्थः । पितुः शतगुणं माता गौरवेणातिरिच्यत इति स्मृतेरित्याशयः ॥ ६ ॥ आत्मानं त्वां प्रति राज्यप्रत्यर्पणपूर्वं प्रतिनिवृत्तिं याचमानस्य भरतस्य वचः कुर्वन्नित्यर्थः ॥ ७ ॥ ८ ॥ मातापितरौ यद्वृत्तं तनये कुरुतः यादृशं पुत्रस्योपकारं कुरुतस्ताभ्यां कृतमुपकाररूपं वस्तु यत्तत्र सुप्रतिकरं अशक्यप्रत्युपकारकमित्यर्थः ॥ ९ ॥ तदेवाह यथाशक्तिप्रदानेन बालस्य जीवनार्थं पदार्थभोजनशक्त्यनुरोधतः क्षीरान्नादिप्रदानेन उच्छादनं उद्वर्तनम् तिलपिष्टादिना संवर्धनं क्रीडनं एतैर्यत्ताभ्यां कृतं तत्र सुप्रतिकरमित्यन्वयः ॥ १० ॥ जनयिता उत्पादकः पिता न तु गौणः । पिता यदाज्ञापयद्वनवासरूपम् एवं च भवदाज्ञानः पूर्वं तेनाज्ञादानात् मया चावश्यमिति प्रतिज्ञानात् भवदाज्ञयापि तदन्यथाकरणमधुनाऽत्यंतमनुचितमिति भावः ॥ ११ ॥ प्रत्यनंतरं समीपवर्तिनम् ॥ १२ ॥ आर्यं प्रत्युपेक्ष्यामि आर्यमुद्दिश्य प्रत्यु

रक्षणाशक्तिं दर्शयति रक्षितुमिति । एकोऽसहायः रक्तानतुरक्तान् ॥ ११ ॥ हि यतस्त्वामेव प्रतीक्षंते ॥ १२ ॥ अत इदं राज्यं प्रतिपद्य स्वीकृत्य कस्मिंश्चित्स्थापय हि । हिर्वाक्यालंकारे । हि यतः स त्वद्दत्त राज्यो लोकपालने शक्तिमान् भवति । शक्तिमानसीतिपाठे अयं मदीय इति स्वीकारमात्रेण लोकस्य समस्तस्य पालने शक्तिमानसि । रामस्य राज्यमित्येतावल्लोकपरिपालनेपेक्षितसहायतयेत्यर्थः ॥ १३ ॥ एवं उक्तप्रकारम् ॥ १४ ॥ स्वयमंके कृत्वेत्यन्वयः ॥ १५ ॥ इयं बुद्धिर्मद्वनवासविरोधिनी स्वीयत्वेनांगीकृत्य स्थापनविषया आगता जाता सा स्वजा स्वाभाविकी । गुरुसेवया प्राप्तो यो विनयः शिक्षा तज्जन्या च इतरा च सर्वा दुष्टेति भावः । अथ या त्वया स्वस्याशक्तिरुक्ता पालने सा नास्त्येवेत्याह भृशमिति ॥१६॥ अमात्याः प्रधानमंत्रिणः । मंत्रिण उपमंत्रिणः । कारय राजाज्ञयेति शेषः ॥१७॥ अथ मातृयाचनयापि इदानीं परावृत्तिरशक्येत्याह लक्ष्मीरित्यादि । पितुः प्रतिज्ञां न त्यजेयमिति शेषः ॥१८॥ कामात् त्वद्गतस्नेहात् । लोभात्त्वद्द्वयाजेन राज्यकरणलोभात् । तुभ्यं मात्रा तव मात्रा षष्ठ्यर्थे आर्षी चतुर्थी । यदिदं कृतं तत्त्वानिष्टमपि अनिष्टमिति मनसि न कर्तव्यम् मदाज्ञयेति शेषः । अतस्तस्यां मातृवदेव वर्तितव्यं शुश्रूषितव्यम् । तदर्हमिति वतिः । कामात् देवानामिच्छातः । लोभाद्वा लोभादेव तेषां देवलोकराज्यलोभात् ।

ज्ञातयश्चापियोधाश्चमित्राणिसुहृदश्चनः ॥ त्वामेवहिप्रतीक्षंतेपर्जन्यमिवकर्षकाः ॥ १२ ॥ इदंराज्यंमहाप्राज्ञस्थापयप्रतिपद्यहि ॥ शक्तिमान्साहि काकुत्स्थलोकस्यपरिपालने ॥ १३ ॥ एवमुक्त्वापतद्भ्रातुःपादयोर्भरतस्तदा ॥ भृशंसंप्रार्थयामासराघवेतिप्रियंवदन् ॥ १४ ॥ तमंकेभ्रातरंकृत्वा रामोवचनमब्रवीत् ॥ श्यामंनलिनपत्राक्षंमत्तहंसस्वरःस्वयम् ॥ १५ ॥ आगतात्वामियंबुद्धिःस्वजावैनयिकीचया ॥ भृशमुत्सहसेतातरक्षितुंपृथिवीम पि ॥ १६ ॥ अमात्यैश्चसुहृद्भिश्चबुद्धिमद्भिश्चमंत्रिभिः ॥ सर्वकार्याणिसंमंत्र्यमहांत्यपिहिकारय ॥ १७ ॥ लक्ष्मीश्चंद्रादपेयाद्वाहिमवान्वाहिमंत्यजे त् ॥ अतीयात्सागरोवेलांनप्रतिज्ञामहंपितुः ॥ १८ ॥ कामाद्वातातलोभाद्वामात्रातुभ्यमिदंकृतम् ॥ नतन्मनसिकर्तव्यंवर्तितव्यंचमातृवत् ॥ १९ ॥ एवंब्रुवाणंभरतःकौसल्यासुतमब्रवीत् ॥ तेजसादित्यसंकाशंप्रतिपच्चंद्रदर्शनम् ॥ २० ॥ अधिरोहार्यपादाभ्यांपादुकेहेमभूषिते ॥ एतेहिसर्वलोक स्ययोगक्षेमंविधास्यतः ॥ २१ ॥ सोधिरुह्यनरव्याघ्रःपादुकेव्यवमुच्यच ॥ प्रायच्छत्सुमहातेजाभरतायमहात्मने ॥ २२ ॥

तव मात्रा देवैरेव मंथराद्वारा इदं कृतं कारितमिति गूढोर्थः । शेषं प्राग्वत् ॥ १९ ॥ प्रतिपच्चंद्रदर्शनमित्यनेन तद्वदादरणीयदर्शनत्वं वर्धिष्णुत्वं चिरप्रदर्शनं च सूचितम् ॥ २० ॥ एते उटजसन्निहिते अधिरोहेत्यनेन भद्रासनस्थानीयपादुकयोः प्रति निधिभूतयोरारोहणेन राज्यप्रतिपत्तिः कारिता । एषा च प्रार्थना वसिष्ठनियोगानंतरं बोध्या । भरद्वाजं प्रति एते प्रयच्छ संहृष्टः पादुके हेमभूषिते इति वसिष्ठोक्तित्वेन वक्ष्यमाणत्वात्प्रतिनिधित्वमेवाह एते हीत्यादिना ॥२१॥ स रामः पादुके आधिरुह्य व्यवमुच्य पुनस्ततोवरुह्य भरताय प्रायच्छत् । एतेन प्रतिनिधिदानद्वारा राज्यरक्षानियोगः कृतः । प्रतिपद्य स्थापयेति चिरं भरतप्रार्थनं च साधितम् । अधिरोहणेन शक्तिविशेषस्य तत्र स्थापनम् । यद्दर्शनेन सर्वज्ञत्वसंपत्तिरिति बोध्यम् । तदुक्तं पाद्मे । ज्ञात्वा तदाज्ञां ताभ्यां च भरतः क्षितिमन्वशादिति । ताभ्यां पादुकाभ्यां तद्दर्श नमात्रेणेदृशे विषये भगवत एवमाज्ञेति ज्ञात्वा तथा व्यवहारमकरोदित्यर्थः । भरतस्तु पांचजन्यावतारत्वादाच्छादितसार्वज्ञ्य इत्यनेन सूचितम् । भगवत्स्पर्शेनाचेतनेपि सार्वज्ञ्यदानशक्तिमत्त्वमिति भगवन्माहात्म्या

तिशयद्वारा रामस्येश्वरत्वं च सूचितम् ॥ २२ ॥ जटाचीरधर इत्यादिना राज्यकृतभोगाभावः सूचितः ॥ २३ ॥ २४ ॥ राज्यतंत्रं राज्यव्यापारं न्यस्य त्वद्बुद्ध्या विनिवेद्य चतुर्दशे वर्षे संपूर्णे पंचदशवर्षाद्यदिवसे यदि त्वां न द्रक्ष्यामि तदाग्निं प्रवेक्ष्यामि ॥ २५ ॥ २६ ॥ २७ ॥ शप्तोसि रोषाकरणायेति शेषः ॥ २८ ॥ संपरिगृह्य शिरसेति शेषः । उत्तमनागमूर्धनि राजोपवाह्यगजमस्तके तत्कालाभिषिक्तराजाधिरोहणधियेति शेषः । सर्वलोकप्रख्यापनार्थमेतत् ॥ २९ ॥ ३० ॥ सर्वाः सकैकेयीकाः । अनेन कैकेय्या दोषराहित्यं सूचितम् । रुदन् रुदन्निव ॥ ३१ ॥ कौलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥ ॥ तत इति । पूर्वं सर्वलोकज्ञानाय गजमस्तके स्थापयित्वा पुनः सादरं तत आदाय स्वम

सपादुकेसंप्रणम्यरामंवचनमब्रवीत् ॥ चतुर्दशहिवर्षाणिजटाचीरधरोह्यहम् ॥ २३ ॥ फलमूलाशनोवीरभवेयंरघुनंदन ॥ तवागमनमाकांक्षन्वसन्वै नगराद्बहिः ॥ २४ ॥ तवपादुकयोन्यर्स्यराज्यतंत्रंपरंतप ॥ चतुर्दशेहिसंपूर्णेवर्षेहनिरघूत्तम ॥ २५ ॥ नद्रक्ष्यामियदित्वांतुप्रवेक्ष्यामिहुताशनम् ॥ तथेतिचप्रतिज्ञायतंपरिष्वज्यसादरम् ॥ २६ ॥ शत्रुघ्नंचपरिष्वज्यवचनंचेदमब्रवीत् ॥ मातरंरक्षकैकेयींमारोषंकुरुतांप्रति ॥ २७ ॥ मयाचसीतयाचैवशप्तोसिरघुनंदन ॥ इत्युक्त्वाश्रुपरीताक्षोभ्रातरंविससर्जह ॥२८॥ सपादुकेतेभरतःस्वलंकृतेमहोज्ज्वलेसंपरिगृह्यधर्मवित् ॥ प्रदक्षिणंचैवचकारराघवंचकारचैवोत्तमनागमूर्धनि ॥२९॥ अथानुपूर्व्यात्प्रतिपूज्यतंजनंगुरूंश्चमंत्रीन्प्रकृतीस्तथानुजौ ॥ व्यसर्जयद्राघववंशवर्धनःस्थितःस्वधर्मेहिमवानिवाचलः ॥ ३० ॥ तंमातरोबाष्पगृहीतकंठ्योदुःखेननामंत्रयितुंहिशेकुः ॥ सचैवमातॄरभिवाद्यसर्वारुदन्कुटींस्वांप्रविवेशरामः ॥ ३१ ॥ इत्यार्षे श्रीम० वा० आ० अ० द्वादशाधिकशततमःसर्गः ॥ ११२ ॥ ततःशिरसिकृत्वातुपादुकेभरतस्तदा ॥ आरुरोहरथंहृष्टःशत्रुघ्नसहितस्तदा ॥ १ ॥ वसिष्ठोवामदेवश्चजाबालिश्चदृढव्रतः ॥ अग्रतःप्रययुःसर्वेमंत्रिणोमंत्रपूजिताः ॥ २ ॥ मंदाकिनींनदींरम्यांप्राङ्मुखास्तेययुस्तदा ॥ प्रदक्षिणंचकुर्वाणाश्चित्रकूटंमहागिरिम् ॥ ३ ॥ पश्यन्धातुसहस्राणिरम्याणिविविधानिच ॥ प्रययौतस्यपार्श्वेनससैन्योभरतस्तदा ॥ ४ ॥ अदूराच्चित्रकूटस्यददर्शभरतस्तदा ॥ आश्रमंयत्रसमुनिर्भरद्वाजःकृतालयः ॥ ५ ॥ सतमाश्रममागम्यभरद्वाजस्यवीर्यवान् ॥ अवतीर्यरथात्पादौववंदेकुलनंदनः ॥ ६ ॥ ततोहृष्टोभरद्वाजोभरतंवाक्यमब्रवीत् ॥ अपिकृत्यंकृतंतातरामेणचसमागतम् ॥ ७ ॥ एवमुक्तःसतुततोभरद्वाजेनधीमता ॥ प्रत्युवाचभरद्वाजंभरतोधर्मवत्सलः ॥ ८ ॥

स्तके कृत्वेत्यर्थः । यद्वा शिरसीत्यस्य गजशिरसीत्येवार्थः ॥ १ ॥ मंत्रे गाढकार्यविचारे निश्चेतृत्वेन पूजिता इत्यर्थः ॥ २ ॥ मंदाकिनीं चित्रकूटोत्तरपार्श्ववर्तिनीम् प्रदक्षिणमिति उत्तरपार्श्वस्थां मंदाकिनीं प्राप्य प्राङ्मुखतया गमनात्सिद्धं तस्य प्रदक्षिणकरणम् ॥ ३ ॥ पार्श्वेन उत्तरपार्श्वेन ॥ ४ ॥ यत्र यमुनादक्षिणकूले अतएव चित्रकूटस्यादूरात् अनेन यमुनादक्षिणतटेपि कश्चिद्भरद्वाजाश्रम इति ज्ञायते । अतएवाग्रे भरद्वाजामंत्रणोत्तरं ततस्ते यमुनां तीर्त्वेति वक्ष्यति । संप्रति तत्र स्थितिस्तु रामभरतयोः संवादं शिष्यद्वारा झटिति श्रोतुमिति बोध्यम् ॥ ५ ॥ ६ ॥ कृत्यं कर्तव्यं कृतमपि । अपिः प्रश्ने ।

विततां गुणुष्याततताम् गुरुपाशां धनुष्कोट्योर्ज्याबंधनार्थपाशयुताम् तरस्विनां बाणैर्विनिकृतां छिन्नाम् आयुधाद्धनुषः पतिताम् ॥ १६ ॥ सहसा बलात्कारेण वाहितां अश्वाविता प्रतिसैन्येन निहतामतएव पातिताम् ॥ १७ ॥ १८ ॥ यथापुरं यथापूर्वं न निशाम्यते खलु । अत्र किं कुर्म इति योजना ॥ १९ ॥ मदकरो गंधः मदगन्धः मूर्छितो व्याप्तः ॥२०॥२१॥२२॥२३॥ मम भ्राता सहेति शेषः ॥ २४ ॥ अर्जुनी शारदी शुक्लपक्षसंबधिनी वा सासारा वेगवद्वृष्टिधारासहिता । महोत्सव इव ग्रीष्मेंबुद इव च ॥ २५ ॥ उन्नतगामिभिः संतोषादुद्धतगामिभिः ॥ २६ ॥ २७ ॥ २८ ॥ सुरैरुत्कृष्टं कृतशोकमभास्करं दिन

सहसायुद्धशौंडेनहयारोहेणवाहिताम् ॥ निहतांप्रतिसैन्येनवडवामिवपातिताम् ॥ १७ ॥ भरतस्तुरथस्थःसन्श्रीमान्दशरथात्मजः ॥ वाहयंतंरथश्रेष्ठं सारथिंवाक्यमब्रवीत् ॥१८॥ किंनुखल्वद्यगंभीरोमूर्च्छितोननिशाम्यते ॥ यथापुरमयोध्यायांगीतवादित्रनिःस्वनः ॥१९॥ वारुणीमदगंधश्चमाल्यगंधश्चमूर्च्छितः ॥ चंदनागुरुगंधश्चनप्रवातिसमंततः ॥ २० ॥ यानप्रवरघोषश्चसुस्निग्धहयनिःस्वनः ॥ प्रमत्तगजनादश्चमहांश्चरथनिःस्वनः ॥२१॥ नेदानींश्रूयतेपुर्यामस्यांरामेविवासिते ॥ चंदनागुरुगंधांश्चमहार्हाश्चवनस्रजः ॥ २२ ॥ गतेरामेहितरुणाःसंतप्तानोपभुंजते ॥ बहिर्यात्रांनगच्छंति चित्रमाल्यधरानराः ॥ २३ ॥ नोत्सवाःसंप्रवर्तंतेरामशोकार्दितेपुरे ॥ साहिनूनंममभ्रात्रापुरस्यास्यद्युतिर्गता ॥ २४ ॥ नहिराजत्ययोध्येयंसासारेवार्जुनीक्षपा ॥ कदानुखलुमेभ्रातामहोत्सवइवागतः ॥ २५ ॥ जनयिष्यत्ययोध्यायांहर्षंग्रीष्मइवांबुदः ॥ तरुणैश्चारुवेषैश्चनरैरुन्नतगामिभिः ॥ २६ ॥ संपतद्भिरयोध्यायांनाभिभांतिमहापथाः ॥ इतिब्रुवन्सारथिनादुःखितोभरतस्तदा ॥ २७ ॥ अयोध्यांसंप्रविश्यैवविवेशवसतिंपितुः ॥ तेनहीनांनरेंद्रेणसिंहहीनांगुहामिव ॥ २८ ॥ तदातदंतःपरमुज्झितप्रभंसुरैरिवोत्कृष्टमभास्करंदिनम् ॥ निरीक्ष्यसर्वत्रविभक्तमात्मवान्मुमोचबाष्पंभरतःसुदुःखितः ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकाण्डे चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥ ततोनिक्षिप्य मातॄस्ताअयोध्यायांदृढव्रतः ॥ भरतःशोकसंतप्तोगुरूनिदमथाब्रवीत् ॥ १ ॥ नंदिग्रामंगमिष्यामिसर्वानामंत्रयेऽत्रवः ॥ तत्रदुःखमिदंसर्वंसहिष्येराघवंविना ॥ २ ॥ गतश्चाहोदिवंराजावनस्थःसगुरुर्मम ॥ रामंप्रतीक्षेराज्यायसहिराजामहायशाः ॥ ३ ॥ एतच्छ्रुत्वाशुभंवाक्यंभरतस्यमहात्मनः ॥ अब्रुवन्मंत्रिणःसर्वेवसिष्ठश्चपुरोहितः ॥ ४ ॥

मिव । एवं हि श्रूयते पुरा देवासुरे युद्धेऽसुरैर्देवाः पराजिता राहुणा च भानुः पातितस्तदा दिवारात्रविभागरहिते काले स्वस्वलोकाद्ब्रह्मलोकं गतैर्देवैः प्रार्थितस्य ब्रह्मणो नियोगादत्रिः सप्तरात्रं सूर्याधिपत्यं चकारेति तीर्थः । देवैरुत्कृष्टं भास्करहीनं दिनं कविकल्पितमत्रोपमानमिति कतकः । विभक्तं विनतसंस्कारं भक्तं सेवितं संस्कृतं तद्भिन्नमिति यावत् ॥ २९ ॥ धीरैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण तिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥ तत इति ॥ १ ॥ अत्र अयोध्यायां तेन सहागमनकारितं राघवं विना दुःखं पितृभ्रातृवियोगजं दुःखमिति यावत् ॥ २ ॥ तदेवाह गतश्चेति ॥ ३ ॥ ४ ॥

॥५॥ बंधुलुब्धस्य बंधुजनपरिपालनेऽधिकस्पृहावतः । आर्यं श्रेष्ठं नानुमन्येत त्वद्वचनमिति शेषः ॥ ६ ॥ यथाभिलषितं स्वाभिलषितमनतिक्रम्य प्रवृत्तम् ॥ ७ ॥ ८ ॥ ९ ॥ नंदिग्रामो यतो भवेत् येन मार्गेण स ग्रामो भवेत् तेन ययुः ॥ १० ॥ तदनाहूतं भरतेनाकृताह्वानमपि ॥ ११ ॥ १२ ॥ १३ ॥ एतदयोध्याराज्यं मम भ्रात्रा संन्यासवत्समीचीनवस्तुनिक्षेपवन्मयि दत्तं स्थापितम् । कालांतरे ग्रहणाय विश्वस्तपुरुषे रक्षणार्थं वस्तुस्थापनं न्यासो निक्षेप इति च । न्यासस्यापि राज्यस्य रक्षणं भगवत्पादुकाधीनमेव न मदधीनमित्याह योगेत्यादि । इत्युवाचेति पूर्वेणान्वयः ॥ १४ ॥ पादुके संन्यासं पादुकात्मकं सद्वस्तुन्यासं वेदाः प्रमाणमितिवत्साधु । शिरसा कृत्वा प्रणम्येति यावत् ॥ १५ ॥ इमौ पादुकारूपौ आर्यपादाविति । पादशब्दः पूजावाची विधेयाभिप्रायेण चेमाविति पुल्लिंगनिर्देशः शैत्यं हि यत्सा प्रकृति

सुभृशंश्लाघनीयंचयदुक्तंभरतत्वया ॥ वचनंभ्रातृवात्सल्यादनुरूपंतवैवतत् ॥५॥ नित्यतेवंधुलुब्धस्यतिष्ठतोभ्रातृसौहृदे ॥ मार्गमार्यंप्रपन्नस्यनानुमन्येतकःपुमान्॥ ६ ॥ मंत्रिणांवचनंश्रुत्वायथाभिलषितंप्रियम् ॥ अब्रवीत्सारथिंवाक्यंरथोमेयुज्यतामिति ॥७॥ प्रहृष्टवदनःसर्वामातृःसमभिभाष्यच ॥ आरुरोहरथंश्रीमान्शत्रुघ्नेनसमन्वितः ॥ ८ ॥ आरुह्यतुरथंक्षिप्रंशत्रुघ्नभरतावुभौ ॥ ययतुःपरमप्रीतौवृतौमंत्रिपुरोहितैः ॥ ९ ॥ अग्रतोगुरवःसर्वेवसिष्ठप्रमुखाद्विजाः ॥ प्रययुःप्राङ्मुखाःसर्वेनंदिग्रामोयतोभवेत् ॥ १० ॥ बलंचतदनाहूतंगजाश्वरथसंकुलम् ॥ प्रययौभरतेयातेसर्वेचपुरवासिनः ॥ ११ ॥ रथस्थःसतुधर्मात्माभरतोभ्रातृवत्सलः ॥ नंदिग्रामंययौतूर्णंशिरस्यादायपादुके ॥ १२ ॥ भरतस्तुततःक्षिप्रंनंदिग्रामंप्रविश्यसः ॥ अवतीर्यरथात्तूर्णंगुरूनिदमभाषत ॥ १३ ॥ एतद्राज्यंममभ्रात्रादत्तंसंन्यासमुत्तमम् ॥ योगक्षेमवहेचेमेपादुकेहेमभूषिते ॥ १४ ॥ भरतःशिरसाकृत्वासंन्यासंपादुकेततः ॥ अब्रवीद्दुःखसंततःसर्वंप्रकृतिमंडलम् ॥ १५ ॥ छत्रंधारयतक्षिप्रमार्यपादाविमौमतौ ॥ आभ्यांराज्येस्थितोधर्मःपादुकाभ्यांगुरोर्मम ॥ १६ ॥ भ्रात्रातुमयिसंन्यासोनिक्षिप्तःसौहृदादयम् ॥ तमिमंपालयिष्यामिराघवागमनंप्रति ॥ १७ ॥ क्षिप्रंसंयोजयित्वातुराघवस्यपुनःस्वयम् ॥ चरणौतौतुरामस्यद्रक्ष्यामिसहपादुकौ ॥ १८ ॥ ततोनिक्षिप्तभारोहंराघवेणसमागतः ॥ निवेद्यगुरवेराज्यंभजिष्येगुरुवर्तिताम् ॥ १९ ॥ राघवायचसंन्यासंदत्वेमेवरपादुके ॥ राज्यंचेदमयोध्यांचधूतपापोभवाम्यहम् ॥ २० ॥ सवल्कलजटाधारीमुनिवेषधरःप्रभुः ॥ नंदिग्रामेवसद्वीरःससैन्योभरतस्तदा ॥ २१ ॥ सवालव्यजनंछत्रंधारयामाससस्वयम् ॥ भरतःशासनंसर्वंपादुकाभ्यांनिवेदयन् ॥२२॥ ततस्तुभरतःश्रीमानभिषिच्यार्यपादुके ॥ तदधीनस्तदाराज्यंकारयामाससर्वदा ॥ २३ ॥

जंलस्येति तत्परमपूज्यरामभावनाविषये इमे पादुके इत्यर्थः । राज्येपेक्षितो मम गुरोर्धर्मव्यवहारोऽनयोरेव स्थितोऽत आभ्यां पादुकाभ्यां छत्रं धारयत एतत्सन्निधानादेव तत्तद्व्यवहारे धर्मव्यवहारांशज्ञानं ममेति भावः ॥ १६ ॥ अयं राज्यरूपः संन्यासो निक्षेपो निक्षिप्तः राघवागमनं प्रति तावत्पर्यंतम् ॥ १७ ॥ संयोजयित्वा चरणयोः पादुके ॥ १८ ॥ समागतो मिलितः निवेद्य प्रत्यर्प्य गुरुवर्तितां गुरूचितशुश्रूषाम् ॥ १९ ॥ २० ॥ अवसत् धीरः धीमान् ॥ २१ ॥ वालव्यजनेन सहितं छत्रं स भरतः सर्वं शासनं ताभ्यां निवेदयन् उक्तविशेषणं छत्रं स्वयमेव धारयामास ॥ २२ ॥ आर्यपादुके अभिषिच्य तयोः

राज्याभिषेकं कृत्वा तदधीनः पादुकाधीनः ॥ २३ ॥ यत्कार्यं राज्यविषयं पश्चाद्यथावत् काशागारस्थमुपायन चकार । प्रजान्यायकार्यं च यथावच्छास्त्रानतिक्रमेण चकार ॥ २४ ॥ भरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे पंचदशाधिकशततमः सर्गः ॥ ११५ ॥ ॥ सोद्वेगं सभयमौत्सुक्यं आश्रमांतरगमनौत्सुक्यम् ॥१॥ पुरस्तात्पूर्वं ये तापसाः चित्रकूटस्य आश्रमे संधिरार्षः । राममाश्रित्य निरताः नितरां रताः सानंदास्तानुत्सुकानलक्षयत् । अत्रेदं बोध्यम् चैत्रशुक्लदशम्यां पुष्ये रामवनप्रस्थानम् ततः पूर्णिमायामर्धरात्रे दशरथमरणम् ततः पक्षेण भरतागमनमयोध्यायां तत और्ध्वदेहिकेन पक्षो गतः । एवं वैशाखे गते ज्येष्ठे भरतस्य चित्रकूटं प्रति प्रस्थानम् अग्रे वर्षाकाले सन्निहिते सति कार्तिक्यंतं चित्रकूटे वासो रामस्य तदनंतरं तापसौत्सुक्यलक्षणम् नतु भरतनिवृत्त्यनंतरमेवैतदिति । अतएव पाद्मे भरतस्यायोध्यां प्रति निवृत्त्यनंतरमुक्तम् । राघवश्चित्रकूटाद्रौ सानुजोरमत स्त्रिया ॥ कदाचिदंके वैदेह्या निद्राणे रघुनंदने ॥ १ ॥ ऐंद्रः काकः समागम्य जानकीं वीक्ष्य कामुकः ॥ विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ॥ २ ॥ तद्दृष्ट्वा राघवः क्रुद्धः कुशं जग्राह पाणिना ॥ ब्राह्मेणास्त्रेण संयोज्य चिक्षेप ध्वांक्षमारणे ॥ ३ ॥ तं दृष्ट्वा घोरसंकाशं ज्वलत्कालानलोपमम् ॥ दृष्ट्वा काकः प्रदुद्राव निनदन्दारुणस्वनम् ॥ ४ ॥ वायसस्त्रिषु लोकेषु बभ्राम भयपीडितः ॥ यत्र यत्र ययौ काकः शरणार्थी च वायसः ॥ ५ ॥ तत्र तत्र तदस्त्रं तु प्रविवेश भयावहम् ॥ ब्रह्माणमिंद्रं रुद्रं मां शरणार्थी जगाम सः ॥ ६ ॥ तं दृष्ट्वा वायसं भीतं देवता न ररक्षिम ॥ न शक्ताः स्म वयं त्रातुं राघवास्त्राद्भयंकरात् ॥ ७ ॥ इत्यब्रूम महादेवा अन्यथास्त्रं दहेच्च नः ॥ पुनश्चागाद्दिधिं काको

तदाहियत्कार्यमुपैतिकिंचिदुपायनंचोपहृतंमहार्हम् ॥ सपादुकाभ्यांप्रथमंनिवेद्यचकारपश्चाद्भरतोयथावत् ॥ २४ ॥ इत्यार्षे श्रीम० वा० आ० अयो० पंचदशाधिकशततमः सर्गः ॥ ११५ ॥ प्रतियातेतुभरतेवसन्रामस्तदावने ॥ लक्षयामाससोद्वेगमथौत्सुक्यंतपस्विनाम् ॥ १ ॥ येतत्रचित्रकूटस्यपुरस्तात्तापसाश्रमे ॥ राममाश्रित्यनिरतास्तानलक्षयदुत्सुकान् ॥२॥ नयनैर्भृकुटीभिश्चरामंनिर्दिश्यशंकिताः ॥ अन्योन्यमुपजल्पंतःशनैश्चक्रुर्मिथःकथाः ॥३॥ तेषामौत्सुक्यमालक्ष्यरामस्त्वात्मनिशंकित ॥ कृतांजलिरुवाचेदमृषिंकुलपतिंततः ॥४॥ नकच्चिद्भगवन्किंचित्पूर्ववृत्तमिदंमयि ॥ दृश्यतेविकृतंयेनविक्रियंतेतपस्विनः ॥५॥ प्रमादाच्चरितंकिंचित्कच्चिन्नावरजस्यमे ॥ लक्ष्मणस्यर्षिभिर्दृष्टंनानुरूपंमहात्मनः ॥६॥ कच्चिच्छुश्रूषमाणावः शुश्रूषणपरामयि ॥ प्रमदाभ्युचितांवृत्तिंसीतायुक्तांनवर्तते ॥ ७ ॥

दयया विधिराहतम् ॥ ८ ॥ भो भो बलिभुजां श्रेष्ठ तमेव शरणं व्रज ॥ स एव रक्षकः श्रीशः शरणागतवत्सलः ॥ ९ ॥ इत्युक्तः सोथ बलिभुग्ब्रह्मणा रघुनंदनम् ॥ उपेत्य सहसा भूमौ निपपात भयातुरः ॥ १० ॥ प्राणसंशयमापन्नं दृष्ट्वा सीता तु वायसम् ॥ त्राहि त्राहीति भर्तारमुवाच दयिता विभुम् ॥ ११ ॥ तच्छिरः पादयोस्तस्य युयुजे चाथ जानकी ॥ तमुत्थाप्य करेणाथ कृपापीयूषसागरः ॥ १२ ॥ ररक्षासौ निजास्त्राय तदेकाक्षि ददौ तदा ॥ वायसोपि मुहुर्नत्वा सीतायै राघवाय च ॥ १३ ॥ स्वर्लोकं प्रययौ हृष्टो राघवेणाभिपालितः ॥ ततो रामो महातेजा वैदेह्या लक्ष्मणेन च ॥ १४ ॥ उवास चित्रकूटाद्रौ स्तूयमानो महर्षिभिरिति ॥ २ ॥ कथमलक्षयत्तत्राह नयनैरित्यादि । निर्दिश्य प्रदर्श्य शंकिताः रामः किं मंस्यत इति भीताः नयनादिभिः प्रदर्श्यान्योन्यमुपजल्पंतः आह्वयंतः शनैरुपांशुकथाश्चक्रुः । अयं राम इह सस्त्रीक आस्ते । राक्षसाश्चैतद्द्वेषेणेह संचरन्तोऽस्मान्बाधंतेऽतोन्यत्र गंतव्यमित्येवंरूपाः कथाश्चक्रुः ॥ ३ ॥ शंकत अशंकतेत्यर्थः एतदाश्रमत्यागकारणमात्मानिष्ठं दोषमशंकतेत्यर्थः । अतएव कृतांजलिः सन्कुलपतिम् ऋषिसंघस्वामिनमाश्रमस्वामिनं वा । कुलमन्वयसंघातगृहोत्पत्त्याश्रमेषु च ॥ ४ ॥ मयि पूर्ववृत्तं पूर्वराजवृत्तं न दृश्यते कच्चित् विकृतं वा दृश्यते कच्चित् येन तपस्विनो विक्रियंते । इदं तपस्विविक्रियारूपं किंचित्कारणकं भवति तन्निवेदयतु भवानिति शेषः ॥ ५ ॥ अवरजस्य लक्ष्मणस्य नानुरूपं चरितं अयुक्ताचरणं प्रमादाज्जातं किंचिदृषिभिर्न दृष्टं कच्चित् ॥ ६ ॥ वः शुश्रूषमाणा अर्घ्यपाद्यादिना युष्मान्सेव

॥ ६ ॥ वः शुश्रूषमाणा अध्यापयाद्दिना युष्मान्सेव

मांना अधुना मच्छुश्रूषानुरोधात्ममदोचितां युष्मासु युक्तां वृत्तिं शुश्रूषाविषय। सीता न वर्तते कच्चित् ॥७॥ तपसां च वृद्ध इत्यनुकर्षः । वेपमान इव कथं वा रामो मंस्यत इति कंपः । जरया वा कम्पः इव एवार्थे ॥८॥ सत्त्वं स्वभावः ॥ ९ ॥ त्वन्निमित्तं त्वत्तो हेतोः इदं भयं रक्षोभ्यः समागतमिति भावः ॥ १० ॥ कथं तत्राह रावणेति । उत्पाट्य संपीड्य ॥ ११ ॥ जितकाशी जिताहवः जितभयो वा त्वां च न मृष्यते पीडयितुमिच्छति ॥ १२ ॥ विप्रकुर्वंति अपकुर्वंति ॥ १३ ॥ तमपकारं दर्शयति दर्शयंतीति । बीभत्सैर्जुगुप्सितरूपैरात्मानं दर्शयंति इत्यन्वयः ॥ १४ ॥ अप्रशस्तैः पापजनकैरशुचिभिः पदार्थैस्तापसान्संप्रयु ज्य विप्रकुर्वंति । अपरानपि मृढन्प्रतिघ्नंत्यपि पीडयंत्यपि ॥ १५ ॥ अबुद्धं अविदितं यथा भवति तथा निद्रादौ अवलीय च निर्भयमाश्लिष्य च तदालिंगनेनाल्पचेतसो विचेतसस्तापसान् नाशयंतो रमंते ॥१६॥

अथर्षिर्जरयावृद्धस्तपसाचजरांगतः ॥ वेपमानइवोवाचरामंभूतदयापरम् ॥ ८ ॥ कुतःकल्याणसत्त्वायाःकल्याणाभिरतेःसदा ॥ चलनंतातवैदेह्यास्तपस्विषुविशेषतः ॥ ९ ॥ त्वन्निमित्तमिदंतावत्तापसान्प्रतिवर्तते ॥ रक्षोभ्यस्तेनसंविग्नाःकथयंतिमिथःकथाः ॥१०॥ रावणावरजःकश्चित्खरोनामेहराक्षसः ॥ उत्पाट्यतापसान्सर्वान्जनस्थाननिवासिनः ॥ ११ ॥ धृष्टश्चजितकाशीचनृशंसःपुरुषादकः ॥ अवलिप्तश्चपापश्चत्वांचताततनमृष्यते ॥ १२ ॥ त्वंयदाप्रभृतिह्यस्मिन्नाश्रमेताततवर्तसे ॥ तदाप्रभृतिरक्षांसिविप्रकुर्वंतितापसान् ॥ १३ ॥ दर्शयंतिहिबीभत्सैःक्रूरैर्भीषणकैरपि ॥ नानारूपैर्विरूपैश्चरूपैरसुखदर्शनैः ॥ १४ ॥ अप्रशस्तैरशुचिभिःसंप्रयुज्यचतापसान् ॥ प्रतिघ्नंत्यपरान्क्षिप्रमनार्याःपुरतःस्थितान् ॥ १५ ॥ तेषुतेष्वाश्रमस्थानेष्वबुद्धमवलीयच ॥ रमंतेतापसांस्तत्रनाशयंतोल्पचेतसः ॥ १६ ॥ अवक्षिपंतिस्रग्भांडानग्नीन्सिंचंतिवारिणा ॥ कलशांश्चप्रमर्दंतिहवने समुपस्थिते ॥ १७ ॥ तैर्दुरात्मभिराविष्टानाश्रमान्प्राजिहासवः ॥ गमनायान्यदेशस्यचोदयंत्यृषयोद्यमाम् ॥ १८ ॥ तत्पुरारामशारीरीमुपहिंसांतपस्विषु ॥ दर्शयंतिहिदुष्टास्तेत्यक्ष्यामइममाश्रमम् ॥ १९ ॥ बहुमूलफलंचित्रमविदूरादितोवनम् ॥ अश्वस्याश्रममेवाहंश्रयिष्येसगणःपुनः ॥ २० ॥ खरस्त्वय्यपिचायुक्तंपुरारामप्रवर्तते ॥ सहास्माभिरितोगच्छयदिबुद्धिःप्रवर्तते ॥ २१ ॥ सकलत्रस्यसंदेहोनित्यंयुक्तस्यराघव ॥ समर्थस्यापिसहितोवासोदुःखमिहाद्यते ॥ २२ ॥ इत्युक्तवंतंरामस्तंराजपुत्रस्तपस्विनम् ॥ नशशाकोत्तरैर्वाक्यैरवबद्धुंसमुत्सुकम् ॥ २३ ॥

स्रुग्भांडान्स्रुगादियज्ञसंभारान् अवक्षिपंति अवस्कंदयंति कलशानुदकपात्राणि प्रमर्दो भंगः हवने होमकर्मणि समुपस्थिते प्रवृत्ते ॥ १७ ॥ प्रजिहासवः परित्यक्तुमिच्छवः मिथो मिलिताः ॥ १८ ॥ शारीरीमुपहिंसां प्राणवियोगरूपां पुरा दर्शयन्ति दर्शयिष्यंति अत इममाश्रमं त्यक्ष्यामः ॥१९॥ अश्वस्य न विद्यते श्वः संचयो यस्य महर्षेः । पृषोदरादित्वात्साधुः। एतेन रक्षोभयनिवारणक्षमत्वं तस्य दर्शितम् ॥२०॥ पुरा प्रवर्तते प्रवर्तयिष्यति अतस्तव नित्ययुक्तस्यापि सदा सावधानस्यापि रक्षोनिग्रहे समर्थस्यापि सकलत्रस्यापि हेतुगर्भमेतत् इहाश्रमे संदेहः संदेहवानेव वासः अर्शआद्यच् । दुःखो दुःखजनकः अतस्तवाप्यत्रावस्थानमनुचितमिति व्यंग्यमतस्त्वमपि सहास्माभिरितो गच्छेत्यन्वयः ॥ २१ ॥ २२ ॥ अवबद्धुम् अहं रक्षांसि निवारयिष्यामि मा भैष्टेत्यादिवचनैर्निवारयितुं न शशाक तत्र हेतुः समुत्सुकमिति । कार्यशेषस्य स्वी

यान्यदेशगमनसाध्यत्वाच्च ॥ २३ ॥ अभिनंद्य स्तुत्वा समाधाय स्ववियोगखिन्नं समाश्वास्य कुलैर्ऋषिसंघैः ॥ २४ ॥ रामस्तस्माद्देशादपयांतमृषिगणमनुगमनादनुव्रजनेन संसाध्य प्रस्थाप्य कुलपतिमृषिमभिवाद्य सम्यक्प्रीतैस्तैरनुमतः कृतानुमतिक उपदिष्टार्थः रक्षःसन्देहादत्रावस्थानमनुचितमिति कृतोपदेशः पुण्यं स्वनिलयं स्ववासायोपसंपदे ॥२५॥ क्षणमपि न जहौ सीतारक्षणार्थमिति भावः । आर्षम् ऋषिसंबंधिचारितं वृत्तं यस्य तादृशे राघवे धृतगुणाः निश्चितनिजरक्षासामर्थ्यगुणाः केचित्तापसाः सततं निरंतरं राघवमनुगता हि अनुगता एव नाश्रमांतरं जग्मुः ॥ २६ ॥ चैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे षोडशाधिकशततमः सर्गः ॥ ११६ ॥ ॥ छ ॥ ॥ अनुविचिंतयन्वक्ष्यमाणलक्षणमुपाधिम् ॥ १ ॥ तमेवाह । इहेति । मे मया संबंधसामान्ये षष्ठी । सा मे स्मृतिर्मां नित्यमनुशोचतस्तानन्वेति विषयीकरोति । एवं च तादृशतत्स्मरणेन ममापि शोको वर्धत इति भावः ॥ २ ॥ राजधानीतो निर्गतायाः सेनाया निवासस्थानं स्कंधावारः ।

अभिनंद्यसमापृच्छ्यसमाधायचराघवम् ॥ सजगामाश्रमंत्यक्त्वाकुलैःकुलपतिःसह ॥ २४ ॥ रामःसंसाध्यऋषिगणमनुगमनाद्देशात्तस्मात्कुलपतिमभिवाद्यऋषिम् ॥ सम्यक्प्रीतैस्तैरनुमतउपदिष्टार्थःपुण्यंवासायस्वनिलयमुपसंपेदे ॥ २५ ॥ आश्रमंमृषिविरहितंप्रभुःक्षणमपिनजहौसराघवः ॥ राघवंहिसततमनुगतास्तापसाश्चार्षचरितेधृतगुणाः ॥ २६ ॥ इत्यार्षे श्रीम०वा०आ०अ०षोडशाधिकशततमः सर्गः ॥ ११६ ॥ राघवस्त्वपयातेषुसर्वेष्वनुविचिंतयन् ॥ नतत्रारोचयद्वासंकारणैर्बहुभिस्तदा ॥ १ ॥ इहमेभरतोदृष्टोमातरश्चसनागराः ॥ साचमेस्मृतिरन्वेतितान्नित्यमनुशोचतः ॥ २ ॥ स्कंधावारनिवेशेनतेनतस्यमहात्मनः ॥ हयहस्तिकरीषैश्चउपमर्दःकृतोभृशम् ॥ ३ ॥ तस्मादन्यत्रगच्छामइतिसंचिंत्यराघवः ॥ प्रातिष्ठतसवैदेह्यालक्ष्मणेनचसंगतः ॥ ४ ॥ सोऽत्रेराश्रममासाद्यतंववंदेमहायशाः ॥ तंचापिभगवानत्रिःपुत्रवत्प्रत्यपद्यत ॥ ५ ॥ स्वयमातिथ्यमादिश्यसर्वमस्यसुसत्कृतम् ॥ सौमित्रिंचमहाभागंसीतांचसमसांत्वयत् ॥ ६ ॥ पत्नींचतमनुप्राप्तांवृद्धामामंत्र्यसत्कृताम् ॥ सांत्वयामासधर्मज्ञःसर्वभूतहितेरतः ॥ ७ ॥ अनसूयांमहाभागांतापसींधर्मचारिणीम् ॥ प्रतिगृह्णीष्ववैदेहीमब्रवीदृषिसत्तमः ॥ ८ ॥ रामायचाचचक्षेतांतापसींधर्मचारिणीम् ॥ दशवर्षाण्यनावृष्ट्यादग्धेलोकेनिरंतरम् ॥ ९ ॥ ययामूलफलेसृष्टेजाह्नवीचप्रवर्तिता ॥ उग्रेणतपसायुक्तानियमैश्चाप्यलंकृता ॥१०॥ दशवर्षसहस्राणिययातप्तंमहत्तपः ॥ अनसूयाव्रतैस्तातप्रत्यूहाश्चनिबर्हिताः ॥ ११ ॥

तस्य भरतस्य तेन पुरतो दृश्यमानेन । अनेन स्मृत्युद्बोधकमुक्तम् । उपमर्दः भूमेरशुचिता ॥ ३ ॥ ४ ॥ स रामः तमत्रिं तमपि जगत्कारणमपि रामं लोकव्यवहारानुसरणेन पुत्रवत् अंगीचकार आलिंगनमूर्धाघ्राणादिभिः ॥ ५ ॥ स्वयमादिश्य विज्ञाप्यास्य सर्वमातिथ्यं सुसत्कृतं कृत्वा समसांत्वयत् प्रीतियुक्तेन चक्षुषापश्यत् ॥ ६ ॥ तं देशमनुप्राप्तां वृद्धां पत्नीमनसूयानाम्नीं तापसीत्वादिगुणयुक्तां वाचा सत्कृतां सर्वैः सत्कृतां वा आमंत्र्य संबोध्य सांत्वयामास प्रीत्या सीतां दर्शयामास । अनंतरं वैदेहीं प्रतिगृह्णीष्वेत्यब्रवीदित्यर्थः ॥ ७ ॥ ८ ॥ तामाचचक्षे तद्वैभवं कथितवान् तदेव दर्शयति दशेत्यादि ॥ ९ ॥ मूलफले ऋषीणां जीवनायेति शेषः । जाह्नवी गंगा च प्रवर्तिता दशवर्षमनावृष्ट्या भूमेर्निर्जलत्वात्तेषां स्नानार्थं मंत्रसिद्धिवैभवेनावाहिता स्वाश्रमे इति शेषः ॥ १० ॥ अनुसूयाव्रतैस्तत्कृतैर्व्रतैः प्रत्यूहाः ऋषीणां तपोविघ्नाः ॥ ११ ॥

...मन्त्रसिद्धिवभवनावाहिता स्वाश्रमे इति शेषः ॥ १० ॥ अनुसूयात्रैस्तत्कृतैर्व्रतैः प्रत्यूहाः ऋषीणां तपोविघ्नाः ॥ ११ ॥

देवकार्यनिमित्तमिति मांडव्यऋषिणा प्रातर्विधवा भवति कस्यां चिदृषिपत्न्यामनसूयासख्यां शप्तायां प्रातरेव मा भूदिति तया प्रतिशापे दत्ते तत्प्रतिशापेन व्याकुलैर्देवैः प्रार्थिताऽनसूया दशरात्राव धिकालं एकरात्रित्वेन कृत्वा देवकार्यं कृतवती सख्या वैधव्यं च परिहृतवतीति गाथेति कतकः । सेयं मातेव ते पूज्येति शेषः ॥ १२ ॥ अभिगच्छतु दर्शनार्थमिति शेषः । ननु वैदेह्या अल्पवयस्त्वेन व्यव हारानभिज्ञत्वात् कचिद्व्यवहारे स्खलनेऽनर्थः स्यादत आहाक्रोधनां सदेति ॥ १३ ॥ १४ ॥ अस्य मुनेः समीरितं वचनं यतः श्रुतमत आत्मनः श्रेयोर्थमित्यादि ॥ १५ ॥ तामनसूयेत्यन्वर्थनाम्नीं अभिगम्या मक्रोधनत्वात् ॥ १६ ॥ १७ ॥ शिथिलां श्लथसंधिबंधाम् वलितां संजातवलिं वृद्धामिति सर्वोपपादकं विशेषणं प्रवाते कदलीमिव वेपमानांगीं स्थिताम् ॥ १८ ॥ समुदाहरत् अभिवादनांगत्वेनेति शेषः ॥ १९ ॥

देवकार्यनिमित्तंचययासंत्वरमाणया ॥ दशरात्रंकृतारात्रिःसेयंमातेवतेनघ ॥ १२ ॥ तामिमांसर्वभूतानांनमस्कार्यांतपस्विनीम् ॥ अभिगच्छतुवैदेहीवृद्धामक्रोधनांसदा ॥ १३ ॥ एवंब्रुवाणंतमृषिंतथेत्युक्त्वासराघवः ॥ सीतामालोक्यधर्मज्ञामिदंवचनमब्रवीत् ॥ १४ ॥ राजपुत्रिश्रुतंत्वेतन्मुनेरस्यसमीरितम् ॥ श्रेयोर्थमात्मनःशीघ्रमभिगच्छतपस्विनीम् ॥ १५ ॥ अनसूयेतियालोकेकर्मभिःख्यातिमागता ॥ तांशीघ्रमभिगच्छत्वमभिगम्यांतपस्विनीम् ॥ १६ ॥ सीतात्वेतद्वचःश्रुत्वाराघवस्ययशस्विनी ॥ तामत्रिपत्नींधर्मज्ञामभिचक्राममैथिली ॥ १७ ॥ शिथिलांवलितांवृद्धांजरापांडुरमूर्धजाम् ॥ सततंवेपमानांगींप्रवातेकदलीमिव ॥ १८ ॥ तांतुसीतामहाभागामनसूयांपतिव्रताम् ॥ अभ्यवादयदव्यग्रास्वंनामसमुदाहरत् ॥ १९ ॥ अभिवाद्यचवैदेहीतापसींतांदमान्विताम् ॥ बद्धांजलिपुटाहृष्टापर्यपृच्छदनामयम् ॥ २० ॥ ततःसीतांमहाभागांदृष्ट्वातांधर्मचारिणीम् ॥ सांत्वयंत्यब्रवीद्वृद्धादिष्ट्याधर्ममवेक्षसे ॥ २१ ॥ त्यक्त्वाज्ञातिजनंसीतेमानवृद्धिंचमानिनि ॥ अवरुद्धंवनेरामंदिष्ट्यात्वमनुगच्छसि ॥ २२ ॥ नगरस्थोवनस्थोवाशुभोवायदिवाशुभः ॥ यासांस्त्रीणांप्रियोभर्तातासांलोकामहोदयाः ॥ २३ ॥ दुःशीलःकामवृत्तोवाधनैर्वापरिवर्जितः ॥ स्त्रीणामार्यस्वभावानांपरमंदैवतंपतिः ॥ २४ ॥ नातोविशिष्टंपश्यामिबांधवंविमृशंत्यहम् ॥ सर्वत्रयोग्यंवैदेहितपःकृतमिवाव्ययम् ॥ २५ ॥ नत्वेवमनुगच्छंतिगुणदोषमसत्स्त्रियः ॥ कामवक्तव्यहृदयाभर्तृनाथाश्चरंतियाः ॥ २६ ॥ प्राप्नुवंत्ययशश्चैवधर्मभ्रंशंचमैथिलि ॥ अकार्यवशमापन्नाःस्त्रियोयाःखलुतद्विधाः ॥ २७ ॥ त्वद्विधास्तुगुणैर्युक्तादृष्टलोकपरावराः ॥ स्त्रियःस्वर्गेचरिष्यंतियथापुण्यकृतस्तथा ॥ २८ ॥

अनामयमिति तपस्विनां स्वायत्तकुशलतयारोग्यप्रश्न एवोचित इति भावः ॥ २० ॥ धर्मचारिणीं भर्तृसमानधर्मचारिणीम् । दिष्ट्या दैवयोगेन ॥ २१ ॥ मानं राजसुताहं कथं वनं गच्छेयमित्येवंरूपम् । वने अवरुद्धं वनवासे पित्रा नियुक्तम् ॥ २२ ॥ शुभोनुकूलः अशुभः प्रतिकूलः प्रियः लौकिकालौकिकनिमित्ततोऽप्रियत्वानादरदम् ॥ २३ ॥ आर्यस्वभावः पूज्यस्वभावः ॥ २४ ॥ अतो विशिष्टं भर्तुर्विशिष्टम् बांधवमिष्टबंधुम् सर्वत्र योग्यमिहामुत्रचेष्टसाधनतया भजनयोग्यम् तपःकृतम् । भावे निष्ठा । तपोनुष्ठानमिति यावत् ॥ २५ ॥ याः कामवक्तव्यहृदयाः कामाधीनहृदयाः गृत्याधीनौ तु वक्तव्यौ भर्तृनाथाः भर्तॄणां नाथभूतास्तास्त्रियंत्र्यः । यदा भर्तृन्भोगार्थं नार्थंते याचंते ताः चरंति स्वेच्छया इतस्ततो यांति ॥ २६ ॥ तद्विधाः उक्तनिकृष्टगुणवत्यः ॥ २७ ॥ दृष्टो लोकः परोवरश्च याभिस्ताः ॥ २८ ॥

समय आचारः ॥ २९ ॥ धुरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥ अनसूया असूयारहिता । अनसूयया अन्वर्थतन्नाम्न्या । वचः अनसूयायाः ॥ १ ॥ अनुभाषसे शिक्षयसि नार्या गुरुः पतिरिति यथा भवत्योपदिष्टं एतद्विदितं एतद्विषयकं ज्ञानं ममापि ॥ २ ॥ तदेव दर्शयति यद्यपीति । एष भर्ता यद्यप्यनार्यः पूज्य चरित्रहीनः वृत्तिवर्जितः जीवनरहितो दारिद्रश्च भवेत् तथापि मया मद्विधया अत्र भर्तरि अद्वैधं प्रकारद्वयरहितं यथा भवति तथा वर्तव्यं वर्तितव्यम् प्रीतिप्रकारेणैव वर्तितव्यमित्यर्थः ॥ ३ ॥ गुणश्लाघ्यत्वादिवि शिष्टे सा वृत्तिरिति किं पुनर्वक्तव्यम् । मातृवत्पितृवत्प्रियः मयीति शेषः प्रियः प्रीतिमान्ममेति वा शेषः प्रीतिविषय इत्यर्थः । मातृवर्ती पितृप्रिय इतिपाठे मातृवर्ती मातृसेवारतः पितुः प्रीतिविषय इत्यर्थ इति तीर्थः ॥ ४ ॥ अन्यासामपि नृपनारीणां सुमित्रादीनां विषयेपीत्यर्थः । तथा अन्यासामपि विषये मदतिरिक्तस्त्रीमात्रविषयेपि तामेव वृत्तिं कुरुते इत्यर्थः । नृपनारीणामित्यनेनैव सुमित्रादीनां लाभादित्यन्ये ॥ ५ ॥

तदेवमेतंत्वमनुव्रतासतीपतिप्रधानासमयानुवर्तिनी ॥ भवस्वभर्तुःसहधर्मचारिणीयशश्चधर्मंचततःसमाप्स्यासि ॥ २९ ॥ इत्यार्षे श्रीम० वा० आ० अयोध्याकांडे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥ सात्वेवमुक्तावैदेहीत्वनसूयानसूयया ॥ प्रतिपूज्यवचोमंदंप्रवक्तुमुपचक्रमे ॥ १ ॥ नैतदाश्चर्यमार्यायांयन्मांत्वमनुभाषसे ॥ विदितंतुममाप्येतद्यथानार्याःपतिर्गुरुः ॥ २ ॥ यद्यप्येषभवेद्भर्ताअनार्योवृत्तिवर्जितः ॥ अद्वैधमत्रवर्तव्यंतथाप्येषमयाभवेत् ॥ ३ ॥ किंपुनर्योगुणश्लाघ्यःसानुक्रोशोजितेंद्रियः ॥ स्थिरानुरागोधर्मात्मामातृवत्पितृवत्प्रियः ॥ ४ ॥ यांवृत्तिंवर्ततेरामःकौसल्यायांमहाबलः ॥ तामेवनृपनारीणामन्यासामपिवर्तते ॥ ५ ॥ सकृद्दृष्टास्वपिस्त्रीषुनृपेणनृपवत्सलः ॥ मातृवद्वर्ततेवीरोमानमुत्सृज्यधर्मवित् ॥ ६ ॥ आगच्छंत्याश्चविजनंवनमेवंभयावहम् ॥ समाहितंहिमेश्वश्र्वाहृदयेयत्स्थिरंमम ॥ ७ ॥ पाणिप्रदानकालेचयत्पुरात्वग्निसन्निधौ ॥ अनुशिष्टंजनन्यामेवाक्यंतदपिमेधृतम् ॥ ८ ॥ नविस्मृतंतुमेसर्ववाक्यैःस्वैर्धर्मचारिणि ॥ पतिशुश्रूषणान्नार्यास्तपोनान्यद्विधीयते ॥ ९ ॥ सावित्रीपतिशुश्रूषांकृत्वास्वर्गेमहीयते ॥ तथावृत्तिश्चयातात्वंपतिशुश्रूषयादिवम् ॥ १० ॥ वरिष्ठासर्वनारीणामेषाचादिविदेवता ॥ रोहिणीनविनाचंद्रंमुहूर्तमपिदृश्यते ॥ ११ ॥ एवंविधाश्चप्रवराःस्त्रियोभर्तृदृढव्रताः ॥ देवलोकेमहीयंतेपुण्येनस्वेनकर्मणा ॥ १२ ॥ ततोनसूयासंहृष्टाश्रुत्वोक्तंसीतयावचः ॥ शिरस्याघ्रायचोवाचमैथिलींहर्षयंत्युत ॥ १३ ॥ नियमैर्विविधैराप्तंतपोहिमहदस्तिमे ॥ तत्संश्रित्यबलंसीतेछंदयेत्वांशुचिव्रते ॥ १४ ॥ उपपन्नंचयुक्तंचवचनंतवमैथिलि ॥ प्रीताचास्म्युच्यतांसीतेकरवाणिप्रियंचकिम् ॥ १५ ॥

नृपेण दशरथेन मानम् अहं महाप्रभुरित्यभिमानं त्यक्त्वेत्यर्थः । अन्यमते उक्तार्थे सत्यत्वप्रत्यायनायैतदुक्तिरिति बोध्यम् ॥ ६ ॥ यन्मे श्वश्र्वा समाहितं त्वदुक्तार्थकमेव वाक्यं शिक्षितं तन्मे हृदि स्थिरं वर्तते ॥ ७ ॥ तदपि मे धृतं मात्रनुशासनमपि मे हृद्गतमेवास्ति ॥ ८ ॥ यच्च स्वैरात्मीयैर्बंधुवर्गैः पतिशुश्रूषणादिप्रकारैर्बोधितमर्थजातं तच्च मे न विस्मृतं तु इत्यर्थः ॥ ९ ॥ सावित्री सत्यवतः स्त्री तथावृत्तिः सावित्रीसमानवृत्तिः त्वम् अनसूया यातेत्युक्तिः । पातिव्रत्यमहिम्ना स्वर्गस्य हस्तगतत्वादिति तीर्थः । तपोर्थमिह वर्तमानापि पतिसेवया मूर्त्यंतरेण दिवं यातेत्यर्थ इति कतकः ॥ १० ॥ रोहिणी विना चंद्रं मुहूर्तमपि न दृश्यते । पूर्वकृतपतिशुश्रूषावशादेवं पतिसाहित्यं प्राप्तमिति भावः ॥ ११ ॥ प्रवराः स्त्रियोऽरुंधत्यादयः ॥ १२ ॥ हर्षयंत्युत हर्षयंत्यपीत्यर्थः । उताप्यर्थविकल्पयोः ॥ १३ ॥ तद्बलं संश्रित्य आश्रित्य छंदये वरं वृणी

ष्वेति प्रार्थयामि ॥ १४ ॥ १५ ॥ विस्मिता जाताश्चर्या अहो तपसो माहात्म्यं यन्ममापि वरदाने सामर्थ्यं मंदविस्मया मंदस्मिता कृतं भवत्या अनुग्रहेणैव सर्वं मे पूर्णं न किंचित्कर्तव्यमस्तीति भावः ॥१६॥ तया लोभरहितवाचा । महर्षे लोभराहित्यजं स्वनिष्ठम् ते त्वद्विषयम् ॥ १७ ॥ अंगरागः उद्वर्तनेनांगानि रंजयतीत्यंगरागः केशरचंदनादिजः । अनुलेपनं तु कर्पूरागुरुकस्तूरीकंकोलैर्यक्षकर्दम इत्युक्तप्रकारो दिव्य गंधद्रव्यकल्क इति तीर्थः । कतकस्तु अंगरागं अंगरंजनकरं अनुलेपनं दिव्यगंधद्रव्यकल्कमित्यर्थ इत्याह । इदमेव युक्तम् ॥ १८ ॥ शोभयेत् शोभयिष्यति । अनुरूपं त्वदेकोचितम् । नित्यमेवासंक्लिष्टं उपभोगे पि अशुचित्वमृदितत्वादिदोषराहितं भविष्यति ॥ १९ ॥ शोभयिष्यसीत्यनेन त्वत्पूजया भर्तुरपि पूजा कृतेति सूचितम् ॥ २० ॥ क्षत्रियत्वात्प्रतिग्रहानाधिकारेण प्रीतिदानमित्युक्तम् । लक्ष्म्युद्देशेन ब्राह्मणादिभ्यो

तस्यास्तद्वचनंश्रुत्वाविस्मितामंदविस्मया ॥ कृतमित्यब्रवीत्सीतातपोबलसमन्विताम् ॥ १६ ॥ सात्वेवमुक्ताधर्मज्ञातयाप्रीततराभवत् ॥ सफलं चप्रहर्षंतेहंतसीतेकरोम्यहम् ॥ १७ ॥ इदंदिव्यंवरंमाल्यंवस्त्रमाभरणानिच ॥ अंगरागंचवैदेहिमहार्हमनुलेपनम् ॥ १८ ॥ मयादत्तमिदंसीते तवगात्राणिशोभयेत् ॥ अनुरूपमसंक्लिष्टंनित्यमेवभविष्यति ॥ १९ ॥ अंगरागेणदिव्येनलिप्तांगीजनकात्मजे ॥ शोभयिष्यसिभर्तारंयथाश्रीर्विष्णुमव्ययम् ॥ २० ॥ सावस्त्रमंगरागंचभूषणानिस्रजस्तथा ॥ मैथिलीप्रतिजग्राहप्रीतिदानमनुत्तमम् ॥ २१ ॥ प्रतिगृह्यचतत्सीताप्रीतिदानंयशस्विनी ॥ श्लिष्टांजलिपुटाधीरासमुपास्ततपोधनाम् ॥ २२ ॥ तथासीतामुपासीनामनसूयादृढव्रता ॥ वचनंप्रष्टुमारेभेकथांकांचिदनुप्रियाम् ॥२३॥ स्वयंवरेकिलप्राप्तात्वमनेनयशस्विना ॥ राघवेणेतिमेसीतेकथाश्रुतिमुपागता ॥ २४ ॥ तांकथांश्रोतुमिच्छामिविस्तरेणचमैथिलि ॥ यथाभूतंचकात्स्न्र्येनतन्मेत्वंवक्तुमर्हसि ॥ २५ ॥ एवमुक्तातुसासीतातापसींधर्मचारिणीम् ॥ श्रूयतामितिचोक्त्वावैकथयामासतांकथाम् ॥ २६ ॥ मिथिलाधिपतिर्वीरोजनकोनामधर्मवित् ॥ क्षत्रकर्मण्यभिरतोन्यायतःशास्तिमेदिनीम् ॥ २७ ॥ तस्यलांगलहस्तस्यकृषतःक्षेत्रमंडलम् ॥ अहंकिलोत्थिता भित्त्वाजगतींनृपतेःसुता ॥ २८ ॥ समांदृष्ट्वानरपतिर्मुष्टिविक्षेपतत्परः ॥ पांसुगुंठितसर्वांगींविस्मितोजनकोभवत् ॥ २९ ॥ अनपत्येनचस्नेहादंकमारोप्यचस्वयम् ॥ ममेयंतनयेत्युक्त्वास्नेहोमयिनिपातितः ॥३०॥ अंतरिक्षेचवागुक्ताप्रतिमामानुषीकिल ॥ एवमेतन्नरपतेधर्मेणतनयातव ॥३१॥

दत्तमक्षयं चेत् साक्षाल्लक्ष्म्यै प्रीत्या दत्तं तथेति किं वक्तव्यमिति देव्यै तद्दानमनसूयाया इति बोध्यम् ॥ २१ ॥ श्लिष्टांजलिपुटा रचितांजलिपुटा ॥ २२ ॥ अनु अनंतरं प्रियां कांचित्कथां श्रोतुकामा वचनं प्रष्टुमारेभे ॥ २३ ॥ अनेन रामेण श्रुतिं मम श्रोत्रपथम् ॥ २४ ॥ विस्तरेण च विस्तरेणैव ॥ २५ ॥ २६ ॥ २७ ॥ क्षेत्रमंडलं यज्ञयोग्यक्षेत्रम् । चयनप्रकरणे षड्गवेन कृषतीति श्रुतेः । कृषतस्तस्य पुरः जगतीं भुवं भित्त्वोत्थिता । एतावन्मात्रेणाहं नृपतेर्जनकस्य सुता ॥ २८ ॥ मुष्टिविक्षेपतत्परः या जाता औषधयो देवेभ्य इत्यादिमंत्रोक्तप्रकारेणौषधिमुष्टिविकिरणतत्पर इति तीर्थः । निम्नोन्नतसमीकरणाय मृत्तिकामुष्टिविक्षेपतत्पर इति कतकः ॥ २९ ॥ अत्र चौ त्वर्थे ॥ ३० ॥ प्रतिमामानुषी प्रतिमया स्वरूपेण मानुषी मनुष्यवाक्तुल्या वागंतरिक्षे उक्ता तां वाचमाह एवमिति । एतन्म

नेयं तनयेत्येतत् । एवमर्थवदेव यतो हे नरपते धर्मेण न्यायेन एषा त्वत्क्षेत्रजातत्वात्तव तनयैव ॥ ३१ ॥ मामवाप्य यज्ञभूमेरिति शेषः । मल्लाभोत्तरं तस्य महती समृद्धिर्जातेति भावः ॥ ३२ ॥ इष्टवद्देव्यै इष्टायै देव्यै राज्ञ्यै । इष्टमिति भावे क्तः । इष्टमिच्छा तद्वत्यै विषयतासंबंधेनेत्यक्षरार्थः । आर्षं वा साधुत्वमुक्तार्थे । यद्वा संतानेच्छावत्यै देव्यै इत्यर्थः । पुण्यकर्मणे इति देवीविशेषणम् । तृतीयांतः पाठः क्वचित् । संभाविता संवर्धिता ॥ ३३ ॥ पतिसंयोगसुलभं पाणिग्रहणोचितम् ॥ ३४ ॥ सदृशादपकृष्टाच्च वरवर्गजनात् कन्यायाः पिता इंद्रसमोपि भुवि स्थितो लोके प्रधर्षणमसंमानादिरूपं क्लेशमाप्नोति किमु तांधिकादिति शेषः ॥ ३५ ॥ अदूरस्थां निकटप्राप्तां धर्षणां कन्यानिमित्ततिरस्क्रियां आत्मनि संदृश्य संभाव्य प्लवः पोतः ॥ ३६ ॥ सदृशं कुलविद्यादिना अभिरूपं वयःसौंदर्यादिना वरमिति शेषः ॥ ३७ ॥

ततःप्रहृष्टोधर्मात्मापितामेमिथिलाधिपः ॥ अवाप्तोविपुलामृद्धिंमामवाप्यनराधिपः ॥ ३२ ॥ दत्ताचास्मीष्टवद्देव्यैज्येष्ठायैपुण्यकर्मणे ॥ तयासंभाविताचास्मिस्निग्धयामातृसौहृदात् ॥ ३३ ॥ पतिसंयोगसुलभंवयोदृष्ट्वातुमेपिता ॥ चिंतामभ्यगमद्दीनोवित्तनाशादिवाधनः ॥ ३४ ॥ सदृशाच्चापकृष्टाच्चलोकेकन्यापिताजनात् ॥ प्रधर्षणमवाप्नोतिशक्रेणापिसमोभुवि ॥ ३५ ॥ तांधर्षणामदूरस्थांसंदृश्यात्मनिपार्थिवः ॥ चिंतार्णवगतःपारंनाससादाप्लवोयथा ॥ ३६ ॥ अयोनिजांहिमांज्ञात्वानाध्यगच्छत्सचिंतयन् ॥ सदृशंचानुरूपंचमहीपालःपतिंमम ॥ ३७ ॥ तस्यबुद्धिरियंजाताचिंतयानस्यसंततम् ॥ स्वयंवरंतनूजायाःकरिष्यामीतिधर्मतः ॥ ३८ ॥ महायज्ञेतदातस्यवरुणेनमहात्मना ॥ दत्तंधनुर्वरंप्रीत्यातूणीचाक्षय्यसायकौ ॥ ३९ ॥ असंचाल्यंमनुष्यैश्चयत्नेनापिचगौरवात् ॥ तन्नशक्तानमयितुंस्वप्नेष्वपिनराधिपाः ॥ ४० ॥ तद्धनुःप्राप्यमेपित्राव्याहृतंसत्यवादिना ॥ समवायेनरेंद्राणांपूर्वमामंत्र्यपार्थिवान् ॥ ४१ ॥ इदंचधनुरुद्यम्यसज्यंयःकुरुतेनरः ॥ तस्यमेदुहिताभार्याभविष्यतिनसंशयः ॥ ४२ ॥ तच्चदृष्ट्वाधनुःश्रेष्ठंगौरवाद्गिरिसन्निभम् ॥ अभिवाद्यनृपाजग्मुरशक्तास्तस्यतोलने ॥ ४३ ॥ सुदीर्घस्यतुकालस्यराघवोयंमहाद्युतिः ॥ विश्वामित्रेणसहितोयज्ञंद्रष्टुंसमागतः ॥ ४४ ॥ लक्ष्मणेनसहभ्रात्रारामःसत्यपराक्रमः ॥ विश्वामित्रस्तुधर्मात्मासमपित्रासुपूजितः ॥ ४५ ॥ प्रोवाचपितरंतत्रराघवौरामलक्ष्मणौ ॥ सुतौदशरथस्येमौधनुर्दर्शनकांक्षिणौ ॥ ४६ ॥ इत्युक्तस्तेनविप्रेणतद्धनुःसमुपानयत् ॥ तद्धनुर्दर्शयामासराजपुत्रायदैविकम् ॥ ४७ ॥

॥ ३८ ॥ महायज्ञे दक्षयज्ञे तस्य मत्पितृपूर्वजस्य देवरातस्य तदा शत्रुजयसमर्थधनुर्लाभाय तपःकरणकाले । दक्षयज्ञे हि शिवेन पीडिता देवाः शिवं संप्रार्थ्य धनुर्याचितवंतः स च देवेभ्यो दत्वोक्तवान् इदं देवराताय दीयतामिति ततो देवैर्वरुणद्वारा देवराताय दत्तम् । यद्वा व्रियते सर्वदेवैरिति व्युत्पत्त्या वरुणः शिव एव ॥ ३९ ॥ गौरवाद्भारवत्त्वात् ॥ ४० ॥ ४१ ॥ न संशय इति पित्रा व्याहृतमिति पूर्वेण संबंधः ॥ ४२ ॥ तोलने चालने अभिवाद्य नमस्कृत्य ॥ ४३ ॥ ४४ ॥ ४५ ॥ इमौ धनुर्दर्शनकांक्षिणौ अतो रामाय दैविकं देवदत्तं धनुर्दर्शयेति विश्वामित्रः पितरं प्रोवाचेति संबंधः ॥ ४६ ॥ ४७ ॥

पूरयामास सज्यं कृत्वाकृष्टवान् ॥ ४८ ॥ ४९ ॥ उत्तमं जलभाजनमुद्यम्य पित्राहं रामाय दातुमुद्यतेति संबंधः ॥ ५० ॥ छंदमभिप्रायम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ वैशंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे अष्टादशाधिकशततमः सर्गः ॥ ११८ ॥ ॥ अनसूयेति ॥ १ ॥ स्वयंवरं वृत्तं स्वयंवरो वृत्तः अर्धर्चादिः स्वयंवरः ॥ २ ॥ उपोह्य समीपं प्रापय्य ॥ ३ ॥ दिवसं व्याप्याहारार्थं परितः कीर्णानां संचरताम् । निलीनानां निलीयमानानाम् ॥ ४ ॥ कलशोद्यताः उद्यतकलशाः । सहिताः परस्परं मिलिताः ॥ ५ ॥ कपोतांगवत् पारावतकंठव

निमेषांतरमात्रेणतदानम्यमहाबलः ॥ ज्यांसमारोप्यझटितिपूरयामासवीर्यवान् ॥ ४८ ॥ तेनापूरयतावेगान्मध्येभग्नंद्विधाधनुः ॥ तस्यशब्दोभवद्भीमःपतितस्याशनेर्यथा ॥ ४९ ॥ ततोहंतत्ररामायपित्रासत्याभिसंधिना ॥ उद्यतादातुमुद्यम्यजलभाजनमुत्तमम् ॥ ५० ॥ दीयमानांनतुतदाप्रतिजग्राहराघवः ॥ अविज्ञायपितुश्छंदमयोध्याधिपतेःप्रभोः ॥ ५१ ॥ ततःश्वशुरमामंत्र्यवृद्धंदशरथंनृपम् ॥ ममपित्रात्वहंदत्तारामायविदितात्मने ॥ ५२ ॥ ममचैवानुजासाध्वीऊर्मिलाशुभदर्शना ॥ भार्यार्थेलक्ष्मणस्यापिदत्तापित्राममस्वयम् ॥ ५३ ॥ एवंदत्तास्मिरामायतथातस्मिन्स्वयंवरे ॥ अनुरक्तास्मिधर्मेणपतिंवीर्यवतांवरम् ॥ ५४ ॥ इत्यार्षे श्रीम० वा० आ० अयो० अष्टादशाधिकशततमः सर्गः ॥ ११८ ॥ अनुसूयातुधर्मज्ञाश्रुत्वातांमहतींकथाम् ॥ पर्यष्वजतबाहुभ्यांशिरस्याघ्रायमैथिलीम् ॥ १ ॥ व्यक्ताक्षरपदंचित्रंभाषितंमधुरंत्वया ॥ यथास्वयंवरंवृत्तंतत्सर्वंचश्रुतंमया ॥ २ ॥ रमेयंकथयातेतुदृढंमधुरभाषिणि ॥ रविरस्तंगतःश्रीमानुपोह्यरजनींशुभाम् ॥ ३ ॥ दिवसंपरिकीर्णानामाहारार्थंपतत्रिणाम् ॥ संध्याकालेनिलीनानांनिद्रार्थंश्रूयतेध्वनिः ॥ ४ ॥ एतेचाप्यभिषेकार्द्रामुनयःकलशोद्यताः ॥ सहिताउपवर्ततेसलिलाप्लुतवल्कलाः ॥ ५ ॥ अग्निहोत्रेचऋषिणाहुतेचविधिपूर्वकम् ॥ कपोतांगारुणोधूमोदृश्यतेपवनोद्धतः ॥ ६ ॥ अल्पपर्णाहितरवोघनीभूताःसमंततः ॥ विप्रकृष्टेंद्रियेदेशेनप्रकाशंतिवैदिशः ॥ ७ ॥ रजनीचरसत्त्वानिप्रचरंतिसमंततः ॥ तपोवनमृगाह्येतेवेदितीर्थेषुशेरते ॥ ८ ॥ संप्रवृत्तानिशासीतेनक्षत्रसमलंकृता ॥ ज्योत्स्नाप्रावरणश्चंद्रोदृश्यतेभ्युदितोंबरे ॥ ९ ॥ गम्यतामनुजानामिरामस्यानुचरीभव ॥ कथयंत्याहिमधुरंत्वयाहमपितोषिता ॥ १० ॥ अलंकुरुचतावत्त्वंप्रत्यक्षंममसैथिलि ॥ प्रीतिंजनयमेवत्सेदिव्यालंकारशोभिनी ॥ ११ ॥ सातदासमलंकृत्यसीतासुरसुतोपमा ॥ प्रणम्यशिरसापादौरामंत्वभिमुखीययौ ॥ १२ ॥ तथातुभूषितांसातिांददर्शवदतांवरः ॥ राघवःप्रीतिदानेनतपस्विन्याजहर्षच ॥ १३ ॥

दरुणः मेचकः श्यामे रक्तेऽरुणोऽर्के च ॥ ६ ॥ अल्पपर्णा अपि तरवस्तमसाऽव्यक्तपर्णांतरत्वाद्घनीभूता इव विप्रकृष्टेंद्रिये देशे इंद्रियविप्रकृष्टे दूरे देशे इत्यर्थः । न प्रकाशंति न प्रकाशंते ॥ ७ ॥ वेदितीर्थेषु अग्निहोत्रवेदिसंबंधात्पुण्यक्षेत्ररूपाश्रमप्रदेशेषु । तीर्थशब्दः पुण्यक्षेत्रवाची ॥ ८ ॥ चंद्रो दृश्यते इत्यनेन कार्तिक्युत्तरं प्रतिपदि यात्रेति सूचितम् ॥ ९ ॥ अनुचरी भव शुश्रूषुर्भव ॥ १० ॥ अलंकुरु आत्मान

मिति शेषः । प्रीतिं जनय अलंकृत्य दिव्यस्वस्वरूपानुभावेनेति शेषः ॥ ११ ॥ १२ ॥ १३ ॥ सर्वं न्यवेदयदित्यस्यैव प्रपंचः प्रीतिदानमित्यादि । अत्र कर्मणि ल्युट् ॥ १४ ॥ मानुषेषु मनुष्यलोकेषु ॥ १५ ॥ पुण्यां अनसूयया पुण्यया कृतालंकारां सीतां दृष्ट्वा शर्वरीमुवास ॥ १६ ॥ आपृच्छेतां वनांतरगमनार्थमिति शेषः ॥ १७ ॥ संचारं देशं वृद्धिरार्षी । समभिप्लुतं सम्यगुपद्रुतम् ॥ १८ ॥ व्याला हिंस्रप



न्यवेदयत्ततःसर्वंसीतारामायमैथिली ॥ प्रीतिदानंतपस्विन्यावसनाभरणस्रजाम् ॥ १४ ॥ प्रहृष्टस्त्वभवद्रामोलक्ष्मणश्चमहारथः ॥ मैथिल्याः सत्क्रियांदृष्ट्वामानुषेषुसुदुर्लभाम् ॥ १५ ॥ ततःसशर्वरींप्रीतःपुण्यांशशिनिभाननाम् ॥ अर्चितस्तापसैःसर्वैरुवासरघुनंदनः ॥ १६ ॥ तस्यांरात्र्यां व्यतीतायामभिषिच्यहुताग्निकान् ॥ आपृच्छेतांनरव्याघ्रौतापसान्वनगोचरान् ॥ १७ ॥ तावूचुस्तेवनचरास्तापसाधर्मचारिणः ॥ वनस्यतस्यसंचारंराक्षसैःसमभिप्लुतम् ॥ १८ ॥ रक्षांसिपुरुषादीनिनानारूपाणिराघव ॥ वसंत्यस्मिन्महारण्येव्यालाश्चरुधिराशनाः ॥ १९ ॥ उच्छिष्टंवाप्रमत्तंवातापसंब्रह्मचारिणम् ॥ अदंत्यस्मिन्महारण्येतान्निवारयराघव ॥ २० ॥ एषपंथामहर्षीणांफलान्याहरतांवने ॥ अनेनतुवनंदुर्गंगंतुंराघवतेक्षमम् ॥ २१ ॥ इतीरितःप्रांजलिभिस्तपस्विभिर्द्विजैःकृतस्वस्त्ययनःपरंतपः ॥ वनंसभार्यःप्रविवेशराघवःसलक्ष्मणःसूर्यइवाभ्रमंडलम् ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥ समाप्तमयोध्याकांडम् ॥ छ ॥

अतःपरमारण्यकांडम् ॥ तस्यायमाद्यःश्लोकः ॥ प्रविश्यतुमहारण्यंदंडकारण्यमात्मवान् ॥ रामोददर्शदुर्धर्षस्तापसाश्रममंडलम् ॥ १ ॥

श्वः सर्पो हिंस्रः पशुर्व्याल इत्यमरः ॥ १९ ॥ उच्छिष्टमशुचिं प्रमत्तमसावधानं तान् रक्षोव्यालान् ॥ २० ॥ क्षमं युक्तम् ॥ २१ ॥ इतीरितः एवमुपदिष्टमार्गः कृतस्वस्त्ययनः कृतमंगलाशीर्वादः ॥ २२ ॥ खेरैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अयोध्याकांडे एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥ ॥ मूलसंख्या ॥ ४३५० ॥ व्याख्यानसंख्या ॥ ५३०० ॥ मिलिता ग्रंथसंख्या ॥ ९६५० ॥ ॥ समाप्तमयोध्याकाण्डम् ॥

इदं श्रीमद्रामायणे सतिलकटीके अयोध्याकाण्डं
मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये
"श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणागारे मुद्रितम्।
संवत् १९६१, शके १८२६.

श्रीगणेशाय नमः ॥ अथ ऋषिदर्शितवर्त्मना रामस्य दंडकारण्यप्रवेशमाह प्रविश्येति । ऋषिदर्शितवर्त्मनेति शेषः दंडकारण्यं तत्संज्ञकं महारण्यं दंडकस्य राज्ञो देशः शुक्रशापवशादरण्यमभूत्ततःप्रभृति दंडकारण्य संज्ञा तस्य । प्रायेण महाराष्ट्रदेशोयम् । आत्मवान्स्वायत्तचित्तः दुर्धर्षो द्विषद्भिरप्रधृष्यः । दुर्धर्षमितिपाठे रक्षोयुतत्वादशक्यप्रवेशमित्यर्थः ॥ मंडलं समूहः ॥ १ ॥ आश्रममंडलं वर्णयाति कुशेति । परिक्षिप्तं व्याप्तं ब्राह्मी लक्ष्मीः ब्रह्मविद्याभ्यासजनितस्तेजोविशेषः तत्समावृतत्वादेव गगने प्रदीप्तं दुर्दर्शं रक्षआदिभिर्द्रष्टुमशक्यं सूर्यमंडलं यथा तथा भुवि स्थितम् ॥ २ ॥ शरण्यं वासायार्हं सर्वत्राणार्हं च । सुसंमृष्टाजिरम् अलंकृत प्रांगणम् ॥ ३ ॥ अप्सरसां गणैरुपनृत्तं उप समीपे कृतनर्तनम् अतिमनोरमदेशत्वात् अतएव तैः पूजितं च । अग्निशरणैरग्निहोत्रगृहैः स्रुगादिभिर्यज्ञोपकरणैश्च शोभितम् ॥ ४ ॥ आरण्यैररण्यभवैः ॥ ५ ॥ बलिहोमार्चितं वैश्वदेवहोमबलिहरणैः सत्कृतं ब्रह्मघोषो वेदघोषस्तेन निनादितं संजातनिनादम् । पद्मिनीसरः । सपद्मया पद्मपुष्पयुक्तया ॥ ६ ॥ पुराणैर्वृद्धैः ॥ ७ ॥ ब्रह्मभवनं ब्रह्मलोकः । ब्रह्मघोषो वेदघोषः ॥ ८ ॥

श्रीगणेशायनमः ॥ प्रविश्यतुमहारण्यंदंडकारण्यमात्मवान् ॥ रामोददर्शदुर्धर्षस्तापसाश्रममण्डलम् ॥ १ ॥ कुशचीरपरिक्षिप्तंब्राह्म्यालक्ष्म्या समावृतम् ॥ यथाप्रदीप्तंदुर्दर्शंगगनेसूर्यमंडलम् ॥ २ ॥ शरण्यंसर्वभूतानांसुसंमृष्टाजिरंसदा ॥ मृगैर्बहुभिराकीर्णंपक्षिसंघैःसमावृतम् ॥ ३ ॥ पूजितं चोपनृत्तंचानित्यमप्सरसांगणैः ॥ विशालैरग्निशरणैःस्रुग्भांडैरजिनैःकुशैः ॥ ४ ॥ समिद्भिस्तोयकलशैःफलमूलैश्चशोभितम् ॥ आरण्यैश्चमहावृक्षैः पुण्यैःस्वादुफलैर्वृतम् ॥ ५ ॥ बलिहोमार्चितंपुण्यंब्रह्मघोषनिनादितम् ॥ पुष्पैश्चान्यैःपरिक्षिप्तंपद्मिन्याचसपद्मया ॥ ६ ॥ फलमूलाशनैर्दांतैश्ची रकृष्णाजिनांबरैः॥ सूर्यवैश्वानराभैश्चपुराणैर्मुनिभिर्युतम् ॥ ७ ॥ पुण्यैश्चनियताहारैःशोभितंपरमर्षिभिः ॥ तद्ब्रह्मभवनप्रख्यंब्रह्मघोषनिनादितम् ॥ ८ ॥ ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैरुपशोभितम् ॥ तद्दृष्ट्वाराघवःश्रीमांस्तापसाश्रममंडलम् ॥ ९ ॥ अभ्यगच्छन्महातेजाविज्यंकृत्वामहद्धनुः ॥ दिव्यज्ञानोपपन्नास्तेरामंदृष्ट्वामहर्षयः ॥ १० ॥ अभिजग्मुस्तदाप्रीतावैदेहींचयशस्विनीम् ॥ तेतुसोममिवोद्यंतंदृष्ट्वावैधर्मचारिणम् ॥ ११ ॥ लक्ष्मणंचैवदृष्ट्वातुवैदेहींचयशस्विनीम् ॥ मंगलानिप्रयुंजानाःप्रत्यगृह्णन्दृढव्रताः ॥ १२ ॥ रूपसंहननंलक्ष्मींसौकुमार्यंसुवेषताम् ॥ ददृशुर्विस्मिताकारारामस्यवनवासिनः ॥ १३ ॥

ब्रह्मविद्भिः सर्वत्र ब्रह्मानन्यत्वज्ञानवद्भि र्ब्राह्मणैरुक्तलक्षणैरन्वर्थब्राह्मणैस्तादृशैर्युक्तत्वादेव ब्रह्मभवनप्रख्यत्वमाश्रमस्य ॥ ९ ॥ विज्यम् अवरोपितगुणम् आश्रमवर्तिमृगादित्रासनिवृत्त्यर्थमिति भावः । दिव्यज्ञानोपपन्ना आदिगुर्वंवतारो रामो रावणादीन्हनिष्यतीत्येवंज्ञानयुक्ताः ते रामं सीतां च चाल्लक्ष्मणं च दृष्ट्वा प्रीता अभिजग्मुः आभिमुख्येन जग्मुः । उद्यंतं सोममिव तद्वत्प्रियदर्शनं सोमोस्माकं ब्राह्मणानां राजेति श्रुतेः । स्वकुलरक्षकसोमराजमिव स्वरक्षकं धर्मचारिणं रामं दृष्ट्वा लक्ष्मणं यशस्विनीं पातिव्रत्ययशोवतीं रक्षःकुलसंहारजयशोवतीं च सीतां दृष्ट्वा । अतएवाग्रे रक्षणप्रार्थनोपपद्यते । मंगलानि आशीर्वादान्प्रत्यगृह्णन्संरक्षकेष्टेदेवतावुद्ध्याप्रतिगृहीतवंतः ॥ १० ॥ ११ ॥ १२ ॥ रूपसंहननं अंगान्यभूषितान्येव प्रेक्षणीयैर्विभूषणैः ॥ येन भूषितवद्भांति तद्रूपमिति कथ्यत इति लक्षितं रूपं तद्युक्तं संहननम् आपादकेशम् । सुश्लिष्टसंधिबंधः

अंगप्रत्यंगकानां च सन्निवेशो यथोचितम् ॥ सुश्लिष्टसंधिबंधो यस्तत्सौंदर्यमिहोच्यते इत्युक्तलक्षणं सौंदर्यम् । लक्ष्मीं कांतिं लावण्यं मुक्ताफलेषु च्छायायास्तरलत्वमिवांतरा ॥ प्रतिभाति यदंगेषु लावण्यं तन्निगद्यते ॥ सौकुमार्यं परचित्तग्राहितालक्षणं मार्दवं वा । विस्मितानामद्भुतवस्तुदर्शनवतां य आकारो मुखप्रसादविस्फारितेक्षणत्वादिरूपस्तथाविधाकारा विस्मितचित्ता इति यावत् । वनवासिन इति रामविशेषणं तादृशस्याप्रीदृशं रूपादीत्याश्चर्यम् ॥१३॥ तदेवाह वैदेहीमिति । अनिमेषैर्निमेषरहितैः आश्चर्यभूतान् रूपादिभिर्विस्मयप्रापकान्सर्वे ते वनवासिनः ऋषयो मृगादयश्च । तद्दर्शनानंदविच्छेदभयेन च निमेषराहित्यम् ॥ १४ ॥ अत्राश्रममंडले । अतिथिं न्यायतः पूजार्हम् । पर्णशालायां प्रातिस्विक्याम् ॥१५॥ रामस्य सत्कृत्येति । कर्मणः शेषत्वविवक्षायां षष्ठी । भवद्दर्शनादिभिर्वयं धन्या इत्यादिप्रियवचनैः सत्कृत्य सलिलं सलिलादिपूजाद्रव्यं आजह्रुः रामपूजार्थमिति शेषः ॥१६ ॥ आश्रमं च स्ववासस्थानभूतम् ॥ १७ ॥ प्रांजलयः निजकुलदेवतावतारत्वात् । अन्यथा हि क्षत्रिये ब्राह्मणांजलिकरणस्यानौचित्यं स्यात ॥ १८ ॥ पूजनीयो देवताबुद्ध्या पालकत्वेन गुरुत्वाद्वा मान्यो राजबुद्ध्या सत्कारार्हः । तदेवाह राजेत्यादि । दंडधरो दुष्टनिग्रहकर्ता । सर्वलोकप्रसिद्धम् । पूजाहेतुमाह इंद्रस्येति । इंद्रस्याशेषयागपूज्यस्य चतुर्भागः चतुर्थांशः यद्वेंद्र

**वैदेहींलक्ष्मणंरामंनेत्रैरनिमिषैरिव ॥ आश्चर्यभूतान्ददृशुःसर्वेतेवनवासिनः ॥१४॥ अत्रैनंहिमहाभागाःसर्वभूतहिते रताः ॥ अतिथिंपर्णशालायांराघवंसन्न्यवेशयन् ॥ १५ ॥ ततोरामस्यसत्कृत्याविधिनापावकोपमाः ॥ आजह्रुस्तेमहाभागाःसलिलंधर्मचारिणः ॥१६॥ मंगलानिप्रयुंजानामुदापरमयायुताः ॥ मूलंपुष्पंफलंसर्वमाश्रमंचमहात्मनः ॥ १७ ॥ निवेदयित्वाधर्मज्ञास्तेतुप्रांजलयोब्रुवन् ॥ धर्मपालोजनस्यास्यशरण्यश्चमहायशाः ॥१८॥ पूजनीयश्चमान्यश्चराजादंडधरोगुरुः ॥ इंद्रस्यैवचतुर्भागःप्रजारक्षतिराघव ॥ १९ ॥ राजातस्माद्वरान्भोगान्रम्यान्भुंक्तेनमस्कृतः ॥ तेवयंभवतारक्ष्याभवद्विषयवासिनः ॥ २० ॥ नगरस्थोवनस्थोवात्वंनोराजाजनेश्वरः ॥ न्यस्तदंडावयंराजन्जितक्रोधाजितेंद्रियाः ॥ २१ ॥ रक्षणीयास्त्वयाशश्वद्गर्भभूतास्तपोधनाः ॥ एवमुक्त्वाफलैर्मूलैःपुष्पैरन्यैश्चराघवम् ॥ वन्यैश्चविविधाहारैःसलक्ष्मणमपूजयन् ॥ २२ ॥ तथान्येतापसाःसिद्धारामंवैश्वानरोपमाः ॥ न्यायवृत्तायथान्यायंतर्पयामासुरीश्वरम् ॥ २३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे प्रथमः सर्गः ॥१॥**

स्य परमात्मनो विष्णोश्चतुर्थांशः । एवकारेण न यस्य कस्यापि देवतासामान्यस्येति सूचितम् ॥१९॥ नमस्कृतो लोकैरिति शेषः । एवं राजमात्रस्याप्येवंविधत्वे साक्षाद्भगवतस्तवैवंविधत्वमिति किमु वक्तव्यमिति ध्वनिः । ते वयं ऋषयः रक्ष्यत्वे हेतुर्भवद्विषयवासिन इति । विषयो देशः सार्वभौमत्वाद्दंडकारण्यमपि तद्देश एवेति भावः । विष्ण्ववतारत्वात्सर्वो देशस्तवैवेति गूढोभिप्रायः ॥ २० ॥ ननु वनस्थेन बलहीनेन मया कथं भवंतो रक्ष्यास्तत्राह नगरस्थ इति । नगरमयोध्या त्वं नो राजा रक्षकः राजा जनेश्वर इत्याभ्यामिहामुत्र च त्वमेव रक्षकः सर्वशक्तिसंपन्नस्य नगरवनवासाभ्यामुपचयापचयोरभावादिति ध्वनितम् । ननु महा प्रभावाणां कुतो रक्षकांतरापेक्षेत्यत आह न्यस्तेति । त्यक्तभूतनिग्रहाः तत्र हेतुर्जितक्रोधाः तपोनाशभयात् ॥ २१ ॥ अतो रक्षितव्याः गर्भभूताः यथा मातुर्गर्भे प्राप्तो जीवो मात्रा रक्ष्यते तद्वद्रक्ष्या इत्यर्थः । अन्यैर्नीवारादिभिर्विविधाहारैः । सलक्ष्मणमित्यनेन लक्ष्मणस्याप्याहारभक्षणं स्पष्टमुक्तम् ॥ २२ ॥ अन्ये सिद्धाः संकल्पसिद्धाः न्यायो धर्मस्तदनुरुद्धं वृत्तं चरित्रं येषां ते यथान्यायम् ईश्वरार्हपदार्थोपस्थापनेनेश्वरं तर्पयामासुः ॥ २३ ॥ गैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे प्रथमः सर्गः ॥ १ ॥

उदयनं मति उदयकाले अन्वगाहत माविशत् ॥ १ ॥ ध्वस्तवृक्षलतागुल्मं विराधसंचारवशादिति शेषः । दुर्दर्शसलिलाशयम् उक्तहेतुवशादेव ॥ २ ॥ निष्कूजमानाः शकुनयो यत्र तद् विराधभयादेवं झिल्लिकागणमात्रशब्दयुतं वनमध्यं ददर्शेति संबन्धः ॥ ३ ॥ घोरमृगास्तरक्ष्वादयः । पुरुषादं राक्षसम् ॥ ४ ॥ गभीराक्षं महाकूपवदगाधचक्षुषं विकटं विशालं बीभत्सं कुत्सितं विषमं निम्नोन्नतसंस्थानं विकृतं वक्ष्यमाणधर्मैर्विपरीतवेषम् अतएव घोरदर्शनम् ॥ ५ ॥ वसा मांसांतर्गतस्नेहः । व्यादितास्यं व्यात्तास्यमित्यर्थः ॥ ६ ॥ पृषता बिंदुयुक्ता मृगाः ॥ ७ ॥ भक्षणार्थं सिंहादीन् आयसे शूलेऽवसज्य महास्वनं यथा तथा विनदंतम् ॥ ८ ॥ काले युगांतकाले क्रुद्धोंतकः प्रजा अभि उद्दिश्य यथा धावति तथा अभ्यधावत् ॥ ९ ॥ अंकेन कटिप्रदेशेन । सभार्यौ भार्याशब्दो योषिन्मात्रवाची

कृतातिथ्योथरामस्तुसूर्यस्योदयनंप्रति ॥ आमंत्र्यससुनीन्सर्वान्वनमेवान्वगाहत ॥१॥ नानामृगगणाकीर्णमृक्षशार्दूलसेवितम् ॥ ध्वस्तवृक्षलतागुल्मंदुर्दर्शसलिलाशयम् ॥ २ ॥ निष्कूजमानशकुनिझिल्लिकागणनादितम् ॥ लक्ष्मणानुचरोरामोवनमध्यंददर्शह ॥ ३ ॥ सीतयासहकाकुत्स्थस्तस्मिन्घोरमृगायुते ॥ ददर्शगिरिशृंगाभंपुरुषादंमहास्वनम् ॥ ४ ॥ गभीराक्षंमहावक्त्रंविकटंविकटोदरम् ॥ बीभत्संविषमंदीर्घंविकृतंघोरदर्शनम् ॥ ॥ ५ ॥ वसानंचर्मवैयाघ्रंवसार्द्रंरुधिरोक्षितम् ॥ त्रासनंसर्वभूतानांव्यादितास्यमिवांतकम् ॥ ६ ॥ त्रीन्सिंहांश्चतुरोव्याघ्रान्द्वौवृकौपृषतान्दश ॥ सविषाणंवसादिग्धंगजस्यचशिरोमहत् ॥ ७ ॥ अवसज्यायसेशूलेविनदंतंमहास्वनम् ॥ सरामंलक्ष्मणंचैवसीतांदृष्ट्वाचमैथिलीम् ॥ ८ ॥ अभ्यधावत्सुसंक्रुद्धःप्रजाःकालइवांतकः ॥ सकृत्वाभैरवंनादंचालयन्निवमेदिनीम् ॥ ९ ॥ अंकेनादायवैदेहीमपक्रम्यतदाब्रवीत् ॥ युवांजटाचीरधरौसभार्यौक्षीणजीवितौ ॥ १० ॥ प्रविष्टौदंडकारण्यंशरचापासिपाणिनौ ॥ कथंतापसयोर्वांचवासःप्रमदयासह ॥ ११ ॥ अधर्मचारिणौपापौकौयुवांमुनिदूषकौ ॥ अहंवनमिदंदुर्गंविराधोनामराक्षसः ॥ १२ ॥ चरामिसायुधोनित्यमृषिमांसानिभक्षयन् ॥ इयंनारीवरारोहाममभार्याभविष्यति ॥१३॥ युवयोःपापयोश्चाहंपास्यामिरुधिरंमृधे ॥ तस्यैवंब्रुवतोदुष्टंविराधस्यदुरात्मनः ॥ १४ ॥ श्रुत्वासगर्वितंवाक्यंसंभ्रांताजनकात्मजा ॥ सीताप्रवेपितोद्वेगात्प्रवातेकदलीयथा ॥ १५ ॥ तांदृष्ट्वाराघवःसीतांविराधांकगतांशुभाम् ॥ अब्रवील्लक्ष्मणंवाक्यंमुखेनपरिशुष्यता ॥ १६ ॥ पश्यसौम्यनरेंद्रस्यजनकस्यात्मसंभवाम् ॥ ममभार्यांशुभाचारांविराधांकेप्रवेशिताम् ॥ १७ ॥ अत्यंतसुखसंवृद्धांराजपुत्रींयशस्विनीम् ॥ यदभिप्रेतमस्मासुप्रियंवरवृतंचयत् ॥ १८ ॥ कैकेय्यास्तुसुसंवृत्तंक्षिप्रमद्यैवलक्ष्मण ॥ यानतुष्यतिराज्येनपुत्रार्थेदीर्घदर्शिनी ॥ १९ ॥

एकया योषिता सहितौ । यद्वा विराधस्येदं निंदोक्तिरूपमेव वाक्यम् ॥ १० ॥ तदेवाह कथमिति । प्रमदया एकया सह द्वयोर्वासः कथं चेत्यन्वयः ॥ ११ ॥ अतएवाह अधर्मचारिणौ मुनिदूषकौ मुनिवेषविरुद्धशरचापासिधारणात् एकभार्यारक्तत्वाच्च अतएव पापौ तयोर्भीत्युत्पादनाय विराधः स्वयमेव स्वस्वरूपमाह अहमिति ॥ १२ ॥ १३ ॥ मृधे युद्धे ॥ १४ ॥ सगर्वितं भावे निष्ठा सगर्वमिति यावत् । उद्वेगाद्भयात् ॥ १५ ॥ परिशुष्यता शोकसंकुचितेन मुखेनोपलक्षित इव ॥ १६ ॥ प्रवेशितां विराधेनेति शेषः ॥ १७ ॥ अस्मासु विषये यद्दुःखं कैकेय्या वने संपादनीयतयाऽभिमतं यत्स्वस्य प्रियं वरवृतं च तद्

क्षिप्रमद्यैव सुसंवृत्तं सिद्धम् । या पुत्रार्थे पुत्रप्रयोजननिमित्तं राज्येन राज्याभिषेकमात्रेण न तुष्यति दीर्घदर्शिनी अस्मन्नाशेन स्वपुत्रस्य चिरं राज्यं पश्यंती ॥ १८ ॥ १९ ॥ यथा दीर्घदर्शिन्या सर्वभूतहितोहं वनमपि प्रस्थापितः । पितृराज्यदार्ढ्याय या मे मध्यमा माता कौसल्यातः कनिष्ठत्वात्सुमित्रातो ज्येष्ठत्वात्साऽद्य दिवसे इदानीमस्मिन्काले सकामा जाता । कौसल्यापेक्षया कनिष्ठत्वात्पूर्वं यवीयसीत्युक्तिरपि नासंगता । तीर्थस्तु कौसल्यासुमित्राभ्यां कनीयसी इतरदशरथपत्नीभ्यो ज्येष्ठेत्याह । भगवतोपीदृशोक्तिस्तु लक्ष्मणोत्साहवर्धनायेति शेषः ॥ २० ॥ तदर्थमेव पुनरप्याह परेति । पितुर्मरणात्स्वराज्यहरणादधिकदुःखजनको वैदेही परस्पर्शः । इतोधिकं दुःखजनकं तु न मे किंचिदिति दुःखातिशयो व्यंग्यः ॥ २१ ॥ बाष्पशोकाभ्यां नेत्रचित्तगताभ्यां परिप्लुतो व्याप्तस्तथा क्रुद्धः कैकेयीं प्रति विराधं प्रति च रुद्धो नाग इव आहितुंडिकेन मंत्ररुद्धः पेटीरुद्धो वा सर्प इवेत्यर्थः । श्वसन् रामविषाददर्शनेन ॥ २२ ॥ अनाथ इव नाथापेक्षः प्राणी नाथरहितः सन् यथा शोचति तद्वत् ।

ययाहंसर्वभूतानांप्रियःप्रस्थापितोवनम् ॥ अद्येदानींसकामासायामातामध्यमामम ॥ २० ॥ परस्पर्शात्तुवैदेह्यानदुःखतरमस्तिमे ॥ पितुर्विनाशात्सौमित्रेस्वराज्यहरणात्तथा ॥२१॥ इतिब्रुवतिकाकुत्स्थेबाष्पशोकपरिप्लुतः ॥ अब्रवील्लक्ष्मणःक्रुद्धोरुद्धोनागइवश्वसन् ॥ २२ ॥ अनाथइवभूतानांनाथस्त्वंवासवोपमः ॥ मयाप्रेष्येणकाकुत्स्थकिमर्थंपरितप्यसे ॥ २३ ॥ शरेणनिहतस्याद्यमयाक्रुद्धेनरक्षसः ॥ विराधस्यगतासोर्हिमहीपास्यतिशोणितम् ॥ २४॥ राज्यकामेममक्रोधोभरतेयोवभूवह ॥ हतंविराधेविमोक्ष्यामिवज्रीवज्रमिवाचले ॥२५॥ ममभुजबलवेगवेगितःपततुशरोस्यमहान्महोरसि ॥ व्यपनयतुतनोश्चजीवितंपततुततश्चमहींविघूर्णितः ॥ २६ ॥ इत्यार्षे श्रीम० वा० आ० अर० द्वितीयः सर्गः ॥ २॥ अथोवाचपुनर्वाक्यंविराधःपूरयन्वनम् ॥ पृच्छतोममहिब्रूतंकौयुवांक्वगमिष्यतः ॥ १ ॥ तमुवाचततोरामोराक्षसंज्वलिताननम् ॥ पृच्छंतंसुमहातेजाइक्ष्वाकुकुलमात्मनः ॥ २॥ क्षत्रियौवृत्तसंपन्नौविद्धिनौवनगोचरौ ॥ त्वांतुवेदितुमिच्छावःकस्त्वंचरसिदंडकान् ॥ ३ ॥ तमुवाचविराधस्तुरामंसत्यपराक्रमम् ॥ हंतवक्ष्यामितेराजन्निबोधममराघव ॥ ४ ॥ पुत्रःकिलजवस्याहंमातामम शतह्रदा ॥ विराधइतिमामाहुःपृथिव्यांसर्वराक्षसाः ॥ ५॥ तपसाचाभिसंप्राप्ताब्रह्मणोहिप्रसादजा ॥ शस्त्रेणावध्यतालोकेऽछेद्याभेद्यत्वमेवच ॥ ६ ॥

कीदृशस्त्वं भूतानां सर्वजीवानां नाथस्त्राता तेन तस्य नाथनिरपेक्षत्वं ध्वनितम् । तदुपपादकमेव वासवोपम इत्यपि मया प्रेष्येण युक्त इति शेषः ॥ २३ ॥ किं त्वया शक्यं तत्राह शरेणेति ॥ २४ ॥ विराधे मोक्ष्यामि भरतेन राज्याकामनायाः प्रदर्शितत्वात्तमुपेक्ष्य ॥ २५ ॥ भुजबलवेगेन धनुष्कर्षणवेगेन वेगितः आहितवेगः महीं पततु विराध इति शेषः । विघूर्णितः संजातभ्रमणः ॥ २६ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे द्वितीयः सर्गः ॥ २ ॥ अथेति । वनं पूरयन्नित्यस्य शब्देनेति शेषः । युवयोः स्वरूपं पृच्छते मह्यं ब्रूतम् । लोण्मध्यमद्विवचनम् । प्रश्नप्रकारः कावित्यादि ॥ १ ॥ ज्वलिताननंराक्षसत्वान्मुखनिःसृताग्निज्वालया । आत्मनः इक्ष्वाकुसंबंधिकुलमुवाचेत्यर्थः ॥ २ ॥ क्षत्रियौ इक्ष्वाकुवंशजाविति शेषः । वनगोचरौ बहुव्रीहिः । कुतश्चिद्धेतोरिति शेषः ॥ ३ ॥ निबोध मम वचनान्मम स्वरूपमिति शेषः ॥ ४ ॥ जवस्य जवनाम्नः ॥ ५ ॥ लोके प्राणिलोके शस्त्रेण शस्त्र सामान्येन किंच अच्छेद्याभेद्यत्वं प्राणवियोजनाय च्छेदभेदाशक्यगात्रत्वं च प्राप्त

मित्यर्थः ॥६॥ यदेवमत उत्सृज्येत्यादि । अनपेक्षौ प्रमदाशया युद्धाशया च रहितौ वां युवयोः॥७॥८॥हीनार्थं परदारस्पर्शलक्षणहीनकर्मकरं अतएव त्वां धिक् । मृत्युमन्वेषसे ध्रुवम् उक्तदुष्कर्मकरणादिति शेषः ।
तं च मृत्युं रणे सम्यक्प्राप्स्यसि तिष्ठ क्षणमिति शेषः ॥ ९ ॥ अभिसंधाय धनुषीति शेषः ॥१०॥ ज्यागुणवता ज्यारूप रज्जुमता ज्याशब्दवतेति वा । सुपर्णानिलाभ्यां तुल्यं गच्छंति तान् ॥ ११ ॥ बर्हिणवा
ससः बर्हिणो मयूरस्तत्संबंधिबर्हवासस इत्यर्थः । शोणिता दिग्धाः रक्तलिप्ताः ॥ १२ ॥ स विद्धोपि रामबाणताडितोपि वरदानमाहात्म्यादगतासुर्व्यथामात्रेण वैदहीं हित्वा शूलमुद्यम्याभ्यद्रवत् ॥ १३ ॥ महा
नादं विनद्य कृत्वा शक्रध्वजोपमम् । दैर्घ्येण स्थौल्येन च । व्यात्ताननो विवृताननः ॥१४॥ कालांतकयमाः प्राणतनुमनःसंहारप्रधानाः संहाररुद्रस्य मूर्तयस्तत्सदृशे॥१५॥प्रहस्य शस्त्रावध्ये मयि वृथैषां बाणपात इति

उत्सृज्यप्रमदामेनामनपेक्षौयथागतम् ॥ त्वरमाणौपलायेथांनवांजीवितमाददे ॥ ७ ॥ तंरामःप्रत्युवाचेदंकोपसंरक्तलोचनः ॥ राक्षसंविकृताकारं विराधंपापचेतसम् ॥ ८ ॥ क्षुद्रधिक्त्वांतुहीनार्थंमृत्युमन्वेषसेध्रुवम् ॥ रणेप्राप्स्यसिसंतिष्ठनमेजीवन्विमोक्ष्यसे ॥ ९ ॥ ततःसज्यंधनुःकृत्वारामः सुनिशिताञ्शरान् ॥ सुशीघ्रमभिसंधायराक्षसंनिजघानह ॥ १० ॥ धनुषाज्यागुणवतासप्तबाणान्मुमोचह ॥ रुक्मपुंखान्महावेगान्सुपर्णा निलतुल्यगान् ॥ ११ ॥ तेशरीरंविराधस्यभित्त्वाबर्हिणवाससः ॥ निपेतुःशोणितादिग्धाधरण्यांपावकोपमाः ॥ १२ ॥ सविद्धोन्यस्यवैदेहीं शूलमुद्यम्यराक्षसः ॥ अभ्यद्रवत्सुसंक्रुद्धस्तदारामंसलक्ष्मणम् ॥ १३ ॥ सविनद्यमहानादंशूलंशक्रध्वजोपमम् ॥ प्रगृह्याशोभततदाव्यात्ताननइवां तकः ॥ १४ ॥ अथतौभ्रातरौदीप्तंशरवर्षंववर्षतुः ॥ विराधेराक्षसेतस्मिन्कालांतकयमोपमे ॥ १५ ॥ सप्रहस्यमहारौद्रःस्थित्वाऽजृंभतराक्षसः ॥ जृंभमाणस्यतेबाणाःकायान्निष्पेतुराशुगाः ॥ १६ ॥ स्पर्शात्तुवरदानेनप्राणान्संरोध्यराक्षसः ॥ विराधःशूलमुद्यम्यराघवावभ्यधावत ॥ १७ ॥ तच्छूलंवज्रसंकाशंगगनेज्वलनोपमम् ॥ द्वाभ्यांशराभ्यांचिच्छेदरामःशस्त्रभृतांवरः ॥ १८ ॥ तद्रामविशिखैश्छिन्नंशूलंतस्यापतद्भुवि ॥ पपाताश निनाच्छिन्नंमेरोरिवशिलातलम् ॥ १९ ॥ तौखड्गौक्षिप्रमुद्यम्यकृष्णसर्पाविवोद्यतौ ॥ तूर्णमापेततुस्तस्यतदाप्रहरतांबलात् ॥ २० ॥ सवध्यमानः सुभृशंभुजाभ्यांपरिगृह्यतौ ॥ अप्रकंप्यौनरव्याघ्रौरौद्रःप्रस्थातुमैच्छत ॥ २१ ॥ तस्याभिप्रायमाज्ञायरामोलक्ष्मणमब्रवीत् ॥ वहत्वयमलंतावत्पथाने नतुराक्षसः ॥ २२ ॥ यथाचेच्छतिसौमित्रेतथावहतुराक्षसः ॥ अयमेवहिनःपंथायेनयातिनिशाचरः ॥ २३ ॥ सतुस्वबलवीर्येणसमुत्क्षिप्यनिशा चरः ॥ बालाविवस्कंधगतौचकारातिबलोद्धतः ॥२४॥ तावारोप्यततःस्कंधंराघवौरजनीचरः ॥ विराधोविनदन्घोरंजगामाभिमुखोवनम् ॥२५॥

हासः । ते बाणाः रामलक्ष्मणविसृष्टाः जृंभणेन शरीरलग्ना अपि कायान्निर्जग्मुः । आशुगाः शीघ्रगा इत्यर्थे केवलं यौगिकम्॥१६॥स्पर्शात्तु वरदानेन वरदानसंबंधादित्यर्थः ॥ संरोध्य धृत्वा परमदुःखं प्राप्तोपीति शेषः
॥१७॥ तच्छूलं करस्थमूलभागमेवेति शेषः । गगने ज्वलनोपमं शिखाभागावच्छेदेनेति भावः ॥१८॥ अशनिर्वज्रम् ॥१९॥ तदा आपतनकाल एव प्रहरतामित्यर्थः ॥२०॥ भुजाभ्यां परिगृह्य एकैकेनैकैकम् ॥२१॥
तस्याभिप्रायं काननांतर्नयनविषयम् ॥२२॥ यथेच्छति तथा वहतु । यथास्येष्टं भवति तथा वहतु । अनेन निर्भयत्वं दर्शितम् । तत्र हेतुमाह अयमेवेति ॥२३॥ स्कंधगतौ चकार स्कंधावारोपयामास ॥ २४ ॥२५॥

शिवायुतं शिवाभिर्वृतम् ॥ २६ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे तृतीयः सर्गः ॥३॥ सुमहांतौ स्वभुजौ प्रगृह्य उद्यम्य ॥ १॥ क्रोशनप्रकारमाह एष इति ॥२ ॥ शार्दूलद्वीपिनः सविंद्वविंदुव्याघ्राः मां हर ते नम इत्युक्ती रामलक्ष्मणयोः प्रेमातिशयत्वात् ॥ ३ ॥ वेगं त्वराम् ॥ ४ ॥ बाहुं बभंज नैतावतापि प्राणहानिरिति न वरदानविरोधः । अभेद्याच्छेद्यत्वं च प्राणनाश क्षमावयवविशेषपरं बोध्यम् । बभंज मुष्टिप्रहारेणेति शेषः । अभेद्याच्छेद्यत्ववरस्तु शस्त्रकरणकतद्विषय इत्यन्ये ॥ ५ ॥ संविग्नः खिन्नः ॥ ६ ॥ सूदयंतौ हिंसंतौ ॥७ ॥ न ममार वरदानबलादिति भावः ॥८॥

वनंमहामेघनिभंप्रविष्टोद्रुमैर्महद्भिर्विविधैरुपेतम् ॥ नानाविधैःपक्षिकुलैर्विचित्रंशिवायुतंव्यालमृगैर्विकीर्णम् ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे तृतीयः सर्गः ॥ ३ ॥ ह्रियमाणौतुकाकुत्स्थौदृष्ट्वासीतारघूत्तमौ ॥ उच्चैःस्वरेणचुक्रोशप्रगृह्यसुमहाभुजौ ॥ १ ॥ एषदाशरथीरामःसत्यवाञ्छीलवाञ्शुचिः ॥ रक्षसारौद्ररूपेणह्रियतेसहलक्ष्मणः ॥ २ ॥ मामृक्षाभक्षयिष्यंतिशार्दूलद्वीपिनस्तथा ॥ मांहरोत्सृजकाकुत्स्थौनमस्तेराक्षसोत्तम ॥ ३ ॥ तस्यास्तद्वचनंश्रुत्वावैदेह्यारामलक्ष्मणौ ॥ वेगंप्रचक्रतुर्वीरौवधेतस्यदुरात्मनः ॥ ४ ॥ तस्यरौद्रस्यसौमित्रिःसव्यंबाहुंबभंजह ॥ रामस्तुदक्षिणंबाहुंतरसातस्यरक्षसः ॥ ५ ॥ सभग्नबाहुःसंविग्नःपपाताशुविमूर्छितः ॥ धरण्यांमेघसंकाशोवज्रभिन्नइवाचलः ॥ ॥ ६ ॥ मुष्टिभिर्बाहुभिःपद्भिःसूदयंतौतुराक्षसम् ॥ उद्यम्योद्यम्यचाप्येनंस्थंडिलेनिष्पिपेषतुः ॥ ७ ॥ सविद्धोबहुभिर्बाणैःखड्गाभ्यांचपरिक्षतः ॥ निष्पिष्टोबहुधाभूमौनममारसराक्षसः ॥ ८ ॥ तंप्रेक्ष्यरामःसुभृशमवध्यमचलोपमम् ॥ भयेष्वभयदःश्रीमानिदंवचनमब्रवीत् ॥ ९ ॥ तपसापुरुषव्याघ्रराक्षसोयंनशक्यते ॥ शस्त्रेणयुधिनिर्जेतुंराक्षसंनिखनावहे ॥ १० ॥ कुंजरस्येवरौद्रस्यराक्षसस्यास्यलक्ष्मण ॥ वनेस्मिन्सुमहच्छ्वभ्रंखन्यतांरौद्रवर्चसः ॥११॥ इत्युक्त्वालक्ष्मणंरामःप्रदरःखन्यतामिति ॥ तस्थौविराधमाक्रम्यकंठेपादेनवीर्यवान् ॥ १२॥ तच्छ्रुत्वाराघवेणोक्तंराक्षसःप्रश्रितंवचः॥ इदंप्रोवाचकाकुत्स्थंविराधःपुरुषर्षभम् ॥१३॥ हतोहंपुरुषव्याघ्रशक्रतुल्यबलेनवै ॥ मयातुपूर्वंत्वंमोहान्नज्ञातःपुरुषर्षभ ॥१४॥ कौसल्यासुप्रजास्तातरामस्त्वंविदितोमया ॥ वैदेहीचमहाभागालक्ष्मणश्चमहायशाः ॥१५॥ अभिशापादहंघोरांप्रविष्टोराक्षसींतनुम् ॥ तुंबुरुर्नामगंधर्वःशप्तोवैश्रवणेनहि ॥ ॥ १६ ॥ प्रसाद्यमानश्चमयासोब्रवीन्मांमहायशाः ॥ यदादाशरथीरामस्त्वांवधिष्यतिसंयुगे ॥ १७ ॥

भयेषु भयकालेषु अभयदः स्वगुणादिश्रवणस्मरणकीर्तनादिना ॥९॥ निखनावहे भूमौ गर्ते पातयावहे ॥१०॥११॥ प्रदरो गर्तः । कंठे आक्रम्य गयमिव ॥१२॥ प्रश्रितं शापांतकालप्राप्तेः प्रश्रयप्राप्तिः ॥१३॥ प्रदरकरणरूपप्राणांतव्यापारात्पूर्वंरामस्त्वमिति न ज्ञातः ॥ १४ ॥ इदानीं कथं ते ज्ञानं तत्राह कौसल्येत्यादि । त्वया कौसल्या सुप्रजा इति त्वं विदितः । कौसल्यापुत्र इति ज्ञातोसीत्यर्थः । एवं च कौसल्यायामीश्वरोवतीर्णो वैदेही च लक्ष्मीर्लक्ष्मणश्च तवांश इति सूचितम् ॥ १५ ॥ एवं ज्ञाने कारणमाह अभिशापादिति । तुंबुरुरहं वैश्रवणेन शप्तस्तस्माच्छापाद्राक्षसीं तनुं प्रविष्टोऽतो मे ज्ञानशक्तिरस्तीत्यर्थः ॥१६॥१७॥

प्रकृतिं गांधर्वीं प्रकृतक्रोधकारणमाह अनुपस्थीयमानः अवसरेष्वसेव्यमानः । व्याजहारेत्यस्य राक्षसीं तनुं प्रविशतीति शेषः ॥ १८ ॥ अनुपस्थाने कारणमाह इतीति । उक्तं शापं तत्प्रतीकारं चोवाचेत्यर्थ । शापमुक्तिकालज्ञानंदपारवश्यात्पुनरुक्तिर्न दोषाय । रंभासक्तं पुरानघेतिपाठे पुनरुक्त्यभाव एव ॥ १९ ॥ स्वभुवनं स्वंलोकम् । भवनमिति पाठांतरम् ॥ २० ॥ अध्यर्धयोजने सार्धयोजने ॥ २१ ॥ गतसत्त्वानां गतप्राणानां सनातनः परंपराप्राप्तः अतएव कलिराक्षसेषु यवनेष्वेतद्धर्मप्रवृत्तिः ॥ २२ ॥ उक्तमेव विवृणोति अवटे इति ॥ २३ ॥ न्यस्तदेहोऽवटनिक्षिप्तदेहः स्वर्गसंप्राप्तः संप्राप्तस्वर्गे इत्यर्थः बभूव तथाभवितुमुद्यतो बभूवेत्यर्थः । यद्वा बभूवेत्यर्थेन संक्षिप्ततयोक्तस्य विस्तरमाह तच्छ्रुत्वेति । अवटनिक्षेपेण स्वर्गप्राप्तिं श्रुत्वा ॥ २४ ॥ कुंजरस्येव निखननार्थमिवेत्यर्थः । खन्यतामिति शीघ्रमिति शेषः । प्रमातर्कितस्यैतन्मरणोपायस्यानेनापि कथनान्निश्चितत्वेन शीघ्रता कार्येत्याशयः ॥ २५ ॥ पादेन कंठे आक्रम्य तस्थौ श्वभ्राद्दूरपरिलुंठनव्यावृत्त्यर्थम् ॥ २६ ॥ विराधस्य महात्मनः महात्मनो महाशरीरस्य ।

तदाप्रकृतिमापन्नोभवान्स्वर्गंगमिष्यति ॥ अनुपस्थीयमानोमांसक्रुद्धोव्याजहारह ॥ १८॥ इतिवैश्रवणोराजारंभासक्तमुवाचह ॥ तवप्रसादान्मुक्तोहमभिशापात्सुदारुणात् ॥ १९ ॥ भुवनंस्वंगमिष्यामिस्वस्तिवोस्तुपरंतप ॥ इतोवसतिधर्मात्माशरभंगःप्रतापवान् ॥२०॥ अध्यर्धयोजनेतातमहर्षिःसूर्यसन्निभः ॥ तंक्षिप्रमभिगच्छत्वंसतेश्रेयोभिधास्यति ॥२१॥ अवटेचापिमांरामनिक्षिप्यकुशलीव्रज ॥ रक्षसांगतसत्त्वानामेषधर्मःसनातनः ॥ ॥ २२ ॥ अवटेयेनिधीयंतेतेषांलोकाःसनातनाः ॥ एवमुक्त्वातुकाकुत्स्थंविराधःशरपीडितः ॥ २३ ॥ बभूवस्वर्गसंप्राप्तोन्यस्तदेहोमहाबलः ॥ तच्छ्रुत्वाराघवोवाक्यंलक्ष्मणंव्यादिदेशह ॥ २४ ॥ कुंजरस्येवरौद्रस्यराक्षसस्यास्यलक्ष्मण ॥ वनेस्मिन्सुमहाञ्छ्वभ्रःखन्यतांरौद्रकर्मणः ॥ २५ ॥ इत्युक्त्वालक्ष्मणंरामःप्रदरःखन्यतामिति ॥ तस्थौविराधमाक्रम्यकंठेपादेनवीर्यवान् ॥२६॥ ततःखनित्रमादायलक्ष्मणःश्वभ्रमुत्तमम् ॥ अखनत्पार्श्वतस्तस्यविराधस्यमहात्मनः ॥ २७ ॥ तंमुक्तकंठमुत्क्षिप्यशंकुकर्णंमहास्वनम् ॥ विराधंप्राक्षिपच्छ्वभ्रेनदंतंभैरवस्वनम् ॥ २८ ॥ तमाहवेदारुणमाशुविक्रमौस्थिरावुभौसंयतिरामलक्ष्मणौ ॥ मुदान्वितौचिक्षिपतुर्भयावहंनदंतमुत्क्षिप्यबलेनराक्षसम् ॥ २९ ॥ अवध्यतांप्रेक्ष्यमहासुरस्यतौशितेनशस्त्रेणतदानरर्षभौ ॥ समर्थ्यचात्यर्थविशारदावुभौबिलेविराधस्यवधंप्रचक्रतुः ॥ ३० ॥ स्वयंविराधेनहिमृत्युमात्मनःप्रसह्यरामेणयथार्थमीप्सितः ॥ निवेदितःकाननचारिणास्वयंनमेवधःशस्त्रकृतोभवेदिति ॥ ३१ ॥

गंधर्वत्वमल्पापत्त्यभिप्रायेण रामस्वरूपज्ञानाभिप्रायेण च कविना महात्मन इति प्रयुक्तं वा ॥ २७ ॥ मुक्तकंठं श्वभ्रे क्षेपणार्थं रामेण मुक्तकंठाक्रमणम् शंकुवत्काठिनकर्णं उत्क्षिप्य चालयित्वा महास्वनत्वादेव भैरवस्वनत्वं यथा धन्योहमतिधन्योहामिति नदंतं श्वभ्रे प्राक्षिपत् ॥ २८ ॥ आशुविक्रमौ क्षिप्रकारिणौ संयति स्थिरौ दृढचित्तौ आहवे निर्जितं बलेनोत्क्षिप्य संचाल्य गर्ते चिक्षिपतुः ॥ २९ ॥ अवध्यतां शस्त्रेणावध्यतां प्रेक्ष्य । असह्यतामितिपाठेप्यवध्यतामित्येवार्थः । प्रेक्ष्य विचार्य समर्थ्य बिलं संपाद्य तत्र बिले वधं प्रचक्रतुः । मृत्पूरणेनेति शेषः ॥ ३० ॥ उक्तमेवार्थमुपसंहरति स्वयमिति । यथार्थं स्वप्रयोजनोचितम् रामेण कर्त्रा प्रसह्य स्वयं स्वस्य यो मृत्युरीप्सितस्तमात्मनो मृत्युं प्रसह्य उद्दिश्य । प्रपद्येतिपाठेप्ययमेवार्थः । काननचारिणा विराधेन मे वधः शस्त्रकृतो न भवेदिति निवेदितोभूद्राम

इति शेषः ॥ ३१ ॥ तदेव भाषितं विराधोक्तं शस्त्रेण मे न मृत्युरित्येवंरूपम् ॥ ३२ ॥ महद्दृष्टरूपाविव इवशब्द एवार्थे दिवि स्थितौ चंद्रदिवाकराविव महावने विजह्रतुः । नीलत्वाद्विशालत्वाच्च वनस्याकाशसादृश्यम् । उभावपि चंद्रवत्कलासंपन्नौ सूर्यवत्प्रतापयुतौ ॥ ३३ ॥ गैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण० वाल्मी० आदिकाव्ये अरण्यकांडे चतुर्थः सर्गः ॥ ४ ॥ ॥ समाश्वास्य समाश्वास्यैव विराधाद्भीतामिवेति शेषः ॥ १ ॥ इदं वनं कष्टं पीडाजनकं दुर्गं विषमं क्रमणायोग्यं च वयंचेतः पूर्वं कदापि वनगोचरा न स्मः कदापीदृशं वनं न दृष्टं यस्मात् ॥ २ ॥ अतः शीघ्रं शरभंगं गच्छामहे गच्छाम इत्यर्थः इत्युक्त्वेति शेषः ॥ ३ ॥ भावितः शुद्ध आत्मा यस्य तस्य समीपे महदद्भुतं ददर्श ॥ ४ ॥ तदेवाह विभ्राजमानमिति । वपुषा वपुःकांत्या विबुधानुगं देवानुचरं बहुव्रीहिः ॥ ५ ॥ वसुधमसंस्पृशंतं रथादवरुह्यापीति शेषः । विबुधेश्वरं शक्रं अतिशयप्रभावदाभरणं विरजस्कमंबरं धर्तुं शीलं यस्य तम् ॥ ६ ॥ तद्विधैस्तद्विधाभरणादिमद्भिः हरितैः श्यामवर्णैः तादृशं रथं च ददर्श ॥ ७ ॥ पांडुराभ्रस्येव घना अधिका प्रख्या कांतिर्यस्य तत् ॥ ८ ॥ चामरव्यजने वालव्यजने रुक्मं स्वर्णं महाधने रत्नयुतत्वाद्बहुमूल्ये ॥ ९ ॥ १० ॥ ११ ॥ उक्तलक्षणे वासवशरभंगेन संभाषमाणे तु तं शतक्रतुं दृष्ट्वा ज्ञात्वा रामोब्रवीत् । उक्तस्यैव प्रपंचो रामोथेति । उद्दिश्य हस्तेन निर्दिश्य दर्शयत अदर्शयतेत्यर्थः ॥ १२ ॥ १३ ॥ पुरु बहु यथा तथा यज्वभिराहूयते यागायेति पुरुहूतः नः अस्माभिः ॥ १४ ॥

तदेवरामेणनिशम्यभाषितंकृतामतिस्तस्यविलप्रवेशने ॥ विलंचतेनातिबलेनरक्षसाप्रवेश्यमानेनवनंविनादितम् ॥३२॥ प्रहृष्टरूपाविवरामलक्ष्मणौ विराधमुर्व्यांप्रदरेनिपात्यतम्॥ ननंदतुर्वीतभयौमहावनेदिविस्थितौचंद्रदिवाकराविव ॥३३॥ इत्यार्षे श्रीम०वा०आ०अरण्यकांडे चतुर्थः सर्गः॥४॥

हत्वातुतंभीमबलंविराधंराक्षसंवने ॥ ततःसीतांपरिष्वज्यसमाश्वास्यचवीर्यवान् ॥ १ ॥ अब्रवीद्भ्रातरंरामोलक्ष्मणंदीप्ततेजसम् ॥ कष्टंवनमिदंदुर्गं नचस्मोवनगोचराः ॥ २ ॥ अभिगच्छामहेशीघ्रंशरभंगंतपोधनम् ॥ आश्रमंशरभंगस्यराघवोभिजगामह ॥ ३ ॥ तस्यदेवप्रभावस्यतपसाभावितात्मनः ॥ समीपेशरभंगस्यददर्शमहदद्भुतम् ॥ ४ ॥ विभ्राजमानंवपुषासूर्यवैश्वानरप्रभम् ॥ रथप्रवरमारूढमाकाशेविबुधानुगम् ॥ ५ ॥ असंस्पृशंतं वसुधांददर्शविबुधेश्वरम्॥ संप्रभाभरणंदेवंविरजोंबरधारिणम्॥ ६ ॥ तद्विधैरेवबहुभिःपूज्यमानंमहात्मभिः ॥ हरितैर्वाजिभिर्युक्तमंतरिक्षगतंरथम् ॥ ॥ ७ ॥ ददर्शादूरतस्तस्यतरुणादित्यसन्निभम् ॥ पांडुराभ्रघनप्रख्यंचंद्रमंडलसन्निभम् ॥ ८ ॥ अपश्यद्विमलंछत्रंचित्रमाल्योपशोभितम् ॥ चामरव्यजनेचाग्र्येरुक्मदंडेमहाधने॥ ९ ॥ गृहीतेवरनारीभ्यांधूयमानेचमूर्धनि ॥ गंधर्वामरसिद्धाश्चबहवःपरमर्षयः ॥ १० ॥ अंतरिक्षगतंदेवंगीर्भिरग्र्याभिरैडयन्॥ सहसंभाषमाणेतुशरभंगेनवासवे ॥ ११ ॥ दृष्ट्वाशतक्रतुंतत्ररामोलक्ष्मणमब्रवीत् ॥ रामोथरथमुद्दिश्यभ्रातुर्दर्शयताद्भुतम् ॥ १२॥ अर्चिष्मंतंश्रियाजुष्टमद्भुतंपश्यलक्ष्मण ॥ प्रतपंतमिवादित्यमंतरिक्षगतंरथम् ॥ १३ ॥ येहयाःपुरुहूतस्यपुराशक्रस्यनःश्रुताः ॥ अंतरिक्षगतादिव्यास्तइमेहरयोध्रुवम्॥ १४ ॥

शतं शतम् अष्टदिक्ष्विति शेषः । शतशब्दोनंतवाची ॥१५॥ विस्तीर्णविपुलानि अतिशयेन विशालानि उरांसि येषां ते आयता दीर्घाः शोणांशूनि शोणप्रभानि वसनानि येषाम् । शोणाश्मवसना इतिपाठे पद्मरागसदृशवसना इत्यर्थः । शोणांश्वित्येव प्राचीनः पाठ इति कतकः ॥१६॥ ज्वलनसन्निभाः दीप्तिमात्रेण ॥ १७ ॥ एताद्धि पंचविंशतिवर्षप्रमाणकम् । नित्यदेत्यार्षम् । ये इमे देवाः यथा यादृशशुभदर्शनवयस्का दृश्यंते एतद्देवैषां नित्यदा वय इति पूर्वेण संबंधः ॥ १८ ॥ यावज्जानामि ज्ञास्यामि तावत्तिष्ठेत्यन्वयः । क एष रथे इंद्रत्वेनानुमितोपि प्रमाणांतरेणापि ज्ञातव्य इत्यर्थः ॥ १९ ॥ उक्तानुवादपूर्वं व्यापारांतरोपदेशस्तमेवमित्यादि । इहैव स्थीयतामित्येवमुक्त्वेत्यर्थः ॥ २० ॥ अनुज्ञाप्य गमनाय कृतानुमतिकं कृत्वा ॥ २१ ॥ यावदसौ मां नाभिभाषते तावन्मां निष्ठां स्थानांतरं स्वर्गं वा नयत मया सह गच्छत । ततो वनचारित्वाद्धेतोर्मां मां अद्रष्टुमर्हति द्रष्टुं नार्हतीत्यर्थः । अ इति निषेधार्थमव्ययं पृथक्पदम् । विपदीव स्थितेनैवंवैभवस्य दर्शनमनुचितमित्यर्थः ॥ २२ ॥ कृतार्थं निस्तीर्णविपदं जितवंतं रावणमिति शेषः ।

इमेचपुरुषव्याघ्रयेतिष्ठंत्यभितोदिशम् ॥ शतंशतंकुंडलिनोयुवानःखड्गपाणयः ॥ १५ ॥ विस्तीर्णविपुलोरस्काःपरिघायतबाहवः ॥ शोणांशुवसनाः सर्वेव्याघ्राइवदुरासदाः ॥ १६ ॥ उरोदेशेषुसर्वेषांहाराज्वलनसंनिभाः ॥ रूपंविभ्रतिसौमित्रेपंचविंशतिवार्षिकम् ॥ १७ ॥ एतद्धिकिलदेवानांवयोभवतिनित्यदा ॥ यथेमेपुरुषव्याघ्रादृश्यंतेप्रियदर्शनाः ॥ १८ ॥ इहैवसहवैदेह्यामुहूर्तंतिष्ठलक्ष्मण ॥ यावज्जानाम्यहंव्यक्तंकएषद्युतिमान्रथे ॥ १९ ॥ तमेवमुक्त्वासौमित्रिमिहैवस्थीयतामिति ॥ अभिचक्रामकाकुस्थःशरभंगाश्रमंप्रति ॥ २० ॥ ततःसमभिगच्छंतंप्रेक्ष्यरामंशचीपतिः ॥ शरभंगमनुज्ञाप्यविबुधानिदमब्रवीत् ॥ २१ ॥ इहोपयात्यसौरामोयावन्मांनाभिभाषते ॥ निष्ठांनयततावत्तुततोमाद्रष्टुमर्हति ॥ २२ ॥ जितवंतंकृतार्थंहितदाहमचिरादिमम् ॥ कर्मह्यनेनकर्तव्यंमहदन्यैःसुदुष्करम् ॥ २३ ॥ अथवज्रीतमामंत्र्यमानयित्वाचतापसम् ॥ रथेनहययुक्तेनययौदिवमरिंदमः ॥ २४ ॥ प्रयातेतुसहस्राक्षेराघवःसपरिच्छदः ॥ अग्निहोत्रमुपासीनंशरभंगमुपागमत् ॥ २५ ॥ तस्यपादौचसंगृह्यरामःसीताचलक्ष्मणः ॥ निषेदुस्तदनुज्ञातालब्धवासानिमंत्रिताः ॥२६॥ ततःशक्रोपयानंतुपर्यपृच्छतराघवः ॥ शरभंगश्चतत्सर्वंराघवायन्यवेदयत् ॥ २७ ॥ मामेषवरदोरामब्रह्मलोकंनिनीषति ॥ जितमुग्रेणतपसादुष्प्रापमकृतात्मभिः ॥२८॥ अहंज्ञात्वानरव्याघ्रवर्तमानमदूरतः ॥ ब्रह्मलोकंनगच्छामित्वामदृष्ट्वाप्रियातिथिम् ॥२९॥

तदा वैभवयुक्तमिमं द्रक्ष्यामीति शेषः । कतकस्त्वेतत्पद्यं प्रक्षिप्तमित्याह । तद्वृथैव मद्रीत्या व्याख्याने सर्वसामंजस्यात् । रामो यावन्मां नाभिभाषते तावत्कर्मणो रावणवधस्य निष्ठां समाप्तिं नयत ततो मां द्रष्टुमर्हति अन्यैः सुदुष्करं महत्कर्म तेन कर्तव्यमस्ति रावणवधरूपमतस्तत्करणेन कृतार्थं कृतदेवप्रयोजनं रावणजयिनं द्रष्टास्मि इति तीर्थव्याख्याने संप्रत्यदर्शनहेतुस्तु पूर्वोक्त एवोपरितो बोध्यः ॥ २३ ॥ अथ वज्रीति । देवैरालापोत्तरंतंतापसंशरभंगमामंत्र्य मानयित्वा संपूज्य च दिवं ययौ ॥ २४ ॥ सपरिच्छदः स्त्रीभ्रातृसहितः ॥ २५ ॥ पादौ संगृह्य राम ईश्वरोपि ब्राह्मणा एवं पूज्या इत्यन्यान् शिक्षयितुमेवं चकार । तदनुज्ञाताः आसनावस्थानाय कृतानुमतिकाः अतएव लब्धवासाः लब्धवासस्थानाः निमंत्रिताः भोजनाद्यर्थं तादृशा निषेदुः ॥ २६ ॥ शक्रोपयानं इंद्रागमनप्रयोजनम् ॥ २७ ॥ निवेदनप्रकारमाह मामेष इति । उग्रेण तपसा मया जितं ब्रह्मलोकमेष वरद इंद्रो ब्रह्माज्ञया मां निनीषति यद्वा देवेंद्रवेषधारी ब्रह्मैवायम् अकृतात्मभिः अननुष्ठितभगवदुपासनैः ॥ २८॥ तर्हि किमिति विलंबितं तत्राह अहमिति ।

ज्ञात्वा योगचक्षुषा न गच्छामि योगसिद्धया स्वेच्छया देहत्यागात् त्वां प्रियातिथिं अतिप्रियमतिथिम् ॥ २९ ॥ त्वया समागम्य त्वत्समागमश्च सकृदपि संवृत्त एतावत्कालपर्यंतानुष्ठितोपासनातोधिकफलद इति भावः । त्रिदिवमवरं परं च परो ब्रह्मलोकः ॥ ३० ॥ समागमस्य यथाधिकफलता भवति तथा करोति अक्षया इति । के ते लोकास्तत्राह ब्राह्म्याइति । उभयत्र ष्यञ् आर्षः । ब्रह्मलोकानाकपृष्ठलोकाश्च जिताः मामकास्तान्प्रतिगृह्णीष्व स्वकृतत्वेनांगीकुरुष्व । अनेन सर्वकर्मणां भगवदर्पणमकरोदिति सूचितम् । कामतोकामतो वापि यत्करोमि शुभाशुभम् ॥ तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥ नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ॥ एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिरिति कौर्मोक्तिः । भगवत्यर्पितधर्माणामनंतफलत्वं गीतादिषु स्पष्टमेव । मुक्तिपर्यवसायित्वात् ॥ ३१ ॥ ३२ ॥ अहमेवेति । तपसेत्यर्थः त्वद्दत्तप्रतिग्रहे नाहमधिकारीत्यापाततोर्थः । वास्तवस्तु ऋषेः परमभक्तस्यानुग्रहाय तदर्पितधर्मांगीकारमाह भगवान् अहमेवेति । मयि न्यासत्वेन स्थापितानिमांस्त्वदर्जितान्सर्वांल्लोकांस्तुभ्यमहमेवाहरिष्यामि प्रापयिष्यामीत्युक्त्वा इतरजनप्रतारणायाह आवासं त्विति । प्रदिष्टमुपदिष्टम् ॥ ३३ ॥ ३४ ॥ इहारण्ये वसति अदूरे इति शेषः ॥ ३५ ॥ प्रतिस्रोताम् आवंतत्त्वमार्षम् । मंदाकिनीं तामिव पुण्यां तन्नामिकां वा चित्रकूट

त्वयाहंपुरुषव्याघ्रधार्मिकेणमहात्मना ॥ समागम्यगमिष्यामित्रिदिवंचावरंपरम् ॥ ३० ॥ अक्षयानरशार्दूलजितालोकामयाशुभाः ॥ ब्राह्म्याश्च नाकपृष्ठ्याश्चप्रतिगृह्णीष्वमामकान् ॥ ३१ ॥ एवमुक्तोनरव्याघ्रःसर्वशास्त्रविशारदः ॥ ऋषिणाशरभंगेनराघवोवाक्यमब्रवीत् ॥ ३२ ॥ अहमेवाहरिष्यामिसर्वांल्लोकान्महामुने ॥ आवासंत्वहमिच्छामिप्रदिष्टमिहकानने ॥ ३३ ॥ राघवेणैवमुक्तस्तुशक्रतुल्यबलेनवै ॥ शरभंगोमहाप्राज्ञःपुनरेवाब्रवीद्वचः ॥ ३४ ॥ इहराममहातेजाःसुतीक्ष्णोनामधार्मिकः ॥ वसत्यरण्येनियतःसतेश्रेयोविधास्यति ॥ ३५ ॥ इमांमंदाकिनींरामप्रतिस्रोतामनुव्रज ॥ नदींपुष्पोडुपवहांततस्तत्रगमिष्यसि ॥ ३६ ॥ एषपंथानरव्याघ्रमुहूर्तंपश्यतातमाम् ॥ यावज्जहामिगात्राणिजीर्णांत्वचमिवोरगः ॥ ३७ ॥ ततोग्निंससमाधायहुत्वाचाज्येनमंत्रवत् ॥ शरभंगोमहातेजाःप्रविवेशहुताशनम् ॥ ३८ ॥ तस्यरोमाणिकेशांश्चतदावह्निर्महात्मनः ॥ जीर्णांत्वचंतदस्थीनियच्चमांसंचशोणितम् ॥ ३९ ॥ सचपावकसंकाशःकुमारःसमपद्यत ॥ उत्थायाग्निचयात्तस्माच्छरभंगोव्यरोचत ॥ ४० ॥ सलोकानाहिताग्नीनामृषीणांचमहात्मनाम् ॥ देवानांचव्यतिक्रम्यब्रह्मलोकंव्यरोहत ॥ ४१ ॥

स्थेयमेव प्रतिस्रोतसं कृत्वा व्रज । पूर्ववाहिन्यां पुरुषेण पाश्चिमाभिमुखतया गमने प्रतिस्रोतस्त्वं भवति । पुष्पवल्लघुउडुपवहा उडुपं प्लवः पुष्पसमूहवहामिति वा ॥ ३६ ॥ एष पंथा इति मार्गोपदेशः । अथ ऋषिर्भगवत्प्रार्थितस्योत्तरं दत्वा स्वाभीष्टं भगवंतं प्रार्थयते । मुहूर्तं तात पश्य माम् अयं कृतार्थो भवत्वित्यभिध्यानपूर्वकं कटाक्षेणेति शेषः । तातेति गूढं जगज्जनकेत्यर्थमपि । गात्राणि गात्रावयवान् ॥ ३७ ॥ ततोग्निं स इति । वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः ॥ आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनांबुभिरित्युक्तेऽग्निप्रवेशंत्येष्टिमार्गेणाग्निं समाधाय मंत्रवत् तदुक्तमंत्रैर्हुत्वा च अग्निप्रवेशोक्तमंत्रैरुपनिषदुक्तैः प्रविवेश ॥ ३८ ॥ तस्येति । तस्य शरभंगस्य रोमादीनि वह्निर्ददाहेति शेषः ॥ ३९ ॥ स्वर्गारोहणार्थं दिव्यशरीरपरिग्रहमग्निप्रवेशस्य पूर्वकृतोपासनस्य च फलभूतमाह सचेति ॥ ४० ॥ आहिताग्निलोकाः कर्मणा पितृलोक इति श्रुताश्चंद्रप्रदक्षिणाः । ऋषिलोका विद्यया देवलोक इति श्रुताः सूर्यप्रदक्षिणाः । देवानामाजानदेवानां ब्रह्मविष्णुरुद्राणां च लोकाः । यान् ध्रुवः प्रदक्षिणं करोति । ततो ब्रह्मलोकं तुर्यं

व्यरोहतारूढवान् ॥ ४१ ॥ पितामहं ब्रह्मादित्रयसमष्टिरूपम् ॥ ४२ ॥ रंवर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचमः सर्गः ॥ ५ ॥ मुनिसंघाः दंडकारण्यवासिनः समागता मिलिताः अभ्यगच्छंत स्वरक्षणप्रार्थनार्थमिति शेषः ॥ १ ॥ वैखानसा इति । ये नखास्ते वैखानसा ये वालास्ते वालखिल्या इति श्रुतेः । प्रजापतेर्नखलोमजाः । संप्रक्षालाः भगवतः पादप्रक्षालनजा महर्षयः । अश्वस्तनिकाः संप्रक्षाला इत्यन्ये । मरीचिपाः रविचंद्रान्यतरकिरणजीवनाः । अश्मकुट्टाः अपक्वकुट्टितान्नभक्षकाः ॥ २ ॥ दंतोलूखलिनः दंतातिरिक्तावहननसाधनरहिताः । उन्मज्जकाः कंठदघ्ने जले स्थित्वा तपः कुर्वंतः । गात्रशय्या अनास्तरणशायिनः । अशय्या निद्राहीनाः । अनवकाशिकाः एकपादस्य स्थित्यवकाशदानरहिताः । एकपादस्थितिमंत इति यावत् ॥ ३ ॥ आकाशनिलयाः अनावृतप्रदेशस्थायिनः । स्थंडिलशायिनः उपलिप्तानास्तीर्णस्थलशयनाः ॥ ४ ॥ ऊर्ध्ववासिनः गिरिशिखराद्यूर्ध्वप्रदेशे नित्यं वासशालिनः । व्रतोपवासिन इति पाठस्तु चिंत्यः । तस्य साधारणधर्म

सपुण्यकर्माभुवनेद्विजर्षभःपितामहंसानुचरंददर्शह ॥ पितामहश्चापिसमीक्ष्यतंद्विजंननंदसुस्वागतमित्युवाच ॥ ४२ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअरण्यकांडेपंचमःसर्गः ॥ ५ ॥ शरभंगेदिवंप्राप्तेमुनिसंघाःसमागताः ॥ अभ्यगच्छंतकाकुत्स्थंरामंज्वलिततेजसम् ॥ १ ॥ वैखानसावालखिल्याःसंप्रक्षालामरीचिपाः ॥ अश्मकुट्टाश्चबहवःपत्राहाराश्चतापसाः ॥२॥ दंतोलूखलिनश्चैवतथैवोन्मज्जकाःपरे ॥ गात्रशय्याअशय्याश्चतथैवानवकाशिकाः ॥ ३ ॥ मुनयःसलिलाहारावायुभक्षास्तथापरे ॥ आकाशनिलयाश्चैवतथास्थंडिलशायिनः ॥ ४ ॥ तथोर्ध्ववासिनोदांतास्तथार्द्रपटवाससः ॥ सजपाश्चतपोनिष्ठास्तथापंचतपोन्विताः ॥ ५ ॥ सर्वेब्राह्म्याश्रियायुक्तादृढयोगसमाहिताः ॥ शरभंगाश्रमेराममभिजग्मुश्चतापसाः ॥ ६ ॥ अभिगम्यचधर्मज्ञारामंधर्मभृतांवरम् ॥ ऊचुःपरमधर्मज्ञमृषिसंघाःसमागताः ॥ ७ ॥ त्वमिक्ष्वाकुकुलस्यास्यपृथिव्याश्चमहारथः ॥ प्रधानश्चापिनाथश्चदेवानांमघवानिव ॥ ८ ॥ विश्रुतस्त्रिषुलोकेषुयशसाविक्रमेणच ॥ पितृव्रतत्वंसत्यंचत्वयिधर्मश्चपुष्कलः ॥ ९ ॥ त्वामासाद्यमहात्मानंधर्मज्ञंधर्मवत्सलम् ॥ अर्थित्वान्नाथवक्ष्यामस्तच्चनःक्षंतुमर्हसि ॥ १० ॥

त्वादिति कतकः । आर्द्रपटवाससः नित्यमार्द्रवस्त्रवसनशीलाः सजपाः सदा जपपराः । तपोनिष्ठाः सदा स्वाध्यायाध्ययनशीलाः । तपो हि स्वाध्याय इत्युक्तेः । पंचतपोन्विताः ग्रीष्मे पंचाग्निमध्यस्थाः ॥ ५ ॥ ब्राह्म्या श्रिया ब्रह्मविद्यानुष्ठानजनितब्रह्मवर्चसेन दृढयोगसमाहिताः योगैकाग्रचित्ताः ॥ ६ ॥ ७ ॥ किमूचुस्तत्राह त्वमिति । इक्ष्वाकुकुलस्य पृथिव्याश्च । चेन सकलत्रैलोक्यस्येति गूढम् । प्रधानत्वेन जगद्धारणकर्तृत्वं नाथत्वेन पालकत्वं गर्भितम् । देवानां मघवानिव ॥ ८ ॥ यशसा विक्रमेण स श्रुतः प्रसिद्धः तेन रूपेणेति शेषः । पितृवचनपालनं व्रतं यस्य तद्भावः । सत्यं सत्यवचनं च त्वयि तिष्ठतीति शेषः । किंच त्वयि स्मृते धर्मश्च पुष्कलः अंगहीनोपि सकलांगपूर्णो भवतीत्यर्थः । प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ॥ तद्विष्णोः स्मरणादेव संपूर्णं स्यादिति श्रुतिरिति स्मृतेः ॥ ९ ॥ धर्मज्ञं शरणागतरक्षणरूपधर्मज्ञं धर्मवत्सलं धर्मानुष्ठातृप्रियम् त्वामासाद्य शरणं प्राप्य अर्थित्वादर्थिभावेन यत् क्रूरमपि वक्ष्यामस्तत्क्षंतुमर्हसीति योजना । यद्यपि सत्सु कार्यवतां पुंसामलमेवाग्रतः स्थितिरिति न्यायेन त्वदग्रेऽ

वस्थानमेव सकलमनोरथपूरकत्वान्नः कार्यसाधनं तथाप्यार्त्यतिशयेन किंचिद्वक्ष्यमाणं क्षंतव्यमिति भावः ॥ १० ॥ जगद्रक्षणतत्परस्य विनापि कथनं स्वरक्षणेपि प्रवृत्तिरस्त्येव तथाप्यार्त्यतिशयेन लोकरीत्या राजधर्मं बोधयंति अधर्मम् इति । न च रक्षति विषयवासिन इत्यपकृष्यते । बलिषड्भागं करभागरूपं षष्ठांशम् । यद्वा बलये पूजायै दत्तं षड्भागं षष्ठांशं प्रजाभिः स्वानिष्टपरिहारायेत्यर्थः ॥ ११ ॥ अथ रक्षणे भ्युदयमाहुः युंजान इति । युंजानः प्रजारक्षणे यतमानः सर्वान्देशवासिनः स्वान्प्राणानिव प्राणैरिष्टान्प्राणेभ्योप्यधिकप्रियान् सुतानिव नित्ययुक्तः सदा सावधानः रक्षन् ॥ १२ ॥ इह शाश्वतीम् अस्यैव विवरणम् बहुवार्षिकीं कीर्तिमैहिकीमामुष्मिकं च ब्रह्मलोकरूपं फलं प्राप्नोति तदाहुः ब्रह्मण इति ॥ १३ ॥ ननु षष्ठांशग्रहात्प्रजारक्षणावश्यकत्वेपि वनवासिरक्षणं कुतस्तत्राह यदिति । यदिति सामान्ये नपुंसकम् । प्रजाः वानप्रस्थप्रजाः चतुर्भागश्चतुर्थांशः इदमुपलक्षणं षड्भागस्यापि । तत्रोपवासिभिक्षाहारिधर्माद् षड्भागप्राप्तिः तेन धर्मषड्भागप्रतिपादकस्मृत्यविरोधः । राजपरिपालितदेशभवफलाद्यशनवतो धर्माच्चतुर्थो भागः तदन्नभोजनादिपुष्टांगधर्मात्त्वर्धं राज्ञः अन्नप्रदातुस्तस्यार्धं कर्तुश्चार्धं न संशय इति स्मृतेरिति बोध्यम् ॥ १४ ॥ अथ विवक्षितमर्थमाहुः सोयमिति । ब्राह्मणभूयिष्ठ इत्यनेन क्षत्रवैश्यवानप्रस्थसत्तापि तत्र

अधर्मःसुमहान्नाथभवेत्तस्यतुभूपतेः ॥ योहरेद्बलिषड्भागंनचरक्षतिपुत्रवत् ॥ ११ ॥ युंजानःस्वानिवप्राणान्प्राणैरिष्टान्सुतानिव ॥ नित्ययुक्तःसदा रक्षन्सर्वान्विषयवासिनः ॥ १२ ॥ प्राप्नोतिशाश्वतींरामकीर्तिंसबहुवार्षिकीम् ॥ ब्रह्मणःस्थानमासाद्यतत्रचापिमहीयते ॥ १३ ॥ यत्करोतिपरंधर्मंमु निर्मूलफलाशनः ॥ तत्रराज्ञश्चतुर्भागःप्रजाधर्मेणरक्षतः ॥ १४ ॥ सोयंब्राह्मणभूयिष्ठोवानप्रस्थगणोमहान् ॥ त्वन्नाथोनाथवद्रामराक्षसैर्हन्यतेभृशम् ॥ १५ ॥ एहिपश्यशरीराणिमुनीनांभावितात्मनाम् ॥ हतानांराक्षसैर्घोरैर्बहूनांबहुधावने ॥ १६ ॥ पंपानदीनिवासानामनुमंदाकिनीमपि ॥ चित्रकूटालयानांचक्रियतेकदनंमहत् ॥ १७ ॥ एवंवयंनमृष्यामोविप्रकारंतपस्विनाम् ॥ क्रियमाणंवनेघोरंरक्षोभिर्भीमकर्मभिः ॥ १८ ॥ ततस्त्वांशरणार्थंचशरण्यंसमुपस्थिताः ॥ परिपालयनोरामवध्यमानान्निशाचरैः ॥ १९ ॥ परात्वत्तोगतिर्वीरपृथिव्यांनोपपद्यते ॥ परिपालयनःसर्वान्राक्षसेभ्यो नृपात्मज ॥ २० ॥ एतच्छ्रुत्वातुकाकुत्स्थस्तापसानांतपस्विनाम् ॥ इदंप्रोवाचधर्मात्मासर्वानेवतपस्विनः ॥ २१ ॥ नैवमर्हथमांवक्तुमाज्ञाप्योहं तपस्विनाम् ॥ केवलेनस्वकार्येणप्रवेष्टव्यंवनंमया ॥ २२ ॥ विप्रकारमपाक्रष्टुंराक्षसैर्भवतामिमम् ॥ पितुस्तुनिदशकरःप्रविष्टोहमिदंवनम् ॥ २३ ॥

बोधिता । त्वं नाथो रक्षको यस्य स त्वन्नाथः सोप्यनाथवद्धन्यतेऽतस्त्वादृशस्योपेक्षानुचितेति भावः ॥ १५ ॥ स्ववचसो मिथ्यात्वपरिहारायाहुः एहीति । मुनयो मननशीलाः । भावितात्मानो निदिध्यासननिष्ठाः । शरीराणि केवलं हत्वा त्यक्तानि बहुधा बहुप्रकारैरंगप्रत्यंगच्छेदनादिभिः ॥ १६ ॥ सकलदंडकारण्यपीडामाहुः पंपेत्यादि । पंपा च नद्यश्च तत्र निवासो येषां तेषाम् पंपारूपा नदी वा । अनुमंदाकिनीमपीति अनुर्लक्षणे कर्मप्रवचनीयः । मंदाकिन्या अत्रत्यपुण्यनद्यास्तीरवासिनाम् मंदाकिन्या विस्तीर्णप्रवाहत्वाद्दुरवगाहतया पृथगुक्तिः राघवाख्याने ॥ १७ ॥ विप्रकारं दुःखं न मृष्यामः सोढुमशक्ताः ॥ ॥ १८ ॥ शरण्यं रक्षणसमर्थम् । शरणार्थं रक्षणार्थम् ॥ १९ ॥ त्वत्तः परा गतिस्त्वदन्यस्त्राता ॥ २० ॥ तपस्विनां तपोबलयुतानां तापसानामृषीणाम् ॥ २१ ॥ तदेवाह नैवमिति । एवं उक्तं प्रार्थनारूपं वचः । आज्ञाप्यः शिष्यादिरिवेदं कुर्विति शिक्षणीयः । केवलेनोपाध्यंतररहितेन स्वकार्येण पितृवचनपरिपालनात्मकेन हेतुना मयाऽवश्यं वनं प्रवेष्टव्यमेव । स च मे वनप्रवेशो राक्षसैः क्रियमाणं भवतामिमं

विप्रकारमपाकर्तुमपि भविष्यतीत्यर्थ इति तीर्थकतकौ । भवच्छत्रुहननं केवलं मदीयमेव कार्यं बहुधर्मोपचयजनकत्वान्मदिष्टसाधनमेव । यद्यपि स्वविप्रकारनाशे भवंतः समर्था एव तथापि मम धर्मोपचयायैवैषा भवदीया मम प्रेरणेति भावः । अन्वयस्त्वत्र स्फुट एवेत्यन्ये । किंच पित्राज्ञापरिपालनार्थमिदं वनं प्रविष्ट एवास्मि प्रविष्टे च मयि सोर्थोवश्यंभाव्य एवेति भवतामेवं प्रार्थनमनवसरमिति भावः ॥ २२ ॥ २३ ॥ तदेवाह भवतामिति । यदृच्छया आगत एवाहं भवतामर्थसिद्ध्यर्थमपि भविष्याम्येवेति शेषः । पितुस्त्वित्यनेन उक्त एवार्थः कविना श्लोकांतरेण वर्ण्यते । इयमपि शैली कवेरिति कतकतीर्थौ । यतः शत्रून्हंतु मिच्छामि अतस्तस्य यदृच्छया वनमागतस्य मेऽयं वनवासो महाफलो भविष्यतीति स्वगतो विचारः । अथ ऋषिधैर्याय प्रकाशं प्रतिजानीते पश्यंत्विति । सर्वथा हनिष्यामी यावत् ॥ २४ ॥ २५ ॥ वरं उक्तवचनात्मना धर्मे धृतात्मा धर्मे स्थितचित्तः आर्यं पूज्यं दत्तं यस्य सः तपोधनैः सह सुतीक्ष्णमभिजगाम ॥२६॥ चंरभानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि० अरण्यकांडे षष्ठः सर्गः ॥ ६ ॥ ॥ द्विजैः प्रार्थनार्थमागतैर्वानप्रस्थैः ॥ १ ॥ विमलं पवित्रम् । महामेधमिवेतिपाठे स्थितमिति शेषः । नैल्यस्थौल्याभ्यां सादृश्यम् । उन्नतमिति स्वरूपकथनम् ॥ २ ॥ ३ ॥ ४ ॥

भवतामर्थसिद्ध्यर्थमागतोहंयदृच्छया ॥ तस्यमेयंवनेवासोभविष्यतिमहाफलः ॥ २४ ॥ तपस्विनांरणेशत्रून्हंतुमिच्छामिराक्षसान् ॥ पश्यंतुवीर्यंमृषयःसभ्रातुर्मेतपोधनाः ॥ २५ ॥ दत्वावरंचापितपोधनानांधर्मेधृतात्मासहलक्ष्मणेन ॥ तपोधनैश्चापिसहार्यदत्तःसुतीक्ष्णमेवाभिजगामवीरः ॥ ॥२६॥ इत्यार्षे श्रीम० वा० आ० अर० षष्ठः सर्गः ॥ ६ ॥ रामस्तुसहितोभ्रात्रासीतयाचपरंतपः ॥ सुतीक्ष्णस्याश्रमपदंजगामसहतैर्द्विजैः ॥१॥ सगत्वादूरमध्वानंनदीस्तीर्त्वाबहूदकाः ॥ ददर्शविमलंशैलंमहामेरुमिवोन्नतम् ॥ २ ॥ ततस्तादिक्ष्वाकुवरौसततंविविधैर्द्रुमैः ॥ काननंतौविविशतुः सीतयासहराघवौ ॥३॥ प्रविष्टस्तुवनंघोरंबहुपुष्पफलद्रुमम् ॥ ददर्शाश्रममेकांतेचीरमालापरिष्कृतम् ॥४॥ तत्रतापसमासीनंमलपंकजधारिणम् ॥ रामःसुतीक्ष्णंविधिवत्तपोधनमभाषत ॥ ५ ॥ रामोहमस्मिभगवन्भवंतंद्रष्टुमागतः ॥ तन्माभिवदधर्मज्ञमहर्षेसत्यविक्रम ॥६॥ सनिरीक्ष्यततोधीरो रामंधर्मभृतांवरम् ॥ समाश्लिष्यचबाहुभ्यामिदंवचनमब्रवीत् ॥७॥ स्वागतंतेरघुश्रेष्ठरामसत्यभृतांवर ॥ आश्रमोयंत्वयाक्रांतःसनाथइवसांप्रतम् ॥८॥ प्रतीक्षमाणस्त्वामेवनारोहेहंमहायशः ॥ देवलोकमितोवीरदेहंत्यक्त्वामहीतले ॥ ९ ॥

अत्र ततस्तादिक्ष्वाकुवरावित्यादिश्लोकत्रयं प्रक्षिप्तमिति कतकः । मलपंकजधारिणं मलस्य सर्वांघस्य शांतये पंकजे पद्मासने स्थित्वा धारणशीलम् । यद्वा पंकजे हृदयपंकजे धारिणमैश्वरयोगधारणशीलमित्यर्थ इति कतकः । तीर्थस्तु मलपंकजटाधरमिति पठित्वा मलम् उद्वर्तनादिसंस्काराभावाच्छरीरजं पंको वनसंचाराच्छरीरलग्न इति भेद इत्याह । विधिवदुपगम्येति शेषः ॥५॥ तन्माभिवदेति मा इति माम् उक्तयोगधारणशीलत्वेन वाग्व्यवहाराभावादेवं प्रार्थना सत्यविक्रम अक्षततपःस्वभाव ॥६॥ स निरीक्ष्येति उक्तवचनात्समाधितो व्युत्थाय रामं दृष्ट्वेत्यर्थः ॥ ७ ॥ सनाथ इव सस्वामिक इव अत्रायमाश्रमो ब्रह्मचर्याद्याश्रमव्यवहार्योयं देहस्त्वया जीवरूपेणाक्रांतोपि सांप्रतमद्य बहिश्चक्षुषानुभवन्सनाथ इव मायया सच्चिदानंदस्यैवैवं शरीररूपेण प्रतिभासमानस्य ईदृशस्य त्वद्रूपस्य दर्शनेन चित्तशुद्ध्या पूर्वं जीवाभेदेनाहमिति प्रतीत्या गृहीतस्य तद्वैलक्षण्येनेदानीं ग्रहाद्भेदनिबंधनसनाथत्वव्यवहारः । इवेन जडानामप्यतिरिक्तत्वाभावः सूचित इति ध्वनिः ॥ ८ ॥ अतस्त्वां प्रतीक्षमाण इति । त्वां स्वात्मभूतम् । महायश इति संबोधनम् । देवलोकं देवस्य ब्रह्म

णो लोकम् ॥ ९ ॥ ननु कात्र मदागमनसंभावना तत्राह चित्रेति । यदा राज्यभ्रष्टश्चित्रकूटमुपादाय प्राप्य स्थितोसि तदाप्रभृति मे मया श्रुतोसि । आश्रमोयमित्यस्य व्यंग्यार्थे तु चित्रं विचित्रफलहेतु कूटं दुरवगाहत्वात्संसारं प्राप्य राज्यभ्रष्टो विद्यासंसर्गेण स्वाराज्यान्नित्यशुद्धबुद्धमुक्तस्वरूपाद्भ्रष्टस्तद्योगात्संसारं प्राप्तस्त्वमेव मया श्रुतिवाक्येभ्यः श्रुतोसि अतस्तत्प्रतीक्षया न देवलोकं गत इति व्यंग्योर्थः । नन्विदानीं क ते देवलोकारोहणप्रसक्तिस्तत्राह इहेति । शरभंगाह्वानानंतरमिहाप्यागत इत्यर्थः ॥ १० ॥ पुण्येन कर्मणा जितानित्यनेन श्रवणसंपत्तावपि निदिध्यासनसंपत्त्यभावोस्योक्तः । पूजावचनेषु पौनरुक्त्यं न दोषाय । देवादिपदानां प्रवृत्तिनिमित्तभेदस्य स्पष्टत्वान्न पौनरुक्त्यमिति केचित् ॥ ११ ॥ अथ सर्वं पुण्यमनंतफलत्वाय भगवत्यर्पयति तेष्विति ॥ १२ ॥ १३ ॥ अहमेवेति तपसेत्यर्थः त्वत्तः प्रतिग्रहे नाहमधिकारीति आशततोर्थः । वास्तवस्तु तद्दत्तपुण्यांगीकारेणानुगृह्णाति भगवान् अहमेवेति । न्यासत्वेन त्वया स्थापितं तुभ्यं प्रापयिष्यामि । अहमेवेत्यनेन सर्वकर्मफलदाता सर्वोपासनास्वहमेवेति सूचितम् । अथ लोकदृष्ट्येतरजन

चित्रकूटमुपादायराज्यभ्रष्टोसिमेश्रुतः ॥ इहोपयातःकाकुत्स्थदेवराजःशतक्रतुः ॥ १० ॥ उपागम्यचमेदेवोमहादेवःसुरेश्वरः ॥ सर्वाँल्लोकाञ्जिता नाहममपुण्येनकर्मणा ॥ ११ ॥ तेषुदेवर्षिजुष्टेषुजितेषुतपसामया ॥ मत्प्रसादात्सभार्यस्त्वंविहरस्वसलक्ष्मणः ॥ १२ ॥ तमुग्रतपसंदीप्तंमहर्षिंस त्यवादिनम् ॥ प्रत्युवाचात्मवान्रामोब्रह्माणमिववासवः ॥ १३ ॥ अहमेवाहरिष्यामिस्वयंलोकान्महामुने ॥ आवासंत्वहमिच्छामिप्रदिष्टमिहका नने ॥ १४ ॥ भवान्सर्वत्रकुशलःसर्वभूतहितेरतः ॥ आख्यातंशरभंगेनगौतमेनमहात्मना ॥ १५ ॥ एवमुक्तस्तुरामेणमहर्षिर्लोकविश्रुतः ॥ अब्रवी न्मधुरंवाक्यंहर्षेणमहतायुतः ॥ १६ ॥ अयमेवाश्रमोरामगुणवान्रम्यतामिति ॥ ऋषिसंघानुचरितःसदामूलफलैर्युतः ॥ १७ ॥ इममाश्रममागम्य मृगसंघामहीयसः ॥ अहत्वाप्रतिगच्छंतिलोभयित्वाकुतोभयाः ॥ १८ ॥ नान्योदोषोभवेदत्रमृगेभ्योन्यत्रविद्धिवै ॥ तच्छ्रुत्वावचनंतस्यमहर्षेर्ल क्ष्मणाग्रजः ॥ १९ ॥ उवाचवचनंधीरोविगृह्यसशरंधनुः ॥ तानहंसुमहाभागमृगसंघान्समागतान् ॥ २० ॥ हन्यांनिशितधारेणशरेणानतपर्वणा ॥ भवांस्तत्राभिषज्येतकिंस्यात्कृच्छ्रतरंततः ॥ २१ ॥ एतस्मिन्नाश्रमेवासंचिरंतुनसमर्थये ॥ तमेवमुक्त्वोपरमंरामःसंध्यामुपागमत् ॥ २२ ॥ अन्वा स्यपश्चिमांसंध्यांतत्रवासमकल्पयत् ॥ सुतीक्ष्णस्याश्रमेरम्येसीतयालक्ष्मणेनच ॥ २३ ॥

प्रतारणाय आवासमिति । प्रदिष्टं त्वयेति शेषः ॥ १४ ॥ गौतमेन गौतमगोत्रेण शरभंगेन सर्वत्र इह परत्र च कुशल इत्याख्यातम् एवं चानभिज्ञोहमित्युत्तरं दातुमशक्यमित्याशयः ॥ १५ ॥ १६ ॥ अयमेव अस्मदीयः ॥ १७ ॥ अनेन गुणमुक्त्वा दोषमाह इममिति । इममाश्रमं दंडकारण्याश्रमं महीयसः अतिशयितमहत्त्ववतोपि अहत्वा हननमकृत्वा लोभयित्वा रूपकांतिगतिविशेषैः चित्तक्षोभं कृत्वा गच्छंतीत्यर्थः । अनेन भावी मारीचवृत्तांतः सूचितः ते इव ॥ १८ ॥ अत्र दंडकारण्ये नान्यो दोषो भवेदत्रेत्यस्यैव अकुतोभयाः विवरणं मृगेभ्योन्यत्र विद्धि वै इति । मृगेभ्योन्यत्र न भयमिति विद्धीत्यर्थः । दंडकारण्याभिप्रायेण मुन्युक्तं तदाश्रममात्राभिप्रायं परिकल्प्य रामोवादीदित्याह तच्छ्रुत्वा मृगेभ्यो भयविषयं वचनम् ॥ १९ ॥ २० ॥ हन्यां प्राप्तकाले लिङ् । प्राप्तमृगहननं कुर्यां परं त्वेवं कृत्वाऽत्रस्थातुमशक्यमित्याह भवानिति । तत्र मृगसंघवधे भवान्मयाभिषज्येत अभिषंगः पराभवः कृतपराभवो यो भवेत्ततः परं मे कृच्छ्रतरं किं स्यान्नकिमपि ॥ २१ ॥ यदेवमत एतस्मिन्निति । चिरं चिरकालं वासं न समर्थये नेच्छामि

मृगसंचरवधं विना स्थातुमशक्यं तद्वधेन च भवतां पीडेत्याशयः । उपरमं उपरम्य क्वचिदुपरम्येत्येव पाठः । संध्यामुपागमत्संध्यां वंदितुमुपागतवान् ॥ २२ ॥ २३ ॥ संध्यानिवृत्तौ रजनीमभ्यवहारार्हां समीक्ष्येति यावत् ॥ २४ ॥ वैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामा० वाल्मी० आदि० अरण्यकांडे सप्तमः सर्गः ॥ ७ ॥ ॥ परिणाम्य अतिवाह्य ॥ १ ॥ उपस्पृश्य स्नात्वा । उत्पलगंधिना उत्पलगंधवता ॥ २ ॥ काल्यं यथाकालप्राप्तमित्यभ्यर्चनक्रियाविशेषणम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ अभ्यनुज्ञातुमिच्छामः त्वत्कर्तृकं गमनानुज्ञानं प्रार्थयामः । विशिखैर्विधूमैः ॥ ७ ॥ अविषह्यातपः सोढुम

ततःशुभंतापसयोग्यमन्नंस्वयंसुतीक्ष्णःपुरुषर्षभाभ्याम् ॥ ताभ्यांसुसत्कृत्यददौमहात्मासंध्यानिवृत्तोरजनींसमीक्ष्य ॥ २४ ॥ इत्यार्षेश्रीम० वा० आ० अरण्यकांडे सप्तमः सर्गः ॥७॥ रामस्तुसहसौमित्रिःसुतीक्ष्णेनाभिपूजितः ॥ परिणाम्यनिशांतत्रप्रभातेप्रत्यबुध्यत ॥१॥ उत्थायचयथाकालं राघवःसहसीतया ॥ उपस्पृश्यसुशीतेनतोयेनोत्पलगंधिना ॥ २ ॥ अथतेग्निंसुरांश्चैववैदेहीरामलक्ष्मणौ ॥ काल्यंविधिवदभ्यर्च्यतपस्विशरणे वने ॥ ३ ॥ उदयंतंदिनकरंदृष्ट्वाविगतकल्मषाः ॥ सुतीक्ष्णमभिगम्येदंश्लक्ष्णंवचनमब्रुवन् ॥ ४ ॥ सुखोषिताःस्मभगवंस्त्वयापूज्येनपूजिताः ॥ आपृच्छामःप्रयास्यामोमुनयस्त्वरयंतिनः ॥ ५ ॥ त्वरामहेवयंद्रष्टुंकृत्स्नमाश्रममंडलम् ॥ ऋषीणांपुण्यशीलानांदंडकारण्यवासिनाम् ॥ ६ ॥ अभ्यनुज्ञातुमिच्छामःसहैभिर्मुनिपुंगवैः ॥ धर्मनित्यैस्तपोदांतैर्विशिखैरिवपावकैः ॥ ७ ॥ अविषह्यातपोयावत्सूर्योनातिविराजते ॥ अमार्गेणागतां लक्ष्मींप्राप्येवान्वयवर्जितः ॥ ८ ॥ तावदिच्छामहेगंतुमित्युक्त्वाचरणौमुनेः ॥ ववंदेसहसौमित्रिःसीतयासहराघवः ॥ ९ ॥ तौसंस्पृशंतौचरणावु त्थाप्यमुनिपुंगवः ॥ गाढमाश्लिष्यसस्नेहमिदंवचनमब्रवीत् ॥१०॥ अरिष्टंगच्छपंथानंरामसौमित्रिणासह ॥ सीतयाचानयासार्धंछाययेवानुवृत्तया ॥ ॥ ११ ॥ पश्याश्रमपदंरम्यंदंडकारण्यवासिनाम् ॥ एषांतपस्विनांवीरतपसाभावितात्मनाम् ॥ १२ ॥ सुप्राज्यफलमूलानिपुष्पितानिवनानिच ॥ प्रशस्तमृगयूथानिशांतपक्षिगणानिच ॥ १३ ॥ फुल्लपंकजखंडानिप्रसन्नसलिलानिच ॥ कारंडवविकीर्णानितटाकानिसरांसिच ॥ १४ ॥ द्रक्ष्यसे दृष्टिरम्याणिगिरिप्रस्रवणानिच ॥ रमणीयान्यरण्यानिमयूराभिरुतानिच ॥ १५ ॥ गम्यतांवत्ससौमित्रेभवानपिचगच्छतु ॥ आगंतव्यंचतेदृष्ट्वापुनरेवाश्रमंप्रति ॥ १६ ॥ एवमुक्तस्तथेत्युक्त्वाकाकुत्स्थःसहलक्ष्मणः ॥ प्रदक्षिणंमुनिंकृत्वाप्रस्थातुमुपचक्रमे ॥ १७ ॥

शक्यातपो यावन्नातपएवातिविराजते तावद्गंतुमिच्छाम इत्यन्वयः । अमार्गेणान्यायेनागतां लक्ष्मीमैश्वर्यं प्राप्यान्वयवर्जितः अन्वयः संबंधस्तद्विवर्जितः गुरुसाधुजनसेवारहितो दुष्प्रभुरिव अकुलज इव वा यावदविषह्यमतापो न ततः पूर्वं गंतुमिच्छाम इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ अरिष्टं निरुपद्रवम् ॥ ११ ॥ आश्रमपदमिति जातावेकवचनम् ॥ १२ ॥ उक्तविशेषणविशिष्टानि वनानि सरांसि च द्रक्ष्यसे इत्यन्वयः । शांतपक्षिगणत्वं परस्परविरोधाभावात् ॥ १३ ॥ कारंडवैर्विकीर्णानि व्याप्तानि ॥ १४ ॥ १५ ॥ ते त्वया सकलऋषीणामाश्रमान् दृष्ट्वा पुनरपि ममाश्रमं प्रत्यागंतव्यमित्यर्थः ॥ १६ ॥ १७ ॥

ततो धनुरादिदानानंतरं विमलौ निशितौ खड्गौ च ददौ ॥ १८ ॥ चापे चापशब्दो द्विलिंगः ॥ १९ ॥ २० ॥ नंखेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामा० वाल्मी० आदिकाव्ये अरण्यकांडे अष्टमः सर्गः ॥ ८ ॥ ॥ छ ॥ ॥ राक्षसवधप्रतिज्ञां पुनरुक्तां कारयितुं तेजोवृद्ध्यर्थं च राक्षसवधमापाततो निषेधती सीता अब्रवीत् सीतेति शेषः। हृद्यया युक्तिमत्त्वे हृदयंगमया स्निग्धया स्नेहप्रवृत्तया ॥ १ ॥ अधर्ममिति । यद्यपि भवान्महान् महापुरुषोथापि सुसूक्ष्मेण विधिना सूक्ष्मेण मार्गेण विचारणे सति भवान् अधर्मं तु प्राप्यते प्राप्नोति । छांदसः श्यन् । अतिदुर्बलमृगवधप्रतिज्ञया वनप्रवेशे सतीत्यर्थः । वर्तमानसामीप्ये लट् । अयमधर्मस्तु कामजाद्व्यसनाद्विनिवृत्तेन त्वया निवर्तयितुं शक्यः ॥ २ ॥ किं तत्कामजं व्यसनं कश्चायमधर्मो यस्तन्निवृत्त्या निवर्तनीय इत्याशंकायामाह त्रीण्येवेति । कानि त्रीणीत्यतो मिथ्येति । स्वदेहस्त्रीपुत्रादिरागवशान्मिथ्यावाक्यप्रवृत्तिः पुंसस्तत्परमकं व्यसनस्वरूपं तदनंतरं ततोपि गुरुतरौ अत्यंतगुरुव्यसनभूतौ ॥ ३ ॥

ततःशुभतरेतूणीधनुषीचायतेक्षणा ॥ ददौसीतातयोर्भ्रात्रोःखड्गौचविमलौततः ॥ १८ ॥ आबध्यचशुभेतूणीचापेचादायसस्वने ॥ निष्क्रांतावाश्रमाद्गंतुमुभौतौरामलक्ष्मणौ ॥ १९ ॥ शीघ्रंतौरूपसंपन्नावनुज्ञातौमहर्षिणा ॥ प्रस्थितौधृतचापासीसीतयासहराघवौ ॥ २० ॥ इत्यार्षेश्रीम० वा०आ०अर०अष्टमः सर्गः ॥ ८ ॥ सुतीक्ष्णेनाभ्यनुज्ञातंप्रस्थितंरघुनंदनम् ॥ हृद्ययास्निग्धयावाचाभर्तारमिदमब्रवीत् ॥ १॥ अधर्मंतुसुसूक्ष्मेणविधिनाप्राप्यतेमहान् ॥ निवृत्तेनचशक्योयंव्यसनात्कामजादिह ॥ २॥ त्रीण्येवव्यसनान्यत्रकामजानिभवंत्युत ॥ मिथ्यावाक्यंतुपरमंतस्माद्गुरुतरावुभौ ॥ ३ ॥ परदाराभिगमनंविनावैरंचरौद्रता ॥ मिथ्यावाक्यंनतेभूतंनभविष्यतिराघव ॥ ४ ॥ कुतोभिलषणंस्त्रीणांपरेषांधर्मनाशनम् ॥ तवनास्तिमनुष्येंद्रनचाभूत्तेकदाचन ॥ ५ ॥ मनस्यपितथारामनचैतद्विद्यतेक्वचित् ॥ स्वदारनिरतश्चैवनित्यमेवनृपात्मज ॥ ६ ॥ धर्मिष्ठःसत्यसंधश्चपितुर्निर्देशकारकः ॥ त्वयिधर्मश्चसत्यंचत्वयिसर्वंप्रतिष्ठितम् ॥ ७ ॥ तच्चसर्वंमहाबाहोसत्यंवोढुंजितेंद्रियैः ॥ तववश्येंद्रियत्वंचभूतानांशुभदर्शन ॥ ८ ॥ तृतीयंयदिदंरौद्रंपरप्राणाभिहिंसनम् ॥ निर्वैरंक्रियतेमोहात्तच्चतेसमुपस्थितम् ॥ ९ ॥

कौ तौ तत्राह परदारेति । विना वैरं रौद्रता रौद्रभावावलंबनं मृगाणामत्यंतदुर्बलत्वेन तेषु वैरप्रसक्त्यभावादिति भावः । एवं व्यसनत्रयं निरूप्य प्रकृतेऽधर्मप्राप्तिपरिहाराय व्यसनं परिशेषयितुमाह मिथ्येति ॥४॥ परदाराभिमर्शनमपि त्वयि नास्तीत्याह कुत इति । कुतोपि हेतोरित्यर्थकं कुत इति पूर्वान्वयि । धर्मनाशनं परेषां स्त्रीणामभिलषणं तत्पूर्वकं तत्स्पर्शादि तव नास्ति । वर्तमानकालेनाभूत्पूर्वं च ततः परं न भविष्यति च ॥ ५ ॥ किं बहुना मनस्यपि एतन्न विद्यते । अनेनेच्छाया अपि निरासः । तस्यैवोपपादनं स्वदारेति ॥ ६ ॥ यतस्त्वं धर्मिष्ठत्वादिगुणः अतस्त्वयिधर्मः प्रतिष्ठितः सर्वं सत्यं च त्वयि प्रतिष्ठितम् ॥ ॥ ७ ॥ ननु उक्तव्यसने मयि न भविष्यत इति कथं तव निर्णयोत आह तच्चेति । वोढुं शक्यं अग्रेपि तत्परिपालनं कर्तुं शक्यं यतस्तत्परिपालनकारणं जितेंद्रियत्वं त्वय्यस्ति अतो न भविष्यत इति निर्णयः ॥ ॥८॥ तृतीयं तु व्यसनं प्रसक्तमित्याह तृतीयमिति । यत् मोहात् निर्वैरं परप्राणाभिहिंसनं क्रियते तदिदं रौद्राख्यं मृगयारूपं तृतीयं व्यसनं ते तच्च तत्तु तत्सदृशं तु समुपस्थितम् । राक्षसैः स्वापराधाकरणान्निर्वै

मृत्युसान्निध्यं सूचितम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ अहो इत्यादिर्व्यंग्योक्तिः । पुष्पैरिव परिक्षत इत्यनेन त्वगपि न विद्धेत्याशयः ॥ १२ ॥ १३ ॥ तुरगान्वेगवतोश्वानित्यर्थः ॥ १४ ॥ १५ ॥ हतरथाद्धतहयसारथिकाद्रथात् ॥ १६ ॥ जडः आयुधपरिग्रह इति शेषः ॥ १७ ॥ १८ ॥ पूर्वं पतितैः शिरोभिरुपलक्षितः पश्चान्न्यपतत् । चतुर्दशसहस्राणि मम चित्तानुवर्तिनामिति सेनोद्योगे खरोक्तेश्चतुर्दशसहस्राणि हतानि खरत्रिशिरसावेवावशिष्टाविति पूर्वसर्गांते उक्तेर्हतशेषान्निवर्त्येति अत्रत्योक्तेश्चतुर्दशसहस्रं यूथपा अत्रेति ज्ञायते । हतशेषा इति तु खरीयमूलबलाभिप्रायं बोध्यम् ॥ १९ ॥ २० ॥

आगच्छंतंत्रिशिरसंराक्षसंप्रेक्ष्यराघवः ॥ धनुषाप्रतिजग्राहविधुन्वन्सायकाञ्शितान् ॥ ९ ॥ ससंप्रहारस्तुमुलोरामत्रिशिरसोस्तदा ॥ संबभूवातिबलिनोःसिंहकुंजरयोरिव ॥ १० ॥ ततस्त्रिशिरसावाणैर्ललाटेताडितस्त्रिभिः ॥ अमर्षीकुपितोरामःसंरब्धइदमब्रवीत् ॥ ११ ॥ अहोविक्रमशूरस्यराक्षसस्येदृशंबलम् ॥ पुष्पैरिवशरैर्योहंललाटेऽस्मिपरिक्षतः ॥ १२ ॥ ममापिप्रतिगृह्णीष्वशरांश्चापगुणाच्च्युतान् ॥ एवमुक्तस्तुसंरब्धःशरानाशीविषोपमान् ॥ १३ ॥ त्रिशिरोवक्षसिक्रुद्धोनिजघानचतुर्दश ॥ चतुर्भिस्तुरगानस्यशरैःसन्नतपर्वभिः ॥ १४ ॥ न्यपातयततेजस्वीचतुरस्तस्यवाजिनः ॥ अष्टभिःसायकैःसूतंरथोपस्थेन्यपातयत् ॥ १५ ॥ रामश्चिच्छेदवाणेनध्वजंचास्यसमच्छ्रितम् ॥ ततोहतरथात्तस्मादुत्पतंतंनिशाचरम् ॥ १६ ॥ चिच्छेदरामस्तंवाणैर्हृदयेसोभवज्जडः ॥ सायकैश्चाप्रमेयात्मासामर्षात्तस्यरक्षसः ॥ १७ ॥ शिरांस्यपातयत्त्रीणिवेगवद्भिस्त्रिभिःशरैः ॥ सधूमशोणितोद्गारीरामवाणाभिपीडितः ॥ १८ ॥ न्यपतत्पतितैःपूर्वंसमरस्थोनिशाचरः ॥ हतशेषास्ततोभग्नाराक्षसाःखरसंश्रयाः ॥ १९ ॥ द्रवंतिस्मनतिष्ठंतिव्याधत्रस्तामृगाइव ॥ तान्खरोद्रवतोदृष्ट्वानिवर्त्यरुषितस्त्वरन् ॥ राममेवाभिदुद्रावराहुश्चंद्रमसंयथा ॥ २० ॥ इत्यार्षे श्रीमद्रा० वा० आ० अरण्यकांडे सप्तविंशः सर्गः ॥ २७ ॥ निहतंदूषणंदृष्ट्वारणेत्रिशिरसासह ॥ खरस्याप्यभवत्त्रासोदृष्ट्वारामस्यविक्रमम् ॥ १ ॥ सदृष्ट्वाराक्षसंसैन्यमविषह्यंमहावलम् ॥ हतमेकेनरामेणदूषणस्त्रिशिराअपि ॥ २ ॥ तद्बलंहतभूयिष्ठंविमनाःप्रेक्ष्यराक्षसः ॥ आससादखरोरामंनमुचिर्वासवंयथा ॥ ३ ॥ विकृष्यबलवच्चापंनाराचान्रक्तभोजनान् ॥ खरश्चिक्षेपरामायक्रुद्धानाशीविषानिव ॥४॥ ज्यांविधून्वन्सुबहुशःशिक्षयास्त्राणिदर्शयन् ॥ चचारसमरेमार्गाञ्शरैरथगतःखरः ॥ ५ ॥ ससर्वाश्चदिशोवाणैःप्रदिशश्चमहारथः ॥ पूरयामासतंदृष्ट्वारामोपिसुमहद्धनुः ॥ ६ ॥ ससायकैर्दुर्विषहैर्विस्फुलिंगैरिवाग्निभिः ॥ नभश्चकाराविवरंपर्जन्यइववृष्टिभिः ॥ ७ ॥

॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे सप्तविंशः सर्गः ॥ २७ ॥ ॥ निहतमिति ॥ १ ॥ रक्षसामिदं राक्षसं सैन्यं हतं दृष्ट्वेत्यन्वयः ॥ २ ॥ हतभूयिष्ठम् अल्पावशेषम् ॥ ३ ॥ ४ ॥ शिक्षया धनुर्विद्याभ्यासेन मार्गान् शरसंधानक्षेपणादिप्रकारभेदान्दर्शयन् रथस्थः खरः समरे चचार अनेकविधरथसंचरणैः ॥ ५ ॥ ६ ॥ स रामः नभः आकाशमविवरं

नीरंध्रं चकार ॥ ७ ॥ पर्याकाशं परितो विद्यमानमाकाशमनाकाशं निरवकाशं बभूव ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ सर्वसैन्यस्य हंतारं रामं खरः परिश्रांतं मेने । अनेनायं महारावसर इति खरबोधः सूचित
अतएवानुपदं तेन रामधनुषश्छेदः ॥ १२ ॥ १३ ॥ १४ ॥ मुष्टिदेशे धनुर्ग्रहणप्रदेशोपरिदेशे ॥ १५ ॥ स खरः । मर्मणि कवचबंधसंधिषु ॥ १६ ॥ १७ ॥ महतं कवचं पपात ॥ १८ ॥ शरैरर्पितः संक्षतः

तद्बभूवशितैर्बाणैःखररामविसर्जितैः ॥ पर्याकाशमनाकाशंसर्वतःशरसंकुलम् ॥ ८ ॥ शरजालावृतःसूर्योनतदास्मप्रकाशते ॥ अन्योन्यवधसंरंभादुभयोःसंप्रयुज्यतोः ॥ ९ ॥ ततोनालीकनाराचैस्तीक्ष्णाग्रैश्चविकर्णिभिः ॥ आजघानरणेरामंतोत्रैरिवमहाद्विपम् ॥ १० ॥ तंरथस्थंधनुष्पाणिंराक्षसंपर्यवस्थितम् ॥ ददृशुःसर्वभूतानिपाशहस्तमिवांतकम् ॥ ११ ॥ हंतारंसर्वसैन्यस्यपौरुषेपर्यवस्थितम् ॥ परिश्रांतंमहासत्त्वंमेनेरामंखरस्तदा ॥ १२ ॥ तंसिंहमिवविक्रांतंसिंहविक्रांतगामिनम् ॥ दृष्ट्वानोद्विजतेरामःसिंहःक्षुद्रमृगंयथा ॥ १३ ॥ ततःसूर्यनिकाशेनरथेनमहताखरः ॥ आससादाथतंरामंपतंगइवपावकम् ॥ १४ ॥ ततोस्यसशरंचापंमुष्टिदेशेमहात्मनः ॥ खरश्चिच्छेदरामस्यदर्शयन्हस्तलाघवम् ॥ १५ ॥ सपुनस्त्वपरान्सप्तशरानादायमर्मणि ॥ निजघानरणेक्रुद्धःशक्राशनिसमप्रभान् ॥ १६ ॥ ततःशरसहस्रेणराममप्रतिमौजसम् ॥ अर्दयित्वामहानादंननादसमरेखरः ॥ १७ ॥ ततस्तत्प्रहतंबाणैःखरमुक्तैःसुपर्वभिः ॥ पपातकवचंभूमौरामस्यादित्यवर्चसम् ॥ १८ ॥ सशरैरर्पितःक्रुद्धःसर्वगात्रेषुराघवः ॥ रराजसमरेरामोविधूमोग्निरिवज्वलन् ॥ १९ ॥ ततोगंभीरनिर्ह्रादंरामःशत्रुनिवर्हणः ॥ चकारांतायसरिपोःसज्यमन्यन्महद्धनुः ॥ २० ॥ सुमहद्वैष्णवंयत्तदतिसृष्टंमहर्षिणा ॥ वरंतद्धनुरुद्यम्यखरंसमभिधावतः ॥ २१ ॥ ततःकनकपुंखैस्तुशरैःसन्नतपर्वभिः ॥ चिच्छेदरामःसंक्रुद्धःखरस्यसमरेध्वजम् ॥ २२ ॥ सदर्शनीयोवहुधाविच्छिन्नःकांचनोध्वजः ॥ जगामधरणींसूर्योदेवतानामिवाज्ञया ॥ २३ ॥ तंचतुर्भिःखरःक्रुद्धोरामंगात्रेषुमार्गणैः ॥ विव्याधहृदिमर्मज्ञोमातंगमिवतोयदैः ॥ २४ ॥ सरामोवहुभिर्बाणैःखरकार्मुकनिःसृतैः ॥ विद्धोरुधिरसिक्तांगोवभूवरुषितोभृशम् ॥ २५ ॥ सधनुर्धन्विनांश्रेष्ठःसंगृह्यपरमाहवे ॥ मुमोचपरमेष्वासःषट्शरानभिलक्षितान् ॥ २६ ॥ शिरस्येकेनबाणेनद्वाभ्यांबाह्वोरथार्पयत् ॥ त्रिभिश्चंद्रार्धवक्त्रैश्चवक्षस्यभिजघानह ॥ २७ ॥ ततःपश्चान्महातेजानाराचान्भास्करोपमान् ॥ जघानराक्षसंक्रुद्धस्त्रयोदशशिलाशितान् ॥ २८ ॥ रथस्ययुगमेकेनचतुर्भिःशवलान्हयान् ॥ षष्ठेनचशिरःसंख्येचिच्छेदखरसारथेः ॥ २९ ॥ त्रिभिस्त्रिवेणून्वलवान्द्वाभ्यामक्षंमहाबलः ॥ द्वादशेनतुवाणेनखरस्यसकरंधनुः ॥ ३० ॥

कृतः ॥ १९ ॥ २० ॥ महर्षिणा अगस्त्येन अतिसृष्टं दत्तं वरं श्रेष्ठम् ॥ २१ ॥ २२ ॥ देवतानामाज्ञया सूर्य इवेति कविकल्पितोपमानिकोपमेयम् ॥ २३ ॥ २४ ॥ २५ ॥ अभिलक्षितानाभिलक्षितविषयाव
॥ २६ ॥ तानेव विषयानाह शिरस्येकेनेत्यादि ॥ २७ ॥ भास्करोपमानित्यस्य गृहीत्वेति शेषः ॥ २८ ॥ उपात्तत्रयोदशानां विनियोगमाह रथस्येत्यादि ॥ २९ ॥ त्रिवेणर्नाम रथमुखस्थो युगाधारदंडः ॥ ३० ॥

महसन्निव लीलयैव बिभेद खरंहृदीति शेषमाह कतकः ॥ ३१ ॥ ३२ ॥ महारथस्य पूज्यस्य तत्कर्म दृष्ट्वेति शेषः । अपूजयन्नमस्कारस्तुत्यादिभिस्तमतोषयन्नित्यर्थः ॥ ३३ ॥ गर्लैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टाविंशः सर्गः ॥२८ ॥ ॥ मृदुपूर्वं न्यायमवलंब्य मृदूक्तिपूर्वम् । परुषं परुषार्थकम् ॥१॥ त्वत्कृतान्यायेनायं तवनाश इत्याह गजेत्यादि। बले तिष्ठता बलविषयस्वामित्वेन तिष्ठता ईदृशेन यद्दारुणं कर्म कृतं भवति तत्सर्वं लोकनिंद्यं भवति ॥ २ ॥ एवंविधकर्मकर्तुर्नेह सुखमित्याह उद्वेजनीय इति । उद्वेजक इत्यर्थः । नृशंसो घातुकः क्रूरः एवंगुणक ईश्वरोऽपि न तिष्ठति न चिरं तिष्ठति ॥ ३ ॥ तदेवाह कर्मेत्यादि । सर्वजनो हंति अकृतापकारोपि हंति स सर्वजन्य इति यावत् ॥ ४ ॥ अप्राप्तप्राप्तीच्छा कामः प्राप्ताधिकेच्छा लोभः तस्य पापस्यांतं स्वनाशरूपं परिपाकं पश्यति पापफलमनुभवतीत्यर्थः । करका वर्षोपलास्तानत्ति करकात्सा ब्राह्मणी रक्तपुच्छिकेव । रक्तपुच्छिकायाः करका विषम् । तन्निगरणमात्रेण तन्मृत्युरिति प्रसिद्धिः । सा यथा स्वानर्थमपश्यंती तद्भुंक्ते भोजनोत्तरं तन्नाशं लोकः पश्यति । एवं यः कर्मकरणकाले नाशकमिदमिति न बुध्यते तस्य तत्कर्मप्राप्तमंतं नाशं लोको हृष्टः सन्पश्यतीत्यर्थः इति कतकः ॥ ५ ॥ ततः किं तत्राह वसत इति । किंनु फलमग्रे प्राप्स्यासि तत्र विघ्न इति शेषः ॥६॥ इदं तु प्रत्यक्षमित्याह नेति । पापकर्माणः पूर्वपुण्येनैश्वर्यं प्राप्यापि न चिरं तिष्ठंति ॥ ७ ॥ काले पापानुभवकाले घोरं दुःखरूपफलम् ॥८॥९॥ घोरं कर्मणः फलं भवतीति शेषः । अतो हेतोरहं राजा दुष्टनिग्रहाधिकारी । हे निशाचर रक्षसां प्राणान्हंतुं आसादितो ऋषिभिरिति शेषः । त्वयेति वा । राज्ञेतिपाठे राज्ञा दशरथेनासादितो नियुक्त इत्यर्थ इति तीर्थः ॥१०॥ अद्य मया मुक्ता बाणाः त्वद्वपुर्भित्त्वा भूमिं विदार्यातिपतिष्यंति भुवमितिक्रम्य पतिष्यन्ति पातालं गमिष्यंतीति यावत् ॥ ११ ॥ अत्र ऋष्यनुगमनं प्राणनाशमात्रेण अतएव निरयस्थमिति वक्ष्यति ॥ १२ ॥

छित्त्वावज्रनिकाशेनराघवःप्रहसन्निव ॥ त्रयोदशेनेंद्रसमोविभेदसमरेखरम् ॥३१॥ प्रभग्नधन्वाविरथोहताश्वोहतसारथिः ॥ गदापाणिरवप्लुत्यतस्थौभूमौखरस्तदा ॥ ३२ ॥ तत्कर्मरामस्यमहारथस्यसमेत्यदेवाश्चमहर्षयश्च ॥ अपूजयन्प्रांजलयःप्रहृष्टास्तदाविमानाग्रगताःसमेताः ॥ ३३ ॥ इत्यार्षे श्रीम० वा० आ० अरण्यकांडे अष्टाविंशः सर्गः ॥ २८ ॥ खरंतुविरथंरामोगदापाणिमवस्थितम् ॥ मृदुपूर्वंमहातेजाःपरुषंवाक्यमब्रवीत् ॥ १ ॥ गजाश्वरथसंबाधेबलेमहतितिष्ठता ॥ कृतंतेदारुणंकर्मसर्वलोकजुगुप्सितम् ॥ २ ॥ उद्वेजनीयोभूतानांनृशंसःपापकर्मकृत् ॥ त्रयाणामपिलोकानामीश्वरोपिनतिष्ठति ॥ ३ ॥ कर्मलोकविरुद्धंतुकुर्वाणंक्षणदाचर ॥ तीक्ष्णंसर्वजनोहंतिसर्पंदुष्टमिवागतम् ॥ ४ ॥ लोभात्पापानिकुर्वाणःकामाद्वायोनबुध्यते ॥ हृष्टःपश्यतितस्यांतंब्राह्मणीकरकादिव ॥५॥ वसतोदंडकारण्येतापसान्धर्मचारिणः ॥ किंनुहत्वामहाभागान्फलंप्राप्स्यसिराक्षस ॥ ६ ॥ नचिरंपापकर्माणःक्रूरालोकजुगुप्सिताः ॥ ऐश्वर्यंप्राप्यतिष्ठंतिशीर्णमूलाइवद्रुमाः ॥ ७ ॥ अवश्यंलभतेकर्ताफलंपापस्यकर्मणः ॥ घोरंपर्यागतेकालेद्रुमःपुष्पमिवार्तवम् ॥ ८ ॥ नचिरात्प्राप्यतेलोकेपापानांकर्मणांफलम् ॥ सविषाणामिवान्नानांभुक्तानांक्षणदाचर ॥ ९ ॥ पापमाचरतांघोरंलोकस्याप्रियमिच्छताम् ॥ अहमासादितोराज्ञाप्राणान्हंतुंनिशाचर ॥ १० ॥ अद्यभित्त्वामयामुक्ताःशराःकांचनभूषणाः ॥ विदार्यापिपतिष्यंतिवल्मीकमिवपन्नगाः ॥ ११ ॥ येत्वयादंडकारण्येभक्षिताधर्मचारिणः ॥ तानद्यनिहतःसंख्येससैन्योनुगमिष्यासि ॥ १२ ॥

निरयस्थमिति । ननु भगवता हतस्य मृतिसमये भगवद्दर्शनवतः कथं निरयस्थत्वमितिचेन्न । अत्युग्रस्य ब्रह्मवधकर्मणः फलस्यावश्यं भोक्तव्यत्वेनादौ भगवादिच्छयैव निरयभोगपूर्वमुत्तमपदप्राप्तेः सत्त्वेनादोषात्॥ १३॥ कुलाधम कुलेनाधम ॥ १४ ॥ १५ ॥ १६ ॥ गर्विता अपि न कथयंतीत्यन्वयः ॥ १७ ॥ अकृतात्मानः कल्मषचित्ताः ॥ १८ ॥ कलुषं व्यपदिशन्कुलीनत्वं प्रकटयन्मृत्युकाले तत्तुल्ययुद्धकाले संप्राप्ते । अप्रस्तवे अप्रस्तावे । घत्रभाव आर्षः । स्वस्तवरूपं वचनं कोभिधास्यति न कोपीत्यर्थः । अहमासादितो राजेति रामोक्तेरिदमुक्तवान् ॥ १९ ॥ कत्थनेन प्राकृतेन ते त्वया सर्वथैवात्मनो लघुत्वं दर्शितम् । यथा सुवर्णप्रतिरूपेण स्वर्णतुल्यरूपेण पित्तलेन कुशाग्निना ॥ स्वर्णादिशोधनाग्निना तप्तेन यथा स्वस्य कृष्णवर्णत्वरूपं लाघवं दर्शितं भवति तद्वत्तापात्पूर्वं हि तत्र स्वर्णताबुद्धिः सा तापे यथा

अद्यत्वांनिहतंबाणैःपश्यंतुपरमर्षयः ॥ निरयस्थंविमानस्थायेत्वयानिहताःपुरा ॥ १३ ॥ प्रहरस्वयथाकामंकुरुयत्नंकुलाधम ॥ अद्यतेपातयिष्या मिशिरस्तालफलंयथा ॥ १४ ॥ एवमुक्तस्तुरामेणक्रुद्धःसंरक्तलोचनः ॥ प्रत्युवाचततोरामंप्रहसन्क्रोधमूर्च्छितः ॥ १५ ॥ प्राकृतान्राक्षसान्हत्वायुद्धे दशरथात्मज ॥ आत्मनाकथमात्मानमप्रशंस्यंप्रशंससि ॥ १६ ॥ विक्रांताबलवंतोवायेभवंतिनरर्षभाः ॥ कथयंतिनतेकिंचित्तेजसाचातिगर्विताः ॥ १७ ॥ प्राकृतास्त्वकृतात्मानोलोकेक्षत्रियपांसनाः ॥ निरर्थकंविकत्थंतेतथारामविकत्थसे ॥ १८ ॥ कुलंव्यपदिशन्वीरःसमरेकोभिधास्यति ॥ मृत्युकालेतुसंप्राप्तेस्वयमप्रस्तवेस्तवम् ॥ १९ ॥ सर्वथातुलघुत्वंतेकत्थनेनविदर्शितम् ॥ सुवर्णप्रतिरूपेणतप्तेनेवकुशाग्निना ॥ २० ॥ नतुमा मिहतिष्ठंतंपश्यसित्वंगदाधरम् ॥ धराधरमिवाकंप्यंपर्वतंधातुभिश्चितम् ॥ २१ ॥ पर्याप्तोहंगदापाणिर्हंतुंप्राणान्रणेतव ॥ त्रयाणामपिलोकानां पाशहस्तइवांतकः ॥ २२ ॥ कामंबह्वपिवक्तव्यंत्वयिवक्ष्यामिनत्वहम् ॥ अस्तंप्राप्नोतिसवितायुद्धविघ्नस्ततोभवेत् ॥ २३ ॥ चतुर्दशसहस्रा णिराक्षसानांहतानिते ॥ त्वद्विनाशात्करोम्यद्यतेषामश्रुप्रमार्जनम् ॥ २४ ॥ इत्युक्त्वापरमक्रुद्धःसगदांपरमांगदाम् ॥ खरश्चिक्षेपरामायप्रदीप्तामश निंयथा ॥२५॥ खरबाहुप्रमुक्तासाप्रदीप्तामहतीगदा ॥ भस्मवृक्षांश्चगुल्मांश्चकृत्वागात्तत्समीपतः ॥२६॥ तामापतंतींमहतींमृत्युपाशोपमांगदाम् ॥ अंतरिक्षगतांरामश्चिच्छेदबहुधाशरैः ॥ २७ ॥

नश्यति तथा त्वया स्वस्मिन्स्थिता प्राक्शूरत्वबुद्धिः कत्थनेनापहृतेत्यर्थः । तुषाग्निनेति पाठांतरम् ॥ २० ॥ अयमेव ते कत्थने हेतुरित्याह न त्विति । गदाधरं मां यतो न पश्यसि सारतो न जानासि अतो विकत्थसे इत्यन्वयः । धराधरमिति पर्वतविशेषणम् । तेन कुलाचलसादृश्यबोधनम्॥ २१ ॥ स्वकं सारं दर्शयति पर्याप्त इति । गदापाणिरिति गदाहस्त इत्यर्थः । तव त्रयाणां लोकानां चेत्यर्थः ॥२२॥ यद्यपि त्वद्विषये कामं बहु वक्तव्यमस्ति अथाप्यहं न वक्ष्यामि त्वद्वल्लघुत्वापत्तेः हेत्वंतरमप्याह अस्तमिति ॥ २३ ॥ यानि ते त्वया हतानि तेषां तत्संबंधिस्त्रीपुत्रादीनां अश्रुमार्जनं करिष्यामि त्वद्विनाशात्त्व न्मरणात् ॥ २४ ॥ परमा अंगदाः कनकवलयानि यस्यास्तां प्रसिद्धां हस्तस्थां गदां चिक्षेप ॥ २५ ॥ भस्म कृत्वा स्वज्वालयेति शेषः । तत्समीपतः रामसमीपतः ॥ २६ ॥ २७ ॥

४२

मंत्रादिबलैर्विनिपातिता श्यालीव॥२८॥हारंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकोनत्रिंशः सर्गः ॥२९॥ भित्त्वेति ॥१॥ लब्धावसरो भगवांस्त्वय्यैव कत्थनं कृतमित्याह एतदिति । शक्तिहीनतरः शक्त्या हीनतरः ॥२॥ अभिधाने केवलं प्रगल्भस्य तवानया शत्रुवधो भवत्येवेत्ययं यः प्रत्ययो विश्वासस्तस्य स्वनाशेन घातिका ॥३॥४॥५॥६॥ स्रस्तं स्थानादत एव भूमौ न्यस्तं भुजद्वयं येन सः । गां भुवम् ॥ ७ ॥ प्रवृद्धनिद्रे प्रवृद्धदीर्घनिद्रे । शरण्याः सुखवासभूताः । शरण्यानां तपोमहिम्ना सर्वजनशरण्यानाम् ॥ ८ ॥ हतस्थाने हतराक्षसवासे ॥ ९ ॥ विप्रसरिष्यंति मद्भयेन जनस्थानात्पलायिष्यंतीत्यर्थः ॥ १० ॥ शोकरसज्ञाः शोकस्थायिकरसज्ञाः । निरर्थिकाः निःशेषतो नष्टोर्थः कामादिपुरुषार्थो यासां ताः । अनुरूपकुलास्त्वत्सदृशदुर्वृत्तत्वादिगुणवत्कुलाः । ईदृशः पापकर्मा ॥

साविशीर्णाशरैर्भिन्नापपातधरणीतले ॥ गदामंत्रौषधिबलैर्व्यालीवविनिपातिता ॥ २८ ॥ इत्यार्षे श्रीम० वा० आ०अरण्यकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ भित्त्वातुतांगदांवाणैराघवोधर्मवत्सलः ॥ स्मयमानइदंवाक्यंसंरब्धमिदमब्रवीत् ॥ १ ॥ एतत्तेवलसर्वस्वंदर्शितंराक्षसाधम ॥ शक्तिहीनतरोमत्तोवृथात्वमुपगर्जसि ॥ २ ॥ एषावाणविनिर्भिन्नागदाभूमितलंगता ॥ अभिधानप्रगल्भस्यतवप्रत्ययघातिनी ॥ ३ ॥ यत्त्वयोक्तं विनष्टानामिदमश्रुप्रमार्जनम् ॥ राक्षसानांकरोमीतिमिथ्यातदपितेवचः ॥ ४ ॥ नीचस्यक्षुद्रशीलस्यमिथ्यावृत्तस्यरक्षसः ॥ प्राणानपहरिष्यामि गरुत्मानमृतंयथा ॥ ५ ॥ अद्यतेभिन्नकंठस्यफेनबुद्बुदभूषितम् ॥ विदारितस्यमद्बाणैर्महीपास्यतिशोणितम् ॥ ६ ॥ पांसुरूषितसर्वांगःस्रस्तन्यस्तभुजद्वयः ॥ स्वप्स्यसेगांसमाश्लिष्यदुर्लभांप्रमदामिव ॥ ७ ॥ प्रवृद्धनिद्रेशयितेत्वयिराक्षसपांसने ॥ भविष्यंतिशरण्यानांशरण्यादंडकाइमे ॥ ८ ॥ जनस्थानेहतस्थानेतवराक्षसमच्छरैः ॥ निर्भयाविचारिष्यंतिसर्वतोमुनयोवने ॥ ९ ॥ अद्यविप्रसरिष्यंतिराक्षस्योहतवांधवाः ॥ वाष्पार्द्रवदनादीनाभयादन्यभयावहाः ॥ १० ॥ अद्यशोकरसज्ञास्ताभविष्यंतिनिरर्थिकाः ॥ अनुरूपकुलाःपत्न्योयासांत्वंपतिरीदृशः ॥ ११ ॥ नृशंसशीलक्षुद्रात्मन्नित्यंब्राह्मणकंटक ॥ त्वत्कृतेशंकितैरग्नौमुनिभिःपात्यतेहविः ॥ १२ ॥ तमेवमभिसंरब्धंब्रुवाणंराघवंवने ॥ खरोनिर्भर्त्सयामासरोषात्खरतरस्वरः ॥ १३ ॥ दृढंखल्ववलिप्तोसिभयेष्वपिचनिर्भयः ॥ वाच्यावाच्यंततोहित्वंमृत्योर्वश्योनवुध्यसे ॥ १४ ॥ कालपाशपरिक्षिप्ताभवंतिपुरुषाहिये ॥ कार्याकार्यंनजानंतितेनिरस्तषडिंद्रियाः ॥१५॥ एवमुक्त्वाततोरामंसंरुध्यभ्रुकुटिंततः ॥ सददर्शमहासालमविदूरेनिशाचरः ॥१६॥

॥ ११ ॥ अस्यैव विवरणं नृशंसेत्यादि । शंकितैस्त्वद्भटेभ्यः । यद्यपि भगवत ईदृशेषु क्षुद्रेष्वेवं वादोऽनुचितस्तथापि निरयस्तमिति स्वोक्तिं सत्यां कर्तुं मरणकाले क्रोधजनकतमोगुणोद्रेकस्य तामसगुणगति संपादकस्योद्भवायेति बोध्यम् ॥१२॥१३॥ ततो हि अवलिप्तत्वादेव। मृत्युवश्योऽपि वाच्यावाच्यं न जानीषे ॥१४॥ परिक्षेपो बंधः । निरस्तषडिंद्रियाः सांतःकरणचक्षुरादिपञ्चेंद्रियैर्निरस्ता विनाशितस्वातंत्र्याः । मृत्युकाले स्फुरितभगवद्रूपः श्लेषेण स्वाविनयं क्षमापयति च कालेति। अतस्त्वया मदुक्तयः क्षंतव्या इति व्यंग्यमित्यन्ये । तेषां निरयस्थमिति भगवदुक्तेरसंगतिः स्पष्टैव ॥१५॥ भ्रुकुटिं सान्निरूध्य सन्निबध्य ॥१६॥

प्रहरणमायुधं तदर्थं सर्वतः प्रसृतामिति शेषः। तादृशसालमवलोकयन्नित्यर्थः। दशनच्छदमधरम् संदष्टदशनच्छदं यथा भवति तथा ॥१७॥ समुत्क्षिप्य भ्रामयित्वा हतो मारितः ॥१८॥१९॥ जातस्वेदो रोषादिति शेषः। न तु श्रमादिति। अयं रोषोपि भगवतारोपित एव नटवन्न तु वास्तवो मानुषत्वस्थिरीकरणायेति बोध्यम्। रक्तवर्णेऽन्तभागेऽपांगभागे लोचने यस्य सः। सहस्रेणानंते ॥२०॥ बाणांतराद्बाणक्षतविवरात्प्रस्रवणस्य प्रस्रवणाख्यस्य परिस्रवः प्रवाहः ॥२१॥ विकलः परवशः कृतो न तु मृत इत्यर्थः। तदेवाह मत्त इति ॥ २२ ॥ आपतंतं बाणक्षेपावकाशो यथा न भवति तथोपर्यापतंतं खरं दृष्ट्वाऽत्यासत्तौ धनुर्व्यापारो न स्यादिति स्वशरीरे तद्रुधिरपातभिया च द्वित्रीणि पदानि त्वरितपदन्यासो बाणं संदधदेव पृष्ठतोपासर्पत्। अनेन महाबलत्वं खरस्योक्तम्। नत्वन्यथा रामधनुश्छेदोनंततद्बाणसहनं वा सुशकम्। अतएवाग्रे तद्वधाय विशिष्य स्वशक्तिरूप वैष्णवबाणग्रहणम् ॥ २३ ॥ ब्रह्मदंडमिव ब्रह्मास्त्रमिवामोघम् ॥ २४ ॥ मघवता दत्तमगस्त्यद्वारा ॥ २५ ॥ धनुरायम्य विमुक्तः स खरस्योरस्यपतदित्यन्वयः ॥ २६ ॥ श्वेतारण्ये

रणेप्रहरणस्यार्थेसर्वतोह्यवलोकयन् ॥ सतमुत्पाटयामाससंदष्टदशनच्छदम् ॥ १७ ॥ तंसमुत्क्षिप्यबाहुभ्यांविनर्दित्वामहाबलः ॥ राममुद्दिश्यचिक्षेपहतस्त्वमितिचाब्रवीत् ॥ १८ ॥ तमापतंतंबाणौघैश्छित्वारामःप्रतापवान् ॥ रोषमाहारयत्तीव्रंनिहंतुंसमरेखरम् ॥ १९ ॥ जातस्वेदस्ततोरामोरोषरक्तांतलोचनः ॥ निर्बिभेदसहस्रेणबाणानांसमरेखरम् ॥ २० ॥ तस्यबाणांतराद्रक्तंबहुसुस्राबफेनिलम् ॥ गिरेःप्रस्रवणस्येवधाराणांचपरिस्रवः ॥ २१ ॥ विकलःसकृतोबाणैःखरोरामेणसंयुगे ॥ मत्तोरुधिरगंधेनतमेवाभ्यद्रवद्द्रुतम् ॥ २२ ॥ तमापतंतंसंक्रुद्धंकृतास्त्रोरुधिराप्लुतम् ॥ अपासर्पद्द्वित्रिपदंकिंचित्त्वरितविक्रमः ॥ २३ ॥ ततःपावकसंकाशंवधायसमरेशरम् ॥ खरस्यरामोजग्राहब्रह्मदंडमिवापरम् ॥ २४ ॥ सतद्दत्तंमघवतासुरराजेनधीमता ॥ संदधेचसधर्मात्मामुमोचचखरंप्रति ॥ २५ ॥ सविमुक्तोमहाबाणोनिर्घातसमनिःस्वनः ॥ रामेणधनुरायम्यखरस्योरसिचापतत् ॥ २६ ॥ सपपातखरोभूमौदह्यमानःशराग्निना ॥ रुद्रेणेवविनिर्दग्धःश्वेतारण्येयथांधकः ॥ २७ ॥ सवृत्रइववज्रेणफेनेननमुचिर्यथा ॥ बलोवेंद्राशनिहतोनिपपातहतःखरः ॥ २८ ॥ एतस्मिन्नंतरेदेवाश्चारणैःसहसंगताः ॥ दुंदुभींश्चाभिनिघ्नंतःपुष्पवर्षंसमंततः ॥ २९ ॥ रामस्योपरिसंहृष्टाववृषुर्विस्मितास्तदा ॥ अर्धाधिकमुहूर्तेनरामेणनिशितैःशरैः ॥ ३० ॥ चतुर्दशसहस्राणिरक्षसांकामरूपिणाम् ॥ खरदूषणमुख्यानांनिहतानिमहामृधे ॥ ३१ ॥ अहोबतमहत्कर्मरामस्यविदितात्मनः ॥ अहोवीर्यमहोदार्ढ्यंविष्णोरिवहिदृश्यते ॥ ३२ ॥ इत्येवमुक्त्वातेसर्वेययुर्देवायथागतम् ॥ ततोराजर्षयःसर्वेसंगताःपरमर्षयः ॥ ३३ ॥

यथांऽधकः अंधकासुरः श्वेतारण्ये रुद्रेण हत इति पुराणप्रसिद्धम्। रुद्रेणेवेति इवशब्दो वाक्यालंकारे। श्वेतारण्ये यथांतक इति प्रचुरः पाठः। तत्र कावेरीतीरवर्तिनि श्वेतारण्ये मार्कंडेयचिरजीवित्वायांतकसंहारो रुद्रेण कृत इति तन्माहात्म्ये प्रसिद्धिः। कौर्मे तूत्तरखंडे श्वेतस्य राजर्षेः परमशैवस्य कालंजरे पर्वते तपस्यभिरतस्य मारणायागतस्यांतकस्य शिवेन वामपादप्रहारेण संहारः कृत इति षड्त्रिंशेऽध्याये उक्तम् ॥ २७ ॥ वज्रेण वृत्र इव फेनेन तदाच्छादितवज्रेण नमुचिरिव। न शुष्केण नार्द्रेणेति ब्रह्मणा तस्मै वरदानात्। अशनिहतो बलो वा। वा शब्द इवार्थे। बल इव। एवं च अंधकादिवधस्य रुद्रादितिरेकासाध्यत्ववत् खरवधस्य रामातिरिक्तासाध्यत्वं प्रकाशितं कविना ॥ २८ ॥ २९ ॥ अर्धाधिकमुहूर्तेन किंचिदूनघटिकात्रयेण ॥ ३० ॥ ३१ ॥ ३२ ॥ राजर्षयो नहुषाद्याः। परमर्षयो भृग्वाद्याः ॥ ३३ ॥

सभाज्य पूजयित्वा । एतदर्थं रक्षसां वधायैतद्देशवासनियोजनार्थं क्षणं स्थित्वा रामं प्रस्थाप्य भवद्भिर्ब्रह्मलोकाय प्रस्थातव्यमित्युक्त्वा शरभंगं प्रति इंद्रो गत इत्याशयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ एतस्मिन्नंतरे देवानाम् ऋषीणां च निर्गमनसमये ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥४१॥ हर्षातिशयात्पुनरालिंगनम् । इदं युद्धं प्रायः शिशिरार्धे ॥ ४२ ॥ रवैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रिंशः सर्गः ॥ ३० ॥ ॥ त्वरमाण इति । खरसंग्रामात्पलायितः शूर्पणखागमनात्पूर्वमेव लंकां प्रविश्येत्यर्थः । संपूर्णं दंडकारण्यं जनस्थानपदवाच्यमतो गोदावरीतीरा

सभाज्यमुदितारामंसागस्त्याइदमब्रुवन् ॥ एतदर्थंमहातेजामहेंद्रःपाकशासनः ॥ ३४ ॥ शरभंगाश्रमंपुण्यमाजगामपुरंदरः ॥ आनीतस्त्वमिमंदेशमुपायेनमहार्षिभिः ॥ ३५ ॥ एषांवधार्थंशत्रुणांरक्षसांपापकर्मणाम् ॥ तदिदंनःकृतंकार्यंत्वयादशरथात्मज ॥ ३६ ॥ स्वधर्मंप्रचरिष्यंतिदंडकेषुमहर्षयः ॥ एतस्मिन्नंतरेवीरोलक्ष्मणःसहसीतया ॥३७॥ गिरिदुर्गाद्विनिष्क्रम्यसंविवेशाश्रमेसुखी ॥ ततोरामस्तुविजयीपूज्यमानोमहर्षिभिः ॥३८॥ प्रविवेशाश्रमंवीरोलक्ष्मणेनाभिपूजितः ॥ तंदृष्ट्वाशत्रुहंतारंमहर्षीणांसुखावहम् ॥ ३९ ॥ बभूवहृष्टावैदेहीभर्तारंपरिषस्वजे ॥ मुदापरमयायुक्तादृष्ट्वारक्षोगणान्हतान् ॥४०॥ रामंचैवाव्ययंदृष्ट्वातुतोपजनकात्मजा ॥ ४१ ॥ ततस्तुतंराक्षससंघमर्दनंसंपूज्यमानंमुदितैर्महात्मभिः ॥ पुनःपरिष्वज्यमुदान्वितानना बभूवहृष्टाजनकात्मजातदा ॥ ४२ ॥ इत्यार्षे श्रीम० वा० आ० अर० त्रिंशः सर्गः ॥ ३० ॥ त्वरमाणस्ततोगत्वाजनस्थानादकंपनः ॥ प्रविश्यलंकांवेगेनरावणंवाक्यमब्रवीत् ॥ १ ॥ जनस्थानस्थिताराजन्राक्षसाबहवोहताः ॥ खरश्चनिहतःसंख्येकथंचिदहमागतः ॥ २ ॥ एवमुक्तोदशग्रीवःक्रुद्धःसंरक्तलोचनः ॥ अकंपनमुवाचेदंनिर्दहन्निवतेजसा ॥ ३ ॥ तेनभीमंजनस्थानंहतंममपरासुना ॥ कोहिसर्वेषुलोकेषुगतिंनाधिगमिष्यति ॥ ४ ॥ नहिमेविप्रियंकृत्वाशक्यंमघवतासुखम् ॥ प्राप्तुंवैश्रवणेनापिनयमेनचविष्णुना ॥ ५ ॥ कालस्यचाप्यहंकालोदहेयमपिपावकम् ॥ मृत्युंमरणधर्मेणसंयोजयितुमुत्सहे ॥ ६ ॥ वातस्यतरसावेगंनिहंतुमपिचोत्सहे ॥ दहेहमपिसंक्रुद्धस्तेजसादित्यपावकौ ॥ ७ ॥ तथाक्रुद्धंदशग्रीवंकृतांजलिरकंपनः ॥ भयात्संदिग्धयावाचारावणंयाचतेऽभयम् ॥ ८ ॥ दशग्रीवोऽभयंतस्मैप्रददौरक्षसांवरः ॥ सविस्रब्धोऽब्रवीद्वाक्यमसंदिग्धमकंपनः ॥ ९ ॥ पुत्रोदशरथस्यास्तेसिंहसंहननोयुवा ॥ रामोनाममहास्कंधोवृत्तायतमहाभुजः ॥ १० ॥ श्यामःपृथुयशाःश्रीमानतुल्यबलविक्रमः ॥ हतस्तेनजनस्थानेखरश्चसहदूषणः ॥ ११ ॥ अकंपनवचःश्रुत्वारावणोराक्षसाधिपः ॥ नागेंद्रइवनिःश्वस्यइदंवचनमब्रवीत् ॥ १२ ॥

द्गतोपि जनस्थानाद्गत इत्युक्तः ॥ १ ॥ खरश्चेति । तेन दूषणत्रिशिरसोः संग्रहः । कथंचिदहमागतः केवलं प्रेक्षकतया स्थितत्वाद्रामबाणाविषयीकृततयेत्याशयः ॥ २ ॥ ३ ॥ भीमं सर्वलोकभयदं जनस्थानम् । परासुनेति क्रोधान्मुमूर्षुणेत्यर्थे प्रयुक्तम् । गतिं स्थितिम् ॥ ४ ॥ ५ ॥ ६ ॥ निहंतुं भंक्तुम् । आदित्यपावकौ उभावपि । युगपदिति शेषः ॥ ७ ॥ संदिग्धया संदिग्धाक्षरया । अभयमिति च्छेदः ॥ ८ ॥ वरांगरूपोपेतो यः सिंहसंहननो हि स इति कोशः ॥ ९ ॥ १० ॥ अतुल्यं केनापि तुलानर्हं बलं विक्रमश्च यस्य सः सदूषणः खरश्च हत इत्यन्वयः ॥ ११ ॥ नागेंद्रः सर्पश्रेष्ठः ॥ १२ ॥

स रामः सर्वामरसहितेंद्रेण जनस्थानं कच्चिदुपागत इत्यन्वयः॥१३॥१४॥ परं धर्मम् अतिशयितं शौर्यम् ॥ १५ ॥ राकाशशिनिभानन इति । राका पूंर्णिमा पूर्णे राका निशाकरे इत्यमरः । पूर्णनिशाकरवदन इत्यर्थः॥१६॥राजवरः राजराज इति यावत्॥१७॥ महात्मानो देवा नैवागता इति शेषः। रामेण तु न तु लक्ष्मणेनापीत्यर्थः॥१८॥भयात्पलायनाय येन मार्गेण गच्छंति राक्षसास्तेन तेन मार्गेणागत्याग्रतः स्थित मेव रामं पश्यंति । अनेनानंताकारताप्रदर्शनेन रामस्यापरिच्छिन्नशक्तित्वं च सूचितम् ॥ १९ ॥ २० ॥ २१ ॥ बलं पराभिभवसामर्थ्यं पौरुषं महापुरुषकर्म वृत्तं चरितं यथा यादृशं तत्सर्वं शृण्वित्यर्थः ॥ २२ ॥ कुपितः कुपितोंतक इव संहारे प्रवृत्तो रामः पराक्रमेण ततो निवर्तयितुमसाध्यो ब्रह्मादिभिरपीति शेषः । परिहरेत्परावर्तयेत् । अनेन कृष्णबलभद्रावतारस्यापि सूचनम् ॥ २३ ॥ नभोप्यवसादयेत्ता

संसुरेंद्रेणसंयुक्तोरामःसर्वामरैःसह ॥ उपयातोजनस्थानंब्रूहिकच्चिदकंपन ॥ १३ ॥ रावणस्यपुनर्वाक्यंनिशम्यतदकंपनः ॥ आचचक्षेबलंतस्य विक्रमंचमहात्मनः ॥ १४ ॥ रामोनाममहातेजाःश्रेष्ठःसर्वधनुष्मताम् ॥ दिव्यास्त्रगुणसंपन्नःपरंधर्मंगतोयुधि ॥ १५ ॥ तस्यानुरूपोबलवान्रक्ताक्षो दुंदुभिस्वनः ॥ कनीयाँल्लक्ष्मणोभ्राताराकाशशिनिभाननः ॥ १६ ॥ सतेनसहसंयुक्तःपावकेनानिलोयथा ॥ श्रीमान्राजवरस्तेनजनस्थानंनि पातितम् ॥ १७ ॥ नैवदेवामहात्मानोनात्रकार्याविचारणा ॥ शरारामेणतूत्सृष्टारुक्मपुंखाःपतत्रिणः ॥ १८ ॥ सर्पाःपंचाननाभूत्वाभक्षयंतिस्मरा क्षसान् ॥ येनयेनचगच्छंतिराक्षसाभयकर्शिताः ॥ १९ ॥ तेनतेनस्मपश्यंतिराममेवाग्रतःस्थितम् ॥ इत्थंविनाशितंतेनजनस्थानंतवानघ ॥ ॥ २० ॥ अकंपनवचःश्रुत्वारावणोवाक्यमब्रवीत् ॥ गमिष्यामिजनस्थानंरामंहंतुंसलक्ष्मणम् ॥ २१ ॥ अथैवमुक्तेवचनेप्रोवाचेदमकंपनः ॥ शृणुराजन्यथावृत्तंरामस्यबलपौरुषम् ॥ २२ ॥ असाध्यःकुपितोरामोविक्रमेणमहायशाः ॥ आपगायास्तुपूर्णायावेगंपरिहरेच्छरैः ॥२३॥ सताराग्र हनक्षत्रंनभश्चाप्यवसादयेत् ॥ असौरामस्तुसीदंतींश्रीमानभ्युद्धरेन्महीम् ॥ २४ ॥ भित्त्वावेलांसमुद्रस्यलोकानाप्लावयेद्विभुः ॥ वेगंवापिसमुद्रस्यवायुं वाविधमेच्छरैः ॥ २५ ॥ संहृत्यवापुनर्लोकान्विक्रमेणमहायशाः ॥ शक्तःश्रेष्ठःसपुरुषःस्रष्टुंपुनरपिप्रजाः ॥ २६ ॥ नहिरामोदशग्रीवशक्योजेतुं रणेत्वया ॥ रक्षसांवापिलोकेनस्वर्गःपापजनैरिव ॥ २७ ॥ नतंवध्यमहंमन्येसर्वैर्देवासुरैरपि ॥ अयंतस्यवधोपायस्तन्ममैकमनाःशृणु ॥ २८ ॥ भार्यातस्योत्तमालोकेसीतानामसुमध्यमा ॥ श्यामासमविभक्तांगीस्त्रीरत्नंरत्नभूषिता ॥ २९ ॥

राराहितं कुर्यात् । त्रिविक्रमावतार इव महीमभ्युद्धरेत् यज्ञवराह इव । शक्यर्थे एते लिङः ॥२४॥ वेलां मर्यादां आप्लावयेत् मलयकाल इव समुद्रस्य वेगं विधमेत् । समुद्रे सेतुबंधनसामर्थ्यं दर्शितम् । वायु मित्युपलक्षणं भूतपंचकस्य ॥२५॥ संहृत्य पुनः स्रष्टुं शक्तः । अत्र पुनरपिशब्दाभ्यां सर्वसृष्टिसंहाराणां तदधीनत्वमुक्तम् । अनेन जगत्स्थितिसंहारकर्तृत्वमस्य व्यंग्यम् । अकंपनस्यापि भगवत्प्रसादादेवं ज्ञानम् ॥२६॥ लोकेन समूहेन सहितेनापीति शेषः ॥ २७ ॥ अपिना त्वयापि । एतेनेंद्रजिन्निर्जितेंद्रादिसाहाय्येऽपि तस्य जयोऽसुकर इति ध्वनितम् । ममेति मुखादिति शेषः ॥२८ ॥ श्यामा यौवनमध्यस्था ॥२९॥

कुतो भवेत्तुल्येति शेषः ॥ ३० ॥ तं रामं प्रमथ्य केनाप्युपायेनोच्चाट्योति यावत् । तस्य भार्याम् अपहर बलात्कारेण हर ॥ ३१ ॥ अरोचयत इष्टत्वेन ज्ञातवान् । चिंतयित्वा रामस्य सीतया सहान वस्थानोपायम् ॥ ३२ ॥ कल्यं प्रातः । प्रांतमव्ययम् । हृष्ट इति । अकंपनवाक्यं श्रुत्वा त्रेतामुखे श्रीरामोवतरिष्यतीति सनत्कुमारवाक्यस्मरणाद्धृष्टः । तदेतदुत्तररामायणे स्पष्टम् । तत्र हि सनत्कुमारं प्रति विष्णुहस्तमृतानां का गतिरिति रावणेन पृष्टे तेन हतानां तल्लोकप्राप्तिरिति सनत्कुमारवचः श्रुत्वा । एवं श्रुत्वा महाबाहू राक्षसेंद्रः प्रतापवान् ॥ त्वया सह विरोधेप्सुश्चिंतयामास राघव ॥ एतदर्थं म हाबाहो रावणेन दुरात्मना ॥ सुता जनकराजस्य हृता राम महावने इत्युक्तमिति तीर्थः । उत्तमस्त्रीलाभो भविष्यतीति हृष्ट इत्यर्थ उचितः । श्रुतस्यापि तस्यार्थस्य तामसत्वेन विस्मरणात् । ते पद्ये तु न यथाश्रुतार्थे वक्ष्यमाणविष्णुपुराणविरोधात् । किंतु श्रीरामस्य स्वमृत्योरवतारं श्रुत्वा त्वया सह मृत्युविघातकविरोधिच्छुस्तां हृतवान् । तद्वियोगे तव मरणमित्याशयेनेति तयोरर्थ इत्यन्ये । वस्तुवस्तु एतेषां श्लोकानां तद्गतां

नैवदेवीनगंधर्वीनाप्सरानचपन्नगी ॥ तुल्यासीमंतिनीतस्यमानुषीतुकुतोभवेत् ॥ ३० ॥ तस्यापहरभार्यांत्वंतंप्रमथ्यमहावने ॥ सीतयारहितोरामो नचैवहिभविष्यति ॥ ३१ ॥ अरोचयततद्वाक्यंरावणोराक्षसाधिपः ॥ चिंतयित्वामहाबाहुरकंपनमुवाचह ॥ ३२ ॥ बाढंकल्यंगमिष्यामिएकःसार थिनासह ॥ आनेष्यामिचवैदेहीमिमांहृष्टोमहापुरीम् ॥ ३३ ॥ तदेवमुक्त्वाप्रययौखरयुक्तेनरावणः ॥ रथेनादित्यवर्णेनदिशःसर्वाःप्रकाशयन् ॥ ३४ ॥ सरथोराक्षसेंद्रस्यनक्षत्रपथगोमहान् ॥ चंचूर्यमाणःशुशुभेजलदेचंद्रमाइव ॥ ३५ ॥ सदूरेचाश्रमंगत्वाताटकेयमुपागमत् ॥ मारीचेनार्चितो राजाभक्ष्यभोज्यैरमानुषैः ॥ ३६ ॥ तंस्वयंपूजयित्वातुआसनेनोदकेनच ॥ अर्थोपहितयावाचामारीचोवाक्यमब्रवीत् ॥ ३७ ॥ कच्चित्सुकुशलंराजँ ल्लोकानांराक्षसाधिप ॥ आशंकेनाधिजानेत्वंयतस्तूर्णमुपागतः ॥ ३८ ॥ एवमुक्तोमहातेजामारीचेनसरावणः ॥ ततःपश्चादिदंवाक्यमब्रवी द्वाक्यकोविदः ॥ ३९ ॥ आरक्षोमेहतस्तातरामेणाक्लिष्टकारिणा ॥ जनस्थानमवध्यंतत्सर्वंयुधिनिपातितम् ॥ ४० ॥ तस्यमेकुरुसाचिव्यंतस्यभार्या पहारणे ॥ राक्षसेंद्रवचःश्रुत्वामारीचोवाक्यमब्रवीत्॥४१॥ आख्याताकेनवासीतामित्ररूपेणशत्रुणा ॥ त्वयाराक्षसशार्दूलकोननंदतिनंदितः॥४२॥

सर्गाणां च प्रक्षिप्तत्वान्न ते प्रमाणभूताः । अतएव ते सर्गाः कतकादिभिस्तीर्थेन च न व्याख्याताः । एतेन एतदर्थं महाबाहो रावणेन दुरात्मना ॥ विज्ञायापहृता सीता त्वत्तो मरण कांक्षयेति तत्र पाठो दृश्यते । तत्र च त्वदुक्तार्थासंभव इत्यपास्तम् ॥ ३३ ॥ ३४ ॥ चंचूर्यमाणः भृशं चरन् । जलदसदृशं गगनं चंद्रसदृशो रथः ॥३५॥ मारीचाश्रमं पूर्वं रामनिरस्तस्य दुःखात्तपःप्रवृत्तेरेवमुक्तिः । ताटकेयं ताटकापत्यम् ॥३६॥ अर्थोपहितया किं प्रयोजनमत्रागमनामिति प्रयोजनयुक्तया ॥ ३७ ॥ कच्चित्सुकुशलमिति सामान्यप्रश्नः लोकानां राक्षसलोकानाम् । आशंके भयमिति शेषः । नाधिजाने क्षेममिति शेषः । यतस्त्वमेकाकी तूर्ण मागतः ॥ ३८ ॥ ३९ ॥ आरक्षः समाजस्थानं जनस्थानाख्यम् । आरक्षोंतपालः खरादिरित्यर्थ इत्यन्ये ॥ ४० ॥ ४१ ॥ सा सीता केनाख्याता हर्तव्यत्वेन कथिता येन कथिता स मित्ररूपस्ते शत्रुः । त्वया दानादिना नंदितः को न नंदति । निंदित इतिपाठे निंदितोवमानितः । कस्त्वां न नंदति न संतुष्यति । क्रुध्यतीति यावत् । त्वया तिरस्कृतस्तावकमैश्वर्यमसहमानः संस्त्वया सह कृत्रिममित्रभावं

प्राप्तः संस्तवेद्दर्शी बुद्धिमुपदिशतीति भावः ॥ ४२ ॥ सीतामिहानयेति को ब्रवीति तं ब्रवीहि । ईडार्षः । शृंगमौन्नत्यम् ॥ ४३ ॥ स च शत्रुरसंशयमित्यत्र हेतुमाह आशीविषेत्यादि च । यस्मात्त्वया प्रयोज्येनाशीविषमुखाद्दंष्ट्रामुद्धर्तुं उद्धारयितुमिच्छति ॥ ४४ ॥ केन शत्रुणाऽनेन कर्मणा एतत्कर्मोपदेशेन कापथं नाशमार्गमिति यावत् प्रहृतं वृथैव दुःखमुत्पादितमित्यर्थः ॥ ४५ ॥ राघवरूपो गंधहस्ती यस्य गंधं समाघ्रायान्ये गजाः पलायंते स गंधहस्ती मत्तगजः उदीक्षितुमपि इह देशे काले न युक्तः किं पुनर्योद्धुमित्यर्थः । विशुद्धवंशेभिजनोभिजननमेवाग्रहस्तः शुंडाग्रं यस्य तेजःप्रताप एव मदो यस्य सः । संस्थितौ समीचीनावस्थानौ दोषौ बाहू एव विषाणे दंतौ यस्य ॥४६॥ रणांतःस्थितिरूपा रणमध्यावस्थानरूपाः संधयो वालाश्च यस्य । विदग्धरक्षसां रणचतुराणां राक्षसमृगाणां हंता । शररूपैरंगैः पूर्णः ॥४७॥

सीतामिहानयस्वेतिकोब्रवीतिब्रवीहिमे ॥ रक्षोलोकस्यसर्वस्यकःशृंगंछेत्तुमिच्छति ॥ ४३ ॥ प्रोत्साहयतियश्चत्वांसचशत्रुरसंशयम् ॥ आशीविषमुखाद्दंष्ट्रामुद्धर्तुंचेच्छतित्वया ॥ ४४ ॥ कर्मणानेनकेनासिकापथंप्रतिपादितः ॥ सुखसुप्तस्यतेराजन्प्रहृतंकेनमूर्धनि ॥ ४५ ॥ विशुद्धवंशाभिजनाग्रहस्ततेजोमदःसंस्थितदोर्विषाणः ॥ उदीक्षितुंरावणनेहयुक्तःससंयुगेराघवगंधहस्ती ॥ ४६ ॥ असौरणांतःस्थितिसंधिवालोविदग्धरक्षोमृगहानृसिंहः ॥ सुप्तस्त्वयाबोधयितुंनशक्यःशरांगपूर्णोनिशितासिदंष्ट्रः ॥४७॥ चापापहारेभुजवेगपंकेशरोर्मिमालेसुमहाहवौघे ॥ नरामपातालमुखेतिघोरेप्रस्कंदितुंराक्षसराजयुक्तम् ॥ ४८ ॥ प्रसीदलंकेश्वरराक्षसेंद्रलंकांप्रसन्नोभवसाधुगच्छ ॥ त्वंस्वेषुदारेषुरमस्वनित्यंरामःसभार्योरमतांवनेषु ॥ ४९ ॥ एवमुक्तोदशग्रीवोमारीचेनसरावणः ॥ न्यवर्ततपुरींलंकांविवेशचगृहोत्तमम् ॥ ५० ॥ इत्यार्षे श्रीम० वा० आ० अरण्यकांडे एकत्रिंशः सर्गः ३१ ॥ ततःशूर्पणखादृष्ट्वासहस्राणिचतुर्दश ॥ हतान्येकेनरामेणरक्षसांभीमकर्मणाम् ॥ १ ॥ दूषणंचखरंचैवहतंत्रिशिरसंरणे ॥ दृष्ट्वापुनर्महानादान्ननादजलदोपमा ॥ २ ॥ सादृष्ट्वाकर्मरामस्यकृतमन्यैःसुदुष्करम् ॥ जगामपरमोद्विग्नालंकांरावणपालिताम् ॥ ३ ॥ साददर्शविमानाग्रेरावणंदीप्ततेजसम् ॥ उपोपविष्टंसचिवैर्मरुद्भिरिववासवम् ॥ ४ ॥ आसीनंसूर्यसंकाशेकांचनेपरमासने ॥ रुक्मवेदिगतंप्राज्यंज्वलंतमिवपावकम् ॥ ५ ॥ देवगंधर्वभूतानामृषीणांचमहात्मनाम् ॥ अजेयंसमरेघोरंव्यात्ताननमिवांतकम् ॥ ६ ॥

चाप एवापहारः प्राणिप्राणापहारको ग्राहो यस्मिन् । भुजयोः शरग्रहणसंधानमोक्षविषयो वेग एव पंको यस्मिन्दुस्तरत्वात्तत्र शरा एवोर्मिमालास्तरंगा यस्मिन् सुमहानाहव एव ओघो जलं यस्य तस्मिन् । राम एव पातालं पातालप्रविष्टमहार्णवस्तस्य मुखे वडवामुखरूपे प्रस्कंदितुं पतितुम् ॥४८॥४९॥५०॥ नृंशंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ ॥ तत इति ॥ १ ॥ महानादान्ननाद शोकादिति शेषः ॥ २ ॥ ३ ॥ ४ ॥ रुक्मवेदिं प्राप्तं हिरण्येष्टकचितां वेदिं प्राप्तं प्राज्यं भूर्याज्यहोमवंतम् अतएव ज्वलंतम् ॥ ५ ॥ ६ ॥

कुतो भवेत्तुल्येति शेषः ॥ ३० ॥ तं रामं प्रमथ्य केनाप्युपायेनोन्माथ्येति यावत् । तस्य भार्याम् अपहर बलात्कारेण हर ॥ ३१ ॥ अरोचयत इष्टत्वेन ज्ञातवान् । चिंतयित्वा रामस्य सीतया सहान वस्थानोपायम् ॥ ३२ ॥ कल्यं प्रातः । मांतमव्ययम् । हृष्ट इति । अकंपनवाक्यं श्रुत्वा त्रेतामुखे श्रीरामोवतरिष्यतीति सनत्कुमारवाक्यस्मरणाद्धृष्टः । तदेतदुत्तररामायणे स्पष्टम् । तत्र हि सनत्कुमारं प्रति विष्णुहस्तमृतानां का गतिरिति रावणेन पृष्टे तेन हतानां तल्लोकप्राप्तिरिति सनत्कुमारवचः श्रुत्वा । एवं श्रुत्वा महाबाहू राक्षसेंद्रः प्रतापवान् ॥ त्वया सह विरोधेप्सुश्चिंतयामास राघव ॥ एतदर्थं म हाबाहो रावणेन दुरात्मना ॥ सुता जनकराजस्य हृता राम महावने इत्युक्तमिति तीर्थः । उत्तमस्त्रीलाभो भविष्यतीति हृष्ट इत्यर्थ उचितः । श्रुतस्यापि तस्यार्थस्य तामसत्वेन विस्मरणात् । ते पद्ये तु न यथाश्रुतार्थे वक्ष्यमाणविष्णुपुराणविरोधात् । किंतु श्रीरामस्य स्वमृत्योरवतारं श्रुत्वा त्वया सह मृत्युविघातकविरोधेच्छुस्तां हृतवान् । तद्वियोगे तव मरणमित्याशयेनेति तयोरर्थ इत्यन्ये । वस्तुवस्तु एतेषां श्लोकानां तद्गतां

नैवदेवीनगंधर्वीनाप्सरानचपन्नगी ॥ तुल्यासीमंतिनीतस्यमानुषीतुकुतोभवेत् ॥ ३० ॥ तस्यापहरभार्यांत्वंतंप्रमथ्यमहावने ॥ सीतयारहितोरामो नचैवहिभविष्यति ॥ ३१ ॥ अरोचयततद्वाक्यंरावणोराक्षसाधिपः ॥ चिंतयित्वामहाबाहुरकंपनमुवाचह ॥ ३२ ॥ बाढंकल्यंगमिष्यामिएकःसार थिनासह ॥ आनेष्यामिचवैदेहीमिमांहृष्टोमहापुरीम् ॥ ३३ ॥ तदेवमुक्त्वाप्रययौखरयुक्तेनरावणः ॥ रथेनादित्यवर्णेनदिशःसर्वाःप्रकाशयन् ॥ ॥ ३४ ॥ सरथोराक्षसेंद्रस्यनक्षत्रपथगोमहान् ॥ चंचूर्यमाणःशुशुभेजलदेचंद्रमाइव ॥ ३५ ॥ सदूरेचाश्रमंगत्वाताटकेयमुपागमत् ॥ मारीचेनार्चितो राजाभक्ष्यभोज्यैरमानुषैः ॥ ३६ ॥ तंस्वयंपूजयित्वातुआसनेनोदकेनच ॥ अर्थोपहितयावाचामारीचोवाक्यमब्रवीत् ॥ ३७ ॥ कच्चित्सुकुशलंराजँ ल्लोकानांराक्षसाधिप ॥ आशंकेनाधिजानेत्वंयतस्तूर्णमुपागतः ॥ ३८ ॥ एवमुक्तोमहातेजामारीचेनसरावणः ॥ ततःपश्चादिदंवाक्यमब्रवी द्वाक्यकोविदः ॥ ३९ ॥ आरक्षोमेहतस्तातरामेणाक्लिष्टकारिणा ॥ जनस्थानमवध्यंतत्सर्वंयुधिनिपातितम् ॥ ४० ॥ तस्यमेकुरुसाचिव्यंतस्यभार्या पहरणे ॥ राक्षसेंद्रवचःश्रुत्वामारीचोवाक्यमब्रवीत् ॥ ४१ ॥ आख्याताकेनवासीतामित्ररूपेणशत्रुणा ॥ त्वयाराक्षसशार्दूलकोननंदतिनंदितः ॥ ४२ ॥

सर्गाणां च प्रक्षिप्तत्वान्न ते प्रमाणभूताः । अतएव ते सर्गाः कतकादिभिस्तीर्थेन च न व्याख्याताः । एतेनं एतदर्थं महाबाहो रावणेन दुरात्मना ॥ विज्ञायापहृता सीता त्वत्तो मरण कांक्षयेति तत्र पाठो दृश्यते । तत्र च त्वदुक्तार्थासंभव इत्यपास्तम् ॥ ३३ ॥ ३४ ॥ चंचूर्यमाणः भृशं चरन् । जलदसदृशं गगनं चंद्रसदृशो रथः ॥ ३५ ॥ मारीचाश्रमं पूर्वं रामनिरस्तस्य दुःखात्तपःप्रवृत्तेरेवमुक्तिः । ताटकेयं ताटकापत्यम् ॥ ३६ ॥ अर्थोपहितया किं प्रयोजनमत्रागमनामिति प्रयोजनयुक्तया ॥ ३७ ॥ कच्चित्सुकुशलमिति सामान्यप्रश्नः लोकानां राक्षसलोकानाम् । आशंके भयमिति शेषः । नाधिजाने क्षेममिति शेषः । यतस्त्वमेकाकी तूर्ण मागतः ॥ ३८ ॥ ३९ ॥ आरक्षः समाजस्थानं जनस्थानाख्यम् । आरक्षोंतपालः खरादिरित्यर्थ इत्यन्ये ॥ ४० ॥ ४१ ॥ सा सीता केनाख्याता हर्तव्यत्वेन कथिता येन कथिता स मित्ररूपस्ते शत्रुः । त्वया दानादिना नंदितः को न नंदति । निंदित इतिपाठे निंदितोवमानितः । कस्त्वां न नंदति न संतुष्यति । क्रुध्यतीति यावत् । त्वया तिरस्कृतस्तावकमैश्वर्यमसहमानः संस्त्वया सह कृत्रिममित्रभावं

प्राप्तः संस्तवेद्दर्शी बुद्धिमुपदिशतीति भावः ॥ ४२ ॥ सीतामिहानयेति को ब्रवीति तं ब्रवीहि । ईडार्षः । शृंगमौन्नत्यम् ॥ ४३ ॥ स च शत्रुरसंशयमित्यत्र हेतुमाह आशीविषेत्यादि च । यस्मात्त्वया प्रयो ज्येनाशीविषमुखाद्दंष्ट्रामुद्धर्तुं उद्धारयितुमिच्छति ॥ ४४ ॥ केन शत्रुणाऽनेन कर्मणा एतत्कर्मोपदेशेन कापथं नाशमार्गमिति यावत् प्रहृतं वृथैव दुःखमुत्पादितमित्यर्थः ॥ ४५ ॥ राघवरूपो गंधहस्ती यस्य गंधं समाघ्रायान्ये गजाः पलायंते स गंधहस्ती मत्तगजः उदीक्षितुमपि इह देशे काले न युक्तः किं पुनर्योद्धुमित्यर्थः । विशुद्धवंशेभिजनोभिजननमेवाग्रहस्तः शुंडाग्रं यस्य तेजःप्रताप एव मदो यस्य सः । संस्थितौ समीचीनावस्थानौ दोषौ बाहू एव विषाणे दंतौ यस्य ॥४६॥ रणांतःस्थितिरूपा रणमध्यावस्थानरूपाः संधयो वालाश्च यस्य । विदग्धरक्षसां रणचतुराणां राक्षसमृगाणां हंता । शररूपैरंगैः पूर्णः ॥४७॥

सीतामिहानयस्वेतिकोब्रवीतिब्रवीहिमे ॥ रक्षोलोकस्यसर्वस्यकःशृंगंछेत्तुमिच्छति ॥ ४३ ॥ प्रोत्साहयतियश्चत्वांसचशत्रुरसंशयम् ॥ आशीविषमुखाद्दंष्ट्रामुद्धर्तुंचेच्छतित्वया ॥ ४४ ॥ कर्मणानेनकेनासिकापथंप्रतिपादितः ॥ सुखसुप्तस्यतेराजन्प्रहृतंकेनमूर्धनि ॥ ४५ ॥ विशुद्धवंशाभिजनाग्रहस्ततेजोमदःसंस्थितदोर्विषाणः ॥ उदीक्षितुंरावणनेहयुक्तःससंयुगेराघवगंधहस्ती ॥ ४६ ॥ असौरणांतःस्थितिसंधिवालोविदग्धरक्षोमृगहानृसिंहः ॥ सुप्तस्त्वयाबोधयितुंनशक्यःशरांगपूर्णोनिशितासिदंष्ट्रः ॥४७॥ चापापहारेभुजवेगपंकेशरोर्मिमालेसुमहाहवौघे ॥ नरामपातालमुखेतिघोरेप्रस्कंदितुंराक्षसराजयुक्तम् ॥ ४८ ॥ प्रसीदलंकेश्वरराक्षसेंद्रलंकांप्रसन्नोभवसाधुगच्छ ॥ त्वंस्वेषुदारेषुरमस्वनित्यंरामःसभार्योरमतांवनेषु ॥ ४९ ॥ एवमुक्तोदशग्रीवोमारीचेनसरावणः ॥ न्यवर्ततपुरींलंकांविवेशचगृहोत्तमम् ॥ ५० ॥ इत्यार्षे श्रीम० वा० आ० अरण्यकांडे एकत्रिंशः सर्गः ३१ ॥ ततःशूर्पणखादृष्ट्वासहस्राणिचतुर्दश ॥ हतान्येकेनरामेणरक्षसांभीमकर्मणाम् ॥ १ ॥ दूषणंचखरंचैवहतंत्रिशिरसंरणे ॥ दृष्ट्वापुनर्महानादान्ननादजलदोपमा ॥ २ ॥ सादृष्ट्वाकर्मरामस्यकृतमन्यैःसुदुष्करम् ॥ जगामपरमोद्विग्नालंकांरावणपालिताम् ॥ ३ ॥ साददर्शविमानाग्रेरावणंदीप्ततेजसम् ॥ उपोपविष्टंसचिवैर्मरुद्भिरिववासवम् ॥ ४ ॥ आसीनंसूर्यसंकाशेकांचनेपरमासने ॥ रुक्मवेदिगतंप्राज्यंज्वलंतमिवपावकम् ॥ ५ ॥ देवगंधर्वभूतानामृषीणांचमहात्मनाम् ॥ अजेयंसमरेघोरंव्यात्ताननमिवांतकम् ॥ ६ ॥

चाप एवापहारः प्राणिप्राणापहारको ग्राहो यस्मिन् । भुजयोः शरग्रहणसंधानमोक्षविषयो वेग एव पंको यस्मिन्दुस्तरत्वात्तत्र शरा एवोर्मिमालास्तरंगा यस्मिन् सुमहानाहव एव ओघो जलं यस्य तस्मिन् । राम एव पातालं पातालप्रविष्टमहार्णवस्तस्य मुखे वडवामुखरूपे प्रस्कंदितुं पतितुम् ॥४८॥४९॥५०॥ नंशंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ ॥ तत इति ॥ १ ॥ महानादान्ननाद शोकादिति शेषः ॥ २ ॥ ३ ॥ ४ ॥ रुक्मवेदिं प्राप्तं हिरण्येष्टकचितां वेदिं प्राप्तं प्राज्यं भूर्याज्यहोमवंतम् अतएव ज्वलंतम् ॥ ५ ॥ ६ ॥

विमर्दो युद्धं वज्राशनिकृतव्रणामित्यनेन तदवध्यत्वमुक्तम् । ऐरावतदंताग्रैरुत्कृष्टं विलेखनं तेन जातो यः किणस्तदंकितवक्षसम् ॥७॥परिच्छदः छत्रचामरालंकरणादीनि ॥८ ॥ वैदूर्यं श्यामरक्तम् । श्याममित्यन्ये । स्वश रीरनद्धवैदूर्यकांतिसदृशशरीरकांतिमित्यर्थः । स्निग्धवैदूर्येति पाठो बहुलम्॥९॥१०॥क्षोभणं क्षोभकर्तारम्॥११॥१२॥परदाराभिमर्शनं विवृणोति पुरीमिति ॥१३॥१४॥ नलिनीं चैत्ररथवनमध्यवर्तिनीं सरसीम् ॥१५॥ उत्तिष्ठंतावुदयंतौ ॥१६॥१७॥ उपनहार उपहारत्वेन दत्तवान् ॥१८॥ यस्य संग्रामे मृत्युतोऽभयं मनुष्यातिरिक्ततो मरणभयहीन इत्यर्थः । मंत्रैः प्रातरनुवाक्यावस्तोत्रादिभिरभिष्टुतम् ॥१९॥ सोमं

देवासुरविमर्देषुवज्राशानिकृतव्रणम् ॥ ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ७ ॥ विंशद्भुजंदशग्रीवंदर्शनीयपरिच्छदम् ॥ विशालवक्षसंवीरंराजलक्षणलक्षितम् ॥ ८ ॥ नद्धवैदूर्यसंकाशंतप्तकांचनभूषणम् ॥ सुभुजंशुक्लदशनंमहास्यंपर्वतोपमम् ॥ ९ ॥ विष्णुचक्रनिपातैश्चशतशोदेवसंयुगे ॥ अन्यैः शस्त्रैःप्रहारैश्चमहायुद्धेषुताडितम् ॥ १० ॥ अहतांगैःसमस्तैस्तंदेवप्रहरणैस्तदा ॥ अक्षोभ्याणांसमुद्राणांक्षोभणंक्षिप्रकारिणम् ॥ ११ ॥ क्षेप्तारंपर्वताग्राणांसुराणांचप्रमर्दनम् ॥ उच्छेत्तारंचधर्माणांपरदाराभिमर्शनम् ॥१२॥सर्वदिव्यास्त्रयोक्तारंयज्ञविघ्नकरंसदा ॥ पुरींभोगवतींगत्वापराजित्यचवासुकिम् ॥ १३ ॥ तक्षकस्यप्रियांभार्यांपराजित्यजहारयः ॥ कैलासंपर्वतंगत्वाविजित्यनरवाहनम् ॥ १४ ॥ विमानंपुष्पकंतस्यकामगंवैजहारयः ॥ वनंचैत्ररथंदिव्यंनलिनींनंदनंवनम् ॥ १५ ॥ विनाशयतियःक्रोधादेवोद्यानानिवीर्यवान् ॥ चंद्रसूर्यौमहाभागावुत्तिष्ठंतौपरंतपौ ॥ १६ ॥ निवारयतिबाहुभ्यांयःशैलशिखरोपमः ॥ दशवर्षसहस्राणितपस्तप्त्वामहावने ॥ १७ ॥ पुरास्वयंभुवेधीरःशिरांस्युपजहारयः ॥ देवदानवगंधर्वपिशाचपतगोरगैः ॥ ॥ १८ ॥ अभयंयस्यसंग्रामेमृत्युतोमानुषाहृते ॥ मंत्रैरभिष्टुतंपुण्यमध्वरेषुद्विजातिभिः ॥ १९ ॥ हविर्धानेषुयःसोममुपहंतिमहाबलः ॥ प्राप्तयज्ञहरंदुष्टंब्रह्मघ्नंक्रूरकारिणम् ॥ २० ॥ कर्कशंनिरनुक्रोशंप्रजानामहितेरतम् ॥ रावणंसर्वभूतानांसर्वलोकभयावहम् ॥ २१ ॥ राक्षसीभ्रातरंक्रूरंसाददर्शमहाबलम् ॥ तंदिव्यवस्त्राभरणंदिव्यमाल्योपशोभितम् ॥ २२ ॥ आसनेसूपविष्टंतंकालेकालमिवोद्यतम् ॥ राक्षसेंद्रंमहाभागंपौलस्त्यकुलनंदनम् ॥ ॥ २३ ॥ उपगम्याब्रवीद्वाक्यंराक्षसीभयविह्वला ॥ रावणंशत्रुहंतारंमंत्रिभिःपरिवारितम् ॥ २४ ॥ तमब्रवीद्दीप्तविशाललोचनंप्रदर्शयित्वाभयलोभमोहिता ॥ सुदारुणंवाक्यमभीतचारिणीमहात्मनाशूर्पणखाविरूपिता ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ ततःशूर्पणखादीप्तारावणंलोकरावणम् ॥ अमात्यमध्येसंक्रुद्धापरुषंवाक्यमब्रवीत् ॥ १ ॥ प्रमत्तःकामभोगेषुस्वैरवृत्तोनिरंकुशः ॥ समुत्पन्नंभयंघोरंबोद्धव्यंनावबुध्यसे ॥ २ ॥

हविर्धानेषु सोमाभिषवशालासु उपहंति नाशयति प्राप्तान् दक्षिणाकालं प्राप्तान्यज्ञान् हरति तम् ॥ २० ॥ सर्वभूतानां रावणं आक्रोशशब्दकारिणम् ॥२१॥ राक्षसीं शूर्पणखा ॥ २२ ॥ काले प्रलयकाले । पौलस्त्या राक्षसाः ॥२३॥२४॥ उपगम्याब्रवीदित्युक्तम् । तस्य विवरणं तमिति प्रदर्शयित्वा स्वकं वैरूप्यमिति शेषः । भयं राक्षसवधेन रामजं लोभस्तत्सौंदर्यात्तद्विषयस्ताभ्यां मोहिता अभीतं यथा भवति तथा सर्वलोकेषु चराति तच्छीला ॥२५॥ मेंखेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणति० वाल्मी० आदिकाव्ये अरण्यकांडे द्वात्रिंशः सर्गः ॥३२॥ तत इति ॥१॥ कामभोगेषु प्रमतः अतिशयप्रसक्तः निरंकुशः सन्बोद्धव्यं

नावबुध्यस इत्यन्वयः ॥२॥ हेयोपादेयराजगुणानाह रावणस्य गुणहीनत्वं वक्तुम् सक्तमिति । ग्राम्यभोगः स्त्र्यादिभोगः । तदेवाह कामावृत्तमिति । कामचेष्टापरम् लुब्धं भोगलोलुपम् श्मशानाग्निमिव अस्पृश्यत्वेन साहश्यम् ॥३॥ तैः कार्यैरननुष्ठितैः ॥४॥ अयुक्तचारमनियोजितचारम् दुर्दर्शमुचिते काले प्रजाभ्यो दर्शनदानरहितम् अस्वाधीनं स्त्र्यादिपरतंत्रम् ॥ ५ ॥ विषयं देशम् अस्वाधीनं स्वभिन्नाधीनम् पूर्वं स्वाधीनम् देशं पश्चात्परायत्तं ये न रक्षंति स्वाधीनीकरणेनेति शेषः ते न प्रकाशंते सागरे मग्ना गिरय इव॥ ६॥आत्मवद्भिर्वशीकृतांतर्बहिरिंद्रियैः विगृह्य विरुध्य ॥७॥८॥ प्राकृतैः राजव्यवहारानर्हदासीदासजनैः ॥९॥१०॥ स्वजनं

सक्तंग्राम्येषुभोगेषुकामवृत्तंमहीपतिम् ॥ लुब्धंनबहुमन्यंतेश्मशानाग्निमिवप्रजाः ॥ ३ ॥ स्वयंकार्याणियःकालेनानुतिष्ठतिपार्थिवः ॥ सतुवैसहरा ज्येनतैश्चकार्यैर्विनश्यति ॥ ४ ॥ अयुक्तचारंदुर्दर्शमस्वाधीनंनराधिपम् ॥ वर्जयंतिनरादूरान्नदीपंकमिवद्विपाः ॥ ५ ॥ येनरक्षंतिविषयमस्वाधीनं नराधिपाः ॥ तेनवृद्ध्याप्रकाशंतेगिरयःसागरेयथा ॥ ६ ॥ आत्मवद्भिर्विगृह्यत्वंदेवगंधर्वदानवैः ॥ अयुक्तचारश्चपलःकथंराजाभविष्यसि ॥ ७ ॥ त्वंतुबालस्वभावश्चबुद्धिहीनश्चराक्षस ॥ ज्ञातव्यंतंनजानीषेकथंराजाभविष्यसि ॥ ८ ॥ येषांचाराश्चकोशश्चनयश्चजयतांवर ॥ अस्वाधीनानरेंद्राणां प्राकृतैस्तेजनैःसमाः ॥ ९ ॥ यस्मात्पश्यंतिदूरस्थान्सर्वानर्थान्नराधिपाः ॥ चारेणतस्मादुच्यंतेराजानोदीर्घचक्षुषः ॥ १० ॥ अयुक्तचारंमन्ये त्वांप्राकृतैःसचिवैर्युतः ॥ स्वजनंचयतःस्थानंनिहतंनावबुध्यसे ॥ ११ ॥ चतुर्दशसहस्राणिरक्षसांभीमकर्मणाम् ॥ हतान्येकेनरामेणखरश्चसहदूषणः ॥ १२ ॥ ऋषीणामभयंदत्तंकृतक्षेमाश्चदंडकाः ॥ धर्षितंचजनस्थानंरामेणाक्लिष्टकारिणा ॥ १३ ॥ त्वंतुलुब्धःप्रमत्तश्चपराधीनश्चराक्षस ॥ विषये स्वेसमुत्पन्नंयद्भयंनावबुध्यसे ॥ १४ ॥ तीक्ष्णमल्पप्रदातारंप्रमत्तंगर्वितंशठम् ॥ व्यसनेसर्वभूतानिनाभिधावंतिपार्थिवम् ॥ १५ ॥ अतिमानिनमग्रा ह्यमात्मसंभावितंनरम् ॥ क्रोधनंव्यसनेहंतिस्वजनोपिनराधिपम् ॥ १६ ॥ नानुतिष्ठतिकार्याणिभयेषुनबिभेतिच ॥ क्षिप्रंराज्याच्च्युतोदीनस्तृणै स्तुल्योभवेदिह ॥ १७ ॥ शुष्ककाष्ठैर्भवेत्कार्यंलोष्टैरपिचपांसुभिः ॥ नतुस्थानात्परिभ्रष्टैःकार्यंस्याद्वसुधाधिपैः ॥ १८ ॥ उपभुक्तंयथावासःस्रजोवामृ दितायथा ॥ एवंराज्यात्परिभ्रष्टःसमर्थोपिनिरर्थकः ॥ १९ ॥ अप्रमत्तश्चयोराजासर्वज्ञोविजितेंद्रियः ॥ कृतज्ञोधर्मशीलश्चसराजातिष्ठतेचिरम् ॥ २० ॥ नयनाभ्यांप्रसुप्तोवाजागर्तिनयचक्षुषा ॥ व्यक्तक्रोधप्रसादश्चसराजापूज्यतेजनैः ॥ २१ ॥ त्वंतुरावणदुर्बुद्धिर्गुणैरेतैर्विवर्जितः ॥ यस्यतेऽविदितश्चा रैरक्षसांसुमहान्वधः ॥ २२ ॥

स्वस्य जना यस्मिन् तत् ॥ ११ ॥ १२ ॥ कृतं क्षेमं येषु ते कृतक्षेमाः ॥ १३ ॥ १४ ॥ तीक्ष्णं स्वामात्यादिविषये तैक्ष्ण्यादिगुणविशिष्टम् शठो गूढविप्रियकारी तादृशम् राजानं सर्वभूतानि भृत्यामात्या दिसर्वजना नाभिधावंति तद्रक्षणाय न प्रवर्तंते ॥१५॥ अग्राह्यं स्वीयैरनुपसर्प्यम् आत्मसंभावितम् आत्मना स्वेनैव संभावितं बहुमानं प्राप्तम् अक्रोधनम् अस्थाने क्रोधवंतम् ॥ १६ ॥ नानुतिष्ठति यस्य अमात्यादिस्व जनोऽपीत्याकर्षः स राज्याच्च्युतो भवेदित्यन्वयः ॥ १७ ॥ १८ ॥ १९ ॥ सर्वज्ञः स्वपरसर्ववृत्तांतज्ञः ॥ २० ॥ प्रसुप्तो वा प्रसुप्तोपि व्यक्तक्रोधप्रसादः फलदानेन ॥ २१ ॥ अविदितः येन त्वया न ज्ञात

इत्यर्थः ॥ २२ ॥ परेषामवमंता केवलमवमंतैव नतु तन्नाशविषयबुद्धिः न चिरात्क्षिमं विपत्स्यसे आपदं प्राप्स्यसीत्यर्थः ॥ २३ ॥ धनेनाक्षयकोशेन दर्पेण राजत्वाहंकारेण बलेन प्राणबलेन चतुरंगबलेन च चिंतयामास । मारीचः कलहं निवारयति एषा कलहार्थं प्रोत्साहयति किमत्र कर्तव्यमिति विचारयामासेत्यर्थः ॥ २४ ॥ वैरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ तत इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ किंरूप इत्यस्योत्तरम् दीर्घबाहुरित्यादि ॥ ५ ॥ कश्च राम इत्यस्योत्तरम् दशरथात्मजः कनकांगदं कनकवलयभूषितं चापम् ॥ ६ ॥ ७ ॥

परावमंताविषयेषुसंगवान्नदेशकालप्रविभागतत्त्ववित् ॥ अयुक्तबुद्धिर्गुणदोषनिश्चयेविपन्नराज्योनचिराद्विपत्स्यते ॥ २३ ॥ इतिस्वदोषान्परिकीर्तितांस्तयासमीक्ष्यबुद्ध्याक्षणदाचरेश्वरः ॥ धनेनदर्पेणबलेनचान्वितोविचिंतयामासचिरंसरावणः ॥ २४ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ ततःशूर्पणखांदृष्ट्वाब्रुवतींपरुषंवचः ॥ अमात्यमध्येसंक्रुद्धःपरिपप्रच्छरावणः ॥ १ ॥ कश्चरामःकथंवीर्यःकिंरूपःकिंपराक्रमः ॥ किमर्थंदंडकारण्यंप्रविष्टश्चसुदुस्तरम् ॥ २ ॥ आयुधंकिंचरामस्ययेनतेराक्षसाहताः ॥ खरश्चनिहतःसंख्येदूषणस्त्रिशिरास्तथा ॥ ३ ॥ तत्त्वंब्रूहिमनोज्ञांगिकेनत्वंचविरूपिता ॥ इत्युक्ताराक्षसेंद्रेणराक्षसीक्रोधमूर्च्छिता ॥४॥ ततोरामंयथान्यायमाख्यातुमुपचक्रमे ॥ दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनांबरः ॥ ५ ॥ कंदर्पसमरूपश्चरामोदशरथात्मजः ॥ शक्रचापनिभंचापंविकृष्यकनकांगदम् ॥ ६ ॥ दीप्तान्क्षिपतिनाराचान्सर्पानिवमहाविषान् ॥ नाददानंशरान्घोरान्विमुंचंतंमहाबलम् ॥ ७ ॥ नकार्मुकंविकर्षंतंरामंपश्यामिसंयुगे ॥ हन्यमानंतुतत्सैन्यंपश्यामिशरवृष्टिभिः ॥ ८ ॥ इंद्रेणेवोत्तमंसस्यमाहतंत्वश्मवृष्टिभिः ॥ रक्षसांभीमवीर्याणांसहस्राणिचतुर्दश ॥ ९ ॥ निहतानिशरैस्तीक्ष्णैस्तेनैकेनपदातिना ॥ अर्धाधिकमुहूर्तेनखरश्चसहदूषणः ॥ १० ॥ ऋषीणामभयंदत्तंकृतक्षेमाश्चदंडकाः ॥११॥ एकाकथंचिन्मुक्ताहंपरिभूयमहात्मना ॥ स्त्रीवधंशंकमानेनरामेणविदितात्मना ॥ १२ ॥ भ्राताचास्यमहातेजागुणतस्तुल्यविक्रमः ॥ अनुरक्तश्चभक्तश्चलक्ष्मणोनामवीर्यवान् ॥ १३ ॥ अमर्षीदुर्जयोजेताविक्रांतोबुद्धिमान्बली ॥ रामस्यदक्षिणोबाहुर्नित्यंप्राणोबहिश्चरः ॥ १४ ॥ रामस्यतुविशालाक्षीपूर्णेंदुसदृशानना ॥ धर्मपत्नीप्रियानित्यंभर्तुःप्रियहितेरता॥१५॥सासुकेशीसुनासोरूःसुरूपाचयशस्विनी ॥ देवतेववनस्यास्यराजतेश्रीरिवापरा॥१६॥तप्तकांचनवर्णाभारक्ततुंगनखीशुभा ॥ सीतानामवरारोहावैदेहीतनुमध्यमा॥१७॥नैवदेवीनगंधर्वीनयक्षीनचकिन्नरी ॥ तथारूपामयानारीदृष्टपूर्वामहीतले॥१८॥यस्यसीताभवेद्भार्यायंचतुष्टापरिष्वजेत् ॥ अभिजीवेत्ससर्वेषुलोकेष्वपिपुरंदरात् ॥१९॥ सासुशीलावपुःश्लाघ्यारूपेणाप्रतिमाभुवि ॥ तवानुरूपाभार्यासात्वंचतस्याःपतिर्वरः॥२०॥

॥ ८ ॥ ९ ॥ खरश्च सहदूषणो हत इत्यर्थः ॥ १० ॥ किमर्थं दंडकारण्यं प्रविष्ट इत्यस्योत्तरम् ऋषीणामित्यादि ॥ ११ ॥ पूर्वतनं स्ववृत्तं गोपयंत्याह एकेति । परिभूय नासाकर्णहीनां कृत्वा ॥ १२ ॥ ॥ १३ ॥ रामस्य दक्षिणो बाहुरित्यनेन सर्वतत्कार्यधुरंधरत्वम् । बहिश्चरः प्राण इत्यनेन निरतिशयप्रेमास्पदत्वं सूच्यते ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ यस्य सीता भार्या यं च दृष्टा परिष्वजेत्स

एव सर्वेषु कालेषु च पुरंदरादपि अभ्यधिकं जीवेत् तस्या लक्ष्म्यवतारत्वादिति व्यंग्यम् ॥ १९ ॥ २० ॥ तवानेतुमुद्यताहमिति मृषावचो रावणसंतोषार्थम् ॥ २१ ॥ २२ ॥ भार्यात्वे भार्यात्वेन संपादने ॥ २३ ॥ २४ ॥ एषां रामादीनामशक्तिं तेषां राज्याद्यभावाच्चकारात्तव शक्तिं च विज्ञाय सीता तव भार्यात्वे क्रियताम् । भार्यात्वे तद्व्यवहारे यथा विषयो भवति तथा क्रियताम् यत्यतामित्यर्थः ॥ २५ ॥ अद्य कृत्यमेतत्कालोचितकृत्यं कर्तुं योग्यं तत्प्रतिपत्तुं निश्चित्य ज्ञात्वा प्रवर्तयितुमर्हसीत्यर्थः ॥ २६ ॥ चरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अर० चतुस्त्रिंशः सर्गः ॥ ३४ ॥ तत इति शूर्पं शोणितभाजनम् । नखविदूषण इति धातुः । शूर्पेण शोणितभाजनेन यज्ञादिसत्क्रियां नखयति विदूषयतीति शूर्पणखेति तीर्थः । शूर्पाकारनखवतीत्यर्थे संज्ञायां शूर्पणखा अन्यत्र

तांतुविस्तीर्णजघनांपीनोत्तुंगपयोधराम् ॥ भार्यार्थेंतुतवानेतुमुद्यताहंवराननाम् ॥ २१ ॥ विरूपितास्मिक्रूरेणलक्ष्मणेनमहाभुज ॥ तांतुदृष्ट्वाद्यवैदेहींपूर्णचंद्रनिभाननाम् ॥ २२ ॥ मन्मथस्यशराणांचत्वंविधेयोभविष्यसि ॥ यदितस्यामभिप्रायोभार्यात्वेतवजायते ॥ शीघ्रमुद्ध्रियतांपादोजयार्थमिहदक्षिणः ॥ २३ ॥ रोचतेयदितेवाक्यंममैतद्राक्षसेश्वर ॥ क्रियतांनिर्विशंकेनवचनंममरावण ॥ २४ ॥ विज्ञायैषामशक्तिंचक्रियतांचमहाबल ॥ सीतातवानवद्यांगीभार्यात्वेराक्षसेश्वर ॥ २५ ॥ निशम्यरामेणशरैरजिह्मगैर्हताञ्जनस्थानगतान्निशाचरान् ॥ खरंचहृष्ट्वानिहतंचदूषणंत्वमद्यकृत्यंप्रतिपत्तुमर्हसि ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअरण्यकांडेचतुस्त्रिंशःसर्गः ॥ ३४ ॥ ततःशूर्पणखावाक्यंतच्छ्रुत्वारोमहर्षणम् ॥ सचिवानभ्यनुज्ञायकार्यंबुद्ध्वाजगामह ॥ १ ॥ तत्कार्यमनुगम्यांतर्यथावदुपलभ्यच ॥ दोषाणांचगुणानांचसंप्रधार्यबलाबलम् ॥ २ ॥ इतिकर्तव्यमित्येवकृत्वानिश्चयमात्मनः ॥ स्थिरबुद्धिस्ततोरम्यांयानशालांजगामह ॥ ३ ॥ यानशालांततोगत्वाप्रच्छन्नंराक्षसाधिपः ॥ सूतंसंचोदयामासरथःसंयुज्यतामिति ॥ ४ ॥ एवमुक्तःक्षणेनैवसारथिर्लघुविक्रमः ॥ रथंसंयोजयामासतस्याभिमतमुत्तमम् ॥ ५ ॥ कामगंरथमास्थायकांचनंरत्नभूषितम् ॥ पिशाचवदनैर्युक्तंखरैःकनकभूषणैः ॥ ६ ॥ मेघप्रतिमनादेनसतेनधनदानुजः ॥ राक्षसाधिपतिःश्रीमान्ययौनदनदीपतिम् ॥ ७ ॥ सश्वेतबालव्यजनःश्वेतच्छत्रोदशाननः ॥ स्निग्धवैदूर्यसंकाशस्तप्तकांचनभूषणः ॥ ८ ॥ दशग्रीवोविंशतिभुजोदर्शनीयपरिच्छदः ॥ त्रिदशारिर्मुनींद्रघ्नोदशशीर्षइवाद्रिराट् ॥ ९ ॥ कामगंरथमास्थायशुशुभेराक्षसाधिपः ॥ विद्युन्मंडलवान्मेघःसबलाकइवांबरे ॥ १० ॥

शूर्पनखीति परे । रोमहर्षणम् शूर्पणखावाक्यस्य कामविकारजनकतया रोमांचकरत्वम् । सचिवेभ्यस्तद्वाक्यस्य प्रतिपाद्यं कार्यं बुद्ध्वा तत्संमतिपूर्वकं तत्कर्तव्यत्वेन निर्धार्य तानभ्यनुज्ञाय दत्ताभ्यनुज्ञान् कृत्वा जगाम मारीचाश्रममिति शेषः ॥ १ ॥ तत्कार्यं सीतापहाररूपम् अंतश्चित्ते अनुगम्योद्दिश्य दोषाणां गुणानां च स्वरूपं यथावदुपलभ्य सीतापहारे एतावंतो गुणा इति निश्चित्य बलाबलं यथावत्संप्रधार्य इत्येव कर्तव्यमित्यात्मनः स्वस्य निश्चयं कृत्वा अकंपनशूर्पणखाभ्यामुक्तत्वात्सीताहरणमवश्यं कर्तव्यमिति निश्चित्य यानशालां जगाम ॥ २ ॥ ३ ॥ दुष्टे कर्मणि प्रवृत्तौ वृद्धादिनिरोधशंकया प्रच्छन्नं गूढम् ॥ ४ ॥ ५ ॥ देवयोनिभेदाः पिशाचाः वदनभागे तत्सदृशैरित्यर्थः ॥ ६ ॥ नदनदीपतिः समुद्रस्तं तीर्त्वा ययौ ॥ ७ ॥ ८ ॥ ९ ॥ विद्युत्स्थाने आभरणानि मेघस्थाने

रावणः बलाकास्थाने छत्रम् ॥ १० ॥ शैलसहितसागरानूपं तत्कूलम् तस्यैव वर्णनं नानापुष्पैरित्यादिना ॥ ११ ॥ १२ ॥ कदल्यटविः कदलीवनं तेन शोभावत् ॥ १३ ॥ अत्यंतं अतिशयेन पर्णवातादि रूपो नियत आहारो येषां तैः ॥१४॥ अजो ब्रह्मा तत्पुत्रैर्वैखानसैरयोनिजैः प्रसिद्धैः माषैर्माषसंज्ञकैः ॥ १५ ॥ १६ ॥ अमृताशिभिः अमृतभोजनैः ॥ १७ ॥ प्लवा मंडूकाः वैदूर्यप्रस्तरं वैदूर्यसदृशश्यामप्रस्तरम् सागरतेजसा सागरोर्मिविभवेन स्निग्धं सांद्रं शीतलम् ॥ १८ ॥ १९ ॥ अभिसंपतन् गच्छन्मार्गवशाद्विमानानि गंधर्वाप्सरसश्च ददर्श ॥ २० ॥ निर्यासरूपरसयुक्तमूलानां चंदनानामित्यर्थः । यद्वा निर्यासरसस्य

सशैलसागरानूपंवीर्यवानवलोकयन् ॥ नानापुष्पफलैर्वृक्षैरनुकीर्णंसहस्रशः ॥ ११ ॥ शीतमंगलतोयाभिःपद्मिनीभिःसमंततः ॥ विशालैराश्रमपदैर्वे दिमद्भिरलंकृतम् ॥ १२ ॥ कदल्यटविसंशोभंनालिकेरोपशोभितम् ॥ सालैस्तालैस्तमालैश्चतरुभिश्चसुपुष्पितैः ॥ १३ ॥ अत्यंतनियताहारैः शोभितंपरमर्षिभिः ॥ नागैःसुपर्णैर्गंधर्वैःकिन्नरैश्चसहस्रशः ॥ १४ ॥ जितकामैश्चसिद्धैश्चचारणैश्चोपशोभितम् ॥ आजैर्वैखानसैर्माषैर्वालखिल्यै र्मरीचिपैः ॥ १५ ॥ दिव्याभरणमाल्याभिर्दिव्यरूपाभिरावृतम् ॥ क्रीडारतविधिज्ञाभिरप्सरोभिःसहस्रशः ॥ १६ ॥ सेवितंदेवपत्नीभिःश्रीमती भिरुपासितम् ॥ देवदानवसंघैश्चचरितंत्वमृताशिभिः ॥१७॥ हंसक्रौंचप्लवाकीर्णंसारसैःसंप्रसादितम् ॥ वैदूर्यप्रस्तरंस्निग्धंसांद्रंसागरतेजसा ॥१८॥ पाण्डुराणिविशालानिदिव्यमाल्ययुतानिच ॥ तूर्यगीताभिजुष्टानिविमानानिसमंततः ॥ १९ ॥ तपसाजितलोकानांकामगान्यभिसंपतन् ॥ गंधर्वा प्सरसश्चैवददर्शधनदानुजः ॥ २० ॥ निर्यासरसमूलानांचंदनानांसहस्रशः ॥ वनानिपश्यन्सौम्यानिघ्राणतृप्तिकराणिच ॥ २१ ॥ अगुरूणांचमु ख्यानांवनान्युपवनानिच ॥ तक्कोलानांचजात्यानांफलानांचसुगंधिनाम् ॥ २२ ॥ पुष्पाणिचतमालस्यगुल्मानिमरिचस्यच ॥ मुक्तानांचसमूहा निशुष्यमाणानितीरतः ॥ २३ ॥ शैलानिप्रवरांश्चैवप्रवालनिचयांस्तथा ॥ कांचनानिचशृंगाणिराजतानितथैवच ॥ २४ ॥ प्रस्रवाणिमनोज्ञानिप्रस न्नान्यद्भुतानिच ॥ धनधान्योपपन्नानिस्त्रीरत्नैरावृतानिच ॥२५॥ हस्त्यश्वरथगाढानिनगराणिविलोकयन् ॥ तंसमंसर्वतःस्निग्धंमृदुसंस्पर्शमारुतम् ॥ ॥ २६ ॥ अनूपेसिंधुराजस्यददर्शत्रिदिवोपमम् ॥ तत्रापश्यत्समेघाभंन्यग्रोधंमुनिभिर्वृतम् ॥ २७ ॥ समंताद्यस्यताःशाखाःशतयोजनमायताः ॥ यस्यहस्तिनमादायमहाकायंचकच्छपम् ॥ २८ ॥ भक्षार्थंगरुडःशाखामाजगाममहाबलः ॥ तस्यतांसहसाशाखांभारेणपतगोत्तमः ॥ २९ ॥

मूलानां उपादानकारणानां गुग्गुलादिवृक्षाणां चंदनानां च वनानि पश्यन् ॥ २१ ॥ जात्यानामुत्तमानाम् तक्कोलाः सुगंधफला वृक्षविशेषास्तेषां वनानि पश्यन् ॥ २२ ॥ २३ ॥ शैलानि शिलासमूहान् ॥ ॥ २४ ॥ प्रस्रवाणि निर्झराः ॥ २५ ॥ समं समभूतलं देशम् ॥ २६ ॥ तत्र समुद्रानूपे ॥ २७ ॥ यस्य दिव्यवटस्य प्रसंगात्तन्माहात्म्यं कविराह यस्येतिषड्भिः श्लोकैः । गरुडोऽमृताहरणप्रस्तावे भक्षार्थं महाकायं गजं कच्छपं चादाय क्वचित्स्थित्वा भक्षणाय यस्य शाखां जगाम गत्वा च यस्य शाखां भारेण बभंज । तस्या भग्नशाखाया अधो वैखानसाद्या अनेके ऋषयः समागता बभूवुस्तेषां शाखापातेन नाशो

मा भूदिति तां शाखां तौ गजकच्छपौ च महाबलत्वादादायान्यत्र जगाम तदा गच्छन्नेव तौ शाखां चैकपादेन धृत्वांतरिक्ष एव तदामिषं गजकच्छपरूपं भक्षयित्वा तया शाखया प्रक्षिप्तया निषादविषयं निषाद देशं हत्वा मुनींश्च बधान्मोक्षयित्वा महर्षं लेभे ॥२८॥ २९ ॥३० ॥३१ ॥ ३२ ॥ ३३ ॥ स तेनैव हर्षेणामिषभक्षणनिषादनाशनमुनिरक्षणजसंतोषेण ॥३४॥ अयोजालानि अयःशृंखलनिर्मितजालानि रत्नम यगेहोपरि पक्षिप्रवेशपरिहाराय बद्धानि बलान्निर्मथ्य छित्त्वा रत्नमयगृहं च भित्त्वा गुप्तममृतं महेंद्रभवनादाजहार ॥ ३५ ॥ सुपर्णेन कृतं भग्नैकमहाशाखात्वरूपं लक्षणं यस्य तम् ॥ ३६ ॥ ३७ ॥ ३८ ॥

सुपर्णःपर्णबहुलांबभंजाथमहाबलः ॥ तत्रवैखानसामाषावालखिल्यामरीचिपाः ॥ ३० ॥ आजावभूवुर्धूम्राश्चसंगताःपरमर्षयः ॥ तेषांदयार्थंगरुड स्तांशाखांशतयोजनम् ॥ ३१ ॥ भग्नामादायवेगेनतौचोभौगजकच्छपौ ॥ एकपादेनधर्मात्माभक्षयित्वातदामिषम् ॥ ३२ ॥ निषादविषयंहत्वा शाखयापतगोत्तमः ॥ प्रहर्षमतुलंलेभेमोक्षयित्वामहामुनीन् ॥ ३३ ॥ सतुतेनप्रहर्षेणद्विगुणीकृतविक्रमः ॥ अमृतानयनार्थंवैचकारमतिमान्मतिम् ॥ ३४ ॥ अयोजालानिनिर्मथ्यभित्त्वारत्नगृहंवरम् ॥ महेंद्रभवनाद्गुप्तमाजहारामृतंततः ॥ ३५ ॥ तंमहर्षिगणैर्जुष्टंसुपर्णकृतलक्षणम् ॥ नाम्नासुभद्रं न्यग्रोधंददर्शधनदानुजः ॥ ३६ ॥ तंतुगत्वापरंपारंसमुद्रस्यनदीपतेः ॥ ददर्शाश्रममेकांतेपुण्येरम्येवनांतरे ॥ ३७॥ तत्रकृष्णाजिनधरंजटामंडलधा रिणम् ॥ ददर्शनियताहारंमारीचंनामराक्षसम् ॥ ३८ ॥ सरावणःसमागम्यविधिवत्तेनरक्षसा ॥ मारीचेनार्चितोराजासर्वकामैरमानुषैः ॥ ३९ ॥ तंस्वयंपूजयित्वाचभोजनेनोदकेनच ॥ अथोपहितयावाचामारीचोवाक्यमब्रवीत् ॥ ४० ॥ कच्चित्तेकुशलंराजँल्लंकायांराक्षसेश्वर ॥ केनार्थेनपुनस्त्वं वैतूर्णमेवइहागतः ॥ ४१ ॥ एवमुक्तोमहातेजामारीचेनसरावणः ॥ ततःपश्चादिदंवाक्यमब्रवीद्वाक्यकोविदः ॥ ४२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ मारीचश्रूयतांतातवचनंममभाषतः ॥ आर्तोऽस्मिममचार्तस्यभवान्हिपरमागतिः ॥ १ ॥ जानीषेत्वंजनस्थानंभ्रातायत्रखरोमम ॥ दूषणश्चमहाबाहुःस्वसाशूर्पणखाचमे ॥ २ ॥ त्रिशिराश्चमहाबाहूराक्षसःपिशिताशनः ॥ अन्येचबहवः शूरालब्धलक्षानिशाचराः ॥ ३ ॥ वसन्तिमयोगेनअधिवासंचराक्षसाः ॥ बाधमानामहारण्येमुनीन्येधर्मचारिणः ॥४॥ चतुर्दशसहस्राणिरक्षसांभी मकर्मणाम् ॥ शूराणांलब्धलक्षाणांखरचित्तानुवर्तिनाम् ॥ ५ ॥

सर्वकामैरभिलषितसर्वभोग्यवस्तुभिरर्चितो बभूवेति शेषः ॥३९॥४०॥ पूजोत्तरं कुशलं पृच्छति कच्चिदिति ॥४१॥ इदं अग्रिमसर्ववक्ष्यमाणम् ॥ ४२ ॥ ओंरभमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण तिलके आदिकाव्ये अरण्यकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ ॥ मारीचेति । तातेत्युपलालनेन कार्यं वदिष्यन्पूर्वं वृत्तं स्मारयति ॥ १ ॥ जानीषे इति । भ्रात्रादयो मन्नियोगाज्जनस्थानं प्राप्य वसंतीति त्वं जानी षे किलेत्यन्वयः ॥ २ ॥ ॥ लब्धलक्षाः लब्धयुद्धोत्साहाः ॥ ३ ॥ अथ तत्र स्थित्वा क्रियमाणं वृत्तं च जानीषे इत्याह अधिवासं चेति । मुनीन्बाधमाना बाधहेतवे हेतौ शानच् अधिवासं च कुर्वंति

मन्नियोगादिति शेषः । अधिवास उपद्रव इति कतकः । रतिवासमितिपाठे रतिवासं रत्या प्रीत्या वासो यत्र कर्मणि तथा ॥ ४ ॥ ५ ॥ चतुर्दशसहस्राणि यानि संति ते त्विदानीमित्यन्वयः वसमानाः वसंतः रामेण संयुगे संगताः तेन सह समरमकार्षुरित्यर्थः परमत्यर्थमायत्ताः सन्नद्धाः ॥ ६ ॥ ७ ॥ किंचिदपि परुषमनुक्त्वा शरैः शरमोक्षणव्यापारैर्व्यापारितं संजातव्यापारं कृतम् ॥ ८ ॥ ९ ॥ अथ भगिनीवैरूप्यं निष्कारणं मन्यमानः क्रोधाद्दूषयति रामम् पित्रेत्यादिना । क्षीणजीवितः निरपराधं स्त्रीवैरूप्यकरणादेव तथा त्वं मन्यते ॥ १० ॥ अत एवाशीलोऽजितेंद्रियश्च अस्थाने क्रोधात् ॥ ११ ॥ सत्त्वं बलमेव केवल माश्रित्य न तु धर्मम् ॥ १२ ॥ १३ ॥ १४ ॥ भ्रातृभिः कुंभकर्णादिभिः नाभिचिंतये न गणयामि ॥ १५ ॥ उपायतः उपायेष्वित्यर्थः । तत्रैव हेतुगर्भं विशेषणम् महामायेत्यादि ॥ १६ ॥ मम साहाय्ये

तेत्विदानींजनस्थानेवसमानामहाबलाः ॥ संगताःपरमायत्तारामेणसहसंयुगे ॥ ६ ॥ नानाशस्त्रप्रहरणाःखरप्रमुखराक्षसाः ॥ तेनसंजातरोषेणरामेणरणमूर्धनि ॥ ७ ॥ अनुक्त्वापरुषंकिंचिच्छरैर्व्यापारितंधनुः ॥ चतुर्दशसहस्राणिरक्षसामुग्रतेजसाम् ॥ ८ ॥ निहतानिशरैर्दीप्तैर्मानुषेणपदातिना ॥ खरश्चनिहतःसंख्येदूषणश्चनिपातितः ॥ ९ ॥ हत्वात्रिशिरसंचापिनिर्भयादंडकाःकृताः ॥ पित्रानिरस्तःक्रुद्धेनसभार्यःक्षीणजीवितः ॥ १० ॥ सहंतातस्यसैन्यस्यरामःक्षत्रियपांसनः ॥ अशीलःकर्कशस्तीक्ष्णोमूर्खोलुब्धोऽजितेंद्रियः ॥ ११ ॥ त्यक्तधर्मात्वधर्मात्माभूतानामहितेरतः ॥ येनवैरंविनारण्येसत्वमास्थायकेवलम् ॥ १२ ॥ कर्णनासापहारेणभगिनीमेविरूपिता ॥ अस्यभार्यांजनस्थानात्सीतांसुरसुतोपमाम् ॥ १३ ॥ आनयिष्यामिविक्रम्यसहायस्तत्रमेभव ॥ त्वयाह्यहंसहायेनपार्श्वस्थेनमहाबल ॥ १४ ॥ भ्रातृभिश्चसुरान्सर्वान्नाहमत्राभिचिंतये ॥ तत्सहायोभवत्वंमेसमर्थोह्यसिराक्षस ॥ १५ ॥ वीर्येयुद्धेचदर्पेचनह्यस्तिसदृशस्तव ॥ उपायतोमहाञ्छूरोमहामायाविशारदः ॥ १६ ॥ एतदर्थमहंप्राप्तस्त्वत्समीपंनिशाचर ॥ शृणुतत्कर्मसाहाय्येयत्कार्यंवचनान्मम ॥ १७ ॥ सौवर्णस्त्वंमृगोभूत्वाचित्रोरजतबिंदुभिः ॥ आश्रमेतस्यरामस्यसीतायाःप्रमुखेचर ॥ १८ ॥ त्वांतुनिःसंशयंसीतादृष्ट्वातुमृगरूपिणम् ॥ गृह्यतामितिभर्तारंलक्ष्मणंचाभिधास्यति ॥ १९ ॥ ततस्तयोरपायेतुशून्येसीतांयथासुखम् ॥ निराबाधोहरिष्यामिराहुश्चंद्रप्रभामिव ॥ २० ॥ ततःपश्चात्सुखंरामेभार्याहरणकर्शिते ॥ विस्रब्धंप्रहरिष्यामिकृतार्थेनांतरात्मना ॥ २१ ॥ तस्यरामकथांश्रुत्वामारीचस्यमहात्मनः ॥ शुष्कंसमभवद्वक्त्रंपरित्रस्तोबभूवच ॥ २२ ॥ ओष्ठौपरिलिहञ्छुष्कौनेत्रैरनिमिषैरिव ॥ मृतभूतइवार्तस्तुरावणंसमुदैक्षत ॥ २३ ॥ सरावणंत्रस्तविषण्णचेतामहावनेरामपराक्रमज्ञः ॥ कृतांजलिस्तत्त्वमुवाचवाक्यंहितंचतस्मैहितमात्मनश्च ॥ २४ ॥ इत्यार्षे श्रीम० वा० आदि० अरण्य० षट्त्रिंशः सर्गः ॥३६॥ तच्छ्रुत्वाराक्षसेंद्रस्यवाक्यंवाक्यविशारदः ॥ प्रत्युवाचमहातेजामारीचोराक्षसेश्वरम् ॥ १ ॥ सुलभाःपुरुषाराजन्सततंप्रियवादिनः ॥ अप्रियस्यचपथ्यस्यवक्ताश्रोताचदुर्लभः ॥ २ ॥

यत्कर्म त्वया कार्यं तत्कर्म शृण्वित्यन्वयः ॥ १७ ॥ १८ ॥ १९ ॥ अपाये अपगमे ॥ २० ॥ ततः सुखं क्लेशरहितं यथा भवति तथा विस्रब्धं यथा भवति तथा च प्रहरिष्यामि ॥ २१ ॥ रामकथा रामप्रसंगं श्रुत्वा मारीचस्त्रस्तो बभूव । तेन त्रासेन च तस्य मुखं शुष्कमभवत् ॥२२॥ चिंतावशादनिमिषैरिव नेत्रैरुपलक्षित इति शेषः । मृतभूतो मृतप्रायः॥२३॥आत्मनो हितमित्यार्षी षष्ठी॥२४॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदि० अरण्यकांडे षट्त्रिंशः सर्गः ३६ ॥ ॥ तदिति ॥ १ ॥ प्रियवादिनः स्वामिहिताहितविचारमुपेक्ष्य राज्ञ आपातप्रियतया संतोषाय तत्कालम

धुरवाक्यवक्तारः पुरुषाः सुलभाः । अपितु अप्रियस्यापि तत्कालमप्रियतया प्रतीयमानस्यापि कालांतरे पथ्यस्य वचसो वक्ता भृत्यस्तस्य च भोक्ताऽहितवत्प्रतिभासमानमपि इदं पथ्यमेवेति ग्रहीता राजा विवेकी दुर्लभः । अतो मयोच्यमानं आपाततोऽप्रियमिव भासमानमपि उदर्के परमहितं शृण्विति शेषः ॥२॥ अबोधे हेतुरयुक्तचारत्वं अनियुक्तचारत्वम् ॥३॥ एतदबोधकृतश्च तत्रानर्थो भावीत्याह अपीति । रक्षसां स्वस्तीत्यार्षं अपि स्वस्ति भवेदपि क्षेमं संपद्येतापि किम् । तव दुर्बुद्धिनिवृत्त्येति शेषः । तथा संक्रुद्धो रामो लोकमराक्षसं न कुर्यादपि किम् । एवमग्रेपि बोध्यम् ॥ ४ ॥ ५ ॥ ६ ॥ पापमंत्रितः सः हि कृतकर्तव्यार्थ विचारः ॥ ७ ॥ एवं महावीर्यत्वं रामे प्रतिपाद्य रावणोक्तदूषणानि निराचष्टे न च पित्रेत्यादि ॥ ८ ॥ तैक्ष्ण्याभावे हेतुः सर्वभूतहिते रतत्वम् ॥ ९ ॥ कैकेय्या वंचितं पितरं दृष्ट्वा तं सत्यवादिनं करिष्या

ननूनंबुध्यसेराममहावीर्यंगुणोन्नतम् ॥ अयुक्तचारश्चपलोमहेंद्रवरुणोपमम् ॥ ३ ॥ अपिस्वस्तिभवेत्तातसर्वेषामपिरक्षसाम् ॥ अपिरामोनसंक्रुद्धःकुर्याल्लोकानराक्षसान् ॥ ४ ॥ अपितेजीवितांतायनोत्पन्नाजनकात्मजा ॥ अपिसीतानिमित्तंचनभवेद्व्यसनंमहत् ॥ ५ ॥ अपित्वामीश्वरंप्राप्यकामवृत्तंनिरंकुशम् ॥ नविनश्येत्पुरीलंकात्वयासहसराक्षसा ॥ ६ ॥ त्वद्विधःकामवृत्तोहिदुःशीलःपापमंत्रितः ॥ आत्मानंस्वजनंराष्ट्रंसराजाहंतिदुर्मतिः ॥७॥ नचपित्रापरित्यक्तोनामर्यादःकथंचन ॥ नलुब्धोनचदुःशीलोनचक्षत्रियपांसनः ॥८॥ नचधर्मगुणैर्हीनःकौसल्यानंदवर्धनः ॥ नचतीक्ष्णोहिभूतानांसर्वभूतहितेरतः ॥ ९ ॥ वंचितंपितरंदृष्ट्वाकैकेय्यासत्यवादिनम् ॥ करिष्यामीतिधर्मात्माततःप्रव्रजितोवनम् ॥ १० ॥ कैकेय्याःप्रियकामार्थंपितुर्दशरथस्यच ॥ हित्वाराज्यंचभोगांश्चप्रविष्टोदंडकावनम् ॥ ११ ॥ नरामःकर्कशस्तातनाविद्वान्नाजितेंद्रियः ॥ अनृतंनश्रुतंचैवनैवत्वंवक्तुमर्हसि ॥ १२ ॥ रामोविग्रहवान्धर्मःसाधुःसत्यपराक्रमः ॥ राजासर्वस्यलोकस्यदेवानामिववासवः ॥१३ ॥ कथंनुतस्यवैदेहींरक्षितांस्वेनतेजसा ॥ इच्छसेप्रसभंहर्तुंप्रभामिवविवस्वतः ॥ १४ ॥ शरार्चिषमनाधृष्यंचापखड्गेंधनंरणे ॥ रामाग्निंसहसादीप्तंनप्रवेष्टुंत्वमर्हसि ॥ १५ ॥ धनुर्व्यादितदीप्तास्यंशरार्चिषममर्षणः ॥ चापबाणधरंतीक्ष्णंशत्रुसेनापहारिणम् ॥ १६ ॥ राज्यंसुखंचसंत्यज्यजीवितंचेष्टमात्मनः ॥ नात्यासादयितुंतातरामांतकमिहार्हसि ॥ १७ ॥ अप्रमेयंहितत्तेजोयस्यसाजनकात्मजा ॥ नत्वंसमर्थस्तांहर्तुंरामचापाश्रयांवने ॥ १८ ॥

मीति वनं स्वयमेव प्रव्रजितो नतु किंचित्पापात् पित्रा प्रवासित इत्यर्थः ॥ १० ॥ कैकेय्याः प्रियस्य कामस्य मनोरथस्य पूरणार्थम् ॥ ११ ॥ अनृतं न श्रुतं चैव अनृतप्रसंगमपि न जानाति तेन तत्कथनं दूरापास्तमित्यर्थः । एवं वक्तुं रामं दुर्गुणं वक्तुम् ॥ १२ ॥ १३ ॥ अथ सीतापहारस्याशक्यत्वमाह कथं न्विति । स्वेन तेजसा पातिव्रत्यवैभवेन । किंच तस्य रामस्य स्वेन तेजसा सहजप्रतापेनेत्यर्थः । ॥ १४ ॥ शरार्चिषं शरज्वालं खड्गचापपदेन तद्गतशस्त्रवस्तद्रूपमिंधनं यस्य ॥ १५ ॥ रामेंतकरूपकोपपादकविशेषणान्याह धनुरिति । धनुरेव व्यादितं व्यात्तमिति यावत् । दीप्तं ज्वालादीप्तमास्यं यस्य रामरूपांतकस्य ज्वालादीप्तत्वमेव शरार्चिषमित्यनेनोक्तम् ॥ १६ ॥ अत्यासादयितुमत्यंतं प्राप्तुम् ॥१७॥ अप्रमेयं हि तत्तेज इत्यनेनावाङ्मनसगोचरत्वं ध्वनितम् । यस्य सेत्यनेन तस्या अपि तत्त्वं सूचितम्॥१८॥

नरसिंहस्येत्यनेन हिरण्यकशिपुप्रभृतिहंताऽयमेवेति सूचितम् । नित्यमनुव्रतेत्यनेन तस्यास्तच्छक्तित्वं सूचितम् ॥ १९ ॥ न सेति । रजस्तमःप्रधानेन त्वादृशेनेत्यर्थः ॥ २० ॥ व्यर्थमिममुद्यमं कृत्वा तेन किमपि हितामित्यर्थः । तेन चेत्त्वं रणे दृष्टस्तदा तदंतं तद्दर्शनावसानं तव जीवितमित्यर्थः ॥ २१ ॥ जीवितमिति जीविताद्युद्दिश्य स त्वं विभीषणपुरोगमैर्धर्मिष्ठैर्मंत्रयित्वा अनंतरं निश्चयं कृत्वा दोषगुणबलाबलनिर्धारणविषयम् आत्मनो रामस्य च दोषगुणबलाबलं संप्रधार्य विचार्य तदनंतरं स्वस्य रामस्य च बलं तत्त्वतो ज्ञात्वा निश्चित्य तव आत्मनो हितमिदमिति निश्चित्य यत्क्षमं तत्कर्तुमर्हसी त्यर्थः ॥ २२ ॥ २३ ॥२४॥ सत्सचिवांतर्गतस्य मम त्वेष निश्चय इत्याह अहं त्विति । इदं वक्ष्यमाणम् ॥ २५ ॥ शंरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये

तस्यवैनरसिंहस्यासिंहोरस्कस्यभामिनी ॥ प्राणेभ्योपिप्रियतराभार्यानित्यमनुव्रता ॥ १९ ॥ नसाधर्षयितुंशक्यामैथिल्योजस्विनःप्रिया ॥ दीप्तस्येवहुताशस्यशिखासीतासुमध्यमा ॥ २० ॥ किमुद्यमंव्यर्थमिमंकृत्वातेराक्षसाधिप ॥ दृष्टश्चेत्त्वंरणेतेनतदंतमुपजीवितम् ॥ २१ ॥ जीवितंचसुखंचैवराज्यंचैवसुदुर्लभम् ॥ ससर्वैःसचिवैःसार्धंविभीषणपुरस्कृतैः ॥ २२ ॥ मंत्रयित्वासधर्मिष्ठैःकृत्वानिश्चयमात्मनः ॥ दोषाणांचगुणानांचसंप्रधार्यबलाबलम् ॥ २३ ॥ आत्मनश्चबलंज्ञात्वाराघवस्यचतत्त्वतः ॥ हितंहितवनिश्चित्यक्षमंत्वंकर्तुमर्हसि ॥ २४ ॥ अहंतुमन्येतवनक्षमंरणेसमागमंकोसलराजसूनुना ॥ इदंहिभूयःशृणुवाक्यमुत्तमंक्षमंचयुक्तंचनिशाचराधिप ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ कदाचिदप्यहंवीर्यात्पर्यटन्पृथिवीमिमाम् ॥ बलंनागसहस्रस्यधारयन्पर्वतोपमः ॥ १ ॥ नीलजीमूतसंकाशस्तप्तकांचनकुंडलः ॥ भयंलोकस्यजनयन्किरीटीपरिघायुधः ॥ २ ॥ व्यचरन्दंडकारण्यमृषिमांसानिभक्षयन् ॥ विश्वामित्रोथधर्मात्मामद्वित्रस्तोमहामुनिः ॥ ३ ॥ स्वयंगत्वादशरथंनरेंद्रमिदमब्रवीत् ॥ अयंरक्षतुमांरामःपर्वकालेसमाहितः ॥४॥ मारीचान्मेभयंघोरंसमुत्पन्नंनरेश्वर ॥ इत्येवमुक्तोधर्मात्माराजादशरथस्तदा ॥ ५ ॥ प्रत्युवाचमहाभागंविश्वामित्रंमहामुनिम् ॥ ऊनद्वादशवर्षोयमकृतास्त्रश्चराघवः ॥ ६ ॥ कामंतुममतत्सैन्यंमयासहगमिष्यति ॥ बलेनचतुरंगेणस्वयमेत्यनिशाचरम् ॥ ७ ॥ वधिष्यामिमुनिश्रेष्ठशत्रुंतवयथेप्सितम् ॥ एवमुक्तःसतुमुनीराजानमिदमब्रवीत् ॥ ८ ॥ रामान्नान्यद्बलंलोकेपर्याप्तंतस्यरक्षसः ॥ देवतानामपिभवान्समरेष्वभिपालकः ॥ ९ ॥ आसीत्तवकृतंकर्मत्रिलोकविदितंनृप ॥ काममस्तिमहत्सैन्यंतिष्ठत्विहपरंतप ॥ १० ॥ बालोप्येषमहातेजाःसमर्थस्तस्यनिग्रहे ॥ गमिष्येराममादायस्वस्तितेऽस्तुपरंतप ॥ ११ ॥ इत्येवमुक्त्वासमुनिस्तमादायनृपात्मजम् ॥ जगामपरमप्रीतोविश्वामित्रःस्वमाश्रमम् ॥ १२ ॥

अरण्यकांडे सप्तत्रिंशः सर्गः ॥३७॥ ॥ अथ स्वानुभवसिद्धं रामबलमाह कदाचिदित्यादि । अहमपीति संबंधः ॥ १ ॥ २ ॥ मद्वित्रस्तः मत्तो वित्रस्त इत्यर्थः ॥ ३ ॥ पर्वकाले यागकाले ॥४॥ ५ ॥ पंचदश वर्षोऽपि तथा दशरथेनानूदितोप्यत्यंतबाल्यद्योतनाय अतिबालेनापीदृशं कृतं किमधुना वाच्यमिति रावणास्यात्यंतभयाय मारीचेन तथा दशरथेनोक्त इत्यूनद्वादशवर्ष इत्युक्तम् । ऊनषोडशवर्षोयमिति पाठांतरम् ॥ ६ ॥ ७ ॥ ॥ ८ ॥ यद्यपि भवान्देवानामपि सहायकृत् आसीत् । अन्यच्च तव त्वया कृतं कर्म त्रिलोकविदितं त्रिषु लोकेषु विदितं तथापि रामादन्यद्बलं तस्य रक्षसो न पर्याप्तमतः कामं तव बलं यदस्ति तदत्रैव तिष्ठतु

तदुपयोगाभावात् । अत एष बालोपि यतस्तन्निग्रहसमर्थोऽतो देय एवेति शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ उपस्थितो रामः तद्रक्षणार्थं समीपं प्राप्तः सन् ॥ १३ ॥ अजातव्यंजनः श्मश्र्वादिपुंस्त्वचिह्नप्रादुर्भावहीन इत्यर्थः । एकवस्त्रधरः ब्रह्मचर्ये स्थितः । शिखी काकपक्षधरः । कनकमालयोपलक्षितः ॥ १४ ॥ १५ ॥ आजगामेत्युत्तमपुरुषः । अत्र पारोक्ष्यार्थकलिटा दैवपारवश्यादेवाहमागतो न तु तदागमनं मम प्रत्यक्षमिति ध्वनयति । यद्वा बहुकालितत्वेन विस्मृतत्वाद्वा तत्त्वारोपः । आर्षो वा लिट् । आश्रमांतरम् आश्रममध्यम् । दत्तवरो ब्रह्मदत्तदेवावध्यत्ववरः ॥१६॥ प्रविष्टोहं तेन न दृष्ट इत्यन्वयः ॥ १७ ॥

तंतथादंडकारण्येयज्ञमुद्दिश्यदीक्षितम् ॥ बभूवोपस्थितोरामश्चित्रंविस्फारयन्धनुः ॥ १३ ॥ अजातव्यंजनःश्रीमान्बालःश्यामःशुभेक्षणः ॥ एकवस्त्रधरोधन्वीशिखीकनकमालया ॥ १४ ॥ शोभयन्दंडकारण्यंदीप्तेनस्वेनतेजसा ॥ अदृश्यततदारामोबालचंद्रइवोदितः ॥१५॥ ततोऽहंमेघसंकाशस्तप्तकांचनकुंडलः ॥ बलीदत्तवरोदर्पादाजगामाश्रमांतरम् ॥ १६ ॥ तेनदृष्टःप्रविष्टोऽहंसहसैवोद्यतायुधः ॥ मांतुदृष्ट्वाधनुःसज्यमसंभ्रांतश्चकार ॥ १७ ॥ अवजानन्नसंमोहाद्बालोऽयमितिराघवम् ॥ विश्वामित्रस्यतांवेदिमभ्यधावंकृतत्वरः ॥ १८ ॥ तेनमुक्तस्ततोबाणःशितःशत्रुनिबर्हणः ॥ तेनाहंताडितःक्षिप्तःसमुद्रेशतयोजने ॥ १९ ॥ नेच्छतातातमांहंतुंतदावीरेणरक्षितः ॥ रामस्यशरवेगेननिरस्तोभ्रांतचेतनः ॥ २० ॥ पातितोऽहंतदातेनगंभीरेसागरांभसि ॥ प्राप्यसंज्ञांचिरात्तातलंकांप्रतिगतःपुरीम् ॥ २१ ॥ एवमस्मितदामुक्तःसहायास्तेनिपातिताः ॥ अकृतास्त्रेणरामेणबालेनाक्लिष्टकर्मणा ॥ २२ ॥ तन्मयावार्यमाणस्तुयदिरामेणविग्रहम् ॥ करिष्यस्यापदंघोरांक्षिप्रंप्राप्यनशिष्यसि ॥ २३ ॥ क्रीडारतिविधिज्ञानांसमाजोत्सवदर्शिनाम् ॥ रक्षसांचैवसंतापमनर्थंचाहरिष्यसि ॥ २४ ॥ हर्म्यप्रासादसंबाधांनानारत्नविभूषिताम् ॥ द्रक्ष्यसित्वंपुरींलंकांविनष्टांमैथिलीकृते ॥ ॥ २५ ॥ अकुर्वतोपिपापानिशुचयःपापसंश्रयात् ॥ परपापैर्विनश्यंतिमत्स्यानागह्रदेयथा ॥ २६ ॥ दिव्यचंदनदिग्धांगान्दिव्याभरणभूषितान् ॥ द्रक्ष्यस्यभिहतान्भूमौतवदोषात्तुराक्षसान् ॥ २७ ॥ हृतदारान्सदारांश्चदशविद्रवतोदिशः ॥ हतशेषानशरणान्द्रक्ष्यसित्वंनिशाचरान् ॥ २८ ॥ शरजालपरिक्षिप्तामग्निज्वालासमावृताम् ॥ प्रदग्धभवनांलंकांद्रक्ष्यसित्वमसंशयम् ॥ २९ ॥

॥ १८ ॥ शतयोजने तटात्तत्पर्यंतदेशस्थिते समुद्रे क्षिप्तः ॥ १९ ॥ नेच्छता अनिच्छता एतच्च रक्षणं केवलं कृपाजन्यमिति मारीचाशयः । भाविकार्यार्थमिति वस्तुतत्त्वम् ॥ २० ॥ २१ ॥ ये मे सहाया अपरे गतास्ते निपातिता इत्यन्वयः ॥ २२ ॥ २३ ॥ अनर्थं मरणरूपम् आहरिष्यसि यत्नात्संपादयिष्यसि ॥ २४ ॥ २५ ॥ संगदोषाद्रक्षःकुलमात्रस्य नाशः प्राप्नोतीत्याह अकुर्वंतोपीति । परपापैः परेषां पापात्मनां पापैर्निमित्तैः । नागह्रदे सर्पयुक्तह्रदे सर्पनिग्रहाय प्रविष्टेन राजमेरितधीवरादिना गरुडेन वा यथा प्रसंगान्मत्स्या नश्यंति तद्वत् ॥२६॥२७॥ हृतदारान्परिहृतदारांस्त्यक्तदारानिति यावत् ॥२८॥२९॥

तव परिग्रहेंतःपुरे प्रमदानां सहस्राणि अतस्तास्वेव रमस्व नान्यत्र मनो धेहीत्यर्थः ॥३०॥३१॥३२॥३३ ॥ वैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥ ॥ पुनः स्वानुभवसिद्धं रामवृत्तमाह एवमिति । तदा विश्वामित्रयज्ञरक्षणसमये तेन कथंचिन्मुक्तोस्मि इदानीं मौढावस्थायामपि यद्वृत्तं मद्विषयं यदुत्तरं यत्सर्वलोकोत्तरं तदतिरि कासाध्यं तच्छृणुष्व शृण्विति यावत् ॥ १ ॥ पूर्वं तथाकृतः प्राणसंकटं प्रापितोप्यहमनिर्विण्णः अप्राप्ततद्विषयप्रवृत्तिवैराग्यः ताभ्यां मृगरूपाभ्यां सहितोहमपि मृगरूपः सम्प्रविष्ट इत्यन्वयः ॥ २ ॥

परदाराभिमर्शात्तुनान्यत्पापतरंमहत् ॥ प्रमदानांसहस्राणितवराजन्परिग्रहे ॥ ३० ॥ भवस्वदारनिरतःस्वकुलंरक्षराक्षसान् ॥ मानंवृद्धिंचराज्यं चजीवितंचेष्टमात्मनः ॥ ३१ ॥ कलत्राणिचसौम्यानिमित्रवर्गंतथैवच ॥ यदीच्छसिचिरंभोक्तुंमाकृथारामविप्रियम् ॥ ३२ ॥ निवार्यमाणःसुहृदा मयाभृशंप्रसह्यसीतांयदिधर्षयिष्यसि ॥ गमिष्यसिक्षीणवलःसवांधवोयमक्षयंरामशरास्तजीवितः ॥३३॥ इत्यार्षे श्रीम०वा०आ०अर०अष्टत्रिंशः सर्गः ॥ ३८॥ एवमस्मितदामुक्तःकथंचित्तेनसंयुगे ॥ इदानीमपियद्वृत्तंतच्छृणुष्वयदुत्तरम् ॥ १ ॥ राक्षसाभ्यामहंद्वाभ्यामनिर्विण्णस्तथाकृतः ॥ सहितोमृगरूपाभ्यांप्रविष्टोदंडकावने ॥ २ ॥ दीप्तजिह्वोमहादंष्ट्रस्तीक्ष्णशृंगोमहावलः ॥ व्यचरन्दंडकारण्यंमांसभक्षोमहामृगः ॥ ३ ॥ अग्निहोत्रे षुतीर्थेषुचैत्यवृक्षेषुरावण ॥ अत्यंतघोरोव्यचरंस्तापसांस्तान्प्रधर्षयन् ॥ ४ ॥ निहत्यदंडकारण्येतापसान्धर्मचारिणः ॥ रुधिराणिपिवंस्तेषांतन्मां सानिचभक्षयन् ॥ ५ ॥ ऋषिमांसाशनःक्रूरस्त्रासयन्वनगोचरान् ॥ तदारुधिरमत्तोऽहंव्यचरंदंडकावनम् ॥ ६ ॥ तदाहंदंडकारण्येविचरन्धर्मदूषकः॥ आसादयंतदारामंतापसंधर्ममाश्रितम् ॥ ७॥ वैदेहींचमहाभागांलक्ष्मणंचमहारथम् ॥ तापसंनियताहारंसर्वभूतहितेरतम् ॥ ८ ॥ सोऽहंवनगतंरामं परिभूयमहावलम् ॥ तापसोऽयमितिज्ञात्वापूर्ववैरमनुस्मरन् ॥ ९ ॥ अभ्यधावंसुसंक्रुद्धस्तीक्ष्णशृंगोमृगाकृतिः ॥ जिघांसुरकृतप्रज्ञस्तंप्रहा रमनुस्मरन् ॥१०॥ तेनत्यक्तास्त्रयोवाणाःशिताःशत्रुनिवर्हणाः॥ विकृष्यसुमहच्चापंसुपर्णानिलतुल्यगाः ॥ ११ ॥ तेवाणावज्रसंकाशाःसुघोरारक्तभो जनाः ॥ आजग्मुःसहिताःसर्वेत्रयःसन्नतपर्वणः ॥ १२ ॥ पराक्रमज्ञोरामस्यशठोदृष्टभयःपुरा ॥ समुत्क्रांतस्ततोमुक्तस्तावुभौराक्षसौहतौ ॥ १३ ॥ शरेणमुक्तोरामस्यकथंचित्प्राप्यजीवितम् ॥ इहप्रव्राजितोयुक्तस्तापसोऽहंसमाहितः ॥ १४ ॥ वृक्षेवृक्षेहिपश्यामिचीरकृष्णाजिनांवरम् ॥ गृहीतधनुषं रामंपाशहस्तमिवांतकम् ॥ १५ ॥ अपिरामसहस्राणिभीतःपश्यामिरावण ॥ रामभूतमिदंसर्वमरण्यंप्रतिभातिमे ॥ १६ ॥

तदेवाह दीप्तेति ॥ ३ ॥ ४ ॥ ५ ॥ वनगोचरानृषीनन्यजीवांश्च ॥ ६ ॥ आसादयं प्राप्तवान् तापसं धर्मं तापससंबंधिधर्ममाश्रितम् ॥ ७ ॥ ८ ॥ ९ ॥ अकृतप्रज्ञः अकृतविचारः तं प्रहारं पूर्वं रामदत्त महारम् ॥ १० ॥ ११ ॥ सन्नतपर्वणः अदीर्घत्वमार्षम् ॥ १२ ॥ शठो गूढविप्रियकारी दृष्टभयः रामादिति शेषः समुत्क्रांतः पलायितः ॥ १३ ॥ प्रव्राजितः परिव्राजितः कृतसकलदुर्वृत्तपरित्यागः युक्तो

योगाभ्यासरतः अतएव तापसस्तपोनिष्ठः समाहितः स्थिरांतःकरणः ॥ १४ ॥ १५ ॥ १६ ॥ रहिते रामरहितेपि वने उद्भ्रमामि भीतो भवामीव चेतनः सुषुप्तौ नष्टचैतन्योपि तद्दर्शनवशाल्लब्धचैतन्यः प्रल पामीत्यर्थः ॥ १७ ॥ रकारादीनीति एवं च साक्षाद्दर्शने यत्त्रासः स वक्तुमशक्य इति भाव' । तन्नाम्नैकदेशसत्तावदपि नाम भयजनकं किं वक्तव्यं संपूर्णतन्नाम्नो भयजनकत्वमिति । स्थाने हृषीकेश तव प्रकीर्त्येति गीताश्लोकार्थोत्र व्यंग्यः ॥ १८ ॥ १९ ॥ तस्माद्रामेण रणे युध्यस्व एतदुचितं न तु तद्दारापहार उचितः सर्वकुलनाशकत्वात् युद्धे एकस्यैव नाशादिति भावः । मुख्यपक्षमाह क्षमां वेति । यदि मां जीवंतं द्रष्टुमिच्छसि तदा रामकथा न कार्या तत्कथाया रक्षस्तेजोपहारकत्वादुभयोरपि तेजोनाशे मरणादप्यधिका दुःखावस्थेति भावः ॥ २० ॥ साधवः अकृतपरापचाराः युक्ता योगवंतः अनुष्ठिता इति कर्तरि निष्ठा ॥ २१ ॥ परापराधेन तवापराधेनेत्यर्थः विनशेयं विनशिष्यामि । अतः हे राक्षस यत्ते क्षमं रणः क्षमा वा तत्त्वमेव कुरु अहं तु त्वां नानुयामि त्वद्बुद्धिं नानुगच्छामीत्यर्थः ॥ २२ ॥ तत्र हेतुमाह

राममेवहिपश्यामिरहितेराक्षसेश्वर ॥ दृष्ट्वास्वप्नगतंराममुद्भ्रमामीवचेतनः ॥ १७ ॥ रकारादीनिनामानिरामत्रस्तस्यरावण ॥ रत्नानिचरथाश्चैववित्रासं जनयंतिमे ॥१८॥ अहंतस्यप्रभावज्ञोनयुद्धंतेनतेक्षमम् ॥ बलिंवानमुचिंवापिहन्याद्धिरघुनंदनः ॥ १९ ॥ रणेरामेणयुद्ध्यस्वक्षमांवाकुरुरावण ॥ नतेरामकथाकार्यायदिमांद्रष्टुमिच्छसि ॥ २० ॥ बहवःसाधवोलोकेयुक्ताधर्ममनुष्ठिताः ॥ परेषामपराधेनविनष्टाःसपरिच्छदाः ॥ २१ ॥ सोऽहंपराप राधेनविनशेयंनिशाचर ॥ कुरुयत्तेक्षमंतत्त्वमहंत्वांनानुयामिवै ॥ २२ ॥ रामश्चहिमहातेजामहासत्त्वोमहाबलः ॥ अपिराक्षसलोकस्यभवेदंतकरो ऽपिहि ॥ २३ ॥ यदिशूर्पणखाहेतोर्जनस्थानगतःखरः ॥ अतिवृत्तोहतःपूर्वंरामेणाक्लिष्टकर्मणा ॥ अत्रब्रूहियथातत्त्वंकोरामस्यव्यतिक्रमः ॥ २४ ॥ इदंवचोबंधुहितार्थिनामयायथोच्यमानंयदिनाभिपत्स्यसे ॥ सबांधवस्त्यक्ष्यसिजीवितंरणेहतोऽद्यरामेणशरैरजिह्मगैः ॥२५॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ मारीचस्यतुतद्वाक्यंक्षमंयुक्तंचरावणः ॥ उक्तोनप्रतिजग्राहमर्तुकामइवौ षधम् ॥ १ ॥ तंपथ्यहितवक्तारंमारीचंराक्षसाधिपः ॥ अब्रवीत्परुषंवाक्यमयुक्तंकालचोदितः ॥ २ ॥ दुष्कुलैतदयुक्तार्थंमारीचमयिकथ्यते ॥ वाक्यं निष्फलमत्यर्थंबीजमुप्तमिवोखरे ॥ ३ ॥

रामश्च हीति । तेजः पराक्रमः सत्त्वं बुद्धिबलम् बलशरीरम् हि यतो महातेजस्त्वादिगुणै रामः प्रसिद्धोऽत ईदृशो रामः राक्षसलोकस्यांतकरः हि निश्चयेन भवेदिति अपि संभाव्यते अतो नानुयामि त्वद्बुद्धिं सकल राक्षसकुलनाशभियेति भावः ॥ २३ ॥ खरादिनाशस्य तत्कृतान्यायमूलत्वात् तत्र क्षमैव युक्तेत्याह यदीति । सीताहननप्रयत्नदोषनिरूपितशूर्पणखाहेतोरतिवृत्तस्तूष्णीमवस्थितेन रामेण यदि शूर्पणखावाक्य जनितरोषात्स्वयं योद्धुं गतो रामेण हतस्तदा को रामस्य व्यतिक्रमोऽन्यायस्तत्त्वमेव ब्रूहि ॥ २४ ॥ सिद्धांतमाह इदमिति । यथोच्यमानं परमार्थत उच्यमानं यदि नाभिपत्स्यसे नांगीकरिष्यसि तदा रणे हतः सबांधवस्त्वं जीवितं त्यक्ष्यसि इति मया अद्यैव निश्चीयते ॥ २५ ॥ शैरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ मारीचस्य मारीचेन क्षमं निवृत्तिसमर्थं युक्तं न्याय्यं कालोचितं च वाक्ययुक्त उपदिष्टो रावणो मुमूर्षुरौषधमिव तदुक्तं न प्रतिजग्राह ॥ १ ॥ २ ॥ शत्रोर्मानुषस्य स्तावकत्वाक्रोधेनाह दुष्कुलेति । अयुक्तार्थं

राजचित्तमतिकूलत्वादयुक्तार्थं निष्फलं तमोगुणाक्रांते मम हृदये तस्यानवकाशात् ॥ ३ ॥ संयुगे पापशीलत्वादिगुणकस्य स्त्रीताटकाहंतृत्वात् रामस्य भार्याहरणविषये स्थितं मां तद्वाक्यैर्भेत्तुं निवर्तयितुं न शक्यमित्यर्थः । मामिति द्वितीया छांदसत्वात ॥ ४ ॥ तत्र मूर्खत्वमुपपादयति य इति । प्राकृतमसारम् स्त्री कैकेयी एकपदे द्राक् ॥ ५ ॥ संयुगे खरहंतुरित्यन्वयः ॥ ६ ॥ ७ ॥ अपि चापृष्टोत्तरप्रलापस्त्वासंगत इत्याह दोषं गुणं वेति । कस्यचित्संदिग्धस्य कार्यस्य निश्चये निश्चयसिद्ध्यर्थम् अत्रानुष्ठिते को गुणः को दोषः क उपायः कोऽपाय इति यदि पृष्टं स्यात्तदा एवं वक्तुमर्हसि गुणदोषादिकमित्यर्थः । मया तु निश्चिते कार्ये केवलं साहाय्ये वियुज्यसेऽतो न ते जल्पः संगत इति भावः ॥ ८ ॥ पृष्टोत्तरमेव राजनि सचिवेन विनीतेन वाच्यमित्याह संपृष्टेन त्विति । उद्यतांजलिनेत्यनेन विनीतता दर्शिता ॥ ९ ॥ उपचारेण राजनीत्युक्तमार्गेण

त्वद्वाक्यैर्नतुमांशक्यंभेत्तुंरामस्यसंयुगे ॥ मूर्खस्यपापशीलस्यमानुषस्याविशेषतः ॥ ४ ॥ यस्त्यक्त्वासुहृदोराज्यंमातरंपितरंतथा ॥ स्त्रीवाक्यंप्राकृतंश्रुत्वावनमेकपदेगतः ॥ ५ ॥ अवश्यंतुमयातस्यसंयुगेखरघातिनः ॥ प्राणैःप्रियतरासीताहर्तव्यातवसंनिधौ ॥ ६ ॥ एवंमेनिश्चिताबुद्धिर्हृदिमारीचविद्यते ॥ नव्यावर्तयितुंशक्यासेंद्रैरपिसुरासुरैः ॥ ७ ॥ दोषंगुणंवासंपृष्टस्त्वमेवंवक्तुमर्हसि ॥ अपायंवाउपायंवाकार्यस्यास्यविनिश्चये ॥ ८ ॥ संपृष्टेनतुवक्तव्यंसचिवेनविपश्चिता ॥ उद्यतांजलिनाराज्ञोयइच्छेद्भूतिमात्मनः ॥ ९ ॥ वाक्यमप्रतिकूलंतुमृदुपूर्वंशुभंहितम् ॥ उपचारेणवक्तव्योयुक्तंचवसुधाधिपः ॥ १० ॥ सावमर्दंतुयद्वाक्यमथवाहितमुच्यते ॥ नाभिनंदेततद्राजामानार्थीमानवर्जितम् ॥ ११ ॥ पंचरूपाणिराजानोधारयंत्यमितौजसः ॥ अग्नेरिंद्रस्यसोमस्ययमस्यवरुणस्यच ॥ १२ ॥ औष्ण्यंतथाविक्रमंचसौम्यंदंडंप्रसन्नताम् ॥ धारयंतिमहात्मानोराजानःक्षणदाचर ॥ १३ ॥ तस्मात्सर्वास्ववस्थासुमान्याःपूज्याश्चनित्यदा ॥ त्वंतुधर्ममविज्ञायकेवलंमोहमाश्रितः ॥ १४ ॥ अभ्यागतंतुदौरात्म्यात्परुषंवदसीदृशम् ॥ गुणदोषौनपृच्छामिक्षमंचात्मनिराक्षस ॥ १५ ॥ मयोक्तमपिचैतावत्त्वांप्रत्यमितविक्रम ॥ अस्मिंस्तुसभवान्कृत्येसाहाय्यंकर्तुमर्हति ॥ १६ ॥ शृणुतत्कर्मसाहाय्येयत्कार्यंवचनान्मम ॥ सौवर्णस्त्वंमृगोभूत्वाचित्रोरजतबिंदुभिः ॥ १७ ॥ आश्रमेतस्यरामस्यसीतायाःप्रमुखेचर ॥ प्रलोभयित्वावैदेहींयथेष्टंगंतुमर्हसि ॥ १८ ॥ त्वांहिमायामयंदृष्ट्वाकांचनंजातविस्मया ॥ आनयैनमितिक्षिप्रंरामंवक्ष्यतिमैथिली ॥ १९ ॥ अपक्रांतेचकाकुत्स्थेदूरंगत्वाप्युदाहर ॥ हासीतेलक्ष्मणेत्येवंरामवाक्यानुरूपकम् ॥ २० ॥

युक्तम् ॥ १० ॥ सावमर्दं तु राजपृष्टावमर्दसहितम् अथवा यद्यप्यर्थे यद्यपि हितं तथापि नाभिनंदेत त्वं त्वपृष्ट एव ममाहितमवमर्दसाहितम् मानहीनं वदसीत्यनुचितमिति भावः ॥ ११ ॥ ततो वक्तुरनिष्टमपीत्याह पंचेति । के पंचेत्यत्राह अग्नेरिति ॥ १२ ॥ कानि रूपाणि तत्राह क्रमेण औष्ण्यमिति । औष्ण्यं तैक्ष्ण्यम् सौम्यं दयार्द्रचित्तत्वम् । दंडं दुष्टनिग्रहम् एवं च तादृशे वक्तरि तीक्ष्णदंडपात इत्याशयः ॥ १३ ॥ धर्मं राजधर्मम् ॥ १४ ॥ अभ्यागतमतिथिमित्यनेन पूज्यत्वातिशयं सूचयति गुणदोषप्रश्ने किं मम हितमिति प्रश्ने वा ईदृशं वक्तुं युक्तम् नचैतदेकमपि मया पृष्टमिति भावः ॥ १५ ॥ अपि च अपि तु मया त्वां प्रति एतावदेवोक्तम् किं तत्राह अस्मिन्सीतापहाररूपे कृत्ये स भवान्मया नियुक्तः साहाय्यं कर्तुमर्हसीति ॥ १६ ॥ किं तन्मत्कर्तव्यसाहाय्यं तत्राह शृण्विति । साहाय्ये मम वचनाद्यत्कार्यं शृण्विति संबंधः ॥ १७ ॥ १८ ॥ १९ ॥ रामवाक्यानुरूपकं

रामध्वानिसदृशध्वनियुक्तम् ॥२०॥२१॥२२॥२३॥ शिवं मार्गं गच्छ सौम्यो भूत्वा प्रस्थितो भवेत्यर्थः । किंच शिवं मनोहरं मार्गं मृगरूपं गच्छ प्राप्नुहि ॥२४॥२५॥ अथ राजत्वात्स्ववाक्याकरणे दंडमाह नो चेदिति मद्वचनाननुष्ठाने मरणमेवानुष्ठाने तु जीवनं मत्तो बहुधनादिप्राप्तिश्च एवं प्रार्थनया अकरणे बलान्मद्बलहेतुकमरणभयात्त्वं च करिष्यस्येव ॥ २६ ॥ रामात्पर्यायद्वये इव कदाचिज्जीवनं संभाव्यत एव । मद्वचनाकरणे तु सर्वथाऽद्य मृत्युरेवेत्याह आसाद्येति । तं रामम् संशयो नतु नाशनिश्चयः एतन्मदुक्तवचनम् ॥ संरंमानः ॥ २७ ॥ इति श्रीरा० श्रीरा० रामा० वाल्मीकिये आदिकाव्ये अरण्यकांडे चत्वारिंशः सर्गः ॥ ४० ॥ राजवद्राजयोग्यं रावणेनाज्ञप्तः रामलक्ष्मणप्रतारणरूपं कार्यं प्रतिकूलम् अन्यथा वधं करिष्यामीत्येवं प्रतिकूलवाक्यसहितं यथाज्ञप्तो मृत्योर्निःशंको मारीचः परुषं शब्दतोर्थतश्च वाक्यमब्रवीत् ॥ १ ॥ विनाशः

तच्छ्रुत्वारामपदवींसीतयाचप्रचोदितः ॥ अनुगच्छतिसंभ्रांतंसौमित्रिरपिसौहृदात् ॥ २१ ॥ अपक्रांतेचकाकुत्स्थेलक्ष्मणेचयथासुखम् ॥ आहरिष्यामिवैदेहींसहसाक्षःशचीमिव ॥ २२ ॥ एवंकृत्वात्विदंकार्यंयथेष्टंगच्छराक्षस ॥ राज्यस्यार्धंप्रदास्यामिमारीचतवसुव्रत ॥ २३ ॥ गच्छसौम्यशिवंमार्गंकार्यस्यास्यविवृद्धये ॥ अहंत्वानुगमिष्यामिसरथोदंडकावनम् ॥ २४ ॥ प्राप्यसीतामयुद्धेनवंचयित्वातुराघवम् ॥ लंकांप्रतिगमिष्यामिकृतकार्यःसहत्वया ॥ २५ ॥ नोचेत्करोपिमारीचहन्मित्वामहमद्यवै ॥ एतत्कार्यमवश्यंमेबलादपिकरिष्यसि ॥ राज्ञोविप्रतिकूलस्थोनजातुसुखमेधते ॥२६॥ आसाद्यतंजीवितसंशयस्तेमृत्युर्ध्रुवोह्यद्यमयाविरुध्यतः ॥ एतद्यथावत्परिगण्यबुद्ध्यायदत्रपथ्यंकुरुतत्तथात्वम् ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे चत्वारिंशः सर्गः ॥ ४० ॥ आज्ञप्तोरावणेनेत्थंप्रतिकूलंचराजवत् ॥ अब्रवीत्परुषंवाक्यंनिःशंकोराक्षसाधिपम् ॥ ॥ १॥ केनायमुपदिष्टस्तेविनाशःपापकर्मणा ॥ सपुत्रस्यसराज्यस्यसामात्यस्यनिशाचर ॥ २ ॥ कस्त्वयासुखिनाराजन्नाभिनंदतिपापकृत् ॥ केनेदमुपदिष्टंतेमृत्युद्वारमुपायतः ॥ ३ ॥ शत्रवस्तवसुव्यक्तंहीनवीर्यानिशाचर ॥ इच्छंतित्वांविनश्यंतमुपरुद्धंबलीयसा ॥ ४ ॥ केनेदमुपदिष्टंतेक्षुद्रेणाहितबुद्धिना ॥ यस्त्वामिच्छतिनश्यंतंस्वकृतेननिशाचर ॥ ५ ॥ वध्याःखलुनवध्यंतेसचिवास्तवरावण ॥ येत्वामुत्पथमारूढंननिगृह्णंतिसर्वशः ॥ ॥ ६ ॥ अमात्यैःकामवृत्तोहिराजाकापथमाश्रितः ॥ निग्राह्यःसर्वथासद्भिःसनिग्राह्योनगृह्यसे ॥ ७ ॥ धर्ममर्थंचकामंचयशश्चजयतांवर ॥ स्वामिप्रसादात्सचिवाःप्राप्नुवंतिनिशाचर ॥ ८ ॥ विपर्ययेतुतत्सर्वंव्यर्थंभवतिरावण ॥ व्यसनंस्वामिवैगुण्यात्प्राप्नुवंतीतरेजनाः ॥ ९ ॥ राजमूलोहिधर्मश्चयशश्चजयतांवर ॥ तस्मात्सर्वास्ववस्थासुरक्षितव्यानराधिपाः ॥ १० ॥

विनाशोपायः ॥ २ ॥ सुखिना त्वया सहावस्थानमिति शेषः को नाभिनंदति केन पापकृता उपायतः उपायव्याजेन ॥ ३ ॥ तथोपदेष्टारस्त्वत्तो हीनवीर्यास्तव शत्रवः ये त्वां त्वत्तो बलवत्तरेण शत्रुणोपरुद्धं विनश्यंतं द्रष्टुमिच्छंति ॥ ४ ॥ स्वकृतेन स्वनिर्मितविनाशोपायेन ॥ ५ ॥ ये त्वामेवं कुपथमारूढं न निगृह्णंति न वारयंति अमात्यास्ते वध्या वधयोग्याः कुतस्त्वया न वध्यंत इत्यर्थः ॥ ६ ॥ तत्र नीतिशास्त्रमाह अमात्यैरिति ॥ ७ ॥ कुतस्तैरेवमनुष्ठेयं तत्राह धर्ममिति ॥ ८ ॥ विपर्यये स्वामिवैगुण्ये तत्र न केवलं तेषामेव व्यसनप्राप्तिः किंतु सर्वजनानां तदाह इतरे जना इति ।

अपीति शेषः ॥९॥१०॥ तीक्ष्णेन क्रूरदंडेन प्रतिकूलेन स्वकृतीनामिति शेषः ॥ ११ ॥ तीक्ष्णमंत्रास्तीक्ष्णोपायप्रयोक्तारस्तेन तन्मंत्रग्राहिणा राज्ञा सह भुज्यंते स्वसमतया स्थाप्यंते मंदो मंदबुद्धिः सारथिर्येषां ते रथा यथा विषमे सारथिभिः सह नश्यंति तथा ते राजानो मंत्रिभिः सह नश्यंति ॥ १२ ॥ युक्तधर्ममनुष्ठिताः युक्तधर्मानुष्ठातारः साधवो नीतिमार्गनिष्ठाः सपरिच्छदाः सपरिजनाः ॥ १३ ॥ तीक्ष्णदंडेन प्रजानां प्रतिकूलेन रक्ष्यमाणाः प्रजा न वर्धंते गोमायुना मृगघातुकजीवेन रक्ष्यमाणा मृगा इव ॥ १४ ॥ कर्कशः क्रूरबुद्धिः कठिनश्च ॥ १५ ॥ तदिदं त्वत्तो मरणरूपं घोरं काकतालीयमाकस्मिकं मयासादितं यद्यपि तथापि तत्प्रति न मया शोकः क्रियते जातस्य हि ध्रुवो मृत्युरिति न्यायात् । तथापि त्वं ससैन्यो विनशिष्यसि यद्यत्रार्थे त्वं मया शोचनीयोसि ॥ १६ ॥ ननु मम शरणं कथं निश्चितं तत्राह मामिति । मां निहत्य रामस्त्वां सबांधवमचिराद्वधिष्यति । तस्मादुभयथापि मरणं निश्चितं त्वत्तो वा रामाद्वा । तत्रानेन वधेन कृतकृत्योस्मि यत् मृधे रणेऽरिणा हतो म्रिये राजतो बलान्मरणापेक्षया रणे

राज्यंपालयितुंशक्यंनतीक्ष्णेननिशाचर ॥ नचातिप्रतिकूलेननाविनीतेनराक्षस ॥ ११ ॥ येतीक्ष्णमंत्राःसचिवाभुज्यंतेसहतेनवै ॥ विषमेषुरथाःशीघ्रं मंदसारथयोयथा ॥ १२ ॥ बहवःसाधवोलोकेयुक्तधर्ममनुष्ठिताः ॥ परेषामपराधेनविनष्टाःसपरिच्छदाः ॥ १३ ॥ स्वामिनाप्रतिकूलेनप्रजास्तीक्ष्णे नरावण ॥ रक्ष्यमाणानवर्धंतेमृगागोमायुनायथा ॥ १४ ॥ अवश्यंविनशिष्यंतिसर्वेरावणराक्षसाः ॥ येषांत्वंकर्कशोराजादुर्बुद्धिरजितेंद्रियः ॥ १५ ॥ तदिदंकाकतालीयंघोरमासादितंमया ॥ अत्रत्वंशोचनीयोसिससैन्योविनशिष्यसि ॥ १६ ॥ मांनिहत्यतुरामोसावचिरात्त्वांवधिष्यति ॥ अनेनकृतकृत्योस्मिम्रियेचाप्यरिणाहतः ॥ १७ ॥ दर्शनादेवरामस्यहतंमामवधारय ॥ आत्मानंचहतंविद्धिहृत्वासीतांसबांधवम् ॥ १८ ॥ आनयिष्यसिचेत्सीतामाश्रमात्सहितोमया ॥ नैवत्वमपिनाहंवैनैवलंकानराक्षसाः ॥ १९ ॥ निवार्यमाणस्तुमयाहितैषिणानमृष्यसेवाक्यमिदंनिशाचर ॥ परेतकल्पाहिगतायुषोनराहितंनगृह्णंतिसुहृद्भिरीरितम् ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥

एवमुक्त्वातुपरुषंमारीचोरावणंततः ॥ गच्छावेत्यब्रवीद्दीनोभयाद्रात्रिंचरप्रभोः ॥ १ ॥ दृष्टश्चाहंपुनस्तेनशरचापासिधारिणा ॥ मद्वधोद्यतशस्त्रेणनिहतंजीवितंचमे ॥ २ ॥ नहिरामंपराक्रम्यजीवन्प्रतिनिवर्तते ॥ वर्ततेप्रतिरूपोऽसौयमदंडहतस्यते ॥ ३ ॥ किंतुकर्तुंमयाशक्यमेवंत्वयिदुरात्मनि ॥ एषगच्छाम्यहंतातस्वस्तितेस्तुनिशाचर ॥ ४ ॥ प्रहृष्टस्त्वभवत्तेनवचनेनसराक्षसः ॥ परिष्वज्यसुसंश्लिष्टमिदंवचनमब्रवीत् ॥ ५ ॥

शत्रुतो मृत्योः स्वर्गदत्वादाद्यमृत्योरपमृत्युत्वेन दुर्मरणत्वेन शास्त्रे उक्तेः राज्ञा मारितस्य शौचोदकदानाद्यभावश्रवणाद्रामतो मरणेन कृतकृत्योहमिति व्यंग्यम् । ईदृशं ज्ञानं चास्य तपसा योगेन च शुद्धचित्तत्वादिति बोध्यम् ॥ १७ ॥ आत्मानं रावणम् सबांधवमात्मानमित्यन्वयः ॥ १८ ॥ कदाचिद्यदि मया जीवता सहैव सीतामानयिष्यसि तदा पश्चादपि सर्ववधो निश्चित इत्यर्थः ॥ १९ ॥ न मृष्यसे प्रतिकूलबुद्ध्या न परिगृह्णासीत्यर्थः । परेतकल्पाः मृतप्रायाः ॥ २० ॥ नंर्खेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥ रात्रिंचरप्रभोः रावणाद्भयमधुनैव निद्यमरणरूपं तस्माद्गच्छावेत्यब्रवीत्त्वमहं च इत्यर्थः ॥ १ ॥ तथावदन्नेव निजदुःखमप्याह दृष्टश्चाहमिति । पुनः यदाद्य तेन दृष्टो भविष्यामि तदोच्यमानविशेषणेन रामेण जीवितं नियतं नष्टमेव चकारात्तव च जीवितं नष्टम् ॥ २ ॥ यमदंडहतस्य तेऽसौ रामः प्रतिरूपो यमदंडप्रतिरूपो वर्तते ॥ ३ ॥ अथाशक्यपरिहारमनर्थं शोचति किं त्विति ॥ ४ ॥ तेन वचनेन गच्छामीति वचनेन सुसंश्लिष्टं

गाढम् ॥ ५ ॥ मच्छंदवशवर्तिनः मदभिप्रायवशवर्तिनः शौटीर्यं वीर्यं तद्युक्तम् एतद्वचोयोग्यमिति शेषः । इदानीं मारीचोसि स्वप्रकृतिं प्राप्तोसि पूर्वमन्यो हि राक्षसस्तदाविष्ट इति शेषः ॥ ६ ॥ खगः आकाशगामी रथः ॥ ७ ॥ शून्ये रामलक्ष्मणरहिते समये ॥ ८ ॥ ९ ॥ आश्रममंडलान्मारीचाश्रममंडलादित्यर्थः पत्तननगरयोरराजधानीराजधानीत्वेन भेदः । पत्तनशब्दोऽर्धर्चादिः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ मणिप्रवरशृंगाग्रः इंद्रनीलरत्नाकारशृंगाग्रः । मणिशब्दः केवल इंद्रनीले इति कविसमय इति कतकः । क्वचित्सिता क्वचिदसिता मुखस्याकृतिः शोभा यस्य सः । यदेवाह रक्तपद्मोत्पले

एतच्छौटीर्ययुक्तंतेमच्छंदवशवर्तिनः ॥ इदानीमसिमारीचःपूर्वमन्योहिराक्षसः ॥ ६ ॥ आरुह्यतामयंशीघ्रंखगोरत्नविभूषितः ॥ मयासहरथोयुक्तः पिशाचवदनैःखरैः ॥ ७ ॥ प्रलोभयित्वावैदेहींयथेष्टंगंतुमर्हसि ॥ तांशून्येप्रसभंसीतामानयिष्यामिमैथिलीम् ॥ ८ ॥ ततस्तथेत्युवाचैनंरावणं ताटकासुतः ॥ ततोरावणमारीचौविमानमिवतंरथम् ॥९॥ आरुह्यcraयतुःशीघ्रंतस्मादाश्रममंडलात् ॥ तथैवतत्रपश्यंतौपत्तनानिवनानिच ॥ १० ॥ गिरींश्चसरितःसर्वाराष्ट्राणिनगराणिच ॥ समेत्यदंडकारण्यंराघवस्याश्रमंततः ॥ ११ ॥ ददर्शसहमारीचोरावणोराक्षसाधिपः ॥ अवतीर्यरथात्तस्मात्ततःकांचनभूषणात् ॥ १२ ॥ हस्तेगृहीत्वामारीचंरावणोवाक्यमब्रवीत् ॥ एतद्रामाश्रमपदंदृश्यतेकदलीवृतम् ॥ १३ ॥ क्रियतांतत्सखेशीघ्रंयदर्थंवयमागताः ॥ सरावणवचःश्रुत्वामारीचोराक्षसस्तदा ॥ १४ ॥ मृगोभूत्वाश्रमद्वारिरामस्यविचचारह ॥ सतुरूपंसमास्थायमहदद्भुतदर्शनम् ॥१५॥ मणिप्रवरशृंगाग्रःसितासितमुखाकृतिः ॥ रक्तपद्मोत्पलमुखइंद्रनीलोत्पलश्रवाः ॥ १६ ॥ किंचिदभ्युन्नतग्रीवइंद्रनीलनिभोदरः ॥ मधूकनिभपार्श्वश्चकंजकिंजल्कसन्निभः ॥ १७ ॥ वैदूर्यसंकाशखुरस्तनुजंघःसुसंहतः ॥ इंद्रायुधसवर्णेनपुच्छेनोर्ध्वंविराजितः ॥ १८ ॥ मनोहरस्निग्धवर्णोरत्नैर्नानाविधैर्वृतः ॥ क्षणेनराक्षसोजातोमृगःपरमशोभनः ॥ १९ ॥ वनंप्रज्वलयन्रम्यंरामाश्रमपदंचतत् ॥ मनोहरंदर्शनीयंरूपंकृत्वासराक्षसः ॥ २० ॥ प्रलोभनार्थंवैदेह्यानानाधातुविचित्रितम् ॥ विचरन्गच्छतेशष्पंशाद्वलानिसमंततः ॥ २१ ॥ रौप्यैर्बिंदुशतैश्चित्रंभूत्वाचप्रियनंदनः ॥ विटपीनांकिसलयान्भक्षयन्विचचारह ॥ २२ ॥ कदलीगृहकंगत्वाकर्णिकारानितस्ततः ॥ तमाश्रमंमंदगतिंसीतासंदर्शनंततः ॥ २३ ॥ राजीवचित्रपृष्ठःसविरराजमहामृगः ॥ रामाश्रमपदाभ्याशेविचचारयथासुखम् ॥२४॥ पुनर्गत्वानिवृत्तश्चविचचारमृगोत्तमः ॥ गत्वामुहूर्तंत्वरयापुनःप्रतिनिवर्तते ॥२५॥ विक्रीडंश्चपुनर्भूमौपुनरेवनिषीदति ॥ आश्रमद्वारमागम्यमृगयूथानिगच्छति ॥ २६ ॥

ति उत्पलं नीलोत्पलम् इंद्रनीलवदुत्पलवच्छ्रवः श्रवणं यस्य सः ॥ १६ ॥ मधूकपुष्पसदृशपार्श्वद्वयः कंजं पद्मं तत्किंजल्कसदृशवर्णः ॥ १७ ॥ सुसंहतः श्लिष्टसंधिबंधः ॥ १८ ॥ १९ ॥ प्रज्वलयन्प्रदीपयन् ॥ २० ॥ शाद्वलानि विचरन् भक्षयन् गच्छते गच्छति ॥ २१ ॥ चित्रमिति क्रियाविशेषणं विटपीनामिति दीर्घ आर्षः छंदोनुरोधात् । भक्त्वादन्निति पाठे आर्षोऽनुनासिकलोपः ॥ २२ ॥ कदलीगृहं कदलीवाटिकां कर्णिकारांस्तद्वनं च गत्वा त्यक्त्वा सीतासंदर्शनमपेक्ष्येतस्ततो मंदगतिं समाश्रयन्विचचार विरराज च ॥ २३ ॥ २४ ॥ २५ ॥ मृगयूथानि गच्छति तत्पृष्ठतो गच्छतीत्यर्थः ॥ २६ ॥

॥ २७ ॥ विनिष्पतन् भागल्भ्येन कुर्वन्नित्यर्थः ॥ २८ ॥ विद्रवंति अमृगत्वनिश्चयादिति शेषः ॥ २९ ॥ मृगवधे रतोपि भावस्य राक्षसस्य संछादनार्थं संस्पृशन्नपि मृगान्न भक्षयति ॥ ३० ॥ अपचयो ग्रहणम् । अत्राशोकचूतकुसुमानामपचयोक्त्या शिशिरांतकालोयम् । गंधवान्सुरभिर्मासो जातपुष्पफलद्रुम इति । संतापयति सौमित्रे शूरश्चैत्रवनानिल इति च पंपातीरे रामोक्तेश्च । किंचाग्रे द्वादशमासोत्तरं यद्येषा मां नांगी करोति तदैनां हन्मीति रावणप्रतिज्ञा । ततो हनुमद्दर्शनकाले च तं प्रति सीतावाक्यम् । वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगमेति संगच्छते । माघशुक्लाष्टम्यां हरणे हि मार्गशुक्लाष्टम्यां ततोर्वागेव वा दशमसमाप्त्या तस्य वर्तमानत्वोक्तिरसंगतैव स्यात् तच्छुक्लपक्षांते हनूमतस्तद्दर्शनात् ॥ ३१ ॥ अनर्हा वनवासस्येत्यनेन नगरवासः सूचितः ॥ ३२ ॥ रूप्यं रजतं धातवो गैरिकाद्यास्तत्सदृशरोमयुक्तम्

मृगयूथैरनुगतःपुनरेवनिवर्तते ॥ सीतादर्शनमाकांक्षन्राक्षसोमृगतांगतः ॥ २७ ॥ परिभ्रमतिचित्राणिमंडलानिविनिष्पतन् ॥ समुद्वीक्ष्यचसर्वेतं मृगायेऽन्येवनेचराः ॥२८॥ उपगम्यसमाघ्रायविद्रवंतिदिशोदश ॥ राक्षसःसोपितान्वन्यान्मृगान्मृगवधेरतः ॥ २९ ॥ प्रच्छादनार्थंभावस्यनभक्षयतिसंस्पृशन् ॥ तस्मिन्नेवततःकालेवैदेहीशुभलोचना ॥ ३० ॥ कुसुमापचयेव्यग्रापादपानत्यवर्तत ॥ कर्णिकारानशोकांश्चचूतांश्चमदिरेक्षणा ॥ ३१ ॥ कुसुमान्यपचिन्वंतीचचाररुचिरानना ॥ अनर्हावनवासस्यसातंरत्नमयंमृगम् ॥ ३२ ॥ मुक्तामणिविचित्रांगंददर्शपरमांगना ॥ तंवैरुचिरदंतोष्ठंरूप्यधातुतनूरुहम् ॥ ३३ ॥ विस्मयोत्फुल्लनयनासस्नेहंसमुदैक्षत ॥ सचतांरामदयितांपश्यन्मायामयोमृगः ॥ ३४ ॥ विचचारततस्तत्रदीपयन्निवतद्वनम् ॥ अदृष्टपूर्वंदृष्ट्वातंनानारत्नमयंमृगम् ॥ विस्मयंपरमंसीताजगामजनकात्मजा ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ सातंसंप्रेक्ष्यसुश्रोणिकुसुमानिविचिन्वती ॥ हेमराजतवर्णाभ्यांपार्श्वाभ्यामुपशोभितम् ॥ १ ॥ प्रहृष्टाचानवद्यांगीमृष्टहाटकवर्णिनी ॥ भर्त्तारमपिचक्रंदलक्ष्मणंचैवसायुधम् ॥ २ ॥ आहूयाहूयचपुनस्तंमृगंसाधुवीक्षते ॥ आगच्छागच्छशीघ्रंवैआर्यपुत्रसहानुज ॥ ३ ॥ तावाहूतौनरव्याघ्रौवैदेह्यारामलक्ष्मणौ ॥ वीक्षमाणौतुतंदेशंतदाददृशतुर्मृगम् ॥४॥ शंकमानस्तुतंदृष्ट्वालक्ष्मणोवाक्यमब्रवीत् ॥ तमेवैनमहंमन्येमारीचंराक्षसंमृगम् ॥ ५ ॥ चरंतोमृगयांहृष्टाःपापेनोपाधिनावने ॥ अनेननिहताराम राजानःपापरूपिणा ॥ ६ ॥ अस्यमायाविदोमायामृगरूपमिदंकृतम् ॥ भानुमत्पुरुषव्याघ्रगंधर्वपुरसन्निभम् ॥ ७ ॥ मृगोह्येवंविधोरत्नविचित्रोनास्तिराघव ॥ जगत्यांजगतीनाथमायैषाहिनसंशयः ॥ ८ ॥ एवंब्रुवाणंकाकुत्स्थंप्रतिवार्यशुचिस्मिता ॥ उवाचसीतासंहृष्टाछद्मनाहृतचेतना ॥ ९ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ शैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ॥ सा तमिति ॥ १ ॥ मृष्टहाटकं शुद्धं हेम तत्सदृशवर्णा चक्रंद । आह्वाने क्रदिः । चक्रंदेति रोदनार्थेन भाव्यशुभमिति सूचितं कविना ॥ २ ॥ ३ ॥ तावाहूतौ सीतयेति शेषः ॥ ४ ॥ ५ ॥ मृगयां चरंतस्तां कुर्वंतः उपाधिना मृगरूपच्छलेन ॥ ६ ॥ अस्य मायाविदो मायया श्रुता सा मृगरूपमिदं कृतं मायैव मृगरूपेण परिणतेत्यर्थः । भानुमत्प्रकाशयुतं गंधर्वपुरवदापातरमणीयम् ॥ ७ ॥ नास्ति एवमुपादानकमृगासंभवात् ॥ ८ ॥ काकुत्स्थं लक्ष्मणं

मतिवार्य नायं राक्षसोऽपि तु चित्रमृगो नैतद्ग्रहणविघ्नस्त्वया कार्य इत्युक्त्येत्यर्थः । छद्मना वंचनेन हतचेतना सेव ॥ ९ ॥ नोऽस्माकं अयोध्यागमनोत्तरं तत्र सख्यभिप्रायेण बहुवचनम् ॥ १० ॥ सृमरश्च मरौ कृष्णशुक्लपुच्छौ ॥ ११ ॥ १२ ॥ अन्यः सदृशः एतत्सदृशोन्य इत्यर्थः तेजसा विचित्रगतिसामर्थ्येन क्षमया सौम्यभावेन दीप्त्यादेहकांत्या ॥ १३ ॥ शशिसंनिभत्वेनाह्लादकत्वम् ॥ १४ ॥ स्वरसंपद्ध्वनिसमृद्धिः ॥ १५ ॥ तव ग्रहणं त्वत्कर्तृकग्रहणम् । जीवतो ग्रहणमाश्चर्यभूतं भवति यतोऽतो विस्मयं जनयिष्यति ॥ १६ ॥ १७ ॥ १८ ॥ हतोपि यदि ते ग्रहणं प्राप्नोति तदापि मे प्रयोजनमित्याह अजिनमिति ॥ १९ ॥ शष्पवृस्यां बालतृणपरिकल्पिततापसासने विनीतायां प्रसारितायामस्य जांबूनदमयत्वचि उपासितुं त्वत्समीपे स्थातुमिच्छामि । यद्वा भगवदुपासनां कर्तुमित्यर्थः ॥ २० ॥ इदं कामेन

आर्यपुत्राभिरामोसौमृगोहरतिमेमनः ॥ आनयैनंमहाबाहोक्रीडार्थंनोभविष्यति ॥ १० ॥ इहाश्रमपदेऽस्माकंबहवःपुण्यदर्शनाः ॥ मृगाश्चरंतिसहिताश्चमराःसृमरास्तथा ॥ ११ ॥ ऋक्षाःपृषतसंघाश्चवानराःकिन्नरास्तथा ॥ विहरंतिमहाबाहोरूपश्रेष्ठामहाबलाः ॥ १२ ॥ नचान्यःसदृशोराजन्दृष्टःपूर्वंमृगोमया ॥ तेजसाक्षमयादीप्त्यायथाऽयंमृगसत्तमः ॥ १३ ॥ नानावर्णविचित्रांगोरत्नभूतोममाग्रतः ॥ द्योतयन्वनमव्यग्रंद्योततेशशिसन्निभः ॥ १४ ॥ अहोरूपमहोलक्ष्मीःस्वरसंपच्चशोभना ॥ मृगोऽद्भुतोविचित्रांगोहृदयंहरतीवमे ॥ १५ ॥ यदिग्रहणमभ्येतिजीवन्नेवमृगस्तव ॥ आश्चर्यभूतंभवतिविस्मयंजनयिष्यति ॥१६॥ समाप्तवनवासानांराज्यस्थानांचनःपुनः ॥ अंतःपुरेविभूषार्थोमृगएषभविष्यति ॥ १७ ॥ भरतस्यार्यपुत्रस्यश्वश्रूणांचममप्रभो ॥ मृगरूपमिदंदिव्यंविस्मयंजनयिष्यति ॥ १८ ॥ जीवन्नयदितेभ्येतिग्रहणंमृगसत्तमः ॥ अजिनंनरशार्दूलरुचिरंतुभविष्यति ॥ १९ ॥ निहतस्यास्यसत्त्वस्यजांबूनदमयत्वचि ॥ शष्पवृस्यांविनीतायामिच्छाम्यहमुपासितुम् ॥२०॥ कामवृत्तमिदंरौद्रंस्त्रीणामसदृशंमतम् ॥ वपुषात्वस्यसत्त्वस्यविस्मयोजनितोमम ॥ २१ ॥ तेनकांचनरोम्णातुमणिप्रवरशृंगिणा ॥ तरुणादित्यवर्णेननक्षत्रपथवर्चसा ॥ २२ ॥ बभूवराघवस्यापिमनोविस्मयमागतम् ॥ इतिसीतावचःश्रुत्वादृष्ट्वाचमृगमद्भुतम् ॥ २३ ॥ लोभितस्तेनरूपेणसीतयाचप्रचोदितः ॥ उवाचराघवोहृष्टोभ्रातरंलक्ष्मणंवचः ॥ २४ ॥ पश्यलक्ष्मणवैदेह्यास्पृहामुल्लसितामिमाम् ॥ रूपश्रेष्ठतयाह्येषमृगोऽद्यनभविष्यति ॥ २५ ॥ नवनेनंदनोद्देशेनचैत्ररथसंश्रये ॥ कुतःपृथिव्यांसौमित्रेयोऽस्यकश्चित्समोमृगः ॥ २६ ॥

स्वप्रयोजनेच्छया प्रतिनियोजनरूपं रौद्रं अतएव स्त्रीणामसदृशं कैकेयीवदिति मम निर्णीतं तथाप्यस्य सत्त्वस्य वपुषा मम विस्मयो जनित इति जातकौतुकनिवृत्त्यर्थमनुचितमपि करोमीति शेषः ॥ २१ ॥ कांचनरूपेणेतिपाठे रूपेण मृगेण रूपमृगेऽपि विज्ञेयमिति हलायुधः । नक्षत्रसदृशनानाबिंदूपलक्षितत्वात्तत्पथसदृशेन ॥ २२ ॥ राघवस्यापि संभावितासंभावितवस्तुतत्त्वनिरूपणकुशलमतेरपि मनो विस्मयमागतं प्राप्तं तदिव बभूव भवितव्यतायाः प्राबल्यात् ॥२३॥ तदेवाह लोभित इति ॥२४॥ रूपेण अलौकिकविचित्रस्वरूपेण श्रेष्ठः सर्वश्रेष्ठरूपेण हेतुना अद्य एष मृगो न भविष्यति न जीविष्यति जीवनमस्य न संभावितमित्यर्थः । प्रायेण मृगत्वमत्र न संभावितमित्यर्थ इति कतकः ॥२५॥ नंदन इत्युद्देशः कीर्तनं यस्य तत्र वने चैत्ररथसंश्रये तदाख्ये वनेपि न योस्य कश्चित्समो मृगः स पृथिव्यामस्ति इति कुतः संभाव्यते इत्यर्थः ॥२६॥

तदेवाह प्रतिलोमेत्यादि । कनकबिंदुभिः सहिता रोमराजय इत्यन्वयः ॥ २७ ॥ शतह्रदा विद्युत् ॥ २८ ॥ मसारगल्लर्कमुखः शंखमुक्तानिभोदर इतिपाठे मसार इंद्रनीलस्तस्य गल्लर्कश्चषकस्तदाकारस्य संपुट इत्यर्थ इति तीर्थः । अनिरूप्यः इदमित्थमिति निरूपयितुमशक्यः । पाठांतरे यस्येत्यादि ॥ २९ ॥ ३० ॥ मांसहेतोरपि विहारार्थं च घ्नंति किं पुनरेवंविधत्वग्लाभार्थमिति भावः ॥ ३१ ॥ महावने राजभिरिति शेषः व्यवसायेन मृगवधोद्यमेन धनानि विचीयंते संगृह्यंते । ननु वने कुतो धनं तत्राह धातव इति । मणिरत्नं सुवर्णं च येषु तादृशा धातवः वज्रादिमणिसुवर्णादियुक्तास्ताम्रादिधातव इति यावत् ॥ ३२ ॥ निचयवर्धनं कोशवर्धनं तदन्यं धनं नृणां सारमतिप्रशस्तं भवति । शुक्रं ब्रह्म सपर्यगाच्छुक्रमकायमव्रणमिति श्रुतेः । एवं च शुक्रस्य ब्रह्मलोकं प्राप्तस्य तद्रूपमापन्नस्य मनसा चिंतितं सर्वं संकल्पमात्रसिद्धं सर्वं भोग्यवस्तु यथा सर्वस्मात्सारतरं तद्वत् ॥ ३३ ॥ ननु तथापि विचार्य कर्तव्यं तत्राह अर्थीति । अर्थी अर्थापेक्षः पुमान् येनार्थकृत्येन अर्थनिमित्तेन कर्तव्येन कर्मणा तत्सौंदर्यादाक्षिप्तहृदयोऽविचारयन्न

प्रतिलोमानुलोमाश्चरुचिरारोमराजयः ॥ शोभंतेमृगमाश्रित्यचित्राःकनकबिंदुभिः ॥ २७ ॥ पश्यास्यजृंभमाणस्यदीप्तामग्निशिखोपमाम् ॥ जिह्वांमुखान्निःसरंतींमेघादिवशतह्रदाम् ॥ २८ ॥ मसारगल्लर्कमुखःशंखमुक्तानिभोदरः ॥ कस्यनामानिरूप्योसौनमनोलोभयेन्मृगः ॥ २९ ॥ कस्यरूपमिदंदृष्ट्वाजांबूनदमयप्रभम् ॥ नानारत्नमयंदिव्यंनमनोविस्मयंव्रजेत् ॥ ३० ॥ मांसहेतोरपिमृगान्विहारार्थंचधन्विनः ॥ घ्नंतिलक्ष्मणराजानोमृगयायांमहावने ॥ ३१ ॥ धनानिव्यवसायेनविचीयंतेमहावने ॥ धातवोविविधाश्चापिमणिरत्नसुवर्णिनः ॥ ३२ ॥ तत्सारमखिलंनृणांधनंनिचयवर्धनम् ॥ मनसाचिंतितंसर्वंयथाशुक्रस्यलक्ष्मण ॥ ३३ ॥ अर्थीयेनार्थकृत्येनसंव्रजत्यविचारयन् ॥ तमर्थमर्थशास्त्रज्ञाःप्राहुरर्थ्याःसुलक्ष्मण ॥ ॥ ३४ ॥ एतस्यमृगरत्नस्यपरार्ध्येकांचनत्वचि ॥ उपवेक्ष्यतिवैदेहीमयासहसुमध्यमा ॥ ३५ ॥ नकादलीनाप्रियकीनप्रवेणीनचाविकी ॥ भवेदेतस्यसदृशीस्पर्शेनेनेतिमेमतिः ॥३६॥ एषचैवमृगःश्रीमान्यश्चदिव्योनभश्चरः ॥ उभावेतौमृगौदिव्यौतारामृगमहीमृगौ ॥३७॥ यदिवायंतथायन्मांभवेद्वदसिलक्ष्मण ॥ मायैषाराक्षसस्येतिकर्तव्योस्यवधोमया ॥ ३८ ॥ एतेनहिनृशंसेनमारीचेनाकृतात्मना ॥ वनेविचरतापूर्वंहिंसितामुनिपुंगवाः ॥ ॥ ३९ ॥ उत्थायबहवोयेनमृगयायांजनाधिपाः ॥ निहताःपरमेष्वासास्तस्माद्वध्यस्त्वयंमृगः ॥ ४० ॥

न व्रजति तत्संपादनार्थं तमेवार्थ्याः अर्थसंपादनचतुराः अर्थशास्त्रज्ञा अर्थं अर्थपदवाच्यमाहुः ॥ ३४ ॥ अतोऽविचारितैवात्र प्रवृत्तिरित्याह एतस्येति । अत्र विचारो न कर्तव्य एतन्मूलेन महतोर्थस्य सिद्धिरिति गूढतात्पर्यम् ॥ ३५ ॥ अस्य परार्ध्यत्वमेव दर्शयति नेति । कदल्या इयं त्वक् कादली । मृदूच्चकर्बुरनीलाग्ररोमा मृगविशेषः कदली । प्रियकी मृदूच्चमसृणघनरोमयुक्तो मृगः प्रियकस्तस्येयं प्रियकी । प्रवेणी अजविशेषसंबंधिनी । आविकी अवित्वक् । प्रत्येकं नञुक्तिः सर्वथा सादृश्याभावबोधनाय । अनेन एतदीयत्वचा ॥ ३६ ॥ यश्च नभश्चरो मृगः मृगशिरो नक्षत्ररूपः । तदेवाह तारामृगेति ॥ ३७ ॥ अथ लक्ष्मणमतमंगीकृत्यापि प्रवृत्तिमाह यदि वेति । राक्षसमायैषा न मृग इति यथा मां वदसि यदि वा तथैवैष भवेत्तथाप्यस्य वधो मया कर्तव्य एव राक्षसवधस्य प्रतिज्ञातत्वात् ॥ ३८ ॥ ३९ ॥ उत्थाय प्रादुर्भूय

उल्लुत्य वा ॥ ४० ॥ पुरस्तात्पूर्वम् इह दंडकारण्ये स्वगर्भोश्वतरीमिवेति अश्वतरी स्वगर्भेण म्रियत इति प्रसिद्धिः । अश्वतरी गर्दभादश्वायामुत्पन्नेति तीर्थः । अश्वतरी कर्कटीति परे । वृश्चिक इति कतकः । अत्राद्यव्याख्यैव ज्यायसी । तस्या गर्भस्योदरपाटनं विना न निःसरणमिति सर्वजनप्रसिद्धेः ॥ ४१ ॥ ४२ ॥ समुत्थाने श्राद्धांते । तद्रूपं राक्षसं रूपम् । उत्स्मयित्वा ईषद्धसित्वा ॥ ४३ ॥ अविगण्य अविचार्य पापं तस्माद्द्विजपरिभवजपापेन जरां जीर्णताम् ॥ ४४ ॥ यो मारीचो मद्विधमतिमन्येतातिक्रामेत्तद्रक्षोपि मारीचाख्यं वातापिरिव न भवेदेव न जीवेदेव ॥ ४५ ॥ उक्तमेवार्थं पुनराह दार्ढ्याय भवेदिति । मा मां गतः प्राप्तो मारीचोऽगस्त्येन वातापिरिव मया हतो भवेत् भविष्यतीत्यर्थः सन्नद्धः धनुःकवचादियुक्तः यंत्रितः यत्नवान् व्यापारांतरहीनः ॥ ४६ ॥ अस्माकं यत्कृत्यमावश्यकं कर्तव्यं तदस्यामेतद्रक्षणविषये आयत्तं स्थितम् तन्मुख्यकृते त्वं सावधानस्तिष्ठ । स्वकर्तव्यमाह अहमिति । अत्र पूर्वश्लोकचतुर्थचरणश्लेषेण अयंत्रितो यंत्रणयाहीनोतियत्नराहितः सीतां रक्ष यदस्माकं कृत्यमव

पुरस्तादिहवातापिःपरिभूयतपस्विनः ॥ उदरस्थोद्विजान्हंतिस्वगर्भोश्वतरीमिव ॥ ४१ ॥ सकदाचिच्चिराल्लोकेआससादमहामुनिम् ॥ अगस्त्यंतेजसायुक्तंभक्ष्यस्तस्यबभूवह ॥ ४२ ॥ समुत्थानेचतद्रूपंकर्तुकामंसमीक्ष्यतम् ॥ उत्स्मयित्वातुभगवान्वातापिमिदमब्रवीत् ॥ ४३ ॥ त्वयाऽविगण्यवातापेपरिभूताश्चतेजसा ॥ जीवलोकेद्विजश्रेष्ठास्तस्मादसिजरांगतः ॥ ४४ ॥ तद्रक्षोपिनभवेदेववातापिरिवलक्ष्मण ॥ मद्विधंयोतिमन्येतधर्मनित्यंजितेंद्रियम् ॥ ४५ ॥ भवेद्धतोयंवातापिरगस्त्येनेवमागतः ॥ इहत्वंभवसन्नद्धोयंत्रितोरक्षमैथिलीम् ॥ ४६ ॥ अस्यामायत्तमस्माकंयत्कृत्यंरघुनंदन ॥ अहमेनंवधिष्यामिग्रहीष्याम्यथवामृगम् ॥ ४७ ॥ यावद्गच्छामिसौमित्रेमृगमानयितुंद्रुतम् ॥ पश्यलक्ष्मणवैदेह्यामृगत्वाचिगतांस्पृहाम् ॥ ॥ ४८ ॥ त्वचाप्रधानयाह्येषमृगोऽद्यनभविष्यति ॥ अप्रमत्तेनतेभाव्यमाश्रमस्तेनसीतया ॥ ४९ ॥ यावत्पृषतमेकेनसायकेननिहन्म्यहम् ॥ हत्वैतच्चर्मआदायशीघ्रमेष्यामिलक्ष्मण ॥ ५० ॥ प्रदक्षिणेनातिबलेनपक्षिणाजटायुषाबुद्धिमताचलक्ष्मण ॥ भवाप्रमत्तःप्रतिगृह्यमैथिलींप्रतिक्षणंसर्वतएवशंकितः ॥ ५१ ॥ इत्यार्षेश्रीम० वा० आ० अर०त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ तथातुतंसमुद्दिश्यभ्रातरंरघुनंदनः ॥ दधारासिंमहातेजाजांबूनदमयत्सरुम् ॥ १ ॥ ततस्त्रिविनतंचापमादायात्मविभूषणम् ॥ आबध्यचकलापौद्वौजगामोदग्रविक्रमः ॥ २ ॥ तंवन्यराजोराजेंद्रमापतंतंनिरीक्ष्यवै ॥ बभूवांतर्हितस्त्रासात्पुनःसंदर्शनेऽभवत् ॥ ३ ॥

तारग्रहणप्रयोजनं तदस्यामायत्तं अनयैव साधनीयमित्यपि सूचितम् ॥ ४७ ॥ यावद्गच्छामि गमिष्यामीत्यर्थः । आनयितुम् आनेतुम् । तत्र हेतुः पश्येति ॥ ४८ ॥ प्रधानया सर्वोत्तमया न भविष्यति न जीविष्यति अनेन जीवतो ग्रहणमशक्यमिति दर्शितम् । ते त्वया सीतया सहेतिशेषः अनया प्रेरिते कर्तव्ये चेत्यप्यर्थः ॥ ४९ ॥ यावदिति तावदप्रमत्तेन भाव्यमित्यन्वयः ॥ ५० ॥ प्रदक्षिणेन समर्थेन सर्वतः सर्वदिग्वर्तिरक्षोसुरेभ्यः ॥ ५१ ॥ कैर्णमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ ॥ त्सरुः खड्गमुष्टिः ॥ १ ॥ मध्ये स्थलत्रये विनतं त्रिविनतम् आत्मविभूषणम् चापस्य वीरालंकारत्वात् आत्मविभूषणमित्यनेनागस्त्यदत्तं वैष्णवमिति सूचितम् कलापौ तूणीरौ ॥ २ ॥ वन्यराजः वन्यानां मृगाणां राजा विचित्रमृगत्वात् पुनः संदर्शने

दृष्टिविषये ॥ ३ ॥ रूपेण स्वरूपेणाग्रतो द्योतयंतं द्योतमानमिव स्थितम् ॥ ४ ॥ अतिवृत्तं अतिक्रांतम् कदाचन लोभयानं हस्तप्राप्तमिव दृश्यमानम् ॥ ५ ॥ शंकितमिषुपातादिति शेषः वनोद्देशेषु कचि दृश्यमानं कचिददृश्यमानम् ॥ ६ ॥ छिन्नाभ्रसंवीतचंद्रसादृश्योपपादकमुत्तरार्धम् ॥ ७ ॥ दर्शनादर्शनेनेति द्वंद्वैकवद्भावः । स मृगतां गतो मारीचोऽस्याश्रमस्य दूरं गत इत्यर्थः ॥ ८ ॥ तेन दर्शनादर्श नेन विलोभ्य मोहयता मारीचेन मोहितो वंचितो विवशस्तत्त्वग्लोभपरवश इव सुतरां छायामाश्रित्यावतस्थे ॥ ९ ॥ उन्मादयामास बहुदूरधावनेन चित्तविभ्रमं चकार ॥ १० ॥ ११ ॥ १२ ॥ भूयः

बद्धासिर्धनुरादायप्रदुद्रावयतोमृगः ॥ तंस्मपश्यतिरूपेणद्योतयंतमिवाग्रतः ॥ ४ ॥ अवेक्ष्यावेक्ष्यधावंतंधनुष्पाणिर्महावने ॥ अतिवृत्तमिवोत्पा ताल्लोभयानंकदाचन ॥ ५ ॥ शंकितंतुसमुद्भ्रांतमुत्पतंतमिवांबरम् ॥ दृश्यमानमदृश्यंचवनोद्देशेषुकेषुचित ॥ ६ ॥ छिन्नाभ्रैरिवसंवीतंशारदंचंद्रमं डलम् ॥ मुहूर्तादेवददृशेमुहुर्दूरात्प्रकाशते ॥ ७ ॥ दर्शनादर्शनेनैवसोऽपाकर्षतराघवम् ॥ सदूरमाश्रमस्यास्यमारीचोमृगतांगतः ॥ ८ ॥ आसी त्क्रुद्धस्तुकाकुत्स्थोविवशस्तेनमोहितः ॥ अथावतस्थेसुश्रांतश्छायामाश्रित्यशाद्वले ॥ ९ ॥ सतमुन्मादयामासमृगरूपोनिशाचरः ॥ मृगैःपरिवृतो ऽथान्यैरदूरात्प्रत्यदृश्यत ॥ १० ॥ ग्रहीतुकामंदृष्ट्वातंपुनरेवाभ्यधावत ॥ तत्क्षणादेवसंत्रासात्पुनरंतर्हितोभवत् ॥ ११ ॥ पुनरेवततोदूराद्वृक्षखंडा द्विनिःसृतः ॥ दृष्ट्वारामोमहातेजास्तंहंतुंकृतनिश्चयः ॥ १२ ॥ भूयस्तुशरमुद्धृत्यकुपितस्तत्रराघवः ॥ सूर्यरश्मिप्रतीकाशंज्वलंतमरिमर्दनः ॥ १३ ॥ संधायसुदृढंचापेविकृष्यबलवद्बली ॥ तमेवमृगमुद्दिश्यज्वलंतमिवपन्नगम् ॥ १४ ॥ मुमोचज्वलितंदीप्तमस्त्रंब्रह्मविनिर्मितम् ॥ सभृशंमृगरूपस्य विनिर्भिद्यशरोत्तमः ॥ १५ ॥ मारीचस्यैवहृदयंविभेदाशनिसन्निभः ॥ तालमात्रमथोत्प्लुत्यन्यपतत्सभृशातुरः ॥ १६ ॥ व्यनदद्भैरवंनादंधरण्या मल्पजीवितः ॥ म्रियमाणस्तुमारीचोजहौतांकृत्रिमांतनुम् ॥ १७ ॥ स्मृत्वातद्वचनंरक्षोदध्यौकेनतुलक्ष्मणम् ॥ इहप्रस्थापयेत्सीतातांशून्येरावणो हरेत् ॥१८॥ सप्राप्तकालमाज्ञायचकारचततःस्वनम्॥ सदृशंराघवस्येवहासीतेलक्ष्मणेतिच ॥ १९ ॥ तेनकर्मणिनिर्विद्धःशरेणानुपमेनहि ॥ मृगरूपं तुतत्त्यक्त्वाराक्षसंरूपमास्थितः ॥२०॥ चक्रेससुमहाकायोमारीचोजीवितंत्यजन् ॥ तंदृष्ट्वापतितंभूमौराक्षसंभीमदर्शनम् ॥२१॥ रामोरुधिरसिक्तांगंचे ष्टमानंमहीतले॥जगाममनसासीतांलक्ष्मणस्यवचःस्मरन्॥२२॥मारीचस्यतुमायैषापूर्वोक्तालक्ष्मणेनतु॥तत्तथाह्यभवच्चाद्यमारीचोऽयंमयाहतः ॥२३॥

कुपित इत्यन्वयः ॥ १३ ॥ १४ ॥ ब्रह्मविनिर्मितमस्त्रं ब्रह्मास्त्रं ब्रह्मदत्तबाणं च मृगरूपसदृशरूपस्य मायाकृतरूपे यक्षवत्प्रविश्य स्थितस्य ॥ १५ ॥ मारीचस्यैव हृदयं न तु तत्कृतमायामृगाकारमात्रस्य तालमात्रमुत्प्लुत्य शरवेगकृतवेधादिति शेषः ॥ १६ ॥ १७ ॥ तद्वचनं रावणवचनम् दध्यौ ध्यानं कृतवन् केन मत्कृतेनोपायेन सीता लक्ष्मणं प्रस्थापयेत्तां च शून्ये रावणो हरेदिति दध्यौ ॥ १८ ॥ प्राप्तका लमाज्ञाय रावणोक्तमुपायमेव युक्तम् ॥ १९ ॥ मर्मणि प्राणस्थाने रक्षस इदं राक्षसं रूपमास्थितः पूर्वोक्तं शब्दं चक्रे इत्यन्वयः ॥ २० ॥ सुमहाकायः महाशरीरम् ॥ २१ ॥ २२ ॥ लक्ष्मणवच एवाह

मारीचस्य त्विति ॥ २३ ॥ सीता कथं भवेत् किमधैर्यं नाटयित्वा लक्ष्मणं प्रेषयेदुत धीरा भवेदित्यर्थः ॥ २४ ॥ कामवस्थाम् अधैर्यादिति शेषः हृष्टतनूरुहस्त्रासादिव रोमांचिततनुः वस्तुत एतन्मूलेन सर्वकार्यनिष्पत्तिरिति हर्षाद्रोमांचिततनुः ॥ २५ ॥ तत्र नटवद्भगवान्मनुष्यरूपत्वात् भयशोकादिमत्त्वं नाटयतीति कविरपि सर्वलोकवेद्यं तथैवाह तत्र रामं भयमिति । तात्त्विकमर्थं तु हृष्टतनूरुह इति हृष्टप देन प्रागेव ध्वनितवान् ॥ २६ ॥ पृषतं मृगम् जनस्थानमभिमुखं जनस्थानवर्तिनिजाश्रमाभिमुखम् ॥ २७ ॥ धैर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे चतु श्चत्वारिंशः सर्गः ॥ ४४ ॥ भैर्यमानः ॥ अथ सीता रामविषयशोकनाटनेन लक्ष्मणमुद्रासयति आर्तेति । भर्तुः स्वरेण सदृशं स्वरम् भर्तुः स्वर इत्येव ज्ञात्वेत्यर्थः ॥१॥ क्रोशतः रामस्य ॥ २ ॥ ३ ॥ आज्ञाय शासनं अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतयेत्युक्तमनुचिंत्येत्यर्थः ॥ ४ ॥ क्षुभिता क्षुभितेव शत्रुवच्छत्रुयोग्यवृत्तः ॥ ५ ॥ तदेवाह यस्त्वमिति । नाभिपद्यसे न प्राप्तो भवसि मत्कृते मत्परिग्रहार्थम् ॥ ६ ॥

हासीतिलक्ष्मणेत्येवमाक्रुश्यतुमहास्वनम् ॥ ममाररा़क्षसःसोऽयंश्रुत्वासीताकथंभवेत् ॥ २४ ॥ लक्ष्मणश्चमहाबाहुःकामवस्थांगमिष्यति ॥ इतिसंचिंत्यधर्मात्मारामोहृष्टतनूरुहः ॥२५॥ तत्ररामंभयंतीव्रमाविशेशविषादजम् ॥ राक्षसंमृगरूपंतंहत्वाश्रुत्वाचतत्स्वनम् ॥ २६ ॥ निहत्यपृषतं चान्यंमांसमादायराघवः ॥ त्वरमाणोजनस्थानंससाराभिमुखंतदा ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ आर्तस्वरंतुतंभर्तुर्विज्ञायसदृशंवने ॥ उवाचलक्ष्मणंसीतागच्छजानीहिराघवम् ॥ १ ॥ नहिमेजीवितंस्थानेहृदयंवाव तिष्ठते ॥ क्रोशतःपरमार्तस्यश्रुतःशब्दोमयाभृशम् ॥ २ ॥ आक्रंदमानंतुवनेभ्रातरंत्रातुमर्हसि ॥ तंक्षिप्रमभिधावत्वंभ्रातरंशरणैषिणम् ॥ ३ ॥ रक्षसांवशमापन्नंसिंहानामिवगोवृषम् ॥ नजगामतथोक्तस्तुभ्रातुराज्ञायशासनम् ॥ ४ ॥ तमुवाचततस्तत्रक्षुभिताजनकात्मजा ॥ सौमित्रेमित्ररूपे णभ्रातुस्त्वमसिशत्रुवत् ॥ ५ ॥ यस्त्वमस्यामवस्थायांभ्रातरंनाभिपद्यसे ॥ इच्छसित्वंविनश्यंतंराममंलक्ष्मणमत्कृते ॥ ६ ॥ लोभात्तुमत्कृतेनूनं नानुगच्छसिराघवम् ॥ व्यसनंतेप्रियंमन्येस्नेहोभ्रातरिनास्तिते ॥ ७ ॥ तेनतिष्ठसिविश्रब्धंतमपश्यन्महाद्युतिम् ॥ किंहिसंशयमापन्नेतस्मिन्निहमया भवेत् ॥ ८ ॥ कर्तव्यमिहतिष्ठंत्यायत्प्रधानस्त्वमागतः ॥ एवंब्रुवाणांवैदेहींबाष्पशोकसमन्विताम् ॥ ९ ॥ अब्रवील्लक्ष्मणस्त्रस्तांसीतांमृगवधूमिव ॥ पन्नगासुरगंधर्वदेवदानवराक्षसैः ॥१०॥ अशक्यस्तववैदेहिभर्ताजेतुंनसंशयः ॥ देविदेवमनुष्येषुगंधर्वेषुपतत्रिषु ॥ ११ ॥ राक्षसेषुपिशाचेषुकिन्नरे षुमृगेषुच ॥ दानवेषुचघोरेषुनसविद्येतशोभने ॥ १२ ॥ योरामंप्रतियुध्येतसमरेवासवोपमम् ॥ अवध्यःसमरेरामोनैवंत्वंवक्तुमर्हसि ॥ १३ ॥

॥ ७ ॥ विश्रब्धं विश्वस्तं यथा तथा विश्रब्ध इति पाठांतरम् । त्वद्रक्षणं विहाय कथं गच्छामीत्यत्राह किं हीति । यो रामः प्रधानं यस्य सयत्प्रधानस्त्वमिहागतस्तस्मिन् रामे संशयमापन्ने सति मया तिष्ठंत्या त्वद्रक्षणेन जीवंत्या किं कर्तव्यं भवेत् तदभावे मरणमेव श्रेयस्तच्चेन केनापि भवतु रक्षसा वाऽन्येन जंतुना वा स्वतो वह्निप्रवेशादिना वेति भावः । अत्रायं ध्वनिः राक्षससंहारप्रधानकार्यकरणायागतस्य तव त्वद्भ्रातुर्वा तस्मिन्कार्ये इह मदवस्थित्या संशयमापन्ने इह जीवंत्या मया किं कार्यं भवेत् सर्वत्रोत्पत्तिस्थितिसंहारेषु तव भ्रातुरहमेव सहकारिणी प्रकृतश्च संहारोत्र मत्स्थित्या न निवर्तेत इति ॥ ८ ॥ ॥९॥ एवं बोधिततत्त्वोपि मानुष्यनाटनेन लोकव्यवहारानुसाराल्लक्ष्मणोऽवददित्याह अब्रवीदिति ॥१०॥११॥ न स विद्येत नश्येदेवेत्यर्थः ॥१२॥ न स विद्येतेत्युक्तं तत्र स कस्तत्राह यो राममिति ॥१३॥

बलवतामिंद्रादीनामपि बलैस्तस्य बलमनिवार्यमधृष्यम् ॥ १४ ॥ तव त्वया ॥ १५ ॥ स स्वरो व्यक्तं स्पष्टं तस्य रामस्य न भवति दैवतः अशरीरदेवतासंबंधी कश्चित्स्वर इत्यपि नेत्यर्थः तदापि शंकायुक्ता न त्वेवमपीत्यर्थः ॥१६॥ किं तर्हि गंधर्वनगरप्रख्या तद्वन्मिथ्या तस्य रक्षसो मायैव वंचनार्थं तत्कृतोयं स्वर इत्यर्थः । त्वं न्यासरूपतया मयि निक्षिप्तासि अतस्त्वां त्यक्तुं नोत्सहे ॥ इत्युत्तरेणान्वयः ॥ १७ ॥ १८ ॥ खरस्य निधने रामेण कृते सति जनस्थानवधं जनस्थानवर्तिस्वपरिकररक्षोवधं प्रतिलक्ष्य कृतवैरा इत्यन्वयः व्याहरंति अस्मद्व्यामोहनार्थमतस्त्वां त्यक्तुं नोत्सहे ॥ १९ ॥ हिंसैव साधुजनपीडैव विहारो येषां ते तथा इदं पूर्वान्वयि अतस्त्वं रामस्य क्लेशं न चिंतयितुमर्हसि ॥ २० ॥ अनार्यकरुणारंभ अनार्यया कुत्सितया करुणया रामव्यसनेपि मद्विषयया आरंभो मद्रक्षणारंभो यस्य तत्संबोधनम् ॥ २१ ॥ तेन रामव्यसनप्रियत्वेन अत्र रामव्यसनं रामस्य प्रतिज्ञातार्थस्य सर्वरक्षोवधरूपस्य हानिस्तत्प्रियत्वेनेति गूढं तात्पर्यम् । अत एषा मद्विषया करुणा अनार्या कुत्सिता प्रधानकार्यविरोधित्वा

नत्वामस्मिन्वनेहातुमुत्सहेराघवंविना ॥ अनिवार्यवलंतस्यवलैर्वलवतामपि ॥ १४ ॥ त्रिभिर्लोकैःसमुदितैःसेश्वरैःसामरैरपि ॥ हृदयंनिर्वृतंतेस्तुसंतापस्त्यज्यतांतव ॥ १५ ॥ आगमिष्यतितेभर्ताशीघ्रंहत्वामृगोत्तमम् ॥ नसतस्यस्वरोव्यक्तंनकश्चिदपिदैवतः ॥१६॥ गंधर्वनगरप्रख्यामायातस्यचरक्षसः ॥ न्यासभूतासिवैदेहिन्यस्तामयिमहात्मना ॥ १७ ॥ रामेणत्वंवरारोहेनत्वांत्यक्तुमिहोत्सहे ॥ कृतवैराश्चकल्याणिवयमेतैर्निशाचरैः ॥ १८ ॥ खरस्यनिधनेदेविजनस्थानवधंप्रति ॥ राक्षसाविविधावाचोव्याहरंतिमहावने ॥१९॥ हिंसाविहारावैदेहिनचिंतयितुमर्हसि ॥ लक्ष्मणेनैवमुक्तातुक्रुद्धासंरक्तलोचना ॥ २० ॥ अब्रवीत्परुषंवाक्यंलक्ष्मणंसत्यवादिनम् ॥ अनार्यकरुणारंभनृशंसकुलपांसन ॥ २१ ॥ अहंतवप्रियंमन्येरामस्यव्यसनंमहत् ॥ रामस्यव्यसनंदृष्ट्वातेनैतानिप्रभाषसे ॥ २२ ॥ नैवचित्रंसपत्नेषुपापंलक्ष्मणयद्भवेत् ॥ त्वद्विधेषुनृशंसेषुनित्यंप्रच्छन्नचारिषु ॥ २३ ॥ सुदुष्टस्त्वंवनेराममेकमेकोनुगच्छसि ॥ ममहेतोःप्रतिच्छन्नःप्रयुक्तोभरतेनवा ॥ २४ ॥ तन्नसिद्ध्यतिसौमित्रेतवापिभरतस्यवा ॥ कथमिंदीवरश्यामंरामंपद्मनिभेक्षणम् ॥ २५ ॥ उपसंश्रित्यभर्तारंकामयेयंपृथग्जनम् ॥ समक्षंतवसौमित्रेप्राणांस्त्यक्ष्याम्यसंशयम् ॥ २६ ॥ रामंविनाक्षणमपिनैवजीवामिभूतले ॥ इत्युक्तःपरुषंवाक्यंसीतयारोमहर्षणम् ॥ २७ ॥ अब्रवील्लक्ष्मणःसीतांप्रांजलिःसजितेंद्रियः ॥ उत्तरंनोत्सहेवक्तुंदैवतंभवतीमम ॥ २८॥ वाक्यमप्रतिरूपंतुनचित्रंस्त्रीषुमैथिलि ॥ स्वभावस्त्वेषनारीणामेषुलोकेषुदृश्यते ॥ २९ ॥ विमुक्तधर्माश्चपलास्तीक्ष्णाभेदकराःस्त्रियः ॥ नसहेहीदृशंवाक्यंवैदेहिजनकात्मजे ॥३०॥ श्रोत्रयोरुभयोर्मध्येतप्तनाराचसंनिभम् ॥ उपशृण्वंतुमेसर्वेसाक्षिणोहिवनेचराः ॥३१॥ न्यायवादीयथावाक्यमुक्तोहंपरुषंत्वया ॥ धिक्त्वामद्यविनश्यंतींयन्मामेवंविशंकसे ॥ ३२ ॥

दिति वाच्यम् ॥ २२ ॥ अथ पुनर्नटवदाह नैवेत्यादि । सपत्नेषु ज्ञातित्वात् ॥ २३ ॥ सुदुष्टः सुतरां दुष्टहृदयः ॥ २४ ॥ तन्न सिद्ध्यति मत्परिग्रहरूपम् ॥ २५ ॥ उपसंश्रित्य उपभुज्य ॥ २६ ॥ ॥ २७ ॥ २८ ॥ अप्रतिरूपमत्यंतानुचितम् ॥ २९ ॥ तीक्ष्णाः क्रूरा भेदकराः कृत्रो हेत्विति टः । सुतभ्रातृपित्रादेरिति शेषः ॥ ३० ॥ वनेचरा देवा इति शेषः ॥ ३१ ॥ यत्परुषमुक्तस्तदुपशृण्वंत्विति योजना यद्यस्मान्मामेवं वागगोचरदुर्भाववंतं विशंकसे तत एव दोषादद्य विनश्यंतीमासन्नविनाशां विपरीतमतिं त्वा त्वां धिगित्यर्थः अत्र नशेर्नाशेच्छार्थः । तेन राक्षसकुलस्य नाशेच्छावतीं त्वां धिक् यतो यदर्थं मामेवं विशंकसे वदसि इति गूढम् । यद्वा विनश्यंतीं शक्तितया प्रतिक्षणं परिणामरूपेण विनश्यंतीं त्वां धिक् यन्मां त्वदस्पृष्टं त्वदाक्रमणायोग्यमेवं विशंकसे त्वदाक्रांतेषु किलैवं संभाव नेति ॥ ३२ ॥

पुनर्वेषानुसारेणाह स्त्रीत्वादिति । स्त्रीत्वादुष्टस्वभावेन क्रौर्येण युता त्वं गुरुवाक्ये ज्येष्ठनियोगे स्थितं मामेवं ब्रूषे इति शेषः । अतो यत्र काकुत्स्थस्तत्र गच्छामि गमिष्ये ते स्वस्त्यस्तु सर्वत इति शेषः ॥ ३३ ॥ यानि घोराणि निमित्तानि मे प्रादुर्भवंति तैस्त्वत्पीडां शंकमानोऽहं रामेण सह पुनरागतस्त्वां पश्येयम् । एतदपि संभवेदित्यर्थः ॥ ३४ ॥ किमनेन सामान्यपुरुषप्रसंगः शंक्य इति मन्यमाना स्वदार्ढ्यं प्रकाशयति "लक्ष्मणेनेति ॥ ३५ ॥ आबंधिष्ये रज्वा कंठमिति शेषः । विषमे भृग्वादिविषमे स्थित्वा ततः प्रपातेनेति शेषः ॥ ३६ ॥ सर्वथा कर्तव्यमर्थमाह प्रवेक्ष्यामि हुताशनम् अत एवात्र वाशब्दानुक्तिः । अनेन साक्षाद्रावणगृहं न गमिष्यामि किंत्वहं स्वरूपेणाग्नौ स्थित्वा माययैव तद्धस्तं गमिष्यामीति ध्वनितम् ॥ तदुक्तं कूर्मपुराणे रामस्य सुभगां भार्यां रावणो राक्षसेश्वरः ॥ सीतां विशालनयनां चकमे कालनोदितः ॥ गृहीत्वा मायया वेषं चरंतीं विजने वने ॥ समाहर्तुं मनश्चक्रे तापसः किल कामिनीम् ॥ विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् ॥ तद्भावं लंकायामेव हृदि कृतं तापसो भूत्वा हरिष्यामीति भावमित्यर्थः । जगाम शरणं वह्निमावसथ्यं शुचिस्मिता ॥ प्रपद्ये पावकं देवं साक्षिणं विश्वतोमुखम् ॥ आत्मानं दीप्तवपुषं सर्वभूतहृदिस्थितमित्याद्यष्टश्लोकानुक्त्वा ॥ इति बह्वृचष्टकं जप्त्वा रामपत्नी यशस्विनी ॥ ध्यायंती मनसा तस्थौ राममुन्मीलितेक्षणा ॥ अथावसथ्याद्भगवान्हव्यवाहो महेश्वरः ॥ आविरासीत्सुदीप्तात्मा तेजसा निर्दहन्निव ॥ सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया ॥

स्त्रीत्वाद्दुष्टस्वभावेनगुरुवाक्येव्यवस्थितम् ॥ गच्छामियत्रकाकुत्स्थःस्वस्तितेऽस्तुवरानने ॥३३॥ रक्षंतुत्वांविशालाक्षिसमग्रावनदेवताः ॥ निमित्तानिहिघोराणियानिप्रादुर्भवंतिमे ॥ अपित्वांसहरामेणपश्येयंपुनरागतः ॥ ३४ ॥ लक्ष्मणेनैवमुक्तातुरुदतीजनकात्मजा ॥ प्रत्युवाचततोवाक्यंतीव्रबाष्पपरिप्लुता ॥ ३५ ॥ गोदावरींप्रवेक्ष्यामिहीनारामेणलक्ष्मण ॥ आबंधिष्येऽथवात्यक्ष्येविषमेदेहमात्मनः ॥ ३६ ॥ पिबामिवाविषंतीक्ष्णंप्रवेक्ष्यामिहुताशनम् ॥ नत्वहंराघवादन्यंकदापिपुरुषंस्पृशे ॥३७॥ इतिलक्ष्मणमाश्रुत्यसीताशोकसमन्विता ॥ पाणिभ्यांरुदतीदुःखादुदरंप्रजघानह॥ ॥ ३८ ॥ तामार्तरूपांविमनारुदंतींसौमित्रिरालोक्यविशालनेत्राम् ॥ आश्वासयामासनचैवभर्तुस्तंभ्रातरंकिंचिदुवाचसीता ॥ ३९ ॥

सीतामादाय रामेष्टां पावकोंतरधीयत ॥ कृत्वा तु रावणवधं रामो लक्ष्मणसंयुतः ॥ समादायाभवत्सीतां शंकाकुलितमानसः ॥ सा प्रत्ययाय भूतानां सीता मायामयी पुनः ॥ विवेश पावकं दीप्तं ददाह ज्वलनोपि ताम् ॥ दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः ॥ रामायादर्शयत्सीतां पावकोसौ सुरप्रियः ॥ एतत्पतिव्रतानां वै माहात्म्यं कथितं मया ॥ स्त्रीणां सर्वाघशमनं प्रायश्चित्तमिदं स्मृतमिति उत्तरखंडे चतुस्त्रिंशेऽध्याये । अनेन स्त्रीणां जातिभ्रंशकरापदि अग्निप्रवेशो न दोषाय सर्वं प्रायश्चित्तं चेति ध्वनितम् । कदाप्यन्यं पुरुषं न स्पृशे इत्यन्वयः । अत्र पत्यसान्निध्ये इति शेषः । तेन विराधस्पर्शेपि न हानिः तदा पतिसन्निधानात् । किंच साक्षाद्भगवतीस्पर्शे रावणो विराधवत्तत्क्षणादेव म्रियेतैवं च सर्वराक्षसवधो न स्यादिति मायासीतारचना । किंचास्य कार्यं हनुमत्पुच्छाग्निना लंकादाहः । अन्यथा रावणवशेन लोकपालाग्निना कथं तन्नगरदाहः स्यात् एतच्छक्तिप्रवेशेन तु तत्कार्यसामर्थ्यं तस्येति मंतव्यम् । किंचैवं प्रतिज्ञाय रावणस्पर्शे जगन्मातुः प्रतिज्ञाभंगः स्यात् ॥ ३७ ॥ आश्रुत्य लक्ष्मणं प्रति प्रतिज्ञाय दुःखात्सकलकरणतापादिव उदरं प्रजघानेत्यनेन सर्वरक्षोमरणं विना न मे उदरपूर्तिरिति सूचितम् । अन्यथा शोके वक्षआघातस्यैव स्त्रीषु प्रसिद्धयासंगतिः स्यात् ॥ ३८ ॥ विमनाः सौमित्रिस्तां रुदंतीमार्तस्येव कृत

रूपामालोक्य लोकानुसारत आश्वासयामास सा च तं न किंचिदुवाच । आश्वासनव्याजेन गमनविलंबं करोतीति कोपेनेति शेषः ॥ ३९ ॥ अभिवाद्य मनसेति शेषः । किंचिदभिप्रणम्येति कायिकः स उक्तः अत्र किंचिदित्यनेन कोपः सूचितः यद्यपि कोपेपि यथोचितव्यवहारत्यागो लक्ष्मणस्यानुचितस्तथापि प्रतिज्ञोत्तरं तथैव स्वच्छायां संदर्श्य तस्या अग्निप्रवेशोद्यमेन छायाबुद्ध्या किंचित्प्रांजलित्वं किंचिदेव नमनमित्यनेन सूचितम् । कथमेनां रामेण विना त्यक्ष्यामीति बहुशोवेक्षमाणः अग्निं प्रविष्टा न वेति च वीक्षमाणः ॥ ४० ॥ नंर्भमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ ॥ नचिरादिव शीघ्रमेवेत्यर्थः विकांक्षन्विशेषेण कांक्षमाणः तत्सविधगमनमिच्छन्नित्यर्थः । कांक्षिः शंकायामपि तेन रामं विरुद्धं शंकमानः शीघ्रमितोऽनपसरणे कार्यनाशाद्रामोपि विरुद्धः स्यादिति शंकमानः शीघ्रं जगामेति व्यंग्यम् अत एव व्यवहितपूर्वसर्गांते मारीचस्य तथाशब्दोत्तरं सीताविषयां महतीं चिंतामुक्त्वा ततः पुनरपि मांसार्थमितरमृगवधप्रवृत्तिरुक्ता सा विलंबार्थै

ततस्तुसीतामभिवाद्यलक्ष्मणःकृतांजलिःकिंचिदभिप्रणम्य ॥ अवेक्षमाणोवहुशःसमैथिलींजगामरामस्यसमीपमात्मवान् ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ तयापरुषमुक्तस्तुकुपितोराघवानुजः ॥ सविकांक्षन्भृशंरामं प्रतस्थेनचिरादिव ॥ १ ॥ तदासाद्यदशग्रीवःक्षिप्रमंतरमास्थितः ॥ अभिचक्रामवैदेहींपरिव्राजकरूपधृक् ॥ २ ॥ श्लक्ष्णकाषायसंवीतःशिखीछत्री उपानही ॥ वामेचांसेऽवसज्ज्याथशुभेयष्टिकमंडलू ॥ ३ ॥ परिव्राजकरूपेणवैदेहीमन्ववर्तत ॥ तामाससादातिवलोभ्रातृभ्यांरहितांवने ॥ ४ ॥ रहितांसूर्यचंद्राभ्यांसंध्यामिवमहत्तमः ॥ तामपश्यत्ततोवालांराजपुत्रींयशस्विनीम् ॥ ५ ॥ रोहिणींशशिनाहीनांग्रहवद्भृशदारुणः ॥ तमुग्रंपापकर्माणं जनस्थानगताद्रुमाः ॥ ६ ॥ संदृश्यनप्रकंपंतेनप्रवातिचमारुतः ॥ शीघ्रस्रोताश्चतंदृष्ट्वावीक्षंतंरक्तलोचनम् ॥ ७ ॥ स्तिमितंगंतुमारेभेभयाद्गोदावरी नदी ॥ रामस्यत्वंतरंप्रेप्सुर्दशग्रीवस्तदंतरे ॥ ८ ॥ उपतस्थेचवैदेहींभिक्षुरूपेणरावणः ॥ अभव्योभव्यरूपेणभर्तारमनुशोचतीम् ॥ ९ ॥ अभ्यवर्त तंवैदेहींचित्रामिवशनैश्चरः ॥ सहसाभव्यरूपेणतृणैःकूपइवावृतः ॥ १० ॥ अतिष्ठत्प्रेक्ष्यवैदेहींरामपत्नींयशस्विनीम् ॥ तिष्ठन्संप्रेक्ष्यचतदापत्नीं रामस्यरावणः ॥ ११ ॥ शुभांरुचिरदंतोष्ठींपूर्णचंद्रनिभाननाम् ॥ आसीनांपर्णशालायांवाष्पशोकाभिपीडिताम् ॥ १२ ॥ सतांपद्मपलाशाक्षीं पीतकौशेयवासिनीम् ॥ अभ्यगच्छतवैदेहींहृष्टचेतानिशाचरः ॥ १३ ॥

व ॥ १ ॥ तदा लक्ष्मणस्यापगमे अंतरं रामलक्ष्मणयोरपसरणेनावकाशमासाद्य प्राप्य ॥ २ ॥ शिखी उपानहीति व्रीह्यादित्वादिनिः । अनेन त्रिदंडिसंन्यासिविशेषः सूचितः । तदुक्तं भारते । रावणस्तु यतिर्भूत्वा मुंडः कुंडी त्रिदंडधृगिति ॥ तत्र मुंड इत्यनेन जटित्वव्यावृत्तिः कुंडं कमंडलुः यष्टिस्त्रिदंडात्मिका भ्रातृभ्यां परस्परभ्रातृभ्यां रामलक्ष्मणाभ्याम् ॥ ३ ॥ ४ ॥ ५ ॥ ग्रहवत्केतुवत् तं संदृश्येत्यन्वयः ॥ ६ ॥ शीघ्रस्रोताः शीघ्रप्रवाहापि नदी तं वीक्षंतं वीक्षमाणं दृष्ट्वा तद्भयात्स्तिमितं मंदं गंतुमारेभे इत्यन्वयः ॥ ७ ॥ अंतरं अपकारयोग्यं छिद्रम् तदंतरे उभयरहितदेशकाले ॥ ८ ॥ उपतस्थे अतिसमीपं प्रापेत्यर्थः । अनुशोचंतीं तामिव ॥ ९ ॥ चित्रां चित्राख्यनक्षत्रम् भव्यरूपेण परमशांतयतिरूपेण ॥ १० ॥ ११ ॥ वाष्पैः शोकेन चाभिपीडिताम् स्वयमग्नौ प्रविश्य मां रक्षसे दत्तवतीति शोकवाष्पौ । रामव्यसनशंकयेत्या

पाततोर्थः ॥ १२ ॥ १३ ॥ ब्रह्मघोषं ब्राह्मणत्वमत्यभिज्ञानाय वेदघोषमुदीरयन्कुर्वन् ॥ १४ ॥ १५ ॥ रौप्यकांचनमुत्तमकांचनम् ॥ १६ ॥ ह्रीर्गौरी श्रीरैश्वर्यप्रधाना भगवच्छक्तिः लक्ष्मीः सौभाग्यप्रधाना भूतिरणिमादिसिद्धिः रतिः कामपत्नी स्वैरचारिणी त्वं वने आगमनात् ॥१७॥ प्रशशंसेत्यस्य प्रपंचः समा इत्यादिसमा इति समसंस्थानाः शिखरिणः कुंदकुड्मलवत् प्रशस्ताग्राः ॥१८॥ संप्रगल्भितौ आलिंगनादौ संजातप्रागल्भ्यौ संप्रवल्गिताविति पाठे आलिंगनोद्यतावित्यर्थः ॥ १९ ॥ मणिप्रवेको मणिश्रेष्ठः ॥२०॥ नदी कर्त्री कूलं स्वकूलम् ॥२१॥ करांतेनांगुष्ठप्रदेशिनीचक्रप्रमाणेन मितं मध्यं यस्यास्तथाभूते ॥ २२ ॥

दृष्ट्वाकामशराविद्धोब्रह्मघोषमुदीरयन् ॥ अब्रवीत्प्रश्रितंवाक्यंरहितेराक्षसाधिपः ॥ १४ ॥ तामुत्तमांत्रिलोकानांपद्महीनामिवश्रियम् ॥ विभ्राजमानांवपुषारावणःप्रशशंसह॥१५॥ रौप्यकांचनवर्णाभेपीतकौशेयवासिनि ॥ कमलानांशुभांमालांपद्मिनीवचबिभ्रती ॥ १६ ॥ ह्रीःश्रीःकीर्तिःशुभालक्ष्मीरप्सरावाशुभानने ॥भूतिर्वात्वंवरारोहेरतिर्वास्वैरचारिणी ॥ १७ ॥ समाःशिखरिणःस्निग्धाःपांडुरादशनास्तव॥विशालेविमलेनेत्रेरक्तांतेकृष्णतारके ॥ १८॥ विशालंजघनंपीनमूरूकरिकरोपमौ ॥ एतावुपचितौवृत्तौसंहतौसंप्रगल्भितौ ॥ १९ ॥ पीनोन्नतमुखौकांतौस्निग्धतालफलोपमौ ॥ मणिप्रवेकाभरणौरुचिरौतौपयोधरौ ॥ २० ॥ चारुस्मितेचारुदतिचारुनेत्रेविलासिनि ॥ मनोहरसिमेरामेनदीकूलमिवांभसा ॥२१॥ करांतमितमध्यासिसुकेशेसंहतस्तनि ॥ नैवदेवीनगंधर्वीनयक्षीनचकिन्नरी ॥ २२ ॥ नैवंरूपामयानारीदृष्टपूर्वामहीतले ॥ रूपमग्र्यंचलोकेषुसौकुमार्यंवयश्चते ॥ २३ ॥ इहवासश्चकांतारेचित्तमुन्माथयंतिमे ॥ साप्रतिक्रामभद्रंतेनत्वंवस्तुमिहार्हसि ॥२४॥ राक्षसानामयंवासोघोराणांकामरूपिणाम्॥ प्रासादाग्राणिरम्याणिनगरोपवनानिच ॥ २५॥ संपन्नानिसुगंधीनियुक्तान्याचरितुंत्वया ॥ वरंमाल्यंवरंगंधंवरंवस्त्रंचशोभने ॥ २६ ॥ भर्तारंचवरंमन्येत्वद्युक्तमसितेक्षणे ॥ कात्वंभवसिरुद्राणांमरुतांवाशुचिस्मिते ॥ २७ ॥ वसूनांवावरारोहेदेवताप्रतिभासिमे ॥ नेहगच्छंतिगंधर्वानदेवानचकिन्नराः ॥ ॥२८॥ राक्षसानामयंवासःकथंतुत्वमिहागता ॥ इहशाखामृगाःसिंहाद्वीपिव्याघ्रमृगावृकाः ॥ २९ ॥ ऋक्षास्तरक्षवःकंकाःकथंतेभ्योनबिभ्यसे ॥ मदान्वितानांघोराणांकुंजराणांतरस्विनाम् ॥३०॥ कथमेकामहारण्येनबिभेषिवरानने ॥ कासिकस्यकुतश्चत्वंकिंनिमित्तंचदंडकान् ॥३१॥ एकाचरसिकल्याणिघोरान्राक्षससेवितान् ॥ इतिप्रशस्तावैदेहीरावणेनमहात्मना ॥ ३२ ॥ द्विजातिवेषेणहितंदृष्ट्वारावणमागतम् ॥ सर्वैरतिथिसत्कारैःपूजयामासमैथिली॥ ३३॥ उपानीयासनंपूर्वंपाद्येनाभिनिमंत्र्यच ॥ अब्रवीत्सिद्धमित्येवतदातंसौम्यदर्शनम् ॥ ३४ ॥

रूपं सुकुमारता वयः कांतारवास इति चत्वारि चित्तमुन्माथयंति विकृतं कुर्वंति प्रतिक्राम निर्गच्छ रामचंद्राधिष्ठितस्थाने । राक्षसपराक्रमासंभवादेवं वचनम् ॥२३॥२४॥२५॥ आचरितुमुपभोक्तुम् त्वद्युक्तं त्वत्संयुक्तमाल्यादि वरम् अन्यत्तु विफलमिति भावः ॥ २६ ॥ २७ ॥ २८ ॥ द्वीपिव्याघ्रौ सबिंदुनिर्बिंदू ॥ २९ ॥ तरक्षुर्मृगादनः बिभ्यसे बिभेषि ॥ ३० ॥ ३१ ॥ प्रशस्ता कृतप्रशंसा ॥ ३२ ॥ द्विजातिवेषेण तमागतं रावणं दृष्ट्वा द्विजातिवेषोयं रावण इति ज्ञात्वापि अतिथिसत्कारैः अतिथियोग्यसत्कारैः ॥ ३३ ॥ पाद्येनाभिनिमंत्र्य सत्कृत्य तदा पाद्यदानोत्तरकाले सौम्यदर्शनं तं सिद्धं

पक्रमन्त्रमित्यब्रवीत् ॥ ३४ ॥ पात्रं कमंडलुः कुसुंभं तद्रक्तवस्त्रम् तदुभयधारिणम् उपायानां ब्राह्मणत्वप्रतिपत्त्यै रावणेन कृतानां काषायवस्त्रब्रह्मघोषदंडादीनां दर्शनात् उद्वेष्टुमुपेक्षितुमशक्यमिति विचार्येति शेषः । तथागतं ब्राह्मणवेषेणागतं रावणं ब्राह्मणवदेव न्यमंत्रयत् । पाठांतरं त्वत्राशक्तकल्पितम् । अयमेव रक्षःसंहारोपाय इति दर्शनादित्यपि गूढमत्र ॥ ३५ ॥ निमंत्रणप्रकारः इयं ब्रूसीत्यादि । वनजातं वन्यपदार्थजातं त्वदर्थमेव सिद्धं कृतं तदिहोपभुज्यताम् ॥ ३६ ॥ एवं निमंत्र्यमाणो रावणः आत्मवधाय स्वनाशाय तस्याः प्रसह्य हरणे मनो दृढं निश्चितं समर्पयामास सम्यग्वधाय कृतवानित्यर्थः ॥ ३७ ॥ सुवेषं शोभनाकारम् मृगयागतं मृगयां प्रतिगतम् हरितं श्यामम् ॥ ३८ ॥ जडैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥ रावणेन त्विति । आत्मानं जिहीर्षुणा परिव्राजकरूपेण रावणेन पृष्टा वैदेही आत्मना स्वयमेवात्मानं शशंस ॥ १ ॥ ननु पूजामात्रं कर्तव्यं किं प्रतिवचनेनेत्याह ब्राह्मणश्चेति । एष अनुक्तः इत्यार्षोसंधिः ।

द्विजातिवेषेणसमीक्ष्यमैथिलीसमागतंपात्रकुसुंभधारिणम् ॥ अशक्यमुद्वेष्टुमुपायदर्शनान्यमंत्रयद्ब्राह्मणवत्तथागतम् ॥ ३५ ॥ इयंबृसीब्राह्मणकाममास्यतामिदंचपाद्यंप्रतिगृह्यतामिति ॥ इदंचसिद्धंवनजातमुत्तमंत्वदर्थमव्यग्रमिहोपभुज्यताम् ॥ ३६ ॥ निमंत्र्यमाणःप्रतिपूर्णभाषिणींनरेंद्रपत्नींप्रसमीक्ष्यमैथिलीम् ॥ प्रसह्यतस्याहरणेदृढंमनःसमर्पयामासवधायरावणः ॥ ३७ ॥ ततःसुवेषंमृगयागतंपतिंप्रतीक्षमाणासहलक्ष्मणंतदा ॥ निरीक्षमाणाहरितं ददर्शतन्महद्वनंनैवतुरामलक्ष्मणौ ॥ ३८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रावणेनतुवैदेहीतदापृष्टाजिहीर्षुणा ॥ परिव्राजकरूपेणशशंसात्मानमात्मना ॥ १ ॥ ब्राह्मणश्चातिथिश्चैषअनुक्तोहिशपेतमाम् ॥ इतिध्यात्वामुहूर्तंतुसीतावचनमब्रवीत् ॥ २ ॥ दुहिताजनकस्याहंमैथिलस्यमहात्मनः ॥ सीतानामास्मिभद्रंतेरामस्यमहिषीप्रिया ॥३॥ उषित्वाद्वादशसमाइक्ष्वाकूणांनिवेशने ॥ भुंजानामानुषान्भोगान्सर्वकामसमृद्धिनी ॥ ४ ॥ तत्रत्रयोदशेवर्षेराजाऽमंत्रयतप्रभुः ॥ अभिषेचयितुंरामंसमेतोराजमंत्रिभिः ॥ ५ ॥ तस्मिन्संभ्रियमाणेतुराघवस्याभिषेचने ॥ कैकेयीनामभर्तारंममार्यायाचतेवरम् ॥ ६ ॥ परिगृह्यतुकैकेयीश्वशुरंसुकृतेनमे ॥ ममप्रव्राजनंभर्तुर्भरतस्याभिषेचनम् ॥ ७ ॥ द्वावयाचतभर्तारंसत्यसंधंनृपोत्तमम् ॥ नाद्यभोक्ष्येनचस्वप्स्येनपास्येचकदाचन ॥ ८ ॥ एषमेजीवितस्यांतोरामोयद्भिषिच्यते ॥ इतिब्रुवाणांकैकेयींश्वशुरोमेसपार्थिवः ॥ ९ ॥ अयाचतार्थैरन्वर्थैर्नचयाच्ञांचकारसा ॥ ममभर्तामहातेजावयसापंचविंशकः ॥१०॥

अनुक्तः अनुक्तप्रतिवचनः ॥ २ ॥ ३ ॥ सर्वकामसमृद्धिनी व्रीह्यादित्वादिनिः ॥ ४ ॥ राजमंत्रिभिः राज्ञो राज्यनिर्वाहकैर्मंत्रिभिरित्यर्थः ॥ ५ ॥ संभ्रियमाणे संपाद्यमानसंभारे इत्यर्थः । भर्तारं दशरथम् ममार्या मम पूज्या श्वश्रूः अनार्येति कचित्पाठः ॥ ६ ॥ मे श्वशुरं सुकृतेन परिगृह्य वररूपेण सुकृतेन वशीकृत्य । यद्वा धर्मेण शापयित्वेत्यर्थः । मम भर्तुः प्रव्राजनं भरतस्याभिषेचनमिति द्वौ वरावयाचत ॥७॥ ॥ ८ ॥ ९ ॥ अन्वर्थैरनुगतार्थैः सप्रयोजनैरुपभोगक्षमैरर्थैरयाचत । सर्वाण्युत्तमवस्तूनि तुभ्यं दास्यामि रामाभिषेचने विघ्नं मा कुर्विति याच्यमाना न याच्ञां चकार नांगीकृतवती । वयसा पंचविंशकः वननिर्गमनकाले इति शेषः । नन्विदमयुक्तम् ऊनषोडशवर्षोयमिति विश्वामित्रं प्रति दशरथोक्तेः । उषित्वा द्वादश समा इत्यत्रोक्तेश्चेति चेन्न अल्पांतरत्वात् । अतितरुणावस्थायामपि राज्यं त्यक्तवानित्यर्थे तात्पर्येण

स्थया तथोक्तिः । यद्वाऽतिक्रांतपंचाविंशक इत्यर्थः । मम भर्ता वयसा महातेजाः अतितरुण इत्यर्थः । पंचाविंशकः सांख्यसिद्धं पंचविंशं तत्त्वं चैतन्यं सोयमेव एतच्चैतन्येनैव जगद्व्याप्तं न ततोधिकं किंचिदस्तीति सूचयितुं तथोक्तिरिति तत्त्वम ॥ १० ॥ तथा मम जन्मतो वनप्रवेशसमयेऽतीतानीत्यर्थः । गण्यत इत्यार्षमेकत्वम् । मम पंचतन्मात्रपंचमहाभूतपंचेंद्रियाहंकारबुद्धिमनोरूपाण्यष्टादशवर्षाणि पर्वाणि जन्मनि कार्ये गण्यंत इति तन्मूलीभूता प्रकृतिरहमिति सूचितम् ॥ ११ ॥ कामार्तः कैकेयीकामार्तः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अनृतान्मोचय तद्दत्तवरानुपालनेनेति शेषः ॥ १६ ॥ १७ ॥ वैमात्रः शुभ्रा

अष्टादशहिवर्षाणिममजन्मनिगण्यते ॥ रामेतिप्रथितोलोकेसत्यवाञ्छीलवाञ्छुचिः ॥ ११ ॥ विशालाक्षोमहाबाहुःसर्वभूतहितेरतः ॥ कामार्तश्चमहाराजःपितादशरथःस्वयम् ॥ १२ ॥ कैकेय्याःप्रियकामार्थंतंरामंनाभ्यषेचयत् ॥ अभिषेकायतुपितुःसमीपंराममागतम् ॥ १३ ॥ कैकेयीममभर्तारमित्युवाचद्रुतंवचः ॥ तवपित्रासमाज्ञप्तंममेदंशृणुराघव ॥ १४ ॥ भरतायप्रदातव्यमिदंराज्यमकंटकम् ॥ त्वयातुखलुवस्तव्यंनववर्षाणिपंचच ॥१५॥ वनेप्रव्रजकाकुत्स्थपितरंमोचयानृतात् ॥ तथेत्युवाचतांरामःकैकेयीमकुतोभयः ॥१६॥ चकारतद्वचःश्रुत्वाभर्तोममदृढव्रतः ॥ दद्यान्नप्रतिगृह्णीयात्सत्यंब्रूयान्नचानृतम् ॥ १७ ॥ एतद्ब्राह्मणरामस्यव्रतंधृतमनुत्तमम् ॥ तस्यभ्रातातुवैमात्रोलक्ष्मणोनामवीर्यवान् ॥१८॥ रामस्यपुरुषव्याघ्रःसहायःसमरेऽरिहा ॥ सभ्रातालक्ष्मणोनामब्रह्मचारीदृढव्रतः ॥ १९ ॥ अन्वगच्छद्धनुष्पाणिःप्रव्रजंतंमयासह ॥ जटीतापसरूपेणमयासहसहानुजः ॥ २० ॥ प्रविष्टोदंडकारण्यंधर्मनित्योदृढव्रतः ॥ तेवयंप्रच्युताराज्यात्कैकेय्यास्तुकृतेत्रयः ॥ २१ ॥ विचरामोद्विजश्रेष्ठवनंगंभीरमोजसा ॥ समाश्वससुहूर्तंतुशक्यंवस्तुमिहत्वया ॥ २२॥ आगमिष्यतिमेभर्तावन्यमादायपुष्कलम् ॥ रुरून्गोधान्वराहांश्चहत्वादायामिषंबहु ॥ २३ ॥ सत्वंनामचगोत्रंचकुलमाचक्ष्वतत्त्वतः ॥ एकश्चदंडकारण्येकिमर्थंचरसिद्विज ॥२४॥ एवंब्रुवत्यांसीतायांरामपत्न्यांमहाबलः ॥ प्रत्युवाचोत्तरंतीव्रंरावणोराक्षसाधिपः ॥२५॥ येनवित्रासितालोकाःसदेवासुरमानुषाः ॥ अहंसरावणोनामसीतेरक्षोगणेश्वरः ॥ २६ ॥ त्वांतुकांचनवर्णाभांदृष्ट्वाकौशेयवासिनीम् ॥ रतिंस्वकेषुदारेषुनाधिगच्छाम्यनिंदिते ॥ २७ ॥ बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ॥ सर्वासामेवभद्रंतेममाग्रमहिषीभव ॥ २८ ॥ लंकानामससमुद्रस्यमध्येममममहापुरी ॥ सागरेणपरिक्षिप्तानिविष्टागिरिमूर्धनि ॥ २९ ॥ तत्रसीतेमयासार्द्धंवनेषुविचरिष्यसि ॥ नचास्यवनवासस्यस्पृहयिष्यसिभामिनी ॥ ३० ॥ पंचदास्यःसहस्राणिसर्वाभरणभूषिताः ॥ सीतेपरिचरिष्यंतिभार्याभवसिमेयदि ॥ ३१ ॥

दिषु विमातृशब्दपाठेपि आर्षोऽण् । असहोदरो भ्रातेत्यर्थः । विभिन्नाया मातुरपत्यं वैमात्रः ॥ १८ ॥ १९ ॥२०॥ कैकेय्याः कृते तन्निमित्तम् ॥२१॥ यदि वस्तुं शक्यं तर्हि मुहूर्तं समाश्वस विश्रमं कुर्वित्यर्थः ॥ २२ ॥ हत्वा आदायेति च्छेदः आदनमादस्तदर्थमित्यर्थः ॥ २३ ॥ गोत्रमार्षम् कुलं प्रसिद्धवंश्यकृतम् । यद्वा गोत्रं पितृकुलं कुलं मातुः ॥ २४ ॥ २५ ॥ २६ ॥ दृष्ट्वा पूर्वं श्रुत्वा अद्य दृष्ट्वा चेत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ वनेषु उपवनेषु ॥ ३० ॥ पंचेत्यादि । रक्षोयोनौ तमोगुणप्रधानायां जातत्वादुद्रिक्ततमसा भगवन्मायया ज्ञानाच्छादनादेवमुक्तिः । सर्वथा तत्त्वज्ञो रावणः कथमेवं वदेदिति तु श्रद्धा

जाड्यमेव तत्त्वज्ञचिह्नानुपलंभात् । सीतारामौ सर्वेश्वरावित्येतन्मात्रज्ञानं रावणस्यास्त्येवेत्यपि श्रद्धाजाड्यमेव विष्णुपुराणादिविरोधात् । तथाचोक्तं विष्णुपुराणे ॥ मैत्रेय उवाच ॥ हिरण्यकशिपुत्वे च रावणत्वे च विष्णु
ना ॥ अवाप निहतो भोगानप्राप्यानमरैरपि ॥ न लयं तत्र तेनैव निहतः स कथं पुनः ॥ संप्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ ॥ एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर ॥ कौतूहलपरेणैतत्पृष्टो मे वक्तुमर्ह
सि ॥ पराशर उवाच ॥ दैत्येश्वरस्य तु वधायाखिललोकोत्पत्तिस्थितिविनाशकारिणाऽपूर्वां तनुं गृह्णता नृसिंहरूपमाविष्कृतं तत्र हिरण्यकशिपोर्विष्णुरयमित्येवं न मनस्यभूत् निरतिशयपुण्यजातसंभूतमेतत्सत्त्वमिति
रजउद्रेकप्रेरितैकाग्रमतिस्तद्भावनायोगात्ततोवाप्तवधहेतुकीं निरतिशयामेवाखिलत्रैलोक्याधिक्यधारिणीं दशाननत्वे भोगसंपदमवाप । नातस्तस्मिन्ननादिनिधने परब्रह्मभूते भगवत्यनालंबनीकृते मनसस्तत्र लयं दशान
नत्वेप्यनंगपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत् । नायमच्युत इत्यासक्तिर्विपद्यतोंतःकरणस्य मानुषबुद्धिरेव केवलमभूत् । विपद्यत इति विपद्यतोपीत्यर्थः । तस्मिन्नपि समये
विष्णुत्वबुद्धिर्नासीदिति भावः । पुनरच्युतविनिपातनमात्रफलमखिलभूमंडलश्लाघ्यचेदिराजकुलजन्माव्याहतं चैश्वर्यं शिशुपालत्वे चावाप । तत्र त्वखिलान्येव भगवन्नामकारणान्यभवन् । नामानि गोविंदादीनि कार
णानि गवां रक्षणादीनीत्यर्थः ततश्च तत्कारणकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरतमनेकजन्मसंवर्धितविद्वेषानुबंधिचित्तो विनिंदन्संतर्जनादिषूच्चारणमकरोत् तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्र
धार्यमलकिरीटकेयूरकटकोपशोभितमुदारपीवरचतुर्बाहुशंखचक्रगदाधरमतिप्रौढवैरानुभावादटनभोजनस्नानासनशयनादिष्ववस्थांतरेषु नैवाप ययावस्यात्मचेतसः ततस्तमेवानुक्रोशेषूच्चारयंस्तमेव हृदये धारयन्नात्मवधाय
भगवदस्त्रचक्रांशुमालोज्ज्वलमक्षय्यतेजःस्वरूपं परमब्रह्मस्वरूपमपगतरागद्वेषादिदोषं भगवंतमद्राक्षीत् । तावच्च भगवच्चक्रेणाशुव्यापादितः । तेन तत्स्मरणदग्धाखिलावसंचयो भगवतैवांतमुपनीतस्तस्मिन्नेव लयमुपय
यौ एतत्तवाभिहितं भगवानिह कीर्तितः संस्मृतश्च द्वेषानुबंधेनाप्यखिलसुरासुरादिदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमंतमिति। लोकदृष्ट्या तु सीतासादृश्यात् सीताबुद्ध्याहरणाच्चाततायित्वसंपत्त्या तद्वधे भगव

**रावणेनैवमुक्तातुकुपिताजनकात्मजा ॥ प्रत्युवाचानवद्यांगीतमनादृत्यराक्षसम् ॥ ३२ ॥**
**महागिरिमिवाकंप्यंमहेंद्रसदृशंपतिम् ॥ महोदधिमिवाक्षोभ्यमहंराममनुव्रता ॥ ३३ ॥**

तः प्रवृत्तिः एवं च ईदृशोक्तीनां यद्वातद्वाप्रकारेणान्यथायोजनप्रयासस्तीर्थादीनां विफल एव । विष्णुपुराणोक्तरीत्यैव भागवते उक्तम् ॥ एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयमिति एतं इत्यनेन पूर्वोक्ता अवतारा
ऋष्यादयश्च परामृश्यंते पुंसः परमेश्वरस्य । तत्रावतारा अंशाः ऋष्यादयः कलाः । यद्यपि कृष्णोप्यंश एव तत्रैव दशमे तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस न इत्याद्युक्तेः । उज्जहारात्मनः केशौ सितकृष्णौ महा
मुने इति विष्णुपुराणाद्युक्तेः । द्वितीये भागवतेप्येवमेव भारतेप्येवमेव । एतेन तत्रांशेनावतीर्णस्येत्यादि दशमस्थश्लोकव्याख्यानमपास्तम् । तथापि तत्तत्कारणकृतनाम्नां तत्र लाभाद्बहुशोऽज्ञानकार्यनाटनाच्च शंखचक्रा
दीनां प्रत्यक्षतो दर्शनाच्च स्वयं भगवानित्युक्तिः । नैतावता रामाद्यवताराणां ततो न्यूनत्वमिति भ्रमः कार्यः । श्रीधरोपि मत्स्याद्यवताराणां सर्वज्ञत्वसर्वशक्तिमत्त्वेपि यावदुपयोगमेव ज्ञानशक्त्याविष्कारः । अज्ञाना
विष्कारश्च बहुशः । कृष्णेत्वंत्योऽल्पः यथाऽभिमन्युमरणे नाहं तत्र संनिहित आसमतस्तस्य मरणमिति । यथा द्रौपद्याः सभायां नयनकाले नाहं द्वारकायां संनिहितः किंतु सौभवधार्थं गतोऽतो भवतामयं क्लेश
इति । सौभवधे च मायिकं मृतवसुदेवशरीरं दृष्ट्वा मोह इत्याद्यज्ञाननाट्यमल्पम् । रामावतारेपि ज्ञानाविष्कारस्तत्र तत्र दर्शितो दर्शयिष्यते च । अवताराश्चेमे विराज एवांशाः । भागवते प्रथमे तृतीयेऽध्याये । जगृहे
पौरुषं रूपं भगवान्महदादिभिः ॥ संभूतं षोडशकलमादौ लोकसिसृक्षयेत्यादिना वैराजं रूपमुक्त्वा एतन्नानावताराणां निधानं बीजमव्ययम् । यस्यांशांशेन सृज्यंते देवतिर्यङ्नरादयः इत्युक्तेः । एतदुक्तं वैराजं
निधानं कार्यावसाने प्रवेशस्थानं बीजमुद्गमकारणं अव्ययं स्वयं चिरस्थायि । न केवलमवताराणामेव बीजं किंतु सर्वेषामित्याह यस्येति । यद्यपि विराट् जीव एव तथापि तदंतर्यामिणस्तथोपासनायैवमुक्तम् । सित
कृष्णकेशोद्धारेण च तेषां मूर्धन्यत्वेन मुख्यत्वात्तद्वन्मुख्ययोः प्रधानयोर्मदंशयोस्तद्वर्णयोर्वैकुंठस्थभूतलस्थयोर्विष्णुशेषयोरवतार इति सूचितमतएवांते कृष्णं प्रति देवदूतेन त्वां विना स्वर्गो न शोभतेऽतस्त्वमागच्छेति
निवेदितमिति स्पष्टं पुराणेषु । अत्र रामं प्रत्यपि तथैवोक्तं अंशत्वं चैषामौपाधिकं मायायाः सांशत्वादित्यलम् ॥ ३१ ॥ रावणेनेति । कुपिता कुपितेव ॥ ३२ ॥ पर्वतसमुद्रोपमाभ्यां धैर्यगांभीर्ये दर्शिते ॥ ३३ ॥

न्यग्रोधपरिमंडलं तत्सदृशपरिणाहं तद्वत्सर्वाश्रयं च राममुद्दिश्यानुसरणमेव व्रतं यस्याः सा ॥ ३४ ॥ सिंहस्य विक्रांतं पदक्षेपस्तद्वत् पदनिक्षेपेण सगर्वगमनशीलं सिंहसंकाशं पराक्रमे इति भावः । नृसिंहमित्यस्य हिरण्यकशिपुहंतृत्वं व्यंग्यम् ॥३५॥ राजा चासौ वत्सः श्रेष्ठराजस्तम् । यद्वा दशरथपुत्रम् ॥३६॥ यथा आदित्यप्रभा आदित्यात् पृथक्कृत्य केनापि स्प्रष्टुमशक्या तथाहं शक्तिशक्तिमतोरवियोगादिति गूढम् ॥३७॥ कांचन वृक्षदर्शनं मुमूर्षुलक्षणम् । मंदं क्षीणमायुरादि भजति स मंदभाक् ॥३८॥ क्षुधितस्य सिंहस्य सर्पस्य वदनाद्दंष्ट्राग्रहणेच्छासदृशीमदिच्छा । एषु सर्वत्र निदर्शनालंकारः ॥ ३९ ॥ ४० ॥ लेढि लेक्षि ॥ ४१ ॥

सर्वलक्षणसंपन्नंन्यग्रोधपरिमंडलम् ॥ सत्यसंधंमहाभागमहंराममनुव्रता ॥ ३४ ॥ महाबाहुंमहोरस्कंसिंहविक्रांतगामिनम् ॥ नृसिंहंसिंहसंकाशमहंराममनुव्रता ॥३५॥ पूर्णचंद्राननंरामंराजवत्संजितेंद्रियम् ॥ पृथुकीर्तिमहाबाहुमहंराममनुव्रता ॥३६॥ त्वंपुनर्जंबुकःसिंहींमामिहेच्छसिदुर्लभाम् ॥ नाहंशक्यात्वयास्प्रष्टुमादित्यस्यप्रभायथा ॥ ३७ ॥ पादपान्कांचनान्नूनंबहून्पश्यसिमंदभाक् ॥ राघवस्यप्रियांभार्यांयस्त्वमिच्छसिराक्षस ॥३८॥ क्षुधितस्यचसिंहस्यमृगशत्रोस्तरस्विनः ॥ आशीविषस्यवदनाद्दंष्ट्रामादातुमिच्छसि ॥ ३९ ॥ मंदरंपर्वतश्रेष्ठंपाणिनाहर्तुमिच्छसि ॥ कालकूटंविषंपीत्वास्वस्तिमान्गंतुमिच्छसि ॥ ४० ॥ अक्षिसूच्याप्रमृजसिजिह्वयालेढिचक्षुरम् ॥ राघवस्यप्रियांभार्यामधिगंतुंत्वमिच्छसि ॥ ४१ ॥ अवसज्ज्यशिलांकंठेसमुद्रंतर्तुमिच्छसि ॥ सूर्यचन्द्रमसौचोभौपाणिभ्यांहर्तुमिच्छसि ॥ ४२ ॥ योरामस्यप्रियांभार्यांप्रधर्षयितुमिच्छसि ॥ अग्निंप्रज्वलितंदृष्ट्वावस्त्रेणाहर्तुमिच्छसि ॥ ४३ ॥ कल्याणवृत्तांयोभार्यांरामस्याहर्तुमिच्छसि ॥ अयोमुखानांशूलानांमध्येचरितुमिच्छसि ॥ रामस्यसदृशींभार्यांयोऽधिगंतुंत्वमिच्छसि ॥ ४४ ॥ यदंतरंसिंहसृगालयोर्वनेयदंतरंस्यंदनिकासमुद्रयोः ॥ सुराग्र्यसौवीरकयोर्यदंतरंतदंतरंदाशरथेस्तवैवच ॥ ४५ ॥ यदंतरंकांचनसीसलोहयोर्यदंतरंचंदनवारिपंकयोः ॥ यदंतरंहस्तिविडालयोर्वनेतदंतरंदाशरथेस्तवैवच ॥ ४६ ॥ यदंतरंवायसवैनतेययोर्यदंतरंमद्गुमयूरयोरपि ॥ यदंतरंहंसकगृध्रयोर्वनेतदंतरंदाशरथेस्तवैवच ॥ ४७ ॥ तस्मिन्सहस्राक्षसमप्रभावेरामेस्थितेकार्मुकबाणपाणौ ॥ हृतापितेहंनजरांगमिष्येआज्यंयथामक्षिकयाऽवगीर्णम् ॥४८॥ इतीवतद्वाक्यमदुष्टभावासुदुष्टमुक्त्वारजनीचरंतम् ॥ गात्रप्रकंपाद्व्यथितावभूववातोद्धतासाकदलीवतन्वी ॥ ॥ ४९ ॥ तांवेपमानामुपलक्ष्यसीतांसरावणोमृत्युसमप्रभावः ॥ कुलंबलंनामचकर्मचात्मनःसमाचचक्षेभयकारणार्थम् ॥ ५० ॥ इत्यार्षेश्रीमद्रा० वाल्मी० आदि० अर० सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ एवंब्रुवत्यांसीतायांसंरब्धःपरुषंवचः ॥ ललाटेभ्रुकुटिंकृत्वारावणःप्रत्युवाचह ॥ १ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ स्यंदनिका क्षुद्रनदी । सुराग्र्यममृतम् । सौवीरकमारनालं कांजिकम् ॥ ४५ ॥ कांचनसीसरूपलोहयोरित्यर्थः । हस्ती गजः विडालो मार्जारः ॥ ४६ ॥ मद्गुर्जलकाकः ॥ ४७ ॥ जरां जीर्णावस्थां सुखोदर्कां मक्षिकयावगीर्णं भुक्तमाज्यं यथा तां नाशयति तद्वत् ॥ ४८ ॥ इतीव इत्येवं सुदुष्टम् अत्यंतदुःखजनकं तत्पूर्वोक्तम् । वातोद्धता महावातप्रकंप्यमाना ॥ ४९ ॥ भयकारणार्थं भयोत्पादनार्थम् ॥ ५० ॥ वेपमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ ॥ एवमिति । परुषं क्रोधावेशेन वर्णानां चर्वणेनैवोच्चार

णाव् श्रुतिकटु अक्षरमित्यर्थः । संरब्धः क्रुद्धः ॥ १ ॥ सापत्नः । शिवाद्यण् । सापत्ने इति पाठे मातृसपत्नीपुत्रत्वे प्रसिद्ध इत्यर्थः । भ्रातेत्यत्र च साक्षादिति तदा पाठः । एतेन कुलप्राशस्त्यमुक्तम् ॥ २ ॥ ॥ ३ ॥ वैमात्रः प्राग्वत् । द्वैमात्र इतिपाठे द्वितीया माता द्विमाता तदपत्यमित्यर्थे मातुरुदित्युत्वाभाव आर्षः । अस्य द्विशब्दस्य द्विपूरणार्थत्वेपि संख्यार्थत्वाभावान्नोत्वमित्यन्ये । कारणांतरे निमित्तविशेषे द्वंद्वं द्वंद्वयुद्धं आसादितः प्रापितः ॥ ४ ॥ स्वमधिष्ठानं स्वां पुरीं लंकां कैलासाश्रयणं प्रबलाश्रयणबुद्ध्या ॥ ५ ॥ येन पुष्पकेण वीर्यादावर्जितं आच्छिद्य गृहीतं मयेति शेषः ॥ ६ ॥ ७ ॥ तीव्रांशुरपि मम भयाच्छिशिरांशुः संपद्यते ॥ ८ ॥ यत्र चरामि येन मार्गेण गच्छामीति यावत् । यत्र च तिष्ठामि तत्र भवंतीत्यन्वयः ॥ ९ ॥ समुद्रस्य पारे मम लंका नाम पुरीत्यन्वयः ॥ १० ॥ प्राका

भ्रातावैश्रवणस्याहंसापत्नोवरवर्णिनि ॥ रावणोनामभद्रंतेदशग्रीवःप्रतापवान् ॥ २ ॥ यस्यदेवाःसगंधर्वाःपिशाचपतगोरगाः ॥ विद्रवंतिसदाभीता मृत्योरिवसदाप्रजाः ॥ ३ ॥ येनवैश्रवणोभ्रातावैमात्रःकारणांतरे ॥ द्वंद्वमासादितःक्रोधाद्रणेविक्रम्यनिर्जितः ॥ ४ ॥ मद्भयार्तःपरित्यज्यस्वमधिष्ठानमृद्धिमत् ॥ कैलासंपर्वतश्रेष्ठमध्यास्तेनरवाहनः ॥५॥ यस्यतत्पुष्पकंनामविमानंकामगंशुभम् ॥ वीर्यादावर्जितंभद्रेयेनयामिविहायसम् ॥६॥ ममसंजातरोषस्यमुखंदृष्ट्वैवमैथिलि ॥ विद्रवंतिपरित्रस्ताःसुराःशक्रपुरोगमाः ॥ ७ ॥ यत्रतिष्ठाम्यहंतत्रमारुतोवातिशंकितः ॥ तीव्रांशुःशिशिरांशुश्च भयात्संपद्यतेदिवि ॥ ८ ॥ निष्कंपपत्रास्तरवोनद्यश्चस्तिमितोदकाः ॥ भवंतियत्रतत्राहंतिष्ठामिचचरामिच ॥ ९ ॥ ममपारेसमुद्रस्यलंकानामपुरी शुभा ॥ संपूर्णाराक्षसैर्घोरैर्यथेंद्रस्यामरावती ॥ १० ॥ प्राकारेणपरिक्षिप्तापांडुरेणविराजिता ॥ हेमकक्ष्यापुरीरम्यावैदूर्यमयतोरणा ॥ ११ ॥ हस्त्यश्वरथसंबाधातूर्यनादविनादिता ॥ सर्वकामफलैर्वृक्षैःसंकुलोद्यानभूषिता ॥ १२ ॥ तत्रत्वंवसहेसीतेराजपुत्रिमयासह ॥ नस्मरिष्यसिनारीणांमानुषीणांमनस्विनि ॥ १३ ॥ भुंजानामानुषान्भोगान्दिव्यांश्चवरवर्णिनि ॥ नस्मरिष्यसिरामस्यमानुषस्यगतायुषः ॥ १४ ॥ स्थापयित्वाप्रियंपुत्रंराज्ये दशरथोनृपः ॥ मंदवीर्यस्ततोज्येष्ठःसुतःप्रस्थापितोवनम् ॥ १५ ॥ तेनकिंभ्रष्टराज्येनरामेणगतचेतसा ॥ करिष्यसिविशालाक्षितापसेनतपस्विना ॥ १६ ॥ रक्षराक्षसभर्तारंकामयस्वयमागतम् ॥ नमन्मथशराविष्टंप्रत्याख्यातुंत्वमर्हसि ॥ १७ ॥ प्रत्याख्यायहिमांभीरुपश्चात्तापंगमिष्यसि ॥ चरणेनाभिहत्येवपुरूरवसमुर्वशी ॥ १८ ॥ अंगुल्यानसमोरामोममयुद्धेसमानुषः ॥ तवभाग्येनसंप्राप्तंभजस्ववरवर्णिनि ॥ १९ ॥

रस्य पांडुरत्वं सुधालेपाद्राजतत्वाद्वा हेम्नः कक्ष्या अवच्छेदा यस्यां सा तोरणं पुरद्वारम् ॥ ११ ॥ १२ ॥ मानुषीणां नारीणां न स्मरिष्यसि । शेषे षष्ठी । मन्नगरे दिव्यनारीसमागमादिति भावः । युगपन्मानुषदिव्यभोगस्तत्रान्यत्र तूभयं युगपद्दुर्लभमिति भावः ॥ १३ ॥ गतायुषः एकादशसहस्रसंख्यया मितायुषः । खरादिवधजक्रोधेन मया वधाद्वा तत्त्वम् ॥ १४ ॥ यो रामो मंदवीर्य इति ज्ञात्वा ज्येष्ठोपि राज्ये प्रियं भरतं स्थापयित्वा वनं प्रस्थापितः ॥ १५ ॥ तेन गतचेतसा किं करिष्यसीत्यन्वयः । भ्रष्टराज्यत्वाच्चेतोहीनत्वम् । तापसेन तपस्विना तापसश्रेष्ठतपस्विना । यद्वा तापसेन शोच्यत्वेन तपस्विना अशूरेण ॥ १६ ॥ रक्ष रक्षणे रक्ष पालय ॥ १७ ॥ उर्वशी पुरूरवसं चरणेनाभिहत्य यथा पश्चात्तापं गतेति पुराणेषु प्रसिद्धम् । तथा पश्चात्तापं गमिष्यसि ॥ १८ ॥ अंगुल्या न समः अंगुलीबलेनापि

तुल्यो न । अनेन मया नीतां पुना राम आनयिष्यतीति न शंक्यमिति भावः । संप्राप्तम् मामिति शेषः ॥ १९ ॥ २० ॥ रहिते रामरहित आश्रमे स्थितेति शेषः । ईदृशवंश्यस्येदृशं कृत्यमनुचितमिति मिथ्यैवान्यवंशं स्ववंशत्वेन कथयसीति व्यंग्यम् ॥ २१ ॥ एवंभूतस्य राज्ञः प्रजानां सर्वथा नाशः मम नयने सर्वजीवितच्छेद एवेति भावः ॥ २२ ॥ २३ ॥ अप्रतिरूपरूपां अनुपमसौंदर्याम् मोक्षः मृत्यो रिति शेषः । अतिमलिनांतःकरणत्वान्मोक्षो ज्ञानैकप्राप्यस्तव नास्त्येवेति भावः ॥ २४ ॥ अत्र सर्गे रावणोक्तौ सप्तसप्तकवेत्ताहमष्टाष्टकविभूषितः ॥ पंचपंचकतत्वज्ञो रावणोहं भजस्व मामिति श्लोकः कचि त्पठ्यते । तमेवं व्याचक्षते । सप्तसप्तकं षडंगसहितवेदोपवेदसहितचतुर्दशविद्यारूपं तद्वेत्ता । अष्टाष्टकविभूषितः चतुःषष्टिकलाभूषितः । पंचपंचकतत्त्वज्ञः पंचविंशतितत्त्वज्ञः पंचविंशतितत्त्वस्वरूपवेत्ता नित्यानित्य वस्तुविवेकवानिति यावत् इति । स कतकाद्यव्याख्यातत्वात्प्रक्षिप्त इति ज्ञायते । आद्यपादे अर्थासंगतिरपि । परपादपर्यालोचनया तृतीयपादोक्तज्ञानवत ईदृशे कर्मणि प्रवृत्तिरप्यनुचितेति भाति ॥ भर्त्स्यमानः ॥ इति

एवमुक्तातुवैदेहीक्रुद्धासंरक्तलोचना ॥ अब्रवीत्परुषंवाक्यंरहितेराक्षसाधिपम् ॥ २० ॥ कथंवैश्रवणंदेवंसर्वदेवनमस्कृतम् ॥ भ्रातरंव्यपदिश्यत्वमशुभं कर्तुमिच्छसि ॥ २१ ॥ अवश्यंविनशिष्यंतिसर्वेरावणराक्षसाः ॥ येषांत्वंकर्कशोराजादुर्बुद्धिरजितेंद्रियः ॥ २२ ॥ अपहृत्यशचींभार्यांशक्यमिंद्रस्य जीवितुम् ॥ नहिरामस्यभार्यांमामानीयस्वस्तिमान्भवेत् ॥ २३ ॥ जीवेच्चिरंवज्रधरस्यपश्चाच्छचींप्रधृष्याप्रतिरूपरूपाम् ॥ नमादृशींराक्षसधर्षयि त्वापीतामृतस्यापितवास्तिमोक्षः ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ सीताया वचनंश्रुत्वादशग्रीवःप्रतापवान् ॥ हस्तेहस्तंसमाहन्यचकारसुमहद्वपुः ॥ १ ॥ समैथिलींपुनर्वाक्यंबभाषेवाक्यकोविदः ॥ नोन्मत्तयाश्रुतौमन्येममवी र्यपराक्रमौ ॥२॥ उद्वहेयंभुजाभ्यांतुमेदिनीमंबरेस्थितः ॥ आपिबेयंसमुद्रंचमृत्युंहन्यांरणेस्थितः ॥३॥ अर्कंतुद्यांशरैस्तीक्ष्णैर्विभिंद्यांहिमहीतलम् ॥ कामरूपेणउन्मत्तेपश्यमांकामरूपिणम् ॥ ४ ॥ एवमुक्तवतस्तस्यरावणस्याशिखिप्रभे ॥ क्रुद्धस्यहरिपर्यंतेरक्तेनेत्रेबभूवतुः ॥५॥ सद्यःसौम्यंपरित्य ज्यतीक्ष्णरूपंसरावणः ॥ स्वंरूपंकालरूपाभंभेजेवैश्रवणानुजः ॥ ६ ॥ संरक्तनयनःश्रीमांस्तप्तकांचनभूषणः ॥ क्रोधेनमहताविष्टोनीलजीमूतसं निभः ॥ ७ ॥ दशास्योविंशतिभुजोबभूवक्षणदाचरः ॥ सपरिव्राजकच्छद्ममहाकायोविहायतत् ॥ ८ ॥ प्रतिपेदेस्वकंरूपंरावणोराक्षसाधिपः ॥ रक्तां वरधरस्तस्थौस्त्रीरत्नंप्रेक्ष्यमैथिलीम् ॥ ९ ॥ सतामसितकेशांतांभास्करस्यप्रभामिव ॥ वसनाभरणोपेतांमैथिलींरावणोऽब्रवीत् ॥ १० ॥

श्रीसमाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ ॥ हस्ते हस्तं समाहन्य समाहत्येत्यर्थः विनिष्पीड्येति यावत् । महिषादयः स्त्रियैव हतास्तथा कदाचिदेषा हरणसमये क्रौर्यं कुर्यादिति शंकया क्रूरस्वीयमहद्रूपांगीकारः । यद्वा कपटेनापि शांतस्वभावयतिवेषधारणात्तद्वेषस्वाभाव्येन हरणे स्वस्य प्रतिबद्धतां दृष्ट्वा स्वरूपग्रहणम् । मम रावणस्यापि अयं वेषः क्रौर्यप्रतिबंधक इत्यतश्च हस्ते हस्ताघात इत्यतश्च बोध्यम् ॥ १ ॥ न श्रुतौ अग्रे वक्ष्यमाणाविति शेषः ॥ २ ॥ तानेवाह उद्वहेयमित्यादि । आपिबेयमिति ॥ ३ ॥ कामेन चित्तजेन रूपेण च उन्मत्ते इत्यर्थः ॥ ४ ॥ हरिपर्यंते श्याममध्यांते ॥ ५ ॥ सौम्यं भिक्षुरूपम् तीक्ष्णरूपं प्रशस्ततीक्ष्णं रूपं मृत्युतुल्यरूपं भेजे ॥ ६ ॥ ७ ॥ परिव्राजकच्छद्म कपटपरिव्राजकरूपम् ॥ ८ ॥ ९ ॥ भास्करस्य प्रभामिव तस्या अपि

पर्यंते श्यामरूपतायाश्छांदोग्ये उक्तिः ॥१०॥११॥१२॥ मानुषो भावः मनुष्यरामविषयको भावः स्नेहबंधः ॥१३॥१४॥ मियवादिनीम् रावणादन्यत्रेति शेषः ॥१५॥ काममोहितो जग्राहेत्यत्यंतानौचित्ये दृष्टांतः बुधः खे रोहिणीमिव खे आकाशे शून्ये च रौहिणेयो बुधो रोहिणीं स्वमातरं यदि कामाद्गृह्णीयात्तदा तत्सदृशमिदं घोरं यद्यथोक्तौ च कल्पनमित्यतिशयोक्तिरत्र व्यंग्या । सीतया सद्यो मरणपर्यवसायि शापादानं तु समूलनाशनस्य वेदवत्यंशेन प्रतिज्ञातस्य निर्वाहाय ऋषीणां देवानामग्रे रामप्रतिज्ञातस्य च निर्वाहाय ॥ १६ ॥ वामेनेति अननुरक्ततया शापदानभिया स्ववामांगासनत्वनिवारणायैवं ग्रहणमित्याहुः ॥ १७ ॥ ॥ १८ ॥ १९ ॥ परुषैः इतः परं राममत्याशा त्याज्येत्येवमादिभिः । अंकेन हस्तांतरैरित्यर्थः ॥ २० ॥ अतिचुक्रोशेत्यादि तच्छायाया अपि मनुष्यभावनाख्यम् ॥ २१ ॥ अकामां विरागिणीम् विचेष्टमानां

त्रिषुलोकषुविख्यातंयदिभर्तारमिच्छसि ॥ मामाश्रयवरारोहेतवाहंसदृशःपतिः ॥ ११ ॥ मांभजस्वचिरायत्वमहंश्लाघ्यःपतिस्तव ॥ नैवचाहंक्वचिद्भद्रेकरिष्येतवविप्रियम् ॥ १२ ॥ त्यज्यतांमानुषोभावोमयिभावःप्रणीयताम् ॥ राज्याच्युतमसिद्धार्थंरामंपरिमितायुषम् ॥ १३॥ कैर्गुणैरनुरक्तासिमूढेपण्डितमानिनि ॥ यःस्त्रियोवचनाद्राज्यंविहायससुहृज्जनम्॥ १४ ॥ अस्मिन्व्यालानुचरितेवनेवसतिदुर्मतिः ॥ इत्युक्त्वामैथिलींवाक्यंप्रियार्हांप्रियवादिनीम् ॥ १५ ॥ अभिगम्यसुदुष्टात्माराक्षसःकाममोहितः ॥ जग्राहरावणःसीतांबुधःखेरोहिणीमिव ॥ १६ ॥ वामेनसीतांपद्माक्षींमूर्धजेषुकरेणसः ॥ ऊर्वोस्तुदक्षिणेनैवपरिजग्राहपाणिना ॥ १७ ॥ तंदृष्ट्वागिरिशृंगाभंतीक्ष्णदंष्ट्रंमहाभुजम् ॥ प्राद्रवन्मृत्युसंकाशंभयार्तावनदेवताः ॥ १८ ॥ सचमायामयोदिव्यःखरयुक्तःखरस्वनः ॥ प्रत्यदृश्यतहेमांगोरावणस्यमहारथः ॥ १९ ॥ ततस्तांपरुषैर्वाक्यैरभितर्ज्यमहास्वनः ॥ अंकेनादायवैदेहींरथमारोहयत्तदा ॥ २० ॥ साग्रहीतातिचुक्रोशरावणेनयशस्विनी ॥ रामेतिसीतादुःखार्तारामंदूरंगतंवने ॥ २१ ॥ तामकामांसकामार्तःपन्नगेंद्रवधूमिव ॥ विचेष्टमानामादायउत्पपाताथरावणः ॥ २२ ॥ ततःसाराक्षसेंद्रेणह्रियमाणाविहायसा ॥ भृशंचुक्रोशमत्तेवभ्रांतचित्तायथातुरा ॥ २३ ॥ हालक्ष्मणमहाबाहोगुरुचित्तप्रसादक ॥ ह्रियमाणांनजानीषेरक्षसाकामरूपिणा ॥ २४ ॥ जीवितंसुखमर्थंचधर्महेतोःपरित्यजन् ॥ ह्रियमाणामधर्मेणमांराघवनपश्यसि ॥ २५ ॥ ननुनामाविनीतानांविनेतासिपरंतप ॥ कथमेवंविधंपापंनत्वंशाधिहिरावणम् ॥ २६ ॥ ननुसद्योऽविनीतस्यदृश्यतेकर्मणःफलम् ॥ कालोप्यंगीभवत्यत्रसस्यानामिवपक्तये ॥२७॥ त्वंकर्मकृतवानेतत्कालोपहतचेतनः ॥ जीवितांतकरंघोरंरामाद्व्यसनमाप्नुहि ॥२८॥ हंतेदानींसकामातुकैकेयीबांधवैःसह ॥ ह्रियेयंधर्मकामस्यधर्मपत्नीयशस्विनः ॥ २९ ॥

तत आत्मानं मोचयितुम् ॥ २२ ॥ मत्तेव अतिदुःखवशादुन्मत्तेव तथा भ्रांतचित्ता आतुरा शोकातुरा यथा क्रोशति तथा चुक्रोश अत्रेवयथाभ्यां सर्वचेष्टानां नाट्यत्वं सूचितम् ॥ २३ ॥ २४ ॥ २५ ॥ ननुनामेति प्रसिद्धौ विनेता शिक्षकः न शाधि प्राप्तकालं शासनं न करोषि । हिर्वाक्यालंकारे शोकातुरत्वाद्वाधिकपदं न दोषाय ॥ २६ ॥ स्वयमेव तत्र हेतुमुन्नयति अविनीतस्य पुरुषस्याविनयरूपकर्मणः फलं सद्यो न दृश्यते यतस्तत्र कालोप्यंगी भवति सहकारिकारणं भवति पक्तिः पाकः ॥२७॥ अधुना स्वेष्टं शापमाह त्वमिति व्यसनं पुत्रपौत्रादिनाशरूपम् ॥२८॥ सकामा तु जातेति शेषः यत इत्यादिः ॥२९॥

हरतीति शंसध्वमिति संबंधः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ते सीतेत्यन्वयः ॥ ३४ ॥ अमुत्रापि परलोकेपि गतां वैवस्वतहृतामपि मां विदित्वा पराक्रमं कृत्वा आनेष्यत्येव अतो यूयं शंसते त्यन्वयः ॥ ३५ ॥ गृध्रं जटायुषम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ तुभ्यमितिपाठे त्वयेत्यर्थे आर्षं तत् । न शक्य इत्यत्र हेतुः सत्त्ववानित्यादि ॥ ३९ ॥ ४० ॥ नैर्भमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण तिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकोनपंचाशः सर्गः ॥ ४९ ॥ ॥ तं शब्दं जटायो पश्य मामिति शब्दम् अवसुप्तः भोजनोत्तरं दिवैव गाढसुप्तोपि शुश्रुवे ततस्तेन शब्देन प्रबुद्धो रावणं निरैक्षत ॥ १ ॥ २ ॥ दशग्रीवेति संबुद्धिः । अहं सत्यसंश्रवः सत्यप्रतिज्ञः सीतारक्षणे अहं सहाय इत्युक्तत्वादिति भावः । नाम्ना जटायुरिति प्रसिद्धोऽतो मत्समक्षमीदृशं कर्म कर्तुं नार्हसि । भ्रातरिति सामप्रयोगः यद्ये

आमंत्रयेजनस्थानंकर्णिकारांश्चपुष्पितान् ॥ क्षिप्रंरामायशंसध्वंसीतांहरतिरावणः ॥ ३० ॥ हंससारससंघुष्टांवंदेगोदावरींनदीम् ॥ क्षिप्रंरामायशंसध्वंसीतांहरतिरावणः ॥ ३१ ॥ दैवतानिचयान्यस्मिन्वनेविविधपादपे ॥ नमस्करोम्यहंतेभ्योभर्तुःशंसतमांहृताम् ॥ ३२ ॥ यानिकानिचिद्प्यत्रसत्त्वानिविविधानिच ॥ सर्वाणिशरणंयामिमृगपक्षिगणानिवै ॥ ३३ ॥ ह्रियमाणांप्रियांभर्तुःप्राणेभ्योऽपिगरीयसीम् ॥ विवशातेहृतासीतारावणेनेतिशंसत ॥ ३४ ॥ विदित्वातुमहाबाहुरमुत्रापिमहाबलः ॥ आनेष्यतिपराक्रम्यवैवस्वतहृतामपि ॥ ३५ ॥ सातदाकरुणावाचोविलपंतीसुदुःखिता ॥ वनस्पतिगतंगृध्रंददर्शायतलोचना ॥ ३६ ॥ सातमुद्वीक्ष्यसुश्रोणीरावणस्यवशंगता ॥ समाक्रंदद्भयपरादुःखोपहितयागिरा ॥ ३७ ॥ जटायोपश्यमामार्यह्रियमाणामनाथवत् ॥ अनेनराक्षसेंद्रेणकरुणंपापकर्मणा ॥ ३८ ॥ नैषवारयितुंशक्यस्त्वयाक्रूरोनिशाचरः ॥ सत्त्ववाञ्जितकाशीचसायुधश्चैवदुर्मतिः ॥ ३९ ॥ रामायतुयथातत्त्वंजटायोहरणंमम ॥ लक्ष्मणायचतत्सर्वमाख्यातव्यमशेषतः ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे एकोनपंचाशः सर्गः ॥ ४९ ॥ तंशब्दमवसुप्तस्तुजटायुरथशुश्रुवे ॥ निरैक्षद्रावणंक्षिप्रंवैदेहींचददर्शसः ॥ १ ॥ ततःपर्वतशृंगाभस्तीक्ष्णतुंडःखगोत्तमः ॥ वनस्पतिगतःश्रीमान्व्याजहारशुभांगिरम् ॥ २ ॥ दशग्रीवस्थितोधर्मेपुराणेसत्यसंश्रवः ॥ भ्रातस्त्वंनिंदितंकर्मकर्तुंनार्हसिसांप्रतम् ॥ ३ ॥ जटायुर्नामनाम्नाहंगृध्रराजोमहाबलः ॥ राजासर्वस्यलोकस्यमहेंद्रवरुणोपमः ॥ ४ ॥ लोकानांचहितेयुक्तोरामोदशरथात्मजः ॥ तस्यैषालोकनाथस्यधर्मपत्नीयशस्विनी ॥ ५ ॥ सीतानामवरारोहायांत्वंहर्तुमिहेच्छसि ॥ कथंराजास्थितोधर्मेपरदारान्परामृशेत् ॥ ६ ॥ रक्षणीयाविशेषेणराजदारामहाबल ॥ निवर्तयगतिंनीचांपरदाराभिमर्शनात् ॥ ७ ॥ नतत्समाचरेद्धीरोयत्परोस्यविगर्हयेत् ॥ यथात्मनस्तथान्येषांदारारक्ष्याविमर्शनात् ॥ ८ ॥ अर्थंवायदिवाकामंशिष्टाःशास्त्रेष्वनागतम् ॥ व्यवस्यंत्यनुराजानंधर्मंपौलस्त्यनंदन ॥ ९ ॥

वं न त्यक्ष्यसि तदा सत्यप्रतिज्ञत्वान्मया सह युद्धं भावीति दंडप्रयोगश्च व्यंग्यः ॥ ३ ॥ राजेति सर्वस्य लोकस्य राजत्वेन तवापि राजेति ध्वनितम् ॥ ४ ॥ धर्मपत्नीत्यनेनैतद्धरणे महापापं सूचितम् ॥ ५ ॥ कथं राजेति शेषः धर्मे प्रजापालनरूपे ॥ ६ ॥ राजदारा इति । तद्धरणस्य गुरुतल्पसमत्वादिति भावः ॥ ७ ॥ अस्य पुरुषस्य परः स्वेतरः प्राणी यत्कर्म विगर्हयेत् न तत्समाचरेत्स्वदारवत् परदाराश्च विमर्शनात्पर स्पर्शादिस्याः ॥ ८ ॥ शास्त्रेष्वनागतं शास्त्रेष्वनवगतं परमसूक्ष्मत्वाच्छास्त्रतोनवगतमपि अर्थं वा राजानमनुसृत्य व्यवस्यंति । शास्त्रेऽस्फुटमपि राज्ञः आचरणं दृष्ट्वा प्रजा आचरंति तस्माद्राज्ञोऽधर्मप्रवृत्तिरनुचितेति

तात्पर्यम् । न व्यवस्यंति राजान इतिपाठे शास्त्रेष्वनागतं तत्रामतिपादितं धर्मं राजानो न व्यवस्यंति नेच्छंतीत्यर्थः । तस्माच्छास्त्रानुसारिधर्मे एव मतिं कुर्यादित्याशयः ॥ ९ ॥ तथा राजाद्रव्याणामुत्तमवस्तूना मुत्तमो निधिः । तथा धर्मश्च कामश्चेतिपाठे मजानामिति राजेति च शेषः । द्रव्याणामिति भाग्वदेव । यतो धनादिकं राजमूलम् अतो राजा मजानां धर्मादिरूप इत्यर्थः । शुभं कामम् ॥ १० ॥ एवंभूतराजधर्म हीन त्वयि कथमैश्वर्यागम इत्याह पापेति दुष्कृतौ स्वायोग्यं देवयानमिव ॥ ११ ॥ ननु ऐश्वर्येण पुण्यमपि मय्यनुमीयतां तत्राह कामेति । यः पुमान्कामस्वभावो भवति सोसौ तं स्वभावं ममार्जितुं न शक्यः । तन्मार्जनं हि धर्मेण पापमपनुदतीति श्रुतेर्धर्मेण स्यात्र च स तस्मिन्नस्तीत्याह न हीति यस्माद्दुष्टात्मनामालये आर्यं पूज्यं पुण्यं चिरं चिरकालेनापि नावसंति ॥ १२ ॥ यदा रामः यस्माद्राम इत्यर्थः ॥ १३ ॥ अनपराधोऽसिद्धः खरादिवधादित्याशंक्याह यदीति । अनपराधे हेतुः पूर्वमतिवृत्तः अतिक्रांतोचितवृत्तः ॥ १४ ॥ गमिष्यसीत्यत्र काकुः न जीवन् गमिष्यसीत्यर्थः ॥ १५ ॥ त्वा त्वां घोरेणे चक्षुषा मा दहेद्राम

राजाधर्मश्चकामश्चद्रव्याणाचोत्तमोनिधिः ॥ धर्मःशुभंवांपापंवाराजमूलंप्रवर्तते ॥ १० ॥ पापस्वभावश्चपलःकथंत्वंरक्षसावर ॥ ऐश्वर्यमभिसंप्रातोविमानमिवदुष्कृती ॥११॥ कामस्वभावोयःसोऽसौनशक्यस्तंप्रमार्जितुम् ॥ नहिदुष्टात्मनामार्यमावसत्यालयेचिरम् ॥ १२ ॥ विषयेवापुरेवातेयदारामोमहाबलः ॥ नापराध्यतिधर्मात्माकथंतस्यापराध्यसि ॥ १३ ॥ यदिशूर्पणखाहेतोर्जनस्थानगतःखरः ॥ अतिवृत्तोहतःपूर्वंरामेणाक्लिष्टकर्मणा ॥१४॥ अत्रब्रूहियथातत्त्वंकोरामस्यव्यतिक्रमः ॥ यस्यत्वंलोकनाथस्यहृत्वाभार्यांगमिष्यसि ॥ १५ ॥ क्षिप्रंविसृजवैदेहींमात्वाघोरेणचक्षुषा ॥ दहेद्दहनभूतेनवृत्रमिंद्राशनिर्यथा ॥ १६ ॥ सर्पमाशीविषंबद्धावस्त्रांतेनाववुध्यसे ॥ ग्रीवायांप्रतिमुक्तंचकालपाशंनपश्यसि ॥ १७ ॥ सभारःसौम्यभर्तव्योयोनरंनावसादयेत् ॥ तदन्नमपिभोक्तव्यंजीर्यतेयदनामयम् ॥१८॥ यत्कृत्वानभवेद्धर्मोनकीर्तिर्नयशोध्रुवम् ॥ शरीरस्यभवेत्खेदःकस्तत्कर्मसमाचरेत् ॥१९॥ षष्टिवर्षसहस्राणिजातस्यममरावण ॥ पितृपैतामहंराज्यंयथावदनुतिष्ठतः ॥ २० ॥ वृद्धोहंत्वंयुवाधन्वीसरथःकवचीशरी ॥ नचाप्यादायकुशलीवैदेहींमेगमिष्यसि ॥ २१ ॥ नशक्तस्त्वंबलाद्धर्तुंवैदेहींममपश्यतः ॥ हेतुभिर्न्यायसंयुक्तैर्ध्रुवांवेदश्रुतीमिव ॥ २२ ॥ युद्धचस्वयदिशूरोसिमुहूर्तंतिष्ठरावण ॥ शयिष्यसेहतोभूमौयथापूर्वंखरस्तथा ॥ २३ ॥

इति शेषः । इंद्राशनिरिंद्रमयुक्तं वज्रम् ॥ १६ ॥ १७ ॥ भारः भारवद्द्रव्यम् अनामयं रोगानुत्पादकम् ॥ १८ ॥ यत्कर्म कृत्वा धर्मः कीर्तिः पारलौकिकी पुण्यातिशयजा बलाद्यैश्वर्यातिशयजं यशस्तन्न भवेन्नो त्पद्येत पूर्वार्जितं च धर्मादि न भवेन्नश्येत् । किंच येन शरीरस्य खेदस्तत्कर्म कस्त्वद्भिन्नः समाचरेन्न कोपीत्यर्थः ॥ १९ ॥ षष्टिवर्षसहस्राणि गतानीत्यर्थः राज्यं पक्षिराज्यमित्यर्थः पितृपैतामहं पितृपितामहेभ्य आगतमित्यर्थः ॥ २० ॥ मे वैदेहीं दशरथमित्रत्वान्मम स्नुषां वैदेहीमादाय न कुशली गमिष्यसीत्यर्थः ॥ २१ ॥ मम पश्यतः मां पश्यंतमनादृत्येत्यर्थः न्यायसंयुक्तैर्वैशेषिकाद्युक्ततर्काभास युक्तैर्हेतुभिर्हेत्वाभासैर्ध्रुवां सनातनीं धर्मब्रह्मपरां वेदश्रुतिं छांदसो दीर्घः । तच्छास्त्राध्येता तथा पूर्वापरमीमांसान्यायविदोग्रे हर्तुमन्यथा कर्तुं न शक्नोति तद्वदित्यर्थः ॥ २२ ॥ मुहूर्तं रामागमनपर्यंतम् ॥२३॥

संयुगे रामेणेति शेषः न वधिष्यति अपि तु वधिष्यतीत्यर्थः । अनेन रामस्येश्वरत्वं व्यंग्यम् ॥ २४ ॥ नश्यसे पलायति न संशय इत्यन्वयः ॥ २५ ॥ जीवमानस्य जीवतः नयिष्यसि नेष्यसि ॥ २६ ॥ ॥ २७ ॥ २८ ॥ यथाप्राणं यथाबलमित्यर्थः ॥ २९ ॥ धेरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचाशः सर्गः ॥ ५० ॥ ॥ इतीति ॥ १ ॥ वातोद्धुतयोर्वातप्रवर्तितयोः ॥ २ ॥ माल्यवतोः द्वौ माल्यवंतौ एको दंडकारण्येऽपरो मेरुपार्श्वे सपक्षयोः पक्षसहितयोः । यद्वा यद्यथोक्तौ कल्पनेयम् यदि द्वौ माल्यवंतौ सपक्षौ युद्धे यातां तदा तत्सदृशं

असकृत्संयुगेयेननिहतादैत्यदानवाः ॥ नचिराच्चीरवासास्त्वांरामोयुधिवधिष्यति ॥ २४ ॥ किंनुशक्यंमयाकर्तुंगतौदूरंनृपात्मजौ ॥ क्षिप्रंत्वंनश्यसेनीचतयोर्भीतोनसंशयः ॥ २५ ॥ नहिमेजीवमानस्यनयिष्यतिशुभामिमाम् ॥ सीतांकमलपत्राक्षींरामस्यमहिषींप्रियाम् ॥ २६ ॥ अवश्यंतुमयाकार्यंप्रियंतस्यमहात्मनः ॥ जीवितेनापिरामस्यतथादशरथस्यच ॥ २७ ॥ तिष्ठतिष्ठदशग्रीवमुहूर्तंपश्यरावण ॥ वृंतादिवफलंत्वांतुपातयेयंरथोत्तमात् ॥ ॥ २८ ॥ युद्धातिथ्यंप्रदास्यामियथाप्राणंनिशाचर ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचाशः सर्गः ॥ ५० ॥ इत्युक्तःक्रोधताम्राक्षस्तप्तकांचनकुंडलः ॥ राक्षसेंद्रोऽभिदुद्रावपतगेंद्रममर्षणः ॥ १ ॥ ससंप्रहारस्तुमुलस्तयोस्तस्मिन्महामृधे ॥ बभूववातोद्धृतयोर्मेघयोर्गगनेयथा ॥२॥ तद्बभूवाद्भुतंयुद्धंगृध्रराक्षसयोस्तदा ॥ सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥३॥ ततोनालीकनाराचैस्तीक्ष्णाग्रैश्चविकर्णिभिः ॥ अभ्यवर्षन्महाघोरैर्गृध्रराजंमहाबलम् ॥ ४ ॥ सतानिशरजालानिगृध्रःपत्ररथेश्वरः ॥ जटायुःप्रतिजग्राहरावणास्त्राणिसंयुगे ॥ ५ ॥ तस्यतीक्ष्णनखाभ्यांतुचरणाभ्यांमहाबलः ॥ चकारबहुधागात्रेव्रणान्पतगसत्तमः ॥ ६ ॥ अथक्रोधाद्दशग्रीवोजग्राहदशमार्गणान् ॥ मृत्युदंडनिभान्घोराञ्छत्रोर्निधनकांक्षया ॥ ७ ॥ सतैर्बाणैर्महावीर्यःपूर्णमुक्तैरजिह्मगैः ॥ बिभेदनिशितैस्तीक्ष्णैर्गृध्रंघोरैःशिलीमुखैः ॥८॥ सराक्षसरथेपश्यञ्जानकींबाष्पलोचनाम् ॥ अचिंतयित्वाबाणांस्तान्राक्षसंसमभिद्रवत् ॥९॥ ततोऽस्यसशरंचापंमुक्तामणिविभूषितम् ॥ चरणाभ्यांमहातेजाबभंजपतगोत्तमः ॥ १० ॥ ततोऽन्यद्धनुरादायरावणःक्रोधमूर्च्छितः ॥ ववर्षशरवर्षाणिशतशोथसहस्रशः ॥ ११ ॥ शरैरावारितस्तस्यसंयुगेपतगेश्वरः ॥ कुलायमभिसंप्राप्तःपक्षिवच्चबभौतदा ॥ १२ ॥ सतानिशरजालानिपक्षाभ्यांतुविधूयह ॥ चरणाभ्यांमहातेजाबभंजास्यमहद्धनुः ॥ १३ ॥ तच्चाग्निसदृशंदीप्तंरावणस्यशरावरम् ॥ पक्षाभ्यांचमहातेजाव्यधुनोत्पतगेश्वरः ॥ १४ ॥

मिदमिति तेनानुपमत्वं फलति ॥ ३ ॥ ४ ॥ प्रतिजग्राह सेहे रावणास्त्राणि रावणक्षिप्तानीति शरजालविशेषणम् अस्यतेरौणादिकस्त्रन् । रावणास्तानीतिपाठस्तु सुगम एव ॥ ५ ॥ तस्य रावणस्य गात्रे इत्यन्वयः ॥ ६ ॥ ७ ॥ पूर्णमुक्तैः आकर्णपूर्णाकृष्टधनुर्मुक्तैः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ आवारितः आसमंताद्व्याप्तः कुलायं वासस्थानं संप्राप्तो यः पक्षी तद्वद्बभौ ॥ १२ ॥ १३ ॥ तत्प्रसिद्धम् शरावरं

कवचम् व्यधुनोत्पातयामास शराशनंमितिपाठे शरप्रक्षेपकारणम् तच्च द्वितीयं धनुश्च बभंजेत्यन्वयः । व्यधुनोत्कंपयति स्म रावणमिति शेषः ॥ १४ ॥ १५ ॥ त्रिवेणुर्युगंधरः ॥ १६ ॥ ग्राहिभिश्छत्रादि धारकैः ॥ १७ ॥ १८ ॥ अंकेन कटिभागेन ॥ १९ ॥ २० ॥ २१ ॥ मनष्टानि स्वत एव नष्टानि हतानि गृध्रेण नाशितानि साधनानि युद्धसाधनानि यस्य तम् ॥ २२ ॥ समावार्य सन्निरुद्ध्य ॥२३॥ वज्रतुल्यः स्पर्शो येषां तादृशा बाणा यस्य ॥ २४ ॥ सबलः सचतुरंगबलः परिच्छदो दासीदासादि निदर्शनाऽत्र तत्सहितो नशिष्यसीति तात्पर्यम् ॥ २५ ॥ अनुबंधं फलम् ॥ २६ ॥ तस्य ततः काल पाशान्मोक्ष्यसे इत्यर्थः । बडिशं मत्स्यवेधनम् जलजो मत्स्यः ॥ २७ ॥ अस्याश्रमस्य तव धर्षणं त्वत्कृतमभिभवं नहि क्षमिष्यते ॥ २८ ॥ यथा यादृशं त्वया कृतं कर्म तत्तस्कराचरितो मार्गो न वीरसे

कांचनोरश्छदान्दिव्यान्पिशाचवदनान्खरान् ॥ तांश्चास्यजवसंपन्नाञ्जघानसमरेवली ॥ १५ ॥ अथत्रिवेणुसंपन्नंकामगंपावकार्चिषम् ॥ मणिसोपानचित्रांगंबभंचचमहारथम् ॥ १६ ॥ पूर्णचंद्रप्रतीकाशंछत्रंचव्यजनैःसह ॥ पातयामासवेगेनग्राहिभीराक्षसैःसह ॥ १७ ॥ सारथेश्चास्यवेगेनतुंडेनचमहच्छिरः ॥ पुनर्व्यपहनच्छ्रीमान्पक्षिराजोमहावलः ॥१८॥ सभग्नधन्वाविरथोहताश्वोहतसारथिः ॥ अंकेनादायवैदेहींपपातभुविरावणः ॥१९॥ दृष्ट्वानिपतितंभूमौरावणंभग्नवाहनम् ॥ साधुसाध्वितिभूतानिगृध्रराजमपूजयन् ॥ २० ॥ परिश्रांतंतुतंदृष्ट्वाजरयापक्षियूथपम् ॥ उत्पपातपुनर्हृष्टोमैथिलींगृह्यरावणः ॥ २१ ॥ तंप्रहृष्टंनिधायांकेरावणंजनकात्मजाम् ॥ गच्छंतंखड्गशेषंचप्रणष्टहतसाधनम् ॥ २२ ॥ गृध्रराजःसमुत्पत्यरावणंसमभिद्रवत् ॥ समावार्यमहातेजाजटायुरिदमब्रवीत् ॥ २३ ॥ वज्रसंस्पर्शबाणस्यभार्यांरामस्यरावण ॥ अल्पबुद्धेहरस्येनांवधायखलुरक्षसाम् ॥ २४ ॥ समित्रबंधुःसामात्यःसबलःसपरिच्छदः ॥ विषपानंपिबस्येतत्पिपासितइवोदकम् ॥ २५ ॥ अनुबंधमजानंतःकर्मणामविचक्षणः ॥ शीघ्रमेवविनश्यंतियथात्वंविनशिष्यसि ॥ २६ ॥ बद्धस्त्वंकालपाशेनक्वगतस्तस्यमोक्ष्यसे ॥ वधायबडिशंगृह्यसामिषंजलजोयथा ॥ २७ ॥ नहिजातुदुराधर्षौकाकुत्स्थौतवरावण ॥ धर्षणंचाश्रमस्यास्यक्षमिष्येतेतुराघवौ ॥ २८ ॥ यथात्वयाकृतंकर्मभीरुणालोकगर्हितम् ॥ तस्कराचरितोमार्गोनैषवीरनिषेवितः ॥२९॥ युद्ध्यस्वयदिशूरोसिमुहूर्तंतिष्ठरावण ॥ शयिष्यसिहतोभूमौयथाभ्राताखरस्तथा ॥ ३० ॥ परेतकालेपुरुषोयत्कर्मप्रतिपद्यते ॥ विनाशायात्मनोऽधर्म्यंप्रतिपन्नोसिकर्मतत् ॥ ३१ ॥ पापानुबंधोवैयस्यकर्मणःकोनुतत्पुमान् ॥ कुर्वीतलोकाधिपतिःस्वयंभूर्भगवानपि ॥ ३२ ॥ एवमुक्त्वाशुभंवाक्यंजटायुस्तस्यरक्षसः ॥ निपपातभृशंपृष्ठेदशग्रीवस्यवीर्यवान् ॥ ३३ ॥ तंगृहीत्वानखैस्तीक्ष्णैर्विददारसमंततः ॥ अधिरूढोगजारोहोयथास्याद्दुष्टवारणम् ॥ ३४ ॥

वितः ॥ २९ ॥ ३० ॥ परेतकाले मृत्युकाले अधर्म्यं तज्जनकम् प्रतिपन्नोसि प्राप्तोसि ॥ ३१ ॥ यस्य कर्मणः कर्तुः पापानुबंधः पापफलसंबंधः आवश्यकः शास्त्रदृष्टः को नु पुमान्वै निश्चयेन तत्कर्म कुर्वीत लोकाधिपतिरपि इंद्रादिरपि समर्थोऽपि पापफलं कर्म न कुर्यात् स्वयंभूर्भगवानपि पापपुण्यतत्फलतदधिकारिस्रष्टापि कर्तुमकर्तुमन्यथाकर्तुं शक्तोपि नेदृशं कर्म कुर्यात् तादृशमैश्वर्यमत्तेन त्वया क्रियमाणं कर्माचिरादेव फलदं भविष्यतीति तात्पर्यम् ॥ ३२ ॥ पृष्ठे पश्चाद्भागे ॥ ३३ ॥ दुष्टवारणमधिरूढो गजारोहो हस्तिपको गजविषये यथा स्यात् यादृशव्यापारो भवेत् गजक्षतकरणव्यापारो भवेत् तथा । विरराददेति

पाठेपि क्षतानि चकारेत्येवार्थः ॥ ३४ ॥ अस्य विददार एनं विददारेत्यर्थः । तादृशक्रियाणां बाहुल्यात्पुनरुक्तिः ॥ ३५ ॥ ३६ ॥ वैदेहीं संपरिष्वज्य पतनेन पलायनभिया ॥ ३७ ॥ तं तलप्रहारमति
क्रम्य सोढ्वा व्यपाहरत् युगपद्दशापि तुंडेन धृत्वा त्रोटितवान् ॥ ३८ ॥ संछिन्नबाहोः कर्तितबाहोरपि तस्य बाहवः पुनः सहसा समभवन् वल्मीकात्पन्नगा इव ॥ ३९ ॥ ४० ॥ ४१ ॥ व्यायच्छमानस्य
व्यायामं पराक्रमं कुर्वाणस्य ॥४२॥ अल्पजीवितः घटीमात्रावस्थानोचितप्राणः ॥ ४३ ॥४४॥ अग्निदावं दावाग्निं परनिपात आर्षः ॥ ४५ ॥ संगृह्य बाहुभ्यामालिंग्य ॥ ४६ ॥ तंवमानः ॥ इति श्रीरा
माभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकपंचाशः सर्गः ॥ ५१ ॥ ॥ सा त्विति ॥ १ ॥ नराणां सुखदुःखेषु निमित्तं सूचनं वामदक्षिणांगस्पंदनादिरूपं लक्षणं

विददारनखैरस्यतुंडंपृष्ठेसमर्पयन् ॥ केशांश्चोत्पाटयामासनखपक्षमुखायुधः ॥३५॥ सतदागृध्रराजेनक्लिश्यमानोमुहुर्मुहुः ॥ अमर्षस्फुरितोष्ठःसन्प्राकं
पतचराक्षसः ॥ ३६ ॥ संपरिष्वज्यवैदेहींवामेनांकेनरावणः ॥ तलेनाभिजघानार्तोजटायुंक्रोधमूर्च्छितः ॥३७॥ जटायुस्तमतिक्रम्यतुंडेनास्यखगा
धिपः ॥ वामबाहून्दशतदाव्यपाहरदरिंदमः ॥ ३८॥ संछिन्नबाहोःसद्योवैबाहवःसहसाऽभवन् ॥ विषज्वालावलीयुक्तावल्मीकादिवपन्नगाः॥ ३९ ॥
ततःक्रोधाद्दशग्रीवःसीतामुत्सृज्यवीर्यवान् ॥ मुष्टिभ्यांचरणाभ्यांचगृध्रराजमपोथयत् ॥ ४० ॥ ततोमुहूर्तंसंग्रामोबभूवातुलवीर्ययोः ॥ राक्षसानां
चमुख्यस्यपक्षिणांप्रवरस्यच ॥४१॥ तस्यव्यायच्छमानस्यरामस्यार्थेसरावणः ॥ पक्षौपादौचपार्श्वौचखड्गमुद्धृत्यसोच्छिनत् ॥४२॥ सच्छिन्नपक्षः
सहसारक्षसारौद्रकर्मणा ॥ निपपातमहागृध्रोधरण्यामल्पजीवितः ॥ ४३ ॥ तंदृष्ट्वापतितंभूमौक्षतजार्द्रंजटायुषम् ॥ अभ्यधावतवैदेहीस्वबंधुमिवदुः
खिता ॥ ४४ ॥ तंनीलजीमूतनिकाशकल्पंसपांडुरोरस्कमुदारवीर्यम् ॥ ददर्शलंकाधिपतिःपृथिव्यांजटायुषंशांतमिवाग्निदावम् ॥ ४५ ॥ ततस्तुतं
पत्ररथंमहीतलेनिपातितंरावणवेगमर्दितम् ॥ पुनश्चसंगृह्यशशिप्रभाननारुरोदसीताजनकात्मजातदा ॥ ४६ ॥ इत्यार्षे श्रीमद्रा० वा० आ० अर०
एकपंचाशः सर्गः ॥ ५१ ॥ सातुताराधिपमुखीरावणेननिरीक्ष्यतम् ॥ गृध्रराजंविनिहतंविललापसुदुःखिता ॥ १ ॥ निमित्तंलक्षणंस्वप्नंशकुनिस्वरद
र्शनम् ॥ अवश्यंसुखदुःखेषुनराणांपरिदृश्यते ॥ २ ॥ ननूनंरामजानासिमहद्व्यसनमात्मनः ॥ धावंतिनूनंकाकुत्स्थमदर्थंमृगपक्षिणः ॥ ३ ॥ अयं
हिकृपयारामंमांत्रातुमिहसंगतः ॥ शेतेविनिहतोभूमौममाभाग्याद्विहंगमः ॥ ४ ॥ त्राहिमामद्यकाकुत्स्थलक्ष्मणेतिवरांगना ॥ सुसंत्रस्तासमाक्रं
दच्छृण्वतांतुयथांतिके ॥ ५ ॥

चिह्नम् । तथा जलादर्शादावात्मनोऽशिरसो दर्शनं च लक्षणम् । स्वप्नं स्वप्ने यः पुरुषं कृष्णं कृष्णदंतं प्रपश्यति स एनं हंतीत्यादि स्वप्नाध्यायोपदिष्टम् तथा शकुनीनां वामदक्षिणगमनविशेषदर्शनम् तथा तेषां
स्वराणां दर्शनमनुभवः एतत्सर्वं यथायोगं परिदृश्यते सर्वेण । लक्षणज्ञानमितिपाठे अंगस्फुरणादिज्ञानमित्यर्थः । शकुनिग्रहणं मृगाद्युपलक्षणम् ॥ २ ॥ किं ततस्तत्राह न नूनमिति । मदर्थं मदपहारसूचन
प्रयोजनमुद्दिश्य मृगपक्षिणोऽशुभसूचनमार्गेण धावंति । त्वं तु तैः सूचितमपि स्वस्य महद्व्यसनं न जानासि नूनं जानीथाश्चेन्नोपेक्षेथा इति तात्पर्यमिति लोकाभिनयेन रामोपालंभः ॥ ३ ॥ ४ ॥ यथांतिके निक

टस्थितानां शृण्वतां श्रवणं भवेत्तथा समाक्रंदत् नतूच्चैः शीघ्रं रामागमनं मा भूदिति तात्पर्येण ॥ ५ ॥ क्लिष्टानि परिमृदितानि माल्याभरणानि यस्यास्ताम् ॥ ६ ॥ वेष्टंतीं लतामिव वृक्षानालिंगंतीं मा मुंच मुंचेति बहुशो वृक्षान्वदंतीमिति शेषः । मोचयमोचयेत्यर्थो वा । प्राप इतस्ततो धावंतीं समीपगत आसीत् ॥ ७ ॥ जीवितांताय अनेन परस्त्रीकेशस्पर्शो यस्य कस्यापि जीवितापहारीति बोधितम् ॥ ८ ॥ अमर्यादं त्यक्तस्वस्वप्रकृतिकं जलमुष्णमग्निः शीत इत्येवमादी अंधेन तमसा बाह्येनाभ्यंतरेण च ॥ ९ ॥ मर्यादात्यागमेवाह न वातीति । देवो ब्रह्मापि ब्रह्मलोकस्थ एव दिव्येन चक्षुषा सीतां परामृष्टां रक्षसा केशेषु गृहीतां दृष्ट्वा ॥ १० ॥ श्रीमान् निस्तुलसकलैश्वर्यवान् पितामहः कृतं यदर्थमवतीर्णो देवानां तत्कार्यं कृतं सिद्धमित्यब्रवीत् ॥ ११ ॥ महर्षव्यथयोर्हेतुमाह दृष्ट्वेति । तत्कालं नातिदैन्यायाहरणं दृष्ट्वा तन्मायामोहितत्वाद्व्यथिताः । यदृच्छया आयासं विनैव सपरिवारस्य रावणस्य नाशं प्राप्तं बुद्ध्वा हृष्टा इत्यर्थः । भागसंधिरत्र ॥ १२ ॥ १३ ॥ तप्ताभरणवर्णांगी तप्तकांचनाभरणसदृशवर्णयुक्तांगी

तांक्लिष्टमाल्याभरणांविलपंतीमनाथवत् ॥ अभ्यधावतवैदेहींरावणोराक्षसाधिपः ॥ ६ ॥ तांलतामिववेष्टंतीमालिंगंतींमहाद्रुमान् ॥ मुंचमुंचेतिबहुशःप्रापतांराक्षसाधिपः ॥७॥ क्रोशंतींरामरामेतिरामेणरहितांवने ॥ जीवितांतायकेशेषुजग्राहांतकसंनिभः ॥८॥ प्रधर्षितायांवैदेह्यांबभूवसचराचरम् ॥ जगत्सर्वममर्यादंतमसांधेनसंवृतम् ॥९॥ नवातिमारुतस्तत्रनिष्प्रभोऽभूद्दिवाकरः ॥ दृष्ट्वासीतांपरामृष्टांदेवोदिव्येनचक्षुषा ॥१०॥ कृतंकार्यमितिश्रीमान्व्याजहारपितामहः ॥ प्रहृष्टाव्यथिताश्चासन्सर्वेतेपरमर्षयः ॥ ११ ॥ दृष्ट्वासीतांपरामृष्टांदंडकारण्यवासिनः ॥ रावणस्यविनाशंचप्राप्तंबुद्ध्वायदृच्छया ॥ १२ ॥ सतुतांरामरामेतिरुदतींलक्ष्मणेतिच ॥ जगामादायचाकाशंरावणोराक्षसेश्वरः ॥ १३ ॥ तप्ताभरणवर्णांगीपीतकौशेयवासिनी ॥ रराजराजपुत्रीतुविद्युत्सौदामनीयथा ॥ १४ ॥ उद्धूतेनचवस्त्रेणतस्याःपीतेनरावणः ॥ अधिकंपरिबभ्राजगिरिर्दीप्तइवाग्निना ॥ १५ ॥ तस्याःपरमकल्याण्यास्ताम्राणिसुरभीणिच ॥ पद्मपत्राणिवैदेह्याअभ्यकीर्यंतरावणम् ॥ १६ ॥ तस्याःकौशेयमुद्धूतमाकाशेकनकप्रभम् ॥ बभौचादित्यरागेणताम्रमभ्रमिवातपे ॥ १७ ॥ तस्यास्तद्विमलंवक्त्रमाकाशेरावणांकगम् ॥ नरराजविनारामंविनालमिवपंकजम् ॥ १८ ॥ बभूवजलदंनीलंभित्त्वाचंद्रइवोदितः ॥ सुललाटंसुकेशांतंपद्मगर्भाभमव्रणम् ॥ १९ ॥ शुक्लैःसुविमलैर्दंतैःप्रभावद्भिरलंकृतम् ॥ तस्याःसुनयनंवक्त्रमाकाशेरावणांकगम् ॥ २० ॥ रुदितंव्यपमृष्टास्रंचंद्रवत्प्रियदर्शनम् ॥ सुनासंचारुताम्रोष्ठमाकाशेहाटकप्रभम् ॥ २१ ॥

सौदामनी विद्युदिति सुदाम्नो बहुरत्नादमत्त्वात्तद्भवा विद्युदतिप्रकाशमाना भवति तद्वत्सीतेत्यर्थः ॥ १४ ॥ अग्निना दीप्तो गिरिरिवेत्यनेनासन्नभस्मता सूचिता । असंगाया अपि चिच्छक्तेस्तस्या रावणविनाशसान्निध्यद्योतनाय कविः रावणेन तस्या आसक्तिं वर्णयति ॥ १५ ॥ पद्मपत्राणि रावणमभ्यकीर्यंत रावणांगे पतितान्यभूवन्नित्यर्थः ॥ १६ ॥ आतपे इत्यनेन ईषत्तप इत्यर्थकेन संध्याकालं लक्षयति तत्र काले आदित्यरागेण तत्किरणेन युक्तमभ्रमिव तत्करयुतं वासो बभौ ॥ १७ ॥ विनालमिव पंकजं शोकशुष्कत्वात् ॥ १८ ॥ नीलं जलदं भित्त्वा तन्मध्ये उदितश्चंद्र इव बभौ । तत्कांतिधूसरो हि सततमुदेति । वक्त्रं विशिनष्टि सुललाटमिति । पद्मगर्भवदाभा यस्य तत् ॥ १९ ॥ रावणांकगं न बभाविति शेषः ॥ २० ॥ रुदितं रोदनवत् अश्रुआद्यच् । अत एवापमृष्टास्त्रं अपमार्जिताश्रुकम् ॥ २१ ॥

दिवो दितचंद्रवदपगतशोभम् ॥ २२ ॥ शुशुभे शोभयति स्म नीलं गजमाश्रिता कांचनी कांचीव ॥ २३ ॥ पद्मपीता पद्मकेसरवत्पीतदेहा तप्तकांचनभूषणा ॥ २४ ॥ अभूत्सचपलो नील इतिपाठे चपला विद्यु त्तया सहितो घोषवान्मेघ इवाभूदित्यर्थः ॥ २५ ॥ उत्तमांगेति मातस्त्वया संपादितोस्मन्मनोरथ इति हर्षाद्देवैः क्रियमाणा पुष्पवृष्टिस्तदुत्तमांगाच्च्युता तत्काले भूमौ पपातेति कतकः । वस्तुतो रावणस न्निधौ देवानां तथावीर्यासंभवात् उत्तमांगे धृतपुष्पाणां तद्वेगेन ततश्च्युत्योत्तमांगच्युतेत्युक्तम् अत एवाग्रे भूमौ पुष्पयुतं मार्गं दृष्ट्वा रामो वक्ष्यति । अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण ॥ अपि नद्धानि वैदेह्या मया दत्तानि कानने इति ॥ २६ ॥ रावणगमनवेगजनितवायुना समाधूतापि पुनर्दशग्रीवमेवाभ्यवर्तत अभितोऽवर्तिष्ट अनवरतं जायमानत्वात् ॥ २७ ॥ २८ ॥ २९ ॥ तरुप्रवालरक्तवर्णा रक्त

राक्षसेंद्रसमाधूतंतस्यास्तद्वदनंशुभम्॥ शुशुभेनविनारामंदिवाचंद्रइवोदितः॥ २२ ॥ साहेमवर्णानीलांगंमैथिलीराक्षसाधिपम्॥ शुशुभेकांचनीकांची नीलंगजमिवाश्रिता॥ २३॥ सापद्मपीताहेमाभारावणंजनकात्मजा॥ विद्युद्घनमिवाविश्यशुशुभेतप्तभूषणा ॥२४॥ तस्याभूषणघोषेणवैदेह्याराक्षसे श्वरः॥ बभूवविमलोनीलःसघोषइवतोयदः ॥ २५॥ उत्तमांगच्युतातस्याःपुष्पवृष्टिःसमंततः॥ सीतायाह्रियमाणायाःपपातधरणीतले॥ २६॥ सातुरावणवेगेनपुष्पवृष्टिःसमंततः॥ समाधूतादशग्रीवंपुनरेवाभ्यवर्तत॥ २७॥ अभ्यवर्ततपुष्पाणांधारावैश्रवणानुजम् ॥ नक्षत्रमालाविमलामेरुं नगमिवोत्तमम्॥ २८॥ चरणान्नूपुरंभ्रष्टंवैदेह्यारत्नभूषितम्॥ विद्युन्मंडलसंकाशंपपातधरणीतले॥ २९॥ तरुप्रवालरक्तासानीलांगंराक्षसेश्वरम्॥ प्रशोभयतवैदेहीगजंकक्ष्येवकांचनी॥ ३०॥ तांमहोल्कामिवाकाशेदीप्यमानांस्वतेजसा॥ जहाराकाशमाविश्यसीतांवैश्रवणानुजः॥ ३१॥ तस्या स्तान्यग्निवर्णानिभूषणानिमहीतले॥ सघोषाण्यवशीर्यंतक्षीणास्ताराइवांबरात्॥ ३२॥ तस्याःस्तनांतराद्भ्रष्टोहारस्ताराधिपद्युतिः॥ वैदेह्यानिपत न्भातिगंगेवगगनच्युता॥ ३३॥ उत्पातवाताभिरतानानाद्विजगणायुताः॥ माभैरितिविधूताग्राव्याजह्रुरिवपादपाः॥३४॥ नलिन्योध्वस्तकमलास्त्र स्तमीनजलेचराः॥ सखीमिवगतोत्साहांशोचंतीवस्ममैथिलीम्॥ ३५॥ समंतादभिसंपत्यसिंहव्याघ्रमृगद्विजाः॥ अन्वधावंस्तदारोषात्सीतांछा यानुगामिनः॥ ३६॥ जलप्रपातास्रमुखाःशृंगैरुच्छ्रितबाहुभिः॥ सीतायांह्रियमाणायाविक्रोशंतीवपर्वताः॥ ३७॥

किसलयवर्णेत्यर्थः । क्रोधातिशयादेवं वर्णोस्याः कक्ष्या गजाच्छादिनी ॥ ३० ॥ तां सीतामित्यन्वयः अत्रप्रकरणं वारंवारं वैश्रवणानुजत्वोक्त्या ईदृशक्रियाया अत्यनौचित्यप्रदर्शनेन शीघ्रफलदत्वं सूचयति ॥ ३१ ॥ क्षीणाः क्षीणपुण्यास्तारास्ताराक्रूपावस्थिताः पुण्यकृत इत्यर्थः ॥ ३२ ॥ ३३ ॥ उत्पातवातः ऊर्ध्ववातः द्विजगणैः पक्षिगणैर्युक्ताः व्याजह्रुरिव उत्प्रेक्षालंकारः ॥ ३४ ॥ त्रस्ता मीनप्रभृतिजले चरा यासां ताः सखीमिव मैथिलीं गतोत्साहाम् । गतोच्छ्वासा इति पाठे रावणत्रासाच्छुष्कजलतया गतप्राणा इत्यर्थः ॥ ३५ ॥ रोषाद्रावणविषयात् ॥ ३६ ॥ जलप्रपातरूपाण्यस्राणि मुखे येषां ते ॥ ३७ ॥

॥ ३८ ॥ आर्जवमजैह्यं अनृशंसता दया यत्र यस्मादित्यर्थः ॥ ३९ ॥ गणशः संघशः वित्रस्तकाः स्वार्थे कः । मृगपोतकाः मृगबालकाः ॥ ४० ॥ विलक्षणैर्विगतलक्षणैर्विगतशोभैरिति यावत् ॥ ४१ ॥ विक्रोशंतीमित्यर्धं पूर्वान्वयि ॥ ४२ ॥ धरणीतलमवेक्षमाणां रामलक्ष्मणागमनकांक्षया वस्तुतस्तदनुगमनाकांक्षयेति तत्त्वं विप्रमृष्टो विलुलितो विशेषकस्तिलकोयस्यास्ताम् ॥ ४३ ॥ भयभारपीडिता सेव विवर्णवक्रेत्यर्थः ॥ ४४ ॥ भेवमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे द्विपंचाशः सर्गः ॥ ५२ ॥ अथ सीतया क्रियमाणपारुष्य एव तां हरति स्मेत्याह खमिति । वर्तिनीत्यसुप्यपि णिनिरार्षः ॥ १ ॥ रोषरोदनाभ्यां हेतुभ्यां ताम्राक्षी ॥ २ ॥ विरहितां रामलक्ष्मणाभ्यामिति शेषः । अनेन कर्मणा चौर्येण ॥ ३ ॥ अपवाहितः अन्यत्र नायितः मायया मृगरूपेण

ह्रियमाणांतुवैदेहींदृष्ट्वादीनोदिवाकरः ॥ प्रविध्वस्तप्रभःश्रीमानासीत्पांडुरमंडलः ॥ ३८ ॥ नास्तिधर्मःकुतःसत्यंनार्जवंनानृशंसता ॥ यत्ररामस्यवैदेहीसीतांहरतिरावणः ॥ ३९ ॥ इतिभूतानिसर्वाणिगणशःपर्यदेवयन् ॥ वित्रस्तकादीनमुखारुरुदुर्मृगपोतकाः ॥४०॥ उद्वीक्ष्योद्वीक्ष्यनयनैर्भयादिवविलक्षणैः ॥ सुप्रवेपितगात्राश्चबभूवुर्वनदेवताः ॥ ४१ ॥ विक्रोशंतींदृढंसीतांदृष्ट्वादुःखंतथागताम् ॥ तांतुलक्ष्मणरामेतिक्रोशंतींमधुरस्वराम् ॥४२॥ अवेक्षमाणांबहुशोवैदेहींधरणीतलम् ॥ सतामाकुलकेशांतांविप्रमृष्टविशेषकाम् ॥ जहारात्मविनाशायदशग्रीवोमनस्विनीम् ॥४३॥ ततस्तुसाचारुदतीशुचिस्मिताविनाकृताबंधुजनेनमैथिली ॥ अपश्यतीराघवलक्ष्मणावुभौविवर्णवक्राभयभारपीडिता ॥ ४४ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आदिकाव्ये अरण्यकांडे द्विपंचाशः सर्गः ॥५२॥ खमुत्पतंतंतंदृष्ट्वामैथिलीजनकात्मजा ॥ दुःखितापरमोद्विग्नाभयेमहतिवर्तिनी ॥१॥ रोषरोदनताम्राक्षीभीमाक्षंराक्षसाधिपम् ॥ रुदतीकरुणंसीताह्रियमाणातमब्रवीत् ॥ २ ॥ नव्यपत्रपसेनीचकर्मणानेनरावण ॥ ज्ञात्वाविरहितांयोमांचोरयित्वापलायसे ॥ ३ ॥ त्वयैवनूनंदुष्टात्मन्भीरुणाहर्तुमिच्छता ॥ ममापवाहितोभर्तामृगरूपेणमायया ॥ ४ ॥ योहिमामुद्यतस्त्रातुंसोप्ययंविनिपातितः ॥ गृध्रराजःपुराणोऽसौश्वशुरस्यसखामम ॥ ५ ॥ परमंखलुतेवीर्यंदृश्यतेराक्षसाधम ॥ विश्राव्यनामधेयंहियुद्धेनास्मिजितात्वया ॥ ६ ॥ ईदृशंगर्हितंकर्मकथंकृत्वानलज्जसे ॥ स्त्रियाश्चाहरणंनीचरहितेचपरस्यच ॥ ७ ॥ कथयिष्यंतिलोकेषुपुरुषाःकर्मकुत्सितम् ॥ सुनृशंसमधर्मिष्ठंतवशौटीर्यमानिनः ॥ ८ ॥ धिक्तेशौर्यंचसत्त्वंचयत्त्वयाकथितंतदा ॥ कुलाक्रोशकरंलोकेधिक्तेचारित्रमीदृशम् ॥ ९ ॥ किंशक्यंकर्तुमेवंहियज्जवेनैवधावसि ॥ मुहूर्तमपितिष्ठत्वंनजीवन्प्रतियास्यसि ॥ १० ॥

मारीचेनेति शेषः ॥ ४ ॥ पुराणो वृद्धः अत एवास्य निपातनं न तु त्वद्वीर्यहेतुकमिति भावः ॥ ५ ॥ परमं खल्विति व्यंग्योक्तिः ॥ ६ ॥ स्त्रियाहरणमेव गर्हितं राक्षसादिविवाहानां शास्त्रे गर्हितत्वात्तत्रापि परस्य विवाहितायास्तत्रापि रहिते पतिरहिते काले देशे चेत्यतिनिंद्यं ते कर्मेति भावः ॥ ७ ॥ शौटीर्यमानिनः शूरमानिनः तादृशस्येदृशी लोके निंदा मरणादप्यधिकेति भावः ॥ ८ ॥ सत्त्वं शारीरं बलं तदा अपहरणपूर्वकाले कुलाक्रोशः कुलनिंदा चारित्रमाचारः ॥ ९ ॥ हि यतः एवंरूपेण हृत्वा धावसि अतः किं कर्तुं शक्यं मुहूर्तमपि तिष्ठ त्वं यदि शूर इति शेषः । अवस्थितौ किं स्यात्तदाह नेति ॥ १० ॥

तदेवोपपादयति नहीति ॥ ११ ॥ १२ ॥ साधु आत्मनः पथ्यं कृत्वा विचार्येत्यर्थः । साधु कुर्वात्मन इतिपाठांतरम् । साधु मां मुंच शीघ्रं मां मुंच यावन्मे भर्ता नायातीत्यर्थः ॥ १३ ॥ विनाशाय विधास्यति यत्नमिति शेषः । येन व्यवसायेन स्त्रीभोगव्यवसायेन ॥ १४ ॥ तन्नैरर्थक्यमेवाह नहीति ॥ १५ ॥ श्रेयस्तत्कालसुखावहं पथ्यं वा परिणामसुखावहं वा न समवेक्षसे न विचारयासि यथा मर्त्यो मृत्युकाले विपरीतानि सेवते तथा त्वमपीति भावः ॥ १६ ॥ १७ ॥ १८ ॥ हिरण्मयवृक्षदर्शनं मृत्युचिह्नं वैतरण्यादियातनास्थानं पश्यसीति । वर्तमानसामीप्ये लट् ॥ १९ ॥ २० ॥ शाल्मली यातनावृक्षः ॥ २१ ॥

नहिचक्षुःपथंप्राप्यतयोःपार्थिवपुत्रयोः ॥ ससैन्योपिसमर्थस्त्वंमुहूर्तमपिजीवितुम् ॥ ११ ॥ नत्वंतयोःशरस्पर्शंसोढुंशक्तःकथंचन ॥ वनेप्रज्वलितस्येवस्पर्शमग्नेर्विहंगमः ॥ १२ ॥ साधुकृत्वात्मनःपथ्यंसाधुमांमुंचरावण ॥ मत्प्रधर्षणसंक्रुद्धोभ्रात्रासहपतिर्मम ॥ १३ ॥ विधास्यतिविनाशायत्वंमांयदिनमुंचसि ॥ येनत्वंव्यवसायेनबलान्मांहर्तुमिच्छसि ॥ १४ ॥ व्यवसायस्तुतेनीचभविष्यतिनिरर्थकः ॥ नह्यहंतमपश्यंतीभर्तारंविबुधोपमम् ॥ १५ ॥ उत्सहेशत्रुवशगाप्राणान्धारयितुंचिरम् ॥ ननूनंचात्मनःश्रेयःपथ्यंवासमवेक्षसे ॥ १६ ॥ मृत्युकालेयथामर्त्योविपरीतानिसेवते ॥ मुमूर्षूणांतुसर्वेषांयत्पथ्यंतन्नरोचते ॥ १७ ॥ पश्यामीहहिकंठेत्वांकालपाशावपाशितम् ॥ यथाचास्मिन्भयस्थानेनबिभेषिनिशाचर ॥ १८ ॥ व्यक्तंहिरण्मयांस्त्वंहिसंपश्यसिमहीरुहान् ॥ नदींवैतरणींघोरांरुधिरौघविवाहिनीम् ॥ १९ ॥ खड्गपत्रवनंचैवभीमंपश्यसिरावण ॥ तप्तकांचनपुष्पांचवैदूर्यप्रवरच्छदाम् ॥ २० ॥ द्रक्ष्यसेशाल्मलींतीक्ष्णामायसैःकंटकैश्चिताम् ॥ नहित्वमीदृशंकृत्वातस्यालीकंमहात्मनः ॥ २१ ॥ धारितुंशक्ष्यसिचिरंविषंपीत्वेवनिर्घृणम् ॥ बद्धस्त्वंकालपाशेनदुर्निवारेणरावण ॥२२॥ क्वगतोलप्स्यसेशर्ममभर्तुर्महात्मनः ॥ निमेषांतरमात्रेणविनाभ्रातरमाहवे ॥२३॥ राक्षसानिहतायेनसहस्राणिचतुर्दश ॥ कथंसराघवोवीरःसर्वास्त्रकुशलोबली ॥ २४ ॥ नत्वांहन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् ॥ एतच्चान्यच्चपरुषंवैदेहीरावणांकगा ॥ भयशोकसमाविष्टाकरुणंविललापह ॥ २५ ॥ तदाभृशार्तांबहुचैवभाषिणींविलापपूर्वंकरुणंचभामिनीम् ॥ जहारपापस्तरुणींविचेष्टतींनृपात्मजामागतगात्रवेपथुः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥

ह्रियमाणातुवैदेहीकंचिन्नाथमपश्यती ॥ ददर्शगिरिशृंगस्थान्पंचवानरपुंगवान् ॥ १ ॥ तेषांमध्येविशालाक्षीकौशेयंकनकप्रभम् ॥ उत्तरीयंवरारोहाशुभान्याभरणानिच ॥ २ ॥ मुमोचयदिरामायशंसेयुरितिभामिनी ॥ वस्त्रमुत्सृज्यतन्मध्येनिक्षिप्तंसहभूषणम् ॥ ३ ॥

धारितुं भर्तुं जीवितमिति शेषः ॥ २२ ॥ मम भर्तुः अपराधं कृत्वेति शेषः भ्रातरं विना एकाकिनेति यावत् ॥ २३ ॥ २४ ॥ २५ ॥ आगतगात्रवेपथुः भारातिशयात् ॥ २६ ॥ तैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥ ॥ अपश्यती अपश्यंती ॥ १ ॥ २ ॥ यदि रामाय शंसेयुरिति दैवगत्या दृष्ट्वाय रामाय शंसेयुरिति मत्वाशयेति शेषः । वस्तुतोयं यदिशब्दो वेदाः प्रमाणं यदि स्युरितिवत् वस्त्रमुत्तरीयमुत्सृज्य तन्मध्ये वानरमध्ये सहभूषणं भूषणसहितं कर्णोत्पलादि च निक्षिप्तं तयेति शेषः ॥ ३ ॥

तत्कर्म च तत्कर्म तु वस्त्रभूषणप्रक्षेपकर्म तु संभ्रमात्सभयहरणजनितचित्तक्षोभात् अतिभारेण शिरसामधोमुखतया च ॥ ४ ॥ ५ ॥ सुसंदृष्टः मृत्योस्तत्त्वेनाज्ञानात् । केचित्तु लब्धं रामहस्तान्मृत्युद्वारमिति संदृष्टः विना चोत्कटं पापं पुण्यक्षयाभावेन न मृत्युः सन्निहितः स्यादिति तमोगुणावृतः सन्मातर्यपि विरुद्धशब्दव्यवहारं कृतवानिति वदंति तेषामेतत्सर्गान्ते वक्ष्यमाणं बभूव मोहान्मुदित इत्यसंगतं स्यात् तथा आत्मानं बुद्धिवैकल्यात्कृतकृत्यममन्यत इत्युत्तरसर्गादिस्थं चासंगतं स्यात् ॥ ६ ॥ विहायसा आकाशमार्गेण क्षिप्रं समतीयायेत्यन्वयः ॥ ७ ॥ तिमिर्मत्स्यविशेषः ॥ ॥ ८ ॥ संभ्रमाज्जगन्मात्रपहारदर्शनजक्षोभात्परिवृत्तोर्मिः स्वभावमाप्तोर्मिप्रवृत्तिरहितः रुद्धाः रुद्धप्रचारा मीनादयो यस्मिन् ॥ ९ ॥ १० ॥ एतदंतः सीताहरणकर्मावसानः सिद्धाः सिद्धाश्च ॥ ११ ॥ रूपिणी

संभ्रमात्तुदशग्रीवस्तत्कर्मचनबुद्धवान् ॥ पिंगाक्षास्तांविशालाक्षींनेत्रैरनिमिषैरिव ॥ ४ ॥ विक्रोशंतींतदासीतांददृशुर्वानरोत्तमाः ॥ सचपंपामतिक्रम्यलंकामभिमुखःपुरीम् ॥ ५ ॥ जगाममैथिलींगृह्यरुदतींराक्षसेश्वरः ॥ तांजहारसुसंहृष्टोरावणोमृत्युमात्मनः ॥ ६ ॥ उत्संगेनैवभुजगींतीक्ष्णदंष्ट्रांमहाविषाम् ॥ वनानिसरितःशैलान्सरांसिचविहायसा ॥ ७ ॥ सक्षिप्रंसमतीयायशरश्चापादिवच्युतः ॥ तिमिनक्रनिकेतंतुवरुणालयमक्षयम् ॥ ८ ॥ सरितांशरणंगत्वासमतीयायसागरम् ॥ संभ्रमात्परिवृत्तोर्मीरुद्धमीनमहोरगः ॥ ९ ॥ वैदेह्यांह्रियमाणायांबभूववरुणालयः ॥ अंतरिक्षागतावाचःसमृजुश्चारणास्तथा ॥ १० ॥ एतदंतोदशग्रीवइतिसिद्धास्तदाब्रुवन् ॥ सतुसीतांविचेष्टंतीमंकेनादायरावणः ॥ ११ ॥ प्रविवेशपुरींलंकांरूपिणींमृत्युमात्मनः ॥ सोऽभिगम्यपुरींलंकांसुविभक्तमहापथाम् ॥ १२ ॥ संरूढकक्ष्यांबहुलांस्वमंतःपुरमाविशत् ॥ तत्रतामसितापांगींशोकमोहसमन्विताम् ॥ ॥ १३ ॥ निदधेरावणःसीतांमयोमायामिवासुरीम् ॥ अब्रवीच्चदशग्रीवःपिशाचीर्घोरदर्शनाः ॥ १४ ॥ यथानैनांपुमान्स्त्रीवासीतांपश्यत्यसंमतः ॥ मुक्तामणिसुवर्णानिवस्त्राण्याभरणानिच ॥ १५ ॥ यद्यदिच्छेत्तदेवास्यादेयंमच्छंदतोयथा ॥ याचवक्ष्यतिवैदेहींवचनंकिंचिदप्रियम् ॥ १६ ॥ अज्ञानाद्यदिवाज्ञानान्नतस्याजीवितंप्रियम् ॥ तथोक्त्वाराक्षसीस्तास्तुराक्षसेंद्रःप्रतापवान् ॥ १७ ॥ निष्क्रम्यांतःपुरात्तस्मात्किंकृत्यमितिचिंतयन् ॥ ददर्शाष्टौमहावीर्यान्राक्षसान्पिशिताशनान् ॥ १८ ॥ सतान्दृष्ट्वामहावीर्योवरदानेनमोहितः ॥ उवाचतानिदंवाक्यंप्रशस्यबलवीर्यतः ॥ १९ ॥

मात्मनो मृत्युमित्यन्वयः ॥ १२ ॥ संरूढकक्ष्यां बहुजनाकीर्णद्वारां बहुलां विपुलां संरूढकक्ष्याबहुलमितिपाठे तादृशबहुतरद्वारवदित्यंतःपुरविशेषणम् ॥ १३ ॥ मायामिवासुरीमित्यनेन मायारूपैवैषा सीताया लंकामागतेति ध्वनितं मुख्यमाता त्वग्निं प्रविष्टेति पूर्वमेव ध्वनितमतएव रावणस्य वहनीयैषा जाता मायात्वादेव रावणस्य तदज्ञानं पिशाचीः राक्षसीरित्यर्थः इति तीर्थः ॥ १४ ॥ असंमतः अस्मदननुज्ञातः पुमांस्तथाभूता स्त्री वा न पश्यति तथा रक्षतेति शेषः ॥ १५ ॥ मच्छंदतो मदाज्ञया यद्यद्वस्तु यदा इच्छेत्तदैव यथास्या इष्टं भवति तथैव तत्सर्वं देयं मच्छंदत इत्यस्य मद्वशप्राप्तिसिद्ध्यर्थमित्यर्थः इति कतकः । अस्या अप्रियं च न वाच्यमित्याह या चेति । तस्या जीवितं न प्रियं तां मारयामीत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ वरदानेन पैतामहेन मोहितो रामशतादपि न मे भीरिति चिंतयानः मोहकृतैषा

चिंता तान्बलवीर्यतः प्रशस्येत्यन्वयः ॥ १९ ॥ हतस्थानं रामेणेति शून्यं कृतमित्यर्थः । पूर्वं खरालयत्वं भूतं प्राप्तम् ॥ २० ॥ २१ ॥ २२ ॥ धैर्यस्योपरि क्रोधः धैर्योपमर्दकः क्रोध इत्यर्थः । ततः खरादि वधात्र तु भीत्या नापि वृथा क्रोध इत्यर्थः ॥ २३ ॥ निर्यातयितुं प्रत्युपकारेणापनेतुम् ॥ २४ ॥ २५ ॥ प्रवृत्तिर्वार्ता उपनेतव्या मम प्रापणीया ॥ २६ ॥ २७ ॥ २८ ॥ महार्थं महानर्थोभिधेयं यस्य तत् यतः यद्दिशि जनस्थानं तद्दिशीत्यर्थः । अलक्ष्यदर्शनाः अंतर्धानविद्यया ॥ २९ ॥ उपलभ्य प्राप्य स्पृष्ट्वा च परिगृह्य स्वगृहे स्थापयित्वा परिग्रहत्वेन विभाव्य च प्रसज्ज्य संपाद्य मोहान्मुदितः खरहं

नानाप्रहरणाःक्षिप्रमितोगच्छतसत्वराः ॥ जनस्थानंहतस्थानंभूतपूर्वंखरालयम् ॥ २० ॥ तत्रास्यतांजनस्थानेशून्येनिहतराक्षसे ॥ पौरुषंबलमाश्रित्यत्रासमुत्सृज्यदूरतः ॥ २१ ॥ बहुसैन्यंमहावीर्यंजनस्थानेनिवेशितम् ॥ सदूषणखरंयुद्धेनिहतंरामसायकैः ॥ २२ ॥ ततःक्रोधोममापूर्वोधैर्यस्योपरिवर्धते ॥ वैरंचसुमहज्जातंरामंप्रतिसुदारुणम् ॥ २३ ॥ निर्यातयितुमिच्छामितच्चवैरंमहारिपोः ॥ नहिलप्स्याम्यहंनिद्रामहत्वासंयुगेरिपुम् ॥ २४ ॥ तंत्विदानीमहंहत्वाखरदूषणघातिनम् ॥ रामंशर्मोपलप्स्यामिधनंलब्ध्वेवानिर्धनः ॥ २५ ॥ जनस्थानेवसद्भिस्तुभवद्भीराममाश्रिता ॥ प्रवृत्तिरुपनेतव्याकिंकरोतीतितत्त्वतः ॥ २६ ॥ अप्रमादाच्चगंतव्यंसर्वैरेवनिशाचरैः ॥ कर्तव्यश्चसदायत्नोराघवस्यवधंप्रति ॥ २७ ॥ युष्माकंतुबलंज्ञातंबहुशोरणमूर्धनि ॥ अतश्चास्मिञ्जनस्थानेमयायूयंनिवेशिताः ॥ २८ ॥ ततःप्रियंवाक्यमुपेत्यराक्षसामहार्थमष्टावभिवाद्यरावणम् ॥ विहायलंकांसहिताःप्रतस्थिरेयतोजनस्थानमलक्ष्यदर्शनाः ॥ २९ ॥ ततस्तुसीतामुपलभ्यरावणःसुसंप्रहृष्टःपरिगृह्यमैथिलीम् ॥ प्रसज्ज्यरामेणचवैरमुत्तमंबभूवमोहान्मुदितःसरावणः ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अर० चतुष्पंचाशः सर्गः ॥ ५४ ॥ संदिश्यराक्षसान्घोरान्रावणोऽष्टौमहाबलान् ॥ आत्मानंबुद्धिवैक्लव्यात्कृतकृत्यममन्यत ॥ १ ॥ सचिंतयानोवैदेहींकामबाणैःप्रपीडितः ॥ प्रविवेशगृहंरम्यंसीतांद्रष्टुमभित्वरन् ॥ २ ॥ सप्रविश्यतुतद्वेश्मरावणोराक्षसाधिपः ॥ अपश्यद्राक्षसीमध्येसीतांदुःखपरायणाम् ॥ ३ ॥ अश्रुपूर्णमुखींदीनांशोकभारावपीडिताम् ॥ वायुवेगैरिवाक्रांतांमज्जंतींनावमर्णवे ॥ ४ ॥ मृगयूथपरिभ्रष्टांमृगींश्वभिरिवावृताम् ॥ अधोगतमुखींसीतांतामभ्येत्यनिशाचरः ॥ ५ ॥ तांतुशोकवशांदीनामवशांराक्षसाधिपः ॥ सबलाद्दर्शयामासगृहंदेवगृहोपमम् ॥ ६ ॥

न्तुर्वंशो मम सुकरः स्त्रीवियोगेनातिखिन्नस्येति हर्षितः ॥ ३० ॥ नंलँमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणातिलके वाल्मीकीय आदिकाव्ये अरण्यकांडे चतुष्पंचाशः सर्गः ॥ ५४ ॥ ॥ बुद्धिवैक्लव्याद्बुद्धिवैपरीत्यात् ॥ १ ॥ २ ॥ ३ ॥ शोको वायुस्थाने अश्रु चार्णवजलस्थाने अनेनाश्रुवेगातिशय उक्तः ॥ ४ ॥ अधोगतमवनतं मुखं यस्याः ॥ ५ ॥ अनिच्छंतीमपि तद्दर्शनं बलाद्दर्शयामासेत्यन्वयः ॥ ६ ॥

॥ ७ ॥ दांतकैर्गजदंतकृतैः तपनीयं स्वर्णं स्तंभैर्युतामिति शेषः ॥ ८ ॥ तया सीतया ॥ ९ ॥ हेममयजालकैरावृताः ॥ १० ॥ सुधया मणिभिश्च विचित्राणि भूमिभागानीत्यार्षं क्लीबत्वम् ॥ ११ ॥ दीर्घिका वाप्यः ॥ १२ ॥ लोभितुं सामनिग्रहाभ्यां प्रलोभयितुम् ॥ १३ ॥ दशेति । द्वात्रिंशत्कोटिसंख्याः ॥ १४ ॥ तेषामपि एकस्यैकस्यैकमेकं सहस्रं मम कार्ये प्रयोजने साधकतया पुरःसरमस्तीति शेषः ॥ १५ ॥ मे मम यदिदमुक्तरूपं राज्यतंत्रं राजपरिकरस्तत्त्वयि प्रतिष्ठितम् त्वदधीनमित्यर्थः ॥ १६ ॥ बह्वीनामुत्तमस्त्रीणामंतःपुरसंचारिणीनाम् यो मम परिग्रहः भार्या । नित्यपुलिंगः परिग्रहशब्दो भार्यावाची । मम भार्या

हर्म्यप्रासादसंबाधंस्त्रीसहस्रनिषेवितम् ॥ नानापक्षिगणैर्जुष्टंनानारत्नसमन्वितम् ॥ ७ ॥ दांतकैस्तापनीयैश्चस्फाटिकैराजतैस्तथा ॥ वज्रवैदूर्यचित्रैश्चस्तंभैर्दृष्टिमनोरमैः ॥ ८ ॥ दिव्यदुंदुभिनिर्घोषंतप्तकांचनभूषणम् ॥ सोपानंकांचनंचित्रमारुरोहतयासह ॥ ९ ॥ दांतकाराजताश्चैवगवाक्षाःप्रियदर्शनाः ॥ हेमजालावृताश्चासंस्तत्रप्रासादपंक्तयः ॥१०॥ सुधामणिविचित्राणिभूमिभागानिसर्वशः ॥ दशग्रीवःस्वभवनेप्रादर्शयतमैथिलीम् ॥११॥ दीर्घिकाःपुष्करिण्यश्चनानापुष्पसमावृताः ॥ रावणोदर्शयामाससीतांशोकपरायणाम् ॥ १२ ॥ दर्शयित्वातुवैदेहींकृत्स्नंतद्भवनोत्तमम् ॥ उवाचवाक्यंपापात्मासीतांलोभितुमिच्छया ॥ १३ ॥ दशराक्षसकोट्यश्चद्वाविंशतिरथापराः ॥ वर्जयित्वाजनान्वृद्धान्बालांश्चरजनीचरान् ॥ १४ ॥ तेषांप्रभुरहंसीतेसर्वेषांभीमकर्मणाम् ॥ सहस्रमेकमेकस्यममकार्यपुरःसरम् ॥ १५ ॥ यदिदंराज्यतंत्रंमेत्वयिसर्वंप्रतिष्ठितम् ॥ जीवितंचविशालाक्षित्वंमेप्राणैर्गरीयसी ॥ १६ ॥ बह्वीनामुत्तमस्त्रीणांममयोऽसौपरिग्रहः ॥ तासांत्वमीश्वरीसीतेममभार्याभवप्रिये ॥१७॥ साधुकिंतेन्यथाबुद्ध्यारोचयस्ववचोमम ॥ भजस्वमाभितप्तस्यप्रसादंकर्तुमर्हसि ॥ १८ ॥ परिक्षिप्तासमुद्रेणलंकेयंशतयोजना ॥ नेयंधर्षयितुंशक्यासेंद्रैरपिसुरासुरैः ॥ १९ ॥ नदेवेषुनयक्षेषुनगंधर्वेषुनर्षिषु ॥ अहंपश्यामिलोकेषुयोमेवीर्यसमोभवेत् ॥२०॥ राज्यभ्रष्टेनदीनेनतापसेनपदातिना ॥ किंकरिष्यसिरामेणमानुषेणाल्पतेजसा ॥२१॥ भजस्वसीतेमामेवभर्ताहंसदृशस्तव ॥ यौवनंत्वध्रुवंभीरुरमस्वेहमयासह ॥२२॥ दर्शनेमाकृथाबुद्धिंराघवस्यवरानने ॥ कास्यशक्तिरिहागंतुमपिसीतेमनोरथैः ॥ २३ ॥ नशक्योवायुराकाशेपाशैर्बद्धुंमहाजवः ॥ दीप्यमानस्यवाप्यग्नेर्ग्रहीतुंविमलाःशिखाः ॥ २४ ॥ त्रयाणामपिलोकानांनतंपश्यामिशोभने ॥ विक्रमेणनयेद्यस्त्वांमद्बाहुपरिपालिताम् ॥२५॥ लंकायाःसुमहद्राज्यमिदंत्वमनुपालय ॥ त्वत्प्रेष्यामद्विधाश्चैवदेवाश्चापिचराचरम् ॥२६॥

सती तासां त्वमीश्वरी स्वामिनी भव ॥१७॥ साधु हितं मम वचो रोचयस्वेत्यन्वयः अन्यथाबुद्ध्या ते तव किं न किमपि फलमित्यर्थः । मा मां भजस्व अभितप्तस्य कामाभितप्तस्य ॥१८॥ शतयोजना भूमेरिति शेषः अशक्यधर्षणत्वे पूर्वार्धं हेतुः एवं च रामस्यात्रगमनमसंभावितमिति भावः ॥१९॥२०॥२१॥२२॥ अस्य रामस्य ॥२३॥ यथा वायुर्बद्धुमशक्यो यथा चाग्निशिखा ग्रहीतुमशक्यास्तथेहागन्तुमशक्यमित्यर्थः ॥२४॥२५॥मद्विधास्त्वत्प्रेष्या भविष्यंति मां चेदंगी करिष्यसि तदा सेवकवत्त्वदाज्ञावशो भविष्यामि तथाभूते मयि राक्षसा देवाश्च मद्वशास्त्वद्वशाः संपन्ना एव किं विशेषेण सर्वं चराचरं त्वत्प्रेष्यं भवति तदेत्यर्थः॥२६॥

अभिषेकः श्रमनिवृत्तिद्वारा भोगाय स्नानं तदुदकेन क्लिन्नार्द्रा श्रमापनयनात्तुष्टा च मां रमयस्व यत्पूर्वं संचितं किंचिद्दुष्कृतमासीत्तद्वनवासेन तद्गतदुःखेन गतं क्षीणम् ॥२७॥इह लङ्कायाम् मदंगीकारादिति शेषः ॥२८॥
॥२९॥३०॥३१॥३२॥ शोकेन अस्वस्थामिव चिंतया हतप्रभामिव ध्यायंतीमिव तामुवाचेत्यन्वयः ॥३३॥ तूष्णीमवस्थानाद्व्रीडया तूष्णीं स्थितेति मन्यमान आह अलमिति। धर्मलोपः स्वभर्तृत्यागपरांगीकाररू
पस्तत्कृतेन व्रीडेन लज्जयाऽलम् मास्त्वित्यर्थः॥३४॥कुतस्तत्राह आर्ष इति। हे देवि त्वामभि त्वामुद्दिश्यमया क्रियमाणो निष्पंदः स्नेहबंधः प्रार्थनारूपः यश्चाग्रे भविष्यति सोयमार्षो ऋषिदृष्ट एव क्षत्रियाणामुचितत्वेन वेदोक्त
एव बलात्कारेण राक्षस इति विवाहेषु स्मृत्या गणनात्।एवमुक्तिरपि तमोगुणप्राधान्येनैव कन्याया बलात्कारेण ग्रहणस्यैव राक्षसविवाहपदार्थत्वादिति बोध्यम् पुनः प्रसादयति एताविति॥३५॥इमा दासोहमित्यंताः शुष्यमाणे

अभिषेकजलक्लिन्नातुष्टाचरमयस्वच ॥ दुष्कृतंयत्पुराकर्मवनवासेनतद्गतम् ॥२७॥ यच्चतेसुकृतंकर्मतस्येहफलमाप्नुहि ॥ इहसर्वाणिमाल्यानिदिव्यगं
धानिमैथिलि ॥२८॥ भूषणानिचमुख्यानितानिसेवमयासह ॥ पुष्पकंनामसुश्रोणिभ्रातुर्वैश्रवणस्यमे ॥२९॥ विमानंसूर्यसंकाशंतरसानिर्जितंरणे ॥
विशालंरमणीयंचतद्विमानंमनोजवम् ॥ ३० ॥ तत्रसीतेमयासार्धंविहरस्वयथासुखम् ॥ वदनंपद्मसंकाशंविमलंचारुदर्शनम् ॥३१॥ शोकार्तंतुवरारोहे
नभ्राजतिवरानने ॥ एवंवदतितस्मिन्सावस्त्रांतेनवरांगना ॥ ३२ ॥ पिधायेंदुनिभंसीतामंदमश्रूण्यवर्तयत् ॥ ध्यायंतीतामिवास्वस्थांसीतांचिंताहतप्र
भाम् ॥ ३३ ॥ उवाचवचनंवीरोरावणोरजनीचरः ॥ अलंव्रीडेनवैदेहिधर्मलोपकृतेनते ॥ ३४ ॥ आर्षोऽयंदेविनिष्पंदोयस्त्वामभिभविष्यति ॥ एतौ
पादौमयास्निग्धौशिरोभिःपरिपीडितौ ॥ ३५ ॥ प्रसादंकुरुमेक्षिप्रंवश्योदासोऽहमस्मिते ॥ इमाःशून्यमयावाचःशुष्यमाणेनभाषिताः ॥ ३६ ॥ नचा
पिरावणःकांचिन्मूर्ध्नास्त्रींप्रणमेतह ॥ एवमुक्त्वादशग्रीवोमैथिलींजनकात्मजाम् ॥ कृतांतवशमापन्नोममेयमितिमन्यते ॥ ३७ ॥ इत्यार्षेश्रीम० वा०
आ० अर० पंचपंचाशः सर्गः ॥ ५५ ॥ सातथोक्तातुवैदेहीनिर्भयाशोककर्शिता ॥ तृणमंतरतःकृत्वारावणंप्रत्यभाषत ॥ १ ॥ राजादशरथोनामधर्म
सेतुरिवाचलः ॥ सत्यसंधःपरिज्ञातोयस्यपुत्रःसराघवः ॥ २ ॥ रामोनामसधर्मात्मात्रिषुलोकेषुविश्रुतः ॥ दीर्घबाहुर्विशालाक्षोदैवतंसपतिर्मम ॥३॥
इक्ष्वाकूणांकुलेजातःसिंहस्कंधोमहाद्युतिः ॥ लक्ष्मणेनसहभ्रात्रायस्तेप्राणान्वधिष्यति ॥ ४ ॥ प्रत्यक्षंयद्यहंतस्यत्वयावैधर्षिताबलात् ॥ शयितात्वं
हतःसंख्येजनस्थानेयथाखरः ॥५॥ यएतेराक्षसाःप्रोक्ताघोररूपामहाबलाः ॥ राघवेनिर्विषाःसर्वेसुपर्णेपन्नगायथा ॥६॥ तस्यज्याविप्रमुक्तास्तेशराः
कांचनभूषणाः ॥ शरीरंविधमिष्यंतिगंगाकूलमिवोर्मयः ॥ ७ ॥ असुरैर्वासुरैर्वात्वंयद्यवध्योसिरावण ॥ उत्पाद्यसुमहद्वैरंजीवंस्तस्यनमोक्ष्यसे ॥८॥

न कामपीडितेन मया भाषिता उक्ता वाचः शून्या यथा न भवंति तथा कुर्विति शेषः॥३६॥ एवंविधं प्रसादनं न काप्यभूदित्याह न चापीति। मन्यतेऽमंस्त अत्र रसाभासः॥३७॥ सैलैमानः ॥ इति श्रीरामा० श्रीरा० रामा०
वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचपंचाशः सर्गः ॥५५॥ निर्भया स्त्रियो बलादुपभोगे मूर्धा ते विपतिष्यतीत्यप्सरसो रावणं प्रतिशापं चित्ते विज्ञाय निर्भया बलात्कारे योगवशाददृश्याऽस्पृश्या च भविष्यामीति धिया
निर्भया वा तृणमंतरतः कृत्वा साक्षात्पापात्मकपरपुरुषसंभाषणजदोषपरिहारायेति शेषः ॥१॥ धर्मसेतुरिवेत्यत्र धर्मेति पृथक्पदं लुप्तषष्ठीकम् धर्मस्याचलः सेतुरिव मर्यादाप्रतिष्ठापकः परिज्ञातः प्रसिद्धः ॥२॥३॥
स कस्तत्राह य इति ॥ ४ ॥ शयिता शयनकर्ता मृतोभूरिति शेषः इडार्षः ॥ ५ ॥ मोक्तास्त्वया प्रत्युर इति शेषः ॥ ६ ॥ ७ ॥ तस्य रामस्य वैरं क्रोधमुत्पाद्य तत्सन्निधिं प्राप्तस्ततो जीवन्न मोक्ष्यसे

तस्य मनुष्यत्वादिति भावः ॥ ८ ॥ तदेवाह अंतकरः नाशकरः ॥ ९ ॥ रक्षं इति रावणसंबोधनम् निर्दग्धो भवेरीति शेषः ॥ १० ॥ यो रामः पातयेदित्यादि शक्यार्थे लिङ् यच्चं तव शतयोजनसमुद्र मध्यगा लंकाऽगम्येति बुद्धिः सा वृथैवेत्याह सागरं शोषयेद्वापि । वाशब्द एवार्थे स इह स्थितां सीतां मोचयेदेवेत्यर्थः ॥ ११ ॥ त्वत्कृतेन त्वत्कृतापराधेन ॥ १२ ॥ पतिपार्श्वाद्विना भावं पतिपार्श्ववियोगम ॥ १३ ॥ देवरसंयुक्तो लक्ष्मणसंयुतः स खरादिहंता दैवतसंयुक्त इतिपाठे दैवानुकूल्यवांनित्यर्थः ॥ १४ ॥ वीर्यं पराक्रमः बलं शारीरम् दर्पो मदः उत्सेकः अमर्यादत्वम् ॥ १५ ॥ कार्ये ममाद्यंति उचिते कार्ये वैपरीत्यं प्राप्नुवंतीत्यर्थः ॥ १६ ॥ मां प्रधृष्य स्थितस्येति शेषः स ते काल इति नाशकाल इत्यर्थः । स्वमरणेन वैधव्यमेवांतःपुरवधः ॥ १७ ॥ यज्ञमध्यस्था यज्ञशालामध्यस्था स्रुगादियज्ञोपकरणमं

सतेजीवितशेषस्यराघवोंतकरोवली ॥ पशोर्यूपगतस्येवजीवितंतवदुर्लभम् ॥ ९ ॥ यदिपश्येत्सरामस्त्वांरोषदीप्तेनचक्षुषा ॥ रक्षस्त्वमद्यनिर्दग्धो यथारुद्रेणमन्मथः ॥ १० ॥ यश्चंद्रंनभसोभूमौपातयेन्नाशयेतवा ॥ सागरंशोषयेद्वापिससीतांमोचयेदिह ॥ ११ ॥ गतासुस्त्वंगतश्रीकोगतसत्त्वो गतेंद्रियः ॥ लंकावैधव्यसंयुक्तात्वत्कृतेनभविष्यति ॥ १२ ॥ नतेपापमिदंकर्मसुखोदर्कंभविष्यति ॥ याहंनीताविनाभावंपतिपार्श्वात्त्वयावलात् ॥ ॥ १३ ॥ सहिदेवरसंयुक्तोममभर्तामहाद्युतिः ॥ निर्भयोवीर्यमाश्रित्यशून्येवसतिदंडके ॥ १४ ॥ सतेवीर्यंवलंदर्पमुत्सेकंचयथाविधम् ॥ व्यपनेष्य तिगात्रेभ्यःशरवर्षेणसंयुगे ॥ १५ ॥ यदाविनाशोभूतानांदृश्यतेकालचोदितः ॥ तदाकार्येप्रमाद्यंतिनराःकालवशंगताः ॥ १६ ॥ मांप्रधृष्यसतेकालः प्राप्तोऽयंराक्षसाधम ॥ आत्मनोराक्षसानांचवधायांतःपुरस्यच ॥ १७ ॥ नशक्यायज्ञमध्यस्थावेदिःस्रुग्भांडमंडिता ॥ द्विजातिमंत्रसंपूताचंडालेना वमर्दितुम् ॥ १८ ॥ तथाहंधर्मनित्यस्यधर्मपत्नीदृढव्रता ॥ त्वयास्प्रष्टुंनशक्याहंराक्षसाधमपापिना ॥ १९ ॥ क्रीडंतिराजहंसेनपद्मखंडेषुनित्यशः ॥ हंसीसातृणमध्यस्थंकथंद्रक्ष्येतमद्गुकम् ॥ २० ॥ इदंशरीरंनिःसंज्ञंबंधवाघातयस्ववा ॥ नेदंशरीरंरक्ष्यंमेजीवितंवापिराक्षस ॥ २१ ॥ नतुशक्यमपक्रो शंपृथिव्यांदातुमात्मनः ॥ एवमुक्त्वातुवैदेहीक्रोधात्सुपरुषंवचः ॥ २२ ॥ रावणंजानकीतत्रपुनर्नोवाचकिंचन ॥ सीतायावचनंश्रुत्वापरुषंरोमहर्षणम् ॥ :॥ २३ ॥ प्रत्युवाचततःसीतांभयसंदर्शनंवचः ॥ शृणुमैथिलिमद्वाक्यंमासान्द्वादशभामिनि ॥ २४ ॥

डितां वेदिश्चंडालेनावमर्दितुं स्प्रष्टुं न शक्या तथा त्वयाहमिति योजना ॥ १८ ॥ १९ ॥ पद्मषंडानि पद्मसमूहाः तृणमध्यस्थं जलनील्यादितृणमध्यस्थं द्रक्ष्येत पश्येत् मद्गुकं जलवायसम् ॥ २० ॥ एवं निर्भयोक्तौ लोकानुसारेण पतिव्रतोचितं हेतुमाह इदमिति निःसंज्ञं स्वतो जडम् ॥ २१ ॥ अपक्रोशं सीता असती जातेति निंदाम् सुपरुषं सुतरां परुषम अनेन प्रबंधेन रजस्तमोयुतानामीश्वरालाभो दर्शितः ॥ ॥ २२ ॥ २३ ॥ भयसंदर्शनं भयोत्पादकम् द्वादश प्रतीक्षे इति शेषः । यत्तु पाद्मे दशमासात्परं सीते यदि मां न भजिष्यसि तदा हन्मीत्युक्तम् तत्तु पुनः सीतासविधगमनकालिकं वच इति न विरोधः ॥ २४ ॥

नाभ्येषि स्वारस्येनेति शेषः ॥ २५ ॥ शत्रून् रावयति क्रोशयति शत्रुरावणः ॥ २६ ॥ अपनेष्यंतु अपनयंतु ॥ २७ ॥ कृतप्रांजलयो रावणं प्रतीति शेषः ॥ २८ ॥ चरणोत्कर्षैः पदोत्क्षेपैर्मे
दिनीं दारयन्निव प्रचल्य द्वित्राणि पदानि चलित्वा ॥ २९ ॥ नीयतामिति प्रोवाचेत्यन्वयः परिवारिता क्षणमप्यवियुक्ता रक्ष्यतामित्यर्थः ॥ ३० ॥ ३१ ॥ ३२ ॥ सर्वे कामाः फलंति येभ्यस्तादृशैर्वृक्षैः
कल्पवृक्षैरित्यर्थः सर्वकालमदैः सर्वकालं मदयुतैर्द्विजैः पक्षिभिः ॥ ३३ ॥ ३४ ॥ शोकेन त्रस्ता सेव इतरजनप्रतारणाय नटवल्लोकरीत्यनुसरणमनयोर्लोको यथा वास्तवममन्यत तथैव कविरपि वर्णयति तत्प्र

कालेनानेननाभ्येषियदिमांचारुहासिनि ॥ ततस्त्वांप्रातराशार्थंसूदाश्छेत्स्यंतिलेशशः ॥ २५ ॥ इत्युक्त्वापरुषंवाक्यंरावणःशत्रुरावणः ॥ राक्षसी श्चततःक्रुद्धइदंवचनमब्रवीत् ॥ २६ ॥ शीघ्रमेवहिराक्षस्योविरूपाघोरदर्शनाः ॥ दर्पमस्यापनेष्यंतुमांसशोणितभोजनाः ॥ २७ ॥ वचनादेवतास्त स्यसुघोराघोरदर्शनाः ॥ कृतप्रांजलयोभूत्वामैथिलींपर्यवारयन् ॥ २८ ॥ सताः प्रोवाचराजासौरावणोघोरदर्शनाः ॥ प्रचल्यचरणोत्कर्षैर्दारयन्निवमे दिनीम् ॥२९॥ अशोकवनिकामध्येमैथिलीनीयतामिति ॥ तत्रेयंरक्ष्यतांगूढंयुष्माभिःपरिवारिता ॥३०॥ तत्रैनांतर्जनैर्घोरैःपुनःसांत्वैश्चमैथिलीम् ॥ आनयध्वंवशंसर्वावन्यांगजवधूमिव ॥ ३१ ॥ इतिप्रतिसमादिष्टाराक्षस्योरावणेनताः ॥ अशोकवनिकांजग्मुर्मैथिलींपरिगृह्यतु ॥ ३२ ॥ सर्वकामफलै र्वृक्षैर्नानापुष्पफलैर्वृताम् ॥ सर्वकालमदैश्चापिद्विजैःसमुपसेविताम् ॥ ३३ ॥ सातुशोकपरीतांगीमैथिलीजनकात्मजा ॥ राक्षसीवशमापन्नाव्याघ्री णांहरिणीयथा ॥ ३४ ॥ शोकेनमहतात्रस्तामैथिलीजनकात्मजा ॥ नशर्मलभतेभीरुःपाशबद्धामृगीयथा ॥ ३५ ॥ नविंदतेतत्रतुशर्ममैथिलीविरूप नेत्राभिरतीवतर्जिता ॥ पतिंस्मरंतीदयितंचदेवरंविचेतनाभूद्भयशोकपीडिता ॥३६॥ इत्यार्षेश्रीम० वा० आ०अरण्यकांडे षट्पंचाशः सर्गः ॥५६॥

प्रवेशितायांसीतायांलंकांप्रतिपितामहः ॥ तदाप्रोवाचदेवेंद्रंपरितुष्टंशतक्रतुम् ॥ १ ॥ त्रैलोक्यस्यहितार्थायरक्षसामहितायच ॥ लंकांप्रवेशितासीतारा वणेनदुरात्मना ॥ २ ॥ पतिव्रतामहाभागानित्यंचैवंसुखैधिता ॥ अपश्यंतीचभर्तारंपश्यंतीराक्षसीजनम् ॥ ३ ॥ राक्षसीभिःपरिवृताभर्तृदर्शनलाल सा ॥ निविष्टाहिपुरीलंकातीरेनदनदीपतेः ॥४॥ कथंज्ञास्यतितांरामस्तत्रस्थांतामनिंदिताम् ॥ दुःखंसंचिंतयंतीसाबहुशःपरिदुर्लभा ॥ ५॥ प्राणया त्रामकुर्वाणाप्राणांस्त्यक्ष्यत्यसंशयम् ॥ सभूयःसंशयोजातःसीतायाःप्राणसंक्षये ॥ ६ ॥ सत्वंशीघ्रमितोगत्वासीतांपश्यशुभाननाम् ॥ प्रविश्यन गरींलंकांप्रयच्छहविरुत्तमम् ॥ ७ ॥ एवमुक्तोथदेवेंद्रःपुरींरावणपालिताम् ॥ आगच्छन्निद्रयासार्द्धंभगवान्पाकशासनः ॥ ८ ॥ निद्रांचोवाचगच्छ त्वंराक्षसान्संप्रमोहय ॥ सातथोक्तामघवतादेवीपरमहर्षिता ॥९॥ देवकार्यार्थसिद्ध्यर्थंप्रामोहयतराक्षसान् ॥एतस्मिन्नंतरेदेवःसहस्राक्षःशचीपतिः॥१०॥

तारणायैवेति मंतव्यम् ॥ ३५ ॥ ३६ ॥ तैलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ प्रवेशितायामिति ॥ १ ॥ २ ॥ ३ ॥
॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ चंरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे सर्गः ॥ छ ॥ अथ कवी रामवृत्तांतमाह राक्षसमिति ॥ १ ॥ यदा पथि निवृत्तस्तदा तस्य मैथिलीं द्रष्टुकामस्य तां द्रष्टुं संत्वरमाणस्य तस्यैव

आससादवनस्थांतांवचनंचेदमब्रवीत् ॥ देवराजोस्मिभद्रंतेइहचास्मिशुचिस्मिते ॥ ११ ॥ अहंत्वांकार्यसिद्ध्यर्थंराघवस्यमहात्मनः ॥ साहाय्यं कल्पयिष्यामिमाशुचोजनकात्मजे ॥ १२ ॥ मत्प्रसादात्समुद्रंसतरिष्यतिबलैःसह ॥ मयैवेहचराक्षस्योमाययामोहिताःशुभे ॥ १३ ॥ तस्मादन्नमिदंसीतेहविष्यान्नमहंस्वयम् ॥ सत्वांसंगृह्यवैदेहिआगतःसहनिद्रया ॥ १४ ॥ एतदत्स्यसिमद्धस्तान्नत्वांवाधिष्यतेशुभे ॥ क्षुधातृषाचरंभोरुवर्षाणामयुतैरपि ॥ १५ ॥ एवमुक्तातुदेवेंद्रमुवाचपरिशंकिता ॥ कथंजानामिदेवेंद्रंत्वामिहस्थंशचीपतिम् ॥ १६ ॥ देवलिंगानिदृष्टानिरामलक्ष्मणसन्निधौ ॥ तानिदर्शयदेवेंद्रयदित्वंदेवराट्स्वयम् ॥ १७ ॥ सीतायावचनंश्रुत्वातथाचक्रेशचीपतिः ॥ पृथिवींनास्पृशत्पद्भ्यामनिमेषेक्षणानिच ॥ १८ ॥ अरजोंवरधारीचनम्लानकुसुमस्तथा ॥ तंज्ञात्वालक्षणैःसीतावासवंपरिहर्षिता ॥ १९ ॥ उवाचवाक्यंरुदतीभगवद्राघवंप्रति ॥ सहभ्रातामहाबाहुर्दिष्ट्यामेश्रुतिमागतः ॥ २० ॥ यथामेश्वशुरोराजायथाचमिथिलाधिपः ॥ तथात्वामद्यपश्यामिसनाथोमेपतिस्त्वया ॥ २१ ॥ तवाज्ञयाचदेवेंद्रपयोभूतमिदंहविः ॥ अशिष्यामित्वयादत्तंरघूणांकुलवर्धनम् ॥ २२ ॥ इंद्रहस्ताद्गृहीत्वातत्पायसंसाशुचिस्मिता ॥ न्यवेदयतभर्त्रेसालक्ष्मणायच मैथिली ॥ २३ ॥ यदिजीवतिमेभर्तासहभ्रात्रामहावलः ॥ इदमस्तुतयोर्भक्त्यातदाश्नात्पायसंस्वयम् ॥ २४ ॥ इतीवतत्प्राश्यहविर्वरानना जहौक्षुधादुःखसमुद्भवंचतम् ॥ इंद्रात्प्रवृत्तिमुपलभ्यजानकीकाकुत्स्थयोःप्रीतमनावभूव ॥ २५ ॥ सचापिशक्रस्त्रिदिवालयंतदाप्रीतोययौराघवकार्यसिद्धये ॥ आमंत्र्यसीतांसततोमहात्माजगामनिद्रासहितःस्वमालयम् ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे प्रक्षिप्तः सर्गः ॥ राक्षसंमृगरूपेणचरंतंकामरूपिणम् ॥ निहत्यरामोमारीचंतूर्णंपथिन्यवर्तत ॥ १ ॥ तस्यसंत्वरमाणस्यद्रष्टुरामस्यमैथिलीम् ॥ क्रूरस्वनोथगोमायुर्विननादास्यपृष्ठतः ॥ २ ॥ सतस्यस्वरमाज्ञायदारुणंरोमहर्षणम् ॥ शंकयामासगोमायोःस्वरेणपरिशंकितः ॥ ३ ॥ अशुभंवतमन्येहंगोमायुर्वाशते यथा ॥ स्वस्तिस्यादपिवैदेह्याराक्षसैर्भक्षणंविना ॥ ४ ॥ मारीचेनतुविज्ञायस्वरमालक्ष्यमामकम् ॥ विक्रुष्टंमृगरूपेणलक्ष्मणःशृणुयाद्यदि ॥ ५ ॥

स्थितस्य पृष्ठतो गोमायुः शिवा ननादेत्यन्वयः ॥ २ ॥ ३ ॥ यथा भाव्यशुभं तथा वाशत इत्यर्थः । वैदेह्या वैदेह्यै राक्षसैर्भक्षणं विना तत्कर्तृकभक्षणाभावरूपं स्वस्ति स्यादित्यर्थः । अपिः काममवेदने ॥ ४ ॥ मारीचेन मामकं स्वरं विज्ञाय मामकस्वरध्वनिं ज्ञात्वा आलक्ष्य मदपकारोपायमवधार्य यन्मृगरूपेण तेनाक्रुष्टम् । हा सीते लक्ष्मणेति च शृणुयात्तदा तं स्वरं श्रुत्वा मदीयस्वरत्वेन ज्ञात्वा मैथिल्यैव महितस्ता

हित्वैष्याति ॥ ५ ॥ ६ ॥ सहितैरीप्सितः कर्तुमिष्टः नूनं निश्चयेन तत्रैवानुकूलतर्कमाह कांचन इत्यादि । यतः कांचनमृगो भूत्वा मां व्यपनीयाकृष्य दूरं नीत्वा राक्षसोऽभूत् नतु चर्ममयोजनमृग एव स्थितः इति वाक्यं व्याजहार च यत्तस्मात्तस्या वध ईप्सित इत्यन्वयः । काव्यलिंगालंकारः ॥ ७ ॥ ८ ॥ अथ चिंतांनाटयति अपीति । स्वस्त्यभवने हेतुर्जनस्थानेति जनस्थानं स्थानविशेषः जनानां लोकानां राक्षसेभ्यो भयनिवृत्त्या इह स्थाननिमित्तं चेत्यर्थः ॥ ९ ॥ हेत्वंतरमपि निमित्तानीति ॥ १० ॥ मृगरूपेणात्मनोपनयनं दूरमाकर्षणं दृष्ट्वा परिशंकितो जनस्थानं खरादिवासभूतमाजगाम अनेन ततोपि परतो मारीच व्यसनेन गत इति सूचितम् ॥ ११ ॥ दीनमानसम् दीनमानसत्वं नाटयति दीनं शरीरेणापि म्लानम् आसेदुः विपरीतार्थसूचकत्वेन मापुः ॥ १२ ॥ तदेवाह सव्यमपदक्षिणम् ॥ १३ ॥ अविदूरे समीपे समी

ससौमित्रिःस्वरंश्रुत्वातांचहित्वाथमैथिलीम् ॥ तयैवप्रहितःक्षिप्रंमत्सकाशमिहैष्यति ॥ ६ ॥ राक्षसैःसहितैर्नूनंसीतायाईप्सितोवधः ॥ कांचनश्चमृगो भूत्वाव्यपनीयाश्रमात्तुमाम् ॥ ७ ॥ दूरंनीत्वाथमारीचोराक्षसोभूच्छराहतः ॥ हालक्ष्मणहतोस्मीतियद्वाक्यंव्याजहारह ॥ ८ ॥ अपिस्वस्तिभवेदाभ्यांरहिताभ्यांमयावने ॥ जनस्थाननिमित्तंहिकृतवैरोस्मिराक्षसैः ॥ ९ ॥ निमित्तानिचघोराणिदृश्यंतेऽद्यवहूनिच ॥ इत्येवंचिंतयन्रामःश्रुत्वागोमायुनिःस्वनम् ॥ १० ॥ निवर्तमानस्त्वरितोजगामाश्रममात्मवान् ॥ आत्मनश्चापनयनंमृगरूपेणरक्षसा ॥ ११ ॥ आजगामजनस्थानंराघवःपरिशंकितः ॥ तंदीनमानसंदीनमासेदुर्मृगपक्षिणः ॥१२॥ सव्यंकृत्वामहात्मानंघोरांश्चससृजुःस्वरान् ॥ तानिदृष्ट्वानिमित्तानिमहाघोराणिराघवः ॥१३॥ ततोलक्ष्मणमायांतंददर्शविगतप्रभम् ॥ ततोविदूरेरामेणसमीयायसलक्ष्मणः ॥ १४ ॥ विषण्णःसन्विषण्णेनदुःखितोदुःखभागिना ॥ सजगर्हेऽथतंभ्राताहृष्ट्वालक्ष्मणमागतम् ॥ १५ ॥ विहायसीतांविजनेवनेराक्षससेविते ॥ गृहीत्वाचकरंसव्यंलक्ष्मणंरघुनंदनः ॥ १६ ॥ उवाचमधुरोदर्कमिदंपरुषमार्तवत् ॥ अहोलक्ष्मणगर्ह्यंतेकृतंयत्त्वंविहायताम् ॥१७॥ सीतामिहागतःसौम्यकच्चित्स्वस्तिभवेदिति ॥ नमेऽस्तिसंशयोवीरसर्वथाजनकात्मजा ॥ ॥ १८ ॥ विनष्टाभक्षितावापिराक्षसैर्वनचारिभिः ॥ अशुभान्येवभूयिष्ठंयथाप्रादुर्भवंतिमे ॥ १९ ॥ अपिलक्ष्मणसीतायाःसामग्र्यंप्राप्नुयामहे ॥ जीवंत्याःपुरुषव्याघ्रसुतायाजनकस्यवै ॥ २० ॥ यथावैमृगसंघाश्चगोमायुश्चैवभैरवम् ॥ वाशंतेशकुनाश्चापिप्रदीप्तामभितोदिशम् ॥ अपिस्वस्तिभवेत्तस्याराजपुत्र्यामहावल ॥ २१ ॥

याय संगतोभूत् ॥ १४ ॥ समगुणकः सन्मिलित्वा स रामो लक्ष्मणस्य भ्राता सीतां विहायागतं लक्ष्मणं दृष्ट्वा लक्ष्मणं षष्ठयर्थे द्वितीया लक्ष्मणस्य सव्यं करं गृहीत्वा जगर्हे ॥ १५ ॥ १६ ॥ गर्हणामाह उवाचेति मधुरोदर्कं शब्दतो माधुर्योत्तरम् अर्थतः परुषमिदं वक्ष्यमाणमार्तवदार्तार्हमुवाच यद्वा । मधुरोदर्कं तात्पर्यतो मधुरमापाततः परुषम् ते कृतं त्वया कृतम् ॥ १७ ॥ कच्चित्स्वस्ति भवेत् कल्याणं न संभाव्यत इत्यर्थः ॥ १८ ॥ विनष्टा अपहृता यथा प्रादुर्भवंति विनष्टेत्यादि निश्चितम् ॥ १९ ॥ अथापि वा प्रश्ने सामग्र्यं क्षेमं अनपहरणरूपम् ॥ २० ॥ वाशंते नदंति प्रदीप्ता सूर्याधि

ष्ठिता ॥ २१ ॥ मृगसन्निकाशं मृगवत्प्रतिभासमानं म्रियमाण एव न ततः पूर्वमित्यर्थः ॥ २२ ॥ सव्यं वामं वास्तवमर्थमाह पथि वर्तते वा ह्रियमाणा वर्तते वेत्यर्थः । इदं वस्तुतत्त्वमुक्तम् ॥ २३ ॥ गैरमानः ॥
॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ ॥ पुनस्तदेव विस्तरेणाह स इति । शून्यं संतोषादिहीनचित्तं वैदेहीं विनागतं तां त्यक्त्वा
गतम् ॥ १ ॥ २ ॥ ३ ॥ प्राणसहाया तां विनाऽसहायाः प्राणाः कथं स्थास्यंतीति भावः ॥ ४ ॥ अमराणां पतित्वमिंद्रत्वम् ॥ ५ ॥ मे प्रव्राजनं चतुर्दश समा वनप्रव्राजनव्रतधारणं तु सीताजीवने

इदंहिरक्षोमृगसंनिकाशंप्रलोभ्यमांदूरमनुप्रयातम् ॥ हतंकथंचिन्महताश्रमेणसराक्षसोभून्म्रियमाणएव ॥ २२ ॥ मनश्चमेदीनमिहाप्रहृष्टंचक्षुश्चसव्यं कुरुतेविकारम् ॥ असंशयंलक्ष्मणनास्तिसीताहृतामृतावापथिवर्ततेवा ॥ २३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ सदृष्ट्वालक्ष्मणंदीनंशून्यंदशरथात्मजः ॥ पर्यपृच्छतधर्मात्मावैदेहीमागतंविना ॥ १ ॥ प्रस्थितंदंडकारण्यंयामामनुजगामह ॥ क्वसालक्ष्मणवैदेहीयांहित्वात्वमिहागतः ॥ २ ॥ राज्यभ्रष्टस्यदीनस्यदंडकान्परिधावतः ॥ क्वसादुःखसहायामेवैदेहीतनुमध्यमा ॥ ३ ॥ यांविनानोत्सहेवीरमुहूर्तमपिजीवितुम् ॥ क्वसाप्राणसहायामेसीतासुरसुतोपमा ॥ ४ ॥ पतित्वममराणांहिपृथिव्याश्चापिलक्ष्मण ॥ विनातांतपनीयाभांनेच्छेयंजनकात्मजाम् ॥ ५ ॥ कच्चिज्जीवतिवैदेहीप्राणैःप्रियतरामम ॥ कच्चित्प्रव्राजनंवीरनमेमिथ्याभविष्यति ॥ ६ ॥ सीतानिमित्तंसौमित्रेमृतेमयिगतेत्वयि ॥ कच्चित्सकामाकैकेयीसुखितासाभविष्यति ॥ ७ ॥ सपुत्रराज्यांसिद्धार्थांमृतपुत्रातपस्विनी ॥ उपस्थास्यतिकौसल्याकच्चित्सौम्येनकैकयीम् ॥ ८ ॥ यदिजीवतिवैदेहीगमिष्याम्याश्रमंपुनः ॥ संवृत्तायदिवृत्तासाप्राणांस्त्यक्ष्यामिलक्ष्मण ॥ ९ ॥ यदिमामाश्रमगतंवैदेहीनाभिभाषते ॥ पुरःप्रहसितासीताविनशिष्यामिलक्ष्मण ॥ १० ॥ ब्रूहिलक्ष्मणवैदेहीयदिजीवतिवानवा ॥ त्वयिप्रमत्तेरक्षोभिर्भक्षितावातपस्विनी ॥ ११ ॥ सुकुमारीचबालाचनित्यंचादुःखभागिनी ॥ मद्वियोगेनवैदेहीव्यक्तंशोचतिदुर्मनाः ॥ १२ ॥ सर्वथारक्षसातेनजिह्मेनसुदुरात्मना ॥ वदतालक्ष्मणेत्युच्चैस्तवापिजनितंभयम् ॥ १३ ॥ श्रुतश्चमन्येवैदेह्यासस्वरःसदृशोमम ॥ त्रस्तयाप्रेषितस्त्वंचद्रष्टुंमांशीघ्रमागतः ॥ १४ ॥ सर्वथातुकृतंकष्टंसीतामुत्सृजतावने ॥ प्रतिकर्तुंनृशंसानांरक्षसांदत्तमंतरम् ॥ १५ ॥ दुःखिताःखरघातेनराक्षसाःपिशिताशनाः ॥ तैःसीतानिहताघोरैर्भविष्यतिनसंशयः ॥ १६ ॥ अहोऽस्मिव्यसनेमग्नःसर्वथारिपुनाशन ॥ किंत्विदानींकरिष्यामिशंकेप्राप्तव्यमीदृशम् ॥ १७ ॥

मम जीवनान्न मिथ्या भविष्यति तदभावे मध्ये एव मम मरणे तद्धानिरिति भावः ॥ ६ ॥ सीतानिमित्तं तद्विनाशनिमित्तं मयि मृते त्वयि चैकाकिन्ययोध्यां गते इत्यर्थः सकामा पूर्णमनोरथा ॥ ७ ॥
सौम्येन विनयेन ॥ ८ ॥ संवृत्ता सद्वृत्ता यदि वृत्ता मृतेत्यर्थः ॥ ९ ॥ प्रहसिता प्रहसितमुखी ॥ १० ॥ प्रमत्तेऽनुचितकारिणि ॥ ११ ॥ १२ ॥ तवापि ज्ञातमद्बलवीर्यादिमतोपि ॥ १३ ॥ मम सदृशः
मम स्वरेण सदृशः यस्मात्त्वमत्रागतस्तस्मात् स स्वरस्तयाश्रुत इति शंके ॥ १४ ॥ प्रतिकर्तुं मत्कृतापकारस्य प्रत्युपकारं कर्तुं तदपेक्षाणां रक्षसामंतरमवकाशो दत्तः ॥ १५ ॥ १६ ॥ किं त्विदानीं करि

प्यामीति शंके । ईदृशं दुःखं प्राप्तव्यमवश्यमनुभवितव्यमिति शंके इति धैर्यावलंबनं उत्प्रेक्षा ॥ १७ ॥ जनस्थानं तद्वर्तिस्वाश्रमम् ॥ १८ ॥ विगर्हमाण इत्यादिवक्ष्यमाणसर्गार्थसंग्रहः । श्रमेण बहुदूरधावनजेन । श्रमाच्चैवेति प्रायः पाठः । प्रतिश्रयमाश्रमसमीपदेशं शून्यं सीतया ॥ १९ ॥ प्रतिश्रयं प्रेक्ष्यानंतरं स्वाश्रमं प्रविगाह्य तमपि शून्यं वीक्ष्य ततः सीतायाः कांश्चिद्विहारदेशाननुसृत्य तेषु तां विचित्य तानपि शून्यान्निरीक्ष्य एतत्क्रीडाविशेषस्थानं तत्रत्यक्रीडाविशेषं च स्मृत्वा हृष्टरोमा शोकेन व्यथितश्च बभूव ॥ २० ॥ नं॰रं॰मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टपंचाशः सर्गः ॥ ५८ ॥ ॥ अथ विस्तरेण मार्गमध्यकृतां कथामाह अथेति । उपावृत्तं सीतावचनात्स्वसमीपं प्राप्तम् अंतरा मध्ये मार्गम् ॥ १ ॥ यदा यस्मात्तव विश्वासात्सा वने मया स्वेन विरहिता कृताऽतस्तामपास्य किमर्थं त्वमागतः ॥ २ ॥ महत्पापं सीताहरणादिरूपं शंकमानं यन्मे मनो व्यथितमासीन्मारीचवधकाले मच्छब्दसदृशशब्दस्य तेन करणात्तन्मैथिलीं त्यज्याभ्यागतं

इतिसीतांवरारोहांचिंतयन्नेवराघवः ॥ आजगामजनस्थानंत्वरयासहलक्ष्मणः ॥ १८ ॥ विगर्हमाणोऽनुजमार्तरूपंक्षुधाश्रमेणैवपिपासयाच ॥ विनिःश्वसञ्शुष्कमुखोविषण्णःप्रतिश्रयंप्राप्यसमीक्ष्यशून्यम् ॥ १९ ॥ स्वमाश्रमंसप्रविगाह्यवीरोविहारदेशाननुसृत्यकांश्चित् ॥ एतत्तदित्येवनवासभूमौप्रहृष्टरोमाव्यथितोबभूव ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टपंचाशः सर्गः ॥ ५८ ॥ अथाश्रमादुपावृत्तमंतरारघुनंदनः ॥ परिपप्रच्छसौमित्रिंरामोदुःखादिदंवचः ॥ १ ॥ तमुवाचकिमर्थंत्वमागतोऽपास्यमैथिलीम् ॥ यदासातवविश्वासाद्वनेविरहितामया ॥ २ ॥ दृष्ट्वैवाभ्यागतंत्वांमेमैथिलींत्यज्यलक्ष्मण ॥ शंकमानंमहत्पापंयत्सत्यंव्यथितंमनः ॥ ३ ॥ स्फुरतेनयनंसव्यंबाहुश्चहृदयंचमे ॥ दृष्ट्वालक्ष्मणदूरेत्वांसीताविरहितंपथि ॥ ४ ॥ एवमुक्तस्तुसौमित्रिर्लक्ष्मणःशुभलक्षणः ॥ भूयोदुःखसमाविष्टोदुःखितंराममब्रवीत् ॥ ५ ॥ नस्वयंकामकारेणतांत्यक्त्वाहमिहागतः ॥ प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥ ६ ॥ आर्येणैवपराक्रुष्टंलक्ष्मणेतिसुविस्वरम् ॥ परित्राहीतियद्वाक्यंमैथिल्यास्तच्छ्रुतिंगतम् ॥ ७ ॥ सातमार्तस्वरंश्रुत्वातवस्नेहेनमैथिली ॥ गच्छगच्छेतिमामाहरुदतीभयविक्लवा ॥८॥ प्रचोद्यमानेनमयागच्छेतिबहुशस्तया ॥ प्रत्युक्तामैथिलीवाक्यमिदंतत्प्रत्ययान्वितम् ॥ ९ ॥ नतत्पश्याम्यहंरक्षोयदस्यभयमावहेत् ॥ निर्वृताभवनास्त्येतत्केनाप्येतदुदाहृतम् ॥ १० ॥ विगर्हितंचनीचंचकथमार्योभिधास्यति ॥ त्राहीतिवचनंसीतेयस्त्रायेत्त्रिदशानपि ॥ ११ ॥

त्वां दृष्ट्वैव सत्यमिति जाने एकलत्वेन सर्वस्य संभावयितुं शक्यत्वादिति भावः ॥ ३ ॥ यस्य सत्यत्वसंभावनायां शरीरनिमित्तानि तत्कालानुभूयमानान्याह स्फुरते इति । स्फुरति सव्यं वामं बाहुरपि वाम एव हृदयं च वामभाग एव ॥ ४ ॥ पूर्वं सीतावचनाद्दुःखितः अकृत्यं कृतमिति रामवचनाद्भूयो दुःखितः ॥ ५ ॥ कामकारेण स्वेच्छया प्रचोदितः उग्रैर्दुःश्रवैर्वचोभिरिति शेषः ॥ ६ ॥ लक्ष्मणेति सुतरां विस्वरं परित्राहीति च आर्येणैव त्वयैव यत्परिक्रुष्टं तन्मैथिल्याः श्रुतिं गतम् ॥७॥८॥ तत्प्रत्ययान्वितं यस्या अपि प्रत्ययेन विश्वसनीयत्वेनान्वितं तत्त्वेन योग्यमिदं वक्ष्यमाणं वाक्यं प्रत्युक्ता प्रतिवचनत्वेनोक्ता ॥ ९ ॥ किं तत्तत्राह नेति । एतत्कातरवचनं नास्य रामस्य केनापि रक्षसाऽन्येन वोदाहृतम् ॥ १० ॥ तद्वचनत्वाभावे हेतुः विगर्हितमिति । क्षत्रियस्य निंदितमतएव नीचं कुत्सितं यो देवानपि त्रायेदेवत्राणेपि यः समर्थः

स कथमीदृग्वाक्यं ब्रूयात् ॥ ११ ॥ किंनिमित्तं कुत्सितं किंचिन्निमित्तमाश्रित्य केनापि रक्षसेरितम् ॥ १२ ॥ १३ ॥ विक्लवतां गंतुमलं वैक्लव्यमालंब्यालमास्त्वित्यर्थः । पुमान्विद्यमान इति। शेषः यः पराजयेदित्यपकर्षः ॥ १४ ॥ जायमान इत्यनेन जनिष्यमाण इत्यर्थकेन भाविनोपि वारणम् अतः संयुगे इत्यस्य न पौनरुक्त्यम् ॥ १५ ॥ १६ ॥ भावो मयीत्यादिव्याख्यातमायं विनष्टे भ्रातरि मां प्राप्तुं अत्यर्थपापरूप एव भावस्तव हृदि मद्विषये निवेशितो दैवेनेति शेषः । नच मामवाप्स्यसे तन्नाशे ममापि नाशात् ॥ १७॥ संकेतात्पापरूपं संकेतं कृत्वेत्यर्थः । नाभिपद्यसे नाभ्यपद्यसे क्रोशंतं क्रोशतस्तस्य त्राणाय न गच्छसि ॥ १८ ॥ १९ ॥ २० ॥ दुष्कृतमकृत्यं कृतमिति शेषः ॥ २१ ॥ त्वद्रक्षार्थमिति चेन्नेत्याह जानन्नपीति अनेन मैथिल्या क्रोधवाक्येन किं भवानाश्रमान्निर्गतः ॥ २२ ॥ यन्मैथिलीं त्यक्त्वा इहागतोसि तेन

किंनिमित्तंतुकेनापिभ्रातुरालंब्यमेस्वरम् ॥ विस्वरंव्याहृतंवाक्यंलक्ष्मणत्राहिमामिति ॥ १२ ॥ राक्षसेनेरितंवाक्यंत्रासात्राहीतिशोभने ॥ नभवत्या व्यथाकार्याकुनारीजनसेविता ॥ १३ ॥ अलंविक्लवतांगंतुंस्वस्थाभवनिरुत्सुका ॥ नचास्तित्रिषुलोकेषुपुमान्योराघवंरणे ॥ १४ ॥ जातोवाजायमानोवासंयुगेयःपराजयेत् ॥ अजेयोराघवोयुद्धेदेवैःशक्रपुरोगमैः ॥ १५ ॥ एवमुक्तातुवैदेहीपरिमोहितचेतना ॥ उवाचाऽश्रूणिमुंचंतीदारुणंमामिदं वचः ॥ १६ ॥ भावोमयितवात्यर्थंपापएवनिवेशितः ॥ विनष्टेभ्रातरिप्राप्तुंनचत्वंमामवाप्स्यसे ॥ १७ ॥ संकेताद्भरतेनत्वंरामंसमनुगच्छसि ॥ क्रोशंतंहियथात्यर्थंनैनमभ्यवपद्यसे ॥ १८ ॥ रिपुःप्रच्छन्नचारीत्वंमदर्थमनुगच्छसि ॥ राघवस्यांतरंप्रेप्सुस्तथैनंनाभिपद्यसे ॥ १९ ॥ एवमुक्तस्तुवैदेह्यासंरब्धोरक्तलोचनः ॥ क्रोधात्प्रस्फुरमाणोष्ठआश्रमादभिनिर्गतः ॥ २० ॥ एवंब्रुवाणंसौमित्रिंरामःसंतापमोहितः ॥ अब्रवीद्दुष्कृतंसौम्यतांविनात्वमिहागतः ॥ २१ ॥ जानन्नपिसमर्थंमांरक्षसामपवारणे ॥ अनेनक्रोधवाक्येनमैथिल्यानिर्गतोभवान् ॥ २२ ॥ नहितेपरितुष्यामित्यक्त्वायदसिमैथिलीम् ॥ क्रुद्धायाःपरुषंश्रुत्वास्त्रियायत्त्वमिहागतः ॥ २३ ॥ सर्वथात्वपनीतंतेसीतयायत्प्रचोदितः ॥ क्रोधस्यवशमागम्यनाकरोःशासनंमम ॥ २४ ॥ असौहिराक्षसःशेतेशरेणाभिहतोमया ॥ मृगरूपेणयेनाहमाश्रमादपवाहितः ॥ २५ ॥ विकृष्यचापंपरिधायसायकंसलीलबाणेनचताडितोमया ॥ मार्गींतनुंत्यज्यचविक्लवस्वरोबभूवकेयूरधरःसराक्षसः ॥ २६ ॥ शराहतेनैवतदार्तयागिरास्वरंममालंब्यसुदूरसुश्रवम् ॥ उपाहृतंतद्वचनंसुदारुणंत्वमागतोयेनविहायमैथिलीम् ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मी० आदिकाव्ये अरण्यकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥

न न परितुष्यामि यच्च क्रुद्धायाः स्त्रियाः परुषं श्रुत्वा त्वमिहागतोसि तेन ते न तुष्यामि क्रुद्धस्त्रीणां वाक्ये मर्यादालेशस्याप्यभावादिति भावः ॥ २३ ॥ अपनीतमपनयोऽनीतिरिति यावत् कृतेति शेषः । यत्तया प्रचोदितः सन् क्रोधवशं प्राप्य मम शासनं नाकरोः ॥ २४ ॥ अधुना स्ववृत्तांतमाह असाविति । बुद्धिस्थित्यैवं निर्देशः । अपवाहितः दूरमाकृष्टः ॥ २५ ॥ परिधाय संधाय सलीलबाणेन नातिविकृष्य मुक्तेन मार्गीं मृगसंबंधिनीम् ॥ २६ ॥ स दूरेपि संश्रवः संश्रवणं यस्य तं स्वरं मम मत्स्वरसदृशं आलंब्य तद्वचनमुपाहृतं उक्तम् ॥ २७ ॥ सँरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥

आव्रजमानस्य आश्रममागच्छतः अधः प्रास्फुरत्स्वयमस्खलद्वेपथुः कंपश्चास्याजायत ॥ १ ॥ अपि क्षेममिति तु व्याजहारेत्यन्वयः ॥ २ ॥ ३ ॥ उद्भ्रमन्नितस्ततो व्रजन् विक्षिपन्हस्तादीन् क्षिपन् तत्र तत्र सीता भविष्यतीत्याशयाऽभिवीक्ष्य ॥ ४ ॥ ५ ॥ रुदंतमित्यादेराश्रमो विशेष्यः । वर्णनीयमयीभावेन कवेरपि सन्निहितवैपरीत्यम् ॥ ६ ॥ ॥ ७ ॥ नष्टा अदर्शनं गता स्वयोगशक्त्या पुनरलभ्यदर्शना जातेति तात्पर्यम् ॥ ८ ॥ ९ ॥ नदीं गतेत्यादि संतर्क्य तत्र तत्र यत्नान्मृगयमाणोपि नाससाद उन्मत्त इवेत्ययमिवशब्दो मृगयमाणः प्रधाव न्वभ्रामेत्यादौ सर्वत्र संबद्ध्यः । एतत्सर्वं लोकव्यवहारनटनं भगवतश्चित्स्वरूपस्य लोके सर्वतो भार्या प्रियतमेति बोधयितुम् अतएव मातापितृवियोगो नैतावच्छोककारणम् । तदुक्तं भागवते समनुजोजभवार्चि तांघ्रिरलंघ्यवीर्य इत्यादिना विशिष्टं राममुपक्रम्य रक्षोधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायां भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसंगिनां गतिमिति प्रथयंश्चचारेति । नेदं यशो रघुपतेः सुर

भृशमाव्रजमानस्यतस्याधोवामलोचनम् ॥ प्रास्फुरच्चास्खलद्रामोवेपथुश्चास्यजायते ॥ १ ॥ उपालक्ष्यनिमित्तानिसोऽशुभानिमुहुर्मुहुः ॥ अपिक्षे मंतुसीतायाइतिवैव्याजहारह ॥ २ ॥ त्वरमाणोजगामाथसीतादर्शनलालसः ॥ शून्यमावसथंदृष्ट्वाबभूवोद्विग्नमानसः ॥ ३ ॥ उद्भ्रमन्निववेगेनविक्षि पन्रघुनंदनः ॥ तत्रतत्रोटजस्थानमभिवीक्ष्यसमंततः ॥ ४ ॥ ददर्शपर्णशालांचसीतयारहितांतदा ॥ श्रियाविरहितांध्वस्तांहेमंतेपद्मिनीमिव ॥५॥ रुदंतमिववृक्षैश्चग्लानपुष्पमृगद्विजम् ॥ श्रियाविहीनंविध्वस्तंसंत्यक्तवनदैवतैः ॥ ६ ॥ विप्रकीर्णाजिनकुशंविप्रविद्धबृसीकटम् ॥ दृष्ट्वाशून्योटज स्थानंविललापपुनःपुनः ॥ ७ ॥ हतामृतावानष्टावाभक्षितावाभविष्यति ॥ निलीनाप्यथवाभीरुरथवावनमाश्रिता ॥ ८ ॥ गताविचेतुंपुष्पाणिफला न्यपिचवापुनः ॥ अथवापद्मिनींयाताजलार्थंवानदींगता ॥९॥ यत्नान्मृगयमाणस्तुनाससादवनेप्रियाम् ॥ शोकरक्तेक्षणःश्रीमानुन्मत्तइवलक्ष्यते ॥ ॥ १० ॥ वृक्षाद्वृक्षंप्रधावन्सगिरींश्चापिनदीनदम् ॥ बभ्रामविलपन्रामःशोकपंकार्णवप्लुतः ॥ ११ ॥ अस्तिकच्चित्त्वयादृष्टासाकदंबप्रियाप्रिया ॥ कदं बयदिजानीषेशंससीतांशुभाननाम् ॥ १२ ॥ स्निग्धपल्लवसंकाशांपीतकौशेयवासिनीम् ॥ शंसस्वयदिसादृष्टाबिल्वबिल्वोपमस्तनी ॥ १३ ॥ अथ वार्जुनशंसत्वंप्रियांतामर्जुनप्रियाम् ॥ जनकस्यसुतातन्वीयदिजीवतिवानवा ॥ १४ ॥ ककुभःककुभोरूपांव्यक्तंजानातिमैथिलीम् ॥ लतापल्लवपु ष्पाढ्योभातिह्येषवनस्पतिः ॥ १५ ॥

याच्ञयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः । रक्षोवधो जलधिबंधनमस्त्रपूगैर्यत्तस्य शत्रुहनने कपयः सहाया इति च । यद्यथा सुग्रीवाद्याश्रयणवदिदमपि लीलैवेति न तत्तस्य स्तुतिरिति तदर्थः लीलाप्रयोजनं च तच्छ्रवणेन लोकोद्धारः । एतन्नवमे एकादशाध्यायस्थे पद्ये तथा पंचमेपि मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ॥ कुतोन्यथा स्याद्रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्येति ॥ १० ॥ नदीनदं नदीसंबंधिनदं जातावेकवचनं नारा इति लोकप्रसिद्धम् । नद्यः पश्चिमप्रवाहा इति कतकः । पश्चिमप्रवाहाया अपि नर्मदाया नदत्वव्यवहाराभावाच्चिंत्यं तत् ॥ ११ ॥ उन्मत्त इवेत्युक्तं विवृणोति अस्ति कच्चिदिति । प्रश्ने कदंबप्रियत्वात्सर्वथा त्वया दृष्टेत्यर्थः । यदीति । वेदा यदि प्रमाणमिति वत् ॥ १२ ॥ स्निग्धपल्लवसंकाशां तद्वत्कोमलांगीम् ॥ १३ ॥ अर्जुनः करवीरः । करवीरः करालश्च करवीरी तथार्जुन इति निघंटुः ॥१४॥ ककुभो मरुवकः ककुभस्य बहिस्त्वचोपि श्लक्ष्णत्वात्तद्वत् श्लक्ष्णोरूम् । तस्य ज्ञातृत्वोपपादकं लतेत्यादि तत्संबंधं विना कथमियती संपदस्येति भावः ॥१५॥

उप समीपे गीतः क्रियमाणझंकार इत्यर्थः । तथा द्रुमवरोव्यासि इति स्तौति । तत उत्तरमलब्ध्वान्यं मत्याह एष इति । तत्प्रियत्वात्तज्ज्ञेयत्वसंभावना ॥ १६ ॥ त्वन्नामानं अशोकं कुर्वित्यर्थः । शोकापनुदत्वादेतत्करणयोग्यता ॥ १७ ॥ १८ ॥ निःशंकम् मरणादिकथनेपि शंका न कार्येति भावः ॥ १९ ॥ २० ॥ रामः पमच्छेति शेषः ॥ २१ ॥ उन्मत्त इव मानुषव्यवहारनटनवशात् वस्तुतो नोन्मत्त इत्यर्थः । उन्मादस्यापि विरहे औचित्यादशावस्थासु गणितत्वाच्च ॥ २२ ॥ मृगीभिः सहिता भवेदित्यादौ संभावनायां लिङ् । संभावनाबीजं मृगविप्रेक्षणीत्वम् ॥ २३ ॥ गजस्य वेत्तृत्वसंभावना बीजं गजनासोरुत्वम् यद्वोच्चत्वाद्दूरदर्शित्वम् ॥ २४ ॥ न ते भयम् त्वया भक्षिता चेदपि तथा कथनेपि तव मत्तो न भयमित्यर्थः ॥ २५ ॥ अतिविरहवशात्सर्वतस्तद्भ्रमावस्थां नाट्यति किमिति ॥ २६ ॥

भ्रमरैरुपगीतश्चयथाद्रुमवरोह्यसि ॥ एषव्यक्तंविजानातितिलकस्तिलकप्रियाम् ॥ १६ ॥ अशोकशोकापनुदशोकोपहतचेतनम् ॥ त्वन्नामानंकुरु क्षिप्रंप्रियासंदर्शनेनमाम् ॥ १७ ॥ यदितालत्वयादृष्टापक्वतालोपमस्तनी ॥ कथयस्ववरारोहांकारुण्यंयदितेमयि ॥१८॥ यदिदृष्टात्वयाजंबुजांबूनद समप्रभा ॥ प्रियांयदिविजानासिनिःशंकंकथयस्वमे ॥ १९ ॥ अहोत्वंकर्णिकाराद्यपुष्पितःशोभसेभृशम् ॥ कर्णिकारप्रियांसाध्वींशंसदृष्टायदिप्रि या ॥ २० ॥ चूतनीपमहासालान्पनसान्कुररांस्तथा ॥ दाडिमानपितान्गत्वादृष्ट्वारामोमहायशाः ॥२१॥ बकुलानथपुन्नागांश्चंदनान्केतकांस्तथा ॥ पृच्छन्रामोवनेभ्रांतउन्मत्तइवलक्ष्यते ॥ २२ ॥ अथवामृगशावाक्षींमृगजानासिमैथिलीम् ॥ मृगविप्रेक्षणीकांतामृगीभिःसहिताभवेत् ॥ २३ ॥ गज सागजनासोरूर्यदिदृष्टात्वयाभवेत् ॥ तांमन्येविदितांतुभ्यमाख्याहिवरवारण ॥ २४ ॥ शार्दूलयदिसादृष्टाप्रियाचंद्रनिभानना ॥ मैथिलीममविस्रब्धः कथयस्वनतेभयम् ॥ २५ ॥ किंधावसिप्रियेनूनंदृष्टासिकमलेक्षणे ॥ वृक्षैराच्छाद्यचात्मानंकिंमांनप्रतिभापसे ॥ २६ ॥ तिष्ठतिष्ठवरारोहेनतेस्तिक रुणामयि ॥ नात्यर्थंहास्यशीलासिकिमर्थंमामुपेक्षसे ॥२७॥ पीतकौशेयकेनासिसूचितावरवर्णिनि ॥ धावंत्यपिमयादृष्टातिष्ठयद्यस्तिसौहृदम् ॥२८॥ नैवसानूनमथवाहिंसिताचारुहासिनी ॥ कृच्छ्रंप्राप्तंहिमांनूनंयथापेक्षितुमर्हति ॥ २९ ॥ व्यक्तंसाभक्षितावालाराक्षसैःपिशिताशनैः ॥ विभज्यांगानि सर्वाणिमयाविरहिताप्रिया ॥ ३० ॥ नूनंतच्छुभदंतोष्ठंसुनासंशुभकुंडलम् ॥ पूर्णचंद्रनिभंग्रस्तंमुखंनिष्प्रभतांगतम् ॥३१॥ साहिचंदनवर्णाभाग्रीवाग्रै वेयकोचिता ॥ कोमलाविलपंत्यास्तुकांतायाभक्षिताशुभा ॥३२॥ नूनंविक्षिप्यमाणौतौवाहूपल्लवकोमलौ ॥ भक्षितौवेपमानाग्रौसहस्ताभरणांगदौ ॥ ॥ ३३ ॥ मयाविरहितावालारक्षसांभक्षणायवै ॥ सार्थेनैवपरित्यक्ताभक्षिताबहुबांधवा ॥ ३४ ॥

नात्यर्थं हास्यशीलासि नात्यंतं परिहासशीलासि । किमर्थमिति इतः परमदर्शने मृतिर्मे प्रसक्तेति भावः ॥ २७ ॥ पीतवस्त्रेण' सूचितासि धावंती दृष्टासि च तस्मात्तिष्ठ ॥ २८ ॥ पुनर्बोधावस्था नूनं सा नैव या दृष्टा । तर्हि सा केत्यत्राह अथवा हिंसिता रक्षोभिः तत्र हेतुः यथा एवं प्रकारेण कृच्छ्रं नूनं मां प्राप्तं सापेक्षितुमर्हति नापेक्षते तस्मान्नैव सेत्यर्थः । उपेक्षितुमितिपाठे काकुः ॥ २९ ॥ उक्तमेव स्पष्टयति व्यक्तमिति ॥ ३० ॥ निष्प्रभतां गतम् रक्षोभिर्ग्रासादिति शेषः ॥ ३१ ॥ सर्वत्रोत्प्रेक्षा ग्रैवेयं ग्रीवाभूषणम् ॥ ३२ ॥ विक्षिप्यमाणौ इतस्ततः क्षिप्यमाणौ ॥ ३३ ॥ रक्षसां भक्षणाय सा बाला मया

स्वविरहिता कृता बहुबांधवापि या सार्थेन परित्यक्ता हीना स्त्री सेव भक्षिता रक्षोभिरिति शेषः ॥ ३४ ॥ पश्यसे पश्यसि हा सीते इकारलोप आर्षः ॥ ३५ ॥ परिधावन् उद्भ्रमते उत्पतति विभ्रमते वात्यावत् ॥ ३६ ॥ अपरिसंस्थितः क्वचिदपि स्थितिमलभमानो भ्रमति ॥ ३७ ॥ अनिष्ठिताशः अनिवृत्ताशः मार्गणे अन्वेषणे पुनः परमं परिश्रमं चकार । अर्धो वा एष आत्मन इति श्रुतेस्तस्याः प्रियात्वम् । एतत्सर्वं लोकव्यवहारनटनमित्युक्तमेव न त्वेतावता भगवति तमोरजसोः संभावने दिक् ॥ ३८ ॥ जैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अर० षष्ठितमः सर्गः ॥ ६० ॥

हालक्ष्मणमहाबाहोपश्यसेत्वंप्रियांक्वचित् ॥ हाप्रियेक्वगताभद्रेहासीतेतिपुनःपुनः ॥ ३५ ॥ इत्येवंविलपन्रामःपरिधावन्वनाद्वनम् ॥ क्वचिदुद्भ्रमतेयोगात्क्वचिद्विभ्रमतेबलात् ॥ ३६ ॥ क्वचिन्मत्तइवाभातिकांतान्वेषणतत्परः ॥ सवनानिनदीःशैलान्गिरिप्रस्रवणानिच ॥ काननानिचवेगेनभ्रमत्यपरिसंस्थितः ॥ ३७ ॥ तदासगत्वाविपुलंमहद्वनंपरीत्यसर्वंत्वथमैथिलींप्रति ॥ अनिष्ठिताशःसचकारमार्गणेपुनःप्रियायाःपरमंपरिश्रमम् ॥ ३८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदि० अरण्यकांडे षष्ठितमः सर्गः ॥ ६० ॥ दृष्ट्वाश्रमपदंशून्यंरामोदशरथात्मजः ॥ रहितांपर्णशालांचप्रविद्धान्यासनानिच ॥१॥ अदृष्ट्वातत्रवैदेहींसन्निरीक्ष्यचसर्वशः ॥ उवाचरामःप्राक्रुश्यप्रगृह्यरुचिरौभुजौ ॥ २ ॥ क्वनुलक्ष्मणवैदेहीकंवादेशमितोगता ॥ केनाहृतावासौमित्रेभक्षिताकेनवाप्रिया ॥ ३ ॥ वृक्षेणावार्ययदिमांसीतेहसितुमिच्छसि ॥ अलंतेहसितेनाद्यमांभजस्वसुदुःखितम् ॥४॥ यैःपरिक्रीडसेसीतेविश्वस्तैर्मृगपोतकैः ॥ एतेहीनास्त्वयासौम्येध्यायंत्यस्राविलेक्षणाः ॥ ५ ॥ सीतयारहितोऽहंवैनहिजीवामिलक्ष्मण ॥ वृतंशोकेनमहतासीताहरणजेनमाम् ॥ ६ ॥ परलोकेमहाराजोनूनंद्रक्ष्यतिमेपिता ॥ कथंप्रतिज्ञांसंश्रुत्यमयात्वमभियोजितः ॥७॥ अपूरयित्वातंकालंमत्सकाशमिहागतः ॥ कामवृत्तमनार्यंवामृषावादिनमेवच ॥ ८ ॥ धिक्त्वामितिपरेलोकेव्यक्तंवक्ष्यतिमेपिता ॥ विवशंशोकसंतप्तंदीनंभग्नमनोरथम् ॥ ९ ॥ मामिहोत्सृज्यकरुणंकीर्तिर्नरमिवानृजुम् ॥ क्वगच्छसिवरारोहेमामोत्सृजसुमध्यमे ॥ १० ॥ त्वयाविरहितश्चाहंत्यक्ष्येजीवितमात्मनः ॥ इतीवविलपन्रामःसीतादर्शनलालसः ॥ ११ ॥ नददर्शसुदुःखार्तोराघवोजनकात्मजाम् ॥ अनासादयमानंतंसीतांशोकपरायणम् ॥१२॥ पंकमासाद्यविपुलंसीदंतमिवकुंजरम् ॥ लक्ष्मणोराममत्यर्थमुवाचहितकाम्यया ॥ १३ ॥ माविषादंमहाबुद्धेकुरुयत्नंमयासह ॥ इमंगिरिवरंवीरबहुकंदरशोभितम् ॥ १४ ॥

प्रविद्धानि इतस्ततः प्रक्षिप्तानि ॥ १ ॥ प्राकुश्य हा इति शब्दं कृत्वा बाहू प्रगृह्य उत्क्षिप्य ॥ २ ॥ तदेव वचनम् केति ॥ ३ ॥ वृक्षेणेत्यादि पुनः प्रलापः आवार्य आच्छाद्य ॥ ४ ॥ विश्वस्तैश्चिरकालसहवासेन विश्वासं प्राप्तैः ध्यायंति त्वामिति शेषः ॥ ५ ॥ ६ ॥ मरणेपि परलोके मम धिक्कार एव प्राप्नोतीत्याह कथमिति । संश्रुत्य प्रतिज्ञाय अभियोजितः नियुक्तः ॥ ७ ॥ ८ ॥ पुनः सीतामुद्दिश्य प्रलपति विवशमिति ॥ ९ ॥ अनृजुं छलशीलं मामुत्सृज्य क्व गच्छसि हृष्ट्वेवाह मां मा उत्सृज त्यज ॥ १० ॥ ११ ॥ सीतामनासादयमानमप्राप्नुवानं रामं लक्ष्मण उवाचेत्यन्वयः ॥ १२ ॥ १३ ॥ विषादं मा कुर्विति

शेषः कुरु यत्नमन्वेषण इति शेषः ॥ १४ ॥ प्रियः काननसंचारो यस्याः सा वनोन्मत्ता वनस्य पुष्पितत्वदर्शनादुन्मत्ता हर्षवती ॥ १५ ॥ वंजुलो वेतसः संभावनायां लिङ् । सर्वत्र वित्रासयितुकामा अस्मान् ॥ १६ ॥ जिज्ञासमाना आवयोरन्वेषणसामर्थ्यम् यतावहे यत्नं कुर्वः ॥ १७ ॥ यत्र सा अस्तीति शेषः ॥ १८ ॥ विचेतुमन्वेष्टुम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ नेह पश्यामि वैदेहीमित्युक्तेपि पुनर्विलापपरिहाराय लक्ष्मणोऽवददित्याह तत इति । दंडकारण्यं विचरंस्त्वं सीतां प्राप्स्यसि ॥ २३ ॥ तत्र दृष्टांतो यथा विष्णुरिति ॥२४॥२५॥ अस्तु लक्ष्मणैवं कृतं करणेन किमित्याह रामः वनमिति॥२६॥

प्रियकाननसंचारावनोन्मत्ताचमैथिली ॥ सावनंवाप्रविष्टास्यान्नलिनींवासुपुष्पिताम् ॥ १५ ॥ सरितंवापिसंप्राप्तामीनवंजुलसेविताम् ॥ वित्रासयितुकामावालीनास्यात्काननेकाचित् ॥ १६ ॥ जिज्ञासमानावैदेहीत्वांमांचपुरुषर्षभ ॥ तस्याह्यन्वेषणेश्रीमन्क्षिप्रमेवयतावहे ॥ १७ ॥ वनंसर्वंविचिनुवोयत्रसाजनकात्मजा ॥ मन्यसेयदिकाकुत्स्थमास्मशोकेमनःकृथाः ॥ १८ ॥ एवमुक्तःससौहार्दाल्लक्ष्मणेनसमाहितः ॥ सहसौमित्रिणारामोविचेतुमुपचक्रमे ॥ १९ ॥ तौवनानिगिरींश्चैवसरितश्चसरांसिच ॥ निखिलेनविचिन्वंतौसीतांदशरथात्मजौ ॥२०॥ तस्यशैलस्यसानूनिशिलाश्चशिखराणिच ॥ निखिलेनविचिन्वंतौनैवतामभिजग्मतुः ॥ २१ ॥ विचित्यसर्वतःशैलंरामोलक्ष्मणमब्रवीत् ॥ नेहपश्यामिसौमित्रेवैदेहींपर्वतेशुभाम् ॥२२॥ ततोदुःखाभिसंतप्तोलक्ष्मणोवाक्यमब्रवीत् ॥ विचरन्दंडकारण्यंभ्रातरंदीप्ततेजसम् ॥ २३ ॥ प्राप्स्यसेत्वंमहाप्राज्ञमैथिलींजनकात्मजाम् ॥ यथाविष्णुर्महाबाहुर्बलिंबद्ध्वामहीमिमाम् ॥ २४ ॥ एवमुक्तस्तुवीरेणलक्ष्मणेनसराघवः ॥ उवाचदीनयावाचादुःखाभिहतचेतनः ॥ २५ ॥ वनंसुविचितंसर्वंपद्मिन्यःफुल्लपंकजाः ॥ गिरिश्चायंमहाप्राज्ञबहुकंदरनिर्झरः ॥ नहिपश्यामिवैदेहींप्राणेभ्योऽपिगरीयसीम् ॥२६॥ एवंसविलपन्रामःसीताहरणकर्शितः ॥ दीनःशोकसमाविष्टोमुहूर्तंविह्वलोभवत् ॥ २७ ॥ सविह्वलितसर्वांगोगतबुद्धिर्विचेतनः ॥ विषसादातुरोदीनोनिःश्वस्याशीतमायतम् ॥ २८ ॥ बहुशःसतुनिःश्वस्यरामोराजीवलोचनः ॥ हाप्रियेतिविचुक्रोशबहुशोबाष्पगद्गदः ॥ २९ ॥ तंसांत्वयामासततोलक्ष्मणःप्रियबांधवम् ॥ बहुप्रकारंशोकार्तःप्रश्रितःप्रश्रितांजलिः ॥ ३० ॥ अनादृत्यतुतद्वाक्यंलक्ष्मणोष्ठपुटच्युतम् ॥ अपश्यंस्तांप्रियांसीतांप्राक्रोशत्सपुनःपुनः ॥ ३१ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीये आदिकाव्ये अरण्यकांडे एकषष्टितमः सर्गः ॥ ६१ ॥ सीतामपश्यन्धर्मात्माशोकोपहतचेतनः ॥ विललापमहाबाहूरामःकमललोचनः ॥ १ ॥ पश्यन्निवचतांसीतामपश्यन्मन्मथार्दितः ॥ उवाचराघवोवाक्यंविलापाश्रयदुर्वचम् ॥ २ ॥

विह्वलः परवशः ॥ २७ ॥ गतबुद्धिर्ज्ञानशून्य इव विचेतनः चेष्टारहित इव अशीतम् उष्णम् आयतं दीर्घम् ॥ २८ ॥ हा प्रिये इतीति इकारलोप आर्षः ॥ २९ ॥ प्रश्रितो विनयोपेतः प्रश्रितांजलिर्बद्धांजलिः ॥ ३० ॥ ३१ ॥ कैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकषष्टितमः सर्गः ॥ ६१ ॥ ॥ एवं प्रियावियोगो दुःसह इति बोधयन् पुनः शोचति सीतामिति शोकोपहतचेतनः शोकेन सीतावियोगजेनोपहतज्ञान इव ॥ १ ॥ अपश्यन्नपि भ्रमावस्थत्वात्पश्यन्निव विलापाश्रयत्वेन । दुर्वचं गद्गदकंठत्वात ॥ २ ॥

ते स्वस्य सीतायाः ॥ ३ ॥ कदलीस्कंधेतिपाठेपि स्कंधः कांडम् । निगूहितुं शक्ता नासि आत्मानमिति शेषः ॥ ४ ॥ ततो वनांतरं गच्छतीति भ्रमन्नाह कर्णिकारेति ॥ ५ ॥ ६ ॥ पुनर्भ्रमनिवृत्याह सुव्यक्त मिति ॥ ७ ॥ उपसंप्रैति हासरसेनोपेक्षत इत्यर्थः ॥ ८ ॥ भक्षितां शंसंतीव । तत्र बीजं साश्रुनेत्राणीति ॥ ९ ॥ विना सीतामुपागत इति सकामा भविष्यति त्वया भक्षितयेति शेषः ॥ १० ॥ ११ ॥ कात रत्वमशूरत्वम् सीतापनयनेन सीतानाशेन ॥ १२ ॥ तया सीतया विरहितं हीनम् ॥ १३ ॥ तात एव कृतार्थः स तत्रैव वसतादितीत्यर्धमधिकंकतकपाठे । तातो दशरथ एव कृतार्थः वसतादिति लोट् व्यत्य

त्वमशोकस्यशाखाभिःपुष्पप्रियतराप्रिये ॥ आवृणोसिशरीरंतेममशोकविवर्द्धिनी ॥ ३ ॥ कदलीकांडसदृशौकदल्यासंवृताबुभौ ॥ ऊरूपश्यामिते देविनासिशक्तानिगूहितुम् ॥४॥ कर्णिकारवनंभद्रेहसंतीदेविसेवसे ॥ अलंतेपरिहासेनममबाधावहेनवै ॥ ५ ॥ विशेषेणाश्रमस्थानेहासोयंनप्रशस्यते ॥ अवगच्छामितेशीलंपरिहासप्रियंप्रिये ॥ ६ ॥ आगच्छत्वंविशालाक्षिशून्योयमुटजस्तव ॥ सुव्यक्तंराक्षसैःसीताभक्षितावाहृतापिवा ॥ ७॥ नहिसा विलपंतंमामुपसंप्रतिलक्ष्मण ॥ एतानिमृगयूथानिसाश्रुनेत्राणिलक्ष्मण ॥ ८॥ शंसंतीवहिमेदेवींभक्षितांरजनीचरैः ॥ हाममार्येक्वयातासिहासाध्विवरव र्णिनि ॥ ९ ॥ हासकामाद्यकैकेयीदेविमेद्यभविष्यति ॥ सीतयासहनिर्यातोविनासीतामुपागतः ॥ १० ॥ कथंनामप्रवेक्ष्यामिशून्यमंतःपुरंमम ॥ निर्वी र्यइतिलोकोमांनिर्दयश्चेतिवक्ष्यति ॥ ११ ॥ कातरत्वंप्रकाशंहिसीतापनयनेनमे ॥ निवृत्तवनवासश्चजनकंमिथिलाधिपम् ॥ १२ ॥ कुशलंपरिपृच्छंतं कथंशक्ष्येनिरीक्षितुम् ॥ विदेहराजोनूनंमांदृष्ट्वाविरहितंतया ॥१३॥ सुताविनाशसंतप्तोमोहस्यवशमेष्यति ॥ " तातएवकृतार्थःसतत्रैववसतादिति " अथवानगमिष्यामिपुरींभरतपालिताम् ॥ १४ ॥ स्वर्गोपिहितयाहीनःशून्यएवमतोमम ॥ तन्मामुत्सृज्यहिवनेगच्छायोध्यापुरींशुभाम् ॥ १५ ॥ नत्वहंतांविनासीतांजीवेयंहिकथंचन ॥ गाढमाश्लिष्यभरतोवाच्योमद्वचनात्त्वया ॥ १६ ॥ अनुज्ञातोऽसिरामेणपालयेतिवसुंधराम् ॥ अंबाचमम कैकेयीसुमित्राचत्वयाविभो ॥ १७ ॥ कौसल्याचयथान्यायमभिवाद्याममाज्ञया ॥ रक्षणीयाप्रयत्नेनभवतासूक्तचारिणा ॥ १८ ॥ सीतायाश्चविनाशो ऽयंममचामित्रसूदन ॥ विस्तरेणजनन्यामेविनिवेद्यस्त्वयाभवेत् ॥ १९ ॥ इतिविलपतिराघवेतुदीनेवनमुपगम्यतयाविनासुकेश्या ॥ भयविकल मुखस्तुलक्ष्मणोऽपिव्यथितमनाभृशमातुरोबभूव ॥ २० ॥ इत्यार्षे श्रीमद्रा० वा० आ० अर० द्विषष्टितमः सर्गः ॥ ६२ ॥ सराजपुत्रःप्रिययाविही नःशोकेनमोहेनचपीड्यमानः ॥ विषादयन्भ्रातरमार्तरूपोभूयोविषादंप्रविवेशतीव्रम् ॥ १ ॥ सलक्ष्मणंशोकवशाभिपन्नंशोकेनिमग्नोविपुलेतुरामः ॥ उवाचवाक्यंव्यसनानुरूपमुष्णंविनिःश्वस्यरुदन्सशोकम् ॥ २ ॥

येन । यतस्तत्रैव स्वर्गे एव वसति नतु जीवंती कौसल्येत्यर्थः । पक्षांतरमादत्ते अथवेति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ भयविकलमुखः भयेन विवर्णमुखः ॥ २० ॥ नरैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ ॥ शोक इष्टवियोगजो वृत्तिविशेषः । तज्जन्यं चित्तवैकल्यं मोहः ॥ १ ॥ शोकवशेनाभिपन्नं

पीडितम् । विपुलेति राम इतिपाठेऽतिशायिते शोके इत्यर्थः । व्यसनानुरूपं लोकस्य दुःखमसंगे उचितम् ॥ २ ॥ शोकमनुप्रवृत्तः शोकः शोकानुशोकः सः । परम्परायाः तृतीयार्थेषष्ठी । परंपरयाऽविच्छेदेन हि यतो मां हृदयं तदधिष्ठानमात्मानं मनश्च भिंदन्नेति प्राप्नोति ॥ ३ ॥ उक्तमेव विस्तरेणाह पूर्वमिति । अभीप्सितानि चिकीर्षाविषयत्वं प्राप्तानि तत्र तेषां मध्ये केषांचिद्विपाकः फलपरिपाकोयमद्यापतितः प्राप्तदुःखेन दुःखं दुःखपरंपरामित्यर्थः ॥ ४ ॥ तामेवाह राज्येति । एतानि प्रविचिंतितानि शोकवेगमिदानींतनमापूरयंति ॥ ५ ॥ वनमेत्य प्राप्य शरीरे क्लेशमनुभूयापि सीतासन्निधानात्सर्वं शांतम् अद्य सीतावियोगात्पुनरुदीर्णं वृद्धिं प्राप्तम् प्रियावियोग एव दुःसह इति भावः ॥ ६ ॥ सा राक्षसेन नूनमभ्याहृता तदा खमाकाशं समुपेत्य प्राप्य अस्वरं विस्वरं विक्रंदितवती अपि संभाव्यत एवमित्यन्वयः ॥ ७ ॥

नमद्विधोदुष्कृतकर्मकारीमन्येद्वितीयोऽस्तिवसुंधरायाम् ॥ शोकानुशोकोहिपरंपरायामामेतिभिंदन्हृदयंमनश्च ॥ ३ ॥ पूर्वंमयानूनमभीप्सितानि पापानिकर्माण्यसकृत्कृतानि ॥ तत्रायमद्यापतितोविपाकोदुःखेनदुःखंयदहंविशामि ॥ ४ ॥ राज्यप्रणाशःस्वजनैर्वियोगःपितुर्विनाशोजननीवियोगः॥ सर्वाणिमेलक्ष्मणशोकवेगमापूरयंतिप्रविचिंतितानि ॥ ५ ॥ सर्वंतुदुःखंममलक्ष्मणेदंशांतंशरीरेवनमेत्यक्लेशम् ॥ सीतावियोगात्पुनरप्युदीर्णंकाष्ठैरिवाग्निःसहसोपदीप्तः ॥ ६ ॥ सानूनमार्याममराक्षसेनह्यभ्याहृताखंसमुपेत्यभीरुः ॥ अप्यस्वरंसुस्वरविप्रलापाभयेनविक्रंदितवत्यभीक्ष्णम् ॥ ॥ ७ ॥ तौलोहितस्यप्रियदर्शनस्यसदोचितावुत्तमचंदनस्य ॥ वृतौस्तनौशोणितपंकदिग्धौनूनंप्रियायाममनाभिपातः ॥ ८ ॥ तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापंतस्यामुखंकुंचितकेशभारम् ॥ रक्षोवशंनूनमुपागतायानभ्राजतेराहुमुखेयथेंदुः ॥ ९ ॥ तांहारपाशस्यसदोचितांतांग्रीवांप्रियायाममसुव्रतायाः ॥ रक्षांसिनूनंपरिपीतवंतिशून्येहिभित्त्वारुधिराशनानि ॥ १० ॥ मयाविहीनाविजनेवनेसारक्षोभिराहृत्यविकृष्यमाणा ॥ नूनंविनादंकुररीवदीनासामुक्तवत्यायतकांतनेत्रा॥ ११ ॥ अस्मिन्मयासार्धमुदारशीलाशिलातलेपूर्वमुपोपविष्टा ॥ कांतस्मितालक्ष्मणजातहासात्वामाहसीताबहुवाक्यजातम् ॥ १२ ॥ गोदावरीयंसरितांवरिष्ठाप्रियाप्रियायाममनित्यकालम् ॥ अप्यत्रगच्छेदितिचिंतयामिनैकाकिनीयातिहिसाकदाचित् ॥ १३ ॥ पद्माननापद्मपलाशनेत्रापद्मानिवानेतुमभिप्रयाता ॥ तदप्ययुक्तंनहिसाकदाचिन्मयाविनागच्छतिपंकजानि ॥ १४ ॥ कामंत्विदंपुष्पितवृक्षषंडंनानाविधैःपक्षिगणैरुपेतम् ॥ वनंप्रयातानुतदप्ययुक्तमेकाकिनीसातिविभेतिभीरुः ॥ १५ ॥ आदित्यभोलोककृताकृतज्ञलोकस्यसत्यानृतकर्मसाक्षिन् ॥ ममप्रियासाक्वगताहृतावाशंसस्वमेशोकहतस्यसर्वम् ॥ १६ ॥ लोकेषुसर्वेषुननास्तिकिंचिद्यत्तेननित्यंविदितंभवेत्तव ॥ शंसस्ववायोकुलपालिनींतांमृताहृतावापथिवर्ततेवा ॥ १७ ॥

लोहितस्य चंदनस्य हरिचंदनस्य लोहितं हरिचंदनमिति कोशात् । शोणितपंकदिग्धौ भक्षणाय राक्षसैर्विशसनादिति भावः । मम नाभिपातः एवमपि मम शरीरस्याभिपातो न जायत इत्यर्थः ॥ ८ ॥ ९ ॥ हारपाशो हाररूपा माला तस्या उचितां उचितोंतःप्रांतभागो यस्यास्तां तां कंबुतुल्याम् ग्रीवामित्यर्थः । परिपीतवंतीतिपाठे रुधिरमिति शेषः । भविष्यंति जानातीति वा । शून्ये विजने ॥ १० ॥ ११ ॥ उपोपविष्टा समीपावस्थिता निःशब्दं स्मितम् । ईषत्सशब्दो हासः ॥ १२ ॥ मम प्रियाया नित्यकालं प्रियेत्यन्वयः अत्र गोदावर्यामियं चिंता असंगतेत्याह नैकाकिनीति ॥ १३ ॥ एवमग्रेपि गच्छति पंकजानि आनेतुमिति शेषः ॥ १४ ॥ अतिबिभेति अत्यंतं भीता भवति ॥ १५ ॥ लोककृताकृतज्ञेत्यादिना तादृशसूक्ष्मज्ञानवतस्तज्ज्ञानं सर्वथास्तीति भावः ॥ १६ ॥ यत्ते नित्यं विदितं न भवेत्तद्वस्तु सर्वेषु लोकेषु

नैवास्ति अतः सापि तव विदितैवेति तां शंसस्वेत्यन्वयः । कुलपालिनीमित्यनेन तस्य महत्त्वात् तज्ज्ञानं मम नेति वक्तुमशक्यमिति सूचितम् ॥ १७ ॥ इतीवातीवशब्दौ पर्यायौ । शोकविधेयदेहं तमिव काल युतं कालोचितम् ॥ १८ ॥ १९ ॥ न चिंतयामास लक्ष्मणोक्तं युक्तमिति न विचारयामास । किंतु धैर्यं त्यक्तवानेवातएव पुनर्दुःखं माप्त् ॥२०॥ नंखेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥ ॥ एवं शोककरणं चारद्वाराश्रवणेन रावणस्य मनुष्यत्वबुद्धिदार्ढ्यपूर्वकं स्ववध्यत्वसंपादनायेति बोध्यम् । तदुक्तं ब्रह्मांडपुराणे स्त्रीपुंमलानुपंगात्मा देहो नास्य विजायते ॥ किंतु निर्दोषचैतन्यं सुखनित्यां स्वकां तनुम् ॥ प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ॥ तथाप्यसुरमोहार्थं परेषां च कचित् कचित् ॥ दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः ॥ क व्रणादि क चाज्ञानं स्वतंत्राचिंत्यसद्गुणे ॥ मोक्षाभावाय तेषां तु दर्शयत्तानजो हरिः ॥ कृष्णो ह्यत्यक्तदेहोपि त्यक्तदेहस्य देहवत् ॥ लोकानां दर्शयामास स्वरूपसदृशाकृतिमिति । एतेन रावणस्येश्वरत्वबुद्धि

इतीवतंशोकविधेयदेहंरामंविसंज्ञंविलपंतमेव॥ उवाचसौमित्रिरदीनसत्त्वोन्याय्येस्थितःकालयुतंचवाक्यम्॥ १८ ॥शोकंविसृज्याद्यधृतिंभजस्वसोत्साहताचास्तुविमार्गणेस्याः॥ उत्साहवंतोहिनरानलोकेसीदंतिकर्मस्वतिदुष्करेषु ॥ १९ ॥ इतीवसौमित्रिमुदग्रपौरुषंब्रुवंतमार्तोरघुवंशसत्तमः ॥ नचिंतयामासधृतिंविमुक्तवान्पुनश्चदुःखंमहदप्युपागमत्॥२०॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीये आदिकाव्ये अरण्यकांडे त्रिषष्टितमः सर्गः॥६३॥ सदीनोदीनयावाचालक्ष्मणंवाक्यमब्रवीत्॥ शीघ्रंलक्ष्मणजानीहिगत्वागोदावरींनदीम् ॥ १ ॥ अपिगोदावरींसीतापद्मान्यानयितुंगता ॥ एवमुक्तस्तुरामेणलक्ष्मणःपुनरेवहि ॥ २ ॥ नदींगोदावरींरम्यांजगामलघुविक्रमः ॥ तांलक्ष्मणस्तीर्थवतींविचित्वाराममब्रवीत् ॥ ३ ॥ नैनांपश्यामितीर्थेषुक्रोशतोनशृणोतिमे ॥ कंनुसादेशमापन्नावैदेहीक्लेशनाशिनी ॥ ४ ॥ नहितंवेद्मिवैरामयत्रसातनुमध्यमा ॥ लक्ष्मणस्यवचःश्रुत्वादीनःसंतापमोहितः ॥ ५ ॥ रामःसमभिचक्रामस्वयंगोदावरींनदीम्॥ सतामुपस्थितोरामःक्वसीतेत्येवमब्रवीत्॥ ६ ॥ भूतानिराक्षसेंद्रेणवधार्हेणहृतामपि॥ नतांशशंसूरामायतथागोदावरीनदी॥७॥ ततःप्रचोदिताभूतैःशंसचास्मैप्रियामिति॥ नचसह्यावदत्सीतांपृष्टारामेणशोचता ॥ ८॥ रावणस्यचतद्रूपंकर्मापिचदुरात्मनः॥ध्यात्वाभयात्तुवैदेहींसानदीनशशंसह॥९॥निराशस्तुतयानद्यासीतायादर्शनेकृतः॥उवाचरामःसौमित्रिंसीतादर्शनकर्षितः॥१०॥

मतिबंधेन मोक्षाभावोऽपि शोकफलमित्युक्तम् । एवं रावणद्वारा सीताहरणमपि तत्पुण्यातिशयनाशेन वध्यतासंपादनाय । तथा च केदारखंडे उक्ताख्यायिका महता तपसा लब्धबलो रावणस्तदधिकतपोबलं विना नैतुमशक्यो देवाश्च स्वयं तदधिकं तपः कर्तुमक्षमा अतस्तेषां कार्यमत्यंतानुचितसीतानुरागमोहानुवृत्तिसंपादनेन रावणस्य तपोवीर्यभ्रंशं संपाद्य कर्तव्यमिति लक्ष्म्या सह विचार्य तदर्थं विष्णुः सीतया ब्रह्मविद्यया सहावतीर्ण इति ॥ १ ॥ २ ॥ लघुविक्रमः अविलंबितपादन्यासः । तीर्थवती अवतारवतीम् पुण्योदकवतीं च ॥ ३ ॥ न शृणोति मे वाक्यमिति शेषः । क्लेशनाशिनी सति दर्शन इति भावः ॥ ४ ॥ तं देशम् ॥ ५ ॥ तां गोदावरीम् ॥ ६ ॥ भूतानि उक्तरूपेण पृच्छ्यमानानि राक्षसेंद्रेण हृतां ज्ञात्वापि रक्षोभयाद्रामाय न शशंसुः तथा गोदावरी च न शशंसेत्यर्थः ॥ ७ ॥ तथाभूतैरस्मै सीतां शंसेति प्रचोदिताभि गोदावरी पृष्टापि नावदत् ॥ ८ ॥ तत्र हेतुः रावणस्येति ॥ ९ ॥ नद्या सीतामशंसंत्या रामः सीतादर्शने निराशः कृतः । इयं गोदावरी दिव्यदेवता न ब्रूते अतस्तद्दर्शनं दुर्लभमिति निराशोभूत ॥१०॥

तदेवाह एषेति ॥ ११ ॥ १२ ॥ १३ ॥ मंदाकिनी काचिन्नदी । प्रस्रवणस्तदाख्यो गिरिः ॥ १४ ॥ सर्वाण्यनुचरिष्यामि अनुचरवत्सेविष्यामि ॥ १५ ॥ एषामिंगितानि तयोपलक्षये यथा वक्तुकामा इवेमे इत्यर्थः ॥ १६ ॥ निरीक्षन्मृगचेष्टाज्ञानाय सूक्ष्मदृष्टिं कुर्वन् एवमुक्ताः एवंपृष्टाः ॥ १७ ॥ नभःस्थलं दर्शयन्तः उन्मुखतयाकाशावलोकनेंगितेनेत्यर्थः ह्रियमाणा सीतायां दिशमभ्यपद्यत ॥ १८ ॥ तेन मार्गेण दिङ्मार्गेण गच्छंतो धावंतो नराधिपं रामं निरीक्षंते । एवमिंगितं लक्ष्मणोपश्यदित्याह येनेति । येन हेतुना मार्गमाकाशमार्गं पुनर्भूमौ गमनाय भूमिं च निरीक्षंते ॥ १९ ॥ पुनश्च मार्गं

एषागोदावरीसौम्यकिंचिन्नप्रतिभाषते ॥ किंतुलक्ष्मणवक्ष्यामिसमेत्यजनकंवचः ॥ ११ ॥ मातरंचैववैदेह्याविनातामहमप्रियम् ॥ यामेराज्यविहीनस्यवनेवन्येनजीवतः ॥ १२ ॥ सर्वव्यपानयच्छोकंवैदेहीक्वनुसागता ॥ ज्ञातिवर्गविहीनस्यवैदेहीमप्यपश्यतः ॥१३॥ मन्येदीर्घाभविष्यंतिरात्रयोममजाग्रतः ॥ मंदाकिनींजनस्थानमिमंप्रस्रवणंगिरिम् ॥ १४ ॥ सर्वाण्यनुचरिष्यामियदिसीताहिलभ्यते ॥ एतेमहामृगावीरामामीक्षंतेपुनःपुनः ॥ ॥ १५ ॥ वक्तुकामाइवहिमेइंगितान्युपलक्षये ॥ तांस्तुदृष्ट्वानरव्याघ्रोराघवःप्रत्युवाचह ॥१६॥ क्वसीतेतितिनिरीक्षन्वैबाष्पसंरुद्धयागिरा ॥ एवमुक्तानरेंद्रेणतेमृगाःसहसोत्थिताः ॥ १७ ॥ दक्षिणाभिमुखाःसर्वेदर्शयंतोनभःस्थलम् ॥ मैथिलीह्रियमाणासादिशंयामभ्यपद्यत ॥ १८ ॥ तेनमार्गेणगच्छंतोनिरीक्षंतेनराधिपम् ॥ येनमार्गंचभूमिंचनिरीक्षंतेस्मतेमृगाः ॥ १९ ॥ पुनर्नदंतोगच्छंतिलक्ष्मणेनोपलक्षिताः ॥ तेषांवचनसर्वस्वंलक्षयामासचेंगितम् ॥२०॥ उवाचलक्ष्मणोधीमाञ्ज्येष्ठंभ्रातरमार्तवत् ॥ क्वसीतेतित्वयापृष्टायदिमेसहसोत्थिताः ॥२१॥ दर्शयंतिक्षितिंचैवदक्षिणांचादिशंमृगाः ॥ साधुगच्छावहेदेवदिशमेतांचनैर्ऋतीम् ॥ २२ ॥ यदितस्यागमःकश्चिदार्यावासाथलक्ष्यते ॥ बाढमित्येवकाकुत्स्थःप्रथितोदक्षिणांदिशम् ॥ २३ ॥ लक्ष्मणानुगतःश्रीमान्वीक्षमाणोवसुंधराम् ॥ एवंसंभाषमाणौतावन्योन्यंभ्रातरावुभौ ॥ २४ ॥ वसुंधरायांपतितपुष्पमार्गमपश्यताम् ॥ पुष्पवृष्टिंनिपतितांदृष्ट्वारामोमहीतले ॥ २५ ॥ उवाचलक्ष्मणंवीरोदुःखितोदुःखितंवचः ॥ अभिजानामिपुष्पाणितानीमानीहलक्ष्मण ॥२६॥ अपिनद्धानिवैदेह्यामयादत्तानिकानने ॥ मन्येसूर्यश्चवायुश्चमेदिनीचयशस्विनी॥२७॥अभिरक्षंतिपुष्पाणिप्रकुर्वंतोममप्रियम् ॥ एवमुक्त्वामहाबाहुर्लक्ष्मणंपुरुषर्षभम् ॥२८॥

दर्शयितुमिच्छंतो लक्ष्मणेनोपलक्षितास्तेषामिंगितं लक्ष्मणो लक्षयामासेत्यर्थः । आकाशमार्गेण गत्वा दक्षिणदिशि दूरे स्थापिता सीता दक्षिणादिशि गच्छतेत्येवं तदिंगितम् तेषां च वचनसर्वस्वभूतं स्वयं लक्षयामास ॥ २० ॥ ततो ज्ञात्वा भ्रातरमप्युवाचेत्यर्थः आर्तवत् आर्तार्हम् ॥ २१ ॥ २२ ॥ तस्यागमः तस्या आगम इत्यर्थः आर्षो दीर्घः । ज्ञापकं वस्तु दृश्येतेत्यर्थः ॥ २३ ॥ २४ ॥ पतितपुष्पमार्गं पतितपुष्पयुतं मार्गम् ॥२५॥ अभिजानामि प्रत्यभिजानामि ॥२६॥ अपिनद्धानि केशपाशे बद्धानि अम्लानत्वेन रविरपनयनेन वायुर्धारणेन वसुंधरा मत्प्रियं सीताज्ञापनरूपं प्रकुर्वंतो रक्षंतीति मन्ये ॥२७॥२८॥

मया विरहिता कच्चिद्रम्ये वनोद्देशे सर्वांगसुंदरी दृष्टा ॥ २९ ॥ क्रुद्धस्तदधिष्ठातृदेवतोद्देशेन क्रोधः ॥ ३० ॥ हेमांगीमित्यनेन लावण्यमुक्तम् ॥ ३१ ॥ दर्शयन्निव वक्ष्यमाणलिंगद्वारा नादर्शयद्वाग्राहित्येन साक्षादिति शेषः राघवे तद्विषये ॥ ३२ ॥ ३३ ॥ ३४ ॥ दिधक्षन्निव न तु वास्तवी दिधक्षेति भावः ॥ ३५ ॥ निष्क्रांतं प्रवृत्तविक्षेपम् महदत्यायतविस्तृतम् ॥ ३६ ॥ अनुसृप्ताया अनुगम्यमानायाः जटायुयुद्धसमये सीताया रावणेन भूमौ विसृज्य पुनर्ग्रहणादेवमुक्तिः परिक्रान्तं परिवृतम् एतत्सर्वं समीक्ष्य भ्रातरं शशंसेत्यन्वयः ॥ ३७ ॥ ३८ ॥ कनकबिंदवः भूषणावयवीभूतस्वर्णशक

उवाचरामोधर्मात्मागिरिंप्रस्रवणाकुलम् ॥ कच्चित्क्षितिभृतांनाथदृष्टासर्वांगसुंदरी ॥ २९ ॥ रामारम्येवनोद्देशेमयाविरहितात्वया ॥ क्रुद्धोब्रवीद्गिरिंतत्रसिंहःक्षुद्रमृगंयथा ॥ ३० ॥ तांहेमवर्णांहेमांगींसीतांदर्शयपर्वत ॥ यावत्सानूनिसर्वाणिनतेविध्वंसयाम्यहम् ॥ ३१ ॥ एवमुक्तस्तुरामेणपर्वतोमैथिलींप्रति ॥ दर्शयन्निवतांसीतांनादर्शयतराघवे ॥ ३२ ॥ ततोदाशरथीरामउवाचचशिलोच्चयम् ॥ ममबाणाग्निनिर्दग्धोभस्मीभूतोभविष्यसि ॥ ३३ ॥ असेव्यःसर्वतश्चैवनिस्तृणद्रुमपल्लवः ॥ इमांवासरितंचाद्यशोषयिष्यामिलक्ष्मण ॥ ३४ ॥ यदिनाख्यातिमेसीतामद्यचंद्रनिभाननाम् ॥ एवंप्ररुपितोरामोदिधक्षन्निवचक्षुषा ॥ ३५ ॥ ददर्शभूमौनिष्क्रांतंराक्षसस्यपदंमहत् ॥ त्रस्तायारामकांक्षिण्याःप्रधावंत्याइतस्ततः ॥ ३६ ॥ राक्षसेनानुसृतायावैदेह्याश्चपदानितु ॥ ससमीक्ष्यपरिक्रांतंसीतायाराक्षसस्यच ॥ ३७ ॥ भग्नंधनुश्चतूणीचविकीर्णंबहुधारथम् ॥ संभ्रांतहृदयोरामःशशंसभ्रातरंप्रियम् ॥ ३८ ॥ पश्यलक्ष्मणवैदेह्याःकीर्णाःकनकबिंदवः ॥ भूषणानांहिसौमित्रेमाल्यानिविविधानिच ॥ ३९ ॥ तप्तबिंदुनिकाशैश्चचित्रैःक्षतजबिंदुभिः ॥ आवृतंपश्यसौमित्रेसर्वतोधरणीतलम् ॥ ४० ॥ मन्येलक्ष्मणवैदेहीराक्षसैःकामरूपिभिः ॥ भित्त्वाभित्त्वाविभक्तावाभक्षितावाभविष्यति ॥ ४१ ॥ तस्यानिमित्तंसीतायाद्वयोर्विवदमानयोः ॥ बभूवयुद्धंसौमित्रेघोरंराक्षसयोरिह ॥ ४२ ॥ मुक्तामणिचितंचेदंरमणीयंविभूषितम् ॥ धरण्यांपतितंसौम्यकस्यभग्नंमहद्धनुः ॥ ४३ ॥ राक्षसानामिदंवत्ससुराणामथवापिवा ॥ तरुणादित्यसंकाशंवैदूर्यगुलिकाचितम् ॥ ४४ ॥ विशीर्णंपतितंभूमौकवचंकस्यकांचनम् ॥ छत्रंशतशलाकंचदिव्यमाल्योपशोभितम् ॥ ४५ ॥ भग्नदंडमिदंसौम्यभूमौकस्यनिपातितम् ॥ कांचनोरच्छदाश्चेमेपिशाचवदनाःखराः ॥ ४६ ॥ भीमरूपामहाकायाःकस्यवानिहतारणे ॥ दीप्तपावकसंकाशोद्युतिमान्समरध्वजः ॥ ४७ ॥

लानि भूषणानामिति पूर्वान्वयि ॥ ३९ ॥ तप्तबिंदुनिकाशैस्तपनीयबिंदुसदृशैः क्षतजबिंदुभिः रुधिरबिंदुभिः ॥ ४० ॥ मन्ये इति । सीताया वा इमे रुधिरबिंदवः सीतानिमित्तं सुंदोपसुंदवद्युद्ध्यमानयो रक्षसोर्वेति विकल्पालंकारः श्लोकद्वयेनोक्तः ॥ ४१ ॥ ४२ ॥ ४३ ॥ वैदूर्यगुलिकाचितं वैदूर्यमण्यलंकृतम् ॥ ४४ ॥ ४५ ॥ कांचनोरश्छदाः कांचनमयतनुत्राणाः ॥ ४६ ॥ समरे स्वामिप्रकाशको ध्वजो

यत्र स समरध्वज इति रथविशेषणम् तादृशो रथः अपविद्धः परिवृत्य पातितो भग्नश्चेत्युत्तरेणान्वयः। केचित्तु ध्वजोपविद्धः ध्वस्तः रथो भग्न इत्यन्वयमाहुः ॥ ४७ ॥ रथाक्षमात्राः चतुःशतांगुलदीर्घाः विशिखाः फलभागा इत्यर्थः ॥ ४८ ॥ निहताः परेण योधेन शरावरौ तूणीरौ ॥ ४९ ॥ प्रतोदः तोत्रम् अभीषवः प्रग्रहाः कस्यापि राक्षसपुरुषस्यैषा पदवी पदसंचारमार्गः ॥ ५० ॥ अतो मम तै राक्षसैः सह एतन्निमित्तजं वैरं पूर्ववैराच्छतगुणं सत्तेषां जीवितांतकं जीवितस्यांतकम् अंतरूपं संपन्नं पश्य ॥ ५१ ॥ एवं रक्षोभिः सीताविपत्तिं निश्चित्य धर्मं निंदति नेति। यतः सीतां धर्मो न त्रायते एवं च भक्षितायां हतायां वा वैदेह्यां के हि लोके मम प्रियं कर्तुं शक्ताः न केपि धर्मासाध्ये तेषामकिंचित्करत्वादिति भावः ॥ ५२ ॥ ५३ ॥ अथ पौरुषमेवावलंबितुं तच्छेषतया कांचिल्लोकस्थितिमाह कर्तारमिति। सर्वलोकस्योत्पत्तिस्थितिसंहारकर्तारमपि श्रुत्यादिप्रसिद्धं शूरं त्रिपुरसंहारादिविषयकात्यंतशौर्यवंतं महेश्वरमपि करुणवेदिनं करुणं यथा तथा वेदितुं शीलमस्य तम्। दयादृष्ट्या तूष्णीं स्थितमज्ञानात्तद्वैभवाज्ञानादवमन्येरन्किमयं

अपविद्धश्चभग्नश्चकस्यसांग्रामिकोरथः ॥ रथाक्षमात्राविशिखास्तपनीयविभूषणाः ॥ ४८ ॥ कस्येमेनिहताबाणाःप्रकीर्णाघोरदर्शनाः ॥ शरावरौ शरैःपूर्णौविध्वस्तौपश्यलक्ष्मण ॥ ४९ ॥ प्रतोदाभीपुहस्तोऽयंकस्यवासारथिर्हतः ॥ पदवीपुरुषस्यैषाव्यक्तंकस्यापिरक्षसः ॥ ५० ॥ वैरंशतगुणं पश्यममतैर्जीवितान्तकम् ॥ सुघोरहृदयैःसौम्यराक्षसैःकामरूपिभिः ॥ ५१ ॥ हतामृतावावैदेहीभक्षितावातपस्विनी ॥ नधर्मस्त्रायतेसीतांह्रियमाणां महावने ॥५२॥ भक्षितायांहिवैदेह्यांहृतायामपिलक्ष्मण ॥ केहिलोकेप्रियंकर्तुंशक्ताःसौम्यममेश्वराः ॥५३॥ कर्तारमपिलोकानांशूरंकरुणवेदिनम् ॥ अज्ञानादवमन्येरन्सर्वभूतानिलक्ष्मण ॥ ५४ ॥ मृदुंलोकहितेयुक्तंदांतंकरुणवेदिनम् ॥ निर्वीर्यइतिमन्यंतेनूनंमांत्रिदशेश्वराः ॥ ५५ ॥ मांप्राप्यहि गुणोदोषःसंवृत्तःपश्यलक्ष्मण ॥ अद्यैवसर्वभूतानांरक्षसामभवायच ॥५६॥ संहृत्यैवशशिज्योत्स्नांमहान्सूर्यइवोदितः ॥ संहृत्यैवगुणान्सर्वान्ममतेजः प्रकाशते ॥ ५७ ॥ नैवयक्षानगंधर्वानपिशाचानराक्षसाः ॥ किन्नरावामनुष्यावासुखंप्राप्स्यंतिलक्ष्मण ॥ ५८॥ ममास्त्रबाणसंपूर्णमाकाशंपश्यलक्ष्मण ॥ असंपातंकरिष्यामिह्यद्यत्रैलोक्यचारिणाम् ॥ ५९ ॥ सन्निरुद्धग्रहगणमावारितनिशाकरम् ॥ विप्रणष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६० ॥ विनिर्मथितशैलाग्रंशुष्यमाणजलाशयम् ॥ ध्वस्तद्रुमलतागुल्मंविप्रणाशितसागरम् ॥ ६१ ॥ त्रैलोक्यंतुकरिष्यामिसंयुक्तंकालकर्मणा ॥ नतेकुशलिनींसीतांप्रदास्यंतिममेश्वराः ॥ ६२॥ अस्मिन्मुहूर्तेसौमित्रेममद्रक्ष्यंतिविक्रमम् ॥ नाकाशमुत्पतिष्यंतिसर्वभूतानिलक्ष्मण॥ ६३ ॥

कुपितोपि करिष्यतीति न गणयंतीत्यर्थः ॥ ५४ ॥ यदेवमतो मृदुमिति लोकहिते प्राणिसौख्यसंपादने युक्तं युक्तचित्तम् अतएव मृदुस्वभावम् दांतं नानाप्रकारेण दुर्विषयप्रवृत्तिरहितेंद्रियवर्गम्। मां त्रिदशेश्वरा इंद्रादयो निर्वीर्यं मन्यंते। यतः सीतात्राणं न कृतवंत इत्यर्थः ॥ ५५ ॥ तस्मात्पौरुषमेवावलंबनीयमित्याह मामिति। गुणोपि मार्दवादिर्मां प्राप्य दोषोऽनिष्टसाधनं वृत्त इति हेतोरेतं त्यक्त्वा पौरुषमवलंबे पश्य अद्य मम तेज एव प्रकाशते सर्वभूतानामभवाय नाशाय शशिज्योत्स्नां संहृत्यैव प्रलयकालोदितो महासूर्य इव शशिज्योत्स्नातुल्यान्मामकान् गुणान्संहृत्यैव रविवत्तेजो मदीयं प्रकाशते पश्येत्यन्वयः ॥ ५६ ॥ ॥ ५७ ॥ तदेव प्रपंचयति नैवेति ॥ ५८ ॥ पश्य अचिरादेवेति शेषः। त्रैलोक्यचारिणामसंपातं बाणावरणात्क्रियाराहित्यं यथा भवति तथा करिष्यामि ॥ ५९ ॥ सन्निरुद्धप्रचारो ग्रहगणो यत्र तत्त्रैलोक्यम् विप्रनष्टा अनलादिद्युतयो यत्र तच्च तत्संवृतं तमसा संवृतमित्यर्थः ॥ ६० ॥ ६१ ॥ कालकर्मणा कालसाध्यं कर्मनाशस्तेन कालधर्मणेतिपाठेपि तद्रूपेण कालधर्मेणेत्यर्थः। तत्पुरुषेऽनिजार्षः ॥ ६२ ॥ ६३ ॥

अमर्यादं त्यक्तस्वस्वमर्यादकृत्यवस्थानम् जीवलोकेन दुरावरैः दुर्निवारैः दुरावरशब्दः खलंतः ॥ ६४ ॥ ६५ ॥ देवादयो न भविष्यंति प्रत्येकं सर्वे न शिष्यंतीत्यर्थः ॥ ६६ ॥ ६७ ॥ ६८ ॥ तथारूपां यथापूर्व स्वभावाम् अत्र न दास्यंतीति पौनरुक्त्यं क्रोधातिशयात्र दोषाय ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ निष्पीड्य दृढमुष्टिबंधेन गृहीत्वा ॥ ७३ ॥ ७४ ॥ यथा जरादयोऽनिवार्यास्तथाहमस्मात्कर्मणः केनापि वारयितु मशक्यः विधिर्दैवम् विधिर्विधाने दैवेपि इति कोशः ॥७५॥ पुरेवेति । अत्र पुरेत्यावर्तते पुरेव पूर्वरूपसदृशरूपवतीं पुरा न दिशंति न दास्यंतीत्यर्थः । परिवर्तयामि नाशयामि । नन्वेवंविधः क्रोधः कथमस्य किम र्थं चेच्छृणु । मनुष्यदेहधारणेन तद्व्यवहारनटनमेवैतत् । किंच ईदृशदुःखकाले अस्य क्रोधाभावे रावणो मनुष्यबुद्धिं कुर्यात् तथा च तद्वधोशक्यः स्यादित्येतदर्थं च सः मृत्युं मरणधर्मेण योजयामि इत्यादिवचोपि

समाकुलममर्यादंजगत्पश्याद्यलक्ष्मण ॥ आकर्णपूर्णैरिपुभिर्जीवलोकदुरावरैः ॥ ६४ ॥ करिष्येमैथिलीहेतोरपिशाचमराक्षसम् ॥ ममरोषप्रयुक्तानां विशिखानांबलंसुराः ॥ ६५ ॥ द्रक्ष्यंत्यद्यविमुक्तानाममर्षाद्दूरगामिनाम् ॥ नैवदेवानदैतेयानपिशाचानराक्षसाः ॥ ६६ ॥ भविष्यंतिममक्रोधात्रैलो क्येऽपिप्रणाशिते ॥ देवदानवयक्षाणांलोकायेरक्षसामपि ॥ ६७ ॥ बहुधानिपतिष्यंतिबाणौघैःशकलीकृताः ॥ निर्मर्यादानिमाँल्लोकान्करिष्या म्यद्यसायकैः ॥ ६८ ॥ हृतांमृतांवासौमित्रेनदास्यंतिममेश्वराः ॥ तथारूपांहिवैदेहींनदास्यंतियदिप्रियाम् ॥ ६९ ॥ नाशयामिजगत्सर्वंत्रैलोक्यं सचराचरम् ॥ यावद्दर्शनमस्यावैतापयामिचसायकैः ॥ ७० ॥ इत्युक्त्वाक्रोधताम्राक्षःस्फुरमाणोष्ठसंपुटः ॥ वल्कलाजिनमाबध्यजटाभारमबंधयत् ॥ ७१ ॥ तस्यक्रुद्धस्यरामस्यतथाभूतस्यधीमतः ॥ त्रिपुरंजघ्नुषःपूर्वंरुद्रस्येवबभौतनुः ॥ ७२ ॥ लक्ष्मणादथचादायरामोनिष्पीड्यकार्मुकम् ॥ शरमादायसंदीप्तंघोरमाशीविषोपमम् ॥ ७३ ॥ संदधेधनुषिश्रीमान्रामःपरपुरंजयः ॥ युगांताग्निरिवक्रुद्धइदंवचनमब्रवीत् ॥ ७४ ॥ यथाजरायथा मृत्युर्यथाकालोयथाविधिः ॥ नित्यंनप्रतिहन्यंतेसर्वभूतेषुलक्ष्मण ॥ तथाहंक्रोधसंयुक्तोननिवार्योऽस्म्यसंशयम् ॥ ७५ ॥ पुरेवमेचारुदतीमनिंदितांदि शंतिसीतांयदिवाद्यमैथिलीम् ॥ सदेवगंधर्वमनुष्यपन्नगंजगत्सशैलंपरिवर्तयाम्यहम् ॥ ७६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे चतुःषष्टितमः सर्गः ॥६४॥ तप्यमानंतदारामंसीताहरणकर्शितम् ॥ लोकानामभवेयुक्तंसांवर्तकमिवानलम् ॥१॥वीक्षमाणंधनुःसज्यंनिः श्वसंतंपुनःपुनः ॥ दग्धुकामंजगत्सर्वंयुगांतेचयथाहरम् ॥ २ ॥ अदृष्टपूर्वंसंक्रुद्धंदृष्ट्वारामंसलक्ष्मणः ॥ अब्रवीत्प्रांजलिर्वाक्यंमुखेनपरिशुष्यता ॥ ३ ॥

रावणवचोवदेव आरोपितक्रोधमूलकत्वात् अत एव शरैर्विधमिष्यामीत्युक्तिः । लक्ष्मणस्तु तत्त्वज्ञोपि तद्देवातत्त्वज्ञ इव तन्मायामोहितो वा मलयकालिकरौद्रसत्त्वयावेशं संभाव्यानुनयति स्म । किंचास्य क्रोधस्या रोपित्वाभावे अद्य सीताया अलाभे सर्वजगत्परिवर्तनं प्रतिज्ञाय कथं लक्ष्मणप्रार्थनयापि तामन्यथयेत् अन्यथा कैकेय्यग्रे कृतां वनवासप्रतिज्ञां कथं कौसल्यावचसा न त्यक्तवांस्तस्मात्सा यथार्था इयं तु आरोपितेत्येव सारम् । अनेन व्यवहारेण क्रोधादिकाले कृताया अयुक्ताया अपि प्रतिज्ञाया अपालने अत्यंतदोषाभाव इत्यपि सूचितम् ॥ ७६ ॥ तप्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥ ॥ अभवे नाशे युक्तमुद्युक्तम् सांवर्तकं मलयकालिकम् ॥ १ ॥ हरं कालाग्निरुद्रम् ॥ २ ॥ अदृष्टपूर्वं पूर्वमेवं कदाप्यदृष्टसं

हारशक्त्यावेशं संक्रुद्धं रामं दृष्ट्वा राममब्रवीदिति रामपदद्वयसंबंधः मुखपरिशोषो लोकविनाशभयेन ॥ ३ ॥ प्रकृतिं सर्वभूतहितत्वरूपाम् ॥ ४ ॥ एतच्च उक्तचतुष्टयं च अनुत्तमं यशश्च त्वयि नियतमित्यर्थः ॥ ५ ॥ एकस्यापराध इति कथं ज्ञायते तत्राह नन्विति । ननु जानाम्येक एवापराद्ध इति । कुतस्तत्राह कस्यचिदेव न केषांचिदित्यर्थः सायुधपरिकरो भग्न इत्यन्वयः ॥ ६ ॥ स केन भग्नः केन हेतुनेत्येतत्तु न जानामीति शेषः । खुरनेमिक्षतत्वादिविशिष्टोयं देशो निर्वृत्तसंग्रामो दृश्यते इति शेषः । एवंभूतैर्हेतुभिरयं विमर्दः संग्राम एकस्य रथिकस्य केन चित्सह न तु द्वयोरधिकयोरिति शेषः ॥ ७ ॥ ८ ॥ तदेवाह नहीति । वृत्तं भुवि कृतचिह्नम् अत एकस्य कृते लोकनाशो न युक्तः ॥ ९ ॥ युक्तदंडा यथापराधदंडाः मृदवोऽकठिनाः ॥ १० ॥ किंच यदि त्वद्दार

पुराभूत्वामृदुर्दांतःसर्वभूतहितेरतः॥ नक्रोधवशमापन्नःप्रकृतिंहातुमर्हसि ॥ ४ ॥ चंद्रेलक्ष्मीःप्रभासूर्येगतिर्वायौभुविक्षमा ॥ एतच्चनियतंनित्यंत्वयिचानुत्तमंयशः॥ ५॥ एकस्यनापराधेनलोकान्हंतुंत्वमर्हसि ॥ ननुजानामिकस्यायंभग्नःसांग्रामिकोरथः॥ ६ ॥ केनवाकस्यवाहेतोःसंयुगःसपरिच्छदः॥ खुरनेमिक्षतश्चायंसिक्तोरुधिरबिंदुभिः ॥ ७ ॥ देशोनिर्वृत्तसंग्रामःसुघोरःपार्थिवात्मज॥ एकस्यतुविमर्दोऽयंनद्वयोर्वदतांवर ॥८॥ नहिवृत्तंहिपश्यामिबलस्यमहतःपदम्॥ नैकस्यतुकृतेलोकान्विनाशयितुमर्हसि ॥ ९ ॥ युक्तदंडाहिमृदवःप्रशांतावसुधाधिपाः॥ सदात्वंसर्वभूतानांशरण्यःपरमागतिः ॥ १० ॥ कोनुदारप्रणाशंतेसाधुमन्येतराघव ॥ सरितःसागराःशैलादेवगंधर्वदानवाः ॥ ११ ॥ नालंतेविप्रियंकर्तुंदीक्षितस्येवसाधवः॥ येनराजन्हृतासीतातमन्वेषितुमर्हसि॥ १२ ॥ मद्द्वितीयोधनुष्पाणिःसहायैःपरमर्षिभिः॥ समुद्रंवाविचेष्यामःपर्वतांश्चवनानिच॥ १३ ॥ गुहाश्चविविधाघोराःपद्मिन्योविविधास्तथा॥ देवगंधर्वलोकांश्चविचेष्यामःसमाहिताः॥१४॥ यावन्नाधिगमिष्यामस्तवभार्यापहारिणम्॥ नचेत्साम्नाप्रदास्यंतिपत्नींतेत्रिदशेश्वराः॥ कोशलेंद्रततःपश्चात्प्राप्तकालंकरिष्यसि ॥ १५ ॥ शीलेनसाम्नाविनयेनसीतांनयेननप्राप्स्यसिचेन्नरेन्द्र ॥ ततःसमुत्सादयहेमपुंखैर्महेन्द्रवज्रप्रतिमैःशरौघैः ॥ १६ ॥ इत्यार्षे श्रीमद्रा० वा० आ० अरण्यकाण्डे पंचषष्टितमः सर्गः ॥ ६५ ॥ तंतथाशोकसंतप्तंविलपंतमनाथवत्॥ मोहेनमहतायुक्तंपरिद्यूनमचेतसम्॥ १ ॥

प्रणाशो लोककर्तृको लोकानुमतो वा स्यात्तद्युक्तं तन्नाशनं नैवमस्तीत्याह को न्विति ॥ ११ ॥ सरिदादयस्ते विप्रियं कर्तुं नालं न समर्थाः न स्पृहावंतो वा । दीक्षितस्य यजमानस्य साधवो ज्ञानसंपन्ना ऋत्विगादयो यथा विप्रियं शापादि दातुं व्यंगं वा कर्म कर्तुमसमर्थास्तद्वत् ॥ १२ ॥ मद्द्वितीयः अहं द्वितीयः सहायो यस्य सः समुद्रादिस्थाश्रमेषु विचयनार्थं परमर्षिभिः सहायैरित्युक्तम् ॥ १३ ॥ १४ ॥ यदि अस्मद्विचयनेनाशक्त्या तत्प्राप्तिः स्यात् ततः परं देवाः सर्वज्ञा यदि ते पत्नीं पत्नीवार्तां न दास्यंति ततः पश्चात्प्राप्तकालं चतुर्थोपायं दंडं तेषु करिष्यसि ॥ १५ ॥ शीलं सुचरित्रं साम साधुवादः विनयः प्रश्रयः नयो नीतिः ॥१६॥ चेष्टमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥ ॥ एवं क्रोधमुपशमय्य सहजप्रकृतिप्राप्तये बोधयति

यति लक्ष्मणो रामं तमिति । परिद्यूनं क्षीणम् अचेतसं अस्वस्थचित्तमिव ॥ १ ॥ मुहूर्तादिव मुहूर्तादेव ॥ २ ॥ बोधनप्रकारो महतेत्यादि । तपसा पुत्रकामनया कृतेन व्रतादिना कर्मणा ऋष्यश्रृंगानयनपूर्वकमहायागेन ॥ ३ ॥ भरतस्य मुखादिति शेषः यथा यथावच्छ्रुतम् ॥ ४ ॥ इतरः क इति । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इत्युक्तेः । मर्त्यावतारस्त्विह मर्त्यशिक्षणमिति भागवतोक्तरीत्या लोकशिक्षणार्थमपि त्वदवतारादिति भावः ॥ ५ ॥ आश्वसिहीति । न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतेः ॥ ६ ॥ तदेव विवृणोति लोकेति । एष औपाधिकदुःखसंबंधो लोकस्य शरीरिणः स्वभाव एव । तदेवाह ययातिरिति । अनयोऽनयमूलं दुःखं तच्च स्वर्गाद्भ्रंशरूपं समस्पृशदित्यनेन अचिरस्थितिकस्पर्शमात्रार्थकेन पुनरविलंबेनैव दौहित्रप्रयुक्तसुखोत्तरकालिकदुःखनिवृत्तिरप्यस्य सूचिता ॥ ७ ॥ यो महर्षिः यः पुनर्नः पितुः पुरोहितस्तस्य पुत्रशतं जज्ञे अह्ना एकाह्ना च पुनर्विश्वामित्रेण हतं पूर्वं सुखोत्तरकालिकदुःखानंतरं सुखं व्यंग्यतयोक्त्वात्र सुखानंतरं दुःखमुक्तम् एवं च महतामप्यवश्यं जायमाने ईदृशे

ततःसौमित्रिराश्वास्यमुहूर्तादिवलक्ष्मणः ॥ रामंसंबोधयामासचरणौचाभिपीडयन् ॥ २ ॥ महतातपसाचापिमहताचापिकर्मणा ॥ राज्ञादशरथेनासीह्लब्धोमृतमिवामरैः ॥ ३ ॥ तवचैवगुणैर्बद्धस्त्वद्वियोगान्महीपतिः ॥ राजादेवत्वमापन्नोभरतस्ययथाश्रुतम् ॥४॥ यदिदुःखमिदंप्राप्तंकाकुत्स्थनसहिष्यसे ॥ प्राकृतश्चाल्पसत्त्वश्चइतरःकःसहिष्यति ॥ ५ ॥ आश्वसिहिनरश्रेष्ठप्राणिनःकस्यनापदः ॥ संस्पृशंत्यग्निवद्राजन्क्षणेनव्यपयांतिच ॥ ६ ॥ लोकस्वभावएवैषययातिर्नहुषात्मजः ॥ गतःशक्रेणसालोक्यमनयस्तंसमस्पृशत् ॥ ७ ॥ महर्षियोंवसिष्ठस्तुयःपितुर्नःपुरोहितः ॥ अह्नापुत्रशतंजज्ञेतथैवास्यपुनर्हतम् ॥ ८ ॥ याचेयंजगतोमातासर्वलोकनमस्कृता ॥ अस्याश्चचलनंभूमेर्दृश्यतेकोशलेश्वर ॥९॥ यौधर्मौजगतोनेत्रौयत्रसर्वंप्रतिष्ठितम् ॥ आदित्यचंद्रौग्रहणमभ्युपेतौमहाबलौ ॥ १० ॥ सुमहांत्यपिभूतानिदेवाश्चपुरुषर्षभ ॥ नदैवस्यप्रमुंचंतिसर्वभूतानिदेहिनः ॥ ॥ ११ ॥ शक्रादिष्वपिदेवेषुवर्तमानौनयानयौ ॥ श्रूयेतेनरशार्दूलनत्वंव्यथितुमर्हसि ॥ १२ ॥ मृतायामपिवैदेह्यांनष्टायामपिराघव ॥ शोचितुंनार्हसेवीरयथान्यःप्राकृतस्तथा ॥ १३ ॥ त्वद्विधानहिशोचंतिसततंसर्वदर्शनाः ॥ सुमहत्स्वपिकृच्छ्रेषुरामानिर्विण्णदर्शनाः ॥ १४ ॥ तत्त्वतोहिनरश्रेष्ठबुद्ध्यासमनुचिंतय ॥ बुद्ध्यायुक्तामहाप्राज्ञाविजानंतिशुभाशुभे ॥ १५ ॥ अदृष्टगुणदोषाणामध्रुवाणांतुकर्मणाम् ॥ नांतरेणक्रियांतेषांफलमिष्टंचवर्तते १६ ॥

सुखे दुःखे च न हर्षशोकौ भवादृशस्योचिताविति भावः ॥ ८ ॥ चलनं भूकंपजं दुःखमित्यर्थः ॥ ९ ॥ यौ धर्मौ परावरधर्मप्रवर्तकौ नेत्रौ जगतः संसारचक्रस्य कालपरिच्छेदद्वारा प्रवर्तकौ अत एव यत्र सर्वं प्रतिष्ठितं तौ च ग्रहणं राहुग्रासदुःखं प्राप्तौ ॥ १० ॥ दैवस्य कर्मणो वशं न प्रमुंचंतीत्यर्थः । किं पुनर्वक्तव्यं देहिनः सर्वभूतानि देहवंति सर्वभूतानि न मुंचंतीति पुंस्त्वमार्षम् ॥ ११ ॥ नयानयौ तन्मूलसुखदुःखे ॥ १२ ॥ १३ ॥ अनिर्विण्णदर्शना विषादरहितदर्शनाः विषादराहित्येन कृत्याकृत्यतत्त्वज्ञानवंतः ॥ १४ ॥ तत्त्वतः समनुचिंतय युक्तायुक्तं कृत्याकृत्यं चेति शेषः । शुभाशुभे कर्तव्याकर्तव्ये युक्तायुक्ते बुद्धियुक्ताः जानंति तस्मात्त्वं बुद्ध्या विचिंतयेति शेषः ॥ १५ ॥ एवं दुःखमूलं प्राचीनं कर्म बुद्ध्वा दुःखं सोढव्यमेवेत्याह अदृष्टेति शास्त्रैकसमधिगम्यतयाप्रत्यक्षेणादृष्टगुणदोषाणां धर्मत्वाधर्मत्वे गुणदोषौ आपाततो धर्मवद्भासमानानामधर्मत्वादिपरीत्याच्च अध्रुवाणां फलनाश्यानां अनेन फलावश्यंभावः सूचितः । तादृशानां कर्मणां निष्पत्तिः क्रियां तत्तत्पुरुषव्यापारमंतरेण न भवति स्वव्यापारेण कृतानां

तेषामिष्टं फलं सुखं चादनिष्टं च फलं वर्तेते प्रवर्तेत एव नतु न प्रवर्तेत इति । अतः सोढव्यमेवेति भावः ॥ १६ ॥ इयं च बुद्धिस्त्वद्दत्तैव मेऽतस्तवोपदेशे किं सामर्थ्यमिति न वाच्यमित्याह मामिति । अकारणे क्रोधवशमापन्नमिति शेषः बहुशोकवानिति संधिरार्षः । अनुशिष्याच्छिक्षितुं शक्तः स्याद्बृहस्पतिरपि अन्यस्य का गणनेत्यर्थः ॥ १७ ॥ देवैरपि दुरन्वया अन्वेतुमनुगंतुमशक्या त्वज्ज्ञानपरिच्छेदो देवानामप्यशक्य इति भावः । अनेनेश्वरता सूचिता । तथापि शोकेनांतर्हितमिव ते ज्ञानं संबोधयामि बोधयामीव ॥ १८ ॥ दिव्यं देवोचितं मानुषं मनुष्योचितम् एवमुभयविधपराक्रमाश्रयत्वमात्मनोवेक्ष्य तत्राद्यः



मामेवंहिपुरावीरत्वमेववहुशोकवान् ॥ अनुशिष्याद्धिकोनुत्वामपिसाक्षाद्बृहस्पतिः ॥ १७ ॥ बुद्धिश्चतेमहाप्राज्ञदेवैरपिदुरन्वया ॥ शोकेनाभिप्रसुप्तंते ज्ञानंसंबोधयाम्यहम् ॥ १८ ॥ दिव्यंचमानुषंचैवमात्मनश्चपराक्रमम् ॥ इक्ष्वाकुवृषभावेक्ष्ययतस्वद्विषतांवधे ॥ १९ ॥ किंतेसर्वविनाशेनकृतेनपु रुषर्षभ ॥ तमेवतुरिपुंपापंविज्ञायोद्धर्तुमर्हसि ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये अरण्यकांडे षट्षष्टितमः सर्गः ॥ ६६ ॥

पूर्वजोऽप्युक्तवाक्यस्तुलक्ष्मणेनसुभाषितम् ॥ सारग्राहीमहासारंप्रतिजग्राहराघवः ॥ १ ॥ सनिगृह्यमहाबाहुःप्रवृद्धंरोषमात्मनः ॥ अवष्टभ्यधनु श्चित्रंरामोलक्ष्मणमब्रवीत् ॥ २ ॥ किंकरिष्यावहेवत्सक्ववागच्छावलक्ष्मण ॥ केनोपायेनपश्यावःसीतामिहाविचिंतय ॥ ३ ॥ तंतथापरितापार्तं लक्ष्मणोवाक्यमब्रवीत् ॥ इदमेवजनस्थानंत्वमन्वेषितुमर्हसि ॥ ४ ॥ राक्षसैर्बहुभिःकीर्णंनानाद्रुमलतायुतम् ॥ संतीहगिरिदुर्गाणिनिर्दराःकंदरा णिच ॥ ५ ॥ गुहाश्चविविधाघोरानानामृगगणाकुलाः ॥ आवासाःकिन्नराणांचगंधर्वभवनानिच ॥ ६ ॥ तानियुक्तोमयासार्धंसमन्वेषितुमर्हसि ॥ त्वद्विधाबुद्धिसंपन्नामहात्मानोनरर्षभाः ॥ ७ ॥ आपत्सु न प्रकंपंतेवायुवेगैरिवाचलाः ॥ इत्युक्तस्तद्वनंसर्वंविचचारसलक्ष्मणः ॥ ८ ॥ क्रुद्धोरामः शरंघोरंसंधायधनुषिक्षुरम् ॥ ततःपर्वतकूटाभंमहाभागंद्विजोत्तमम् ॥ ९ ॥ ददर्शपतितंभूमौक्षतजार्द्रंजटायुषम् ॥ तंदृष्ट्वागिरिशृंगाभंरामोलक्ष्मणमब्रवी त् ॥ १० ॥ अनेनसीतावैदेहीभक्षितानात्रसंशयः ॥ गृध्ररूपमिदंव्यक्तंरक्षोभ्रमतिकाननम् ॥ ११ ॥ भक्षयित्वाविशालाक्षीमास्तेसीतांयथासुखम् ॥ एनंवधिष्येदीप्ताग्रैःशरैर्घोरैरजिह्मगैः ॥ १२ ॥ इत्युक्त्वाऽभ्यपतद्द्रष्टुंसंधायधनुषिक्षुरम् ॥ क्रुद्धोरामःसमुद्रांतांचालयन्निवमेदिनीम् ॥ १३ ॥

परशुरामविषयः अंत्यो रक्षोविषयः एवं च देवोचितपराक्रमस्यायं नावसर इति भावः ॥ १९ ॥ कृतेन अनुष्ठितेन ॥ २० ॥ नंखंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे षट्षष्टितमः सर्गः ॥ ६६ ॥ पूर्वजोपि रामः लक्ष्मणेन सुभाषितं यथा भवति तथोक्तवाक्यस्तद्वाक्यस्य महासारं सयुक्तिकत्वात्सारांशम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इह जनस्थाने गिरिगतानि दुर्गाणि गंतुमशक्यदेशाः संतीत्यर्थः । निर्दरा विदीर्णपाषाणाः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ क्षुरं तद्वन्निशितं शरमित्यर्थः । तं संधाय विचचारेत्यन्वयः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

सफेनं फेनसहितं दीनदीनया अतिशयितदीनया दीनसदृशा वा ॥ १४ ॥ ओषधीमिव संजीवनौषधीमिव अन्वेषासि अन्वेषसे ॥ १५ ॥ १६ ॥ अहं सीतामभ्यवपन्नः सीता परित्राणमुद्दिश्याभिगतः मया रावणश्च रणे विध्वंसितरथच्छत्रो धरणीतले पतितश्च कृतः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्य स्वरूपं विज्ञाय सीतासक्तां सीतासंबद्धां कथां च श्रुत्वा ॥ २१ ॥ द्विगुणीकृततापार्तः सीतावियोगजो जटायुवधजस्तापश्चेति तापस्य द्वैगुण्यं तेनार्तो बभूवेति शेषः ॥ २२ ॥ एकमसहायं एकस्मिन्नूर्ध्वेतालक्षणे अयने श्वासमार्गेऽतएव कृच्छ्रे मुहुर्मुहुर्निःश्वसंतमिति कतकसंमतपाठेऽर्थः । एकमेकायने दुर्गे निःश्वसंतं कथंचनेतिपाठे दुर्गे लताकंटकसंकीर्णे एकायने एकमार्गे पतित्वा कथंचन निःश्वसंतं मृतमायमित्यर्थ इति तीर्थः ॥ २३ ॥

तंदीनदीनयावाचासफेनंरुधिरंवमन् ॥ अभ्यभाषतपक्षीसरामंदशरथात्मजम् ॥ १४ ॥ यामोषधीमिवायुष्मन्नन्वेषसिमहावने ॥ सादेवीममच प्राणारावणेनोभयंहृतम् ॥१५॥ त्वयाविरहितादेवीलक्ष्मणेनचराघव ॥ ह्रियमाणामयादृष्टारावणेनबलीयसा ॥ १६ ॥ सीतामभ्यवपन्नोऽहंरावणश्च रणेप्रभो ॥ विध्वंसितरथच्छत्रःपतितोधरणीतले ॥ १७॥ एतदस्यधनुर्भग्नमेतेचास्यशरास्तथा ॥ अयमस्यरणेरामभग्नःसांग्रामिकोरथः ॥ १८ ॥ अयंतुसारथिस्तस्यमत्पक्षनिहतोभुवि ॥ परिश्रांतस्यमेपक्षौछित्त्वाखड्गेनरावणः ॥ १९ ॥ सीतामादायवैदेहीमुत्पपातविहायसम् ॥ रक्षसानिहतंपूर्वं मांनहंतुंत्वमर्हसि ॥ २० ॥ रामस्तस्यतुविज्ञायसीतासक्तांप्रियांकथाम् ॥ गृध्रराजंपरिष्वज्यपरित्यज्यमहद्धनुः ॥ २१ ॥ निपपातावशोभूमौरुरो दसहलक्ष्मणः ॥ द्विगुणीकृततापार्तोरामोधीरतरोऽपिसन् ॥२२॥ एकमेकायनेकृच्छ्रेनिःश्वसंतंमुहुर्मुहुः ॥ समीक्ष्यदुःखितोरामःसौमित्रिमिदमब्रवी त् ॥२३ ॥ राज्यंभ्रष्टंवनेवासःसीतानष्टामृतोद्विजः ॥ ईदृशीयंममालक्ष्मीर्दहेदपिहिपावकम् ॥२४॥ संपूर्णमपिचेदद्यप्रतरेयंमहोदधिम् ॥ सोपिनूनं ममालक्ष्म्याविशुष्येत्सरितांपतिः ॥ २५ ॥ नास्त्यभाग्यतरोलोकेमत्तोऽस्मिन्सचराचरे ॥ येनेयंमहतीप्राप्तामयाव्यसनवागुरा ॥ २६ ॥ अयंपितुर्व यस्योमेगृध्रराजोमहाबलः ॥ शेतेविनिहतोभूमौममभाग्यविपर्ययात् ॥ २७ ॥ इत्येवमुक्त्वाबहुशोराघवःसहलक्ष्मणः ॥ जटायुषंचपस्पर्शपितृस्नेहं निदर्शयन्॥२८॥निकृत्तपक्षंरुधिरावसिक्तंतंगृध्रराजंपरिगृह्यराघवः ॥ क्वमैथिलीप्राणसमागतेतिविमुच्यवाचंनिपपातभूमौ ॥२९॥ इत्यार्षे श्रीम० वा० आ० अरण्यकांडे सप्तषष्टितमः सर्गः ॥६७॥ रामःप्रेक्ष्यतुतंगृध्रंभुविरौद्रेणपातितम् ॥ सौमित्रिंमित्रसंपन्नमिदंवचनमब्रवीत् ॥१॥ ममायंनूनमर्थेषुयत मानोविहंगमः ॥ राक्षसेनहतःसंख्येप्राणांस्त्यजतिमत्कृते॥२॥अतिखिन्नः शरीरेऽस्मिन्प्राणोलक्ष्मणविद्यते ॥ तथास्वरविहीनोऽयंविक्लवंसमुदीक्षते॥३॥

ममालक्ष्मीर्मद्दुष्कर्मसंबद्धा अलक्ष्मीः पावकं सर्वदाहकमपि दहेत्किमुत मच्छ्रियमित्यर्थः ॥ २४ ॥ एतद्दुःखपरितापशांतये संपूर्णं महोदधिमपि प्रतरेयं तदा सोपि सरितां पतिर्नूनं निश्चयेन ममालक्ष्म्या विशुष्येत ॥ २५ ॥ येनाभाग्येन वागुरा मृगादिबंधनजालम् ॥ २६ ॥ पितुर्वयस्यः सखा ॥ २७ ॥ पितृस्नेहं पितरीव स्नेहम् ॥ २८ ॥ २९ ॥ धेरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥ ॥ रौद्रेण रक्षसा अनेन रक्षसां तमःप्राधान्यमेवेति सूचितम् । मित्रसंपन्नं मित्रत्वेन संपन्नं सर्वजनेषु मैत्र्या युक्तम् ॥ १ ॥ २ ॥ तथा अतिखिन्नप्राण

इव स्वरहीनो विह्वलेक्षणश्च ॥ ३ ॥ व्याहरितुं व्याहर्तुम् वधं वधमकारम् ॥ ४ ॥ यमपराधं दृष्ट्वा तु प्रिया सीता हृता सोपराधस्तस्य मया किं कृतः अपि तु न अतः किंनिमित्त इति किं निमित्तं हृदि यस्य सः रावणः आर्यां जहार ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ किंकर्मेत्यस्योत्तरं मायामिति । वातेन दुर्दिनेन च संकुलाम् ॥ ९ ॥ १० ॥ अन्यप्रश्नोत्तरासामर्थ्यं ध्वनयन्प्राणोपरोधमाह उपेति । उशीरेण नलदेन कृता मूर्धजाः केशा येषां तान्सौवर्णान् वृक्षान्पश्यामि तादृशसौवर्णवृक्षदर्शनं मरणचिह्नम् ॥ ११ ॥ ज्योतिषज्ञानवलादाह येनेति ॥ १२ ॥ कोसौ मुहूर्तस्तत्राह विंद इति । लाभार्थाद्विदेर्निष्पन्नोसावित्याहुः स च

जटायोयदिशक्रोषिवाक्यंव्याहरितुंपुनः ॥ सीतामाख्याहिभद्रंतेवधमाख्याहिचात्मनः ॥ ४ ॥ किंनिमित्तोजहारार्यांरावणस्तस्याकिंमया ॥ अपराधं तुयंदृष्ट्वारावणेनहृताप्रिया ॥ ५ ॥ कथंतच्चंद्रसंकाशंमुखमासीन्मनोहरम् ॥ सीतयाकानिचोक्तानितास्मिन्कालेद्विजोत्तम ॥ ६ ॥ कथंवीर्यःकथंरूपः किंकर्मासचराक्षसः ॥ क्वचास्यभवनंतातब्रूहिमेपरिपृच्छतः॥ ७ ॥ तमुद्वीक्ष्यसधर्मात्माविलपंतमनाथवत् ॥ वाचाविक्लवयारामामिदंवचनमब्रवीत् ॥ ॥ ८ ॥ साहृताराक्षसेंद्रेणरावणेनदुरात्मना ॥ मायामास्थायविपुलांवातदुर्दिनसंकुलाम् ॥ ९ ॥ परिक्लांतस्यमेतातपक्षौछित्त्वानिशाचरः ॥ सीतामादायवैदेहींप्रयातोदक्षिणामुखः ॥ १० ॥ उपरुध्यंतिमेप्राणादृष्टिर्भ्रमतिराघव ॥ पश्यामिवृक्षान्सौवर्णानुशीरकृतमूर्धजान् ॥ ११ ॥ येनयातिमुहूर्तेनसीतामादायरावणः ॥ विप्रनष्टंधनंक्षिप्रंतत्स्वामीप्रतिपद्यते॥ १२ ॥ विंदोनाममुहूर्तोऽसौनचकाकुत्स्थसोऽबुधत् ॥ झषवद्बडिशंगृह्यक्षिप्रमेवविनश्यति ॥ १३ ॥ नचत्वयाव्यथाकार्याजनकस्यसुतांप्रति ॥ वैदेह्यारंस्यसेक्षिप्रंहत्वातंरणमूर्धनि ॥१४॥ असंमूढस्यगृध्रस्यरामंप्रत्यनुभाषतः॥ आस्यात्सुस्रावरुधिरंम्रियमाणस्यसामिषम् ॥ १५ ॥ पुत्रोविश्रवसःसाक्षाद्भ्रातावैश्रवणस्यच ॥ इत्युक्त्वादुर्लभान्प्राणान्मुमोचपतगेश्वरः ॥ १६ ॥ ब्रूहिब्रूहीतिरामस्यब्रुवाणस्यकृतांजलेः॥ त्यक्त्वाशरीरंगृध्रस्यप्राणाजग्मुर्विहायसम् ॥ १७॥ सनिक्षिप्याशिरोभूमौप्रसार्यचरणौतथा ॥ विक्षिप्यचशरीरं स्वंपपातधरणीतले ॥ १८ ॥ तंगृध्रंप्रेक्ष्यताम्राक्षंगतासुमचलोपमम् ॥ रामःसुबहुभिर्दुःखैर्दीनःसौमित्रिमब्रवीत् ॥ १९ ॥ बहूनिरक्षसांवासेवर्षाणिवसतासुखम् ॥ अनेनदंडकारण्येविशीर्णमिहपक्षिणा॥२०॥अनेकवार्षिकोयस्तुचिरकालसमुत्थितः ॥ सोऽयमद्यहतःशेतेकालोहिदुरतिक्रमः॥२१॥

रावणो निजकर्माननुकूलं तं नावबुधत् । बुधिरवगमने इत्यस्य लुङि रूपम् । न केवलं मुहूर्तमहिम्ना इष्टप्राप्तिरेवापि तु शत्रुनाशोपीत्याह झषेति । बडिशं गृहीत्वा झष इव क्षिप्रमेव विनश्यति वर्तमाननिर्देशेनाति सान्निध्यं विनाशस्य दर्शयति ॥ १३ ॥ अतो नचेति ॥ १४ ॥ असंमूढस्य मृतिकालेप्यभ्रांतस्य रामं प्रत्यनुभाषतः उत्तरं भाषमाणस्य ॥ १५ ॥ इत्युक्त्वा एतावन्मात्रमुक्त्वा तद्वीर्यतद्भवनादिकथनात्पूर्वमिति शेषः ॥१६॥१७॥१८॥१९॥ अस्मिन्दंडकारण्ये बहूनि वर्षाणि सुखं वसतानेन पक्षिणेहैव दंडकारण्ये विशीर्णं देहविशरणं प्राप्तम् ॥ २० ॥ अनेकवार्षिक इत्यस्यैव विवरणं चिरकालसमुत्थित इति ॥२१॥

मे उपकारीत्यन्वयः सीतामभ्यवपन्नः सीतां मोचयितुं प्रवृत्तः ॥ २२ ॥ २३ ॥ सर्वत्र सर्वजातिषु ॥ २४॥ तथा आगतमिति च्छेदः प्राप्तमित्यर्थः मन्निमित्तं यो गृध्रविनाशस्तज्जं दुःखं यथा मां प्राप्तं सीताहरणजदुःखाद्गृध्रविनाशजं दुःखमधिकमिति भावः । तस्याः पुनः प्राप्तिसंभावनासत्त्वादस्य तदभावाच्चेति तात्पर्यम् ॥ २५ ॥ २६ ॥ दिधक्ष्यामि दग्धुमिच्छामि सद्गतिसिद्धये इत्यनार्षः ॥ २७ ॥ २८ ॥ अपरावर्तिनां संग्रामे इति शेषः गम्यत इति गतिर्लोकः यज्ञशीलानां लोकान् क्रमेण प्राप्य मदनुज्ञातः सन्ननुत्तमान् येभ्यः परे उत्तमा न संति तान् लोकान्ब्रह्मणो लोकान् क्रममुक्तिदान् गच्छ । अनेन संकल्पमात्रात्कर्मानधिकृततिरश्चः साधनहीनस्यापि तल्लोकदानेन भगवान् रामः स्वस्वरूपांशे माययावृतज्ञान इति प्रलपतां मुखं ध्वस्तम् । शोकादि तु नटनमित्युक्तमेवासकृत् । तदुक्तम् । संस्कारमकरोत्तस्य रामो

पश्यलक्ष्मणगृध्रोऽयमुपकारीहतश्चमे ॥ सीतामभ्यवपन्नोहिरावणेनबलीयसा ॥२२॥ गृध्रराज्यंपरित्यज्यपितृपैतामहंमहत् ॥ ममहेतोरयंप्राणान्मुमोचपतगेश्वरः ॥ २३ ॥ सर्वत्रखलुदृश्यंतेसाधवोधर्मचारिणः ॥ शूराःशरण्याःसौमित्रेतिर्यग्योनिगतेष्वपि ॥ २४ ॥ सीताहरणजंदुःखंनमेसौम्यतथागतम् ॥ यथाविनाशोगृध्रस्यमत्कृतेचपरंतप ॥ २५ ॥ राजादशरथःश्रीमान्यथामममहायशाः ॥ पूजनीयश्चमान्यश्चतथायंपतगेश्वरः ॥ २६ ॥ सौमित्रेहरकाष्ठानिनिर्मंथिष्यामिपावकम् ॥ गृध्रराजंदिधक्ष्यामिमत्कृतेनिधनंगतम् ॥ २७ ॥ नाथंपतगलोकस्यचितिमारोपयाम्यहम् ॥ इमंधक्ष्यामिसौमित्रेहतंरौद्रेणरक्षसा ॥ २८ ॥ यागतिर्यज्ञशीलानामाहिताग्नेश्चयागतिः ॥ अपरावर्तिनांयाचयाचभूमिप्रदायिनाम् ॥२९॥ मयात्वंसमनुज्ञातोगच्छलोकाननुत्तमान् ॥ गृध्रराजमहासत्त्वसंस्कृतश्चमयाव्रज ॥ ३० ॥ एवमुक्त्वाचितांदीप्तामारोप्यपतगेश्वरम् ॥ ददाहरामोधर्मात्मास्वबंधुमिवदुःखितः ॥ ३१ ॥ रामोऽपिसहसौमित्रिर्वनंयात्वासवीर्यवान् ॥ स्थूलान्हत्वामहारोहीननुतस्तारतंद्विजम् ॥ ३२ ॥ रोहिमांसानिचोद्धृत्यपेशीकृत्वामहायशाः ॥ शकुनायददौरामोरम्येहरितशाद्वले ॥ ३३ ॥ यत्तत्प्रेतस्यमर्त्यस्यकथयंतिद्विजातयः ॥ तत्स्वर्गगमनंक्षिप्रंतस्यरामोजजापह ॥३४॥ ततोगोदावरींगत्वानदींनरवरात्मजौ ॥ उदकंचक्रतुस्तस्मैगृध्रराजायतावुभौ ॥३५॥ शास्त्रदृष्टेनविधिनाजलंगृध्रायराघवौ ॥स्नात्वातौगृध्रराजायउदकंचक्रतुस्तदा ॥ ३६ ॥

ब्रह्मविधानतः ॥ स्वपदं च ददौ तस्मै सोपि रामप्रसादतः ॥ हरेः सामान्यरूपेण प्रययौ परमं पदमिति जटायुषं प्रक्रम्य पाद्मे एतेन तिरश्चामपि स्नेहादिना दाहादि युक्तमिति ध्वनितम् सारूप्यमुक्तिलाभश्चोक्तः मया मद्रूपेण सामान्यहरिरूपेण ॥ २९ ॥ ३० ॥ ३१ ॥ स प्रसिद्धमहिमा रामः महारोहीन्महामृगान् रोहिशब्द इकारांतोपि मृगवाची तान्हत्वा पिंडदानार्थं मांसमादायागत्यानु अनंतरं तं द्विजं पक्षिणमुद्दिश्य पिंडदानार्थं शाद्वलं तृणं तस्तार ॥ ३२ ॥ तत्र तन्मांसान्युत्कृत्य पेशी कृत्वा पेशीकृत्य पिंडं कृत्वा शकुनाय ददौ ॥ ३३ ॥ यत्तन्मंत्रजातं प्रेतस्य मर्त्यस्य स्वर्गादिगमनमुद्दिश्य ब्राह्मणाः कथयंति तत्स्वर्गगमनं तद्गमनसाधनं तत्तस्य क्षिप्रं स्वर्गगमनाय रामो जजाप ॥ ३४ ॥ ३५ ॥ उक्तस्य सर्वस्यास्य स्नानपूर्वकत्वं दर्शयितुं पुनराह शास्त्रेति । तत्र पाठक्रमादर्थक्रमस्य बलवत्त्वात्पूर्वं स्नानं तत

उदकदानं ततः पिंडदानमिति क्रमो बोध्यः ॥ ३६ ॥ पुण्यां पुण्यैकलभ्याम् अतएव सुखां सुखैकस्वभावाम् ॥ ३७ ॥ पक्षिसत्तमे तद्विषये पितरीवेत्यर्थः । स्थिरां बुद्धिं तस्मिन्पितृवद्बुद्धिं निधाय सीताधिगमे सीताप्राप्तिसूचके निमित्ते मनः प्रवेश्य तादृशं निमित्तं दृष्ट्वा वनं जग्मतुः ॥ ३८ ॥ जलैंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टषष्टितमः सर्गः ॥ ६८ ॥ ॥ पश्चिमामित्यत्रोक्तेरुत्तरश्लोके दक्षिणामित्युक्तेर्नैर्ऋतीं जग्मतुरिति लभ्यते ॥ १ ॥ अविप्रहतं जनाक्षुण्णम् ॥ २ ॥ गुल्मादिभिः प्रवेष्टितम् अतएव सर्वत आवृतम् अतएव दुर्गं दुष्प्रवेशं गहनं वनरूपं पंथानं प्रतिपेदतुरित्यन्वयः ॥ ३ ॥ वेगेनातिक्रम्य चलित्वा तन्महारण्यं व्यतियातौ व्यतिक्रम्य गतौ ॥ ४ ॥ गम्य गत्वा गहनं दुष्प्रवेशम् क्रौंचारण्यं क्रौंचारण्याख्यं गहनं वनमिति वा ॥ ५ ॥ अनेकमेघानां घनः

सगृध्रराजःकृतवान्यशस्करंसुदुष्करंकर्मरणेनिपातितः ॥ महर्षिकल्पेनचसंस्कृतस्तदाजगामपुण्यांगतिमात्मनःशुभाम् ॥ ३७ ॥ कृतोदकौताव पिपाक्षिसत्तमेस्थिरांचबुद्धिंप्रणिधायजग्मतुः ॥ प्रवेश्यसीताधिगमेततोमनोवनंसुरेन्द्राविवविष्णुवासवौ ॥ ३८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे अष्टषष्टितमः सर्गः ॥ ६८ ॥ कृत्वैवमुदकंतस्मैप्रस्थितौराघवौतदा ॥ अवेक्षंतौवनेसीतांजग्मतुःपश्चिमांदिशम् ॥ १ ॥ तांदिशंदक्षिणांगत्वाशरचापासिधारिणौ ॥ अविप्रहतमैक्ष्वाकौपंथानंप्रतिपेदतुः ॥ २ ॥ गुल्मैर्वृक्षैश्चबहुभिर्लताभिश्चप्रवेष्टितम् ॥ आवृतंसर्वतोदुर्गं गहनंघोरदर्शनम् ॥ ३ ॥ व्यतिक्रम्यतुवेगेनगृहीत्वादक्षिणांदिशम् ॥ सुभीमंतन्महारण्यंव्यतियातौमहाबलौ ॥ ४ ॥ ततःपरंजनस्थानात्रिक्रोशं गम्यराघवौ ॥ क्रौंचारण्यंविविशतुर्गहनंतौमहौजसौ ॥ ५ ॥ नानामेघघनप्रख्यंप्रहृष्टमिवसर्वतः ॥ नानावर्णैःशुभैःपुष्पैर्मृगपक्षिगणैर्युतम् ॥ ६ ॥ दिदृक्षमाणौवैदेहींतद्वनंतौविचिन्वतुः ॥ तत्रतत्रावतिष्ठंतौसीताहरणदुःखितौ ॥७॥ ततःपूर्वेणतौगत्वात्रिक्रोशंभ्रातरौतदा ॥ क्रौंचारण्यमतिक्रम्यमतं गाश्रममंतरे ॥ ८ ॥ दृष्ट्वातुतद्वनंघोरंबहुभीममृगद्विजम् ॥ नानावृक्षसमाकीर्णंसर्वंगहनपादपम् ॥ ९ ॥ ददृशातेगिरौतत्रदरींदशरथात्मजौ ॥ पाताल समगंभीरांतमसानित्यसंवृताम् ॥१०॥ आसाद्यचनरव्याघ्रौदर्यास्तस्याविदूरतः ॥ ददर्शतुर्महारूपांराक्षसींविकृताननाम् ॥ ११ ॥ भयदामल्पसत्त्वा नांबीभत्सांरौद्रदर्शनाम् ॥ लंबोदरींतीक्ष्णदंष्ट्रांकरालींपरुषत्वचम् ॥ १२ ॥ भक्षयंतींमृगान्भीमान्विकटांमुक्तमूर्धजाम् ॥ अवैक्षतांतुतौतत्रभ्रातरौ रामलक्ष्मणौ ॥ १३ ॥ सासमासाद्यतौवीरौव्रजंतंभ्रातुरग्रतः ॥ एहिरंस्यावहेत्युक्त्वासमालंभतलक्ष्मणम् ॥ १४ ॥

समूहस्तत्प्रख्यं तद्वत् श्यामम् सर्वतः प्रहृष्टमिव पुष्पविकासादिना तद्गतजंतुहर्षेण वा तस्य प्रहृष्टत्वव्यपदेशः ॥ ६ ॥ ७ ॥ क्रौंचारण्यमतिक्रम्य तद्वनात्पूर्वेण त्रिक्रोशं गत्वा अंतरे मध्ये मार्गे मतंगाश्रमं ददृशतुः अथ घोरत्वादिविशेषणं तद्वनं मतंगाश्रमवनं दृष्ट्वा तत उच्यमानविशेषणां तत्र गिरौ दरीं ददृशाते ॥ ८ ॥ ९ ॥ १० ॥ तस्याविदूर इति संधिरार्षः । तद्दरीसमीपे इत्यर्थः ॥ ११ ॥ बीभत्सां जुगुप्सिताम् । परुषत्वचं कर्कशत्वचम् । करालीं तुंगशरीराम् । करालो भीषणे तुंगे ॥ १२ ॥ विकटामतिस्थूलाकारां तत्र तत्रास्थानेपि निम्नोन्नतां वा ॥१३॥ भ्रातू रामस्याग्रतो व्रजंतम् एहि रंस्यावहेत्युक्त्वेत्यत्र

इकारलोप आर्षः । समालंभत गृहीतवती ॥ १४ ॥ उपगुत्यांलिंग्य अयोमुखीत्यन्वर्थं नाम अहं ते तव लाभो निध्यादिवल्लाभरूपास्मि त्वं च मे प्रियो भर्तासि ॥ १५ ॥ आयुश्चिरं चिरमायुः ॥ १६ ॥ कर्णनासस्तनमिति समाहारद्वंद्वः ॥ १७ ॥ कर्णनासे इति सप्तमी ॥ १८ ॥ तस्यां गतायां पश्चाद्व्रजंतौ गहनं दुष्प्रवेशं वनं आसेदतुः प्रापतुः ॥ १९ ॥ २० ॥ बाहुर्वामः अनिष्टानि तत्सूचकानि ॥ २१ ॥ सज्ञी भव यत्तो भव संभ्रमं भयम् ॥ २२ ॥ ततः कंचिच्छकुनमप्याह एष इति । वंचुलकः कंठवालः वंजुलक इत्यपि पाठांतरम् । अनेन युद्धमवश्यंभाविजयश्चेत्युभयं सूचितम् ॥ २३ ॥ अन्वेषतोः सीतामिति शेषः ओजसा सामर्थ्येन ॥ २४ ॥ तद्गहनं वनमत्यंतं मातरिश्वना संवेष्टितं व्याप्तमिव जातम् ततस्तस्य वनस्य मध्ये शब्दोभवत् ॥ २५ ॥ तं शब्दं कांक्षमाणः तदुत्पत्तिनिमित्तं कांक्षमाणः ॥ २६ ॥

उवाचचैनंवचनंसौमित्रिमुपगुह्यच ॥ अहंत्वयोमुखीनामलाभस्तेत्वमसिप्रियः ॥ १५ ॥ नाथपर्वतदुर्गेषुनदीनांपुलिनेषुच ॥ आयुश्चिरमिदंवीरत्वंमयासहरंस्यसे ॥ १६ ॥ एवमुक्तस्तुकुपितःखङ्गमुद्धृत्यलक्ष्मणः ॥ कर्णनासस्तनंतस्यानिचकर्तारिसूदनः ॥ १७ ॥ कर्णनासेनिकृत्तेतुविस्वरंविननादसा ॥ यथागतंप्रदुद्रावराक्षसीघोरदर्शना ॥ १८ ॥ तस्यांगतायांगहनंव्रजंतौवनमोजसा ॥ आसेदतुरमित्रघ्नौभ्रातरौरामलक्ष्मणौ ॥ १९ ॥ लक्ष्मणस्तुमहातेजाःसत्यवाञ्छीलवाञ्छुचिः ॥ अब्रवीत्प्रांजलिर्वाक्यंभ्रातरंदीप्ततेजसम् ॥ २० ॥ स्पंदतेमेदृढंबाहुरुद्विग्नमिवमेमनः ॥ प्रायशश्चाप्यनिष्टानिनिमित्तान्युपलक्षये ॥ २१ ॥ तस्मात्सज्ञीभवार्यत्वंकुरुष्ववचनंमम ॥ ममैवहिनिमित्तानिसद्यःशंसंतिसंभ्रमम् ॥ २२ ॥ एषवंचुलकोनामपक्षीपरमदारुणः ॥ आवयोर्विजयंयुद्धेशंसन्निवविनर्दति ॥ २३ ॥ तयोरन्वेषतोरेवंसर्वंतद्वनमोजसा ॥ संजज्ञेविपुलःशब्दःप्रभंजन्निवतद्वनम् ॥ २४ ॥ संवेष्टितमिवात्यर्थंगहनंमातरिश्वना ॥ वनस्यतस्यशब्दोऽभूद्वनमापूरयन्निव ॥ २५ ॥ तंशब्दंकांक्षमाणस्तुरामःखङ्गीसहानुजः ॥ ददर्शसुमहाकायंराक्षसंविपुलोरसम् ॥ २६ ॥ आसेदतुश्चतद्रक्षस्तावुभौप्रमुखेस्थितम् ॥ विवृद्धमशिरोग्रीवंकबंधमुदरेमुखम् ॥ २७ ॥ रोमभिर्निशितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ॥ नीलमेघनिभंरौद्रंमेघस्तनितनिःस्वनम् ॥ २८ ॥ अग्निज्वालानिकाशेनललाटस्थेनदीप्यता ॥ महापक्ष्मेणपिंगेनविपुलेनायतेनच ॥ २९ ॥ एकेनोरसिघोरेणनयनेनसुदर्शिना ॥ महादंष्ट्रोपपन्नंतंलेलिहानंमहामुखम् ॥ ३० ॥ भक्षयंतंमहाघोरानृक्षसिंहमृगद्विजान् ॥ घोरौभुजौविकुर्वाणमुभौयोजनमायतौ ॥ ३१ ॥ कराभ्यांविविधान्गृह्यऋक्षान्पक्षिगणान्मृगान् ॥ आकर्षंतंविकर्षंतमनेकान्मृगयूथपान् ॥ ३२ ॥ स्थितमावृत्यपंथानंतयोर्भ्रात्रोःप्रपन्नयोः ॥ अथतंसमतिक्रम्यक्रोशमात्रंददर्शतुः ॥ ३३ ॥

आसेदतुर्ददृशतुः विवृद्धं विवृद्धाकारम् अशिरोग्रीवं अदृश्यमानशिरोग्रीवम् अतएव कबंधं अन्वर्थतन्नामकम् उदरे मुखम् अमूर्धमस्तका दित्यलुक् ॥ २७ ॥ निशितैरित्यस्य विवरणं तीक्ष्णैरिति । उपलक्षितमिति शेषः रोमभिर्निबिडैस्तीक्ष्णैरिति क्वचित्पाठः ॥ २८ ॥ उच्यमानविशेषणेन ललाटस्थेनैकेन नयनेनोरःप्रदेशांतर्गतशिरस्त्वात् उरसि उरःप्रदेशेंतरुपलभ्यमानेन नयनेनोपलक्षितं मुखं लेलिहानम् महापक्ष्मणेत्यार्षम् ॥ २९ ॥ ३० ॥ विकुर्वाणं विक्षिपंतम् ॥ ३१ ॥ आकर्षंतं इष्टान्मृगानाभिमुख्येन कर्षंतम् अनिष्टान्मृगान्मुंचतम् ॥ ३२ ॥ प्रपन्नयोः पंथानमिति शेषः आवृत्य स्थितं तं ज्ञात्वा तद्भुजवेष्टनं समतिक्रम्य दूरे

स्थितौ तं क्रोशमात्रं ददर्शतुः ॥ ३३ ॥ भुजाभ्यां जंतून्संवृणोतीति भुजसंवृत् तम् संस्थानाद्देहस्थित्या अशिरस्कत्वलक्षणकबंधवास्थितम् ॥ ३४ ॥ सहितौ नैकमपि मुक्तेत्यर्थः ॥ ३५ ॥ तिग्मतेजौ तीक्ष्णतेजसौ तादृशवेषधरावित्यर्थः विवशं प्राप्तौ बलात्कर्षणं प्राप्तौ ॥ ३६ ॥ तत्र तस्यामवस्थायाम् अनाश्रयात् धैर्यस्येति शेषः धैर्यानालंबनादित्यर्थः । तत्र हेतुर्बाल्यं बालबुद्धित्वं शुद्धसत्वाप्रधानत्वम् । अनाश्रयत्वादिति पाठे आश्रयभूतस्य रामस्यापि कबंधभुजावृतत्वादिति भावः ॥ ३७ ॥ ३८ ॥ निर्युक्तः निर्योजितरक्षोबलिः संस्त्वं किंचित्स्ववशमात्मानं परिमुच्यस्व पलायनेनेति शेषः तस्यैव विवरणमुत्तरार्धं मां हीति भूतबलिं महाभूताकाररक्षसे बलिमित्यर्थः ॥ ३९ ॥ अधिगंता प्राप्ता ॥ ४० ॥ ४१ ॥ एतस्मिन्नंतरे इति लक्ष्मणविषादनिवृत्तिफलकरामाश्वासनसमये इति शेषः ॥ ४२ ॥ ४३ ॥ दैवेन दैवगत्या मम

महांतंदारुणंभीमंकवंधंभुजसंवृतम् ॥ कवंधमिवसंस्थानादतिघोरप्रदर्शनम् ॥ ३४ ॥ समहाबाहुरत्यर्थंप्रसार्यविपुलौभुजौ ॥ जग्राहसहितावेवराघवौ पीडयन्बलात् ॥ ३५ ॥ खड्गिनौदृढधन्वानौतिग्मतेजौमहाभुजौ ॥ भ्रातरौविवशंप्राप्तौकृष्यमाणौमहाबलौ ॥ ३६ ॥ तत्रधैर्याच्चशूरस्तुराघवोनैव विव्यथे ॥ बाल्यादनाश्रयाच्चैवलक्ष्मणस्त्वभिविव्यथे ॥ ३७ ॥ उवाचचविषण्णःसन्राघवंराघवानुजः ॥ पश्यमांविवशंवीरराक्षसस्यवशंगतम् ॥ ३८ ॥ मयैकेनतुनिर्युक्तःपरिमुच्यस्वराघव ॥ मांहिभूतबलिंदत्वापलायस्वयथासुखम् ॥ ३९ ॥ अधिगंतासिवैदेहीमाचिरेणेतिमेमतिः ॥ प्रतिलभ्यचककुत्स्थपितृपैतामहींमहीम् ॥ ४० ॥ तत्रमांराम राज्यस्थःस्मर्तुमर्हसिसर्वदा ॥ लक्ष्मणेनैवमुक्तस्तुरामःसौमित्रिमब्रवीत् ॥ ४१ ॥ मास्मत्रासंवृथावीरनहित्वादृग्विषीदति ॥ एतस्मिन्नंतरेक्रूरोभ्रातरौरामलक्ष्मणौ ॥ ४२ ॥ तावुवाचमहाबाहुःकबंधोदानवोत्तमः ॥ कौयुवांवृषभस्कंधौमहाखड्गधनुर्धरौ ॥ ॥ ४३ ॥ घोरंदेशमिमंप्राप्तौदैवेनममचाक्षुषौ ॥ वदतंकार्यमिहवांकिमर्थंचागतौयुवाम् ॥ ४४ ॥ इमंदेशमनुप्राप्तौक्षुधार्तस्येहतिष्ठतः ॥ सबाणचापखड्गौचतीक्ष्णशृंगाविवर्षभौ ॥ ४५ ॥ मांतूर्णमनुसंप्राप्तौदुर्लभंजीवितंहिवाम् ॥ तस्यतद्वचनंश्रुत्वाकबंधस्यदुरात्मनः ॥ ४६ ॥ उवाचलक्ष्मणं रामोमुखेनपरिशुष्यता ॥ कृच्छ्रात्कृच्छ्रतरंप्राप्यदारुणंसत्यविक्रम ॥ ४७ ॥ व्यसनंजीवितांतायप्राप्तमप्राप्यतांप्रियाम् ॥ कालस्यसुमहद्वीर्यंसर्वभूतेषुलक्ष्मण ॥ ४८ ॥ त्वांचमांचनरव्याघ्रव्यसनैःपश्यमोहितौ ॥ नहिभारोऽस्तिदैवस्यसर्वभूतेषुलक्ष्मण ॥ ४९ ॥ शूराश्चबलवंतश्चकृतास्त्राश्चरणाजिरे ॥ कालाभिपन्नाःसीदंतियथावालुकसेतवः ॥ ५० ॥

चाक्षुषौ चक्षुर्गोचरौ ॥ ४४ ॥ एवं कार्यादिकं पृष्ट्वा तदुपेक्ष्य स्वप्रयोजनं संपन्नमित्याह इमं देशमिति । इह तिष्ठतः क्षुधार्तस्य मम भाग्यादिमं देशमनुप्राप्तौ ॥ ४५ ॥ ततः किं तत्राह दुर्लभमिति ॥ ४६ ॥ मुखेन परिशुष्यतोपलक्षितं लक्ष्मणमुवाच हे सत्यविक्रम कृच्छ्रात्कष्टात्कष्टतरं राज्यभ्रंशवनवासप्रियापहारादि प्राप्य स्थितयोरावयोस्तां प्रियामप्राप्यैव जीवितांतायेदं व्यसनं प्राप्तम् यदेवमतः सर्वेष्वपि भूतेषु कालस्य वीर्यं सुमहत् अनर्गलप्रचारमस्तीति शेषः ॥ ४७ ॥ ४८ ॥ कुतो यतस्त्वां चेति महाबलपराक्रमावपि व्यसनैर्दुःखैर्मोहितौ कालः करोतीति पश्य उक्तार्थस्यैव प्रपंचो नहीति नातीति पाठांतरम् ॥ ४९ ॥ ५० ॥

उदग्रविक्रमः उत्कटपराक्रमो रामः सौमित्रिमवेक्ष्य दीनमिति शेषः स्वां मतिमात्मनात्मवैभवेन स्थिरामकरोत् ईषदपि विषादं न प्राप्तवानित्यर्थः । अत्र लक्ष्मणस्यापि लोकव्यवहारनाट्यमेवे त्यन्ये ॥ ५१ ॥ केऽमंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे एकोनसप्ततितमः सर्गः ॥ ६९ ॥ ॥ बाहुपाशपरिक्षिप्तौ बाहुभ्यां पाशाकारेण परितो व्याप्तौ ॥ १ ॥ क्षुधार्थं मां दृष्ट्वा भीतौ नु किं तिष्ठतम् यतो मे आहारार्थं संदिष्टावतो न जीवनसंभावनेत्यर्थः ॥ २ ॥ ३ ॥ पुरा आदत्ते आदास्यतीत्यर्थः ॥ ४ ॥ भुजमात्रेण विक्रमो यस्य नत्वायुधेनेत्यर्थः । अतिजितं सर्वथा पराजितम् ॥ ५ ॥ अस्य बाहुच्छेद एव युक्तो नतु प्राणवियोजनमित्याह निश्चेष्टानामिति । शस्त्रादिभिर्विक्रमहीनानाम् जगतीपतेः क्षत्रियस्य क्रतुमध्यं प्राप्तानां पशूनां वध इव स यथा स्वर्गफलदोऽपि शास्त्रवि

इतिब्रुवाणोदृढसत्यविक्रमोमहायशादाशरथिःप्रतापवान् ॥ अवेक्ष्यसौमित्रिमुदग्रविक्रमःस्थिरांतदास्वांमतिमात्मनाकरोत् ॥ ५१ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअरण्यकांडेएकोनसप्ततितमःसर्गः ॥ ६९ ॥ तौतुतत्रस्थितौदृष्ट्वाभ्रातरौरामलक्ष्मणौ ॥ बाहुपाशपरिक्षिप्तौकबंधोवाक्यमब्रवीत् ॥ १ ॥ तिष्ठतःकिंनुमांदृष्ट्वाक्षुधार्तंक्षत्रियर्षभौ ॥ आहारार्थंतुसंदिष्टौदैवेनहतचेतनौ ॥ २ ॥ तच्छ्रुत्वालक्ष्मणोवाक्यंप्राप्तकालंहितंतदा ॥ उवाचार्तिंसमापन्नोविक्रमेकृतनिश्चयः ॥३॥ त्वांचमांचपुरातूर्णमादत्तेराक्षसाधमः ॥ तस्मादसिभ्यामस्याशुबाहूछिंदावहेगुरू ॥ ४ ॥ भीषणोऽयंमहाकायोराक्षसोभुजविक्रमः ॥ लोकंह्यतिजितंकृत्वाह्यावांहंतुमिहेच्छति ॥ ५ ॥ निश्चेष्टानांवधोराजन्कुत्सितोजगतीपतेः ॥ क्रतुमध्योपनीतानांपशूनामिवराघव ॥६॥ एतत्संजल्पितंश्रुत्वातयोःक्रुद्धस्तुराक्षसः ॥ विदार्यास्यंततोरौद्रंतौभक्षयितुमारभत् ॥ ७ ॥ ततस्तौदेशकालज्ञौखड्गाभ्यामेवराघवौ ॥ अच्छिंदतांसुसंहृष्टौबाहूतस्यांसदेशयोः ॥ ८ ॥ दक्षिणोदक्षिणंबाहुमसक्तमसिनाततः ॥ चिच्छेदरामोवेगेनसव्यंवीरस्तुलक्ष्मणः ॥ ९ ॥ सपपातमहाबाहुश्छिन्नबाहुर्महास्वनः ॥ खंचगांचदिशश्चैवनादयञ्जलदोयथा ॥ १० ॥ सनिकृत्तौभुजौदृष्ट्वाशोणितौघपरिप्लुतः ॥ दीनःपप्रच्छतौवीरौकौयुवामितिदानवः ॥११॥ इतितस्यब्रुवाणस्यलक्ष्मणःशुभलक्षणः ॥ शशंसतस्यकाकुत्स्थंकबंधस्यमहाबलः ॥ १२ ॥ अयमिक्ष्वाकुदायादोरामोनामजनैःश्रुतः ॥ तस्यैवावरजंविद्धिभ्रातरंमांचलक्ष्मणम् ॥ १३ ॥ मात्राप्रतिहतेराज्येरामःप्रव्राजितोवनम् ॥ मयासहचरत्येषभार्ययाचमहद्वनम् ॥ १४ ॥ अस्यदेवप्रभावस्यवसतोविजनेवने ॥ रक्षसापहृताभार्यायामिच्छंताविहागतौ ॥ १५ ॥

हितोऽपि कुत्सितः सांख्यपातंजलाद्युक्तरीत्या अधर्मजनकत्वाद् लोकदृष्ट्या च कुत्सितः एतेन तद्वधस्यापीषत्पापफलदता सूचिता । केचित्तु क्रतुमध्यापनीतानामिति पाठं श्रद्धाजाड्येन कल्पयित्वा क्रतुमध्यादन्यत्र नीतानां वधो यथा कुत्सित इति व्याचक्षते ॥ ६ ॥ तयोरंतत्संजल्पितं श्रुत्वेति संबंधः भक्षयितुमारभत् हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥ सुसंहृष्टौ कदलीकांडच्छेदेनेव तच्छेदन हस्तसुखलाभात् ॥ ८ ॥ दक्षिणः समर्थः दक्षिणपार्श्वस्थो वा ॥ ९ ॥ गां भूमिम् ॥ १० ॥ कौ युवामिति पप्रच्छ पूर्वमप्राप्तोत्तरत्वात्पुनः प्रश्नः ॥ ११ ॥ १२ ॥ इक्ष्वाकुदायादः दशरथपुत्रः ॥ १३ ॥ १४ ॥ यामिच्छंतौ

यामन्वेषयंतौ ॥ १५ ॥ विचेष्टसे चेष्टमानस्तिष्ठसीत्यर्थः ॥ १६ ॥ भीतः शापमोक्षकालमत्यभिज्ञानाव् तदिंद्रवचनं वक्ष्यमाणम् ॥ १७ ॥ बाह्वोर्बंधनं ययोरंसदेशयोस्तौ बाहुबंधनावंसदेशौ ॥ १८ ॥ यथाऽविनयाव् यादृशाविनयात्प्राप्तं तच्छृण्वित्यन्वयः ॥ १९ ॥ धर्षमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे सप्ततितमः सर्गः ॥ ७० ॥ ॥ अचिंत्यं अचिंत्यवैभवम् ॥ १ ॥ तदेवाह यथेति । इदं रूपं रक्षोरूपं वैभवेन कृत्वा ॥ २ ॥ ऋषींस्त्रासयामीत्यन्वयः ॥ ३ ॥ एवमुक्तः ॥ ४ ॥ एवंशब्दार्थ एतदेवेति । एतदेव रूपं नृशंसं क्रूरं विगर्हितं चास्त्वित्यवदत् ॥ ५ ॥ अभिशापकृतस्य मत्कर्तृकत्वत्मधर्षणे त्वया कृतस्यास्य शापस्यांतो भवत्विति याचितः । तेनैवंयाचितेन तद्वच आह यदेति । तदा त्वं विपुलमुत्तमं श्रिया विराजितं रूपं प्राप्स्यस

त्वंतुकोवाकिमर्थंवाकबंधसदृशोवने ॥ आस्येनोरसिदीप्तेनभग्नजंघोविचेष्टसे ॥ १६ ॥ एवमुक्तःकबंधस्तुलक्ष्मणेनोत्तरंवचः ॥ उवाचवचनंप्रीतस्तदिंद्रवचनंस्मरन् ॥ १७ ॥ स्वागतंवांनरव्याघ्रौदिष्ट्यापश्यामिवामहम् ॥ दिष्ट्याचेमौनिकृत्तौमेयुवाभ्यांबाहुबंधनौ ॥ १८ ॥ विरूपंयच्चमेरूपंप्राप्तंह्यविनयाद्यथा ॥ तन्मेशृणुनरव्याघ्रतत्त्वतःशंसतस्तव ॥ १९ ॥ इत्यार्षे श्रीम० वाल्मी० आदि० अरण्यकांडे सप्ततितमः सर्गः ॥ ७० ॥

पुरारामममहाबाहोमहाबलपराक्रमम् ॥ रूपमासीन्ममाचिंत्यंत्रिषुलोकेषुविश्रुतम् ॥ १ ॥ यथासूर्यस्यसोमस्यशक्रस्यचयथावपुः ॥ सोऽहंरूपमिदंकृत्वालोकवित्रासनंमहत् ॥ २ ॥ ऋषीन्वनगतान्रामत्रासयामिततस्ततः ॥ ततःस्थूलशिरानाममहर्षिःकोपितोमया ॥ ३ ॥ सचिन्वन्विविधंवन्यंरूपेणानेनधर्षितः ॥ तेनाहमुक्तःप्रेक्ष्यैवंघोरशापाभिधायिना ॥ ४ ॥ एतदेवंनृशंसंतेरूपमस्तुविगर्हितम् ॥ समयायाचितःक्रुद्धःशापस्यांतोभवेदिति ॥ ५ ॥ अभिशापकृतस्येतितेनेदंभाषितंवचः ॥ यदाछित्त्वाभुजौरामस्त्वांदहेद्विजनेवने ॥ ६ ॥ तदात्वंप्राप्स्यसेरूपंस्वमेवविपुलंशुभम् ॥ श्रियाविराजितंपुत्रदनोस्त्वंविद्धिलक्ष्मण ॥ ७ ॥ इंद्रशापादिदंरूपंप्राप्तमेवंरणाजिरे ॥ अहंहितपसोग्रेणपितामहमतोषयम् ॥ ८ ॥ दीर्घमायुःसमेप्रादात्ततोमांविभ्रमोऽस्पृशत् ॥ दीर्घमायुर्मयाप्राप्तंकिंमांशक्रःकरिष्यति ॥ ९ ॥ इत्येवंबुद्धिमास्थायरणेशक्रमधर्षयम् ॥ तस्यबाहुप्रमुक्तेनवज्रेणशतपर्वणा ॥ १० ॥ सक्थिनीचशिरश्चैवशरीरेसंप्रवेशितम् ॥ समयायाच्यमानःसन्नानयद्यमसादनम् ॥ ११ ॥ पितामहवचःसत्यंतदस्त्वितिममाब्रवीत् ॥ अनाहारःकथंशक्तोभग्नसक्थिशिरोमुखः ॥ १२ ॥ वज्रिणाभिहतःकालंसुदीर्घमपिजीवितुम् ॥ सएवमुक्तःशक्रोमेबाहूयोजनमायतौ ॥ १३ ॥

इति तेन भाषितमिति संबंधः । एवं वृतं मां दनोः पुत्रं विद्धीत्यन्वयः । श्रिया विराजितं पुत्रं दनुं त्वं विद्धि लक्ष्मणेति पाठांतरम् । तदा श्रियाः श्रीनाम्नो दानवस्य पुत्रं दनुनामानमित्यर्थः ॥ ६ ॥ ७ ॥ ननु कुत्सितरूपत्वे शापेऽपि कथं कबंधरूपताप्राप्तिस्तत्राह इंद्रेति । तच्छापबीजमाह अहमिति । ऋषिशापतो घोररूपप्राप्त्यनंतरमुग्रेण तपसा पितामहमतोषयम् स्वकुलारातींद्रादिभियेनेति शेषः ॥ ८ ॥ विभ्रमो गर्वः तमेवाह दीर्घमिति ॥ ९ ॥ शतपर्वणा शतधारेण ॥ १० ॥ सक्थिनी नाभ्यधोभागोपलक्षणम् शरीरे शरीरमध्यस्थे उदरभागे एवंभूतेनोर्ध्वाधरव्यवहाररहितेन मया मरणं याच्यमानोपि तन्नाकरोत् ॥ ११ ॥ किमिति नाकरोत्तत्राह पितामहेति । तद्वचो दीर्घायुर्दानरूपम् ॥ १२ ॥ वज्रिणा त्वयाभिहतो जीवितुं कथं शक्त इत्यन्वयः । एवमुक्तः अनाहारस्याक्रियस्य कथं जीवनमित्युक्तः ॥ १३ ॥

वनेचरान्वनेसंचारवतः ॥ १४ ॥ १५॥१६ ॥ सर्वस्य ग्रहणं साधु रोचये न किंचिदप्यभक्ष्यबुद्ध्या त्यजामीत्यर्थः । ऋषेरिंद्रस्य च वाक्यविश्वासादवश्यं रामो मम हस्ते ग्रहणमेष्यतीति मन्ये मन्यमानास्तिष्ठामि ॥ १७ ॥ मम देहन्यासे देहत्यागे कृतश्रमः कृतयत्नो रामो मम हस्ते ग्रहणमेष्यतीतीमां बुद्धिं पुरस्कृत्य सर्वस्य ग्रहणं साधु रोचये अयमेव रामो भवेदिति बुद्ध्या किमपि न त्यजामीत्याशयः ॥ १८ ॥ सर्वथा दाहोत्तरं तव बुद्धिं मित्रं चोपदेक्ष्यामि ॥ १९ ॥ दनुना दनुनाम्ना ॥ २० ॥ वह्निसंस्कारं करिष्यामि मम साहाय्यं कुर्वित्याशयेनाह इदमिति ॥२१ ॥ यथासुखं हृतेत्यन्वयः नाममात्रम् आप्तस्य जटायोर्वाक्यादिति भावः ॥ २२ ॥ २३ ॥ उपकारेण परोपकारेण वर्ततामस्माकं सदृशमुचितं कारुण्यं सीताहर्तृदेशादिकथनरूपमुपकारं कर्तुमर्हसि । दाहविषये त्वया चिंता न कार्या इत्याह काष्ठानीति ॥ २४ ॥

तदाचास्यंचमेकुक्षौतीक्ष्णदंष्ट्रमकल्पयत् ॥ सोऽहंभुजाभ्यांदीर्घाभ्यांसंक्षिप्यास्मिन्वनेचरान् ॥ १४ ॥ सिंहद्वीपिमृगव्याघ्रान्भक्षयामिसमंततः ॥ सतुमामब्रवीदिंद्रोयदारामःसलक्ष्मणः ॥ १५ ॥ छेत्स्यतेसमरेबाहूतदास्वर्गंगमिष्यसि ॥ अनेनवपुषाताततवनेऽस्मिन्राजसत्तम ॥ १६ ॥ यद्यत्पश्यामिसर्वस्यग्रहणंसाधुरोचये ॥ अवश्यंग्रहणंरामोमन्येऽहंसमुपैष्यति ॥ १७ ॥ इमांबुद्धिंपुरस्कृत्यदेहन्यासकृतश्रमः ॥ सत्वंरामोऽसिभद्रंतेनाहमन्येनराघव ॥ १८ ॥ शक्योहंतुंयथातत्त्वमेवमुक्तंमहर्षिणा ॥ अहंहिमतिसाचिव्यंकरिष्यामिनरर्षभ॥१९॥मित्रंचैवोपदेक्ष्यामियुवाभ्यांसंस्कृतोऽग्निना ॥ एवमुक्तस्तुधर्मात्मादनुनातेनराघवः ॥ २० ॥ इदंजगादवचनंलक्ष्मणस्यचपश्यतः ॥ रावणेनहृताभार्यासीताममयशस्विनी ॥ २१ ॥ निष्क्रांतस्यजनस्थानात्सहभ्रात्रायथासुखम् ॥ नाममात्रंतुजानामिनरूपंतस्यरक्षसः ॥ २२ ॥ निवासंवाप्रभावंवावयंतस्यनविद्महे ॥ शोकार्तानामनाथानामेवंविपरिधावताम् ॥ २३ ॥ कारुण्यंसदृशंकर्तुमुपकारेणवर्तताम् ॥ काष्ठान्यानीयभग्नानिकालेशुष्काणिकुंजरैः ॥ २४ ॥ धक्ष्यामस्त्वांवयंवीरश्वभ्रेमहतिकल्पिते ॥ सत्वंसीतांसमाचक्ष्वयेनवायत्रवाहृता ॥२५॥ कुरुकल्याणमत्यर्थंयदिजानासितत्त्वतः ॥ एवमुक्तस्तुरामेणवाक्यंदनुरनुत्तमम्॥२६॥ प्रोवाचकुशलोवक्तावक्तारमपिराघवम् ॥ दिव्यमस्तिनमेज्ञानंनाभिजानामिमैथिलीम् ॥ २७ ॥ यस्तांवक्ष्यतितंवक्ष्येदग्धःस्वंरूपमास्थितः ॥ योभिजानातितद्रक्षस्तद्वक्ष्येरामतत्परम् ॥ २८ ॥ अदग्धस्यहिविज्ञातुंशक्तिरस्तिनमेप्रभो ॥ राक्षसंतुमहावीर्यंसीतायेनहृतातव ॥ २९ ॥ विज्ञानंहिमहद्भ्रष्टंशापदोषेणराघव ॥ स्वकृतेनमयाप्राप्तंरूपंलोकविगर्हितम् ॥ ३० ॥ किंतुयावन्नयात्यस्तंसविताश्रांतवाहनः ॥ तावन्मामवटेक्षिप्त्वादहरामयथाविधि ॥ ३१ ॥ दग्धस्त्वयाहमवटेन्यायेनरघुनंदन ॥ वक्ष्यामितंमहावीरयस्तंवेत्स्यातिराक्षसम् ॥३२॥ तेनसख्यंचकर्तव्यंन्याय्यवृत्तेनराघव॥ कल्पयिष्यतिते वीरसाहाय्यंलघुविक्रम ॥ ३३ ॥ नहितस्यास्त्यविज्ञातंत्रिषुलोकेषुराघव ॥ सर्वान्परिवृतोलोकान्पुरावैकारणांतरे ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वा० आ० अरण्यकांडे एकसप्ततितमः सर्गः ॥ ७१ ॥

कल्पिते इहैव कृते येन कर्त्रा यत्र देशे ॥ २५ ॥ कल्याणं तत्त्वाख्यानरूपं दाह एव मे दिव्यज्ञानसाधनं तत्कुरु ततः परं सर्वं वक्ष्यामीत्याह एवमिति ॥ २६ ॥ कुशलो वक्ता वक्तृताचातुर्यवान् वक्तारं प्रशस्तवक्तारम् ॥ २७ ॥ यस्तां सर्वेति शेषः तत्परं दाहात्परम् ॥ २८ ॥ २९ ॥ विज्ञानमतींद्रियविषयं स्वकृतेनानुचितकर्मणा ॥ ३० ॥ ३१ ॥ ३२ ॥ तेन यो राक्षसं ज्ञास्यति तेन न्याय्यवृत्तेन नीतिसच्चारित्रेण ॥ ३३ ॥ कारणांतरे कस्मिंश्चिन्निमित्ते जाते सतीत्यर्थः ॥ ३४ ॥वर्तमानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

प्रदरं गर्तमासाद्य कबंधं प्रापय्य सर्वतः काष्ठानि दत्वा तत्राग्निं ददतुः ॥ १ ॥ २ ॥ मेदसा पूर्णस्येति शेषः मेदःपूर्णत्वान्मंददाहः दहद् अदहद् ॥ ३ ॥ अरजे निर्मले ॥ ४ ॥ चिताया उत्पपात भास्वरः कांतिमान् सर्वेषु प्रत्यंगेषु करचरणादिषु भूषणानि यस्य ॥ ५ ॥ हंसयुक्ते रामकृतसंस्कारप्रभावेण पूर्वतपःप्रभावेण चैवंभूतं विमानं प्राप्तः ॥ ६ ॥ तत्त्वेन परमार्थत उच्यमानमिति शेषः ॥ ७ ॥ अथ प्रतिज्ञात मुपायमाह राम षडिति । षड्युक्तयः संधिविग्रहयानासनद्वैधीभावसमाश्रयाख्या लोके संति याभिर्युक्तिभिः सर्वं वस्तुजातं राज्ञा विमृश्यते विमृश्य प्राप्यते तत्र दशांतेन दुर्दशापरिपाककालेन यः परिमृष्टः स दशा भागेन दशाभागं दुर्दशापरिपाकावस्थां प्राप्तेन सेव्यते इति नीतिः । तस्मात्त्वयांत्य उपायः समाश्रयः कार्य इत्यर्थः । परिभ्रष्ट इतिपाठे दशांतेन दुर्दशापरिपाककालेनार्थाद्भ्रंशित इत्यर्थः ॥ ८ ॥ नन्वहं दशाभागं

एवमुक्तौतुतौवीरौकबंधेननरेश्वरौ ॥ गिरिप्रदरमासाद्यपावकंविससर्जतुः ॥ १ ॥ लक्ष्मणस्तुमहोल्काभिर्ज्वलिताभिःसमंततः ॥ चितामादीपयामाससाप्रजज्वालसर्वतः ॥ २ ॥ तच्छरीरंकबंधस्यघृतापिंडोपमंमहत् ॥ मेदसापच्यमानस्यमंदंदहतपावकः ॥ ३ ॥ सविधूयचितामाशुविधूमोऽग्निरिवोत्थितः ॥ अरजेवाससीबिभ्रन्माल्यंदिव्यंमहाबलः ॥४॥ ततश्चितायावेगेनभास्वरोविरजांबरः ॥ उत्पपाताशुसंहृष्टःसर्वप्रत्यंगभूषणः ॥ ॥ ५ ॥ विमानेभास्वरेतिष्ठन्हंसयुक्तेयशस्करे ॥ प्रभयाचमहातेजादिशोदशविराजयन् ॥ ६ ॥ सोंतरिक्षगतोवाक्यंकबंधोराममब्रवीत् ॥ शृणुराघवतत्त्वेनयथासीतामवाप्स्यसि ॥ ७ ॥ रामषड्युक्तयोलोकेयाभिःसर्वंविमृश्यते ॥ परिमृष्टोदशांतेनदशाभागेनसेव्यते ॥ ८ ॥ दशाभागगतोहीनस्त्वंहिरामसलक्ष्मणः ॥ यत्कृतेव्यसनंप्राप्तंत्वयादारप्रधर्षणम् ॥ ९ ॥ तदवश्यंत्वयाकार्यःससुहृत्सुहृदांवर ॥ अकृत्वानहितेसिद्धिमहंपश्यामिचिंतयन् ॥ ॥ १० ॥ श्रूयतांरामवक्ष्यामिसुग्रीवोनामवानरः ॥ भ्रात्रानिरस्तःक्रुद्धेनवालिनाशक्रसूनुना ॥ ११ ॥ ऋष्यमूकेगिरिवरेपंपापर्यंतशोभिते ॥ निवसत्यात्मवान्वीरश्चतुर्भिःसहवानरैः ॥ १२ ॥ वानरेंद्रोमहावीर्यस्तेजोवानमितप्रभः ॥ सत्यसंधोविनीतश्चधृतिमान्मतिमान्महान् ॥ १३ ॥ दक्षःप्रगल्भोद्युतिमान्महाबलपराक्रमः ॥ भ्रात्राविवासितोवीरराज्यहेतोर्महात्मना ॥ १४ ॥ सतेसहायोमित्रंचसीतायाःपरिमार्गणे ॥ भविष्यतिहितेराममाचशोकेमनःकृथाः ॥ १५ ॥ भवितव्यंहितच्चापिनतच्छक्यमिहान्यथा ॥ कर्तुमिक्ष्वाकुशार्दूलकालोहिदुरतिक्रमः ॥ १६ ॥ गच्छशीघ्रमितोवीरसुग्रीवंतंमहाबलम् ॥ वयस्यंतंकुरुक्षिप्रमितोगत्वाद्यराघव ॥ १७ ॥

प्राप्त इति ॥ कथं त्वया निर्णीतं तत्राह दशाभागगत इति । यतस्त्वं सलक्ष्मण एव हीनो राज्यादिनेत्यर्थः यत्कृते यद्दशाभागनिमित्तं त्वया दारप्रधर्षणं प्राप्तं तेन त्वं ज्ञायते दुर्दशाभोगकालं प्राप्त इति ॥९॥ यदेव मतस्त्वया स सुहृद्दशाभागं प्राप्तः सुहृत्कार्यः । तत्करणावश्यकत्वे हेतुमाह अकृत्वेति ॥ १० ॥ तादृशः सुहृत्क इत्यत आह श्रूयतामिति ॥ ११ ॥ पंपापर्यंतेन पंपाप्रदेशेन शोभिते चतुर्भिः मंत्रिभिरिति शेषः ॥ १२ ॥ तेजोवान्प्रतापी अमितप्रभः अपरिच्छिन्नकांतिः ॥ १३ ॥ द्युतिमान् तद्गुणानां वास्तवत्वबोधनायोक्तस्यापि कस्यचित्पुनः कथनम् ॥ १४ ॥ हे राम ते भविष्यति हिर्निश्चये ॥ १५ ॥ यद्भवितव्यं राज्यभ्रंशदारापहारादिदुःखं तदन्यथा कर्तुं केनापि न शक्यमिति । अतः शोकेन मनो मा कृथा इति शेषः । ते इत्यादीनां पुनरुक्तिस्तु रामदुःखेन तस्यापि दुःखितचित्तत्वान्न दोषाय ॥१६॥ तं गच्छ तं वयस्यं

कुर्वित्यन्वयः ॥ १७ ॥ परस्परं द्रोहपरिहारायाग्निसाक्षिकं सख्यं कार्यमित्याह अद्रोहायेति ॥ १८ ॥ तस्य तिर्यक्त्वात्तदवमतिः कुतो न कार्येत्यत्र हेतुमाह कृतज्ञ इति । ननु स किमर्थं मया सह मैत्रीं कुर्यादत आह सहायार्थीति । नन्वावाभ्यामशक्ताभ्यां कस्तस्य सहायार्थ इत्यत आह शक्तौ हीति । तस्य चिकीर्षितं कार्यं कर्तुं युवां शक्तावित्यन्वयः ॥ १९ ॥ ननु तस्य तिरश्चोऽस्मत्साहाय्ये का शक्तिस्तत्राह कृतार्थ इति । स कृतार्थः त्वया कृतप्रयोजनः करिष्यमाणप्रयोजनोपि तव कार्यं सीतान्वेषणादिरूपं स करिष्यत्येव तथासामर्थ्यं प्रयोजकं तस्य कुलीनत्वमाह स ऋक्षेति । पुत्रः क्षेत्रज इत्यर्थः ॥ २० ॥ तदेवाह भास्करस्यौरस इति । कृतकिल्बिषः कृतवैरोऽतएव वालिनः शंकितोऽटति तमग्निसंनिधावायुधं संनिधाय संस्थाप्य तेन सत्येन च तं कपिं वयस्यं कुरु । हि यतः स रक्षसां स्थानानि सर्वाणि जानाति ॥ २१ ॥

अद्रोहायसमागम्यदीप्यमानेविभावसौ ॥ नचतेसोऽवमंतव्यःसुग्रीवोवानराधिपः ॥ १८ ॥ कृतज्ञःकामरूपीचसहायार्थीचवीर्यवान् ॥ शक्तौह्यद्ययुवांकर्तुंकार्यंयस्यचिकीर्षितम् ॥ १९ ॥ कृतार्थोवाऽकृतार्थोवातवकृत्यंकरिष्यति ॥ सऋक्षरजसःपुत्रःपंपामटतिशंकितः ॥ २० ॥ भास्करस्यौरसःपुत्रोवालिनाकृतकिल्बिषः ॥ संनिधायायुधंक्षिप्रमृष्यमूकालयंकपिम् ॥ २१ ॥ कुरुराघवसत्येनवयस्यंवनचारिणम् ॥ सहिस्थानानिकात्स्न्येंनसर्वाणिकपिकुंजरः ॥ २२ ॥ नरमांसाशिनांलोकेनैपुण्यादधिगच्छति ॥ नतस्याविदितंलोकेकिंचिदस्तिहिराघव ॥ २३ ॥ यावत्सूर्यःप्रतपति सहस्रांशुःपरंतप ॥ सनदीर्विपुलाञ्छैलान्गिरिदुर्गाणिकंदरान् ॥ २४ ॥ अन्विष्यवानरैःसार्धंपत्नींतेधिगमिष्यति ॥ वानरांश्चमहाकायान्प्रेषयिष्यतिराघव ॥ २५ ॥ दिशोविचेतुंतांसतींत्वद्वियोगेनशोचतीम् ॥ अन्वेष्यतिवरारोहांमैथिलींरावणालये ॥ २६ ॥ समेरुशृंगाग्रगतामनिंदितांप्रविश्यपातालतलेपिवाश्रिताम् ॥ प्लवंगमानामृषभस्तवप्रियांनिहत्यरक्षांसिपुनःप्रदास्यति ॥ २७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मी० आदि० अरण्यकांडे द्विसप्ततितमः सर्गः ॥ ७२ ॥ दर्शयित्वातुरामायसीतायाःपरिमार्गणे ॥ वाक्यमन्वर्थमर्थज्ञःकबंधःपुनरब्रवीत् ॥ १ ॥ एषरामशिवःपंथायत्रैतेपुष्पिताद्रुमाः ॥ प्रतीचींदिशमाश्रित्यप्रकाशंतेमनोरमाः ॥ २ ॥ जंबूप्रियालपनसान्यग्रोधप्लक्षतिंदुकाः ॥ अश्वत्थाःकर्णिकाराश्चचूताश्चान्येचपादपाः ॥ ३ ॥ धन्वनानागवृक्षाश्चतिलकानक्तमालकाः ॥ नीलाशोकाःकदंबाश्चकरवीराश्चपुष्पिताः ॥ ४ ॥ अग्निमुख्याअशोकाश्चसुरक्ताःपारिभद्रकाः ॥ तानारुह्याथवाभूमौपातयित्वाचतान्बलात् ॥ ५ ॥

॥ २२ ॥ २३ ॥ २४ ॥ अधिगमिष्यति ज्ञास्यति ॥ २५ ॥ रावणालये शोचंतीमिति संबंधः । अनेन ज्ञायते सर्वदिक्षु रावणालयाः संति तत्र किंदिक्स्थरावणालये इति ज्ञातुं सर्वदिग्विचयनम् ॥ २६ ॥ अनिन्दितां निर्मलाम् अनेन सीताशुद्धत्वं ज्ञापितम् ॥ २७ ॥ संरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे द्विसप्ततितमः सर्गः ॥ ७२ ॥ ॥ परिमार्गणे उपायं दर्शयित्वा पुनर्वाक्यमब्रवीत् ॥ १ ॥ यत्र प्रकाशंते तत्र गंतुमेष शिवः अदुष्टः पंथाः ॥ २ ॥ एते के तत्राह जंबू इत्यादि ॥ ३ ॥ धन्वना धवाः नागवृक्षो नागकेसरः ॥ ४ ॥ अग्निमुख्योऽरुष्करः रक्ता रक्तचंदनाः पारिभद्र

को मंदारः बलात्तान् वृक्षान् भूमौ पातयित्वा शाखां धृत्वा भूमिपर्यंतं संनाम्य ॥ ५ ॥ ६ ॥ अन्यद्गमिष्यथेति शेषः । उत्तरकुरुवच्च ॥ ७ ॥ विटपाः शाखाः ॥ ८ ॥ ९ ॥ चक्रमंतौ चंक्रम्यमाणा ॥ १० ॥ तीर्थमवतारमार्गः अविभ्रंशां शैवलासंबंधेन पादभ्रंशाहेतुम् ॥ ११ ॥ संजातवालूकामिति दीर्घ आर्षः । प्लवा मंडूकाः ॥ १२ ॥ वधस्याकोविदाः वधमजानानाः ॥ १३ ॥ द्विजान्पक्षिणः रोहिता मत्स्यविशेषाः चक्रतुंडा नलमीनाश्च त एव ॥: १४ ॥ अयस्तप्तान् शूलाग्रे पकान् अकृशा अनेके च कंटका येषां विद्यन्ते तान् ॥ १५ ॥ पुष्पसंचये पद्मादिपुष्पसमूहे वर्तमानम् ॥ १६ ॥ अतएव

फलान्यमृतकल्पानिभक्षयित्वागमिष्यथ ॥ तदतिक्रम्यकाकुत्स्थवनंपुष्पितपादपम् ॥ ६ ॥ नंदनप्रतिमंत्वन्यत्कुरवस्तूत्तराइव ॥ सर्वकालफलायत्र पादपामधुरस्रवाः ॥ ७ ॥ सर्वेचऋतवस्तत्रवनेचैत्ररथेयथा ॥ फलभारनतास्तत्रमहाविटपधारिणः ॥ ८ ॥ शोभंतेसर्वतस्तत्रमेघपर्वतसंनिभाः ॥ तानारुह्याथवाभूमौपातयित्वाथवासुखम् ॥ ९ ॥ फलान्यमृतकल्पानिलक्ष्मणस्तेप्रदास्यति ॥ चंक्रमंतौवरान्शैलान्शैलाच्छैलंवनाद्वनम् ॥ १० ॥ ततःपुष्करिणींवीरौपंपांनामगमिष्यथः ॥ अशर्करामविभ्रंशांसमतीर्थामशैवलाम् ॥ ११ ॥ रामसंजातवालूकांकमलोत्पलशोभिताम् ॥ तत्रहंसाः प्लवाःक्रौंचाःकुरराश्चैवराघव ॥ १२ ॥ वल्गुस्वराणिकूजंतिपंपासलिलगोचराः ॥ नोद्विजंतेनरान्दृष्ट्वावधस्याकोविदाःपुरा ॥ १३ ॥ घृतपिंडोपमान्स्थूलांस्तान्द्विजान्भक्षयिष्यथ ॥ रोहितांश्चक्रतुंडांश्चनलमीनांश्चराघव ॥ १४ ॥ पंपायामिषुभिर्मत्स्यांस्तत्ररामवरान्हतान् ॥ निस्त्वक्पक्षानयस्तप्तानकृशानेककंटकान् ॥ १५ ॥ तवभक्त्यासमायुक्तोलक्ष्मणःसंप्रदास्यति ॥ भृशंतान्खादतोमत्स्यान्पंपायाःपुष्पसंचये ॥ १६ ॥ पद्मगंधिशिवंवारिसुखशीतमनामयम् ॥ उद्धृत्यसतदाक्लिष्टंरूप्यस्फटिकसंनिभम् ॥ १७ ॥ अथपुष्करपर्णेनलक्ष्मणःपाययिष्यति ॥ स्थूलान्गिरिगुहाशय्यान्वानरान्वनचारिणः ॥ १८ ॥ सायाह्नेविचरन्रामदर्शयिष्यतिलक्ष्मणः ॥ अपांलोभादुपावृत्तान्वृषभानिवनर्दतः ॥ १९ ॥ स्थूलान्पीतांश्चपंपायांद्रक्ष्यसित्वंनरोत्तम ॥ सायाह्नेविचरन्रामविटपीमाल्यधारिणः ॥ २० ॥ शिवोदकंचपंपायांदृष्ट्वाशोकंविहास्यसि ॥ सुमनोभिश्चितास्तत्रतिलकानक्तमालकाः ॥ २१ ॥ उत्पलानिचफुल्लानिपंकजानिचराघव ॥ नतानिकश्चिन्माल्यानितत्रारोपयितानरः ॥ २२ ॥ नचवैम्लानतांयांतिनचशीर्यंतिराघव ॥ मतंगशिष्यास्तत्रासन्नृषयःसुसमाहिताः ॥ २३ ॥ तेषांभाराभितप्तानांवन्यमाहरतांगुरोः ॥ येप्रपेतुर्महींतूर्णंशरीरात्स्वेदबिंदवः ॥ २४ ॥ तानिमाल्यानिजातानिमुनीनांतपसातदा ॥ स्वेदबिंदुसमुत्थानिनविनश्यंतिराघव ॥ २५ ॥

पद्मगंधि अक्लिष्टं मलादिकश्मलहीनम् ॥ १७ ॥ पुष्करपर्णेन पद्मपर्णेन उद्धृत्य मत्स्यान्खादतस्ते जलं पाययिष्यतीति संबंधः । गिरिगुहासु शय्यासनं येषां तान् ॥ १८ ॥ १९ ॥ पीतान् जलपानं कृतवतः विटपी विटपिनः । आर्षमेकत्वं प्रथमांतत्वम् । माल्यधारिणः पुष्पवतः तान्दृष्ट्वा शीतोदकं च दृष्ट्वा शोकं हास्यसि ॥ २० ॥ अन्यान्यपि शोकहंतॄणि दर्शनीयान्याह सुमनोभिरिति ॥ २१ ॥ आरोपयिता गृहीत्वा धारयिता महावनत्वान्मनुष्यसंचाराभावेनेत्यर्थः ॥ २२ ॥ अम्लाना शीर्णत्वे हेतुर्मतंगेत्यादि ॥ २३ ॥ भारेण तप्तानां गुर्वर्थे आह्रियमाणवन्यभारेण श्रांतानाम् ॥ २४ ॥ तानि माल्यानीति विधेया

पेक्षं क्लीबत्वम् ॥ २५ ॥ शबरी नाम शबरीत्याख्या श्रमणी तापसी ॥ २६ ॥ त्वां दृष्ट्वा स्वर्गलोकं गमिष्यति पूर्वार्जिततपसस्त्वद्दर्शनस्य च माहात्म्यात्स्वर्गलोकोत्र ब्रह्मलोक इति वदंति । देवलोकमिति पाठेपि स एवार्थः ॥ २७ ॥ तदाश्रमस्थानं शबरीवासरूपं मतंगाश्रमस्थानम् । गुह्यं आश्रमेषु गुह्यम् ॥ २८ ॥ नागा गजास्तत्र तदाश्रमे तस्मिन्मतंगाश्रमे इत्यर्थः । यद्यपि तत्र विविधाः नागाः संति तथापि मतंगस्य विधानात्प्रभावात् तदेकदेशमतंगाश्रमे न संचार इत्यर्थः ॥ २९ ॥ अतस्तच्च वनं मतंगवनमित्येव विश्रुतम् देवारण्यं नंदनादि तत्सदृशम् ॥ ३० ॥ पंपायाः पंपातीरवर्तिमतंगाश्रमादित्यर्थः ॥ ३१ ॥ सुदुःखारोहणोऽत्युच्चत्वात् हेत्वंतरमप्याह शिशुभिर्नागैः सर्पैरभिरक्षितः उदारो दाता ब्रह्मणा पूर्वकाले सृष्टिकाले निर्मितः विद्यौदार्यतपःप्राधान्येन निर्मितः ॥ ३२ ॥ औदार्यमेव दर्शयति शयान इति ॥ ३३ ॥

तेषांगतानामद्यापिदृश्यतेपरिचारिणी ॥ श्रमणीशबरीनामकाकुत्स्थचिरजीविनी ॥ २६ ॥ त्वांतुधर्मेस्थितानित्यंसर्वभूतनमस्कृतम् ॥ दृष्ट्वादेवोपमं रामस्वर्गलोकंगमिष्यति ॥ २७ ॥ ततस्तद्रामपंपायास्तीरमाश्रित्यपश्चिमम् ॥ आश्रमस्थानमतुलंगुह्यंकाकुत्स्थपश्यसि ॥ २८ ॥ नतत्राक्रमितुं नागाःशक्नुवंतितदाश्रमे ॥ ऋषेस्तस्यमतंगस्यविधानात्तचकाननम् ॥ २९ ॥ मतंगवनमित्येवविश्रुतंरघुनंदन ॥ तस्मिन्नंदनसंकाशेदेवारण्योपमे वने ॥ ३० ॥ नानाविहगसंकीर्णेरंस्यसेरामनिर्वृतः ॥ ऋष्यमूकस्तुपंपायाःपुरस्तात्पुष्पितद्रुमः ॥ ३१ ॥ सुदुःखारोहणश्चैवशिशुनागाभिरक्षितः ॥ उदारोब्रह्मणाचैवपूर्वकालेभिनिर्मितः ॥ ३२ ॥ शयानःपुरुषोरामतस्यशैलस्यमूर्धनि ॥ यःस्वप्नेलभतेवित्तंतत्प्रबुद्धोधिगच्छति ॥ ३३ ॥ यस्त्वेनं विषमाचारःपापकर्माधिरोहति ॥ तत्रैवप्रहरंत्येनंसुप्तमादायराक्षसाः ॥ ३४ ॥ ततोपिशिशुनागानामाक्रंदःश्रूयतेमहान् ॥ क्रीडतांरामपंपायांमतं गाश्रमवासिनाम् ॥ ३५ ॥ सक्तारुधिरधाराभिःसंहत्यपरमद्विपाः ॥ प्रचरंतिपृथक्कीर्णामेघवर्णास्तरस्विनः ॥ ३६ ॥ तेतत्रपीत्वापानीयंविमलंचारुशो भनम् ॥ अत्यंतसुखसंस्पर्शंसर्वगंधसमन्वितम् ॥ ३७ ॥ निवृत्ताःसंविगाहंतेवनानिवनगोचराः ॥ ऋक्षांश्चद्वीपिनश्चैवनीलकोमलकप्रभान् ॥ ३८ ॥ रुरूनपेतानजयान्दृष्ट्वाशोकंप्रहास्यसि ॥ रामतस्यतुशैलस्यमहतीशोभतेगुहा ॥ ३९ ॥ शिलापिधानाकाकुत्स्थदुःखंचास्याःप्रवेशनम् ॥ तस्या गुहायांःप्राग्द्वारेमहाञ्शीतोदकोह्रदः ॥ ४० ॥ बहुमूलफलोरम्योनानानगसमाकुलः ॥ तस्यांवसतिधर्मात्मासुग्रीवःसहवानरैः ॥ ४१ ॥ कदाचि च्छिखरेतस्यपर्वतस्यापितिष्ठति ॥ कबंधस्त्वनुशास्यैवंतावुभौरामलक्ष्मणौ ॥ ४२ ॥ स्रग्वीभास्करवर्णाभःखेव्यरोचतवीर्यवान् ॥ तंतुखस्थंमहाभागं तावुभौरामलक्ष्मणौ ॥ ४३ ॥ प्रस्थितौत्वंव्रजस्वेतिवाक्यमूचतुरंतिके ॥ गम्यतांकार्यसिद्ध्यर्थमितितावब्रवीत्सच ॥ ४४ ॥ सुप्रीतौतावनुज्ञाप्यकबं धःप्रस्थितस्तदा ॥ ४५ ॥

अन्यमप्यतिशयमाह य इति । तत्रैव पर्वतमूर्ध्न्येव ॥ ३४ ॥ शिशुनागानां बालगजानाम् ॥ ३५ ॥ रुधिरधाराभिः ईषद्रक्तमदधाराभिः सक्ताः संबद्धाः संहत्य संभूय संचरंति पृथक्कीर्णाश्चरंति ॥ ३६ ॥ ॥ ३७ ॥ नीलमणिवत्कोमलकांतीन् ॥ ३८ ॥ अपेतान्मनुष्यं दृष्ट्वाऽपलायितान् अजयान्प्राणिजयहीनान् अनेनाक्रूरता अयासाधारणं चिह्नमाह रामेति ॥ ३९ ॥ शिलापिधानेति गुहानामेति तीर्थः । शिरो षणमित्यन्ये ॥ ४० ॥ तस्यां गुहायाम् ॥ ४१ ॥ कदाचित्पर्वतस्य शिखरेऽपि तिष्ठति अपिधानश्च ॥ ४२ ॥ ४३ ॥ प्रस्थितौ आवां सुग्रीवसमीपं प्रस्थितौ त्वं व्रजस्व पुण्यलोकमिति शेषः अंतिके

समीपे वर्तमानं देवभूतं तावूचतुः । स ताभ्यां कृतानुमतिकः कबंधः ॥ ४४ ॥ ४५ ॥ उकार्थोपसंहारः स तदिति । निदर्शयन्मार्गादिकमिति शेषः । किंचिद्दूरं गत्वा पुनः राममवेक्ष्य सख्यं कुरुष्वेत्युवाच ॥ ४६ ॥तैर्वैमानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकांडे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ यः कबंधेन कथितस्तं मार्गं गृहीत्वा पंपामुद्दिश्य प्रतीचीं दिशमातस्थतुः मतस्थतुः ॥ १ ॥ आचितानेकान्विद्यमानाननेकान् माधुर्येण क्षौद्रं मधु तत्तुल्यपुष्पफलान् ॥ २ ॥ उपतस्थतुः प्रापतुः ॥ ३ ॥ ४ ॥ तं शबर्याश्रमम् ॥ ५ ॥ सिद्धा सिद्धयोगा ॥ ६ ॥ ७ ॥ विघ्नास्तपो

सतत्कबंधःप्रतिपद्यरूपंवृतःश्रियाभास्वरसर्वदेहः ॥ निदर्शयन्राममवेक्ष्यखस्थःसख्यंकुरुष्वेतितदाभ्युवाच॥४६॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडेत्रिसप्ततितमः सर्गः ॥ ७३ ॥ तौकबंधेनतंमार्गंपंपायादर्शितंवने ॥ आतस्थतुर्दिशंगृह्यप्रतीचींनृवरात्मजौ ॥ १ ॥ तौशैलेष्वाचितानेकान्क्षौद्रपुष्पफलद्रुमान् ॥ वीक्षंतौजग्मतुर्द्रष्टुंसुग्रीवंरामलक्ष्मणौ ॥ २ ॥ कृत्वातुशैलपृष्ठेतुतौवासंरघुनंदनौ ॥ पंपायाःपश्चिमंतीरं राघवावुपतस्थतुः ॥ ३ ॥ तौपुष्करिण्याःपंपायास्तीरमासाद्यपश्चिमम् ॥ अपश्यतांततस्तत्रशबर्यारम्यमाश्रमम् ॥ ४ ॥ तौतमाश्रममासाद्यद्रुमैर्बहुभिरावृतम् ॥ सुरम्यमभिवीक्षंतौशबरीमभ्युपेयतुः ॥ ५ ॥ तौदृष्ट्वातुतदासिद्धासमुत्थायकृतांजलिः ॥ पादौजग्राहरामस्यलक्ष्मणस्यचधीमतः ॥ ६ ॥ पाद्यमाचमनीयंचसर्वंप्रादाद्यथाविधि ॥ तामुवाचततोरामःश्रमणींधर्मसंस्थिताम् ॥ ७ ॥ कच्चित्तेनिर्जिताविघ्नाःकच्चित्तेवर्धतेतपः ॥ कच्चित्तेनियतःकोपआहारश्चतपोधने ॥ ८ ॥ कच्चित्तेनियमाःप्राप्ताःकच्चित्तेमनसःसुखम् ॥ कच्चित्तेगुरुशुश्रूषासफलाचारुभाषिणि ॥ ९ ॥ रामेणतापसीपृष्टासासिद्धासिद्धसंमता ॥ शशंसशबरीवृद्धारामायप्रत्यवस्थिता ॥ १० ॥ अद्यप्राप्तातपःसिद्धिस्तवसंदर्शनान्मया ॥ अद्यमेसफलंजन्मगुरवश्चसुपूजिताः ॥ ११ ॥ अद्यमेसफलंतप्तंस्वर्गश्चैवभविष्यति ॥ त्वयिदेववरेरामपूजितेपुरुषर्षभ ॥ १२ ॥ तवाहंचक्षुषासौम्यपूतासौम्येनमानद ॥ गमिष्याम्यक्षयाँल्लोकांस्त्वत्प्रसादादरिंदम ॥ १३ ॥ चित्रकूटंत्वयिप्राप्तेविमानैरतुलप्रभैः ॥ इतस्तेदिवमारूढायानहंपर्यचारिषम् ॥ १४ ॥ तैश्चाहमुक्ताधर्मज्ञैर्महाभागैर्महर्षिभिः॥ आगमिष्यतितेरामःसुपुण्यमिममाश्रमम् ॥ १५ ॥ सतेप्रतिग्रहीतव्यःसौमित्रिसहितोऽतिथिः ॥ तंचदृष्ट्वावराँल्लोकानक्षयांस्त्वंगमिष्यसि ॥ १६ ॥ एवमुक्तामहाभागैस्तदाहंपुरुषर्षभ ॥ मयातुसंचितंवन्यंविविधंपुरुषर्षभ ॥ १७ ॥

विघ्नाः कामादयः कोपो नियतः निगृहीतः आहारश्च नियत इत्यनुकर्षः ॥ ८ ॥ ९ ॥ प्रत्यवस्थिता अभिमुखं स्थिता ॥ १० ॥ अद्य प्राप्ता तपःसिद्धिरित्यादिः शबर्या उपचारवत्परमार्थदशावादः ॥ ११ ॥ स्वर्गो ब्रह्मलोकः देववरे सर्वांतरात्मनि ॥ १२ ॥ अक्षयाँल्लोकान् अपुनरावृत्तिकान्ब्रह्मलोकान् ॥ १३ ॥ चित्रकूटमिति तदासक्तिवैभवमात्रादित्यर्थः । इतः अस्मदाश्रमात् ॥ १४ ॥ आगमिष्यति अनुग्रहायेति शेषः ॥ १५ ॥ ते त्वया तं दृष्ट्वा अस्मत्सेवाफलभूतं तद्दर्शनं प्राप्य अक्षयाँल्लोकान् ब्रह्मलोकम् अवयवाभिप्रायेण गुणाभिप्रायेण वा बहुवचनम् ॥ १६ ॥ एवमुक्ताहं यतोतो मया त्वदर्थं वन्यं सम्यक्परीक्ष्य

माधुर्ययुतं संचितमित्यर्थः । तदुक्तं पाद्मे शबरीं प्रस्तुत्य प्रत्युद्गम्य प्रणम्याथ निवेश्य कुशविष्टरे । पादप्रक्षालनं कृत्वा तत्तोयं पापनाशनम् । शिरसा धार्य पीत्वा च वन्यैः पुष्पैरथार्चयत् । फलानि च सुपक्वानि मूलानि मधुराणि च ॥ स्वयमास्वाद्य माधुर्यं परीक्ष्य परिभक्ष्य च ॥ पश्चान्निवेदयामास राघवाभ्यां दृढव्रता ॥ फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं परां ददाविति ॥ १७ ॥ १८ ॥ विज्ञाने आगतानागतज्ञाने अबहिष्कृतां तादृशज्ञानवतीमित्यर्थ इति तीर्थः । विज्ञाने ब्रह्मविद्यायां मैत्रेय्यादिवदबहिष्कृताम् तत्राप्यधिकारिणीमित्यर्थ इति कतकः । विशिष्टं ज्ञानं येषां तेषां संबंधो यस्यास्तत्संबोधनं हे विज्ञाने इति संबोध्य तां नित्यमबहिष्कृतां भोजनादिव्यवहारादिति शेषः । तद्दत्तमाहारादि अंगीकृत्येति च शेष इत्यन्ये । किमाह तदाह दनोरिति । ते महात्मनां त्वदाचार्याणाम् दनोः सकाशाच्छ्रुतं प्रत्यक्षं कर्तुमिच्छामीति शेषः । संद्रष्टुं यदि मन्यसे संदर्शयितुं योग्यं यदि मन्यसे इत्यर्थः ॥ १९ ॥ २० ॥ मेघो वर्षुको यो घनस्तद्वन्नीलम् । मिह सेचने बाहुलकात् घत्वम् ॥ २१ ॥ मतंगवनं तत्तपोमहिम्ना विश्रुतं प्रसिद्धम् ते प्रसिद्धाः मंत्रपूजितं मंत्रस्य गायत्र्या जपेन पूजितमतिशुद्धम् नीडं देहपंजरम् । तीर्थमितिपाठेऽपि स एवार्थः मंत्रवत् तद्धोममंत्रवत् जुहवांचक्रिरे हुतवंतः । यद्वा तीर्थमध्वरं जुहवांचक्रिरे हुतवंतः । यद्वा

तवार्थेपुरुषव्याघ्रपंपायास्तीरसंभवम् ॥ एवमुक्तःसधर्मात्माशबर्याशबरीमिदम् ॥ १८ ॥ राघवःप्राहविज्ञानेतांनित्यमबहिष्कृताम् ॥ दनोःसकाशात्तत्त्वेनप्रभावंतेमहात्मनाम् ॥१९॥ श्रुतंप्रत्यक्षमिच्छामिसंद्रष्टुंयदिमन्यसे ॥ एतत्तुवचनंश्रुत्वारामवक्त्रविनिःसृतम् ॥ २० ॥ शबरीदर्शयामासतावुभौतद्वनंमहत् ॥ पश्यमेघघनप्रख्यंमृगपक्षिसमाकुलम् ॥ २१ ॥ मतंगवनमित्येवविश्रुतंरघुनंदन ॥ इहतेभावितात्मानोगुरवोमेमहाद्युते ॥ जुहवांचक्रिरेनीडंमंत्रवन्मंत्रपूजितम् ॥ २२ ॥ इयंप्रत्यक्स्थलीवेदीयत्रतेमेसुसत्कृताः ॥ पुष्पोपहारंकुर्वंतिश्रमादुद्वेपिभिःकरैः ॥ २३ ॥ तेषांतपःप्रभावेणपश्याद्यापिरघूत्तम ॥ द्योतयंतीदिशःसर्वाःश्रियावेद्यतुलप्रभा ॥ २४ ॥ अशक्नुवद्भिस्तैर्गंतुमुपवासश्रमालसैः ॥ चिंतितेनागतान्पश्यसमेतान्सप्तसागरान् ॥ २५ ॥ कृताभिषेकैस्तैर्न्यस्तावल्कलाःपादपेष्विह ॥ अद्यापिनविशुष्यंतिप्रदेशेरघुनंदन ॥ २६ ॥ देवकार्याणिकुर्वद्भिर्यानीमानिकृतानिवै ॥ पुष्पैःकुवलयैःसार्धंम्लानत्वंनतुयांतिवै ॥ २७ ॥ कृत्स्नंवनमिदंदृष्टंश्रोतव्यंचश्रुतंत्वया ॥ तदिच्छाम्यभ्यनुज्ञातात्यक्ष्याम्येतत्कलेवरम् ॥ २८ ॥ तेषामिच्छाम्यहंगंतुंसमीपंभावितात्मनाम् ॥ मुनीनामाश्रमोयेषामहंचपरिचारिणी ॥ २९ ॥

तीर्थमध्वरं जुहवांचक्रिरे कृतवंत इत्यर्थः ॥२२॥ प्रत्यक्स्थली तन्नाम्नी वेदी यत्र यस्यां सुसत्कृता अत्यंतं पूज्या मे मत्संबंधिनस्ते गुरवः श्रमादुद्वेपिभिः कंपवद्भिर्वृद्धतरत्वात् करैः पुष्पोपहारं देवताभ्यः कुर्वंति ॥ २३ ॥ तेषां मदाचार्याणां प्रभावेणेयं वेदिस्तत्पूजाकाल इवाद्यापि सर्वा दिशो द्योतयंती अतुलप्रभा दृश्यते पश्य ॥ २४ ॥ आश्चर्यांतरं दर्शयति अशक्नुवद्भिरिति । सागरादितीर्थं गंतुमशक्नुवद्भिरित्यर्थः तत्र हेतुरुपवासश्रमालसैः कृच्छ्रादिशास्त्रीयोपवासैर्जनितेन श्रमेणालसैः ईदृशैस्तैश्चिंतितेन तेषां ध्यानेन तदभिषेकतीर्थं आगतान्सप्तसागरान्समेतान्पश्य ॥ २५ ॥ आश्चर्यांतरमाह कृताभिषेकैरिति । न विशुष्यंति तीर्थवैभवात्तत्तपोवैभवाच्चेति भावः ॥ २६ ॥ आश्चर्यांतरमाह देवेति । कृतानि दत्तानि अतिमृदुकुवलयसहितानि पुष्पाणि नाद्यापि म्लानत्वं यांति तत्तपःप्रभावादिति शेषः ॥ २७ ॥ उपसंहरति कृत्स्नमिति । इह त्वया मया दर्शितम् श्रुतं त्वया मया श्रावितम् अभ्यनुज्ञाता त्वयेति शेषः ॥ तत्तस्मात् एतत्कलेवरं त्यक्ष्यामीति इच्छामि ॥ २८ ॥ येषां मुनीनामयमाश्रमो येषां चाहं परिचारिणी तेषां भावितात्मनां

सदानुसंहितपरमात्मनां मुनीनां समीपं गंतुमहमिच्छामि इति चाब्रवीत ॥ २९ ॥ श्रुतार्थमुद्दिश्येति शेषः ॥ ३० ॥ संशितव्रतां तीक्ष्णव्रताम् ॥ ३१ ॥ आत्मानं हुताशने हुत्वा स्वाचार्योपदिष्टमार्गेणेत्यर्थः ॥ ३२ ॥ स्वर्गं ब्रह्मलोकमेव ॥ ३३ ॥ ३४ ॥ यत्र ब्रह्मलोके तत्पुण्यस्थानं शबरी आत्मसमाधिना जगाम ब्रह्मसमाधिनेत्यर्थः ॥ ३५ ॥ शैलेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके

धर्मिष्ठंतुवचःश्रुत्वाराघवःसहलक्ष्मणः ॥ प्रहर्षमतुलंलेभेआश्चर्यमितिचाब्रवीत् ॥३०॥ तामुवाचततोरामःशवरींसंशितव्रताम् ॥ अर्चितोऽहंत्वयाभद्रेगच्छकामंयथासुखम् ॥ ३१ ॥ इत्येवमुक्ताजटिलाचीरकृष्णाजिनांबरा ॥ अनुज्ञातातुरामेणहुत्वात्मानंहुताशने ॥ ३२ ॥ ज्वलत्पावकसंकाशास्वर्गमेवजगामह ॥ दिव्याभरणसंयुक्तादिव्यमाल्यानुलेपना ॥ ३३ ॥ दिव्यांबरधरातत्रबभूवप्रियदर्शना ॥ विराजयंतीतंदेशंविद्युत्सौदामनीयथा ॥ ॥ ३४ ॥ यत्रतेसुकृतात्मानोविहरंतिमहर्षयः ॥ तत्पुण्यंशवरीस्थानंजगामात्मसमाधिना ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे चतुःसप्ततितमः सर्गः ॥७४॥ दिवंतुतस्यांयातायांशवर्यांस्वेनतेजसा ॥ लक्ष्मणेनसहभ्रात्राचिंतयामासराघवः ॥१॥ चिंतयित्वातुधर्मात्माप्रभावंतंमहात्मनाम् ॥ हितकारिणमेकाग्रंलक्ष्मणंराघवोऽब्रवीत् ॥ २ ॥ दृष्टोमयाश्रमःसौम्यबह्वाश्चर्यःकृतात्मनाम् ॥ विश्वस्तमृगशार्दूलोनानाविहगसेवितः ॥ ३ ॥ सप्तानांचसमुद्राणांतेषांतीर्थेषुलक्ष्मण ॥ उपस्पृष्टंचविधिवत्पितरश्चापितर्पिताः ॥४॥ प्रणष्टमशुभंयन्नःकल्याणंसमुपस्थितम् ॥ तेनत्वेतत्प्रहृष्टंमेमनोलक्ष्मणसंप्रति ॥ ५ ॥ हृदयेमेनरव्याघ्रशुभमाविर्भविष्यति ॥ तदागच्छगमिष्यावःपंपांतांप्रियदर्शनाम् ॥ ६ ॥ ऋष्यमूकोगिरिर्यत्रनातिदूरेप्रकाशते ॥ यस्मिन्वसतिधर्मात्मासुग्रीवोंऽशुमतःसुतः ॥ ७ ॥ नित्यंवालिभयात्रस्तश्चतुर्भिःसहवानरैः ॥ अहंत्वरेचतंद्रष्टुंसुग्रीवंवानरर्षभम् ॥ ८ ॥ तदधीनंहिमेकार्यंसीतायाःपरिमार्गणम् ॥ इतिब्रुवाणंतंवीरंसौमित्रिरिदमब्रवीत् ॥ ९ ॥ गच्छावस्त्वरितंतत्रममापित्वरतेमनः ॥ आश्रमात्तुततस्तस्मान्निष्क्रम्यसविशांपतिः ॥ १० ॥ आजगामततःपंपांलक्ष्मणेनसहप्रभुः ॥ समीक्षमाणःपुष्पाढ्यंसर्वतोविपुलद्रुमम् ॥ ११ ॥ कोयष्टिभिश्चार्जुनकैःशतपत्रैश्चकीचकैः ॥ एतैश्चान्यैश्चबहुभिर्नादितंतद्वनंमहत् ॥ १२ ॥ सरामोविविधान्वृक्षान्सरांसिविविधानिच ॥ पश्यन्कामाभिसंतप्तोजगामपरमंह्रदम् ॥ १३ ॥

वाल्मीकीये आदिकाव्ये अरण्यकांडे चतुःसप्ततितमः सर्गः ॥ ७४ ॥ ॥ दिवं त्विति ॥ १ ॥ महात्मनां प्रभावं शबर्युक्तम् ॥ २ ॥ ३ ॥ तेषां मुनीनाम् सप्तानां समुद्राणां तीर्थेषु लोकोपकाराय तैः स्थापितेषु उपस्पृष्टं स्नातम् ॥ ४ ॥ तेन कल्याणोपस्थानेन ॥ ५ ॥ शुभं मित्रलाभादि ॥ ६ ॥ अंशुमतः सूर्यस्य ॥७॥ त्वरे त्वरामि ॥८ ॥ ९ ॥ ममापि त्वरते पंपादर्शने ॥१०॥११॥१२॥१३॥

पानीयवाहिनीं पानार्हातिमधुरसुशीतंनिर्मलजलवाहिनीम् अनेन पंपानदीति लभ्यते । वाहिनीमित्यस्य धारिणीमित्यर्थो वा मतंगसरसमित्यकारांतः तच्च पंपायामेव प्रदेशभेदो गंगायां मणिकर्णिकेव ॥ ॥ १४ ॥ १५ ॥ १६ ॥ श्लक्ष्णाः मृदुस्पर्शाः ॥ १७ ॥ १८ ॥ १९ ॥ कुवलयोद्घाटैः कुवलयसमूहैः । कुथा गजास्तरणचित्रकंबलः ॥ २० ॥ अरविंदपद्मयोरक्तश्वेतविषयत्वेन भेदः ॥ २१ ॥ विललाप सीतावियोगादिति शेषः ॥ २२ ॥ शुक्रद्रुमो लोध्रः ॥ २३ ॥ भंडीरो वटः निचुलो वंजुलः अतिमुक्तो माधवीलता ॥ २४ ॥ पूर्वोक्तः कबंधोक्तः ॥ २५ ॥ तस्य प्रसिद्धतरस्य ऋक्षरजोनामकस्य

सतामासाद्यवैरामोदूरात्पानीयवाहिनीम् ॥ मतंगसरसंनामह्रदंसमवगाहत ॥ १४ ॥ तत्रजग्मतुरव्यग्रौराघवौहिसमाहितौ ॥ सतुशोकसमाविष्टो रामोदशरथात्मजः ॥ १५ ॥ विवेशनलिनींरम्यांपंकजैश्चसमावृताम् ॥ तिलकाशोकपुन्नागवकुलोद्दालकाशिनीम् ॥ १६ ॥ रम्योपवनसंबाधांरम्यसंपीडितोदकाम् ॥ स्फटिकोपमतोयांतांश्लक्ष्णवालुकसंतताम् ॥ १७ ॥ मत्स्यकच्छपसंबाधांतीरस्थद्रुमशोभिताम् ॥ सखीभिरिवसंयुक्तांलताभिरनुवेष्टिताम् ॥ १८ ॥ किन्नरोरगगंधर्वयक्षराक्षससेविताम् ॥ नानाद्रुमलताकीर्णांशीतवारिनिधिंशुभाम् ॥ १९ ॥ पद्मसौगंधिकैस्ताम्रांशुक्लांकुमुदमंडलैः ॥ नीलांकुवलयोद्घाटैर्बहुवर्णांकुथामिव ॥ २० ॥ अरविंदोत्पलवतींपद्मसौगंधिकायुताम् ॥ पुष्पिताम्रवणोपेतांबर्हिणोद्घुष्टनादिताम् ॥ २१ ॥ सतांदृष्ट्वाततःपंपांरामःसौमित्रिणासह ॥ विललापचतेजस्वीरामोदशरथात्मजः ॥ २२ ॥ तिलकैर्बीजपूरैश्चवटैःशुक्रद्रुमैस्तथा ॥ पुष्पितैःकरवीरैश्चपुन्नागैश्चसुपुष्पितैः ॥ २३ ॥ मालतीकुंदगुल्मैश्चभंडीरैर्निचुलैस्तथा ॥ अशोकैःसप्तपर्णैश्चकेतकैरतिमुक्तकैः ॥ २४ ॥ अन्यैश्चविविधैर्वृक्षैःप्रमदेवोपशोभिताम् ॥ अस्यास्तीरेतुपूर्वोक्तःपर्वतोधातुमंडितः ॥ २५ ॥ ऋष्यमूकइतिख्यातश्चित्रपुष्पितपादपः ॥ हरिर्ऋक्षरजोनाम्नःपुत्रस्तस्यमहात्मनः ॥ २६ ॥ अध्यास्तेतुमहावीर्यःसुग्रीवइतिविश्रुतः ॥ सुग्रीवमभिगच्छत्वंवानरेंद्रंनरर्षभ ॥ २७॥ इत्युवाचपुनर्वाक्यंलक्ष्मणंसत्यविक्रमः ॥ कथंमयाविनासीताशक्यंलक्ष्मणजीवितुम् ॥२८॥ इत्येवमुक्त्वामदनाभिपीडितःसलक्ष्मणंवाक्यमनन्यचेतनः ॥ विवेशपंपांनलिनीमनोरमांतमुत्तमंशोकमुदीरयाणः ॥२९॥ क्रमेणगत्वाप्रविलोकयन्वनंददर्शपंपांशुभदर्शकाननाम् ॥ अनेकनानाविधपक्षिसंकुलांविवेशरामःसहलक्ष्मणेन ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये अरण्यकांडे पंचसप्ततितमः सर्गः ॥ ७५ ॥ अतःपरंकिष्किंधाकांडंभविष्यति तस्यायमाद्यःश्लोकः ॥ सतांपुष्करिणींगत्वापद्मोत्पलझषाकुलाम् ॥ रामःसौमित्रिसहितोविललापाकुलेंद्रियः ॥ १ ॥

पुत्रो हरिर्वानरः ॥ २६ ॥ २७ ॥ इत्युवाच अंतरांतरा सीताशोकम् ॥ २८ ॥ उपसंहरति इतीति । अनन्यचेतनः नास्त्यन्यत्र सीतायाः चेतनं चित्तं यस्य सः नलिनीभिर्मनोरमां पंपां मतंगसरसः प्रदेश वर्तिनीं विवेश ॥२९॥ शुभदर्शी शुभदर्शनं काननं यस्यां तां पंपां ददर्श सर्वत इति शेषः । विवेश च मतंगसरसावच्छेदेनेति बोध्यम् ॥३०॥ विराधादिकबंधांतान् हत्वा स्वपदमादिशत् ।। विचरन् दंडकारण्ये भवारण्ये स मे गतिः ॥१॥ नंदैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये अरण्यकाण्डे पंचसप्ततितमः सर्गः ॥७५॥ ॥छ॥ ग्रंथसंख्या ५४५०मूल २३५० व्याख्या ३१००॥

श्रीगणेशाय नमः ॥ सुग्रीवस्यावनं तुर्ये इंद्रसूनोश्च मर्दनम् ॥ मारुतेर्मुद्रिकादानं कृतं येन स मे गतिः ॥ १ ॥ स विराधादिवधेन प्रसिद्धपराक्रमः पंपादर्शनोद्दीपितकामो वा तां सुग्रीवाधिष्ठितर्ष्यमूकसमीपगां पुष्करिणीं पंपानद्यंतरगतं पंपाख्यं मतंगाख्यं वा सरोविशेषं विललाप पर्यदेवयत् ॥ १ ॥ तां पंपां दृष्ट्वा तज्जन्यहर्षात्तस्येंद्रियाणि चकंपिरे उद्रिक्तविकाराणीवाभूवन् कामवशमापन्न इव ॥ २ ॥ वैदूर्यवत्तत्प्रभावन्निर्मलोदका पंपा तदाख्यसरोवरावच्छिन्ना पंपानदी तज्जलस्योपाधिकश्यामत्वमतिभासाद्वैदूर्यप्रभासादृश्यम् । उपाधिमाह फुल्लेति । द्रुमादिच्छायया तथा भानम् ॥ ३ ॥ पंपायाः काननं तत्परिसरवर्ति काननं यत्र कानने सशिखरा इव उन्नताग्रशाखाभिः सशृंगा इव द्रुमाः शैला इव राजंति ॥ ४ ॥ शोकाभिसंतप्तं राज्यभ्रंशसीतावियोगादिना शोकतप्तं आधयः पीडयंतीत्युक्तम् । तानाधीनाह भरतस्येति । दुःखेन जटावल्कलादिदुःखस्मरणेन ॥ ५ ॥ एवं शोकार्तस्यापि शोभते सुखावहा वर्तते इत्यर्थः ॥ ६ ॥ व्यालाः श्वापदाः ॥ ७ ॥ नीलानुबद्धं पीतं नीलपीतं शाद्वलं हरितप्रदेशः परिस्तोमैः कुथैरर्पितं युक्तं

श्रीसीतारामचंद्राभ्यांनमः ॥ ॥ सतांपुष्करिणींगत्वापद्मोत्पलझषाकुलाम् ॥ रामःसौमित्रिसहितोविललापाकुलेंद्रियः ॥ १ ॥ तत्रदृष्ट्वैवतांहर्षादिंद्रियाणिचकंपिरे ॥ सकामवशमापन्नःसौमित्रिमिदमब्रवीत् ॥ २ ॥ सौमित्रेशोभतेपंपावैदूर्यविमलोदका ॥ फुल्लपद्मोत्पलवतीशोभिताविविधैर्द्रुमैः ॥ ॥३॥ सौमित्रेपश्यपंपायाःकाननंशुभदर्शनम् ॥ यत्रराजंतिशैलावाद्रुमाःसशिखराइव ॥ ४ ॥ मांतुशोकाभिसंतप्तमाधयःपीडयंतिवै ॥ भरतस्यचदुःखेनवैदेह्याहरणेनच ॥ ५ ॥ शोकार्तस्यापिमेपंपाशोभतेचित्रकानना ॥ व्यवकीर्णाबहुविधैःपुष्पैःशीतोदकाशिवा ॥ ६ ॥ नलिनैरपिसंछन्नाह्यत्यर्थशुभदर्शना ॥ सर्पव्यालानुचरितामृगद्विजसमाकुला ॥ ७ ॥ अधिकंप्रविभात्येतन्नीलपीतंतुशाद्वलम् ॥ द्रुमाणांविविधैःपुष्पैःपरिस्तोमैरिवार्पितम् ॥ ॥ ८ ॥ पुष्पभारसमृद्धानिशिखराणिसमंततः ॥ लताभिःपुष्पिताग्राभिरुपगूढानिसर्वतः ॥ ९ ॥ सुखानिलोऽयंसौमित्रेकालःप्रचुरमन्मथः ॥ गंधवान्सुरभिर्मासोजातपुष्पफलद्रुमः ॥ १० ॥ पश्यरूपाणिसौमित्रेवनानांपुष्पशालिनाम् ॥ सृजतांपुष्पवर्षाणिवर्षंतोयमुचामिव ॥ ११ ॥ प्रस्तरेषुचरम्येषुविविधाःकाननद्रुमाः ॥ वायुवेगप्रचलिताःपुष्पैरवकिरंतिगाम् ॥ १२ ॥ पतितैःपतमानैश्चपादपस्थैश्चमारुतः ॥ कुसुमैःपश्यसौमित्रेक्रीडतीवसमंततः ॥ १३ ॥ विक्षिपन्विविधाःशाखानगानांकुसुमोत्कटाः ॥ मारुतश्चलितःस्थानैःषट्पदैरनुगीयते ॥१४॥ मत्तकोकिलसन्नादैर्नर्तयन्निवपादपान् ॥ शैलकंदरनिष्क्रांतःप्रगीतइवचानिलः ॥१५॥ तेनविक्षिपतात्यर्थंपवनेनसमंततः ॥ अमीसंसक्तशाखाग्राग्रथिताइवपादपाः॥१६॥

परिस्तोमः कुथो द्वयोः । द्रुमाणामुच्छ्रितैरितिपाठे उच्छ्रितगंधैः यद्वा परिस्तोमैः परिस्तोमभूतैः राशीभूतैरिव स्थितैः पुष्पैरर्पितं युक्तम् ॥ ८ ॥ शिखराणि द्रुमाग्राणि उपगूढानि व्याप्तानि सर्वतः सर्वावच्छेदेन ॥ ९ ॥ अयं कालो वसंतः प्रचुरमन्मथः कामोद्दीपकः अत एव गंधवान् कामोद्दीपनेन गर्ववान् । गंधो गंधक आमोदे लेशे संबंधगर्वयोरिति । सुरभिर्मासो मधुमासः जातानि पुष्पफलानि यत्र तादृग्द्रुमः॥ १०॥ ॥ ११ ॥ प्रस्तरेषु समशिलातलेषु ॥ १२ ॥ १३ ॥ कुसुमोत्कटाः बहुकुसुमाः । कुसुमोत्कचा इतिपाठे कुसुमैरुद्भूतकचाः संजातकेशा इवेत्यर्थ इति कतकः । तादृशीः शाखा विक्षिपन् चालयन् मारुतश्चलितस्थानैः तत्तत्कुसुमस्थानतश्चलितैः आहिताग्न्यादिरयं षट्पदैरनुगीयते पुष्पं हरन्मारुतोनुसृत्य गीयते इत्यर्थः ॥ १४ ॥ मत्तेति । अत्र वायोर्गानकर्तृत्वेन नर्त्तकाचार्यसाधर्म्यमुच्यते मत्तकोकिलकृतैः सन्नादैर्मृदंगादिध्वनिभिर्नर्तयन्निव नृत्यं शिक्षयन्निव शैलकंदरनिष्कान्तः तन्निष्क्रमकाले ध्वनियुतत्वात् प्रगीतवानिव ॥ १५ ॥ तेन मंदत्वादिगुणवता विक्षिपता वृक्षान् चालयता ग्रथिताः कृतग्रथना इव ॥ १६ ॥

गंधमभ्यवहन्वातीति संबंधः ॥ १७ ॥ अनुकूजद्भिः षट्पदैर्विनदंतीव ॥१८॥ संसक्तशिखराः संपन्नशेखरा इवेत्यर्थ इति कतकः । गिरिप्रस्थेषूत्पन्नैर्द्रुमैः शैलाः संबद्धाग्रभागा इत्यर्थ इति तीर्थः ॥ १९ ॥ पुष्पैः संछन्नाः शिखराः शाखाग्रभागा येषां मारुतकृतोत्क्षेपणेन चालनेन चंचलाः मधुकररूप उत्तंसश्चूडा येषां ते प्रगीता इव प्रारब्धनृत्यगीता इवेत्यर्थः ॥ २० ॥ कर्णिकारः पीतपुष्प इत्यनेन ज्ञायते ॥ २१ ॥ ॥ २२ ॥ हृष्टं यथा तथा प्रवदमानः कोकिलो मां समाह्वयति स्पर्धयेवेत्यर्थः ॥ २३ ॥ दात्यूहको जलकुक्कुटः हृष्टः कामावेशेन वननिर्झरे वनमध्यगे प्रस्रवणे ॥ २४ ॥ मामाहूय प्रदर्शनार्थामिति शेषः परममतिशयेन ॥ २५ ॥ पतगाः कर्तारो वृक्षादीन्कर्मभूतान् संपतंति पश्य ॥ २६ ॥ पुंभिर्विहगैर्विमिश्राः संबद्धाः आत्मव्यूहेषु स्वस्वजातिसमूहेषु अभिनंदिताः प्राप्तानंदाः भृंगराजप्रमुदिताः प्रमुदितभृंगराजा इव

सएवसुखसंस्पर्शोवातिचंदनशीतलः ॥ गंधमभ्यवहन्पुण्यंश्रमापनयनोऽनिलः ॥ १७ ॥ अमीपवनविक्षिप्ताविनदंतीवपादपाः ॥ षट्पदैरनुकूजद्भिर्वनेषुमधुगंधिषु ॥ १८ ॥ गिरिप्रस्थेषुरम्येषुपुष्पवद्भिर्मनोरमैः ॥ संसक्तशिखराःशैलाविराजंतिमहाद्रुमैः ॥ १९ ॥ पुष्पसंछन्नशिखरामारुतोत्क्षेपचंचलाः ॥ अमीमधुकरोत्तंसाःप्रगीताइवपादपाः ॥२०॥ सुपुष्पितांस्तुपश्यैतान्कर्णिकारान्समंततः ॥ हाटकप्रतिसंछन्नान्नरान्पीतांवरानिव ॥ ॥ २१ ॥ अयंवसंतःसौमित्रेनानाविहगनादितः ॥ सीतयाविप्रहीणस्यशोकसंदीपनोमम ॥ २२ ॥ मांहिशोकसमाक्रांतंसंतापयतिमन्मथः ॥ हृष्टंप्रवदमानश्चसमाह्वयतिकोकिलः ॥ २३ ॥ एषदात्यूहकोहृष्टोरम्येमांवननिर्झरे ॥ प्रणदन्मन्मथाविष्टंशोचयिष्यतिलक्ष्मण ॥ २४ ॥ श्रुत्वैतस्यपुराशब्दमाश्रमस्थाममप्रिया ॥ मामाहूयप्रमुदितापरमंप्रत्यनंदत ॥ २५ ॥ एवंविचित्राःपतगानानारावविराविणः ॥ वृक्षगुल्मलताःपश्यसंपतंतिसमंततः ॥ २६ ॥ विमिश्राविहगाःपुंभिरात्मव्यूहाभिनंदिताः ॥ भृंगराजप्रमुदिताःसौमित्रेमधुरस्वराः ॥ २७ ॥ अस्याःकूलेप्रमुदिताःसंघशःशकुनास्त्विह ॥ दात्यूहरतिविक्रंदैःपुंस्कोकिलरुतैरपि ॥ २८ ॥ स्वनंतिपादपाश्चेमेममानंगप्रदीपकाः ॥ अशोकस्तबकांगारःषट्पदस्वननिःस्वनः ॥२९॥ मांहिपल्लवताम्रार्चिर्वसंताग्निःप्रधक्ष्यति ॥ नहितांसूक्ष्मपक्ष्माक्षींसुकेशींमृदुभाषिणीम् ॥ ३० ॥ अपश्यतोमेसौमित्रेजीवितेऽस्तिप्रयोजनम् ॥ अयंहिरुचिरस्तस्याःकालोरुचिरकाननः ॥ ३१ ॥ कोकिलाकुलसीमांतोदयितायाममानघ ॥ मन्मथायाससंभूतोवसंतगुणवर्धितः ॥३२॥ अयंमांधक्ष्यतिक्षिप्रंशोकाग्निर्नचिरादिव ॥ अपश्यतस्तांवनितांपश्यतोरुचिरान्द्रुमान् ॥ ३३ ॥ ममायमात्मप्रभवोभूयस्त्वमुपयास्यति ॥ अदृश्यमानावैदेहीशोकंवर्धयतीहमे ॥ ३४ ॥ दृश्यमानोवसंतश्चस्वेदसंसर्गदूषकः ॥ मांहिसामृगशावाक्षीचिंताशोकबलात्कृतम् ॥ ३५ ॥

मधुरस्वनाः अस्याः कूले संतीति शेषः । यद्वा भृंगराजसंबंधेन प्रमुदिता मधुरस्वरा भृंग्यश्चात्र संतीति शेषः ॥ २७ ॥ तथा अस्या इह कूले शकुनाश्च प्रमुदिताः संति दात्यूहानां रतिसंबंधिनो विक्रंदा दात्यूहरतिविक्रंदास्तैः ॥ २८ ॥ अशोकस्तवकरूपा अंगारा यस्य अग्नेः सशब्दत्वादाह षट्पदस्वन एव निःस्वतो यस्य पल्लवरूपा अर्चिषो यस्य ॥ २९ ॥ ३० ॥ अयं हीति अयं कालो वसंतकालस्तस्या मम दयिताया रुचिर इष्टः ॥ ३१ ॥ कोकिलैराकुलः सीम्नां वनसीम्नामंतो मध्यप्रदेशो येन समन्मथायासेन कामपीडया संभूतो जनितो वसंतगुणैर्मंदानिलपुष्पितकाननत्वादिरूपैर्वर्धितः प्रज्वलितः ॥ ३२ ॥ न चिरादिव इदानीमेव अचिरादिवेति पाठांतरम् ॥ ३३ ॥ आत्मप्रभवः कामः भूयस्त्वं वैपुल्यम् ॥ ३४ ॥ स्वेदसंसर्गः कामविकारजस्तेन दूषयति मलिनीकरोति तादृशः । यद्वा तं दूषयति नाशयति

मलयानिलसंबंधात्ताहशः । चिंताशोकाभ्या बलात्कृतं बलात्कृतपीडम् ॥ ३५ ॥ चैत्रसंबंधी वनानिलः ॥ ३६ ॥ शिखिनीभिर्मयूरीभिः मदमूर्च्छिताः मत्ताः ॥ ३७ ॥ अभिपरीतस्य व्याप्तस्य ॥ ३८ ॥ अनुधावति नृत्यप्रसंगेनाग्रे गताम् ॥ ३९ ॥ रुतैरुपहसन्निवमामिति शेषः ॥ ४० ॥ यतो न हृता तस्मान्नृत्यतीत्यर्थः विना सीतां विनाऽयं मम पुष्पमासे चैत्रे वासः सुदुःसहः अतिपीडाजनकत्वात् ॥ ४१ ॥ नन्वेतावान् रागस्तवानुचितस्तत्राह पश्येति । संरागोऽतिशयितो रागः ॥ ४२ ॥ ४३ ॥ वन्यानि पुष्पाणि मे सीतावियोगाद्भोगसाधनत्वाभावान्निष्फलानि भवंति ॥ ४४ ॥ उक्तस्यैव विवरणं पुष्पाणी त्यादि । अतिश्रिया रुचिराणीत्यन्वयः मधुकरोत्करैर्मधुकरसमूहैः ॥ ४५ ॥ आह्वयंत इव नदंतीत्यन्वयः ॥ ४६ ॥ यदि सीतावासदेशेपि वसंतोस्ति तदा मद्वदेव सापि शोचंति सामग्र्याः समत्वात् ॥ ४७ ॥

संतापयतिसौमित्रेक्रूरश्चैत्रवनानिलः ॥ अमीमयूराःशोभंतेप्रनृत्यंतस्ततस्ततः ॥ ३६ ॥ स्वैःपक्षैःपवनोद्धूतैर्गवाक्षैःस्फाटिकैरिव॥शिखिनीभिःप रिवृतास्तएतेमदमूर्छिताः॥ ३७ ॥ मन्मथाभिपरीतस्यममन्मथवर्धनाः ॥ पश्यलक्ष्मणनृत्यंतंमयूरमुपनृत्यति ॥ ३८ ॥ शिखिनीमन्मथार्तै षाभर्तारंगिरिसानुनि ॥ तामेवमनसारामांमयूरोप्यनुधावति ॥ ३९ ॥ वितत्यरुचिरौपक्षौरुतैरुपहसन्निव ॥ मयूरस्यवनेनूनंरक्षसानहृताप्रिया॥४०॥ तस्मान्नृत्यतिरम्येषुवनेषुसहकांतया ॥ ममत्वयंविनावासःपुष्पमासेसुदुःसहः ॥ ४१ ॥ पश्यलक्ष्मणसंरागस्तिर्यग्योनिगतेष्वपि ॥ अधुनाशिखिनी कामाद्भर्तारमभिवर्तते ॥ ४२ ॥ ममाप्येवंविशालाक्षीजानकीजातसंभ्रमा ॥ मदनेनाभिवर्तेतयदिनापहृताभवेत् ॥ ४३ ॥ पश्यलक्ष्मणपुष्पाणिनि ष्फलानिभवंतिमे ॥ पुष्पभारसमृद्धानांवनानांशिशिरात्यये ॥ ४४ ॥ रुचिराण्यपिपुष्पाणिपादपानामतिश्रिया ॥ निष्फलानिमहीयांतिसमंमधुकरो त्करैः ॥ ४५ ॥ नदंतिकामंशकुनामुदिताःसंघशःकलम् ॥ आह्वयंतइवान्योन्यंकामोन्मादकराममम ॥ ४६ ॥ वसंतोयदितत्रापियत्रमेवसतिप्रिया ॥ नूनंपरवशासीतासापिशोचत्यहंयथा ॥ ४७ ॥ नूनंनतुवसंतस्तंदेशंस्पृशतियत्रसा ॥ कथंह्यसितपद्माक्षीवर्तयेत्सामयाविना ॥ ४८ ॥ अथवावर्तते तत्रवसंतोयत्रमेप्रिया ॥ किंकरिष्यतिसुश्रोणीसातुनिर्भर्त्सितापरैः ॥ ४९ ॥ श्यामापद्मपलाशाक्षीमृदुभाषाचमेप्रिया ॥ नूनंवसंतमासाद्यपरित्यक्ष्य तिजीवितम् ॥ ५० ॥ दृढंहिहृदयेबुद्धिर्ममसंपरिवर्तते ॥ नालंवर्तयितुंसीतासाध्वीमद्विरहंगता ॥ ५१ ॥

यद्यपि तत्र वसंतो न भवेत् कदाचित्तथापि मयां विना सा कथं वर्तयेज्जीवेत् मद्विरह एव तन्नाशे पर्याप्त इति भावः ॥ ४८ ॥ अथवा वर्तते तत्र वसंतस्तथाऽपि परैः शत्रुभिः पीडिता यतः साऽतस्तस्या वसंतः किं करिष्यति परकृतपीडासत्त्वे कामपीडानवकाशादिति भाव इति प्राञ्चः । परे तु तत्र वसंतो नास्त्येव तत्सत्त्वे मया विना सा कथं तत्र तिष्ठेत् आगतैव स्यादित्यर्थः । तदेव सूचयन्नाहाथवेति । परनिर्भर्त्सनवशान्नायातीत्याशय इत्याहुः ॥ ४९ ॥ सर्वथा तस्याः कामपीडया नाश एव प्राप्त इत्याह श्यामेति ॥ ५० ॥ तदेव विवृणोति दृढमिति साध्वी सीता मद्विरहं गता संप्राप्ता वसंतसत्त्वेऽसत्त्वे वा

सर्वथा वर्तयितुं जीवितुं नालं न समर्था ॥ ५१ ॥ एवं निश्चयकारणं परस्परानुरागसाम्यं दर्शयति मयि भाव इति ॥ ५२ ॥ हिमवहोपि पावकप्रतिमोऽत्युष्ण इति विरोधाभासः ॥ ५३ ॥ यं वायुं सीतया सह स्थितिकाले सदा सुखं मन्ये इत्यन्वयः ॥ ५४ ॥ तदा सीतासंयोगकाले असौ वायसः पक्षी विहंगः आकाशगः सन्प्रणदितस्तेन च तद्वियोगं सूचितवानित्याशयः । अथ तां विना तद्वियोगावस्थायां पादपगतः प्रहृष्टमभिकूजति तेन तत्संयोगं सूचयतीत्याशयः । तदेव विवृणोति विहगः सन्प्रतिहारकोऽपहारक इत्यर्थः । तु इदानीं तु स पक्षी तस्याः समीपं मां नेष्यतीत्यर्थः । कतकस्तु पक्षी प्रणदितस्तथेति विहगः प्रीतिकारक इति च प्राचीनः पाठः । असौ पक्षी तथातिसुखं यथा भवति तथा विहगः सन्नाकाशगः प्रणदितः नादं कृतवान् अस्य पूर्वमिति शेषः तत्संयोगकाले इत्यर्थः । अथेदानीं तां विना तद्वियोगकालेऽन्यथेति शेषः दुःखनाद इत्यर्थः । अथ कंचिच्छकुनमाह पादपगतो वायसः प्रहृष्टं यथा कूजति एष विहग एव नादंविशिष्टो विहगो वायसो यत्र सीता तिष्ठति तत्र तस्याः प्रीतिकारकः अति पीडाभावसूचकः

मयिभावोहिवैदेह्यास्तत्त्वतोविनिवेशितः ॥ ममापिभावःसीतायांसर्वथाविनिवेशितः ॥ ५२॥ एषपुष्पवहोवायुःसुखस्पर्शोहिमावहः ॥ तांविचिंतयतःकांतांपावकप्रतिमोमम ॥ ५३ ॥ सदासुखमहंमन्येयंपुरासहसीतया ॥ मारुतःसविनासीतांशोकसंजननोमम ॥ ५४ ॥ तांविनाथविहंगोऽसौपक्षीप्रणदितस्तदा ॥ वायसःपादपगतःप्रहृष्टमभिकूजति ॥ ५५ ॥ एषवैतत्रवैदेह्याविहगःप्रतिहारकः ॥ पक्षीमांतुविशालाक्ष्याःसमीपमुपनेष्यति ॥ ५६॥ पश्यलक्ष्मणसंनादंवनेमदविवर्धनम् ॥ पुष्पिताग्रेषुवृक्षेषुद्विजानामवकूजताम् ॥ ५७ ॥ विक्षिप्तांपवनेनैतामसौतिलकमंजरीम् ॥ षट्पदःसहसाभ्येतिमदोद्धूतामिवप्रियाम् ॥ ५८ ॥ कामिनामयमत्यंतमशोकःशोकवर्धनः ॥ स्तबकैःपवनोत्क्षिप्तैस्तर्जयन्निवमांस्थितः ॥५९॥ अमीलक्ष्मणदृश्यन्तेचूताःकुसुमशालिनः ॥ विभ्रमोत्सिक्तमनसःसांगरागानराइव ॥ ६० ॥ सौमित्रेपश्यपंपायाश्चित्रासुवनराजिषु॥ किन्नरानरशार्दूलविचरंतियतस्ततः॥ ॥ ६१ ॥ इमानिशुभगंधीनिपश्यलक्ष्मणसर्वशः ॥ नलिनानिप्रकाशंतेजलेतरुणसूर्यवत् ॥ ६२ ॥ एषाप्रसन्नसलिलापद्मनीलोत्पलायुता ॥ हंसकारंडवाकीर्णापंपासौगंधिकायुता ॥ ६३ ॥ जलेतरुणसूर्याभैःषट्पदाहतकेसरैः ॥ पंकजैःशोभतेपंपासमंतादभिसंवृता ॥ ६४ ॥ चक्रवाकयुतानित्यंचित्रप्रस्थवनांतरा ॥ मातंगमृगयूथैश्चशोभतेसलिलार्थिभिः ॥ ६५ ॥ पवनाहतवेगाभिरूर्मिभिर्विमलेंभासि ॥ पंकजानिविराजंतेताड्यमानानिलक्ष्मण ॥ ६६ ॥ पद्मपत्रविशालाक्षींसततंप्रियपंकजाम् ॥ अपश्यतोमेवैदेहींजीवितंनाभिरोचते ॥ ६७॥ अहोकामस्यवामत्वंयोगतामपिदुर्लभाम् ॥ स्मारयिष्यतिकल्याणींकल्याणतरवादिनीम् ॥ ६८ ॥

मांतु मां च तस्याः समीपं तत्समीपगमनद्वारमुपनेष्यति उपस्थापयिष्यतीत्यर्थ इत्याह ॥ ५५ ॥ ५६ ॥ पुनः कामपीडां नाटयति पश्येति शृण्वित्यर्थः अवकूजतां शब्दं कुर्वताम् ॥ ५७ ॥ मदोद्धूतां मदेन स्खलंतीम् ॥ ५८ ॥ ५९ ॥ विभ्रमोत्सिक्तमनसः शृंगारोद्रिक्तचित्ताः ॥ ६० ॥ विचरंति किन्नरीभिः सहेति शेषः । स्वनायिकासहितनायकांतरदर्शनमुद्दीपनम् ॥ ६१ ॥ नलिनान्यत्र रक्तकमलानि ॥ ६२ ॥ नीलोत्पलैरासमंताद्युतः ॥ ६३ ॥ जले षट्पदाहतकेसरैर्जले भ्रमरपतितपुष्पधूलिभिरभिसंवृता व्याप्ता शोभते ॥ ६४ ॥ चित्रप्रस्थानि चित्रप्रदेशानि वनांतराणि यस्याः सा ॥ ६५ ॥ पवनाहतवेगाभिः पवनावातजनितवेगाभिः अंभसि पंकजानि विराजंत इत्यन्वयः ॥ ६६ ॥ अपश्यतो मे आत्मने इति शेषः यद्वा कर्तुः शेषत्वविवक्षायां मे इति षष्ठी ॥ ६७ ॥ वामत्वं कौटिल्यम् गतः वियुक्ताम् दुर्लभाम् अद्यामाप्यां

स्मारयिष्यति स्मारयतीत्यर्थः । चित्तवैकल्यबोधनद्वाराऽन्यथामयोगो विरहपरिपोषाय ॥ ६८ ॥ कामः कामकृततापः भूयोधिकम् ॥ ६९ ॥ रमणीयानि भवंति स्म ॥ ७० ॥ पद्मकोशस्य पलाशानि दलानि कामोद्दीपकान्यपि तन्नेत्रकोशाभ्यां तन्नेत्रपुटाभ्यां सदृशानीति द्रष्टुं दृष्टिर्मन्यत इत्यर्थः ॥ ७१ ॥ पद्मकेसरेत्यादिना शैत्यसौरभ्ये । वृक्षांतरेत्यादिना मांद्यम् ॥ ७२ ॥ ७३ ॥ ७४ ॥ किंशुकैः प्रदीप्ता इवेत्यन्वयः ॥ ७५ ॥ पंपातीररुहास्तत्तीरवृक्षाः संसिक्तास्तज्जलसेकेन वर्धिताः । मालती जातिः ॥ ७६ ॥ वासंती हेमपुष्पिका ॥ ७७ ॥ चिरिबिल्वो नक्तमालः ॥ ७८ ॥ पद्मकाः गंधवृक्षविशेषाः । सिंहकेसराः

शक्योधारयितुंकामोभवेदभ्यागतोमया ॥ यदिभूयोवसंतोमांनहन्यात्पुष्पितद्रुमः ॥ ६९ ॥ यानिस्मरमणीयानितयासहभवंतिमे ॥ तान्येवारमणीयानिजायंतेमेतयाविना ॥ ७० ॥ पद्मकोशपलाशानिद्रष्टुंदृष्टिर्हिमन्यते ॥ सीतायानेत्रकोशाभ्यांसदृशानीतिलक्ष्मण ॥ ७१ ॥ पद्मकेसरसंसृष्टो वृक्षांतरविनिःसृतः ॥ निःश्वासइवसीतायावातिवायुर्मनोहरः ॥ ७२ ॥ सौमित्रेपश्यपंपायादक्षिणेगिरिसानुषु ॥ पुष्पितांकर्णिकारस्ययष्टिंपरमशोभिताम् ॥ ७३ ॥ अधिकंशैलराजोऽयंधातुभिस्तुविभूषितः ॥ विचित्रंसृजतेरेणुंवायुवेगविघट्टितम् ॥७४॥ गिरिप्रस्थास्तुसौमित्रेसर्वतःसंप्रपुष्पितैः ॥ निष्पत्रैःसर्वतोरम्यैःप्रदीप्ताइवकिंशुकैः ॥ ७५ ॥ पंपातीररुहाश्चेमेसंसिक्तामधुगंधिनः ॥ मालतीमल्लिकापद्मकरवीराश्चपुष्पिताः ॥ ७६ ॥ केतक्यःसिंदुवाराश्चवासंत्यश्चसुपुष्पिताः ॥ मातुलिंगाश्चपूर्णाश्चकुंदगुल्माश्चसर्वशः ॥ ७७ ॥ चिरिबिल्वामधूकाश्चवंजुलाबकुलास्तथा ॥ चंपकास्तिलकाश्चैवनागवृक्षाश्चपुष्पिताः ॥ ७८॥ पद्मकाश्चैवशोभंतेनीलाशोकाश्चपुष्पिताः ॥ लोध्राश्चगिरिपृष्ठेषुसिंहकेसरपिंजराः ॥ ७९॥ अंकोलाश्चकुरंटाश्चचूर्णकाःपारिभद्रकाः ॥ चूताःपाटलयश्चापिकोविदाराश्चपुष्पिताः ॥८० ॥मुचुकुंदार्जुनाश्चैवदृश्यंतेगिरिसानुषु ॥ केतकोद्दालकाश्चैवशिरीषाःशिंशपाधवाः ॥ ८१ ॥ शाल्मल्यःकिंशुकाश्चैवरक्ताःकुरवकास्तथा ॥ तिनिशानक्तमालाश्चचंदनाःस्यंदनास्तथा ॥ ८२ ॥ हिंतालास्तिलकाश्चैवनागवृक्षाश्चपुष्पिताः ॥ पुष्पितान्पुष्पिताग्राभिर्लताभिःपरिवेष्टितान् ॥ ८३ ॥ द्रुमान्पश्येहसौमित्रेपंपायारुचिरान्बहून् ॥ वातविक्षिप्तविटपान्यथासन्नान्द्रुमानिमान् ॥ ८४ ॥ लताःसमनुवर्ततेमत्ताइववरस्त्रियः ॥ पादपात्पादपंगच्छञ्छैलाच्छैलंवनाद्वनम् ॥ ८५ ॥ वातिनैकरसास्वादसंमोदितइवानिलः ॥ केचित्पर्याप्तकुसुमाःपादपामधुगंधिनः ॥ ८६ ॥ केचिन्मुकुलसंवीताःश्यामवर्णाइवाबभुः ॥ इदंमृष्टमिदंस्वादुप्रफुल्लमिदमित्यपि ॥ ८७॥ रागरक्तोमधुकरःकुसुमेष्वेवलीयते ॥ निलीयपुनरुत्पत्यसहसान्यत्रगच्छति ॥ मधुलुब्धोमधुकरःपंपातीरद्रुमेष्वसौ ॥ ८८ ॥

पिंजरा येस्ते ॥ ७९ ॥ चूर्णकाः शाल्मलीविशेषाः । पारिभद्रको मंदारः ॥ ८० ॥ मुचुकुंदाः मुचिलिंदा इति पाठांतरम् ॥ ८१ ॥ ८२ ॥ पुष्पिताः संतीति शेषः तान्पश्येत्याह पुष्पितानिति । समासोक्त्यलंकारः ॥ ८३ ॥ तानेवोपमामुखेनोपपादयति वातेति ॥ ८४ ॥ ८५ ॥ नैकरसास्वादसंमोदित इव अनेकरसास्वादेन जातहर्ष इव ॥ ८६ ॥ मधुलिप्सया पुष्पात्पुष्पांतरं गच्छन् । उत्प्रेक्षते

इदं मृष्टमिति मृष्टं मधुरम् ॥ ८७ ॥ ८८ ॥ स्वयं निपतितैः कुसुमसमूहैरुपस्तीर्णेयं भूमिः शयनप्रस्तरैः शयनार्थतल्पप्रसरणैरिव सुखाकृता । सुखकरी सुखप्रियादानुलोम्य इति डाच् ॥ ८९ ॥ विविधैस्तैः पुष्पैर्नगसानुषु विस्तीर्णाः पीतरक्ताभाः अतएव विविधाः प्रस्तराः शय्याः कृता इत्युत्प्रेक्षा ॥ ९० ॥ हिमांते शिशिरांते पुष्पमासे चैत्रे संघर्षः स्पर्धा ॥ ९१ ॥ नगा वृक्षाः । विटपाः शाखाः कुसुमयुक्तशाखावंत इत्यर्थः ॥ ९२ ॥ उद्दीपयन्निव ममेति शेषः ॥ ९३ ॥ मंदाकिन्यास्तत्सदृशपंपायाः । अतिशयोक्तिरत्र । यत इदं मनोरमम् अतो यज्जगति तस्या गुणा विख्याता एतत्स्थाने युक्तमित्यर्थः ॥ ९४ ॥

इयंकुसुमसंघातैरुपस्तीर्णासुखाकृता ॥ स्वयंनिपतितैर्भूमिःशयनप्रस्तरैरिव ॥८९॥ विविधाविविधैःपुष्पैस्तैरेवनगसानुषु ॥ विस्तीर्णाःपीतरक्ताभाः सौमित्रेप्रस्तराःकृताः ॥ ९० ॥ हिमांतेपश्यसौमित्रेवृक्षाणांपुष्पसंभवम् ॥ पुष्पमासेहितरवःसंघर्षादिवपुष्पिताः ॥ ९१ ॥ आह्वयंतइवान्योन्यंनगाः षट्पदनादिताःकुसुमोत्तंसविटपाःशोभंतेबहुलक्ष्मण ॥ ९२ ॥ एषकारंडवःपक्षीविगाह्यसलिलंशुभम् ॥ रमतेकांतयासार्धंकाममुद्दीपयन्निव ॥ ९३ ॥ मंदाकिन्यास्तुयदिदंरूपमेतन्मनोहरम् ॥ स्थानेजगतिविख्यातागुणास्तस्यामनोरमाः ॥ ९४ ॥ यदिदृश्येतसासाध्वीयदिचेहवसेमहि ॥ स्पृहयेयं नशक्रायनायोध्यायैरघूत्तम ॥ ९५ ॥ नह्येवंरमणीयेषुशाद्वलेषुतयासह ॥ रमतोमेभवेच्चिंतानस्पृहान्येषुवाभवेत् ॥९६॥ अमीहिविविधैःपुष्पैस्तरवो विविधच्छदाः ॥ काननेऽस्मिन्विनाकांतांचितामुत्पादयंतिमे ॥ ९७ ॥ पश्यशीतजलांचेमांसौमित्रेपुष्करायुताम् ॥ चक्रवाकानुचरितांकारंडवनिषेविताम् ॥ ९८ ॥ प्लवैःक्रौंचैश्चसंपूर्णांमहामृगनिषेविताम् ॥ अधिकंशोभतेपंपाविकूजद्भिर्विहंगमैः ॥ ९९ ॥ दीपयंतीवमेकामंविविधामुदिताद्विजाः ॥ श्यामांचंद्रमुखींस्मृत्वाप्रियांपद्मनिभेक्षणाम् ॥ पश्यसानुषुचित्रेषुमृगीभिःसहितान्मृगान् ॥ १०० ॥ मांपुनर्मृगशावाक्ष्यावैदेह्याविरहीकृतम् ॥ व्यथयंतीवमेचित्तंसंचरंतस्ततस्ततः ॥ १ ॥ अस्मिन्सानुनिरम्येहिमत्तद्विजगणाकुले ॥ पश्येयंयदितांकांतांततःस्वस्तिभवेन्मम ॥ २ ॥ जीवेयं खलुसौमित्रेमयासहसुमध्यमा ॥ सेवेतयदिवैदेहीपंपायाःपवनंशुभम् ॥ ३ ॥ पद्मसौगंधिकवहंशिवंशोकविनाशनम् ॥ धन्यालक्ष्मणसेवंतेपंपायावनमारुतम् ॥ ४ ॥ श्यामापद्मपलाशाक्षीप्रियाविरहितामया ॥ कथंधारयतिप्राणान्विवशाजनकात्मजा ॥ ५ ॥ किंनुवक्ष्यामिधर्मज्ञंराजानं सत्यवादिनम् ॥ जनकंपृष्टसीतंतंकुशलंजनसंसदि ॥ ६ ॥

वसेमहि तया सहेति शेषः । शक्राय शक्रपदप्राप्तये ॥ ९५ ॥ उक्तमेवानुरागातिशयेन पुनराह नहीति । अन्येषु सुखांतरेषु ॥ ९६ ॥ ९७ ॥ इमां पंपाम् पुष्करैरासमंताद्युताम् ॥ ९८ ॥ ९९ ॥ स्मृत्वा स्मारयित्वा दीपयंतीवेत्यन्वयः ॥ १०० ॥ विरहीकृतं विरहितं कृतम् पश्येत्यनुकर्षः । संचरंतो मृगीभिः सहिता मृगा इति शेषः ॥ १ ॥ २ ॥ स्वस्ति भवेदित्यस्यैव विवरणम् जीवेयमिति । यदि सा मया सहैवंभूतं पद्मानां सौगंधिकानां च गंधवहं पवनं सेवेत तदा जीवेयमित्यन्वयः ॥ ३ ॥ पंपावनवायुं ये नायिकया सह सेवंते ते धन्या इत्यर्थः ॥ ४ ॥ विवशा शत्रुवशत्वात् ॥ ५ ॥ पृष्टा सीता

केति येन तं किन्नु कुशलं वक्ष्यामि ॥६॥ मंदं मंदभाग्यम् ॥७॥ धारये प्राणानिति शेषः ॥८॥ अश्चिते पूजिते पद्मतुल्ये अक्षिणी यत्र तादृशम् ॥९॥ स्मितेन ईषद्धास्येन विनोदवचनेनांतरे मध्ये एव युतं नत्वोष्ठप्रदेशाद्वहिरिति पतिव्रतालक्षणसूचनम् । इदं पूर्ववर्णितमुखान्वयि । कश्चित्तु प्रसन्नहास्यविशेषेण युतमिति वाक्यविशेषणमाह । गुणवत् प्रसादवत् । मधुरम् अपरुषाक्षरम् ॥ ११० ॥ वने दुःखं प्राप्यापि नष्टदुःखेव ॥ ११ ॥ क सा स्नुषा कथं किंप्रकारेति च पृच्छंतीं किं नु वक्ष्यामि यथाजातं वक्ष्यामि वा अन्यथा वोभयमपि वक्तुं न शक्यत इत्यर्थः ॥ १२ ॥ १३ ॥ अव्ययमनपायार्थम् ॥ १४ ॥ संस्तंभ शोकं निरुंधीत्यर्थः । अकलुषात्मनामपीदृशानां शोकमनसां मतिर्मंदा नेति न अपि तु मंदैव ॥ १५ ॥ अतः स्मृत्वेत्यादि । संयोगा विप्रयोगांता इति न्यायेन प्रियविषयेऽवश्यंभाविवियोगदुःखं स्मृत्वा स्नेहं त्यज ।

यामामनुगतामंदंपित्राप्रस्थापितंवनम् ॥ सीताधर्मंसमास्थायक्वनुसावर्ततेप्रिया ॥ ७ ॥ तयाविहीनःकृपणःकथंलक्ष्मणधारये ॥ यामामनुगता राज्याद्भ्रष्टंविहतचेतसम् ॥८॥ तच्चार्वंचितपद्माक्षंसुगंधिशुभमव्रणम् ॥ अपश्यतोमुखंतस्याःसीदतीवमतिर्मम ॥ ९ ॥ स्मितहास्यांतरयुतंगुणवन्मधुरं हितम् ॥ वैदेह्यावाक्यमतुलंकदाश्रोष्यामिलक्ष्मण ॥ ११० ॥ प्राप्यदुःखंवनेश्यामामांमन्मथविकर्शितम् ॥ नष्टदुःखेवहृष्टेवसाध्वीसाध्वभ्यभाषत ॥ ॥११॥ किंनुवक्ष्याम्ययोध्यायांकौसल्यांहिनृपात्मज ॥ क्वसास्नुषेतिपृच्छंतींकथंचापिमनस्विनीम् ॥१२॥ गच्छलक्ष्मणपश्यत्वंभरतंभ्रातृवत्सलम् ॥ नह्यहंजीवितुंशक्तस्तामृतेजनकात्मजाम् ॥ १३ ॥ इतिरामंमहात्मानंविलपंतमनाथवत् ॥ उवाचलक्ष्मणोभ्राताव चनंयुक्तमव्ययम् ॥ १४ ॥ संस्तंभरामभद्रंतमाशुचःपुरुषोत्तम ॥ नेदृशानांमतिर्मंदाभवत्यकलुषात्मनाम् ॥ १५ ॥ स्मृत्वावियोगजंदुःखंत्यजस्नेहंप्रियेजने ॥ अतिस्नेहपरिष्वंगाद्व र्तिरार्द्रापिदह्यते ॥ १६॥ यदिगच्छतिपातालंततोऽभ्यधिकमेववा ॥ सर्वथारावणस्तातनभविष्यतिराघव ॥ १७ ॥ प्रवृत्तिर्लभ्यतांतावत्तस्यपापस्यर क्षसः ॥ ततोहास्यतिवासीतांनिधनंवागमिष्यति ॥ १८ ॥ यदियातिदितेर्गर्भंरावणःसहसीतया ॥ तत्राप्येनंहनिष्यामिनचेद्दास्यतिमैथिलीम् ॥ ॥ १९ ॥ स्वास्थ्यंभद्रभजस्वार्यत्यज्यतांकृपणामतिः ॥ अर्थोहिनष्टकार्यार्थैरयत्नेनाधिगम्यते ॥ १२० ॥ उत्साहोबलवानार्यनास्त्युत्साहात्परं बलम् ॥ सोत्साहस्यहिलोकेषुनकिंचिदपिदुर्लभम् ॥ २१ ॥ उत्साहवंतःपुरुषानावसीदंतिकर्मसु ॥ उत्साहमात्रमाश्रित्यप्रतिलप्स्यामजानकीम् ॥ ॥ २२ ॥ त्यज्यतांकामवृत्तत्वंशोकंसंन्यस्यपृष्ठतः ॥ महात्मानंकृतात्मानमात्मानंनावबुध्यसे ॥ २३ ॥

विपक्ष बाधकमाह अतिस्नेहेति । आर्द्रा जलसिक्तापि एवं शांतमपि चित्तमतिस्नेहसंबंधेन तद्वियोगजशोकदीपेन दीप्येतैवेति भावः ॥ १६ ॥ ततोभ्यधिकं पातालादभ्यधिकं गुप्तदेशम् न भविष्यति न जीविष्यतीत्यर्थः ॥ १७ ॥ तावत्प्रथमम् प्रवृत्तिर्वासवृत्तान्तः ॥ १८ ॥ दितेरसुरमातुः ॥ १९ ॥ स्वास्थ्यं धैर्यं स्वस्वभावरूपम् नष्टः कार्यावश्यं सेव्योऽर्थो येषां तैः पुंभिः सोर्थोऽयत्ने यत्नाभावे सति नाधिग म्यते ॥१२० ॥ अत उत्साह इति । बलवान्कार्यसाधनसमर्थः ॥ २१ ॥ उत्साहमात्रं शत्रुसंहारे पौरुषम् ॥२२॥ कामवृत्तत्वं कामपरतंत्रत्वम् । शोकं पृष्ठतः संन्यस्य कामजशोकसेवने कामस्य वृद्धेस्तत्सेवनं पृष्ठतः कृत्वेत्यर्थः । महात्मानं रजस्तमोम लास्पृष्टचित्तं निरतिशयशौर्यधैर्यादिस्वभावचित्तं च कृतात्मानं श्रुतिस्मृत्यादिषु गुरुभिः शिक्षितस्वरूपं किं नावबुद्ध्यसे यद्यपीश्वरस्य लोकवद्धर्माधर्माश्रयं चित्तं नास्ति

तथापि मायिकं तदाश्रयं तदस्ति तत्स्वीकारे बाधकाभावात् ॥ २३ ॥ एवं द्वित्रिवचनमात्रेण शुद्धसत्त्वप्रकृतिकत्वादारोपितशोकादि संत्यज्य धैर्यमुपागमत् मोहः कामजो मोहजश्च शोकः ॥ २४ ॥ अतिक्रामत् अत्यकामत् पारिप्लवा वायुचञ्चलास्तीरद्रुमा यस्यां ताम् ॥ २५ ॥ विचार्य लक्ष्मणोक्तेर्युक्तत्वमिति शेषः ॥ २६ ॥ धर्मेण संस्तंभ रामेत्यादिनीतिरूपधर्मबोधनेन बलेन गच्छति पातालमित्यादिस्वबलकथनेन च ॥ २७ ॥ एवं वृत्तमनूद्य वर्तिष्यमाणं दर्शयति ताविति । वितत्रसे वितत्रास वाल्यानीतत्वशंकया त्रासः इष्टमिष्टभोजनादिविषयचेष्टामपि नैव विचेष्ट च न चकार च । विश्रांतिमत्तस्य बभूव चित्तमित्याधुनिकपाठे तस्य सुग्रीवस्य चित्तं तद्दर्शनेन विश्रांतिमद्व्यवद्धभूवेत्यर्थः ॥ २८ ॥ उक्तमेव विवृणोति स ताविति । भयभारभग्नः भयभारेण भग्नोत्साहः ॥ २९ ॥ तमाश्रमं मतंगशापाद्वालिना दुष्प्रवेशं अतएव

एवंसंबोधितस्तेनशोकोपहतचेतनः ॥ त्यज्यशोकंचमोहंचरामोधैर्यमुपागमत् ॥ २४ ॥ सोऽभ्यतिक्रामदव्यग्रस्तामचिंत्यपराक्रमः ॥ रामःपंपांसुरुचिरांरम्यांपारिप्लवद्रुमाम् ॥ २५ ॥ निरीक्षमाणःसहसामहात्मासर्वंवनंनिर्झरकंदरंच ॥ उद्विग्नचेताःसहलक्ष्मणेनविचार्यदुःखोपहतःप्रतस्थे ॥ २६ ॥ तंमत्तमातंगविलासगामीगच्छंतमव्यग्रमनामहात्मा ॥ सलक्ष्मणोराघवमिष्टचेष्टोररक्षधर्मेणबलेनचैव ॥२७॥ तावृष्यमूकस्यसमीपचारीचरन्ददर्शाद्भुतदर्शनीयौ ॥ शाखामृगाणामधिपस्तरस्वीवितत्रसेनैवविचेष्टचेष्टम् ॥ २८ ॥ सतौमहात्मागजमंदगामीशाखामृगस्तत्रचरंश्चरंतौ ॥ दृष्ट्वाविषादंपरमंजगामचिंतापरीतोभयभारभग्नः ॥ २९ ॥ तमाश्रमंपुण्यसुखंशरण्यंसदैवशाखामृगसेवितांतम् ॥ त्रस्ताश्चदृष्ट्वाहरयोविजग्मुर्महौजसौराघवलक्ष्मणौतौ ॥ १३० ॥ इत्यार्षेश्रीम०वा०आदि० किष्किं०प्रथमः सर्गः ॥ १ ॥ तौतुदृष्ट्वामहात्मानौभ्रातरौरामलक्ष्मणौ ॥ वरायुधधरौवीरौसुग्रीवःशंकितोऽभवत् ॥१॥ उद्विग्नहृदयःसर्वादिशःसमवलोकयन् ॥ नव्यतिष्ठतकस्मिंश्चिद्देशेवानरपुंगवः ॥ २ ॥ नैवचक्रेमनःस्थातुंवीक्ष्यमाणौमहाबलौ ॥ कपेःपरमभीतस्यचित्तंव्यवससादह ॥ ३ ॥ चिंतयित्वासधर्मात्माविमृश्यगुरुलाघवम् ॥ सुग्रीवःपरमोद्विग्नःसर्वैस्तैर्वानरैःसह ॥ ४ ॥ ततःससचिवेभ्यस्तुसुग्रीवःप्लवगाधिपः ॥ शशंसपरमोद्विग्नःपश्यंस्तौरामलक्ष्मणौ ॥ ५ ॥ एतौवनमिदंदुर्गंवालिप्रणिहितौध्रुवम् ॥ छद्मनाचीरवसनौप्रचरंताविहागतौ ॥ ६ ॥ ततःसुग्रीवसचिवादृष्ट्वापरमधन्विनौ ॥ जग्मुर्गिरितटात्तस्मादन्यच्छिखरमुत्तमम् ॥ ७ ॥ तेक्षिप्रमभिगम्याथयूथपायूथपर्षभम् ॥ हरयोवानरश्रेष्ठंपरिवार्योपतस्थिरे ॥ ८ ॥

शरण्यम् सेवितांतं सेवितमध्यं सेवितप्रांतं वा तौ दृष्ट्वा त्रस्ता हरयो वालिप्रेरितबुद्ध्या भीता विजग्मुर्गताः ॥ १३० ॥ निर्लेयमानः ॥ इति श्रीरा० श्रीरा० रा० वा० आदिकाव्ये किष्किंधाकांडे प्रथमः सर्गः ॥ १ ॥ ॥ तदेव विस्तारयति तौ त्विति ॥ १ ॥ न व्यतिष्ठत न व्यवस्थितोऽभूत् ॥ २ ॥ व्यवससाद विषण्णमभूत् ॥ ३ ॥ अवस्थितिप्रस्थानयोर्गुरुलाघवं विमृश्य सचिवैः सह विचार्य ॥ ४ ॥ ततः विचारानंतरं प्रस्थानेच्छया सचिवेभ्यः शशंस भयहेतुमिति शेषः ॥ ५ ॥ तमेवाह एताविति । छद्मना विश्वासार्थम् ऋषिवेषेणेत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् अतो ज्ञात्वा प्रस्थातव्यमित्याशयः ॥ ६ ॥ ततः सुग्रीवोक्त्यनंतरं सुग्रीवसचिवास्तौ परमधन्विनौ अतएव शंकास्पदौ दृष्ट्वा तस्मात्पूर्वमधिष्ठिताद्गिरितटादन्यत्तस्यैव गिरेः शिखरं जग्मुः सुग्रीवेणसहेतिशेषः अन्यं शिखरमितिपाठे पुंस्त्वमार्षम् ॥ ७ ॥ ते क्षिप्रं शिखरांतरमभिक्रम्य

प्राप्य यूथपर्षभं वानरश्रेष्ठं सुग्रीवं परिवार्योपतस्थिरे उपविष्टाः ॥ ८ ॥ उक्तमेव विवृणोति एवमिति । उक्तरीत्या स्थितिगतिभयाभयसुखदुःखादावेकायनमेकमार्गसमानत्वं गताः गिरेः प्रागधिष्ठितगिरिशृंगाद्गिरिं तस्यैव शिखरांतरं मृगत्रासादि कुर्वंतो ययुर्गतवंतः ॥९॥१०॥११॥ सुग्रीवसचिवा हनुमदादयः ॥१२॥ वालिकिल्बिषेण वालिप्रवर्तनया किल्बिषाद्वधाच्छंकितम् ॥ १३ ॥ संभ्रमश्चित्तक्षोभः वालिकृते वालिनिमित्तम् सर्ववानरैः मलयो मलयपर्यायो ऋष्यमूकः ॥१४॥ यस्माद्वालिनः ॥१५॥ तदेवाहादरायस्मात्तवेति । पूर्वजाद्वालिनः इह पर्वते तस्मात्ते भयं न पश्यामीत्यन्वयः ॥१६॥ शाखामृगत्वं बहुचेष्टचपलचित्तमर्कटत्वं तदेवाह लघुचित्ततयेति । लघु चपलम्॥१७॥ननु ततो भयाभावेपि तत्प्रेरिताद्भयं तत्राह बुद्धीति । इंगितैरंतराशयगमकैश्चेष्टाविशेषैर्बुद्ध्या निश्चयात्मकेन विज्ञानेन पारक्याशयज्ञानेन संपन्नः संस्तदुचितं सर्वमाचर सर्वभूतानि निजशास्यप्रजाजातम् ॥१८॥ नेदं भयं चापलमूलमित्याह सुग्रीव इति ॥१९॥ तदेवाह दीर्घेति ॥२०॥ ननु वनचारिणा वानरेण वालिना कुतोऽनयोः प्रवर्तना तत्राह राजान इति ।

एवमेकायनगताःप्लवमानागिरेर्गिरिम् ॥ प्रकंपयंतोवेगेनगिरीणांशिखराणिच ॥ ९ ॥ ततःशाखामृगाःसर्वेप्लवमानामहाबलाः ॥ बभंजुश्चनगांस्तत्रपुष्पितान्दुर्गमाश्रितान् ॥ १० ॥ आप्लवंतोहरिवराःसर्वतस्तंमहागिरिम् ॥ मृगमार्जारशार्दूलांस्त्रासयंतोययुस्तदा ॥ ११ ॥ ततःसुग्रीवसचिवाःपर्वतेंद्रेसमाहिताः ॥ संगम्यकपिमुख्येनसर्वेप्रांजलयःस्थिताः ॥ १२ ॥ ततस्तुभयसंत्रस्तंवालिकिल्बिषशंकितम् ॥ उवाचहनुमान्वाक्यंसुग्रीवंवाक्यकोविदः ॥ १३ ॥ संभ्रमस्त्यज्यतामेषसर्वैर्वालिकृतेमहान् ॥ मलयोऽयंगिरिवरोभयंनेहास्तिवालिनः ॥१४॥ यस्मादुद्विग्नचेतास्त्वंविद्रुतोहरिपुंगव ॥ तंक्रूरदर्शनंक्रूरंनेहपश्यामिवालिनम् ॥ १५ ॥ यस्मात्तवभयंसौम्यपूर्वजात्पापकर्मणः ॥ सनेहवालीदुष्टात्मानतेपश्याम्यहंभयम् ॥ १६ ॥ अहोशाखामृगत्वंतेव्यक्तमेवप्लवंगम ॥ लघुचित्ततयात्मानंनस्थापयसियोमतौ ॥१७॥ बुद्धिविज्ञानसंपन्नइंगितैःसर्वमाचर ॥ नह्यबुद्धिंगतोराजासर्वभूतानिशास्तिहि ॥१८॥ सुग्रीवस्तुशुभंवाक्यंश्रुत्वासर्वंहनूमतः ॥ ततःशुभतरंवाक्यंहनूमंतमुवाचह ॥ १९ ॥ दीर्घबाहूविशालाक्षौशरचापासिधारिणौ ॥ कस्यनस्याद्भयंदृष्ट्वाह्येतौसुरसुतोपमौ ॥ २० ॥ वालिप्रणिहितावेवशंकेऽहंपुरुषोत्तमौ ॥ राजानोबहुमित्राश्चविश्वासोनात्रहिक्षमः ॥ २१ ॥ अरयश्चमनुष्येणविज्ञेयाश्छद्मचारिणः ॥ विश्वस्तानामविश्वस्ताश्छिद्रेषुप्रहरंत्यपि ॥ २२ ॥ कृत्येषुवालीमेधावीराजानोबहुदर्शिनः ॥ भवंतिपरहंतारस्तेज्ञेयाःप्राकृतैर्नरैः ॥ २३ ॥ तौत्वयाप्राकृतेनेवगत्वाज्ञेयौप्लवंगम ॥ इंगितानांप्रकारैश्चरूपव्याभाषणेनच ॥ २४ ॥ लक्षयस्वतयोर्भावंप्रहृष्टमनसौयदि॥ विश्वासयन्प्रशंसाभिरिंगितैश्चपुनःपुनः ॥ २५ ॥

बहुमित्राः जात्यंतरेष्वपि मित्रवंतः यथा दशरथो गृध्रराजेन मित्रवान् एवं वालिनापि नरमैत्र्यं संभावितमिति भावः ॥ २१ ॥ नन्वथापि तापसाभ्यां कुतो भयं तत्राह अरयश्चेति । यतस्ते छद्मचारिणोऽतो विज्ञेयाः यतश्च विश्वस्तानां वंचनया प्राप्तविश्वासानामरीणां स्वयमविश्वस्ताश्छिद्रेषु प्रहारावकाशेषु प्रहरंति अतो विज्ञेया इत्यर्थः ॥ २२ ॥ उक्तमुपनयति कृत्येष्विति । राजानो बहुदर्शिनः नानाविधवंचनोपायज्ञाः परहंतारो भवंति ते एते प्राकृतैः प्राकृतवेषैश्चारैर्ज्ञेयाः ज्ञातव्यांतराशयाः ॥ २३ ॥ यत एवमतस्ताविति प्राकृतेनेव उदासीनेनेव इंगितानां प्रकारैर्विशेषैः रूपेण सौम्यासौम्याकारेण व्याभाषणेन तत्तत्प्रसंगे दीयमानोत्तरेण च ॥ २४ ॥ तयोर्मनुष्ययोर्यदि त्वयि समीपस्थिते प्रहृष्टमनसौ उत्तरप्रत्युत्तरादौ संतुष्टमनसौ तदा तयोरभिमुखं स्थित्वा ममैव प्रशंसाभिस्तद्बोधकवाक्यैरिंगितैर्मामकाभिप्रायबोधनैर्मयि

तौ विश्वासयन्नस्य वनस्य प्रवेशस्य प्रयोजनं पृच्छ । यद्वा ममैवाभिमुखं यथा तथा स्थित्वा प्रशंसाभिस्तयोःस्तुतिभिरिंगितैः स्वीयैस्तावात्मनि मयि च विश्वासयन्पृच्छेरयन्वयः । स्वाभिमुखस्थितिकथनमन्यादृश वचनकथनसंभावनया तन्निरासायेति बोध्यम् ॥२५॥२६॥ प्रश्नावसरं दर्शयति शुद्धेति । यद्येतौ शुद्धात्मानावस्मासु द्वेषरहितौ जानीहि ज्ञास्यसि तर्ह्येव तदभिमतं प्रयोजनं पृच्छ । उपसंहरति व्याभाषितैरिति दुष्टताऽदुष्टता चेति तंत्रेण पदच्छेदः ॥ २७ ॥ २८ ॥ २९ ॥ धैरेमानः ॥ इति श्रीरामाभिरामे श्रीरामीय रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्वितीयः सर्गः ॥ २ ॥ ॥ विज्ञाय तात्पर्यतो ज्ञात्वा ॥ १ ॥ भिक्षुरूपं प्राकृततापसरूपम् शठबुद्धितया अविश्वस्तबुद्धितया ॥ २ ॥ विनीतवत् विनीतयोग्यम् ॥ ३ ॥ यथावत्प्रशशंस नतु मिथ्यास्तुतिरित्यर्थः । आबभाषे वक्तुमभिमुखीचकार

ममैवाभिमुखंस्थित्वापृच्छत्वंहरिपुंगव ॥ प्रयोजनंप्रवेशस्यवनस्यास्यधनुर्धरौ ॥२६॥ शुद्धात्मानौयदित्वेतौजानीहित्वंप्लवंगम ॥ व्याभाषितैर्वारूपै र्वाविज्ञेयादुष्टताऽनयोः ॥ २७ ॥ इत्येवंकपिराजेनसंदिष्टोमारुतात्मजः ॥ चचारगमनेबुद्धिंयत्रतौरामलक्ष्मणौ ॥ २८ ॥ तथेतिसंपूज्यवचस्तुतस्यक पिःसुभीतस्यदुरासदस्य ॥ महानुभावौहनुमान्ययौतदासयत्ररामोतिबलीसलक्ष्मणः ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्वितीयः सर्गः ॥ २ ॥ वचोविज्ञायहनुमान्सुग्रीवस्यमहात्मनः ॥ पर्वतादृष्यमूकात्तुपुप्लुवेयत्रराघवौ ॥ १ ॥ कपिरूपंपरित्यज्य हनुमान्मारुतात्मजः ॥ भिक्षुरूपंततोभेजेशठबुद्धितयाकपिः ॥२॥ ततःसहनुमान्वाचाश्लक्ष्णयासुमनोज्ञया ॥ विनीतवदुपागम्यराघवौप्रणिपत्यच ॥ ३ ॥ आबभाषेचतौवीरौयथावत्प्रशशंसच ॥ संपूज्यविधिवद्वीरौहनुमान्वानरोत्तमः ॥ ४ ॥ उवाचकामतोवाक्यंमृदुसत्यपराक्रमौ ॥ राजर्षिदेवप्र तिमौतापसौसंशितव्रतौ ॥ ५ ॥ देशंकथमिमंप्राप्तौभवंतौवरवर्णिनौ ॥ त्रासयंतौमृगगणानन्यांश्चवनचारिणः ॥ ६ ॥ पंपातीररुहान्वृक्षान्वीक्षमाणौ समंततः ॥ इमांनदींशुभजलांशोभयंतौतरस्विनौ ॥ ७ ॥ धैर्यवंतौसुवर्णाभौकौयुवांचीरवाससौ ॥ निःश्वसंतौवरभुजौपीडयंताविमाःप्रजाः ॥ ८ ॥ सिंहविप्रेक्षितौवीरौमहाबलपराक्रमौ ॥ चक्रचापनिभेचापेगृहीत्वाशत्रुनाशनौ ॥ ९ ॥ श्रीमंतौरूपसंपन्नौवृषभश्रेष्ठविक्रमौ ॥ हस्तिहस्तोपमभुजौद्यु तिमंतौनरर्षभौ ॥ १० ॥ प्रभयापर्वतेंद्रोऽसौयुवयोरवभासितः ॥ राज्यार्हावमरप्रख्यौकथंदेशमिहागतौ ॥ ११ ॥ पद्मपत्रेक्षणौवीरौजटामंडलधा रिणौ ॥ अन्योन्यसदृशौवीरौदेवलोकादिहागतौ ॥ १२ ॥ यदृच्छयेवसंप्राप्तौचंद्रसूर्यौवसुंधराम् ॥ विशालवक्षसौवीरौमानुषौदेवरूपिणौ ॥ १३ ॥

संपूज्य वाचा प्रशस्य ॥ ४ ॥ कामतः सुग्रीवोपदेशाविरुद्धस्वेच्छातः राजर्षी च देवौ च तत्प्रतिमौ ॥ ५ ॥ वरवर्णिनौ ब्रह्मचारिश्रेष्ठौ अन्यांश्च रक्षोसुरादीन् ॥ ६ ॥ समंततो वीक्षमाणौ किंचिद्वस्त्वन्वेष माणाविवेत्यर्थः । इमा नदीमिति । सरंस्यपि विस्तृतत्वेन नदीत्वोपचार इति केचित् । नद्येवेत्यन्ये ॥ ७ ॥ शोभनो वर्ण आभा कांतिश्च ययास्तौ निःश्वसंतौ किंचि दुःखवशेनेति शेषः । इमा वन्याः प्रजाः पीडयंतौ स्वरूपमात्रेणेति शेषः ॥ ८ ॥ ९ ॥ हस्तः शुंडादंडः ॥ १० ॥ राज्यार्हौ देवतुल्यौ देशं हित्वा कथमिहागताविल्यर्थः । आकारतो महाराजत्वानिश्चयादेव मुक्तिः ॥ ११ ॥ देवलोकादिह भूतले

आगताविव ॥ १२ ॥ १३ ॥ समदौ हृष्टौ गोवृषौ तरुणवृषभाविव ॥ १४ ॥ १५ ॥ चित्रमनुलेपनं स्वर्णजलरूषणं ययोस्ते ॥ १६ ॥ हेमभूषिते वज्रे यथा ॥ १७ ॥ १८ ॥ निर्मुक्तौ मुक्तकंचुकौ कस्माद्धै कस्माद्धेतोर्नाभिभाषथः मत्युत्तरमिति शेषः ॥ १९ ॥ ननु कस्त्वं कस्य वा यस्यास्माभिः मत्युत्तरं देयं तत्राह सुग्रीव इति । सुग्रीवस्याक्षुद्रत्वबोधनाय तत्स्तुतिपूर्वकमुक्तिः । विनिकृतो निरस्तः ॥ २० ॥ २१ ॥ ननु त्वद्राज्ञाऽस्मत्समीपे मेषणं किमर्थं तत्राह युवाभ्यामिति ॥ २२ ॥ वानरराजसचिवस्य मानुषं रूपं कुतस्तत्राह भिक्षुरूपेति । अनेन शुद्धं वानरत्वमेव नेत्यपि बोधितम् ईदृशं वित्त मिति माक्तनेनान्वयः ॥ २३ ॥ २४ ॥ २५ ॥ तमेव सुग्रीवमेव कांक्षमाणस्येच्छत इत्यर्थः ॥ २६ ॥ तमभ्यभाष अभिभाषस्वेति यावत् । वाक्येति । वाक्यज्ञं वाक्यरचनाभिज्ञम् मधुरैर्वाक्यैः स्नेहयु

सिंहस्कंधौमहोत्साहौसमदाविवगोवृषौ ॥ आयताश्चसुवृत्ताश्चबाहवःपरिघोपमाः ॥ १४ ॥ वर्सभूषणभूषार्हाःकिमर्थंनविभूषिताः ॥ उभौयोग्यावहंमन्येरक्षितुंपृथिवीमिमाम् ॥ १५ ॥ ससागरवनांकृत्स्नांविंध्यमेरुविभूषिताम् ॥ इमेचधनुषीचित्रेश्लक्ष्णेचित्रानुलेपने ॥ १६ ॥ प्रकाशेतेयथेंद्रस्यवज्रेहेमविभूषिते ॥ संपूर्णाश्चशितैर्बाणैस्तूणाश्चशुभदर्शनाः ॥ १७॥ जीवितांतकरैर्घोरैर्ज्वलद्भिरिवपन्नगैः ॥ महाप्रमाणौविपुलौतप्तहाटकभूषणौ ॥ १८ ॥ खड्गावेतौविराजेतेनिर्मुक्तभुजगाविव ॥ एवंमांपरिभाषंतंकस्माद्वैनाभिभाषथः ॥ १९ ॥ सुग्रीवोनामधर्मात्माकश्चिद्वानरपुंगवः ॥ वीरोविनिकृतोभ्रात्राजगद्भ्रमतिदुःखितः ॥ २० ॥ प्राप्तोऽहंप्रेषितस्तेनसुग्रीवेणमहात्मना ॥ राज्ञावानरमुख्यानांहनुमान्नामवानरः ॥ २१ ॥ युवाभ्यांसहिधर्मात्मासुग्रीवःसख्यमिच्छति ॥ तस्यमांसचिवंवित्तंवानरंपवनात्मजम् ॥ २२ ॥ भिक्षुरूपप्रतिच्छन्नंसुग्रीवप्रियकारणात् ॥ ऋष्यमूकादिहप्राप्तंकामदंकामचारिणम् ॥ २३ ॥ एवमुक्त्वातुहनुमांस्तौवीरौरामलक्ष्मणौ ॥ वाक्यज्ञोवाक्यकुशलःपुनर्नोवाचकिंचन ॥ २४ ॥ एतच्छ्रुत्वावचस्तस्यरामोलक्ष्मणमब्रवीत् ॥ प्रहृष्टवदनःश्रीमान्भ्रातरंपार्श्वतःस्थितम् ॥ २५ ॥ सचिवोऽयंकपींद्रस्यसुग्रीवस्यमहात्मनः ॥ तमेवकांक्षमाणस्यममांतिकमिहागतः ॥ २६ ॥ तमभ्यभाषसौमित्रेसुग्रीवसचिवंकपिम् ॥ वाक्यज्ञंमधुरैर्वाक्यैःस्नेहयुक्तमरिंदमम् ॥ २७ ॥ नानृग्वेदविनीतस्यनायजुर्वेदधारिणः ॥ नासामवेदविदुषःशक्यमेवंविभाषितुम् ॥ २८ ॥ नूनंव्याकरणंकृत्स्नमनेनबहुधाश्रुतम् ॥ बहुव्याहरताऽनेननकिंचिदपशब्दितम् ॥ २९ ॥ नमुखेनेत्रयोश्चापिललाटेचभ्रुवोस्तथा ॥ अन्येष्वपिचसर्वेषुदोषःसंविदितःक्वचित् ॥ ३० ॥ अविस्तरमसंदिग्धमविलंबितमव्यथम् ॥ उरस्थंकंठगंवाक्यंवर्ततेमध्यमस्वरम् ॥ ३१ ॥

क्तमभ्यभाषेत्यन्वयः ॥ २७ ॥ विनयः मातिशाख्यादिज्ञानपूर्वकाभ्यासः ऋग्वेदविषये तद्धीनो यो न भवति तेन एकैकानुवाकेऽनुवाकांतरसांकर्येण तद्धारणस्य दुष्करत्वाद्यजुर्वेदधारणाहीनभिन्नेन गायनविषयोहादेर्दुर्ज्ञेयत्वात्सामवेदज्ञानहीनाभिन्नेनैवं मभाषितुं शक्यं न तद्धीनेनेत्यर्थः । पञ्चार्षी शेषे वा । यद्वा तद्धीनैरेवं मभाषितुं न शक्यम अशक्यमित्यर्थः । तेनायं सर्वथा तज्ज्ञ इति नोपेक्षार्ह इति व्यंग्यम् ॥ २८॥ ननु वेदमात्राध्यायिना न किंचिद्राजमंत्रादि ज्ञातुं शक्यं तत्राह नूनमिति । कृत्स्नं पदतदर्थस्वरूपनिर्णयोपयोगिन्यायसहितम् व्याकरणबोध्यसाधुत्वस्यार्थघटित्वात् । अनेन सर्वज्ञत्वं सूचितम् । तथा श्रवणे हेतुमाह बह्विति ॥ २९ ॥ इंगितैरप्यसौ विश्वासयोग्य इत्याह न मुखे इति । दोषः संविदितो व्यवहारकाले इति शेषः ॥ ३० ॥ अथ वचनरचनासौष्ठवमाह अविस्तरमिति । नातिविस्तारमित्यर्थः । असंदिग्धम् असं

दिग्धार्थमसंदिग्धाक्षरं च अविलंबितम् अनेनास्खलद्वीक्षम् अव्यर्थं न वियते श्रोतृश्रुतेर्व्यथा यस्मात्तादृशम् तेनाश्रुतिकटुवर्णमित्यर्थः । उरस्थं मध्यमारूपेण कंठगं वैखरीरूपेण कंठविवराच्छ्रोतृश्रोत्रं गतम् अतएव मध्यमस्वरं नात्युच्चैर्नातिनीचैः ॥ ३१ ॥ संस्कारक्रमसंपन्नां संस्काराणां क्रमे क्रमेण जनने संपन्नां समर्थाम् विशिष्टानुपूर्वी विशेषरूपेण पदादीनां ग्रहणाय क्रमवत्तत्तद्वर्णाकारसंस्कारानंतःकरणे उत्पाद्य तत्क्रमेण क्रमवद्वर्णावभासपदवाक्यज्ञानमिति वाक्यप्रदीपादौ स्पष्टम् । तेन मध्यमवृत्त्योच्चारणं सूचितम् । तदाहाद्भुतामविलंबितामिति । अतएव हृदयहर्षिणीम् ॥३२ ॥ त्रिस्थानव्यंजनस्थया त्रिषु स्थानेषु उरःकण्ठशिरःसु यद्व्यंजनमभिव्यक्तिस्तया तिष्ठति श्रोतृग्राह्यस्वरूपं लभते तादृश्या अनेन नित्य एव स्फोटरूपः शब्द इति सूचितम् । नाराध्यते नानुकूल्यते ॥ ३३ ॥ कार्याणां गतयः परिपाकाः ॥ ३४ ॥ दूतवाक्यप्रचोदिताः तद्वाक्यबोधिताः ॥ ३५॥ एवमुक्तः रामेणेति शेषः ॥३६॥ नौ आवयोः तमेव सुग्रीवमेव मार्गावो मार्गयावः ॥३७॥ यथा ब्रवीषि सख्यमिच्छतीति यदवादीस्तत्तथैव करिष्याव इत्यर्थः ॥३८॥

संस्कारक्रमसंपन्नामद्भुतामविलंबिताम् ॥ उच्चारयतिकल्याणींवाचंहृदयहर्षिणीम् ॥३२॥ अनयाचित्रयावाचात्रिस्थानव्यंजनस्थया ॥ कस्यनाराध्यते चित्तमुद्यतासेररेरपि ॥ ३३ ॥ एवंविधोयस्यदूतोनभवेत्पार्थिवस्यतु ॥ सिध्यंतिहिकथंतस्यकार्याणांगतयोऽनघ ॥३४॥ एवंगुणगणैर्युक्तायस्यस्युः कार्यसाधकाः ॥ तस्यसिध्यंतिसर्वेऽर्थादूतवाक्यप्रचोदिताः ॥ ३५ ॥ एवमुक्तस्तुसौमित्रिःसुग्रीवसचिवंकपिम् ॥ अभ्यभाषतवाक्यज्ञोवाक्यज्ञं पवनात्मजम् ॥ ३६ ॥ विदितानौगुणाविद्वन्सुग्रीवस्यमहात्मनः ॥ तमेवचावांमार्गावःसुग्रीवंप्लवगेश्वरम् ॥ ३७ ॥ यथाब्रवीषिहनुमन्सुग्रीववचनादिह ॥ तत्तथाहिकरिष्यावोवचनात्तवसत्तम ॥ ३८ ॥ तत्तस्यवाक्यंनिपुणंनिशम्यप्रहृष्टरूपःपवनात्मजःकपिः ॥ मनःसमाधायजयोपपत्तौसख्यं तदाकर्तुमियेषताभ्याम् ॥ ३९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे तृतीयः सर्गः ॥ ३ ॥ ततःप्रहृष्टोहनुमान्कृत्यवानितितद्वचः ॥ श्रुत्वामधुरभावंचसुग्रीवंमनसागतः ॥ १ ॥ भाव्योराज्यागमस्तस्यसुग्रीवस्यमहात्मनः ॥ यदयंकृत्यवान्प्राप्तःकृत्यंचैतदुपागतम् ॥ २ ॥ ततःपरमसंहृष्टोहनूमान्प्लवगोत्तमः ॥ प्रत्युवाचततोवाक्यंरामंवाक्यविशारदम् ॥ ३॥ किमर्थंचवनंघोरंपंपाकाननमंडितम् ॥ आगतः सानुजोदुर्गंनानाव्यालमृगायुतम् ॥ ४ ॥ तस्यतद्वचनंश्रुत्वालक्ष्मणोरामचोदितः ॥ आचचक्षेमहात्मानंरामंदशरथात्मजम् ॥ ५ ॥ राजादशरथोनामद्युतिमान्धर्मवत्सलः ॥ चातुर्वर्ण्यंस्वधर्मेणनित्यमेवाभिपालयन् ॥ ६ ॥

जयोपपत्तौ सुग्रीवस्येति शेषः । ताभ्यां रामसुग्रीवाभ्याम् ॥ ३९ ॥ धर्गैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे तृतीयः सर्गः ॥३॥ ॥ तद्वचः सचिवोयं कपींद्रस्य सुग्रीवस्य महात्मनः तमेव कांक्षमाणस्य ममांतिकमुपागत इति रामवचो महात्मन इति सोपचारप्रयोगतः सुग्रीवविषये मधुरभावं सौम्यभावं श्रुत्वा तमेव कांक्षमाण इत्यनेन सुग्रीवे रामः किंचित्कृत्यवानिति विज्ञाय प्रहृष्टः सुग्रीव सुग्रीवाभिमतसिद्धिं मनसा गतो दृष्टवान् ॥१॥ तदेव विवृणोति भाव्य इति । अवश्यंभावीत्यर्थः यदयं महापुरुषः कृत्यवान् प्रयोजनसापेक्षः प्राप्त एतत्कृत्यं च उपागतं सुग्रीवं प्राप्तमित्यर्थः ॥ २ ॥ एवं सहृदयत्वमवगत्य स्वस्वाम्युक्तं पृच्छति तत इति ॥ ३ ॥ पंपाकाननेन मंडितमलंकृतम् घोरमन्यदिति शेषः ॥ ४ ॥ रामचोदितः इंगितेनेति शेषः आचचक्षे बोधितवान् ॥ ५ ॥ ६ ॥

पितामह इव पालकत्वेनेत्यर्थः ॥ ७ ॥ ८ ॥ निर्देशो नियोगस्तत्पारगः तस्य समाप्तकल्पत्वादेवमुक्तम् ॥९॥ संयुक्तः संयुज्यमानः भ्रष्टः किंचिन्निमित्तवशात् ॥ १० ॥ ११ ॥ अवरः कनीयान्दास्यमुपागतो स्येति शेषः ॥ १२ ॥ १३ ॥ रहिते आवाभ्यां रहिते काले न ज्ञायते विशिष्येति शेषः ॥ १४ ॥ दनुः कबंधः स ज्ञास्यतीत्याख्यातः ॥ १५ ॥ स्वर्गं गंतुं दिवमाकाशं गतः उत्पतितः ॥ १६ ॥ १७ ॥

नद्वेष्टाविद्यतेतस्यसतुद्वेष्टिनकंचन ॥ सतुसर्वेषुभूतेषुपितामहइवापरः ॥ ७ ॥ अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ॥ तस्यायंपूर्वजःपुत्रोरामो नामजनैःश्रुतः ॥ ८ ॥ शरण्यःसर्वभूतानांपितुर्निर्देशपारगः ॥ ज्येष्ठोदशरथस्यायंपुत्राणांगुणवत्तरः ॥ ९ ॥ राजलक्षणसंयुक्तःसंयुक्तोराज्यसंपदा ॥ राज्याद्भ्रष्टोमयावस्तुंवनेसार्धमिहागतः ॥१०॥ भार्ययाचमहाभागसीतयाऽनुगतोवशी ॥ दिनक्षयेमहातेजाःप्रभयेवदिवाकरः ॥ ११॥ अहमस्यावरो भ्राताgुणैर्दास्यमुपागतः ॥ कृतज्ञस्यबहुज्ञस्यलक्ष्मणोनामनामतः ॥ १२ ॥ सुखार्हस्यमहार्हस्यसर्वभूतहितात्मनः ॥ ऐश्वर्येणविहीनस्यवनवासे रतस्यच ॥ १३ ॥ रक्षसाऽपहृताभार्यारहितेकामरूपिणा ॥ तच्चनज्ञायतेरक्षःपत्नीयेनास्यवाहृताः ॥ १४ ॥ दनुर्नामदितेःपुत्रशापाद्राक्षसतांगतः ॥ आख्यातस्तेनसुग्रीवःसमर्थोवानराधिपः ॥ १५ ॥ सज्ञास्यतिमहावीर्यस्तवभार्यापहारिणम् ॥ एवमुक्त्वादनुःस्वर्गंभ्राजमानोदिवंगतः ॥ १६ ॥ एतत्ते सर्वमाख्यातंयाथातथ्येनपृच्छतः ॥ अहंचैवचरामश्चसुग्रीवंशरणंगतौ ॥ १७ ॥ एषदत्वाचवित्तानिप्राप्यचानुत्तमंयशः ॥ लोकनाथःपुराभूत्वासुग्री वंनाथमिच्छति ॥ १८ ॥ सीतायस्यस्नुषाचासीच्छरण्योधर्मवत्सलः ॥ तस्यपुत्रःशरण्यस्यसुग्रीवंशरणंगतः ॥१९॥ सर्वलोकस्यधर्मात्माशरण्यः शरणंपुरा ॥ गुरुर्मेराघवःसोऽयंसुग्रीवंशरणंगतः ॥ २० ॥ यस्यप्रसादेसततंप्रसीदेयुरिमाःप्रजाः ॥ सरामोवानरेंद्रस्यप्रसादमभिकांक्षते ॥ २१ ॥ येनसर्वगुणोपेताःपृथिव्यांसर्वपार्थिवाः ॥ मानिताःसततंराज्ञासदादशरथेनवै ॥२२ ॥ तस्यायंपूर्वजःपुत्रस्त्रिषुलोकेषुविश्रुतः ॥ सुग्रीवंवानरेंद्रंतुरामः शरणमागतः ॥ २३ ॥ शोकाभिभूतेरामेतुशोकार्तेशरणंगते ॥ कर्तुमर्हतिसुग्रीवःप्रसादंसहयूथपैः ॥ २४ ॥ एवंब्रुवाणंसौमित्रिंकरुणंसाश्रुपातनम् ॥ हनूमान्प्रत्युवाचेदंवाक्यंवाक्यविशारदः ॥ २५ ॥ ईदृशाबुद्धिसंपन्नाजितक्रोधाजितेंद्रियाः ॥ द्रष्टव्यावानरेंद्रेणदिष्ट्यादर्शनमागताः ॥ २६ ॥ सहिराज्याच्चविभ्रष्टःकृतवैरश्चवालिना ॥ हृतदारोवनेत्रस्तोभ्रात्राविनिकृतोभृशम् ॥ २७ ॥

नायं रक्षकं इच्छति दैवगत्येति शेषः ॥ १८ ॥ यः शरण्यो धर्मवत्सलश्चासीदित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ सर्वगुणोपेताः मूर्धाभिषिक्ता इति यावत् । सदा प्रतिदिनम् सततमनुक्षणम् ॥ २२ ॥ ॥ २३ ॥ शोकाभिभूते शोकाविष्टे । शोकार्ते शोकपीडिते ॥ २४ ॥ साश्रुपातनं अस्माकमप्यन्यशरणापेक्षेत्यश्रुपातनसहितम् ॥ २५ ॥ द्रष्टव्याः द्रष्टुं योग्याः ॥ २६ ॥ स हीति । अनेन तस्यापि सहायापे

क्षत्वं दर्शितम् ॥ २७ ॥ यदेवमतः परिमार्गणे साहाय्यं करिष्यतीत्यन्वयः ॥ २८ ॥ २९ ॥ ३० ॥ सोपि त्वया कृत्यवानिति यथा कथ्यते तथा जाने एनं दृशं संप्राप्तस्त्वं कृतकृत्योसीत्यर्थः ॥ ३१ ॥ उक्तं समर्थयते प्रसन्नेति । मुखवर्णो मुखशोभा ॥ ३२ ॥ ३३ ॥ वानरम् । वानरस्येदम् आषाऽण् ॥ ३४ ॥ उक्तं संगृह्णाति स त्विति । कृतकृत्यवत्तदर्हं गिरिवरं ऋष्यमूकम् ॥ ३५ ॥ मैंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चतुर्थः सर्गः ॥ ४ ॥ ॥ ऋष्यमूकादिति । ऋष्यमूके सुग्रीवावासस्थाने राघवौ स्थापयित्वा ततः सुग्रीवानयनार्थम् ऋष्य

करिष्यतिससाहाय्यंयुवयोर्भास्करात्मजः ॥ सुग्रीवःसहचास्माभिःसीतायाःपरिमार्गणे ॥ २८ ॥ इत्येवमुक्त्वाहनुमाञ्छ्लक्ष्णंमधुरयागिरा ॥ बभाषे साधुगच्छामःसुग्रीवमितिराघवम् ॥ २९ ॥ एवंब्रुवंतंधर्मात्माहनूमंतंसलक्ष्मणः ॥ प्रतिपूज्ययथान्यायमिदंप्रोवाचराघवम् ॥ ३० ॥ कपिःकथयते हृष्टोयथायंमारुतात्मजः ॥ कृत्यवान्सोपिसंप्राप्तःकृतकृत्योऽसिराघव ॥ ३१ ॥ प्रसन्नमुखवर्णश्चव्यक्तंहृष्टश्चभाषते ॥ नानृतंवक्ष्यतेवीरोहनूमान्मारुतात्मजः ॥ ३२ ॥ ततःसतुमहाप्राज्ञोहनूमान्मारुतात्मजः ॥ जगामादायतौवीरौहरिराजायराघवौ ॥ ३३ ॥ भिक्षुरूपंपरित्यज्यवानरंरूपमास्थितः ॥ पृष्ठमारोप्यतौवीरौजगामकपिकुंजरः ॥ ३४ ॥ सतुविपुलयशाःकपिप्रवीरःपवनसुतःकृतकृत्यवत्प्रहृष्टः ॥ गिरिवरमुरुविक्रमःप्रयातःसशुभमतिःसहरामलक्ष्मणाभ्याम् ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चतुर्थः सर्गः ॥ ४ ॥ ऋष्यमूकात्तुहनुमान्गत्वातंमलयंगिरिम् ॥ आचचक्षेतदावीरौकपिराजायराघवौ ॥ १ ॥ अयंरामोमहाप्राज्ञसंप्राप्तोदृढविक्रमः ॥ लक्ष्मणेनसहभ्रात्रारामोऽयंसत्यविक्रमः ॥ २ ॥ इक्ष्वाकूणांकुलेजातोरामोदशरथात्मजः ॥ धर्मेनिगदितश्चैवपितुर्निर्देशकारकः ॥ ३ ॥ राजसूयाश्वमेधैश्चवह्निर्येनाभितर्पितः ॥ दक्षिणाश्चतथोत्सृष्टागावःशतसहस्रशः ॥ ४ ॥ तपसासत्यवाक्येनवसुधातेनपालिता ॥ स्त्रीहेतोस्तस्यपुत्रोऽयंरामोऽरण्यंसमागतः ॥ ५ ॥ तस्यास्यवसतोऽरण्येनियतस्यमहात्मनः ॥ रावणेनहृताभार्यासत्वांशरणमागतः ॥ ६ ॥ भवतासख्यकामौतौभ्रातरौरामलक्ष्मणौ ॥ प्रगृह्यचार्चयस्वैतौपूजनीयतमावुभौ ॥ ७ ॥ श्रुत्वाहनूमतोवाक्यंसुग्रीवोवानराधिपः ॥ दर्शनीयतमोभूत्वाप्रीत्योवाचचराघवम् ॥ ८ ॥ भवान्धर्मविनीतश्चसुतपाःसर्ववत्सलः ॥ आख्यातावायुपुत्रेणतत्त्वतोमेभवद्गुणाः ॥ ९ ॥ तन्ममैवैषसत्कारोलाभश्चैवोत्तमःप्रभो ॥ यत्त्वमिच्छसिसौहार्दंवानरेणमयासह ॥ १० ॥

मूकैकदेशं मलयाख्यं गिरिं गत्वेत्यन्वयः ॥ १ ॥ अयं रामः मलयस्थसुग्रीवदृष्टिपथवर्तित्वादेवं निर्देशः पुनराहादराद्रामोयमिति । सत्यविक्रमत्वदृढत्वाभ्यां त्वच्छत्रुनिरसनक्षमता व्यज्यते ॥ २ ॥ इक्ष्वाकूणामित्यनेन स्वरूपकथनं धर्मे स्वसत्यपरिपालनरूपधर्मनिमित्तम् । निगदितः प्रेरितः पित्रेति शेषः । अतएव तस्य पितुर्निर्देशकारकः ॥ ३ ॥ ४ ॥ स्त्रीहेतोः पित्रा स्त्रियै दत्तस्य वरस्य पालनहेतोः ॥ ५ ॥ ६ ॥ प्रगृह्य दर्शनाकांक्षिणोर्दर्शनं दत्वा ॥ ७ ॥ दर्शनीयतमो भूत्वा इच्छावशादिति शेषः ॥ ८ ॥ धर्मविनीतः धर्मे शिक्षितः ॥ ९ ॥ एषः मन्मैत्रीच्छारूपः तदेवाह । यत्त्वमिति । वानरेण तिर्यग्योनिनापि ॥ १० ॥

रोचते यदीति कार्यवशादिति शेषः । ध्रुवा मर्यादा अनुल्लंघनीयोऽन्योन्यकार्यसंपादनविषयो निश्चयः बध्यतां बुद्ध्या विचार्य प्रतिज्ञायताम् ॥११॥ हस्तं पीडयामास दक्षिणहस्तेन दक्षिणहस्तं गृहीतवान्॥१२॥ पीडितं पर्यष्वजत गाढमालिंगितवान् । कृतसौहार्दस्थैर्याय दनूपदिष्टाग्निसाक्षिकत्वसिद्ध्ये च रामप्रेरितहनूमतः प्रवृत्तिस्तत इति। भिक्षुरूपं परित्यज्य तौ त्वया प्राकृतेनेव गत्वा ज्ञेयौ प्लवंगमेति सुग्रीवाज्ञाकरणप्रतीतये रामागमननिवेदनसमये पुनः कृतं भिक्षुरूपं परित्यज्य ॥१३॥ स्वेन रूपेण वानररूपेण काष्ठयोररण्योरग्निं जनयामास । ततो दीप्यमानमग्निं तयोर्मध्ये निदधौ । निहितं च तं पुष्पैरभ्यर्च्य सत्कृतं परिस्तरणादि

रोचतेयदिमेसख्यंबाहुरेषप्रसारितः ॥ गृह्यतांपाणिनापाणिर्मर्यादावध्यतांध्रुवा ॥ ११ ॥ एतत्तुवचनंश्रुत्वासुग्रीवस्यसुभाषितम् ॥ संप्रहृष्टमनाहस्तंपीडयामासपाणिना ॥ १२ ॥ हृष्टःसौहृदमालंव्यपर्यष्वजतपीडितम् ॥ ततोहनूमान्संत्यज्यभिक्षुरूपमरिंदमः ॥१३ ॥ काष्ठयोःस्वेनरूपेणजनयामासपावकम् ॥ दीप्यमानंततोवह्निंपुष्पैरभ्यर्च्यसत्कृतम् ॥ १४ ॥ तयोर्मध्येतुसुप्रीतोनिदधौसुसमाहितः ॥ ततोऽग्निंदीप्यमानंतौचक्रतुश्चप्रदक्षिणम् ॥ १५ ॥ सुग्रीवोराघवश्चैववयस्यत्वमुपागतौ ॥ ततःसुप्रीतमनसौतावुभौहरिराघवौ ॥ १६ ॥ अन्योन्यमभिवीक्षंतौनतृप्तिमभिजग्मतुः ॥ त्वंवयस्योसिहृद्योमेएकंदुःखंसुखंचनौ ॥ १७ ॥ सुग्रीवोराघवंवाक्यमित्युवाचप्रहृष्टवत् ॥ ततःसुपर्णबहुलांभङ्क्त्वाशाखांसुपुष्पिताम् ॥ १८ ॥ सालस्यास्तीर्यसुग्रीवोनिषसादसराघवः ॥ लक्ष्मणायाथसंहृष्टोहनुमान्मारुतात्मजः ॥१९ ॥ शाखांचंदनवृक्षस्यददौपरमपुष्पिताम् ॥ ततःप्रहृष्टःसुग्रीवःश्लक्ष्णंमधुरयागिरा ॥ २० ॥ प्रत्युवाचतदारामंहर्षव्याकुललोचनः ॥ अहंविनिकृतोरामचरामीहभयार्दितः ॥ २१ ॥ हृतभार्योवनेत्रस्तोदुर्गमेतदुपाश्रितः ॥ सोहंत्रस्तोवनेभीतोवसाम्युद्भ्रांतचेतनः ॥ २२ ॥ वालिनानिकृतोभ्रात्राकृतवैरश्चराघव ॥ वालिनोमेमहाभागभयार्तस्याभयंकुरु ॥ २३ ॥ कर्तुमर्हसिकाकुत्स्थभयंमेनभवेद्यथा ॥ एवमुक्तस्तुतेजस्वीधर्मज्ञोधर्मवत्सलः ॥ २४ ॥ प्रत्यभाषतकाकुत्स्थःसुग्रीवंप्रहसन्निव ॥ उपकारफलंमित्रंविदितंमेमहाकपे ॥ २५ ॥ वालिनंतंवधिष्यामितवभार्यापहारिणम् ॥ अमोघाःसूर्यसंकाशाममेमेनिशिताःशराः ॥ २६ ॥

सत्कृतं चाकरोत् ॥१४॥ प्रदक्षिणं चक्रतुः मैत्रीदार्ढ्यायेति शेषः ॥१५॥१६॥ हृद्यः हृदयप्रियः एकं समानमित्यर्थः ॥१७॥ प्रहृष्टवत्प्रहृष्टः सन्नेतावत्पर्यंतं सम्यग्विश्वासाभावात्सुग्रीवः पृथगासनस्थ एवासीदिति ज्ञायते । तदाह ततः सुपर्णेति ॥१८॥ आस्तीर्य राघवायेति शेषः स राघवो निषसाद स्वयं तत्र स्थितः ॥१९॥ लक्ष्मणाय विषादपरिहारार्थं चंदनशाखास्तरणदानम् । अथ कार्यमर्यादाबंधनाय प्रवृत्तिः तत इति ॥२०॥ इह वने इत्यन्वयः ॥ २१॥२२॥ अभयं कुरु अभयप्रतिज्ञां कुरु ॥२३॥ तदेव दार्ढ्याय पुनराह कर्तुमिति ॥२४॥ लीलाविसृष्टैकेषुमात्रसाध्यत्वात्प्रहसन्निवेति उपकारः फलं यस्य तम् ॥२५॥२६॥

वेगिताः संजातवेगाः ॥ २७ ॥ २८ ॥ २९ ॥ मम वैरिणमग्रजं तथा कुरु यथा पुनः स मम न हिंस्यात् ॥ ३० ॥ सीतादीनां राजीवादिभिः क्रमेणान्वयः । कपींद्रोत्र वाली । पुंसां वामनेत्रस्पंदोऽशुभशंसी स्त्रीणां स शुभशंसी ॥ ३१ ॥ केडैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकाण्डे पञ्चमः सर्गः ॥ ५ ॥ ॥ आख्याति आख्यातवान् तन्निमित्तमिति शेषः ॥१॥ तत्किं तत्राह यन्निमित्तमिति॥२॥त्वया लक्ष्मणेन च वियुक्ता तव भार्या सीता अंतरं प्रेप्सुना छिद्रं दिदृक्षुणा हृता तेन लोकरावणेन रक्षसा त्वं भार्यावियोगजं



तस्मिन्वालिनिदुर्वृत्तेनिपतिष्यंतिवेगिताः ॥ कंकपत्रप्रतिच्छन्नामहेंद्राशनिसंनिभाः ॥ २७॥ तीक्ष्णाग्राऋजुपर्वाणःसरोषाभुजगाइव ॥ तमद्यवालिनं पश्यतीक्ष्णैराशीविषोपमैः ॥ २८ ॥ शरैर्विनिहतंभूमौप्रकीर्णमिवपर्वतम् ॥ सतुतद्वचनंश्रुत्वाराघवस्यात्मनोहितम् ॥ सुग्रीवःपरमप्रीतःपरमंवाक्य मब्रवीत् ॥ २९ ॥ तवप्रसादेननृसिंहवीरप्रियांचराज्यंचसमाप्नुयामहम् ॥ तथाकुरुत्वंनरदेववैरिणंयथानहिंस्यात्सपुनर्ममाग्रजम् ॥ ३० ॥ सीता कपींद्रक्षणदाचराणांराजीवहेमज्वलनोपमानि ॥ सुग्रीवरामप्रणयप्रसंगेवामानिनेत्राणिसमंस्फुरंति ॥ ३१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे पंचमः सर्गः ॥ ५ ॥ पुनरेवाब्रवीत्प्रीतोराघवंरघुनंदनम् ॥ अयमाख्यातितेरामसेवकोमंत्रिसत्तमः ॥ १ ॥ हनूमान्य न्निमित्तंत्वंनिर्जनंवनमागतः ॥ लक्ष्मणेनसहभ्रात्रावसतश्चवनेतव ॥ २ ॥ रक्षसापहृताभार्यामैथिलीजनकात्मजा ॥ त्वयावियुक्तारुदतीलक्ष्मणे नचधीमता ॥ ३ ॥ अंतरंप्रेप्सुनातेनहत्वागृध्रंजटायुषम् ॥ भार्यावियोगजंदुःखंप्रापितस्तेनरक्षसा ॥४॥ भार्यावियोगजंदुःखंनचिरात्त्वंविमोक्ष्यसे॥ अहंतामानयिष्यामिनष्टांवेदश्रुतीमिव ॥ ५ ॥ रसातलेवावर्तंतींवर्तंतींवानभस्तले ॥ अहमानीयदास्यामितवभार्यामरिंदम ॥ ६ ॥ इदंतथ्यंममव चस्त्वमवेहिचराघव ॥ नशक्यासाजरयितुमपिसेंद्रैःसुरासुरैः ॥ ७ ॥ तवभार्यामहाबाहोभक्ष्यंविषकृतंयथा ॥ त्यजशोकंमहाबाहोतांकांतामानया मिते ॥८॥ अनुमानात्तुजानामिमैथिलीसानसंशयः ॥ ह्रियमाणामयादृष्टारक्षसारौद्रकर्मणा ॥ ९ ॥ क्रोशंतीरामरामेतिलक्ष्मणेतिचविस्वरम् ॥ स्फुरंतीरावणस्यांकेपन्नगेंद्रवधूर्यथा ॥१०॥ आत्मनापंचमंमांहिदृष्ट्वाशैलतलेस्थितम् ॥ उत्तरीयंतयात्यक्तंशुभान्याभरणानिच ॥ ११ ॥ तान्यस्मा भिर्गृहीतानिनिहितानिचराघव ॥ आनयिष्याम्यहंतानिप्रत्यभिज्ञातुमर्हसि ॥ १२ ॥ तमब्रवीत्ततोरामःसुग्रीवंप्रियवादिनम् ॥ आनयस्वसखेशी घ्रंकिमर्थंप्रविलंबसे ॥ १३ ॥ एवमुक्तस्तुसुग्रीवःशैलस्यगहनांगुहाम् ॥ प्रविवेशततःशीघ्रंराघवप्रियकाम्यया ॥ १४ ॥ उत्तरीयंगृहीत्वातुसता न्याभरणानिच ॥ इदंपश्येतिरामायदर्शयामासवानरः॥१५॥ततोगृहीत्वावासस्तुशुभान्याभरणानिच ॥ अभवद्बाष्पसंरुद्धोनीहारेणेवचंद्रमाः॥१६॥

दुःखं प्रापित इति चाख्यातवान् ॥३॥४॥ रामेण स्वकार्यसाधने प्रतिज्ञाते सति स्वयमपि तत्कार्यसाधनं प्रतिजानीते भार्येत्यादि । नचिरान्नष्टां मधुकैटभहृतां देवस्य धर्मस्य धर्मज्ञब्रह्मणश्च ज्ञानसाधनभूता श्रुति स्त्रयी तामिव । दीर्घ आर्षः ॥ ५ ॥ वर्तंतीं वर्तमानाम् ॥६॥ तथ्यं तथ्यमेवावेहीत्यन्वयः विषकृतं विषमिश्रितम् ॥७॥८॥ या दृष्टा सा मैथिलीत्यनुमानात्त्वद्भार्यात्वानुमापकाद्रामेत्याक्रोशाल्लिंगाज्जानामीत्यन्वयः ॥ ९ ॥ १० ॥ आत्मना पंचमं मंत्रिचतुष्टयसहितं मामित्यर्थः ॥ ११ ॥ आनयिष्यामि आनेष्यामि दृष्टेत्यत्र प्रमाणप्रदर्शनमिदम् ॥ १२ ॥ १३ ॥ गहनां दुष्प्रवेशाम् ॥ १४ ॥ १५ ॥ १६ ॥

हाप्रिये इतीत्यत्र संधिरार्षः ॥ १७ ॥ हृदीति । प्रियासंबंधेन प्रीत्यतिशयात् ॥ १८ ॥ १९ ॥ २० ॥ शाद्वलभूम्युत्सर्गे लिंगमाह तथारूपमिति । अभग्नतया यथापूर्वरूपमित्यर्थः ॥ २१ ॥ नाहमिति । ऊर्ध्वदृष्ट्या परस्त्रीत्वेन कदाप्यदर्शनादिति भावः ॥ २२ ॥ २३ ॥ कं देशमुद्दिश्येति शेषः प्राणप्रिया प्राणेभ्योपीष्टा प्राणसंबंधस्य तदधीनत्वादिति भावः ॥ २४ ॥ यन्निमित्तं प्रियापहारे तन्निमित्तम् ॥ २५ ॥ ॥ २६ ॥ विमथ्य वंचयित्वा ॥ २७ ॥ सँखमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे षष्ठः सर्गः ॥ ६ ॥ ॥ एवमिति ॥ १ ॥ तस्य पापरक्षसां पापं कृतवतो रक्षसो निलयं निलयस्थानं गुप्तवासस्थानं सर्वथा न जाने नहीदृशं पापं कर्म कृत्वा राजधान्यां वस्तुमर्हतीति भावः । सामर्थ्यं शौर्यादि विक्रमं विशेषेण क्रामति पादविक्षेपं करोति यत्र तद्वासनगरं

सीतास्नेहप्रवृत्तेनसतुबाष्पेणदूषितः ॥ हाप्रियेतिरुदन्धैर्यमुत्सृज्यन्यपतत्क्षितौ ॥ १७ ॥ हृदिकृत्वासबहुशस्तमलंकारमुत्तमम् ॥ निःश्वाससभृशंसर्पो बिलस्थइवरोषितः ॥ १८ ॥ अविच्छिन्नाश्रुवेगस्तुसौमित्रिंप्रेक्ष्यपार्श्वतः ॥ परिदेवयितुंदीनंरामःसमुपचक्रमे ॥ १९ ॥ पश्यलक्ष्मणवैदेह्यासंत्यक्तं ह्रियमाणया ॥ उत्तरीयमिदंभूमौशरीराद्भूषणानिच ॥ २० ॥ शाद्वलिन्यांध्रुवंभूम्यांसीतयाह्रियमाणया ॥ उत्सृष्टंभूषणमिदंतथारूपंहिदृश्यते ॥ ॥ २१ ॥ एवमुक्तस्तुरामेणलक्ष्मणोवाक्यमब्रवीत् ॥ नाहंजानामिकेयूरेनाहंजानामिकुंडले ॥ २२ ॥ नूपुरेत्वभिजानामिनित्यंपादाभिवंदनात् ॥ ततस्तुराघवोवाक्यंसुग्रीवमिदमब्रवीत् ॥ २३ ॥ ब्रूहिसुग्रीवकंदेशंह्रियंतीलक्षितात्वया ॥ रक्षसारौद्ररूपेणममप्राणप्रियाहृता ॥ २४ ॥ क्ववावसति तद्रक्षोमहद्व्यसनदंमम ॥ यन्निमित्तमहंसर्वान्नाशयिष्यामिराक्षसान् ॥ २५ ॥ हरतामैथिलींयेनमांचरोषयताध्रुवम् ॥ आत्मनोजीवितांतायमृत्युद्वारमपावृतम् ॥ २६ ॥ ममदयिततमाहृतावनाद्रजनिचरेणविमथ्ययेनसा ॥ कथयममरिपुंतमद्यवैप्लवगपतेयमसंनिधिंनयामि ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे षष्ठः सर्गः ॥ ६ ॥ एवमुक्तस्तुसुग्रीवोरामेणार्तेनवानरः ॥ अब्रवीत्प्रांजलिर्वाक्यंसबाष्पं बाष्पगद्गदः ॥ १ ॥ नजानेनिलयंतस्यसर्वथापापरक्षसः ॥ सामर्थ्यंविक्रमंवापिदौष्कुलेयस्यवाकुलम् ॥ २ ॥ सत्यंतुप्रतिजानामित्यजशोकमरिंदम ॥ करिष्यामितथायत्नंयथाप्राप्स्यसिमैथिलीम् ॥ ३ ॥ रावणंसगणंहत्वापरितोष्यात्मपौरुषम् ॥ तथास्मिकर्तानचिराद्यथाप्रीतोभविष्यसि ॥ ४ ॥ अलंवैक्लव्यमालंब्यधैर्यमात्मगतंस्मर ॥ त्वद्विधानांनसदृशमीदृशंबुद्धिलाघवम् ॥ ५ ॥ मयापिव्यसनंप्राप्तंभार्याविरहजंमहत् ॥ नाहमेवंहिशोचामिधैर्यंनचपरित्यजे ॥ ६ ॥ नाहंतामनुशोचामिप्राकृतोवानरोपिसन् ॥ महात्माचविनीतश्चकिंपुनर्धृतिमान्महान् ॥ ७ ॥ बाष्पमापतितंधैर्यान्निगृहीतुं त्वमर्हसि ॥ मर्यादांसत्त्वयुक्तानांधृतिंनोत्स्रष्टुमर्हसि ॥ ८ ॥ व्यसनेवार्थकृच्छ्रेवाभयेवाजीवितांतगे ॥ विमृशंश्चस्वयाबुद्ध्याधृतिमान्नावसीदति ॥ ९ ॥

दौष्कुलेयस्येत्यनेन रक्षःकुलजत्वं ध्वनितं तज्जाने एवेति शेषः । वाशब्दौ त्वर्थे । अतएव लंकाद्वीपं निर्दिश्य स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेरिति हनुमदादि प्रेषणकालिकसुग्रीववचसा न विरोधः ॥ २ ॥ यद्यप्येतावज्जानामि तथापि तदुपवर्णनं निष्फलं तावन्मात्रज्ञानेपि तद्वधासंभवात् कचिद्बुधे स्थितिसंभवात् । एतावत्त्ववगम्यतामित्याह सत्यंत्विति ॥ ३ ॥ परितोष्यं भवतः परितोषार्हम् आत्मनः सपरिवारस्य मम पौरुषमवलंब्येति शेषः ॥ ४ ॥ न सदृशमयुक्तम् ॥ ५ ॥ ६ ॥ तां प्रियाम् ॥ ७ ॥ सत्त्वयुक्तानां सत्त्वगुणवताम् ॥ ८ ॥ व्यसने इष्टवियोगजे अर्थ

कृच्छ्रे धननाशे भये चौरव्याघ्रादिजे जीवितांतगे जीवितनाशप्रापके विमृशन्प्रारब्धवेगमिति शेषः ॥ ९ ॥ यो बालिशः यश्च नित्यं वैक्लव्यमनुवर्तते स मज्जाति । तुश्चार्थे । भाराक्रांता अतिभारवती ॥ १० ॥ अंतरं अवसरम् ॥ ११ ॥ १२ ॥ १३ ॥ ब्रूमि ब्रवीमि ॥ १४ ॥ प्रमार्जयत् प्रामार्जयत् ॥ १५ ॥१६॥ कर्तव्यं यच्छोकनाशार्थमिति शेषः ॥ १७ ॥ प्रकृतिस्थः स्वभावस्थो दुःखहीन इत्यर्थः । अस्मिन्काले व्यसनकाले ॥ १८ ॥ रावणस्य संहारे चेति शेषः ॥१९॥ मया च यदनुष्ठेयं तवेति शेषः । वर्षास्विव सुक्षेत्रे उप्तं बीजमिति शेषः । संपद्यते सफलं भविष्यतीत्यर्थः । शैघ्र्यमत्यायनाय वर्तमानप्रयोगः

बालिशस्तुनरोनित्यंवैक्लव्यंयोनुवर्तते ॥ समज्जत्यवशःशोकेभाराक्रांतेवनौर्जले ॥ १० ॥ एषोंऽजलिर्मयाबद्धःप्रणयात्त्वांप्रसादये ॥ पौरुषंश्रयशोकस्यनांतरंदातुमर्हसि ॥ ११ ॥ येशोकमनुवर्ततेनतेषांविद्यतेसुखम् ॥ तेजश्चक्षयतेतेषांनत्वंशोचितुमर्हसि ॥ १२ ॥ शोकेनाभिप्रपन्नस्यजीवितेचापिसंशयः ॥ सशोकंत्यजराजेंद्रधैर्यमाश्रयकेवलम् ॥ १३ ॥ हितंवयस्यभावेनब्रूमिनोपदिशामिते ॥ वयस्यतांपूजयन्मेनत्वंशोचितुमर्हसि ॥ १४ ॥ मधुरंसांत्वितस्तेनसुग्रीवेणसराघवः ॥ मुखमश्रुपरिक्लिन्नंवस्त्रांतेनप्रमार्जयत् ॥ १५ ॥ प्रकृतिस्थस्तुकाकुत्स्थःसुग्रीववचनात्प्रभुः ॥ संपरिष्वज्यसुग्रीवमिदंवचनमब्रवीत् ॥ १६ ॥ कर्तव्यंयद्वयस्येनस्निग्धेनचहितेनच ॥ अनुरूपंचयुक्तंचकृतंसुग्रीवतत्त्वया ॥ १७ ॥ एषचप्रकृतिस्थोऽहमनुनीतस्त्वयासखे ॥ दुर्लभोहीदृशोबंधुरस्मिन्कालेविशेषतः ॥ १८ ॥ किन्तुयत्नस्त्वयाकार्योमैथिल्याःपरिमार्गणे ॥ राक्षसस्यचरौद्रस्यरावणस्यदुरात्मनः ॥ ॥ १९ ॥ मयाचयदनुष्ठेयंविस्रब्धेनतदुच्यताम् ॥ वर्षास्विवचसुक्षेत्रेसर्वंसंपद्यतेतव ॥ २० ॥ मयाचयदिदंवाक्यमभिमानात्समीरितम् ॥ तत्त्वयाहरिशार्दूलतत्त्वमित्युपधार्यताम् ॥ २१ ॥ अनृतंनोक्तपूर्वंमेनचवक्ष्येकदाचन ॥ एतत्तेप्रतिजानामिसत्येनैवशपाम्यहम् ॥ २२ ॥ ततःप्रहृष्टःसुग्रीवोवानरैःसचिवैःसह ॥ राघवस्यवचःश्रुत्वाप्रतिज्ञातंविशेषतः ॥ २३ ॥ एवमेकांतसंपृक्तौततस्तौनरवानरौ ॥ उभावन्योन्यसदृशंसुखंदुःखमभाषताम् ॥ ॥ २४ ॥ महानुभावस्यवचोनिशम्यहरिर्नृपाणामधिपस्यतस्य ॥ कृतंसमेनेहरिवीरमुख्यस्तदाचकार्यंहृदयेनविद्वान् ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तमः सर्गः ॥ ७ ॥ परितुष्टस्यसुग्रीवस्तेनवाक्येनहर्षितः ॥ लक्ष्मणस्याग्रजंशूरमिदंवचनमब्रवीत् ॥ १ ॥ सर्वथाहमनुग्राह्योदेवतानांनसंशयः ॥ उपपन्नोगुणोपेतःसखायस्यभवान्मम ॥ २ ॥ शक्यंखलुभवेद्रामसहायेनत्वयानघ ॥ सुरराज्यमभिप्राप्तुंस्वराज्यंकिमुतप्रभो ॥ ३ ॥ सोहंसभाज्योबंधूनांसुहृदांचैवराघव ॥ यस्याग्निसाक्षिकंमित्रंलब्धंराघववंशजम् ॥४॥ अहमप्यनुरूपस्तेवयस्योज्ञास्यसेशनैः ॥ नतुवक्तुंसमर्थोहंत्वयिआत्मगतान्गुणान् ॥ ५ ॥ महात्मनांतुभूयिष्ठंत्वद्विधानांकृतात्मनाम् ॥ निश्चलाभवतिप्रीतिर्धैर्यमात्मवतांवर ॥ ६ ॥

॥ २० ॥ इदं वाक्यं वालिनं वधिष्यामीति वाक्यम् अभिमानात्तत इव ॥ २१ ॥ एतदनृतवचनाभावं सत्येन तत्साक्षितयेत्यर्थः ॥ २२ ॥ २३ ॥ संपृक्तौ कृतसख्यसंपन्नौ अभाषताम् अभाषेताम् ॥२४॥ ॥ २५ ॥ र्णेखमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तमः सर्गः ॥ ७ ॥ ॥ तेन वाक्येन अनृतं नोक्तपुर्वं मे इत्यादिवाक्येन ॥ १ ॥ उपपन्नः संपन्नः ॥ २ ॥ ३ ॥ सभाज्यः पूज्यः यस्य येन राघववंशजं मित्रं लब्धम् ॥ ४ ॥ अनुरूपः योग्यः ज्ञास्यसे अनुरूप्यमिति शेषः नतु वक्तुं समर्थः । आत्मप्रशंसा मरणं ममेतिन्यायात् ॥ ५ ॥ भूयिष्ठमधिकं

प्रीतिर्निश्चला भवति वयस्यानामिति शेषः । आत्मवतां स्वाधीनानाम् ॥ ६ ॥ साधूनां वयस्यानाम् । साधवो वयस्याः रजतमित्याद्युपलक्षणम् ॥ ७ ॥ वयस्यः परमा गतिः वयस्यस्येति शेषः ॥ ८ ॥ तथाविधं स्वर सतो धनादित्यागप्रवर्तकमित्यर्थः ॥ ९ ॥ तत्तथेति यदुक्तं वयस्ययोर्धनविभागादिकं तन्ममापि संमतमित्यब्रवीदित्यर्थः । लक्ष्म्या कांत्या युतो रामः वासवस्येव वासवसदृशस्य लक्ष्मणस्येत्यन्वयः । लक्ष्मणस्याग्रत इत्यनेन यथा मम लक्ष्मणस्य मैत्री तथैव तवापीत्यपि सूचितम् ॥ १० ॥ ततः तद्दिनापगमोत्तरं द्वितीयदिने इत्यर्थः । स्थितं दृष्ट्वा भूमाविति शेषः ॥ ११ ॥ ईषत्सुपुष्पं पत्राढ्यं पत्रबहुलम् ॥ १२ ॥ स राघवः

रजतंवासुवर्णंवाशुभान्याभरणानिच ॥ अविभक्तानिसाधूनामवगच्छंतिसाधवः ॥ ७ ॥ आढ्योवापिदरिद्रोवादुःखितःसुखितोपिवा ॥ निर्दोषश्चसदो पश्चवयस्यःपरमागतिः ॥ ८ ॥ धनत्यागःसुखत्यागोदेशत्यागोपिवाऽनघ ॥ वयस्यार्थेप्रवर्ततेस्नेहंदृष्ट्वातथाविधम् ॥ ९ ॥ तत्तथेत्यब्रवीद्रामःसुग्रीवंप्रियदर्शनम् ॥ लक्ष्मणस्याग्रतोलक्ष्म्यावासवस्येवधीमतः ॥ १० ॥ ततोरामंस्थितंदृष्ट्वालक्ष्मणंचमहाबलम् ॥ सुग्रीवःसर्वतश्चक्षुर्वनेलोलमपातयत् ॥ ११ ॥ सददर्शततःसालमविदूरेहरीश्वरः ॥ सुपुष्पमीषत्पत्राढ्यंभ्रमरैरुपशोभितम् ॥ १२ ॥ तस्यैकांपर्णबहुलांशाखांभंक्त्वासुशोभिताम् ॥ रामस्यास्तीर्यसुग्रीवोनिषसादसराघवः ॥ १३ ॥ तावासीनौततोदृष्ट्वाहनूमानपिलक्ष्मणम् ॥ शालशाखांसमुत्पाट्यविनीतमुपवेशयत् ॥ १४ ॥ सुखोपविष्टंरामंतुप्रसन्नमुदधिंयथा ॥ सालपुष्पावसंकीर्णेतस्मिन्गिरिवरोत्तमे ॥ १५ ॥ ततःप्रहृष्टःसुग्रीवःश्लक्ष्णयाशुभयागिरा ॥ उवाचप्रणयाद्रामंहर्षव्याकुलिताक्षरम् ॥ १६ ॥ अहंविनिकृतोभ्रात्राचराम्येषभयार्दितः ॥ ऋष्यमूकंगिरिवरंहृतभार्यःसुदुःखितः ॥ १७ ॥ सोऽहंत्रस्तोभयेमग्नोवनेसंभ्रांतचेतनः ॥ वालिनानिकृतोभ्रात्राकृतवैरश्चराघव ॥ १८ ॥ वालिनोमेभयार्तस्यसर्वलोकाभयंकर ॥ ममापित्वमनाथस्यप्रसादंकर्तुमर्हसि ॥ १९ ॥ एवमुक्तस्तुतेजस्वीधर्मज्ञोधर्मवत्सलः ॥ प्रत्युवाचसकाकुत्स्थःसुग्रीवंप्रहसन्निव ॥ २० ॥ उपकारफलंमित्रमपकारोरिलक्षणम् ॥ अद्यैवतंवधिष्यामितवभार्यापहारिणम् ॥ २१ ॥ इमेहिमेमहाभागपत्रिणस्तिग्मतेजसः ॥ कार्तिकेयवनोद्भूताःशराहेमविभूषिताः ॥ २२ ॥ कंकपत्रपरिच्छन्नामहेंद्राशनिसंनिभाः ॥ सुपर्वाणःसुतीक्ष्णाग्राःसरोषाभुजगाइव ॥ २३ ॥ वालिसंज्ञममित्रंतेभ्रातरंकृतकिल्बिषम् ॥ शरैर्विनिहतंपश्यविकीर्णमिवपर्वतम् ॥ २४ ॥ राघवस्यवचःश्रुत्वासुग्रीवोवाहिनीपतिः ॥ प्रहर्षमतुलंलेभेसाधुसाध्वितिचाब्रवीत् ॥ २५ ॥ रामशोकाभिभूतोऽहंशोकार्तानांभवान्गतिः ॥ वयस्यइतिकृत्वाहित्वय्यहंपरिदेवये ॥ २६ ॥

सुग्रीवो निषसाद ॥ १३ ॥ १४ ॥ सुखोपविष्टं रामं तु दृष्ट्वेति शेषः ॥ १५ ॥ १६ ॥ अहं विनिकृत इति पूर्वदिवसोक्तार्थस्मारणं तदर्थस्यावश्यानुष्ठेयात्वाभिप्रायेण ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ननु भ्रातृत्वमरित्वेन विरुद्धमिति जनाशंकायां स्वयमेवोत्तरयति उपकारेत्यादि । उपकाररूपफलमेव मित्रत्वे प्रयोजकं नत्वेकोदरे जन्मेत्याशयः ॥ २१ ॥ कार्तिकयस्य स्कंदस्योत्पत्तिक्षेत्रभूतं वनं शरवणं तत्रोत्पन्न कांडाः ॥ २२ ॥ शोभनानि पर्वाणि येषां ते ॥ २३ ॥ भ्रातरम् अमित्रमपि एकोदरजन्ममात्रेण तथाव्यवहृतं पश्य द्वित्रैर्दिवसैरिति शेषः ॥ २४ ॥ २५ ॥ दुःखाशयात्पुनराह रामेत्यादि । शोकार्तगतित्वाद्

यस्यत्वाच्च त्वयि देवनम् ॥ २६ ॥ वयस्यत्वमुपपादयन्करुणामुत्पादयति त्वं हीति । अग्निसाक्षिकं पाणिप्रदानेन वयस्य इत्यन्वयः ॥ २७ ॥ अवक्तव्यमपि वयस्य इति कृत्वा विस्रब्धो विश्वस्तो वदामि हरति क्षीणं करोति ॥ २८ ॥ न शक्नोति नाशक्नोत् ॥ २९ ॥ ३० ॥ ३१ ॥ वालिविनिकारं संक्षेपेणाह पुराहमिति । स्वाद्राज्यात् विद्यमानज्येष्ठोचिताद्वा नरराज्यात् अवरोपितोऽपहृताधिकारः निर्धूतो भर्त्सितः ॥ ३२ ॥ बंधनेषु बंधनागारेषु संयता बद्धाः ॥ ३३ ॥ तत्प्रयुक्ता मद्वधाय तत्प्रेरिताः ॥ ३४ ॥ एतया शंकया मद्वधाय वालिप्रेरितत्वशंकया नोपसर्पामि नोपासर्पम् । भये यत्किंचिद्भयमात्रे बिभ्यति सर्वत

त्वंहिपाणिप्रदानेनवयस्योमेऽग्निसाक्षिकम् ॥ कृतःप्राणैर्बहुमतःसत्येनचशपाम्यहम् ॥ २७ ॥ वयस्यइतिकृत्वाचविस्रब्धःप्रवदाम्यहम् ॥ दुःखमंतर्गतंतन्मेमनोहरतिनित्यशः ॥ २८ ॥ एतावदुक्त्वावचनंबाष्पदूषितलोचनः ॥ बाष्पदूषितयावाचानोच्चैःशक्नोतिभाषितुम् ॥ २९ ॥ बाष्पवेगंतुसहसानदीवेगमिवागतम् ॥ धारयामासधैर्येणसुग्रीवोरामसंनिधौ ॥ ३० ॥ सनिगृह्यतुतंबाष्पंप्रमृज्यनयनेशुभे ॥ विनिःश्वस्यचतेजस्वीराघवंपुनरूचिवान् ॥ ३१ ॥ पुराहंवालिनारामराज्यात्स्वादवरोपितः ॥ परुषाणिचसंश्राव्यनिर्धूतोऽस्मिबलीयसा ॥ ३२ ॥ हृताभार्याचमेतेनप्राणेभ्योऽपिगरीयसी ॥ सुहृदश्चमदीयायेसंयताबंधनेषुते ॥ ३३ ॥ यत्नवांश्चसदुष्टात्मामद्विनाशायराघव ॥ बहुशस्तत्प्रयुक्ताश्चवानराहिहतामया ॥ ३४ ॥ शंकयात्वेतयाहंचदृष्ट्वात्वामपिराघव ॥ नोपसर्पाम्यहंभीतोभयेसर्वेहिबिभ्यति ॥ ३५ ॥ केवलंहिसहायामेहनुमत्प्रमुखास्त्विमे ॥ अतोहंधारयाम्यद्यप्राणान्कृच्छ्रगतोपिसन् ॥ ३६ ॥ एतेहिकपयःस्निग्धामांरक्षंतिसमंततः ॥ सहगच्छंतिगंतव्येनित्यंतिष्ठंतिचास्थिते ॥ ३७ ॥ संक्षेपस्त्वेषमेरामकिमुक्त्वाविस्तरंहिते ॥ समेज्येष्ठोरिपुर्भ्रातावालीविश्रुतपौरुषः ॥ ३८ ॥ तद्विनाशेपिमेदुःखंप्रमृष्टंस्यादनंतरम् ॥ सुखंमेजीवितंचैवतद्विनाशनिबंधनम् ॥ ३९ ॥ एषमेरामशोकांतःशोकार्तेननिवेदितः ॥ दुःखितःसुखितोवापिसख्युर्नित्यंसखागतिः ॥ ४० ॥ श्रुत्वैतच्चवचोरामःसुग्रीवमिदमब्रवीत् ॥ किंनिमित्तमभूद्वैरंश्रोतुमिच्छामितत्त्वतः ॥ ४१ ॥ सुखंहिकारणंश्रुत्वावैरस्यतववानर ॥ आनंतर्याद्विधास्यामिसंप्रधार्यबलाबलम् ॥ ॥ ४२ ॥ बलवान्हिममामर्षःश्रुत्वात्वामवमानितम् ॥ वर्धतेहृदयोत्कंपीप्रावृड्वेगइवांभसः ॥ ४३ ॥ हृष्टःकथयविस्रब्धोयावदारोप्यतेधनुः ॥ सृष्टश्चहिमयाबाणोनिरस्तश्चरिपुस्तव ॥ ४४ ॥ एवमुक्तस्तुसुग्रीवःकाकुत्स्थेनमहात्मना ॥ प्रहर्षमतुलंलेभेचतुर्भिःसहवानरैः ॥ ४५ ॥

एवेति शेषः ॥ ३५ ॥ ३६ ॥ ३७ ॥ संक्षेपस्त्वेष इत्येतच्छब्दार्थः स मे ज्येष्ठ इति ॥ ३८ ॥ तद्विनाशेपीति । यद्यपि भ्रातृनाशो दुःखाय तथापि अनंतरं संप्रति विद्यमानं मे दुःखं तद्विनाशे एव प्रमृष्टं स्यात् । अपिरेवार्थे । तदेवाह सुखमिति ॥ ३९ ॥ ४० ॥ तन्निमित्तं तत्त्वतः श्रोतुमिच्छामीत्यन्वयः ॥ ४१ ॥ तव तेन वैरस्य कारणं श्रुत्वा युवयोर्बलाबलं च श्रुत्वानंतर्यात् तदनंतरोत्पन्नविमर्शात्संप्रधार्य निश्चित्य हि निश्चयेन तव सुखं त्वत्सुखसाधनं वालिवधं विधास्यामि ॥ ४२ ॥ अंभःसंबंधी प्रावृट्कालिको वेग इव मे अमर्षो वर्धते ॥ ४३ ॥ यावदारोप्यते आरोपयिष्यामि । सृष्टो विसृष्टः रिपुर्निरस्तश्च ।

समुच्चयालंकारः । व्यंग्यातिशयोक्तिश्च ॥ ४४ ॥ ४५ ॥ तत्त्वं तात्त्विकं वैरस्य कारणमित्यन्वयः ॥ ४६ ॥ चैर्थमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे अष्टमः सर्गः ॥ ८ ॥ ॥ उपक्रांतमेवाह वालीति । पितुः क्षेत्रिणः मात्रैक्याच्च भ्रातृत्वं भीमार्जुनादिवत् ॥ १ ॥ कपीनां राज्ये इत्यन्वयः ॥ २ ॥ पितृपैतामहम् आर्षत्वादुत्तरपदवृद्धिः ॥ ३ ॥ मायावीत्यन्वर्थं नाम पूर्वजो ज्येष्ठः स्त्रीकृतं स्त्रीनिमित्तम् । अयमितिहासः कचित्पुराणे शोधनीयो बहुदर्शिभिः ॥ ४ ॥ सुप्ते जने रात्रौ सुप्तजने भागे अर्धरात्रे रणनिमित्तम् ॥ ५ ॥ ६॥ ७ ॥ ८ ॥

ततःप्रहृष्टवदनःसुग्रीवोलक्ष्मणाग्रजे ॥ वैरस्यकारणंतत्त्वमाख्यातुमुपचक्रमे ॥४६॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकांडेऽष्टमः सर्गः ॥ ८ ॥ वालीनाममममभ्राताज्येष्ठःशत्रुनिषूदनः ॥ पितुर्बहुमतोनित्यंममचापितथापुरा ॥ १ ॥ पितर्युपरतेतस्मिञ्ज्येष्ठोऽयमितिमंत्रिभिः ॥ कपीनामीश्वरोराज्येकृतःपरमसंमतः ॥ २ ॥ राज्यंप्रशासतस्तस्यपितृपैतामहंमहत् ॥ अहंसर्वेषुकालेषुप्रणतःप्रेष्यवत्स्थितः ॥ ३ ॥ मायावीनामतेजस्वीपूर्वजोदुंदुभेःसुतः ॥ तेनतस्यमहद्वैरंवालिनःस्त्रीकृतंपुरा ॥ ४ ॥ सतुसुप्तेजनेरात्रौकिष्किंधाद्वारमागतः ॥ नर्दतिस्मसुसंरब्धोवालिनंचाह्वयद्रणे ॥ ५ ॥ प्रसुप्तस्तुममभ्रातानर्दतोभैरवस्वनम् ॥ श्रुत्वानममृषेवालीनिष्पपातजवात्तदा ॥ ६ ॥ सतुवैनिःसृतःक्रोधात्तंहंतुमसुरोत्तमम् ॥ वार्यमाणस्ततःस्त्रीभिर्मयाचप्रणतात्मना ॥ ७ ॥ सतुनिर्धूयताःसर्वानिर्जगाममहाबलः ॥ ततोऽहमपिसौहार्दान्निःसृतोवालिनासह ॥८॥ सतुमेभ्रातरंदृष्ट्वामांचदूरादवस्थितम् ॥ असुरोजातसंत्रासःप्रदुद्रावतदाभृशम् ॥ ९ ॥ तस्मिन्द्रवतिसंत्रस्तेह्यावांद्रुततरंगतौ ॥ प्रकाशोऽपिकृतोमार्गश्चंद्रेणोद्गच्छतातदा ॥ १० ॥ सतृणैरावृतंदुर्गंधरण्याविवरंमहत् ॥ प्रविवेशासुरोवेगादावामासाद्यविष्ठितौ ॥११॥ तंप्रविष्टंरिपुंदृष्ट्वाबिलंरोषवशंगतः ॥ मामुवाचततोवालीवचनंक्षुभितेंद्रियः ॥ १२ ॥ इहतिष्ठाद्यसुग्रीवबिलद्वारिसमाहितः ॥ यावदत्रप्रविश्याहंनिहन्मिसमरेरिपुम् ॥ १३ ॥ मयात्वेतद्वचःश्रुत्वायाचितःसपरंतपः ॥ शापयित्वासमांपद्भ्यांप्रविवेशबिलंततः ॥१४॥ तस्यप्रविष्टस्यबिलंसाग्रःसंवत्सरोगतः ॥ स्थितस्यचबिलद्वारिसकालोव्यत्यवर्तत ॥१५॥ अहंतुनष्टंतंज्ञात्वास्नेहादागतसंभ्रमः ॥ भ्रातरंनप्रपश्यामिपापशंकिचमेमनः ॥ १६ ॥ अथदीर्घस्यकालस्यबिलात्तस्माद्विनिःसृतम् ॥ सफेनंरुधिरंदृष्ट्वाततोऽहंभृशदुःखितः ॥ १७ ॥

॥ ९ ॥ १० ॥ तृणैरावृतं छन्नं विवरं बिलम् आसाद्य प्राप्य विष्ठितौ स्थितौ ॥ ११ ॥ बिलं प्रविष्टं दृष्ट्वा ॥१२॥ १३॥ एतद्वचो रिपुवधाय बिलप्रवेशवचनं याचितः सहप्रवेशमिति शेषः। स्वपादाभ्यां शापयित्वा स्वपादशपथपूर्वं सहप्रवेशान्निवार्य यावन्मदागमनं तावद्बिलद्वारि तिष्ठेति चोक्त्वेत्यर्थः ॥ १४ ॥ साग्रः संवत्सरः किंचिदधिकः संवत्सरः द्वारि स्थितस्य च मम स कालः साग्रः संवत्सरो व्यत्यवर्तत अतिक्रांतः तावत्पर्यंतं मया तत्रैव स्थितमित्याशयः ॥ १५ ॥ ततो यदा हतं भ्रातरं न पश्यामि तदाऽहं भ्रातरं नष्टं दर्शनाविषयं जातं स्नेहादागतसंभ्रम आगतक्षोभो जातः । पापशंकि मरणशंकि मे मनो

जातं च ॥ १६ ॥ १७ ॥ संग्रामे रतस्य निरतस्य क्रोशतोपि गुरोः स्वनो न श्रोत्रमागत इत्यनुकर्षः ॥ १८ ॥ चिह्नैर्बिलद्वारि रुधिरैर्निःसरणादुरीयसंग्रामक्रोशनादिभिर्भ्रातरं हतमवगतः ज्ञातवान् पिधाय राक्षसनिर्गमशंकया ॥ १९ ॥ यत्नतो गूहमानस्यापि मे तत्त्वं वालिवृत्तांतविषयं मंत्रिभिर्वालिमंत्रिभिः श्रुतम् ॥ २० ॥ समेतैर्मिलितैः तस्य राज्यमिति बुद्ध्यैव न्यायतः प्रशासतो मम समीपमाजगाम स वानर इत्यन्वयः ॥ २१ ॥ २२ ॥ मदीयान्मदभिषेककर्तॄन् निग्रहे समर्थस्यापि मे बुद्धिर्भ्रातृगौरवेण यंत्रिता संकुचिता सती तं पापं प्रति निग्रहाय न प्रावर्तत ॥ २३ ॥ उक्तानुवादपूर्वमवशिष्टव्यापारकथनं हत्वेत्यादि

नर्दतामसुराणांचध्वनिर्मेश्रोत्रमागतः ॥ निरस्तस्यचसंग्रामेक्रोशतोनिःस्वनोगुरोः ॥ १८ ॥ अहंत्ववगतोबुद्ध्याचिह्नैस्तैर्भ्रातरंहतम् ॥ पिधायच बिलद्वारंशिलयागिरिमात्रया ॥ १९ ॥ शोकार्तश्चोदकंकृत्वाकिष्किंधामागतःसखे ॥ गूहमानस्यमेतत्त्वंयत्नतोमंत्रिभिःश्रुतम् ॥ २० ॥ ततोऽहंतैः समागम्यसमेतैरभिषेचितः ॥ राज्यंप्रशासतस्तस्यन्यायतोममराघव ॥ २१ ॥ आजगामरिपुंहत्वादानवंसतुवानरः ॥ अभिषिक्तंतुमांदृष्ट्वाक्रोधात्संरक्तलोचनः ॥ २२ ॥ मदीयान्मंत्रिणोबद्ध्वापरुषंवाक्यमब्रवीत् ॥ निग्रहेचसमर्थस्यतंपापंप्रतिराघव ॥ २३ ॥ नप्रावर्ततमेबुद्धिर्भ्रातृगौरवयंत्रिता ॥ हत्वाशत्रुंसमेभ्राताप्रविवेशपुरंतदा ॥२४॥ मानयंस्तंमहात्मानंयथावच्चाभिवादयम् ॥ उक्ताश्चनाशिषस्तेनप्रहृष्टेनांतरात्मना ॥२५॥ नत्वापादावहंतस्यमुकुटेनास्पृशंप्रभो ॥ अपिवालीममक्रोधान्नप्रसादंचकारसः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येकिष्किंधाकांडेनवमः सर्गः ॥ ९ ॥ ततःक्रोधसमाविष्टंसंरब्धंतमुपागतम् ॥ अहंप्रसादयांचक्रेभ्रातरंहितकाम्यया ॥ १ ॥ दिष्ट्यासिकुशलीप्राप्तोनिहतश्चत्वयारिपुः ॥ अनाथस्यहिमेनाथस्त्वमेकोनाथनंदन ॥ २ ॥ इदंवहुशलाकंतेपूर्णचंद्रमिवोदितम् ॥ छत्रंसवालव्यजनंप्रतीच्छस्वमयाधृतम् ॥ ३ ॥ आर्तस्तस्यबिलद्वारिस्थितःसंवत्सरंनृप ॥ दृष्ट्वाचशोणितंद्वारिबिलाच्चापिसमुत्थितम् ॥ ४ ॥ शोकसंविग्नहृदयोभृशंव्याकुलितेंद्रियः ॥ अपिधायबिलद्वारंशैलशृंगेणतत्तदा ॥ ५ ॥तस्माद्देशादपाक्रम्यकिष्किंधांप्राविशंपुनः ॥ विषादात्त्विहमांदृष्ट्वापौरैर्मंत्रिभिरेवच ॥ ६ ॥ अभिषिक्तोनकामेनतन्मेक्षंतुंत्वमर्हसि ॥ त्वमेवराजामानार्हःसदाचाहंयथापुरा ॥ ७ ॥ राजभावेनियोगोऽयंममत्वद्विरहात्कृतः ॥ सामात्यपौरनगरंस्थितंनिहतकंटकम् ॥ ८ ॥ न्यासभूतमिदंराज्यंतवनिर्यातयाम्यहम् ॥ माचरोषंकृथाःसौम्यममशत्रुनिषूदन ॥ ९ ॥ याचेत्वांशिरसाराजन्मयाबद्धोऽयमंजलिः ॥ बलादस्मिन्समागम्यमंत्रिभिःपुरवासिभिः ॥ १० ॥

॥ २४ ॥ २५ ॥ अपि तथापीत्यर्थः ॥ २६ ॥ चैवमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किन्धाकांडे नवमः सर्गः ॥९॥ ॥ संरब्धं क्रोधावेशादेव क्षुभितचित्तं हितकाम्यया आत्महितेच्छया ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ विषादात्प्राविशमित्यन्वयः ॥ ६ ॥ अभिषिक्तो बलात् न कामेन न मदीयराज्येच्छया तत्तस्मान्मे दैवागतापराधं क्षंतुमर्हसि यथा पुरा तव सेवकस्तथैव सदा इदानीमपीत्यर्थः ॥ ७ ॥ राजभावे राज्येऽयं मम नियोगो मंत्रिभिस्त्वद्विरहात्कृतोऽमात्यपौरसहितं नगरं निहतकंटकं अराजत्वप्रयुक्तदोषरहितं कर्तुमिति शेषः । तच्चेदं त्वदीयराज्यं मयि

न्यासभूतं स्थितम् अहं तत्र निर्यातयामि मा रोषं कृथा इत्यन्वयः ॥ ८ ॥ ९ ॥ १० ॥ शून्यदेशस्य राजहीनदेशस्य या परेषां जिगीषा तया तन्निवृत्तिहेतुना मशकार्थो धूम इतिवदयं प्रयोगः ॥ ११ ॥ तत्तदुवाच अवाच्यवचनजातमित्यर्थः प्रकृतीः स्वीयप्रजाः ॥ १२ ॥ मां प्रति परमं गर्हितं वाक्यं सुहृदां मध्ये आह मम विगर्हणाहेतुं च सभासदानभ्येत्याह विदितं व इति । युष्माकं विदितं प्रत्यक्षसिद्धम् ॥ १३ ॥ १४ ॥ सद्वितीयं भ्रात्रा ससहायम् ॥ १५ ॥ १६ ॥ १७ ॥ शक्तिरिच्छाशक्तिः प्रतीक्ष प्रतीक्षस्व ॥ १८ ॥ स्थितोऽयं बिलद्वारीति शेषः ॥ १९ ॥ अनिर्वेदात्संवत्सरान्वेषणेपि दर्शनाभावाद्ब

राज्यभावेनियुक्तोऽहंशून्यदेशजिगीषया ॥ स्निग्धमेवंब्रुवाणंमांसविनिर्भर्त्स्यवानरः ॥ ११ ॥ धिक्त्वामितिचमामुक्त्वाबहुतत्तदुवाचह ॥ प्रकृती श्वसमानीयमंत्रिणश्चैवसंमतान् ॥ १२ ॥ मामाहसुहृदांमध्येवाक्यंपरमगर्हितम् ॥ विदितंवोमयारात्रौमयावीसमहासुरः ॥ १३ ॥ मांसमाह्वयतक्रुद्धो युद्धाकांक्षीतदापुरा ॥ तस्यतद्व्राषितंश्रुत्वानिःसृतोऽहंनृपालयात् ॥१४॥ अनुयातश्चमांतूर्णमयंभ्रातासुदारुणः ॥ सतुदृष्ट्वैवमांरात्रौसद्वितीयंमहाबलः ॥१५॥ प्राद्रवद्भयसंत्रस्तोवीक्ष्यावांसमुपागतौ ॥ अभिद्रुतस्तुवेगेनविवेशसमहाबिलम् ॥ १६ ॥ तंप्रविष्टंविदित्वातुसुघोरंसुमहद्बिलम् ॥ अयमुक्तो थमेभ्रातामयातुक्रूरदर्शनः ॥ १७ ॥ अहत्वानास्तिमेशक्तिःप्रतिगंतुमितःपुरीम् ॥ बिलद्वारिप्रतीक्षत्वंयावदेनंनिहन्म्यहम् ॥ १८ ॥ स्थितोऽयमि तिमत्वाहंप्रविष्टस्तुदुरासदम् ॥ तंमेमार्गयतस्तत्रगतःसंवत्सरस्तदा ॥१९॥ सतुदृष्टोमयाशत्रुरनिर्वेदाद्भयावहः ॥ निहतश्चमयासद्यःससर्वैःसहबंधुभिः ॥ २० ॥ तस्यैवचप्रवृत्तेनरुधिरौघेणतद्बिलम् ॥ पूर्णमासीद्दुराक्रामंस्तनतस्तस्यभूतले ॥ २१ ॥ सूदयित्वातुतंशत्रुंविक्रांतंतमहंसुखम् ॥ निष्क्रामंने हपश्यामिबिलस्यपिहितंमुखम् ॥ २२ ॥ विक्रोशमानस्यतुमेसुग्रीवेतिपुनपुनः ॥ यतःप्रतिवचोनास्तिततोऽहंभृशदुःखितः ॥ २३ ॥ पादप्रहारै स्तुमयाबहुभिःपरिपातितम् ॥ ततोऽहंतेननिष्क्रम्यपथापुरमुपागतः ॥२४॥ तत्रानेनास्मिसंरुद्धोराज्यंमृगयतात्मनः ॥ सुग्रीवेणनृशंसेनविस्मृत्यभ्रातृ सौहृदम् ॥ २५ ॥ एवमुक्त्वातुमांतत्रवस्त्रेणैकेनवानरः ॥ तदानिर्वासयामासवालीविगतसाध्वसः ॥ २६ ॥ तेनाहमपविद्धश्चहृतदारश्चराघव ॥ तद्भ याच्चमहींसर्वांक्रांतवान्सवनार्णवाम् ॥ २७ ॥ ऋष्यमूकंगिरिवरंभार्याहरणदुःखितः ॥ प्रविष्टोऽस्मिदुराधर्षवालिनःकारणांतरे ॥ २८ ॥

यावहः स तु कथंचिद्दृष्टो निहतश्च समुच्चयाऽलंकारः ॥ २० ॥ भुवस्तलेऽधस्तले पाताले स्तनतः शब्दं कुर्वतस्तस्यास्यात्प्रवृत्तेन रुधिरौघेण पूर्णं तद्बिलं दुराक्रममासीत् ॥ २१ ॥ विक्रांतं शूरं तं प्रसिद्धं मायाविनं सुखं सूदयित्वा तु इहागंतुं निष्क्रामं निर्गममार्गं न पश्यामि यतो बिलस्य मुखं पिहितम् ॥ २२ ॥ २३ ॥ तेन पथा बिलद्वारमार्गेण ॥ २४ ॥ आत्मनो राज्यं मृगयता मार्गयतोऽनेन तत्र बिलद्वारे संरुद्धः निरुद्धगतिकः कृतः ॥ २५ ॥ एकेन वस्त्रेणेति अन्यत्सर्वं मम हृत्वेत्यर्थः ॥ २६ ॥ अपविद्धो निरस्तः ॥ २७ ॥ ऋष्यमूकं प्रविष्टोस्मि अन्यत्र निर्भयस्थितिमलभमानः । अत्र निर्भयस्थितिः

कथं तत्राह दुराधर्षमिति । मतंगशापलक्षणे कारणविशेषे सति वालिना दुराधर्षं दुष्पवेशम् ॥ २८ ॥ वैरानुकथनं वैरकारणम् ॥ २९॥ वालिन इति पंचमी ॥ ३० ॥३१॥ रुषान्विताः रुषेन मया पातिताः॥ ॥ ३२ ॥ चारित्रदूषकः निषिद्धानिषिद्धज्ञानवत्त्वेऽसति जीवतो भ्रातुर्भार्यापहारात् ॥ ३३ ॥ आत्मानुमानात् अयं शोकाब्धिमग्नो रिपुहृतदारत्वात् मद्वदित्यनुमानम् । वाढं प्राप्स्यसि भार्याम् पुष्कलं राज्यं च ॥ ३४ ॥ ३५ ॥ मेंडमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे दशमः सर्गः ॥ १० ॥ ॥ इदानीं वालिनो बलमाह रामस्येति । वचनं



एतत्तेसर्वमाख्यातंवैरानुकथनंमहत् ॥ अनागसामयाप्राप्तंव्यसनंपश्यराघव ॥ २९ ॥ वालिनश्चभयात्तस्यसर्वलोकभयापह ॥ कर्तुमर्हसिमेवीरप्रसादं तस्यनिग्रहात् ॥ ३० ॥ एवमुक्तःसतेजस्वीधर्मज्ञोधर्मसंहितम् ॥ वचनंवक्तुमारेभेसुग्रीवंप्रहसन्निव ॥३१॥ अमोघाःसूर्यसंकाशानिशितामेशराइमे ॥ तस्मिन्वालिनिदुर्वृत्तेपतिष्यंतिरुषान्विताः ॥ ३२ ॥ यावत्तंनहिपश्येयंतवभार्यापहारिणम् ॥ तावत्सजीवेत्पापात्मावालीचारित्रदूषकः ॥ ३३ ॥ आत्मानुमानात्पश्यामिमग्नस्त्वंशोकसागरे ॥ त्वामहंतारयिष्यामिवाढंप्राप्स्यसिपुष्कलम् ॥ ३४ ॥ तस्यतद्वचनंश्रुत्वाहर्षपौरुषवर्धनम् ॥ सुग्रीवः परमप्रीतःसुमहद्वाक्यमब्रवीत् ॥ ३५ ॥ इत्यार्षे श्रीम०वा०आदि०किष्किन्धाकांडे दशमः सर्गः ॥ १० ॥ रामस्यवचनंश्रुत्वाहर्षपौरुषवर्धनम् ॥ सुग्रीवःपूजयांचक्रेराघवंप्रशशंसच ॥ १ ॥ असंशयंप्रज्वलितैस्तीक्ष्णैर्मर्मातिगैःशरैः ॥ त्वंदहेःकुपितोलोकान्युगांतइवभास्करः ॥ २ ॥ वालिनःपौरुषंयत्तद्यच्चवीर्यंधृतिश्चया ॥ तन्ममैकमनाःश्रुत्वाविधत्स्वयदनंतरम् ॥ ३ ॥ समुद्रात्पश्चिमात्पूर्वंदक्षिणादपिचोत्तरम् ॥ क्रामत्यनुदितेसूर्येवाली व्यपगतक्लमः ॥ ४ ॥ अग्राण्यारुह्यशैलानांशिखराणिमहांत्यपि ॥ ऊर्ध्वमुत्पात्यतरसाप्रतिगृह्णातिवीर्यवान् ॥ ५ ॥ बहवःसारवंतश्चवनेषुविविधाद्रुमाः ॥ वालिनातरसाभग्नावलंप्रथयतात्मनः ॥ ६ ॥ महिषोदुंदुभिर्नामकैलासशिखरप्रभः ॥ बलंनागसहस्रस्यधारयामासवीर्यवान् ॥ ७ ॥ सवीर्योत्सेकदुष्टात्मावरदानेनमोहितः ॥ जगामससमहाकायःसमुद्रंसरितांपतिम् ॥ ८ ॥ ऊर्मिमंतमतिक्रम्यसागरंरत्नसंचयम् ॥ ममयुद्धंप्रयच्छेतितमुवाचमहार्णवम् ॥ ९ ॥ ततःसमुद्रोधर्मात्मासमुत्थायमहावलः ॥ अब्रवीद्वचनंराजन्नसुरंकालचोदितम् ॥ १० ॥ समर्थोनास्मितेदातुंयुद्धंयुद्धविशारद ॥ श्रूयतांत्वभिधास्यामियस्तेयुद्धंप्रदास्यति ॥ ११ ॥ शैलराजोमहारण्येतपस्विशरणंपरम् ॥ शंकरश्वशुरोनाम्नाहिमवानितिविश्रुतः ॥१२॥



वालिवधविषयम् ॥ १ ॥ राघवं प्रशशंसेत्युक्तम् । तां प्रशंसामाह असंशयमिति ॥२॥ पौरुषं बलवैभवम् वीर्यं परसंहारशक्तिः धृतिः रणे धैर्यम् ॥३॥ अनुदिते सूर्ये क्रामति ब्राह्मे मुहूर्ते उत्थायेति शेषः ॥४॥ ऊर्द्ध्वमुत्पात्य कंदुकवदिति भावः ॥ ५ ॥ ६ ॥ महिषस्तद्रूपधरः ॥ ७ ॥ ८ ॥ ऊर्मिमंतं ऊर्मिमत्त्वाद्याकारवंतं समुद्रमतिक्रम्याविगणय्य तं तदधिष्ठातृदेवतामुवाच ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ गजेंद्र ऐरावतः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ युद्धे असमर्थ इति च्छेदः ॥ १९ ॥ अनुक्तपूर्वम् इतः पूर्वं न उक्तो युद्धदाताऽस्य तमसुरम् ॥ २० ॥ २१ ॥ एकः सशब्दः प्र
सिद्धपराक्रमार्थकः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ हरीणामीश्वरोहमस्मीति शेषः ॥ २९ ॥ नगरद्वारं मामकमिति शेषः । मे विदितोसि मया ज्ञातबलोसि अतः प्राणान् रक्ष

महाप्रस्रवणोपेतोवहुकंदरनिर्झरः ॥ ससमर्थस्तवप्रीतिमतुलांकर्तुमर्हति ॥ १३ ॥ तंभीतमितिविज्ञायसमुद्रमसुरोत्तमः ॥ हिमवद्वनमागम्यशरश्चापा
दिवच्युतः ॥ १४ ॥ ततस्तस्यगिरेःश्वेतागजेंद्रप्रतिमाःशिलाः ॥ चिक्षेपवहुधाभूमौदुंदुभिर्विननादच ॥ १५ ॥ ततःश्वेतांबुदाकारःसौम्यःप्रीतिकराकृ
तिः ॥ हिमवानब्रवीद्वाक्यंस्वएवशिखरेस्थितः ॥ १६ ॥ क्लेष्टुमर्हसिमांनत्वंदुंदुभेधर्मवत्सल ॥ रणकर्मस्वकुशलस्तपस्विशरणोह्यहम् ॥ १७ ॥
तस्यतद्वचनंश्रुत्वागिरिराजस्यधीमतः ॥ उवाचदुंदुभिर्वाक्यंक्रोधात्संरक्तलोचनः ॥ १८ ॥ यदियुद्धेऽसमर्थस्त्वंमद्भयाद्वानिरुद्यमः ॥ तमाचक्ष्वप्रदद्या
न्मेयोहियुद्धंयुयुत्सतः ॥ १९ ॥ हिमवानब्रवीद्वाक्यंश्रुत्वावाक्यविशारदः ॥ अनुक्तपूर्वंधर्मात्माक्रोधात्तमसुरोत्तमम् ॥ २० ॥ वालीनाममहाप्राज्ञ
शक्रपुत्रःप्रतापवान् ॥ अध्यास्तेवानरःश्रीमान्किष्किंधामतुलप्रभाम् ॥ २१ ॥ ससमर्थोमहाप्राज्ञस्तवयुद्धविशारदः ॥ द्वंद्वयुद्धंसदातुंतेनमुचेरिववास
वः ॥ २२ ॥ तंशीघ्रमभिगच्छत्वंयदियुद्धमिहेच्छसि ॥ सहिदुर्मर्षणोनित्यंशूरःसमरकर्मणि ॥ २३ ॥ श्रुत्वाहिमवतोवाक्यंकोपाविष्टःसदुंदुभिः ॥
जगामतांपुरींतस्यकिष्किंधांवालिनस्तदा ॥ २४ ॥ धारयन्माहिषंरूपंतीक्ष्णशृंगोभयावहः ॥ प्रावृषीवमहामेघस्तोयपूर्णोनभस्तले ॥ २५ ॥ ततस्तु
द्वारमागम्यकिष्किंधायामहावलः ॥ ननर्दकंपयन्भूमिंदुंदुभिर्दुंदुभिर्यथा ॥ २६ ॥ समीपजान्द्रुमान्भंजन्वसुधांदारयन्खुरैः ॥ विषाणेनोल्लिखन्दर्पा
त्तद्वारंद्विरदोयथा ॥ २७ ॥ अंतःपुरगतोवालीश्रुत्वाशब्दममर्षणः ॥ निष्पपातसहस्त्रीभिस्ताराभिरिवचंद्रमाः ॥ २८ ॥ मितंव्यक्ताक्षरपदंतमुवाचसदुं
दुभिम् ॥ हरीणामीश्वरोवालीसर्वेषांवनचारिणाम् ॥ २९ ॥ किमर्थंनगरद्वारमिदंरुद्ध्वाविनर्दसे ॥ दुंदुभेविदितोमेऽसिरक्षप्राणान्महावल ॥ ३० ॥
तस्यतद्वचनंश्रुत्वावानरेंद्रस्यधीमतः ॥ उवाचदुंदुभिर्वाक्यंक्रोधात्संरक्तलोचनः ॥ ३१ ॥ नत्वंस्त्रीसंनिधौवीरवचनंवक्तुमर्हसि ॥ ममयुद्धंप्रयच्छाद्यततो
ज्ञास्यामितेवलम् ॥ ३२ ॥ अथवाधारयिष्यामिक्रोधमद्यनिशामिमाम् ॥ गृह्यतामुदयःस्वैरंकामभोगेषुवानर ॥ ३३ ॥ दीयतांसंप्रदानंचपरिष्वज्य
चवानरान् ॥ सर्वशाखामृगेंद्रस्त्वंसंसाधयसुहृज्जनम् ॥ ३४ ॥ सुदृष्टांकुरुकिष्किंधांकुरुष्वात्मसमंपुरे ॥ क्रीडस्वचसमंस्त्रीभिरहंतेदर्पशासनः ॥ ३५ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ स्त्रीसमूहगतो युद्धाय नाह्वातव्य इति स्मृत्वा पक्षांतरमाह अथवेति । स्वैरं काममोगेषु उदयस्तावत्पर्यंतं कालो मत्तोऽवधिर्गृह्यताम् उदयपर्यंतं त्वां प्रतीक्ष इत्यर्थः ॥ ३३ ॥
वानरान्परिष्वज्य तेभ्यः संप्रदानं प्रीतिदानं दीयताम् संसाधय आमंत्रयस्व पाठांतरेपि उक्तार्थ एव ॥ ३४ ॥ सुदृष्टां पुनर्दर्शनाभावात् आत्मसमं पुत्रादिकं राज्यरक्षार्थे राजानं कुरुष्व क्रीडस्व आ उदयम् ॥ ३५ ॥

मत्तं पानादिना प्रमत्तमनवहितम् रहितमायुधादिभिः त्वद्विधं त्वामिव स्त्रीमध्यगम् मदमोहितं स्त्रीभोगार्थं कृतमधुपानादितिकर्तव्यतामूढम् ॥ ३६ ॥ ३७ ॥ मदोयं स्त्रीगोष्ठीजनितोपि वीरपानं वीरै रणे मनउत्साहार्थं क्रियमाणः पानविशेषः समर्थ्यतां ज्ञायताम् ॥ ३८ ॥ उत्क्षिप्य कंठे प्रतिमुच्य । एषा हि माला संग्रामजयदा ॥ ३९ ॥ अविध्यत क्षिप्तवान् ॥ ४० ॥ व्यापादयांचक्रे पातितवान् । पात्यतः पात्यमानस्य ॥ ४१ ॥ अस्यैव प्रपंचस्तयोरित्यादि ॥४२॥४३॥ हीनः हीनबलः ॥४४॥ उद्यम्य हस्ताभ्यामूर्ध्वीकृत्य उत्साद्येतिपाठे उत्पाटितविषाणं कृत्वेत्यर्थः ॥४५॥ स्रोतोभ्यो नासादिद्वारेभ्यः ॥४६॥

योहिमत्तंप्रमत्तंवाभग्नंवारहितंकृशम् ॥ हन्यात्सभ्रूणहालोकेत्वद्विधंमदमोहितम् ॥ ३६ ॥ सप्रहस्याब्रवीन्मंदंक्रोधात्तमसुरेश्वरम् ॥ विसृज्यताःस्त्रियः सर्वास्ताराप्रभृतिकास्तदा ॥ ३७ ॥ मत्तोऽयमितिमामंस्थायद्यभीतोसिसंयुगे ॥ मदोयंसंप्रहारेस्मिन्वीरपानंसमर्थ्यताम् ॥ ३८ ॥ तमेवमुक्त्वासंक्रुद्धोमालामुत्क्षिप्यकांचनीम् ॥ पित्रादत्तांमहेंद्रेणयुद्धायव्यवतिष्ठत ॥ ३९ ॥ विषाणयोर्गृहीत्वातंदुंदुभिंगिरिसंनिभम् ॥ अविध्यततदावालीविनदन्कपिकुंजरः ॥ ४० ॥ वालीव्यापादयांचक्रेनदन्नंचमहास्वनम् ॥ श्रोत्राभ्यामथरक्तंतुतस्यसुस्रावपात्यतः॥४१॥ तयोस्तुक्रोधसंरंभात्परस्परजयैषिणोः ॥ युद्धंसमभवद्घोरंदुंदुभेर्वालिनस्तदा ॥ ४२ ॥ अयुध्यततदावालीशक्रतुल्यपराक्रमः ॥ मुष्टिभिर्जानुभिःपद्भिःशिलाभिःपादपैस्तथा॥४३॥ परस्परंघ्नतोस्तत्रवानरासुरयोस्तदा ॥ आसीद्धीनोऽसुरोयुद्धेशक्रसूनुर्व्यवर्धत ॥ ४४ ॥ तंतुदुंदुभिमुद्यम्यधरण्यामभ्यपातयत् ॥ युद्धेप्राणहरेतस्मिन्निष्पिष्टोदुंदुभिस्तदा ॥ ४५ ॥ स्रोतोभ्योबहुरक्तंतुतस्यसुस्रावपात्यतः ॥ पपातचमहाबाहुःक्षितौपंचत्वमागतः ॥ ४६ ॥ तंतोलयित्वाबाहुभ्यांगतसत्त्वमचेतनम् ॥ चिक्षेपवेगवान्वालीवेगेनैकेनयोजनम् ॥ ४७ ॥ तस्यवेगप्रविद्धस्यवक्त्रात्क्षतजबिंदवः ॥ प्रपेतुर्मारुतोत्क्षिप्तामतंगस्याश्रमंप्रति ॥ ४८ ॥ तान्दृष्ट्वापतितांस्तत्रमुनिःशोणितविप्रुषः ॥ क्रुद्धस्तस्यमहाभागचिंतयामासकोन्वयम् ॥ ४९ ॥ येनाहंसहसास्पृष्टःशोणितेनदुरात्मना ॥ कोऽयंदुरात्मादुर्बुद्धिरकृतात्माचवालिशः ॥ ५० ॥ इत्युक्त्वासविनिष्क्रम्यददृशेमुनिसत्तमः ॥ महिषंपर्वताकारंगतासुंपतितंभुवि ॥ ५१ ॥ सतुविज्ञायतपसावानरेणकृतंहितत् ॥ उत्ससर्जमहाशापंक्षेप्तारंवानरंप्रति ॥ ५२ ॥ इहतेनाप्रवेष्टव्यंप्रविष्टस्यवधोभवेत् ॥ वनंमत्संश्रयंयेनदूषितंरुधिरस्रवैः ॥ ५३ ॥ क्षिपतापादपाश्चेमेसंभग्नाश्चासुरींतनुम् ॥ समंतादाश्रमंपूर्णंयोजनंमामकंयदि ॥ ५४ ॥ आक्रमिष्यतिदुर्बुद्धिर्व्यक्तंसनभविष्यति ॥ ये चास्यसचिवाःकेचित्संश्रितामामकंवनम् ॥ ५५ ॥ नचतैरिहवस्तव्यंश्रुत्वायांतुयथासुखम् ॥ तेपियद्यदितिष्ठंतिशापिष्येतानपिध्रुवम् ॥ ५६ ॥ वनेस्मिन्मामकेनित्यंपुत्रवत्परिरक्षिते ॥ पत्रांकुरविनाशायफलमूलाभवायच ॥ ५७ ॥

तोलयित्वा हस्तग्रहणेन भारं ज्ञात्वा योजनं तावद्दूरम् ॥ ४७ ॥ ४८ ॥ तस्य विप्रुषः कर्तारं को न्वयमिति चिंतयामास ॥ ४९ ॥ चिंताया एवाभिनयो येनेत्यादि ॥ ५० ॥ ५१ ॥ ५२ ॥ अप्रवेष्टव्यम् न प्रवेष्टव्यमित्यर्थः ॥ ५३ ॥ आसुरीं तनुं क्षिपता येनेमे पादपाः संभग्ना इत्यन्वयः । स यदि मामकम् आश्रमं तदागमनमुद्दिश्य समंतात्परिसरवर्ति पूर्णं योजनं तत्पर्यंतम् ॥ ५४ ॥ आक्रमिष्यति पद्भ्यां स्प्रक्ष्यति तर्हि न भविष्यति न जीविष्यतीत्यर्थः ॥५५॥ तैर्वालिसचिवैः श्रुत्वा मदुत्सृष्टं शापम् ॥ ५६ ॥ शापमेव हेतूपन्यासपूर्वमाह वने इति । फलाद्यभावाय तन्नाशाय जायंते यतोऽतः शपिष्यामि ॥५७॥

हारकत्वेन दंड्यत्वात्सखिकार्यस्य स्वकार्यत्वात् क्षत्रियस्य प्रतिज्ञाहानौ च महतोऽधर्मस्य श्रवणात्त्वद्वधो मे आवश्यको धर्मश्चेत्याशयः ॥ २८ ॥ सर्वथा मया यः कृतस्तव निग्रहः स धर्म एवेति त्वया द्रष्टव्यः । दुष्टनिग्रहफलकत्वादवतारग्रहणस्येत्याशयो गूढः । किंच धर्ममेवानुपश्यता जानता मित्रस्योपकर्तव्यम् मित्रोपकारकरणमपि धर्म एवेति सुग्रीवोपकाररूपत्वाद्वधस्य धर्मत्वमिति भावः ॥ २९ ॥ किंचानुतापादिना धर्ममनुवर्तता एतद्दुष्कर्मप्रायश्चित्तरूपधर्मानुवृत्तिं कुर्वता त्वयापि तत्कार्यं मत्कृतनिग्रहरूपं कार्यं शक्यं राजप्रार्थनापूर्वं कारयितुं शक्यम् । सत्यनुतापे त्वया प्रार्थनापूर्वमयं दंडः स्वस्य कारणीय एवेति त्वत्करणीयस्यैव मया कृतत्वान्नात्र क्षोभः कार्य इति भावः । पापिनामेवं स्वदंडप्रार्थना स्मृतिसिद्धेत्याह श्रूयते इति । चारित्रवत्सलौ चरित्रप्रतिपादनतत्परौ धर्मकुशलैर्गृहीतौ च भवतस्तत्तदर्थतत्त्वमेव तथा शास्त्रोक्तप्रकारेणैव मया रचितं कृतम् ॥ ३० ॥ तौ श्लोकावाह राजभिरिति । अनेन स्वकृतदंडस्य शास्त्रसंमतत्वं दंड्यहितत्वं चोक्तम् ॥ ३१ ॥ त्वयापि प्रार्थनापूर्वमयमर्थः कारणीयः स्यादित्यर्थप्रतिपादकं श्लोकमाह शासनाद्वेति । पापोहं मे दंडं कुर्विति प्रार्थनया स्वसमीपमागतस्य पापिनः शासनाद्दंडकरणाद्वा मोक्षाद्दयया विसर्जनाद्वा । स्तेन इति पापोपलक्षणम् । तत्र द्वितीयः पक्षो राज्ञो दोषायेत्याह राजा त्विति । राजा तु

सर्वथाधर्मइत्येवद्रष्टव्यस्तवनिग्रहः ॥ वयस्यस्योपकर्तव्यंधर्ममेवानुपश्यता ॥ २९ ॥ शक्यंत्वयापितत्कार्यंधर्ममेवानुवर्तता ॥ श्रूयतेमनुनागीतौश्लोकौचारित्रवत्सलौ ॥ गृहीतौधर्मकुशलैस्तथातच्चरितंमया ॥ ३० ॥ राजभिर्धृतदंडाश्चकृत्वापापानिमानवाः ॥ निर्मलाःस्वर्गमायांतिसंतःसुकृतिनोयथा ॥ ३१ ॥ शासनाद्वापिमोक्षाद्वास्तेनःपापात्प्रमुच्यते ॥ राजात्वशासन्पापस्यतदवाप्नोतिकिल्बिषम् ॥ ३२ ॥ आर्येणममर्मांधात्राव्यसनंघोरमीप्सितम् ॥ श्रमणेनकृतेपापेयथापापंकृतंत्वया ॥ ३३ ॥ अन्यैरपिकृतंपापंप्रमत्तैर्वसुधाधिपैः ॥ प्रायश्चित्तंचकुर्वंतितेनतच्छाम्यतेरजः ॥ ३४ ॥ तदलंपरितापेनधर्मतःपरिकल्पितः ॥ वधोवानरशार्दूलनवयंस्ववशेस्थिताः ॥ ३५ ॥ शृणुचाप्यपरंभूयःकारणंहरिपुंगव ॥ तच्छ्रुत्वाहिमहद्वीरनमन्युंकर्तुमर्हसि ॥ ३६ ॥ नमेतत्रमनस्तापोनमन्युर्हरिपुंगव ॥ वागुराभिश्चपाशैश्चकूटैश्चविविधैर्नराः ॥ ३७ ॥ प्रतिच्छन्नाश्चदृश्याश्चगृह्णंतिसुबहून्मृगान् ॥ प्रधावितान्वावित्रस्तान्विस्रब्धानतिविष्ठितान् ॥ ३८ ॥ प्रमत्तानप्रमत्तान्वानरामांसाशिनोभृशम् ॥ विध्यंतिविमुखांश्चापिनचदोषोऽत्रविद्यते ॥ ३९ ॥

पापस्याशासन् पापनिग्रहमकुर्वन् अनेन त्वद्दंडकरणमस्मादृशामावश्यकमिति ध्वनितम् ॥ ३२ ॥ ॥ अथात्रार्थे शिष्टाचारमपि प्रमाणयति आर्येणेति । मम कूटस्थेन मांधात्रा त्वया यत्प्रकारं पापं कृतं तत्प्रकारे पापे केनचिच्छ्रमणेनार्हतेन कृते सति कर्तुमीप्सितं घोरं व्यसनं दंडरूपं मांधात्रा कृतम् ॥ ३३ ॥ अन्यैरपि वसुधाधिपैः प्रमत्तपुरुषैः कृतं पापं प्रतिशुद्धये दंडनं कृतमित्यध्याहारः । न केवलं राजदंड एव पापप्रायश्चित्तमन्यदपि मन्वाद्युक्तमित्याह प्रायश्चित्तं च कुर्वंति कृतपापा इति शेषः । तेन कर्त्रनुष्ठितप्रायश्चित्तेन ॥ ३४ ॥ धर्मतः शास्त्रतः न वयं स्ववशे स्थिताः किंतु शास्त्राधीना इति शेषः । एतेनादर्शनपूर्वकं वधोऽधर्म इति यदुक्तं तदपि समाहितम् । दंडार्थवधे दर्शनानपेक्षणात् । एवं वालिनः संध्योपासनाद्यनुष्ठानेन शास्त्रज्ञत्वमवलंब्य समाहितम् ॥ ३५ ॥ अथ केवलशाखामृगत्वमवलंब्यापि समाधत्ते शृणु चापीति । छन्नेनानभिमुख्यस्य निःशंकवधे कारणं शृण्वित्यर्थः । तन्महत्कारणं श्रुत्वा मन्युं न कर्तुमर्हसि ॥ ३६ ॥ तत्र प्रच्छन्नवधे मनस्तापः कथमेवं कृतमिति पश्चात्तापो न नापि वधस्य कारणे मन्युर्मम क्रोधः । यद्वा मन्युः शोकः मृगाणां तादृशवधस्य राज्ञां स्वभावतया न दोष इत्याह वागुराभिरिति । विविधैः कूटैस्तृणच्छन्नश्वभ्रादिसंपादनरूपैः ॥ ३७ ॥ पर्णाद्याच्छादितत्वादिरूपैः प्रतिच्छन्ना इत्यन्वयः । विस्रब्धान्

विश्वस्तान् अतिविष्ठितान्स्वपालितमृगैः विष्ठितान्विरोधेन स्थितान्युध्यमानानिति यावत् ॥ ३८ ॥ ३९ ॥ न दोष इत्यत्र शिष्टाचारं प्रमाणयति यांतीति । मृगयां नानाप्रकारमृगवधयुक्तां कर्तुं राजर्षयो धर्मकोविदा यांति ॥ ४० ॥ प्रतियुध्यन्नन्येन युद्धं कुर्वन् मांसादिलोभाभावेपि क्षत्रियस्वाभाव्यात्तव वधो मया कृत इतरव्याघ्रादितिर्यग्जंतुवत् तत्र मे न कश्चिन्महान् दोषः । अल्पस्तु प्राणायाममात्रापनेय इति भावः ॥ ४१ ॥ शुभस्यैहिकाभ्युदयस्य राजानः क्षत्रियाः ॥ ४२ ॥ न हिंस्याद्रणव्यतिरेकेणेत्यर्थः । आक्रोशो निंदा । आक्षेपोवमाननम् । अप्रियवादः प्रतिकूलवचनम् । त्वं तु न तादृशो राजेति भावः । एतेन राज्ञो वधादौ ब्रह्मवधादिदोष इति सूचितम् ॥ ४३ ॥ ४४ ॥ प्रव्यथितो भगवति मिथ्यादोषोक्त्या प्रव्यथितो न दोषं राघवे दध्यौ तथा ध्यानस्यापि पापावहत्वादिति भावः । यद्वा ध्यानेनापि नाविंदच्छुद्धबुद्धमुक्तस्वभावत्वादिति भावः । धर्मेधिगतनिश्चयः भगवद्वचनादेव धर्मविषये जातनिश्चयः ॥ ४५ ॥ ४६ ॥ प्रकृष्टे प्रकृष्टज्ञानैश्वर्ये अपकृष्टो मादृश इति शेषः । यत्प्रमादाद्वाक्यमुक्तं तदयुक्तमेव ॥ ४७ ॥ तत्रापि अज्ञान

यांतिराजर्षयश्चात्रमृगयांधर्मकोविदाः ॥ तस्मात्त्वंनिहतोयुद्धेमयावाणेनवानर॥ ४० ॥ अयुध्यन्प्रतियुध्यन्वायस्माच्छाखामृगोह्यसि ॥ ४१ ॥ दुर्लभस्यचधर्मस्यजीवितस्यशुभस्यच ॥ राजानोवानरश्रेष्ठप्रदातारोनसंशयः ॥४२॥ तान्नहिंस्यान्नचाक्रोशेन्नाक्षिपेन्नाप्रियंवदेत् ॥ देवामानुषरूपेणचरंत्येतेमहीतले ॥ ४३ ॥ त्वंतुधर्ममविज्ञायकेवलंरोपमास्थितः ॥ विदूषयसिमांधर्मेपितृपैतामहेस्थितम् ॥ ४४ ॥ एवमुक्तस्तुरामेणवालीप्रव्यथितोभृशम् ॥ नदोषंराघवेदध्यौधर्मेऽधिगतनिश्चयः ॥ ४५ ॥ प्रत्युवाचततोरामंप्रांजलिर्वानरेश्वरः ॥ यत्त्वमात्थनरश्रेष्ठतत्तथैवनसंशयः ॥ ४६ ॥ प्रतिवक्तुंप्रकृष्टेहिनापकृष्टस्तुशक्नुयात् ॥ यदयुक्तंमयापूर्वंप्रमादाद्वाक्यमप्रियम् ॥ ४७ ॥ तत्रापिखलुमांदोषंकर्तुंनार्हसिराघव ॥ त्वंहिदृष्टार्थतत्त्वज्ञःप्रजानांचहितेरतः ॥ ४८ ॥ कार्यकारणसिद्धौचप्रसन्नाबुद्धिरव्यया ॥४९॥ मामप्यवगतंधर्माद्व्यतिक्रांतपुरस्कृतम् ॥ धर्मसंहितयावाचाधर्मज्ञपरिपालय ॥५० ॥ बाष्पसंरुद्धकंठस्तुवालीसार्तरवःशनैः ॥ उवाचरामंसंप्रेक्ष्यपंकलग्नइवद्विपः ॥ ५१ ॥ नचात्मानमहंशोचेनतारांनापिबांधवान् ॥ यथापुत्रंगुणज्येष्ठमंगदंकनकांगदम् ॥ ५२ ॥ सममादर्शनाद्दीनोबाल्यात्प्रभृतिलालितः ॥ तटाकइवपीतांबुरुपशोषंगमिष्यति ॥ ५३ ॥ बालश्चाकृतबुद्धिश्चएकपुत्रश्चमेप्रियः ॥ तारेयोरामभवतारक्षणीयोमहाबलः ॥ ५४ ॥ सुग्रीवेचांगदेचैवविधत्स्वमतिमुत्तमाम् ॥ त्वंहिगोप्ताचशास्ताचकार्याकार्यविधौस्थितः ॥ ५५ ॥ यातेनरपतेवृत्तिर्भरतेलक्ष्मणेचया ॥ सुग्रीवेचांगदेराजंस्तांचिंतयितुमर्हसि ॥ ५६ ॥

नाप्रियोक्तावपि दोषं कर्तुं दोषं भावयितुम् । तत्र हेतुस्त्वं हीति दृष्टेनापरोक्षानुभवेनार्थतत्त्वस्य धर्मादितत्त्वस्य ज्ञाता ॥ ४८ ॥ कार्यं दंडः कारणं तद्धेतुभूतं पापं तयोः सिद्धौ निश्चये तव बुद्धिरंतःकरणं प्रसन्ना निर्मला वैषम्यरहितेत्यर्थः ॥ ४९ ॥ धर्मादेव व्यतिक्रांतानां पुरस्कृतमग्रेसरं अवगतं तदग्रेसरत्वेन प्रसिद्धं मामपि पापिष्ठतरं धर्मसंहितया वाचा परिपालय । उत्तमलोकान्प्राप्नुहीतिवाचानुगृहाणेत्यर्थः ॥ ५० ॥ उवाच पुत्रादिमायाकृष्टः सन्नुवाचेत्यर्थः ॥५१॥ न त्वात्मानं भगवता त्वया हतत्वाद्भुक्तभोगत्वात् न तारां सुग्रीवस्यापि तस्यामनुरागात् न बांधवान् सुग्रीवतोपि सेवया जीवनलाभात् पुत्रं शोचामि बालत्वात्॥५२॥ मया लालितः स ममादर्शनाच्छोषं गमिष्यति । पीतांबुः सस्याद्युपयोजितांबुः ॥ ५३ ॥ तारेयस्तारापत्यम् । एकपुत्रत्वेनातिलालितत्वम् ॥ ५४ ॥ मतिमुत्तमां मरणांतानि वैराणीति न्यायेनेति भावः ।

सुग्रीवे च तत्रैवेत्यर्थः । भ्रातृस्नेहोद्बोधेन वा तत्राप्यनुग्रहप्रार्थनम् । कार्यविधौ गोप्ता अकार्यविधौ शास्ता ॥५५॥ ५६ ॥ मद्दोषकृतदोषां मत्कृतसुग्रीवापकारदोषानुसरणमात्रेण कृतदोषां न तु स्वतः कृततदप कारां तपस्विनीं शोच्याम् अवस्थातुमवस्थापयितुम् ॥ ५७ ॥ राज्यं वानरराज्यम् ॥५८॥ शक्यमिति । स्वाराज्यमपि त्वत्प्रसादलभ्यमिति भावः ॥ अहं त्वदुपदेशतस्त्वद्दर्शनतश्चेदानीं क्षीणपापस्त्वत्तो वध मुत्तमलोकराज्यफलमाकांक्षन्नपेक्षमाण इदानीमस्मि अतस्तारया वार्यमाणोपि यद् भ्रात्रा युद्धमुपागतः प्राप्तस्तत्पूर्वकृतपुण्यपरिपाकेनेति शेषः ॥ ५९ ॥ ६० ॥ व्यक्तदर्शनं उद्बुद्धबोधम् ॥ ६१ ॥ न वयं गुप्त वधरूपाकृत्यकारित्वेन चिंत्याः । नाप्यात्मा भ्रातृभार्यापहरणरूपाकृत्यकारित्वेन । तत्र हेतुर्वयमित्यादि । भवद्विशेषेण त्वदपेक्षया विशेषण विशेषज्ञत्वेन धर्मतो धर्मशास्त्रमार्गेण कृते त्वत्कृतपापे स्वकृतवधद्योतक स्वरूपे व्यापारे च निश्चयोऽत्र पापेऽयमेव दंड इति निश्चयो येषां तादृशाः ॥६२॥ अत्रार्थे स्मृतिमुपन्यस्यति दंड्ये य इति । कार्यकारणेति भावप्रधानो निर्देशः । कार्यत्वं दंड्यत्वं कारणत्वं दंडयितृत्वं ताभ्यां सिद्धार्थौ

मद्दोषकृतदोषांतांयथातारांतपस्विनीम् ॥ सुग्रीवोनावमन्येततथावस्थातुमर्हसि ॥ ५७ ॥ त्वयाह्यनुगृहीतेनशक्यंराज्यमुपासितुम् ॥ त्वद्वशेवर्तमानेनतवचित्तानुवर्तिना ॥ ५८ ॥शक्यंदिवंचार्जयितुंवसुधांचापिशासितुम् ॥ त्वत्तोऽहंवधमाकांक्षन्वार्यमाणोपितारया ॥ ५९ ॥ सुग्रीवेणसहभ्रात्रांद्वंद्वयुद्धमुपागतः ॥ इत्युक्त्वावानरोरामंविररामहरीश्वरः ॥ ६० ॥ सतमाश्वासयद्रामोवालिनंव्यक्तदर्शनम् ॥ साधुसंमतयावाचाधर्मतत्त्वार्थयुक्तया ॥ ६१ ॥ नवयंभवताचिंत्यानाप्यात्माहरिसत्तम ॥ वयंभवद्विशेषेणधर्मतःकृतनिश्चयाः ॥६२॥ दंड्येयःपातयेद्दंडंदंड्योयश्चापिदंड्यते ॥ कार्यकारणसिद्धार्थावुभौतौनावसीदतः ॥ ६३ ॥ तद्भवान्दंडसंयोगादस्माद्विगतकल्मषः ॥ गतःस्वांप्रकृतिंधर्म्यांदंडदिष्टेनवर्त्मना ॥ ६४ ॥ त्यजशोकंचमोहंचभयंचहृदयेस्थितम् ॥ त्वयाविधानंहर्यग्र्यनशक्यमतिवर्तितुम् ॥ ६५ ॥ यथात्वय्यंगदोनित्यंवर्ततेवानरेश्वर ॥ तथावर्तेतसुग्रीवेमयिचापिनसंशयः ॥ ६६ ॥ सतस्यवाक्यंमधुरंमहात्मनःसमाहितंधर्मपथानुवर्तिनत् ॥ निशम्यरामस्यरणावमर्दिनोवचःसुयुक्तंनिजगादवानरः ॥ ६७ ॥ शराभितप्तेनविचेतसामयाप्रभाषितस्त्वंयदजानताविभो ॥ इदंमहेंद्रोपमभीमविक्रमप्रसादितस्त्वंक्षममेहरीश्वर ॥६८ ॥ इत्यार्षे श्रीमद्रा० वा० आ० कि०अष्टादशः सर्गः ॥ १८ ॥ सवानरमहाराजःशयानःशरपीडितः ॥ प्रत्युक्तोहेतुमद्वाक्यैर्नोत्तरंप्रतिपद्यत ॥ १ ॥

निष्पन्नपरलोकप्रयोजनौ अतएव नावसीदतः । एवं न्याय्यदंडकर्तृत्वान्नाहमकृत्यकारी । जातदंडत्वाच्च त्वमपि न तथेति भावः ॥६३॥ तदेवाह स्वां प्रकृतिं स्वकीयं शुद्धस्वभावत्वं दंडदिष्टेन दंडबोधकशास्त्रोक्तेन मार्गेण ॥६४॥भयं भ्रातृभार्याहरणकर्मजनितनरकभयं मद्दूषणनिमित्तपरलोकभयं च दंडेन । कर्मणो नाशात् मद्दूषणस्य मया क्षांतत्वाच्च शोकमोहौ तारातारेयविषयौ । विधानं प्राग्भवीयं कर्म । अत्रांते दंडस्यैव संहारात्तिर श्चामपि ज्ञानवतां शास्त्रार्थेऽधिकारो दृढः कृत इति बोध्यम् ॥६५॥ तथा वर्तेत पितृवदेव तं पालयिष्याव इति भावः । अस्मत्तस्तथा वृत्तिं प्राप्नुयादित्यक्षरार्थः ॥६६॥ तस्य वाक्यं आत्मनः सुगतेः पुत्रपालनस्य च प्रतिपादकम् ॥६७॥ इदं प्रभाषणम् ॥६८॥ हर्षमाणः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे अष्टादशः सर्गः ॥१८॥ ॥ हेतुमद्वाक्यैर्हेतूपन्यासयुतैर्वाक्यैः

मयुक उक्तमत्युत्तरः ॥ १ ॥ जीवितांते तत्समये मुमोह विसंज्ञोभूत् ॥ २ ॥ ३ ॥ अप्रियमिति च्छेदः । सपुत्रा पुत्रोंगदः । गिरिकंदरं गिरिगह्वरं किष्किंधाख्यम् ॥४॥५॥ सा तारा आपततः पलायमानान् ॥ ६ ॥ इषुभिरनुबद्धानिवानुसृतानिव रामवित्रासितान् रामाद्वित्रस्तान् ॥ ७ ॥ वचनमाह वानरा इति । यस्य वालिनः दुर्गता वस्त्रादिकमपश्यंतः ॥ ८ ॥ भ्राता प्रयोजककर्ता । रामः प्रयोज्यकर्ता । बाणाः करणम् । दूराद्दूरे स्थित्वा तैः स पातितश्चेत्किं युष्माभिः पलायितमिति शेषः । तत्सेवयैव भवज्जीवनसंभवादिति भावः ॥ ९ ॥ प्राप्तकालं कालोचितम् । अविश्लिष्टं सर्वसंमतिपूर्वमेकरूपम् । अविक्लिष्ट मितिपाठे व्यक्तमित्यर्थः । अंगनां वालिन इति शेषः ॥ १० ॥ पुत्रं रक्षस्व रामादिति शेषः । कुतः पुत्रस्य भयं तत्राह अंतक इत्यादि । नयति यमपुरमिति शेषः ॥ ११ ॥ वृक्षान्वालिप्रहितान् अयं सर्वोपि

अश्मभिःपरिभिन्नांगःपादपैराहतोभृशम् ॥ रामबाणेनचाक्रांतोजीवितांतेमुमोहसः ॥ २ ॥ तंभार्याबाणमोक्षेणरामदत्तेनसंयुगे ॥ हतंप्लवगशार्दूलं ताराशुश्राववालिनम् ॥ ३ ॥ सासपुत्राऽप्रियंश्रुत्वावधंभर्तुःसुदारुणम् ॥ निष्पपातभृशंतस्मादुद्विग्नागिरिकंदरात् ॥ ४ ॥ येत्वंगदपरीवारावानराहि महाबलाः ॥ तेसकार्मुकमालोक्यरामंत्रस्ताःप्रदुद्रुवुः ॥ ५ ॥ साददर्शततस्त्रस्तान्हरीनापततोद्रुतम् ॥ यूथादिवपरिभ्रष्टान्मृगान्निहतयूथपान् ॥ ६ ॥ तानुवाचसमासाद्यदुःखितान्दुःखितासती ॥ रामवित्रासितान्सर्वाननुबद्धानिवेषुभिः ॥ ७ ॥ वानराराजसिंहस्ययस्ययूयंपुरःसराः ॥ तंविहायसुवित्र स्ताःकस्माद्द्रवतदुर्गताः ॥ ८ ॥ राज्यहेतोःसचेद्भ्राताभ्रात्राक्रूरेणपातितः ॥ रामेणप्रसृतैर्दूरान्मार्गणैर्दूरपातिभिः ॥ ९ ॥ कपिपत्न्यावचःश्रुत्वाकपयः कामरूपिणः ॥ प्राप्तकालमविश्लिष्टमूचुर्वचनमंगनाम् ॥ १० ॥ जीवपुत्रेनिवर्तस्वपुत्रंरक्षस्वचांगदम् ॥ अंतकोरामरूपेणहत्वानयतिवालिनम् ॥ ११ ॥ क्षिप्तान्वृक्षान्समाविध्यविपुलाश्चतथाशिलाः ॥ वालीवज्रसमैर्बाणैर्वज्रेणेवनिपातितः ॥ १२ ॥ अभिभूतमिदंसर्वंविद्रुतंवानरंबलम् ॥ अस्मि न्प्लवगशार्दूलेहतेशक्रसमप्रभे ॥ १३ ॥ रक्ष्यतांनगरीशूरैरंगदश्चाभिषिच्यताम् ॥ पदस्थंवालिनःपुत्रंभजिष्यंतिप्लवंगमाः ॥ १४ ॥ अथवारुचितं स्थानमिहतेरुचिरानने ॥ आविशंतिचदुर्गाणिक्षिप्रमद्यैववानराः ॥ १५ ॥ अभार्याःसहभार्याश्चसंत्यत्रवनचारिणः ॥ लुब्धेभ्योविप्रलब्धेभ्यस्ते भ्योनःसुमहद्भयम् ॥ १६ ॥ अल्पांतरगतानांतुश्रुत्वावचनमंगना ॥ आत्मनःप्रतिरूपंसावभाषेचारुहासिनी ॥ १७ ॥

संभाव्यवादः एवं बहुबाणत्यागवादोपि ॥ १२ ॥ अभिभूतमिव द्रुतम् । वानरं वानराणामिदम् ॥ १३ ॥ पदस्थं वानरराज्यपदस्थं पुत्रमंगदं भजिष्यंति अन्यथाऽराजकेत्रास्माभिरवस्थातुमशक्यमिति भावः ॥ १४ ॥ अथवेति । सरामे सुग्रीवे किष्किंधामागच्छति अभिषिक्तेनाप्यंगदेनास्मत्पालनमशक्यमेवेति नेह स्थातुं योग्यमिति शेषः । हे रुचिरानने यद्यपीदं स्थानं ते तुभ्यं रुचितमभीष्टं तथापीह किष्किंधायां विद्यमानानि दुर्गाणि अद्यैव वानराः सुग्रीवहनुमदादयः आविशंति । वर्तमानसामीप्ये लट् । तेषु प्रविष्टेषु येऽभार्याः सभार्याश्च वानराः सुग्रीवावलंबिनः प्रागस्माभिः कृतवैरास्ते च प्रवेक्ष्यंति । ततश्च लुब्धेभ्यो राज्यादिविषये विप्रलब्धेभ्यः पूर्वमस्माभिर्वंचितेभ्योस्माकं तुमुलं महद्भयमस्ति यत इति शेषः । केचित्तु इह ते स्थानमस्माकमरुचितम् अनभिमतम् इतरत् पूर्ववदित्याहुः ॥ १५ ॥ १६ ॥ अल्पांतरगतानां

नातिदूरवर्तिनाम् । अवांतरगतानामितिपाठे मध्ये मार्गमागतानामित्यर्थः । तेषां वानराणां वचनं श्रुत्वा आत्मनः प्रतिरूपं कालोचितं बभाषे ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ पर्वतेंद्राणां क्षेप्तारं रणेष्विति शेषः । रणभेदमपेक्ष्य वज्राणामिति बहुवचनप्रयोगः । महता वातेन समं तुल्यम् आविष्टमावेशो यस्य रणेषु तम् ॥ २२ ॥ शक्रतुल्यं पराक्रांतं पराक्रमो यस्य तं वृक्षेव जलमुत्सृज्याविरतं नर्दतां मध्ये भीमं नर्दंतम् ॥ २३ ॥ मृगराजं प्रभूतमांसादिमत्त्वेन मृगश्रेष्ठं शार्दूलो व्याघ्रः ॥ २४ ॥ सर्वलोकस्य सर्वलोकेनार्चितं चैत्यं चतुष्पथवर्तिवल्मीकं नागहेतोरंतर्विद्यमाननागभक्षणार्थं सुपर्णेन

पुत्रेणममकिंकार्यंराज्येनापिकिमात्मना ॥ कपिसिंहेमहाभागेतस्मिन्भर्तरिनश्यति ॥ १८ ॥ पादमूलंगमिष्यामितस्यैवाहंमहात्मनः ॥ योऽसौ रामप्रयुक्तेनशरेणविनिपातितः ॥ १९ ॥ एवमुक्त्वाप्रदुद्रावरुदतीशोकमूर्छिता ॥ शिरश्चोरश्चबाहुभ्यांदुःखेनसमभिघ्नती ॥ २० ॥ सात्रजंतीददर्शाथपतिंनिपतितंभुवि ॥ हंतारंवानरेंद्राणांसमरेष्वनिवर्तिनाम् ॥ २१ ॥ क्षेप्तारंपर्वतेंद्राणांवज्राणामिववासवम् ॥ महावातसमाविष्टंमहामेघौघनिःस्वनम् ॥ २२ ॥ शक्रतुल्यपराक्रांतंवृष्ट्वेवोपरतंघनम् ॥ नर्दंतंनर्दतांभीमंशूरंशूरेणपातितम् ॥ २३ ॥ शार्दूलेनामिषस्यार्थेमृगराजमिवाहतम् ॥ ॥ २४ ॥ अर्चितंसर्वलोकस्यसपताकंसवेदिकम् ॥ नागहेतोःसुपर्णेनचैत्यमुन्मथितंयथा ॥ २५ ॥ अवष्टभ्यावतिष्ठंतंददर्शधनुरूर्जितम् ॥ रामं रामानुजंचैवभर्तुश्चैवतथानुजम् ॥२६॥ तानतीत्यसमासाद्यभर्तारंनिहतंरणे ॥ समीक्ष्यव्यथिताभूमौसंभ्रांतानिपपातह ॥ २७॥ सुप्तेवपुनरुत्थायआर्यपुत्रेतिवादिनी ॥ रुरोदसापतिंदृष्ट्वासंवीतंमृत्युदामभिः ॥ २८ ॥ तामवेक्ष्यतुसुग्रीवःशोचंतींकुररीमिव ॥ विषादमगमत्कष्टंदृष्ट्वाचांगदमागतम् ॥ ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकोनविंशः सर्गः ॥ १९ ॥ रामचापविसृष्टेनशरेणांतकरेणतम् ॥ दृष्ट्वाविनिहतंभूमौताराताराधिपानना ॥ १ ॥ सासमासाद्यभर्तारंपर्यष्वजतभामिनी ॥ इषुणाभिहतंदृष्ट्वावालिनंकुंजरोपमम् ॥ २ ॥ वानरंपर्वतेंद्राभंशोकसंततमानसा ॥ तारातरुमिवोन्मूलंपर्यदेवयतातुरा ॥ ३ ॥ रणेदारुणविक्रांतप्रवीरप्लवतांवर ॥ किमिदानींपुरोभागामद्यत्वंनाभिभाषसे ॥ ४ ॥ उत्तिष्ठहरिशार्दूलभजस्वशयनोत्तमम् ॥ नैवंविधाःशेरतेहिभूमौनृपतिसत्तमाः ॥ ५ ॥ अतीवखलुतेकांतावसुधावसुधाधिप ॥ गतासुरपितांगात्रैर्मांविहायनिषेवसे ॥ ६ ॥ व्यक्तमद्यत्वयावीरधर्मतःसंप्रवर्तता ॥ किष्किंधेवपुरीरम्यास्वर्गमार्गेविनिर्मिता ॥ ७ ॥

गरुडेन यथोन्मथितं तथा सुग्रीवस्य राज्यभोगहेतो रामेणोन्मथितमित्यर्थः ॥ २५ ॥ २६ ॥ तानतीत्य मार्गस्थान् रामादीनतीत्य ॥ २७ ॥ संवीतं बद्धम् ॥ २८ ॥ २९ ॥ धीरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकोनविंशः सर्गः ॥ १९ ॥ ॥ अंतकरेण मृत्युकारिणा ॥ १ ॥ २ ॥ उन्मूलमुत्पाटितमूलं पतितमिति शेषः ॥ ३ ॥ प्लवतां वानराणां श्रेष्ठ इदानीं पुरोभागां एतस्मिन्काले कृतापराधां मत्वाऽद्य नाभिभाषसे किमित्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ हे वीर धर्मतः संप्रवर्तता धर्मेण युद्धमाचरता त्वयाद्य स्वर्गमार्गे स्वर्गसाधनरणभूमौ

किष्किंधेवान्या रम्या पुरी निर्मिता नो चेत्कथं किष्किंधां विहायात्र शेषे इत्यर्थः । कतकस्तु धर्मतः प्रवर्तिता रक्षिता किष्किंधेवान्यापि स्वर्गमार्गे स्वर्गरूपदेशे निर्मितेत्यर्थमाह ॥ ७ ॥ यानि त्वया सार्धं विहृतानि तेषामत्र काले त्वयोपरमः समाप्तिः कृता ॥ ८ ॥ ९ ॥ मत्यं मम हृदयं सुस्थितमतिदृढं यत्त्वां पतितं दृष्ट्वा न स्फुटेत् ॥ १० ॥ स विवासित इति यत्तत्प्रसिद्धं कर्म तस्य कर्मण इयं व्युष्टिः परिपाकः प्राप्त इत्यर्थः ॥ ११ ॥ येषाहं हितं वाक्यमब्रुवं सा त्वया मोहाद्विगर्हिता अस्वीकृतवचनाकृतेति यावत् ॥ १२ ॥ दक्षिणानां विदग्धानां समर्थानां वा चित्तानि प्रमथिष्यसि प्राप्तदिव्यदेहेनाप्सरसां काममोहजननेनेति शेषः ॥ १३ ॥ कालः प्राप्त इति शेषः । अवपन्नः प्राप्तिनोसि कालविशेषणं निःसंशय इति तत्तदायुर्विषयसंदेहरहित इत्यर्थः ॥ १४ ॥ न संतप्यति तदस्थानेऽयुक्तम् ॥ १५ ॥ कृप

यान्यस्माभिस्त्वयासार्धंवनेषुमधुगंधिषु ॥ विहृतानित्वयाकालेतेषामुपरमःकृतः ॥८॥ निरानंदानिराशाहंनिमग्नाशोकसागरे ॥ त्वयिपंचत्वमापन्ने महायूथपयूथपे ॥ ९ ॥ हृदयंसुस्थितंमह्यंदृष्ट्वानिपतितंभुवि ॥ यन्नशोकाभिसंततंस्फुटतेद्यसहस्रधा ॥ १० ॥ सुग्रीवस्यत्वयाभार्याहृतासचविवासितः ॥ यत्तत्तस्यत्वयाव्युष्टिःप्राप्तेयंप्लवगाधिप ॥ ११ ॥ निःश्रेयसपरामोहात्त्वया चाहंविगर्हिता ॥ येषाब्रुवंहितंवाक्यंवानरेंद्रहितैषिणी ॥ १२ ॥ रूपयौवनदृप्तानांदक्षिणानांचमानद ॥ नूनमप्सरसामार्यचित्तानिप्रमथिष्यसि ॥ १३ ॥ कालोनिःसंशयोनूनंजीवितांतकरस्तव ॥ बलाद्येनावपन्नोसिसुग्रीवस्यावशोवशी ॥ १४ ॥ अस्थानेवालिनंहत्वायुध्यमानंपरेणच ॥ नसंतप्यतिकाकुत्स्थःकृत्वाकर्मसुगर्हितम् ॥ १५ ॥ वैधव्यंशोकसंतापं कृपणाकृपणासती ॥ अदुःखोपचितापूर्वंवर्तयिष्याम्यनाथवत् ॥ १६ ॥ लालितश्चांगदोवीरःसुकुमारःसुखोचितः ॥ वत्स्यतेकामवस्थांमेपितृव्येक्रोधमूर्च्छिते ॥ १७ ॥ कुरुष्वपितरंपुत्रसुदृष्टंधर्मवत्सलम् ॥ दुर्लभंदर्शनंतस्यतववत्सभविष्यति ॥ १८ ॥ समाश्वासयपुत्रंत्वंसंदेशंसंदिशस्वमे ॥ मूर्ध्निचैनंसमाघ्रायप्रवासंप्रस्थितोह्यसि ॥ १९ ॥ रामेणहिमहत्कर्मकृतंत्वामभिनिघ्नता ॥ आनृण्यंतुगतंतस्यसुग्रीवस्यप्रतिश्रवे ॥ २० ॥ सकामोभवसुग्रीवरुमांत्वंप्रतिपत्स्यसे ॥ भुंक्ष्वराज्यमनुद्विग्नःशस्तोभ्रातारिपुस्तव ॥ २१ ॥ किंमामेवंप्रलपतींप्रियांत्वंनाभिभाषसे ॥ इमाःपश्यवराबह्वीर्भार्यास्तेवानरेश्वर ॥ २२ ॥ तस्याविलपितंश्रुत्वावानर्यःसर्वतश्चताः ॥ परिगृह्यांगदंदीनादुःखार्ताःप्रतिचुक्रुशुः ॥ २३ ॥ किमंगदंसांगदवीरबाहो विहाययातोसिचिरंप्रवासम् ॥ नयुक्तमेवंगुणसंनिकृष्टंविहायपुत्रंप्रियचारुवेषम् ॥ २४ ॥

णाकृपणा अतिशयेन कृपणा आबाधायां वा द्वित्वम् । पूर्वमदुःखोपचिता अदुःखं दुःखरहितं यथा भवति तथोपचिता वर्धिता ॥ १६ ॥ मे मया लालितः कामवस्थां प्राप्य वत्स्यत इत्यर्थः ॥ १७ ॥ पितरं सुदृष्टं कुरुष्व ॥ १८ ॥ मूर्ध्न्येनमुपाघ्राय संदेशं कर्तव्योपदेशं संदिशस्वेत्यन्वयः । प्रस्थितः प्रस्थातुकामः ॥ १९ ॥ प्रतिश्रवे प्रतिज्ञाविषये अनेन रामस्य वालिवधविषयदोषाभावो ध्वनितः ॥ २० ॥ शस्तो हिंसितः ॥ २१ ॥ २२ ॥ तस्या विलपितं ताराया विलापम् ॥ २३ ॥ किमंगदं सांगदवीरबाहो सांगदो वीरहंता बाहुर्यस्य तादृशगुणसन्निकृष्टं गुणैस्तव प्रत्यासन्नं प्रियश्चारुर्वेषो यस्य तं पुत्रं

विहाय चिरं मवासं गंतुं न युक्तमित्यन्वयः ॥ २४ ॥ असंमधार्य अविचार्य हरिवंशानां वानरसमूहानां नाथ व्रजामि स्पृशामीत्यर्थः ॥ २५ ॥ यत्र वाली तत्रोपभुवि तद्भूसमीपभुवि मायमुपवेष्टुं मायोपवेशं कर्तुं व्यवस्यत निश्चितवती ॥ २६ ॥ चैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे विंशः सर्गः ॥ २० ॥ ॥ तत इति ॥ १ ॥ जंतुः फल हेतुकं स्वर्गनरकादिफलसाधनम्, स्वार्थे कः । गुणैः शमादिभिः दोषेण रागादिना वा कृतं यत्स्वकर्मास्ति तत्तस्य शुभाशुभरूपं फलं मेत्याव्यग्रोऽनाकुलोवामोति । गुणदोषकृतं ज्ञानाज्ञानकृतमित्यर्थ इति कश्चित ॥ २ ॥ शोच्या पापपुण्यकर्मपाशवशगत्वेन शोचनीया त्वं कमन्यं शोच्यं शोचसि कर्मवशगं भर्त्रादिकं कर्मफलवशतो दीना त्वं कमन्यं पुत्रादिकमनुकंपसे बुद्बुदोपमे देहेऽतीते कः कस्यानुशोच्योस्ति उपल क्षणं कस्य को नु शोचकोस्तीत्यपि बोध्यं विदुषो नोचितः शोक इति भावः ॥ ३ ॥ द्रष्टव्यो वालिशोकनिवृत्त्यर्थमिति शेषः । अस्य वालिनो मरिष्यमाणस्यायत्यां मरणोत्तरकाले यानि विधेयानि कार्याणि

यद्यप्रियंकिंचिदसंप्रधार्यकृतंमयास्यात्तवदीर्घबाहो ॥ क्षमस्वमेतद्धरिवंशनाथव्रजामिमूर्ध्नातववीरपादौ ॥ २५ ॥ तथातुताराकरुणंरुदंतीभर्तुःसमीपेसहवानरीभिः ॥ व्यवस्यतप्रायमनिंद्यवर्णाउपोपवेष्टुंभुवियत्रवाली ॥ २६ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येकिष्किंधाकांडेविंशः सर्गः ॥ २० ॥ ततोनिपतितांतारांच्युतांतारामिवांबरात् ॥ शनैराश्वासयामासहनूमान्हरियूथपः ॥ १ ॥ गुणदोषकृतंजंतुःस्वकर्मफलहेतुकम् ॥ अव्यग्रस्तदवाप्नोतिसर्वंप्रेत्यशुभाशुभम् ॥ २ ॥ शोच्याशोचसिकंशोच्यंदीनंदीनानुकंपसे ॥ कश्चकस्यानुशोच्योस्तिदेहेस्मिन्बुद्बुदोपमे ॥ ३ ॥ अंगदस्तुकुमारोयंद्रष्टव्योजीवपुत्रया ॥ आयत्यांचविधेयानिसमर्थान्यस्यचिंतय ॥ ४ ॥ जानास्यनियतामेवंभूतानामागतिंगतिम् ॥ तस्माच्छुभंहिकर्तव्यंपंडितेनेहलौकिकम् ॥ ५ ॥ यस्मिन्हरिसहस्राणिशतानिनियुतानिच ॥ वर्तयंतिकृताशानिसोयंदिष्टान्तमागतः ॥ ६ ॥ यदयंन्यायदृष्टार्थः सामदानक्षमापरः ॥ गतोधर्मजितांभूमिंनैनंशोचितुमर्हसि ॥ ७ ॥ सर्वेचहरिशार्दूलाःपुत्रश्चायंतवांगदः ॥ हर्यृक्षपतिराज्यंचत्वत्सनाथमनिंदिते ॥ ८ ॥ ताविमौशोकसंतप्तौशनैःप्रेरयभामिनि ॥ त्वयापरिगृहीतोयमंगदःशास्तुमेदिनीम् ॥ ९ ॥ संततिश्चयथादृष्टाकृत्यंयच्चापिसांप्रतम् ॥ राज्ञस्तत्क्रियतांसर्वमेषकालस्यनिश्चयः ॥ १० ॥

समर्थानि श्रेष्ठानि तानि त्वं चिंतय विचारय ॥४॥ अनियतामव्यवस्थितां तस्माच्छुभं परलोकसुखावहं यत्तत्कर्तव्यम्, हे पंडिते इह पतिपित्रादिवियोगकाले न लौकिकं बहुरोदनादि कर्तव्यम् । मीतिमात्रबोधक तया मृतेष्टासाधनत्वेन च तस्य लौकिकत्वम् ॥५॥ यस्मिन् जीवतीति शेषः । कृताशानि कृतभोग्याशानि वर्तयंति जीवंति दिष्टांतम आयुर्दायरूपकल्पितकालांतम् ॥६॥ न्यायेन नीतिशास्त्रेण दृष्टोऽर्थो राजकार्यं येन सामादिपरो वानरेषु धर्मजितां धर्मेण भूमिं जितवतां राज्ञां भूमिं स्थानं गतः गंतेत्यर्थः अतो नैतच्छोक उचितः ॥ ७ ॥ त्वमपि न शोककरणार्हेत्याह सर्वे चेति । त्वत्सनाथं त्वयैवैकया सनाथम ॥८ ॥ ताविमौ सुग्रीवांगदौ शनैः प्रेरय उत्तरकार्यकरणायेति शेषः ॥ ९ ॥ संततिः अंगदः यथा दृष्टा यत्प्रयोजनकतया शास्त्रे दृष्टा यच्च राज्ञः सांप्रतं परलोकहितं कृत्यं तत्क्रियताम् । एष कालस्य इदानींतनकालस्यो

चितो निश्चयः अनुष्ठाननिश्चयः ॥ १० ॥ तदेवाह संस्कार्य इति । रामबाणस्यामोघत्वान्मरणनिश्चयेनैवमुक्तिः ॥ ११ ॥ १२ ॥ यदुक्तं पुत्रेण सुखिनी भवेति तत्मत्याख्याति तारा अंगदेति । अंगदतुल्यानां पुत्राणां शतमेकतः सुखसाधनैककोटौ हतस्यापि पत्युर्गात्रसंश्लेषोऽपरकोटौ तयोर्मध्ये द्वितीयो वरमतिशयितसुखसाधनं परलोके परमानंदहेतुत्वात् तस्मात्सहगमनं करिष्य इति भावः ॥ १३ ॥ राज्यं त्वदधीनमिति यदुक्तं तन्निराचष्टे न चेति । न राज्यस्य प्रभवामि न योग्या स्त्रीत्वात् । अंगदस्य वा राज्यदानेन प्रभवामि अनंतरः समर्थः मत्तः प्रत्यासन्नश्च ॥ १४ ॥ एषा बुद्धिर्मत्कर्तृकाभिषेकबुद्धिः पिता तत्तुल्यः सुग्रीवः बंधुः सुखदानाधिकारी न मातेत्यर्थः ॥ १५ ॥ १६ ॥ षैकेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकविंशः सर्गः ॥ २१ ॥ ॥ सर्वतो वीक्षमाणः सः आत्मजस्याग्रतः स्थितं सुग्रीवमेवादौ ददर्श ॥ १ ॥ आभाष्य सुग्रीवेति संबोध्य ॥ २ ॥ हे सुग्रीव मां किल्बिषात् प्राग्भवीयदुष्कृतवशाद्भविष्येण भविष्यतावश्यंभाविना बुद्धिमोहेन त्वयि शत्रुबुद्धिरूपेण बलात्कृष्यमाणं मां ज्ञात्वा त्वं दोषेण स्वापकारदोषवत्त्वेन मां गंतुमवगंतुं नार्हसि ॥ ३ ॥ कार्यानुमितं कर्मप्राबल्यं दर्शयति युगपदिति । भ्रातृयुक्तं भ्रात्रोर्युक्तमुचितं सौहार्दं

संस्कार्योहरिराजस्तुअंगदश्चाभिषिच्यताम् ॥ सिंहासनगतंपुत्रंपश्यंतीशांतिमेष्यसि ॥ ११ ॥ सातस्यवचनंश्रुत्वाभर्तृव्यसनपीडिता ॥ अब्रवीदुत्तरंताराहनूमंतमवस्थितम् ॥ १२ ॥ अंगदप्रतिरूपाणांपुत्राणामेकतःशतम् ॥ हतस्याप्यस्यवीरस्यगात्रसंश्लेषणंवरम् ॥ १३ ॥ नचाहंहरिराज्यस्यप्रभवाम्यंगदस्यवा ॥ पितृव्यस्तस्यसुग्रीवःसर्वकार्येष्वनंतरः ॥ १४ ॥ नह्येषाबुद्धिरास्थेयाहनूमन्नंगदंप्रति ॥ पिताहिबंधुःपुत्रस्यनमाताहरिसत्तम ॥ १५ ॥ नहिममहरिराजसंश्रयात्क्षमतरमस्तिपरत्रचेहवा ॥ अभिमुखहतवीरसेवितंशयनमिदंममसेवितुंक्षमम् ॥ १६ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकविंशः सर्गः ॥ २१ ॥ वीक्ष्यमाणस्तुमंदासुःसर्वतोमंदमुच्छ्वसन् ॥ आदावेवतुसुग्रीवंददर्शानुजमग्रतः ॥ १ ॥ तंप्राप्तविजयंवालीसुग्रीवंप्लवगेश्वरम् ॥ आभाष्यव्यक्तयावाचासस्नेहमिदमब्रवीत् ॥ २ ॥ सुग्रीवदोषेणनमांगंतुमर्हसिकिल्बिषात् ॥ कृष्यमाणंभविष्येणबुद्धिमोहेनमांबलात् ॥ ३ ॥ युगपद्विहितंतातनमन्येसुखमावयोः ॥ सौहार्दंभ्रातृयुक्तांहितादिदंजातमन्यथा ॥ ४ ॥ प्रतिपद्यत्वमद्यैवराज्यमेषांवनौकसाम् ॥ मामप्यद्यैवगच्छंतंविद्धिवैवस्वतक्षयम् ॥ ५ ॥ जीवितंचहिराज्यंचश्रियंचविपुलांतथा ॥ प्रजहाम्येषवैतूर्णंमहंचागर्हितंयशः ॥ ६ ॥ अस्यांत्वहमवस्थायांवीरवक्ष्यामियद्वचः ॥ यद्यप्यसुकरंराजन्कर्तुमेवत्वमर्हसि ॥ ७ ॥

सुखं च राज्यसुखं चावयोः कर्मणा युगपन्न विहितमिति मन्ये यतस्तदिदमुचितमपि सौहार्दं सुखं चान्यथा जातं विघटितमित्यर्थः ॥ ४ ॥ अथ रामशरक्षीणपापत्वात्प्राप्तदिव्यप्रकृतिः स्वयमेव सुग्रीवाय स्वानंतरं प्राप्तं राज्यं ददाति प्रतिपद्येति प्रतिपद्यस्वेत्यर्थः । वैवस्वतक्षयं यमगृहम् । ननु राजनि मृते तत्पुत्र एव राज्याधिकारी न तु तत्कनीयान् भ्रातेति चेन्न । पुत्रस्य बालत्वेन राज्यरक्षणासामर्थ्यात् बलवदाश्रितत्वाच्च पुत्रनाशो मा भूदिति तथोक्तिः भगवता रामेणापि राज्यरक्षणासामर्थ्येनांगदस्य सुग्रीवोभिषिक्तो राज्ये यौवराज्ये चांगदः । सुग्रीवानंतरं त्वंगदस्यैव राज्याधिकारो न तु सुग्रीवपुत्राणां ज्येष्ठपुत्रत्वादित्याहुः ॥ ५ ॥ अगर्हितं यशः प्रशस्तं यशः वाली केनाप्यवध्य इत्येवं तच्च प्रजहामि एकेनैव शरेण रामहतत्वादिति प्राञ्चः । अन्ये तु चस्त्वर्थे यश इत्युत्तरं बोध्यः अगर्हितं यशस्तु प्राप्नोमीति शेषः । वाली भगवता रामेण च्छन्नेन हत इत्येवंरूपं च यश इत्याहुः ॥ ६ ॥ अस्यामवस्थायां चरमदशायां यद्यप्यसुकरं मयात्यंतमपकृतत्वात् तथापि कर्तुमर्हस्येवेति योजना सात्विकत्वात्सात्विकसमाश्रयणाच्चेत्याशयः ।

स्वयं राज्यस्य दत्तत्वाद्राजन्निति संबोधनम् ॥ ७ ॥ तदेवाह सुखार्हमिति अबालिशं समर्थम् ॥ ८ ॥ प्राणैः प्राणेभ्यः मम पुत्रं स्वमौरसं पुत्रमिवाहीनार्थमक्षीणैहिकसकलप्रयोजनं यथा तथा सर्वतः सर्वत्र देशे काले च पालय । स्वानंतरमस्यैव राज्यं देहीति व्यंग्यम् ॥ ९ ॥ पालनप्रकारमेव दर्शयति त्वमपीति । सर्वत्र भवेति शेषः ॥ १० ॥ उक्तं स्वपुत्रस्याबालिशत्वं दर्शयति एष इति । रक्षसां वधे रामप्रत्युपकारप्रसंगप्राप्ते ॥ ११ ॥ अनुरूपाणि मदनुरूपाणि ॥ १२ ॥ तारारक्षणं तत उपकारमादर्श्य सूचयति सुषेणेति । तद्दुहिता तारा अर्थानां मध्ये सूक्ष्मः परमदुर्ज्ञेयो योऽर्थस्तस्य निश्चये औत्पातिके विविधे नानाप्रकारोत्पातसूचितापत्कालिकानुष्ठेयनिश्चये सर्वतः ऐहिकामुष्मिकनिश्चये च परिनिष्ठिताऽतिसमर्था ॥ १३ ॥ ततः किं तत्राह यदिति । तत्कार्यं त्यक्तसंशयं कार्यमनुष्ठेयम् । तदेव द्रढयति नहीति । मदनुभवसिद्धमेतदिति भावः । अनेन त्रैवर्णिकेतरत्वेन तरुणत्वेनावश्यंकर्तव्यपुरुषांतरस्वीकारायास्ताराया देवरत्वात्सुग्रीवस्य स्वीकारोप्यनुमत इति गम्यते ॥ १४ ॥ अथ भ्रात्रे वक्तव्यमुपदेशमाह राघव

सुखार्हंसुखसंवृद्धंबालमेनमबालिशम् ॥ बाष्पपूर्णमुखंपश्यभूमौपतितमंगदम् ॥ ८ ॥ ममप्राणैःप्रियतरंपुत्रंपुत्रमिवौरसम् ॥ मयाहीनमहीनार्थंसर्वतःपरिपालय ॥ ९ ॥ त्वमप्यस्यपितादातापरित्राताचसर्वशः ॥ भयेष्वभयदश्चैवयथाहंप्लवगेश्वर ॥ १० ॥ एषतारात्मजःश्रीमांस्त्वयातुल्यपराक्रमः ॥ रक्षसांचवधेतेषामग्रतस्तेभविष्यति ॥ ११ ॥ अनुरूपाणिकर्माणिविक्रम्यबलवान्रणे ॥ करिष्यत्येषतारेयस्तेजस्वीतरुणोंगदः ॥ १२ ॥ सुषेणदुहिताचेयमर्थसूक्ष्मविनिश्चये ॥ औत्पातिकेचविविधेसर्वतःपरिनिष्ठिता ॥ १३ ॥ यदेषासाध्वितिब्रूयात्कार्यंतन्मुक्तसंशयम् ॥ नहितारामतंकिंचिदन्यथापरिवर्तते ॥ १४ ॥ राघवस्यचतेकार्यंकर्तव्यमविशंकया ॥ स्यादधर्मोह्यकरणेत्वांचहिंस्यादमानितः ॥ १५ ॥ इमांचमालामाधत्स्वदिव्यांसुग्रीवकांचनीम् ॥ उदाराश्रीःस्थिताह्यस्यांसंप्रजह्यान्मृतेमयि ॥ १६ ॥ इत्येवमुक्तःसुग्रीवोवालिनाभ्रातृसौहृदात् ॥ हर्षंत्यक्त्वापुनर्दीनोग्रहग्रस्तइवोडुराट् ॥ १७ ॥ तद्वालिवचनाच्छांतःकुर्वन्युक्तमतंद्रितः ॥ जग्राहसोभ्यनुज्ञातोमालांतांचैवकांचनीम् ॥ १८ ॥ तांमालांकांचनींदत्वादृष्ट्वाचैवात्मजंस्थितम् ॥ संसिद्धःप्रेत्यभावायस्नेहादंगदमब्रवीत् ॥ १९ ॥ देशकालौभजस्वाद्यक्षममाणःप्रियाप्रिये ॥ सुखदुःखसहःकालेसुग्रीववशगोभव ॥ २० ॥

स्येति । अकरणेऽधर्मः स्यान्मिथ्याप्रतिज्ञत्वापत्तेरिति भावः । एवं पारलौकिकमनिष्टं प्रदर्श्यैहिकमपि तदाह त्वां चेति । मामिव धर्मभ्रष्टत्वादिति भावः ॥ १५ ॥ अथ राज्यानुमतिं क्रिययापि दर्शयति इमां चेति । उदारा प्रशस्ता श्रीर्जयलक्ष्मीरस्यां स्थिता महेंद्रानुग्रहात् । हि यतो मृते मयि शवस्पर्शात् एनां सा श्रीर्जह्यात् अत इदानीमेवेमां गृहाणेति भावः ॥ १६ ॥ एवं वालिवचः श्रुत्वा पूर्वं वाली दुष्ट इति बुद्ध्या तद्वधे जातं हर्षमिदानीमेव सौमनस्यदर्शनेन त्यक्त्वा दीनो विषण्णोभूदित्यर्थः । ग्रहग्रस्तः राहुग्रस्तः ॥ १७ ॥ तद्वालिवचनात्तादृशवालिवचनेन शांतः शांतवैरः युक्तं भ्रातृस्नेहोचितदर्शनादिव्यवहारमतंद्रितः कुर्वन् मालाग्रहणे वालिनाभ्यनुज्ञातो मालां जग्राह ॥ १८ ॥ प्रेत्यभावाय संसिद्धो निश्चितमरणः ॥ १९ ॥ देशकालौ तत्तत्कर्मोचितौ भजस्व जानीहि । प्रियाप्रिये इष्टानिष्टयोगजे काले सेवा

काले सुग्रीववशगस्तत्सेवापरो भव ॥ २० ॥ विपक्षे बाधकमाह यथा हीति । बालतया केवलं लालितो यथा सेवोचितकालेपि सेवारहितोऽवर्तिष्ठ तथा सेवाराहित्येन वर्तमानं त्वां सुग्रीवो न बहु मन्ये तातः सेवा कुर्वित्युपदेशः ॥ २१ ॥ किंचास्य सुग्रीवस्यामित्रैरनुपकारकैस्तथा शत्रुभिरपकारकैश्च गतं संगतं सख्यं मा गच्छेः मा गच्छ । भर्तुः सुग्रीवस्यार्थपरः प्रयोजनसाधनपरः ॥ २२ ॥ नातिप्रणयः पुत्रत्वात् अप्रणयश्च न कार्यः अस्मद्वधादिना अंतरदृक् । अत्यासत्तिर्विनाशाय त्वतिदूरं तु निष्फलम् । सेवा मध्यमभावेन राजवह्निगुरुस्त्रियामिति न्यायेन मध्यममार्गमवलंबस्वेत्याशयः ॥ २३ ॥ २४ ॥ हतो यूथपो येषां तादृशाः परिदेवयमाना विचुक्रुशुरित्यन्वयः ॥ २५ ॥ अस्यैव प्रपंचः किष्किंधेत्यादि ॥ २६ ॥ २७ ॥ गोलभस्य तदाख्यस्य महद्युद्धं पंचदशवर्षावधि अहोरात्रमविश्रमं युद्धम् । तदे

यथाहित्वंमहाबाहोलालितःसततंमया ॥ नतथावर्तमानंत्वांसुग्रीवोबहुमन्यते ॥ २१ ॥ नास्यामित्रैर्गतंगच्छेर्माशत्रुभिररिंदम ॥ भर्तुरर्थपरोदांतः सुग्रीववशगोभव ॥ २२ ॥ नचातिप्रणयःकार्यःकर्तव्योऽप्रणयश्चते ॥ उभयंहिमहादोषंतस्मादंतरदृग्भव ॥ २३ ॥ इत्युक्त्वाथविवृत्ताक्षःशरसंपीडितो भृशम् ॥ विवृतैर्दशनैर्भीमैर्बभूवोत्क्रांतजीवितः ॥ २४ ॥ ततोविचुक्रुशुस्तत्रवानराहतयूथपाः ॥ परिदेवयमानास्तेसर्वेप्लवगसत्तमाः ॥ २५ ॥ किष्किंधाह्यद्यशून्याचस्वर्गतेवानरेश्वरे ॥ उद्यानानिचशून्यानिपर्वताःकाननानिच ॥ २६ ॥ हतेप्लवगशार्दूलेनिष्प्रभावानराःकृताः ॥ येनदत्तं महद्युद्धंगंधर्वस्यमहात्मनः ॥ २७ ॥ गोलभस्यमहाबाहोर्दशवर्षाणिपंचच ॥ नैवरात्रौनदिवसेतद्युद्धमुपशाम्यति ॥ २८ ॥ ततःषोडशमेवर्षेगो लभोविनिपातितः ॥ तंहत्वादुर्विनीतंतुवालीदंष्ट्राकरालवान् ॥ २९ ॥ सर्वाभयंकरोस्माकंकथमेषनिपातितः ॥ ३० ॥ हतेतुवीरेप्लवगाधिपेतदावने चरास्तत्रनशर्मलेभिरे ॥ वनेचराःसिंहयुतेमहावनेयथाहिगावोनिहतेगवांपतौ ॥ ३१ ॥ ततस्तुताराव्यसनार्णवप्लुतामृतस्यभर्तुर्वदनंसमीक्ष्यसा ॥ जगामभूमिंपरिरभ्यवालिनंमहाद्रुमंछिन्नमिवाश्रितालता ॥ ३२ ॥ इत्यार्षेश्रीमद्रामायणे वा० आ० किष्किंधाकांडे द्वाविंशः सर्गः ॥ २२ ॥ ततःसमुपजिघ्रंतीकपिराजस्यतन्मुखम् ॥ पतिंलोकश्रुतातारामृतंवचनमब्रवीत् ॥ १ ॥ शेषेत्वंविषमेदुःखमकृत्वावचनंमम ॥ उपलोपचितेवीरसुदुःखेवसुधातले ॥ २ ॥ मत्तःप्रियतरानूनंवानरेंद्रमहीतव ॥ शेषेहितांपरिष्वज्यमांचनप्रतिभाषसे ॥ ३ ॥ सुग्रीवस्यवशंप्राप्तोविधिरेषभवत्यहो ॥ सुग्रीवएवविक्रांतोवीरसाहसिकप्रिय ॥ ४ ॥

वाह नैवेति ॥ २८ ॥ दंष्ट्राकरालवान् आर्षः स्वार्थे मतुप् । दंष्ट्राकराल इत्यर्थः ॥ २९ ॥ अस्माकं सर्वाभयंकरः सर्वेभ्योऽभयंकरः स एष वीरः कथं निपातितः ॥ ३० ॥ वनेचराः प्लवंगमा न शर्म लेभिरे इत्यन्वयः । अपरं वनेचरा इति गवां विशेषणम् ॥ ३१ ॥ समीक्ष्येति पाठः ॥ ३२ ॥ खगमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्वाविंशः सर्गः ॥ २२ ॥ ॥ अथ तारा मृतं दृष्ट्वा पुनः प्रलपति तत इति । लोकश्रुता लोकप्रसिद्धा ॥ १ ॥ उपलैः पाषाणैरुपचिते व्याप्ते सुदुःखे सुतरां दुःखकरे ॥ २ ॥ ३ ॥ एष विधिः रामरूपः सुग्रीवस्य वशं प्राप्तोऽधीनो भवति । अहो इत्याश्चर्ये । न तु त्वद्वशं प्राप्तो येनाद्यैव भार्यया योजितः स्यादिति भावः । अतः सुग्रीव एव विक्रांतोऽत्र राज्ये भवितेति शेषः । साहसिकं साहसकर्म ॥ ४ ॥

पर्युपासते पर्युपासंत॥५॥ यत्र त्वया निहता रिपवः शायितास्तदिदं वीरशयनं तत्र त्वमपि शेषे ॥६॥ विशुद्धसत्त्वाभिजन विशुद्धसत्त्ववंशभव प्रिययुद्ध प्रिययुद्धत्वाद्युद्धेनैव मरणं जातमिति भावः ॥७॥८॥ शूराय कन्याया अदाने हेतुः, शूरस्य तव भार्यां मां विधवां कृतां पश्य । मानः राजपत्नीत्वाभिमानः । शाश्वती स्थिरा गतिः सुखप्राप्तिः ॥ ९ ॥ १० ॥ कृतं शोकेनेति शेषः प्रकृत्याऽनुपाधितः ॥ ११ ॥ प्रहारे रणे पराक्रांतः परेण आक्रांत अभिभूतः पञ्चत्वमागतः एतद्दृष्ट्वापि यद्धृदयं न भिन्नमतो दृढमिति पूर्वेणान्वयः । ननु सपुत्रायाः कस्तेशोकोऽतआह पतिहीनेत्यादि ॥ १२ ॥ १३ ॥ कृमेरिंद्रगोपादे राग इव रागो यस्य तादृशः परिस्तोम आस्तरणं यस्मिन् कृमिरागो लाक्षारागः । कृमिरागं वदंत्यार्या लाक्षिकं प्रियदर्शनमित्युत्पलमालाकोशादित्यन्ये ॥ १४ ॥ परिरब्धुं आलिंगितुं न शक्नोमि रेणुशोणितसंवीत

ऋक्षवानरमुख्यास्त्वांबलिनंपर्युपासते ॥ तेषांविलपितंकृच्छ्रमंगदस्यचशोचतः ॥ ५ ॥ ममचेमागिरःश्रुत्वाकिंत्वंनप्रतिबुध्यसे ॥ इदंतद्वीरशयनं तत्रशेषेहतोयुधि ॥ ६ ॥ शायितानिहतायत्रत्वयैवरिपवःपुरा ॥ विशुद्धसत्त्वाभिजनप्रिययुद्धममप्रिय ॥ ७ ॥ मामनाथांविहायैकांगतस्त्वम सिमानद ॥ शूरायनप्रदातव्याकन्याखलुविपश्चिता ॥ ८ ॥ शूरभार्यांहतांपश्यसद्योमांविधवांकृताम् ॥ अवभग्नश्चमेमानोभग्नामेशाश्वतीगतिः॥९॥ अगाधेचनिमग्नास्मिविपुलेशोकसागरे ॥ अश्मसारमयंनूनामिदंमेहृदयंदृढम् ॥ १० ॥ भर्तारंनिहतंदृष्ट्वायन्नाद्यशतधाकृतम् ॥ सुहृच्चैवचभर्ताचप्रकृ त्याचममप्रियः ॥ ११ ॥ प्रहारेचपराक्रांतःशूरःपंचत्वमागतः ॥ पतिहीनातुयानारीकामंभवतुपुत्रिणी ॥ १२ ॥ धनधान्यसमृद्धापिविधवेत्युच्य तेबुधैः ॥ स्वगात्रप्रभवेवीरशेषेरुधिरमंडले ॥ १३ ॥ कृमिरागपरिस्तोमेस्वकीयेशयनेयथा ॥ रेणुशोणितसंवीतंगात्रंतवसमंततः ॥ १४ ॥ परिरब्धुंनशक्नोमिभुजाभ्यांप्लवगर्षभ ॥ कृतकृत्योद्यसुग्रीवोवैरेस्मिन्नतिदारुणे ॥ १५ ॥ यस्यरामविमुक्तेनहृतमेकेषुणाभयम् ॥ शरेणहृदिलग्नेनगा त्रसंस्पर्शनेतव ॥१६॥ वार्यामित्वांनिरीक्षंतीत्वयिपंचत्वमागते ॥ उद्बबर्हशरंनीलस्तस्यगात्रगतंतदा ॥१७॥ गिरिगह्वरसंलीनंदीप्तमाशीविषंयथा ॥ तस्यनिष्कृष्यमाणस्यबाणस्यापिबभौद्युतिः ॥१८॥ अस्तमस्तकसन्नद्धरश्मेर्दिनकरादिव ॥ पेतुःक्षतजधारास्तुव्रणेभ्यस्तस्यसर्वशः ॥१९॥ ताम्रगै रिकसंपृक्ताधाराइवधराधरात् ॥ अवकीर्णंविमार्जंतीभर्तारंरणरेणुना ॥२०॥ अस्रैर्नयनजैःशूरंसिषेचास्त्रसमाहतम् ॥ रुधिरोक्षितसर्वांगंदृष्ट्वाविनिहतं पतिम् ॥ २१ ॥ उवाचतारापिंगाक्षंपुत्रमंगदमंगना ॥ अवस्थांपश्चिमांपश्यपितुःपुत्रसुदारुणाम् ॥ २२ ॥ संप्रसक्तस्यवैरस्यगतोंतःपापकर्मणा ॥ बालसूर्योज्ज्वलतनुंप्रयातंयमसादनम् ॥ २३ ॥ अभिवादयराजानंपितरंपुत्रमानदम् ॥ एवमुक्तःसमुत्थायजग्राहचरणौपितुः ॥ २४ ॥

त्वात् शोकेन भुजयोर्बलाभावाच्च गात्रसंलग्नशरत्वाच्च अस्मिन्वैरे वालिविषये वैरे कृतकृत्यः कृतानुष्ठेयानुष्ठानः ॥ १५ ॥ शरेण तव गात्रसंस्पर्शने वार्यामि निवारिता भवामीत्यन्वयः ॥ १६ ॥ एवं तद्वचः श्रुत्वा नीलः शरम् उद्बबर्ह उद्धृतवान् अस्य बाणस्यातितेजस्विशत्रुवधेन तेजःक्षयान्न पुनस्तूणगमनमिति बोध्यम् ॥ १७ ॥ १८ ॥ दिनकरादिति पंचमी षष्ठ्यर्थे । रुधिररक्तत्वादिति भावः । व्रणेभ्यः शरशिला पादपर्वतेभ्यः ॥ १९ ॥ रणरेणुनावकीर्णं व्याप्तम् ॥ २० ॥ २१ ॥ पश्चिमावस्था मरणम् ॥ २२ ॥ पापकर्मणा प्राचीनपापवशात्संप्रसक्तस्य प्राप्तस्य वैरस्यांतोवसानं गतः प्राप्तवान् ॥ २३ ॥ २४ ॥

त्वामभिवादयमानम् इदं तारावाक्यम् ॥ २५ ॥ उपासे समीपे तिष्ठामि ॥ २६ ॥ रामस्य प्रहरणं बाणस्तद्रूपेणांभसा मया विना कथमवभृथे स्नातः ॥ २७ ॥ मालामिह न पश्यामि किं नु सुग्रीवाय मालादानस्यादर्शनं शोकवशाद्दृष्टस्यापि विस्मरणं चेत्येवमुक्तिः ॥ २८ ॥ आवर्तमानस्य अस्तं गच्छतः शैलराजं तमेवास्ताचलम् ॥ २९ ॥ पथ्यमिदं वच इति स्मृतिसन्निहितस्य प्रागुपदिष्टस्य परामर्शः ॥ ३० ॥ नैर्गमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे त्रयोविंशः सर्गः ॥ २३ ॥ ॥ तां ताराम् आशुवेगेन शोकमहार्णवेनाभिप्लुतां खिन्नाम् अप्रतिमेन असदृशेन आत्मन इति शेषः ॥ १ ॥ बाष्पपूर्णेन मुखेनोपलक्षितां तारां पश्यन् निर्विण्णमनाः खिन्नः संपरिदूयमानः सम्यगनुतप्यमानः ॥ २ ॥ उदात्तं धीरोदात्तस्वभावम् लक्षणैः

भुजाभ्यांपीनवृत्ताभ्यामंगदोहमितिब्रुवन् ॥ अभिवादयमानंत्वामंगदंत्वंयथापुरा ॥ २५ ॥ दीर्घायुर्भवपुत्रेतिकिमर्थंनाभिभाषसे ॥ अहंपुत्रसहाया त्वामुपासेगतचेतनम् ॥ सिंहेनपातितंसद्योगौःसवत्सेवगोवृषम् ॥ २६ ॥ इष्ट्वासंग्रामयज्ञेनरामप्रहरणांभसा ॥ तस्मिन्नवभृथेस्नातःकथंपत्न्यामया विना ॥ २७ ॥ यादत्तादेवराजेनतवतुष्टेनसंयुगे ॥ शातकौंभींप्रियांमालांतांतेपश्यामिनेहकिम् ॥ २८ ॥ राज्यश्रीर्नजहातित्वांगतासुमपिमानद ॥ सूर्यस्यावर्तमानस्यशैलराजमिवप्रभा ॥ २९ ॥ नमेवचःपथ्यमिदंत्वयाकृतंनचास्मिशक्ताहिनिवारणेतव ॥ हतासपुत्रास्मिहतेनसंयुगेसहत्वयाश्रीर्विजहातिमामपि ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे त्रयोविंशः सर्गः ॥ २३ ॥ तामाशुवेगेनदुरासदेनत्वभिप्लुतांशोकमहार्णवेन ॥ पश्यंस्तदावाल्यनुजस्तरस्वीभ्रातुर्वधेनाप्रतिमेनतेपे ॥ १ ॥ सबाष्पपूर्णेनमुखेनपश्यन्क्षणेननिर्विण्णमनामनस्वी ॥ जगामरामस्यशनैःसमीपंभृत्यैर्वृतःसंपरिदूयमानः ॥ २ ॥ सतंसमासाद्यगृहीतचापमुदात्तमाशीविषतुल्यबाणम् ॥ यशस्विनंलक्ष्मणलक्षितांगमवस्थितंराघवमित्युवाच ॥ ३ ॥ यथाप्रतिज्ञातमिदंनरेंद्रकृतंत्वयादृष्टफलंचकर्म ॥ ममाद्यभोगेषुनरेंद्रसूनोमनोनिवृत्तंहतजीवितेन ॥ ४ ॥ अस्यांमहिष्यांतुभृशंरुदंत्यांपुरेऽतिविक्रोशतिदुःखतप्ते ॥ हतेनृपेसंशयितेंगदेचनरामराज्येरमतेमनोमे ॥ ५ ॥ क्रोधादमर्षादतिविप्रधर्षाद्भ्रातुर्वधोमेनुमतःपुरस्तात् ॥ हतेत्विदानींहरियूथपेस्मिन्सुतीक्ष्णमिक्ष्वाकुवरप्रतप्स्ये ॥ ६ ॥ श्रेयोद्यमन्येममशैलमुख्येतस्मिन्हिवासश्चिरमृष्यमूके ॥ यथातथावर्तयतःस्ववृत्त्यानेमंनिहत्यत्रिदिवस्यलाभः ॥ ७ ॥ नत्वाजिघांसामिचरेतियन्मामयंमहात्मामतिमानुवाच ॥ तस्यैवतद्रामवचोनुरूपमिदंवचःकर्मचमेनुरूपम् ॥ ८ ॥

सामुद्रिकशास्त्रोक्तराजलक्षणैर्लक्षितमंगं यस्य तम् ॥ ३ ॥ दृष्टफलं राज्यभोगफलं कर्म वालिवधरूपम् हतजीवितेन कुत्सितजीवितेन साध्येषु भोगेष्वित्यन्वयः ॥ ४ ॥ अस्यां तारायाम् पुरे तत्स्थे जने अतिविक्रोशति अत्यंतं रुदति अंगदे संशयिते पितृवियोगात्संशयितजीविते ॥ ५ ॥ अतिविप्रधर्षाद्भ्रातृकृताधिकपराभवाद्धेतोर्ममोत्पन्नात्क्रोधादमर्षादसहिष्णुतया च सुतीक्ष्णमतिशयेन प्रतप्स्ये तपामि ॥ ६ ॥ यथा तथा येन केनापि प्रकारेण स्ववृत्त्या स्वजात्युचितवृत्त्या वर्तयतः जीवतः ऋष्यमूकवास एव श्रेयो मन्ये नतु त्रिदिवस्य लाभ इत्यन्वयः ॥ ७ ॥ तद्वचस्तस्यैवानुरूपम् ईषत्करघातेपि मयि तदकृत्वांत

रभ्रातृस्नेहबद्धतया त्वां न जिघांसामि कदापि चर गच्छेति यत्तद्वच इत्यर्थः । इदं कर्म भ्रातृवधरूपम् वच स्तदर्थमाकारणरूपम् ॥ ८ ॥ कामः पुरस्कृतो येन तादृशोपि भ्राता राज्यस्य तत्सुखस्य दुःखस्य भ्रातृवधे भाविदुःखस्य सारं तारतम्यं विचिंतयन्विचारयन् कथं भ्रातुर्वधं रोचयेत । एवं चाहं तत्तारतम्यानभिज्ञ इति भावः ॥ ९ ॥ उक्तमेव विवृणोति वधो हीति । मां हंतुं तस्य मतिर्नासीदित्यर्थः । तत्र हेतुः स्वमाहात्म्यव्यतिक्रमात् अनुचितकर्मकारी वालीत्ययशःप्रसंगभयात् प्राणहारी भ्रातुरिति शेषः । व्यतिक्रमोऽन्यायः ॥ १० ॥ द्रुमशाखयावभग्नः पलायितः अतएव मुहूर्तं परिनिष्टनन् त्वामाक्रोशन् यदाऽभवं तदा तेन भ्रात्रा सांत्वयित्वा पुनरेवं दुश्चेष्टां कर्तुं नार्हसि इत्युक्तः । न पुनर्मां हतवानित्यर्थः ॥ ११ ॥ अतएव भ्रातृत्वमित्यादि ॥ १२ ॥ अचिंतनीयं चिंतयितुमप्ययोग्यम् अतएवार्यैर्नित्यं परिहरणीयं यत्किंचिदुपाधिनाप्यनीप्सनीयम् आत्मकर्तृकमपि सर्वथाऽनवेक्षणीयं दर्शनानर्हम् इदं प्राप्तोस्मि । इदंपदार्थमाह पाप्मानमिति । हे वयस्य भ्रातुर्ज्येष्ठस्य भ्रातुर्वधात् पाप्मानं तद्रूपं वस्त्वित्यर्थः । त्वाष्ट्रो विश्वरूपः ॥ १३ ॥ प्रतिपत्तुं प्राप्तुं क इच्छेत्को वा सहेत । ग्रहीतुं शक्नुयादित्यर्थः ॥ १४ ॥ प्रजानां संमानं ताभिः क्रियमाणं स्वसंमाननमपि नार्हामि पापग्रस्तत्वात् । न यौवराज्यम् ज्येष्ठस्य पुत्रमंगदं

भ्राताकथंनाममयागुणस्यभ्रातुर्वधंरामविरोचयेत ॥ राज्यस्यदुःखस्यचवीरसारंविचिंतयन्कामपुरस्कृतोपि॥९॥ वधोहिमेमतोनासीत्स्वमाहात्म्यव्यतिक्रमात् ॥ ममासीद्बुद्धिदौरात्म्यात्प्राणहारीव्यतिक्रमः ॥ १० ॥ द्रुमशाखावभग्नोहंमुहूर्तंपरिनिष्टनन् ॥ सांत्वयित्वात्वनेनोक्तोनपुनःकर्तुमर्हसि ॥ ११ ॥ भ्रातृत्वमार्यभावश्चधर्मश्चानेनरक्षितः ॥ मयाक्रोधश्चकामश्चकपित्वंचप्रदर्शितम् ॥१२॥ अचिंतनीयंपरिवर्जनीयमनीप्सनीयंस्वनवेक्षणीयम् ॥ प्राप्तोस्मिपाप्मानमिदंवयस्यभ्रातुर्वधात्त्वाष्ट्रवधादिवेंद्रः ॥ १३ ॥ पाप्मानमिंद्रस्यमहीजलंचवृक्षाश्चकामंजगृहुःस्त्रियश्च ॥ कोनामपाप्मानमिमंसहेतशाखामृगस्यप्रतिपत्तुमिच्छेत् ॥ १४ ॥ नार्हामिसंमानमिमंप्रजानांनयौवराज्यंकुतएवराज्यम् ॥ अधर्मयुक्तंकुलनाशयुक्तमेवंविधंराघवकर्मकृत्वा ॥ १५ ॥ पापस्यकर्तास्मिविगर्हितस्यक्षुद्रस्यलोकापकृतस्यलोके ॥ शोकोमहान्मामभिवर्ततेऽयंवृष्टेर्यथानिम्नमिवांबुवेगः ॥ १६ ॥ सोदर्यघातापरगात्रवालःसंतापहस्ताक्षिशिरोविषाणः ॥ एनोमयोमामभिहंतिहस्तीदीप्तोनदीकूलमिवप्रवृद्धः ॥१७॥ अहोवतेदंनृवराविषह्यंनिवर्ततेमेहृदिसाधुवृत्तम् ॥ अग्नौविवर्णंपरितप्यमानंकिट्टंयथाराघवजातरूपम् ॥ १८ ॥ महाबलानांहरियूथपानामिदंकुलंराघवमन्निमित्तम् ॥ अस्यांगदस्यापिचशोकतापादर्धस्थितप्राणमितीवमन्ये ॥ १९ ॥

राज्ये कृत्वा यथाप्राप्तं यौवराज्यमित्यर्थः । एवंविधं कर्म कृत्वा राज्यं सर्वथा नार्हामीत्यन्वयः ॥ १५ ॥ क्षुद्रस्य क्षुद्रयोग्यस्य लोके इह लोक विगर्हितस्य निंदितस्य लोकापकृतस्य परलोकेऽपरमार्थसाधनस्य पापस्य कर्तास्मि अतो महान् शोको मां इव तथाभिवर्तते । यथा वृष्टेरंबुवेगो निम्नम् । इवशब्दस्तथाशब्दार्थे ॥ १६ ॥ सोदर्यघात एव परगात्रभागो वालश्च यस्य तज्जसंताप एव हस्ताक्षिशिरोविषाणं यस्य सः दृप्तो मत्तः प्रवृद्धो महान् ॥ १७ ॥ हे नृवर इदमंहः पापम् बत खेदे अविषह्यं सोढुमशक्यं प्राप्य मे हृदि स्थितं साधुवृत्तं जन्मांतरार्जितपुण्यं निवर्तते । विवर्णमतएवाग्नौ परितप्यमानं जातरूपं अविषह्यमशक्यसहावस्थानं प्राप्य किट्टं मलं यथा निवर्तते तथेत्यर्थः । यथा बलवतोत्तमेनाधमः स्थातुं न शक्नोति तथा बलवताधमेन सहोत्तमोपीत्याशयः । एवं चानेन पापेन सर्वपुण्यक्षयो जात इति तात्पर्यम् । केचित्तु अग्नौ परितप्यमानं जातरूपं स्वर्णं यथा विवर्णं विवर्णताकारकं किट्टं दाहकक्षारद्रव्यं प्राप्य निवर्तते भस्म भवति तथेत्यर्थ इत्याहुः ॥ १८ ॥ मन्निमित्तम् । मयैतत्स्वामिवधादिति भावः । अपि चास्यांग

दस्य शोकतापाच इतीव मन्य इत्युत्प्रेक्षाबोधकम् ॥ १९ ॥ सुलभ्यः सुलभ इत्यर्थः ॥ २० ॥ अंगदो न जीवेत् यदि जीवेत्तदा माता तारा पुत्रपालनाय जीवत् तदभावे तु सा सर्वथा न जीवेदित्यर्थः ॥ २१ ॥ सख्यं समानत्वम् निदेशे त्वदाज्ञायाम् ॥ २२ ॥ अनुजानीहि अग्निमवेशायेति शेषः ॥ २३ ॥ संजातबाष्पः दुःखिप्राणिदर्शनेन महतामयं स्वभावः ॥ २४ ॥ तस्मिन्क्षणे तस्मिन्नवसरे तारं रुदंतीमभीक्ष्णं वारंवारमवेक्षमाणः जीवंतीमिच्छन् क्षितिरिव क्षमावान् समुत्सुकः शोकापनयनायेति शेषः ॥ २५ ॥ कपिसिंहनाथां कपिसिंहानां स्वामिनीम् ॥ २६ ॥ २७ ॥ पुरुषप्रधानं पुरुषश्रेष्ठम् सः अंगदोक्तः काकुत्स्थोयमिति प्रजज्ञे इति संबंधः ॥ २८ ॥ परिविह्वलंती कष्टेन स्खलनपूर्वं गच्छंती ॥ २९ ॥ संभ्रांतो विस्मृतः शरीरभावो राजस्त्रीत्वादिर्यया सा रणेषु युद्धेषूत्कर्षणेन सर्वाधिकोत्कर्षेण लक्ष्यं येन

सुतःसुलभ्यःसुजनःसुवश्यःकुतस्तुपुत्रःसदृशोंगदेन ॥ नचापिविद्येतसवीरदेशोयस्मिन्भवेत्सोदरसंनिकर्षः ॥ २० ॥ अद्यांगदोवीरवरोनजीवेज्जीवेतमातापरिपालनार्थम् ॥ विनातुपुत्रंपरितापदीनासानैवजीवेदितिनिश्चितंमे ॥ २१ ॥ सोहंप्रवेक्ष्याम्यतिदीप्तमग्निंभ्रात्राचपुत्रेणचसख्यमिच्छन् ॥ इमेविचेष्यंतिहरिप्रवीराःसीतांनिदेशेपरिवर्तमानाः ॥ २२ ॥ कृत्स्नंतुतेसेत्स्यतिकार्यमेतन्मय्यप्यतीतेमनुजेन्द्रपुत्र ॥ कुलस्यहंतारमजीवनार्हं रामानुजानीहिकृतागसंमाम् ॥२३॥ इत्येवमार्तस्यरघुप्रवीरःश्रुत्वावचोवालिजघन्यजस्य ॥ संजातबाष्पःपरवीरहंतारामोमुहूर्तंविमनाबभूव॥२४॥ तस्मिन्क्षणेऽभीक्ष्णमवेक्षमाणःक्षितिक्षमावान्भुवनस्यगोप्ता ॥ रामोरुदंतीव्यसनेनिमग्नांसमुत्सुकःसोथददर्शताराम् ॥ २५ ॥ तांचारुनेत्रांकपिसिंहनाथांपतिंसमाश्लिष्यतदाशयानाम् ॥ उत्थापयामासुरदीनसत्त्वांमंत्रिप्रधानाःकपिराजपत्नीम् ॥ २६ ॥ साविस्फुरंतीपरिरभ्यमाणाभर्तुःसमीपादपनीयमाना ॥ ददर्शरामंशरचापपाणिंस्वतेजसासूर्यमिवज्वलंतम् ॥ २७ ॥ सुसंवृतंपार्थिवलक्षणैश्चतंचारुनेत्रंमृगशावनेत्रा ॥ अदृष्टपूर्वंपुरुषप्रधानमयंसकाकुत्स्थइतिप्रजज्ञे ॥ २८ ॥ तस्येंद्रकल्पस्यदुरासदस्यमहानुभावस्यसमीपमार्या ॥ आर्तातितूर्णंव्यसनंप्रपन्नाजगामतारापरिविह्वलंती ॥ २९ ॥ तंसासमासाद्यविशुद्धसत्त्वंशोकेनसंभ्रांतशरीरभावा ॥ मनस्विनीवाक्यमुवाचतारारामंरणोत्कर्षणलब्धलक्ष्यम् ॥ ३० ॥ त्वमप्रमेयश्चदुरासदश्चजितेंद्रियश्चोत्तमधर्मकश्च ॥ अक्षीणकीर्तिश्चविचक्षणश्चक्षितिक्षमावान्क्षतजोपमाक्षः ॥ ३१ ॥ त्वमात्तबाणासनबाणपाणिर्महाबलःसंहननोपपन्नः ॥ मनुष्यदेहाभ्युदयंविहायदिव्येनदेहाभ्युदयेनयुक्तः ॥ ३२ ॥ येनैवबाणेनहतःप्रियोमेतेनैवबाणेनहिमांजहीहि ॥ हतागमिष्यामिसमीपमस्यनमांविनावीररमेतवाली॥३३॥स्वर्गेपिपद्मामलपत्रनेत्रसमेत्यसंप्रेक्ष्यचमामपश्यन्॥नह्येषउच्चावचताम्रचूडाविचित्रवेषाप्सरसोभजिष्यत् ॥३४॥

सर्वतोधिकवेध्यवेधक इत्यर्थः ॥ ३० ॥ अप्रमेयः देशतः कालतश्चापरिच्छेद्यः गुणेयत्तया दुर्ज्ञेयश्च दुरासदः योगिभिरपि प्राप्तुमशक्यः उत्तमधर्मकः पुरुषोत्तमधर्मा अक्षीणकीर्तिः पापवदाभासमानेनापि कर्मणेति शेषः । अतएव पुरुषोत्तमधर्मा क्षतजोपमाक्षः रक्ताक्षः ॥ ३१ ॥ आत्तबाणासनश्चासौ बाणपाणिश्चेति कर्मधारयः । संहननं दृढगात्रता तादृशेन त्वया हतो वाली मनुष्यदेहाभ्युदयं मनुष्यलोकवर्तिदेहप्राप्यमभ्युदयसुखं विहाय दिव्यदेहेन प्राप्यो योभ्युदयस्तेन युक्तः । समास आर्षः ॥ ३२ ॥ अतः येनैवेति । रमेत रंस्यते ॥ ३३ ॥ पद्मस्यामलं यत्पत्रं तद्वन्नेत्र । समेत्याप्सरोभिस्ताः संप्रेक्ष्य च मामपश्यन्न रमेतेत्य

न्वयः । उच्चावचैर्नानामकारैस्ताम्रै रक्तपुष्पैः कृतः शेखरो याभिस्ता अप्सरसो नाभजिष्यन्न भजिष्यति । रक्तपुष्पधारणं वालिवशीकरणाय ॥ ३४ ॥ तटावकाशे तटदेशे ॥ ३५ ॥ यद्वनिताहीनो दुःखं प्राप्नोति तत्त्वं वेत्थ अतस्तज्ज्ञानंस्त्वं मां जहि । कुमारः सुंदरः पुरुषः । यद्वा दुःखहेतुमाह कुमारः इति । कुत्सितो मारो यस्य मारकत्वेन मदनस्य प्रसिद्धेः अथवा कुत्सितो मारो मरणं यस्य मरणादपि दुःखजनकत्वादेवमुक्तिः । भावे घञ् ॥३६॥ मह्यं स्त्रीघातदोषो भवेदिति भवान्महात्मा मन्येत तदपि न । इयं ताराऽस्य वालिन आत्मेति ज्ञात्वा जहि । एवं च तदभिन्नत्वान्मम न ते स्त्रीवधदोष इति भावः । महात्मेत्यनेन ताटकावधादिकृतवतः स्त्रीवधोऽकिंचित्कर इत्यपि सूचितम् ॥ ३७ ॥ स्त्रीणां पुरुषात्मत्वमेव साधयति शास्त्रेति । शास्त्रे शास्त्रीययागाद्यनुष्ठाने प्रकर्षेण सहैव योगात् अधिकारात् विविधाच्च वेदात् । अर्धो वा एष आत्मनो यत्पत्नीति श्रुतेः । अनन्यरूपाः अभिन्नरूपाः न केवलं दोषाभावमात्रमपि तु स्त्रीदानफलमपीत्याह दारेति । अन्यदधिकं दानं नेति भावः ॥ ३८ ॥ त्वं चापीति । एवं च धर्मेण पापमपनु

स्वर्गेपिशोकंचविवर्णतांचमयाविनाप्राप्स्यतिवीरवाली ॥ रम्येनगेंद्रस्यतटावकाशेविदेहकन्यारहितोयथात्वम् ॥ ३५ ॥ त्वंवेत्थतावद्वनिताविहीनः प्राप्नोतिदुःखंपुरुषःकुमारः ॥ तत्त्वंप्रजानञ्जहिमांनवालीदुःखंममादर्शनजंभजेत ॥ ३६ ॥ यच्चापिमन्येतभवान्महात्मास्त्रीघातदोषस्तुभवेतमह्यम्॥ आत्मेयमस्येतिहिमांजहित्वंनस्त्रीवधःस्यान्मनुजेंद्रपुत्र ॥ ३७ ॥ शास्त्रप्रयोगाद्विविधाच्चवेदादनन्यरूपाःपुरुषस्यदाराः ॥ दारप्रदानाद्धिनदानमन्यत्प्रदृश्यतेज्ञानवतांहिलोके ॥३८॥ त्वंचापिमांतस्यममप्रियस्यप्रदास्यसेधर्ममवेक्ष्यवीर ॥ अनेनदानेननलप्स्यसेत्वमधर्मयोगंममवीरघातात्॥ ॥ ३९ ॥ आर्तामनाथामपनीयमानामेवंगतांनार्हसिमामहंतुम् ॥ अहंहिमातंगविलासगामिनाप्लवंगमानामृषभेणधीमता ॥ ४० ॥ विनावराहोंत्तमहेममालिनाचिरंनशक्ष्यामिनरेंद्रजीवितुम् ॥ इत्येवमुक्तस्तुविभुर्महात्मातारांसमाश्वास्यहितंबभाषे ॥ ४१ ॥ मावीरभार्येविमतिंकुरुष्वलोकोहिसर्वोविहितोविधात्रा ॥ तंचैवसर्वंसुखदुःखयोगंलोकोब्रवीत्तेनकृतंविधात्रा ॥ ४२ ॥ त्रयोपिलोकाविहितंविधानंनातिक्रमंतेवशगाहितस्य ॥ प्रीतिंपरांप्राप्स्यसितांतथैवपुत्रश्चतेप्राप्स्यतियौवराज्यम् ॥ ४३ ॥

दतीति न्यायेनापि हे वीर ते न मद्वधदोष इति भावः । यद्वा मम वीरस्य पत्युश्छलेन घातात्प्राप्तधर्मसंबंधं न लप्स्यसे । किंच तत एव मच्छापतः प्राप्तमधर्मयोगमधर्मफलयोगं स्त्रीवियोगरूपं न लप्स्यसे ममावधे तु लप्स्यसे एतातएव कचित्पठ्यते। अचिरेणैव कालेन त्वया वीर्यबलाद्धृता ॥ सा सीता मम शापेन न चिरात्त्वयि वत्स्यतीति ॥३९॥ अपनीयमानां प्रियसकाशादन्यत इति शेषः अहंतुं नार्हसि अपि तु हंतुमेवेत्यर्थः। तत्र हेतुरहं हीति ॥४०॥ वराहोत्तमहेममालिना श्रेष्ठयेत्योत्तमस्वर्णमालावता ॥४१॥ विमतिं मरणविषयां विरुद्धमतिं सर्वो लोको विधात्रा विहितः अहरादौ सृष्टस्तं लोकं सुखदुःखाभ्यामवर्ज्याभ्यां योगोऽस्य तंतेनैव विधात्रा कृतं लोक्यतेऽनेनेति लोको वेदोऽब्रवीत् । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतेः ॥ ४२ ॥ त्रयोपि लोकालोकत्रयवासिनोपि जना विधातृविहितं विधानं नातिक्रमंते हि यतस्तस्य वशगाः ब्रह्मादिस्थावरांताः वाली परां प्रीतिं त्वत्संबंधजां प्राप्स्यति मत्संकल्पात् । किंच भवत्यपि वालिसंबंधजां प्रीतिं सुग्रीवसंबंधात्प्राप्स्यसि ते पुत्रो यौवराज्यं प्राप्स्यति च चेनाहमपि

शापं माप्स्याम्येवेति ॥ ४३ ॥ धात्रेदं विधानं तथैव विहितम् यथा मयोक्तं कृतं च अनेन सर्वज्ञत्वशक्तिराविष्कृता एवमीश्वरकृतं सर्वं ज्ञात्वा शूरपत्न्यो न शोचंति ध्वनता मुखेनोपलक्षिता विरराम त्यक्त परिदेवनाभूत् ॥ ४४ ॥ ईर्ष्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चतुर्विंशः सर्गः ॥ २४ ॥ ॥ समानशोकः सुग्रीवादिभिरिति शेषः ॥ १ ॥ शोकयुक्तः परितापस्तेन शोकश्चित्तधर्मः तावन्मात्रेणैव न मृतस्य श्रेयः समाधातुमनुष्ठातुम् ॥ २ ॥ लोकवृत्तं लोकाचारोप्यनुष्ठेय एव तच्च बाष्पमोक्षणरूपं कृतम् युष्माभिरिति शेषः । यद्वा कृतं पर्याप्तं बाष्पमोक्षणमिति द्वितीया तृतीयार्थे । यतः कालात्तत्तत्कर्मणि विहितात्कालादुत्तरं परं तस्मिन्नतिक्रांत इति यावत् । किंचिदपि परं कर्म विहितं कर्म उपासितुं कर्तुमशक्यं कालस्योपादेयकारणत्वात् अकाले कृतस्याकृतमायत्वादिति भावः ॥ ३ ॥ कालस्य मुख्यत्वं दर्शयति नियतिरिति । नियतिः नियम्यतेऽनयेति नियतिः कालः कालकृता व्यवस्था निमेषादिपरार्धांता कालस्त्वीश्वर एव । लोके लोकसृष्ट्यादि व्यवहारे कर्मणो लौकिकालौकिककर्मप्रवृत्तेर्दिनादिरूपेण कारणं काल एव सर्वभूतानां नियोगाधिकृतप्राणिमात्रस्य नियोगेषु ज्योतिष्टोमादिषु नियतिर्वसंतादिः कारणम् ॥ ४ ॥ कालातिरिक्तं न साक्षात् प्रवर्त

धात्राविधानांविहितंतथैवनशूरपत्न्यःपरिदेवयंति ॥ आश्वासितातेनमहात्मनातुप्रभावयुक्तेनपरंतपेन ॥ सावीरपत्नीध्वनतामुखेनसुवेषरूपाविरराम तारा ॥ ४४ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चतुर्विंशः सर्गः ॥ २४ ॥ ससुग्रीवंचतारांचसांगदांसहलक्ष्मणः ॥ समानशोकःकाकुत्स्थःसांत्वयन्निदमब्रवीत् ॥१॥ नशोकपरितापेनश्रेयसायुज्यतेमृतः ॥ यदत्रानंतरंकार्यंतत्समाधातुमर्हथ ॥२॥ लोकवृत्तमनुष्ठेयं कृतंवोबाष्पमोक्षणम् ॥ नकालादुत्तरंकिंचित्परंकर्मउपासितुम् ॥ ३ ॥ नियतिःकारणंलोकेनियतिःकर्मसाधनम् ॥ नियतिःसर्वभूतानांनियोगे ष्विहकारणम् ॥ ४ ॥ नकर्ताकस्यचित्कश्चिन्नियोगेनापिचेश्वरः ॥ स्वभावेवर्ततेलोकस्तस्यकालःपरायणम् ॥ ५ ॥ नकालःकालमत्येतिनकालः परिहीयते ॥ स्वभावंचसमासाद्यनकिंचिदतिवर्तते ॥ ६ ॥

कमित्याह न कर्तेत्यादि । कस्यचित्कृष्यादेः कश्चित्कर्ता न नियतिनिरपेक्षः कर्ता न तथा नियोगे नियोगानुष्ठानेपि नियतिनिरपेक्षः कश्चिदीश्वरो न नियतिनैरपेक्ष्येण समर्थो न यतो लोको लोकव्यवहारः स्वभावे ईश्वरसहिते प्राक्तनस्वकर्मणि वतते तदधीनो वर्तते तस्य च स्वभावस्य कालः परायणम् सहकारीत्यर्थः । तदुक्तं सूतसंहितायां शिववाक्येन स्वभावादेव संभूतं समस्तमिति केचन ॥ तन्न सिध्यति विप्रेंद्रा देशकालाद्यपेक्षणात् ॥ मत्तः कर्मानुरूपेण जगज्जन्मादि जायते ॥ एष स्वभावो विप्रेंद्रा इति वेदार्थनिर्णयः ॥ न मया केवलेनापि न च केवलकर्मणा ॥ प्राणिनां कर्मपाकेन मया च मुनिसत्तमाः । जगतः संभवो नाशः स्थितिश्च भवति द्विजा इति ॥ ५ ॥ कालात्मा भगवानेव सर्वकर्मप्रवर्तक इत्याह न काल इति । कालो भगवानीश्वरः कालं स्वकृतां कालव्यवस्थां जन्ममरणादिरूपां नात्येति नातिक्रामति स भगवान् कालो न परिहीयते अनुक्षणं जगद्धानिकरस्य हानिकारणाभावात् स्वभावमुक्तलक्षणं समासाद्य किंचिदत्युत्कृष्टमपि जीवजातं नातिवर्तते उत्पत्तियोग्यमुत्पद्यते नश्वरं नश्यत्येवेत्यर्थः ॥ ६ ॥

स च भगवान्न पक्षपातस्वभाव इत्याह न कालस्येति । न कालस्य बंधुत्वमस्ति प्राप्तकालं वस्तु सर्वथा संहरत्येव नतु पक्षपातेन किमपि त्यजतीत्यर्थः । न हेतुः स्वसृज्ये स्वनाश्ये वा स्वकृतव्यवस्थातिरिक्तकारणनिरपेक्ष इत्यर्थः । यद्वा प्राप्तकालसंहारनिवर्तनेन कश्चिदपि हेतुर्मंत्रतंत्रौषधादिः प्रभवतीत्यर्थः तस्यैव प्रपंचः न पराक्रमः । महापराक्रमवतामपि काले प्राप्ते संहारो भवत्येव न मित्रज्ञातिसंबंधो न बहुमित्रता न बहुज्ञातिता । प्राप्तकालसंहारनिवर्तने हेतुः सोपि भगवानात्मनः प्रत्यग्वर्गस्य जीवजातस्य न वशस्तदिच्छाधीनो न किं तु परमस्वतंत्र एव तेन च भगवता कालेन क्रियमाणो नियत्यधीनः स्वस्वकर्मपरिणाम एव सर्वसुखदुःखादिलाभ इत्येव साधु पश्यता सुमतिना विवेकवता द्रष्टव्यो ज्ञातव्यः । न तु विषादहर्षौ कर्तव्यौ नापि स्वसामर्थ्यनिंदेति भावः । एवं धर्मादयोपि चादधर्मादयोपि कालक्रमेणैव समाहिताः संपादिता भवंति ॥ ७ ॥ ८ ॥ प्रकृतमाह इत इति । सामदानाभ्यामर्जितैरर्थसंयोगैरैश्वर्यैः पवित्रं शुभं क्रियाफलं भोगमिह लोके प्राप्तवान्वाली इतो लोकाद्देहाच्च गतोऽपगतः स्वां प्रकृतिं गतः

नचकस्यास्तिबंधुत्वंनहेतुर्नपराक्रमः ॥ नमित्रज्ञातिसंबंधःकारणंनात्मनोवशः ॥ ७ ॥ किंतुकालपरीणामोद्रष्टव्यःसधुापश्यता ॥ धर्मश्चार्थश्चकामश्चकालक्रमसमाहिताः ॥ ८ ॥ इतःस्वांप्रकृतिंवालीगतःप्राप्तःक्रियाफलम् ॥ सामदानार्थसंयोगैःपवित्रंप्लवगेश्वरः ॥ ९ ॥ स्वधर्मस्यचसंयोगाज्जितस्तेनमहात्मना ॥ स्वर्गःपरिगृहीतश्चप्राणानपरिरक्षता ॥१०॥ एषावैनियतिःश्रेष्ठायांगतोहरियूथपः ॥ तदलंपरितापेनप्राप्तकालमुपास्यताम् ॥ ॥११॥ वचनांतेतुरामस्यलक्ष्मणःपरवीरहा ॥ अवदत्प्रश्रितंवाक्यंसुग्रीवंगतचेतसम् ॥१२॥ कुरुत्वमस्यसुग्रीवप्रेतकार्यमनंतरम् ॥ तारांगदाभ्यांसहितोवालिनोदहनंप्रति ॥ १३ ॥ समाज्ञापयकाष्ठानिशुष्काणिचबहूनिच ॥ चंदनानिचदिव्यानिवालिसंस्कारकारणात् ॥ १४ ॥ समाश्वासयदीनंत्वमंगदंदीनचेतसम् ॥ माभूर्वालिशबुद्धिस्त्वंत्वदधीनमिदंपुरम् ॥ १५ ॥ अंगदस्त्वानयेन्माल्यंवस्त्राणिविविधानिच ॥ घृतंतैलमथोगंधान्यच्चात्रसमनंतरम् ॥ १६ ॥ त्वंतारशिविकांशीघ्रमादायागच्छसंभ्रमात् ॥ त्वरागुणवतीयुक्ताह्यस्मिन्कालेविशेषतः ॥१७॥ सज्जीभवंतुप्लवगाःशिविकावाहनोचिताः ॥ समर्थाबलिनश्चैवनिर्हरिष्यंतिवालिनम् ॥ १८ ॥ एवमुक्त्वाथसुग्रीवंसुमित्रानंदवर्धनः ॥ तस्थौभ्रातृसमीपस्थोलक्ष्मणःपरवीरहा ॥ १९ ॥ लक्ष्मणस्यवचःश्रुत्वातारःसंभ्रांतमानसः ॥ प्रविवेशगुहांशीघ्रंशिविकासक्तमानसः ॥२०॥ आदायशिविकांतारःसतुपर्यापतत्पुनः ॥ वानरैरुह्यमानांतांशूरैरुद्वहनोचितैः ॥ २१ ॥

प्राप्तः कार्याणां कारणे लयात् एवं चेंद्रलोकं गतो वालीति सूचितम् ॥ ९ ॥ स्वधर्मस्य संयोगात्तेन महात्मना वालिना पूर्वं स्वर्गो जितोऽर्जितः युद्धे प्राणानपरिरक्षतेदानीं परिगृहीतश्च प्राप्तश्च ॥ १० ॥ एषा नियतिः कालकृतव्यवस्थाप्राप्तिः । प्राप्तकालं कर्मेति शेषः ॥ ११ ॥ १२ ॥ अस्य प्रेतकार्यं कुर्वित्यन्वयः । दहनं प्रतिदहननिमित्तम् यतस्वेति शेषः ॥ १३ ॥ वालिसंस्कारनिमित्तं काष्ठान्यानेतुं समाज्ञापयेति संबंधः ॥ १४ ॥ त्वं सुग्रीव अंगदं समाश्वासय ॥ १५ ॥ कः कुत्राज्ञापनीयस्तत्राह अंगदस्त्विति । समनंतरमपेक्षितम् ॥ १६ ॥ तारः सचिवः संभ्रमाद्वेगात् हि यतोस्मिन्काले विशेषतस्त्वरा युक्ता सैव चेदृशेऽवसरे गुणवतीति संबंधः ॥ १७ ॥ समर्था बलिनः शिविकावाहनोचिता ये निर्हरिष्यंति ते सज्जी भवंत्वित्यन्वयः निर्हारो दहनदेशनयनम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

भद्रासनयुतां मध्ये राज्ञोचितमहार्हासनवतीम् पक्षिकर्मभिः पक्षिप्रतिकृतिभिः आसमंताच्चित्रां चित्रवतीम् द्रुमकर्मभिर्द्रुमप्रतिकृतिभिर्भूषिताम् ॥ २२ ॥ चित्रपत्तीभिश्चित्रपदातिभिः दीर्घ आर्षः । सुनिविष्टां सुसन्निवेशाम् जालवातायनयुतां जालवन्निर्मितवातमार्गयुताम् ॥ २३ ॥ सुनियुक्तां सुश्लिष्टाम् शिल्पिभिर्विशालां कृताम् एवमुक्तरीत्या सुकृताम् दारुनिर्मितक्रीडापर्वतयुक्ताम् चारुकर्मभिः पारिष्क्रियाकर्मभिः परिष्कृताम् ॥ २४ ॥ तदेवाह वराभरणहारैरिति । युक्तामिति शेषः । गुहागहनशब्देन शिबिकोपरिप्रसार्यमाणं पंजरमुच्यते ॥ २५ ॥ २६ ॥ विनीयताम् दहनदेशमिति शेषः ॥ २७ ॥ उद्यम्य हस्ताभ्यां भूमेरूर्ध्वं कृत्वा ॥ २८ ॥

दिव्यांभद्रासनयुतांशिबिकांस्यंदनोपमाम् ॥ पक्षिकर्मभिराचित्रांद्रुमकर्मविभूषिताम् ॥ २२ ॥ आचितांचित्रपत्तीभिःसुनिविष्टांसमंततः ॥ विमानमिवसिद्धानांजालवातायनायुताम् ॥ २३ ॥ सुनियुक्तांविशालांचसुकृतांशिल्पिभिःकृताम् ॥ दारुपर्वतकोपेतांचारुकर्मपरिष्कृताम् ॥ २४ ॥ वराभरणहारैश्चचित्रमाल्योपशोभिताम् ॥ गुहागहनसंच्छन्नांरक्तचंदनभूषिताम् ॥ २५ ॥ पुष्पाढ्यैःसमभिच्छन्नांपद्ममालाभिरेवच ॥ तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम् ॥ २६ ॥ ईदृशींशिबिकांदृष्ट्वारामोलक्ष्मणमब्रवीत् ॥ क्षिप्रंविनीयतांवालीप्रेतकार्यंविधीयताम् ॥ २७ ॥ ततोवालिनमुद्यम्यसुग्रीवःशिबिकांतदा ॥ आरोपयतविक्रोशन्नंगदेनसहैवतु ॥ २८ ॥ आरोप्यशिबिकांचैववालिनंगतजीवितम् ॥ अलंकारैश्चविविधैर्माल्यैर्वस्त्रैश्चभूषितम् ॥ २९ ॥ आज्ञापयत्तदाराजासुग्रीवःप्लवगेश्वरः ॥ और्ध्वदेहिकमार्यस्यक्रियतामनुकूलतः ॥ ३० ॥ विश्राणयंतोरत्नानिविविधानिबहूनिच ॥ अग्रतःप्लवगायांतुशिबिकातदनंतरम् ॥ ३१ ॥ राज्ञामृद्धिविशेषाहिदृश्यंतेभुवियादृशाः ॥ तादृशैरिहकुर्वंतुवानराभर्तृसत्क्रियाम् ॥ ३२ ॥ तादृशंवालिनःक्षिप्रंप्राकुर्वन्नौर्ध्वदेहिकम् ॥ अंगदंपरिरभ्याशुतारप्रभृतयस्तथा ॥ ३३ ॥ क्रोशंतःप्रययुःसर्वेवानराहतबांधवाः ॥ ततःप्रणिहिताःसर्वावानर्योस्यवशानुगाः ॥ ३४ ॥ चुक्रुशुर्वीरवीरेतिभूयःक्रोशंतिताःप्रियम् ॥ ताराप्रभृतयःसर्वावानर्योहतबांधवाः ॥ ३५ ॥ अनुजग्मुश्चभर्तारंक्रोशंत्यःकरुणस्वनाः ॥ तासांरुदितशब्देनवानरीणांवनांतरे ॥ ३६ ॥ वनानिगिरयश्चैवविक्रोशंतीवसर्वतः ॥ पुलिनेगिरिनद्यास्तुविविक्तेजलसंवृते ॥ ३७ ॥ चितांचक्रुःसुबहवोवानरावनचारिणः ॥ अवरोप्यततःस्कंधाच्छिबिकांवानरोत्तमाः ॥ ३८ ॥ तस्थुरेकांतमाश्रित्यसर्वेशोकपरायणाः ॥ ततस्तारापतिंदृष्ट्वाशिबिकातलशायिनम् ॥ ३९ ॥ आरोप्यांकेशिरस्तस्यविललापसुदुःखिता ॥ हावानरमहाराजहानाथममवत्सल ॥ ४० ॥

शिबिकामारोप्य शिबिकायां स्थापयित्वा ॥ २९ ॥ आज्ञापनप्रकार और्ध्वदेहिकमित्यादि । और्ध्वदेहिकं तत्क्रियायोग्यं स्थानम् अनुकूलतः नदीतीरसमीपतः क्रियतामित्युत्तरमिति द्रष्टव्यम् ॥ ३० ॥ विश्राणयतः क्षिपंतः इत्याज्ञापयदित्यन्वयः ॥ ३१ ॥ तादृशैः ऋद्धिविशेषैः सत्क्रियां कुर्वंतु ॥ ३२ ॥ ३३ ॥ प्रणिहिताः समेताः ॥ ३४ ॥ ३५ ॥ ३६ ॥ विक्रोशंतीव प्रतिध्वनिनेति शेषः । जलसंवृते समंताज्ज

लावृतभूदेशे ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ महार्ह उत्तमभोगार्ह ॥ ४१ ॥ ४२ ॥ रणे सुग्रीवेण सह युद्धे ॥ ४३ ॥ अप्लवगाः द्रुतगतिमजानंत्यः विकृष्टं दूरम् ॥ ४४ ॥ ४५ ॥ ४६ ॥ यथापुरं यथापूर्वं क्रीडामहे त्वया सहेति विलपेति शेषः ॥ ४७ ॥ ४८ ॥ ४९ ॥ अपसव्यं अपसव्यप्रदक्षिणम् ॥ ५० ॥ विधिवद्देवांशत्वेन स्वयं ज्ञातवेदत्वाज्ज्ञानवत्तिर्यग्देहोचितविधिवदित्यर्थः । विधिवदग्निहोत्र

हामहार्हमहाबाहोहाममप्रियपश्यमाम् ॥ जनंनपश्यसीमंत्वंकस्माच्छोकाभिपीडितम् ॥ ४१ ॥ प्रहृष्टमिहतेवक्रंगतासोरपिमानद ॥ अस्ताकर्कसमवर्णं चदृश्यतेजीवतोयथा ॥ ४२ ॥ एषत्वांरामरूपेणकालःकर्षतिवानर ॥ येनस्मविधवाःसर्वाःकृताएकेषुणारणे ॥ ४३ ॥ इमास्तास्तवराजेंद्रवानर्यो ऽप्लवगास्तव ॥ पादैर्विकृष्टमध्वानमागताःकिंनबुध्यसे ॥ ४४ ॥ तवेष्टाननुचैवेमाभार्याश्चंद्रनिभाननाः ॥ इदानींनेक्षसेकस्मात्सुग्रीवंप्लवगेश्वर ॥४५॥ एतेहिसचिवाराजंस्तारप्रभृतयस्तव ॥ पुरवासिजनश्चायंपरिवार्यविषीदति ॥ ४६ ॥ विसर्जयैनान्सचिवान्यथापुरमरिंदम ॥ ततःक्रीडामहेसर्वावने षुमदनोत्कटाः ॥ ४७ ॥ एवंविलपतींतारांपतिशोकपरीवृताम् ॥ उत्थापयंतिस्मतदावानर्यःशोककर्शिताः ॥ ४८ ॥ सुग्रीवेणततःसार्धंसोंगदःपितरं रुदन् ॥ चितामारोपयामासशोकेनाभिप्लुतेंद्रियः ॥ ४९ ॥ ततोऽग्निंविधिवद्दत्त्वासोपसव्यंचकारह ॥ पितरंदीर्घमध्वानंप्रस्थितंव्याकुलेंद्रियः ॥ ५० ॥ संस्कृत्यवालिनंतंतुविधिवत्प्लवगर्षभाः ॥ आजग्मुरुदकंकर्तुंनदींशुभजलांशिवाम् ॥ ५१ ॥ ततस्तेसहितास्तत्रअंगदंस्थाप्यचाग्रतः ॥ सुग्रीवतारासहिताःसिषिचुर्वानराजलम् ॥ ५२ ॥ सुग्रीवेणवदीनेनदीनोभूत्वामहाबलः ॥ समानशोकःकाकुत्स्थःप्रेतकार्याण्यकारयत् ॥ ५३ ॥ ततोथतंवालिनमग्र्यपौरुषंप्रकाशमिक्ष्वाकुवरेषुणाहतम् ॥ प्रदीप्यदीप्ताग्निसमौजसंतदासलक्ष्मणंराममुपेयिवान्हरिः ॥ ५४ ॥ इत्यार्षे श्रीम०वा० आ०किष्किंधाकांडे पंचविंशः सर्गः ॥ २५ ॥

ततःशोकाभिसंतप्तंसुग्रीवंक्लिन्नवाससम् ॥ शाखामृगमहामात्राःपरिवार्योपतस्थिरे ॥ १ ॥ अभिगम्य महाबाहुंराममक्लिष्टकारिणम् ॥ स्थिताःप्रांजलयःसर्वेपितामहमिवर्षयः ॥ २ ॥ ततःकांचनशैलाभस्तरुणार्कनिभाननः ॥ अब्रवीत्प्रांजलिर्वाक्यं हनूमान्मारुतात्मजः ॥ ३ ॥ भवत्प्रसादात्काकुत्स्थपितृपैतामहंमहत् ॥ वानराणांसुदंष्ट्राणांसंपन्नबलशालिनाम् ॥ ४ ॥ महात्मनांसुदुष्प्रापंप्राप्तं राज्यमिदंप्रभो ॥ भवतासमनुज्ञातःप्रविश्यनगरंशुभम् ॥ ५ ॥ संविधास्यतिकार्याणिसर्वाणिससुहृद्गणः ॥ स्नातोयंविविधैर्गंधैरौषधैश्चयथाविधि ॥ ६ ॥

विधिनेत्यर्थ इत्यन्ये ॥ ५१ ॥ ५२ ॥ प्रेतकार्याणि जलदानादिरूपाणि अकारयत् तदितिकर्तव्यतामुपदिष्टवानित्यर्थः ॥ ५३ ॥ ५४ ॥ वैशंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे पंचविंशः सर्गः ॥ २५ ॥ ॥ क्लिन्नवाससमार्द्रवाससम् शाखामृगमहामात्राः वानरबलप्रधानाः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ कार्याणि राजकार्याणि यथाविधि स्नातः

राज्याभिषेकाभिषिक्तः ॥ ६ ॥ ७ ॥ स्वामिसंबंधं वानरस्वामित्वसंबंधं सुग्रीवस्य राज्याभिषेकेणेति शेषः ॥ ८ ॥ ९ ॥ १० ॥ अभिषिच्यतां मदाज्ञया त्वयेति शेषः ॥ ११ ॥ १२ ॥ यतो ज्येष्ठस्य ज्येष्ठः सुतो विक्रमेण ज्येष्ठस्य सदृशश्च तस्माद्यौवराज्ये योग्यः ॥ १३ ॥ सीतान्वेषणोद्योगं सुग्रीवस्यालक्ष्याह पूर्वोयमिति । ये चत्वारो वार्षिकसंज्ञकाः प्रवृत्तास्तेषामयं पूर्व इति योजना ॥ १४ ॥ १५ ॥ युक्तमारुता मारुतेन युक्तेत्यर्थः अस्यां स्थास्यामीति शेषः ॥ १६ ॥ यत यतस्व एष नः समय इति आश्विनेऽतीतयत्नारंभरूपः संकेत इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ मूर्ध्ना प्रणम्य नम्रीभूय वसुधा

अर्चयिष्यतिमाल्यैश्वरत्नैश्चत्वांविशेषतः ॥ इमांगिरिगुहांरम्यामभिगंतुंत्वमर्हसि ॥ ७ ॥ कुरुष्वस्वामिसंबंधंवानरान्संप्रहर्षय ॥ एवमुक्तोहनुमताराघवः परवीरहा ॥ ८ ॥ प्रत्युवाचहनूमंतंबुद्धिमान्वाक्यकोविदः ॥ चतुर्दशसमाःसौम्यग्रामंवायदिवापुरम् ॥ ९ ॥ नप्रवेक्ष्यामिहनुमन्पितुर्निर्देशपारगः ॥ सुसमृद्धांगुहांदिव्यांसुग्रीवोवानरर्षभः ॥ १० ॥ प्रविष्टोविधिवद्वीरःक्षिप्रंराज्येभिषिच्यताम् ॥ एवमुक्त्वाहनूमंतंरामःसुग्रीवमब्रवीत् ॥ ११ ॥ वृत्तज्ञो वृत्तसंपन्नमुदारबलविक्रमम् ॥ इममप्यंगदंवीरंयौवराज्येभिषेचय ॥ १२ ॥ ज्येष्ठस्यहिसुतोज्येष्ठःसदृशोविक्रमेणच ॥ अंगदोयमदीनात्मायौवराजस्यभाजनम् ॥ १३ ॥ पूर्वोयंवार्षिकोमासःश्रावणःसलिलागमः ॥ प्रवृत्ताःसौम्यचत्वारोमासावार्षिकसंज्ञिताः ॥ १४ ॥ नायमुद्योगसमयः प्रविशत्वंपुरींशुभाम् ॥ अस्मिन्वत्स्याम्यहंसौम्यपर्वतेसहलक्ष्मणः ॥ १५ ॥ इयंगिरिगुहारम्याविशालायुक्तमारुता ॥ प्रभूतसलिलासौम्यप्रभूत कमलोत्पला ॥ १६ ॥ कार्तिकेसमनुप्राप्तेत्वंरावणवधेयत ॥ एषनःसमयःसौम्यप्रविशत्वंस्वमालयम् ॥ १७ ॥ अभिषिंचस्वराज्येचसुहृदःसंप्रहर्षय ॥ इतिरामाभ्यनुज्ञातःसुग्रीवोवानरर्षभः ॥ १८ ॥ प्रविवेशपुरींरम्यांकिष्किंधांवालिपालिताम् ॥ तंवानरसहस्राणिप्रविष्टंवानरेश्वरम् ॥ १९ ॥ अभिवार्यप्रविष्टानिसर्वतःप्लवगेश्वरम् ॥ ततःप्रकृतयःसर्वादृष्ट्वाहरिगणेश्वरम् ॥ २० ॥ प्रणम्यमूर्ध्नापतितावसुधायांसमाहिताः ॥ सुग्रीवःप्रकृतीःसर्वाःसंभाष्योत्थाप्यवीर्यवान् ॥ २१ ॥ भ्रातुरंतःपुरंसौम्यंप्रविवेशमहाबलः ॥ प्रविष्टंभीमविक्रांतंसुग्रीवंवानरर्षभम् ॥ २२ ॥ अभ्यषिंचंतसुहृदःसहस्राक्षमिवामराः ॥ तस्यपांडुरमाजह्रुश्छत्रंहेमपरिष्कृतम् ॥ २३ ॥ शुक्लेचवालव्यजनेहेमदंडेयशस्करे ॥ तथारत्नानिसर्वाणिसर्वबीजौषधानिच ॥ २४ ॥ सक्षीराणांचवृक्षाणांप्ररोहान्कुसुमानिच ॥ शुक्लानिचैववस्त्राणिश्वेतंचैवानुलेपनम् ॥ २५ ॥ सुगंधीनिचमाल्यानिस्थलजान्यंबुजानिच ॥ चंदनानिचदिव्यानिगंधांश्चविविधान्बहून् ॥ २६ ॥ अक्षतंजातरूपंचप्रियंगुमधुसर्पिषी ॥ दधिचर्मचवैयाघ्रंपरार्ध्यौचाप्युपानहौ ॥ २७ ॥ समालंभनमादायगोरोचनंमनःशिलाम् ॥ आजग्मुस्तत्रमुदितावराःकन्याश्चषोडश ॥ २८ ॥ ततस्तेवानरश्रेष्ठमभिषेक्तुंयथाविधि ॥ रत्नैर्वस्त्रैश्चभक्ष्यैश्चतोषयित्वाद्विजर्षभान् ॥ २९ ॥

यां दंडवत्पतिताः उत्थाप्य वसुधायां पतिता इति शेषः ॥ २१ ॥ प्रविष्टं भीमविक्रांतमिति । प्रविश्य त्वभिनिष्क्रांतमितिपाठे प्रविश्यांतःपुरगतशोकादिकं दृष्ट्वाऽभिषेकाय तु पुनः निष्क्रांतं प्रतिनिवृत्तम् सभामागतमित्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ क्षीरवृक्षप्ररोहा अधोजटाः ॥ २५ ॥ गंधान् गंधद्रव्याणि ॥ २६ ॥ २७ ॥ समालंभनं अनुलेपनद्रव्यम् तदेवाह गोरोचनमित्यादि ॥ २८ ॥ २९ ॥

ततः कुशेति । अनेनाग्निसाध्यकर्माधिकारं तेषां दर्शयति मनुष्यसदृशसर्वव्यवहाराद्वेदज्ञत्वाच्च ॥ ३० ॥ ३१ ॥ मंत्रैः स्थापयित्वा वसवस्त्वगायत्रेण च्छंदसेत्यादिमंत्रैरासने स्थापयित्वेत्यर्थः ॥ ३२ ॥ अप आहृत्य मिलिताः कृत्वा विमलं जलं कुंभेषु निधायेति संबंधः ॥ ३३ ॥ महर्षिविहितेन बौधायनादिविहितेन ॥ ३४ ॥ ३५ ॥ ३६ ॥ हृष्टाः प्रचुकुशुः किलकिलाशब्दं कृतवंतः ॥ ३७ ॥ ३८ ॥ ३९ ॥ तादृशे तत्र वर्तिनि अभिषिक्ते सुग्रीवेंगदे च तत्र किष्किंधायां वर्तिनि वर्तमाने सतीत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ रैर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये

ततःकुशपरिस्तीर्णंसमिद्धंजातवेदसम् ॥ मंत्रपूतेनहविषाहुत्वामंत्रविदोजनाः ॥ ३० ॥ ततोहेमप्रतिष्ठानेवरास्तरणसंवृते ॥ प्रासादशिखरेरम्येचित्रमाल्योपशोभिते ॥ ३१ ॥ प्राङ्मुखंविधिवन्मंत्रैःस्थापयित्वावरासने ॥ नदीनदेभ्यःसंहृत्यतीर्थेभ्यश्चसमंततः ॥ ३२ ॥ आहृत्यचसमुद्रेभ्यःसर्वेभ्योवानरर्षभाः ॥ अपःकनककुंभेषुनिधायविमलंजलम् ॥ ३३ ॥ शुभैर्ऋषभशृंगैश्चकलशैश्चैवकांचनैः ॥ शास्त्रदृष्टेनविधिनामहर्षिविहितेनच ॥ ॥ ३४ ॥ गजोगवाक्षोगवयःशरभोगंधमादनः ॥ मैंदश्चद्विविदश्चैवहनूमाञ्जांबवांस्तथा ॥ ३५ ॥ अभ्यषिंचंतसुग्रीवंप्रसन्नेनसुगंधिना ॥ सलिलेनसहस्राक्षंवसवोवासवंयथा ॥ ३६ ॥ अभिषिक्तेतुसुग्रीवेसर्वेवानरपुंगवाः ॥ प्रचुकुशुर्महात्मानोहृष्टाःशतसहस्रशः ॥ ३७ ॥ रामस्यतुवचःकुर्वन्सुग्रीवोवानरेश्वरः ॥ अंगदंसंपरिष्वज्ययौवराज्येभ्यषेचयत् ॥ ३८ ॥ अंगदेचाभिषिक्तेतुसानुक्रोशाःप्लवंगमाः ॥ साधुसाध्वितिसुग्रीवंमहात्मानोह्यपूजयन् ॥ ३९ ॥ रामंचैवमहात्मानंलक्ष्मणंचपुनःपुनः ॥ प्रीताश्चतुष्टुवुःसर्वेतादृशेतत्रवर्तिनि ॥ ४० ॥ हृष्टपुष्टजनाकीर्णापताकाध्वजशोभिता ॥ बभूवनगरीरम्याकिष्किंधागिरिगह्वरे ॥ ४१ ॥ निवेद्यरामायतदामहात्मनेमहाभिषेकंकपिवाहिनीपतिः ॥ रुमांचभार्यामुपलभ्यवीर्यवानवापराज्यंत्रिदशाधिपोयथा ॥ ४२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीये आदिकाव्ये किष्किंधाकांडे षड्विंशः सर्गः ॥ २६ ॥ अभिषिक्तेतुसुग्रीवेप्रविष्टेवानरेगुहाम् ॥ आजगामसहभ्रात्रारामःप्रस्रवणंगिरिम् ॥ १ ॥ शार्दूलमृगसंघुष्टंसिंहैर्भीमरवैर्वृतम् ॥ नानागुल्मलतागूढंबहुपादपसंकुलम् ॥ २ ॥ ऋक्षवानरगोपुच्छैर्मार्जारैश्चनिषेवितम् ॥ मेघराशिनिभंशैलंनित्यंशुचिकरंशिवम् ॥ ३ ॥ तस्यशैलस्यशिखरेमहतीमायतांगुहाम् ॥ प्रत्यगृह्णतवासार्थंरामःसौमित्रिणासह ॥ ४ ॥ कृत्वाचसमयंरामःसुग्रीवेणसहानघः ॥ कालयुक्तंमहद्वाक्यमुवाचरघुनंदनः ॥ ५ ॥ विनीतंभ्रातरंभ्रातालक्ष्मणंलक्ष्मिवर्धनम् ॥ इयंगिरिगुहारम्याविशालायुक्तमारुता ॥ ६ ॥ अस्यांवत्स्यामसौमित्रेवर्षरात्रमरिंदम ॥ गिरिशृंगमिदंरम्यमुत्तमंपार्थिवात्मज ॥ ७ ॥ श्वेताभिःकृष्णताम्राभिःशिलाभिरुपशोभितम् ॥ नानाधातुसमाकीर्णंनदीदर्दुरसंयुतम् ॥ ८ ॥ विविधैर्वृक्षषंडैश्चचारुचित्रलतायुतम् ॥ नानाविहगसंघुष्टंमयूरवरनादितम् ॥ ९ ॥ मालतीकुंदगुल्मैश्चसिंदुवारैःशिरीषकैः ॥ कदंबार्जुनसर्जैश्चपुष्पितैरुपशोभितम् ॥ १० ॥

किष्किंधाकांडे षड्विंशः सर्गः ॥ २६ ॥ ॥ गुहां किष्किंधाख्यां प्रस्रवणं तदाख्यम् ॥ १ ॥ गिरिवर्णनं शार्दूलेति ॥ २ ॥ ३ ॥ प्रत्यगृह्णत प्रत्यग्रहीत् ॥ ४ ॥ समयं पूर्वोक्तम् कालयुक्तम् । तत्कालोचितम् ॥ ५ ॥ युक्तमारुता उचितवाता ॥ ६ ॥ वर्षरात्रं जातावेकवचनं वार्षिका मासा इत्यर्थः ॥ ७ ॥ नदीसंबंधिदर्दुरैः संयुतम् ॥ ८ ॥ वृक्षषंडैश्चारु सुंदरम् ॥ ९ ॥ १० ॥

गुहाया नातिदूरे भविष्यति भाविवारिपूरवृद्ध्या गुहासमीपवर्तिनी भविष्यतीत्यर्थः ॥ ११ ॥ प्रागुदक्प्रवणे ईशानदिङ्नमवति देशे वर्तमाना गुहा साधु सम्यग्भविष्यति सुखसाधनमिति शेषः । पौरस्त्यवर्षवातप्रवे शाभावाच्चसाधुत्वं बोध्यम् । तेन निर्ऋतिद्वारत्वं सूचितम् । पश्चाद्भागे चैषोन्नता अतएव पुरोवातनिरोधकत्वान्निवाता च ॥१२॥ गुहाद्वारे इति । तेन बहिरुपवेशनसौकर्यम् ॥ १३ ॥ उत्तरतः उत्तरभागे ॥१४॥ श्वेतमिवांबरं श्वेतवस्त्रमिव स्थितम् । श्वेतमिवापरमितिपाठेऽपरं शृंगं श्वेतमिव रूप्यमिव स्थितमित्यर्थः ॥ १५ ॥ त्रिकूटे पूर्वोषितत्रिकूटाचले । जाह्नवीपदेन तत्रत्या जाह्नवीसदृशी मंदाकिन्याख्या नदी ॥१६॥

इयंचनलिनीरम्याफुल्लपंकजमंडिता ॥ नातिदूरेगुहायानौभविष्यतिनृपात्मज ॥ ११ ॥ प्रागुदक्प्रवणेदेशेगुहासाधुभविष्यति ॥ पश्चाच्चैवोन्नतासौम्य निवातेयंभविष्यति॥ १२ ॥ गुहाद्वारेचसौमित्रेशिलासमतलाशिवा ॥ कृष्णाचैवायताचैवभिन्नांजनचयोपमा ॥ १३ ॥ गिरिशृंगमिदंतातपश्यचो त्तरतःशुभम् ॥ भिन्नांजनचयाकारमंभोधरमिवोदितम् ॥ १४ ॥ दक्षिणस्यामपिदिशिस्थितंश्वेतमिवांबरम् ॥ कैलासशिखरप्रख्यंनानाधातुविरा जितम् ॥ १५॥ प्राचीनवाहिनींचैवनदींभृशमकर्दमाम् ॥ गुहायाःपरतःपश्यत्रिकूटेजाह्नवीमिव ॥ १६ ॥ चंदनैस्तिलकैःसालैस्तमालैरतिमुक्तकैः ॥ पद्मकैःसरलैश्चैवअशोकैश्चैवशोभिताम् ॥ १७ ॥ वानीरैस्तिमिदैश्चैवबकुलैःकेतकैरपि ॥ हिंतालैस्तिनिशैर्नीपैर्वेतसैःकृतमालकैः ॥ १८ ॥ तीरजैः शोभिताभातिनानारूपैस्ततस्ततः ॥ वसनाभरणोपेताप्रमदेवाभ्यलंकृता ॥ १९ ॥ शतशःपक्षिसंघैश्चनानानादविनादिता ॥ एकैकमनुरक्तैश्चचक्र वाकैरलंकृता ॥ २० ॥ पुलिनैरतिरम्यैश्चहंससारससेविता ॥ प्रहसंत्येवभात्येपानानारत्नसमन्विता ॥ २१ ॥ क्वचिन्नीलोत्पलैश्छन्नाभातिरक्तो त्पलैःक्वचित् ॥ क्वचिदाभातिशुक्लैश्चदिव्यैःकुमुदकुड्मलैः ॥ २२ ॥ पारिप्लवशतैर्जुष्टाबर्हिक्रौंचविनादिता ॥ रमणीयानदीसौम्यमुनिसंघनिषेविता ॥ २३ ॥ पश्यचंदनवृक्षाणांपंक्तीःसुरुचिराइव ॥ ककुभानांचदृश्यंतेमनसैवोदिताःसमम् ॥ २४ ॥ अहोसुरमणीयोयंदेशःशत्रुनिषूदन ॥ दृढंरं स्यावसौमित्रेसाध्वत्रनिवसावहे ॥ २५ ॥ इतश्चनातिदूरेसाकिष्किंधाचित्रकानना ॥ सुग्रीवस्यपुरीरम्याभविष्यतिनृपात्मज ॥ २६ ॥ गीतवादित्र निर्घोषःश्रूयतेजयतांवर ॥ नदतांवानराणांचमृदंगाडंबरैःसह ॥ २७ ॥ लब्ध्वाभार्यांकपिवरःप्राप्यराज्यंसुहृद्वृतः ॥ ध्रुवंनंदतिसुग्रीवःसंप्राप्यम हतींश्रियम् ॥ २८ ॥



अतिमुक्तः पुंड्रकः । पद्मकश्चंदनभेदः । सरलः पीतद्रुमः ॥ १७ ॥ १८ ॥ १९ ॥ एकैकमनुरक्तैः परस्परानुरागयुक्तैः ॥ २० ॥ २१ ॥ २२ ॥ पारिप्लवाः जलपक्षिणः ॥ २३ ॥ सुरुचिरा इव इवोऽप्यर्थे शोभमानाश्चंदनवृक्षपंक्तीरपि पश्य । मनसा संकल्पेन सममेवोदिताः ककुभानां वृक्षविशेषाणां पंक्तय इति शेषः ॥ २४॥२५॥२६॥ नातिदूरत्वगमकंगीतेत्यादि । मृदंगाडंबरैः मृदंगशब्दैः ॥ २७ ॥ २८ ॥

बहूनि दृश्यानि उत्तमवस्तूनि यत्र ता दर्यः कुंजाश्च यस्मिन्निति गिरिविशेषणम् ॥ २९ ॥ बहुद्रव्ये सुखसाधनबहुद्रव्यवति रतिः सुखम् ॥ ३० ॥ उदये उदयपर्वते अभ्युदितम् उदयं प्राप्तम् ॥ ३१ ॥ ३२ ॥ अनुनयं अनुनयवत ॥ ३३ ॥ व्यथां गत्वा अलम् व्यथा मास्त्वित्यर्थः ॥ ३४ ॥ क्रियापरो नित्यकर्मानुष्ठाता देवपरायणो देवपूजकः व्यवसायी उद्यमी ॥ ३५ ॥ अव्यवसितः शोकेनो द्यमहीनस्त्वं हंतुं न समर्थः विक्रमे विक्रमस्थाने रणे जिह्मकारिणं कुटिलम् ॥ ३६ ॥ अतः शोकं समुन्मूलय । व्यवसायमुद्योगम् ॥ ३७ ॥ परिवर्तनमधरोत्तरीकरणम् ॥ ३८ ॥ ३९ ॥ दीप्तैर्दीपकैर्वाक्यै

इत्युक्त्वान्यवसत्तत्रराघवःसहलक्ष्मणः ॥ बहुदृश्यदरीकुंजेतस्मिन्प्रस्रवणेगिरौ ॥२९ ॥ सुसुखेहिबहुद्रव्येतस्मिन्हिधरणीधरे ॥ वसतस्तस्यरामस्यर तिरल्पापिनाभवत् ॥ ३० ॥ हृतांहिभार्यांस्मरतःप्राणेभ्योपिगरीयसीम् ॥ उदयाभ्युदितंदृष्ट्वाशशांकंसविशेषतः ॥ ३१ ॥ आविवेशनतंनिद्रा निशासुशयनंगतम् ॥ तत्समुत्थेनशोकेनबाष्पोपहतचेतनम् ॥ ३२ ॥ तंशोचमानंकाकुत्स्थंनित्यंशोकपरायणम् ॥ तुल्यदुःखोब्रवीद्भ्रातालक्ष्मणो नुनयंवचः ॥ ३३ ॥ अलंवीरव्यथांगत्वानत्वंशोचितुमर्हसि ॥ शोचतोह्यवसीदंतिसर्वार्थाविदितंहिते ॥ ३४ ॥ भवान्क्रियापरोलोकेभवान्दे वपरायणः ॥ आस्तिकोधर्मशीलश्चव्यवसायीचराघव ॥ ३५॥ नह्यव्यवसितःशत्रुंराक्षसंतंविशेषतः ॥ समर्थस्त्वंरणेहंतुंविक्रमेजिह्मकारिणम् ॥३६॥ समुन्मूलयशोकंत्वंव्यवसायंस्थिरीकुरु ॥ ततःसपरिवारंतंराक्षसंहंतुमर्हसि ॥ ३७ ॥ पृथिवीमपिकाकुत्स्थससागरवनाचलाम् ॥ परिवर्तयितुंशक्तः किंपुनस्तंहिरावणम् ॥ ३८ ॥ शरत्कालंप्रतीक्षस्वप्रावृट्कालोयमागतः ॥ ततःसराष्ट्रंसगणंरावणंतंवधिष्यसि ॥ ३९ ॥ अहंतुखलुतेवीर्यंप्रसुप्तंप्र तिबोधये ॥ दीप्तैराहुतिभिःकालेभस्मच्छन्नमिवानलम् ॥ ४० ॥ लक्ष्मणस्यहितद्वाक्यंप्रतिपूज्यहितंशुभम् ॥ राघवःसुहृदंस्निग्धमिदंवचनमब्र वीत् ॥४१॥ वाच्यंयदनुरक्तेनस्निग्धेनचहितेनच ॥ सत्यविक्रमयुक्तेनतदुक्तंलक्ष्मणत्वया ॥ ४२ ॥ एषशोकःपरित्यक्तःसर्वकार्यावसादकः ॥ विक्रमे ष्वप्रतिहतंतेजःप्रोत्साहयाम्यहम् ॥ ४३ ॥ शरत्कालंप्रतीक्षिष्येस्थितोस्मिवचनेतव ॥ सुग्रीवस्यनदीनांचप्रसादमनुपालयन् ॥ ४४ ॥ उपकारेणवी रस्तुप्रतिकारेणयुज्यते ॥ अकृतज्ञोप्रतिकृतोहंतिसत्त्ववतांमनः ॥ ४५ ॥

रिति शेषः काले होमकाले ॥ ४० ॥ ४१ ॥ अनुरक्तेनानुरागयुतेन स्निग्धेन तत्कालोचितप्रियपरेण हितेनोदर्कहितैषिणा सत्यविक्रमयुक्तेन अमोघविक्रमयुक्तेन ॥ ४२ ॥ विक्रमकालेषु तेजः सहजमिति शेषः प्रोत्साहयामि वर्धयामि । अधुना त्वाच्छन्नमिव तदिति भावः ॥ ४३ ॥ शरत्कालं तत्प्रांतम् । सुग्रीवस्य प्रसादं चित्तसौमनस्यम् । नदीनां चामलोदकत्वरूपम् ॥ ४४ ॥ उपकारेण युक्तो वीरोऽवश्यं प्रतिकारेण प्रत्युपकारेण युज्यते केनचित्कृतोपकारो वीरपुरुषोऽवश्यं प्रत्युपकरोत्येवेति भावः । कुत एवं निश्चयस्तत्राह अकृतज्ञो भूत्वा यद्यप्रतिकृतोऽकृतप्रत्युपकृतो भवति तदा सत्ववतामरमादृशां मनो हंति मैत्रीं नाशयत्ये

गुहाया नातिदूरे भविष्यति भाविवारिपूरवृद्ध्या गुहासमीपवर्तिनी भविष्यतीत्यर्थः ॥ ११ ॥ प्रागुदक्प्रवणे ईशानदिक्प्रवति देशे वर्तमाना गुहा साधु सम्यग्भविष्यति सुखसाधनमिति शेषः । पौरस्त्यवर्षवातप्रवेशाभावाच्चसाधुत्वं बोध्यम् । तेन निर्ऋतिद्वारत्वं सूचितम् । पश्चाद्भागे चैषोन्नता अतएव पुरोवातनिरोधकत्वान्निवाता च ॥१२॥ गुहाद्वारे इति । तेन बहिरुपवेशनसौकर्यम् ॥ १३ ॥ उत्तरतः उत्तरभागे ॥१४॥ श्वेतमिवांबरं श्वेतवस्त्रमिव स्थितम् । श्वेतमिवापरमितिपाठेऽपरं शृंगं श्वेतमिव रूप्यमिव स्थितमित्यर्थः ॥ १५ ॥ त्रिकूटे पूर्वोपितत्रिकूटाचले । जाह्नवीपदेन तत्रत्या जाह्नवीसदृशी मंदाकिन्याख्या नदी ॥१६॥



इयंचनलिनीरम्याफुल्लपंकजमंडिता ॥ नातिदूरेगुहायानौभविष्यतिनृपात्मज ॥ ११ ॥ प्रागुदक्प्रवणेदेशेगुहासाधुभविष्यति ॥ पश्चाच्चैवोन्नतासौम्य निवातेयंभविष्यति॥ १२ ॥ गुहाद्वारेचसौमित्रेशिलासमतलाशिवा ॥ कृष्णाचैवायताचैवभिन्नांजनचयोपमा ॥ १३ ॥ गिरिशृंगमिदंतातपश्यचोत्तरतःशुभम् ॥ भिन्नांजनचयाकारमंभोधरमिवोदितम् ॥ १४ ॥ दक्षिणस्यामपिदिशिस्थितंश्वेतमिवांबरम् ॥ कैलासशिखरप्रख्यंनानाधातुविराजितम् ॥ १५॥ प्राचीनवाहिनींचैवनदींभृशमकर्दमाम् ॥ गुहायाःपरतःपश्यत्रिकूटेजाह्नवीमिव ॥ १६ ॥ चंदनैस्तिलकैःसालैस्तमालैरतिमुक्तकैः ॥ पद्मकैःसरलैश्चैवअशोकैश्चैवशोभिताम् ॥ १७ ॥ वानीरैस्तिमिदैश्चैवबकुलैःकेतकैरपि ॥ हिंतालैस्तिनिशैर्नीपैर्वेतसैःकृतमालकैः ॥ १८ ॥ तीरजैःशोभिताभातिनानारूपैस्ततस्ततः ॥ वसनाभरणोपेताप्रमदेवाभ्यलंकृता ॥ १९ ॥ शतशःपक्षिसंघैश्चनानानादविनादिता ॥ एकैकमनुरक्तैश्चचक्रवाकैरलंकृता ॥ २० ॥ पुलिनैरतिरम्यैश्चहंससारससेविता ॥ प्रहसंत्येवभात्येपानानारत्नसमन्विता ॥ २१ ॥ क्वचिन्नीलोत्पलैश्छन्नाभातिरक्तोत्पलैःक्वचित् ॥ क्वचिदाभातिशुक्लैश्चदिव्यैःकुमुदकुड्मलैः ॥ २२ ॥ पारिप्लवशतैर्जुष्टावर्हिक्रौंचविनादिता ॥ रमणीयानदीसौम्यमुनिसंघनिषेविता ॥ २३ ॥ पश्यचंदनवृक्षाणांपंक्तीःसुरुचिराइव ॥ ककुभानांचदृश्यंतेमनसैवोदिताःसमम् ॥ २४ ॥ अहोसुरमणीयोयंदेशःशत्रुनिषूदन ॥ दृढंरंस्यावसौमित्रेसाध्वत्रनिवसावहे ॥ २५ ॥ इतश्चनातिदूरेसाकिष्किंधाचित्रकानना ॥ सुग्रीवस्यपुरीरम्याभविष्यतिनृपात्मज ॥ २६ ॥ गीतवादित्रनिर्घोषःश्रूयतेजयतांवर ॥ नदतांवानराणांचमृदंगाडंबरैःसह ॥ २७ ॥ लब्ध्वाभार्यांकपिवरःप्राप्यराज्यंसुहृद्वृतः ॥ ध्रुवंनंदतिसुग्रीवःसंप्राप्यमहतींश्रियम् ॥ २८ ॥



अतिमुक्तः पुंड्रकः । पद्मकश्चंदनभेदः । सरलः पीतद्रुमः ॥ १७ ॥ १८ ॥ १९ ॥ एकैकमनुरक्तैः परस्परानुरागयुक्तैः ॥ २० ॥ २१ ॥ २२ ॥ पारिप्लवाः जलपक्षिणः ॥ २३ ॥ सुरुचिरा इव इवोऽप्यर्थे शोभमानाश्चंदनवृक्षपंक्तीरपि पश्य । मनसा संकल्पेन सममेवोदिताः ककुभानां वृक्षविशेषाणां पंक्तय इति शेषः ॥ २४॥२५॥२६॥ नातिदूरत्वगमकंगीतेत्यादि । मृदंगाडंबरैः मृदंगशब्दैः ॥ २७ ॥ २८ ॥

बहूनि दृश्यानि उत्तमवस्तूनि यत्र ता दर्यः कुंजाश्च यस्मिन्निति गिरिविशेषणम् ॥ २९ ॥ बहुद्रव्ये सुखसाधनबहुद्रव्यवति रतिः सुखम् ॥ ३० ॥ उदये उदयपर्वते अभ्युदितम् उदयं प्राप्तम् ॥ ३१ ॥ ३२ ॥ अनुनयं अनुनयवत् ॥ ३३ ॥ व्यथां गत्वा अलम् व्यथा मास्त्वित्यर्थः ॥ ३४ ॥ क्रियापरो नित्यकर्मानुष्ठाता देवपरायणो देवपूजकः व्यवसायी उद्यमी ॥ ३५ ॥ अव्यवसितः शोकेनो द्यमहीनस्त्वं हंतुं न समर्थः विक्रमे विक्रमस्थाने रणे जिह्मकारिणं कुटिलम् ॥ ३६ ॥ अतः शोकं समुन्मूलय । व्यवसायमुद्योगम् ॥ ३७ ॥ परिवर्तनमधरोत्तरीकरणम् ॥ ३८ ॥ ३९ ॥ दीप्तैर्दीपकैर्वाक्यै

इत्युक्त्वान्यवसत्तत्रराघवः सहलक्ष्मणः ॥ बहुदृश्यदरीकुंजेतस्मिन्प्रस्रवणेगिरौ ॥२९ ॥ सुसुखेहिबहुद्रव्येतस्मिन्हिधरणीधरे ॥ वसतस्तस्यरामस्यर तिरल्पापिनाभवत् ॥ ३० ॥ हृतांहिभार्यांस्मरतःप्राणेभ्योपिगरीयसीम् ॥ उदयाभ्युदितंदृष्ट्वाशशांकंसविशेषतः ॥ ३१ ॥ आविवेशनतंनिद्रा निशासुशयनंगतम् ॥ तत्समुत्थेनशोकेनबाष्पोपहतचेतनम् ॥ ३२ ॥ तंशोचमानंकाकुत्स्थंनित्यंशोकपरायणम् ॥ तुल्यदुःखोब्रवीद्भ्राताळक्ष्मणो नुनयंवचः ॥ ३३ ॥ अलंवीरव्यथांगत्वानत्वंशोचितुमर्हसि ॥ शोचतोह्यवसीदंतिसर्वार्थाविदितंहिते ॥ ३४ ॥ भवान्क्रियापरोलोकेभवान्दे वपरायणः ॥ आस्तिकोधर्मशीलश्चव्यवसायीचराघव ॥ ३५॥ नह्यव्यवसितःशत्रुंराक्षसंतंविशेषतः ॥ समर्थस्त्वंरणेहंतुंविक्रमेजिह्मकारिणम् ॥३६॥ समुन्मूलयशोकंत्वंव्यवसायंस्थिरीकुरु ॥ ततःसपरिवारंतंराक्षसंहंतुमर्हसि ॥ ३७ ॥ पृथिवीमपिकाकुत्स्थससागरवनाचलाम् ॥ परिवर्तयितुंशक्तः किंपुनस्तंहिरावणम् ॥ ३८ ॥ शरत्कालंप्रतीक्षस्वप्रावृट्कालोयमागतः ॥ ततःसराष्ट्रंसगणंरावणंतंवधिष्यसि ॥ ३९ ॥ अहंतुखलुतेवीर्यंप्रसुप्तंप्र तिबोधये ॥ दीप्तैराहुतिभिःकालेभस्मच्छन्नमिवानलम् ॥ ४० ॥ लक्ष्मणस्यहितद्वाक्यंप्रतिपूज्यहितंशुभम् ॥ राघवःसुहृदंस्निग्धमिदंवचनमब्र वीत् ॥४१॥ वाच्यंयदनुरक्तेनस्निग्धेनचहितेनच ॥ सत्यविक्रमयुक्तेनतदुक्तंलक्ष्मणत्वया ॥ ४२ ॥ एषशोकःपरित्यक्तःसर्वकार्यावसादकः ॥ विक्रमे ष्वप्रतिहतंतेजःप्रोत्साहयाम्यहम् ॥ ४३ ॥ शरत्कालंप्रतीक्षिष्येस्थितोस्मिवचनेतव ॥ सुग्रीवस्यनदीनांचप्रसादमनुपालयन् ॥ ४४ ॥ उपकारेणवी रस्तुप्रतिकारेणयुज्यते ॥ अकृतज्ञोप्रतिकृतोहंतिसत्त्ववतांमनः ॥ ४५ ॥

रिति शेषः काले होमकाले ॥ ४० ॥ ४१ ॥ अनुरक्तेनानुरागयुतेन स्निग्धेन तत्कालोचितप्रियपरेण हितेनोदर्कहितैषिणा सत्यविक्रमयुक्तेन अमोघविक्रमयुक्तेन ॥ ४२ ॥ विक्रमकालेषु तेजः सहजमिति शेषः प्रोत्साहयामि वर्धयामि । अधुना त्वाच्छन्नमिव तदिति भावः ॥ ४३ ॥ शरत्कालं तत्प्रांतम् । सुग्रीवस्य प्रमादं चित्तसौमनस्यम् । नदीनां चामलोदकत्वरूपम् ॥ ४४ ॥ उपकारेण युक्तो वीरोऽवश्यं प्रतिकारेण प्रत्युपकारेण युज्यते केनचित्कृतोपकारो वीरपुरुषोऽवश्यं प्रत्युपकरोत्येवेति भावः । कुत एवं निश्चयस्तत्राह अकृतज्ञो भूत्वा यद्यप्रतिकृतोऽकृतप्रत्युपक्रियो भवति तदा सत्त्ववतामस्मादृशां मनो हंति मैत्रीं नाशयत्ये

वातो मित्रत्वादवश्यं स प्रत्युपकर्तेति भावः ॥ ४५ ॥ तदेव रामवाक्यमेव युक्तं प्रणिधाय निश्चित्य आत्मनः शुभं दर्शनं शुभां बुद्धिं प्रदर्शयन्नुवाच ॥ ४६ ॥ जलप्रपातं वर्षाकालम् । धृतः स्थिरनिश्चयः ॥ ४७ ॥ किंतु सुग्रीवेणाद्यैव रावणं हनिष्यामीत्युक्त्वा कुतो विलंब्यत इत्येवं क्रुद्धं राममालक्ष्याह नियम्येति । शरत्तदंतः संवर्तयन्नुक्तकालं क्षपयन् ॥ ४८ ॥ दीर्वमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तविंशः सर्गः ॥ २७ ॥ ॥ स तदेति ॥ १ ॥ स विरहिप्रमाथकः स । कस्तत्राह अद्य जलागमः समयः संप्रवृत्तस्तं संपश्य । नभ आकाशम् ॥ २ ॥ समुद्राणां रसं जलं भास्करस्य गभस्तिभिर्द्यौः पीत्वा कार्तिकादिनवमासधृतं गर्भं जलरूपं रसायनं लोकजीवानुभूतं प्रसूते त्यजति । गर्भमाहात्म्यात्सामुद्रस्य क्षारस्यापि स्वादुता ॥ ३ ॥ दिवाकरोऽलं

तदेवयुक्तंप्रणिधायलक्ष्मणःकृतांजलिस्तत्प्रतिपूज्यभाषितम् ॥ उवाचरामंस्वभिरामदर्शनंप्रदर्शयन्दर्शनमात्मनःशुभम् ॥ ४६ ॥ यथोक्तमेतत्तवसर्वमीप्सितंनरेंद्रकर्तानचिरात्तुवानरः ॥ शरत्प्रतीक्षःक्षमतामिमंभवाञ्जलप्रपातंरिपुनिग्रहेधृतः ॥ ४७ ॥ नियम्यकोपंपरिशाल्यतांशरत्क्षमस्वमासांश्चतुरोमयासह ॥ वसाचलेस्मिन्मृगराजसेवितेसंवर्तयञ्शत्रुवधेसमर्थः ॥ ४८ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तविंशः सर्गः ॥ २७ ॥ सतदावालिनंहत्वासुग्रीवमभिषिच्यच ॥ वसन्माल्यवतःपृष्ठेरामोलक्ष्मणमब्रवीत् ॥ १ ॥ अयंसकालःसंप्राप्तःसमयोऽद्यजलागमः ॥ संपश्यत्वंनभोमेघैःसंवृतंगिरिसंनिभैः ॥ २ ॥ नवमासधृतंगर्भंभास्करस्यगभस्तिभिः ॥ पीत्वारसंसमुद्राणांद्यौःप्रसूतेरसायनम् ॥ ३ ॥ शक्यमंबरमारुह्यमेघसोपानपंक्तिभिः ॥ कुटजार्जुनमालाभिरलंकर्तुंदिवाकरः ॥ ४ ॥ संध्यारागोत्थितैस्ताम्रैरंतेष्वपिचपांडुभिः ॥ स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवांबरम् ॥ ५ ॥ मंदमारुतनिःश्वासंसंध्याचंदनरंजितम् ॥ आपांडुजलदंभातिकामातुरमिवांबरम् ॥ ६ ॥ एषाधर्मपरिक्लिष्टानववारिपरिप्लुता ॥ सीतेवशोकसंतप्तामहीबाष्पंविमुंचति ॥ ७ ॥ मेघोदरविनिर्मुक्ताःकर्पूरदलशीतलाः ॥ शक्यमंजलिभिःपातुंवाताःकेतकगंधिनः ॥ ८ ॥ एषफुल्लार्जुनःशैलःकेतकैरभिवासितः ॥ सुग्रीवइवशांतारिर्धाराभिरभिषिच्यते ॥ ९ ॥ मेघकृष्णाजिनधराधारायज्ञोपवीतिनः ॥ मारुतापूरितगुहाःप्राधीताइवपर्वताः ॥ १० ॥ कशाभिरिवहैमीभिर्विद्युद्भिरभिताडितम् ॥ अंतस्तनितनिर्घोषंसवेदनमिवांबरम् ॥ ११ ॥

कर्तुं शक्यं सुकर इत्यर्थः ॥ ४ ॥ संध्यारागोत्थितैः उद्भिन्नसंध्यारागैरतएव ताम्रैरंतेषु पर्यंतभागेषु श्वेतैः स्निग्धैः किंचिज्जलसंबंधात् । अभ्रपटच्छेदैरभ्ररूपैः छिन्नपटैः बद्धव्रणमिवेत्युत्प्रेक्षा ॥ ५ ॥ मंदमारुत एव निःश्वासो यस्य तम् । संध्यारूपेण चंदनेन हरिचंदनेन रंजितम् आपांडु जलदम् प्रांतपांडुजलदं जलदस्थाने कामातुरस्य कपोलादि ॥ ६ ॥ घर्मेण रवितेजसा परिक्लिष्टा संतप्ता । बाष्पमूष्माणं बाष्पं नेत्रजलं च ॥ ७ ॥ मेघैः स्वोदराद्विनिर्मुक्ता इति मंदता । कर्पूरलिप्तदलवच्छीतलाः केतकगंधिनो वाता अंजलिभिः पातुमित्यादरातिशयादुक्तिः । जलवच्छ्रांतिहरत्वाच्च ॥ ८ ॥ फुल्लाः पुष्पिता अर्जुना यस्मिन् । धाराः जलधाराः । अत्र शैलस्यारिर्वनदाहकत्वाद्दावाग्निः ॥ ९ ॥ धाराः वर्षधारास्तद्रूपयज्ञोपवीतधराः मारुता पूरितत्वेन शब्दवत्ता प्राधीताः उपक्रांताध्ययना वटव इवेत्यर्थः ॥ १० ॥ अंतर्गतस्तनितरूपो निर्घोषः

कशाप्रहारे क्रियमाणः शब्दो यस्य तत् सवेदनमित्यस्योत्तमाश्वमिति शेषः ॥ ११ ॥ १२ ॥ घनैरनुलिप्ता इवात एव नष्टा अदृश्या ग्रहादयो यासु ताः प्रतिहताः प्रतिहत प्राचीत्वादिज्ञानाः इमा दिशो मन्मथवतां मन्मथोत्सवसावधानप्रियासहितानां हिताः सुखजनिकाः ॥ १३ ॥ बाष्पाभिसंरुद्धान्नववारिसेकजमहीसमुद्गतोष्मणावृतान् वर्षाया आगमेन समुत्सुकान्सहर्षान्सानुषु स्थितानित्यन्वयः ॥ १४ ॥ सहिमः सशीतः निदाघस्य ग्रीष्मस्य दोषप्रसरास्तापादायः स्थिता स्तब्धा निवृत्तेति यावत् । स्वदेशान्यांति प्रियावियुक्तैः स्थातुमशक्यत्वात् ॥ १५ ॥ मानसं सरः । अभीक्ष्ण मतिशयितं यद्वर्षोदकं तेन विक्षतेषु क्लिष्टगमनेषु मार्गेष्विति शेषः यानानि रथादीनि न संपतंति न गच्छंति ॥ १६ ॥ शांतमहार्णवस्य निस्तरंगसमुद्रस्य ॥ १७ ॥ सर्जादिपुष्पैर्मिश्रं पर्वतसंबंधिधातुभिस्ताम्रं

नीलमेघाश्रिताविद्युत्स्फुरंतीप्रतिभातिमे ॥ स्फुरंतीरावणस्यांकेवैदेहीवतपस्विनी ॥ १२ ॥ इमास्तामन्मथवतांहिताःप्रतिहतादिशः ॥ अनुलिप्ता इवघनैर्नष्टग्रहनिशाकराः ॥ १३ ॥ क्वचिद्बाष्पाभिसंरुद्धान्वर्षागमसमुत्सुकान् ॥ कुटजान्पश्यसौमित्रेपुष्पितान्गिरिसानुषु ॥ ममशोकाभिभूत स्यकामसंदीपनान्स्थितान् ॥ १४ ॥ रजःप्रशांतंसहिमोद्यवायुर्निदाघदोषप्रसराःप्रशांताः ॥ स्थिताहियात्राबसुधाधिपानांप्रवासिनोयांतिनराः स्वदेशान् ॥ १५ ॥ संप्रस्थितामानसवासलुब्धाःप्रियान्विताःसंप्रतिचक्रवाकाः ॥ अभीक्ष्णवर्षोदकविक्षतेषुयानानिमार्गेषुनसंपतंति ॥ १६ ॥ क्वचित्प्रकाशंक्वचिदप्रकाशंनभःप्रकीर्णांबुधरंविभाति ॥ क्वचित्क्वचित्पर्वतसंनिरुद्धंरूपंयथाशांतमहार्णवस्य ॥ १७ ॥ व्यामिश्रितंसर्जकदंबपुष्पैर्नवं जलंपर्वतधातुताम्रम् ॥ मयूरकेकाभिरनुप्रयातंशैलापगाःशीघ्रतरंवहंति ॥ १८ ॥ रसाकुलंषट्पदसंनिकाशंप्रभुज्यतेजंबुफलंप्रकामम् ॥ अनेकवर्णं पवनावधूतंभूमौपतत्याम्रफलंविपक्वम् ॥ १९ ॥ विद्युत्पताकाःसबलाकमालाःशैलेंद्रकूटाकृतिसंनिकाशाः ॥ गर्जंतिमेघाःसमुदीर्णनादामत्तागजेंद्राइवसं युगस्थाः ॥ २० ॥ वर्षोदकाप्यायितशाद्वलानिप्रवृत्तनृत्तोत्सवबर्हिणानि ॥ वनानिनिर्वृष्टबलाहकानिपश्यापराह्णेष्वधिकंविभांति ॥ २१ ॥ समुद्वहंतः सलिलातिभारंबलाकिनोवारिधरानदंतः ॥ महत्सुशृंगेषुमहीधराणांविश्रम्यविश्रम्यपुनःप्रयांति ॥ २२ ॥ मेघाभिकामापरिसंपतंतीसंमोदिताभा तिबलाकपंक्तिः ॥ वातावधूतावरपौंडरीकीलंबेवमालारुचिरांबरस्य ॥ २३ ॥ बालेंद्रगोपांतरचित्रितेनविभातिभूमिर्नवशाद्वलेन ॥ गात्रानुपृक्तेनशु कप्रभेणनारीवलाक्षोक्षितकंबलेन ॥ २४ ॥

ताम्रवर्णं मयूरशब्दैरनुप्रयातमनुसृतं जलं नद्यः शीघ्रं वहंति समुद्वहंते ॥ १८ ॥ रसाकुलं रसवत् षट्पदसन्निकाशं भ्रमरसदृशवर्णं प्रकामं यथेच्छं यथा भवति तथा प्रभुज्यते जनैरिति शेषः । आम्रफलस्याति विपक्वत्वात्स्वत एव भूमौ पातः ॥ १९ ॥ बलाकमालया तत्पंक्त्या सहिताः कूटः शिखरं तदाकारसदृशाकाराः ॥ २० ॥ प्रवृत्तेत्यादि । नृत्तोत्सवप्रवृत्तमयूराणि नितरां वृष्टा बलाहका येषु तानि ॥ २१ ॥ सलिलातिभारं सलिलरूपभारं भारवत्त्वाच्च विश्रम्य विश्रम्य गमनम् ॥ २२ ॥ गर्भार्थं मेघेष्वभिकामो यस्याः सा परिसंपतंती नभसि गच्छंती अतएव संमोदिता हर्षवती । बलाकपंक्तिरित्यार्षोह्रस्वः । तद्वे लंबिता वातेत्यादि । वरा श्रेष्ठा पौंडरीकी श्वेतपद्मसंबंधिनी लंबा रुचिरांबरस्य मालेव ॥ २३ ॥ बालेंद्रगोपैरंतरे मध्ये मध्ये चित्रितेन शाद्वलेन युता भूमिः स्वतः शुकवर्णेन मध्ये मध्ये लाक्षाबिंदुयुतेन

कंबलेन गात्रानुपृक्तेन गात्रसंपृक्तेन कृता नारीव ॥ २४ ॥ निद्रेति आषाढ्यां स्वापोत्सवाद्भूर्ध्वा गर्भधारणार्थम् ॥ २५ ॥ शिखिनां सुष्ठु मनृत्तं येषु ते सकदंबाः सकदंबपुष्पाः शाखा येषां समानकामा उभयेपि कामवंत इत्यर्थः सस्यैर्वनैश्चाभिरामा ॥ २६ ॥ वहनादिक्रियाणां नद्यादीनां च क्रमेणान्वयाद्यथासंख्यमत्रालंकारः प्लवंगमाः समाश्वसंति सुग्रीवराज्यलाभात् ॥ २७ ॥ वननिर्झरे क्रीडया केतकगंधमाघ्राय महर्षिताः मपातशब्दः मपतन्निर्झरशब्दः ॥ २८ ॥ पुष्परसैस्तदास्वादैरवगाढं वृद्धं मदं क्षणेनोत्सवेनार्जितम् ॥ २९ ॥ अंगारः शांताग्निस्तच्चूर्णस्य य उत्करस्तत्समैः अनेन फलानामतिमहत्त्वं सूचितम् । अत्युक्तिरत्रालंकारः ॥ ३० ॥ ३१ ॥ पृष्ठतो मेघरवं निशम्य श्रुत्वा मतिनादशंकी शत्रुभूतगजांतरनादशंकी मतिनिवृत्तः ॥ ३२ ॥ अनेकाश्रयिणः अनेकभावाश्रयिणः ॥ ३३ ॥ कंदलं

निद्राशनैःकेशवमभ्युपैतिद्रुतंनदीसागरमभ्युपैति ॥ हृष्टाबलाकाघनमभ्युपैतिकांतासकामाप्रियमभ्युपैति ॥२५॥ जातावनांताःशिखिसुप्रनृत्ताजाताः कदंबाःसकदंबशाखाः ॥ जातावृषागोषुसमानकामाजातामहीसस्यवनाभिरामा ॥ २६ ॥ वहंतिवर्षंतिनदंतिभांतिध्यायंतिनृत्यंतिसमाश्वसंति ॥ नद्योघनामत्तगजावनांताःप्रियाविहीनाःशिखिनःप्लवंगमाः ॥ २७ ॥ प्रहर्षिताःकेतकिपुष्पगंधमाघ्रायमत्तावननिर्झरेषु ॥ प्रपातशब्दाकुलितागजेंद्राः सार्धंमयूरैःसमदानदंति ॥२८॥ धारानिपातैरभिहन्यमानाःकदंबशाखासुविलंबमानाः ॥ क्षणार्जितंपुष्परसावगाढंशनैर्मदंषट्चरणास्त्यजंति ॥२९॥ अंगारचूर्णोत्करसंनिकाशैःफलैःसुपर्याप्तरसैःसमृद्धैः ॥ जंबूद्रुमाणांप्रविभांतिशाखानिपीयमानाइवषट्पदौघैः ॥ ३० ॥ तडित्पताकाभिरलंकृता नामुदीर्णगंभीरमहारवाणाम् ॥ विभांतिरूपाणिवलाहकानांरणोत्सुकानामिववानराणाम् ॥३१॥ मार्गानुगःशैलवनानुसारीसंप्रस्थितोमेघरवंनिशम्य॥ युद्धाभिकामःप्रतिनादशंकीमत्तोगजेंद्रःप्रतिसंनिवृत्तः ॥ ३२ ॥ क्वचित्प्रगीताइवषट्पदौघैःक्वचित्प्रनृत्ताइवनीलकंठैः ॥ क्वचित्प्रमत्ताइववारणेन्द्रै र्विभांत्यनेकाश्रयिणोवनांताः ॥३३॥ कदंबसर्जार्जुनकंदलाढ्यावनांतभूमिर्मधुवारिपूर्णा ॥ मयूरमत्ताभिरुतप्रनृत्तैरापानभूमिप्रतिमाविभाति ॥ ३४ ॥ मुक्तासमाभंसलिलंपतद्वैसुनिर्मलंपत्रपुटेषुलग्नम् ॥ हृष्टाविवर्णच्छदनाविहंगाःसुरेंद्रदत्तंतृषिताःपिबंति ॥ ३५ ॥ षट्पादतंत्रीमधुराभिधानंप्लवंगमोदीरितकंठतालम् ॥ आविष्कृतंमेघमृदंगनादैर्वनेषुसंगीतमिवप्रवृत्तम् ॥ ३६ ॥ क्वचित्प्रनृत्तैःक्वचिदुन्नदद्भिःक्वचिच्चवृक्षाग्रनिषण्णकायैः ॥ व्यालंबबर्हाभरणैर्मयूरैर्वनेषुसंगीतमिवप्रवृत्तम् ॥ ३७ ॥ स्वनैर्घनानांप्लवगाःप्रबुद्धाविहायनिद्रांचिरसंनिरुद्धाम् ॥ अनेकरूपाकृतिवर्णनादानवांबुधारा भिहतानदंति ॥ ३८ ॥

स्थलोत्पलं मधुवारि मधुसदृशवारि आपानभूमिर्मद्यपानभूमिस्तस्यामपि कदंबादिपुष्पाणि मद्यपूर्णतामत्तजनशब्दस्तन्नृत्यं च ॥ ३४ ॥ विवर्णच्छदनाः जलसेकतो विवर्णपक्षाः ॥ ३५ ॥ षट्पदो भ्रमरस्तद्ध्वनिरूपं तंत्रीणां मधुरमभिधानं गीतं यस्मिन् प्लवंगमानां भेकानामुदीरितमेव कंठतालं सूत्रधारमुखशब्दतालो यस्मिन् मेघशब्दा एव मृदंगनादास्तैराविष्कृतं प्रकटितं सङ्गीतं वनेषु प्रवृत्तमिव ॥ ३६ ॥ प्रनृत्तैरारब्धनृत्तैः उन्नदंतो गायकास्तैः वृक्षाग्रनिषण्णकायास्ते संगीतोपलक्षितनृत्यद्रष्टारः ॥ ३७ ॥ चिरसन्निरुद्धां चिरसंपादितां शुष्कमृत्तिकास्विति शेषः । प्लवगा भेकाः अनेकरूपा आकृतिः संस्थानं वर्णो नीलपीतादि

नीदश्च येषाम् ॥ ३८ ॥ कामातुरयुवतिवृत्तांतं नदीष्वारोपयति नद्य इति । वारिपूरेण समुद्राहिता उन्नमिताश्चक्रवाकरूपस्तना याभिः शीर्णानि तटानि रोधकनरतीस्थानीयान्यपवाहयित्वा निरस्य नवप्रावृतपूर्ण भोगाद्दतं नवं प्रावृतं पुष्पाद्युपहारात् पूर्णभोगायाहृतं स्वीकृतं उपोपयंति । प्रसमुपोदःपादपूरणे इति द्वित्वम् ॥ ३९ ॥ नीलेषु मेघेषु सक्ता नीलमेघाः प्रतिभांति । दवाग्निदग्धेषु शैलेषु तादृशाः शैला यदि सक्ता भवंति तदा ते इव । बद्धमूला इत्युभयान्वयि ॥ ४० ॥ प्रमत्तशब्दवन्मयूरवंति । शक्रगोप इंद्रगोपः ॥ ४१ ॥ ४२ ॥ गवेंद्रा वृषभाः । निभृतास्त्यक्तोद्योगाः । सर्वत्र जाता इति शेषः । सुरेंद्रो देवेंद्रः

नद्यःसमुद्राहितचक्रवाकास्तटानिशीर्णान्यपवाहयित्वा ॥ दृप्तानवप्रावृतपूर्णभोगाद्दतंस्वभर्तारमुपोपयंति ॥ ३९ ॥ नीलेषुनीलानववारिपूर्णामेघेषुमेघाःप्रतिभांतिसक्ताः ॥ दवाग्निदग्धेषुदवाग्निदग्धाःशैलेषुशैलाइवबद्धमूलाः ॥ ४० ॥ प्रमत्तसन्नादितबर्हिणानिसशक्रगोपाकुलशाद्वलानि ॥ चरंतिनीपार्जुनवासितानिगजाःसुरम्याणिवनांतराणि ॥ ४१ ॥ नवांबुधाराहतकेसराणिध्रुवंपरिष्वज्यसरोरुहाणि ॥ कदंबपुष्पाणिसकेसराणिनवानिहृष्टाभ्रमराःपिबंति ॥ ४२ ॥ मत्तागजेंद्रामुदितागवेंद्रावनेषुविक्रांततरामृगेंद्राः ॥ रम्यानरेंद्रानिभृतानरेंद्राःप्रक्रीडितोवारिधरैःसुरेंद्रः ॥ ४३ ॥ मेघाःसमुद्भूतसमुद्रनादामहाजलौघैर्गगनावलंबाः ॥ नदीस्तटाकानिसरांसिवापीर्महींचकृत्स्नामपवाहयंति ॥ ४४ ॥ वर्षप्रवेगाविपुलाःपतंतिप्रवांतिवाताःसमुदीर्णवेगाः ॥ प्रनष्टकूलाःप्रवहंतिशीघ्रंनद्योजलंविप्रतिपन्नमार्गाः ॥ ४५ ॥ नरैर्नरेंद्राइवपर्वतेंद्राःसुरेंद्रनीतैःपवनोपनीतैः ॥ घनांबुकुंभैरभिषिच्यमानारूपंश्रियंस्वामिवदर्शयंति ॥ ४६ ॥ घनोपगूढंगगनंनतारानभास्करोदर्शनमभ्युपैति ॥ नवैर्जलौघैर्धरणीवितृप्तातमोविलिप्तानदिशःप्रकाशाः ॥ ४७ ॥ महांतिकूटानिमहीधराणांधाराविधौतान्यधिकंविभांति ॥ महाप्रमाणैर्विपुलैःप्रपातैर्मुक्ताकलापैरिवलंबमानैः ॥ ४८ ॥ शैलोपलप्रस्खलमानवेगाःशैलोत्तमानांविपुलाःप्रपाताः ॥ गुहासुसन्नादितबर्हिणासुहाराविकीर्यंतइवावभांति ॥ ४९ ॥ शीघ्रप्रवेगाविपुलाःप्रपातानिर्धौतशृंगोपतलागिरीणाम् ॥ मुक्ताकलापप्रतिमाःपतंतोमहागुहोत्संगतलैर्ध्रियंते ॥ ५० ॥ सुरतामर्दविच्छिन्नाःस्वर्गस्त्रीहारमौक्तिकाः ॥ पतंतिचातुलादिक्षुतोयधाराःसमंततः ॥ ५१ ॥ विलीयमानैर्विहगैर्निमीलद्भिश्चपंकजैः ॥ विकसंत्याचमालत्यागतोऽस्तंज्ञायतेरविः ॥ ५२ ॥ वृत्तायात्रानरेंद्राणांसेनापथ्येववर्तते ॥ वैराणिचैवमार्गाश्चसलिलेनसमीकृताः ॥ ५३ ॥

प्रक्रीडितः । कर्तरि निष्ठा ॥ ४३ ॥ समुद्भूतस्तिरस्कृतः समुद्रनादो यैः अपवाहयंति प्रवहज्जलानि कुर्वंति ॥ ४४ ॥ वर्षप्रवेगा वृष्टयः । विप्रतिपन्नः प्रतिबद्धो मार्गो नृणां याभिस्ताः ॥ ४५ ॥ रूपं निर्मलमाकारं श्रियं विविधधातुयुक्तत्वरूपां दर्शयंतीव ॥ ४६ ॥ घनोपगूढत्वाद्गगनस्य तारारविदर्शनाभावः । वितृप्ता जामितां प्राप्ता ॥ ४७ ॥ प्रपातैर्निर्झरैः ॥ ४८ ॥ प्रपतंतीति प्रपाता निर्झराः विकीर्यंतस्त्रुट्यंतः ॥ ४९ ॥ निर्धौतं क्षालितं शृंगाणामुपतलं यैस्ते ॥ ५० ॥ ५१ ॥ ज्ञायतेऽनुमीयते । अनुमानालंकारः ॥ ५२ ॥ वृत्ता निवृत्ता । पृक्तेतिपाठेप्ययमेवार्थः । प्रस्थितापि सेना पथ्येव वर्तते । समीकृताः

निरुद्धत्वं साधारणधर्मः ॥ ५३ ॥ प्रौष्ठपदो भाद्रपदः । ब्रह्म वेदं विवक्षतामध्येतुमिच्छताम् । अध्यायसमय उपाकरणकालः ॥ ५४ ॥ निवृत्तं कर्म च्छादनादिकर्म यस्य तादृशमायतनं यस्य संचिताः संचयाः जीवनसाधनानि येन स भरत आषाढीं प्राप्याभ्युपगतः कृतयत्किंचिद्व्रतसंकल्पः ॥ ५५ ॥ मामायांतं समीक्ष्य वनतः प्रतिनिवृत्तमिति शेषः ॥ ५६ ॥ वर्षाः प्राप्येति शेषः ॥ ५७ ॥ नदीकूलं कर्तृ ॥ ५८ ॥ वर्षाश्च विस्तीर्णा इत्यनुकर्षः । अपारः दुष्प्रापवैरनिर्यातनपारः ॥ ५९ ॥ अयात्रां वर्षवशाद्यात्राभावं कार्योन्मुखतया सुग्रीवे प्रणतेपि मया सीतान्वेषणाद्युद्दिश्य किंचिदपि नोक्तम् ॥ ६० ॥ अपि च

मासिप्रोष्ठपदेब्रह्मब्राह्मणानांविवक्षताम् ॥ अयमध्यायसमयःसामगानामुपस्थितः ॥ ५४ ॥ विवृत्तकर्मायतनोनूनंसंचितसंचयः ॥ आषाढीमभ्युपगतोभरतःकोशलाधिपः ॥ ५५ ॥ नूनमापूर्यमाणायाःसरय्वावर्धतेरयः ॥ मांसमीक्ष्यसमायांतमयोध्यायाइवस्वनः ॥ ५६ ॥ इमाःस्फीतगुणावर्षाःसुग्रीवःसुखमश्नुते ॥ विजितारिःसदारश्चराज्येमहतिचस्थितः ॥ ५७ ॥ अहंतुहृतदारश्चराज्याच्चमहतश्च्युतः ॥ नदीकूलमिवक्लिन्नमवसीदामिलक्ष्मण ॥ ५८ ॥ शोकश्चममविस्तीर्णोवर्षाश्चभृशदुर्गमाः ॥ रावणश्चमहाञ्छत्रुरपारःप्रतिभातिमे ॥ ५९ ॥ अयात्रांचैवदृष्ट्वेमांमार्गांश्चभृशदुर्गमान् ॥ प्रणतेचैवसुग्रीवेनमयाकिंचिदीरितम् ॥ ६० ॥ अपिचापिपरिक्लिष्टंचिराद्दारैःसमागतम् ॥ आत्मकार्यगरीयस्त्वाद्वक्तुंनेच्छामिवानरम् ॥ ६१ ॥ स्वयमेवहिविश्रम्यज्ञात्वाकालमुपागतम् ॥ उपकारंचसुग्रीवोवेत्स्यतेनात्रसंशयः ॥ ६२ ॥ तस्मात्कालप्रतीक्षोऽहंस्थितोस्मिशुभलक्षण ॥ सुग्रीवस्यनदीनांचप्रसादमभिकांक्षयन् ॥ ६३ ॥ उपकारेणवीरोहिप्रतीकारेणयुज्यते ॥ अकृतज्ञोप्रतिकृतोहंतिसत्त्ववतांमनः ॥ ६४ ॥ अथैवमुक्तःप्रणिधायलक्ष्मणःकृताञ्जलिस्तत्प्रतिपूज्यभाषितम् ॥ उवाचरामंस्वभिरामदर्शनंप्रदर्शयन्दर्शनमात्मनःशुभम् ॥ ६५ ॥ यदुक्तमेतत्तवसर्वमीप्सितंनरेंद्रकर्तानचिराद्धरीश्वरः ॥ शरत्प्रतीक्षःक्षमतामिदंभवान्जलप्रपातंरिपुनिग्रहेधृतः ॥ ६६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे अष्टाविंशः सर्गः ॥ २८ ॥ समीक्ष्यविमलंव्योमगतविद्युद्बलाहकम् ॥ सारसाकुलसंघुष्टंरम्यज्योत्स्नानुलेपनम् ॥ १ ॥ समृद्धार्थंचसुग्रीवंमंदधर्मार्थसंग्रहम् ॥ अत्यर्थंचासतांमार्गमेकांतगतमानसम् ॥ २ ॥ निवृत्तकार्यंसिद्धार्थंप्रमदाभिरतंसदा ॥ प्राप्तवंतमभिप्रेतान्सर्वानेवमनोरथान् ॥ ३ ॥



तदानीं गरीयसे आत्मकार्याय वक्तुमनुचितमित्याह अपि चेति । अपिपरिक्लिष्टं अतिपरिक्लिष्टं गरीयस्त्वादल्पकालाल्पयत्नासाध्यत्वात् नेच्छामि नैषिषम् ॥ ६१ ॥ शेषं व्याख्यातम् ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ चैषमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे अष्टाविंशः सर्गः ॥ २८ ॥ ॥ ईदृशं व्योम समीक्ष्य हरीश्वरमुपागम्य हनूमानब्रवीदित्युत्तरेण नवमश्लोकस्थेनान्वयः ॥ १ ॥ मंदो धर्मार्थयोः संग्रहो यस्य तं असतां मार्गं कामप्रवृत्तिलक्षणमत्यर्थमाश्रयंतमिति शेषः एकांतगतमानसं कामभोगार्हैकांतदेशगतचित्तम् ॥ २ ॥ निवृत्तकार्यं निष्पन्नवा

लिवधरूपस्वकार्यं सिद्धार्थं माप्तराज्यम् अभिप्रेतानीप्सितानर्थान्माप्तवंतम् ॥ ३ ॥ स्वां पत्नीं रुमाम् ॥ ४ ॥ ५ ॥ उच्छिन्नराज्यसंदेहं मंत्रिसौष्ठवेन नष्टराज्यपालनसंदेहं निश्चितार्थः निश्चितसर्वशास्त्रार्थः अतएवार्थतत्त्वज्ञः कर्तव्याकर्तव्यसकलार्थतत्त्वज्ञः । कालेति । कालोचितं धर्मविशेषमनुष्ठेयं वेत्ति तादृशः ॥ ६ ॥ वाक्यैः प्रसादप्रयोजनैः ॥ ७ ॥ हितं तत्कालहितं पथ्यं कालांतरहितं तथ्यं सत्यं सामादि चतुष्कवदेतच्चतुष्टयं वाक्यविशेषणं प्रणयत्वं प्राप्तया प्रीत्या संयुक्तं विश्वासे स्ववचनप्रामाण्ये कृतनिश्चयमीदृशं हरीश्वरमित्यन्वयः ॥ ८ ॥ तत्र प्रसादप्रयोजनवाक्यान्याह राज्यं प्राप्तमित्यादि । कौली कुलक्रमागता ॥ ९ ॥ शेषः कर्तव्यशेषः कालज्ञः प्रत्युपकारकालज्ञः साधु वर्तते साध्वनुष्ठानवान्वर्तते ॥ १० ॥ दंड्यतेऽनेन दंडः सैन्यम् आत्मा सकरणग्रामः समानि स्ववशत्वेन समत्वम् । समवेतानीतिपाठे मिलितानीत्यर्थः नत्वेकमपि पृथग्भूतमिति भावः ॥ ११ ॥ निरत्यये निरपाये अभिनीतार्थं प्रतिज्ञातार्थम् ॥ १२ ॥ संभ्रमात्त्वरया विशेषेण कृतोत्साहोऽन्यत्र कर्मणीति शेषः ॥ १३ ॥ कालव्यतीतेषु करणोचितकालमतिक्रांतेषु पश्चात्तेषु वर्तते तत्सिद्ध्यर्थं यतते स मित्रस्य महतोर्थान्कृत्वापि मित्रार्थेन मित्रत्वप्रयोजनकार्येन न युज्यते उचितकालेऽकृतं कृतमप्यकृतप्रायमिति भावः ॥ १४ ॥ तत्कालातीतं भविष्यतीति

स्वांचपत्नीमभिप्रेतांतारांचापिसमीप्सिताम् ॥ विहरंतमहोरात्रंकृतार्थंविगतज्वरम् ॥ ४ ॥ क्रीडंतमिवदेवेशंगंधर्वाप्सरसांगणैः ॥ मंत्रिषुन्यस्तकार्यंचमंत्रिणामनवेक्षकम् ॥ ५ ॥ उच्छिन्नराज्यसंदेहंकामवृत्तमिवस्थितम् ॥ निश्चितार्थोऽर्थतत्त्वज्ञःकालधर्मविशेषवित् ॥ ६ ॥ प्रसाद्यवाक्यैर्विविधैर्हेतुमद्भिर्मनोरमैः ॥ वाक्यविद्वाक्यतत्त्वज्ञंहरीशंमारुतात्मजः ॥ ७ ॥ हितंतथ्यंचपथ्यंचसामधर्मार्थनीतिमत् ॥ प्रणयप्रीतिसंयुक्तंविश्वासकृतनिश्चयम् ॥ ८ ॥ हरीश्वरमुपागम्यहनूमान्वाक्यमब्रवीत् ॥ राज्यंप्राप्तंयशश्चैवकौलीश्रीरभिवर्धिता ॥ ९ ॥ मित्राणांसंग्रहःशेषस्तद्भवान्कर्तुमर्हति ॥ योहिमित्रेषुकालज्ञःसततंसाधुवर्तते ॥ १० ॥ तस्यराज्यंचकीर्तिश्चप्रतापश्चापिवर्धते ॥ यस्यकोशश्चदंडश्चमित्राण्यात्माचभूमिप ॥ समान्येतानिसर्वाणिसराज्यंमहदश्नुते ॥ ११ ॥ तद्भवान्वृत्तसंपन्नःस्थितःपथिनिरत्यये ॥ मित्रार्थमभिनीतार्थंयथावत्कर्तुमर्हति ॥ १२ ॥ संत्यज्यसर्वकर्माणिमित्रार्थेयोनवर्तते ॥ संभ्रमाद्विकृतोत्साहःसोऽनर्थेनावरुध्यते ॥ १३ ॥ योहिकालव्यतीतेषुमित्रकार्येषुवर्तते ॥ सकृत्वामहतोप्यर्थान्नमित्रार्थेनयुज्यते ॥ १४ ॥ तदिदंमित्रकार्यंनःकालातीतमरिंदम ॥ क्रियतांराघवस्यैतद्वैदेह्याःपरिमार्गणम् ॥ १५ ॥ नचकालमतीतंतेनिवेदयतिकालवित् ॥ त्वरमाणोपिसप्राज्ञस्तवराजन्वशानुगः ॥ १६ ॥ कुलस्यहेतुःस्फीतस्यदीर्घबंधुश्चराघवः ॥ अप्रमेयप्रभावश्चस्वयंचाप्रतिमोगुणैः ॥ १७ ॥ तस्यत्वंकुरुवेकार्यंपूर्वंतेनकृतंतव ॥ हरीश्वरकपिश्रेष्ठानाज्ञापयितुमर्हसि ॥ १८ ॥ नहितावद्भवेत्कालोव्यतीतश्चोदनादृते ॥ चोदितस्यहिकार्यस्यभवेत्कालव्यतिक्रमः ॥ १९ ॥

शेषः । तस्मात्क्रियतामित्यादि ॥ १५ ॥ ननु तत्कार्यकालात्ययश्चेत्स तं ज्ञापयिष्यत्येवेत्याह न चेति । कालवित्कालज्ञोपि स प्राज्ञत्वात्त्वदभिप्रायमेव केवलमनुगच्छेत्तूष्णीं तिष्ठतीति भावः ॥ १६ ॥ त्वदीयस्य स्फीतस्य महतः कुलस्य हेतुर्वृद्धिहेतुः दीर्घबंधुः इदानीं कालांतरे च बंधुः स्वयं च चाल्लक्ष्मणः ॥ १७ ॥ कृतं तव कार्यमिति शेषः आज्ञापयितुमर्हसि रामनियोगात्पूर्वमिति शेषः ॥ १८ ॥ नन्वेवमपि कालव्यतिक्रमस्तुल्योऽत आह नहीति । चोदनादृते रामप्रेरणां विना जातोपि कालातिक्रमो न दोषायेति भावः । तत्प्रेरणया यदि कार्यकरणं तदा कालव्यतिक्रमो भवेदेवेत्यर्थः ॥ १९ ॥

स्व । पाठांतरं त्वस्य योजनाशक्त्या कल्पितमिति च सः ॥ १६ ॥ उक्तमेव विवृणोति क्रियाभियोगमिति । क्रियाणां शौचस्नानादीनामभितः कात्स्न्येंन योगमनुष्ठानं मनसः प्रसादं चास्थाय कालं सव
कालं समाधियोगानुगतं तेन संबद्धमेव कुरुष्व । तथाऽदीनसत्त्वः अक्षीणसत्त्वः सन् स्वकर्महेतुं पौरुषवृद्धेः कारणं सहायसामर्थ्यं तद्घटनरूपं स्वकर्म देवार्चनादिरूपकर्मयोगं च कुरुष्व । अनेन यावत्फलं निदि
ध्यासनज्ञानकर्मसमुच्चय उक्तः ॥ १७ ॥ त्वया सनाथा नाथवती जानकी परेण न सुलभा न सुग्रहा । ज्वलितामग्निचूडामग्निशिखामुपेत्य स्पृष्ट्वा कश्चिदपि न दह्यते इति नापितु वह्निव्यतिरिक्तः सर्वोपि
दह्यत एव । अतो या नीता सा तत्प्रतिकृतिरेव सा तु त्वदुपासितायाविति व्यंग्यम् ॥ १८ ॥ रामः अप्रधृष्यं न्यायोपेतत्वादविचाल्यं स्वभावजं तत्त्वार्थकं वाक्यमुक्तवंतं लक्षणसहितं लक्ष्मणमुवाच ।
किमुवाच यत्त्वया मत्युक्तं वाक्यं तद्धितं तत्कालसुखम् । पथ्यं कालांतरेपि सुखम् । नयप्रसक्तं राजनीत्युपेतम् सामसहितधर्मार्थाभ्यां समाहितं संगतम् ॥ १९ ॥ तस्मात्त्वदुक्तं निःसंशयं कार्यं त्वद्वाक्यार्थोऽ

क्रियाभियोगंमनसःप्रसादंसमाधियोगानुगतंचकालम् ॥ सहायसामर्थ्यमदीनसत्त्वःस्वकर्महेतुंचकुरुष्वतात ॥ १७ ॥ नजानकीमानववं शनाथत्वयासनाथासुलभापरेण ॥ नचाग्निचूडांज्वलितामुपेत्यनदह्यतेवीरवरार्हकश्चित् ॥ १८ ॥ सलक्षणंलक्ष्मणमप्रधृष्यंस्वभावजंवाक्यमुवाचरामः ॥ हितंचपथ्यंचनयप्रसक्तंससामधर्मार्थसमाहितंच ॥ १९ ॥ निःसंशयंकार्यमवेक्षितव्यंक्रियाविशेषोप्यनुवर्तितव्यः ॥ नतुप्रवृद्धस्यदुरासदस्यकुमारवीर्यस्यफलंचचिंत्यम् ॥ २० ॥ अथपद्मपलाशाक्षींमैथिलीमनुचिंतयन् ॥ उवाचलक्ष्मणंरामोमुखेनपरिशुष्यता ॥ २१ ॥ तर्पयित्वासहस्राक्षःसलिलेनवसुंधराम् ॥ निर्वर्तयित्वासस्यानिकृतकर्माव्यवस्थितः ॥२२॥ दीर्घगंभीरनिर्घोषाःशैलद्रुमपुरोगमाः ॥ विसृज्यसलिलंमेघाःपरिशांतानृपात्मज ॥ २३ ॥ नीलोत्पलदलश्यामाःश्यामीकृत्वादिशोदश ॥ विमदाइवमातंगाःशांतवेगाःपयोधराः ॥ २४ ॥ जलगर्भामहामेघाःकुटजार्जुनगंधिनः ॥ चरित्वाविरताःसौम्यवृष्टिवाताःसमुद्यताः ॥ २५ ॥ घनानांवारणानांचमयूराणांचलक्ष्मण ॥ नादःप्रस्रवणानांचप्रशांतःसहसानव ॥ २६ ॥ अभिवृष्टामहामेघैर्निर्मलाश्चित्रसानवः ॥ अनुलिप्ताइवाभांतिगिरयश्चंद्ररश्मिभिः ॥ २७ ॥ शाखासुसप्तच्छदपादपानांप्रभासुताराकनिशाकराणाम् ॥ लीलासुचैवोत्तमवारणानांश्रियंविभज्याद्यशरत्प्रवृत्ता ॥ २८ ॥ संप्रत्यनेकाश्रयचित्रशोभालक्ष्मीशरत्कालगुणोपपन्ना ॥ सूर्याग्रहस्तप्रतिबोधितेषुपद्माकरेष्वभ्यधिकंविभाति ॥ २९ ॥

नुष्ठेय एव । अनुष्ठेयमाह अवेक्षितव्यं समाधियोगेन भगवत्तत्त्वं द्रष्टव्यम् । क्रियाविशेषः कर्मयोगः सोपि अनुवर्तितव्योनुष्ठेयः । हे कुमार नतु कर्मज्ञानयोगौ हित्वा प्रकर्षेण वृद्धिं प्राप्तस्यातएव दुरा
सदस्य वीर्यस्य वीर्यवतः कर्मणः फलं च फलमेव चिंत्यमपेक्षणीयम् । अनेन यावत्फलं निदिध्यासनकर्मसमुच्चय उक्तः ॥ २० ॥ लक्ष्मणवचसा तत्कालं स्वस्थस्यापि पुनर्मैथिलीं स्मृत्वा खिद्यमानस्य शर
दनुभववर्णनं अथेत्यादि ॥ २१ ॥ निर्वर्तयित्वा संपाद्य अहं त्वकृतकर्मेति व्यंग्यम् ॥ २२ ॥ गच्छंतीति गमाः । पचाद्यच् । शैलद्रुमपुर इति द्वितीयाबहुवचनांतम् । तान् गच्छंति तथाभूत्वा सलिलम् विसृज्य
परिशांताः ॥ २३ ॥ नीलोत्पलदलश्यामा इति पयोधरविशेषणम् । अहं त्वशांतकामवेग इति व्यंग्यम् । एवमग्रेप्यूह्यम् ॥ २४ ॥ वृष्टिसहितवाताः समुद्यता अपि विरताः ॥ २५ ॥ २६ ॥ महामेघैर
भिवृष्टा अतएव निर्मलाः ॥ २७ ॥ श्रियं विभज्येति । शाखाप्रभालीलासु त्रिधा विभागं कृत्वेत्यर्थः ॥ २८ ॥ अनेकपदार्थाश्रयाश्चित्राः शोभा यस्याः सा अग्रहस्ताः प्रथमविसृतकिरणाः ॥ २९ ॥

पवनमनुसरति तच्छीलः विनेष्यन् जलं शोषयन् । शरत्काल इति शेषः । मत्तद्विपानां दर्पमधिकं कुर्वन् विभाति ॥ ३० ॥ मानससरस्तः स्वेन सहाभ्यागतैश्चक्रवाकैः सह क्रीडंति ॥ ३१ ॥ ३२ ॥ विमुक्तं त्यक्तं बर्हरूपमाभरणं यैः अरक्ताः रागरहिताः ॥ ३३ ॥ प्रियकैरसनवृक्षैः ॥ ३४ ॥ कुसुमोद्गतानां सप्तच्छदकुसुमाघ्राणप्रवृत्तानाम् । उद्गतानामित्येव पांक्तः पाठः । उद्धतानामिति कल्पित इति कतक कृतः । मदोत्कटा अधिकमदा अतएव मदलालसाः मदशब्देन तज्जन्यः कामभोगस्तत्रेच्छावंतः ॥ ३५ ॥ शस्त्रवदुत्तेजितासिवद्विधौतो विमलो वर्णो नैल्यं यस्य तत् । कह्लारशीताः कह्लाराश्च शीताश्चेत्यर्थः

सप्तच्छदानांकुसुमोपगंधीषट्पादवृंदैरनुगीयमानः ॥ मत्तद्विपानांपवनानुसारीदर्पंविनेष्यन्नधिकंविभाति ॥ ३० ॥ अस्यागतैश्चारुविशालपक्षैः स्मरप्रियैःपद्मरजोवकीर्णैः ॥ महानदीनांपुलिनोपयातैःक्रीडंतिहंसाःसहचक्रवाकैः ॥ ३१ ॥ मदप्रगल्भेषुचवारणेषुगवांसमूहेषुचदर्पितेषु ॥ प्रसन्नतोयासुचनिम्नगासुविभातिलक्ष्मीर्बहुधाविभक्ता ॥ ३२ ॥ नभःसमीक्ष्यांबुधरैर्विमुक्तंविमुक्तबर्हाभरणावनेषु ॥ प्रियासुरक्ताविनिवृत्तशोभागतोत्सवाध्यानपरामयूराः ॥ ३३ ॥ मनोज्ञगंधैःप्रियकैरनल्पैःपुष्पाग्रभारावनताग्रशाखैः ॥ सुवर्णगौरैर्नयनाभिरामैरुद्योतितानीववनांतराणि ॥ ३४ ॥ प्रियान्वितानांनलिनीप्रियाणांवनप्रियाणांकुसुमोद्गतानाम् ॥ मदोत्कटानांमदलालसानांगजोत्तमानांगतयोऽद्यमंदाः ॥ ३५ ॥ व्यक्तंनभःशस्त्रविधौतवर्णंकृशप्रवाहानिनदीजलानि ॥ कह्लारशीताःपवनाःप्रवांतितमोविमुक्ताश्चदिशःप्रकाशाः ॥ ३६ ॥ सूर्यातपक्रामणनष्टपंकाभूमिश्चिरोद्घाटितसांद्ररेणुः ॥ अन्योन्यवैरेणसमायुतानामुद्योगकालोऽद्यनराधिपानाम् ॥ ३७ ॥ शरद्गुणाप्यायितरूपशोभाःप्रहर्षिताःपांसुसमुत्थितांगाः ॥ मदोत्कटाःसंप्रतियुद्धलुब्धावृषागवांमध्यगतानदंति ॥ ३८ ॥ समन्मथातीव्रतरानुरागाकुलान्वितामंदगतिःकरेणूः ॥ मदान्वितंसंपरिवार्ययांतंवनेषुभर्तारमनुप्रयाति ॥ ३९ ॥ त्यक्त्वावराण्यात्मविभूषितानिवर्हाणितीरोपगतानदीनाम् ॥ निर्भर्त्स्यमानाइवसारसौघैःप्रयांतिदीनाविमनामयूराः ॥ ४० ॥ वित्रास्यकारंडवचक्रवाकान्महारवैर्भिन्नकटागजेंद्राः ॥ सरस्सुबुद्धांबुजभूषणेषुविक्षोभ्यविक्षोभ्यजलंपिबंति ॥ ४१ ॥ व्यपेतपंकासुसवालुकासुप्रसन्नतोयासुसगोकुलासु ॥ ससारसारावविनादितासुनदीषुहंसानिपतंतिहृष्टाः ॥ ४२ ॥ नदीघनप्रस्रवणोदकानामतिप्रवृद्धानिलबर्हिणानाम् ॥ प्लवंगमानांचगतोत्सवानांध्रुवंरवाःसंप्रतिसंप्रणष्टाः ॥ ४३ ॥ अनेकवर्णाःसुविनष्टकायानवोदितेष्वंबुधरेषुनष्टाः ॥ क्षुधार्दिताघोरविषाबिलेभ्यश्चिरोषिताविप्रसरंतिसर्पाः ॥ ४४ ॥

॥ ३६ ॥ सूर्यातपस्य क्रामणं संबंधः चिरेणोद्घाटितः प्रकाशितः सांद्रो रेणुर्यया । अनेन शरदुत्तरार्धकालोयमिति ज्ञायते ॥ ३७ ॥ आप्यायिते वर्धिते रूपशोभे येषाम् पांसुसमुत्थितांगाः पांसुयुक्तांगाः ॥ ३८ ॥ समन्मथत्वादिविशेषणचतुष्टयं करेण्वाः करेणूरिति दीर्घत्वमार्षम् ॥ ३९ ॥ विभूषितं विभूषणम् विमनाः मयूराः । मनःपर्यायो मनशब्दः अकारांतोपि द्विरूपकोशात् ॥ ४० ॥ बुद्धांबुजानि विकसितकमलानि ॥ ४१ ॥ ससारसाश्च तास्तदारावविनादिताश्च तासु ॥ ४२ ॥ अतिप्रवृद्धानिलो महावायुः बर्हिणा मयूराः प्लवंगमा भेकाः ॥ ४३ ॥ अनेके वर्णा येषां ते नवोदितेष्वंबुधरेषु सुविनष्ट

कायाः सुतरां नष्टदेहयात्राः अतएव नष्टा मृतप्रायाः ॥ ४४ ॥ चंचतां शोभमानानां चंद्रकिरणानां स्पर्शेन यो हर्षस्तेनोन्मीलिता ईषत्प्रकाशितास्तारका नक्षत्राणि नेत्रकनीनिका च यया सा रागवती रक्तवर्णा अनुरक्ता च अंबरमाकाशं वस्त्रं च । समासोक्तिरलंकारः । कांतकरस्पर्शसुखादर्धोन्मीलितनयनायास्तदनुरागवशात् स्वतो विगलितवसनायाः कामुक्या वृत्तांतस्य संध्यायामारोपादिति बोध्यम् ॥ ४५ ॥ शशांकोदितेति । उदितशशांकेत्यर्थः । तारागणा एवोन्मीलितानि चारूणि नेत्राणि यस्याः सा ॥ ४६ ॥ शालिप्रसवा व्रीहयः मालेव नभः समाक्रामति ॥ ४७ ॥ सुप्तैकहंसमिति चंद्रप्रतिबिंबवत् ॥ ॥ ४८ ॥ प्रकीर्णा हंसा एवाकुला मेखला यासां वाप्युत्तमानाम् उत्तमवापीनाम् ॥ ४९ ॥ वेणुस्वररूपेण व्यंजितेन व्यक्तेन तूर्येण वाद्यघोषेण मिश्रः प्रत्यूषकाले प्रातःकाले अनिलेन संप्रवृत्तस्तत्संबंधेन

चंचच्चंद्रकरस्पर्शहर्षोन्मीलिततारका ॥ अहोरागवतीसंध्याजहातुस्वयमंबरम् ॥ ४५ ॥ रात्रिःशशांकोदितसौम्यवक्त्रातारागणोन्मीलितचारुनेत्रा ॥ ज्योत्स्नांशुकप्रावरणाविभातिनारीवशुक्लांशुकसंवृतांगी ॥ ४६ ॥ विपक्वशालिप्रसवानिभुक्त्वाप्रहर्षितासारसचारुपंक्तिः ॥ नभःसमाक्रामतिशीघ्रवेगावातावधूताग्रथितेवमाला ॥४७॥ सुप्तैकहंसंकुमुदैरुपेतंमहाह्रदस्थंसलिलंविभाति॥घनैर्विमुक्तंनिशिपूर्णचंद्रंतारागणाकीर्णमिवांतरिक्षम् ॥४८॥ प्रकीर्णहंसाकुलमेखलानांप्रबुद्धपद्मोत्पलमालिनीनाम् ॥ वाप्युत्तमानामधिकाद्यलक्ष्मीर्वरांगनानामिवभूषितानाम् ॥ ४९ ॥ वेणुस्वरव्यंजिततूर्यमिश्रःप्रत्यूषकालेऽनिलसंप्रवृत्तः ॥ संमूर्च्छितोगह्वरगोवृषाणामन्योन्यमापूरयतीवशब्दः ॥ ५० ॥ नवैर्नदीनांकुसुमप्रहासैर्व्याधूयमानैर्मृदुमारुतेन ॥ धौतामलक्षौमपटप्रकाशैःकूलानिकाशैरुपशोभितानि ॥ ५१ ॥ वनप्रचंडामधुपानशौंडाःप्रियान्विताःषट्चरणाःप्रहृष्टाः ॥ वनेषुमत्ताःपवनानुयात्रांकुर्वंतिपद्मासनरेणुगौराः ॥ ५२ ॥ जलंप्रसन्नंकुसुमप्रहासंक्रौंचस्वनंशालिवनंविपक्वम् ॥ मृदुश्चवायुर्विमलश्चचंद्रःशंसंतिवर्षव्यपनीतकालम् ॥ ५३ ॥ मीनोपसंदर्शितमेखलानांनदीवधूनांगतयोद्यमंदाः ॥ कांतोपभुक्तालसगामिनीनांप्रभातकालेष्विवकामिनीनाम् ॥ ५४ ॥ सचक्रवाकानिसशैवलानिकाशैर्दुकूलैरिवसंवृतानि ॥ सपत्ररेखाणिसरोचनानिवधूमुखानीवनदीमुखानि ॥ ५५ ॥ प्रफुल्लबाणासनचित्रितेषुप्रहृष्टषट्पादनिकूजितेषु ॥ गृहीतचापोद्यतदंडचंडःप्रचंडचापोऽद्यवनेषुकामः ॥ ५६ ॥

जातः संमूर्च्छितो व्याप्तो गह्वराणां गिरिगह्वराणां गोवृषाणां च वनवर्तिनां शब्दोन्योन्यमापूरयतीव वर्धयतीव । गह्वरगोवृषशब्दाः साजात्यात्परस्परवर्धका इत्यर्थः । गह्वरगोवृषाणामिति पाठः ॥ ५० ॥ नदीनां कूलानि मृदुमारुतेन व्याधूयमानैः कंपितैः कुसुमप्रहासैः कुसुमविकासैर्युतैः काशैरुपशोभितानि ॥ ५१ ॥ प्रचंडाः प्रगल्भाः शौंडा मत्ताः पद्मानामसनपुष्पाणां च रेणुभिर्गौराः पीताः पवनानुयात्रां कुर्वंति गंधलोभादिति भावः ॥ ५२ ॥ कुसुमरूपः प्रहासो यस्य तं शालिवनं शालिसमूहः वर्षस्य व्यपनीतं व्यपनयो यस्मिंस्तं कालम् ॥ ५३ ॥ मीना एवोपसंदर्शिता मेखला यासाम् ॥ ५४ ॥ चक्रवाकशैवलकाशाः रोचना पत्ररेखा दुकूलस्थानीयाः ॥ ५५ ॥ सप्तम्यंते वनविशेषणे वनेष्विति शेषः । गृहीतेन चापेनोद्यते आरब्धे विरहिविषयके दंडे चंडः प्रचंडः प्रचंडश्चापो यस्य सः इदं हेतुगर्भम् ॥५६॥

॥ ५७ ॥ दर्शयंतीति पद्ये समासोक्तिः स्पष्टैव व्यंग्या ॥ ५८ ॥ ५९ ॥ ६० ॥ यात्रा यात्राकाल इत्यर्थः तथाविधं यात्रोपयोगिनमुद्योगं च तस्य न पश्यामीत्यनुकर्षः ॥ ६१ ॥ श्यामास्त
मालाः ॥ ६२ ॥ ६३ ॥ चत्वार इति यद्यपि चतुर्थो मासो विद्यत एव तथापि तत्रोद्योगाभावेन तस्यापि गतप्रायत्वाद्गता इत्युक्तिः ॥ ६४ ॥ का सा सीता तत्राह चक्रेति । या विषमं दंडकारण्याख्यं
वनमुद्यानमिव ज्ञात्वा चक्रवाकी भर्तारमिव मां पृष्ठतोऽनुगता ॥ ६५ ॥ ६६ ॥ कृपाया अकरणे हेतुमुन्नयति अनाथ इति । दूरग्रह इति पाठे दूरवर्तिस्त्रीविषयो ग्रहो रावणोभिनिवेशो वा यस्येत्यर्थः ॥ ६७ ॥

लोकंसुवृष्ट्यापरितोषयित्वानदीस्तटाकानिचपूरयित्वा ॥ निष्पन्नसस्यांवसुधांचकृत्वात्यक्त्वानभस्तोयधराःप्रणष्टाः ॥ ५७ ॥ दर्शयंतिशरन्नद्यःपु
लिनानिशनैःशनैः ॥ नवसंगमसव्रीडाजघनानीवयोषितः ॥ ५८ ॥ प्रसन्नसलिलाःसौम्यकुरराभिविनादिताः ॥ चक्रवाकगणाकीर्णाविभांतिस
लिलाशयाः ॥ ५९ ॥ अन्योन्यबद्धवैराणांजिगीषूणांनृपात्मज ॥ उद्योगसमयःसौम्यपार्थिवानामुपस्थितः ॥ ६० ॥ इयंसाप्रथमायात्रापार्थिवानां
नृपात्मज ॥ नचपश्यामिसुग्रीवमुद्योगंचतथाविधम् ॥ ६१ ॥ असनाःसप्तपर्णाश्चकोविदाराश्चपुष्पिताः ॥ दृश्यंतेबंधुजीवाश्चश्यामाश्चगिरिसानुषु
॥ ६२ ॥ हंससारसचक्राह्वैःकुररैश्चसमंततः ॥ पुलिनान्यवकीर्णानिनदीनांपश्यलक्ष्मण ॥ ६३ ॥ चत्वारोवार्षिकामासागतावर्षशतोपमाः ॥ ममशो
काभितप्तस्यतथासीतामपश्यतः ॥ ६४ ॥ चक्रवाकीवभर्तारंपृष्ठतोऽनुगतावनम् ॥ विषमंदंडकारण्यमुद्यानमिवचांगना ॥ ६५ ॥ प्रियाविहीनेदुः
खार्तेहृतराज्येविवासिते ॥ कृपांनकुरुतेराजासुग्रीवोमयिलक्ष्मण ॥ ६६ ॥ अनाथोहृतराज्योऽयंरावणेनचधर्षितः ॥ दीनोदूरगृहःकामीमांचैवशरणं
गतः ॥ ६७ ॥ इत्येतैःकारणैःसौम्यसुग्रीवस्यदुरात्मनः ॥ अहंवानरराजस्यपरिभूतःपरंतपः ॥ ६८ ॥ सकालंपरिसंख्यायसीतायाःपरिमार्गणे ॥
कृतार्थःसमयंकृत्वादुर्मतिर्नावबुध्यते ॥ ६९ ॥ सकिष्किंधांप्रविश्यत्वंब्रूहिवानरपुंगवम् ॥ मूर्खंग्राम्यसुखेसक्तंसुग्रीवंवचनान्मम ॥ ७० ॥ अर्थिनामु
पपन्नानांपूर्वंचाप्युपकारिणाम् ॥ आशांसंश्रुत्ययोहंतिसलोकेपुरुषाधमः ॥ ७१ ॥ शुभंवायदिवापापंयोहिवाक्यमुदीरितम् ॥ सत्येनपरिगृह्णातिसवीरः
पुरुषोत्तमः ॥ ७२ ॥ कृतार्थाह्यकृतार्थानांमित्राणांनभवंतिये ॥ तान्मृतानपिक्रव्यादाःकृतघ्नान्नोपभुञ्जते ॥ ७३ ॥ नूनंकांचनपृष्ठस्यविकृष्टस्यमया
रणे ॥ द्रष्टुमिच्छसिचापस्यरूपंविद्युद्गणोपमम् ॥ ७४ ॥ घोरंज्यातलनिर्घोषंक्रुद्धस्यममसंयुगे ॥ निर्घोषमिववज्रस्यपुनःसंश्रोतुमिच्छसि ॥ ७५ ॥
काममेवंगतेयस्यपरिज्ञातेपराक्रमे ॥ त्वत्सहायस्यमेवीरनचिंतास्यान्नृपात्मज ॥ ७६ ॥

वानरराजस्य वानरराजेन । शेषे षष्ठी ॥ ६८ ॥ परिसंख्याय गणयित्वा न बुध्यते समयमिति शेषः ॥ ६९ ॥ ७० ॥ उपपन्नानां बलवीर्यादियुक्तानाम् आशामभिमतार्थविषयां संश्रुत्य प्रतिज्ञाय ॥ ७१ ॥
सत्येनामोघतया ॥ ७२ ॥ न भवंति कार्यायेति शेषः । क्रव्यादाः श्वादयः ॥ ७३ ॥ ७४ ॥ संश्रोतुमिच्छसीत्युत्तरमिति सुग्रीवं ब्रूहीति संबंधः ॥ ७५ ॥ एवंगते इत्यस्य विवरणं पराक्रमे परिज्ञाते इति ।

त्वत्सहायस्य मे पराक्रमे ज्ञातेऽप्यस्य सुग्रीवस्य चिंता वालिवन्मामपि मारयिष्यतीति । चिंता कामं न स्यादित्याश्चर्यमिति भावः ॥ ७६ ॥ यदर्थं सीतान्वेषणार्थमयमारंभः एतत्सख्यरूपः कृतस्तद्विषयं समय कृतार्थो निष्पन्नस्वप्रयोजनो नाभिजानाति न स्मरति ॥ ७७ ॥ वर्षाः वर्षोत्तरकालं समयंकालं संकेतविषयं कालं प्रतिज्ञाय व्यतीतान्व्यतीतप्रायान् ॥ ७८ ॥ पानं मद्यपानम् ॥ ७९ ॥ उच्यतामित्युक्तम् । किं वक्तव्यमित्यतआह यद्रूपमिति । मम रोषस्य यद्रूपमुचितामिति शेषः । तद्ब्रूया इदं वचश्च ब्रूयाः ॥ ८० ॥ तद्वच आह नेति । समये तिष्ठ समयं मा हासीरित्यर्थः ॥ ८१ ॥ ८२ ॥ एवं तेन विहिते कार्ये यद्धितमस्माकं तस्य च तत्तद्ब्रूहि त्वराहेतुः कालव्यतिक्रमः जायते इति शेषः ॥ ८३ ॥ उपदेशसंक्षेपः कुरुष्वेति प्रेतगतः प्रेतत्वं प्राप्तः यमक्षये यमगृहे मा वालिनं पश्येः मम शरैश्चोदितः प्रेरितः

यदर्थमयमारंभःकृतःपरपुरंजय ॥ समयंनाभिजानातिकृतार्थःप्लवगेश्वरः ॥ ७७ ॥ वर्षासमयकालंतुप्रतिज्ञायहरीश्वरः ॥ व्यतीतांश्चतुरोमासा न्विहरन्नाववुध्यते ॥७८॥ सामात्यपरिषत्क्रीडन्पानमेवोपसेवते ॥ शोकदीनेषुनास्मासुसुग्रीवःकुरुतेदयाम् ॥ ७९ ॥ उच्यतांगच्छसुग्रीवस्त्वयावी रमहाबल ॥ ममरोषस्ययद्रूपंब्रूयाश्चैनमिदंवचः॥ ८० ॥ नससंकुचितःपंथायेनवालीहतोगतः ॥ समयेतिष्ठसुग्रीवमावालिपथमन्वगाः ॥ ८१ ॥ एक एवरणेवालीशरेणनिहतोमया ॥ त्वांतुसत्यादतिक्रांतंहनिष्यामिसबांधवम् ॥ ८२ ॥ यदेवंविहितेकार्येयद्धितंपुरुषर्षभ ॥ तत्तद्ब्रूहिनरश्रेष्ठत्वराकाल व्यतिक्रमः ॥ ८३ ॥ कुरुष्वसत्यंममवानरेश्वरप्रतिश्रुतंधर्ममवेक्ष्यशाश्वतम् ॥ मावालिनंप्रेतगतोयमक्षयेत्वमद्यपश्येर्ममचोदितःशरैः ॥ ८४ ॥ सपू र्वजंतीव्रविवृद्धकोपंलालप्यमानंप्रसमीक्ष्यदीनम् ॥ चकारतीव्रांमतिमुग्रतेजाहरीश्वरेमानववंशवर्धनः ॥ ८५ ॥ इत्यार्षेश्रीम० वा०आदि० किष्किं० त्रिंशः सर्गः ॥ ३० ॥ सकामिनंदीनमदीनसत्त्वंशोकाभिपन्नंसमुदीर्णकामम् ॥ नरेंद्रसूनुर्नरदेवपुत्रंरामानुजःपूर्वजमित्युवाच ॥ १ ॥ नवानरःस्थास्य तिसाधुवृत्तेनमन्यतेकर्मफलानुषंगान् ॥ नभोक्ष्यतेवानरराज्यलक्ष्मींतथाहिनातिक्रमतेऽस्यबुद्धिः ॥ २ ॥ मतिक्षयाद्ग्राम्यसुखेषुसक्तस्तवप्रसादात्प्र तिकारबुद्धिः ॥ हतोऽग्रजंपश्यतुवीरवालिनंनराज्यमेवंविगुणस्यदेयम् ॥ ३ ॥ नधारयेकोपमुदीर्णवेगंनिहन्मिसुग्रीवमसत्यमद्य ॥ हरिप्रवीरैःसहवा लिपुत्रोनरेंद्रपुत्र्याविचयंकरोतु ॥ ४ ॥ तमात्तबाणासनमुत्पतंतंनिवेदितार्थंरणचंडकोपम् ॥ उवाचरामःपरवीरहंतास्ववीक्षितंसानुनयंचवाक्यम् ॥५॥

प्रेतत्वायेति शेषः इति ब्रूहीत्यन्वयः ॥ ८४ ॥ मानववंशवर्धनो लक्ष्मणः ॥ ८५ ॥ मंत्रमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे त्रिंशः सर्गः ॥ ३० ॥ स लक्ष्मणः ॥ १ ॥ साधुवृत्ते साधूनां वृत्ते स्थिरस्नेहतालक्षणे कर्मणा जनितान्फलानुषंगानकंटकराज्यभोगसंबंधान्न मन्यते सख्यमूलानिति शेषः । अतएव वानरराज्यलक्ष्मीं न भोक्ष्यते । हि यस्मात्तस्मात्तथा तत्प्रकाराऽस्य बुद्धिः प्रेमपरिपालने अति अत्यंतं न क्रमते । तथाहि नातिक्रमत इति पाठः पांक्तः ॥ २ ॥ तत्र हेतुमाह मतिक्षयादिति । मतिक्षये हेतुस्तव प्रसादाः अतस्तस्य प्रतिकारबुद्धिः प्रत्युपकारबु द्धिर्न वर्तत इति शेषः न देयं दत्तं नानुपालनीयमित्यर्थः ॥ ३ ॥ न धारये धारयितुं न शक्नोमि वालिपुत्रोंगदः विचयमन्वेषणम् सुग्रीवं हत्वा तस्मै राज्यसमर्पणादितिं भावः ॥ ४ ॥ निवेदितार्थं विज्ञापि

तत्सुग्रीववधप्रवृत्तिम् स्वयं वीक्षितं सुष्ठु अवीक्षितं समयोचितम् ॥ ५ ॥ त्वद्विधः धर्मज्ञः पापं मित्रवधाध्यवसायरूपम् आर्येण सम्यग्विवेकेन ॥ ६ ॥ इदं मित्रघातरूपं वस्तु न ग्राह्यं न निश्चेयम् साधुवृत्तं सा धुत्वं तेन । ता पूर्वकृतां प्रीतिं अनुवर्तस्व सुग्रीवे इति शेषः । पूर्ववृत्तं संगतं च सख्यं च स्मरेति शेषः ॥ ७ ॥ कालपर्यये कालातिक्रमे व्यतीतं अतिक्रममेव कालोतिक्रांत इत्येव वक्तुमर्हसि नापरं किंचिदि त्यर्थः ॥ ८ ॥ अग्रजेन रामेण ॥ ९ ॥ भवनं प्रति जगाम संरब्धः नाटितकालातिक्रमजकोपः ॥ १० ॥ कालांतकोपमं कालादिवद्भयंकरम् सानुमान्मंदर इव जगामेत्यन्वयः ॥ ११ ॥ यथोक्तकारी रामस्येति शेषः वचनं सुग्रीवं प्रति स्वेन वक्तव्यम् उत्तरं तदुपारि सुग्रीवेण वक्तव्यम् सोत्तरं तदुपरि स्ववक्तव्योत्तरसहितम् मत्वा आलोच्य ॥ १२ ॥ भ्रातू रामस्य यः कामो मनोरथस्तज्जन्यो यः क्रोधस्तद्विघातजन्यः

नहिवैत्वद्विधोलोकेपापमेवंसमाचरेत् ॥ कोपमार्येणयोहंतिसवीरःपुरुषोत्तमः ॥ ६ ॥ नेदमत्रत्वयाग्राह्यंसाधुवृत्तेनलक्ष्मण ॥ तांप्रीतिमनुवर्तस्वपूर्व वृत्तंचसंगतम् ॥ ७ ॥ सामोपहितयावाचारूक्षाणिपरिवर्जयन् ॥ वक्तुमर्हसिसुग्रीवंव्यतीतंकालपर्यये ॥ ८ ॥ सोऽग्रजेनानुशिष्टार्थोयथावत्पुरुषर्षभः ॥ प्रविवेशपुरींवीरोलक्ष्मणःपरवीरहा ॥ ९ ॥ ततःशुभमतिःप्राज्ञोभ्रातुःप्रियहितेरतः ॥ लक्ष्मणःप्रतिसंरब्धोजगामभवनंकपेः ॥ १० ॥ शक्रबाणासन प्रख्यंधनुःकालांतकोपमम् ॥ प्रगृह्यगिरिशृंगाभंमंदरःसानुमानिव ॥ ११ ॥ यथोक्तकारीवचनमुत्तरंचैवसोत्तरम् ॥ बृहस्पतिसमोबुद्ध्यामत्वारामानु जस्तदा ॥ १२ ॥ कामक्रोधसमुत्थेनभ्रातुःक्रोधाग्निनावृतः ॥ प्रभंजनइवाप्रीतःप्रययौलक्ष्मणस्ततः ॥ ॥ १३ ॥ सालतालाश्वकर्णांश्चतरसापातयन्ब लात् ॥ पर्यस्यन्गिरिकूटानिद्रुमानन्यांश्चवेगितः ॥ १४ ॥ शिलाश्चशकलीकुर्वन्पद्भ्यांगजइवाशुगः ॥ दूरमेकपदंत्यक्त्वाययौकार्यवशाद्द्रुतम् ॥ १५ ॥ तामपश्यद्बलाकीर्णांहरिराजमहापुरीम् ॥ दुर्गामिक्ष्वाकुशार्दूलःकिष्किंधांगिरिसंकटे ॥ १६ ॥ रोषात्प्रस्फुरमाणोष्ठःसुग्रीवंप्रतिलक्ष्मणः ॥ ददर्श वानरान्भीमान्किष्किंधायांबहिश्चरान् ॥ १७ ॥ तंदृष्ट्वावानराःसर्वेलक्ष्मणंपुरुषर्षभम् ॥ शैलशृंगाणिशतशःप्रवृद्धांश्चमहीरुहान् ॥ जगृहुःकुंजरप्र ख्यावानराःपर्वतांतरे ॥ १८ ॥ तान्गृहीतप्रहरणान्सर्वान्दृष्ट्वातुलक्ष्मणः ॥ बभूवद्विगुणंक्रुद्धोबह्विंधनइवानलः ॥ १९ ॥ तंतेभयपरीतांगाःक्षुब्धं दृष्ट्वाप्लवंगमाः ॥ कालमृत्युयुगांताभंशतशोविद्रुतादिशः ॥ २० ॥ ततःसुग्रीवभवनंप्रविश्यहरिपुंगवाः ॥ क्रोधमागमनंचैवलक्ष्मणस्यन्यवेदयन् ॥ २१ ॥ तारयासहितःकामीसक्तःकपिवृषस्तदा ॥ नतेषांकपिसिंहानांशुश्राववचनंतदा ॥ २२ ॥ ततःसचिवसंदिष्टाहरयोरोमहर्षणाः ॥ गिरिकुंजरमेघाभा नगरान्निर्ययुस्तदा ॥ २३ ॥

क्रोधस्तत्समुत्थेन तज्जन्येन क्रोधाग्निना वृतः अत एवाप्रीतः प्रभंजनो वायुरिव वेगेन प्रययौ ॥ १३ ॥ तरसा उरुवेगेन पर्यस्यन्क्षिपन् वेगितः संजातवेगः ॥ १४ ॥ एकपदं एकैकपदम् दूरं यथा भवति तथा त्यक्त्वा कार्यवशात् द्रुतं ययौ ॥ १५ ॥ बलाकीर्णे वानरसेनाव्याप्ताम् गिरिसंकटे भूधरमध्ये वर्तमानाम् ॥ १६ ॥ १७ ॥ क्रुद्धलक्ष्मणदर्शनेन भीत्या शैलशृंगादिग्रहो वानराणाम् ॥ १८ ॥ द्विगुणं क्रुद्धः मां दृष्ट्वेमे प्रणामं त्यक्त्वा प्रहरणं गृह्णंतीति कोपद्वैगुण्यम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ततः सचिवसंदिष्टाः सुग्रीवं बोधयित्वा तदनुमत्या लक्ष्मणोऽस्माभिर्यावत्प्रवेश्यते तावद्धठाल्लक्ष्मणप्रवेशं निरुंधा

नास्तिष्ठत इत्येवं सचिवैर्हनूमदादिभिः संदिष्टा हरयो नगरान्निर्ययुः ॥ २३ ॥ विकृतदर्शना भीमदर्शनाः विवृतदर्शनाः प्रकटदर्शनाः ॥ २४ ॥ दशगुणोत्तराः शतनागबला इत्यर्थः नागसहस्रस्य तुल्यवर्चसः नागसहस्रतेजस्तुल्यतेजसः ॥ २५ ॥ दुरासदामपश्यदित्यन्वयः ॥ २६ ॥ प्राकाराद्बहिर्वर्तिनी परिखा तदंतरात्तदवधेरपि बहिर्निष्क्रम्य आविष्कृतं प्रकटितं यथा तथा तस्थुः ॥ २७ ॥ प्रमादं च चाद्यानरम तिरोधं च पूर्वजस्य रामस्यार्थं च दृष्ट्वा विचार्य ॥ २८ ॥ दीर्घ उष्णो महानुच्छ्वासो यस्य ॥ २९ ॥ बाणस्य शल्यमेव स्फुरंती जिह्वा यस्य सः सायकासनं धनुरेव भोगो यस्य स्वतेजोरूपविषेण संभूतो व्याप्तः ॥ ३० ॥ विषादमगमत् एतावत्पर्यंतं रामकार्यं न चिंतितमिति विषादः ॥ ३१ ॥ इत्युत एवंप्रकारेणेत्यर्थः ॥ ३२ ॥ तं प्रकारं दर्शयति एष इति ॥ ३३ ॥ इदमुक्तं मम वाक्यं तस्मै इति उक्तप्रकारेण

नखदंष्ट्रायुधाःसर्वेवीराविकृतदर्शनाः ॥ सर्वेशार्दूलदंष्ट्राश्चसर्वेविवृतदर्शनाः ॥ २४ ॥ दशनागबलाःकेचित्केचिद्दशगुणोत्तराः ॥ केचिन्नागसहस्रस्यबभूवुस्तुल्यवर्चसः ॥ २५ ॥ ततस्तैःकपिभिर्व्याप्तांद्रुमहस्तैर्महाबलैः ॥ अपश्यल्लक्ष्मणःक्रुद्धःकिष्किंधांतांदुरासदाम् ॥ २६ ॥ ततस्तेहरयःसर्वेप्राकारपरिखांतरात् ॥ निष्क्रम्योदग्रसत्त्वास्तुतस्थुराविष्कृतंतदा ॥ २७ ॥ सुग्रीवस्यप्रमादंचपूर्वजस्यार्थमात्मवान् ॥ दृष्ट्वाक्रोधवशंवीरःपुनरेवजगामसः ॥ २८ ॥ सदीर्घोष्णमहोच्छ्वासःकोपसंरक्तलोचनः ॥ बभूवनरशार्दूलःसधूमइवपावकः ॥ २९ ॥ बाणशल्यस्फुरज्जिह्वःसायकासनभोगवान् ॥ स्वतेजोविषसंभूतःपंचास्यइवपन्नगः ॥ ३० ॥ तंदीप्तमिवकालाग्निंनागेंद्रमिवकोपितम् ॥ समासाद्यांगदस्त्रासाद्विषादमगमत्परम् ॥ ३१ ॥ सोंगदंरोषताम्राक्षःसंदिदेशमहायशाः ॥ सुग्रीवःकथ्यतांवत्समामागमनमित्युत ॥ ३२ ॥ एषरामानुजःप्राप्तस्त्वत्सकाशमरिंदम ॥ भ्रातुर्व्यसनसंतप्तोद्वारितिष्ठतिलक्ष्मणः ॥ ३३ ॥ तस्यवाक्यंयदिरुचिःक्रियतांसाधुवानरः ॥ इत्युक्त्वाशीघ्रमागच्छवत्सवाक्यमरिंदम ॥ ३४ ॥ लक्ष्मणस्यवचःश्रुत्वाशोकाविष्टोऽङ्गदोब्रवीत् ॥ पितुःसमीपमागम्यसौमित्रिरयमागतः ॥३५॥ अथांगदस्तस्यसुतीव्रवाचासंभ्रांतभावःपरदीनवक्त्रः ॥ निर्गत्यपूर्वंनृपतेस्तरस्वीततोरुमायाश्चरणौववंदे ॥ ३६ ॥ संगृह्यपादौपितुरुग्रतेजाजग्राहमातुःपुनरेवपादौ ॥ पादौरुमायाश्चनिपीडयित्वानिवेदयामासततस्तदर्थम् ॥ ३७ ॥ सनिद्राक्लांतसंवीतोवानरोनविबुद्धवान् ॥ बभूवमदमत्तश्चमदनेनचमोहितः ॥ ३८ ॥ ततःकिलकिलांचक्रुर्लक्ष्मणंप्रेक्ष्यवानराः ॥ प्रसादयंतस्तंक्रुद्धंभयमोहितचेतसः ॥३९॥ तेमहौघनिभंदृष्ट्वावज्राशनिसमस्वनम् ॥ सिंहनादंसमंचक्रुर्लक्ष्मणस्यसमीपतः ॥ ४० ॥

उक्त्वा स वानरः सुग्रीवः साधु साधुकारी यथा भवति तथा क्रियतां अनंतरं तस्यास्मासु यदि रुचिर्भवति तदा तस्य वाक्यं श्रुत्वा शीघ्रमागच्छ ॥ ३४ ॥ ३५ ॥ लक्ष्मणस्येतिश्लोकेन संक्षिप्योक्तस्यार्थस्य विस्तरोऽथेति । संभ्रांतभावः संभ्रांतचित्तः परदीनवक्त्रः परमतिशयेन दीनं वक्त्रं यस्य सः । परिदीनेति पाठांतरम् । निर्गत्य लक्ष्मणसन्निहितदेशात्पराङ्वृत्येर्थः । पूर्वं नृपतेस्ततो रुमायाः इदमुपलक्षणं तारायाश्चरणौ वित्यन्वयः ॥ ३६ ॥ तदेव विस्तारयति संगृह्येति । मातुस्तारायाः ॥ ३७ ॥ निद्रया क्लांतः संवीतो व्याप्तश्चेत्यर्थः न विबुद्धवान् तन्नर्ति तद्वचनं चेत्यर्थः । यतो मदनेन मोहितो मदमत्तश्च बभूवासीत् ॥ ३८ ॥ ततः अंगदस्य सुग्रीवसमीपगमनानंतरम् । वानराणां भयक्रोधादिजः शब्दसमूहः किलकिला । तं लक्ष्मणम् ॥ ३९ ॥ ते लक्ष्मणं दृष्ट्वा महौघनिभं तच्छब्दसदृशशब्दं वज्रादिसदृशशब्दं च समं सह

सिंहनादं चक्रुः सुग्रीवोद्बोधनायेति शेषः ॥ ४०॥४१ ॥ अथेति । वानरशब्देन प्रबुद्धस्य वानरेंद्रस्य सुग्रीवस्य समीपमंगदवचः श्रुत्वा तेनांगदेनैव सह मंत्रिणौ वानरेंद्रस्य समीपमागतौ संमतौ च तावुदारदर्शनौ च संमतोदारदर्शनौ ॥ ४२ ॥ कौ तौ तत्राह यक्ष इत्यादि । अर्थधर्मयोर्विषये उच्चावचं स्वराज्ञे वक्तुं प्राप्तं लक्ष्मणं शशंसतुः ॥ ४३ ॥ सार्थनिश्चितैः अर्थनिश्चयसहितैर्वचनैः प्रसादयित्वा शशंसतुरित्यन्वयः ॥४४॥ राज्यार्हौ त्रिलोकीराज्यार्हौ । राज्यदायिनौ तवेति शेषः । मनुष्यभावं प्राप्ताविल्यनेन वस्तुतो न मनुष्याविति सूचितम् ॥ ४५ ॥ यस्य भीताः यस्माद्भीताः ॥ ४६ ॥ वाक्यं रामवाक्यं सारथिर्यस्य व्यवसायः कर्तव्यार्थनिश्चयः स रथो यस्य ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ धर्मात्मा वदतीति शेषः । सत्यमतिश्रवः सत्यप्रतिज्ञः ॥ ५१ ॥ कर्णमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके

तेनशब्देनमहताप्रत्यबुद्ध्यतवानरः ॥ मदविह्वलताम्राक्षोव्याकुलःस्रग्विभूषणः ॥ ४१ ॥ अथांगदवचःश्रुत्वातेनैवचसमागतौ ॥ मंत्रिणौवानरेंद्रस्यसंमतोदारदर्शनौ ॥ ४२ ॥ यक्षश्चैवप्रभावश्चमंत्रिणावर्थधर्मयोः ॥ वक्तुमुच्चावचंप्राप्तंलक्ष्मणंतौशशंसतुः ॥ ४३ ॥ प्रसादयित्वासुग्रीवंवचनैःसार्थनिश्चितैः ॥ आसीनंपर्युपासीनौयथाशक्रंमरुत्पतिम् ॥ ४४ ॥ सत्यसंधौमहाभागौभ्रातरौरामलक्ष्मणौ ॥ मनुष्यभावंसंप्राप्तौराज्यार्हौराज्यदायिनौ ॥ ४५ ॥ तयोरेकोधनुष्पाणिर्द्वारितिष्ठतिलक्ष्मणः ॥ यस्यभीताःप्रवेपंतोनादान्मुंचंतिवानराः ॥ ४६ ॥ सएषराघवभ्रातालक्ष्मणोवाक्यसारथिः ॥ व्यवसायरथःप्राप्तस्तस्यरामस्यशासनात् ॥ ४७ ॥ अयंचतनयोराजंस्तारायादयितोंगदः ॥ लक्ष्मणेनसकाशंतेप्रेपितस्त्वरयानघ ॥ ४८ ॥ सोयंरोषपरीताक्षोद्वारितिष्ठतिवीर्यवान् ॥ वानरान्वानरपतेचक्षुषानिर्दहन्निव ॥ ४९ ॥ तस्यमूर्ध्नाप्रणामंत्वंसपुत्रःसहबांधवः ॥ गच्छशीघ्रंमहाराजरोषोह्यद्योपशाम्यताम् ॥ ५० ॥ यथाहिरामोधर्मात्मातत्कुरुष्वसमाहितः ॥ राजंस्तिष्ठस्वसमयेभवसत्यप्रतिश्रवः ॥ ५१ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकत्रिंशः सर्गः ॥३१॥ अंगदस्यवचःश्रुत्वासुग्रीवःसचिवैःसह ॥ लक्ष्मणंकुपितंश्रुत्वामुमोचासनमात्मवान् ॥ १ ॥ सचतानब्रवीद्वाक्यंनिश्चित्यगुरुलाघवम् ॥ मंत्रज्ञान्मंत्रकुशलोमंत्रेषुपरिनिष्ठितः ॥ २ ॥ नमेदुर्व्याहृतंकिंचिन्नापिमेदुरनुष्ठितम् ॥ लक्ष्मणोराघवभ्राताक्रुद्धःकिमितिचिंतये ॥ ३ ॥ असुहृद्भिर्ममामित्रैर्नित्यमंतरदर्शिभिः ॥ ममदोषानसंभूतान्श्रावितोराघवानुजः ॥ ४ ॥ अत्रतावद्यथाबुद्धिःसर्वैरेवयथाविधि ॥ भावस्यनिश्चयस्तावद्विज्ञेयोनिपुणंशनैः ॥ ५ ॥ नखल्वस्तिममत्रासोलक्ष्मणान्नापिराघवात् ॥ मित्रंत्वस्थानकुपितंजनयत्येवसंभ्रमम् ॥ ६ ॥

वाल्मीकीये आदिकाव्ये किष्किधाकांडे एकत्रिंशः सर्गः ॥ ॥ ३१ ॥ ॥ अंगदस्येति ॥ १ ॥ गुरुलाघवं गुरुत्वलघुत्वे इत्यर्थः ॥ २ ॥ दुर्व्याहृतं अनुचितवचनमुक्तम् । दुरनुष्ठितं अनुचितं कृत्यं कृतमिति शेषः ॥३॥ कोपकारणमुन्नयति असुहृद्भिरिति । असुहृदः शत्रवः । अमित्राः अपकारिणः । अंतरं छिद्रम् । असंभूतान् अनुत्पन्नान् । श्रावितो नूनमिति शेषः ॥४॥ अत्र लक्ष्मणकोपविषये तावत्प्रथमतः यथा तत्त्वात्मिका बुद्धिर्ज्ञानं यस्मिन्निश्चये स भावस्य कोपस्य निश्चयस्तात्त्विककोपनिमित्तस्य निश्चयो विज्ञेयः कर्त्तव्यः ॥५॥ त्रासो मदपराधमूल इति शेषः । कुतस्तर्हि त्रासोऽत आह मित्रमिति । अस्थानेऽकांडे वास्तवाप

राधाभावेपि रिपुकृतमिथ्योपजापेन कुपितं संजातकोपं मित्रं संभ्रमं भयं जनयत्येव ॥ ६ ॥ रिपुजोपजापपरिहारेण सख्यपालनं दुष्करमित्याह सर्वथेति । अल्पेपि उपजापे इति शेषः ॥ ७ ॥ अतोनिमित्तं अस्मा निमित्तात् । अथ स्वदोषशंकानिवृत्तये कृतज्ञतां मंत्रिभ्यो दर्शयति रामेण त्विति ॥ ८ ॥ अथ मुख्यमंत्री हनूमान्कोपनिमित्तं निश्चित्याह सुग्रीवेणेति । तर्को युक्तिः ॥ ९ ॥ अथ निश्चयं विवक्षुः स्वस्य गुणग्राहित्वरूपं मंत्रिलक्षणं प्रकटयति सर्वथेति ॥ १० ॥ उपकारमेवाह राघवेणेति । भयं वालिपराक्रमजं वालिनश्छलेन वधकृतं लोकापवादजं वा ॥ ११ ॥ प्रणयात्क्रुद्धः न तु त्वद्रिपूपजापत इत्यर्थः ॥ १२ ॥ प्रणयकोपस्यापि निमित्ताभासं दर्शयति त्वमिति । कालं प्रतिज्ञातं सीतान्वेषणकालम् । प्रवृत्ता प्रकर्षेण वृत्ता गतप्रायेति यावत् ॥ १३ ॥ १४ ॥ व्यक्तं ज्ञात्वेति शेषः ॥ १५ ॥ पुरुषांतरात् लक्ष्मणात् श्रुतं

सर्वथासुकरंमित्रंदुष्करंप्रतिपालनम् ॥ अनित्यत्वात्तुचित्तानांप्रीतिरल्पेपिविद्यते ॥ ७ ॥ अतोनिमित्तंत्रस्तोहंरामेणतुमहात्मना ॥ यन्ममोपकृतं शक्यंप्रतिकर्तुंनतन्मया ॥ ८ ॥ सुग्रीवेणैवमुक्तेतुहनूमान्हरिपुंगवः ॥ उवाचस्वेनतर्केणमध्येवानरमंत्रिणाम् ॥ ९ ॥ सर्वथानैतदाश्चर्यंयत्त्वंहरिगणेश्वर ॥ नविस्मरस्यविस्रब्धमुपकारंकृतंशुभम् ॥ १० ॥ राघवेणतुवीरेणभयमुत्सृज्यदूरतः ॥ त्वत्प्रियार्थंहतोवालीशक्रतुल्यपराक्रमः ॥ ११ ॥ सर्वथाप्रणयात्क्रुद्धोराघवोनात्रसंशयः ॥ भ्रातरंसंप्रहितवाँल्लक्ष्मणंलक्ष्मिवर्धनम् ॥ १२ ॥ त्वंप्रमत्तोनजानीषेकालंकालविदांवर ॥ फुल्लसप्तच्छदश्यामाप्रवृत्तातुशरच्छुभा ॥ १३ ॥ निर्मलग्रहनक्षत्राद्यौःप्रनष्टवलाहका ॥ प्रसन्नाश्चदिशःसर्वाःसरितश्चसरांसिच ॥ १४ ॥ प्राप्तमुद्योगकालंतुनावैषिहरिपुंगव ॥ त्वंप्रमत्तइतिव्यक्तंलक्ष्मणोऽयमिहागतः ॥ १५ ॥ आर्तस्यहृतदारस्यपरुषंपुरुषांतरात् ॥ वचनंमर्षणीयंतेराघवस्यमहात्मनः ॥ १६ ॥ कृतापराधस्यहितेनान्यत्पश्याम्यहंक्षमम् ॥ अंतरेणांजलिंबद्धालक्ष्मणस्यप्रसादनात् ॥ १७ ॥ नियुक्तैर्मंत्रिभिर्वाच्योह्यवश्यंपार्थिवोहितम् ॥ इतएवभयंत्यक्त्वाब्रवीम्यवधृतंवचः ॥ १८ ॥ अभिक्रुद्धःसमर्थोहिचापमुद्यम्यराघवः ॥ सदेवासुरगंधर्वंवशेस्थापयितुंजगत् ॥ १९ ॥ नसक्षमःकोपयितुंयःप्रसाद्यःपुनर्भवेत् ॥ पूर्वोपकारंस्मरताकृतज्ञेनविशेषतः ॥ २० ॥ तस्यमूर्ध्नाप्रणम्यत्वंसपुत्रःससुहृज्जनः ॥ राजंस्तिष्ठस्वसमयेभर्तुर्भार्येवतद्वशे ॥ २१ ॥ नरामरामानुजशासनंत्वयाकपींद्रयुक्तंमनसाप्यपोहितुम् ॥ मनोहितेज्ञास्यतिमानुषंबलंसराघवस्यास्यसुरेंद्रवर्चसः ॥ २२ ॥ इत्यार्षेश्रीम० वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ अथप्रतिसमादिष्टोलक्ष्मणः परवीरहा ॥ प्रविवेशगुहांरम्यांकिष्किंधांरामशासनात् ॥ १ ॥

परुषं वचनं ते त्वया मर्षणीयम् । तत्संभावनमालक्ष्यायमुपदेशः ॥ १६ ॥ १७ ॥ नियुक्तैर्हितोपदेशे इति शेषः भयं त्यक्त्वा ब्रवीमि राजानमपि कार्यवशात्परस्मै अंजलिं कुर्वीति वचोऽवधृतं निश्चितं वदामि ॥ १८ ॥ १९ ॥ यः पुनः प्रसाद्यो भवेत् स कोपयितुं न क्षमो न युक्तः ॥ २० ॥ २१ ॥ अपोहितुं उपेक्षितुम् सराघवस्य सलक्ष्मणस्यास्य रामस्य मानुषं मनुष्यमतिक्रांतं बलं ते मनो ज्ञास्यति जानात्येव वालिवधादिनेति भावः ॥ २२ ॥ खरैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ ॥ अथ एवं हनुमद्वचनानंतरं

प्रतिसमादिष्टः अंगदात्प्रतिसंदेशं प्राप्तः ॥ १ ॥ स्थिता हरयः प्रांजल्यो बभूवुरित्यन्वयः ॥ २ ॥ पर्यवारयन् भयेन लक्ष्मणं परिवार्य गंतुं नाशक्नुवन्नित्यर्थः ॥ ३ ॥ पुष्पितानि काननानि यस्यां सा ताम् । रत्नसमाकीर्णाम् अनेकोत्तमवस्त्वाक्रांताम् ॥ ४ ॥ तस्यैव प्रपंचः हर्म्येति । सर्वकामफलैः सर्वदापेक्षितफलयुक्तैः ॥ ५॥ ६॥ पद्मं पद्मकाख्यं गंधद्रव्यम् । सुरभिगंधितां सुगंधितां मधूनां च संवैरिति शेषः ॥७॥

द्वारस्थाहरयस्तत्रमहाकायामहाबलाः ॥ बभूवुर्लक्ष्मणंदृष्ट्वासर्वेप्रांजलयःस्थिताः ॥ २ ॥ निःश्वसंतंतुतंदृष्ट्वाक्रुद्धंदशरथात्मजम् ॥ बभूवुर्हरयस्त्रस्तानचैनंपर्यवारयन् ॥ ३ ॥ सतांरत्नमयींदिव्यांश्रीमान्पुष्पितकाननाम् ॥ रम्यांरत्नसमाकीर्णांददर्शमहतींगुहाम् ॥ ४ ॥ हर्म्यप्रासादसंबाधांनानारत्नोपशोभिताम् ॥ सर्वकामफलैर्वृक्षैःपुष्पितैरुपशोभिताम् ॥५॥ देवगंधर्वपुत्रैश्चवानरैःकामरूपिभिः ॥ दिव्यमाल्यांबरधरैःशोभितांप्रियदर्शनैः ॥६॥ चंदनागुरुपद्मानांगंधैःसुरभिगंधिताम् ॥ मैरेयाणांमधूनांचसंमोदितमहापथाम् ॥ ७ ॥ विंध्यमेरुगिरिप्रख्यैःप्रासादैर्नैकभूमिभिः ॥ ददर्शगिरिनद्यश्चविमलास्तत्रराघवः ॥ ८ ॥ अंगदस्यगृहंरम्यंमैन्दस्यद्विविदस्यच ॥ गवयस्यगवाक्षस्यगजस्यशरभस्यच ॥ ९ ॥ विद्युन्मालेश्चसंपातेःसूर्याक्षस्यहनूमतः ॥ वीरबाहोःसुबाहोश्चनलस्यचमहात्मनः ॥ १० ॥ कुमुदस्यसुषेणस्यतारजांबवतोस्तथा ॥ दधिवक्रस्यनीलस्यसुपाटलसुनेत्रयोः ॥ ११ ॥ एतेषांकपिमुख्यानांराजमार्गेमहात्मनाम् ॥ ददर्शगृहमुख्यानिमहासाराणिलक्ष्मणः ॥ १२ ॥ पांडुराभ्रप्रकाशानिगंधमाल्ययुतानिच ॥ प्रभूतधनधान्यानिस्त्रीरत्नैःशोभितानिच ॥ १३ ॥ पांडुरेणतुशैलेनपरिक्षिप्तंदुरासदम् ॥ वानरेंद्रगृहंरम्यंमहेंद्रसदनोपमम् ॥ १४ ॥ शुक्लैःप्रासादशिखरैःकैलासशिखरोपमैः ॥ सर्वकामफलैर्वृक्षैःपुष्पितैरुपशोभितम् ॥ १५ ॥ महेंद्रदत्तैःश्रीमद्भिर्नीलजीमूतसन्निभैः ॥ दिव्यपुष्पफलैर्वृक्षैःशीतच्छायैर्मनोरमैः ॥ १६ ॥ हरिभिःसंवृतद्वारंबलिभिःशस्त्रपाणिभिः ॥ दिव्यमाल्यावृतंशुभ्रंतप्तकांचनतोरणम् ॥ १७ ॥ सुग्रीवस्यगृहंरम्यंप्रविवेशमहाबलः ॥ अवार्यमाणःसौमित्रिर्महाभ्रमिवभास्करः ॥ १८ ॥ ससप्तकक्ष्याधर्मात्मायानासनसमावृताः ॥ ददर्शसुमहद्गुप्तंददर्शांतःपुरंमहत् ॥ १९ ॥ हैमराजतपर्यंकैर्बहुभिश्चवरासनैः ॥ महार्हास्तरणोपेतैस्तत्रतत्रसमावृतम् ॥ २० ॥ प्रविशन्नेवसततंशुश्रावमधुरस्वनम् ॥ तंत्रीगीतसमाकीर्णंसमतालपदाक्षरम् ॥ २१ ॥ बह्वीश्चविविधाकारारूपयौवनगर्विताः ॥ स्त्रियःसुग्रीवभवनेददर्शसमहाबलः ॥ २२ ॥ दृष्ट्वाभिजनसंपन्नास्तत्रमाल्यकृतस्रजः ॥ वरमाल्यकृतव्यग्राभूषणोत्तमभूषिताः ॥ २३ ॥

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ पांडुरेण शैलेन परिक्षिप्तं स्फटिकशिलामयवप्रेण वेष्टितम् ॥ १४ ॥ १५ ॥ महेंद्रदत्तैर्वृक्षैः कल्पवृक्षैः ॥ १६ ॥ १७ ॥ १८ ॥ सप्त कक्ष्या इत्यस्यातिक्रम्येति शेषः ॥ १९ ॥ २० ॥ तंत्रीगीतेन वीणावाद्यघोषेण सहितं मधुरस्वनं मुरजादेः शुश्राव ॥ २१ ॥ २२ ॥ अभिजनसंपन्ना आभिजात्ययुक्ताः वरमाल्यकृतव्यग्राः वरमाल्यानामुत्तमस्रजां कृते करणं तत्र

व्यग्राः ॥ २३ ॥ अव्यग्रान् परिचर्यात्वरारहितान् अनुदात्तपरिच्छदान् प्रशस्तालंकाररहितान् ॥ २४ ॥ लज्जितोभवत् अयोध्यातोप्यधिकसौभाग्यदर्शनाल्लज्जा परस्त्रीदर्शनकृता लज्जेत्यन्ये ॥ २५ ॥ रोषवेगेन प्रकु
पितः इदानीमपि कामभोगं त्यजतीति कोपवृद्धिः । रोषवेगप्रचलित इति पाठांतरम् अर्थस्तुल्यः । आभरणस्वनं श्रुत्वा स्त्रीणां ततो निवृत्तये ज्यास्वनं चकार ॥ २६ ॥ तदेवाह चारित्रेण स्त्रीगोष्ठ्यां प्रवेष्टुं नोचि
तमित्याचारपर्यालोचनया अपकृष्टो निवर्तितांतःपुरप्रवेशः सन्नेकांतमाश्रित्य रामकोपसमन्वितः रामकार्याप्रवृत्तिदर्शनजकोपेन समन्वितस्तस्थौ ॥ २७ ॥ २८ ॥ २९ ॥ समाख्यातः बोधितलक्ष्मणागमनः उप
शुष्यत उपाशुष्यत ॥ ३० ॥ ३१ ॥ सरोष इव सरोष एव ॥ ३२ ॥ रोषस्थानं रोषकारणम् ममापराधमित्यर्थः ॥ ३३ ॥ अस्माभिः कृतं यत्किंचिदित्यन्वयः ॥ ३४ ॥ निर्निमित्तकोपासंभवान्निमित्तं चानिर्णीयं

नातृप्तान्नातिचव्यग्रान्नानुदात्तपरिच्छदान् ॥ सुग्रीवानुचरांश्चापिलक्षयामासलक्ष्मणः ॥ २४ ॥ कूजितंनूपुराणांचकांचीनांनिःस्वनंतथा ॥ सनिशम्य
ततःश्रीमान्सौमित्रिर्लज्जितोऽभवत् ॥ २५ ॥ रोषवेगप्रकुपितःश्रुत्वाचाभरणस्वनम् ॥ चकारज्यास्वनंवीरोदिशःशब्देनपूरयन् ॥ २६ ॥ चारित्रे
णमहाबाहुरपकृष्टःसलक्ष्मणः ॥ तस्थावेकांतमाश्रित्यरामकोपसमन्वितः ॥ २७ ॥ तेनचापस्वनेनाथसुग्रीवःप्लवगाधिपः ॥ विज्ञायागमनंत्रस्तः
सचचालवरासनात् ॥ २८ ॥ अंगदेनयथामह्यंपुरस्तात्प्रतिवेदितम् ॥ सुव्यक्तमेषसंप्राप्तःसौमित्रिर्भ्रातृवत्सलः ॥ २९ ॥ अंगदेनसमाख्यातोज्यास्व
नेनचवानरः ॥ बुबुधेलक्ष्मणंप्राप्तंमुखंचास्योपशुष्यत ॥ ३० ॥ ततस्तारांहरिश्रेष्ठःसुग्रीवःप्रियदर्शनाम् ॥ उवाचहितमव्यग्रस्त्राससंभ्रांतमानसः ॥
॥ ३१ ॥ किंनुरुट्कारणंसुभ्रुप्रकृत्यामृदुमानसः ॥ सरोषइवसंप्राप्तोयेनायंराघवानुजः ॥ ३२ ॥ किंपश्यसिकुमारस्यरोषस्थानमनिंदिते ॥ नखल्व
कारणेकोपमाहरेन्नरपुंगवः ॥ ३३ ॥ यद्यस्यकृतमस्माभिर्बुध्यसेकिंचिदप्रियम् ॥ तद्बुद्ध्यासंप्रधार्याशुक्षिप्रमेवाभिधीयताम् ॥ ३४ ॥ अथवास्वय
मेवैनंद्रष्टुमर्हसिभामिनि ॥ वचनैःसांत्वयुक्तैश्चप्रसादयितुमर्हसि ॥ ३५ ॥ त्वद्दर्शनेविशुद्धात्मानस्मकोपंकरिष्यति ॥ नहिस्त्रीषुमहात्मानःक्वचित्कुर्वं
तिदारुणम् ॥ ३६ ॥ त्वयासांत्वैरुपक्रांतंप्रसन्नेंद्रियमानसम् ॥ ततःकमलपत्राक्षंद्रक्ष्याम्यहमरिंदमम् ॥ ३७ ॥ साप्रस्खलंतीमदविह्वलाक्षीप्रलंबकांची
गुणहेमसूत्रा ॥ सलक्षणालक्ष्मणसन्निधानंजगामतारानमितांगयष्टिः ॥ ३८ ॥ सतांसमीक्ष्यैवहरीशपत्नींतस्थावुदासीनतयामहात्मा ॥ अवाङ्मुखो
भून्मनुजेंद्रपुत्रःस्त्रीसन्निकर्षाद्विनिवृत्तकोपः ॥ ३९ ॥ सापानयोगाच्चनिवृत्तलज्जादृष्टिप्रसादाच्चनरेंद्रसूनोः ॥ उवाचताराप्रणयप्रगल्भंवाक्यंमहार्थंप
रिसांत्वरूपम् ॥ ४० ॥ किंकोपमूलंमनुजेंद्रपुत्रकस्तेनसंतिष्ठतिवाङ्निदेशे ॥ कःशुष्कवृक्षंवनमापतंतंदवाग्निमासीदतिनिर्विशंकः ॥ ४१ ॥
सतस्यावचनंश्रुत्वासांत्वपूर्वमशंकितः ॥ भूयःप्रणयदृष्टार्थंलक्ष्मणोवाक्यमब्रवीत् ॥ ४२ ॥

स्वस्य समीपगमनमनुचितमिति पक्षांतरं गृह्णाति अथवेति । स्वयमेव मां विहायेत्यर्थः ॥ ३५ ॥ विशुद्धात्मा गतक्रोधचित्तः ॥ ३६ ॥ उपक्रांतं उपक्रांतक्षमापनम् ॥ ३७ ॥ प्रस्खलंती मदालसतया पदे
पदे स्खलंती मदविह्वलाक्षी भोगार्थं कृतमधुपानमदेनालसचकितनेत्रा प्रलंबे कांचीगुणहेमसूत्रे यस्याः कांचीगुणो रशनानमितांगयष्टिः स्तनभारेणेति शेषः ॥ ३८ ॥ हरीशपत्नीं सुग्रीवपत्नीं ताराम् ॥ ३९ ॥
प्रणयप्रगल्भं मैत्रीसमर्थनसमर्थं परिसांत्वरूपं परितः सांत्वरूपम् । पतिसांत्वेतिपाठः सुगमः ॥ ४० ॥ वाङ्निदेशे अनुशिष्टकार्यानुष्ठाने आपतंतं दग्ध्वा तिष्ठंतम् ॥ ४१ ॥ भूयोधिकं प्रणयप्रकाशपूर्वं दृष्टोर्थो

यस्मिस्तव ॥ ४२ ॥ अयं ते भर्ता लुप्तधर्मार्थसंग्रहो वर्तते अर्थोत्र मित्ररूपः एनं किं न बुध्यसे ॥ ४३ ॥ लुप्तधर्मादित्वमेवाह नेति । राज्यार्थं राज्यस्थैर्यार्थं सामान्या परिषद्यस्य तादृशो भूत्वेति शेषः ॥ ४४ ॥ विहरंस्त्वया क्रीडन् ॥ ४५ ॥ ४६ ॥ पानादर्थादिनाशमुपपादयति धर्मेति । महान्धर्मलोपः प्रतिज्ञाहानिरूपः कृते उपकारेऽप्रतिकुर्वतः प्रत्युपकारमकुर्वतः तावत्प्रथमं ततो गुणवतो मित्रस्य मैत्रीनाशे महानर्थलोपो भवति ॥ ४७ ॥ अर्थगुणश्रेष्ठं मित्रार्थसाधनलक्षणश्रेष्ठगुणवत् सत्यधर्मपरायणम् एतद्गुणद्वयवन्मित्रं हि प्रसिद्धं तद्द्वयं गुणद्वयमपि तव भर्त्रा परित्यक्तं न तु धर्मे मैत्रीपालनरूपे धर्मे व्यवस्थितम् ॥ ४८ ॥ तत्तस्मादेवं सति प्रस्तुते कार्ये प्रस्तुतकार्यसिद्धिनिमित्तम् इत उत्तरं यदस्माभिः कार्यं तत्कार्यम् उदाहर्तुमर्हसि ॥ ४९ ॥ धर्मार्थसमाधियुक्तम् तत्संबंधयुक्तम् अगतार्थे भ्रष्टप्रयोजने मनुजेंद्रकार्ये तद्विषये विश्वासयुक्तं यथा तथा भूयः पुनरुवाच ॥ ५० ॥ न कोपकालः अर्थस्यानीतत्वादिति भावः प्रमादं अज्ञातभूतमपराधम् ॥ ५१ ॥ तस्य सोढव्यतां समर्थयति कोपं कथं नामेति । अपकृष्टसत्त्वे हीने

किमयंकामवृत्तस्तेलुप्तधर्मार्थसंग्रहः ॥ भर्ताभर्तृहितेयुक्तेनचैवमवबुध्यसे ॥ ४३ ॥ नचिंतयतिराज्यार्थंसोस्माञ्छोकपरायणान् ॥ सामान्यपरिषत्तारे काममेवोपसेवते ॥ ४४ ॥ समासांश्चतुरःकृत्वाप्रमाणंप्लवगेश्वरः ॥ व्यतीतांस्तान्मदोदग्रोविहरन्नावबुध्यते ॥४५ ॥ नहिधर्मार्थसिद्ध्यर्थंपानमेवंप्रशस्यते ॥ पानादर्थश्चकामश्चधर्मश्चपरिहीयते ॥ ४६ ॥ धर्मलोपोमहांस्तावत्कृतेह्यप्रतिकुर्वतः ॥ अर्थलोपश्चमित्रस्यनाशेगुणवतोमहान् ॥ ४७ ॥ मित्रंह्यर्थगुणश्रेष्ठंसत्यधर्मपरायणम् ॥ तद्द्वयंतुपरित्यक्तंनतुधर्मेव्यवस्थितम् ॥ ४८ ॥ तदेवंप्रस्तुतेकार्येकार्यमस्माभिरुत्तरम् ॥ तत्कार्यंकार्यतत्त्वज्ञेत्वमुदाहर्तुमर्हसि ॥ ४९ ॥ सातस्यधर्मार्थसमाधियुक्तंनिशम्यवाक्यंमधुरस्वभावम् ॥ तारागतार्थेमनुजेंद्रकार्येविश्वासयुक्तंतमुवाचभूयः ॥ ५० ॥ नकोपकालःक्षितिपालपुत्रनचापिकोपःस्वजनेविधेयः ॥ त्वदर्थकामस्यजनस्यतस्यप्रमादमप्यर्हसिवीरसोढुम् ॥ ५१ ॥ कोपंकथंनामगुणप्रकृष्टः कुमारकुर्यादपकृष्टसत्त्वे ॥ कस्त्वद्विधःकोपवशंहिगच्छेत्सत्त्वावरुद्धस्तपसःप्रसूतिः ॥ ५२ ॥ जानामिकोपंहरिवीरबंधोर्जानामिकार्यस्यचकालसंगम् ॥ जानामिकार्यंत्वयियत्कृतंनस्तच्चापिजानामियदत्रकार्यम् ॥ ५३ ॥ तच्चापिजानामितथाविषह्यंबलंनरश्रेष्ठशरीरजस्य ॥ जानामियस्मिंश्चजनेऽवबद्धंकामेनसुग्रीवमसक्तमद्य ॥५४ ॥ नकामतंत्रेतवबुद्धिरस्तित्वंवैयथामन्युवशंप्रपन्नः ॥ नदेशकालौहियथार्थधर्माववेक्षतेकामरतिर्मनुष्यः ॥५५॥ तंकामवृत्तंममसन्निकृष्टंकामाभियोगाच्चविमुक्तलज्जम् ॥ क्षमस्वतावत्परवीरहंतस्त्वद्भ्रातरंवानरवंशनाथम् ॥ ५६ ॥

सत्त्वावरुद्धः सहजसत्त्वगुणावरुद्धविपरीतव्यापारः । सत्त्वाविरुद्ध इतिपाठे सहजगुणाविरुद्धव्यापारः अतएव तपसः प्रसूतिः ॥५२ ॥ जानामि कोपमिति । हरिवीरबंधो रामस्य कोपं कोपनिमित्तं कार्यस्य कालसंगं विलंबं च जानामि । त्वयि यदायत्तं नः कार्यं राज्यदानलक्षणं त्वया कृतं तदपि जानामि यदत्र विषये कार्यं प्रतिकर्तव्यरूपं तदपि जानामि ॥ ५३ ॥ तव कोपस्यायुक्तत्वे हेतुमपि जानामीत्याह तच्चापीति । शरीरजस्य कामस्य तथाऽविषह्यं बलं तच्चापि जानामि एवं सुग्रीवं यस्मिन् जने स्त्रीजने कामेनाववद्धं संभावयसि तं च जानामि तथाद्यान्यत्र कृत्येऽसक्तं अव्यापारं च जानामि ॥ ५४ ॥ नन्वेवं सति मम कोपस्यायुक्तता कथमत आह नेति । यथा त्वं वै निश्चयेन मन्युवशं प्रपन्नो दृश्यसे तथा जानामि कामतंत्रे कामस्वभावपरिज्ञाने तव बुद्धिर्नास्ति चिरकालं स्त्रीसंगाभावादिति भावः । तमेव कामस्वभावमाह नेति । हि प्रसिद्धं यथादेशकालौ भोगायोग्यौ न जानाति तथार्थधर्मावपि नावेक्षते मनुष्य इति । मनुष्योपि न जानाति किमुत तिर्यग्जंतुरिति भावः ॥ ५५ ॥ मम सन्निकृष्टं स्वभार्याया

मम समीपे कामवशाद्वर्तमानं कामाभियोगः कामावेशः । क्षमस्वेति परवशप्रवृत्तापराधत्वात्स्वभ्रातृत्वाच्च क्षमैवात्र योग्या न तु कोप इत्याशयः ॥ ५६ ॥ कामवशत्वं नास्यैवेत्याह महर्षय इति । कामे कामभोगे अनुकामोऽभिलाषो येषां ते अतएव स्त्रीषु प्रतिबद्धमोहाः कपिस्तत्रापि राजा ॥ ५७ ॥ भर्तुर्हितमुद्दिश्येति शेषः ॥ ५८ ॥ चिराज्ञप्तस्त्वदागमनात्पूर्वमेवेति शेषः ॥ ५९ ॥ कामविधेयस्योद्योगाज्ञापि न विश्वसनीयेत्यत आह आगता इति । कोटीःशतेत्यस्य बहुत्वे तात्पर्यम् ॥ ६० ॥ चारित्रं रक्षितं झटित्यंतःपुरागमनेन अच्छलं छलमधर्मः स नेत्यर्थः मित्रभावेन न तु विकारेण ॥ ६१ ॥ त्वरया रामाज्ञाकरणत्वरया ॥ ६२ ॥ ६३ ॥ ६४ ॥ प्रमदाभिः समं ददर्शेत्यन्वयः । ततः संरब्धतररक्ताक्षो बभूवेत्यन्वयः ॥ ६५ ॥ परिरभ्यावास्थित एव सन् ददर्शेत्यन्वयः ॥ ६६ ॥ चार्षमानः ॥

महर्षयोधर्मतपोभिरामाःकामानुकामाःप्रतिबद्धमोहाः ॥ अयंप्रकृत्याचपलःकपिस्तुकथंनसज्जेतसुखेषुराजा ॥ ५७ ॥ इत्येवमुक्त्वावचनंमहार्थंसावानरीलक्ष्मणमप्रमेयम् ॥ पुनःसखेदंमदविह्वलाक्षीभर्तुर्हितंवाक्यमिदंबभाषे ॥ ५८ ॥ उद्योगस्तुचिराज्ञप्तःसुग्रीवेणनरोत्तम ॥ कामस्यापिविधेयेनतवार्थप्रतिसाधने ॥ ५९ ॥ आगताहिमहावीर्याहरयःकामरूपिणः ॥ कोटीःशतसहस्राणिनानानगनिवासिनः ॥ ६० ॥ तदागच्छमहाबाहोचारित्रंरक्षितंत्वया ॥ अच्छलंमित्रभावेनसतांदारावलोकनम् ॥ ६१ ॥ तारयाचाप्यनुज्ञातस्त्वरयावापिचोदितः ॥ प्रविवेशमहाबाहुरभ्यंतरमरिंदम ॥ ६२ ॥ ततःसुग्रीवमासीनंकांचनेपरमासने ॥ महार्हास्तरणोपेतेददर्शादित्यसन्निभम् ॥ ६३ ॥ दिव्याभरणचित्रांगंदिव्यरूपंयशस्विनम् ॥ दिव्यमाल्यांबरधरंमहेंद्रमिवदुर्जयम् ॥ ६४ ॥ दिव्याभरणमालाभिःप्रमदाभिःसमंततः ॥ संरब्धतररक्ताक्षोबभूवांतकसन्निभः ॥ ६५ ॥ रुमांतुवीरःपरिरभ्यगाढंवरासनस्थोवरहेमवर्णः ॥ ददर्शसौमित्रिमदीनसत्त्वंविशालनेत्रःसविशालनेत्रम् ॥ ६६ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीये आदिकाव्ये किष्किन्धाकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ तमप्रतिहतंक्रुद्धंप्रविष्टंपुरुषर्षभम् ॥ सुग्रीवोलक्ष्मणंदृष्ट्वाबभूवव्यथितेंद्रियः ॥ १ ॥ क्रुद्धंनिःश्वसमानंतंप्रदीप्तमिवतेजसा ॥ भ्रातुर्व्यसनसंतप्तंदृष्ट्वादशरथात्मजम् ॥ २ ॥ उत्पपातहरिश्रेष्ठोहित्वासौवर्णमासनम् ॥ महान्महेंद्रस्ययथास्वलंकृतइवध्वजः ॥ ३ ॥ उत्पतंतमनूत्पेतूरुमाप्रभृतयःस्त्रियः ॥ सुग्रीवंगगनेपूर्णचंद्रंतारागणाइव ॥ ४ ॥ संरक्तनयनःश्रीमान्संचचारकृतांजलिः ॥ बभूवावस्थितस्तत्रकल्पवृक्षोमहानिव ॥ ५ ॥ रुमाद्वितीयंसुग्रीवंनारीमध्यगतंस्थितम् ॥ अब्रवील्लक्ष्मणःक्रुद्धःसतारंशशिनंयथा ॥ ६ ॥ सत्त्वाभिजनसंपन्नःसानुक्रोशोजितेंद्रियः ॥ कृतज्ञःसत्यवादीचराजालोकेमहीयते ॥ ७ ॥ यस्तुराजास्थितोऽधर्मेमित्राणामुपकारिणाम् ॥ मिथ्याप्रतिज्ञांकुरुतेकोनृशंसतरस्ततः ॥ ८ ॥ शतमश्वानृतेहंतिसहस्रंतुगवानृते ॥ आत्मानंस्वजनंहंतिपुरुषःपुरुषानृते ॥ ९ ॥

॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ ॥ तमिति । अप्रतिहतं केनाप्यप्रतिबद्धम् ॥ १ ॥ २ ॥ महान्महेंद्रध्वजो यथालंकृतः ॥ ३ ॥ अनूत्पेतुः पश्चादुत्थितवत्यः ॥ ४ ॥ संचचार संमुखमाजगाम अवस्थितो बभूवेत्यस्य लक्ष्मण इति शेषः । कल्पवृक्षोपमया सर्वहितत्वं व्यंग्यम् ॥ ५ ॥ सतारं शशिनमिव स्थितम् ॥ ६ ॥ सत्त्वाभिजनाभ्यां संपन्नः तल्लक्षणानि सानुक्रोशत्वादीनि ॥ ७ ॥ अधर्मे स्थित इत्यन्वयः अधर्ममार्गस्थः नृशंसतरः क्रूरतरः ॥ ८ ॥ प्रकृतोपयुक्तमसत्यदोषमाह शतमिति । एकाश्वनिमित्तकेऽनृते दानादि

प्रतिज्ञाविघाते सति सोऽनृतवाक् शतं हंति शताश्वहननदोषभाक् गोविषयानृते गोसहस्रहननभाक् एवं पुरुषानृते पुरुषविषयकिंचित्प्रतिज्ञाहानौ स पुरुषः प्रथममात्मानं हंति आत्मघातदोषभाक् निजं पुण्यलोकं नाशयति वा तथा स्वजनस्य पित्रादेः पुण्यलोकं च नाशयति ॥ ९ ॥ अथ कृतघ्नदोषमाह पूर्वमिति । कृतार्थो मित्रैरिति शेषः सर्वभूतानां सर्वलोकानां वध्यः सर्वलोकबहिष्कार्य इत्यर्थः ॥ १० ॥ नाय मर्थः स्वकल्पनामात्रकल्पित इत्याह गीत इति । ब्रह्मणा हिरण्यगर्भेण अयं श्लोकः पूर्वोक्तः सर्वलोकनमस्कृतः ब्रह्मवदेव सर्वस्मर्तृसंमत इत्यर्थः । अथ रामवचनमाह त्वां कृतघ्नं दृष्ट्वा क्रुद्धेन रामेण यदुक्तं तच्छृणु ॥ ११ ॥ किं तत्तत्राह गोघ्ने इति ॥ १२ ॥ कुतोहं कृतघ्नस्तत्राह पूर्वमिति ॥ १३ ॥ मिथ्यावादित्वं दर्शयति नन्विति । यत्नः प्राक्प्रतिज्ञातः कृतमिच्छता कृतस्य प्रतिकृतं कर्तुमिच्छता ॥ १४ ॥

पूर्वंकृतार्थोमित्राणांनतत्प्रतिकरोतियः ॥ कृतघ्नःसर्वभूतानांसवध्यःप्लवगेश्वर ॥ १० ॥ गीतोऽयंब्रह्मणाश्लोकःसर्वलोकनमस्कृतः ॥ दृष्ट्वाकृतघ्नंक्रुद्धे नतन्निबोधप्लवंगम ॥ ११ ॥ गोघ्नेचैवसुरापेचचौरेभग्नव्रतेतथा ॥ निष्कृतिर्विहितासद्भिःकृतघ्नेनास्तिनिष्कृतिः ॥ १२ ॥ अनार्यस्त्वंकृतघ्नश्चमि थ्यावादीचवानर ॥ पूर्वंकृतार्थोरामस्यनतत्प्रतिकरोषियत् ॥ १३ ॥ ननुनामकृतार्थेनत्वयारामस्यवानर ॥ सीतायामार्गणेयत्नःकर्तव्यःकृतमिच्छता ॥ १४ ॥ सत्वंग्राम्येषुभोगेषुसक्तोमिथ्याप्रतिश्रवः ॥ नत्वांरामोविजानीतेसर्पंमंडूकराविणम् ॥ १५ ॥ महाभागेनरामेणपापःकरुणवेदिना ॥ हरी णांप्रापितोराज्यंत्वंदुरात्मामहात्मना ॥ १६ ॥ कृतंचेन्नातिजानीषेराघवस्यमहात्मनः ॥ सद्यस्त्वंनिशितैर्बाणैर्हतोद्रक्ष्यसिवालिनम् ॥ १७ ॥ नससं कुचितःपंथायेनवालीहतोगतः ॥ समयेतिष्ठसुग्रीवमावालिपथमन्वगाः ॥ १८ ॥ ननूनमिक्ष्वाकुवरस्यकार्मुकाच्छरांश्चतान्पश्यसिवज्रसन्निभान् ॥ ततःसुखंनामनिषेवसेसुखीनरामकार्यंमनसाप्यवेक्षसे ॥ १९ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चतुर्स्त्रिंशः सर्गः ॥ ३४ ॥ तथाब्रुवाणंसौमित्रिंप्रदीप्तमिवतेजसा ॥ अब्रवील्लक्ष्मणंताराताराधिपनिभानना ॥ १ ॥ नैवंलक्ष्मणवक्तव्योनायंपरुषमर्हति ॥ हरीणामीश्वरःश्रोतुं तववक्त्राद्विशेषतः ॥ २ ॥ नैवाकृतज्ञःसुग्रीवोनशठोनापिदारुणः ॥ नैवानृतकथोवीरनजिह्मश्चकपीश्वर ॥ ३ ॥ उपकारंकृतंवीरोनाप्ययंविस्मृतः कपिः ॥ रामेणवीरसुग्रीवोयदन्यैर्दुष्करंरणे ॥ ४ ॥ रामप्रसादात्कीर्तिंचकपिराज्यंचशाश्वतम् ॥ प्राप्तवानिहसुग्रीवोरुमांमांचपरंतप ॥ ५ ॥ सुदुः खशयितःपूर्वंप्राप्येदंसुखमुत्तमम् ॥ प्राप्तकालंनजानीतेविश्वामित्रोयथामुनिः ॥ ६ ॥

मंडूकराविणं स्वगृहीतमुखस्थमंडूकशब्देन शब्दवंतं सर्पं यथा जनोऽनवलोकनान्मंडूकमेव जानीते नतु सर्पं तथा तव स्वरूपं रामो नाज्ञासीदिति भावः । कश्चित्तु मंडूकग्रहणार्थं सर्पो मंडूकवद्रौति तेन स्वरेण स्वगण इति विस्रब्धः स्वसमीपमागतो मंडूकस्तेन गृह्यते एवं वंचकं त्वां नाज्ञासीदित्यर्थ इत्याह तत्तु तथालोकाप्रसिद्धयोपेक्ष्यम् ॥ १५ ॥ पापरत्वमित्यन्वयः ॥ १६ ॥ १७ ॥ १८ ॥ शरान्नूनं न पश्यसि यतो ग्राम्यसुखं निषेवसे तेन च सुखी सन् रामकार्यं मनसापि नावेक्षसे ॥ १९ ॥ धृष्टमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥ ॥ १ ॥ तवेति । तव सुहृदो वक्त्रान्मुखादित्यर्थः ॥ २ ॥ नार्हतीत्यत्र हेतुर्नैवेत्यादि । अनृतकथोऽनृतवाक् ॥ ३ ॥ ४ ॥ ५ ॥ यदि न कृतघ्नः कथं तर्हि कालात्यया

नभिज्ञस्तत्राह सुदुःखेति । सुतरामनुभूतदुःखः प्राप्तकालं अवश्यं कर्तव्यम् ॥ ६ ॥ घृताच्यामिति । अहः दिनं यद्यपि पूर्वं बालकांडे मेनकासंबंध उक्तस्तथाप्येतद्वचनाद्घृताचीसंबंधोपि तस्य ज्ञेय इत्याहुः ॥ ७ ॥ ८ ॥ देहधर्माः आहारनिद्रामैथुनानि पशुधर्मैतिपाठेप्ययमेवार्थः ॥ ९ ॥ निश्चयार्थं कर्तव्यार्थनिश्चयम् ॥ १० ॥ ११ ॥ रोषेण समुत्पन्नः संरंभः क्षोभः ॥ १२ ॥ १३ ॥ १४ ॥ कथमयं रावणं हनिष्यतीत्यत्र तत्साहायकसाध्यत्वात्तद्वधस्येत्याह शतेति । एषा संख्या विवक्षितैव दशकोटिः समुद्रः शतकोटिर्मध्यं मध्यानां सहस्रं तथा षष्टिसहस्राधिकत्रिलक्षाणि तदुपरि षट्त्रिंशत्सहस्राणि तदुपरि तावंति शतानीत्यर्थः ॥ १५ ॥ १६ ॥ तावतां वधे परमशूरस्यापि सहायापेक्षास्तीत्याह ते इति । यस्मात् असहायेन रामेण ते हंतुमशक्या यस्माद्रावणश्च क्रूरकर्मा क्रूरपराक्रमस्तस्माद्विशेषतः सुग्रीवेण सहायेन प्रयोजनमस्ति तत्सम्प्रतिसेनाघटनस्य सुग्रीवाधीनत्वात्सर्वेषां मनुष्यावध्यत्वाच्चेति भावः । यत्तु तीर्थः सुग्रीवेण सहायेन ते राक्षसा हंतुमशक्या रावणश्च हंतुमशक्य इत्यन्वयं कृत्वा वाली किले

घृताच्यांकिलसंसक्तोदशवर्षाणिलक्ष्मण ॥ अहोमन्यतधर्मात्माविश्वामित्रोमहामुनिः ॥ ७ ॥ सहिप्राप्तंनजानीतेकालंकालविदांवरः ॥ विश्वामित्रो महातेजाःकिंपुनर्यःपृथग्जनः ॥ ८ ॥ देहधर्मंगतस्यास्यपरिश्रांतस्यलक्ष्मण ॥ अवितृप्तस्यकामेषुरामःक्षंतुमिहार्हति ॥ ९ ॥ नचरोषवशंतातगंतुमर्हसिलक्ष्मण ॥ निश्चयार्थमविज्ञायसहसाप्राकृतोयथा ॥ १० ॥ सत्त्वयुक्ताहिपुरुषास्त्वद्विधाःपुरुषर्षभ ॥ अविमृश्यनरोषस्यसहसायांतिवश्यताम् ॥ ११ ॥ प्रसादयेत्वांधर्मज्ञसुग्रीवार्थेसमाहिता ॥ महान्रोषसमुत्पन्नःसंरंभस्त्यज्यतामयम् ॥ १२ ॥ रुमांमांचांगदंराज्यंधनधान्यपशूनिच ॥ रामप्रियार्थंसुग्रीवस्त्यजेदितिमतिर्मम ॥ १३ ॥ समानेष्यतिसुग्रीवःसीतयासहराघवम् ॥ शशांकमिवरोहिण्याहत्वातंराक्षसाधमम् ॥ १४ ॥ शतकोटिसहस्राणिलंकायांकिलरक्षसाम् ॥ अयुतानिचषट्त्रिंशत्सहस्राणिशतानिच ॥ १५ ॥ अहत्वातांश्चदुर्धर्षान्राक्षसान्कामरूपिणः ॥ अशक्यंरावणंहंतुंयेनसामैथिलीहृता ॥ १६ ॥ तेनशक्यारणेहंतुमसहायेनलक्ष्मण ॥ रावणःक्रूरकर्माचसुग्रीवेणविशेषतः ॥ १७ ॥ एवमाख्यातवान्वालीसह्यभिज्ञोहरीश्वरः ॥ आगमस्तुनमेव्यक्तःश्रवात्तस्यब्रवीम्यहम् ॥ १८ ॥ त्वत्सहायनिमित्तंहिप्रेषिताहरिपुंगवाः ॥ आनेतुंवानरान्युद्धेसुबहून्हरिपुंगवान् ॥ ॥ १९ ॥ तांश्चप्रतीक्षमाणोयंविक्रांतान्सुमहाबलान् ॥ राघवस्यार्थसिद्ध्यर्थंननिर्यातिहरीश्वरः ॥ २० ॥ कृतासुसंस्थासौमित्रेसुग्रीवेणपुरायथा ॥ अद्यतैर्वानरैःसर्वैरागंतव्यंमहाबलैः ॥ २१ ॥ ऋक्षकोटिसहस्राणिगोलांगूलशतानिच ॥ अद्यत्वामुपयास्यंतिजहिकोपमरिंदम ॥ कोट्योनेकास्तुकाकुत्स्थकपीनांदीप्ततेजसाम् ॥ २२ ॥

कवान् रावणवधाय सुग्रीवं वृथा प्रार्थयते रामस्तस्यासावशक्य इति कथां च कल्पयति तदपार्थकं रामस्य सहायापेक्षासमर्थनस्यैव प्रस्तुतत्वात् ॥ १७ ॥ नन्वेषा रक्षःसंख्या त्वया कथं ज्ञाता तत्राह एवमिति । आगमस्तु न मे व्यक्तः रावणस्यैवं बलप्राप्तिप्रकारस्तु न मया ज्ञातः संख्यामात्रं प्रसंगात्पूर्वं श्रुतं तस्य श्रवात्तन्मुखतो वाक्यश्रवणात् ॥ १८ ॥ ननु सहायसंपत्तिप्रवृत्तेरस्मिन्नदर्शनात्कोपो नस्तत्राह त्वदिति ॥ १९ ॥ राघवार्थं तान्प्रतीक्षमाणास्तिष्ठति अतएवेदानीं न निर्याति ॥ २० ॥ ते तर्हि कदा आगमिष्यंति तत्राह कृतेति । सुसंस्था शोभना आगमनकालमर्यादा पुरा पूर्वं दूतप्रेषणसमये यथा कृता तथा तैः सर्वैरद्यागंतव्यम् ॥ २१ ॥ रक्षःसेनापेक्षया स्वसेनाधिक्यमाह ऋक्षेति । शतकोटिर्मध्यं तद्दशगुणात्मिका सहस्रकोटिस्तत्संख्या ऋक्षाः गोलांगूलानां शतानि च शतकोटिः अन्ये कपयोऽ

नेकाः कोट्यः असंख्या इत्यर्थः ॥ २२ ॥ प्रथमभयस्य तत्सदृशभयस्य वालिवधवत् सुग्रीववधभयस्य षष्ठ्यार्षी ॥ २३ ॥ गैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीयं रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ ॥ इतीति ॥ १ ॥ तस्मिंस्तारानुनयवाक्ये ॥ २ ॥ माल्यं मालां बहुगुणं बहुविधकाममदकरं अतएव तच्छेदफलं विमदश्चासीदिति ॥ ३ ॥ लक्ष्मणं संप्रहर्षयन्नित्यन्वयः ॥ ४ ॥ ५ ॥ शक्तः समर्थः तस्य देवावतारस्य स्वेन कर्मणा धनुर्भंगवालिवधादिना ख्यातस्य तादृशं तज्जनितोपकारसदृशम् ॥ ६ ॥ सहायमात्रेण उपलक्षितं स्वयमेवार्थ

तवहिमुखमिदंनिरीक्ष्यकोपात्क्षतजसमेनयनेनिरीक्षमाणाः ॥ हरिवरवनितानयांतिशांतिंप्रथमभयस्यहिशंकिताःस्मसर्वाः ॥ २३ ॥ इत्यार्षे श्रीमद्रामायणेवा०आ०किष्किंधाकांडेपंचत्रिंशः सर्गः ॥ ३५ ॥ इत्युक्तस्तारयावाक्यंप्रश्रितंधर्मसंहितम् ॥ मृदुस्वभावःसौमित्रिःप्रतिजग्राहतद्वचः॥ ॥ १ ॥ तस्मिन्प्रतिगृहीतेतुवाक्येहरिगणेश्वरः ॥ लक्ष्मणात्सुमहत्त्रासंवस्त्रंक्लिन्नमिवात्यजत् ॥ २ ॥ ततःकंठगतंमाल्यंचित्रंबहुगुणंमहत् ॥ चिच्छेद विमदश्चासीत्सुग्रीवोवानरेश्वरः ॥ ३ ॥ सलक्ष्मणंभीमबलंसर्ववानरसत्तमः ॥ अब्रवीत्प्रश्रितंवाक्यंसुग्रीवःसंप्रहर्षयन् ॥ ४ ॥ प्रनष्टाश्रीश्चकीर्तिश्चक पिराज्यंचशाश्वतम् ॥ रामप्रसादात्सौमित्रेपुनश्चाप्तमिदंमया ॥ ५ ॥ कःशक्तस्तस्यदेवस्यख्यातस्यस्वेनकर्मणा ॥ तादृशंप्रतिकुर्वीतअंशेनापिनृपा त्मज ॥ ६ ॥ सीतांप्राप्स्यतिधर्मात्मावधिष्यतिचरावणम् ॥ सहायमात्रेणमयाराघवःस्वेनतेजसा ॥ ७ ॥ सहायकृत्यंकिंतस्ययेनसप्तमहाद्रुमाः ॥ गिरिश्चवसुधाचैवबाणेनैकेनदारिताः ॥ ८ ॥ धनुर्विस्फारयाणस्ययस्यशब्देनलक्ष्मण ॥ सशैलाकंपिताभूमिःसहायैःकिंनुतस्यवै ॥ ९ ॥ अनुयात्रांनरें द्रस्यकरिष्येऽहंनरर्षभ ॥ गच्छतोरावणंहंतुंवैरिणंसपुरःसरम् ॥ १० ॥ यदिकिंचिदतिक्रांतंविश्वासात्प्रणयेनवा ॥ प्रेष्यस्यक्षमितव्यंमेनकश्चिन्ना पराध्यति ॥ ११ ॥ इतितस्यब्रुवाणस्यसुग्रीवस्यमहात्मनः ॥ अभवल्लक्ष्मणःप्रीतःप्रेम्णाचेदमुवाचह ॥ १२ ॥ सर्वथाहिममभ्रातासनाथोवानरेश्वर ॥ त्वयानाथेनसुग्रीवप्रश्रितेनविशेषतः ॥ १३ ॥ यस्तेप्रभावःसुग्रीवयच्चतेशौचमीदृशम् ॥ अर्हस्त्वंकपिराज्यस्याश्रियंभोक्तुमनुत्तमाम् ॥ १४ ॥ सहाये नतुसुग्रीवत्वयारामःप्रतापवान् ॥ वधिष्यतिरणेशत्रूनचिरान्नात्रसंशयः ॥ १५ ॥ धर्मज्ञस्यकृतज्ञस्यसंग्रामेष्वनिवर्तिनः ॥ उपपन्नंचयुक्तंचसुग्री वतवभाषितम् ॥ १६ ॥ दोषज्ञःप्रतिसामर्थ्यैकोन्योभाषितुमर्हति ॥ वर्जयित्वाममज्येष्ठंत्वांचवानरसत्तम ॥ १७ ॥

निर्वाहकोहं तु परिकरमात्रमित्यर्थः ॥ ७ ॥ सहायकृत्यं सहायसाध्यं कृत्यं येन पातालानि तत्स्थदैत्याश्च ॥ ८ ॥ ९ ॥ अनुयात्रां पश्चाद्गमनं सपुरःसरं युद्धाग्रे पुरःसरैः सहितं रावणम् ॥ १० ॥ विश्वासादयं न क्रूरोऽमित्र इति विश्वासात्प्रणयेन वा यदि किंचिदतिक्रांतम् अपराद्धं तदुक्तहेतुभ्यां प्रेष्यस्य दासस्य क्षमितव्यं क्षंतव्यं यस्माद्यो दासो नापराध्यति तादृशदासासंभवः स्वामिचित्तानुवर्तनस्य सर्वथासंभवात् ॥ ११ ॥ १२ ॥ १३ ॥ शौचमिंद्रियनिग्रहः ॥ १४ ॥ १५ ॥ उपपन्नं योग्यं युक्तं युक्तियुक्तम् ॥ १६ ॥ दोषज्ञो विद्वान्को रामसुग्रीवाभ्यामन्यो भवद्वाक्यसदृशं वाक्यं वक्तुमर्हति ॥ १७ ॥

॥ १८ ॥ वयस्यं रामम् ॥ १९ ॥ स्वोक्तवाक्यानां रामोक्तत्वशंकाव्यावृत्तये स्वोक्तित्वमेव बोधयन्स्वापराधं क्षमापयति यचेति । रामभाषितं सीतावियोगजविलापरूपम् ॥ २० ॥ नरैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ ॥ अथ सुग्रीवेणापरिमितदूतप्रेषणमनेककोटिनिजसेनासंमेलनं एवमिति ॥ १ ॥ २ ॥ पर्वतेषु उक्तातिरिक्तेषु तथा पश्चिमस्यां तु ये दिशि । पश्चिमस्यामित्यार्षम् ॥ ३ ॥ आदित्यभवने गिरौ ये स्थिताः उदयाचलास्ताचलयोरित्यर्थः । पद्माचलो गिरिविशेषः ॥ ४ ॥ ५ ॥ महाशैलस्तदाख्यपर्वतः ॥ ६ ॥ ७ ॥ तापसाश्रमरम्येषु रम्यतापसाश्रमेषु । यद्वा ते रम्येष्विति वनविशेषणम् ॥ ८ ॥ क्षिप्रमानयेत्युक्ते मयैव गंतव्यमित्याशंक्याह सामदानादिभिः कल्यैर्वानरैर्वेगवत्तरैरित्यादिना दुष्ट दंडः

सदृशश्चासि रामेण विक्रमेण बलेन च ॥ सहायो दैवतैर्दत्तश्चिराय हरिपुंगव ॥ १८ ॥ किंतु शीघ्रमितो वीर निष्क्रम त्वं मया सह ॥ सांत्वयस्व वयस्यं च भार्याहरणदुःखितम् ॥ १९ ॥ यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् ॥ मया त्वं परुषाण्युक्तस्तत्क्षमस्व सखे मम ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वा० आ० किं०कां० षट्त्रिंशः सर्गः ॥ ३६ ॥ एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ॥ हनूमंतं स्थितं पार्श्वे वचनं चेदमब्रवीत् ॥ १ ॥ महेंद्रहिमवद्विंध्यकैलासशिखरेषु च ॥ मंदरे पांडुशिखरे पंचशैलेषु ये स्थिताः ॥ २ ॥ तरुणादित्यवर्णेषु भ्राजमानेषु नित्यशः ॥ पर्वतेषु समुद्रांते पश्चिमस्यां तु ये दिशि ॥ ॥ ३ ॥ आदित्यभवने चैव गिरौ संध्याभ्रसन्निभे ॥ पद्माचलवनं भीमाः संश्रिता हरिपुंगवाः ॥ ४ ॥ अंजनांबुदसंकाशाः कुंजरेंद्रमहौजसः ॥ अंजने पर्वते चैव ये वसंति प्लवंगमाः ॥ ५ ॥ महाशैलगुहावासा वानराः कनकप्रभाः ॥ मेरुपार्श्वगताश्चैव ये च धूम्रगिरिं श्रिताः ॥ ६ ॥ तरुणादित्यवर्णाश्च पर्वते ये महारुणे ॥ पिबंतो मधु मैरेयं भीमवेगाः प्लवंगमाः ॥ ७ ॥ वनेषु च सुरम्येषु सुगंधिषु महत्सु च ॥ तापसाश्रमरम्येषु वनांतेषु समंततः ॥ ८ ॥ तांस्तांस्त्वमानय क्षिप्रं पृथिव्यां सर्ववानरान् ॥ सामदानादिभिः कल्यैर्वानरैर्वेगवत्तरैः ॥ ९ ॥ प्रेषिताः प्रथमं ये च मया ज्ञाता महाजवाः ॥ त्वरणार्थं तु भूयस्त्वं संप्रेषय हरीश्वरान् ॥ १० ॥ ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः ॥ इहानयस्व तान्शीघ्रं सर्वानेव कपीश्वरान् ॥ ११ ॥ अहोभिर्दशभिर्ये च नागच्छंति ममाज्ञया ॥ हंतव्यास्ते दुरात्मानो राजशासनदूषकाः ॥ १२ ॥ शतान्यथ सहस्राणि कोट्यश्च मम शासनात् ॥ प्रयांतु कपिसिंहानां निदेशे मम ये स्थिताः ॥ १३ ॥ मेघपर्वतसंकाशाश्छादयंत इवांबरम् ॥ घोररूपाः कपिश्रेष्ठा यांतु मच्छासनादितः ॥ १४ ॥ ते गतिज्ञा गतिं गत्वा पृथिव्यां सर्ववानराः ॥ आनयंतु हरीन्सर्वांस्त्वरिताः शासनान्मम ॥ १५ ॥ तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः ॥ दिक्षु सर्वासु विक्रांतान्प्रेषयामास वानरान् ॥ १६ ॥ ते पदं विष्णुविक्रांतं पतत्रिज्योतिरध्वगाः ॥ प्रयाताः प्रहिता राज्ञा हरयस्तु क्षणेन वै ॥ १७ ॥ ते समुद्रेषु गिरिषु वनेषु च सरस्सु च ॥ वानरा वानरान्सर्वान्रामहेतोरचोदयन् ॥ १८ ॥

कल्यैरुपायैः आनयेत्यस्य चानाययेत्यर्थ इति कतकः ॥ ९ ॥ ननु प्रेषिता एव पूर्वं दूता इत्यत्राह प्रेषिता इति । प्रथमं पूर्वं ये महाजवा दूताः प्रेषितास्ते मया ज्ञाता एव तथापि तेषां त्वरणार्थमपरान्हरीश्वरान्प्रेषय ॥ १० ॥ कामेषु तद्भोगेषु प्रसक्ता ये च दीर्घसूत्रा विलंबितव्यापाराः आनयस्व आनायय ॥ ११ ॥ ये दूताः ॥ १२ ॥ प्रेषणीयदूतसंख्यामाह शतानीति । एतेन दूतानंत्यमुक्तम् ॥ १३ ॥ तदेव स्पष्टयति छादयंत इवांबरमिति ॥ १४ ॥ गतिं गत्वा वेगवत्तरां गतिं गत्वा ॥ १५ ॥ १६ ॥ विष्णुविक्रांतं पदमाकाशम् । पतत्रिज्योतिरध्वगाः पक्षिणां नक्षत्राणां च मार्गगाः ॥ १७ ॥ १८ ॥

मृत्युकालोपमस्य निग्रहविषये इति शेषः ॥ १९ ॥ तस्माद्गिरेरंजनगिरेः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ असंख्यं बलमित्याह तेषां संख्या न विद्यत इति ॥ २५ ॥
॥ २६ ॥ ये च त्वरयितुं याताः हनुमत्प्रेषिताः महाद्रुमं अतिप्रसिद्धभगवद्धामभूतं माहेश्वरयज्ञवाटस्थं ददृशुः । पूर्वं नीलप्रेषितान्दूतांश्च ददृशुरिति शेषः । अतस्तेषां तत एव परावृत्तिः ॥ २७ ॥ माहे
श्वरो यज्ञः महेश्वरदैवत्यो दिव्योऽश्वमेध इति कतकः । सर्वदेवानां मनस्तोषो यत्र सः ॥ २८ ॥ अन्ननिस्यंदाद्धोमद्रव्याज्यादिस्रवणाज्जातानि ॥ २९ ॥ ३० ॥ औषधानि संजीवन्यादीनि ॥ ३१ ॥

मृत्युकालोपमस्याज्ञांराजराजस्यवानराः ॥ सुग्रीवस्याययुःश्रुत्वासुग्रीवभयशंकिताः ॥ १९ ॥ ततस्तेंजनसंकाशागिरेस्तस्मान्महाबलाः ॥ तिस्रःको
टचःप्लवंगानांनिर्ययुर्यत्रराघवः ॥ २० ॥ अस्तंगच्छतियत्रार्कस्तस्मिन्गिरिवरेरताः ॥ संतप्तहेमवर्णाभास्तस्मात्कोटचोदशच्युताः ॥ २१ ॥ कैलास
शिखरेभ्यश्चसिंहकेसरवर्चसाम् ॥ ततःकोटिसहस्राणिवानराणांसमागमन् ॥ २२ ॥ फलमूलेनजीवंतोहिमवंतमुपाश्रिताः ॥ तेषांकोटिसहस्राणां
सहस्रंसमवर्तत ॥ २३ ॥ अंगारकसमानानांभीमानांभीमकर्मणाम् ॥ विंध्याद्वानरकोटीनांसहस्राण्यपतन्द्रुतम् ॥ २४ ॥ क्षीरोदवेलानिलयास्त
मालवनवासिनः ॥ नारिकेलाशनाश्चैवतेषांसंख्यानविद्यते ॥ २५ ॥ वनेभ्योगह्वरेभ्यश्चसरिद्भ्यश्चमहाबलाः ॥ आगच्छद्वानरीसेनापिबंतीवदि
वाकरम् ॥ २६ ॥ येतुत्वरयितुंयातावानराःसर्ववानरान् ॥ तेवीराहिमवच्छैलेददृशुस्तंमहाद्रुमम् ॥ २७ ॥ तस्मिन्गिरिवरेपुण्येयज्ञोमाहेश्वरःपुरा ॥
सर्वदेवमनस्तोषोबभूवसुमनोरमः ॥ २८ ॥ अन्ननिस्यंदयातानिमूलानिचफलानिच ॥ अमृतस्वादुकल्पानिददृशुस्तत्रवानराः ॥ २९ ॥ तदन्नसं
भवंदिव्यंफलमूलंमनोहरम् ॥ यःकश्चित्सकृदश्नातिमासंभवतितर्पितः ॥ ३० ॥ तानिमूलानिदिव्यानिफलानिचफलाशनाः ॥ औषधानिच
दिव्यानिजगृहुर्हरिपुंगवाः ॥ ३१ ॥ तस्माच्चयज्ञायतनात्पुष्पाणिसुरभीणिच ॥ आनिन्युर्वानरागत्वासुग्रीवप्रियकारणात् ॥ ३२ ॥ तेतुसर्वेह
रिवराःपृथिव्यांसर्ववानरान् ॥ संचोदयित्वात्वरितंयूथानांजग्मुरग्रतः ॥ ३३ ॥ तेतुतेनमुहूर्तेनकपयःशीघ्रचारिणः ॥ किष्किंधांत्वरयाप्राप्ताःसुग्री
वोयत्रवानरः ॥ ३४ ॥ तेगृहीत्वौषधीःसर्वाःफलमूलंचवानराः ॥ तंप्रतिग्राहयामासुर्वचनंचेदमब्रुवन् ॥ ३५ ॥ सर्वेपरिसृताःशैलाःसरितश्चवनानिच ॥
पृथिव्यांवानराःसर्वेशासनादुपयांतिते ॥ ३६ ॥ एवंश्रुत्वाततोहृष्टःसुग्रीवप्लवगाधिपः ॥ प्रतिजग्राहचप्रीतस्तेषांसर्वमुपायनम् ॥ ३७ ॥ इत्यार्षे
श्रीम०वा०आ०कि०कां०सप्तत्रिंशः सर्गः ॥ ३७ ॥ प्रतिगृह्यचतत्सर्वमुपायनमुपाहृतम् ॥ वानरान्सांत्वयित्वाचसर्वानेवव्यसर्जयत् ॥ १ ॥ विसर्ज
यित्वासहरीन्सहस्रान्कृतकर्मणः ॥ मेनेकृतार्थमात्मानंराघवंचमहाबलम् ॥ २ ॥ सलक्ष्मणोभीमबलंसर्ववानरसत्तमम् ॥ अब्रवीत्प्रश्रितंवाक्यंसुग्री
वंसंप्रहर्षयन् ॥ ३ ॥ किष्किंधायाविनिष्क्रामयदितेसौम्यरोचते ॥ तस्यतद्वचनंश्रुत्वालक्ष्मणस्यसुभाषितम् ॥ ४ ॥

॥ ३२ ॥ ते तु सर्वे दूतरूपाः यूथानांतग्रतः स्वप्रेरितबलानामागमात्पूर्वमित्यर्थः ॥ ३३ ॥ ३४ ॥ ते हनुमत्प्रेष्यसहिता नीलप्रेषिता दूताः ॥ ३५ ॥ ३६ ॥ ३७ ॥ शैलमानः ॥ ॥ इति श्रीरामा
भिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ ॥ प्रतिगृह्येति ॥ १ ॥ राघवं च कृतार्थमित्यनुषंगः ॥ २ ॥ ३ ॥ विनिष्काम इति प्रार्थने लोट् ॥ ४ ॥

स्थेयं तत्र द्दातव्यमित्यर्थः ॥ ५ ॥ ६ ॥ एहि एतेत्यर्थः ॥ ७ ॥ स्त्रीदर्शनक्षमाः स्त्रीसमूहेपि राजदर्शनक्षमा अत्याप्ता इति यावत् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ हरिभिर्वाहकैः सलक्ष्मण इत्यनेनैकवाहनारोहणात्सख्यातिशयः सूचितः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ वानराश्च तथा अभवन् कृतांजलिपुटा अभवन्नित्यर्थः । आह्लादकत्वात्तटाकोपमा । तदुपमेयं वानराणां महत्सै

सुग्रीवःपरमप्रीतोवाक्यमेतदुवाचह ॥ एवंभवतुगच्छामस्थेयंत्वच्छासनेमया ॥ ५ ॥ तमेवमुक्त्वासुग्रीवोलक्ष्मणंशुभलक्षणम् ॥ विसर्जयामासतदा ताराद्याश्चैवयोषितः ॥ ६ ॥ एहीत्युच्चैर्हरिवरान्सुग्रीवःसमुदाहरत् ॥ तस्यतद्वचनंश्रुत्वाहरयःशीघ्रमाययुः ॥ ७ ॥ बद्धांजलिपुटाःसर्वेयेस्युःस्त्रीदर्शनक्षमाः ॥ तानुवाचततःप्राप्तान्राजार्कसदृशप्रभः ॥ ८ ॥ उपस्थापयतक्षिप्रंशिबिकांममवानराः ॥ श्रुत्वातुवचनंतस्यहरयःशीघ्रविक्रमाः ॥ ९ ॥ समुपस्थापयामासुःशिबिकांप्रियदर्शनाम् ॥ तामुपस्थापितांदृष्ट्वाशिबिकांवानराधिपः ॥ १० ॥ लक्ष्मणारुह्यतांशीघ्रमितिसौमित्रिमब्रवीत् ॥ इत्युक्त्वाकांचनंयानंसुग्रीवःसूर्यसन्निभम् ॥ ११ ॥ बहुभिर्हरिभिर्युक्तमारुरोहसलक्ष्मणः ॥ पांडुरेणातपत्रेणध्रियमाणेनमूर्धनि ॥ १२ ॥ शुक्लैश्चवालव्यजनैर्धूयमानैःसमंततः ॥ शंखभेरीनिनादैश्चवंदिभिश्चाभिनंदितः ॥ १३ ॥ निर्ययौप्राप्यसुग्रीवोराज्यश्रियमनुत्तमाम् ॥ सवानरशतैस्तीक्ष्णैर्बहुभिःशस्त्रपाणिभिः ॥ १४ ॥ परिकीर्णोययौतत्रयत्ररामोव्यवस्थितः ॥ सतंदेशमनुप्राप्यश्रेष्ठंरामनिषेवितम् ॥ १५ ॥ अवातरन्महातेजाःशिबिकायाःसलक्ष्मणः ॥ आसाद्यचततोरामंकृतांजलिपुटोऽभवत् ॥ १६ ॥ कृतांजलौस्थितेतस्मिन्वानराश्चाभवंस्तथा ॥ तटाकमिवतंदृष्ट्वारामःकुड्मलपंकजम् ॥ १७ ॥ वानराणांमहत्सैन्यंसुग्रीवेप्रीतिमानभूत् ॥ पादयोःपतितंमूर्ध्नातमुत्थाप्यहरीश्वरम् ॥ १८ ॥ प्रेम्णाचबहुमानाच्चराघवःपरिषस्वजे ॥ परिष्वज्यचधर्मात्मानिषीदेतिततोऽब्रवीत् ॥ १९ ॥ निषण्णंतंततोदृष्ट्वाक्षितौरामोब्रवीत्ततः ॥ धर्ममर्थंचकामंचकालेयस्तुनिषेवते ॥ २० ॥ विभज्यसततंवीरसराजाहरिसत्तम ॥ हित्वाधर्मंतथार्थंचकामंयस्तुनिषेवते ॥ २१ ॥ सवृक्षाग्रेयथासुप्तःपतितःप्रतिबुध्यते ॥ अमित्राणांवधेयुक्तोमित्राणांसंग्रहेरतः ॥ २२ ॥ त्रिवर्गफलभोक्ताचराजाधर्मेणयुज्यते ॥ उद्योगसमयस्त्वेषप्राप्तःशत्रुनिषूदन ॥ २३ ॥ संचिंत्यतांहिपिंगेशहरिभिःसहमंत्रिभिः ॥ एवमुक्तस्तुसुग्रीवोरामंवचनमब्रवीत् ॥ २४ ॥ प्रनष्टाश्रीश्चकीर्तिश्चकपिराज्यंचशाश्वतम् ॥ त्वत्प्रसादान्महाबाहोपुनःप्राप्तमिदंमया ॥ २५ ॥ तवदेवप्रसादाच्चभ्रातुश्चजयतांवर ॥ कृतंनप्रतिकुर्याद्यःपुरुषाणांहिदूषकः ॥ २६ ॥

न्यम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ वृक्षाग्रे सुप्तः पतितः सन्यथा प्रतिबुध्यते तथा कामपरो राज्यभ्रष्टः सन्प्रतिबुध्यत इत्यर्थः ॥ २२ ॥ त्रिवर्गो धर्मार्थकामलक्षणस्तस्य तत्फलस्य च यथाकालं भोक्ता ॥ २३ ॥ संचिंत्यतां सीतान्वेषणादिप्रतिज्ञापरिपूर्त्युपायश्चिंत्यतामित्यर्थः ॥ २४ ॥ २५ ॥ हे देव तव प्रसादात्तव भ्रातुः प्रसादाच्चेत्यर्थः । पुरुषाणां मध्ये स एव दूषको धर्मनाशक

इत्यर्थः ॥ २६ ॥ आदाय आहूय ॥ २७ ॥ २८ ॥ २९ ॥ शतैरित्यादौ केचिदित्यध्याहारः । परिवृता इत्यर्थकमावृता इति च सर्वत्र योज्यम् । शतसहस्रं लक्षम् । लक्षशतं कोटिः । दशसहस्रमयुतम् । कोटिलक्षं शंकुः ॥ ३० ॥ शंकुसहस्रमर्बुदम् । अर्बुदाद्दशगुणं मध्यम । तस्माद्दशगुणोंत्यः ततो विंशतिगुणः समुद्रः ततस्त्रिंशद्गुणः परार्धस्तेनासंख्यत्वमुक्तम् ॥ ३१ ॥ ३२ ॥ ये आनयिष्यंति ते त्वामभिगमिष्यंतीत्यन्वयः ॥ ३३ ॥ प्रबुद्धनीलोत्पलतुल्यदर्शनः विकसितनीलोत्पलसदृशनेत्रः ॥ ३४ ॥ भंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥ ॥ इतीति ॥ १ ॥ उपकर्तृत्वं तव सहजधर्म एवेति भगवान्सुग्रीवे स्तौति यदिति । वर्षत इति यत्तन्न चित्रं स्वाभाविकत्वादिति शेषः ॥ २ ॥ निर्मलां रविकिरणजतापर

एतेवानरमुख्याश्चशतशःशत्रुसूदन ॥ प्राप्ताश्चादायवलिनःपृथिव्यांसर्ववानरान् ॥ २७ ॥ ऋक्षाश्चवानराःशूरागोलांगूलाश्चराघव ॥ कांतारवनदुर्गाणामभिज्ञाघोरदर्शनाः ॥ २८ ॥ देवगंधर्वपुत्राश्चवानराःकामरूपिणः ॥ स्वैःस्वैःपरिवृताःसैन्यैर्वर्ततेपथिराघव ॥ २९ ॥ शतैःशतसहस्रैश्चवर्ततेकोटिभिस्तथा ॥ अयुतैश्चावृतावीरशंकुभिश्चपरंतप ॥ ३० ॥ अर्बुदैरर्बुदशतैर्मध्यैश्चांत्यैश्चवानराः ॥ समुद्राश्चपरार्धाश्चहरयोहरियूथपाः ॥ ३१ ॥ आगमिष्यंतितेराजन्महेंद्रसमविक्रमाः ॥ मेघपर्वतसंकाशामेरुविंध्यकृतालयाः ॥ ३२ ॥ तेत्वामभिगमिष्यंतिराक्षसंयोद्धुमाहवे ॥ निहत्यरावणंयुद्धेह्यानयिष्यंतिमैथिलीम् ॥ ३३ ॥ ततःसमुद्योगमवेक्ष्यवीर्यवान्हरिप्रवीरस्यनिदेशवर्तिनः ॥ बभूवहर्षाद्वसुधाधिपात्मजःप्रबुद्धनीलोत्पलतुल्यदर्शनः ॥ ॥ ३४ ॥ इत्यार्षे श्रीम०वा०आ०किष्किंधाकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥ इतिब्रुवाणंसुग्रीवंरामोधर्मभृतांवरः ॥ बाहुभ्यांसंपरिष्वज्यप्रत्युवाचकृतांजलिम् ॥ १ ॥ यदिंद्रोवर्षतेवर्षंनतच्चित्रंभविष्यति ॥ आदित्योसौसहस्रांशुःकुर्याद्वितिमिरंनभः ॥ २ ॥ चंद्रमारजनींकुर्यात्प्रभयासौम्यनिर्मलाम् ॥ त्वद्विधोवापिमित्राणांप्रीतिंकुर्यात्परंतप ॥ ३ ॥ एवंत्वयिनतच्चित्रंभवेद्यत्सौम्यशोभनम् ॥ जानाम्यहंत्वांसुग्रीवसततंप्रियवादिनम् ॥ ४ ॥ त्वत्सनाथःसखेसंख्येजेतास्मिसकलानरीन् ॥ त्वमेवमेसुहृन्मित्रंसाहाय्यंकर्तुमर्हसि ॥ ५ ॥ जहारात्मविनाशायमैथिलींराक्षसाधमः ॥ वंचयित्वातुपौलोमीमनुह्रादोयथाशचीम् ॥ ६ ॥ नचिरात्तंवधिष्यामिरावणंनिशितैःशरैः ॥ पौलोम्याःपितरंहतंशतक्रतुरिवारिहा ॥ ७ ॥ एतस्मिन्नंतरेचैवरजःसमभिवर्तत ॥ उष्णतीव्रांसहस्रांशोश्छादयद्गगनेप्रभाम् ॥ ८ ॥

हिताम् । त्वद्विधः सात्त्विको मित्राणां प्रत्युपकारेण प्रीतिं कुर्यादिति यत्तदपि न चित्रम् ॥ ३ ॥ एवं त्वयि मित्रप्रत्युपकारार्थं सेनामेलनं यत्तन्न चित्रम् । हे सौम्य शोभनं भद्रं जातम् ॥ ४ ॥ संख्ये युद्धे ॥ ॥ ५ ॥ यथापौलोमीपितरं वंचयित्वा कृतानुमतिकं कृत्वा शचीं योनुह्रादो जहारात्मविनाशाय । इंद्रस्तत्पितरमननुमंतारं हर्तारं चानुह्रादं हत्वा शचीं प्रत्यानीतवानिति पुराणगाथा । एवं य आत्मविनाशाय मैथिलीं जहार मारीचेन मां वंचयित्वा तेन चिराच्छीघ्रमारिहा इंद्र इव वधिष्यामि । पौलोम्याः पितरमिवेत्यनेन रावणकृतो ज्ञानव्यतिक्रमाभावः सूचितः ॥ ६ ॥ ७ ॥ अभिवर्तत अभ्यवर्तत ॥ ८ ॥

॥ ९ ॥ १० ॥ उक्तमेव प्रपंचयति निमेषेति ॥ ११ ॥ वनवासिभिः उक्तताल्लादिवनवासिभिः ॥ १२ ॥ हेमा हेमाचलः ॥ १३ ॥ १४ ॥ तारापिता सुषेणः ॥ १५ ॥ रुमापिता तारः ॥ १६ ॥



दिशःपर्याकुलाश्चासंस्तमसातेनदूषिताः ॥ चचालचमहीसर्वासशैलवनकानना ॥ ९ ॥ ततोनरेंद्रसंकाशैस्तीक्ष्णदंष्ट्रैर्महाबलैः ॥ कृत्स्नासंछादिताभूमिरसंख्येयैःप्लवंगमैः ॥ १० ॥ निमेषांतरमात्रेणततस्तैर्हरियूथपैः ॥ कोटीशतपरीवारैर्वानरैर्हरियूथपैः ॥ ११ ॥ नादेयैःपार्वतेयैश्चसामुद्रैश्चमहाबलैः ॥ हरिभिर्मेघनिर्ह्रादैरन्यैश्चवनवासिभिः ॥ १२ ॥ तरुणादित्यवर्णैश्चशशिगौरैश्चवानरैः ॥ पद्मकेसरवर्णैश्चश्वेतैर्हेमकृतालयैः ॥ १३ ॥ कोटीसहस्रैर्दशभिःश्रीमान्परिवृतस्तदा ॥ वीरःशतबलिर्नामवानरःप्रत्यदृश्यत ॥ १४ ॥ ततःकांचनशैलाभस्तारायावीर्यवान्पिता ॥ अनेकैर्बहुसाहस्रैःकोटिभिःप्रत्यदृश्यत ॥ १५ ॥ तथापरेणकोटीनांसहस्रेणसमन्वितः ॥ पितारुमायाःसंप्राप्तःसुग्रीवश्वशुरोविभुः ॥ १६ ॥ पद्मकेसरसंकाशस्तरुणार्कनिभाननः ॥ बुद्धिमान्वानरश्रेष्ठःसर्ववानरसत्तमः ॥ १७ ॥ अनेकैर्बहुसाहस्रैर्वानराणांसमन्वितः ॥ पिताहनुमतःश्रीमान्केसरीप्रत्यदृश्यत ॥ १८ ॥ गोलांगूलमहाराजोगवाक्षोभीमविक्रमः ॥ वृतःकोटिसहस्रेणवानराणामदृश्यत ॥ १९ ॥ ऋक्षाणांभीमवेगानांधूम्रःशत्रुनिबर्हणः ॥ वृतःकोटिसहस्राभ्यांद्वाभ्यांसमभिवर्तत ॥ २० ॥ महाबलनिभैर्घोरैःपनसोनामयूथपः ॥ आजगाममहावीर्यैस्तिसृभिःकोटिभिर्वृतः ॥ २१ ॥ नीलांजनचयाकारोनीलोनामैषयूथपः ॥ अदृश्यतमहाकायःकोटिभिर्दशभिर्वृतः ॥ २२ ॥ ततःकांचनशैलाभोगवयोनामयूथपः ॥ आजगाममहावीर्यःकोटिभिःपंचभिर्वृतः ॥ २३ ॥ दरीमुखश्चबलवान्यूथपोभ्याययौतदा ॥ वृतःकोटिसहस्रेणसुग्रीवंसमवस्थितः ॥ २४ ॥ मैंदश्चद्विविदश्चोभावश्विपुत्रौमहाबलौ ॥ कोटिकोटिसहस्रेणवानराणामदृश्यताम् ॥ २५ ॥ गजश्चबलवान्वीरस्तिसृभिःकोटिभिर्वृतः ॥ ऋक्षराजोमहातेजाजांबवान्नामनामतः ॥ २६ ॥ कोटिभिर्दशभिर्व्याप्तःसुग्रीवस्यवशेस्थितः ॥ रुमणोनामतेजस्वीविक्रांतैर्वानरैर्वृतः ॥ २७ ॥ आगतोबलवांस्तूर्णंकोटीशतसमावृतः ॥ ततःकोटिसहस्राणांसहस्रेणशतेनच ॥ २८ ॥ पृष्ठतोऽनुगतःप्राप्तोहरिभिर्गंधमादनः ॥ ततःपद्मसहस्रेणवृतःशंखशतेनच ॥ २९ ॥ युवराजोंगदःप्राप्तःपितुस्तुल्यपराक्रमः ॥ ततस्ताराद्युतिस्तारोहरिभिर्भीमविक्रमैः ॥ ३० ॥ पंचभिर्हरिकोटीभिर्दूरतःपर्यदृश्यत ॥ इंद्रजानुःकपिर्वीरोयूथपःप्रत्यदृश्यत ॥ ३१ ॥ एकादशानांकोटीनामीश्वरस्तैश्चसंवृतः ॥ ततोरंभस्त्वनुप्राप्तस्तरुणादित्यसन्निभः ॥ ३२ ॥

॥ १७ ॥ १८ ॥ गोलांगूलो वानरावांतरजातिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ताराद्युतिर्नक्षत्रप्रभः अयं रुमापितुरन्यस्तारः ॥ ३० ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ शिरोभिर्न्यवेदयन्बहुसंमर्दात् दूरे स्थित्वा नमस्कारेणैवात्मानं न्यवेदयन्नित्यर्थः ॥ ४१ ॥ अपरे संगम्य समीपदेशं प्राप्य यथोचितं निवेद्य जग्मुः । अपरे हनूमदंगदादयः समागम्य निकटमागत्य स्थिताः ॥ ४२ ॥ धर्मज्ञो राजधर्मज्ञः रामाभिमुखं प्रांजलिः स्थितो भूत्वा सर्वान्यूथपतीन्निवेदयित्वा यूथपानब्रवीत् ॥ ॥ ४३ ॥ भो वानरेंद्राः पर्वतादिषु यथासुखं स्वानि बलानि निवेशयित्वा तेषु यो बलज्ञः बलतत्त्वज्ञः प्रतिपत्तुं क आगतः को नागत इति ज्ञातुमीष्टे ईशो भवेत् । लिङर्थे लट् ॥ ४४ ॥ भैवमानः ॥

अयुतेनवृतश्चैवसहस्रेणशतेनच ॥ ततोयूथपतिर्वीरोदुर्मुखोनामवानरः ॥ ३३ ॥ प्रत्यदृश्यतकोटीभ्यांद्वाभ्यांपरिवृतोबली ॥ कैलासशिखराकारैर्वानरैर्भीमविक्रमैः ॥ ३४ ॥ वृतःकोटिसहस्रेणहनुमान्प्रत्यदृश्यत ॥ नलश्चापिमहावीर्यःसंवृतोद्रुमवासिभिः ॥ ३५ ॥ कोटीशतेनसंप्राप्तःसहस्रेणशतेनच ॥ ततोदरीमुखःश्रीमान्कोटिभिर्दशभिर्वृतः ॥ ३६ ॥ संप्राप्तोभिनदन्तस्यसुग्रीवस्यमहात्मनः ॥ शरभःकुमुदोवह्निर्वानरोरंभएवच ॥ ३७ ॥ एतेचान्येचबहवोवानराःकामरूपिणः ॥ आवृत्यपृथिवींसर्वांपर्वतांश्चवनानिच ॥ ३८ ॥ यूथपाःसमनुप्राप्तायेषांसंख्यानविद्यते ॥ आगताश्चानिविष्टाश्चपृथिव्यांसर्ववानराः ॥ ३९ ॥ आप्लवंतःप्लवंतश्चगर्जंतश्चप्लवंगमाः ॥ अभ्यवर्तंतसुग्रीवंसूर्यमभ्रगणाइव ॥ ४० ॥ कुर्वाणाबहुशब्दांश्चप्रकृष्टाबाहुशालिनः ॥ शिरोभिर्वानरेंद्रायसुग्रीवायन्यवेदयन् ॥ ४१ ॥ अपरेवानरश्रेष्ठाःसंगम्यचयथोचितम् ॥ सुग्रीवेणसमागम्यस्थिताःप्रांजलयस्तदा ॥ ॥ ४२॥ सुग्रीवस्त्वरितोरामेसर्वांस्तांस्त्वरितांस्तदा ॥ निवेदयित्वाधर्मज्ञःस्थितःप्रांजलिरब्रवीत् ॥ ४३ ॥ यथासुखंपर्वतनिर्झरेषुवनेषुवर्षेषुचवानरेंद्राः ॥ निवेशयित्वाविधिवद्बलानिबलंबलज्ञःप्रतिपत्तुमीष्टे ॥ ४४ ॥ इत्यार्षे श्रीमद्रा०वाल्मी० आदिकाव्येकिष्किंधाकांडेएकोन च० सर्गः ॥३९॥

अथराजासमृद्धार्थःसुग्रीवःप्लवगेश्वरः ॥ उवाचनरशार्दूलंरामंपरबलार्दनम् ॥ १ ॥ आगताविनिविष्टाश्चबलिनःकामचारिणः ॥ वानरेंद्रामहेंद्राभायेमद्विषयवासिनः ॥ २ ॥ तइमेबहुविक्रान्तैर्बलिभिर्भीमविक्रमैः ॥ आगतावानराघोरादैत्यदानवसन्निभाः ॥ ३ ॥ ख्यातकर्मापदानाश्चबलवंतोजितक्लमाः ॥ पराक्रमषुविख्याताव्यवसायेषुचोत्तमाः ॥ ४ ॥ पृथिव्यंबुचरारामनानानगनिवासिनः ॥ कोट्योघाश्चइमेप्राप्तावानरास्तवकिंकराः ॥ ५ ॥ निदेशवर्तिनःसर्वेसर्वेगुरुहितेस्थिताः ॥ अभिप्रेतमनुष्ठातुंतवशक्ष्यंत्यरिंदम ॥६॥ तइमेबहुसाहस्रैरनेकैर्बहुविक्रमैः ॥ आगतावानराघोरादैत्यदानवसन्निभाः ॥ ७ ॥ यन्मन्यसेनरव्याघ्रप्राप्तकालंतदुच्यताम् ॥ त्वत्सैन्यंत्ववशेयुक्तमाज्ञापयितुमर्हसि ॥ ८ ॥

॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ ॥ अथेति ॥ १ ॥ विनिविष्टाश्चेति स्वस्वसेनानिवेश इति शेषः निवेशिता इत्यर्थः । मद्विषयवासिनः मम विषये वानरराज्ये वासिनः ॥ २ ॥ बहुविक्रांतैर्बहुषु स्थलेषु कृतपराक्रमः अतएव भीमविक्रमैः स्वयूथैः सहेति शेषः ॥ ३ ॥ ख्यातं कर्मणि युद्धे अपदानं शौर्यं येषाम् ॥ ॥ ४ ॥ अंबुचराः समुद्रमध्यद्वीपचराः । कोट्योघा इत्यसंख्यत्वोपलक्षणम् ॥ ५ ॥ गुरुहिते स्वामिहिते तवाभिमितमनुष्ठातुं शक्ष्यंति समर्था इत्यर्थः ॥ ६ ॥ अनेकैः सहेति शेषः ॥ ७ ॥ प्राप्तकालं कालो

चितं तदुच्यतां मन्त्रियोगः कार्य इत्यर्थः । नन्विदं त्वत्सैन्यं न मन्त्रियोज्यतामर्हति तत्राह त्वत्सैन्यमिति ॥ ८ ॥ इदं कार्यं सीतान्वेषणरूपम् ॥ ९ ॥ १० ॥ ११ ॥ तस्मिन्काले वृत्तांतावगत्यनंतरकाले ॥ १२ ॥ अस्मिन्कार्ये वानरप्रेषणरूपे अस्य कार्यस्येति सिद्धेरिति शेषः ॥ १३ ॥ मम कार्यविनिश्चयं ज्ञात्वेति शेषः । हे वीर त्वं मम सुहृदित्यन्वयः ॥ १४ ॥ द्वितीयः सुहृल्लक्ष्मणापेक्षया ॥ १५ ॥ ॥ १६ ॥ सोमसूर्यनिभैस्तत्सदृशकांतिभिः ॥ १७ ॥ नयो नीतिः विज्ञः तज्ज्ञस्त्वमिति शेषः ॥ १८ ॥ निलयं रावणस्य निलयस्थानं यद्वा चतुर्दिक्षु रावणवासस्थानमनेन सूचितम् ॥ १९ ॥ मार्गध्वमिति सामान्यतो नियोगः । विशेषेणाह नदीमित्यादि । द्वितीयांतानां माप्येति शेषः ॥ २० ॥ कालिंदीं यमुनां यामुनो गिरिर्यमुनोत्पत्तिस्थानभूतः कलिंदगिरिः ॥ २१ ॥ महीकालमह्यौ नद्यौ । अथ माच्यदेशा

काममेवमिदंकार्यंविदितंममतत्त्वतः ॥ तथापितुयथायुक्तमाज्ञापयितुमर्हसि ॥ ९ ॥ तथाब्रुवाणंसुग्रीवंरामोदशरथात्मजः ॥ वाहुभ्यांसंपरिष्वज्यइदं वचनमब्रवीत् ॥ १० ॥ ज्ञायतांसौम्यवैदेहीयदिजीवतिवानवा ॥ सचदेशोमहाप्राज्ञयस्मिन्वसतिरावणः ॥ ११ ॥ अभिगम्यसुवैदेहींनिलयंरावणस्यच ॥ प्राप्तकालंविधास्यामितस्मिन्कालेसहत्वया ॥ १२ ॥ नाहमस्मिन्प्रभुःकार्येवानरेंद्रनलक्ष्मणः ॥ त्वमस्यहेतुःकार्यस्यप्रभुश्चप्लवगेश्वर ॥ ॥ १३ ॥ त्वमेवाज्ञापयविभोममकार्यविनिश्चयम् ॥ त्वंहिजानासिमेकार्यंममवीरनसंशयः ॥ १४ ॥ सुहृद्द्वितीयोविक्रांतः प्राज्ञःकालविशेषवित् ॥ भवानस्मद्धितेयुक्तःसुहृदाप्तोऽर्थवित्तमः ॥ १५ ॥ एवमुक्तस्तुसुग्रीवोविनतंनामयूथपम् ॥ अब्रवीद्रामसान्निध्येलक्ष्मणस्यचधीमतः ॥१६॥ शैलाभंमेघनिर्घोषमूर्जितंप्लवगेश्वरम् ॥ सोमसूर्यनिभैःसार्धंवानरैर्वानरोत्तम ॥ १७ ॥ देशकालनयैर्युक्तोविज्ञःकार्यविनिश्चये ॥ वृतःशतसहस्रेणवानराणांतरस्विनाम् ॥१८॥ अधिगच्छदिशंपूर्वांसशैलवनकाननाम् ॥ तत्रसीतांचवैदेहींनिलयंरावणस्यच ॥ १९ ॥ मार्गध्वंगिरिदुर्गेषुवनेषुचनदीषुच ॥ नदीं भागीरथींरम्यांसरयूंकौशिकींतथा ॥ २० ॥ कालिंदींयमुनांरम्यांयामुनंचमहागिरिम् ॥ सरस्वतींचसिंधुंचशोणंमणिनिभोदकम् ॥ २१ ॥ महीं कालमहींचापिशैलकाननशोभिताम् ॥ ब्रह्ममालान्विदेहांश्चमालवान्काशिकोसलान् ॥ २२ ॥ मागधांश्चमहाग्रामान्पुंड्रान्वंगांस्तथैवच ॥ भूमिंचकोशकाराणांभूमिंचरजताकराम् ॥ २३ ॥ सर्वंचतद्विचेतव्यंमृगयद्भिस्ततस्ततः ॥ रामस्यदयितांभार्यांसीतांदशरथस्नुषाम् ॥ २४ ॥ समुद्रमवगाढांश्चपर्वतान्पत्तनानिच ॥ मंदरस्यचयेकोटिंसंश्रिताःकेचिदालयाः ॥ २५ ॥ कर्णप्रावरणाश्चैवतथाचाप्योष्ठकर्णकाः ॥ घोरलोहमुखाश्चैवजवनाश्चैकपादकाः ॥ २६ ॥ अक्षयावलवंतश्चतथैवपुरुषादकाः ॥ किरातास्तीक्ष्णचूडाश्चहेमाभाःप्रियदर्शनाः ॥ २७ ॥

नाह ब्रह्ममालानिति । हिमवद्विंध्यमध्यवर्त्यार्यावर्तापेक्षया माच्यादिविभागोत्र विवक्षित इत्याहुः ॥ २२ ॥ कोशकाराणां भूमिं कौशेयकतंतूत्पादकजंतूत्पत्तिस्थानभूतां भूमिं रजताकरां रजतखनिम् ॥ २३ ॥ एतानि माप्य एतत्पूर्वोक्तं सर्वं सर्वावयवं विचेतव्यम् । तत्र किं विचेतव्यं तत्राह रामस्य दयितामिति ॥ २४ ॥ समुद्रमवगाढान्समुद्रांतर्गतान् पत्तनानि समुद्रद्वीपवर्तीनि आलया ग्रामाः ॥ २५ ॥ कर्णप्रावरणाः प्रावरणं वस्त्रं तद्वद्विशालश्रवणपुटाः ओष्ठकर्णकाः ओष्ठपर्यंतकर्णाः लोहमुखाः लोहवत्कठिनकृष्णमुखाः एकपादकाः एकपादकाः संतो जवना वेगगतयः ॥ २६ ॥ अक्षया अक्षयसंतानाः एते उक्ताः

पुरुषाः तथैव पुरुषादका रक्षोभेदाः तीक्ष्णसूच्यग्रसदृशतैक्ष्ण्यवती चूडा केशपाशो येषाम् ॥ २७ ॥ आममीनाशना अपक्वमत्स्यभुजः नरव्याघ्राः अधःप्रदेशे नराकारा एव संत उपरिभागे व्याघ्राकारा अत एव घोराः ॥ २८ ॥ काननौकस इति संबोधनं गिरिभिर्ये च गम्यंते गिरीनाक्रम्य ये देशा द्वीपाश्च गम्यंते ये च प्लवनेन कूर्दनेन गम्यंते ये च प्लवेनोडुपेन गम्यंते ते च विचेया इत्यन्वयः ॥ २९ ॥ ततः परं यत्नवंतो भूत्वा सप्तराज्योपशोभितं यवद्वीपं तथा सुवर्णद्वीपं रूप्यकद्वीपं विचेतव्यमिति शेषः । सुवर्णकरमंडितमिति । सुवर्णं कुर्वंति ये तैः शोभितम् ॥ ३० ॥ ततः परं यवाख्यद्वीपमतिक्रम्य शिशिरनामा पर्वतोस्ति ॥ ३१ ॥ एतेषामुक्तद्वीपानाम् ॥ ३२ ॥ ततः समुद्रस्य पारं गत्वा रक्तवर्णजलम् अतएव शोणाख्यं नदं प्राप्य ॥ ३३ ॥ तस्य तीर्थेष्ववतारभेदेषु ॥ ३४ ॥ बहुनिष्कुटाः बहू पवनप्रदेशाः दरीमंतो दरीयुक्ताः ॥ ३५ ॥ समुद्रद्वीपान् उक्तदेशात्परिवर्तीक्षुसमुद्रद्वीपान् ऊर्मिमंतं अतएव क्रोशंतं महाघोषम् ॥ ३६ ॥ तत्र इक्षुसमुद्रे समनुज्ञाताः समनुज्ञातच्छायाद्वारकग्रहणसामर्थ्या

आममीनाशनाश्चापिकिराताद्वीपवासिनः ॥ अंतर्जलचराघोरानरव्याघ्राइतिस्मृताः ॥२८॥ एतेषामाश्रयाःसर्वेविचेयाःकाननौकसः ॥ गिरिभिर्येचगम्यंतेप्लवनेनप्लवेनच ॥ २९ ॥ यत्नवंतोयवद्वीपंसप्तराज्योपशोभितम् ॥ सुवर्णरूप्यकद्वीपंसुवर्णकरमंडितम् ॥ ३० ॥ यवद्वीपमतिक्रम्यशिशिरोनामपर्वतः ॥ दिवंस्पृशतिशृंगेणदेवदानवसेवितः ॥ ३१ ॥ एतेषांगिरिदुर्गेषुप्रपातेषुवनेषुच ॥ मार्गध्वंसहिताःसर्वेरामपत्नींयशस्विनीम् ॥ ३२ ॥ ततोरक्तजलंप्राप्यशोणाख्यंशीघ्रवाहिनम् ॥ गत्वापारंसमुद्रस्यसिद्धचारणसेवितम् ॥३३॥ तस्यतीर्थेषुरम्येषुविचित्रेषुवनेषुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ ३४ ॥ पर्वतप्रभवानद्यःसुभीमबहुनिष्कुटाः ॥ मार्गितव्यादरीमंतःपर्वताश्चवनानिच ॥ ३५ ॥ ततःसमुद्रद्वीपांश्चसुभीमान्द्रष्टुमर्हथ ॥ ऊर्मिमंतंमहारौद्रंक्रोशंतमनिलोद्धतम् ॥ ३६ ॥ तत्रासुरामहाकायाश्छायांगृह्णंतिनित्यशः ॥ब्रह्मणासमनुज्ञातादीर्घकालंबुभुक्षिताः॥ ॥ ३७ ॥ तंकालमेघप्रतिमंमहोरगनिषेवितम् ॥ अभिगम्यमहानादंतीर्थेनैवमहोदधिम् ॥ ३८ ॥ ततोरक्तजलंभीमंलोहितंनामसागरम् ॥ गत्वाप्रेक्ष्यथतांचैववृहतींकूटशाल्मलीम् ॥ ३९ ॥ गृहंचवैनतेयस्यनानारत्नविभूषितम् ॥ तत्रकैलाससंकाशंविहितंविश्वकर्मणा ॥४०॥ तत्रशैलनिभाभीमामंदेहानामराक्षसाः ॥ शैलशृंगेषुलंबंतेनानारूपाभयावहाः ॥ ४१ ॥ तेपतंतिजलेनित्यंसूर्यस्योदयनंप्रति ॥ अभितप्ताःस्मसूर्येणलंबंतेस्मपुनःपुनः ॥ ४२ ॥ निहताब्रह्मतेजोभिरहन्यहनिराक्षसाः ॥ ततःपांडुरमेघाभंक्षीरोदंनामसागरम् ॥ ४३ ॥

दिमंतः छायागृहीतप्राणिभक्षणानुमतिकाश्च ॥ ३७ ॥ इक्षुरसस्यापि श्यामत्वात्तदुदधेः कालमेघप्रतिमत्वं तीर्थेन उपायेनाऽभिगम्य प्राप्य ॥ ३८ ॥ तत इक्षुसागरात् परतः रक्तजलं रक्तवर्णजलम् अतएव लोहिताख्यं कूटशाल्मलीं शाल्मलीद्वीपत्वप्रयोजकं वृक्षं जंबूद्वीपे जंबुवत् ॥ ३९ ॥ तत्र कूटशाल्मलीसमीपे ॥ ४० ॥ शैलशृंगेषु सुरासमुद्रांतर्वर्तिशैलशृंगेषु लंबंते अधोमुखा इति शेषः ॥ ४१ ॥ सूर्यस्योदयनं प्रति सूर्योदयं प्राप्योर्ध्वमुखाः सूर्येण युध्यमानाः सूर्येणाभितप्तास्तन्मंडलब्रह्मतेजोभितप्ताः ब्रह्मतेजोभिरहन्यहनि त्रैवर्णिकप्रवर्तितैर्ब्रह्मविद्यातेजोभिर्निहताः संतः सुरोदजले पतंति ततः पुनरुज्जीविता लंबंते स्म शैलशृंगेष्विति शेषः । अत्र कनककृतः शैलशृंगेषु लंबंत इत्यादिश्लोकद्वयं प्रक्षिप्तम् । तानि रक्षांसि मंदेहारुणे द्वीपे प्रक्षिपंतीति श्रुतौ । अरुणद्वीपे तत्प्रक्षेपोक्तेरत्रारुणद्वीपप्रसंगाभावात्प्राचीनपुस्तकेष्वदर्शनाच्चेत्याहुः । ततः पांडुरेति । अत्र सुराक्षीरोदयोर्मध्ये सर्पिर्दधिसमुद्रयोर्विवेचनानुक्तिस्तत्र विचेतव्यदुर्गस्थलाभावादिति कतकः । अनुक्तमपि तदुभयविवेचनमर्थतोऽवगंतव्यमिति तीर्थः ॥ ४२ ॥ ४३ ॥

मुक्ताहारमिव ऊर्मिभिस्तद्दंतमित्यर्थः ॥४४॥ सरश्च नाम्ना सुदर्शनमित्यन्वयः ॥४५॥ नामशब्दः प्रसिद्ध्यर्थः ॥४६॥ नलिनीमुक्तं सुदर्शनं सर इत्यर्थः ॥ ४७ ॥ जलोदं शुद्धजलरूपोदकं तत्र जलसमुद्र तत्कोपजं और्वब्रह्मर्षिकोपजं हयमुखं वडवामुखं तेजो ब्रह्मणा कृतमस्ति ॥४८॥ अस्याद्भुतं महावेगं सचराचरं सर्वं जगद्युगांते ओदनं वदंति । अनेन तस्य ब्रह्मरूपता सूचिता । तद्वडवामुखं दृष्ट्वा तत्र पतनभीत्या विक्रोशतामसमर्थानां चात्समर्थानामपि सागरौकसां भूतानां यो नादोभूत्स श्रूयते ॥४९॥ स्वादूदस्य शुद्धोदकस्य समुद्रस्य उत्तरे तीरे इति पांक्तः पाठः ॥५०॥ चंद्रप्रतीकाशं श्वेतवर्णम् ॥५१॥५२ ॥ त्रिशिराः शिरःप्रदेशवर्तित्रिस्कंधवान् सवेदिकः आधारवेदिबंधसहितः ॥ ५३ ॥ अयमेव तालः पूर्वस्यां दिशि पूर्वदिग्व्यवस्थाया निर्माणं कृतम् अभिज्ञाशंकुवत् प्रमाणनिर्माणं कृतमित्यर्थः ॥ ५४ ॥ कोटिः शिखरं

गत्वाद्रक्ष्यथदुर्धर्षांमुक्ताहारमिवोर्मीभिः ॥ तस्यमध्येमहाञ्छ्वेतऋषभोनामपर्वतः ॥ ४४ ॥ दिव्यगंधैःकुसुमितैराचितैश्चनगैर्वृतः ॥ सरश्चराजितैः पद्मैर्ज्वलितैर्हैमकेसरैः ॥ ४५ ॥ नाम्नासुदर्शनंनामराजहंसैःसमाकुलम् ॥ विबुधाश्चारणायक्षाःकिन्नराश्चाप्सरोगणाः ॥ ४६ ॥ हृष्टाःसमधिगच्छंतिनलिनींतांरिरंसवः ॥ क्षीरोदंसमतिक्रम्यतदाद्रक्ष्यथवानराः ॥ ४७ ॥ जलोदंसागरंशीघ्रंसर्वभूतभयापहम् ॥ तत्रतत्कोपजंतेजःकृतंहयमुखंमहत् ॥ ॥ ४८ ॥ अस्याद्भुतंमहावेगमोदनंसचराचरम् ॥ तत्रविक्रोशतांनादोभूतानांसागरौकसाम् ॥ श्रूयतेचासमर्थानांदृष्ट्वाभूद्वडवामुखम् ॥ ४९ ॥ स्वादूदस्योत्तरेतीरेयोजनानित्रयोदश ॥ जातरूपशिलोनामसुमहान्कनकप्रभः ॥ ५० ॥ तत्रचंद्रप्रतीकाशंपन्नगंधरणीधरम् ॥ पद्मपत्रविशालाक्षंततोद्रक्ष्यथवानराः ॥ ५१ ॥ आसीनंपर्वतस्याग्रेसर्वदेवनमस्कृतम् ॥ सहस्रशिरसंदेवमनंतंनीलवाससम् ॥ ५२ ॥ त्रिशिराःकांचनःकेतुस्तालस्तस्यमहात्मनः ॥ स्थापितःपर्वतस्याग्रेविराजतिसवेदिकः ॥ ५३ ॥ पूर्वस्यांदिशिनिर्माणंकृतंतत्रिदशेश्वरैः ॥ ततःपरंहेममयःश्रीमानुदयपर्वतः॥५४॥ तस्यकोटिर्दिवंस्पृष्ट्वाशतयोजनमायता ॥ जातरूपमयीदिव्याविराजतिसवेदिका ॥५५॥ सालैस्तालैस्तमालैश्चकर्णिकारैश्चपुष्पितैः ॥ जातरूपमयैर्दिव्यैःशोभतेसूर्यसन्निभैः ॥ ५६ ॥ तत्रयोजनविस्तारमुच्छ्रितंदशयोजनम् ॥ शृंगंसौमनसंनामजातरूपमयंध्रुवम् ॥ ५७ ॥ तत्रपूर्वंपदंकृत्वापुराविष्णुस्त्रिविक्रमे ॥ द्वितीयंशिखरेमेरोश्चकारपुरुषोत्तमः ॥ ५८ ॥ उत्तरेणपरिक्रम्यजंबूद्वीपंदिवाकरः ॥ दृश्योभवतिभूयिष्ठंशिखरंतन्महोच्छ्रयम् ॥ ॥ ५९ ॥ तत्रवैखानसानामवालखिल्यामहर्षयः ॥ प्रकाशमानादृश्यंतेसूर्यवर्णास्तपस्विनः ॥६० ॥ अयंसुदर्शनोद्वीपःपुरोयस्यप्रकाशते ॥ तस्मिंस्तेजश्चचक्षुश्चसर्वप्राणभृतामपि ॥ ६१ ॥ शैलस्यतस्यपृष्ठेषुकंदरेषुवनेषुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ ६२ ॥

सवेदिका साधारपर्वता ॥ ५५ ॥ ५६ ॥ तत्र शतयोजनदीर्घे उदयगिरिशिखरे ॥ ५७ ॥ तत्र सौमनसे शृंगे त्रिविक्रमे त्रिभिः पदैस्त्रिलोक्या आक्रमणप्रस्तावे प्रथमं पदं तत्र कृत्वा द्वितीयं पदं मेरोः शिखरे चकार ॥ ५८ ॥ अस्तानंतरमुत्तरेण जंबूद्वीपं परिक्रम्य तन्महोच्छ्रयं शिखरं सौमनसाख्यं प्राप्य स्थितो दिवाकरो जंबूद्वीपवर्तिनां भूयिष्ठं दृश्यो भवति सौमनसे शिखरे इत्यर्थः । इदं सत्ययुगाभिप्रायम् । त्रेतायां क्षीरसागरमध्यगस्य द्वापरे सुरोदमध्यगस्य कलौ लंकामध्यगस्य जंबूद्वीपस्थमनुष्यदृश्यतायाः अन्यत्रोक्तत्वात् ॥ ५९ ॥ ६० ॥ यस्य पुरः पुरस्तात्समीपे एव अयं प्रागुक्तसुदर्शनसरश्चिह्नो द्वीपः प्रकाशते

तस्मिन्सौमनसशिखरे भगवत्युदिते सर्वप्राणभृतां प्राणिनां तेजःसंबंधो भवति चक्षुश्च प्रकाशते ॥ ६१ ॥ ६२ ॥ कांचनशैलस्य सूर्यस्य च तेजसा आविष्टा समाक्रांता पूर्वा संध्या उदयावच्छिन्ना पूर्वा दिक् रक्ता सती प्रकाशते ॥ ६३ ॥ तदेवाह पूर्वमिति । चो हेतौ यतो भुवनस्य प्रकाशनहेतोः सूर्यस्योदयनमवेक्ष्य पूर्वं प्रथमं पृथिव्या एतद्द्वारमूर्ध्वस्थानां पृथिवीप्रवेशस्य द्वारं पृथ्वीस्थानां भुवनस्य ब्रह्मभुवनस्य प्रवेशद्वारमेतदुदयगिरिरूपं कृतमत एषा पूर्वा दिगुच्यते । अन्ये तु एतद्द्वारमेतद्दिग्वर्तिमहद्भूविवरं सृष्टं ब्रह्मणा तस्मादेषा पूर्वा दिगुच्यते ॥ ६४ ॥ तस्य शैलस्य उदयशैलस्य ॥ ६५ ॥ ततः परम् उदयाद्रेः पुरस्तात्त्रिदशावृता तद्दिगधिष्ठात्रिंद्रादित्रिदशाधिष्ठिता । उदयाचलात्परमगम्यत्वे हेतुमाह रहितेति ॥ ६६ ॥ उक्तार्थोपसंहारः शैलेष्वित्यादि ॥ ६७ ॥ ६८ ॥ ६९ ॥ सिद्धार्थाः कृतान्वेषणकृत्याः ॥७०॥

कांचनस्यचशैलस्यसूर्यस्यचमहात्मनः ॥ आविष्टातेजसासंध्यापूर्वारक्ताप्रकाशते ॥ ६३ ॥ पूर्वमेतत्कृतंद्वारंपृथिव्याभुवनस्यच ॥ सूर्यस्योदयनंचैवपूर्वाह्येषादिगुच्यते ॥ ६४ ॥ तस्यशैलस्यपृष्ठेषुनिर्झरेषुगुहासुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ ६५ ॥ ततःपरमगम्यास्यादिक्पूर्वात्रिदशावृता ॥ रहिताचंद्रसूर्याभ्यामदृश्यातमसावृता ॥ ६६ ॥ शैलेषुतेषुसर्वेषुकंदरेषुनदीषुच ॥ येचनोक्तामयोद्देशाविचेयातेषुजानकी ॥ ६७ ॥ एतावद्वानरैःशक्यंगंतुंवानरपुंगवाः ॥ अभास्करममर्यादंनजानीमस्ततःपरम् ॥ ६८ ॥ अभिगम्यतुवैदेहींनिलयंरावणस्यच ॥ मासेपूर्णेनिवर्तध्वमुदयंप्राप्यपर्वतम् ॥ ॥ ६९ ॥ ऊर्ध्वंमासान्नवस्तव्यंवसन्वध्योभवेन्मम ॥ सिद्धार्थाःसन्निवर्तध्वमधिगम्यचमैथिलीम् ॥ ७० ॥ महेंद्रकांतांवनषंडमंडितांदिशंचरित्वानिपुणेनवानराः ॥ अवाप्यसीतांरघुवंशजप्रियांततोनिवृत्ताःसुखिनोभविष्यथ॥७१॥इ॰श्रीम॰वा॰आ॰किष्किं॰चत्वारिंशःसर्गः॥४०॥

ततःप्रस्थाप्यसुग्रीवस्तन्महद्वानरंबलम् ॥ दक्षिणांप्रेषयामासवानरानभिलक्षितान् ॥ १ ॥ नीलमग्निसुतंचैवहनूमंतंचवानरम् ॥ पितामहसुतंचैवजांबवंतंमहौजसम् ॥ २ ॥ सुहोत्रंचशरारिंचशरगुल्मंतथैवच ॥ गजंगवाक्षंगवयंसुषेणंवृषभंतथा ॥ ३ ॥ मैंदंचद्विविदंचैवसुषेणंगंधमादनम् ॥ उल्कामुखमनंगंचहुताशनसुतावुभौ ॥ ४ ॥ अंगदप्रमुखान्वीरान्वीरःकपिगणेश्वरः ॥ वेगविक्रमसंपन्नान्संदिदेशविशेषवित् ॥ ५ ॥ तेषामग्रेसरंचैवबृहद्बलमथांगदम् ॥ विधायहरिवीराणामादिशद्दक्षिणांदिशम् ॥ ६ ॥ येकेचनसमुद्देशास्तस्यांदिशिसुदुर्गमाः ॥ सतेषांकपिमुख्यानांकपीशःसमुदाहरत् ॥ ७ ॥ सहस्रशिरसंविंध्यंनानाद्रुमलतायुताम् ॥ नर्मदांचनदींरम्यांमहोरगनिषेविताम् ॥ ८ ॥

॥ ७१ ॥ केचैष्ठमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चत्वारिंशः सर्गः ॥ ४० ॥ ॥ तत इति । अभिलक्षितान् कार्यसमर्थत्वेन निर्णीतान् ॥ १ ॥ २ ॥ ३ ॥ अयं सुषेणस्तारापितुरन्यः । हुताशनसुताविति । अग्नित्वव्याप्यं हुताशनत्वमित्यग्निहुताशनयोर्भेदः ॥ ४ ॥ विशेषवित् अन्वेष्टव्यदेशविशेषवित् ॥ ५ ॥ अग्रेसरं मुख्यम् । असंग्रहमिति पाठेऽसंकोचप्रभुमित्यर्थः । दक्षिणां दिशमादिशदन्वेष्टव्यत्वेनेति शेषः ॥ ६ ॥ तस्यां दिशि ये दुर्गमास्तान्समुदाहरदुवाच ॥ ७ ॥ अत्राप्यार्यावर्तापेक्षया दक्षिणत्वं तदाह । सहस्रशिरसं सहस्रशिखरम् ॥ ८ ॥

गोदावरीं विंध्यपूर्वप्रदेशवर्तिगोदावरीं नदीं मेखलादयो देशभेदाः ॥ ९ ॥ ऋषिकानिति पाठः ॥ १० ॥ मत्स्याश्च कलिंगाश्च तान् ॥ ११ ॥ नदीं गोदावरीं दंडकारण्यवर्तिगोदावरीप्रदेशम् ॥ १२ ॥ अयोमुख इति मलयस्य नामांतरं सुचंदनवनत्वलिंगात् ॥ १३ ॥ १४ ॥ तस्यायोमुखपर्यायस्य ॥ १५ ॥ अगस्त्यमिति । यद्यपि पंचवटीत उदग्भागेऽगस्त्याश्रमः पूर्वमुक्तस्तथाप्यत्रापि बोध्यः । वाल्मीकेरनेकदेशेष्वाश्रमवत् । समाननामान्य एवायमित्यन्ये ॥ १६ ॥ ग्राहजुष्टामित्यादि ताम्रपर्णीविशेषणम् । चंदनैः प्रच्छन्नानि द्वीपानि वारि च यस्याः सा प्रच्छन्नद्वीपवारिणी प्रच्छन्नशरीरेति यावत् ॥ १७॥ अतएव युवती कांतेव ॥ १८ ॥ युक्तं पुरमाकारघाटितम् अर्थे समुद्रतरणरूपे निश्चयं शक्ता शक्तनिरूपं संप्रधार्य कृत्वा ॥ १९ ॥ तत्र प्लवनसाधनभूतः पर्वतः उपदिश्यते । अगस्त्येनेति । सागरेंतरे साग

ततोगोदावरींरम्यांकृष्णवेणींमहानदीम् ॥ मेखलानुत्कलांश्चैवदशार्णनगराण्यपि ॥ ९ ॥ आब्रवंतीमवंतींचसर्वमेवानुपश्यत ॥ विदर्भानृष्टिकांश्चैवरम्यान्माहिषकानापि॥१०॥तथामत्स्यकलिंगांश्चकौशिकांश्चसमंततः ॥ अन्वीक्ष्यदंडकारण्यंसपर्वतनदीगुहम् ॥ ११ ॥ नदींगोदावरींचैवसर्वमेवानुपश्यत ॥ तथैवांध्रांश्चपुंड्रांश्चचोलान्पांड्यांश्चकेरलान् ॥ १२ ॥ अयोमुखश्चगंतव्यःपर्वतोधातुमंडितः ॥ विचित्रशिखरःश्रीमांश्चित्रपुष्पितकाननः ॥ १३ ॥ सुचंदनवनोद्देशोमार्गितव्योमहागिरिः ॥ ततस्तामापगांदिव्यांप्रसन्नसलिलाशयाम् ॥ १४ ॥ तत्रद्रक्ष्यथकावेरींविहृतामप्सरोगणैः ॥ तस्यासीनंनगस्याग्रेमलयस्यमहौजसः ॥ १५ ॥ द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् ॥ ततस्तेनाभ्यनुज्ञाताःप्रसन्नेनमहात्मना ॥ १६ ॥ ताम्रपर्णींग्राहजुष्टांतरिष्यथमहानदीम् ॥ साचंदनवनैश्चित्रैःप्रच्छन्नद्वीपवारिणी ॥ १७॥ कांतेवयुवतीकांतंसमुद्रमवगाहते ॥ ततोहेममयंदिव्यंमुक्तामणिविभूषितम् ॥ १८ ॥ युक्तंकवाटंपांड्यानांगताद्रक्ष्यथवानराः ॥ ततःसमुद्रमासाद्यसंप्रधार्यार्थनिश्चयम् ॥ १९ ॥ अगस्त्येनांतरेतत्रसागरेविनिवेशितः ॥ चित्रसानुनगःश्रीमान्महेंद्रःपर्वतोत्तमः ॥ २० ॥ जातरूपमयःश्रीमानवगाढोमहार्णवम्॥नानाविधैर्नगैःफुल्लैर्लताभिश्चोपशोभितम् ॥ २१ ॥ देवर्षियक्षप्रवरैरप्सरोभिश्चशोभितम् ॥ सिद्धचारणसंघैश्चप्रकीर्णंसुमनोरमम् ॥ २२ ॥ तमुपैतिसहस्राक्षःसदापर्वसुपर्वसु ॥ द्वीपस्तस्यापरेपारेशतयोजनविस्तृतः ॥ २३ ॥ अगम्योमानुषैर्दीप्तस्तंमार्गध्वंसमंततः ॥ तत्रसर्वात्मनासीतामार्गितव्याविशेषतः॥ २४ ॥ सहिदेशस्तुवध्यस्यरावणस्यदुरात्मनः ॥ राक्षसाधिपतेर्वासःसहस्राक्षसमद्युतेः ॥२५॥ दक्षिणस्यसमुद्रस्यमध्येतस्यतुराक्षसी ॥ अंगारकेतिविख्याताछायामाक्षिप्यभोजनी॥२६॥

रखातसंबंधिन्यंतरे अवकाशे अगस्त्येन विनिवेशितः प्रतिष्ठापितो महेंद्र पर्वतोत्तमोस्ति । श्रीमान् सुंदरः ॥ २० ॥ अवगाढः प्रविष्टैकपार्श्वः ॥ २१ ॥ २२ ॥ तं उक्तविशेषणविशिष्टं सहस्राक्ष उपैतीत्यनेन महेंद्राधिष्ठितत्वादन्वर्थनामकत्वं महेंद्रस्य सूचितम् । अपरे पारे अपरे परतीरे । अपरशब्दो विशेषवाची परतीरविशेषे प्रतिष्ठित इति शेषः । द्वीप इति उत्तरभागे दक्षिणे लवणसमुद्र इति तस्य द्वीपत्वम् । सगरखातोप्येकदेशेनोदग्भागे च समुद्रसंबद्धः ॥ २३ ॥ दीप्तः स्वर्णभूयिष्ठत्वात् । तत्र द्वीपे सर्वात्मना सर्वप्रकारेण विशेषतः एकदेशमप्यनुपेक्ष्य ॥ २४ ॥ २५ ॥ समुद्रसंबद्धत्वात्सागरोपि समुद्रत्वेन

समुद्रश्च सागरत्वेन व्यवह्रियत इत्यविरोधः । तस्य तु रावणस्य तु भोजनी भोक्तुशीला ॥ २६ ॥ संशयान्संशयविषयान्देशान्निःसंशयान् सम्यगन्वेषणेन कृत्वा ततो नष्टसंशया आप्तसत्त्वा सत्त्वनिश्चयास्तत्रा सत्त्वे सति तं लंकाद्वीपमतिक्रम्य मृगयध्वम् ॥ २७ ॥ .क मार्गणीया तत्राह लक्ष्मीवानिति ॥ २८ ॥ २९ ॥ तस्य कांचनं शृंगमस्ति यं भगवान् सूर्यः सेवते नित्यं सन्निहितो भवति । शृंगशब्दोर्ध र्चादिः । अतश्चंद्रसूर्याधिष्ठितत्वात्तं कृतघ्ना न पश्यंति ॥ ३० ॥ ३१ ॥ चतुर्दशेति तैरुपलक्षित इत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ तत्र कुंजरपर्वते अगस्त्यभवनवर्णनं योजनेत्यादि । इदं तृतीयमगस्त्य स्थानम् ॥ ३५ ॥ शरणं गृहमगस्त्यस्येति शेषः । तत्र कुंजरपर्वते एव । आलयशब्दो नित्यं पुल्लिंगः । यद्यपि भोगवती रसातले प्रसिद्धा तथापि रावणस्य जनस्थानवत्सर्पाणामपि भोगवत्याख्यपुरं भूमावप्य

एवंनिःसंशयान्कृत्वासंशयान्नष्टसंशयाः ॥ मृगयध्वंनरेंद्रस्यपत्नीममिततेजसः ॥ २७ ॥ तमतिक्रम्यलक्ष्मीवान्समुद्रेशतयोजने ॥ गिरिःपुष्पितको नामसिद्धचारणसेवितः ॥ २८ ॥ चंद्रसूर्यांशुसंकाशसागरांबुसमाश्रयः ॥ भ्राजतेविपुलैःशृंगैरंबरंविलिखन्निव ॥ २९ ॥ तस्यैकंकांचनंशृंगंसेवते ऽयंदिवाकरः ॥ नतंकृतघ्नाःपश्यंतिननृशंसाननास्तिकाः ॥३०॥ प्रणम्यशिरसाशैलंतंविमार्गथवानराः ॥ तमतिक्रम्यदुर्धर्षसूर्यवान्नामपर्वतः ॥ ३१ ॥ अध्वनादुर्विगाहेनयोजनानिचतुर्दश ॥ ततस्तमप्यतिक्रम्यवैद्युतोनामपर्वतः ॥३२॥ सर्वकामफलैर्वृक्षैःसर्वकालमनोहरैः ॥ तत्रभुक्त्वावरार्हाणिमूला निचफलानिच ॥ ३३ ॥ मधूनिपीत्वाजुष्टानिपरंगच्छतवानराः ॥ तत्रनेत्रमनःकांतःकुंजरोनामपर्वतः ॥ ३४ ॥ अगस्त्यभवनंयत्रनिर्मितंविश्वकर्म णा ॥ तत्रयोजनविस्तारमुच्छ्रितंदशयोजनम् ॥ ३५ ॥ शरणंकांचनंदिव्यंनानारत्नविभूषितम् ॥ तत्रभोगवतीनामसर्पाणामालयःपुरी ॥ ३६ ॥ विशालरथ्यादुर्धर्षासर्वतःपरिरक्षिता ॥ रक्षितापन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ॥ ३७॥ सर्पराजोमहाघोरोयस्यांवसतिवासुकिः ॥ निर्यायमार्गितव्या चसाचभोगवतीपुरी ॥ ३८ ॥ तत्रचानंतरोद्देशायेकेचनसमावृताः ॥ तंचदेशमतिक्रम्यमहानृषभसंस्थितिः ॥ ३९ ॥ सर्वरत्नमयःश्रीमानृषभोनाम पर्वतः ॥ गोशीर्षकंपद्मकंचहरिश्यामंचचंदनम् ॥ ४० ॥ दिव्यमुत्पद्यतेयत्रतच्चैवाग्निसमप्रभम् ॥ नतुतच्चंदनंदृष्ट्वास्प्रष्टव्यंतुकदाचन ॥ ४१ ॥ रोहितानामगंधर्वाघोरंरक्षंतितद्वनम् ॥ तत्रगंधर्वपतयःपंचसूर्यसमप्रभाः ॥४२॥ शैलूषोग्रामणीःशिक्षःशुक्रोबभ्रुस्तथैवच ॥ रविसोमाग्निवपुषांनिवासः पुण्यकर्मणाम् ॥४३॥ अंतेपृथिव्यादुर्धर्षास्ततःस्वर्गजितस्थिताः ॥ ततःपरंनवःसेव्यःपितृलोकःसुदारुणः ॥ ४४ ॥ राजधानीयमस्यैषाकष्टेनतमसा वृता ॥ एतावदेवयुष्माभिर्वीरावानरपुंगवाः ॥ शक्यंविचेतुंगंतुंवानातोगतिमतांगतिः ॥ ४५ ॥ सर्वमेतत्समालोक्ययच्चान्यदपिदृश्यते ॥ गतिंवि दित्वावैदेह्याःसन्निवर्तितुमर्हथ ॥ ४६ ॥ यश्चमासान्निवृत्तोग्रेदृष्टासीतेतिवक्ष्यति ॥ मत्तुल्यविभवोभोगैःसुखंसविहरिष्यति ॥ ४७ ॥

स्तीति वासुकेर्भुव उपर्यपि योगवैभवात्स्थितिरिति चेत एवावगंतव्यम् । यथागस्त्यस्य कुंजरपर्वतावच्छिन्ने विश्वकर्मनिर्मितभवने नक्षत्रपदे मलये पंचवटीदक्षिणभागे च वासस्तथेति ध्येयम् ॥ ३६ ॥ ३७ ॥ निर्याय विशेषतो गत्वा ॥ ३८ ॥ समावृता गुप्तास्ते च मार्गितव्याः । ऋषभसंस्थितिः ऋषभाकारसंस्थानवान् ॥ ३९ ॥ गोशीर्षकादयश्चंदनभेदाः ॥ ४० ॥ ४१ ॥ तच्चंदनास्पष्टत्वे हेतुः रोहिता इति ॥ ४२ ॥ ॥ ४३ ॥ तत ऋषभात्परतः पृथिव्या अंते पुण्यकर्मणां निवासस्तत्र स्वर्गजित एव स्थिता भवंति अतो हेतोस्ततः परं पितृलोको न सेव्यः अगम्यः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

बहुशः कृतापराधोपीत्यर्थः ॥ ४८ ॥ लभध्वं लप्स्यध्वम् । तथा तत्कार्यमुद्दिश्याधिगुणमधिकगुणोपेतं पुरुषार्थं पुरुषयत्नमारभध्वम् ॥४९॥ धेर्वैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥ ॥ अथेति ॥ १ ॥ श्वशुरत्वात्प्रांजलिः प्रणम्याब्रवीत् एतद्विशेषकथनार्थैव पुनरब्रवीदित्युक्तिः ॥ २ ॥ महर्षिपुत्रं मारीचं महर्षेर्मरीचेः पुत्रं अर्चिष्मं तंम् अर्चिष्मदाख्यम् अयं तेषु प्रधानः अर्चिर्माल्याख्या अन्येपि मरीचिपुत्राः ॥ ३ ॥ मारीचशब्दस्य व्युत्पत्त्यंतरसंभवान्मरीचिपुत्रानित्युक्तम् ॥४॥५॥ परिमार्गथ मार्गध्वम् । चंद्रचित्रानिति । शूरान् भीमा

ततःप्रियतरोनास्तिममप्राणाद्विशेषतः॥कृतापराधोवहुशोममवंधुर्भविष्यति ॥४८॥ अमितबलपराक्रमाभवंतोविपुलगुणेषुकुलेषुचप्रसूताः ॥ मनुजपतिसुतांयथालभध्वंतदधिगुणंपुरुषार्थमारभध्वम् ॥ ४९ ॥ इत्यार्षेश्रीम०वा०आ०किष्किंधाकांडेएकचत्वारिंशःसर्गः ॥ ४१ ॥ अथप्रस्थाप्यसहरीन्सुग्रीवोदक्षिणांदिशम् ॥ अब्रवीन्मेघसंकाशंसुषेणंनामवानरम् ॥ १ ॥ तारायाःपितरंराजाश्वशुरंभीमविक्रमम् ॥ अब्रवीत्प्रांजलिर्वाक्यमभिगम्यप्रणम्यच ॥ २ ॥ महर्षिपुत्रंमारीचमर्चिष्मंतंमहाकपिम् ॥ वृतंकपिवरैःशूरैर्महेंद्रसदृशद्युतिम् ॥ ३ ॥ बुद्धिविक्रमसंपन्नंवैनतेयसमद्युतिम् ॥ मरीचिपुत्रान्मारीचानर्चिर्माल्यान्महाबलान् ॥ ४ ॥ ऋषिपुत्रांश्चतान्सर्वान्प्रतीचीमादिशद्दिशम् ॥ द्वाभ्यांशतसहस्राभ्यांकपीनांकपिसत्तमाः ॥ ५ ॥ सुषेणप्रमुखायूयंवैदेहींपरिमार्गथ ॥ सौराष्ट्रान्सहवाह्लीकांश्चंद्रचित्रांतथैवच ॥ ६ ॥ स्फीताञ्जनपदाव्रम्यान्विपुलानिपुराणिच ॥ पुन्नागगहनंकुक्षिवकुलोद्दालकाकुलम् ॥ ७ ॥ तथाकेतकखंडांश्चमार्गध्वंहरिपुंगवाः ॥ प्रत्यक्स्रोतोवहाश्चैवनद्यःशीतजलाःशिवाः ॥ ८ ॥ तापसानामरण्यानिकांतारगिरयश्चये ॥ तत्रस्थलीर्मरुप्रायाअत्युच्चशिशिराःशिलाः ॥ ९ ॥ गिरिजालावृतांदुर्गांमार्गित्वापश्चिमांदिशम् ॥ ततःपश्चिममागम्यसमुद्रंद्रष्टुमर्हथ ॥ १० ॥ तिमिनक्राकुलजलंगत्वाद्रक्ष्यथवानराः ॥ ततःकेतकखंडेषुतमालगहनेषुच ॥ ११ ॥ कपयोविहरिष्यंतिनारिकेलवनेषुच ॥ तत्रसीतांचमार्गध्वंनिलयंरावणस्यच ॥ १२ ॥ वेलातलनिविष्टेषुपर्वतेषुवनेषुच ॥ मुरचीपत्तनंचैवरम्यंचैवजटीपुरम् ॥ १३ ॥ अवंतीमंगलेपांचतथाचालक्षितंवनम् ॥ राष्ट्राणिचविशालानिपत्तनानिततस्ततः ॥ १४ ॥ सिंधुसागरयोश्चैवसंगमेतत्रपर्वतः ॥ महान्सोमगिरिर्नामशतशृंगोमहाद्रुमः ॥ १५ ॥ तत्रप्रस्थेषुरम्येषुसिंहाःपक्षगमास्थिताः ॥ तिमिमत्स्यगजांश्चैवनीडान्यारोपयंतिते ॥ १६ ॥ तानिनीडानिसिंहानागिरिशृंगगताश्चये ॥ दृप्तास्तृप्ताश्चमातंगास्तोयदस्वननिःस्वनाः ॥ १७ ॥

निति पाठांतरम् । देशविशेषा इमे ॥ ६ ॥ विपुलानि विशालानि । कुक्षिर्देशविशेषः ॥ ७ ॥ प्रत्यक्स्रोतोवहाः पश्चिमाभिमुखप्रवाहाः ॥ ८ ॥ कांतारागिरयः कांतारयुक्ता गिरयः स्थली अकृत्रिमा भूः शिशिराः शीतलाः ॥ ९ ॥ तत्रादर्शने ततः किंचित्पश्चिमं गत्वा समुद्रं द्रष्टुमर्हथ तत्र समुद्रं द्रक्ष्यथेति निश्चय एव ॥ १० ॥ ११ ॥ कपयो भवत्सैनिकाः ॥ १२ ॥ १३ ॥ अवंत्यंगलेपे पुर्यौ । आलक्षिताख्यं वनम् ॥ १४ ॥ महाद्रुमः महांतो द्रुमा यस्मिन्सः ॥१५॥ सिंहास्तदाख्याः पक्षगमाः स्थिताः पक्षिणः ते पक्षिणः तिमिमत्स्यगजान् नीडानि स्ववासस्थानान्यारोपयंति प्रापयंति ॥१६॥॥१७॥

तोयपूर्णे मस्ये ॥ १८ ॥ कोटिं शृंगम् । समुद्रस्य मध्ये इति शेषः ॥ १९ ॥ २० ॥ घोराणामतएव पापकर्मणा संहर्तॄणाम् । पावकार्चिःप्रतीकाशाः कोटयः समवेता इत्यन्वयः ॥ २१ ॥ नात्यासादयितव्याः न द्रष्टव्या नापराद्धव्या वा नादेयं न ग्राह्यम् ॥ २२ ॥ २३ ॥ यत्नः कर्तव्यो मार्गण इति शेषः । ननु पापकारित्वात्तदनासादने कथं तत्र मार्गणसंभवोऽत आह नहि तेभ्य इति । तद्देशे मृगपक्ष्यादिवत्प्राकृतमृगस्वभावे तिष्ठतामित्यर्थः । अतएव नापराद्धव्या इति पूर्वं व्याख्यातम् ॥ २४ ॥ वैदूर्यवर्ण आभा च यस्य सः वज्रवत् कठिनसंस्थानेन संस्थितः ॥ २५ ॥ समुदितः प्रतिष्ठितसमम्

विचरंतिविशालेऽस्मिंस्तोयपूर्णेसमंततः ॥ तस्यशृंगंदिवस्पर्शंकांचनंचित्रपादपम् ॥ १८ ॥ सर्वमाशुविचेतव्यंकपिभिःकामरूपिभिः ॥ कोटिंतत्रसमुद्रस्यकांचनींशतयोजनाम् ॥ १९ ॥ दुर्दर्शांपारियात्रस्यगत्वाद्रक्ष्यथवानराः ॥ कोटयस्तत्रचतुर्विंशद्गंधर्वाणांतपस्विनाम् ॥ २० ॥ वसंत्यग्निनिकाशानांघोराणांपापकर्मणाम् ॥ पावकार्चिःप्रतीकाशाःसमवेताःसमंततः ॥ २१ ॥ नात्यासादयितव्यास्तेवानरैर्भीमविक्रमैः ॥ नादेयंचफलंतस्माद्देशात्किंचित्प्लवंगमैः ॥ २२ ॥ दुरासदाहितेवीराःसत्त्ववंतोमहाबलाः ॥ फलमूलानितेतत्ररक्षंतेभीमविक्रमाः ॥ २३ ॥ तत्रयत्नश्चकर्तव्योमार्गितव्याचजानकी ॥ नहितेभ्योभयंकिंचित्कपित्वमनुवर्तताम् ॥ २४ ॥ तत्रवैदूर्यवर्णाभोवज्रसंस्थानसंस्थितः ॥ नानाद्रुमलताकीर्णोवज्रोनाममहागिरिः ॥ २५ ॥ श्रीमान्समुदितस्तत्रयोजनानांशतंसमम् ॥ गुहास्तत्रविचेतव्याःप्रयत्नेनप्लवंगमाः ॥ २६ ॥ चतुर्भागेसमुद्रस्यचक्रवान्नामपर्वतः ॥ तत्रचक्रंसहस्रारंनिर्मितंविश्वकर्मणा ॥ २७ ॥तत्रपंचजनंहत्वाहयग्रीवंचदानवम् ॥ आजहारततश्चक्रंशंखंचपुरुषोत्तमः ॥ २८ ॥ तत्रसानुषुरम्येषुविशालासुगुहासुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ २९ ॥ योजनानिचतुःषष्टिर्वराहोनामपर्वतः ॥ सुवर्णशृंगःसुमहानगाधेवरुणालये ॥ ३० ॥ तत्रप्राग्ज्योतिषंनामजातरूपमयंपुरम् ॥ तस्मिन्वसतिदुष्टात्मानरकोनामदानवः ॥ ३१ ॥ तत्रसानुषुरम्येषुविशालासुगुहासुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ ३२ ॥ तमतिक्रम्यशैलेंद्रंकांचनांतरदर्शनम् ॥ पर्वतःसर्वसौवर्णोधाराप्रस्रवणायुतः ॥ ३३ ॥ तंगजाश्चवराहाश्चसिंहाव्याघ्राश्चसर्वतः ॥ अभिगर्जंतिसततंतेनशब्देनदर्पिताः ॥३४॥ यस्मिन्हरिहयःश्रीमान्महेंद्रःपाकशासनः ॥ अभिषिक्तःसुरैराजामेघोनामसपर्वतः ॥ ३५ ॥ तमतिक्रम्यशैलेंद्रंमहेंद्रपरिपालितम् ॥ षष्टिंगिरिसहस्राणिकांचनानिगमिष्यथ ॥ ३६ ॥ तरुणादित्यवर्णानिभ्राजमानानिसर्वशः ॥ जातरूपमयैर्वृक्षैःशोभितानिसुपुष्पितैः ॥ ३७ ॥ तेषांमध्येस्थितोराजामेरुरुत्तमपर्वतः ॥ आदित्येनप्रसन्नेनशैलोदत्तवरःपुरा ॥ ३८ ॥

आयामतो विस्तारतश्च शतयोजन इत्यर्थः ॥ २६ ॥ चतुर्भागे चतुर्थभागे गत इति शेषः ॥ २७ ॥ तत्र चक्रवत्पर्वते पंचजनं तदाख्यम् । हयस्येव ग्रीवा यस्य तं च ॥ २८ ॥ २९ ॥ ३० ॥ तत्र वराहपर्वते जातरूपं स्वर्णम् ॥ ३१ ॥ ३२ ॥ कांचनांतरदर्शनं कांचनगर्भा अंतरा निर्दरा यस्मिंस्तस्य दर्शनं भविष्यतीति शेषः ॥ ३३ ॥ तं प्राप्य स्थिता गजादयस्तेन शब्देन स्वध्वनिजप्रतिध्वनिशब्देन दर्पिताः सर्वतोऽभिगर्जंति ॥ ३४ ॥ सः सौवर्ण इति उक्तः ॥ ३५ ॥ ३६ ॥ ३७ ॥ तेषां षष्टिसहस्रपर्वतानां मध्ये राजेव मेरुवत्कांचनः पर्वतोस्ति एनं सावर्णिमेरुरिति वदंति ॥ ३८ ॥

कीदृशो वरस्तत्राह तेनैवमिति । आदित्येन एवमुक्त इत्येवंशब्दार्थः सर्व एवेति ॥ ३९ ॥ ते भक्ता मयीति शेषः । कांचनप्रभाश्च भविष्यंति ॥ ४० ॥ विश्वेदेवादयस्तमुत्तमपर्वतं मेरुं सावर्णिमेरुमागत्य तत्र स्थित्वा पश्चिमां संध्यां प्राप्य आदित्यमुपतिष्ठंति इत्यग्रिमेणान्वयः ॥ ४१ ॥ इतः पूर्वभागस्था अनुक्ता अपि द्वीपा विचेतव्या इत्यर्थतः सिद्धम् ॥ ४२ ॥ ततः परं दशयोजनसहस्रेऽस्ताचल इत्याह योजनानामिति । तान्युक्तसंख्यायोजनानि अतीत्येति शेषः । मुहूर्तार्धमेका घटी तया तं शिलोच्चयमस्तमभियाति ॥ ४३ ॥ अथ वरुणपुरवर्णनम् । शृंगे इति ॥ ४४ ॥ ४५ ॥ दशशिराः दशस्कंधः ॥ ४६ ॥ ४७ ॥

तेनैवमुक्तःशैलेंद्रःसर्वएवत्वदाश्रयाः ॥ मत्प्रसादाद्भविष्यंतिदिवारात्रौचकांचनाः ॥ ३९ ॥ त्वयियेचापिवत्स्यंतिदेवगंधर्वदानवाः ॥ तेभविष्यंतिभक्ताश्चप्रभयाकांचनप्रभाः ॥४०॥ विश्वेदेवाश्चवसवोमरुतश्चदिवौकसः ॥ आगत्यपश्चिमांसंध्यांमेरुमुत्तमपर्वतम् ॥ ४१ ॥ आदित्यमुपतिष्ठंतितैश्चसूर्योभिपूजितः ॥ अदृश्यःसर्वभूतानामस्तंगच्छतिपर्वतम् ॥ ४२ ॥ योजनानांसहस्राणिदशतानिदिवाकरः ॥ मुहूर्तार्धेनतंशीघ्रमभियातिशिलोच्चयम् ॥ ४३ ॥ शृंगेतस्यमहद्दिव्यंभवनंसूर्यसन्निभम् ॥ प्रासादगणसंबाधंविहितंविश्वकर्मणा ॥ ४४ ॥ शोभितंतरुभिश्चित्रैर्नानापक्षिसमाकुलैः ॥ निकेतंपाशहस्तस्यवरुणस्यमहात्मनः ॥ ४५ ॥ अंतरामेरुमस्तंचतालोदशशिरामहान् ॥ जातरूपमयःश्रीमान्भ्राजतेचित्रवेदिकः ॥४६॥ तेषुसर्वेषुदुर्गेषुसरस्सुचसरित्सुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ ४७ ॥ यत्रतिष्ठतिधर्मज्ञस्तपसास्वेनभावितः ॥ मेरुसावर्णिरित्येषख्यातोवैब्रह्मणासमः ॥ ४८ ॥ प्रष्टव्योमेरुसावर्णिर्महर्षिःसूर्यसन्निभः ॥ प्रणम्यशिरसाभूमौप्रवृत्तिंमैथिलींप्रति ॥ ४९ ॥ एतावज्जीवलोकस्यभास्करोरजनीक्षये ॥ कृत्वावितिमिरंसर्वमस्तंगच्छतिपर्वतम् ॥ ५० ॥ एतावद्वानरैःशक्यंगंतुंवानरपुंगवाः ॥ अभास्करममर्यादंनजानीमस्ततःपरम् ॥५१॥ अवगम्यतुवैदेहींनिलयंरावणस्यच॥अस्तंपर्वतमासाद्यपूर्णेमासेनिवर्तत ॥ ५२ ॥ ऊर्ध्वंमासान्नवस्तव्यंवसन्वध्योभवेन्मम ॥ सहैवशूरोयुष्माभिःश्वशुरोमेगमिष्यति ॥ ५३ ॥ श्रोतव्यंसर्वमेतस्यभवद्भिर्दिष्टकारिभिः ॥ गुरुरेषमहाबाहुःश्वशुरोमेमहाबलः ॥ ५४ ॥ भवंतश्चापिविक्रांताःप्रमाणंसर्वएवहि ॥ प्रमाणमेनंसंस्थाप्यपश्यध्वंपश्चिमांदिशम् ॥ ५५ ॥ कृतकृत्याभविष्यामःकृतस्यप्रतिकर्मणा ॥ अतोन्यदपियत्कार्यंकार्यस्यास्यप्रियंभवेत् ॥ संप्रधार्यभवद्भिश्चदेशकालार्थसंहितम् ॥ ५६ ॥ ततःसुषेणप्रमुखाःप्लवंगमाःसुग्रीववाक्यंनिपुणंनिशम्य ॥ आमंत्र्यसर्वेप्लवगाधिपास्तेजग्मुर्दिशंतांवरुणाभिगुप्ताम् ॥ ५७ ॥ इतिश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येकिष्किंधाकांडेद्विचत्वारिंशःसर्गः ॥ ४२ ॥

यत्र मेरौ ब्रह्मणा समः महामेरुवर्तिप्रजापतिसमः ॥ ४८ ॥ मैथिलीं प्रति प्रवृत्तिं मैथिलीसंबंधिप्रवृत्तिं प्रष्टव्य इत्यन्वयः ॥ ४९ ॥ एतावत् उदयाचलमारभ्य मेरुसावर्णिपर्यंतम् ॥ ५० ॥ ॥ ५१ ॥ निवर्तत निवर्तध्वम् ॥ ५२ ॥ ५३ ॥ दिष्टं संदिष्टम् ॥ ५४ ॥ प्रमाणं कर्तव्याकर्तव्यनिश्चायकाः अथापि एनं सुषेणं विशिष्य प्रमाणं संस्थाप्य ॥ ५५ ॥ कृतस्य प्रतिकर्मणा उपकारप्रत्युपकारेण अस्य कार्यस्येति रावणवधांतरामकार्यस्येत्यर्थः ॥ ५६ ॥ ५७ ॥ थंमेंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

॥ तत इति ॥ १ ॥ सर्वज्ञः देशवृत्ताभिज्ञः ॥ २ ॥ वैवस्वतसुतैर्यमसुतैः ॥ ३ ॥ विक्रांतेति शतवलस्य संबुद्धिः । सर्वत इति सामान्यतो नियोगः ॥ ४ ॥ विनिर्वृत्ते विशेषेणानुष्ठिते । कृतार्थाः कृतकृत्याः । अर्थविदा लब्धाभीष्टानाम् । संधिरार्षः ॥ ५ ॥ अस्ति क्रियेत ॥ ६ ॥ अर्थिनः स्वस्मात्प्रयोजनार्थिनः कार्यनिर्वृत्तिं तत्प्रयोजनानुष्ठानम् अकर्तुः पूर्वमुपकाराकर्तुरपि यश्चरेत् कुर्यात् ॥ ७ ॥ ८ ॥ ॥ ९ ॥ इमानि वक्ष्यमाणानि ॥ १० ॥ प्रस्थला भरताश्च देशविशेषाः ॥ कुरून् दक्षिणकुरून् ॥ ११ ॥ १२ ॥ लोध्रपद्मकखंडेषु हैमवतेष्विति शेषः ॥ १३ ॥ तं कालाख्यं पर्वतम् ॥ १४ ॥

ततःसंदिश्यसुग्रीवःश्वशुरंपश्चिमांदिशम् ॥ वीरंशतबलंनामवानरंवानरेश्वरः ॥ १ ॥ उवाचराजासर्वज्ञःसर्ववानरसत्तमः ॥ वाक्यमात्महितंचैवरामस्यचहितंतदा ॥ २ ॥ वृतःशतसहस्रेणत्वद्विधानांवनौकसाम् ॥ वैवस्वतसुतैःसार्धंप्रविष्टःसर्वमंत्रिभिः ॥ ३ ॥ दिशंह्युदीचींविक्रांतहिमशैलावतंसिकाम् ॥ सर्वतःपरिमार्गध्वंरामपत्नींयशस्विनीम् ॥ ४ ॥ अस्मिन्कार्येविनिर्वृत्तेकृतेदाशरथेःप्रिये ॥ ऋणान्मुक्ताभविष्यामःकृतार्थार्थविदांवर ॥ ५ ॥ कृतंहिप्रियमस्माकंराघवेणमहात्मना ॥ तस्यचेत्प्रतिकारोऽस्तिसफलंजीवितंभवेत् ॥ ६ ॥ अर्थिनः कार्यनिर्वृत्तिमकर्तुरपियश्चरेत् ॥ तस्य स्यात्सफलं जन्म किंपुनःपूर्वकारिणः ॥ ७ ॥ एतां बुद्धिसमास्थाय दृश्यते जानकीयथा ॥ तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ८ ॥ अयं हि सर्वभूतानां मान्यस्तुनरसत्तमः ॥ अस्मासु च गतः प्रीतिं रामः परपुरंजयः ॥ ९ ॥ इमानिवहुदुर्गाणिनद्यःशैलांतराणिच ॥ भवंतःपरिमार्गंतुबुद्धिविक्रमसंपदा ॥ १० ॥ तत्रम्लेच्छान्पुलिंदांश्चशूरसेनांस्तथैवच ॥ प्रस्थलान्भरतांश्चैवकुरूंश्चसहमद्रकैः ॥ ११ ॥ कांबोजयवनांश्चैवशकानांपत्तनानिच॥अन्वीक्ष्यवरदांश्चैवहिमवंतंविचिन्वथ ॥ १२ ॥ लोध्रपद्मकखंडेषुदेवदारुवनेषुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ १३ ॥ ततःसोमाश्रमंगत्वादेवगंधर्वसेवितम् ॥ कालंनाममहासानुंपर्वतंतंगमिष्यथ ॥ १४ ॥ महत्सुतस्यशैलेषुपर्वतेषुगुहासुच ॥ विचिन्वतमहाभागांरामपत्नीमनिंदिताम् ॥ १५ ॥ तमतिक्रम्यशैलेंद्रंहेमगर्भंमहागिरिम् ॥ ततःसुदर्शनंनामपर्वतंगंतुमर्हथ ॥ १६ ॥ ततोदेवसखानामपर्वतःपतगालयः ॥ नानापक्षिसमाकीर्णोविविधद्रुमभूषितः ॥ १७ ॥ तस्यकांचनखंडेषुनिर्दरेषुगुहासुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ १८ ॥ तमतिक्रम्यचाकाशंसर्वतःशतयोजनम् ॥ अपर्वतनदीवृक्षंसर्वसत्त्वविवर्जितम् ॥ १९ ॥ तत्त्वशीघ्रमतिक्रम्यकांताररोमहर्षणम् ॥ कैलासंपांडुरंप्राप्यहृष्टायूयंभविष्यथ ॥ २० ॥ तत्रपांडुरमेघाभंजांबूनदपरिष्कृतम् ॥ कुबेरभवनंरम्यंनिर्मितंविश्वकर्मणा ॥ २१ ॥ विशालानलिनीयत्रप्रभूतकमलोत्पला ॥ हंसकारंडवाकीर्णाअप्सरोगणसेविता ॥ २२ ॥ तत्रवैश्रवणोराजासर्वलोकनमस्कृतः ॥ धनदोरमतेश्रीमान्गुह्यकैःसहयक्षराट् ॥ २३ ॥ तस्यचंद्रनिकाशेषुपर्वतेषुगुहासुच ॥ रावणःसहवैदेह्यामार्गितव्यस्ततस्ततः ॥ २४ ॥

तस्य शैलेषु गंडपर्वतेषु पर्वतेषु ततो महत्सु तेषु ॥ १५ ॥ तं कालपर्वतम् ॥ १६ ॥ ततः सुदर्शनात्परतः । पतगाः पक्षिणः ॥ १७ ॥ १८ ॥ तं देवसखपर्वतमतिक्रम्य आकाशं शून्यदेशं शून्यत्वोपपादकमपर्वतेत्यादि ॥ १९ ॥ कांतारम् अपर्वतवनत्वादिना । रोमहर्षणं भयंकरत्वात् ॥ २० ॥ २१ ॥ नलिनी सरसी ॥ २२ ॥ २३ ॥ तस्य कैलासस्य पर्वतेषु गंडपर्वतेषु ॥ २४ ॥

तस्य क्रौंचस्य बिलं स्कंदशक्तिकृतं विवरम् ॥ २५ ॥ तत्र क्रौंचगुहायाम् ॥ २६ ॥ २७ ॥ कामशैलं कामतपःस्थानशैलम् । तद्विशेषणमवृक्षम् । मानसं तदाख्यम् । तत्र मानसपर्वते ॥ २८ ॥स चेति । क्रौंचपर्वत इत्यर्थः । सानूनि प्रस्था भूधराः पर्यंतपर्वतास्तैः सहितः । मैनाक इति । मेनाकोयं समुद्रमग्नादन्यः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ वैखानसं वैखानसानामिदम् ॥ ३३ ॥ विचरितं सेवितम् औपवाह्यः वाहनम् ॥ ३४ ॥ तत्सरोऽतिक्रम्य वर्तमानं व्योम ।कियानवकाशः चंद्रादिसर्वज्योतिर्गणप्रकाशरहितः ॥ ३५ ॥ नापि सांधकार इत्याह गभस्तिभिरिवेति ।-चंद्रादिज्योतींष्यभिभूय अर्कगभस्तिसदृशैः स्वीयैर्गभस्तिभिः प्रकाश्यते । के ते यैः स्वगभस्तिभिः प्रकाश्यते तत्राह विश्राम्यद्भिरिति । सुखोपविष्टैः स्वतपःसिद्धैरतएव देवकल्पैः सर्यादिदेवतुल्यैः स्वयंप्रभैश्च सूर्यादिवत्स देशः प्रकाश्यते । यत्तु

क्रौंचंतुगिरिमासाद्यबिलंतस्यसुदुर्गमम् ॥ अप्रमत्तैःप्रवेष्टव्यंदुष्प्रवेशंहितत्स्मृतम् ॥ २५ ॥ वसंतिहिमहात्मानस्तत्रसूर्यसमप्रभाः ॥ देवैरभ्यर्थिताः सम्यग्देवरूपामहर्षयः ॥२६॥ क्रौंचस्यतुगुहाश्चान्याःसानूनिशिखराणिच ॥ दर्दराश्चनितंबाश्चविचेतव्यास्ततस्ततः ॥ २७ ॥ अवृक्षंकामशैलंचमानसंविहगालयम् ॥ नगतिस्तत्रभूतानांदेवानांनचरक्षसाम् ॥ २८ ॥ सचसर्वैर्विचेतव्यःससानुप्रस्थभूधरः ॥ क्रौचंगिरिमतिक्रम्यमैनाकोनामपर्वतः ॥ २९ ॥ मयस्यभवनंतत्रदानवस्यस्वयंकृतम् ॥ मैनाकस्तुविचेतव्यःससानुप्रस्थकंदरः ॥ ३० ॥ स्त्रीणामश्वमुखीनांतुनिकेतस्तत्रतत्रतु ॥ तंदेशंसमतिक्रम्यआश्रमंसिद्धसेवितम् ॥ ३१ ॥ सिद्धावैखानसायत्रवालखिल्याश्चतापसाः ॥ वंदितव्यास्ततःसिद्धास्तपसावीतकल्मषाः ॥ ३२ ॥ प्रष्टव्याचापिसीतायाःप्रवृत्तिर्विनयान्वितैः ॥ हिमपुष्करसंच्छन्नंतत्रवैखानसंसरः ॥ ३३ ॥ तरुणादित्यसंकाशैर्हंसैर्विचरितंशुभैः ॥ औपवाह्यःकुबेरस्यसार्वभौमइतिस्मृतः ॥ ३४ ॥ गजःपर्येतितंदेशंसदासहकरेणुभिः ॥ तत्सरःसमतिक्रम्यनष्टचंद्रदिवाकरम् ॥ अनक्षत्रगणंव्योमनिष्पयोदमनादितम् ॥ ३५ ॥ गभस्तिभिरिवार्कस्यसतुदेशःप्रकाश्यते ॥ विश्राम्यद्भिस्तपःसिद्धैर्देवकल्पैःस्वयंप्रभैः ॥ ३६ ॥ तंतुदेशमतिक्रम्यशैलोदानामनिम्नगा ॥ उभयोस्तीरयोस्तस्याःकीचकानामवेणवः ॥ ३७ ॥ तेनयंतिपरंतीरंसिद्धान्प्रत्यानयंतिच ॥ उत्तराःकुरवस्तत्रकृतपुण्यप्रतिश्रयाः ॥ ३८ ॥ ततःकांचनपद्माभिःपद्मिनीभिःकृतोदकाः ॥ ३९ ॥नीलवैदूर्यपत्राढ्यानद्यस्तत्रसहस्रशः ॥ रक्तोत्पलवनैश्चात्रमंडिताश्चहिरण्मयैः ॥४०॥ तरुणादित्यसंकाशाभांतितत्रजलाशयाः ॥ महार्हमणिरत्नैश्चकांचनप्रभकेसरैः ॥४१॥ नीलोत्पलवनैश्चित्रैःसदेशःसर्वतोवृतः ॥ निस्तुलाभिश्चमुक्ताभिर्मणिभिश्चमहाधनैः ॥ ४२ ॥ उद्धूतपुलिनास्तत्रजातरूपैश्चनिम्नगाः ॥ सर्वरत्नमयैश्चित्रैरवगाढानगोत्तमैः ॥ ४३ ॥

तत्र चंद्रादीनां संचाराभाव एवेति तन्न अग्रे सुप्रसिद्धचंद्रादिसंचारवदुत्तरकुरूणां तदूर्ध्वमुपदेशानुपपत्तेः ॥ ३६ ॥ निम्नगा अस्तीति शेषः । अंतःसुषिरो वेणुः कीचकः ॥ ३७ ॥ परं तीरं शैलोदाया इति शेषः । कृतपुण्यानां प्रतिश्रयाः निवासभूताः ॥ ३८ ॥ पद्मिनीभिः सरसीभिः कृतोदकाः कृतोदककार्याः ॥ ३९ ॥ तत आरभ्योत्तरकुरुदेशस्य भोगभूमित्वकथनम् । दिव्यनद्योपि तत्र संतीत्याह नीलेत्यादि ॥ ४० ॥ जलाशयास्तटाकादयः ॥ ४१ ॥ निस्तुलाभिर्वर्तुलाभिः । निस्तुलं वृत्तमित्यमरः ॥ ४२ ॥ जातरूपैः स्वर्णैरुद्धूतपुलिना युक्तपुलिनाः नगोत्तमैः पर्वतैः अवगाढा व्याप्ताः ॥ ४३ ॥

नगाः वृक्षाः पत्ररथैः पक्षिभिराकुला व्याप्ताः ॥ ४४ ॥ ४५ ॥ इत उत्तरं केचित् श्लोका रमंते सततं तत्र नारीभिर्भास्वरप्रभा इत्यंताः प्रक्षिप्ताः प्राचीनपुस्तकेष्वनुपलंभादिति कतकः ॥ ४६ ॥ ४७ ॥
॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ असदविद्यमानं प्रियं यस्य तादृशः ॥ ५३ ॥ अत्र सुमेर्वन्वेषणं नोक्तम् । तत्र रक्षसां वासासंभवादित्याहुः । मध्ये उत्तरसमुद्रमध्ये ॥ ५४ ॥ स तु देशो विसू
र्योपि सूर्यसंचाररहितोपि तस्य भासा सोमगिरिप्रभया तपता विवस्वता युक्तदेश इव सूर्यलक्ष्म्या सूर्योपेतदेशश्रिया युक्तः प्रकाशते ॥ ५५ ॥ विश्वमतति व्याप्नोतीति विश्वात्मा व्यापकः तेन विष्णुरूपः ।
विष्ल व्याप्तावित्यनुसारात् । स एव शंभुः शं भवत्यस्मात्स एवैकादशात्मकः एकादशानुवाकार्थैकादशरुद्रात्मकः स एव ब्रह्मा बृंहणत्वाज्जगत्स्रष्टृत्वात् । एवं रूपत्रयात्मा भगवान् तत्र सोमगिरौ कार्यब्रह्मलोक

जातरूपमयैश्चापिहुताशनसमप्रभैः ॥ नित्यपुष्पफलास्तत्रनगाःपत्ररथाकुलाः ॥ ४४ ॥ दिव्यगंधरसस्पर्शाःसर्वकामान्स्रवंतिच ॥ नानाकारा णिवासांसिफलंत्यन्येनगोत्तमाः ॥ ४५ ॥ मुक्तावैदूर्यचित्राणिभूषणानितथैवच ॥ स्त्रीणांयान्यनुरूपाणिपुरुषाणांतथैवच ॥ ४६ ॥ सर्वर्तुसुखसेव्या निफलंत्यन्येनगोत्तमाः॥महार्हमणिचित्राणिफलंत्यन्येनगोत्तमाः ॥ ४७ ॥ शयनानिप्रसूयंतेचित्रास्तरणवंतिच ॥ मनःकांतानिमाल्यानिफलंत्यत्रा परेद्रुमाः ॥ ४८ ॥ पानानिचमहार्हाणिभक्ष्याणिविविधानिच ॥ स्त्रियश्चगुणसंपन्नारूपयौवनलक्षिताः ॥ ४९ ॥ गंधर्वाःकिन्नराःसिद्धानागाविद्याध रास्तथा ॥ रमंतेसततंतत्रनारीभिर्भास्वरप्रभाः ॥ ५० ॥ सर्वेसुकृतकर्माणःसर्वेरतिपरायणाः ॥ सर्वेकामार्थसहितावसंतिसहयोषितः ॥ ५१ ॥ गीतवादित्रनिर्घोषःसोत्कृष्टहसितस्वरः ॥ श्रूयतेसततंतत्रसर्वभूतमनोरमः ॥ ५२ ॥ तत्रनामुदितःकश्चिन्नात्रकश्चिदसत्प्रियः ॥ अहन्यहनिवर्धंते गुणास्तत्रमनोरमाः ॥ ५३ ॥ तमतिक्रम्यशैलेंद्रमुत्तरःपयसांनिधिः ॥ तत्रसोमगिरिर्नाममध्येहेममयोमहान् ॥ ५४ ॥ सतुदेशोविसूर्योपितस्यभासा प्रकाशते ॥ सूर्यलक्ष्याभिविज्ञेयस्तपतेवविवस्वता ॥ ५५ ॥ भगवांस्तत्रविश्वात्माशंभुरेकादशात्मकः ॥ ब्रह्मावसतिदेवेशोब्रह्मर्षिपरिवारितः ॥५६॥ नकथंचनगंतव्यंकुरूणामुत्तरेणवः ॥ अन्येषामपिभूतानांनानुक्रामतिवैगतिः ॥ ५७ ॥ सहिसोमगिरिर्नामदेवानामपिदुर्गमः ॥ तमालोक्यततः क्षिप्रमुपावर्तितुमर्हथ ॥ ५८ ॥ एतावद्वानरैःशक्यंगंतुंवानरपुंगवाः ॥ अभास्करममर्यादंनजानीमस्ततःपरम् ॥ ५९ ॥ सर्वमेतद्विचेतव्यंयन्मया परिकीर्तितम् ॥ यदन्यदपिनोक्तंचतत्रापिक्रियतांमतिः ॥ ६० ॥ ततःकृतंदाशरथेर्महत्प्रियंमहत्प्रियंचापिततोममप्रियम् ॥ कृतंभविष्यत्यनिलान लोपमाविदेहजादर्शनजेनकर्मणा ॥ ६१ ॥ ततःकृतार्थाःसहिताःसबांधवामयार्चिताःसर्वगुणैर्मनोरमैः ॥ चरिष्यथोर्वींप्रतिशांतशात्रवाःसहप्रियाभूत धराःप्लवंगमाः ॥ ६२ ॥ इत्यार्षे श्रीमद्रा॰ वाल्मी॰ आदि॰ किष्किंधाकांडेत्रिचत्वारिंशः सर्गः ॥ ४३ ॥

त्वाद्वसतीत्यर्थः ॥ ५६ ॥ नानुक्रामति वै गतिः तस्य कार्यब्रह्मलोकत्वेन ब्रह्मर्षिव्यतिरिक्तस्य तत्रागतेः ब्रह्मर्षिपदेन दहरादिमार्गेण ब्रह्मोपासका ऋषय उच्यंते ॥ ५७ ॥ तदाह देवानामपि दुर्गम इति ॥ ५८ ॥
॥ ५९ ॥ तत्रापि मतिः क्रियतामिति अन्वेषणायेति भावः ॥ ६० ॥ प्रियमित्यस्य स्वस्येत्यादिः । विदेहजादर्शनजेन कर्मणा विदेहजादर्शनमुद्दिश्य जातेन कर्मणा अन्वेषणकर्मणेति यावत् ॥ ६१ ॥
भूतधराः भूतैः प्राणिभिर्ध्रियंते ते भूतधराः प्राणिभिरुपजीव्या इत्यर्थः ॥ ६२ ॥ खवैर्तमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

हनूमत्यर्थस्य सविशेषमुक्तौ हेतुः सहीति । अर्थसाधने तद्विषये निश्चितार्थः तादृशार्थतद्विषयकनिश्चयवान् ॥ १ ॥ उक्तिप्रकारं दर्शयति अब्रवीच्चेति । सर्ववनौकसाम् मध्ये इति शेषः ॥ २ ॥ अंतरिक्षं पृथिव्यासन्नपक्षिमार्गः । अंबरं मेघमार्गः अमरालयः स्वर्गः । गतिसंगं गतिप्रतिबंधम् ॥ ३ ॥ सर्वलोकविशेषणं सासुरा इत्यादि ॥ ४ ॥ लाघवं क्षिप्रकारित्वम् ॥ ५ ॥ भूतं प्राणी तत्तस्मात्वया सीता लभ्यते तदर्थजातं त्वमेवानुचिंतय ॥ ६ ॥ बलं शारीरम् । पराक्रम उत्साहः । देशकालानुवृत्तिस्तदुचितकर्मानुष्ठानम् । नये नीतिशास्त्रे पंडितेति संबुद्धिः ॥ ७ ॥ तत एवं सुग्रीववचनात् कार्यसिद्धिसंबंधमवगम्य स्वयं च तत्सामर्थ्याद्यनुभवेन तस्मिन्कार्यसाधकत्वं विदित्वा चात्तद्गम्यदेश एव सीतां विदित्वा चिंतयामास । अस्मिन्स्वकर्तव्यसमर्पणं युक्तमिति विचारयामास ॥ ८ ॥



विशेषेणतुसुग्रीवोहनूमत्यर्थमुक्तवान् ॥ सहितस्मिन्हरिश्रेष्ठेनिश्चितार्थोऽर्थसाधने ॥ १ ॥ अब्रवीच्चहनूमंतंविक्रांतमनिलात्मजम् ॥ सुग्रीवःपरमप्रीतःप्रभुःसर्ववनौकसाम् ॥ २ ॥ नभूमौनांतरिक्षेवानांबरेनामरालये ॥ नाप्सुवागतिसंगंतेपश्यामिहरिपुंगव ॥ ३ ॥ सासुराःसहगंधर्वाःसनागनरदेवताः ॥ विदिताःसर्वलोकास्तेससागरधराधराः ॥ ४ ॥ गतिर्वेगश्चतेजश्चलाघवंचमहाकपे ॥ पितुस्तेसदृशंवीरमारुतस्यमहौजसः ॥ ५ ॥ तेजसावापितेभूतंनसमंभुविविद्यते ॥ तद्यथालभ्यतेसीतातत्त्वमेवानुचिंतय ॥ ६ ॥ त्वय्येवहनुमन्नस्तिवलंबुद्धिःपराक्रमः ॥ देशकालानुवृत्तिश्चनयश्चनयपंडित ॥ ७ ॥ ततःकार्यसमासंगमवगम्यहनूमति ॥ विदित्वाहनुमंतंचचिंतयामासराघवः ॥ ८ ॥ सर्वथानिश्चितार्थोयंहनूमतिहरीश्वरः ॥ निश्चितार्थतरश्चापिहनूमान्कार्यसाधने ॥ ९ ॥ तदेवप्रस्थितस्यास्यपरिज्ञातस्यकर्मभिः ॥ भर्त्रापरिगृहीतस्यध्रुवःकार्यफलोदयः ॥ १० ॥ तंसमीक्ष्यमहातेजाव्यवसायोत्तरंहरिम् ॥ कृतार्थइवसंहृष्टःप्रहृष्टेंद्रियमानसः ॥ ११ ॥ ददौतस्यततःप्रीतःस्वनामांकोपशोभितम् ॥ अंगुलीयमभिज्ञानंराजपुत्र्याःपरंतपः ॥ १२ ॥ अनेनत्वांहरिश्रेष्ठचिह्नेनजनकात्मजा ॥ मत्सकाशादनुप्राप्तमनुद्विग्नाऽनुपश्यति ॥ १३ ॥ व्यवसायश्चतेवीरसत्त्वयुक्तश्चविक्रमः ॥ सुग्रीवस्यचसंदेशःसिद्धिंकथयतीवमे ॥ १४ ॥ सतद्गृह्यहरिश्रेष्ठःकृत्वामूर्ध्निकृतांजलिः ॥ वंदित्वाचरणौचैवप्रस्थितःप्लवगर्षभः ॥ १५ ॥

चिंताप्रकारमाह सर्वथेति । निश्चितार्थः एतदर्थविषयकनिश्चयवान् स्वतोप्ययमतिशयेन कार्यसाधने निश्चितार्थः ॥ ९ ॥ प्रस्थितस्य भर्त्रा प्रस्थापितस्य । परिज्ञातस्य परीक्षितस्य । परिगृहीतस्य श्रेष्ठतयेति शेषः । कार्यस्य फलोदयः सीतादर्शनप्राप्तिरूपः । स ध्रुवो निश्चितार्थः ॥ १० ॥ व्यवसायोत्तरं कार्यसाधने श्रेष्ठं तं हरिं हनूमंतं समीक्ष्य प्रहृष्टेंद्रियमानसो बभूव ॥ ११ ॥ ततो निश्चितकार्यसाधकत्वादेव हेतोः राजपुत्र्याः अभिज्ञानं प्रत्यभिज्ञासाधनं ददौ ॥ १२ ॥ १३ ॥ तावत्पर्यंतं मद्गमननिश्चयः कथमत आह व्यवसायश्चेति ॥ १४ ॥ तदभिज्ञानपदार्थम् ॥ १५ ॥

स तत् हरिणां दीर्घाभाव आर्षः । महद्बलं मकर्षन् ॥ १६ ॥ हरिवरविक्रम श्रेष्ठसिंहविक्रम अतिबल पवनसुत हनूमन् तवैव बलमाश्रितोहमस्मि अतोऽनल्पैर्विक्रमैर्जनकसुता यथाऽधिगम्यते तथा कुरुष्व इत्यब्रवीदिति शेषः । रामसुग्रीवयोः साधारणमिदं वचः ॥ १७ ॥ कतेकेन तु चतुस्त्रिंशत्संख्यश्लोकः सर्गोयमुक्तः ॥ सँक्रमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ ॥ सर्वानिति ॥ १ ॥ उक्तिप्रकार एवमिति ॥ २ ॥ माप्तनियोगानामुद्योगः शलभा इवेति ॥ ३ ॥ यः सीताभ्यधिगमे तद्वृत्तांतज्ञानेऽवधिभूतः कृतस्तं

सतत्प्रकर्षन्हरिणांमहद्बलंबभूववीरःपवनात्मजःकपिः ॥ गतांबुदेव्योम्निविशुद्धमंडलःशशीवनक्षत्रगणोपशोभितः ॥ १६ ॥ अतिबलबलमाश्रितस्तवाहंहरिवरविक्रमविक्रमैरनल्पैः ॥ पवनसुतयथाऽधिगम्यतेसाजनकसुताहनुमंस्तथाकुरुष्व ॥ १७ ॥ इत्यार्षेश्रीमद्रामायणे वा० आदिकाव्येकिष्किंधाकांडेचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ सर्वांश्चाहूयसुग्रीवःप्लवगान्प्लवगर्षभः ॥ समस्तांश्चाब्रवीद्राजारामकार्यार्थसिद्धये ॥ १ ॥ एवमेतद्विचेतव्यंभवद्भिर्वानरोत्तमैः ॥ तदुग्रशासनंभर्तुर्विज्ञायहरिपुंगवाः ॥ २ ॥ शलभाइवसंच्छाद्यमेदिनींसंप्रतस्थिरे ॥ रामःप्रस्रवणेतस्मिन्न्यवसत्सहलक्ष्मणः ॥ ३ ॥ प्रतीक्षमाणस्तंमासंसीताधिगमनेकृतः ॥ उत्तरांतुदिशंरम्यांगिरिराजसमावृताम् ॥ ४ ॥ प्रतस्थेसहसावीरोहरिःशतवलिस्तदा ॥ पूर्वांदिशंप्रतिययौविनतोहरियूथपः ॥ ५ ॥ तारांगदादिसहितःप्लवगःपवनात्मजः ॥ अगस्त्याचरितामाशांदक्षिणांहरियूथपः ॥ ६ ॥ पश्चिमांचदिशंघोरांसुषेणःप्लवगेश्वरः प्रतस्थेहरिशार्दूलोदिशंवरुणपालिताम् ॥ ७ ॥ ततःसर्वादिशोराजाचोदयित्वायथातथम् ॥ कपिसेनापतिर्वीरोमुमोदसुखितःसुखम् ॥ ८ ॥ एवंसंचोदिताःसर्वेराज्ञावानरयूथपाः ॥ स्वांस्वांदिशमभिप्रेत्यत्वरिताःसंप्रतस्थिरे ॥ ९ ॥ नदंतश्चोन्नदंतश्चगर्जंतश्चप्लवंगमाः ॥ क्ष्वेडंतोधावमानाश्चविनदंतोमहाबलाः ॥ १० ॥ एवंसंचोदिताःसर्वेराज्ञावानरयूथपाः ॥ आनयिष्यामहेसीतांहनिष्यामश्चरावणम् ॥ ११ ॥ अहमेकोवधिष्यामिप्राप्तंरावणमाहवे ॥ ततश्चोन्मथ्यसहसाहरिष्येजनकात्मजाम् ॥ १२ ॥ वेपमानांश्रमेणाद्यभवद्भिःस्थीयतामिति ॥ एकएवाहरिष्यामिपातालादपिजानकीम् ॥ १३ ॥ विधमिष्याम्यहंवृक्षान्दारयिष्याम्यहंगिरीन् ॥ धरणींदारयिष्यामिक्षोभयिष्यामिसागरान् ॥ १४ ॥ अहंयोजनसंख्यायाःप्लवेयंनात्रसंशयः ॥ शतयोजनसंख्यायाःशतंसमधिकंह्यहम् ॥ १५ ॥ भूतलेसागरेवापिशैलेषुचवनेषुच ॥ पातालस्यापिवामध्येनममाच्छिद्यतेगतिः ॥ १६ ॥

मासमित्यन्वयः । गिरिराजो हिमालयः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यथातथं यथायोग्यमित्यर्थः । मुमोद चिक्रीड ॥ ८ ॥ अभिप्रेत्य उद्दिश्य ॥ ९ ॥ नादादयः शब्दावांतरभेदाः ॥ १० ॥ आनयिष्यामहे इत्यादेरूचुरित्यनेनान्वयः ॥ ११ ॥ १२ ॥ श्रमेण वेपमानामिति जनकजाविशेषणम् ॥ १३ ॥ १४ ॥ अहं योजनेत्येकस्य वाक्यम् । शतयोजनेत्यन्यस्य ॥ १५ ॥ १६ ॥

एकैकः एकश इत्यर्थः ॥ १७ ॥ थंकेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ गतेष्विति ॥ १ ॥ प्रणत आत्मा देहो यस्यास्तीति ॥ २ ॥ दुंदुभिं नामेति । अत्र दुंदुभिशब्देन महिषशब्देन च तत्पुत्रो मायाविनामा दानव उच्यते तद्वृत्तांतस्यैवाग्रे वक्ष्यमाणत्वात् । मायावी नाम तेजस्वी दुंदुभेः पूर्वजः सुत इति प्रागुक्तेस्तस्य तत्पुत्रत्वं पितुर्माहिषाकारत्वात्तत्पुत्रस्य च तदाकारत्वमिति च बोध्यम् ॥ ३ ॥ मलयं मलयगुहाम् ॥ ४ ॥ ५ ॥ आपुपूरे पूर्णम् ॥ ६ ॥ निहत इति गतबुद्धिः प्राप्तबुद्धिः । जात इति शेषः । ततो मयेत्यादि ॥ ७ ॥ विनशिष्यतीत्यस्येति बुद्ध्वेति शेषः । तस्य वालिनः ॥८॥ तारां च प्राप्येति संबंधः । वसामि अवसम् ॥९॥१०॥ परिकालयते सचिवैः सह धावंतमनुधावति स्म ॥११॥ ततस्तेन वालिना

इत्येकैकस्तदातत्रवानरावलदर्पिताः ॥ उचुश्चवचनंतस्यहरिराजस्यसन्निधौ ॥ १७ ॥ इत्यार्षेश्रीम० वा० आ० किष्किंधाकांडेपंचचत्वारिंशः सर्गः ॥ ४५ ॥ गतेषुवानरेंद्रेषुरामःसुग्रीवमब्रवीत् ॥ कथंभवान्विजानीतेसर्वंवैमंडलंभुवः ॥ १ ॥ सुग्रीवश्चततोरामस्रुवाचप्रणतात्मवान् ॥ श्रूयतांसर्वमाख्यास्येविस्तरेणवचोमम ॥ २ ॥ यदातुदुंदुभिंनामदानवंमहिषाकृतिम् ॥ प्रतिकालयतेवालीमलयंप्रतिपर्वतम् ॥ ३ ॥ तदाविवेशमहिषोमलयस्यगुहांप्रति ॥ विवेशवालीतत्रापिमलयंतज्जिघांसया ॥ ४ ॥ ततोऽहंतत्रनिक्षिप्तोगुहाद्वारिविनीतवत् ॥ नचनिष्क्रामतेवालीतदासंवत्सरेगते ॥ ५ ॥ ततःक्षतजवेगेनआपुपूरेतदाबिलम् ॥ तदहंविस्मितोदृष्ट्वाभ्रातुःशोकविषार्दितः ॥ ६ ॥ अथाहंगतबुद्धिस्तुसुव्यक्तंनिहतोगुरुः ॥ शिलापर्वतसंकाशाबिलद्वारिमयाकृता ॥ ७ ॥ अशक्नुवन्निष्क्रमितुंमहिषोविनशिष्यति ॥ ततोहमागांकिष्किंधांनिराशस्तस्यजीविते ॥८॥ राज्यंचसुमहत्प्राप्यतारांचरुमयासह ॥ मित्रैश्चसहितस्तस्यवसामिविगतज्वरः ॥ ९ ॥ आजगामततोवालीहत्वातंवानरर्षभः ॥ ततोहमददांराज्यंगौरवाद्भययंत्रितः ॥ १० ॥ समांजिघांसुर्दुष्टात्मावालीप्रव्यथितेंद्रियः ॥ परिकालयतेवालीधावंतंसचिवैःसह ॥ ११ ॥ ततोहंवालिनातेनसोनुबद्धःप्रधावितः ॥ नदीश्चविविधाःपश्यन्वनानिनगराणिच ॥१२॥ आदर्शतलसंकाशाततोवैपृथिवीमया ॥ अलातचक्रप्रतिमादृष्टागोष्पदवत्कृता ॥१३॥ पूर्वांदिशंततोगत्वापश्यामिविविधान्द्रुमान् ॥ पर्वतान्सदरीन्रम्यान्सरांसिविविधानिच ॥ १४ ॥ उदयंतत्रपश्यामिपर्वतंधातुमंडितम् ॥ क्षीरोदंसागरंचैवनित्यमप्सरसालयम् ॥ १५ ॥ परिकाल्यमानस्तुतदावालिनाभिद्रुतोह्यहम् ॥ पुनरावृत्यसहसाप्रस्थितोऽहंतदाविभो ॥ १६ ॥ दिशस्तस्यास्ततोभूयःप्रस्थितोदक्षिणांदिशम् ॥ विंध्यपादपसंकीर्णांचंदनद्रुमशोभिताम् ॥ १७ ॥ द्रुमशैलांतरेपश्यन्भूयोदक्षिणतोपराम् ॥ अपरांचदिशंप्राप्तोवालिनासमभिद्रुतः ॥ १८ ॥

सोहमनुबद्धोनुद्रुतः प्रधावितः ॥ १२ ॥ ततो वै तदनुधावनहेतोर्मया गोष्पदवत्परिभ्राम्यमाणेयं पृथिवी अलातचक्रप्रतिमा आदर्शतलसंकाशा च दृष्टा । गोष्पदवदित्यनेन लंघनेऽप्रयास उक्तः । अलातचक्रेत्यनेन स्वीयो भ्रमणवेगः । आदर्शतलेत्यनेन भूतचक्रवर्तिपदार्थस्य स्पष्टमनुभव उक्तः ॥ १३ ॥ उक्तमेव विवृणोति पूर्वां दिशमिति ॥ १४ ॥ अप्सरसशब्दोऽकारांतोप्यार्षः ॥ १५ ॥ परिकाल्यमानः परिकालयमानः पलायमान इत्यर्थः । अकारलोप आर्षः । पुनरावृत्य उदयगिरिभुवः ॥ १६ ॥ तस्या दिशः तां दिशं त्यक्त्वा ॥ १७ ॥ द्रुमांतरे शैलांतरे च तद्व्यवहितं वालिनं पश्यन्नपरां पश्चिमां

दिशं समभिद्रुत इति शेषः ॥ १८ ॥ गिरिसत्तमम् अभिधावित इति शेषः ॥ १९ ॥ मेरुं महामेरुम् । न विंदे न लभे ॥ २० ॥ किमब्रवीत्तदाह इदानीमिति । मे मया स्मृतम् । किं स्मृतं तदाह यथेति ॥ २१ ॥ तदा पूर्वकाले अस्मिन्नाश्रममंडले वाली यदा प्रविशेत्तदास्य मूर्धा शतधा भवेदिति हरीश्वरो मतंगेन शप्तः ॥ २२ ॥ तत्र मतंगाश्रमे निरुद्विग्नो निर्भयः आसाद्य स्थितस्य मम समीपमिति शेषः । न विवेशेत्यन्वयः ॥ २३ ॥ तदा जातशापकृतादिति शेषः । गुहाम् ऋष्यमूकस्येति शेषः ॥ २४ ॥ वैरंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥ ॥ यथोक्तं स्वस्वान्वेषणीयतयोक्तं देशमनतिक्रम्येत्यर्थः ॥ १ ॥ आकाशं वनगिर्यनावृतप्रदेशमित्यर्थः । नदीदुर्गानिति । नदीप्रवाहैर्गंतुमशक्या

सपश्यन्विविधान्देशानस्तंचगिरिसत्तमम् ॥ प्राप्यचास्तगिरिश्रेष्ठमुत्तरंसंप्रधावितः ॥ १९ ॥ हिमवंतंचमेरुंचसमुद्रंचतथोत्तरम् ॥ यदानविंदेशरणं वालिनासमभिद्रुतः ॥ २० ॥ ततोमांबुद्धिसंपन्नोहनुमान्वाक्यमब्रवीत् ॥ इदानींमेस्मृतंराजन्यथावालीहरीश्वरः ॥ २१ ॥ मतंगेनतदाशप्तोह्य स्मिन्नाश्रममंडले ॥ प्रविशेद्यदिवावालीमूर्धास्यशतधाभवेत् ॥ २२ ॥ तत्रवासःसुखोऽस्माकंनिरुद्विग्नोभविष्यति ॥ तत्रपर्वतमासाद्यऋष्यमूकंनृपात्मज ॥ २३ ॥ नविवेशतदावालीमतंगस्यभयात्तदा ॥ एवंमयातदाराजन्प्रत्यक्षमुपलक्षितम् ॥ पृथिवीमंडलंसर्वंगुहामस्म्यागतस्ततः ॥ २४ ॥ इत्यार्षेश्रीम०वा०आ०किष्किंधाकांडेषट्चत्वारिंशःसर्गः ॥४६॥ दर्शनार्थंतुवैदेह्याःसर्वतःकपिकुंजराः ॥ व्यादिष्टाःकपिराजेनयथोक्तंजग्मुरंजसा ॥ ॥ १ ॥ तेसरांसिसरित्कक्षानाकाशंनगराणिच ॥ नदीदुर्गांस्तथादेशान्विचिन्वंतिसमंततः ॥ २ ॥ सुग्रीवेणसमाख्याताःसर्वेवानरयूथपाः ॥ तत्रदेशान्विचिन्वंतिसशैलवनकाननान् ॥ ३ ॥ विचित्यदिवसंसर्वेसीताधिगमनेधृताः ॥ समायांतिस्ममेदिन्यांनिशाकालेषुवानराः ॥ ४ ॥ सर्वर्तुकांश्च देशेषुवानराःसफलान्द्रुमान् ॥ आसाद्यरजनींशय्यांचक्रुःसर्वेष्वहस्सुते ॥ ५ ॥ तदहःप्रथमंकृत्वामासेप्रस्रवणंगताः ॥ कपिराजेनसंगम्यनिराशाः कपिकुंजराः ॥ ६ ॥ विचित्यतुदिशंपूर्वांयथोक्तांसचिवैःसह ॥ अदृष्ट्वाविनतःसीतामाजगाममहाबलः ॥ ७ ॥ दिशमप्युत्तरांसर्वांविविच्यसमहाकपिः ॥ आगतःसहसैन्येनभीतःशतबलिस्तदा ॥ ८ ॥ सुषेणःपश्चिमामाशांविविच्यसहवानरैः ॥ समेत्यमासेपूर्णेतुसुग्रीवमुपचक्रमे ॥ ९ ॥ तंप्रस्रवण पृष्ठस्थंसमासाद्याभिवाद्यच ॥ आसीनंसहरामेणसुग्रीवमिदमब्रुवन् ॥ १० ॥ विचिताःपर्वताःसर्वेवनानिगहनानिच ॥ निम्नगाःसागरांताश्चसर्वे जनपदाश्चये ॥११॥ गुहाश्चविचिताःसर्वायाश्चतेपरिकीर्तिताः ॥ विचिताश्चमहागुल्मालताविततसंतताः ॥ १२ ॥ गहनेषुचदेशेषुदुर्गेषुविषमेषुच ॥ सत्त्वान्यतिप्रमाणानिविचितानिहतानिच ॥ येचैवगहनादेशाविचितास्तेपुनःपुनः ॥ १३ ॥

देशा नदीदुर्गास्तान् ॥ २ ॥ ३ ॥ दिवसमित्यत्यंतसंयोगे द्वितीया । धृताः उद्युक्ताः मेदिन्यां सर्वाधारभूतायां निद्रासौकर्यार्थमिति भावः ॥ ४ ॥ तेषु देशेषु सर्वर्तुकान्नित्यसंनिहितसर्वर्तुयुक्तानतएव सदा सफलद्रुमान् सर्वेष्वहस्सु विचयनसमये समासाद्य कामं प्राप्य रजनीं रजन्यां शय्यां चक्रुः । तादृशवृक्षवत्त्वं च देशस्य रामप्रसादात् ॥ ५ ॥ तदहः प्रस्थानदिवसं प्रथमं कृत्वा गताः पुनर्मासे गते निराशाः सीताप्राप्तौ प्रस्रवणं गता आगताः कपिराजेन संगम्य स्थिता इत्यन्वयः ॥ ६ ॥ ७ ॥ ८ ॥ उपचक्रमे प्राप्तः ॥ ९ ॥ १० ॥ सागरांताः सागरमध्यवर्तिद्वीपाः ॥ ११ ॥ लताविततैर्लताप्रतानैः

५९

संतताः समंताद्व्याप्तास्तादृशा महागुल्मा लतागृहविशेषाः ॥ १२ ॥ १३ ॥ दिक्त्रयासत्यसिद्धनिश्चयमर्थमनुवदति उदारेति ॥ १४ ॥ भ्रंटमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ प्रचक्रमे अन्वेष्टुमिति शेषः॥१॥२॥३॥ अन्वेषमाणास्ते विविधानि फलान्यपि भक्षयंतः सीतां न ददृशुः ॥४॥५॥ यत्र निर्जलत्वादिवद्गहनं तादृशान्यपि दुरन्वेष्याणि विचित्येत्यन्वयः । भृशपीडिताः निर्जलारण्यान्वेषणेन क्षुत्पिपासाभ्यां पीडिताः।स देशो निर्जलादिदेशो यद्यपि दुरन्वेष्योऽथापि तं विचित्य ततस्तं देशं त्यक्त्वाऽन्यदेशं विविशुरित्यग्रिमेणान्वयः

उदारसत्त्वाभिजनोहनूमान्समैथिलींज्ञास्यतिवानरेंद्र ॥ दिशंतुयामेवगतातुसीतातामास्थितोवायुसुतोहनूमान् ॥ १४ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआदिकाव्येकिष्किंधाकांडेसप्तचत्वारिंशःसर्गः ॥ ४७ ॥ सहतारांगदाभ्यांतुसहसाहनुमान्कपिः ॥ सुग्रीवेणयथोदिष्टंगंतुंदेशंप्रचक्रमे ॥ ॥ १ ॥ सतुदूरमुपागम्यसर्वैस्तैकपिसत्तमैः ॥ ततोविचित्यविंध्यस्यगुहाश्चगहनानिच ॥ २ ॥ पर्वताग्रनदीदुर्गान्सरांसिविपुलद्रुमान् ॥ वृक्षखंडांश्च विविधान्पर्वतान्वनपादपान् ॥ ३ ॥ अन्वेषमाणास्तेसर्वेवानराःसर्वतोदिशम् ॥ नसीतांददृशुर्वीरामैथिलींजनकात्मजाम् ॥ ४ ॥ तेभक्षयंतोमूला निफलानिविविधान्यपि ॥ निर्जलंनिर्जनंशून्यंगहनंघोरदर्शनम् ॥ ५ ॥ तादृशान्यप्यरण्यानिविचित्यभृशपीडिताः ॥ सदेशश्चदुरन्वेष्योगुहागहन वान्महान् ॥ ६ ॥ त्यक्त्वातुतंततोदेशंसर्वेवैहरियूथपाः ॥ देशमन्यंदुराधर्षंविविशुश्चाकुतोभयाः ॥ ७ ॥ यत्रवंध्यफलावृक्षाविपुष्पाःपर्णवर्जिताः ॥ निस्तोयाःसरितोयत्रमूलंयत्रसुदुर्लभम् ॥८॥ नसंतिमहिषायत्रनमृगानचहस्तिनः ॥ शार्दूलाःपक्षिणोवापियेचान्येवनगोचराः ॥ ९ ॥ नचात्रवृक्षानौ षध्योनवल्ल्योनापिवीरुधः ॥ स्निग्धपत्राःस्थलेयत्रपद्मिन्यःफुल्लपंकजाः ॥ १० ॥ प्रेक्षणीयाःसुगंधाश्चभ्रमरैश्चविवर्जिताः ॥ कंडुर्नाममहाभागः सत्यवादीतपोधनः ॥ ११ ॥ महर्षिःपरमामर्षीनियमैर्दुष्प्रधर्षणः ॥ तस्यतस्मिन्वनेपुत्रोबालकोदशवार्षिकः ॥ १२ ॥ प्रनष्टोजीवितांतायक्रुद्धस्ते नमहामुनिः ॥ तेनधर्मात्मनाशप्तंकृत्स्नंतत्रमहद्वनम् ॥१३॥ अशरण्यंदुराधर्षंमृगपक्षिविवर्जितम् ॥ तस्यतेकाननांतांस्तुगिरीणांकंदराणिच ॥१४॥ प्रभवानिनदीनांचविचिन्वंतिसमाहिताः ॥ तत्रचापिमहात्मानोनापश्यञ्जनकात्मजाम् ॥ १५ ॥

॥ ६ ॥ ७ ॥ वंध्यफलाः अनुत्पन्नफलाः ॥ ८ ॥ ९ ॥ वल्ल्यो वृक्षाद्याश्रिताः । वीरुधो भूम्याधाराः स्थले यत्र स्थलेनेत्यनुकर्षः ॥१०॥ भ्रमरैर्विवर्जिताः विगतं वर्जितं यासु ताः संयुक्ता इत्यर्थः । तादृशाः फुल्लपंकजाश्च यत्र न संति यत्र वने कंडुर्नाम महर्षिरासीत् ॥ ११ ॥ वने पूर्वमिति शेषः इदानीमुक्तलक्षणः ॥ १२ ॥ जीवितांताय जीवितांतं गत्वा प्रनष्टस्तेन बालदुर्मरणेन क्रुद्धो मुनिरभूत् ततस्तेन धर्मात्मना शापानुग्रहसमर्थप्रबलधर्मवता तत्र काले शप्तमभूत् ॥ १३ ॥ शापस्वरूपमाह अशरण्यं अनावासम् ते वानरास्तस्य काननांतान्विचिन्वंतीत्यन्वयः ॥ १४ ॥ नदीनां प्रभवानि उत्पत्ति

स्थानानि ॥ १५ ॥ ते प्रविश्य वनांतरमिति शेषः तमसुरं ददृशुरित्यन्वयः ॥ १६ ॥ सुरेभ्यो निर्भयः सुरनिर्भयः तथावरदानादिति भावः ॥ १७ ॥ गाढं परिहिताः दृढं परिबद्धवस्त्राः सन्नद्धा इति यावत् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सर्वं विचितं ज्ञात्वेति शेषः ॥ २२ ॥ २३ ॥ गैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किन्धाकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ ॥ समाश्वास्य वानरानिति शेषः ॥ १ ॥ २ ॥ रक्षः तद्रूपोपहर्तेत्याद्यर्थः ॥ ३ ॥ नो महान्यातः मासमध्ये इति शेषः तन्मध्येऽल्पावशिष्ट इति भावः । परावृत्य गमने मह

हर्तारंरावणंवापिसुग्रीवप्रियकारिणः ॥ तेप्रविश्यतुतंभीमंलतागुल्मसमावृतम् ॥ १६ ॥ ददृशुर्भीमकर्माणमसुरंसुरनिर्भयम् ॥ तंदृष्ट्वावानराघोरं स्थितंशैलमिवासुरम् ॥ १७ ॥ गाढंपरिहिताःसर्वेदृष्ट्वातंपर्वतोपमम् ॥ सोपितान्वानरान्सर्वान्नष्टाःस्थेत्यब्रवीद्बली ॥ १८ ॥ अभ्यधावतसंक्रुद्धोमुष्टिमुद्यम्यसंगतम् ॥ तमापतंतंसहसावालिपुत्रोंगदस्तदा ॥ १९ ॥ रावणोऽयमितिज्ञात्वातलेनाभिजघानह ॥ सवालिपुत्राभिहतोवक्त्राच्छोणितमुद्वमन् ॥ २० ॥ असुरोन्यपतद्भूमौपर्यस्तइवपर्वतः ॥ तेतुतस्मिन्निरुच्छ्वासेवानराजितकाशिनः ॥ २१ ॥ विचिन्वन्प्रायशस्तत्रसर्वेतेगिरिगह्वरम् ॥ विचितंतुततःसर्वंसर्वेतेकाननौकसः ॥ २२ ॥ अन्यदेवापरंघोरंविविशुर्गिरिगह्वरम् ॥ तेविचित्यपुनःखिन्नाविनिष्पत्यसमागताः ॥ एकांतेवृक्षमूलेतु निषेदुर्दीनमानसाः ॥ २३ ॥ इत्यार्षेश्री०वा०आ०किष्किंधाकांडेअष्टचत्वारिंशःसर्गः ॥४८॥ अथांगदस्तदासर्वान्वानरानिदमब्रवीत् ॥ परिश्रांतोमहाप्राज्ञःसमाश्वास्यशनैर्वचः ॥ १ ॥ वनानिगिरयोनद्योदुर्गाणिगहनानिच ॥ दरीगिरिगुहाश्चैवविचिताःसर्वमंततः ॥ २ ॥ तत्रतत्रसहास्माभिर्जानकीनचदृश्यते ॥ तथारक्षोपहर्ताचसीतायाश्चैवदुष्कृती ॥ ३ ॥ कालश्चनोमहान्यातःसुग्रीवश्चोग्रशासनः ॥ तस्माद्भवंतःसहिताविचिन्वंतुसमंततः ॥ ४ ॥ विहायतंद्रींशोकंचनिद्रांचैवसमुत्थिताम् ॥ विचिनुध्वंतथासीतांपश्यामोजनकात्मजाम् ॥ ५ ॥ अनिर्वेदंचदाक्ष्यंचमनसश्चापराजयम् ॥ कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥ ६ ॥ अद्यापीदंवनंदुर्गंविचिन्वंतुवनौकसः ॥ खेदंत्यक्त्वापुनःसर्वंवनमेवविचिन्वताम् ॥ ७॥ अवश्यंकुर्वतांतस्यदृश्यतेकर्मणःफलम् ॥ परंनिर्वेदमागम्यनहिनोन्मीलनंक्षमम् ॥८॥ सुग्रीवःक्रोधनोराजातीक्ष्णदंडश्चवानराः ॥ भेतव्यंतस्यसततं रामस्यचमहात्मनः ॥ ९ ॥

दनिष्टमित्याह सुग्रीवश्चेति ॥ ४ ॥ तथा विचिनुध्वं यथा सीतां पश्याम इत्यन्वयः ॥ ५ ॥ अनिर्वेदमखेदम् दाक्ष्यं सामर्थ्यम् अपराजयं कार्यापराङ्मुखत्वम् एतद्वक्ष्यमाणम् ॥ ६ ॥ हे वनौकसः इदं दुर्गंवनमद्यापि विचिन्वंतु भवंतः आदरात्पुनराह खेदं त्यक्त्वा पुनर्विचिन्वताम ॥ ७ ॥ निर्वेदं खेदम् नोन्मीलनमनुन्मीलनमनुद्योग इति यावत् न क्षमं न युक्तम् ॥ ८ ॥ तत्र हेतुः सुग्रीव इति ॥ ९ ॥

संतताः समंताद्यामास्तादृशा महागुल्मा लतागृहविशेषाः ॥ १२ ॥ १३ ॥ दिकूत्रयासत्यसिद्धनिश्चयमर्थमनुवदति उदारेति ॥ १४ ॥ भेटमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ प्रचक्रमे अन्वेष्टुमिति शेषः॥ १॥ २॥ ३॥ अन्वेषमाणास्ते विविधानि फलान्यपि भक्षयंतः सीतां न ददृशुः ॥ ४॥ ५॥ यत्र निर्जलत्वादिवद्गहनं तादृशान्यपि दुरन्वेष्याणि विचित्येत्यन्वयः । भृशपीडिताः निर्जलारण्यान्वेषणेन क्षुत्पिपासाभ्यां पीडिताः।स देशो निर्जलादिदेशो यद्यपि दुरन्वेष्योऽथापि तं विचित्य ततस्तं देशं त्यक्त्वाऽन्यदेशं विविशुरित्यग्रिमेणान्वयः

उदारसत्त्वाभिजनोहनूमान्समैथिलींज्ञास्यातिवानरेंद्र ॥ दिशंतुयामेवगतातुसीतातामास्थितोवायुसुतोहनूमान् ॥ १४ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआदिकाव्येकिष्किंधाकांडेसप्तचत्वारिंशःसर्गः ॥ ४७ ॥ सहतारांगदाभ्यांतुसहसाहनुमान्कपिः॥ सुग्रीवेणयथोदिष्टंगंतुंदेशंप्रचक्रमे ॥ ॥ १ ॥सतुदूरमुपागम्यसर्वैस्तैःकपिसत्तमैः ॥ ततोविचित्यविंध्यस्यगुहाश्चगहनानिच ॥ २ ॥ पर्वताग्रनदीदुर्गान्सरांसिविपुलद्रुमान् ॥ वृक्षखंडांश्च विविधान्पर्वतान्वनपादपान्॥ ३ ॥ अन्वेषमाणास्तेसर्वेवानराःसर्वतोदिशम् ॥ नसीतांददृशुर्वीरामैथिलींजनकात्मजाम् ॥ ४ ॥ तेभक्षयंतोमूला निफलानिविविधान्यपि ॥ निर्जलंनिर्जनंशून्यंगहनंघोरदर्शनम् ॥ ५ ॥ तादृशान्यप्यरण्यानिविचित्यभृशपीडिताः ॥ सदेशश्चदुरन्वेष्योगुहागहन वान्महान् ॥ ६ ॥ त्यक्त्वातुतंततोदेशंसर्वेवैहरियूथपाः ॥ देशमन्यंदुराधर्षंविविशुश्चाकुतोभयाः ॥ ७ ॥ यत्रवंध्यफलावृक्षाविपुष्पाःपर्णवर्जिताः ॥ निस्तोयाःसरितोयत्रमूलंयत्रसुदुर्लभम् ॥८॥ नसंतिमहिषायत्रनमृगानचहस्तिनः ॥ शार्दूलाःपक्षिणोवापियेचान्येवनगोचराः ॥ ९ ॥ नचात्रवृक्षानौ षध्योनवल्ल्योनापिवीरुधः ॥ स्निग्धपत्राःस्थलेयत्रपद्मिन्यःफुल्लपंकजाः ॥ १० ॥ प्रेक्षणीयाःसुगंधाश्चभ्रमरैश्चविवर्जिताः ॥ कंडुर्नाममहाभागः सत्यवादीतपोधनः ॥ ११ ॥ महर्षिःपरमामर्षीनियमैर्दुष्प्रधर्षणः ॥ तस्यतस्मिन्वनेपुत्रोबालकोदशवार्षिकः ॥ १२ ॥ प्रनष्टोजीवितांतायक्रुद्धस्ते नमहामुनिः ॥ तेनधर्मात्मनाशप्तंकृत्स्नंतत्रमहद्वनम् ॥१३॥ अशरण्यंदुराधर्षंमृगपक्षिविवर्जितम् ॥ तस्यतेकाननांतांस्तुगिरीणांकंदराणिच ॥१४॥ प्रभवानिनदीनांचविचिन्वंतिसमाहिताः ॥ तत्रचापिमहात्मानोनापश्यञ्जनकात्मजाम् ॥ १५ ॥



॥ ६ ॥ ७ ॥ वंध्यफलाः अनुत्पन्नफलाः ॥ ८ ॥ ९ ॥ वल्ल्यो वृक्षाद्याश्रिताः । वीरुधो भूम्याधाराः स्थले यत्र स्थलेनेत्यनुकर्षः ॥१०॥ भ्रमरैर्विवर्जिताः विगतं वर्जितं यासु ताः संयुक्ता इत्यर्थः । तादृशाः फुल्लपंकजाश्च यत्र न संति यत्र वने कंडुर्नाम महर्षिरासीत् ॥ ११ ॥ वने पूर्वमिति शेषः इदानीमुक्तलक्षणः ॥ १२ ॥ जीवितांताय जीवितांतं गत्वा प्रनष्टस्तेन बालदुर्मरणेन क्रुद्धो मुनिरभूत् ततस्तेन धर्मात्मना शापानुग्रहसमर्थमबलधर्मवता तत्र काले शप्तमभूत् ॥ १३ ॥ शापस्वरूपमाह अशरण्यं अनावासम् ते वानरास्तस्य काननांतान्विचिन्वंतीत्यन्वयः ॥ १४ ॥ नदीनां प्रभवानि उत्पत्ति

स्थानानि ॥ १५ ॥ ते प्रविश्य वनांतरमिति शेषः तमसुरं ददृशुरित्यन्वयः ॥ १६ ॥ सुरेभ्यो निर्भयः सुरनिर्भयः तथावरदानादिति भावः ॥ १७ ॥ गाढं परिहिताः दृढं परिबद्धवस्त्राः सन्नद्धा इति यावत् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सर्वं विचितं ज्ञात्वेति शेषः ॥ २२ ॥ २३ ॥ गैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किन्धाकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ ॥ समाश्वास्य वानरानिति शेषः ॥ १ ॥ २ ॥ रक्षः तद्रूपोपहर्तेत्याद्यर्थः ॥ ३ ॥ नो महान्यातः मासमध्ये इति शेषः तन्मध्येऽल्पावशिष्ट इति भावः । परावृत्य गमने मह

हर्तारंरावणंवापिसुग्रीवप्रियकारिणः ॥ तेप्रविश्यतुतंभीमंलतागुल्मसमावृतम् ॥ १६ ॥ ददृशुर्भीमकर्माणमसुरंसुरनिर्भयम् ॥ तंदृष्ट्वावानराघोरं स्थितंशैलमिवासुरम् ॥ १७ ॥ गाढंपरिहिताःसर्वेदृष्ट्वातंपर्वतोपमम् ॥ सोपितान्वानरान्सर्वान्नष्टाःस्थेत्यब्रवीद्बली ॥ १८ ॥ अभ्यधावतसंक्रुद्धोमुष्टिमुद्यम्यसंगतम् ॥ तमापतंतंसहसावालिपुत्रोंगदस्तदा ॥ १९ ॥ रावणोऽयमितिज्ञात्वातलेनाभिजघानह ॥ सवालिपुत्राभिहतोवक्त्राच्छोणितमुद्वमन् ॥ २० ॥ असुरोन्यपतद्भूमौपर्यस्तइवपर्वतः ॥ तेतुतस्मिन्निरुच्छ्वासेवानराजितकाशिनः ॥ २१ ॥ विचिन्वन्प्रायशस्तत्रसर्वंतेगिरिगह्वरम् ॥ विचितंतुततःसर्वंसर्वेतेकाननौकसः ॥ २२ ॥ अन्यदेवापरंघोरंविविशुर्गिरिगह्वरम् ॥ तेविचित्यपुनःखिन्नाविनिष्पत्यसमागताः ॥ एकांतेवृक्षमूलेतु निषेदुर्दीनमानसाः ॥ २३ ॥ इत्यार्षेश्री०वा०आ०किष्किंधाकांडेअष्टचत्वारिंशःसर्गः ॥४८॥ अथांगदस्तदासर्वान्वानरानिदमब्रवीत् ॥ परिश्रांतोमहाप्राज्ञःसमाश्वास्यशनैर्वचः ॥ १ ॥ वनानिगिरयोनद्योदुर्गाणिगहनानिच ॥ दरीगिरिगुहाश्चैवविचिताःसर्वमंततः ॥ २ ॥ तत्रतत्रसहास्माभिर्जानकीनचदृश्यते ॥ तथारक्षोपहर्ताचसीतायाश्चैवदुष्कृती ॥ ३ ॥ कालश्चनोमहान्यातःसुग्रीवश्चोग्रशासनः ॥ तस्माद्भवंतःसहिताविचिन्वंतुसमंततः ॥ ४ ॥ विहायतंद्रींशोकंचनिद्रांचैवसमुत्थिताम् ॥ विचिनुध्वंतथासीतांपश्यामोजनकात्मजाम् ॥ ५ ॥ अनिर्वेदंचदाक्ष्यंचमनसश्चापराजयम् ॥ कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥ ६ ॥ अद्यापीदंवनंदुर्गंविचिन्वंतुवनौकसः ॥ खेदंत्यक्त्वापुनःसर्वंवनमेवविचिन्वताम् ॥ ७॥ अवश्यंकुर्वतांतस्यदृश्यतेकर्मणःफलम् ॥ परंनिर्वेदमागम्यनहिनोन्मीलनंक्षमम् ॥८॥ सुग्रीवःक्रोधनोराजातीक्ष्णदंडश्चवानराः ॥ भेतव्यंतस्यसततं रामस्यचमहात्मनः ॥ ९ ॥

दनिष्टमित्याह सुग्रीवश्चेति ॥ ४ ॥ तथा विचिनुध्वं यथा सीतां पश्याम इत्यन्वयः ॥ ५ ॥ अनिर्वेदमखेदम् दाक्ष्यं सामर्थ्यम् अपराजयं कार्यापराङ्मुखत्वम् एतद्वक्ष्यमाणम् ॥ ६ ॥ हे वनौकसः इदं दुर्गवनमद्यापि विचिन्वंतु भवंतः आदरात्पुनराह खेदं त्यक्त्वा पुनर्विचिन्वताम ॥ ७ ॥ निर्वेदं खेदम् नोन्मीलनमनुन्मीलनमनुद्योग इति यावत् न क्षमं न युक्तम् ॥ ८ ॥ तत्र हेतुः सुग्रीव इति ॥ ९ ॥

यदि मदुक्तमेतन्न रोचते तर्हि यदन्यत्क्षमं तदुच्यताम् ॥ १० ॥ ११ ॥ वो युष्माकम् यदंगद उवाच तत्सदृशं तस्यैवेति शेषः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ तस्य रजतपर्वतस्य ॥ १८ ॥ दृष्टिगतं दृष्टिगोचरं अध्यारोहंत अवारोहंतेत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ आदितस्तावद्विंध्यं विचेरुरन्वेषणायेति शेषः । तावच्छब्दो वाक्यालंकारे ॥ २२ ॥ रेफैमानः ॥ ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकोनपंचाशः सर्गः ॥ ४९ ॥ ॥ सहेति ॥ १ ॥ विषमेषु क्लेशजनकेषु ॥ २ ॥ दक्षिणपश्चिमां कोटिं नैर्ऋ

हितार्थमेतदुक्तंवः क्रियतांयदिरोचते ॥ उच्यतांहिक्षमंयत्तत्सर्वेषामेववानराः ॥ १० ॥ अंगदस्यवचःश्रुत्वावचनंगंधमादनः ॥ उवाचव्यक्तयावाचा पिपासाश्रमखिन्नया ॥ ११ ॥ सदृशंखलुवोवाक्यमंगदोयदुवाचह ॥ हितंचैवानुकूलंचक्रियतामस्यभाषितम् ॥ १२ ॥ पुनर्मार्गामहेशैलान्कंदरांश्चशिलास्तथा ॥ काननानिचशून्यानिगिरिप्रस्रवणानिच ॥ १३ ॥ यथोद्दिष्टानिसर्वाणिसुग्रीवेणमहात्मना ॥ विचिन्वंतुवनंसर्वेगिरिदुर्गाणिसंगताः ॥ १४ ॥ ततःसमुत्थायपुनर्वानरास्तेमहाबलाः ॥ विंध्यकाननसंकीर्णांविचेरुर्दक्षिणांदिशम् ॥ १५ ॥ तेशारदाभ्रप्रतिमंश्रीमद्रजतपर्वतम् ॥ शृंगवंतंदरीवंतमधिरुह्यचवानराः ॥१६॥ तत्रलोध्रवनंरम्यंसप्तपर्णवनानिच ॥ विचिन्वंतोहरिवराःसीतादर्शनकांक्षिणः ॥ १७ ॥ तस्याग्रमधिरूढास्तेश्रुताविपुलविक्रमाः ॥ नपश्यंतिस्मवैदेहींरामस्यमहिषींप्रियाम् ॥१८॥ तेतुदृष्टिगतंदृष्ट्वातंशैलंबहुकंदरम् ॥ अध्यारोहंतहरयोवीक्षमाणाःसमंततः॥ १९ ॥ अवरुह्यततोभूमिंश्रांताविगतचेतसः ॥ स्थित्वामुहूर्तंतत्राथवृक्षमूलमुपाश्रिताः ॥ २० ॥ तेमुहूर्तंसमाश्वस्ताःकिंचिद्भग्नपरिश्रमाः ॥ पुनरेवोद्यताःकृत्स्नांमार्गितुंदक्षिणांदिशम् ॥ २१ ॥ हनुमत्प्रमुखास्तावत्प्रस्थिताःप्लवगर्षभाः ॥ विंध्यमेवादितःकृत्वाविचेरुश्चसमंततः ॥ २२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येकिष्किंधाकांडेएकोनपंचाशःसर्गः ॥ ४९ ॥ सहतारांगदाभ्यांतुसंगम्यहनुमान्कपिः ॥ विचिनोतिचविंध्यस्यगुहाश्चगहनानिच ॥ १ ॥ सिंहशार्दूलजुष्टाश्चगुहाश्चपरितस्तदा ॥ विषमेषुनगेंद्रस्यमहाप्रस्रवणेषुच ॥ २ ॥ आसेदुस्तस्यशैलस्यकोटिंदक्षिणपश्चिमाम् ॥ तेषांतत्रैववसतांसकालोव्यत्यवर्तत ॥ ३ ॥ सहिदेशोदुरन्वेष्योगुहागहनवान्महान् ॥ तत्रवायुसुतःसर्वंविचिनोतिस्मपर्वतम् ॥ ४ ॥ परस्परेणरहितावन्योन्यस्याविदूरतः ॥ गजोगवाक्षोगवयःशरभोगंधमादनः ॥ ५ ॥ मैंदश्चद्विविदश्चैवहनूमाञ्जांबवानपि ॥ अंगदोयुवराजश्चतारश्चवनगोचरः ॥ ६ ॥ गिरिजालावृतान्देशान्मार्गित्वादक्षिणांदिशम् ॥ विचिन्वंतस्ततस्तत्रददृशुर्विवृतंबिलम् ॥ ७ ॥ दुर्गमृक्षबिलंनामदानवेनाभिरक्षितम् ॥ क्षुत्पिपासापरीतास्तुश्रांतास्तुसलिलार्थिनः ॥ ८॥ अवकीर्णंलतावृक्षैर्ददृशुस्तेमहाबिलम् ॥ तत्रक्रौंचाश्चहंसाश्चसारसाश्चापिनिष्क्रमन्॥ ॥ ९ ॥ जलार्द्राश्चक्रवाकाश्चरक्तांगाःपद्मरेणुभिः ॥ ततस्तद्बिलमासाद्यसुगंधिदुरतिक्रमम् ॥ १० ॥

त्यभागीयशृंगं स कालः सुग्रीवकल्पितः कालः व्यत्यवर्तत व्यतिक्रांतः ॥ ३ ॥ सदेशो नैर्ऋत्यविंध्यकोटिप्रदेशः ॥ ४ ॥ परस्परेण रहिताः प्रत्येकमन्योन्यस्याविदूरतो भूत्वा हनूमान् गजादयश्च विचिन्वंति स्म ॥ ५ ॥ ६ ॥ विवृतमनावृतद्वारम् ॥ ७ ॥ दुर्गं दुर्गमं दानवेन मयेन ॥ ८ ॥ तत्र ततः निष्क्रमन् निराक्रमन् ॥ ९ ॥ सुगंधि बिलांतर्वक्ष्यमाणदिव्यगंधपुष्पसंबद्धवातसंगात ॥ १० ॥

संजातपरिशंकाः संजातजलसंभावनाः ॥ ११ ॥ दैत्येंद्रनिलयः पातालम् ॥ १२ ॥ १३ ॥ कांतारवनकोविदः तत्प्रवेशादौ समर्थः ॥ १४ ॥ १५ ॥ १६ ॥ इत्युक्ताः हनूमतेति शेषः ॥ १७ ॥ निशाम्य अवलोक्य ॥ १८ ॥ न सज्जते न प्रतिबध्यते तेजः प्रभावः । अन्ये तु तेषां दृष्टिर्न सज्जते तत्रत्यपदार्थेष्विति शेषः तिमिरावृतत्वात् । अतएव तेजःपराक्रमयोरपि कुंठितगमनम् । यद्यपि वायोरिवं गतिरस्तथापि यतो दृष्टिस्तमसि प्रतिबद्धा वर्ततेऽतो वेगेन परस्परहस्तग्रहणपूर्वकं प्रविष्टा इत्यर्थः । अतएव गृह्यहस्तैः परस्परमित्यग्रे हनुमदुक्तिरित्याहुः ॥ १९ ॥ २० ॥

विस्मयव्यग्रमनसोबभूवुर्वानरर्षभाः ॥ संजातपरिशंकास्तेतद्बिलंप्लवगोत्तमाः ॥ ११ ॥ अभ्यपद्यंतसंहृष्टास्तेजोवंतोमहाबलाः ॥ नानासत्त्वसमाकीर्णंदैत्येंद्रनिलयोपमम् ॥ १२ ॥ दुर्दर्शमिवघोरंचदुर्विगाह्यंचसर्वशः ॥ ततःपर्वतकूटाभोहनूमान्मारुतात्मजः ॥ १३ ॥ अब्रवीद्वानरान्घोरान्कांतारवनकोविदः ॥ गिरिजालावृतान्देशान्मार्गित्वादक्षिणांदिशम् ॥ १४ ॥ वयंसर्वेपरिश्रांतानचपश्याममैथिलीम् ॥ अस्माच्चापिबिलाद्धंसाःक्रौंचाश्चसहसारसैः ॥ १५ ॥ जलार्द्राश्चक्रवाकाश्चनिष्पतंतिस्मसर्वशः ॥ नूनंसलिलवानत्रकूपोवायदिवाह्रदः ॥ १६ ॥ तथाचेमेबिलद्वारेस्निग्धास्तिष्ठंतिपादपाः ॥ इत्युक्तास्तद्बिलंसर्वेविविशुस्तिमिरावृतम् ॥ १७ ॥ अचंद्रसूर्यंहरयोददृशूरोमहर्षणम् ॥ निशाम्यतस्मात्सिंहांश्चतांस्तांश्चमृगपक्षिणः ॥ १८ ॥ प्रविष्टाहरिशार्दूलाबिलंतिमिरसंवृतम् ॥ नतेषांसज्जतेदृष्टिर्नतेजोनपराक्रमः ॥ १९ ॥ वायोरिवगतिस्तेषांदृष्टिस्तमसिवर्तते ॥ तेप्रविष्टास्तुवेगेनतद्बिलंकपिकुंजराः ॥ २० ॥ प्रकाशंचाभिरामंचददृशुर्देशमुत्तमम् ॥ ततस्तस्मिन्बिलेभीमेनानापादपसंकुले ॥ २१ ॥ अन्योन्यंसंपरिष्वज्यजग्मुर्योजनमंतरम् ॥ तेनष्टसंज्ञास्तृषिताःसंभ्रांताःसलिलार्थिनः ॥ २२ ॥ परिपेतुर्बिलेतस्मिन्कंचित्कालमतंद्रिताः ॥ तेकृशादीनवदनाःपरिश्रांताःप्लवंगमाः ॥ २३ ॥ आलोकंददृशुर्वीरानिराशाजीवितेयदा ॥ ततस्तंदेशमागम्यसौम्याविितिमिरंवनम् ॥ २४ ॥ ददृशुःकांचनान्वृक्षान्दीप्तवैश्वानरप्रभान् ॥ सालांस्तालांस्तमालांश्चपुन्नागान्वंजुलान्धवान् ॥ २५ ॥ चंपकान्नागवृक्षांश्चकर्णिकारांश्चपुष्पितान् ॥ स्तवकैःकांचनैश्चित्रैरक्तैःकिसलयैस्तथा ॥ २६ ॥

॥ २१ ॥ अन्योन्यं संपरिष्वज्य तिमिरदेशविनिर्गमनसंतोषवशादिति शेषः । यद्वान्योन्यं हस्तावलंबनं कृत्वा हस्तेन परस्परस्योरआदिसम्यग्धृत्वेति यावत् । पूर्वोक्तस्यैव विस्तरः नष्टसंज्ञास्तृषावशात्तदाह तृषिता इति ॥ २२ ॥ परिपेतुरिति । अधोमार्गावलंबनांधकारे गताः ॥ २३ ॥ आलोकमेव ददृशुर्न तु जलं जीविते निराशा यदा बभूवुस्तदोच्यमानलक्षणं देशमागम्य कांचनान्वृक्षांश्च ददृशुः । यद्वा जीविते निराशा बभूवुस्तदा भगवत्कृपया आलोकं ददृशुरुच्यमानविशेषणे देशे कांचनान्वृक्षान् ददृशुः ॥ २४ ॥ २५ ॥ २६ ॥

आपीडैः स्तबकशेखरैर्लताभिश्च संयुक्तान्पादपान् ददृशुः ॥ २७ ॥ पद्मिनीः पद्मलताः ॥ २८ ॥ २९ ॥ पद्मादियुता नलिनीः सरांसि च ददृशुः ॥ ३० ॥ मुक्ताजालैर्मुक्ताखचितजालैरावृतानि । हैमेत्यादि गृहमुख्यानीत्यस्य विशेषणम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ यानानि शिबिकादीनि ॥ ३६ ॥ ३७ ॥ ३८ ॥ व्यवतिष्ठंत तूष्णीमवस्थिता बभूवुः ॥ ३९ ॥



आपीडैश्चलताभिश्चहेमाभरणभूषितान् ॥ तरुणादित्यसंकाशान्वैदूर्यमयवेदिकान् ॥ २७ ॥ विभ्राजमानान्वपुषापादपांश्चहिरण्मयान् ॥ नीलवैदूर्यवर्णीश्चपद्मिनीःपतगैर्वृताः ॥ २८ ॥ महद्भिःकांचनैर्वृक्षैर्वृतंबालार्कसन्निभैः ॥ जातरूपमयैर्मत्स्यैर्महद्भिश्चाथपंकजैः ॥ २९ ॥ नलिनीस्तत्रददृशुः प्रसन्नसलिलायुताः ॥ कांचनानिविमानानिराजतानितथैवच ॥ ३० ॥ तपनीयगवाक्षाणिमुक्ताजालावृतानिच ॥ हैमराजतभौमानिवैदूर्यमणिमंतिच ॥ ३१ ॥ ददृशुस्तत्रहरयोगृहमुख्यानिसर्वशः ॥ पुष्पितान्फलिनोवृक्षान्प्रवालमणिसन्निभान् ॥ ३२ ॥ कांचनभ्रमरांश्चैवमधूनिचसमंततः ॥ मणिकांचनचित्राणिशयनान्यासनानिच ॥ ३३ ॥ विविधानिविशालानिददृशुस्तेसमंततः ॥ हैमराजतकांस्यानांभाजनानांचराजयः ॥ ३४ ॥ अगुरूणांचदिव्यानांचंदनानांचसंचयान् ॥ शुचीन्यभ्यवहाराणिमूलानिचफलानिच ॥ ३५ ॥ महार्हाणिचयानानिमधूनिरसवंतिच ॥ दिव्यानामंवराणांचमहार्हाणांचसंचयान् ॥ ३६ ॥ कंबलानांचचित्राणामजिनानांचसंचयान् ॥ तत्रतत्रविचिन्वंतोबिलेतत्रमहाप्रभाः ॥ ३७ ॥ ददृशुर्वानराःशूराःस्त्रियंकांचिददूरतः ॥ तांचतेददृशुस्तत्रचीरकृष्णाजिनांवराम् ॥ ३८ ॥ तापसींनियताहारांज्वलंतीमिवतेजसा ॥ विस्मिताहरयस्तत्रव्यवतिष्ठंतसर्वशः ॥ पप्रच्छहनुमांस्तत्रकासित्वंकस्यवाबिलम् ॥ ३९ ॥ ततोहनूमान्गिरिसन्निकाशःकृतांजलिस्तामभिवाद्यवृद्धाम् ॥ पप्रच्छकात्वंभवनंबिलंचरत्नानिचेमानिवदस्वकस्य ॥ ४० ॥ इत्यार्षेश्रीमद्रामायणेवा० आदिकाव्ये किष्किंधाकांडे पंचाशः सर्गः ॥ ५० ॥ इत्युक्त्वाहनुमांस्तत्रचीरकृष्णाजिनांवराम् ॥ अब्रवीत्तांमहाभागांतापसींधर्मचारिणीम् ॥ १ ॥ इदंप्रविष्टाःसहसाबिलंतिमिरसंवृतम् ॥ क्षुत्पिपासापरिश्रांताःपरिखिन्नाश्चसर्वशः ॥ २ ॥ महद्धरण्याविवरंप्रविष्टाःस्मपिपासिताः ॥ इमांस्त्वेवंविधान्भावान्विविधानद्भुतोपमान् ॥ ३ ॥ दृष्ट्वावयंप्रव्यथिताःसंभ्रांतानष्टचेतसः ॥ कस्यैतेकांचनावृक्षास्तरुणादित्यसन्निभाः ॥४॥ शुचीन्यभ्यवहाराणिमूलानिचफलानिच ॥ कांचनानिविमानानिराजतानिगृहाणिच ॥५॥ तपनीयगवाक्षाणिमणिजालावृतानिच ॥ पुष्पिताःफलवंतश्चपुण्याःसुरभिगंधयः ॥ ६ ॥

पप्रच्छ हनूमानित्यर्थस्यैव सविशेषप्रतिपादनं ततो हनूमानिति ॥ ४० ॥ अनेडमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे पंचाशः सर्गः ॥ ५० ॥ ॥ इत्युक्त्वा का त्वं भवनमित्यादि पृष्ट्वा ॥ १ ॥ किमब्रवीत्तदाह इदमिति । सहसा हठात् ॥ २ ॥ उक्तमेवार्थं प्रपंचयति महदिति । भावान् पदार्थान् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

कस्य तेजसा संभूता इति शेषः ॥ ७ ॥ आत्मनस्तवेत्यर्थः । कस्य वान्यस्य वेत्यर्थः ॥ ८ ॥ अजानतामेतत्स्वरूपमजानताम् ॥ ९ ॥ १० ॥ मायया विचित्रनिर्माणशक्त्या को मय इत्याशंक्य तत्प्रसिद्धिमाह पुरेति । विश्वकर्मा शिल्पी । ह प्रसिद्धम् ॥ ११ ॥ येनेदं निर्मितं स दानवानां विश्वकर्मेत्यन्वयः । निर्माणशक्तिबीजमाह स त्विति ॥ १२ ॥ वरं विचित्रसृष्टिसामर्थ्यरूपं अपि च सर्वमौशनसं धनं निर्माणसाधनपदार्थजातं निर्माणसाधनशिल्पं शास्त्रज्ञानं च लेभे । शिल्पशास्त्रस्योशनःप्रणीतत्वात्तद्धनत्वव्यपदेशः । बलवान् उक्तरूपबलवान् सर्वकामेश्वरः स्वसृष्टिभोग्यविशेषाणामीश्वरो भोक्ता ॥ १३ ॥ सुखितोऽत्रोवास हेमायां तदाख्याप्सरसि सक्तम् ॥ १४ ॥ दानवपुंगवमशनिं गृह्य गृहीत्वा विक्रम्यैव युद्धं कृत्वैव पुरंदरो जघान । यद्यप्यसुरशिल्पी मयो नित्य इति कथं

इमेजांबूनदमयाःपादपाःकस्यतेजसा ॥ कांचनानिचपद्मानिजातानिविमलेजले ॥ ७ ॥ कथंमत्स्याश्चसौवर्णाहृश्यंतेसहकच्छपैः ॥ आत्मनस्त्वनुभावाद्वाकस्यवैतत्तपोवलम् ॥ ८ ॥ अजानतांनःसर्वेषांसर्वमाख्यातुमर्हसि ॥ एवमुक्ताहनुमतातापसीधर्मचारिणी ॥ ९ ॥ प्रत्युवाचहनूमंतंसर्वभूतहितेरता ॥ मयोनाममहातेजामायावीवानरर्षभ ॥ १० ॥ तेनेदंनिर्मितंसर्वंमाययाकांचनंवनम् ॥ पुरादानवमुख्यानांविश्वकर्माबभूवह ॥ ११ ॥ येनेदंकांचनंदिव्यंनिर्मितंभवनोत्तमम् ॥ सतुवर्षसहस्राणितपस्तप्त्वामहद्वने ॥ १२ ॥ पितामहाद्वरंलेभेसर्वमौशनसंधनम् ॥ विधायसर्वंबलवान्सर्वकामेश्वरस्तदा ॥ १३ ॥ उवाससुखितःकालंकंचिदस्मिन्महावने ॥ तमप्सरसिहेमायांसक्तंदानवपुंगवम् ॥ १४ ॥ विक्रम्यैवाशनिंगृह्यजघानेशःपुरंदरः ॥ इदंचब्रह्मणादत्तंहेमायैवनमुत्तमम् ॥ १५ ॥ शाश्वतःकामभोगश्चगृहंचेदंहिरण्मयम् ॥ दुहितामेरुसावर्णेरहंतस्याःस्वयंप्रभा ॥ १६ ॥ इदंरक्षामिभवनंहेमायावानरोत्तम ॥ ममप्रियसखीहेमानृत्तगीतविशारदा ॥ १७ ॥ तयादत्तवराचास्मिरक्षामिभवनंमहत् ॥ किंकार्यंकस्यवाहेतोःकांताराणिप्रपद्यथ ॥ ॥ १८ ॥ कथंचेदंवनंदुर्गंयुष्माभिरुपलक्षितम् ॥ शुचीन्यभ्यवहाराणिमूलानिचफलानिच ॥ भुक्त्वापीत्वाचपानीयंसर्वंमेवक्तुमर्हसि ॥ १९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकपंचाशः सर्गः ॥ ५१ ॥

हननं तस्य तथापि य एवासुरशिल्पिपदस्थः सर्वोपि मयाख्य इति प्रवाहनित्यतैव तस्येंद्रवदिति न दोषः । तस्मिंश्च हते इदं वनं शाश्वतः कामभोग इदं गृहं च मयभुक्तायै हेमायै न्यायप्राप्तत्वात् भगवता ब्रह्मणा दत्तमित्यर्थः । एतेन विचित्रनिर्माणसामर्थ्यगुणयोगादत्र ब्रह्मशब्दो मयदानवपर इत्यपास्तं हतेन दानासंभवात् ॥ १५ ॥ स्वयंप्रभेत्यन्वर्थं नाम तस्याः । तेन सूर्यावलोकाभावेपि प्रकाशवत्त्वमुपपादितं तस्या हेमाया भवनमित्यन्वयः ॥ १६ ॥ ननु त्वं किमर्थं रक्षसि तत्राह मम प्रियसखीति ॥ १७ ॥ दत्तवरा रक्षणसामर्थ्यवत्त्वात्सखित्वेन प्रार्थितरक्षणा च । एवं स्ववृत्तांतमुक्त्वा हनूमदादिवृत्तांतं पृच्छति किमिति ॥ १८ ॥ अभ्यवहाराणि अभ्यवहार्याणि ॥ १९ ॥ अंधेपमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकपंचाशः सर्गः ॥ ५१ ॥

॥ इदं वचनं वक्ष्यमाणम् ॥ १ ॥ यदि चैतत्किं कार्यमित्यादि प्राक्पृष्टार्थतत्त्वम् ॥ २ ॥ ३ ॥ सर्वलोकराजत्वेन तस्येश्वरत्वं सूचितम् ॥ ४ ॥ बलाद्बलात्कारेण ॥ ५ ॥ ६ ॥ अंगदप्रमुखैर्वानरैः सह वयं प्रस्थापिताः ॥ ७ ॥ सहिता मिलिताः संतो रावणं सीतया सह मार्गध्वमिति वयं चोदिताश्च स्मः ॥ ८ ॥ तदाह विचित्य त्विति । समुद्रं विचेतुकामा इति शेषः ॥ ९ ॥ नाधिगच्छाम । हे इति स्वयंप्रभासंबोधनम् । नाध्यगच्छाम पारं चिंतामहार्णवस्येति शेषः ॥१०॥११॥ सलिलरेणुभिः सलिलपद्मरेणुयुक्तपक्षैरुपलक्षिता इत्यर्थः निष्पतंति निष्पतिताः ॥१२॥ अनुमानं जलानुमापको

अथतानब्रवीत्सर्वान्विश्रांतान्हरियूथपान् ॥ इदंवचनमेकाग्रातापसीधर्मचारिणी ॥ १ ॥ वानरायदिवःखेदःप्रनष्टःफलभक्षणात् ॥ यदिचैतन्मयाश्राव्यं श्रोतुमिच्छामितांकथाम् ॥ २ ॥ तस्यास्तद्वचनंश्रुत्वाहनूमान्मारुतात्मजः ॥ आर्जवेनयथातत्त्वमाख्यातुमुपचक्रमे ॥ ३ ॥ राजासर्वस्यलोकस्यमहेंद्रवरुणोपमः ॥ रामोदाशरथिःश्रीमान्प्रविष्टोदंडकावनम् ॥ ४ ॥ लक्ष्मणेनसहभ्रात्रावैदेह्यासहभार्यया ॥ तस्यभार्याजनस्थानाद्रावणेनहृताबलात् ॥ ॥ ५ ॥ वीरस्तस्यसखाराज्ञःसुग्रीवोनामवानरः ॥ राजावानरमुख्यानांयेनप्रस्थापितावयम् ॥ ६ ॥ अगस्त्यचरितामाशांदक्षिणांयमरक्षिताम् ॥ सहैभिर्वानरैर्मुख्यैरंगदप्रमुखैर्वयम् ॥७॥ रावणंसहिताःसर्वेराक्षसंकामरूपिणम् ॥ सीतयासहवैदेह्यामार्गध्वमितिचोदिताः ॥ ८ ॥ विचित्यतुवनंसर्वंसमुद्रंदक्षिणांदिशम् ॥ वयंबुभुक्षिताःसर्वेवृक्षमूलमुपाश्रिताः ॥ ९ ॥ विवर्णवदनाःसर्वेसर्वेध्यानपरायणाः ॥ नाधिगच्छामहेपारंमग्नाश्चिंतामहार्णवे ॥ ॥ १० ॥ चारयंतस्ततश्चक्षुर्दृष्टवंतोमहद्बिलम् ॥ लतापादपसंपन्नंतिमिरेणसमावृतम् ॥ ११ ॥ अस्माद्धंसाजलक्लिन्नाःपक्षैःसलिलरेणुभिः ॥ कुरराःसारसाश्चैवनिष्पतंतिपतत्रिणः ॥ १२ ॥ साध्वत्रप्रविशामेतिमयातूक्ताःप्लवंगमाः ॥ तेषामपिहिसर्वेषामनुमानमुपागतम् ॥ १३ ॥ अस्मिन्निपतिताःसर्वेप्यथकार्यत्वरान्विताः ॥ ततोगाढंनिपतितागृह्यहस्तैःपरस्परम् ॥ १४ ॥ इदंप्रविष्टाःसहसाबिलंतिमिरसंवृतम् ॥ एतन्नःकार्यमेतेनकृत्येनवयमागताः ॥ १५ ॥ त्वांचैवोपगताःसर्वेपरिद्यूनाबुभुक्षिताः ॥ आतिथ्यधर्मदत्तानिमूलानिचफलानिच ॥ १६ ॥ अस्माभिरुपभुक्तानिबुभुक्षापरिपीडितैः ॥ यत्त्वयारक्षिताःसर्वेम्रियमाणाबुभुक्षया ॥ १७ ॥ ब्रूहिप्रत्युपकारार्थंकिंतेकुर्वंतुवानराः ॥ एवमुक्तातुसर्वज्ञावानरैस्तैःस्वयंप्रभा ॥ १८ ॥ इत्युवाचततःसर्वानिदंवानरयूथपान् ॥ सर्वेषांपरितुष्टास्मिवानराणांतरस्विनाम् ॥ १९ ॥

हेतुरागतं मनःप्राप्तम् ॥ १३ ॥ अस्मिन्देशे ततो गच्छाम इत्युक्त्वा निबिडांधकारत्वात् परस्परं हस्तैर्गाढं गृहीत्वा निपतिताः गुहामिति शेषः । हस्ते इतिपाठेपि हस्तैरित्येवार्थः । परिष्वज्येति पूर्वोक्तस्वरसात् ॥ १४ ॥ एतत् सीतान्वेषणरूपम् ॥ १५ ॥ यतो बुभुक्षिता अतः परिद्यूनाः क्षीणाः ॥ १६ ॥ १७ ॥ किं ते कुर्वंतु प्रियमिति शेषः ॥ १८ ॥ परितुष्टास्मि प्रत्युपचिकीर्षावचनेनैवेति भावः । धर्मेण

चरंत्या धर्मानुष्ठानेन वर्तमानायाः ॥ १९ ॥ अत्र कतकस्तु द्विपंचाशत्सर्गसमाप्तिमाह ॥ ५२ ॥ ॥ एवमुक्त इति ॥ २० ॥ २१ ॥ समयः कालावधिर्मासरूपः।बिलं च बिले एव ॥२२॥ तस्माद्धेतोरस्मा द्बिलादस्मानित्यन्वयः गतायुषो नष्टजीवितान् तत्र हेतुः सुग्रीववचनादतिक्रांतानिति । सुग्रीवाज्ञप्तकालादतिक्रांतकालानित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ प्रविष्टेन इदं बिलं प्रविष्टेन प्राणिना जीवता अस्मान्निव र्तितुं दुष्करं मन्ये तर्हि वयं किं कुर्मस्तत्राह तपस इति ॥ २६ ॥ २७ ॥ निमीलिताः संतोऽकस्मादुन्मीलनभिया सुकुमारांगुलैः करैः ॥ २८ ॥ सहसा दृष्टिं पिदधुः ॥ २९ ॥३० ॥ इदमब्रवीद्दिङ्मोहशा

चरंत्याममधर्मेणनकार्यमिहकेनचित् ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्विपंचाशः सर्गः ॥ ५२ ॥ एवमुक्तःशुभं वाक्यंतापस्याधर्मसंहितम् ॥ २० ॥ उवाचहनुमान्वाक्यंतामनिंदितलोचनाम् ॥ शरणंत्वांप्रपन्नाःस्मःसर्वेवैधर्मचारिणीम् ॥ २१ ॥ यःकृतःसमयो स्मासुसुग्रीवेणमहात्मना ॥ सतुकालोव्यतिक्रांतोबिलेचपरिवर्तताम् ॥ २२ ॥ सात्वमस्माद्बिलादस्मानुत्तारयितुमर्हसि ॥ तस्मात्सुग्रीववचनादतिक्रां तान्गतायुषः ॥ २३ ॥ त्रातुमर्हसिनःसर्वान्सुग्रीवभयशंकितान् ॥ महच्चकार्यमस्माभिःकर्तव्यंधर्मचारिणि ॥ २४ ॥ तच्चापिनकृतंकार्यमस्माभिरिहवा सिभिः॥एवमुक्ताहनुमतातापसीवाक्यमब्रवीत् ॥२५॥ जीवताुदुष्करंमन्येप्रविष्टेननिवर्तितुम् ॥ तपसःसुप्रभावेणनियमोपार्जितेनच ॥ २६ ॥ सर्वानि तबिलादस्मात्तारयिष्यामिवानरान् ॥ निमीलयतचक्षूंषिसर्वेवैवानरपुंगवाः ॥ २७ ॥ नहिनिष्क्रमितुंशक्यमनिमीलितलोचनैः ॥ ततोनिमीलिताः सर्वेसुकुमारांगुलैःकरैः ॥ २८ ॥ सहसापिदधुर्दृष्टिंहृष्टागमनकांक्षया ॥ वानरास्तुमहात्मानोहस्तरुद्धमुखास्तदा ॥ २९ ॥ निमेषांतरमात्रेणबिलादु त्तारितास्तया ॥ उवाचसर्वांस्तांस्तत्रतापसीधर्मचारिणी ॥ ३० ॥ निसृतान्विषमात्तस्मात्समाश्वस्येदमब्रवीत् ॥ एषविंध्योगिरिःश्रीमान्नानाद्रु मलतायुतः ॥३१॥ एषप्रस्रवणःशैलःसागरोयंमहोदधिः ॥ स्वस्तिवोस्तुगमिष्यामिभवनंवानरर्षभाः ॥ इत्युक्तातद्बिलंश्रीमत्प्रविवेशस्वयंप्रभा॥३२॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येकिष्किंधाकांडेद्विपंचाशः सर्गः ॥ ५२ ॥ ततस्तेददृशुर्घोरंसागरंवरुणालयम् ॥ अपारमभिगर्जंतंघोरै रूर्मिभिराकुलम् ॥ १ ॥ मयस्यमायाविहितंगिरिदुर्गंविचिन्वताम् ॥ तेषांमासोव्यतिक्रांतोयोराज्ञासमयःकृतः ॥ २ ॥ विंध्यस्यतुगिरेःपादेसंप्रपु ष्पितपादपे ॥ उपविश्यमहात्मानश्चिंतामापेदिरेतदा ॥ ३ ॥ ततःपुष्पातिभाराग्राँल्लताशतसमावृतान् ॥ द्रुमान्वासंतिकान्दृष्ट्वाबभूवुर्भयशंकिताः ॥ ४ ॥ तेवसंतमनुप्राप्तंप्रतिवेद्यपरस्परम् ॥ नष्टसंदेशकालार्थानिपेतुर्धरणीतले ॥ ५ ॥

त्यर्थमिति भावः ॥ ३१ ॥ प्रस्रवणः किष्किंधासमीपप्रस्रवणादन्योयमित्याहुः । अत्युच्चत्वात्ततोपि तस्य दर्शनमित्यन्ये । यत्रेच्छा तत्र गंतव्यमिति तात्पर्यम् ॥ ३२ ॥ अंखंगमानः ॥ ॥ इति श्रीरामाभि रामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्विपंचाशः सर्गः ॥ ५२ ॥ कतकरीत्या त्रिपंचाशः ॥ ५३ ॥ ॥ तत इति ॥१॥ गिरिदुर्गं ऋक्षबिलाख्यम् । समयः कालावधिः ॥२॥ तदा शिशिरारंभसमये ॥ ३ ॥ पुष्पातिभारयुक्तान्यग्राणि येषाम् वासंतिकान्वसंतकाले फलवत आम्रादीन् ॥ ४ ॥ भयकृतशंकां विवृणोति ते इति । वसंतमनुप्राप्तं प्रकृतशिशिरकालस्योत्तरकालमासन्नतया

मात्रमायम् । नष्टः संदेशकाले राजसंदिष्टमासरूपे कालेऽनुष्ठेयोर्थो येषां ते ॥ ५ ॥ तान् भयेन भूतले पतितान् शिष्टान् वृद्धेन्योऽन्यान् अनुमान्य संपूज्य ॥ ६ ॥ प्राज्ञ अंगद इत्यार्षम् ॥ ७ ॥ शासनव्यतिक्रमं दर्शयति मास इति । अन्वेषणावधित्वेन दत्त इत्यर्थः । किं न बुध्यत नावुध्यत कालात्ययमिति शेषः ॥ ८ ॥ कालात्ययमेवाह वयमिति । आश्वयुजेऽतीतप्राये इति शेषः । कार्तिके समनुप्राप्ते त्वं रावणवधे यतेत्युक्तेः । ततः पंचदशरात्रकालसंख्यया प्रवर्तितदूतैर्व्यवस्थिताः मिलिताः । एवं चामांतमानेनाश्विनस्योत्तरे दीपोत्सवामायुते पक्षे सर्वसेनाऽऽगमनं किष्किंधायाम् । रामस्य क्रोधस्तु तत्रैव पक्षे कार्तिकसन्निधावपि तदुद्यमाभावकृतः । ततः कार्तिकेऽवधिरन्वेषणस्य ततो मार्गशुक्ल इदं वचनम् । मायस्तद्वर्षे पौषः क्षयमासः । कार्तिकादित्रये नान्यत इत्युक्तेः । अतो मार्गशुक्ल एव आम्रादीनां पुष्पोद्गमः । उत्पाततो वा तादृशरीत्या पुष्पोद्गमं दृष्ट्वापि वसंतासन्नतानुमानेन भयोपपत्तिः । कतकादयस्तु अन्वेषणेऽवधित्वेन दत्तः पौषो मासः । आश्वयुजे इत्यस्य तत्प्रत्यासन्नकार्तिकांते इत्यर्थः । कालसंख्येति । कार्तिकोत्तरं पंचदशरात्रसंख्याकालेनावधिना वानरानयनाय दूतप्रेषणम् । ततः पूर्णिमांतमानेन मार्गशुक्लेन सर्ववानरागमनम् ततः । पौषाद्यदिने दिक्ष्वन्वेषणाय वानरप्रस्थानम् । तत्र पौषे माघकृ

ततस्तान्कपिवृद्धांश्वशिष्टांश्चैववनौकसः ॥ वाचामधुरयाभाष्ययथावदनुमान्यच ॥ ६ ॥ सतुसिंहवृषस्कंधःपीनायतभुजःकपिः ॥ युवराजोमहाप्राज्ञ अंगदोवाक्यमब्रवीत् ॥ ७ ॥ शासनात्कपिराजस्यवयंसर्वेविनिर्गताः ॥ मासःपूर्णोबिलस्थानांहरयःकिंनबुध्यत ॥ ८ ॥ वयमाश्वयुजेमासिकालसंख्याव्यवस्थिताः ॥ प्रस्थिताःसोपिचातीतःकिमतःकार्यमुत्तरम् ॥ ९ ॥ भवंतःप्रत्ययंप्राप्तानीतिमार्गविशारदाः ॥ हितेष्वभिरताभर्तुर्निसृष्टाःसर्वकर्मसु ॥ १० ॥ कर्मस्वप्रतिमाःसर्वेदिक्षुविश्रुतपौरुषाः ॥ मांपुरस्कृत्यनिर्याताःपिंगाक्षप्रतिचोदिताः ॥ ११ ॥ इदानीमकृतार्थानांमर्तव्यंनात्रसंशयः ॥ हरिराजस्यसंदेशमकृत्वाकःसुखीभवेत् ॥ १२ ॥ अस्मिन्नतीतेकालेतुसुग्रीवेणकृतेस्वयम् ॥ प्रायोपवेशनंयुक्तंसर्वेषांचवनौकसाम् ॥ १३ ॥ तीक्ष्णःप्रकृत्यासुग्रीवःस्वामिभावेव्यवस्थितः ॥ नक्षमिष्यतिनःसर्वानपराधकृतोगतान् ॥ १४ ॥ अप्रवृत्तौचसीतायाःपापमेवकरिष्यति ॥ तस्मात्क्षममिहाद्यैवगंतुंप्रायोपवेशनम् ॥ १५ ॥ त्यक्त्वापुत्रांश्चदारांश्चधनानिचगृहाणिच ॥ ध्रुवंनोहिंसतेराजासर्वान्प्रतिगतानितः ॥ १६ ॥

ष्णीयकिंचिद्दिनसहितेऽतीते इदं वाक्यमित्याहुः । तेषां सीतानयनोत्तरं सीतां प्रति द्वादशमासा रावणावधिरिति स्पष्टमेव । पंपायां चैत्रे आगमनमित्यस्योक्तत्वात्ततः पूर्वं फाल्गुने सीतापहार इति च स्पष्टमेव । एवं च माघकृष्णे तच्छुक्लादौ वा हनूमतः सीतासमीपगमने हनुमंतं प्रति वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगमेति सीतोक्तिविरोधः । किंच हनूमतो लंकाप्रवेशदिने प्रदोषसमये एव पूर्णकल्पचंद्रोदयवर्णनं च विरोध इत्याहुः ॥ ९ ॥ उक्तमेव विस्तरेणाह भवंत इति । प्रत्ययं अन्वेषणार्थराजनियोगं प्राप्ता ज्ञातवंतो भवंतो मां पुरस्कृत्य निर्याता इत्यन्वयः ॥ १० ॥ ११ ॥ तस्य कालस्य च विलेगतत्वादिदानीमकृतार्थानामस्माकं मर्तव्यं मरणमेवानुष्ठेयम् । कुतस्तत्राह हरिराजस्येति ॥ १२ ॥ प्रायोपवेशनं युक्तम् प्राणत्यागायेति शेषः ॥ १३ ॥ स्वामिभावे निग्रहानुग्रहकृद्राजभावे व्यवस्थितः । अपराधः कालातिक्रमरूपः । गतान्स्वसमीपं प्राप्तान् ॥ १४ ॥ अप्रवृत्तौ प्रवृत्तिप्रतिपादनाभावे । पापं वधरूपम् ॥ १५ ॥ पुत्रादि त्यक्त्वा प्रायोपवेशनं गंतुं कर्तुं क्षमं युक्तमित्यन्वयः तत्र हेतुः ध्रुवमिति ॥ १६ ॥

अप्रतिरूपेण अपराधमूलत्वेनास्य वधस्याप्रतिरूपत्वम् । ननु युवराजत्वेनाभिषिच्य कथमसौ त्वां हनिष्यतीत्यत आह न चाहमिति ॥ १७ ॥ पूर्वं मां प्रति बद्धवैरः स राजा सुग्रीवो व्यतिक्रममा
ज्ञालंघनं दृष्ट्वा घातयिष्यत्येव ॥ १८ ॥ जीवितांतरे राजाज्ञया जीवितनाशावधौ काले प्राप्ते मम व्यसनं पश्यद्भिरपि सुहृद्भिः किं कार्यमिति किं साध्यमित्यर्थकं शेषः । यदेवमत इहैवेति ॥ १९ ॥ २० ॥
प्रियायां रक्तोऽनुरक्तः । तस्मिन्समयेऽन्वेषणावधिकाले ॥ २१ ॥ २२ ॥ अपराद्धानां कृतापराधानां स्वामिपार्श्वे । सुग्रीवस्य प्रधानभूताः सेवका वयमिह समागताः ॥ २३ ॥ उपलभ्य वा गच्छाम
नोचेदिहैव स्थित्वा यमगृहं गमिष्यामः ॥ २४ ॥ बिलं स्वयंप्रभाया बिलम् ॥ २५ ॥ कथमत्र प्राणत्राणमत आह इदं हीति । नो इति लोकोक्तौ ॥ २६ ॥ अंगदस्यापि । अपिना तारस्य असक्तमवि
लंबम् ॥ २७ ॥ कतकरीत्या चतुष्पंचाशत् ॥ ५४ ॥ सुंसुमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥ ॥ ताराधि

वधेनाप्रतिरूपेणश्रेयान्मृत्युरिहैवनः ॥ नचाहंयौवराज्येनसुग्रीवेणाभिषेचितः ॥ १७ ॥ नरेंद्रेणाभिषिक्तोस्मिरामेणाक्लिष्टकर्मणा ॥ सपूर्वंबद्धवैरो
मांराजादृष्ट्वाव्यतिक्रमम् ॥ १८ ॥ घातयिष्यतिदंडेनतीक्ष्णेनकृतनिश्चयः ॥ किंमेसुहृद्भिर्व्यसनंपश्यद्भिर्जीवितांतरे ॥ इहैवप्रायमासिष्येपुण्ये
सागररोधसि ॥ १९ ॥ एतच्छ्रुत्वाकुमारेणयुवराजेनभाषितम् ॥ सर्वेतेवानरश्रेष्ठाःकरुणंवाक्यमब्रुवन् ॥ २० ॥ तीक्ष्णःप्रकृत्यासुग्रीवःप्रियारक्त
श्चराघवः ॥ समीक्ष्याकृतकार्यांस्तुतस्मिंश्चसमयेगते ॥ २१ ॥ अदृष्टायांचवैदेह्यांदृष्ट्वाचैवसमागतान् ॥ राघवप्रियकामायघातयिष्यत्यसंशयम्
॥ २२ ॥ नक्षमंचापराद्धानांगमनंस्वामिपार्श्वतः ॥ प्रधानभूताश्चवयंसुग्रीवस्यसमागताः ॥ २३ ॥ इहैवसीतामन्वीक्ष्यप्रवृत्तिमुपलभ्यवा ॥ नोचे
द्गच्छामतंवीरंगमिष्यामोयमक्षयम् ॥ २४ ॥ प्लवंगमानांतुभयार्दितानांश्रुत्वावचस्तारइदंबभाषे ॥ अलंविषादेनबिलंप्रविश्यवसामसर्वेयदिरोचतेवः
॥ २५ ॥ इदंहिमायाविहितंसुदुर्गंप्रभूतवृक्षोदकभोज्यपेयम् ॥ इहास्तिनोनैवभयंपुरंदरान्नराघवाद्वानरराजतोपिवा ॥ २६ ॥ श्रुत्वांगदस्यापिवचो
नुकूलमूचुश्चसर्वेहरयःप्रतीताः ॥ यथानहन्येमतथाविधानमसक्तमद्यैवविधीयतांनः ॥ २७ ॥ इत्यार्षेश्री० वा० आदि० किं० त्रिपंचाशः सर्गः
॥ ५३ ॥तथाब्रुवतितारेतुताराधिपतिवर्चसि ॥ अथमेनेहृतंराज्यंहनुमानंगदेनतत् ॥ १ ॥ बुद्ध्याह्यष्टांगयायुक्तंचतुर्बलसमन्वितम् ॥ चतुर्दशगुणं
मेनेहनूमान्वालिनःसुतम् ॥ २ ॥ आपूर्यमाणंशश्वच्चतेजोबलपराक्रमैः ॥ शशिनंशुक्लपक्षादौवर्धमानमिवश्रिया ॥ ३ ॥ बृहस्पतिसमंबुद्ध्यावि
क्रमेसदृशंपितुः ॥ शुश्रूषमाणंतारस्यशुक्रस्येवपुरंदरम् ॥ ४ ॥

पतिवर्चसि तारे तथाब्रुवति । तुशब्दादंगदे प्रतिपत्त्याकरणात्तदनुमन्यमाने सति । अथानंतरमंगदेन राज्यं सुग्रीवीयं कपिराज्यं हृतमिति मेने । तद्राज्यं स्वयंप्रभाबिलराज्यमित्यर्थ इत्यन्ये ॥ १ ॥
ननु अंगदे कथं राज्यापहारचिंताऽत आह बुद्ध्येति । अष्टांगया अष्टगुणया । तेऽत्र गुणाः शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ॥ ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणा इति प्रसिद्धाः । चतुर्बलम् सामदा
नभेदनिग्रहरूपोपायचतुष्टयजनम् । चतुर्दशगुणम् देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता ॥ सर्वविज्ञानता दाक्ष्यमूर्जः संवृतमंत्रता ॥ अविसंवादिता शौर्यं भक्तिज्ञत्वं कृतज्ञता ॥ शरणागतवात्सल्यममर्षित्वमचा
पलम् । इत्युक्तचतुर्दशगुणयुक्तम् ॥ २ ॥ ३ ॥ तारस्य वचः शुश्रूषमाणं मनोऽपकर्षतो राज्यं हृतं मेने । शुक्रस्येव पुरंदरस्य विपरीतोपदेशग्रहे उपमेषा । शुक्रशब्दोत्र बृहस्पतिपर इति कश्चित् ॥ ४ ॥

भर्तुः सुग्रीवस्यार्थेऽर्थकरणे परिश्रांतं विमुखम् । सर्वशास्त्रविशारद इति हनुमद्विशेषणम् । अभिसंधातुं तारादिभ्यो भेदयितुम् ॥ ५ ॥ स इति । अभिसंधित्सुर्हनुमानित्यर्थः । द्वितीय उपायो भेदस्तमुपवर्णयन् हेतौ शता । तदुपायावलंबनहेतुना तान्सर्वानंगदानुवर्तिनः वाक्यसंपदाभेदजननक्षमन्यायोपेतेन हीनाश्रयो न कर्तव्यः कर्तव्यो महदाश्रय इत्यादिवाक्यसमूहेन ॥ ६ ॥ कोपोपायो दंडस्तत्समन्वितैः । कोपापायसमन्वितैरिति पांक्तः पाठः । कोपापनयनसामर्थ्ययुक्तैः अभीषयत् न्यायप्रदर्शनपूर्वं भयमुत्पादयामास ॥ ७ ॥ भीषणमेव स्तुतिपूर्वं करोति त्वमिति । त्वं पित्रा सुग्रीवेण युद्धे समर्थतरः । यद्वा त्वं पित्रा सदृश इति शेषः । अतएव युद्धे समर्थतर इत्यर्थः । दृढं धारयितुं शक्तः अस्य यदि सर्वे कपयस्त्वामनुवर्त्स्यंतीति शेषः । कपिराज्यं किष्किंधायां वा ऋक्षबिले वा ॥ ८ ॥ न च तदस्तीत्याह नित्यमिति । स्वभावादिति भावः । अस्थैर्ये कारणांतरमप्याह पुत्रदारं विनेति । पुत्रदाराणां किष्किंधावर्तिनां सुग्रीवायत्तत्वात् त्वया सह बिलेऽवस्थाने तद्वियोगस्य स्पष्टत्वात् । निगृह्य स्थापनमप्यशक्य मित्याह त्वयाज्ञाप्यं त्वत्कर्तृकमाज्ञापनं न सहिष्यंति । त्वत्तोप्यधिकबलत्वादिति भावः ॥ ९ ॥ पुत्रदारं हित्वा एते त्वां नानुरंजेयुः त्वयि नानुरक्ता भवेयुः । उक्तमर्थं स्पष्टं यथा भवति तथा प्रवदामि

भर्तुरर्थेपरिश्रांतंसर्वशास्त्रविशारदः ॥ अभिसंधातुमारेभेहनूमानंगदंततः ॥ ५ ॥ सचतुर्णामुपायानांद्वितीयमुपवर्णयन् ॥ भेदयामासतान्सर्वान्वानरान्वाक्यसंपदा ॥ ६ ॥ तेषुसर्वेषुभिन्नेषुततोऽभीषयदंगदम् ॥ भीषणैर्विविधैर्वाक्यैःकोपोपायसमन्वितैः ॥ ७ ॥ त्वंसमर्थतरःपित्रायुद्धेतारेयवैध्रुवम् ॥ दृढंधारयितुंशक्तःकपिराज्यंयथापिता ॥ ८ ॥ नित्यमस्थिरचित्ताहिकपयोहरिपुंगव ॥ नाज्ञाप्यंविषहिष्यंतिपुत्रदारंविनात्वया ॥ ९ ॥ त्वांनैतेह्यनुरंजेयुःप्रत्यक्षंप्रवदामिते ॥ यथायंजांबवान्नीलःसुहोत्रश्चमहाकपिः ॥ १० ॥ नह्यहंतेइमेसर्वेसामदानादिभिर्गुणैः ॥ दंडेननत्वयाशक्याःसुग्रीवादपकर्षितुम् ॥ ११ ॥ विगृह्यासनमप्याहुर्दुर्बलेनबलीयसा ॥ आत्मरक्षाकरस्तस्मान्नविगृह्णीतदुर्बलः ॥ १२ ॥ यांचेमांमन्यसेधात्रीमेतद्बिलमितिश्रुतम् ॥ एतल्लक्ष्मणबाणानामीषत्कार्यंविदारणम् ॥ १३ ॥ स्वल्पंहिकृतमिंद्रेणक्षिपताह्यशनिंपुरा ॥ लक्ष्मणोनिशितैर्बाणैर्भिंद्यात्पत्रपुटंयथा ॥ १४ ॥ लक्ष्मणस्यचनाराचाबहवःसंतितद्विधाः ॥ वज्राशनिसमस्पर्शागिरीणामपिदारकाः ॥ १५ ॥ अवस्थानंयदैवत्वमासिष्यसिपरंतप ॥ तदैवहरयःसर्वेत्यक्ष्यंतिकृतनिश्चयाः ॥ १६ ॥ स्मरंतःपुत्रदाराणांनित्योद्विग्नाबुभुक्षिताः ॥ खेदितादुःखशय्याभिस्त्वांकरिष्यंतिपृष्ठतः ॥ १७ ॥

प्रदर्शयामि । तदेव दर्शयति अयं जांबवानिति ॥ १० ॥ अहमिति स्वनिर्देशः । ते इमे सर्वे सामदानादिभिर्गुणैरुपायैस्त्वया सुग्रीवादपकर्षितुं शक्या नहि नापि दंडेन ॥ ११ ॥ ननु गच्छत यूयमपि एकेनैव मया स्थेयमत आह विगृह्येति । दुर्बलेन सह विगृह्य बलीयसा आसनं स्थितिः शक्येत्याहुः । न तु दुर्बलस्य बलीयसा विगृह्यासनं शक्यम् । तस्मादात्मरक्षाकरः आत्मरक्षाकरणेच्छुः पुरुषो दुर्बलः सन् बलीयसा न विगृह्णीत ॥ १२ ॥ नन्वेषा गुहा न बलवतः साध्येत्याशंक्याह यामिति । यामिमां गुहां धात्रीं रक्षिकां मन्यसे नेयं रक्षिकेति शेषः । कुतस्तत्राह यदेतद्बिलं ऋक्षबिलं निर्भयमिति ताराच्छ्रुतम् एतत् एतद्विषयविदारणं लक्ष्मणबाणानामीषत्कार्यं ईषत्करम् । खलभाव आर्षः ॥ १३ ॥ पुरा पूर्वं मायया भूतलांतर्निर्मितैतत्पुरवर्तिमयवधार्थमशनिं तत्प्रदेशभुवि क्षिपता इंद्रेण स्वल्पमेव कृतं मयवधमात्रं कृतं न तु पुरं भग्नम् । लक्ष्मणस्तु निशितैर्बाणैरेतत्पुरमपि पत्रपुटमिव भिंद्यात् ॥ १४ ॥ कुतस्तत्राह लक्ष्मणस्येति । तद्विधा इत्यस्य विवरणं वज्राशनीत्यादि वज्रमिंद्रकरस्थम् । अशनिर्मेघस्थः । यद्वा तद्विधा वालिहंतृबाणसदृशाः ॥ १५ ॥ यदैवात्र बिले त्वमवस्थानमासिष्यासि प्राप्स्यसि तदैव सर्वे हरयः कृतनिश्चयास्त्वां त्यक्ष्यंति ॥ १६ ॥ नित्योद्विग्नाः रामलक्ष्मणसुग्रीवेभ्यः बुभुक्षिता पुत्रदारादिजसुखभोगेच्छवः

त्वया दुःखशय्याभिर्दुःखस्थित्यादिभिः खेदिताः संतस्त्वां पृष्ठतः करिष्यंति सर्वथा त्यक्ष्यंत्येवेत्यर्थः ॥ १७ ॥ स्पंदमानात्तृणादपि लघुरिति शेषः । अतएव भृशोद्विग्नो भविष्यसि । यद्वा तादृशतृणात्तद्वद्भृशोद्विग्नो रामाद्यागमनशंकयेति भावः ॥ १८ ॥ अतोऽत्युग्रवेगा निशिता घोरा लक्ष्मणसायकाः अपावृत्तं व्युत्थितं त्वां जिघांसंतो भवेयुः । सर्वत्रात्र लक्ष्मणनामग्रहणं तस्य क्रूरस्वभावत्वात् । ईदृशानां रामालक्ष्यत्वाच्च ॥ १९ ॥ एवं वास्तवं भयं प्रदर्श्य सुग्रीवसमाश्रयणमेव हितमित्याह अस्माभिरिति । आनुपूर्व्याज्ज्येष्ठपुत्रत्वप्रयुक्तानुक्रमात् ॥ २० ॥ राज्येऽवस्थाने हेतुमाह धर्मेति । धर्मराजः धर्ममार्गवर्ती राजा तथा प्रीतिकाम एव त्वयि न तु त्वद्वधकामः ॥ २१ ॥ इतश्च सर्वथैवमेवेत्याह प्रियकाम इति । अस्य जीवितम् तदर्थं त्वन्मातुः प्रीतिसंपादनप्रयोजनम् । गम्यतां अस्माभिः सार्धमिति शेषः ॥ २२ ॥ खैरेमानः ॥ ॥ कतकरीत्या पंचपंचाशः सर्गः ॥ ५५ ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे चतुष्पंचाशः सर्गः ॥ ५४ ॥ प्रश्रितं विनीतम् स्वामिसत्कारसंयुक्तं सुग्रीवसन्मानयुक्तमिति हनुमद्वाक्यविशेषणम् ॥ १ ॥ आत्ममनसोः शौचं कामादिदोषराहित्यम् ॥ २ ॥ तदनुपपत्तिमेव दर्शयति भ्रातुरिति । ज्येष्ठस्य भ्रातुर्भार्यां धर्मेण

सत्वंहीनःसुहृद्भिश्चहितकामैश्चबंधुभिः ॥ तृणादपिभृशोद्विग्नःस्पंदमानाद्भविष्यसि ॥ १८ ॥ अत्युग्रवेगानिशिताघोरालक्ष्मणसायकाः ॥ अपावृत्तं जिघांसंतोमहावेगादुरासदाः ॥ १९ ॥ अस्माभिस्तुगतंसार्धंविनीतवदुपस्थितम् ॥ आनुपूर्व्यात्तुसुग्रीवोराज्येत्वांस्थापयिष्यति ॥ २० ॥ धर्मराजःपितृव्यस्तेप्रीतिकामोदृढव्रतः ॥ शुचिःसत्यप्रतिज्ञश्चसत्वांजातुननाशयेत् ॥ २१ ॥ प्रियकामश्चतेमातुस्तदर्थंचास्यजीवितम् ॥ तस्यापत्यंचनास्त्यन्यत्तस्मादंगदगम्यताम् ॥ २२ ॥ इत्यार्षेश्रीम० वा० आ० किष्किंधाकांडेचतुष्पंचाशःसर्गः ॥ ५४ ॥ श्रुत्वाहनुमतोवाक्यंप्रश्रितंधर्मसंहितम् ॥ स्वामिसत्कारसंयुक्तमंगदोवाक्यमब्रवीत् ॥ १ ॥ स्थैर्यमात्ममनःशौचमानृशंस्यमथार्जवम् ॥ विक्रमश्चैवधैर्यंचसुग्रीवेनोपपद्यते ॥ २ ॥ भ्रातुर्ज्येष्ठस्ययोभार्यांजीवतोमहिषींप्रियाम् ॥ धर्मेणमातरंयस्तुस्वीकरोतिजुगुप्सितः ॥ ३ ॥ कथंसधर्मंजानीतेयेनभ्रात्रादुरात्मना ॥ युद्धायाभिनियुक्तेनबिलस्यपिहितंमुखम् ॥ ४ ॥ सत्यात्पाणिगृहीतश्चकृतकर्मामहायशाः ॥ विस्मृतोराघवोयेनसकस्यसुकृतंस्मरेत् ॥ ५ ॥ लक्ष्मणस्यभयेनेहनाधर्मभयभीरुणा ॥ आदिष्टामार्गितुंसीतांधर्मस्तस्मिन्कथंभवेत् ॥ ६ ॥ तस्मिन्पापेकृतघ्नेतुस्मृतिभिन्नेचलात्मनि ॥ आर्यःकोविश्वसेज्जातुतत्कुलीनोविशेषतः ॥ ७ ॥ राज्येपुत्रंप्रतिष्ठाप्यसगुणोविगुणोपिवा ॥ कथंशत्रुकुलीनंमांसुग्रीवोजीवयिष्यति ॥ ८ ॥

मातरं धर्ममार्गेण वर्तमानां ज्येष्ठभ्रातृपत्नीं तां मातृतुल्यां जीवतो मम समक्षम् । अनेन देवराच्च सुतोत्पत्तिमित्यतोपि धर्मत्वं वारितम् । यद्वा जीवतो महिषीमिति महिषयुद्धकालिकस्वीकारपरम् । यः स्वीकरोति कथं स धर्मं जानीते इत्यन्वयः । एतेन हनूमदुक्तं धर्मराजत्वं प्रत्याख्यातम् । एतद्वचोंगदस्य केवलरोषमूलं त्रैवर्णिकातिरिक्तधर्मास्मरणमूलकम् ॥ ३ ॥ ॥ स उक्तजुगुप्सितकर्मकारी धर्माज्ञाने उपपत्त्यंतरमप्याह युद्धाय युद्धार्थं गच्छता भ्रात्राभिनियुक्तेन बिलरक्षणनियुक्तेनेत्यर्थः ॥ ४ ॥ सत्यादग्निसाक्षिकतया पाणिगृहीतो मित्रं कृतो राघवोपि येन विस्मृतः स कस्य सुकृतमुपकारं स्मरेन्न कस्यापीत्यतः कथं कृतज्ञ इत्यर्थः ॥ ५ ॥ ननु तत्कार्ये प्रवृत्तत्वात्कथं न कृतज्ञोत आह लक्ष्मणस्येति । भयोपाधिक्येषा प्रवृत्तिर्न धर्ममूलेति भावः । धर्ममस्मिन्निति पाठे धर्मं धर्मधीमूलं प्रवर्तनमित्यर्थः ॥ ६ ॥ स्मृतिभिन्ने स्मृतिर्मन्वादीनां भिन्ना त्यक्ता येन चलात्मनि चंचलांतःकरणे तत्कुलीनः तज्ज्ञातिकोटिप्रविष्टः ॥ ७ ॥ तदेव विवृणोति राज्ये इति । सुग्रीवः सगुणो निर्गुणो वास्तु न मे तद्विचारेण किंचित् अपि तु

शत्रुकुलीनं मां पुत्रं राज्ये प्रतिष्ठाप्य कथं सुग्रीवो जीवयिष्यति न कथमपीत्यर्थः ॥ ८ ॥ इतोपि न जीवयिष्यतीत्याह भिन्नेति । भिन्नो बिलप्रवेशरूपो मंत्रो यस्य सः एवं मंत्रस्य यस्य कस्यापि मुखात श्रवणेऽवश्यंभाविनि स्पष्टमपराद्धश्च भवामि हीनशक्तिः सुग्रीवापेक्षया हीनबलः हनुमदुक्तरीत्या सहायबलहीनश्च ॥ ९ ॥ उपांशुदंडस्यैव रूपं बंधनेनेति । पुत्र इति कृत्वा वधाभावः । अपराद्ध इति च बंधननिश्चयः ॥ १० ॥ तदेव द्रढयन्नाह बंधनादिति । अवसादो बंधनजं दुःखम् ॥ ११ ॥ १२ ॥ राजा सुग्रीवः कुशलमेव वाच्य इत्यनुकर्षः । न त्विदानीं दुःखवशादुक्तमित्यर्थः । राघवौ कुशलं वाच्यौ ॥ १३ ॥ अथ मातुः कुशलविज्ञापनाशेषतया आरोग्यपूर्वकत्वविशेषाभिधित्सया च पुनः सुग्रीवे कुशलविज्ञापनमाह वाच्यस्तात इति ॥ १४ ॥ १५ ॥ वृद्धान् जांबवदादीन् ॥ १६ ॥ १७ ॥ सुग्रीवं

भिन्नमंत्रोपराद्धश्चभिन्नशक्तिःकथंह्यहम् ॥ किष्किंधांप्राप्यजीवेयमनाथइवदुर्बलः ॥ ९ ॥ उपांशुदंडेनहिमांबंधनेनोपपादयेत् ॥ शठःक्रूरोनृशंसश्च सुग्रीवोराज्यकारणात् ॥ १० ॥ बंधनाच्चावसादान्मेश्रेयःप्रायोपवेशनम् ॥ अनुजानंतुमांसर्वेगृहंगच्छंतुवानराः ॥ ११ ॥ अहंवःप्रतिजानामिनगमिष्याम्यहंपुरीम् ॥ इहैवप्रायमासिष्येश्रेयोमरणमेवमे ॥ १२ ॥ अभिवादनपूर्वंतुराजाकुशलमेवच ॥ अभिवादनपूर्वंतुराघवौबलशालिनौ ॥ १३ ॥ वाच्यस्ताततोयवीयान्मेसुग्रीवोवानरेश्वरः ॥ आरोग्यपूर्वंकुशलंवाच्यामातारुमाचमे ॥ १४ ॥ मातरंचैवमेतारामाश्वासयितुमर्हथ ॥ प्रकृत्याप्रियपुत्रासासानुक्रोशातपस्विनी ॥ १५ ॥ विनष्टमिहमांश्रुत्वाव्यक्तंहास्यतिजीवितम् ॥ एतावदुक्त्वावचनंवृद्धांस्तानभिवाद्यच ॥ १६ ॥ विवेशचांगदोभूमौरुदन्दर्भेषुदुर्मुखः ॥ तस्यसंविशतस्तत्ररुदंतोवानरर्षभाः ॥ १७ ॥ नयनेभ्यःप्रमुमुचुरुष्णंवैवारिदुःखिताः ॥ सुग्रीवंचैवनिंदंतःप्रशंसंतश्चवालिनम् ॥ ॥ १८ ॥ परिवार्यांगदंसर्वेव्यवसन्प्रायमासितुम् ॥ तद्वाक्यंवालिपुत्रस्यविज्ञायप्लवगर्षभाः ॥ १९ ॥ उपस्पृश्योदकंसर्वेप्राङ्मुखाःसमुपाविशन् ॥ दक्षिणाग्रेषुदर्भेषुउदक्तीरंसमाश्रिताः ॥ २० ॥ मुमूर्षवोहरिश्रेष्ठाएतत्क्षममितिस्मह ॥ रामस्यवनवासंचक्षयंदशरथस्यच ॥ २१ ॥ जनस्थानवधंचैवधंचैवजटायुषः ॥ हरणंचैववैदेह्यावालिनश्चवधंतथा ॥ रामकोपंचवदतांहरीणांभयमागतम् ॥ २२ ॥ ससंविशद्भिर्बहुभिर्महीधरोमहाद्रिकूटप्रतिमैःप्लवंगमैः ॥ बभूवसन्नादितनिर्झरांतरोभृशंनदद्भिर्जलदैरिवांबरम् ॥ २३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे पंचपंचाशः सर्गः ॥ ५५ ॥

निंदंतः अंगदपक्ष्या इति शेषः ॥ १८ ॥ व्यवसन्व्यवास्यन्नित्यर्थः ॥ १९ ॥ २० ॥ हरिश्रेष्ठा अपि एतत्प्रायोपवेशनमेवास्माकमद्य क्षयं मुक्तमिति मन्यंते स्मेति शेषः । स्वामिनि म्रियमाणे तं परित्यज्यास्माकं गमनमयुक्तमिति तत्क्षमत्वव्यवसायः । रामस्य वनवासमित्यादिनाऽग्रिमसर्गार्थसंक्षेपः ॥ २१ ॥ भयमागतं संपातिजं वक्ष्यमाणं भयमित्यर्थः ॥ २२ ॥ भृशं नदद्भिः संपातिजभयादिति शेषः ॥ ॥ २३ ॥ डैरंमानः ॥ कतकरीत्या षट्पंचाशः सर्गः ॥ ५६ ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे पंचपंचाशः सर्गः ॥ ५५ ॥

गिरिस्थलेगिरिप्रदेशे ॥ १॥२॥३॥ विधिः क्रियाफलं नरं प्राणिनं विधानेन प्राचीनकर्मानुसारेण यथा तद्यथा तथोच्यत इत्यर्थः । अयमामिषरूपोस्माकं भक्ष्यः चिरात् मह्यं स्वत एवोपागतः ॥ ४ ॥ यतः परंपराणां पंक्तित उपविष्टानां वानराणां मध्ये मृतं मृतं क्रमात् भक्षिष्ये तस्मादिति पूर्वेण संबंधः ॥ ५ ॥ परमायस्तः परमखिन्नः ॥ ६ ॥ सीतापदेशेनेति । सीताव्याजेन प्राप्तप्रायोपवेशानामित्यर्थः । गृध्रापदेशेनेति पाठः सुगमः ॥ ७ ॥ अज्ञाता अचिंतिता ॥ ८ ॥ तिर्यग्योनिभूतानामस्माकमिव तिर्यग्योन्यंतरस्यापि सीतानिमित्तं विपत्तिर्जातेत्याह वैदेह्या इति । प्रत्यक्षं ह्रियमाणाया इति शेषः ॥ ९ ॥ रामस्य प्रियं कुर्वंतीत्यनेन तस्मिन्सर्वेषामादरत्वं सूचयता सर्वात्मत्वं सूचितम् ॥ १० ॥ सार्वात्म्यमेव द्रढयति अन्योन्यमिति । स्नेहकारुण्ययंत्रिताः रामे इति शेषः । सर्वस्य रामत्वात्तदीयस्नेहेनैव पर

उपविष्टास्तुतेसर्वेयस्मिन्प्रायंगिरिस्थले ॥ हरयोगृध्रराजश्चतंदेशमुपचक्रमे ॥ १ ॥ संपातिर्नामनाम्नातुचिरंजीवीविहंगमः ॥ भ्राताजटायुषःश्रीमान्विख्यातबलपौरुषः ॥ २ ॥ कंदरादभिनिष्क्रम्यसविंध्यस्यमहागिरेः ॥ उपविष्टान्हरीन्दृष्ट्वाहृष्टात्मागिरमब्रवीत् ॥ ३ ॥ विधिःकिलनरंलोकेविधानेनानुवर्तते ॥ यथायंविहितोभक्ष्यश्चिरान्मह्यमुपागतः ॥ ४ ॥ परंपराणांभक्षिष्येवानराणांमृतंमृतम् ॥ उवाचैतद्वचःपक्षीतान्निरीक्ष्यप्लवंगमान् ॥ ५ ॥ तस्यतद्वचनंश्रुत्वाभक्ष्यलुब्धस्यपक्षिणः ॥ अंगदःपरमायस्तोहनूमंतमथाब्रवीत् ॥ ६ ॥ पश्यसीतापदेशेनसाक्षाद्वैवस्वतोयमः ॥ इमंदेशमनुप्राप्तोवानराणांविपत्तये ॥ ७ ॥ रामस्यनकृतंकार्यंनकृतंराजशासनम् ॥ हरीणामियमज्ञाताविपत्तिःसहसागता ॥ ८ ॥ वैदेह्याःप्रियकामेनकृतंकर्मजटायुषा ॥ गृध्रराजेनयत्तत्रश्रुतंवस्तदशेषतः ॥ ९ ॥ तथासर्वाणिभूतानितिर्यग्योनिगतान्यपि ॥ प्रियंकुर्वंतिरामस्यत्यक्त्वाप्राणान्यथावयम् ॥ १० ॥ अन्योन्यमुपकुर्वंतिस्नेहकारुण्ययंत्रिताः ॥ ततस्तस्योपकारार्थंत्यजतात्मानमात्मना ॥ ११ ॥ प्रियंकृतंहिरामस्यधर्मज्ञेनजटायुषा ॥ राघवार्थेपरिश्रांतावयंसंत्यक्तजीविताः ॥ १२ ॥ कांताराणिप्रपन्नाःस्मनचपश्याममैथिलीम् ॥ ससुखीगृध्रराजस्तुरावणेनहतोरणे ॥ मुक्तश्चसुग्रीवभयाद्गतश्चपरमांगतिम् ॥ १३ ॥ जटायुषोविनाशेनराज्ञोदशरथस्यच ॥ हरणेनचवैदेह्याःसंशयंहरयोगताः ॥ १४ ॥ रामलक्ष्मणयोर्वासमरण्येसहसीतया ॥ राघवस्यचबाणेनवालिनश्चतथावधम् ॥ १५ ॥

स्परोपकारकरणमित्यर्थः । स्नेहविषयता रामातिरिक्तेनेत्यनेन सूचितम् । ततः उक्तस्नेहादियंत्रणतः तस्य रामस्य उपकारार्थमित्यस्य प्रवृत्ता इति शेषः ॥ ११ ॥ ननु प्राणत्यागेन कथं रामस्य संतोषोऽत आह प्रियमिति । हि यतो जटायुषा प्राणांस्त्यजता प्रियं कृतमिति रामस्य मतमिति शेषः । तथास्मन्मरणेनापि रामस्तथा मंस्यतीति भावः ॥ १२ ॥ सुखीति । सुखित्वमेव परमगतिप्राप्त्या दर्शयति रावणेनेत्यादि । मुक्तश्चेति । अनेन सर्वतिर्यग्योनिराजत्वं कपींद्रस्य सूचितम् । गतश्च परमां गतिं रामानुग्रहादिति शेषः ॥ १३ ॥ जटायुषो विनाशेन प्रागिति शेषः । यदि पुनर्मुहूर्तमपि युद्धे रावणं निरुंध्यात्तदा रामदृग्गोचरो रावणः सीतां हरेदिति भावः । राज्ञो दशरथस्य च हानिनाशेन यदि पक्षमात्रमपि राजजीवनं स्यात्तदा रामं प्रत्यानयेदेवेति भावः । वैदेहीहरणं तु स्पष्टमेव वानराणां प्राणसंशयकारणम् ॥ १४ ॥ १५ ॥

विकृतम अरण्यवाससवालिवधरक्षोवधरूपम् । इदं च अस्मन्मरणरूपं च कैकेय्या वरदानेनैव कृतमित्यर्थः ॥ १६ ॥ भृशंचकितमातिः क्षुभितचित्तः कृपणं दीनम् ॥ १७ ॥ अस्यैव प्रपंच स्तत्त्विति ॥ १८ ॥ को घोषयति स मया प्रष्टव्य इति शेषः ॥ १९ ॥ प्रश्नमेवाह कथमिति ॥ २० ॥ गिरिदुर्गाद्भवाद्भिरवतारितुमिच्छेयम् आत्मानमिति शेषः । अवतारणफलमाह यवीयस इति । कनि ष्ठस्येत्यर्थः ॥ २१ ॥ श्रोतुमिच्छेयं युष्मत्समीपमागत्येति शेषः । अन्वयस्तु यस्य रामः प्रियः पुत्रः स दशरथो मम भ्रातुः तस्यैव जटायुषः सखाऽतस्तत्स्नेहात् प्रयतमानस्य तस्य जनस्थानवासिनस्तस्य प्रसिद्धविक्रमस्य जटायुषो विनाशः कथमभवदिति तस्य विनाशं श्रोतुमिच्छेयमिति । कथं सखेत्यन्वयस्तु नोचितः तदुत्तरस्याग्रेऽभावात् ॥ २२ ॥ २३ ॥ स्वस्यावतारणसापेक्षत्वे हेतुमाह सूर्येति ॥ २४ ॥ अव

रामकोपादशेषाणांरक्षसांचतथावधम् ॥ कैकेय्यावरदानेनइदंचविकृतंकृतम् ॥ १६ ॥ तदसुखमनुकीर्तितंवचोभुविपतितांश्चनिरीक्ष्यवानरान् ॥ भृशचकितमतिर्महामतिःकृपणमुदाहृतवान्सगृध्रराजः ॥ १७ ॥ तत्तुश्रुत्वातथावाक्यमंगदस्यमुखोद्गतम् ॥ अब्रवीद्वचनंगृध्रस्तीक्ष्णतुंडोमहास्वनः ॥ ॥ १८ ॥ कोयंगिराघोषयतिप्राणैःप्रियतरस्यमे ॥ जटायुषोवधंभ्रातुःकंपयन्निवमेमनः ॥ १९ ॥ कथमासीज्जनस्थानेयुद्धंराक्षसगृध्रयोः ॥ नामधेय मिदंभ्रातुश्चिरस्याद्यमयाश्रुतम् ॥ २० ॥ इच्छेयंगिरिदुर्गाच्चभवद्भिरवतारितुम् ॥ यवीयसोगुणज्ञस्यश्लाघनीयस्यविक्रमैः ॥ २१ ॥ अतिदीर्घस्यकालस्यप रितुष्टोस्मिकीर्तनात् ॥ तदिच्छेयमहंश्रोतुंविनाशंवानरर्षभाः ॥ २२ ॥ भ्रातुर्जटायुषस्तस्यजनस्थाननिवासिनः ॥ तस्यैवचममभ्रातुःसखादशरथः कथम् ॥ २३ ॥ यस्यरामःप्रियःपुत्रोज्येष्ठोगुरुजनप्रियः ॥ सूर्यांशुदग्धपक्षत्वान्नशक्रोमिविसर्पितुम् ॥ २४ ॥ इच्छेयंपर्वतादस्मादवतर्तुमरिंदमाः ॥ ॥ २५ ॥ इत्यार्षेश्रीम०वा०आ०किष्किंधाकांडेषट्पंचाशःसर्गः ॥ ५६ ॥ शोकाद्भ्रष्टस्वरमपिश्रुत्वावानरयूथपाः ॥ श्रद्दधुर्नैवतद्वाक्यंकर्मणातस्यशं किताः ॥ १ ॥ तेप्रायमुपविष्टास्तुदृष्ट्वागृध्रंप्लवंगमाः ॥ चक्रुर्बुद्धिंतदारौद्रांसर्वान्नोभक्षयिष्यति ॥ २ ॥ सर्वथाप्रायमासीनान्यदिनोभक्षयिष्यति ॥ कृतकृत्याभविष्यामःक्षिप्रंसिद्धिमितोगताः ॥ ३ ॥ एतांबुद्धिंततश्चक्रुःसर्वेतेहरियूथपाः ॥ अवतार्यगिरेःशृंगाद्गृध्रमाहांगदस्तदा ॥ ४ ॥ बभूवर्क्षरजो नामवानरेंद्रःप्रतापवान् ॥ ममार्यःपार्थिवःपक्षिन्धार्मिकौतस्यचात्मजौ ॥ ५ ॥

तर्तुमवतारयितुम् ॥ २५ ॥ शेरैमानः ॥ ॥ कतकरीत्या सप्तपंचाशः सर्गः ॥ ५७ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ भ्रष्टस्वरमपि भक्षणवचनस्वरापेक्षया भ्रष्टस्वरमित्यर्थः । तेन स्वरेण यद्यपि स निश्चितशोकः परितुष्टोस्मीति श्रद्धेयवचनो भवति तथापि न श्रद्दधुः यतस्तस्य कर्मणा शंकिताः भक्षणार्थं वंचनमेव करोतीति बुद्ध्येति भावः ॥ १ ॥ तदेवाह चक्रुरित्यादि । अस्यार्थस्येतीति शेषः ॥ २ ॥ सिद्धिं मरणरूपाम् ॥ ३ ॥ एतां बुद्धिं भक्षणाभीष्टत्वबुद्धिम् ॥ ४ ॥ कोयं घोषयतीति प्रथमप्रश्नोत्तरमाह बभूवेति ।

आर्यः पितामहः पार्थिवो वानराणामिति शेषः ॥ ५ ॥ घनबलौ बहुबलौ ओघबलाविति पाठांतरम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ रावणेन विहायसीतिपाठे ह्रियमाणामिति शेषः । स्थापयित्वा भूमाविति शेषः ॥ १० ॥ ११ ॥ १२ ॥ स्वपितृवधे कारणमाह ममेति । निरुद्धो निरुद्धराज्यः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ धैर्यमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ कतकरीत्याष्टपंचाशः सर्गः ॥ ५८ ॥ ॥ त्यक्तजीवितैः त्यक्तजीवनाशभयैः सबाष्पोऽश्रुपूर्णनयनः सबाष्पानिति पाठांत

सुग्रीवश्चैववालीचपुत्रौघनबलावुभौ ॥ लोकेविश्रुतकर्माभूद्राजावालीपितामम ॥ ६ ॥ राजाकृत्स्नस्यजगतइक्ष्वाकूणांमहारथः ॥ रामोदाशरथिः श्रीमान्प्रविष्टोदंडकावनम् ॥ ७ ॥ लक्ष्मणेनसहभ्रात्रावैदेह्यासहभार्यया ॥ पितुर्निदेशनिरतोधर्मंपंथानमाश्रितः ॥ ८ ॥ तस्यभार्याजनस्थानाद्रावणेनहृताबलात् ॥ रामस्यतुपितुर्मित्रंजटायुर्नामगृध्रराट् ॥ ९ ॥ ददर्शसीतांवैदेहींह्रियमाणांविहायसा ॥ रावणंविरथंकृत्वास्थापयित्वाचमैथिलीम् ॥ परिश्रांतश्चवृद्धश्चरावणेनहतोरणे ॥ १० ॥ एवंगृध्रोहतस्तेनरावणेनबलीयसा ॥ संस्कृतश्चापिरामेणजगामगतिमुत्तमाम् ॥ ११ ॥ ततोममपितृव्येणसुग्रीवेणमहात्मना ॥ चकारराघवःसख्यंसोऽवधीत्पितरंमम ॥ १२ ॥ ममपित्रानिरुद्धोहिसुग्रीवःसचिवैःसह ॥ निहत्यवालिनंरामस्ततस्तमभिषेचयत् ॥ १३ ॥ सराज्येस्थापितस्तेनसुग्रीवोवानरेश्वरः ॥ राजावानरमुख्यानांतेनप्रस्थापितावयम् ॥ १४ ॥ एवंरामप्रयुक्तास्तुमार्गमाणास्ततस्ततः ॥ वैदेहींनाधिगच्छामोरात्रौसूर्यप्रभामिव ॥ १५ ॥ तेवयंदंडकारण्यंविचित्यसुसमाहिताः ॥ अज्ञानात्तुप्रविष्टाःस्मधरण्याविवृतंबिलम् ॥ १६ ॥ मयस्यमायाविहितंतद्बिलंचविचिन्वताम् ॥ व्यतीतस्तत्रनोमासोयोराज्ञासमयःकृतः ॥ १७ ॥ तेवयंकपिराजस्यसर्वेवचनकारिणः ॥ कृतांसंस्थामतिक्रांताभयात्प्रायमुपासिताः ॥ १८ ॥ क्रुद्धेतस्मिंस्तुकाकुत्स्थेसुग्रीवेचसलक्ष्मणे ॥ गतानामपिसर्वेषांतत्रनोनास्तिजीवितम् ॥ १९ ॥ इत्यार्षे श्रीम० वा० आदिकाव्ये किष्किंधाकांडेसप्तपंचाशःसर्गः ॥ ५७ ॥ इत्युक्तःकरुणंवाक्यंवानरैस्त्यक्तजीवितैः ॥ सबाष्पोवानरान्गृध्रःप्रत्युवाचमहास्वनः ॥ १ ॥ यवीयान्सममभ्राताजटायुर्नामवानराः ॥ यमाख्यातहतं युद्धेरावणेनबलीयसा ॥ २ ॥ वृद्धभावादपक्षत्वाच्छृण्वंस्तदपिमर्षये ॥ नहिमेशक्तिरस्त्यद्यभ्रातुर्वैरविमोक्षणे ॥ ३ ॥ पुरावृत्रवधेवृत्तेसचाहंचजयैषिणौ ॥ आदित्यमुपयातौस्वोज्वलंतंरश्मिमालिनम् ॥ ४ ॥ आवृत्त्याकाशमार्गेणजवेनस्वर्गतौभृशम् ॥ मध्यंप्राप्तेतुसूर्येतुजटायुरवसीदति ॥ ५ ॥

रम् ॥ १ ॥ आख्यात आख्यातवंतः ॥ २ ॥ तदपि भ्रातृवधमपि ॥ ३ ॥ अद्य शक्तिर्नास्तीत्यनेनं पूर्वं महती शक्तिरासीदिति सूचितं तदेवाह पुरेति । पुरा पूर्वं वृत्रवधे वृत्ते सति स जटायुरहं च जयैषिणौ वृत्रवधेनेंद्रस्यातिप्रबलत्वं निर्णीय तज्जयैषिणौ भूत्वा प्रथममाकाशमार्गेण स्वर्गं गतौ ततो गरुडवद्भृशं जवेन तं विजित्य आवृत्त्या प्रत्यावृत्त्यादित्यं दर्पादुपयातौ स्वः । अथ तमुपयातयोरावयोर्मध्ये जटायुः सवितारि मध्यं प्राप्तेऽवसीदति स्मेति कतकः । अन्ये तु जयैषिणौ परस्परौ येनोत्पत्त्यादित्यः प्रथमं प्राप्यते स आवयोः प्रबल इति प्रतिज्ञापूर्वमिति शेषं इत्याहुः । तेषामावृत्त्येति पदस्येंद्रप्रसंगस्य चासंगतिः ॥ ४ ॥ ५ ॥

---

१ ह्रियमाणामित्यत्र ॥

छादयामास अपरोक्षेपि लिडुत्तम आर्षः ॥६॥ निर्दग्धपक्षः सूर्यकिरणैरिति शेषः भ्रातुर्जटायुषः मत्प्राप्तिमित्यन्वयः ॥७॥ जटायुषो भ्रात्रेत्यन्वयः ॥८॥ यदि जटायुषो रामभक्तस्य भ्राता यदिच मत्कथितं रामवृत्तांत रूपं वस्तु ते त्वया श्रुतं यदि च तस्य रक्षसो निलयं जानासि तर्ह्याख्याहीति प्रार्थने लोट् ॥९॥ अदीर्घदर्शिनं भाव्यनर्थविचारासमर्थं रावणमंतिके दूरे वा तिष्ठंतं यदि जानासि तदा नः शंस ॥ १० ॥ ११ ॥ रामस्य साह्यं रामकार्यप्रवृत्तानां युष्माकं सहायत्वमित्यर्थः ॥ १२ ॥ वारुणाँल्लोकान् जलप्रधानान् लोकान् त्रैविक्रमान् त्रिविक्रमावतारे आक्रांतान्भूरादिलोकान् देवासुरविमर्दांस्तद्युद्धानि हिश्चार्थे अमृतस्य मंथनं

तमहंभ्रातरंदृष्ट्वासूर्यरश्मिभिरर्दितम् ॥ पक्षाभ्यांछादयामासस्नेहात्परमविह्वलम् ॥६॥ निर्दग्धपक्षःपतितोविंध्येऽहंवानरर्षभाः ॥ अहमस्मिन्वसन्भ्रातुः प्रवृत्तिंनोपलक्षये ॥ ७ ॥ जटायुषस्त्वेवमुक्तोभ्रात्रासंपातिनातदा ॥ युवराजोमहाप्राज्ञःप्रत्युवाचांगदस्तदा ॥ ८ ॥ जटायुषोयदिभ्राताश्रुतंतेगदितं मया ॥ आख्याहियदिजानासिनिलयंतस्यरक्षसः ॥ ९ ॥ अदीर्घदर्शिनंतंवैरावणंराक्षसाधमम् ॥ अंतिकेयदिवादूरेयदिजानासिशंसनः ॥ १० ॥ ततोऽब्रवीन्महातेजाभ्राताज्येष्ठोजटायुषः ॥ आत्मानुरूपंवचनंवानरान्संप्रहर्षयन् ॥ ११ ॥ निर्दग्धपक्षोगृध्रोहंगतवीर्यःप्लवंगमाः ॥ वाङ्मात्रेणा पिरामस्यकरिष्येसाह्यमुत्तमम् ॥ १२ ॥ जानामिवारुणाँल्लोकान्विष्णोस्त्रैविक्रमानपि ॥ देवासुरविमर्दांश्चह्यमृतस्यविमंथनम् ॥ १३ ॥ रामस्यय दिदंकार्यंकर्तव्यंप्रथमंमया ॥ जरयाचहृतंतेजःप्राणाश्चशिथिलामम ॥ १४ ॥ तरुणीरूपसंपन्नासर्वाभरणभूषिता ॥ ह्रियमाणामयादृष्टारावणे नदुरात्मना ॥ १५ ॥ क्रोशंतीरामरामेतिलक्ष्मणेतिचभामिनी ॥ भूषणान्यपविध्यंतीगात्राणिचविधुन्वती ॥ १६ ॥ सूर्यप्रभेवशैलाग्रेतस्याःकौ शेयमुत्तमम् ॥ असितेराक्षसेभातियथाविद्युदिवांबरे ॥ १७ ॥ तांतुसीतामहंमन्येरामस्यपरिकीर्तनात् ॥ श्रूयतांमेकथयतोनिलयंतस्यरक्षसः ॥ ॥ १८ ॥ पुत्रोविश्रवसःसाक्षाद्भ्रातावैश्रवणस्यच ॥ अध्यास्तेनगरींलंकांरावणोनामराक्षसः ॥ १९ ॥ इतोद्वीपेसमुद्रस्यसंपूर्णेशतयोजने ॥ तस्मिँल्लंकापुरीरम्यानिर्मिताविश्वकर्मणा ॥२०॥ जांबूनदमयैर्द्वारैश्चित्रैःकांचनवेदिकैः ॥ प्रासादैर्हेमवर्णैश्चमहद्भिःसुसमाकृता ॥२१॥ प्राकारेणार्कव र्णेनमहताचसमन्विता ॥ तस्यांवसतिवैदेहीदीनाकौशेयवासिनी ॥ २२ ॥ रावणांतःपुरेरुद्धाराक्षसीभिःसुरक्षिता ॥ जनकस्यात्मजांराज्ञस्तस्यां द्रक्ष्यथमैथिलीम् ॥२३॥ "लंकायामभिगुप्तायांसागरेणसमंततः ॥ संप्राप्यसागरस्यांतेसंपूर्णेशतयोजने ॥ आसाद्यदक्षिणंकूलंततोद्रक्ष्यथरावणम् ॥ तत्रैवत्वरिताःक्षिप्रंविक्रमध्वंप्लवंगमाः" ॥ ज्ञानेनखलुपश्यामिदृष्ट्वाप्रत्यागमिष्यथ ॥ आद्यःपंथाःकुलिंगानांयेचान्येधान्यजीविनः ॥ २४ ॥

च अनेन च ब्रह्माहरादिक्षणमारभ्यैतत्क्षणपर्यंतं सर्ववृत्तांतज्ञत्वं स्वस्य निवेदितम् ॥ १३ ॥ रामस्येदं कार्यं प्रथममवश्यं मया कर्तव्यं परंतु जरादिमत्त्वादशक्यमिति भावः ॥ १४ ॥ १५ ॥ १६ ॥ ॥ १७ ॥ तां तु रावणह्रियमाणत्वेन दृष्टाम् । सीतात्वेन ज्ञाने हेतुः रामस्य परिकीर्तनम् ॥ १८ ॥ १९ ॥ सा च लंकेतः शतयोजने शतयोजनात्परतः स्थिते समुद्रस्य द्वीपे तिष्ठतीति शेषः । तस्मि न्द्वीपे सा लंकापुरी विश्वकर्मणा निर्मिता ॥ २० ॥ २१ ॥ २२ ॥ तस्यां मैथिलीं द्रक्ष्यथ ॥ २३ ॥ एतदग्रे लंकायामित्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः । देवयोनित्वेन द्विव्यज्ञानेन यूयं तां दृष्ट्वा प्रत्याग

मिष्यथेत्यपि पश्यामि अतो निःसंशयं गच्छतेति शेषः । अथ स्वस्य देवयोनित्वप्रदर्शनशेषतया पक्षिमार्गानाह आद्य इति । पंथा आकाशमार्गः । अन्ये धान्यजीविनः पारावतादयः ॥ २४ ॥ बलिभोजाः काकाः । वृक्षफलाशनाः शुकादयः । भासाः पक्षिविशेषाः ॥ २५ ॥ बलवीर्येत्यादि हंसविशेषणम् ॥ २६ ॥ वैनतेयाद्विनतापुत्रादरुणात् तस्माज्जातोहमरुणात्संपातिस्तु ममाग्रज इति अरण्ये जटायुवा क्यात् । एवं दिव्यज्ञानेन युष्मद्वृत्तज्ञानम् ॥ २७ ॥ युष्मत्सहायकरणं च वैरशुद्ध्या स्वप्रयोजनमपीत्याह गर्हितमिति । येन रावणेन परदारहरणरूपं गर्हितं कर्म कृतं तस्य पिशिताशिनो भ्रातृकृतं वैरमुद्दिश्य यत्प्रतिकार्यं तच्च मे कृतं भवेत् युष्मत्प्रवर्तनेनेति शेषः ॥ २८ ॥ ननु कथं लंकास्था सीतेति त्वया ज्ञातं तत्राह इहस्थ इति । सौपर्णं सुपर्णलिंगकचक्षुष्मतीविद्यासिद्धिजं सा च विद्या बह्वृचब्राह्मणे तृती

द्वितीयोबलिभोजानांयेचवृक्षफलाशनाः ॥ भासास्तृतीयंगच्छंतिक्रौंचाश्चकुररैःसह ॥ २५ ॥ श्येनाश्चतुर्थंगच्छंतिगृध्रागच्छंतिपंचमम् ॥ बलवीर्योपपन्नानांरूपयौवनशालिनाम् ॥ २६ ॥ षष्ठस्तुपंथाहंसानांवैनतेयगतिःपरा ॥ वैनतेयाच्चनोजन्मसर्वेषांवानरर्षभाः ॥ २७ ॥ गर्हितंतुकृतंकर्मयेनस्मपिशिताशिनः ॥ प्रतिकार्यंचमेतस्यवैरंभ्रातृकृतंभवेत् ॥ २८ ॥ इहस्थोऽहंप्रपश्यामिरावणंजानकींतथा ॥ अस्माकमपिसौपर्णंदिव्यंचक्षुर्बलंतथा ॥ २९ ॥ तस्मादाहारवीर्येणनिसर्गेणचवानराः ॥ आयोजनशतात्साग्राद्वयंपश्यामनित्यशः ॥ ३० ॥ अस्माकंविहितावृत्तिर्निसर्गेणचदूरतः ॥ विहितावृक्षमूलेतुवृत्तिश्चरणयोधिनाम् ॥ ३१ ॥ उपायोदृश्यतांकश्चिल्लंघनेलवणांभसः ॥ अभिगम्यतुवैदेहींसमृद्धार्थागमिष्यथ ॥ ३२ ॥ समुद्रंनेतुमिच्छामिभवद्भिर्वरुणालयम् ॥ प्रदास्याम्युदकंभ्रातुःस्वर्गतस्यमहात्मनः ॥ ३३ ॥ ततोनीत्वातुतंदेशंतीरेनदनदीपतेः ॥ निर्दग्धपक्षंसंपातिंवानराःसुमहौजसः ॥ ३४ ॥ तंपुनःप्रापयित्वाचतंदेशंपतगेश्वरम् ॥ बभूवुर्वानराहृष्टाःप्रवृत्तिमुपलभ्यते ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे अष्टपंचाशः सर्गः ॥ ५८ ॥ ततस्तदमृतास्वादंगृध्रराजेनभाषितम् ॥ निशम्यवदतोहृष्टास्तेवचःप्लवगर्षभाः ॥ १ ॥ जांबवान्वानरश्रेष्ठःसहसर्वैःप्लवंगमैः ॥ भूतलात्सहसोत्थायगृध्रराजानमब्रवीत् ॥ २ ॥

यसंचिकायामुक्ता ॥ २९ ॥ तस्मादुक्तविद्यासिद्धेः निसर्गेणाहारवीर्येण च मांसविशेषाहारबलेन च आङभिविधौ । साग्रात्किंचिदधिकाद्योजनशतात् ॥ ३० ॥ अस्माकं तु निसर्गेण जातिस्वभावेन दूरतः दूरवर्तिदर्शनबलसंपादकेन भक्ष्यविशेषेण वृत्तिर्विहिता धात्रेति शेषः । कुक्कुटादीनां तु स्वावासवृक्षमूले एव तावद्दूरदृष्टिमात्रसंपादिका च वृत्तिर्विहिता ॥ ३१ ॥ गमिष्यथ किष्किंधामिति शेषः ॥ ३२ ॥ नेतुं नाययितुम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ मूर्गंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे अष्टपंचाशः सर्गः ॥ ५८ ॥ ॥ कतकरीत्या एकोनषष्टितमः सर्गः ॥ ५९ ॥ तत इति । ते प्लवगर्षभा अमृतास्वादं गृध्रराजाभिभाषितं निशम्य हर्षादेव तद्वदतः अनुवदंतो हृष्टा बभूवुरित्यर्थः । वदत इत्यत्र नुमभाव आर्षः ॥ १ ॥ अब्रवील्लंकायां सीताद

र्शनं त्वदेकसाक्षिकमन्यसाक्षिकमपि वेति दार्ढ्यायापृच्छदित्यर्थः । भूतलादुत्थाय मायोपवेशं त्यक्त्वेत्यर्थः ॥२॥ प्रश्नमेवाह केति । सीतां को हरति स्म ह्रियमाणा च केन दृष्टा त्वयान्येनापि वा हृता च क्व वा वर्तते इति सर्वं भवानाख्यातु सामान्यतः श्रुत्वा मायोपवेशादुत्थितानां विशिष्य वदत्वित्यर्थः ॥ ३ ॥ को जानकीहर्ता स्वयं रामबाणानां विक्रमं न चिंतयतीत्यन्वयः ॥ ४ ॥ प्रतिसंमुक्तान् त्यक्तप्रायोपवेशान् सीताश्रुतिसमाहितान्सीताविषयवृत्तांतश्रवणे सावधानान्पुनराश्वासयन्नन्यसाक्षिकताप्रदर्शनेन भूयः स्वोक्तार्थं प्रत्यापयन् ॥ ५ ॥ वैदेह्या हरणं यथा मे मया श्रुतं येन च ममाख्यातं यत्र सा आयतलोचना वर्तते इति श्रुतं तदपीहेदानीं श्रूयताम् ॥ ६ ॥ तदेवाह अहमिति । दुर्गे दुर्गमे क्षीणः प्राणो बलं पराक्रमश्च यस्य सः ॥ ७ ॥ ८ ॥ तीक्ष्णकामा स्त्रीकामा वै गंधर्वा इतिश्रुतेः । यथा कामादिविषये गंधर्वादेस्तैक्ष्ण्यं स्वभावात्तत एव स्वभावादेव वयं पतगास्तीक्ष्णक्षुधा इत्यर्थः ॥ ९ ॥ यस्मादेवमतः क्षुधार्तस्यात एवाहारकांक्षिणो ममाहारार्थं सूर्येऽहनि अह्नि सूर्ये सूर्योदयकाले गतो मम पुत्रः सायमनामिषः प्राप्त

कसीताकेनवादृष्टाकोवाहरतिमैथिलीम् ॥ तदाख्यातुभवान्सर्वंगतिर्भववनौकसाम् ॥ ३ ॥ कोदाशरथिबाणानांवज्रवेगनिपातिनाम् ॥ स्वयंलक्ष्मणमुक्तानांनचिंतयतिविक्रमम् ॥ ४ ॥ सहरीन्प्रतिसंमुक्तान्सीताश्रुतिसमाहितान् ॥ पुनराश्वासयन्प्रीतइदंवचनमब्रवीत ॥ ५ ॥ श्रूयतामिहवैदेह्यायथामेहरणंश्रुतम् ॥ येनचादिममाख्यातंयत्रचायतलोचना ॥ ६ ॥ अहमस्मिन्गिरौदुर्गेबहुयोजनमायते ॥ चिरान्निपतितोवृद्धःक्षीणप्राणपराक्रमः ॥ ७ ॥ तंमामेवंगतंपुत्रःसुपार्श्वोनामनामतः ॥ आहारेणयथाकालंबिभर्तिपततांवरः ॥ ८ ॥ तीक्ष्णकामास्तुगंधर्वास्तीक्ष्णकोपाभुजंगमाः ॥ मृगाणांतुभयंतीक्ष्णंततस्तीक्ष्णक्षुधावयम् ॥ ९ ॥ सकदाचित्क्षुधार्तस्यममाहाराभिकांक्षिणः ॥ गतःसूर्येऽहनिप्राप्तोममपुत्रोह्यनामिषः ॥ १० ॥ समयाहारसंरोधात्पीडितःप्रीतिवर्धनः ॥ अनुमान्ययथातत्त्वमिदंवचनमब्रवीत् ॥ ११ ॥ अहंतातयथाकालमामिषार्थीखमाप्लुतः ॥ महेंद्रस्यगिरेर्द्वारमावृत्यसुसमाश्रितः ॥ १२ ॥ तत्रसत्त्वसहस्राणांसागरांतरचारिणाम् ॥ पंथानमेकोऽध्यवसंसन्निरोद्धुमवाङ्मुखः ॥ १३ ॥ तत्रकश्चिन्मयादृष्टःसूर्योदयसमप्रभाम् ॥ स्त्रियमादायगच्छन्वैभिन्नांजनचयोपमः ॥ १४ ॥ सोऽहमभ्यवहारार्थंतौदृष्ट्वाकृतनिश्चयः ॥ तेनसाम्नाविनीतेनपंथानमनुयाचितः ॥ १५ ॥ नहिसामोपपन्नानांप्रहर्ताविद्यतेभुवि ॥ नीचेष्वपिजनःकश्चित्किमंगवतमद्विधः ॥ १६ ॥ सयातस्तेजसाव्योमसंक्षिपन्निववेगितः ॥ अथाहंखेचरैर्भूतैरभिगम्यसभाजितः ॥ १७ ॥ दिष्ट्याजीवतिसीतेतिअब्रुवन्मांमहर्षयः ॥ कथंचित्सकलत्रोऽसौगतस्तेस्वस्त्यसंशयम् ॥ १८ ॥

आगतः ॥ १० ॥ यत एवमतः स मम प्रीतिवर्धनः मयाहारसंरोधात्पीडितो दुर्वचनेन खेदं प्रापितः सन्मामनुमान्य क्षमापयित्वा यथातत्त्वमिदं वक्ष्यमाणं वचनमब्रवीत् ॥ ११ ॥ सुसमाश्रितः स्थितः ॥ १२ ॥ पंथानं सन्निरोद्धुमवसमित्यन्वयः ॥ १३ ॥ सूर्योदयसमप्रभाम् उदयकालिकसूर्यसमप्रभाम् ॥ १४ ॥ तौ स्त्रीपुरुषौ कृतनिश्चयः इमावेव हत्वा पितुरभ्यवहारार्थं नेष्यामीति कृतनिश्चयः इत्यर्थः । ततस्तेन विनीतेन सता साम्नैव पंथानमभियाचितोस्मि अतएवासौ त्यक्त इति शेषः ॥ १५ ॥ तत्र हेतुर्नहि सामेति ॥ १६ ॥ अथ सस्त्रीकस्य तस्य गमनानंतरं खेचरैर्भूतैः सिद्धचारणादिभिः सभाजितः पूजितोस्मि ॥ १७ ॥ दिष्ट्या जीवति सीतेति पाठः । दिष्ट्या सीता त्वद्दृष्टिपथं प्राप्ता जीवति स्म त्वया तद्धननस्येषत्करत्वात् । एवं पूजयित्वा मां महर्षयोब्रुवन् असौ त्वया दृष्टः पुरुषः सकलत्रः कथंचित् कुशलीगतोतोऽसंशयं ते स्वस्त्यस्तु इति कतकः । अन्ये तु दिष्ट्या जीवसि तातेति पाठः । हे तात त्वं दिष्ट्या रावणं प्राप्यापि जीवसीत्यब्रुवन् यतोसौ सकलत्रोऽतोऽसंशयं त्वां संशयमप्राप्य गतोऽतस्ते स्वस्ति

जातमित्यर्थमाहुः ॥ १८ ॥ अथ स हर्ता रावण इति सा रामभार्येति चाहं प्रतिवेदितः ॥ १९ ॥ अतोहं भ्रष्टाभरणत्वादिगुणां रामभार्यां पश्यन्स्थित इत्येव तावन्मे कालात्ययः कालातिपातहेतुरिति समग्रमेतदर्थं वाक्यविदां वरः सुपार्श्वो मे प्रत्यवेदयत् । तत् श्रुत्वापीति । सामान्यतः पूर्वं मया दृष्टमपि पुत्राद्धर्ता रावणो हृता रामपत्नीति निश्चित्य श्रुत्वापि ॥ २० ॥ २१ ॥ २२ ॥ वाग्बुद्धिभ्यां साध्यो यो गुण उपकारलक्षणस्तन्मात्रवर्तनशीलेन ॥ २३ ॥ पौरुषाश्रयं पराक्रमप्रतिष्ठाभूतम् । किंचैष उपकारो न केवलं भवत्प्रयोजन एवापि तु स्वप्रयोजनफलोपीत्याह वाङ्मतिभ्यामिति । दाशरथेः कार्यमुद्दिश्य वः सर्वेषां वाङ्मतिभ्यां यत्प्रियं करिष्यामि तन्ममैव कार्यम् अत्र संशयो न ॥ २४ ॥ तत्तस्मान्मया भवतां कार्यसिद्धेरसंशयं दृष्टत्वात् भवंतोवश्यं कार्ये यतंतामिति शेषः ॥ २५ ॥ विहिताः विधात्रेति शेषः

एवमुक्तस्ततोहंतैःसिद्धैःपरमशोभनैः ॥ सचमेरावणोराजारक्षसांप्रतिवेदितः ॥ १९ ॥ पश्यन्दाशरथेर्भार्यांरामस्यजनकात्मजाम् ॥ भ्रष्टाभरणकौशेयांशोकवेगपराजिताम् ॥ २० ॥ रामलक्ष्मणयोर्नामक्रोशंतींमुक्तमूर्धजाम् ॥ एपकालात्ययस्तातइतिवाक्यविदांवरः ॥ २१ ॥ एतदर्थंसमग्रंमेसुपार्श्वःप्रत्यवेदयत् ॥ तच्छ्रुत्वापिहिमेबुद्धिर्नासीत्काचित्पराक्रमे ॥ २२ ॥ अपक्षोहिकथंपक्षीकर्मकिंचित्समारभेत् ॥ यत्तुशक्यंमयाकर्तुंवाग्बुद्धिगुणवर्तिना ॥ २३ ॥ श्रूयतांतत्रवक्ष्यामिभवतांपौरुषाश्रयम् ॥ वाङ्मतिभ्यांहिसर्वेषांकरिष्यामिप्रियंहिवः ॥ २४ ॥ यद्धिदाशरथेःकार्यंममतन्नात्रसंशयः ॥ तद्भवंतोमतिश्रेष्ठाबलवंतोमनस्विनः ॥ २५ ॥ प्रहिताःकपिराजेनदेवैरपिदुरासदाः ॥ रामलक्ष्मणबाणाश्चविहिताःकंकपत्रिणः ॥ ॥ २६ ॥ त्रयाणामपिलोकानांपर्याप्तास्त्राणनिग्रहे ॥ कामंखलुदशग्रीवस्तेजोबलसमन्वितः ॥ भवतांतुसमर्थानांनकिंचिदपिदुष्करम् ॥ २७ ॥ तदलंकालसंगेनक्रियतांबुद्धिनिश्चयः ॥ नहिकर्मसुसज्जंतेबुद्धिमंतोभवद्विधाः ॥ २८ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येकिष्किंधाकांडे एकोनषष्टितमःसर्गः ॥ ५९ ॥ ततःकृतोदकंस्नातंतंगृध्रंहरियूथपाः ॥ उपविष्टागिरौरम्येपरिवार्यसमंततः ॥ १ ॥ तमंगदमुपासीनंतैःसर्वैर्हरिभिर्वृतम् ॥ जनितप्रत्ययोहर्षात्संपातिःपुनरब्रवीत् ॥ २ ॥ कृत्वानिःशब्दमेकाग्राःशृण्वंतुहरयोमम ॥ तथ्यंसंकीर्तयिष्यामियथाजानामिमैथिलीम् ॥ ॥ ३ ॥ अस्यविंध्यस्यशिखरेपतितोऽस्मिपुरानघ ॥ सूर्यतापपरीतांगोनिर्दग्धःसूर्यरश्मिभिः ॥ ४ ॥ लब्धसंज्ञस्तुषड्रात्राद्विवशोविह्वलन्निव ॥ वीक्षमाणोदिशःसर्वानाभिजानामिकिंचन ॥ ५ ॥ ततस्तुसागराञ्शैलान्नदीःसर्वाःसरांसिच ॥ वनानिचप्रदेशांश्चनिरीक्ष्यमतिरागता ॥ ६ ॥

॥ २६ ॥ त्राणनिग्रहे त्राणे निग्रहे च पर्याप्ताः समाहारद्वंद्वः । यद्यपि दशग्रीवो लोकदृष्ट्या प्रबलस्तथापि भवतां रामलक्ष्मणसहायत्वेनैव समर्थानां सुकर एवेति भावः ॥ २७ ॥ कालसंगः कालविलंबः सज्जंते अलसा भवंति ॥ २८ ॥ हरिमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥ कतकरीत्या षष्टितमः ॥ ६० ॥ ॥ ततइति ॥ १ ॥ जनितप्रत्ययः एष्यंत्यन्वेषका इति निशाकरमुन्युक्तरीत्या रामदूतागमनदर्शनान्निशाकरोक्तपक्षप्ररोहादिदर्शनाच्च निशाकरवचसि विश्वस्तः हर्षात्पक्षलाभजनितहर्षात् आत्मानमुपासीनमंगदं प्रति पुनरब्रवीत् ॥ २ ॥ तथ्यं मैथिलीं जानामीति मद्वाक्यं सत्यं यथा भवद्भिः प्रतिपत्तव्यं तथा संकीर्तयिष्यामि ॥ ३ ॥ सूर्यरश्मिभिर्निर्दग्धोऽतएव विवशः षड्रात्रात्परं लब्धसंज्ञः विह्वलन्निव

परमार्त एव सन् ॥ ४ ॥ ५ ॥ ६ ॥ कंदराण्युदरे यस्य स चासौ कूटवान् शृंगवानित्यर्थः ॥ ७ ॥ यस्मिन्नाश्रमे उग्रतपाभवदिति संबंधरार्थः ॥ ८ ॥ निशाकरे ऋषौ स्वर्गते तेन विनात्र गिरौ वसतो ममाष्टौ वर्षसहस्राणि गतानीति शेषः ॥ ९ ॥ अथ तत्स्थितिकालिकीं तद्दर्शनप्रवृत्तिमाह अवतीर्येति । तीक्ष्णदर्भां तीक्ष्णाग्रा दर्भा यस्याम् ॥ १० ॥ तमृषिं द्रष्टुकामोस्मि द्रष्टुकामोभूवमित्यर्थः । अतएव दुःखेन तदभ्याशमभ्यागतः । ननु तद्वासोत्रेति त्वया कथं ज्ञातमत आह जटायुषेति । अधिगतः प्राप्तः सेवित इत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ उदङ्मुखमुपावृत्तं समुद्रे स्नात्वोदङ्मुखतया प्रत्यावृत्तम् ॥ १४ ॥ तस्य स्वसेवायोग्यत्वप्रदर्शनाय तिर्यग्योनिसेव्यत्वं तपोमहिमजं दर्शयति तमृक्षा इति ॥ १५ ॥ प्राप्तमाश्रममागतम् ॥ १६ ॥ १७ ॥ ते रोम्णां वैकल्यं दृष्ट्वा नावगम्यते न प्रत्यभिज्ञायते भवानित्यर्थः ।

हृष्टपक्षिगणाकीर्णःकंदरोदरकूटवान् ॥ दक्षिणस्योदधेस्तीरेविंध्योऽयमितिनिश्चितः ॥७॥ आसीच्चात्राश्रमंपुण्यंसुरैरपिसुपूजितम् ॥ ऋषिर्निशाकरो नामयस्मिन्नुग्रतपाभवत् ॥ ८ ॥ अष्टौवर्षसहस्राणितेनास्मिन्नृषिणागिरौ ॥ वसतोममधर्मज्ञेस्वर्गतेतुनिशाकरे ॥ ९ ॥ अवतीर्यचविंध्याग्रात्कृच्छ्रेणवि षमाच्छनैः ॥ तीक्ष्णदर्भांवसुमतींदुःखेनपुनरागतः ॥ १० ॥ तमृषिंद्रष्टुकामोऽस्मिदुःखेनाभ्यागतोभृशम् ॥ जटायुषामयाचैवबहुशोऽधिगतोहिसः ॥ ११ ॥ तस्याश्रमपदाभ्याशेववुर्वाताःसुगंधिनः ॥ वृक्षोनापुष्पितःकश्चिदफलोवानदृश्यते ॥ १२ ॥ उपेत्यचाश्रमंपुण्यंवृक्षमूलमुपाश्रितः ॥ द्रष्टुकामःप्रतीक्षेचभगवंतंनिशाकरम् ॥ १३ ॥ अथपश्यामिदूरस्थमृषिंज्वलिततेजसम् ॥ कृताभिषेकंदुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४ ॥ तमृक्षाः सृमराव्याघ्राःसिंहानानासरीसृपाः ॥ परिवार्योपगच्छंतिदातारंप्राणिनोयथा ॥ १५ ॥ ततःप्राप्तमृषिंज्ञात्वातानिसत्त्वानिवैययुः ॥ प्रविष्टेराजनिय थासर्वंसामात्यकंबलम् ॥ १६ ॥ ऋषिस्तुदृष्ट्वामांतुष्टःप्रविष्टश्चाश्रमंपुनः ॥ मुहूर्तमात्रान्निर्गम्यततःकार्यमपृच्छत ॥ १७ ॥ सौम्यवैकल्यतांदृष्ट्वारो म्णांतेनावगम्यते ॥ अग्निदग्धाविमौपक्षौप्राणाश्चापिशरीरके ॥ १८ ॥ गृध्रौद्वौदृष्टपूर्वौमेमातरिश्वसमौजवे ॥ गृध्राणांचैवराजानौभ्रातरौकामरू पिणौ ॥ १९ ॥ज्येष्ठोऽवितस्त्वंसंपातेजटायुरनुजस्तव ॥ मानुषंरूपमास्थायगृह्णीतांचरणौमम ॥ २० ॥ किंतेव्याधिसमुत्थानंपक्षयोःपतनंकथम् ॥ दंडोवाऽयंधृतःकेनसर्वमाख्याहिपृच्छतः ॥ २१ ॥ इत्यार्षेश्रीम०वा०आ०कि०षष्टितमः सर्गः ॥ ६० ॥ ततस्तद्दारुणंकर्मदुष्करंसहसाकृतम् ॥ आचचक्षेमुनेःसर्वंसूर्यानुगमनंतथा ॥ १ ॥ भगवन्व्रणयुक्तत्वाल्लज्जयाचाकुलेंद्रियः ॥ परिश्रांतोनशक्नोमिवचनंपरिभाषितुम् ॥ २ ॥

वैकल्यमेवाह अग्निदग्धौ ताविव अतएव शरीरके अल्पे शरीरे प्राणाश्चाद्विक्रमबले अपि ते दग्धकल्पाः ॥ १८ ॥ अथ प्रत्यभिज्ञामूलामभिज्ञामाह गृध्राविति ॥ १९ ॥ अवितो ज्ञातः गृहीतामगृहीताम् ॥ २० ॥ किं कीदृशं व्याधिसमुत्थानमिति षष्ठीतत्पुरुषः । अयं दंडः व्रणकरः प्रहारः केन धृतः केन कृतः ॥ २१ ॥ पुरैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे षष्टितमः सर्गः ॥ ६० ॥ ॥ कतकरीत्या एकषष्टितमः ॥ ६१ ॥ ॥ तद्दारुणं कर्म इंद्रेण युद्धरूपम् अनेन दुष्करं सहसा दर्पात्कृतं प्रथममाचचक्षे । तथा तदनंतरकृतं सूर्यानुगमनं सर्वं प्रकृतविंध्यपतनप्रयोजनत्वेनाचचक्षे ॥ १ ॥ तदेवाह भगवन्निति । व्रणयुक्तत्वादिंद्रयुद्धे वज्रप्रहारजव्रणयुक्तत्वात् । परिश्रांतस्तया पक्षनाशफलकानुचितकर्मकरणजलज्जया आकुलितेंद्रियश्चाहं प्रतिभाषितुं

सम्यगुत्तरं दातुं न शक्नोमि तथापि कथंचिद्ब्रवीमीति शेषः ॥ २ ॥ संघर्षात्पतनविषयस्पर्धातः गर्वमोहितौ इंद्रजयगर्वमोहितौ ॥ ३ ॥ पणं बद्धा प्रतिज्ञां कृत्वा । प्रतिज्ञामेवाह रविरिति । रविर्यावदस्तं महाद्रिं यायात्ततः प्रागावाभ्यां रविरनुयातव्योऽनुप्राप्तव्य इति प्रतिज्ञा ॥ ४ ॥ युगपत्प्राप्तावाकाशमिति शेषः अपश्याव दृष्टवंतौ ॥ ५ ॥ क्वचिदूर्ध्वदिक्प्रदेशविशेषे ॥ ६ ॥ आकाशम् आकाशपथादर्वाक्तनं भूवर्तिवनम् शाद्वलसंस्थितं शाद्वलानां बालतृणवद्देशानामिव संस्थानं यस्य तत् ॥ ७ ॥ उपलैः सूक्ष्मपाषाणैः ॥ ८ ॥ नागा गजाः ॥ ९ ॥ तदा सवितारि मध्यं प्राप्ते मोहो दिङ्मोहस्ततो मोहादनंतरं दारुणा मूर्छा सेंद्रियमनउपप्लवो मूर्छा ॥ १० ॥ मोहमूर्छे एव प्रकाशयति न चेति । युगांते नियतो नियतदाहोपि लोक आवाभ्यां तत्कालेऽग्निना दग्धो हत इव दृष्टोभूत् ॥ ११ मनश्च मे भूयोभ्याधिकं संश्रयं चक्षुः प्राप्य तेन सह हतं सौरतेजसा प्रतिहतदर्शनशक्तिकमभूत् । अस्मिन्सूर्ये पुनश्चक्षुषी मनश्च संधाय ॥ १२ ॥ कथं सूर्यो दृष्ट इत्यत्र तत्प्रकारमाह तुल्य इति । पृथ्व्यत्र जंबूद्वीपावच्छिन्ना बोध्या ॥ १३ ॥

अहंचैवजटायुश्चसंघर्षाद्गर्वमोहितौ ॥ आकाशंपतितौदूराज्जिज्ञासंतौपराक्रमम् ॥ ३ ॥ कैलासशिखरेबद्धामुनीनामग्रतःपणम् ॥ रविःस्यादनुयातव्यो यावदस्तंमहागिरिम् ॥ ४ ॥ अप्यावांयुगपत्प्राप्तावपश्यावमहीतले ॥ रथचक्रप्रमाणानिनगराणिपृथक्पृथक् ॥ ५ ॥ क्वचिद्वादित्रघोषश्चक्वचिद्भूषणनिःस्वनः ॥ गायंतीःस्मांगनाबह्वीःपश्यावोरक्तवाससः ॥ ६ ॥ तूर्णमुत्पत्यचाकाशमादित्यपदमास्थितौ ॥ आवामालोकयावस्तद्वनंशाद्वलसंस्थितम् ॥ ७ ॥ उपलैरिवसंछन्नादृश्यतेभूःशिलोच्चयैः ॥ आपगाभिश्चसंवीतासूत्रैरिववसुंधरा ॥ ८ ॥ हिमवांश्चैवविंध्यश्चमेरुश्चसुमहागिरिः ॥ भूतले संप्रकाशंतेनागाइवजलाशये ॥ ९ ॥ तीव्रःस्वेदश्चखेदश्चभयंचासीत्तदावयोः ॥ समाविशतमोहश्चततोमूर्च्छाचदारुणा ॥ १० ॥ नचदिग्ज्ञायते याम्यानचाग्नेयीनवारुणी ॥ युगांतेनियतोलोकोहतोदग्धइवाग्निना ॥ ११ ॥ मनश्चमेहतंभूयश्चक्षुःप्राप्यतुसंश्रयम् ॥ यत्नेनमहताह्यस्मिन्मनःसंधायचक्षुषी ॥१२॥ यत्नेनमहताभूयोभास्करःप्रतिलोकितः ॥ तुल्यपृथ्वीप्रमाणेनभास्करःप्रतिभातिनौ ॥१३॥ जटायुर्मामनापृच्छ्यनिपपातमहीं ततः ॥ तंदृष्ट्वातूर्णमाकाशादात्मानंमुक्तवानहम् ॥ १४॥ पक्षाभ्यांचमयागुप्तोजटायुर्नप्रदह्यत ॥ प्रमादात्तत्रनिर्दग्धःपतन्वायुपथादहम् ॥ १५ ॥ आशंकेतंनिपतितंजनस्थानेजटायुषम् ॥ अहंतुपतितोविंध्येदग्धपक्षोजडीकृतः ॥ १६ ॥ राज्याच्चहीनोभ्रात्राचपक्षाभ्यांविक्रमेणच ॥ सर्वथामर्तुमेवेच्छन्पतिष्येशिखराद्गिरेः ॥ १७॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकषष्टितमः सर्गः ॥ ६१ ॥ एवमुक्त्वामुनिश्रेष्ठमरुदंभृशदुःखितः ॥ अथध्यात्वामुहूर्तंचभगवानिदमब्रवीत ॥ १ ॥ पक्षौचतेप्रपक्षौचपुनरन्यौभविष्यतः ॥ चक्षुषीचैवप्राणाश्चविक्रमश्चबलंचते॥ ॥ २ ॥ पुराणेसुमहत्कार्यंभविष्यंहिमयाश्रुतम् ॥ दृष्टंमेतपसाचैवश्रुत्वाचविदितंमम ॥ ३ ॥

ततः सूर्यदर्शनानंतरम् अनापृच्छ्य मोहवशादिति शेषः । तं दृष्ट्वेति । मोहात्पतंतं जटायुं दृष्ट्वा आकाशादात्मानं मुक्तवानिति सूर्यसमीपवर्त्याकाशप्रदेशादात्मानं स्वशरीरं जटायुरक्षणार्थंमुक्तवान् पक्षौ विस्तार्य पतितवानित्यर्थः ॥ १४ ॥ प्रमादाज्जटायुपरित्राणविषयचिंताभिषंगात् । तत्र तस्मिन्काले निर्दग्धो निर्दग्धपक्षः अथ वायुपथात्पतन्नहमाशंके अनुमितवान् न तु प्रत्यक्षतो दृष्टवानित्यर्थः ॥ १५ ॥ १६ ॥ सर्वथा मर्तुमेवेच्छन् शिखरात्पतिष्ये इत्याहेति शेषः ॥ १७ ॥ संक्रमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे एकषष्टितमः सर्गः ॥ ६१ ॥ कतकरीत्या द्विषष्टितमः ॥ ६२ ॥ ॥ एवमिति ॥ १ ॥ पक्षप्रपक्षौ सूक्ष्मपक्षमहापक्षौ । प्राणाः पुष्टप्राणाः । चक्षुषी उद्भूतशक्तिके ॥ २ ॥ पुराणे नारदादिभिरुच्यमाने भविष्यरामचरितरूपे पुराणे श्रुत्वा विदितं

तपसा दृष्टं च ॥ ३ ॥ किं तत्तत्राह राजेत्यादि ॥ ४ ॥ तस्मिन्नर्थे अरण्यगमनरूपे ॥ ५ ॥ ६ ॥ प्रलोभ्यंती प्रलोभ्यमाना ॥ ७ ॥ परमान्नं पायसं ज्ञात्वा निराहारतामिति शेषः । वासवो दास्यति स्वपुरुषद्वारेति शेषः ॥८॥ इंद्रादिद्विपुरुषान्न तु रावणपुरुषादिति विज्ञाय अभूतलस्पर्शित्वादिरूपैर्देवचिह्नैः राम आगत्य एनं हत्वा त्वां नयिष्यति संवत्सरतृप्तिकरमिदमन्नं भुक्त्वा देवकार्यसिद्ध्ये मनुष्यभावं धृतवत्या प्राणा धर्तव्याः । देवैरपि मनुष्यभावे आहारं विना जीवितुं न शक्यते इत्यादिवचनैश्च निश्चित्येत्यर्थः । निर्वपिष्यति दास्यति ननु त्रेतायामस्थि प्राणवासस्योक्तत्वाज्जीवितुं शक्यत एवेति चेन्न । तथा सत्यपि क्षीणतायां देहवैरूप्ये रावणस्यानुरागभंगेन तत्पुण्यक्षये तस्य वधो न स्यादिति रूपलावण्याद्यहानाय तद्दानेनादोषात् । रावणस्य तु तथैव रूपादिदर्शनेन मद्दत्ताहाराग्रहणेपि वन्यफलादीन्याहारं करोतीति बुद्ध्या तस्यां नामनुष्यत्वनिश्चयः । एतेनाहारं विनापि पूर्वरूपादिसत्त्वज्ञानेन तस्य तस्याममनुष्यत्वबुद्धौ तत्संबंधाद्रामेपि तत्त्वबुद्धौ रामतो रावणवधो न स्यादित्यपास्तम् ॥९॥ दानमंत्रः यदीति । यदि जीवति तदाप्युपतिष्ठतु कालांतरे देवत्वं गच्छतोः प्राप्नुवतोरप्युपतिष्ठत्विति शेषः ॥१०॥ तत्र लंकायां गंतुमेष्यंति आगमिष्यंति इहेति शेषः ॥ ११ ॥ न गंतव्यम् इमं देशं विहायेति शेषः ॥ १२ ॥ उत्सहेयं यदि त्वया देवकार्येह

राजादशरथोनामकश्चिदिक्ष्वाकुवर्धनः ॥ तस्यपुत्रोमहातेजारामोनामभविष्यति ॥ ४ ॥ अरण्यंचसहभ्रात्रालक्ष्मणेनगमिष्यति ॥ तस्मिन्नर्थेनियुक्तः सन्पित्रासत्यपराक्रमः ॥ ५ ॥ नैर्ऋतोरावणोनामतस्यभार्यांहरिष्यति ॥ राक्षसेंद्रोजनस्थानेअवध्यःसुरदानवैः ॥ ६ ॥ साचकामैःप्रलोभ्यंतीभक्ष्यैर्भोज्यैश्चमैथिली ॥ नभोक्ष्यतिमहाभागादुःखमग्नायशस्विनी ॥ ७ ॥ परमान्नंचवैदेह्याज्ञात्वादास्यतिवासवः ॥ यदन्नममृतप्रख्यंसुराणामपिदुर्लभम् ॥ ८ ॥ तदन्नंमैथिलीप्राप्यविज्ञायेंद्रादिदंत्विति ॥ अग्रमुद्धृत्यरामायभूतलेनिर्वपिष्यति ॥ ९ ॥ यदिजीवतिमेभर्तालक्ष्मणोवापिदेवरः ॥ देवत्वंगच्छतोर्वापितयोरन्नमिदंत्विति ॥ १० ॥ एष्यंतिप्रेषितास्तत्ररामदूताःप्लवंगमाः ॥ आख्येयाराममहिषीत्वयातेभ्योविहंगम ॥ ११ ॥ सर्वथातुनगंतव्यमीदृशःक्वगमिष्यसि ॥ देशकालौप्रतीक्षस्वपक्षौत्वंप्रतिपत्स्यसे ॥ १२ ॥ उत्सहेयमहंकर्तुमद्यैवत्वांसपक्षकम् ॥ इहस्थस्त्वंहिलोकानांहितंकार्यंकरिष्यसि ॥ १३ ॥ त्वयापिखलुतत्कार्यंतयोश्चनृपपुत्रयोः ॥ ब्राह्मणानांगुरूणांचमुनीनांवासवस्यच ॥ १४ ॥ इच्छाम्यहमपिद्रष्टुंभ्रातरौरामलक्ष्मणौ ॥ नेच्छेचिरंधारयितुंप्राणांस्त्यक्ष्येकलेवरम् ॥ महर्षिस्त्वब्रवीदेवंदृष्टतत्त्वार्थदर्शनः ॥ १५ ॥ इत्यार्षे श्रीमद्रामायणे वा० आ० किष्किंधाकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ एतैरन्यैश्चबहुभिर्वाक्यैर्वाक्यविशारदः ॥ मांप्रशस्याभ्यनुज्ञाप्यप्रविष्टःसस्वमालयम् ॥ १ ॥ कंदरात्तुविसर्पित्वापर्वतस्यशनैःशनैः ॥ अहंविंध्यंसमारुह्यभवतःप्रतिपालये ॥ २ ॥

स्थातव्यं स्यादिति शेषः । पक्षवत्त्वे हि चापल्याद्गंतव्यमेवेतोन्यत्र त्वयेति भावः ॥ १३ ॥ लोकानामेवेत्येव न । अपि तु तयोर्नृपपुत्रयोस्तत्कार्यं दूतानां सीतावोधनरूपं त्वयापि कर्तुमर्हम् । तवापि देवांशत्वेन त्वद्धितमपि तदिति भावः । तत्कार्यस्य लोकसंबंधित्वं दर्शयति ब्राह्मणानामिति । तत्कार्यमिति शेषः ॥ १४ ॥ इच्छाम्यहमिति । दृष्टतत्त्वार्थदर्शनः दृष्टं सिद्धं तत्त्वार्थदर्शनं यस्य सः । महर्षिरेवं भाव्यर्थमब्रवीदतो हेतोरहमपि भ्रातरौ रामलक्ष्मणौ द्रष्टुमिच्छामि । यदि महर्षिरेवं मां प्रति नावक्ष्यत्तदा प्राणांश्चिरं धारयितुं नेच्छे नैच्छमपि तु कलेवरं त्यक्ष्ये इत्येवैच्छमित्यर्थ इति कतकः । अन्ये तु निशाकरवाक्यमेवेदम् अहंपदार्थोपि स एवेत्याहुः ॥ १५ ॥ मैंयेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ कतकरीत्या त्रिषष्टितमः सर्गः ॥ ६३ ॥ ॥ एतैरिति । मां प्रशस्य भाविदेवकार्यसाधकत्वेन स्तुत्वा अभ्यनुज्ञाप्य आमंत्र्य ॥ १ ॥ पर्वतकंदरादहं शनैःशनैर्विसर्पित्वा निःसृत्य विंध्यं विंध्यशिखरम् ॥ २ ॥

तपसा दृष्टं च ॥ ३ ॥ किं तत्तत्राह राजेत्यादि ॥ ४ ॥ तस्मिन्नर्थे अरण्यगमनरूपे ॥ ५ ॥ ६ ॥ प्रलोभ्यंती प्रलोभ्यमाना ॥ ७ ॥ परमान्नं पायसं ज्ञात्वा निराहारतामिति शेषः । वासवो दास्यति स्वपुरुषद्वारेति शेषः ॥८॥ इंद्रादिद्रपुरुषान्न तु रावणपुरुषादिति विज्ञाय अभूतलस्पर्शित्वादिरूपैर्देवचिह्नैः राम आगत्य एनं हत्वा त्वां नयिष्यति संवत्सरतृप्तिकरमिदमन्नं भुक्त्वा देवकार्यसिद्ध्ये मनुष्यभावं धृतवत्या प्राणा धर्तव्याः । देवैरपि मनुष्यभावे आहारं विना जीवितुं न शक्यते इत्यादिवचनैश्च निश्चित्येत्यर्थः । निर्वपिष्यति दास्यति ननु त्रेतायामस्थि प्राणत्रासस्योक्तत्वाज्जीवितुं शक्यत एवेति चेन्न । तथा सत्यपि क्षीणतायां देहवैरूप्ये रावणस्यानुरागभंगेन तत्पुण्यक्षये तस्य वधो न स्यादिति रूपलावण्याद्यहानाय तद्दानेनादोषात् । रावणस्य तु तथैव रूपादिदर्शनेन मद्दत्ताहाराग्रहणेपि वन्यफलादीन्याहारं करोतीति बुद्ध्या तस्यां नामनुष्यत्वनिश्चयः । एतेनाहारं विनापि पूर्वरूपादिसत्त्वज्ञानेन तस्य तस्याममनुष्यत्वबुद्धौ तत्संबंधाद्रामेपि तत्त्वबुद्धौ रामतो रावणवधो न स्यादित्यपास्तम् ॥९॥ दानमंत्रः यदीति । यदि जीवति तदाप्युपतिष्ठतु कालांतरे देवत्वं गच्छतोः प्राप्नुवतोरप्युपतिष्ठत्विति शेषः ॥१०॥ तत्र लंकायां गंतुमेष्यंति आगमिष्यंति इहेति शेषः ॥ ११ ॥ न गंतव्यम् इमं देशं विहायेति शेषः ॥ १२ ॥ उत्सहेयं यदि त्वया देवकार्यायेह

राजादशरथोनामकश्चिदिक्ष्वाकुवर्धनः ॥ तस्यपुत्रोमहातेजारामोनामभविष्यति ॥ ४ ॥ अरण्यंचसहभ्रात्रालक्ष्मणेनगमिष्यति ॥ तस्मिन्नर्थेनियुक्तः सन्पित्रासत्यपराक्रमः ॥ ५ ॥ नैर्ऋतोरावणोनामतस्यभार्यांहरिष्यति ॥ राक्षसेंद्रोजनस्थानेअवध्यःसुरदानवैः ॥ ६ ॥ साचकामैःप्रलोभ्यंतीभक्ष्यैर्भोज्यैश्चमैथिली ॥ नभोक्ष्यतिमहाभागादुःखमग्नायशस्विनी ॥ ७ ॥ परमान्नंचवैदेह्याज्ञात्वादास्यतिवासवः ॥ यदन्नममृतप्रख्यंसुराणामपिदुर्लभम् ॥ ८ ॥ तदन्नंमैथिलीप्राप्यविज्ञायेंद्रादिदंत्विति ॥ अग्रमुद्धृत्यरामायभूतलेनिर्वपिष्यति ॥ ९ ॥ यदिजीवतिमेभर्तालक्ष्मणोवापिदेवरः ॥ देवत्वंगच्छतोर्वापितयोरन्नमिदंत्विति ॥ १० ॥ एष्यंतिप्रेषितास्तत्ररामदूताःप्लवंगमाः ॥ आख्येयारामममहिषीत्वयातेभ्योविहंगम ॥ ११ ॥ सर्वथातुनगंतव्यमीदृशःक्वगमिष्यसि ॥ देशकालौप्रतीक्षस्वपक्षौत्वंप्रतिपत्स्यसे ॥ १२ ॥ उत्सहेयमहंकर्तुमद्यैवत्वांसपक्षकम् ॥ इहस्थस्त्वंहिलोकानांहितंकार्यंकरिष्यसि ॥ १३ ॥ त्वयापिखलुतत्कार्यंतयोश्चनृपपुत्रयोः ॥ ब्राह्मणानांगुरूणांचमुनीनांवासवस्यच ॥ १४ ॥ इच्छाम्यहमपिद्रष्टुंभ्रातरौरामलक्ष्मणौ ॥ नेच्छेचिरंधारयितुंप्राणांस्त्यक्ष्येकलेवरम् ॥ महर्षिस्त्वब्रवीदेवंदृष्टतत्त्वार्थदर्शनः ॥ १५ ॥ इत्यार्षे श्रीमद्रामायणे वा० आ० किष्किंधाकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ एतैरन्यैश्चबहुभिर्वाक्यैर्वाक्यविशारदः ॥ मांप्रशस्याभ्यनुज्ञाप्यप्रविष्टःसस्वमालयम् ॥ १ ॥ कंदरात्तुविसर्पित्वापर्वतस्यशनैःशनैः ॥ अहंविंध्यंसमारुह्यभवतःप्रतिपालये ॥ २ ॥

स्थातव्यं स्यादिति शेषः । पक्षवत्त्वे हि चापल्याद्गंतव्यमेवेतोन्यत्र त्वयेति भावः ॥ १३ ॥ लोकानामेवेत्येव न । अपि तु तयोर्नृपपुत्रयोस्तत्कार्यं दूतानां सीताबोधनरूपं त्वयापि कर्तुमर्हम् । तवापि देवांशत्वेन त्वद्धितमपि तदिति भावः । तत्कार्यस्य लोकसंबंधित्वं दर्शयति ब्राह्मणानामिति । तत्कार्यमिति शेषः ॥ १४ ॥ इच्छाम्यहमिति । दृष्टतत्त्वार्थदर्शनः दृष्टं सिद्धं तत्त्वार्थदर्शनं यस्य सः । महर्षिरेवं भाव्यर्थमब्रवीदतो हेतोरहमपि भ्रातरौ रामलक्ष्मणौ द्रष्टुमिच्छामि । यदि महर्षिरेवं मां प्रति नावक्ष्यत्तदा प्राणांश्चिरं धारयितुं नेच्छे नैच्छमपि तु कलेवरं त्यक्ष्ये इत्यैवैच्छमित्यर्थ इति कतकः । अन्ये तु निशाकरवाक्यमेवेदमहंपदार्थोपि स एवेत्याहुः ॥ १५ ॥ भैयमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये किष्किंधाकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ कतकरीत्या त्रिषष्टितमः सर्गः ॥ ६३ ॥ ॥ एतैरिति । मां प्रशस्य भाविदेवकार्यसाधकत्वेन स्तुत्वा अभ्यनुज्ञाप्य आमंत्र्य ॥ १ ॥ पर्वतकंदरादहं शनैःशनैर्विसर्पित्वा निःसृत्य विंध्यं विंध्यशिखरम् ॥ २ ॥

श्रीगणेशाय नमः ॥ ॥ सुंदरे यस्य दासोऽब्धिं तीर्त्वा दृष्ट्वा च मैथिलीम् ॥ दृष्टा सीतेत्यभ्यवोचत्तं रामं नौमि चिद्घनम् ॥ १ ॥ अथ समुद्रकूर्दनमिच्छतिस्म ततइति । ततः शत्रुकर्षणो हनुमान् रावण नीतायाः रावणहतायाः सीतायाः पदमवस्थितिस्थानमन्वेष्टुं चारणैर्देवजातिविशेषैराचरिते क्रियमाणसंचारे पथि आकाशमार्गे गमनाय इयेष ॥ १ ॥ निष्प्रतिद्वंद्वं सहायांतररहितं प्रतिबंधरहितं च । अन्यैर्दुष्करं कर्म लंघनपूर्वं सीतान्वेषणकर्म । समुदग्रमुन्नतं शिरो ग्रीवा च यस्य सः अतएव गवां पतिर्वृष इव आबभौ ॥ २ ॥ वैदूर्यवर्णशाद्वलप्रदेशस्य समुद्रजलवत् श्यामत्वमृदुत्वाभ्यामुरसा प्लवनसदृशक्रियाकालिकोरःप्रेषणेन प्रवृद्धः केसरीव विचचार ॥ ३ ॥ ४ ॥ नीललोहितो रक्तश्यामः । मांजिष्ठः कृष्णपांडुरइति कतकः । मांजिष्ठः पाटलइत्यन्ये । पद्मवर्णः प्रसिद्धः । सितासितैः कल्माषैः कृष्णपांडुरैरिति यावत् । स्वभावसिद्धैः शैलस्वभावसिद्धैरुक्तरूपैर्धातुभिः समलंकृतम् । कामरूपित्वादिविशेषणवद्भिर्यक्षादिभिरभीक्ष्णमाविष्टं यत्तस्य गिरिवर्यस्य तलं तत्र नागवरैराससमंताद्युते तिष्ठन्स कपिर्ह्रदे नाग इव

श्रीरामचंद्रायनमः ॥ ॥ ततोरावणनीतायाःसीतायाःशत्रुकर्षणः ॥ इयेषपदमन्वेष्टुंचारणाचरितेपथि ॥१॥ दुष्करंनिष्प्रतिद्वंद्वंचिकीर्षन्कर्मवानरः ॥ समुदग्रशिरोग्रीवोगवांपतिरिवाबभौ ॥ २ ॥ अथवैदूर्यवर्णेषुशाद्वलेषुमहाबलः ॥ धीरःसलिलकल्पेषुविचचारयथासुखम् ॥ ३ ॥ द्विजान्वित्रासयन्धीमानुरसापादपान्हरन् ॥ मृगांश्चसुबहून्निघ्नन्प्रवृद्धइवकेसरी ॥ ४ ॥ नीललोहितमांजिष्ठपद्मवर्णैःसितासितैः ॥ स्वभावसिद्धैर्विमलैर्धातुभिः समलंकृतम् ॥ ५ ॥ कामरूपिभिराविष्टमभीक्ष्णंसपरिच्छदैः ॥ यक्षकिन्नरगंधर्वैर्देवकल्पैःसपन्नगैः ॥ ६ ॥ सतस्यगिरिवर्यस्यतलेनागवरायुते ॥ तिष्ठन्कपिवरस्तत्रह्रदेनागइवाबभौ ॥ ७ ॥ ससूर्यायमहेंद्रायपवनायस्वयंभुवे ॥ भूतेभ्यश्चांजलिंकृत्वाचकारगमनेमतिम् ॥ ८ ॥ अंजलिंप्राङ्मुखंकुर्वन्पवनायात्मयोनये ॥ ततोहिववृधेगंतुंदक्षिणोदक्षिणांदिशम् ॥ ९ ॥ प्लवगप्रवरैर्दृष्टःप्लवनेकृतनिश्चयः ॥ ववृधेरामवृद्ध्यर्थंसमुद्रइवपर्वसु ॥१०॥ निष्प्रमाणशरीरःसँल्लिलंघयिषुरर्णवम् ॥ बाहुभ्यांपीडयामासचरणाभ्यांचपर्वतम् ॥११॥ सचचालाचलश्चाशुमुहूर्तंकपिपीडितः ॥ तरूणांपुष्पिताग्राणांसर्वंपुष्पमशातयत् ॥१२॥ तेनपादपमुक्तेनपुष्पौघेणसुगंधिना ॥ सर्वतःसंवृतःशैलोबभौपुष्पमयोयथा ॥ १३ ॥ तेनचोत्तमवीर्येणपीड्यमानः सपर्वतः ॥ सलिलंसंप्रसुस्रावमदमत्तइवद्विपः ॥ १४ ॥ पीड्यमानस्तुबलिनामहेंद्रस्तेनपर्वतः ॥ रीतीर्निर्वर्तयामासकांचनांजनराजतीः ॥ १५ ॥

आबभौ । गिरौ ह्रदसाम्यं श्यामलत्वेन ॥ ५ ॥ ६ ॥ ७ ॥ स्वयंभुवे पवनाय पूयते येन स्वज्ञानेन योगिवृंदं स पवनो भगवान्प्रत्यक्तत्त्वभूतो रामः । एतेन सकलविघ्ननिवारणायेष्टदेवताप्रार्थनापूर्वं यात्रा कर्तव्येति सदाचारो बोधितः ॥ ८ ॥ आत्मयोनये पवनाय स्वजनकवायवे इत्यर्थः । दक्षिणः कुशलः ॥ ९ ॥ रामवृद्ध्यर्थं रामाभ्युदयाय ॥ १० ॥ निष्प्रमाणशरीरः परिच्छेदातिक्रांतदेहः पीडयामास लिलंघयिषासन्नाहवशतः ॥ ११ ॥ एकेन पीडनव्यापारेण मुहूर्तपर्यंतं चलनम् । अशातयत् । पर्वतः कर्ता । चलनं करणम् ॥ १२ ॥ पुष्पमयो यथा पुष्पप्रचुरः स्वयमिवेत्यर्थः ॥ १३ ॥ उत्तमवीर्येण तेन पीड्यमानः स पर्वतः सलिलं प्रसुस्राव ॥ १४ ॥ उक्तार्थस्यैव विवरणम् पीड्यमानइति । कांचनांजनराजतीस्तदाभा रीतीः स्रोतःप्रकारान्निर्वर्तयामास । तदाभत्वमुपाधिकृतम् ॥ १५ ॥

किंच स शैलः समनःशिला विशालाः शिला मुमोच निपीडनात् । अतएव मध्यमेन मध्यभागेनार्चिषा ज्वालया जुष्टो योनलस्तस्य धूमराजिरिव बभावित्यर्थः । यस्येत्यध्याहारः । धूमराजिरिवेति ह्रस्वपाठः । तीर्थस्तु मध्यमेनार्चिषा मध्यमाख्यया ऽग्निजिह्वया जुष्टो विशिष्टोग्निर्धूमराजीरिव धूमनिचयानिवेत्यर्थः । धूमराजीरिवेति च पाठ इत्याह ॥ १६ ॥ हरिणा हनुमता पीड्यमानेन पर्वतेन पीड्यमानानि सत्त्वानि ॥ १७ ॥ स महासत्त्वेतिपाठे महासत्त्वा महाजंतवस्तेषां संनाद इति तीर्थः । स महान्सत्त्वसंनाद इति पाठांतरम् ॥ १८ ॥ स्वस्तिकः फणास्थनीलरेखा तच्चिह्नैः शिरोभिरुपलक्षिताः ददंशुः । पीडाजनितक्रोधवशात् ॥ १९ ॥ सविषैस्तैः सर्पैर्दष्टाः सत्यः पावकोद्दीप्ता इव जज्वलुः । बिभिदुर्भिन्ना बभूवुश्च ॥ २० ॥ शमितुं शमयितुम् ॥ २१ ॥ भूतैर्ब्रह्मरक्षःप्रभृतिमहाभूतैः ॥ २२ ॥ हित्वेत्यत्र विद्या

मुमोचचशिलाःशैलोविशालाःसमनःशिलाः ॥ मध्यमेनार्चिषाजुष्टोधूमराजिरिवानलः ॥१६॥ हरिणापीड्यमानेनपीड्यमानानिसर्वतः ॥ गुहाविष्टानिसत्त्वानिविनेदुर्विकृतैःस्वरैः ॥ ॥ १७ ॥ समहान्सत्त्वसन्नादःशैलपीडानिमित्तजः ॥ पृथिवींपूरयामासादिशश्चोपवनानिच ॥ १८ ॥ शिरोभिःपृथुभिर्नागाव्यक्तस्वस्तिकलक्षणैः ॥ वमंतःपावकंघोरंददंशुर्दशनैःशिलाः ॥ १९ ॥ तास्तदासविषैर्दष्टाःकुपितैस्तैर्महाशिलाः ॥ जज्वलुःपावकोद्दीप्ताबिभिदुश्चसहस्रधा ॥ २० ॥ यानित्वौषधजालानितस्मिञ्जातानिपर्वते ॥ विषघ्नान्यपिनागानांनशेकुःशमितुंविषम् ॥ २१ ॥ भिद्यतेऽयंगिरिर्भूतैरितिमत्वातपस्विनः ॥ त्रस्ताविद्याधरास्तस्मादुत्पेतुःस्त्रीगणैःसह ॥ २२ ॥ पानभूमिगतंहित्वाहैममासनभाजनम् ॥ पात्राणिचमहार्हाणिकरकांश्चहिरण्मयान् ॥ २३ ॥ लेह्यानुच्चावचान्भक्ष्यान्मांसानिविविधानिच ॥ आर्षभाणिचचर्माणिखड्गांश्चकनकत्सरून् ॥ २४ ॥ कृतकंठगुणाःक्षीवारक्तमाल्यानुलेपनाः ॥ रक्ताक्षाःपुष्कराक्षाश्चगगनंप्रतिपेदिरे ॥ २५ ॥ हारनूपुरकेयूरपारिहार्यधराःस्त्रियः ॥ विस्मिताःसस्मितास्तस्थुराकाशेरमणैःसह ॥ २६ ॥ "दर्शयंतोमहाविद्यांविद्याधरमहर्षयः ॥ सहितास्तस्थुराकाशेवीक्षांचक्रुश्चपर्वतम् ॥ १ ॥ शुश्रुवुश्चतदाशब्दमृषीणांभावितात्मनाम् ॥ चारणानांचसिद्धानांस्थितानांविमलेंबरे ॥ २ ॥" एषपर्वतसंकाशोहनुमान्मारुतात्मजः ॥ तितीर्षतिमहावेगःसमुद्रंवरुणालयम् ॥ २७ ॥ रामार्थंवानरार्थंचचिकीर्षन्कर्मदुष्करम् ॥ समुद्रस्यपरंपारंदुष्प्रापंप्राप्तुमिच्छति ॥ २८ ॥ इतिविद्याधरावाचःश्रुत्वातेषांतपस्विनाम् ॥ तमप्रमेयंददृशुःपर्वतेवानरर्षभम् ॥ २९ ॥ दुधुवेचसरोमाणिचकंपेचानलोपमः ॥ ननादचमहानादंसुमहानिवतोयदः ॥ ३० ॥ आनुपूर्व्याचवृत्तंतल्लांगूलंलोमभिश्चितम् ॥ उत्पतिष्यन्विचिक्षेपपक्षिराजइवोरगम् ॥ ३१ ॥

धराः कर्तारः ॥ २३ ॥ आर्षभाणि ऋषभचर्मनिर्मितानि चर्माणि फलकानि । त्सरुः खड्गमुष्टिः ॥ २४ ॥ कृताः कंठेषु गुणाः स्रजो यैस्ते क्षीवा मत्ताः । पुष्करं पद्मम् ॥ २५ ॥ पारिहार्यशब्दः श्रेष्ठवाचीति कतकः । पारिहार्यो वलय इति तीर्थः । एतदग्रे श्लोकद्वयं प्रक्षिप्तं कचिदिति कतकः ॥ २६ ॥ २७ ॥ २८ ॥ तेषां तपस्विनामाकाशचारितपस्विनां वाचः एष पर्वतसंकाश इत्यादिश्लोकद्वयरूपाः श्रुत्वा विद्याधरास्तमप्रमेयं ददृशुः । तद्वाक्श्रवणात्पूर्वं तु भूतैरयं गिरिर्भिद्यत इति ज्ञातवंतः ॥ २९ ॥ दुधुवे च स हनूमान् ॥ ३० ॥ आनुपूर्व्याद्वृत्तं त्रिवलयं लांगूलं विचिक्षेपेत्यन्वयः ॥ ३१ ॥

आविद्धमास्फालितं भृशं च ॥ ३२ ॥ बाहू संस्तंभयामासेत्युत्प्लवनसन्ताहाभिनयः बाह्वोः संस्तंभनं नाम पर्वतोपरि दृढप्रतिष्ठापनम् । कपिः कट्यां कटिप्रदेशे आससाद कायप्रसारणात् कृशोभूत् । उरःशिरसो रूर्ध्वप्रसारणे सपृष्ठचरणभागस्याधःसंकोचने तथात्वं कटिदृशस्येति बोध्यम् ॥ ३३ ॥ भुजौ संहृत्य अंसप्रदेशे संकुच्य शिरोधरां ग्रीवां कंठदेशे संकुच्य । तेजःपराभिभवसामर्थ्यम् । सत्त्वं बलं शारीरम् । वीर्यमान्तरं बलम् ॥ ३४ ॥ दूरान्मार्गमालोकयन् अतएवोर्ध्वप्रणिहितेक्षणः । हृदये प्राणप्रतिष्ठास्थाने ॥ ३५ ॥ कर्णौ निकुच्य संकुच्य । उत्पतनसन्नाहवशाद्धि कर्णसंकोचो भवति ॥ ३६ ॥ श्वसनस्य वायोरिव विक्रमो वेगो यस्य सः ॥ ३७ ॥ तद्वद्गमिष्यामि । अनेन तद्वदेव गत्वा कृतकार्य आगमिष्यामीति सूचितम् । तस्यैव प्रपंचो नहीत्यादि ॥ ३८ ॥ अनेनैव एवंविधेनैव ॥ ३९ ॥ आनयिष्यामि आने

तस्यलांगूलमाविद्धमतिवेगस्यपृष्ठतः ॥ ददृशेगरुडेनेवह्रियमाणोमहोरगः ॥ ३२ ॥ बाहूसंस्तंभयामासमहापरिघसन्निभौ ॥ आससादकपिःकट्यां चरणौसंचुकोचच ॥ ३३ ॥ संहृत्यचभुजौश्रीमांस्तथैवचशिरोधराम् ॥ तेजःसत्त्वंतथावीर्यमाविवेशसवीर्यवान् ॥ ३४ ॥ मार्गमालोकयन्दूरादूर्ध्वं प्रणिहितेक्षणः ॥ रुरोधहृदयेप्राणानाकाशमवलोकयन् ॥३५॥ पद्भ्यांदृढमवस्थानंकृत्वासकपिकुंजरः ॥ निकुच्यकर्णौहनुमानुत्पतिष्यन्महाबलः ॥ ॥ ३६ ॥ वानरान्वानरश्रेष्ठइदंवचनमब्रवीत् ॥ यथाराघवनिर्मुक्तःशरःश्वसनविक्रमः ॥ ३७ ॥ गच्छेत्तद्वद्गमिष्यामिलंकांरावणपालिताम् ॥ नहि द्रक्ष्यामियदितांलंकायांजनकात्मजाम् ॥ ३८ ॥ अनेनैवहिवेगेनगमिष्यामिसुरालयम् ॥ यदिवात्रिदिवेसीतांनद्रक्ष्यामिकृतश्रमः ॥ ३९ ॥ बद्ध्वा राक्षसराजानमानयिष्यामिरावणम् ॥ सर्वथाकृतकार्योहमेष्यामिसहसीतया ॥ ४० ॥ आनयिष्यामिवालंकांसमुत्पाट्यसरावणाम् ॥ एवमुक्त्वातुहनु मान्वानरोवानरोत्तमः ॥ ४१ ॥ उत्पपाताथवेगेनवेगवानविचारयन् ॥ सुपर्णमिवचात्मानंमेनेसकपिकुंजरः ॥ ४२ ॥ समुत्पततिवेगात्तुवेगात्तेनग रोहिणः ॥ संहृत्यविटपान्सर्वान्समुत्पेतुःसमंततः ॥ ४३ ॥ समत्तकोयष्टिभकान्पादपान्पुष्पशालिनः ॥ उद्वहन्नुरुवेगेनजगामविमलेंऽबरे ॥ ४४ ॥ ऊरुवेगोत्थितावृक्षामुहूर्तंकपिमन्वयुः ॥ प्रस्थितंदीर्घमध्वानंस्वबंधुमिवबांधवाः ॥ ४५ ॥ तमूरुवेगोन्मथिताःसालाश्चान्येनगोत्तमाः ॥ अनुजग्मुर्ह नूमंतंसैन्याइवमहीपतिम् ॥४६॥ सुपुष्पिताग्रैर्बहुभिःपादपैरन्वितःकपिः ॥ हनूमान्पर्वताकारोबभूवाद्भुतदर्शनः ॥ ४७ ॥ सारवंतोऽथयेवृक्षान्यमज्जँ ल्लवणांभसि ॥ भयादिवमहेंद्रस्यपर्वतावरुणालये ॥४८॥ सनानाकुसुमैःकीर्णःकपिःसांकुरकोरकैः ॥ शुशुभेमेघसंकाशःखद्योतैरिवपर्वतः ॥ ४९ ॥

ष्यामि सीतया सह मिलित्वेति शेषः ॥ ४० ॥ समुत्पाट्येति ओषधिपर्वतोत्पाटनवदिति भावः ॥ ४१ ॥ अविचारयन् लंघनक्लेशलेशमप्यगणयन् । तस्यैव प्रपंचनं सुपर्णमित्यादि ॥ ४२ ॥ वेगाद्धनूमति समुत्पतति सति ते नगरोहिणः पर्वतस्थवृक्षाः सर्वान्विटपान् सर्वाः शाखाः संहृत्य संक्षिप्य वेगात्समुत्पेतुः ॥ ४३ ॥ मत्ताः कोयष्टिभा येषु तान् । कोयष्टिको यष्टिभौ पर्यायौ ॥ ४४ ॥ ४५ ॥ सालाः सर्जे वृक्षाः । सैन्यशब्दोर्धर्चादिः ॥ ४६ ॥ पर्वताकारः तत्त्वं बृहत्त्वेन पुष्पितवृक्षवत्त्वेन च ॥ ४७ ॥ सारवंतो गुरुत्वातिशययुक्ताः खदिरादयस्ते गुरुत्वाल्लवणांभसि न्यमज्जन् । अर्थादन्ये लघवः सहैव गता इति बोध्यम् । महेंद्रस्य भयात्पक्षच्छेदभयात्पर्वता इव न्यमज्जन् ॥ ४८॥ नानाकुसुमैःस्वानुयायिद्रुमीयैः सांकुरकोरकैः कानिचित्कुसुमान्यंकुरितानि कानिचित्कोरकरूपाणि कानिचिद्विकसितानीत्यर्थः ॥ ४९ ॥

तस्य हनूमतो वेगेन विमुक्तास्ततो विभक्तास्ते वृक्षाः सलिले व्यवशीर्यंत । आर्षोऽडभावः । सुहृदो यथा बंधुप्रस्थापनार्थं गताः सुहृदो यथा तान्प्रस्थाप्य निवर्तंते तद्वत् ॥ ५० ॥ अपतदितिच्छेदः । यदपतत्तल्लघुत्वेनोपपन्नम् उपपत्तिमत् ॥ ५१ ॥ सर्ववर्णानां विद्युत्सुसत्त्वान्नानावर्णपुष्पोद्यानबद्धस्य सविद्युद्गणमेघोपमा ॥ ५२ ॥ रामाभिः रमणीयाभिः ॥ ५३ ॥ ५४ ॥ विवृतवक्त्रत्वात् पिबन्निवेति । अधोवक्त्रत्वे इयमुत्प्रेक्षा । ऊर्ध्ववक्त्रत्वे आकाशं पिपासुरिवेति ॥ ५५ ॥ विप्रकाशेते विशेषेण प्रकाशेतेस्म । अनलौ दावानलौ ॥ ५६ ॥ पिंगे पिंगलवर्णे परिमंडले परितोबद्धप्रभामण्डले स्थितौ चंद्रसूर्याविव एकगिरौ उदये लिंगलमंडलतयाऽवस्थितौ चंद्रसूर्याविवेत्यर्थः॥५७॥नासिकयायुक्तमिति शेषः।सध्याकालिकं सूर्यमंडलं यथा तथा बभावित्यर्थः॥५८॥५९॥ शुक्लदंष्ट्रत्वं स्वरूपकथनमात्रं न तु परिवेषिभास्करोपमोपयोगि॥६०॥

विमुक्तास्तस्यवेगेनमुक्तापुष्पाणितेद्रुमाः ॥ व्यवशीर्यंतसलिलेनिवृत्ताःसुहृदोयथा ॥ ५० ॥ लघुत्वेनोपपन्नंतद्विचित्रंसागरेऽपतत् ॥ द्रुमाणांविविधं पुष्पंकपिवायुसमीरितम् ॥ ५१ ॥ पुष्पौघेणसुगंधेननानावर्णेनवानरः ॥ बभौमेघइवोद्यन्वैविद्युद्गणविभूषितः ॥ ५२ ॥ तस्यवेगसमुद्धूतैःपुष्पैस्तोयमदृश्यत ॥ ताराभिरिवरामाभिरुदिताभिरिवांबरम् ॥ ५३ ॥ तस्यांबरगतौबाहूददृशातेप्रसारितौ ॥ पर्वताग्राद्विनिष्क्रांतौपंचास्याविवपन्नगौ ॥ ५४ ॥ पिबन्निवबभौचापिसोर्मिजालंमहार्णवम् ॥ पिपासुरिवचाकाशंददृशेसमहाकपिः ॥ ५५ ॥ तस्याविद्युत्प्रभाकारेवायुमार्गानुसारिणः ॥ नयनेविप्रकाशेतेपर्वतस्थाविवानलौ ॥५६॥ पिंगेपिंगाक्षमुख्यस्यबृहतीपरिमंडले ॥ चक्षुषीसंप्रकाशेतेचंद्रसूर्याविवस्थितौ ॥५७॥ मुखंनासिकयातस्यताम्रयाताम्रमावभौ ॥ संध्ययासमभिस्पृष्टंयथास्यात्सूर्यमंडलम् ॥५८॥ लांगूलंचसमाविद्धंप्लवमानस्यशोभते ॥ अंबरेवायुपुत्रस्यशक्रध्वजइवोच्छ्रितम् ॥ ५९ ॥ लांगूलचक्रोहनुमाञ्छुक्लदंष्ट्रोऽनिलात्मजः ॥ व्यरोचतमहाप्राज्ञःपरिवेषीवभास्करः ॥ ६० ॥ स्फिग्देशेनातिताम्रेणरराजसमहाकपिः ॥ महतादारितेनेवगिरिर्गैरिकधातुना ॥ ६१ ॥ तस्यवानरसिंहस्यप्लवमानस्यसागरम् ॥ कक्षांतरगतोवायुर्जीमूतइवगर्जति ॥ ६२ ॥ खेयथानिपतत्युल्काउत्तरांताद्विनिःसृता ॥ दृश्यतेसानुबंधाचतथासकपिकुंजरः ॥ ६३ ॥ पतत्पतंगसंकाशोव्यायतःशुशुभेकपिः ॥ प्रवृद्धइवमातंगःकक्ष्ययाबध्यमानया ॥ ६४ ॥ उपरिष्टाच्छरीरेणच्छाययाचावगाढया ॥ सागरेमारुताविष्टानौरिवासीत्तदाकपिः ॥६५॥ यंयंदेशंसमुद्रस्यजगामसमहाकपिः ॥ सतुतस्यांगवेगेनसोन्मादइवलक्ष्यते ॥ ६६ ॥

स्फिग्देशेन कटिप्रदेशेन । तन्मात्रस्यातिताम्रत्ववर्णनादन्यत्राल्पवद्वर्णत्वम् । अतएव दारितगैरिकधातुयुक्तगिर्युपमा ॥ ६१ ॥ जीमूत इति सप्तम्यंतमिति कतकः । गर्जति जगर्ज ॥ ६२ ॥ उत्तरांतादुत्तरोर्ध्वदिग्भागात् । सानुबंधा सूक्ष्मोल्कांतरानुबद्धा । इदं विशेषणं पुच्छसाहित्यात् ॥ ६३ ॥ पतत्पतंगसंकाशः गच्छत्सूर्यसंकाशः व्यायतो दीर्घः कपिर्वस्त्रेण बध्यमानया कक्ष्यया गजमध्यबंधनरज्ज्वा युक्तः प्रवृद्धो मातंग इव बभौ । कक्ष्या प्रकोष्ठे हर्म्यादेः कांच्यां मध्येभबंधने इति ॥ ६४ ॥ उपरिष्टात् खे गच्छता स्वशरीरेणाधः सागरेवगाढया स्वस्य च्छायया प्रतिबिंबेन लक्षितः सः सागरे मारुताविष्टा नौरिवासीत् । नौश्चोपरिविद्यमानपदार्थेन सह सागरे वायुवशाद्वेगेन चंचला गच्छतीति तदुपमा ॥ ६५ ॥ सोन्माद इव सापस्मार इव । घूर्णनफेनवमनविक्रोशनादिविकारसाम्यात् ॥ ६६ ॥

ऊर्मिजालानामभिन्नन् । कर्मणः शेषत्वविवक्षया षष्ठी । तान्यभिन्नन्निति यावत् । शैलसदृशेन । अनेन सागरोर्मीणामत्युन्नतत्वं सूचितम् ॥ ६७ ॥ कपिवातः कपिनोत्थापितो वातः । मेघवातो मेघमंडलगो वातः ॥ ६८ ॥ रोदसी द्यावापृथिव्यौ विकिरन्निव पृथक्कुर्वन्निव ॥ ६९ ॥ अतीत्यातीत्य गमनाद्गिणयन्निवेत्युत्प्रेक्षा ॥ ७० ॥ तस्य वेगेन समुद्धुष्टम् अतएव सजलदं जलदसहचरं मेघमंडलपर्यंतमूर्ध्वंगतमं बरस्थं जलमाततं विततं शरदभ्रमिव शरन्मेघ इव बभौ । शुक्लत्वादिति भावः ॥ ७१ ॥ विवृताः वेगाज्जलोत्सारणेन व्यक्तदेहाः । वस्त्रापकर्षणेन वस्त्रापहारेण शरीराणि अवयवाः ॥ ७२ ॥ ७३ ॥ छायाममाणव

सागरस्योर्मिजालानामुरसाशैलवर्ष्मणा ॥ अभिघ्नंस्तुमहावेगःपुप्लुवेसमहाकपिः ॥ ६७ ॥ कपिवातश्चबलवान्मेघवातश्चनिर्गतः॥सागरंभीमनिर्ह्रादं कंपयामासतुर्भृशम्॥६८॥विकर्षन्नूर्मिजालानिबृहंतिलवणांभसि ॥ पुप्लुवेकपिशार्दूलोविकिरन्निवरोदसी ॥ ६९ ॥ मेरुमंदरसंकाशानुद्गतान्सुमहार्णवे ॥ अत्यक्रामन्महावेगस्तरंगान्गणयन्निव ॥ ७० ॥ तस्यवेगसमुद्धुष्टंजलंसजलदंतदा ॥ अंबरस्थंविबभ्राजेशरदभ्रमिवाततम् ॥ ७१ ॥ तिमिनक्रझषाःकूर्मादृश्यंतेविवृतास्तदा ॥ वस्त्रापकर्षणेनेवशरीराणिशरीरिणाम् ॥ ७२ ॥ क्रममाणंसमीक्ष्याथभुजगाःसागरंगमाः ॥ व्योम्नितंकपिशार्दूलं सुपर्णमिवमेनिरे ॥ ७३ ॥ दशयोजनविस्तीर्णात्रिंशद्योजनमायता ॥ छायावानरसिंहस्यजवेचारुतराऽभवत् ॥ ७४ ॥ श्वेताभ्रघनराजीववायुपुत्रानुगामिनी ॥ तस्यसाशुशुभेछायापतितालवणांभसि॥ ७५ ॥ शुशुभेसमहातेजामहाकायोमहाकपिः ॥ वायुमार्गेनिरालंबेपक्षवानिवपर्वतः ॥ ॥ ७६ ॥ येनासौयातिबलवान्वेगेनकपिकुंजरः ॥ तेनमार्गेणसहसाद्रोणीकृतइवार्णवः ॥ ७७ ॥ आपातेपक्षिसंघानांपक्षिराजइवव्रजन् ॥ हनुमान्मेघजालानिप्रकर्षन्मारुतोयथा ॥ ७८ ॥ पांडुरारुणवर्णानिनीलमंजिष्ठकानिच ॥ कपिनाकृष्यमाणानिमहाभ्राणिचकाशिरे ॥७९॥ प्रविशन्नभ्रजालानिनिष्पतंश्चपुनःपुनः ॥ प्रच्छन्नश्चप्रकाशश्चचंद्रमाइवदृश्यते ॥ ८० ॥ प्लवमानंतुतंदृष्ट्वाप्लवगंत्वरितंतदा ॥ ववृषुस्तत्रपुष्पाणिदेवगंधर्वदानवाः ॥ ८१ ॥ ततापनहितंसूर्यःप्लवंतंवानरेश्वरम् ॥ सिषेवेचतदावायूरामकार्यार्थसिद्धये ॥ ८२ ॥ ऋषयस्तुष्टुवुश्चैनंप्लवमानंविहायसा ॥ जगुश्चदेवगंधर्वाःप्रशंसंतोवनौकसम् ॥ ८३ ॥

र्षेनेन तच्छरीरममाणमपि वर्णितप्रायम् । इयं माध्याह्निकी छाया ॥ ७४ ॥ श्वेताभ्रघनराजीव श्वेताभ्रयुक्तमेघपंक्तिवत्तस्य छाया शुशुभे । शुक्लदंष्ट्रादिना नानावर्णत्वादुक्तोपमानिर्वाहः ॥ ७५ ॥ ७६ ॥ द्रोणी हर्म्यादौ जलनिर्गमकाष्ठयंत्रं तज्जलधारायुक्त इव कृतो द्रोणीकृतः मेघेषु । तदाघातेन तेभ्यो जलस्रवणादिति भावः ॥ ७७ ॥ आपतंत्यस्मिन्नित्यापातो मार्गः । पांडुरत्वादिगुणकानि मेघजालानि प्रकर्षन्मारुतो यथा तथा बभूवेति शेषः ॥ ७८ ॥ कपिनाकृष्यमाणानि महाभ्राणि चकाशिरे मारुतेनाकृष्यमाणानीवेति शेषः ॥ ७९ ॥ ८० ॥ तत्र प्लवगे ॥ ८१ ॥ तं नहि ततापेत्यन्वयः । वायुः सिषेवे

श्रमापनयनायेति भावः ॥ ८२ ॥ ८३ ॥ कपिवरं विगतक्लमं वीक्ष्य नागादयस्तुष्टुवुः ॥ ८४ ॥ इक्ष्वाकुकुलस्य स्वोत्पादकस्य मानं सत्कारमर्थयते तथाभूतः ॥ ८५ ॥ विवक्षतां वागिंद्रियवत्प्राणिनाम् सर्ववाच्यः सर्वं वाच्यं निंदा यस्मिंतादृशो भविष्यामि । सर्वनिंदास्पदं भविष्यामीत्यर्थः ॥ ८६ ॥ उक्तमेव विवृणोति अहमिति । तत्तस्मादेषः अवसादितुं अवसन्नं श्रमं गंतुं नार्हसि । सागरेण विवर्धित इत्युक्त्या कश्चिद्देशः सगरखातस्याप्येतत्संबद्ध इति ज्ञायते ॥ ८७ ॥ शेषं मार्गशेषम् ॥ ८८ ॥ अंभसि स्वांभसि च्छन्नं हिरण्यनाभं हिरण्य प्रधानं तन्मयमिति यावत् । नाभिः प्रधाने कस्तूर्यामिति ॥ ८९ ॥ परिघ इति । पक्षच्छेदभयात् समुद्रप्रवेशानंतरं पातालस्थराक्षसनिरोधार्थं द्वारनिरोधकपरिघवन्मैनाकः स्थापित इत्यर्थः ॥ ९० ॥ ज्ञातवीर्याणां देवराजेनेति शेषः एषामसुराणाम् ॥ ९१ ॥

नागाश्चतुष्टुवुर्यक्षारक्षांसिविविधानिच ॥ प्रेक्ष्यसर्वैकपिवरंसहसाविगतक्लमम् ॥८४॥ तस्मिन्प्लवगशार्दूलेप्लवमानेहनूमति ॥ इक्ष्वाकुकुलमानार्थीचिंतयामाससागरः॥ ८५॥ साहाय्यंवानरेंद्रस्ययदिनाहंहनूमतः ॥ करिष्यामिभविष्यामिसर्ववाच्योविवक्षताम् ॥ ८६ ॥ अहमिक्ष्वाकुनाथेनसागरेणविवर्धितः ॥ इक्ष्वाकुसचिवश्चायंतन्नार्हत्यवसादितुम् ॥ ८७ ॥ तथामयाविधातव्यंविश्रमेतयथाकपिः ॥ शेषंचमयिविश्रांतःसुखीसोऽतितरिष्यति ॥ ८८ ॥ इतिकृत्वामतिंसाध्वींसमुद्रश्छन्नमंभसि ॥ हिरण्यानाभंमैनाकमुवाचगिरिसत्तमम् ॥ ८९ ॥ त्वमिहासुरसंघानांदेवराज्ञामहात्मना ॥ पातालनिलयानांहिपरिघःसन्निवेशितः ॥ ९० ॥ त्वमेषांज्ञातवीर्याणांपुनरेवोत्पतिष्यताम् ॥ पातालस्याप्रमेयस्यद्वारमावृत्यतिष्ठसि ॥ ९१ ॥ तिर्यगूर्ध्वमधश्चैवशक्तिस्तेशैलवर्धितुम् ॥ तस्मात्संचोदयामित्वामुत्तिष्ठगिरिसत्तम ॥ ९२ ॥ सएषकपिशार्दूलस्त्वामुपर्येतिवीर्यवान् ॥ हनूमान्रामकार्यार्थीभीमकर्माखमाप्लुतः ॥ श्रमंचप्लवगेंद्रस्यसमीक्ष्योत्थातुमर्हसि ॥९३॥ हिरण्यगर्भोमैनाकोनिशम्यलवणांभसः ॥ उत्पपातजलात्तूर्णंमहाद्रुमलतावृतः॥ ९४ ॥ ससागरजलंभित्त्वाबभूवात्युच्छ्रितस्तदा ॥ यथाजलधरंभित्त्वादीप्तरश्मिर्दिवाकरः ॥ ९५ ॥ समहात्मामुहूर्तेनपर्वतःसलिलावृतः ॥ दर्शयामासशृंगाणिसागरेणनियोजितः ॥ ९६ ॥ शातकुंभमयैःशृंगैःसकिन्नरमहोरगैः ॥ आदित्योदयसंकाशैरुल्लिखद्भिरिवांबरम् ॥ ९७ ॥ तस्यजांबूनदैःशृंगैःपर्वतस्यसमुत्थितैः ॥ आकाशंशस्त्रसंकाशमभवत्कांचनप्रभम् ॥ ९८ ॥ जातरूपमयैःशृंगैर्भ्राजमानैर्महाप्रभैः ॥ आदित्यशतसंकाशःसोऽभवद्गिरिसत्तमः ॥ ९९ ॥ समुत्थितमसंगेनहनूमानग्रतःस्थितम् ॥ मध्येलवणतोयस्यविघ्नोऽयमितिनिश्चितः ॥ १०० ॥

शक्तिस्ते अस्तीति शेषः । तस्मात्पिहितपातालमुखएव सन् वृद्धिशक्त्या वर्धमानः सन्नूर्ध्वमुत्तिष्ठ ॥ ९२ ॥ उपर्येति । तत्रोपरि प्रदेशं प्राप्नोति । तस्माद्विश्रामाय त्वमुत्तिष्ठेति पूर्वेणान्वयः । एतदुत्तरम् हनूमान् रामकार्यार्थी भीमकर्मा खमाप्लुतः । श्रमं च प्लवगेंद्रस्य समीक्ष्योत्थातुमर्हसीति प्राचीनः पांक्तः पाठः । अत्र खमाप्लुत इत्यनंतरं केचित् श्लोकाः प्रक्षिप्ताः परैरिति कतकः । यतो रामकार्यार्थी यतश्च श्राम्यति ततस्तस्य श्रमं समीक्ष्योत्थातुमर्हसि ॥ ९३ ॥ लवणांभसो वचो निशम्येत्यर्थः ॥ ९४ ॥ ९५ ॥ ९६ ॥ एतदुत्तरं शातकुंभमयैरित्यादि अत्रापि द्वित्रश्लोकप्रक्षेपः परेषाम् । हिरण्यनाभत्वविवरणं शातकुंभमयैरिति । आदित्योदयसंकाशैरिति । उपलक्षित इति शेषः ॥ ९७ ॥ शस्त्रसंकाशं शस्त्रवत् श्याममाकाशं कांचनप्रभमभवत् ॥ ९८ ॥ ९९ ॥ असंगेन अविलंबेन ॥ १०० ॥

पातयामास तमत्यर्थमुच्छ्रितं दृष्ट्वा तच्छृंगं पातयामासेत्यर्थः ॥१०१॥ सादितोऽवसादितोऽधःकृत इति यावत् । जहर्ष च ननाद चेति प्राचीनः पाठः । बलवैभवं दृष्ट्वा जहर्ष स्वोत्थानप्रयोजनावेदनाय ननाद शब्दं कृतवान् । ननंदेति त्वाधुनिककल्पितः पाठः ॥ १०२ ॥ तदेव विवृणोति तमिति ॥१०३॥१०४॥ राघवस्य कुले जातैः सगरपुत्रैः ॥१०५॥ कृतमुपकारः ॥ १०६ ॥ सोयं राघवकुलजः सागर स्तत्प्रतिकारार्थी तत्कुलप्रत्युपकारार्थी त्वत्तः सत्क्रियमाणाद्द्वारभूतात्संमानं राघवकुलपूजामर्हति । त्वन्निमित्तं त्वत्सत्कारार्थं प्रचोदितः प्रेरितः ॥ १०७ ॥ प्रेरणाप्रकारो योजनानामिति । योजनानां शतमपि प्रक्र मितुं समाप्लुत एष कपिः शेषं प्रक्रांतावशेषं तव सानुषु विश्रांतः सन्प्रक्रमतामिति । यतः प्रेरितोस्मि अतो मयि तिष्ठ । स्थित्वा विश्रम्य पश्चाद्गम्यतामिति योजना । अत्र तिष्ठ त्वमित्यर्धं प्रक्षिप्तमिति केचित्

सतमुच्छ्रितमत्यर्थंमहावेगोमहाकपिः ॥ उरसापातयामासजीमूतमिवमारुतः ॥ १०१॥ सतदासादितस्तेनकपिनापर्वतोत्तमः ॥ बुद्ध्वातस्यहरेर्वेगं जहर्षचननादच ॥ १०२ ॥ तमाकाशगतंवीरमाकाशेससमुपस्थितः ॥ प्रीतोहृष्टमनावाक्यमब्रवीत्पर्वतःकपिम्॥ १०३ ॥ मानुषंधारयन्रूपमात्मनः शिखरेस्थितः ॥ दुष्करंकृतवान्कर्मत्वमिदंवानरोत्तम ॥ १०४ ॥ निपत्यममशृंगेषुसुखंविश्रम्यगम्यताम् ॥ राघवस्यकुलेजातैरुदधिःपरिवर्धितः ॥ ॥ १०५ ॥ सत्वांरामहितेयुक्तंप्रत्यर्चयतिसागरः ॥ कृतेचप्रतिकर्तव्यमेषधर्मःसनातनः ॥ १०६॥ सोऽयंतत्प्रतिकारार्थीत्वत्तःसंमानमर्हति ॥ त्वन्नि मित्तमनेनाहंबहुमानात्प्रचोदितः ॥ १०७ ॥ योजनानांशतंचापिकपिरेषखमाप्लुतः ॥ तवसानुषुविश्रांतःशेषंप्रक्रमतामिति ॥ १०८ ॥ तिष्ठत्वंह रिशार्दूलमयिविश्रम्यगम्यताम् ॥ तदिदंगंधवत्स्वादुकंदमूलफलंबहु ॥ १०९ ॥ तदास्वाद्यहरिश्रेष्ठविश्रांतोऽथगमिष्यसि ॥ अस्माकमपिसंबंधःक पिमुख्यत्वयाऽस्तिवै ॥ प्रख्यातस्त्रिषुलोकेषुमहागुणपरिग्रहः ॥ ११० ॥ वेगवंतःप्लवंतोयेप्लवगामारुतात्मज ॥ तेषांमुख्यतमंमन्येत्वामहंकपिकुंजर ॥ १११ ॥ अतिथिःकिलपूजार्हःप्राकृतोपिविजानता ॥ धर्मंजिज्ञासमानेनकिंपुनर्यादृशोभवान् ॥ ११२ ॥ त्वंहिदेववरिष्ठस्यमारुतस्यमहात्मनः पुत्रस्तस्यैववेगेनसदृशःकपिकुंजर ॥ ११३ ॥ पूजितेत्वयिधर्मज्ञेपूजांप्राप्नोतिमारुतः ॥ तस्मात्त्वंपूजनीयोमेशृणुचाप्यत्रकारणम् ॥ ११४ ॥ पूर्वंकृतयुगेतातपर्वताःपक्षिणोभवन् ॥ तेपिजग्मुर्दिशःसर्वागरुडाइववेगिनः ॥११५॥ ततस्तेषुप्रयातेषुदेवसंघाःसहर्षिभिः ॥ भूतानिचभयंजग्मुस्ते षांपतनशंकया ॥ ११६ ॥ ततःक्रुद्धःसहस्राक्षःपर्वतानांशतक्रतुः ॥ पक्षांश्चिच्छेदवज्रेणततःशतसहस्रशः ॥ ११७ ॥ समामुपगतःक्रुद्धोवज्रमुद्यम्यदे वराट् ॥ ततोऽहंसहसाक्षिप्तःश्वसनेनमहात्मना ॥ ११८ ॥ अस्मिँल्लवणतोयेचप्रक्षिप्तःप्लवगोत्तम ॥ गुप्तपक्षःसमग्रश्चतवपित्राभिरक्षितः ॥ ११९ ॥

॥ १०८ ॥ तत्तस्मात्यदिदं कंदादि मयि बहु दृश्यते तदास्वाद्येत्यन्वयः ॥ १०९ ॥ अस्माकमपि संबंधस्त्वत्साहाय्यकरणप्रयोजक इति शेषः । संबंधं वक्तुमाह प्रख्यातइति । भवान्महागुणपरिग्रहः । बहुव्रीहिरयम् । अतस्त्रिषुलोकेषु प्रख्यातः ॥ ११० ॥ तादृशं त्वां ये वेगवंतः प्लवगाः संति तेषां मुख्यतमं मन्ये ॥ १११ ॥ भवान्यादृशस्तादृशः पूज्य इति किंपुनरिति योजना ॥ ११२ ॥ विवक्षि तमाशस्यमेवाह त्वंहीति ॥ ११३ ॥ हनूमद्द्वारकमारुतपूजायां कारणांतरमप्याह शृणु चापीति ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ क्षिप्तः आकाशमुत्क्षिप्तः ॥ ११८ ॥ ११९ ॥

तत उक्तकारणादेषसंबंधः पूजाप्रयोजकः स्वरक्षकपुत्रत्वरूपः ॥१२०॥ अस्मिन्कार्ये मत्युपकाररूपे एवं गते सति चिरात्प्राप्ते सति मया समुद्रेण चेति शेषः । त्वं पूजास्वीकारेण तयोः प्रीतिं कर्तुमर्हसि ॥ ॥ १२१ ॥ मान्यस्य वायुसंबंधात्तव पूज्यस्य मम प्रीतिं कुरु इति शेषः ॥ १२२ ॥ मन्युः पूजानंगीकारजं दैन्यम् ॥ १२३ ॥ १२४ ॥ शैलमालभ्य स्पृष्ट्वा । प्रहसन्निवेति । एतावत्प्लवनेपि श्रममारोप्य वृथायं प्रयास एतयोरिति प्रहासः ॥ १२५ ॥ उपपन्नाभिस्तत्काले युक्ताभिः ॥ १२६ ॥ अथ ऊर्ध्वं यत्र देशे स्थितस्ततोपि:बहूर्ध्वं पितुः पंथानं वायुमार्गम् ॥ १२७ ॥ भूय ऊर्ध्वं ततोपि बहु

ततोऽहंमानयामित्वांमान्योसिममममारुते ॥ त्वयाममैषसंवंधःकपिमुख्यमहागुणः ॥ १२० ॥ अस्मिन्नेवंगतेकार्येसागरस्यममैवच ॥ प्रीतिंप्रीतमनाः कर्तुंत्वमर्हसिमहामते ॥ १२१ ॥ श्रमंमोक्षयपूजांचगृहाणहरिसत्तम ॥ प्रीतिंचममममान्यस्यप्रीतोऽस्मितवदर्शनात् ॥ १२२ ॥ एवमुक्तःकपिश्रेष्ठस्तंनगोत्तममब्रवीत् ॥ प्रीतोस्मिकृतमातिथ्यंमन्युरेषोपनीयताम् ॥ १२३ ॥ त्वरतेकार्यकालोमेअहश्चाप्यतिवर्तते ॥ प्रतिज्ञाचमयादत्तानस्थातव्यमिहांतरा ॥ १२४ ॥ इत्युक्त्वापाणिनाशैलमालभ्यहरिपुंगवः ॥ जगामाकाशमाविश्यवीर्यवान्प्रहसन्निव ॥ १२५ ॥ सपर्वतसमुद्राभ्यांवहुमानादवेक्षितः ॥ पूजितश्चोपपन्नाभिराशीर्भिरभिनंदितः ॥ १२६ ॥ अथोर्ध्वंदूरमाप्लुत्यहित्वाशैलमहार्णवौ ॥ पितुःपंथानमासाद्यजगामविमलेंबरे ॥१२७॥ भूयश्चोर्ध्वगतिंप्राप्यगिरिंतमवलोकयन् ॥ वायुसूनुर्निरालंबोजगामकपिकुंजरः ॥ १२८ ॥ तद्द्वितीयंहनुमतोदृष्ट्वाकर्मसुदुष्करम् ॥ प्रशशंसुःसुराःसर्वेसिद्धाश्चपरमर्षयः ॥ १२९ ॥ देवताश्चाभवन्हृष्टास्तत्रस्थास्तस्यकर्मणा ॥ कांचनस्यसुनाभस्यसहस्राक्षश्चवासवः ॥ १३० ॥ उवाचवचनंधीमान्परितोषात्सगद्गदम् ॥ सुनाभंपर्वतश्रेष्ठंस्वयमेवशचीपतिः ॥ १३१ ॥ हिरण्यनाभशैलेंद्रपरितुष्टोऽस्मितेभृशम् ॥ अभयंतेप्रयच्छामिगच्छसौम्ययथासुखम् ॥ १३२ ॥ साह्यंकृतंतेसुमहद्विश्रांतस्यहनूमतः ॥ क्रमतोयोजनशतंनिर्भयस्यभयेसति ॥ १३३ ॥ रामस्यैषहितायैवयातिदाशरथेःकपिः ॥ सत्क्रियांकुर्वताशक्त्यातोषितोऽस्मिदृढंत्वया ॥ १३४ ॥ ससतत्प्रहर्षमलभद्विपुलंपर्वतोत्तमः ॥ देवतानांपतिंदृष्ट्वापरितुष्टंशतक्रतुम् ॥ १३५ ॥ सवैदत्तवरःशैलोबभूवावस्थितस्तदा ॥ हनुमांश्चमुहूर्तेनव्यतिचक्रामसागरम् ॥ १३६ ॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ अब्रुवन्सूर्यसंकाशांसुरसांनागमातरम् ॥ १३७॥ अयंवातात्मजःश्रीमान्प्लवतेसागरोपरि ॥ हनूमान्नामतस्यत्वंमुहूर्तंविघ्नमाचर ॥ १३८ ॥



ऊर्ध्वं तं गिरिमधःप्रदेशवर्तिनमवलोकयन् ॥ १२८ ॥ तद्द्वितीयं कर्म अविश्रम्यैव पुनरत्यूर्ध्वं पतनरूपं कर्म ॥ १२९ ॥ तत्रस्थाः मैनाकस्था गगनस्था वा । तस्य कांचनस्य कांचनमयस्य सुनाभस्य शोभनमध्यस्य मैनाकस्य कर्मणा जलादुत्थानरूपेण देवता इंद्रश्च तुष्टः ॥ १३० ॥ १३१ ॥ अभयं स्वकृतपक्षच्छेदशंकाजनितभयाभावम् ॥ १३२ ॥ निर्भयस्यापि भये सतीवोपचारार्थं साह्यं कृतं यतोऽतः परितुष्ट इत्यन्वयः ॥ १३३ ॥ १३४ ॥ १३५ ॥ अवस्थितः जलांतरमग्न इत्यर्थः । सागरं मैनाकाधिष्ठितसागरप्रदेशम् ॥ १३६ ॥ अथ देवैर्लंकां प्रविष्टस्य हनुमतः कार्यक्षमबलपरीक्षणार्थं सुरसा

मवर्तनं तत इत्यादि ॥ १३७ ॥ १३८ ॥ नभःस्पृशमिति । पुंस्त्वमार्षम् । वक्त्रशब्देर्दीर्घं चोदिर्वा ॥ १३९ ॥ बलं ज्ञानबलम् उपायबलं च पराक्रमं च ज्ञातुमिच्छामहे । तदेवविवृणोति त्वामिति ॥१४०॥ ॥ १४१ ॥ भयस्य च भयावहमिति पाठे सर्वलोकभयस्यापीत्यर्थः ॥१४२॥ ईश्वरैर्देवैः ॥१४३॥ एव वरः पुर आगतस्य वदनप्रवेशरूपः इत्युक्तेतिशेषः । सत्वरा त्वरासहिता सा सुरसा ॥१४४॥ प्रहृष्टवदनः दत्तभक्षणवराया अपि सकाशान्निस्तारोपायज्ञानजो हर्षः ॥ १४५ ॥ कार्यविषक्तस्य मायामृगवधे प्रसक्तस्य बद्धवैरस्य शूर्पणखाविरूपकरणादिकर्मणेति शेषः ॥ १४६ ॥ रामसाह्यकरणे हेतुः

राक्षसंरूपमास्थायसुघोरंपर्वतोपमम् ॥ दंष्ट्राकरालंपिंगाक्षंवक्त्रंकृत्वानभःस्पृशम् ॥ १३९ ॥ बलमिच्छामहेज्ञातुंभूयश्चास्यपराक्रमम् ॥त्वांविजेष्यत्युपायेनविषादंवागमिष्यति ॥ १४० ॥ एवमुक्तातुसादेवीदेवतैरभिसत्कृता ॥ समुद्रमध्येसुरसाबिभ्रतीराक्षसंवपुः ॥ १४१ ॥ विकृतंचविरूपंचसर्वस्यचभयावहम् ॥ प्लवमानंहनूमंतमावृत्येदमुवाचह ॥ १४२ ॥ ममभक्ष्यःप्रदिष्टस्त्वमीश्वरैर्वानरर्षभः ॥ अहंत्वांभक्षयिष्यामिप्रविशेदंममाननम् ॥ १४३ ॥ वरएषपुरादत्तोममधात्रेतिसत्वरा ॥ व्यादायवक्त्रंविपुलंस्थितासामारुतेःपुरः ॥ १४४ ॥ एवमुक्तःसुरसयाप्रहृष्टवदनोऽब्रवीत् ॥ रामोदाशरथिर्नामप्रविष्टोदंडकावनम् ॥ लक्ष्मणेनसहभ्रात्रावैदेह्याचापिभार्यया ॥ १४५ ॥ अस्यकार्यविषक्तस्यबद्धवैरस्यराक्षसैः ॥ तस्यसीताहताभार्यारावणेनयशस्विनी ॥ १४६ ॥ तस्याःसकाशंदूतोऽहंगमिष्येरामशासनात् ॥ कर्तुमर्हसिरामस्यसाह्यंविषयवासिनि ॥१४७॥ अथवामैथिलींदृष्ट्वारामंचाक्लिष्टकारिणम् ॥ आगमिष्यामितेवक्त्रंसत्यंप्रतिशृणोमिते ॥ १४८ ॥ एवमुक्ताहनुमतासुरसाकामरूपिणी ॥ अब्रवीन्नातिवर्तेन्मांकश्चिदेषवरोमम ॥ १४९ ॥ संप्रयांतंसमुद्वीक्ष्यसुरसावाक्यमब्रवीत् ॥ बलंजिज्ञासमानासानागमाताहनूमतः ॥ १५० ॥ निविश्यवंदनंमेद्यगंतव्यंवानरोत्तम ॥ वरएषपुरादत्तोममधात्रेतिसत्वरा ॥ १५१ ॥ व्यादायविपुलंवक्त्रंस्थितासामारुतेःपुरः ॥ एवमुक्तःसुरसयाक्रुद्धोवानरपुंगवः ॥१५२॥ अब्रवीत्कुरुवैवक्त्रंयेनमांविषहिष्यसि ॥ इत्युक्तासुरसांक्रुद्धोदशयोजनमायताम् ॥१५३॥ दशयोजनविस्तारोहनूमानभवत्तदा ॥ चकारसुरसाप्यास्यंविंशद्योजनमायतम् ॥ १५४ ॥

रामस्य विषयवासिनीति । तस्य सर्वाधिपतित्वात् ॥ १४७ ॥ रामं चेति । दृष्ट्वा वृत्तांतं च विज्ञाप्येति शेषः ॥ १४८ ॥ कश्चिदपि मां नातिवर्तेत् अभक्षितो न गच्छेदित्यर्थः । परस्मैपदमार्षम् ॥ १४९ ॥ तं प्रयांतं पुनरागच्छामीत्युक्त्या वरदानं श्रुत्वापि प्रयाणोन्मुखम् हनुमतस्तस्य बलं जिज्ञासमाना सुरसा वाक्यमब्रवीत् ॥ १५० ॥ निविश्येति । प्रविश्यैव गंतव्यं यदि शक्तिरस्तीत्यर्थः । इत्यब्रवीदित्यन्वयः ॥ १५१ ॥ १५२ ॥ दशयोजनमायताम् आयतवक्त्रामित्यर्थः ॥ १५३ ॥ चकार सुरसाप्यास्यं विंशद्योजनमायतमित्यनंतरं तद्दृष्ट्वा व्यादितं त्वास्यमिति प्राचीनः पाठः । तद्दृष्ट्वा मेघसंकाशमित्यादिशतयोजन

मायतामित्यंतश्लोकास्तु प्रक्षिप्ता इति कतकः ॥ १५४ ॥ व्यादितं व्यात्तं दीर्घजिह्वत्वादिगुणविशिष्टं व्यात्तं तत्तस्या आस्यं दृष्ट्वेत्यन्वयः ॥ १५५ ॥ १५६ ॥ १५७ ॥ इदं वचनमितीदंशब्दार्थः । प्रविष्टइति दाक्षायणि दक्षप्रजापतिसंताने अतएव नतिः सत्य आसीत् सत्यो जात इत्यर्थः । वदनप्रवेशरूपत्वात्तस्य ॥ १५८ ॥ १५९ ॥ अथ साऽनुगृह्णाति अर्थसिद्ध्यै इति । रावणेन त्वद्विज्ञापितवृत्तांतेन समानय संगमय ॥ १६० ॥ तत्तृतीयं सुरसावक्त्रनिष्क्रमणरूपम् ॥ १६१ ॥ १६२ ॥ वारिधारासेवितत्वादिविशेषणके चंद्रसूर्यपथे जगामेत्यन्वय एकोनसप्ततितमेन पतगैः पक्षिभिः कैशिकं

तद्दृष्ट्वाव्यादितंत्वास्यंवायुपुत्रःसबुद्धिमान् ॥ दीर्घजिह्वंसुरसयासुभीमंनरकोपमम् ॥ १५५ ॥ “ तद्दृष्ट्वामेघसंकाशंविंशद्योजनमायतम् ॥ हनुमांस्तु ततःक्रुद्धस्त्रिंशद्योजनमायतः ॥ चकारसुरसावक्रंचत्वारिंशत्तथोच्छ्रितम् ॥ बभूवहनुमान्वीरःपंचाशद्योजनोच्छ्रितः ॥ चकारसुरसावक्रंषष्टियोजनमुच्छ्रितम् ॥ तदेवहनुमान्वीरःसप्ततियोजनोच्छ्रितः ॥ चकारसुरसावक्त्रमशीतियोजनोच्छ्रितम् ॥ हनूमाननलप्रख्योनवतियोजनोच्छ्रितःचकारसुरसावक्रंशतयोजनमायतम् ॥ ” ससंक्षिप्यात्मनःकायंजीमूतइवमारुतिः ॥ तस्मिन्मुहूर्तेहनुमान्बभूवांगुष्ठमात्रकः ॥ १५६ ॥ सोऽभिपद्याथतद्वक्रंनिष्पत्यचमहाबलः ॥ अंतरिक्षेस्थितःश्रीमानिदंवचनमब्रवीत् ॥ १५७॥ प्रविष्टोऽस्मिहितेवक्रंदाक्षायणिनमोऽस्तुते ॥ गमिष्येयत्रवैदेहीसत्यश्चासीद्वरस्तव॥१५८॥तंदृष्ट्वावदनान्मुक्तंचंद्रंराहुमुखादिव ॥ अब्रवीत्सुरसादेवीस्वेनरूपेणवानरम् ॥ १५९ ॥ अर्थसिद्ध्यैहरिश्रेष्ठगच्छसौम्ययथासुखम् ॥ समानयचवैदेहींराघवेणमहात्मना ॥ १६० ॥ तत्तृतीयंहनुमतोदृष्ट्वाकर्मसुदुष्करम् ॥ साधुसाध्वितिभूतानिप्रशशंसुस्तदाहरिम् ॥ १६१ ॥ ससागरमनाधृष्यमभ्येत्यवरुणालयम् ॥ जगामाकाशमाविश्यवेगेनगरुडोपमः ॥ १६२ ॥ सेवितेवारिधाराभिःपतगैश्चनिषेविते ॥ चरितेकैशिकाचार्यैरैरावतनिषेविते ॥ १६३ ॥ सिंहकुंजरशार्दूलपतगोरगवाहनैः ॥ विमानैःसंपतद्भिश्चविमलैःसमलंकृते ॥ १६४ ॥ वज्राशनिसमस्पर्शैःपावकैरिवशोभिते ॥ कृतपुण्यैर्महाभागैःस्वर्गजिद्भिरधिष्ठिते ॥ १६५ ॥ वहताहव्यमत्यंतंसेवितेचित्रभानुना ॥ ग्रहनक्षत्रचंद्रार्कतारागणविभूषिते ॥ १६६ ॥ महर्षिगणगंधर्वनागयक्षसमाकुले ॥ विविक्तेविमलेविश्वेविश्वावसुनिषेविते ॥ १६७ ॥ देवराजगजाक्रांतेचंद्रसूर्यपथेशिवे ॥ वितानेजीवलोकस्यविमलेब्रह्मनिर्मिते ॥१६८ ॥ बहुशःसेवितेवीरैर्विद्याधरगणैर्वृते ॥ जगामवायुमार्गेचगरुत्मानिवमारुतिः ॥ १६९ ॥ हनुमान्मेघजालानिप्राकर्षन्मारुतोयथा ॥कालागुरुसवर्णानिरक्तपीतसितानिच ॥ १७० ॥ कपिनाकृष्यमाणानिमहाभ्राणिचकाशिरे ॥ प्रविशन्नभ्रजालानिनिष्पतंश्चपुनःपुनः ॥ १७१ ॥ प्रावृषींदुरिवाभातिनिष्पतन्प्रविशंस्तथा ॥ प्रदृश्यमानःसर्वत्रहनूमान्मारुतात्मजः ॥ १७२ ॥ भेजेंऽबरंनिरालंबंपक्षयुक्तइवाद्रिराट्॥ प्लवमानंतुतंदृष्ट्वासिंहिकानामराक्षसी ॥ १७३ ॥ मनसाचिंतयामासप्रवृद्धाकामरूपिणी ॥ अद्यदीर्घस्यकालस्यभविष्याम्यहमाशिता ॥ १७४॥

गानन्नृत्यविद्यातदाचार्यैस्तुंबुरुप्रभृतिगंधर्वैश्चरिते सेविते । ऐरावतम् ऋजुदीर्घमिंद्रधनुरिति तीर्थः । गजविशेष इत्यन्ये ॥ १६३ ॥ पतगोरगाः पक्षिसर्पाः ॥ १६४ ॥ वज्राशनिसमस्पर्शैस्तद्वत्प्राणहरैः पावकैः पंचाग्निभिरिव स्वर्गजिद्भिरधिष्ठिते । समाघातैरिति पाठे ताभ्यां तुल्यआघातोऽभिघातो येषां तैरित्यर्थः ॥ १६५ ॥ चित्रभानुना पंचाग्निभिन्नोयमग्निश्चित्रभानुः ॥ १६६ ॥ विश्वे विश्वाश्रये । विश्वावसुर्गंधर्वराजः ॥ १६७ ॥ देवराजानां गजाः पुंडरीकादयः । विताने अवकाशावरणवस्त्रे चांदवा इति प्रसिद्धे ॥ १६८ ॥ १६९ ॥ १७० ॥ १७१ ॥ १७२ ॥ १७३ ॥ आशिता कृतभोजना ॥ १७४ ॥

समाक्षिपन्नग्राह छायाग्रहणेन तद्वस्तुनिरोधशक्तिस्तस्या ब्रह्मदत्ता ॥ १७५ ॥ पंगूकृतः स्तब्धगतिः पराक्रमो यस्य ॥ १७६ ॥ महानौर्यथा पंगूकृतपराक्रमा स्तब्धगतिः प्रतिलोमेन वातेन क्रियते । गम्यदेशगतिनिरोधएवात्र स्तब्धगतित्वम् । यद्वा तेन यथा विपरीतगतिवारणाय यंत्रैः स्तब्धगतिः कार्यते । तथाहं केनचिद् स्तब्धगतिः कृतः ॥ १७७ ॥ महासत्त्वं स्त्रीरूपं प्राणिनम् ॥ १७८ ॥ १७९ ॥ अर्थतत्त्वेन च्छायाग्रहणरूपार्थक्रियया ॥ १८० ॥ पातालांबरसंनिभं पातालाकाशमध्यभागसदृशम् ॥ १८१ ॥ १८२ ॥ कायमात्रं स्वशरीरकवलनपर्याप्तं शरीरप्रमाणमित्यर्थ इति तीर्थः । मात्रशब्दा ल्पवाचीति कतकः । मर्माणि च भेदनार्थं ददर्शेत्यन्वयः । तस्या वक्त्रे आत्मानं मुहुः संक्षिप्य अधिकं संकुच्य निपपातेत्यन्वयः ॥ १८३ ॥ १८४ ॥ १८५ ॥ मनःसंपातविक्रमः मनोवेगतुल्यवेगः ।

इदंममहासत्त्वंचिरस्यवशमागतम् ॥ इतिसंचिंत्यमनसाछायामस्यसमाक्षिपत् ॥ १७५ ॥ छायायांगृह्यमाणायांचिंतयामासवानरः ॥ समाक्षिप्तोऽस्मिसहसापंगूकृतपराक्रमः ॥ १७६ ॥ प्रतिलोमेनवातेनमहानौरिवसागरे ॥ तिर्यगूर्ध्वमधश्चैववीक्षमाणस्तदाकपिः ॥ १७७ ॥ ददर्शसमहासत्त्वमुत्थितंलवणांभसि ॥ तद्दृष्ट्वाचिंतयामासमारुतिर्विकृताननाम् ॥ १७८ ॥ कपिराज्ञायथाख्यातंसत्त्वमद्भुतदर्शनम् ॥ छायाग्राहिमहावीर्यंतदिदंनात्रसंशयः ॥ १७९ ॥ सतांबुद्ध्वार्थतत्त्वेनसिंहिकांमतिमान्कपिः ॥ व्यवर्धतमहाकायःप्रावृषीवबलाहकः ॥ १८० ॥ तस्यसाकायमुद्वीक्ष्यवर्धमानंमहाकपेः ॥ वक्त्रंप्रसारयामासपातालांबरसन्निभम् ॥ १८१ ॥ घनराजीवगर्जंतीवानरंसमभिद्रवत् ॥ सददर्शततस्तस्याविकृतंसुमहन्मुखम् ॥ १८२ ॥ कायमात्रंचमेधावीमर्माणिचमहाकपिः ॥ सतस्याविकृतेवक्त्रेवज्रसंहननःकपिः ॥ १८३ ॥ संक्षिप्यमुहुरात्मानंनिपपातमहाकपिः ॥ आस्येतस्यानिमज्जंतंददृशुःसिद्धचारणाः ॥ १८४ ॥ ग्रस्यमानंयथाचंद्रंपूर्णंपर्वणिराहुणा ॥ ततस्तस्यानखैस्तीक्ष्णैर्मर्माण्युत्कृत्यवानरः ॥ १८५ ॥ उत्पपाताथवेगेनमनःसंपातविक्रमः ॥ तांतुदिष्ट्याचधृत्याचदाक्षिण्येननिपात्यसः ॥ १८६ ॥ कपिप्रवीरोवेगेनववृधेपुनरात्मवान् ॥ हृतहृत्साहनुमतापपातविधुरांभसि ॥ स्वयंभुवैवहनुमान्सृष्टस्तस्यानिपातने ॥ १८७ ॥ तांहतांवानरेणाशुपतितांवीक्ष्यसिंहिकाम् ॥ भूतान्याकाशचारीणितमूचुःप्लवगोत्तमम् ॥ १८८ ॥ भीममद्यकृतंकर्ममहत्सत्त्वंत्वयाहतम् ॥ साधयार्थमभिप्रेतमरिष्टंप्लवतांवर ॥ १८९ ॥ यस्यत्वेतानिचत्वारिवानरेंद्रयथातव ॥ धृतिर्दृष्टिर्मतिर्दाक्ष्यंसकर्मसुनसीदति ॥ १९० ॥

दिष्ट्या दैवानुग्रहेण । दृष्ट्येति पाठे सूक्ष्मदर्शनेनेत्यर्थः । धृत्या सहजधैर्येण दाक्षिण्येन कालोचितकृत्यचातुर्येण च तां निपात्य निहत्य वेगेनोत्पपात ॥ १८६ ॥ ननु प्रथमप्रवृत्तवेगस्य सुरसादिभिः कुंठीभावे सति कथं पुनराकाशगमनं तत्राह आत्मवान्वायोरिव स्वाधीन एव तद्गमनविषयो यत्नः । प्रथमं तु आकाशमार्गप्राप्तिमात्राय महेंद्रपर्वतालंबनमितरजनप्रतारणाय वेत्याहुः । हृतहृत् ध्वस्तहृदयलक्षणप्राणस्थाना अतएव विधुरा प्राणशून्या अंभसि पपात । अत्र कविरुत्प्रेक्षते तस्याश्छायाग्रहणमात्रेण भक्षणादिशक्तिमत्याः सिंहिकाया निपातने निपातनिमित्तं रावणनाशाय स्वात्मरूपरामवत् स्वस्वरूपो हनुमान् सृष्टः ॥ १८७ ॥ १८८ ॥ महत्सत्त्वं महाबला राक्षसी रावणवदशक्यसंहारा त्वया संहतेत्यर्थः । अरिष्टं बाधारहितम् । रिष हिंसायाम् ॥ ॥ १८९ ॥ निर्बाधं कर्मसाधनहेतुमाह यस्यत्विति ॥ १९० ॥

स तैः संपूजितः तैः पूर्वोक्तभूतैः प्रतिपन्नप्रयोजनैः अभिमतं साधयेत्यनुमत्याऽनुगृहीतकार्यैः ॥ १९१ ॥ प्राप्तभूयिष्ठः प्राप्तकल्पः पारो येन सः ॥ १९२ ॥ पतन्नेव गच्छन्नेव मलयोपवनानि । अनेनोत्तरतीर इव दक्षिणतीरेपि मलयाख्यः पर्वतोस्तीति गम्यते ॥ १९३ ॥ सागरं दक्षिणतीरसमीपवर्तिसागरम् । अनूपः कच्छदेशः । सागरस्य पत्नीनां लंकाद्वीपादागत्य सागरं प्रविशंतीनां नदीनां मुखानि संगमस्थानानि विलोकयद् व्यलोकयत् ॥ १९४ ॥ आत्मानं स्वशरीरं महत्त्वादाकाशं निरुंधंतमिव । मतिं कर्तव्यनिश्चयम् ॥ १९५ ॥ कौतूहलमाश्चर्यधिया दिदृक्षामित्यर्थः ॥ १९६ ॥ प्रकृतिं निजमाकारं वीतमोहः वीतो नष्टो वासनावशादागतः कामादिमोहो यस्य सः आत्मवान् जीवन्मुक्तयोगी प्रकृतिं भगवदनन्यतत्त्वतालक्षणस्वभावमित्यर्थः ॥ १९७ ॥ अतिसंक्षिप्य अतिसंकोच्य त्रीन् क्रमान् पदानि विक्रम्य

सतैःसंपूजितःपूज्यःप्रतिपन्नप्रयोजनैः ॥ जगामाकाशमाविश्यपन्नगाशनवत्कपिः ॥ १९१ ॥ प्राप्तभूयिष्ठपारस्तुसर्वतःपरिलोकयन् ॥ योजनानां शतस्यांतेवनराजींददर्शसः ॥ १९२ ॥ ददर्शचपतन्नेवविविधद्रुमभूषितम् ॥ द्वीपंशाखामृगश्रेष्ठोमलयोपवनानिच ॥ १९३ ॥ सागरंसागरानूपान्सागरानूपजान्द्रुमान् ॥ सागरस्यचपत्नीनांमुखान्यपिविलोकयत् ॥ १९४ ॥ समहामेघसंकाशंसमीक्ष्यात्मानमात्मवान् ॥ निरुंधंतमिवाकाशंचकारमतिमान्मतिम् ॥ १९५ ॥ कायवृद्धिंप्रवेगंचममदृष्ट्वैवराक्षसाः ॥ मयिकौतूहलंकुर्युरितिमेनेमहामतिः ॥ १९६ ॥ ततःशरीरंसंक्षिप्यतन्महीधरसन्निभम् ॥ पुनःप्रकृतिमापेदेवीतमोहइवात्मवान् ॥ १९७ ॥ तद्रूपमतिसंक्षिप्यहनूमान्प्रकृतौस्थितः ॥ त्रीन्क्रमानिवविक्रम्यबलिवीर्यहरोहरिः ॥ १९८ ॥ सचारुनानाविधरूपधारीपरंसमासाद्यसमुद्रतीरम् ॥ परैरशक्यंप्रतिपन्नरूपःसमीक्षितात्मासमवेक्षितार्थः ॥ १९९ ॥ ततःसलंबस्यगिरेःसमृद्धेविचित्रकूटेनिपपातकूटे ॥ सकेतकोद्दालकनारिकेलेमहाभ्रकूटप्रतिमोमहात्मा ॥ २०० ॥ ततस्तुसंप्राप्यसमुद्रतीरंसमीक्ष्यलंकांगिरिवर्यमूर्ध्नि ॥ कपिस्तुतस्मिन्निपपातपर्वतेविधूयरूपंव्यथयन्मृगद्विजान् ॥ २०१ ॥ ससागरंदानवपन्नगायुतंबलेनविक्रम्यमहोर्मिमालिनम् ॥ निपत्यतीरेचमहोदधेस्तदाददर्शलंकाममरावतीमिव ॥ २०२ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे प्रथमः सर्गः ॥ १ ॥

प्रक्षिप्य बलेर्वीर्यस्य हरो हरिरिव प्रकृतौ स्थितः ॥ १९८ ॥ चारुनानाविधरूपधारी नानावर्णाकृतिरूपधारी । तच्च तद्व्याख्यानेषु स्पष्टम् । परैरशक्यं समुद्रतीरमासाद्येत्यन्वयः । समीक्षितात्मा समालोकितातिप्रमाणस्वशरीरः समवेक्षितार्थः आलोचितानंतरकार्यः प्रतिपन्नरूपः अंगीकृतस्वल्पदेहोभूदिति शेषः ॥ १९९ ॥ लंबस्य लंबाख्यस्य विचित्राणि कूटानि अवांतरशिखराणि यस्य तादृशे कूटे प्रधानशिखरे । उद्दालकः श्लेष्मातकः ॥ २०० ॥ गिरिवर्यमूर्ध्नि स्थितामिति शेषः । उपसंहरति कपिस्त्विति । स कपिरुच्यमानविशेषणं सागरमतिक्रम्य तस्मिन् लंबाख्यपर्वते मृगादीन् व्यथयन् पीडयन्निपपात । निपत्य च ततः प्राचीनं रूपं विधूय महोदधेस्तीरेऽमरावतीमिव स्थितां लंकां ददर्श ॥२०१॥२०२॥ रैंनेंरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे प्रथमः सर्गः ॥१॥

त्रिकूटस्य लंबापरपर्यायस्य पर्वतस्य तटे स्थितः स्वस्थो भूत्वा लंकां ददर्श ॥ १ ॥ पुष्पमयः पुष्पमयवानर इव ॥ २ ॥ अनिःश्वसन् श्रमजश्वासरहितः । तदेवाह न ग्लानिमिति । कविवाक्यमेतत् ॥ ३ ॥ अहं योजनानां बहूनि शतान्यपि क्रमेयं क्रामेयं क्रमितुं शक्तः शतयोजनमिति संख्यातं सागरस्यांतं परं पारं क्रामेयमिति का गणना ममेति मन्यतेस्मेति शेषः । हनूमदभिप्रायानुवादः कवेः ॥ ४ ॥ जगाम लंकां पर्वतशिखरादवरुह्येति शेषः ॥ ५ ॥ मध्येन जगाम मध्यमार्गेण वनादीन् पश्यन् जगाम । नगवंति वृक्षवंति प्राशस्त्ये मतुप् ॥ ६ ॥ शैलान् लंबगिरिपादरूपान ॥ ७ ॥ स तस्मिन् लंबपर्वते तिष्ठन् लंकाया वनान्युपवनानि च ददर्श । अपिच स पवनात्मजस्तां लंकां नगाग्रे पर्वताग्रस्थितां ददर्श ॥ ८ ॥ अस्यैव प्रपंचः सरलानित्यादि । मुचुलिंदा जंबीरा

ससागरमनाधृष्यमतिक्रम्यमहाबलः ॥ त्रिकूटस्यतटेलंकांस्थितःस्वस्थोददर्शह ॥ १ ॥ ततःपादपमुक्तेनपुष्पवर्षेणवीर्यवान् ॥ अभिवृष्टस्ततस्तत्रव भौपुष्पमयोहरिः ॥ २ ॥ योजनानांशतंश्रीमांस्तीर्त्वाप्युत्तमविक्रमः ॥ अनिःश्वसन्कपिस्तत्रनग्लानिमधिगच्छति ॥ ३ ॥ शतान्यहंयोजनानां क्रमेयंसुबहून्यपि ॥ किंपुनःसागरस्यांतंसंख्यातंशतयोजनम् ॥ ४ ॥ सतुवीर्यवतांश्रेष्ठःप्लवतामपिचोत्तमः ॥ जगामवेगवाँल्लंकांलंघयित्वामहोदधिम् ॥ ५ ॥ शाद्वलानिचनीलानिगंधवंतिवनानिच ॥ मधुमंतिचमध्येनजगामनगवंतिच ॥ ६ ॥ शैलांश्चतरुसंछन्नान्वनराजीश्चपुष्पिताः ॥ अभिचक्रामतेजस्वीहनूमान्प्लवगर्षभः ॥ ७ ॥ सतस्मिन्नचलेतिष्ठन्वनान्युपवनानिच ॥ सनगाग्रेस्थितांलंकांददर्शपवनात्मजः ॥ ८ ॥ सरलान्कर्णिकारांश्चखर्जूरांश्चसुपुष्पितान् ॥ प्रियालान्मुचुलिंदांश्चकुटजान्केतकानपि ॥ ९ ॥ प्रियंगून्गंधपूर्णांश्चनीपान्सप्तच्छदांस्तथा ॥ असनान्कोविदारांश्चकरवीरांश्चपुष्पितान् ॥१०॥ पुष्पभारनिबद्धांश्चतथामुकुलितानपि ॥ पादपान्विहगाकीर्णान्पवनाधूतमस्तकान् ॥ ११ ॥ हंसकारंडवाकीर्णावापीःपद्मोत्पलावृताः ॥ आक्रीडान्विविधान्रम्यान्विविधांश्चजलाशयान् ॥ १२ ॥ संततान्विविधैर्वृक्षैःसर्वर्तुफलपुष्पितैः ॥ उद्यानानिचरम्याणिददर्शकपिकुंजरः ॥ १३ ॥ समासाद्यचलक्ष्मीवाँल्लंकांरावणपालिताम् ॥ परिखाभिःसपद्माभिःसोत्पलाभिरलंकृताम् ॥ १४ ॥ सीतापहरणात्तेनरावणेनसुरक्षिताम् ॥ समंताद्विचरद्भिश्चराक्षसैरुग्रधन्वभिः ॥ १५ ॥ कांचनेनावृतांरम्यांप्राकारेणमहापुरीम् ॥ गृहैश्चगिरिसंकाशैःशारदांबुदसन्निभैः ॥ १६ ॥ पांडुराभिःप्रतोलीभिरुच्चाभिरभिसंवृताम् ॥ अट्टालकशताकीर्णांपताकाध्वजशोभिताम् ॥ १७ ॥

इत्याहुः ॥ ९ ॥ गंधपूर्णान् गंधाढ्यान् ॥ १० ॥ ११ ॥ रावणतपोबलात्तस्यां सर्वे वृक्षाः सर्वदा पुष्पिता इति न कश्चिद्विरोधः । आक्रीडाः क्रीडापर्वता इति कतकः । साधारणोद्यानान्याक्रीडा इत्यन्ये । राज्ञामसाधारणान्युद्यानान्याक्रीडा इति तीर्थः ॥ १२ ॥ १३ ॥ समासाद्य लंकां लंकासमीपं प्राप्य वक्ष्यमाणविशेषणां लंकां ददर्शेत्यन्वयः ॥ १४ ॥ सीतापहरणात्सीतां लंकायामपहृत्य स्थापनाद्धेतोरित्यर्थः । राक्षसाश्च रक्षणे करणभूताः ॥ १५ ॥ ॥ १६ ॥ प्रतोल्यः रथ्याः तासां पांडुरत्वमुच्चत्वं च तत्रत्य सौधसंबंधकृतम् । अट्टालकाः प्राकारशिरांसि । पताकाध्वजपटस्तद्युक्तध्वजशोभिताम् ॥ १७ ॥

लतापंक्तिः तदाकारचित्रविशेषास्तया विराजितैः शोभमानैस्तोरणैर्युक्तां देव इंद्रः देवपुरीं अमरावतीमिव । अनेन परनगरादिकृतक्षोभाभावः सूचित इति बोध्यम् ॥ १८ ॥ गिरिमूर्धस्थत्वादाकाशगपुरोपमेयता लंकायाः ॥ १९ ॥ गिरिमूर्धस्थत्वादेवाकाशे प्लवमानामिव लंकां द्रष्टुर्हनूमत इव तद्वर्णनप्रसक्तस्य कवेरप्याश्चर्यमग्नतया ददर्शेति पुनरुक्तिर्न दोषाय । विस्मयेन पुनःपुनर्ददर्शेति वा तात्पर्यम् ॥ २० ॥ लंकां स्त्रीत्वेन वर्णयति वप्रेति । वप्रः प्राकाराभ्यंतरवेदिका तद्युक्तप्राकारजघनाम् । विपुलांबुः समुद्रः वनानि चांबरं वासो यस्यास्ताम् । अत्रांबुशब्देन परिखांतर्जलमिति तीर्थः ॥ २१ ॥ विश्वकर्मणा निर्मितां तेनापि मनसा कृतामिव स्थिताम् । द्वारमुत्तरमासाद्य समुद्रदक्षिणतटे प्लवनेन तस्यैव प्रथमं प्राप्तेः । चिंता वक्ष्यमाणप्रकारा ॥ २२ ॥ कैलासो निलयः स्थानं यस्यालंकाद्वारस्य तत्प्रख्यमुत्तरद्वारम् । उच्छ्रितैर्भवनोत्तमैरंबरमालिखंतमिव । आकाशं ध्रियमाणमिव आकाशधारणं कुर्वदिव ॥ २३ ॥ एतदग्रे संपूर्णा राक्षसैर्घोरैर्गुहामाशीविषैरिवेति पाठः । इतरत्प्रक्षिप्तमिति कतकः । राक्षसैः

तोरणैःकांचनैर्दिव्यैर्लतापंक्तिविराजितैः ॥ ददर्शहनुमाँल्लंकांदेवोदेवपुरीमिव ॥ १८ ॥ गिरिमूर्ध्निस्थितांलंकांपांडुरैर्भवनैःशुभैः ॥ ददर्शसकपिःश्रीमान्पुरीमाकाशगामिव ॥ १९ ॥ पालितांराक्षसेंद्रेणनिर्मितांविश्वकर्मणा ॥ प्लवमानामिवाकाशेददर्शहनुमान्कपिः ॥ २० ॥ वप्रप्राकारजघनांविपुलांबुवनांबराम् ॥ शतघ्नीशूलकेशांतामट्टालकावतंसकाम् ॥ २१ ॥ मनसेवकृतांलंकांनिर्मितांविश्वकर्मणा ॥ द्वारमुत्तरमासाद्यचिंतयामासवानरः ॥ २२ ॥ कैलासनिलयप्रख्यमालिखंतमिवांबरम् ॥ ध्रियमाणमिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥ २३ ॥ संपूर्णांराक्षसैर्घोरैर्गुहामाशीविषैरिव ॥ तस्याश्चमहतींगुप्तिंसागरंचनिरीक्ष्यसः ॥ रावणंचरिपुंघोरंचिंतयामासवानरः ॥ २४ ॥ आगत्यापीहहरयोभविष्यंतिनिरर्थकाः ॥ नहियुद्धेनवैलंकाशक्याजेतुंसुरैरपि ॥ २५ ॥ इमांत्वविषमांलंकांदुर्गांरावणपालिताम् ॥ प्राप्यापिसुमहाबाहुःकिंकरिष्यतिराघवः ॥ २६ ॥ अवकाशोनसाम्नस्तुराक्षसेष्वभिगम्यते ॥ नदानस्यनभेदस्यनैवयुद्धस्यदृश्यते ॥ २७ ॥ चतुर्णामेवहिगतिर्वानराणांतरस्विनाम् ॥ वालिपुत्रस्यनीलस्यममराज्ञश्चधीमतः ॥ २८ ॥ यावज्जानामिवैदेहींयदिजीवतिवानवा ॥ तत्रैवचिंतयिष्यामिदृष्ट्वातांजनकात्मजाम् ॥ २९ ॥ ततःसचिंतयामासमुहूर्तंकपिकुंजरः ॥ गिरेःशृंगेस्थितस्तस्मिन्रामस्याभ्युदयंततः ॥ ३० ॥ अनेनरूपेणमयानशक्यारक्षसांपुरी ॥ प्रवेष्टुंराक्षसैर्गुप्ताक्रूरैर्बलसमन्वितैः ॥ ३१ ॥ महौजसोमहावीर्याबलवंतश्चराक्षसाः ॥ वंचनीयामयासर्वेजानकींपरिमार्गता ॥ ३२ ॥

संपूर्णा नगरीं महतीं गुप्तिं रिपुं रावणं च सागरं च निरीक्ष्य चिंतयामास । सादरं चिंतयामासेत्यर्थः ॥ २४ ॥ चिंताप्रकारः आगत्यापीति । अपिना आगमनस्यैवाशक्यता सूचिता । एवैव सागरनिरीक्षणेन सूचिता । सुरैरपि जेतुमशक्या यद्तः ॥ २५ ॥ इमां त्विति । अविषमां न विद्यते विषमा यतस्ताम् । प्राप्यापीत्यपिना पदातित्वादागमनमेवाशक्यमिति सूच्यते । किं करिष्यति राघवः । प्रायो राघवस्यापि दुःसाध्येत्यर्थः ॥ २६ ॥ अवकाशो नेति । उपचितार्थत्वाद्बलदर्पपराक्रमसंपन्नत्वात् सुस्निग्धदृढप्रकृतित्वाच्च न सामादीनामवकाश इति भावः ॥ २७ ॥ पूर्वमागत्यापीह हरय इत्युक्तमिदानीं सर्ववानरागमनासंभव एवेत्याह चतुर्णामेवेति ॥ २८ ॥ ननु जानकीजीवनज्ञाने तन्मोक्षणाय बलाबलादिचिंताऽतस्तद्दर्शनचिंतैव प्रथमं युक्तेत्याह यावज्जानामीति । यावत्पुरेति लट् । ज्ञास्ये इत्यर्थः । तत्रैव जानकीदर्शनविषये एव प्रथममिति शेषः । प्रथमं तां दृष्ट्वा पश्चाद्यच्चिंत्यं तत्तदानीमेव चिंतयामीति शेषः ॥ २९ ॥ रामस्याभ्युदयं तदभ्युदयरूपसीतान्वेषणोपायम् ॥ ३० ॥ चिंताप्रकारोऽ

नेनेति ॥ ३१ ॥ ३२ ॥ लक्ष्यं कार्यप्रवृत्त्यानुमेयं तच्च तदलक्ष्यं चेंद्रियागोचरमित्यर्थः । महत् कृत्यं सीतान्वेषणरूपं साधयितुं तेन रूपेण लंकापुरीं प्रवेष्टुं प्राप्तकालम् उचितम् ॥ ३३ ॥ तेन रूपेणाप्यन्वेषणं कथं घटेतेति पुनश्चिंतयति तां पुरीमिति ॥ ३४ ॥ ३५ ॥ नेति । रहिते एकांते कथं पश्येयमित्यन्वयः ॥ ३६ ॥ ननु सीतादर्शने किमर्थमेकांतापेक्षा तत्राह भूताश्चेति । भूतार्थाः सिद्धप्रायकार्याणि विक्लवं कातरम् अविमृश्यकारिणं दूतमासाद्य देशकालाभ्याम् उचितप्रवृत्तिहीनाभ्यां विरोधिताः संतः सूर्योदये तम इव विनश्यंति । अतोऽसहायेन मयैतादृशे देशे काले कार्ये च गुप्तमेव प्रवर्तितव्यमिति भावः ॥ ३७ ॥ न केवलं कार्यहानिः किंत्वन्यदपि स्यादित्याह । अर्थानर्थांतरे इति अर्थानर्थांतरे कार्याकार्यविषये निश्चितापि स्वामिना सचिवैः सह निश्चितापि बुद्धिर्न शोभते । विक्लवं दूतमासाद्येति शेषः । तदेव द्रढयति घातयंतीति । एवं सति लोको मत्स्वामिनं बुद्धिशून्यमपि जानीयादित्याशयः ॥ ३८ ॥ यदेवमतः कार्यं राजकार्यं न विनश्येत् ।

लक्ष्यालक्ष्येणरूपेणरात्रौलंकापुरीमया ॥ प्राप्तकालंप्रवेष्टुंमेकृत्यंसाधयितुंमहत् ॥ ३३ ॥ तांपुरींतादृशींदृष्ट्वादुराधर्षांसुरासुरैः ॥ हनुमांश्चिंतयामास विनिःश्वस्यमुहुर्मुहुः ॥ ३४ ॥ केनोपायेनपश्येयंमैथिलींजनकात्मजाम् ॥ अदृष्टोराक्षसेंद्रेणरावणेनदुरात्मना ॥ ३५ ॥ नविनश्येत्कथंकार्यंरामस्य विदितात्मनः ॥ एकामेकस्तुपश्येयंरहितेजनकात्मजाम् ॥ ३६ ॥ भूताश्चार्थाविनश्यंतिदेशकालविरोधिताः ॥ विक्लवंदूतमासाद्यतमःसूर्योदयेयथा ॥ ॥ ३७ ॥ अर्थानर्थांतरेबुद्धिर्निश्चितापिनशोभते ॥ घातयंतीहकार्याणिदूताःपंडितमानिनः ॥ ३८ ॥ नविनश्येत्कथंकार्यंवैक्लव्यंनकथंभवेत् ॥ लंघनंचसमुद्रस्यकथंनुनभवेद्वृथा ॥ ३९ ॥ मयिदृष्टेतुरक्षोभीरामस्यविदितात्मनः ॥ भवेद्व्यर्थमिदंकार्यंरावणानर्थमिच्छतः ॥४०॥ नहिशक्यंक्वचित्स्थातुमविज्ञातेनराक्षसैः ॥ अपिराक्षसरूपेणकिमुतान्येनकेनचित् ॥४१॥ वायुरप्यत्रनाज्ञातश्चरेदितिमतिर्मम ॥ नह्यत्राविदितंकिंचिद्रक्षसांभीमकर्मणाम् ॥ ४२ ॥ इहाहंयदितिष्ठामिस्वेनरूपेणसंवृतः ॥ विनाशमुपयास्यामिभर्तुरर्थश्चहास्यति ॥ ४३ ॥ तदहंस्वेनरूपेणरजन्यांह्रस्वतांगतः ॥ लंकामभिपतिष्यामिराघवस्यार्थसिद्धये ॥ ४४ ॥ रावणस्यपुरींरात्रौप्रविश्यसुदुरासदाम् ॥ प्रविश्यचभवनंसर्वंद्रक्ष्यामिजनकात्मजाम् ॥ ॥ ४५ ॥ इतिनिश्चित्यहनुमान्सूर्यस्यास्तमयंकपिः ॥ आचकांक्षेतदावीरोवैदेह्यादर्शनोत्सुकः ॥ ४६ ॥ सूर्येचास्तंगतेरात्रौदेहंसंक्षिप्यमारुतिः ॥ वृषदंशकमात्रोऽथबभूवाद्भुतदर्शनः ॥ ४७ ॥ प्रदोषकालेहनुमांस्तूर्णमुत्पत्यवीर्यवान् ॥ प्रविवेशपुरींरम्यांप्रविभक्तमहापथाम् ॥ ४८ ॥

वैक्लव्यं बुद्धिहीनता । तदसिद्धिः स्वस्य स्वस्वामिनश्च ॥ ३९ ॥ रावणानर्थं रावणवधम् ॥ ४० ॥ अदर्शनेन संचारश्च सर्वथाऽशक्य इत्याह नहीति ॥ ४१ ॥ रक्षसामविदितं रक्षोभिरविदितं न किंचिदस्ति कृत्रिमरूपमिति शेषः । अतः प्राकृतसहजकपिरूपेणैव स्थातव्यमिति भावः ॥ ४२ ॥ किंच यावदस्तमयं स्वगोपनमेवोचितमित्याह इहेति । स्वेन रूपेण संवृतः सन्युक्तः सन् इहाद्रि देशे च यदि तिष्ठामि तदा स्पष्टं परैरवगम्यमानत्वात् विनाशमुपयास्यामि भर्तुरर्थहानिश्च । तस्मादासायमत्रैव कचिद्गिरिगुहायां निःशंकं स्थित्वा रजन्यामपि स्वेन रूपेणैव परंतु ह्रस्वतां गतो भूत्वा लंकामभिपतिष्यामीत्यन्वयः ॥ ४३ ॥ ४४ ॥ प्रथमतः पुरीं प्रविश्य ततः सर्वं भवनं रावणगृहं प्रविश्य ॥ ४५ ॥ ४६ ॥ वृषान्मूषकान्दशतीति वृषदंशको मार्जारस्तन्मात्रस्तत्प्रमाणः ॥ ४७ ॥ प्रविवेश पुरीमिति ।

प्रवेशपूर्वकान्वेषणसंक्षेपोक्तिः ॥ ४८ ॥ तृतीयांतेषूपलक्षितामिति शेषः ॥ ४९ ॥ सप्तेति । भूमीनां समूहैः सप्तसंख्यावयवयुक्तैरुपलक्षिताम् । स्फटिकसंकीर्णैः स्फटिकरत्नखचितैः स्थलैरित्यर्थः । स्थलं भूः । तलैरिति पाठेपि स एवार्थः । तैस्तैः प्रासादैरितिशेषः ॥ ५० ॥ रक्षसां तोरणानि रक्षोगृहद्वारस्थतोरणानि ॥ ५१ ॥ अचिंत्यामशक्यान्वेषणचिंताम् । अयं विषादहेतुः । अद्भुताकारामिति हर्षहेतुः ॥ ५२ ॥ पांडुरा सुधा धवला आविद्धा परस्परसंसिद्धा विमानानां सप्तभूमिकप्रासादानां मालाऽस्यामस्ति ताम् । प्रविवेशेति शेषः ॥ ५३ ॥ मध्यगतः खमध्यगतः । अनेकसहस्रेत्यनेन पूर्णत्वम् अनेकेत्यस्यैव सहस्रेत्यनेन विवरणम् । उत्तिष्ठते आर्षस्तङ् । ज्योत्स्नावितानेन लोकान्वितत्य आवार्य सम्यगवलोकनसाधनतया अस्य हनूमतः साचिव्यं साहाय्यं कुर्वन्निव । ननु खमध्यगतस्य प्रदोषे उदयोष्टम्यां तदा पूर्णस्य तु न खमध्यगतस्योदय इतिचेन्न । शुक्लैकादश्यां खमध्यसमीपगतत्वेन मध्यगतत्वोपचारात्पूर्णत्वं च पूर्णकल्पत्वेन व्यवहृतम् । यद्वा अनेकन्यूनाः सहस्रं रश्मयो यस्येति मध्यमपदलोपितत्पुरु

प्रासादमालावितताांस्तंभैःकांचनसन्निभैः ॥ शातकुंभनिभैर्जालैर्गंधर्वनगरोपमाम् ॥ ४९ ॥ सप्तभौमाष्टभौमैश्चसददर्शमहापुरीम् ॥ स्थलैःस्फटिकसंकीर्णैःकार्तस्वरविभूषितैः ॥ तैस्तैःशुशुभिरेतानिभवनान्यत्ररक्षसाम् ॥ ५० ॥ कांचनानिविचित्राणितोरणानिचरक्षसाम् ॥ लंकामुद्द्योतयामासुःसर्वतःसमलंकृताम् ॥ ५१ ॥ अचिंत्यामद्भुताकारांदृष्ट्वालंकांमहाकपिः ॥ आसीद्विषण्णोहृष्टश्चवैदेह्यादर्शनोत्सुकः ॥ ५२ ॥ सपांडुराविद्धविमानमालिनींमहार्हजांबूनदजालतोरणाम् ॥ यशस्विनींरावणबाहुपालितांक्षपाचरैर्भीमबलैःसुपालिताम् ॥५३॥ चंद्रोपिसाचिव्यमिवास्यकुर्वंस्तारागणैर्मध्यगतोविराजन् ॥ ज्योत्स्नावितानेनवितत्यलोकानुत्तिष्ठतेनैकसहस्ररश्मिः॥५४॥शंखप्रभंक्षीरमृणालवर्णमुद्गच्छमानंव्यवभासमानम्॥ ददर्शचंद्रंसकपिप्रवीरःपोप्लूयमानंसरसीवहंसम् ॥ ५५ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येसुंदरकांडेद्वितीयःसर्गः ॥ २ ॥ सलंबशिखरेलंबेलंबतोयदसन्निभे ॥ सत्त्वमास्थायमेधावीहनुमान्मारुतात्मजः ॥ १ ॥ निशिलंकांमहासत्त्वोविवेशकपिकुंजरः ॥ रम्यकाननतोयाढ्यांपुरींरावणपालिताम् ॥ २ ॥ शारदांबुधरप्रख्यैर्भवनैरुपशोभिताम् ॥ सागरोपमनिर्घोषांसागरानिलसेविताम् ॥ ३ ॥सुपुष्टबलसंपुष्टांयथैवविटपावतीम् ॥ चारुतोरणनिर्यूहांपांडुरद्वारतोरणाम् ॥ ४ ॥

षगर्भो बहुव्रीहिः । अतएव रात्रिशेषे हनूमत्यशोकवनिकास्थे सीतासविधे रावणस्यागमनकाले दीपिकावर्णनं कृतम् । तेन हि तदा चंद्रास्तानुमानम् । साचेयं मार्गशीर्षस्य । फाल्गुने लंकां प्रविष्टायाः सीताया वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगमेति हनूमंतं प्रतिवचनात् । हरणदिने एव च सीताया लंकाप्रवेशनं रामभयादिति स्पष्टमेव ॥ ५४ ॥ पोप्लूयमानं भृशं प्लवमानम् ॥ ५५ ॥ शेमेमानः ॥ ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे द्वितीयः सर्गः ॥ २ ॥ ॥ लंबशिखरे उन्नतशिखरे लंबे लंबाख्यपर्वते अतएव लंबतोयदसन्निभे सत्त्वं सत्त्वगुणमपेक्षितबलं च रजस्तमःप्रधानरक्षोजयाय सत्त्वगुणाश्रयणम् । मेधावी कालोचितविचारज्ञः ॥ १ ॥ २ ॥ सागरोपमनिर्घोषां सागरशब्दसदृशरक्षःशब्दवतीम् ॥ ३ ॥ विटपावती अलकापुरी । निर्यूहो मत्तवारणः ।

चारुस्तोरणस्थनिर्यूहो यस्यास्ताम् । पांडुरे सुधाधवले द्वारे तोरणं यस्यां ताम् ॥ ४ ॥ भुजगैराचरितां कृतसंचाराम् । भोगवतीं सर्पनगरीम् । सविद्युद्भिर्घनैर्व्याप्ताम् । ज्योतिषां ग्रहर्क्षादीनां गणैर्निषेवितामित्युत्तरान्वयि ॥ ५ ॥ चंडमारुतानां परिवहादीनां शब्दो यस्यां तादृशीममरावतीमिव स्थिताम् । अत्रामराः संत्यस्यामित्यमरावती द्यौः । असंज्ञायामपि मतौ बह्वच इत्यार्षो दीर्घः । नत्विंद्रपुरी अमरावती उक्तलक्षणाभावात् । लंकाया उक्तद्युसादृश्यं च सालंकारराक्षसवत्त्वात् बलवद्धोषबाहुल्याच्चेति कतकः । शातकुंभेन स्वर्णमयेन ॥ ६ ॥ किंकिणीजालैः क्षुद्रघंटिकासमूहैः शब्दो यासां ताभिः ॥ ७ ॥ वैदूर्यमणिभिः कृता वेदिकाश्चत्वरा येषु तादृशैर्द्वारैः ॥ ८ ॥ मणिस्फटिकमुक्ताभिश्च कृतवेदिकैर्द्वारैः सर्वत उपलक्षिताम् । कुट्टिमो निबद्धा भूः । निर्यूहो मत्तवारणः । राजतामलपांडुरैः रजतमया मलपांडुरोपरिप्रदेशैः सर्वत्र द्वारं विशेष्यम् ॥ ९ ॥ वैदूर्यमणिभिः कृतानि सोपानानि येषु तैः स्फाटिका स्फटिकरचिता अंतर्मध्यप्रदेशा अपांसवश्च येषु तैर्द्वारैः चारुसंजवनैः सभाभिरुपेतैर्द्वारैः खमुत्पतितैरिव शुभ्रैर्गृहैरुपलक्षितैर्द्वारैः ॥ १० ॥ संघुष्टैः कृतघोषैर्द्वारैः ॥ ११ ॥ वस्वोक

भुजगाचरितांगुप्तांशुभांभोगवतीमिव ॥ तांसविद्युद्घनाकीर्णांज्योतिर्गणनिषेविताम् ॥ ५ ॥ चंडमारुतनिर्ह्रादांयथाचाप्यमरावतीम् ॥ शातकुंभेनमहताप्राकारेणाभिसंवृताम् ॥ ६ ॥ किंकिणीजालघोषाभिःपताकाभिरलंकृताम् ॥ आसाद्यसहसाहृष्टःप्राकारमभिपेदिवान् ॥ ७ ॥ विस्मयाविष्टहृदयःपुरीमालोक्यसर्वतः ॥ जांबूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः ॥ ८ ॥ मणिस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः ॥ तप्तहाटकनिर्यूहैराजतामलपांडुरैः ॥ ९ ॥ वैदूर्यकृतसोपानैःस्फाटिकांतरपांसुभिः ॥ चारुसंजवनोपेतैःखमिवोत्पतितैःशुभैः ॥ १० ॥ क्रौंचबर्हिणसंघुष्टैराजहंसनिषेवितैः ॥ तूर्याभरणनिर्घोषैःसर्वतःपरिनादिताम् ॥ ११ ॥ वस्वोकसारप्रतिमांसमीक्ष्यनगरींततः ॥ खमिवोत्पतितांलंकांजहर्षहनुमान्कपिः ॥ १२ ॥ तांसमीक्ष्यपुरींलंकांराक्षसाधिपतेःशुभाम् ॥ अनुत्तमामृद्धिमतींचिंतयामासवीर्यवान् ॥ १३ ॥ नेयमन्येननगरीशक्याधर्षयितुंबलात् ॥ रक्षितारावणबलैरुद्यतायुधपाणिभिः ॥ १४ ॥ कुमुदांगदयोर्वापिसुषेणस्यमहाकपेः ॥ प्रसिद्धेयंभवेद्भूमिर्मैंदद्विविदयोरपि ॥ १५ ॥ विवस्वतस्तनूजस्यहरेश्चकुशपर्वणः ॥ ऋक्षस्यकपिमुख्यस्यममचैवगतिर्भवेत् ॥ १६ ॥ समीक्ष्यचमहाबाहोराघवस्यपराक्रमम् ॥ लक्ष्मणस्यचविक्रांतमभवत्प्रीतिमान्कपिः ॥ १७ ॥ तांरत्नवसनोपेतांगोष्ठागारावतंसिकाम् ॥ यंत्रागारस्तनीमृद्धांप्रमदामिवभूषिताम् ॥ १८ ॥ तांनष्टतिमिरांदीपैर्भास्वरैश्चमहाग्रहैः ॥ नगरींराक्षसेंद्रस्यसददर्शमहाकपिः ॥ १९ ॥

सारा अलका तत्सदृशीम् । ह्रस्व आर्षः । जांबूनदमयद्वारत्वादिना सादृश्यम् । खमिवोत्पतितां गिरिमूर्ध्नि प्रतिष्ठितत्वात् ॥ १२ ॥ १३ ॥ १४ ॥ अनेन धर्षयितुमशक्या किं सर्वथा नेत्याह कुमुदेत्यादि । प्रसिद्धा प्रकर्षेण सिद्धगतिका ॥ १५ ॥ कुशपर्वण इति कुशपर्वसदृशलोमवत इत्यर्थकं ऋक्षस्य विशेषणम् अतिदीर्घकठोरलोमावृतत्वात् । कपिमुख्यस्येति विशेषणं च तस्यैव मम चैव गतिरस्यामिति शेषः ॥ १६ ॥ रामस्य पराक्रमं लक्ष्मणस्य विक्रांतं शौर्यं च समीक्ष्येदृश्यपि तदीयबाणैरीषत्करध्वंसेति विचार्य प्रीतिमानभूत् अविषण्णोभूत् ॥ १७ ॥ रत्नवसनोपेतां रत्नप्राकारवाससं च गोष्ठान्यागाराणि चावतंसो यस्यास्तां गोष्ठं गोशाला इदं वाजिशालादेरप्युपलक्षणम् । यंत्राणि प्राकारोपरिस्थापितानि क्षेपण्यादीनि तद्रूहस्तनीम् ॥ १८ ॥ तां प्रसिद्धां लंकां भास्वरैश्च महाग्रहैः चाप्यंद्रकिरणैः ॥ १९ ॥

सा नगरी स्वेन रूपेणाधिष्ठातृदेवतारूपेण युक्ता ददर्श ॥ २० ॥ स्वयमेवोत्थिता अनन्यप्रेरितेति यावत् ॥ २१ ॥ अतिष्ठत देवतारूपं प्रकाशितवती ॥ २२ ॥ वनालय वानर तत्त्वं सत्यम् ॥ २३ ॥ त्वया एषा प्रवेष्टुं न शक्यम् । क्षुद्रपहर्तुं शक्यमितिवत् । न शक्येति पाठस्तु सुगम एव ॥ २४ ॥ २५ ॥ अथ तया पृष्टो हनूमांस्तां प्रति तत्प्रश्नोत्तरकथनं प्रतिज्ञाय सुरसावदेषा पूज्या वा सिंहिकावद्वध्या वेति निर्णेतुं पृच्छति कात्वमिति ॥ २६ ॥ २७ ॥ आज्ञाप्रतीक्षा नियोगपरिपालिका ॥ २८ ॥ २९ ॥ अथापि का त्वं तत्राह अहं हीति । स्वयं स्वदेवतास्वरूपेणेत्यर्थः ॥ ३० ॥ यत्नवान् लंकाधिष्ठा

अथसाहरिशार्दूलंप्रविशंतंमहाकपिम् ॥ नगरीस्वेनरूपेणददर्शपवनात्मजम् ॥ २० ॥ सातंहरिवरंदृष्ट्वालंकारावणपालिता ॥ स्वयमेवोत्थितातत्र विकृताननदर्शना ॥ २१ ॥ पुरस्तात्तस्यवीरस्यवायुसूनोरतिष्ठत ॥ मुंचमानामहानादमब्रवीत्पवनात्मजम् ॥ २२ ॥ कस्त्वंकेनचकार्येणइहप्राप्तो वनालय ॥ कथयस्वेहयत्तत्त्वंयावत्प्राणाधरंतिते ॥ २३ ॥ नशक्यंखल्वियंलंकाप्रवेष्टुंवानरत्वया ॥ रक्षितारावणबलैरभिगुप्तासमंततः ॥ २४ ॥ अथतामब्रवीद्वीरोहनुमानग्रतःस्थिताम् ॥ कथयिष्यामितत्तत्त्वंयन्मांत्वंपरिपृच्छसे ॥ २५ ॥ कात्वंविरूपनयनापुरद्वारेऽवतिष्ठसे ॥ किमर्थंचापिमां क्रोधान्निर्भर्त्सयसिदारुणे ॥ २६ ॥ हनुमद्वचनंश्रुत्वालंकासाकामरूपिणी ॥ उवाचवचनंक्रुद्धापरुषंपवनात्मजम् ॥ २७ ॥ अहंराक्षसराजस्यरावण स्यमहात्मनः ॥ आज्ञाप्रतीक्षादुर्धर्षारक्षामिनगरीमिमाम् ॥ २८ ॥ नशक्यंमामवज्ञायप्रवेष्टुंनगरीमिमाम् ॥ अद्यप्राणैःपरित्यक्तःस्वप्स्यसेनिहतो मया ॥ २९ ॥ अहंहिनगरीलंकास्वयमेवप्लवंगम ॥ सर्वतःपरिरक्षामिअतस्तेकथितंमया ॥ ३० ॥ लंकायावचनंश्रुत्वाहनूमान्मारुतात्मजः ॥ यत्नवान्सहरिश्रेष्ठःस्थितःशैलइवापरः ॥ ३१ ॥ सतांस्त्रीरूपविकृतांदृष्ट्वावानरपुंगवः ॥ आवभाषेऽथमेधावीसत्त्ववान्प्लवगर्षभः ॥ ३२ ॥ द्रक्ष्या मिनगरींलंकांसाट्टप्राकारतोरणाम् ॥ इत्यर्थमिहसंप्राप्तःपरंकौतूहलंहिमे ॥ ३३ ॥ वनान्युपवनानीहलंकायाःकाननानिच ॥ सर्वतोगृहमुख्यानि द्रष्टुमागमनंहिमे ॥ ३४ ॥ तस्यतद्वचनंश्रुत्वालंकासाकामरूपिणी ॥ भूयएवपुनर्वाक्यंबभाषेपरुषाक्षरम् ॥ ३५ ॥ मामनिर्जित्यदुर्बुद्धेराक्षसेश्वरपा लिताम् ॥ नशक्यंह्यद्यतेद्रष्टुंपुरीयंवानराधम ॥ ३६ ॥ ततःसहरिशार्दूलस्तामुवाचनिशाचरीम् ॥ दृष्ट्वापुरीमिमांभद्रेपुनर्यास्येयथागतम् ॥ ३७ ॥ ततःकृत्वामहानादंसावैलंकाभयंकरम् ॥ तलेनवानरश्रेष्ठंताडयामासवेगिता ॥ ३८ ॥ ततःसहरिशार्दूलोलंकयाताडितोभृशम् ॥ ननादसुमहानादं वीर्यवान्मारुतात्मजः ॥ ३९ ॥ ततःसंवर्तयामासवामहस्तस्यसोंऽगुलीः ॥ मुष्टिनाऽभिजघानैनांहनूमान्क्रोधमूर्छितः ॥ ४० ॥

तृत्वेनावगतत्वात्तद्विजयोपाये यत्नवान् ॥ ३१ ॥ स्त्रीरूपविकृतां विकृतस्त्रीरूपाम् । अथ लब्धप्रश्नोत्तरस्तत्प्रश्नोत्तरमाह आवभाषे इति ॥ ३२ ॥ द्रक्ष्यामीत्यर्थमिह संप्राप्त इत्यन्वयः । दर्शनं प्रयोजनमुद्दिश्येत्यर्थः ॥ ३३ ॥ वनं कृत्रिमं काननमकृत्रिमम् ॥ ३४ ॥ भूयोधिकं परुषाक्षरं वाक्यं पुनर्बभाषे इति संबंधः ॥ ३५ ॥ ३६ ॥ अनिर्जित्य द्रष्टुं न शक्यमित्युक्तेपि कस्यापि वस्तुनोऽग्रहणपूर्वकं केवलं दर्शनमात्रे तव का क्षतिरित्याशयेनाह ततः स इति । स हनूमान् ॥ ३७ ॥ वेगिता संजातवेगा ॥ ३८ ॥ महानादं ननादेति निर्भयत्वद्योतनम् ॥ ३९ ॥ अंगुलीः संवर्तयामास मुष्टिं बबंधेत्यर्थः ॥ ४० ॥

वामहस्तमुष्टिबंधे आशयमाह स्त्री चेति । तेन प्रहारेण वाममुष्टिकृतसदयताडनेनापीत्यर्थः । विकृताननदर्शना विकृतवक्रदृष्टिः ॥ ४१ ॥ ४२ ॥ उद्विग्ना भीता अगर्वितं गर्वरहितम् ॥ ४३ ॥ त्रायस्व मा प्राणनाशं कुर्वित्यर्थः । तत्र हेतुः समये इति । स्त्री न हंतव्येति शास्त्रमर्यादायामित्यर्थः ॥ ४४ ॥ यद्यप्यहं लंकाधिष्ठातृदेवतात्वात् दुर्जया तथापि त्वया निर्जिता ॥ ४५ ॥ इदं च तथ्यं शृणु त्वद नुग्रहार्थमुच्यमानमित्यर्थः । वरदानं दत्तं कृतमित्यर्थः ॥ ४६ ॥ रक्षसां भयमिति । एवं च मज्जयोयं सर्वरक्षोजयसूचक इति भावः ॥ ४७ ॥ न तस्यास्ति व्यतिक्रमः भगवद्दत्तवरस्य रावणस्य स्वकृता धिक्षेपक्षुभितनंदिकेश्वरशापात्तु सद्यः प्राप्तो विनाशः । स्वयंभूवरवशाद्वानरास्कंदनपर्यंतं प्रतिबद्ध इति कथात्रानुसंधेयेति तीर्थः ॥ ४८ ॥ ४९ ॥ विधत्स्व अनुतिष्ठ ॥ ५० ॥ शापोपहतां सत्यसंकल्पभग

स्त्रीचेतिमन्यमानेननातिक्रोधःस्वयंकृतः ॥ सातुतेनप्रहारेणविह्वलांगीनिशाचरी ॥ पपातसहसाभूमौविकृताननदर्शना ॥ ४१ ॥ ततस्तुहनुमान्वीरस्तांदृष्ट्वाविनिपातिताम् ॥ कृपांचकारतेजस्वीमन्यमानःस्त्रियंचताम् ॥ ४२ ॥ ततोवैभृशमुद्विग्नालंकासागद्गदाक्षरम् ॥ उवाचागर्वितंवाक्यंहनूमंतंप्लवंगमम् ॥ ४३ ॥ प्रसीदसुमहाबाहोत्रायस्वहरिसत्तम ॥ समयेसौम्यतिष्ठंतिसत्त्ववंतोमहाबलाः ॥ ४४ ॥ अहंतुनगरीलंकास्वयमेवप्लवंगम ॥ निर्जिताहंत्वयावीरविक्रमेणमहाबल ॥ ४५ ॥ इदंचतथ्यंशृणुमेब्रुवंत्यावैहरीश्वर ॥ स्वयंस्वयंभुवादत्तंवरदानंयथामम ॥ ४६ ॥ यदात्वांवानरःकश्चिद्विक्रमाद्वशमानयेत् ॥ तदात्वयाहिविज्ञेयंरक्षसांभयमागतम् ॥ ४७ ॥ सहिमेसमयःसौम्यप्राप्तोऽद्यतवदर्शनात् ॥ स्वयंभूविहितःसत्योनतस्यास्तिव्यतिक्रमः ॥ ४८ ॥ सीतानिमित्तंराज्ञस्तुरावणस्यदुरात्मनः ॥ रक्षसांचैवसर्वेषांविनाशःसमुपागतः ॥ ४९ ॥ तत्प्रविश्यहरिश्रेष्ठपुरींरावणपालिताम् ॥ विधत्स्वसर्वकार्याणियानियानीहवांछसि ॥ ५० ॥ प्रविश्यशापोपहतांहरीश्वरःपुरींशुभांराक्षसमुख्यपालिताम् ॥ यदृच्छयात्वंजनकात्मजांसतींविमार्गसर्वत्रगतोयथासुखम् ॥ ५१ ॥ इत्यार्षेश्रीम० वा० आ० सुं० तृतीयः सर्गः ॥ ३ ॥ सनिर्जित्यपुरींलंकांश्रेष्ठांतांकामरूपिणीम् ॥ विक्रमेणमहातेजाहनूमान्कपिसत्तमः ॥ १ ॥ अद्वारेणमहावीर्यःप्राकारमवपुप्लुवे ॥ निशिलंकांमहासत्त्वोविवेशकपिकुंजरः ॥ २ ॥ प्रविश्यनगरींलंकांकपिराजहितंकरः ॥ चक्रेऽथपादंसव्यंचशत्रूणांसतुमूर्धनि ॥ ३ ॥ प्रविष्टःसत्त्वसंपन्नोनिशायांमारुतात्मजः ॥ समहापथमास्थायमुक्तपुष्पविराजितम् ॥ ४ ॥

बद्धचनेन नंदिकेश्वरशापेन च प्रापितनाशकालां हरीश्वरस्त्वं प्रविश्य यदृच्छया सर्वत्र रावणांतःपुरपर्यंतं यथासुखं गतः सन् सतीमप्रच्युतपातिव्रत्यां जानकीं विमार्ग अन्वेषय । अनेन च वचनेन सीताऽकल्मषात्र पुरे वर्तत इत्युपदिष्टम् ॥ ५१ ॥ कैंमंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे तृतीयः सर्गः ॥ ३ ॥ ॥ स इति ॥ १ ॥ प्राकारमद्वारेणावपुप्लुवे शत्रोः पुरं ग्रामं गृहं वा अद्वारेण प्रविशेच्छत्रुविनाशायेति नीतिस्मृतेरिति भावः ॥ २ ॥ अद्वारेण प्रवेशेपि सव्यं पादं वामपादं प्रथमतश्चक्रे । यतः स तु प्रथमनिक्षिप्तवामपादस्तु शत्रूणां मूर्धन्येव निहितो भवति तथा विजयप्रदो भवतीति भावः । उक्तं च "प्रयाणकाले स्वगृहप्रवेशे विवाहकालेपि च दक्षिणांघ्रिम् ॥ कृत्वाऽग्रतः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालयमिति" ॥ ३ ॥ महापथं राजमा

गेम् ॥ ४ ॥ हसितैरट्टहासैरुत्पन्ना ये उत्कृष्टनिनदास्तूर्यघोषैः पुरस्कृतास्तैरुपलक्षिताम् ॥ ५ ॥ वज्राणामंकुशानां निकाशाः प्रतिमा येषु गृहेषु तैर्बभासे । वज्रनिर्मितानि जालानि गवाक्षाणि तद्विभूषितैर्गृहैः ॥ ६ ॥ पद्मादिसंज्ञकं संस्थितं संस्थानं येषां तैः ॥ ७ ॥ वर्धमानगृहैः वर्धमाननामकसंस्थानवद्गृहैः । चतुःशालं चतुर्द्वारं सर्वतोभद्रसंज्ञितम् ॥ पश्चिमद्वाररहितं नंद्यावर्ताह्वयं तु तत् ॥ दक्षिणद्वाररहितं वर्धमानं धनप्रदम् ॥ प्राग्द्वाररहितं स्वस्तिकाख्यं पुत्रधनप्रदमित्युक्तेः ॥ हितंकर इत्यार्षः ॥ ८ ॥ चरंस्तां ददर्शेत्यन्वयः ॥ ९ ॥ विविधाकृतिरूपाणि विविधा आकाराः रूपाणि वर्णाश्च येषां तानि भवनानि ददर्शेति पूर्वेणान्वयः । त्रिस्थानस्वरभूषितम् उरःकंठशिरोरूपस्थानत्रयजैर्मंद्रमध्यतारस्वरैर्भूषितम् ॥ १० ॥ ११ ॥ सोपाननिनदान्सोपानसंचरत्कांताजनकांचीमंजीरनिनदान् । यद्वा सोपानेषु पदाघातजशब्दान् आस्फोटितं विलासार्थं करास्फालनं तज्जन्यनिनादान् । क्ष्वेडितान् सिंहनिनादान् ॥ १२ ॥ मंत्रान्वेदमंत्रान् स्वाध्यायेऽध्ययार्थे निरतान् ॥ १३ ॥ १४ ॥ मध्यमे गुल्मे मध्यमकक्ष्याप्रदेशे

ततस्तुतांपुरींलंकांरम्यामभिययौकपिः ॥ हासतोत्कृष्टनिनदैस्तूर्यघोषपुरस्कृतैः ॥ ५ ॥ वज्रांकुशनिकाशैश्चवज्रजालविभूषितैः ॥ गृहमेधैःपुरीरम्याबभासेद्यौरिवांबुदैः ॥ ६ ॥ प्रजज्वालतदालंकारक्षोगणगृहैःशुभैः ॥ सिताभ्रसदृशैश्चित्रैःपद्मस्वस्तिकसंस्थितैः ॥ ७ ॥ वर्धमानगृहैश्चापिसर्वतःसुविभूषितैः ॥ तांचित्रमाल्याभरणांकपिराजहितंकरः ॥ ८ ॥ राघवार्थंचरञ्श्रीमान्ददर्शचननंदच ॥ भवनाद्भवनंगच्छन्ददर्शकपिकुंजरः ॥ ९॥ विविधाकृतिरूपाणिभवनानिततस्ततः ॥ शुश्रावरुचिरंगीतंत्रिस्थानस्वरभूषितम् ॥ १० ॥ स्त्रीणांमदनविद्धानांदिविचाप्सरसामिव ॥ शुश्रावकांचीनिनदंनूपुराणांचनिःस्वनम् ॥ ११॥ सोपाननिनदांश्चापिभवनेषुमहात्मनाम् ॥ आस्फोटितनिनादांश्चक्ष्वेडितांश्चततस्ततः ॥ १२ ॥ शुश्रावजपतांतत्रमंत्रान्रक्षोगृहेषुवै ॥ स्वाध्यायनिरतांश्चैवयातुधानान्ददर्शसः ॥ १३ ॥ रावणस्तवसंयुक्तान्गर्जतोराक्षसानपि ॥ राजमार्गंसमावृत्यस्थितंरक्षोगणंमहत् ॥ १४ ॥ ददर्शमध्यमेगुल्मेराक्षसस्यचरान्बहून् ॥ दीक्षिताञ्जटिलान्मुंडान्गोजिनांबरवाससः ॥ १५ ॥ दर्भमुष्टिप्रहरणानग्निकुंडायुधांस्तथा ॥ कूटमुद्गरपाणींश्चचंडायुधधरानपि ॥ १६ ॥ एकाक्षानेकवर्णांश्चचलदेकपयोधरान् ॥ करालान्भुग्नवक्त्रांश्चविकटान्वामनांस्तथा ॥ १७ ॥ धन्विनःखड्गिनश्चैवशतघ्नीमुसलायुधान् ॥ परिघोत्तमहस्तांश्चविचित्रकवचोज्ज्वलान् ॥ १८ ॥ नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ॥ नातिगौरान्नातिकृष्णान्नातिकुब्जान्नवामनान् ॥ १९ ॥ विरूपान्बहुरूपांश्चसुरूपांश्चसुवर्चसः ॥ ध्वजिनःपताकिनश्चैवददर्शविविधायुधान् ॥ २० ॥ शक्तिवृक्षायुधांश्चैवपट्टिशाशनिधारिणः ॥ क्षेपणीपाशहस्तांश्चददर्शसमहाकपिः ॥ २१ ॥

चरान् नगरवृत्तांतावेदकगूढचारान् दीक्षितजटिलमुंडा गृहिवनियतयः गोजिनं गवाजिनं तद्वाससोंबरवाससो विवाससः । ननु लंकाया भारतखंडाद्बहिर्भावेन कर्मभूमित्वाभावात्कथं तत्र रक्षसां दीक्षितत्वमिति चेन्न । नित्यकर्मस्वन्यदेशेप्यधिकारात् । रावणादेस्तपोमाहात्म्यात्तत्र काम्यकर्मसिद्धिरपीत्यन्यत् । यथा त्वष्टुरमेंद्रमेव सोममाजह्रे इत्यादि शतपथोक्तरीत्या । एतेन देवानामीषद्विकृतानपि यज्ञान्दर्शयतीति भाष्यरीत्या चांगवैकल्येप्यनुष्ठितात्कर्मणो वृत्रोत्पत्तिरूपकामनासिद्धिस्तथा प्रकृते देशरूपांगवैकल्येपि तत्सिद्धिः रक्षसामपि देवयोनित्वात् ॥ १५ ॥ अरिष्टनिवारणपूर्वकमनुष्ठाननिर्वाहाय दर्भमुष्टिप्रहरणत्वं केषांचित् । यथा वज्रं हरेः पाणौ तथा विप्रकरे कुशा इति स्मृतेः । कृत्याद्युत्पादनद्वारा शत्रुमारकतयाऽग्निकुंडानामायुधत्वम् । कूटोयस्कारकूटः आयुधविशेषः ॥ १६ ॥ एकपयोधरान्परभागेसूक्ष्मसन्निवेशस्तेनापि रहितान् विकटान् विकटांगान् ॥ १७ ॥ १८ ॥ नातिदीर्घातिह्रस्वाकारान् । वृत्तभंगो रेफहकारसंयोगपरो गुरुर्लघुकार्यकारीति न ॥ १९ ॥ छंदोभंग आर्षः ॥ २० ॥ वृक्षायुधाः वक्कलकुटाद्यायुधाः

पट्टिशाशनी आयुधविशेषे क्षेपणी भिंदिपालः ॥ २१ ॥ यथास्वैरचरान् यथेष्टं स्वैरविहारं गतान् ॥ २२ ॥ अव्यग्रं सावधानम् आरक्षं आसमंतादंतःपुररक्षकं सैन्यम् मध्यमं मध्यमकक्ष्यास्थितम् ॥२३॥ अंतःपुराग्रतः रावणांतःपुरगृहस्याग्रतः तद्गृहम् आरक्षावस्थितिगृहं दृष्ट्वा सः प्रकृतः प्रसिद्धः कपिः ॥ २४ ॥ राक्षसेंद्रस्य गृहमुच्यमानविशेषणं ददर्श । पुंडरीकावतंसाभिः श्वेतपद्मभूषिताभिः ॥ २५ ॥ ॥ २६ ॥ विमानैः पुष्पकादिभिः । विचित्रवर्णादिमत्त्वादद्भुतत्वं हयानां हयगजैर्हयाकारैर्गजैःस्वल्पगजैरिति यावत् ॥ २७ ॥ द्वारमित्यस्य ददर्शेति शेषः ॥ २८ ॥ विवेश आससाद ॥ २९ ॥ हेमत प्तवर्णं स्वर्णं तत्सहितेन जांबूनदेन षोडशवर्णस्वर्णेन निर्मितं चक्रवालं प्राकारमंडलं यस्य महार्हमुक्तामणिभिर्भूषितोंतः शिरोभागो यस्य परार्ध्याभ्यामुत्तमाभ्यां कालागुरुचंदनाभ्यामर्होर्हणं पूजा यस्य तदंतःपुरम्।

स्रग्विणस्त्वनुलिप्तांश्चवराभरणभूषितान् ॥ नानावेषसमायुक्तान्यथास्वैरचरान्बहून् ॥ २२ ॥ तीक्ष्णशूलधरांश्चैववज्रिणश्चमहाबलान् ॥ शतसाहस्र मव्यग्रमारक्षंमध्यमंकपिः ॥ २३ ॥ रक्षोधिपतिनिर्दिष्टंददर्शांतःपुराग्रतः ॥ सतदातद्गृहंदृष्ट्वामहाहाटकतोरणम् ॥ २४ ॥ राक्षसेंद्रस्यविख्यातमद्रिमू र्ध्निप्रतिष्ठितम् ॥ पुंडरीकावतंसाभिःपरिखाभिःसमावृतम् ॥२५॥ प्राकारावृतमत्यंतंददर्शसमहाकपिः ॥ त्रिविष्टपनिभंदिव्यंदिव्यनादविनादितम् ॥ ॥ २६ ॥ वाजिह्रेषितसंघुष्टमद्भुतैश्चहयैस्तथा ॥ रथैर्यानैर्विमानैश्चतथाहयगजैःशुभैः ॥ २७ ॥ वारणैश्चचतुर्दंतैःश्वेताभ्रनिचयोपमैः ॥ भूषितैरुचि रद्वारंमत्तैश्चमृगपक्षिभिः ॥ २८ ॥ रक्षितंसुमहावीर्यैर्यातुधानैःसहस्रशः ॥ राक्षसाधिपतेर्गुप्तमाविवेशगृहंकपिः ॥ २९ ॥ सहेमजांबूनदचक्रवालं महार्हमुक्तामणिभूषितांतम् ॥ परार्ध्यकालागुरुचंदनार्हंसरावणांतःपुरमाविवेश ॥ ३० ॥ इत्यार्षेश्रीम०वाल्मीकीयेआदिकाव्येसुंदरकांडेचतुर्थः सर्गः ॥४॥ "चंद्रोपिसाचिव्यमिवास्यकुर्वंस्तारागणैर्मध्यगतोविराजन् ॥ ज्योत्स्नावितानेननिपत्यलोकानुत्तिष्ठतेनैकसहस्ररश्मिः ॥ १ ॥ शंखप्रभं क्षीरमृणालवर्णंह्युद्गम्यमानंव्यवभासमानम् ॥ ददर्शचंद्रंसकपिप्रवीरःपोप्लूयमानंसरसीवहंसम् ॥ २ ॥ " ततःसमध्यंगतमंशुमंतंज्योत्स्नावितानं मुहुरुद्वमंतम् ॥ ददर्शधीमान्भुविभानुमंतंगोष्ठेवृषंमत्तमिवभ्रमंतम् ॥ १ ॥ लोकस्यपापानिविनाशयंतंमहोदधिंचापिसमेधयंतम् ॥ भूतानिसर्वाणि विराजयंतंददर्शशीतांशुमथाभियांतम् ॥ २ ॥ याभातिलक्ष्मीर्भुविमंदरस्थायथाप्रदोषेषुचसागरस्था ॥ तथैवतोयेषुचपुष्करस्थाररराजसाचारु निशाकरस्था ॥ ३ ॥

विवेश स हनुमान् ॥ ३० ॥ नैर्गमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुर्थः सर्गः ॥ ४ ॥ ॥ अग्रे श्लोकद्वयं प्रक्षिप्तम् ॥ १ ॥ २ ॥ ततः अंतःपुरप्रवेशोत्तरं रात्रेः प्रथमयामस्य समाप्तिकल्पत्वमत्रेति बोध्यम् । मध्यंगतं व्योममध्यं तारामध्यं च प्राप्तम् अंशुमंतं शीतांशुं भानुमंतं सूर्ययोगेन प्रकाशवत्किरणवंतम् । गोष्ठे भ्रमतं मत्तं वृषमिव ॥ १ ॥ पापानि पापजनकदुःखानि नाशयंतम् लोकाह्लादजनकत्वात् । समेधयंतं वर्धयंतम् विराजयंतं प्रकाशयंतम् अभितो यांतम् अंतःपुरदर्शनसाधनत्वेन स्वमध्यं प्राप्तम् ॥ २ ॥ भुवि मंदरस्था भाति अधि कसन्निधाना भवति पुष्करस्था अहीति शेषः । सैदानीं निशाकरस्थेति पर्यायालंकारः । पादचतुष्टये स्था इत्येकपदयमकं च । भुवि मंदरे प्रदोषे सागरेऽधिकलक्ष्मीसंनिधानमृषिवचनादेवावसेयम् ॥ ३ ॥

हंसो यथेति । किंचिदाधारप्रतिष्ठितशुक्लवस्तुत्वमात्रेणांबरस्थचंद्रे साहृश्यमिति कतकः । कुंजरोप्यत्र श्वेत एव अंबरमपि तत्किरणैरेव श्वेतमिति बोध्यम् । अंबरस्थोंबरमध्य स्थः ॥४॥ परिपूर्णशृंगः परिपूर्ण कलंकरूपहरिणशृंग इत्यर्थः । जांबूनदबद्धेति स्वरूपकथनमात्रम् ॥ ५ ॥ विनष्टः शीतांबुतुषाररूपः शीतलजलबिंदुसंपर्करूपः पंको यस्य तम् । तत्वं च वर्षाकालस्यातीतत्वाद्वस्तुतो हिमकालेपि विनष्टः शीतलजलबिंदुसंपर्करूपः पंको यस्य तमित्यर्थः । हिमालयस्यातिदूरत्वादितिभावः । विनष्टेति द्वितीयार्थे प्रथमामंगीकृत्येदम् । महाग्रहस्य सर्पस्य ग्राहेण किरणसंक्रमेण विनष्टो विनाशितः पंकस्तमो येन सः । अतएव प्रकाशलक्ष्म्याश्रयेण हेतुना निर्मलांकः व्यक्तस्फुरल्लांछनः रराज गगनमध्यं प्राप्येति शेषः ॥ ६ ॥ शिलातलं गुहाबहिस्थम् ॥ ७ ॥ प्रकाशयुक्तचंद्रस्योदयेन ऊर्ध्वमागमनेन नष्टो नाशितोंतर्गृहेपि दोषस्तिमिरजो येन तथाभूतः प्रदोषो रजनीमुखं यामादूर्ध्वतनम् । प्रवृद्धा वर्धिता रक्षसां पिशिताशनरूपा दोषा येन पिशितभक्षणस्य दोषत्वमविहितजीवहिंसाहेतुत्वात् । रामाणामभिरामविषयको रमणविषयक ईरितो निरस्तश्चित्तदोषः प्रणयकलहरूपो येन स्वर्गस्य सुखस्य प्रकाशो यतः अतएव भगवान्पूज्यो रराजेत्यनुकर्षः ॥ ८ ॥ सुपृक्ता भेदग्रहा विषयाः । स्ववृत्ता इति पाठे स्वं स्वीयं सहजपातिव्र

हंसोयथाराजतपंजरस्थःसिंहोयथामंदरकंदरस्थः ॥ वीरोयथागर्वितकुंजरस्थश्चंद्रोऽपिबभ्राजतथांबरस्थः ॥ ४ ॥ स्थितःककुद्मानिवतीक्ष्णशृंगोमहाचलःश्वेतइवोर्ध्वशृंगः ॥ हस्तीवजांबूनदबद्धशृंगोविभातिचंद्रःपरिपूर्णशृंगः ॥ ५ ॥ विनष्टशीतांबुतुषारपंकोमहाग्रहग्राहविनष्टपंकः ॥ प्रकाशलक्ष्म्याश्रयनिर्मलांकोरराजचंद्रोभगवाञ्छशांकः ॥ ६ ॥ शिलातलंप्राप्ययथामृगेंद्रोमहारणंप्राप्ययथागजेंद्रः ॥ राज्यंसमासाद्ययथानरेंद्रस्तथाप्रकाशोविरराजचंद्रः ॥ ७ ॥ प्रकाशचंद्रोदयनष्टदोषःप्रवृद्धरक्षःपिशिताशदोषः ॥ रामाभिरामेरितचित्तदोषःस्वर्गप्रकाशोभगवान्प्रदोषः ॥ ८ ॥ तंत्रीस्वराःकर्णसुखाःप्रवृत्ताःस्वपंतिनार्यःपतिभिःसुपृक्ताः ॥ नक्तंचराश्चापितथाप्रवृत्ताविहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९ ॥ मत्तप्रमत्तानिसमाकुलानिरथाश्वभद्रासनसंकुलानि ॥ वीरश्रियाचापिसमाकुलानिददर्शधीमान्सकपिःकुलानि ॥ १० ॥ परस्परंचाधिकमाक्षिपंतिभुजांश्चपीनानधिविक्षिपंति ॥ मत्तप्रलापानधिविक्षिपंतिमत्तानिचान्योन्यमधिक्षिपंति ॥ ११ ॥ रक्षांसिवक्षांसिचविक्षिपंतिगात्राणिकांतासुचविक्षिपंति ॥ रूपाणिचित्राणिचविक्षिपंतिदृढानिचापानिचविक्षिपंति ॥ १२ ॥ ददर्शकांताश्चसमालभंत्यस्तथापरास्तत्रपुनःस्वपंत्यः ॥ सुरूपवक्त्राश्चतथाहसंत्यःक्रुद्धाःपराश्चापिविनिःश्वसंत्यः ॥ १३ ॥ महागजैश्चापितथानदद्भिःसुपूजितैश्चापितथासुसद्भिः ॥ रराजवीरैश्चविनिःश्वसद्भिर्ह्रदाभुजंगैरिवनिःश्वसद्भिः ॥ १४ ॥ बुद्धिप्रधानान्रुचिराभिधानान्संश्रद्दधानाञ्जगतःप्रधानान् ॥ नानाविधानान्रुचिराभिधानान्ददर्शतस्यांपुरियातुधानान् ॥ १५ ॥

त्यलक्षणं वृत्तं चारित्रं यासां ताः नक्तंचरा उलूकादयो राक्षसाश्च तथा विहर्तुं प्रवृत्ताः ॥ ९ ॥ ऐश्वर्यादिमत्ताः प्रमत्ता मद्यादिना येषु तानि अतएव समाकुलानि रक्षसां गृहाणि । रथाश्वेति सर्वयानोपलक्षणम् भद्रासनं स्वर्णपीठम् ॥ १० ॥ आक्षिपंति उत्तरप्रत्युत्तरं कुर्वंति अधिविक्षिपंति परस्परमित्यनुकर्षः । मत्तप्रलापानधिकं विक्षिपंति मुंचंति भर्त्सयंति वा मत्तानि रक्षांसीत्याकर्षः । अधिक्षिपंति तिरस्कुर्वंति ॥ ११ ॥ वक्षांसि विक्षिपंति परस्परमास्फालयंति । गात्राणां हस्तादीनां कांतासु क्षेपो न्यासः । चित्राणि रूपाणि नानाविधवेषान्विक्षिपंति कुर्वंति कांताप्रीतये संपादयंति । धनुषां विक्षेपो विस्फारणम् । ईदृशानि रक्षांसि ददर्श । शत्रंतान्येतानि ॥ १२ ॥ समालभंत्यः चंदनादीनीति शेषः । द्वितीयार्थे इमाः प्रथमाः । तत्रासंस्ताश्च ददर्शेति शेषो वा ॥ १३ ॥ सुसद्भिः सुतरां संतो विभीषणादयस्तैः रराज पुरमिति शेषः । विनिःश्वसद्भिः स्वापेक्षितयोधृलाभात् ॥ १४ ॥ बुद्धिः प्रधानं प्रधानगुणो येषाम् । रुचिरमभिधानं वचनं येषाम् । सम्यक् श्रद्दधानानास्तिकान् रुचिराभिधानान्रुचिरनाम्नः नानाप्रकारं विधानं वेषादेर्येषां तान् ॥ १५ ॥

आत्मगुणानुरूपान् तदुचितव्यवहारवतः । कांश्चित्पुनर्विरूपानपि विद्योतमानान्सुरूपानिव ददर्शेत्यर्थः ॥ १६ ॥ वरार्हाः श्रेष्ठविभूषणादियोग्या उत्तमोत्तमरूपाश्च । भावाः कटाक्षादयः । अनुभावः प्रभावः । भावोंतःकरणम् । तारास्तारकाः ॥ १७ ॥ ज्वलंतीः रूपसंपदा ज्वलंतीरिव । त्रपा लज्जा प्रमदेन हर्षेणोपगूढाः संबद्धाः यथा विहंगाः विहंगीरित्यर्थः । इंद्रनीलमणिमयोर्ध्वगेहेषु नीलतमः सदृशेषु शयनात्तत्सादृश्यम् ॥ १८ ॥ भर्तुः परा उत्कृष्टत्वेनाभिमताः । धर्मपराः भर्तृसेवालक्षणधर्मतत्पराः । निविष्टा ऊढाः । निवेशः शिबिरोद्वाहविन्यासेष्विति कोशः । मदन उपविष्टो यासु मदनाश्रया इत्यर्थः ॥ १९ ॥ अप्रावृत्ता उत्तरीयहीनाः कांचनराजिवर्णाः कनकरेखाकाराः परार्ध्या उत्तमाः तपनीयवर्णास्तप्तस्वर्णवर्णाः शशलक्ष्मा चंद्रः । कांतप्रहीणाः प्रियवियुक्ताः रुचिरांगवर्णाः सुंदरदेहकांतयः प्रथमं ददर्श ॥२०॥ प्रियान्प्राप्य प्रीतियुक्ता आसन् । सुमनोभिः पुष्पैरभिरामाः अतएव हृष्टाः परमया शोभयाऽभिरामाः स्वस्वकांतमनोहरा रामा गृहेषु ददर्श । प्रसमीक्ष्य रामा इति पाठे प्रियान् प्राप्य तान्समीक्ष्य प्रीतियुक्ताः रामास्तैः प्रियैः रम्यमाणाः अतएव गृहेषु हृष्टाः रामा ददर्शेति शेषः ॥ २१ ॥ चही पादपूरकौ । वक्रमालाः वक्रसमूहाः वक्राः वक्रप्रेक्षणाः सुपक्ष्माः शोभनपक्ष्मयुक्ता नेत्रमाला ददर्श ।

ननंदहृष्टाःसचतान्सुरूपान्नानागुणानात्मगुणानुरूपान् ॥ विद्योतमानान्सचतान्सुरूपान्ददर्शकांश्चिच्चपुनर्विरूपान् ॥ १६ ॥ ततोवरार्हाःसविशुद्ध भावास्तेषांस्त्रियस्तत्रमहानुभावाः ॥ प्रियेषुपानेषुचसक्तभावाददर्शताराइवसुस्वभावाः ॥१७॥स्त्रियोज्वलंतीस्त्रपयोपगूढानिशीथकालेरमणोपगूढाः ॥ ददर्शकाश्चित्प्रमदोपगूढायथाविहंगाविहगोपगूढाः ॥ १८॥ अन्याःपुनर्हर्म्यतलोपविष्टास्तत्रप्रियांकेषुसुखोपविष्टाः ॥ भर्तुःपराधर्मपरानिविष्टाददर्श धीमान्मदनोपविष्टाः ॥ १९ ॥ अप्रावृताःकांचनराजिवर्णाःकाश्चित्परार्ध्यास्तपनीयवर्णाः ॥ पुनश्चकाश्चिच्छशलक्ष्मवर्णाःकांतप्रहीणारुचिरांग वर्णाः ॥ २० ॥ ततःप्रियान्प्राप्यमनोभिरामान्सुप्रीतियुक्ताःसुमनोभिरामाः ॥ गृहेषुहृष्टाःपरमाभिरामाहरिप्रवीरःसददर्शरामाः ॥ २१ ॥ चंद्रप्रका शाश्चहिवक्रमालावक्राःसुपक्ष्माश्चसुनेत्रमालाः ॥ विभूषणानांचददर्शमालाःशतह्रदानामिवचारुमालाः ॥ २२ ॥ नत्वेवसीतांपरमाभिजातांपथि स्थितेराजकुलेप्रजाताम् ॥ लतांप्रफुल्लामिवसाधुजातांददर्शतन्वींमनसाभिजाताम् ॥२३॥ सनातनेवर्त्मनिसंनिविष्टांरामेक्षणींतांमदनाभिविष्टाम् ॥ भर्तुर्मनःश्रीमदनुप्रविष्टांस्त्रीभ्यःपराभ्यश्चसदाविशिष्टाम् ॥ २४ ॥ उष्णार्दितांसानुसृतास्रकंठींपुरावरार्होत्तमनिष्ककंठीम् ॥ सुजातपक्ष्मामभिरक्तकं ठींवनेप्रवृत्तामिवनीलकंठीम् ॥२५॥ अव्यक्तरेखामिवचंद्रलेखांपांसुप्रदिग्धामिवहेमरेखाम् ॥ क्षतप्ररूढामिवबाणरेखांवायुप्रभुग्नमिवहेमरेखाम् ॥२६॥

शतह्रदानां माला इव भूषणानां माला ददर्श । वक्राक्षिपक्ष्मा इति पाठेऽक्षिपदमधिकम् । वक्रपक्ष्मा इत्येवोचितम् । पक्ष्मसु वक्रत्वमपि किमित्यपि चिंत्यम् ॥ २२ ॥ पथि स्थिते धर्ममार्गस्थे नत्वेव ददर्शेत्यन्वयः । साधुजातामिति लताविशेषणम् । मनसाभिजातां धात्रा मनसा सृष्टाम् ॥ २३ ॥ सनातने वर्त्मनि अविच्छेदप्रवृत्ते पातिव्रत्यमार्गे । राममीक्षते ध्यायति रामेक्षणी तां मदनेन रामविषयेणा भिविष्टां व्याप्तां श्रीमद्भर्तुर्मनोऽनुप्रविष्टाम् । अनेन परस्परानुरागो ध्वनितः ॥ २४ ॥ उष्णार्दितां विरहतापपीडिताम् अनुसृतास्रेण प्रवृत्त बाष्पेण सह वर्तमानः कंठो यस्यास्ताम् । अत्रङीषार्षः । कंठामिति वा पाठः । पुरा रामसन्निधिकाले वराणामुत्तमभूषणानामर्होऽतएवोत्तमनिष्कः उत्तमभूषणः कंठो यस्यास्ताम् अभिरक्तो मधुरस्वरः कंठो यस्यास्ताम् । नीलकंठी मयूरी ॥ २५ ॥ अव्यक्ता अभ्रादिनाऽ स्पष्टा रेखा रेखाकारो यस्यास्ताम् । प्रदिग्धां रूषिताम् । क्षतप्ररूढां क्षतेन प्ररूढामुत्पन्नां वर्णरेखां बाणव्रणचिह्नं तद्वद्रामस्येदानीं रावणस्य वा ॥ २६ ॥

चिरस्य चिरमित्यर्थेऽव्ययम् । चिरमन्विष्याप्यपश्यन् अचिरस्य सद्यः मंद इव अन्वेषणाद्यकुशल इव दुःखोपहतो बभूव । अत्र सर्गे यमकालंकारः ॥ २७ ॥ सँरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकाण्डे पंचमः सर्गः ॥ ५ ॥ विमानेषु सप्तभूमिप्रासादेषु लाघवेन शैघ्र्येण ॥ १ ॥ राक्षसेंद्रनिवेशनमाससाद ॥ २ ॥ चकाशे चंद्रसाहित्याद्व्यक्तान्वेषणक्रियो बभूवत्यर्थः ॥ ३ ॥ रूप्यकं रजतं तेनोपहितैः शोभार्थम् लिखितैः ॥ ४ ॥ गजास्थितैर्गजारूढैः महामात्रैर्हस्तिपकैः उपस्थितं युक्तम् । असंहार्यैरप्रतिहतवेगैः स्यंदनयायिभिः स्यंदनवाहकैः प्रशस्ताश्वैरित्यर्थः ॥ ५ ॥ सिंहव्याघ्रतनुत्राणत्वादि रथविशेषणम् । दंतादिविकारा दांतादयस्तत्स्थप्रतिमास्ता धरद्भिरिति शेषः । घोषवत्त्वं किंकिणीभिः ॥ ६ ॥ महतां रथानामावापः स्थानं समंताद्यस्मिंस्तत् महारथानाम् ।

सीतामपश्यन्मनुजेश्वरस्यरामस्यपत्नींवदतांवरस्य ॥ बभूवदुःखोपहतश्चिरस्यप्लवंगमोमंदइवाचिरस्य ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकांडेपंचमः सर्गः ॥ ५ ॥ सनिकामंविमानेषुविचरन्कामरूपधृक् ॥ विचचारकपिर्लंकांलाघवेनसमन्वितः ॥ १ ॥ आससाद चलक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥ प्राकारेणार्कवर्णेनभास्वरेणाभिसंवृतम् ॥ २ ॥ रक्षितंराक्षसैर्भीमैःसिंहैरिवमहद्वनम् ॥ समीक्षमाणोभवनंचकाशेकपिकुंजरः ॥ ३ ॥ रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषणैः ॥ विचित्राभिश्चकक्ष्याभिर्द्वारैश्चरुचिरावृतम् ॥४॥ गजास्थितैर्महामात्रैःशूरैश्चविगतश्रमैः ॥ उपस्थितमसंहार्यैर्हयैःस्यंदनयायिभिः ॥ ५ ॥ सिंहव्याघ्रतनुत्राणैर्दांतकांचनराजतैः ॥ घोषवद्भिर्विचित्रैश्चसदाविचरितंरथैः ॥ ६ ॥ बहुरत्नसमाकीर्णपरार्ध्यासनभूषितम् ॥ महारथसमावापंमहारथमहासनम् ॥७॥ दृश्यैश्चपरमोदारैस्तैस्तैश्चमृगपक्षिभिः ॥ विविधैर्बहुसाहस्रैःपरिपूर्णंसमंततः ॥८॥ विनीतैरंतपालैश्चरक्षोभिश्चसुरक्षितम् ॥ मुख्याभिश्चवरस्त्रीभिःपरिपूर्णंसमंततः ॥ ९ ॥ मुदितप्रमदारत्नंराक्षसेंद्रनिवेशनम् ॥ वराभरणसंह्रादैःसमुद्रस्वननिस्वनम् ॥ १० ॥ तद्राजगुणसंपन्नंमुख्यैश्चवरचंदनैः ॥ महाजनसमाकीर्णंसिंहैरिवमहद्वनम् ॥ ११ ॥ भेरीमृदंगाभिरुतंशंखघोषविनादितम् ॥ नित्यार्चितंपर्वसुतंपूजितंराक्षसैःसदा ॥ १२ ॥ समुद्रमिवगंभीरंसमुद्रसमनिःस्वनम् ॥ महात्मनोमहद्वेश्ममहारत्नपरिच्छदम् ॥ १३ ॥ महारत्नसमाकीर्णंददर्शसमहाकपिः ॥ विराजमानंवपुषागजाश्वरथसंकुलम् ॥१४॥ लंकाभरणमित्येवसोऽमन्यतमहाकपिः ॥ चचारहनुमांस्तत्ररावणस्यसमीपतः ॥ १५ ॥ गृहाद्गृहंराक्षसानामुद्यानानिचसर्वशः ॥ वीक्षमाणोप्यसंत्रस्तःप्रासादांश्चचचारसः ॥ १६ ॥

एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते इत्युक्तलक्षणमहारथानां महासनं सदा वासस्थानम् ॥ ७ ॥ दृश्यैर्दर्शनीयैरतएव परमोदारैः अतिसुंदरैः ॥ ८ ॥ अंतपालैः पर्यंतरक्षकैः ॥ ९ ॥ राक्षसेंद्राणां महापार्श्वादीनां निवेशनानि यस्मिंस्तत् । भूषणशब्दैः समुद्रस्वनसदृशनिःस्वनम् ॥ १० ॥ तद्राजगुणसंपन्नं तैः प्रसिद्धै राजभवनगुणैश्छत्रचामरादिभिः संपन्नम् । वरचंदनैश्च संपन्नमित्यनुकर्षः ॥ ११ ॥ पर्वसु सुतः सोमो यस्मिन् यज्ञार्थे तत्पर्वसुतम् राक्षसैः सदा पूजितं स्वपूजनीयदेवताकम् ॥ १२ ॥ परिच्छदोऽलंकारः । महात्मनो रावणस्य महद्वेश्म ददर्शेत्यन्वयः ॥ १३ ॥ ॥ १४ ॥ अमन्यत तद्रावणवेश्मेति शेषः । रावणस्य रावणभवनस्य समीपतस्तत्प्राकारप्रदेशेषु ॥ १५ ॥ गृहाद्गृहं राजवेश्ममहाप्राकारांतर्वर्तिप्रधानरक्षसामेकस्य

गृहादपरं गृहमित्यर्थः ॥ १६ ॥ अस्यैव प्रपंचोऽवप्लुत्येत्यादि ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ विद्युज्जिह्वद्विजिह्वानामिति बहुवचनमार्षम् । तयोरित्यर्थः । विद्युज्जिह्वेंद्रजिह्वानामिति वा पाठांतरम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ उपशायिन्यः उपशायोपशायश्च पर्यायशयनार्थकाः । पर्यायेण शयनस्थानरक्षिका इत्यर्थ इत्याहुः ॥ २९ ॥ गुल्मान् राक्षसीसमूहान् ॥ ३० ॥ हरीन् अश्वान् ॥ ३१ ॥ परगजारुजान् शत्रुगजान् आरुजंति भंजयंति तान् ॥ ३२ ॥ ३३ ॥ मेघस्तनितनिर्घोषत्वादिविशिष्टान् गजान् ददर्शेत्यन्वयः । सहस्रं वाहिनीः अनेकसेनाः

अवप्लुत्यमहावेगःप्रहस्तस्यनिवेशनम् ॥ ततोऽन्यत्पुप्लुवेवेश्ममहापार्श्वस्यवीर्यवान् ॥ १७ ॥ अथमेघप्रतीकाशंकुंभकर्णनिवेशनम् ॥ विभीषणस्यचतथापुप्लुवेसमहाकपिः ॥ १८ ॥ महोदरस्यचतथाविरूपाक्षस्यचैवहि ॥ विद्युज्जिह्वस्यभवनंविद्युन्मालेस्तथैवच ॥ १९ ॥ बहुदंष्ट्रस्यचतथापुप्लुवेसमहाकपिः ॥ शुकस्यचमहावेगःसारणस्यचधीमतः ॥ २० ॥ तथाचेंद्रजितोवेश्मजगामहरियूथपः ॥ जंबुमालेःसुमालेश्चजगामहरिसत्तमः ॥२१॥ रश्मिकेतोश्चभवनंसूर्यशत्रोस्तथैवच ॥ वज्रकायस्यचतथापुप्लुवेसमहाकपिः ॥ २२ ॥ धूम्राक्षस्याथसंपातेर्भवनंमारुतात्मजः ॥ विद्युद्रूपस्यभीमस्यघनस्यविघनस्यच ॥ २३ ॥ शुकनाभस्यचक्रस्यशठस्यकपटस्यच ॥ ह्रस्वकर्णस्यदंष्ट्रस्यलोमशस्यचरक्षसः ॥२४॥ युद्धोन्मत्तस्यमत्तस्यध्वजग्रीवस्यसादिनः ॥ विद्युज्जिह्वद्विजिह्वानांतथाहस्तिमुखस्यच ॥ २५ ॥ करालस्यविशालस्यशोणिताक्षस्यचैवहि ॥ प्लवमानःक्रमेणैवहनूमान्मारुतात्मजः ॥ २६ ॥ तेषुतेषुमहार्हेषुभवनेषुमहायशाः ॥ तेषामृद्धिमतामृद्धिंददर्शसमहाकपिः ॥ २७ ॥ सर्वेषांसमतिक्रम्यभवनानिसमंततः ॥ आससादाथलक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥ २८ ॥ रावणस्योपशायिन्योददर्शहरिसत्तमः ॥ विचरन्हरिशार्दूलोराक्षसीर्विकृतेक्षणाः ॥ २९ ॥ शूलमुद्गरहस्ताश्चशक्तितोमरधारिणः ॥ ददर्शविविधान्गुल्मांस्तस्यरक्षःपतेर्गृहे ॥ ३० ॥ राक्षसांश्चमहाकायान्नानाप्रहरणोद्यतान् ॥ रक्तान्श्वेतान्सितांश्चापिहरींश्चापिमहाजवान् ॥ ३१ ॥ कुलीनान्रूपसंपन्नान्गजान्परगजारुजान् ॥ शिक्षितान्गजशिक्षायामैरावतसमान्युधि ॥ ३२ ॥ निहंतॄन्परसैन्यानांगृहेतस्मिन्ददर्शसः ॥ क्षरतश्चयथामेघान्स्रवतश्चयथागिरीन् ॥ ३३ ॥ मेघस्तनितनिर्घोषान्दुर्धर्षान्समरेपरैः ॥ सहस्रंवाहिनीस्तत्रजांबूनदपरिष्कृताः ॥ ३४ ॥ हेमजालैरविच्छिन्नास्तरुणादित्यसन्निभाः ॥ ददर्शराक्षसेंद्रस्यरावणस्यनिवेशने ॥ ३५ ॥ शिबिकाविविधाकाराःसकपिर्मारुतात्मजः ॥ लतागृहाणिचित्राणिचित्रशालागृहाणिच ॥ ३६ ॥ क्रीडागृहाणिचान्यानिदारुपर्वतकानिच ॥ कामस्यगृहकंरम्यंदिवागृहकमेवच ॥ ॥ ३७ ॥ ददर्शराक्षसेंद्रस्यरावणस्यनिवेशने ॥ समंदरसमप्रख्यंमयूरस्थानसंकुलम् ॥ ३८ ॥

॥ ३४ ॥ हेमजालैरविच्छिन्नाः सर्वतो भूषिता इति शिबिकाविशेषणम् ॥ ३५ ॥ शिबिकाः ददर्शेत्यनुकर्षः । चित्रशालागृहाणि चित्रयुक्तशालावंति गृहाणि ॥ ३६ ॥ दारुनिर्मिताः क्रीडापर्वताः दारुपर्वतकानि । क्लीबत्वमार्षम् । कामस्य गृहकं रतिगृहकम् । दिवागृहकं दिनविहारगृहम् । सर्वत्रात्यंतस्वार्थिकः कन् ॥ ३७ ॥ मयूरस्थानैः क्रीडामयूरस्थानैः संकुलं व्याप्तम् ॥ ३८ ॥

निधिजालम् निधिजालवदित्यर्थः। धीरनिष्ठितकर्मांगं धीरैर्निर्भयस्थिरचित्तैर्निष्ठितं निर्वर्तितं कर्मणो निधिरक्षादिकर्मणोंगं महिषादि बलिरूपं यस्मिन्। कश्चित्तु कर्मांतमिति पठित्वा धीरैर्निष्ठितस्यानुष्ठितस्य कर्मणस्तपो रूपस्यांतं फलरूपमित्यर्थमाह। भूतपतेर्महेश्वरस्य यक्षेश्वरस्य वा ॥ ३९ ॥ ४० ॥ ४१ ॥ मध्वासवयोरवांतरभेदस्ताभ्यां कृतक्लेदमार्द्रमित्यर्थः ॥ ४२ ॥ घोषवद्भिर्मृदंगातिरिक्तैरपि घोषवद्भिर्वाद्यैर्विनादितम् ॥ ४३ ॥ ४४ ॥ भौर्वेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षष्ठः सर्गः ॥ ६ ॥ ॥ अथ रावणप्रधानगृहं वर्णयति स इति। व्यासक्तानि संबद्धानि वैदूर्यखचितानि च सुवर्णजालानि स्वर्णगवाक्षाणि यस्मिंस्तत्। सविहंगजालमिति गृहमेघयोर्विशेषणम् ॥ १ ॥ प्रधानैः प्रशस्तैः शंखादिभिः शालंते शोभन्ते तादृशीर्निवेशनानां शाला अवांतर

ध्वजयष्टिभिराकीर्णंददर्शभवनोत्तमम् ॥ अनंतरत्ननिचयंनिधिजालंसमंततः ॥ धीरनिष्ठितकर्मांगंगृहंभूतपतेरिव ॥ ३९ ॥ अर्चिर्भिश्चापिरत्नानांतेजसारावणस्यच ॥ विरराजचतद्वेश्मरश्मिवानिवरश्मिभिः ॥४०॥ जांबूनदमयान्येवशयनान्यासनानिच ॥ भाजनानिचशुभ्राणिददर्शहरियूथपः ॥ ॥ ४१ ॥ मध्वासवकृतक्लेदंमणिभाजनसंकुलम् ॥ मनोरममसंबाधंकुबेरभवनंयथा ॥ ४२ ॥ नूपुराणांचघोषेणकांचीनांनिःस्वनेनच ॥ मृदंगतलनिर्घोषैर्घोषवद्भिर्विनादितम् ॥ ४३ ॥ प्रासादसंघातयुतंस्त्रीरत्नशतसंकुलम् ॥ सुव्यूढकक्ष्यंहनुमान्प्रविवेशमहागृहम् ॥ ४४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे षष्ठः सर्गः ॥ ६ ॥ सवेश्मजालंबलवान्ददर्शव्यासक्तवैदूर्यसुवर्णजालम् ॥ यथामहत्प्रावृषिमेघजालंविद्युद्भिनद्धं सविहंगजालम् ॥ १ ॥ निवेशनानांविविधाश्चशालाःप्रधानशंखायुधचापशालाः ॥ मनोहराश्चापिपुनर्विशालाददर्शवेश्माद्रिषुचंद्रशालाः ॥ २ ॥ गृहाणिनानावसुराजितानिदेवासुरैश्चापिसुपूजितानि ॥ सर्वैश्चदोषैःपरिवर्जितानिकपिर्ददर्शस्वबलार्जितानि ॥ ३ ॥ तानिप्रयत्नाभिसमाहितानिमयेनसाक्षादिवनिर्मितानि ॥ महीतलेसर्वगुणोत्तराणिददर्शलंकाधिपतेर्गृहाणि ॥ ४ ॥ ततोददर्शोच्छ्रितमेघरूपंमनोहरंकांचनचारुरूपम् ॥ रक्षोधिपस्यात्मबलानुरूपंगृहोत्तमंह्यप्रतिरूपरूपम् ॥ ५ ॥ महीतलेस्वर्गमिवप्रकीर्णंश्रियाज्वलंतंबहुरत्नकीर्णम् ॥ नानातरूणांकुसुमावकीर्णंगिरेरिवाग्रंरजसावकीर्णम् ॥ ६ ॥ नारीप्रवेकैरिवदीप्यमानंतडिद्भिरंभोधरमर्च्यमानम् ॥ हंसप्रवेकैरिववाह्यमानंश्रियायुतंखेसुकृतांविमानम् ॥ ७ ॥

गृहाणि ददर्श। पुनश्च विशालाश्चंद्रशाला ददर्श। वेश्माद्रिषु औन्नत्याददिद्रतुल्यवेश्मसु। चंद्रशालाः शिरोगृहाणि चंद्रकांतमणिबद्धशाला वा ॥ २ ॥ वसु धनम्। स्वबलेत्यत्र स्वशब्दो रावणवाची। कुबेराद्रावणेन लंकाया आच्छिद्य गृहीतत्वात् यद्वा स्वशब्दो हनुमद्वाची। स्वबलेनार्जितानि लब्धप्रवेशानि ॥ ३ ॥ प्रयत्नेनाभितः सम्यगाहितानि यथायोगं स्थापितानि प्रयत्नाभिसमाहितानि। विश्वकर्मकृतान्यपि मायया विचित्ररचनादक्षेण मयेन निर्मितानीव ॥ ४ ॥ गृहोत्तमं प्रधानगृहेष्वप्युत्तमम्। अप्रतिरूपरूपं निरुपमरूपम् ॥ ५ ॥ प्रकीर्णं पातितम्। रत्नकीर्णं रत्नपूर्णम्। रजसा पुष्परजसा ॥ ६ ॥ नारीप्रवेकैर्नारीश्रेष्ठैः। इवश्चार्थे। तडिद्भिरर्च्यमानं युज्यमानमंभोधरं मेघमिव। हंसश्रेष्ठैर्वाह्यमानमुह्यमानं विमानमिव ॥ ७ ॥

नानावर्णैर्युक्तोपि तद्युक्तः कृतो युक्तीकृतः स चासौ चारुमेघश्च तद्वद्विचित्रं विमानं पुष्पकाख्यम् ॥ ८ ॥ यत्र पुष्पके मही अनेकजननानामाधारस्थानं पर्वतराज्या पूर्णम् । पर्वतादयश्चात्रमणिस्वर्णादिनिर्मिताः । नत्विदं चित्ररूपमिति भ्रमितव्यम् । अनंतवानरसेनाया निर्बाधं तत्रावस्थानस्य वक्ष्यमाणत्वात् । किं च स्वामीच्छानुसारेण संकोचविकासौ तस्य वक्ष्यति स्वेच्छया हनुमेद्देहवत् । वितानं समूहः । एकावली अत्रालंकारः ॥ ९ ॥ कृतानि अस्य यत्रेत्यादिशेषः ॥ १० ॥ पुष्पाह्वयं नाम ददर्शेत्यन्वयः । वेश्मोत्तमानां देववेश्मभूतविमानानां मध्ये उच्चमानं सौभाग्यपरमकाष्ठां प्राप्तम् ॥ ११ ॥ कृताश्चेति । तत्र विमाने इति शेषः । नानावसुभिः रूप्यस्वर्णाद्यैः जात्यानुरूपा जातितुरंगसदृशाः । तुरगविशेषणं चैतत् ॥ १२ ॥ प्रवालजांबूनदकृतानि पुष्पाणि पक्षेषु येषाम् । आवर्जितः संकुचिता जिह्वा वक्राः पक्षा येषां ते । साक्षात्कामस्य पक्षा इव येषां पक्षा भांति । तदुद्दीपकत्वात् । तादृशा उच्यमानगुणा विहंगास्तत्र कृताः ॥ १३ ॥ नियुज्यमानाः व्याभियमाणाः । वक्ष्यमाणाया लक्ष्म्या अभिषेके इति शेषः ।

यथानगाग्रंवहुधातुचित्रंयथानभश्चग्रहचंद्रचित्रम् ॥ ददर्शयुक्तीकृतचारुमेघचित्रंविमानंवहुरत्नचित्रम् ॥ ८ ॥ महीकृतापर्वतराजिपूर्णाशैलाःकृतावृक्षवितानपूर्णाः ॥ वृक्षाःकृताःपुष्पवितानपूर्णाःपुष्पंकृतंकेसरपत्रपूर्णम् ॥ ९ ॥ कृतानिवेश्मानिचपांडुराणितथासुपुष्पाअपिपुष्करिण्यः ॥ पुनश्चपद्मानिसकेसराणिवनानिचित्राणिसरोवराणि ॥ १० ॥ पुष्पाह्वयंनामविराजमानंरत्नप्रभाभिश्चविघूर्णमानम् ॥ वेश्मोत्तमानामपिचोच्चमानंमहाकपिस्तत्रमहाविमानम् ॥ ११ ॥ कृताश्चवैदूर्यमयाविहंगारूप्यप्रवालैश्चतथाविहंगाः ॥ चित्राश्चनानावसुभिर्भुजंगाजात्यानुरूपास्तुरगाःशुभांगाः ॥ १२ ॥ प्रवालजांबूनदपुष्पपक्षाःसलीलमावर्जितजिह्मपक्षाः ॥ कामस्यसाक्षादिवभांतिपक्षाःकृताविहंगाःसुमुखाःसुपक्षाः ॥ १३ ॥ नियुज्यमानाश्चगजाःसुहस्ताःसकेसराश्चोत्पलपत्रहस्ताः ॥ वभूवदेवीचकृतासुहस्तालक्ष्मीस्तथापद्मिनिपद्महस्ता ॥ १४ ॥ इतीवतद्गृहमभिगम्यशोभमानंसविस्मयोनगमिवचारुकंदरम् ॥ पुनश्चतत्परमसुगंधिसुंदरंहिमात्ययेनगमिवचारुकंदरम् ॥ १५ ॥ ततःसतांकपिरभिपत्यपूजितांचरन्पुरींदशमुखवाहुपालिताम् ॥ अदृश्यतांजनकसुतांसुपूजितांसुदुःखितांपतिगुणवेगनिर्जिताम् ॥ १६ ॥ ततस्तदावहुविधभावितात्मनःकृतात्मनोजनकसुतांसुवर्त्मनः ॥ अपश्यतोभवदतिदुःखितंमनःसचक्षुषःप्रविचरतोमहात्मनः ॥ १७ ॥ इत्यार्षे श्रीम० वाल्मी० आदि० सुं० सप्तमः सर्गः ॥ ७ ॥ सतस्यमध्येभवनस्यसंस्थितोमहद्विमानंमणिरत्नचित्रितम् ॥ प्रतप्तजांबूनदजालकृत्रिमंददर्शधीमान्पवनात्मजःकपिः ॥ १ ॥

हस्तः शुंडा । पद्माकरविहारिगजाकारनिर्माणात्सकेसरत्वमुत्पलपत्रहस्तत्वं च तेषां तादृशा गजास्तत्र कृता बभूवुरिति शेषः । पद्मिनि पद्मवत्सरासि ॥१४॥ इतीव एवंप्रकारं चारुकंदरं चारुगुहं नगमिव पर्वतमिव चारुदर्शनं तत् गृहमभिगम्य सविस्मयो बभूवेति शेषः । हिमात्यये वसंते परमसुगंधि चारुकंदरं नगमिव वृक्षमिव । कंदरोत्र कोटरः । पुनश्चाभिगम्य सविस्मयोभूदिति शेषः । परिच्छेदानवगमादिति भावः ॥ १५ ॥ अभिपत्याभिपत्य चरन् संचरन् पतिगुणवेगनिर्जितां पतिगुणवेगेन पतिगुणनिरंतरध्यानेन निर्जितां निर्जितदुःखां अदृश्य अदृष्ट्वा दुःखितोभूदिति शेषः । आर्षो ल्यप् ॥ १६ ॥ बहुविधभावितात्मनः नानाप्रकारेण सर्वजगत्पूजितस्वभावस्य । स्वभाववाची आत्मशब्दः । कृतात्मनः शिक्षितांतःकरणस्य । सुवर्त्मनः शोभननीतिमार्गवर्तिनः । सचक्षुषः श्रुतिस्मृतिन्यायरूपचक्षुःसहितस्य ॥ १७ ॥ सैकैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तमः सर्गः ॥ ७ ॥ ॥ अथ विशिष्य पुष्पकं वर्णयितुमाह स इति । मणिरत्नैर्मणिश्रेष्ठैश्चित्रितं प्रतप्तजांबूनदजालानां

तन्मयगवाक्षाणा कृत्रिमं कृतिर्यस्मिंस्तत्तस्य भवनस्य रावणगृहस्य मध्ये महद्विमानं पुष्पकं ददर्श ॥ १ ॥ अप्रमेयप्रतिकारकृत्रिमं अप्रमेयैरपरिच्छेद्यसौंदर्यादिभिः प्रतिकारैः प्रतिमादिभिः कृत्रिमं निर्वृत्तचित्रशोभम् । पाठांतरं त्वसांप्रदायिकमिति कतकः । विश्वकर्मणा च स्वयं साध्विति कृतम् । मन्निर्मितेष्विदमतिसाध्वित्यनुमोदितमित्यर्थः । दिवमाकाशं गते वायुपथे प्रतिष्ठितं वायुपथस्यैवादित्यपथत्वात्तस्य चिह्नभूतम् ॥ २ ॥ तत्र तादृशं किंचिन्न यत्प्रयत्नतो न कृतम् । अपि तु सर्वं प्रयत्नकृतमेवेत्यर्थः । यद्वयवजातं महार्घरत्नवन्न बहुमूल्यरत्नवन्न तादृशं किंचिदपि तत्र न । ये विशेषा रचनाविशेषास्तत्र नियताः प्रतिष्ठितास्ते सुरेषु सुरविमानेष्वपि न । महाविशेषो गुणाधिक्यम् ॥ ३ ॥ तपसा उपवासादिना समाधानेन भगवति चित्तसमाधानेन लब्धो यः पराक्रमस्तेन रावणार्जितम् । मनः समाधानेन यत्र विचारो गमनस्य तत्र संचरणशीलं मनः संकल्पितदेशगमनशीलम् । संस्थानविशेषा रचनाविशेषाः । ततस्ततस्तस्मात्तस्मादाहृतेन तुल्येन दिव्यविमाननिर्माणोचितेन विशेषेण विशिष्टपदार्थेन निर्मितम् ॥ ४ ॥ मनः

तदप्रमेयप्रतिकारकृत्रिमंकृतंस्वयंसाध्वितिविश्वकर्मणा ॥ दिवंगतेवायुपथेप्रतिष्ठितंव्यराजतादित्यपथस्थलक्ष्मतत् ॥ २ ॥ नतत्रकिंचिन्नकृतंप्रयत्नतोनतत्रकिंचिन्नमहार्घरत्नवत् ॥ नतेविशेषानियताःसुरेष्वपिनतत्रकिंचिन्नमहाविशेषवत् ॥ ३ ॥ तपःसमाधानपराक्रमार्जितंमनःसमाधानविचारचारिणम् ॥ अनेकसंस्थानविशेषनिर्मितंततस्ततस्तुल्यविशेषनिर्मितम् ॥ ४ ॥ मनःसमाधायतुशीघ्रगामिनंदुरासदंमारुततुल्यगामि ॥ महात्मनांपुण्यकृतांमहर्द्धिनांयशस्विनामग्र्यमुदामिवालयम् ॥ ५ ॥ विशेषमालंब्यविशेषसंस्थितंविचित्रकूटंबहुकूटमंडितम् ॥ मनोभिरामंशरदिंदुनिर्मलंविचित्रकूटंशिखरंगिरेर्यथा ॥ ६ ॥ वहंतियत्कुंडलशोभिताननामहाशनाव्योमचरानिशाचराः ॥ विवृत्तविध्वस्तविशाललोचनामहाजवाभूतगणाःसहस्रशः ॥ ॥ ७ ॥ वसंतपुष्पोत्करचारुदर्शनंवसंतमासादपिचारुदर्शनम् ॥ सपुष्पकंतत्रविमानमुत्तमंददर्शतद्वानरवीरसत्तमः ॥ ८ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आदि० सुंदरकांडे अष्टमः सर्गः ॥ ८ ॥ तस्यालयवरिष्ठस्यमध्येविमलमायतम् ॥ ददर्शभवनश्रेष्ठंहनूमान्मारुतात्मजः ॥ १ ॥

समाधाय स्वामिमनोनुरुध्यंतु शीघ्रगामित्वादिधर्मकं दुरासदं पापिभिरिति शेषः । दुरावरमिति पाठे शत्रुभिर्दुर्निवारमित्यर्थः । महर्द्धिनाम् दीर्घाभावश्छांदसः । एवं तुल्यगामिनमित्यत्र पुंस्त्वम् । विमानशब्दोऽर्धर्चादिर्वा । अग्र्यमुदां महासुखानां पुण्यकृतामेवालयम् आस्पदम् । इवशब्द एवार्थे । अत्र तस्याचेतनत्वेपि तदभिमानिदेवतायाश्चेतनत्वादिति बोध्यम् ॥ ५ ॥ विशेषं गातिविशेषमालंब्य विशेषे व्योमलक्षण देशविशेषे संस्थितम् विचित्राणामाश्चर्यवस्तूनां कूटं समवायभूतम् बहुभिः कूटैः शालाभिर्मंडितम् गिरेर्विचित्रावांतरशृंगवच्छिखरमिव ॥ ६ ॥ उच्यमानविशेषणा भूतगणा यद्वहन्ति तद्विमानं तत्र ददर्शेत्यन्वयः । विवृत्तानि विघूर्णानि विध्वस्तानि त्यक्तनिमेषाणि विशालानि लोचनानि येषाम् । निशाचराः निशास्वप्यहर्विशेषं चरंति ते ॥ ७ ॥ वसंतपुष्पोत्करचारुदर्शनं वसंतकालिकपुष्पसमूहेन चारु दर्शनम् ॥ ८ ॥ हनुमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे अष्टमः सर्गः ॥ ८ ॥ ॥ छ ॥ ॥ तस्येति । आलयवरिष्ठस्य लंकामध्यवर्तिनो गृहसमूहवतो महागृहस्य ॥ १ ॥

अर्धयोजनविस्तीर्णं तिर्यक्प्रमाणम् ॥ २ ॥ ३ ॥ आवासं बहुराक्षससाधारणं वासस्थानम् । राक्षसेंद्रनिवेशनं तन्मात्रवासस्थानम् ॥ ४ ॥ परिक्षिप्तं युक्तं ईदृशगजादिसत्त्वेप्यसंबाधत्वेनातिविस्तृतत्वं सूच्यते ॥ ५ ॥ राक्षसीभिः राक्षसजातिजाभिः पत्नीभिरावृतम् तथा विक्रम्यांहृताभी राजकन्याभिश्चावृतम् ॥ ६ ॥ पन्नगैर्युतं सागरमिव तत्पश्यतिस्म ॥ ७ ॥ लक्ष्मीः शोभा रावणगृहे लंकायाम् ॥ ८ ॥ ऋद्धिरैश्वर्यं तद्विशिष्टा ततोप्यधिका ॥ ९ ॥ तस्य हर्म्यस्य अर्धयोजनविस्तीर्णत्वादिधर्मणः वेश्म सन्नीकशयनगृहमिति कतकः । वेश्म पुष्पकाख्यमिति तीर्थः । अत्र तीर्थव्याख्या ज्यायसी । निर्यूहो मत्तवारणः ॥ १० ॥

अर्धयोजनविस्तीर्णमायतंयोजनंमहत् ॥ भवनंराक्षसेंद्रस्यबहुप्रासादसंकुलम् ॥ २ ॥ मार्गमाणस्तुवैदेहींसीतामायतलोचनाम् ॥ सर्वतःपरिचक्राम हनूमानरिसूदनः ॥ ३ ॥ उत्तमंराक्षसावासंहनूमानवलोकयन् ॥ आससादाथलक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥ ४ ॥ चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैवच ॥ परिक्षिप्तमसंबाधंरक्ष्यमाणमुदायुधैः ॥ ५ ॥ राक्षसीभिश्चपत्नीभीरावणस्यनिवेशनम् ॥ अहृताभिश्चविक्रम्यराजकन्याभिरावृतम् ॥ ६ ॥ तन्नक्रमकराकीर्णंतिमिंगिलझषाकुलम् ॥ वायुवेगसमाधूतंपन्नगैरिवसागरम् ॥ ७ ॥ याहिवैश्रवणेलक्ष्मीर्याचंद्रेहरिवाहने ॥ सारावणगृहेरम्यानित्यमेवानपायिनी ॥ ८ ॥ याचराज्ञःकुबेरस्ययमस्यवरुणस्यच ॥ तादृशीतद्विशिष्टावाऋद्धीरक्षोगृहेष्विह ॥ ९ ॥ तस्यहर्म्यस्यमध्यस्थवेश्मचान्यत्सुनिर्मितम् ॥ बहुनिर्यूहसंयुक्तंददर्शपवनात्मजः ॥ १० ॥ ब्रह्मणोऽर्थेकृतंदिव्यंदिवियद्विश्वकर्मणा ॥ विमानंपुष्पकंनामसर्वरत्नविभूषितम् ॥ ११ ॥ परेणतपसालेभेयत्कुबेरःपितामहात् ॥ कुबेरमोजसाजित्वालेभेतद्राक्षसेश्वरः ॥ १२ ॥ ईहामृगसमायुक्तैःकार्तस्वरहिरण्मयैः ॥ सुकृतैराजितंस्तंभैः प्रदीप्तमिवचाश्रिया ॥ १३ ॥ मेरुमंदरसंकाशैरुल्लिखद्भिरिवांबरम् ॥ कूटागारैःशुभागारैःसर्वतः समलंकृतम् ॥ १४ ॥ ज्वलनार्कप्रतीकाशैःसुकृतंविश्वकर्मणा ॥ हेमसोपानयुक्तंचचारुप्रवरवेदिकम् ॥ १५ ॥ जालवातायनैर्युक्तंकांचनैःस्फाटिकैरपि ॥ इंद्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६ ॥ विद्रुमेणविचित्रेणमणिभिश्चमहाधनैः ॥ निस्तुलाभिश्चमुक्ताभिस्तलेनाभिविराजितम् ॥ १७ ॥ चंदनेनचरक्तेनतपनीयनिभेनच ॥ सुपुण्यगंधिनायुक्तमादित्यतरुणोपमम् ॥ १८ ॥ विमानंपुष्पकंदिव्यमारुरोहमहाकपिः ॥ तत्रस्थःसर्वतोगंधंपानभक्ष्यान्नसंभवम् ॥ १९ ॥

पुनर्हनुमदारोहणशेषतया पुष्पकं वर्णयति ब्रह्मणोर्थे इति । भगवतो लीलाफलकमित्यर्थः ॥ ११ ॥ १२ ॥ कार्तस्वरहिरण्ये स्वर्णजातिविशेषौ । रूप्यस्वर्णे इति कश्चित् । ईहामृगो वृकस्तत्प्रतिमायुक्तैः ॥ १३ ॥ कूटागारैर्गुप्तस्वल्पगृहैः । शुभागारैर्विहारयोग्यगृहैः ॥ १४ ॥ चार्व्यः सुंदराः प्रवराः श्रेष्ठा वेदिका यस्मिंस्तत् ॥ १५ ॥ जालवातायनयोः कांचनकार्तस्वरयोर्मध्वासवयोश्च कंचिद्भेदं परिकल्प्य निर्वाहः । एवमिंद्रनीलमहानील्योरपि ॥ १६ ॥ निस्तुलाभिर्वर्तुलाभिर्निरुपमाभिर्वा । तलेन कुट्टिममदेशेन ॥ १७ ॥ आदित्यतरुणोपमं तरुणादित्यसदृशम् ॥ १८ ॥ तत्रस्थः पुष्पकविमानस्थः ॥ १९ ॥

संमूर्छितं व्याप्तं गंधवहमनिलमपि तद्बंधने रूपवंतमिव गंधद्रव्यरूपमिव तद्वायुसंबंधात्स गंधः स्वयं महासत्त्वं उत्तमं बंधुं बंधुरिव जिघ्रन्नभूत् । गंधापारोक्ष्यात्तद्वहवायुरप्यपरोक्ष इवाभूत् ॥ २० ॥ यत्र स रावणस्तत्र स्थाने इत एहीत्युवाचेव । उक्तगुणवायुः कर्ता । द्विव्यगंधेन रावणशयनगृहं ज्ञातवानित्यर्थः । ततस्तस्मात्पुष्पकादवरुह्य गंधानुमितां तां रावणशयनशालां प्रस्थितस्तां शालां ददर्श । यत्तु पुष्पकस्यैव सा शाला तत इत्यस्य तदनंतरमित्यर्थ इति तच्चिंत्यम् । प्रस्थित इति पदस्वारस्यात् । अर्धयोजनविस्तीर्णमित्यादिना मूलालयप्रदर्शनोपक्रमाच्च । मूलालयं दृष्ट्वा तद्बहिःस्थं पुष्पकमन्विष्य तत्स्थ एव रावणशयनगृहं तद्वहवत्र्यनुमाय पुष्पकादवरुह्य तं प्रति स्थितस्तां ददर्शेत्येव न्याय्यमिति कतकः ॥ यत्त्वित्यादिनोक्ता व्याख्यैव युक्तेति मम भाति । अवतीर्य विमानाच्च हनुमान् मारुतात्मज इत्यग्रे उपसंहारात् ॥ २१ ॥ महाकांताम् अतिरमणीयामित्यर्थकं शालाविशेषणम् । कांतां कमनीयाम् तां शालामेव विशिनष्टि मणीत्यादिना श्रियः संजननीमिवेत्यंतेन । मणिकृतसोपानानि विशेषणकृतानि यस्याम् ॥ २२ ॥ तलं कुट्टिमभूः । दंतांतारितरूपिकामिति । दंतैरंतरितानि मध्ये मध्ये निर्मितानि रूपाणि यस्यां सा चामीकरैरपि अंतरितरूपिकामित्यनुकर्षः ॥ २३ ॥ बहुत्वबोधनाय

दिव्यंसंमूर्छितंजिघ्रन्रूपवंतमिवानिलम् ॥ सगंधस्तंमहासत्त्वंबंधुर्बंधुमिवोत्तमम् ॥ २० ॥ इतएहीत्युवाचेवतत्रयत्रसरावणः ॥ ततस्तांप्रस्थितः शालांददर्शमहतींशिवाम् ॥ २१ ॥ रावणस्यमहाकांतांकांतामिववरांस्त्रियम् ॥ मणिसोपानविकृतांहेमजालविराजिताम् ॥ २२ ॥ स्फाटिकैरावृत तलांदंतांतरितरूपिकाम् ॥ मुक्तावज्रप्रवालैश्चरूप्यचामीकरैरपि ॥ २३ ॥ विभूषितांमणिस्तंभैःसुबहुस्तंभभूषिताम् ॥ समैरृजुभिरत्युच्चैःसमंतात्सु विभूषितैः ॥ २४ ॥ स्तंभैःपक्षैरिवात्युच्चैर्दिवंसंप्रस्थितामिव ॥ महत्याकुथयास्तीर्णांपृथिवीलक्षणांकया ॥ २५॥ पृथिवीमिवविस्तीर्णांसराष्ट्रगृहशा लिनीम् ॥ नादितांमत्तविहगैर्दिव्यगंधाधिवासिताम् ॥ २६ ॥ परार्ध्यास्तरणोपेतांरक्षोधिपनिषेविताम् ॥ धूम्रामगुरुधूपेनविमलांहंसपांडुराम् ॥ ॥ २७ ॥ पत्रपुष्पोपहारेणकल्माषीमिवसुप्रभाम् ॥ मनसोमोदजननींवर्णस्यापिप्रसाधिनीम् ॥ २८ ॥ तांशोकनाशनींदिव्यांश्रियःसंजननीमिव ॥ इंद्रियाणींद्रियार्थैस्तुपंचपंचभिरुत्तमैः ॥ २९ ॥ तर्पयामासमातेवतदारावणपालिता ॥ स्वर्गोऽयंदेवलोकोऽयमिंद्रस्यापिपुरीभवेत् ॥ ३० ॥ सिद्धिर्वेयं परास्यादित्यमन्यतमारुतिः ॥ ३१ ॥ प्रध्यायतइवापश्यत्प्रदीपांस्तत्रकांचनान् ॥ धूर्तानिवमहाधूर्तैर्देवनेनपराजितान् ॥ ३२ ॥

पुनः स्तंभानुवादः बहुत्वं च विपुलत्वम् समंतात्सुविभूषितैः रत्नादिभिरिति शेषः ॥ २४ ॥ अत्युच्चैः पक्षैरिवात्युच्चैः स्तभैर्दिवं संप्रस्थितामिवेत्युत्प्रेक्षात्र । कुथया विशालविचित्रकंबलास्तरणेन पृथिवीलक्षणं चतुरस्रत्वम् ॥ २५ ॥ सराष्ट्रगृहशालिनीमिति पृथिवीविशेषणम् ॥ २६ ॥ हंसपांडुरां हंसवत् पांडुराम् ॥ २७ ॥ कल्माषी शबलवर्णा वसिष्ठगौः अनेन सर्वानंददायित्वं रिपूणामधृष्यत्वं च सर्वमनोरथपरकत्वं च सूच्यते । वर्णस्य देहकांतेः प्रसाधिनीं संपादिकाम् ॥ २८ ॥ तां शालां ददर्शेति पूर्वेण संबंधः । पंचभिरिंद्रियार्थैः शब्दस्पर्शरूपरसगंधैः पंचेंद्रियाणि श्रोत्रत्वक्चक्षूरसनघ्राणानि तर्पयामास हनुमंतमिति शेषः । रावणपालिता शालेति शेषः स्वर्गो ज्योतिष्टोमादिकफलभोगभूमिः देवलोको वायुवरुणादिलोकः । इंद्रस्य पुरी अमरावती ॥ २९ ॥ ३० ॥ परा गांधर्वी सिद्धिस्तन्मायेत्यर्थः ॥ ३१ ॥ प्रध्यायतो ध्याननिष्ठान् धूर्तांक्षदेवनस्तत्रातिसमर्थो महाधूर्तः महाधूर्तेन देवनेन पराजितो हि धूर्तो धननाशाद्ध्यायन्निवास्ते । कांचनान् दीपान् कांचनदीपस्तंभस्थदीपान् विपुलदीपाग्रे

क्षुद्रदीपप्रभा इव रावणतेजोभिभूतानपश्यदित्यर्थः ॥ ३२ ॥ प्रदीप्ता अग्निज्वालाज्वालिता । अनेनाग्निमोग्निदाहः सूचितः ॥ ३३ ॥ कुथासीनं आस्तीर्णकुथायां शयानम् ॥ ३४ ॥ बलवत्प्रसुप्तमपश्यदित्यनुकर्षः ॥ ३५ ॥ तत्प्रसुप्तं प्रसुप्तजनं रावणगृहं निःशब्दांतरैर्निर्गतस्वस्वशब्दभेदैर्नूपुरसिंजिन्यादिभिर्भूषितम् ॥ ३६ ॥ निद्रितत्वात्संवृतानि संवृतपक्ष्माणि तादृशानि च तानि दांतानि ग्लानानि मीलिताक्षीणि अतिसंवृतपक्ष्माणि स्वर्गदेवलोकादेरिव संवृतमीलितयोरपि भेदो बोध्यः । यद्वा संवृतदांतानीत्यस्यैव व्याख्यानं निमीलिताक्षीणीति । यद्वा संवृतत्वमोष्ठयोः ॥ ३७ ॥ क्षपाक्षये पद्मानीव प्रबुद्धानि भूत्वा पुनः रात्रौ संवृतपत्राणि पद्मानी व बभूवुरित्यन्वयः ॥ ३८ ॥ मुखानि दृष्ट्वा हनुमतो जातां संभावनामाह इमानीति । फुल्लानि प्रार्थयंतीत्यन्वयः । नियतं नित्यम् ॥ ३९ ॥ उपपत्त्या युक्त्या । सलिलोद्भवैः पद्मैः ॥ ४० ॥ ४१ ॥ ४२ ॥ पुण्यशेषसमावृतास्तद्युक्ताः संगताः एकदेशमिलिताः । अनेन सौंदर्यात्युक्तिरूपोत्युक्त्यलंकारः ॥ ४३ ॥ तदेवाह ताराणामिति । प्रभा

दीपानांचप्रकाशेनतेजसारावणस्यच ॥ अर्चिर्भिर्भूषणानांचप्रदीप्तेत्यभ्यमन्यत ॥ ३३ ॥ ततोऽपश्यत्कुथासीनंनानावर्णांबरस्रजम् ॥ सहस्रंवरनारीणांनानावेषविभूषितम् ॥ ३४ ॥ परिवृत्तेऽर्धरात्रेतुपाननिद्रावशंगतम् ॥ क्रीडित्वोपरतंरात्रौप्रसुप्तंबलवत्तदा ॥ ३५ ॥ तत्प्रसुप्तंविरुरुचेनिःशब्दांतरभूषितम् ॥ निःशब्दहंसभ्रमरंयथापद्मवनंमहत् ॥ ३६ ॥ तासांसंवृतदांतानिमीलिताक्षीणिमारुतिः ॥ अपश्यत्पद्मगंधीनिवदनानिसुयोषिताम् ॥ ३७ ॥ प्रबुद्धानीवपद्मानितासांभूत्वाक्षपाक्षये ॥ पुनःसंवृतपत्राणिरात्राविवबभुस्तदा ॥ ३८ ॥ इमानिमुखपद्मानिनियतंमत्तषट्पदाः ॥ अंबुजानीवफुल्लानिप्रार्थयंतिपुनःपुनः ॥ ३९ ॥ इतिवाऽमन्यतश्रीमानुपपत्त्यामहाकपिः ॥ मेनेहिगुणतस्तानिसमानिसलिलोद्भवैः ॥ ४० ॥ सातस्यशुशुभेशालाताभिःस्त्रीभिर्विराजिता ॥ शरदीवप्रसन्नाद्यौस्ताराभिरभिशोभिता ॥ ४१ ॥ सचताभिःपरिवृतःशुशुभेराक्षसाधिपः ॥ यथाह्युडुपतिःश्रीमांस्ताराभिरिवसंवृतः ॥ ४२ ॥ याश्च्यवंतेंबरात्ताराःपुण्यशेषसमावृताः ॥ इमास्ताः संगताः कृत्स्नाइतिमेनेहरिस्तदा ॥ ४३ ॥ ताराणामिवसुव्यक्तंमहतीनांशुभार्चिषाम् ॥ प्रभावर्णप्रसादाश्चविरेजुस्तत्रयोषिताम् ॥ ४४ ॥ व्यावृत्तकचपीनस्रक्प्रकीर्णवरभूषणाः ॥ पानव्यायामकालेषुनिद्रोपहतचेतसः ॥ ४५ ॥ व्यावृत्ततिलकाःकाश्चित्काश्चिदुद्भ्रांतनूपुराः ॥ पार्श्वेगलितहाराश्चकाश्चित्परमयोषितः ॥ ४६ ॥ मुक्ताहारवृताश्चान्याःकाश्चित्प्रस्रस्तवाससः ॥ व्याविद्धरशनादामाःकिशोर्यइववाहिताः ॥ ४७ ॥ अकुंडलधराश्चान्याविच्छिन्नमृदितस्रजः ॥ गजेंद्रमृदिताःफुल्लालताइवमहावने ॥ ४८ ॥

देहकांतिः । वर्णो रूपम् । प्रसादस्त्वौज्ज्वल्यम् ॥ ४४ ॥ व्यावृत्ताः कचाः पीनस्रजश्च यासां ताश्च प्रकीर्णानि इतस्ततः श्लथानि वरभूषणानि यासां ताः पानव्यायामकालेषु पानानंतरकालिकगाननृत्यरत्यादिक्रीडाकालेषु उक्तगुणाः अत एव श्रमान्निद्रापहतचेतसः ॥ ४५ ॥ उक्तं भूषणप्रकिरणमेव प्रपंचयति व्यावृत्तेति । उद्भ्रांताः स्वस्थानात्स्खलितनुपुरा यासां ताः पार्श्वे एकस्मिन् गलिता विस्रस्ता हारा यासां ताः ॥ ४६ ॥ मुक्ताहारैर्वृताः छिन्नमुक्ताहाराः व्याविद्धं विक्षिप्तं रशनादाम कांचीगुणो यासां ताः एवं भूषणबंधराहित्येन शयने उपमा । वाहिताः किशोर्य इव कृतभारवहनाः श्रांताः किशोर्यो वडवा यथा अध्वश्रमापनयनाय लुंठनेन व्यत्यस्तपल्ययनबंधाः शेरते तद्वत् ॥ ४७ ॥ अकुंडलधराः कुंडलधरणरहिताः गलितकुंडला इति यावत् । विच्छिन्ना आमृदिताश्च स्रजो यासां ताः अत्र रेजुरित्यनुकर्षः ॥ ४८ ॥

अंशवः प्रभाः किरणास्तदाधाराः । अंशवः सूक्ष्मरश्मयः । किरणाः स्थूलरश्मय इत्यन्ये । वैपरीत्येन स्थिताः हाराः मुक्ताहाराः ॥ ४९ ॥ वैदूर्याः वैदूर्यमणिमालाः । कादंबाः कलहंसाः । अत्र कादंबशब्देन कारंडवपदवाच्यो जलकाक उच्यते । अन्यथा वैदूर्योपमानत्वमसंगतं स्यात् । हेमसूत्राणि च अत्रापि स्तनमध्योद्गतानीत्यनुकर्षः । चक्रवाकानां पीतत्वसादृश्यादुपमानत्वम् ॥ ५० ॥ स्त्रीषु नानावर्णभूषणानि हंसादिस्थानीयानि स्त्रीकटीपुरोभागो जघनम् ॥ ५१ ॥ किंकिणीजालसंकाशाः तद्वन्मुकुलितनयनाः तत्स्थाने च नद्यां मुकुलितकुमुदानि । हेमविपुलांबुजत्वेन वक्त्रनिगरणम् । उपमाने तु न निगरणम् । किंकिणीजालसंबाधा इति पाठे किंकिणीजालसंबाधत्वमुभयत्रापि स्पष्टमेव । शब्दवत्त्वसाधर्म्यात्किंकिणीशब्देन लहरीणामप्युक्तेः । भावा विलासा एव स्वाप्निकसुरतभावो वा ग्राहो यासां ताः यशोऽतिगुणवत्त्वकृतयश एव तीरं यासां ताः । यशःशब्देन लक्षणया कांतिरित्यन्ये । सुप्ता नार्यो नद्य इव बभुः ॥ ५२ ॥ भूषणराजयः विमर्दजनितरेखाः । भूषणराशय इति पाठेप्ययमेवार्थो लक्षणादिना बोध्यः

चंद्रांशुकिरणाभाश्चहाराःकासांचिदुद्गताः ॥ हंसाइवबभुःसुप्ताःस्तनमध्येषुयोषिताम् ॥ ४९ ॥ अपरासांचवैदूर्याःकादंबाइवपक्षिणः ॥ हेमसूत्राणि चान्यासांचक्रवाकाइवाभवन् ॥ ५० ॥ हंसकारंडवोपेताश्चक्रवाकोपशोभिताः ॥ आपगाइवतारेजुर्जघनैःपुलिनैरिव ॥ ५१ ॥ किंकिणीजालसंकाशास्ताहेमविपुलांबुजाः ॥ भावग्राहायशस्तीराःसुप्तानद्यइवावभुः ॥ ५२ ॥ मृदुष्वंगेषुकासांचित्कुचाग्रेषुचसंस्थिताः ॥ बभूवुर्भूषणानीवशुभाभूषणराजयः ॥ ५३ ॥ अंशुकांताश्चकासांचिन्मुखमारुतकंपिताः ॥ उपर्युपरिवक्त्राणांव्याधूयंतेपुनःपुनः ॥ ५४ ॥ ताःपताकाइवोद्धूताःपत्नीनांरुचिरप्रभाः ॥ नानावर्णसुवर्णानांवक्त्रमूलेषुरेजिरे ॥ ५५ ॥ ववल्गुश्चात्रकासांचित्कुंडलानिशुभार्चिषाम् ॥ मुखमारुतसंकंपैर्मंदंमंदंचयोषिताम् ॥ ५६ ॥ शर्करासवगंधःसप्रकृत्यासुरभिःसुखः ॥ तासांवदननिःश्वासःसिषेवेरावणंतदा ॥ ५७ ॥ रावणाननशंकाश्चकाश्चिद्रावणयोषितः ॥ मुखानिस्मसपत्नीनामुपाजिघ्रन्पुनःपुनः ॥ ५८ ॥ अत्यर्थंसक्तमनसोरावणेतावरस्त्रियः ॥ अस्वतंत्राःसपत्नीनांप्रियमेवाचरंस्तदा ॥ ५९ ॥ बाहूउपनिधायान्याः पारिहार्यविभूषिताः ॥ अंशुकानिचरम्याणिप्रमदास्तत्रशिश्यिरे ॥ ६० ॥

॥ ५३ ॥ वक्त्राणामुपर्युपरीत्यन्वयः ॥ ५४ ॥ व्याधूयमानमंशुकांतमुत्प्रेक्षते ता इति । विधेयमपेक्ष्य स्त्रीलिंगनिर्देशः । पत्नीनाम् अर्थाद्रावणस्य । अनेकवर्णवत्सुवर्णतंतुनिर्मितवाससां पताका इवेत्यन्वयः ॥ ५५ ॥ शुभार्चिषां कासांचिद्योषितां कुंडलानि मुखमारुतसंकंपैर्मुखमारुतसंसर्गकृतचलनैर्मंदं मंदंववल्गुः । तेन कुंडलानामतिलघुता । तेन तासां सौकुमार्यातिशयो व्यंग्यः ॥ ५६ ॥ शर्करासवः आसवविशेषस्तद्योगात्तद्गंधः प्रकृत्या च सुरभिरतएव सुखस्तासां वदननिःश्वासो रावणं सिषेवे।यद्वा प्रकृत्या असुरभिरपि वायुरिति शेषः।तासां वदननिःश्वासस्तद्युक्तः। अर्श आद्यजन्तम् अतएव शर्करासवगंधो रावणं सिषेवे ॥५७॥ रावणाननशंकाः मदनिद्राभयजनितचित्तवैवश्यात् । सपत्नीनाश्च सपत्नीनामपि मुखान्युपाजिघ्रन् ॥५८॥ ननु सपत्नीभिः कृतं मुखाघ्राणं ताः कथमसहंतेत्यत आह अत्यर्थमिति । अत्यासक्तेरेवास्वतंत्राः मदपारवश्याच्च तथाभूताः वरस्त्रियः सपत्नीभिराघ्रातमुखा अपि सपत्नीनां प्रियमेवाचरन् । ता अपि तासां मुखानि रावणशंकयोपाजिघ्रन्नित्यर्थः ॥ ५९ ॥ पारिहार्यो वलयः । उपनिधाय उपधानं कृत्वा अंशुकानि

च उपनिधायेत्यनुकर्षः ॥ ६० ॥ अन्येत्यादिश्लोकद्वये शिशियर इति पदं यथायोगं वचनविपरिणामेन योज्यम् । उपनिधायेति पदं च ॥ ६१ ॥ स्नेहोत्र रावणीयः ॥ ६२ ॥ एकीकृतभुजाः परस्परसंबद्धभुजाः ॥ ६३ ॥ अतएवाह अन्योन्येति । माला पुष्पमाला । उपमेये मत्तषट्पदस्थानीयाः कचभारा नेत्रद्वंद्वानि च ॥ ६४ ॥ लतानां वनमिवेत्यन्वयः । अन्योन्यसंबंधेन मालाकारेण ग्रथितमिव ॥ ६५ ॥ प्रतिवेष्टिता वृक्षाणां नायकानां च शोभनाः स्कंधा येन तत् । अन्योन्यं धावंतो ये भ्रमरास्तैराकुलम् । स्त्रीणामपि पद्मिनीत्वात् भ्रमराकुलत्वम् । केशपाशनेत्रादयो वा तासु भ्रमराः । स्त्रीवनं स्त्रीसमूहः ॥ ६६ ॥ तासां योषितामुचितेषु स्थानेषु सुव्यक्तं प्रतिष्ठितानामपि भूषणांगांबरस्रजां विवेकमाधातुं कर्तुं न शक्यम् । अपरिमितत्वात् । भूषणभूष्ययोरैकरूप्यात् परस्परसंग्रथितत्वेन सुप्तत्वाच्च इमानि अस्या भूषणानि इमान्यन्यस्या इति विवेकः कर्तुमशक्या इति भ्रांतिमानलंकारोत्र व्यंग्यः ॥ ६७ ॥

अन्यावक्षसिचान्यस्यास्तस्याःकाचित्पुनर्भुजम् ॥ अपरात्वंकमन्यास्यास्तस्याश्चाप्यपराकुचौ ॥६१॥ ऊरुपार्श्वकटीपृष्ठमन्योन्यस्यसमाश्रिताः ॥ परस्परनिविष्टांग्योमदस्नेहवशानुगाः ॥ ६२ ॥ अन्योन्यस्यांगसंस्पर्शात्प्रीयमाणाःसुमध्यमाः ॥ एकीकृतभुजाःसर्वाःसुषुपुस्तत्रयोषितः ॥ ६३ ॥ अन्योन्यभुजसूत्रेणस्त्रीमालाग्रथिताहिसा ॥ मालेवग्रथितासूत्रेशुशुभेमत्तषट्पदा ॥ ६४ ॥ लतानांमाधवेमासिफुल्लानांवायुसेवनात् ॥ अन्योन्यमालाग्रथितंसंसक्तकुसुमोच्चयम् ॥ ६५ ॥ प्रतिवेष्टितसुस्कंधमन्योन्यभ्रमराकुलम् ॥ आसीद्वनमिवोद्धूतंस्त्रीवनंरावणस्यतत् ॥ ६६ ॥ उचितेष्वपिसुव्यक्तनतासांयोषितांतदा ॥ विवेकंशक्यमाधातुंभूषणांगांबरस्रजाम् ॥ ६७ ॥ रावणेसुखसंविष्टेताःस्त्रियोविविधप्रभाः ॥ ज्वलंतःकांचनादीपाःप्रेक्षंतोनिमिषाइव ॥ ६८ ॥ राजर्षिविप्रदैत्यानांगंधर्वाणांचयोषितः ॥ रक्षसांचाभवन्कन्यास्तस्यकामवशंगताः ॥ ६९ ॥ युद्धकामेनताःसर्वारावणेनहृताःस्त्रियः ॥ समदामदनेनैवमोहिताःकाश्चिदागताः ॥ ७० ॥ नतत्रकाश्चित्प्रमदाःप्रसह्यवीर्योपपन्नेनगुणेनलब्धाः ॥ नचान्यकामापिनचान्यपूर्वाविनावराहांजनकात्मजांतु ॥ ७१ ॥ नचाकुलीनानचहीनरूपानादक्षिणानानुपचारयुक्ता ॥ भार्याऽभवत्तस्यनहीनसत्त्वानचापिकांतस्यनकामनीया ॥ ॥ ७२ ॥ बभूवबुद्धिस्तुहरीश्वरस्ययदीदृशीराघवधर्मपत्नी ॥ इमामहाराक्षसराजभार्याःसुजातमस्येतिहिसाधुबुद्धेः ॥ ७३ ॥

सुखसंविष्टे सुखसुप्ते । कांचनाः कांचनस्तंभाः । दीपाः दीपस्थाग्निपुरुषाः कर्तारः । स्त्रियः कर्म । अनेन रावणे जाग्रति तेषामपि तद्दर्शने भयं सूचितम् ॥ ६८ ॥ राजर्षयो विप्रदैत्याश्च । अस्य ब्रह्मराक्षसत्वादस्ति विप्रकन्याविवाहेऽधिकारः । कामवशंगता सत्यस्तस्य योषितोऽभवन् । अनेन तासामप्यनुरागः सूचितः ॥ ६९ ॥ अस्य बहुस्त्रीप्राप्तिर्बलात् स्वारस्याच्चेत्याह युद्धेत्यादि । सर्वा इति बाहुल्याभिप्रायम् । आसां हरणे एतद्बंधुभिर्युद्धं भविष्यतीति युद्धकामनापूर्वं हृताः । काश्चित्समदास्तरुण्यो मदनमोहिताः स्वयमेवैनं वृतवत्यः ॥ ७० ॥ अस्यैवं विवरणं न तत्र काश्चिदिति । वीर्योपपन्नेनापि तेन तत्र तासु मध्ये काश्चित्प्रमदाः प्रसह्य न हृताः किंतु गुणेन निरतिशयैश्वर्यवीर्यसौंदर्यादिगुणेन स्वत एव लब्धाः । तत्र लंकायामन्यकामा च नाहृता अन्यपूर्वा च नाहृता । कथमेवं प्रत्यक्षापलापस्तत्राह विनेति । वराहां श्रेष्ठरामार्हाम् ॥ ७१ ॥ उपचारः उत्तमांबरभूषणमालादिः कांतस्य रावणस्य कामनीया मनोज्ञा न तादृशी च न ॥ ७२ ॥ अथ सीताप्येतरवर्यंतर्गता न वेति विकल्प्याये

रावणस्य भद्रमेवेति बुद्धिर्हनूमतो नातेत्याह बभूवति । साधुबुद्धेर्हरीश्वरस्येति बुद्धिर्बभूव । इमा महाराक्षसराजभार्याः यथा तद्धुक्ताः राघवधर्मपत्न्यपि ईदृशी एतदंतर्गता एतद्धुक्ता च यदि स्यात्तदाऽस्य रावणस्य सुजातं भद्रमेव भवति । रावणभुक्तेति मया निवेदिते सति सीतायां मृतायामिव राघवस्योपेक्षणाद्रावणवधयत्नाप्रसक्तेरितिभावः ॥ ७३ ॥ यदीत्यनेन सूचितमस्य पक्षस्यात्यंतासंभावितत्वमाह पुनश्चेति । पक्षांतरं च सोऽचिंतयद्विचारेण निश्चितवानित्यर्थः । चिन्ताप्रकारः हि प्रसिद्धमेतत् । यत्सीतादेवीगुणतः पातिव्रत्यादिगुणैर्विशिष्टा । अथ यत इत्यर्थे यतो महात्मा महाबलो लंकेश्वरः । निरवधिकैश्वर्यवैशिष्ट्यमनेन सूचितम् । ईदृशोऽस्यां जानक्याम् अनार्यकर्मापहरणरूपं कर्म आत्तरूपः परिगृहीतमायारूपः सन्कष्टं सक्लेशं यथा भवति तथा कृतवान् । यद्येषा ऐश्वर्यादौ सरागा स्यात्तदा स्वरसत एव नयनं स्यात् । न च तदस्ति । अस्माभिस्ताद्विक्रोशनादेव रावणेन क्लेशपूर्वं नयनस्य चानुभवादित्याशयः । आर्तरूप इति पाठ आर्तं संजातपीडं रूपं यस्येत्यर्थं हनुमद्विशेषणम् । आंतरपीडासूचकरूप इत्यर्थः ॥ ७४ ॥ वैसंमानः ॥ ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे नवमः सर्गः ॥ ९ ॥ ॥ तत्र शालायाम् दिव्योपमं दिवि भवेन स्वर्गवर्तिपदार्थेनैवोपमा यस्य तत् शयनस्या

पुनश्चसोऽचिंतयदात्तरूपोध्रुवंविशिष्टागुणतोहिसीता ॥ अथायमस्यांकृतवान्महात्मालंकेश्वरःकष्टमनार्यकर्म ॥ ७४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकांडे नवमः सर्गः ॥ ९ ॥ तत्रदिव्योपमंमुख्यंस्फाटिकंरत्नभूषितम् ॥ अवेक्षमाणोहनुमान्ददर्शशयनासनम् ॥ १ ॥ दांतकांचनचित्रांगैर्वैदूर्यैश्चवरासनैः ॥ महार्हास्तरणोपेतैरुपपन्नंमहाधनैः ॥ २ ॥ तस्यचैकतमेदेशेदिव्यमालोपशोभितम् ॥ ददर्शपांडुरंछत्रंताराधिपतिसन्निभम् ॥ ३ ॥ जातरूपपरिक्षिप्तंचित्रभानोःसमप्रभम् ॥ अशोकमालाविततंददर्शपरमासनम् ॥ ४ ॥ वालव्यजनहस्ताभिर्वीज्यमानंसमंततः ॥ गंधैश्चविविधैर्जुष्टंवरधूपेनधूपितम् ॥ ५ ॥ परमास्तरणास्तीर्णमाविकाजिनसंवृतम् ॥ दामभिर्वरमाल्यानांसमंतादुपशोभितम् ॥ ६ ॥ तस्मिञ्जीमूतसंकाशंप्रदीप्तोज्ज्वलकुंडलम् ॥ लोहिताक्षंमहाबाहुंमहारजतवाससम् ॥ ७ ॥ लोहितेनानुलिप्तांगंचंदनेनसुगंधिना ॥ संध्यारक्तमिवाकाशेतोयदंसतडिद्गणम् ॥ ८ ॥ वृतमाभरणैर्दिव्यैःसुरूपंकामरूपिणम् ॥ सवृक्षवनगुल्माढ्यंप्रसुप्तमिवमंदरम् ॥ ९ ॥ क्रीडित्वोपरतंरात्रौवराभरणभूषितम् ॥ प्रियंराक्षसकन्यानांराक्षसानांसुखावहम् ॥ १० ॥ पीत्वाप्युपरतंचापिददर्शसमहाकपिः ॥ भास्वरेशयनेवीरंप्रसुप्तंराक्षसाधिपम् ॥ ११ ॥

सनं पल्यंकप्रतिष्ठापनवेदिका अवेक्षमाणः इतस्ततः पश्यन् ॥ १ ॥ तस्यैव वर्णनं दांतेत्यादि । गजदंतमयानि स्वर्णमयानि च चित्राणि चित्रयुतानि अंगानि पादादिरूपाणि येषां तैर्महार्हास्तरणोपेतैर्बहुमूल्यास्तरणयुक्तैः वैदूर्यैरित्युपलक्षणं वैदूर्यैः पद्मरागादिनिर्मितैर्वरासनैः स्त्रीशयनपल्यंकैर्महाधनैर्बहुमूल्यैरुपपन्नम् ॥ २ ॥ ३ ॥ परमासनं पल्यंकः तस्यैकदेशे ददर्श । अशोकपुष्पमालायुक्तम् । यद्वा यत्सन्निधाने शोकाभावस्तादृशमालायुतम् । चित्रभानुरग्निः ॥ ४ ॥ वालव्यजनं चामरम् । ननु संभोगगृहे तत्रापि निद्राणस्य कथं वालव्यजनवीजनं कथं च हनुमतस्ताभिरदर्शनामिति चेन्न । यंत्रनिर्मितस्त्रीप्रतिमादिभिस्तत्रापि तत्संभवात् ॥ ५ ॥ आविकाजिनम् ऊर्णायुचर्म तद्धि परममृदुलम् तेन संवृतं संवृतपर्यंतप्रदेशम् माल्यं पुष्पम् ॥ ६ ॥ तस्मिन्प्रसुप्तमिति शेषः । महारजतं स्वर्णं तत्तंतुनिर्मितवासोधारिणम् ॥ ७ ॥ रावणस्य तडित्स्थानीयं सौवर्णं वासः ॥ ८ ॥ सवृक्षवनगुल्माढ्यं पुष्पसहितवृक्षवनगुल्माढ्यं मंदरमिव स्थितं बाहवो यस्य वृक्षाः नासादयो गुल्माः ॥ ९ ॥ १० ॥ पीत्वाप्युपरतम् अपिना क्रीडित्वा

प्युपरतम् ॥ ११ ॥ यथा नागं गजमिव निःश्वसंतं रावणम् आसाद्य प्राप्य परमोद्विग्नः अयं पापी देवीं हृतवानित्येतत्समीपेवस्थानमनुचितमिति खिन्नचित्तोऽपासर्पत् । सुभीतवत् सुभीतो यथा भयहेतोः पिशाचादेः संमुखे स्थातुमशक्तोऽपसर्पति तद्वत् ॥ १२ ॥ आरोहणं सोपानम् । वेदिकांतरं सोपानवेदिकांतरं सोपानपर्वमध्यम् ॥ १३ ॥ यस्य गंधेनान्ये गजाः पलायंते स गंधगजः मत्तगजेन नितरां संविष्टम् अधिष्ठितं महत्प्रस्रवणमिव ॥ १४ ॥ महात्मनः महाशरीरस्य विक्षिप्तौ प्रसारितौ ॥ १५ ॥ आपीडने युद्धे कृतव्रणौ कृतव्रणकिणौ वज्रेणोल्लिखितौ क्षतौ पीनांसौ ययोस्तौ वज्रचक्रयोरप्यसाध्यमृत्युरिति भावः ॥ १६ ॥ समौ सुजातौ चांसौ संगतौ दृढसंधिबंधौ स्वंगुलीयकलक्षितौ शोभनांगुलीयकभूषितौ ॥ १७ ॥ १८ ॥ शशस्य क्षतजं रक्तमतिलोहितवर्णम् ॥ १९ ॥ उत्तमस्त्रीणां विमृदितं

निःश्वसंतंयथानागंरावणंवानरोत्तमः ॥ आसाद्यपरमोद्विग्नःसोपासर्पत्सुभीतवत् ॥१२॥ अथारोहणमासाद्यवेदिकांतरमाश्रितः ॥ क्षीबंराक्षसशार्दूलंप्रेक्षतेस्ममहाकपिः ॥ १३ ॥ शुशुभेराक्षसेन्द्रस्यस्वपतःशयनंशुभम् ॥ गंधहस्तिनिसंविष्टंयथाप्रस्रवणंमहत् ॥ १४ ॥ कांचनांगदसन्नद्धौददर्शसमहात्मनः ॥ विक्षिप्तौराक्षसेंद्रस्यभुजाविंद्रध्वजोपमौ ॥१५॥ ऐरावतविषाणाग्रैरापीडनकृतव्रणौ ॥ वज्रोल्लिखितपीनांसौविष्णुचक्रपरिक्षतौ ॥१६॥ पीनौसमसुजातांसौसंगतौबलसंयुतौ ॥ सुलक्षणनखांगुष्ठौस्वंगुलीयकलक्षितौ ॥ १७ ॥ संहतौपरिघाकारौवृत्तौकरिकरोपमौ ॥ विक्षिप्तौशयनेशुभ्रेपंचशीर्षाविवोरगौ ॥ १८ ॥ शशक्षतजकल्पेनसुशीतेनसुगंधिना ॥ चंदनेनपरार्ध्येनस्वनुलिप्तौस्वलंकृतौ ॥ १९ ॥ उत्तमस्त्रीविमृदितौगंधोत्तमनिषेवितौ ॥ यक्षपन्नगगंधर्वदेवदानवराविणौ ॥ २० ॥ ददर्शसकपिस्तस्यबाहूशयनसंस्थितौ ॥ मंदरस्यांतरेसुप्तौमहाहीरुषिताविव ॥ २१ ॥ ताभ्यांसपरिपूर्णाभ्यामुभाभ्यांराक्षसेश्वरः ॥ शुशुभेऽचलसंकाशःशृंगाभ्यामिवमंदरः ॥ २२ ॥ चूतपुन्नागसुरभिर्बकुलोत्तमसंयुतः ॥ मृष्टान्नरससंयुक्तःपानगंधपुरःसरः ॥ २३ ॥ तस्यराक्षसराजस्यनिश्चक्राममहामुखात् ॥ शयानस्यविनिश्वासःपूरयन्निवतद्गृहम् ॥ २४ ॥ मुक्तामणिविचित्रेणकांचनेनविराजता ॥ मुकुटेनापवृत्तेनकुंडलोज्ज्वलिताननम् ॥ २५ ॥ रक्तचंदनदिग्धेनतथाहारेणशोभिना ॥ पीनायतविशालेनवक्षसाभिविराजता ॥ २६ ॥ पांडुरेणापविद्धेनक्षौमेणक्षतजेक्षणम् ॥ महार्हेणसुसंवीतंपीतेनोत्तरवाससा ॥२७॥ माषराशिप्रतीकाशंनिःश्वसंतंभुजंगवत् ॥ गांगेमहतितोयांतेप्रसुप्तमिवकुंजरम् ॥ २८ ॥ चतुर्भिःकांचनैर्दीपैर्दीप्यमानंचतुर्दिशम् ॥ प्रकाशीकृतसर्वांगंमेघंविद्युद्गणैरिव ॥ २९ ॥

विमर्दनमालिंगनादि ययोस्तौ ॥ २० ॥ ददर्श अत्यादरेण ददर्श । नातः पुनरुक्तिः महाही महासर्पौ अत्र द्विभुजत्वकथनाद्युद्धादिकाले एव विंशतिभुजत्वं दशशीर्षत्वं चेति बोध्यम् ॥ २१ ॥ २२ ॥ बकुलोत्तमसंयुतः उत्तमबकुलगंधयुतः । अयं पुरुषविशेषश्वासधर्म इति कतकः । चूतादिसुरभित्वं तु तदधिवासितवस्तुसेवनात् । मृष्टान्नरससंयुक्तः षड्रसोत्तमान्नगंधोपेतः । पानं मधु राक्षसत्वादेव वामाचारेण पूजाकरणान्मधुपानम् ॥ २३ ॥ २४ ॥ अपवृत्तेन निद्रावशात्पर्यस्तेन विराजता मुकुटेन उपलक्षितमिति शेषः ॥ २५ ॥ शोभिना हारेण शोभनहारवता वक्षसोपलक्षितमिति शेषः ॥ २६ ॥ अपविद्धेन पर्यस्तेन । पांडुरेण क्षौमेण परिधानीयेन कटेरधःसंवीतम् । पीतेनोत्तरीयेण सुसंवीतमित्यर्थः ॥ २७ ॥ तोयांते तोयमध्ये ॥ २८ ॥ कांचनैः कांचनस्तंभगैः । चतुर्दिशं चतुर्दिक्षु दीप्यमानम् । अत्यंतसं

रावणस्य भद्रमेवेति बुद्धिर्हनूमतो नातेत्याह वभूवति । साधुबुद्धेर्हरीश्वरस्येति बुद्धिर्बभूव । इमा महाराक्षसराजभार्याः यथा तद्धुक्ताः राघवधर्मपत्न्यपि ईदशी एतदंतर्गता एतद्धुक्ता च यदि स्यात्तदाऽस्य रावणस्य सुजातं भद्रमेव भवति । रावणभुक्तेति मया निवेदिते सति सीतायां मृतायामिव राघवस्योपेक्षणाद्रावणवधयत्नाप्रसक्तेरितिभावः ॥ ७३ ॥ यदीत्यनेन सूचितमस्य पक्षस्यात्यंतासंभावितत्वमाह पुनश्चेति । पक्षांतरं च सोचिंतयद्विचारेण निश्चितवानित्यर्थः । चिन्ताप्रकारः हि प्रसिद्धमेतत् । यत्सीतादेवीगुणतः पातिव्रत्यादिगुणैर्विशिष्टा । अथ यत इत्यर्थे यतो महात्मा महाबलो लंकेश्वरः । निरवधिकैश्वर्यवैशिष्ट्यमनेन सूचितम् । ईदृशोऽस्यां जानक्याम् अनार्यकर्मापहरणरूपं कर्म आत्तरूपः परिगृहीतमायारूपः सन्कष्टं सक्लेशं यथा भवति तथा कृतवान् । यद्येषा ऐश्वर्यादौ सरागा स्यात्तदा स्वरसत एव नयनं स्यात् । न च तदस्ति । अस्माभिस्तद्विक्रोशनादेव रावणेन क्लेशपूर्वं नयनस्य चानुभवादित्याशयः । आर्तरूप इति पाठ आर्तं संजातपीडं रूपं यस्येत्यर्थं हनुमद्विशेषणम् । आंतरपीडासूचकरूप इत्यर्थः ॥ ७४ ॥ वैसंमानः ॥ ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे नवमः सर्गः ॥ ९ ॥ ॥ तत्र शालायाम् दिव्योपमं दिवि भवेन स्वर्गवर्तिपदार्थेनैवोपमा यस्य तत् शयनस्या

पुनश्चसोचिंतयदात्तरूपोध्रुवंविशिष्टागुणतोहिसीता ॥ अथायमस्यांकृतवान्महात्मालंकेश्वरःकष्टमनार्यकर्म ॥ ७४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकांडे नवमः सर्गः ॥ ९ ॥ तत्रदिव्योपमंमुख्यंस्फाटिकंरत्नभूषितम् ॥ अवेक्षमाणोहनुमान्ददर्शशयनासनम् ॥ १ ॥ दांतकांचनचित्रांगैर्वैदूर्यैश्चवरासनैः ॥ महार्हास्तरणोपेतैरुपपन्नंमहाधनैः ॥ २ ॥ तस्यचैकतमेदेशेदिव्यमालोपशोभितम् ॥ ददर्शपांडुरंछत्रंताराधिपतिसन्निभम् ॥ ३ ॥ जातरूपपरिक्षिप्तंचित्रभानोःसमप्रभम् ॥ अशोकमालाविततंददर्शपरमासनम् ॥ ४ ॥ वालव्यजनहस्ताभिर्वीज्यमानंसमंततः ॥ गंधैश्चविविधैर्जुष्टंवरधूपेनधूपितम् ॥ ५ ॥ परमास्तरणास्तीर्णमाविकाजिनसंवृतम् ॥ दामभिर्वरमाल्यानांसमंतादुपशोभितम् ॥ ६ ॥ तस्मिञ्जीमूतसंकाशंप्रदीप्तोज्ज्वलकुंडलम् ॥ लोहिताक्षंमहाबाहुंमहारजतवाससम् ॥ ७ ॥ लोहितेनानुलिप्तांगंचंदनेनसुगंधिना ॥ संध्यारक्तमिवाकाशेतोयदंसतडिद्गणम् ॥ ८ ॥ वृतमाभरणैर्दिव्यैःसुरूपंकामरूपिणम् ॥ सवृक्षवनगुल्माढ्यंप्रसुप्तमिवमंदरम् ॥ ९ ॥ क्रीडित्वोपरतंरात्रौवराभरणभूषितम् ॥ प्रियंराक्षसकन्यानांराक्षसानांसुखावहम् ॥ १० ॥ पीत्वाप्युपरतंचापिददर्शसमहाकपिः ॥ भास्वरेशयनेवीरंप्रसुप्तंराक्षसाधिपम् ॥ ११ ॥

सनं पल्यंकप्रतिष्ठापनवेदिका अवेक्षमाणः इतस्ततः पश्यन् ॥ १ ॥ तस्यैव वर्णनं दांतेत्यादि । गजदंतमयानि स्वर्णमयानि च चित्राणि चित्रयुतानि अंगानि पादादिरूपाणि येषां तैर्महार्हास्तरणोपेतैर्बहुमूल्यास्तरणयुक्तैः वैदूर्यैरित्युपलक्षणं वैदूर्यैः पद्मरागादिनिर्मितैर्वरासनैः स्त्रीशयनपल्यंकैर्महाधनैर्बहुमूल्यैरुपपन्नम् ॥ २ ॥ ३ ॥ परमासनं पल्यंकः तस्यैकदेशे ददर्श । अशोकपुष्पमालायुक्तम् । यद्वा यत्सन्निधाने शोकाभावस्तादृशमालायुतम् । चित्रभानुरग्निः ॥ ४ ॥ वालव्यजनं चामरम् । ननु संभोगगृहे तत्रापि निद्राणस्य कथं वालव्यजनवीजनं कथं च हनुमतस्ताभिरदर्शनमिति चेन्न । यंत्रनिर्मितस्त्रीप्रतिमादिभिस्तत्रापि तत्संभवात् ॥ ५ ॥ आविकाजिनम् ऊर्णायुचर्म तद्धि परममृदुलम् तेन संवृतं संवृतपर्यंतप्रदेशम् माल्यं पुष्पम् ॥ ६ ॥ तस्मिन्प्रसुप्तमिति शेषः । महारजतं स्वर्णं तत्तंतुनिर्मितवासोधारिणम् ॥ ७ ॥ रावणस्य तडित्स्थानीयं सौवर्णं वासः ॥ ८ ॥ सवृक्षवनगुल्माढ्यं पुष्पसहितवृक्षवनगुल्माढ्यं मंदरमिव स्थितं बाहवो यस्य वृक्षाः नासादयो गुल्माः ॥ ९ ॥ १० ॥ पीत्वाप्युपरतम् अपिना क्रीडित्वा

प्युपरतम् ॥ ११ ॥ यथा नागं गजमिव निःश्वसंतं रावणम् आसाद्य प्राप्य परमोद्विग्नः अयं पापी देवीं हतवानित्येतत्समीपेवस्थानमनुचितमिति खिन्नचित्तोऽपासर्पत् । सुभीतवत् सुभीतो यथा भयहेतोः पिशाचादेः संमुखे स्थातुमशक्तोऽपसर्पति तद्वत् ॥ १२ ॥ आरोहणं सोपानम् । वेदिकांतरं सोपानवेदिकांतरं सोपानपर्वमध्यम् ॥ १३ ॥ यस्य गंधेनान्ये गजाः पलायंते स गंधगजः मत्तगजेन नितरां संविष्टम् अधिष्ठितं महत्प्रस्रवणमिव ॥ १४ ॥ महात्मनः महाशरीरस्य विक्षिप्तौ प्रसारितौ ॥ १५ ॥ आपीडने युद्धे कृतव्रणौ कृतव्रणकिणौ वज्रेणोल्लिखितौ क्षतौ पीनांसौ ययोस्तौ वज्रचक्रयोरप्यसाध्यमृत्यु रिति भावः ॥ १६ ॥ समौ सुजातौ चांसौ संगतौ दृढसंधिबंधौ स्वंगुलीयकलक्षितौ शोभनांगुलीयकभूषितौ ॥ १७ ॥ १८ ॥ शशस्य क्षतजं रक्तमतिलोहितवर्णम् ॥ १९ ॥ उत्तमस्त्रीणां विमृदितं

निःश्वसंतंयथानागंरावणंवानरोत्तमः ॥ आसाद्यपरमोद्विग्नःसोपासर्पत्सुभीतवत् ॥१२॥ अथारोहणमासाद्यवेदिकांतरमाश्रितः ॥ क्षीबंराक्षसशार्दूलंप्रेक्षतेस्ममहाकपिः ॥ १३ ॥ शुशुभेराक्षसेन्द्रस्यस्वपतःशयनंशुभम् ॥ गंधहस्तिनिसंविष्टंयथाप्रस्रवणंमहत् ॥ १४ ॥ कांचनांगदसन्नद्धौददर्श समहात्मनः ॥ विक्षिप्तौराक्षसेंद्रस्यभुजाविंद्रध्वजोपमौ ॥१५॥ ऐरावतविषाणाग्रैरापीडनकृतव्रणौ ॥ वज्रोल्लिखितपीनांसौविष्णुचक्रपरिक्षतौ ॥१६॥ पीनौसमसुजातांसौसंगतौबलसंयुतौ ॥ सुलक्षणनखांगुष्ठौस्वंगुलीयकलक्षितौ ॥ १७ ॥ संवृत्तौपरिघाकारौवृत्तौकरिकरोपमौ ॥ विक्षिप्तौशयनेशुभ्रेपंचशीर्षाविवोरगौ ॥ १८ ॥ शशक्षतजकल्पेनसुशीतेनसुगंधिना ॥ चंदनेनपरार्ध्येनस्वनुलिप्तौस्वलंकृतौ ॥ १९ ॥ उत्तमस्त्रीविमृदितौगंधोत्तमनिषेवितौ ॥ यक्षपन्नगगंधर्वदेवदानवराविणौ ॥ २० ॥ ददर्शसकपिस्तस्यबाहूशयनसंस्थितौ ॥ मंदरस्यांतरेसुप्तौमहाहीरुषिताविव ॥ २१ ॥ ताभ्यांसपरिपूर्णाभ्यामुभाभ्यांराक्षसेश्वरः ॥ शुशुभेऽचलसंकाशःशृंगाभ्यामिवमंदरः ॥ २२ ॥ चूतपुन्नागसुरभिर्बकुलोत्तमसंयुतः ॥ मृष्टान्नरससंयुक्तःपानगंधपुरःसरः ॥ २३ ॥ तस्यराक्षसराजस्यनिश्चक्राममहामुखात् ॥ शयानस्यविनिश्वासःपूरयन्निवतद्गृहम् ॥ २४ ॥ मुक्तामणिविचित्रेणकांचनेनविराजता ॥ मुकुटेनापवृत्तेनकुंडलोज्ज्वलिताननम् ॥ २५ ॥ रक्तचंदनदिग्धेनतथाहारेणशोभिना ॥ पीनायतविशालेनवक्षसाभिविराजता ॥ २६ ॥ पांडुरेणापविद्धेनक्षौमेणक्षतजेक्षणम् ॥ महार्हेणसुसंवीतंपीतेनोत्तरवाससा ॥२७॥ माषराशिप्रतीकाशंनिःश्वसंतंभुजंगवत् ॥ गांगेमहतितोयांतेप्रसुप्तमिवकुंजरम् ॥ २८ ॥ चतुर्भिःकांचनैर्दीपैर्दीप्यमानंचतुर्दिशम् ॥ प्रकाशीकृतसर्वांगंमेघंविद्युद्गणैरिव ॥ २९ ॥

विमर्दनमालिंगनादि ययोस्तौ ॥ २० ॥ ददर्श अत्यादरेण ददर्श । नातः पुनरुक्तिः महाही महासर्पौ अत्र द्विभुजत्वकथनायुद्धादिकाले एव विंशतिभुजत्वं दशशीर्षत्वं चेति बोध्यम् ॥ २१ ॥ २२ ॥ बकुलोत्तमसंयुतः उत्तमबकुलगंधयुतः । अयं पुरुषविशेषश्वासधर्म इति कतकः । चूतादिसुरभित्वं तु तदधिवासितवस्तुसेवनात् । मृष्टान्नरससंयुक्तः षड्रसोत्तमान्नगंधोपेतः । पानं मधु राक्षसत्वादेव वामाचारेण पूजाकरणान्मधुपानम् ॥ २३ ॥ २४ ॥ अपवृत्तेन निद्रावशात्पर्यस्तेन विराजता मुकुटेन उपलक्षितमिति शेषः ॥ २५ ॥ शोभिना हारेण शोभनहारवता वक्षसोपलक्षितमिति शेषः ॥ २६ ॥ अपविद्धेन पर्यस्तेन । पांडुरेण क्षौमेण परिधानीयेन कटेरधःसंवीतम् । पीतेनोत्तरीयेण सुसंवीतमित्यर्थः ॥ २७ ॥ तोयांते तोयमध्ये ॥ २८ ॥ कांचनैः कांचनस्तंभगैः । चतुर्दिशं चतुर्दिक्षु दीप्यमानम् । अत्यंतसं

योगे द्वितीया । विद्युल्लतैरिवेति पाठे पुंस्त्वमार्षम् ॥ २९ ॥ उक्तगुणं रावणं ददर्श । पादमूलगास्तत्पत्नीश्च ददर्श । रक्षःपतेर्गृह इत्युत्तरान्वयि ॥ ३० ॥ अम्लानमाल्याभरणा देवकन्या इत्यर्थः ॥ ३१ ॥ राक्षसेंद्रभुजावंकं च गच्छंति तास्तथा प्रिया इति यावत् । धारिण्यः धारिणीः । निषण्णाः शयिताः ॥ ३२ ॥ बाहूपधानत्वादंगदानामपि श्रवणांते दर्शनं बोध्यम् ॥ ३३ ॥ विमानं मंचकविशेषः । पुष्पकमित्यन्ये । विराजत व्यराजत ॥ ३४ ॥ मदव्यायामेन रतिजेन ॥ ३५ ॥ कोमलैः अकर्कशैः अंगहारैः अंगविक्षेपैः नृत्यशालिनीतिवासनाबलेन नृत्याभिनयोपेततया सुप्तवतीत्यर्थः । विशेषेण न्यस्तं शुभं येषु धात्रा तादृशानि सर्वाण्यंगानि यस्याः ॥ ३६ ॥ महानदीप्रकीर्णा महानद्यां प्रकीर्णपुष्पपत्रा दैवात्संगतं पोतं प्लवमाश्रिता नलिनी पद्मिनीव । पोतस्थानेऽत्र वीणा ॥ ३७ ॥ मड्डुको वाद्यभेदः ॥ ३८ ॥

पादमूलगताश्चापिददर्शसुमहात्मनः ॥ पत्नीःसप्रियभार्यस्यतस्यरक्षःपतेर्गृहे ॥ ३० ॥ शशिप्रकाशवदनावरकुंडलभूषणाः ॥ अम्लानमाल्याभरणा ददर्शहरियूथपः ॥ ३१ ॥ नृत्यवादित्रकुशलाराक्षसेंद्रभुजांकगाः ॥ वराभरणधारिण्योनिषण्णाददृशेकपिः ॥ ३२ ॥ वज्रवैदूर्यगर्भाणिश्रवणांतेषुयोपिताम् ॥ ददर्शतापनीयानिकुंडलान्यंगदानिच ॥ ३३ ॥ तासांचंद्रोपमैर्वक्रैःशुभैर्ललितकुंडलैः ॥ विराजतविमानंतन्नभस्तारागणैरिव ॥ ३४ ॥ मदव्यायामखिन्नास्ताराक्षसेंद्रस्ययोषितः ॥ तेषुतेष्ववकाशेषुप्रसुप्तास्तनुमध्यमाः ॥ ३५ ॥ अंगहारैस्तथैवान्याकोमलैर्नृत्यशालिनी ॥ विन्यस्ताशुभसर्वांगीप्रसुप्तावरवर्णिनी ॥ ३६ ॥ काचिद्वीणांपरिष्वज्यप्रसुप्तासंप्रकाशते ॥ महानदीप्रकीर्णेवनलिनीपोतमाश्रिता ॥ ३७ ॥ अन्याकक्षगतेनैवमड्डुकेनासितेक्षणा ॥ प्रसुप्ताभामिनीभातिबालपुत्रेववत्सला ॥ ३८ ॥ पटहंचारुसर्वांगीन्यस्यशेतेशुभस्तनी ॥ चिरस्यरमणंलब्ध्वापरिष्वज्येवकामिनी ॥ ३९ ॥ काचिद्वीणांपरिष्वज्यसुप्ताकमललोचना ॥ वरंप्रियतमंगृह्यसकामेवहिकामिनी ॥ ४० ॥ विपंचींपरिगृह्यान्यानियतानृत्यशालिनी ॥ निद्रावशमनुप्राप्तासहकांतेवभामिनी ॥ ४१ ॥ अन्याकनकसंकाशैर्मृदुपीनैर्मनोरमैः ॥ मृदंगंपरिविध्यांगैःप्रसुप्तामत्तलोचना ॥ ४२ ॥ भुजपार्श्वांतरस्थेनकक्षगेनकृशोदरी ॥ पणवेनसहानिंद्यासुप्तामदकृतश्रमा ॥ ४३ ॥ डिंडिमंपरिगृह्यान्यातथैवासक्तडिंडिमा ॥ प्रसुप्तातरुणंवत्ससुपगुह्येवभामिनी ॥ ४४ ॥ काचिदाडंबरंनारीभुजसंभोगपीडितम् ॥ कृत्वाकमलपत्राक्षीप्रसुप्तामदमोहिता ॥ ४५ ॥ कलशीमपविध्यान्याप्रसुप्ताभातिभामिनी ॥ वसंतेपुष्पशबलामालेवपरिमार्जिता ॥ ४६ ॥ पाणिभ्यांचकुचौकाचित्सुवर्णकलशोपमौ ॥ उपगुह्याबलासुप्तानिद्राबलमुपागता ॥ ४७ ॥ अन्याकमलपत्राक्षीपूर्णेंदुसदृशानना ॥ अन्यामालिंग्यसुश्रोणींनिद्रावशमुपागता ॥ ४८ ॥ आतोद्यानिविचित्राणिपरिष्वज्यवरस्त्रियः ॥ निपीड्यचकुचैःसुप्ताःकामिन्यःकामुकानिव ॥ ४९ ॥

न्यस्य आलिंग्येत्यर्थः ॥ ३९ ॥ काचिदिति ॥ ४० ॥ विपंची वीणाविशेषः ॥ ४१ ॥ ४२ ॥ मदकृतश्रमा मदवती । अर्शआद्यच् । वादनेन कृतश्रमा च ॥ ४३ ॥ डिंडिमं परिगृह्य आलिंग्य । आसक्तडिंडिमा पृष्ठदेशसंबद्धान्यडिंडिमा । तरुणं रमणं वत्सं पुत्रं च परिगृह्य प्रसुप्तेव ॥ ४४ ॥ आडंबरं वाद्यभेदः । भुजसंभोगेन भुजाश्लेषेण पीडितम् आश्लिष्टं कृत्वा ॥ ४५ ॥ कलशीं जलसंभृतामपविद्ध्य पर्यस्य । स्वपर्यस्तकलशोदकार्द्रशरीरा नारी वसन्ते परिमार्जिता ग्लानिपरिहाराय कृतजलसेका पुष्पशबला शबलापुष्पमालेव भाति ॥ ४६ ॥ ४७ ॥ ४८ ॥ आतोद्यानि वाद्यानि ॥ ४९ ॥

अथ प्रधानमहिषीदर्शनम् । तासामिति । एकांतविन्यस्ते तासां शयनात्पृथग्विन्यस्ते । तां स्त्रियं वक्ष्यमाणगुणां स्त्रियम् ॥ ५० ॥ ५१ ॥ गौरीं पीतामतएव कनकवर्णाभाम् इष्टां रावणस्याति प्रियाम् । अंतःपुरस्त्रीणामीश्वरीम् । कपिर्मंदोदरीं ददर्शेत्यन्वयः ॥ ५२ ॥ तर्कयामास संभावयामास । पृथगेकांते परममंचे अतिरूपांया दर्शनात्प्रायेणेयं सीतेति संभावना हनूमतः तदेवाह रूपयौवनसंपदा । न त्वौचित्यालोचनं कृतवानिति भावः । हर्षो मुखविकासादिः आनंदो मानसः ॥ ५३ ॥ आनंदं कार्यद्वाराह आस्फोटयामासेति । आस्फोटपुच्छचुंबनादि जातिधर्मः । जगाम स्तंभानित्यनुकर्षः । सर्वा अप्येता श्रेष्ठा उपांश्विति बोध्यम् । एवं चेष्टायां हेतुः स्वां कपीनां प्रकृतिं निदर्शयन्निति ॥ ५४ ॥ वैॉममानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे दशमः सर्गः॥ १० ॥ अवधूय च तां बुद्धिं सीतासंभावनया प्रवृत्तां कापेयविषयां बुद्धिम् अवधूय त्यक्त्वा अवस्थितः स्थिरता स्वभावे प्रतिष्ठितः सीतां प्रति तद्विषयामितरामन्यां चिंतां पूर्वचिंताविघटिकां जगाम ॥ १ ॥ तामेव चिंता

तासामेकांतविन्यस्तेशयानांशयनेशुभे ॥ ददर्शरूपसंपन्नामथतांसकपिःस्त्रियम् ॥ ५० ॥ मुक्तामणिसमायुक्तैर्भूषणैःसुविभूषिताम् ॥ विभूषयंतीमिवचस्वश्रियाभवनोत्तमम् ॥ ५१ ॥ गौरींकनकवर्णाभामिष्टामंतःपुरेश्वरीम् ॥ कपिर्मंदोदरींतत्रशयानांचारुरूपिणीम् ॥ ५२ ॥ सतांदृष्ट्वामहाबाहुर्भूपितांमारुतात्मजः ॥ तर्कयामाससीतेतिरूपयौवनसंपदा ॥ हर्षेणमहतायुक्तोननंदहरियूथपः ॥ ५३ ॥ आस्फोटयामासचुचुंबपुच्छंननंदचिक्रीडजगौजगाम ॥ स्तंभानरोहन्निपपातभूमौनिदर्शयन्स्वांप्रकृतिंकपीनाम् ॥ ५४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे दशमः सर्गः ॥ १० ॥ अवधूयचतांबुद्धिंबभूवावस्थितस्तदा ॥ जगामचापरांचिंतांसीतांप्रतिमहाकपिः ॥ १ ॥ नरामेणवियुक्तासास्वप्तुमर्हतिभामिनी ॥ नभोक्तुंनाप्यलंकर्तुंनपानमुपसेवितुम् ॥ २ ॥ नान्यंनरमुपस्थातुंसुराणामपिचेश्वरम् ॥ नहिरामसमः कश्चिद्विद्यतेत्रिदशेष्वपि ॥ ३॥ अन्येयमितिनिश्चित्यभूयस्तत्रचचारसः ॥ पानभूमौहरिश्रेष्ठःसीतासंदर्शनोत्सुकः ॥ ४ ॥ क्रीडितेनापराःक्लांतागीतेनचतथापराः ॥ नृत्येनचापराःक्लांतापानविप्रहतास्तथा ॥ ५ ॥ मुरजेषुमृदंगेषुचेलिकासुचसंस्थिताः ॥ तथास्तरणमुख्येषुसंविष्टाश्चापराःस्त्रियः ॥ ६ ॥ अंगनानांसहस्रेणभूषितेनविभूषणैः ॥ रूपसंलापशीलेनयुक्तगीतार्थभाषिणा ॥ ७॥ देशकालाभियुक्तेनयुक्तवाक्याभिधायिना ॥ रताधिकेनसंयुक्तांददर्शहरियूथपः ॥ ८ ॥ अन्यत्रापिवरस्त्रीणांरूपसंलापशायिनाम् ॥ सहस्रंयुवतीनांतुप्रसुप्तंसददर्शह ॥ ९ ॥

मभिनयाति न रामेणेति ॥ २ ॥ अन्यं नरं पुरुषमुपस्थातुमंगीकर्तुं नार्हति नाध्यवस्यति । तत्र हेतुर्नहि रामेति ॥ ३ ॥ यदेवमतोन्येयमनुभूतेति निश्चित्य तत्र गृहे पानभूमौ पानशालायां चचार । पुनः सम्यगन्वेषणायेति शेषः ॥ ४ ॥ अथ पानभूमौ दर्शनप्रकारः क्रीडितेनेति । क्रीडितेनाक्षादिक्रीडया क्लांताः सत्यस्तथैव निद्रिता इति शेषः । विप्रहताः अतिनिद्रिताः स्त्रियो ददर्शेति शेषः ॥ ५ ॥ मुरजेषु मृदंगेषु । चेलिकासु चेलिका वाद्यविशेष इत्याहुः । तेषु प्रसक्ता एव संस्थिताः स्थिता एव निद्रिताः संविष्टाः सुप्ता ददर्शेति शेषः । आकर्षो वा ॥ ६ ॥ रूपसंलापशीलेन निद्रोद्भ्रमवशात्तस्यास्तस्या रूपविषयो यः संलापो वर्णनं तच्छीलेन युक्तं यथा भवति तथा गीतार्थस्य भाषणशीलेन ॥ ७ ॥ देशकालाभियुक्तेन तद्विषयपरिज्ञानकुशलेन युक्तवाक्यस्य देशकालोचितवाक्यस्याभिधानशीलेन । एतत्सर्वं निद्रोद्भ्रमवशादेव बोध्यम् रताधिकेन उत्तमक्रीडावता संयुक्तां पानभूमिं ददर्श ॥ ८ ॥ अन्यत्रापीत्यादिश्लोकद्वयं नव्याः प्रमादान्न पठंति । अन्यत्रापि पानभूमिभिन्ने रावणशयनगृहे बहिःस्थां पानभूमिं दृष्ट्वा पुनरभ्यंतरे

शयनस्थाने आगत्यान्वेषणम् । रूपविषयो यः संलापो वर्णनं तत्पूर्वं शयानानां युवतीनां वरस्त्रीणां सहस्रमुच्यमानगुणं ददर्श ॥ ९ ॥ तत् पूर्वदृष्टम् । रताविरतसंसुप्तं रतांतेऽविरतसुप्तं गाढसुप्तम् ॥ १० ॥ तासां मध्ये इति॥११॥स इति ॥ १२ ॥ सस्त्रीकरावणगृहे पुनः सम्यगन्विष्य पुनर्बहिःपानभूमिमागत्य विचिनोति सर्वकामैरिति । पूर्वं नृत्यादियुक्ततत्स्थस्त्रीमात्रदर्शनम् । इदानीं तस्याः सर्वकामोपेतत्वदर्शनम् ॥ १३ ॥ तदेव प्रपंचयति मृगाणामिति ॥ १४ ॥ १५ ॥ पुनःपुनर्वराहादिमृगादिकथनं बहुस्थलवर्तितया भूयस्त्वप्रकाशनाय । वाध्रीणसः पक्षिविशेषः । कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः ॥ स वै वाध्रीणसः प्रोक्त इति विष्णुधर्मोक्तेः । छागविशेषो वा । त्रिःपिबंत्विंद्रियक्षीणं श्वेतं वृद्धमजापतिम् । वाध्रीणसं च तं प्राहुर्याज्ञिकाः श्राद्धकर्मणीति स्मृतेः । मुखं कर्णौ च पानसमये जलं स्पृशंति यस्य सः त्रिःपिबः । वाध्रीणसः खड्गमृगः इति हलायुधः । दध्ना सौवर्चलेन लवणविशेषेण च आयुतान् संस्कृतान् ॥ १६ ॥ कृकलकृकरौ समौ पक्षिविशेषवाचकौ । एकशल्या मत्स्यविशेषाः । कृतनिष्ठितान् ।

देशकालाभियुक्तंतयुक्तवाक्याभिधायितत् ॥ रताविरतसंसुप्तंददर्शहरियूथपः ॥ १० ॥ तासांमध्येमहाबाहुःशुशुभेराक्षसेश्वरः ॥ गोष्ठेमहतिमुख्यानां गवांमध्येयथावृषः ॥ ११ ॥ सराक्षसेंद्रःशुशुभेताभिःपरिवृतःस्वयम् ॥ करेणुभिर्यथाऽरण्येपरिकीर्णोमहाद्विपः ॥ १२ ॥ सर्वकामैरुपेतांचपानभूमिंमहात्मनः ॥ ददर्शकपिशार्दूलस्तस्यरक्षःपतेर्गृहे ॥ १३ ॥ मृगाणांचवराहाणांमहिषाणांचभागशः ॥ तत्रन्यस्तानिमांसानिपानभूमौददर्शसः ॥ १४ ॥ रौक्मेषुचविशालेषुभाजनेष्वप्यभक्षितान् ॥ ददर्शकपिशार्दूलोमयूरान्कुक्कुटांस्तथा ॥ १५ ॥ वराहवाध्रीणसकान्दधिसौवर्चलायुतान् ॥ शल्यान्मृगमयूरांश्चहनुमानन्ववैक्षत ॥१६॥ कृकलान्विविधांश्छागाञ्छशकानर्धभक्षितान् ॥ महिषानेकशल्यांश्चछेद्यांश्चकृतनिष्ठितान् ॥ १७ ॥ लेह्यानुच्चावचान्पेयान्भोज्यान्युच्चावचानिच ॥ तथाम्ललवणोत्तंसैर्विविधैरागखांडवैः ॥ १८ ॥ हारनूपुरकेयूरैरपविद्धैर्महाधनैः ॥ पानभाजनविक्षिप्तैःफलैश्चविविधैरपि ॥ १९ ॥ कृतपुष्पोपहाराभूरधिकांपुष्यतिश्रियम् ॥ तत्रतत्रचविन्यस्तैःसुश्लिष्टशयनासनैः ॥२०॥ पानभूमिर्विनावह्निंप्रदीप्तेवोपलक्ष्यते ॥ बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ॥ २१ ॥ मांसैःकुशलसंयुक्तैःपानभूमिगतैःपृथक् ॥ दिव्याःप्रसन्नाविविधाःसुराःकृतसुराअपि ॥ २२ ॥ शर्करासवमाध्वीकाःपुष्पासवफलासवाः ॥ वासचूर्णैश्चविविधैर्मृष्टास्तैस्तैःपृथक्पृथक् ॥ २३ ॥

कृतं निष्ठितं निष्ठानं पाको येषां तान् ॥ १७ ॥ अम्लरसो लवणरसश्च उत्तंसो जिह्वाजाड्यपरिहारकर्ता येषु भक्ष्यमाणेषु तैः रागखांडवैः । सितामध्वादिमधुरो द्राक्षादाडिमजो रसः । विरलश्चेत्कृतो रागः सांद्रश्चेत्खांडवः स्मृत इत्युक्तेः । केशरादिभिः कृतवर्णाः षड्रसोपेताः पूपा रागखांडवा इत्यन्ये ॥ १८ ॥ महाधनैर्बहुमूल्यैः ॥ १९ ॥ सुश्लिष्टैः सुकृतसंधिबंधैः ॥ २० ॥ उच्चैः सौवर्णरत्नमयशयनासनैः पानभूमिः प्रदीप्तेवोपलक्ष्यते । बहुप्रकारैः बहूपादानभेदैरतएव विविधैर्विविधरसवद्भिः वरसंस्कारेण श्रेष्ठसंस्कारकद्रव्ययोगेन संस्कृतैः ॥ २१ ॥ कुशलसंयुक्तैर्निपुणपाचकपक्वैर्मांसैः सहोच्यमानगुणाः सुरा ददर्श तत्र दिव्याः सुराः वृक्षेभ्यः कदंबादिभ्यः स्वतः प्रादुर्भूताः कृतसुराः शौंडिकैरुत्पादिताः ॥ २२ ॥ कृतसुरावांतरभेदानाह शर्करासवेत्यादि । शर्करोपादानक आसवः शर्करासवः । मधूपादानको माध्वीकः

द्राक्षोपादानक इत्यन्ये । मधूकपुष्पादिजः पुष्पासवः । खर्जूरफलादिजः फलासवः । वासचूर्णैः सुगंधद्रव्यचूर्णैर्मृष्टा अधिवासिताः दृष्टा इति शेषः ॥ २३ ॥ अथ भूमिवर्णनम् । बहुषु देशेषु संस्थितैर्माल्यैः संतता व्याप्ता भूमिः शुशुभे । उच्यमानविशेषणैः करकैर्घटैश्च संतता ॥ २४ ॥ राजतादिषु कुंभेषु ॥ २५ ॥ पानश्रेष्ठां संभृतप्रशस्तपानाम् । सीधोर्मधस्य भाजनानीत्यन्वयः ॥ २६ ॥ भाजनानि पानभाजनानि अर्धावशेषाणि अर्धावशिष्टपानानि पीतानि पीतासवानि ॥ २७ ॥ नैव प्रपीतानि पूर्णासवान्येव पानानि पानभाजनानि । विभागतः विभागेन पानं ददर्श । इदममुकमिदममुकमिति विभज्य ददर्शेत्यर्थः ॥ २८ ॥ शून्यानि पतिशून्यानि । अतएव परस्परं समाश्लिष्येति ॥ २९ ॥ अपहृत्य बलाद्गृहीत्वा उपगुह्य प्रावृत्त्य उपगम्य तच्छयनस्थानं प्राप्य तां च पश्यन्विचचारेति संबंधः ॥ ३० ॥ गात्रजं गात्रस्थम् ॥ ३१ ॥ अथ पानभूमितोपि बहिरागत्य तत्र स्थिते पुष्पके प्रवृत्तिकाल इव निर्गमकालेपि बहुगंधो वायुरन्यस्त्रियश्चानुभूता इत्याह चंदनस्य चेत्यादि । पानभूम्यादिकमपि पुष्पकस्थमे

संतताशुशुभेभूमिर्माल्यैश्चबहुसंस्थितैः ॥ हिरण्मयैश्चकलशैर्भाजनैःस्फाटिकैरपि ॥ २४ ॥ जांबूनदमयैश्चान्यैःकरकैरभिसंवृता ॥ राजतेषुच कुंभेषुजांबूनदमयेषुच ॥२५॥ पानश्रेष्ठांतथाभूमिंकपिस्तत्रददर्शह ॥ सोऽपश्यच्छातकुंभानिसीधोर्मणिमयानिच ॥ २६ ॥ तानितानिचपूर्णानिभाजनानिमहाकपिः ॥ क्वचिदर्धावशेषाणिक्वचित्पीतान्यशेषतः ॥ २७ ॥ क्वचिन्नैवप्रपीतानिपानानिसददर्शह ॥ क्वचिद्भक्ष्यांश्चविविधान्क्वचित्पानंविभागतः ॥ २८ ॥ क्वचिदर्धावशेषाणिपश्यन्वैविचचारह ॥ शयनान्यत्रनारीणांशून्यानिबहुधापुनः ॥ परस्परंसमाश्लिष्यकाश्चित्सुप्तावरांगनाः ॥२९॥ काचिच्चवस्त्रमन्यस्याअपहृत्योपगुह्यच ॥ उपगम्याबलासुप्तानिद्राबलपराजिता ॥३०॥ तासामुच्छ्वासवातेनवस्त्रंमाल्यंचगात्रजम् ॥ नात्यर्थंस्पंदतेचित्रंप्राप्यमंदमिवानिलम् ॥ ३१ ॥ चंदनस्यचशीतस्यसीधोर्मधुरसस्यच ॥ विविधस्यचमाल्यस्यपुष्पस्यविविधस्यच ॥ ३२॥ बहुधामारुतस्तस्यगंधंविविधमुद्वहन् ॥ स्नानानांचंदनानांचधूपानांचैवसंमूर्छितः ॥ ३३ ॥ प्रववौसुरभिर्गंधोविमानेपुष्पकेतदा ॥ श्यामावदातास्तत्रान्याःकाश्चित्कृष्णावरांगनाः ॥ ३४ ॥ काश्चित्कांचनवर्णांग्यःप्रमदाराक्षसालये ॥ तासांनिद्रावशत्वाच्चमदनेनविमूर्छितम् ॥ ३५ ॥ पद्मिनीनांप्रसुप्तानांरूपमासीद्यथैवहि ॥ एवंसर्वमशेषेणरावणांतःपुरंकपिः ॥ ३६ ॥ ददर्शसमहातेजानददर्शचजानकीम् ॥ ३७ ॥ निरीक्षमाणश्चततस्ताःस्त्रियःसमहाकपिः ॥ जगाममहतींशंकांधर्मसाध्वसशंकितः॥३८॥परदारावरोधस्यप्रसुप्तस्यनिरीक्षणम् ॥ इदंखलुममात्यर्थंधर्मलोपंकरिष्यति ॥३९॥

वेत्यन्ये । सीधुर्मद्यम् ॥ ३२ ॥ स्नानानां चंदनानामिति पाठे स्नानार्हचंदनानामित्यर्थः । विविधं गंधमुद्वहन् प्रववौ । अतएव सुरभिर्गंधो विमाने मूर्छितो व्याप्तः ॥ ३३ ॥ तत्रान्याः बहिःप्रतिष्ठितपुष्पके इत्यर्थः ॥ ३४ ॥ राक्षसालये आंतरमध्यबहिःकक्षोपलक्षिते । सर्वत्र निद्रावशत्वान्मदनेन तद्धेतुकरत्यार्द्धमूर्छितं क्लांतं तासां रूपं प्रसुप्तानां रात्रौ मुकुलितानां पद्मिनीनां नलिनीनां यथा रूपं तथैवासीत् । एवंप्रकारेण ददर्श ॥ ३५ ॥ ३६ ॥ ३७ ॥ ततो निरीक्षणानंतरम् । नेक्षेत नग्नां परस्त्रियमिति शास्त्रस्मरणादिति शेषः । तदेवाह धर्मेति । धर्मलोपनिमित्तं यत्साध्वसं भयं तेन शंकितो भीत इत्यर्थः ॥ ३८ ॥ धर्मलोपं दर्शयति परदारेति । परदारावरोधस्य दारशब्दः स्त्रीसामान्यवाची । अवरोधशब्दः स्वधर्मयुक्तकुलस्त्रीवाची प्रसुप्तस्य अनेन नग्नप्रायत्वं सूचितम् । तत्समये वसनानां विपर्यासात् ॥ ३९ ॥

मे दृष्टिः परदाराणामद्य यावद्विषयवर्तिनी न किंच परदारपरिग्रहस्तद्वान् अतिपापी रावणश्च दृष्टः तादृशदर्शनमपि धर्मलोपकारीति भावः ॥४०॥ अथ पुनर्विचारेण तद्लोपबुद्धिरप्युत्पन्नेत्याह तस्येति । अन्या चिंता पूर्वचिंताविरोधिनी निश्चिते प्रमाणप्रतिपन्ने एकांते सिद्धांते तद्विषयज्ञाने चित्तं यस्य सः । अतएव सा चिंता कार्यनिश्चयदर्शिनी कर्तव्याऽकर्तव्यनिर्णयसमर्था ॥४१॥ तां चिंतामभिनयति काममिति । विश्वस्ता इतरालोकनशंकारहिताः। वैकृत्यं विकारः । स्वार्थे ष्यञ् । नोपपद्यते न प्राप्नोति ॥४२॥ ततः किं तत्राह मनोहीति । शुभा शुभास्ववस्थासु पुण्यपापकर्मसु इंद्रियाणां प्रवर्तने मनो हेतुः मनसोऽसत्सदर्थरागद्वेषत इंद्रियप्रवृत्तिर्हि पापाय इयं तु मम प्रवृत्तिर्न पापाय । यतस्तन्मे मनः सुष्ठु व्यवस्थितं परदारेषु न रागवत् पुण्यपापव्यवस्थायां च स्वचित्तमेव साक्षीति भावः ॥ ४३ ॥ किंच राजाज्ञानुष्ठानरूपसेवकीयपरमधर्मा न्यथानुपपत्त्यापि न दोष इत्याह नान्यत्रेति । तत्र हेतुः स्त्रियो हीति । सदा संपरिमार्गणे मार्गणव्यवहारे लोकैरिति शेषः ॥४४॥ सजातीयेष्वेव मार्गणं प्रसिद्धमित्याह यस्येति। सत्त्वस्य प्राणिनः या योनिः या

नहिमेपरदाराणांदृष्टिर्विषयवर्तिनी ॥ अयंचात्रमयादृष्टःपरदारपरिग्रहः ॥ ४० ॥ तस्यप्रादुरभूच्चिंतापुनरन्यामनस्विनः ॥ निश्चितैकांतचित्तस्यकार्यनिश्चयदर्शिनी ॥ ४१ ॥ कामंदृष्टामयासर्वाविश्वस्तारावणस्त्रियः ॥ नतुमेमनसाकिंचिद्वैकृत्यमुपपद्यते ॥ ४२ ॥ मनोहिहेतुःसर्वेषामिंद्रियाणांप्रवर्तने ॥ शुभाशुभास्ववस्थासुतच्चमेसुव्यवस्थितम् ॥ ४३ ॥ नान्यत्रहिमयाशक्यावैदेहीपरिमार्गितुम् ॥ स्त्रियोहिस्त्रीषुदृश्यंतेसदासंपरिमार्गणे ॥४४॥ यस्यसत्त्वस्ययायोनिस्तस्यांतत्परिमार्गते ॥ नशक्यंप्रमदानष्टामृगीषुपरिमार्गितुम् ॥ ४५ ॥ तदिदंमार्गितंतावच्छुद्धेनमनसामया ॥ रावणांतःपुरंसर्वंदृश्यतेनचजानकी ॥ ४६ ॥ देवगंधर्वकन्याश्चनागकन्याश्चवीर्यवान् ॥ अवेक्षमाणोहनुमान्नैवापश्यतजानकीम् ॥ ४७ ॥ तामपश्यन्कपिस्तत्रपश्यंश्चान्यावरस्त्रियः ॥ अपक्रम्यतदावीरःप्रस्थातुमुपचक्रमे ॥ ४८ ॥ सभूयःसर्वतःश्रीमान्मारुतिर्यत्नमाश्रितः ॥ आपानभूमिमुत्सृज्यतांविचेतुंप्रचक्रमे ॥ ४९ ॥ इत्यार्षे श्रीमद्रा० वा० आदि० सुं० एकादशः सर्गः ॥ ११ ॥ सतस्यमध्येभवनस्यसंस्थितोलतागृहांश्चित्रगृहान्निशागृहान् ॥ जगामसीतांप्रतिदर्शनोत्सुकोनचैवतांपश्यतिचारुदर्शनाम् ॥ १ ॥ सचिंतयामासततोमहाकपिःप्रियामपश्यन्रघुनंदनस्यताम् ॥ ध्रुवंनसीताध्रियतेयथानमेविचिन्वतोदर्शनमेतिमैथिली ॥ २ ॥ साराक्षसानांप्रवरेणबालास्वशीलसंरक्षणतत्परासती ॥ अनेननूनंप्रतिदुष्टकर्मणाहताभवेदार्यपथेपरेस्थिता ॥ ३ ॥ विरूपरूपाविकृताविवर्चसोमहाननादीर्घविरूपदर्शनाः ॥ समीक्ष्यताराक्षसराजयोषितोभयाद्विनष्टाजनकेश्वरात्मजा ॥ ४ ॥

समानजातिः परिमार्गते लोक इति शेषः । तत्रैवोपपत्तिमाह न शक्यमिति । एतेन रावणदर्शनजोपि दोषः परिहृतः ॥४५॥४६॥४७॥ अपक्रम्य रावणांतःपुरबहिःकक्षात इति शेषः ॥ ४८ ॥ तां सीतामन्यत्र विचेतुं प्रचक्रमे ॥ ४९ ॥ धोर्वमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकादशः सर्गः ॥ ११ ॥ अथ बहुदुःखचिंताकुलोऽन्विष्टमेव पुनःपुनरन्वेषयतिस्मेत्याह स तस्येति । तस्य भवनस्य रावणभवनस्य । निशागृहाः रात्रिनिवासगृहाः तान्विचेतुं जगाम ॥१॥ न ध्रियते न जीवतिस्म ध्रुवं नु सीता म्रियत इति क्वचित्पाठः । तत्र हेतुर्यथेति । यत इत्यर्थः॥२॥ स्वशीलं पातिव्रत्यम् । प्रतिदुष्टकर्मणा प्रति इष्टं दुष्टं कर्म यस्य तेन सकलसज्जनानर्थकारिणेत्यर्थः । आर्यपथे आर्याणां पतिव्रतानां मार्गे ॥ ३ ॥ रावणस्यानुरागात्स्त्रीवधदोषाद्वा तद्वधेऽप्रवृत्तावपि स्वयमेव भयान्न

इत्याह विरूपेति । दीर्घाणि विरूपाणि दर्शनानि यासां ताः दीर्घपदेन कर्मधारयो वा राक्षसराजयोषितस्तदाज्ञाकारिणीः ॥ ४ ॥ पौरुषं समुद्रलंघनरूपपराक्रमसाध्यं प्रयोजनम् । कालं विहत्य सुग्रीवकृतं कालमतिक्रम्य । सुग्रीवसमीपं गम्यते यया सा गतिर्मार्गो नास्ति । तत्र हेतुः सुतीक्ष्णेति ॥ ५ ॥ ६ ॥ अस्तु सुग्रीवसमीपगमनवार्ता अंगदादिसमीपगमनमपि दुर्लभमित्याह किंन्विति । किंतु वक्ष्यंतीति चिंतां कृत्वा पुनर्विचार्य यद्वक्तव्यं तत्स्वयमेवानुवदति गत्वेत्यादि वदस्व इति वक्ष्यंतीत्यर्थः ॥ ७ ॥ किं प्रवक्ष्यामि तान्प्रतीति शेषः । न किमपीत्यर्थः । यदेवमतोध्रुवमिति कालस्य सुग्रीवकल्पितस्य व्यतिवर्तने अतिक्रमे ॥ ८ ॥ किं वा वक्ष्यति मां धिकरिष्यतीत्यर्थः । समागता मिलिता अन्ये वानराश्च धिक्करिष्यंति ॥९॥ एवं क्षणमात्रं निर्विद्य पुनरुत्साहमवलंब्याह अनिर्वेद इति । निर्वेदः करणग्रामस्य प्रवृत्तिवैमुख्यं तदभाव

सीतामदृष्ट्वाह्यनवाप्यपौरुषंविहत्यकालंसहवानरैश्चिरम् ॥ नमेऽस्तिसुग्रीवसमीपगागतिःसुतीक्ष्णदंडोबलवांश्चवानरः ॥ ५ ॥ दृष्टमंतःपुरंसर्वंदृष्टा राक्षसयोषितः ॥ नसीतादृश्यतेसाध्वीवृथाजातोममश्रमः ॥ ६ ॥ किंनुमांवानराःसर्वेगतंवक्ष्यंतिसंगताः ॥ गत्वातत्रत्वयावीरकिंकृतंतद्वदस्वनः ॥ ॥ ७ ॥ अदृष्ट्वाकिंप्रवक्ष्यामितामहंजनकात्मजाम् ॥ ध्रुवंप्रायमुपासिष्येकालस्यव्यतिवर्तने ॥ ८ ॥ किंवावक्ष्यतिवृद्धश्चजांबवानंगदश्चसः ॥ गतंपारं समुद्रस्यवानराश्चसमागताः ॥ ९ ॥ अनिर्वेदःश्रियोमूलमनिर्वेदःपरंसुखम् ॥ भूयस्तत्रविचेष्यामिनयत्रविचयःकृतः ॥ १० ॥ अनिर्वेदोहिसततं सर्वार्थेषुप्रवर्तकः ॥ करोतिसफलंजंतोःकर्मयच्चकरोतिसः ॥ ११ ॥ तस्मादनिर्वेदकरंयत्नंचेष्टेऽहमुत्तमम् ॥ अदृष्टांश्चविचेष्यामिदेशान्रावणपालितान् ॥ १२ ॥ आपानशालाविचितास्तथापुष्पगृहाणिच ॥ चित्रशालाश्चविचिताभूयःक्रीडागृहाणिच ॥ १३ ॥ निष्कुटांतररथ्याश्चविमानानिचसर्वशः ॥ इतिसंचिंत्यभूयोपिविचेतुमुपचक्रमे ॥ १४ ॥ भूमीगृहांश्चैत्यगृहान्गृहातिगृहकानपि ॥ उत्पतन्निपतंश्चापितिष्ठन्गच्छन्पुनःक्वचित् ॥ १५ ॥ अपवृण्वंश्चद्वाराणिकपाटान्यववट्टयन् ॥ प्रविशन्निष्पतंश्चापिप्रपतन्नुत्पतन्निव ॥ १६ ॥ सर्वमप्यवकाशंसविचचारमहाकपिः ॥ चतुरंगुलमात्रोपिनावकाशःसविद्यते ॥ रावणांतःपुरेतस्मिन्यंकपिर्नजगामसः ॥१७॥ प्राकारांतरवीथ्यश्चवेदिकाश्चैत्यसंश्रयाः ॥ श्वभ्राश्चपुष्करिण्यश्चसर्वं तेनावलोकितम् ॥ १८ ॥

उत्साहः ॥ १० ॥ यत्कर्म स करोति तत्कर्म सफलं करोति ॥ ११ ॥ अनिर्वेदकरम् उत्साहजननं यत्नं चित्तस्थैर्यं चेष्टे करोमि ॥ १२ ॥ ॥ १३ ॥ निष्कुटांतररथ्याः गृहाराममध्यगता वीथीः विमानानि पुष्पकादीनि ॥ १४ ॥ भूमीगृहान्भूबिलगृहान् । गृहातिगृहकाः गृहोपरिगृहा इति कतकः । गृहानतीत्यानतिदूरे स्वैरविहारार्थं निर्मितगृहा इति तीर्थः । विचेतुमुपचक्रमे इत्यनुकर्षः । उत्पतन्नुन्नतमारुहन् निपतनमवरोहः ॥ १५ ॥ निष्पतनं निष्क्रमणं अववट्टनं संवरणम् ॥ १६ ॥ यं स कपिर्न जगाम स तादृशश्चतुरंगुलमात्रोऽप्यवकाशो न विद्यते ॥ १७ ॥ प्राकारांतरवीथ्यः प्राकारमध्यवर्तिमंत्रिकुमारादिगृहवीथ्यः चैत्यश्चतुष्पथवर्तिवृक्षः श्वभ्राः गर्ताः ॥ १८ ॥

॥१९॥राघवनंदिनी रामप्रिया ॥२०॥२१॥ प्रमथ्य नागकन्या बलाद्धृता इत्यनेन बंदीकृतानां ग्रहणम् । पूर्वं तूढानां नागकन्यानां ग्रहणमतो न पुनरुक्तिः ॥२२॥२३॥२४॥ अवतीर्य विमानाच्चेति पुनरारुह्यावरुह्य चेत्यर्थः । विमान एवैतत्सर्वदर्शनमिति तत्वम् ॥ २५ ॥ मेरैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि० सुंदरकांडे द्वादशः सर्गः ॥ १२ ॥ ॥ वेगवान्हनूमान्विमानात्प्राकारं संक्रम्य वनांतरे यथा विद्युत्सशोभा आसीत्तथासीत् । प्राकारस्येंद्रनीलकृतत्वमनेन ध्वन्यते ॥ १ ॥ रावणस्य निवेशनान् गृहान्संपरिक्रम्य पुनः परिक्रमणेन दृष्ट्वा जानकीं चादृष्ट्वा अब्रवीत् । आत्मनैवेति बोध्यम् ॥ २ ॥ भूयिष्ठं लोलिता बहुशोन्विष्टा ॥ ३ ॥ ४ ॥ नन्वनुपलब्धिप्रमाणादभावनिश्चय एवास्त्वत आह इहेति । रावणनिवेशने एवाख्याता तद्वचश्च प्रमाणम् । दृश्यते तु न । किमिद

राक्षस्योविविधाकाराविरूपाविकृतास्तथा ॥ दृष्टाहनुमतातत्रनतुसाजनकात्मजा ॥ १९ ॥ रूपेणाप्रतिमालोकेपराविद्याधरस्त्रियः ॥ दृष्टाहनुमता तत्रनतुराघवनंदिनी ॥ २० ॥ नागकन्यावरारोहाःपूर्णचंद्रनिभाननाः ॥ दृष्टाहनुमतातत्रन तुसाजनकात्मजा ॥ २१ ॥ प्रमथ्यराक्षसेंद्रेणनागकन्या बलाद्धृताः ॥ दृष्टाहनुमतातत्रनसाजनकनंदिनी ॥ २२ ॥ सोऽपश्यंस्तांमहाबाहुःपश्यंश्चान्यावरस्त्रियः ॥ विषसादमहाबाहुर्हनूमान्मारुतात्मजः ॥ ॥ २३ ॥ उद्योगंवानरेंद्राणांप्लवनंसागरस्यच ॥ व्यर्थंवीक्ष्यानिलसुतश्चिंतांपुनरुपागतः ॥२४॥ अवतीर्यविमानाच्चहनूमान्मारुतात्मजः ॥ चिंतामुपजगामाथशोकोपहतचेतनः ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वा० आदिकाव्ये सुंदरकांडे द्वादशः सर्गः ॥ १२ ॥ विमानात्तुससंक्रम्यप्राकारंहरियूथपः ॥ हनुमान्वेगवानासीद्यथाविद्युद्घनांतरे ॥ १ ॥ संपरिक्रम्यहनुमान्रावणस्यनिवेशनान् ॥ अदृष्ट्वाजानकींसीतामब्रवीद्वचनंकपिः ॥ २ ॥ भूयिष्ठंलोलितालंकारामस्यचरताप्रियम् ॥ नहिपश्यामिवैदेहींसीतांसर्वांगशोभनाम् ॥३॥ पल्वलानितटाकानिसरांसिसरितस्तथा ॥ नद्योऽनूपवनांताश्चदुर्गाश्चधरणीधराः ॥ लोलितावसुधासर्वानचपश्यामिजानकीम् ॥४॥ इहसंपातिनासीतारावणस्यनिवेशने ॥आख्यातागृध्रराजेननचसादृश्यते तुकिम् ॥५॥किंतुसीताथवैदेहीमैथिलीजनकात्मजा ॥ उपतिष्ठेतविवशारावणेनहृताबलात् ॥ ६ ॥ क्षिप्रमुत्पततोमन्येसीतामादायरक्षसः॥विभ्यतो रामबाणानामंतरापतिताभवेत् ॥ ७ ॥ अथवाह्रियमाणायाःपथिसिद्धनिषेविते ॥ मन्येपतितमार्यायाहृदयंप्रेक्ष्यसागरम् ॥ ८ ॥

मिति ॥ ५ ॥ बहुप्रकारं चिंतयति किंत्विति । पूर्वदृष्टां मंदोदरीं सौंदर्यादिगुणैः पुनः सीतात्वेन संभाव्य तन्निरासकवाक्यं रावणेन बलाद्धृता विवशा सती सीता उपतिष्ठेत रावणमिति शेषः । रावणं दुष्टचारिणमिति पाठे तु यथाश्रुतमेव । इदं किंतु कुत्सितं तु यतः सा मैथिली सा सीता लांगलपद्धतिजत्वेनायोनिजा । वैदेही जगत्प्रशस्तविदेहवंशसंबद्धा । जनकात्मजा ब्रह्मवित्पुत्री ॥ ६ ॥ तर्ह्यदर्शनं कुतस्तत्र हेतूनुत्प्रेक्षते क्षिप्रमिति । एते पक्षाः दुःखातिशयात्संपातिवचनाविस्मरणमूलकाः । बिभ्यतः कराद् भ्रष्टेति शेषः । रामबाणानाम् आघातादिति शेषः । शेषे षष्ठी वा ॥७॥ रामपरोक्षं तथा भयायोगात्पक्षांतरमथवेति

हृदयं पतितं मन उत्क्रांतं मनउत्क्रमणस्यैवमरणत्वात् ॥ ८ ॥ पीडितेन पीडनेन ॥ ९ ॥ विचेष्टमाना विलुठंती ॥ १० ॥ ननु सर्वमेतदसंभावितं रावणेन सर्वापायरहितं हरणस्येपत्करत्वादतः पक्षांतरमाह अहोइति । अथवेत्यर्थः ॥ ११ ॥ ननु बहुभक्षणसामग्रीमत्त्वादनुरागवत्त्वाच्च तेन भक्षणमसंभावितमत आह अथवेति । सापत्न्यदुःखादिति भावः ॥ १२ ॥ एतदुत्तरं श्लोकद्वयं संपूर्णचंद्रेत्यादि प्रक्षिप्तमिति कतकः ॥ १ ॥ २ ॥ ननु सपत्नीभिरप्यशक्यं भक्षणं रावणेन स्वभोगार्थमानीतत्वादत आह अथवेति । निहिता गुप्ततया स्थापिता इति मन्ये । नायमपि पक्षो युक्त इत्याह भृशमिति । एवमपि सा बाल पंजरस्था सारिकेव भृशं मुहुर्मुहुः रामेति लालप्यते लालप्येत । न च तद्दृश्यते इति भावः ॥ १३ ॥ ननु तर्हि रावणसमीप एव भवेत् संपातिवचनप्रामाण्यात् मया तु सम्यङ्नान्विष्टमित्याशंक्याह जनकस्येति तस्मादेतदप्ययुक्तमिति भावः ॥ १४ ॥ नन्वनेन विचारेणाऽलं यथानुभूतं निवेद्यतां तत्राह विनष्टेति । अस्य कश्चिद्वर्तत इति शेषः । णशअदर्शने इति धात्वनुसाराददृष्टा सती कश्चिदस्तीति वक्तुमशक्यमक्षमं

रावणस्योरुवेगेनभुजाभ्यांपीडितेनच ॥ तयामन्येविशालाक्ष्यात्यक्तंजीवितमार्यया ॥ ९ ॥ उपर्युपरिसानूनंसागरंक्रमतस्तदा ॥ विचेष्टमानाप तितासमुद्रेजनकात्मजा ॥ १० ॥ आहोक्षुद्रेणचानेनरक्षंतीशीलमात्मनः ॥ अबंधुर्भक्षितासीतारावणेनतपस्विनी ॥ ११ ॥ अथवाराक्षसेंद्रस्यपत्नी भिरसितेक्षणा ॥ अदुष्टादुष्टभावाभिर्भक्षितासाभविष्यति ॥ १२ ॥ "संपूर्णचंद्रप्रतिमंपद्मपत्रनिभेक्षणम् ॥ रामस्यध्यायतीवक्त्रंपंचत्वंकृपणागता ॥ १ ॥ हारामलक्ष्मणेत्येवहाऽयोध्येतिचभामिनी ॥ विलप्यबहुवैदेहीन्यस्तदेहाभविष्यति ॥ २ ॥" अथवानिहितामन्येरावणस्यनिवेशने ॥ भृशंलाल प्यतेबालापंजरस्थेवसारिका ॥ १३ ॥ जनकस्यकुलेजातारामपत्नीसुमध्यमा ॥ कथमुत्पलपत्राक्षीरावणस्यवशंव्रजेत् ॥ १४ ॥ विनष्टावाप्रण ष्टावामृतावाजनकात्मजा ॥ रामस्यप्रियभार्यस्यननिवेदयितुंक्षमम् ॥ १५ ॥ निवेद्यमानेदोषःस्याद्दोषःस्यादनिवेदने ॥ कथंनुखलुकर्तव्यंविषमंप्र तिभातिमे ॥ १६ ॥ अस्मिन्नेवंगतेकार्येप्राप्तकालंक्षमंचकिम् ॥ भवेदितिमतिंभूयोहनुमान्प्रविचारयन् ॥ १७ ॥ यदिसीतामदृष्ट्वाऽहंवानरेंद्रपुरी मितः ॥ गमिष्यामिततःकोमेपुरुषार्थोभविष्यति ॥ १८ ॥ ममेदंलंघनंव्यर्थंसागरस्यभविष्यति ॥ प्रवेशश्चैवलंकायाराक्षसानांचदर्शनम् ॥ ॥ १९ ॥ किंवावक्ष्यतिसुग्रीवोहरयोवापिसंगताः ॥ किष्किंधामनुसंप्राप्तंतौवादशरथात्मजौ ॥ २० ॥

सर्वतोन्विष्टत्वात । प्रणष्टा प्रगतं नष्टमदर्शनं यस्याः सा दृष्टेत्यर्थः । एतदपि न वक्तुं क्षमं स्वयमदृष्टत्वात् । एवं मृतेत्यपि वक्तुं न शक्यं तत्साधकदृष्टतरप्रमाणाभावात् । तस्माद्रामस्याग्रे किमपि वक्तुं न शक्यम् दृश्यदेशे माययाऽदर्शनं विनाशः अदृश्यदेशेऽवस्थापनं प्रणाश इति तु तीर्थः ॥ १५ ॥ तदेव स्पष्टयति निवेद्यमाने इति । न दृष्टेति निवेद्यमाने दोषो वक्ष्यमाणरामप्राणत्यागरूपः । अनिवेदने स्वामिवचनरूपो दोषः । तस्मान्निवेदनानिवेदनरूपमुभयमपि विषमं दुरनुष्ठेयं प्रतिभाति ॥ १६ ॥ एतदनंतरं कविवाक्यमस्मिन्निति । कार्ये एवं गते सति दुर्निरूपे सतीत्यर्थः । प्राप्तकालं कालोचितम् । किं क्षमं किं वक्तुं युक्तं भवेदिति भूयो मतिं तद्विषयं पक्षं विचारयन्नभूदिति शेषः ॥ १७ ॥ विचारमेव प्रपंचयति यदीति । को भविष्यति न कोपीत्यर्थः ॥ १८ ॥ १९ ॥ वक्ष्यति असाध्वेव वक्ष्यतीत्यर्थः ॥ २० ॥

न दृष्टेत्यप्रियं यदि वक्ष्यामि ततस्तच्छ्रवणानंतरम् ॥२१॥ परुषं कर्णकठोरम् अतएव दारुणं भयंकरं तीक्ष्णमसह्यं क्रूरमुग्रम् इंद्रियाणां तापनं संतापकं सीतानिमित्तं सीताविषयं स रामः ॥२२॥२३॥२४॥२५॥ ततः दिविस्थरामदर्शनात् ॥ २६ ॥ २७ ॥ वालिजेन वालिमरणजेन पंचत्वमागता पंचत्वं प्राप्तुं निश्चयवती ॥ २८ ॥ तस्मात्तदनंतरम् ॥ २९ ॥ ३० ॥ यशस्विना कपिनाथेन सांत्वादिभिर्लालिताः प्राणांस्त्यक्ष्यंति ॥ ३१ ॥ निरोधेषु गुहादिसंवृतदेशेषु ॥ ३२ ॥ सपुत्रदारा इत्यादेः कपिकुंजरा इति विशेष्यम् ॥ ३३ ॥ शस्त्रं शस्त्रघातं प्रचरिष्यंति करिष्यंति॥ ३४॥ ३५ ॥३६॥ अगच्छति गमनरहिते ।

गत्वातुयदिकाकुत्स्थंवक्ष्यामिपरुषंवचः ॥ नदृष्टेतिमयासीताततस्त्यक्ष्यतिजीवितम् ॥ २१ ॥ परुषंदारुणंतीक्ष्णंक्रूरमिंद्रियतापनम् ॥ सीतानिमित्तंदुर्वाक्यंश्रुत्वासनभविष्यति ॥२२ ॥ तंतुकृच्छ्रगतंदृष्ट्वापंचत्वगतमानसम् ॥ भृशानुरक्तमेधावीनभविष्यतिलक्ष्मणः ॥ २३॥ विनष्टौभ्रातरौश्रुत्वाभरतोपिमरिष्यति ॥ भरतंचमृतंदृष्ट्वाशत्रुघ्नोनभविष्यति॥ २४ ॥ पुत्रान्मृतान्समीक्ष्याथनभविष्यंतिमातरः ॥ कौसल्याचसुमित्राचकैकेयीचनसंशयः ॥ २५ ॥ कृतज्ञःसत्यसंधश्चसुग्रीवःप्लवगाधिपः ॥ रामंतथागतंदृष्ट्वाततस्त्यक्ष्यतिजीवितम् ॥ २६ ॥ दुर्मनाव्यथितादीनानिरानंदातपस्विनी ॥ पीडिताभर्तृशोकेनरुमात्यक्ष्यतिजीवितम् ॥ २७ ॥ वालिजेनतुदुःखेनपीडिताशोककर्शिता ॥ पंचत्वमागताराज्ञीताराऽपिनभविष्यति ॥ २८ ॥ मातापित्रोर्विनाशेनसुग्रीवव्यसनेनच ॥ कुमारोऽप्यंगदस्तस्माद्विजहिष्यतिजीवितम् ॥ २९ ॥ भर्तृजेनतुदुःखेनअभिभूतावनौकसः ॥ शिरांस्यभिहनिष्यंतितलैर्मुष्टिभिरेवच ॥ ३० ॥ सांत्वेनानुप्रदानेनमानेनचयशस्विना ॥ लालिताःकपिनाथेनप्राणांस्त्यक्ष्यंतिवानराः ॥ ३१ ॥ नवनेषुनशैलेषुननिरोधेषुवापुनः ॥ क्रीडामनुभविष्यंतिसमेत्यकपिकुंजराः ॥ ३२ ॥ सपुत्रदाराःसामात्याभर्तृव्यसनपीडिताः ॥ शैलाग्रेभ्यःपतिष्यंतिसमेषुविषमेषुच ॥ ३३ ॥ विषमुद्बंधनंवापिप्रवेशंज्वलनस्यवा ॥ उपवासमथोशस्त्रंप्रचरिष्यंतिवानराः ॥ ३४ ॥ घोरमारोदनंमन्येगतेमयिभविष्यति ॥ इक्ष्वाकुकुलनाशश्चनाशश्चैववनौकसाम् ॥ ३५ ॥ सोऽहंनैवगमिष्यामिकिष्किन्धांनगरीमितः ॥ नहिशक्ष्याम्यहंद्रष्टुंसुग्रीवंमैथिलीं विना ॥ ३६ ॥ मय्यगच्छतिचेहस्थेधर्मात्मानौमहारथौ ॥ आशयातौधरिष्येतेवानराश्चतरस्विनः ॥ ३७ ॥ हस्तादानोमुखादानोनियतोवृक्षमूलिकः ॥ वानप्रस्थोभविष्यामिअदृष्ट्वाजनकात्मजाम् ॥ ३८ ॥ सागरानूपजेदेशेबहुमूलफलोदके ॥ चितिंकृत्वाप्रवेक्ष्यामिसमिद्धमरणिसुतम् ॥ ॥ ३९ ॥उपविष्टस्यवासम्यग्लिंगिनंसाधयिष्यतः ॥ शरीरंभक्षयिष्यंतिवायसाःश्वापदानिच ॥ ४० ॥

आशया सीतावृत्तांतश्रवणप्रत्याशया । धरिष्येते प्राणानिति शेषः ॥ ३७ ॥ हस्तादानः हस्तपतितफलादिकग्राहकस्तद्भोजीति यावत् । एवं मुखादानो मुखपतितभोजी । नियतो नियतेंद्रियः वृक्षमूलिको वृक्षमूलनिवासी ॥ ३८ ॥अरणीसुतमग्निम् ॥ ३९ ॥उपविष्टस्य प्रायमुपविष्टस्य।लिङ्गिनं प्राणलिङ्गिनं लिंगशरीरवंतं वा आत्मानंसाधयिष्यतः शरीरेण वियोजयिष्यतः। लिंगिनीमिति पाठे प्राणलिंगिनीं चितिं चैतन्यमित्यर्थः॥ ४०॥

इदं वक्ष्यमाणम् आपः अप इत्यर्थः ॥ ४१ ॥ सीतामपश्यतो मम यशस्विनी यशःसंपादिका । मृतस्य ख्यातिर्यशः । सुजातमूला सुजातकारणवती । कीर्तिरूपा माला जीवतः सा कीर्तिः । चिरात्रायेत्यव्ययम् । चिरायेत्यर्थः । चिराय भग्ना आत्यंतिकलयं गतेत्यर्थः । तीर्थस्तु चिररात्रीयं ममेति पाठं प्रकल्प्य सीतान्वेषणोपयुक्तत्वेन शोभनमूला सीतान्वेषणसौकर्यापादकचंद्रिकया सुभगा सीतान्वेषणसहकारिणीति सर्वैः क्रियमाणा कीर्तिरेव माला यस्याः सेयं चिररात्री चिरकालविशिष्टा दीर्घा रात्रिः स्वस्य लंकाप्रवेशरात्रिः प्रभग्ना निष्फला जाता इत्यर्थः । अनेन रामकार्यसहकारिणी स्वेच्छया रात्रिरप्यात्मानं वर्धितवतीति सूच्यत इत्याह ॥ ४२ ॥ तापसः जटाकाषायादिचिह्नो यतिः ॥ ४३ ॥ अदृष्ट्वा गमने निश्चितमासन्नं दोषमाह यदित्विति । न भविष्यति न जीविष्यति ॥ ४४ ॥ एवमगमने निश्चिते मरणजीवितयोः किं श्रेयस्तत्राह विनाश इति । दोषा बहवः प्रागुक्ताः । चिरं मदगमने सीताविनाशनिश्चयेन रामादयो न स्युरेव आत्मघातादयश्च । जीवंस्तु ममात्मा भद्रकं प्राप्नोति । वक्ष्यमाणनाना विधोपायाश्रयणेन । तस्मात्प्राणान् धरिष्यामि यतो मयि जीवति सति संगमः सुखसंगमो रामादीनां ध्रुवः संभावित इत्यर्थः । काव्यलिंगमत्रालंकारः । तीर्थस्त्वत्र जीवितसंगम इति पाठं कल्पयामास ॥ ४५ ॥

इदमप्यृषिभिर्दृष्टंनिर्याणमितिमेमतिः ॥ सम्यगापःप्रवेक्ष्यामिनचेत्पश्यामिजानकीम् ॥ ४१ ॥ सुजातमूलासुभगाकीर्तिमालायशस्विनी ॥ प्रभग्नाचिररात्रायममसीतामपश्यतः ॥ ४२ ॥ तापसोवाभविष्यामिनियतोवृक्षमूलिकः ॥ नेतःप्रतिगमिष्यामितामदृष्ट्वासितेक्षणाम् ॥ ४३ ॥ यदितुप्रतिगच्छामिसीतामनधिगम्यताम् ॥ अंगदःसहितःसर्वैर्वानरैर्नभविष्यति ॥ ४४ ॥ विनाशेबहवोदोषाजीवन्प्राप्नोतिभद्रकम् ॥ तस्मात्प्राणान्धरिष्यामिध्रुवोजीवतिसंगमः ॥ ४५ ॥ एवंबहुविधंदुःखंमनसाधारयन्बहु ॥ नाध्यगच्छत्तदापारंशोकस्यकपिकुंजरः ॥ ४६ ॥ ततोविक्रममासाद्यधैर्यवान्कपिकुंजरः ॥ रावणंवावधिष्यामिदशग्रीवंमहाबलम् ॥ ४७ ॥ काममस्तुहृतासीताप्रत्याचीर्णंभविष्यति ॥ ४८ ॥ अथवैनंसमुत्क्षिप्यउपर्युपरिसागरम् ॥ रामायोपहरिष्यामिपशुंपशुपतेरिव ॥ ४९ ॥ इतिचिंतासमापन्नःसीतामनधिगम्यताम् ॥ ध्यानशोकपरीतात्माचिंतयामासवानरः ॥ ॥ ५० ॥ यावत्सीतांनपश्यामिरामपत्नींयशस्विनीम् ॥ तावदेतांपुरींलंकांविचिनोमिपुनःपुनः ॥ ५१ ॥ संपातिवचनाच्चापिरामंयद्यानयाम्यहम् ॥ अपश्यन्राघवोभार्यांनिर्दहेत्सर्ववानरान् ॥ ५२ ॥

इतः परं कविवाक्यम् । एवमित्यादि ॥ ४६ ॥ कपिकुंजर इत्यस्य इति चिंतयामासेति शेषः । ध्रुवो जीवति संगम इत्युक्तेराशयं हनूमानाह रावणं वेति ॥ ४७ ॥ ननु रावणवधेन किं साधितं स्यात्तत्राह प्रतीति । प्रत्याचीर्णं वैरनिर्यातनं कृतं भविष्यतीत्यर्थः । एवं कृत्वा गमने सर्वेषां सुखमित्याशयः ॥ ४८ ॥ ननु मया हत इतीदं वचोऽविश्वसनीयं स्यात्सीताऽलाभेन रामदुःखादिवृत्तिश्चेत्यत पक्षांतरमथवेति । एवं सति तल्लाभोपि संभाव्यत इत्याशयः ॥ ४९ ॥ रावणस्य बद्धानयनेपि सीतां राक्षसा हन्युरिति तदलाभ एवेत्यतः शोकपरीतः पक्षांतरं चिंतयामास यावत्सीतामिति । वर्तमानसमीप त्वं ॥ ५० ॥ ५१ ॥ नन्वत्रावस्थितिनिश्चये पुनःपुनरन्वेषणं सफलंस्यादत आह संपातिवचनादिति । तद्वचनविश्वासादेवेत्यर्थः । तत्तु तत्पक्षप्ररोहान्निश्चितं प्रमाणम् । ननु तद्वचनविश्वासादेव रामं प्रति सीतात्रास्तीत्युक्त्वा शीघ्रं स एवात्रानेयः किमनेन कालविलंबेनेत्यत्राह रामं यदीति । रावणे हतेपि मयेव अन्विष्यमाणा न दृश्येत । रामेणापि तददर्शने रामः सर्ववानरनाशं करिष्यतीति भावः ॥ ५२ ॥

तस्मादिहैव नियताहारो वत्स्यामि । विनश्येयुः सीतामदृष्ट्वा मद्गमनानंतरमिति भावः ॥ ५३ ॥ एवं चिंताकुलोऽनन्विष्टं देशं दृष्ट्वा संपातिवचनात्तत्र सीतास्थितिं निश्चिन्वान आह अशोकेति ॥ ५४ ॥ तत्राप्यमाप्तिशंकया तद्दर्शनमतिबंधकदुरितक्षयाय देवानुकूल्यं संपादयति वसूनिति । चाद्रामादीन् ॥ ५५ ॥ तपस्विने सिद्धीमिव तपःफलमिव तपःप्रसन्ना देवतेति शेषः ॥ ५६ ॥ चिंतया विग्रथितानि संबद्धानि व्याकुलानि इंद्रियाणि यस्य सः ॥ ५७ ॥ प्रतिज्ञातं नमस्कारमनुतिष्ठति नमोस्तु रामायेति । अनेन रामस्य भगवदवतारत्वं सूचितम् । रुद्रादिनमस्कारेण विराजो भगवतो नतिः ॥ ५८ ॥ स्वामित्वात्सूर्यांशत्वाच्च सुग्रीवनतिः । अशोकवनिकां गतः मनसेति शेषः । अशोकवनिकां प्रतीति पाठे गत इत्यध्याहारः ॥ ५९ ॥ उत्तरं गमनोत्तरकर्तव्यकृत्यम् ॥ ६० ॥ चिंताहेतुं दर्शयति ध्रुव

इहैवनियताहारोवत्स्यामिनियतेंद्रियः ॥ नमत्कृतेविनश्येयुःसर्वेतेनरवानराः ॥ ५३ ॥ अशोकवनिकाचापिमहतीयंमहाद्रुमा ॥ इमामधिगमिष्यामिनहीयंविचितामया ॥ ५४ ॥ वसून्रुद्रांस्तथादित्यानश्विनौमरुतोपिच ॥ नमस्कृत्वागमिष्यामिरक्षसांशोकवर्धनः ॥ ५५ ॥ जित्वातुराक्षसान्देवीमिक्ष्वाकुकुलनंदिनीम् ॥ संप्रदास्यामिरामायसिद्धीमिवतपस्विने ॥ ५६ ॥ समुहूर्तमिवध्यात्वाचिंताविग्रथितेंद्रियः ॥ उदतिष्ठन्महाबाहुर्हनूमान्मारुतात्मजः ॥ ५७ ॥ नमोऽस्तुरामायसलक्ष्मणायदेव्यैचतस्यैजनकात्मजायै ॥ नमोऽस्तुरुद्रेंद्रयमानिलेभ्योनमोऽस्तुचंद्राग्निमरुद्गणेभ्यः ॥ ५८ ॥ सतेभ्यस्तुनमस्कृत्वासुग्रीवायचमारुतिः ॥ दिशःसर्वाःसमालोक्यसोऽशोकवनिकांप्रति ॥ ५९ ॥ सगत्वामनसापूर्वमशोकवनिकांशुभाम् ॥ उत्तरंचिंतयामासवानरोमारुतात्मजः ॥ ६० ॥ ध्रुवंतुरक्षोबहुलाभविष्यतिवनाकुला ॥ अशोकवनिकापुण्यासर्वसंस्कारसंस्कृता ॥ ॥ ६१ ॥ रक्षिणश्चात्रविहितानूनंरक्षंतिपादपान् ॥ भगवानपिविश्वात्मानातिक्षोभंप्रवायति ॥ ६२ ॥ संक्षिप्तोयंमयात्माचरामार्थेरावणस्यच ॥ सिद्धिंदिशंतुमेसर्वेदेवाःसर्षिगणास्त्विह ॥ ६३ ॥ ब्रह्मास्वयंभूर्भगवान्देवाश्चैवतपस्विनः ॥ सिद्धिमग्निश्चवायुश्चपुरुहूतश्चवज्रभृत् ॥ ६४ ॥ वरुणःपाशहस्तश्चसोमादित्यौतथैवच ॥ अश्विनौचमहात्मानौमरुतःसर्वएवच ॥ ६५ ॥ सिद्धिंसर्वाणिभूतानिभूतानांचैवयःप्रभुः ॥ दास्यंतिममयेचान्येप्यदृष्टाःपथिगोचराः ॥ ६६ ॥ तदुन्नसंपांडुरदंतमव्रणंशुचिस्मितंपद्मपलाशलोचनम् ॥ द्रक्ष्येतदार्यावदनंकदान्वहंप्रसन्नताराधिपतुल्यवर्चसम् ॥ ६७ ॥

मिति । वनाकुला काननावृता । संस्काराः खननसेकादिरूपवृक्षसंस्काराः । अत्र ध्रुवं रक्षोबहुलेत्युत्प्रेक्षया चंद्रास्तः सूचितः । अन्यथा तत्प्रकाशेन निश्चय एव स्यात् ॥ ६१ ॥ अत्राशोकवनिकायां विहिताः नियुक्ताः । विश्वात्मा वायुः ॥ ६२ ॥ मया आत्मा शरीरमित्यर्थः । रावणस्य अर्थे इत्यनुकर्षः । रावणकर्तृकदर्शनपरिहारायेत्यर्थः ॥ ६३ ॥ पुनः सर्वात्मना कार्यसिद्धये स्मरति ब्रह्मेत्यादि । देवा भगवदवयवदेवाः । तानेव दर्शयति अग्निश्चेत्यादि । सिद्धिं दिशंत्वित्यन्वयः ॥ ६४ ॥ ६५ ॥ भूतानां प्रभुः प्रजापतिः दास्यंति तेषामप्यस्यार्थस्येष्टत्वादिति भावः । पूर्वं प्रार्थना इदानीं तु तन्निश्चयः पथि गोचरा अदृष्टा अपि पथि मार्गे गोचरत्वेन सिद्धिदत्वेन शास्त्रेऽदृष्टा अनुक्ताः अपिना दृष्टाश्च ये तेऽपि सिद्धिं दास्यंति ॥ ६६ ॥ उच्छ्रिता नासा यस्मिंस्तत्पांडुरं वियोगवशात् अव्रणमनवद्यम् ॥ ६७ ॥

सुदारुणोप्यलंकृतवेषधारी विश्वसनीयवेषधारी तेन ॥ ६८ ॥ ईर्वैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे त्रयोदशः सर्गः ॥ १३ ॥ ॥ ध्यात्वा उत्प्लवनं निश्चित्य तां सीतां मनसाऽधिगम्य ध्यात्वा तस्य रावणस्य वेश्मनः वेश्म प्राकारात् प्राकारं वनप्राकारम् अवप्लुतः उत्प्लवनेन प्राप्तः ॥ १ ॥ संहृष्टसर्वांगः पुलकितसर्वांगः । वसंतादौ वसंतादिसर्वर्तुषु सन्निहितैः पुष्पैः पुष्पिताग्रान् ॥ २ ॥ भव्यान्युक्तफलान् । उद्दालका वृक्षविशेषाः । नागवृक्षान्नागकेसरवृक्षान् । कपिमुखान्कपिमुखाकारफलवतः । चूतविशेषणमेतत् ॥ ३ ॥ ज्यामुक्तः रामेणेति शेषः ॥ ४ ॥ विचित्रां विचित्रपर्यंतां राजतैः रजतादिसंस्कृतैस्तद्वर्णैर्वा ॥ ५ ॥ चित्रकाननां चित्रद्रुमखंडाम् उदितादित्यसंकाशाम् । पुष्पैरिति शेषः ॥ ६ ॥ पुष्पोपगफलोपगैः पुष्पफलयुतैः ॥ ७ ॥

क्षुद्रेणहीनेननृशंसमूर्तिनासुदारुणालंकृतवेषधारिणा ॥ बलाभिभूताह्यबलातपस्विनीकथंनुमेदृष्टिपथेऽद्यसाभवेत् ॥ ६८ ॥ इत्यार्षे श्रीम०वा०आ० सुं०त्रयोदशः सर्गः ॥ १३ ॥ समुहूर्तमिवध्यात्वामनसाचाधिगम्यताम् ॥ अवप्लुतोमहातेजाःप्राकारंतस्यवेश्मनः ॥१॥ सतुसंहृष्टसर्वांगःप्राकारस्थो महाकपिः ॥पुष्पिताग्रान्वसंतादौददर्शविविधान्द्रुमान् ॥ २ ॥ सालानशोकान्भव्यांश्चचंपकांश्चसुपुष्पितान् ॥ उद्दालकान्नागवृक्षांश्चूतान्कपिमुखानपि ॥ ३ ॥ तथाम्रवणसंपन्नाँल्लताशतसमन्वितान् ॥ ज्यामुक्तइवनाराचःपुप्लुवेवृक्षवाटिकाम् ॥ ४ ॥ सप्रविश्यविचित्रांतांविहगैरभिनादिताम् ॥राजतैः कांचनैश्चैवपादपैःसर्वतोवृताम् ॥ ५ ॥ विहगैर्मृगसंघैश्चविचित्रांचित्रकाननाम् ॥ उदितादित्यसंकाशांददर्शहनुमान्बली ॥ ६ ॥ वृतैर्नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः ॥ कोकिलैर्भृंगराजैश्चमत्तैर्नित्यनिषेविताम् ॥७॥ प्रहृष्टमनुजांकालेमृगपक्षिमदाकुलाम् ॥ मत्तबर्हिणसंघुष्टांनानाद्विजगणायुताम् ॥ ॥८॥ मार्गमाणोवरारोहांराजपुत्रीमनिंदिताम् ॥ सुखप्रसुप्तान्विहगान्बोधयामासवानरः ॥९॥ उत्पतद्भिर्द्विजगणैःपक्षैर्वातैःसमाहताः ॥ अनेकवर्णा विविधामुमुचुःपुष्पवृष्टयः ॥ १० ॥ पुष्पावकीर्णःशुशुभेहनूमान्मारुतात्मजः ॥ अशोकवनिकामध्येयथापुष्पमयोगिरिः ॥ ११ ॥ दिशःसर्वाभिधावंतंवृक्षखंडगतंकपिम् ॥ दृष्ट्वासर्वाणिभूतानिवसंतइतिमेनिरे ॥ १२ ॥ वृक्षेभ्यःपतितैःपुष्पैरवकीर्णापृथग्विधैः ॥ रराजवसुधातत्रप्रमदेवविभूषिता ॥ ॥ १३ ॥ तरस्विनातेतरवस्तरसाबहुकंपिताः ॥ कुसुमानिविचित्राणिससृजुःकपिनातदा ॥ १४ ॥

काले सर्वस्मिन्नपि प्रहृष्टमनुजां मुखविकासादिलिंगकहर्षवज्जनाम् । मृगादीन्मदेनाकुलयति ताम् । प्रहृष्टमनुजे काले इति पदद्वये सप्तम्यंतपाठे तादृक्काले वसंतप्राग्भवे तत्सन्निहिते काले इत्यर्थः ॥ ८ ॥ बोधयामास शाखाचंक्रमणेनेति भावः ॥ ९ ॥ पक्षैरुत्पतद्भिरित्यन्वयः । समाहताः वृक्षा इति शेषः । पुष्पवृष्टयः पुष्पवृष्टीः ॥ १० ॥ ११ ॥ सर्वाभिधावंतमिति संधिरार्षः । वसंत इति मेनिरे इति अन्यस्येह वनेऽ शक्यप्रवेशत्वाद्वसंत एव वृक्षसंचारोचितं कपिरूपमास्थाय चरतीति मेनिरे इत्यर्थः । एतेन द्रष्टृणां तस्मिन्विमतिनिवृत्तिरीश्वरानुग्रहादिति सूचितम् ॥ १२ ॥ १३ ॥ बहुप्रकारं कंपितः ॥ १४ ॥

निर्धूतपत्राणि शिखराण्यग्राणि च येषां ते धूर्ता अक्षधूर्ताः ॥ १५ ॥ १६ ॥ स्कंधमात्रस्याश्रयाः न तु पुष्पादीनाम् अतएवागमाः असेव्याः मारुतेन तत्पुत्रेण हनूमता । विनिर्धुता इति ह्रस्व आर्ष इति कतकस्तद्वृथा । ह्रस्वस्यापि धुञः सत्त्वात् ॥१७॥ वर्णको विलेपनम् । निपीतः शुभदंतयुक्तः ओष्ठो यस्याः सा ॥१८॥ लांगूलहस्तैरित्यत्रैकत्वाभाव आर्षः ॥१९॥ दामानि जालानि ॥२०॥२१ ॥ उच्यमान विशिष्टा वापीर्ददर्श । श्लोकपंचकमेकं वाक्यम् ॥ २२ ॥ मुक्ताप्रवालरूपा एव सिकता यासाम् आंतरकुट्टिमाः अभ्यंतरनिबद्धभूमियुताः ॥ २३ ॥ नत्यूहो दात्यूहः ॥ २४ ॥ द्रुमयुक्ताभिः तीरद्रुमयुक्ताभिः वापीनां सरिदुपस्कृतत्वं नित्यं पूर्णजलत्वाय ॥ २५ ॥ संतानः कल्पवृक्षः गुल्मावृतवना वनं जलं करवीरैः कृतमंतरं गवाक्षस्थानीयं यासां ताः ॥ २६ ॥ ततो वापीदर्शनानंतरम् ॥ २७ ॥ जगति लोके

निर्धूतपत्रशिखराःशीर्णपुष्पफलद्रुमाः ॥ निक्षिप्तवस्त्राभरणाधूर्ताइवपराजिताः ॥ १५ ॥ हनूमतावेगवताकंपितास्तेनगोत्तमाः ॥ पुष्पपत्रफलान्याशु मुमुचुःफलशालिनः ॥ १६ ॥ विहंगसंघैर्हीनास्तेस्कंधमात्राश्रयाद्रुमाः ॥ बभूवुरगमाःसर्वेमारुतेनविनिर्धुताः ॥ १७ ॥ विधूतकेशीयुवतिर्यथामृदितवर्णका ॥ निपीतशुभदंतोष्ठीनखैर्दंतैश्चविक्षता ॥ १८ ॥ तथालांगूलहस्तैस्तुचरणाभ्यांचमर्दिता ॥ तथैवाशोकवनिकाप्रभग्नवनपादपा ॥ १९ ॥ महालतानांदामानिव्यधमत्तरसाकपिः ॥ यथाप्रावृषिवेगेनमेघजालानिमारुतः ॥ २० ॥ सतत्रमणिभूमिश्चराजतीश्चमनोरमाः ॥ तथाकांचनभूमीश्च विचरन्ददृशेकपिः ॥ २१ ॥ वापीश्चविविधाकाराःपूर्णाःपरमवारिणा ॥ महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२ ॥ मुक्ताप्रवालसिकताःस्फाटिकांतरकुट्टिमाः ॥ कांचनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३ ॥ बुद्धपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ॥ नत्यूहरुतसंघुष्टाहंससारसनादिताः ॥ २४ ॥ दीर्घाभिर्द्रुमयुक्ताभिःसरिद्भिश्चसमंततः ॥ अमृतोपमतोयाभिःशिवाभिरुपसंस्कृताः ॥ २५ ॥ लताशतैरवततःसंतानकुसुमावृताः ॥ नानागुल्मावृतवनाःकरवीरकृतांतराः ॥ २६ ॥ ततोंबुधरसंकाशंप्रवृद्धशिखरंगिरिम् ॥ विचित्रकूटंकूटैश्चसर्वतःपरिवारितम् ॥ २७ ॥ शिलागृहैरवततंनानावृक्षसमावृतम् ॥ ददर्शकपिशार्दूलोरम्यंजगतिपर्वतम् ॥ २८ ॥ ददर्शचनगात्तस्मान्नदींनिपतितांकपिः ॥ अंकादिवसमुत्पत्यप्रियस्यपतितांप्रियाम् ॥ २९ ॥ जलेनपतिताग्रैश्चपादपैरुपशोभिताम् ॥ वार्यमाणामिवक्रुद्धांप्रमदांप्रियबंधुभिः ॥३०॥ पुनरावृत्ततोयांचददर्शसमहाकपिः ॥ प्रसन्नामिवकांतस्यकांतांपुनरुपस्थिताम् ॥ ३१ ॥ तस्यादूरात्सपद्मिन्योनानाद्विजगणायुताः ॥ ददर्शकपिशार्दूलोहनूमान्मारुतात्मजः ॥ ३२ ॥ कृत्रिमांदीर्घिकांचापिपूर्णांशीतेनवारिणा ॥ मणिप्रवरसोपानांमुक्तासिकतशोभिताम् ॥ ३३ ॥

रम्यं सुंदरवस्तुभ्योपिपरमसुंदरम् । तीर्थस्तु जगतीपर्वतमित्यर्थः । ह्रस्व आर्षः । मृत्पर्वतमिति यावदिति व्याचक्षाण उपेक्ष्य एव ॥ २८ ॥ निपातितां निःसृतां समुत्पत्य कोपादुत्थाय पतितां भूमिशयिताम् ॥ २९ ॥ जलेन पतिताग्रैः पादपैः । परिणाहवशादधःप्रसृतशाखाद्वारेण जलनिपतिताग्रत्वं वृक्षाणां कूलात्पातने वा । प्रियं प्रति क्रुद्धां प्रियसमीपादन्यत्र निर्गमिषुं प्रियबंधुभिः सखीभिर्वार्यमाणां प्रमदामिव ॥ ३० ॥ अतएव कांतस्य प्रसन्नां पुनरुपस्थितां कांतामिव पुनरावृत्ततोयां वृक्षाग्रप्रतिघातात्परावृत्तजलां ददर्श ॥ ३१ ॥ तस्य पर्वतस्य पद्मिन्यः पद्मिनीः अकृत्रिमदीर्घिकाः ॥ ३२ ॥ उच्यमानविशेषणां

कृत्रिमां दीर्घिकामपि ददर्श । सिकतशोभितामित्यत्र ह्रस्व आर्षः ॥ ३३ ॥प्रासादैरित्यस्य युता मिति शेषः॥ ३४॥ये केचित्तत्र वृक्षास्ते सर्वेपि पुष्पफलोभययुता एवेत्यर्थः॥ ३५॥सच्छत्राः छत्राकारसंस्थानवंतः तेन शीतलच्छा यत्वं सूचितम् ।सवितर्दीकाः सवेदिकाः सौवर्णवेदिकाः राजतादिमहावेदिकोपरिकृतसौवर्णवेदिका इत्यर्थः । लतेत्यर्धमुत्तरान्वयि ॥ ३६॥ एकां मुख्यां वृक्षांतरसंबंधरहितां च कांचनीं तद्वर्णां रिंगशपां ।पिच्छिलागुरुशिंशपा इति कोशः ॥ ३७॥ ३८॥ मेरोः प्रभया दिवाकर इव । तेषां द्रुमाणां प्रभया कांचनोस्मीत्यमन्यत । कांचनवर्णमात्मशरीरं वीक्षतेस्मेत्यर्थः ॥ ३९॥ तान्कांचनानिति । किंकिण्यस्तेषु फलादिवत्सहजाः । अतएव विस्मयमागमत् ॥ ४० ॥ तेषां तरुधर्ममप्याह सुपुष्पिताग्रानिति । तरुणाः कोमलाः अंकुराः पल्लवाश्च येषां तान्दृष्ट्वा विस्मयं प्राप्त इत्यन्वयः । तां यस्याः पर्यंतवृक्षा एवं भूतास्तामारुह्य चिंतयामासेति शेषः ॥ ४१ ॥ इत इति । आगतामिति शेषः । तदेव स्पष्टयति इतश्चेतश्चेति ॥ ४२ ॥ रम्येयमशोकवनिका दुरात्मनो रावणस्यैव दृढं ध्रुवं राक्षसांतरस्यैवंविधतदसंभवात् ॥ ४३ ॥ नलिनीचेयं रम्या सा च राजमहिषी

विविधैर्मृगसंघैश्चविचित्रांचित्रकाननाम् ॥ प्रासादैःसुमहद्भिश्चनिर्मितैर्विश्वकर्मणा ॥ ३४ ॥ काननैःकृत्रिमैश्चापिसर्वतःसमलंकृताम् ॥ यैंकेचित्पा दपास्तत्रपुष्पोपगफलोपगाः ॥ ३५ ॥ सच्छत्राःसवितर्दीकाःसर्वेसौवर्णवेदिकाः ॥ लताप्रतानैर्बहुभिःपर्णैश्चबहुभिर्वृताम् ॥ ३६ ॥ कांचनींशिंशपामे कांददर्शसमहाकपिः ॥ वृतांहेममयीभिस्तुवेदिकाभिःसमंततः ॥ ३७ ॥ सोऽपश्यद्भूमिभागांश्चनगप्रस्रवणानिच ॥ सुवर्णवृक्षानपरान्ददर्शशिखिस न्निभान् ॥ ३८ ॥ तेषांद्रुमाणांप्रभयामेरोरिवमहाकपिः ॥ अमन्यततदावीरःकांचनोस्मीतिसर्वतः ॥ ३९ ॥ तान्कांचनान्वृक्षगणान्मारुतेनप्रकं पितान् ॥ किंकिणीशतनिर्घोषान्दृष्ट्वाविस्मयमागमत् ॥४०॥ सुपुष्पिताग्रान्रुचिरांस्तरुणांकुरपल्लवान् ॥ तामारुह्यमहावेगःशिंशपांपर्णसंवृताम् ॥ ॥ ४१ ॥ इतोद्रक्ष्यामिवैदेहींरामदर्शनलालसाम् ॥ इतश्चेतश्चदुःखार्तांसंतपंतींयदृच्छया ॥४२॥ अशोकवनिकाचेयंदृढंरम्यादुरात्मनः ॥ चंदनैश्चंप कैश्चापिवकुलैश्चविभूषिता ॥ ४३ ॥ इयंचनलिनीरम्याद्विजसंघनिषेविता ॥ इमांसाराजमहिषीनूनमेष्यतिजानकी ॥ ४४ ॥ सारामाराजमहिषी राघवस्यप्रियासदा ॥ वनसंचारकुशलाध्रुवमेष्यतिजानकी ॥ ४५ ॥ अथवामृगशावाक्षीवनस्यास्यविचक्षणा ॥ वनमेष्यतिसाऽद्येहरामचिंतासुक शिता ॥ ४६ ॥ रामशोकाभिसंतप्तासादेवीवामलोचना ॥ वनवासरतानित्यमेष्यतेवनचारिणी ॥ ४७ ॥ वनेचराणांसततंनूनंस्पृहयतेपुरा ॥ रामस्यदयिताचार्याजनकस्यसुतासती ॥ ४८ ॥ संध्याकालमनाःश्यामाध्रुवमेष्यतिजानकी ॥ नदींचेमांशुभजलांसंध्यार्थेवरवर्णिनी ॥ ४९ ॥

त्वाद्रम्यप्रिया । अतएवेमां नलिनीं नूनमेष्यति॥४४॥ अरामा रामवियुक्ता राजमहिषीत्वादेव उद्यानवनसंचारकुशला ॥४५॥ अयमेवार्थ आदरेण बुद्धिस्थैर्यार्थं त्रिरावर्त्यते अथवेति । सर्वथेत्यर्थः । न तु पक्षांतरमिदं तत्त्वासंभवात् ॥४६॥४७॥ अशोकवनिकांतःशिंशपाप्रदेशे सीताया आगमने हेत्वंतरमुन्नयति वनेचराणामिति । मृगपक्ष्यादीनामित्यर्थः ॥ ४८ संध्या दिनरात्र्योः संधिरूपानुष्ठानकालो यस्य कर्मणस्तत्र मनो यस्याः सा तथा संध्यार्थे संध्याकालक्रियमाणस्नानाद्यर्थे पूर्ववदेवात्राप्युक्तस्यैवार्थस्यावृत्तिः । रात्रिशेषे हनुमतोऽस्य वचसः प्रवृत्तेः संध्याशब्देनात्राप्राप्तः कालो विवक्षितः । तत्र कर्तव्यस्नानादौ चास्त्येव स्त्रीणा मप्यधिकार इति । कथं स्त्रीणां संध्यावंदनमिति परास्तं वेदितव्यम् । किं च सम्यग्भगवद्ध्यानस्यैव संध्यापदार्थत्वेनास्त्येव तत्र स्त्रिया अधिकारः। गायत्रीमंत्रेण तदर्थस्मरणपूर्वकध्याने तु द्विजस्यैवाधिकार इत्यन्यत्॥४९॥

या रामस्य पत्नी संमता च पतिव्रतेति सर्वजनस्य तस्याः शुभायाः इयं नदी अशोकवनिका च अनुरूपा योग्या ॥ ५० ॥ ५१ ॥ प्रतीक्षमाणः सीताया आगमनमिति शेषः । अवेक्ष माण इतस्ततोऽवलोकयन् पर्णघने सुपुष्पिते शिंशपावृक्षे निलीनः सन्सर्वं वनं ददर्शेत्यन्वयः ॥ ५२ ॥ रेमेमाणः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुर्दशः सर्गः ॥ १४ ॥ ॥ वीक्षमाण इतस्ततोवलोकयन् तत्रस्थः शिंशपास्थः मार्गमाणः मैथिलीहेतुनाऽधो दृष्ट्वा महीमवेक्षमाणः सर्वां ताम् अशोकवनिकामन्ववैक्षत ॥ १ ॥ तां विशिनष्टि संतानके ति । संतानकलताभिः सहितैः पादपैरित्यर्थः ॥ २ ॥ तां स ददर्शेत्यन्वयः । नंदनसंकाशां तद्वच्चंदनद्राक्षाद्यनेकोपादेयवस्तुमतीम् ॥ ३ ॥ बह्वासनैः कुथैरास्तरणैश्चोपेताम् उपर्युपरि भूमियुक्ता गृहा बहुभूमिगृहाः ॥४॥

तस्याश्चाप्यनुरूपेयमशोकवनिकाशुभा॥शुभायाःपार्थिवेंद्रस्यपत्नीरामस्यसंमता॥५०॥ यदिजीवतिसादेवीताराधिपनिभानना॥ आगमिष्यतिसाऽत्रश्यमिमांशीतजलांनदीम्॥५१॥ एवंतुगत्वाहनुमान्महात्माप्रतीक्षमाणोमनुजेंद्रपत्नीम्॥ अवेक्षमाणश्चददर्शसर्वंसुपुष्पितेपर्णघनेनिलीनः॥५२॥ इ०श्रीमद्रा०वा०आदि० सुंदरकांडेचतुर्दशःसर्गः॥ १४ ॥ सवीक्षमाणस्तत्रस्थोमार्गमाणश्चमैथिलीम्॥ अवेक्षमाणश्चमहींसर्वांतामन्ववैक्षत ॥ १ ॥ संतानकलताभिश्चपादपैरुपशोभिताम्॥ दिव्यगंधरसोपेतांसर्वतःसमलंकृताम्॥ २ ॥ तांसनंदनसंकाशांमृगपक्षिभिरावृताम्॥ हर्म्यप्रासादसंबाधांकोकिलाकुलनिःस्वनाम्॥ ३ ॥ कांचनोत्पलपद्माभिर्वापीभिरुपशोभिताम्॥बह्वासनकुथोपेतांबहुभूमिगृहायुताम्॥ ४॥ सर्वर्तुकुसुमैरम्यैःफलवद्भिश्चपादपैः॥ पुष्पितानामशोकानांश्रियासूर्योदयप्रभाम्॥ ५ ॥ प्रदीप्तामिवतत्रस्थोमारुतिःसमुदैक्षत॥ निष्पत्रशाखांविहगैःक्रियमाणामिवासकृत॥ ६ ॥ विनिष्पतद्भिःशतशश्चित्रैःपुष्पावतंसकैः॥ समूलपुष्परचितैरशोकैःशोकनाशनैः॥ ७ ॥ पुष्पभारातिभारैश्चस्पृशद्भिरिवमेदिनीम्॥ कर्णिकारैःकुसुमितैःकिंशुकैश्चसुपुष्पितैः॥८॥ सदेशःप्रभयातेषांप्रदीप्तइवसर्वतः॥ पुन्नागाःसप्तपर्णाश्चचंपकोद्दालकास्तथा॥९॥ विवृद्धमूलाबहवःशोभंतेस्मसुपुष्पिताः॥ शातकुंभनिभाःकेचित्केचिदग्निशिखाप्रभाः॥ १० ॥ नीलांजननिभाःकेचित्तत्राशोकाःसहस्रशः॥ नंदनंविबुधोद्यानंचित्रंचैत्ररथंयथा॥ ११ ॥ अतिवृत्तमिवाचिंत्यंदिव्यंरम्यश्रियायुतम्॥ द्वितीयमिवचाकाशंपुष्पज्योतिर्गणायुतम्॥ १२ ॥ पुष्परत्नशतैश्चित्रंपंचमंसागरंयथा॥ सर्वर्तुपुष्पैर्निचितंपादपैर्मधुगंधिभिः॥ १३ ॥

सर्वर्तुषु कुसुमानि येषां तैः पादपैर्युक्ताम् । सूर्योदयप्रभाम् उद्यत्सूर्यसमकांतिम् ॥ ५ ॥ तत्रस्थः शिंशपास्थो मारुतिरशोकपुष्पैः प्रदीप्तामिवोदैक्षतेत्युत्प्रेक्षा । असकृच्छतशो विनिष्पतद्भिश्चित्रैः पुष्पाण्यवतंसवत्प्रतीयमानानि येषां तैर्विहगैर्निबिडशाखामपि निष्पत्रशाखां क्रियमाणाम् । बहुपक्षिपक्षपिहितपर्णतया पत्ररहितशाखामिवेत्यर्थः । तथा उच्यमानविशेषणैरशोकैः पुष्पभारेण पुष्पसमूहेन जनितातिभारैरतएवातिभारवशादतिप्रह्वशाखतया भूमिं स्पृशद्भिः कर्णिकारैः किंशुकैश्च युतः स देशस्तेषां प्रभया प्रदीप्त इव ॥६॥७॥८॥९॥१०॥ नीलांजननिभा इति । एवमुक्त्याऽशोकानामनेकवर्णपुष्पवत्त्वं सूचितम् । विबुधोद्यानं नंदनं यथा नंदनम् आह्लादकं तद्वदाह्लादकं चैत्ररथं कुबेरवनं यथा चित्रं तद्वच्चित्रम् ॥११॥ तदुभयमप्यतिवृत्तामिव अतिक्रम्येव स्थितं पुष्परूपज्योतिर्गणैरायुतम् ॥ १२ ॥ पुष्परूपैः रत्नशतैः ॥ १३ ॥

मृगादिभिः स्वीयैर्नानाविधैः शब्दै रम्यं कृतं एवंविशेषणाकमुद्यानमशोकवनिकांतर्गतं ददर्शेत्यनुकर्षः ॥१४॥ शैलेंद्रो हिमवान्। तस्यां पूर्ववर्णितायाम् ॥१५॥ चैत्यं वर्तुलाकारत्वाद्बुद्धायतनमिव प्रासादं स्तंभसहस्रेणाधारभूतेनेस्थितम् ॥ १६ ॥ १७ ॥ प्रांशुभावत्वादुच्चस्वभावत्वात् । ततस्तद्दर्शनानंतरं मलिनवासः संवीतत्वादिविशेषणवतीं सीतां दूरादेव तन्मूलस्थां ददर्शेत्यनुकर्षः ॥१८॥१९॥ मंदप्रख्यायमानेन इदमिदमिति इदं तदिति वा कथंचिदूह्यमानेन रूपेण स्वरूपेणोपलक्षिताम् ॥ २० ॥ क्लिष्टेन जीर्णेन पांसुध्वास्तरणेन वा क्लिष्टेन सपंकां मलवच्छरीराम्। पद्मिनी लक्ष्मीर्लता च ॥ २१ ॥ अंगारकेणेव तत्तुल्येन ग्रहेण केतुना पीडितां रोहिणीमिव ॥ २२ ॥ २३ ॥ प्रियं जनं रामलक्ष्मणसुग्रीवादिरूपं जनम् । श्वगणेन शुनां गणेन ॥ २४ ॥ जघनं पृष्ठभागं गतया प्राप्तयैकया हरणदिनकृतैकसंस्कारवत्या यद्वा पुरोभागीयवै

नानानिनादैरुद्यानंरम्यंमृगगणद्विजैः ॥ अनेकगंधप्रवहंपुण्यगंधंमनोहरम् ॥ १४ ॥ शैलेंद्रमिवगंधाढ्यंद्वितीयंगंधमादनम् ॥ अशोकवनिकायांतुतस्यांवानरपुंगवः ॥ १५ ॥ सददर्शाविदूरस्थंचैत्यप्रासादमूर्जितम् ॥ मध्येस्तंभसहस्रेणस्थितंकैलासपांडुरम् ॥ १६ ॥ प्रवालकृतसोपानंतप्तकांचनवेदिकम् ॥ मुष्णंतमिवचक्षूंषिद्योतमानमिवश्रिया ॥१७॥ निर्मलंप्रांशुभावत्वादुल्लिखंतमिवांबरम् ॥ ततोमलिनसंवीतांराक्षसीभिःसमावृताम् ॥१८॥ उपवासकृशांदीनांनिःश्वसंतींपुनःपुनः ॥ ददर्शशुक्लपक्षादौचंद्ररेखामिवामलाम् ॥ १९ ॥ मंदप्रख्यायमानेनरूपेणरुचिरप्रभाम् ॥ पिनद्धांधूमजालेनशिखामिवविभावसोः ॥ २० ॥ पीतेनैकेनसंवीतांक्लिष्टेनोत्तमवाससा ॥ सपंकामनलंकारांविपद्मामिवपद्मिनीम् ॥ २१ ॥ पीडितांदुःखसंतप्तांपरिक्षीणांतपस्विनीम् ॥ ग्रहेणांगारकेणेवपीडितामिवरोहिणीम् ॥२२॥ अश्रुपूर्णमुखींदीनांकृशामनशनेनच ॥ शोकध्यानपरांदीनांनित्यंदुःखपरायणाम् ॥२३॥प्रियंजनमपश्यंतींपश्यंतींराक्षसीगणम् ॥ स्वगणेनमृगींहीनांश्वगणेनावृतामिव ॥ २४ ॥ नीलनागाभयावेण्याजघनंगतयैकया ॥ नीलयानीरदापायेवनराज्यामहीमिव ॥ २५ ॥ सुखार्हांदुःखसंतप्तांव्यसनानामकोविदाम् ॥ तांविलोक्यविशालाक्षीमधिकंमलिनांकृशाम् ॥ २६ ॥ तर्कयामाससीतेतिकारणैरुपपादिभिः ॥ ह्रियमाणातदातेनरक्षसाकामरूपिणा ॥ २७ ॥ यथारूपाहिदृष्टासातथारूपेयमंगना ॥ पूर्णचंद्राननांसुभ्रूंचारुवृत्तपयोधराम् ॥२८॥ कुर्वंतींप्रभयादेवींसर्वावितिमिरादिशः ॥ तांनीलकंठींबिंबोष्ठींसुमध्यांसुप्रतिष्ठिताम् ॥२९॥ सीतांपद्मपलाशाक्षींमन्मथस्यरतिंयथा ॥ इष्टांसर्वस्यजगतःपूर्णचंद्रप्रभामिव ॥ ३० ॥ भूमौसुतनुमासीनांनियतामिवतापसीम् ॥ निःश्वासबहुलांभीरुंभुजगेंद्रवधूमिव ॥ ३१ ॥

पीढ्यराहित्येन पृष्ठलंबयैकया वेण्या नीलनागाभया नीलसर्पतुल्यया वेण्योपलक्षिताम् । अनेन तत्स्पर्शेऽन्यस्य मरणमेवेति सूचितम् । मेघापाये नीलया वनराज्योपलक्षितां महीमिव स्थिताम् ॥ २५ ॥ २६ ॥ उपपादिभिः सीतात्वनिश्चयोपपादनसमर्थैः तत्कारणं प्रत्यभिज्ञानमाह ह्रियमाणेति । यथारूपा दृष्टा यादृग्वेषवर्णादिमती अनुभूता तथारूपेयम् । भेदे हि प्रत्यभिज्ञानमनुपपन्नमिति भावः ॥ २७ ॥ पूर्णचंद्राननत्वादिगुणवतीं निरीक्ष्य तस्य बुद्धिः संदिदिहे इत्यष्टत्रिंशच्छ्लोकेनान्वयः । सुभ्रूं सुभ्रुवम् ॥ २८ ॥ सर्वा दिशो वितिमिराः कुर्वतीं नीलकंठीं सौभाग्यसूचकेंद्रनीलमणिमयकंठस्थभूषणप्रभया तद्वर्णकंठां सुप्रतिष्ठितां सुप्रतिष्ठितसर्वावयवसंस्थानाम् ॥२९॥ चंद्रप्रभासादृश्यं सर्वानंदकरत्वेन ॥ ३० ॥ नियतां भूशयनादिरूपनियमवतीं तापसीमिव भूमावासीनाम् । भुजगेंद्रवधूसादृश्यं दुष्प्रधृष्यत्वेन रक्षःकुलनाशकत्वेन च॥३१॥

नराजतीम् अराजतीं विभावसोः शिखामिव पातिव्रत्यतेजसा ज्वलंतीम् ॥३२॥ स्मृतीमिवेति । दीर्घ आर्षः। संदिग्धामर्थसंदेहवतीं ऋद्धिमैश्वर्यं निपतितामन्यायवशादिति भावः । विहतां नास्तिकबुद्ध्येति भावः । प्रतिहतां स्वविषयालाभादिति भावः ॥ ३३ ॥ सोपसर्गां सविघ्नां सकलुषां रागद्वेषादिकालुष्यवतीम् अभूतेनापवादेन केवलमारोपितेन कळंकेन ॥३४॥ रामोपरोधः रामसेवाप्रतिबंधः ॥ ३५ ॥ कृष्णानि वक्राणि च अक्षिपक्ष्माणि यत्र तेन ॥३६॥ संस्कारस्नानराहित्यान्मलपंकधरत्वम् । त्वगादिमलरूपः पंकः नक्षत्रराजश्चंद्रः ॥३७॥ संदिदिहे प्रत्यभिज्ञाबाधकात् । कार्श्यमालिन्यादितिरोहितरूपत्वात्संदेहः आम्नायोऽभ्यासः ॥ ३८ ॥ बाधकस्याकिंचित्करत्वमाह दुःखेनेति । दुःखबोध्यत्वे हेतुरनलंकृतामिति संस्कारेणेति । स्नानानुलेपनादिरंगसंस्कारः । वाचो व्याकरणज्ञानादिजः संस्कारः। देव्या अर्थांतरगतत्वं देशांतरगतत्वं वाचस्तु विवक्षितार्थादन्यार्थबोधकत्वम् । वाचोर्थो यथा व्याकरणाद्यभ्यासदुःखेन व्युत्पत्तिं संपाद्य बुध्यते तद्वत् सीतां कष्टेन बुबुधे ॥ ३९ ॥ कारणैरुपपादयन् सीतानिश्चयहेतुभिरुपपत्तिमंतं संपादयन् ॥ ४० ॥

शोकजालेनमहताविततेननराजतीम् ॥ संसक्तांधूमजालेनशिखामिवविभावसोः ॥ ३२ ॥ तांस्मृतीमिवसंदिग्धामृद्धिंनिपतितामिव ॥ विहतामिवच श्रद्धामाशांप्रतिहतामिव ॥ ३३ ॥ सोपसर्गांयथासिद्धिंबुद्धिंसकलुषामिव ॥ अभूतेनापवादेनकीर्तिंनिपतितामिव ॥ ३४ ॥ रामोपरोधव्यथितांरक्षोगणनिपीडिताम् ॥ अबलांमृगशावाक्षींवीक्षमाणांततस्ततः ॥ ३५ ॥ बाष्पांबुपरिपूर्णेनकृष्णवक्राक्षिपक्ष्मणा ॥ वदनेनाप्रसन्नेननिःश्वसंतींपुनःपुनः ॥ ३६ ॥ मलपंकधरांदीनांमंडनार्हाममंडिताम् ॥ प्रभांनक्षत्रराजस्यकालमेघैरिवावृताम् ॥ ३७ ॥ तस्यसंदिदिहेबुद्धिस्तथासीतांनिरीक्ष्यच ॥ आम्नायानामयोगेनविद्यांप्रशिथिलामिव ॥ ३८ ॥ दुःखेनबुबुधेसीतांहनुमाननलंकृताम् ॥ संस्कारेणयथाहीनांवाचमर्थांतरंगताम् ॥ ३९॥ तांसमीक्ष्यविशालाक्षींराजपुत्रीमनिंदिताम् ॥ तर्कयामाससीतेतिकारणैरुपपादयन् ॥ ४० ॥ वैदेह्यायानिचांगेषुतदारामोन्वकीर्तयत् ॥ तान्याभरणजालानिगात्रशोभीन्यलक्षयत् ॥ ४१ ॥ सुकृतौकर्णवेष्टौचश्वदंष्ट्रौचसुसंस्थितौ ॥ मणिविद्रुमचित्राणिहस्तेष्वाभरणानिच ॥ ४२ ॥ श्यामानिचिरयुक्तत्वात्तथासंस्थानवंतिच ॥ तान्येवैतानिमन्येहंऽयानिरामोऽन्वकीर्तयत् ॥ ४३ ॥

इदानीं सीतात्वोपपादकमाह वैदेह्या इति । तदा स्वप्रस्थानसमये गात्रशोभीनीति पाठः कतकसंमतः । येष्वंगेषु यान्याभरणजालान्यकीर्तयत् तान्याभरणजालानि तत्तद्गात्रशोभीन्यलक्षयदिति प्रत्यभिज्ञाप्रामाण्यं सिद्धम् । तीर्थस्तु शाखाशोभीनीति पाठं प्रकल्प्य रामविश्लेषसमये भूषणधारणस्यानुचितत्वाद्वैदेह्या भूषणानि स्वांगेभ्य उन्मुच्य शाखायां न्यस्तानीति गम्यत इति व्याचख्यौ । तत्तु उत्तरश्लोकयोर्हस्तेष्विति तथा श्यामानि चिरयुक्तत्वादिति पदस्वरसविरुद्धम् । किंचैवं तदंगे रामोक्ताभरणाभावादसीतात्वमेव स्यात् ॥ ४१ ॥ अथ कस्मिन्गात्रे किमाभरणं दृश्यते तत्राह सुकृताविति । सुकृतौ निर्मितौ कर्णवेष्टौ कुंडले श्वदंष्ट्रौ कर्णाभरणविशेषौ त्रिकर्णकापरनामानौ सुसंस्थितौ कर्णरूपांगे सुप्रतिष्ठितौ उपलक्षये इति शेषः । हस्तेषु हस्तावयवेषु च यानि मणिविद्रुमचित्राण्याभरणानि रामेणोक्तानि तथैव सुस्थितानि उपलक्षये ॥ ४२ ॥ चिरयुक्तत्वाच्चिरकालमसंस्कृतदेहस्थितत्वेनासंस्कृतत्वात् । श्यामान्यपि श्यामवर्णान्यपि तथा संस्थानवंति रामोक्तसंनिवेशवंति यानि रामोन्वकीर्तयत् तान्येवमानीति मन्ये ॥ ४३ ॥

इतांप्येवमित्याह तत्रेति। रामोपदिष्टेषु यान्याभरणानि अवहीनानि पतितानि ऋष्यमूकादावित्यर्थः॥४४॥कानि त्यक्तानीति त्वयावगतानि तत्राह पीतमिति।कनकपादभत्वेन स्वर्णतंतुमात्रनिष्पन्नत्वं तस्य सूच्यते । नगासक्तं वृक्षासक्तम् ॥ ४५ ॥ ऋष्यमूके वस्त्रभूषणत्यागोप्यनयैव कृत इत्याह अनयैवेति ॥ ४६ ॥ इदं वसनम् अंतरीयवस्त्रमित्यर्थः । चिरधृतत्वात्क्लिष्टवत्तरं शयनादिना मृदितं तथापि तद्वर्णं स पीतो रागः अनूनमप्रच्युतम् । क्लीबत्वमार्षम् । अर्धर्चादिर्वा वर्णशब्दः । तथा श्रीमच्छोभावत् यथेतरत् अस्मद्गृहीतमुत्तरीयमित्यर्थः ॥ ४७ ॥ एवं जातनिश्चय आह इयमिति । प्रणष्टा दर्शनमप्राप्तापि यस्य रामस्य मनस्तु न प्रणश्यति नादृष्टा भवति नित्यं सन्निहिता भवतीत्यर्थः ॥ ४८ ॥ सा इयमेव के चत्वारस्तत्राह कारुण्येनेति ॥ ४९ ॥ परितापहेतुकारुण्यादिस्वयमेव दर्शयति स्त्रीति । प्रणष्टा परेण पीडिता मया च सती सा न रक्षिता । आपदि स्त्रियो रक्ष्या इत्युक्तेस्तदकरणकृतकारुण्यात्परितापः । वनं प्रस्थितमपि मामाश्रिता सा च न रक्षितेति आनृशंस्यतः आश्रितसंरक्षणस्वभावत्वेन तदकरणात्परितापः । पत्नी सर्वधर्मसाधनभूता नष्टेति धर्मनाशचिंताशोकेन परितापः । प्रियेति परमरूपलावण्यादिमती परमसुखसाधनभूता नष्टेति पूर्वसंभोगादिस्मरणजमदनेन सर्वसिद्धसर्वेंद्रियपरितापः ॥ ५० ॥ अस्या यथा रूपादि

तत्रयान्यवहीनानितान्यहंनोपलक्षये ॥ यान्यस्यानावहीनानितानीमानिनसंशयः ॥ ४४ ॥ पीतंकनकपट्टाभंस्रस्तंतद्वसनंशुभम् ॥ उत्तरीयंनगासक्तंतदाहृष्टंप्लवंगमैः ॥ ४५ ॥ भूषणानिचमुख्यानिदृष्टानिधरणीतले ॥ अनयैवापविद्धानिस्वनवंतिमहांतिच ॥ ४६ ॥ इदंचिरगृहीतत्वाद्वसनंक्लिष्टवत्तरम् ॥ तथाप्यनूनंतद्वर्णंतथाश्रीमद्यथेतरत् ॥ ४७ ॥ इयंकनकवर्णांगीरामस्यमहिषीप्रिया ॥ प्रणष्टापिसतीयस्यमनसोनप्रणश्यति ॥ ४८ ॥ इयंसायत्कृतेरामश्चतुर्भिरिहतप्यते ॥ कारुण्येनानृशंस्येनशोकेनमदनेनच ॥ ४९ ॥ स्त्रीप्रणष्टेतिकारुण्यादाश्रितेत्यानृशंस्यतः ॥ पत्नीनष्टेतिशोकेन प्रियेतिमदनेनच॥ ५० ॥ तस्यादेव्यायथारूपमंगप्रत्यंगसौष्ठवम् ॥ रामस्यचयथारूपंतस्येयमसितेक्षणा ॥ ५१ ॥ अस्यादेव्यामनस्तस्मिंस्तस्यचास्यांप्रतिष्ठितम् ॥ तेनेयंसचधर्मात्मामुहूर्तमपिजीवति ॥ ५२ ॥ दुष्करंकृतवान्रामोहीनोयदनयाप्रभुः ॥ धारयत्यात्मनोदेहंनशोकेनावसीदति ॥५३॥ एवंसीतांतथादृष्ट्वाहृष्टःपवनसंभवः ॥ जगाममनसारामंप्रशशंसचतंप्रभुम् ॥ ५४ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआ०सुन्दरकांडे पंचदशःसर्गः ॥ १५ ॥

तथा रामस्य यथा रामस्य रूपादि तथा अस्या अपि अतः सोस्या योग्य इयं च तस्य योग्येत्यर्थः । अनेनोभयोरन्योन्यमानुरूप्यं दर्शितम् ॥ ५१ ॥ अथान्योन्यानुरागमाह अस्या देव्या इति । येनास्याश्चित्तं रामे सक्तं तस्य चास्यां तेनेयं स च जीवति चित्तसन्निधानेन वियोगाभावादिति भावः । मुहूर्तमपीत्यस्यान्यथेत्यादिः न जीवेदिति च शेषः ॥ ५२ ॥ दुष्करमिति । अत्र तेनेति वर्तते । तेन चित्तसन्निधानेन दुष्करं किं कृतवांस्तत्राह धारयतीति । वर्तमानसामीप्ये लट् । दधारेत्यर्थः ॥ ५३ ॥ सितामेवमेवंगुणां तथा मलिनवासःसंवीतत्वोपवासकृशत्वशोकध्यानपरायणत्वादिपातिव्रत्यधर्मवतीं दृष्ट्वा हृष्टः सन् रामं सस्मार । स्मृतं च तं प्रशशंस । एवं पातिव्रत्यगुणवत्पत्नीलाभेन भाग्योत्तरो रामः । ईदृश्या वियोगेनेदृशी पीडा ईदृशीप्राप्तये उद्यमश्चोचित एवेति चात्सीतांच प्रशशंस । बलवता भव्येन प्रभुणा हृतापि या एवं पातिव्रत्यात्तदैव सर्वोत्तमेत्येवं प्रशशंस ॥ ५४ ॥ वंमंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचदशः सर्गः ॥ ॥ १५ ॥

सीतां प्रशस्य । प्रशंसा च प्रागुक्तरूपा । चिंतापरः सीताविषयदुःखेनेति भावः ॥ १ ॥ सीतामाश्रित्य सीतामुद्दिश्य ॥ २ ॥ गुरुभिर्विनीतस्य शिक्षितस्य लक्ष्मणस्य गुरुप्रिया गुरोः रामस्य पत्नीत्वात् । तद्वदेव परमोपास्यत्वेनाभीष्टा सीता अयोनिजा निःसीमपातिव्रत्या रामपत्न्यपि यदि दुःखार्ता दुःखपीडिता तर्हि कालो दुरतिक्रम इति हि निश्चितमित्यर्थः । दुःखोपायघटकत्वस्य काल एव प्रसिद्धत्वादिति भावः । ननु न दुःखं सुखं वा कालमात्रजन्यम् । कर्मानुष्ठानवैफल्यापत्तेः । तत्सापेक्षकालजन्यत्वेपि ईश्वरावतारसीतारामयोः कर्माभावात्कथं दुःखमिति चेन्न । वस्तुतस्तु तयोर्दुःखाभावेपि लोकानुग्रहाय गृहीतमनुष्यदेहयोस्तेषां मनुष्यत्वाभावबुद्धिप्रतिबंधाय नटवद्व्यवहारमभिनयतोः सुखदुःखादिकालिकमुखविकासाद्यभिनयेन तन्मायामोहितस्यैव देवांशस्य हनुमतोऽभिनीतकार्यदर्शनेन तत्कारणानुमानाद्दुःखार्तत्वाद्युक्तेः सामंजस्यात् । यथा च परेणोद्बोधनं विना हनूमतः स्वबलपराक्रमांशे मोहस्तथाऽनयोर्भगवत्स्वरूपत्वे इदानीं त्वस्य मोह इति वक्तुं शक्यत्वात् । पश्चात्तु भगवदिच्छयैव तस्य तयोः स्वरूपज्ञानेपि न किंचिदवद्यम् ॥ ३ ॥ नन्वेवंविधदुःखातिशये जीवनहानिरेव स्यादत आह रामस्येति । सलक्ष्मणो राम एवंविधे दुर्गे स्थितामपि मां दिव्यास्त्रैः समुद्रमपि येन केनाप्युपायेनोल्लंघ्यागत्यात्रायास्यतीति तस्य व्यवसायज्ञया पराक्रमज्ञा

प्रशस्यतुप्रशस्तव्यांसीतांतांहरिपुंगवः ॥ गुणाभिरामंरामंचपुनश्चिंतापरोऽभवत् ॥ १ ॥ समुहूर्तमिवध्यात्वाबाष्पपर्याकुलेक्षणः ॥ सीतामाश्रित्यतेजस्वीहनूमान्विललापह ॥ २ ॥ मान्यागुरुविनीतस्यलक्ष्मणस्यगुरुप्रिया ॥ यदिसीताहिदुःखार्ताकालोहिदुरतिक्रमः ॥ ३ ॥ रामस्यव्यवसायज्ञालक्ष्मणस्यचधीमतः ॥ नात्यर्थंक्षुभ्यतेदेवीगंगेवजलदागमे ॥ ४ ॥ तुल्यशीलवयोवृत्तांतुल्याभिजनलक्षणाम् ॥ राघवोऽर्हतिवैदेहींतंचेयमसितेक्षणा ॥ ५ ॥ तांदृष्ट्वानवहेमाभांलोककांतामिवश्रियम् ॥ जगाममनसारामंवचनंचेदमब्रवीत् ॥ ६ ॥ अस्याहेतोर्विशालाक्ष्याहतोवालीमहाबलः ॥ रावणप्रतिमोवीर्येकबंधश्चनिपातितः ॥ ७ ॥ विराधश्चहतःसंख्येराक्षसोभीमविक्रमः ॥ वनेरामेणविक्रम्यमहेंद्रेणेवशंबरः ॥ ८ ॥ चतुर्दशसहस्राणिरक्षसांभीमकर्मणाम् ॥ निहतानिजनस्थानेशरैरग्निशिखोपमैः ॥ ९ ॥ खरश्चनिहतःसंख्येत्रिशिराश्चनिपातितः ॥ दूषणश्चमहातेजारामेणविदितात्मना ॥ १० ॥ ऐश्वर्यंवानराणांचदुर्लभंवालिपालितम् ॥ अस्यानिमित्तेसुग्रीवःप्राप्तवाँल्लोकविश्रुतः ॥ ११ ॥ सागरश्चमयाक्रांतःश्रीमान्नदनदीपतिः ॥ अस्याहेतोर्विशालाक्ष्याःपुरीचेयंनिरीक्षिता ॥ १२ ॥ यदिरामःसमुद्रांतांमेदिनींपरिवर्तयेत् ॥ अस्याःकृतेजगच्चापियुक्तमित्येवमेमतिः ॥ १३ ॥ राज्यंवात्रिषुलोकेषुसीतावाजनकात्मजा ॥ त्रैलोक्यराज्यंसकलंसीतायानाप्नुयात्कलाम् ॥ १४ ॥

सती नात्यंतं क्षुभ्यते । नैराश्यमूलकं प्राणत्यागसंपादकं क्षोभं न प्राप्नोतीत्यर्थः । जलदागमे वर्षाकालेपि गंगा यथा इतरक्षुद्रनदीव दुर्धरवेगं न प्राप्नोति तद्वत् ॥ ४ ॥ तुल्यशीलवयोवृत्तां रामतुल्यस्वभाववयश्चारित्राम् । अभिजनः कुलम् । लक्षणं सामुद्रिकोक्तम् । अत एव सीताया रामस्य पुरुषांतरे रूपांतरे चाप्रवृत्तिः स्वभावमूलेति सूचितम् ॥ ५ ॥ मनसा रामं जगाम अस्याः स एवानुरूप इति सस्मारेत्यर्थः । नवहेमाभां नवां तरुणीं हेमाभां चेत्यर्थः ॥ ६ ॥ अस्या हेतोः सर्वात्मना स्वसदृश्याः प्राप्त्यर्थमित्यर्थः ॥ ७ ॥ दूषणांतरक्षोनिपातश्चैतदासक्त्या शूर्पणखानिरासमूलत्वादन्वेषणप्रतिबंधसंभावनामूलकत्वाच्चैतन्मूल एव शंबरोयं प्रद्युम्नहतादन्य एव । महेंद्रपदेन तत्तुल्यप्रद्युम्ने लक्षणा वा ॥ ८ ॥ ९ ॥ १० ॥ अस्या निमित्ते सप्तम्यर्थे षष्ठी । अस्यां निमित्तभूतायां सत्यामित्यर्थ इति तीर्थः ॥ ११ ॥ १२ ॥ परिवर्तयेत् अधरोत्तरं कुर्यात् संहरेदिति यावत् ॥ १३ ॥ एवं मतेर्युक्तत्वमुपपादयति राज्यंवेति । त्रैलोक्यराज्यसीताप्राप्त्योः कतरदुत्कृष्टमिति विचारे आद्यं द्वितीयकोटिशतांशेन सादृश्यमपि नार्हतीत्यर्थः ॥ १४ ॥

आधिक्यमेवोपपादयति इयमिति । अनेन कुलम् । भर्तृदृढव्रतेत्यनेन चारित्र्यातिशयः । मेदिनीं भित्त्वेत्यनेनायोनिजतयाऽमानुषाद्दिव्यरूपत्वं दर्शितम् ॥ १५ ॥ १६ ॥ आर्यशीलस्य पूज्यशीलस्य । अनेन महाकुलीनपाणिग्रहणं दर्शितम् ॥१७॥ यच्छेषतयैवं प्राशस्त्यं दर्शितम् । तस्य कालस्य दुरतिक्रमत्वमाह इयंसेति । राक्षसीवशमागता कालप्राबल्यादिति भावः । फलमत उपपत्तेरिति व्याससूत्रेणापि कालात्मनो भगवत एव कर्मफलप्रापणसामर्थ्यं दर्शितम् ॥ १८ ॥ भर्तृस्नेहबलात्कृता बलात्प्रवर्तिता ॥ १९ ॥ भर्तृशुश्रूषणापरा । सन्नंतात्स्वार्थेणिचिण्यासश्रन्थेति युच् ॥२०॥ पूर्ववदेवाह सेयमिति । यातनां राक्षसीभिः संपाद्यमानतीव्रदुःखम् ।अनर्थानामापदाम्॥२१॥शीलसंपन्नाम ईदृशदुःखेपि चारित्र्यप्रच्यवरहितां प्रमथितां प्रमथितामपि । प्रपा पानीयशाला ॥२२॥२३॥काम्यंत इति कामाः भुज्यंत इति भोगाः स्रक्चंदनादयस्तै

इयंसाधर्मशीलस्यजनकस्यमहात्मनः ॥ सुतामैथिलराजस्यसीताभर्तृदृढव्रता ॥ १५ ॥ उत्थितामेदिनींभित्त्वाक्षेत्रेहलमुखक्षते ॥ पद्मरेणुनिभैः कीर्णांशुभैःकेदारपांसुभिः ॥१६॥ विक्रांतस्यार्यशीलस्यसंयुगेष्वनिवर्तिनः ॥ स्नुषादशरथस्यैषाज्येष्ठाराज्ञोयशस्विनी ॥ १७ ॥ धर्मज्ञस्यकृतज्ञस्य रामस्यविदितात्मनः ॥ इयंसादयिताभार्याराक्षसीवशमागता ॥ १८ ॥ सर्वान्भोगान्परित्यज्यभर्तृस्नेहबलात्कृता ॥ अचिंतयित्वाकष्टानिप्रविष्टा निर्जनंवनम् ॥ १९ ॥ संतुष्टाफलमूलेनभर्तृशुश्रूषणापरा ॥ यापरांभजतेप्रीतिंवनेऽपिभवनेयथा ॥ २० ॥ सेयंकनकवर्णांगीनित्यंसुस्मितभाषिणी ॥ सहतेयातनामेतामनर्थानामभागिनी ॥ २१ ॥ इमांतुशीलसंपन्नांद्रष्टुमिच्छतिराघवः ॥ रावणेनप्रमथितांप्रपामिवपिपासितः ॥ २२ ॥ अस्यानूनं पुनर्लाभाद्राघवःप्रीतिमेष्यति ॥ राजाराज्यपरिभ्रष्टःपुनःप्राप्येवमेदिनीम् ॥ २३ ॥ कामभोगैःपरित्यक्ताहीनाबंधुजनेनच ॥ धारयत्यात्मनोदेहं तत्समागमकांक्षिणी ॥ २४ ॥ नैषापश्यतिराक्षस्योनेमान्पुष्पफलद्रुमान् ॥ एकस्थहृदयानूनंराममेवानुपश्यति ॥ २५ ॥ भर्तानामपरंनार्याःशोभनं भूषणादपि ॥ एषाहिरहितातेनशोभनार्हानशोभते ॥२६॥ दुष्करंकुरुतेरामोहीनोयदनयाप्रभुः ॥ धारयत्यात्मनोदेहंनदुःखेनावसीदति ॥२७॥ इमाम सितकेशांतांशतपत्रनिभेक्षणाम् ॥ सुखार्हांदुःखितांज्ञात्वाममापिव्यथितंमनः ॥ २८ ॥ क्षितिक्षमापुष्करसन्निभेक्षणायारक्षिताराघवलक्ष्मणाभ्याम् ॥ साराक्षसीभिर्विकृतेक्षणाभिःसंरक्ष्यतेसंप्रतिवृक्षमूले ॥२९॥ हिमहतनलिनीवनष्टशोभाव्यसनपरंपरयानिपीड्यमाना ॥ सहचररहितेवचक्रवाकीजनक सुताकृपणांदशांप्रपन्ना ॥३०॥अस्याहिपुष्पावनताग्रशाखाःशोकंदृढंवैजनयंत्यशोकाः॥ हिमव्यपायेनचशीतरश्मिरभ्युत्थितोनैकसहस्ररश्मिः॥३१॥

स्त्यक्ता तत्समागमकांक्षिणी । एति जीवंतमानंदो नरं वर्षशतादपीति न्यायेनेति भावः ॥ २४ ॥ राक्षस्यः राक्षसीरित्यर्थः । एकस्मिँल्लक्ष्ये तिष्ठति तादृशं हृदयं यस्याः सा । किं तदेकं लक्ष्यं तत्राह नूनं राममेवेति ॥ २५ ॥ राममेवेत्यत्र बीजमाह भर्तानामेति । शोभनं शोभा ॥२६॥ एतदेकहृदयत्वज्ञानादेव रामः प्रभुर्यज्जीवनरूपं दुःखेनावसादनाभावरूपं च दुष्करं कुरुते ॥२७॥ ममापि तिर्यग्योनेरपि विषयानभिज्ञस्यापि ॥ २८ ॥ क्षितितुल्या क्षमा यस्याः सा दृष्टिमात्रेण रावणस्याभस्मीकरणात् । संरक्ष्यते परैरनपहाराय गोप्यत इत्यर्थः ॥२९॥ कृपणां शोच्याम् ॥३०॥ न केवलमशोक एव शोकजनकश्चंद्रोपीत्याह हिमेति । हिमव्यपायेन वसंतसमीपप्राकालेनोपलक्षितः।यद्वा लंकायां हिमव्यपायेन शीताभावेनाभ्युत्थितोतिप्रकाशतया स्थितः अतएव नैकसहस्ररश्मिः अभ्युत्थितः उदयं प्राप्तः शीतरश्मिश्च शोकं जनयतीत्यनुकर्षः॥ ३१॥

सीतेयमित्येव इयं सीतैवेति जातबुद्धिस्तामेव बुद्धिं संश्रित्य ततः परानुष्ठेयाचिकीर्षया तस्मिन् शिंशपावृक्षे एव निषसाद । तद्रात्रिशेषं परदिनं च स्थित इत्यर्थः । एवं च सरावणांतःपुरा सर्वापि लंका यामत्रयेण समुद्रलंघनदिनरात्रावेव विचिता तुर्ये यामेऽशोकवनिकाप्रवेश इति बोध्यम् ॥ ३२ ॥ रंगमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षोडशः सर्गः ॥ १६ ॥ ॥ ततस्तद्दिनापगमोत्तरं कुमुदखंडं कुमुदसमूहस्तदाभः श्वैत्येन निर्मलं नभो जगाम । नभसोनिर्मलत्वं स्वच्छनीलवर्णत्वम् अतएवाह हंसा नीलमुदकमिवेति । नभसो नीलत्वं प्रतीत्या कविसंप्रदायेन च बोध्यम् । नभो जगाम किंचिन्नभउपरिभागं जगामेत्यर्थः॥ १॥साचिव्यमिव सीतादर्शनादौ प्रभया स्वकांत्या साचिव्यमिव साहायकमिव दिवा कचिदेकांतप्रदेशे स्थितत्वान्निद्राव्याकुलत्वाच्च न सम्यक् राक्षसीनां सीतायाश्च दर्शनम् ।

इत्येवमर्थकपिरन्ववेक्ष्यसीतेयमित्येवतुजातबुद्धिः ॥ संश्रित्यतस्मिन्निषसादवृक्षेबलीहरीणामृषभस्तरस्वी ॥ ३२ ॥ इ०श्री०वा०आ०सुं०षोडशः सर्गः ॥ १६ ॥ ततःकुमुदखंडाभोनिर्मलंनिर्मलोदयः ॥ प्रजगामनभश्चंद्रोहंसोनीलमिवोदकम् ॥ १ ॥ साचिव्यमिवकुर्वन्सप्रभयानिर्मलप्रभः ॥ चंद्रमारश्मिभिःशीतैःसिषेवेपवनात्मजम् ॥ २ ॥ सददर्शततःसीतांपूर्णचंद्रनिभाननाम् ॥ शोकभारैरिवन्यस्तांभारैर्नावमिवांभसि ॥ ३ ॥ दिदृक्षमाणोवैदेहींहनूमान्मारुतात्मजः ॥ सददर्शविदूरस्थाराक्षसीर्घोरदर्शनाः ॥ ४ ॥ एकाक्षीमेककर्णांचकर्णप्रावरणांतथा ॥ अकर्णांशंकुकर्णांचमस्तकोच्छ्वासनासिकाम् ॥ ५ ॥ अतिकायोत्तमांगींचतनुदीर्घशिरोधराम् ॥ ध्वस्तकेशींतथाकेशींकेशकंबलधारिणीम् ॥ ६ ॥ लंबकर्णललाटांचलंबोदरपयोधराम् ॥ लंबोष्ठींचिबुकोष्ठींचलंबास्यांलंबजानुकाम् ॥ ७ ॥ ह्रस्वांदीर्घांचकुब्जांचविकटांवामनांतथा ॥ करालांभुग्नवक्त्रांचपिंगाक्षींविकृताननाम् ॥ ८ ॥ विकृताःपिंगलाःकालीःक्रोधनाःकलहप्रियाः ॥ कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९ ॥ वराहमृगशार्दूलमहिषाजशिवामुखीः ॥ गजोष्ट्रहयपादाश्चनिखातशिरसोऽपराः ॥ १० ॥ एकहस्तैकपादाश्चखरकर्ण्यश्वकर्णिकाः ॥ गोकर्णीर्हस्तिकर्णीश्चहरिकर्णीस्तथापराः ॥ ॥ ११ ॥ अतिनासाश्चकाश्चित्तिर्यङ्नासाअनासिकाः ॥ गजसन्निभनासाश्चललाटोच्छ्वासनासिकाः ॥ १२ ॥ हस्तिपादामहापादागोपादाःपादचूलिकाः ॥ अतिमात्रशिरोग्रीवाअतिमात्रकुचोदरीः ॥ १३ ॥

रात्रौ चंद्रोदये सति तु पुनः समीपदेशे आगत्य स्थितस्य सम्यक् सर्वदर्शनम् ॥ २ ॥ शोकभारैर्न्यस्ताम् अधोनीतामिव निमज्जमानामित्यर्थः ॥ ३ ॥ दिदृक्षमाणः प्रकटतया तां द्रष्टुमिच्छुः ॥ ४ ॥ कर्णप्रावरणामिति । विशालकर्णां मस्तकोच्छ्वासनासिकाम् ऊर्ध्वमुखनासाम् ॥ ५ ॥ अतिकायोत्तमांगीम् अतिप्रवृद्धोपरिभागदेहवतीं तनुदीर्घशिरोधराम् अस्थूलदीर्घग्रीवामित्यर्थः । शारीरकेशैः कंबलधारिणीमिव ॥ ६ ॥ चिबुके संबद्धः ओष्ठो यस्यास्ताम् ॥७॥ विकटां वक्रशरीरां करालां भयंकरकृष्णवर्णाम्॥८॥विकृतत्वादिगुणाश्च या राक्षस्यस्तत्र स्थितास्ता ददर्शेति वक्ष्यमाणेनान्वयः । कूटोयस्कारकूटाभ आयुधविशेषः ॥९॥ निखातशिरसः कबंधवदुरःप्रदेशगतशिरसः ॥१०॥ हरिकर्णीः सिंहकर्णीः ॥११॥ गजसन्निभनासाः शुंडादंडोपेतनासाः ॥ १२ ॥ पादचूलिकाः पादे संलग्ना चूडा शिरःकेशा यासां ताः । पादे वा चूडाकाराः

केशा यासां ताः । अतिमात्रम् अतिप्रमाणम् ॥ १३ ॥ १४ ॥ १५ ॥ सुरामांससदाप्रियाः सुरामांसे सदा प्रिये यासां ताः ॥ १६ ॥ १७ ॥ स्कंधवंतं प्रशस्तशाखोपशाखावंतं वृक्षं शिंशपावृक्षं परिवार्य तन्मूलादीषद्दूरे आसीनाः स्थितास्तस्याधस्तात्तन्मूलसमीपे ॥ १८ ॥ १९ ॥ दिवश्च्युतां भूमौ पतितां तारामिव । चारित्रव्यपदेशः पातिव्रत्यजकीर्तिः । भर्तृदर्शनं दुर्गतं दुर्लभं यस्यास्ताम् ॥ २० ॥ उत्तमभूषणजशोभाहीनामपि भर्तृवात्सल्येन तत्प्रियत्वेन शोभावतीम् । वर्षान्ते विनाकृतां रहिताम् ॥ २१ ॥ पयोदांते वर्षान्ते । अनेन दुःखस्यात्यल्पावशिष्टत्वं सूच्यते ॥ २२ ॥ असंस्पर्शाद्भर्तृस्पर्शाभावात् । अतएवायुक्तां वीणावादकवादनक्रियारहितां वल्लकीं वीणामिव स्थिताम् । अयुक्तां रक्षसां वशे रक्षोधीनत्वेऽयोग्याम् ॥ २३ ॥ शोकसागरमाप्लुतां तत्र मग्नाम् । ताभिः राक्षसीभिः । सग्रहां क्रूरग्रहाविष्टाम् ॥ २४ ॥ अकुसुमलतासादृश्यमाभरणत्यागात् । वपुषा

अतिमात्रास्यनेत्राश्चदीर्घजिह्वाननास्तथा ॥ अजामुखीर्हस्तिमुखीर्गोमुखीःसूकरीमुखीः ॥१४॥ हयोष्ट्रखरवक्त्राश्चराक्षसीर्घोरदर्शनाः ॥ शूलमुद्गरहस्ताश्चक्रोधनाःकलहप्रियाः ॥ १५ ॥ करालाधूम्रकेशिन्योराक्षसीर्विकृताननाः ॥ पिबंतिसततंपानंसुरामांससदाप्रियाः ॥ १६ ॥ मांसशोणितदिग्धांगीर्मांसशोणितभोजनाः ॥ तादद्दर्शकपिश्रेष्ठोरोमहर्षणदर्शनाः ॥१७॥ स्कंधवंतमुपासीनाःपरिवार्यवनस्पतिम् ॥ तस्याधस्ताच्चतांदेवींराजपुत्रीमनिंदिताम् ॥ १८ ॥ लक्षयामासलक्ष्मीवान्हनूमाञ्जनकात्मजाम् ॥ निष्प्रभांशोकसंतप्तांमलसंकुलमूर्धजाम् ॥ १९ ॥ क्षीणपुण्यांच्युतांभूमौतारांनिपतितामिव ॥ चारित्र्यव्यपदेशाढ्यांभर्तृदर्शनदुर्गताम् ॥ २० ॥ भूषणैरुत्तमैर्हीनांभर्तृवात्सल्यभूषिताम् ॥ राक्षसाधिपसंरुद्धांबंधुभिश्चविनाकृताम् ॥ ॥२१॥ वियूथांसिंहसंरुद्धांबद्धांगजवधूमिव ॥ चंद्ररेखांपयोदांतेशारदाभ्रैरिवावृताम् ॥२२॥ क्लिष्टरूपामसंस्पर्शादयुक्तामिववल्लकीम् ॥ सतांभर्तृहितेयुक्तामयुक्तांरक्षसांवशे ॥ २३ ॥ अशोकवनिकामध्येशोकसागरमाप्लुताम् ॥ ताभिःपरिवृतांतत्रसग्रहामिवरोहिणीम् ॥ २४ ॥ ददर्शहनुमांस्तत्रलतामकुसुमामिव ॥ सामलेनचदिग्धांगीवपुषाचाप्यलंकृता ॥ मृणालीपंकदिग्धेवविभातिचनभातिच ॥ २५ ॥ मलिनेनतुवस्त्रेणपरिक्लिष्टेनभामिनीम् ॥ संवृतांमृगशावाक्षींददर्शहनुमान्कपिः ॥ २६ ॥ तांदेवींदीनवदनामदीनांभर्तृतेजसा ॥ रक्षितांस्वेनशीलेनसीतामसितलोचनाम् ॥ २७ ॥ तांदृष्ट्वाहनुमान्सितांमृगशावनिभेक्षणाम् ॥ मृगकन्यामिवत्रस्तांवीक्षमाणांसमंततः ॥ २८ ॥ दहंतीमिवनिःश्वासैर्वृक्षान्पल्लवधारिणः ॥ संघातमिवशोकानांदुःखस्योर्मिमिवोत्थिताम् ॥ २९ ॥ तांक्षामांसुविभक्तांगींविनाभरणशोभिनीम् ॥ प्रहर्षमतुलंलेभेमारुतिःप्रेक्ष्यमैथिलीम् ॥३०॥ हर्षजानिचसोऽश्रूणितांदृष्ट्वामदिरेक्षणाम् ॥ मुमोचहनुमांस्तत्रनमश्चक्रेचराघवम् ॥३१॥ नमस्कृत्वाथरामायलक्ष्मणायचवीर्यवान् ॥ सीतादर्शनसंहृष्टोहनुमान्संवृतोऽभवत् ॥ ॥ ३२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येसुंदरकांडेसप्तदशःसर्गः ॥ १७ ॥

स्वरूपीयसहनसौंदर्येण । कारकदीपकमत्रालंकारः समुच्चयश्च ॥ २५ ॥ २६ ॥ भर्तृतेजसा भर्तृपराक्रमानुसंधानेनादीनहृदयाम् ॥ २७ ॥ २८ ॥ दुःखस्य दुःखसागरस्य । अत्राधेयेनाधारनिगरणम् ॥ २९ ॥ क्षामां कृशाम् । विनाभरणशोभिनीम् आभरणानुग्रहमनपेक्ष्यैव सौंदर्येण शोभमानाम् ॥ ३० ॥ राघवं नमश्चक्रे इति । भगवतो राघवस्यानुग्रहादेवेयं मया दृष्टेति पुनःपुनः स्मृत्वा नमस्कारः ॥ ३१ ॥ संवृतोभवत् राक्षसीनां दर्शनपरिहाराय सूक्ष्मरूपमवलंब्य वृक्षमूलसमीपशाखासु निलीनोभवत् ॥ ३२ ॥ औरागमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तदशः सर्गः ॥ १७ ॥

तथेति । किंचिच्छेषा अपरयाममात्रशेषा । विचिन्वतस्तस्याः स्पष्टदर्शनाय राक्षसीनिद्रारूपमवसरमन्वेषयतः ॥ १ ॥ विरात्रे रात्रिविपर्यासे अपररात्र इत्यर्थः । ब्रह्मराक्षसं ब्रह्म वेदस्तज्ज्ञरक्षसाम् । तदेव स्पष्टीकृतं षडंगेत्यादिना ॥ २ ॥ ३ ॥ निद्रावशादेव स्रस्तमाल्यांबरधरः ॥ ४ ॥ भृशं नियुक्तः गाढाभिनिवेशितचित्तः । कामं कामवेगम् । ईदृशेषु तीर्थस्यान्यथायोजनं भ्रांत्यैव । रक्षसस्तमोगुणाविष्टस्य भगवन्मायामोहितस्याकृत्येष्वेव प्रवृत्तेः । तथा क्रियमाणं भगवद्ध्यानमपि पापभोगोत्तरं जन्मांतरे उत्तमफलायेति बोद्धव्यम् । अतएव ऋक्शाश्वमेधनाम्नो राज्ञो दानस्तावक ऋङ्मंत्रः । न युष्मे वाजबंधवो निनित्सुश्च न मर्त्यः । अवद्यमधि दीधरत् इति । तस्यार्थः वाजमित्यन्ननाम । अन्नदानेन ये सर्वेषां बंधवस्तेषां संबोधनं हे वाजबंधवः युष्मे युष्मासु अधि सप्तम्यर्थानुवादी अधिः । निनित्सुश्च न निंदनेच्छाशीलोपि मर्त्यः अवद्यं न दीधरत् न धारयति । भगवदनुसंधानेनैव निष्पापत्वादिति । एवं च भगवतो निंदावरुद्धभावेन ध्यानमपि नरकभोगोत्तरं जन्मांतरे उत्तमफलायातएवास्य मरणोत्तरं चतुर्थचतुर्युग्यां

तथाविप्रेक्षमाणस्यवनंपुष्पितपादपम् ॥ विचिन्वतश्चवैदेहींकिंचिच्छेषानिशाभवत् ॥ १ ॥ षडंगवेदविदुषांक्रतुप्रवरयाजिनाम् ॥ शुश्रावब्रह्मघोषान्सविरात्रेब्रह्मरक्षसाम् ॥ २ ॥ अथमंगलवादित्रैःशब्दैःश्रोत्रमनोहरैः ॥ प्राबोध्यतमहाबाहुर्दशग्रीवोमहाबलः ॥ ३ ॥ विबुध्यतुमहाभागोराक्षसेंद्रःप्रतापवान् ॥ स्रस्तमाल्यांबरधरोवैदेहीमन्वचिंतयत् ॥ ४ ॥ भृशंनियुक्तस्तस्यांचमदनेनमदोत्कटः ॥ नतुतंराक्षसःकामंशशाकात्मनिगूहितुम् ॥ ५ ॥ ससर्वाभरणैर्युक्तोबिभ्रच्छ्रियमनुत्तमाम् ॥ तांनगैर्विविधैर्जुष्टांसर्वपुष्पफलोपगैः ॥ ६ ॥ वृतांपुष्करिणीभिश्चनानापुष्पोपशोभिताम् ॥ सदामत्तैश्चविहगैर्विचित्रांपरमाद्भुतैः ॥ ७ ॥ ईहामृगैश्चविविधैर्वृतांदृष्टिमनोहरैः ॥ वीथीःसंप्रेक्षमाणश्चमणिकांचनतोरणाम् ॥ ८ ॥ नानामृगगणाकीर्णांफलैःप्रपतितैर्वृताम् ॥ अशोकवनिकामेवप्राविशत्संततद्रुमाम् ॥ ९ ॥ अंगनाःशतमात्रंतुतंव्रजंतमनुव्रजन् ॥ महेंद्रमिवपौलस्त्यंदेवगंधर्वयोषितः ॥ १० ॥ दीपिकाःकांचनीःकाश्चिज्जगृहुस्तत्रयोषितः ॥ वालव्यजनहस्ताश्चतालवृंतानिचापराः ॥ ११ ॥ कांचनैश्चैवभृंगारैर्जह्रुःसलिलमग्रतः ॥ मंडलाग्राबृसीश्चैवगृह्यान्याःपृष्ठतोययुः ॥ १२ ॥ काचिद्रत्नमयींपात्रींपूर्णांपानस्यभ्राजतीम् ॥ दक्षिणादक्षिणेनैवतदाजग्राहपाणिना ॥ १३ ॥ राजहंसप्रतीकाशंछत्रंपूर्णशशिप्रभम् ॥ सौवर्णदंडमपराग्रहीत्वापृष्ठतोययौ ॥ १४ ॥ निद्रामदपरीताक्ष्योरावणस्योत्तमाःस्त्रियः ॥ अनुजग्मुःपतिंवीरंघनंविद्युल्लताइव ॥ १५ ॥ व्याविद्धहारकेयूराःसमामृदितवर्णकाः ॥ समागलितकेशांताःसस्वेदवदनास्तथा ॥ १६ ॥

चेदिराजकुले जन्म । चतुर्विंशतिचतुर्युग्यां रामावतार इति हरिवंशोक्तेस्तावत्पर्यंतं चैतत्पापफलभोग इत्यर्थायातमिति बोध्यम् ॥ ५ ॥ ६ ॥ ७ ॥ वीथीः अशोकवनिकामार्गगमनवीथीः ॥ ८ ॥ ९ ॥ अंगनाः शतमात्रामित्यवधारणे इति कतकः । देवादियोषितो महेंद्रमिव पौलस्त्यं रावणम् अनुव्रजन् । अडभाव आर्षः ॥ १० ॥ कांचनीः कांचनदंडाः वालव्यजनहस्ता इत्यस्यान्वव्रजन्निति शेषः । तालवृंतानीत्यस्य जगृहुरिति । अनेन लंकायां हेमंतशिशिरयोरपि शीताभावो ध्वनितः ॥ ११ ॥ भृंगारैः कलशैः । धत्तूरकुसुमसदृशजलपात्रैरित्यर्थ इति तीर्थः । मंडलाग्रा वृत्तपर्यंता बृसीरासनविशेषान् । तपस्विनामिमे तृणादिना अस्य तु स्वर्णेनेति विशेषः ॥ १२ ॥ पानस्य पूर्णां पानेन पूर्णाम् । शेषे षष्ठी । भ्राजतीं देदीप्यमानां दक्षिणा अनुकूला ॥ १३ ॥ १४ ॥ १५ ॥ व्याविद्धाः स्थानादीषच्चलिताः । सम्यगामृदितो

मृष्टो वर्णकोनुलेपनं यासां ताः ॥ १६ ॥ समाल्याः सपुष्पा आकुला मूर्धना यासां ताः ॥ १७ ॥ मदिरलोचनाः मदकरवीक्षणाः । बहुमानाद्भर्तृकृतसंमानात् । कामात् स्वीयात् ॥ १८ ॥ मंदा दुर्मतिः । मंदं यथा तथांचिता गतिर्यस्य ॥ १९ ॥ २० ॥ द्वारदेशम् अशोकवनिकाप्राकारदेशम् ॥ २१ ॥ दीपिकाभिर्भासितम् । रात्रिशेषसत्त्वात् । द्वादश्यां यामावशिष्टरात्रौ चंद्रस्यास्तगमनाच्च ॥ २२ ॥ जिह्मा द्विगुणके ईक्षणे यस्य तम् । समक्षं प्रत्यक्षं कंदर्पमिव स्थितम् । अपविद्धशरासनं त्यक्तेक्षुचापम् ॥२३॥ अमृतं पयः । मथितपयःफेनवच्छुक्ला आभा यस्य तत् अरजः धौतम् । सपुष्पं पुष्पमालासहितं विमुक्तं विशिष्टमुक्तावंतम् । यद्वा स्थानाच्च्युतम् अंगदे सक्तं वस्त्रम् अवकर्षन्तम् अंगदादाकृष्य यथास्थाने स्थापयंतम्। सपुष्पमवकर्षंतमित्येव पाठः। तीर्थस्तु एतद्योजनाशक्त्या सलीलमवकर्षंतमिति पाठं कल्पयति॥२४॥

घूर्णंत्योमदशेषेणनिद्रयाचशुभाननाः ॥ स्वेदक्लिष्टांमकुसुमाःसमाल्याकुलमूर्धजाः ॥ १७ ॥ प्रयांतंनैर्ऋतपतिंनार्योमदिरलोचनाः ॥ बहुमानाच्च कामाच्चप्रियभार्यास्तमन्वयुः ॥ १८ ॥ सचकामपराधीनःपतिस्तासांमहाबलः ॥ सीतासक्तमनामंदोमदांचितगतिर्बभौ ॥ १९ ॥ ततःकांचीनिनादं चनूपुराणांचनिःस्वनम् ॥ शुश्रावपरमस्त्रीणांकपिर्मारुतनंदनः ॥२०॥ तंचाप्रतिमकर्माणमचिंत्यबलपौरुषम् ॥ द्वारदेशमनुप्राप्तंददर्शहनुमान्कपिः ॥ ॥ २१ ॥ दीपिकाभिरनेकाभिःसमंतादवभासितम् ॥ गंधतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥ २२ ॥ कामदर्पमदैर्युक्तंजिह्मताम्रायतेक्षणम् ॥ समक्ष मिवकंदर्पमपविद्धशरासनम् ॥ २३ ॥ मथितामृतफेनाभमरजोवस्त्रमुत्तमम् ॥ सपुष्पमवकर्षंतंविमुक्तंसक्तमंगदे ॥ २४ ॥ तंपत्रविटपेलीनःपत्रपु ष्पशतावृतः ॥ समीपमुपसंक्रांतंविज्ञातुमुपचक्रमे ॥ २५ ॥ अवेक्षमाणस्तुतदाददर्शकपिकुंजरः ॥ रूपयौवनसंपन्नारावणस्यवरस्त्रियः ॥२६॥ ताभिः परिवृतोराजासुरूपाभिर्महायशाः ॥ तन्मृगद्विजसंघुष्टंप्रविष्टःप्रमदावनम् ॥ २७ ॥ क्षीवोविचित्राभरणःशंकुकर्णोमहाबलः ॥ तेनविश्रवसःपुत्रःसदृष्टो राक्षसाधिपः ॥२८॥ वृतःपरमनारीभिस्ताराभिरिवचंद्रमाः ॥ तंददर्शमहातेजास्तेजोवंतंमहाकपिः ॥२९॥ रावणोऽयंमहाबाहुरितिसंचिंत्यवानरः॥ सोऽयमेवपुराशेतेपुरमध्येगृहोत्तमे ॥ अवप्लुतोमहातेजाहनूमान्मारुतात्मजः ॥ ३० ॥ सतथाऽप्युग्रतेजाःसनिर्धूतस्तस्यतेजसा ॥ पत्रेगुह्यांतरेसक्तोम तिमान्संवृतोऽभवत् ॥ ३१ ॥

पत्रविटपे निबिडपत्रशाखायाम् । विज्ञातुम् अयममुक इति विशेषेण ज्ञातुम् । निध्यातुमिति पाठेप्ययमेवार्थः ॥ २५ ॥ २६ ॥ प्रमदानां क्रीडार्हं वनं प्रमदावनम् ॥ २७ ॥ शंकुकर्णनामा तद्वनरक्षी राक्षसः तेन विश्रवसः पुत्रो राक्षसो रावणो दृष्टः नान्येन केनापि पुरुषेणेत्यर्थः ॥ २८ ॥ २९ ॥ यः पुरमध्ये पुरा शेते शयितः सोयमेवेत्यन्वयः । तस्माद्रावणोयमिति संचिंत्य अवप्लुतः स्वाश्रितशाखाया अत्यूर्ध्व शाखांतरे इति शेषः ॥ ३० ॥ यद्यपि सः समुद्रलंघनकर्ता स मारुतात्मजो हनूमानुग्रतेजास्तथापि तस्य रावणस्य तेजसा निर्धूतस्तस्य पुरोवस्थातुमशक्नुवन् पत्रे पत्रबहुले अतएव गुह्यांतरे शाखांतरे रुक्तः

स्थितस्तत्राप्यत्यल्पशरीरतया संवृतो गुप्तोऽभवत् । सर्वमाया तिरस्कारकमायावतस्तस्य दृश्यग्रे मायया अल्पशरीरादिमत्त्वेन स्थातुमशक्यत्वादेवं करणम् ॥३१॥ उपावर्तत समीपं प्राप्तः ॥ ३२ ॥ रंगेमौनः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडेऽष्टादशः सर्गः ॥ १८ ॥ ॥ ततः हनुमतः प्लवनानंतरम् । तस्मिन्नेव काले अपररात्ररूपे आगमनकाल एव रावणं दृष्ट्वा ततोनंतरं प्रावेपत ॥ १ ॥ २ ॥ रुदत्युपविष्टाऽभूत् । भीतस्वभावोक्त्या स्वभावोक्तिरत्रालंकारः ॥ ३ ॥ सन्नां शीर्णां शीर्णनौस्थं जनमिवेत्यर्थः ॥ ४ ॥ असंवृतायाम् आस्तरणरहितायाम् । संशितव्रतां रावणवधाय तीक्ष्णं व्रतमिव कुर्वाणाम् ॥ ५ ॥ मलेन मंडनस्थानेषु दिग्धांगीं रूषितांगीम् । चित्रांगीमिति पठित्वा मलरूपेण मंडनेन चित्रांगीं कर्बुराङ्गीमित्यर्थं तीर्थ आह । संन्यासित्वादुचितैव तस्य मलेपि

सतामासितकेशांतांसुश्रोणींसंहतस्तनीम् ॥ दिदृक्षुरसितापांगीमुपावर्ततरावणः ॥ ३२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येसुंदरकांडे अष्टादशः सर्गः ॥ १८ ॥ तस्मिन्नेवततःकालेराजपुत्रीत्वनिंदिता ॥ रूपयौवनसंपन्नंभूषणोत्तमभूषितम् ॥ १ ॥ ततोदृष्ट्वैववैदेहीरावणंराक्षसाधिपम् ॥ प्रावेपतवरारोहाप्रवातेकदलीयथा ॥ २॥ ऊरुभ्यामुदरंछाद्यबाहुभ्यांचपयोधरौ ॥ उपविष्टाविशालाक्षीरुदतीवरवर्णिनी ॥ ३ ॥ दशग्रीवस्तुवैदेहींरक्षितांराक्षसीगणैः ॥ ददर्शदीनांदुःखार्तांनावंसन्नामिवार्णवे ॥ ४ ॥ असंवृतायामासीनांधरण्यांसंशितव्रताम् ॥ छिन्नांप्रपतितांभूमौशाखामिववनस्पतेः ॥ ५ ॥ मलमंडनदिग्धांगींमंडनार्हाममंडनाम् ॥ मृणालीपंकदिग्धेवविभातिनविभातिच ॥ ६ ॥ समीपंराजसिंहस्यरामस्यविदितात्मनः ॥ संकल्पहयसंयुक्तैर्यांतीमिवमनोरथैः ॥ ७॥ शुष्यंतींरुदतीमेकांध्यानशोकपरायणाम् ॥ दुःखस्यांतमपश्यंतींरामांराममनुव्रताम् ॥८॥ चेष्टमानामथाविष्टांपन्नगेंद्रवधूमिव ॥ धूप्यमानांग्रहेणेवरोहिणींधूमकेतुना ॥९ ॥ वृत्तशीलेकुलेजातामाचारवतिधार्मिके ॥ पुनःसंस्कारमापन्नांजातामिवचदुष्कुले ॥ १० ॥ सन्नामिवमहाकीर्तिंश्रद्धामिवविमानिताम् ॥ प्रज्ञामिवपरिक्षीणामाशांप्रतिहतामिव ॥ ११ ॥ आयतीमिवविध्वस्तामाज्ञांप्रतिहतामिव ॥ दीप्तामिवदिशंकालेपूजामपहतामिव ॥ १२ ॥ पौर्णमासीमिवनिशांतमोग्रस्तेंदुमंडलाम् ॥ पद्मिनीमिवविध्वस्तांहतशूरांचमूमिव ॥ ॥ १३ ॥ प्रभामिवतमोध्वस्तामुपक्षीणामिवापगाम् ॥ वेदीमिवपरामृष्टांशांतामग्निशिखामिव ॥ १४ ॥

मंडनत्वबुद्धिः । ईदृशीं यां ददर्श सा पंकदिग्धा मृणालीव विभाति । न विभाति च स्वरूपशोभयातिमलावरणाच्च न विभातीत्यर्थः ॥ ६ ॥ संकल्पस्तच्चिन्तनं तद्रूपाश्वसंयुक्तैर्मनोरथैः रामसमीपं यांतीमिव ॥ ७ ॥ अपश्यंतीं तामिव ॥ ८ ॥ आविष्टां मंत्राद्यवरुद्धाम् । धूप्यमानां संतप्यमानाम् । धूमवर्णेन केतुना ॥ ९ ॥ वृत्तमाचारः शीलं सत्स्वभावस्तद्युते विहितकर्मानुष्ठानवतिच कुले जाताम् तादृश एव कुले पुनः संस्कारं पाणिग्रहणसंस्कारमापन्नामपि दुष्कुले जातामुत्पन्नां तत्रैव प्राप्तसंस्कारामिव च मलिनां स्थिताम् । स्त्रीणां विवाहस्यैवोपनयनवद्द्वितीयजन्मस्थानत्वादिति भावः ॥ १० ॥ सन्नां क्षीणां विमानितां अनादृताम् ॥ ११ ॥ आयती धनादिप्राप्तिः । आज्ञा राज्ञ इति शेषः । काले उत्पातकाले । पूजां देवपूजाम् ॥ १२ ॥ पौर्णमासीं तत्संबंधिनीम् । तमः राहुः ॥ १३ ॥ प्रभां रविप्रकाशम् । तमोंधकारः ।

परामृष्टां वेदवेदीराहितपतितैराक्रांताम् ॥ १४ ॥ उत्कृष्टानि त्रुटितानि पर्णानि कमलानि यस्याः सा ॥ १५ ॥ विस्राविताां रोधोभंगादिना अन्यतः मापितजलाम् अतएव शुष्कां मृजया अंगशुद्ध्या हीनाम् ॥ १६ ॥ १७ ॥ गृहीतां धृतां पश्चात्स्तंभे लाडितां बद्धाम् । कश्चित्तु गृहीतामालितामिति पठित्वा आलिताम् आलानितामित्यर्थमाह ॥ १८ ॥ अयत्नत इति । केशसंस्काराभावादयत्नतः । सिद्धयेति शेषः॥ ॥ १९ ॥ अल्पाहारां जलमात्राहाराम् । अस्नातया अन्नस्य ग्रहीतुमशक्यत्वात् देवराजतः पायसलाभेन तदनपेक्षणाच्च ॥ २० ॥ तपोधनत्वादेव रघुमुख्यस्य सकाशाद्दशग्रीवपराभवम् आयाचमानाम् प्रार्थयंतीम् अतएव भावेनांतरध्यानेन देवतामिव । एवार्थे इव । स्वकुलदेवतामेवोद्दिश्य प्रांजलिं कृतनमस्काराम्॥२१॥ क्रोधेन रोदनेन वा ताम्रप्रांते आयते शुक्ले च लोचने यस्यास्ताम् । वधाय तावन्मात्रफलम् मेव न तु स्वेष्टफलकमिति तात्पर्यम् ॥ २२ ॥ आखेरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनविंशः सर्गः ॥ १९ ॥ परिवृतां राक्षसीभिरिति शेषः

उत्कृष्टपर्णकमलांवित्रासितविहंगमाम् ॥ हस्तिहस्तपरामृष्टामाकुलामिवपद्मिनीम् ॥ १५ ॥ पतिशोकातुरांशुष्कांनदींविस्रावितामिव ॥ परयामृजयाहीनांकृष्णपक्षेनिशामिव ॥ १६ ॥ सुकुमारींसुजातांगींरत्नगर्भगृहोचिताम् ॥ तप्यमानामिवोष्णेनमृणालीमचिरोद्धृताम् ॥ १७ ॥ गृहीतांलाडितांस्तंभेयूथपेनविनाकृताम् ॥ निःश्वसंतींसुदुःखार्तांगजराजवधूमिव ॥ १८ ॥ एकयादीर्घयावेण्याशोभमानामयत्नतः ॥ नीलयानीरदापायेवनराज्यामहीमिव ॥ १९ ॥ उपवासेनशोकेनध्यानेनचभयेनच ॥ परिक्षीणांकृशांदीनामल्पाहारांतपोधनाम् ॥ २० ॥ आयाचमानांदुःखार्तांप्रांजलिंदेवतामिव ॥ भावेनरघुमुख्यस्यदशग्रीवपराभवम् ॥ २१ ॥ समीक्षमाणांरुदतीमनिंदितांसुपक्ष्मताम्रायतशुक्ललोचनाम् ॥ अनुव्रतांराममतीवमैथिलींप्रलोभयामासवधायरावणः ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनविंशः सर्गः ॥ १९ ॥ ॥ सतांपरिवृतांदीनांनिरानंदांतपस्विनीम् ॥ साकारैर्मधुरैर्वाक्यैर्न्यदर्शयतरावणः ॥ १ ॥ मांदृष्ट्वानागनासोरुगूहमानास्तनोदरम् ॥ अदर्शनमिवात्मानंभयान्नेतुंत्वमिच्छसि ॥ २ ॥ कामयेत्वांविशालाक्षिबहुमन्यस्वमांप्रिये ॥ सर्वांगगुणसंपन्नेसर्वलोकमनोहरे ॥ ३ ॥ नेहकिंचिन्मनुष्यावाराक्षसाःकामरूपिणः॥ व्यपसर्पतुतेसीतेभयंमत्तःसमुत्थितम् ॥४॥ स्वधर्मोरक्षसांभीरुसर्वदैवनसंशयः ॥ गमनंवापरस्त्रीणांहरणंसंप्रमथ्यवा ॥५॥ एवंचैवमकामांत्वांनचस्प्रक्ष्यामिमैथिलि ॥ कामंकामःशरीरेमेयथाकामंप्रवर्तताम् ॥ ६ ॥

साकारैः साभिप्रायैः । आकारस्त्विंगिताकृती । न्यदर्शयत स्वाभिप्रायमिति शेषः ॥ १ ॥ नागो गजः । स्तनोदरं गूहमाना भयादिव भयादेवात्मानं स्वशरीरमदर्शनं नेतुमिच्छसि । तत्किमिति शेषः ॥ २ ॥ नैवं भीतिर्मत्तस्ते युक्तेत्याह कामये इत्यादि ॥ ३ ॥ किमिदानीं मदतिरिक्तपुरुषांतरजं तव भयमुत मम स्पर्शे धर्महानिजं नाद्य इत्याह नेहेति । मत्तः मदागमनात्समुत्थितं पुरुषांतरागमनसंभावनया जातं भयं व्यपसर्पतु । अन्येषामभावात् ॥ ४ ॥ नांत्य इत्याह स्वधर्म इति । तं स्वधर्ममाह गमनं वेति । आनुकूल्यं संपाद्येति शेषः । संप्रमथ्य बलात्कृत्य । एवं स्वधर्मत्वान्मम नाधर्मः । बलात्कारे चास्वतंत्रत्वात् स्त्रिया अपि न दोष इति भावः ॥ ५ ॥ एवं च एवमपि बलात्कारपक्षे तव मम च दोषाभावेपि तस्य पक्षस्य रसाभाससंपादकत्वात् । अतएवमकामाम् अनेन प्रकारेण मयि कामरहितां त्वां मद्विनेच्छ

वर्ती च न च ननु स्वक्ष्यामि । एवं चैतदकामां त्वामिति पाठे एतद्रक्षोधर्मत्वम् एवं च एवमेव मदुक्तरीतिकमेव । तथाप्युक्तप्रकारेण त्वामकामां न स्प्रक्ष्यामीत्यर्थः । नन्वेवंसति दुःसहा कामपीडा तव स्यात्त त्राह काममिति । कामो मन्मथः यथाकामं यथेच्छं कामं तद्विषयेच्छां प्रवर्ततां प्रवर्तयात्वित्यर्थः ॥ ६ ॥ अतः सर्वथा भयं न कार्यमित्याह देवीति । देवि सर्वांतःपुरपूज्ये इह मयि मद्विषये प्रणयस्व संमाननं कुरु । संमानने नयतेरात्मनेपदम् ॥ ७ ॥ अधःशय्या भूशयनं नौपयिकानि न पुरुषार्थोपयुक्तानि ॥ ८॥ मां प्राप्य विचित्रमाल्यादीनि लभस्वेत्यर्थः ॥ ९ ॥ १० ॥ अनर्हा भूषणानामिति शेषः । सुविग्रहे इति संबुद्धिः ॥ ११ ॥ अतिवर्त्तते अतिक्रम्य गच्छति स्रोतस्विनो जलप्रवाहाः । स्रोतस्तेन प्रवहज्जलम् । अतो भुंक्ष्व भोगानिति शेषः ॥ १२ ॥ रूपकर्ता दिव्यरूपस्रष्टा त्वां कृत्वा निर्माय उपरतां दिव्य

देविनेहभयंकार्यंमयिविश्वसिहिप्रिये ॥ प्रणयस्वचतत्त्वेनमैवंभूःशोकलालसा ॥ ७ ॥ एकवेणीअधःशय्याध्यानंमलिनमंबरम् ॥ अस्थानेप्युपवासश्चनैतान्यौपयिकानिते ॥ ८ ॥ विचित्राणिचमाल्यानिचंदनान्यगरूणिच ॥ विविधानिचवासांसिदिव्यान्याभरणानिच ॥ ९ ॥ महार्हाणिचपानानिशयनान्यासनानिच ॥ गीतंनृत्यंचवाद्यंचलभमांप्राप्यमैथिलि ॥ १० ॥ स्त्रीरत्नमसिमैवंभूःकुरुगात्रेषुभूषणम् ॥ मांप्राप्यहिकथंवास्यास्त्वमनर्हासुविग्रहे ॥ ११ ॥ इदंतेचारुसंजातंयौवनंह्यतिवर्तते ॥ यदतीतंपुनर्नैतिस्रोतःस्रोतस्विनामिव ॥ १२ ॥ त्वांकृत्वोपरतोमन्येरूपकर्तासविश्वकृत् ॥ नहिरूपोपमाह्यन्यातवास्तिशुभदर्शने ॥ १३ ॥ त्वांसमासाद्यवैदेहिरूपयौवनशालिनीम् ॥ कःपुनर्नातिवर्तेतसाक्षादपिपितामहः ॥ १४ ॥ यद्यत्पश्यामितेगात्रंशीतांशुसदृशानने ॥ तस्मिंस्तस्मिन्पृथुश्रोणिचक्षुर्ममनिबध्यते ॥ १५ ॥ भवमैथिलिभार्यामेमोहमेतंविसर्जय ॥ बह्वीनामुत्तमस्त्रीणांममाग्रमहिषीभव ॥ १६ ॥ लोकेभ्योयानिरत्नानिसंप्रमथ्याहृतानिमे ॥ तानितेभीरुसर्वाणिराज्यंचैवददामिते ॥ १७ ॥ विजित्यपृथिवींसर्वांनानानगरमालिनीम् ॥ जनकायप्रदास्यामितवहेतोर्विलासिनि ॥ १८ ॥ नेहपश्यामिलोकेऽन्यंयोमेप्रतिबलोभवेत् ॥ पश्यमेसुमहद्वीर्यमप्रतिद्वंद्वमाहवे ॥ १९ ॥ असकृत्संयुगेभग्नामयाविमृदितध्वजाः ॥ अशक्ताःप्रत्यनीकेषुस्थातुंममसुरासुराः ॥ २० ॥ इच्छमांक्रियतामद्यप्रतिकर्मतवोत्तमम् ॥ सुप्रभाण्यवसज्जंतांतवांङ्गेभूषणानिहि ॥ २१ ॥ साधुपश्यामितेरूपंसुयुक्तंप्रतिकर्मणा ॥ प्रतिकर्माभिसंयुक्तादाक्षिण्येनवरानने ॥ २२ ॥ भुंक्ष्वभोगान्यथाकामंपिबभीरुरमस्वच ॥ यथेष्टंचप्रयच्छत्वंपृथिवींवाधनानिच ॥ २३ ॥

रूपनिर्माणाद्विरत इति मन्ये । उत्प्रेक्षायां हेतुः । हि यतस्तव रूपोपमा नास्ति । यदि पुन. स उत्तमरूपनिर्माणे यतेत न तथापि तवोपमेत्याशयः ॥ १३ ॥ को नातिवर्तेत क्षुभ्येतेत्यर्थः । कः पुमान्नातिवर्तेतेति पाठे कामवशतामतिक्रम्य को वर्तेतेत्यर्थः ॥ १४ ॥ निबध्यते बद्धं जायते ॥ १५ ॥ मोहं नैतद्दशा भविष्यामीति बुद्धिम् ॥ १६ ॥ १७ ॥ तव हेतोस्त्वत्प्रीत्यर्थम् ॥ १८ ॥ प्रतिबलो युद्धे जेता ॥ १९ ॥ प्रत्यनीकेषु प्रतिसैनिकभावेषु ॥ २० ॥ प्रतिकर्म प्रसाधनमलंकरणमिति यावत् ॥ २१ ॥ प्रतिकर्मणा युक्तं ते रूपं पश्यामि । भाविकमत्रालंकारः । दाक्षिण्येन मद्विषयककृपया प्रति कर्माभिसंयुक्ता भवेति शेषः ॥ २२ ॥ २३ ॥

ललस्व ईप्सां कुरु । मत्प्रसादान्मयि प्रसादात् ललंत्याः मदीप्साजनितप्रभावेण वर्धमानायाः ॥ २४ ॥ ऋद्धिं पराक्रमादिसंपदम् । श्रियं धनादिसंपदम् ॥ २५ ॥ निक्षिप्तविजयः निरस्तविजयसाधनः
अतएव गतश्रीत्वादिगुणः । जीवनस्यैव संदेहे पराक्रमादिसंभावना दूरत इत्यर्थः ॥ २६ ॥ द्रष्टुं वापि प्राप्तिस्तु दूरतरेत्यर्थः । उपलभ्यते व्यत्ययेन श्यन् प्रत्ययः । समर्थो भवतीत्यर्थः । उपलप्स्यत
इति पाठे समर्थो भविष्यतीत्यर्थः । पुरोबलाकैः अग्रेसरबलाकैः ॥ २७ ॥ इंद्रहस्तगतां कीर्तिं कीर्तितुल्यां भार्यामिंद्रहृतां नारदमुखेन प्रार्थनया यथा हिरण्यकशिपुः प्राप्तवान् नैवं त्वां रामः प्राप्स्यतीति भावः ।
इयं च कथा भागवते प्रसिद्धेति तीर्थः ॥ २८ ॥ २९ ॥ स्वेषु दारेषु मंदोदर्यामपि ॥ ३० ॥ ऐश्वर्यमाधिपत्यम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ प्रदिश देहि अभितो मेदिनीमपि इष्टेभ्यो देहि लल

ललस्वमयिविस्रब्धाधृष्टमाज्ञापयस्वच ॥ मत्प्रसादाल्ललंत्याश्चललतांबांधवस्तव ॥ २४ ॥ ऋद्धिंममानुपश्यत्वंश्रियंभद्रेयशस्विनि ॥ किंकरिष्यसिरामेणसुभगेचीरवासिना ॥ २५ ॥ निक्षिप्तविजयोरामोगतश्रीर्वनगोचरः ॥ व्रतीस्थंडिलशायीचशंकेजीवतिवानवा ॥ २६ ॥ नहिवैदेहिरामस्त्वांद्रष्टुंवाप्युपलभ्यते ॥ पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ॥ २७ ॥ नचापिममहस्तात्त्वांप्राप्तुमर्हतिराघवः ॥ हिरण्यकशिपुःकीर्तिमिंद्रहस्तगतामिव ॥ २८ ॥ चारुस्मितेचारुदतिचारुनेत्रेविलासिनि ॥ मनोहरसिमेभीरुसुपर्णःपन्नगंयथा ॥ २९ ॥ क्लिष्टकौशेयवसनांतन्वीमप्यनलंकृताम् ॥ त्वांदृष्ट्वास्वेषुदारेषुरतिंनोपलभाम्यहम् ॥ ३० ॥ अंतःपुरनिवासिन्यःस्त्रियःसर्वगुणान्विताः ॥ यावत्योममसर्वासामैश्वर्यंकुरुजानकि ॥ ३१ ॥ ममह्यसितकेशांतेत्रैलोक्यप्रवरस्त्रियः ॥ तास्त्वांपरिचरिष्यंतिश्रियमप्सरसोयथा ॥ ३२ ॥ यानिवैश्रवणेसुभ्रुरत्नानिचधनानिच ॥ तानिलोकांश्चसुश्रोणिमयाभुंक्ष्वयथासुखम् ॥ ३३ ॥ नरामस्तपसादेविनबलेनचविक्रमैः ॥ नधनेनमयातुल्यस्तेजसायशसापिवा ॥ ३४ ॥ पिबविहररमस्वभुंक्ष्वभोगान्धननिचयंप्रदिशामिमेदिनींच ॥ मयिललललनेयथासुखंत्वंत्वयिचसमेत्यललंतुबांधवास्ते ॥ ३५ ॥ कुसुमिततरुजालसंततानिभ्रमरयुतानिसमुद्रतीरजानि ॥ कनकविमलहारभूषितांगीविहरमयासहभीरुकाननानि ॥ ३६ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदि०सुं० विंशः सर्गः ॥ २० ॥ तस्यतद्वचनंश्रुत्वासीतारौद्रस्यरक्षसः ॥ आर्तादीनस्वरादीनंप्रत्युवाचततःशनैः ॥ १ ॥ दुःखार्तारुदतीसीतावेपमानातपस्विनी ॥ चिंतयंतीवरारोहापतिमेवपतिव्रता ॥ २ ॥ तृणमंतरतःकृत्वाप्रत्युवाचशुचिस्मिता ॥ निवर्तयमनोमत्तःस्वजनेप्रीयतांमनः ॥ ३ ॥

ईप्सावती भव ललंतु मानसमस्तेप्सिता भवंतु । प्राक्षिप्रोयम् ॥ ३५ ॥ ३६ ॥ तालैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि० सुंदरकांडे विंशः सर्गः ॥ २० ॥ तस्येति । दीनमिति
क्रियाविशेषणम् ॥ १ ॥ पतिमेव चिंतयंती प्रत्युवाचेति संबंधः ॥ २ ॥ तृणमंतरतः कृत्वा परपुरुषस्य साक्षात्संभाषणानर्हत्वात् भूम्यां किंचिदंतर्धाय मूत्रादिविसर्जनवत् तृणांतरेण तस्य मुखे प्रत्युत्तरदानम् ।
कथमस्य दुरात्मना रजस्तमोभिभूतस्य मयि दुराशेति शुचिस्मिता प्रत्युवाचेति पुनरभिधानं प्रकारविशेषकथनार्थम् । एतेन तृणीकृतप्राणतया तृणतुल्यतया । रावणस्य ग्रहणाच्च निर्भयप्रत्युत्तरदानमिति बोध्यम् ।
तदेवाह निवर्तयेति । मत्तो मनो निवर्तय स्वजने प्रीयतां प्रीतिं कुरु । स्वजनः स्वभार्यादिः क्रुद्धोक्त्या मनःपदादेः पौनरुक्त्यं न दोषभाक् । वर्णनीयमयीभावाच्च कवेरपि तादृशं न दोषाय ॥ ३ ॥

सिद्धिं ब्रह्मलोकप्राप्तिम् । एकपत्न्या पतिव्रतया अकार्यं परपुरुषस्पर्शरूपम् ॥ ४ ॥ तं प्राप्तया विवाहसंबंधेनेति शेषः ॥ ५ ॥ पृष्ठतः कृत्वा परावृत्य स्थित्वा औपयिकी भोगयोग्या तत्र हेतुः सती परभार्येति ॥ ६ ॥ धर्मं साध्विति पश्य साधूनां व्रतं चर यथा तव मंदोदर्याः परपरिग्रहेण दुःखमेवमन्येषामपि स्वदाराणां परपरिग्रहे दुःखमिति ज्ञात्वा अन्येषां दारा रक्ष्याः परिहार्याः ॥ ७ ॥ यथा स्वदाराणां स्वस्मिन्नेव रत्येहामुत्र सुखमिति स्वस्य निश्चयस्तथा परेषामपीत्यर्थे आत्मानमेव दृष्टांतीकृत्य स्वेष्वेवदारेषु रम्यताम् । अन्यथोभयोरपि धर्मलोप इति भावः । विपक्षे बाधकांतरमप्याह अतुष्टमिति । निकृतिमज्ञं निकृतिर्न्यक्कारः साधुकृत धिक्कारस्तदास्पदमज्ञम् । पराभवमजयरूपम् ॥ ८ ॥ इह लंकानगरे संतः इहलोकपरलोकहितवक्तारो न वा नैव संति सत्सु वा तेषु तान्नानुवर्तसे तत्समीपं नगच्छसि गतोपि वा न पृच्छसि यथा ते विपरीता बुद्धिः आचारवर्जिता विहितकर्मविमुखी अविहितसंमुखीच ॥ ९ ॥ सत्पुरुषत उपदेशसत्त्वेपि समूलोन्मूलनचिकीर्षुर्दैववशात्त्वंन शृणोषीत्याह वच इति । विचक्षणैर्भाविकार्यपर्यालोचनचतुरैः । पथ्यं हितोदर्कं वच

नमांप्रार्थयितुंयुक्तस्त्वंसिद्धिमिवपापकृत् ॥ अकार्यंनमयाकार्यमेकपत्न्याविगर्हितम् ॥ ४ ॥ कुलंसंप्राप्तयापुण्यंकुलेमहतिजातया ॥ एवमुक्त्वातुवैदेहीरावणंतंयशस्विनी ॥ ५ ॥ रावणंपृष्ठतःकृत्वाभूयोवचनमब्रवीत् ॥ नाहमौपयिकीभार्यापरभार्यासतीतव ॥ ६ ॥ साधुधर्ममवेक्षस्वसाधुसाधुव्रतंचर ॥ यथातवतथान्येषांरक्ष्यादारानिशाचर ॥ ७ ॥ आत्मानमुपमांकृत्वास्वेषुदारेषुरम्यताम् ॥ अतुष्टंस्वेषुदारेषुचपलंचपलेंद्रियम् ॥ नयंतिनिकृतिप्रज्ञंपरदाराःपराभवम् ॥ ८ ॥ इहसंतोनवासंतिसतोवानानुवर्तसे ॥ यथाहिविपरीतातेबुद्धिराचारवर्जिता ॥ ९ ॥ वचोमिथ्याप्रणीतात्मापथ्यमुक्तंविचक्षणैः ॥ राक्षसानामभावायत्वंवानप्रतिपद्यसे ॥ १० ॥ अकृतात्मानमासाद्यराजानमनयेरतम् ॥ समृद्धानिविनश्यंतिराष्ट्राणिनगराणिच ॥ ११ ॥ तथैवत्वांसमासाद्यलंकारत्नौघसंकुला ॥ अपराधात्तवैकस्यनचिराद्विनशिष्यति ॥ १२ ॥ स्वकृतैर्हन्यमानस्यरावणादीर्घदर्शिनः ॥ अभिनंदंतिभूतानिविनाशेपापकर्मणः ॥ १३ ॥ एवंत्वांपापकर्माणंवक्ष्यंतिनिकृताजनाः ॥ दिष्ट्यैतद्व्यसनंप्राप्तोरौद्रइत्येवहर्षिताः ॥ १४ ॥ शक्यालोभयितुंनाहमैश्वर्येणधनेनवा ॥ अनन्याराघवेणाहंभास्करेणयथाप्रभा ॥ १५ ॥ उपधायभुजंतस्यलोकनाथस्यसत्कृतम् ॥ कथंनामोपधास्यामिभुजमन्यस्यकस्यचित् ॥ १६ ॥ अहमौपयिकीभार्यातस्यैवचधरापतेः ॥ व्रतस्नातस्यविद्येवविप्रस्यविदितात्मनः ॥ १७ ॥

उक्तमपि मिथ्या प्रणीतात्मा तद्वचो मिथ्याऽवस्तुभूतमसारभूतमित्यश्रद्धया प्रणीतः प्राप्त आत्मा बुद्धिर्येन तादृशो राक्षसानामभावाय नाशाय न प्रतिपद्यसे न परिगृह्णासि ॥ १० ॥ ननु मया सज्जनोपदेशाग्रहे कुतो राक्षसनाशप्रसंग इत्यत्रोत्तरं वक्तुं लोकस्थितिमाह अकृतेति । अकृतात्मानं सदुपदेशाग्राहिबुद्धिम् ॥ ११ ॥ तथैवेति । राजापराधतोऽशेषप्रजानाशस्य लोकप्रसिद्धत्वादिति भावः ॥ ॥ १२ ॥ किं च सज्जनोपदेशमशृण्वतो नाशं सज्जनोनुमोदत इत्याह स्वकृतैरिति । स्वकृतैर्दुष्कृतैर्हन्यमानस्यावश्यप्राप्तनाशस्यादीर्घदर्शिना भाव्यनर्थदर्शनासमर्थस्य विनाशे उपस्थिते भूतानि सर्वप्राणिनो नंदंति ॥ १३ ॥ एवं निराकृतास्त्वया क्लेशिताः सर्वे जनाः एतद्व्यसनं स्वबुद्धिप्राप्तनाशम् ॥ १४ ॥ ऐश्वर्यं कुरु इत्यादि यदुक्तं रावणेन प्रलोभनाय तत्प्रत्याख्याति शक्येति । अनन्या भिन्नत्वाभाववती ॥ १५ ॥ प्रलोभनाशक्यत्वमेव स्पष्टयति उपधायेति । उपधानं कृत्वेति सह शयित्वेति यावत् कस्यचिदतत्वभूतस्य ॥ १६ ॥ औपयिकी योग्यव्रतस्नातस्य ब्रह्मचर्यव्रतपूर्वकं

कृतसमावर्तनस्य यथाशास्त्रं मत्पाणिग्रहणं कृतवतः विदितात्मनः ज्ञातस्वतत्त्वस्य ज्ञातपुरुषार्थसाधनस्य च तस्यैवाहं योग्या । विप्रस्य विद्येव ब्रह्मविद्येव ब्रह्मविद्या यथा ब्राह्मणस्यैवासाधारणं स्वं न्यायप्राप्तं तद्वत् । संन्यासे तस्यैवाधिकाराद्ब्रह्मविद्यायां ब्राह्मणस्यैवाधिकार इति भावः । अन्ये तु विप्रपदं त्रैवर्णिकपरम् त्रैवर्णिकस्यैव ब्रह्मविद्यायामधिकारः । अतएव धीरस्येति क्वचित्पाठ इत्याहुः ॥ १७ ॥ हे रावण मां रामेण समानय तदेव ते साधु । वने वासितया कामुक्या करेण्वा सार्धं गजाधिपमिव । उपमानोपमेयवाक्ययोर्वैषम्यं तु क्रुद्धविरहिण्युक्तित्वान्न दोषावहम् । करेणुं गजाधिपेनेति तु वक्तुमुचितम् ॥ १८ ॥ बुद्ध्यंतरं चोपदिशति मित्रमिति । स्थानं परीप्सता लंकां रिरक्षिषता आत्मनो वधं च घोरं सकलकुटुंबपीडाकरमनिच्छता त्वया पुरुषर्षभोऽसौ रामो मित्रं कर्तुमौपयिकं युक्तम् ॥ १९ ॥ कथमेवमपराद्धस्य मे तेन मैत्री तत्राह विदित इति । यतः सर्वधर्मज्ञ इति । शत्रुरपि शरणागतो रक्षणीय इति धर्मज्ञत्वेन शरणागतवत्सलत्वेन च विदितः प्रसिद्धः अतस्तेन मैत्री भवतु । तेन मैत्रीमाप्तकालेत्यर्थः ॥ २० ॥ अत

साधुरावणरामेणमांसमानयदुःखिताम् ॥ वनेवासितयासार्धंकरेण्वेवगजाधिपम् ॥ १८ ॥ मित्रमौपयिकंकर्तुंरामःस्थानंपरीप्सता ॥ वधंचानिच्छताघोरंत्वयासौपुरुषर्षभः॥ १९ ॥ विदितःसर्वधर्मज्ञःशरणागतवत्सलः ॥ तेनमैत्रीभवतुतेयदिजीवितुमिच्छसि ॥२०॥ प्रसादयस्वत्वंचैनंशरणागतवत्सलम् ॥ मांचास्मैप्रयतोभूत्वानिर्यातयितुमर्हसि ॥ २१ ॥ एवंहितेभवेत्स्वस्तिसंप्रदायरघूत्तमे ॥ अन्यथात्वंहिकुर्वाणःपरांप्राप्स्यसिचापदम् ॥ ॥ २२ ॥ वर्जयेद्वज्रमुत्सृष्टंवर्जयेदंतकश्चिरम् ॥ त्वद्विधंनतुसंक्रुद्धोलोकनाथःसराघवः ॥२३॥ रामस्यधनुषःशब्दंश्रोष्यसित्वंमहास्वनम् ॥ शतक्रतुविसृष्टस्यनिर्घोषमशनेरिव ॥ २४ ॥ इहशीघ्रंसुपर्वाणोज्वलितास्याइवोरगाः ॥ इषवोनिपतिष्यंतिरामलक्ष्मणलक्षिताः ॥२५॥ रक्षांसिनिहनिष्यंतःपुर्यामस्यांनसंशयः ॥ असंपातंकरिष्यंतिपतंतःकंकवाससः ॥ २६ ॥ राक्षसेंद्रमहासर्पान्सरामगरुडोमहान् ॥ उद्धरिष्यतिवेगेनवैनतेयइवोरगान् ॥ ॥ २७ ॥ अपनेष्यतिमांभर्तात्वत्तःशीघ्रमरिंदमः ॥ असुरेभ्यःश्रियंदीप्तांविष्णुस्त्रिभिरिवक्रमैः ॥ २८ ॥ जनस्थानेहतस्थानेनिहतेरक्षसांबले ॥ अशक्तेनत्वयारक्षःकृतमेतदसाधुवै ॥२९॥ आश्रमंतत्तयोःशून्यंप्रविश्यनरसिंहयोः ॥ गोचरंगतयोर्भ्रात्रोरपनीतात्वयाऽधम ॥३०॥ नहिगंधमुपाघ्रायरामलक्ष्मणयोस्त्वया ॥ शक्यंसंदर्शनेस्थातुंशुनाशार्दूलयोरिव ॥३१॥ तस्यतेविग्रहेताभ्यांयुगग्रहणमस्थिरम् ॥ वृत्रस्येवेंद्रबाहुभ्यांवाहोरेकस्यविग्रहे॥३२॥

एनं शरणागतवत्सलं त्वं प्रसादयस्व । मां चास्मै निर्यातयितुं दातुमर्हसि ॥ २१ ॥ संप्रदायेति मामिति शेषः ॥ २२ ॥ मत्प्रत्यर्पणं विना सर्वथा तव जीवनं नास्तीत्याह वर्जयेदिति । त्वद्विधमाणान्न नाशयेदित्यर्थः । राघवो न तु वर्जयेन्नाशयेदेव ॥ २३ ॥ महास्वनं महांतं नादं नादो हि कश्चिच्छब्दधर्मः प्रतिशब्दरूपः श्रोष्यति । यदि मां न ददासीति भावः ॥ २४ ॥ रामलक्ष्मणलक्षितांस्तन्नामांका इत्यर्थः ॥ ॥ २५ ॥ कंकवाससो बाणाः । असंपातमनवकाशम् । असंबाधमिति पाठे राक्षससंमर्दरहितम् ॥ २६ ॥ राक्षसेंद्ररूपान्महासर्पान् । उद्धरणशैघ्र्ये उपमा वैनतेय इवेति ॥ २७ ॥ न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघव इत्यस्योत्तरमाह अपनेष्यतीति ॥ २८ ॥ हतस्थाने हतास्पदे ॥ २९ ॥ नरसिंहयोः शून्यमाश्रमं प्रविश्य यत्कृतं तदसाधुवृत्ति किलेत्यर्थः गोचरं गतयोः । मायामृगवृत्तांतं ज्ञातुं गतयोः गोचरं वनप्रदेशं गतयोरिति वार्थः ॥ ३० ॥ यस्माद्रामलक्ष्मणयोः गंधमुपाघ्राय शार्दूलयोः संदर्शने शुनेव समक्षं स्थातुं त्वया न शक्यम् ॥ ३१ ॥ तस्य अधमबलस्याधमकृत्यस्य च ते

अथेपि ताभ्यां विग्रहे कलहे प्रसक्ते सति युगग्रहणं सहायसंपत्तिरस्थिरा जनस्थानबलसहायसंपत्तिवत् तस्मात्तेन युद्धे तव निग्रह एव । वृत्रसंबंधिन एकस्य बाहोर्दोर्भ्यामिंद्रबाहुभ्यां युद्धे वृत्रबाहुपराजयवत् वज्रच्छिन्नैकबाहुर्वृत्रो बहुकालमिंद्रेण सहैकबाहुना युद्धं कृतवान् पराजितश्चेति भागवते प्रसिद्धम् ॥ ३२ ॥ मे नाथः स राम इत्यन्वयः ॥ ३३ ॥ कुबेरस्यालयं कैलासम् । कैलासवरुणसभे ऊर्ध्वाधस्थसकललोकोपलक्षणम् । कालहतस्त्वमशनेः संबंधान्महाद्रुम इव दाशरथेः संबंधाद्विमोक्षसे प्राणानिति शेषः । विमोक्ष्यसे इति पांक्तः पाठ इति कतकः ॥३४॥ वैंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकविंशः सर्गः ॥ २१ ॥ प्रियदर्शनां सीतां प्रति अनुनयोक्तिं कृत्वा ततो विप्रियमाहेति संबंधः ॥ १ ॥ लोके स्त्रीणां सांत्वयिता पुमान् यथा यथा सांत्वयति तथा तथा तत्तत्सांत्वानुसारेण स स्त्रीणां वश्य इष्टो भवति । त्वयि तु यथाहं प्रियं वक्ताऽभूवं तथा तथा त्वया परिभूत एवास्मीति शेषः ॥ २ ॥ एवं च त्वद्विषये न्यायप्राप्तमुत्पन्नं क्रोधं क्रोधकार्यं वधं त्वद्विषये

क्षिप्रंतवसनाथोमेरामःसौमित्रिणासह ॥ तोयमल्पमिवादित्यःप्रणानादास्यतेशरैः ॥ ३३ ॥ गिरिंकुबेरस्यगतोथवालयंसभांगतोवावरुणस्यराज्ञः ॥ असंशयंदाशरथेर्विमोक्ष्यसेमहाद्रुमःकालहतोऽशनेरिव ॥ ३४ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मी० आदि० सुंदरकांडे एकविंशः सर्गः ॥ २१ ॥ सीतायावचनंश्रुत्वापरुषंराक्षसेश्वरः ॥ प्रत्युवाचततःसीतांविप्रियंप्रियदर्शनाम् ॥ १ ॥ यथायथासांत्वयितावश्यःस्त्रीणांतथातथा ॥ यथायथाप्रियंवक्तापरिभूतस्तथातथा ॥ २ ॥ सन्नियच्छतिमेक्रोधंत्वयिकामःसमुत्थितः ॥ द्रवतोमार्गमासाद्यहयानिवसुसारथिः ॥ ३ ॥ वामःकामोमनुष्याणांयस्मिन्किलनिवध्यते ॥ जनेतस्मिंस्त्वनुक्रोशःस्नेहश्चकिलजायते ॥ ४ ॥ एतस्मात्कारणान्नत्वांघातयामिवरानने ॥ वधार्हामवमानार्हांमिथ्याप्रव्रजनेरताम् ॥ ५ ॥ परुषाणिहिवाक्यानियानियानिब्रवीषिमाम् ॥ तेषुतेषुवधोयुक्तस्तवमैथिलिदारुणः ॥ ६ ॥ एवमुक्त्वातुवैदेहींरावणोराक्षसाधिपः ॥ क्रोधसंरंभसंयुक्तःसीतामुत्तरमब्रवीत् ॥ ७ ॥ द्वौमासौरक्षितव्यौमेयोऽवधिस्तेमयाकृतः ॥ ततःशयनमारोहममत्वंवरवर्णिनि ॥ ८ ॥ द्वाभ्यामूर्ध्वंतुमासाभ्यांभर्तारंमामनिच्छतीम् ॥ ममत्वांप्रातराशार्थेसूदाश्छेत्स्यंतिखंडशः ॥ ९ ॥ तांभर्त्स्यमानांसंप्रेक्ष्यराक्षसेंद्रेणजानकीम् ॥ देवगंधर्वकन्यास्ताविषेदुर्विकृतेक्षणाः ॥ १० ॥ ओष्ठप्रकारैरपरानेत्रैर्वक्त्रैस्तथापराः ॥ सीतामाश्वासयामासुस्तर्जितांतेनरक्षसा ॥ ११ ॥

समुत्थितः कामो नियच्छति निरुणद्धि । तत्र दृष्टांतः द्रवत इति । अमार्गमासाद्य द्रवतो धावतो हयान्सुसारथिरिव ॥ ३ ॥ ननु विपरीतं क्रोध एव किं न कामं रुणद्धि इत्यत्र कामस्यौत्कंठ्यादित्याह वाम इति । क्रूर इत्यर्थः । सव्ये क्रौर्ये सुंदरे च वाम इति कोशः । कामक्रौर्यमेवाह यस्मिन्निति । परमक्रोधविषयेपि यत्र जने कामो निबद्ध्यते तत्र जने अनुक्रोशो दयास्नेहश्च जायते तस्मात्क्रोधात्काम उत्कटक्रूरत्ववानित्यर्थः ॥४॥ एतस्मादिति उत्कटकामविषयत्वादित्यर्थः । मिथ्या प्रव्रजने निष्प्रयोजनमेव भोगत्यागरूपप्रव्रजनमार्गे रताम् । मिथ्या प्रव्रजिते इति पाठे रामे रतामित्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ अवधिः मासान् द्वादश भामिनीत्यारण्यकांडोक्तस्तन्मध्ये द्वौ मासाववशिष्टौ तौ मया रक्षणीयौ । यद्यपि वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगमेति सीता वक्ष्यति तथाप्यल्पांतरत्वान्मासद्वयरक्षणोक्तिरविरुद्धा ॥ ८ ॥ प्रातराशः प्रातःकालिकं भोजनम् ॥ ९ ॥ देवगंधर्वकन्याः सीतावदेव बलादाहृता इत्यर्थः ॥ १० ॥ ओष्ठप्रकारैः वराकोयं किं करिष्यति न भेतव्यमित्येवमोष्ठाग्रोत्क्षेपणैः नेत्रैर्द्राङ्निमीलनोन्मीलनवद्भिः वक्त्रैः मुखचलनैः सीतामाश्वासयामासुः ॥ ११ ॥

आत्महितं रावणात्मनो हितम् । वृत्तेन सदाचारेण शौटीर्येण पतिशौर्येण च संजातगर्वम् ॥ १२ ॥ अस्मिन्नगरे ते तव निःश्रेयसि अभ्युदयसंपादने स्थितो जनो नूनं नकश्चिदस्ति यस्मात्त्वामस्माद्विग
र्हितात्कर्मणो न कोपि निवारयति ॥ १३ ॥ मनसाऽपि कः प्रार्थयेत् किं पुनर्वचसेति भावः १४ ॥ यत्पापं मम शयनमारोहेत्यादिरूपम् क गतो मोक्ष्यसे । तत्साध्यसमूलनाशस्य त्वया परिहारो शक्य
इत्यर्थः ॥ १५ ॥ दृप्तो मातंगः शशश्च यदा वने दैवात्सहितौ युयुत्सू भवतः तयोश्च शशो यथाऽतिक्षुद्रस्तथा रामेण संयुगे त्वं शशवत्क्षुद्रः रामो गजवदित्यर्थः ॥ १६ ॥ सत्वं रामादतिक्षुद्रः क्षिपन् निंदन्
इह तदसन्निधौ यावन्नोपगच्छसि तावदिह निंदन्न लज्जसे इत्यन्वयः ॥ १७॥१८॥१९॥ ननु न पतिते न शीर्यतीत्युक्तिर्यदि पातिव्रत्यमूला तर्हि तथा निग्रहं कस्मान्न करोषीत्यत्राह असंदेशादिति । शापविषये

ताभिराश्वासितासीतारावणंराक्षसाधिपम् ॥ उवाचात्महितंवाक्यंवृत्तशौटीर्यगर्वितम् ॥ १२ ॥ नूनंनतेजनःकश्चिदस्मिन्निःश्रेयसिस्थितः ॥
निवारयतियोनत्वांकर्मणोस्माद्विगर्हितात् ॥ १३ ॥ मांहिधर्मात्मनःपत्नींशचीमिवशचीपतेः ॥ त्वदन्यस्त्रिषुलोकेषुप्रार्थयेन्मनसापिकः ॥ १४ ॥
राक्षसाधमरामस्यभार्याममिततेजसः ॥ उक्तवानसियत्पापंक्वगतस्तस्यमोक्ष्यसे ॥ १५ ॥ यथादृप्तश्चमातंगःशशश्चसहितौवने ॥ तथाद्विरदव
द्रामस्त्वंनीचशशवत्स्मृतः ॥ १६ ॥ सत्वमिक्ष्वाकुनाथंवैक्षिपन्निहनलज्जसे ॥ चक्षुषोविषयेतस्यनयावदुपगच्छसि ॥ १७ ॥ इमेतेनयनेक्रूरेविकृते
कृष्णपिंगले ॥ क्षितौनपतितेकस्मान्मामनार्यनिरीक्षतः ॥ १८ ॥ तस्यधर्मात्मनःपत्नींस्नुषांदशरथस्यच ॥ कथंव्याहरतोमांतेनजिह्वापापशी
र्यति ॥ १९ ॥ असंदेशात्तुरामस्यतपसश्चानुपालनात् ॥ नत्वांकुर्मिदशग्रीवभस्मभस्मार्हतेजसा ॥ २० ॥ नापहर्तुमहंशक्यातस्यरामस्यधीमतः ॥
विधिस्तववधार्थायविहितोनात्रसंशयः ॥ २१ ॥ शूरेणधनदभ्रात्राबलैःसमुदितेनच ॥ अपोह्यरामंकस्माच्चिद्दारचौर्यंत्वयाकृतम् ॥ २२ ॥ सीता
यास्तद्वचनंश्रुत्वारावणोराक्षसाधिपः ॥ विवृत्यनयनेक्रूरेजानकीमन्ववैक्षत ॥ २३ ॥ नीलजीमूतसंकाशोमहाभुजशिरोधरः ॥ सिंहसत्त्वगतिःश्रीमान्दी
प्तजिह्वोग्रलोचनः ॥ २४ ॥ चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः ॥ रक्तमाल्यांबरधरस्तप्तांगदविभूषणः ॥ २५ ॥ श्रोणीसूत्रेणमहतामेचकेनसुसं
वृतः ॥ अमृतोत्पादनेनद्धोभुजंगेनेवमंदरः ॥ २६ ॥

रामाज्ञाभावात् शापसामर्थ्येपि तपोनुपालनाद्धेतोरपि भस्मार्हेण भस्मजनकशक्तिमता तेजसा स्वीयपातिव्रत्यतेजसा न भस्म कुर्मि करोमि ॥ २० ॥ अहं तस्य रामस्य भार्या त्वयाऽपहर्तुं न शक्याऽथापि अयं
विधिरपहरणरूपविधिस्तव वधार्थाय दैवेन विहितोत्र न संशयः ॥ २१ ॥ शूरेणेत्याद्युपहासोक्तिः । अपोह्य मारीचमाययाऽपसार्य कस्माद्दारचौर्यं त्वया कृतम् । तस्मादत्यंतमशूरस्त्वमित्युपहासः । चिदिति
पादपूरणे ॥ २२ ॥ २३ ॥ सिंहसत्त्वगतिः सिंहवत्सत्त्वं पराक्रमो गतिश्च यस्य सः । सिंहसंहनन इति पाठांतरम् ॥ २४ ॥ चलमग्रं यस्य तादृशमुकुटवान् ॥ २५ ॥ श्रोणीसूत्रेण कटिसूत्रेण रशनयेत्यर्थः ।

इंद्रनीलनद्धमुखारक्तमणियुक्तत्वाच्च तस्य मेचकत्वम् । भुजंगो वासुकिः स हि नीलवर्ण इत्याहुः ॥ २६ ॥ ताभ्यां प्रसिद्धपराक्रमाभ्याम् । भुजद्वयमेव सर्वदा युद्धादौ स्वेच्छया दशभुजत्वमिति द्विवचनम् । वामदक्षेषु भुजत्वजात्यैकवचनमित्यन्ये ॥ २७ ॥ २८ ॥ वसंत इव भूषितोपि श्मशानचैत्यप्रतिमः तदुभयवत्परिहार्यदर्शनः । चैत्यं बुद्धायतनम् अतएव भयंकरः ॥ २९ ॥ ३० ॥ अनयेन अनीत्या युक्तम् अर्थहीनं प्रयोजनहीनं व्रतं रामं वा अनुव्रते इति संबोधनम् ईदृशीं त्वां नाशयामि । सूर्य उदितः संध्यां तत्कालिकमंधकारमिव ॥ ३१ ॥ ३२ ॥ एकाक्षीति द्विरुपादानं व्यक्तिभेदात् ॥ ३३ ॥

ताभ्यांसपरिपूर्णाभ्यांभुजाभ्यांराक्षसेश्वरः ॥ शुशुभेऽचलसंकाशःशृंगाभ्यामिवमंदरः ॥ २७ ॥ तरुणादित्यवर्णाभ्यांकुंडलाभ्यांविभूषितः ॥ रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २८ ॥ सकल्पवृक्षप्रतिमोवसंतइवमूर्तिमान् ॥ श्मशानचैत्यप्रतिमोभूषितोपिभयंकरः ॥ २९ ॥ अवेक्षमाणोवैदेहींकोपसंरक्तलोचनः ॥ उवाचरावणःसीतांभुजंगइवनिःश्वसन् ॥ ३० ॥ अनयेनाभिसंपन्नमर्थहीनमनुव्रते ॥ नाशयाम्यहमद्यत्वांसूर्यःसंध्यामिवौजसा ॥ ३१ ॥ इत्युक्त्वामैथिलींराजारावणःशत्रुरावणः ॥ संददर्शततःसर्वाराक्षसीर्घोरदर्शनाः ॥ ३२ ॥ एकाक्षीमेककर्णींचकर्णप्रावरणांतथा ॥ गोकर्णींहस्तिकर्णींचलंबकर्णीमकर्णिकाम् ॥ ३३ ॥ हस्तिपद्यश्वपद्यौचगोपदींपादचूलिकाम् ॥ एकाक्षीमेकपादींचपृथुपादीमपादिकाम् ॥ ३४ ॥ अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् ॥ अतिमात्रास्यनेत्रांचदीर्घजिह्वानखामपि ॥ ३५ ॥ अनासिकांसिंहमुखींगोमुखींसूकरीमुखीम् ॥ यथामद्वशगासीताक्षिप्रंभवतिजानकी ॥ ३६ ॥ तथाकुरुतराक्षस्यःसर्वाःक्षिप्रंसमेत्यवा ॥ प्रतिलोमानुलोमैश्चसामदानादिभेदनैः ॥ ३७ ॥ आवर्जयतवैदेहींदंडस्योद्यमनेनच ॥ इतिप्रतिसमादिश्यराक्षसेंद्रःपुनःपुनः ॥ ३८ ॥ काममन्युपरीतात्माजानकींप्रतिगर्जत ॥ उपगम्यततःक्षिप्रंराक्षसीधान्यमालिनी ॥ ३९ ॥ परिष्वज्यदशग्रीवमिदंवचनमब्रवीत् ॥ मयाक्रीडमहाराजसीतयाकिंतवानया ॥ ४० ॥ विवर्णयाकृपणयामानुष्याराक्षसेश्वर ॥ नूनमस्यांमहाराजनदेवाभोगसत्तमान् ॥ ४१ ॥ विदधत्यमरश्रेष्ठास्तवबाहुबलार्जितान् ॥ अकामांकामयानस्यशरीरमुपतप्यते ॥ ४२ ॥ इच्छन्तींकामयानस्यप्रीतिर्भवतिशोभना ॥ एवमुक्तस्तुराक्षस्यासमुत्क्षिप्तस्ततोबली ॥ प्रहसन्मेघसंकाशोराक्षसःसन्यवर्तत ॥ ४३ ॥ प्रस्थितःसदशग्रीवःकंपयन्निवमेदिनीम् ॥ ज्वलद्भास्करसंकाशंप्रविवेशनिवेशनम् ॥ ४४ ॥

॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ भो राक्षस्यो यूयं प्रत्येकं तथा कुरुत । सर्वा मिलित्वा वा तथा कुरुत । प्रतिलोमानुलोमैः प्रतिकूलानुकूलव्यवहारैः ॥ ३७ ॥ आवर्जयत आनुकूल्यं संपादयत ॥ ३८ ॥ प्रतिगर्जत प्रत्यगर्जत् । उपगम्य समीपमागम्य । ततः अतिसंतर्जनं दृष्ट्वा सीतायां दययेति शेषः ॥ ३९ ॥ परिष्वज्य परिष्वंगेन महाराद्विप्रवृत्तिं निरुध्य ॥ ४० ॥ अमरश्रेष्ठाः इंद्रादयो भोगसत्तमान्न विदधति नानुमन्यंते दैवहतेयमदृष्टहीनेति भावः ॥ ४१ ॥ ४२ ॥ समुत्क्षिप्तः अन्यतोपसारितः प्रहसन् धान्यमालिन्या उचितव्यवहारदर्शनेन अवशमात्रस्त्रीमहारापकीर्तिपरिहारेण च प्रसन्न इत्यर्थः ॥ ४३ ॥ ४४ ॥

प्रविशुः प्रविविशुः ॥४५॥४६॥ उच्चावैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये श्रीरामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥ शत्रून् रावयति हाहाशब्दं कारयति स शत्रुरावणः ॥१॥२॥ ततः परं रावणगमनादनंतरं लोकोक्तौ वा परमिति॥ ३॥भार्यात्वं भार्याभावं न बहु मन्यसे मोहादिति शेषः॥४॥ततः सर्वसाधारणैतद्वाक्यप्रयोगोत्तरमेकजटा विशिष्याब्रवीत् । करतलोदरीं

देवगंधर्वकन्याश्चनागकन्याश्चतास्ततः ॥ परिवार्यदशग्रीवंप्रविशुस्तागृहोत्तमम् ॥ ४५ ॥ समैथिलींधर्मपरामवस्थितांप्रवेपमानांपरिभर्त्स्यरावणः॥ विहायसीतांमदनेनमोहितंःस्वमेववेश्मप्रविवेशरावणः ॥ ४६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडेद्वाविंशः सर्गः ॥ २२ ॥ इत्युक्त्वामैथिलींराजारावणःशत्रुरावणः ॥ संदिश्यचततःसर्वाराक्षसीर्निर्जगामह ॥ १ ॥ निष्क्रांतेराक्षसेंद्रेतुपुनरंतःपुरंगते ॥ राक्षस्योभीमरूपास्ताः सीतांसमभिदुद्रुवुः ॥ २ ॥ ततःसीतामुपागम्यराक्षस्यःक्रोधमूर्च्छिताः ॥ परंपरुषयावाचावैदेहीमिदमब्रुवन् ॥ ३ ॥ पौलस्त्यस्यवरिष्ठस्यरावणस्य महात्मनः ॥ दशग्रीवस्यभार्यात्वंसीतेनबहुमन्यसे ॥ ४ ॥ ततस्त्वेकजटानामराक्षसीवाक्यमब्रवीत् ॥ आमंत्र्यक्रोधताम्राक्षीसीतांकरतलोदरीम् ॥ ॥ ५ ॥ प्रजापतीनांषण्णांतुचतुर्थोऽयंप्रजापतिः ॥ मानसोब्रह्मणःपुत्रःपुलस्त्यइतिविश्रुतः ॥ ६ ॥ पुलस्त्यस्यतुतेजस्वीमहर्षिर्मानसःसुतः ॥ नाम्नासविश्रवानामप्रजापतिसमप्रभः ॥७॥ तस्यपुत्रोविशालाक्षिरावणःशत्रुरावणः॥ तस्यत्वंराक्षसेंद्रस्यभार्याभवितुमर्हसि ॥ ८॥ मयोक्तंचारुसर्वांगिवाक्यंकिंनानुमन्यसे ॥ ततोहरिजटानामराक्षसीवाक्यमब्रवीत् ॥ ९ ॥ विवृत्त्यनयनेकोपान्मार्जारसदृशेक्षणा ॥ येनदेवास्त्रयस्त्रिंशद्देवराजश्च निर्जितः ॥ १० ॥ तस्यत्वंराक्षसेंद्रस्यभार्याभवितुमर्हसि ॥ वीर्योत्सिक्तस्यशूरस्यसंग्रामेष्वनिवर्तिनः ॥ बलिनोवीर्ययुक्तस्यभार्यात्वंकिंनलिप्ससे ॥ ॥ ११ ॥ प्रियांबहुमतांभार्यांत्यक्त्वाराजामहाबलः ॥ सर्वासांचमहाभागांत्वामुपैष्यतिरावणः ॥ १२ ॥ समृद्धंस्त्रीसहस्रेणनानारत्नोपशोभितम् ॥ अंतःपुरंतदुत्सृज्यत्वामुपैष्यतिरावणः ॥ १३ ॥ अन्यातुविकटानामराक्षसीवाक्यमब्रवीत् ॥ असकृद्भीमवीर्येणनागागंधर्वदानवाः ॥ निर्जिताःसमरे येनसतेपार्श्वमुपागतः ॥ १४ ॥ तस्यसर्वसमृद्धस्यरावणस्यमहात्मनः ॥ किमर्थंराक्षसेंद्रस्यभार्यात्वंनेच्छसेऽधमे ॥ १५ ॥

कृशोदरीमित्यर्थः ॥ ५ ॥ मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुरित्यनुक्रांतषट्प्रजापतीनां चतुर्थः पुलस्त्यः ॥ ६ ॥ ७ ॥ तस्य पुत्र इत्यनेन कुलीनत्वं सूचितम् ॥ ८ ॥ किं किमर्थम् । ततः कुलनिरूपणानंतरम् ॥९॥ येनेत्यनेन पराक्रमातिशयसूचनम् ॥१०॥ न लिप्ससे नेच्छसीत्यर्थः ॥११॥ सर्वासां मध्ये बहुमतां महाभागाम् अतिभाग्यवतीं मंदोदरीमपि त्यक्त्वा त्वामुपैष्यति ॥१२॥१३॥१४॥१५॥

यस्य भीतः सूर्यो न तपतीत्यर्थः । न तिष्ठसे वशे इति शेषः ॥ १६ ॥ यदेच्छति तदा सुस्त्रुवुरित्यर्थः ॥ १७ ॥ भार्यार्थे भार्यात्वनिमित्तम् ॥ १८ ॥ साधु कथितं साधु गृहाण । न भविष्यसि मारयाम इत्यर्थः ॥ १९ ॥ धीर्यमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे त्रयोविंशः सर्गः ॥ २३ ॥ तत इति ॥ १ ॥ २ ॥ प्रत्याहर निवर्तय । एवं त्वदभीष्टं रामसंगमरूपं वस्तु जातु कदाचिदप्यतःपरं न भविष्यति । अत्र रामागमनस्य तव वा तत्र गमनस्य प्रसक्त्यभावादिति भावः । यद्वातःपरं जातु कदाचिदप्येवं भावश्चेद्भवती न भविष्यति

ततस्तांदुर्मुखीनामराक्षसीवाक्यमब्रवीत् ॥ यस्यसूर्योनतपतिभीतोयस्यसमारुतः ॥ नवातिस्मायतापांगिकिंत्वंतस्यनतिष्ठसे ॥ १६ ॥ पुष्पवृष्टिंचतरवोमुमुचुर्यस्यवैभयात् ॥ शैलाःसुस्रुवुःपानीयंजलदाश्चयदेच्छति ॥ १७ ॥ तस्यनैर्ऋतराजस्यराजराजस्यभामिनी ॥ किंत्वंनकुरुषेबुद्धिं भार्यार्थेरावणस्यहि ॥ १८ ॥ साधुतेतत्त्वतोदेविकथितंसाधुभामिनि ॥ गृहाणसुस्मितेवाक्यमन्यथानभविष्यसि ॥ १९ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआदिकाव्येसुंदरकांडेत्रयोविंशःसर्गः ॥ २३ ॥ ततःसीतांसमस्तास्ताराक्षस्योविकृताननाः ॥ परुषंपरुषानर्हामूचुस्तद्वाक्यमप्रियम् ॥ ॥ १ ॥ किंत्वमंतःपुरेसीतेसर्वभूतमनोरमम् ॥ महार्हशयनोपेतेनवासमनुमन्यसे ॥ २ ॥ मानुषेमानुषस्यैवभार्यात्वंबहुमन्यसे ॥ प्रत्याहरमनोरामान्नैवंजातुभविष्यति ॥ ३ ॥ त्रैलोक्यवसुभोक्तारंरावणंराक्षसेश्वरम् ॥ भर्तारमुपसंगम्यविहरस्वयथासुखम् ॥ ४ ॥ मानुषीमानुषंतंतुराममिच्छसिशोभने ॥ राज्याद्भ्रष्टमसिद्धार्थंविक्लवंतमनिंदिते ॥ ५ ॥ राक्षसीनांवचःश्रुत्वासीतापद्मनिभेक्षणा ॥ नेत्राभ्यामश्रुपूर्णाभ्यामिदंवचनमब्रवीत् ॥६॥ यदिदंलोकविद्विष्टमुदाहरतसंगताः ॥ नैतन्मनसिवाक्यंमेकिल्बिषंप्रातितिष्ठति ॥ ७ ॥ नमानुषीराक्षसस्यभार्याभवितुमर्हति ॥ कामंखादतमांसर्वा नकरिष्यामिवोवचः ॥ ८ ॥ दीनोवाराज्यहीनोवायोमेभर्त्तासमेगुरुः ॥ तंनित्यमनुरक्तास्मियथासूर्यंसुवर्चला ॥ ९ ॥ यथाशचीमहाभागाशक्रंसमुपतिष्ठति ॥ अरुंधतीवसिष्ठंचरोहिणीशशिनंयथा ॥ १० ॥ लोपामुद्रायथागस्त्यंसुकन्याच्यवनंयथा ॥ सावित्रीसत्यवंतंचकपिलंश्रीमतीयथा ॥ ॥ ११ ॥ सौदासंमदयंतीवकेशिनीसगरंयथा ॥ नैषधंदमयंतीवभैमीपतिमनुव्रता ॥ १२ ॥ तथाहमिक्ष्वाकुवरंरामंपतिमनुव्रता ॥ सीतायावचनंश्रुत्वाराक्षस्यःक्रोधमूर्च्छिताः ॥ भर्त्सयंतिस्मपरुषैर्वाक्यैरावणचोदिताः ॥ १३ ॥ अवलीनःसनिर्वाक्योहनूमाञ्छिंशपाद्रुमे ॥ सीतांसंतर्जयंतीस्ताराक्षसीरशृणोत्कपिः ॥ १४ ॥

मारयाम इत्यर्थः ॥३॥४॥५॥ नेत्राभ्यामुपलक्षितेति शेषः । इदं वचनं युष्मद्वचोऽनंगीकारे मारणं चेच्छीघ्रं तदेव क्रियतामित्यर्थः । कं वक्ष्यमाणम् ॥६॥ लोकविद्विष्टं लोकविद्विष्टपरपुरुषसंगार्थकम् । संगताः समेताः किल्बिषं किल्बिषजनकार्यकम् ॥७॥८॥ गुरुरुपास्यदेवता । सुवर्चला सूर्यपत्नी सूर्याभिमुखपुष्पवती काचिदोषधिरित्यन्यः ॥९॥ अतिदुःखसमयेपि दृढव्रतत्वद्योतनायानेकसाध्वीनामुपन्यासो दृष्टांतविधयेत्याहुः ॥१०॥ ११ ॥ भैमी दमयंती नैषधं पतिं यथानुव्रता ॥ १२ ॥ १३ ॥ अवलीनश्छन्नः । निर्वाक्यो मौनी शिंशपाद्रुमे स्थित इति शेषः । सीतां तर्जयंतीः राक्षसीस्तद्वाक्यान्यशृणोत ॥ १४ ॥

वेपमानां तामभिक्रम्य तत्समीपमागत्य संरब्धाः क्रुद्धास्ता राक्षस्यो दशनच्छदान्लिलिहुः लेहनं कुर्वंतिस्म ॥१५॥ परश्वधान्गृहीत्वोचुश्च नेयं रावणं भर्तारमर्हति अपि त्वस्माकं भक्षणमेवार्हतीति भावः॥१६॥ भर्त्स्यमाना एवं प्रकारेण पीड्यमानाभूदिति शेषः । तां शिंशपां हनूमदधिष्ठितशिंशपाम् । अत्यंतं तन्मूलसमीपमित्यर्थः ॥ १७ ॥ ततस्तन्मूलगमनानंतरम् ॥ १८ ॥ १९ ॥ निर्णतोदरी अतिनिम्नोदरी॥२०॥ अतिक्रांतं अतिमात्राचरणं श्रीरपि सैव ज्यायसीति लोकोक्तेरिति भावः । व्यसनं दुःखम् ॥२१॥ मानुषो मनुष्यजात्युचितो विधिरनुष्ठानं ते त्वयाकृतम् । एतावदेवालमित्यर्थः ॥२२॥ सुरेशं वासवमिव ॥२३॥

तामभिक्रम्यसंरब्धावेपमानांसमंततः ॥ भृशंसंलिलिहुर्दीप्तान्प्रलंबान्दशनच्छदान् ॥ १५ ॥ ऊचुश्चपरमक्रुद्धाःप्रगृह्याशुपरश्वधान् ॥ नेयमर्हतिभर्ता रंरावणंराक्षसाधिपम् ॥ १६ ॥ साभर्त्स्यमानाभीमाभीराक्षसीभिर्वरांगना ॥ सावाष्पमपमार्जंतीशिंशपांतामुपागमत् ॥ १७ ॥ ततस्तांशिंशपां सीताराक्षसीभिःसमावृता ॥ अभिगम्यविशालाक्षीतस्थौशोकपरिप्लुता ॥ १८ ॥ तांकृशांदीनवदनांमलिनांबरवासिनीम् ॥ भर्त्सयांचक्रिरेभी माराक्षस्यस्ताःसमंततः ॥ १९ ॥ ततस्तुविनतानामराक्षसीभीमदर्शना ॥ अब्रवीत्कुपिताकाराकरालानिर्णतोदरी ॥ २० ॥ सीतेपर्याप्तमे तावद्भर्तुःस्नेहःप्रदर्शितः ॥ सर्वत्रातिकृतंभद्रेव्यसनायोपकल्पते ॥ २१ ॥ परितुष्टास्मिभद्रंतेमानुषस्तेकृतोविधिः ॥ ममापितुवचःपथ्यंब्रुवंत्याः कुरुमैथिलि ॥ २२ ॥ रावणंभजभर्तारंभर्तारंसर्वरक्षसाम् ॥ विक्रांतमापतंतंचसुरेशमिववासवम् ॥२३॥ दक्षिणंत्यागशीलंचसर्वस्यप्रियवादिनम् ॥ मानुषंकृपणंरामंत्यक्त्वारावणमाश्रय ॥ २४ ॥ दिव्यांगरागावैदेहिदिव्याभरणभूषिता ॥ अद्यप्रभृतिलोकानांसर्वेषामीश्वरीभव ॥ २५ ॥ अग्नेःस्वा हायथादेवीशचीवेंद्रस्यशोभने ॥ किंतेरामेणवैदेहिकृपणेनगतायुषा ॥ २६ ॥ एतदुक्तंचमेवाक्यंयदित्वंनकरिष्यसि ॥ अस्मिन्मुहूर्तेसर्वास्त्वांभक्ष यिष्यामहेवयम् ॥ २७ ॥ अन्यातुविकटानामलंबमानपयोधरा ॥ अब्रवीत्कुपितासीतांमुष्टिमुद्यम्यतर्जती ॥ २८ ॥ बहून्यप्रतिरूपाणिवचना निसुदुर्मते ॥ अनुक्रोशान्मृदुत्वाच्चसोढानितवमैथिलि ॥२९॥ नचनःकुरुषेवाक्यंहितंकालपुरस्कृतम् ॥ आनीतासिसमुद्रस्यपारमन्यैर्दुरासदम् ॥ ॥३०॥ रावणांतःपुरेघोरेप्रविष्टाचासिमैथिलि ॥ रावणस्यगृहेरुद्धाअस्माभिस्त्वभिरक्षिता ॥ ३१ ॥ नत्वांशक्तःपरित्रातुमपिसाक्षात्पुरंदरः ॥ कुरुष्व हितवादिन्यावचनंममर्मैथिलि ॥ ३२ ॥ अलमश्रुनिपातेनत्यजशोकमनर्थकम् ॥ भजप्रीतिंप्रहर्षंचत्यजंतीनित्यदैन्यताम् ॥ ३३ ॥ सीतेराक्षसराजे नपरिक्रीडयथासुखम् ॥ जानीमहेयथाभीरुस्त्रीणांयौवनमध्रुवम् ॥ ३४ ॥

कृपणं दीनम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ तर्जती तर्जयंती ॥ २८ ॥ अनुक्रोशो दया । मृदुत्वमल्पप्रमाणत्वम् ॥ २९ ॥ कालपुरस्कृतं कालोचितं नो वाक्यं न च कुरुषे नैत्तत्ते हितमिति शेषः । तदेवोपपादयति आनीतासीति ॥३०॥ गृहे रुद्धा चासि अस्माभिरभिरक्षिता रक्षितनिरोधा ॥ ३१ ॥ ३२ ॥ प्रीतिं स्नेहं रावणे प्रहर्षमानंदमा नित्यदैन्यतां निरंतरदीनत्वम् । स्वार्थे ष्यञ् ॥ ३३ ॥ ३४ ॥

व्यतिक्रामेत् यौवनमिति शेषः । उद्यानानि चरेत्युत्तरस्थेनान्वयः । तेषु क्रीडेत्यर्थः ॥३५॥३६॥ उत्पाटनं स्थानादपकर्षणम्॥३७॥यदीत्यर्धं पूर्वान्वयि ॥३८॥३९॥ गर्भिण्याः गर्भकृत इच्छाविशेषो दौर्हृदम् । यकृत् दक्षिणभागस्थः । कालखंडाख्यो मांसविशेषः । स्त्रायुः स्त्रियां कालखंडयकृती च समे उभे इति कोशः । प्लीहं हृदयवामभागस्थो गुल्माख्यो मांसविशेषः । यद्यपि तद्वाचकः प्लीहा इत्याकारांतस्तथाप्यदं तत्वमार्षम् । महत्कोडं भुजांतरम् । अथोत्पीडमिति पाठे उत्पीडं हृदयोपरि स्थितमांसबंधनम् । हृदयं नाडीबंधनसहितं मुकुलाकारं हृत्पुंडरीकाख्यम् ॥ ४० ॥ ४१ ॥ मवसावाक्यं विशस्येमामिति । मध्ये श्लोकद्वयं प्रक्षिप्तमिति कतकः । पिंडकान्मांसखंडान् । विवादः अनया सहेति शेषः ॥ ४२ ॥ शूर्पणखेयमन्या ॥ ४३ ॥ अजामुखसदृशमुखवत्या मवसयेत्यर्थः ॥ ४४ ॥ निकुंभिला नाम लंकायाः पश्चिमभा

यावन्नतेव्यतिक्रामेत्तावत्सुखमवाप्नुहि ॥ उद्यानानिचरम्याणिपर्वतोपवनानिच ॥ ३५ ॥ सहराक्षसराजेनचरत्वंमदिरेक्षणे ॥ स्त्रीसहस्राणितेदेविवशे स्थास्यंतिसुंदरि ॥ ३६ ॥ रावणंभजभर्तारंभर्तारंसर्वरक्षसाम् ॥ उत्पाट्यवातेहृदयंभक्षयिष्यामिमैथिलि ॥ ३७ ॥ यदिमेव्याहृतंवाक्यंनयथावत्क रिष्यसि ॥ ततश्चंडोदरीनामराक्षसीक्रूरदर्शना ॥ ३८ ॥ भ्रामयंतीमहच्छूलमिदंवचनमब्रवीत् ॥ इमांहरिणशावाक्षींत्रासोत्कंपपयोधराम् ॥ ३९ ॥ रावणेनहृतांदृष्ट्वादौर्हृदोमेमहानयम् ॥ यकृत्प्लीहंमहत्क्रोडंहृदयंचसबंधनम् ॥ ४० ॥ गात्राण्यपितथाशीर्षंखादेयमितिमेमतिः ॥ ततस्तुप्रघसा नामराक्षसीवाक्यमब्रवीत् ॥ ४१ ॥ "कंठमस्यानृशंसायाःपीडयामःकिमास्यते ॥ निवेद्यतांततोराज्ञेमानुषीसामृतेतिच ॥ नात्रकश्चिच्चसंदेहःखादते तिसवक्ष्यति ॥ ततस्त्वजामुखीनामराक्षसीवाक्यमब्रवीत् " विशस्येमांततःसर्वान्समान्कुरुतपिंडकान् ॥ विभजामततःसर्वाविवादोमेनरो चते ॥४२॥ पेयमानीयतांक्षिप्रंमाल्यंचविविधंबहु ॥ ततःशूर्पणखानामराक्षसीवाक्यमब्रवीत् ॥४३॥ अजामुख्यायदुक्तंवैतदेवममरोचते ॥ सुराचानी यतांक्षिप्रंसर्वशोकविनाशिनी ॥ ४४ ॥ मानुषंमांसमासाद्यनृत्यामोऽथनिकुंभिलाम् ॥ एवंनिर्भर्त्स्यमानासासीतासुरसुतोपमा ॥ राक्षसीभिर्वि रूपाभिर्धैर्यमुत्सृज्यरोदिति ॥ ४५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुर्विंशःसर्गः ॥ २४ ॥ अथतासांवदंतीनांपरुषं दारुणंबहु ॥ राक्षसीनामसौम्यानांरुरोदजनकात्मजा ॥ १ ॥ एवमुक्तातुवैदेहीराक्षसीभिर्मनस्विनी ॥ उवाचपरमत्रस्ताबाष्पगद्गदयागिरा ॥ २ ॥ नमानुषीराक्षसस्यभार्याभवितुमर्हति ॥ कामंखादतमांसर्वानकरिष्यामिवोवचः ॥ ३ ॥ साराक्षसीमध्यगतासीतासुरसुतोपमा ॥ नशर्मलेभेशोकार्ता रावणेनेवभर्त्सिता ॥ ४ ॥ वेपतेस्माधिकंसीताविशंतीवांगमात्मनः ॥ वनेयूथपरिभ्रष्टामृगीकोकैरिवार्दिता ॥ ५ ॥

गवर्तिनी भद्रकाली तां नृत्यामः तत्समीपं गत्वा नृत्यामः । सुरसुतोपमा देवकन्योपमा रोदिति अरुदत् ॥ ४५ ॥ अर्णवेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुर्विंशः सर्गः ॥ २४ ॥ ॥ छ ॥ परुषं वदंतीनां वचः श्रुत्वेति शेषः ॥ १ ॥ पूर्वसर्गोक्तरीत्योक्ता मनस्विनी पातिव्रत्ये दृढमनाः ॥ २ ॥ कामं खादतेति । अयं सर्वः सीताप्रलापो गृहीतमनुष्यशरीरतया नटवदनुकरणरूप इति बोध्यम् ॥ ३ ॥ शर्म न लेभे इव शोकार्तेव ॥ ४ ॥ आत्मनोंगं विशंतीव भीत्या अतिसंकुचितशरीरा कमठवद्भूदित्यर्थः । कोकैर्वृकैः ॥ ५ ॥

अशोकस्य अशोकवनिकासंबंधिनः शिंशपावृक्षस्य तत्समीपवर्तिनोऽशोकस्यैव वा ॥६॥७॥ राक्षसीनां राक्षसीभ्यः ॥८॥ सीतयेति पष्ठ्यर्थे तृतीया । परिसर्पंती परितः प्रसर्पंती ॥९ ॥ १० ॥ हा सुमित्रेतीत्य त्रेकारलोप आर्षः ॥ ११ ॥ अकाले दैवाविहितस्वेच्छाकाले ॥१२॥ यत्राहमिति यस्मादहमित्यर्थः ॥ १३॥१४॥ तोयहतं नदीपूरहृतम् ॥ १५ ॥ पद्मदलं विकसितं पद्मं तस्य पत्रमिवाक्षिणी यस्य तम् ॥ ॥ १६ ॥ तीक्ष्णं विषं वत्सनाभादिकमास्वाद्य स्थितस्येव मे मम जीवनं दुर्लभम् ॥ १७ ॥ १८ ॥ जीवितं त्यक्तुमिच्छामि तदपि न शक्यमिति शेषः । रामोपि नासाद्यते च ॥ १९ ॥ एवं परवशतया

सात्रशोकस्यविपुलांशाखामालंब्यपुष्पिताम् ॥ चिंतयामासशोकेनभर्तारंभग्नमानसा ॥ ६ ॥ सास्नापयंतीविपुलौस्तनौनेत्रजलस्रवैः ॥ चिंतयंतीनशोकस्यतदांऽतमधिगच्छति ॥ ७ ॥ सावेपमानापतिताप्रवातेकदलीयथा ॥ राक्षसीनांभयत्रस्ताविवर्णवदनाऽभवत् ॥ ८ ॥ तस्याःसादीर्घवहुलावेपंत्याःसीतयातदा ॥ ददृशेकंपितावेणीव्यालीवपरिसर्पंती ॥ ९ ॥ सानिःश्वसंतीशोकार्ताकोपोपहतचेतना ॥ आर्ताव्यसृजदश्रूणिमैथिलीविललापच ॥ १० ॥ हारामेतिचदुःखार्ताहापुनर्लक्ष्मणेतिच ॥ हाश्वश्रूर्ममकौसल्येहासुमित्रेतिभामिनी ॥ ११ ॥ लोकप्रवादःसत्योयंपंडितैःसमुदाहृतः ॥ अकालेदुर्लभोमृत्युःस्त्रियावापुरुषस्यवा ॥ १२ ॥ यत्राहमाभिःक्रूराभीराक्षसीभिरिहार्दिता ॥ जीवामिहीनारामेणमुहूर्तमपिदुःखिता ॥१३॥ एषाल्पपुण्याकृपणाविनशिष्याम्यनाथवत् ॥ समुद्रमध्येनौःपूर्णावायुवेगैरिवाहता ॥ १४ ॥ भर्तारंतमपश्यंतीराक्षसीवशमागता ॥ सीदामिखलुशोकेनकूलंतोयहतंयथा ॥ १५ ॥ तंपद्मदलपत्राक्षंसिंहविक्रांतगामिनम् ॥ धन्याःपश्यंतिमेनाथंकृतज्ञंप्रियवादिनम् ॥ १६ ॥ सर्वथातेनहीनायारामेणविदितात्मना ॥ तीक्ष्णंविषमिवास्वाद्यदुर्लभंममजीवनम् ॥ १७ ॥ कीदृशंतुमहापापंमयादेहांतरेकृतम् ॥ येनेदंप्राप्यतेघोरंमहादुःखंसुदारुणम्॥ ॥ १८॥ जीवितंत्यक्तुमिच्छामिशोकेनमहतावृता ॥ राक्षसीभिश्चरक्षंत्यारामोनासाद्यतेमया ॥ १९ ॥ धिगस्तुखलुमानुष्यंधिगस्तुपरवश्यताम् ॥ नशक्यंयत्परित्यक्तुमात्मच्छंदेनजीवितम् ॥ २० ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येसुंदरकांडेपंचविंशःसर्गः ॥ २५ ॥ प्रसक्ताश्रुमुखीत्वेवंब्रुवतीजनकात्मजा ॥ अधोगतमुखीबालाविलप्तुमुपचक्रमे ॥१॥ उन्मत्तेवप्रमत्तेवभ्रांतचित्तेवशोचती॥उपावृत्ताकिशोरीवविचेष्टंतीमहीतले॥२॥

दुःखानुभवे हेतुमाह धिगिति । मनुष्यस्य विशोद्बंधनादिना देहत्यागेऽपरमार्थभावेः परमदुःखस्यापि सोढव्यत्वादप्रयोजको मनुष्यदेह इत्यर्थः । राक्षस्यादिपरतंत्रतां च मनुष्यत्वप्रयुक्तां धिक् । यत् यत्र मनुष्यदेहे आत्मच्छन्देनात्मेच्छया जीवितं परित्यक्तुं न शक्यम् ॥ २० ॥ नारिमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचविंशः सर्गः ॥ २५ ॥ ॥ छ ॥ प्रसक्तानि प्रवृत्तान्यश्रूणि मुखे यस्याः सा एवं ब्रुवती वक्ष्यमाणरीत्या ब्रुवती विलप्तुम् ॥ १ ॥ उन्मत्ता भूताविष्टा । प्रमत्ता पित्तोद्रेकादिना भ्रांतचित्तेव । दिङ्मोहादिना मूर्च्छितचित्तेव । शोचती शोचंती

उपावृत्ताश्रमापनयनाय परिवर्तनशीला किशोरीव वडवेव ॥ २ ॥ कामरूपिणा रक्षसा मारीचेन प्रमत्तस्य असन्निधानं प्राप्तस्य राघवस्य संबंधिनी अहं रावणेन प्रमथ्य प्रपीड्य क्रोशंती बलादानीतास्मि ॥ ॥ ३ ॥ किंच राक्षसीवशमापन्ना भर्त्स्यमानां राक्षसीभिः चिंतयंती रामम् ॥ ४ ॥ अर्थैः धनैः ॥५॥६॥ असतीं असतीवत्परगृहस्थां जीवामि जीवितं रक्षामीत्यर्थः । पाकं पचतीतिवत्प्रयोगः ॥७॥ एतदुत्तरं चरणेति मध्ये द्वौ श्लोकौ प्रक्षिप्तौ सव्येन वामेन ॥८॥ प्रत्याख्यानं मया क्रियमाणं निराकरणं न जानाति काममोहादिति शेषः । नृशंसस्वभावेन क्रूरस्वभावेन मां प्रार्थयितुं राक्षसीद्वारा स्वानुकूलां कर्तुम्॥ ९॥ छिन्ना रज्जुवत् भिन्ना भित्तिवत् प्रभिन्ना घटवत् दीप्ता अग्नौ दीप्तशूल्यमांसवत् प्रदीपिता प्रदीप्ता गृहादिवत् वाश्विरं प्रलापेन किम् । रावणं नोपतिष्ठेयमित्येव निश्चयसत्त्वात् ॥ १० ॥ अथ स्वापत्स्थैर्ये कारणानि

राघवस्यप्रमत्तस्यरक्षसाकामरूपिणा ॥ रावणेनप्रमथ्याहमानीताक्रोशतीबलात् ॥ ३ ॥ राक्षसीवशमापन्नाभर्त्स्यमानाचदारुणम् ॥ चिंतयंतीसुदुःखार्तानाहंजीवितुमुत्सहे ॥ ४ ॥ नहिमेजीवितेनार्थोनैवार्थैर्नचभूषणैः ॥ वसंत्याराक्षसीमध्येविनाराममहारथम् ॥ ५ ॥ अश्मसारमिदंनूनमथवाप्यजरामरम् ॥ हृदयंममयेनेदंनदुःखेनविशीर्यते ॥ ६ ॥ धिङ्मामनार्यामसतींयाहंतेनविनाकृता ॥ मुहूर्तमपिजीवामिजीवितंपापजीविका ॥७॥ चरणेनापिसव्येननस्पृशेयंनिशाचरम् ॥ रावणंकिंपुनरहंकामयेयंनिशाचरम् ॥ ८ ॥ प्रत्याख्यानंनजानातिनात्मानंनात्मनःकुलम् ॥ योनृशंसस्वभावेनमांप्रार्थयितुमिच्छति ॥ ९ ॥ छिन्नाभिन्नाप्रभिन्नावादीप्तावाग्नौप्रदीपिता ॥ रावणंनोपतिष्ठेयंकिंप्रलापेनवश्चिरम् ॥ १० ॥ ख्यातःप्राज्ञःकृतज्ञश्चसानुक्रोशश्चराघवः ॥ सद्वृत्तोनिरनुक्रोशःशंकेमद्भाग्यसंक्षयात् ॥ ११ ॥ राक्षसानांजनस्थानेसहस्राणिचतुर्दश ॥ एकेनैवनिरस्तानिसमांकिंनाभिपद्यते ॥१२॥ "निरुद्धारावणेनाहमल्पवीर्येणरक्षसा ॥ समर्थःखलुमेभर्तारावणंहंतुमाहवे ॥ विराधोदंडकारण्येयेनराक्षसपुंगवः ॥ रणेरामेणनिहतःसमांनाभ्यवपद्यते ॥ " ॥ कामंमध्येसमुद्रस्यलंकेयंदुष्प्रधर्षणा ॥ नतुराघवबाणानांगतिरोधोभविष्यति ॥ १३ ॥ किंनुतत्कारणंयेनरामोदृढपराक्रमः ॥ रक्षसापहृतांभार्यामिष्टांयोनाभिपद्यते ॥१४॥ इहस्थांमांनजानीतेशंकेलक्ष्मणपूर्वजः ॥ जानन्नपिसतेजस्वीधर्षणांमर्षयिष्यति ॥१५॥ हृतेतिमांयोऽधिगत्यराघवायनिवेदयेत् ॥ गृध्रराजोपिसरणेरावणेननिपातितः ॥ १६ ॥

संभावयति ख्यात इति । प्रसिद्धः प्रशस्तगुणः ईदृशोपि राघवो मद्भाग्यसंक्षयादेव मयि निरनुक्रोशो दयाहीनः संपन्न इतिशेषः । इति शंके ॥ ११ ॥ न च तस्य मद्विमोक्षणाशक्तिरित्याह राक्षसानामिति । नाभिपद्यते । न प्राप्नोति ॥ १२ ॥ एतदुत्तरं कामं मध्ये इति मध्ये श्लोकौ प्रक्षिप्ताविति कतकः । काममन्येषां दुष्प्रधर्षणा भवतु न तु रामबाणानां गतिरोधो भविष्यति । आब्रह्मलोकं रामबाणगत्यप्रतिरोधस्य भार्गवादिविषये प्रसिद्धतरत्वादिति भावः । एतेनातिदुर्गस्थानस्थितत्वान्न मोक्षणमित्यपास्तम् ॥ १३ ॥ १४ ॥ तस्मादत्र मत्स्थित्यज्ञानमेव मद्विमोक्षणप्रवृत्त्यभावे कारणमित्याह इहस्थामिति । मर्षयिष्यतीत्यत्र काकुः । जानंश्चेद्भवेत्तदा मर्षयिष्यति अपि तु न सहिष्यत्येवेत्यर्थः ॥ १५ ॥ संभावितं ज्ञानकारणं च विहतमित्याह हृतेति । हृतेत्यधिगत्य ज्ञात्वा यो मां राघवाय निवेदयेत् सोपीत्यन्वयः ॥ १६ ॥

अभ्यवपद्यता अनुगृह्णानेन रावणवधे तिष्ठता रावणवधार्थं यतता । रावणद्वंद्वे इति पाठे रावणेन सह द्वंद्वयुद्धे इत्यर्थः ॥ १७ ॥ मामिति । इहस्थां माम् ॥ १८ ॥ १९ ॥ यथाहमिदानीमेवं रुदती वर्तें भूयो मत्तोधिकं मृतभर्तृकत्वाद्राक्षस्यो रुदत्यो भविष्यंतीत्यत्र न संशय इत्यर्थः ॥ २० ॥ ननु ज्ञाने खल्विदं संभाव्येत । ज्ञानमेव तु दुर्लभं तत्राह अन्विष्येति । अचिंत्यसामर्थ्यत्वाद्दैवानुग्रहाच्च लंकामप्यन्विष्य मां ज्ञात्वा रक्षसां कुर्यात् विनाशमिति शेषः । विनाशस्यैषत्करत्वमाह न हीति ॥ २१ ॥ निश्चित एवायमर्थ इत्याह जितेति । भवेल्लंकेति शेषः ॥ २२ ॥ रक्षाऽनर्थवन्ममार्थोपि निश्चित एवेत्याह अचिरेणेति । युष्माकमनर्थोपि निश्चित इति च राक्षसीः मत्याह दुष्प्रस्थान इति । दुर्निमित्तप्रवृत्तिरयं विपर्ययः । एतद्विपरीतज्ञानमिति भाति ॥ २३ ॥ तामेवाह यादृशानीति । यादृशानि दृश्यंते तैरेव हतप्रभा भविष्यतीति ज्ञायत इत्यर्थः ॥ २४ ॥ शोषं ऐश्वर्यादेरिति शेषः ॥ २५ ॥ पुण्योत्सवसमृद्धा च अद्येति शेषः ॥ २६ ॥ ध्वनिं रोदनशब्दम् । दुःखार्तानामिवेति पाठः ॥ २७ ॥ सांधकारा अलक्ष्मीसहिता

कृतंकर्ममहत्तेनमातदाभ्यवपद्यता ॥ तिष्ठतारावणवधेवृद्धेनापिजटायुषा ॥ १७ ॥ यदिमामिहजानीयाद्वर्तमानांहिराघवः ॥ अद्यबाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ १८ ॥ निर्दहेच्चपुरींलंकांनिर्दहेच्चमहोदधिम् ॥ रावणस्यचनीचस्यकीर्तिंनामचनाशयेत् ॥ १९ ॥ ततोनिहतनाथानांराक्षसीनांगृहेगृहे ॥ यथाहमेवंरुदतीतथाभूयोनसंशयः ॥२०॥ अन्विष्यरक्षसांलंकांकुर्याद्रामःसलक्ष्मणः ॥ नहिताभ्यांरिपुर्दृष्टोमुहूर्तमपिजीवति ॥ २१ ॥ चिताधूमाकुलपथागृध्रमंडलमंडिता ॥ अचिरेणैवकालेनश्मशानसदृशीभवेत् ॥ २२ ॥ अचिरेणैवकालेनप्राप्स्याम्येनंमनोरथम् ॥ दुष्प्रस्थानोयमाभातिसर्वेषांवोविपर्ययः ॥ २३ ॥ यादृशानितुदृश्यंतेलंकायामशुभानितु ॥ अचिरेणैवकालेनभविष्यतिहतप्रभा ॥ २४ ॥ नूनंलंकाहतेपापेरावणेराक्षसाधिपे ॥ शोषमेष्यतिदुर्धर्षाप्रमदाविधवायथा ॥ २५ ॥ पुण्योत्सवसमृद्धाचनष्टभर्त्रीसराक्षसा ॥ भविष्यतिपुरीलंकानष्टभर्त्रीयथांगना ॥ ॥ २६ ॥ नूनंराक्षसकन्यानांरुदतीनांगृहेगृहे ॥ श्रोष्यामिनचिरादेवदुःखार्तानामिहध्वनिम् ॥ २७ ॥ सांधकाराहतद्योताहतराक्षसपुंगवा ॥ भविष्यतिपुरीलंकानिर्दग्धारामसायकैः ॥ २८ ॥ यदिनामसशूरोमांरामोरक्तांतलोचनः ॥ जानीयाद्वर्तमानांमांराक्षसस्यनिवेशने ॥ २९ ॥ अनेनतुनृशंसेनरावणेनाधमेनमे ॥ समयोयस्तुनिर्दिष्टस्तस्यकालोऽयमागतः ॥ ३० ॥ सचमेविहितोमृत्युरस्मिन्दुष्टेनवर्तते ॥ अकार्यंयेनजानंतिनैर्ऋताःपापकारिणः ॥ ३१ ॥ अधर्मात्तुमहोत्पातोभविष्यतिहिसांप्रतम् ॥ नैतेधर्मंविजानंतिराक्षसाःपिशिताशनाः ॥ ३२ ॥ ध्रुवंमांप्रातराशार्थंराक्षसःकल्पयिष्यति ॥ साहंकथंकरिष्यामितंविनाप्रियदर्शनम् ॥ ३३ ॥

॥ २८ ॥ यदि राक्षसस्य निवेशने वर्तमानां यां मां रामो जानीयात्तदा लंकापुरी रामसायकैर्निर्दग्धा भविष्यतीत्यन्वयः ॥ २९ ॥ ननु लंकानाशेऽपि मम जीवनं कथं स्यादिति चिंतयति अनेनेति । समयो द्वादशमासरूपः । तस्य कालः किंचिदधिकमासद्वयावशिष्टत्वादत्यासन्नकाल इत्यर्थः ॥ ३० ॥ अस्मिन्काले दुष्टेन रावणेन स कालो मे मृत्युर्विहितो वर्तत इत्यर्थः । ननु ततः परमपि स्त्रीत्वात्त्वां न हिंस्युस्तत्राह अकार्यमिति । ये राक्षसा अकार्यम् इदं कर्तव्यमिदमकर्तव्यमिति न जानंति ते नैर्ऋताः पापकारिणः स्युः॥ ३१ ॥अपि च सांप्रतं संपादितात्परदाराहरणलक्षणात् अधर्मात्तु अधर्मादेव योयं महोत्पातो वर्तते तेन एते सर्वथा न भविष्यंति।नत्रोत्रानुकर्ष इति कतकः।यदेवमतो नैत इति यतो न विजानंति न गणयंति॥ ३२॥राक्षसस्तस्मादयं रावणोपि मां ध्रुवं प्रातराशार्थं कल्पयिष्यति साहं कथं करिष्यामि।प्राप्तविशसनकाला तत्काल इति शेषः॥ ३३॥

उक्तमेवाह राममिति । कथं करिष्यामीति शेषः ॥ ३४ ॥ तदेवं वीरतरस्य रामस्य स्वानन्वेषणे कारणान्युत्प्रेक्षते नाजानादिति । स रामो लक्ष्मणश्च प्रायेण मां जीवतीं जीवंतीं नाजानात् यदि जानीयातां तदा जानंतौ तौ उर्व्यां भूमौ परिमार्गणं न कुर्यातामिति न । किंतु कुर्यातामेवातो मृतेति मत्वा तूष्णीं तिष्ठत इति भावः ॥ ३५ ॥ अथवा मद्वियोगेन रामो देहं न्यस्तवानित्याह नूनमिति ॥ ३६ ॥ एवं च देवलोकस्था धन्या इत्याह धन्या इति । मम वीरमित्यन्वयः ॥ ३७ ॥ ननु त्वज्जीवनाभावनिश्चयप्रमाणोपलंभं विना कथं रामेण देहस्त्यक्त इत्यतः पक्षांतरमाह अथवेति । धर्मकामस्य हि भार्ययार्थः । अयं तु न तथा । तदेवाह धीमतः आत्मानात्मविवेकवतः अतएव परमात्मनः परमात्मब्रह्मात्मना स्थितस्य जीवन्मुक्तस्य तस्य मया नार्थः । अनेन वैराग्यादप्रवृत्तिरिति सूचितम् ॥ ३८ ॥ सर्वदा जीवन्मुक्ते नांगीकार एव न कृतः स्यात् । तादृशे कृतेंऽगीकारे त्वेवंविधस्त्यागोऽनुचित इत्यतो दूरवासात् स्नेहनाशेनाप्रवृत्तिरित्याह दृश्यमान इति । सौहृदं प्रीतिः नास्त्यदृश्यतः ममादृश्यत्वान्मयि तन्नास्ति नष्टमित्यर्थः । अयमपि पक्षोऽसंगतः ईदृशगुणवता कृतप्रीतेर्नाशनायोगादित्याह नाशयंतीति । कृतघ्ना एव प्रपन्नजनस्नेहमसन्निकर्षान्नाशयंति नैवं रामोऽकृतघ्नत्वात्स्वस्य प्रकृतित्वेन प्राकृतप्रपंचभोक्तृत्वेन च तस्याकृतघ्नतौचित्यं

रामंरक्तांतनयनमपश्यंतीसुदुःखिता ॥ क्षिप्रंवैवस्वतंदेवंपश्येयंपतिनाविना ॥ ३४ ॥ नाजानाज्जीवतींरामःसमांभरतपूर्वजः ॥ जानंतौतुनकुर्यातांनोर्व्यांहिपरिमार्गणम् ॥ ३५ ॥ नूनंममैवशोकेनसवीरोलक्ष्मणाग्रजः ॥ देवलोकमितोयातस्त्यक्त्वादेहंमहीतले ॥ ३६ ॥ धन्यादेवाःसगंधर्वाःसिद्धाश्च परमर्षयः ॥ ममपश्यंतियेवीरंरामंराजीवलोचनम् ॥ ३७ ॥ अथवानहितस्यार्थोधर्मकामस्यधीमतः ॥ मयारामस्यराजर्षेर्भार्ययापरमात्मनः ॥ ३८ ॥ दृश्यमानेभवेत्प्रीतिःसौहृदंनास्त्यदृश्यतः ॥ नाशयंतिकृतघ्नास्तुनरामोनाशयिष्यति ॥३९॥ किंवामय्यगुणाःकेचित्किंवाभाग्यक्षयोहिमे॥ याहिसीतावरार्हेणहीनारामेणभामिनी ॥ ४० ॥ श्रेयोमेजीवितान्मर्तुंविहीनायामहात्मना ॥ रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥ ४१ ॥ अथवान्यस्तशस्त्रौतौवनेमूलफलाशनौ ॥ भ्रातरौहिनरश्रेष्ठौचरंतौवनगोचरौ॥४२॥अथवाराक्षसेंद्रेणरावणेनदुरात्मना ॥ छद्मनाघातितौशूरौभ्रातरौ रामलक्ष्मणौ ॥ ४३ ॥ साहमेवंविधेकालेमर्तुमिच्छामिसर्वतः ॥ नचमेविहितोमृत्युरस्मिन्दुःखेतिवर्तति ॥४४॥ धन्याःखलुमहात्मानोमुनयःसत्यसंमताः॥जितात्मानोमहाभागायेषांनस्तःप्रियाप्रिये ॥४५॥ प्रियान्नसंभवेद्दुःखमप्रियादधिकंभवेत् ॥ ताभ्यांहितेवियुज्यंतेनमस्तेषांमहात्मनाम् ॥४६॥

वनवासादौ संगदानाच्च ॥ ३९ ॥ अतः पक्षांतरम् किंवेति । मयि तदुपेक्षाहेतवः केचनागुणा दोषाः स्युः अयमपि पक्षो न युक्तः स्वापरिज्ञातस्वापचाराभावात् । तस्मात्प्राग्भवीयदुष्कर्मजो भाग्यक्षय एव हेतुरित्याह किंवेति । अतोक्लिष्टचारित्रादिगुणाढ्यात्रामाद्याहं त्राणार्हा सीताख्या भामिनी एतावत्पर्यंतं सा हि यत इदानीं वरार्हेणोत्तमवस्तुयोग्येन रामेण हीनास्मि अतस्तस्या मम तेन महात्मना हीनाया मर्तुं श्रेयः मरणं न्यायः ॥ ४० ॥ ४१ ॥ भाग्यक्षयनिश्चयस्य कर्तुमशक्यत्वात् पक्षांतरमथवेति । शस्त्रग्रहणमूलत्वात् सर्वथानर्थस्य हिंसारहिते तपस्येव यावज्जीवं वर्तितव्यमिति धिया न्यस्तशस्त्रौ जातौ ॥ ४२ ॥ इदमप्यसंभावितं रक्षोभिः कृतवैरेण क्षत्रियेण तत्त्यागायोगादतः पक्षांतरमथवेति । छद्मवंचना सा रक्षसां प्रसिद्धैव ॥ ४३ ॥ अतिवर्तति अतिशयेन वर्तमाने ॥ ४४ ॥ अथ तस्या दुःखनाशकारणं विवेकज्ञानमेवेत्याह धन्या इति । सत्यं ब्रह्म संमतमात्मत्वेन येषां ते । अनेन संसारतरणसामर्थ्यं दर्शितम् । अतएव जितात्मानो जितांतःकरणाः अतएव महात्मानः प्राप्तमहात्मैक्याः अतएव महाभागाः पूर्वजन्माद्यर्जितनिष्कामधर्मरूपमहाभाग्यवंतः मुनयो ध्यानशीलास्ते धन्याः तत्र हेतुः । येषां कर्मजन्ये प्रियाप्रिये न स्तः ॥ ४५ ॥ प्रियाप्रियाभावं विवृणोति प्रियादिति । येषां मुक्तानां प्रियद्वियुज्यमा

नाद्दुःखं न संभवेत अप्रियात्संयुज्यमानादधिकं प्रियवियोगादप्यधिकं दुःखं न भवेत् । अप्रियादधिकं भयमिति पाठे संयुज्यमानादप्रियादधिकं महद्भयमपि न भवेदित्यर्थः । ताभ्यां प्रियवियोगजदुःखाप्रियसंयोगजदुःखभयान्यतराभ्यां ये वियुज्यंते तेषां महात्मनां मामिका नमस्क्रियास्तु तेषां नमस्कारेण तत्तुल्यता ममापिस्यादित्याशयः ॥ ४६ ॥ रामेण त्यक्ता अन्विष्य न मोचिता प्रियेणैव संतोषेणैव प्राणांस्त्यक्ष्यामि रामेण त्यक्तायाः प्राणत्यागस्यैव परमप्रियत्वात् ॥ ४७ ॥ छविर्मानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षड्विंशः सर्गः ॥ २६ ॥
इत्युक्ताः मरिष्ये इत्युक्ताः तदाख्यातुं मरणनिश्चयं कथयितुम् ॥ १ ॥ एकार्थं वाक्यमिति शेषः । अनर्थार्थं स्वेषामनर्थमात्रप्रयोजनकम् ॥ २ ॥ तदेव वाक्यमाह अद्येदानीमिति । अद्य दिने इदानीमस्मिन् क्षणे पापविनिश्चये कृतमरणनिश्चयेऽस्मासु रक्षिकास्विदानीं तदसंभवान्मासं मासमात्रम् । इदमवधिकालोपलक्षणम् । भयातिशयार्थमेवमुक्तिः यथासुखं स्थितायास्तदनंतरं रावणाज्ञया एतत्तव

साहंत्यक्ताप्रियेणैवरामेणविदितात्मना ॥ प्राणांस्त्यक्ष्यामिपापस्यरावणस्यगतावशम् ॥ ४७ ॥ इत्यार्षे श्रीम०वा०आ०सुं०षड्विंशःसर्गः ॥ २६ ॥

इत्युक्ताःसीतयाघोरंराक्षस्यःक्रोधमूर्च्छिताः ॥ काश्चिज्जग्मुस्तदाख्यातुंरावणस्यदुरात्मनः ॥ १ ॥ ततःसीतामुपागम्यराक्षस्योभीमदर्शनाः ॥ पुनःपरुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २ ॥ अद्येदानींतवानार्येसीतेपापविनिश्चये ॥ राक्षस्योभक्षयिष्यंतिमासमेतद्यथासुखम् ॥ ३ ॥ सीतांताभिरनार्याभिर्दृष्ट्वासंतर्जितांतदा ॥ राक्षसीत्रिजटावृद्धाप्रबुद्धावाक्यमब्रवीत् ॥ ४ ॥ आत्मानंखादतानार्यानसीतांभक्षयिष्यथ ॥ जनकस्यसुतामिष्टांस्नुषांदशरथस्यच ॥ ५ ॥ स्वप्नोह्यद्यमयादृष्टोदारुणोरोमहर्षणः ॥ राक्षसानामभावायभर्तुरस्याभवायच ॥ ६ ॥ एवमुक्तास्त्रिजटयाराक्षस्यःक्रोधमूर्च्छिताः ॥ सर्वाएवाब्रुवन्भीतास्त्रिजटांतामिदंवचः ॥ ७ ॥ कथयस्वत्वयादृष्टःस्वप्नोयंकीदृशोनिशि ॥ तासांश्रुत्वातुवचनंराक्षसीनांमुखोद्गतम् ॥ ८ ॥ उवाचवचनंकालेत्रिजटास्वप्नसंश्रितम् ॥ गजदंतमयींदिव्यांशिबिकामंतरिक्षगाम् ॥ ९ ॥ युक्तांवाजिसहस्रेणस्वयमास्थायराघवः ॥ शुक्लमाल्यांबरधरोलक्ष्मणेनसमागतः ॥ १० ॥ स्वप्नेचाद्यमयादृष्टासीताशुक्लांबरावृता ॥ सागरेणपरिक्षिप्तंश्वेतपर्वतमास्थिता ॥ ११ ॥ रामेणसंगतासीताभास्करेणप्रभायथा ॥ राघवश्चपुनर्दृष्टश्चतुर्दंतंमहागजम् ॥ १२ ॥

शरीरं राक्षस्यः भक्षयिष्यंति ॥ ३ ॥ अनार्याभिः क्रूराभिः । वृद्धा धर्मज्ञानयोगवयोभिर्वृद्धा । प्रबुद्धेत्यनेन तावत्पर्यंतं सुप्तवतीति गम्यते ॥ ४ ॥ आत्मानं स्वशरीरं भक्षयिष्यथेति । अवधिकालात्परमपीति शेषः ॥ ५ ॥ कुतोविगतमेतत्तत्राह स्वप्न इति । दारुणः क्रूरः राक्षसानामभावाय दृष्टः । तथा रोमहर्षणः अत्यद्भुतो रोमांचकरोन्योस्या भर्तुर्भवाय दृष्ट इत्यर्थः ॥ ६ ॥ पूर्वं क्रोधमूर्च्छिताः पश्चात्त्रिजटावचनाद्भीता इत्यर्थः ॥ ७ ॥ ॥ ८ ॥ काले प्रातःकाले स्वप्नसंश्रितं प्रातःकालदृष्टस्वप्नदृष्टार्थविषयकम् । अनेन स्वप्नस्य शीघ्रफलदत्वं सूचितम् । तत्र सीतायाः पीडानिवृत्तये तदभ्युदयसूचकं स्वप्नं प्रथममाह गजदंतेति । शिबिकां वाजिसहस्रयुक्तत्वविशेषणाद्विमानमित्यर्थः । तामास्थाय गच्छन्मया दृष्टः समागतः सहितः ॥ ९ ॥ १० ॥ सागरेण क्षीरसागरेण परिक्षिप्तमावृतम् ॥ ११ ॥ संगता तत्रैव पर्वत इति शेषः । एतेन लंकायामेव

रामस्य सीतादर्शनं सूचितम् । स्वप्नांतरमाह राघवश्चेति । पुनः स्वप्नांतर इत्यर्थः ॥ १२ ॥ चकास शुशुभे ॥ १३ ॥ जानकीं पर्युपस्थितौ जानकीसमीपं प्राप्तौ नगस्य श्वेतपर्वतस्य दंतिनः स्कंधमाश्रितौ । तदुक्तम् आरोहणं गोवृषकुंजराणां प्रासादशैलाग्रवनस्पतीनाम् ॥ ध्रुवमर्थलाभदमिति ॥ १४ ॥ प्रथमं भर्तुरंके गत्वा ततः समुत्पत्य संकूर्द्य भर्त्रा परिगृहीतस्य धृतालानस्य गजस्य स्कंधमाश्रिता ॥ १५ ॥ सूर्याचंद्रमसौ पाणिभ्यां परिमार्जती । तदुक्तम् आदित्यमंडलं वापि चंद्रमंडलमेव वा ॥ स्वप्ने गृह्णाति हस्ताभ्यां महद्राज्यं समाप्नुयादिति ॥ १६ ॥ पांडुरर्षभेति । पांडुरवृषभाष्टकयुक्तेन रथेन ॥ १७ ॥

आरूढःशैलसंकाशंचकाससहलक्ष्मणः ॥ ततस्तुसूर्यसंकाशौदीप्यमानौस्वतेजसा ॥ १३ ॥ शुक्लमाल्यांबरधरौजानकींपर्युपस्थितौ ॥ ततस्तस्यनगस्याग्रेह्याकाशस्थस्यदंतिनः ॥ १४ ॥ भर्त्रापरिगृहीतस्यजानकीस्कंधमाश्रिता ॥ भर्तुरंकात्समुत्पत्यततःकमललोचना ॥ १५ ॥ चंद्रसूर्यौमयादृष्टौपाणिभ्यांपरिमार्जती ॥१६॥ ततस्ताभ्यांकुमाराभ्यामास्थितःसगजोत्तमः ॥ सीतयाचविशालाक्ष्यालंकायाउपरिस्थितः ॥ पांडुरर्षभयुक्तेनरथेनाष्टयुजास्वयम् ॥ १७ ॥ शुक्लमाल्यांबरधरोलक्ष्मणेनसहागतः ॥ ततोन्यत्रमयादृष्टोरामःसत्यपराक्रमः ॥ १८ ॥ लक्ष्मणेनसहभ्रात्रासीतयासहवीर्यवान् ॥ आरुह्यपुष्पकंदिव्यंविमानंसूर्यसन्निभम् ॥ १९ ॥ उत्तरांदिशमालोच्यप्रस्थितःपुरुषोत्तमः ॥ रावणश्चमयादृष्टोमुंडस्तैलसमुक्षितः ॥ २० ॥ रक्तवासाःपिबन्मत्तःकरवीरकृतस्रजः ॥ विमानात्पुष्पकादद्यरावणःपतितःक्षितौ ॥ २१ ॥ कृष्यमाणःस्त्रियामुंडोदृष्टःकृष्णांबरःपुनः ॥ रथेनखरयुक्तेनरक्तमाल्यानुलेपनः ॥ २२ ॥ पिबंस्तैलंहसन्नृत्यन्भ्रांतचित्ताकुलेंद्रियः ॥ गर्दभेनययौशीघ्रंदक्षिणांदिशमाश्रितः ॥ २३ ॥ पुनरेवमयादृष्टोरावणोराक्षसेश्वरः ॥ पतितोविशिराभूमौगर्दभाद्भयमोहितः ॥२४॥ सहसोत्थायसंभ्रांतोभयार्तोमदविह्वलः ॥ उन्मत्तरूपोदिग्वासादुर्वाक्यंप्रलपन्बहु ॥ २५ ॥ दुर्गंधंदुःसहंघोरंतिमिरंनरकोपमम् ॥ मलपंकंप्रविश्याशुमग्नस्तत्रसरावणः ॥ २६ ॥ प्रस्थितोदक्षिणामाशांप्रविष्टोऽकर्दमंह्रदम् ॥ कंठेबद्ध्वादशग्रीवंप्रमदारक्तवासिनी ॥ २७ ॥ कालीकर्दमलिप्तांगीदिशंयाम्यांप्रकर्षति ॥ एवंतत्रमयादृष्टःकुंभकर्णोमहाबलः ॥ २८ ॥ रावणस्यसुताःसर्वेमुंडास्तैलसमुक्षिताः ॥ वराहेणदशग्रीवःशिशुमारेणचेंद्रजित् ॥ २९ ॥

शुक्लमाल्यांबरधरो रामो लक्ष्मणेन सहेहागत इत्यन्वयः । अन्यत्र स्वप्नांतरे ॥ १८ ॥ आरुह्य पुष्पकमित्येतद्भावि स्पष्टमेव दृष्टम् ॥ १९ ॥ अत्र मध्ये सांडं भुवनमित्यादयो बहवः श्लोका रामानुजसंप्रदाय पुस्तकेषु दृश्यंते ते प्रक्षिप्ता इति कतकादयोन्ये च । अथ रावणानर्थसूचकः स्वप्नः रावणश्चेति । मुंडः मुंडितमुंडः ॥ २० ॥ पिबन्निति । तैलमिति शेषः । करवीरकृतस्रज इति विमानादित्यस्य विशेषणम् । करवीरेत्यारभ्य स्वप्नांतरम् ॥ २१ ॥ रथेनेत्यादि स्वप्नांतरम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ मलानि पंकानि च यस्मिंस्तत्तिमिरम् ॥ २६ ॥ अकर्दमं जलकर्दमेनापि रहितम् ॥ २७ ॥ २८ ॥ २९ ॥

वेपन्वेपमानः स्फुरन्नित्यर्थः । राघवमस्याः पुरः स्थितमिव सूचयति॥४६॥पक्षी काकादिः शाखानिलयं शाखास्थनीडं प्रविष्टो वारंवारमुत्तमसांत्ववादी उत्तमशांतस्वरवादी सुस्वागतां शोभनस्य स्वागतं प्राप्तिर्यस्यां तादृशीं वाचं कथयन्पुनःपुनश्चोदयतीव शोभनप्राप्तिं सूचयतीव । शोभनमागतं प्रत्युद्गच्छेति सीतां पुनःपुनः प्रेरयतीव वा ॥४७॥ तत्त्रिजटोक्तम् ॥४८॥ अर्हवमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण तिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तविंशः सर्गः ॥२७॥ पुनर्दुःखपारमदृष्ट्वैव सीताप्रलापः सेति ॥१॥ विसृष्टा बाला कन्येव महादुर्भिक्षक्षोभवशात् बालकन्यायाः परित्यागः ॥ २ ॥ यस्मादपुण्या पुण्यर हिता॥ ३ ॥ ४ ॥ नन्वेवं प्राणत्यागे आत्महननदोषः स्यादत आह नैवेति । अत्रेदृशे विषये प्राणत्यागेपि न दोषमस्ति । दोषमिति क्लीबत्वमार्षम् । यतोहमस्य वध्या एवं च दुर्मरणजनितदोषस्य दुर्वारत्वेन दोषाभावोक्तिरिति भावः । आत्मघातिब्राह्मणहतयोर्दाहादावनधिकारश्रवणस्य तुल्यत्वादिति बोध्यम् । नन्वेवं रावणांगीकार एव क्रियतामत आह भावमिति । अद्विजाय शूद्राय द्विजो मंत्रमिवाहं स्वीयं

करेणुहस्तप्रतिमःसव्यश्चोरुरनुत्तमः ॥ वेपन्कथयतीवास्याराघवंपुरतःस्थितम् ॥ ४६ ॥ पक्षीचशाखानिलयंप्रविष्टःपुनःपुनश्चोत्तमसांत्ववादी ॥ सुस्वागतांवाचमुदीरयाणःपुनःपुनश्चोदयतीवहृष्टः ॥ ४७ ॥ ततःसाह्रीमतीबालाभर्तुर्विजयहर्षिता ॥ अवोचद्यदितत्तथ्यंभवेयंशरणंहिवः ॥ ४८ ॥ इत्यार्षेश्रीम०वा०आ०सुं०सप्तविंशःसर्गः ॥ २७ ॥ साराक्षसेंद्रस्यवचोनिशम्यतद्रावणस्याप्रियमप्रियार्ता ॥ सीतावितत्रासयथावनांतेसिंहाद्भिपन्नाग जराजकन्या ॥ १ ॥ साराक्षसीमध्यगताचभीरुर्वाग्भिर्भृशंरावणतर्जिताच ॥ कांतारमध्येविजनेविसृष्टाबालेवकन्याविललापसीता ॥२॥ सत्यंबते दंप्रवदंतिलोकेनाकालमृत्युर्भवतीतिसंतः ॥ यत्राहमेवंपरिभर्त्स्यमानाजीवामियस्मात्क्षणमप्यपुण्या ॥ ३ ॥ सुखाद्विहीनंबहुदुःखपूर्णमिदंतुनूनंहृदयं स्थिरंमे ॥ विदीर्यतेयन्नसहस्रधाद्यवज्राहतंशृंगमिवाचलस्य ॥ ४ ॥ नैवास्तिनूनंममदोषमत्रवध्याहमस्याप्रियदर्शनस्य ॥ भावंनचास्याहमनुप्र दातुमलंद्विजोमंत्रमिवाद्विजाय ॥ ५ ॥ तस्मिन्ननागच्छतिलोकनाथेगर्भस्यजंतोरिवशल्यकृंतः ॥ नूनंममांगान्यचिरादनार्यःशरैःशितैश्छेत्स्य तिराक्षसेंद्रः ॥ ६ ॥ दुःखंबतेदंननुदुःखितायामासौचिरायाभिगमिष्यतोद्वौ ॥ बद्धस्यवध्यस्ययथानिशांतेराजोपरोधादिवतस्करस्य ॥ ७ ॥

भावमांतरमस्यानुप्रदातुं अनुकूलतया समर्पयितुं नालं न समर्था । एवंच पातिव्रत्यस्य प्राणत्यागेन रक्षणात्सर्वदोषनिस्तार इति भावः ॥ ५ ॥ ननु तथाप्यात्मघातेऽतिदोषात्सोऽयुक्त इत्याशंक्य सत्यं विचित्रवधा द्भिभेमीत्याह तस्मिन्ननागच्छतीति । तस्मिन् रामेऽनागच्छति सति अवधिकालादर्वागिति शेषः । ममांगानि जीवंत्या एव छेत्स्यति । निरुद्धाया विशसने दृष्टांतः गर्भेति । शल्यं शस्त्रं तेन कृणत्तीति शल्यकृंतः आंबष्ठवैद्यः । आर्षत्वात्साधु स यथा गर्भस्थजंतुं व्याधिरूपं जीवंतं कृणत्ति तद्वत् । एतत् श्लोकद्वयं कतकेन इत्थं व्याख्यातम् । अन्यायप्राप्तवधेऽपि मम दोषो नेत्याह नैवेति यद्यप्यस्याहं वध्या भवामि मम दोषो नैवम् । भावाप्रदानेन पातिव्रत्यरक्षणात्सर्वदोषनिस्तार इत्यर्थः । किंच मरणप्राप्तिः पाक्षिकीत्याह तस्मिन्निति । अनागच्छत्येव वधप्रसक्तिर्नान्यथेति भावः । अनागमनपक्षे प्राप्तविशसने दृष्टांतः गर्भस्येति ॥६॥ चिराय भर्तृवियोगदुःखिताया मे इदं विशसनदुःखमपि वतागमिष्यति । यतो द्वौ मासौ विशसनावधिभूतौ कतिपयदिनावधिकावपि अभिगमिष्यतः शीघ्रं गमिष्यतः किल । तत्र वधप्राप्तौ दृष्टांतः बद्धस्येति । तस्करस्य

रामस्य सीतादर्शनं सूचितम् । स्वप्नांतरमाह राघवश्चेति । पुनः स्वप्नांतर इत्यर्थः ॥ १२ ॥ चकास शुशुभे ॥ १३ ॥ जानकीं पर्युपस्थितौ जानकीसमीपं प्राप्तौ नगस्य श्वेतपर्वतस्य दंतिनः स्कंधमाश्रितौ । तदुक्तम् आरोहणं गोवृषकुंजराणां प्रासादशैलाग्रवनस्पतीनाम् ॥ ध्रुवमर्थलाभदमिति ॥ १४ ॥ प्रथमं भर्तुरंके गत्वा ततः समुत्पत्य संकूर्द्य भर्त्रा परिगृहीतस्य धृतालानस्य गजस्य स्कंधमाश्रिता ॥ १५ ॥ सूर्याचंद्रमसौ पाणिभ्यां परिमार्जती । तदुक्तम् आदित्यमंडलं वापि चंद्रमंडलमेव वा ॥ स्वप्ने गृह्णाति हस्ताभ्यां महद्राज्यं समाप्नुयादिति ॥ १६ ॥ पांडुरर्षभेति । पांडुरवृषभाष्टकयुक्तेन रथेन ॥ १७ ॥

आरूढःशैलसंकाशंचकाससहलक्ष्मणः ॥ ततस्तुसूर्यसंकाशौदीप्यमानौस्वतेजसा ॥ १३ ॥ शुक्लमाल्यांबरधरौजानकींपर्युपस्थितौ ॥ ततस्तस्यनगस्याग्रेह्याकाशस्थस्यदंतिनः ॥ १४ ॥ भर्त्रापरिगृहीतस्यजानकीस्कंधमाश्रिता ॥ भर्तुरंकात्समुत्पत्यततःकमललोचना ॥ १५ ॥ चंद्रसूर्यौमयादृष्टौपाणिभ्यांपरिमार्जती ॥१६॥ ततस्ताभ्यांकुमाराभ्यामास्थितःसगजोत्तमः ॥ सीतयाचविशालाक्ष्यालंकायाउपरिस्थितः ॥ पांडुरर्षभयुक्तेनरथेनाष्टयुजास्वयम् ॥ १७ ॥ शुक्लमाल्यांबरधरोलक्ष्मणेनसहागतः ॥ ततोन्यत्रमयादृष्टोरामःसत्यपराक्रमः ॥ १८ ॥ लक्ष्मणेनसहभ्रात्रासीतयासहवीर्यवान् ॥ आरुह्यपुष्पकंदिव्यंविमानंसूर्यसन्निभम् ॥ १९ ॥ उत्तरांदिशमालोच्यप्रस्थितःपुरुषोत्तमः ॥ रावणश्चमयादृष्टोमुंडस्तैलसमुक्षितः ॥ २० ॥ रक्तवासाःपिबन्मत्तःकरवीरकृतस्रजः ॥ विमानात्पुष्पकादद्यरावणःपतितःक्षितौ ॥ २१ ॥ कृष्यमाणःस्त्रियामुंडोदृष्टःकृष्णांबरःपुनः ॥ रथेनखरयुक्तेनरक्तमाल्यानुलेपनः ॥ २२ ॥ पिबंस्तैलंहसन्नृत्यन्भ्रांतचित्ताकुलेंद्रियः ॥ गर्दभेनययौशीघ्रंदक्षिणांदिशमाश्रितः ॥ २३ ॥ पुनरेवमयादृष्टोरावणोराक्षसेश्वरः ॥ पतितोविशिराभूमौगर्दभाद्भयमोहितः ॥२४॥ सहसोत्थायसंभ्रांतोभयार्तोमदविह्वलः ॥ उन्मत्तरूपोदिग्वासादुर्वाक्यंप्रलपन्बहु ॥ २५ ॥ दुर्गंधंदुःसहंघोरंतिमिरंनरकोपमम् ॥ मलपंकंप्रविश्याशुमग्नस्तत्रसरावणः ॥ २६ ॥ प्रस्थितोदक्षिणामाशांप्रविष्टोऽकर्दमंह्रदम् ॥ कंठेबद्ध्वादशग्रीवंप्रमदारक्तवासिनी ॥ २७ ॥ कालीकर्दमलिप्तांगीदिशंयाम्यांप्रकर्षति ॥ एवंतत्रमयादृष्टःकुंभकर्णोमहाबलः ॥ २८ ॥ रावणस्यसुताःसर्वेमुंडास्तैलसमुक्षिताः ॥ वराहेणदशग्रीवःशिशुमारेणचेंद्रजित् ॥ २९ ॥

शुक्लमाल्यांबरधरो रामो लक्ष्मणेन सहेहागत इत्यन्वयः । अन्यत्र स्वप्नांतरे ॥ १८ ॥ आरुह्य पुष्पकमित्येतद्भावि स्पष्टमेव दृष्टम् ॥ १९ ॥ अत्र मध्ये सांडं भुवनमित्यादयो बहवः श्लोका रामानुजसंप्रदाय पुस्तकेषु दृश्यंते ते प्रक्षिप्ता इति कतकादयोन्ये च । अथ रावणानर्थसूचकः स्वप्नः रावणश्चेति । मुंडः मुंडितमुंडः ॥ २० ॥ पिबन्निति । तैलमिति शेषः । करवीरकृतस्रज इति विमानादित्यस्य विशेषणम् । करवीरेत्यारभ्य स्वप्नांतरम् ॥ २१ ॥ रथेनेत्यादि स्वप्नांतरम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ मलानि पंकानि च यस्मिंस्तत्तिमिरम् ॥ २६ ॥ अकर्दमं जलकर्दमेनापि रहितम् ॥ २७ ॥ २८ ॥ २९ ॥

वैहायसं खेचरत्वम् ॥ ३० ॥ एतदग्रे श्लोकद्वयं प्रक्षिप्तमिति कतकः । गीतवादित्रनिःस्वन इति बहुव्रीहिः । अयमपि विभीषणविषयो भाव्यर्थः स्पष्टमनुभूतः । पिबतां तैलादि पिबतां रक्षसां वासभूता लंका सागरे पतितेत्यन्वयः ॥ ३१ ॥ ३२ ॥ भस्मरूक्षायां भस्मना रूक्षायाम् ॥ ३३ ॥ निवसनं न्यग्भूतं कुत्सितं वस्त्रमित्यर्थः ॥ ३४॥ यदेवमतोपगच्छत तत्क्लेशदानं त्यक्त्वान्यतोऽपसरत । राघवश्च सीतामाप्नो त्येव पश्यध्वम् । अनपगमे बाधकमाह घातयेदिति । युष्मान् सीताक्लेशदात्रीः ॥ ३५ ॥ भर्त्सितां युष्मत्कृतभर्त्सनादिमतीं नानुमंस्यति नानुमंस्यते न क्षमिष्यते अतस्तत्कर्त्रीर्वोघातयेदिति भावः ॥ ३६ ॥ ३७ ॥ ३८ ॥ हे राक्षस्यः किं विवक्षया कुत्सितभर्त्सनादिवचनेच्छया अलमिति शेषः । तत्र हेतुः राघवादिति ॥ ३९ ॥ नन्वेवं क्लेशिता कथमस्माकं प्रसन्ना स्यात्तत्राह प्रणिपातेति ॥ ४० ॥

उष्ट्रेणकुंभकर्णश्चप्रयातोदक्षिणांदिशम् ॥ एकस्तत्रमयादृष्टःश्वेतच्छत्रोविभीषणः ॥ चतुर्भिःसचिवैःसार्धंवैहायससमुपस्थितः ॥ ३० ॥ समाजश्चमहान्वृत्तोगीतवादित्रनिःस्वनः ॥ पिबतांरक्तमाल्यानांरक्षसांरक्तवाससाम् ॥ ३१ ॥ लंकाचेयंपुरीरम्यासवाजिरथकुंजरा ॥ सागरेपतितादृष्टाभग्नगोपुरतोरणा ॥ ३२ ॥पीत्वातैलंप्रमत्ताश्चप्रहसंत्योमहास्वनाः ॥ लंकायांभस्मरूक्षायांसर्वाराक्षसयोषितः ॥३३॥ कुंभकर्णादयश्चेमेसर्वेराक्षसपुंगवाः ॥ रक्तंनिवसनंगृह्यप्रविष्टागोमयह्रदम् ॥ ३४ ॥ अपगच्छतपश्यध्वंसीतामाप्नोतिराघवः ॥ घातयेत्परमामर्षीयुष्मान्सार्धंहिराक्षसैः ॥ ३५ ॥ प्रियांबहुमतांभार्यांवनवासमनुव्रताम् ॥ भर्त्सितांतर्जितांवापिनानुमंस्यतिराघवः ॥ ३६ ॥ तदलंक्रूरवाक्यैश्चसांत्वमेवाभिधीयताम् ॥ अभियाचामवैदेहीमेतद्धिममरोचते ॥ ३७ ॥ यस्याह्येवंविधःस्वप्नोदुःखितायाःप्रदृश्यते ॥ सादुःखैर्बहुभिर्मुक्ताप्रियंप्राप्नोत्यनुत्तमम् ॥ ३८ ॥ भर्त्सितामपियाचध्वंराक्षस्यःकिंविवक्षया ॥ राघवाद्धिभयंघोरंराक्षसानामुपस्थितम् ॥ ३९ ॥ प्रणिपातप्रसन्नाहिमैथिलीजनकात्मजा ॥ अलमेषापरित्रातुंराक्षस्योमहतोभयात् ॥ ४० ॥ अपिचास्याविशालाक्ष्यानाकिंचिदुपलक्षये ॥ विरूपमपिचांगेषुनसूक्ष्ममपिलक्षणम् ॥४१॥ छायावैगुण्यमात्रंतुशंकेदुःखमुपस्थितम् ॥ अदुःखार्हामिमांदेवींवैहायसमुपस्थिताम् ॥ ४२ ॥ अर्थसिद्धिंतुवैदेह्याःपश्याम्यहमुपस्थिताम् ॥ राक्षसेंद्रविनाशंचविजयंराघवस्यच॥ ॥ ४३ ॥ निमित्तभूतमेतत्तुश्रोतुमस्यामहत्प्रियम् ॥ दृश्यतेचस्फुरच्चक्षुःपद्मपत्रमिवायतम् ॥ ४४ ॥ ईषच्चहृषितोवास्यादक्षिणायाह्यदक्षिणः ॥ अकस्मादेववैदेह्यावाहुरेकःप्रकंपते ॥ ४५ ॥

सीताया अभ्युदयसूचकं प्रत्यक्षनिमित्तमपि दर्शयति अपिचेति । द्वितीयमपिनेति पादपूरणे । विरूपं लक्षणं सूक्ष्ममपि किंचिन्नोपलक्षय इत्यर्थः ॥ ४१ ॥ किंतु स्नानानुलेपनाद्यभावमूलकशोभावैगुण्यमात्रात्मकं दुःखमुपस्थितमिति उत्प्रेक्षते । ननु मुखवैवर्ण्यदक्षिणाक्षिस्पंदादिदुर्निमित्तक्लेशोपीत्यर्थः । वैहायसमुपस्थितां स्वप्ने तया दृष्टाम् ॥ ४२ ॥ अतएवास्या अर्थसिद्धिं इष्टसिद्धिमुपस्थितां पश्यामि रावणनाशं रामविजयं च पश्यामि ॥ ४३ ॥ अपि चास्या महत्प्रियं श्रोतुं निमित्तभूतं मत्स्वप्नवत्सूचकमेतत् । स्फुरच्चक्षुश्च दृश्यते वाममिति शेषः ॥ ४४ ॥ हृषितः पुलकितः । वेति वाक्यालंकारे । अदक्षिणो वामः ॥ ४५ ॥

वेपन्वेपमानः स्फुरन्नित्यर्थः । राघवमस्याः पुरः स्थितमिव सूचयति॥४६॥पक्षी काकादिः शाखानिलयं शाखास्थनीडं प्रविष्टो वारंवारमुत्तमसांत्ववादी उत्तमशांतस्वरवादी सुस्वागतां शोभनस्य स्वागतं प्राप्तिर्यस्यां तादृशीं वाचं कथयन्पुनःपुनश्चोदयतीव शोभनप्राप्तिं सूचयतीव । शोभनमागतं प्रत्युद्गच्छेति सीतां पुनःपुनः प्रेरयतीव वा ॥४७॥ तत्रिजटोक्तम् ॥४८॥ अहिर्वमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तविंशः सर्गः ॥२७॥ पुनर्दुःखपारमदृष्ट्वैव सीताप्रलापः सेति ॥१॥ विसृष्टा बाला कन्येव महादुर्भिक्षक्षोभवशात् बालकन्यायाः परित्यागः ॥ २ ॥ यस्मादपुण्या पुण्यरहिता॥ ३ ॥ ४ ॥ नन्वेवं प्राणत्यागे आत्महननदोषः स्यादत आह नैवेति । अत्रेदृशे विषये प्राणत्यागेपि न दोषमस्ति । दोषमिति क्लीबत्वमार्षम् । यतोहमस्य वध्या एवं च दुर्मरणजनितदोषस्य दुर्वारत्वेन दोषाभावोक्तिरिति भावः । आत्मघातिब्राह्मणहतयोर्दाहादावनधिकारश्रवणस्य तुल्यत्वादिति बोध्यम् । नन्वेवं रावणांगीकार एव क्रियतामत आह भावमिति । अद्विजाय शूद्राय द्विजो मंत्रमिवाहं स्वीयं

करेणुहस्तप्रतिमःसव्यश्चोरुरनुत्तमः ॥ वेपन्कथयतीवास्याराघवंपुरतःस्थितम् ॥ ४६ ॥ पक्षीचशाखानिलयंप्रविष्टःपुनःपुनश्चोत्तमसांत्ववादी ॥ सुस्वागतांवाचमुदीरयाणःपुनःपुनश्चोदयतीवहृष्टः ॥ ४७ ॥ ततःसाह्नीमतीबालाभर्तुर्विजयहर्षिता ॥ अवोचद्यदितत्तथ्यंभवेयंशरणंहिवः ॥ ४८ ॥ इत्यार्षेश्रीम०वा०आ०सुं०सप्तविंशःसर्गः ॥ २७ ॥ साराक्षसेंद्रस्यवचोनिशम्यतद्रावणस्याप्रियमप्रियार्ता ॥ सीतावितत्रासयथावनांतेसिंहाद्विपन्नागजराजकन्या ॥ १ ॥ साराक्षसीमध्यगताचभीरुर्वाग्भिर्भृशंरावणतर्जिताच ॥ कांतारमध्येविजनेविसृष्टाबालेवकन्याविललापसीता ॥२॥ सत्यंबतेदंप्रवदंतिलोकेनाकालमृत्युर्भवतीतिसंतः ॥ यत्राहमेवंपरिभर्त्स्यमानाजीवामियस्मात्क्षणमप्यपुण्या ॥ ३ ॥ सुखाद्विहीनंबहुदुःखपूर्णमिदंतुनूनंहृदयंस्थिरंमे ॥ विदीर्यतेयन्नसहस्रधाद्यवज्राहतंशृंगमिवाचलस्य ॥ ४ ॥ नैवास्तिनूनंममदोषमत्रवध्याहमस्याप्रियदर्शनस्य ॥ भावंनचास्याहमनुप्रदातुमलंद्विजोमंत्रमिवाद्विजाय ॥ ५ ॥ तस्मिन्ननागच्छतिलोकनाथेगर्भस्यजंतोरिवशल्यकृंतः ॥ नूनंममांगान्यचिरादनार्यःशरैःशितैश्छेत्स्यतिराक्षसेंद्रः ॥ ६ ॥ दुःखंबतेदंननुदुःखितायामासौचिरायाभिगमिष्यतोद्वौ ॥ बद्धस्यवध्यस्ययथानिशांतेराजोपरोधादिवतस्करस्य ॥ ७ ॥

भावमांतरमस्यानुप्रदातुं अनुकूलतया समर्पयितुं नालं न समर्था । एवंच पातिव्रत्यस्य प्राणत्यागेन रक्षणात्सर्वदोषनिस्तार इति भावः ॥ ५ ॥ ननु तथाप्यात्मघातेऽतिदोषात्सोऽयुक्त इत्याशंक्य सत्यं विचित्रवधाद्बिभेमीत्याह तस्मिन्ननागच्छतीति । तस्मिन् रामेऽनागच्छति सति अवधिकालादर्वागिति शेषः । ममांगानि जीवंत्या एव छेत्स्यति । निरुद्धाया विशसने दृष्टांतः गर्भेति । शल्यं शस्त्रं तेन कृणत्तीति शल्यकृंतः आंबष्ठवैद्यः । आर्षत्वात्साधु स यथा गर्भस्थजंतुं व्याधिरूपं जीवंतं कृणत्ति तद्वत् । एतत् श्लोकद्वयं कतकेन इत्थं व्याख्यातम् । अन्यायप्राप्तवधेऽपि मम दोषो नेत्याह नैवेति यद्यप्यस्याहं वध्या भवामि मम दोषो नैवम् । भावाप्रदानेन पातिव्रत्यरक्षणात्सर्वदोषनिस्तार इत्यर्थः । किंच मरणप्राप्तिः पाक्षिकीत्याह तस्मिन्निति । अनागच्छत्येव वधप्रसक्तिर्नान्यथेति भावः । अनागमनपक्षे प्राप्तविशसने दृष्टांतः गर्भस्येति ॥६॥ चिराय भर्तृवियोगदुःखिताया मे इदं विशसनदुःखमपि बतागमिष्यति । यतो द्वौ मासौ विशसनावधिभूतौ कतिपयदिनावधिकावपि अभिगमिष्यतः शीघ्रं गमिष्यतः किल । तत्र वधप्राप्तौ दृष्टांतः बद्धस्येति । तस्करस्य

वध इवेति शेषः ॥ ७ ॥ सह श्वश्रूभ्यां सह या मे जनन्यस्ताश्च हा युष्मानदृष्ट्वा स्मृत्वैवाहं विपद्यामि । मूढवाता मोहास्पदमहावात्यादिवातयुक्ता ॥ ८ ॥ मृगस्य रूपं धारयता सत्त्वेन राक्षसरूपजीवेन मम कारणाद्विशस्तौ नूनम् । वैद्युतेन विद्युत्संबंधितेजसा ॥ ९ ॥ सर्वं चेदं दुःखं स्वकृतानर्थमूलमित्याह नूनमिति । लुलुभे विमोहयति स्म । अहं विससर्ज विसृष्टवती । अपरोक्षेपि चित्तविक्षेपादिना पारोक्ष्यमारोप्य लिट् ॥१०॥ हा रामेत्यादौ हे राम मां हा अहं शोचे इत्यर्थः हा जीव मम प्राणरूपहितः हितकरः प्रियश्चेत्यस्य त्वमिति शेषः ॥११॥ धर्मो रक्षतीति सर्वाविवादसिद्धमपि मां प्रति निष्फलमित्याह अनन्यदेवत्वमिति । पत्येकदेवत्वमित्यर्थः । इयं क्षमा शापेन संहारशक्तावपि एवं पीडासहनरूपा पत्यतिरिक्ते कामासक्तिराहित्यं पतिव्रतात्वम् । कृतमुपकृतम् ॥ १२ ॥ उक्तमेवार्थं दुःखातिशयादावर्तयति मोघं हीति ।

हारामहालक्ष्मणहासुमित्रेहाराममातःसहमेजनन्यः ॥ एपाविपद्याम्यहमल्पभाग्यामहार्णवेनौरिवमूढवाता ॥ ८ ॥ तरस्विनौधारयतामृगस्यसत्त्वेनरूपंमनुजेंद्रपुत्रौ ॥ नूनंविशस्तौममकारणात्तौसिंहर्षभौद्वाविववैद्युतेन ॥ ९ ॥ नूनंसकालोमृगरूपधारीमामल्पभाग्यांलुलुभेतदानीम् ॥ यत्रार्यपुत्रौविससर्जमूढारामानुजंलक्ष्मणपूर्वजंच ॥ १० ॥ हारामसत्यव्रतदीर्घवाहोहापूर्णचंद्रप्रतिमानवक्त्र ॥ हाजीवलोकस्यहितःप्रियश्चवध्यांनमांवेत्सिहिराक्षसानाम् ॥ ११ ॥ अनन्यदेवत्वमियंक्षमाचभूमौचशय्यानियमश्चधर्मे ॥ पतिव्रतात्वंविफलंममेदंकृतंकृतघ्नेष्विवमानुषाणाम् ॥१२॥ मोघंहिधर्मश्चरितोममायंतथैकपत्नीत्वमिदंनिरर्थकम् ॥ यात्वानपश्याभिकृशाविवर्णाहीनात्वयासंगमनेनिराशा ॥ १३ ॥ पितुर्निदेशंनियमेनकृत्वावनान्निवृत्तश्चरितव्रतश्च ॥ स्त्रीभिस्तुमन्येविपुलेक्षणाभिःसंरंस्यसेवीतभयःकृतार्थः ॥ १४ ॥ अहंतुरामत्वयिजातकामाचिरंविनाशायनिबद्धभावा ॥ मोघंचरित्वाथतपोव्रतंचत्यक्ष्यामिधिग्जीवितमल्पभाग्याम् ॥ १५ ॥ संजीवितंक्षिप्रमहंत्यजेयंविषेणशस्त्रेणशितेनवापि ॥ विषस्यदातानतुमेऽस्तिकश्चिच्छस्त्रस्यवावेश्मनिराक्षसस्य ॥ १६ ॥ " इतीवदेवीवहुधाविलप्यसर्वात्मनाराममनुस्मरंती ॥ प्रवेपमानापरिशुष्कवक्त्रानगोत्तमंपुष्पितमाससाद " शोकाभितप्तावहुधाविचिंत्यसीताथवेणीग्रथनंगृहीत्वा ॥ उद्बध्यवेण्युद्ग्रथनेनशीघ्रमहंगमिष्यामियमस्यमूलम् ॥ १७ ॥ उपस्थितासामृदुसर्वगात्रीशाखांगृहीत्वाचनगस्यतस्य ॥ तस्यास्तुरामंपरिचिंतयंत्यारामानुजंस्वंचकुलंशुभांग्याः ॥ १८ ॥ तस्याविशोकानिसदावहूनिधैर्यार्जितानिप्रवराणिलोके ॥ प्रादुर्निमित्तानितदावभूवुःपुरापिसिद्धान्युपलक्षितानि ॥१९॥ इत्यार्षे श्रीमद्रा०वा०आदि० सुंदरकांडे अष्टाविंशः सर्गः ॥२८॥

तथागतांतांव्यथितामनिन्दितांव्यतीतहर्षांपरिदीनमानसाम् ॥ शुभांनिमित्तानिशुभानिभेजिरेनरंश्रियाजुष्टमिवोपसेविनः ॥१॥ तस्याःशुभंवाममरालपक्ष्मराज्यावृतंकृष्णविशालशुक्लम् ॥ प्रास्पंदतैकंनयनंसुकेश्यामीनाहतंपद्ममिवाभिताम्रम् ॥ २ ॥

त्वया हीना तव संगमने च निराशा ॥ १३ ॥ इदानीं तयोरवधमेव निश्चित्य मन्नाशात्तयोर्न कोपि नाशोऽपितु ममैवेत्याह पितुरिति । पितुर्वचनमकृत्वा वनान्निवृत्तिर्न मध्ये व्रतत्यागो नेत्याह चरितव्रतश्चेति ॥ १४ ॥ विनाशाय मरणांतदुःखाय अल्पभाग्यां मां धिक् ॥ १५ ॥ वेश्मनि राक्षसस्येत्येतदनंतरमेकः श्लोकः प्रक्षिप्तः ॥ १६ ॥ यमस्य मूलं समीपम् ॥ १७ ॥ तस्याः नगस्य शाखां गृहीत्वोपस्थितायाः ॥ १८ ॥ विशोकानि विशोककराणि धैर्यार्जितानि धैर्यस्यार्जितमर्जनं संपादनं यैस्तानि लोके प्रवराणि प्रसिद्धानि पुरापि सिद्धानि संवादीनि निमित्तानि प्रादुर्बभूवुः ॥ १९ ॥ धेयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे अष्टाविंशः सर्गः ॥ २८ ॥ ॥ तथेति । उपसेविनः सेवकास्त इव ॥ १ ॥ अरालया वक्रया पक्ष्मराज्या वृतम्

पक्ष्मणोऽरालया वक्ररोमराज्या वृतमित्यर्थः । तथा कृष्णं कनीनिकामात्रेऽन्यत्र विशालशुक्लत्वयुक्त अभितस्ताम्रं प्रांतरक्तम् एकं वामम् ॥ २ ॥ अध्युषितः कृतसंपर्कः ॥ ३ ॥ संहतयोः श्लिष्टयोस्तयोरूर्वोर्मध्य वाम ऊरुरित्यर्थः ॥ ४ ॥ हेमरूषितत्वाद्धेमसमानवर्णम् । ईषद्रजोध्वस्तमिव ईषन्मलिनमिव चिरमपरिवर्तनात् । शिखरं दाडिमबीजं तदग्रतुल्यदंत्याः । शिखरं शैलवृक्षाग्रे कक्षाग्रगृहकोटिषु पक्के दाडिमबीजे चेति विश्वः । परिस्रंसत पर्यस्रंसत आसनादधः पपात ॥ ५ ॥ साधुसिद्धैः सम्यक्संबंधिभिः संवादिभिरिति पाठांतरम् ॥ ६ ॥ शोभने अक्षिणी भ्रुवौ केशांता अलकाश्च यत्र तत् । सितशुक्लदंष्ट्रं स्फटिकादि सितपदार्थवत् शुक्ला दंष्ट्रा यत्र तत्संबद्धशुक्लदंष्ट्रावदिति च ॥ ७ ॥ हर्षेण विबुद्धं सत्त्वं चित्तं यस्याः । वदनेन करणेन । शुक्ले शुक्लपक्षे ॥ ८ ॥ अर्जमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये

भुजश्चचार्वंचितवृत्तपीनःपरार्ध्यकालागुरुचंदनार्हः ॥ अनुत्तमेनाध्युषितःप्रियेणचिरेणवामःसमवेपताशु ॥ ३ ॥ गजेंद्रहस्तप्रतिमश्चपीनस्तयोर्द्वयोःसंहतयोस्तुजातः ॥ प्रस्पंदमानःपुनरूरुरस्यरामंपुरस्तात्स्थितमाचचक्षे ॥ ४ ॥ शुभंपुनर्हेमसमानवर्णमीषद्रजोध्वस्तमिवातुलास्याः ॥ वासःस्थितायाःशिखराग्रदंत्याःकिंचित्परिस्रंसतचारुगात्र्याः ॥ ५ ॥ एतैर्निमित्तैरपरैश्चसुभ्रूःसंचोदिताप्रागपिसाधुसिद्धैः ॥ वातातपक्लांतमिवप्रणष्टंवर्षेणबीजंप्रतिसंजहर्ष ॥ ६ ॥ तस्याःपुनर्बिंबफलोपमोष्ठंस्वक्षिभ्रुकेशांतमरालपक्ष्म ॥ वक्त्रंवभासेसितशुक्लदंष्ट्रंराहोर्मुखाच्चंद्रइवप्रमुक्तः ॥ ७ ॥ सावीतशोकाव्यपनीततंद्राशांतज्वराहर्षविबुद्धसत्त्वा ॥ अशोभतार्यावदनेनशुक्लेशीतांशुनारात्रिरिवोदितेन ॥ ८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ हनुमानपिविक्रांतःसर्वंशुश्रावतत्त्वतः ॥ सीतायास्त्रिजटायाश्चराक्षसानांचगर्जितम् ॥ १ ॥ अवेक्षमाणस्तांदेवींदेवतामिवनंदने ॥ ततोवहुविधांचिंतांचिंतयामासवानरः ॥२॥ यांकपीनांसहस्राणिसुवहून्ययुतानिच ॥ दिक्षुसर्वासुमार्गंतेसेयमासादितामया ॥ ३ ॥ चारेणतुसुयुक्तेनशत्रोःशक्तिमवेक्षता ॥ गूढेनचरतातावदवेक्षितमिदंमया ॥ ४ ॥ राक्षसानांविशेषश्चपुरीचेयंनिरीक्षिता ॥ राक्षसाधिपतेरस्यप्रभावोरावणस्यच ॥ ५ ॥ यथातस्याप्रमेयस्यसर्वसत्त्वदयावतः ॥ समाश्वासयितुंभार्यांपतिदर्शनकांक्षिणीम् ॥६॥ अहमाश्वासयाम्येनांपूर्णचंद्रनिभाननाम् ॥ अदृष्टदुःखांदुखस्यनह्यंतमधिगच्छतीम् ॥ ७ ॥ यदिह्यहंसतीमेनांशोकोपहतचेतनाम् ॥ अनाश्वास्यगमिष्यामिदोषवद्गमनंभवेत् ॥ ८ ॥ गतेहिमयितत्रेयंराजपुत्रीयशस्विनी ॥ परित्राणमपश्यंतीजानकीजीवितंत्यजेत् ॥ ९ ॥ यथाचसमहाबाहुःपूर्णचंद्रनिभाननः ॥ समाश्वासयितुंन्याय्यःसीतादर्शनलालसः ॥ १० ॥

रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनत्रिंशः सर्गः ॥ ॥ २९ ॥ विक्रांतः शूरः । सीतायाः त्रिजटायाः । स्वप्नकथनमिति शेषः ॥ १ ॥ चिंतां चिंतयामास चिंतां चकारेत्यर्थः ॥ २ ॥ ॥ ३ ॥ चारेण चारात्मना प्रवर्तमानेन इदं वक्ष्यमाणम् ॥ ४ ॥ राक्षसानां विशेषस्तारतम्यमैश्वर्यादिकृतम् । अस्य रावणस्य प्रभावश्चावेक्षितः ॥ ५ ॥ अप्रमेयस्य अपरिच्छेद्यस्वरूपस्य अपरिच्छेद्यगुणस्य च सर्वसत्त्वदयावतः सर्वं सत्त्वं बलं दया च यस्य सर्वसत्त्वेषु दयावत इति वा । दयावत्त्वादेव सीतार्थे त्रैलोक्या नाशनं रामस्य समाश्वासयितुं युक्तमिति शेषः ॥ ६ ॥ आश्वासयामि । वर्तमानसामीप्ये भविष्यति लट् न हि नापि ॥ ७ ॥ दोषवत्कार्यहानिदोषवत् ॥ ८ ॥ तदेवाह गते हीति । तत्र रामसमीपे ॥ ९ ॥ आश्वासयितुं सीतासंदेशकथनेन तथा इयमप्याश्वासयितुं न्याय्येति शेषः ॥ १० ॥

विमर्दे विमर्दायापतेयुरित्यर्थः ॥ २७ ॥ न शक्नुयां युद्धश्रांत्येतिभावः ॥ २८ ॥ अगृहीतार्था मत्तोऽज्ञातमदागमनप्रयोजना ॥ २९ ॥ इमां वेति एतदर्थं किलायमागत इत्याशयेनेति शेषः ॥ ३० ॥ कार्यं विपदमेवोपपादयति उद्देशे समुल्लंघनमाप्यदेशे नष्टमार्गे प्रकारांतरेणैतत्प्राप्तिसंपादकमार्गरहिते ॥ ३१ ॥ विशस्ते हते ॥ ३२ ॥ ३३ ॥ नतु शक्ष्यामि युद्धश्रांत्येति भावः ॥ ३४ ॥ किंच युद्धे जयोपि संदिग्ध इत्याह असत्यानीति अनिश्चितजयानि संशयः संशयितजयफलकयुद्धव्यापारः । अरुचिहेतुः माज्ञत्वमेव दर्शयति कश्चेति । निःसंशयं निर्णीतफलकम् । माज्ञो मादृशः ससंशयं संशयितफलकं न कोपीत्यर्थः ॥ ३५ ॥

संरुद्धस्तैस्तुपरितोविधमेराक्षसंवलम् ॥ शक्नुयांनतुसंप्राप्तुंपरंपारंमहोदधेः ॥ २८ ॥ मांवागृह्णीयुरावृत्यवहवःशीघ्रकारिणः ॥ स्यादियंचागृहीतार्था ममचग्रहणंभवेत् ॥ २९ ॥ हिंसाभिरुचयोहिंस्युरिमांवाजनकात्मजाम् ॥ विपन्नंस्यात्ततःकार्यंरामसुग्रीवयोरिदम् ॥ ३० ॥ उद्देशेनष्टमार्गेस्मिन्राक्षसैः परिवारिते ॥ सागरेणपरिक्षिप्तेगुप्तेवसातिजानकी ॥ ३१ ॥ विशस्तेवागृहीतेवारक्षोभिर्मयिसंयुगे ॥ नाशंपश्यामिरामस्यसहायंकार्यसाधने ॥ ३२ ॥ विमृशंश्चनपश्यामियोहतेमयिवानरः ॥ शतयोजनविस्तीर्णंलंघयेतमहोदधिम् ॥ ३३ ॥ कामंहंतुंसमर्थोस्मिसहस्राण्यपिरक्षसाम् ॥ नतुशक्ष्याम्यहं प्राप्तुंपरंपारम्महोदधेः ॥ ३४ ॥ असत्यानिचयुद्धानिसंशयोमेनरोचते ॥ कश्चनिःसंशयंकार्यंकुर्यात्प्राज्ञःससंशयम् ॥ ३५ ॥ एषदोषोमहान्हिस्यान्मसीताभिभाषणे ॥ प्राणत्यागश्चवैदेह्याभवेदनभिभाषणे ॥ ३६ ॥ भूताश्चार्थाविरुध्यंतिदेशकालविरोधिताः ॥ विक्लवंदूतमासाद्यतमःसूर्योदये यथा ॥ ३७ ॥ अर्थानर्थांतरेबुद्धिर्निश्चितापिनशोभते ॥ घातयंतिहिकार्याणिदूताःपंडितमानिनः ॥ ३८ ॥ नविनश्येत्कथंकार्यंवैक्लव्यंनकथंमम ॥ लंघनंचसमुद्रस्यकथंनुनवृथाभवेत् ॥ ३९ ॥ कथंनुखलुवाक्यंमेशृणुयान्नोद्विजेतच ॥ इतिसंचिंत्यहनुमांश्चकारमतिमान्मतिम् ॥ ४० ॥ राममक्लिष्टकर्माणंसुवंधुमनुकीर्तयन् ॥ नैनामुद्वेजयिष्यामितद्वंधुगतचेतनाम् ॥ ४१ ॥ इक्ष्वाकूणांवरिष्ठस्यरामस्यविदितात्मनः ॥ शुभानिधर्मयुक्तानिवचनानिसमर्पयन् ॥ ४२ ॥ श्रावयिष्यामिसर्वाणिमधुरांप्रब्रुवन्गिरम् ॥ श्रद्धास्यतियथासीतातथासर्वंसमादधे ॥ ४३ ॥ इतिसबहुविधंमहाप्रभावोजगतिपतेःप्रमदामवेक्षमाणः ॥ मधुरमवितथंजगादवाक्यंद्रुमविटपांतरमास्थितोहनूमान् ॥ ४४ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आदि० सुं० त्रिंशःसर्गः ॥ ३० ॥ एवंबहुविधांचिंतांचिंतयित्वामहामतिः ॥ संश्रवेमधुरंवाक्यंवैदेह्याव्याजहारह ॥ १ ॥

सीताभिभाषणे पुरतः स्थित्वेति शेषः ॥ ३६ ॥ भूताः सिद्धमायाः । भूता इत्यादिश्लोकावत्रैव कांडे द्वितीयसर्गे व्याख्यातौ ॥ ३७ ॥ ३८ ॥ ३९ ॥ शृणुयात्सीतेति शेषः ॥ ४० ॥ सुबंधुं सीताया इति शेषः । स चासौ बंधुश्चेति तद्बंधौ रामे गता चेतना चित्तं यस्याः सा ॥ ४१ ॥ वचनानि समर्पयन्रामसंदेशवचनान्युच्चारयन् ॥ ४२ ॥ यथेयं श्रद्धारयति तथा सर्वं समादधे सम्यगभिधास्ये ॥ ४३ ॥ जगतिपतेरिति ह्रस्व आर्षः ॥ ४४ ॥ अभेवैमानः ॥ इति श्रीरामाभि०श्रीरा०वा०आ०सुं०त्रिंशः सर्गः ॥ ३० ॥ चिंतां चिंतयित्वा चिन्तां कृत्वा । कर्तव्यमर्थं निश्चित्येति यावत् । संश्रवे सम्यक्श्रवणयोग्ये

पक्ष्मणोऽरालया वक्ररोमराज्या वृतमित्यर्थः । तथा कृष्णं कनीनिकामात्रेऽन्यत्र विशालशुक्लत्वयुक्त अभितस्ताम्रं मांतरक्तम् एकं वामम् ॥ २ ॥ अध्युषितः कृतसंपर्कः ॥ ३ ॥ संहतयोः श्लिष्टयोस्तयोरूर्वोर्मध्य वाम ऊरुरित्यर्थः ॥ ४ ॥ हेमरूषितत्वाद्धेमसमानवर्णम् । ईषद्रजोध्वस्तमिव ईषन्मलिनमिव चिरमपरिवर्तनात् । शिखरं दाडिमबीजं तदग्रतुल्यदंत्याः । शिखरं शैलवृक्षाग्रे कक्षाग्रगृहकोटिषु पक्वे दाडिमबीजे चेति विश्वः । परिस्रंसत पर्यस्रंसत आसनादधः पपात ॥ ५ ॥ साधुसिद्धैः सम्यक्संबंधिभिः संवादिभिरिति पाठांतरम् ॥ ६ ॥ शोभने अक्षिणी भ्रुवौ केशांता अलकाश्च यत्र तत् । सितशुक्लदंष्ट्रं स्फटिकादि सितपदार्थवत् शुक्ला दंष्ट्रा यत्र तत्संबद्धशुक्लदंष्ट्रावदिति च ॥ ७ ॥ हर्षेण विबुद्धं सत्त्वं चित्तं यस्याः । वदनेन करणेन । शुक्ले शुक्लपक्षे ॥ ८ ॥ अर्जमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीय

भुजश्चचार्वंचितवृत्तपीनःपरार्ध्यकालागुरुचंदनार्हः ॥ अनुत्तमेनाध्युषितःप्रियेणचिरेणवामःसमवेपताशु ॥ ३ ॥ गजेंद्रहस्तप्रतिमश्चपीनस्तयोर्द्वयोःसंहतयोस्तुजातः ॥ प्रस्पंदमानःपुनरूरुरस्यरामंपुरस्तात्स्थितमाचचक्षे ॥ ४ ॥ शुभंपुनर्हैमसमानवर्णमीषद्रजोध्वस्तमिवातुलास्याः ॥ वासःस्थितायाःशिखराग्रदंत्याःकिंचित्परिस्रंसतचारुगात्र्याः ॥ ५ ॥ एतैर्निमित्तैरपरैश्चसुभ्रूःसंचोदिताप्रागपिसाधुसिद्धैः ॥ वातातपक्लांतमिवप्रणष्टंवर्षेणबीजंप्रतिसंजहर्ष ॥ ६ ॥ तस्याःपुनर्बिंबफलोपमोष्ठंस्वक्षिभ्रुकेशांतमरालपक्ष्म ॥ वक्त्रंबभासेसितशुक्लदंष्ट्रंराहोर्मुखाच्चंद्रइवप्रमुक्तः ॥ ७ ॥ सावीतशोकाव्यपनीततंद्राशांतज्वराहर्षविबुद्धसत्त्वा ॥ अशोभतार्यावदनेनशुक्लेशीतांशुनारात्रिरिवोदितेन ॥ ८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ हनुमानपिविक्रांतःसर्वंशुश्रावतत्त्वतः ॥ सीतायास्त्रिजटायाश्चराक्षसानांचगर्जितम् ॥ १ ॥ अवेक्षमाणस्तांदेवींदेवतामिवनंदने ॥ ततोबहुविधांचिंतांचिंतयामासवानरः ॥२॥ यांकपीनांसहस्राणिसुबहून्ययुतानिच ॥ दिक्षुसर्वासुमार्गंतेसेयमासादितामया ॥ ३ ॥ चारेणतुसुयुक्तेनशत्रोःशक्तिमवेक्षता ॥ गूढेनचरताताबदवेक्षितमिदंमया ॥ ४ ॥ राक्षसानांविशेषश्चपुरीचेयंनिरीक्षिता ॥ राक्षसाधिपतेरस्यप्रभावोरावणस्यच ॥ ५॥ यथातस्याप्रमेयस्यसर्वसत्त्वदयावतः ॥ समाश्वासयितुंभार्यांपतिदर्शनकांक्षिणीम् ॥६॥ अहमाश्वासयाम्येनांपूर्णचंद्रनिभाननाम् ॥ अदृष्टदुःखांदुखस्यनह्यंतमधिगच्छतीम् ॥ ७ ॥ यदिह्यहंसतीमेनांशोकोपहतचेतनाम् ॥ अनाश्वास्यगमिष्यामिदोषवद्गमनंभवेत् ॥ ८ ॥ गतेहिमयितत्रेयंराजपुत्रीयशस्विनी ॥ परित्राणमपश्यंतीजानकीजीवितंत्यजेत् ॥ ९ ॥ यथाचसमहाबाहुःपूर्णचंद्रनिभाननः ॥ समाश्वासयितुंन्याय्यःसीतादर्शनलालसः ॥ १० ॥

रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनत्रिंशः सर्गः ॥ ॥ २९ ॥ विक्रांतः शूरः । सीतायाः त्रिजटायाः । स्वप्नकथनमिति शेषः ॥ १ ॥ चिंतां चिंतयामास चिंतां चकारेत्यर्थः ॥ २ ॥ ॥ ३ ॥ चारेण चारात्मना प्रवर्तमानेन इदं वक्ष्यमाणम् ॥ ४ ॥ राक्षसानां विशेषस्तारतम्यमैश्वर्यादिकृतम् । अस्य रावणस्य प्रभावश्चावेक्षितः ॥ ५ ॥ अप्रमेयस्य अपरिच्छेद्यस्वरूपस्य अपरिच्छेद्यगुणस्य च सर्वसत्त्वदयावतः सर्वं सत्त्वं बलं दया च यस्य सर्वसत्त्वेषु दयावत इति वा । दयावत्त्वादेव सीतार्थे त्रैलोक्या नाशनं रामस्य समाश्वासयितुं युक्तमिति शेषः ॥ ६ ॥ आश्वासयामि । वर्तमानसामीप्ये भविष्यति लट् न हि नापि ॥ ७ ॥ दोषवत्कार्यहानिदोषवत् ॥ ८ ॥ तदेवाह गते हीति । तत्र रामसमीपे ॥ ९ ॥ आश्वासयितुं सीतासंदेशकथनेन तथा इयमप्याश्वासयितुं न्याय्येति शेषः ॥ १० ॥

सीतासमाश्वासनं च कष्टमित्याह निशाचरीणामिति। तासां प्रत्यक्षं सीताया अभिभाषणमक्षममयोग्यम्। अत इदं कार्यं कथं कर्तव्यमित्येवंकृच्छ्रगतोहमस्मि॥ ११ ॥ कालविलंबश्चाश्वासनस्यायुक्त इत्याह अनेनेति॥ १२॥ संभाषणं चावश्यकमित्याह रामस्त्विति । मामुद्दिश्य सीता किमब्रवीदिति चेत् रामो मां पृच्छेदित्यन्वयः ॥ १३ ॥ १४ ॥ यद्येनामसंभाष्यैव भर्तारं स्वस्वामिनं सुग्रीवं रामकारणाद्यदि वोद्योजयिष्यामि उद्योगं कारयिष्यामि तर्हि तदागमनं व्यर्थं स्यात् । अनाश्वासितया सीतया ततः प्रागेव देहत्यागादिति भावः ॥१५॥ अंतरमवकाशं तासामनवधानसमयम् ॥१६॥ तत्राश्वासनोपायं निश्चिनोति अहं हीति । अतितनुः अतिसूक्ष्मवानरतनुरेव सन्मानुषीं मनुष्यशरीरसाध्यां संस्कृतां व्याकरणसंस्कारवतीम् ॥१७॥ संस्कृतकथने दोषमाशंक्य मनुष्यभाषयैव व्यवहर्तव्यमिति निश्चिनुते यदीति ॥१८॥ तदेवाह अवश्यमेवेति ॥१९॥

निशाचरीणांप्रत्यक्षमक्षमंचाभिभाषितम् ॥ कथंनुखलुकर्तव्यमिदंकृच्छ्रगतोह्यहम् ॥ ११ ॥ अनेनरात्रिशेषेणयदिनाश्वास्यतेमया ॥ सर्वथानास्तिसं देहःपरित्यक्ष्यतिजीवितम् ॥ १२ ॥ रामस्तुयदिपृच्छेन्मांकिंमांसीताब्रवीद्वचः ॥ किमहंतंप्रतिब्रूयामसंभाष्यसुमध्यमाम् ॥ १३ ॥ सीतासंदेशरहितं मामितस्त्वरयागतम् ॥ निर्दहेदपिकाकुत्स्थःक्रोधतीव्रेणचक्षुषा ॥ १४ ॥ यदिवोद्योजयिष्यामिभर्तारंरामकारणात् ॥ व्यर्थमागमनंतस्यससैन्यस्यभ विष्यति ॥ १५ ॥ अंतरंत्वहमासाद्यराक्षसीनामवस्थितः ॥ शनैराश्वासयाम्यद्यसंतापबहुलामिमाम् ॥ १६ ॥ अहंह्यतितनुश्चैववानरश्चविशेषतः ॥ वाचंचोदाहरिष्यामिमानुषीमिहसंस्कृताम् ॥१७॥ यदिवाचंप्रदास्यामिद्विजातिरिवसंस्कृताम् ॥ रावणंमन्यमानामांसीताभीताभविष्यति ॥ १८ ॥ अवश्यमेववक्तव्यंमानुषंवाक्यमर्थवत् ॥ मयासांत्वयितुंशक्यानान्यथेयमनिंदिता ॥ १९ ॥ सेयमालोक्यमेरूपंजानकीभाषितंतथा ॥ रक्षोभिस्त्रा सितापूर्वंभूयस्त्रासमुपैष्यति ॥२०॥ ततोजातपरित्रासाशब्दंकुर्यान्मनस्विनी ॥ जानानामांविशालाक्षीरावणंकामरूपिणम् ॥ २१ ॥ सीतयाचकृते शब्देसहसाराक्षसीगणः ॥ नानाप्रहरणोघोरःसमेयादंतकोपमः ॥ २२ ॥ ततोमांसंपरिक्षिप्यसर्वतोविकृताननाः ॥ वधेचग्रहणेचैवकुर्युर्यत्नंमहा बलाः ॥ २३ ॥ तंमांशाखाःप्रशाखाश्चस्कंधांश्चोत्तमशाखिनाम् ॥ दृष्ट्वाचपरिधावंतंभवेयुःपरिशंकिताः ॥ २४ ॥ ममरूपंचसंप्रेक्ष्यवनेविचरतो महत् ॥ राक्षस्योभयवित्रस्ताभवेयुर्विकृतस्वराः ॥ २५ ॥ ततःकुर्युःसमाह्वानंराक्षस्योरक्षसामपि ॥ राक्षसेन्द्रनियुक्तानांराक्षसेंद्रनिवेशने ॥ २६ ॥ तेशूलशरनिस्त्रिंशविविधायुधपाणयः ॥ आपतेयुर्विमर्देस्मिन्वेगेनोद्वेगकारणात् ॥ २७ ॥

अथ वृक्षांतरितेनेयं मया वक्तव्येति निश्चयं कुर्वन् पुरतो गत्वाऽभिभाषणे दोषपरंपरामुपन्यस्यति सेयमिति । मे रूपं वानरीयं पुरतो दृष्ट्वा भाषितं च मानुषं श्रुत्वा विरुद्धव्यापारदर्शनाद्रावणोयमिति मत्वा त्रासं गमिष्यति ॥ २० ॥ किं ततस्तत्राह ततो जातेति । शब्दं आर्तशब्दम् ॥ २१ ॥ समेयान्मत्संमुखो गच्छेन्मिलितो भवेद्वा ॥ २२ ॥ संपरिक्षिप्य सर्वतश्चक्षुर्विक्षेपेण ज्ञात्वा ॥ २३ ॥ शाखाः परिधावंतं मां दृष्ट्वेत्यन्वयः ॥ २४ ॥ ताभिरप्रधर्षणार्थं परिगृहीतं मम महद्रूपं संप्रेक्ष्य भयवित्रस्ता भयेन मद्दर्शनजशरीरकंपादियुताः सत्यस्त्रस्तचित्ताः विकृतस्वरा भवेयुः । न केवलमयं शाखामृगोऽपितु कश्चन कामरूपी शत्रुपक्ष्य इति शंकिताः स्युरित्यर्थः ॥ २५ ॥ ततः किं तत्राह ततः कुर्युरिति । राक्षसेंद्रनिवेशने रक्षणाय राक्षसेंद्रेण नियुक्तानामाह्वानं कुर्युः ॥ २६ ॥ उद्वेगकारणात् आसामुद्वेगरूपान्निमित्तादस्मिन्देशे वेगेन

विमर्दे विमर्दायापतेयुरित्यर्थः ॥ २७ ॥ न शक्नुयां युद्धश्रांत्येतिभावः ॥ २८ ॥ अगृहीतार्था मत्तोऽज्ञातमदागमनप्रयोजना ॥ २९ ॥ इमां वेति एतदर्थं किलायमागत इत्याशयेनेति शेषः ॥ ३० ॥ कार्यं विपदमेवोपपादयति उद्देशे समुल्लंघनमाप्यदेशे नष्टमार्गे प्रकारांतरेणैतत्प्राप्तिसंपादकमार्गरहिते ॥ ३१ ॥ विशस्ते हते ॥ ३२ ॥ ३३ ॥ नतु शक्ष्यामि युद्धश्रांत्येति भावः ॥ ३४ ॥ किंच युद्धे जयोपि संदिग्ध इत्याह असत्यानीति अनिश्चितजयानि संशयः संशयितजयफलकयुद्धव्यापारः । अरुचिहेतुः माज्ञत्वमेव दर्शयति कश्चेति । निःसंशयं निर्णीतफलकम् । माज्ञो मादृशः ससंशयं संशयितफलकं न कोपीत्यर्थः ॥ ३५ ॥

संरुद्धस्तैस्तुपरितोविधमेराक्षसंवलम् ॥ शक्नुयांनतुसंप्राप्तुंपरंपारंमहोदधेः ॥ २८ ॥ मांवाग्रह्णीयुरावृत्यवहवःशीघ्रकारिणः ॥ स्यादियंचागृहीतार्था ममचग्रहणंभवेत् ॥ २९ ॥ हिंसाभिरुचयोहिंस्युरिमांवाजनकात्मजाम् ॥ विपन्नंस्यात्ततःकार्यंरामसुग्रीवयोरिदम् ॥ ३० ॥ उद्देशेनष्टमार्गेस्मिन्राक्षसैः परिवारिते ॥ सागरेणपरिक्षिप्तेगुप्तेवसातिजानकी ॥ ३१ ॥ विशस्तेवागृहीतेवारक्षोभिर्मयिसंयुगे ॥ नाशंपश्यामिरामस्यसहायंकार्यसाधने ॥ ३२ ॥ विमृशंश्चनपश्यामियोहतेमयिवानरः ॥ शतयोजनविस्तीर्णंलंघयेतमहोदधिम् ॥ ३३ ॥ कामंहंतुंसमर्थोस्मिसहस्राण्यपिरक्षसाम् ॥ नतुशक्ष्याम्यहं प्राप्तुंपरंपारम्महोदधेः ॥ ३४ ॥ असत्यानिचयुद्धानिसंशयोमेनरोचते ॥ कश्चनिःसंशयंकार्यंकुर्यात्प्राज्ञःससंशयम् ॥ ३५ ॥ एषदोषोमहान्हिस्यान्म मसीताभिभाषणे ॥ प्राणत्यागश्चवैदेह्याभवेदनभिभाषणे ॥ ३६ ॥ भूताश्चार्थाविरुध्यंतिदेशकालविरोधिताः ॥ विक्लवंदूतमासाद्यतमःसूर्योदये यथा ॥ ३७ ॥ अर्थानर्थांतरेबुद्धिर्निश्चितापिनशोभते ॥ घातयंतिहिकार्याणिदूताःपंडितमानिनः ॥ ३८ ॥ नविनश्येत्कथंकार्यंवैक्लव्यंनकथंमम ॥ लंघनंचसमुद्रस्यकथंनुनवृथाभवेत् ॥ ३९ ॥ कथंनुखलुवाक्यंमेशृणुयान्नोद्विजेतच ॥ इतिसंचिंत्यहनुमांश्चकारमतिमान्मतिम् ॥ ४० ॥ राममक्लिष्टकर्माणंसुवंधुमनुकीर्तयन् ॥ नैनामुद्वेजयिष्यामितद्बंधुगतचेतनाम् ॥ ४१ ॥ इक्ष्वाकूणांवरिष्ठस्यरामस्यविदितात्मनः ॥ शुभानिधर्म युक्तानिवचनानिसमर्पयन् ॥ ४२ ॥ श्रावयिष्यामिसर्वाणिमधुरांप्रब्रुवन्गिरम् ॥ श्रद्धास्यतियथासीतातथासर्वंसमादधे ॥ ४३ ॥ इतिसबहुविधंम हाप्रभावोजगतिपतेःप्रमदामवेक्षमाणः ॥ मधुरमवितथंजगादवाक्यंद्रुमविटपांतरमास्थितोहनूमान् ॥ ४४ ॥ इत्यार्षे श्रीमद्वा० वाल्मी० आदि० सुं० त्रिंशःसर्गः ॥ ३० ॥ एवंवहुविधांचिंतांचिंतयित्वामहामतिः ॥ संश्रवेमधुरंवाक्यंवैदेह्याव्याजहारह ॥ १ ॥

सीताभिभाषणे पुरतः स्थित्वेति शेषः ॥ ३६ ॥ भूताः सिद्धमायाः । भूता इत्यादिश्लोकावत्रैव कांडे द्वितीयसर्गे व्याख्यातौ ॥ ३७ ॥ ३८ ॥ ३९ ॥ शृणुयात्सीतेति शेषः ॥ ४० ॥ सुबंधुं सीताया इति शेषः । स चासौ बंधुश्चेति तद्बंधौ रामे गता चेतना चित्तं यस्याः सा ॥ ४१ ॥ वचनानि समर्पयन्रामसंदेशवचनान्युच्चारयन् ॥ ४२ ॥ यथेयं श्रद्धास्यति तथा सर्वं समादधे सम्यगभिधास्ये ॥ ४३ ॥ जगतिपतेरिति ह्रस्व आर्षः ॥ ४४ ॥ अभेर्वैमानः ॥ इति श्रीरामाभि० श्रीरा० वा० आ० सुं० त्रिंशः सर्गः ॥ ३० ॥ चिंतां चिंतयित्वा चिन्तां कृत्वा । कर्तव्यमर्थं निश्चित्येति यावत् । संश्रवे सम्यक्श्रवणयोग्ये

समीपदेशे यत्रोक्तं सीतैव शृणुयान्नान्य इत्यर्थः । व्याजहार वृत्तांतमिति शेषः ॥ १ ॥ २ ॥ मुख्यस्य राजवंशेषु श्रेष्ठस्य । लक्ष्मिवर्धन इति ह्रस्व आर्षः ॥ ३ ॥ पार्थिवव्यंजनैश्छत्रचामरादिभिर्बाह्यैः सामुद्रिकोक्तैः शारीरैश्च राजचिह्नैर्युक्तः । सुखदः मित्राणाम् ॥ ४ ॥ ५ ॥ ६ ॥ सत्याभिसंधस्य सत्यसंकल्पस्य ॥ ७ ॥ मृगयामुद्दिश्य धावता ॥ ८ ॥ जनस्थानवधं खरदूषणौ निहतौ च श्रुत्वा रावणेनामर्षापहता वैरेणापहता तु ॥ ९ ॥ मायया मृगरूपेण मारीचेन करणेन रामंवंचयित्वेत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तस्या हेतोस्तदन्वेषणहेतोः । यथारूपां यादृग्रूपां यादृग्वर्णां यादृक्चिह्नवतीं च तां सीताम्॥ १४॥

राजादशरथोनामरथकुंजरवाजिनाम् ॥ पुण्यशीलोमहाकीर्तिरिक्ष्वाकूणांमहायशाः ॥ २ ॥ अहिंसारतिरक्षुद्रोघृणीसत्यपराक्रमः ॥ मुख्यस्येक्ष्वाकुवंशस्यलक्ष्मीवाँल्लक्ष्मिवर्धनः ॥ ३ ॥ पार्थिवव्यंजनैर्युक्तःपृथुश्रीःपार्थिवर्षभः ॥ पृथिव्यांचतुरंतायांविश्रुतःसुखदःसुखी ॥ ४ ॥ तस्यपुत्रःप्रियोज्येष्ठस्ताराधिपनिभाननः ॥ रामोनामविशेषज्ञःश्रेष्ठःसर्वधनुष्मताम् ॥ ५ ॥ रक्षितास्वस्यवृत्तस्यस्वजनस्यापिरक्षिता ॥ रक्षिताजीवलोकस्यधर्मस्यचपरंतपः ॥ ६ ॥ तस्यसत्याभिसंधस्यवृद्धस्यवचनात्पितुः ॥ सभार्यःसहचभ्रात्रावीरःप्रव्रजितोवनम् ॥ ७ ॥ तेनतत्रमहारण्येमृगयांपरिधावता ॥ राक्षसानिहताःशूरावहवःकामरूपिणः ॥ ८ ॥ जनस्थानवधंश्रुत्वानिहतौखरदूषणौ ॥ ततस्त्वमर्षापहताजानकीरावणेनतु ॥ ९ ॥ वंचयित्वावनेरामंमृगरूपेणमायया ॥ समार्गमाणस्तांदेवींरामःसीतामनिंदिताम् ॥ १० ॥ आससादवनेमित्रंसुग्रीवंनामवानरम् ॥ ततःसवालिनंहत्वारामःपरपुरंजयः ॥११॥ आयच्छत्कपिराज्यंतुसुग्रीवायमहात्मने ॥ सुग्रीवेणाभिसंदिष्टाहरयःकामरूपिणः ॥ १२ ॥ दिक्षुसर्वासुतांदेवींविचिन्वंतःसहस्रशः ॥ अहंसंपातिवचनाच्छतयोजनमायतम् ॥ १३ ॥ तस्याहेतोर्विशालाक्ष्याःसमुद्रंवेगवान्प्लुतः ॥ यथारूपांयथावर्णांयथालक्ष्मवतींचताम् ॥ १४ ॥ अश्रौषंराघवस्याहंसेयमासादितामया ॥ विररामैवमुक्त्वासवाचंवानरपुंगवः ॥ १५ ॥ जानकीचापितच्छ्रुत्वाविस्मयंपरमंगता ॥ ततःसावक्रकेशांतासुकेशीकेशसंवृतम् ॥ उन्नम्यवदनंभीरुःशिंशपामन्ववैक्षत ॥ १६ ॥ निशम्यसीतावचनंकपेश्चदिशश्चसर्वाःप्रदिशश्चवीक्ष्य ॥ स्वयंप्रहर्षंपरमंजगाम सर्वात्मनाराममनुस्मरंती ॥ १७ ॥ सतिर्यगूर्ध्वंचतथाह्यधस्तान्निरीक्षमाणातमचिंत्यबुद्धिम् ॥ ददर्शपिंगाधिपतेरमात्यंवातात्मजंसूर्यमिवोदयस्थम् ॥ १८ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आदि० सुन्दर० एकत्रिंशः सर्गः ॥ ३१ ॥ ततःशाखांतरेलीनंदृष्ट्वाचलितमानसा ॥ वेष्टितार्जुनवस्त्रंतंविद्युत्संघातपिंगलम् ॥ १ ॥

राघवस्य मुखादहमश्रौषम् सेयमासादिता दृष्टा । इहेति शेषः ॥ १५ ॥ केशसंवृतम् असंस्कारतः प्रकीर्णत्वात् ॥ १६ ॥ १७ ॥ १८ ॥ दृश्यमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ लीनं दृष्ट्वा अस्फुरंतं दृष्ट्वा । चलितमानसा अदृष्टरूपोयमपि मायामृगो वेति चलितचित्ता । पुनः सम्यङ्निरीक्ष्योच्यमानविशेषणं कपिं ददर्श । वेष्टितं

परिहितमर्जुनवर्णं वस्त्रं येन तम् ॥ १ ॥ २ ॥ ३ ॥ वानरस्य । निर्धारणे षष्ठी । जातावेकवचनम् । वानराणां मध्ये इदं सत्त्वं जीवः । भीमं प्राकृतप्राणिभयावहम् । अतएव तैर्दुरासदं दुर्निरीक्ष्यं चेति मत्वा पुनरपि मायैवेयमिति भयान्मुमोह ॥ ४ ॥ अथ भयमोहिता सती भृशं करुणं दीनं विललाप । विलापप्रकारो रामेत्यादि ॥ ५ ॥ मंदमंदस्वरा । अस्य दैवगत्या वास्तवत्वे राक्षस्यो मा जानंत्वित्यतिमंदस्वररोदनम् । विनीतवद्विनीततयोपस्थितम् । स्वप्नःजाग्रत्कल्पःस्वप्नइत्यर्थः ॥ ६ ॥ स्वप्नत्वचिंतापूर्वकमेव पुनर्दर्शनमुपन्यस्यति सेति । किमिदं वाक्यं राक्षस्यः श्रुतवत्य इति परितो वीक्षमाणा सा । पृथुभग्नं वज्रप्रहाराद्वक्रं यस्य तम् । शाखामृगेंद्रस्य यथोक्तकारं कामाज्ञाकरम् । यद्वा यथोक्तवेष्टितार्जुनवस्त्राद्याकारम् । छांदसो ह्रस्वः । पिंगप्रवरं कपिश्रेष्ठमिति निश्चियेन ददर्श ॥ ७ ॥ सा तं कपिरूपं रावणमित्येव समीक्ष्य भृशं विसंज्ञा चित्तक्षोभाद्गतासुकल्पेव ॥ ८ ॥ एवं चिंतयामासेत्यत्रैवंशब्दार्थः स्वप्न इत्यादि । दृश्यमानोयं स्वप्नो मया विकृत एव दृष्टः । कुतस्तत्राह शाखामृग इत्यादि । एवं दुःस्वप्नं मत्वा स्वस्ति प्रार्थयते । जनकस्य तद्वंश्यस्य ॥ ९ ॥ अथ स्वप्न

सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् ॥ फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥ २ ॥ साथ दृष्ट्वा हरिश्रेष्ठं विनीतवदवस्थितम् ॥ मैथिली चिंतयामास विस्मयं परमं गता ॥ ३ ॥ अहो भीममिदं सत्त्वं वानरस्य दुरासदम् ॥ दुर्निरीक्ष्यमिदं मत्वा पुनरेव मुमोह सा ॥ ४ ॥ विललाप भृशं सीता करुणं भयमोहिता ॥ राम रामेति दुःखार्ता लक्ष्मणेति च भामिनी ॥ ५ ॥ रुरोद सहसा सीता मंदमंदस्वरा सती ॥ साथ दृष्ट्वा हरिवरं विनीतवदुपागतम् ॥ मैथिली चिंतयामास स्वप्नोयमिति भामिनी ॥ ६ ॥ सा वीक्षमाणा पृथुभग्नवक्रं शाखामृगेंद्रस्य यथोक्तकारम् ॥ ददर्श पिंगप्रवरं महार्हं वातात्मजं बुद्धिमतां वरिष्ठम् ॥ ७ ॥ सा तं समीक्ष्यैव भृशं विपन्ना गतासुकल्पेव बभूव सीता ॥ चिरेण संज्ञां प्रतिलभ्य चैवं विचिंतयामास विशालनेत्रा ॥ ८ ॥ स्वप्नो मयायं विकृतोद्य दृष्टः शाखामृगः शास्त्रगणैर्निषिद्धः ॥ स्वस्त्यस्तु रामाय सलक्ष्मणाय तथा पितुर्मे जनकस्य राज्ञः ॥ ९ ॥ स्वप्नो हि नायं नहि मेस्ति निद्रा शोकेन दुःखेन च पीडितायाः ॥ सुखं हि मे नास्ति यतो विहीना तेनेंदुपूर्णप्रतिमाननेन ॥ १० ॥ रामेति रामेति सदैव बुद्ध्या विचिंत्य वाचा ब्रुवती तमेव ॥ तस्यानुरूपं च कथां तदर्थामेवं प्रपश्यामि तथा शृणोमि ॥ ११ ॥ अहं हि तस्याद्य मनोभवेन संपीडिता तद्गतसर्वभावा ॥ विचिंतयंती सततं तमेव तथैव पश्यामि तथा शृणोमि ॥ १२ ॥ मनोरथः स्यादिति चिंतयामि तथापि बुद्ध्यापि वितर्कयामि ॥ किं कारणं तस्य हि नास्ति रूपं सुव्यक्तरूपश्च वदत्ययं माम् ॥ १३ ॥

हेत्वभावान्नायं स्वप्न इत्याह स्वप्नो हीति । स्वप्नस्य निद्रामूलत्वान्निद्रायाश्च सुखमूलत्वाद्रामवियोगेन च मे सुखाभावादिति भावः ॥ १० ॥ सदा रामेति विचिंत्य वाचा तमेव ब्रुवंत्यहं तस्य चिंतनादेरनुरूपं यथा तथा शृणोमि । श्रूयमाणां च कथां तथा तेन प्रकारेण तदर्थामेव चिंताद्यनुरूपार्थामेव पश्यामि ॥ ११ ॥ उक्तमेवार्थं विवृणोति अहं हीति ॥ १२ ॥ अथ मनोरथमात्रमेतदिति संभाव्य तदपि नेति निश्चिनोति मनोरथ इति । मनोराज्यमित्यर्थः स नेत्याह तथापीति । तथैवेत्यर्थः । यथा मनोरथोन्नीतोर्थस्तं तथैव बुद्ध्यापि निश्चयात्मकांतःकरणवृत्त्यापि विषयीकृतं तर्कयामि । मनोराज्यं संकल्पविकल्पपरं चंचलवृत्तिरूपम् । बुद्धिस्तु निश्चयात्मिका स्थिरा चेति विरुद्धमित्यर्थः । ननु तर्हि मनोराज्यत्वमेवास्तु इतरदेवारोपितं तत्राह किं कारणमिति । मनोराज्यत्वाभाव इति शेषः । उत्तरं तस्य हि मनोराज्यभूतार्थस्य नास्ति रूपं अनुभवार्हं रूपं नास्तीति हि प्रसिद्धम् । प्रकृते तु दृश्यं रूपमस्तीत्याह सुव्यक्तेति । यो मां वदति सुव्यक्तरूपो दृश्यते सुव्यक्तरूपं च वदति यत इत्यर्थः । मनोराज्यार्थो दृष्टनष्टो बाह्येंद्रियज

स्थिरानुभवानर्होतोऽवास्तव एवायमिति भावः ॥ १३ ॥ एवं हनुमद्वचसो वास्तवत्वं निर्णीयानाप्तप्रणीतत्वेन मिथ्यार्थकत्वस्यापि संभवात्तद्व्यावृत्तये देवान्प्रणमति नमोस्त्विति । वाचस्पतित्वेन वाचः सत्यत्वसंपादनयोग्यता वज्रिणोपि बृहस्पतितः सत्यवाग्रूपशब्दपारायणग्रंथरूपमंत्रलाभात्तदुपासकत्वेन वाचः सत्यत्वसंपादनयोग्यता । स्वयंभुवे सत्यादिरूपब्रह्मणे । वागधिष्ठातृदेवतात्वाच्चाग्नये नतिः ॥ १४ ॥ वीर्युमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ स इति । अत्यूर्ध्वशाखातः सीतासंमुखशाखायामवतीर्य । द्रुमशब्दस्तदवयवपरः । अतएवाग्रे द्रुमाश्रितमिति वक्ष्यति । कृपणः मातुः सीताया दुःखदर्शनाद्दीनः । दूरात्प्रणिपत्य तत उपसृत्य समीपमागत्य ॥ १ राक्षसीनां निशाजागरतो निद्राजाड्यात्त्रिजटास्वप्नश्रवणजन्यभयेनात्मत्राणाय सीतैकशरणत्वेनोपक्षणाच्च दैवानुग्रहाच्चामत्यूहः सीताहनूमतोः संलाप इति बोध्यम् ॥ २ ॥ अथ लिंगैः सीतेति निश्चयेपि तथैव साक्षाद्वाचयितुमजानान इव पृच्छति का न्विति ॥ ३ ॥ विप्रकीर्णं भिन्नघटादिव

नमोस्तुवाचस्पतयेसवाज्रिणेस्वयंभुवेचैवहुताशनाय ॥ अनेनचोक्तंयदिदंममाग्रतोवनौकसातच्चतथास्तुनान्यथा ॥ १४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये सुंदरकांडे द्वात्रिंशःसर्गः ॥ ३२ ॥ सोवतीर्यद्रुमात्तस्माद्विद्रुमप्रतिमाननः ॥ विनीतवेषःकृपणःप्रणिपत्योपसृत्यच ॥ १ ॥ तामब्रवीन्महातेजाहनूमान्मारुतात्मजः ॥ शिरस्यंजलिमाधायसीतांमधुरयागिरा ॥ २ ॥ कानुपद्मपलाशाक्षिक्लिष्टकौशेयवासिनि ॥ द्रुमस्यशाखामालंब्यतिष्ठसित्वमनिंदिता ॥ ३ ॥ किमर्थंतवनेत्राभ्यांवारिस्रवतिशोकजम् ॥ पुंडरीकपलाशाभ्यांविप्रकीर्णमिवोदकम् ॥ ४ ॥ सुराणामसुराणांचनागगंधर्वरक्षसाम् ॥ यक्षाणांकिन्नराणांचकात्वंभवसिशोभने ॥ ५ ॥ कात्वंभवसिरुद्राणांमरुतांवावरानने ॥ वसूनांवावरारोहेदेवताप्रतिभासिमे ॥ ६ ॥ किंनुचंद्रमसाहीनापतिताविबुधालयात् ॥ रोहिणीज्योतिषांश्रेष्ठाश्रेष्ठासर्वगुणाधिका ॥ ७ ॥ "कात्वंभवसिकल्याणित्वमनिंदितलोचने " कोपाद्वायदिवामोहाद्भर्तारमसितेक्षणे ॥ वसिष्ठंकोपयित्वात्वंवाऽसिकल्याण्यरुंधती ॥ ८ ॥ कोनुपुत्रःपिताभ्राताभर्तावातेसुमध्यमे ॥ अस्माल्लोकादमुंलोकंगतंत्वमनुशोचसि ॥ ९ ॥ रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि ॥ नत्वादेवीमहंमन्येराज्ञःसंज्ञावधारणात् ॥ १० ॥ व्यंजनानिहितेयानिलक्षणानिचलक्षये ॥ महिषीभूमिपालस्यराजकन्याचमेमता ॥ ११ ॥

मसृतम् ॥ ४ ॥ का न्वित्यादिश्लोकद्वयोक्तार्थस्यैव प्रपंचः सुराणामिति । सुरादिजातिमध्ये त्वं का किंजातीया ॥ ५ ॥ देवता प्रतिभासि दिव्यरूपलक्षणवत्त्वादिति भावः ॥ ६ ॥ कांत्या रोहिणीत्वाशंका । श्रेष्ठैः सर्वैर्गुणैरधिका । एतदग्रे का त्वं भवसि कल्याणि त्वमनिंदितलोचने इत्यर्धं प्रक्षिप्तम् ॥ ७ ॥ कोपादेति । अत्रापि किं न्विति संबध्यते । कोपादिना वसिष्ठं कोपयित्वा इहागता कल्याण्यरुंधती किं नु वाऽसि । पातिव्रत्यादरुंधतीत्वशंका ॥ ८ ॥ अथ शोककारणं पुत्रादिवियोगोन्यद्वेति पृच्छति । को नु पुत्र इति । अस्माल्लोकादमुं लोकं परलोकं गतं यं त्वमनुशोचसि सः पुत्रादिः को न्विति योजना ॥ ९ ॥ इदानीं देवयोनित्वशंकां स्वयमेव निवर्तयति रोदनादिति । अश्रुसंबंधो भूस्पर्शश्च देवानां नास्तीति श्रुतम् । तद्वत्त्वा त्वां देवीं न मन्ये । किंच राज्ञो रामस्य संज्ञावधारणान्नामग्रहणात् ॥ १० ॥ भूमिपालस्य रामस्य महिषीति मे मतिः । यतो व्यंजनानि राममहिषीत्वप्रकाशकानि ते सामुद्रिकलक्षणानि च लक्षयेऽतो रावणेन जनस्थानाद्बलात्प्रमथिता प्रमथ्य हृता । यदि सीता त्वंतदा

पृच्छतो ममाचक्ष्व तत्त्वं ब्रूहि । ते भद्रमस्तु ॥ ११ ॥ १२ ॥ अनुक्तेपि त्वत्समीपनिश्चयो ममास्तीति मौढ्याऽह यथा हीति । अपरोक्षानुभवविषयामित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ अहं नाम्ना सीता इति ॥ १६ ॥ १७ ॥ १८ ॥ नाम प्रसिद्धमित्यर्थः ॥ १९ ॥ प्रत्यहं यन्मम भोजनं भोज्यं वस्तु तन्नपिबेयं न खादेयमित्यन्वयः ॥ २० ॥ तद्देवासुरे युद्धे वरदानरूपम् ॥ २१ ॥ ॥ २२ ॥ राज्यमयाचत भरताय दातुमिति शेषः ॥ २३ ॥ अभिषेकादपि परमधिकं प्रियं यथा भवति तथा मनसा पूर्वमंगीकृत्य वाचाप्यंगीकृतवान् ॥ २४ ॥ सीता रामं स्तौति दद्यादिति ॥ २५ ॥

रावणेनजनस्थानाद्बलात्प्रमथितायदि ॥ सीतात्वमसिभद्रंतेतन्ममाचक्ष्वपृच्छतः ॥ १२ ॥ यथाहितववैदन्यंरूपंचाप्रतिमानुषम् ॥ तपसाचान्वितोवेषस्त्वंराममहिषीध्रुवम् ॥ १३ ॥ सातस्यवचनंश्रुत्वारामकीर्तनहर्षिता ॥ उवाचवाक्यंवैदेहीहनूमंतंद्रुमाश्रितम् ॥१४॥ पृथिव्यांराजसिंहानांमुख्यस्यविदितात्मनः ॥ स्नुषादशरथस्याहंशत्रुसैन्यप्रणाशिनः ॥ १५ ॥ दुहिताजनकस्याहंवैदेहस्यमहात्मनः ॥ सीतेतिनाम्नाचोक्ताहंभार्यारामस्यधीमतः ॥ १६ ॥ समाद्वादशतत्राहंराघवस्यनिवेशने ॥ भुंजानामानुषान्भोगान्सर्वकामसमृद्धिनी ॥ १७ ॥ ततस्त्रयोदशेवर्षेराज्येचेक्ष्वाकुनंदनम् ॥ अभिषेचयितुंराजासोपाध्यायःप्रचक्रमे ॥ १८ ॥ तस्मिन्संभ्रियमाणेतुराघवस्याभिषेचने ॥ कैकेयीनामभर्तारमिदंवचनमब्रवीत् ॥१९॥ नपिबेयंनखादेयंप्रत्यहंममभोजनम् ॥ एषमेजीवितस्यांतोरामोयद्यभिषिच्यते ॥ २० ॥ यत्तदुक्तंत्वयावाक्यंप्रीत्यानृपतिसत्तम ॥ तच्चेन्नवितथंकार्यंवनंगच्छतुराघवः ॥ २१ ॥ सराजासत्यवाग्देव्यावरदानमनुस्मरन् ॥ मुमोहवचनंश्रुत्वाकैकेय्याःक्रूरमप्रियम् ॥ २२ ॥ ततस्तंस्थविरोराजासत्यधर्मेव्यवस्थितः ॥ ज्येष्ठंयशस्विनंपुत्रंरुदन्राज्यमयाचत ॥ २३ ॥ सपितुर्वचनंश्रीमानभिषेकात्परंप्रियम् ॥ मनसापूर्वमासाद्यवाचाप्रतिगृहीतवान् ॥ २४ ॥ दद्यान्नप्रतिगृह्णीयात्सत्यंब्रूयान्नचानृतम् ॥ अपिजीवितहेतोर्हिरामःसत्यपराक्रमः ॥ २५ ॥ सविहायोत्तरीयाणिमहार्हाणिमहायशाः ॥ विसृज्यमनसाराज्यंजनन्यैमांसमादिशत् ॥ २६ ॥ साहंतस्याग्रतस्तूर्णंप्रस्थितावनचारिणी ॥ नहिमेतेनहीनायावासःस्वर्गेपिरोचते ॥ २७ ॥ प्रागेवतुमहाभागःसौमित्रिर्मित्रनंदनः ॥ पूर्वजस्यानुयात्रार्थेकुशचीरैरलंकृतः ॥ २८ ॥ तेवयंभर्तुरादेशंबहुमान्यदृढव्रताः ॥ प्रविष्टाःस्मपुराहष्टंवनंगंभीरदर्शनम् ॥ २९ ॥ वसतोदंडकारण्येतस्याहममितौजसः ॥ रक्षसापहृताभार्यारावणेनदुरात्मना ॥ ३० ॥ द्वौमासौतेनमेकालोजीवितानुग्रहःकृतः ॥ ऊर्ध्वंद्वाभ्यांतुमासाभ्यांततस्त्यक्ष्यामिजीवितम् ॥ ३१ ॥ इत्यार्षेश्री० वा० आ० सुं० त्रयस्त्रिंशःसर्गः ॥ ३३ ॥ तस्यास्तद्वचनंश्रुत्वाहनूमान्हरिपुंगवः ॥ दुःखाद्दुःखाभिभूतायाःसांत्वमुत्तरमब्रवीत् ॥ १ ॥

समादिशद्बहुमकारं रक्षणाय निवेदितवान् ॥ २६ ॥ तस्याग्रतः प्रस्थिता वनचारिणी अभूवमिति शेषः ॥ २७ ॥ २८ ॥ भर्तुर्दशरथस्य पुरा अदृष्टामितिच्छेदः ॥ २९ ॥ ३० ॥ जीवितानुग्रहः जीवितानुग्रहकरः कालः कृतः परिच्छिन्नः ॥ ३१ ॥ अपेगैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ दुःखाद्दुःखाभिभूताया इत्यलुगार्षः ।

दुःखपरंपराखिन्नाया इत्यर्थः ॥ १ ॥ तव समीपमितिशेषः ॥ २ ॥ ब्राह्ममस्त्रं यो वेद अनेन सर्वास्त्रपारगत्वमुक्तम् । तदस्त्रदेवताया ब्रह्मणः सर्वजगत्समष्टित्ववत् तदस्त्रस्यापि सर्वास्त्रसमष्टित्वात् वेदाश्चेत्यनेन सर्वकर्ममार्गपारगत्वं वेदविदांवर इत्यनेन ज्ञानमार्गपारगत्वमुक्तम् ॥ ३ ॥ ४ ॥ संहृष्टसर्वांगी पुलकितसर्वांगी ॥ ५ ॥ असंभावितमपि रामप्रसंगं जीवितधारणेन प्राप्तत्वात्तत्संवादिनीं लौकिकीं गाथां स्तौति कल्याणीति । गाथायाः संवादित्वदर्शनजो हर्षोबतेत्यनेन सूच्यते । कल्याणी सत्यार्थेति मा मां प्रतिभाति । मज्ज्ञानविषया भवतीत्यर्थः । गाथां पठति एतीति जीवंतमेवेत्येवातो बहुदुःखं सोढ्वापि जीवितव्यमिति भावः ॥ ६ ॥ तस्मिंस्तस्मिन्काले रामलक्ष्मणकुशलवचःश्रवणकाले तयोः रामलक्ष्मणयोः समागमकाल इव सीतायास्तेन वचसा अद्भुता अचिंत्यस्वरूपा प्रीतिरुत्पादिता किंच तयोः सीताहनूमतोस्तस्मिन्स मागमेपरस्परस्याद्भुता प्रीतिरुत्पादिता । देवी दृष्टेति हनूमतःप्रीतिः । रामदूतो दृष्ट इति देव्याः प्रीतिः अतस्तौ विश्वस्तौ भूत्वा परस्परेणालापं चक्रतुः ॥ ७ ॥ तद्वचनं कल्याणीत्यादिसीतावचनं समीपमुपचक्रमे

अहंरामस्यसंदेशाद्देविदूतस्तवागतः ॥ वैदेहिकुशलीरामःसत्वांकौशलमब्रवीत् ॥ २ ॥ योब्राह्ममस्त्रंवेदांश्चवेदवेदविदांवरः ॥ सत्वांदाशरथीरामोदेविकौशलमब्रवीत् ॥ ३ ॥ लक्ष्मणश्चमहातेजाभर्तुस्तेऽनुचरःप्रियः ॥ कृतवाञ्छोकसंतप्तःशिरसातेऽभिवादनम् ॥ ४ ॥ सातयोःकुशलंदेवीनिशम्य नरसिंहयोः ॥ प्रतिसंहृष्टसर्वांगीहनूमंतमथाब्रवीत् ॥ ५ ॥ कल्याणीबतगाथेयंलौकिकीप्रतिभातिमा ॥ एतिजीवंतमानंदोनरंवर्षशतादपि ॥ ६ ॥ तयोःसमागमेतस्मिन्प्रीतिरुत्पादिताऽद्भुता ॥ परस्परेणचालापंविश्वस्तौतौप्रचक्रतुः ॥ ७ ॥ तस्यास्तद्वचनंश्रुत्वाहनूमान्मारुतात्मजः ॥ सीतायाःशोकतप्तायाःसमीपमुपचक्रमे ॥ ८ ॥ यथायथासमीपंसहनूमानुपसर्पति ॥ तथातथारावणंसातंसीतापरिशंकते ॥ ९ ॥ अहोधिग्धिक्कृतमिदं कथितंहियदस्यमे ॥ रूपांतरमुपागम्यसएवायंहिरावणः ॥ १० ॥ तामशोकस्यशाखांतुविमुक्ताशोककर्शिता ॥ तस्यामेवानवद्यांगीधरण्यांसमुपाविशत् ॥ ११ ॥ अवंदतमहाबाहुस्ततस्तांजनकात्मजाम् ॥ साचैनंभयसंत्रस्ताभूयोनैनमुदैक्षत ॥ १२ ॥ तंदृष्ट्वावंदमानंचसीताशशिनिभानना ॥ अब्रवीद्दीर्घमुच्छ्वस्यवानरंमधुरस्वरा ॥ १३ ॥ मायांप्रविष्टोमायावीयदित्वंरावणःस्वयम् ॥ उत्पादयसिमेभूयःसंतापंतन्नशोभनम् ॥ १४ ॥ स्वंपरित्यज्यरूपंयःपरिव्राजकरूपवान् ॥ जनस्थानेमयादृष्टस्त्वंसएवहिरावणः ॥ १५ ॥ उपवासकृशांदीनांकामरूपनिशाचर ॥ संतापयसिमां भूयःसंतापंतन्नशोभनम् ॥ १६ ॥ अथवानैतदेवंहियन्मयापरिशंकितम् ॥ मनसोहिंममप्रीतिरुत्पन्नातवदर्शनात् ॥ १७ ॥

तच्छाखातोप्यर्वाचीनां शाखामवरुह्य समीपं गंतुं यत्नवानभूदित्यर्थः ॥ ८ ॥ परिशंकते परिशंकते स्म । रामकुशलकथनेन विश्वस्तापि रावणमायाबाहुल्यस्मरणेनाविश्वासादिति भावः ॥ ९ ॥ यदस्य यदनेन कथितं कथनं कृतं वार्ता कृता इदं धिग्धिक् कथितमिति भावे निष्ठा । तत्र हेतुमाह रूपांतरमिति । यः पूर्वं मायया मामपाहरत्स एव रावणो रूपांतरं प्राप्य वर्तत इत्यर्थः ॥ १० ॥ अशोकस्य अशोकवनस्थशिंशपावृक्षस्येत्यर्थः ॥ ११ ॥ तां धरण्युपविष्टां अवंदत नमस्कृतवान् । एनं दृष्ट्वा भयसंत्रस्ता भूयः पुनरेनं नापश्यत् ॥ १२ ॥ १३ ॥ भूयः संतापं यदुत्पादयसि तन्न शोभनम् ॥ १४ ॥ तवैवंरूपकरणमपि सुकरमेवेत्याह स्वं परित्यज्येति ॥ १५ ॥ १६ ॥ एवं रावणदौरात्म्याद्धनूमंतं रावणमाशंक्य तद्दर्शनजनितमात्मनो मनःप्रसादमालोच्य तां शंकां निराचष्टे अथवेति । यन्मया परिशंकितं रावणत्वमेतदेवं न यतस्तव दर्शना

न्मम मनसः प्रीतिरुत्पन्ना । रावणत्वे हि सा नोत्पद्येतेति भावः ॥ १७ ॥ तव मयि रामदूतत्वनिश्चयः कथं स्यादिति चेत्तत्राह यदीति । पृच्छामीति रामकथामिति शेषः । तदेवाह प्रिया रामकथा हीति ॥ ॥ १८ ॥ चित्तं हरसि चित्तं शिथिलयसि विश्वासहेतुत्वसंपादनादिति भावः । रयो नदीवेगः ॥ १९ ॥ रामदूतदर्शनं नेदं तदागमनस्यात्रासंभावितत्वात्प्रायेणायं स्वप्नोथापि मे असौ सुखावह इत्याहाहो इति । या चिराहताहमेव राघवेण प्रेषितं वनौकसं पश्यामि नाम । अस्वप्नत्वे त्वन्यासामपि दर्शनं स्यादित्याशयः ॥ २० ॥ अथ रामादिदर्शनस्वरूपस्वप्नोपि मे न जायत इति खिद्यति स्वप्नेपीति मत्सरी मत्सरेण मत्समीपं सोपि नायातीति भावः ॥ २१ स्वप्नत्वमस्य नेत्याह नाहं स्वप्नमिति । प्राप्तश्चाभ्युदय इति । तथा मनःसंतोषोदयात्प्राप्तप्राय इत्यर्थस्तस्मान्न स्वप्नः ॥ २२ ॥ पुनरुत्प्रेक्षते किं न्विति । चित्तमोहो निरंतररामध्यानजनितस्तत्प्रेषितदूतदर्शनसंभाषणादिविषयो भ्रमः । वातगतिर्भूतावेशादिजनितो भ्रमः । उन्मादो विरहिणां पित्तोद्रेकरूपावस्थाविशेषजो भ्रमः । मृगतृष्णिका तद्वत्प्रत्यक्षो भ्रमः ॥ २३ ॥ बाधरा

यदिरामस्यदूतस्त्वमागतोभद्रमस्तुते ॥ पृच्छामित्वांहरिश्रेष्ठप्रियारामकथाहिमे ॥ १८ ॥ गुणान्रामस्यकथयप्रियस्यममवानर ॥ चित्तंहरसिमेसौम्यनदीकूलंयथारयः ॥ १९ ॥ अहोस्वप्नस्यसुखतायाहमेवचिराहृता ॥ प्रेषितंनामपश्यामिराघवेणवनौकसम् ॥ २० ॥ स्वप्नेऽपियद्यहंवीरंराघवंसहलक्ष्मणम् ॥ पश्येयंनावसीदेयंस्वप्नोपिमममत्सरी ॥ २१ ॥ नाहंस्वप्नमिमंमन्येस्वप्नेदृष्ट्वाहिवानरम् ॥ नशक्योभ्युदयःप्राप्तुंप्राप्तश्चाभ्युदयोमम ॥ ॥ २२ ॥ किंनुस्याच्चित्तमोहोयंभवेद्वातगतिस्त्वियम् ॥ उन्मादजोविकारोवास्यादयंमृगतृष्णिका ॥ २३ ॥ अथवानायमुन्मादोमोहोप्युन्मादलक्षणः ॥ संबुध्येचाहमात्मानमिमंचापिवनौकसम् ॥ २४ ॥ इत्येवंबहुधासीतासंप्रधार्यबलाबलम् ॥ रक्षसांकामरूपत्वान्मेनेतंराक्षसाधिपम् ॥ ॥ २५ ॥ एतांबुद्धिंतदाकृत्वासीतासातनुमध्यमा ॥ नप्रतिव्याजहाराथवानरंजनकात्मजा ॥ २६ ॥ सीतायानिश्चितंबुद्ध्वाहनूमान्मारुतात्मजः ॥ श्रोत्रानुकूलैर्वचनैस्तदातांसंप्रहर्षयन् ॥ २७ ॥ आदित्यइवतेजस्वीलोककांतःशशीयथा ॥ राजासर्वस्यलोकस्यदेवोवैश्रवणोयथा ॥ २८ ॥ विक्रमेणोपपन्नश्चयथाविष्णुर्महायशाः ॥ सत्यवादीमधुरवाग्देवोवाचस्पतिर्यथा ॥ २९ ॥ रूपवान्सुभगःश्रीमान्कंदर्पइवमूर्तिमान् ॥ स्थानक्रोधेप्रहर्ताचश्रेष्ठोलोकेमहारथः ॥ ३० ॥

हित्याद्भ्रमचतुष्टयमपि निरस्यति । अथवेति मोहोप्युन्मादस्य लक्षणमिव लक्षणं यस्य सः एवं चोन्मादनिराकरणात्सोपि निरस्तः । अर्थतो भूतावेशोपि निरस्तः । यतोहमात्मानमिमं समीपस्थं वनौकसं च संबुध्ये सम्यक् जानामि निर्बाधं जानामीत्यर्थः । उक्तानां सर्वेषामविवेकलक्षणत्वान्मम विवेकसत्त्वात्तेऽसंभाविताः । मृगतृष्णाभ्रमोपि दूरत्वदोषाज्जायते । वानरश्च समीप एवेति स पक्षोप्ययुक्त इति भावः ॥ २४ ॥ बलाबलं बलं रक्षसां कामरूपबलम् अबलं रामदूतस्य वानरस्यात्रागमनसामर्थ्याभावः ॥ २५ ॥ २६ ॥ निश्चितं रावणत्वनिश्चयम् । श्रोत्रानुकूलैर्वचनैः रामगुणकथनरूपैः विश्वासार्थं गुणान् रामस्य कथयति । सीतोक्तेरिति भावः । संप्रहर्षयन्वक्ष्यमाणं वचः कथयामासेति शेषः ॥ २७ ॥ राजा धनधान्यादिप्रदानेन सर्वलोकस्य रंजकः ॥ २८॥२९ ॥ स्थानक्रोधे उचितक्रोधविषये क्रोधौचित्ये प्रहर्तेति यावत् ॥ ३० ॥

तं राघवमाश्रमादपकृष्य शून्ये आश्रमे येनापनीता तस्य रक्षसस्तत्फलं त्वदपहारपापफलं तेनानुभूयमानं द्रक्ष्यसि तदेवाह अचिरादिति । न चिरादिति पाठांतरम् । यो वधिष्यति तेनेत्यर्थः ॥ ३१ ॥ ३२ ॥ ॥३३ ॥३४ ॥३५॥३६ ॥३७ ॥३८ ॥३९॥ यथा मामवगच्छसि मायावी रावण इति न तथाहमस्मि ॥४०॥ अंनुर्थमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि०सुं० चतुस्त्रिंशः सर्गः ॥ ३४ ॥ तां त्विति । आदित्य इवेत्यादिकाम् ॥ १ ॥ २ ॥ तानि रामलक्ष्मणचिह्नानि भूयोऽधिकं विशिष्य समाचक्ष्व येन मां शोको न समाविशेत् ॥ ३ ॥ संस्थानमवयवसन्निवेशः रूपमाकारो

बाहुच्छायामवष्टब्धोयस्यलोकोमहात्मनः ॥ अपक्रम्याश्रमपदान्मृगरूपेणराघवम् ॥ ३१ ॥ शून्येयेनापनीतासितस्यद्रक्ष्यसितत्फलम् ॥ अचिराद्रावणंसंख्येयोवधिष्यतिवीर्यवान् ॥ ३२ ॥ क्रोधप्रमुक्तैरिषुभिर्ज्वलद्भिरिवपावकैः ॥ तेनाहंप्रेषितोदूतस्त्वत्सकाशमिहागतः ॥ ३३ ॥ त्वद्वियोगेनदुःखार्तःसत्वांकौशलमब्रवीत् ॥ लक्ष्मणश्चमहातेजाःसुमित्रानंदवर्धनः ॥ ३४ ॥ अभिवाद्यमहाबाहुःसत्वांकौशलमब्रवीत ॥ रामस्यचसखादेविसुग्रीवोनामवानरः ॥ ३५ ॥ राजावानरमुख्यानांसत्वांकौशलमब्रवीत् ॥ नित्यंस्मरतितेरामःससुग्रीवःसलक्ष्मणः ॥ ३६ ॥ दिष्ट्याजीवसिवैदेहिराक्षसीवशमागता ॥ नचिराद्रक्ष्यसेरामंलक्ष्मणंचमहारथम् ॥ ३७ ॥ मध्येवानरकोटीनांसुग्रीवंचामितौजसम् ॥ अहंसुग्रीवसचिवोहनूमान्नामवानरः ॥ ३८ ॥ प्रविष्टोनगरींलंकांलंघयित्वामहोदधिम् ॥ कृत्वामूर्ध्निंतदान्यासंरावणस्यदुरात्मनः ॥ ३९ ॥ त्वांद्रष्टुमुपयातोहंसमाश्रित्यपराक्रमम् ॥ नाहमस्मितथादेवियथामामवगच्छसि ॥ विशंकात्यज्यतामेषाश्रद्धस्ववदतोमम ॥ ४० ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येसुंदरकांडेचतुस्त्रिंशःसर्गः ॥ ३४ ॥ तांतुरामकथांश्रुत्वावैदेहीवानरर्षभात् ॥ उवाचवचनंसांत्वमिदंमधुरयागिरा ॥१॥ क्वतेरामेणसंसर्गःकथंजानासिलक्ष्मणम् ॥ वानराणांनराणांचकथमासीत्समागमः ॥ २ ॥ यानिरामस्यचिह्नानिलक्ष्मणस्यचवानर ॥ तानिभूयःसमाचक्ष्वनमांशोकःसमाविशेत ॥३॥ कीदृशंतस्यसंस्थानंरूपंतस्यचकीदृशम् ॥ कथमूरूकथंबाहूलक्ष्मणस्यचशंसमे ॥ ४ ॥ एवमुक्तस्तुवैदेह्याहनूमान्मारुतात्मजः ॥ ततोरामंयथातत्त्वमाख्यातुमुपचक्रमे ॥ ५ ॥ जानंतीवतदिष्ट्यामांवैदेहिपरिपृच्छसि ॥ भर्तुःकमलपत्राक्षिसंस्थानंलक्ष्मणस्यच ॥ ६ ॥ यानिरामस्यचिह्नानिलक्ष्मणस्यचयानिवै ॥ लक्षितानिविशालाक्षिवदतःशृणुतानिमे ॥ ७ ॥ रामःकमलपत्राक्षःपूर्णचंद्रनिभाननः ॥ रूपदाक्षिण्यसंपन्नःप्रसूतोजनकात्मजे ॥ ८ ॥ तेजसादित्यसंकाशःक्षमयापृथिवीसमः ॥ बृहस्पतिसमोबुद्ध्यायशसावासवोपमः ॥ ९ ॥ रक्षिताजीवलोकस्यस्वजनस्यचरक्षिता ॥ रक्षितास्वस्यवृत्तस्यधर्मस्यचपरंतपः ॥ १० ॥ रामोभामिनिलोकस्यचातुर्वर्ण्यस्यरक्षिता ॥ मर्यादानांचलोकस्य कर्ताकारयिताचसः ॥ ११ ॥

नीलपीतादिवर्णश्च ॥४॥५॥ जानंती दिष्ट्या दैवेन रामदत्तं मां जानंती यदि पृच्छसि रावणशंकां त्यक्त्वा तदा त्वया यानि संस्थानादीनि पृष्टानि यथा च मया लक्षितानि दृष्टानि तानि सर्वाणि वदतो मत्तः शृणु॥६॥ ॥ ७ ॥ रूपदाक्षिण्यसंपन्नः प्रसूत इति । जन्मना सहैवोक्ता वक्ष्यमाणाश्च गुणा जाता इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ रामो भामिनि लोकस्येति सर्वस्य कर्ता हर्ता भर्तांचेति शेषः । अनेन सृष्टिस्थिति

संहारकर्तृत्वरूपं ब्रह्मलक्षणं रामस्योक्तं गूढम् एवं ज्ञानं तत्क्षणं भगवतैव स्वमायातिरस्करिणी निरासादिति बोध्यम् । लोकस्य मर्यादानां वर्णाश्रममर्यादानां कर्ता भगवदवतारत्वात् । कारयिता कालात्मना अवतीर्णरूपेण चातुर्वर्ण्यरक्षिता च ॥ ११ ॥ अतएवार्चिष्मान् आदित्यरूपः सन् अर्चितस्त्रैवर्णिकैरिति शेषः । ब्रह्मचर्यव्रते गृहस्थोचितपर्वादिवर्जनपूर्वकमृतुगमनलक्षणे स्थितः । वस्तुतस्तु गार्हस्थ्येपि अस्खलितरेताः मनःसंकल्पेनैव देव्या रतिप्रीतेः संतानस्य च संपादनमिति भावः । साधूनामुपकारज्ञः उपकर्तव्यकालज्ञः । कर्मणां स्वरूपस्यानुष्ठानस्य च तत्त्वज्ञाता ॥ १२ ॥ ब्राह्मणानां वसिष्ठादीनाम् ॥ १३ ॥ यजुर्वेदविनीतश्च । चादन्येषामपि संग्रहः । विनीतो निरतः ॥ १४ ॥ एवमात्मगुणानुक्त्वा देहगुणानाह विपुलांस इति ॥ १५ ॥ समः विस्तारायामसमः ॥ १६ ॥ त्रिस्थिरः त्रिषु स्थानेषु स्थिरः । ऊरुश्च मणिबंधश्च मुष्टिश्च नृपतेः स्थिरा इत्युक्तेः । त्रिषु प्रलंबः—प्रलंबा यस्य स धनी त्रयो भ्रूमुष्कबाहव इति सामुद्रिकोक्तेः । मुष्को वृषणः । त्रिषु समः—समत्र्यवयव इत्यर्थः । केशाग्रं वृषणं जानु समं यस्य स भूपतिरित्युक्तेः । त्रिषु चोन्नतः—नाभ्यंतःकुक्षिवक्षोभिरुन्नतैः क्षितिपो भवेत् । त्रिताम्रः—त्रिषु ताम्रः नेत्रांतनखपाण्यंघ्रितलैस्ताम्रैस्त्रिभिः सुखी । त्रिषु स्निग्धः—स्निग्धा भवंति वै येषां पादरेखाः शिरोरुहाः ॥ तथा लिंगमणिस्तेषां महाभाग्यं विनिर्दिशेत् । त्रिषु गंभीरः—स्वरे गतौ च नाभौ च गंभीरस्त्रिषु शस्यते ॥ १७ ॥ त्रिवलीमान्—उदरे कंठे उभयत्र वा वलीत्रयवान् । त्रिषु अवनतः निम्नः निम्नत्वं निमग्नत्वं

## अर्चिष्मानर्चितोत्यर्थंब्रह्मचर्यव्रतेस्थितः ॥ साधूनामुपकारज्ञःप्रचारज्ञश्चकर्मणाम् ॥ १२ ॥ राजनीत्यांविनीतश्चब्राह्मणानामुपासकः ॥ ज्ञानवाञ्शीलसंपन्नोविनीतश्चपरंतपः ॥ १३ ॥ यजुर्वेदविनीतश्चवेदविद्भिःसुपूजितः ॥ धनुर्वेदेचवेदेचवेदांगेषुचनिष्ठितः ॥ १४ ॥ विपुलांसोमहाबाहुःकंबुग्रीवःशुभाननः ॥ गूढजत्रुःसुताम्राक्षोरामोनामजनैःश्रुतः ॥ १५ ॥ दुंदुभिस्वननिर्घोषःस्निग्धवर्णःप्रतापवान् ॥ समश्चसुविभक्तांगोवर्णंश्यामंसमाश्रितः ॥ १६ ॥ त्रिस्थिरस्त्रिप्रलंबश्चत्रिसमस्त्रिषुचोन्नतः ॥ त्रिताम्रस्त्रिषुचस्निग्धोगंभीरस्त्रिषुनित्यशः ॥ १७ ॥ त्रिवलीमांस्त्र्यवनतश्चतुर्व्यंगस्त्रिशीर्षवान् ॥ चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुःसमः ॥ १८ ॥ चतुर्दशसमद्वंद्वश्चतुर्दंष्ट्रश्चतुर्गतिः ॥ महोष्ठहनुनासश्चपंचस्निग्धोष्टवंशवान् ॥ १९ ॥

तच्च निमग्नपादतलमध्यत्वं निमग्नपादरेखात्वं निमग्नस्तनचूचुकत्वं च । चतुर्व्यंगश्चतुर्ह्रस्वः ग्रीवा प्रजननं पृष्ठं ह्रस्वे जंघे च पूजिते । त्रिशीर्षवान् आवर्तत्रययुक्तशीर्षः आवर्तत्रययुक्तं यस्य शिरः क्षितिभृतामयं नाथः । चतुष्कलः चतस्रः कलाः चतुर्वेदप्राप्तिसूचकांगुष्ठमूलरेखा यस्य सः । मूलेंगुष्ठस्य रेखानां चतस्रस्तिस्र एव वा एका द्वे वा यथायोगं वेद रेखा द्विजन्मनां चतुर्लेखः ललाटे चतूरेखायुक्तः । ललाटे यस्य दृश्यंते चतुस्त्रिद्व्येकरेखिकाः ॥ शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिः क्रमात ॥ चतुष्किष्कुः किष्कुश्चतुर्विंशत्यंगुलात्मको हस्तः चतुर्हस्तप्रमाणः षण्णवत्यंगुलोत्सेध इति यावत् । चतुःसमः बाहुजानूरुगंडानि चत्वार्यथसमानि चेति बाहूरू जानुगंडौ समावित्यर्थः ॥ १८ ॥ चतुर्दशसमद्वंद्व इति समपरिमाणचतुर्दशांगद्वंद्वः । तदुक्तं भ्रुवौ नासपुटे नेत्रे कर्णावोष्ठौ च चूचुकौ ॥ कूर्परे मणिबंधौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः ॥ स्कंधौ गंडौ तथा दंता ऊरू ज्ञेयौ च जत्रुणीत्यन्यत्र पाठः । चतुर्दंष्ट्र इति । चतस्रो दंष्ट्रा दंतपंक्तिद्वये प्रतिपार्श्वं शास्त्रोक्तलक्षणा यस्य सः तच्च स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः शुभाश्चतस्र इति दंष्ट्राणां तीक्ष्णत्वं क्रमुकादिखंडनसमर्थत्वम् । चतुर्गतिरिति । सिंहशार्दूलगजवृषभैश्चतुर्भिस्तुल्या गतिर्यस्य सः । महोष्ठहनुनासश्चेति महत्प्रशस्तमोष्ठहनुनासं यस्य सः तत्रौष्ठस्य प्राशस्त्यं बिंबफलादिवदरुणत्वे सति मांसलत्वं हनोस्तु परिपूर्णमांसलोन्नतत्वं नासिकायास्तु दीर्घोन्नतरुचिरपुटत्वं पंचस्निग्ध इति । पंचवाग्वक्त्रनखलोमत्वचं स्निग्धं यस्य सः । अष्टवंशवान्

प्रशस्ताष्टवंशाख्यावयववान् । वंशशब्देन दैर्घ्यं विवक्षितम् । बाहू च नलकावूरू जंघे चेत्यष्टवंशकाः ॥ नलकावंगुल्याविति तीर्थः ॥ १९ ॥ दशपद्मःमुखनेत्रास्यजिह्वोष्ठतालुस्तननखं करौ ॥ पादौ च दशपद्मानि पद्माकाराणि यस्य चेति । आस्यमोष्ठमध्यं दश बृहत् तानि तु उरः शिरो ललाटं च ग्रीवा बाहुंसनाभयः ॥ पादौ पृष्ठं श्रुती चैव विशालास्ते सुखप्रदा इति त्रिभिः श्रीयशस्तेजोभिर्व्याप्तो युक्तः । द्विशुक्लवान् द्वौ शुद्धौ तु शुभौ शुक्लौ वंशौ मातुः पितुस्तथेत्युक्तेः । षडुन्नतः तानि च कक्षःकुक्षिश्च वक्षश्च घ्राणस्कंधललाटिकाः ॥ सर्वभूतेषुनिर्दिष्टा उन्नतास्तु सुखप्रदा इति पूर्वं त्र्युन्नतस्निग्धत्वमुक्तम् अत्र पंचस्निग्धत्वं षडुन्नतत्वं चोभयमपि मतभेदादविरुद्धम् एवं नानामतप्रदर्शनं रामस्य नानामतसंमतसर्वलक्षणयुक्तत्वसूचनाय । नवतनुः नवसु सूक्ष्मः तानि च सूक्ष्माण्यंगुलिपर्वाणि केशरोमनखत्वचः ॥ शेफश्च येषां सूक्ष्माणि ते नरा दीर्घजीविन इति प्रोक्तं षट्कं मृदुश्मश्रुत्वं सूक्ष्मदृष्टित्वं सूक्ष्मबुद्धित्वं चेति नवसूक्ष्मत्वम् । दृष्टेः सौक्ष्म्यं रत्नपरीक्षांतसूक्ष्मदर्शनचातुर्यं बुद्धेः सूक्ष्मत्वं तत्त्वसाक्षात्कारसमर्थत्वम् । त्रिभिर्व्याप्नोति धर्मार्थकामैः कालं यथोचितं व्याप्नोति

दशपद्मोदशबृहत्त्रिभिर्व्याप्तोद्विशुक्लवान् ॥ षडुन्नतोनवतनुस्त्रिभिर्व्याप्नोतिराघवः ॥ २० ॥ सत्यधर्मरतःश्रीमान्संग्रहानुग्रहेरतः ॥ देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ २१ ॥ भ्राताचास्यचद्वैमात्रःसौमित्रिरमितप्रभः ॥ अनुरागेणरूपेणगुणैश्चापितथाविधः ॥ २२ ॥ ससुवर्णच्छविःश्रीमान् रामःश्यामोमहायशाः ॥ तावुभौनरशार्दूलौत्वद्दर्शनकृतोत्सवौ ॥ २३ ॥ विचिन्वंतौमहींकृत्स्नामस्माभिःसहसंगतौ ॥ त्वामेवमार्गमाणौतौविचरंतौवसुंधराम् ॥ २४ ॥ ददर्शतुमृगपतिंपूर्वजेनावरोपितम् ॥ ऋष्यमूकस्यमूलेतुबहुपादपसंकुले ॥ २५ ॥ भ्रातुर्भयार्तमासीनंसुग्रीवंप्रियदर्शनम् ॥ वयंचहरिराजंतंसुग्रीवंसत्यसंगरम् ॥ २६ ॥ परिचर्यामहेराज्यात्पूर्वजेनावरोपितम् ॥ ततस्तौचीरवसनौधनुःप्रवरपाणिनौ ॥ सतौहृष्ट्वानरव्याघ्रौधन्विनौवानरर्षभः ॥ २७ ॥ अभिप्लुतोगिरेस्तस्यशिखरंभयमोहितः ॥ ततःसशिखरेतस्मिन्वानरेंद्रोव्यवस्थितः ॥ २८ ॥ तयोःसमीपंमामेवप्रेषयामाससत्वरम् ॥ तावहंपुरुषव्याघ्रौसुग्रीववचनात्प्रभू ॥ २९ ॥ रूपलक्षणसंपन्नौकृतांजलिरुपस्थितः ॥ तौपरिज्ञाततत्त्वार्थौमयाप्रीतिसमन्वितौ ॥ ३० ॥ पृष्ठमारोप्यतंदेशंप्रापितौपुरुषर्षभौ ॥ निवेदितौचतत्त्वेनसुग्रीवायमहात्मने ॥ ३१ ॥ तयोरन्योन्यसंभाषाद्भृशंप्रीतिरजायत ॥ तत्रतौकीर्तिसंपन्नौहरीश्वरनरेश्वरौ ॥ ३२ ॥ परस्परकृताश्वासौकथयापूर्ववृत्तया ॥ तंततःसांत्वयामाससुग्रीवंलक्ष्मणाग्रजः ॥ ३३ ॥ स्त्रीहेतोर्वालिनाभ्रात्रानिरस्तंपुरुतेजसा ॥ ततस्त्वन्नाशजंशोकंरामस्याक्लिष्टकर्मणः ॥ ३४ ॥

त्रिवर्गसेवीत्यर्थः ॥ २० ॥ संग्रहानुग्रहे संग्रहो धनबलादीनाम् अनुग्रहस्ताभ्यां प्रजारक्षणं तदुभयनिष्ठः ॥ २१ ॥ द्वैमात्रः राममात्रपेक्षया द्वितीया माता द्विमाता तस्या अपत्यमित्यर्थः भिन्नोदरभ्रातेत्यर्थः । वैमात्र इति पाठांतरम् ॥ २२ ॥ २३ ॥ अस्माभिः सुग्रीवमंत्रिभिरित्यर्थः । उक्तमेव विस्तरेणाह त्वामेवेति ॥ २४ ॥ मृगपतिं शाखामृगपतिं सुग्रीवं पूर्वजेन वालिना अवरोपितं राज्याद्भ्रंशितम् ॥ २५ ॥ २६ ॥ परिचर्यामहे । तद्वचनावार्यौ । परिचराम इत्यर्थः । अवरोपितं राज्येन हीनं कृतं पाणिनौ पाणी इति यावत् ॥ २७ ॥ अभिप्लुतः उत्प्लुत्यारूढः ॥ २८ ॥ २९ ॥ मया परिज्ञाततत्त्वार्थौ मया विज्ञाताशेषवृत्तांतौ विज्ञापिताशेषवृत्तांतौ च ॥ ३० ॥ ३१ ॥ ३२ ॥ पूर्ववृत्तया स्वीयस्वीयवृत्तांतगोचरया ॥ ३३ ॥ स्त्रीहेतोः सुग्रीवस्त्रीपरिग्रहार्थं पुरु महत्तेजो यस्य तेन त्वन्नाशनं त्वदपहारजम् ॥ ३४ ॥

निष्प्रभः खिन्नचित्तः त्वद्गात्रं शोषयितुं शीलं येषां तानि॥३५॥३६॥३७॥ दर्शयामासुः सुग्रीवाज्ञयेति शेषः॥३८॥मयैवोपहृतानि च मयमभिति शेषः। अवकीर्णानि भूमौ पातनात्किंचिद्विशीर्णानि तानि दत्तानि गृहीत्वा शोकात्तस्मिन्विहतचेतासि प्रथमार्थे सप्तमी विहतचेताः मूर्च्छितचेता अभूदित्यर्थः ॥३९॥ देवप्रकाशेन देवावतारेणातएव देवेन परिदेवितं प्रादीपयत् आभरणदर्शनमिति शेषः ॥ ४० ॥ शायितं शोका

लक्ष्मणोवानरेंद्रायसुग्रीवायन्यवेदयत् ॥ सश्रुत्वावानरेंद्रस्तुलक्ष्मणेनेरितंवचः ॥ ३५ ॥ तदासीन्निष्प्रभोत्यर्थंग्रहग्रस्तइवांशुमान् ॥ ततस्त्वद्गात्रशोभीनिरक्षसाह्रियमाणया ॥ ३६ ॥ यान्याभरणजालानिपातितानिमहीतले ॥ तानिसर्वाणिरामायआनीयहरियूथपाः ॥ ३७ ॥ संहृष्टादर्शयामासुर्गतिंतुनविदुस्तव ॥ तानिरामायदत्तानिमयैवोपहृतानिच ॥ ३८ ॥ स्वनवंत्यवकीर्णानितस्मिन्विहतचेतसि ॥ तान्यंकेदर्शनीयानिकृत्वाबहुविधं तदा ॥ ३९ ॥ तेनदेवप्रकाशेनदेवेनपरिदेवितम् ॥ प्रादीपयद्दाशरथेस्तदाशोकहुताशनम् ॥ ४० ॥ शायितंचचिरंतेनदुःखार्तेनमहात्मना ॥ मयापिविविधैर्वाक्यैःकृच्छ्रादुत्थापितःपुनः ॥४१॥ तानिदृष्ट्वामहार्हाणिदर्शयित्वामुहुर्मुहुः ॥ राघवःसहसौमित्रिःसुग्रीवेसन्यवेशयत् ॥ ४२ ॥ सतवादर्शनादार्येराघवःपरितप्यते ॥ महताज्वलतानित्यमग्निनेवाग्निपर्वतः ॥ ४३ ॥ त्वत्कृतेतमनिद्राचशोकश्चिंताचराघवम् ॥ तापयंतिमहात्मानमग्न्यगारमिवाग्नयः ॥ ४४ ॥ तवादर्शनशोकेनराघवःपरिचाल्यते ॥ महताभूमिकंपेनमहानिवशिलोच्चयः ॥ ४५ ॥ काननानिसुरम्याणिनदीप्रस्रवणानिच ॥ चरन्नरतिमाप्नोतित्वामपश्यन्नृपात्मजे ॥ ४६ ॥ सत्वांमनुजशार्दूलःक्षिप्रंप्राप्स्यतिराघवः ॥ समित्रबांधवंहत्वारावणंजनकात्मजे ॥ ४७ ॥ सहितौरामसुग्रीवावुभावकुरुतांतदा ॥ समयंवालिनंहंतुंतवचान्वेषणंप्रति ॥ ४८ ॥ ततस्ताभ्यांकुमाराभ्यांवीराभ्यांसहरीश्वरः ॥ किष्किंधांसमुपागम्यवालीयुद्धेनिपातितः ॥ ४९ ॥ ततोनिहत्यतरसारामोवालिनमाहवे ॥ सर्वेक्षहरिसंघानांसुग्रीवमकरोत्पतिम् ॥ ५० ॥ रामसुग्रीवयोरैक्यंदेव्येवंसमजायत ॥ हनूमंतंचमांविद्धितयोर्दूतमुपागतम् ॥ ५१ ॥ स्वंराज्यंप्राप्यसुग्रीवःस्वानानीयमहाकपीन् ॥ त्वदर्थंप्रेषयामासदिशोदशमहाबलान् ॥ ५२ ॥ आदिष्टावानरेंद्रेणसुग्रीवेणमहौजसः ॥ अद्रिराजप्रतीकाशाःसर्वतःप्रस्थितामहीम् ॥ ५३ ॥ ततस्तेमार्गमाणावैसुग्रीववचनातुराः ॥ चरंतिवसुधांकृत्स्नांवयमन्येचवानराः ॥ ५४ ॥

द्भूमौ पतितम् ॥४१॥४२॥ अग्निपर्वतः संवर्ताख्यकालाग्निनिवासभूतः पर्वतोऽग्निपर्वतः। तत्र माल्यवतः शृंगे दृश्यते हव्यवाट् सदा ॥ नाम्ना सम्वर्तकोनाम कालाग्निर्भरतर्षभेति भीष्मपर्वणि भारतोक्तेः ॥ ४३ ॥ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ सहितौ सख्यं प्राप्तौ। समयं प्रतिज्ञाम् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ सुग्रीववचनातुराः सुग्रीवाज्ञाभीताः ॥ ५४ ॥

त्रिभागबलसंवृतः सेनायास्त्रिष्वंशेष्वेकांशसेनापरिवृत इत्यर्थः ॥५५॥ विंध्ये विमनष्टानां विलमध्येऽदर्शनं प्राप्तानाम् । गता इति । समयात्परेपीति शेषः ॥५६॥५७॥५८॥५९॥६०॥ निराशानां त्वत्प्राप्त्याशारहितानाम् । स्वामिसंदेशात्तत्संदिष्टकालात्ययाद्धेतोर्मुमूर्षताम् ॥ ६१ ॥ कार्यहेतोः कार्यसिद्ध्यर्थमिहायातः दैवादिति शेषः ॥ ६२ ॥ क्व देशे इति शेषः ॥ ६३ ॥ आख्यातुमित्यसमानकर्तृकेपि तुमुन्नार्षः

अंगदोनामलक्ष्मीवान्वालिसूनुर्महाबलः ॥ प्रस्थितःकपिशार्दूलस्त्रिभागबलसंवृतः ॥ ५५ ॥ एषांनोविप्रनष्टानांविंध्येपर्वतसत्तमे ॥ भृशंशोकपरीतानामहोरात्रगणागताः ॥ ५६ ॥ तेवयंकार्यनैराश्यात्कालस्यातिक्रमेणच ॥ भयाच्चकपिराजस्यप्राणांस्त्यक्तुमुपस्थिताः ॥ ५७ ॥ विचित्यगिरिदुर्गाणिनदीप्रस्रवणानिच ॥ अनासाद्यपदंदेव्याःप्राणांस्त्यक्तुंव्यवस्थिताः ॥ ५८ ॥ ततस्तस्यगिरेर्मूर्ध्निवयंप्रायमुपास्महे ॥ दृष्ट्वाप्रायोपविष्टांश्चसर्वान्वानरपुंगवान् ॥ ५९ ॥ भृशंशोकार्णवेमग्नःपर्यदेवयदंगदः ॥ तवनाशंचवैदेहिवालिनश्चतथावधम् ॥ ६० ॥ प्रायोपवेशमस्माकंमरणंचजटायुषः ॥ तेषांनःस्वामिसंदेशान्निराशानांमुमूर्षताम् ॥ ६१ ॥ कार्यहेतोरिहायातःशकुनिर्वीर्यवान्महान् ॥ गृध्रराजस्यसोदर्यःसंपातिर्नामगृध्रराट् ॥ ६२ ॥ श्रुत्वाभ्रातृवधंकोपादिदंवचनमब्रवीत् ॥ यवीयान्केनमेभ्राताहतःक्वचनिपातितः ॥ ६३ ॥ एतदाख्यातुमिच्छामिभवद्भिर्वानरोत्तमाः ॥ अंगदोऽकथयत्तस्यजनस्थानेमहद्वधम् ॥ ६४ ॥ राक्षसाभीमरूपेणत्वामुद्दिश्ययथार्थतः ॥ जटायोस्तुवधंश्रुत्वादुःखितःसोरुणात्मजः ॥ ६५ ॥ त्वामाहसवरारोहेवसंतींरावणालये ॥ तस्यतद्वचनंश्रुत्वासंपातेःप्रीतिवर्धनम् ॥ ६६ ॥ अंगदप्रमुखाःसर्वेततःप्रस्थापितावयम् ॥ विंध्यादुत्थायसंप्राप्ताःसागरस्यांतमुत्तमम् ॥ ६७ ॥ त्वद्दर्शनेकृतोत्साहाहृष्टाःपुष्टाःप्लवंगमाः ॥ अंगदप्रमुखाःसर्वेवेलोपांतमुपागताः ॥ ६८ ॥ चिंतांजग्मुःपुनर्भीमांत्वद्दर्शनसमुत्सुकाः ॥ अथाहंहरिसैन्यस्यसागरंदृश्यसीदतः ॥ ६९ ॥ व्यवधूयभयंतीव्रंयोजनानांशतंप्लुतः ॥ लंकाचापिमयारात्रौप्रविष्टाराक्षसाकुला ॥ ७० ॥ रावणश्चमयादृष्टस्त्वंचशोकनिपीडिता ॥ एतत्तेसर्वमाख्यातंयथावृत्तमनिंदिते ॥ ७१ ॥ अभिभाषस्वमांदेविदूतोदाशरथेरहम् ॥ तन्मांरामकृतोद्योगंत्वन्निमित्तमिहागतम् ॥ ७२ ॥ सुग्रीवसचिवंदेविबुद्ध्यस्वपवनात्मजम् ॥ कुशलीतवकाकुत्स्थःसर्वशस्त्रभृतांवरः ॥ ७३ ॥ गुरोराराधनेयुक्तोलक्ष्मणःशुभलक्षणः ॥ तस्यवीर्यवतोदेविभर्तुस्तवहितेरतः ॥ ७४ ॥ अहमेकस्तुसंप्राप्तःसुग्रीववचनादिह ॥ मयेयमसहायेनचरताकामरूपिणा ॥ ७५ ॥

॥ ६४ ॥ ६५ ॥ ६६ ॥ अंतं तटम् ॥ ६७ ॥ ६८ ॥ ६९ ॥ प्लुतः प्लुतवान् ॥ ७० ॥ ७१ ॥ ७२ ॥ पवनात्मजत्वेन लंघनसामर्थ्यम् ॥ ७३ ॥ ७४ ॥ एकः संप्राप्तोर्थाच्छेषाः समुद्रतीर एवासते

कामरूपिणा अनेन रावणांतःपुराद्यन्वेषणसामर्थ्यं सूचितम् ॥ ७५ ॥ त्वन्नाशं त्वददर्शनम् ॥ ७६ ॥ अधिगमो दर्शनम् ॥ ७७ ॥ ७८ ॥ तिर्यग्देहस्य तव कथं पवनात्मजत्वमिति शंकामपनयन्नाह माल्यवान्नामेति ॥ ७९ ॥ गोकर्णं तदाख्यम् । दिष्टः शंबसादनाख्यासुरवधायाज्ञप्तः । उद्धरन्नुद्धृतवान् अवधीदित्यर्थः । भूतेपि लटः शतार्षः ॥ ८० ॥ स्वेनैव उत्पत्तिकालप्रवृत्तेन कर्मणा पराक्रमेण ॥ ८१ ॥ भर्तुस्त्वद्भर्तुः रामस्य । नयिता नेता ॥ ८२ ॥ उपपन्नैर्वास्तवैः । अभिज्ञानै रामलक्ष्मणचिह्नैः । अधिगच्छति अध्यगच्छत् ॥ ८३ ॥ ८४ ॥ ८५ ॥ अन्यथा नेति । मायाकपिर्नेत्यर्थः ॥ ८६ ॥ सर्वमुत्तरं सर्वं प्रत्युत्तरमाख्यातमित्यन्वयः । अथ सीतायै चिकीर्षितं पृच्छति किं करोमीति । वर्तमानसामीप्ये लटौ । प्रतियामि प्रतियास्ये रामसमीपम् । किं करोमि किं करिष्ये । कथं वा रोचते चिकीर्षितमिति शेष

दक्षिणादिगनुक्रांतात्वन्मार्गविचयैषिणा ॥ दिष्ट्याहंहरिसैन्यानांत्वन्नाशमनुशोचताम् ॥ ७६ ॥ अपनेष्यामिसंतापंतवाधिगमशासनात् ॥ दिष्ट्याहिनममव्यर्थंसागरस्येहलंघनम् ॥ ७७ ॥ प्राप्स्याम्यहमिदंदेवित्वद्दर्शनकृतंयशः ॥ राघवश्चमहावीर्यःक्षिप्रंत्वामभिपत्स्यते ॥७८ ॥ सपुत्रबांधवंहत्वारावणंराक्षसाधिपम् ॥ माल्यवान्नामवैदेहिगिरीणामुत्तमोगिरिः ॥ ७९ ॥ ततोगच्छतिगोकर्णंपर्वतंकेसरीहरिः ॥ सचदेवर्षिभिर्दिष्टःपितामममहाकपिः ॥ तीर्थेनदीपतेःपुण्येशंबसादनमुद्धरन् ॥ ८० ॥ यस्याहंहरिणःक्षेत्रेजातोवातेनमैथिलि ॥ हनूमानितिविख्यातोलोकेस्वेनैवकर्मणा ॥ ८१ ॥ विश्वासार्थंतुवैदेहिभर्तुरुक्तामयागुणाः ॥ अचिरात्त्वामितोदेविराघवोनयिताध्रुवम् ॥ ८२ ॥ एवंविश्वासितासीताहेतुभिःशोककर्शिता ॥ उपपन्नैरभिज्ञानैर्दूतंतमधिगच्छति ॥ ८३ ॥ अतुलंचगताहर्षंप्रहर्षेणतुजानकी ॥ नेत्राभ्यांवक्रपक्ष्माभ्यांमुमोचानन्दजंजलम् ॥ ८४ ॥ चारुतद्वदनंतस्यास्ताम्रशुक्लायतेक्षणम् ॥ अशोभतविशालाक्ष्याराहुमुक्तइवोडुराट् ॥ ८५ ॥ हनूमंतंकपिंव्यक्तंमन्यतेनान्यथेतिसा ॥ अथोवाचहनूमांस्तामुत्तरंप्रियदर्शनाम् ॥ ८६ ॥ एतत्तेसर्वमाख्यातंसमाश्वसिहिमैथिलि ॥ किंकरोमिकथंवातेरोचतेप्रतियाम्यहम् ॥ ८७ ॥ हतेऽसुरेसंयतिशंबसादनेकपिप्रवीरेणमहर्षिचोदनात् ॥ ततोस्मिवायुप्रभवोहिमैथिलिप्रभावतस्तत्प्रतिमश्चवानरः ॥ ८८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ भूयएवमहातेजाहनूमान्पवनात्मजः ॥ अब्रवीत्प्रश्रितंवाक्यंसीताप्रत्ययकारणात् ॥ १ ॥ वानरोहंमहाभागेदूतोरामस्यधीमतः ॥ रामनामांकितंचेदंपश्यदेव्यंगुलीयकम् ॥ २ ॥ प्रत्ययार्थंतवानीतंतेनदत्तंमहात्मना ॥ समाश्वसिहिभद्रंतेक्षीणदुःखफलाह्यसि ॥ ३ ॥ गृहीत्वाप्रेक्षमाणासाभर्तुःकरविभूषितम् ॥ भर्तारमिवसंप्राप्तंजानकीमुदिताभवत् ॥ ४ ॥

॥ ८७ ॥ नहि रावण आत्मानं कथमपि कपिपुत्र इति ब्रूयादिति ज्ञापनपूर्वकं कपित्वनिश्चयाय पुनः स्वजन्मानुवादः हतेऽसुर इति । ततः शंबसादनासुरवधप्रीतमहर्षेः प्रसादत इत्यर्थः । तत्प्रतिमो वायुसदृश इत्यर्थः ॥ ८८ ॥ हर्दमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचत्रिंशः सर्गः ॥ ॥ ३५ ॥ अथ दृढतरविश्वासाय रामांगुलीयकं दातुमाह भूय इति । प्रत्ययो विश्वासः ॥ १ ॥ वानरोहं नान्यः । रामस्य नाम नामाक्षराणि तैरंकितं चिह्नितम् ॥ २ ॥ क्षीणं दुःखरूपं पापफलं यस्याः सा असि शीघ्रमेव भविष्यसि ॥ ३ ॥ विभूषितं विभूषणम् ।

भर्तारं प्राप्तेवेत्यन्वयः ॥ ४ ॥ बभूव हर्षोदग्रं चेति पाठः ॥ ५ ॥ ह्रीमती अंगुलीयसान्निध्ये भर्तृसान्निध्यादिव किंचिल्लज्जावती । प्रियं कृत्वा आदरं कृत्वा ॥ ६ ॥ विक्रांतः शूरः समर्थो देशकालोचितकृत्य चतुरः । प्राज्ञः धर्मार्थविषयकसर्वशास्त्रार्थतत्त्वज्ञः । पदं स्थानम् ॥ ७ ॥ क्रमता कामता ॥ ८ ॥ संत्रासः समुद्रादिति शेषः । रावणादपि संभ्रमः चित्तक्षोभः ॥ ९ ॥ यदि यस्मात्तेन प्रेषितोसि तस्माव मया समभिभाषितुं संभाषणं कर्तुमर्हसे अर्हसि ॥ १० ॥ ११ ॥ १२ ॥ ननु तद्दूतागमनेन तद्वचसा च कुशलावगतेः किं पुनर्दिष्ट्येत्यादितत्प्रश्नेनेति शंकायां प्रश्नाशयं दर्शयति कुशली यदीति । यदि कुशली त्वया कथ्यते तदा मत्कृते सागरमेखलां महीं किं न दहतीत्यर्थः ॥ १३ ॥ ननु केवलं महीमेवेति किमुच्यते इत्याशयेन पक्षांतरमथवेति । तथा शक्तिमंतौ यदि तर्हि किमिति तूष्णीं तिष्ठतस्तत्राह ममैवेति । दुःखानां दुःखहेतुपापानां विपर्ययो नाशो नाद्यापि संवृत्त इत्यर्थः ॥ १४॥ मम दुःखक्षय ईषत्करः अपितु तस्य सुखावस्थानमेव मृग्यमित्याशयेनाह कच्चिदिति । उत्तराणि कार्याणि मद्विमोचनफलानि ॥१५॥

चारुतद्वदनंतस्यास्ताम्रशुक्लायतेक्षणम् ॥ बभूवहर्षोदग्रंचराहुमुक्तइवोडुराट् ॥ ५ ॥ ततःसाह्रीमतीबालाभर्तुःसंदेशहर्षिता ॥ परितुष्टाप्रियंकृत्वाप्रशशंसमहाकपिम् ॥ ६ ॥ विक्रांतस्त्वंसमर्थस्त्वंप्राज्ञस्त्वंवानरोत्तम ॥ येनेदंराक्षसपदंत्वयैकेनप्रधर्षितम् ॥ ७ ॥ शतयोजनविस्तीर्णःसागरोमकरालयः ॥ विक्रमश्लाघनीयेनक्रमतागोष्पदीकृतः ॥ ८ ॥ नहित्वांप्राकृतंमन्येवानरंवानरर्षभ ॥ यस्यतेनास्तिसंत्रासोरावणादपिसंभ्रमः ॥ ९ ॥ अर्हसेचकपिश्रेष्ठमयासमभिभाषितुम् ॥ यद्यसिप्रेषितस्तेनरामेणविदितात्मना ॥ १० ॥ प्रेषयिष्यतिदुर्धर्षोरामोनह्यपरीक्षितम् ॥ पराक्रममविज्ञायमत्सकाशंविशेषतः ॥ ११ ॥ दिष्ट्याचकुशलीरामोधर्मात्मासत्यसंगरः ॥ लक्ष्मणश्चमहातेजाःसुमित्रानंदवर्धनः ॥ १२ ॥ कुशलीयदिकाकुत्स्थः किंनसागरमेखलाम् ॥ महींदहतिकोपेनयुगांताग्निरिवोत्थितः ॥ १३ ॥ अथवाशक्तिमंतौतौसुराणामपिनिग्रहे ॥ ममैवतुनदुःखानामस्तिमन्येविपर्ययः ॥ १४ ॥ कच्चिन्नव्यथतेरामःकच्चिन्नपरितप्यते ॥ उत्तराणिचकार्याणिकुरुतेपुरुषोत्तमः ॥ १५ ॥ कच्चिन्नदीनःसंभ्रांतःकार्येषुचनमुह्यति ॥ कच्चित्पुरुषकार्याणिकुरुतेनृपतेःसुतः ॥ १६ ॥ द्विविधंत्रिविधोपायमुपायमपिसेवते ॥ विजिगीषुःसुहृत्कच्चिन्मित्रेषुचपरंतपः ॥ १७ ॥ कच्चिन्मित्राणिलभतेमित्रैश्चाप्यभिगम्यते ॥ कच्चित्कल्याणमित्रश्चमित्रैश्चापिपुरस्कृतः ॥ १८ ॥ कच्चिदाशास्तिदेवानांप्रसादंपार्थिवात्मजः ॥ कच्चित्पुरुषकारंचदैवंचप्रतिपद्यते ॥ १९ ॥ कच्चिन्नविगतस्नेहोविवासान्मयिराघवः ॥ कच्चिन्मांव्यसनादस्मान्मोक्षयिष्यतिराघवः ॥ २० ॥ सुखानामुचितोनित्यमसुखानामनूचितः ॥ दुःखमुत्तरमासाद्यकच्चिद्रामोनसीदति ॥ २१ ॥

न दीनो न संभ्रांत इत्यनुषंगः । पुरुषकार्याणि पुरुषकारान् ॥ १६ ॥ द्विविधं सौम्यासौम्यरूपप्रकारद्वयवत् । त्रिविधोपायं धर्मार्थकामलक्षणत्रिविधपुरुषार्थानां प्राप्त्युपायभूतमुपायं सामाद्युपायमपि सेवते कच्चित् । तथा मित्रेषु च विजिगीषुसुहृत्कच्चित् । विजिगीषुसुहृदिति बहुव्रीहिः । तत्पुरुषश्चेति कतकः । सुहृत्परंतपो रामो विजिगीषुः संस्त्रिविधोपायं सामदानभेदरूपमुपायं दंडोपायं च मित्रेषु च चादामित्रेषु च द्विविधं यथा भवति तथा सेवते कच्चित् । मित्रेषु सामदाने अमित्रेषु भेददंडौ चेत्येवं विभज्य प्रयुंक्ते कच्चिदित्यर्थ इति तीर्थः ॥ १७ ॥ मित्राणि लभते स्वयत्नेनामित्रैश्च स्वयत्नतोभिगम्यते । कल्याणमित्रः सौम्यमित्रः । मित्रैः पुरस्कृतो बहुमतः कच्चित् ॥ १८॥ आशास्ति आशास्ते प्रार्थयत इत्यर्थः ॥१९॥ विवासाद्विदूरवासात् ॥२०॥ अनूचित इति च्छांदसो दीर्घः । उत्तरं दुःखं दुःखाद्दुःखमित्यर्थः॥२१ ॥

॥ २२ ॥ मन्निमित्तेन मद्वियोगनिमित्तेन शोकेन कच्चित्परितप्यत इति शेषः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ रौद्रेण अमोघक्रूरेण ॥ २७ ॥ हेमसमानवर्णं हेमवर्णवत्स्पृहणीयशोभम् ॥ २८ ॥ धर्मोपदेशाद्धर्मोद्देशात् धर्ममुद्दिश्येति यावत् । न भीर्न शोकः मम नयनान्नभीः राज्यत्यागान्न शोकः । भयं च मद्रक्षानिमित्तम् । यस्य व्यथा वनवासखेदश्च नासीत्स इदानीं धैर्यं करोति कच्चित् ॥ २९ ॥ धैर्यत्यागे मद्वियोग एव हेतुरित्याह न चास्येति । मातापित्रादौ नास्य मत्समोपि स्नेहः । अधिकस्तु कुतः मम तच्छक्तिरूपत्वात् वस्तुतस्तयोस्तस्याभावाच्च हनूमन्नहमपि तावज्जिजीविषेयं मत्प्रवृत्तिं वार्तां मत्प्रवृत्तिमार्गे रतिं

कौसल्यायास्तथाकच्चित्सुमित्रायास्तथैवच ॥ अभीक्ष्णंश्रूयतेकच्चित्कुशलंभरतस्यच ॥ २२ ॥ मन्निमित्तेनमानार्हःकच्चिच्छोकेतराघवः ॥ कच्चिन्नान्यमनारामःकच्चिन्मांतारयिष्यति ॥ २३ ॥ कच्चिदक्षौहिणींभीमांभरतोभ्रातृवत्सलः ॥ ध्वजिनींमंत्रिभिर्गुप्तांप्रेषयिष्यतिमत्कृते ॥ २४ ॥ वानराधिपतिःश्रीमान्सुग्रीवःकच्चिदेष्यति ॥ मत्कृतेहरिभिर्वीरैर्वृतोदंतनखायुधैः ॥ २५ ॥ कच्चिच्चलक्ष्मणःशूरःसुमित्रानंदवर्धनः ॥ अस्त्रविच्छरजालेनराक्षसान्विधमिष्यति ॥ २६ ॥ रौद्रेणकच्चिदस्त्रेणरामेणनिहतंरणे ॥ द्रक्ष्याम्यल्पेनकालेनरावणंससुहृज्जनम् ॥ २७ ॥ कच्चिन्नतद्धेमसमानवर्णंतस्याननंपद्मसमानगंधि ॥ मयाविनाशुष्यतिशोकदीनंजलक्षयेपद्ममिवातपेन ॥ २८ ॥ धर्मापदेशात्त्यजतःस्वराज्यंमांचाप्यरण्यंनयतःपदातेः ॥ नासीद्यथायस्यनभीर्नशोकःकच्चित्सधैर्यंहृदयेकरोति ॥ २९ ॥ नचास्यमातानपितानचान्यःस्नेहाद्विशिष्टोस्तिमयासमोवा ॥ तावद्ध्यहंदूतजिजीविषेयंयावत्प्रवृत्तिंशृणुयांप्रियस्य ॥३०॥ इतीवदेवीवचनंमहार्थंतंवानरेंद्रंमधुरार्थमुक्त्वा ॥ श्रोतुंपुनस्तस्यवचोभिरामंरामार्थयुक्तंविररामरामा ॥ ३१ ॥ सीतायावचनंश्रुत्वामारुतिर्भीमविक्रमः ॥ शिरस्यंजलिमाधायवाक्यमुत्तरमब्रवीत् ॥ ३२ ॥ नत्वामिहस्थांजानीतेरामःकमललोचनः ॥ तेनत्वांनानयत्याशुशचीमिवपुरंदरः ॥ ३३ ॥ श्रुत्वैवचवचोमह्यंक्षिप्रमेष्यतिराघवः ॥ चमूंप्रकर्षन्महतींहर्यृक्षगणसंयुताम् ॥ ३४ ॥ विष्टंभयित्वावाणौघैरक्षोभ्यंवरुणालयम् ॥ करिष्यतिपुरींलंकांकाकुत्स्थःशांतराक्षसाम् ॥ ३५ ॥ तत्रयद्यंतरामृत्युर्यदिदेवामहासुराः ॥ स्थास्यंतिपथिरामस्यसतानपिवधिष्यति ॥ ३६ ॥ तवादर्शनजेनार्येशोकेनपरिपूरितः ॥ नशर्मलभतेरामःसिंहार्दितइवद्विपः ॥ ३७ ॥ मंदरेणचतेदेविशपेमूलफलेनच ॥ मलयेनचविंध्येनमेरुणादर्दुरेणच ॥ ३८ ॥ यथासुनयनंवल्गुबिंबोष्ठंचारुकुंडलम् ॥ मुखंद्रक्ष्यसिरामस्यपूर्णचंद्रमिवोदितम् ॥ ३९ ॥

च निवृत्तिमार्गरतौ ममापि कार्याक्षमत्वेनादर्शनरूपो नाश एवेति भावः ॥ ३० ॥ रामार्थयुक्तं रामप्रयोजनयुक्तं रामरूपाभिधेयेन युक्तं तद्बोधकमिति वा ॥ ३१ ॥ ३२ ॥ न जानीते न जानीत इव अनुह्लादद्दैत्यनीतां शचीं पुरंदर इव ॥ ३३ ॥ मह्यं मत्तः ॥ ३४ ॥ विष्टंभयित्वा संस्तभ्य सेतुं बध्वेति यावत् ॥ ३५ ॥ तत्र तत्कर्मप्रवृत्तौ अंतरा विघ्नत्वेन यदि मृत्युप्रभृतयोपि स्थास्यंति तदा तानपि वधिष्यति ॥ ३६ ॥ ॥ ३७ ॥ स्वोक्तेर्थे देव्या विश्वासार्थं स्ववासस्थानमंदरादिभिः स्वजीवनसाधनैर्मूलफलैश्च शपथं करोति मंदरेण चेति । दर्दुरः पर्वताविशेषः ॥ ३८ ॥ यथा रामस्य मुखं द्रक्ष्यसि तथा मंदरादिभिः शपे इत्यन्वयः ॥ ३९ ॥

प्रस्रवणे गिरौ विद्यमानमपीह द्रक्ष्यसीत्यर्थः । नागपृष्ठस्य मूर्धनि ऐरावतोपरि स्थितमिंद्रमिव मत्पृष्ठगं रामं द्रक्ष्यसीत्यर्थः । नाकपृष्ठस्येति पाठः । स्वर्गस्योपरीत्यर्थ इति तीर्थः ॥ ४० ॥ सुविहितमारण्यकशास्त्रबोधितम् । भक्तं ओदनम् । पंचमं कालं प्राप्येति शेषः । प्रातः संगवमध्याह्नापराह्णात्पंचमं सायाह्नं प्राप्येत्यर्थः । यद्वा प्रातःसायं प्रातःसायमिति कालचतुष्टयं त्यक्त्वा पंचमे प्रातःकाल इत्यर्थः । दिनद्वयमतीत्य भुंक्ते इत्यर्थः ॥ ४१ ॥ ४२ ॥ ४३ ॥ प्रायोऽनिद्र एव कथंचित्सुप्तोपि सीतेति वदन्नेव प्रतिबुध्यते ॥ ४४ ॥ स्त्रीमनोहरं स्त्रीसन्निधाने मनोहरं स्त्रीणां मनोहरं वा । श्वसन्दीर्घोच्छ्वासं त्यजन् ॥ ४५ ॥ ४६ ॥ रामसंकीर्तनेन अनिद्रा सततं रामइत्यादिना वीतशोका । न मांसं राघवो भुंक्ते इत्युक्तेन रामशोकेन समानशोका । अंबुदशेषश्चंद्रो यस्यां सा शरत् । लुप्तषष्ठीकम् । शरदो निशेव प्रकाशा प्रकाशयुक्तशरन्निशेव हर्षशोक

क्षिप्रंद्रक्ष्यसिवैदेहिरामंप्रस्रवणेगिरौ ॥ शतक्रतुमिवासीनंनागपृष्ठस्यमूर्धनि ॥ ४० ॥ नमांसंराघवोभुंक्तेनचैवमधुसेवते ॥ वन्यंसुविहितंनित्यंभक्तमश्नातिपंचमम् ॥ ४१ ॥ नैवदंशान्नमशकान्नकीटान्नसरीसृपान् ॥ राघवोऽपनयेद्गात्रात्त्वद्गतेनांतरात्मना ॥ ४२ ॥ नित्यंध्यानपरोरामोनित्यंशोकपरायणः ॥ नान्यच्चिंतयतेकिंचित्सतुकामवशंगतः ॥ ४३ ॥ अनिद्रःसततंरामःसुप्तोपिचनरोत्तमः ॥ सीतेतिमधुरांवाणींव्याहरन्प्रतिबुध्यते ॥ ४४ ॥ दृष्ट्वाफलंवापुष्पंवायच्चान्यत्स्त्रीमनोहरम् ॥ बहुशोहाप्रियेत्येवंश्वसंस्त्वामभिभाषते ॥ ४५ ॥ सदेविनित्यंपरितप्यमानस्त्वामेवसीतेत्यभिभाषमाणः ॥ धृतव्रतोराजसुतोमहात्मातवैवलाभायकृतप्रयत्नः ॥ ४६ ॥ सारामसंकीर्तनवीतशोकारामस्यशोकेनसमानशोका ॥ शरन्मुखेनांबुदशेषचंद्रानिशेववैदेहसुताबभूव ॥ ४७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ ॥ सासीतावचनंश्रुत्वापूर्णचंद्रनिभानना ॥ हनूमंतमुवाचेदंधर्मार्थसहितंवचः ॥ १ ॥ अमृतंविषसंपृक्तंत्वयावानरभाषितम् ॥ यच्चनान्यमनारामोयच्चशोकपरायणः ॥ २ ॥ ऐश्वर्येवासुविस्तीर्णेव्यसनेवासुदारुणे ॥ रज्ज्वेवपुरुषंबद्ध्वाकृतांतःपरिकर्षति ॥ ३ ॥ विधिर्नूनमसंहार्यःप्राणिनांप्लवगोत्तम ॥ सौमित्रिंमांचरामंचव्यसनैःपश्यमोहितान् ॥ ४ ॥ शोकस्यास्यकथंपारंराघवोधिगमिष्यति ॥ प्लवमानःपरिक्रांतोहतनौःसागरेयथा ॥ ५ ॥ राक्षसानांवधंकृत्वासूदयित्वाचरावणम् ॥ लंकामुन्मथितांकृत्वाकदाद्रक्ष्यतिमांपतिः ॥ ६ ॥ सवाच्यःसंत्वरस्वेतियावदेवनपूर्यते ॥ अयंसंवत्सरःकालस्तावद्धिममजीवितम् ॥ ७ ॥ वर्ततेदशमोमासोद्वौतुशेषौप्लवंगम ॥ रावणेननृशंसेनसमयोयःकृतोमम ॥ ८ ॥

वती बभूव ॥ ४७ ॥ इच्छांभिर्मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ वचनं हनुमत इत्यादि ॥ १ ॥ यच्च अनन्यमना इति वाक्यमाख्यायते तदमृतम् । यच्च शोकपरायण इति वाक्यमाख्यायते तद्विषम् ॥ २ ॥ ऐश्वर्ये व्यसने इति च विषयसप्तमी ॥ ३ ॥ विधिर्दैवम् । असंहार्यः अशक्यप्रतिक्रियः । अत्र स्वीयमेव दुःखं दर्शयति ॥ ४ ॥ हतनौः पुरुषः परिक्रांतः कृतपराक्रमो बाहुभ्यां प्लवमानो यथा सागरे पारमतिक्लेशेनाधिगच्छति तथा राघवोऽपि कथंचित्तमधिगमिष्यति ॥ ५ ॥ ६ ॥ सः रामः ॥ ७ ॥ ८ ॥

निर्यातनं पुनः समर्पणं न च तत् तास्मिन्नित्यर्थः ॥ ९ ॥ १० ॥ कन्या अजातपुरुषसंबंधा । एतद्विभीषणानुनयनम् इदमेवाग्रे रामश्रुतं विभीषणस्य निःशंकपरिग्रहाभिषेकयोर्बीजम् ॥ ११ ॥ १२ ॥ रामक्षयं रक्षसां रामात्क्षयं प्राप्तमित्यर्थः ॥ १३ ॥ पतिः प्राप्स्यत इत्यत्र हेतुः अंतरात्मेति । तस्मिन् रामे ॥ १४ ॥ उत्साहः कार्येषु स्थिरप्रयत्नरूप उद्योगः पौरुषं तज्जन्यः पुरुषव्यापारः । सत्त्वं बलम् । आनृशंस्य मक्रूरता । श्रितजनदाक्षिण्यमिति यावत् । विक्रमः शौर्यम् । प्रभावो दिव्यास्त्रसंपज्जन्यो महिमा ॥ १५ ॥ तत्सत्तानुमापककार्यमाह चतुर्दशेति ॥ १६ ॥ व्यसनैर्व्यसनदातृभी राक्षसैस्तुलयितुमुपमितुम् । तस्य

विभीषणेनचभ्रात्राममनिर्यातनंप्रति ॥ अनुनीतःप्रयत्नेननचतत्कुरुतेमतिम् ॥ ९ ॥ ममप्रतिप्रदानंहिरावणस्यनरोचते ॥ रावणंमार्गतेसंख्येमृत्युः कालवशंगतम् ॥ १० ॥ ज्येष्ठाकन्याकलानामविभीषणसुताकपे ॥ तयाममैतदाख्यातंमात्राप्रहितयास्वयम् ॥ ११ ॥ अविंध्योनाममेधावीवि द्वान्राक्षसपुंगवः ॥ धृतिमाञ्छीलवान्वृद्धोरावणस्यसुसंमतः ॥ १२ ॥ रामक्षयमनुप्राप्तंरक्षसांप्रत्यचोदयत ॥ नचतस्यसदुष्टात्माशृणोतिवचनं हितम् ॥ १३ ॥ आशंसेयंहरिश्रेष्ठक्षिप्रंमांप्राप्स्यतेपतिः ॥ अंतरात्माहितेशुद्धस्तस्मिंश्चबहवोगुणाः ॥ १४ ॥ उत्साहःपौरुषंसत्वमानृशंस्यंकृत ज्ञता ॥ विक्रमश्चप्रभावश्चसंतिवानरराघवे ॥ १५ ॥ चतुर्दशसहस्राणिराक्षसानांजघानयः ॥ जनस्थानेविनाभ्रात्राशत्रुःकस्तस्यनोद्विजेत् ॥ १६ ॥ नसशक्यस्तुलयितुंव्यसनैःपुरुषर्षभः ॥ अहंतस्यानुभावज्ञाशक्रस्येवपुलोमजा ॥ १७ ॥ शरजालांशुमाञ्छूरःकपेरामदिवाकरः ॥ शत्रुरक्षोमयं तोयमुपशोषंनयिष्यति ॥ १८ ॥ इतिसंजल्पमानांतांरामार्थेशोककर्शिताम् ॥ अश्रुसंपूर्णवदनामुवाचहनुमान्कपिः ॥ १९ ॥ श्रुत्वैवचवचोमह्यं क्षिप्रमेष्यतिराघवः ॥ चमूंप्रकर्षन्महतींहर्यृक्षगणसंकुलाम् ॥ २० ॥ अथवामोचयिष्यामित्वामद्यैवसराक्षसात् ॥ अस्माद्दुःखादुपारोहममपृष्ठमनिं दिते ॥ २१ ॥ त्वांतुपृष्ठगतांकृत्वासंतरिष्यामिसागरम् ॥ शक्तिरस्तिहिमेवोढुंलंकामपिसरावणाम् ॥ २२ ॥ अहंप्रस्रवणस्थायराघवायाद्यमै थिलि ॥ प्रापयिष्यामिशक्रायहव्यंहुतमिवानलः ॥ २३ ॥ द्रक्ष्यस्यद्यैववैदेहिराघवंसहलक्ष्मणम् ॥ व्यवसायसमायुक्तंविष्णुंदैत्यवधेयथा ॥ ॥ २४ ॥ त्वद्दर्शनकृतोत्साहमाश्रमस्थंमहाबलम् ॥ पुरंदरमिवासीनंनगराजस्यमूर्धनि ॥ २५ ॥ पृष्ठमारोहमेदेविमाविकांक्षस्वशोभने ॥ योगम न्विच्छरामेणशशांकेनेवरोहिणी ॥ २६ ॥ कथन्यतीवशशिनासंगमिष्यसिरोहिणी ॥ मत्पृष्ठमधिरोहत्वंतराकाशंमहार्णवम् ॥ २७ ॥

तत्त्वं च मम प्रत्यक्षमेवेत्याह अहं तस्येति । तद्रूपत्वादिति गूढम् ॥ १७ ॥ शरजालेत्यादिपरंपरितरूपकमिदम् ॥ १८ ॥ १९ ॥ मह्यं मम मत्तो वा ॥ २० ॥ तत्र रामसंगमे रामस्येहानयनं व्यर्थमेव प्रकारांतरेणव तस्य संभवादित्याह अथवेति । सोहं राक्षसाद्राक्षसकृतादस्माद्दुःखान्मोचयिष्यामीत्यन्वयः ॥ २१ ॥ २२ ॥ २३ ॥ दैत्यवधे व्यवसाययुक्तं विष्णुमिव स्थितम् ॥ २४ ॥ नगराजस्य श्रेष्ठस्य प्रस्रवणगिरेरित्यर्थः ॥ २५ ॥ मां विकांक्षस्व मोपेक्षां कुर्वित्यर्थः ॥ २६ ॥ कथयंतीव संगंतव्यो राम इति वचनं कथयंतीव शशिना रोहिणीव संगमिष्यसीत्यन्वयः । एतद्वचनसमकालमेव रामसमीपं

मापयिष्यामीत्यर्थः । यथा तद्वचने न प्रयास एवमनायासेन त्वां नयामीत्यर्थो वा । आकाशं तन्मार्गमवलंब्य महार्णवं तरेत्यन्वयः ॥ २७ ॥२८॥ त्वामुद्यम्य पृष्ठे कृत्वा विहायसं यास्यामि पश्य ॥ २९ ॥ हर्षविस्मितसर्वांगी हर्षपुलकितसर्वांगी ॥ ३० ॥ तदेव दृश्यमानमेव ॥ ३१ ॥ ३२ ॥ नवं परिभवम् अल्पशरीरोशक्तइत्येवंरूपम् ॥३३ ॥ कामतः इच्छाकृतम् ॥ ३४ ॥ ३५ ॥ तस्मात्पादपात् शिंशपातः शरीरवृद्धौ तद्भारजातशाखाभंगध्वनिना राक्षस्यो ज्ञास्यंतीति तत आप्लुतिः ॥ ३६ ॥ अग्रतो व्यवतस्थे योग्यपुरोदेशे स्थितः ॥ ३७ ॥ ३८ ॥ सनाथां सरावणां नयितुं नेतुम् ॥ ३९ ॥ अवस्थाप्यतां

नहिमेसंप्रयातस्यत्वामितोनयतोंगने ॥ अनुगंतुंगतिंशक्ताःसर्वेलंकानिवासिनः ॥ २८ ॥ यथैवाहमिहप्राप्तस्तथैवाहमसंशयम् ॥ यास्यामि पश्यवैदेहित्वामुद्यम्यविहायसम् ॥ २९ ॥ मैथिलीतुहरिश्रेष्ठाच्छ्रुत्वावचनमद्भुतम् ॥ हर्षविस्मितसर्वांगीहनूमंतमथाब्रवीत् ॥ ३० ॥ हनूमन्दूरमध्वानंकथंमांनेतुमिच्छसि ॥ तदेवखलुतेमन्येकपित्वंहरियूथप ॥ ३१ ॥ कथंचाल्पशरीरस्त्वंमामितोनेतुमिच्छसि ॥ सकाशंमानवेंद्रस्यभर्तुर्मेप्लवगर्षभ ॥ ॥ ३२ ॥ सीतायास्तुवचःश्रुत्वाहनूमान्मारुतात्मजः ॥ चिंतयामासलक्ष्मीवान्नवंपरिभवंकृतम् ॥ ३३ ॥ नमेजानातिसत्त्वंवाप्रभावंवासितेक्षणा ॥ तस्मात्पश्यतुवैदेहीयद्रूपंममकामतः ॥ ३४ ॥ इतिसंचिंत्यहनुमांस्तदाप्लवगसत्तमः ॥ दर्शयामाससीतायाःस्वरूपमरिमर्दनः ॥ ॥ ३५ ॥ सतस्मात्पादपाद्धीमानाप्लुत्यप्लवगर्षभः ॥ ततोवर्धितुमारेभेसीताप्रत्ययकारणात् ॥ ३६ ॥ मेरुमंदरसंकाशोबभौदीप्तानलप्रभः ॥ अग्रतोव्यवतस्थेचसीतायावानरर्षभः ॥ ३७ ॥ हरिःपर्वतसंकाशस्ताम्रवक्त्रोमहाबलः ॥ वज्रदंष्ट्रनखोभीमोवैदेहीमिदमब्रवीत् ॥ ३८ ॥ सपर्वतवनोद्देशांसाट्टप्राकारतोरणाम् ॥ लंकामिमांसनाथांवानयितुंशक्तिरस्तिमे ॥ ३९ ॥ तदवस्थाप्यतांबुद्धिरलंदेविविकांक्षया ॥ विशोकंकुरुवैदेहिराघवंसहलक्ष्मणम् ॥ ४० ॥ तंदृष्ट्वाचलसंकाशमुवाचजनकात्मजा ॥ पद्मपत्रविशालाक्षीमारुतस्यौरसंसुतम् ॥ ४१ ॥ तवसत्त्वंबलंचैवविजानामिमहाकपे ॥ वायोरिवगतिश्चापितेजश्चाग्नेरिवाद्भुतम् ॥ ४२ ॥ प्राकृतोन्यःकथंचेमांभूमिमागंतुमर्हति ॥ उदधेरप्रमेयस्यपारंवानरयूथप ॥ ४३ ॥ जानामिगमनेशक्तिंनयनेचापितेमम ॥ अवश्यंसंप्रधार्याशुकार्यसिद्धिरिवात्मनः ॥४४॥ अयुक्तंतुकपिश्रेष्ठमयागंतुंत्वयासह ॥ वायुवेगसवेगस्यवेगोमांमोहयेत्तव ॥ ४५ ॥

समर्थोयमिति निश्चीयताम् । विकांक्षया संदेहेनालम् । विशोकं कुरु मत्पृष्ठेन तत्र गत्वेति शेषः ॥ ४० ॥ ४१ ॥ विजानामि एवंविधत्वद्रूपदर्शनात्मागप्यनुमानादिति भावः ॥ ४२ ॥ तदेवानुमानं दर्शयति प्राकृत इति ॥ ४३ ॥ तवेव ममाप्यात्मनः कार्यसिद्धिरवश्यं संप्रधार्या विचार्या त्वया तु स्वबलवैभवेन विचारिता कार्यसिद्धिः ॥ ४४ ॥ भवत्यास्तर्हि को विचारस्तत्राह अयुक्तं त्विति ॥ ४५ ॥

उपर्युपरि सागरं सागरस्योपरीत्यर्थः ॥ ४६ ॥ ४७ ॥ इतोऽपि गमनमयुक्तं त्वया सहेत्याह नचेति कलत्रवति स्त्रिया सह गंतरि संदेहः राक्षसानामिति शेषः ॥ ४८ ॥ ४९ ॥ संशयं प्राणसंशयं तैस्त्वं परिवृतो भवेः । ततस्त्वं संशयं प्राप्तो भवेरिति त्वंशब्दद्वयनिर्वाहः॥५०॥तत्रहेतूनाह सायुधाइति । व्योम्नि निरालंबप्रदेशे इत्यर्थः॥५१॥५२॥कथंचिन्महता यत्नेन सांपराये युद्धे जयेयुः । तस्याव्यवस्थितत्वादितिभावः ॥५३॥अथ त्वं नेष्यसि एवमपि पतने महाननर्थ इत्याह अथवेति।पतेयं तव पृष्ठादिति शेषः।तत्र हेतुर्विमुखस्येति।युद्धपारवश्यान्मद्रक्षणविमुखस्येत्यर्थः॥५४॥विशसेयुः रामविषयकद्वेषवशात् तत्संतोषनाशार्थमित्यर्थः ॥५५॥५६॥यशो हीयेतेत्स्वयं मत्याहर्तुमशक्तइत्यपयशोवृद्धिः स्यादिति भावः।शस्तैर्हिंसितैः ॥५७॥राक्षसैःस्वग्रहणपक्षे दोषांतरमाह अथवेति।संवृते गुप्ते॥५८॥आरंभः समुद्रतरणादिरूपः।एवं स्वागमनपक्षे दोषमुक्त्वा

अहमाकाशमासक्ताउपर्युपरिसागरम् ॥ प्रपतेयंहितेपृष्ठाद्भयोवेगेनगच्छतः ॥ ४६ ॥ पतितासागरेचाहंतिमिनक्रझषाकुले ॥ भवेयमाशुविवशायाद सामन्नमुत्तमम् ॥ ४७ ॥ नचशक्ष्येत्वयासार्द्धंगंतुंशत्रुविनाशन ॥ कलत्रवतिसंदेहस्त्वयिस्यादप्यसंशयम् ॥ ४८ ॥ ह्रियमाणंतुमांदृष्ट्वाराक्षसाभीम विक्रमाः ॥ अनुगच्छेयुरादिष्टारावणेनदुरात्मना ॥ ४९ ॥ तैस्त्वंपरिवृतःशूरैःशूलमुद्गरपाणिभिः ॥ भवेस्त्वंसंशयंप्राप्तोमयावीरकलत्रवान् ॥ ५० ॥ सायुधावहवोव्योम्निराक्षसास्त्वंनिरायुधः ॥ कथंशक्ष्यसिसंयातुंमांचैवपरिरक्षितुम् ॥ ५१ ॥ युध्यमानस्यरक्षोभिस्ततस्तैःक्रूरकर्मभिः ॥ प्रपतेयं हितेपृष्ठाद्भयार्ताकपिसत्तम ॥ ५२ ॥ अथरक्षांसिभीमानिमहांतिबलवंतिच ॥ कथंचित्सांपरायेत्वांजयेयुःकपिसत्तम ॥ ५३ ॥ अथवायुध्यमानस्य पतेयंविमुखस्यते ॥ पतितांचगृहीत्वामांनयेयुःपापराक्षसाः ॥ ५४ ॥ मांवाहरेयुस्त्वद्धस्ताद्विशसेयुरथापिवा ॥ अनवस्थौहिदृश्येतेयुद्धेजय पराजयौ ॥ ५५ ॥ अहंवापिविपद्येयंरक्षोभिरभितर्जिता ॥ त्वत्प्रयत्नोहरिश्रेष्ठभवेन्निष्फलएवतु ॥ ५६ ॥ कामंत्वमपिपर्याप्तोनिहंतुंसर्वराक्षसान् ॥ राघवस्ययशोहीयेत्त्वयाशस्तैस्तुराक्षसैः ॥ ५७ ॥ अथवादायरक्षांसिन्यसेयुःसंवृतेहिमाम् ॥ यत्रतेनाभिजानीयुर्हरयोनापिराघवः ॥ ५८ ॥ आरं भस्तुमदर्थोयंततस्तवनिरर्थकः ॥ त्वयाहिसहरामस्यमहानागमनेगुणः ॥ ५९ ॥ मयिजीवितमायत्तंराघवस्यामितौजसः ॥ भ्रातॄणांचमहाबाहो तवराजकुलस्यच ॥ ६० ॥ तौनिराशौमदर्थंचशोकसंतापकर्शितौ ॥ सहसर्वर्क्षहरिभिस्त्यक्ष्यतःप्राणसंग्रहम् ॥ ६१ ॥ भर्तुर्भक्तिंपुरस्कृत्यरामादन्य स्यवानर ॥ नाहंस्प्रष्टुंस्वतोगात्रमिच्छेयंवानरोत्तम ॥ ६२ ॥ यदहंगात्रसंस्पर्शंरावणस्यगताबलात् ॥ अनीशाकिंकरिष्यामिविनाथाविवशासती ॥ ६३ ॥ यदिरामोदशग्रीवमिहहत्वासराक्षसम् ॥ मामितोगृह्यगच्छेततत्तस्यसदृशंभवेत् ॥ ६४ ॥

रावणानयनपक्ष एव गुणवानित्याह त्वया हीति ॥ ५९॥ रामेण मदप्राप्तौ सर्वनाशप्रसंग इत्याह मयि जीवितमिति । भ्रातॄणां लक्ष्मणादीनाम्। राजकुलस्य सुग्रीवकुलस्य ॥ ६० ॥ प्राणसंग्रहं प्राणसंबंधम् ॥ ६१ ॥ हनूमता सह गमनाभावे कारणांतरमाह भर्तुरिति । रावणगात्रस्पर्शस्तु न स्वत इत्याह यदहमिति ॥ ६२ ॥ अनीशा स्त्रीत्वात्स्वयमसमर्था । विवशा विचेष्टा । विनाथा असन्निहितरामलक्ष्मणा । हा सीते लक्ष्मणेति मारीचवाक्यं श्रुत्वा रामानर्थशंकया लक्ष्मणस्यापि प्रस्थापनादिति भावः ॥६३॥ तत्तस्य सदृशं स्वमहिम्ना सगणं शत्रुं हत्वा मन्नयनम्। सगणरावणवधार्थमेवावतारात् । तस्य च मद्गमनेऽसंभवात।

एवं च स्वकार्यानिष्पत्त्यागतायामपि कुध्येदिति गूढम् ॥ ६४ ॥ तादृशबलं च तस्य मया सुविदितमित्याह श्रुताश्चेति । विश्वामित्रयज्ञादौ कृताः वालिवधादयश्च श्रुताः । अन्ये दृष्टाः ॥ ६५ ॥ ६६ ॥ ॥ ६७ ॥ अथ निश्चितं कर्तव्यमाह स मे इति । सयूथपं ससुग्रीवं उपपादयानय । चिरकालं शोककर्शितां रामस्यात्रागमनेन हर्षितां कुरुष्व । समूलसकलनाशेनेति भावः ॥ ६८ ॥ दर्शमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तत्रिंशःसर्गः ॥ ॥ ३७ ॥ तेन वाक्येन सीतयोक्तेन वाक्येन ॥ १ ॥ स्त्रीस्वभावस्य भीरुत्वादेः । साध्वीनां पतिव्रतानाम् । विनयस्य वृत्तस्य सदृशं युक्तरूपं अतिशयेन युक्तम् ॥ २ ॥ वचनस्य युक्तरूपतां प्राशस्त्यं दर्शयति स्त्रीत्वादिति । शतयोजनं सागरं व्यतिवर्तितुं तर्तुं विस्तीर्णं अतिबृहच्छरीरमपि मामधिष्ठायेत्यन्वयः । स्त्रीत्वं

श्रुताश्चदृष्टाहिमयापराक्रमामहात्मनस्तस्यरणावमर्दिनः ॥ नदेवगंधर्वभुजंगराक्षसाभवंतिरामेणसमाहिसंयुगे ॥ ६५ ॥ समीक्ष्यतंसंयतिचित्रकार्मुकं महाबलंवासवतुल्यविक्रमम् ॥ सलक्ष्मणंकोविपहेतराघवंहुताशनंदीप्तमिवानिलेरितम् ॥ ६६ ॥ सलक्ष्मणंराघवमाजिमर्दनंदिशागजंमत्तमिवव्यव स्थितम् ॥ सहेतकोवानरमुख्यसंयुगेयुगांतसूर्यप्रतिमंशरार्चिषम् ॥ ६७ ॥ समेकपिश्रेष्ठसलक्ष्मणंप्रियंसयूथपंक्षिप्रमिहोपपादय ॥ चिरायरामंप्रतिशो ककर्षितांकुरुष्वमांवानरवीरहर्षिताम् ॥ ६८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मी० आ० सुंदरकांडेसप्तत्रिंशःसर्गः ॥ ३७ ॥ ततःसकपिशार्दूलस्तेनवाक्ये नतोषितः ॥ सीतामुवाचतच्छ्रुत्वावाक्यंवाक्यविशारदः ॥ १ ॥ युक्तरूपंत्वयादेविभाषितंशुभदर्शने ॥ सदृशंस्त्रीस्वभावस्यसाध्वीनांविनयस्यच ॥ २ ॥ स्त्रीत्वान्नत्वंसमर्थासिसागरंव्यतिवर्तितुम् ॥ मामधिष्ठायविस्तीर्णंशतयोजनमायतम् ॥ ३ ॥ द्वितीयंकारणंयच्चब्रवीषिविनयान्विते ॥ रामादन्य स्यनार्हामिसंसर्गमितिजानकि ॥ ४ ॥ एतत्तेदेविसदृशंपत्न्यास्तस्यमहात्मनः ॥ कान्यान्यात्वामृतेदेविब्रूयाद्वचनमीदृशम् ॥ ५ ॥ श्रोष्यतेचैवकाकुत्स्थः सर्वंनिरवशेषतः ॥ चेष्टितंयत्त्वयादेविभाषितंचममाग्रतः ॥ ६ ॥ कारणैर्बहुभिर्देविरामप्रियचिकीर्षया ॥ स्नेहप्रस्कन्नमनसामयैतत्समुदीरितम् ॥ ७ ॥ लंकायादुष्प्रवेशत्वाद्दुस्तरत्वान्महोदधेः ॥ सामर्थ्यादात्मनश्चैवमयैतत्समुदीरितम् ॥ ८ ॥ इच्छामित्वांसमानेतुमद्यैवरघुनंदिना ॥ गुरुस्नेहेनभक्त्या चनान्यथातदुदाहृतम् ॥ ९ ॥ यदिनोत्सहसेयातुंमयासार्धमनिंदिते ॥ अभिज्ञानंप्रयच्छत्वंजानीयाद्राघवोहियत् ॥ १० ॥

ननु समर्थं हीति पाठे त्वं स्त्री न तु समर्थं न समर्थेत्यर्थः । लिंगव्यत्यय आर्ष इति तीर्थः । स्त्रीणां भीरुस्वभावत्वादिति भावः ॥ ३ ॥ ४ ॥ ईदृशं वचनं त्वया सह न यास्यामीत्येतद्वचनम् । त्वद्भिन्नेदृश्या मापदि ईदृशं वचः का ब्रूयात् ॥ ५ ॥ चेष्टितं व्यापारो विलापादिरूपः ॥ ६ ॥ कारणैर्बहुभिरुपपन्नं यत्त्वया मदग्रतो भाषितं तद्रामाग्रे उच्यमानगुणकेन मया ईरितं काकुत्स्थो निरवशेषतः श्रोष्यत इत्यन्वय इति कतकः ॥ ७ ॥ रामसमीपनयनोक्तौ हेतुमाह लंकाया इति । रामेण पत्या लंकाया दुष्प्रवेशत्वान्महोदधेर्दुस्तरत्वाच्चात्मनः सामर्थ्यसत्त्वाच्च ॥ ८ ॥ इच्छामीत्यादि समुदीरितम् मयेति शेषः । रघुनंदिना रघूंस्तदंश्यानंदयति तेन रामेण समानेतुमित्यन्वयः । तदपि गुरौ रामस्य स्नेहेन त्वयि भक्त्या चोक्तम् । न तु निजबलगर्वादित्यर्थः ॥ ९ ॥ यदीति । उक्तरीत्या अयुक्तत्वपर्यालोचनयेत्यर्थः ॥ १० ॥

एवमुक्ता प्रत्यभिज्ञां देहीत्युक्ता । मंदमुपांशु एकांतवृत्तांतस्मरणजो बाष्पः ॥ ११ ॥ इदं रहस्यवृत्तांतकथनरूपं रहस्यवृत्तांतत्वादेवान्याज्ञातत्वेन श्रेष्ठं तदेवाह शैलस्येति । पूर्वोत्तरे ईशानदिक्स्थे पादे प्रत्यंतपर्वतरूपे पदे स्थाने ॥ १२ ॥ मंदाकिन्यविदूरतः मंदाकिनीसमीपे सिद्धाश्रिते बहुमूलादिमति देशे तापसाश्रमवासिन्या मम यद्वृत्तं तच्छ्रेष्ठमभिज्ञानं त्वं ब्रूया इति संबंधः ॥ १३ ॥ समुपाविष्टोभूः ॥ १४ ॥ ततोनंतरं सः त्वदनुभवसिद्धः समायुक्तः विकाराभियुक्तः सन् पर्यतुंडयत् स्तनांतरे इति शेषः । यद्वा मांससमायुक्तः मांसेच्छायुक्त इत्यर्थः ॥ १५ ॥ तत्रैव परिलीयते वार्यमाणोपि न देशांतरं गच्छति स्म न च मांसान्मांसविदारणाद्भक्षार्थी उपारमत् । यद्ययं वस्तुतो न मांसार्थीत्युच्यते तदेत्थं योज्यम् । स वायसो मांसाद्भक्षार्थीव इवाध्याहारः । ल्यब्लोपे पंचमी । मांसमुपगृह्य भक्षार्थीव । यद्वा मांसभोजने भक्षार्थीव पुनः पुनर्विलेखनान्न विरराम ॥ १६ ॥ अथ पक्षिणे क्रुद्धायां मयि रशनां वासो दार्ढ्यायोत्कर्षंत्यां तदानीं वसने स्रंसमाने सति त्वयाहं स्रस्तवसना

एवमुक्ताहनुमतासीतासुरसुतोपमा ॥ उवाचवचनंमंदंबाष्पप्रग्रथिताक्षरम् ॥ ११ ॥ इदंश्रेष्ठमभिज्ञानंब्रूयास्त्वंतुममप्रियम् ॥ शैलस्यचित्रकूटस्यपादेपूर्वोत्तरेपदे ॥ १२ ॥ तापसाश्रमवासिन्याःप्राज्यमूलफलोदके ॥ तस्मिन्सिद्धाश्रितेदेशेमंदाकिन्याविदूरतः ॥ १३ ॥ तस्योपवनखंडेषुनानापुष्पसुगंधिषु ॥ विहृत्यसलिलेक्लिन्नोममांकेसमुपाविशः ॥ १४ ॥ ततोमांससमायुक्तोवायसःपर्यतुंडयत् ॥ तमहंलोष्टमुद्यम्यवारयामिस्मवायसम् ॥ १५ ॥ दारयन्सचमांकाकस्तत्रैवपरिलीयते ॥ नचाप्युपारमन्मांसाद्भक्षार्थीबलिभोजनः ॥ १६ ॥ उत्कर्षंत्यांचरशनांक्रुद्धायांमयिपक्षिणे ॥ स्रंसमानेचवसनेततोदृष्टात्वयाह्यहम् ॥ १७ ॥ त्वयाविहसिताचाहंक्रुद्धासंलज्जितातदा ॥ भक्ष्यगृद्ध्नेनकाकेनदारितात्वामुपागता ॥ १८ ॥ ततःश्रांताहमुत्संगमासीनस्यतवाविशम् ॥ क्रुध्यंतीवप्रहृष्टेनत्वयाहंपरिसांत्विता ॥ १९ ॥ बाष्पपूर्णमुखीमंदंचक्षुषीपरिमार्जती ॥ लक्षिताहंत्वयानाथवायसेनप्रकोपिता॥२०॥परिश्रमात्प्रसुप्ताहेराघवांकेस्म्यहंचिरम् ॥ पर्यायेणप्रसुप्तश्चममांकेभरताग्रजः ॥ २१ ॥ सतत्रपुनरेवाथवायसःसमुपागमत् ॥ ततःसुप्तप्रबुद्धांमांराघवांकात्समुत्थिताम् ॥ वायसःसहसागम्यविररादस्तनांतरे ॥ २२ ॥ पुनःपुनरथोत्पत्यविररादसमांभृशम् ॥ ततःसमुत्थितोरामोमुक्तैःशोणितबिंदुभिः ॥ २३ ॥

दृष्टा ततस्त्वया विहसिता तदा तत्परिहासकाले क्रुद्धा सम्यक्लज्जिता च । भक्ष्यगृद्ध्नेन भक्ष्यलुब्धेनेव काकेन दारिता सती त्वामुपागता ॥ १७ ॥ १८ ॥ तदनंतरं वायसापसारणेन श्रांताहमासीनस्य ते उत्संगमाविशं ततः परिहासमात्रं कृत्वा तूष्णीं तिष्ठति भवति क्रुद्ध्यंती अहं प्रहृष्टेन त्वया परिसांत्विता ॥ १९ ॥ अतएव बाष्पपरिपूर्णमुखी चक्षुषी च मंदं परिमार्जती हे नाथ वायसेन प्रकोपितेति त्वया लक्षितास्मि ॥ २० ॥ अथ हे राघवाहं तवांके परिश्रमात्सुप्तास्मि भरताग्रज त्वं च पर्यायेण ममांके सुप्तः ॥ २१ ॥ स तत्रेति त्वयि स्वपति मयि जाग्रत्यामित्यर्थः । सुप्तप्रबुद्धां राघवांके सुप्त्वा ततः प्रबुद्धामतएव राघवांकादुत्थितां वायसः पुनरागम्य स्तनांतरे विरराद व्यलिखत् ॥ २२ ॥ एतदंतमभिज्ञानवचनानुवादः अथ हनूमते शेषवृत्तांतकथनं तत इति । ततः पुनः पुनर्विलेखनाद्धेतोर्मुक्तैः शोणितबिंदु

भिः रामः समुत्थितोभूत्सुखसुप्तोपीति शेषः ॥ २३ ॥ तदा स्तनयोर्वितुन्नां मां दृष्ट्वा क्रुद्धः अनेन पूर्वपर्याये केवलं रामः काकचेष्टाबुद्ध्या परिहासमेव कृतवानिति सूचितम् ॥ २४ ॥ २५ ॥ वीक्षमाणः इतस्ततः प्रांतेदेशमित्यर्थः ॥ २६ ॥ देवि कोसौ एवंविधो वायस इति हनूमतः शंकायामाह पुत्र इति । शक्रपुत्रो जयंतः स तु वायसो वायसरूपधारीत्यर्थः । धरांतरं गतः भूमिबिलं प्राप्तः शीघ्रगतौ पवनस्य समः धरांतरचारित्वं तु पवनादस्य विशेषः । न हि वायुस्तत्संचारीति कतकः ॥२७॥ कोपेन संवर्तिते विवर्तिते ईक्षणे येन सः ॥२८॥ दर्भसंस्तरात्संस्तरणार्थगृहीतदर्भमुष्टेरेकमिति शेषः । योजयद्ब्रह्मास्त्रदेवतामंत्रेणा योजयदित्यर्थः ॥ २९ ॥ ३० ॥ विविधां गतिं जगामेत्येतद्विवृणोति त्राणेति । इमं लोकं भूलोकादिसत्यलोकांतम् ॥ ३१ ॥ पित्रा परित्यक्तः सर्वैपीति शेषः । पित्रेत्युपलक्षणं ब्रह्मांतानाम् ॥ ३२ ॥

समांदृष्ट्वामहाबाहुर्वितुन्नांस्तनयोस्तदा ॥ आशीविषइवक्रुद्धःश्वसन्वाक्यमभाषत ॥ २४ ॥ केनतेनागनासोरुविक्षतंवैस्तनांतरम् ॥ कःक्रीडतिसरोषेणपंचवक्त्रेणभोगिना ॥ २५॥ वीक्षमाणस्ततस्तंवैवायसंसमवैक्षत ॥ नखैःसरुधिरैस्तीक्ष्णैर्मामेवाभिमुखंस्थितम् ॥२६॥ पुत्रःकिलसशक्रस्यवायसःपततांवरः ॥ धरांतरगतःशीघ्रंपवनस्यगतौसमः ॥ २७ ॥ ततस्तस्मिन्महाबाहुःकोपसंवर्तितेक्षणः ॥ वायसेकृतवान्क्रूरांमतिंमतिमतांवरः ॥२८॥ सदर्भंसंस्तराद्गृह्यब्रह्मणोस्त्रेणयोजयत् ॥ सदीप्तइवकालाग्निर्जज्वालाभिमुखोद्विजम् ॥ २९ ॥ सतंप्रदीप्तंचिक्षेपदर्भंतंवायसंप्रति ॥ ततस्तुवायसंदर्भःसोंबरेनुजगामह ॥ ३० ॥ अनुसृष्टस्तदाकाकोजगामविविधांगतिम् ॥ त्राणकामइमंलोकंसर्वंवैविचचारह ॥ ३१ ॥ सपित्राचपरित्यक्तःसर्वैश्चपरमर्षिभिः ॥ त्रीँल्लोकान्संपरिक्रम्यतमेवशरणंगतः ॥ ३२ ॥ सतंनिपतितंभूमौशरण्यःशरणागतम् ॥ वधार्हमपिकाकुत्स्थःकृपयापर्यपालयत् ॥ ३३ ॥ परिद्यूनंविवर्णंचपतमानंतमब्रवीत् ॥ मोघमस्त्रंनशक्यंतुब्राह्मंकर्तुंतदुच्यताम् ॥ ३४ ॥ ततस्तस्याक्षिकाकस्यहिनस्तिस्मसदक्षिणम् ॥ दत्त्वातुदक्षिणंनेत्रंप्राणेभ्यःपरिरक्षितः ॥ ३५ ॥ सरामायनमस्कृत्वाराज्ञेदशरथायच ॥ विसृष्टस्तेनवीरेणप्रतिपेदेस्वमालयम् ॥ ३६ ॥ मत्कृतेकाकमात्रेपिब्रह्मास्त्रंसमुदीरितम् ॥ कस्माद्योमाहरत्त्वत्तःक्षमसेतंमहीपते ॥ ३७ ॥ सकुरुष्वमहोत्साहांकृपांमयिनरर्षभ ॥ त्वयानाथवतीनाथअनाथाइवदृश्यते ॥ ३८ ॥ आनृशंस्यंपरोधर्मस्त्वत्तएवमयाश्रुतम् ॥ जानामित्वांमहावीर्यंमहोत्साहंमहाबलम् ॥ ३९ ॥ अपारवारमक्षोभ्यंगांभीर्यात्सागरोपमम् ॥ भर्तारंससमुद्रायाधरण्यावासवोपमम् ॥ ४० ॥ एवमस्त्रविदांश्रेष्ठोबलवान्सत्त्ववानपि ॥ किमर्थमस्त्रंरक्षस्सुनयोजयसिराघव ॥४१॥

पर्यपालयत् प्राणरक्षणेनेति शेषः ॥ ३३ ॥ परिद्यूनं क्षीणशक्तिं ब्राह्ममस्त्रं मोघं कर्तुं न शक्यमतस्तदुच्यतां तत्संहार्यं वस्तु भार्गववदुच्यतामित्यर्थः ॥ ३४ ॥ स दक्षिणाक्षि अस्य संहार्यं भवत्विरयुक्तः परिरक्षितः परिरक्षितवानात्मानमिति शेषः ॥ ३५ ॥ सः जयंतः ॥ ३६ ॥ एवं हनूमते रामेणसंदेशमभिज्ञानमुक्त्वा संदेशांतरमाह मत्कृते इति । कस्मात्क्षमसे इत्यवांतरवाक्यांते इत्युक्तवतीति ब्रूहीति वाक्यशेषो द्रष्टव्य इति कतकः । बुद्धिस्तत्र । राममेव सोपालंभं संबोध्य प्रार्थयते इति तीर्थः । त्वत्तस्त्वत्तः काकाद्यो मा माम् अहरत् हतवान् ॥ ३७ ॥ मम महोत्साहरूपां मयि कृपां कुरु त्वया नाथवत्यपि मल्लक्षणा नारी अनाथेव दृश्यते इत्यर्थः ॥ ३८ ॥ आनृशंस्यं दया न च शक्तोयमर्थ इति चेत्तत्राह जानामीति ॥ ३९ ॥ अपारवारं मर्यादारहितं देशकालादिपरिच्छेदहीनमित्यर्थः । जानामीत्यनुकर्षः ॥४०॥ ४१ ॥

अथ हनूमंतं सामान्यतो रामवैभवमाह न नागा इति । प्रतिसमीहितुं प्रतिभटतया स्थित्वा निरोद्धुमित्यर्थः । प्रतिसमाधितुमिति पाठांतरम् । तत्रार्थस्त्वं शरणं उक्त एवार्थः ॥ ४२ ॥ मम संभ्रम इति पाठे मम मात्रये संभ्रम इत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ कस्माद्राक्षसभयं न करोतीत्यस्योत्तरं त्वच्छोकेति त्वद्वियोगजशोकेन सर्वकार्यविमुख इत्यर्थः ॥ ४८ ॥ यतः कथंचिद्भवती दृष्टा अत इमं मुहूर्तमारभ्य ते परिदेवितुं कालो न कुतस्तत्राह यतो दुःखानां अंतं द्रक्ष्यसि ॥ ४९ ॥ ५० ॥ ५१ ॥ नियोगसारं ब्रूहीत्याह ब्रूहीति ॥ ५२ ॥ ५३ ॥ ममार्थे मत्प्रतिनिधित्वेनेत्यर्थः । लक्ष्मणः

ननागानापिगंधर्वानसुरानमरुद्गणाः ॥ रामस्यसमरेवेगंशक्ताःप्रतिसमीहितुम् ॥ ४२ ॥ तस्यवीर्यवतःकच्चिद्यद्यस्तिमयिसंभ्रमः ॥ किमर्थंनशरै स्तीक्ष्णैःक्षयंनयतिराक्षसान् ॥ ४३ ॥ भ्रातुरादेशमादायलक्ष्मणोवापरंतपः ॥ कस्यहेतोर्नमांवीरःपरित्रातिमहाबलः ॥ ४४ ॥ यदितौपुरुषव्याघ्रौ वाय्विद्रसमतेजसौ ॥ सुराणामपिदुर्धर्षौकिमर्थंमामुपेक्षतः ॥ ४५ ॥ ममैवदुष्कृतंकिंचिन्महदस्तिनसंशयः ॥ समर्थावपितौयन्मांनावेक्षेतेपरं तपौ ॥ ४६ ॥ वैदेह्यावचनंश्रुत्वाकरुणंसाश्रुभाषितम् ॥ अथाब्रवीन्महातेजाहनूमान्हारियूथपः ॥ ४७ ॥ त्वच्छोकविमुखोरामोदेविसत्येनतेशपे ॥ रामेदुःखाभिपन्नेतुलक्ष्मणःपरितप्यते ॥ ४८ ॥कथंचिद्भवतीदृष्टानकालःपरिशोचितुम् ॥ इमंमुहूर्तंदुःखानामंतंद्रक्ष्यसिशोभने ॥ ४९ ॥ तावुभौपुरु षव्याघ्रौराजपुत्रौमहाबलौ ॥ त्वद्दर्शनकृतोत्साहौलोकान्भस्मीकरिष्यतः ॥ ५० ॥ हत्वाचसमरेक्रूरंरावणंसहबांधवम् ॥ राघवस्त्वांविशालाक्षिस्व पुरींप्रतिनेष्यति ॥ ५१ ॥ ब्रूहियद्राघवोवाच्योलक्ष्मणश्चमहाबलः ॥ सुग्रीवोवापितेजस्वीहरयोवासमागताः ॥ ५२ ॥ इत्युक्तवतितस्मिंश्चसीतापुन रथाब्रवीत्॥कौसल्यालोकभर्तारंसुषुवेयंमनस्विनी ॥ ५३ ॥ तंममार्थेसुखंपृच्छशिरसाचाभिवादय ॥ स्रजश्चसर्वरत्नानिप्रियायाश्चवरांगनाः ॥ ५४ ॥ ऐश्वर्यंचविशालायांपृथिव्यामपिदुर्लभम् ॥ पितरंमातरंचैवसंमान्याभिप्रसाद्यच ॥ ५५ ॥ अनुप्रव्रजितोरामंसुमित्रायेनसुप्रजाः ॥ आनुकूल्येनधर्मा त्मात्यक्त्वासुखमनुत्तमम् ॥ ५६ ॥ अनुगच्छतिकाकुत्स्थंभ्रातरंपालयन्वने ॥ सिंहस्कंधोमहाबाहुर्मनस्वीप्रियदर्शनः ॥ ५७॥ पितृवद्वर्ततेरामे मातृवन्मांसमाचरत् ॥ ह्रियमाणांतदावीरोनतुमांवेदलक्ष्मणः ॥ ५८ ॥ वृद्धोपसेवीलक्ष्मीवाञ्छक्तोनबहुभाषिता ॥ राजपुत्रप्रियश्रेष्ठःसदृशःश्वशुर स्यमे ॥ ५९ ॥ मत्तःप्रियतरोनित्यंभ्राताराम़स्यलक्ष्मणः ॥ नियुक्तोधुरियस्यांतुतामुद्वहतिवीर्यवान् ॥ ६० ॥

पूर्वं मारीचवधाय गते रामे तत्पृष्ठगमनाय सम्यक् कृतपारुष्य इति ज्ञात्वा तस्य विमोचनप्रवृत्त्युपेक्षा मा भूदिति विशिष्य कुशलप्रश्नं ब्रूहीत्याह स्रजश्चेति दुर्लभमित्यत्र त्यक्त्वेत्यनुकर्षः ॥ ५४ ॥ ५५ ॥ ॥ ५६ ॥ ५७ ॥ समाचरत्पर्यचरत् दुर्वाक्यैरति पीडां प्रापितो वीरो मां ह्रियमाणां केनचिद्धरिष्यमाणाम् । वर्तमानसामीप्ये लट् न वेद यदि वेद मयि तथाप्रलपंत्यामपि निकटे एव तिष्ठेदतो मद्दुरदृष्टवशान्नावेदीदित्यर्थः ॥ ५८ ॥ शक्तः समर्थः न बहुभाषिता मितभाषीत्यर्थः । राजपुत्रस्य रामस्य प्रियेषु श्रेष्ठः अतिप्रिय इत्यर्थः ॥ ५९ ॥ तदेवाह मत्त इति । मत्तोपीत्यर्थः । यस्यां धुरि यत्र कार्ये ॥ ६० ॥

वृत्तं प्रमीतम् । पितृवद्दक्षकत्वात्तत्स्मरणाभावः अनुस्मरत् अन्वस्मरत् ममार्थाय मत्प्रयोजनोन्मुखाय । मम वचनाद्वक्तव्यः सीता त्वां कुशलं पृच्छतीति वक्तव्य इत्यर्थः ॥ ६१ ॥ हि निश्चये यथा दुःखक्षयकरो भवेद्दुःखक्षयहेतुप्रवृत्तिपरो भवेत् तथा वाच्य इत्यनुकर्षः ॥ ६२ ॥ किंबहुनास्य कार्यस्य निर्वाहे त्वं प्रमाणम् । यथा कार्यनिर्वाहो भवति तथा कुर्वित्यर्थः । यत एवं अतो राघव इति ॥ ६३ ॥ ६४ ॥ ऊर्ध्वं मासादिति । रावणदत्तावध्यवशिष्टं किंचिदधिकं मासद्वयमपि न सहिष्ये इति भावः । तत्समाप्तौ त्वदनागमने अनार्यो नार्यमेवाचरेदतोर्वागेव मरणं ज्याय इति शीघ्रमागमनायैवमुक्तिरिति बोध्यम् निकृत्या राक्षसीकर्तृकनिग्रहेणोपरुद्धाम् । पातालादिव कौशिकीं पातालमग्नां भुवं भगवानिव त्रातुमर्हसि । गायत्र्याः सांख्यायनगोत्रत्ववद्भूः कौशिकीति कतकः । कौशिकी देवेंद्रश्रीः पुरा किल वृत्रवधाभिभूतस्येंद्रस्य लक्ष्मीं पातालं प्रविष्टां देवप्रार्थितो नारायण उद्धृत्य पुनरिंद्राय प्रायच्छदिति पुराणगाथेति तीर्थः ॥ ६५ ॥ चूडामणिं शिरोरत्नम् ॥ ६६ ॥ अंगुल्या योजयामास दधार चूडामण्यधिष्ठानहेमपुष्प

यंदृष्ट्वाराघवोनैववृत्तमार्यमनुस्मरत ॥ सममार्थायकुशलंवक्तव्योवचनान्मम ॥ ६१ ॥ मृदुर्नित्यंशुचिर्दक्षःप्रियोरामस्यलक्ष्मणः ॥ यथाहि वानरश्रेष्ठदुःखक्षयकरोभवेत् ॥ ६२ ॥ त्वमस्मिन्कार्यनिर्वाहेप्रमाणंहरियूथप ॥ राघवस्त्वत्समारंभान्मयियत्नपरोभवेत् ॥ ६३ ॥ इदंब्रूयाश्चमेनाथं शूरंरामंपुनःपुनः ॥ जीवितंधारयिष्यामिमासंदशरथात्मज ॥ ६४ ॥ ऊर्ध्वंमासान्नजीवेयंसत्येनाहंब्रवीमिते ॥ रावणेनोपरुद्धांमांनिकृत्यापापकर्मणा ॥ त्रातुमर्हसिवीरत्वंपातालादिवकौशिकीम् ॥ ६५ ॥ ततोवस्त्रगतंमुक्त्वादिव्यंचूडामणिंशुभम् ॥ प्रदेयोराघवायेतिसीताहनुमतेददौ ॥ ६६ ॥ प्रतिगृह्यततोवीरोमणिरत्नमनुत्तमम् ॥ अंगुल्यायोजयामासनह्यस्यप्राभवद्भुजः ॥ ६७ ॥ मणिरत्नंकपिवरःप्रतिगृह्याभिवाद्यच ॥ सीतांप्रदक्षिणं कृत्वाप्रणतःपार्श्वतःस्थितः ॥ ६८ ॥ हर्षेणमहतायुक्तःसीतादर्शनजेनसः ॥ हृदयेनगतोरामंलक्ष्मणंचसलक्षणम् ॥ ६९ ॥ मणिवरमुपगृह्यतंमहार्हं जनकनृपात्मजयाधृतंप्रभावात् ॥ गिरिवरपवनावधूतमुक्तःसुखितमनाःप्रतिसंक्रमंप्रपेदे ॥ ७० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे अष्टत्रिंशःसर्गः ॥ ३८ ॥ मणिंदत्त्वाततःसीताहनूमंतमथाब्रवीत् ॥ अभिज्ञानमभिज्ञातमेतद्रामस्यतत्त्वतः ॥ १ ॥

स्य केशप्रवेशार्थं यद्रंध्रं तत्रांगुलिं प्रवेशयामासेत्यर्थः । ननु तदा सूक्ष्मरूपत्वात्तत्र भुजासंजनमेवोचितमत आह नहीति । अस्य भुजः सूक्ष्मोऽपि न प्राभवत् तद्रंध्रे न प्राविशदित्यर्थः । निषेधस्य प्रसक्तिमूलकत्वात्प्रसक्तेश्च सूक्ष्मरूप एव संभवात् पूर्वं देव्यै प्रदर्शितं महद्रूपं विहाय सूक्ष्मरूपेणैव स्थित इति गम्यत इति तीर्थः । कतकस्तु अंगुल्या योजयामास सूक्ष्मवासोबद्धमंगुल्यां दृढं बबंधेत्यर्थः । अस्य बंधने भुजो न प्राभवत् व्यक्ततया सर्वानुभवप्रसंगात् गोपनीयत्वाच्च भुजो नोचितोभूदित्यर्थ इत्याह ॥ ६७ ॥ पार्श्वतः स्थितः सीतासमीपे स्थितः ॥ ६८ ॥ ६९ ॥ महार्हं बहुमूल्यम् । प्रभावात् सामर्थ्यविशेषात् राक्षसीभिर्यथा न ज्ञायते तथा धृतम् । गिरिवरपवनावधूतमुक्तः पर्वतश्रेष्ठोर्ध्वभागीयपवनकंपितः पश्चात्तेन कंपेन मुक्तः स इव सुखितमनाः । अयमपि पूर्वं सीताया अदर्शनेन दुःखवशात्कंपितस्ततस्तद्दर्शनेन ततः कंपान्मुक्तोतः सुखितमनाः प्रतिसंक्रमं लंकादुर्गप्राकारं प्राप्तुं प्रपेदे यत्नमारभतेत्यर्थः ॥ ७० ॥ नार्थंमान. ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे अष्टत्रिंशः सर्गः ॥ ३८ ॥ रामस्याभिज्ञातं

रामेणाभिज्ञातमित्यर्थः ॥ १ ॥ त्रयाणां संस्मरिष्यति । कर्मणि शेषे षष्ठी । त्रीनाह जनन्या इति अयं मणिर्विवाहकाले मज्जनन्या हस्तान्मत्पित्रादाय दशरथहस्ते मम शिरोभूषणतया दत्त इति मम जनन्याश्च मत्पितुर्दशरथस्य चेति त्रयाणां स्मारक इति भावः ॥२॥ स त्वमस्मिन्समुत्साहे भूयश्चोदितो भविष्यसि तदत्र कार्यसमुत्साहप्रचोदितः सन् यदुत्तरं उत्तरकर्तव्यं तच्चिंतय ॥ ३ ॥ मम का चिंतने शक्तिरिति चेत्तत्राह त्वमिति । नियोगो निर्वाहः यस्तस्य रामस्य यत्नो दुःखक्षयकरो भवेत्तं चिंतय ॥ ४ ॥ यत्नमास्थायेति । यत्नं रामप्रवृत्त्यर्थमित्यर्थः ॥५॥६॥७॥८॥ अंबूनि संरुध्यंते यस्मिन्नित्यंबुसंरोधः समुद्रः दुःखरूपात्समुद्रादित्यर्थः । यथा

मणिंदृष्ट्वातुरामोवैत्रयाणांसंस्मरिष्यति ॥ वीरोजनन्याममचराज्ञोदशरथस्यच ॥ २ ॥ सभूयस्त्वंसमुत्साहचोदितोहरिसत्तम ॥ अस्मिन्कार्यसमुत्साहेप्रचिंतययदुत्तरम् ॥ ३ ॥ त्वमस्मिन्कार्यनियोगेप्रमाणंहरिसत्तम ॥ तस्यचिंतययोयत्नोदुःखक्षयकरोभवेत् ॥ ४ ॥ हनूमन्यत्नमास्थायदुःखक्षयकरोभव ॥ सतथेतिप्रतिज्ञायमारुतिर्भीमविक्रमः ॥५॥ शिरसावंद्यवैदेहींगमनायोपचक्रमे ॥ ज्ञात्वासंप्रस्थितंदेवीवानरंपवनात्मजम् ॥६॥ बाष्पगद्गदयावाचामैथिलीवाक्यमब्रवीत् ॥ हनुमन्कुशलंब्रूयाःसहितौरामलक्ष्मणौ ॥ ७ ॥ सुग्रीवंचसहामात्यंसर्वान्वृद्धांश्चवानरान् ॥ ब्रूयास्त्वंवानरश्रेष्ठकुशलंधर्मसंहितम् ॥ ८ ॥ यथाचसमहाबाहुर्मांतारयतिराघवः ॥ अस्माद्दुःखांबुसंरोधात्त्वंसमाधातुमर्हसि ॥ ९ ॥ जीवंतींमांयथारामःसंभावयतिकीर्तिमान् ॥ तत्त्वयाहनुमन्वाच्यंवाचाधर्ममवाप्नुहि ॥ १० ॥ नित्यमुत्साहयुक्तस्यवाचःश्रुत्वामयेरिताः ॥ वर्धिष्यतेदाशरथेःपौरुषंमदवाप्तये ॥ ११ ॥ मत्संदेशयुतावाचस्त्वत्तःश्रुत्वैवराघवः ॥ पराक्रमेमतिंवीरोविधिवत्संविधास्यति ॥ १२ ॥ सीतायास्तद्वचःश्रुत्वाहनूमान्मारुतात्मजः ॥ शिरस्यंजलिमाधायवाक्यमुत्तरमब्रवीत् ॥ १३ ॥ क्षिप्रमेष्यतिकाकुत्स्थोहर्यृक्षप्रवरैर्वृतः ॥ यस्तेयुधिविजित्यारीञ्छोकंव्यपनयिष्यति ॥ १४ ॥ नहिपश्यामिमर्त्येषुनासुरेषुसुरेषुवा ॥ यस्तस्यवमतोबाणान्स्थातुमुत्सहतेग्रतः ॥ १५ ॥ अप्यर्कमपिपर्जन्यमपिवैवस्वतंयमम् ॥ सहिसोढुंरणेशक्तस्तवहेतोर्विशेषतः ॥ १६ ॥ सहिसागरपर्यंतांमहींसाधितुमर्हति ॥ त्वन्निमित्तोहिरामस्यजयोजनकनंदिनि ॥ १७ ॥ तस्यतद्वचनंश्रुत्वासम्यक्सत्यंसुभाषितम् ॥ जानकीबहुमेनेतंवचनंचेदमब्रवीत् ॥ १८ ॥ ततस्तंप्रस्थितंसीतावीक्षमाणापुनःपुनः ॥ भर्तृस्नेहान्वितंवाक्यंसौहार्दादनुमानयत् ॥ १९ ॥ यदिवामन्यसेवीरवसैकाहमरिंदम ॥ कस्मिंश्चित्संवृतेदेशेविश्रांतःश्वोगमिष्यसि ॥ २० ॥ ममचैवाल्पभाग्यायाःसान्निध्यात्तववानर ॥ अस्यशोकस्यमहतोमुहूर्तंमोक्षणंभवेत् ॥ २१ ॥ ततोहिहरिशार्दूलपुनरागमनायतु ॥ प्राणानामपिसंदेहोममस्यान्नात्रसंशयः ॥२२॥

तारयति तथा समाधातुं यत्नं कर्तुम् ॥९॥ वाचा वाक्कृतसाहाय्येन ॥१०॥११॥ उक्तमेव आदराय पुनराह मत्संदेशयुता इति ॥१२॥१३॥१४॥ वमतो बाणान्विसृजत इत्यर्थः ॥१५॥ पर्जन्य इंद्रः ॥१६॥ महीं साधितुमर्हति जेतुमुद्युंक्ते इत्यर्थः । किमर्थं तत्राह त्वन्निमित्त इति । त्वत्प्राप्तिप्रयोजन इत्यर्थः ॥ १७ ॥ १८ ॥ भर्तृस्नेहान्वितं रामस्नेहान्वितं वाक्यं हनूमद्वाक्यं सौहार्दाद्रामप्रेम्णा अनुमानयत् अपूजयत ॥१९॥२०॥ मोक्षणं भवेत् अद्य स्थित्वा श्वो गमने इति शेषः ॥२१॥ ततो हीति । ततोपीत्यर्थः । एकाहवासोत्तरं गमनेपि पुनरागमनाय तु संदेह एव तत्संदेहे सति मम प्राणानामपि संदेह एव ॥२२॥

तदाह तवेति । तथा च मज्जीवनमसंभावितमेव पुनरनागमने इति भावः । दुःखाद्दुःखपरामृष्टाम् अतिदुःखमाप्तां दीपने कर्ता शोकः ॥ २३ ॥ अयं संदेहो ममाग्रतः पुरस्तादिव तिष्ठति कोयं तत्राह त्वत्सहाये ष्विति । साक्षात्साधकस्य तव सहायभूतेषु मिलितेषु हर्यृक्षेषु हरीश्वरः सुग्रीवः कथमुदधिं तरिष्यंति तौ वा कथं तारिष्यति सैन्यानि कथं तारिष्यत इत्यर्थः॥२४॥२५॥ एवं संदेहे बीजमाह त्रयाणामेवेति॥२६॥ किं समाधानं पश्यसि कं कार्यसिद्ध्युपायं पश्यसि ॥२७॥ ननु किं तैरागतैरहमेव पर्याप्तोस्य कार्यस्येत्यत्राह काममिति । त्वया कार्यसाधने तव यशस्यो यशस्करः फलोदयो जयरूपफलप्राप्तिर्भवति न तु रामस्ये त्यर्थः ॥ २८ ॥ किं तर्ह्युचितं तत्राह बलैरिति । समग्रैर्बलैः सहागत्य रावणं संयुगे जित्वा विजयी सन्मां गृहीत्वा यायात्तत्तस्य रामस्य सदृशं भवेत् ॥ २९ ॥ आदरात्पुनराह बलैस्त्विति ॥ ३० ॥

तवादर्शनजःशोकोभूयोमांपरितापयेत् ॥ दुःखाद्दुःखपरामृष्टांदीपयन्निववानर ॥ २३ ॥ अयंचवीरसंदेहस्तिष्ठतीवममाग्रतः ॥ सुमहांस्त्वत्सहाये षुहर्यृक्षेषुहरीश्वरः ॥ २४ ॥ कथंनुखलुदुष्पारंतरिष्यतिमहोदधिम् ॥ तानिहर्यृक्षसैन्यानितौवानरवरात्मजौ ॥ २५ ॥ त्रयाणामेवभूतानांसागरस्ये हलंघने ॥ शक्तिःस्याद्वैनतेयस्यतववामारुतस्यवा ॥२६ ॥ तदस्मिन्कार्यनिर्योगेवीरैवंदुरतिक्रमे ॥ किंपश्यसेसमाधानंत्वंहिकार्यविदांवर ॥२७॥ काममस्यत्वमेवैकःकार्यस्यपरिसाधने ॥ पर्याप्तःपरवीरघ्नयशस्यस्तेफलोदयः ॥ २८ ॥ बलैःसमग्रैर्युधिमांरावणंजित्यसंयुगे ॥ विजयीस्वपुरंयाया त्तत्तस्यसदृशंभवेत् ॥ २९ ॥ बलैस्तुसंकुलांकृत्वालंकांपरबलार्दनः ॥ मांनयेद्यदिकाकुत्स्थस्तत्तस्यसदृशंभवेत् ॥३०॥ तद्यथातस्यविक्रांतमनुरूपं महात्मनः ॥ भवेदाहवशूरस्यतथात्वमुपपादय ॥ ३१ ॥ तदर्थोपहितंवाक्यंप्रश्रितंहेतुसंहितम् ॥ निशम्यहनुमाञ्शेषंवाक्यमुत्तरमब्रवीत् ॥ ३२ ॥ देविहर्यृक्षसैन्यानामीश्वरःप्लवतांवरः ॥ सुग्रीवःसत्यसंपन्नस्तवार्थेकृतनिश्चयः ॥ ३३ ॥ सवानरसहस्राणांकोटीभिरभिसंवृतः ॥ क्षिप्रमेष्यतिवैदेहि राक्षसानांनिवर्हणः॥ ३४ ॥ तस्यविक्रमसंपन्नाःसत्त्ववंतोमहाबलाः ॥ मनःसंकल्पसंपातानिदेशेहरयःस्थिताः ॥ ३५ ॥ येषांनोपरिनाधस्तान्नतिर्य क्सज्जतेगतिः ॥ नचकर्मसुसीदंतिमहत्स्वमिततेजसः ॥ ३६ ॥ असकृत्तैर्महोत्साहैःससागरधराधरा ॥ प्रदक्षिणीकृताभूमिर्वायुमार्गानुसारिभिः ॥ ॥ ३७ ॥ मद्विशिष्टाश्चतुल्याश्चसंतितत्रवनौकसः ॥ मत्तःप्रत्यवरःकश्चिन्नास्तिसुग्रीवसन्निधौ ॥ ३८ ॥ अहंतावदिहप्राप्तःकिंपुनस्तेमहाबलाः ॥ नहि प्रकृष्टाःप्रेष्यंतेप्रेष्यंतेहीतरेजनाः ॥३९॥ तदलंपरितापेनदेविशोकोव्यपैतुते ॥ एकोत्पातेनतेलंकामेष्यंतिहरियूथपाः ॥४०॥ ममपृष्ठगतौतौचचंद्रसूर्या विवोदितौ॥त्वत्सकाशंमहासङ्घौनृसिंहावागमिष्यतः ॥४१॥ तौहिवीरौनरवरौसहितौरामलक्ष्मणौ॥आगम्यनगरींलंकांसायकैर्विधमिष्यतः॥४२॥

विक्रांतं पराक्रमः ॥ ३१ ॥ तदुक्तं सीतावाक्यं प्रश्रयः स्नेहः शेषं शिष्टं प्रकृतोत्तरवाक्यमब्रवीत् ॥ ३२ ॥ तदेव वाक्यमाह देवीति ॥३३॥३४॥ कथमेष्यतीत्यत आह तस्य विक्रमेति । मनःसंकल्पवदति दूरपतनशीलाः ॥ ३५ ॥ तदेव स्पष्टमाह येषामिति । न सज्जते न प्रतिबद्धा भवति ॥ ३६ ॥ सागरैर्धराधरैश्च सहिता ॥ ३७ ॥ प्रत्यवरो हीनबलपराक्रमः ॥३८॥ अहं तदपेक्षया न्यूनबलोपीत्यर्थः । तेषां स्वाधिकबलत्वं लोकन्यायेन दृढं बोधयति नहीति ॥ ३९ ॥ एकोत्पातेन एकोत्प्लवनेन ॥ ४० ॥ ननु भवत्वेवं हरीणामागमनं राघवयोः कथं तत्राह ममेति । महासंघौ महासमुदाययुक्तौ ॥ ४१ ॥ ४२ ॥

रघूणामानंदजनकमपत्यम् ॥४३॥ कालकांक्षिणी दिवसगणनतत्परा ॥४४॥४५॥४६॥४७॥४८॥४९॥ यूथान्यनेकशः द्रक्ष्यसीति शेषः ॥५०॥रामस्य सर्वथा त्वत्प्राप्तिचिंतैवास्ते इत्याह स त्विति ॥५१॥ ॥५२॥सौमित्रिणा समः कश्चित्कोपि नास्तीति शेषः॥५३॥ मत्संगमकालमात्रं मया रामस्य यः संगमस्तत्कालमात्रं प्रतीक्षस्वेत्यर्थः॥५४॥ वैशंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि० सुंदरकांडे एकोनचत्वारिंशः सर्गः ॥३९॥ आत्माहितम् आत्मदुःखोद्धारप्रयोजनम् ॥ १ ॥ अर्धसंजातानि अर्धं वयः प्राप्तानि ततःपरं जलाभावादासन्नशोषाणि सस्यानि यस्याः सा यथा दैवात्संपन्नवृष्ट्या

सगणंरावणंहत्वाराघवोरघुनंदनः ॥ त्वामादायवरारोहेस्वपुरींप्रतियास्यति ॥ ४३ ॥ तदाश्वसिहिभद्रंतेभवत्वंकालकांक्षिणी ॥ नचिराद्रक्ष्यसेरामंप्रज्वलंतमिवानलम् ॥ ४४ ॥ निहतेराक्षसेंद्रेचसपुत्रामात्यबांधवे ॥ त्वंसमेष्यसिरामेणशशांकेनेवरोहिणी ॥४५॥ क्षिप्रंत्वंदेविशोकस्यपारंद्रक्ष्यसिमैथिलि ॥ रावणंचैवरामेणद्रक्ष्यसेनिहतंबलात् ॥ ४६ ॥ एवमाश्वास्यवैदेहींहनूमान्मारुतात्मजः ॥ गमनायमतिंकृत्वावैदेहींपुनरब्रवीत् ॥ ४७ ॥ तमरिघ्नंकृतात्मानंक्षिप्रंद्रक्ष्यसिराघवम् ॥ लक्ष्मणंचधनुष्पाणिंलंकाद्वारमुपागतम् ॥ ४८ ॥ नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् ॥ वानरान्वारणेंद्राभान्क्षिप्रंद्रक्ष्यसिसंगतान् ॥ ४९ ॥ शैलांबुदनिकाशानांलंकामलयसानुषु ॥ नर्दतांकपिमुख्यानामार्येयूथान्यनेकशः ॥ ५० ॥ सतुमर्मणिघोरेणताडितोमन्मथेषुणा ॥ नशर्मलभतेरामःसिंहार्दितइवद्विपः ॥ ५१ ॥ रुदमादेविशोकेनमाभूत्तेमनसोऽभयम् ॥ शचीवभर्त्राशक्रेणसंगमेष्यसिशोभने ॥ ५२ ॥ रामाद्विशिष्टःकोन्योस्तिकश्चित्सौमित्रिणासमः ॥ अग्निमारुतकल्पौतौभ्रातरौतवसंश्रयौ ॥ ५३ ॥ नास्मिंश्चिरंवत्स्यसिदेविदेशेरक्षोगणैरध्युषितेऽतिरौद्रे ॥ नतेचिरादागमनंप्रियस्यक्षमस्वमत्संगमकालमात्रम् ॥५४॥ इत्यार्षे श्री०वा०आ०सुं० एकोनचत्वारिंशःसर्गः ॥ ३९ ॥

श्रुत्वातुवचनंतस्यवायुसूनोर्महात्मनः ॥ उवाचात्महितंवाक्यंसीतासुरसुतोपमा ॥ १ ॥ त्वांदृष्ट्वाप्रियवक्तारंसंप्रहृष्यामिवानर ॥ अर्धसंजातसस्येववृष्टिंप्राप्यवसुंधरा ॥२॥ यथातंपुरुषव्याघ्रंगात्रैःशोकाभिकर्शितैः ॥ संस्पृशेयंसकामाहंतथाकुरुदयांमयि ॥ ३ ॥ अभिज्ञानंचरामस्यदद्याहरिगणोत्तम ॥ क्षिप्तामिषीकांकाकस्यकोपादेकाक्षिशातनीम् ॥ ४ ॥ मनःशिलायास्तिलकोगंडपार्श्वेनिवेशितः ॥ त्वयाप्रणष्टेतिलकेतंकिलस्मर्तुमर्हसि ॥ ५ ॥ सवीर्यवान्कथंसीतांहृतांसमनुमन्यसे ॥ वसंतींरक्षसांमध्येमहेंद्रवरुणोपम ॥ ६ ॥ एषचूडामणिर्दिव्योमयासुपरिरक्षितः ॥ एतंदृष्ट्वाप्रहृष्यामिव्यसनेत्वामिवानघ ॥ ७ ॥

संपन्नसस्या भवति तथाहमपि प्राप्तजीवितनाशाऽमृतोपमात्त्वद्दर्शनाद्धृतजीवितेति भावः ॥ २ ॥ सकामा तत्स्पर्शेच्छावती ॥ ३ ॥ अभिज्ञानं चूडामण्यात्मकं दद्याः देहि तथा कोपात्काकस्यैकाक्षिशातनीमिषीकां क्षिप्त्वा काको रक्षित इत्यपरमभिज्ञानं दद्याः श्रावयेत्यर्थः ॥ ४ ॥ अथाभिज्ञानांतरमाह संदेशरूपेण मनःशिलायाइति । पूर्वतने तिलके नष्टे सति त्वया रामेण मम गंडपार्श्वे मनःशिलातिलको निवेशितः तं किल स्वकृततिलकमित्यर्थः । स्मर्तुमर्हसि इति मयोक्तमिति ब्रूहीति शेषः ॥ ५ ॥ अथ केवलसंदेशांतरमाह सवीर्यवानिति । अनुमन्यसे सहसे इत्यर्थः ॥ ६ ॥ दिव्य एष चूडामणिरेतावत्कालं सुपरिरक्षितः ।

एतं व्यसने त्वामिव दृष्ट्वा महष्यामि । एतत्सान्निधाने रक्षोभिभवासंभवादिति भावः ॥ ७ ॥ स एष निर्यातितो दत्तस्त्वत्प्रत्यभिज्ञानार्थमिति शेषः । अतः शीघ्रमागमने एव कुशलमन्यथा परमं दुःखमिति भावः ॥ ८ ॥ त्वत्कृते त्वत्प्राप्तिप्रत्याशया मर्षयामि सहामि ॥९॥१०॥ यतोयं घोरस्तस्य दृष्टिश्च चाद्बुद्धिर्न सुखा अवधिकालादूर्ध्वंकृतविनाशनिश्चया अतस्तत्पूर्वमेव मरणौचित्यादवधिकालस्याधिकत्वेऽपि मासादूर्ध्वमेव न जीविष्यामि । किंच त्वां विषज्जंतं विलंबं कुर्वंतं यदि शृणुयां तदा तथा श्रुत्वा मासादर्वागेव क्षणमपि न जीवेयमित्युक्तमिति ब्रूहीति शेषः ॥ ११॥ वचनमुक्तसंदेशरूपम् ॥ १२ ॥ त्वच्छोकविमुखः त्वदिस्थत्यपरिज्ञानजशोकेन त्वदुद्धारप्रवृत्तिविमुखो नतु ज्ञात्वेति सत्येन ते शपे ॥ १३ ॥ कथंचिद्द्रवती दृष्ट्वा अतःपरं शोचितुं न कालः इमं मुहूर्तम् अस्मिन्नचिरकाले इत्यर्थः ॥ १४ ॥ ॥ १५ ॥ १६ ॥

एषनिर्यातितःश्रीमान्मयांतेवारिसंभवः ॥ अतःपरंनशक्ष्यामिजीवितुंशोकलालसा ॥ ८ ॥ असह्यानिचदुःखानिवाचश्चहृदयच्छिदः ॥ राक्षसैःसहसंवासंत्वत्कृतेमर्षयाम्यहम् ॥ ९ ॥ धारयिष्यामिमासंतुजीवितंशत्रुसूदन ॥ मासादूर्ध्वंनजीविष्येत्वयाहीनानृपात्मज ॥ १० ॥ घोरोराक्षसराजोयंदृष्टिश्चनसुखामयि ॥ त्वांचश्रुत्वाविषज्जंतंनजीवेयमपिक्षणम् ॥ ११ ॥ वैदेह्यावचनंश्रुत्वाकरुणंसाश्रुभाषितम् ॥ अथाब्रवीन्महातेजाहनूमान्मारुतात्मजः ॥ १२ ॥ त्वच्छोकविमुखोरामोदेविसत्येनतेशपेरामेशोकाभिभूतेतुलक्ष्मणःपरितप्यते ॥ १३ ॥ दृष्टाकथंचिद्भवतीनकालःपरिदेवितुम् ॥ इमंमुहूर्तंदुःखानामंतंद्रक्ष्यसिभामिनि ॥ १४ ॥ तावुभौपुरुषव्याघ्रौराजपुत्रावनिंदितौ ॥ त्वद्दर्शनकृतोत्साहौलंकांभस्मीकरिष्यतः ॥ १५ ॥ हत्वातुसमरेरक्षोरावणंसहबांधवैः ॥ राघवौत्वांविशालाक्षिस्वांपुरींप्रतिनेष्यतः ॥ १६ ॥ यत्तुरामोविजानीयादभिज्ञानमनिंदिते ॥ प्रीतिसंजननंभूयस्तस्यत्वंदातुमर्हसि ॥ १७ ॥ साब्रवीद्दत्तमेवाहोमयाभिज्ञानमुत्तमम् ॥ एतदेवहिरामस्यदृष्ट्वायत्नेनभूषणम् ॥ १८ ॥ श्रद्धेयंहनुमन्वाक्यंतवाविरभविष्यति ॥ सतंमणिवरंगृह्यश्रीमान्प्लवगसत्तमः ॥ १९ ॥ प्रणम्यशिरसादेवींगमनायोपचक्रमे ॥ तमुत्पातकृतोत्साहमवेक्ष्यहरियूथपम् ॥ २० ॥ वर्धमानंमहावेगमुवाचजनकात्मजा ॥ अश्रुपूर्णमुखीदीनावाष्पगद्गदयागिरा ॥ २१ ॥ हनूमन्सिंहसंकाशौभ्रातरौरामलक्ष्मणौ ॥ सुग्रीवंचसहामात्यंसर्वान्ब्रूयाअनामयम् ॥ २२ ॥ यथाचसमहाबाहुर्मांतारयतिराघवः ॥ अस्माद्दुःखांबुसंरोधात्त्वंसमाधातुमर्हसि ॥ २३ ॥ इदंचतीव्रंममशोकवेगंरक्षोभिरेभिःपरिभर्त्सनंच ॥ ब्रूयास्तुरामस्यगतःसमीपंशिवश्चतेध्वास्तुहरिप्रवीर ॥ २४ ॥

यत्त्वभिज्ञानं राम एव विशिष्य जानीयाद्यच्च तस्य प्रीतिसंजननं तद्भूयः पुनरधिकं च दातुमर्हसि ॥ १७ ॥ १८ ॥ श्रद्धेयं विश्वसनीयम् ॥ १९ ॥ उत्पाते उत्प्लवने कृतोत्साहम् ॥ २० ॥ २१ ॥ अनामयमारोग्यम् ॥ २२ ॥ त्वं समाधातुमित्यस्य तथेत्यादिः समाधानं संविधानम् । अथापि स महाबाहुरिति पाठे यथेत्यपि पूरणीयमेव । यद्यपि श्रुतवृत्तांतः स्वयमेव यतिष्यति तथापि त्वमपि यथा मां शीघ्रं तारयसि तथा संविधानं कुर्वित्यर्थः ॥ २३ ॥ २४ ॥

तत्कार्यं लंकागमनप्रयोजनम् अल्पशेषं देवीदर्शनरूपस्य महतः प्रधानकृत्यस्य निष्पन्नत्वात्परबलदर्शनरूपस्यानुषंगिकत्वादल्पशेषत्वमित्याशयः ॥ २५ ॥ प्रेक्षमाणः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥ तस्माद्देशादपाक्रम्य सीतासमीपात्किंचिद्दूरं गत्वा ॥ १ ॥ चिंतयामासेत्युक्तां चिंतां दर्शयति अल्पशेषमिति । इयं सीता दृष्टेतीदं प्रधानकार्यं निष्पन्नमिति । आनुषंगिकं परबलदर्शनमवशिष्टमित्यल्पशेषत्वम् । इह कार्ये परबलज्ञानलक्षणे त्रीनुपायान्सामादीनतिक्रम्य चतुर्थो दंड एव साधनत्वेन दृश्यते ॥ २ ॥ तत्र युक्तिमाह नेति । ऋजुषु सामफलाय न शूरेषु तदाह रक्षस्स्विति । बलदर्पिता भेदसाध्या न भेद उपायः बलवंतो हि कुतोप्यनिष्टं न गणयंतीत्यर्थः ॥ ३ ॥ अस्य कार्यस्य परबलाशयपरिज्ञानरूपस्य । सर्वातिशायिपराक्रमवतो मम पराजय एव नास्तीत्याशये नाह पराक्रमादृते इति । विनिश्चयः निश्चितोपायः । स्वबलप्रकाशने प्रयोजनांतरमप्यस्तीत्याह हतेति । अद्य हताः प्रवीराः श्रेष्ठाः येषां ते राक्षसाः यद्यस्मादिह भाविनि रणे मार्दवं एकेनैवैवं पराक्रमः कृतस्तादृशैरनेकैः कथमस्माकं जयाशेति रणप्रवृत्तिराहित्यं प्राप्नुयुः । अतः पराक्रमात्परबलस्य मनोभंगरूपं कार्यं सिद्ध्यतीत्याशयः

सराजपुत्र्याप्रतिवेदितार्थःकपिःकृतार्थःपरिहृष्टचेताः ॥ तदल्पशेषंप्रसमीक्ष्यकार्यंदिशंह्युदीचींमनसाजगाम ॥ २६ ॥ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आदि० सुंदरकांडे चत्वारिंशः सर्गः ॥ ४० ॥ सचवाग्भिःप्रशस्ताभिर्गमिष्यन्पूजितस्तया ॥ तस्माद्देशादपाक्रम्यचिंतयामासवानरः ॥ १ ॥ अल्पशेषमिदंकार्यंदृष्टेयमसितेक्षणा ॥ त्रीनुपायानतिक्रम्यचतुर्थइहदृश्यते ॥ २ ॥ नसामरक्षस्सुगुणायकल्पतेनदानमर्थोपचितेषुयुज्यते ॥ नभेदसाध्याबलदर्पिताजनाःपराक्रमस्त्वेषममेहरोचते ॥ ३ ॥ नचास्यकार्यस्यपराक्रमादृतेविनिश्चयःकश्चिदिहोपपद्यते ॥ हतप्रवीराश्चरणेतुराक्षसाः कथंचिदीयुर्यदिहाद्यमार्दवम् ॥ ४ ॥ कार्येकर्मणिनिर्वृत्तेयोबहून्यपिसाधयेत् ॥ पूर्वकार्याविरोधेनसकार्यंकर्तुमर्हति ॥ ५ ॥ नह्येकःसाधकोहेतुः स्वल्पस्यापीहकर्मणः॥योह्यर्थंबहुधावेदससमर्थोर्थसाधने ॥६॥ इहैवतावत्कृतनिश्चयोह्यहंव्रजेयमद्यप्लवगेश्वरालयम् ॥परात्मसंमर्दविशेषतत्त्ववित्ततः कृतंस्यान्ममभर्तृशासनम् ॥७॥ कथंनुखल्वद्यभवेत्सुखागतंप्रसह्ययुद्धंममराक्षसैःसह ॥ तथैवखल्वात्मबलंचसारवत्समानयेन्मांचरणेदशाननः॥८॥

॥ ४ ॥ ननु स्वामिसंदिष्टकार्यातिरिक्तकार्यकरणे दोषः । स्वामिना हि अभिगम्य तु वैदेहीं निलयं रावणस्य चेत्येतावदेव संदिष्टमित्याशंक्य संदिष्टकार्याविरोधेन स्वामिहितकार्यांतरसाधनं दूतस्यालंकार इत्याह कार्ये इति । कार्ये प्रधानकार्ये निर्वृत्ते स कार्यं कर्तुमर्हति । ननु संदिष्टमात्रस्य कथंचित्साधक इत्याशयः ॥ ५ ॥ उक्तमेव विवृणोति नहीति । यस्तु स्वल्पस्यापि कर्मणः अतिशयितयत्नेन सिद्धिहेतुर्भवति असावेको मुख्यः साधको हेतुर्न भवति । अपितु यो ह्यर्थं प्रयोजनमल्पेन यत्नेन बहुधा कर्तुं वेद स एवार्थसाधने समर्थः ॥ ६ ॥ तस्मादन्यदपि स्वाम्यभीष्टं कृत्वैव गंतव्यमित्याह इहैवेति । यद्यप्यहं इहैव सीतान्वेषण एव तावत्प्रथमं कृतनिश्चयस्तथापि यदि परात्मसंमर्दविशेषतत्त्ववित्परस्यात्मनः स्वस्य च संमर्दे युद्धे यो विशेषस्तत्तत्त्वविद्भूत्वा यदि प्लवगेश्वरालयं सुग्रीवालयं व्रजेयं ततस्तदा भर्तृशासनं सम्यक्कृतं स्यात् । अन्यथा राक्षसबलं कीदृशमिति पृष्टे निरुत्तरः स्यामिति भावः ॥ ७ ॥ एवं निश्चितार्थो युद्धप्रवृत्तिप्रकारं चिंतयति कथंन्विति । अद्य खलु मेभेहागतमागमनं सुखागतं सुखफलकमागमनं

कथं भवेत । तथा राक्षसैः सह प्रसह्य स्वयमेव बलात्कृत्य युद्धं च कथं मम भवेत् । तथा तथैव करणे सति सारवदूर्जितं स्वबलं मां च स दशाननः कथं मानयेत् श्लाघयेत् । यद्वा तथैव खलु युद्धकरणे खलु दशाननः आत्मबलं मां च सारवत्समानयेत्सम्यक्परिच्छिद्यादित्यर्थेन युद्धफलमुक्तम् ॥ ८ ॥ ततो मद्बलवशादेव मां रणे समासाद्य वर्तमानं सबलं सयायिनं ससारथिम् । अंतर्भावितण्यर्थाद्यातेर्णिनौ । यापयिता यायी सारथिस्तेन सहितं रावणं ज्ञात्वा हृदि स्थितं तस्य मतमभीष्टं बलं च सुखेन अक्लेशतो मत्वा ज्ञात्वा पुनरितो व्रजे व्रजिष्ये । सबलं सयायिनामिति पाठः । सबलप्रयायिनमित्याधुनिककल्पितः पाठः ॥ ९ ॥ अथ प्रसह्य रणप्रवर्तनोपायं चिंतयति इदमिति । अस्येदं वनं नेत्रमनःकांतं भवति । अत इदं विध्वंसयामि ॥ १० ॥ ११ ॥ समानेष्यति मां प्रति युद्धाय प्रापयिष्यति । महद्युद्धं मन्मनस्तोषकृत

ततःसमासाद्यरणेदशाननंसमंत्रिवर्गंसबलंसयायिनम् ॥ हृदिस्थितंतस्यमतंबलंचसुखेनमत्वाहमितःपुनर्व्रजे ॥ ९ ॥ इदमस्यनृशंसस्यनंदनोपममुत्तमम् ॥ वनंनेत्रमनःकांतंनानाद्रुमलतायुतम् ॥ १० ॥ इदंविध्वंसयिष्यामिशुष्कंवनमिवानलः ॥ अस्मिन्भग्नेततःकोपंकरिष्यतिसरावणः ॥ ११ ॥ ततोमहत्साश्वमहारथद्विपंबलंसमानेष्यतिराक्षसाधिपः ॥ त्रिशूलकालायसपट्टिशायुधंततोमहद्युद्धमिदंभविष्यति ॥ १२ ॥ अहंचतैःसंयतिचंडविक्रमैःसमेत्यरक्षोभिरभंगविक्रमः ॥ निहत्यतद्रावणचोदितंबलंसुखंगमिष्यामिहरीश्वरालयम् ॥ १३ ॥ ततोमारुतवत्क्रुद्धोमारुतिर्भीमविक्रमः ॥ ऊरुवेगेनमहताद्रुमान्क्षेप्तुमथारभत् ॥ १४ ॥ ततस्तद्धनुमान्वीरोबभंजप्रमदावनम् ॥ मत्तद्विजसमाघुष्टंनानाद्रुमलतायुतम् ॥ १५ ॥ तद्वनंमथितैर्वृक्षैर्भिन्नैश्चसलिलाशयैः ॥ चूर्णितैःपर्वताग्रैश्चबभुवाप्रियदर्शनैः ॥१६॥ नानाशकुंतविरुतैःप्रभिन्नसलिलाशयैः ॥ ताम्रैःकिसलयैःक्लांतैःक्लांतद्रुमलतायुतैः ॥ १७ ॥ नबभौतद्वनंतत्रदावानलहतंयथा ॥ व्याकुलावरणारेजुर्विह्वलाइवतालताः ॥१८॥ लतागृहैश्चित्रगृहैश्चसादितैर्व्यालैर्मृगैरार्तरवैश्चपक्षिभिः ॥ शिलागृहैरुन्मथितैस्तथागृहैःप्रनष्टरूपंतदभून्महद्वनम् ॥ १९ ॥ साविह्वलाशोकलताप्रतानावनस्थलीशोकलताप्रताना ॥ जातादशास्यप्रमदावनस्यकपेर्बलाद्धिप्रमदावनस्य ॥ २० ॥

॥ १२ ॥ ततो हरीश्वरालयं गमिष्यामीति चिंतयामासेत्यन्वयः ॥ १३ ॥ ततः एवं निश्चयानंतरम् ॥ १४ ॥ १५ ॥ पर्वताग्रैः क्रीडापर्वताग्रैः उपलक्षितमिति शेषः ॥ १६ ॥ १७ ॥ व्याकुलं ध्वस्तमावरणं यासां ता अतएव विह्वलाः स्त्रिय इव ता लता रेजुः ॥ १८ ॥ सादितैर्विशीर्णैः व्यालैः शार्दूलैः ॥ १९ ॥ प्रमदावनस्य अंतःपुरविहारोचितवनस्य । स्यादेतदेवप्रमदवनमंतःपुरोचितमित्यमरः । दशास्यप्रमदानां स्त्रीणां कामसंवर्धनद्वारा अवनस्य रक्षकस्यास्य वनस्य सा विह्वलाशोकलताप्रताना चंचला शोकलतासमूहवती वनस्थली तृणगुल्मलताजलाशयादियुक्ता भूमिः । कपेर्बलात् शोच्यत इति

शोकः शोच्यलताप्रतानां जाता । द्रष्टृचित्तशोकजनिका जातेत्यर्थः ॥ २० ॥ जगतीपतेः राज्ञो रावणस्य व्यलीकमप्रियम् ॥ २१ ॥ आयेरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुन्दरकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥ ता इति ॥ १ ॥ प्रतिपेदिरे प्राप्तानि ॥ २ ॥ गतायां निद्रायां वनभंगध्वनिनेत्यर्थः ॥ ३ ॥ ४ ॥ जनकात्मजां पप्रच्छुः तस्या निर्विद्वतयावस्थानं मत्वेति भावः ॥ ५ ॥ त्वयाऽनेन कथं संवादः कृत इति च पप्रच्छुः यद्यपि ता निद्रिता वनभंगध्वनिना जागरिता इति संवादज्ञानस्यैवाभावात् । तत्कथं प्रश्नो निरवसरस्तथापि निद्रामध्ये किंचिज्जागरेण ईषत्संवादश्रवणेपि देवमायया पुनर्निद्रेति तत्प्रश्नोपपत्तिरित्याहुः । सीतायास्तद्दर्शनेपि निर्भयप्रसन्नमुखतयावस्थानदर्शनादयं कश्चिदेतत्परिचित एतद्वृत्तांतज्ञानार्थमेव मायेणागत इति संभाव्यानया

ततःसकृत्वाजगतीपतेर्महान्महद्व्यलीकंमनसोमहात्मनः ॥ युयुत्सुरेकोवहुभिर्महावलैःश्रियाज्वलंस्तोरणमाश्रितःकपिः ॥ २१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येसुंदरकांडेएकचत्वारिंशःसर्गः ॥ ४१ ॥ ततःपक्षिनिनादेनवृक्षभंगस्वनेनच ॥ वभूवुस्त्रासंसंभ्रांताःसर्वेलंकानिवासिनः ॥१॥विद्रुताश्चभयत्रस्तानिषेदुर्मृगपक्षिणः ॥ रक्षसांचनिमित्तानिक्रूराणिप्रतिपेदिरे ॥ २ ॥ ततोगतायांनिद्रायांराक्षस्योविकृताननाः ॥ तद्वनंददृशुर्भग्नंतंचवीरंमहाकपिम् ॥ ३ ॥ ततोदृष्ट्वामहावाहुर्महासत्त्वोमहावलः ॥ चकारसुमहद्रूपंराक्षसीनांभयावहम् ॥ ४ ॥ ततस्तुगिरिसंकाशमतिकायंमहावलम् ॥ राक्षस्योवानरंदृष्ट्वापप्रच्छुर्जनकात्मजाम् ॥ ५ ॥ कोयंकस्यकुतोवायंकिंनिमित्तमिहागतः ॥ कथंत्वयासहानेनसंवादःकृतइत्युत ॥ ६ ॥ आचक्ष्वनोविशालाक्षिमाभूत्तेसुभगेभयम् ॥ संवादमसितापांगित्वयाकिंकृतवानयम् ॥ ७ ॥ अथाब्रवीत्तदासाध्वीसीतासर्वांगशोभना ॥ रक्षसांकामरूपाणांविज्ञानेकागतिर्मम ॥ ८ ॥ यूयमेवास्यजानीतयोयंयद्वाकरिष्यति ॥ अहिरेवअहेःपादान्विजानातिनसंशयः ॥ ९ ॥ अहमप्यतिभीतास्मिनैवजानामिकोह्ययम् ॥ वेद्मिराक्षसमेवैनंकामरूपिणमागतम् ॥ १० ॥ वैदेह्यावचनंश्रुत्वाराक्षस्योविद्रुताद्रुतम् ॥ स्थिताःकाश्चिद्गताःकाश्चिद्रावणायनिवेदितुम् ॥ ११ ॥ रावणस्यसमीपेतुराक्षस्योविकृताननाः ॥ विरूपंवानरंभीमंरावणायन्यवेदिषुः ॥ १२ ॥ अशोकवनिकामध्येराजन्भीमवपुःकपिः ॥ सीतयाकृतसंवादस्तिष्ठत्यमितविक्रमः ॥ १३ ॥ नचतंजानकीसीताहरिंहरिणलोचना ॥ अस्माभिर्वहुधापृष्टानिवेदयितुमिच्छति ॥ १४ ॥ वासवस्यभवेद्दूतोदूतोवैश्रवणस्यवा ॥ प्रेषितोवापिरामेणसीतान्वेषणकांक्षया ॥ १५ ॥ तेनैवाद्भुतरूपेणयत्तत्तवमनोहरम् ॥ नानामृगगणाकीर्णंप्रमृष्टंप्रमदावनम् ॥ १६ ॥ नतत्रकश्चिदुद्देशोयस्तेननविनाशितः ॥ यत्रसाजानकीदेवीसतेननविनाशितः ॥ १७ ॥

संवादकरणं च संभाव्य तत्प्रश्ननिर्वाह इति कतकः ॥ ६ ॥ अथ विशिष्य संवादं पृच्छंति संवादमिति ॥ ७ ॥ का गतिः उपायः ॥ ८ ॥ युष्माकमेवैतत्स्वरूपज्ञानमुचितमित्यत्र न्यायमाह अहिरेवेति ॥ ९ ॥ १० ॥ वैदेह्या वचनम् अज्ञानप्रतिपादकम् ॥ अनेनात्मत्राणादौ मृषावादो न दोषायेति ध्वनितम् । काश्चिद्विद्रुताः काश्चिद्दृढं स्थिता एव काश्चिद्रावणाय निवेदितुं गताः ॥ ११ ॥ १२ ॥ सीतया कृतसंवादत्वज्ञानं यथा तथोक्तम् ॥ १३ ॥ न निवेदयितुमिच्छति मायेणेयं तं जानातीति तासामाशयः ॥ १४ ॥ १५ ॥ प्रमृष्टं नाशितम् ॥ १६ ॥ उद्देशः प्रदेशः ॥ १७ ॥

कः श्रम इति महावनं भग्नवतस्तस्य श्रमोऽसंभावित इत्यर्थः । अतः सा जानक्येव तेनाभिरक्षिता तदाश्रयवृक्षाभंगेनाति शेषः ॥ १८ ॥ तस्यैवार्थस्य स्थिरीकरणाय पुनः प्रतिपादनं चार्विति । तेनाभिरक्षितः सीतारक्षणार्थमिति शेषः ॥ १९ ॥ आज्ञातुमाज्ञापयितुम् । सीतासंभाषितेत्यनेन सापराधग्रहत्वं बोधितम् ॥ २० ॥ तद्भाषणस्यापराधत्वमुपपादयति मन इति । त्यक्तजीवितस्त्यक्तजीविताशः राजपरिग्रहभाषणं पुंसोपराध इति भावः ॥ २१ ॥ संवर्तिते विवर्तिते ईक्षणे नेत्रे येन सः ॥ २२ ॥ २३ ॥ २४ ॥ अशीतेः साहस्रम् । स्वार्थेऽण् । कूटः अयस्कारः कूटसदृशाग्र आयुधविशेषः ॥ २५ ॥

जानकीरक्षणार्थंवाश्रमाद्वानोपलक्ष्यते ॥ अथवाकःश्रमस्तस्यसैवतेनाभिरक्षिता ॥ १८ ॥ चारुपल्लवपत्राढ्यंयंसतीस्वयमास्थिता ॥ प्रवृद्धः शिंशपावृक्षःसचतेनाभिरक्षितः ॥ १९ ॥ तस्योग्ररूपस्योग्रंत्वंदंडमाज्ञातुमर्हसि ॥ सीतासंभाषितायेनवनंतेनविनाशितम् ॥ २० ॥ मनःपरिगृही तांतांतवरक्षोगणेश्वर ॥ कःसीतामभिभाषेतयोनस्यात्त्यक्तजीवितः ॥ २१ ॥ राक्षसीनांवचःश्रुत्वारावणोराक्षसेश्वरः ॥ चिताग्निरिवजज्वालको पसंवर्तितेक्षणः ॥ २२ ॥ तस्यक्रुद्धस्यनेत्राभ्यांप्रापतन्नश्रुबिंदवः ॥ दीप्ताभ्यामिवदीपाभ्यांसार्चिषःस्नेहबिंदवः ॥ २३ ॥ आत्मनःसदृशान्वीरा न्किंकरान्नामराक्षसान् ॥ व्यादिदेशमहातेजानिग्रहार्थंहनूमतः ॥ २४ ॥ तेषामशीतिसाहस्रंकिंकराणांतरस्विनाम् ॥ निर्ययुर्भवनात्तस्मात्कूटमुद्गर पाणयः ॥ २५ ॥ महोदरामहादंष्ट्राघोररूपामहाबलाः ॥ युद्धाभिमनसःसर्वेहनूमद्ग्रहणोन्मुखाः ॥ २६ ॥ तेकपिंतंसमासाद्यतोरणस्थमवस्थितम् ॥ अभिपेतुर्महाभागाःपतंगाइवपावकम् ॥ २७ ॥ तेगदाभिर्विचित्राभिःपरिघैःकांचनांगदैः ॥ आजघ्नुर्वानरश्रेष्ठंशरैरादित्यसन्निभैः ॥ २८ ॥ मुद्गरैः पट्टिशैःशूलैःप्रासतोमरपाणयः ॥ परिवार्यहनूमंतंसहसातस्थुरग्रतः ॥ २९ ॥ हनूमानपितेजस्वीश्रीमान्पर्वतसन्निभः ॥ क्षितावाविध्यलांगूलंननाद चमहाध्वनिम् ॥ ३० ॥ सभूत्वातुमहाकायोहनूमान्मारुतात्मजः ॥ पुच्छमास्फोटयामासलंकांशब्देनपूरयन् ॥ ३१ ॥ तस्यास्फोटितशब्दे नमहताचानुनादिना ॥ पेतुर्विहंगागगनादुच्चैश्चेदमघोषयत् ॥ ३२ ॥ जयत्यतिबलोरामोलक्ष्मणश्चमहाबलः ॥ राजाजयतिसुग्रीवोराघवेणाभिपा लितः ॥ ३३ ॥ दासोहंकोशलेंद्रस्यरामस्याक्लिष्टकर्मणः ॥ हनूमाञ्शत्रुसैन्यानांनिहंतामारुतात्मजः ॥ ३४ ॥ नरावणसहस्रंमेयुद्धेप्रतिबलंभवेत् ॥ शिलाभिश्चप्रहरतःपादपैश्चसहस्रशः ॥ ३५ ॥ अर्दयित्वापुरींलंकामभिवाद्यचमैथिलीम् ॥ समृद्धार्थोगमिष्यामिमिषतांसर्वरक्षसाम् ॥ ३६ ॥ तस्यसन्नादशब्देनतेभवन्भयशंकिताः ॥ ददृशुश्चहनूमंतंसंध्यामेघमिवोन्नतम् ॥ ३७ ॥ स्वामिसंदेशनिःशंकास्ततस्तेराक्षसाःकपिम् ॥ चित्रैःप्रहरणै र्भीमैरभिपेतुस्ततस्ततः ॥ ३८ ॥

॥ २६ ॥ अवस्थितं युद्धाय सन्नद्धम् ॥ २७ ॥ कांचनांगदैः कांचनपट्टबंधैः ॥ २८ ॥ २९ ॥ क्षितावाविध्य लांगूलमिति स्वभावोक्तिरलंकारः ॥ ३० ॥ ३१ ॥ अनुनादिना प्रतिध्वनिमता ॥ ३२ ॥ जयति सर्वोत्कर्षेण वर्तते ॥ ३३ ॥ ३४ ॥ प्रतिबलं प्रतिस्पर्द्धार्हबलवत् ॥ ३५ ॥ मिषतामित्यनादरे षष्ठी ॥ ३६ ॥ सन्नादशब्देन आस्फोटशब्दजप्रतिध्वनिना सिंहनादेन च ॥ ३७ ॥ स्वामिनो रामस्य

संदेशेन नामग्रहणेन कस्यायं भट इति संदेहरहिताः । किंच स्वामिसंदेशेन रावणाज्ञयाऽतिघोरेणाध्यनेन योद्धव्यमेवेति निश्चयात् पक्षांतरशंकारहिताः प्रहरणैरायुधैरभिपेतुः प्राहरन्नित्यर्थः ॥ ३८ ॥ तोरणाश्रितं तोरणसमीपे स्थापितम् ॥ ३९ ॥ स प्रसिद्धो विनतासुतः पन्नगमादायेव स हनूमांस्तं परिघमादायेति योजना ॥ ४० ॥ परिगृह्य परिघमिति शेषः ॥ ४१ ॥ ४२ ॥ कतिचिद्धताऽवशेषा द्वित्राः ॥ ४३ ॥ प्रहस्तपुत्रो जंबुमाली॥४४॥अत्रैंभिमानः॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ॥ अथ रावणसंदिष्टसेनांतरागमनात्पूर्वं तूष्णीं स्थि

सतैःपरिवृतःशूरैःसर्वतःसमहाबलः ॥ आससादायसंभीमंपरिघंतोरणाश्रितम् ॥ ३९ ॥ सतंपरिघमादायजघानरजनीचरान् ॥ सपन्नगमिवादायस्फुरंतंविनतासुतः ॥ ४० ॥ विचचारांबरेवीरःपरिगृह्यचमारुतिः ॥ सूदयामासवज्रेणदैत्यानिवसहस्रदृक् ॥ ४१ ॥ सहत्वाराक्षसान्वीरःकिंकरान्मारुतात्मजः ॥ युद्धाकांक्षीमहावीरस्तोरणंसमवस्थितः ॥ ४२ ॥ ततस्तस्माद्भयान्मुक्ताःकतिचित्तत्रराक्षसाः ॥ निहतान्किंकरान्सर्वान्रावणाय न्यवेदयन् ॥ ४३ ॥ सराक्षसानांनिहतंमहाबलंनिशम्यराजापरिवृत्तलोचनः ॥ समादिदेशाप्रतिमंपराक्रमेप्रहस्तपुत्रंसमरेसुदुर्जयम् ॥ ४४ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मी० आदि० सुंदरकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ततःसकिंकरान्हत्वाहनूमान्ध्यानमास्थितः ॥ वनंभग्नंमयाचैत्यप्रासादोनविनाशितः ॥ १ ॥ तस्मात्प्रासादमप्येवमिमंविध्वंसयाम्यहम् ॥ इतिसंचिंत्यहनुमान्मनसादर्शयन्बलम् ॥ २ ॥ चैत्यप्रासादमुत्प्लुत्यमेरुशृंगमिवोन्नतम् ॥आरुरोहहरिश्रेष्ठोहनूमान्मारुतात्मजः ॥ ३ ॥ आरुह्यगिरिसंकाशंप्रासादंहरियूथपः ॥ बभौससुमहातेजाःप्रतिसूर्यइवोदितः ॥ ४ ॥ संप्रधृष्यतुदुर्धर्षश्चैत्यप्रासादमुन्नतम् ॥ हनूमान्प्रज्वलँल्लक्ष्म्यापारियात्रोपमोभवत् ॥ ५ ॥ सभूत्वासुमहाकायःप्रभावान्मारुतात्मजः ॥ धृष्टमास्फोटयामासलंकांशब्देनपूरयन् ॥ ६ ॥ तस्यास्फोटितशब्देनमहताश्रोत्रघातिना ॥ पेतुर्विहंगमास्तत्रचैत्यपालाश्चमोहिताः ॥ ७॥ अस्त्रविज्जयतांरामोलक्ष्मणश्चमहाबलः ॥ राजाजयतिसुग्रीवोराघवेणाभिपालितः ॥८॥ दासोहंकोसलेंद्रस्यरामस्याक्लिष्टकर्मणः ॥ हनूमाञ्शत्रुसैन्यानांनिहंतामारुतात्मजः ॥ ९ ॥ नरावणसहस्रंमेयुद्धेप्रतिबलंभवेत् ॥ शिलाभिश्चप्रहरतःपादपैश्चसहस्रशः ॥ १० ॥ धर्षयित्वापुरींलंकामभिवाद्यचमैथिलीम् ॥ समृद्धार्थोगमिष्यामिमिषतांसर्वरक्षसाम् ॥ ११ ॥ एवमुक्त्वामहाकायश्चैत्यस्थोहरियूथपः ॥ ननादभीमनिर्ह्रादोरक्षसांजनयन्भयम् ॥ १२ ॥ तेननादेनमहताचैत्यपालाःशतंययुः ॥ गृहीत्वाविविधानस्त्रान्प्रासान्खड्गान्परश्वधान् ॥ १३ ॥ विसृजंतोमहाकायामारुतिंपर्यवारयन् ॥ तेगदाभिर्विचित्राभिःपरिघैःकांचनांगदैः ॥ १४ ॥ आजग्मुर्वानरश्रेष्ठंबाणैश्चादित्यसन्निभैः ॥ आवर्तइवगंगायास्तोयस्यविपुलोमहान् ॥ १५ ॥

त्वा न किंचित्प्रयोजनमिति विचार्य प्रासादभंगादि चिकीर्षति तत इति। ध्यानं विचारः चैत्यप्रासादो रक्षःकुलदेवताप्रासादः ॥१॥एवं प्रमदवनवत्॥२॥प्रासादमुत्प्लुत्यारुरोह ॥ ३ ॥ ४ ॥ संप्रधृष्य भंक्त्वा पारियात्रः पर्वतविशेषः औन्नत्यं साधारणो धर्मः ॥ ५ ॥ धृष्टं निर्भयम् ॥ ६ ॥ विहंगाश्चैत्यपालाश्च मोहिताः पेतुः ॥ ७ ॥ ८ ॥ ९ ॥ १०॥ ११ ॥ १२ ॥ शतं ययुः अनेके इत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥

परिक्षिप्येत्यंशे तोयस्यावर्त इवेति दृष्टांतः ॥ १६ ॥ महान्मारुतात्मज इत्यन्वयः ॥ १७ ॥ उत्पाटयित्वा तं शतधारं स्तंभं भ्रामयामास । तत्र च भ्राम्यमाणे स्तंभांतरेण घट्टनवशादग्निः समभवत्तेन प्रासादश्चाप्यदह्यत ॥ १८ ॥ ततः स राक्षसशतं हत्वा दह्यमानं प्रासादं दृष्ट्वा चांतरिक्षे स्थित इदं वचोऽब्रवीत् ॥ १९ ॥२० ॥ एतदुक्तिप्रयोजनं च राक्षसहृदयपीडा ॥२१॥२२॥ ओघबलाः ओघसंख्यात गजबलाः ॥ २३ ॥ २४ ॥ २५ ॥ अमरैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुन्दरकांडे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ ॥ अथ जंबुमाल्यागमनं तद्वधश्च

परिक्षिप्यहरिश्रेष्ठंसबभारक्षसांगणः ॥ ततोवातात्मजःक्रुद्धोभीमरूपंसमास्थितः ॥ १६ ॥ प्रासादस्यमहांस्तस्यस्तंभंहेमपरिष्कृतम् ॥ उत्पाटयित्वावेगेनहनूमान्मारुतात्मजः ॥ १७ ॥ ततस्तंभ्रामयामासशतधारंमहाबलः ॥ तत्रचाग्निःसमभवत्प्रासादश्चाप्यदह्यत ॥ १८ ॥ दह्यमानंततोदृष्ट्वाप्रासादंहरियूथपः ॥ सराक्षसशतंहत्वावज्रेणेन्द्रइवासुरान् ॥१९॥ अंतरिक्षस्थितःश्रीमानिदंवचनमब्रवीत् ॥मादृशानांसहस्राणिविसृष्टानिमहात्मनाम् ॥ २० ॥ बलिनांवानरेंद्राणांसुग्रीववशवर्तिनाम् ॥ अटंतिवसुधांकृत्स्नांवयमन्येचवानराः ॥ २१॥ दशनागबलाःकेचितकेचिद्दशगुणोत्तराः ॥ केचिन्नागसहस्रस्यबभूवुस्तुल्यविक्रमाः ॥ २२ ॥ संचितौघबलाःकेचित्संतिवायुबलोपमाः ॥ अप्रमेयबलाःकेचित्तत्रासन्हरियूथपाः ॥ २३ ॥ ईदृग्विधैस्तुहरिभिर्वृतोदंतनखायुधैः ॥ शतैःशतसहस्रैश्चकोटिभिश्चायुतैरपि ॥ २४ ॥ आगमिष्यतिसुग्रीवःसर्वेषांवोनिषूदनः ॥ नेयमस्तिपुरीलंकानयूयंनचरावणः ॥ यस्यत्विक्ष्वाकुवीरेणबद्धंवैरंमहात्मना ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीये आदिकाव्ये सुंदरकांडे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ संदिष्टोराक्षसेंद्रेणप्रहस्तस्यसुतोबली ॥ जंबुमालीमहादंष्ट्रोनिर्जगामधनुर्धरः ॥ १ ॥ रक्तमाल्यांबरधरःस्रग्वीरुचिरकुंडलः ॥ महान्विवृत्तनयनश्चंडःसमरदुर्जयः ॥ २ ॥ धनुःशक्रधनुःप्रख्यंमहद्रुचिरसायकम् ॥ विस्फारयाणोवेगेनवज्राशनिसमस्वनम् ॥ ३ ॥ तस्यविस्फारघोषेणधनुषोमहतादिशः ॥ प्रदिशश्चनभश्चैवसहसासमपूर्यत ॥ ४ ॥ रथेनखरयुक्तेनतमागतमुदीक्ष्यसः ॥ हनूमान्वेगसंपन्नोजहर्षचननादच ॥ ५ ॥ तंतोरणविटंकस्थंहनूमंतंमहाकपिम् ॥ जंबुमालीमहातेजाविव्याधनिशितैःशरैः ॥ ६ ॥ अर्धचंद्रेणवदनेशिरस्येकेनकर्णिना ॥ बाह्वोर्विव्याधनाराचैर्दशभिस्तुकपीश्वरम् ॥ ७ ॥ तस्यतच्छुशुभेताम्रंशरेणाभिहतंमुखम् ॥ शरदीवांबुजंफुल्लंविद्धंभास्कररश्मिना ॥ ८ ॥ तत्तस्यरक्तंरक्तेनरंजितंशुशुभेमुखम् ॥ यथाकाशेमहापद्मंसिक्तंकांचनबिंदुभिः ॥ ९ ॥

संदिष्ट इति ॥ १ ॥ २ ॥ धनुर्विस्फारयाणः विस्फारयमाणः विस्फारो ज्याघोषः ॥ ३ ॥ समपूर्यंत दिगादिसमुदायापेक्षमेकवचनम् ॥ ४ ॥ जहर्ष स्वबलानुरूपशत्रुप्राप्त्या ॥ ५ ॥ तोरणविटंकः तोरणस्तंभयोरुपरि तिर्यक्प्रतिष्ठापितकपोतपालिकादारु ॥ ६ ॥ कर्णी अंकुशाकारायसशरविशेषः ॥ ७ ॥ अंबुजं रक्तांबुजम् ॥ ८ ॥ तत्तस्य रक्तं स्वत इति शेषः । रक्तेन क्षतजेन रंजितं मुखमाकाशे

काचनविंदुभिः रक्ताशोकपुष्परसविंदुभिः [चितं महापद्मं महत्तरं रक्तपद्ममिवेत्यभूतोपमेयम् । अशोकः कांचनाह्वयः ॥ ९ ॥ १० ॥ ताडयामास विभेदं ॥ ११ ॥ विपन्नं व्यर्थीकृतम् ॥१२॥१३॥१४॥१५॥ ॥ १६ ॥ नाश्वाः रथेन खरयुक्तेनेत्युक्तेरश्वशब्देनात्र खरा उच्यन्ते ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अंनरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुन्दरकांडे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ ॥ सप्तार्चिवर्चसः अग्नितुल्यतेजसः । आर्षो रेफलोपः ॥ १ ॥ महद्बलं महती सेना परीवारो येषाम् । कृतास्त्रास्त्रेति आर्षः संधिः । कृतास्त्राः शिक्षितास्त्राः ॥ अस्त्रविदां

चुकोपबाणाभिहतोराक्षसस्यमहाकपिः ॥ ततःपार्श्वेतिविपुलांददर्शमहतींशिलाम् ॥ १० ॥ तरसातांसमुत्पाट्यचिक्षेपजववद्बली ॥ तांशरैर्दशभिः क्रुद्धस्ताडयामासराक्षसः ॥ ११ ॥ विपन्नंकर्मतद्दृष्ट्वाहनूमांश्चंडविक्रमः ॥ सालंविपुलमुत्पाट्यभ्रामयामासवीर्यवान् ॥ १२ ॥ भ्रामयंतंकपिंदृष्ट्वा सालवृक्षंमहाबलम् ॥ चिक्षेपसुबहून्बाणाञ्जंबुमालीमहाबलः ॥ १३ ॥ सालंचतुर्भिश्चिच्छेदवानरंपंचभिर्भुजे ॥ उरस्येकेनबाणेनदशभिस्तुस्तनांतरे ॥ १४ ॥ सशरैःपूरिततनुःक्रोधेनमहतावृतः ॥ तमेवपरिघंगृह्यभ्रामयामासवेगितः ॥ १५ ॥ अतिवेगोतिवेगेनभ्रामयित्वामहोत्कटः ॥ परिघं पातयामासजंबुमालेर्महोरसि ॥ १६ ॥ तस्यचैवशिरोनास्तिनबाहूजानुनीनच ॥ नधनुर्नरथोनाश्वास्तत्रादृश्यंतनेषवः ॥ १७ ॥ सहतस्तरसातेनजंबुमालीमहारथः ॥ पपातनिहतोभूमौचूर्णितांगइवद्रुमः ॥ १८ ॥ जंबुमालिंसुनिहतंकिंकरांश्चमहाबलान् ॥ चुक्रोधरावणःश्रुत्वाक्रोधसंरक्तलोचनः ॥ १९ ॥ सरोषसंवर्तिततास्रलोचनःप्रहस्तपुत्रेनिहतेमहाबले ॥ अमात्यपुत्रानतिवीर्यविक्रमान्समादिदेशाशुनिशाचरेश्वरः ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडेचतुश्चत्वारिंशःसर्गः ॥४४॥ ततस्तेराक्षसेंद्रेणचोदितामंत्रिणःसुताः॥ निर्ययुर्भवनात्तस्मात्सप्तसप्तार्चिवर्चसः ॥ १ ॥ महद्बलपरीवाराधनुष्मंतोमहाबलाः ॥ कृतास्त्रास्त्रविदांश्रेष्ठाःपरस्परजयैषिणः ॥ २ ॥ हेमजालपरिक्षिप्तैर्ध्वजवद्भिःपताकिभिः ॥ तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥ तप्तकांचनचित्राणिचापान्यमितविक्रमाः ॥ विस्फारयंतःसंहृष्टास्तडिद्वंतइवांबुदाः ॥ ४ ॥ जनन्यस्तास्ततस्तेषांविदित्वाकिंकरान्हतान् ॥ बभूवुःशोकसंभ्रांताःसबांधवसुहृज्जनाः ॥ ५ ॥ तेपरस्परसंघर्षास्तप्तकांचनभूषणाः ॥ अभिपेतुर्हनूमंतंतोरणस्थमवस्थितम् ॥ ६ ॥ सृजंतोबाणवृष्टिंतेरथगर्जितानिःस्वनाः ॥ प्रावृट्कालइवांभोदाविचेरुर्नैर्ऋतांबुदाः ॥ ७ ॥ अवकीर्णस्ततस्ताभिर्हनूमाञ्शरवृष्टिभिः ॥ अभवत्संवृताकारःशैलराडिववृष्टिभिः ॥ ८ ॥ सशरान्वंचयामासतेषामाशुचरःकपिः ॥ रथवेगांश्चवीराणांविचरन्विमलेंबरे ॥ ९ ॥

श्रेष्ठाः परस्परजयैषिणः अहमहमिकया स्वस्वोत्कर्षापेक्षिणः ॥ २ ॥ ध्वजवद्भिर्विशिष्टध्वनदंडयुक्तैः पताकिभिः प्रशस्तपताकावद्भिर्महारथैर्निर्ययुरिति संबन्धः ॥ ३ ॥ ४ ॥ शोकसंभ्रांताः निश्चितमरणबुद्ध्येति शेषः ॥ ५ ॥ परस्परसंघर्षाः अहमेवाग्रे इति परस्परमभिमानाद् तोरणस्थमवस्थितं तत्र स्थितं निश्चलमित्यर्थः ॥ ६ ॥ सृजंतो विसृजंतः ॥ ७॥ संवृताकारः अदृश्य इति यावत् ॥८॥ वंचयामास स्वस्पर्शेर

हितांश्चकार । तत्रोपायः आशुचर इति । स्थिरलक्ष्यं हि सुवेधं भवति रथवेगाश्च वंचयामास ॥ ९ ॥ धनुर्मद्भिरिति पाठे आर्ष रुत्वम् । धनुष्मद्भिरैन्द्रधनुर्युक्तैः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ भयार्दितं सत् दश दिशो दुद्रावेति शेषः ॥ १४ ॥ नीडं रथस्थं रथ्यधिष्ठानस्थानम् ॥ १५ ॥ स्रवंत्यो नद्यः ननाद प्रतिध्वनिना रक्षोराक्षसीध्वनिना च ॥ १६ ॥ १७ ॥ असूयमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ संवृताकारः निगृहीतांतर्गतभयः उत्तमां मतिं धैर्यविषयाम् ॥ १ ॥ २ ॥ हनूमद्ग्रहणे संदिदेश ।

सतैःक्रीडन्धनुष्मद्भिर्व्योम्निवीरःप्रकाशते ॥ धनुष्मद्भिर्यथामेघैर्मारुतःप्रभुरंवरे ॥ १० ॥ सकृत्वानिनदंघोरंत्रासयंस्तांमहाचमूम् ॥ चकारहनुमान्वेगंतेषुरक्षःसुवीर्यवान् ॥ ११ ॥ तलेनाभिहनत्कांश्चित्पादैःकांश्चित्परंतपः ॥ मुष्टिभिश्चाहनत्कांश्चिन्नखैःकांश्चिद्व्यदारयत् ॥ १२॥ प्रममाथोरसा कांश्चिदूरुभ्यामपरानपि ॥ केचित्तस्यैवनादेनतत्रैवपतिताभुवि ॥ १३ ॥ ततस्तेष्ववपन्नेषुभूमौनिपतितेषुच ॥ तत्सैन्यमगमत्सर्वंदिशोदशभयार्दितम् ॥ १४ ॥ विनेदुर्विस्वरंनागानिपेतुर्भुविवाजिनः ॥ भग्ननीडध्वजच्छत्रैर्भूश्चकीर्णाभवद्रथैः ॥ १५ ॥ स्रवतारुधिरेणाथस्रवंत्यो दर्शिताः पथि ॥ विविधैश्चस्वनैर्लंकाननादविकृतंतदा ॥ १६ ॥ सतान्प्रवृद्धान्विनिहत्यराक्षसान्महावलश्चंडपराक्रमःकपिः ॥ युयुत्सुरन्यैःपुनरेवराक्षसैस्तदेववीरोभिजगामतोरणम् ॥ १७ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये सुंदरकांडेपंचचत्वारिंशःसर्गः ॥ ४५ ॥ छ ॥ हतान्मंत्रिसुतान्बुद्ध्वावानरेणमहात्मना ॥ रावणःसंवृताकारश्चकारमतिमुत्तमाम् ॥ १ ॥ सविरूपाक्षयूपाक्षौदुर्धर्षंचैवराक्षसम् ॥ प्रघसंभासकर्णंचपंचसेनाग्रनायकान् ॥ २ ॥ संदिदेशदशग्रीवोवीरान्नयविशारदान् ॥ हनूमद्ग्रहणेव्यग्रान्वायुवेगसमान्युधि ॥ ३ ॥ यातसेनाग्रगाःसर्वेमहावलपरिग्रहाः ॥ सवाजिरथमातंगाः सकपिःशास्यतामिति ॥ ४ ॥ यत्तैश्चखलुभाव्यंस्यात्तमासाद्यवनालयम् ॥ कर्मचापिसमाधेयंदेशकालाविरोधितम् ॥ ५ ॥ नह्यहंतं कपिमन्येकर्मणाप्रतितर्कयन् ॥ सर्वथातन्महद्भूतं महावलपरिग्रहम् ॥ ६ ॥ वानरोयमितिज्ञात्वानहिशुध्यतिमेमनः ॥ नैवाहंतंकपिंमन्येयथेयंप्रस्तुताकथा ॥ ७ ॥ भवेदिंद्रेणवासृष्टमस्मदर्थंतपोवलात् ॥ सनागयक्षगंधर्वदेवासुरमहर्षयः ॥ ८ ॥ युष्माभिःप्रहितैःसर्वैर्मयासहविनिर्जिताः ॥ तैरवश्यंविधातव्यंव्यलीकंकिंचिदेवनः ॥ ९ ॥

व्यग्रान् सर्वत्र कार्ये त्वरावतः ॥ ३ ॥ यात गच्छत ॥ ४ ॥ यत्तैः सावधानैः किंचात्र देशकालविरोधि कर्म न कार्यमित्याह देशकालाविरोधितं तदविरुद्धं तदुचितमिति यावत् । समाधेयं कार्यम् ॥ ५ ॥ यत्तैर्भाव्यमित्यत्र हेतुमाह नहीति । तस्य कर्मणा तं प्रति तर्कयंस्तं कपिं न मन्ये । किं तर्हि मन्यसे तत्राह सर्वथेति ॥ ६ ॥ ७ ॥ महतो भूतस्येह कः प्रसंगस्तत्राह भवेदिति । सनागेति । नागादिसहिता देवादय इत्यर्थः ॥ ८ ॥ प्रहितैः सर्वैर्युष्माभिः सह मया विनिर्जिता अतस्तैरवश्यं नोऽस्माकं किंचिद्व्यलीकम् अप्रियं विधातुं प्राप्तकालम् ॥ तस्मात्तदेवं तत्सृष्टभूतमेव परिगृह्यतां बद्धा आनीयताम् ॥

सवाजिरथेत्यादि पुनर्वचनं स्थैर्यार्थम् ॥ ९ ॥ १० ॥ ११ ॥ सर्वथा महद्भूतमित्यत्र हेतुं निश्चायकमाह दृष्टा इति ॥ १२ ॥ ननु त्वद्दृष्टान्यतम एवायं नेत्याह नैवेति । यथास्य भीमा गतिः समुद्रप्लवनरूपा तथा तेषां नैव यथा चास्य तेजआदि तथा तेषां न ॥ १३ ॥ रूपपरिकल्पनं यथेप्सितरूपपरिग्रहः ॥ १४ ॥ प्रयत्नमित्यार्षं क्लीबत्वम् । कामं यद्यपीत्यर्थः ॥ १५ ॥ नयज्ञेन नीतिज्ञेन आत्मा स्वदेहः युद्धसिद्धिर्युद्धे जयः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ सत्त्वं चित्तम् ॥ २० ॥ दिक्षु सर्वास्ववस्थिताः द्राक् तत्समीपमागंतुं चकिता इति भावः ॥ २१ ॥ तीक्ष्णा मर्मच्छिदः पीतमुखाः फलभागे स्वर्णरूषिताः उत्पलपत्राभा एव न तु तत्पीडार्हा इत्यर्थः ॥ २२ ॥ स्वयं नदन्

तदेवनात्रसंदेहःप्रसह्यपरिगृह्यताम् ॥ यातसेनाग्रगाःसर्वैमहावलपरिग्रहाः ॥ १० ॥ सवाजिरथमातंगाःसकपिःशास्यतामिति ॥ नावमन्योभवद्भिश्चकपिर्धीरपराक्रमः ॥ ११ ॥ दृष्टाहिहरयःशीघ्रंमयाविपुलविक्रमाः ॥ वालीचसहसुग्रीवोजांबवांश्चमहाबलः ॥ १२ ॥ नीलःसेनापतिश्चैवयेचान्ये द्विविदादयः ॥ नैवतेषांगतिर्भीमानतेजोनपराक्रमः ॥ १३ ॥ नमतिर्नवलोत्साहोनरूपपरिकल्पनम् ॥ महत्सत्त्वमिदंज्ञेयंकपिरूपंव्यवस्थितम् ॥ ॥ १४ ॥ प्रयत्नंमहदास्थायक्रियतामस्यनिग्रहः ॥ काममंलोकास्त्रयःसेंद्राःससुरासुरमानवाः ॥ १५ ॥ भवतामग्रतःस्थातुंनपर्याप्तारणाजिरे ॥ तथापितुनयज्ञेनजयमाकांक्षतारणे ॥ १६ ॥ आत्मारक्ष्यःप्रयत्नेनयुद्धसिद्धिर्हिचंचला ॥ तेस्वामिवचनंसर्वेप्रतिगृह्यमहौजसः ॥ १७ ॥ समुत्पेतुर्महावेगाहुताशसमतेजसः ॥ रथैर्मत्तैर्नागैश्ववाजिभिश्चमहाजवैः ॥ १८ ॥ शस्त्रैश्चनिशितैस्तीक्ष्णैःसर्वैश्चोपहितावलैः ॥ ततस्तुददृशुर्वीरादीप्यमानंमहाकपिम् ॥ १९ ॥ रश्मिमंतमिवोद्यंतंस्वतेजोरश्मिमालिनम् ॥ तोरणस्थंमहावेगंमहासत्त्वंमहाबलम् ॥ २० ॥ महामतिंमहोत्साहंमहाकायंमहाभुजम् ॥ तंसमीक्ष्यैवतेसर्वेदिक्षुसर्वास्ववस्थिताः ॥ २१ ॥ तैस्तैःप्रहरणैर्भीमैरभिपेतुस्ततस्ततः ॥ तस्यपंचायसास्तीक्ष्णाःसिताःपीतमुखाःशराः ॥ शिरस्युत्पलपत्राभादुर्धरेणनिपातिताः ॥ २२ ॥ सतैःपंचभिराविद्धःशरैःशिरसिवानरः ॥ उत्पपातनदन्व्योम्निदिशोदशविनादयन् ॥ २३ ॥ ततस्तुदुर्धरोवीरःसरथःसज्जकार्मुकः ॥ किरञ्छरशतैर्नैकैरभिपेदेमहाबलः ॥ २४ ॥ सकपिर्वारयामासतंव्योम्निशरवर्षिणम् ॥ वृष्टिमंतंपयोदांतेपयोदमिवमारुतः ॥ २५ ॥ अर्द्यमानस्ततस्तेनदुर्धरेणानिलात्मजः ॥ चकारनिनदंभूयोव्यवर्धतचवीर्यवान् ॥ २६ ॥ सदूरंसहसोत्पत्यदुर्धरस्यरथेहरिः ॥ निपपातमहावेगोविद्युद्राशिर्गिराविव ॥ २७ ॥ ततःसमथिताष्टाश्वंरथंभग्नाक्षकूबरम् ॥ विहायन्यपतद्भूमौदुर्धरस्त्यक्तजीवितः ॥ २८ ॥ तंविरूपाक्षयूपाक्षौदृष्ट्वानिपतितंभुवि ॥ तौजातरोषौदुर्धर्षावुत्पेततुररिंदमौ ॥ २९ ॥ सताभ्यांसहसोत्प्लुत्यविष्ठितोविमलेऽम्बरे ॥ मुद्गराभ्यांमहाबाहुर्वक्षस्यभिहतःकपिः ॥ ३० ॥ तयोर्वेगवतोर्वेगंनिहत्यसमहावलः ॥ निपपातपुनर्भूमौसुपर्णइववेगितः ॥ ३१ ॥ ससालवृक्षमासाद्यसमुत्पाट्यचवानरः ॥ तावुभौराक्षसौवीरौजघानपवनात्मजः ॥ ३२ ॥ ततस्तांस्त्रीन्हताञ्ज्ञात्वावानरेणतरस्विना ॥ अभिगम्यमहावेगःप्रहस्यप्रघसोबली ॥ ३३ ॥

तेन नादेन दिशो नादयन्नित्यर्थः । उत्पपात तोरणादिति शेषः ॥ २३ ॥ अभिपेदे प्राप्तः ॥ २४ ॥ कपिर्व्योम्नि स्थित्वा तं स्वनादेन हुंकारादिरूपेण वारयामास पयोदांते जलदात्ययवर्षाकालांते ॥ २५ ॥ २६ ॥ रथे निपपातेत्यन्वयः ॥ २७ ॥ २८ ॥ २९ ॥ ताभ्यां कर्तृभ्यां मुद्गराभ्यां करणाभ्यामभिहतः ॥ ३० ॥ निहत्य वज्रवक्षस्त्वाद्व्यर्थीकृत्य ॥ ३१ ॥ ३२ ॥ ३३ ॥

एकतोवस्थितावित्यन्वयः । परस्परसाहाय्यबुद्धचैकदेशे स्थितावित्यर्थः ॥ ३४ ॥ ३५ ॥ विक्षतैर्गात्रैरुपलक्षितः ॥३६॥३७॥३८॥३९॥४०॥ ध्वजिनिपतीन्सेनापतीन् परिगृह्याश्रित्य स्थित इति शेषः । कृतक्षणो लब्धावसरः ॥ ४१ ॥ यंवर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वा० आ० सुंद० षट्चत्वारिंशः सर्गः ॥४६॥ ॥ प्रमापितान्मारितान् समरोद्धतोन्मुखं समरोद्धतश्चासौ समरायोन्मुखश्च तम् अक्षं समक्षमवस्थितमक्षाख्यं कुमारं निशम्य दृष्ट्वा प्रसमैक्षत दृष्टयायुद्धार्थमाज्ञापयामासेत्यर्थः ॥ १ ॥ तदेवाह स इति । सदसि यज्ञशालायां द्विजातिमुख्यैर्हविषोदीरितः प्रेरितः पावक इव समुत्पपात ॥ २ ॥

भासकर्णश्चसंक्रुद्धःशूलमादायवीर्यवान् ॥ एकतःकपिशार्दूलंयशस्विनमवस्थितौ ॥ ३४ ॥ पट्टिशेनशिताग्रेणप्रघसःप्रत्यपोथयत् ॥ भासकर्णश्चशूले नराक्षसःकपिकुंजरम् ॥ ३५ ॥ सताभ्यांविक्षतैर्गात्रैरसृग्दिग्धतनूरुहः ॥ अभवद्वानरःक्रुद्धोबालसूर्यसमप्रभः ॥ ३६ ॥ समुत्पाट्यगिरेःशृंगंसमृगव्या लपादपम् ॥ जघानहनुमान्वीरोराक्षसौकपिकुंजरः ॥ गिरिशृंगसुनिष्पिष्टौतिलशस्तौबभूवतुः ॥ ३७ ॥ ततस्तेष्ववसन्नेषुसेनापतिषुपंचसु ॥ बलं तदवशेषंतुनाशयामासवानरः ॥ ३८ ॥ अश्वैरश्वान्गजैर्नागान्योधैर्योधान्रथैरथान् ॥ सकपिर्नाशयामाससहस्राक्षइवासुरान् ॥ ३९ ॥ हयैर्नागै स्तुरंगैश्चभग्नाक्षैश्चमहारथैः हतैश्चराक्षसै ॥ भूमीरुद्धमार्गासमंततः ॥ ४० ॥ ततःकपिस्तान्ध्वजिनीपतीन्रणेनिहत्यवीरान्सबलान्सवाहनान् ॥ तथै ववीरःपरिगृह्यतोरणंकृतक्षणःकालइवप्रजाक्षये ॥ ४१ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ० सुं० षट्चत्वारिंशःसर्गः ॥ ४६ ॥ सेनापतीन्पं चसतुप्रमापितान्हनूमतासानुचरान्सवाहनान् ॥ निशम्यराजासमरोद्धतोन्मुखंकुमारमक्षंप्रसमैक्षताक्षम् ॥ १ ॥ सतस्यदृष्ट्यर्पणसंप्रचोदितःप्रतापवा न्कांचनचित्रकार्मुकः ॥ समुत्पपाताथसदस्युदीरितोद्विजातिमुख्यैर्हविषेवपावकः ॥ २ ॥ ततोमहान्बालदिवाकरप्रभंप्रतप्तजांबूनदजालसंततम् ॥ रथंसमास्थाययथौसवीर्यवान्महाहरिंतंप्रतिनैर्ऋतर्षभः ॥ ३ ॥ ततस्तपःसंग्रहसंचयार्जितंप्रतप्तजांबूनदजालचित्रितम् ॥ पताकिनंरत्नविभूषितध्वजं मनोजवाष्टाश्ववरैःसुयोजितम् ॥ ४ ॥ सुरासुराधृष्यमसंगचारिणंतडित्प्रभंव्योमचरंसमाहितम् ॥ सतूणमष्टासिनिबद्धबंधुरंयथाक्रमावेशितशक्तितो मरम् ॥ ५ ॥ विराजमानंप्रतिपूर्णवस्तुनासहेमदाम्नाशशिसूर्यवर्चसा ॥ दिवाकराभंरथमास्थितस्ततःसनिर्जगामामरतुल्यविक्रमः ॥ ६ ॥ सपूरयन्खं चमहींचसाचलांतुरंगमातंगमहारथस्वनैः ॥ बलैःसमेतैःसहतोरणस्थितंसमर्थमासीनमुपागमत्कपिम् ॥ ७ ॥ सतंसमासाद्यहरिंहरीक्षणोयुगांतकाला ग्निमिवप्रजाक्षये ॥ अवस्थितंविस्मितजातसंभ्रमंसमैक्षताक्षोबहुमानचक्षुषा ॥ ८ ॥

महान्सः इत्यन्वयः । जांबूनदजालेन तत्समूहेन संततं व्याप्तम् ॥ ३ ॥ उक्तमेवार्थं विशिष्याह तत इति । तपःसंग्रहस्य तपोनुष्ठानस्य संचयेन समृद्ध्यार्जितम् ॥ ४ ॥ अतएव व्योमचरम् असंगचारिणं पर्वतादिष्वपीति भावः । समाहितं सन्नंतूण इषुधिः अष्टसु दिक्ष्वसिभिः सह निबद्धा बंधुराः रथफलका यस्मिंस्तं यथाक्रमं यथास्थानमावेशितं शक्तितोमरं यस्मिंस्तम् ॥ ५ ॥ प्रतिपूर्णवस्तुना युद्धपरिकरवस्तुना शशिसूर्यवर्चसातद्रश्मिवर्चसा हेमदामसहितेन वस्तुना विराजमानम् ॥६॥ तोरणस्थितं तोरणाश्रयम् आसीनमुपविष्टम् ॥७॥ हरीक्षणः सिंहवत् क्रूरदृष्टिः युगांतकालाग्निवत्प्रजाक्षयेवस्थितम् । हरिं समासाद्य तमैक्षै

क्षत । विस्मितं च तं जातसंभ्रमं च बालोयं मां योद्धुमिच्छतीति विस्मयः रावणपुत्रत्वाच्च तत्र जातादरत्वम् ॥८॥ अभिवर्द्धत तेजसा अभ्यवर्द्धतेत्यर्थः ॥९॥ स्थिरः स्थितः प्रसमीक्ष्यविक्रमं संदर्शनीयपराक्रमं संयति रणे दुःखं निवारणं यस्य तं त्रिभिः शरैः प्रचोदयामास युद्धाय प्रेरयामास ॥ १० ॥ ११ ॥ निष्कमुरोभूषणम् आशुपराक्रमः तीक्ष्णपौरुष इति यावत् । समागमो युद्धं संभ्रमप्रदो भयप्रदः ॥ १२ ॥ भूमिर्भूमिस्थप्राणिजातं ररास वीर्यप्रवृत्तं संयुगं वीक्ष्येति शेषः ॥ १३ ॥ समाधिर्लक्ष्यदर्शनं संयोगः शरसंधानं विमोक्षः संहितस्य त्यागस्तेषां तत्त्ववित् अताडयदपातयत् ॥ १४ ॥ असृग्दिग्धश्चासौ विवृत्तने

सतस्यवेगंचकपेर्महात्मनःपराक्रमंचारिषुरावणात्मजः ॥ विचारयन्स्वंचबलंमहाबलोयुगक्षयेसूर्यइवाभिवर्धत ॥ ९ ॥ सजातमन्युःप्रसमीक्ष्यविक्रमं स्थितःस्थिरःसंयतिदुर्निवारणम् ॥ समाहितात्माहनुमंतमाहवेप्रचोदयामासशितैःशरैस्त्रिभिः ॥ १० ॥ ततःकपिंतंप्रसमीक्ष्यगर्वितंजितश्रमंशत्रुपराजयोचितम् ॥ अवैक्षताक्षःसमुदीर्णमानसंसबाणपाणिःप्रगृहीतकार्मुकः ॥ ११ ॥ सहेमनिष्कांगदचारुकुंडलःसमाससादाशुपराक्रमःकपिम् ॥ तयोर्बभूवाप्रतिमःसमागमःसुरासुराणामपिसंभ्रमप्रदः ॥ १२ ॥ ररासभूमिर्नततापभानुमान्ववौनवायुःप्रचचालचाचलः ॥ कपेःकुमारस्यचवीर्यसंयुगं ननादचद्यौरुदधिश्चचुक्षुभे ॥ १३ ॥ सतस्यवीरःसुमुखान्पतत्रिणःसुवर्णपुंखान्सविषानिवोरगान् ॥ समाधिसंयोगविमोक्षतत्त्वविच्छरानथत्रीन्कपिमूर्ध्न्यताडयत् ॥ १४ ॥ सतैःशरैर्मूर्ध्निसमंनिपातैःक्षरन्नसृग्दिग्धविवृत्तनेत्रः ॥ नवोदितादित्यनिभःशरांशुमान्व्यराजतादित्यइवांशुमालिकः ॥ ॥ १५ ॥ ततःप्लवंगाधिपमंत्रिसत्तमःसमीक्ष्यतंराजवरात्मजंरणे ॥ उदग्रचित्रायुधचित्रकार्मुकंजहर्षचापूर्यतचाहवोन्मुखः ॥ १६ ॥ समंदराग्रस्थइवांशुमालीविवृद्धकोपोबलवीर्यसंवृतः ॥ कुमारमक्षंसबलंसवाहनंददाहनेत्राग्निमरीचिभिस्तदा ॥ १७ ॥ ततः सबाणासनशक्रकार्मुकःशरप्रवर्षोयुधिराक्षसांबुदः ॥ शरान्मुमोचाशुहरीश्वराचलेबलाहकोवृष्टिमिवाचलोत्तमे ॥ १८ ॥ कपिस्ततस्तंरणचंडविक्रमंप्रवृद्धतेजोबलवीर्यसायकम् ॥ कुमारमक्षंप्रसमीक्ष्यसंयुगेननादहर्षाद्घनतुल्यनिःस्वनः ॥ १९ ॥ सबालभावाद्युधिवीर्यदर्पितःप्रवृद्धमन्युःक्षतजोपमेक्षणः ॥ समाससादाप्रतिमंरणेकापिंगजोमहाकूपमिवावृतंतृणैः ॥ २० ॥ सतेनबाणैःप्रसभंनिपातितैश्चकारनादंघननादनिःस्वनः ॥ समुत्सहेनाशुनभःसमारुजन्भुजोरुविक्षेपणघोरदर्शनः ॥ २१ ॥ तमुत्पतंतंसमभिद्रवद्बलीसराक्षसानांप्रवरःप्रतापवान् ॥ रथीरथिश्रेष्ठतरःकिरञ्छरैः पयोधरः शैलमिवाश्मवृष्टिभिः ॥ २२ ॥ सताञ्छरांस्तस्यहरिर्विमोक्षयंश्चचारवीरःपथिवायुसेविते ॥ शरांतरेमारुतवद्विनिष्पतन्मनोजवः संयातिभीमविक्रमः ॥ २३ ॥

त्रश्च । विवृत्तलोचन इति पाठे अवसरोचितचक्षुरित्यर्थः । नवोदितादित्यसन्निभः रक्तवर्ण इत्यर्थः शरांशुमान्स्वमस्तकस्थशररूपांशुमान् ॥ अंशुमालाधृत्सूर्य इव व्यराजत ॥ १५ ॥ आपूर्यत व्यवर्धत ॥१६॥ मंदराग्रस्थत्वेन मध्यंदिनस्थत्वं लक्ष्यते ॥ १७ ॥ बाणासनमेव शक्रकार्मुकं यस्यसः ॥ १८ ॥ तेजआदिसायकांताः प्रवृद्धा यस्य ॥१९॥ तृणैरावृतं महाकूपं गजपातनार्थकृतगर्तम् ॥२०॥ घननादनिः स्वनः मेघशब्दसदृशशब्दः समुत्सहेन । समुत्साहेन ह्रस्व आर्षः । भुजयोरूर्वोर्विक्षेपणेन घोरं दर्शनं यस्य सः ॥ २१ ॥ समभिद्रवत् अभ्यद्रवत् ॥२२॥ शरान्विमोक्षयन् व्यर्थीकुर्वन् । तदुपायः शरांतर इति ॥२३॥

॥ २४ ॥ एवं शरान् व्यर्थीकुर्वतोऽपि भुजांतरभेदरूपकर्मविशेषतत्त्वज्ञः पराक्रमविशेषेण चिंतयामास ॥ २५ ॥ चिंताप्रकारः अबालवदिति । सर्वाहवकर्मशालिनः सर्वप्रकाराहवकर्मशालिनः । अत्रास्मिन्का लेऽस्य प्रमापणे मे मतिर्न जायते । प्रमापणे मारुतिरत्र जायते इति पाठेऽयं जन इतिवत्स्वस्यैव हनुमता मारुतिरिति निर्देशः ॥२६॥ समाहितोऽवहितः अतिसहोऽतिरणक्लेशसहः कर्मगुणोदयाद्रणकर्मणो गुणोदयो त्कर्षस्य दर्शनाद्धेतोः पूजित इत्यर्थः ॥२७॥ पराक्रमविषयोत्साहेन विवृद्धं मानसं यस्य तादृशः सन्मां समीक्षते नतु कातर्येणेत्यर्थः । प्रमुखः वीरमुख्यः॥२८॥ उपेक्षितोयं न नाभिभवेत् अभिभवेदेवेत्यर्थः । स्वकर्मयोगं

तमात्तबाणासनमाहवोन्मुखंखमास्तृणंतंविविधैःशरोत्तमैः ॥ अवैक्षताक्षंबहुमानचक्षुषाजगामचिंतांसचमारुतात्मजः ॥ २४ ॥ ततःशरैर्भिन्नभुजांतरः कपिःकुमारवर्येणमहात्मनानदन् ॥ महाभुजःकर्मविशेषतत्त्वविद्विचिंतयामासरणेपराक्रमम् ॥ २५ ॥ अबालवद्बालदिवाकरप्रभःकरोत्ययंकर्ममह न्महाबलः ॥ नचास्यसर्वाहवकर्मशालिनः प्रमापणेमेमतिरत्रजायते ॥ २६ ॥ अयंमहात्माचमहांश्चवीर्यतःसमाहितश्चातिसहश्चसंयुगे ॥ असंशयं कर्मगुणोदयादयंसनागयक्षैर्मुनिभिश्चपूजितः ॥ २७ ॥ पराक्रमोत्साहविवृद्धमानसःसमीक्षतेमांप्रमुखोग्रतःस्थितः ॥ पराक्रमोह्यस्यमनांसिकंपये त्सुरासुराणामपिशीघ्रकारिणः ॥ २८ ॥ नखल्वयंनाभिभवेदुपेक्षितःपराक्रमोह्यस्यरणेविवर्धते ॥ प्रमापणंह्यस्यममाद्यरोचतेनवर्धमानोग्निरुपेक्षितुं क्षमः ॥ २९ ॥ इतिप्रवेगंतुपरस्यतर्कयन्स्वकर्मयोगंचविधायवीर्यवान् ॥ चकारवेगंतुमहाबलस्तदामतिंचचक्रेस्यवधेतदानीम् ॥ ३० ॥ सतस्यता न्हयवरान्महाहयान्समाहितान्भारसहान्विवर्तने ॥ जघानवीरःपथिवायुसेवितेतलप्रहारैःपवनात्मजःकपिः ॥ ३१ ॥ ततस्तलेनाभिहतोमहारथः सतस्यपिंगाधिपमंत्रिनिर्जितः ॥ सभग्ननीडःपरिवृत्तकूबरःपपातभूमौहतवाजिरंबरात् ॥ ३२ ॥ सतंपरित्यज्यमहारथोरथंसकार्मुकःखड्गधरःखमु त्पतन् ॥ ततोभियोगादृषिरुग्रवीर्यवान्विहायदेहंमरुतामिवालयम् ॥ ३३ ॥ कपिस्ततस्तंविचरंतमंबरेपतत्रिराजानिलसिद्धसेविते ॥ समेत्यतं मारुतवेगविक्रमःक्रमेणजग्राहचपादयोर्दृढम् ॥ ३४ ॥ सतंसमाविध्यसहस्रशःकपिर्महोरगंगृह्यइवांडजेश्वरः ॥ मुमोचवेगात्पितृतुल्यविक्रमोमही तलेसंयतिवानरोत्तमः ॥ ३५ ॥ सभग्नबाहूरुकटीपयोधरःक्षरन्नसृङ्निर्मथितास्थिलोचनः ॥ संभिन्नसंधिःप्रविकीर्णबंधनोहतःक्षितौवायुसुतेनराक्ष सः ॥ ३६ ॥ महाकपिर्भूमितलेनिपीडचतंचकाररक्षोधिपतेर्महद्भयम् ॥ महर्षिभिश्चक्रधरैःसमागतैःसमेत्यभूतैश्चसयक्षपन्नगैः ॥ सुरैश्चसेंद्रैर्भृशजात विस्मयैर्हतेकुमारेसकपिर्निरीक्षितः ॥ ३७ ॥

स्वस्वकर्मणियोगं ज्ञानबलविशेषावस्थानलक्षणमुपायम्॥२९॥३०॥विवर्तनेनानाविधमंडलगमने समाहितान् शिक्षितान्वायुसेविते पथि स्थितःस्थितांश्च॥३१॥नीडं रथ्यधिष्ठानस्थानम् ॥३२॥ मरुतामालयं स्वर्गमुत्पत न्नृषिरिव॥३३॥पतत्रीति । गरुडवायुसिद्धसेविते तं समेत्य तं पादयोर्जग्राहेत्यन्वयः ॥३४॥ समाविद्ध्य भ्रामयित्वा गृह्य इव । असंधिल्यपावार्षौ । गृहीत्वेवेत्यर्थः॥३५॥३६॥ चक्रचरैर्ज्योतिश्चक्रचरैर्ग्रहादिभिः

समेत्य समागतैर्जातविस्मयैर्निरीक्षित इत्यन्वयः ॥३७॥ वज्रिसुतोपमं जयंततुल्यम् । कृतक्षणः पुनर्युद्धे कृतोत्साहः ॥३८॥ अहलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ मनः समाधाय पुत्रनाशखिन्नमपि चेतो धीरतयाऽप्रकाशितभयं प्रतिष्ठाप्य ॥१॥ पितामहाराधनेन संचितास्त्रः प्राप्तब्रह्मास्त्रोसीत्यर्थः ॥२॥ सुरेश्वरसमाश्रिता अपि रणे स्थातुं न शेकुः ॥३॥ कश्चित्त्वदन्यो न गतश्रमो न सर्वे प्राप्तश्रमा इत्यर्थः । भुजवीर्याभिगुप्तस्तपसाभिरक्षितो देशकालप्रधानश्च मत्या सत्तमः प्रशस्ततरश्च त्वमेवेत्यन्वयः ॥४॥ समरेषु कर्तव्यानां कर्मणांमध्ये ऽशक्यं नास्ति । कर्मणा इत्येव पाठः सांप्रदायिक इति कतकः । मतिपूर्वमंत्रणे शास्त्रानुरूपबुद्धिपूर्वकर्तव्यराजकार्यविचारे तेऽकार्यं नास्ति कार्यासाधकविचारो नास्तीत्यर्थः। त्रिषु संग्रहेषु त्रिष्वपि लोकेषु भोक्तृभिः कर्मणा संगृह्यंत इति संग्रहा लोकास्तेषु तेऽस्त्रबलं सहजं च बलं यो न वेद स कश्चिदपि नास्ति सर्वप्रसिद्धबलद्वयबलवानित्यर्थः ॥५॥ ममानुरूपं मत्सदृशम् । रणावमर्दे युद्धसंघर्षे त्वां समासाद्य प्राप्य मे मनो

निहत्यतंवज्रिसुतोपमंरणेकुमारमक्षंक्षतजोपमेक्षणम् ॥ तदेववीरोभिजगाममतोरणंकृतक्षणःकालइवप्रजाक्षये ॥ ३८ ॥ इत्यार्षे श्रीमद्वा० वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तचत्वारिंशःसर्गः ॥ ४७ ॥ ततस्तुरक्षोधिपतिर्महात्माहनूमताक्षेनिहतेकुमारे ॥ मनःसमाधायसदेवकल्पंसमादिदेशेंद्रजितंसरोषः ॥ १ ॥ त्वमस्त्रविच्छस्त्रभृतांवरिष्ठःसुरासुराणामपिशोकदाता ॥ सुरेषुसेंद्रेषुचदृष्टकर्मापितामहाराधनसंचितास्त्रः ॥ २ ॥ त्वदस्त्रबलमासाद्यससुरासमरुद्गणाः ॥ नशेकुःसमरेस्थातुंसुरेश्वरसमाश्रिताः ॥३॥ नकश्चित्त्रिषुलोकेषुसंयुगेनगतश्रमः ॥ भुजवीर्याभिगुप्तश्चतपसाचाभिरक्षितः ॥ देशकालप्रधानश्चत्वमेवमतिसत्तमः ॥ ४ ॥ नतेस्त्यशक्यंसमरेषुकर्मणांनतेस्त्यकार्यंमतिपूर्वमंत्रणे ॥ नसोस्तिकश्चित्त्रिषुसंग्रहेषुनवेदयस्तेऽस्त्रबलंबलंच ॥५॥ ममानुरूपंतपसोबलंचतेपराक्रमश्चास्त्रबलंचसंयुगे ॥ नत्वांसमासाद्यरणावमर्देमनःश्रमंगच्छतिनिश्चितार्थम् ॥ ६ ॥ निहताःकिंकराःसर्वेजंबुमालीचराक्षसः ॥ अमात्यपुत्रावीराश्चपंचसेनाग्रगामिनः ॥ ७ ॥ बलानिसुसमृद्धानिसाश्वनागरथानिच ॥ महोदरश्चशयितःकुमारोऽक्षश्चसूदितः ॥ नतुतेष्वेवमेसारोयस्त्वय्यरिनिषूदन ॥ ८ ॥ इदंचदृष्ट्वानिहतंमहद्बलंकपेःप्रभावंचपराक्रमंच ॥ त्वमात्मनश्चापिनिरीक्ष्यसारंकुरुष्ववेगंस्वबलानुरूपम् ॥ ९ ॥ बलावमर्दैस्त्वयिसन्निकृष्टेयथागतेशाम्यतिशांतशत्रुः ॥ तथासमीक्ष्यात्मबलंपरंचसमारभस्वास्त्रभृतांवरिष्ठ ॥ १० ॥ नवीरसेनागणशोच्यवंतिनवज्रमादायविशालसारम् ॥ नमारुतस्यास्तिगतिप्रमाणंनचाग्निकल्पःकरणेनहंतुम् ॥ ११ ॥

जयविषये निश्चितार्थं सत् श्रमं विषादं न गच्छति त्वद्बलं स्मृत्वा श्वसिमीत्यर्थः ॥ ६ ॥ प्रकृतमाह निहता इति ॥ ७ ॥ हे अरिनिषूदन त्वयि मे यः सारः उत्कर्षबुद्धिः सतेषु नत्वेवेत्यन्वयः । यद्वा मे सारः सर्वजगज्जयसामर्थ्यं स त्वय्येव त्वत्साहाय्यनिमित्त एव नतु तेषु न तु तत्साहाय्यनिमित्तक इत्यर्थः ॥ ८ ॥ ९ ॥ गते युद्धाय निर्गते त्वयि सन्निकृष्टे सति बलावमर्दैरनेकबलप्रमथनैर्हेतुभिः शांतशत्रुरुपशांतबलः शत्रुर्यथा शाम्यति क्षीणो भवति तथात्मबलं परबलं च समीक्ष्यारभस्व बलावमर्दैरिति शांतशत्रुरिति च पाठे इति कतकः । बलावमर्द इति शांतशत्रो इति च पठित्वा हेऽस्त्रभृतां वरिष्ठ त्वयि युद्धाय गते सन्निकृष्टे हनूमत्समीपं प्राप्ते बलावमर्दः सेनानाशो यथा शाम्यति न भवति तथारभस्वेत्यर्थ इति तीर्थः ॥ १० ॥ अथ तत्र सेनादिपरिग्रहो व्यर्थ इत्याह न वीरेति । हे वीर सेना न ग्राह्या यतस्ता गणशः

संघशश्च्यवंति पलायंते नश्यंति च तथा विशालसारमतितैक्ष्ण्यकाठिन्यवत् अतएव वज्रं तत्तुल्यमायुधजालमादायापि न प्रयोजनं गणशः प्रयुक्तस्य तस्यापि प्रच्यवादेव । गणशो च्यवंतीत्यत्रोत्वमार्षं कुतस्तत्राह नेति । मरुतोपत्यस्य मारुतस्य गतेः सामर्थ्यस्य प्रमाणं परिच्छेद एतावद्बलं निग्रहीतुं शक्त इति परिच्छेदो नास्ति अतो लोके निखिलमपि बलं तस्याकिंचित्करमित्यर्थः । किंचाग्निकल्पोग्नितुल्योसौ करणेन शस्त्रादिरूपेण हंतुं न शक्यः । जयत्यतिबलो राम इत्येतद्घोषणसमये हनूमाञ्छत्रुसैन्यानां निहंता मारुतात्मज इत्युक्तेरिह रावणस्य मारुतस्येत्युक्तिर्नासमंजसा पराक्रमातिशयदर्शनादुत्प्रेक्षामात्रेण तु किंचिद्भूतमिति प्रागुक्तम् । केचित्तु गणान् शोचय तीति गणशोकः हनूमांस्तस्मिन्सेना नावंति ततो न रक्षंतीत्यर्थ इति वदंति तत्रावतेस्त्रायतिसमानार्थत्वात्पंचमीप्राप्तौ सप्तम्यार्षीतवोत्ववत् । एवं विशालसारमित्यत्र विशअलसारमिति च्छेदं कुर्वंति अलसारं कुंठसारं वज्रं तत्तुल्यमप्यायुधमादाय न विश रणं न प्रविशेति च व्याचक्षते । अलतेर्धातोः पर्याप्त्यर्थत्वेन पर्याप्तसारमिति व्याख्यातुं योग्यम् । कुंठेत्यर्थस्य ततोऽलाभात् ॥ ११ ॥ किं बलावष्टंभेन गंतव्यमिति शंकायां तत्सविशेषमुपदिशति तमिति । तं मदुक्तमर्थम् । एवमेव प्रसमीक्ष एवमेव तत्वमिति निश्चित्य स्वकर्मसाम्यात्स्वेनैव कर्मणः प्रकृतकार्यस्य साम्यात्सिद्धेः संपादनी यत्वात्त्वं समाहितात्मा समाहितचित्तो भूत्वाऽस्य विषये दिव्यं धनुषो वीर्यं दिव्यास्त्रमोक्षसामर्थ्यं स्मरन्निश्चिन्वन् व्रज गत्वा चाक्षतं परकीयप्रहारहीनं यथा भवति तथा शत्रुपराभवकर्मारभस्व ॥ १२ ॥

तमेवमर्थंप्रसमीक्ष्यसम्यक्स्वकर्मसाम्याद्धिसमाहितात्मा ॥ स्मरंश्चदिव्यंधनुषोस्यवीर्यंव्रजाक्षतंकर्मसमारभस्व ॥ १२ ॥ नखल्वियंमतिश्रेष्ठयत्त्वांसंप्रेषयाम्यहम् ॥ इयंचराजधर्माणांक्षत्रस्यचमतिर्मता ॥ १३ ॥ नानाशस्त्रेषुसंग्रामेवैशारद्यमरिंदम ॥ अवश्यमेवबोद्धव्यंकाम्यश्चविजयोरणे ॥ १४ ॥ ततःपितुस्तद्वचनंनिशम्यप्रदक्षिणंदक्षसुतप्रभावः ॥ चकारभर्तारमतित्वरेणरणायवीरःप्रतिपन्नबुद्धिः ॥१५॥ ततस्तैःस्वगणैरिष्टैरिंद्रजित्प्रतिपूजितः ॥ युद्धोद्धतकृतोत्साहःसंग्रामंसंप्रपद्यत ॥ १६ ॥ श्रीमान्पद्मविशालाक्षोराक्षसाधिपतेःसुतः ॥ निर्जगाममहातेजाःसमुद्रइवपर्वणि ॥ १७ ॥ सपक्षिराजोपमतुल्यवेगैर्व्यालैश्चतुर्भिःसतुतीक्ष्णदंष्ट्रैः ॥ रथंसमायुक्तमसह्यवेगःसमारुरोहेंद्रजिदिंद्रकल्पः ॥ १८ ॥ सरथीधन्विनांश्रेष्ठःशस्त्रज्ञोऽस्त्रविदांवरः ॥ रथेनाभिययौक्षिप्रंहनूमान्यत्रसोऽभवत् ॥ १९ ॥ सतस्यरथनिर्घोषंज्यास्वनंकार्मुकस्यच ॥ निशम्यहरिवीरोसौसंप्रहृष्टतरोऽभवत् ॥ ॥ २० ॥ इंद्रजिच्चापमादायशितशल्यांश्चसायकान् ॥ हनूमंतमभिप्रेत्यजगामरणपंडितः ॥ २१ ॥ तस्मिंस्ततःसंयतिजातहर्षेरणायनिर्गच्छतिबाणपाणौ ॥ दिशश्चसर्वाःकलुषाबभूवुर्मृगाश्चरौद्राबहुधाविनेदुः ॥ २२ ॥

हे मतिश्रेष्ठ प्रशस्तबुद्धे अहं त्वामतिमियं पुत्रमीदृशे संकटे प्रेषयामि । इयं प्रेषणा नोचिता खलु अथापि इयं मतिः राजधर्माणामस्माकं तथा क्षत्रस्य क्षत्रियस्य च मतैव शास्त्रतः संमतैव ॥ १३ ॥ अथ राज्ञः क्षत्रियस्य च कृत्यमाह नानेति । नानाशास्त्रेषु धर्मार्थनीत्यादिशास्त्रेषु संग्रामे च वैशारद्यं संपाद्यमिति शेषः । यस्य रणे विजयः काम्यो भवति तेनोक्तं नानाशास्त्रमवश्यं बोद्धव्यमेवेत्यर्थः । यद्वा परस्य नानाशास्त्रेषु यद्वैशारद्यमस्ति तद्योद्धा अवश्यमेव बोद्धव्यम् । बुद्ध्वापि रणे स्वस्य विजयः प्रार्थ्य एव । अहं जेष्याम्येवेति बुद्ध्या युद्धमारभ्यमेव । नतु तादृशशत्रोरपि निवर्तितव्यमित्यर्थः । केचित्तु नानाशास्त्रैरिति योद्धव्यमिति च पठित्वा नानाशास्त्रकरणकसंग्रामे वैशारद्यं सामर्थ्यं तवास्ति अतस्त्वयाऽवश्यं योद्धव्यमेव रणे जयश्च प्रार्थनीय एवेति व्याचक्षते ॥ १४ ॥ दक्षसुताः देवाः प्रदक्षिणं चकार भर्तारं राजानं रावणं रणाय अतित्वरेणातित्वरया गंतुं कृतबुद्धिः ॥ १५ ॥ स्वगणैरन्यैः सभास्थै राक्षसैः युद्धे उद्धतश्चासौ कृतोत्साहश्च संप्रपद्यत संप्रापद्यत ॥ १६ ॥ पर्वणीति वर्धमान इति शेषः ॥ १७॥ पक्षिराजोपमैरन्योन्यतुल्यवेगैश्च व्यालैः सर्पैः ॥ १८ ॥ १९ ॥ २० ॥ शितशल्यांस्तीक्ष्णाग्रान् ॥ २१ ॥ संयति तद्विषये जातहर्षे दिशश्चेत्युत्पातवर्णनम् । रौद्रा मृगाः क्रोष्टुप्रभृतयः ॥ २२ ॥

नक्रचराग्रहाः परममहृष्टा विनेदुरिति शुभनिमित्तम् ॥२३॥ इंद्रध्वजं इंद्राकारचिह्नवत् ध्वजम् ॥ २४ ॥ तडिदूर्जितनिःस्वनं तडिन्निभमूर्जितस्वनं च ॥ २५ ॥ २६ ॥ व्यहनत् वंचितवान् ॥२७॥ सुपत्रिणः कंकादिपक्षयुक्तान् । सुसंततान् अविरतान् ॥ २८ ॥ २९ ॥ अभिलक्ष्यस्य अभिमतलक्ष्यस्य । लक्ष्यसंग्रहं लक्ष्यत्वेन संग्रहणम् । मोक्षयन्मोघीकुर्वन् व्यर्थीकुर्वन्निति यावत् । शराणामंतरेषु व्यावर्तत परिवर्तते स्मेत्यर्थः ॥ ३० ॥ अभिवर्तत अभ्यवर्तत । ततः शरमोक्षसमये पुनरुत्पपात ॥ ३१ ॥ ३२ ॥ निर्विषहौ दुःसहवेगौ ॥ ३३ ॥ अमोघेषु शरेषु संपतत्स्वपि । लक्ष्ये लक्ष्यभूते हनूमति विहन्यमाने

समागतास्तत्रतुनागयक्षामहर्षयश्चक्रचराश्चसिद्धाः ॥ नभःसमावृत्यचपक्षिसंघाविनेदुरुच्चैःपरमप्रहृष्टाः ॥ २३ ॥ आयांतंसरथंदृष्ट्वापूर्णमिंद्रध्वजं कपिः ॥ ननादचमहानादंव्यवर्धतचवेगवान् ॥ २४ ॥ इंद्रजित्सरथंदिव्यमाश्रितश्चित्रकार्मुकः ॥ धनुर्विस्फारयामासतडिदूर्जितनिःस्वनम् ॥ २५ ॥ ततःसमेतावतितीक्ष्णवेगौमहाबलौतौरणनिर्विशंकौ ॥ कपिश्चरक्षोधिपतेस्तनूजःसुरासुरेंद्राविवबद्धवैरौ ॥ २६ ॥ सतस्यवीरस्यमहारथस्यधनुष्मतः संयतिसंमतस्य ॥ शरप्रवेगंव्यहनत्प्रवृद्धश्चचारमार्गेपितुरप्रमेयः ॥ २७ ॥ ततःशरानायततीक्ष्णशल्यान्सुपत्रिणःकांचनचित्रपुंखान् ॥ मुमोचवीरः परवीरहंतासुसंततान्वज्रसमानवेगान् ॥ २८ ॥ ततःसतत्स्यंदननिःस्वनंचमृदंगभेरीपटहस्वनंच ॥ विकृष्यमाणस्यचकार्मुकस्यानिशम्यघोषंपुनरुत्प पात ॥ २९ ॥ शराणामंतरेष्वाशुव्यावर्ततमहाकपिः ॥ हरिस्तस्याभिलक्ष्यस्यमोक्षयँल्लक्ष्यसंग्रहम् ॥ ३० ॥ शराणामग्रतस्तस्यपुनःसमभिवर्तत ॥ प्रसार्यहस्तौहनुमानुत्पपातानिलात्मजः ॥ ३१ ॥ तावुभौवेगसंपन्नौरणकर्मविशारदौ ॥ सर्वभूतमनोग्राहिचक्रतुर्युद्धमुत्तमम् ॥ ३२ ॥ हनूमतोवे दनराक्षसोंतरंनमारुतिस्तस्यमहात्मनोंऽतरम् ॥ परस्परंनिर्विषहौबभूवतुःसमेत्यतौदेवसमानविक्रमौ ॥ ३३ ॥ ततस्तुलक्ष्येसविहन्यमानेशरेष्वमोघे षुचसंपतत्सु ॥ जगामचिंतांमहतींमहात्मासमाधिसंयोगसमाहितात्मा ॥ ३४ ॥ ततोमतिंराक्षसराजसूनुश्चकारतस्मिन्हरिवीरमुख्ये ॥ अवध्यतांत स्यकपेःसमीक्ष्यकथंनिगच्छेदितिनिग्रहार्थम् ॥ ३५ ॥ ततःपैतामहंवीरःसोऽस्त्रमस्त्रविदांवरः ॥ संदधेसुमहातेजास्तंहरिप्रवरंप्रति ॥ ३६ ॥ अवध्यो यमितिज्ञात्वातमस्त्रेणास्त्रतत्त्ववित् ॥ निजग्राहमहाबाहुंमारुतात्मजमिंद्रजित् ॥ ३७ ॥ तेनबद्धस्ततोस्त्रेणराक्षसेनसवानरः ॥ अभवन्निर्विचेष्टश्चप पातचमहीतले ॥ ३८ ॥ ततोथबुद्ध्वासतदस्त्रबंधंप्रभोःप्रभावाद्विगताल्पवेगः ॥ पितामहानुग्रहमात्मनश्चविचिंतयामासहरिप्रवीरः ॥ ३९ ॥

शरेभ्यः स्वयमेव मुच्यमाने शरैरभिद्यमाने सतीत्यर्थः । हंतेर्गत्यर्थात् कर्मकर्तरि शानच् । समाधिसंयोगेन ध्यानकारणेन तत्स्वरूपज्ञानाय समाहितात्मा एकाग्रचित्तः ॥ ३४ ॥ ततो ध्यानानंतरम् अवध्योयमिति ध्यानेन ज्ञात्वा निग्रहार्थं बंधनार्थं बंधनमुद्दिश्य कथं निगच्छेत् कथं निश्चेष्टो भवेदिति मतिं विचारं चकार ॥ ३५ ॥ ३६ ॥ ब्रह्मास्त्रेणाप्यवध्यतां ज्ञात्वा तदस्त्रेण तं निजग्राह बबंध ॥ ३७ ॥ ३८ ॥ स हनुमान्स्वस्य तदस्त्रबंधं ब्रह्मास्त्रबंधं कृतं बुद्ध्वापि प्रभोर्ब्रह्मणः प्रभावाद्वरदानाद्विगताल्पवेगः विगतः अप्राप्तः अल्पोऽपि वेगः पीडा येन तादृशः अभीतचित्त इति यावत् ।

क्षवदपरोक्षतयाज्ञातवानपि हनूमान्न तथा ज्ञापयतीत्याह अस्त्रेणेति । अवबुध्यते अंतर्भावितण्यर्थतया नावबोधयति स्म अस्त्रमोक्षं न प्रकाशयति स्मेत्यर्थः । तैर्बन्धैर्लौकिकबंधैः अतएव कृष्यमाणत्वादि गुणकः राक्षसेंद्रसमीपं प्राकृष्यत ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ कस्य सुत इति शेषः । कोभ्युपाश्रयः कस्याश्रयेणैवं निर्भय इत्यर्थः ॥ ५५ ॥ यत्र रावणः स्थितस्तत्रत्या राक्षसा एवमब्रुवन्नित्यर्थः ॥ ५६ ॥ परिचारवृद्धान्वृद्धान्परिचारकानित्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ वक्ष्यमाणसंक्षेपोऽर्थेति । मंत्रीन्मांत्रिणं इत्यर्थः ॥ ६० ॥ कार्यं कर्तव्यमर्थस्तत्प्रयोजनं च समाहारद्वंद्वः । अर्थस्य मूलमुक्तमयो

हंन्यमानस्ततःक्रूरैराक्षसैःकालमुष्टिभिः ॥ समीपंराक्षसेंद्रस्यप्राकृष्यतसवानरः ॥ ५२ ॥ अथेंद्रजित्तंप्रसमीक्ष्यमुक्तमस्त्रेणबद्धंद्रुमचीरसूत्रैः ॥ व्यदर्शयत्तत्रमहाबलंतंहरिप्रवीरंसगणायराज्ञे ॥ ॥ ५३ ॥ तंमत्तमिवमातंगंबद्धंकपिवरोत्तमम् ॥ राक्षसाराक्षसेंद्रायरावणायन्यवेदयन् ॥ ५४ ॥ कोयंकस्यकुतोत्रापिकिंकार्यंकोभ्युपाश्रयः ॥ इतिराक्षसवीराणांदृष्ट्वासंजज्ञिरेकथाः ॥५५॥ हन्यतांदह्यतांवापिभक्ष्यतामितिचापरे ॥ राक्षसास्तत्रसंक्रुद्धाःपरस्परमथाब्रुवन् ॥ ५६ ॥ अतीत्यमार्गंसहसामहात्मासतत्ररक्षोधिपपादमूले ॥ ददर्शराज्ञःपरिचारवृद्धान्गृहंमहारत्नविभूषितंच ॥ ५७ ॥ सददर्शमहातेजारावणःकपिसत्तमम् ॥ रक्षोभिर्विकृताकारैःकृष्यमाणमितस्ततः ॥ ५८ ॥ राक्षसाधिपतिंचापिददर्शकपिसत्तमः ॥ तेजोबलसमायुक्तंतपंतमिवभास्करम् ॥ ५९ ॥ सरोषसंवर्तिततामृदृष्टिर्दशाननस्तंकपिमन्ववेक्ष्य ॥ अथोपविष्टान्कुलशीलवृद्धान्समादिशत्तंप्रतिमुख्यमंत्रीन् ॥ ६० ॥ यथाक्रमंतैःसकपिश्चपृष्टःकार्यार्थमर्थस्यचमूलमादौ ॥ निवेदयामासहरीश्वरस्यदूतःसकाशादहमागतोस्मि ॥ ६१ ॥ इत्यार्षे श्रीमद्रा० वा० आ० सुं० अष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ततःसकर्मणातस्यविस्मितोभीमविक्रमः ॥ हनुमान्क्रोधताम्राक्षोरक्षोधिपमवैक्षत ॥ १ ॥ भ्राजमानंमहार्हेणकांचनेनविराजता ॥ मुक्ताजालवृतेनाथमुकुटेनमहाद्युतिम् ॥ २ ॥ वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ॥ हैमैराभरणैश्चित्रैर्मनसेवप्रकल्पितैः ॥ ३ ॥ महार्हक्षौमसंवीतरक्तचंदनरूषितम् ॥ स्वनुलिप्तंविचित्राभिर्विविधाभिश्चभक्तिभिः ॥ ४ ॥ विचित्रंदर्शनीयैश्चरक्ताक्षैर्भीमदर्शनैः ॥ दीप्ततीक्ष्णमहादंष्ट्रंप्रलंबंदशनच्छदैः ॥ ५ ॥ शिरोभिर्दशभिर्वीरोभ्राजमानंमहौजसम् ॥ नानाव्यालसमाकीर्णैःशिखरैरिवमंदरम् ॥ ६ ॥

जनप्रवर्तकम् । उत्तराशयस्तु दूत्यं कृत्यं प्रेरकः सुग्रीव इति ॥ ६१ ॥ येतिर्मतः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ तस्य इंद्रजितः यत्तु रावणस्येति तत्र तेन हनूमति कस्यापि कर्मणोऽकृतत्वादिति कतकः । पुत्रदारा स्ववंचनकर्मणेत्यर्थ इति तीर्थः ॥ १ ॥ २ ॥ वज्रसंयोगेन तद्घट्टनेन संयुक्तैर्घटितैर्महार्हमणिविग्रहैः बहुमल्यमणिप्रधानस्वरूपैः ॥ ३ ॥ भक्तिभिः शैवत्रिपुंड्रवद्रचनाविशेषैः ॥ ४ ॥ विचित्रमाश्चर्यभूतैर्दशनच्छदैः प्रलंबं लंबदशनच्छदवंतम् ॥ ५ ॥ शिरोभिर्दशभिरिति । हनूमतो

चक्रचराग्रहाः परममहृष्टा विनेदुरिति शुभनिमित्तम् ॥२३॥ इंद्रध्वजं इंद्राकारचिह्नवत् ध्वजम् ॥ २४ ॥ तडिदूर्जितनिःस्वनं तडिन्निभमूर्जितस्वनं च ॥ २५ ॥ २६ ॥ व्यहनत् वंचितवान् ॥२७॥ सुपत्रिणः कंकादिपक्षयुक्तान् । सुसंततान् अविरतान् ॥ २८ ॥ २९ ॥ अभिलक्ष्यस्य अभिमतलक्ष्यस्य । लक्ष्यसंग्रहं लक्ष्यत्वेन संग्रहणम् । मोक्षयन्मोघीकुर्वन् व्यर्थीकुर्वन्निति यावत् । शराणामंतरेषु व्यावर्तत परिवर्तते स्मेत्यर्थः ॥ ३० ॥ अभिवर्तत अभ्यवर्तत । ततः शरमोक्षसमये पुनरुत्पपात ॥ ३१ ॥ ३२ ॥ निर्विषहौ दुःसहवेगौ ॥ ३३ ॥ अमोघेषु शरेषु संपतत्स्वपि । लक्ष्ये लक्ष्यभूते हनूमति विहन्यमाने

समागतास्तत्रतुनागयक्षामहर्षयश्चक्रचराश्चसिद्धाः ॥ नभःसमावृत्यचपक्षिसंघाविनेदुरुच्चैःपरमप्रहृष्टाः ॥ २३ ॥ आयांतंसरथंदृष्ट्वापूर्णमिंद्रध्वजं कपिः ॥ ननादचमहानादंव्यवर्धतचवेगवान् ॥ २४ ॥ इंद्रजित्सरथंदिव्यमाश्रितश्चित्रकार्मुकः ॥ धनुर्विस्फारयामासतडिदूर्जितनिःस्वनम् ॥ २५ ॥ ततःसमेतावतितीक्ष्णवेगौमहाबलौतौरणनिर्विशंकौ ॥ कपिश्चरक्षोधिपतेस्तनूजःसुरासुरेंद्राविवबद्धवैरौ ॥ २६ ॥ सतस्यवीरस्यमहारथस्यधनुष्मतः संयतिसंमतस्य ॥ शरप्रवेगंव्यहनत्प्रवृद्धश्चचारमार्गेपितुरप्रमेयः ॥ २७ ॥ ततःशरानायततीक्ष्णशल्यान्सुपत्रिणःकांचनचित्रपुंखान् ॥ मुमोचवीरः परवीरहंतासुसंततान्वज्रसमानवेगान् ॥ २८ ॥ ततःसतत्स्यंदननिःस्वनंचमृदंगभेरीपटहस्वनंच ॥ विकृष्यमाणस्यचकार्मुकस्यनिशम्यघोषंपुनरुत्प पात ॥ २९ ॥ शराणामंतरेष्वाशुव्यावर्ततमहाकपिः ॥ हरिस्तस्याभिलक्ष्यस्यमोक्षयँल्लक्ष्यसंग्रहम् ॥ ३० ॥ शराणामग्रतस्तस्यपुनःसमभिवर्तत ॥ प्रसार्यहस्तौहनुमानुत्पपातानिलात्मजः ॥ ३१ ॥ तावुभौवेगसंपन्नौरणकर्मविशारदौ ॥ सर्वभूतमनोग्राहिचक्रतुर्युद्धमुत्तमम् ॥ ३२ ॥ हनूमतोवे दनराक्षसोंतरंनमारुतिस्तस्यमहात्मनोंऽतरम् ॥ परस्परंनिर्विषहौबभूवतुःसमेत्यतौदेवसमानविक्रमौ ॥ ३३ ॥ ततस्तुलक्ष्येसविहन्यमानेशरेष्वमोघे षुचसंपतत्सु ॥ जगामचिंतांमहतींमहात्मासमाधिसंयोगसमाहितात्मा ॥ ३४ ॥ ततोमतिंराक्षसराजसूनुश्चकारतस्मिन्हरिवीरमुख्ये ॥ अवध्यतांत स्यकपेःसमीक्ष्यकथंनिगच्छेदितिनिग्रहार्थम् ॥ ३५ ॥ ततःपैतामहंवीरःसोऽस्त्रमस्त्रविदांवरः ॥ संदधेसुमहातेजास्तंहरिप्रवरंप्रति ॥ ३६ ॥ अवध्यो यमितिज्ञात्वातमस्त्रेणास्त्रतत्त्ववित् ॥ निजग्राहमहाबाहुंमारुतात्मजमिंद्रजित् ॥ ३७ ॥ तेनबद्धस्ततोस्त्रेणराक्षसेनसवानरः ॥ अभवन्निर्विचेष्टश्चप पातचमहीतले ॥ ३८ ॥ ततोथबुद्ध्वासतदस्त्रबंधंप्रभोःप्रभावाद्विगतालपवेगः ॥ पितामहानुग्रहमात्मनश्चविचिंतयामासहरिप्रवीरः ॥ ३९ ॥

शरेभ्यः स्वयमेव मुच्यमाने शरैरभिद्यमाने सतीत्यर्थः । हंतेर्गत्यर्थात् कर्मकर्तरि शानच् । समाधिसंयोगेन ध्यानकारणेन तत्स्वरूपज्ञानाय समाहितात्मा एकाग्रचित्तः ॥ ३४ ॥ ततो ध्यानानंतरम् अवध्योयमिति ध्यानेन ज्ञात्वा निग्रहार्थं बंधनार्थं बंधनमुद्दिश्य कथं निगच्छेत् कथं निश्चेष्टो भवेदिति मतिं विचारं चकार ॥ ३५ ॥ ३६ ॥ ब्रह्मास्त्रेणाप्यवध्यतां ज्ञात्वा तदस्त्रेण तं निजग्राह बबंध ॥ ३७ ॥ ३८ ॥ स हनुमान्स्वस्य तदस्त्रबंधं ब्रह्मास्त्रबंधं कृतं बुद्ध्वापि प्रभोर्ब्रह्मणः प्रभावाद्वरदानाद्विगताल्पवेगः विगतः अप्राप्तः अल्पोऽपि वेगः पीडा येन तादृशः अभीतचित्त इति यावत् ।

आत्मनः पितामहानुग्रहं मुहूर्तमात्रेण मदस्त्रनिरोधमुक्तिरित्येवं रूपम् ॥ ३९ ॥ उक्तमेवार्थं स्पष्टयति तत इति । स्वायंभुवैः स्वयंभूदेवत्यैरनेकविधैर्मंत्रैरभिमंत्रितं तत्सिद्धं भवति तादृशं ब्रह्मास्त्रं तत्कृतनिरोधं बुद्धा पितामहाल्लब्धं वररूपं दानं प्रागुक्तरूपं चिंतयामास ॥ ४० ॥ लोकगुरोः प्रभावान्मे हनूमतोस्यास्त्रबंधस्य विमोक्षणे शक्तिर्नास्तीत्येवं ध्यानेन ज्ञात्वा एवमनुभूयमानप्रकारेण ममानेन विहित आत्मयोनेरस्त्रबंधो मयानुवर्तितव्य एव मुहूर्तमात्रं सोढव्य एव ॥ ४१ ॥ विमोक्षशक्तिं मुहूर्तानंतरभाविनीं तां चिंतयित्वा मुहूर्तमात्रं पितामहाज्ञामनुवर्तते स्म ॥ ४२ ॥ भयं नं जायते तत्र हेतुः पिता महेत्यादि । आदित्यग्रासप्रवृत्तिसमय एव त्रयानुग्रहः प्रागुक्तः ॥ ४३ मे महद्गुणदर्शनमस्तीति शेषः । राक्षसेंद्रेण संवाद इति ॥ ४४ ॥ निश्चितार्थः उक्तरीत्येति भावः । समीक्ष्यकारी विचारपूर्वकं कार्यकर्ता । अभिगतैरभिसृत्य गतैः परैः प्रसह्य बलाद्गृहीत्वा परिभर्त्स्यमानः सन्ननाद पीडित इवेति भावः ॥ ४५ ॥ शणवल्कैस्तज्जन्यरज्जुभिः संहितैः । रज्जुरूपेण कृतैर्द्रुमचीरैर्द्रुमवल्कलैः ॥ ४६ ॥

ततःस्वायंभुवैर्मंत्रैर्ब्रह्मास्त्रंचाभिमंत्रितम् ॥ हनूमांश्चिंतयामासवरदानंपितामहात् ॥ ४० ॥ नमेस्यबंधस्यचशक्तिरस्तिविमोक्षणेलोकगुरोःप्रभावात् ॥ इत्येवमेवंविहितोऽस्त्रबंधोमयात्मयोनेरनुवर्तितव्यः ॥ ४१ ॥ सवीर्यमस्त्रस्यकपिर्विचार्यपितामहानुग्रहमात्मनश्च ॥ विमोक्षशक्तिंपरिचिंतयित्वापि तामहाज्ञामनुवर्ततेस्म ॥ ४२ ॥ अस्त्रेणापिहिबद्धस्यभयंममनजायते ॥ पितामहमहेंद्राभ्यांरक्षितस्यानिलेनच ॥ ४३ ॥ ग्रहणेचापिरक्षोभिर्महन्मे गुणदर्शनम् ॥ राक्षसेंद्रेणसंवादस्तस्माद्गृह्णन्तुमांपरे ॥ ४४ ॥ सनिश्चितार्थःपरवीरहंतासमीक्ष्यकारीविनिवृत्तचेष्टः ॥ परैःप्रसह्याभिगतैर्निगृह्यन नादतैस्तैःपरिभर्त्स्यमानः ॥४५॥ ततस्तेराक्षसाद्दृष्ट्वाविनिश्चेष्टमरिंदमम् ॥ बबंधुःशणवल्कैश्चद्रुमचीरैश्चसंहतैः ॥ ४६ ॥ सरोचयामास परैश्चबंधं प्रसह्यवीरैरभिगर्हणंच ॥ कौतूहलान्मांयदिराक्षसेंद्रोद्रष्टुंव्यवस्येदितिनिश्चितार्थः ॥ ४७ ॥ सबद्धस्तेनवल्केनविमुक्तोस्त्रेणवीर्यवान् ॥ अस्त्रबंधः सचान्यंहिनबंधमनुवर्तते ॥ ४८ ॥ अथेंद्रजित्तंद्रुमचीरबद्धंविचार्यवीरःकपिसत्तमंतम् ॥ विमुक्तमस्त्रेणजगामचिंतामन्येनबद्धोप्यनुवर्ततेऽस्त्रम् ॥४९॥ अहोमहत्कर्मकृतंनिरर्थंनराक्षसैर्मंत्रगतिर्विमृष्टा ॥ पुनश्चनास्त्रेविहतेऽस्त्रमन्यत्प्रवर्ततेसंशयिताःस्मसर्वे ॥ ५० ॥ अस्त्रेणहनुमान्मुक्तोनात्मानमवबु ध्यते ॥ कृष्यमाणस्तुरक्षोभिस्तैश्चबंधैर्निपीडितः ॥ ५१ ॥

कौतूहलान्मां द्रष्टुं व्यवस्येदिति निश्चितार्थः निश्चितकार्यतत्त्वः सन्स्वस्य तत्संभाषणापेक्षित्वात् बंधादिकं रोचयामास॥४७॥अस्त्रबंधमोक्षोपि तदैवाजायत इत्याह स इति । वल्केन वल्कलेन तज्जन्यरज्ज्वैव बद्धः । अस्त्रेण तु विमुक्तः । कुतस्तत्राह अस्त्रबंधो मंत्रबंधोन्यबंधं नानुवर्तते इतरबंधेन सह न तिष्ठति तस्मिन्सति मंत्रबंधो नश्यतीत्यर्थः ॥ ४८ ॥ इममर्थमिंद्रजिदपि ज्ञातवानित्याह अथेति । अस्त्रेण विमुक्तं विचार्य ज्ञात्वा अन्येन बद्धोपि हनुमानस्त्रमनुवर्तते अस्त्रेण बद्ध इव वर्तत इत्यपि विचार्य चिंतां जगामेति संबंधः । नान्येन बंधे ह्यनुवर्ततेऽस्त्रमिति पाठे चिंतास्वरूपमिदं राक्षसैः स्वकृतबंधनवशात्खेदं जगामेत्यर्थः ॥ ४९ ॥ चिंतामाह अहो इति । पाठांतरे चिंतांतरमिदम् । मया कृतं महत्कर्म निरर्थं कृतं राक्षसैर्यतस्तैर्मंत्रगतिर्न विमृष्टा न विचारिता अन्यबंधे मंत्रबंधो नश्यतीति न ज्ञातमित्यर्थः । पुन रस्त्रं तदेव प्रयोज्यं तत्राह अस्त्रे ब्राह्मे विहते पुनरन्यदस्त्रं तदस्त्रप्रयोगांतरं न प्रवर्ततेऽतः सर्वे वयं संशयिता संशयितजया एव मुक्तोयं सर्वानपि हन्यादिति भावः ॥ ५० ॥ ॥ अस्त्रविमोक्षं राहुमो

क्षवदपरोक्षतयाज्ञातवानपि हनूमान्न तथा ज्ञापयतीत्याह अस्त्रेणेति । अवबुध्यते अंतर्भावितण्यर्थतया नावबोधयति स्म अस्त्रमोक्षं न प्रकाशयति स्मेत्यर्थः । तैर्बन्धैर्लौकिकबंधैः अतएव कृष्यमाणत्वादि गुणकः राक्षसेंद्रसमीपं प्राकृष्यत ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ कस्य सुत इति शेषः । कोभ्युपाश्रयः कस्याश्रयेणैवं निर्भय इत्यर्थः ॥ ५५ ॥ यत्र रावणः स्थितस्तत्रत्या राक्षसा एवमब्रुवन्नित्यर्थः ॥ ५६ ॥ परिचारवृद्धान्वृद्धान्परिचारकानित्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ वक्ष्यमाणसंक्षेपोऽयेति । मंत्रीन्मंत्रिणं इत्यर्थः ॥ ६० ॥ कार्यं कर्तव्यमर्थस्तत्प्रयोजनं च समाहारद्वंद्वः । अर्थस्य मूलमुक्तमयो

हन्यमानस्ततःक्रूरैराक्षसैःकालमुष्टिभिः ॥ समीपंराक्षसेंद्रस्यप्राकृष्यतसवानरः ॥ ५२ ॥ अथेंद्रजित्तंप्रसमीक्ष्यमुक्तमस्त्रेणबद्धंद्रुमचीरसूत्रैः ॥ व्यदर्शयत्तत्रमहाबलंतंहरिप्रवीरंसगणायराज्ञे ॥ ॥ ५३ ॥ तंमत्तमिवमातंगंबद्धंकपिवरोत्तमम् ॥ राक्षसाराक्षसेंद्रायरावणायन्यवेदयन् ॥ ५४ ॥ कोयंकस्यकुतोवापिकिंकार्यंकोभ्युपाश्रयः ॥ इतिराक्षसवीराणांदृष्ट्वासंजज्ञिरेकथाः ॥५५॥ हन्यतांदह्यतांवापिभक्ष्यतामितिचापरे ॥ राक्षसास्तत्रसंक्रुद्धाःपरस्परमथाब्रुवन् ॥ ५६ ॥ अतीत्यमार्गंसहसामहात्मासतत्ररक्षोधिपपादमूले ॥ ददर्शराज्ञःपरिचारवृद्धान्गृहंमहारत्नविभूषितंच ॥ ५७ ॥ सददर्शमहातेजारावणःकपिसत्तमम् ॥ रक्षोभिर्विकृताकारैःकृष्यमाणमितस्ततः ॥ ५८ ॥ राक्षसाधिपतिंचापिददर्शकपिसत्तमः ॥ तेजोबलसमायुक्तंतपंतमिवभास्करम् ॥ ५९ ॥ सरोषसंवर्तिततात्रदृष्टिर्दशाननस्तंकपिमन्ववेक्ष्य ॥ अथोपविष्टान्कुलशीलवृद्धान्समादिशत्तंप्रतिमुख्यमंत्रीन् ॥ ६० ॥ यथाक्रमंतैःसकपिश्चपृष्टःकार्यार्थमर्थस्यचमूलमादौ ॥ निवेदयामासहरीश्वरस्यदूतःसकाशादहमागतोस्मि ॥ ६१ ॥ इत्यार्षे श्रीमद्रा० वा० आ० सुं० अष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ततःसकर्मणातस्यविस्मितोभीमविक्रमः ॥ हनुमान्क्रोधताम्राक्षोरक्षोधिपमवैक्षत ॥ १ ॥ भ्राजमानंमहार्हेणकांचनेनविराजता ॥ मुक्ताजालवृतेनाथमुकुटेनमहाद्युतिम् ॥ २ ॥ वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ॥ हैमैराभरणैश्चित्रैर्मनसेवप्रकल्पितैः ॥ ३ ॥ महार्हक्षौमसंवीतरक्तचंदनरूषितम् ॥ स्वनुलिप्तंविचित्राभिर्विविधाभिश्चभक्तिभिः ॥ ४ ॥ विचित्रंदर्शनीयैश्चरक्ताक्षैर्भीमदर्शनैः ॥ दीप्ततीक्ष्णमहादंष्ट्रंप्रलंबंदशनच्छदैः ॥ ५ ॥ शिरोभिर्दशभिर्वीरोभ्राजमानंमहौजसम् ॥ नानाव्यालसमाकीर्णैःशिखरैरिवमंदरम् ॥ ६ ॥

जनमवर्तकम् । उत्तराशयस्तु दूत्यं कृत्यं प्रेरकः सुग्रीव इति ॥ ६१ ॥ यतिर्मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ तस्य इंद्रजितः यत्तु रावणस्येति तन्न तेन हनूमति कस्यापि कर्मणोऽकृतत्वादिति कतकः । पुत्रद्वारा स्वबंधनकर्मणेत्यर्थ इति तीर्थः ॥ १ ॥ २ ॥ वज्रसंयोगेन तद्धट्टनेन संयुक्तैर्घटितैर्महार्हमणिविग्रहैः बहुमूल्यमणिप्रधानस्वरूपैः ॥ ३ ॥ भक्तिभिः शैवत्रिपुंड्रवद्रचनाविशेषैः ॥ ४ ॥ विचित्रमाश्चर्यभूतैर्दशनच्छदैः प्रलंबं लंबदशनच्छदवंतम् ॥ ५ ॥ शिरोभिर्दशभिरिति । हनूमतो

दर्शनकाले रणे इव भीषणरूपकरणादिति बोध्यम् ॥ ६ ॥ हारेणोपलक्षितम् ॥ ७ ॥ केयूरांगदयोरवांतरविशेष ऊह्यः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ चतुर्भिः सागरैः परिवृतं तं कृत्स्नं लोकं भूमंडलमिवेत्यर्थः ॥ १२ ॥ मंत्री बुद्धिसहायः सचिवः कार्यसहायः ॥ १३ ॥ १४ ॥ रक्षोधिपमवैक्षत नतु रक्षःकृतपीडामित्यर्थः ॥ १५ १६ ॥ १७ ॥ सर्वसंपत्तिमतोप्यधर्मवतो महान्दोष इत्याह यदीति । बलवानेवंविधसमृद्धे प्युन्मूलनक्षमोऽधर्मो यद्यस्मिन्न स्यात्तदायं राक्षसेश्वरः शक्रस्य सुरलोकस्यापि विष्णुवद्रक्षिता स्यात् । यद्वा अधर्म इत्यर्श‌आद्यजंतम् । अयं बलवान् राक्षसेश्वरो यद्यधर्मवान्न स्यात्तदा शक्रस्येत्यादि प्राग्वत् अधर्महत

नीलांजनचयप्रख्यंहारेणोरसि राजता ॥ पूर्णचंद्राभवक्त्रेणसबालार्कमिवांबुदम् ॥ ७ ॥ बाहुभिर्बद्धकेयूरैश्चंदनोत्तमरूषितैः ॥ भ्राजमानांगदैर्भीमैःपंचशीर्षैरिवोरगैः ॥ ८ ॥ महतिस्फाटिकेचित्रेरत्नसंयोगचित्रिते ॥ उत्तमास्तरणास्तीर्णेसूपविष्टंवरासने ॥ ९ ॥ अलंकृताभिरत्यर्थंप्रमदाभिःसमंततः ॥ वालव्यजनहस्ताभिरारात्समुपसेवितम् ॥ १० ॥ दुर्धरेणप्रहस्तेनमहापार्श्वेनरक्षसा ॥ मंत्रिभिर्मंत्रतत्त्वज्ञैर्निकुंभेनचमंत्रिणा ॥ ११ ॥ उपोपविष्टंरक्षोभिश्चतुर्भिर्बलदर्पितम् ॥ कृत्स्नंपरिवृतंलोकंचतुर्भिरिवसागरैः ॥ १२ ॥ मंत्रिभिर्मंत्रतत्त्वज्ञैरन्यैश्चशुभदर्शिभिः ॥ आश्वास्यमानंसचिवैःसुरैरिवसुरेश्वरम् ॥ १३ ॥ अपश्यद्राक्षसपतिंहनूमानतितेजसम् ॥ वेष्टितंमेरुशिखरेसतोयमिवतोयदम् ॥ १४ ॥ सतैःसंपीड्यमानोपिरक्षोभिर्भीमविक्रमैः ॥ विस्मयंपरमंगत्वारक्षोधिपमवैक्षत ॥ १५ ॥ भ्राजमानंततोदृष्ट्वाहनूमान्राक्षसेश्वरम् ॥ मनसाचिंतयामासतेजसातस्यमोहितः ॥ १६ ॥ अहोरूपमहोधैर्यमहोसत्त्वमहोद्युतिः ॥ अहोराक्षसराजस्यसर्वलक्षणयुक्तता ॥ १७ ॥ यद्यधर्मोनबलवान्स्यादयंराक्षसेश्वरः ॥ स्यादयंसुरलोकस्यसशक्रस्यापिरक्षिता ॥ १८ ॥ अस्यक्रूरैर्नृशंसैश्चकर्मभिर्लोककुत्सितैः ॥ सर्वेबिभ्यतिखल्वस्माल्लोकाःसामरदानवाः ॥ १९ ॥ अयंह्युत्सहतेक्रुद्धःकर्तुमेकार्णवंजगत् ॥ इतिचिंतांबहुविधामकरोन्मतिमान्कपिः ॥ दृष्ट्वाराक्षसराजस्यप्रभावममितौजसः ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनपंचाशःसर्गः ॥ ४९ ॥ तमुद्वीक्ष्यमहाबाहुःपिंगाक्षंपुरतःस्थितम् ॥ रोषेणमहताविष्टोरावणोलोकरावणः ॥ १ ॥ शंकाहतात्माद्ध्यौसकपींद्रंतेजसावृतम् ॥ किमेषभगवान्नंदीभवेत्साक्षादिहागतः ॥ २ ॥ येनशप्तोस्मिकैलासेमयाप्रहसितेपुरा ॥ सोयंवानरमूर्तिःस्यात्किंस्विद्बाणोपिवाऽसुरः ॥ ३ ॥ सराजारोषताम्राक्षःप्रहस्तंमंत्रिसत्तमम् ॥ कालयुक्तमुवाचेदंवचोविपुलमर्थवत् ॥ ४ ॥ दुरात्मापृच्छ्यतामेषकुतःकिंवास्यकारणम् ॥ वनभंगेचकोस्यार्थोराक्षसानांचतर्जने ॥ ५ ॥ मत्पुरीमप्रधृष्यांवैगमनेकिंप्रयोजनम् ॥ आयोधनेवाकिंकार्यंपृच्छ्यतामेषदुर्मतिः ॥ ६ ॥

त्वात्तु स्वमजानामपि नाशक ऐवेति भावः ॥ १८ ॥ के न बिभ्यतीति पाठे के न इति पदच्छेदः ॥ १९ ॥ २० ॥ नैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनपंचाशः सर्गः ॥ ४९ ॥ आविष्टः आसीदिति शेषः ॥ १ ॥ तेजसावृतं दृष्ट्वेति शेषः । शंकाहतात्मेत्युक्तां शंकामेवाह नंदी वानरमुख एष प्रमथगणाधिपः ॥ २ ॥ शप्तः मन्मुखसदृशमुखैस्तव नाशो भविष्यतीति शापः । बलिसुतो बाणो वा महेश्वरभक्तत्वान्नंदिना प्रेषित इति शंका ॥ ३ ॥ कालयुक्तं कालोचितम् ॥ ४ ॥ कुत आगत इति शेषः । किं वा कारणं को वास्य प्रेषक इत्यर्थः ॥ ५ ॥ मत्पुरीमुद्दिश्येति शेषः ।

आयोधने किंकरादिभिर्युद्धे । यद्वा मत्पुरीगमने मत्पुरीमाप्तावित्यर्थः । आर्षः षष्ठ्यभावः ॥ ६ ॥ ७ ॥ मोक्ष्यसे बंधनादिति शेषः ॥ ८ ॥ चाररूपं चाराणां प्रच्छन्नवेषत्वाच्छन्नकृतवानररूपम् ॥ ९ ॥ कुत एवं चिन्ता तत्राह नहीति । वानरमितीदमर्थाण्णंतम् ॥ १० ॥ ११ ॥ अथवेति । अथ चेत्यर्थः । यन्निमित्तो यत्प्रयोजनस्तत्कथयस्वेति संबंधः । एवमुक्तः प्रहस्तेनेति शेषः । रक्षोगणेश्वरं प्रहस्तमलक्ष्यीकृत्य रावणमेव तथा कृत्वा ब्रवीदित्युत्तरेणान्वयः ॥ १२ ॥ वरुणस्य वा दूत इति शेषः । धनदेन विष्णुना च न मे सख्यमतस्ताभ्यां चोदितो नास्मि ॥ १३ ॥ एषा वानराकृतिर्मम जातिरेव जन्मकृतैव अतो वानर एवाहमिहागतः । वानरस्यात्रागमने किं प्रयोजनं तत्राह दर्शन इति । राक्षसेंद्रस्य तव दर्शने दर्शननिमित्तमिहागत इत्यर्थः । तदिदं तव दर्शनं दुर्लभं प्रकारांतरेणाशक्यलाभमिति ज्ञात्वा तव दर्शनार्थे वनं विनाशितम् अयं दर्शनोपायो भवत्येवेत्याह । ततः वनभंगाद्धेतोरित्यर्थः ॥ १४ ॥ १५ ॥ इदानीं युद्धप्रयोजनमाह रक्षणार्थमिति । प्रतियुद्धाः मया प्रतिभटतया स्थित्वा कृतयुद्धाः नन्वेवं

रावणस्यवचःश्रुत्वाप्रहस्तोवाक्यमब्रवीत् ॥ समाश्वसिहिभद्रंतेनभीःकार्यात्वयाकपे ॥ ७ ॥ यदितावत्त्वमिंद्रेण प्रेषितोरावणालयम् ॥ तत्त्वमाख्याहिमातेभूद्भयंवानरमोक्ष्यसे ॥ ८ ॥ यदिवैश्रवणस्यत्वं यमस्यवरुणस्यच ॥ चारुरूपमिदंकृत्वा प्रविष्टोनःपुरीमिमाम् ॥ ९ ॥ विष्णुनाप्रेषितोवापि दूतोविजयकांक्षिणा ॥ नहितेवानरंतेजोरूपमात्रंतुवानरम् ॥ १० ॥ तत्त्वतःकथयस्वाद्य ततोवानरमोक्ष्यसे ॥ अनृतंवदतश्चापिदुर्लभंतवजीवितम् ॥ ॥ ११ ॥ अथवायन्निमित्तस्ते प्रवेशोरावणालये ॥ एवमुक्तोहरिवरस्तदा रक्षोगणेश्वरम् ॥ १२ ॥ अब्रवीन्नास्मिशक्रस्ययमस्यवरुणस्यच ॥ धनदेननमेसख्यंविष्णुनानास्मिचोदितः ॥ १३ ॥ जातिरेवममत्वेषावानरोहमिहागतः ॥ दर्शनेराक्षसेंद्रस्यतदिदंदुर्लभंमया ॥ १४ ॥ वनंराक्षसराजस्य दर्शनार्थेविनाशितम् ॥ ततस्तेराक्षसाःप्राप्तावलिनोयुद्धकांक्षिणः ॥ १५ ॥ रक्षणार्थंचदेहस्यप्रतियुद्धामयारणे ॥ अस्त्रपाशैर्नशक्योहंबद्धुंदेवासुरैरपि ॥ १६ ॥ पितामहादेषवरोममापिहिसमागतः ॥ राजानंद्रष्टुकामेनमयास्त्रमनुवर्तितम् ॥ १७ ॥ विमुक्तोप्यहमस्त्रेणराक्षसैस्त्वभिवेदितः ॥ केनचिद्रामकार्येणआगतोस्मितवांतिकम् ॥ १८॥ दूतोहमितिविज्ञायराघवस्यामितौजसः ॥ श्रूयतामेववचनंममपथ्यमिदंप्रभो ॥ १९ ॥ इत्यार्षे श्रीम०वा० आ०सुं०पंचाशःसर्गः ॥५०॥ ॥ तंसमीक्ष्यमहासत्त्वंसत्त्ववान्हरिसत्तमः ॥ वाक्यमर्थवदव्यग्रस्तमुवाचदशाननम् ॥ १ ॥

भाविबंधाद्यपर्यालोच्य कथं युद्धं कृतं तत्राहास्त्रेति । अस्त्रैर्ब्रह्मास्त्रातैः पाशैर्यमपाशांतैः एवं चेतरपाशकथापि दूरापास्तेत्युक्तं देवासुरैर्मिलितैरपीत्यर्थः ॥ १६ ॥ कुतस्तवैवं बलं तत्राह पितामहादिति । तदनुग्रहादित्यर्थः । ममापि न तु केवलं तवैवेत्यर्थः । एष वर इति बलविशेषरूप इत्यर्थः । तर्हि कथं बंधनमुपगतं तत्राह राजानमिति । अस्त्रं ब्रह्मास्त्रम् अनुवर्तितं निवृत्तमप्यनुवर्तितमिव ॥ १७ ॥ तदेवाह विमुक्त इति । विमुक्तोपि सास्त्र इव अभिवेदितः आनीय तव ज्ञापितः । एवं पीडामनुभूय मम दर्शने किं प्रयोजनं तत्राह केनचिदिति । रामकार्येणेति पाठः पांक्तः ॥ १८ ॥ रामस्य तव च कः संबंधस्तत्राह दूत इति । ननु रामदूतेनापि सीतान्वेषणमेव कार्यं एवंप्रयासेन मद्दर्शने किं फलं तत्राह श्रूयतामिति । वचनं संदेशवचनं तत्कथनार्थमयं प्रयास इति भावः ॥ १९ ॥ धैर्यमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचाशः सर्गः ॥ ५० ॥ ॥ अथ सुग्रीवसंदेशकथनव्याजेन सामदंडान्यतरविषयत्वनिश्चयाय न्यायानुसारी न वेति जिज्ञासति

तमित्यादि ॥ १ ॥ भ्राता हरीश इति स्नेहप्रकाशिका लोकोक्तिः कुशलमब्रवीदप्राक्षीदित्यर्थः ॥ २ ॥ क्षमं सुखसंपादकम् ॥ ३ ॥ अथ संदेशं वक्तुमुपोद्घातो राजेति । पितेव बन्धुः रक्षकः इत्यर्थः ॥ ४ ॥ ॥५॥६॥ भ्रष्टा मृतापहृता वेति विशिष्य न ज्ञातमित्यर्थः ॥ ७ ॥ तां मार्गमाणः स रामः ऋष्यमूकं प्राप्तः सुग्रीवेण संगतश्च अनेनैव ज्ञायते नेदं सुग्रीवसंदेशवाक्यम् । तदा हि मया चैव सुसंगत इत्येव वदेत् ॥ ८ ॥ निवेदितुं प्रतिज्ञातमित्यनुकर्षः ॥ ९ ॥ १० ॥ त्वया विज्ञातपूर्वो वालीति रावणं प्रति मर्मोक्तिः तेन रामबलातिशयबोधनम् ॥११॥१२॥१३॥१४॥१५॥ त्वां दिदृक्षुरिहागत इति पाठः । त्वां सुग्रीवभ्रातरं रावणं तस्मिन् दृष्टे सर्वलोकवृत्तांतज्ञः स सीतागतिं वक्ष्यतीति सुग्रीवेणोक्तत्वात्त्वां दिदृक्षुरिहागतः दैवात्पंगूपरि गंगापातवत्तव गृहे भ्रमता मया जानकी दृष्टा ॥ १६ ॥ अतःपरं यद्वक्तव्यं

अहंसुग्रीवसंदेशादिहप्राप्तस्तवांतिके ॥ राक्षसेशहरीशस्त्वांभ्राताकुशलमब्रवीत् ॥ २ ॥ भ्रातुःशृणुसमादेशंसुग्रीवस्यमहात्मनः ॥ धर्मार्थसहितं वाक्यमिहचामुत्रचक्षमम् ॥ ३ ॥ राजादशरथोनामरथकुंजरवाजिमान् ॥ पितेवबंधुर्लोकस्यसुरेश्वरसमद्युतिः ॥ ४ ॥ ज्येष्ठस्तस्यमहाबाहुःपुत्रः प्रियतरःप्रभुः ॥ पितुर्निदेशान्निष्क्रांतःप्रविष्टोदंडकावनम् ॥ ५ ॥ लक्ष्मणेनसहभ्रात्रासीतयासहभार्यया ॥ रामोनाममहातेजाधर्म्यंपंथानमाश्रितः ॥ ॥ ६ ॥ तस्यभार्याजनस्थानेभ्रष्टासीतेतिविश्रुता ॥ वैदेहस्यसुताराज्ञोजनकस्यमहात्मनः ॥ ७ ॥ मार्गमाणस्तुतांदेवींराजपुत्रःसहानुजः ॥ ऋष्य मूकमनुप्राप्तःसुग्रीवेणचसंगतः ॥ ८ ॥ तस्यतेनप्रतिज्ञातंसीतायाःपरिमार्गणम् ॥ सुग्रीवस्यापिरामेणहरिराज्यंनिवेदितुम् ॥ ९ ॥ ततस्तेनमृधे हत्वाराजपुत्रेणवालिनम् ॥ सुग्रीवःस्थापितोराज्येहर्यृक्षाणांगणेश्वरः ॥ १० ॥ त्वयाविज्ञातपूर्वश्चवालीवानरपुंगवः ॥ सतेननिहतःसंख्येशरेणैकेन वानरः ॥ ११ ॥ ससीतामार्गणेव्यग्रःसुग्रीवःसत्यसंगरः ॥ हरीन्संप्रेषयामासदिशःसर्वाहरीश्वरः ॥ १२ ॥ तांहरीणांसहस्राणिशतानिनियुतानिच ॥ दिक्षुसर्वासुमार्गंतेह्यधश्चोपरिचांबरे ॥ १३ ॥ वैनतेयसमाःकेचित्केचित्तत्रानिलोपमाः ॥ असंगगतयःशीघ्राहरिवीरामहाबलाः ॥ १४ ॥ अहंतुहनु मान्नाममारुतस्यौरसःसुतः ॥ सीतायास्तुकृतेतूर्णंशतयोजनमायतम् ॥१५॥ समुद्रंलंघयित्वैवत्वांदिदृक्षुरिहागतः ॥ भ्रमताचमयादृष्टागृहेतेजनकात्म जा ॥१६॥ तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः ॥ परदारान्महाप्राज्ञनोपरोद्धुंत्वमर्हसि ॥१७॥ नहिधर्मविरुद्धेषुबह्वपायेषुकर्मसु ॥ मूलघातिषुसज्जंतेबु द्धिमंतोभवद्विधाः ॥१८॥ कश्चलक्ष्मणमुक्तानांरामकोपानुवर्तिनाम् ॥ शराणामग्रतःस्थातुंशक्तोदेवासुरेष्वपि ॥ १९ ॥ नचापित्रिषुलोकेषुराजन्विद्य तकश्चन ॥ राघवस्यव्यलीकंयःकृत्वासुखमवाप्नुयात् ॥२०॥ तत्त्रिकालहितंवाक्यंधर्म्यमर्थानुयायिच ॥ मन्यस्वनरशार्दूलेजानकीप्रतिदीयताम् ॥२१॥

मित्रपक्षस्य तद्ददामीत्याह तद्भवानिति । दृष्टधर्मार्थः धर्मार्थतत्त्वसाक्षात्कारवान् तपःकृतपरिग्रहः तपोबलजातधनधान्यादिपरिग्रहः यत एतादृशस्त्वमतः परदारानुपरोद्धुं नार्हसि । दृष्टधर्मार्थतत्त्वत्वादेव महाप्राज्ञत्वम् ॥ १७ ॥ नन्वनेन मम का हानिस्तत्राह नहीति । धर्मविरुद्धत्वादेव बह्वपायेषु बह्वपार्थकारणेषु । ननु सर्वापायप्रतीकारसमर्थस्य किमनया बिभीषिकयेत्यत आह मूलघातिषु समूलं नष्टस्य कथं प्रतीकारसामर्थ्यमिति भावः ॥ १८ ॥ मूलघातित्वमेव प्रपंचयति कश्चेति ॥ १९ ॥ विद्येत विद्यते व्यलीकमपराधम् ॥ २० ॥ तत्तस्मात्त्रिकालहितं सीतादानेन पूर्वापराधनाशात् वर्तमानैश्वर्याविरोधात्

भाविशुभहेतुत्वाच्च त्रिकालहितत्वम् अर्थानुयायिनीति शास्त्रानुगतं वाक्यं मयोच्यमानम् । नरशार्दूलेति पांक्तः पाठ इति कतकः । पुरुषश्रेष्ठ इत्यर्थः । तदेव वाक्यमाह जानकी प्रतिदीयतामिति ॥ २१ ॥ अत्र सीता नास्तीत्यपह्नवस्त्वशक्य इत्याह दृष्टा हीति । यतस्त्वद्गृहे मया दृष्टाऽतोपलापोऽशक्य इति भावः । किं च यद्वा नरकोटिभिरपि दुर्लभं सीतादर्शनं तन्मया लब्धम् । अतः शेषं शिष्टं यदुत्तरं कर्म सीतानयनरूपं तत्र तत्साधने राघवः स एव निमित्तं कारणम् । मत्कृत्यं त्वन्विष्य निवेदनमात्रमिति भावः ॥ २२ ॥ पुना रावणहितमाह लक्षितेति । पन्नगीमिव स्वनाशिकां यां न जानासि सा मया शोकपरायणा लक्षिता । तदीयशोकाग्निनैव पन्नगीविषाग्निनेव त्वन्नगरं दग्धं भविष्यतीति भावः ॥ २३ ॥ ओजसा आहारशक्तिबलेन ॥ २४ ॥ तपःसंतापेन तपःकरणेन यो लब्धो धर्मपरिग्रहो धर्मसाध्यः परिग्रह ऐश्वर्यम् आत्मप्राणपरिग्रहश्च आत्मप्राणानां चिरकालं परिग्रह आयुर्वृद्धिश्च स परदारपरिग्रहरूपपरमाधर्मेण नाशयितुं न न्याय्यः ॥ २५ ॥ अपि च यां देवाद्यवध्यतां मन्यसे तत्रापि तपोजन्यसुकृतमेव कारणमतो धर्महानिर्न कार्येति वदति अवध्यतामिति । तत्रापि अयं महानयमेव तपोमयधर्मस्कंध एव हेतुरित्यर्थः ॥ २६ ॥ किं च देवाद्यवध्यस्यापि प्राणत्राणं दुष्करमित्याह सुग्रीव इति । यस्माद्वरग्रहणवेलायां त्वच्छंकितहंतृभ्योऽन्य एवायं रामश्चातस्तस्मात् सुग्रीवात् ते प्राणत्राणे सामर्थ्यं नास्तीति भावः ॥ २७ ॥ ननु तपोबलान्मे सर्वतो जयो भविष्यतीत्यत आह नत्विति । यः पुमानधर्मफलसं

दृष्टाहीयंमयादेवीलब्धंयदिहदुर्लभम् ॥ उत्तरंकर्मयच्छेषंनिमित्तंतत्रराघवः ॥ २२ ॥ लक्षितेयंमयासीतातथाशोकपरायणा ॥ गृहेयांनाभिजानासिपंचास्यामिवपन्नगीम् ॥ २३ ॥ नेयंजरयितुंशक्यासासुरैरमरैरपि ॥ विषसंसृष्टमत्यर्थंभुक्तमन्नमिवोजसा ॥२४॥ तपःसंतापलब्धस्तेसोयंधर्मपरिग्रहः ॥नसनाशयितुंन्याय्यआत्मप्राणपरिग्रहः ॥ २५ ॥ अवध्यतांतपोभिर्याभवान्समनुपश्यति ॥ आत्मनःसासुरैर्देवैर्हेतुस्तत्राप्ययंमहान् ॥ २६ ॥ सुग्रीवोनचदेवोयंनयक्षोनचराक्षसः ॥ मानुषोराघवोराजन्सुग्रीवश्चहरीश्वरः ॥ तस्मात्प्राणपरित्राणंकथंराजन्करिष्यसि ॥ २७ ॥ नतुधर्मोपसंहारमधर्मफलसंहितम् ॥ तदेवफलमन्वेतिधर्मश्चाधर्मनाशनः ॥ २८ ॥ प्राप्तंधर्मफलंतावद्भवतानात्रसंशयः ॥ फलमस्याप्यधर्मस्यक्षिप्रमेवप्रपत्स्यसे ॥ २९ ॥ जनस्थानवधंबुद्ध्वावालिनश्चवधंतथा ॥ रामसुग्रीवसख्यंचबुद्ध्यस्वहितमात्मनः ॥ ३० ॥ कामंखल्वहमप्येकःसवाजिरथकुंजराम् ॥ लंकांनाशयितुंशक्तस्तस्यैषतुननिश्चयः ॥ ३१ ॥

हितबलवत्तया फलोन्मुखाधर्मसंबद्धस्तं पुरुषं धर्मोपसंहारमपि धर्मोपसंग्रहवंतमपि नत्वन्वेति धर्मफलमिति शेषः । किं तु तदेवफलं फलोन्मुखाधर्ममेवान्वेति । ननु धर्मबलाधर्मनाशो भविष्यतीत्यत्राह धर्मश्चेति । उत्कटोऽधर्मोत्तरभावी धर्मः अधर्मस्य नाशनः चादुत्कटाधर्मो धर्मनाशकः एवं चास्याधर्मस्य त्वत्कृतसकलधर्मापेक्षयोत्कटत्वादुत्तरकालत्वाच्चायमेव त्वया प्राक्संचितस्य सकलधर्मस्य नाशक इति भावः । केचित्तु धर्मोपसंहारमधर्मफलसंहितामिति पाठः । धर्मोपसंहारं धर्ममुपसंह्रियतेनेनेति धर्मफलं सुखं तदधर्मफलसांहितं न संभवति अधर्मफलेन दुःखेन सहानुभवं न भवति तत्तस्मादेव फलमन्वेति धर्मो धर्मफलं सुखमेवान्वेति एवमधर्मो दुःखं दुःखरूपं फलमेवान्वेति । अग्रे धर्मो नाधर्मनाशन इति पाठः । पूर्वकृतो धर्मोऽधर्मस्येदानींकृतस्य न नाशनश्चादधर्मोपि धर्मनाशनो नेत्यर्थ इति वदंति । तत्रार्थसामंजस्यं व्युत्पन्नैर्विभाव्यम् ॥ २८ ॥ ननु किं मे धर्मो व्यर्थ एव नेत्याह प्राप्तमिति । तावत्प्रथमम् इतः पूर्वमिति यावत् । अस्य परदारहरणरूपस्य क्षिप्रमेव प्रपत्स्यसे अत्युत्कटैः पुण्यपापैरिति न्यायादिति भावः ॥ २९ ॥ अतः स्वहितं चिंतयेत्याह जनस्थानेति । सख्यं च बुद्ध्वा आत्मनो हितं बुद्ध्यस्वेत्यन्वयः ॥ ३० ॥ नन्वेवं कटुवादिनस्तव को रक्षक इति चेत्तत्राह काममिति । यथेष्टमित्यर्थः । तर्हि कुतस्तन्नाशं न करोषीत्य

त्राह तस्य यस्याहं दूतस्तस्य रामस्य । एषः मत्कर्तृकलंकानाशविषयो निश्चयो न स्वाम्याज्ञां विना तदनुष्ठानमशक्यमिति भावः ॥ ३१ ॥ तदीयनिश्चयाभावं स्पष्टयति रामेणेति । स्वामिना स्वकर्तव्यत्वेन प्रतिज्ञातस्यार्थस्य सेवकेनानुष्ठानमयुक्तं कर्तुमिति भावः ॥ ३२ ॥ उक्तमेवार्थं दाढर्याय पुनरप्याह अपकुर्वन्निति ॥ ३३ ॥ कालरात्री महाप्रलयकर्त्री भगवतः शक्तिः ॥ ३४ ॥ विग्रहः शरीरं स्कंधाव सक्तेन स्कंधसंबद्धकरणेन आत्मनि आत्मत्राणे ॥३५॥ दह्यमानाम् । वर्तमानसमीपे लट् । प्रतोलिका वीथिः ॥३६॥३७॥ विशेषतः निष्कृष्योच्यमानं वचनमित्यर्थः । रामदासस्येत्यादिविशेषणत्रयेण राममहि मेवत्तृत्वं स्वस्य परोक्तवाक्यानुवादपूर्वं हितोपदेशाधिकारं नररक्षोतिरिक्तजात्यंतरत्वेनापक्षपाततो न्याय्यवक्तृत्वं च सूचितम् ॥ ३८ ॥ सभूतान्सर्वजातीयप्राणिसहितान् अनेन जगत्स्थित्युत्पत्तिसंहारकर्तृत्वं बोधि

रामेणहिप्रतिज्ञातंहर्यृक्षगणसन्निधौ ॥ उत्सादनममित्राणांसीतायैस्तुप्रधर्षिता ॥ ३२ ॥ अपकुर्वन्हिरामस्यसाक्षादपिपुरंदरः ॥ नसुखंप्राप्नुयादन्यः किंपुनस्त्वद्विधोजनः ॥ ३३ ॥ यांसीतेत्यभिजानासियेयंतिष्ठतितेगृहे ॥ कालरात्रीतितांविद्धिसर्वलंकाविनाशिनीम् ॥ ३४ ॥ तदलंकालपाशे नसीताविग्रहरूपिणा ॥ स्वयंस्कंधावसक्तेनक्षेममात्मनिचिंत्यताम् ॥ ३५ ॥ सीतायास्तेजसादग्धांरामकोपप्रदीपिताम् ॥ दह्यमानामिमांपश्यपुरीं साट्टप्रतोलिकाम् ॥ ३६ ॥ स्वानिमित्राणिमंत्रींश्चज्ञातीन्भ्रातॄन्सुतान्हितान् ॥भोगान्दारांश्चलंकांचमाविनाशमुपानय ॥ ३७ ॥ सत्यंराक्षसराजें द्रशृणुष्ववचनंमम ॥ रामदासस्यदूतस्यवानरस्यविशेषतः ॥ ३८ ॥ सर्वांल्लोकान्सुसंहृत्यसभूतान्सचराचरान् ॥ पुनरेवतथास्रष्टुंशक्तोरामोमहा यशाः ॥ ३९ ॥ देवासुरनरेंद्रेषुयक्षरक्षोरगेषुच ॥ विद्याधरेषुनागेषुगंधर्वेषुमृगेषुच ॥ ४० ॥ सिद्धेषुकिन्नरेंद्रेषुपतत्रिषुचसर्वतः ॥ सर्वत्रसर्वभूतेषुसर्व कालेषुनास्तिसः ॥ ४१ ॥ योरामंप्रतियुध्येतविष्णुतुल्यपराक्रमम् ॥ सर्वलोकेश्वरस्येहकृत्वाविप्रियमीदृशम् ॥ रामस्यराजसिंहस्यदुर्लभंतवजी वितम् ॥ ४२ ॥ देवाश्चदैत्याश्चनिशाचरेंद्रगंधर्वविद्याधरनागयक्षाः ॥ रामस्यलोकत्रयनायकस्यस्थातुंनशक्ताःसमरेषुसर्वे ॥ ४३ ॥ ब्रह्मास्वयंभू श्चतुराननोवारुद्रस्त्रिनेत्रस्त्रिपुरांतकोवा ॥ इंद्रोमहेंद्रःसुरनायकोवास्थातुंनशक्तायुधिराघवस्य ॥ ४४ ॥ ससौष्ठवोपेतमदीनवादिनःकपेर्निशम्याप्र तिमोऽप्रियंवचः ॥ दशाननःकोपविवृत्तलोचनःसमादिशत्तस्यवधंमहाकपेः ॥ ४५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येसुंदरकांडे एकपंचाशःसर्गः ॥ ५१ ॥ सतस्यवचनंश्रुत्वावानरस्यमहात्मनः ॥ आज्ञापयद्वधंतस्यरावणःक्रोधमूर्छितः ॥ १ ॥ वधेतस्यसमाज्ञप्तेरावणेनदुरा त्मना ॥ निवेदितवतोदौत्यंनानुमेनेविभीषणः ॥ २ ॥

तम् ॥ ३९ ॥ ४० ॥ सर्वत्र देशे ॥ ४१ ॥ ४२ ॥ उक्तमेवार्थं दाढर्याय पुनराह देवाश्चेति ॥ ४३ ॥ रामद्रुहो देवताभिरपि न त्राणमित्याह ब्रह्मेत्यादि । ब्रह्मा स्वयंभूरित्यनेन हिरण्यगर्भः सर्वादिरुक्तः चतुरान नस्तनःप्रातस्त्रष्टृत्वाधिकारः त्रिनेत्रस्त्रिपुरांतको रुद्रो वेत्यनेन संहाराधिकारी सुरनायको महेंद्रो महैश्वर्यवान् इंद्र उपेंद्रोः विष्णुःपालनाधिकारी एवं त्रिमूर्तिभिरपि रक्षा न सिद्ध्यति रामस्यैव त्रिमूर्तित्वात्॥ ४४॥ ४५॥मेर्वमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकपंचाशः सर्गः ॥ ५१ ॥ स इति ॥ १ ॥ दौत्यं स्वीयं दूतकर्म यथावन्निवेदितवतो हनूमतोऽवध्यत्वं मत्वा रावणाज्ञप्तं वधं

नानुमेने ॥ २ ॥ तत्र कार्यं दूतवधरूपं कार्यविधौ उचितकृत्यसंपादने स्थितः निश्चितबुद्धिरित्यर्थः ॥ ३ ॥ शत्रुजितं च तमग्रजं च ॥ ४ ॥ मतिज्ञां त्यज रोषं क्षमस्वेत्यन्वयः । परावरज्ञाः सर्वकार्यविषयकोत्कर्षापकर्षज्ञाः सन्तो दूतस्य वधं न कुर्वंति ॥ ५ ॥ लोकवृत्तेर्लौकव्यवहारस्य प्रमापणं वधः ॥ ६ ॥ कृतज्ञत्वेनापकारिण्येव वधो न्याय्यो न तादृशेस्मिन् ॥ ७ ॥ त्वादृश इति किन्नंतवहुवचनम् । शास्त्रविपश्चित्त्वं शास्त्रपांडित्यसंपादनश्रमः केवलं श्रम एव व्यर्थप्रयास एवेत्यर्थः ॥ ८ ॥ दूतदंडः दूते विहितो दंडः ॥ ९ ॥ १० ॥ पापकारिणं राजद्रोहिणम् ॥ ११ ॥ अधर्मस्य मूलम् अधर्ममूलम् । दोषोऽपकीर्तिरूपः

तंरक्षोधिपतिंक्रुद्धंतच्चकार्यमुपस्थितम् ॥ विदित्वाचिंतयामासकार्यंकार्यविधौस्थितः ॥ ३ ॥ निश्चितार्थस्ततःसाम्नापूज्यंशत्रुजिदग्रजम् ॥ उवाच हितमत्यर्थंवाक्यंवाक्यविशारदः ॥ ४ ॥ क्षमस्वरोषंत्यजराक्षसेंद्रप्रसीदमेवाक्यमिदंशृणुष्व ॥ वधंनकुर्वंतिपरावरज्ञादूतस्यसंतोवसुधाधिपेंद्राः ॥ ॥ ५ ॥ राजन्धर्मविरुद्धंचलोकवृत्तेश्चगर्हितम् ॥ तवचासदृशंवीरकपेरस्यप्रमापणम् ॥ ६ ॥ धर्मज्ञश्चकृतज्ञश्चराजधर्मविशारदः ॥ परावरज्ञो भूतानांत्वमेवपरमार्थवित् ॥ ७ ॥ गृह्यंतेयदिरोषेणत्वादृशोपिविचक्षणाः ॥ ततःशास्त्रविपश्चित्त्वंश्रमएवहिकेवलम् ॥ ८ ॥ तस्मात्प्रसीदशत्रुघ्नराक्षसेंद्रदुरासद ॥ युक्तायुक्तंविनिश्चित्यदूतदंडोविधीयताम् ॥ ९ ॥ विभीषणवचःश्रुत्वारावणोराक्षसेश्वरः ॥ कोपेनमहताविष्टोवाक्यमुत्तरमब्रवीत् ॥ १० ॥ नपापानांवधेपापंविद्यतेशत्रुसूदन ॥ तस्मादिमंवधिष्यामिवानरंपापकारिणम् ॥ ११ ॥ अधर्ममूलंबहुदोषयुक्तमनार्यजुष्टंवचनंनिशम्य ॥ उवाचवाक्यंपरमार्थतत्त्वंविभीषणोबुद्धिमतांवरिष्ठः ॥ १२ ॥ प्रसीदलंकेश्वरराक्षसेंद्रधर्मार्थतत्त्वंवचनंशृणुष्व ॥ दूतानवध्याःसमयेषुराजन्सर्वेषुसर्वत्रवदंतिसंतः ॥ १३ ॥ असंशयंशत्रुरयंप्रवृद्धःकृतंह्यनेनाप्रियमप्रमेयम् ॥ नदूतवध्यांप्रवदंतिसंतोदूतस्यदृष्टाबहवोहिदंडाः ॥१४॥ वैरूप्यमंगेषुकशाभिघातोमौंड्यंतथालक्षणसन्निपातः ॥ एतान्हिदूतेप्रवदंतिदंडान्वधस्तुदूतस्यननःश्रुतोस्ति ॥ १५ ॥ कथंचधर्मार्थविनीतबुद्धिःपरावरप्रत्ययनिश्चितार्थः ॥ भवद्विधःकोपवशेहितिष्ठेत्कोपंनगच्छंतिहिसत्त्ववंतः ॥ १६ ॥ नधर्मवादेनचलोकवृत्तेनशास्त्रबुद्धिग्रहणेषुवापि ॥ विद्येतकश्चित्तववीरतुल्यस्त्वंह्युत्तमःसर्वसुरासुराणाम् ॥ १७ ॥ "पराक्रमोत्साहमनस्विनांचसुरासुराणामपिदुर्जयेन ॥ त्वयाप्रमेयेणसुरेंद्रसंघाजिताश्चयुद्धेष्वसकृन्नरेंद्राः ॥ १ ॥ इत्थंविधस्यामरदैत्यशत्रोःशूरस्यवीरस्यतवाजितस्य ॥ कुर्वंतिवीरामनसाप्यलीकंप्राणैर्विमुक्तानतुभोःपुराते ॥ २ ॥ "



॥ १२ ॥ समयेषु स्वस्वामिनियोगानुष्ठानकालेषु ॥ १३ ॥ १४ ॥ मौंड्यं मुंडनम् । लक्षणसान्निपातः दूतयोग्यांकनसंभूत इति तीर्थः । वैरूप्यादीनामेकैकं वा तथा लक्षणानां सन्निपातः सर्वानुष्ठानं वेत्यर्थःइत्यन्ये । नोऽस्माकं श्रुतोपि नास्ति दर्शनं तु दूरापास्तमिति भावः ॥ १५ ॥ परावरप्रत्ययनिश्चितार्थः उत्कर्षापकर्षज्ञानेन निश्चितकार्यः ॥ १६ ॥ किंच त्वं नोपदेश्योऽस्माकमित्याह नेति । शास्त्राणां बुद्ध्या निश्चयात्मिक

या ग्रहणेध्विरत्यर्थः ॥ १७ ॥ एतदुत्तरं श्लोकद्वयं प्रक्षिप्तमिति कतकः । न चाप्यस्य कपेरिति ॥ १८ ॥ समर्पितः प्रेषितः ॥ १९ ॥ नान्यं पश्यामि योत्रागच्छेदित्यर्थः ॥२०॥२१॥ नन्वस्मिन्हतेऽन्यस्याना गमने च का मम क्षतिर्विपरीतमिष्टमेवेदं तत्राह अस्मिन् विनष्टे इति । तौ राजपुत्रौ यो योद्धा उद्योजयेत्तं न पश्यामि । ननु तदुद्योगाभावोपि ममेष्ट एव नेत्याह युद्धप्रियेति । संबोधनेन रणपरा क्रमविनयकीर्ती तवेष्टे किल ते उभे अप्येतद्विनाशे नश्यत इत्याशयः । रावणस्य रजःप्रकृतित्वात्तत्प्रकृत्यनुसारेण युद्धादिव्यापारेण प्रलोभनम् । तत्प्रीत्यर्थमेव दुर्विनीतावित्याद्युक्तिः ॥ २२ ॥ हे नैर्ऋतानां मनोनंदन सुरासुराणामपि दुर्जयेन त्वया पराक्रमे य उत्साहस्तत्र प्रशस्तमनोवतां नैर्ऋतानां मनः युद्धाय प्रवृत्तं निर्नाशयितुं न युक्तम् । नैर्ऋतानामित्यत्र मन इत्यत्र च तंत्रम् ।

नचाप्यस्यकपेर्घातेकंचित्पश्याम्यहंगुणम्॥तेष्वयंपात्यतांदंडोयैरयंप्रेषितःकपिः॥१८॥साधुर्वायदिवाऽसाधुःपरैरेषसमर्पितः॥ ब्रुवन्परार्थंपरवान्नदूतो वधमर्हति॥१९॥अपिचास्मिन्हतेनान्यंराजन्पश्यामिखेचरम्॥तस्मान्नास्यवधेयत्नःकार्यःपरपुरंजय॥भवान्सेंद्रेषुदेवेषुयत्नमास्थातुमर्हति ॥२०॥ अस्मिन्विनष्टेनहिभूतमन्यंपश्यामियस्तौनरराजपुत्रौ ॥ युद्धाययुद्धप्रियदुर्विनीतावुद्योजयेद्दैभवताविरुद्धौ॥२१॥पराक्रमोत्साहमनस्विनांचसुरासुराणामपिदुर्जयेन ॥ त्वयामनोनंदननैर्ऋतानांयुद्धायनिर्नाशयितुंनयुक्तम् ॥ २२ ॥ हिताश्चशूराश्चसमाहिताश्चकुलेषुजाताश्चमहागुणेषु ॥ मनस्विनः शस्त्रभृतांवरिष्ठाःकोपप्रशस्ताःसुभृताश्चयोधाः ॥ २३ ॥ तदेकदेशेनबलस्यतावत्केचित्तवादेशकृतोद्ययांतु ॥ तौराजपुत्रावुपगृह्यमूढौपरेषुतेभावयितुंप्रभावम् ॥ २४ ॥ निशाचराणामधिपोनुजस्यविभीषणस्योत्तमवाक्यनिष्ठम् ॥ जग्राहबुद्ध्यासुरलोकशत्रुर्महाबलोराक्षसराजमुख्यः ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे द्विपंचाशःसर्गः ॥ ५२ ॥ तस्यतद्वचनंश्रुत्वादशग्रीवोमहात्मनः ॥ देशकालहितंवाक्यंभ्रातुरुत्तरमब्रवीत् ॥ १ ॥ सम्यगुक्तंहिभवतादूतवध्याविगर्हिता ॥ अवश्यंतुवधायान्यःक्रियतामस्यनिग्रहः ॥ २ ॥ कपीनांकिललांगूलमिष्टंभवतिभूषणम् ॥ तदस्यदीप्यतांशीघ्रंतेनदग्धेनगच्छतु ॥ ३ ॥ ततःपश्यंत्वमुंदीनमंगवैरूप्यकर्शितम् ॥ सुमित्रज्ञातयःसर्वेबांधवाःससुहृज्जनाः ॥ ४ ॥

यद्वा तादृशानां नैर्ऋतानां मनोनंदन तादृशेन त्वया युद्धापत्तिर्युद्धागमो नाशयितुं न युक्तमित्यर्थः ॥ २३ ॥ ननु युद्धे कदाचिद्विपरीतमपि संभाव्येत तत्राह हिताश्चेति । समाहिताः दानादिभिर्वशीकृताः सुभृताः सम्यक् पालिताः तादृशभृत्यवतो जय एव भावीति भावः ॥ २४ ॥ तत्तस्मादुपगृह्य आयांत्विति शेषः । परेषु ते प्रभावं भावयितुं प्रकाशयितुं युक्तमिति शेषः ॥ २५ ॥ उत्तमवाक्यनिष्ठं तत्प्रतिपाद्यमर्थतत्त्वं जग्राह ॥ २६ ॥ तैरंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये सुंदरकांडे द्विपंचाशः सर्गः ॥ ॥ ५२ ॥ तस्य विभीषणस्य ॥१॥ दूतवध्या दूतवधः आर्षमिदं साधु ॥२॥ दग्धेन दाहकृतेनोपलक्षितो गच्छतु स्वस्वामिसमीपमिति शेषः ॥३॥ ततः स्वीयसमीपगमनानंतरं सुमित्राणि समसुखदुःखा ज्ञातयो भ्रात्रादयः बान्धवाः

संबंधिनः सुहृज्जनाः स्निग्धजनास्तत्सहिता बांधवा इत्यर्थः ॥४॥ अथ रावणः स्वपुरदुर्गमहाबलमहैश्वर्याणि परेभ्यः प्रकाशयितुं सर्वपुरपरावर्तनं दीप्तपुच्छस्याज्ञापयदित्याह आज्ञापयदिति । परिणीयतामित्याज्ञापयदिति योजना ॥ ५ ॥ वेष्टंते अवेष्टयंतेत्यर्थः ॥ ६ ॥ शुष्कमिति आरण्यका यथा शुष्कमिंधनमासाद्य हुताशनमुत्पादयंति तथा जीर्णपटवेष्टितलांगूलं तैलेन परिषिच्य तत्र तेऽग्निमुपपादयन् उदपादयन्नित्यर्थो इति कतकः । हुताशन इति पाठे वृद्धौ दृष्टांतोयम् । उपपादयन्नित्यस्य समयोजयन्नित्यर्थ इत्यन्ये । तान् बद्धा नेतॄन् ॥ ७ ॥ ८ ॥ संगतैर्मिलितै राक्षसैः स भूयो निबद्ध इति शेषः ॥ ९ ॥ अथ बंधसंहारशक्तावपि स नोचित इत्यचिंतयदित्याह कृतवानिति ॥ १० ॥ तां मतिमभिनयति काममिति । निबद्धस्यापि निबद्धवदवस्थितस्यापि मे न शक्ताः सर्वथा बंधनादाविति शेषः । तदेव समर्थयति छित्त्वेति॥११॥तर्हि कुतो न हन्यंते तत्राह यदीति। भर्तू रामस्य हितार्थाय हितनिमित्तं चरंतं मां भर्तू रावणस्य शासनाद्यदि ते मां निबध्नंते निबध्नं तु केवलम् । नतु मे निष्कृतिः कृता मया कृतस्य प्रतिक्रिया तु न कृता ॥१२॥ यदि तां वधरूपां चिकीर्षेयुस्तदा सर्वान्हनिष्याम्येवेत्याह सर्वेषामिति । यदि पर्याप्तस्तर्हि क्रियतां शत्रुवधस्तत्राह रामस्येति । प्रीत्यर्थं सर्वराक्षसवधजप्रीत्यविघ्नार्थम् ईदृशबंधनादिकम् ॥१३॥

आज्ञापयद्राक्षसेंद्रः पुरं सर्वं स सत्वरम् ॥ लांगूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥५॥ तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ॥ वेष्टंते तस्य लांगूलं जीर्णैः कार्पासिकैः पटैः ॥६॥ संवेष्ट्यमाने लांगूले व्यवर्धत महाकपिः ॥ शुष्कमिंधनमासाद्य वनेष्विव हुताशनः ॥७॥ तैलेन परिषिच्याथ तेऽग्निं तत्रोपपादयन् ॥ लांगूलेन प्रदीप्तेन राक्षसांस्तानताडयत् ॥ ८॥ रोषामर्षपरीतात्मा बालसूर्यसमाननः ॥ स भूयः संगतैः क्रूरै राक्षसैर्हरिपुंगवः ॥ ९ ॥ सहस्त्रीबालवृद्धाश्च जग्मुः प्रीतिं निशाचराः ॥ निबद्धः कृतवान्वीरस्तत्कालसदृशीं मतिम् ॥ १० ॥ कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः ॥ छित्त्वा पाशान्समुत्पत्य हन्यामहमिमान्पुनः ॥ ११ ॥ यदि भर्तृहितार्थाय चरंतं भर्तृशासनात् ॥ निबध्नंते दुरात्मानो न तु मे निष्कृतिः कृता ॥ १२॥ सर्वेषामेव पर्याप्तो राक्षसानामहं युधि ॥ किंतु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम् ॥ १३ ॥ लंका चारयितव्या मे पुनरेव भवेदिति ॥ रात्रौ न हि सुदृष्टा मे दुर्गकर्मविधानतः ॥ १४ ॥ अवश्यमेव द्रष्टव्या मया लंका निशाक्षये ॥ कामं बध्नंतु मे भूयः पुच्छस्योद्दीपनेन च ॥ १५ ॥

फलांतरार्थमपि सोढव्यमेवेत्याह लंकेति । एतै रावणाज्ञया पुनरेव सकला लंका चारयितव्या चारणेन दर्शयितव्याऽतो विषहिष्ये । ननु दृष्टायाः किं पुनर्दर्शनेन तत्राह रात्राविति । दुर्गकर्मविधानतः दुर्गस्य दुर्गमत्वरूपकर्मविधानाद्धेतोर्दुर्गांशे इति शेषः ॥ १४ ॥ निशाक्षये इत्यनेन सीतासंभाषणार्थं कतिपयदिनवासो गम्यते । तथाहि फाल्गुने रावणेन सीतापहारः । आश्विनशुक्लसमाप्तौ हनूमत्प्रेरणया पक्षावधिदानेन वानरान्प्रति दूतप्रेषणम् । ततः कार्तिकशुक्लप्रतिपदि अन्वेषणार्थं वानरप्रस्थानम् । मार्गशुक्लदशम्यां संपातिदर्शनम् । तदा सुग्रीवदत्तमासावधेर्गतत्वस्य वानरैरुक्तिः । अग्रे एकादश्यां हनूमतो लंकागमनम् । तद्रात्रिशेषे सीतादर्शनम् । ततो द्वादश्यां दिने स्थित्वा रात्रौ सीतायाः सम्यग्दर्शनम् । तद्रात्रिशेषे तत्र रावणागमनं तत्र रावणेन मासान् द्वादश भामिनीति स्वदत्तावधौ मासद्वयावशेषवचने कतिपयदिनाधिक्यं तु मासत्वानवच्छिन्नत्वेनाल्पांतरत्वान्न विवक्षितम् । ततस्त्रयोदश्यां प्रातः सीतया सह कथालापः । तद्दिन एवाशोकवनिकाभंगादि । चतुर्दश्यामक्षांतवधो लंकादाहश्च । पूर्णिमायां वा । पूर्वं वासंतिकवृक्षाणां पुष्पितत्वोक्तिस्तु तद्वर्षे क्षयमासेनोपपादिता उत्पातेन च । लक्ष्मणस्य सुग्रीवनिकटे प्रेषणसमये रामेण मासचतुष्टयरूपकृता वधेरपगमोक्तिस्तु प्रागुपपादितरहस्येति दिक् । पुच्छस्योद्दीपनेन

चेत्यस्योत्तरश्लोकेनान्वयः ॥ १५ ॥ मनसः श्रमो मनःखेदो न मेस्ति इति चिंतयामासेत्यन्वयः । तत एवं तस्य चिंतानंतरमित्यर्थः ॥ १६ ॥ स्वकर्मभिः राजद्रोहिणो दुष्टस्यैवं दंड इत्येवमादि भिर्घोषयंतः पूर्ववृत्तांतस्य सर्वान्प्रति प्रकटं प्रतिपादनं घोषणम् ॥ १७ ॥ १८ ॥ चारयामास । स्वार्थे णिच् । चरणेन ददर्शेत्यर्थः ॥ १९ ॥ चत्वरान् द्वारसमीपे बहिर्बद्धान् गृहैः संबाधाः निबिडाः शृंगाटकानि चतुष्पथान् ॥२०॥ उपरथ्याः स्वल्पवीथ्यः । गृहांतरान् गृहद्वयमध्यभागान् । चतुष्केषु चतुष्पथेषु ॥२१॥ चारीक इति पाठेपि चार इत्येवार्थः। आर्षं साधुत्वं चारशब्दात्स्वार्थे आर्ष ईकः ॥२२॥ तस्य हनूमतो लांगूलाग्रे दीप्यमाने तदप्रियं देव्याः शंसुः शशंसुः ॥२३॥ परिणीयते परितोपनीयते आत्मापहरणोपमं तादृग्दुःखजनकम् ॥ २४ ॥ उपागमत् ध्यानेनोपासितवती । यद्वा तत्र समीपे ज्वलमान मग्निमुपासितवती ॥ २५ ॥ प्रयता शुद्धिमती ॥ २६ ॥ एकपत्नीत्वं पातिव्रत्यम् । शीतो भव । हुताशनेति शेषः । अस्याः सीताछायात्वेति स्वस्मिंस्तदभेदबुद्धिसत्त्वान्नैतदुक्त्यसंगतिः । ततः सीतोपासनानंतरम् ।

पीडांकुर्वंतिरक्षांसिनमेस्तिमनसःश्रमः ॥ ततस्तेसंवृताकारंसत्त्ववंतंमहाकपिम् ॥ १६ ॥ परिगृह्यययुर्हृष्टाराक्षसाःकपिकुंजरम् ॥ शंखभेरीनिनादै श्र्घोषयंतःस्वकर्मभिः ॥ १७ ॥ राक्षसाःक्रूरकर्माणश्चारयंतिस्मतांपुरीम् ॥ अन्वीयमानोरक्षोभिर्ययौसुखमरिंदमः ॥ १८ ॥ हनूमांश्चारयामासराक्ष सानांमहापुरीम् ॥यथापश्यद्विमानानिविचित्राणिमहाकपिः॥१९॥ संवृतान्भूमिभागांश्चसुविभक्तांश्चचत्वरान् ॥ रथ्याश्चगृहसंबाधाःकपिःशृंगाटका निच ॥२०॥ तथारथ्योपरथ्याश्चतथैवचगृहांतरान् ॥ चत्वरेषुचतुष्केषुराजमार्गेतथैवच ॥ २१ ॥ घोषयंतिकपिंसर्वेचारइत्येवराक्षसाः ॥ दीप्यमाने ततस्तस्यलांगूलाग्रेहनूमतः ॥२२॥ राक्षस्यस्ताविरूपाक्ष्यःशंसुर्देव्यास्तदप्रियम् ॥ यस्त्वयाकृतसंवादःसीतेताम्रमुखःकपिः॥२३॥ लांगूलेनप्रदीप्ते नसएषपरिणीयते ॥ श्रुत्वातद्वचनंक्रूरमात्मापहरणोपमम् ॥२४॥ वैदेहीशोकसंतप्ताहुताशनमुपागमत् ॥ मंगलाभिमुखीतस्यसातदासीन्महाकपेः ॥ ॥२५॥ उपतस्थेविशालाक्षीप्रयताहव्यवाहनम् ॥ यद्यस्तिपतिशुश्रूषायद्यस्तिचरितंतपः ॥२६॥यदिवात्त्वेकपत्नीत्वंशीतोभवहनूमतः ॥ ततस्तीक्ष्णा र्चिरव्यग्रःप्रदक्षिणशिखोनलः॥२७॥ जज्वालमृगशावाक्ष्याःशंसन्निवशुभंकपेः॥ हनूमज्जनकश्चैवपुच्छानलयुतोनिलः॥ ववौस्वास्थ्यकरोदेव्याःप्राले यानिलशीतलः ॥२८॥दह्यमानेचलांगूलेचिंतयामासवानरः ॥ प्रदीप्तोग्निरयंकस्मान्नमांदहतिसर्वतः॥२९॥ दृश्यतेचमहाज्वालःकरोतिचनमेरुजम् ॥ शिशिरस्येवसंपातोलांगूलाग्रेप्रतिष्ठितः॥३०॥अथवातदिदंव्यक्तंयद्दृष्टंप्लवतामया॥रामप्रभावादाश्चर्यंपर्वतःसरितांपतौ॥३१॥ यदितावत्समुद्रस्यमैना कस्यचधीमतः॥रामार्थंसंभ्रमस्तादृक्किमग्निर्नकरिष्यति॥३२॥ सीतायाश्चानृशंस्येनराघवस्यचतेजसा ॥ पितुश्चममसख्येननमांदहतिपावकः॥३३॥

तीक्ष्णार्चिरप्यनलः प्रदक्षिणशिखो जज्वाल ॥२७॥ तथा सीतायाः कपेः शिवं स्वकृतं शंसन्निवाभूत् । किंच हनूमज्जनकोनिलो वायुः पुच्छानलयुतोपि देव्याः संमुखे स्वास्थ्यकरः कपेः स्वास्थ्यसूचकः सन्प्रालेयानि लशीतलो ववौ ॥२८॥ सर्वतः प्रदीप्तोग्निरित्यन्वयः ॥ २९ ॥ लांगूलाग्रे शिशिरस्य हिमस्य संपातः पिंड इव प्रतिष्ठित इत्यन्वयः ॥ ३० ॥ तत्रोपपत्तिं चिंतयति अथवेति । यद्यस्मात्प्लवता मया सरितां पतौ रामप्रभावात् समुद्रे पर्वतरूपमाश्चर्यं दृष्टं ततो रामप्रभावादेवेदमपीत्यर्थः ॥ ३१ ॥ ननु समुद्रप्रेरणेन मैनाकोस्थानं प्रयुज्यतेऽग्नेस्तु स्वभाववैपरीत्यं कुतस्तत्राह यदीति । तावदिति वाक्यालंकारे । रामार्थं रामोपकारार्थं तादृक् संभ्रमो यदि आदरपूर्वकं त्वरा यदि तदा रामेण नित्यमुपासितोग्नी रामोपकारार्थं कथमपि शैत्यं किं न करिष्यतीत्यर्थः ॥३२॥ आनृशंस्यमाश्रितजनदया ॥ ३३ ॥

चिंतयामास अनंतरं कर्तव्यमिति शेषः ॥ ३४ ॥ प्रतिक्रिया लंकादहनरूपा मह्यं मम ॥ ३५ ॥ उत्पपात पुच्छाग्निना बंधनेन च सहैवेति शेषः ॥ ३६ ॥ विभक्तरक्षःसंबाधं रक्षःसंमर्दरहितम् ॥ ३७ ॥ शैलसंकाशो महान्भूत्वा ह्रस्वतां मात्र इत्यनेन देहसौक्ष्म्यात्स्वयमेव बंधगलनमुक्तम् । एवंरीत्या बंधनान्यवशातयत् दूरीकृतवान् । विमुक्त्यनंतरं पुनःपर्वताकारोऽभवत् ॥ ३८ ॥३९ ॥ अर्चिमालीत्यत्र नीरेफतार्षी ॥ ४० ॥ अनर्वेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥ वीक्षमाण इति ॥ १ ॥ यदेषां भूयः संतापजननं भवेत्तादृशमवशिष्टं



भूयःसचिंतयामासमुहूर्तंकपिकुंजरः॥कथमस्मद्विधस्येहबंधनंराक्षसाधमैः॥३४॥प्रतिक्रियास्ययुक्तास्यात्सतिमह्यंपराक्रमे ॥ ततश्छित्त्वाचतान्पाशान्वेगवान्वैमहाकपिः ॥ ३५ ॥ उत्पपाताथवेगेननननादचमहाकपिः ॥ पुरद्वारंततःश्रीमाञ्छैलशृंगमिवोन्नतम् ॥ ३६ ॥ विभक्तरक्षःसंबाधमाससादानिलात्मजः ॥ सभूत्वाशैलसंकाशःक्षणेनपुनरात्मवान् ॥ ३७ ॥ ह्रस्वतांपरमांप्राप्तोबंधनान्यवशातयत् ॥ विमुक्तश्चाभवच्छ्रीमान्पुनःपर्वतसन्निभः ॥ ३८ ॥ वीक्षमाणश्चददृशेपरिघंतोरणाश्रितम् ॥ सतंगृह्यमहाबाहुःकालायसपरिष्कृतम् ॥ रक्षिणस्तान्पुनःसर्वान्सूदयामासमारुतिः ॥ ३९ ॥ सतान्निहत्वारणचंडविक्रमःसमीक्षमाणःपुनरेवलंकाम् ॥ प्रदीप्तलांगूलकृतार्चिमालीप्रकाशितादित्यइवार्चिमाली ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये सुंदरकांडे त्रिपंचाशः सर्गः ॥५३॥ वीक्षमाणस्ततोलंकांकपिःकृतमनोरथः ॥ वर्धमानसमुत्साहःकार्यशेषमचिंतयत् ॥१॥ किंनुखल्ववशिष्टंमेकर्तव्यमिहसांप्रतम् ॥ यदेषांरक्षसांभूयःसंतापजननंभवेत् ॥ २ ॥ वनंतावत्प्रमथितंप्रकृष्टाराक्षसाहताः ॥ बलैकदेशःक्षपितःशेषंदुर्गविनाशनम् ॥ ३ ॥ दुर्गेविनाशितेकर्मभवेत्सुखपरिश्रमम् ॥ अल्पयत्नेनकार्येऽस्मिन्ममस्यात्सफलःश्रमः ॥ ४ ॥ योह्ययंममलांगूलेदीप्यतेहव्यवाहनः ॥ अस्यसंतर्पणंन्याय्यंकर्तुमेभिर्गृहोत्तमैः ॥ ५ ॥

सांप्रतं कर्तव्यं किमिति कार्यशेषमचिन्तयदित्यर्थः ॥ २ ॥ तदेव निश्चिनोति शेषं दुर्गविनाशनमिति ॥ ३ ॥ कर्म समुद्रलंघनादि सुखपरिश्रमं सफलप्रयासं तपश्चर्यादिवदित्यर्थः । उक्तमेव विवृणोति अल्पेति । अस्मिन्सीतान्वेषणप्रवृत्तिरूपे कार्ये यो मया कृतः श्रमः स त्वल्पेन यत्नेन स्वल्पयत्नेन साध्येन करिष्यमाणलंकादाहेन सफलो भविष्यति ॥ ४ ॥ तदेवाह यो हीति । न्याय्यं स्वस्य पीडाया अकरण

कृतार्चिर्माला यस्यास्ति सः ॥ ४८ ॥ समुद्रे निर्वापयामास लांगूलप्रक्षेपणेनेति शेषः ॥ ४९ ॥ ५० ॥ नंममानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुःपंचाशः सर्गः ॥ ५४ ॥ संदीप्यमानामिति ॥ १ ॥ कुत्सा चात्मन्यजायतेत्युक्तां कुत्सामाह लंकामिति । किंस्वित्कर्म कृतं कुत्सितमेव कृतमित्यर्थः ॥ २ ॥ उक्तं कुत्सितकार्यमूलं कोप इति निश्चित्य तद्रहितान् स्तौति धन्या इति । दुःखातिशयादेव महात्मपदपौनरुक्त्यं न दोषाय ॥ ३ ॥ क्रुद्धः पापं न कुर्यात्क इति पाठे क्रुद्धो यः कश्चित्पापं कुर्यान्न । नञि काकुः । अपितु कुर्यादेव अकरणमशक्यमेवेत्यर्थः । तदेव दर्शयति क्रुद्धो हन्यादिति ॥ ४ ॥ न जानातीत्येतदेव स्पष्टयति नाकार्यमिति । क्रुद्धस्याकार्यमयुक्तबुद्ध्याऽकरणीयं न किंचिदप्यस्ति अतो गुरुहननाद्यपि करोत्येवेत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ धिगस्तु मामि

लंकांसमस्तांसंपीड्यलांगूलाग्निंमहाकपिः ॥ निर्वापयामासतदासमुद्रेहरिपुंगवः ॥ ४९॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ दृष्ट्वालंकांप्रदग्धांतां विस्मयंपरमंगताः ॥ ५० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुष्पंचाशःसर्गः ॥ ५४ ॥ संदीप्यमानांवित्रस्तांत्रस्तरक्षोगणांपुरीम् ॥ अवेक्ष्यहनुमाँल्लंकांचिंतयामासवानरः ॥१॥ तस्याभूत्सुमहांस्त्रासःकुत्साचात्मन्यजायत ॥ लंकांप्रदहताकामंकिंस्वित्कृतमिदंमया ॥ ॥ २ ॥ धन्याःखलुमहात्मानोयेबुद्ध्याकोपमुत्थितम् ॥ निरुंधंतिमहात्मानोदीप्तमग्निमिवांभसा ॥ ३ ॥ क्रुद्धःपापंनकुर्यात्कःक्रुद्धोहन्याद्गुरूनपि ॥ क्रुद्धःपरुषयावाचानरःसाधूनधिक्षिपेत् ॥ ४ ॥ वाच्यावाच्यंप्रकुपितोनविजानातिकर्हिचित् ॥ नाकार्यमस्तिक्रुद्धस्यनावाच्यंविद्यतेक्वचित् ॥ ५ ॥ यःसमुत्पतितंक्रोधंक्षमयैवनिरस्यति ॥ यथोरगस्त्वचंजीर्णांसवैपुरुषउच्यते ॥ ६ ॥ धिगस्तुमांसुदुर्बुद्धिंनिर्लज्जंपापकृत्तमम् ॥ अचिंतयित्वातांसीतामग्निदंस्वामिघातकम् ॥ ७ ॥ यदिदग्धात्वियंसर्वानूनमार्यापिजानकी ॥ दग्धातेनमयाभर्तुर्हतंकार्यमजानता ॥ ८ ॥ यदर्थमयमारंभस्तत्कार्यमवसादितम् ॥ मयाहिदहतालंकांनसीतापरिरक्षिता ॥ ९ ॥ ईषत्कार्यमिदंकार्यंकृतमासीन्नसंशयः ॥ तस्यक्रोधाभिभूतेनमयामूलक्षयःकृतः ॥ १० ॥ विनष्टाजानकीव्यक्तंनह्यदग्धःप्रदृश्यते ॥ लंकायाःकश्चिदुद्देशःसर्वाभस्मीकृतापुरी ॥ ११ ॥ यदितद्विहतंकार्यंमयाप्रज्ञाविपर्ययात् ॥ इहैवप्राणसंन्यासोममापिह्यद्यरोचते ॥ १२ ॥ किमग्नौनिपताम्यद्यआहोस्विद्वडवामुखे ॥ शरीरमिहसत्त्वानांदद्मिसागरवासिनाम् ॥ १३ ॥ कथंनुजीवताशक्योमयाद्रष्टुंहरीश्वरः ॥ तौवापुरुषशार्दूलौकार्यसर्वस्वघातिना ॥ १४ ॥ मयाखलुतदेवेदंरोषदोषात्प्रदर्शितम् ॥ प्रथितंत्रिषुलोकेषुकपित्वमनवस्थितम् ॥ १५ ॥

त्यनेनोक्तं स्वधिकारमाह यदीति । इयं लंका सर्वापि नूनं दग्धैव यदि जानक्यप्यत्रत्या दग्धा स्यात्तदा तेन अजानता मया भर्तुः कार्यं हतं भवेत् ॥ ८ ॥ एतदेव विवृणोति यदर्थमिति ॥ ९ ॥ एतत्कार्यं लंकादाहरूपम् ईषत्कार्यमिव अप्रयाससाध्यकार्यमिव कृतमनुष्ठितमासीत् । अत्र न संशयः भर्तुः कार्यं तु मया सर्वथा नाशितमेवेत्याह तस्येति । क्रोधाभिभूतेन मया सीतामपरिरक्षता कृतस्य सीतादर्शनरूपस्य कार्यस्य मूलक्षयः कृतः ॥ १० ॥ ननु सीताविनाशनिश्चयस्ते कथं तत्राह विनष्टेति ॥ ११ ॥ १२ ॥ वडवामुखेऽग्नावित्यन्वयः दद्मि ददामि ॥ १३ ॥ १४ ॥ तदेवेदं कपित्वमनवस्थितमव्यवस्थितकार्यकारीति त्रिषु

लोकेषु प्रसिद्धं दर्शितम् । रोषदोषाद्रक्षोविषयक्रोधदोषात् ॥ १५ ॥ राजसं रजोगुणमूलम् भावं चेष्टाविशेषम् अनीशं कार्यासमर्थम् अतएवानवस्थितमव्यवस्थितफलजनकं धिक् यद्यस्मादीश्वरेणापि मया रागाद्रजो गुणमूलक्रोधवशात्सीता न रक्षिता अतो धिक् ॥ १६ ॥ उभौ रामलक्ष्मणौ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ साक्षादुपलब्धानि स्वपरोक्षमनुभूतशुभफलानि उपपेदिरे । जातानि दृष्ट्वा पुनरचिंतयदित्यर्थः ॥ २१ ॥ चिंतामेव दर्शयति अथवेति । नाग्निरग्नौ प्रवर्तते इति । आग्निरग्निं न दहतीत्यर्थः ॥ २२ ॥ २३ ॥ दहनकर्मा भस्मीकरणसहजस्वभावः यद्यतस्तत्प्रभावान्मां तत्सेवकं नादहत् तत एव तां स्प्रष्टु

धिगस्तुराजसंभावमनीशमनवस्थितम् ॥ ईश्वरेणापियद्रागान्मयासीतानरक्षिता॥१६॥विनष्टायांतुसीतायांताबुभौविनशिष्यतः ॥ तयोर्विनाशेसुग्री वःसबंधुर्विनशिष्यति ॥ १७ ॥ एतदेववचःश्रुत्वाभरतोभ्रातृवत्सलः ॥ धर्मात्मासहशत्रुघ्नःकथंशक्ष्यतिजीवितुम् ॥ १८ ॥ इक्ष्वाकुवंशेधर्मिष्ठेगते नाशमसंशयः ॥ भविष्यंतिप्रजाःसर्वाःशोकसंतापपीडिताः ॥ १९ ॥ तदहंभाग्यरहितोलुप्तधर्मार्थसंग्रहः ॥ रोषदोषपरीतात्मा व्यक्तंलोकविनाशनः ॥ २० ॥ इतिचिंतयतस्तस्य निमित्तान्युपपेदिरे ॥ पूर्वमप्युपलब्धानि साक्षात्पुनरचिंतयत् ॥ २१॥ अथवा चारुसर्वांगी रक्षितास्वेनतेजसा ॥ नन शिष्यतिकल्याणी नाग्निरग्नौप्रवर्तते ॥ २२ ॥ नहि धर्मात्मनस्तस्य भार्याममिततेजसः ॥ स्वचरित्राभिगुप्तांतां स्प्रष्टुमर्हतिपावकः ॥ २३ ॥ नूनं रामप्रभावेण वैदेह्याःसुकृतेनच ॥ यन्मांदहनकर्मायंनादहद्धव्यवाहनः ॥ २४॥ त्रयाणांभरतादीनांभ्रातॄणांदेवताचया ॥ रामस्यचमनःकांतासाकथं विनाशिष्यति ॥ २५ ॥ यद्वादहनकर्मायंसर्वत्रप्रभुरव्ययः ॥ नमेदहतिलांगूलंकथमार्यांप्रधक्ष्यति ॥२६॥ पुनश्चाचिंतयत्तत्रहनूमान्विस्मितस्तदा ॥ हिरण्यनाभस्यगिरेर्जलमध्येप्रदर्शनम् ॥ २७॥ तपसासत्यवाक्येनअनन्यत्वाच्चभर्तरि ॥ असौविनिर्दहेदग्निंनतामग्निःप्रधक्ष्यति ॥ २८ ॥ सतथा चिंतयंस्तत्रदेव्याधर्मपरिग्रहम् ॥ शुश्रावहनुमांस्तत्रचारणानांमहात्मनाम् ॥ २९ ॥ अहोखलुकृतंकर्मदुर्विगाहंहनूमता ॥ अग्निंविसृजतातीक्ष्णंभी मंराक्षससद्मनि ॥ ३० ॥ प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला ॥ जनकोलाहलाध्माताक्रंदतीवाद्रिकंदरैः ॥ ३१ ॥ दग्धेयंनगरीलंकासाट्टप्राकारतो रणा ॥ जानकीनचदग्धेतिविस्मयोद्भुतएवनः ॥ ३२ ॥ इतिशुश्रावहनुमान्वाचंताममृतोपमाम् ॥ बभूवचास्यमनसोहर्षस्तत्कालसंभवः ॥ ३३ ॥ सनिमित्तैश्चदृष्टार्थैःकारणैश्चमहागुणैः ॥ ऋषिवाक्यैश्चहनुमानभवत्प्रीतमानसः ॥ ३४ ॥

मपि नार्हतीत्यर्थः ॥ २४ ॥ त्रयाणां भरतलक्ष्मणशत्रुघ्नानां देवतात्वात्तस्यामग्न्यप्रवृत्ते रामभयाच्चेति भावः ॥ २५ ॥ सर्वत्र प्रभुरपि यत्सेवकत्वान्मे लांगूलं न दहति ततस्तां कथं धक्ष्यति ॥ २६ ॥ देवी प्रभावात् सिंधौ मद्विश्रांतिनिमित्तं गिरिदर्शनहेतुनातिप्रभाववतीं तां न दहतीत्याह पुनश्चेति ॥२७॥ विनिर्दहेत् दाहविषयवाक्यप्रयोगेणेति शेषः । तथा चिंतयंश्चारणानां वाक्यं शुश्रावेति योजना ॥ २८ ॥२९॥ दुर्विगाहं केनाप्यसह्यमित्यर्थः ॥ ३० ॥ ३१ ॥ विस्मय आश्चर्यम् अद्भुतः अभूतपूर्वः ॥ ३२ ॥ तत्कालसंभवस्तत्कालजातचारणवाक्यजः ॥ ३३ ॥ दृष्टार्थैर्दृष्टप्रत्ययैर्निमित्तैर्दक्षिणाक्षिस्पंदनादिभिः कारणैः

वसुंधरा नेति । मृतराक्षसानां शयनाय लंकाभूमिर्न पर्याप्ताभूदिति शेषः ॥ २९ ॥ ३० ॥ लंकापुरपर्वताग्रे लंकापुराधारभूतत्रिकुटाचलशिखरे चूडावलयं शिखासमूहं प्राप्तोभूदिति शेषः ॥ ३१ ॥ विधूमरश्मिर्विधूमज्वालः रक्षःशरीररूपाज्येन समर्पिता संपादिता अर्चिर्ज्वालाविशेषो यस्य सः ॥ ३२ ॥ तिष्ठन्नभूदिति शेषः । अशनिप्ररूढैरशनिवत्प्रगल्भैः । महाग्निः प्रलयाग्निः ॥ ३३ ॥ आंबरादंबरपर्यंतम् । रुक्षप्रभः क्रूरकांतिः किंशुकपुष्पवच्चूडा शिखा यस्य सः । निर्वाणानामधोविच्छिन्नानां खे एव वर्तमानानां धूमानामाकुला राजयो नीलोत्पलाभा अभ्राकाराः सत्यः प्रचकाशिरे ॥ ३४ ॥ वज्रित्वत्रिदशेश्वर

हनूमान्राक्षसेंद्राणांवधेकिंचिन्नतृप्यति ॥ नहनूमद्विशस्तानांराक्षसानांवसुंधरा ॥ २९ ॥ हनूमतावेगवतावानरेणमहात्मना ॥ लंकापुरंप्रदग्धंतद्रुद्रेण त्रिपुरंयथा ॥ ३० ॥ ततः स लंकापुरपर्वताग्रेसमुत्थितोभीमपराक्रमोग्निः ॥ प्रसार्यचूडावलयंप्रदीप्तोहनूमतावेगवतोपसृष्टः ॥ ३१ ॥ युगांतकालानलतुल्यरूपःसमारुतोग्निर्ववृधेदिवस्पृक् ॥ विधूमरश्मिर्भवनेषुसक्तोरक्षःशरीराज्यसमर्पितार्चिः ॥ ३२ ॥ आदित्यकोटीसदृशःसुतेजालंकांसमस्तां परिवार्यतिष्ठन् ॥ शब्दैरनेकैरशनिप्ररूढैर्भिंदन्निवांडंप्रबभौमहाग्निः ॥ ३३ ॥ तत्रांबरादग्निरतिप्रवृद्धोरूक्षप्रभःकिंशुकपुष्पचूडः ॥ निर्वाणधूमाकुलराजयश्चनीलोत्पलाभाःप्रचकाशिरेऽभ्राः ॥ ३४ ॥ वज्रीमहेंद्रस्त्रिदशेश्वरोवासाक्षाद्यमोवावरुणोऽनिलोवा ॥ रौद्रोग्निरर्कोधनदश्चसोमोनवानरोयंस्वयमेवकालः ॥ ३५ ॥ किंब्रह्मणःसर्वपितामहस्यलोकस्यधातुश्चतुराननस्य ॥ इहागतोवानररूपधारीरक्षोपसंहारकरःप्रकोपः ॥ ३६ ॥ किंवैष्णवंवाकपिरूपमेत्यरक्षोविनाशायपरंसुतेजः ॥ अचिंत्यमव्यक्तमनंतमेकंस्वमाययासांप्रतमागतंवा ॥ ३७ ॥ इत्येवमूचुर्बहवोविशिष्टारक्षोगणास्तत्रसमेत्यसर्वे ॥ सप्राणिसंघांसगृहांसवृक्षांदग्धांपुरींतांसहसासमीक्ष्य ॥ ३८ ॥ ततस्तुलंकासहसाप्रदग्धासराक्षसासाश्वरथासनागा ॥ सपक्षिसंघासमृगासवृक्षारुरोददीनातुमुलंसशब्दम् ॥ ३९ ॥ हाताতहापुत्रककांतमित्रहाजीवितेशांगहतंसुपुण्यम् ॥ रक्षोभिरेवंबहुधाब्रुवद्भिःशब्दःकृतोघोरतरःसुभीतः ॥ ४० ॥ हुताशनज्वालसमावृतासाहतप्रवीरापरिवृत्तयोधा ॥ हनूमतःक्रोधबलाभिभूताबभूवशापोपहतेवलंका ॥ ४१ ॥ ससंभ्रमंत्रस्तविषण्णराक्षसांसमुज्ज्वलज्ज्वालहुताशनांकिताम् ॥ ददर्शलंकांहनुमान्महामनाःस्वयंभुरोपोपहतामिवावनिम् ॥ ४२ ॥ भंक्त्वावनंपादपरत्नसंकुलंहत्वातुरक्षांसिमहांतिसंयुगे ॥ दग्ध्वापुरींतांगृहरत्नमालिनींतस्थौहनूमान्पवनात्मजःकपिः ॥ ४३ ॥ सराक्षसांस्तान्सुबहूंश्चहत्वावनंचभंक्त्वाबहुपादपंतत् ॥ विसृज्यरक्षोभवनेषुचाग्निंजगामरामंमनसामहात्मा ॥ ४४ ॥ ततस्तुतंवानरवीरमुख्यंमहाबलंमारुततुल्यवेगम् ॥ महामतिंवायुसुतंवरिष्ठंप्रतुष्टुवुर्देवगणाश्चसर्वे ॥ ४५ ॥ देवाश्चसर्वेमुनिपुंगवाश्चगंधर्वविद्याधरपन्नगाश्च ॥ भूतानिसर्वाणिमहांतितत्रजग्मुःपरांप्रीतिमतुल्यरूपाम् ॥ ४६ ॥ भंक्त्वावनंमहातेजाहत्वारक्षांसिसंयुगे ॥ दग्ध्वालंकापुरींभीमांरराजसमहाकपिः ॥ ४७ ॥ गृहाग्र्यशृंगाग्रतलेविचित्रेप्रतिष्ठितोवानरराजसिंहः ॥ प्रदीप्तलांगूलकृतार्चिमालीव्यराजतादित्यइवार्चिमाली ॥ ४८ ॥

त्वविशिष्टो महेंद्र इत्यर्थः । रौद्रोग्निः रुद्रतृतीयनयनसंबंध्यग्निः ॥ ३५ ॥ ३६ ॥ ३७ ॥ विशिष्टा महाबलाः प्रहस्तादय इत्यर्थः । समीक्ष्य इत्येवमूचुरित्यन्वयः ॥ ३८ ॥ ३९ ॥ सुपुण्यमतिशयितमर्जितं पुण्यम् ॥ ४० ॥ परिवृत्तयोधा पर्यस्तयोधा ॥ ४१ ॥ स्वयंभुरोपोपहताम् । स्वदिनांत इति शेषः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ गृहाग्र्याणां गृहश्रेष्ठानां शृंगाग्रतले प्रासादाग्रभूमौ प्रदीप्तलांगूलेन

लोकेषु प्रसिद्धं दर्शितम् । रोषदोषाद्रक्षोविषयक्रोधदोषात् ॥ १५ ॥ राजसं रजोगुणमूलम् भावं चेष्टाविशेषम् अनीशं कार्यासमर्थम् अतएवानवस्थितमव्यवस्थितफलजनकं धिक् यद्यस्मादीश्वरेणापि मया रागाद्रजो गुणमूलक्रोधवशात्सीता न रक्षिता अतो धिक् ॥ १६ ॥ उभौ रामलक्ष्मणौ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ साक्षादुपलब्धानि स्वपरोक्षमनुभूतशुभफलानि उपपेदिरे । जातानि दृष्ट्वा पुनरचिंतयदित्यर्थः ॥ २१ ॥ चिंतामेव दर्शयति अथवेति । नाग्निरग्नौ प्रवर्तते इति । अग्निरग्निं न दहतीत्यर्थः ॥ २२ ॥ २३ ॥ दहनकर्मा भस्मीकरणसहजस्वभावः यद्यतस्तत्प्रभावान्मां तत्सेवकं नादहत् तत एव तां स्प्रष्टु

धिगस्तुराजसंभावमनीशमनवस्थितम् ॥ ईश्वरेणापियद्रागान्मयासीतानरक्षिता॥ १६॥ विनष्टायांतुसीतायांतावुभौविनशिष्यतः ॥ तयोर्विनाशेसुग्री वःसवंधुर्विनशिष्यति ॥ १७ ॥ एतदेववचःश्रुत्वाभरतोभ्रातृवत्सलः ॥ धर्मात्मासहशत्रुघ्नःकथंशक्ष्यतिजीवितुम् ॥ १८ ॥ इक्ष्वाकुवंशेधर्मिष्ठेगते नाशमसंशयः ॥ भविष्यंतिप्रजाःसर्वाःशोकसंतापपीडिताः ॥ १९ ॥ तदहंभाग्यरहितोलुप्तधर्मार्थसंग्रहः ॥ रोषदोषपरीतात्मा व्यक्तंलोकविनाशनः ॥ २० ॥ इतिचिंतयतस्तस्य निमित्तान्युपपेदिरे ॥ पूर्वमप्युपलब्धानि साक्षात्पुनरचिंतयत् ॥ २१॥ अथवा चारुसर्वांगी रक्षितास्वेनतेजसा ॥ नन शिष्यतिकल्याणी नाग्निरग्नौप्रवर्तते ॥ २२ ॥ नहि धर्मात्मनस्तस्य भार्याममिततेजसः ॥ स्वचरित्राभिगुप्तांतां स्प्रष्टुमर्हतिपावकः ॥ २३ ॥ नूनं रामप्रभावेण वैदेह्याःसुकृतेनच ॥ यन्मांदहनकर्मायंनादहद्धव्यवाहनः ॥ २४॥ त्रयाणांभरतादीनांभ्रातॄणांदेवताचया ॥ रामस्यचमनःकांतासाकथं विनाशिष्यति ॥ २५ ॥ यद्वादहनकर्मायंसर्वत्रप्रभुरव्ययः ॥ नमेदहतिलांगूलंकथमार्यांप्रधक्ष्यति ॥२६॥ पुनश्चाचिंतयत्तत्रहनूमान्विस्मितस्तदा ॥ हिरण्यनाभस्यगिरेर्जलमध्येप्रदर्शनम् ॥ २७॥ तपसासत्यवाक्येनअनन्यत्वाच्चभर्तरि ॥ असौविनिर्दहेदग्निंनतामग्निःप्रधक्ष्यति ॥ २८ ॥ सतथा चिंतयंस्तत्रदेव्याधर्मपरिग्रहम् ॥ शुश्रावहनुमांस्तत्रचारणानांमहात्मनाम् ॥ २९ ॥ अहोखलुकृतंकर्मदुर्विगाहंहनूमता ॥ अग्निंविसृजतातीक्ष्णंभी मंराक्षससद्मनि ॥ ३० ॥ प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला ॥ जनकोलाहलाध्माताक्रंदतीवाद्रिकंदरैः ॥ ३१ ॥ दग्धेयंनगरीलंकासाट्टप्राकारतो रणा ॥ जानकीनचदग्धेतिविस्मयोद्भुतएवनः ॥ ३२ ॥ इतिशुश्रावहनुमान्वाचंताममृतोपमाम् ॥ बभूवचास्यमनसोहर्षस्तत्कालसंभवः ॥ ३३ ॥ सनिमित्तैश्चदृष्टार्थैःकारणैश्चमहागुणैः ॥ ऋषिवाक्यैश्चहनुमानभवत्प्रीतमानसः ॥ ३४ ॥

मपि नार्हतीत्यर्थः ॥ २४ ॥ त्रयाणां भरतलक्ष्मणशत्रुघ्नानां देवतात्वात्तस्यामग्न्यप्रवृत्ते रामभयाच्चेति भावः ॥ २५ ॥ सर्वत्र प्रभुरपि यत्सेवकत्वान्मे लांगूलं न दहति ततस्तां कथं धक्ष्यति ॥ २६ ॥ देवी प्रभावात् सिंधौ मद्विश्रांतिनिमित्तं गिरिदर्शनहेतुनातिप्रभाववतीं तां न दहतीत्याह पुनश्चेति ॥२७॥ विनिर्दहेत् दाहविषयवाक्यप्रयोगेणेति शेषः । तथा चिंतयंश्चारणानां वाक्यं शुश्रावेति योजना ॥ २८ ॥२९॥ दुर्विगाहं केनाप्यसह्यमित्यर्थः ॥ ३० ॥ ३१ ॥ विस्मय आश्चर्यम् अद्भुतः अभूतपूर्वः ॥ ३२ ॥ तत्कालसंभवस्तत्कालजातचारणवाक्यजः ॥ ३३ ॥ दृष्टार्थैर्दृष्टप्रत्ययैर्निमित्तैर्दक्षिणाक्षिस्पंदनादिभिः कारणैः

दिति भावः ॥ ५ ॥ तोयदः संध्यातोयदः हनूमतो रक्तवर्णत्वात् ॥ ६ ॥ उद्यानानि गृहारामाः ॥ ७ ॥ प्रहस्तस्य प्रधानमंत्रित्वादादौ तद्गृहेऽग्निप्रक्षेपः प्रथमं तत्संभावनस्यौचित्यात् ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ १२ ॥ १३ ॥ भवनं ददाहेत्यनुकर्षः ॥ १४ ॥ १५ ॥ विभीषणेन स्वस्य वधतो रक्षणाद्विभीषणगृहं वर्जयित्वा प्रतिगृहं क्रममाण इत्यन्वयः ॥ १६ ॥ पूर्वं रावणाद्भीतोप्यग्निः सीतातेजःसंबन्धेन निःशंकं ददाहेत्युक्तं प्राक् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ श्वसनेन संयोगात्सीताश्वासमिश्रितवायुसंयोगात् अतएव वायोरपि निर्भयता ॥ २१ ॥ चारयन्निति हेतौ शता । यतश्चारयतिस्म

ततःप्रदीप्तलांगूलःसविद्युदिवतोयदः ॥ भवनाग्रेषुलंकायाविचचारमहाकपिः ॥ ६ ॥ गृहाद्गृहंराक्षसानामुद्यानानिचवानरः ॥ वीक्षमाणोह्यसंत्रस्तः प्रासादांश्चचचारसः ॥ ७ ॥ अवप्लुत्यमहावेगःप्रहस्तस्यनिवेशनम् ॥ अग्निंतत्रविनिक्षिप्यश्वसनेनसमोबली ॥ ८ ॥ ततोन्यत्पुप्लुवेवेश्ममहापार्श्वस्यवीर्यवान् ॥ मुमोचहनुमानग्निंकालानलशिखोपमम् ॥ ९ ॥ वज्रदंष्ट्रस्यचतथापुप्लुवेसमहाकपिः ॥ शुकस्यचमहातेजाःसारणस्यचधीमतः॥१०॥ तथाचेंद्रजितोवेश्मददाहहरियूथपः ॥ जंबुमालेःसुमालेश्चददाहभवनंततः ॥ ११ ॥ रश्मिकेतोश्चभवनंसूर्यशत्रोस्तथैवच ॥ ह्रस्वकर्णस्यदंष्ट्रस्यरोमशस्यचरक्षसः ॥ १२ ॥ युद्धोन्मत्तस्यमत्तस्यध्वजग्रीवस्यरक्षसः ॥ विद्युज्जिह्वस्यघोरस्यतथाहस्तिमुखस्यच ॥ १३ ॥ करालस्यविशालस्यशोणिताक्षस्यचैवहि ॥ कुंभकर्णस्यभवनंमकराक्षस्यचैवहि ॥ १४ ॥ नरांतकस्यकुंभस्यनिकुंभस्यमहात्मनः ॥ यज्ञशत्रोश्चभवनंब्रह्मशत्रोस्तथैवच ॥ १५ ॥ वर्जयित्वामहातेजाविभीषणगृहंप्रति ॥ क्रममाणःक्रमेणैवददाहहरिपुंगवः ॥ १६ ॥ तेषुतेषुमहार्हेषुभवनेषुमहायशाः ॥ गृहेष्वृद्धिमतामृद्धिंददाहकपिकुंजरः ॥ १७ ॥ सर्वेषांसमतिक्रम्यराक्षसेंद्रस्यवीर्यवान् ॥ आससादाथलक्ष्मीवान्रावणस्यनिवेशनम् ॥ १८ ॥ ततस्तस्मिन्गृहेमुख्ये नानारत्नविभूषिते ॥ मेरुमंदरसंकाशेनानामंगलशोभिते ॥ १९ ॥ प्रदीप्तमग्निमुत्सृज्यलांगूलाग्रेप्रतिष्ठितम् ॥ ननादहनुमान्वीरोयुगांतजलदोयथा ॥ २० ॥ श्वसनेनचसंयोगादतिवेगोमहाबलः ॥ कालाग्निरिवजज्वालप्रावर्धतहुताशनः ॥ २१ ॥ प्रदीप्तमग्निंपवनस्तेषुवेश्मसुचारयन् ॥ तानिकांचनजालानिमुक्तामणिमयानिच ॥ २२ ॥ भवनानिव्यशीर्यंतरत्नवंतिमहांतिच ॥ तानिभग्नविमानानिनिपेतुर्वसुधातले ॥ २३ ॥ भवनानीवसिद्धानामंबरात्पुण्यसंक्षये ॥ संजज्ञेतुमुलःशब्दोराक्षसानांप्रधावताम् ॥ २४ ॥ स्वेस्वेगृहपरित्राणेभग्नोत्साहोज्झितश्रियाम् ॥ नूनमेषोग्निरायातः कपिरूपेणहाइति ॥ २५ ॥ क्रंदंत्यःसहसापेतुःस्तनंधयधराःस्त्रियः ॥ काश्चिदग्निपरीतांग्योहर्म्येभ्योमुक्तमूर्धजाः ॥२६॥ पतंत्योरेजिरेऽभ्रेभ्यःसौदामन्यइवांबरात्॥वज्रविद्रुमवैदूर्यमुक्तारजतसंहतान् ॥२७॥ विचित्रान्भवनाद्धातून्स्यंदमानान्ददर्शसः॥नाग्निस्तृप्यतिकाष्ठानांतृणानांचयथातथा॥२८॥

ततश्चारणाद्धेतोस्तानि व्यशीर्यंतेत्यन्वयः ॥ २२ ॥ भग्नविमानानि भग्नप्रासादानि ॥ २३ ॥ २४ ॥ भग्नोत्साहाश्च ते उज्झितश्रियश्चेत्यर्थः । हा इति तुमुलः शब्दः संजज्ञे इत्यन्वयः ॥ २५ ॥ पेतुरप्याविति शेषः ॥ २६ ॥ अभ्रेभ्यो मेघेभ्यः ॥२७॥ अग्निसंबन्धाद्द्रवताद्धेमरजतादिधातून्स्यंदमानान्ददर्श । यथा काष्ठतृणादिदाहादग्निर्न तृप्यति तथा राक्षसवधे क्रियमाणे हनूमान्किंचिदीषदपि न तृप्यति ॥ २८ ॥

वसुंधरा नेति । मृतराक्षसानां शयनाय लंकाभूमिर्न पर्याप्ताभूदिति शेषः ॥ २९ ॥ ३० ॥ लंकापुरपर्वताग्रे लंकापुराधारभूतत्रिकुटाचलशिखरे चूडावलयं शिखासमूहं प्राप्तोभूदिति शेषः ॥ ३१ ॥ विधूमरश्मिर्विधूमज्वालः रक्षःशरीररूपाज्येन समर्पिता संपादिता अर्चिर्ज्वालाविशेषो यस्य सः ॥ ३२ ॥ तिष्ठन्नभूदिति शेषः । अशनिप्ररूढैरशनिवत्प्रगल्भैः । महाग्निः मलयाग्निः ॥ ३३ ॥ आंबरादंबरपर्यंतम् । रुक्मप्रभः क्रूरकांतिः किंशुकपुष्पवच्चूडा शिखा यस्य सः । निर्वाणानामधोविच्छिन्नानां खे एव वर्तमानानां धूमानामाकुला राजयो नीलोत्पलाभा अभ्राकाराः सत्यः प्रचकाशिरे ॥ ३४ ॥ वज्रित्वात्रिदशेश्वर

हनूमान्राक्षसेंद्राणांवधेकिंचिन्नतृप्यति ॥ नहनूमद्विशस्तानांराक्षसानांवसुंधरा ॥ २९ ॥ हनूमतावेगवतावानरेणमहात्मना ॥ लंकापुरंप्रदग्धंतद्रुद्रेण त्रिपुरंयथा ॥ ३० ॥ ततः स लंकापुरपर्वताग्रेसमुत्थितोभीमपराक्रमोग्निः ॥ प्रसार्यचूडावलयंप्रदीप्तोहनूमतावेगवतोपसृष्टः ॥ ३१ ॥ युगांतकालानलतुल्यरूपःसमारुतोग्निर्ववृधेदिविस्पृक् ॥ विधूमरश्मिर्भवनेषुसक्तोरक्षःशरीराज्यसमर्पितार्चिः ॥ ३२ ॥ आदित्यकोटीसदृशःसुतेजालंकांसमस्तांपरिवार्यतिष्ठन् ॥ शब्दैरनेकैरशनिप्ररूढैर्भिंदन्निवांडंप्रबभौमहाग्निः ॥ ३३ ॥ तत्रांबरादग्निरतिप्रवृद्धोरूक्षप्रभःकिंशुकपुष्पचूडः ॥ निर्वाणधूमाकुलराजयश्चनीलोत्पलाभाःप्रचकाशिरेऽभ्राः ॥ ३४ ॥ वज्रीमहेंद्रस्त्रिदशेश्वरोवासाक्षाद्यमोवावरुणोऽनिलोवा ॥ रौद्रोग्निरर्कोधनदश्चसोमोनवानरोयंस्वयमेवकालः ॥ ३५ ॥ किंब्रह्मणःसर्वपितामहस्यलोकस्यधातुश्चतुराननस्य ॥ इहागतोवानररूपधारीरक्षोपसंहारकरःप्रकोपः ॥ ३६ ॥ किंवैष्णवंवाकपिरूपमेत्यरक्षोविनाशायपरंसुतेजः ॥ अचिंत्यमव्यक्तमनंतमेकंस्वमाययासांप्रतमागतंवा ॥ ३७ ॥ इत्येवमूचुर्बहवोविशिष्टारक्षोगणास्तत्रसमेत्यसर्वे ॥ सप्राणिसंघांसगृहांसवृक्षांदग्धांपुरींतांसहसासमीक्ष्य ॥ ३८ ॥ ततस्तुलंकासहसाप्रदग्धासराक्षसासाश्वरथासनागा ॥ सपक्षिसंघासमृगासवृक्षारुरोददीनातुमुलंसशब्दम् ॥ ३९ ॥ हातातहापुत्रककांतमित्रहाजीवितेशांगहतंसुपुण्यम् ॥ रक्षोभिरेवंबहुधाब्रुवद्भिःशब्दःकृतोघोरतरःसुभीतः ॥ ४० ॥ हुताशनज्वालसमावृतासाहतप्रवीरापरिवृत्तयोधा ॥ हनूमतःक्रोधबलाभिभूताबभूवशापोपहतेवलंका ॥ ४१ ॥ ससंभ्रमंत्रस्तविषण्णराक्षसांसमुज्ज्वलज्ज्वालहुताशनांकिताम् ॥ ददर्शलंकांहनुमान्महामनाःस्वयंभुरोषोपहतामिवावनिम् ॥ ४२ ॥ भंक्त्वावनंपादपरत्नसंकुलंहत्वातुरक्षांसिमहांतिसंयुगे ॥ दग्ध्वापुरींतांगृहरत्नमालिनींतस्थौहनूमान्पवनात्मजःकपिः ॥ ४३ ॥ सराक्षसांस्तान्सुबहूंश्चहत्वावनंचभंक्त्वाबहुपादपंतत् ॥ विसृज्यरक्षोभवनेषुचाग्निंजगामरामंमनसामहात्मा ॥ ४४ ॥ ततस्तुतंवानरवीरमुख्यंमहाबलंमारुततुल्यवेगम् ॥ महामतिंवायुसुतंवरिष्ठंप्रतुष्टुवुर्देवगणाश्चसर्वे ॥ ४५ ॥ देवाश्चसर्वेमुनिपुंगवाश्चगंधर्वविद्याधरपन्नगाश्च ॥ भूतानिसर्वाणिमहांतितत्रजग्मुःपरांप्रीतिमतुल्यरूपाम् ॥ ४६ ॥ भंक्त्वावनंमहातेजाहत्वारक्षांसिसंयुगे ॥ दग्ध्वालंकापुरींभीमांरराजसमहाकपिः ॥ ४७ ॥ गृहाग्र्यशृंगाग्रतलेविचित्रेप्रतिष्ठितोवानरराजसिंहः ॥ प्रदीप्तलांगूलकृतार्चिमालीव्यराजतादित्यइवार्चिमाली ॥ ४८ ॥

त्वाविशिष्टो महेंद्र इत्यर्थः । रौद्रोग्निः रुद्रतृतीयनयनसंबंध्यग्निः ॥ ३५ ॥ ३६ ॥ ३७ ॥ विशिष्टा महाबलाः प्रहस्तादय इत्यर्थः । समीक्ष्य इत्येवमूचुरित्यन्वयः ॥ ३८ ॥ ३९ ॥ सुपुण्यमतिशयितमर्जितं पुण्यम् ॥ ४० ॥ परिवृत्तयोधा पर्यस्तयोधा ॥ ४१ ॥ स्वयंभुरोषोपहताम् । स्वदिनांत इति शेषः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ गृहाढ्याणां गृहश्रेष्ठानां शृंगाग्रतले प्रासादाग्रभूमौ प्रदीप्तलांगूलेन

सीतारामप्रभावपातिव्रत्यादिरूपैर्ऋषिवाक्यैश्चारणवाक्यैः ॥ ३४ ॥ विदित्वा चारणादिवाक्यैः पुनरेव पुनरपि प्रत्यक्षतो दृष्ट्वा प्रतिप्रयाणाय किष्किंधां प्रति गंतुं मतिं चकार ॥ ३५ ॥ मैंगैंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकाण्डे पंचपंचाशःसर्गः ॥ ५५ ॥ इत आरभ्य पुनर्मध्येन सागरमित्यंताः सार्धचतुर्विंशतिश्लोकाः प्राग्व्याख्यातप्राया एव ॥१॥॥२॥३॥

ततःकपिःप्राप्तमनोरथार्थस्तामक्षतांराजसुतांविदित्वा ॥ प्रत्यक्षतस्तांपुनरेवदृष्ट्वाप्रतिप्रयाणायमतिंचकार ॥ ३९ ॥ इ० श्री० वा० आ० सुं० पंचपंचाशःसर्गः ॥ ५५ ॥ ततस्तुशिंशपामूलेजानकींपर्यवस्थिताम् ॥ अभिवाद्याब्रवीद्दिष्ट्यापश्यामित्वामिहाक्षताम् ॥ १ ॥ ततस्तंप्रस्थितंसीतावीक्षमाणापुनःपुनः ॥ भर्तुःस्नेहान्वितावाक्यंहनूमंतमभाषत ॥ २ ॥ यदित्वंमन्यसेतातवसैकाहमिहानघ ॥ क्वचित्सुसंवृतेदेशेविश्रांतःश्वोगमिष्यसि ॥ ३ ॥ ममचैवाल्पभाग्यायाःसान्निध्यात्तववानर ॥ शोकस्यास्याप्रमेयस्यमुहूर्तंस्यादपिक्षयः ॥ ४ ॥ गतेहिहरिशार्दूलपुनःसंप्राप्तयेत्वयि ॥ प्राणेष्वपिनविश्वासोममवानरपुंगव ॥ ५ ॥ अदर्शनंचतेवीरभूयोमांदारयिष्यति ॥ दुःखाद्दुःखतरंप्राप्तांदुर्मनःशोककर्शिताम् ॥ ६ ॥ अयंचवीरसंदेहस्तिष्ठतीवममाग्रतः ॥ सुमहत्सुसहायेषुहर्यृक्षेषुमहाबलः ॥७॥ कथंनुखलुदुष्पारंसंतरिष्यंतिसागरम् ॥ तानिहर्यृक्षसैन्यानितौवानरवरात्मजौ॥८॥ त्रयाणामेवभूतानांसागरस्यातिलंघने ॥ शक्तिःस्याद्वैनतेयस्यतववामारुतस्यवा ॥ ९ ॥ तदत्रकार्यनिर्वंधेसमुत्पन्नेदुरासदे ॥ किंपश्यसिसमाधानंत्वंहिकार्यविशारदः॥ १० ॥ काममस्यत्वमेवैकःकार्यस्यपरिसाधने ॥ पर्याप्तःपरवीरघ्नयशस्यस्तेबलोदयः ॥ ११ ॥ बलैस्तुसंकुलांकृत्वालंकांपरबलार्दनः ॥ मांनयेद्यदिकाकुत्स्थस्तत्तस्यसदृशंभवेत् ॥ १२ ॥ तद्यथातस्यविक्रांतमनुरूपंमहात्मनः ॥ भवत्याहवशूरस्यतथात्वमुपपादय ॥१३॥ तदर्थोपहितंवाक्यंप्रश्रितंहेतुसंहितम् ॥ निशम्यहनुमान्वीरोवाक्यमुत्तरमब्रवीत् ॥ १४ ॥ देविहर्यृक्षसैन्यानामीश्वरःप्लवतांवरः ॥ सुग्रीवःसत्वसंपन्नस्तवार्थेकृतनिश्चयः ॥ १५ ॥ सवानरसहस्राणांकोटीभिरभिसंवृतः ॥ क्षिप्रमेष्यतिवैदेहिसुग्रीवःप्लवतांवरः ॥ १६ ॥ तौचवीरौनरवरौसहितौरामलक्ष्मणौ ॥ आगम्यनगरींलंकांसायकैर्विधमिष्यतः ॥ १७ ॥ सगणंराक्षसंहत्वानचिराद्रघुनंदनः ॥ त्वामादायवरारोहेस्वांपुरींप्रतियास्यति ॥ १८ ॥ समाश्वसिहिभद्रंतेभवत्वंकालकांक्षिणी ॥ क्षिप्रंद्रक्ष्यसिरामेणनिहतंरावणंरणे ॥ १९ ॥ निहतेराक्षसेंद्रेचसपुत्रामात्यबांधवे ॥ त्वंसमेष्यसिरामेणशशांकेनेवरोहिणी ॥ २० ॥ क्षिप्रमेष्यतिकाकुत्स्थोहर्यृक्षप्रवरैर्युतः ॥ यस्तेयुधिविनिर्जित्यशोकंव्यपनयिष्यति ॥ २१ ॥ एवमाश्वास्यवैदेहींहनूमान्मारुतात्मजः ॥ गमनायमतिंकृत्वावैदेहीमभ्यवादयत् ॥ २२ ॥ राक्षसान्प्रवरान्हत्वानामविश्राव्यचात्मनः ॥ समाश्वास्यचवैदेहींदर्शयित्वापरंबलम् ॥ २३ ॥ नगरीमाकुलांकृत्वावंचयित्वाचरावणम् ॥ दर्शयित्वाबलंघोरंवैदेहीमभिवाद्यच ॥ २४ ॥ प्रतिगंतुंमनश्चक्रेपुनर्मध्येनसागरम् ॥ ततःसकपिशार्दूलःस्वामिसंदर्शनोत्सुकः ॥ २५ ॥ आरुरोहगिरिश्रेष्ठमरिष्टमरिमर्दनः ॥ तुंगपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ॥ २६ ॥

॥४॥५॥६॥७॥८॥९॥१०॥११॥१२॥१३॥१४॥१५॥१६॥१७॥१८॥१९॥२०॥२१॥२२॥२३॥२४॥२५॥ अरिष्टं तदाख्यम् । नीलाभिर्वनराजिभिः । सपरिधानमिवेति शेषः ॥ २६ ॥

सोत्तरीयमिव कंठासक्तोत्तरीयधारिणमिव बोध्यमानमिव रविकिरणस्पर्शेन सर्वेषां तत्रत्यवस्तूनां विकासादिति भावः॥२७॥उद्धूतैर्लोचनसदृशैर्धातुभिरुन्मिषंतमिवेत्युत्प्रेक्षा। प्राधीतमिव उच्चैः प्रारब्धाध्ययनमिव तत्स्वनानां महत्त्वात्॥२८॥प्रगीतमिव प्रारब्धगानमिव तत्स्वनानां मंदत्वात्॥२९॥प्रपातजलनिर्घोषैः प्रपातेभ्यो भृगुदेशेभ्यः पतज्जलशब्दैः प्राकुष्टमिवारब्धाक्रोशमिव। सर्वत्रादिकर्मणि कर्तरिक्त इत्याहुः।शरद्घनैःसप्तपर्णादिशारदवृक्ष संघैः॥३०॥३१॥नीहारकृतगंभीरैः नीहारवशेन तत्तद्दर्शनात्तत्कृतगंभीरत्वं गह्वराणां ध्यायंतमिव मुद्रितेंद्रियद्वारं ध्यानारूढमिव स्थितमित्यर्थः।मेघपादाः मेघप्ररोहास्तन्निभैः पादैः प्रत्यंतपर्वतैः प्रक्रांतमिवारब्धगमन

सोत्तरीयमिवांभोदैःशृंगांतरविलंबिभिः ॥ बोध्यमानमिवप्रीत्यादिवाकरकरैःशुभैः ॥ २७ ॥ उन्मिषंतमिवोद्धूतैर्लोचनैरिवधातुभिः ॥ तोयौघानिःस्वनैर्मंद्रैःप्राधीतमिवसर्वतः ॥ २८ ॥ प्रगीतमिवविस्पष्टंनानाप्रस्रवणस्वनैः ॥ देवदारुभिरुद्धूतैरूर्ध्वबाहुमिवस्थितम् ॥ २९ ॥ प्रपातजलनिर्घोषैः प्राकुष्टमिवसर्वतः ॥ वेपमानमिवश्यामैःकंपमानैःशरद्घनैः ॥ ३० ॥ वेणुभिर्मारुतोद्धूतैःकूजंतमिवकीचकैः ॥ निःश्वसंतमिवामर्षाद्घोरैराशीविषोत्तमैः ॥ ३१ ॥ नीहारकृतगंभीरैर्ध्यायंतमिवगह्वरैः ॥ मेघपादनिभैःपादैःप्रक्रांतमिवसर्वतः ॥ ३२ ॥ जृंभमाणमिवाकाशेशिखरैरभ्रमालिभिः ॥ कूटैश्चबहुधाकीर्णंशोभितंबहुकंदरैः ॥ ३३ ॥ सालतालैश्चकर्णैश्चवंशैश्चबहुभिर्वृतम् ॥ लतावितानैर्विततैःपुष्पवद्भिरलंकृतम् ॥ ३४ ॥ नानामृगगणैःकीर्णंधातुनिष्पंदभूषितम् ॥ बहुप्रस्रवणोपेतंशिलासंचयसंकटम् ॥ ३५॥ महर्षियक्षगंधर्वकिन्नरोरगसेवितम् ॥ लतापादपसंबाधंसिंहाधिष्ठितकंदरम् ॥ ॥ ३६ ॥ व्याघ्रादिभिःसमाकीर्णंस्वादुमूलफलद्रुमम् ॥ आरुरोहानिलसुतःपर्वतंप्लवगोत्तमः ॥ ३७ ॥ रामदर्शनशीघ्रेणप्रहर्षेणाभिचोदितः ॥ तेनपादतलक्रांतारम्येषुगिरिसानुषु ॥ ३८ ॥ सघोषाःसमशीर्यंतशिलाश्चूर्णीकृतास्ततः ॥ सतमारुह्यशैलेंद्रंव्यवर्धतमहाकपिः ॥ ३९ ॥ दक्षिणादुत्तरंपारंप्रार्थयँल्लवणांभसः ॥ अधिरुह्यततोवीरःपर्वतंपवनात्मजः ॥४०॥ ददर्शसागरंभीमंभीमोरगनिषेवितम् ॥ समारुतइवाकाशंमारुतस्यात्मसंभवः ॥ ४१ ॥ प्रपेदेहरिशार्दूलोदक्षिणादुत्तरांदिशम् ॥ सतदापीडितस्तेनकपिनापर्वतोत्तमः ॥ ४२ ॥ ररासविविधैर्भूतैःप्राविशद्वसुधातलम् ॥ कंपमानैश्चशिखरैःपतद्भिरपिचद्रुमैः ॥ ४३ ॥ तस्योरुवेगोन्मथिताःपादपाःपुष्पशालिनः ॥ निपेतुर्भूतलेभग्नाःशक्रायुधहताइव ॥ ४४ ॥ कंदरोदरसंस्थानांपीडितानांमहौजसाम् ॥ सिंहानांनिनदोभीमोनभोभिंदन्हिशुश्रुवे ॥ ४५ ॥ त्रस्तव्याविद्धवसनाव्याकुलीकृतभूषणाः ॥ विद्याधर्यःसमुत्पेतुःसहसाधरणीधरात् ॥ ४६ ॥

मिव॥३२॥ अभ्रमालाभिः शिखरैर्जृंभमाणमिव गात्रमोटनं कुर्वाणमिव कूटैः शृंगैः ॥ ३३ ॥ लतारूपैर्विस्तृतैर्वितानैः ॥ ३४ ॥ धातुनिष्पंदैर्धातुनिर्गमैर्भूषितं शिलासंचयेन शिलासमूहेन संकटं नीरंध्रम् ॥३५॥ लताभिः पादपैश्च संबाधं व्याप्तम् ॥ ३६ ॥ ३७ ॥ रामदर्शने शीघ्रेणातिवेगवतोत्कटेनेति यावत्। तेन हनूमता ॥३८॥३९॥ प्रार्थयन् गमनप्राप्यत्वेनेच्छन्। अधिरुह्य ततोप्यूर्ध्वं गत्वा ॥४०॥ स हनुमान्मारुत आकाशमिवोत्तरां दिशं प्रपेदे मनसा प्राप ॥ ४१ ॥ ४२ ॥ कंपविशिष्टशिखरपतद्द्रुमोपलक्षितो वसुधां प्राविशदित्यन्वयः ॥ ४३ ॥ शक्रायुधं वज्रम् ॥ ४४ ॥ ४५ ॥ त्रस्ता अतएव व्याविद्धानि

व्यत्यस्तानि वसनानि यासां ताः ॥ ४६ ॥ व्यवेष्टंत कुंडलीकृतशरीरा अजायंत । व्यचेष्टंतेति पाठे पीडयाऽलुठन्नित्यर्थः ॥ ४७ ॥ ४८ ॥ सवृक्षशिखरैरुदग्र उन्नतो रसातलं प्रविवेश । अंशेन भूसमशिखरा ग्रवृक्षो जात इत्यर्थः ॥ ४९ ॥ तदेव दर्शयति दशेति ॥ ५० ॥ कल्लोलैरास्फाल्यते स्पृश्यते तादृशो वेलांतस्तीरप्रांतो यस्य तं सागरं लिलंघयिषुर्नभ उत्पपातेति संबंधः ॥ ५१ ॥ येशेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ आप्लुत्य उत्प्लुत्याधारं गगनमर्णवत्वेन वर्णयति भुजंगेत्यादि । भुजंगादय एव विकसितानि कमलादीनि यस्मिन् ॥ १ ॥ चंद्ररूपेण कुमुदेन श्वेतोत्पलेन सहितम् । अर्करूपकारंडवाख्यजलपक्षिसहितम् अभ्राणि मेघा एव शैवलानि शाद्वलानि च यत्र तम् ॥ २ ॥ लोहितांगो भौमः महाग्रहो महाग्राहः स्वातीरूपो

अतिप्रमाणावलिनोदीप्तजिह्वामहाविषाः ॥ निपीडितशिरोग्रीवाव्यवेष्टंतमहाहयः ॥ ४७ ॥ किन्नरोरगगंधर्वयक्षविद्याधरास्तथा ॥ पीडितंतंनगवरं त्यक्त्वागगनमास्थिताः ॥ ४८ ॥ सचभूमिधरःश्रीमान्बलिनातेनपीडितः ॥ सवृक्षशिखरोदग्रःप्रविवेशरसातलम् ॥४९॥ दशयोजनविस्तारस्त्रिंशद्यो जनमुच्छ्रितः ॥ धरण्यांसमतांयातःसबभूवधराधरः ॥ ५० ॥ सलिलंघयिषुर्भीमंसलीलंलवणार्णवम् ॥ कल्लोलास्फालवेलांतमुत्पपातनभोहरिः ॥ ५१ ॥ इत्यार्षे श्रीम० वा० आदि० सुं० षट्पंचाशःसर्गः ॥ ५६ ॥ आप्लुत्यचमहावेगःपक्षवानिवपर्वतः ॥ भुजंगयक्षगंधर्वप्रबुद्धकमलोत्पलम् ॥ १ ॥ सचंद्रकुमुदंरम्यंसार्ककारंडवंशुभम् ॥ तिष्यश्रवणकादंबमभ्रशैवलशाद्वलम् ॥ २ ॥ पुनर्वसुमहामीनंलोहितांगमहाग्रहम् ॥ ऐरावतमहाद्वीपंस्वातीहंसविलासितम् ॥ ३ ॥ वातसंघातजालोर्मिचंद्रांशुशिशिरांबुमत् ॥ हनुमानपरिश्रांतःपुप्लुवेगगनार्णवम् ॥ ४ ॥ ग्रसमानइवाकाशंताराधिपमिवोल्लिखन् ॥ हरन्निवसनक्षत्रंगगनंसार्कमंडलम् ॥ ५ ॥ अपारमपरिश्रांतश्चांबुधिंसमगाहत ॥ हनुमान्मेघजालानिविकर्षन्निवगच्छति ॥ ६ ॥ पांडुरारुणवर्णानिनीलमांजिष्ठकानिच ॥ हरितारुणवर्णानिमहाभ्राणिचकाशिरे ॥ ७ ॥ प्रविशन्नभ्रजालानिनिष्क्रमंश्चपुनःपुनः ॥ प्रकाशश्चाप्रकाशश्चचंद्रमाइवदृश्यते ॥ ८ ॥ विविधाभ्रघनापन्नगोचरोधवलांबरः ॥ दृश्यादृश्यतनुर्वीरस्तथाचंद्रायतेंबरे ॥ ९ ॥ तार्क्ष्यायमाणोगगनेसबभौवायुनंदनः ॥ दारयन्मेघवृंदानिनिष्पतंश्चपुनःपुनः ॥ १० ॥ नदन्नादेनमहतामेघस्वनमहास्वनः ॥ प्रवरान्राक्षसान्हत्वानामविश्राव्यचात्मनः ॥ ११ ॥ आकुलांनगरींकृत्वाव्यथयित्वाचरावणम् ॥ अर्दयित्वामहावीरान्वैदेहीमभिवाद्यच ॥ १२ ॥

हंसो विलासितः कृतविलासो यत्र तत् ॥ ३ ॥ वातसंघातो वात्या तज्जालं तत्समूह एवोर्मयो यत्र तत् चंद्रकिरणरूपशीतलजलयुक्तम् । मतुबार्षः । अत्र सावयवरूपकं गगनस्यार्णवत्वेन चंद्रादीनां कुमुदादित्वेन च रूपणात् ॥ ४ ॥ ताराधिपमुल्लिखन्निव नखैरिति शेषः । हरन्निव गृह्णन्निव ॥ ५ ॥ ६ ॥ महाभ्राणीत्यस्य कपिनाकृष्यमाणानीति शेषः ॥ ७ ॥ ८ ॥ प्रविशन्नित्युक्तमेवार्थं भंग्यंतरेणाह विविधेति । विविधेष्वभ्रघनेष्वापन्नो गोचरो मार्गो येन सः प्रवेशनिष्क्रमाभ्यां दृश्यादृश्यतनुः । अयं श्लोकः प्रक्षिप्त इति भाति ॥ ९ ॥ १० ॥ मेघस्वनवन्महास्वनो यस्य सः ॥ ११ ॥ १२ ॥

सुनाभं मैनाकम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ लांगूलं चाप्यकंपयदिति स्वभावोक्तिः ॥ १७ ॥ फलतीव विशीर्यतीव ॥ १८ ॥ ये पूर्वसंविष्ठितास्ते तोयदनिःस्वनमिव ऊरुवेगं तज्जन्यघोषं शुश्रुवुरि त्यन्वयः ॥ १९ ॥ वानरेंद्रस्य निर्घोषं तदीयसिंहनादम् ॥ २० ॥ सुहृद्दर्शनकांक्षिणः तेन शब्देन हनूमानेवैतीति निश्चित्य तद्दर्शनलालसाः ॥ २१ ॥ २२ ॥ २३ ॥ बाहूरुवेगं तज्जन्यशब्दं निनादं च कंठशब्दं च ॥ २४ ॥ नगाग्रात् स्वाश्रयादूर्ध्वदेशस्थानि नगाग्राणीत्यर्थः ॥ २५ ॥ ते शाखां गृह्य गृहीत्वा ऊर्ध्वदृशा हनूमन्निरीक्षणे पतनभिया शाखां गृहीत्वा धृत्वा पादपाग्रेषु तदग्रशाखासु स्थिताः वासां

आजगाममहातेजाःपुनर्मध्येनसागरम् ॥ पर्वतेंद्रंसुनाभंचसमुपस्पृश्यवीर्यवान् ॥ १३ ॥ ज्यामुक्तइवनाराचोमहावेगोभ्युपागमत् ॥ सकिंचिदारात्सं प्राप्तःसमालोक्यमहागिरिम् ॥ १४ ॥ महेंद्रमेघसंकाशोननादसमहाकपिः ॥ सपूरयामासकपिर्दिशोदशसमंततः ॥ १५ ॥ नदन्नादेनमहतामे घस्वनमहास्वनः ॥ सतंदेशमनुप्राप्तःसुहृद्दर्शनलालसः ॥ १६ ॥ ननादसुमहानादंलांगूलंचाप्यकंपयत् ॥ तस्यनानद्यमानस्यसुपर्णाचरितेपथि ॥ १७ ॥ फलतीवास्यघोषेणगगनंसार्कमंडलम् ॥ येतुतत्रोत्तरेकूलेसमुद्रस्यमहाबलाः ॥ १८ ॥ पूर्वसंविष्ठिताःशूरावायुपुत्रदिदृक्षवः ॥ महतो वायुनुन्नस्यतोयदस्येवनिःस्वनम् ॥ शुश्रुवुस्तेतदाघोषमूरुवेगंहनूमतः ॥ १९ ॥ तेदीनमनसःसर्वेशुश्रुवुःकाननौकसः ॥ वानरेंद्रस्यनिर्घोषंपर्जन्य निनदोपमम् ॥२०॥ निशम्यनदतोनादंवानरास्तेसमंततः ॥ बभूवुरुत्सुकाःसर्वेसुहृद्दर्शनकांक्षिणः ॥२१॥ जांबवान्सहरिश्रेष्ठःप्रीतिसंहृष्टमानसः ॥ उपामंत्र्यहरीन्सर्वानिदंवचनमब्रवीत् ॥ २२ ॥ सर्वथाकृतकार्योसौहनूमान्नात्रसंशयः ॥ नह्यस्याकृतकार्यस्यनादएवंविधोभवेत् ॥ २३ ॥ तस्य बाहूरुवेगंचनिनादंचमहात्मनः ॥ निशम्यहरयोहृष्टाःसमुत्पेतुर्यतस्ततः ॥ २४ ॥ तेनगाग्रान्नगाग्राणिशिखराच्छिखराणिच ॥ प्रहृष्टाःसमपद्यंतहनूमं तंदिदृक्षवः ॥ २५ ॥ तेप्रीताःपादपाग्रेषुगृह्यशाखामवस्थिताः ॥ वासांसिचप्रकाशानिसमाविध्यंतवानराः ॥ २६ ॥ गिरिगह्वरसंलीनोयथागर्ज तिमारुतः ॥ एवंजगर्जबलवान्हनूमान्मारुतात्मजः ॥ २७॥ तमभ्रघनसंकाशमापतंतंमहाकपिम् ॥ दृष्ट्वातेवानराःसर्वेतस्थुःप्रांजलयस्तदा ॥२८॥ ततस्तुवेगवान्वीरोगिरेर्गिरिनिभःकपिः ॥ निपपातगिरेस्तस्यशिखरेपादपाकुले ॥ २९ ॥ हर्षेणापूर्यमाणोसौरम्येपर्वतनिर्झरे ॥ छिन्नपक्षइवाका शात्पपातधरणीधरः ॥ ३० ॥

सि समाविध्यंत प्राकंपयंत नृत्यांतर इवेति भावः । प्रकाशानि निर्मलतया प्रकर्षेण शोभंते तादृशानि वासांसि ॥ २६ ॥ २७ ॥ अभ्रं मेघस्तदुपरि यो मेघस्तत्संकाशम् । अत्युन्नतमेघसमूहसदृशमित्यर्थमन्ये । स्वजीवनदातृत्वेन स्वपूज्यत्वात्प्रांजलयः स्थिताः ॥ २८ ॥ ततो गिरेररिष्टाख्याद्गिरेः प्लुतः कपिस्तस्य महेंद्रस्य गिरेः शिखरे निपपात अनेनाविश्रममागमनं ध्वनितम् ॥ २९ ॥ छिन्नपक्षो धरणीधर इवाका

शात्पपात हर्षेणापूर्यमाणः पूर्यमाणहृदयः पर्वतनिर्झरे निर्झरप्रवर्तके शिखरे इत्यर्थमेके । श्रमनिवृत्तये जल एव पतित इत्यन्ये ॥३०॥ ३१ ॥ ३२ ॥ ३३ ॥ शाखानयनं हनूमत आसनार्थम् ॥३४॥३५॥ ताभ्यां जांबवदंगदाभ्यां प्रसादितः प्रसन्नदृष्ट्या कारितात्मनिरीक्षणः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ आयतांचितदीर्घाणि आयामो विस्तारः स्थौल्यमित्यन्ये ॥४३॥ गिरिशृंगेषु

ततस्तेप्रीतमनसस्सर्वेवानरपुंगवाः ॥ हनूमंतंमहात्मानंपरिवार्योपतस्थिरे ॥ ३१ ॥ परिवार्यचतेसर्वेपरांप्रीतिमुपागताः ॥ प्रहृष्टवदनाःसर्वेतमागतमु पागमन् ॥ ३२ ॥ उपायनानिचादायमूलानिचफलानिच ॥ प्रत्यर्चयन्हरिश्रेष्ठंहरयोमारुतात्मजम् ॥ ३३ ॥ विनेदुर्मुदिताःकेचित्केचित्किलकिलां तथा ॥ हृष्टाःपादपशाखाश्चआनिन्युर्वानरर्षभाः ॥ ३४ ॥ हनूमांस्तुगुरून्वृद्धाञ्जांबवत्प्रमुखांस्तदा ॥ कुमारमंगदंचैवसोवंदतमहाकपिः ॥ ३५ ॥ सताभ्यांपूजितःपूज्यःकपिभिश्चप्रसादितः ॥ दृष्टादेवीतिविक्रांतःसंक्षेपेणन्यवेदयत् ॥ ३६ ॥ निषसादचहस्तेनगृहीत्वावालिनःसुतम् ॥ रमणीयेवनो द्देशेमहेंद्रस्यगिरेस्तदा ॥ ३७ ॥ हनूमानब्रवीत्पृष्टस्तदातान्वानरर्षभान् ॥ अशोकवनिकासंस्थादृष्टासाजनकात्मजा ॥ ३८ ॥ रक्ष्यमाणासुघोराभी राक्षसीभिरनिंदिता ॥ एकवेणीधरावालारामदर्शनलालसा ॥ ३९ ॥ उपवासपरिश्रांतामलिनाजटिलाकृशा ॥ ततोदृष्टेतिवचनंमहार्थममृतोपमम् ॥ ४० ॥ निशम्यमारुतेःसर्वेमुदितावानराभवन् ॥ क्ष्वेडंत्यन्येनदंत्यन्येगर्जंत्यन्येमहाबलाः ॥ ४१ ॥ चक्रुःकिलकिलामन्येप्रतिगर्जंतिचापरे ॥ केचिदुच्छ्रितलांगूलाःप्रहृष्टाःकपिकुंजराः ॥ ४२ ॥ आयतांचितदीर्घाणिलांगूलानिप्रविव्यधुः ॥ अपरेतुहनूमंतंश्रीमंतंवानरोत्तमम् ॥ ४३ ॥ आप्लु त्यगिरिशृंगेषुसंस्पृशंतिस्महर्षिताः ॥ उक्तवाक्यंहनूमंतमंगदस्तुतदाब्रवीत् ॥ ४४ ॥ सर्वेषांहरिवीराणांमध्येवाचमनुत्तमाम् ॥ सत्त्वेवीर्येनतेक श्चित्समोवानरविद्यते ॥ ४५ ॥ यदवप्लुत्यविस्तीर्णंसागरंपुनरागतः ॥ जीवितस्यप्रदातानस्त्वमेकोवानरोत्तम ॥ ४६ ॥ त्वत्प्रसादात्समेष्यामः सिद्धार्थाराघवेणह ॥ अहोस्वामिनितेभक्तिरहोवीर्यमहोधृतिः ॥ ४७ ॥ दिष्ट्यादृष्टात्वयादेवीरामपत्नीयशस्विनी ॥ दिष्ट्यात्यक्ष्यतिकाकुत्स्थःशोकंसी तावियोगजम् ॥ ४८ ॥ ततोंगदंहनूमंतंजांबवंतंचवानराः ॥ परिवार्यप्रमुदिताभेजिरेविपुलाःशिलाः ॥ ४९ ॥ उपविष्टागिरेस्तस्यशिलासुविपुलासुते ॥ श्रोतुकामाःसमुद्रस्यलंघनंवानरोत्तमाः ॥ ५० ॥ दर्शनंचापिलंकायाःसीतायारावणस्यच ॥ तस्थुःप्रांजलयःसर्वेहनूमद्वदनोन्मुखाः ॥ ५१ ॥ तस्थौ तत्रांगदःश्रीमान्वानरैर्बहुभिर्वृतः ॥ उपास्यमानोविबुधैर्दिविदेवपतिर्यथा ॥ ५२ ॥

आप्लुत्य तेभ्य आप्लुत्येत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ समेष्यामः संगता भविष्यामः । अहो इति । तव स्वामिभक्त्यादिकमाश्चर्यमित्यर्थः ॥४७॥४८॥४९॥५०॥५१॥ विविधैर्देवैरुपास्यमानइत्यर्थः ॥५२॥

कीर्तिमता हनूमता यशस्विनांगदेनेत्यर्थः । ज्वालितं युक्तम् ॥ ५३ ॥ गैमंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ हनूमत्प्रमुखाः परस्परं मिलिता इति शेषः ॥ १ ॥ २ ॥ कार्यविषयं वृत्तांतम् ॥ ३ ॥ कथंवृत्तः कीदृग्व्यापारः ॥ ४ ॥ ५ ॥ चिंतनीयनिश्चयमेवाह यश्चेति । रक्षितव्यं रामसन्निधौ गोपनीयम् अवक्तव्यमिति यावत् । अवक्तव्यं च यत्तच्चिंतयिष्यामोतस्तत्पृष्टं सर्वमात्मवान् भवान् व्याकरोतु ॥ ६ ॥ ७ ॥ ८ ॥ विघ्नरूपामिवेत्युक्तम् । तदेवाह कांचनमिति । पश्यामि दृष्टमित्यर्थः । तदाश्चर्यत्वाद्द्यापि पश्या

हनूमताकीर्तिमतायशस्विनातथांगदेनांगदनद्धबाहुना ॥ मुदातदाध्यासितमुन्नतंमहन्महीधराग्रंज्वलितंश्रियाभवत् ॥ ५३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तपंचाशःसर्गः ॥ ५७ ॥ ततस्तस्यगिरेःशृंगंमहेंद्रस्यमहाबलाः ॥ हनूमत्प्रमुखाःप्रीतिंहरयोजग्मुरुत्तमाम् ॥ ॥ १ ॥ प्रीतिमत्सूपविष्टेषुवानरेषुमहात्मसु ॥ तंततःप्रतिसंहृष्टःप्रीतियुक्तंमहाकपिम् ॥ २ ॥ जांबवान्कार्यवृत्तांतमपृच्छदनिलात्मजम् ॥ कथंदृष्टात्वयादेवीकथंवातत्रवर्तते ॥ ३ ॥ तस्यांचापिकथंवृत्तःक्रूरकर्मादशाननः ॥ तत्त्वतःसर्वमेतन्नःप्रब्रूहित्वंमहाकपे ॥ ४ ॥ संमार्गिताकथंदेवीकिंचसाप्रत्यभाषत ॥ श्रुतार्थाश्चिंतयिष्यामोभूयःकार्यविनिश्चयम् ॥ ५ ॥ यश्चार्थस्तत्रवक्तव्योगतैरस्माभिरात्मवान् ॥ रक्षितव्यंचयत्तत्रतद्भवान्व्याकरोतुनः ॥ ६ ॥ सनियुक्तस्ततस्तेनसंप्रहृष्टतनूरुहः ॥ नमस्यञ्छिरसादेव्यैसीतायैप्रत्यभाषत ॥ ७ ॥ प्रत्यक्षमेवभवतांमहेंद्राग्रात्खमाप्लुतः ॥ उदधेर्दक्षिणंपारंकांक्षमाणःसमाहितः ॥ ८ ॥ गच्छतश्चहिमेघोरंविघ्नरूपमिवाभवत् ॥ कांचनंशिखरंदिव्यंपश्यामिसुमनोहरम् ॥ ९ ॥ स्थितंपंथानमावृत्यमेनेविघ्नंचतंनगम् ॥ उपसंगम्यतंदिव्यंकांचनंनगमुत्तमम् ॥ १० ॥ कृतामेमनसाबुद्धिर्भेत्तव्योयंमयेतिच ॥ प्रहतस्यमयातस्यलांगूलेनमहागिरेः ॥ ११ ॥ शिखरंसूर्यसंकाशंव्यशीर्यतसहस्रधा ॥ व्यवसायंचतंबुद्ध्वासहोवाचमहागिरिः ॥ १२ ॥ पुत्रेतिमधुरांवाणींमनःप्रह्लादयन्निव ॥ पितृव्यंचापिमांविद्धिसखायंमातरिश्वनः ॥ १३ ॥ मैनाकमितिविख्यातंनिवसंतंमहोदधौ ॥ पक्षवंतःपुरातत्रबभूवुःपर्वतोत्तमाः ॥ १४ ॥ छंदतःपृथिवींचेरुर्बाधमानाःसमंततः ॥ श्रुत्वानगानांचरितंमहेंद्रःपाकशासनः ॥ १५ ॥ वज्रेणभगवान्पक्षौचिच्छेदैषांसहस्रशः ॥ अहं तु मोचितस्तस्मात्तवपित्रामहात्मना ॥ ॥ १६ ॥ मारुतेनतदावत्सप्रक्षिप्तोवरुणालये ॥ राघवस्यमयासाह्येवर्तितव्यमरिंदम ॥ १७ ॥ रामोधर्मभृतांश्रेष्ठोमहेंद्रसमविक्रमः ॥ एतच्छ्रुत्वामयातस्यमैनाकस्यमहात्मनः ॥ १८ ॥ कार्यमावेद्यचगिरेरुद्धतंवैमनोमम ॥ तेनचाहमनुज्ञातोमैनाकेनमहात्मना ॥ १९ ॥ सचाप्यंतर्हितःशैलोमानुषेणवपुष्मता ॥ शरीरेणमहाशैलःशैलेनचमहोदधौ ॥ २० ॥

मीत्यर्थः ॥ ९ ॥ मेने लिङुत्तमपुरुषैकवचनम् । उपसंगम्य प्राप्य ॥ १० ॥ ११ ॥ व्यवसायं स्वभेदनरूपम ॥ १२ ॥ १३ ॥ १४ ॥ छंदतः स्वेच्छयेत्यर्थः । चरितं प्रजाबाधनरूपम् ॥ १५ ॥ ॥ १६ ॥ मोचनमकारमाह मारुतेनेति । साह्ये साहाय्ये ॥ १७ ॥ तत्र हेतुर्धर्मभृतां श्रेष्ठत्वादि ॥ १८ ॥ उद्धतम् अग्रे चलितम् ॥ १९ ॥ स शैलो मानुषेण वपुष्मता प्रशस्तेन शरीरेण महाशैलोंतर्हितः शैलेन शि

नारूपेण च महोदधावंतर्हितइत्यन्वयः॥२०॥२१॥२२॥प्रदिष्टो विहित इत्यर्थः विहितःमापितइत्यर्थः॥२३॥२४॥२५॥ सकाशंसमीपम् ॥२६॥ विषयेसति तदीयदेशेसतिविद्यमाने। मैथिलीदर्शननिवेदनार्थं रामं च दृष्ट्वा ॥२७॥२८॥ नातिवर्तेतनातिक्रमेत। मां माप्तो मदाहारतां माप्तो न गच्छेदित्यर्थः॥२९॥अर्धगुणविस्तारः अर्धस्य दशयोजनार्धस्य पंचयोजनस्य गुणआवृत्तिस्ताद्विस्तारः दशयोजनविस्तार इतियावत्। पूर्वं दशयोजन विस्तारोक्त्यानुगुण्येनैवंव्याख्यातम ॥ ३० ॥ ह्रस्वं स्वशरीरमिति शेषः । तदेवाहांगुष्ठसंमित इति । देह इति शेषः ॥ ३१ ॥ ३२ ॥ समानय मेलय ॥३३॥ साधुसाध्वीति । अत्र दीर्घ आर्षः ॥३४॥३५॥

उत्तमंजवमास्थायशेषमध्वानमास्थितः ॥ ततोहंसुचिरंकालंजवेनाभ्यगमंपथि ॥ २१ ॥ ततःपश्याम्यहंदेवींसुरसांनागमातरम् ॥ समुद्रमध्येसादेवी वचनंचेदमब्रवीत् ॥ २२ ॥ ममभक्ष्यःप्रदिष्टस्त्वममरैर्हरिसत्तम ॥ ततस्त्वांभक्षयिष्यामिविहितस्त्वंहिमेसुरैः ॥२३॥ एवमुक्तःसुरसयाप्रांजलिःप्रणतः स्थितः ॥ विवर्णवदनोभूत्वावाक्यंचेदमुदीरयन् ॥ २४ ॥ रामोदाशरथिःश्रीमान्प्रविष्टोदंडकावनम् ॥ लक्ष्मणेनसहभ्रात्रासीतयाचपरंतपः ॥२५॥ तस्यसीताहृताभार्यारावणेनदुरात्मना ॥ तस्याःसकाशंदूतोहंगमिष्येरामशासनात् ॥ २६ ॥ कर्तुमर्हसिरामस्यसाहाय्यंविषयेसति ॥ अथवामै थिलींदृष्ट्वारामंचाक्लिष्टकारिणम् ॥ २७ ॥ आगमिष्यामितेवक्त्रंसत्यंप्रतिशृणोमिते ॥ एवमुक्तामयासातुसुरसाकामरूपिणी ॥ २८ ॥ अब्रवीन्नाति वर्तेतकश्चिदेषवरोमम ॥ एवमुक्तःसुरसयादशयोजनमायतः ॥ २९ ॥ ततोर्धगुणविस्तारोबभूवाहंक्षणेनतु ॥ मत्प्रमाणाधिकंचैवव्यादितंतुमुखंतया ॥ ३० ॥ तद्दृष्ट्वाव्यादितंत्वास्यंह्रस्वंह्यकरवंपुनः ॥ तस्मिन्मुहूर्तेचपुनर्बभूवांगुष्ठसंमितः ॥ ३१ ॥ अभिपत्याशुतद्वक्त्रंनिर्गतोहंततःक्षणात् ॥ अब्र वीत्सुरसादेवीस्वेनरूपेणमांपुनः ॥ ३२ ॥ अर्थसिद्ध्यैहरिश्रेष्ठगच्छसौम्ययथासुखम् ॥ समानयचवैदेहींराघवेणमहात्मना ॥ ३३ ॥ सुखीभवमहा बाहोप्रीतास्मितववानर ॥ ततोहंसाधुसाध्वीतिसर्वभूतैःप्रशंसितः ॥ ३४ ॥ ततोंतरिक्षंविपुलंप्लुतोहंगरुडोयथा ॥ छायामेनिगृहीताचनचपश्यामिं किंचन ॥ ३५ ॥ सोहंविगतवेगस्तुदिशोदशविलोकयन् ॥ नकिंचित्तत्रपश्यामियेनमेविहतागतिः ॥ ३६ ॥ अथमेबुद्धिरुत्पन्नाकिन्नामगमनेमम ॥ ईदृशोविघ्नउत्पन्नोरूपमत्रनदृश्यते ॥३७॥ अधोभागेतुमेदृष्टिःशोचतःपतितातदा ॥ तत्राद्राक्षमहंभीमांराक्षसींसलिलेशयाम् ॥३८॥ प्रहस्यचमहाना दमुक्तोहंभीमयातया ॥ अवस्थितमसंभ्रांतमिदंवाक्यमशोभनम् ॥ ३९ ॥ क्वासिगंतामहाकायक्षुधितायाममेप्सितः ॥ भक्षःप्रीणयमेदेहंचिरमाहारव र्जितम् ॥ ४० ॥ बाढमित्येवतांवाणींप्रत्यगृह्णामहंततः ॥ आस्यप्रमाणादधिकंतस्याःकायमपूरयम् ॥ ४१ ॥ तस्याश्चास्यंमहद्भीमंवर्धतेममभक्षणे ॥ नतुमांसानुबुबुधेममवाविकृतंकृतम् ॥ ४२ ॥

येन गतिर्विहता तत्किंचिन्न पश्यामि नापश्यमित्यन्वयः ॥ ३६ ॥ ३७ ॥ ३८ ॥ अवस्थितं निश्चेष्टम् । तथाप्यसंभ्रांतं भयहीनं मां लक्षीकृत्येदं वाक्यमहमुक्त इत्यन्वयः ॥ ३९ ॥ ममेप्सितो भक्षस्त्वम तो मे देहं प्रीणयेत्यन्वयः॥४०॥ मत्यगृह्णाम् अंगीकृतवान्। तस्या आस्यप्रमाणादधिकं भवति यथा तथा आत्मनः कायमपूरयम् अवर्धयम् ॥४१॥ मां सा न बुबुधे । अयं कामरूपी सर्वविघ्ननिर्दलन इति मां

न ज्ञातवतीत्यर्थः । मम कृतं विकृतं मया कृतं विकृतं विकारस्वरूपं वक्ष्यमाणसूक्ष्मरूपत्वं च न बुबुधे ॥ ४२ ॥ तदेवाह तत इति । आदाय कर्तित्वा प्रपतामि प्रापतम् ॥ ४३ ॥ विसृष्टभुजा विप्रकीर्णभुजा ॥ ४४ ॥ सिंहिका हनुमता हतेति खगतानां वाचः शृणोमि श्रुताः ॥ ४५ ॥ आत्ययिकं जातकालविलंबम् । कृत्यं सीतार्दनम् । स्मरन्नेव महदध्वानं गत्वा उदधेर्दक्षिणे तीरं पश्यामि दृष्टवान् ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ मां जिघांसंतीम् ज्वलदग्नितुल्यकेशपाशाम् ॥ ४९ ॥ सुभैरवाम् अतिशयेन भयंकररूपाम् । प्रविशं प्राविशम् ॥ ५० ॥ ५१ ॥ सर्वरात्रं सर्वां रात्रीम् अल्पशेषायां रात्रावशोकवनि

ततोहंविपुलंरूपंसंक्षिप्यनिमिषांतरात् ॥ तस्याहृदयमादायप्रपतामिनभस्थलम् ॥ ४३ ॥ साविसृष्टभुजाभीमापपातलवणांभसि ॥ मयापर्वतसं काशानिकृत्तहृदयासती ॥ ४४ ॥ शृणोमिखगतानांचवाचःसौम्यामहात्मनाम् ॥ राक्षसीसिंहिकाभीमाक्षिप्रंहनुमताहता ॥ ४५ ॥ तांहत्वापुनरेवाहं कृत्यमात्ययिकंस्मरन् ॥ गत्वाचमहदध्वानंपश्यामिनगमंडितम् ॥ ४६ ॥ दक्षिणंतीरमुदधेर्लंकायत्रगतापुरी ॥ अस्तंदिनकरेयातेरक्षसांनिलयंपुरीम् ॥ ४७ ॥ प्रविष्टोहमविज्ञातोरक्षोभिर्भीमविक्रमैः ॥ तत्रप्रविशतश्चापिकल्पांतघनसप्रभा ॥ ४८ ॥ अट्टहासंविमुंचंतीनारीकाप्युत्थितापुरः ॥ जिघांसंतींततस्तांतुज्वलदग्निशिरोरुहाम् ॥ ४९ ॥ सव्यमुष्टिप्रहारेणपराजित्यसुभैरवाम् ॥ प्रदोषकालेप्रविशंभीतयाहंतयोदितः ॥ ५० ॥ अहंलंकापुरीवीर निर्जिताविक्रमेणते ॥ यस्मात्तस्माद्विजेतासिसर्वरक्षांस्यशेषतः ॥ ५१ ॥ तत्राहंसर्वरात्रंतुविचरञ्जनकात्मजाम् ॥ रावणांतःपुरगतोनचापश्यंसुमध्यमाम् ॥ ५२ ॥ ततःसीतामपश्यंस्तुरावणस्यानिवेशने ॥ शोकसागरमासाद्यनपारमुपलक्षये ॥ ५३ ॥ शोचताचमयादृष्टंप्राकारेणाभिसंवृतम् ॥ कांचनेनविकृष्टेनगृहोपवनमुत्तमम् ॥ ५४ ॥ सप्राकारमवप्लुत्यपश्यामिबहुपादपम् ॥ अशोकवनिकामध्येशिंशपापादपोमहान् ॥ ५५ ॥ तमारुह्यचपश्यामिकांचनंकदलीवनम् ॥ अदूराच्छिंशपावृक्षात्पश्यामिवरवर्णिनीम् ॥ ५६ ॥ श्यामांकमलपत्राक्षीमुपवासकृशाननाम् ॥ तदेकवासः संवीतांरजोध्वस्ताशिरोरुहाम् ॥ ५७ ॥ शोकसंतापदीनांगींसीतांभर्तृहितेस्थिताम् ॥ राक्षसीभिर्विरूपाभिःक्रूराभिरभिसंवृताम् ॥ ५८ ॥ मांसशोणितभक्ष्याभिर्व्याघ्रीभिर्हरिणीयथा ॥ सामयाराक्षसीमध्येतर्ज्यमानामुहुर्मुहुः ॥ ५९ ॥

कायां दर्शनादेवमुक्तिः ॥ ५२ ॥ उपलक्षये उपालक्षयम् ॥ ५३ ॥ विकृष्टेन विप्रकृष्टोर्ध्वभागेन अत्युच्चेनेति यावत् । तादृशेन प्रासादेनावृतं किंचित्स्थानं मया दृष्टम् ॥ ५४ ॥ ततः प्राकारमव प्लुत्य बहुपादपं गृहोपवनमुद्यानं पश्याम्यपश्यम् । महान्पादपो दृष्ट इति शेषः ॥ ५५ ॥ पश्यामीति प्राग्वत् । कांचनं तद्वर्णम् । अदूराच्छिंशपावृक्षात् शिंशपावृक्षस्य समीपे ॥ ५६ ॥ तदेकवास स्संवीतां तेन हरणकाले किष्किंधायां पूर्वं दृष्टेनैवैकवाससा संवीताम् ॥ ५७ ॥ ५८ ॥ व्याघ्रीपरिवृतां हरिणीमिव तामपश्यमिति संबंधः । राक्षसीमध्ये ताभिरेव तर्ज्यमाना सा सदुःखा मया कंथचिदासादिते त्यन्वयः ॥ ५९ ॥

॥ ६० ॥ रावणाद्रिनिवृत्तो विनिवर्तितोर्थः सुखभोगरूपो यया मर्तव्य मरणे ॥ ६१ ॥ ६२ ॥ शृणोमि श्रुतवान् रावणस्य निवेशने तत्समीपे । यद्वा निवेशने सीतासमीपं प्रवेशनकाले ॥ ६३ ॥ प्रत्यसंहरं सूक्ष्मम करवम् । गहने पर्णसमूहगूढप्रदेशे स्थितः ॥ ६४ ॥ ६५ ॥ परिरभ्य चेति । वित्रस्तेव बभूवेति शेषः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ किंस्वित्कुत्सितामित्यर्थः ॥ ७२ ॥ तदसान्निधौ

एकवेणीधरादीनाभर्तृचिंतापरायणा ॥ भूमिशय्याविवर्णांगीपद्मिनीवहिमागमे ॥ ६० ॥ रावणाद्रिनिवृत्तार्थामर्तव्येकृतनिश्चया ॥ कथंचिन्मृगशावाक्षीतूर्णमासादितामया ॥ ६१ ॥ तांदृष्ट्वातादृशींनारींरामपत्नींयशस्विनीम् ॥ तत्रैवशिंशपावृक्षेपश्यन्नहमवस्थितः ॥ ६२ ॥ ततोहलहलाशब्दंकांचीनूपुरमिश्रितम् ॥ शृणोम्यधिकगंभीरंरावणस्यनिवेशने ॥ ६३ ॥ ततोहंपरमोद्विग्नःस्वरूपंप्रत्यसंहरम् ॥ अहंचशिंशपावृक्षेपक्षीवगहनेस्थितः ॥ ॥ ६४ ॥ ततोरावणदाराश्चरावणश्चमहाबलः ॥ तंदेशमनुसंप्राप्तोयत्रसीताऽभवत्स्थिता ॥ ६५ ॥ तंदृष्ट्वाथवरारोहासीतारक्षोगणेश्वरम् ॥ संकुच्योरूस्तनौपीनौबाहुभ्यांपरिरभ्यच ॥ ६६ ॥ वित्रस्तांपरमोद्विग्नांवीक्षमाणामितस्ततः ॥ त्राणंकंचिदपश्यंतींवेपमानांतपस्विनीम् ॥ ६७ ॥ तामुवाचदशग्रीवःसीतांपरमदुःखिताम् ॥ अवाक्शिराःप्रपतितोबहुमन्यस्वभामिनि ॥ ६८ ॥ यदिचेत्त्वंतुमांदर्पान्नाभिनंदसिगर्विते ॥ द्विमासानंतरंसीतेपास्यामिरुधिरंतव ॥ ६९ ॥ एतच्छ्रुत्वावचस्तस्यरावणस्यदुरात्मनः ॥ उवाचपरमक्रुद्धासीतावचनमुत्तमम् ॥ ७० ॥ राक्षसाधमरामस्यभार्याममिततेजसः ॥ इक्ष्वाकुवंशनाथस्यस्नुषांदशरथस्यच ॥ ७१ ॥ अवाच्यंवदतोजिह्वाकथंनपतितातव ॥ किंस्विद्वीर्यंतवानार्ययोमांभर्तुरसन्निधौ ॥ ॥ ७२ ॥ अपहृत्यागतःपाप तेनादृष्टोमहात्मना ॥ नत्वंरामस्यसदृशोदास्येप्यस्यनयुज्यसे ॥ ७३ ॥ अजेयःसत्यवाक्शूरोरणश्लाघीचराघवः ॥ जानक्यापरुषंवाक्यमेवमुक्तोदशाननः ॥ ७४ ॥ जज्वालसहसाकोपाच्चितास्थइवपावकः ॥ विवृत्यनयनेक्रूरेमुष्टिमुद्यम्यदक्षिणम् ॥ ७५ ॥ मैथिलींहंतुमारब्धःस्त्रीभिर्हाहाकृतंतदा ॥ स्त्रीणांमध्यात्समुत्पत्यतस्यभार्यादुरात्मनः ॥ ७६ ॥ वरामंदोदरीनामतयासप्रतिषेधितः ॥ उक्तश्चमधुरांवाणींतयासमदनार्दितः ॥ ७७ ॥ सीतयातवकिंकार्यंमहेंद्रसमविक्रम ॥ मयासहरमस्वाद्यमद्विशिष्टानजानकी ॥ ७८ ॥ देवगंधर्वकन्याभिर्यक्षकन्याभिरेवच ॥ सार्धंप्रभोरमस्वेतिसीतयाकिंकरिष्यसि ॥ ७९ ॥ ततस्ताभिःसमेताभिर्नारीभिःसमहाबलः ॥ उत्थाप्यसहसानीतोभवनंस्वंनिशाचरः ॥ ८० ॥ यातेतस्मिन्दशग्रीवेराक्षस्योविकृताननाः ॥ सीतांनिर्भर्त्सयामासुर्वाक्यैःक्रूरैःसुदारुणैः ॥ ८१ ॥

अपहृत्य तेनादृष्ट इति लंकामागतः अन्यथा तदैव ते हननं स्यादित्यर्थः । सादृश्यसंभावनाऽपि दूरापास्तेत्याह दास्येपीति ॥ ७३ ॥ ७४ ॥ चितास्थपावकत्वेनास्पृश्यता सूचिता ॥ ७५ ॥ हाहाकृतं हाहेति कृतम् ॥ ७६ ॥ मंदोदरी नामेति पूर्वं धान्यमालिन्या प्रतिषिद्धमित्युक्तम् इदानीं मंदोदर्येत्यभिधानादुभाभ्यामपीति कल्पनीयम्।यद्वा मंदोदर्या एव नामांतरं धान्यमालिनीत्युक्तम्॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥

निरर्थकमासीदिति शेषः ॥ ८२ ॥ सीताव्यवसितं महत् मर्तव्यं न तु त्वमंगीकर्तव्य इत्येतद्रूपम् ॥ ८३ ॥ विहताशाः रावणानुकूल्यमस्माभिरवश्यं संपाद्यमिति तासामाशा अतएव तद्विषये निरुद्यमाः । परिक्लिश्य पूर्वव्यापारकृतः क्लेशः ॥ ८४ ॥ विलप्य प्रशुशोच विलापपूर्वकं शोकं चकार ॥ ८५ ॥ ८६ ॥ रक्षोविनाशकत्वाद्रोमहर्षणः ॥ ८७ ॥ राक्षसीगणमस्मान् राक्षसीरूपानस्मान् परित्रातुमलमेषा सीतेति शेषः ॥ ८८ ॥ अभियाचाम स्वरक्षणमिति शेषः ॥ ८९ ॥ ९० ॥ ततस्त्रिजटावाक्यानंतरम् ॥ कैतावद्भाग्यमिति लज्जिता तत्कथितस्वप्नसूचितरामविजयहर्षिता ॥९१॥

तृणवद्भाषितंतासांगणयामासजानकी ॥ गर्जितंचतथातासांसीतांप्राप्यनिरर्थकम् ॥८२॥ वृथागर्जितनिश्चेष्टाराक्षस्यःपिशिताशनाः ॥ रावणायशशंसुस्ताःसीताव्यवसितंमहत् ॥८३॥ ततस्ताःसहिताःसर्वाविहताशानिरुद्यमाः ॥ परिक्लिश्यसमस्तास्तानिद्रावशमुपागताः ॥ ८४ ॥ तासुचैवप्रसुप्तासुसीताभर्तृहितेरता ॥ विलप्यकरुणंदीनाप्रशुशोचसुदुःखिता ॥ ८५ ॥ तासांमध्यात्समुत्थाप्यत्रिजटावाक्यमब्रवीत् ॥ आत्मानंखादतक्षिप्रंनसीतामसितेक्षणाम् ॥ ८६ ॥ जनकस्यात्मजांसाध्वींस्नुषांदशरथस्यच ॥ स्वप्नोह्यद्यमयादृष्टोदारुणोरोमहर्षणः ॥ ८७ ॥ रक्षसांचविनाशायभर्तुरस्याजयायच ॥ अलमस्मान्परित्रातुंराघवाद्राक्षसीगणम् ॥ ८८ ॥ अभियाचामवैदेहीमेतद्धिममरोचते ॥ यदिह्येवंविधःस्वप्नोदुःखितायाःप्रदृश्यते ॥ ८९ ॥ सादुःखैर्विविधैर्मुक्तासुखमाप्नोत्यनुत्तमम् ॥ प्रणिपातप्रसन्नाहिमैथिलीजनकात्मजा ॥ ९० ॥ अलमेषापरित्रातुंराक्षस्योमहतोभयात् ॥ ततःसाह्रीमतीबालाभर्तुर्विजयहर्षिता ॥ ९१ ॥ अवोचद्यदितत्तथ्यंभवेयंशरणंहिवः ॥ तांचाहंतादृशींदृष्ट्वासीतायादारुणांदशाम् ॥ ९२ ॥ चिंतयामासविश्रांतोनचमेनिर्वृतंमनः ॥ संभाषणार्थेचमयाजानक्याश्चिंतितोविधिः ॥ ९३ ॥ इक्ष्वाकुकुलवंशस्तुस्तुतोममपुरस्कृतः ॥ श्रुत्वातुगदितांवाचंराजर्षिगणभूषिताम् ॥ ९४ ॥ प्रत्यभाषतमांदेवीबाष्पैःपिहितलोचना ॥ कस्त्वंकेनकथंचेहप्राप्तोवानरपुंगव ॥ ९५ ॥ काचरामेणतेप्रीतिस्तन्मेशंसितुमर्हसि ॥ तस्यास्तद्वचनंश्रुत्वाअहमप्यब्रुवंवचः ॥९६॥ देविरामस्यभर्तुस्तेसहायोभीमविक्रमः ॥ सुग्रीवोनामविक्रांतोवानरेंद्रोमहाबलः ॥९७॥ तस्यमांविद्धिभृत्यंत्वंहनूमंतमिहागतम् ॥ भर्त्रासंप्रहितस्तुभ्यंरामेणाक्लिष्टकर्मणा ॥ ९८ ॥ इदंतुपुरुषव्याघ्रःश्रीमान्दाशरथिःस्वयम् ॥ अंगुलीयमभिज्ञानमदात्तुभ्यंयशस्विनि ॥ ९९ ॥ तदिच्छामित्वयाज्ञप्तंदेविकिंकरवाण्यहम् ॥ रामलक्ष्मणयोःपार्श्वंनयामित्वांकिमुत्तरम् ॥ १०० ॥



तत्रिजटावाक्यं यदि तथ्यं तदा अवश्यं शरणं भवेयमित्यवोचदिति संबंधः॥९२॥चिंतयामासेति लिङुत्तमः । ईदृश्या अपीदृशं दुःखमिति चिंतां कृतवानित्यर्थः । मे मनो न च निर्वृतं न चिंतारहितं जातम् । विधिः प्रकारः ॥ ९३ ॥ मम स्तुतो मया स्तुतः ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ तुभ्यं भर्त्रा तव भर्त्रा ॥ ९८ ॥ ९९ ॥ त्वयाज्ञप्तं त्वत्कर्तृकमाज्ञापनम् ॥ उत्तरं समुद्रोत्तरकूलस्थम् । यद्वा किमुत्तरं

मंत्युत्तरं किं ब्रूहीति शेषः ॥१००॥ उत्पाट्य समूलं नाशयित्वा ॥ १ ॥ २ ॥ ३ ॥ संदिदेश काकवृत्तांतं तिलककरणं च राममात्रैकवेद्यं कथयामासेत्यर्थः ॥ ४ ॥ इहाभ्युद्गतमानसः इहागंतुं निश्चितमानसः मम वृत्तांतं त्वयानुभूतं मद्विषयं रावणराक्षसीवृत्तांतम् ॥ ५ ॥ ६ ॥ ७ ॥ यद्यस्मादन्यथा अनागमने द्वौ मासौ मम जीवितं भवेत् अनाथवत् म्रिये राक्षसीकृतवधेनेति भावः ॥ ८ ॥ उत्तरं कार्यशेषं

एतच्छ्रुत्वाविदित्वाचसीताजनकनंदिनी ॥ आहरावणमुत्पाट्यराघवोमांनयत्विति ॥ १ ॥ प्रणम्यशिरसादेवीमहमार्यामनिंदिताम् ॥ राघवस्यमनोह्लादमभिज्ञानमयाचिषम् ॥ २ ॥ अथमामब्रवीत्सीतागृह्यतामयमुत्तमः ॥ मणिर्येनमहाबाहूरामस्त्वांबहुमन्यते ॥ ३ ॥ इत्युक्त्वातुवरारोहामणिप्रवरमुत्तमम् ॥ प्रायच्छत्परमोद्विग्नावाचामांसंदिदेशह ॥ ४ ॥ ततस्तस्यैप्रणम्याहंराजपुत्र्यैसमाहितः ॥ प्रदक्षिणंपरिक्रामम्इहाभ्युद्गतमानसः॥१०५॥ उत्तरंपुनरेवाहनिश्चित्यमनसातदा ॥ हनूमन्ममवृत्तांतंवक्तुमर्हसिराघवे ॥ ६ ॥ यथाश्रुत्वैवनचिरात्तावुभौरामलक्ष्मणौ ॥ सुग्रीवसहितौवीरावुपेयातांतथाकुरु ॥ ७ ॥ यदन्यथाभवेदेतद्द्वौमासौजीवितंमम ॥ नमांद्रक्ष्यतिकाकुत्स्थोम्रियेसाहमनाथवत् ॥ ८ ॥ तच्छ्रुत्वाकरुणंवाक्यंक्रोधोमामभ्यवर्तत ॥ उत्तरंचमयादृष्टंकार्यशेषमनंतरम् ॥ ९ ॥ ततोऽवर्धतमेकायस्तदापर्वतसन्निभः ॥ युद्धाकांक्षीवनंतस्यविनाशयितुमारभे ॥ ११० ॥ तद्भग्नंवनखंडंतुभ्रांतत्रस्तमृगद्विजम् ॥ प्रतिबुध्यनिरीक्षंतेराक्षस्योविकृताननाः ॥ ११ ॥ मांचदृष्ट्वावनेतस्मिन्समागम्यततस्ततः ॥ ताःसमभ्यागताःक्षिप्रंरावणायाचचक्षिरे ॥ १२ ॥ राजन्वनमिदंदुर्गंतवभग्नंदुरात्मना ॥ वानरेणह्यविज्ञायतववीर्यंमहाबल ॥ १३ ॥ तस्यदुर्बुद्धिताराजंस्तवविप्रियकारिणः ॥ वधमाज्ञापयक्षिप्रंयथासौनपुनर्व्रजेत् ॥ १४ ॥ तच्छ्रुत्वाराक्षसेंद्रेणविसृष्टाबहुदुर्जयाः ॥ राक्षसाःकिंकरानामरावणस्यमनोनुगाः ॥१५॥ तेषामशीतिसाहस्रंशूलमुद्गरपाणिनाम् ॥ मयातस्मिन्वनोद्देशेपरिघेणनिषूदितम् ॥१६॥ तेषांतुहतशिष्टायेतेगतालघुविक्रमाः ॥ निहतंचमयासैन्यंरावणायाचचक्षिरे ॥ १७ ॥ ततोमेबुद्धिरुत्पन्नाचैत्यप्रासादमुत्तमम् ॥ तत्रस्थान्राक्षसान्हत्वाशतंस्तंभेनवैपुनः ॥ १८ ॥ ललामभूतोलंकायामयाविध्वंसितोरुषा ॥ ततःप्रहस्तस्यसुतंजंबुमालिनमादिशत् ॥ १९ ॥ राक्षसैर्बहुभिःसार्धंघोररूपैर्भयानकैः ॥ तमहंबलसंपन्नंराक्षसंरणकोविदम् ॥१२०॥ परिघेणातिघोरेणसूदयामिसहानुगम् ॥ तच्छ्रुत्वाराक्षसेंद्रस्तुमंत्रिपुत्रान्महाबलान् ॥ २१ ॥ पदातिबलसंपन्नान्प्रेषयामासरावणः ॥ परिघेणैवतान्सर्वान्नयामियमसादनम् ॥ २२ ॥ मंत्रिपुत्रान्हतान्छ्रुत्वासमरेलघुविक्रमान् ॥ पंचसेनाग्रगाञ्छूरान्प्रेषयामासरावणः ॥२३॥ तानहंसहसैन्यान्वैसर्वानेवाभ्यसूदयम् ॥ ततःपुनर्दशग्रीवःपुत्रमक्षंमहाबलम् ॥ २४ ॥ बहुभीराक्षसैःसार्धंप्रेषयामाससंयुगे ॥ तंतुमंदोदरीपुत्रंकुमारंरणपंडितम् ॥ २५ ॥ सहसाखंसमुद्यंतंपादयोश्चगृहीतवान् ॥ तमासीनंशतगुणंभ्रामयित्वाव्यपेषयम् ॥ २६ ॥

लंकानाशनरूपम् ॥ ९ ॥ ११० ॥ ११ ॥ समागम्य मिलित्वा ॥ १२ ॥ १३ ॥ तस्य दुर्बुद्धितेति बहुव्रीहिस्तत्र् । न पुनर्व्रजेत् स्वदेशमिति शेषः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ चैत्यप्रासादं विनाशयितुमिति शेषः ॥ १८ ॥ ललामभूतश्चैत्यप्रासाद इति शेषः ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

द्वितीयं मेषितपुत्रापेक्षया द्वितीयम् ॥ २७ ॥ २८ ॥ महता प्रत्ययेन विश्वासेन ॥२९॥१३०॥ प्रबद्धा प्रबद्ध्य राक्षसेभ्य आर्पयदिति शेषः । बध्नंति अबध्नन् ॥ ३१ ॥ ३२ ॥ सीतार्थमिति कथितमित्यर्थः ॥३३॥तस्याः सीतायाः॥३४॥३५॥३६॥३७॥ ३८ ॥ समयं प्रतिज्ञाम् ॥ ३९ ॥ १४० ॥ संप्लवतां सम्यक्प्लवतात् । प्रभुरहमिति शेषः ॥ ४१ ॥ तस्य रामस्य तेन रामसाहाय्यस्य कर्तव्यत्वेन तुभ्यं

तमक्षमागतंभग्नंनिशम्यसदशाननः ॥ ततश्चेंद्रजितंनामद्वितीयंरावणःसुतम् ॥ २७ ॥ व्यादिदेशसुसंक्रुद्धोबलिनंयुद्धदुर्मदम् ॥ तच्चाप्यहंबलंसर्वंतं चराक्षसपुंगवम् ॥ २८ ॥ नष्टौजसंरणेकृत्वापरंहर्षमुपागतः ॥ महतापिमहाबाहुःप्रत्ययेनमहाबलः ॥ २९ ॥ प्रहितोरावणेनैषसहवीरैर्मदोद्धतैः ॥ सोऽविषह्यंहिमांबुद्ध्वास्वसैन्यंचावमर्दितम् ॥ १३० ॥ ब्रह्मणोस्त्रेणसतुमांप्रबद्ध्वाचातिवेगिनः ॥ रज्जुभिश्चापिबध्नंतिततोमांतत्रराक्षसाः ॥ ३१ ॥ रावणस्यसमीपंचगृहीत्वामामुपागमन् ॥ दृष्ट्वासंभाषितश्चाहंरावणेनदुरात्मना ॥ ३२ ॥ पृष्टश्चलंकागमनंराक्षसानांचतंवधम् ॥ तत्सर्वंचरणेतत्रसी तार्थमुपजल्पितम् ॥ ३३ ॥ तस्यास्तुदर्शनाकांक्षीप्राप्तस्त्वद्भवनंविभो ॥ मारुतस्यौरसःपुत्रोवानरोहनुमानहम् ॥ ३४ ॥ रामदूतंचमांविद्धिसुग्रीवस चिवंकपिम् ॥ सोहंदौत्येनरामस्यत्वत्सकाशमिहागतः ॥ ३५ ॥ शृणुचापिसमादेशंयदहंप्रब्रवीमिते ॥ राक्षसेशहरीशस्त्वांवाक्यमाहसमाहितम् ॥ ३६ ॥ सुग्रीवश्चमहाभागसत्वांकौशलमब्रवीत् ॥ धर्मार्थकामसहितंहितंपथ्यमुवाचह ॥ ३७ ॥ वसतोऋष्यमूकेमेपर्वतेविपुलद्रुमे ॥ राघवोरण विक्रांतोमित्रत्वंसमुपागतः ॥ ३८ ॥ तेनमेकथितंराजन्भार्यामेरक्षसाहृता ॥ तत्रसाहाय्यहेतोर्मेसमयंकर्तुमर्हसि ॥ ३९ ॥ वालिनाहृतराज्येनसुग्री वेणसहप्रभुः ॥ चक्रेग्निसाक्षिकंसख्यंराघवःसहलक्ष्मणः ॥१४०॥ तेनवालिनमाहत्यशरेणैकेनसंयुगे ॥ वानराणांमहाराजःकृतःसंप्लवतांप्रभुः ॥ ४१ ॥ तस्यसाहाय्यमस्माभिःकार्यंसर्वात्मनात्विह ॥ तेनप्रस्थापितस्तुभ्यंसमीपमिहधर्मतः ॥४२॥ क्षिप्रमानीयतांसीतादीयतांराघवस्यच ॥ यावन्नहरयो वीराविधमंतिबलंतव ॥ ४३ ॥ वानराणांप्रभावोयंनकेनविदितःपुरा ॥ देवतानांसकाशंचयेगच्छंतिनिमंत्रिताः ॥ ४४ ॥ इतिवानरराजस्त्वामाहेत्य भिहितोमया ॥ मामैक्षतततोरुष्टश्चक्षुषाप्रदहन्निव ॥ ४५ ॥ तेनवध्योहमाज्ञप्तोरक्षसारौद्रकर्मणा ॥ मत्प्रभावमविज्ञायरावणेनदुरात्मना ॥ ४६ ॥ ततोविभीषणोनामतस्यभ्रातामहामतिः ॥ तेनराक्षसराजश्चयाचितोममकारणात् ॥ ४७ ॥ नैवंराक्षसशार्दूलत्यज्यतामेषनिश्चयः ॥ राजशास्त्रव्यपे तोहिमार्गःसँल्लक्ष्यतेत्वया ॥ ४८ ॥



समीपं तव समीपं प्रस्थापितो दूत इति शेषः । दूतप्रेषणं विना प्रथममेव युद्धस्याधर्मत्वादिति भावः॥४२॥सीतादानाभावे बाधकमाह यावदिति॥४३॥वानराणामिति।एवं च लंकानाशने वानराःअसमर्था न इति मंतव्यमिति भावः । राघवाणामिति पाठे मनुष्योऽसमर्थ इति न मंतव्यमिति भावः॥४४॥४५॥मत्प्रभावं वरदानं लब्ध्वावध्यत्वरूपम्॥४६॥४७॥नैवम् अयमवध्य इत्यर्थः।एष निश्चयः एतद्वधनिश्चय सँल्लक्ष्यते

विचार्यते ॥४८॥ वेदितव्यं निवेदनीयम् एवं चैवमुक्तिर्दूतस्य नापराध इत्यर्थः ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥ हनंतो मामिति शेषः । आर्षमेतत् ॥५३॥५४॥५५॥५६॥५७॥५८॥५९॥१६०॥
॥ ६१ ॥ विस्मयकारी य उदंतो वृत्तांतस्तद्भाषिणां तं वदताम् ॥ ६२ ॥ उपलक्षितम् । तद्दहनमिति शेषः । निमित्तैः शुभसूचकैः । निमित्तान्याह दीप्यमानेत्यादि ॥ ६३ ॥ दृष्टार्थैर्दृष्टसंवादैः महागुणैः

दूतवध्यानदृष्टाहिराजशास्त्रेषुराक्षस ॥ दूतेनवेदितव्यंचयथाभिहितवादिना ॥ ४९ ॥ सुमहत्यपराधेपिदूतस्यातुलविक्रम ॥ विरूपकरणंदृष्टं नवधोस्तिहिशास्त्रतः ॥ १५० ॥ विभीषणेनैवमुक्तोरावणःसंदिदेशतान् ॥ राक्षसानेतदेवाद्यलांगूलंदह्यतामिति ॥ ५१ ॥ ततस्तस्यवचःश्रुत्वा ममपुच्छंसमंततः ॥ वेष्टितंशणवल्कैश्चपट्टैःकार्पासकैस्तथा ॥ ५२ ॥ राक्षसाःसिद्धसंनाहास्ततस्तेचंडविक्रमाः ॥ तदादीप्यंतमेपुच्छंहनंतःकाष्ठमुष्टिभिः ॥ ५३ ॥ बद्धस्यबहुभिःपाशैर्यंत्रितस्यचराक्षसैः ॥ नमेपीडाभवत्काचिद्दिदृक्षोर्नगरींदिवा ॥ ५४ ॥ ततस्तेराक्षसाःशूराबद्धंमामग्निसंवृतम् ॥ अघोषयन्राजमार्गेनगरद्वारमागताः ॥ ५५ ॥ ततोहंसुमहद्रूपंसंक्षिप्यपुनरात्मनः ॥ विमोचयित्वातंबंधंप्रकृतिस्थःस्थितःपुनः ॥ ५६ ॥ आयसंपरिघंगृह्यतानिरक्षांस्यसूदयम् ॥ ततस्तन्नगरद्वारंवेगेनप्लुतवानहम् ॥ ५७ ॥ पुच्छेनचप्रदीप्तेनतांपुरींसाट्टगोपुराम् ॥ दहाम्यहमसंभ्रांतोयुगांताग्निरिवप्रजाः ॥ ५८ ॥ विनष्टाजानकीव्यक्तंनह्यदग्धःप्रदृश्यते ॥ लंकायाःकश्चिदुद्देशःसर्वाभस्मीकृतापुरी ॥ ५९ ॥ दहताचमयालंकांदग्धासीतानसंशयः ॥ रामस्यचमहत्कार्यंममेदंविफलीकृतम् ॥ १६० ॥ इतिशोकसमाविष्टश्चिंतामहमुपागतः ॥ ततोहंवाचमश्रौषंचारणानांशुभाक्षराम् ॥ ६१ ॥ जानकीनचदग्धेतिविस्मयोदंतभाषिणाम् ॥ ततोमेबुद्धिरुत्पन्नाश्रुत्वातामद्भुतांगिरम् ॥ ६२ ॥ अदग्धाजानकीत्येवनिमित्तैश्चोपलक्षितम् ॥ दीप्यमानेतुलांगूलेनमांदहतिपावकः ॥ ६३ ॥ हृदयंचप्रहृष्टंमेवाताःसुरभिगंधिनः ॥ तैर्निमित्तैश्चदृष्टार्थैःकारणैश्चमहागुणैः ॥ ६४ ॥ ऋषिवाक्यैश्चदृष्टार्थैरभवंहृष्टमानसः ॥ पुनर्दृष्टाचवैदेहीविसृष्टश्चतयापुनः ॥ ६५ ॥ ततःपर्वतमासाद्यतत्रारिष्टमहंपुनः ॥ प्रतिप्लवनमारेभेयुष्मद्दर्शनकांक्षया ॥ ६६ ॥ ततःश्वसनचंद्रार्कसिद्धगंधर्वसेवितम् ॥ पंथानमहमाक्रम्यभवतोदृष्टवानिह ॥ ६७ ॥ राघवस्यप्रसादेनभवतांचैवतेजसा ॥ सुग्रीवस्यचकार्यार्थं मयासर्वमनुष्ठितम् ॥ ६८ ॥ एतत्सर्वंमयातत्रयथावदुपपादितम् ॥ तत्रयन्नकृतंशेषंतत्सर्वंक्रियतामिति ॥ १६९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मी० आदि० सुंदरकांडेअष्टपंचाशःसर्गः ॥ ५८ ॥ ॥ एतदाख्यायतत्सर्वंहनूमान्मारुतात्मजः ॥ भूयःसमुपचक्रामवचनंवक्तुमुत्तरम् ॥ १ ॥ सफलो राघवोद्योगःसुग्रीवस्यचसंभ्रमः ॥ शीलमासाद्यसीतायाममचप्रीणितंमनः ॥ २ ॥

कारणैर्मत्प्रवृत्तिकारणैः सीतारामरूपैः आरेभे ॥ ६४ ॥ ६५ ॥ लिडुत्तमः ॥ ६६ ॥ ६७ ॥ ६८ ॥ १६९ ॥ ३ॆपैकेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुन्दरकांडे अष्टपंचाशः सर्गः ॥ ५८ ॥ एतदिति । उत्तरं पराक्रमयुक्तत्वात्सर्वतोऽधिकम् ॥१॥ संभ्रम आदर उत्साह इत्यर्थः । सीतायाः शीलं सद्वृत्तं पातिव्रत्यम् आसाद्य दृष्ट्वा राघवोद्योगादेः साफल्यज्ञानेन

मम मनः प्रीणितं तुष्टम् । मम च प्रवणं मन इति पाठेपि प्रवणं संतोषप्रवणमित्यर्थः ॥ २ ॥ सदृशं पतिव्रतानामरुंधत्यादीनां सदृशामित्यर्थः ॥ ३ ॥ तर्हि रावणं किमिति नादहदित्यत आह सर्वथेति । अतिप्रकृष्टः महातपःसंपन्न इत्यर्थः । तां सीतां स्पृशतोपि यस्य गात्रं तपसा न नाशितमिति संबंधः ॥ ४ ॥ नैतावता सीताशीलं दुर्बलमित्याशंक्यमित्याह नेति । यत्क्रुद्धा सीता कुर्यात्तत्स्पृष्टाग्निशिखापि न कुर्यात् । इयं तु भर्तुः पराक्रमकीर्तये नाद्यापि क्रुद्ध्यतीति भावः । अक्रुद्धाया अपि स्पर्शमात्रेण प्राप्तो नाशस्तु रावणतपसा निवारित इति ध्येयम् ॥ ५ ॥ इदानीं भृत्यजयस्यापि स्वामिसंबंधित्वसत्त्वेन वयमेव सीतापातिव्रत्यं सहायमासाद्य रावणं जित्वा देव्या सह राघवौ द्रक्ष्यामह इत्याह जांबवदिति । जांबवदादीननुज्ञाप्यानुज्ञां कुर्वंत्विति संप्रार्थ्य । अस्मिन्कार्ये सीतान्वेषणरूपे एवंगते उक्तप्रकारं प्राप्ते

आर्यायाःसदृशंशीलंसीतायाःप्लवगर्षभाः ॥ तपसाधारयेल्लोकान्क्रुद्धावानिर्दहेदपि ॥ ३ ॥ सर्वथातिप्रकृष्टोसौरावणोराक्षसेश्वरः ॥ यस्यतांस्पृशतो गात्रंतपसानाविनाशितम् ॥ ४ ॥ नतदग्निशिखाकुर्यात्संस्पृष्टापाणिनासती ॥ जनकस्यसुताकुर्याद्यत्क्रोधकलुषीकृता ॥ ५ ॥ जांबवत्प्रमुखान्सर्वाननुज्ञाप्यमहाकपीन् ॥ अस्मिन्नेवंगतेकार्येभवतांचनिवेदिते ॥ न्याय्यंस्मसहवैदेह्याद्रष्टुंतौपार्थिवात्मजौ ॥ ६ ॥ अहमेकोपिपर्याप्तःसराक्षसगणांपुरीम् ॥ तांलंकांतरसाहंतुंरावणंचसराक्षसम् ॥ ७ ॥ किंपुनःसहितोवीरैर्बलवद्भिःकृतात्मभिः ॥ कृतास्त्रैःप्लवगैःशक्तैर्भवद्भिर्विजयैषिभिः ॥ ८ ॥ अहंतुरावणंयुद्धेससैन्यंसपुरःसरम् ॥ सहपुत्रंवधिष्यामिसहोदरयुतंयुधि ॥ ९ ॥ ब्राह्ममस्त्रंचरौद्रंचवायव्यंवारुणंतथा ॥ १० ॥ यदिशक्रजितोस्त्राणिदुर्निरीक्ष्याणिसंयुगे ॥ तान्यहंनिहनिष्यामिविधमिष्यामिराक्षसान् ॥ ११ ॥ भवतामभ्यनुज्ञातोविक्रमोमेरुणद्धितम् ॥ मयाऽतुलाविसृष्टाहिशैलवृष्टिर्निरंतरा ॥ १२ ॥ देवानपिरणेहन्यात्किंपुनस्तान्निशाचरान् ॥ भवतामननुज्ञातोविक्रमोमेरुणद्धिमाम् ॥ १३ ॥ सागरोप्यतियाद्वेलांमंदरःप्रचलेदपि ॥ नजांबवंतंसमरेकंपयेदरिवाहिनी ॥ १४ ॥ सर्वराक्षससंघानांराक्षसायेचपूर्वजाः ॥ अलमेकोपिनाशायवीरोवालिसुतःकपिः ॥ १५ ॥ प्लवगस्योरुवेगेननीलस्यचमहात्मनः ॥ मंदरोप्यवशीर्येतकिंपुनर्युधिराक्षसाः ॥ १६ ॥ सदेवासुरयक्षेषुगंधर्वोरगपक्षिषु ॥ मैंदस्यप्रतियोद्धारंशंसतद्विविदस्यवा ॥ १७ ॥ अश्विपुत्रौमहावेगावेतौप्लवगसत्तमौ ॥ एतयोःप्रतियोद्धारंनपश्यामिरणाजिरे ॥ १८ ॥ मयैवनिहतालंकादग्धाभस्मीकृतापुरी ॥ राजमार्गेषुसर्वेषुनामविश्रावितंमया ॥ १९ ॥

तत्प्रकारविशिष्टे च भवतां निवेदिते सति तौ पार्थिवात्मजौ वैदेह्या संद्रष्टुं न्याय्यमित्यब्रवीदिति शेषः ॥ ६ ॥ तया सह दर्शने उपपत्तिमाह अहमिति । एवं च राक्षसान्हत्वा देव्यानयनं कृत्वा देव्या सहैव तौ द्रक्ष्याम इत्यर्थः ॥ ७ ॥ कृतास्त्रैर्देवांशत्वादस्त्रप्रयोगसमर्थैः ॥ ८ ॥ उक्तमेवार्थं संभ्रमेण पुनराह अहं त्विति । अहमेवेत्यर्थः ॥ ९ ॥ १० ॥ यद्यपि दुर्निरीक्ष्याणि तथापि तान्यहं निहनिष्यामि ब्रह्मणो वरदानान्निवारयामि परावृत्तैस्तैरेव राक्षसान्विधमिष्यामि निहनिष्यामि ॥ ११ ॥ रुणद्धि रोत्स्यति ॥ १२ ॥ भवतामननुज्ञातः अनुज्ञां विना मे विक्रमो राक्षसवधप्रवृत्तिर्मां रुणद्धीत्यर्थः । अतः पूर्वमेव मया न पराक्रांतमित्यर्थः ॥ १३ ॥ इदानीं सर्वेपि भवंतस्तद्वधे समर्था इत्याह सागरोपीति ॥ १४ ॥ ये च पूर्वजा राक्षसास्तेषां नाशायैकोपीत्यन्वयः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ मयैव निहता निहत

माया एवं च सर्वैर्मिलित्वा नाशनीयेति किं वाच्यमिति भावः । नामेति सुग्रीवादेरिति शेषः ॥ १९ ॥ तदेवाह जयतीति ॥ २०॥२१॥ सीतादुःखविमर्शेपि संप्रत्येव समानेतुमुचितेत्याशयेन तद्दशां वर्णयति अशोकेत्यादि॥२२॥२३॥अचिंतयंती योग्यत्वेनागणयंती अगणने हेतुः पतिव्रतेति । अगणनाच्चावष्टब्धा निरुद्धा अस्तीति शेषः ॥२४॥ रामेण राममीत्या । अनन्यचिन्ता पौलोमीव नहुषरुद्धापौलोमीव ॥१५॥ तदेकवास इति व्याख्यातम् राक्षसीभिस्तर्ज्यमाना दृष्टेत्युत्तरेणान्वयः ॥२६॥२७॥२८॥ कथंचिदादौ तूष्णीं रामकथाप्रस्तावेन सर्वमर्थं रामसुग्रीववृत्तांतम् ॥ २९ ॥ तदेवाह ॥ रामसुग्रीवसख्यं चेति । नियतः

जयत्यतिबलोरामोलक्ष्मणश्चमहाबलः ॥ राजाजयतिसुग्रीवोराघवेणाभिपालितः ॥ २० ॥ अहंकोसलराजस्यदासःपवनसंभवः ॥ हनूमानितिसर्वत्रनामविश्रावितंमया ॥ २१ ॥ अशोकवनिकामध्येरावणस्यदुरात्मनः ॥ अधस्ताच्छिंशपामूलेसाध्वीकरुणमास्थिता ॥ २२ ॥ राक्षसीभिःपरिवृताशोकसंतापकर्शिता ॥ मेघरेखापरिवृताचंद्ररेखेवनिष्प्रभा ॥ २३ ॥ अचिंतयंतीवैदेहीरावणंबलदर्पितम् ॥ पतिव्रताचसुश्रोणीअवष्टब्धाचजानकी ॥ ॥ २४ ॥ अनुरक्ताहिवैदेहीरामेसर्वात्मनाशुभा ॥ अनन्यचिंतारामेणपौलोमीवपुरंदरे ॥२५॥ तदेकवासःसंवीतारजोध्वस्तातथैवच ॥ सामयाराक्षसीमध्येतर्ज्यमानामुहुर्मुहुः ॥ २६ ॥ राक्षसीभिर्विरूपाभिर्दृष्टाहिप्रमदावने ॥ एकवेणीधरादीनाभर्तृचिंतापरायणा ॥ २७ ॥ अधःशय्याविवर्णांगीपद्मिनीवहिमोदये ॥ रावणाद्विनिवृत्तार्थामर्तव्येकृतनिश्चया ॥२८॥ कथंचिन्मृगशावाक्षीविश्वासमुपपादिता ॥ ततःसंभाषिताचैवसर्वमर्थंप्रकाशिता ॥ ॥ २९ ॥ रामसुग्रीवसख्यंचश्रुत्वाप्रीतिमुपागता ॥ नियतःसमुदाचारोभक्तिर्भर्तरिचोत्तमा ॥ ३० ॥ यन्नहंतिदशग्रीवंसमहात्मादशाननः ॥ निमित्तमात्रंरामस्तुवधेतस्यभविष्यति ॥ ३१ ॥ साप्रकृत्यैवतन्वंगीतद्वियोगाच्चकर्शिता ॥ प्रतिपत्पाठशीलस्यविद्येवतनुतांगता ॥ ३२ ॥ एवमास्तेमहाभागासीताशोकपरायणा ॥ यदत्रप्रतिकर्तव्यंतत्सर्वमुपकल्प्यताम् ॥ ३३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥ तस्यतद्वचनंश्रुत्वावालिसूनुरभाषत ॥ अश्विपुत्रौमहावेगौबलवंतौप्लवंगमौ ॥ १ ॥ पितामहवरोत्सेकात्परमंदर्पमास्थितौ ॥ अश्विनोर्माननार्थंहिसर्वलोकपितामहः ॥ २ ॥ सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा ॥ वरोत्सेकेनमत्तौचप्रमथ्यमहतींचमूम् ॥ ३ ॥ सुराणाममृतंवीरौपीतवंतौमहाबलौ ॥ एतावेवहिसंक्रुद्धौसवाजिरथकुंजराम् ॥४॥ लंकांनाशयितुंशक्तौसर्वेतिष्ठंतुवानराः ॥ अहमेकोपिपर्याप्तःसराक्षसगणांपुरीम् ॥ ॥ ५ ॥ तांलंकांतरसाहंतुंरावणंचमहाबलम् ॥ किंपुनःसहितोवीरैर्बलवद्भिःकृतात्मभिः ॥ ६ ॥ कृतास्त्रैःप्लवगैःशक्तैर्भवद्भिर्विजयैषिभिः ॥ वायुसूनोर्बलेनैवदग्धालंकेतिनःश्रुतम् ॥ ७ ॥ दृष्टादेवीनचानीताइतितत्रनिवेदितुम् ॥ नयुक्तमिवपश्यामिभवद्भिःख्यातपौरुषैः ॥ ८ ॥

समुदाचारो दृढपातिव्रत्यं भर्तरि उत्तमा भक्तिश्चास्ति ॥ ३० ॥ इयत्यापि सामग्र्या यद्दशाननं शापादिना न हंति तत्स दशाननो महात्मा तपोबलेन शापाऽयोग्य इति भावः । अथापि सीतावरोधजन्यपापेन मृतप्राय एव स इत्याह निमित्तमात्रमिति । अतोस्माभिरपि सुशक्य वध एव स इति भावः ॥ ३१ ॥ तत्पापकारणमाह सेति ॥ ३२ ॥ ३३ ॥ वैलैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥ तस्येति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ दृष्टा देवी नानीता इति तत्र रामसमीपे निवेदितुं न युक्तमिव पश्यामि ॥ ८ ॥

तुल्योस्तीति शेषः॥९॥१०॥ अन्यत्कर्तव्यं किमस्ति काकुत्स्थ। अपितु जानकीग्रहणपूर्वकगमनादन्यन्न किमपीत्यर्थः॥११॥न्यस्याम स्थापयाम तान्सर्वान् किष्किंधायामागतान् वानरान्व्यलीकैरप्रियैर्दुःखैर्योजयित्वेति शेषः । तथा कृत्वा किं फलमितिशेषः किं परिक्लेश्य तानिति पाठांतरम् ॥१२॥१३॥१४॥ नैषा बुद्धिर्युक्तेति शेषः । तत्र हेतुमाह विचेतुमिति ॥१५॥ प्रथमं जय एव दुर्लभः । कथंचिज्जयेपि यदि न रोचयेत्तदा कार्यनाश इति भावः ॥ १६ ॥ अरुचौ हेतुः कुलंव्यपदिशन्निति प्रतिज्ञायेति च । अग्रतः कपिमुख्यानामित्यन्वयः ॥ १७ ॥ अरुचौ फलवैपरीत्यं दर्शयति विफलमिति ॥ १८ ॥ अस्य कार्यस्य निवेदने मतिं कृत्वेति शेषः । १९ ॥ अथ जांबवानंगदक्रोधपरिहाराय तन्मतं बहुमान्यसुहृद्भावेन निवर्तयति नतावदिति । हे राजपुत्र यथा भवान्पश्यति विचारयति एषा मतिर्नोस्माकमक्षमा न किंतु युक्तैव यथा रामस्य

नहिवःप्लवनेकश्चिन्नापिकश्चित्पराक्रमे ॥ तुल्यःसामरदैत्येषुलोकेषुहरिसत्तमाः ॥ ९॥ जित्वालंकांसरक्षौघांहत्वातंरावणंरणे ॥ सीतामादायगच्छामः सिद्धार्थाहृष्टमानसाः ॥ १० ॥ तेष्वेवंहतशेषेषुराक्षसेषुहनूमता ॥ किमन्यदत्रकर्तव्यंगृहीत्वायामजानकीम् ॥ ११ ॥ रामलक्ष्मणयोर्मध्येन्यस्यामजनकात्मजाम् ॥ किंव्यलीकैस्तुतान्सर्वान्वानरान्वानर्षभान् ॥ १२ ॥ वयमेवहिगत्वातान्हत्वाराक्षसपुंगवान् ॥ राघवंद्रष्टुमर्हामःसुग्रीवंसहलक्ष्मणम् ॥ १३ ॥ तमेवंकृतसंकल्पंजांबवान्हरिसत्तमः ॥ उवाचपरमप्रीतोवाक्यमर्थवदर्थवित् ॥ १४ ॥ नैषाबुद्धिर्महाबुद्धेयद्ब्रवीषिमहाकपे ॥ विचेतुंवयमाज्ञप्तादक्षिणांदिशमुत्तमाम् ॥ १५ ॥ नानेतुंकपिराजेननैवरामेणधीमता ॥ कथंचिन्निर्जितांसीतामस्माभिर्नाभिरोचयेत् ॥ १६ ॥ राघवोनृपशार्दूलःकुलंव्यपदिशन्स्वकम् ॥ प्रतिज्ञायस्वयंराजासीताविजयमग्रतः ॥ १७ ॥ सर्वेषांकपिमुख्यानांकथंमिथ्याकरिष्यति ॥ विफलंकर्मचकृतंभवेत्तुष्टिर्नतस्यच ॥ १८ ॥ वृथाचदर्शितंवीर्यंभवेद्वानरपुंगवाः॥ तस्माद्गच्छामवैसर्वेयत्ररामःसलक्ष्मणः ॥ सुग्रीवश्चमहातेजाःकार्यस्यास्यनिवेदने ॥ ॥१९॥ नतावदेषामतिरक्षमानोयथाभवान्पश्यतिराजपुत्र ॥ यथातुरामस्यमतिर्निविष्टातथाभवान्पश्यतुकार्यसिद्धिम् ॥२०॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकाण्डे षष्टितमःसर्गः ॥ ६० ॥ ॥ ततोजांबवतोवाक्यमगृह्णंतवनौकसः ॥ अंगदप्रमुखावीराहनूमांश्चमहाकपिः ॥१॥ प्रीतिमंतस्ततःसर्वेवायुपुत्रपुरःसराः ॥ महेंद्राग्रात्समुत्पत्यपुप्लुवुःप्लवगर्षभाः ॥ २ ॥ मेरुमंदरसंकाशामत्ताइवमहागजाः ॥ छादयंतइवाकाशंमहाकायामहाबलाः ॥ ३ ॥ सभाज्यमानंभूतैस्तमात्मवंतंमहाबलम् ॥ हनूमंतंमहावेगंवहंतइवदृष्टिभिः ॥ ४ ॥ राघवेचार्थनिर्वृत्तिंकर्तुंचपरमंयशः ॥ समाधायसमृद्धार्थाःकर्मसिद्धिभिरुन्नताः ॥ ५ ॥ प्रियाख्यानोन्मुखाःसर्वेसर्वेयुद्धाभिनंदिनः ॥ सर्वेरामप्रतीकारेनिश्चितार्था मनस्विनः ॥ ६ ॥

मतिर्निविष्टा अवस्थिता तथा कार्यसिद्धिं भवान्पश्यत्वित्यर्थः ॥ २० ॥ नरैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीराभीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षष्टितमः सर्गः ॥ ६० ॥ अगृह्णंत युक्तियुक्तत्वेनामन्यंत ॥ १ पुप्लुवुः प्लवंतो जग्मुः ॥२॥ आकाशं छादयंत इवेत्युत्प्रेक्षा ॥ ३ ॥ सभाज्यमानं पूज्यमानं भूतैः सिद्धादिभिः दृष्टिभिर्वहंत इव प्रीतिपूर्वकानिमिषदर्शनाद्दृष्टीनां वाहकत्वोत्प्रेक्षा॥४॥ राघवे कार्यनिर्वृत्तिं कार्यसिद्धिं समाधाय निश्चित्य तस्यात्मनश्च परमं यशः कर्तुं च निश्चित्य पुप्लुवुरिति संबंधः । कर्मसिद्धिभिः सीतादर्शनलंकादहनकर्मभिरुन्नताः उन्नतचित्ताः ॥ ५ ॥ रामप्रतीकारे रामकर्तव्ये

रावणप्रतीकारे निश्चितार्था अभूवन्निति शेषः ॥ ६ ॥ वनं सुग्रीवस्य मधुवनम् ॥ ७ ॥ ८ ॥ दधिमुखस्तन्नामा ॥ ९ ॥ परमोत्कटास्तत्रत्यमधुपानादावत्युत्कटोत्कंठावंतः महावनाख्यं वनमि त्यर्थः ॥ १० ॥ मधुपिंगलाः मधुपिंगलवर्णाः ॥ ११ ॥ अनुमान्य कृतानुमतिकान् कृत्वा निसर्गमाज्ञाम् ॥ १२ ॥ निसृष्टाः कृताज्ञाः ॥ १३ ॥ भक्षयंत अभक्षयन्नित्यर्थः ॥ १४ ॥ अनुमताः मधुपानादौ कृतानुमतिकाः हर्षमुदोर्बाह्याभ्यंतरत्वकृतो भेदः ॥ १५ ॥ तत्र बाह्यमानंदसूचकमाह गायंतीति ॥ १६ ॥ अतिब्रुवंति विवादं कुर्वंति नगाग्राद्वृक्षाग्रात् ॥ १७ ॥ गानरोदनहासा मधुपानमत्तधर्माः ॥ १८ ॥

प्लवमानाःखमाप्लुत्यततस्तेकाननौकसः ॥ नंदनोपममासेदुर्वनंद्रुमशतायुतम् ॥ ७ ॥ यत्तन्मधुवनंनामसुग्रीवस्याभिरक्षितम् ॥ अधृष्यंसर्वभूतानांसर्व भूतमनोहरम् ॥ ८ ॥ यद्रक्षतिमहावीरःसदादधिमुखःकपिः ॥ मातुलःकपिमुख्यस्यसुग्रीवस्यमहात्मनः ॥ ९ ॥ तेतद्वनमुपागम्यबभूवुःपरमोत्कटाः ॥ वानरावानरेंद्रस्यमनःकांतंमहावनम् ॥ १० ॥ ततस्तेवानराहृष्टादृष्ट्वामधुवनंमहत् ॥ कुमारमभ्ययाचंतमधूनिमधुपिंगलाः ॥ ११ ॥ ततःकुमारस्ता न्वृद्धाञ्जांबवत्प्रमुखान्कपीन् ॥ अनुमान्यददौतेषांनिसर्गंमधुभक्षणे ॥ १२ ॥ तेनिसृष्टाःकुमारेणधीमतावालिसूनुना ॥ हरयःसमपद्यंतद्रुमान्मधु कराकुलान् ॥ १३ ॥ भक्षयंतसुगंधीनिमूलानिचफलानिच ॥ जग्मुःप्रहर्षंतेसर्वेबभूवुश्चमदोत्कटाः ॥ १४ ॥ ततश्चानुमताःसर्वेसुसंहृष्टावनौकसः ॥ मुदिताश्चततस्तेचप्रनृत्यंतिततस्ततः ॥ १५ ॥ गायंतिकेचित्प्रहसंतिकेचिन्नृत्यंतिकेचित्प्रणमंतिकेचित् ॥ पठंतिकेचित्प्रचरंतिकेचित्प्लवंतिकेचित्प्रलपं तिकेचित् ॥ १६ ॥ परस्परंकेचिदुपाश्रयंतिपरस्परंकेचिदतिब्रुवंति ॥ द्रुमाद्द्रुमंकेचिदभिद्रवंतिक्षितौनगाग्रान्निपतंतिकेचित् ॥ १७ ॥ महीतलात्के चिदुदीर्णवेगामहाद्रुमाग्राण्यभिसंपतंति ॥ गायंतमन्यःप्रहसन्नुपैतिरुदंतमन्यःप्ररुदन्नुपैति ॥ १८ ॥ तुदंतमन्यःप्रणुदन्नुपैतिसमाकुलंतत्कपिसैन्यमा सीत् ॥ नचात्रकश्चिन्नबभूवमत्तोनचात्रकश्चिन्नबभूवदृप्तः ॥ १९ ॥ ततोवनंतत्परिभक्ष्यमाणंद्रुमांश्चविध्वंसितपत्रपुष्पान् ॥ समीक्ष्यकोपाद्दधिवक्त्रनामा निवारयामासकपिःकपींस्तान् ॥ २० ॥ सतैःप्रवृद्धैःपरिभर्त्स्यमानोवनस्यगोप्ताहरिवृद्धवीरः ॥ चकारभूयोमतिमुग्रतेजावनस्यरक्षांप्रतिवानरेभ्यः ॥ २१ ॥ उवाचकांश्चित्परुषाण्यभीतमसक्तमन्यांश्चतलैर्जघान ॥ समेत्यकैश्चित्कलहंचकारतथैवसाम्नोपजगामकांश्चित् ॥ २२ ॥ सतैर्मदादप्र तिवार्यवेगैर्बलाच्चतेनप्रतिवार्यमाणैः ॥ प्रधर्षणेत्यक्तभयैःसमेत्यप्रकृष्यतेचाप्यनवेक्ष्यदोषम् ॥ २३ ॥ नखैस्तुदंतोदशनैर्दशंतस्तलैश्चपादैश्चसमाप यंतः ॥ मदात्कपिंतेकपयःसमंतान्महावनंनिर्विषयंचचक्रुः ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्येसुंदरकांडेएकषष्टितमःसर्गः ॥ ६१ ॥

तुदंतं व्यथयंतम् समाकुलं उत्कटमत्तचेष्टम् ॥ दृप्तोतिमत्तः ॥ १९ ॥ २० ॥ प्रवृद्धैः प्रवृद्धमदैः ॥ २१ ॥ २२ ॥ मदादप्रतिवार्यो निवारयितुमशक्यो वेगो येषां तैः तेन दधिमुखेन बलात्प्रतिवार्यमाणैः प्रधर्षणे दोषं राजदंडमनवेक्ष्य अतएव त्यक्तभयैः समेत्य प्रकृष्यते स्म ॥ २३ ॥ समापयंतः मृतकल्पं कुर्वंतः । महावनं निर्विषयं निर्गतमधुफलादिभोज्यम् ॥ २४ ॥ वैरंमातः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे एकषष्टितमः सर्गः ॥ ६१ ॥

पुनरुक्तमेव विस्तारेणाह तानिति॥ १ ॥आवर्जयिष्यामि निवारयिष्यामि॥ २ ॥ ३ ॥ईदशम् एतन्मात्रार्थकम् ॥ ४ ॥ ५ ॥ यत्र मधुवनं यत्र मार्गे गमनेन मधुवनं प्राप्यते तेन मार्गेण जग्मुः ॥ ६ ॥ ते पटवो हनूमांश्च मैथिलीं दृष्ट्वा अन्ये तन्मुखात्तां लंकास्थां श्रुत्वा महत्कार्यकरणेन भयराहित्यादतिसर्गादंगदानुज्ञानान्मधुवनं विष्टाः पालान्बलादाक्रम्य बद्धा मधु पपू रसवत्फलं चाददुर्भक्षणार्थमिति शेषः ॥ ७ ॥ मधुवने सक्ता भक्षणार्थं लग्नाः ॥ ८ ॥ ९ ॥ अपविध्यन्ति मक्षिपंति मधूनि मधुपटलानि ॥ १० ॥ ११ ॥ उन्मत्तवेगाः उन्मत्तानां वेगो येषांते यद्वातिशयितवेगा इत्यर्थः ॥ १२ ॥ १३ ॥ इतरद्रोदनम् ॥ १४ ॥

तानुवाचहरिश्रेष्ठोहनूमान्वानरर्षभः ॥ अव्यग्रमनसोयूयंमधुसेवतवानराः ॥ १ ॥ अहमावर्जयिष्यामियुष्माकंपरिपंथिनः ॥ श्रुत्वाहनूमतोवाक्यंहरीणांप्रवरोंगदः ॥ २ ॥ प्रत्युवाचप्रसन्नात्मापिबंतुहरयोमधु ॥ अवश्यंकृतकार्यस्यवाक्यंहनुमतोमया ॥ ३ ॥ अकार्यमपिकर्तव्यंकिमंगपुनरीदृशम् ॥ अंगदस्यमुखाच्छ्रुत्वावचनंवानरर्षभाः ॥ ४ ॥ साधुसाध्वितिसंहृष्टावानराःप्रत्यपूजयन् ॥ पूजयित्वांगदंसर्वेवानरावानरर्षभम् ॥ ५ ॥ जग्मुर्मधुवनंयत्रनदीवेगइवद्रुमम् ॥ तेप्रविष्टामधुवनंपालानाक्रम्यशक्तितः ॥ ६ ॥ अतिसर्गाच्चपटवोदृष्ट्वाश्रुत्वाचमैथिलीम् ॥ पपुःसर्वेमधुतदारसवत्फलमाददुः ॥ ७ ॥ उत्पत्यचततःसर्वेवनपालान्समागतान् ॥ तेताडयंतःशतशःसक्तामधुवनेतदा ॥ ८ ॥ मधूनिद्रोणमात्राणिबहुभिःपरिगृह्यते ॥ पिबंतिकपयःकेचित्संघशस्तत्रहृष्टवत् ॥ ९ ॥ घ्नंतिस्मसहिताःसर्वेभक्षयंतितथापरे ॥ केचित्पीत्वापविध्यंतिमधूनिमधुपिंगलाः ॥ १० ॥ मधूच्छिष्टेनकेचिच्चजघ्नुरन्योन्यमुत्कटाः ॥ अपरेवृक्षमूलेषुशाखांगृह्यव्यवस्थिताः ॥ ११ ॥ अत्यर्थंचमदग्लानाःपर्णान्यास्तीर्यशेरते ॥ उन्मत्तवेगाःप्लवगामधुमत्ताश्चहृष्टवत् ॥ १२ ॥ क्षिपंत्यपितथान्योन्यंस्खलंतिचतथापरे ॥ केचित्क्ष्वेडान्प्रकुर्वंतिकेचित्कूजंतिहृष्टवत् ॥ १३ ॥ हरयोमधुनामत्ताःकेचित्सुप्तामहीतले ॥ धृष्टाःकेचिद्धसंत्यन्येकेचित्कुर्वंतिचेतरत् ॥ १४ ॥ कृत्वाकेचिद्वदंत्यन्येकेचिद्बुध्यंतिचेतरत् ॥ येप्यत्रमधुपालाःस्युःप्रेष्यादधिमुखस्यतु ॥ १५ ॥ तेपितैर्वानरैर्भीमैःप्रतिषिद्धादिशोगताः ॥ जानुभिश्चप्रघृष्टाश्चदेवमार्गंचदर्शिताः ॥ १६ ॥ अब्रुवन्परमोद्विग्नागत्वादधिमुखंवचः ॥ हनूमतादत्तवरैर्हतंमधुवनंबलात् ॥ १७ ॥ वयंचजानुभिर्घृष्टादेवमार्गंचदर्शिताः ॥ १८ ॥ तदादधिमुखःक्रुद्धोवनपस्तत्रवानरः ॥ हतंमधुवनंदृष्ट्वासांत्वयामासतान्हरीन् ॥ १९ ॥ एतागच्छतगच्छामोवानरानतिदर्पितान् ॥ बलेनावारयिष्यामिप्रभुंजानान्मधूत्तमम् ॥ २० ॥ श्रुत्वादधिमुखस्येदंवचनंवानरर्षभाः ॥ पुनर्वीरामधुवनंतेनैवसहितयाययुः ॥ २१ ॥ मध्येचैषांदधिमुखःसुप्रगृह्यमहातरुम् ॥ समभ्यधावन्वेगेनसर्वेतेचप्लवंगमाः ॥ २२ ॥ तेशिलाःपादपांश्चैवपाषाणानपिवानराः ॥ गृहीत्वाभ्यागमन्क्रुद्धायत्रतेकपिकुंजराः ॥ २३ ॥

केचिदन्यत्कृत्वा अन्यद्वदंति केचिदुक्तवचनार्थं विद्यमानं परित्यज्यान्यमेव बुध्यंते ॥ १५ ॥ प्रतिषिद्धाः ताडनादिना निरस्ताः जानुभिः प्रघृष्टाः जानुषु गृहीत्वा आकृष्टाः देवमार्गम् अपानद्वारमिति तीर्थः । देवमार्गं दर्शिताः पादौ गृहीत्वोर्ध्वं प्रक्षिप्ता इत्यर्थः । कर्णौ अंगुलिभिर्धृत्वोर्ध्वीकृता इति वार्थ इत्यन्ये ॥ १६ ॥ १७ ॥ १८ ॥ तान् स्वसंबंधिनः पालान् ॥ १९ ॥ एत आगच्छत अग्रे इति शेषः । गच्छामः वयमप्यागच्छाम इत्यर्थः ॥ २० ॥ २१ ॥ सर्वे ते च समभ्यधावन्निति शेषः ॥ २२ ॥ २३ ॥

हरयः पालाः हरीन्हनुमदादीन्॥ २४ ॥ २५ ॥ २६ ॥ आर्यकः सुग्रीवमातुलत्वात्पूज्यः ॥ २७ ॥ २८ ॥ २९ ॥ भर्ता राजा ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३॥ नृपाज्ञापरिपंथिनः तदाज्ञाविरुद्धकर्तारः अमर्ष
प्रभवोऽक्षमाजन्यः॥३४॥ ३५ ॥ ३६ ॥ समप्रतिष्ठां समतलां जगतीं भूमिं दृष्ट्वेत्यनुकर्षः ॥ ३७ ३८ ॥ तौ सर्ववानरपूज्यौ चरणावित्यन्वयः ॥३९॥ झेलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण

बलान्निवारयंतश्चआसेदुर्हरयोहरीन् ॥ संदष्टोष्ठपुटाःक्रुद्धाभर्त्सयंतोमुहुर्मुहुः ॥ २४ ॥ अथदृष्ट्वादधिमुखंक्रुद्धंवानरपुंगवाः ॥ अभ्यधावंतवेगेनहनुम
त्प्रमुखांस्तदा ॥ २५ ॥ सवृक्षंतंमहाबाहुमापतंतंमहाबलम् ॥ वेगवंतंविजग्राहबाहुभ्यांकुपितोंगदः ॥२६॥ मदांधोनकृपांचक्रेआर्यकोयंममेतिसः ॥
अथैनंनिष्पिपेषाशुवेगेनवसुधातले ॥ २७ ॥ सभग्नबाहूरुमुखोविह्वलःशोणितोक्षितः ॥ प्रमुमोहमहावीरोमुहूर्तंकपिकुंजरः ॥ २८ ॥ स कथंचि
द्विमुक्तस्तैर्वानरैर्वानरर्षभः ॥ उवाचैकांतमागत्य स्वान्भृत्यान्समुपागतान् ॥ २९ ॥ एतागच्छतगच्छामोभर्तानोयत्रवानरः ॥ सुग्रीवोविपुलग्रीवः
सहरामेणतिष्ठति ॥ ३० ॥ सर्वंचैवांगदेदोषंश्रावयिष्यामपार्थिवे ॥ अमर्षीवचनंश्रुत्वाघातयिष्यतिवानरान् ॥ ३१ ॥ इष्टंमधुवनंह्येतत्सुग्रीवस्य
महात्मनः ॥ पितृपैतामहंदिव्यंदेवैरपिदुरासदम् ॥ ३२ ॥ सवानरानिमान्सर्वान्मधुलुब्धान्गतायुषः ॥ घातयिष्यतिदंडेनसुग्रीवःससुहृज्जनान् ॥
॥ ३३ ॥ वध्याह्येतेदुरात्मानोनृपाज्ञापरिपंथिनः ॥ अमर्षप्रभवोरोषःसफलोमेभविष्यति ॥ ३४ ॥ एवमुक्त्वादधिमुखोवनपालान्महाबलः ॥ जगाम
सहसोत्पत्त्यवनपालैःसमन्वितः ॥ ३५ ॥ निमेषांतरमात्रेणसहिप्राप्तोवनालयः ॥ सहस्रांशुसुतोधीमान्सुग्रीवोयत्रवानरः ॥ ३६ ॥ रामंचलक्ष्मणं
चैवदृष्ट्वासुग्रीवमेवच ॥ समप्रतिष्ठांजगतीमाकाशान्निपपातह ॥ ३७ ॥ सनिपत्त्यमहावीरःसर्वैस्तैःपरिवारितः ॥ हरिर्दधिमुखःपालैःपालानांप
रमेश्वरः ॥ ३८ ॥ सदीनवदनोभूत्वाकृत्वाशिरसिचांजलिम् ॥ सुग्रीवस्याशुतौमूर्ध्नाचरणौप्रत्यपीडयत् ॥ ३९ ॥ इत्यार्षे श्रीमद्रा० वा० आदि
काव्ये सुंदरकांडे द्विषष्टितमःसर्गः ॥ ६२ ॥ ततोमूर्ध्नानिपतितंवानरंवानरर्षभः ॥ दृष्ट्वैवोद्विग्नहृदयोवाक्यमेतदुवाचह ॥ १ ॥ उत्तिष्ठोत्तिष्ठकस्मा
त्त्वंपादयोःपतितोमम ॥ अभयंतेप्रदास्यामिसत्यमेवाभिधीयताम् ॥ २ ॥ किंसंभ्रमाद्धितंकृत्स्नंब्रूहियद्वक्तुमर्हसि ॥ कच्चिन्मधुवनेस्वस्तिश्रोतुमि
च्छामिवानर ॥ ३ ॥ ससमाश्वासितस्तेनसुग्रीवेणमहात्मना ॥ उत्थायसमहाप्राज्ञोवाक्यंदधिमुखोब्रवीत् ॥ ४ ॥ नैवर्क्षजरताराजन्नत्वयानचवा
लिना ॥ वनंनिसृष्टपूर्वंतेनाशितंतत्तुवानरैः ॥ ५ ॥ न्यवारयमहंसर्वान्सहैभिर्वनचारिभिः ॥ अचिंतयित्वामांहृष्टाभक्षयंतिपिबंतिच ॥ ६ ॥ एभिः
प्रधर्षणायांचवारितंवनपालकैः ॥ मामप्यचिंतयन्देवभक्षयंतिवनौकसः ॥ ७ ॥

तिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ तत इति ॥ १ ॥ २ ॥ किंसंभ्रमात्कस्य भयादिहागतोसीति शेषः । यत्कृत्स्नं हितं तद्ब्रूहि यतस्त्वं सर्वमुचितमनुचितं च वक्तुमर्हसि
॥ ३ ॥ ४ ॥ नैव निसृष्टपूर्वं वानरेभ्यो यथेच्छभोगाय कदापि नानुज्ञातम् ॥ ५ ॥ ६ ॥ एभिर्हनुमदाद्यैः प्रधर्षणायामारब्धायां वनपालकैर्वारितं मामपि अपिनेतरान्पालकान् अचिंतयन् अचिंतयंतः ॥ ७ ॥

भ्रुकुटिं वक्रे भ्रुवौ ॥ ८ ॥ इमे मदीयाः संरब्धतराः निवारणायातियत्नवंतः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ विज्ञाप्यमानम् । दधिमुखेनेति शेषः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ यत् यथा वनमभिपन्नाः नाशयितुं प्रवृत्ताः ॥ १७ ॥ वारयंतः हेतौ शता । वारणाद्धेतोर्जानुभिराहताः पालाः प्राप्ताः ॥१८॥ देवी दृष्टेत्यत्र न संदेहस्तत्राप्यन्येन न किंतु हनूमतेत्यर्थः ॥ १९ ॥ अन्यः हनूमतोन्य इत्यर्थः ।

शिष्टमत्रापविध्यंतिभक्षयंतितथापरे ॥ निवार्यमाणास्तेसर्वेभ्रुकुटिंदर्शयंतिहि ॥८॥ इमेहिसंरब्धतरास्तदातैःसंप्रधर्षिताः ॥ निवार्यंतेवनात्तस्मात्क्रुद्धैर्वानरपुंगवैः ॥ ९ ॥ ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभाः ॥ संरक्तनयनैःक्रोधाद्धरयःसंप्रधर्षिताः ॥१०॥ पाणिभिर्निहताःकेचित्केचिज्जानुभिराहताः ॥ प्रकृष्टाश्चतदाकामंदेवमार्गंचदर्शिताः ॥ ११ ॥ एवमेतेहताःशूरास्त्वयितिष्ठतिभर्तरि ॥ कृत्स्नंमधुवनंचैवप्रकामंतैश्चभक्ष्यते ॥ १२॥ एवंविज्ञाप्यमानंतंसुग्रीवंवानरर्षभम् ॥ अपृच्छत्तंमहाप्राज्ञोलक्ष्मणःपरवीरहा ॥ १३ ॥ किमयंवानरोराजन्वनपःप्रत्युपस्थितः ॥ किंचार्थमभिनिर्दिश्यदुःखितोवाक्यमब्रवीत् ॥ १४ ॥ एवमुक्तस्तुसुग्रीवोलक्ष्मणेनमहात्मना ॥ लक्ष्मणंप्रत्युवाचेदंवाक्यंवाक्यविशारदः ॥ १५ ॥ आर्यलक्ष्मणसंप्राहवीरोदधिमुखःकपिः ॥ अंगदप्रमुखैर्वीरैर्भक्षितंमधुवानरैः ॥१६॥ नैषामकृतकार्याणामीदृशःस्याद्व्यतिक्रमः ॥ वनंयदभिपन्नास्तेसाधितंकर्मतद्ध्रुवम् ॥१७॥ वारयंतोभृशंप्राप्ताःपालाजानुभिराहताः ॥ तथानगणितश्चायंकपिर्दधिमुखोबली ॥ १८ ॥ पतिर्ममवनस्यायमस्माभिःस्थापितःस्वयम् ॥ दृष्टादेवीनसंदेहोनचान्येनहनूमता ॥ १९ ॥ नह्यन्यःसाधनेहेतुःकर्मणोस्यहनूमतः ॥ कार्यसिद्धिर्हनुमतिमतिश्चहरिपुंगवे ॥२०॥ व्यवसायश्चवीर्यंचश्रुतंचापिप्रतिष्ठितम् ॥ जांबवान्यत्रनेता स्यादंगदश्चमहाबलः ॥ २१ ॥ हनूमांश्चाप्यधिष्ठाता नतत्रगतिरन्यथा ॥ अङ्गदप्रमुखैर्वीरैर्हतंमधुवनंकिल॥२२॥ विचित्यदक्षिणामाशामागतैर्हरिपुंगवैः ॥ आगतैश्चप्रहृष्टैस्तद्यथामधुवनंहितैः ॥२३॥ धर्षितंचवनंकृत्स्नमुपयुक्तंतुवानरैः ॥ पातितावनपालास्तेतदाजानुभिराहताः ॥२४॥ एतदर्थमयंप्राप्तोवक्तुंमधुरवागिह ॥ नाम्नादधिमुखोनामहरिःप्रख्यातविक्रमः ॥ २५ ॥ दृष्टासीतामहाबाहोसौमित्रेपश्यतत्त्वतः ॥ अभिगम्ययथासर्वेपिबंतिमधुवानराः ॥ २६ ॥ नचाप्यदृष्ट्वावैदेहींविश्रुताःपुरुषर्षभ ॥ वनंदत्तवरंदिव्यंधर्षयेयुर्वनौकसः ॥ २७ ॥ ततःप्रहृष्टोधर्मात्मालक्ष्मणःसहराघवः ॥ श्रुत्वाकर्णसुखांवाणींसुग्रीववदनाच्युताम् ॥ २८ ॥

हरिपुंगवेहनूमति कार्यसिद्धिर्मतिश्च ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ उपयुक्तं भुक्तम् ॥२४॥२५ ॥ यथा मधु पिबंति तथा सीता दृष्टेत्यन्वयः ॥ २६ ॥ दत्तवरं वरत्वेन देवैरस्माकं दत्तम्॥२७॥२८॥

एकः सुग्रीवशब्दः शोभनग्रीवपरः ॥ २९ ॥ कृतकर्मभिः साधितकृत्यैः ॥ ३० ३१ ॥ तान्द्रष्टुमिच्छामि सीताधिगमे तत्प्राप्तौ कृतं प्रयत्नं च श्रोतुमिच्छामि ॥ ३२ ॥ अथ सुग्रीवः स्वोद्योगसाफ-
ल्यदर्शनाद्भृशं ननंदेत्याह प्रीतीति । प्रीत्या संतोषेण स्फीताक्षौ विकसितनेत्रौ संप्रहृष्टौ पुलकितगात्रौ सिद्धार्थाविव दृष्ट्वा संप्रहृष्टैः पुलकितैरंगैरुपलक्षितः कार्यसिद्धिं बाह्वोरासन्नां हस्तप्राप्तामिव विदित्वा ननंद
॥ ३३ ॥ गंडैमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥ सुग्रीवेणेति ॥ १ ॥ २ ॥ ३॥ विमदत्वसूचकं मेहमानान्मधूदक

प्राहृष्यतभृशंरामोलक्ष्मणश्चमहायशाः॥ श्रुत्वादधिमुखस्यैवंसुग्रीवस्तुप्रहृष्यच ॥ २९ ॥ वनपालंपुनर्वाक्यंसुग्रीवःप्रत्यभाषत ॥ प्रीतोस्मिसोहं यद्भुक्तंवनंतैःकृतकर्मभिः ॥ ३० ॥ धर्षितंमर्षणीयंचचेष्टितंकृतकर्मणाम् ॥ गच्छशीघ्रंमधुवनंसंरक्षस्वत्वमेवहि ॥ शीघ्रंप्रेषयसर्वांस्तान्हनूमत्प्रमुखा न्कपीन् ॥ ३१ ॥ इच्छामिशीघ्रंहनुमत्प्रधानाञ्छाखामृगांस्तान्मृगराजदर्पान् ॥ प्रष्टुंकृतार्थान्सहराघवाभ्यांश्रोतुंचसीताधिगमेप्रयत्नम् ॥ ॥ ३२॥ प्रीतिस्फीताक्षौसंप्रहृष्टौकुमारौदृष्ट्वासिद्धार्थौवानराणांचराजा ॥ अंगैःप्रहृष्टैःकार्यसिद्धिंविदित्वाबाह्वोरासन्नामतिमात्रंननन्द ॥ ३३॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येसुंदरकांडे त्रिषष्टितमःसर्गः ॥ ६३ ॥ सुग्रीवेणैवमुक्तस्तुहृष्टोदधिमुखःकपिः ॥ राघवंलक्ष्मणंचैवसुग्रीवं चाभ्यवादयत् ॥ १ ॥ सप्रणम्यचसुग्रीवंराघवौचमहाबलौ ॥ वानरैःसहितःशूरैर्दिवमेवोत्पपातह ॥ २ ॥ सतथैवागतःपूर्वंतथैवत्वरितंगतः ॥ निपत्यगगनाद्भूमौतद्वनंप्रविवेशह ॥ ३ ॥ सप्रविष्टोमधुवनंददर्शहरियूथपान् ॥ विमदानुद्धतान्सर्वान्मेहमानान्मधूदकम् ॥ ४ ॥ सतानुपागमद्वीरो बद्ध्वाकरपुटांजलिम् ॥ उवाचवचनंश्लक्ष्णमिदंहृष्टवदङ्गदम् ॥ ५ ॥ सौम्यरोषोनकर्तव्योयदेभिःपरिवारणम् ॥ अज्ञानाद्रक्षिभिःक्रोधाद्भवंतःप्रतिषे धिताः॥ ६ ॥ श्रांतोदूरादनुप्राप्तोभक्षयस्वस्वकंमधु ॥ युवराजस्त्वमीशश्चवनस्यास्यमहाबल ॥ ७ ॥ मौर्ख्यात्पूर्वंकृतोरोषस्तद्भवान्क्षंतुमर्हति ॥ यथैवहिपितातेभूत्पूर्वंहरिगणेश्वरः ॥ ८ ॥ तथात्वमपिसुग्रीवोनान्यस्तुहरिसत्तम ॥ आख्यातंहिमयागत्वापितृव्यस्यतवानघ ॥ ९ ॥ इहोपयानंसर्वे षामेतेषांवनचारिणाम् ॥ भवदागमनंश्रुत्वासहैभिर्वनचारिभिः ॥ १० ॥ प्रहृष्टोनतुरुष्टोसौवनंश्रुत्वाप्रधर्षितम् ॥ प्रहृष्टोमांपितृव्यस्तेसुग्रीवोवानरे श्वरः ॥ ११ ॥ शीघ्रंप्रेषयसर्वांस्तानितिहोवाचपार्थिवः ॥ श्रुत्वादधिमुखस्यैतद्वचनंश्लक्ष्णमंगदः ॥ १२ ॥ अब्रवीत्तान्हरिश्रेष्ठोवाक्यंवाक्य विशारदः ॥ शंकेश्रुतोयंवृत्तांतोरामेणहरियूथपाः ॥ १३ ॥ अयंचहर्षादाख्यातितेनजानामिहेतुना ॥ तत्क्षमंनेहनःस्थातुंकृतेकार्येपरंतपाः ॥१४॥

मिति मेहमानान्मूत्रयतः मधुपरिणामभूतमुदकम् मधूदकम् एवं मूत्रणान्मधूनां जीर्णता बोधिता अतएव विमदान् ॥ ४ ॥ ५ ॥ एभिः रक्षिभिरज्ञानात्क्रोधाच्च भवंतः प्रतिषेधिता इति यदेतत्परिवारणं प्रतिरोधो न कर्तव्य इत्यर्थः ॥ ६ ॥ ७ ॥ रोषः कृतो मर्दैरिति शेषः ॥ ८ ॥ तथा सुग्रीवस्त्वमपि त्वं च हरीश्वरः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ शंके दधिमुखस्य परावृत्यागमनात् ॥ १३ ॥ किं चायं हर्षादा

ख्याति सुग्रीवसंदेशमिति शेषः । तेन च हेतुना जानामि रामेण श्रुतोयं वृत्तांत इति तत्तस्मादकार्ये वनविध्वंसनरूपे कृते सतीहस्थातुं नोऽस्माकं न क्षमं न युक्तम् ॥ १४ ॥ किं शेषं न किमपि शिष्टमित्यर्थः । गमनमुचितमिति शेषः॥१५॥कर्तव्ये कर्तव्येर्थे भवद्भिः परवानहं भवदधीन इत्यर्थः॥१६॥यद्यपि अहं युवराजोस्मि युष्मानाज्ञापयितुं नेशश्च । तत्र हेतुः कृतकर्माणो यूयं कृतकर्मणो युष्मान् इत्यर्थे आर्षमिदम् । तथापि अतः परं बलाद्धर्षयितुं न युक्तम् ॥ १७ ॥ १८ ॥ अहं प्रभुरिति शेषः ॥ १९ ॥ सन्नतिर्विनयः भविष्यच्छुभयोग्यतां भाविनीं भाग्योन्नतिम् आख्याति सूचयति ॥ २० ॥ अत्र देशे प्राप्ता वयं यत्र सुग्रीवस्तत्र गंतुं कृतक्षणाः कृतोत्साहाः ॥ २१ ॥ २२ ॥ महाबलास्ते गच्छाम इत्युक्त्वा खमुत्पेतुरित्यन्वयः ॥ २३ ॥ तत्र क्रममाह उत्पतंतमिति । निराकाशं निरवकाशम् । यंत्रेत्यादिना दूरोत्पातेन शीघ्रग

पीत्वामधुयथाकामंविक्रांतावनचारिणः ॥ किंशेषंगमनंतत्रसुग्रीवोयत्रवानरः ॥ १५ ॥ सर्वेयथामांवक्ष्यंतिसमेत्यहरिपुंगवाः ॥ तथास्मिकर्ताकर्तव्येभवद्भिःपरवानहम् ॥ १६ ॥ नाज्ञापयितुमीशोहंयुवराजोस्मियद्यपि ॥ अयुक्तंकृतकर्माणोयूयंधर्षयितुंबलात् ॥१७॥ ब्रुवतश्चांगदस्यैवंश्रुत्वावचनमुत्तमम् ॥ प्रहृष्टमनसोवाक्यमिदमूचुर्वनौकसः ॥ १८ ॥ एवंवक्ष्यतिकोराजन्प्रभुःसन्वानरर्षभ ॥ ऐश्वर्यमदमत्तोहिसर्वोहमितिमन्यते ॥ १९ ॥ तवचेदंसुसदृशंवाक्यंनान्यस्यकस्यचित् ॥ सन्नतिर्हितवाख्यातिभविष्यच्छुभयोग्यताम् ॥ २० ॥ सर्वेवयमपिप्राप्तास्तत्रगंतुंकृतक्षणाः ॥ सयत्रहरिवीराणांसुग्रीवःपतिरव्ययः ॥ २१ ॥ त्वयाह्यनुक्तैर्हरिभिर्नैवशक्यंपदात्पदम् ॥ क्वचिद्गंतुंहरिश्रेष्ठब्रूमःसत्यमिदंतुते ॥ २२ ॥ एवंतुवदतांतेषामंगदःप्रत्यभाषत ॥ साधुगच्छामइत्युक्त्वाखमुत्पेतुर्महाबलाः ॥२३॥ उत्पतन्तमनूत्पेतुःसर्वेतेहरियूथपाः ॥ कृत्वाकाशंनिराकाशंयंत्रोत्क्षिप्ताइवोपलाः ॥२४॥ अंगदंपुरतःकृत्वाहनूमंतंचवानरम् ॥ तेऽम्बरंसहसोत्पत्यवेगवंतःप्लवंगमाः ॥ २५ ॥ विनदंतोमहानादंघनावातेरितायथा ॥ अंगदेसमनुप्राप्तेसुग्रीवोवानरेश्वरः ॥ २६ ॥ उवाचशोकसंतप्तंरामंकमललोचनम् ॥ समाश्वसिहिभद्रंतेदृष्टादेवीनसंशयः ॥ २७ ॥ नागंतुमिहशक्यंतैरतीतसमयैरिह ॥ अंगदस्यप्रहर्षाच्चजानामिशुभदर्शन ॥ २८ ॥ नमत्सकाशमागच्छेत्कृत्येहिविनिपातिते ॥ युवराजोमहाबाहुःप्लवतामंगदोवरः ॥ २९ ॥ यद्यप्यकृतकृत्यानामीदृशःस्यादुपक्रमः ॥ भवेत्तुदीनवदनोभ्रांतविप्लुतमानसः ॥ ३० ॥ पितृपैतामहंचैतत्पूर्वकैरभिरक्षितम् ॥ नमेमधुवनंहन्याददृष्ट्वाजनकात्मजाम् ॥ ३१ ॥ कौसल्यासुप्रजारामसमाश्वासिहिसुव्रत ॥ दृष्टादेवीनसंदेहोनचान्येनहनूमता ॥ ३२ ॥

मनं सूचितम् ॥ २४ ॥ सहसोत्पत्य वातेरिता घना इव विनदंतो जग्मुरिति शेषः । शीघ्रगत्या सादृश्यम् ॥ २५ ॥ समनुप्राप्ते निकटमागते सुग्रीवो राममुवाचेत्यन्वयः ॥ २६ ॥ २७ ॥ दृष्टत्वे हेतुर्नेति अंगदप्रहर्षश्च हेत्वंतरम् ॥ २८ ॥ विनिपातिते असाधिते ॥ २९ ॥ यद्यपीति अकृतकृत्यानामन्येषां वानराणां कपिस्वभावचांचल्यादीदृशमधुवनभंगादिरूप उपक्रमो व्यापारो यद्यपि स्यात्तथाप्यंगदो दीनवदनत्वादिगुणको भवेत् ॥ ३० ॥ कुतस्तत्राह पितृपैतामहं पितृपितामहक्रमागतम् ॥ ३१ ॥ कौसल्या सुप्रजा सीतास्थितिपरिज्ञानेन भवतो जीवनलाभादिदानीं कौसल्या सुपुत्रवत्यभूदिति भावः । तत्रापि

हनूमतैव न तु ततोन्येनेत्यर्थः ॥ ३२ ॥ अस्य कर्मणः साधने तद्विधो हेतुरपरो न भवेन्नास्ति । इह हनूमति एतत्कार्यसाधिका सिद्धिर्वैभ्रवरजन्या मतिश्चास्ति । हि यतः व्यवसाय उद्यमः नेता प्रधानः ॥ ३३ ॥ ३४ ॥ अधिष्ठाता कार्यकरणोद्योगवान् ॥ ३५ ॥ यदा हि यत इत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ आयतांचितलांगूल इति स्वभावोक्त्यलंकारः ॥ ३९ ॥ ४० ४१ ॥ नियतां पातिव्रत्यसंपन्नाम् अक्षतां शरीरेण कुशलिनीम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ अर्णंभमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥

नह्यस्यकर्मणोहेतुः साधनेतद्विधोभवेत् ॥ हनूमतीहसिद्धिश्चमतिश्चमतिसत्तम ॥ ३३ ॥ व्यवसायश्चशौर्यंचश्रुतंचापिप्रतिष्ठितम् ॥ जांबवान्यत्रनेतास्यादंगदश्चहरीश्वरः ॥ ३४ ॥ हनूमांश्चाप्यधिष्ठातानतत्रगतिरन्यथा ॥ माभूश्चिंतासमायुक्तःसंप्रत्यमितविक्रम ॥३५॥ यदाहिहर्षितोदग्राःसंगताःकाननौकसः ॥ नैषामकृतकार्याणामीदृशःस्यादुपक्रमः ॥३६॥ वनभंगेनजानामिमधूनांभक्षणेनच ॥ ततःकिलकिलाशब्दंशुश्रावासन्नमंबरे॥३७॥ हनूमत्कर्मदृप्तानांनदतांकाननौकसाम् ॥ किष्किंधामुपयातानांसिद्धिंकथयतामिव ॥ ३८ ॥ ततःश्रुत्वानिनादंतंकपीनांकपिसत्तमः ॥ आयतांचितलांगूलःसोभवद्धृष्टमानसः ॥ ३९ ॥ आजग्मुस्तेपिहरयोरामदर्शनकांक्षिणः ॥ अंगदंपुरतःकृत्वाहनूमंतंचवानरम् ॥ ४० ॥ तेऽङ्गदप्रमुखावीराःप्रहृष्टाश्चमदान्विताः ॥ निपेतुर्हरिराजस्यसमीपेराघवस्यच ॥ ४१ ॥ हनूमांश्चमहाबाहुःप्रणम्यशिरसाततः ॥ नियतामक्षतांदेवींराघवायन्यवेदयत् ॥ ४२ ॥ दृष्टादेवीतिहनुमद्वदनादमृतोपमम् ॥ आकर्ण्यवचनंरामोहर्षमापसलक्ष्मणः ॥ ४३ ॥ निश्चितार्थंततस्तस्मिन्सुग्रीवंपवनात्मजे ॥ लक्ष्मणःप्रीतिमान्प्रीतोबहुमानादवैक्षत ॥ ४४ ॥ प्रीत्याचपरमोपेतोराघवःपरवीरहा ॥ बहुमानेनमहताहनूमंतमवैक्षत ॥ ४५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुःषष्टितमःसर्गः ॥ ६४ ॥ ॥ ततःप्रस्रवणंशैलंतेगत्वाचित्रकाननम् ॥ प्रणम्यशिरसारामंलक्ष्मणंचमहाबलम् ॥ १ ॥ युवराजंपुरस्कृत्यसुग्रीवमभिवाद्यच ॥ प्रवृत्तिमथसीतायाःप्रवक्तुमुपचक्रमे ॥ २ ॥ रावणांतःपुरेरोधंराक्षसीभिश्चतर्जनम् ॥ रामेसमनुरागंचयथाचनियमःकृतः ॥ ३ ॥ एतदाख्यायतेसर्वंहरयोरामसन्निधौ ॥ वैदेहीमक्षतांश्रुत्वारामस्तूत्तरमब्रवीत् ॥ ४ ॥ क्वसीतावर्ततेदेवीकथंचमयिवर्तते ॥ एतन्मेसर्वमाख्यातवैदेहींप्रतिवानराः ॥ ५॥ रामस्यगदितंश्रुत्वाहरयोरामसन्निधौ ॥ चोदयंतिहनूमंतंसीतावृत्तांतकोविदम् ॥६॥ श्रुत्वातुवचनंतेषांहनूमान्मारुतात्मजः ॥ प्रणम्यशिरसादेव्यैसीतायैतांदिशंप्रति ॥ ७ ॥ उवाचवाक्यंवाक्यज्ञःसीतायादर्शनंयथा ॥ तंमणिंकांचनंदिव्यंदीप्यमानंस्वतेजसा ॥ ८ ॥ दत्त्वारामायहनुमांस्ततःप्रांजलिरब्रवीत् ॥ समुद्रंलंघयित्वाहंशतयोजनमायतम् ॥९ ॥ अगच्छंजानकींसीतांमार्गमाणोदिदृक्षया ॥ तत्रलंकेतिनगरीरावणस्यदुरात्मनः ॥ १० ॥

तत इति ॥ १ ॥ २ ॥ नियमो रावणकृतावधिरूपः ॥ दशमो वर्तते मासो द्वौ तु शेषौ प्लवंगमेति सीतोक्तिः तं चेति शेषः ॥ ३ ॥ रामसन्निधौ स्थिता इति शेषः ॥ ४ ॥ ५ ॥ चोदयंति प्रेरयंति स्म ॥ ६ ॥ सीतायै प्रणम्य तां दिशं प्रति च प्रणम्येत्याकर्षः ॥ ७ ॥ यथा येन प्रकारेण सीताया दर्शनं जातं तत्परं वाक्यमुवाचेत्यर्थः ॥ ८ ॥ ९ ॥ देव्या दिदृक्षया तां मार्गमाणोऽगच्छम् ॥ १० ॥

तीरेदक्षिणसमुद्रसंबंधिद्वीपसन्नद्धतीरे॥ ११॥ हे राम रामा सा सीता त्वयि मनोरथं सम्यक् न्यस्य त्वदतिरिक्तविषयमनोरथाभाववती भूत्वा जीवंती धृतप्राणा मया दृष्टा ॥ १२॥ सुखोचिता देवी त्वया विना दुःखमापद्यते इत्यन्वयः॥ १३॥ १४॥ अधःशय्या भूशयना ॥ १५॥ १६॥सर्वमर्थं रामसुग्रीवसख्यादि दर्शिता ज्ञापिता॥ १७॥ नियत इति। समुदाचारो गोत्रास्खलनादिव्यवहारो भक्तिश्च त्वयि त्वय्येव सदा नियतो नान्यत्रेत्यर्थः ॥ १८॥ उग्रेण तपसा त्वद्भक्त्या च युक्ता॥ १९॥ २०॥यथा दृष्टं राक्षसीतर्जनादि तद्विज्ञाप्य इत्यन्वयः ॥ २१॥ उपशृण्वतः सुग्रीवस्य समक्षं दातव्य इत्यब्रवीदिति शेषः॥ २२॥ एप इति। दत्तस्तं पश्य यन्मनः

दक्षिणस्यसमुद्रस्यतीरेवसतिदक्षिणे ॥ तत्रसीतामयादृष्टारावणांतःपुरेसती ॥ ११ ॥ त्वयिसंन्यस्यजीवंतीरामारामम नोरथम् ॥ दृष्टामेराक्षसीमध्ये तर्ज्यमानामुहुर्मुहुः ॥ १२ ॥ राक्षसीभिर्विरूपाभीरक्षिताप्रमदावने ॥ दुःखमापद्यतेदेवीत्वयावीरसुखोचिता ॥ १३ ॥ रावणांतःपुरेरुद्धाराक्षसीभिः सुरक्षिता ॥ एकवेणीधरादीनात्वयिचिंतापरायणा ॥१४॥ अधःशय्याविवर्णांगीपद्मिनीवहिमागमे ॥ रावणाद्विनिवृत्तार्थामर्तव्येकृतनिश्चया ॥१५॥ देवीकथंचित्काकुत्स्थत्वन्मनामार्गितामया ॥ इक्ष्वाकुवंशविख्यातिंशनैःकीर्तयतानघ ॥ १६ ॥ सामयानरशार्दूलशनैर्विश्वासितातदा ॥ ततःसं भाषितादेवीसर्वमर्थंचदर्शिता ॥ १७ ॥ रामसुग्रीवसख्यंचश्रुत्वाहर्षमुपागता ॥ नियतःसमुदाचारोभक्तिश्चास्याःसदात्वयि ॥ १८ ॥ एवंमयामहा भागदृष्टाजनकनंदिनी ॥ उग्रेणतपसायुक्तात्वद्भक्त्यापुरुषर्षभ ॥ १९ ॥ अभिज्ञानंचमेदत्तंयथावृत्तंतवांतिके ॥ चित्रकूटेमहाप्राज्ञवायसंप्रतिराघव ॥ २० ॥ विज्ञाप्यःपुनरप्येषरामोवायुसुतत्वया ॥ अखिलेनयथादृष्टमितिमामाहजानकी ॥ २१ ॥ अयंचास्मैप्रदातव्योयत्नात्सुपरिरक्षितः ॥ ब्रुवतावचनान्येवसुग्रीवस्योपशृण्वतः ॥ २२ ॥ एषचूडामणिःश्रीमान्मयातेयत्नरक्षितः ॥ मनःशिलायास्तिलकंतत्स्मरस्वेतिचाब्रवीत ॥ २३ ॥ एष निर्यातितःश्रीमान्मयातेवारिसंभवः ॥ एनंदृष्ट्वाप्रमोदिष्येव्यसनेत्वामिवानघ ॥ २४ ॥ जीवितंधारयिष्यामिमासंदशरथात्मज ॥ ऊर्ध्वंमासान्नजीवे यंरक्षसांवशमागता ॥ २५ ॥ इतिमामब्रवीत्सीताकृशांगीधर्मचारिणी ॥ रावणांतःपुरेरुद्धामृगीवोत्फुल्ललोचना ॥ २६ ॥ एतदेवमयाख्यातंसर्वं राघवयद्यथा ॥ सर्वथासागरजलेसंतारःप्रविधीयताम् ॥ २७ ॥ तौजाताश्वासौराजपुत्रौविदित्वातच्चाभिज्ञानंराघवायप्रदाय ॥ देव्याचाख्यातंसर्व मेवानुपूर्व्याद्वाचासंपूर्णंवायुपुत्रःशशंस ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचषष्टितमःसर्गः ॥ ६५॥ ॥

शिलायास्तिलकं त्वया कृतं तत्स्मरस्वेति चाब्रवीत् ॥ २३ ॥ एष वारिसंभवो मणिर्निर्यातितः प्रेषितः । एनं एतत्त्वत्प्रेषितमंगुलीयकम् ॥२४॥ मासाद्विद्यमानाद्दशमादूर्ध्वमित्यर्थः ॥ २५ ॥ २६ ॥ संतारः संतारोपायः प्रविधीयतां प्रविचार्यताम् ॥ २७ ॥ २८ ॥ जरंमाणः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥ ॥ छ ॥

॥ एवमिति ॥ १ ॥ २ ॥ वत्सस्येत्यत्रापि दर्शनादिति संबद्ध्यते तथा स्नेहात्स्रवतीत्यनुकर्षः ॥ ३ ॥ मे श्वशुरेण जनकेन वधूकाले वधूत्वसंपादके काले विवाहकाले वैदेह्याः शिरोभूषणाय सीतामातृहस्ताद्गृहीत्वा दशरथहस्ते दत्तम् । तच्च तस्मिन्काले यथाधिकं शोभते तथा मूर्ध्नि बद्धमित्यर्थः ॥ ४ ॥ जनकस्याप्येतदागमः कुतस्तत्राह अयं हीति । प्रवरैः श्रेष्ठैर्देवैः पूजितः ॥५॥ तथा यथा सीतादर्शनम् अवगतः प्राप्तस्तथा तातस्य दशरथस्य प्राप्तः तद्धस्ते जनकेन दानात्तस्य स्मरणम् । तथा वैदेहस्य राज्ञो जनकस्य सपत्नीकस्य दर्शनं प्राप्त इत्यर्थः ॥६॥७॥ परासुं मूर्च्छितं मां जीवनाय वाक्यवारिणा सिंचंती किमाह

एवमुक्तोहनुमतारामोदशरथात्मजः ॥ तंमणिंहृदयेकृत्वारुरोदसहलक्ष्मणः ॥ १ ॥ तंतुदृष्ट्वामणिश्रेष्ठंराघवःशोककर्शितः ॥ नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २ ॥ यथैवधेनुःस्रवतिस्नेहाद्वत्सस्यवत्सला ॥ तथाममापिहृदयंमणिश्रेष्ठस्यदर्शनात् ॥ ३ ॥ मणिरत्नमिदंदत्तंवैदेह्याःश्वशुरेणमे ॥ वधूकालेयथाबद्धमधिकंमूर्ध्निशोभते ॥ ४ ॥ अयंहिजलसंभूतोमणिःप्रवरपूजितः ॥ यज्ञेपरमतुष्टेनदत्तःशक्रेणधीमता ॥ ५ ॥ इमंदृष्ट्वामणिश्रेष्ठंतथातातस्यदर्शनम् ॥ अद्यास्म्यवगतःसौम्यवैदेहस्यतथाविभोः ॥ ६ ॥ अयंहिशोभतेतस्याःप्रियायामूर्ध्निमेमणिः ॥ अद्यास्यदर्शनेनाहंप्राप्तांतामिवचिंतये ॥ ७ ॥ किमाहसीतावैदेहीब्रूहिसौम्यपुनःपुनः ॥ परासुमिवतोयेनसिंचंतीवाक्यवारिणा ॥ ८ ॥ इतस्तुकिंदुःखतरंयमिमंवारिसंभवम् ॥ मणिंपश्यामिसौमित्रेवैदेहीमागतंविना ॥ ९ ॥ चिरंजीवतिवैदेहीयदिमासंधरिष्यति ॥ क्षणंवीरनजीवेयंविनातामसितेक्षणाम् ॥ १० ॥ नयमामपितंदेशंयत्रदृष्टाममप्रिया ॥ नतिष्ठेयंक्षणमपिप्रवृत्तिमुपलभ्यच ॥ ११ ॥ कथंसाममसुश्रोणीभीरुभीरुःसतीतदा ॥ भयावहानांघोराणांमध्येतिष्ठतिरक्षसाम् ॥ १२ ॥ शारदस्तिमिरोन्मुक्तोनूनंचंद्रइवांबुदैः ॥ आवृतोवदनंतस्यानविराजतिसांप्रतम् ॥ १३ ॥ किमाहसीताहनुमंस्तत्त्वतःकथयस्वमे ॥ एतेनखलुजीविष्येभेषजेनातुरोयथा ॥ १४ ॥ मधुरामधुरालापाकिमाहममभामिनी ॥ मद्विहीनावरारोहाहनुमन्कथयस्वमे ॥ दुःखाद्दुःखतरंप्राप्यकथंजीवतिजानकी ॥ १५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडेषट्षष्टितमःसर्गः ॥ ६६ ॥ एवमुक्तस्तुहनुमान्राघवेणमहात्मना ॥ सीतायाभाषितंसर्वंन्यवेदयतराघवे ॥ १ ॥ इदमुक्तवतींदेवीजानकीपुरुषर्षभ ॥ पूर्ववृत्तमभिज्ञानंचित्रकूटेयथातथम् ॥ २ ॥

तद्ब्रूहि ॥८॥ वैदेहीं विना आगतं मणिं पश्यामि इतः किं दुःखतरम् ॥९॥ यदि मासं धरिष्यति जीविष्यति तदा चिरं जीवति जीविष्यतीत्यर्थः । तां विना यथाहं न जीवेयं तथा मां विना सापि न जीविष्यतीत्यर्थः ॥१०॥ प्रवृत्तिमुपलभ्य क्षणमपि न तिष्ठेयं स्थातुं न शक्यमित्यर्थः ॥ ११ ॥ भीरुभीरुः अत्यंतं भीरुः ॥ १२ ॥ अंबुदैरावृतस्तिमिरोन्मुक्तः शारदश्चंद्र इव तस्या वदनं न राजति ॥१३॥ एतेन तद्वाक्यश्रवणरूपेण ॥ १४ ॥ मधुरा मधुराकारा ॥ १५ ॥ आर्षेकमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षट्षष्टितमः सर्गः ॥ ६६ ॥ ॥ १ ॥ यथातथं यथापूर्वं

तीरेदक्षिणसमुद्रसंबंधिद्वीपसन्नद्धतीरे॥ ११॥ हे राम रामा सा सीता त्वयि मनोरथं सम्यक् न्यस्य त्वदतिरिक्तविषयमनोरथाभाववती भूत्वा जीवंती धृतप्राणा मया दृष्टा॥ १२॥ सुखोचिता देवी त्वया विना दुःखमापद्यते इत्यन्वयः॥ १३॥ १४॥ अधःशय्या भूशयना ॥ १५॥ १६॥सर्वमर्थं रामसुग्रीवसख्यादि दर्शिता ज्ञापिता॥ १७॥ नियत इति। समुदाचारो गोत्रास्खलनादिव्यवहारो भक्तिश्च त्वयि त्वय्येव सदा नियतो नान्यत्रेत्यर्थः ॥ १८॥ उग्रेण तपसा त्वद्भक्त्या च युक्ता॥ १९॥ २०॥यथा दृष्टं राक्षसीतर्जनादि तद्विज्ञाप्य इत्यन्वयः ॥ २१॥ उपशृण्वतः सुग्रीवस्य समक्षं दातव्य इत्यब्रवीदिति शेषः॥ २२॥ एष इति। दत्तस्तं पश्य यन्मनः

दक्षिणस्यसमुद्रस्यतीरेवसतिदक्षिणे ॥ तत्रसीतामयादृष्टारावणांतःपुरेसती ॥ ११ ॥ त्वयिसंन्यस्यजीवंतीरामारामम नोरथम् ॥ दृष्टामेराक्षसीमध्ये तर्ज्यमानामुहुर्मुहुः ॥ १२ ॥ राक्षसीभिर्विरूपाभीरक्षिताप्रमदावने ॥ दुःखमापद्यतेदेवीत्वयावीरसुखोचिता ॥ १३ ॥ रावणांतःपुरेरुद्धाराक्षसीभिः सुरक्षिता ॥ एकवेणीधरादीनात्वयिचिंतापरायणा ॥१४॥ अधःशय्याविवर्णांगीपद्मिनीवहिमागमे ॥ रावणाद्विनिवृत्तार्थामर्तव्येकृतनिश्चया ॥१५॥ देवीकथंचित्काकुत्स्थत्वन्मनामार्गितामया ॥ इक्ष्वाकुवंशविख्यातिंशनैःकीर्तयतानघ ॥ १६ ॥ सामयानरशार्दूलशनैर्विश्वासितातदा ॥ ततःसं भाषितादेवीसर्वमर्थंचदर्शिता ॥ १७ ॥ रामसुग्रीवसख्यंचश्रुत्वाहर्षमुपागता ॥ नियतःसमुदाचारोभक्तिश्चास्याःसदात्वयि ॥ १८ ॥ एवंमयामहा भागदृष्टाजनकनंदिनी ॥ उग्रेणतपसायुक्तात्वद्भक्त्यापुरुषर्षभ ॥ १९ ॥ अभिज्ञानंचमेदत्तंयथावृत्तंतवांतिके ॥ चित्रकूटेमहाप्राज्ञवायसंप्रतिराघव ॥ २० ॥ विज्ञाप्यःपुनरप्येषरामोवायुसुतत्वया ॥ अखिलेनयथादृष्टमितिमामाहजानकी ॥ २१ ॥ अयंचास्मैप्रदातव्योयत्नात्सुपरिरक्षितः ॥ ब्रुवतावचनान्येवसुग्रीवस्योपशृण्वतः ॥ २२ ॥ एषचूडामणिःश्रीमान्मयातेयत्नरक्षितः ॥ मनःशिलायास्तिलकंतत्स्मरस्वेतिचाब्रवीत ॥ २३ ॥ एष निर्यातितःश्रीमान्मयातेवारिसंभवः ॥ एनंदृष्ट्वाप्रमोदिष्येव्यसनेत्वामिवानघ ॥ २४ ॥ जीवितंधारयिष्यामिमासंदशरथात्मज ॥ ऊर्ध्वंमासान्नजीवे यंरक्षसांवशमागता ॥ २५ ॥ इतिमामब्रवीत्सीताकृशांगीधर्मचारिणी ॥ रावणांतःपुरेरुद्धामृगीवोत्फुल्ललोचना ॥ २६ ॥ एतदेवमयाख्यातंसर्वं राघवयद्यथा ॥ सर्वथासागरजलेसंतारःप्रविधीयताम् ॥ २७ ॥ तौजाताश्वासौराजपुत्रौविदित्वातच्चाभिज्ञानंराघवायप्रदाय ॥ देव्याचाख्यातंसर्वं मेवानुपूर्व्याद्वाचासंपूर्णंवायुपुत्रःशशंस ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचषष्टितमःसर्गः ॥ ६५॥ ॥

शिलायास्तिलकं त्वया कृतं तत्स्मरस्वेति चाब्रवीत् ॥ २३ ॥ एष वारिसंभवो मणिर्निर्यातितः प्रेषितः । एनं एतत्त्वत्प्रेषितमंगुलीयकम् ॥२४॥ मासाद्विद्यमानाद्दशमादूर्ध्वमित्यर्थः ॥ २५ ॥ २६ ॥ संतारः संतारोपायः प्रविधीयतां प्रविचार्यताम् ॥ २७ ॥ २८ ॥ जरमाणः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥ ॥ छ ॥

॥ एवमिति ॥ १ ॥ २ ॥ वत्सस्येत्यत्रापि दर्शनादिति संबद्ध्यते तथा स्नेहात्स्रवतीत्यनुकर्षः ॥ ३ ॥ मे श्वशुरेण जनकेन वधूकाले वधूत्वसंपादके काले विवाहकाले वैदेह्याः शिरोभूषणाय सीतामातृहस्ता द्गृहीत्वा दशरथहस्ते दत्तम् । तच्च तस्मिन्काले यथाधिकं शोभते तथा मूर्ध्नि बद्धमित्यर्थः ॥ ४ ॥ जनकस्याप्येतदागमः कुतस्तत्राह अयं हीति । प्रवरैः श्रेष्ठैर्देवैः पूजितः ॥५॥ तथा यथा सीतादर्शनम् अवगतः प्राप्तस्तथा तातस्य दशरथस्य प्राप्तः तद्धस्ते जनकेन दानात्तस्य स्मरणम् । तथा वैदेहस्य राज्ञो जनकस्य सपत्नीकस्य दर्शनं प्राप्त इत्यर्थः ॥६॥७॥ परासुं मूर्च्छितं मां जीवनाय वाक्यवारिणा सिंचंती किमाह

एवमुक्तोहनुमतारामोदशरथात्मजः ॥ तंमणिंहृदयेकृत्वारुरोदसहलक्ष्मणः ॥ १ ॥ तंतुदृष्ट्वामणिश्रेष्ठंराघवःशोककर्शितः ॥ नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २ ॥ यथैवधेनुःस्रवतिस्नेहाद्वत्सस्यवत्सला ॥ तथाममापिहृदयंमणिश्रेष्ठस्यदर्शनात् ॥ ३ ॥ मणिरत्नमिदंदत्तंवैदेह्याःश्वशुरे णमे ॥ वधूकालेयथाबद्धमधिकंमूर्ध्निशोभते ॥ ४ ॥ अयंहिजलसंभूतोमणिःप्रवरपूजितः ॥ यज्ञेपरमतुष्टेनदत्तःशक्रेणधीमता ॥ ५ ॥ इमंदृष्ट्वामणिश्रे ष्ठंतथातातस्यदर्शनम् ॥ अद्यास्म्यवगतःसौम्यवैदेहस्यतथाविभोः ॥ ६ ॥ अयंहिशोभतेतस्याःप्रियायामूर्ध्निमेमणिः ॥ अद्यास्यदर्शनेनाहंप्राप्तांता मिवचिंतये ॥ ७ ॥ किमाहसीतावैदेहीब्रूहिसौम्यपुनःपुनः ॥ परासुमिवतोयेनसिंचंतीवाक्यवारिणा ॥ ८ ॥ इतस्तुकिंदुःखतरंयमिमंवारिसंभवम् ॥ मणिंपश्यामिसौमित्रेवैदेहीमागतंविना ॥ ९ ॥ चिरंजीवतिवैदेहीयदिमासंधरिष्यति ॥ क्षणंवीरनजीवेयंविनातामसितेक्षणाम् ॥ १० ॥ नयमामपि तंदेशंयत्रदृष्टाममप्रिया ॥ नतिष्ठेयंक्षणमपिप्रवृत्तिमुपलभ्यच ॥ ११ ॥ कथंसाममसुश्रोणीभीरुभीरुःसतीतदा ॥ भयावहानांघोराणांमध्येतिष्ठ तिरक्षसाम् ॥ १२ ॥ शारदस्तिमिरोन्मुक्तोनूनंचंद्रइवांबुदैः ॥ आवृतोवदनंतस्यानविराजतिसांप्रतम् ॥ १३ ॥ किमाहसीताहनुमंस्तत्त्वतःकथय स्वमे ॥ एतेनखलुजीविष्येभेषजेनातुरोयथा ॥ १४ ॥ मधुरामधुरालापाकिमाहममभामिनी ॥ मद्विहीनावरारोहाहनुमन्कथयस्वमे ॥ दुःखाद्दुःखतरं प्राप्यकथंजीवतिजानकी ॥ १५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडेषट्षष्टितमःसर्गः ॥ ६६ ॥ एवमुक्तस्तुहनुमान्राघवे णमहात्मना ॥ सीतायाभाषितंसर्वंन्यवेदयतराघवे ॥ १ ॥ इदमुक्तवतीदेवीजानकीपुरुषर्षभ ॥ पूर्ववृत्तमभिज्ञानंचित्रकूटेयथातथम् ॥ २ ॥

तद्ब्रूहि ॥८॥वैदेहीं विना आगतं मणिं पश्यामि इतः किं दुःखतरम्॥९॥यदि मासं धरिष्यति जीविष्यति तदा चिरं जीवति जीविष्यतीत्यर्थः। तां विना यथाहं न जीवेयं तथा मां विना सापि न जीविष्यतीत्यर्थः ॥१०॥ प्रवृत्तिमुपलभ्य क्षणमपि न तिष्ठेयं स्थातुं न शक्यमित्यर्थः ॥ ११ ॥ भीरुभीरुः अत्यंतं भीरुः ॥ १२॥ अंबुदैरावृतस्तिमिरोन्मुक्तः शारदश्चंद्र इव तस्या वदनं न राजति ॥१३॥ एतेन तद्वाक्यश्रवण रूपेण ॥ १४ ॥ मधुरा मधुराकारा ॥ १५ ॥ आर्णकेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे षटषष्टितमः सर्गः ॥ ६६ ॥ ॥ १ ॥ यथातथं यथापूर्वं

वृत्तं तथोक्तवती ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ रादितं दारितामित्यर्थः ॥ ८ ॥ ९ ॥ धरांतरगतः पातालस्थः ॥ १० ॥ व्यधाः अकृताः ॥ ११ ॥ दर्भसंस्तरादेकं कुशं गृह्य गृहीत्वेत्यर्थः ॥१२॥ चिक्षेप चिक्षेपिथ । आर्षः प्रयोगः ॥ १३ ॥ १४ ॥ १५ ॥ पारिपालयः पर्यपालयः शरीरावधेनेति भावः । इत्येवेति हेतोः ॥ १६ ॥ ततस्तदागमतोत्तरम् । हिनस्ति स्म अहिनः ॥ १७ ॥ १८ ॥ १९ ॥

सुखसुप्तात्वयासार्धंजानकीपूर्वमुत्थिता ॥ वायसःसहसोत्पत्यविददारस्तनांतरम् ॥ ३ ॥ पर्यायेणचसुप्तस्त्वंदेव्यंकेभरताग्रज ॥ पुनश्चकिलपक्षीसदेव्याजनयतिव्यथाम् ॥ ४ ॥ ततःपुनरुपागम्यविददारभृशंकिल ॥ ततस्त्वंबोधितस्तस्याःशोणितेनसमुक्षितः ॥ ५ ॥ वायसेनचतेनैवंसततंबाध्यमानया ॥ बोधितःकिलदेव्यात्वंसुखसुप्तःपरंतप ॥ ६ ॥ तांचदृष्ट्वामहाबाहोदारितांचस्तनांतरे ॥ आशीविषइवक्रुद्धस्ततोवाक्यंत्वमूचिवान् ॥ ७ ॥ नखाग्रैःकेनतेभीरुरादितंवैस्तनांतरम् ॥ कःक्रीडतिसरोषेणपंचवक्त्रेणभोगिना ॥ ८ ॥ निरीक्षमाणःसहसावायसंसमुदैक्षथाः ॥ नखैःसरुधिरैस्तीक्ष्णैस्तामेवाभिमुखंस्थितम् ॥ ९ ॥ सुतःकिलसशक्रस्यवायसःपततांवरः ॥ धरांतरगतःशीघ्रंपवनस्यगतौसमः ॥ १० ॥ ततस्तस्मिन्महाबाहोकोपसंवर्तितेक्षणः ॥ वायसेत्वंव्यधाःक्रूरांमतिंमतिमतांवर ॥ ११ ॥ सदर्भसंस्तराद्गृह्यब्रह्मास्त्रेणन्ययोजयः ॥ सदीप्तइवकालाग्निर्जज्वालाभिमुखंखगम् ॥ १२ ॥ सतंप्रदीप्तंचिक्षेपदर्भंतंवायसंप्रति ॥ ततस्तुवायसंदीप्तःसदर्भोनुजगामह ॥ १३ ॥ भीतैश्चसंपरित्यक्तःसुरैःसर्वैश्चवायसः ॥ त्रींल्लोकान्संपरिक्रम्यत्रातारंनाधिगच्छति ॥ १४ ॥ पुनरप्यागतस्तत्रत्वत्सकाशमरिंदम ॥ त्वंतंनिपतितंभूमौशरण्यांशरणागतम् ॥ १५ ॥ वधार्हमपिकाकुत्स्थकृपयापरिपालयः ॥ मोघमस्त्रंनशक्यंतुकर्तुमित्येवराघव ॥ १६ ॥ ततस्तस्याक्षिकाकस्यहिनस्तिस्मसदक्षिणम् ॥ वायसस्त्वांनमस्कृत्यराज्ञोदशरथस्यच ॥ १७ ॥ विसृष्टस्तुतदाकाकःप्रतिपेदेस्वमालयम् ॥ एवमस्त्रविदांश्रेष्ठःसत्त्ववाञ्छीलवानपि ॥ १८ ॥ किमर्थमस्त्रंरक्षस्सुनयोजयसिराघव ॥ नदानवानगंधर्वानासुरानमरुद्गणाः ॥ १९ ॥ तवरामरणेशक्तास्तथाप्रतिसमासितुम् ॥ तववीर्यवतःकश्चिन्मयियद्यस्तिसंभ्रमः ॥ २० ॥ क्षिप्रंसुनिशितैर्बाणैर्हन्यतांयुधिरावणः ॥ भ्रातुरादेशमाज्ञायलक्ष्मणोवापरंतपः ॥ २१ ॥ सकिमर्थंनरवरोनमांरक्षतिराघवः ॥ शक्तौतौपुरुषव्याघ्रौवाय्वग्निसमतेजसौ ॥ २२ ॥ सुराणामपिदुर्धर्षौकिमर्थंमामुपेक्षतः ॥ ममैवदुष्कृतंकिंचिन्महदस्तिनसंशयः ॥ २३ ॥ समर्थौसहितौयन्मांनरक्षेतेपरंतपौ ॥ वैदेह्यावचनंश्रुत्वाकरुणंसाधुभाषितम् ॥ २४ ॥ पुनरप्यहमार्यातामिदंवचनमब्रुवम् ॥ त्वच्छोकविमुखोरामोदेविसत्येनतेशपे ॥ २५ ॥ रामेदुःखाभिभूतेचलक्ष्मणःपरितप्यते ॥ कथंचिद्भवतीदृष्टानकालःपरिशोचितुम् ॥ २६ ॥

हे राम रणे तव त्वां प्रति समासितुं न शक्ताः तथा तद्वत्काकवदित्यर्थः । संभ्रम आदरः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ त्वच्छोकविमुखः त्वच्छोकेन कार्यांतरविमुखः ॥ २५ ॥ भवती मया दृष्टा

अतः परं परिशोचितुं न कालस्तव योग्य इति शेषः । चिरं लंकायाम् आसितुं न कालो योग्य इति पाठांतरेऽर्थः ॥२६॥ इदं मुहूर्तम् अस्मिन्नेव मुहूर्ते इत्यर्थः ॥ २७ २८ ॥ २९ ॥ वेण्युद्ग्रथनं वेण्यामुद्ग्रथनयोग्यम् ॥ ३० ॥ ३१ ॥ त्वरे त्वरावान् जात इत्यर्थः ॥ ३२ ॥ विवर्धमानं समुद्रतरणायेति शेषः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ कालेनोपनिपीडिता परायत्तेति शेषः ॥ ३९ ॥ ४० ॥ ४१ ॥

इदंमुहूर्तंदुःखानामंतंद्रक्ष्यसिभामिनि ॥ तावुभौनरशार्दूलौराजपुत्रौपरंतपौ ॥ २७ ॥ त्वद्दर्शनकृतोत्साहौलंकांभस्मीकरिष्यतः ॥ हत्वाचसमरेरौद्रं रावणंसहबांधवम् ॥ २८ ॥ राघवस्त्वांवरारोहेस्वपुरींनयिताध्रुवम् ॥ यत्तुरामोविजानीयादभिज्ञानमनिंदिते ॥ २९ ॥ प्रीतिसंजननंतस्यप्रदातुं तत्त्वमर्हसि ॥ साभिवीक्ष्यदिशःसर्वावेण्युद्ग्रथनमुत्तमम् ॥ ३० ॥ मुक्त्वावस्त्राद्ददौमह्यंमणिमेतंमहाबल ॥ प्रतिगृह्यमणिंदोर्भ्यांतवहेतोरघुप्रिय॥३१॥ शिरसासंप्रणम्यैनामहमागमनेत्वरे ॥ गमनेचकृतोत्साहमवेक्ष्यवरवर्णिनी ॥ ३२ ॥ विवर्धमानंचहिमामुवाचजनकात्मजा ॥ अश्रुपूर्णमुखीदी नावाष्पगद्गदभाषिणी ॥ ३३ ॥ ममोत्पतनसंभ्रांताशोकवेगसमाहता ॥ मामुवाचततःसीतासभाग्योसिमहाकपे ॥ ३४ ॥ यद्द्रक्ष्यसिमहाबाहुंरामं कमललोचनम् ॥ लक्ष्मणंचमहाबाहुंदेवरंमेयशस्विनम् ॥ ३५ ॥ सीतयाप्येवमुक्तोहमब्रुवंमैथिलींतथा ॥ पृष्ठमारोहमेदेविक्षिप्रंजनकनंदिनि॥३६॥ यावत्तेदर्शयाम्यद्यससुग्रीवंसलक्ष्मणम् ॥ राघवंचमहाभागेभर्तारमसितेक्षणे ॥ ३७ ॥ साब्रवीन्मांततोदेवीनैषधर्मोमहाकपे ॥ यत्तेपृष्ठंसिषेवे हंस्ववशाहरिपुंगव ॥ ३८ ॥ पुराचयदहंवीरस्पृष्टागात्रेषुरक्षसा ॥ तत्राहंकिंकरिष्यामिकालेनोपनिपीडिता ॥ ३९ ॥ गच्छत्वंकपिशार्दूलयत्रतौ नृपतेःसुतौ ॥ इत्येवंसासमाभाष्यभूयःसंदेष्टुमास्थिता ॥ ४० ॥ हनूमन्सिंहसंकाशौतावुभौरामलक्ष्मणौ ॥ सुग्रीवंचसहामात्यंसर्वान्ब्रूयाअना मयम् ॥ ४१ ॥ यथाचसमहाबाहुर्मांतारयतिराघवः ॥ अस्माद्दुःखांबुसंरोधात्त्वमाख्यातुमर्हसि ॥ ४२ ॥ इदंचतीव्रंममशोकवेगंरक्षोभिरेभिः परिभर्त्सनंच ॥ ब्रूयास्तुरामस्यगतःसमीपंशिवश्चतेऽध्वास्तुहरिप्रवीर ॥ ४३ ॥ एतत्तवार्यानृपसंयतासासीतावचःप्राहविषादपूर्वम् ॥ एतच्चबुद्ध्वाग दितोयथात्वंश्रद्धस्वसीतांकुशलांसमग्राम् ॥ ४४ ॥ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥

अथाहमुत्तरंदेव्यापुनरुक्तःससंभ्रमम् ॥ तवस्नेहान्नरव्याघ्रसौहार्दादनुमान्यच ॥ १ ॥ एवंबहुविधंवाच्योरामोदाशरथिस्त्वया ॥ यथामांप्राप्नुयाच्छी घ्रंहत्वारावणमाहवे ॥ २ ॥ यदिवामन्यसेवीरवसैकाहमरिंदम ॥ कस्मिंश्चित्संवृतेदेशेविश्रांतःश्वोगमिष्यसि ॥३॥ ममचाप्यल्पभाग्यायाःसान्निध्या त्तववानर ॥ अस्यशोकविपाकस्यमुहूर्तंस्याद्विमोक्षणम् ॥ ४ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ अर्थ्वर्मानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥ तव स्नेहान्मयि सौहृदात्सुहृद्भावान्मामनुमान्य संमान्य ससंभ्रमो गंतुं सत्वरोहमुत्तरं कार्यं माति पुनःपुनरुक्तः ॥ १ ॥ यथा मां प्राप्नुयात्तथा यतस्वेति शेषः ॥ २ ॥ ३ ॥ एकदिनवासफलमाह मम चेति । तव सान्निध्यादल्पभाग्याया ममास्य महतः

शोकविपाकस्य शोकरूपस्य पापफलस्य मुहूर्तं मोक्षणं स्यादित्यन्वयः ॥ ४ ॥ पुनरागमनाय प्रतीक्षमाणाया मम प्राणानामपि संदेहः स्यादिति योजना ॥ ५ ॥ ६ ॥ उत्तरकार्यविषयामुक्तिमाह अयं चेति । असंशयरहितः ॥ ७ ॥ संदेहमेवाह कथंन्विति ॥ ८ ॥ ९ ॥ १० ॥ यद्यपि त्वमेव पर्याप्तः सकलराक्षसवधपूर्वं मन्मोचन इति शेषः । तथापि ईदृशो बलोदयस्तवैव यशस्यो यशोवर्धकः स्यात् ॥ ११ ॥

गतेहित्वयिविक्रांतपुनरागमनायवै ॥ प्राणानामपिसंदेहोममस्यान्नात्रसंशयः ॥ ५ ॥ तवादर्शनजंचापिभयंमांपरितापयेत् ॥ दुःखाद्दुःखपराभूतांदुर्गतांदुःखभागिनीम् ॥ ६ ॥ अयंचवीरसंदेहस्तिष्ठतीवममाग्रतः ॥ सुमहांस्त्वत्सहायेनहर्यृक्षेषुनसंशयः ॥ ७ ॥ कथंनुखलुदुष्पारंतरिष्यंतिमहोदधिम् ॥ तानिहर्यृक्षसैन्यानितौवानरवरात्मजौ ॥ ८ ॥ त्रयाणामेवभूतानांसागरस्येहलंघने ॥ शक्तिःस्याद्वैनतेयस्यवायोर्वातवचानघ ॥ ९ ॥ तदस्मिन्कार्यनियोगेवीरैवंदुरतिक्रमे ॥ किंपश्यसिसमाधानंब्रूहिवाक्यविदांवर ॥ १० ॥ काममस्यत्वमेवैकःकार्यस्यपरिसाधने ॥ पर्याप्तःपरवीरघ्नयशस्यस्तेबलोदयः ॥ ११ ॥ बलैःसमग्रैर्यदिमांहत्वारावणमाहवे ॥ विजयीस्वपुरींरामोनयेत्तत्स्याद्यशस्करम् ॥ १२ ॥ यथाहंतस्यवीरस्यवनादुपधिनाहृता ॥ रक्षसातद्भयादेवतथानार्हतिराघवः ॥ १३ ॥ बलैस्तुसंकुलांकृत्वालंकांपरबलार्दनः ॥ मांनयेद्यदिकाकुत्स्थस्तत्तस्यसदृशंभवेत् ॥ १४ ॥ तद्यथातस्यविक्रांतमनुरूपंमहात्मनः ॥ भवत्याहवशूरस्यतथात्वमुपपादय ॥ १५ ॥ तदर्थोपहितंवाक्यंप्रश्रितंहेतुसंहितम् ॥ निशम्याहंततःशेषंवाक्यमुत्तरमब्रुवम् ॥ १६ ॥ देविहर्यृक्षसैन्यानामीश्वरःप्लवतांवरः ॥ सुग्रीवःसत्त्वसंपन्नस्त्वदर्थेकृतनिश्चयः ॥ १७ ॥ तस्यविक्रमसंपन्नाःसत्त्ववंतोमहाबलाः ॥ मनःसंकल्पसदृशानिदेशेहरयःस्थिताः ॥ १८ ॥ येषांनोपरिनाधस्तान्नतिर्यक्सज्जतेगतिः ॥ नचकर्मसुसीदंतिमहत्स्वमिततेजसः ॥ १९ ॥ असकृत्तैर्महाभागैर्वानरैर्बलसंयुतैः ॥ प्रदक्षिणीकृताभूमिर्वायुमार्गानुसारिभिः ॥ २० ॥ मद्विशिष्टाश्चतुल्याश्चसंतितत्रवनौकसः ॥ मत्तःप्रत्यवरःकश्चिन्नास्तिसुग्रीवसन्निधौ ॥ २१ ॥ अहंतावदिहप्राप्तःकिंपुनस्तेमहाबलाः ॥ नहिप्रकृष्टाःप्रेष्यंतेप्रेष्यंतेहीतरेजनाः ॥ २२ ॥

यदि तु रामो रावणं हत्वा मां नयेत्तदा तन्नयनं तस्य यशस्करं स्यात् अतस्तेनैवागत्य मोचनं युक्तमिति भावः ॥ १२ ॥ उपधिना छलेन ॥ १३ ॥ १४ ॥ यथा तस्यानुरूपं विक्रांतं भवति तथात्वमेवोपपादय ॥ १५ ॥ शेषं शिष्टम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

मन्युर्दैन्यम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ पूर्वमुक्तया मदुक्तया श्रुतेन त्वच्छोकेनातिपीडिताप्यदीनभाषिणी सा मया शिवाभिर्वाग्भिरभिप्रसादिता शांतिं दुःखनिवृत्तिम् उवाह प्रापेत्यर्थः ॥ २९ ॥ धीरैर्मौनः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये सुंदरकांडेऽष्टषष्टितमः सर्गः ॥ ६८ ॥ सुंदरे सुंदरी सीतामक्षतां मारुतेर्मुखात् ॥ श्रुत्वा हृष्टस्तथैवास्तु स रामः सततं हृदि ॥ १ ॥ मनोभिरामं नयनाभिरामं श्रोत्राभिरामं वचसोभिरामम् ॥ एवं सदा सर्वगतोभिरामं वंदे सदा दाशरथिं च रामम् ॥ २ ॥ श्रीराम राम रामेति रमे रामे मनोरमे ॥ सहस्रनाम

तदलंपरितापेनदेविमन्युरपैतुते ॥ एकोत्पातेनतेलंकामेष्यंतिहारियूथपाः ॥ २३ ॥ ममपृष्ठगतौतौचचंद्रसूर्याविवोदितौ ॥ त्वत्सकाशंमहाभागेनृसिंहावागमिष्यतः ॥ २४ ॥ अरिघ्नंसिंहसंकाशंक्षिप्रंद्रक्ष्यसिराघवम् ॥ लक्ष्मणंचधनुष्मंतंलंकाद्वारमुपागतम् ॥ २५ ॥ नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् ॥ वानरान्वारणेंद्राभान्क्षिप्रंद्रक्ष्यसिसंगतान् ॥ २६ ॥ शैलांबुदनिकाशानांलंकामलयसानुषु ॥ नर्दतांकपिमुख्यानांनचिराच्छ्रोष्यसेस्वनम् ॥ २७ ॥ निवृत्तवनवासंचत्वयासार्धमरिंदमम् ॥ अभिषिक्तमयोध्यायांक्षिप्रंद्रक्ष्यसिराघवम् ॥ २८ ॥ ततोमयावाग्भिरदीनभाषिणीशिवाभिरिष्टाभिरभिप्रसादिता ॥ उवाहशांतिंममतिंमैथिलात्मजातवातिशोकेनतथातिपीडिता ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे चतुर्विंशत्साहस्रिकायांसंहितायामष्टषष्टितमःसर्गः ॥ ६८ ॥ इतिसुंदरकांडंसंपूर्णम् ॥ अतःपरंयुद्धकांडंभविष्यति ॥ तस्यायमाद्यःश्लोकः ॥ श्रुत्वाहनूमतोवाक्यंयथावदभिभाषितम् ॥ रामःप्रीतिसमायुक्तोवाक्यमुत्तरमब्रवीत् ॥ १ ॥ ॥ ७ ॥

तत्तुल्यं रामनाम वरानने ॥ ३ ॥ राम राम तव नाम निर्मलं चिंतयामि भवबंधमुक्तये ॥ वंदितं सुरनरेंद्रमौलिभिर्ध्यायितं मनसि योगिभिः सदा ॥ ४ ॥ मूलम् ॥ २७५० ॥ व्याख्या ॥ २८०० ॥ एकंदरग्रंथसंख्या ॥ ५५५० ॥

---

इदं श्रीमद्रामायणे सतिलकटीके सुन्दरकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये " श्रीवेङ्कटेश्वर "

( स्टीम् ) यन्त्रालये मुद्रितम् । संवत् १९६२, शके १८२७.

श्रीगणेशायनमः ॥ श्रीरामाय नमो नमः ॥ उत्तरे तूत्तरं कार्यं कृत्वायोध्यां निजे पदे ॥ स्थापयित्वा स्वयं रेजे रामो नः कुलदैवतम् ॥ १ ॥ अथ रावणस्य ब्रह्मानुग्रहजबलवैभवप्रतिपादनद्वारा तज्जेतृत्वेन भगवति पराक्रमातिशयं प्रतिपादयितुं त्वद्दत्तवैभवं त्वयैवोपसंहृतमिति भगवन्महिमानं च स्तोतुमृषय आगता इत्याह प्राप्तेति । राक्षसानां वधे कृते अनंतरं प्राप्तराज्यस्य प्राप्तराज्याभिषेकस्य समीपं मुनय आजग्मुः किमर्थम् । राघवं प्रतिनंदितुं तद्वैभवमभिष्टोतुमित्यर्थः ॥ १ ॥ पूर्वस्यां दिशि ये श्रिताः पूर्वदिशि प्रधानतया ये स्थिता इत्यर्थः ॥ २ ॥ स्वस्तिकर आत्रेयः स्वस्त्यात्रेयः ॥३॥४॥५॥ तेपि उक्तवसिष्ठादिरूपाः सप्तर्षयोप्यागता इत्यर्थः । तेषां स्वरूपकथनमुदीच्यां दिशीत्यादि । ननु पुरोहितो वसिष्ठो नित्यं समीप एव वर्तते को नामासौ वसिष्ठो य उत्तरदिशः कश्यपादिभिः सहागत इति चेच्छृणु यथागस्त्य

श्रीगणेशायनमः ॥ प्राप्तराज्यस्यरामस्यराक्षसानांवधेकृते ॥ आजग्मुर्मुनयःसर्वेराघवंप्रतिनंदितुम् ॥ १ ॥ कौशिकोथयवक्रीतोगार्ग्योगालवएवच ॥ कण्वोमेधातिथेःपुत्रःपूर्वस्यांदिशियेश्रिताः ॥ २ ॥ स्वस्त्यात्रेयश्चभगवान्नमुचिःप्रमुचिस्तथा ॥ अगस्त्योऽत्रिश्चभगवान्सुमुखोविमुखस्तथा ॥ ३ ॥ आजग्मुस्तेसहागस्त्यायेश्रितादक्षिणांदिशम् ॥ नृषद्गुःकवषीधौम्यःकौषेयश्चमहानृषिः ॥ ४ ॥ तेप्याजग्मुःसशिष्यावैयेश्रिताःपश्चिमांदिशम् ॥ वसिष्ठःकश्यपोथात्रिर्विश्वामित्रःसगौतमः ॥ ५ ॥ जमदग्निर्भरद्वाजस्तेपिसप्तर्षयस्तथा ॥ उदीच्यांदिशिसप्तैतेनित्यमेवनिवासिनः ॥ ६ ॥ संप्राप्यैते महात्मानोराघवस्यनिवेशनम् ॥ विष्ठिताःप्रतिहारार्थंहुताशनसमप्रभाः ॥ ७ ॥ वेदवेदांगविदुषोनानाशास्त्रविशारदाः ॥ द्वाःस्थंप्रोवाचधर्मात्मा अगस्त्योमुनिसत्तमः ॥ ८ ॥ निवेद्यतांदाशरथेर्ऋषयोवयमागताः ॥ प्रतीहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतम् ॥ ९ ॥ समीपंराघवस्याशुप्रविवेशमहात्मनः ॥ नयेंगितज्ञःसद्वृत्तोदक्षोधैर्यसमन्वितः ॥ १० ॥ सरामंदृश्यसहसापूर्णचंद्रसमद्युतिम् ॥ अगस्त्यंकथयामाससंप्राप्तमृषिसत्तमम् ॥ ११ ॥ श्रुत्वाप्राप्तान्मुनींस्तांस्तुबालसूर्यसमप्रभान् ॥ प्रत्युवाचततोद्वाःस्थंप्रवेशयययथासुखम् ॥ १२ ॥ दृष्ट्वाप्राप्तान्मुनींस्तांस्तुप्रत्युत्थायकृतांजलिः ॥ पाद्यार्घ्यादिभिरानर्चगांनिवेद्यचसादरम् ॥ १३ ॥ रामोऽभिवाद्यप्रयतआसनान्यादिदेशह ॥ तेषुकांचनचित्रेषुमहत्सुचवरेषुच ॥ १४ ॥ कुशांतर्धानदत्तेषुमृगचर्मयुतेषुच ॥ यथार्हमुपविष्टास्तेआसनेष्वृषिपुंगवाः ॥ १५ ॥ रामेणकुशलंपृष्टाःसशिष्याःसपुरोगमाः ॥ महर्षयोवेदविदोरामंवचनमब्रुवन् ॥ कुशलंनोमहाबाहोसर्वत्ररघुनंदन ॥ १६ ॥ त्वांतुदिष्ट्याकुशलिनंपश्यामोहतशात्रवम् ॥ दिष्ट्यात्वयाहतोराजन्रावणोलोकरावणः ॥ १७ ॥

स्तेजोमंडले नक्षत्रमध्ये नित्यस्थितोपि योगवैभवाद्भूलोके स्वाश्रमस्थोपि । तथा वसिष्ठोपि ज्योतिर्मंडले सप्तर्षिमध्यगोप्यस्ति भूलोके च । तत्र सप्तर्षिमंडलस्थस्तैः सहागत इत्युच्यते इति वदंति ॥ ६ ॥ प्रतिहारो द्वाःस्थस्तदर्थं तन्मुखेन रामाय स्वागमननिवेदनार्थम् । विष्ठिता द्वारि स्थिता इत्यर्थः ॥ ७ ॥ अवस्थानानंतरं सर्वानुमत्याऽगस्त्यो द्वाःस्थमुवाच ॥ ८ ॥ किमुवाच तदाह निवेद्यतामिति । तूर्णमिति मानसी त्वरा द्रुतमिति कायिकी उक्ता ॥ ९ ॥ आश्वित्यनेन राजावसरपरीक्षाभावो विवक्षितः ॥ १० ॥ ११ ॥ १२ ॥ निवेद्य मत्येकमिति शेषः ॥ १३ ॥ वरेषु बहुमूल्येषु ॥ १४ ॥ कुशांतर्धानदत्तेषु कुशैरंतर्धानं दत्तं कृतं येषु कुशास्तृतेष्वित्यर्थः ॥ १५ ॥ सपुरोगमाः पुरोगमैः प्रधानैः सहिताः ॥ १६ ॥ हतशात्रवं हतशत्रुसमूहं त्वां भाग्येन कुशलिनं पश्यामस्तेन नः कुशलमेव सर्वथा अत्रहेत

स्तेनैवास्माकं कुशलमित्यर्थः ॥ १७ ॥ दिष्ट्या त्वया हत इत्युक्ता पुनर्विचार्याहुः नहीति । पुत्रपौत्रवानपि रावणस्ते न भारः तद्वधस्तवेषत्कर इत्यर्थः । तदेव दर्शयति सधनुरिति । विजयेथा विपराभ्यां जे रिति तङ् ॥१८॥१९॥ लक्ष्मणेन चेति । अस्यार्थस्य दिष्ट्या राक्षसा हता इति शेषः । मातृभिरित्यस्य दिष्ट्येत्यादिः युक्तमिति शेषः ॥२०॥२१॥ यस्य प्रमाणादाकारप्रमाणात् ॥२२॥२३॥२४॥ द्वयरावणवधे न तव भारस्तिरोहितरावणिवध एव तु दुष्कर इत्याहुः संख्ये तस्येति । संख्ये तस्य रावणस्यत्वत्कर्तृकः पराभव आक्रमणमिति यत्तन्न किंचिदपि तु दिष्ट्या तिरोधानसाधनयागभंगेन द्वंद्वयुद्धमनुप्राप्तोऽत

नहिभारःसतेरामरावणःपुत्रपौत्रवान् ॥ सधनुस्त्वंहिलोकांस्त्रीन्विजयेथानसंशयः ॥ १८ ॥ दिष्ट्यात्वयाहतोरामरावणःपुत्रपौत्रवान् ॥ दिष्ट्याविजयिनंत्वाद्यपश्यामःसहसीतया ॥ १९ ॥ लक्ष्मणेनचधर्मात्मन्भ्रात्रात्वद्धितकारिणा ॥ मातृभिर्भ्रातृसहितंपश्यामोऽद्यवयंनृप ॥२०॥ दिष्ट्याप्रहस्तोविकटोविरूपाक्षोमहोदरः ॥ अकंपनश्चदुर्धर्षोनिहतास्तेनिशाचराः ॥ २१ ॥ यस्यप्रमाणाद्विपुलंप्रमाणंनेहविद्यते ॥ दिष्ट्यातेसमरेरामकुंभकर्णोनिपातितः ॥२२॥ त्रिशिराश्चातिकायश्चदेवांतकनरांतकौ ॥ दिष्ट्यातेनिहतारामसहावीर्यानिशाचराः ॥२३॥ दिष्ट्यात्वंराक्षसेंद्रेणद्वंद्वयुद्धमुपागतः ॥ देवतानामवध्येनविजयंप्राप्तवानसि ॥ २४ ॥ संख्येतस्यनकिंचित्तुरावणस्यपराभवः ॥ द्वंद्वयुद्धमनुप्राप्तोदिष्ट्यातेरावणिर्हतः ॥ २५ ॥ दिष्ट्यातस्यमहाबाहोकालस्येवाभिधावतः ॥ मुक्तःसुररिपोर्वीरप्राप्तश्चविजयस्त्वया ॥ २६ ॥ अभिनंदामतेसर्वेसंश्रुत्येंद्रजितोवधम् ॥ अवध्यःसर्वभूतानांमहामायाधरोयुधि ॥ २७ ॥ विस्मयस्त्वेषचास्माकंतंश्रुत्वेंद्रजितंहतम् ॥ दत्त्वापुण्यामिमांवीरसौम्यामभयदक्षिणाम् ॥ दिष्ट्यावर्धसिकाकुत्स्थजयेनामित्रकर्शन ॥ २८ ॥ श्रुत्वातुवचनंतेषांमुनीनांभावितात्मनाम् ॥ विस्मयंपरमंगत्वारामःप्रांजलिरब्रवीत् ॥ २९ ॥ भगवंतःकुंभकर्णंरावणंचनिशाचरम् ॥ अतिक्रम्यमहावीर्यौकिंप्रशंसथरावणिम् ॥ ३० ॥ महोदरंप्रहस्तंचविरूपाक्षंचराक्षसम् ॥ मत्तोन्मत्तौचदुर्धर्षौदेवांतकनरांतकौ ॥ अतिक्रम्यमहावीरान्किंप्रशंसथरावणिम् ॥ ३१ ॥ अतिकायंत्रिशिरसंधूम्राक्षंचनिशाचरम् ॥ अतिक्रम्यमहावीर्यान्किंप्रशंसथरावणिम् ॥ ३२ ॥ कीदृशोवैप्रभावोऽस्यकिंबलंकःपराक्रमः ॥ केनवाकारणेनैषरावणादतिरिच्यते ॥ ३३ ॥ शक्यंयदिमयाश्रोतुंनखल्वाज्ञापयामिवः ॥ यदिगुह्यंनचेद्वक्तुंश्रोतुमिच्छामिकथ्यताम् ॥ ३४ ॥

एव हतो रावणिरिति यदिदमेव बह्विति शेषः॥२५॥कालस्येवालक्ष्यमभिधावतस्तस्य मुक्तः शरबंधादिकृतपरमकृच्छ्रादितिशेषः ॥२६॥विस्मयहेतुरवध्य इति।यतः सोवध्यत्वादिगुणोऽतएव च एष एव इंद्रजिद्वधोस्माकं विस्मयो विस्मयकर इत्यन्वयः। तत्तस्मादिंद्रजितं हतं श्रुत्वा वयं तुष्टा इति शेषः॥२७॥अभयदक्षिणाम् अभयदानं दत्त्वा ऋषिभ्य इति शेषः वर्धसि वर्धसे॥२८॥विस्मयं गत्वा रावणिवधविषयवाक्येनेति शेषः ॥२९॥ तदेवाह भगवन्त इति संबोधनम् ॥३०॥३१ ॥ ३२ ॥ कीदृशोस्य प्रभावादिः यतो युष्माभिः प्रशस्यत इति शेषः प्रभावस्तपःप्रभावः बलं शारीरम् ॥३३॥ शक्यमिति यदि गुह्यं न भवति यदि युष्माभिर्वक्तुं शक्यं

यदि च मया श्रोतुं शक्यं तदा कथ्यतां श्रोतुमिच्छामि केवलं न खलु वक्तुमाज्ञापयामि ॥ ३४ ॥ पिता रावणो न बलवान्पुत्रापेक्षयेति च कथम् ॥ ३५ ॥३६॥ ताँलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे प्रथमः सर्गः ॥१॥अथ रावणाद्युत्पत्तिशेषतया तत्कूटस्थपौलस्त्योत्पत्तिमाह तस्य तद्वचनमिति ॥ १ ॥ तस्य तेजआद्युद्दिश्य तथावृत्तं वृत्तकथां ब्रवीमि त्वं शृणु असौ रावणिर्येन कारणेन शत्रून् जघान स च शत्रुभिर्न वध्यस्तत्कारणं शृणु ॥२॥ तावत्प्रथमं रावणस्य कुलादि ब्रवीमि पश्चाद्रावणेश्च वक्ष्यामीति शेषः । तावत्ते रावणस्येतिपाठः ॥३॥ तत्र कुलमाह पुरेति । पुलस्त्यो दशप्रजापतिष्वेकः पितामह इव तपोवैभवजनितनिग्रहानुग्रहासामर्थ्यैरिति भावः ॥ ४ ॥ तदेवाह नानुकीर्त्या इति । विविच्य वर्णयितुमशक्यत्वादित्यर्थः । धर्मतः शीलतश्चोत्पन्ना गुणा इत्यन्वयः ।

शक्रोपिविजितस्तेनकथंलब्धवरश्चसः ॥ कथंचबलवान्पुत्रोनापितातस्यरावणः ॥३५॥ कथंपितुश्चाप्यधिकोमहाहवेशक्रस्यजेताहिकथंसराक्षसः ॥ वराश्चलब्धाःकथयस्वमेद्यपाप्रच्छतश्चास्यमुनींद्रसर्वम् ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे प्रथमःसर्गः ॥ १ ॥ तस्यतद्वचनंश्रुत्वाराघवस्यमहात्मनः ॥ कुंभयोनिर्महातेजावाक्यमेतदुवाचह ॥ १ ॥ शृणुरामतथावृत्तंतस्यतेजोबलंमहत् ॥ जघानशत्रून्येनासौ नचवध्यःसशत्रुभिः ॥ २ ॥ तावत्तेरावणस्येदंकुलंजन्मचराघव ॥ वरप्रदानंचतथातस्मैदत्तंब्रवीमिते ॥ ३ ॥ पुराकृतयुगेरामप्रजापतिसुतःप्रभुः ॥ पुलस्त्योनामब्रह्मर्षिःसाक्षादिवपितामहः ॥ ४ ॥ नानुकीर्त्यागुणास्तस्यधर्मतःशीलतस्तथा ॥ प्रजापतेःपुत्रइतिवक्तुंशक्यंहिनामतः ॥ ५ ॥ प्रजापतिसुतत्वेनदेवानांवल्लभोहिसः ॥ इष्टःसर्वस्यलोकस्यगुणैःशुभ्रैर्महामतिः ॥ ६ ॥ सतुधर्मप्रसंगेनमेरोःपार्श्वेमहागिरेः ॥ तृणबिंद्वाश्रमंगत्वाप्यवसन्मुनिपुंगवः ॥ ७ ॥ तपस्तेपेसधर्मात्मास्वाध्यायनियतेंद्रियः ॥ गत्वाश्रमपदंतस्यविघ्नंकुर्वंतिकन्यकाः ॥८॥ ऋषिपन्नगकन्याश्चराजर्षितनयाश्चयाः ॥ क्रीडंत्योऽप्सरसश्चैवतंदेशमुपपेदिरे ॥ ९ ॥ सर्वर्तुपूपभोग्यत्वाद्रम्यत्वात्काननस्यच ॥ नित्यशस्तास्तुतंदेशंगत्वाक्रीडंतिकन्यकाः ॥ १० ॥ देशस्यरमणीयत्वात्पुलस्त्योयत्रसद्विजः ॥ गायंत्योवादयंत्यश्चलासयंत्यस्तथैवच ॥ ११ ॥ मुनेस्तपस्विनस्तस्यविघ्नंचक्रुरनिंदिताः ॥ अथ रुष्टोमहातेजाव्याजहारमहामुनिः ॥ १२ ॥ यामेदर्शनमागच्छेत्सागर्भंधारयिष्यति ॥ तास्तुसर्वाःप्रतिश्रुत्यतस्यवाक्यंमहात्मनः ॥ १३ ॥ ब्रह्मशापभयाद्भीतास्तंदेशंनोपचक्रमुः ॥ तृणबिंदोस्तुराजर्षेस्तनयानश्रृणोतितत् ॥ १४ ॥ गत्वाश्रमपदंतत्रविचचारसुनिर्भया ॥ नचापश्यच्चसातत्रकांचिदभ्यागतांसखीम् ॥ १५ ॥ तस्मिन्कालेमहातेजाःप्राजापत्योमहानृषिः ॥ स्वाध्यायमकरोत्तत्रतपसाभावितःस्वयम् ॥ १६ ॥ सातुवेदश्रुतिंश्रुत्वादृष्ट्वावैतपसोनिधिम् ॥ अभवत्पांडुदेहासासुव्यंजितशरीरजा ॥ १७ ॥

अथ प्रकारांतरेण तद्वैभवं बोधयति प्रजापतेरिति । प्रजापतेः पुत्र इति नामत एव तत्संकीर्तनत एव सद्गुणाधिक्यं वक्तुं शक्यं प्रजापतिपुत्रत्वोक्त्या तस्येवास्याप्यनंतकल्याणगुणत्वमुक्तं भवतीत्यर्थः ॥ ५ ॥ ॥ ६ ॥ धर्मप्रसंगेन तपःसंपादनेच्छया ॥ ७ ॥ विघ्नं कुर्वंति तृणाग्निन्यायेन न तु बुद्धिपूर्वम् ॥ ८ ॥ तदेवाह सर्वर्तुष्विति । तं देशमाश्रमदेशम् ॥ ९ ॥१०॥ वादयंत्यो वीणादिकमिति शेषः । लासयंत्यो नृत्यंत्यः ॥ ११ ॥ १२ ॥ १३ ॥ तदिति शापवाक्यमित्यर्थः । न शृणोति न शुश्राव ॥ १४ ॥ १५ ॥ स्वाध्यायं वेदाध्ययनम् ॥ १६ ॥ वेदश्रुतिं वेदध्वनिं श्रुत्वा कोऽधीत इति गत्वा तपसो निधिं

दृष्ट्वा च पांडुदेहा गर्भोत्पत्त्या सुव्यंजितशरीरजा शरीराज्जायत इति शरीरजो गर्भः सुप्रकाशितो यस्याः सा ॥ १७ ॥ तद्दोषं गर्भसंभवरूपदोषं दृष्ट्वोद्विग्ना बभूव । किं त्विति दोपस्वरूपमिति ज्ञात्वेत्यर्थः ॥ १८॥ असदृशं कन्यात्वस्यायुक्तम् ॥ १९ ॥ २० ॥ पूर्वं गता प्रथमं गता ॥ २१ ॥ २२ ॥ तच्चापि गर्भकारणमित्यर्थः ॥ २३ ॥ तनयां गृहीत्वा पुलस्त्यं गत्वा ॥ २४ ॥ इमा भिक्षां प्रतिगृहाण भिक्षात्वेन स्वीकुर्वित्यब्रवीत् । ननूर्ध्वरेतसो मम नानया प्रयोजनं तत्राह स्वयमुद्यतामिति । उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् ॥ भोज्यां मेने प्रजानाथो अपि दुष्कृतकर्मण इत्युक्तेः स्वयमुद्यतेयं ग्राह्यैवेत्यर्थः॥२५॥

बभूवचससुद्विग्नादृष्ट्वातद्दोषमात्मनः ॥ इदंमेकिंत्वितिज्ञात्वापितुर्गत्वाश्रमेस्थिता ॥१८॥ तांतुदृष्ट्वातथाभूतांतृणविंदुरथाब्रवीत् ॥ किंत्वमेतत्त्वसदृशं धारयस्यात्मनोवपुः ॥१९॥ सातुकृत्वांजलिंदीनाकन्योवाचतपोधनम् ॥ नजानेकारणंतातयेनमेरूपमीदृशम् ॥ २० ॥ किंतुपूर्वंगतास्म्येकामहर्षेर्भावितात्मनः ॥ पुलस्त्यस्याश्रमंदिव्यमन्वेष्टुंस्वसखीजनम् ॥ २१ ॥ नचपश्याम्यहंतत्रकांचिदभ्यागतांसखीम् ॥ रूपस्यतुविपर्यासंदृष्ट्वात्रासादिहागता ॥ २२ ॥ तृणविंदुस्तुराजर्षिस्तपसाद्योतितप्रभः ॥ ध्यानंविवेशतच्चापिअपश्यदृषिकर्मजम् ॥ २३ ॥ सतुविज्ञायतंशापंमहर्षेर्भावितात्मनः॥ गृहीत्वातनयांगत्वापुलस्त्यमिदमब्रवीत् ॥ २४॥ भगवंस्तनयांमित्वंगुणैःस्वैरेवभूषिताम् ॥ भिक्षांप्रतिगृहाणेमांमहर्षेस्वयमुद्यताम् ॥ २५ ॥ तपश्चरणयुक्तस्यश्राम्यमाणेंद्रियस्यते ॥ शुश्रूषणपरानित्यंभविष्यतिनसंशयः ॥२६॥ तंब्रुवाणंतुतद्वाक्यंराजर्षिंधार्मिकंतदा ॥ जिघृक्षुरब्रवीत्कन्यांबाढमित्येवसाद्विजः ॥ २७ ॥ दत्त्वातुतनयांराजास्वमाश्रमपदंगतः ॥ सापितत्रावसत्कन्यातोपयंतीपतिंगुणैः ॥ २८ ॥ तस्यास्तुशीलवृत्ताभ्यांतुतोषमुनिपुंगवः ॥ प्रीतःसतुमहातेजावाक्यमेतदुवाचह ॥ २९ ॥ परितुष्टोस्मिसुश्रोणिगुणानांसंपदाभृशम् ॥ तस्माद्देविददाम्यद्यपुत्रमात्मसमंतव ॥ उभयोर्वंशकर्तारंपौलस्त्यइतिविश्रुतम् ॥ ३० ॥ यस्मात्तुविश्रुतोवेदस्त्वयेहाध्ययतोमम ॥ तस्मात्सविश्रवानामभविष्यतिनसंशयः ॥ ३१॥ एवमुक्तातुसादेवीप्रहृष्टेनांतरात्मना ॥ अचिरेणैवकालेनासूतविश्रवसंसुतम् ॥ त्रिषुलोकेषुविख्यातंयशोधर्मसमन्वितम् ॥ ३२ ॥ श्रुतिमान्समदर्शीचव्रताचाररतस्तथा॥ पितेवतपसायुक्तोअभवद्विश्रवामुनिः ॥ ३३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे द्वितीयःसर्गः ॥ २ ॥ अथपुत्रःपुलस्त्यस्याविश्रवामुनिपुंगवः ॥ अचिरेणैवकालेनपितेवतपसिस्थितः ॥ १ ॥ सत्यवाञ्शीलवान्दान्तःस्वाध्यायनिरतःशुचिः ॥ सर्वभोगेष्वसंसक्तोनित्यंधर्मपरायणः ॥ २ ॥ ज्ञात्वातस्यतुतद्वृत्तंभरद्वाजोमहामुनिः ॥ ददौविश्रवसेभार्यांस्वसुतांदेववर्णिनीम् ॥ ३ ॥ प्रतिगृह्यतुधर्मेणभरद्वाजसुतांतदा ॥ प्रजान्वीक्षिकयाबुद्ध्याश्रेयोह्यस्यविचिंतयन् ॥ ४ ॥

तत्प्रतिग्रहफलमाह शुश्रूषणपरेति ॥ २६ ॥ जिघृक्षुः यथान्यायं पाणिग्रहणपूर्वकमिति शेषः ॥ २७ ॥ तदेवोक्तं तोषयंती पतिमिति ॥ २८ ॥ २९ ॥ उभयोः मातुः पितुश्चेत्यर्थः ॥ ३० ॥ अध्ययतः अधीयानस्य वेदो विश्रुतो गर्भहेतुरिति शेषः ॥३१॥३२॥३३॥ ॐॐमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे द्वितीयः सर्गः ॥२॥ अथ पौलस्त्याद्विश्रवसः कुबेरोत्पत्तिः अथेति ॥ १ ॥ २ ॥ तस्य तद्वृत्तं विश्रवसस्तादृशं चरित्रमित्यर्थः । देववर्णिनीं देवसमानरूपां तन्नाम्नीं च ॥ ३ ॥ प्रजान्वीक्षिकया प्रजानां शुभाशुभवीक्षणरूपया बुद्ध्या ज्योतिःशास्त्रसिद्धया

अस्योत्पादयिष्यमाणपुत्रस्य श्रेयो गुणं चिंतयन् ॥ ४ ॥ तस्यां भार्यायाम् ॥ ५ ॥ सर्वैर्ब्रह्मगुणैः शमतपःशौचादिगुणैर्युक्तमपत्यं जनयामास पितामहः वैश्रवणपितामहः पुलस्त्य इत्यर्थः । अत्र स्थाने प्रजान्वेषि कयेत्यर्थमिति कतकस्वरसः । प्रजामन्विच्छति प्रजान्वेषिका तद्गुणागुणपर्यालोचिका ज्योतिःशास्त्रविषया बुद्धिस्तया अस्य वैश्रवणस्य श्रेयो विचिंतयन्पुलस्त्यस्तस्मिन्विश्रवसः पुत्रे जाते तुष्टो बभूवेति तेन व्याख्या नात् ॥ ६ ॥ श्रेयस्करीं धनेशत्वरूपश्रेयःप्राप्तिहेतुभूतां तपोविषयां तस्य बुद्धिं दृष्ट्वा जन्मलग्नपर्यालोचनयेति शेषः । धनाध्यक्षो भविष्यति कालांतरे एवं नामा भविष्यति इति संहृष्टो बभूवेत्यन्वयः ॥ ७ ॥ यतो विश्रवसोपत्यं रूपसादृश्याद्विश्रवा इव स इवेति व्यवहारविषयस्तस्माद्वैश्रवण इति विश्रुतः प्रसिद्धो भविष्यति नाम । अपत्यप्रत्ययसन्नियोगेन विश्रवसो विश्रवणादेशः ॥ ८ ॥ ९ ॥

मुदापरमयायुक्तोविश्रवामुनिपुंगवः ॥ सतस्यांवीर्यसंपन्नमपत्यंपरमाद्भुतम् ॥ ५ ॥ जनयामासधर्मज्ञःसर्वैर्ब्रह्मगुणैर्वृतम् ॥ तस्मिञ्जातेतुसंहृष्टःसब भूवपितामहः ॥ ६ ॥ दृष्ट्वाश्रेयस्करींबुद्धिंधनाध्यक्षोभविष्यति ॥ नामचास्याकरोत्प्रीतःसार्धंदेवर्षिभिस्तदा ॥ ७ ॥ यस्माद्विश्रवसोपत्यंसादृश्या द्विश्रवाइव ॥ तस्माद्वैश्रवणोनामभविष्यत्येषविश्रुतः ॥ ८ ॥ सतुवैश्रवणस्तत्रतपोवनगतस्तदा ॥ अवर्धताहुतिहुतोमहातेजायथाऽनलः ॥ ९ ॥ तस्याश्रमपदस्थस्यबुद्धिर्जज्ञेमहात्मनः ॥ चरिष्येपरमंधर्मंधर्मोहिपरमागतिः ॥ १० ॥ सतुवर्षसहस्राणितपस्तप्त्वामहावने ॥ यंत्रितोनियमैरुग्रैश्च कारसुमहत्तपः ॥ ११ ॥ पूर्णेवर्षसहस्रांतेतंतंविधिमकल्पयत् ॥ जलाशीमारुताहारोनिराहारस्तथैवच ॥ एवंवर्षसहस्राणिजग्मुस्तान्येकवर्षवत् ॥ १२ ॥ अथप्रीतोमहातेजाःसेंद्रैःसुरगणैःसह ॥ गत्वातस्याश्रमपदंब्रह्मेदंवाक्यमब्रवीत् ॥ १३ ॥ परितुष्टोस्मितेवत्सकर्मणानेनसुव्रत ॥ वरंवृणीष्वभद्रंतेवरा र्हस्त्वंमहामते ॥ १४ ॥ अथाब्रवीद्वैश्रवणःपितामहमुपस्थितम् ॥ भगवँल्लोकपालत्वमिच्छेहंलोकरक्षणम् ॥ १५ ॥ अथाब्रवीद्वैश्रवणंपरितुष्टेनचे तसा ॥ ब्रह्मासुरगणैःसार्धंबाढमित्येवहृष्टवत् ॥ १६ ॥ अहंवैलोकपालानांचतुर्थंस्रष्टुमुद्यतः ॥ यमेंद्रवरुणानांचपदंयत्तवचेप्सितम् ॥ १७ ॥ तद्गच्छ बतधर्मज्ञनिधीशत्वमवाप्नुहि ॥ शक्रांबुपयमानांचचतुर्थस्त्वंभविष्यसि ॥ १८ ॥ एतच्चपुष्पकंनामविमानंसूर्यसन्निभम् ॥ प्रतिगृह्णीष्वयानार्थंत्रिदशैः समतांव्रज ॥ १९ ॥ स्वस्तितेस्तुगमिष्यामःसर्वएवयथागतम् ॥ कृतकृत्यावयंतातदत्त्वातववरद्वयम् ॥ २० ॥ इत्युक्त्वासगतोब्रह्मास्वस्थानंत्रिदशैः सह ॥ गतेषुब्रह्मपूर्वेषुदेवेष्वथनभस्तलम् ॥ २१ ॥ धनेशःपितरंप्राहप्रांजलिःप्रयतात्मवान् ॥ भगवँल्लब्धवानास्मिवरमिष्टंपितामहात् ॥ २२ ॥

॥ १० ॥ ततस्तप्त्वा आलोच्य नियमैर्यंत्रितः संजातनियम इत्यर्थः ॥ ११ ॥ तं तं विधिं वक्ष्यमाणजलाशित्वादिविधिमित्यर्थः ॥ १२ ॥ अथ भगवत्प्रसादवैभवमाह अथ प्रीत इति ॥ १३ ॥ १४ ॥ लोकपालत्वं वित्तरक्षणं वैराजनिधिनाथत्वम् ॥ १५ ॥ १६ ॥ चतुर्थं चतुर्णां पूरणं यमादित्रयस्य यत्पदं लोकपालपदं यत्तवेप्सितं त्वं तद्गच्छ निधीशत्वं चाप्नुहि । एवं सति त्वं शक्रादीनां चतुर्थो भविष्यसीति सम्बन्धः ॥ १७ ॥ १८ ॥ त्रिदशैः समतां व्रज न त्वपिपुत्रत्वेनैव तिष्ठेत्यर्थः ॥ १९ ॥ वरद्वयं निधीशत्वपुष्पकदानरूपम् ॥ २० ॥ २१ ॥ २२ ॥

निवासनं निवासमित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ यंत्ररूपैः शस्त्रैः समावृता ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ निवासयामास निवासमकरोदित्यर्थः ॥ ३१ ॥ प्रमुदितैर्नैर्ऋतानां सहस्रैः सह निवासयामासेति संबंधः संपूर्णा धनधान्यादिसर्वैश्वर्यपूर्णा शासनात्पालनात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ अवभासन् शोभमानः अप्सरोनृत्यैर्विभूषितमालयं पुष्पकं यस्य सः ॥ ३५॥ शोभमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे तृतीयः सर्गः ॥ ३ ॥ लंकायां पूर्वमपि रक्षःस्थितिं श्रुत्वा विस्मितेन रामेण तेषामुत्पत्त्यादिप्रश्ने अगस्त्येन तत्प्रतिपादनं श्रुत्वेति विस्मयमागत

निवासनंनमेदेवोविदधेसप्रजापतिः ॥ तंपश्यभगवन्कंचिन्निवासंसाधुमेप्रभो ॥ नचपीडाभवेद्यत्रप्राणिनोयस्यकस्यचित् ॥ २३ ॥ एवमुक्तस्तुपुत्रेणविश्रवामुनिपुंगवः ॥ वचनंप्राहधर्मज्ञश्रूयतामितिसत्तम ॥ २४ ॥ दक्षिणस्योदधेस्तीरेत्रिकूटोनामपर्वतः ॥ तस्याग्रेतुविशालासामहेंद्रस्यपुरी यथा ॥ २५ ॥ लंकानामपुरीरम्यानिर्मिताविश्वकर्मणा ॥ राक्षसानांनिवासार्थंयथेंद्रस्यामरावती ॥ २६ ॥ तत्रत्वंवसभद्रंतेलंकायांनात्रसंशयः ॥ हेमप्राकारपरिखायंत्रशस्त्रसमावृता ॥ २७ ॥ रमणीयापुरीसाहिरुक्मवैदूर्यतोरणा ॥ राक्षसैःसापरित्यक्तापुराविष्णुभयार्दितैः ॥ २८ ॥ शून्या रक्षोगणैःसर्वैरसातलतलंगतैः ॥ शून्यासंप्रतिलंकासाप्रभुस्तस्यानविद्यते ॥ २९ ॥ सत्वंतत्रनिवासायगच्छपुत्रयथासुखम् ॥ निर्दोषस्तत्रतेवासो नबाधस्तत्रकस्यचित् ॥ ३० ॥ एतच्छ्रुत्वासधर्मात्माधर्मिष्ठंवचनंपितुः ॥ निवासयामासतदालंकांपर्वतमूर्धनि ॥ ३१ ॥ नैर्ऋतानांसहस्रैस्तुहृष्टैः प्रमुदितैःसदा ॥ अचिरेणैवकालेनसंपूर्णातस्यशासनात् ॥ ३२ ॥ सतुतत्रावसत्प्रीतोधर्मात्मानैर्ऋतर्षभः ॥ समुद्रपरिखायांसलंकायांविश्रवात्मजः ॥ ३३ ॥ कालेकालेतुधर्मात्मापुष्पकेणधनेश्वरः ॥ अभ्यागच्छद्विनीतात्मापितरंमातरंचहि ॥ ३४ ॥ सदेवगंधर्वगणैरभिष्टुतस्तथाप्सरोनृत्यविभूषितालयः ॥ गभस्तिभिःसूर्यइवावभासन्पितुःसमीपंप्रययौसवित्तपः ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे तृतीयः सर्गः ॥ ३ ॥ श्रुत्वागस्त्येरितंवाक्यंरामोविस्मयमागतः ॥ कथमासीत्तुलंकायांसंभवोरक्षसांपुरा ॥ १ ॥ ततःशिरःकंपयित्वात्रेताग्निसमविग्रहम् ॥ तमागस्त्यंमुहुर्दृष्ट्वास्मयमानोभ्यभाषत ॥२॥ भगवन्पूर्वमप्येषालंकासीत्पिशिताशिनाम् ॥ श्रुत्वेदंभगवद्वाक्यंजातोमेविस्मयःपरः॥३॥ पुलस्त्यवंशादुद्भूताराक्षसाइतिनःश्रुतम् ॥ इदानीमन्यतश्चापिसंभवःकीर्तितस्त्वया ॥ ४ ॥ रावणात्कुंभकर्णाच्चप्रहस्ताद्विकटादपि ॥ रावणस्यच पुत्रेभ्यःकिंनुतेबलवत्तराः ॥ ५ ॥

इत्युक्तं तत्र किंविषयकश्रवणाद्विस्मयप्राप्तिस्तत्राह कथमिति पुरा धनदावस्थितेःपूर्वमपि रक्षसां संभवोवस्थानादिसंभव इति यदुक्तं तत्तु कथमासीदिति विस्मयमागतः ॥ १ ॥ ततो विस्मयप्राप्त्यनंतरं मुहुः स्मयमानो विस्मयं कुर्वन् ॥ २ ॥ तदेवाह भगवन्निति । पूर्वमपि विश्रवःपुत्रवैश्रवणरावणयोः पूर्वमपि लंका पिशिताशिनामावास आसीदिति भगवद्वाक्यमन्यतोऽपि रक्षःसंभवपरं श्रुत्वा मे विस्मयो जातः ॥ ३ ॥ तदेवाह पुलस्त्येति नोस्माकम् । अन्यतश्चापि संभवः कीर्तितः लंका राक्षसानां निवासार्थं निर्मितेति विश्रवोवाक्यानुवादेनेत्यर्थः ॥ ४ ॥ रावणपुत्रा इंद्रजिदतिकायादयः तेभ्यस्ते बलवत्तरा किंनु यतो

विष्णुना तद्विद्रावणे यतितमिति भावः ॥ ५ ॥ पूर्वकः कूटस्थः तद्वंश्याश्च राक्षसाः कमपराधं प्राप्य विष्णुना द्राविताः कथं च द्राविताः ॥ ६ ॥ प्राचीनरक्षःकथनेन मह्यं कृतमिदं कुतूहलं भानुर्यथा तमो
नुदति तथा नुद ॥ ७ ॥ संस्कारालंकृतं यद्वाक्यार्थसंस्कारयुतं विस्मयमानः सर्वज्ञोप्येवं नाटयतीति विस्मयः ॥ ८ ॥ अपः सृष्ट्वा भूमेरधोभागवर्तिनीरपः सृष्ट्वेत्यर्थः । तत्र सलिलसंभवः प्रजापतिरभूदित्यन्वयः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ तदंडमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिन् जज्ञे स्वयंब्रह्मा सर्वलोकपितामह इति मनूक्तेः । आपो वा इदमग्र आसन् । सप्रजापतिः पुष्करपर्णे समभवत् ।
तथा आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजापतिर्वायुर्भूत्वाचरत्स इमामपश्यत्तां वराहो भूत्वाहरदितिश्रुतेश्च । तदेव पद्मसंभव इत्यनेन दर्शितम् । तासां स्वसृष्टानामपां गोपायने रक्षणनिमित्तं सत्त्वान्भूतानि
जंतूनित्यर्थः ॥ ९ ॥ विनीतवत्पितरि विनीताः संतः क्षुत्पिपासाजनितभयेनार्दिताः ॥ १० ॥ प्रहसन्निव उक्तभयखिद्यमानस्वप्रजाविषयकदयावशात्प्रहासः । मानवा इत्यनेन तेषामुभयवृत्त्यनुग्रहः सूचितः

कएषांपूर्वकोब्रह्मन्‌किंनामाचबलोत्कटः ॥ अपराधंचकंप्राप्यविष्णुनाद्राविताःकथम् ॥ ६ ॥ एतद्विस्तरतःसर्वंकथयस्वममानघ ॥ कुतूहलमिदंमह्यं
नुदभानुर्यथातमः ॥ ७ ॥ राघवस्यवचःश्रुत्वासंस्कारालंकृतंशुभम् ॥ अथविस्मयमानस्तमगस्त्यःप्राहराघवम् ॥ ८ ॥ प्रजापतिःपुरासृष्ट्वाअपः
सलिलसंभवः ॥ तासांगोपायनेसत्त्वानसृजत्पद्मसंभवः ॥ ९॥ तेसत्त्वाःसत्त्वकर्तारंविनीतवदुपस्थिताः ॥ किंकुर्मइतिभाषंतःक्षुत्पिपासाभयार्दिताः
॥ १० ॥ प्रजापतिस्तुतान्सर्वान्प्रत्याहप्रहसन्निव ॥ आभाष्यवाचायत्नेनरक्षध्वमितिमानवाः ॥ ११ ॥ रक्षामइतितत्रान्यैर्यक्षामइतिचापरैः ॥
भुंक्षिताभुंक्षितैरुक्तस्ततस्तानाहभूतकृत् ॥ १२ ॥ रक्षामइतियैरुक्तंराक्षसास्तेभवंतुवः ॥ यक्षामइतियैरुक्तंयक्षाएवभवंतुवः ॥ १३ ॥ तत्रहेतिःप्रहेति
श्चभ्रातरौराक्षसाधिपौ ॥ मधुकैटभसंकाशौबभूवतुररिंदमौ ॥ १४ ॥ प्रहेतिर्धार्मिकस्तत्रतपोवनगतस्तदा ॥ हेतिर्दारक्रियार्थंतुपरंयत्नमथाकरोत् ॥
॥ १५ ॥सकालभगिनींकन्यांभयांनाममहाभयाम् ॥ उदावहदमेयात्मास्वयमेवमहामतिः ॥ १६ ॥ सतस्यांजनयामासहेतीराक्षसपुंगवः ॥ पुत्रं
पुत्रवतांश्रेष्ठोविद्युत्केशमितिश्रुतम् ॥ १७ ॥ विद्युत्केशोहेतिपुत्रःसदीप्तार्कसमप्रभः ॥ व्यवर्धतमहातेजास्तोयमध्यइवांबुजम् ॥ १८ ॥ सयदायौवनं
भद्रमनुप्राप्तोनिशाचरः ॥ ततोदारक्रियांतस्यकर्तुंव्यवसितः पिता ॥ १९ ॥ संध्यादुहितरंसोथसंध्यातुल्यांप्रभावतः ॥ वरयामासपुत्रार्थंहेतीराक्षसपुं
गवः ॥ २० ॥ अवश्यमेवदातव्यापरस्मैसेतिसंध्यया ॥ चिंतयित्वासुतादत्ताविद्युत्केशायराघव ॥ २१ ॥ संध्यायास्तनयांलब्ध्वाविद्यु
त्केशोनिशाचरः ॥ रमतेसतयासार्धंपौलोम्यामघवानिव ॥ २२ ॥

वाचा हे सत्वा नीतिवाचा आभाष्य संबोध्य यत्नेनमा अपो रक्षध्वमिति तानि सत्त्वान्याह ॥ ११ ॥ तत्र तेषु भगवन्नियुक्तभूतेषु मध्ये भगवत्प्रयुक्तरक्षध्वामिति पदस्याविनाशेनावस्थापनमर्थ इति केचन
प्रपन्ना उत्तरोत्तराभिवर्धनरूपपूजनमर्थं इति परे प्रपन्नाः तत्राद्या रक्षामेति प्रतिवचनं दत्तवंतः पुरे यक्षामेति । यक्ष पूजायां उभयमपि लोडुत्तमबहुवचनम् । बुभुक्षिता बुभुक्षितैरित्यस्य स्थाने भुंक्षिता भुंक्षितैरि
त्यार्षमभ्यासलोपानुस्वाराभ्याम् । अबुभुक्षिताः पिपासिताः ॥ १२ ॥ वो युष्माकं मध्ये ॥ १३ ॥ तत्र भगवत्सृष्टभगवद्विभक्तजातिभेदरक्षोमध्ये मधुकैटभावसुरौ ॥ १४ ॥ तपोवनगतः विरक्तः सन्निति शेषः ॥
॥ १५ ॥ परं यत्नमेव दर्शयति स इति । कालो वैवस्वतः स्वयमेवेति । गत्वा प्रार्थनां कृत्वेति शेषः ॥१६॥१७॥१८॥ पिता हेतिः ॥ १९ ॥ प्रभावतः संध्यातुल्यामिति संबंधःसंध्यादुहिता सालकटंकटाख्या

इयं च रक्षाप्राधान्येन भगवत्सृष्टत्वाद्राक्षसी ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ घनगर्भसमप्रभं जलगर्भमेघसमकांतिं प्रसूता प्रसूतवती आग्निजं गर्भम् अग्निविसृष्टं माहेश्वरं गर्भमित्यर्थः । विद्युत्केशरतार्थिनी विद्युत्केशेन सह रतं क्रीडामर्थयति तादृशी बभूवेति शेषः ॥ २४ ॥ तत आत्मनः सकाशाज्जातं सुतं विसृज्य पतिना रेमे ॥ २५ ॥ २६ ॥ २७ ॥ कारुण्यभावात्कारुण्ययुक्तो भावश्चित्तं तस्मात्पार्वत्या प्रेरित इति शेषः ॥ २८ ॥ मातुरेववयःसमं मातृवयस्कमित्यर्थः ॥ २९ ॥ तदाह पार्वत्याः प्रियकाम्ययेति ॥ ३० ॥ सद्योपलब्धिरित्यार्षः संधिः ॥ ३१ ॥ सुकेश इत्यनुवादात्तन्नामकत्वमस्य बोध्यं खगमाकाश

केनचित्त्वथकालेनरामसालकटंकटा ॥ विद्युत्केशाद्गर्भमापघनराजिरिवार्णवात् ॥ २३ ॥ ततः साराक्षसीगर्भंघनगर्भसमप्रभम् ॥ प्रसूतामंदरं गत्वागंगागर्भमिवाग्निजम् ॥ समुत्सृज्यतुसागर्भंविद्युत्केशरतार्थिनी ॥ २४ ॥ रेमेतुसार्धंपतिनाविसृज्यसुतमात्मजम् ॥ उत्सृष्टस्तुतदागर्भोघनशब्दसमस्वनः ॥ २५ ॥ तयोत्सृष्टःसतुशिशुःशरदर्कसमद्युतिः ॥ निधायास्येस्वयंमुष्टिंरुरोदशनकैस्तदा ॥ २६॥ ततोवृषभमास्थायपार्वत्यासहितः शिवः ॥ वायुमार्गेणगच्छन्वैशुश्रावरुदितस्वनम् ॥ २७ ॥ अपश्यदुमयासार्धंरुदंतंराक्षसात्मजम् ॥ कारुण्यभावात्पार्वत्याभवस्त्रिपुरसूदनः ॥ ॥ २८ ॥ तंराक्षसात्मजंचक्रेमातुरेववयःसमम् ॥ अमरंचैवतंकृत्वामहादेवोक्षरोव्ययः ॥ २९ ॥ पुरमाकाशगंप्रादात्पार्वत्याःप्रियकाम्यया ॥ उमयापि वरोदत्तोराक्षसीनांनृपात्मज॥ ३० ॥ सद्योपलब्धिर्गर्भस्यप्रसूतिःसद्यएवच ॥ सद्यएववयःप्राप्तिंमातुरेववयःसमम् ॥ ३१ ॥ ततःसुकेशोवरदानगर्वितःश्रियंप्रभोःप्राप्यहरस्यपार्श्वतः ॥ चचारसर्वत्रमहान्महामतिःखगंपुरंप्राप्यपुरंदरोयथा ॥ ३२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये उत्तरकांडेचतुर्थःसर्गः ॥ ४ ॥ सुकेशंधार्मिकंदृष्ट्वावरलब्धंचराक्षसम् ॥ ग्रामणीर्नामगंधर्वोविश्वावसुसमप्रभः ॥ १ ॥ तस्यदेववतीनामद्वितीयाश्रीरिवात्मजा ॥ त्रिषुलोकेषुविख्यातारूपयौवनशालिनी ॥ २ ॥ तांसुकेशायधर्मात्माददौरक्षःश्रियंयथा ॥ वरदानकृतैश्वर्यंसातंप्राप्यपतिंप्रियम् ॥३॥ आसीद्देववतीतुष्टाधनंप्राप्येवनिर्धनः ॥ सतयासहसंयुक्तोरराजरजनीचरः ॥४॥ अंजनादभिनिष्क्रांतःकरेण्वेवमहागजः ॥ ततःकालेसुकेशस्तुजनयामासराघव ॥ त्रीन्पुत्राञ्जनयामासत्रेताग्निसमविग्रहान् ॥ ५ ॥ माल्यवंतंसुमालिंचमालिंचबलिनांवरम् ॥ त्रींस्त्रिनेत्रसमान्पुत्राव्राक्षसान्राक्षसाधिपः ॥ ६ ॥ त्रयोलोकाइवाव्यग्राःस्थितास्त्रयइवाग्नयः ॥ त्रयोमंत्राइवात्युग्रास्त्रयोघोराइवामयाः ॥ ७ ॥

गतम् ॥ ३२ ॥ फैलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुर्थः सर्गः ॥ ४ ॥ वरलब्धं लब्धवरम् ॥ १ ॥ २ ॥ वरदानेन कृतमैश्वर्यं यस्य तम् ॥ ३ ॥ ॥ ४ ॥ अंजनादंजनाख्यदिग्गजात् अभिनिष्क्रांत उत्पन्नः किं जनयामासेत्यत्राह त्रीन्पुत्रान् जनयामासेति । तान्पुत्रानितिपाठांतरं तान्प्रसिद्धान्वक्ष्यमाणान्वेत्यर्थः ॥ ५ ॥ ६ ॥ मंत्रा इव उत्साहप्रभुमंत्रशक्तिम

अथ रावणस्य दुर्निमित्तान्याह नष्टप्रभ इत्यादि ॥४३॥४४॥४५॥ एतानि रूपाणि निधनसूचकानीत्यर्थः ॥४६॥४७॥४८॥ आह्वयानानां स्पर्धया आह्वयमानानाम् ॥४९॥५०॥५१॥५२॥५३॥ गंमॆमानः ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षण्णवतितमः सर्गः ॥९६॥ कतकरी० ॥८८॥ तथेति ॥१॥ एकतः एकैकस्मिन्प्रदेशे ॥२॥३॥४॥५॥ गुल्मे सेनासन्निवेशे ॥६॥

ततोनष्टप्रभःसूर्योदिशश्चतिमिरावृताः ॥ द्विजाश्चनेदुर्घोराश्चसंचचालचमेदिनी ॥ ४३ ॥ ववर्षरुधिरंदेवश्चस्खलुश्चतुरंगमाः ॥ ध्वजाग्रेन्यपतद्गृध्रो विनेदुश्चाशिवाःशिवाः ॥ ४४ ॥ नयनंचास्फुरद्वामंवामोबाहुरकंपत ॥ विवर्णवदनश्चासीत्किंचिदभ्रश्यतस्वनः ॥ ४५ ॥ ततोनिष्पततोयुद्धेदशग्रीवस्यरक्षसः ॥ रणेनिधनशंसीनिरूपाण्येतानिजज्ञिरे ॥ ४६ ॥ अंतरिक्षात्पपातोल्कानिर्घातसमनिःस्वना ॥ विनेदुरशिवागृध्रावायसैरभिमिश्रिताः ॥ ४७ ॥ एतानचिंतयन्घोरानुत्पातान्समवस्थितान् ॥ निर्ययौरावणोमोहाद्वधार्थीकालचोदितः ॥ ४८ ॥ तेषांतुरथघोषेणराक्षसानांमहात्मनाम्॥ वानराणामपिचमूर्युद्धायैवाभ्यवर्तत ॥ अन्योन्यमाह्वयानानांक्रुद्धानांजयमिच्छताम् ॥ ४९ ॥ ततःक्रुद्धोदशग्रीवःशरैःकांचनभूषणैः ॥ वानराणामनीकेषुचकारकदनंमहत् ॥ ५० ॥ निकृत्तशिरसःकेचिद्रावणेनबलीमुखाः ॥ केचिद्विच्छिन्नहृदयाःकेचिच्छ्रोत्रविवर्जिताः ॥ ५१ ॥ निरुच्छ्वासाहताःकेचित्केचित्पार्श्वेषुदारिताः ॥ केचिद्विभिन्नशिरसःकेचिच्चक्षुर्विनाकृताः ॥ ५२ ॥ दशाननःक्रोधविवृत्तनेत्रोयतोयतोभ्येतिरथेनसंख्ये ॥ ततस्ततस्तस्यशरप्रवेगंसोढुंनशेकुर्हरियूथपास्ते ॥ ५३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डेषण्णवतितमः सर्गः ॥ ९६ ॥
तथातैःकृत्तगात्रैस्तुदशग्रीवेणमार्गणैः ॥ बभूववसुधातत्रप्रकीर्णाहरिभिस्तदा ॥ १ ॥ रावणस्याप्रसह्यंतंशरसंपातमेकतः ॥ नशेकुःसहितुंदीप्तंपतंगाज्वलनंयथा ॥ २ ॥ तेर्दितानिशितैर्बाणैःक्रोशंतोविप्रदुद्रुवुः ॥ पावकार्चिःसमाविष्टादह्यमानायथागजाः ॥ ३ ॥ प्लवंगानामनीकानिमहाभ्राणीवमारुतः ॥ संययौसमरेतस्मिन्विधमन्रावणःशरैः ॥ ४ ॥ कदनंतरसाकृत्वाराक्षसेंद्रोवनौकसाम् ॥ आससादततोयुद्धेत्वरितंराघवंरणे ॥ ५ ॥ सुग्रीवस्तान्कपीन्दृष्ट्वाभग्नान्विद्रावितान्रणे ॥ गुल्मेसुषेणंनिक्षिप्यचक्रेयुद्धेद्रुतंमनः ॥ ६ ॥ आत्मनःसदृशंवीरंसतंनिक्षिप्यवानरम् ॥ सुग्रीवोभिमुखंशत्रुंप्रतस्थेपादपायुधः ॥ ७ ॥ पार्श्वतःपृष्ठतश्चास्यसर्वेवानरयूथपाः ॥ अनुजग्मुर्महाशैलान्विविधांश्चवनस्पतीन् ॥ ८ ॥ ननर्दयुधिसुग्रीवःस्वरेणमहतामहान् ॥ पोथयन्विविधांश्चान्यान्ममंथोत्तमराक्षसान् ॥ ९ ॥

आत्मनः सदृशम् आत्मतुल्यं सुषेणं निक्षिप्य ॥ ७ ॥ सर्वे वानरयूथपाः सुषेणं विनेति शेषः । महाशैलानित्यादेर्गृहीत्वेति शेषः ॥ ८ ॥ अन्यानवशिष्टानुत्तमराक्षसान् बलाध्यक्षराक्षसान् ॥ ९ ॥

अगमान् वृक्षान्॥१०॥११॥१२॥ संक्षीयमाणेषु हिंस्यमानेषु ॥१३॥१४॥१५॥ उद्विग्नान्पलायनकृतोत्साहान्स्थापयामास पलायनान्निवर्तयामास ॥१६॥१७॥ संप्रधनः सम्यक्प्रधनं युद्धं यस्य सः प्रमुखे प्रकृष्टे मुखप्रदेशे इत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ आर्षभम् ऋषभकृत्तिपरिवीतं चर्म फलकम् ॥ २१ ॥ तस्यापि तेनापि दत्तं प्रहारं संगृह्य गृहीत्वा ॥ २२ ॥ स तामिति । अपक्रम्य शिलाप्रहारमोघीकरणार्थं

ममर्दचमहाकायोराक्षसान्वानरेश्वरः ॥ युगांतसमयेवायुःप्रवृद्धानगमानिव ॥ १० ॥ राक्षसानामनीकेषुशैलवर्षंववर्षह ॥ अश्मवर्षंयथामेघःपक्षिसंघेषुकानने ॥ ११ ॥ कपिराजविमुक्तैस्तैःशैलवर्षैस्तुराक्षसाः ॥ विकर्णशिरसःपेतुर्विकीर्णाइवपर्वताः ॥ १२ ॥ अथसंक्षीयमाणेषुराक्षसेषुसमंततः ॥ सुग्रीवेणप्रभग्नेषुनदत्सुचपतत्सुच ॥ १३ ॥ विरूपाक्षःस्वकंनामधन्वीविश्राव्यराक्षसः ॥ रथादाप्लुत्यदुर्धर्षोगजस्कंधमुपारुहत ॥ १४ ॥ सतंद्विपमथारुह्यविरूपाक्षोमहाबलः ॥ ननर्दभीमनिर्ह्रादंवानरानभ्यधावत ॥ १५ ॥ सुग्रीवेसशरान्घोरान्विससर्जचमूमुखे ॥ स्थापयामासचोद्विग्नान्राक्षसान्संप्रहर्षयन् ॥ १६ ॥ सोतिविद्धःशितैर्बाणैःकपींद्रस्तेनरक्षसा ॥ चुक्रोशचमहाक्रोधोवधेचास्यमनोदधे ॥ १७ ॥ ततःपादपमुद्धृत्यशूरःसंप्रधनोहरिः ॥ अभिपत्यजघानास्यप्रमुखेतंमहागजम् ॥ १८ ॥ सतुप्रहाराभिहतःसुग्रीवेणमहागजः ॥ अपासर्पद्धनुर्मात्रंनिषसादननादच ॥१९॥ गजात्तुमथितात्तूर्णमपक्रम्यसवीर्यवान् ॥ राक्षसोभिमुखःशत्रुंप्रत्युद्गम्यततःकपिम् ॥२०॥ आर्षभंचर्मखड्गंचप्रगृह्यलघुविक्रमः ॥ भर्त्सयन्निवसुग्रीवमाससादव्यवस्थितम् ॥ २१ ॥ सहितस्यापिसंगृह्यप्रगृह्यविपुलांशिलाम् ॥ विरूपाक्षस्यचिक्षेपसुग्रीवोजलदोपमाम् ॥ २२ ॥ सतांशिलामापतंतींदृष्ट्वाराक्षसपुंगवः ॥ अपक्रम्यसुविक्रांतःखड्गेनप्राहरत्तदा ॥ २३ ॥ तेनखड्गप्रहारेणरक्षसाबलिनाहतः ॥ मुहूर्तमभवद्भूमौविसंज्ञइववानरः ॥ २४ ॥ सहसासतदोत्पत्यरक्षसस्यमहाहवे ॥ मुष्टिंसंवर्त्यवेगेनपातयामासवक्षसि ॥ २५ ॥ मुष्टिप्रहाराभिहतोविरूपाक्षोनिशाचरः ॥ तेनखड्गेनसंक्रुद्धःसुग्रीवस्यचमूमुखे ॥ २६ ॥ कवचंपातयामासपद्भ्यामभिहतोपतत् ॥ ससमुत्थायपतितःकपिस्तस्यव्यसर्जयत् ॥ २७ ॥ तलप्रहारमशनेःसमानंभीमनिःस्वनम् ॥ तलप्रहारंतद्रक्षःसुग्रीवेणसमुद्यतम् ॥ २८ ॥नैपुण्यान्मोचयित्वैनंमुष्टिनोरसिताडयत् ॥ ततस्तुसंक्रुद्धतरःसुग्रीवोवानरेश्वरः ॥ २९ ॥ मोक्षितंचात्मनोदृष्ट्वाप्रहारंतेनरक्षसा ॥ सददर्शांतरंतस्यविरूपाक्षस्यवानरः ॥ ३० ॥ ततोन्यंपातयत्क्रोधाच्छंखदेशेमहातलम् ॥ महेंद्राशनिकल्पेनतलेनाभिहतःक्षितौ ॥ ३१ ॥ पपातरुधिरक्लिन्नःशोणितंहिसमुद्गिरन् ॥ स्रोतोभ्यस्तुविरूपाक्षोजलंप्रस्रवणादिव ॥ ३२ ॥ विवृत्तनयनंक्रोधात्सफेनंरुधिराप्लुतम् ॥ ददृशुस्तेविरूपाक्षंविरूपाक्षतरंकृतम् ॥ ३३ ॥

पार्श्वतोपसृत्य सुग्रीवं प्राहरदित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ अभिहतः सुग्रीवः पद्भ्यामपतत् आकुंचितजानुरभवदित्यर्थः ॥ २७ ॥ २८ ॥ नैपुण्याद्वंचनासामर्थ्यात् मोचयित्वा मोघीकृत्य ॥२९॥ अंतरं प्रहारावसरम् ॥ ३० ॥ शंखदेशे ललाटास्थिप्रदेशे । तलं प्रसृतकरतलप्रहारन् ॥ ३१ ॥ प्रस्रवणो निर्झरमूलस्थानम्, प्रस्रवत्यस्मादिति व्युत्पत्तेः ॥ ३२ ॥ विरूपाक्षतरम् अतिविरूपाक्षम् ॥ ३३ ॥

सहितानस्मान् भक्षयिष्यति ॥ ३७ ॥ अपनीतेन अनयेन निष्ठानको नाशः शोकसहितः माप्तः ॥ ३८ ॥ ३९ ॥ ४० ॥ माप्तकालं कालोचितं पौलस्त्येन विभीषणेन यत एव यस्माद्रामादेव भयं दृष्टं स्वस्यैव शक्तिवैभवेनेति शेषः ॥ ४१ ॥ ४२ ॥ रैवमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचनवतितमः सर्गः ॥ ९५ ॥ कतकरी० ॥ ८७ ॥ आर्तानामिति

रावणस्यापनीतेनदुर्विनीतस्यदुर्मतेः ॥ अयंनिष्ठानकोघोरःशोकेनसमभिप्लुतः ॥३८॥ तंनपश्यामहेलोकेयोनःशरणदोभवेत् ॥ राघवेणोपसृष्टानांकालेनेवयुगक्षये ॥ ३९ ॥ नास्तिनःशरणंकिंचिद्भयेमहतितिष्ठताम् ॥ दावाग्निवेष्टितानांहि करेणूनां यथावने ॥ ४० ॥ प्राप्तकालंकृतंतेनपौलस्त्येनमहात्मना ॥ यतएवभयंदृष्टंतमेवशरणंगतः ॥ ४१ ॥ इतीवसर्वारजनीचरस्त्रियःपरस्परंसंपरिरभ्यबाहुभिः ॥ विषेदुरार्तातिभयाभिपीडिताविनेदुरुच्चैश्चतदासुदारुणम् ॥ ४२ ॥ इत्यार्षे श्रीमद्रा०वा०आ०यु०पंचनवतितमः सर्गः ॥ ९५ ॥ आर्तानांराक्षसीनांतुलंकायांवैकुलेकुले ॥ रावणःकरुणंशब्दंशुश्रावपरिदेवितम् ॥ १ ॥ सतुदीर्घंविनिःश्वस्यमुहूर्तंध्यानमास्थितः ॥ बभूवपरमक्रुद्धोरावणोभीमदर्शनः ॥ २ ॥ संदश्यदशनैरोष्ठंक्रोधसंरक्तलोचनः ॥ राक्षसैरपिदुर्दर्शःकालाग्निरिवमूर्तिमान् ॥ ३ ॥ उवाचचसमीपस्थान्राक्षसान्राक्षसेश्वरः ॥ क्रोधाव्यक्तकथस्तत्रनिर्दहन्निवचक्षुषा ॥ ४ ॥ महोदरंमहापार्श्वंविरूपाक्षंचराक्षसम् ॥ शीघ्रंवदतसैन्यानिनिर्यातेतिममाज्ञया ॥ ५ ॥ तस्यतद्वचनंश्रुत्वाराक्षसास्तेभयार्दिताः ॥ चोदयामासुरव्यग्रान्राक्षसांस्तान्नृपाज्ञया ॥ ६ ॥ तेतुसर्वेतथेत्युक्त्वाराक्षसाभीमदर्शनाः ॥ कृतस्वस्त्ययनाःसर्वेतेरणाभिमुखाययुः ॥ ७ ॥ प्रतिपूज्ययथान्यायंरावणंतेमहारथाः ॥ तस्थुःप्रांजलयःसर्वेभर्तुर्विजयकांक्षिणः ॥ ८ ॥ ततोवाचप्रहस्यैतान्रावणःक्रोधमूर्छितः ॥ महोदरमहापार्श्वौविरूपाक्षंचराक्षसम् ॥ ९ ॥ अद्यबाणैर्धनुर्मुक्तैर्युगांतादित्यसन्निभैः ॥ राघवंलक्ष्मणंचैवनेष्यामियमसादनम् ॥ १० ॥ खरस्यकुंभकर्णस्यप्रहस्तेंद्रजितोस्तथा ॥ करिष्यामिप्रतीकारमद्यशत्रुवधादहम् ॥ ११ ॥ नैवांतरिक्षंनदिशोनचद्यौर्नापिसागराः ॥ प्रकाशत्वंगमिष्यंतिमद्बाणजलदावृताः ॥१२॥ अद्यवानरमुख्यानांतानियूथानिभागशः ॥ धनुपाशरजालेनवधिष्यामिपतत्रिणा ॥ १३ ॥ अद्यवानरसैन्यानिरथेनपवनौजसा ॥ धनुःसमुद्रादुद्भूतेर्मथिष्यामिशरोर्मिभिः ॥ १४ ॥ व्याकोशपद्मवक्त्राणिपद्मकेसरवर्चसाम् ॥ अद्ययूथतटाकानिगजवत्प्रमथाम्यहम् ॥ १५ ॥

कुलेकुले गृहेगृहे ॥ १ ॥ २ ॥ ३ ॥ क्रोधेनाव्यक्ता कथा कथनं यस्यसः ॥ ४ ॥ ५ ॥ अव्यग्रान् रावणप्रोत्साहनेन त्यक्तभयान् ॥ ६ ॥ ७ ॥ ८ ॥ ततोवाच तत उवाच प्रहस्य क्रोधजोत्र प्रहासः ॥९॥ ॥ १० ॥ ११ ॥ प्रकाशत्वं प्रकटत्वम् ॥ १२ ॥ पतत्रिणा प्रशस्तपक्षवता ॥ १३ ॥ धनूरूपात्समुद्रात् ॥ १४ ॥ व्याकोशपद्मवक्त्राणि वक्त्ररूपविकसितपद्मानि पद्मकेसरवर्चसां वानराणामिति शेषः ।

यूथरूपाणि तटाकानि ममर्थामि ममथिष्यामि ॥ १५ ॥ सशरैः शरसंहितैर्वदनैः स्वीयैः सशरत्वात्सनालैः पंकजैरिव ॥ १६ ॥ १७ ॥ १८ ॥ यत्रेनावेक्ष्यमवेक्षितुं योग्यं तलं यस्यास्तथाभूताम्

सशरैरद्यवदनैःसंख्येवानरयूथपाः ॥ मंडयिष्यंतिवसुधांसनालैरिवपंकजैः ॥ १६ ॥ अद्ययूथप्रचंडानांहरीणांद्रुमयोधिनाम् ॥ मुक्तेनैकेषुणायुद्धेभे त्स्यामिचशतंशतम् ॥ १७ ॥ हतोभ्राताचयेषांवैयेषांचतनयोहतः ॥ वधेनाद्यरिपोस्तेषांकरोम्यश्रुप्रमार्जनम् ॥ १८ ॥ अद्यमद्बाणनिर्भिन्नैःप्रस्तीर्ण गतचेतनैः ॥ करोमिवानरैर्युद्धेयत्नावेक्ष्यतलांमहीम् ॥ १९ ॥ अद्यकाकाश्चगृध्राश्चयेचमांसाशिनोपरे ॥ सर्वांस्तांस्तर्पयिष्यामिशत्रुमांसैः शराहतैः ॥ २० ॥ कल्प्यतांमेरथःशीघ्रंक्षिप्रमानीयतांधनुः ॥ अनुप्रयांतुमांयुद्धेयेत्राशिष्टानिशाचराः ॥ २१ ॥ तस्यतद्वचनंश्रुत्वामहापार्श्वोब्रवी द्वचः ॥ बलाध्यक्षान्स्थितांस्तत्रबलंसंत्वर्यतामिति ॥ २२ ॥ बलाध्यक्षास्तुसंयुक्काराक्षसांस्तान्गृहेगृहे ॥ चोदयंतःपरिययुर्लंकांलघुपराक्रमाः ॥ ॥ २३ ॥ ततोमुहूर्तान्निष्पेतूराक्षसाभीमदर्शनाः ॥ नदंतोभीमवदनानानाप्रहरणैर्भुजैः ॥ २४ ॥ असिभिःपट्टिशैःशूलैर्गदाभिर्मुसलैर्हलैः ॥ शक्ति भिस्तीक्ष्णधाराभिर्महद्भिःकूटमुद्गरैः ॥ २५ ॥ यष्टिभिर्विविधैश्चक्रैर्निशितैश्चपरश्वधैः ॥ भिंदिपालैःशतघ्नीभिरन्यैश्चापिवरायुधैः ॥२६॥ अथानय न्बलाध्यक्षाश्चत्वारोरावणाज्ञया ॥ रथानांनियुतंसाग्रंनागानांनियुतत्रयम् ॥ २७ ॥ अश्वानांषष्टिकोट्यस्तुखरोष्ट्राणांतथैवच ॥ पदातयस्त्वसंख्या ताजग्मुस्तेराजशासनात् ॥ २८ ॥ बलाध्यक्षाश्चसंस्थाप्यराज्ञःसेनांपुरःस्थिताम् ॥ एतस्मिन्नंतरेसूतःस्थापयामासतंरथम् ॥ २९ ॥ दिव्यास्त्रवरसं पन्नंनानालंकारभूषितम् ॥ नानायुधसमाकीर्णंकिंकिणीजालसंयुतम् ॥ ३० ॥ नानारत्नपरिक्षिप्तंरत्नस्तंभैर्विराजितम् ॥ जांबूनदमयैश्चैवसहस्रकलशै र्वृतम् ॥ ३१ ॥ तंदृष्ट्वाराक्षसाःसर्वेविस्मयंपरमंगताः ॥ तंदृष्ट्वासहसोत्थायरावणोराक्षसेश्वरः ॥३२॥ कोटिसूर्यप्रतीकाशंज्वलंतमिवपावकम् ॥ द्रुतं सूतसमायुक्तंयु[illegible]ष्टतुरगंरथम् ॥ आरुरोहतदाभीमंदीप्यमानंस्वतेजसा ॥ ३३ ॥ ततःप्रयातःसहसाराक्षसैर्बहुभिर्वृतः ॥ रावणःसत्त्वगांभीर्याद्दारय न्निवमेदिनीम् ॥ ३४ ॥ ततश्चासीन्महानादस्तूर्याणांचततस्ततः ॥ मृदंगैःपटहैःशंखैःकलहैःसहरक्षसाम् ॥ ३५ ॥ आगतोरक्षसांराजाछत्रचामरसं युतः ॥ सीतापहारीदुर्वृत्तोब्रह्मघ्नोदेवकंटकः ॥ योद्धुंरघुवरेणेतिशुश्रुवेकलहध्वनिः ॥ ३६ ॥ तेननादेनमहतापृथिवीसमकंपत ॥ तंशब्दंसहसाश्रुत्वा वानराद्रुद्रुवुर्भयात् ॥ ३७ ॥ रावणस्तुमहाबाहुःसचिवैःपरिवारितः ॥ आजगाममहातेजाजयायविजयंप्रति ॥ ३८ ॥ रावणेनाभ्यनुज्ञातौमहापार्श्व महोदरौ ॥ विरूपाक्षश्चदुर्धर्षोरथानारुरुहुस्तदा ॥३९॥तेतुहृष्टाभिनर्दंतोभिंदंतइवमेदिनीम्॥नादंघोरंविमुंचंतोनिर्ययुर्जयकांक्षिणः॥४०॥ततोयुद्धायते जस्वीरक्षोगणबलैर्वृतः ॥ निर्ययावुद्यतधनुःकालांतकयमोपमः॥४१॥ततःप्रजविताश्वेनरथेनसमहारथः॥द्वारेणनिर्ययौतेनयत्रतौरामलक्ष्मणौ॥४२॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ भुजैरुपलक्षिताः ॥ २४ ॥ हलैरायुधविशेषैः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ अमायां सूर्योदये इदं रथारोहणम् ॥ ३३ ॥ सत्त्वगांभीर्याद्बलातिशयात् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ प्रजविताश्वेन प्रकर्षेण संजातवेगा अश्वा यस्य तेन ॥ ४२ ॥

मूढत्वात्तमेकमेव परिक्षिप्य परितो निरुध्य हंतुमर्हथ शरवर्षाणि वर्षयतेति शेषः ॥ ४ ॥ अथवेति अद्य रामहननासंभवे भवद्भिरद्य भिन्नगात्रं श्वो निहन्तास्मि ॥ ५. ॥ इत्येतद्वाक्यं प्रथमपक्षोक्तम् ॥ ६ ॥
॥ ७ ॥ ८ ॥ सूर्यस्योदयनं प्रति चतुर्दशीसूर्योदयमारभ्येत्यर्थः । त्रयोदशीरात्रिशेषे रावणस्य सीतासमीपगमनामिति बोध्यम् ॥ ९ ॥ गदाभिरन्योन्यं जघ्नुः यद्यपि वानराणां गदाद्यायुधाभावस्तथापि राक्षसह
स्तेभ्य आच्छिद्य गृहीतैस्तैस्तेषां युद्धसंभव इति बोध्यम् ॥ १० ॥ ११ ॥ मातंगरथरूपे कूले यासां ताः शरीराण्येव संघाटाः काष्ठसमूहास्तान्वहंति ताः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

अथवाहंशरैस्तीक्ष्णैर्भिन्नगात्रंमहाहवे ॥ भवद्भिःश्वोनिहंतास्मिरामंलोकस्यपश्यतः ॥ ५ ॥ इत्येतद्वाक्यमादायराक्षसेंद्रस्यराक्षसाः ॥ निर्य युस्तेरथैःशीघ्रैर्नानानीकैश्चसंयुताः ॥ ६ ॥ परिघान्पट्टिशांश्चैवशरखड्गपरश्वधान् ॥ शरीरांतकरान्सर्वेचिक्षिपुर्वानरान्प्रति ॥ ७ ॥ वानराश्चद्रुमाञ्छै लान्राक्षसान्प्रतिचिक्षिपुः ॥ ८ ॥ ससंग्रामोमहाभीमःसूर्यस्योदयनंप्रति ॥ रक्षसांवानराणांचतुमुलःसमपद्यत ॥ ९ ॥ तेगदाभिश्चचित्राभिःप्रासैः खड्गैःपरश्वधैः ॥ अन्योन्यंसमरेजघ्नुस्तदावानरराक्षसाः ॥ १० ॥ एवंप्रवृत्तेसंग्रामेह्यद्भुतंसुमहद्रजः ॥ रक्षसांवानराणांचशांतंशोणितविस्रवैः ॥ ॥ ११ ॥ मातंगरथकूलाश्चशरमत्स्याध्वजद्रुमाः ॥ शरीरसंघाटवहाःप्रसस्रुःशोणितापगाः ॥ १२ ॥ ततस्तेवानराःसर्वेशोणितौघपरिप्लुताः ॥ ध्वजवर्मरथानश्वान्नानाप्रहरणानिच ॥ आप्लुत्याप्लुत्यसमरेवानरेंद्राबभंजिरे ॥ १३ ॥ केशान्कर्णललाटंचनासिकाश्चप्लवंगमाः ॥ रक्षसांदशनैस्ती क्ष्णैर्नखैश्चापिव्यकर्तयन् ॥ १४ ॥ एकैकंराक्षसंसंख्येशतंवानरपुंगवाः ॥ अभ्यधावंतपतितंवृक्षंशकुनयोयथा ॥ १५ ॥ तदागदाभिर्गुर्वीभिःप्रासैः खड्गैःपरश्वधैः ॥ निर्जघ्नुर्वानरान्घोरान्राक्षसाःपर्वतोपमाः ॥१६॥ राक्षसैर्वध्यमानानांवानराणांमहाचमूः ॥ शरण्यंशरणंयातारामंदशरथात्मजम्॥ ॥ १७ ॥ ततोरामोमहातेजाधनुरादायवीर्यवान् ॥ प्रविश्यराक्षसंसैन्यंशरवर्षंववर्षच ॥ १८ ॥ प्रविष्टंतुतदारामंमेघाःसूर्यमिवांबरे ॥ नाधिजग्मुर्म हाघोरानिर्दहंतंशराग्निना ॥ १९ ॥ कृतान्येवसुघोराणिरामेणरजनीचराः ॥ रणेरामस्यददृशुःकर्माण्यसुकराणिते ॥ २० ॥ चालयंतंमहासैन्यं विधमंतंमहारथान् ॥ ददृशुस्तेनवैरामंवातंवनगतंयथा ॥ २१ ॥ छिन्नंभिन्नंशरैर्दग्धंप्रभग्नंशस्त्रपीडितम् ॥ बलंरामेणददृशुर्नरामंशीघ्रकारिणम् ॥ ॥ २२ ॥ प्रहरंतंशरीरेषुनतेपश्यंतिराघवम् ॥ इंद्रियार्थेषुतिष्ठंतंभूतात्मानमिवप्रजाः ॥ २३ ॥ एषहंतिगजानीकमेषहंतिमहारथान् ॥ एषहंतिशरैस्ती क्ष्णैःपदातीन्वाजिभिःसह ॥ २४ ॥ इतितेराक्षसाःसर्वेरामस्यसदृशान्रणे ॥ अन्योन्यंकुपिताजघ्नुःसादृश्याद्राघवस्यतु ॥ २५ ॥

॥ १७ ॥ १८ ॥ १९ ॥ रजनीचरा रामस्य रणेऽसुकराणि कर्माणि रामेण कृतान्येव ददृशुः नतु क्रियमाणानि ॥ २० ॥ तथा तत्कर्तारमपि न ददृशुरित्याह चालयंतमिति । कर्तुरदृष्टत्वेपि क्रियामात्रदर्शने
दृष्टांतो वातं वनगतं यथा । स्पर्शविधमनादिकार्यैर्यथा वायुरनुमित एव भवति तथा रामोप्यनुमित एव न प्रत्यक्ष इति भावः ॥ २१ ॥ २२ ॥ इंद्रियार्थाः शब्दादिविषयास्तेषु तिष्ठंतमनुभवितृत्वेनावस्थितं
भूतात्मानं जीवं प्रजा यथा न पश्यंति प्रत्यक्षतस्तद्वदित्यर्थः ॥ २३ ॥ एष गजानीकवर्ती गजानीकमेव हंति नान्यमिति गजानीकस्था मन्यंते । एवमन्येपि मन्यंते स्मेत्यर्थः ॥ २४ ॥ इति एष हंतीत्यादि

प्रकारेण कुपिताः सर्वे ते राक्षसाः रामस्य सदृशान्सदृशत्वेन प्रतीयमानान् राक्षसान् रामसादृश्यादन्योन्यं जघ्नुः । सदृशा रावणस्यैते रणे राक्षससत्तमा इति पूर्वार्धपाठे रावणेन देवासुरयुद्धादौ साक्षात्साह्यार्थं मूलबलतया तेषां दृष्टप्रत्ययानामत्यूर्जितबलानामेव संगृहीतत्वात्तेषां रावणसादृश्यम् ॥ २५ ॥ राक्षसानां परस्परं रामसादृश्यप्रतीतौ कारणमाह मोहिता इति ॥ २६ ॥ अत एव ते रामसहस्राणि पश्यंति पुनश्च एकमेव पश्यंति ॥ २७ ॥ भ्रमन्तीमकर्णवेगतोऽनवस्थितां कांचनीं स्वर्णमयीं कार्मुकस्य कोटिं धनुष्कोटिं वेगवशादलातचक्रप्रतिमां ददृशू राघवं तु नेति संबंधः ॥ २८ ॥ लाघवातिशयान्मंडलीकृतकार्मुकं राक्षसान्निघ्नंतं रामं कालचक्रेणोपमिनोति शरीरेति । शरीरं मध्यदेह एव नाभिश्चक्रस्यैव मध्यं यस्य तत् सत्त्वं बलमेवार्चिर्ज्वाला यस्य तत् शरा एवारा मध्यकाष्ठानि यस्य तत् नेमिर्वलयाकारोऽवयवविशेषस्तद्रूपं कार्मुकं यस्य तत् तलं ज्याघातवारणं तेन तज्जो घोषो लक्ष्यते । ज्याघोषतलघोषावेव निर्घोषो ध्वनिर्यस्य तत् तेजः प्रतापो बुद्धिर्ज्ञानं तद्रूपौ गुणावेव प्रभा यस्य तत् ॥ २९ ॥ दिव्यास्त्रगुणो

नतेददृशिरेरामंदहंतमपिवाहिनीम् ॥ मोहिताःपरमास्त्रेणगांधर्वेणमहात्मना ॥ २६ ॥ तेतुरामसहस्राणिरणेपश्यंतिराक्षसाः ॥ पुनःपश्यंतिकाकुत्स्थमेकमेवमहाहवे ॥ २७ ॥ भ्रमंतींकांचनींकोटिंकार्मुकस्यमहात्मनः ॥ अलातचक्रप्रतिमांददृशुस्तेनराघवम् ॥ २८ ॥ शरीरनाभिसत्त्वार्चिःशरीरंनेमिकार्मुकम् ॥ ज्याघोषतलनिर्घोषंतेजोबुद्धिगुणप्रभम् ॥ २९ ॥ दिव्यास्त्रगुणपर्यंतंनिघ्नंतंयुधिराक्षसान् ॥ ददृशूरामचक्रंतत्कालचक्रमिवप्रजाः ॥ ३० ॥ अनीकंदशसाहस्रंरथानांवातरंहसाम् ॥ अष्टादशसहस्राणिकुंजराणांतरस्विनाम् ॥ ३१ ॥ चतुर्दशसहस्राणिसारोहाणांचवाजिनाम् ॥ पूर्णेशतसहस्रेद्वेराक्षसानांपदातिनाम् ॥३२॥ दिवसस्याष्टभागेनशरैरग्निशिखोपमैः ॥ हतान्येकेनरामेणरक्षसांकामरूपिणाम् ॥ ३३ ॥ तेहताश्वाहतरथाःशांताविमथितध्वजाः ॥ अभिपेतुःपुरींलंकांहतशेषानिशाचराः ॥ ३४ ॥

दिव्यास्त्रवैभवं तदेव पर्यंतो धारणा यस्य तत् ॥ ३० ॥ अनीकमिति । एकेभैकरथा त्र्यश्वा पत्तिः पंचपदातिका । पत्त्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् । सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनीदशानीकिन्यक्षौहिणीत्यमरोक्तप्रकारेण दशसंख्यापत्तिस्तत्त्रिगुणं सेनामुखं तत्त्रिगुणो गुल्मः तत्त्रिगुणो गणः गणत्रिगुणा वाहिनी तत्त्रिगुणा पृतना तत्त्रिगुणा चमूः चमूत्रिगुणा अनीकिनी एवं च दशोनत्रिशताधिकसप्तसहस्रसंख्या चमूरनीकं सहस्राण्येव साहस्रं दशसाहस्राण्यनीकान्यस्मिन्नस्तीति तत् रथानां दशसाहस्राण्यनीकिनीत्यर्थः । एकोनत्रिंशल्लक्षाधिकसप्तकोटिसंख्यासंख्याता रथा इत्युक्तम् । अष्टादशसहस्राणीत्यत्राप्यनीकमिति विभक्तिविपरिणामेन योज्यम् । तेन विंशतिसहस्राधिकद्वादशलक्षोत्तरत्रयोदशकोटिसंख्या गजा इत्युक्तं चतुर्दशसहस्राण्यनीकानि षष्टिसहस्राधिकत्रिंशतिलक्षोत्तरदशशतकोटिसंख्या वाजिन इत्यर्थः । शतसहस्रे द्वेऽनीके अष्टाशीतिलक्षोत्तरपंचचत्वारिंशत्कोट्यधिकशतकोटिसंख्या पदातय इत्यर्थः ॥ ३१ ॥ ३२ ॥ दिवसस्याष्टभागेन चतुर्दशीसंबंध्यंत्यमुहूर्तद्वयेन ॥ ३३ ॥ हतशेषाः कतिपया लंकामभिपेतुः॥ ३४॥

आक्रीडं क्रीडा तस्या भूमिः ॥ ३५ ॥ ३६ ॥ प्रत्यनंतरम् आसन्नम् ॥ ३७ ॥ मम वा त्र्यंबकस्य वा अनेन स्वस्य विष्णुत्वं सूचितम् ॥ ३८ ॥ संस्तूयते स्म ॥ ३९ ॥ धेळैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्नवतितमः सर्गः ॥ ९४ ॥ कतकरी० ॥ ८६ ॥ तानीति । सहस्रशः सहस्राणीत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ रावणेन प्रयुक्तानि युद्धार्थं प्रेषि तानि रामेण हतानि दृष्ट्वा वृद्धास्तु श्रुत्वा हतशेषाः बालवृद्धा निशाचरा राक्षस्यश्च समागम्य संवशः संभूय दीनाश्चितापरिप्लुताश्च अभवन्निति शेषः ॥ ४ ॥ ५ ॥ परिदेवनप्रकारः कथमिति । निर्णतोदरी निम्नो

हतैर्गजपदात्यश्वैस्तद्बभूवरणाजिरम् ॥ आक्रीडभूमिःक्रुद्धस्यरुद्रस्येवमहात्मनः ॥ ३५ ॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ साधुसाध्विति रामस्यतत्कर्मसमपूजयन् ॥ ३६ ॥ अब्रवीच्चतदारामःसुग्रीवंप्रत्यनंतरम् ॥ विभीषणंचधर्मात्माहनूमंतंचवानरम् ॥ ३७ ॥ जांबवंतंहरिश्रेष्ठंमैंदंद्वि विदमेवच ॥ एतदस्त्रवलंभीमंममवात्र्यंबकस्यवा ॥ ३८ ॥ निहत्यतांराक्षसराजवाहिनींरामस्तदाशक्रसमोमहात्मा ॥ अस्त्रेषुशस्त्रेषुजितक्लमश्चसं स्तूयतेदेवगणैःप्रहृष्टैः ॥ ३९ ॥ इत्यार्षे श्रीमद्रा० वा० आ० युद्ध० चतुर्नवतितमः सर्गः ॥ ९४ ॥ तानिनागसहस्राणिसारोहाणिचवाजिनाम् ॥ रथानांत्वग्निवर्णानांसध्वजानांसहस्रशः ॥ १ ॥ राक्षसानांसहस्राणिगदापरिघयोधिनाम् ॥ कांचनध्वजचित्राणांशूराणांकामरूपिणाम् ॥ २ ॥ निह तानिशरैर्दीप्तैस्तप्तकांचनभूषणैः ॥ रावणेनप्रसक्तानिरामेणाक्लिष्टकर्मणा ॥ ३ ॥ दृष्ट्वाश्रुत्वाचसंभ्रांताहतशेषानिशाचराः ॥ राक्षस्यश्चसमागम्यदी नाश्चितापरिप्लुताः ॥ ४ ॥ विधवाहतपुत्राश्चक्रोशंत्योहतबांधवाः ॥ राक्षस्यःसहसंगम्यदुःखार्ताःपर्यदेवयन् ॥ ५ ॥ कथंशूर्पणखावृद्धाकरालानि र्णतोदरी ॥ आससादवनेरामंकंदर्पसमरूपिणम् ॥ ६ ॥ सुकुमारंमहासत्त्वंसर्वभूतहितेरतम् ॥ तंदृष्ट्वालोकवध्यासाहीनरूपाप्रकामिता ॥ ७ ॥ कथंसर्वगुणैर्हीनागुणवंतंमहौजसम् ॥ सुमुखंदुर्मुखीरामंकामयामासराक्षसी ॥ ८ ॥ जनस्यास्याल्पभाग्यत्वाद्वलिनीश्वेतमूर्धजा ॥ अकार्यमपहा स्यंचसर्वलोकविगर्हितम् ॥ ९ ॥ राक्षसानांविनाशायदूषणस्यखरस्यच ॥ चकाराप्रतिरूपासाराघवस्यप्रधर्षणम् ॥ १० ॥ तन्निमित्तमिदंवैरंरावणे नकृतंमहत् ॥ वधायसीतासानीतादशग्रीवेणरक्षसा ॥ ११ ॥ नचसीतांदशग्रीवःप्राप्नोतिजनकात्मजाम् ॥ बद्धंबलवतावैरमक्षयंराघवेणच ॥ १२ ॥ वैदेहींप्रार्थयानंतंविराधंप्रेक्ष्यराक्षसम् ॥ हतमेकेनरामेणपर्याप्तंतन्निदर्शनम् ॥ १३ ॥ चतुर्दशसहस्राणिरक्षसांभीमकर्मणाम् ॥ निहतानिजनस्थाने शरैरग्निशिखोपमैः ॥ १४ ॥

दरी ॥ ६ ॥ लोकवध्या लोकैर्वधार्हा हीनरूपा रामसान्निध्यानर्हा कुत्सितरूपा अथापि रामे प्रकामिता संजातप्रकामा ॥ ७ ॥ ८ ॥ अस्य जनस्य राक्षसजनस्य वलिनी जरावशाज्जातवलिः व्रीह्यादित्वादिनिः ॥ ९ ॥ अप्रतिरूपा विकृतरूपा अप्रतिरूपस्येति पाठे तदसदृशाकारस्येत्यर्थः ॥ १० ॥ तन्निमित्तं धर्षणनिमित्तं सा आनीतेतिच्छेदः वधाय रक्षसामिति शेषः ॥ ११ ॥ न प्राप्नोति न प्राप्स्यति च ॥ १२ ॥ प्रार्थयानं प्रार्थयमानम् एकेनासहायेनम् रामेण ब्रह्मदत्तवरमपि हतं विराधं संप्रेक्ष्य स्थितस्य रावणस्य तदेकमेव पर्याप्तं निदर्शनं रामस्य सदेवासुरसकललोकातिशायित्वावगमाय पर्याप्तं निदर्शनमित्यर्थः ॥ १३ ॥ १४ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ इंद्रजितमपि हतं श्रुत्वा नावबुध्यते पराक्रममिति शेषः ॥ २२ ॥ कुले कुले गृहे गृहे ॥ २३ ॥ २४ ॥ २५ ॥ अपश्यंतः अपश्यंत्यः ॥२६॥ रामहस्तात्प्राप्तमिदं स्वस्य भयं शूरो ब्रह्मदत्तमहावर इति कृत्वा तद्रावणो न बुध्यते ॥ २७ ॥ उपसृष्टं हंतुमारब्धम् ॥ २८ ॥ कथयंतीति । तदुत्पातफलं माल्यवदादयो वृद्धा इति शेषः ॥ २९ ॥ रामेणास्य वधे उपपत्तिं चाहुः पितामहेनेति । देवदानवराक्षसैस्तेभ्यः ॥ ३० ॥ ३१ ॥ रावणेन पीड्यमानैर्देवैः प्रसादितस्य ब्रह्मणोऽनुग्रहादपि क्षयो राक्षसानामित्याहुः । पीड्यमानास्त्विति ॥ ३२ ॥ ३३ ॥ दानवा

खरश्चनिहतःसंख्येदूषणस्त्रिशिरास्तथा ॥ शरैरादित्यसंकाशैःपर्याप्तंतन्निदर्शनम् ॥ १५ ॥ हतोयोजनबाहुश्चकबंधोरुधिराशनः ॥ क्रोधान्नादंनदन्सो थपर्याप्तंतन्निदर्शनम् ॥ १६ ॥ जघानबलिनंरामःसहस्रनयनात्मजम् ॥ वालिनंमेघसंकाशंपर्याप्तंतन्निदर्शनम् ॥ १७ ॥ ऋष्यमूकेवसंश्चैवदीनो भग्नमनोरथः ॥ सुग्रीवःप्रापितोराज्यंपर्याप्तंतन्निदर्शनम् ॥ १८ ॥ धर्मार्थसहितंवाक्यंसर्वेषांरक्षसांहितम् ॥ युक्तंविभीषणेनोक्तंमोहात्तस्यनरोचते ॥ १९ ॥ विभीषणवचःकुर्याद्यदिस्मधनदानुजः ॥ श्मशानभूतादुःखार्तानेयंलंकाभविष्यति ॥ २० ॥ कुंभकर्णंहतंश्रुत्वाराघवेणमहाबलम् ॥ अ तिकायंचदुर्मर्षंलक्ष्मणेनहतंतदा ॥ २१ ॥ प्रियंचेंद्रजितंपुत्रंरावणोनावबुध्यते ॥ २२ ॥ ममपुत्रोममभ्राताममभर्तारणेहतः ॥ इत्येषश्रूयतेशब्दो राक्षसीनांकुलेकुले ॥२३॥ रथाश्वनागाश्चहतास्तत्रतत्रसहस्रशः ॥ रणेरामेणशूरेणहताश्चापिपदातयः ॥ २४ ॥ रुद्रोवायदिवाविष्णुर्महेंद्रोवाश तक्रतुः ॥ हंतिनोरामरूपेणयदिवास्वयमंतकः ॥ २५ ॥ हतप्रवीरारामेणनिराशाजीवितेवयम् ॥ अपश्यंतोभयस्यांतमनाथाविलपामहे ॥ २६ ॥ रामहस्ताद्दशग्रीवःशूरोदत्तमहावरः ॥ इदंभयंमहाघोरंसमुत्पन्नंनबुद्ध्यते ॥ २७ ॥ तंनदेवानगंधर्वानपिशाचानराक्षसाः ॥ उपसृष्टंपरित्रातुंशक्तारा मेणसंयुगे ॥ २८ ॥ उत्पाताश्चापिदृश्यंतेरावणस्यरणेरणे ॥ कथयंतिहिरामेणरावणस्यनिबर्हणम् ॥ २९ ॥ पितामहेनप्रीतेनदेवदानवराक्षसैः ॥ रावणस्याभयंदत्तंमनुष्येभ्योनयाचितम् ॥ ३० ॥ तदिदंमानुषंमन्येप्राप्तंनिःसंशयंभयम् ॥ जीवितांतकरंघोरंरक्षसांरावणस्यच ॥ ३१ ॥ पीड्य मानास्तुबलिनावरदानेनरक्षसा ॥ दीप्तैस्तपोभिर्विबुधाःपितामहमपूजयन् ॥ ३२ ॥ देवतानांहितार्थायमहात्मावैपितामहः ॥ उवाचदेवतास्तुष्टइदं सर्वामहद्वचः ॥ ३३ ॥ अद्यप्रभृतिलोकांस्त्रीन्सर्वेदानवराक्षसाः ॥ भयेनप्रभृतानित्यंविचरिष्यंतिशाश्वतम् ॥ ३४ ॥ दैवतैस्तुसमागम्यसर्वैश्चेंद्रपुरो गमैः ॥ वृषध्वजस्त्रिपुरहामहादेवःप्रतोषितः ॥ ३५ ॥ प्रसन्नस्तुमहादेवोदेवानेतद्वचोब्रवीत् ॥ उत्पत्स्यतिहितार्थंवोनारीरक्षःक्षयावहा ॥ ३६ ॥ एषादेवैःप्रयुक्तातुक्षुद्यथादानवान्पुरा ॥ भक्षयिष्यतिनःसर्वान्राक्षसघ्नीसरावणान् ॥ ३७ ॥

राक्षसाश्च भयेन प्रभृताः देवेभ्यो भयं बिभ्राणा एव विचरिष्यंति । देवाः स्वतः परतो वास्मान्पीडयिष्यंतीति भययुक्ता एव भविष्यंतीत्यर्थः ॥ ३४ ॥ एवं ब्रह्मणः प्रसादात्सभयत्वमात्रं प्राप्तं संहाराधिकृतरुद्रप्रसा देन तु नाश एवास्माकमित्याहुः दैवतैरिति ॥ ३५ ॥ ३६ ॥ सा एषा सीतैवेत्याहुः एषेति । पुरा पूर्वकल्पे देवैर्दानवनाशार्थं प्रयुक्ता क्षुद्यथा दानवान्हरति स्म एवं देवैः प्रयुक्ता एषा सीतापि सरावणान् रावण

व्रणिनश्च तेपि विशल्याः मरूढव्रणाश्च कार्याः ॥२३॥ नस्तः नासिकायाम् ॥२४॥२५॥२६॥२७॥२८॥२९॥ धेर्रमानः॥९२॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्विनवतितमः सर्गः ॥९२॥ कतकरी०॥८४॥ अथ रावणवृत्तांतमाह तत इत्यादि सचिवा अवशिष्टसुपार्श्वादिमंत्रिणः अवज्ञाय अवक्षिप्ता ज्ञा ज्ञानं यस्य तस्मै पुत्रवधवृत्तांतज्ञानरहितायेत्यर्थः तीर्थस्तु अवज्ञाय अभिज्ञाय दृष्ट्वा पूर्वं श्रुत्वा पश्चाद्युद्धभूमिं गत्वा मत्यक्षीकृत्याचचक्षुरित्यर्थमाह॥१॥मिषतां न इति योद्धृराक्षसैर्दर्शनाच्छत्रिन्यायेन बोध्यं मिषतोऽनादृत्येत्यर्थः ॥२॥ विबुधान् देवानिंद्रं च जयतीति विबुधेंद्रजित् ॥३॥

एवमुक्तस्तुरामेणमहात्माहरियूथपः ॥ लक्ष्मणायददौनस्तःसुषेणःपरमौषधम् ॥ २४ ॥ सतस्यगंधमाघ्रायविशल्यःसमपद्यत ॥ तदानिर्वेदनश्चैवसंरूढव्रणएवच ॥ २५ ॥ विभीषणमुखानांचसुहृदांराघवाज्ञया ॥ सर्ववानरमुख्यानांचिकित्सामकरोत्तदा ॥२६॥ ततःप्रकृतिमापन्नोहृतशल्योगतक्लमः ॥ सौमित्रिर्मुमुदेतत्रक्षणेनविगतज्वरः ॥ २७ ॥ तदैवरामःप्लवगाधिपस्तथाविभीषणश्चर्क्षपतिश्चवीर्यवान् ॥ अवेक्ष्यसौमित्रिमरोगमुत्थितंमुदाससैन्याःसुचिरंजहर्षिरे ॥ २८ ॥ अपूजयत्कर्मसलक्ष्मणस्यसुदुष्करंदाशरथिर्महात्मा ॥ बभूवहृष्टोयुधिवानरेंद्रोनिशम्यतंशक्रजितंनिपातितम्॥ ॥२९॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडेद्विनवतितमः सर्गः ॥ ९२ ॥ ततःपौलस्त्यसचिवाःश्रुत्वाचेंद्रजितोवधम् ॥ आचचक्षुरवज्ञायदशग्रीवायसत्वराः ॥ १ ॥ युद्धेहतोमहाराजलक्ष्मणेनतवात्मजः॥ विभीषणसहायेनमिषतांनोमहाद्युतिः ॥ २ ॥ शूरःशूरेणसंगम्यसंयुगेष्वपराजितः ॥ लक्ष्मणेनहतःशूरःपुत्रस्तेविबुधेंद्रजित् ॥ ३ ॥ गतःसपरमाँल्लोकाञ्शरैःसंतर्प्यलक्ष्मणम् ॥ सतंप्रतिभयंश्रुत्वावधंपुत्रस्यदारुणम् ॥ ४ ॥ घोरमिंद्रजितःसंख्येकश्मलंप्राविशन्महत् ॥ उपलभ्यचिरात्संज्ञांराजाराक्षसपुंगवः ॥ ५ ॥ पुत्रशोकाकुलोदीनोविललापाकुलेंद्रियः॥ हाराक्षसचमूमुख्यममवत्समहाबल ॥ ६ ॥ जित्वेंद्रंकथमद्यत्वंलक्ष्मणस्यवशंगतः ॥ ननुत्वमिषुभिःक्रुद्धोभिंद्याःकालांतकावपि ॥ ७ ॥ मंदरस्यापिशृंगाणिकिंपुनर्लक्ष्मणंयुधि ॥ अद्यवैवस्वतोराजाभूयोबहुमतोमम ॥ ८॥ येनाद्यत्वंमहाबाहोसंयुक्तःकालधर्मणा ॥ एषपंथाःसुयोधानांसर्वामरगणेष्वपि ॥ यःकृतेहन्यतेभर्तुःसपुमान्स्वर्गमृच्छति॥ ९ ॥ अद्यदेवगणाःसर्वेलोकपालामहर्षयः ॥ हतमिंद्रजितंदृष्ट्वासुखंस्वप्स्यंतिनिर्भयाः ॥ १० ॥ अद्यलोकास्त्रयःकृत्स्नापृथिवीचसकानना ॥ एकेनेंद्रजिताहीनाशून्येवप्रतिभातिमे ॥ ११ ॥

परमाँल्लोकान्वीरमाप्यानिति भावः दारुणं शोकजनकत्वात् मतिभयमतिभयंकरम् ॥४॥ घोरं तीक्ष्णं कश्मलं मूर्च्छाम् ॥५॥६॥ कालांतकौ कालः सर्वसंहारकः अंतकस्तदधिकृतः ॥७॥ भूयो बहुमतो मयात्यंतश्लाघनीयः ॥८॥ येन वैवस्वतेन त्वं कालधर्मणा कालधर्मेण संयुक्तः संयोजितः यो भर्तुः कृते हन्यते स पुमान्स्वर्गं गच्छति एष पंथाः सुयोधानां नररक्षोसुरवानरयोधानां न केवलमेतेष्वेव किंतु देवादिगणेष्वपीत्याह सर्वामरेति एवं युद्धमरणस्य सकलशूरजनाकांक्षिततया युद्धहतं त्वां नशोचामीति भावः ॥ ९ ॥१०॥ त्रयो लोकाः पातालांतरिक्षस्वर्गाः पृथिव्याः पृथगुक्तेः सकानना निर्भयेत्यनुकर्षः किंच ममैकेनेंद्रजिता

शून्या सर्वा पृथिवी शून्यवभाति ॥ ११ ॥ रवं रोदनजम् ॥ १२ ॥ १३ ॥ नामेति प्रसिद्धौ मम त्वया प्रेतकार्याणि कर्तुं योग्यानि त्वं तु विपरीते वर्तसे यतस्त्वदीयानि मया कर्तव्यानि भविष्यंति ॥ ॥ १४ ॥ १५ ॥ रावणं च समाधिगमिति पाठे सम्यगाधिः समाधिर्मनोव्यथा तां गच्छतीत्यर्थ इति तीर्थः ॥ १६ ॥ पुत्रस्याधयः पुत्रनाशजा आधयः प्रकृत्या कोपनमत एव दीप्तं नित्यं कोपदीप्तं पुनश्चाधयो दीपयामासुः ॥ १७ ॥ १८ ॥ बुद्ध्या समीक्ष्य वैदेही किल मे पुत्रवधमूलमित्यालोच्येत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ यंत्रस्य मंदररूपमथनयंत्रस्य वासुकिना करणेन दानवैः कृष्यमाणस्य मथ्नतः

अद्यनैर्ऋतकन्यानांश्रोष्याम्यंतःपुरेरवम् ॥ करेणुसंघस्ययथानिनादंगिरिगह्वरे ॥ १२ ॥ यौवराज्यंचलंकांचरक्षांसिचपरंतप ॥ मातरंमांचभार्याश्चक्वगतोसिविहायनः ॥ १३ ॥ ममनामत्वयावीरगतस्ययमसादनम् ॥ प्रेतकार्याणिकार्याणिविपरीतेहिवर्तसे ॥ १४ ॥ सत्वंजीवतिसुग्रीवेलक्ष्मणेनचराघवे ॥ ममशल्यमनुद्धृत्यक्वगतोसिविहायनः ॥ १५ ॥ एवमादिविलापार्तंरावणंराक्षसाधिपम् ॥ आविवेशमहान्कोपःपुत्रव्यसनसंभवः॥१६॥ प्रकृत्याकोपनंह्येनंपुत्रस्यपुनराधयः ॥ दीप्तंसंदीपयामासुर्घर्मेऽर्कमिवरश्मयः ॥ १७॥ कोपाद्विजृंभमाणस्यवक्त्राद्व्यक्तमिवज्वलन् ॥ उत्पपातसधूमाग्निर्वृत्रस्यवदनादिव ॥ १८ ॥ सपुत्रवधसंतप्तःशूरःक्रोधवशंगतः ॥ समीक्ष्यरावणोबुद्ध्यावैदेह्यारोचयद्वधम् ॥ १९ ॥ तस्यप्रकृत्यारक्तेचरक्तेक्रोधाग्निनापिच ॥ रावणस्यमहाघोरेदीप्तेनेत्रेबभूवतुः ॥ २० ॥ घोरंप्रकृत्यारूपंतत्तस्यक्रोधाग्निमूर्च्छितम् ॥ बभूवरूपंक्रुद्धस्यरुद्रस्येवव्यवस्थितम् ॥ ॥२१॥ तस्यक्रुद्धस्यनेत्राभ्यांप्रापतन्नश्रुबिंदवः ॥ दीप्ताभ्यामिवदीपाभ्यांसार्चिषःस्नेहबिंदवः ॥ २२ ॥ दंतान्विदशतस्तस्यश्रूयतेदशनस्वनः ॥ यंत्रस्याकृष्यमाणस्यमथ्नतोदानवैरिव ॥ २३ ॥ तमंतकमिवक्रुद्धंचराचरचिखादिषुम् ॥ वीक्षमाणंदिशःसर्वाराक्षसानोपचक्रमुः ॥२४॥ ततःपरमसंक्रुद्धोरावणोराक्षसाधिपः ॥ अब्रवीद्रक्षसांमध्येसंस्तंभयिषुराहवे ॥ २५ ॥ मयावर्षसहस्राणिचरित्वापरमंतपः ॥ तेषुतेष्ववकाशेषुस्वयंभूःपरितोषितः ॥२६॥ तस्यैवतपसोव्युष्ट्याप्रसादाच्चस्वयंभुवः ॥ नासुरेभ्योनदेवेभ्योभयंममकदाचन ॥२७॥ कवचंब्रह्मदत्तंमेयदादित्यसमप्रभम् ॥ देवासुरविमर्देषुनच्छिन्नंवज्रमुष्टिभिः ॥ २८ ॥ तेनमामद्यसंयुक्तंरथस्थमिहसंयुगे ॥ प्रतीयात्कोद्यमामाजौसाक्षादपिपुरंदरः ॥ २९ ॥ यत्तदाभिप्रसन्नेनसशरंकार्मुकंमहत् ॥ देवासुरविमर्देषुमदत्तंस्वयंभुवा ॥ ३० ॥ अद्यतूर्यशतैर्भीमंधनुरुत्थाप्यतांमम ॥ रामलक्ष्मणयोरेववधायपरमाहवे ॥३१॥

क्षीराब्धिमथनं कुर्वतो मंदरस्येव ॥ २३ ॥ नोपचक्रमुः समीपं न प्रापुः ॥ २४ ॥ आहवे युद्धे संस्तंभयिषुः प्रतिष्ठापयितुमिच्छुः राक्षसानितिशेषः द्वित्वाभाव आर्षः ॥ २५ ॥ अवकाशेषु तत्तत्तपःसमाप्तिसमयेषु स्वायंभुवस्थानविषयेषु वा ॥ २६ ॥ व्युष्ट्या फलोदयेन ॥ २७ ॥ भयाभावे हेतुमाह कवचमिति ॥ २८ ॥ क्रुद्धोक्तित्वाद्द्येत्यस्य पुनरुक्तिर्न दोषाय प्रतीयात् अभिमुखो भवेत् ॥ २९ ॥ तदेत्यस्य व्याख्यानं देवासुरविमर्देष्विति तद्विषयेऽभिप्रसन्नेन प्रीतेन यद्धनुर्दत्तम् ॥ ३० ॥ तदद्य तूर्यशतैरनेकमंगलवाद्यध्वनिभिः सह परं धनुर्ब्रह्मदत्तं धनुरुत्थाप्यतां उद्ध्रियतां आहवे रामलक्ष्मणयोर्वधाय ॥ ३१ ॥

व्यवस्यत व्यवास्यत निश्चितवानित्यर्थः ॥ ३२ ॥ सुघोरः घोरचित्तः ॥ ३३ ॥ किंचिदेव हतं तदेव हत्वा तत्र तस्मिन्काले इयं वास्तवसीता हतेति मृषैव दर्शितं तदिदं शत्रूणामप्रियकरं रूपं वस्तु आत्मनः प्रियं तथ्यमेव करिष्ये ॥ ३४ ॥ यदेवमतो वैदेहीमिति क्षत्रबंधुं वस्तुतोऽक्षत्रियम् ॥ ३५ ॥ विमलांबरवर्चसं निर्मलाकाशकांति ॥ ३६ ॥ यत्र मैथिली तत्र निष्पपात ॥ ३७ ॥ सिंहनादं विचुक्रुशुः तद्रूपं क्रोशनं कृतवंतः सचिवा इति शेषः ॥ ३८ ॥ तेषां सिंहनादप्रवृत्तौ कारणमाहाद्यैनमिति ॥ ३९ ॥ आहृत्य रत्नानि भुंक्ते ॥ ४० ॥ अशोकवनिकां गतां वैदेहीमभिदुद्राव ॥ ४१ ॥ ग्रहः कुजादिः ॥४२॥

सपुत्रवधसंतप्तःक्रूरःक्रोधवशंगतः ॥ समीक्ष्यरावणोबुद्ध्यासीतांहंतुंव्यवस्यत ॥ ३२ ॥ प्रत्यवेक्ष्यतुताम्राक्षःसुघोरोघोरदर्शनः ॥ दीनोदीनस्वरान्सर्वांस्तानुवाचनिशाचरान् ॥ ३३ ॥ माययाममवत्सेनवंचनार्थंवनौकसाम् ॥ किंचिदेवहतंतत्रसीतेयमितिदर्शितम् ॥ ३४ ॥ तदिदंतथ्यमेवाहंकरिष्येप्रियमात्मनः ॥ वैदेहींनाशयिष्यामिक्षत्रबंधुमनुव्रताम् ॥ इत्येवमुक्त्वासचिवान्खड्गमाशुपरामृशत् ॥ ३५ ॥ उद्धृत्यगुणसंपन्नंविमलांबरवर्चसम् ॥ निष्पपातसवेगेनसभार्यःसचिवैर्वृतः ॥ ३६ ॥ रावणःपुत्रशोकेनभृशमाकुलचेतनः ॥ संक्रुद्धःखड्गमादायसहसायत्रमैथिली ॥ ३७ ॥ व्रजंतंराक्षसंप्रेक्ष्यसिंहनादंविचुक्रुशुः ॥ ऊचुश्चान्योन्यमालिंग्यसंक्रुद्धंप्रेक्ष्यराक्षसम् ॥ ३८ ॥ अद्यैनंतावुभौदृष्ट्वाभ्रातरौप्रव्यथिष्यतः ॥ लोकपाला हिचत्वारःक्रुद्धेनानेननिर्जिताः ॥ बहवःशत्रवश्चान्येसंयुगेष्वभिपातिताः ॥ ३९ ॥ त्रिषुलोकेषुरत्नानिभुंक्तेआहृत्यरावणः ॥ विक्रमेचबलेचैवनास्त्यस्यसदृशोभुवि ॥४०॥ तेषांसंजल्पमानानामशोकवनिकांगताम् ॥ अभिदुद्राववैदेहींरावणःक्रोधमूर्च्छितः ॥॥४१॥वार्यमाणःसुसंक्रुद्धःसुहृद्भिर्हितबुद्धिभिः ॥ अभ्यधावतसंक्रुद्धःखेग्रहोरोहिणीमिव ॥४२॥ मैथिलीरक्ष्यमाणातुराक्षसीभिरनिंदिता ॥ ददर्शराक्षसंक्रुद्धंनिस्त्रिंशवरधारिणम् ॥४३॥ तंनिशम्यसनिस्त्रिंशंव्यथिताजनकात्मजा ॥ निवार्यमाणंबहुशःसुहृद्भिरनिवर्तिनम् ॥ ४४ ॥ सीतादुःखसमाविष्टाविलपंतीदमब्रवीत् ॥ यथायंमामभिक्रुद्धःसमभिद्रवतिस्वयम् ॥ वधिष्यतिसनाथांमामनाथामिवदुर्मतिः ॥ ४५ ॥ बहुशश्चोदयामासभर्तारंमामनुव्रताम् ॥ भार्याममभवस्वेतिप्रत्याख्यातोध्रुवंमया ॥ ४६ ॥ सोयंमामनुपस्थानेव्यक्तंनैराश्यमागतः ॥ क्रोधमोहसमाविष्टोव्यक्तंमांहंतुमुद्यतः ॥ ४७ ॥ अथवातौनरव्याघ्रौभ्रातरौरामलक्ष्मणौ ॥ मन्निमित्तमनार्येणसमरेद्यनिपातितौ ॥ ४८ ॥ भैरवोहिमहान्नादोराक्षसानांश्रुतोमया ॥ बहूनामिहहृष्टानांतथाविक्रोशतांप्रियम् ॥ ४९ ॥ अहोधिङ्मन्निमित्तोयंविनाशोराजपुत्रयोः ॥ अथवापुत्रशोकेनअहत्वारामलक्ष्मणौ ॥ ५० ॥ विधमिष्यतिमांरौद्रोराक्षसःपापनिश्चयः ॥ हनूमतस्तुतद्वाक्यंनकृतंक्षुद्रयामया ॥ ५१ ॥ यद्यहंतस्यपृष्ठेनतदायासमनिर्जिता ॥ नाद्यैवमनुशोचेयंभर्तुरंकगतासती ॥ ५२ ॥

॥ ४३ ॥ निवार्यमाणमप्यनिवर्तिनं अनुवर्तिनमिति पाठेभिमुखमागच्छंतम् ॥ ४४ ॥ यथा येन प्रकारेण अनुभूयमानोयं मामभिद्रवति ॥ ४५ ॥ वधिष्यतीत्यत्र कारणमाह बहुश इति ॥ ४६ ॥ अनुपस्थाने सति अनंगीकारे सति ॥ ४७ ॥ ४८ ॥ ४९ ॥ रामलक्ष्मणावहत्वा तौ हंतुमशक्नुवानेन ॥५०॥ हनूमतस्तु तद्वाक्यं यत्पृष्ठमारोहेदानीमेव त्वां रामसमीपं नेष्यामीत्युक्तरूपं रामेणानिर्जितापि यदि तदाऽयासम्

अयासिषम् तदायैवं नानुशोचेयम् ॥ ५१ ॥ ५२ ॥ यदा श्रोष्यते तदा फलिष्यति स्फुटिष्यति यदि रामोपि हन्यत इति शेषः तदेवाह एकपुत्रेति ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ एवं विलपंतीं चंद्रेण विना कृतां ग्रहवशं गतां रोहिणीमिव मैथिलीं दृष्ट्वा ॥ ५७ ॥ सुपार्श्वो नामामात्यः शुचिः शुद्धव्रतस्तादितरसचिवैरेवं वक्तुमयोग्यमिति निवार्यमाणोपि रावणं प्रतीदमब्रवीत् अस्यैवाविंध्य इति नामांतरम् । अत एव भारते अशोकवनिकास्थां तां रामदर्शनलालसाम् । खड्गमादाय दुष्टात्मा जवेनाभिपपात ह । तद्बुद्धा तस्य दुर्बुद्धेरविंध्यः पापनिश्चयम् । शमयामास संक्रुद्धं श्रूयतां येन हेतुनेत्युक्तम् ॥ ५८ ॥ वैश्रवणानुजेत्यनेन महाकुलप्रसूतत्वमुक्तम् ॥ ५९ ॥ धर्मापालनं च तवायुक्तं धार्मिकत्वादेवेत्याह वेदेति । वेदविद्याग्रहापेक्षितब्रह्मचर्यव्रतपूर्वं विद्यां गृहीत्वा स्नातो गुरुकुलात्समावृत्तः । तदनंतरं दारग्रहणपूर्वं नित्याग्निहोत्रादिस्वकर्म

मन्येतुहृदयंतस्याःकौसल्यायाःफलिष्यति ॥ एकपुत्रायदापुत्रंविनष्टंश्रोष्यतेयुधि ॥ ५३ ॥ साहिजन्मचबाल्यंचयौवनंचमहात्मनः ॥ धर्मकार्याणि रूपंचरुदतीसंस्मरिष्यति ॥ ५४ ॥ निराशानिहतेपुत्रेदत्त्वाश्राद्धमचेतना ॥ अग्निमावेक्ष्यतेनूनमपोवापिप्रवेक्ष्यति ॥ ५५ ॥ धिगस्तुकुब्जामसतीं मंथरांपापनिश्चयाम् ॥ यन्निमित्तमिमंशोकंकौसल्याप्रतिपत्स्यते ॥ ५६ ॥ इत्येवंमैथिलींदृष्ट्वाविलपंतींतपस्विनीम् ॥ रोहिणीमिवचंद्रेणविनाग्रहवशं गताम् ॥ ५७ ॥ एतस्मिन्नंतरेतस्यअमात्यःशीलवाञ्छुचिः ॥ सुपार्श्वोनाममेधावीरावणंरक्षसांवरम् ॥ निवार्यमाणःसचिवैरिदंवचनमब्रवीत् ॥ ॥ ५८ ॥ कथंनामदशग्रीवसाक्षाद्वैश्रवणानुज ॥ हंतुमिच्छसिवैदेहींक्रोधाद्धर्ममपास्यच ॥ ५९ ॥ वेदविद्याव्रतस्नातःस्वकर्मनिरतस्तथा ॥ स्त्रियः कस्माद्वधंवीरमन्यसेराक्षसेश्वर ॥ ६० ॥ मैथिलींरूपसंपन्नांप्रत्यवेक्षस्वपार्थिव ॥ तस्मिन्नेवसहास्माभिराहवेक्रोधमुत्सृज ॥ ६१ ॥ अभ्युत्थानं त्वमद्यैवकृष्णपक्षचतुर्दशी ॥ कृत्वानिर्याह्यमावास्यांविजयायबलैर्वृतः ॥ ६२ ॥ शूरोधीमान्रथीखड्गीरथप्रवरमास्थितः ॥ हत्वादाशरथिंभीमं भवान्प्राप्स्यतेमैथिलीम् ॥ ६३ ॥ सतदुरात्मासुहृदानिवेदितंवचःसुधर्म्यंप्रतिगृह्यरावणः ॥ गृहंजगामाथततश्चवीर्यवान्पुनःसभांचप्रययौसुहृद्वृतः ॥ ॥ ६४ ॥ इत्यार्षे श्रीमद्रा० वा० आदि० युद्धकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥ सप्रविश्यसभांराजादीनःपरमदुःखितः ॥ निषसादासने मुख्येसिंहःक्रुद्धइवश्वसन् ॥ १ ॥ अब्रवीच्चसतान्सर्वान्बलमुख्यान्महाबलः ॥ रावणःप्रांजलिर्वाक्यंपुत्रव्यसनकर्शितः ॥२॥ सर्वेभवंतःसर्वेणहस्त्यश्वे नसमावृताः ॥ निर्यातरथसंघैश्चहस्त्यश्वैश्चोपशोभिताः ॥ ३ ॥ एकंराममंपरिक्षिप्यसमरेहंतुमर्हथ ॥ प्रहृष्टाःशरवर्षाणिप्रावृट्कालइवांबुदाः ॥ ४ ॥

निरतः ॥ ६० ॥ रूपसंपन्नां मैथिलीं प्रत्यवेक्षस्व रामवधपर्यंतमिति शेषः । त्वं तस्मिन्नेव राघव एव क्रोधमुत्सृज ॥ ६१ ॥ अद्य कृष्णपक्षचतुर्दशी तस्यामभ्युत्थानं समरोद्योगं कृत्वा अमावास्यायां विजयाय निर्याहि प्रस्थानं कुरु ॥ ६२ ॥ ६३ ॥ ६४ ॥ वैचैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिनवतितमः सर्गः ॥ ९३ ॥ कतकरी० ॥ ८५ ॥ स इति ॥ १ ॥ रावणः प्रांजलिरिति । परमापदः प्राप्त्या अवशिष्टानां युद्धोन्मुख्यार्थं नमस्कारं करोतीत्याशयः ॥ २ ॥ सर्वेण एकमपि हस्त्यश्वरथपादातमत्यक्त्वेत्यर्थः ॥ ३ ॥ एकं रामं परिक्षिप्येति तस्यैव

समरपरिश्रमं युद्धजश्रमम् ॥ ७८ ॥ हर्षमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकोननवतितमः सर्गः ॥८९॥ युध्यमानाविति । प्रभिन्नौ मत्तौ मातंगाविव युद्धाय प्रसक्तावत एव युध्यमानौ दृष्ट्वा ॥ १ ॥ ततःपरं युद्धार्थं गतयोरन्यतरवधांतं युद्धंद्रष्टुकामः सन् शूरो रावणभ्राता युयुत्सया संग्राममूर्धनि तस्थौ ॥ २ ॥ अत एव ततो विस्फारयामासेति । अवस्थितो भूमाविति शेषः ॥ ३ ॥ वज्राः वज्रपाताः ॥ ४ ॥ ५ ॥ राक्षसैस्तैः सचिवरूपैः ॥ ६ ॥ संचोदमानः संचोदयमानः ॥ ७ ॥ परायणं परा गतिः उत्तमो योद्धेति यावत् । तस्य रावणस्य बलं सेना

अथसमरपरिश्रमंनिहंतुंसमरमुखेष्वजितस्यलक्ष्मणस्य ॥ प्रियहितमुपपादयन्महात्मासमरमुपेत्यविभीषणोवतस्थे ॥ ७८ ॥ इत्यार्षे श्रीमद्रा० वाल्माकीये आ०यु०एकोननवतितमः सर्गः ॥ ८९ ॥ युध्यमानौततोदृष्ट्वाप्रसक्तौनरराक्षसौ ॥ प्रभिन्नाविवमातंगौपरस्परजयैषिणौ ॥ १ ॥ तयोर्युद्धंद्रष्टुकामोवरचापधरोवली ॥ शूरःसरावणभ्रातातस्थौसंग्राममूर्धनि ॥ २ ॥ ततोविस्फारयामासमहद्धनुरवस्थितः ॥ उत्ससर्जचतीक्ष्णाग्रान्राक्षसेषुमहाशरान् ॥ ३ ॥ तेशराःशिखिसंस्पर्शानिपतंतःसमाहिताः ॥ राक्षसान्दारयामासुर्वज्राइवमहागिरीन् ॥ ४ ॥ विभीषणस्यानुचरास्तेपिशूलासिपट्टिशैः ॥ चिच्छिदुःसमरेवीरान्राक्षसान्राक्षसोत्तमाः ॥ ५ ॥ राक्षसैस्तैःपरिवृतःसतदातुविभीषणः ॥ वभौमध्येप्रधृष्टानांकलभानामिवाद्रिपः ॥ ६ ॥ ततःसंचोदमानोवैहरीन्रक्षोवधप्रियान् ॥ उवाचवचनंकालेकालज्ञोरक्षसांवरः ॥ ७ ॥ एकोयंराक्षसेंद्रस्यपरायणमवस्थितः ॥ एतच्छेषंवलंतस्यकिंतिष्ठतहरीश्वराः ॥ ८ ॥ तस्मिन्निहतेपापेराक्षसेरणमूर्धनि ॥ रावणंवर्जयित्वातुशेषमस्यवलंहतम् ॥ ९ ॥ प्रहस्तोनिहतोवीरोनिकुंभश्चमहावलः ॥ कुंभकर्णश्चकुंभश्चधूम्राक्षश्चनिशाचरः ॥ १० ॥ जंबुमालीमहामालीतीक्ष्णवेगोशनिप्रभः ॥ सुप्तघ्नोयज्ञकोपश्चवज्रदंष्ट्रश्चराक्षसः ॥ ११ ॥ संह्रादीविकटोरिघ्नस्तपनोमंदएवच ॥ प्रघासःप्रघसश्चैवप्रजंघोजंघएवच ॥ १२ ॥ अग्निकेतुश्चदुर्धर्षोरश्मिकेतुश्चवीर्यवान् ॥ विद्युज्जिह्वोद्विजिह्वश्चसूर्यशत्रुश्चराक्षसः ॥ १३ ॥ अकंपनःसुपार्श्वश्चचक्रमालीचराक्षसः ॥ कंपनःसत्त्ववंतश्चदेवांतकनरांतकौ ॥ १४ ॥ एतान्निहत्यातिबलान्बहून्राक्षससत्तमान् ॥ वाहुभ्यांसागरंतीर्त्वालंघ्यतांगोष्पदंलघु ॥ १५ ॥ एतावदेवशेषंवोजेतव्यमितिवानराः ॥ हताःसर्वेसमागम्यराक्षसावलदर्पिताः ॥ १६ ॥ अयुक्तंनिधनंकर्तुंपुत्रस्यजनितुर्मम ॥ घृणामपास्यरामार्थेनिहन्यांभ्रातुरात्मजम् ॥ १७ ॥

एतच्छेषं दृश्यमानवलमात्रावशेषम् । तत्किं तिष्ठत तद्धननानुद्यमेनेति शेषः ॥ ८ ॥ ९ ॥ एतन्मात्रशेषत्वमेवाह प्रहस्त इति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ बाहुभ्यां सागरं तीर्त्वावस्थितैर्युष्माभिरिदं लघु अवशिष्ट बलरूपं गोष्पदं लंघ्यताम् ॥ १५ ॥ समागम्य युद्धं प्राप्य ॥ १६ ॥ जनितुः जनयितृभ्रातुःपुत्रस्य निधनं नाशः कर्तुमयुक्तं तथापि घृणां दयामपास्य रामार्थे भ्रातुरात्मजं निहन्याम्

हननोपायप्रवर्तनेनेति भावः ॥ १७ ॥ हंतुकामस्य साक्षात्प्रहर्तुकामस्य बाष्पं कर्तृ निरुध्यति निरुणद्धि तं लक्ष्मणम् एवेत्यन्वयः ॥ १८ ॥ ध्नतेत्यार्षम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ हनूमानपीति । पर्वतात्सानुं शिखरमुत्पाट्य लक्ष्मणं पृष्ठादवरोप्य विश्रामार्थं स्वारूढं लक्ष्मणं भूमाववस्थाप्य विभीषणसहायार्थं हनूमान्कदनं चक्रे ॥ २५ ॥ दुरासादः परैर्दुरासद इत्यर्थः ॥२६॥ प्रयुद्धौयो द्धमुपक्रांतौ ॥२७ ॥ शरजालैः परस्पर प्रयुक्तैः परस्परमंतर्दधतुः उष्णांते वर्षारंभे संधानं संयोजनम् । धनुषो वा परिग्रहः सव्यापसव्येन कार्मुकग्रहणम् ॥२८॥२९॥ विग्रहो बाणानां विभागः विग्रहः । समरे काये

हंतुकामस्यमेबाष्पंचक्षुश्चैवनिरुध्यति ॥ तमेवैषमहाबाहुर्लक्ष्मणःशमयिष्यति ॥ १८ ॥ वानराघ्नतसंभूयभृत्यानस्यसमीपगान् ॥ इतितेनातियशसाराक्षसेनाभिचोदिताः ॥ १९ ॥ वानरेंद्राजहर्षिरेलांगूलानिचविव्यधुः ॥ ततस्तुकपिशार्दूलाःक्ष्वेडंतश्चपुनःपुनः ॥ मुमुचुर्विविधान्नादान्मेघान्दृष्ट्वेवबर्हिणः॥ २० ॥ जांबवानपितैःसर्वैःस्वयूथ्यैरभिसंवृतः ॥ तेऽश्मभिस्ताडयामासुर्नखैर्दंतैश्चराक्षसान् ॥ २१ ॥ निघ्नंतमृक्षाधिपतिंराक्षसास्तेमहाबलाः ॥ परिवव्रुर्भयंत्यक्त्वातमनेकविधायुधाः ॥ २२ ॥ शरैःपरशुभिस्तीक्ष्णैःपट्टिशैर्यष्टितोमरैः ॥ जांबवंतंमृधेजघ्नुर्निघ्नंतंराक्षसींचमूम् ॥ २३ ॥ ससंप्रहारस्तुमुलःसंजज्ञेकपिरक्षसाम् ॥ देवासुराणांक्रुद्धानांयथाभीमोमहास्वनः ॥२४॥ हनूमानपिसंक्रुद्धःसानुमुत्पाट्यपर्वतात् ॥ सलक्ष्मणंस्वयंपृष्ठादवरोप्यमहामनाः ॥ २५ ॥ रक्षसांकदनंचक्रेदुरासादःसहस्रशः ॥ सदत्त्वातुमुलंयुद्धंपितृव्यस्येंद्रजिद्बली ॥ २६ ॥ लक्ष्मणंपरवीरघ्नःपुनरेवाभ्यधावत ॥ तौप्रयुद्धौतदावीरौमृधेलक्ष्मणराक्षसौ ॥ २७ ॥ शरौघानभिवर्षंतौजघ्नतुस्तौपरस्परम् ॥ अभीक्ष्णमंतर्दधतुःशरजालैर्महाबलौ ॥ २८ ॥ चंद्रादित्याविवोष्णांतेयथामेघैस्तरस्विनौ ॥ नह्यादानंनसंधानंधनुषोवापरिग्रहः ॥२९॥ नविप्रमोक्षोबाणानांनांविकर्षोनविग्रहः ॥ नमुष्टिप्रतिसंधानंनलक्ष्यप्रतिपादनम् ॥ ३० ॥ अदृश्यततयोस्तत्रयुध्यतोःपाणिलाघवात् ॥ चापवेगप्रयुक्तैश्चबाणजालैःसमंततः ॥ ३१ ॥ अंतरिक्षेभिसंपन्नेनरूपाणिचकाशिरे ॥ लक्ष्मणोरावणिंप्राप्यरावणिश्चापिलक्ष्मणम् ॥ ३२ ॥ अव्यवस्थाभवत्युग्राताभ्यामन्योन्यविग्रहे ॥ ताभ्यामुभाभ्यांतरसाप्रसृष्टैर्विशिखैःशितैः ॥ ३३ ॥ निरंतरमिवाकाशंबभूवतमसावृतम् ॥ तैःपतद्भिश्चबहुभिस्तयोःशरशतैःशितैः ॥ ३४ ॥ दिशश्चप्रदिशश्चैवबभूवुःशरसंकुलाः ॥ तमसापिहितंसर्वमासीत्प्रातिभयंमहत् ॥ ३५ ॥ अस्तंगतेसहस्रांशौसंवृतेतमसाचवै ॥ रुधिरौघामहानद्यःप्रावर्तंतसहस्रशः ॥ ३६ ॥ क्रव्यादादारुणावाग्भिश्चिक्षिपुर्भीमानिःस्वनान् ॥ नतदानींववौवायुर्नचजज्वालपावकः॥३७॥स्वस्त्यस्तुलोकेभ्यइतिजजल्पुस्तेमहर्षयः ॥ संपेतुश्चात्रसंतप्तागंधर्वाःसहचारणैः ॥३८॥ अथराक्षससिंहस्यकृष्णान्कनकभूषणान् ॥ शरैश्चतुर्भिःसौमित्रिर्विव्याधचतुरोहयान् ॥ ३९ ॥

विरोधप्रविभागयोरिति कोशः। प्रतिसंधानं दृढतया मुष्टिसंयोजनं लक्ष्यप्रतिपादनं लक्ष्यभेदनम् ॥३०॥३१॥ अभिसंपन्ने व्याप्ते रूपाणि रूपवद्वस्तूनि न चकाशिरे न दृग्गोचराणीति भावः । रावणिश्चापि लक्ष्मणं प्राप्यायुध्यतामिति शेषः ॥३२॥ उग्राऽव्यवस्था तत्तद्बाणैरयुध्यद्वानरराक्षसवधरूपा भवति अभवदित्यर्थः । यत्तु अयमेनं निगृह्णाति स एनं वेत्यनिश्चयरूपा व्यवस्थेति व्याख्यानं तच्चिंत्यम् । तस्या अव्यवस्थाया उग्रत्वस्य निरूपयितुमशक्यत्वात् उग्रेति विशेषणवैयर्थ्याच्च ॥ ३३ ॥ ३४ ॥ प्रतिभयं भयंकरम् ॥ ३५ ॥ ३६ ॥ वाग्भिर्वागिंद्रियैः क्रव्यादा गृध्रादयः ॥ ३७ ॥ ३८ ॥ ३९ ॥

पीतेन स्वर्णरूषितेन संपूर्णायतमुक्तेन संपूर्णमाकर्णपर्यंतमायतेनाकृष्टेन ततो मुक्तेन ॥ ४० ॥ विचरिष्यतः रथसंचारं करिष्यतः तलशब्दानुनादिना तलं ज्याघातवारणं तस्य ज्याघट्टनजो यः शब्दस्तस्यानुनादो यस्यास्ति तेन ॥ ४१ ॥ ४२ ॥ ४३ ॥ हयेषु हयप्रेरणविषये व्यग्रहस्तं दृष्ट्वा तत्समये इति शेषः ॥ ४४ ॥ ४५ ॥ समरोद्धर्षं समरोत्साहं प्रजहौ त्यक्तवान् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ते निहत्येति । ऋषभादय इत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ वंशमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे नवतितमः सर्गः ॥ ९० ॥ कतकरी० ॥ ८२ ॥

ततोपरेणभल्लेनपीतेननिशितेनच ॥ संपूर्णायतमुक्तेनसुपत्रेणसुवर्चसा ॥ ४० ॥ महेंद्राशनिकल्पेनसूतस्यविचरिष्यतः ॥ सतेनबाणाशनिनातलशब्दानुनादिना ॥ ४१ ॥ लाघवाद्राघवःश्रीमाञ्शिरःकायादपाहरत् ॥ सयंतरिमहातेजाहतेमंदोदरीसुतः ॥ ४२ ॥ स्वयंसारथ्यमकरोत्पुनश्चधनुरस्पृशत् ॥ तदद्भुतमभूत्तत्रसारथ्यंपश्यतांयुधि ॥४३॥ हयेषुव्यग्रहस्तंतंविव्याधनिशितैःशरैः ॥ धनुष्यथपुनर्व्यग्रंहयेषुमुमुचेशरान् ॥४४॥ छिद्रेषुतेषुबाणौघैर्विचरंतमभीतवत् ॥ अर्दयामाससमरेसौमित्रिःशीघ्रकृत्तमः ॥ ४५ ॥ निहतंसारथिंदृष्ट्वासमरेरावणात्मजः ॥ प्रजहौसमरोद्धर्षंविषण्णःसबभूवह ॥ ४६ ॥ विषण्णवदनंदृष्ट्वाराक्षसंहरियूथपाः ॥ ततःपरमसंहृष्टालक्ष्मणंचाभ्यपूजयन् ॥ ४७ ॥ ततःप्रमाथीरभसःशरभोगंधमादनः ॥ अमृष्यमाणाश्चत्वारश्चक्रुर्वेगंहरीश्वराः ॥ ४८ ॥ तेचास्यहयमुख्येषुतूर्णमुत्पत्यवानराः ॥ चतुर्षुसुमहावीर्यानिपेतुर्भीमविक्रमाः ॥ ४९ ॥ तेषामधिष्ठितानांतैर्वानरैःपर्वतोपमैः ॥ मुखेभ्योरुधिरंव्यक्तंहयानांसमवर्तत ॥ ५० ॥ तेहयामथिताभग्नाव्यसवोधरणींगताः ॥ तेनिहत्यहयांस्तस्यप्रमथ्यचमहारथम् ॥ ५१ ॥ पुनरुत्पत्यवेगेनतस्थुर्लक्ष्मणपार्श्वतः ॥ ५२ ॥ सहताश्वादवप्लुत्यरथान्मथितसारथिः ॥ शरवर्षेणसौमित्रिमभ्यधावतरावणिः ॥ ॥ ५३ ॥ ततोमहेंद्रप्रतिमःसलक्ष्मणःपदातिनंतंनिहतैर्हयोत्तमैः ॥ सृजंतमाजौनिशिताञ्छरोत्तमान्भृशंतदाबाणगतैर्व्यदारयत् ॥ ५४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे नवतितमः सर्गः ॥ ९० ॥ सहताश्वोमहातेजाभूमौतिष्ठन्निशाचरः ॥ इंद्रजित्परमक्रुद्धःसंप्रजज्वालतेजसा ॥ १ ॥ तौधन्विनौजिघांसंतावन्योन्यमिषुभिर्भृशम् ॥ विजयेनाभिनिष्क्रांतौवनेगजवृषाविव ॥ २ ॥ निबर्हयंतश्चान्योन्यंतेराक्षसवनौकसः ॥ भर्तारंनजहुर्युद्धेसंपतंतस्ततस्ततः ॥ ३ ॥ ततस्तान्राक्षसान्सर्वान्हर्षयन्रावणात्मजः ॥ स्तुवानोहर्षमाणश्चइदंवचनमब्रवीत् ॥ ४ ॥ तमसाबहुलेनेमाःसंसक्ताःसर्वतोदिशः ॥ नेहविज्ञायतेस्वोवापरोवाराक्षसोत्तमाः ॥ ५ ॥ धृष्टंभवंतोयुध्यंतुहरीणांमोहनायवै ॥ अहंतुरथमास्थायआगमिष्यामिसंयुगे ॥ ६ ॥

॥ १ ॥ विजयेन विजयप्राप्तिरूपेण हेतुना अभिमुखतया युद्धार्थं प्रवृत्तावभूतामिति शेषः । गजवृषौ गजश्रेष्ठौ ॥ २ ॥ निबर्हयंतो मारयंतः भर्तारं स्वस्वभर्तारम् संपतंतः संगच्छमानाः ॥ ३ ॥ स्तुवान इत्यार्षम् । स्तुवन्नित्यर्थः ॥ ४ ॥ बहुलेन तमसा इमा दिशः संसक्ताः संवृताः एवं चास्माकं बलकरी रात्रिरागता ॥ ५ ॥ अतो भवंतो धृष्टं निर्भयं युध्यंतु मोहनाय मद्गमनापरिज्ञानाय त्वया किमर्थं गम्यते तत्राहाहं

त्विति ॥ ६ ॥ प्रविष्टे प्रवेष्टुमुपक्रांते न युध्येयुः मम नगरप्रवेशविघ्नार्थं यथा वानरा मया सह न युध्येरंस्तथा भवंतः कुर्वंत्वित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ हयज्ञेन अश्वहृदयज्ञेन आप्तं हितमुपदेष्टुं शीलमस्त्यस्य तेन ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ समर कोपेन रावणिसमरजन्यकोपेन ॥ १७ ॥ त्वरन्निव शीघ्रमेव तदपि द्वितीयं धनुरपि ॥ १८ ॥ १९ ॥ रक्ताः वाणानामपि रुधिरसंबं

तथाभवंतःकुर्वंतुयथेमेहिवनौकसः ॥ नयुध्येयुर्महात्मानःप्रविष्टेनगरंमयि ॥ ७ ॥ इत्युक्त्वारावणसुतोवंचयित्वावनौकसः ॥ प्रविवेशपुरींलंकांरथहे तोरमित्रहा ॥ ८ ॥ सरथंभूषयित्वाथरुचिरंहेमभूषितम् ॥ प्रासासिशरसंयुक्तंयुक्तंपरमवाजिभिः ॥ ९ ॥ अधिष्ठितंहयज्ञेनसूतेनाप्तोपदेशिना ॥ आरुरोहमहातेजारावणिःसमितिंजयः ॥ १० ॥ सराक्षसगणैर्मुख्यैर्वृतोमंदोदरीसुतः ॥ निर्ययौनगराद्वीरःकृतांतबलचोदितः ॥ ११ ॥ सोभिनिष्क्र म्यनगरादिंद्रजित्परमौजसा ॥ अभ्ययाज्जवनैरश्वैर्लक्ष्मणंसविभीषणम् ॥ १२ ॥ ततोरथस्थमालोक्यसौमित्रीरावणात्मजम् ॥ वानराश्चमहावीर्या राक्षसश्चविभीषणः ॥ १३ ॥ विस्मयंपरमंजग्मुर्लाघवात्तस्यधीमतः ॥ रावणिश्चापिसंक्रुद्धोरणेवानरयूथपान् ॥ १४ ॥ पातयामासवाणौघैःशतशो थसहस्रशः ॥ समंडलीकृतधनूरावणिःसमितिंजयः ॥ १५ ॥ हरीनभ्याहनत्क्रुद्धःपरंलाघवमास्थितः ॥ तेवध्यमानाहरयोनाराचैर्भीमविक्रमैः ॥ ॥ १६ ॥ सौमित्रिंशरणंप्राप्ताःप्रजापतिमिवप्रजाः ॥ ततःसमरकोपेनज्वलितोरघुनंदनः ॥ चिच्छेदकार्मुकंतस्यदर्शयन्पाणिलाघवम् ॥ १७ ॥ सो न्यत्कार्मुकमादायसज्जंचक्रेत्वरन्निव ॥ तदप्यस्यत्रिभिर्वाणैर्लक्ष्मणोनिरकृंतत ॥ १८ ॥ अथैनंछिन्नधन्वानमाशीविषविषोपमैः ॥ विव्याधोरसिसौ मित्रीरावणिंपंचभिःशरैः ॥ १९ ॥ तेतस्यकायंनिर्भिद्यमहाकार्मुकनिःसृताः ॥ निपेतुर्धरणींवाणारक्ताइवमहोरगाः ॥ २० ॥ सच्छिन्नधन्वारुधिरं वमन्वक्त्रेणरावणिः ॥ जग्राहकार्मुकश्रेष्ठंदृढज्यंवलवत्तरम् ॥ २१ ॥ सलक्ष्मणंसमुद्दिश्यपरंलाघवमास्थितः ॥ ववर्षशरवर्षाणिवर्षाणीवपुरंदरः ॥ ॥ २२ ॥ मुक्तान्द्रजितातत्तुशरवर्षमरिंदमः ॥ आवारयदसंभ्रांतोलक्ष्मणःसुदुरासदम् ॥२३॥ संदर्शयामासतदारावणिंरघुनंदनः ॥ असंभ्रांतोमहाते जास्तदद्भुतमिवाभवत् ॥ २४ ॥ ततस्तान्राक्षसान्सर्वांस्त्रिभिरेकैकमाहवे ॥ अविध्यत्परमक्रुद्धःशीघ्रास्त्रंसंप्रदर्शयन् ॥ राक्षसेंद्रस्तुतंचापिवाणौघैः समताडयत् ॥ २५ ॥ सोतिविद्धोवलवताशत्रुणाशत्रुघातिना ॥ असक्तंप्रेषयामासलक्ष्मणायवहूञ्छरान् ॥ २६ ॥ तानप्राप्ताञ्छितैर्वाणैश्चिच्छेदपर वीरहा ॥ सारथेरस्यचरणेरथिनोरथसत्तमः ॥ २७ ॥ शिरोजहारधर्मात्माभल्लेनानतपर्वणा ॥ असूतास्तेहयास्तत्ररथमूहुरविक्लवाः ॥ २८ ॥ मंडलान्यभिधावंतितदद्भुतमिवाभवत् ॥ अमर्षवशमापन्नःसौमित्रिर्दृढविक्रमः ॥ २९ ॥ प्रत्यविध्यद्धयांस्तस्यशरैर्वित्रासयन्रणे ॥ अमर्षमाण स्तत्कर्मरावणस्यसुतोरणे ॥ ३० ॥

धाद्रक्तत्वम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ संदर्शयामास स्वपौरुषमिति शेषः ॥ २४ ॥ ननु कथं सर्वराक्षसा इंद्रजिति युध्यति त्रिभिस्त्रिभिर्वाणैर्वेद्धुं शक्यास्तत्राह शीघ्रास्त्रमिति । प्रयोगमात्रेण सर्ववेधकमस्त्रं शीघ्रास्त्रम् । यद्वा भावप्रधानो निर्देशः अस्त्रविषयकशीघ्रप्रयोगसामर्थ्यरूपं शीघ्रास्त्रत्वं संप्रदर्शयन्नित्यर्थः ॥ २५ ॥ असक्तं अविरतम् ॥ २६ ॥ रथसत्तमो लक्ष्मणः ॥२७॥ असूता असारथयः अविक्लवा अना

कुद्धाः ॥ २८ ॥ २९ ॥ ३० ॥ कवचमागत्य प्राप्य विलयं जग्मुः पूर्वकवचस्य विशरणेपि कवचांतरं धृतमित्यवगम्यते ॥ ३१ ॥ एवं दर्शनात्तमभेद्यकवचं मत्वा कवचरहिते स्थाने ललाटे अविध्यत् ॥३२॥ ॥ ३३ ॥ ३४ ॥ शरासनं विकृष्येंद्रजितो वदने शरैर्विव्याधेति संबंधः ॥ ३५ ॥ विशिखैर्विशिष्टशिखैः शितैर्बाणैरिति यावत् ॥ ३६ ॥ ३७ ॥ जये कृतभावौ कृताभिप्रायौ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

विव्याधदशभिर्बाणैःसौमित्रिंरोमहर्षणम् ॥ तेतस्यवज्रप्रतिमाःशराःसर्वविषोपमाः ॥ विलयंजग्मुरागत्यकवचंकांचनप्रभम् ॥ ३१ ॥ अभेद्यकवचं मत्वालक्ष्मणंरावणात्मजः ॥ ललाटेलक्ष्मणंबाणैःसुपुंखैस्त्रिभिरिंद्रजित् ॥ ३२ ॥ अविध्यत्परमक्रुद्धःशीघ्रमस्त्रंप्रदर्शयन् ॥ तैःपृषत्कैर्ललाटस्थैः शुशुभेरघुनंदनः ॥ ३३ ॥ रणाग्रेसमरश्लाघीत्रिशृंगइवपर्वतः ॥ सतथाप्यर्दितोबाणैराक्षसेनतदामृधे ॥ ३४ ॥ तमाशुप्रतिविव्याधलक्ष्मणःपंचभिः शरैः॥विकृष्येंद्रजितोयुद्धेवदनेशुभकुंडले॥ ३५ ॥ लक्ष्मणेंद्रजितौवीरौमहाबलशरासनौ ॥ अन्योन्यंजघ्नतुर्वीरौविशिखैर्भीमविक्रमौ ॥ ३६ ॥ ततःशोणितदिग्धांगौलक्ष्मणेंद्रजितावुभौ ॥ रणेतौरेजतुर्वीरौपुष्पिताविवकिंशुकौ ॥ ३७ ॥ तौपरस्परमभ्येत्यसर्वगात्रेषुधन्विनौ ॥ घोरैर्विव्यधतुर्बाणैःकृतभावावुभौजये ॥ ३८ ॥ ततःसमरकोपेनसंयुतोरावणात्मजः ॥ विभीषणंत्रिभिर्बाणैर्विव्याधवदनेशुभे ॥ ३९ ॥ अयोमुखैस्त्रिभिर्विद्ध्वाराक्षसेंद्रंविभीषणम्॥ एकैकानभिविव्याधतान्सर्वान्हरियूथपान् ॥ ४० ॥ तस्मैदृढतरंक्रुद्धोजघानगदयाहयान् ॥ विभीषणोमहातेजारावणेःसुदुरात्मनः ॥ ४१ ॥ सहताश्वादवप्लुत्यरथान्मथितसारथिः ॥ अथशक्तिंमहातेजाःपितृव्यायमुमोचह ॥ ४२ ॥ तामापतंतींसंप्रेक्ष्यसुमित्रानंदवर्धनः ॥ चिच्छेदनिशितैर्बाणैर्दशधापातयद्भुवि ॥ ४३ ॥ तस्मैदृढधनुःक्रुद्धोहताश्वायविभीषणः ॥ वज्रस्पर्शसमान्पंचससर्जोरसिमार्गणान् ॥ ४४ ॥ तेतस्यकायं भित्त्वातुरुक्मपुंखानिमित्तगाः ॥ बभूवुर्लोहितादिग्धारक्ताइवमहोरगाः ॥ ४५ ॥ सपितृव्यस्यसंक्रुद्धइंद्रजिच्छरमाददे ॥ उत्तमंरक्षसांमध्येयमदत्तं महाबलम् ॥ ४६ ॥ तंसमीक्ष्यमहातेजामहेषुंतेनसंधितम् ॥ लक्ष्मणोप्याददेबाणमन्यद्भीमपराक्रमः ॥ ४७ ॥ कुबेरेणस्वयंस्वप्नेयद्दत्तममितात्मना ॥ दुर्जयंदुर्विषह्यंचसेंद्रैरपिसुरासुरैः ॥ ४८ ॥ तयोस्तुधनुषीश्रेष्ठेबाहुभिःपरिघोपमैः ॥ विकृष्यमाणेबलवत्क्रौंचाविवचुकूजतुः ॥ ४९ ॥ ताभ्यांतुधनुषिश्रेष्ठेसंहितौसायकोत्तमौ ॥ विकृष्यमाणौवीराभ्यांभृशंजज्वलतुःश्रिया ॥ ५० ॥ तौभासयंतावाकाशंधनुर्भ्यांविशिखौच्युतौ ॥ मुखेनमुखमाहत्यसन्निपेततुरोजसा ॥ ५१ ॥ सन्निपातस्तयोश्चासीच्छरयोर्घोररूपयोः ॥ सधूमविस्फुलिंगश्चतज्जोग्निर्दारुणोभवत् ॥५२॥ तौमहाग्रहसंकाशावन्योन्यंसन्निपत्यच ॥ संग्रामेशतधायातौमेदिन्यांचैवपेततुः ॥ ५३ ॥

॥ ४२ ॥ दशधा चिच्छेद भुवि अपातयच्च ॥ ४३ ॥ ४४ ॥ निमित्तगाः लक्ष्यगाः । वेध्यं लक्ष्यं शरव्यं च निमित्तं चेति कथ्यते । लोहितं रुधिरम् ॥ ४५ ॥ ४६ ॥ बाणशब्दोर्धर्चादिः ॥ ४७ ॥ अमितात्मना अपरिच्छिन्नमाहात्म्येन ॥ ४८ ॥ ४९ ॥ संहितौ योजितौ ॥ ५० ॥ सन्निपेततुः संघर्षं प्रापतुः ॥ ५१ ॥ बाणसन्निपाताज्जातस्तज्जः ॥ ५२ ॥ महाग्रहोंगारकशन्यादिः ॥ ५३ ॥

व्रीडितौ स्वस्वप्रयुक्तशरस्य मोघत्वदर्शनेन संजातलज्जौ । यद्यपि रावणेरेव व्रीडायुक्ता लक्ष्मणस्य तु तद्बाणनिवारणाय प्रयोक्तुः सार्थक्यसत्त्वेन व्रीडाभावस्तथापि तन्निराकरणपूर्वकं रिपुवधपर्यंतव्यापारेणोपादानात् तदभावेन तस्यापि लज्जेति बोध्यम् । छत्रिन्यायेन द्विवचनप्रयोग इति कतकः । जातरोषौ रामाविशेषे विभीषणे बाणः प्रमुक्त इति लक्ष्मणस्य रोषः लक्ष्मणस्तं परिहृतवानिति रावणे रोषः ॥ ५४ ॥ ॥ ५५ ॥ लोकं संक्षिपन्निव संहरन्निव ॥ ५६ ॥ शस्त्रं निवारितमिति पाठे शस्त्रशब्दोऽस्त्रपर्यायः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ भैरवमभिरुतं यस्मिंस्तादृशे भूतैः प्राणिभिः ॥ ६२ ॥

शरौप्रतिहतौदृष्ट्वाताबुभौरणमूर्धनि ॥ व्रीडितौजातरोषौचलक्ष्मणेंद्रजितौतदा ॥ ५४ ॥ ससंरब्धस्तुसौमित्रिरस्त्रंवारुणमाददे ॥ रौद्रंमहेंद्रजिद्युद्धे व्यसृजद्युद्धविष्ठितः ॥ ५५ ॥ तेनतद्विहतंशस्त्रंवारुणंपरमाद्भुतम् ॥ ततःक्रुद्धोमहातेजाइंद्रजित्समितिंजयः ॥ आग्नेयंसंदधेदीप्तंसलोकंसंक्षिपन्निव ॥ ५६ ॥ सौर्येणास्त्रेणतंवीरोलक्ष्मणःपर्यवारयत् ॥ अस्त्रंनिवारितंदृष्ट्वारावणिःक्रोधमूर्च्छितः ॥ ५७ ॥ आददेनिशितंबाणमासुरंशत्रुदारुणम् ॥ तस्माच्चापाद्विनिष्पेतुर्भास्वराःकूटमुद्गराः ॥ ५८ ॥ शूलानिचभुशुंड्यश्चगदाःखड्गाःपरश्वधाः ॥ तद्दृष्ट्वालक्ष्मणःसंख्येघोरमस्त्रंसुदारुणम् ॥ ५९ ॥ अवार्यंसर्वभूतानांसर्वशस्त्रविदारणम् ॥ माहेश्वरेणद्युतिमांस्तदस्त्रंप्रत्यवारयत् ॥ ६० ॥ तयोःसमभवद्युद्धमद्भुतंरोमहर्षणम् ॥ गगनस्थानिभूतानिलक्ष्मणंपर्यवारयन् ॥ ६१ ॥ भैरवाभिरुतेभीमेयुद्धेवानररक्षसाम् ॥ भूतैर्बहुभिराकाशंविस्मितैरावृतंबभौ ॥६२॥ ऋषयःपितरोदेवागंधर्वगरुडोरगाः ॥ शतक्रतुंपुरस्कृत्यररक्षुर्लक्ष्मणंरणे ॥ ६३ ॥ अथान्यंमार्गणश्रेष्ठंसंदधेराघवानुजः ॥ हुताशनसमस्पर्शंरावणात्मजदारुणम् ॥ ६४ ॥ सुपत्रमनुवृत्तांगंसुपर्वाणंसुसंस्थितम् ॥ सुवर्णविकृतंवीरःशरीरांतकरंशरम् ॥ ६५ ॥ दुरावारंदुर्विषमंराक्षसानांभयावहम् ॥ आशीविषविषप्रख्यंदेवसंघैःसमर्चितम् ॥ ६६ ॥ येनशक्रोमहातेजादानवानजयत्प्रभुः ॥ पुरादेवासुरेयुद्धेवीर्यवान्हरिवाहनः ॥ ६७ ॥ अथैंद्रमस्त्रंसौमित्रिःसंयुगेष्वपराजितम् ॥ शरश्रेष्ठंधनुःश्रेष्ठेविकर्षन्निदमब्रवीत् ॥६८॥ लक्ष्मीवाँल्लक्ष्मणोवाक्यमर्थसाधकमात्मनः ॥ धर्मात्मासत्यसंधश्चरामोदाशरथिर्यदि ॥ पौरुषेचाप्रतिद्वंद्वस्तदेनंजहिरावणिम् ॥ ६९ ॥ इत्युक्त्वाबाणमाकर्णंविकृष्यतमजिह्मगम् ॥ लक्ष्मणःसमरेवीरःससर्जेंद्रजितंप्रति ॥ ७० ॥ ऐंद्रास्त्रेणसमायुज्यलक्ष्मणःपरवीरहा ॥ ७१ ॥ तच्छिरःसशिरस्त्राणंश्रीमज्ज्वलितकुंडलम् ॥ प्रमथ्येंद्रजितःकायात्पातयामासभूतले ॥ ७२ ॥ तद्राक्षसतनूजस्यभिन्नस्कंधंशिरोमहत् ॥ तपनीयनिभंभूमौददृशेरुधिरोक्षितम् ॥ ७३ ॥

॥ ६३ ॥ सन्निहितैतैतदस्त्रेणैवायं वध्य इति निश्चित्यैंद्रास्त्रं संदधे इत्याह अथेति । अत्र प्रत्यस्त्रं रावणेर्ब्रह्मशापवशान्न बुद्ध्यारूढम् वस्तुतोस्य प्रत्यस्त्रं नास्त्येवेति कतकः ॥ ६४ ॥ अनुवृत्तांगं आनुपूर्व्यात्तनुत्ववद्वृत्तत्वगुणयुक्तमंगं यस्य सुसंस्थितं शोभनसंस्थानम सुवर्णविकृतं स्वर्णभूषितम् ॥ ६५ ॥ दुरावारं अस्त्रांतरैर्वारयितुमशक्यम् आशीविषत्वगुणकं यद्विषं महासर्पस्तत्प्रख्यं तत्सदृशम् देवसंघैः समर्चितं पूजितं देवराजीयत्वादेव ॥ ६६ ॥ ६७ ॥ ६८ ॥ अर्थसाधनं आत्मनः कार्यसिद्धिहेतुभूतमिदं वक्ष्यमाणवचनमस्त्राधिष्ठात्रीं देवतां प्रत्यब्रवीत् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ तपनीयनिभत्वे उपपत्तिः

रुधिरोक्षितमिति ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ व्यपास्तोविशषधर्मैरत एव गतजीवितः ॥ ८३ ॥ प्रशांतपीडाबहुलः प्रशांतबहुलपीडः ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ प्रशशाम रज इति शेषः ॥ ८७ ॥ आपः शुद्धाः प्रसन्ना देवदानवाः दानवानामपि तच्छत्रुत्वात्तेषामपि हर्षः आजग्मुरिति देवदानवाइत्यंतुकर्षः ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ लब्ध

हतःसनिपपाताथधरण्यांरावणात्मजः ॥ कवचीसशिरस्त्राणोविप्रविद्धशरासनः ॥ ७४ ॥ चुक्रुशुस्तेततःसर्वेवानराःसविभीषणाः ॥ हृष्यंतेनिहतेत स्मिन्देवावृत्रवधेयथा ॥ ७५ ॥ अथांतरिक्षेभूतानामृषीणांचमहात्मनाम् ॥ जज्ञेथजयसन्नादोगंधर्वाप्सरसामपि ॥ ७६ ॥ पतितंसमभिज्ञायराक्षसी सामहाचमूः ॥ वध्यमानादिशोभेजेहरिभिर्जितकाशिभिः ॥ ७७ ॥ वानरैर्वध्यमानास्तेशस्त्राण्युत्सृज्यराक्षसाः ॥ लंकामभिमुखाःसन्नुर्भ्रष्टसंज्ञाः प्रधाविताः ॥ ७८ ॥ दुद्रुवुर्बहुधाभीताराक्षसाःशतशोदिशः ॥ त्यक्त्वाप्रहरणान्सर्वेपट्टिशासिपरश्वधान् ॥ ७९ ॥ केचिल्लंकांपरित्रस्ताःप्रविष्टावानरा र्दिताः ॥ समुद्रेपतिताःकेचित्केचित्पर्वतमाश्रिताः ॥ ८० ॥ हतमिंद्रजितंदृष्ट्वाशयानंचरणक्षितौ ॥ राक्षसानांसहस्रेषुनकश्चित्प्रत्यदृश्यत ॥ ८१ ॥ यथास्तंगतआदित्येनावतिष्ठंतिरश्मयः ॥ तथातस्मिन्निपतितेराक्षसास्तेगतादिशः ॥ ८२ ॥ शांतरश्मिरिवादित्योनिर्वाणइवपावकः ॥ बभूवसम हावाहुर्व्यपास्तगतजीवितः ॥ ८३ ॥ प्रशांतपीडाबहुलोविनष्टारिःप्रहर्षवान् ॥ बभूवलोकःपतितेराक्षसेंद्रसुतेतदा ॥ ८४ ॥ हर्षंचशक्रोभगवान्सहसर्वै र्महर्षिभिः ॥ जगामनिहतेतस्मिन्राक्षसेपापकर्मणि ॥ ८५ ॥ आकाशेचापिदेवानांशुश्रुवेदुंदुभिस्वनः ॥ नृत्यद्भिरप्सरोभिश्चगंधर्वैश्चमहात्मभिः ॥ ॥ ८६ ॥ ववर्षुःपुष्पवर्षाणितदद्भुतमिवाभवत् ॥ प्रशशामहतेतस्मिन्राक्षसेक्रूरकर्मणि ॥ ८७ ॥ शुद्धाआपोनभश्चैवजहृषुर्देवदानवाः ॥ आजग्मुः पतितेतस्मिन्सर्वलोकभयावहे ॥ ८८ ॥ ऊचुश्चसहितास्तुष्टादेवगंधर्वदानवाः ॥ विज्वराःशांतकलुषाब्राह्मणाविचरंत्विति ॥ ८९ ॥ ततोभ्यनंदन्सं हृष्टाःसमरेहरियूथपाः ॥ तमप्रतिबलंदृष्ट्वाहतंनैर्ऋतपुंगवम् ॥ ९० ॥ विभीषणोहनूमांश्चजांबवांश्चर्क्षयूथपः ॥ विजयेनाभिनंदंतस्तुष्टुवुश्चापिलक्ष्मणम् ॥ ९१ ॥ क्ष्वेडंतश्चप्लवंतश्चगर्जन्तश्चप्लवंगमाः ॥ लब्धलक्षारघुसुतंपरिवार्योपतस्थिरे ॥ ९२ ॥ लांगूलानिप्रविध्यंतःस्फोटयंतश्चवानराः ॥ लक्ष्मणो जयतीत्येववाक्यंविश्रावयंस्तदा ॥ ९३ ॥ अन्योन्यंचसमाश्लिष्यहरयोहृष्टमानसाः ॥ चक्रुरुच्चावचगुणाराघवाश्रयसत्कथाः ॥ ९४ ॥ तदसुकरमथा भिवीक्ष्यहृष्टाःप्रियसुहृदोयुधिलक्ष्मणस्यकर्म ॥ परममुपलभन्मनःप्रहर्षंविनिहतमिंद्ररिपुंनिशम्यदेवाः ॥ ९५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकनवतितमः सर्गः ॥ ९१ ॥ रुधिरक्लिन्नगात्रस्तुलक्षणःशुभलक्ष्मणः ॥ बभूवहृष्टस्तंहत्वाशत्रुजेतारमाहवे ॥ १ ॥ ततःसजांबवंतं चहनूमंतंचवीर्यवान् ॥ सन्निपत्यमहातेजास्तांश्चसर्वान्वनौकसः ॥ २ ॥ आजगामततःशीघ्रंयत्रसुग्रीवराघवौ ॥ विभीषणमवष्टभ्यहनूमंतंचलक्ष्मणः ॥ ३ ॥

लक्षाः प्राप्तहर्षावसराः रलयोरभेदात्प्राप्तरक्षा इत्यपि रघुसुतं रघुवंशजनम् ॥ ९२ ॥ विश्रावयन् व्यश्रावयन् ॥ ९३ ॥ ९४ ॥ उपलभन् उपालभन् ॥ ९५ ॥ मेथमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीय रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकनवतितमः सर्गः ॥ ९१ ॥ कनकरी० ॥ ८३ ॥ रुधिरेति ॥ १ ॥ सन्निपत्य संगृह्य ॥ २ ॥ युद्धव्रणजपीडावशाद्विभीषणं हनूमंतं चावष्टभ्य अवलंब्येत्यर्थः ॥ ३ ॥

अभिक्रम्य प्रदक्षिणीकृत्य शक्रस्येंद्रानुजो यथा यथोपेंद्र इंद्रसमीपे तिष्ठति तद्वत् इंद्रस्येव बृहस्पतिरितिपाठे गुणप्रधानभावेनावस्थानमात्रे दृष्टांत इत्यर्थः ॥ ४ ॥ निघ्नन्निति विभीषण इत्याकर्षः हृष्टो विभीषणः संतु ष्टागमनेनैवेंद्रजिद्वधं निघ्नन् बोधयन्निव निकटमागत्य राघवाय सामान्यत इंद्रजिद्वधमाचचक्षे ॥ ५ ॥ ततः किंकर्तकोवध इत्याकांक्षायामाह रावणेरिति छिन्नमिति न्यवेदयत् ॥ ६ ॥ ७ ॥ जितमित्युपधारय इदानीमेवास्माभिरिति शेषः ॥ ८ ॥ लज्जमानं भ्रातुः सन्निधौ एवं कृतमिति वक्तुं लज्जया युतम् क्रियाबाहुल्याच्चैतेषु श्लोकेषु पुनःपुनः कर्मपदप्रयोगः अंकमारोप्य अंके उपवेशनायाकृष्य ॥ ९ ॥ अवपीडितं शस्त्रव्रणैरिति शेषः यद्वावपीडितं गाढमालिंग्य ॥ १० ॥ शस्तं कृत्तगात्रम् ॥ ११ ॥ १२ ॥ दुष्करकर्मणा इतरदुष्करपौरुषेण त्वयेति शेषः पुत्रे हते रावणमद्य हतमेव मन्ये तद्वधस्येपत्करत्वादिति भावः ॥

ततोराममभिक्रम्यसौमित्रिरभिवाद्यच ॥ तस्थौभ्रातृसमीपस्थःशक्रस्येंद्रानुजोयथा ॥ ४ ॥ निघ्नन्निवचागत्यराघवायमहात्मने ॥ आचचक्षेतदावीरोघोरमिंद्रजितोवधम् ॥ ५ ॥ रावणेस्तुशिरश्छिन्नंलक्ष्मणेनमहात्मना ॥ न्यवेदयतरामायतदाहृष्टोविभीषणः ॥ ६ ॥ श्रुत्वैवतुमहावीर्योलक्ष्मणेनेंद्रजिद्वधम् ॥ प्रहर्षमतुलंलेभेवाक्यंचेदमुवाचह ॥ ७ ॥ साधुलक्ष्मणतुष्टोस्मिकर्मचासुकरंकृतम् ॥ रावणेर्हिविनाशेनजितमित्युपधारय ॥ ८ ॥ सतंशिरस्युपाघ्रायलक्ष्मणंकीर्तिवर्धनम् ॥ लज्जमानंबलात्स्नेहादंकमारोप्यवीर्यवान् ॥ ९ ॥ उपवेश्यतमुत्संगेपरिष्वज्यावपीडितम् ॥ भ्रातरंलक्ष्मणंस्निग्धंपुनःपुनरुदैक्षत ॥ १० ॥ शल्यसंपीडितंशस्तंनिःश्वसंतंतुलक्ष्मणम् ॥ रामस्तुदुःखसंततंतंतुनिःश्वासपीडितम् ॥११॥ मूर्ध्निचैनमुपाघ्रायभूयःसंस्पृश्यचत्वरन् ॥ उवाचलक्ष्मणंवाक्यमाश्वास्यपुरुषर्षभः ॥ १२ ॥ कृतंपरमकल्याणंकर्मदुष्करकर्मणा ॥ अद्यमन्येहतेपुत्रेरावणंनिहतंयुधि॥१३॥ अद्याहंविजयीशत्रौहतेतास्मिन्दुरात्मनि ॥ रावणस्यनृशंसस्यदिष्ट्यावीरत्वयारणे ॥ १४ ॥ छिन्नोहिदक्षिणोबाहुःसहितस्यव्यपाश्रयः ॥ विभीषणहनूमद्भ्यांकृतंकर्ममहद्रणे ॥ १५ ॥ अहोरात्रैस्त्रिभिर्वीरःकथंचिद्विनिपातितः ॥ निरमित्रःकृतोस्म्यद्यनिर्यास्यतिहिरावणः ॥ १६ ॥ बलव्यूहेनमहतानिर्यास्यतिहिरावणः ॥ बलव्यूहेनमहताश्रुत्वापुत्रंनिपातितम् ॥ १७ ॥ तंपुत्रवधसंततंनिर्यांतंराक्षसाधिपम् ॥ बलेनावृत्यमहतानिहनिष्यामिदुर्जयम् ॥ १८ ॥ त्वयालक्ष्मणनाथेनसीताचपृथिवीचमे ॥ नदुष्प्रापाहतेतास्मिन्शक्रजेतरिचाहवे ॥ १९ ॥ सतंभ्रातरमाश्वास्यपरिष्वज्यचराघवः ॥ रामःसुषेणंमुदितःसमाभाष्येदमब्रवीत् ॥ २० ॥ विशल्योयंमहाप्राज्ञःसौमित्रिर्मित्रवत्सलः ॥ यथाभवतिसुस्वस्थस्तथात्वंसमुदाचर ॥ २१ ॥ विशल्यःक्रियतांक्षिप्रंसौमित्रिर्मित्रवत्सलः ॥ ऋक्षवानरसैन्यानांशूराणांद्रुमयोधिनाम् ॥ २२ ॥ येचाप्यन्येत्रयुध्यंतिसशल्यात्रणिनस्तथा ॥ तेपिसर्वेप्रयत्नेनाक्रियतांसुखिनस्तथा ॥ २३ ॥

॥ १३ ॥ १४ ॥ व्यपाश्रयः अवलंबनभूतः एवं लक्ष्मणमाश्वास्य विभीषणादीनप्याश्वासयति विभीषणेनेति ॥ १५ ॥ अहोरात्रैस्त्रिभिरिति दशम्यां चतुर्थप्रहरे आरंभात् त्रयोदश्यां चतुर्थप्रहरे वधादिति भावः अद्य निरमित्रः कृतोस्मि कथं रावणे जीवति निरमित्रत्वं तत्राह निर्यास्यतीति अवश्यं निर्यास्यति ॥ १६ ॥ १७ ॥ निर्यांतं च तं महता बलेन सहजेनावृत्याक्रम्य निहनिष्यामि ॥ १८ ॥ हे लक्ष्मण नाथेन उपलालनार्थं नाथशब्दप्रयोगः ॥१९॥ समाभाष्य सुषेणेत्येवं संबोध्य ॥२०॥ विशल्य इति ओषधिपर्वतानयनोत्तरमोषध्यः सुषेणेन संगृह्य स्थापिता इत्यनेन ज्ञायते ॥ २१ ॥ २२ ॥ ये वानराः सशल्या

मायानामभिज्ञातस्य तद्विषयज्ञानवतः । अभिज्ञस्तस्येतिपाठेप्ययमेवार्थः ॥ २३ ॥ अन्यत्कार्मुकश्रेष्ठम् । देवानुग्रहप्राप्तं परमित्यर्थः ॥ २४ ॥ सशरी प्रशस्तशरवान् वामचापभृद्वामहस्तेन चापभृत् ॥ २५ ॥ रावणिं निर्भिद्यासक्ताः संतो लंकामभिपतिष्यंति ॥ २६ ॥ २७ ॥ एवमुक्त्वा त्विति । स एव मुक्त्वेति पाठे स लक्ष्मणः स एव लक्ष्मणस्त्वरितं ययाविति तच्छन्दद्वयनिर्वाह इति तीर्थः ॥ २८ ॥ २९ ॥ ३० ॥ त्वरितं ययौ लक्ष्मणमनुययावित्यर्थः ॥ ३१ ॥ पथि विष्ठितं हनुमता सीतावधवृत्तांतनिवेदनार्थमागमनसमये द्वाररक्षार्थं पथि स्थापितमित्यर्थः ॥ ३२ ॥ ३३ ॥ मायायोगं माययैव योगो युद्धनयोपायो यस्य तमिंद्रजितं प्राप्य ब्रह्मविधानेन निकुंभिलामसंप्राप्त इत्याद्युक्तब्रह्मवरदानप्रकारेण तं विजेतुं तस्थौ । रघुनंदनो लक्ष्मणः । ब्रह्मविमानेनेतिपाठे ब्रह्मणो भगवतस्तेजोंशोहमस्मीति विशिष्य

अयंत्वांसचिवैःसार्धंमहात्मारजनीचरः ॥ अभिज्ञस्तस्यमायानांपृष्ठतोनुगमिष्यति ॥ २३ ॥ राघवस्यवचःश्रुत्वालक्ष्मणःसविभीषणः ॥ जग्राहकार्मुकश्रेष्ठमन्यद्भीमपराक्रमः ॥ २४ ॥ सन्नद्धःकवचीखड्गीसशरीवामचापभृत् ॥ रामपादावुपस्पृश्यहृष्टःसौमित्रिरब्रवीत् ॥ २५ ॥ अद्यमत्कार्मुकोन्मुक्ताःशरानिर्भिद्यरावणिम् ॥ लंकामभिपतिष्यंतिहंसाःपुष्करिणीमिव ॥ २६ ॥ अद्यैवतस्यरौद्रस्यशरीरंमामकाःशराः ॥ विधमिष्यंतिभित्त्वातंमहाचापगुणच्युताः ॥ २७ ॥ एवमुक्त्वातुवचनंद्युतिमान्भ्रातुरग्रतः ॥ सरावणिवधाकांक्षीलक्ष्मणस्त्वरितंययौ ॥ २८ ॥ सोभिवाद्यगुरोःपादौकृत्वाचापिप्रदक्षिणम् ॥ निकुंभिलामभिययौचैत्यंरावणिपालितम् ॥ २९ ॥ विभीषणेनसहितोराजपुत्रःप्रतापवान् ॥ कृतस्वस्त्ययनोभ्रात्रालक्ष्मणस्त्वरितोययौ ॥ ३० ॥ वानराणांसहस्रैस्तुहनूमान्बहुभिर्वृतः ॥ विभीषणश्चसामात्योलक्ष्मणंत्वरितंययौ ॥ ३१ ॥ महताहरिसैन्येनसवेगमभिसंवृतः ॥ ऋक्षराजबलंचैवददर्शपथिविष्ठितम् ॥ ३२ ॥ सगत्वादूरमध्वानंसौमित्रिर्मित्रनंदनः ॥ राक्षसेंद्रबलंदूरादपश्यद्व्यूहमाश्रितम् ॥ ३३ ॥ ससंप्राप्यधनुष्पाणिर्मायायोगमरिंदमः ॥ तस्थौब्रह्मविधानेनविजेतुंरघुनंदनः ॥ ३४ ॥ विभीषणेनसहितोराजपुत्रःप्रतापवान् ॥ अंगदेनचवीरेणतथानिलसुतेनच ॥ ३५ ॥ विविधममलशस्त्रभास्वरंतद्ध्वजगहनंगहनंमहारथैश्च ॥ प्रतिभयतममप्रमेयवेगंतिमिरमिवद्विषतांबलंविवेश ॥ ३६ ॥ इत्यार्षे श्रीमद्रा० वाल्मी०आदिकाव्ये युद्धकांडे पंचाशीतितमःसर्गः ॥ ८५ ॥ अथतस्यामवस्थायांलक्ष्मणंरावणानुजः ॥ परेषामहितंवाक्यमर्थसाधकमब्रवीत् ॥ १ ॥ यदेतद्राक्षसानीकंमेघश्यामंविलोक्यते ॥ एतदायोध्यतांशीघ्रंकपिभिश्चशिलायुधैः ॥२॥ तस्यानीकस्यमहतोभेदनेयतलक्ष्मण ॥ राक्षसेंद्रसुतोप्यत्रभिन्नेदृश्योभविष्यति ॥ ३ ॥

जायमानेन ध्यानेन शत्रुं जेतुं तस्थौ संकटकाले तादृशध्यानस्य तस्य निसर्गसिद्धत्वादिति कतकः ॥ ३४ ॥ स लक्ष्मणो विभीषणादिभिः सहोच्यमानगुणं द्विषतां बलं विवेश । प्रतिभयतममतिशयेन भयंकरम् ॥ ३५ ॥ ३६ ॥ वर्द्धमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचाशीतितमः सर्गः ॥ ८५ ॥ कतकरी० ॥ ७८ ॥ अथ तस्यामवस्थायां रक्षार्थं सेनां निवेश्येंद्रजितो यागकाले परेषां शत्रूणाम् अहितं नाशकरं स्वेषामर्थसाधकम् ॥ १ ॥ एतत्कपिभिरायोध्यताम् ॥ २ ॥ हे लक्ष्मण तस्य तत्परस्थितस्य महतोनीकस्य भेदने त्वं यत यत्नं कुरु ॥ ३ ॥

एतत्कर्म होमकर्म यावन्न समाप्यते तावदाश्वभिद्रव रावणिमित्यन्वयः ॥ ४ ॥ मायापरम् अधार्मिकमितिच्छेदः ॥ ५ ॥ राक्षसेंद्रसुतं प्रति तत्प्राप्तिमुद्दिश्य तत्सेनायां ववर्षेत्यर्थः ॥ ६ ॥७॥८॥९॥१०॥ ते शस्त्राणि निवेशयंतो विकृताननबाहवः संतः सुमहद्भयं चक्रुः । राक्षसा वानरेंद्रेष्वितिपाठः ॥ ११ ॥ १२ ॥ १३ ॥ विषण्णं श्रुत्वा यागभूमिस्थ इति शेषः । अननुष्ठिते यागस्थानाप्राप्त्या असमाप्ते । स स्वकर्म

सत्वमिंद्राशानिप्रख्यैःशरैरवकिरन्परान् ॥ अभिद्रवाशुयावद्वैनैतत्कर्मसमाप्यते ॥ ४ ॥ जहिवीरदुरात्मानंमायापरमधार्मिकम् ॥ रावणिंक्रूरकर्माणंसर्वलोकभयावहम् ॥५॥ विभीषणवचःश्रुत्वालक्ष्मणःशुभलक्षणः ॥ ववर्षशरवर्षेणराक्षसेंद्रसुतंप्रति ॥६॥ ऋक्षाःशाखामृगाश्चैवद्रुमप्रवरयोधिनः ॥ अभ्यधावंतसहितास्तदनीकमवस्थितम् ॥ ७ ॥ राक्षसाश्चशितैर्बाणैरसिभिःशक्तितोमरैः ॥ अभ्यवर्ततसमरेकपिसैन्यजिघांसवः ॥८॥ ससंप्रहारस्तुमुलःसंजज्ञेकपिरक्षसाम् ॥ शब्देनमहतालंकांनादयन्वैसमंततः ॥९॥ शस्त्रैश्चविविधाकारैःशितैर्बाणैश्चपादपैः ॥ उद्यतैर्गिरिशृंगैश्चघोरैराकाशमावृतम् ॥ १० ॥ राक्षसावानरेंद्रेषुविकृताननबाहवः ॥ निवेशयंतःशस्त्राणिचक्रुस्तेसुमहद्भयम् ॥ ११ ॥ तथैवसकलैर्वृक्षैर्गिरिशृंगैश्चवानराः ॥ अभिजघ्नुर्निजघ्नुश्चसमरेसर्वराक्षसान् ॥ १२ ॥ ऋक्षवानरमुख्यैश्चमहाकायैर्महाबलैः ॥ रक्षसांयुध्यमानानांमहद्भयमजायत ॥ १३ ॥ स्वमनीकंविषण्णंतुश्रुत्वाशत्रुभिरर्दितम् ॥ उदतिष्ठतदुर्धर्षःसकर्मण्यननुष्ठिते ॥ १४ ॥ वृक्षांधकारान्निर्गम्यजातक्रोधःसरावणिः ॥ आरुरोहरथंसज्जंपूर्वयुक्तंसुसंयतम् ॥ १५ ॥ सभीमकार्मुकशरःकृष्णांजनचयोपमः ॥ रक्तास्यनयनोभीमोबभौमृत्युरिवांतकः ॥१६॥ दृष्ट्वैवतुरथस्थंतंपर्यवर्तततद्बलम् ॥ रक्षसांभीमवेगानांलक्ष्मणेनयुयुत्सताम् ॥ १७ ॥ तस्मिंस्तुकालेहनुमानरुजत्सदुरासदम् ॥ धरणीधरसंकाशोमहावृक्षमरिंदमः ॥ १८ ॥ सराक्षसानांतत्सैन्यंकालाग्निरिवनिर्दहन् ॥ चकारबहुभिर्वृक्षैर्निःसंज्ञंयुधिवानरः ॥१९॥ विध्वंसयंतंतरसादृष्ट्वैवपवनात्मजम् ॥ राक्षसानांसहस्राणिहनूमंतमवाकिरन् ॥ ॥२० ॥ शितशूलधराःशूलैरसिभिश्चासिपाणयः ॥ शक्तिहस्ताश्चशक्तीभिःपट्टिशैःपट्टिशायुधाः ॥ २१ ॥ परिघैश्चगदाभिश्चकुंतैश्चशुभदर्शनैः ॥ शतशश्चशतघ्नीभिरायसैरपिमुद्गरैः ॥ २२ ॥ घोरैःपरशुभिश्चैवभिंदिपालैश्चराक्षसाः ॥ मुष्टिभिर्वज्रकल्पैश्चतलैरशनिसन्निभैः ॥ २३ ॥ अभिजघ्नुःसमासाद्यसमंतात्पर्वतोपमम् ॥ तेषामपिचसंक्रुद्धश्चकारकदनंमहत् ॥ २४ ॥ सददर्शकपिश्रेष्ठमचलोपममिंद्रजित् ॥ सूदमानमसंत्रस्तममित्रान्पवनात्मजम् ॥ २५ ॥ ससारथिमुवाचेदंयाहियत्रैषवानरः ॥ क्षयमेवहिनःकुर्याद्राक्षसानामुपेक्षितः ॥ २६ ॥

णीतिपाठेऽक्षराधिक्यमार्षम् ॥ १४ ॥ वृक्षांधकारान्निकुंभिलाक्षेत्रीयात् ॥ इदं निःसरणं दशम्यां सायाह्ने ॥ १५ ॥ १६ ॥ पर्यवर्तत तद्बलं राक्षसबलमित्यर्थः ॥ १७ ॥ १८ ॥ राक्षसानां तत्सैन्यं हनूमान्निःसंज्ञं चकार ॥ १९ ॥ २० ॥ असिपाणयोसिभिः शक्तिहस्ताः शक्तिभिरित्यादिप्रकारेणोह्यम् । शक्तीभिरित्यत्र दीर्घ आर्षः ॥ २१॥ २२ ॥ २३॥२४॥२५॥ नो राक्षसानां मत्संबंधिनां राक्षसानाम् ॥२६॥

इंद्रजितं वहन्प्रापयन् यत्र मारुतिस्तेन तत्प्राप्तिमार्गेण ययौ ॥ २७ ॥ २८ ॥ २९ ॥३०॥ यदि द्वंद्वं ददासि इति शेषः । तर्हि बाहुभ्यां युध्यस्व ॥३१॥ हनूमंतं जिघांसंतं तद्वधे सर्वात्मना सन्नद्धम् ॥३२॥ यो वासवजेता यस्य दर्शनं तवापेक्षितं स एष रथमास्थाय हनूमंतं जिघांसति ॥ ३३ ॥ तमिमं रावणिं दृष्टमप्रतिमसंस्थानैरनुपमस्वरूपैः शरैर्जहि ॥ ३४ ॥ ३५ ॥ शैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षडशीतितमः सर्गः ॥८६॥ कतकरी० ॥ ७९ ॥ एवमिति । जातहर्षो यागासमाप्त्या ब्रह्मवचनादवश्यं मरिष्यतीति संतुष्टो धनुष्पाणिं तं लक्ष्मणमादाय जगामेंद्र

इत्युक्तःसारथिस्तेनययौयत्रसमारुतिः ॥ वहन्परमदुर्धर्षंस्थितमिंद्रजितंरथे ॥ २७ ॥ सोभ्युपेत्यशरान्खड्गान्पट्टिशासिपरश्वधान् ॥ अभ्यवर्षतदुर्धर्षः कपिमूर्धनिराक्षसः ॥ २८ ॥ तानिशस्त्राणिघोराणिप्रतिगृह्यसमारुतिः ॥ रोषेणमहताविष्टोवाक्यंचेदमुवाचह ॥ २९ ॥ युध्यस्वयदिशूरोसिरावणात्मजदुर्मते ॥ वायुपुत्रंसमासाद्यनजीवन्प्रतियास्यसि ॥ ३० ॥ बाहुभ्यांसंप्रयुध्यस्वयदिमेद्वंद्वमाहवे ॥ वेगंसहस्वदुर्बुद्धेततस्त्वंरक्षसांवरः ॥ ३१ ॥ हनूमंतंजिघांसंतंसमुद्यतशरासनम् ॥ रावणात्मजमाचष्टेलक्ष्मणायविभीषणः ॥ ३२ ॥ यःसवासवनिर्जेतारावणस्यात्मसंभवः ॥ सएषरथमास्थायहनूमंतंजिघांसति ॥ ३३ ॥ तमप्रतिमसंस्थानैःशरैःशत्रुनिवारणैः ॥ जीवितांतकरैर्घोरैःसौमित्रेरावणिंजहि ॥ ३४ ॥ इत्येवमुक्तस्तुतदामहात्माविभीषणेनारिविभीषणेन ॥ ददर्शतंपर्वतसन्निकाशंरथस्थितंभीमबलंदुरासदम् ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वा०आ० युद्धकांडे षडशीतितमः सर्गः ॥ ८६ ॥ एवमुक्त्वातुसौमित्रिंजातहर्षोविभीषणः ॥ धनुष्पाणिंतमादायत्वरमाणोजगामसः ॥ १ ॥ अविदूरंततोगत्वाप्रविश्यतुमहद्वनम् ॥ अदर्शयतत्तत्कर्मलक्ष्मणायविभीषणः ॥ २ ॥ नीलजीमूतसंकाशंन्यग्रोधंभीमदर्शनम् ॥ तेजस्वीरावणभ्रातालक्ष्मणायन्यवेदयत् ॥ ३ ॥ इहोपहारंभूतानांबलवान्रावणात्मजः ॥ उपहृत्यततःपश्चात्संग्राममभिवर्तते ॥ ४ ॥ अदृश्यःसर्वभूतानांततोभवतिराक्षसः ॥ निहंतिसमरेशत्रून्बध्नातिचशरोत्तमैः ॥ ५ ॥ तमप्रविष्टंन्यग्रोधंबलिनंरावणात्मजम् ॥ विध्वंसयशरैर्दीप्तैःसरथंसाश्वसारथिम् ॥ ६ ॥ तथेत्युक्त्वामहातेजाःसौमित्रिर्मित्रनंदनः ॥ बभूवावस्थितस्तत्रचित्रंविस्फारयन्धनुः ॥ ७ ॥ सरथेनाग्निवर्णेनबलवान्रावणात्मजः ॥ इंद्रजित्कवचीखड्गीसध्वजःप्रत्यदृश्यत ॥८॥ तमुवाचमहातेजाःपौलस्त्यमपराजितम् ॥ समाह्वयेत्वांसमरेसम्यग्युद्धंप्रयच्छमे ॥ ९ ॥ एवमुक्तोमहातेजामनस्वीरावणात्मजः ॥ अब्रवीत्परुषंवाक्यंतत्रदृष्ट्वाविभीषणम् ॥ १० ॥

जित्संमुखे इति शेषः ॥ १ ॥ अविदूरमल्पमार्गं गत्वा महद्वनं निकुंभिलावनं प्रविश्य तत्ररयं तत्कर्म होमकर्मस्थानम् ॥२॥३॥ भूतानां रजस्तमःप्रधानभूतगणानामुपहारमुपहृत्य दत्त्वा ॥४॥५॥ न्यग्रोधमप्रविष्टं बहिर्युद्धायनिर्गतं पुनस्तत्राप्रविष्टमेव जहि तथैव तस्य वरदानादिति भावः ॥६॥ तत्र न्यग्रोधद्वारे ॥ ७ ॥ प्रत्यदृश्यत लक्ष्मणधनुःशब्दं श्रुत्वा तत्र प्रतिनिवृत्त इति भावः ॥८॥९॥ महातेजा लक्ष्मणः ॥ १० ॥

इह राक्षसीयास्मत्कुले जातः संवृद्धश्चेति स्नातानुलिप्तवत्समासः । पुत्रस्य पुत्राय॥ ११ ॥न जातिः न जात्यभिमानः प्रमाणं कर्तव्याकर्तव्यमर्यादाकारणम् । सौदर्यं सोदरत्वम्॥ १२॥ १३॥शिथिलया कार्याकार्यविवेकास मर्थया बुद्ध्या एतन्महदंतरं स्वजनत्यागपरजनाश्रयणजनितदोषतारतम्यं न वेत्सि तदेव, दार्ढ्याय पुनराह क्वचेति । स्वजनसंवासस्तत्साध्यश्रेयःप्राप्तिरित्यर्थः । जन्मकर्मादिना यः परस्तदाश्रयं प्राप्य नीचो नीचपराश्रयः मयूरव्यंसकादित्वात्समासः ॥ १४॥ सत्यमेवं यदि परो नीचः स्यात्तत्राह गुणवान्वेति । यः परः पर एव स इति । स्वकुलप्रयुक्तव्यवहारे प्राप्ते परोनंतर्भूत एव भवतीत्यर्थः ॥ १५॥ किंच परपक्षाश्रितस्यांते नाश एवेत्याह य इति ॥ १६॥ इयं निरनुक्रोशता होमविघातपूर्वं लक्ष्मणस्य न्यग्रोधप्रवेशकरणेन मद्वधविषया निर्दयता यादृशी अतिघोरा ते तवास्ति तद्विषयं पौरुषं पुरुषयत्नः स्वजनेनैकेन त्वयैव कर्तुं शक्यं नान्येन केनापि ॥ १७॥ मच्छीलं मत्स्वभावं जानन्नप्यजानन्निव किं विकत्थसे ॥ १८ ॥ अतोऽसाधो गौरवात्पितृव्यत्वगौरवमाश्रित्य मद्विषयं पारुष्यं त्यज । यद्वा शूरोहमिति गौरवाद्धेतोर्यत्पारुष्यं तत्त्यज अथ त्वं जातसंवृद्ध इत्यस्यो

इहत्वंजातसंवृद्धःसाक्षाद्भ्रातापितुर्मम ॥ कथंद्रुह्यसिपुत्रस्यपितृव्योममराक्षस ॥ ११ ॥ नजातित्वंनसौहार्दंनजातिस्तवदुर्मते ॥ प्रमाणंनचसौंदर्यं नधर्मोधर्मदूषण ॥ १२ ॥ शोच्यस्त्वमसिदुर्बुद्धेनिंदनीयश्चसाधुभिः ॥ यस्त्वंस्वजनमुत्सृज्यपरभृत्यत्वमागतः ॥ १३ ॥ नैतच्छिथिलयाबुद्ध्या त्वंवेत्सिमहदंतरम् ॥ क्वचस्वजनसंवासःक्वचनीचपराश्रयः ॥ १४ ॥ गुणवान्वापरजनःस्वजनोनिर्गुणोपिवा ॥ निर्गुणःस्वजनः श्रेयान्यःपरः परएवसः ॥ १५ ॥ यःस्वपक्षंपरित्यज्यपरपक्षंनिषेवते ॥ सस्वपक्षेक्षयंयातेपश्चात्तैरेवहन्यते ॥ १६ ॥ निरनुक्रोशताचेयंयादृशीतेनिशाचर ॥ स्वज नेनत्वयाशक्यंपौरुषंरावणानुज ॥ १७ ॥ इत्युक्तोभ्रातृपुत्रेणप्रत्युवाचविभीषणः ॥ अजानन्निवमच्छीलंकिंराक्षसविकत्थसे ॥ १८ ॥ राक्षसें द्रसुतासाधोपारुष्यंत्यजगौरवात् ॥ कुलेयद्यप्यहंजातोरक्षसांक्रूरकर्मणाम् ॥ गुणोयःप्रथमोनॄणांतन्मेशीलमराक्षसम् ॥ १९ ॥ नरमेदारुणेनाहं नचाधर्मेणवैरमे ॥ भ्रात्राविषमशीलोपिकथंभ्रातानिरस्यते ॥ २० ॥ धर्मात्प्रच्युतशीलंहिपुरुषंपापनिश्चयम् ॥ त्यक्त्वासुखमवाप्नोतिहस्तादाशीविषं यथा ॥ २१ ॥ परस्वहरणेयुक्तंपरदाराभिमर्शकम् ॥ त्याज्यमाहुर्दुरात्मानंवेश्मप्रज्वलितंयथा ॥ २२ ॥ परस्वानांचहरणंपरदाराभिमर्शनम् ॥ सुहृदामतिशंकाचत्रयोदोषाःक्षयावहाः ॥ २३ ॥ महर्षीणांवधोघोरःसर्वदेवैश्चविग्रहः ॥ अभिमानश्चरोषश्चवैरत्वंप्रतिकूलता ॥ २४ ॥

त्तरमाह कुल इति । प्रथमो गुणः सत्त्वम् अराक्षसं रजस्तमःप्रकृतिरक्षःकुलदुर्लभम् ॥ १९ ॥ किंच स्वजनत्यागदोषस्तव पितुरेवेत्याह भ्रात्रेति । विषमशीलोपि भ्राता कथं निरस्यते एवमस्ति वा लोके वदेति शेषः । भ्रात्रा विषमशलिनेतिपाठे दारुणकर्माधर्मारतिरहम् अन्यथा विषमशीलेन रावणाद्विलक्षणशीलेन भ्रात्रा कथं भ्राता रावणो निरस्यत इत्यर्थं च तीर्थ आह ॥२०॥ ननु दुःशीलस्त्यज्यत एवेति चेद्भवतु सुशीलस्य मम त्यागोनुचित एवेत्याशयेनाह धर्मादिति ॥ २१ ॥ मया तु तस्य त्यागो न्याय्य एवेत्याह परस्वेति ॥२२॥ स्वकुलनाशनं कृतं त्वयेत्यस्योत्तरमाह परस्वानामिति । सुहृदामतिशंका अनिष्टत्वशंका एवं च भव दीयाधर्म एव भवन्नाशको न त्वहमिति भावः ॥ २३ ॥ पुनः स्पष्टमेव रावणीयादोषाद्भवतां सर्वेषां नाश इत्याह महर्षीणामिति । अभिमानो गर्वः वैरत्वं दीर्घवैरम् प्रतिकूलता हितवक्तृषु प्रतिकूलबुद्धिता॥२४॥

गुणानभिजनविद्यावलवत्त्वादिगुणान् ॥ २५ ॥ नेयमस्तीति । इदं मया पुरैवोक्तमिति शेषः ॥ २६ ॥ यद्यत्परुषमित्यर्थः ॥ २७ ॥ यन्मां परुषमुक्तवांस्त्वं पुरा तस्मात्तेऽद्य व्यसनं प्राप्तम् । संप्रत्युच्यमानपारुष्यफलं तु कालांतरे भविष्यतीति शेषः । व्यसनं प्राप्तमित्येतदेव दृढयति प्रवेष्टुमिति पुनरभिचारायेति शेषः ॥२८॥ अत्र हतो यमक्षयं यमगृहं गतः सन् देवताकार्यं सर्वदेवानां संतोषरूपं करिष्यसि ॥२९॥ ॥३०॥ नलंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्ताशीतितमः ॥८७॥ कतकरी० ॥८०॥ अब्रवीत्परुषमिति विभीषणमिति शेषः । तच्च वक्ष्यमाणम् ॥१॥

एतेदोषाममभ्रातुर्जीवितैश्वर्यनाशनाः ॥ गुणान्प्रच्छादयामासुःपर्वतानिवतोयदाः ॥ २५ ॥ दोषैरेतैःपरित्यक्तोमयाभ्रातापितातव ॥ नेयमस्तिपुरीलंकानचत्वंनचतेपिता ॥ २६ ॥ अतिमानश्चबालश्चदुर्विनीतश्चराक्षस ॥ बद्धस्त्वंकालपाशेनब्रूहिमांयद्यदिच्छसि ॥२७॥ अद्येहव्यसनंप्राप्तंयन्मांपरुपमुक्तवान् ॥ प्रवेष्टुंनत्वयाशक्यंन्यग्रोधंराक्षसाधम ॥ २८ ॥ धर्षयित्वाचकाकुत्स्थंनशक्यंजीवितुंत्वया ॥ युध्यस्वनरदेवेनलक्ष्मणेनरणेसह ॥ हतस्त्वंदेवताकार्यंकरिष्यसियमक्षयम् ॥ २९ ॥ निदर्शयित्वात्मबलंसमुद्यतंकुरुष्वसर्वायुधसायकव्ययम् ॥ नलक्ष्मणस्यैत्यहिबाणगोचरंत्वमद्यजीवन्सबलोगमिष्यसि ॥ ३० ॥ इत्यार्षे श्रीमद्रा० वा० आ० युद्धकांडे सप्ताशीतितमःसर्गः ॥ ८७ ॥ विभीषणवचःश्रुत्वारावणिःक्रोधमूर्छितः ॥ अब्रवीत्परुषंवाक्यंक्रोधेनाभ्युत्पपातच ॥ १ ॥ उद्यतायुधनिस्त्रिंशोरथेसुसमलंकृते ॥ कालाश्वयुक्तेमहतिस्थितःकालांतकोपमः ॥ २ ॥ महाप्रमाणमुद्यम्यविपुलंवेगवद्दृढम् ॥ धनुर्भीमबलोभीमंशरांश्चामित्रनाशनान् ॥ ३ ॥ तंददर्शमहेष्वासोरथस्थःसमलंकृतः ॥ अलंकृतममित्रघ्नोरावणस्यात्मजोबली ॥ ४ ॥ हनूमत्पृष्ठमारूढमुदयस्थरविप्रभम् ॥ उवाचैनंसुसंरब्धःसौमित्रिंसविभीषणम् ॥ ५ ॥ तांश्चवानरशार्दूलान्पश्यध्वंमेपराक्रमम् ॥ अद्यमत्कार्मुकोत्सृष्टंशरवर्षंदुरासदम् ॥ ६ ॥ मुक्तवर्षमिवाकाशेधारयिष्यथसंयुगे ॥ अद्यवोमामकाबाणामहाकार्मुकनिःसृताः ॥ विधमिष्यंतिगात्राणितूलराशिमिवानलः ॥ ७ ॥ तीक्ष्णसायकनिर्भिन्नाञ्छूलशक्त्यृष्टिसायकैः ॥ अद्यवोगमयिष्यामिसर्वानेवयमक्षयम् ॥ ८ ॥ सृजतःशरवर्षाणिक्षिप्रहस्तस्यसंयुगे ॥ जीमूतस्येवनदतःकःस्थास्यतिममाग्रतः ॥ ९ ॥ रात्रियुद्धेतदापूर्वंवज्राशनिसमैःशरैः ॥ शायितौतौमयाभूयोविसंज्ञौसपुरःसरौ ॥ १० ॥

उद्यतायुधनिस्त्रिंशः उद्यतायुधो निस्त्रिंशो निर्घृणश्चेत्यर्थ इति कतकः । उद्यतान्यायुधानि निस्त्रिंशश्च येन सः गोबलीवर्दवत्प्रयोग इत्यन्ये ॥ २ ॥ ३ ॥ तं सविभीषणं लक्ष्मणम् अलंकृतं स्वतेजोभूषितम् ॥ ४ ॥ उवाचेत्यादिनाऽब्रवीत्परुषं वाक्यमिति प्रागुक्तस्यैव विवरणम् ॥ ५ ॥ तांश्च वानरशार्दूलान् उवाचेत्यनुकर्षः ॥६॥ मुक्तवर्षं मेघोत्सृष्टवर्षम् ॥७॥८॥९॥ सपुरःसरौ सुग्रीवादिप्रधानसहितौ युवां भ्रातराविति शेषः ॥१०॥

एवमपि यन्मां योद्धुमुपस्थितोसि तत्मायः पूर्वस्य ते स्मृतिर्नास्ति वाऽथवा व्यक्तं यातो यमक्षयम् आदिकर्मणिक्तः । यमक्षयं यमगृहं प्रयातुमुपक्रांतोसि ॥ ११ ॥ अभीतवदनः निर्भयप्रवृत्ताभिवदनव्यवहारः ॥ ॥ १२ ॥ च यस्मात्त्वया कार्याणां शत्रुवधादिकार्याणां पारोंतः समाप्तिरुक्तो वाचा जल्पितः स पारस्त्वया कर्मणा दुर्गम एव दुष्पाप एव कुतस्तत्राह कार्याणामिति । यः कार्याणां पारं कर्मणा गच्छति स बुद्धिमान् ॥ १३ ॥ स त्वं हीनार्थः क्रियाकार्यनिष्पादनासमर्थः केनचिदपि दुरवापस्य मद्विजयरूपस्यार्थस्य सिद्धिं वाचा व्याहृत्य दुर्मते कृतार्थोस्मीति जानीषे ॥ १४ ॥ अथ शायितावितिं । यत्त्वयोक्तं सा तेऽपकी



स्मृतिर्नतेस्तिवामन्येव्यक्तंयातोयमक्षयम् ॥ आशीविषसमंक्रुद्धंयन्मांयोद्धुमुपस्थितः ॥ ११ ॥ तच्छ्रुत्वाराक्षसेंद्रस्यगर्जितंराघवस्तदा ॥ अभीतवदनःक्रुद्धोरावणिंवाक्यमब्रवीत् ॥ १२ ॥ उक्तश्चदुर्गमःपारःकार्याणांराक्षसत्वया ॥ कार्याणांकर्मणापारंयोगच्छतिसबुद्धिमान् ॥ १३ ॥ सत्वमर्थस्यहीनार्थोदुरवापस्यकेनचित् ॥ वाचाव्याहृत्यजानीषेकृतार्थोस्मीतिदुर्मते ॥ १४ ॥ अंतर्धानगतेनाजौयत्त्वयाचरितस्तदा ॥ तस्कराचरितोमार्गोनैषवीरनिषेवितः ॥ १५ ॥ यथाबाणपथंप्राप्यस्थितोस्मितवराक्षस ॥ दर्शयस्वाद्यतत्तेजोवाचात्वंकिंविकत्थसे ॥ १६ ॥ एवमुक्तोधनुर्भीमंपरामृश्यमहाबलः ॥ ससर्जनिशितान्बाणानिंद्रजित्समितिंजयः ॥ १७ ॥ तेनसृष्टामहावेगाःशराःसर्पविषोपमाः ॥ संप्राप्यलक्ष्मणंपेतुःश्वसंतइवपन्नगाः ॥ १८ ॥ शरैरतिमहावेगैर्वेगवान्रावणात्मजः ॥ सौमित्रिमिंद्रजिद्युद्धेविव्याधशुभलक्षणम् ॥१९॥ सशरैरतिविद्धांगोरुधिरेणसमुक्षितः ॥ शुशुभेलक्ष्मणःश्रीमान्विधूमइवपावकः ॥२०॥ इंद्रजित्त्वात्मनःकर्मप्रसमीक्ष्याभिगम्यच ॥ विनद्यसुमहानादमिदंवचनमब्रवीत् ॥ २१ ॥ पत्रिणःशितधारास्तेशरामत्कार्मुकच्युताः ॥ आदास्यंतेद्यसौमित्रेजीवितंजीवितांतकाः ॥२२॥ अद्यगोमायुसंघाश्चश्येनसंघाश्चलक्ष्मण ॥ गृध्राश्चनिपतंतुत्वांगतासुंनिहतंमया ॥ २३ ॥ क्षत्रबंधुंसदानार्यंरामःपरमदुर्मतिः ॥ भक्तंभ्रातरमद्यैवत्वांद्रक्ष्यतिहतंमया ॥ २४ ॥ विस्रस्तकवचंभूमौव्यपविद्धशरासनम् ॥ हृतोत्तमांगंसौमित्रेत्वामद्यनिहतंमया ॥ २५ ॥ इतिब्रुवाणंसंक्रुद्धःपरुषंरावणात्मजम् ॥ हेतुमद्वाक्यमर्थज्ञोलक्ष्मणःप्रत्युवाचह ॥ ॥ २६ ॥ वाग्बलंत्यजदुर्बुद्धेक्रूरकर्मन्हिराक्षस ॥ अथकस्माद्वदस्येतत्संपादयसुकर्मणा ॥२७॥ अकृत्वाकत्थसेकर्मकिमर्थमिहराक्षस ॥ कुरुतत्कर्मयेनाहंश्रद्धेयंतवकत्थनम् ॥ २८ ॥

र्तिरेवेत्याह अंतारिति । आजौ रणेंतर्धानगतेन त्वया यद् य आचरित एष तस्करादिचरितो मार्गो न वीरनिषेवितः ॥ १५ ॥ १६ ॥ १७ ॥ लक्ष्मणं संप्राप्य पेतुः कवचेनाहता इति शेषः ॥ १८ ॥ १९ ॥ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ त्वामद्येति । द्रक्ष्यतीत्यनुकर्षः ॥ २५ ॥ २६ ॥ क्रूरकर्मन् कूटयुद्धव्यापारकर्तः एतद्वृथा वचनं कस्माद्वदसि सर्वं सुकर्मणैव संपादय ॥ २७ ॥ २८ ॥

अनवक्षिपन् ईषदपि निंदामकुर्वन् अविकत्थन् स्वश्लाघामकुर्वन् ॥ २९ ॥ ३० ॥ सुपत्रवाजिताः सुपत्रैः कंकादिपत्रैः संजातवेगाः ॥३१ ॥ ३२ ॥ विमर्दः संघर्षः ॥ ३३ ॥ विक्रांतौ कृतपराक्रमौ॥ ३४ ॥
वलवृत्रौ वल इंद्रः ॥ ३५ ॥ ३६ ॥ नरराक्षसमुख्यौ तौ । प्रहृष्टावभ्ययुध्यतामित्युत्तरं श्लोकद्वयं भिन्नवृत्तं प्रक्षिप्तम् । तदुत्तरं सर्गाविच्छेदश्चासंप्रदायः तयोर्युद्धस्यैवाग्रे सत्त्वेन प्रकरणांतराभावादिति कतकः ॥
॥ ३७ ॥ सर्गः ॥ ८८ ॥ ततः शरानिति ॥ ३८ ॥ ३९ ॥ युद्धसंयुक्तं युद्धजनकहर्षयुक्तम् ॥ ४० ॥ निमित्तानि मुखवैवर्ण्यादिदुर्निमित्तानि यानि अनुभूतपराजयसूचकत्वानि तेनैतद्वधे त्वर शीघ्रमुद्यमं

अनुक्त्वापरुषंवाक्यंकिंचिदप्यनवक्षिपन् ॥ अविकत्थन्वधिष्यामित्वांपश्यपुरुषादन ॥२९॥ इत्युक्त्वापंचनाराचानाकर्णापूरितान्छरान् ॥ विजघा
नमहावेगाँल्लक्ष्मणोराक्षसोरसि ॥ ३० ॥ सुपत्रवाजितावाणाज्ज्वलिताइवपन्नगाः ॥ नैर्ऋतोरस्यभासंतसवितूरश्मयोयथा ॥ ३१ ॥ सशरैराहतस्ते
नसरोषोरावणात्मजः ॥ सुप्रयुक्तैस्त्रिभिर्बाणैःप्रतिविव्याधलक्ष्मणम् ॥ ३२ ॥ सबभूवमहाभीमोनरराक्षससिंहयोः ॥ विमर्दस्तुमुलोयुद्धेपरस्परजयैषि
णोः ॥ ३३ ॥ विक्रांतौवलसंपन्नावुभौविक्रमशालिनौ ॥ उभौपरमदुर्जेयावतुल्यबलतेजसौ ॥३४॥ युयुधातेतदावीरौग्रहाविवनभोगतौ ॥ वलवृत्रा
विवहितौयुधिवैदुष्प्रधर्षणौ ॥ ३५ ॥ युयुधातेमहात्मानौतदाकेसरिणाविव ॥ वहूनवसृजंतौहिमार्गणौघानवस्थितौ ॥ ३६ ॥ नरराक्षसमुख्यौतौ
प्रहृष्टावभ्ययुध्यताम् ॥ ३७ ॥ सर्गः ॥ ८८ ॥ ततःशरान्दाशरथिःसंधायामित्रकर्षणः ॥ ससर्जराक्षसेंद्रायक्रुद्धःसर्पइवश्वसन् ॥३८॥ तस्यज्यातल
निर्घोषंसश्रुत्वाराक्षसाधिपः ॥ विवर्णवदनोभूत्वालक्ष्मणंसमुदैक्षत ॥३९॥ विषण्णवदनंदृष्ट्वाराक्षसंरावणात्मजम् ॥ सौमित्रिंयुद्धसंयुक्तंप्रत्युवाचविभी
षणः ॥ ४० ॥ निमित्तान्युपपश्यामियान्यस्मिन्रावणात्मजे ॥ त्वरतेनमहावाहोभग्नएषनसंशयः ॥ ४१ ॥ ततःसंधायसौमित्रिःशरानाशीविषो
पमान् ॥ मुमोचविशिखांस्तस्मिन्सर्पानिवविषोल्वणान् ॥ ४२ ॥ शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतःशरैः ॥ मुहूर्तमभवन्मूढःसर्वसंक्षुभितेंद्रियः ॥
॥ ४३ ॥ ददर्शावस्थितंवीरमाजौदशरथात्मजम् ॥ सोभिचक्रामसौमित्रिंरोषात्संरक्तलोचनः ॥ ४४ ॥ अब्रवीच्चैनमासाद्यपुनःसपरुषंवचः ॥
किंनस्मरसितद्युद्धेप्रथमेमत्पराक्रमम् ॥ निवद्धस्त्वंसहभ्रात्रायदायुधिविचेष्टसे ॥ ४५ ॥ युवांखलुमहायुद्धेवज्राशनिसमैःशरैः ॥ शायितौप्रथमं
भूमौविसंज्ञौसपुरःसरौ ॥ ४६ ॥ स्मृतिर्वानास्तितेमन्येव्यक्तंवायमसादनम् ॥ गंतुमिच्छसियन्मांत्वमाधर्षयितुमिच्छसि ॥ ४७ ॥ यदितेप्रथमे
युद्धेनदृष्टोमत्पराक्रमः ॥ अद्यत्वांदर्शयिष्यामितिष्ठेदानींव्यवस्थितः ॥ ४८ ॥ इत्युक्त्वासप्तभिर्बाणैरभिविव्याधलक्ष्मणम् ॥ दशभिस्तुहनूमंतंती
क्ष्णधारैःशरोत्तमैः ॥ ४९ ॥ततःशरशतेनैवसुप्रयुक्तेनवीर्यवान् ॥ क्रोधाद्द्विगुणसंरब्धोनिर्बिभेदविभीषणम् ॥ ५० ॥ तद्दृष्ट्वेंद्रजिताकर्मकृतंरामा
नुजस्तदा ॥ अचिंतयित्वाप्रहसन्नैतत्किंचिदितिब्रुवन् ॥ ५१ ॥ मुमोचचशरान्घोरान्संगृह्यनरपुंगवः ॥ अभीतवदनःक्रुद्धोरावणिंलक्ष्मणोयुधि ॥
॥ ५२ ॥ नैवंरणगताःशूराःप्रहरंतिनिशाचर ॥ लघवश्चाल्पवीर्याश्चशराहीमेसुखास्तव ॥ ५३ ॥

कुरु ॥ ४१ ॥ ४२ ॥ सर्वसंक्षुभितेंद्रियः संक्षुभितसर्वेंद्रियः ॥ ४३ ॥ ४४ ॥ प्रथमे तद्युद्धे नागपाशबंधनके तस्मिन्युद्धे यत्र भ्रात्रा सह निबद्धस्त्वं तत्किं न स्मरसि यदद्य आयुधि आयोधने विचेष्टसे शरपातादि करोषि ॥ ४५ ॥
देव पुनराह युवामिति ॥ ४६ ॥ यमसादनं यमगृहम् ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ नैतत्किंचिदिति ब्रुवन् एतन्न किंचिन्न किंचित्करमितिब्रुवन्नित्यर्थः ॥ ५१ ॥ ५२ ॥ अकिंचित्करत्वमेव विवृणोति

नैवमिति। एवंशब्दार्थो लघव इति पुष्पमालावल्लघव इमे तव शरा मे सुखा नतु क्लेशदा इत्यर्थः ॥ ५३ ॥ ५४ ॥ ५५ ॥ प्रत्यूषे भानुमानिव क्षतजरक्तवर्णत्वादिति भावः ॥ ५६ ॥ ५७ ॥ अन्योन्यं कृतमातिकृता आर्षो डा। कृतमतिकृते यत्तौ बभूवतुरित्यर्थः ॥ ५८ ॥ ५९ ॥ ६०॥६१॥ सासारयोः धारासंपातआसारस्तत्सहितयोः ॥ ६२ ॥ महान्कालोऽनेकदिनरूपः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

नैवंशूरास्तुयुध्यंतेसमरेयुद्धकांक्षिणः ॥ इत्येवंतंब्रुवन्धन्वीशरैरभिववर्षह ॥ ५४ ॥ तस्यबाणैःसुविध्वस्तंकवचंकाञ्चनंमहत् ॥ व्यशीर्यतरथोपस्थे ताराजालमिवांबरात् ॥ ५५ ॥ विधूतवर्मानाराचैर्बभूवसकृतव्रणः ॥ इंद्रजित्समरेवीरःप्रत्यूषेभानुमानिव ॥ ५६ ॥ ततःशरसहस्रेणसंक्रुद्धो रावणात्मजः ॥ बिभेदसमरेवीरोलक्ष्मणंभीमविक्रमः ॥ ५७ ॥ व्यशीर्यतमहद्दिव्यंकवचंलक्ष्मणस्यतु ॥ कृतप्रतिकृतान्योन्यंबभूवतुरभिद्रुतौ ॥५८॥ अभीक्ष्णंनिःश्वसंतौवैयुध्येतांतुमुलैयुधि ॥ शरसंकृत्तसर्वांगौसर्वतोरुधिरोक्षितौ ॥ सुदीर्घकालंतौवीरावन्योन्यंनिशितैःशरैः ॥ ५९ ॥ ततक्षतुर्महात्मानौरणकर्मविशारदौ ॥ बभूवतुश्चात्मजयेयत्तौभीमपराक्रमौ ॥ ६० ॥ तौशरौघैस्तथाकीर्णौनिकृत्तकवचध्वजौ ॥ सृजंतौरुधिरंचोष्णंजलंप्रस्रवणाविव ॥ ६१ ॥ शरवर्षंततोघोरंमुंचतोर्भीमनिःस्वनम् ॥ सासारयोरिवाकाशेनीलयोःकालमेघयोः ॥ ६२ ॥ तयोरथमहान्कालोव्यतीयाद्युध्यमानयोः ॥ नचतौयुद्धवैमुख्यंक्लमंचाप्युपजग्मतुः ॥ ६३ ॥ अस्त्राण्यस्त्रविदांश्रेष्ठौदर्शयंतौपुनःपुनः ॥ शरानुच्चावचाकारानंतरिक्षेबबंधतुः ॥ ॥ ६४ ॥ व्यपेतदोषमस्यंतौलघुचित्रंचसुष्ठुच ॥ उभौतुतुमुलंघोरंचक्रतुर्नरराक्षसौ ॥ ६५ ॥ तयोःपृथक्पृथग्भीमःशुश्रुवेतुमुलःस्वनः ॥ सकंपंजनयामासनिर्घातइवदारुणः ॥ ६६ ॥ तयोःसभ्राजतेशब्दस्तथासमरयत्तयोः ॥ सुघोरयोर्निःस्तनतोर्गगनेमेघयोरिव ॥ ६७॥ सुवर्णपुंखैर्नाराचैर्बलवंतौकृतव्रणौ ॥ प्रसुस्रुवातेरुधिरंकीर्तिमंतौजयेधृतौ ॥६८॥ तेगात्रयोर्निपतितारुक्मपुंखाःशरायुधि ॥ असृग्दिग्धाविनिष्पेतुर्विविशुर्धरणीतलम् ॥ ॥ ६९ ॥ अन्येसुनिशितैःशस्त्रैराकाशेसंजघट्टिरे ॥ बभंजुश्चिच्छिदुश्चैवतयोर्बाणाःसहस्रशः ॥७०॥ सबभूवरणेघोरस्तयोर्बाणमयश्चयः ॥ अग्निभ्यामिवदीप्ताभ्यांसत्रेकुशमयश्चयः ॥ ७१ ॥ तयोःकृतव्रणौदेहौशुशुभातेमहात्मनोः ॥ सुपुष्पाविवनिष्पत्रौवनेकिंशुकशाल्मली ॥ ७२॥ चक्रतुस्तुमुलंघोरंसन्निपातंमुहुर्मुहुः ॥ इंद्रजिल्लक्ष्मणश्चैवपरस्परजयैषिणौ ॥ ७३ ॥ लक्ष्मणोरावणिंयुद्धेरावणिश्चापिलक्ष्मणम् ॥ अन्योन्यंतावभिघ्नंतौनश्रमंप्रतिपद्यताम् ॥ ७४॥ बाणजालैःशरीरस्थैरवगाढैस्तरस्विनौ ॥ शुशुभातेमहावीर्यौप्ररूढाविवपर्वतौ ॥ ७५ ॥ ततोरुधिरसिक्तानिसंवृतानिशरैर्भृशम् बभ्राजुःसर्वगात्राणिज्वलंतइवपावकाः ॥ ७६ ॥ तयोरथमहान्कालोव्यतीयाद्युध्यमानयोः ॥ नचतौयुद्धवैमुख्यंश्रमंचाप्यभिजग्मतुः ॥ ७७ ॥

॥ ६७ ॥ जये धृतौ दृढोत्साहौ ॥ ६८ ॥ ६९ ॥ ७० ॥ चयः समूहः ॥ ७१ ॥ ७२ ॥ सन्निपातं युद्धम् ॥ ७३ ॥ ७४ ॥ अवगाढैः गाढमग्नैः प्ररूढौ प्ररूढवृक्षौ ॥ ७५ ॥ ७६ ॥ ७७ ॥

तत्पापमपि कर्तव्यमेव ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ एषा वैदेही विशस्तातो वः परिश्रमो निष्फलः ॥ ३२ ॥ ३३ ॥ व्यादितास्यस्य विवृतास्यस्य तद्दुर्गं खेचररथरूपं दुर्गम् ॥ ३४ ॥ हृष्टरूपमतिशयेन हृष्टम् । प्रशंसायां रूपप् ॥ ३५ ॥ मैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकाशीतितमः सर्गः ॥ ८१ ॥ कतकरी० ॥ ७४ ॥ श्रुत्वेति । भीमो

तमेवमुक्त्वारुदतींसीतांमायामयींचताम् ॥ शितधारेणखड्गेननिजघानेंद्रजित्स्वयम् ॥ २९ ॥ यज्ञोपवीतमार्गेणाच्छिन्नातेनतपस्विनी ॥ सापृथिव्यां पृथुश्रोणीपपातप्रियदर्शना ॥ ३० ॥ तामिंद्रजितस्त्रियंहत्वाहनुमंतमुवाचह ॥ मयारामस्यपश्येमांप्रियांशस्त्रनिषूदिताम् ॥३१॥ एषाविशस्तावैदेही निष्फलोवःपरिश्रमः ॥ ३२ ॥ ततःखड्गेनमहताहत्वातामिंद्रजित्स्वयम् ॥ हृष्टःसरथमास्थायननादचमहास्वनम् ॥ ३३ ॥ वानराःशुश्रुवुःशब्दमदूरे प्रत्यवस्थिताः ॥ व्यादितास्यस्यनदतस्तद्दुर्गसंश्रितस्यतु ॥ ३४ ॥ तथातुसीतांविनिहत्यदुर्मतिःप्रहृष्टचेताःसबभूवरावणिः ॥ तंहृष्टरूपंसमुदीक्ष्यवानराविषण्णरूपाःसमभिप्रदुद्रुवुः ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकाशीतितमः सर्गः ॥८१॥ श्रुत्वातंभीमनिर्ह्रादंशक्राशनिसमस्वनम् ॥ वीक्षमाणादिशःसर्वादुद्रुवुर्वानराभृशम् ॥१॥ तानुवाचततःसर्वान्हनूमान्मारुतात्मजः ॥ विषण्णवदनान्दीनांस्त्रस्तान्विद्रवतःपृथक् ॥ २ ॥ कस्माद्विषण्णवदनाविद्रवध्वंप्लवंगमाः ॥ त्यक्तयुद्धसमुत्साहाःशूरत्वंक्कनुवोगतम् ॥ पृष्ठतोनव्रजध्वंमामग्रतोयांतमाहवे ॥ ॥ ३ ॥ एवमुक्ताःसुसंक्रुद्धावायुपुत्रेणधीमता ॥ शैलशृंगान्द्रुमांश्चैवजगृहुर्हृष्टमानसाः ॥ ४ ॥ अभिपेतुश्चगर्जंतोराक्षसान्वानरर्षभाः ॥ परिवार्यहनूमंतमन्वयुश्चमहाहवे ॥ ५ ॥ सतैर्वानरमुख्यैस्तुहनूमान्सर्वतोवृतः ॥ हुताशनइवार्चिष्मानदहच्छत्रुवाहिनीम् ॥ ६ ॥ सराक्षसानांकदनंचकारसुमहाकपिः ॥ वृतोवानरसैन्येनकालांतकयमोपमः ॥ ७ ॥ सतुशोकेनचाविष्टःकोपेनमहताकपिः ॥ हनूमाद्रावणिरथेमहतींपातयच्छिलाम् ॥ ८ ॥ तामापतंतींदृष्ट्वैवरथंसारथिनातदा ॥ विधेयाश्वसमायुक्तोविदूरमपवाहितः ॥ ९ ॥ तमिंद्रजितमप्राप्यरथस्थंसहसारथिम् ॥ विवेशधरणींभित्त्वासाशिलाव्यर्थमुद्यता ॥ १० ॥ पतितायांशिलायांतुव्यथितारक्षसांचमूः ॥ निपतंत्याचशिलयाराक्षसामथिताभृशम् ॥ ११ ॥ तमभ्यधावञ्शतशोनदंतःकाननौकसः ॥ तेद्रुमांश्चमहाकायागिरिशृंगाणिचोद्यताः ॥ १२ ॥ क्षिपंतींद्रजितंसंख्येवानराभीमविक्रमाः ॥ वृक्षशैलमहावर्षंविसृजंतःप्लवंगमाः ॥ १३ ॥ शत्रूणांकदनंचक्रुर्नेदुश्चविविधैःस्वनैः ॥ वानरैस्तैर्महाभीमैर्घोररूपानिशाचराः ॥ १४ ॥ वीर्यादभिहतावृक्षैर्व्यचेष्टंतरणक्षितौ ॥ ससैन्यमभिवीक्ष्याथवानरार्दितमिंद्रजित् ॥ १५ ॥ प्रगृहीतायुधःक्रुद्धःपरानभिमुखोययौ ॥ सशरौघानवसृजन्स्वसैन्येनाभिसंवृतः ॥ १६ ॥

यो निर्ह्रादः शब्दस्तं श्रुत्वा इंद्रजित इति शेषः । शक्राशनिसमस्वनं तमिंद्रजितं वीक्षमाणा दिशो दुद्रुवुः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ विधेयाश्वैः सारथ्यधीनाश्वैः समायुक्तः ॥ ९ ॥ सा शिला व्यर्थमुद्यता अभवदिति शेषः ॥ १० ॥ ११ ॥ गिरिशृंगाणि चोद्यताः गृहीत्वेति शेषः गृहीत्वा युद्धार्थमुद्यता बभूवुरित्यर्थः ॥ १२ ॥ ततस्तद्वर्षं विसृजंतस्ते वानरा इंद्रजितं क्षिपंति आक्षिपंति

स्म तिरस्कृतं चकुरिति यावत् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ सन्निवार्य परानीकं राक्षससेनाम् ॥ २० ॥ प्राणांस्त्यक्त्वा प्राणस्नेहमपि त्यक्त्वा विचेष्टंतः संतो रामप्रियचिकीर्षया यन्निमित्तं युध्यामः सा हतेति व्यर्थोयं श्रम इति भावः ॥ २१ ॥ प्रतिविधास्येते प्रतिक्रियानुष्ठाने नियोक्ष्येते तत्करिष्यामहे ॥ २२ ॥ २३ ॥ दशम्यां पूर्वाह्णे निकुंभिलागमनं निकुंभिलां चैत्यं तदाख्यदेवालयं वटवृक्षं वा ॥ २४ ॥ जुहव जुहाव ॥ २५ ॥ होमशोणितभुक् होमार्थमाहुतित्वेन प्रक्षिप्तशोणितभुक् अर्चिर्भिः पिनद्धः समृद्धः सुतीव्रोग्री रक्षोविपत्सूचकः ॥ २६ ॥ महासमूहेषु युद्धेषु नयानयज्ञाः

जघानकपिशार्दूलान्सुवहून्दृढविक्रमः ॥ शूलैरशनिभिःखड्गैःपट्टिशैःशूलमुद्गरैः ॥ १७ ॥ तेचाप्यनुचरांस्तस्यवानराजघ्नुराहवे ॥ १८ ॥ सुस्कंधविटपैःशैलैःशिलाभिश्चमहावलः ॥ हनूमान्कदनंचक्रेरक्षसांभीमकर्मणाम् ॥ १९॥ सन्निवार्यपरानीकमब्रवीत्तान्वनौकसः ॥ हनूमान्सन्निवर्तध्वंननःसाध्यमिदंवलम् ॥ २० ॥ त्यक्त्वाप्राणान्विचेष्टंतोरामप्रियचिकीर्षवः ॥ यन्निमित्तंहियुध्यामोहतासाजनकात्मजा ॥ २१॥ इममर्थंहिविज्ञाप्यरामंसुग्रीवमेवच ॥ तौयत्प्रतिविधास्येतेतत्करिष्यामहेवयम् ॥ २२ ॥ इत्युक्त्वावानरश्रेष्ठोवारयन्सर्ववानरान् ॥ शनैःशनैरसंत्रस्तःसबलःसंन्यवर्तत ॥ ॥२३॥ ततःप्रेक्ष्यहनूमंतंव्रजंतंयत्रराघवः ॥ सहोतुकामोदुष्टात्मागतश्चैत्यंनिकुंभिलाम् ॥२४॥ निकुंभिलामधिष्ठायपावकंजुहवेंद्रजित् ॥ यज्ञभूम्यांततोगत्वापावकस्तेनरक्षसा ॥ २५॥ हूयमानःप्रजज्वालहोमशोणितभुक्तदा ॥ सार्चिःपिनद्धोददृशेहोमशोणिततर्पितः ॥ संध्यागतइवादित्यःसुतीव्रोग्निःसमुत्थितः ॥२६॥ अथेंद्रजिद्राक्षसभूतयेतुजुहावहव्यंविधिनाविधानवित् ॥ दृष्ट्वाव्यतिष्ठंतचराक्षसास्तेमहासमूहेषुनयानयज्ञाः ॥२७॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्व्यशीतितमः सर्गः ॥८२॥ राघवश्चापिविपुलंतंराक्षसवनौकसाम् ॥ श्रुत्वासंग्रामनिर्घोषंजांबवंतमुवाचह ॥ १ ॥ सौम्यनूनंहनुमताकृतंकर्मसुदुष्करम् ॥ श्रूयतेचयथाभीमःसुमहानायुधस्वनः ॥ २ ॥ तद्गच्छकुरुसाहाय्यंस्वबलेनाभिसंवृतः ॥ क्षिप्रमृक्षपतेतस्यकपिश्रेष्ठस्ययुध्यतः ॥ ३ ॥ ऋक्षराजस्तथेत्युक्त्वास्वेनानीकेनसंवृतः ॥ आगच्छत्पश्चिमंद्वारंहनूमान्यत्रवानरः ॥ ४ ॥ अथायांतंहनूमंतंददर्शर्क्षपतिस्तदा ॥ वानरैःकृतसंग्रामैःश्वसद्भिरभिसंवृतम् ॥ ५ ॥ दृष्ट्वापथिहनूमांश्चतदृक्षवलमुद्यतम् ॥ नीलमेघनिभंभीमंसन्निवार्यन्यवर्तत ॥ ६ ॥ सतेनसहसैन्येनसन्निकर्षंमहायशाः ॥ शीघ्रमागम्यरामायदुःखितोवाक्यमब्रवीत् ॥ ७ ॥ समरेयुध्यमानानामस्माकंप्रेक्षतांचसः ॥ जघानरुदतींसीतामिंद्रजिद्रावणात्मजः ॥ ८ ॥ उद्भ्रांतचित्तस्तांदृष्ट्वाविषण्णोहमरिंदम ॥ तदहंभवतोवृत्तांविज्ञापयितुमागतः ॥ ९ ॥ तस्यतद्वचनंश्रुत्वाराघवःशोकमूर्च्छितः ॥ निपपाततदाभूमौछिन्नमूलइवद्रुमः ॥ १० ॥

कृत्याकृत्यतत्त्वज्ञाः ॥ २७ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्व्यशीतितमः सर्गः ॥ ८२ ॥ कतकरी० ॥ ७५ ॥ राघवश्चापीति ॥ १ ॥२ ॥ ॥ ३ ॥ ४ ॥ श्वसद्भिः सीताविपत्तिस्मृतिजदुःखान्निःश्वसद्भिरित्यर्थः ॥ ५ ॥ नीलमेघनिभं भीममृक्षवलमुद्यतं युद्धायोद्यतं सन्निवार्य युद्धप्रवृत्तेरिति शेषः ॥ ६ ॥ तेन सैन्येन सह राक्षससैन्येनापि सह रामस्य

सन्निकर्षमागम्य प्राप्य रामायाब्रवीदित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अभिपेतुः तत्समीपमाजग्मुः ॥ ११ ॥ प्रदहंतं सीतानाशश्रवणशोकेन सहायेन दहंतमतएवासंहार्यमनिवार्यवेगमुत्थितमग्निमिव दृष्ट्वा सलिलादिभिस्तमसिंचन् ॥ १२ ॥ तं लक्ष्मणो बाहुभ्यां परिष्वज्य दुःखितो भूत्वाऽस्वस्थमस्वस्थचित्तं रामं हेत्वर्थसंयुतं उपपत्त्या विशिष्टप्रयोजनेन च सहितं वाक्यमुवाच ॥ १३ ॥ तदेवाह शुभे इति । तदद्य विपुलं वीर दुःखमिंद्रजिता कृतम् ॥ कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघवेति ॥ युद्धाय पौरुषावलंबनेन प्रोत्साहयिष्यन् केवलधर्मावलंबनमप्रयोजकमिति प्रतिपादयत्यनेन वाक्समूहेन। हे आर्य शुभे वर्त्मनि धर्ममार्गे राज्यत्यागपूर्वकं पितृवचनपालनरूपे तिष्ठंतं विजितेंद्रियं हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरुपरि कालुष्याभावेन विजितेंद्रियं त्वां त्वदाश्रितो धर्मोनर्थेभ्यस्त्रातुं न शक्नोति यतस्तस्मादसौ निरर्थकः प्राधान्येन पुरुषार्थो न भवति ॥ १४ ॥ एवं धर्मपदार्थमंगीकृत्य तस्यांर्थत्वं नास्तीत्यनुभवात्प्रदर्श्येदानीं धर्मपदार्थ एव नास्ति फलानुमेयता हि तस्योक्ता फलं च सुखं प्रकृते च सुखान्वयव्यतिरेकयोर्धर्मेऽभावेन न तेन तदनुमानमित्याह भूतानामिति । स्थावराणां जंगमानां च पश्वादिरूपाणां भूतानां दर्शनं सुखापरोक्षदर्शनं यथास्ति तथा धर्मो नास्ति असामर्थ्यादनधिकाराच्च । तस्माद्धर्मः सुखसाधनत्वव्याप्तो नेति मे मतिः । जन्मांतरादिकं नास्त्येवेति बौद्धमतेनेयमुक्तिः । नहि तं विना जायमानस्यापि तत्करणकत्वमिति भावः । यत्तु यथा स्थावरादीनां दर्शनात्तत्सत्ता तथा धर्मस्य दर्शनाभावाद्धर्मो

तंभूमौदेवसंकाशंपतितंदृश्यराघवम् ॥ अभिपेतुःसमुत्पत्यसर्वतःकपिसत्तमाः ॥ ११ ॥ आसिंचन्सलिलैश्चैनंपद्मोत्पलसुगंधिभिः ॥ प्रदहंतमसंहार्यंसहसाग्निमिवोत्थितम् ॥ १२ ॥ तंलक्ष्मणोथबाहुभ्यांपरिष्वज्यसुदुःखितः ॥ उवाचराममस्वस्थंवाक्यंहेत्वर्थसंयुतम् ॥ १३ ॥ शुभेवर्त्मनितिष्ठंतंत्वामार्यविजितेंद्रियम् ॥ अनर्थेभ्योनशक्नोतित्रातुंधर्मोनिरर्थकः ॥ १४ ॥ भूतानांस्थावराणांचजंगमानांचदर्शनम् ॥ यथास्तिनतथाधर्मस्तेननास्तीतिमेमतिः ॥ १५ ॥ यथैवस्थावरंव्यक्तंजंगमंचतथाविधम् ॥ नायमर्थस्तथायुक्तस्त्वद्विधोनविपद्यते ॥ १६ ॥ यद्यधर्मोभवेद्भूतोरावणोनरकंव्रजेत् ॥ भवांश्चधर्मसंयुक्तोनैवव्यसनमाप्नुयात् ॥ १७ ॥ तस्यचव्यसनाभावाद्व्यसनंचागतेत्वयि ॥ धर्मोभवत्यधर्मश्चपरस्परविरोधिनौ ॥ ॥ १८ ॥ धर्मेणोपलभेद्धर्ममधर्मंचाप्यधर्मतः ॥ यद्यधर्मेणयुज्येयुर्येष्वधर्मःप्रतिष्ठितः ॥ १९ ॥ नधर्मेणवियुज्येरन्नाधर्मरुचयोजनाः ॥ धर्मेणाचरतांतेषांतथाधर्मफलंभवेत् ॥ २० ॥

नास्तीति व्याचक्षते । तत्र योग्यानुपलंभस्यैवाभावसाधकत्वात् । धर्मस्य च पिशाचादिवदयोग्यत्वात् ॥ १५ ॥ उक्तमेवार्थं विशदयति यथैवेति । यथा यस्मात्स्थावरं व्यक्तं धर्मप्रसक्तिरहितमपि सुखीति व्यक्तं तथाविधं स्थावरवद्धर्मानधिकृतं जंगमं पश्वाद्यपि सुखीति व्यक्तम् । एतेन व्यतिरेकः खंडितः । अन्वयमपि खंडयति न तथायुक्तः । अयमर्थः सुखरूपो न सर्वात्मना धर्मयुक्तस्त्वद्विधो धर्मस्य सुखान्वयेन विपद्यते न विपन्नः स्यात् दृश्यते च विपत्तिरित्यन्वयोपि नास्ति अनेन तदंशे जन्मांतरीणधर्मकल्पनापि परास्ता । साधनत्वसिद्धावेव तत्कल्पनावसरात् अतोयमर्थो धर्मरूपो न नास्त्येव ॥ १६ ॥ उक्तमर्थं प्रकृते योजयति यदीति । अधर्मो भूतो दुःखसाधनत्वेन यदि सिद्धो भवेत्तदा रावणो नरकं दुःखं व्रजेत् धर्मयुक्तो भवांश्च नैव व्यसनं दुःखं प्राप्नुयात् ॥ १७ ॥ अस्य तर्कस्य विपर्यये पर्यवसानमाह तस्य चेति । तस्य रावणस्य सत्यधर्मे व्यसनाभावात्सुखसत्त्वाच्च पितृवाक्यपरिपालके त्वयि व्यसनं दुःखमागते प्राप्ते सति सिद्धो धर्माधर्माभ्यां सुखदुःखयोरन्वयव्यतिरेकाभावः । किंचोक्तानुभवादेव विपरीतफलता च तयोरित्याह धर्म इति । धर्मो यथा श्रुतफलविरुद्धदुःखफलो भवति एवमधर्मश्च श्रुतफलविरुद्धसुखफलो भवति तस्मादेतौ परस्परविरोधिनौ अन्योन्यं यथा श्रुतफलविरुद्धफलकौ ॥ १८ ॥ कुत एवं निश्चयस्तत्रानुभवादेवे

त्याह धर्मेणेति । धर्मेण धर्मं धर्मसाध्यं सुखं यद्युपलभेत् तथाऽधर्मतः अधर्मेणाधर्मं तत्फलं दुःखं यद्युपलभेत् नियमेन । उत्तरार्धस्थं यदीति पूर्वार्धान्वायि यद्येवं नियमः स्यात्तदा येषु रावणादिष्वधर्मः प्रतिष्ठित स्तेऽधर्मेण तत्फलेन दुःखेनैव युज्येयुः । तथा ये जना नाधर्मरुचयः अधर्मरुचिरहितास्ते धर्मेण तत्फलेन सुखेन न वियुज्येरन्न वियुक्ताः स्युः । तमेवार्थं प्रकारांतरेणाह धर्मेणेति । धर्मेण धर्ममार्गेणाचरतामनुतिष्ठतां तेषां तथा धर्मफलं सुखं भवेत् तदेतयोर्विरुद्धफलराहित्यं स्यादित्यर्थः ॥ १९ ॥ २० ॥ नचैवमस्तीत्याह यस्मादिति । येष्वधर्मः प्रतिष्ठितस्तेष्वर्था विवर्धंते धर्मशीलाश्च क्लिश्यंते तस्मादेतौ निरर्थकौ श्रुतस्वरूप फलरहितौ विपरीतफलौ चेत्यर्थः । एवं च सुखदुःखयोर्धर्माधर्माभ्यां व्याप्त्यभावान्न ताभ्यां तदनुमानमिति भावः ॥ २१ ॥ इदानीं धर्मादिस्वरूपमेव दुर्निरूपमिति वक्तुं किं व्यापाररूपौ वा तज्जन्यातिशयरूपौ वेति विकल्पे नाद्य इत्याह वध्यंत इति । पापकर्माणः पुरुषा यद्यधर्मेण क्रियाशरीरेण वध्यंते तदा क्रियायास्त्रिक्षणावस्थायित्वाच्चतुर्थक्षणे स्वत एव वधकर्मणा नाशक्रियया हतो नष्टोऽधर्मः स्वयं हतोऽसन्भूत्वा कं हंतव्यं वधिष्यति । यद्वा वधकर्मरूपो धर्मश्चतुर्थक्षणे हतो नष्टः स्वयमसन्सन्कं वधिष्यति वधकर्मेत्युपलक्षणम् ॥ २२॥ द्वितीयं दूषयति अथवेति । विहितेन विहितस्येनाद्यनुष्ठानजातिशयेनान्यदीयेनायं पुरुषो हन्यते स्वीयेन वान्यं हंति एवं सति विधिर्विहितानुष्ठानजातिशय एव तेन पापेन कर्मणा हत्यारूपेण लिप्यते न स कर्मानुष्ठाता पुरुषः हत्यायास्तदकर्तृकत्वात् । नहि स्वोत्पादितपुत्रकृतहत्या पितरं स्पृशति एवं तस्य कर्मजातिशयस्वातंत्र्यमभ्युपेत्यात्मालेप उक्तः । एतेन कर्मकरणसंतुष्टस्येश्वरस्य फलदत्वमित्यपास्तम् । तस्यैव लेपप्रसंगात् । अत्र पक्षे विहितेनेत्यस्य विहितकर्मसंतुष्टेने

**यस्मादर्थाविवर्धंतेयेष्वधर्मःप्रतिष्ठितः ॥ क्लिश्यंतेधर्मशीलाश्चतस्मादेतौनिरर्थकौ ॥ २१ ॥ वध्यंतेपापकर्माणोयद्यधर्मेणराघव ॥ वधकर्महतोऽधर्मःसहतःकंवधिष्यति ॥ २२ ॥ अथवाविहितेनायंहन्यतेहंतिचापरम् ॥ विधिःसलिप्यतेतेननसपापेनकर्मणा ॥ २३ ॥ अदृष्टप्रतिकारेणअव्यक्तेनासतासता ॥ कथंशक्यंपरंप्राप्तुंधर्मेणारिविकर्षण ॥ २४ ॥ यदिसत्स्यात्सतांमुख्यनासत्स्यात्तवकिंचन ॥ त्वयायदीदृशंप्राप्तंतस्मात्तन्नोपपद्यते ॥ ॥ २५ ॥ अथवादुर्बलःक्लीबोबलंधर्मोनुवर्तते ॥ दुर्बलोहतमर्यादोनसेव्यइतिमेमतिः ॥२६॥ बलस्ययदिचेद्धर्मोगुणभूतःपराक्रमैः ॥ धर्ममुत्सृज्यवर्तस्वयथाधर्मेतथाबले ॥ २७ ॥ अथचेत्सत्यवचनंधर्मःकिलपरंतप ॥ अनृतंत्वय्यकरुणेकिंनबद्धस्त्वयाविना ॥ २८ ॥**

श्वरेणेत्यर्थः ॥ २३ ॥ एवमतिशयस्य घातकत्वमंगीकृत्यात्मालेप उक्तः इदानीं घातकत्वमेव नास्तीत्याह अदृष्टेति । अदृष्टप्रतिकारेण अचेतनतयाऽज्ञातस्वकर्तव्यशत्रुप्रतीकारेण । अथ स्वाश्रयचेतनद्वारा तज्ज्ञानमिति चेत्तत्राह अव्यक्तेन स्वाश्रयभूतात्मनोऽप्रत्यक्षतयाऽप्रत्यक्षरूपाव्यक्तेनातएवासताऽसत्कल्पेन सता वर्तमानेनापि धर्मेण कर्मजन्यातिशयेन कथं परं वध्यस्वरूपं प्राप्तुं शक्यं अप्राप्य परं हंतीति चेदसंबंधाविशेषात्सर्वहननप्रसंगः । अयं हन्तृकृतकर्मजातिशयो वध्यनिष्ठ एवेति चेदन्यधर्मेणान्यस्य धार्मिकत्वप्रसंगः कर्तृनिष्ठत्वे तूक्तदोष इति भावः ॥ २४ ॥ तुल्यन्यायाच्छुभकर्मजातिशयोप्यसन्नेवेति ध्वनितमर्थं तर्केण दृढी करोति यदीति । हे सतां मुख्य सत्पुरुषश्रेष्ठ यदि सत्कर्मजन्यमदृष्टं सत्स्यात्तदा तव किंचन किंचिदपि असदशुभं दुःखं न स्यात् । उक्तस्य तर्कस्य विपर्ययपर्यवसानमाह त्वया चेदृशं दुःखं प्राप्तं तस्मात्तत्सदिति नोपपद्यते ॥ २५ ॥ ननूक्तदोषसमूहः कर्मणः प्राधान्येनार्थसाधनपक्षे युक्तो न तु पौरुषोपकृतस्यार्थसाधकत्वे तर्हि मुख्यमर्थसाधनं पौरुषमेवावलंब्यतामित्याह । अथवेति दुर्बलः स्वतोर्थसाधनासमर्थः अतएव क्लीबः अर्थसाधनेऽकिंचित्करो बलं पौरुषमनुवर्तते सहकारितयापेक्षते तदा दुर्बलो हतमर्यादस्त्यक्तसुखसाधनत्वमर्यादो धर्मो न सेव्य इति मे मतिः उक्तन्यायेनेति भावः ॥ २६ ॥ ननु पौरुषं सहकारी कृत्यधर्मः साधयतीति नोच्यते किंतु पौरुषमेव प्रधानं कर्म तु तस्योपकारकमिति तर्हि तथैवानुष्ठानं कुर्वित्याह बलस्येति । बलस्य पौरुषस्य धर्मो गुणभूत इत्यंगी क्रियते तदा पराक्रमैः प्रयत्नैर्धर्ममुत्सृज्य धर्मप्राधान्यं त्यक्त्वा यथेदानीं धर्मे वर्तसे प्राधान्येन तथा बले पौरुषे एव वर्तस्व ॥ २७ ॥ किंच सत्यस्यापि धर्मत्वाद्धर्मपक्षपातिना भवता सत्यधर्म एवादौ किमिति सम्यङ्नानुष्ठितो येनैवमनर्थो न वृत्तः स्यादित्याह अथ चेदिति ।

अथ पक्षांतरं हे परंतप त्वया सत्यवचनं पितृवचनांगीकाररूपसत्यपरिपालनं धर्मोनुष्ठीयत इति चेत्तदा त्वयि ज्येष्ठे उक्तस्याभिषेकवचनस्याकरणे यदनृतं राज्ञः प्राप्तं तेनानृतेन राजा त्वया विना भूतो मृत इति शेषः । अतस्तेन राज्ञोऽभिषेककरणरूपसत्येन त्वं बद्धः किं न भवेरिति शेषः । प्रथमोक्तं राज्ञोऽभिषेकवचनरूपं सत्यं न परिपालितं तत्परिपालने त्वया विना भूतत्वासंभवेन पितृमरणं न स्यात् । एवमाद्यनर्थश्च न वृत्तः स्यादिति भावः । अनृतं त्वय्यकरणे किं न बद्धस्त्वया विनेति सर्वत्र पांक्तः पाठ इति कतकः । तीर्थस्त्वनृतं त्वय्यकरुणः किं न बद्धस्त्वया पितेति पठित्वा सत्यस्य धर्मत्वे त्वयि अभिषेकविषयमनृतं वदन् राज्यान्निष्कासनादकरुणः पिता त्वया किं न बद्ध इति व्याचष्टे । तदयुक्तं पितृबंधनस्य सत्यवचनपरिपालनरूपत्वाभावात् ॥ २८ ॥ अथेषद्गतक्रोधावेशः सन्पौरुषधर्मयोरनुष्ठाने सिद्धांतं शिष्टाचारप्रदर्शनपूर्वक माह यदीति । हे परंतप धर्म एव यदि भूतः स्यात्प्राधान्येनानुष्ठेयः स्यात् भूत अधर्म इत्यसंधिरार्षः । अधर्मो धर्मादन्यः पौरुषं तद्वा यदि प्राग्वद्भूतं स्यात्तदा वज्री मुनिं विश्वरूपं पौरुषेण हत्वा पश्चादिज्यां धर्मं न कुर्यात् किं त्वेकस्यैव प्राधान्ये एकमेव कुर्यादिति भावः ॥ २९ ॥ तस्मादधर्मसंश्रितः पौरुषयुक्तो धर्मो रिपुं विनाशयति तस्मात्सर्वमेतत्पौरुषधर्मोभयं यथाकामं स्वकार्यानुरोधेन नरः कुरुते । वज्रिप्रभृतिर्नरः ॥ ३० ॥

यदिधर्मोभवेद्भूतअधर्मोवापरंतप ॥ नस्महत्वामुनिंवज्रीकुर्यादिज्यांशतक्रतुः ॥ २९ ॥ अधर्मसंश्रितोधर्मोविनाशयतिराघव ॥ सर्वमेतद्यथाकामं काकुत्स्थकुरुतेनरः ॥ ३० ॥ ममचेदंमतंतातधर्मोयमितिराघव ॥ धर्ममूलंत्वयाछिन्नंराज्यमुत्सृजतातदा ॥ ३१ ॥ अर्थेभ्योथप्रवृद्धेभ्यःसंवृत्तेभ्यस्ततस्ततः ॥ क्रियाःसर्वाःप्रवर्ततेपर्वतेभ्यइवापगाः ॥ ३२ ॥ अर्थेनहिविमुक्तस्यपुरुषस्याल्पचेतसः ॥ विच्छिद्यंतेक्रियाःसर्वाग्रीष्मेकुसरितोयथा ॥ ३३ ॥ सोयमर्थंपरित्यज्यसुखकामःसुखैधितः ॥ पापमाचरतेकर्तुंतदादोषःप्रवर्तते ॥ ३४ ॥ यस्यार्थास्तस्यमित्राणियस्यार्थास्तस्यबांधवाः ॥ यस्यार्थाःसपुमाँल्लोकेयस्यार्थाःसचपंडितः ॥ ३५ ॥ यस्यार्थाःसचविक्रांतोयस्यार्थाःसचबुद्धिमान् ॥ यस्यार्थाःसमहाबाहुर्यस्यार्थाःसगुणाधिकः ॥ ॥ ३६ ॥ अर्थस्यैतेपरित्यागेदोषाःप्रव्याहृतामया ॥ राज्यमुत्सृजताधीरयेनबुद्धिस्त्वयाकृता ॥ ३७ ॥ यस्यार्थाधर्मकामार्थास्तस्यसर्वंप्रदक्षिणम् ॥ अधनेनार्थकामेननार्थःशक्यंविचिन्वता ॥ ३८ ॥

यदिदमुक्तं यथोचितकालदेशमुभयमनुष्ठेयमिति मम मतम् । नन्वेवं धर्मस्य तवापि संमतत्वे किमिति मे दुःखमत आह धर्ममूलमिति अर्थमूलं राज्यमुत्सृजता त्वया धर्मस्य मूलमर्थरूपं छिन्नमतस्त्वं क्लेशवानिति भावः । यत्तु तीर्थेन अधर्मः संश्रितो धर्मः कर्तारं विनाशयति तस्माद्यथाकामं तत्कालौचित्येनोभयमप्यनुष्ठेयमिदमेव यथाकाम्येनोभयाचरणमेव धर्म इति मम मतमिति व्याख्यातं तत्तूपहसनीयमेव व्युत्पन्नैरित्यलम् ॥ ३१ ॥ अथार्थस्य धर्ममूलत्वमेव प्रतिपादयति अर्थेभ्य इति ततस्ततः संवृत्तेभ्यो नानादेशादाहृतेभ्योऽतएव प्रवृत्तेभ्योर्थेभ्यः सर्वाः क्रिया योगप्रधाना भोगप्रधानाश्च प्रवर्तंते निष्कामतया कृता योगप्रधाना भवंति सकामतया कृता भोगप्रधाना इत्यर्थः ॥ ३२ ॥ अर्थाभावे क्रियाव्यतिरेकमप्याहार्थेन हीति ॥ ३३ ॥ न केवलमर्थपरित्यागे धर्मासंभवः किं तु दोषप्राप्तिरपीत्याह सोयमिति यः पुमान्प्राप्तमर्थं परित्यज्य सुखकामो भवति सोयं वक्ष्यार्थः । सुखैधितः अभिवृद्धसुखाभिलाषो भूत्वा पापमन्यायेनार्थार्जनं कर्तुमाचरते आरभते ततो दोषस्ताडनबंधनादिरूपः प्रवर्तते ॥ ३४ ॥ अथार्थः सर्वमूलमिति स्तौति यस्येति ॥ ३५ ॥ ३६ ॥ एते दोषा मित्राद्यभावरूपाः प्रव्याहृताः स्पष्टमुक्ताः । तत्र राज्यमुत्सृजता त्वया येन गुणेन बुद्धिरर्थपरित्यागविषया कृता तं न जाने इति शेषः ॥ ३७ ॥ पुनरर्थमेव स्तौति यस्येति । यस्यार्थाः संति तस्य धर्मकामरूपा

अर्थाः प्रयोजनानि भवंति तस्य सर्वं प्रदक्षिणमनुकूलं अधनेन पुरुषेणार्थं विचिन्वताप्यर्थकामेन विना पौरुषमर्थो न शक्यं प्राप्तुमिति शेषः ॥ ३८ ॥ अर्थवशादेव राज्ञि सर्वे गुणा इत्याह हर्ष इत्यादि यानि हर्षादीनि संति एतानि नराधिपे अर्थादर्थसंपत्तेरेव प्रवर्तंते अमोघानि भवंतीति भावः। यस्य हर्षो राज्ञः स कृतार्थो भवति यस्मिन् क्रोधः स नश्यतीत्यादि ॥ ३९ ॥ सर्वमूलोर्थस्तव न संवृत्त इत्याह येषामिति। येषां धर्मचारिणां तापसानां धर्मं चरतामप्यर्थाभावादयं लोक ऐहिकपुरुषार्थो नश्यतीति स्पष्टं ते इह लोके सुखसाधनभूता अर्थास्त्वयि न दृश्यंते दुर्दिनेषु नवग्रहा इवेत्यर्थः ॥ ४० ॥ सर्वमिदं दुःखं स्वानुष्ठितपूर्वाचातुरीमूलमित्युपसंहरति त्वयीति। गुरोर्वचने स्थिते त्वयि प्रव्राजिते सति धर्मश्रद्धाजाड्येन मोहाद्वनं प्राप्ते रक्षसा भार्यापहृता महता च । प्राणैः प्राणेभ्यः ॥ ४१ ॥ अतः परमेतावदेव कर्तव्यं किम

हर्षःकामश्चदर्पश्चधर्मःक्रोधःशमोदमः ॥ अर्थादेतानिसर्वाणिप्रवर्तंतेनराधिप ॥३९॥ येषांनश्यत्ययंलोकश्चरतांधर्मचारिणाम् ॥ तेर्थास्त्वयिनदृश्यंतेदुर्दिनेषुयथाग्रहाः ॥ ४० ॥ त्वयिप्रव्रजितेवीरगुरोश्चवचनेस्थिते ॥ रक्षसापहृताभार्याप्राणैःप्रियतरातव ॥४१ ॥ तदद्यविपुलंवीरदुःखमिंद्रजिताकृतम् ॥ कर्मणाव्यपनेष्यामितस्मादुत्तिष्ठराघव ॥ ४२ ॥ उत्तिष्ठनरशार्दूलदीर्घबाहोधृतव्रत ॥ किमात्मानंमहात्मानमात्मानंनावबुध्यसे ॥ ४३ ॥ अयमनघतवोदितःप्रियार्थंजनकसुतानिधनंनिरीक्ष्यरुष्टः ॥ सरथगजहयांसराक्षसेंद्रांभृशमिषुभिर्विनिपातयामिलंकाम् ॥ ४४ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीये आ० युद्धकांडे त्र्यशीतितमः सर्गः ॥ ८३ ॥ राममाश्वासमानेतुलक्ष्मणेभ्रातृवत्सले ॥ निक्षिप्यगुल्मान्स्वस्थानेतत्रागच्छद्विभीषणः ॥ ॥ १ ॥ नानाप्रहरणैर्वीरैश्चतुर्भिरभिसंवृतः ॥ नीलांजनचयाकारैर्मातंगैरिवयूथपैः ॥ २ ॥ सोभिगम्यमहात्मानंराघवंशोकलालसम् ॥ वानरांश्चापिददृशेवाष्पपर्याकुलेक्षणान् ॥ ३ ॥ राघवंचमहात्मानमिक्ष्वाकुकुलनंदनम् ॥ ददर्शमोहमापन्नंलक्ष्मणस्यांकमाश्रितम् ॥ ४ ॥ व्रीडितंशोकसंतप्तंदृष्ट्वारामंविभीषणः ॥ अंतर्दुःखेनदीनात्माकिमेतदितिसोब्रवीत ॥ ५ ॥ विभीषणमुखंदृष्ट्वासुग्रीवंतांश्चवानरान् ॥ लक्ष्मणोवाचमंदार्थमिदंवाष्पपरिप्लुतः ॥ ६ ॥ हताइंद्रजितासीताइतिश्रुत्वैवराघवः ॥ हनूमद्वचनात्सौम्यततोमोहमुपाश्रितः ॥ ७ ॥ कथयंतंतुसौमित्रिंसन्निवार्यविभीषणः ॥ पुष्कलार्थमिदंवाक्यंविसंज्ञंराममब्रवीत् ॥ ८ ॥ मनुजेंद्रार्तरूपेणयदुक्तस्त्वंहनूमता ॥ तदयुक्तमहंमन्येसागरस्येवशोषणम् ॥९॥ अभिप्रायंतुजानामिरावणस्यदुरात्मनः ॥ सीतांप्रतिमहाबाहोनचघातंकरिष्यति ॥ १० ॥

तीतार्थानुशोचनेनेत्याह तदद्येति कर्मणा पौरुषेणाहमेव व्यपनेष्यामि तस्मान्मत्प्रोत्साहनार्थमुत्तिष्ठ ॥४२॥ ननु प्राकृतवद्दैन्यं महात्मनस्ते इत्याह उत्तिष्ठेत्यादि। महात्मानं युक्तं परमात्मानम् ॥४३॥ तव प्रियार्थं मुदित उद्युक्तः निरीक्ष्य श्रुत्वा ॥ ४४ ॥ भैर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्र्यशीतितमः सर्गः ॥ ८३ ॥ कतकरी० ॥ ७६ ॥ आश्वासमाने आश्वासयमाने गुल्मान्स्वस्थाने पूर्वोदितत्तद्द्वारे निक्षिप्यावस्थाप्य ॥ १ ॥ २ ॥ ददृशे ददर्श ॥ ३ ॥ ४ ॥ ५ ॥ विभीषणमुखं दृष्ट्वा रामादिदैन्यदर्शनेन दीनमित्यर्थः। लक्ष्मणोवाचेति संधिरार्षः ॥ ६ ॥ ॥ ७ ॥ सन्निवार्य नैवं दुःखं कार्यमित्युक्त्वा ॥ ८ ॥ आर्तरूपेण दीनवेषेण ॥ ९ ॥ कथमयुक्तं तत्राहाभिप्रायं त्विति। सीतां प्रति सीतामुद्दिश्य वर्तमानं तदभिप्रायं सर्वनाशेपि सीता न त्याज्येत्येवंरूपं जानामि

च अतो घातं न करिष्यति सीताया इति शेषः ॥ १० ॥ तमेवाह याच्यमान इति ॥ ११ ॥ किं च सीतान्येन केनापि केनाप्युपायेन द्रष्टुमेवाशक्या कुतस्तस्या हरणपूर्वं वध इत्याह नैव साम्नेति । कुतो युधा निमित्तभूतयान्यस्य दर्शनादिप्रसंगो न कुतोऽपि ॥१२॥ का तर्हि वधविषयस्यानुभवस्य गतिस्तत्राह वानरानिति । मोहयित्वा मायामयसीताच्छेदनेनेति शेषः ॥१३॥ मोहने प्रयोजनमाह चैत्यमिति ॥१४॥ ननु करोतु होमं किं मोहनप्रयासेनेत्यत्राह विघ्नमिति । वानराणां पराक्रमे सति यागस्य विघ्नमन्विच्छताऽनुसरता संभावयता नूनं निश्चयेन तत्तद्विघ्ननिवृत्तये प्रयोजिता ॥ १५ ॥ तेनाद्य तद्यागस्य विघ्न एव कर्तव्य इति रहस्यमित्याह ससैन्या इति तद्धोमकर्म ॥ १६ ॥ हि यतस्त्वां शोककर्शितं दृष्ट्वा सर्वं वानरबलं सीदते सीदति तस्मात्त्वं स्वस्थहृदयो भूत्वा इहैव तिष्ठ ॥ १७ ॥ सैन्यानुकर्षिभिः सर्वसेनां

याच्यमानःसुबहुशोमयाहितचिकीर्षुणा ॥ वैदेहीमुत्सृजस्वेतिनचतत्कृतवान्वचः ॥ ११ ॥ नैवसाम्नानदानेननभेदेनकुतोयुधा ॥ साद्रष्टुमपिशक्येतनैवचान्येनकेनचित् ॥ १२ ॥ वानरान्मोहयित्वातुप्रतियातःसराक्षसः ॥ मायामयींमहाबाहोतांविद्धिजनकात्मजाम् ॥ १३ ॥ चैत्यंनिकुंभिलामद्यप्राप्यहोमंकरिष्यति ॥ हुतवानुपयातोहिदेवैरपिसवासवैः ॥ १४ ॥ दुराधर्षोभवत्येषसंग्रामेरावणात्मजः ॥ तेनमोहयतानूनमेषामायाप्रयोजिता ॥ विघ्नमन्विच्छतातत्रवानराणांपराक्रमे ॥ १५ ॥ ससैन्यास्तत्रगच्छामोयावत्तन्नसमाप्यते ॥ त्यजैनंनरशार्दूलमिथ्यासंतापमागतम् ॥ १६ ॥ सीदतेहिबलंसर्वंदृष्ट्वात्वांशोककर्शितम् ॥ इहत्वंस्वस्थहृदयस्तिष्ठसत्त्वसमुच्छ्रितः ॥ १७ ॥ लक्ष्मणंप्रेषयास्माभिःसहसैन्यानुकर्षिभिः ॥ १८ ॥ एषतंनरशार्दूलोरावणिंनिशितैःशरैः ॥ त्याजयिष्यतितत्कर्मततोवध्योभविष्यति ॥ १९ ॥ तस्यैतेनिशितास्तीक्ष्णाःपत्रिपत्रांगवाजिनः ॥ पतत्रिणइवासौम्याःशराःपास्यंतिशोणितम् ॥ २० ॥ तत्संदिशमहाबाहोलक्ष्मणंशुभलक्षणम् ॥ राक्षसस्यविनाशायवज्रंवज्रधरोयथा ॥२१॥ मनुजवरनकालविप्रकर्षोरिपुनिधनंप्रतियत्क्षमोद्यकर्तुम् ॥ त्वमतिसृजरिपोर्वधायवज्रंदिविजरिपुमथनेयथामहेंद्रः॥२२॥ समाप्तकर्माहिसराक्षसर्षभोभवत्यदृश्यःसमरेसुरासुरैः ॥ युयुत्सतातेनसमाप्तकर्मणाभवेत्सुराणामपिसंशयोमहान् ॥२३॥ इत्यार्षे श्रीमद्रामायणेवा०आ०यु० चतुरशीतितमः सर्गः ॥ ८४ ॥

तस्यतद्वचनंश्रुत्वाराघवःशोककर्शितः ॥ नोपधारयतेव्यक्तंयदुक्तंतेनरक्षसा ॥ १ ॥

गृहीत्वा गच्छद्भिरस्माभिः प्रधानैः सह लक्ष्मणं प्रेषय ॥ १८ ॥ एष रावणिं निशितैः शरैर्व्याकुलीकृत्य तत्कर्म त्याजयिष्यति । ततो हेतोर्मायासिद्धभावाद्वध्यो भविष्यति ॥ १९ ॥ पत्रिणां पत्ररूपैरंगैर्वाजिनो वेगवंतस्तस्य लक्ष्मणस्य शरा असौम्याः पत्रिणः कंकादय इव शोणितं पास्यंति इंद्रजित इति शेषः ॥ २० ॥ तत्तस्माल्लक्ष्मणं संदिश प्रेषय ॥ २१ ॥ रिपुनिधनं प्रति कालविप्रकर्षः कालक्षेपोद्य कर्तुं यद्यतो न क्षमो न योग्यस्तस्मात्त्वं रिपोर्वधाय लक्ष्मणमतिसृज प्रेषय । यथा दिविजरिपुमथनेऽमरेंद्रो वज्रमतिसृजति तथेत्यर्थः ॥ २२ ॥ कालक्षेपो न कार्य इत्यत्र हेतुमाह समाप्तेति । समाप्तयागकर्मेत्यर्थः सुराणामपि संशयः प्राणसंशय इत्यर्थः ॥ २३ ॥ गैरमानः ॥ इति श्रीरा० श्रीरामीये रामा० वाल्मीकीये आदिकाव्ये युद्धकांडे चतुरशीतितमः सर्गः ॥ ८४ ॥ कतकटी० ॥ ७७ ॥ नोपधारयते व्यक्तं

शोकवशान्न जानाति स्मेत्यर्थः ॥ १ ॥ उपासीनं समीपस्थितम् ॥ २ ॥ ते त्वया यत्प्रागुक्तं तद्भूयः श्रोतुमिच्छामि ॥ ३ ॥ यदुक्तं तदेवेदं वाक्यं पुनर्बभाषे ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ मिथ्यासंतापं तन्मूलं शोकम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ तेन वीरेणेंद्रजिता तपसा प्रीतस्य स्वयंभुवा वरदानान्निकुंभिलायां देवीहोमे समाप्ते कामतुरंगयुक्तो रथो ब्रह्मशिरोस्त्रं चाग्नेः सकाशाल्लप्स्यते तेन च तवावध्यत्वं सक्त्मयोगपर्यंतमिति वरदानाद्ब्रह्मशिरोस्त्रं प्राप्तम् ॥ १२ ॥ स एष एवं प्रकारेण लब्धवर इंद्रजित्सैन्येन सह होमं कर्तुं निकुंभिलायां प्राप्तः । यदि कृतं कर्म होमकर्म कृत्वोत्तिष्ठेच्चेत्सर्वानेव नोस्मान्हतान्विद्धि

ततोधैर्यमवष्टभ्यरामःपरपुरंजयः ॥ विभीषणमुपासीनमुवाचकपिसन्निधौ ॥ २ ॥ नैर्ऋताधिपतेवाक्यंयदुक्तंतेविभीषण ॥ भूयस्तच्छ्रोतुमिच्छामिब्रूहियत्तेविवक्षितम् ॥ ३ ॥ राघवस्यवचःश्रुत्वावाक्यंवाक्यविशारदः ॥ यत्तत्पुनरिदंवाक्यंबभाषेथविभीषणः ॥ ४ ॥ यथाज्ञप्तंमहाबाहोत्वयागुल्मनिवेशनम् ॥ तत्तथानुष्ठितंवीरत्वद्वाक्यसमनंतरम् ॥ ५ ॥ तान्यनीकानिसर्वाणिविभक्तानिसमंततः ॥ विन्यस्तायूथपाश्चैवयथान्यायंविभागशः ॥ ॥ ६ ॥ भूयस्तुममविज्ञाप्यंतच्छृणुष्वमहाप्रभो ॥ त्वय्यकारणसंतप्तेसंतप्तहृदयावयम् ॥ ७ ॥ त्यजराजन्निमंशोकंमिथ्यासंतापमागतम् ॥ यदियंत्यज्यतांचिंताशत्रुहर्षविवर्धिनी ॥ ८ ॥ उद्यमःक्रियतांवीरहर्षःसमुपसेव्यताम् ॥ प्राप्तव्यायदितेसीताहंतव्याश्चनिशाचराः ॥ ९ ॥ रघुनंदनवक्ष्यामिश्रूयतांमेहितंवचः ॥ साध्वयंयातुसौमित्रिर्बलेनमहतावृतः ॥ १० ॥ निकुंभिलायांसंप्राप्तंहंतुंरावणिमाहवे ॥ धनुर्मंडलनिर्मुक्तैराशीविषविषोपमैः ॥ ११ ॥ तेनवीरेणतपसावरदानात्स्वयंभुवः ॥ अस्त्रंब्रह्मशिरःप्राप्तंकामगाश्चतुरंगमाः ॥१२॥ सएषकिलसैन्येनप्राप्तःकिलनिकुंभिलाम् ॥ यद्युत्तिष्ठेत्कृतंकर्महतान्सर्वांश्चविद्धिनः ॥ १३ ॥ निकुंभिलामसंप्राप्तमकृताग्निंचयोरिपुः ॥ त्वामाततायिनंहन्यादिंद्रशत्रोसतेवधः ॥ १४ ॥ वरोदत्तोमहाबाहोसर्वलोकेश्वरेणवै ॥ इत्येवंविहितोराजन्वधस्तस्यैषधीमतः ॥ १५ ॥ वधायेंद्रजितोरामसंदिशस्वमहाबलम् ॥ हतेतस्मिन्हतंविद्धिरावणंससुहृद्गणम् ॥ १६ ॥ विभीषणवचःश्रुत्वारामोवाक्यमथाब्रवीत् ॥ जानामितस्यरौद्रस्यमायांसत्यपराक्रम ॥ १७ ॥ सहिब्रह्मास्त्रवित्प्राज्ञोमहामायोमहाबलः ॥ करोत्यसंज्ञान्संग्रामेदेवान्सवरुणानपि ॥ १८ ॥ तस्यांतरिक्षेचरतःसरथस्यमहायशः ॥ नगतिर्ज्ञायतेवीरसूर्यस्येवाभ्रसंप्लवे ॥ १९ ॥ राघवस्तुरिपोर्ज्ञात्वामायावीर्यंदुरात्मनः ॥ लक्ष्मणंकीर्तिसंपन्नमिदंवचनमब्रवीत् ॥ २० ॥ यद्वानरेंद्रस्यबलंतेनसर्वेणसंवृतः ॥ हनूमत्प्रमुखैश्चैवयूथपैःसहलक्ष्मण ॥ २१ ॥ जांबवेनर्क्षपतिनासहसैन्येनसंवृतः ॥ जहितंराक्षससुतंमायाबलसमन्वितम् ॥ २२ ॥

॥१३॥ किंच भगवता तद्वधोप्येवं प्रकारेणोक्त इत्याह निकुंभिलामिति । निकुंभिलां तद्यागभूमिं महाकालीक्षेत्रं तदाख्यन्यग्रोधमूलरूपमप्राप्तम् । अकृताग्निं अहुताभिचारहोमम् । अहुताग्निमितिपाठांतरम् । आततायिनं गृहीतशस्त्रं यो रिपुर्हन्यात्बुध्येत् । हे इंद्रशत्रो स रिपुस्ते वधः वधकर्ता भविष्यति ॥ १४ ॥ सर्वलोकेश्वरेण ब्रह्मणा एष वरो दत्तो वै प्रसिद्धः । राजन् धीमतस्तस्यैवमेषवधो विहितो ब्रह्मणा ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ हे महायशः अंतरिक्षे चरतः सरथस्य तस्य गतिर्न ज्ञायते अभ्रसंप्लवे मेघसमूहे ॥ १९ ॥ २० ॥ ॥ २१ ॥ २२ ॥

युक्तगत्यादिकं किंचिद्विदितम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ अयुध्यमानं त्यक्तयुद्धं मच्छन्नं युद्धभीत्या गृहेऽस्मदृश्यतया स्थितम् अयुध्यमानत्वादिषट्प्रकाराणामपि सर्वरक्षउद्देशेन ब्रह्मास्त्रसंधाने वधो भवति न तु तद्युज्यत इत्यर्थः । अंततो विभीषणस्यापि नाशमसंग इत्याशयः ॥ ३९ ॥ माययांतर्हितमेनमेव हंतुं घोरानाशीविषोपमानस्त्रान् अस्त्राणि आदेक्ष्यावः । अदृष्टवधोऽस्मदेकसाध्यः दृष्टस्य तु वध ईषत्करो वानराणामपीत्याह राक्षसमिति । यदि दर्शनं स्यात्तदा दृष्ट्वा दर्शनमात्रेण हनूमदादय एनं राक्षसं निहनिष्यंति दृष्ट्वा वानरयूथपा इत्यत्र तद्दर्शनोपायो भारते उक्तः । इदमंभो गृहीत्वा तु राजराजस्य शासनात् ॥ गुह्यकोऽभ्यागतः कश्चित्त्वत्सकाशमरिंदम ॥ इदमंभः कुबेरस्ते महाराज प्रयच्छति ॥ अंतर्हितानां भूतानांदर्शनार्थं परंतप ॥ अनेन मृष्टनयनो भूतान्यंतर्हितान्युत ॥ भवान्द्रक्ष्यति यस्मै च प्रदास्यति नरः स चेति

तेनविद्धाश्चहरयोनिहताश्चगतासवः ॥ बभूवुःशतशस्तत्रपतिताधरणीतले ॥ ३६ ॥ लक्ष्मणस्तुततःक्रुद्धोभ्रातरंवाक्यमब्रवीत् ॥ ब्राह्ममस्त्रंप्रयोक्ष्यामिवधार्थंसर्वरक्षसाम् ॥ ३७ ॥ तमुवाचततोरामोलक्ष्मणंशुभलक्षणम् ॥ नैकस्यहेतोरक्षांसिपृथिव्यांहंतुमर्हसि ॥ ३८ ॥ अयुध्यमानंप्रच्छन्नंप्रांजलिंशरणागतम् ॥ पलायमानंमत्तंवानहंतुंत्वमिहार्हसि ॥३९॥ तस्यैवतुवधेयत्नंकरिष्यामिमहाभुज ॥ आदेक्ष्यावोमहावेगानस्त्रानाशीविषोपमान् ॥ ॥ ४० ॥ तमेनंमायिनंक्षुद्रमंतर्हितरथंबलात् ॥ राक्षसंनिहनिष्यंतिदृष्ट्वावानरयूथपाः ॥ ४१ ॥ यद्येषभूमिंविशतेदिवंवारसातलंवापिनभस्तलंवा ॥ एवंविगूढोपिममास्त्रदग्धःपतिष्यतेभूमितलेगतासुः ॥ ४२ ॥ इत्येवमुक्त्वावचनंमहार्थंरघुप्रवीरःप्लवगर्षभैर्वृतः ॥ वधायरौद्रस्यनृशंसकर्मणस्तदामहात्मात्वरितंनिरीक्षते ॥ ४३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे अशीतितमः सर्गः ॥ ८० ॥ विज्ञायतुमनस्तस्यराघवस्यमहात्मनः ॥ सनिवृत्याहवात्तस्मात्प्रविवेशपुरंततः ॥ १ ॥ सोनुस्मृत्यवधंतेषांराक्षसानांतरस्विनाम् ॥ क्रोधताम्रेक्षणःशूरोनिर्जगामाथरावणिः ॥२॥ सपश्चिमेनद्वारेणनिर्ययौराक्षसैर्वृतः ॥ इंद्रजित्तुमहावीर्यःपौलस्त्योदेवकंटकः ॥ ३ ॥ इंद्रजित्तुततोदृष्ट्वाभ्रातरौरामलक्ष्मणौ ॥ रणायात्युद्यतौवीरौमायांप्रादुष्करोत्तदा ॥ ४ ॥ इंद्रजित्तुरथेस्थाप्यसीतांमायामयींतदा ॥ बलेनमहताबृत्यतस्यावधमरोचयत् ॥ ५ ॥ मोहनार्थंतुसर्वेषांबुद्धिंकृत्वासुदुर्मतिः ॥ हंतुंसीतांव्यवसितोवानराभिमुखोययौ ॥६॥ तंदृष्ट्वात्वभिनिर्यांतंसर्वेतेकाननौकसः ॥ उत्पेतुरभिसंक्रुद्धाःशिलाहस्तायुयुत्सवः ॥ ॥७॥ हनूमान्पुरतस्तेषांजगामकपिकुंजरः ॥ प्रगृह्यसुमहच्छृंगंपर्वतस्यदुरासदम् ॥८॥ सददर्शहतानंदांसीतामिंद्रजितोरथे ॥ एकवेणीधरांदीनामुपवासकृशाननाम् ॥ ९ ॥

विभीषणवाक्येन ॥ ४० ॥ ४१ ॥ भूमिं भूमिविवरम् दिवं स्वर्गम् एतदुपारितनलोकोपलक्षणम् रसातलमित्येतदधस्तललोकोपलक्षणम् ॥ ४२ ॥ त्वरितं त्वरोपेतं निरीक्षते स्म ॥ ४३ ॥ लवमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अशीतितमः सर्गः ॥ ८० ॥ कतकरी० ॥ ७३ ॥ मनो विज्ञाय दिव्यास्त्रबलेन सर्वथा मां जिघांसतीति ज्ञात्वा ॥ १ ॥ तेषां कुंभकर्णादीनाम् ॥ २ ॥ ३ ॥ मायां परव्यामोहकरीं शक्तिं प्रादुष्करोत्प्रादुर्भावयामास निकुंभिलां गंतुकामः पश्चिमेन द्वारेण निर्गच्छन्स्वगमनविघातकं रामलक्ष्मणयोर्युद्धोद्योगं दृष्ट्वा तन्निवारणार्थं मायां प्रकटितवानित्याशयः ॥ ४ ॥ तां मायामाह इंद्रजित्त्विति । तस्या वधं मायासीतावधम् बुद्धिं कृत्वा मंत्रं कृत्वा सीतां हंतुं व्यवसितः सन्ययौ । इदं रात्रिशेष परदिने दशम्यां वा इति बोध्यम् ॥५॥६॥७॥८॥९॥

परिक्लिष्टं मलिनम् अमृजां उद्वर्तनादिसंस्काररहिताम् सर्वगात्रैरुपलक्षिताम् ॥ १० ॥ अध्यवस्य निश्चित्य विषण्णो बभूवेति शेषः । निश्चयहेतुमाह अचिरेत्यादि ॥ ११ ॥ शोकार्तत्वादिगुणविशिष्टां राक्षसेंद्रसुतमिंद्रजितं श्रितां सीतां दृष्ट्वा किमस्य समर्थितमभिमतमिति स्वयं चिंतयन्सन्वानरान्प्रत्यपि किं समर्थितमस्येत्यब्रवीत् ॥ १२ ॥ अस्तु यत्किंचिदस्य समर्थितमपि तु दुष्टमेनं हन्म इत्युद्योगं कृतवानित्याह सह तैरिति ॥ १३ ॥ विकोशं विगतपिधानं निस्त्रिंशं खड्गं मूर्ध्नि तत्स्थे केशपाशे स्पृष्ट्वेति शेषः॥१४॥ पश्यतां तेषां पश्यतस्ताननादृत्येत्यर्थः ॥१५॥॥१६॥१७॥ हे दुरात्मन् यदेनां केशपक्षे केशकलापे परामृशस्तदात्मनाशाय । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे । यतो ब्रह्मर्षिकुले जातोपि राक्षसीं योनिमाश्रितोसि अतस्त्वां धिगित्युत्तरेणान्वयः ॥ १८ ॥ पापपराक्रम कूटयोधिन् हे निर्घृण ते स्त्रीविषयेपि घृणा नास्ति अतोऽनार्यस्येदृशं कर्म धिगित्यनुकर्षः ॥ १९ ॥ २० ॥ हे वधार्ह तेन कर्मणा न चिरं जीविष्यसि हि यतो मम हस्तगतोसि ॥ २१ ॥ ये लोकवध्यैश्चोरादिभिरपि कुत्सिता अतिदुःखितया परिहृताः स्त्रीघातिनां लोकास्तानिहेदानीं जीवितमुत्सृज्य प्रेत्य प्रतिलप्स्यसे ॥ २२ ॥ २३ ॥ आपदंतमिति लिंगव्यत्यय आर्षः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अमित्राणां शत्रूणां यत्पीडाकरं

परिक्लिष्टैकवसनाममृजांराघवप्रियाम् ॥ रजोमलाभ्यामालिप्तैःसर्वगात्रैर्वरस्त्रियम् ॥ १० ॥ तांनिरीक्ष्यमुहूर्तंतुमैथिलीमध्यवस्यच ॥ बभूवाचिरदृष्टाहितेनसाजनकात्मजा ॥ ११ ॥ अब्रवीत्तांतुशोकार्तांनिरानंदांतपस्विनीम् ॥ दृष्ट्वारथस्थितांदीनांराक्षसेंद्रसुताश्रिताम् ॥ १२ ॥ किंसमर्थितमस्येतिचिंतयन्समहाकपिः ॥ सहतैर्वानरश्रेष्ठैरभ्यधावतरावणिम् ॥ १३ ॥ तद्वानरबलंदृष्ट्वारावणिःक्रोधमूर्च्छितः ॥ कृत्वाविकोशंनिस्त्रिंशंमूर्ध्निसीतामकर्षयत् ॥ १४ ॥ तांस्त्रियंपश्यतांतेषांताडयामासराक्षसः ॥ क्रोशंतींरामरामेतिमाययायोजितांरथे ॥ १५ ॥ गृहीतमूर्धजांदृष्ट्वाहनूमान्दैन्यमागतः ॥ दुःखजंवारिनेत्राभ्यामुत्सृजन्मारुतात्मजः ॥ १६ ॥ तांदृष्ट्वाचारुसर्वांगींरामस्यमहिषींप्रियाम् ॥ अब्रवीत्परुषंवाक्यंक्रोधाद्रक्षोधिपात्मजम् ॥ १७ ॥ दुरात्मन्नात्मनाशायकेशपक्षेपरामृशः ॥ ब्रह्मर्षीणांकुलेजातोराक्षसींयोनिमाश्रितः ॥ १८ ॥ धिक्त्वांपापसमाचारंयस्यतेमतिरीदृशी ॥ नृशंसानार्यदुर्वृत्तक्षुद्रपापपराक्रम ॥ अनार्यस्येदृशंकर्मघृणातेनास्तिनिर्घृण ॥ १९ ॥ च्युतागृहाच्चराज्याच्चरामहस्ताच्चमैथिली ॥ किंतवैषापराद्धाहियदेनांहंसिनिर्दय ॥ २० ॥ सीतांहत्वातुनचिरंजीविष्यसिकथंचन ॥ वधार्हकर्मणातेनममहस्तगतोह्यसि ॥२१॥ येचस्त्रीघातिनांलोकालोकवध्यैश्चकुत्सिताः ॥ इहजीवितमुत्सृज्यप्रेत्यतान्प्रतिलप्स्यसे ॥ २२ ॥ इतिब्रुवाणोहनुमान्सायुधैर्हरिभिर्वृतः ॥ अभ्यधावत्सुसंक्रुद्धोराक्षसेंद्रसुतंप्रति ॥ ॥ २३ ॥ आ[illegible]पतंतंमहावीर्यंतदनीकंवनौकसाम् ॥ रक्षसांभीमकोपानामनीकेनन्यवारयत् ॥ २४ ॥ सतांबाणसहस्रेणविक्षोभ्यहरिवाहिनीम् ॥ हनूमंतंहरिश्रेष्ठमिंद्रजित्प्रत्युवाचह ॥ २५ ॥ सुग्रीवस्त्वंचरामश्चयन्निमित्तमिहागताः ॥ तांवधिष्यामिवैदेहीमद्यैवतवपश्यतः ॥२६॥ इमांहत्वाततोरामंलक्ष्मणंत्वांचवानर ॥ सुग्रीवंचवधिष्यामितंचानार्यंविभीषणम् ॥ २७ ॥ नहंतव्याःस्त्रियश्चेतियद्ब्रवीषिप्लवंगम ॥ पीडाकरममित्राणांयच्चकर्तव्यमेवतत् ॥ २८ ॥

इत्यमरः ॥ १४ ॥ १५ ॥ राक्षसैर्मंत्रैर्निर्ऋतिदैवत्यमंत्रैः अंतर्धानगतः अंतर्धानशक्तिं प्राप्तः ॥ १६ ॥ १७ ॥ रामं हत्वा निर्वानरामुर्वीं कृत्वा पितुः प्रीतिं करिष्ये इत्यर्थः । यत्त्वेवमादिवचसां रामस्तुतिपरतया क्लेशेन व्याख्यानं तद्वृथैव कवेः कविनिबद्धवक्तुश्च तथातात्पर्याभावादिति एतत्सजातीयवालिवाक्यावसरे निरूपितम् ॥ १८ ॥ १९ ॥ तूणीधनुःसंबंधात्रिशिरोनागत्वोत्प्रेक्षा सृजंतौ स्रक्ष्यंतौ ॥ २० ॥ इमौ ताविति संचिंत्य सकलराक्षसहंताराविति स्मृत्वा इषुधाराभिः इषुवर्षैः संततान् पूरयामास सर्वा दिश इति शेषः ॥ २१ ॥ वैहायसरथः आकाशगामी रथो यस्य सः । अचक्षुर्विषये तिष्ठन् इदं युद्धं तद्रात्रावेव मध्य

सोभिनिर्यायनगरादिंद्रजित्समितिंजयः ॥ हुत्वाग्निंराक्षसैर्मंत्रैरंतर्धानगतोब्रवीत् ॥ १६ ॥ अद्यहत्वारणेयौतौमिथ्याप्रव्रजितौवने ॥ जयंपित्रेप्रदास्यामिरावणायरणेधिकम् ॥ १७ ॥ अद्यनिर्वानरामुर्वींहत्वारामंचलक्ष्मणम् ॥ करिष्येपरमांप्रीतिमित्युक्त्वांतरधीयत ॥ १८ ॥ आपपाताथसंक्रुद्धोदशग्रीवेणचोदितः ॥ तीक्ष्णकार्मुकनाराचैस्तीक्ष्णस्त्विंद्ररिपूरणे ॥ १९ ॥ सददर्शमहावीर्यौनागौत्रिशिरसाविव ॥ सृजंताविषुजालानिवीरौवानरमध्यगौ ॥२०॥ इमौताविविसंचिंत्यसज्यंकृत्वाचकार्मुकम् ॥ संततानिषुधाराभिःपर्जन्यइववृष्टिमान् ॥२१॥ सतुवैहायसरथोयुधितौरामलक्ष्मणौ ॥ अचक्षुर्विषयेतिष्ठन्विव्याधनिशितैःशरैः ॥ २२ ॥ तौतस्यशरवेगेनपरीतौरामलक्ष्मणौ ॥ धनुषीसशरेकृत्वादिव्यमस्त्रंप्रचक्रतुः ॥२३॥ प्रच्छादयंतौगगनंशरजालैर्महाबलौ ॥ तमस्त्रैःसूर्यसंकाशैर्नैवपस्पर्शतुःशरैः ॥ २४ ॥ सहिधूमांधकारंचचक्रेप्रच्छादयन्नभः ॥ दिशश्चांतर्दधेश्रीमान्नीहारतमसावृतः ॥ २५ ॥ नैवज्यातलनिर्घोषोनचनेमिखुरस्वनः ॥ शुश्रुवेचरतस्तस्यनचरूपंप्रकाशते ॥ २६ ॥ घनांधकारेतिमिरेशिलावर्षमिवाद्भुतम् ॥ सववर्षमहाबाहुर्नाराचशरवृष्टिभिः ॥ २७ ॥ सरामंसूर्यसंकाशैःशरैर्दत्तवरैर्भृशम् ॥ विव्याधसमरेक्रुद्धःसर्वगात्रेषुरावणिः ॥ २८ ॥ तौहन्यमानौनाराचैर्धाराभिरिवपर्वतौ ॥ हेमपुंखान्नरव्याघ्रौतिग्मान्मुमुचतुःशरान् ॥ २९ ॥ अंतरिक्षेसमासाद्यरावणिंकंकपत्रिणः ॥ निकृत्यपतगाभूमौपेतुस्तेशोणिताक्षिताः ॥ ३० ॥ अतिमात्रंशरौघेणदीप्यमानौनरोत्तमौ ॥ तानिषून्पततोभल्लैरनेकैर्विचकर्ततुः ॥ ३१ ॥ यतोहिददृशातेतौशरान्निपतिताञ्छितान् ॥ ततस्तुतौदाशरथीससृजातेस्त्रमुत्तमम् ॥ ३२ ॥ रावणिस्तुदिशःसर्वारथेनातिरथोपतत् ॥ विव्याधतौदाशरथीलघ्वस्त्रोनिशितैःशरैः ॥ ॥ ३३ ॥ तेनातिविद्धौतौवीरौरुक्मपुंखैःसुसंहतैः ॥ बभूवतुर्दाशरथीपुष्पिताविवकिंशुकौ ॥३४॥ नास्यवेगगतिंकश्चिन्नचरूपंधनुःशरान् ॥ नचास्यविदितंकिंचित्सूर्यस्येवाभ्रसंप्लवे ॥ ३५ ॥

रात्रे ॥ २२ ॥ परीतौ व्याप्तौ प्रचक्रतुः प्रादुश्चक्रतुः ॥ २३ ॥ अस्त्रैः अस्त्रमंत्राभिमंत्रितैः शरैस्तमिंद्रजितं नैव पस्पर्शतुः पस्पृशतुः अंतर्हितत्वादिति भावः ॥ २४ ॥ धूमांधकारं चक्रे माययेति शेषः । दिशश्चांतर्दधे अंतर्धापयामास नीहारवशात्तदविवेकं मायया संपादयामासेत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ दत्तवरैर्वरदत्तैः ॥ २८ ॥ २९ ॥ कंकपत्रिणस्ते पतगा बाणा अंतरिक्षे रावणिं समासाद्य तं निकृत्य विद्धा भूमौ शोणितोक्षिताः पेतुः ॥ ३० ॥ तानिषूनिंद्रजित्त्यक्तबाणान्विचकर्ततुरित्यार्षो गुणः ॥ ३१ ॥ यतो यस्यां दिशि ततस्तस्यां दिशि ॥ ३२ ॥ ३३ ॥ ३४ ॥ अभ्रसंप्लवे सूर्यस्य गत्यादिकमिव नास्य वेग

परिक्लिष्टं मलिनम् अमृजां उद्वर्तनादिसंस्काररहिताम् सर्वगात्रैरुपलक्षिताम् ॥ १० ॥ अध्यवस्य निश्चित्य विषण्णो बभूवेति शेषः । निश्चयहेतुमाह अचिरेत्यादि ॥ ११ ॥ शोकार्तत्वादिगुणविशिष्टां राक्षसेंद्रसुतमिंद्रजितं श्रितां सीतां दृष्ट्वा किमस्य समर्थितमभिप्रेतमिति स्वयं चिंतयन्सन्वानरान्प्रत्यपि किं समर्थितमस्येत्यब्रवीत् ॥ १२ ॥ अस्तु यत्किंचिदस्य समर्थितमपि तु दुष्टमेनं हन्म इत्युद्योगं कृतवानित्याह सह तैरिति ॥ १३ ॥ विकोशं विगतपिधानं निस्त्रिंशं खड्गं मूर्ध्नि तत्स्थे केशपाशे स्पृष्ट्वेति शेषः॥१४॥ पश्यतां तेषां पश्यतस्ताननादृत्येत्यर्थः ॥१५॥॥१६॥१७॥ हे दुरात्मन् यदेनां केशपक्षे केशक

परिक्लिष्टैकवसनाममृजांराघवप्रियाम् ॥ रजोमलाभ्यामालिप्तैःसर्वगात्रैर्वरस्त्रियम् ॥ १० ॥ तांनिरीक्ष्यमुहूर्ततुमैथिलीमध्यवस्यच ॥ बभूवाचिरदृष्टाहितेनसाजनकात्मजा॥ ११ ॥ अब्रवीत्तांतुशोकार्तांनिरानंदांतपस्विनीम् ॥ दृष्ट्वारथस्थितांदीनांराक्षसेंद्रसुताश्रिताम् ॥ १२ ॥ किंसमर्थितमस्येतिचिंतयन्समहाकपिः ॥ सहतैर्वानरश्रेष्ठैरभ्यधावतरावणिम् ॥ १३ ॥ तद्वानरबलंदृष्ट्वारावणिःक्रोधमूर्च्छितः ॥ कृत्वाविकोशंनिस्त्रिंशंमूर्ध्निसीतामकर्षयत् ॥ १४ ॥ तांस्त्रियंपश्यतांतेषांताडयामासराक्षसः ॥ क्रोशंतींरामरामेतिमाययायोजितांरथे ॥ १५ ॥ गृहीतमूर्धजांदृष्ट्वाहनूमान्दैन्यमागतः ॥ दुःखजंवारिनेत्राभ्यामुत्सृजन्मारुतात्मजः ॥ १६ ॥ तांदृष्ट्वाचारुसर्वांगींरामस्यमहिषींप्रियाम् ॥ अब्रवीत्परुषंवाक्यंक्रोधाद्रक्षोधिपात्मजम् ॥ १७ ॥ दुरात्मन्नात्मनाशायकेशपक्षेपरामृशः ॥ ब्रह्मर्षीणांकुलेजातोराक्षसींयोनिमाश्रितः ॥ १८ ॥ धिक्त्वांपापसमाचारंयस्यतेमतिरीदृशी ॥ नृशंसानार्यदुर्वृत्तक्षुद्रपापपराक्रम ॥ अनार्यस्येदृशंकर्मघृणातेनास्तिनिर्घृण ॥ १९ ॥ च्युतागृहाच्चराज्याच्चरामहस्ताच्चमैथिली ॥ किंतवैषापराद्धाहियदेनांहंसिनिर्दय ॥ २० ॥ सीतांहत्वातुनचिरंजीविष्यसिकथंचन ॥ वधार्हकर्मणातेनममहस्तगतोह्यसि ॥२१॥ येचस्त्रीघातिनांलोकालोकवध्यैश्चकुत्सिताः ॥ इहजीवितमुत्सृज्यप्रेत्यतान्प्रतिलप्स्यसे ॥ २२ ॥ इतिब्रुवाणोहनुमान्सायुधैर्हरिभिर्वृतः ॥ अभ्यधावत्सुसंक्रुद्धोराक्षसेंद्रसुतंप्रति ॥ ॥ २३ ॥ आपतंतंमहावीर्यंतदनीकंवनौकसाम् ॥ रक्षसांभीमकोपानामनीकेनन्यवारयत् ॥ २४ ॥ सतांबाणसहस्रेणविक्षोभ्यहरिवाहिनीम् ॥ हनूमंतंहरिश्रेष्ठमिंद्रजित्प्रत्युवाचह ॥ २५ ॥ सुग्रीवस्त्वंचरामश्चयन्निमित्तमिहागताः॥ तांवधिष्यामिवैदेहीमद्यैवतवपश्यतः ॥२६॥ इमांहत्वाततोरामंलक्ष्मणंत्वांचवानर ॥ सुग्रीवंचवधिष्यामितंचानार्यंविभीषणम् ॥ २७ ॥ नहंतव्याःस्त्रियश्चेतियद्ब्रवीषिप्लवंगम ॥ पीडाकरममित्राणांयच्चकर्तव्यमेवतत् ॥ २८ ॥

लापे परामृशस्तदात्मनाशाय । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे । यतो ब्रह्मर्षिकुले जातोपि राक्षसीं योनिमाश्रितोसि अतस्त्वां धिगित्युत्तरेणान्वयः ॥ १८ ॥ पापपराक्रम कूटयोधिन् हे निर्घृण ते स्त्रीविषयेपि घृणा नास्ति अतोऽनार्यस्येदृशं कर्म धिगित्यनुकर्षः ॥ १९ ॥ २० ॥ हे वधार्ह तेन कर्मणा न चिरं जीविष्यसि हि यतो मम हस्तगतोसि ॥ २१ ॥ ये लोकवध्यैश्चोरादिभिरपि कुत्सिता अतिदुःखितया परिहृताः स्त्रीघातिनां लोकास्तानिहेदानीं जीवितमुत्सृज्य प्रेत्य प्रतिलप्स्यसे ॥ २२ ॥ २३ ॥ आपदंतमिति लिंगव्यत्यय आर्षः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अमित्राणां शत्रूणां यत्पीडाकरं

धायां तिष्ठत्तद्रक्षः शूलं जग्राहेति संबंधः ॥ ३१ ॥ ३२ ॥ शूलोर्धचांदिः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रधावंत माधावंत ॥ ४० ॥ ४१ ॥ नवम्यां पूर्वरात्रेस्य वधः ॥ थेवँमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे नवसप्ततितमः सर्गः ॥ ७९ कतकरी० ॥ ७२ ॥ ॥ कटकटाय्येत्यार्षो ल्यप् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ जुहव

यंदृष्ट्वादेवताःसर्वाभयार्ताविद्रुतादिशः ॥ विभ्राम्यचमहच्छूलंप्रज्वलंतंनिशाचरः ॥ ३३ ॥ सक्रोधात्प्राहिणोत्तस्मैराघवायमहात्मने ॥ तमापतंतंज्वलितंखरपुत्रकराच्युतम् ॥ ३४ ॥ बाणैश्चतुर्भिराकाशेशूलंचिच्छेदराघवः ॥ सभिन्नोनैकधाशूलोदिव्यहाटकमंडितः ॥ व्यशीर्यतमहोल्केवरामबाणार्दितोभुवि ॥३५ ॥ तच्छूलंनिहतंदृष्ट्वारामेणाक्लिष्टकर्मणा ॥ साधुसाध्वितिभूतानिव्याहरंतिनभोगताः ॥ ३६ ॥ तंदृष्ट्वानिहतंशूलंमकराक्षोनिशाचरः ॥ मुष्टिमुद्यम्यकाकुत्स्थंतिष्ठतिष्ठेतिचाब्रवीत् ॥ ३७॥ सतंदृष्ट्वापतंतंतुप्रहस्यरघुनंदनः ॥ पावकास्त्रंततोरामःसंदधेतुशरासने ॥ ३८ ॥ तेनास्त्रेणहतंरक्षःकाकुत्स्थेनतदारणे ॥ सच्छिन्नहृदयंतत्रपपातचममारच ॥ ३९ ॥ दृष्ट्वातेराक्षसाःसर्वेमकराक्षस्यपातनम् ॥ लंकामेवप्रधावंतरामबाणभयार्दिताः ॥ ४० ॥ दशरथनृपसूनुबाणवेगैरजनिचरंनिहतंखरात्मजंतम् ॥ प्रददृशुरथदेवताःप्रहृष्टागिरिमिववज्रहतंतथाविकीर्णम् ॥ ४१ ॥ इ० श्रीम० वा० आ० यु० नवसप्ततितमः सर्गः ॥ ७९ ॥ मकराक्षंहतंश्रुत्वारावणःसमितिंजयः ॥ रोषेणमहताविष्टोदंतान्कटकटाय्यच ॥ १ ॥ कुपितश्चतदातत्रकिंकार्यमितिचिंतयन् ॥ आदिदेशाथसंक्रुद्धोरणायेंद्रजितंसुतम् ॥ २ ॥ जहिवीरमहावीर्यौभ्रातरौरामलक्ष्मणौ ॥ अदृश्योदृश्यमानोवासर्वथात्वंबलाधिकः ॥ ३ ॥ त्वमप्रतिमकर्माणमिंद्रंजयसिसंयुगे ॥ किंपुनर्मानुषौदृष्ट्वानवधिष्यसिसंयुगे ॥ ४ ॥ तथोक्तोराक्षसेंद्रेणप्रतिगृह्यपितुर्वचः ॥ यज्ञभूमौसविधिवत्पावकंजुहवेंद्रजित् ॥ ५ ॥ जुहतश्चापितत्राग्निंरक्तोष्णीषधराःस्त्रियः ॥ आजग्मुस्तत्रसंभ्रांताराक्षस्योयत्ररावणिः ॥ ६ ॥ शस्त्राणिशरपत्राणिसमिधोथबिभीतकाः ॥ लोहितानिचवासांसिस्रुवंकार्ष्णायसंतथा ॥ ७ ॥ सर्वतोग्निंसमास्तीर्यशरपत्रैःसतोमरैः ॥ छागस्यसर्वकृष्णस्यगलंजग्राहजीवतः ॥ ८ ॥ शरहोमसमिद्धस्यविधूमस्यमहार्चिषः ॥ बभूवुस्तानिलिंगानिविजयंदर्शयंतिच ॥९॥ प्रदक्षिणावर्तशिखस्तप्तहाटकसन्निभः ॥ हविस्तत्प्रतिजग्राहपावकःस्वयमुत्थितः ॥ १० ॥ हुत्वाग्निंतर्पयित्वाथदेवदानवराक्षसान् ॥ आरुरोहरथश्रेष्ठमंतर्धानगतंशुभम् ॥ ११ ॥ सवाजिभिश्चतुर्भिस्तुबाणैस्तुनिशितैर्युतः ॥ आरोपितमहाचापःशुशुभेस्यंदनोत्तमे ॥ १२ ॥ जाज्वल्यमानोवपुषातपनीयपरिच्छदः ॥ मृगैश्चंद्रार्धचंद्रैश्चसरथःसमलंकृतः ॥ १३ ॥ जांबूनदमहाकंबुर्दीप्तपावकसन्निभः ॥ बभूवेंद्रजितःकेतुर्वैदूर्यसमलंकृतः ॥ १४ ॥ तेनचादित्यकल्पेनब्रह्मास्त्रेणचपालितः ॥ सबभूवदुराधर्षोरावणिःसुमहाबलः ॥ १५ ॥

जुहाव वृद्धयभाव आर्षः ॥ ५ ॥ स्त्रिय आजग्मुः होमपरिचारिका इति शेषः ॥ ६ ॥ शस्त्राणीत्यादि व्याख्यातम् ॥ ७ ॥ ८ ॥ विजयं दर्शयंति चेत्यत्र जीवतः पुनर्लंकाप्रवेश एवात्र जयः ॥ ९ ॥ १० ॥ राक्षसांस्तर्पयित्वा अभिचारयागीयानिति शेषः ॥ ११ ॥ १२ ॥ वपुषा स्वरूपेण जाज्वल्यमानो रथ इति शेषः । मृगैश्चित्रमयैः ॥ १३ ॥ जांबनदमया महांतः कंबवो वलया यस्य । कंबुर्ना वलये शंखे

इत्यमरः ॥ १४ ॥ १५ ॥ राक्षसैर्मंत्रैर्निर्ऋतिदैवत्यमंत्रैः अंतर्धानगतः अंतर्धानशक्तिं प्राप्तः ॥ १६ ॥ १७ ॥ रामं हत्वा निर्वानरामुर्वीं कृत्वा पितुः प्रीतिं करिष्ये इत्यर्थः । यत्त्वेवमादिवचसां रामस्तुतिपरतया क्लेशेन व्याख्यानं तद्दैव कवेः कविनिबद्धवक्तुश्च तथातात्पर्याभावादिति एतत्सजातीयवालिवाक्यावसरे निरूपितम् ॥ १८ ॥ १९ ॥ तूणीधनुःसंबंधात्रिशिरोनागत्वोत्प्रेक्षा सृजंतौ स्रक्ष्यंतौ ॥ २० ॥ इमौ ताविति संचिंत्य सकलराक्षसहंताराविति स्मृत्वा इषुधाराभिः इषुवर्षैः संततान् पूरयामास सर्वा दिश इति शेषः ॥ २१ ॥ वैहायसरथः आकाशगामी रथो यस्य सः । अचक्षुर्विषये तिष्ठन् इदं युद्धं तद्रात्रावेव मध्य



सोभिनिर्यायनगरादिंद्रजित्समितिंजयः ॥ हुत्वाग्निंराक्षसैर्मंत्रैरंतर्धानगतोब्रवीत् ॥ १६ ॥ अद्यहत्वारणेयौतौमिथ्याप्रव्रजितौवने ॥ जयंपित्रेप्रदास्यामिरावणायरणेधिकम् ॥ १७ ॥ अद्यनिर्वानरामुर्वींहत्वारामंचलक्ष्मणम् ॥ करिष्येपरमांप्रीतिमित्युक्त्वांतरधीयत ॥ १८ ॥ आपपाताथसंक्रुद्धोदशग्रीवेणचोदितः ॥ तीक्ष्णकार्मुकनाराचैस्तीक्ष्णस्त्विंद्ररिपूरणे ॥ १९ ॥ सददर्शमहावीर्यौनागौत्रिशिरसाविव ॥ सृजंताविषुजालानिवीरौवानरमध्यगौ ॥२०॥ इमौताविितिसंचिंत्यसज्यंकृत्वाचकार्मुकम् ॥ संततानिषुधाराभिःपर्जन्यइववृष्टिमान् ॥२१॥ सतुवैहायसरथोयुधितौरामलक्ष्मणौ ॥ अचक्षुर्विषयेतिष्ठन्विव्याधनिशितैःशरैः ॥ २२ ॥ तौतस्यशरवेगेनपरीतौरामलक्ष्मणौ ॥ धनुषीसशरेकृत्वादिव्यमस्त्रंप्रचक्रतुः ॥२३॥ प्रच्छादयंतौगगनंशरजालैर्महाबलौ ॥ तमस्त्रैःसूर्यसंकाशैर्नैवपस्पर्शतुःशरैः ॥ २४ ॥ सहिधूमांधकारंचचक्रेप्रच्छादयन्नभः ॥ दिशश्चांतर्दधेश्रीमान्नीहारतमसावृतः ॥ २५ ॥ नैवज्यातलनिर्घोषोनचनेमिखुरस्वनः ॥ शुश्रुवेचरतस्तस्यनचरूपंप्रकाशते ॥ २६ ॥ घनांधकारेतिमिरेशिलावर्षमिवाद्भुतम् ॥ सववर्षमहाबाहुर्नाराचशरवृष्टिभिः ॥ २७ ॥ सरामंसूर्यसंकाशैःशरैर्दत्तवरैर्भृशम् ॥ विव्याधसमरेक्रुद्धःसर्वगात्रेषुरावणिः ॥ २८ ॥ तौहन्यमानौनाराचैर्धाराभिरिवपर्वतौ ॥ हेमपुंखान्नरव्याघ्रौतिग्मान्मुमुचतुःशरान् ॥ २९ ॥ अंतरिक्षेसमासाद्यरावणिंकंकपत्रिणः ॥ निकृत्यपतगाभूमौपेतुस्तेशोणिताप्लुताः ॥ ३० ॥ अतिमात्रंशरौघेणदीप्यमानौनरोत्तमौ ॥ तानिषून्पततोभल्लैरनेकैर्विचकर्ततुः ॥ ३१ ॥ यतोहिददृशातेतौशरान्निपतिताञ्छितान् ॥ ततस्तुतौदाशरथीससृजातेस्त्रमुत्तमम् ॥ ३२ ॥ रावणिस्तुदिशःसर्वारथेनातिरथोपतत् ॥ विव्याधतौदाशरथीलघ्वस्त्रौनिशितैःशरैः ॥ ॥ ३३ ॥ तेनातिविद्धौतौवीरौरुक्मपुंखैःसुसंहतैः ॥ बभूवतुर्दाशरथीपुष्पिताविवकिंशुकौ ॥३४॥ नास्यवेगगतिंकश्चिन्नचरूपंधनुःशरान् ॥ नचास्यविदितंकिंचित्सूर्यस्येवाभ्रसंप्लवे ॥ ३५ ॥

रात्रे ॥ २२ ॥ परीतौ व्याप्तौ प्रचक्रतुः प्रादुश्चक्रतुः ॥ २३ ॥ अस्त्रैः अस्त्रमंत्राभिमंत्रितैः शरैस्तमिंद्रजितं नैव पस्पर्शतुः पस्पृशतुः अंतर्हितत्वादिति भावः ॥ २४ ॥ धूमांधकारं चक्रे माययेति शेषः । दिशश्चांतर्दधे अंतर्धापयामास नीहारवशात्तदविवेकं मायया संपादयामासेत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ दत्तवरैर्वरदत्तैः ॥ २८ ॥ २९ ॥ कंकपत्रिणस्ते पतगा बाणा अंतरिक्षे रावणिं समासाद्य तं निकृत्य विद्धा भूमौ शोणितोक्षिताः पेतुः ॥ ३० ॥ तानिषूनिंद्रजित्त्यक्तबाणान्विचकर्ततुरित्यार्षो गुणः ॥ ३१ ॥ यतो यस्यां दिशि ततस्तस्यां दिशि ॥ ३२ ॥ ३३ ॥ ३४ ॥ अभ्रसंप्लवे सूर्यस्य गत्यादिकमिव नास्य वेग

तत्र उरसि ॥८९॥ अर्चिःसहस्रेण विकचं यद्रविमंडलं तत्समानवर्चस्कम् ॥९०॥९१॥ यदृच्छया दैवाधीनतः कदाचिद्भूम्यां पतितो लोहितांगो भौम इव पपात ॥९२॥ मुष्टिनोरसि भग्नस्य पततः कुंभस्य रूपं रुद्रेणाभिपन्नस्याभिभूतस्य गवांपतेः सूर्यस्येव ॥ ९३ ॥ ९४ ॥ वर्धमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षट्सप्ततितमः सर्गः ॥७६॥ कतकरी० ॥ ६९ ॥ निकुंभ इति ॥ १ ॥ स्रग्दामभिः सन्नद्धमलंकृतम् दत्तपंचांगुलं पंचांगुलप्रमाणा दत्ताः कालायसपट्टबंधा यस्मिंस्तम् ॥ २ ॥ हेमपट्टादयोलंकारार्थाः ॥ ३ ॥ शक्रध्वजसमौजसम् अलंकारादिकृतसौंदर्यात् ॥४॥

सतत्राभिहतस्तेनसुग्रीवोवानरर्षभः ॥ मुष्टिंसंवर्तयामासवज्रकल्पंमहाबलः ॥ ८९ ॥ आर्चिःसहस्रविकचरविमंडलवर्चसम् ॥ समुष्टिंपातयामासकुंभस्योरसिवीर्यवान् ॥ ९० ॥ सतुतेनप्रहारेणविह्वलोभृशपीडितः ॥ निपपाततदाकुंभोगतार्चिरिवपावकः ॥ ९१ ॥ मुष्टिनाभिहतस्तेननिपपाताशुराक्षसः ॥ लोहितांगइवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ९२ ॥ कुंभस्यपततोरूपंभग्नस्योरसिमुष्टिना ॥ बभौरुद्राभिपन्नस्ययथारूपंगवांपतेः ॥ ९३ ॥ तस्मिन्हतेभीमपराक्रमेणप्लवंगमानामृषभेणयुद्धे ॥ महीसशैलासवनाचचालभयंचरक्षांस्यधिकंविवेश ॥ ९४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीये आदिकाव्येयुद्धकांडेषट्सप्ततितमःसर्गः ॥ ७६ ॥ निकुंभोभ्रातरंदृष्ट्वासुग्रीवेणनिपातितम् ॥ प्रदहन्निवकोपेनवानरेंद्रमुदैक्षत ॥ १ ॥ ततःस्रग्दामसन्नद्धंदत्तपंचांगुलंशुभम् ॥ आददेपरिघंधीरोमहेंद्रशिखरोपमम् ॥ २ ॥ हेमपट्टपरिक्षिप्तंवज्रविद्रुमभूषितम् ॥ यमदंडोपमंभीमंरक्षसांभयनाशनम् ॥ ॥३॥ तमाविध्यमहातेजाःशक्रध्वजसमौजसम् ॥ विननादविवृत्तास्योनिकुंभोभीमविक्रमः ॥ ४ ॥ उरोगतेननिष्केणभुजस्थैरंगदैरपि ॥ कुंडलाभ्यांचचित्राभ्यांमालयाचसचित्रया ॥ ५ ॥ निकुंभोभूषणैर्भातितेनस्मपरिघेणच ॥ यथेंद्रधनुषामेघःसविद्युत्स्तनयित्नुमान् ॥ ६ ॥ परिघाग्रेणपुस्फोटवातग्रंथिर्महात्मनः ॥ प्रजज्वालसघोषश्चविधूमइवपावकः ॥ ७ ॥ नगर्याविटपावत्यागंधर्वभवनोत्तमैः ॥ सतारागणनक्षत्रंसचंद्रसमहाग्रहम् ॥ निकुंभपरिघाघूर्णंभ्रमतीवनभःस्थलम् ॥ ८ ॥ दुरासदश्चसंजज्ञेपरिघाभरणप्रभः ॥ क्रोधेंधनोनिकुंभाग्निर्युगांताग्निरिवोत्थितः ॥९॥ राक्षसावानराश्चापिनशेकुःस्पंदितुंभयात् ॥ हनूमांस्तुविवृत्योरस्तस्थौप्रमुखतोबली ॥ १० ॥ परिघोपमबाहुस्तुपरिघंभास्करप्रभम् ॥ बलीबलवतस्तस्यपातयामासवक्षसि ॥ ११ ॥ स्थिरेतस्योरसिव्यूढेपरिघःशतधाकृतः ॥ विकीर्यमाणःसहसाउल्काशतमिवांबरे ॥ १२ ॥

निष्कमुरोभूषणम् ॥ ५ ॥ ६ ॥ महात्मनो महादेहस्य परिघाग्रेण वातग्रंथिः आवहादिसप्तमहावायूनां संधिः पुस्फोट एतेन परिघस्य दैर्घ्यमुक्तम् । प्रजज्वाल निकुंभ इति शेषः परिघाग्रभाग इति वा ॥ ७ ॥ विटपावती गंधर्वनगरी अलकेति तीर्थः ॥ ८ ॥ परिघाभरणाभ्यां प्रभा कांतिर्यस्य सः ॥ ९ ॥ स्पंदितुमपि न शेकुः उरो विवृत्य उरः प्रकाश्य ॥ १० ॥ तस्य हनूमतः ॥ ११ ॥ परिघः शतधाकृतः महा

शिलाहतजीर्णकाष्ठवत् विकीर्यमाणश्च स आकाशे उल्काशतमिवासीदिति शेषः ॥१२॥ भूमिचले भूकंपे ॥१३॥१४॥१५॥१६॥१७॥ भीमं विचुक्रुशुः कपीनां भयंकरं यथा भवति तथेत्यर्थः उद्यतं गृहीतम् ॥ ॥ १८ ॥ तथा ह्रियमाणोपि कुंभकर्णेन सुग्रीववत् ह्रियमाणोपि ॥ १९ ॥ क्षितावभ्यवपद्यत भूमावाप्लुतो बभूव ॥ २० ॥ निक्षिप्य भूमाविति शेषः अस्योरसि भूमिपतितस्योरसि ॥ २१ ॥ शिरोधरां परिवृत्य पशोरिवाघूर्ण्य ॥ २२ ॥ निनदति निकुंभे सादिते सति राक्षसेंद्रसूनुः खरसुतो मकराक्षः अनेन वक्ष्यमाणोपक्षेपः ॥ २३ ॥ उक्तार्थस्यैव विवरणं व्यपेते व्यपगते एतदंतं नवमीदिनंयुद्धम् ॥ २४ ॥

सतुतेनप्रहारेणनचचालमहाकपिः ॥ परिघेणसमाधूतोयथाभूमिचलेऽचलः ॥१३॥ सतथाभिहतस्तेनहनूमान्प्लवगोत्तमः ॥ मुष्टिंसंवर्तयामासबलेनातिमहाबलः ॥ १४ ॥ तमुद्यम्यमहातेजानिकुंभोरसिवीर्यवान् ॥ अभिचिक्षेपवेगेनवेगवान्वायुविक्रमः ॥ १५ ॥ तत्रपुस्फोटचर्मास्यप्रसुस्रावचशोणितम् ॥ मुष्टिनातेनसंजज्ञेमेघेविद्युदिवोत्थिता ॥ १६ ॥ सतुतेनप्रहारेणनिकुंभोविचचालच ॥ स्वस्थश्चापिनिजग्राहहनूमंतंमहाबलम् ॥ १७ ॥ चुक्रुशुश्चतदासंख्येभीमंलंकानिवासिनः॥निकुंभेनोद्यतंदृष्ट्वाहनूमंतंमहाबलम् ॥१८॥ सतथाह्रियमाणोपिहनूमांस्तेनरक्षसा ॥ आजघानानिलसुतोवज्रकल्पेनमुष्टिना ॥ १९ ॥ आत्मानंमोक्षयित्वाथक्षितावभ्यवपद्यत ॥ हनूमानुन्ममाथाशुनिकुंभंमारुतात्मजः ॥ २० ॥ निक्षिप्यपरमायत्तोनिकुंभंनिष्पिपेषच ॥ उत्पत्यचास्यवेगेनपपातोरसिवेगवान् ॥ २१ ॥ परिगृह्यचबाहुभ्यांपरिवृत्यशिरोधराम् ॥ उत्पाटयामासशिरोभैरवंनदतोमहत् ॥ २२ ॥ अथनिनदतिसादितेनिकुंभेपवनसुतेनरणेबभूवयुद्धम् ॥ दशरथसुतराक्षसेंद्रसून्वोर्भृशतरमागतरोषयोःसुभीमम् ॥ २३ ॥ व्यपेतेतुजीवेनिकुंभस्यहृष्टाविनेदुःप्लवंगादिशःसस्वनुश्च॥ चचालेवचोर्वीपपातेवसाद्यौर्बलंराक्षसानांभयंचाविवेश ॥ २४ ॥ इत्यार्षेश्रीमद्रामायणेवा० आ० युद्धकांडे सप्तसप्ततितमः सर्गः ॥ ७७ ॥ निकुंभंनिहतंदृष्ट्वाकुंभंचविनिपातितम् ॥ रावणःपरमामर्षीप्रजज्वालानलोयथा ॥ १ ॥ नैर्ऋतःक्रोधशोकाभ्यांद्वाभ्यांतुपरिमूर्च्छितः ॥ खरपुत्रंविशालाक्षंमकराक्षमचोदयत् ॥ २ ॥ गच्छपुत्रमयाज्ञप्तोबलेनाभिसमन्वितः ॥ राघवंलक्ष्मणंचैवजहितौसवनौकसौ ॥ ३ ॥ रावणस्यवचःश्रुत्वाशूरमानीखरात्मजः ॥ बाढमित्यब्रवीद्धृष्टोमकराक्षोनिशाचरम् ॥ ४ ॥ सोभिवाद्यदशग्रीवंकृत्वाचापिप्रदक्षिणम् ॥ निर्जगामगृहाच्छुभ्राद्रावणस्याज्ञयाबली ॥ ५ ॥ समीपस्थंबलाध्यक्षंखरपुत्रोब्रवीद्वचः ॥ रथमानीयतांतूर्णंसैन्यंत्वानीयतांत्वरात् ॥ ६ ॥ तस्यतद्वचनंश्रुत्वाबलाध्यक्षोनिशाचरः ॥ स्यंदनंचबलंचैवसमीपंप्रत्यपादयत् ॥ ७ ॥ प्रदक्षिणंरथंकृत्वासमारुह्यनिशाचरः ॥ सूतंसंचोदयामासशीघ्रंवैरथमावह ॥ ८ ॥ अथतान्राक्षसान्सर्वान्मकराक्षोब्रवीदिदम् ॥ यूयंसर्वेप्रयुध्यध्वंपुरस्तान्ममराक्षसाः ॥ ९ ॥

वानरैः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तसप्ततितमः सर्गः ॥ ७७ ॥कतकरी० ॥ ७० ॥ निकुंभमिति ॥ १ ॥ नैर्ऋतो रावणः परिमूर्च्छितो व्याप्तः ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ बलाध्यक्षं रावणबलाध्यक्षम् त्वरात् त्वरया ॥ ६ ॥ ७ ॥ रथमावह युद्धभूमिं मापयेत्यर्थः ॥ ८ ॥ मम पुरस्तान्ममाग्रतो यूयं सर्वे प्रयुध्यध्वं वानरैः सहेति शेषः ॥ ९ ॥

॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ध्वस्तकेशाः विप्रकीर्णकेशा अत एव भयावहाः ॥ १४ ॥ १५ ॥ १६ ॥ तस्य ध्वजः पपात स बद्धोपीति शेषः ॥ १७ ॥ विक्रमरहिताः यथापूर्वं विचित्रपादन्यासरहिताः प्रथममाकुलैश्चरणैर्गत्वा । पश्चात्सास्रमुखा ययुः ॥ १८ ॥ प्रवाति सपांसुरत एव खरः अभिमुख इति शेषः ॥ १९ ॥ २० ॥ असकृच्छत्रूणां गदासिभिर्भिन्नं भेदो येषां ते अहमहमिति वदंतः ॥ २१ ॥

अहंराक्षसराजेनरावणेनमहात्मना ॥ आज्ञप्तःसमरेहंतुंतावुभौरामलक्ष्मणौ ॥ १० ॥ अद्यरामंवधिष्यामिलक्ष्मणंचनिशाचराः ॥ शाखामृगंचसुग्रीवंवानरांश्चशरोत्तमैः ॥ ११ ॥ अद्यशूलनिपातैश्चवानराणांमहाचमूम् ॥ प्रदहिष्यामिसंप्राप्तांशुष्केंधनमिवानलः ॥ १२ ॥ मकराक्षस्यतच्छ्रुत्वावचनंतेनिशाचराः ॥ सर्वेनानायुधोपेताबलवंतःसमाहिताः ॥ १३ ॥ तेकामरूपिणःक्रूरादंष्ट्रिणःपिंगलेक्षणाः ॥ मातंगाइवनर्दंतोध्वस्तकेशाभयावहाः ॥ ॥ १४ ॥ परिवार्यमहाकायामहाकायंखरात्मजम् ॥ अभिजग्मुस्ततोहृष्टाश्चालयंतोवसुंधराम् ॥ १५ ॥ शंखभेरीसहस्राणामाहतानांसमंततः ॥ क्ष्वेलितास्फोटितानांचतत्रशब्दोमहानभूत् ॥ १६ ॥ प्रभ्रष्टोथकरात्तस्यप्रतोदःसारथेस्तदा ॥ पपातसहसादैवाद्ध्वजस्तस्यतुरक्षसः ॥ १७ ॥ तस्यतेरथसंयुक्ताहयाविक्रमवर्जिताः ॥ चरणैराकुलैर्गत्वादीनाःसास्रमुखाययुः ॥ १८ ॥ प्रवातिपवनस्तस्मिन्सपांसुःखरदारुणः ॥ निर्याणेतस्यरौद्रस्यमकराक्षस्यदुर्मतेः ॥ १९ ॥ तानिदृष्ट्वानिमित्तानिराक्षसावीर्यवत्तमाः ॥ अचिंत्यनिर्गताःसर्वेयत्रतौरामलक्ष्मणौ ॥ २० ॥ घनगजमहिषांगतुल्यवर्णाः समरमुखेष्वसकृद्गदासिभिन्नाः ॥ अहमहमितियुद्धकौशलास्तेरजनिचराःपरिबभ्रमुर्मुहुस्ते ॥ २१ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेअष्टसप्ततितमःसर्गः ॥ ७८ ॥ निर्गतंमकराक्षंतेदृष्ट्वावानरपुंगवाः ॥ आप्लुत्यसहसासर्वेयोद्धुकामाव्यवस्थिताः ॥ १ ॥ ततःप्रवृत्तंसुमहत्तद्युद्धंलोमहर्षणम् ॥ निशाचरैःप्लवंगानांदेवानांदानवैरिव ॥ २ ॥ वृक्षशूलनिपातैश्चगदापरिघपातनैः ॥ अन्योन्यंमर्दयंतिस्मतदाकपिनिशाचराः ॥ ॥ ३ ॥ शक्तिखड्गगदाकुंतैस्तोमरैश्चनिशाचराः ॥ पट्टिशैर्भिंदिपालैश्चबाणपातैःसमंततः ॥ ४ ॥ पाशमुद्गरदंडैश्चनिर्घातैश्चापरैस्तथा ॥ कदनंकपिसिंहानांचक्रुस्तेरजनीचराः ॥ ५ ॥ बाणौघैरर्दिताश्चापिखरपुत्रेणवानराः ॥ संभ्रांतमनसःसर्वेदुद्रुवुर्भयपीडिताः ॥ ६ ॥ तान्दृष्ट्वाराक्षसाःसर्वेद्रवमाणान्वनौकसः ॥ नेदुस्तेसिंहवद्दृप्ताराक्षसाजितकाशिनः ॥ ७ ॥ विद्रवत्सुतदातेषुवानरेषुसमंततः ॥ रामस्तान्वारयामासशरवर्षेणराक्षसान् ॥ ८ ॥ वारितान्राक्षसान्दृष्ट्वामकराक्षोनिशाचरः ॥ कोपानलसमाविष्टोवचनंचेदमब्रवीत् ॥ ९ ॥

कैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टसप्ततितमः सर्गः ॥ ७८ कतकरी० ॥ ७१ ॥ ॥ निर्गतमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ निर्घातास्तद्वन्महाध्वनयो यंत्रायुधविशेषाः ॥ ५ ॥ ६ ॥ द्रवमाणान् द्रवतः जितेन जयेन काशंते ते जितकाशिनः अभूवन्निति शेष इति तीर्थम् ॥ ७ ॥ तान्वानरविद्रावकान् राक्षसान् रामः शरवर्षेण वारयामास ॥ ८ ॥ ९ ॥

॥ १० ॥ यद्यस्मात्पितरं हतवानसि तस्मात्तदग्रतस्तद्दिनादितः स्वकर्मस्थं पितृवधरूपकर्मकर्तारं त्वां स्मृत्वा रोषोभिवर्धते मदग्रतः स्वकर्मस्थं दृष्ट्वेतिपाठे मदग्रतस्तिष्ठंतमिति शेषः । तीर्थस्तु सु अकर्मस्थं सुतरा मकृत्यनिरतमित्यर्थं इत्याह ॥ ११ ॥ यद्यस्मात्तस्मिन्काले पितृवधकाले तस्मिन्महावने मया न दृष्टोसि तस्मान्ममांगानि दह्यंते तदैव दर्शने तु प्रतीकारेण तापः शाम्येदित्यर्थः ॥ १२ ॥ इतरो मृगः सिंहेतर मृगमात्रम् ॥ १३ ॥ १४ ॥ १५ ॥ येन वधसाधनेनास्त्रादिष्वन्यतमेन तेभ्यस्तं तवाभ्यासोस्ति तेन वा तेनैव मृधं युद्धं वर्ततां संपाद्यताम् ॥ १६ ॥ उत्तरोत्तरवादिनं बहुप्रलापिनम् ॥ १७ ॥ ते त्वया

तिष्ठराममयासार्धंद्वंद्वयुद्धंभविष्यति ॥ त्याजयिष्यामितेप्राणान्धनुर्मुक्तैःशितैःशरैः ॥१०॥ यत्तदादंडकारण्येपितरंहतवान्मम ॥ तदग्रतःस्वकर्मस्थं स्मृत्वारोषोभिवर्धते ॥ ११ ॥ दह्यंतेभृशमंगानिदुरात्मन्ममराघव ॥ यन्मयासिनदृष्टस्त्वंतस्मिन्कालेमहावने ॥ १२ ॥ दिष्ट्यासिदर्शनंराममत्त्वं प्राप्तवानिह ॥ कांक्षितोसिक्षुधार्तस्यसिंहस्येवेतरोमृगः ॥१३॥ अद्यमद्बाणवेगेनप्रेतराड्विषयंगतः ॥ येत्वयानिहताःशूराःसहतैश्चवसिष्यसि ॥१४॥ बहुनात्रकिमुक्तेनशृणुरामवचोमम ॥ पश्यंतुसकलालोकास्त्वांमांचैवरणाजिरे ॥ १५॥ अस्त्रैर्वागदयावापिबाहुभ्यांवारणाजिरे ॥ अभ्यस्तंयेनवारा मवर्ततांतेनवामृधम् ॥ १६ ॥ मकराक्षवचःश्रुत्वारामोदशरथात्मजः ॥ अब्रवीत्प्रहसन्वाक्यमुत्तरोत्तरवादिनम् ॥ १७ ॥ कत्थसेकिंवृथारक्षोबहून्य सदृशानिते ॥ नरणेशक्यतेजेतुंविनायुद्धेनवाग्बलात् ॥ १८ ॥ चतुर्दशसहस्राणिरक्षसांत्वत्पिताचयः ॥ त्रिशिरादूषणश्चापिदंडकेनिहतोमया ॥१९॥ स्वाशिताश्चापिमांसेनगृध्रगोमायुवायसाः ॥ भविष्यंत्यद्यवैपापतीक्ष्णतुंडनखांकुशाः ॥ २० ॥ राघवेणैवमुक्तस्तुमकराक्षोमहाबलः ॥ बाणौघानमु चत्तस्मैराघवायरणाजिरे ॥ २१ ॥ तान्छरान्छरवर्षेणरामश्चिच्छेदनैकधा ॥ निपेतुर्भुविविच्छिन्नारुक्मपुंखाःसुवाससः ॥ २२ ॥ तद्युद्धमभवत्तत्रसमे त्यान्योन्यमोजसा ॥ खरराक्षसपुत्रस्यसूनोर्दशरथस्यच ॥ २३ ॥ जीमूतयोरिवाकाशेशब्दोज्यातलयोरिव ॥ धनुर्मुक्तस्वनोन्योन्यंश्रूयतेचरणा जिरे ॥ २४॥ देवदानवगंधर्वाःकिन्नराश्चमहोरगाः ॥ अंतरिक्षगताःसर्वेद्रष्टुकामास्तदद्भुतम् ॥ २५ ॥ विद्धमन्योन्यगात्रेषुद्विगुणंवर्धतेबलम् ॥ कृतप्र तिकृतान्योन्यंकुरुतांतौरणाजिर ॥ २६ ॥ राममुक्तांस्तुबाणौघान्राक्षसस्त्वच्छिनद्रणे ॥ रक्षोमुक्तांस्तुरामोवैनैकधाप्राच्छिनच्छरैः ॥ २७ ॥ बाणौ घवितताःसर्वादिशश्चप्रदिशस्तथा ॥ संछन्नावसुधाचैवसमंतान्नप्रकाशते ॥ २८ ॥ ततःक्रुद्धोमहाबाहुर्धनुश्चिच्छेदसंयुगे ॥ अष्टाभिरथनाराचैःसूतं विव्याधराघवः ॥ २९ ॥ भित्त्वारथंशरैरामोहत्वाअश्वानपातयत् ॥ विरथोवसुधास्थःसमकराक्षोनिशाचरः ॥ ३० ॥ तत्तिष्ठद्वसुधांरक्षःशूलंजग्राहपा णिना ॥ त्रासनंसर्वभूतानांयुगांताग्निसमप्रभम् ॥ ३१ ॥ दुरवापंमहच्छूलंरुद्रदत्तंभयंकरम् ॥ जाज्वल्यमानमाकाशेसंहारास्त्रमिवापरम् ॥ ३२ ॥

जेतुमित्यन्वयः ॥ १८ ॥ १९ ॥ स्वाशिताः सुष्ठु भुक्तवंतोद्य भविष्यंति त्वद्वधेनेति शेषः ॥२०॥२१॥२२॥२३॥आकाशे जीमूतयोः शब्द इव ज्यातलयोर्ज्याकरतलयोः संघर्षाद्धेतोर्धनुर्मुक्तोऽन्योन्यधनुर्मुक्तः स्वनोन्योन्यमिश्रो रणाजिरे श्रूयते स्म ॥२४ ॥ २५ ॥ अन्योन्यं गात्रेषु विद्धं वेधनमभूदिति शेषः । अथापि द्विगुणं बलं वर्धते स्म कृतप्रतिकृता कृतप्रतिकृतानि । आर्षो डादेशो विभक्तेः । कुरुताम् अकुरुताम अडभाव आर्षः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ भित्त्वा रथम् भंक्त्वेत्यर्थः । हत्वा अश्वानित्यसंधिपाठः । रथादश्वानिति पाठांतरम् । वसुधास्थोभूदिति शेषः ॥ ३० ॥ तत्तिष्ठद्वसुधामिति पाठः । वसुधां वसु

अथ कंपनादीनामंगदादिभिर्युद्धम् प्रवृत्ते इति ॥ १ ॥ आहूयेति पूर्वान्वयि सोंगदम् अंगदेन युद्धायाहूतः कंपन इत्यर्थः । स चचाल अंगद इत्यर्थः ॥ २ ॥ ३ ॥ अभीतवत् अभीतार्हम् ॥ ४ ॥ ५ ॥ क्षुरः क्षुराग्रः शरः क्षुरप्रोर्धचंद्राकृतिः नाराचः सर्वायसः वत्सदंतस्तदाकारः शिलीमुखः कंकपत्रसदृशः कर्णी पार्श्वद्वयस्थितकर्णाकारावयवः शल्यभूयस्त्वाद्विर्फलको बाणः शल्यः विपाठः करवीराग्रसदृश इति

प्रवृत्तेसंकुलेतस्मिन्वीरेघोरजनक्षये ॥ अंगदःकंपनंवीरमाससादरणोत्सुकः ॥ १ ॥ आहूयसोंगदंकोपात्ताडयामासवेगितः ॥ गदयाकंपनःपूर्वं सचचालभृशाहतः ॥ २ ॥ ससंज्ञांप्राप्यतेजस्वीचिक्षेपाशिखरंगिरेः ॥ अर्दितश्चप्रहारेणकंपनःपतितोभुवि ॥ ३ ॥ ततस्तुकंपनंदृष्ट्वाशोणिताक्षोहतं रणे ॥ रथेनाभ्यपतत्क्षिप्रंतत्रांगदमभीतवत् ॥ ४ ॥ सोंगदंनिशितैर्बाणैस्तदाविव्याधवेगितः ॥ शरीरदारणैस्तीक्ष्णैःकालाग्निसमविग्रहैः ॥ ५ ॥ क्षुरक्षुरप्रनाराचैर्वत्सदंतैःशिलीमुखैः ॥ कर्णीशल्यविपाठैश्चबहुभिर्निशितैःशरैः ॥ ६ ॥ अंगदःप्रतिविद्धांगोवालिपुत्रःप्रतापवान् ॥ धनुरुग्रंरथं बाणान्ममर्दतरसाबली ॥ ७ ॥ शोणिताक्षस्ततःक्षिप्रमसिचर्मसमाददे ॥ उत्पपाततदाक्रुद्धोवेगवानविचारयन् ॥ ८ ॥ तंक्षिप्रतरमाप्लुत्यपरामृश्यां गदोबली ॥ करेणतस्यतंखड्गंसमाच्छिद्यननादच ॥ ९ ॥ तस्यांसफलकेखड्गंनिजघानततोंगदः ॥ यज्ञोपवीतवच्चैनंचिच्छेदकपिकुंजरः ॥ १० ॥ तंप्रगृह्यमहाखड्गंविनद्यचपुनःपुनः ॥ वालिपुत्रोभिदुद्रावरणशीर्षेपरानरीन् ॥ ११ ॥ प्रजंघसहितोवीरोयूपाक्षस्तुततोबली ॥ रथेनाभिययौक्रुद्धोवालिपुत्रं महाबलम् ॥ १२ ॥ आयसींतुगदांगृह्यसवीरःकनकांगदः ॥ शोणिताक्षःसमाश्वस्यतमेवानुपपातह ॥ १३ ॥ प्रजंघस्तुमहावीरोयूपाक्षसहितोबली ॥ गदयाभिययौक्रुद्धोवालिपुत्रंमहाबलम् ॥ १४ ॥ तयोर्मध्येकपिश्रेष्ठःशोणिताक्षप्रजंघयोः ॥ विशाखयोर्मध्यगतःपूर्णचंद्रइवाबभौ ॥ १५ ॥ अंगदंप रिरक्षंतौमैंदोद्विविदएवच ॥ तस्यतस्थतुरभ्याशेपरस्परदिदृक्षया ॥ १६ ॥ अभिपेतुर्महाकायाःप्रतियत्तामहाबलाः ॥ राक्षसावानरान्रोषादसिबाणग दाधराः ॥ १७ ॥ त्रयाणांवानरेंद्राणांत्रिभीराक्षसपुंगवैः ॥ संसक्तानांमहद्युद्धमभवद्रोमहर्षणम् ॥ १८ ॥ तेतुवृक्षान्समादायसंप्रचिक्षिपुराहवे ॥ खड्गेनप्रति चिक्षेपतान्प्रजंघोमहाबलः ॥ १९ ॥ रथान्सर्वान्द्रुमाञ्च्छैलान्प्रतिचिक्षिपुराहवे ॥ शरौघैःप्रतिचिच्छेदतान्यूपाक्षोमहाबलः ॥ २० ॥

तीर्थादयः ॥ ६ ॥ ७ ॥ ८ ॥ परामृश्य धृत्वा ॥ ९ ॥ अंसरूपे फलके यज्ञोपवीतवदेनं शोणिताक्षं चिच्छेद तावतापि न परावृत्तो नापि मृतः ॥ १० ॥ तं महाखड्गं शोणिताक्षीयम् ॥ ११ ॥ १२ ॥ कनकांगद इति शोणिताक्षविशेषणम् ॥ १३ ॥ १४ ॥ १५ ॥ परस्परदिदृक्षया युद्धावसरदिदृक्षया स्वानूरूपप्रतिभटराक्षसजिज्ञासया वा ॥ १६ ॥ प्रतियत्ताः सावधानाः ॥ १७ ॥ त्रयाणामंगदमैंदद्विविदा

नाम त्रिभिः शोणिताक्षप्रजंघयूपाक्षैः ॥ १८ ॥ १९ ॥ २० ॥ सुष्टान्प्रक्षिप्तान् ॥ २१ ॥ वालिपुत्रायोद्यम्य वालिपुत्रं हंतुमुद्यम्य ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ जग्राह दधार ॥ २९ ॥ ३० ॥ ३१ ॥ एतस्मिन्नंतरे शोणिताक्षताडिते द्विविदे शोणिताक्षगदां गृह्णाने सतीत्यर्थः भ्रातृसहायार्थं तत्समीपमागमत् प्लवंगमाभ्याम् मैंदद्विविदाभ्याम् आकर्षः आकर्षणम् उत्पाटनमुत्थानम्



सृष्टान्द्विविदमैंदाभ्यांद्रुमानुत्पाट्यवीर्यवान् ॥ बभंजगदयामध्येशोणिताक्षप्रतापवान् ॥ २१ ॥ उद्यम्यविपुलंखड्गंपरमर्मविदारणम् ॥ प्रजंघोवालिपुत्रायअभिदुद्रावंवेगितः ॥ २२ ॥ तमभ्याशगतंदृष्ट्वावानरेंद्रोमहाबलः ॥ आजघानाश्वकर्णेनद्रुमेणातिबलस्तदा ॥ २३ ॥ बाहुंचास्यसनिस्त्रिंशमाजघानसमुष्टिना ॥ वालिपुत्रस्यघातेनसपपातक्षितावसिः ॥ २४ ॥ तंदृष्ट्वापतितंभूमौखड्गंमुसलसन्निभम् ॥ मुष्टिंसंवर्तयामासवज्रकल्पंमहाबलः ॥ २५ ॥ सललाटेमहावीर्यमंगदंवानरर्षभम् ॥ आजघानमहातेजाःसमुहूर्तंचचालह ॥२६॥ ससंज्ञांप्राप्यतेजस्वीवालिपुत्रःप्रतापवान् ॥ प्रजंघस्यशिरःकायात्पातयामाससमुष्टिना ॥ २७ ॥ सयूपाक्षोऽश्रुपूर्णाक्षःपितृव्येनिहतेरणे ॥ अवरुह्यरथात्क्षिप्रंक्षीणेषुःखड्गमाददे ॥ २८ ॥ तमापतंतंसंप्रेक्ष्ययूपाक्षंद्विविदस्त्वरन् ॥ आजघानोरसिक्रुद्धोजग्राहचबलाद्बली ॥ २९ ॥ गृहीतंभ्रातरंदृष्ट्वाशोणिताक्षोमहाबलम् ॥ आजघानमहातेजावक्षसिद्विविदंततः ॥ ३० ॥ सततोभिहतस्तेनचचालचमहाबलः ॥ उद्यतांचपुनस्तस्यजहारद्विविदोगदाम् ॥ ३१ ॥ एतस्मिन्नंतरेमैंदोद्विविदाभ्याशमागमत् ॥ तौशोणिताक्षयूपाक्षौप्लवंगाभ्यांतरस्विनौ ॥ चक्रतुःसमरेतीव्रमाकर्षोत्पाटनंभृशम् ॥ ३२ ॥ द्विविदःशोणिताक्षंतुविददारनखैर्मुखे ॥ निष्पिपेषसवीर्येणक्षितावाविध्यवीर्यवान् ॥ ३३ ॥ यूपाक्षमभिसंक्रुद्धोमैंदोवानरपुंगवः ॥ पीडयामासबाहुभ्यांपपातसहतःक्षितौ ॥ ३४ ॥ हतप्रवीराव्यथिताराक्षसेंद्रचमूस्तथा ॥ जगामाभिमुखीसातुकुंभकर्णात्मजोयतः ॥ ३५ ॥ आपतंतींचवेगेनकुंभस्तांसांत्वयच्चमूम् ॥ अथोत्कृष्टंमहावीर्यैर्लब्धलक्षैःप्लवंगमैः ॥ ३६ ॥ निपातितमहावीरांदृष्ट्वारक्षश्चमूंतदा ॥ कुंभःप्रचक्रेतेजस्वीरणेकर्मसुदुष्करम् ॥ ३७ ॥ सधनुर्धन्विनांश्रेष्ठःप्रगृह्यसुसमाहितः ॥ मुमोचाशीविषप्रख्याञ्छरान्देहविदारणान् ॥ ३८ ॥ तस्यतच्छुशुभेभूयःसशरंधनुरुत्तमम् ॥ विद्युदैरावतार्चिष्मद्द्वितीयेंद्रधनुर्यथा ॥ ॥ ३९ ॥ आकर्णकृष्टमुक्तेनजघानाद्विविदंतदा ॥ तेनहाटकपुंखेनपत्रिणापत्रवाससा ॥ ४० ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ कुंभकर्णात्मजो यतः यत्र तत्रेत्यर्थः ॥ ३५ ॥ सांत्वयत् असांत्वयत् उत्कृष्टं रक्षः कुंभो लब्धलक्षैर्महावीर्यैस्तेजस्विभिर्वानरैर्निपातितमहावीरां चमूं दृष्ट्वा रणे सुदुष्करं कर्म चक्रे इति संबंधः ॥ ३६ ॥ ३७ ॥ ३८ ॥ तस्य कुंभस्य तत्सशरं धनुर्विद्युदैरावतसंबंधतोर्चिष्मद्भासमानं द्वितीयेंद्रधनुर्यथा अपरमिंद्रधनुरिव भूयः शुशुभे विद्युच्छरस्थानीया ऐरावतोभ्रमातंगस्तस्येंद्रधनुषा संबंधात् ।

इंद्रायुधं त्विंद्रधनुस्तदेव ऋजुरोहितम् । ऐरावतम् ऋजुदीर्घेंद्रधनुस्तद्युक्तं च स्वाभाविकमिंद्रधनुरित्यर्थः एतच्चोत्पातकाले भवतीत्यर्थ इति तीर्थः ॥ ३९ ॥ ४० ॥ विप्रमुक्तपदः विप्रमुक्तं प्रसारितं पदं येन सः ॥ ॥ ४१ ॥ ४२ ॥ प्रसन्नैः उत्तेजितैः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ सस्कंधमेतं सालमुरसि निवेश्यैकेन करेण संपीड्य सूक्ष्मशाखां किंचिद

सहसाभिहतस्तेनाविप्रमुक्तपदःस्फुरन् ॥ निपपातत्रिकूटाभोविह्वलन्प्लवगोत्तमः ॥४१॥ मैंदस्तुभ्रातरंतत्रभग्नंदृष्ट्वामहाहवे ॥ अभिदुद्राववेगेनप्रगृह्य विपुलांशिलाम् ॥४२॥ तांशिलांतत्रचिक्षेपराक्षसायमहाबलः ॥ बिभेदतांशिलांकुंभःप्रसन्नैःपंचभिःशरैः ॥४३॥ संधायचान्यंसुमुखंशरमाशीविषोपमम् ॥ आजघानमहातेजावक्षसिद्विविदाग्रजम् ॥ ४४ ॥ सतुतेनप्रहारेणमदावानरयूथपः ॥ मर्मण्यभिहतस्तेनपपातभुविमूर्च्छितः ॥ ४५ ॥ अंगदोमातुलौदृष्ट्वामथितौतुमहाबलौ ॥ अभिदुद्राववेगेनकुंभमुद्यतकार्मुकम् ॥ ४६ ॥ तमापतंतंविव्याधकुंभःपंचभिरायसैः ॥ त्रिभिश्चान्यैस्त्रिभिर्बाणैर्मातंगमिवतोमरैः ॥ ४७ ॥ सोंगदंबहुभिर्बाणैःकुंभोविव्याधवीर्यवान् ॥ ४८ ॥ अकुंठधारैर्निशितैस्तीक्ष्णैःकनकभूषणैः ॥ अंगदःप्रतिविद्धांगोवालिपुत्रोनकंपते ॥ ४९ ॥ शिलापादपवर्षाणितस्यमूर्ध्निववर्षह ॥ सप्रचिच्छेदतान्सर्वान्बिभेदचपुनःशिलाः ॥ ५० ॥ कुंभकर्णात्मजःश्रीमान्वालिपुत्रसमीरितान् ॥ आपतंतंचसंप्रेक्ष्यकुंभोवानरयूथपम् ॥ ५१ ॥ भ्रुवौविव्याधबाणाभ्यामुल्काभ्यामिवकुंजरम् ॥ तस्यसुस्रावरुधिरंपिहितेचास्यलोचने ॥ ५२ ॥ अंगदःपाणिनानेत्रेपिधायरुधिरोक्षिते ॥ सालमासन्नमेकेनपरिजग्राहपाणिना ॥ ५३ ॥ संपीड्योरसिसस्कंधंकरेणाभिनिवेश्यच ॥ किंचिदभ्यवनम्यैनमुन्ममाथमहारणे ॥ ५४ ॥ तमिंद्रकेतुप्रतिमंवृक्षंमंदरसन्निभम् ॥ समुत्सृजतवेगेनमिषतांसर्वरक्षसाम् ॥ ५५ ॥ सचिच्छेदशितैर्बाणैःसप्तभिःकायभेदनैः ॥ अंगदोविव्यथेभीक्ष्णंसपपातमुमोहच ॥ ५६ ॥ अंगदंपतितंदृष्ट्वासीदंतमिवसागरम् ॥ दुरासदंहरिश्रेष्ठाराघवायन्यवेदयन् ॥ ५७ ॥ रामस्तुव्यथितंश्रुत्वावालिपुत्रंमहाहवे ॥ व्यादिदेशहरिश्रेष्ठाञ्जांबवत्प्रमुखांस्ततः ॥५८॥ तेतुवानरशार्दूलाःश्रुत्वारामस्यशासनम् ॥ अभिपेतुःसुसंक्रुद्धाःकुंभमुद्यतकार्मुकम् ॥ ५९ ॥ ततोद्रुमशिलाहस्ताःकोपसंरक्तलोचनाः ॥ रिरक्षिषंतोभ्यपतन्नंगदंवानरर्षभाः ॥ ॥ ६० ॥ जांबवांश्चसुषेणश्चवेगदर्शीचवानरः ॥ कुंभकर्णात्मजंवीरंक्रुद्धाःसमभिदुद्रुवुः ॥ ६१ ॥ समीक्ष्यापततस्तांस्तुवानरेंद्रान्महाबलान् ॥ आववारशरौघेणनगेनेवजलाशयम् ॥ ६२ ॥ तस्यबाणपथंप्राप्यनशेकुरपिवीक्षितुम् ॥ वानरेन्द्रामहात्मानोवेलामिवमहोदधिः ॥ ६३ ॥ तांस्तुदृष्ट्वाहरिगणाञ्च्छरवृष्टिभिरर्दितान् ॥ अंगदंपृष्ठतःकृत्वाभ्रातृजंप्लवगेश्वरः ॥ ६४ ॥ अभिदुद्रावसुग्रीवःकुंभकर्णात्मजंरणे ॥ शैलसानुचरंनागंवेगवानिवकेसरी ६५॥

वनम्य उन्ममाथ निष्पत्रं कृतवान् ॥ ५४ ॥ समुत्सृजत समुदसृजत ॥ ५५ ॥ अभीक्ष्णं विव्यथे पुनःपुनः क्रियमाणेन युद्धेनेति भावः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ आववार अवरोध नगेन पर्वतेन जलाशयं जलप्रवाहमिव ॥ ६२ ॥ ६३ ॥ भ्रातृजं भ्रातृपुत्रम् प्लवगेश्वरः सुग्रीवः एतदंतमष्टमीरात्रौ युद्धम् अतः परं नवमीदिनयुद्धम् ॥ ६४ ॥ शैलसानुषु चरति तं नागं गजम् ॥६५॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ अथ कुंभस्य शौर्यं स्तौति निकुंभाग्रजेति वेगश्शीघ्रचर्यादिः ॥ ७१ ॥ सन्नतिः स्वजनप्रावण्यम् प्रभावः प्रतापः तव वा रावणस्य वा नान्यस्य युष्मास्वित्यर्थः प्रह्लादबल्योर्वृत्रघ्नादीनां चोपमा यस्य तम् ॥ ७२ ॥ पितरमनुजातोसि पित्रा सदृशोसि ॥ ७३ ॥ ७४ ॥ पितृव्यो रावणः कुंभकर्णस्तु वीर्येण शरीरबलेन सुरासुरान्सहते त्वं तूभाभ्यामित्यर्थः ॥ ७५ ॥ ७६ ॥ ते तव मया सह महाविमर्दं महायुद्धम् ॥ ७७ ॥ ७८ ॥ उपालंभभयाद्बहुभिः सह युद्धेन श्रांतः कुंभः सुग्रीवेण हत इति निंदाभीत्येत्यर्थः ॥ ७९ ॥ सावमानेन कृतकर्मेत्यादिना ॥ ८० ॥ अवीतमदौ

उत्पाट्यचमहावृक्षानश्वकर्णादिकान्बहून् ॥ अन्यांश्चविविधान्वृक्षांश्चिक्षेपसमहाकपिः ॥ ६६ ॥ तांछादयंतीमाकाशंवृक्षवृष्टिंदुरासदाम् ॥ कुंभकर्णात्मजःश्रीमांश्चिच्छेदस्वशरैःशितैः ॥ ६७ ॥ अर्दितास्तेद्रुमारेजुर्यथाघोराःशतघ्नयः ॥ द्रुमवर्षंतुतद्भिन्नंदृष्ट्वाकुंभेनवीर्यवान् ॥ ६८ ॥ वानराधिपतिःश्रीमान्महासत्त्वोनविव्यथे ॥सविध्यमानःसहसासहमानस्तुतान्छरान् ॥ ६९ ॥ कुंभस्यधनुराक्षिप्यबभंजेंद्रधनुःप्रभम् ॥ अवप्लुत्यधनुःशीघ्रंकृत्वाकर्मसुदुष्करम् ॥ ७० ॥ अब्रवीत्कुपितःकुंभंभग्नशृंगमिवद्विपम् ॥ निकुंभाग्रजवीर्यंतेबाणवेगंतदद्भुतम् ॥ ७१ ॥ सन्नतिश्चप्रभावश्चतवचवारावणस्यवा ॥ प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपमम् ॥ ७२ ॥ एकस्त्वमनुजातोसिपितरंबलवत्तरम् ॥ त्वामेवैकंमहाबाहुंशूलहस्तमरिंदमम् ॥ ७३ ॥ त्रिदशानातिवर्ततेजितेंद्रियमिवाधयः ॥ विक्रमस्वमहाबुद्धेकर्माणिममपश्यच ॥ ७४ ॥ वरदानात्पितृव्यस्तेसहतेदेवदानवान् ॥ कुंभकर्णस्तुवीर्येणसहतेचसुरासुरान् ॥ ७५ ॥ धनुषीन्द्रजितस्तुल्यःप्रतापेरावणस्यच ॥ त्वमद्यरक्षसांलोकेश्रेष्ठोसिबलवीर्यतः ॥ ७६ ॥ महाविमर्दंसमरेमयासहतवाद्भुतम् ॥ अद्यभूतानिपश्यंतुशक्रशंबरयोरिव ॥ ७७ ॥ कृतमप्रतिमंकर्मदर्शितंचास्त्रकौशलम् ॥ पातिताहरिवीराश्चत्वयैतेभीमविक्रमाः ॥ ७८ ॥ उपालंभभयाच्चैवनासिवीरमयाहतः ॥ कृतकर्मपरिश्रांतोविश्रांतःपश्यमेबलम् ॥ ७९ ॥ तेनसुग्रीववाक्येनसावमानेनमानितः ॥ अग्नेराज्यहुतस्येवतेजस्तस्याभ्यवर्धत ॥ ८० ॥ ततःकुंभस्तुसुग्रीवंबाहुभ्यांजगृहेतदा ॥ गजाविवावीतमदौनिःश्वसंतौमुहुर्मुहुः ॥ ८१ ॥ अन्योन्यगात्रग्रथितौघर्षंतावितरेतरम् ॥ सधूमांमुखतोज्वालांविसृजंतौपरिश्रमात् ॥ ८२ ॥ तयोःपादाभिघाताच्चनिमग्नाचाभवन्मही ॥ व्याघूर्णिततरंगश्चचुक्षुभेवरुणालयः ॥ ८३ ॥ ततःकुंभंसमुत्क्षिप्यसुग्रीवोलवणांभसि ॥ पातयामासवेगेनदर्शयन्नुदधेःस्थलम् ॥ ८४ ॥ ततःकुंभनिपातेनजलराशिःसमुत्थितः ॥ विंध्यमंदरसंकाशोविससर्पसमंततः ॥ ८५ ॥ ततःकुंभःसमुत्पत्यसुग्रीवमभिपात्यच ॥ आजघानोरसिक्रुद्धोवज्रकल्पेनमुष्टिना ॥ ८६ ॥ तस्यचर्मचपुस्फोटसंजज्ञेचापिशोणितम् ॥ तस्यमुष्टिर्महावेगःप्रतिजघ्नेऽस्थिमंडले ॥ ८७ ॥ तस्यवेगेनतत्रासीत्तेजःप्रज्वलितंमहत् ॥ वज्रनिष्पेषसंजाताज्वालामेरोर्यथागिरेः ॥ ८८ ॥

अनपगतमदौ आवीतमदाविति च्छेदः व्याप्तमदावित्यर्थः ॥ ८१ ॥ ८२ ॥ ८३ ॥ दर्शयन्नुदधेः स्थलम् स्वबलं दर्शयन् उदधेः स्थलमतिक्रम्य लवणांभसि कुंभं पातयामास उदधेस्तलमितिपाठे तद्दर्शयँल्लवणांभसि पातयामासेत्यर्थः ॥ ८४ ॥ विंध्यमंदरसंकाशः कुंभस्ततो जलात्समुत्पत्येत्यन्वयः ॥ ८५ ॥ ८६ ॥ पुस्फोट भिन्नम् स तस्य मुष्टिः सुग्रीवास्थिमंडले प्रतिजघ्ने प्रतिहतः ॥ ८७ ॥ ८८ ॥

धूमैर्व्याप्तस्यातएवोच्चैर्विनेदुषः कस्वंतं नारीजनस्य स्वन इत्यन्वयः ॥३१॥३२॥३३॥३४॥३५॥ संहारकाले संक्रुद्धो भगवान् भवः शब्दब्रह्मात्मकं वेदमयं धनुर्विस्फारयन्निव ॥ ३६ ॥ रामस्य ज्याशब्दस्तावुभौ वानरराक्षसशब्दावतिक्रम्याधरीकृत्य शुश्रुवे ॥ ३७ ॥ एतत् त्रयं व्याप व्याप्तमभूत् ॥ ३८ ॥ ३९ ॥ सन्नाह उद्योगः ॥ ४० ॥ रौद्रीव कालरात्रिरिव ॥ ४१ ॥ यत् यस्य आसन्नं द्वारं तत्ते आसाद्य युध्यध्वमित्यादिष्टाः ॥ ४२ ॥ अपि च वो युष्माकं मध्ये तत्र गुल्मे स्थितो वितथं पलायनं कुर्यात्स राजशासनदूषको मदाज्ञातिवर्तीति स भवद्भिः प्रबलैर्हंतव्य इत्यादिष्टाः ॥ ४३ ॥ स्थितेषु सत्स्विति शेषः

नारीजनस्यधूमेनव्याप्तस्योच्चैर्विनेदुषः ॥ स्वनोज्वलनतस्यशुश्रुवेशतयोजनम् ॥ ३१ ॥ प्रदग्धकायानपरान्राक्षसान्निर्गतान्बहिः ॥ सहसाह्युत्पतंतिस्महरयोथयुयुत्सवः ॥ ३२ ॥ उद्घुष्टंवानराणांचराक्षसानांचनिःस्वनम् ॥ दिशोदशसमुद्रंचपृथिवींचव्यनादयत् ॥ ३३ ॥ विशल्यौचमहात्मानौतावुभौरामलक्ष्मणौ ॥ असंभ्रांतौजगृहतुस्तेउभेधनुषीवरे ॥ ३४ ॥ ततोविस्फारयामासरामश्चधनुरुत्तमम् ॥ बभूवतुमुलःशब्दोराक्षसानांभयावहः ॥ ३५ ॥ अशोभततदारामोधनुर्विस्फारयन्महत् ॥ भगवानिवसंक्रुद्धोभवोवेदमयंधनुः ॥ ३६ ॥ उद्घुष्टंवानराणांचराक्षसानांचनिःस्वनम् ॥ ज्याशब्दस्तावुभौशब्दावतिरामस्यशुश्रुवे ॥ ३७ ॥ वानरोद्घुष्टघोषश्चराक्षसानांचनिःस्वनः ॥ ज्याशब्दश्चापिरामस्यत्रयंव्यापदिशोदश ॥ ३८ ॥ तस्यकार्मुकनिर्मुक्तैःशरैस्तत्पुरगोपुरम् ॥ कैलासशृंगप्रतिमंविकीर्णमभवद्भुवि ॥ ३९ ॥ ततोरामशरान्दृष्ट्वाविमानेषुगृहेषुच ॥ सन्नाहोराक्षसेंद्राणांतुमुलःसमपद्यत ॥ ४० ॥ तेषांसन्नह्यमानानांसिंहनादंचकुर्वताम् ॥ शर्वरीराक्षसेंद्राणांरौद्रीवसमपद्यत ॥ ४१ ॥ आदिष्टावानरेंद्रास्तेसुग्रीवेणमहात्मना ॥ आसन्नंद्वारमासाद्ययुध्यध्वंचप्लवंगमाः ॥४२॥ यश्चवोवितथंकुर्यात्तत्रतत्राप्युपस्थितः ॥ सहंतव्योभिसंप्लुत्यराजशासनदूषकः ॥४३॥ तेषुवानरमुख्येषुदीप्तोल्कोज्वलपाणिषु ॥ स्थितेषुद्वारमाश्रित्यरावणंक्रोधआविशत् ॥ ४४ ॥ तस्यजृंभितविक्षेपाद्व्यामिश्रावैदिशोदश ॥ रूपवानिवरुद्रस्यमन्युर्गात्रेष्वदृश्यत ॥ ४५ ॥ सकुंभंचनिकुंभंचकुंभकर्णात्मजावुभौ ॥ प्रेषयामाससंक्रुद्धोराक्षसैर्बहुभिःसह ॥ ४६ ॥ यूपाक्षःशोणिताक्षश्चप्रजंघःकंपनस्तथा ॥ निर्ययुःकौंभकर्णाभ्यांसहरावणशासनात् ॥ ४७ ॥ शशासचैवतान्सर्वान्राक्षसान्समहाबलान् ॥ राक्षसागच्छताद्यैवसिंहनादंचनादयन् ॥ ४८ ॥ ततस्तुचोदितास्तेनराक्षसाज्वलितायुधाः ॥ लंकायांनिर्ययुर्वीराःप्रणदंतःपुनःपुनः ॥४९॥ रक्षसांभूषणस्थाभिर्भाभिःस्वाभिश्चसर्वशः॥चक्रुस्तेसप्रभंव्योमहरयश्चाग्निभिःसह॥५०॥तत्रताराधिपस्याभाताराणांभातथैवच॥तयोराभरणाभाचज्वलिताद्यामभासयत् ॥५१॥

॥ ४४ ॥ तस्य रावणस्य भयक्रोधजं यज्जृंभितं विजृंभणं तदुत्थविक्षेपात् सशब्दमहावायुप्रवृत्त्या दश दिशो व्यामिश्रा व्याप्ताः रूपवान् रुद्रस्य गात्रेषु भ्रुकुटिचक्षुर्मुखादिष्वदृश्यत ॥ ४५ ॥ ४६ ॥ ४७ ॥ अद्यास्यां रात्र्यामेव गच्छतेति वानरानीकभयाय स्वयं सिंहनादं नादयन् कुर्वन् शशास ॥ ४८ ॥ ४९ ॥ सप्रभं निस्तिमिरम् ॥ ५० ॥ ताराधिपस्य चंद्रस्य ताराणां नक्षत्राणां तयोर्वानरराक्षसबलयोराभर

॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ अथ कुंभस्य शौर्यं स्तौति निकुंभाग्रेनेति वेगशब्दो◌ेर्घर्वादिः ॥ ७१ ॥ सन्नतिः स्वजनमार्दवम् प्रभावः प्रतापः तव वा रावणस्य वा नान्यस्य युष्मास्वित्यर्थः महादबल्योर्वृत्रघ्नादीनां चोपमा यस्य तम् ॥ ७२ ॥ पितरमनुजातोसि पित्रा सदृशोसि ॥ ७३ ॥ ७४ ॥ पितृव्यो रावणः कुंभकर्णस्तु वीर्येण शरीरबलेन सुरासुरान्सहते त्वं तूभाभ्यामित्यर्थः ॥ ७५ ॥ ७६ ॥ ते तव मया सह महाविमर्दं महायुद्धम् ॥ ७७ ॥ ७८ ॥ उपालंभभयाद्बहुभिः सह युद्धेन श्रांतः कुंभः सुग्रीवेण हत इति निंदाभीत्येत्यर्थः ॥ ७९ ॥ सावमानेन कृतकर्मेत्यादिना ॥ ८० ॥ अवीतमदौ

उत्पाट्यचमहावृक्षानश्वकर्णादिकान्बहून् ॥ अन्यांश्चविविधान्वृक्षांश्चिक्षेपसमहाकपिः ॥ ६६ ॥ तांछादयंतीमाकाशंवृक्षवृष्टिंदुरासदाम् ॥ कुंभकर्णात्मजःश्रीमांश्चिच्छेदस्वशरैःशितैः ॥ ६७ ॥ अर्दितास्तेद्रुमारेजुर्यथाघोराःशतघ्नयः ॥ द्रुमवर्षंतुतच्छिन्नंदृष्ट्वाकुंभेनवीर्यवान् ॥ ६८ ॥ वानराधिपतिःश्रीमान्महासत्त्वोनविव्यथे ॥सविध्यमानःसहसासहमानस्तुतांच्छरान् ॥ ६९ ॥ कुंभस्यधनुराक्षिप्यबभंजेंद्रधनुःप्रभम् ॥ अवप्लुत्यधनुःशीघ्रंकृत्वाकर्मसुदुष्करम् ॥ ७० ॥ अब्रवीत्कुपितःकुंभंभग्नशृंगमिवद्विपम् ॥ निकुंभाग्रजवीर्यंतेबाणवेगंतदद्भुतम् ॥ ७१ ॥ सन्नतिश्चप्रभावश्चतववारावणस्यवा ॥ प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपमम् ॥ ७२ ॥ एकस्त्वमनुजातोसिपितरंबलवत्तरम् ॥ त्वामेवैकंमहाबाहुंशूलहस्तमरिंदमम् ॥ ७३ ॥ त्रिदशानातिवर्तंतेजितेंद्रियमिवाधयः ॥ विक्रमस्वमहाबुद्धेकर्माणिममपश्यच ॥ ७४ ॥ वरदानात्पितृव्यस्तेसहतेदेवदानवान् ॥ कुंभकर्णस्तुवीर्येणसहतेचसुरासुरान् ॥ ७५ ॥ धनुषीन्द्रजितस्तुल्यःप्रतापेरावणस्यच ॥ त्वमद्यरक्षसांलोकेश्रेष्ठोसिबलवीर्यतः ॥ ७६ ॥ महाविमर्दंसमरेमयासहतवाद्भुतम् ॥ अद्यभूतानिपश्यंतुशक्रशंबरयोरिव ॥७७॥ कृतमप्रतिमंकर्मदर्शितंचास्त्रकौशलम् ॥ पातिताहरिवीराश्चत्वयैतेभीमविक्रमाः ॥७८॥ उपालंभभयाच्चैवनासिवीरमयाहतः ॥ कृतकर्मपरिश्रांतोविश्रांतःपश्यमेबलम् ॥ ७९ ॥ तेनसुग्रीववाक्येनसावमानेनमानितः ॥ अग्नेराज्यहुतस्येवतेजस्तस्याभ्यवर्धत ॥ ८० ॥ ततःकुंभस्तुसुग्रीवंबाहुभ्यांजगृहेतदा ॥ गजाविवावीतमदौनिःश्वसंतौमुहुर्मुहुः ॥ ८१ ॥ अन्योन्यगात्रग्रथितौघर्षंतावितरेतरम् ॥ सधूमांमुखतोज्वालांविसृजंतौपरिश्रमात् ॥ ८२ ॥ तयोःपादाभिघाताच्चनिमग्नाचाभवन्मही ॥ व्याघूर्णिततरंगश्चचुक्षुभेवरुणालयः ॥ ८३ ॥ततःकुंभंसमुत्क्षिप्यसुग्रीवोलवणांभसि ॥ पातयामासवेगेनदर्शयन्नुदधेःस्थलम् ॥ ८४॥ ततःकुंभनिपातेनजलराशिःसमुत्थितः॥ विंध्यमंदरसंकाशोविससर्पसमंततः ॥८५॥ ततःकुंभःसमुत्पत्यसुग्रीवमभिपात्यच ॥ आजघानोरसिक्रुद्धोवज्रकल्पेनमुष्टिना ॥ ८६ ॥ तस्यचर्मचपुस्फोटसंजज्ञेचापिशोणितम् ॥ तस्यमुष्टिर्महावेगःप्रतिजघ्नेऽस्थिमंडले ॥ ८७ ॥ तस्यवेगेनतत्रासीत्तेजःप्रज्वलितंमहत् ॥ वज्रनिष्पेषसंजाताज्वालामेरोर्यथागिरेः ॥ ८८ ॥

अनपगतमदौ आवीतमदाविति च्छेदे व्याप्तमदावित्यर्थः ॥ ८१ ॥ ८२ ॥ ८३ ॥ दर्शयन्नुदधेः स्थलम् स्वबलं दर्शयन् उदधेः स्थलमतिक्रम्य लवणांभसि कुंभं पातयामास उदधेस्तलमितिपाठे तद्दर्शयँल्लवणांभसि पातयामासेत्यर्थः ॥ ८४ ॥ विंध्यमंदरसंकाशः कुंभस्ततो जलात्समुत्पत्येत्यन्वयः ॥ ८५ ॥ ८६ ॥ पुस्फोट भिन्नम् स तस्य मुष्टिः सुग्रीवास्थिमंडले प्रतिजघ्ने प्रतिहतः ॥ ८७ ॥ ८८ ॥

धूमैर्व्याप्तस्यातएवोच्चैर्विनेदुषः कस्वंतं नारीजनस्य स्वन इत्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ संहारकाले संक्रुद्धो भगवान् भवः शब्दब्रह्मात्मकं वेदमयं धनुर्विस्फारयन्निव ॥ ३६ ॥ रामस्य ज्याशब्दस्तावुभौ वानरराक्षसशब्दावतिक्रम्याधरीकृत्य शुश्रुवे ॥ ३७ ॥ एतत् त्रयं व्याप व्याप्तमभूत् ॥ ३८ ॥ ३९ ॥ सन्नाह उद्योगः ॥ ४० ॥ रौद्रीव कालरात्रिरिव ॥ ४१ ॥ यत् यस्य आसन्नं द्वारं तत्ते आसाद्य युध्यध्वमित्यादिष्टाः ॥ ४२ ॥ अपि च वो युष्माकं मध्ये तत्र गुल्मे स्थितो वितथं पलायनं कुर्यात्स राजशासनदूषको मदाज्ञातिवर्तीति स भवद्भिः प्रबलैर्हंतव्य इत्यादिष्टाः ॥ ४३ ॥ स्थितेषु सत्स्विति शेषः

नारीजनस्यधूमेनव्याप्तस्योच्चैर्विनेदुषः ॥ स्वनोज्वलनतप्तस्यशुश्रुवेशतयोजनम् ॥ ३१ ॥ प्रदग्धकायानपरान्राक्षसान्निर्गतान्बहिः ॥ सहसाह्युत्पतंतिस्महरयोथयुयुत्सवः ॥ ३२ ॥ उद्घुष्टंवानराणांचराक्षसानांचनिःस्वनम् ॥ दिशोदशसमुद्रंचपृथिवींचव्यनादयत् ॥ ३३ ॥ विशल्यौचमहात्मानौतावुभौरामलक्ष्मणौ ॥ असंभ्रांतौजगृहतुस्तेउभेधनुषीवरे ॥ ३४ ॥ ततोविस्फारयामासरामश्चधनुरुत्तमम् ॥ बभूवतुमुलःशब्दोराक्षसानांभयावहः ॥ ॥ ३५ ॥ अशोभततदारामोधनुर्विस्फारयन्महत् ॥ भगवानिवसंक्रुद्धोभवोवेदमयंधनुः ॥ ३६ ॥ उद्घुष्टंवानराणांचराक्षसानांचनिःस्वनम् ॥ ज्याशब्दस्तावुभौशब्दावतिरामस्यशुश्रुवे ॥ ३७ ॥ वानरोद्घुष्टघोषश्चराक्षसानांचनिःस्वनः ॥ ज्याशब्दश्चापिरामस्यत्रयंव्यापदिशोदश ॥ ३८ ॥ तस्यकार्मुकनिर्मुक्तैःशरैस्तत्पुरगोपुरम् ॥ कैलासशृंगप्रतिमंविकीर्णमभवद्भुवि ॥ ३९ ॥ ततोरामशरान्दृष्ट्वाविमानेषुगृहेषुच ॥ सन्नाहोराक्षसेंद्राणांतुमुलःसमपद्यत ॥ ४० ॥ तेषांसन्नह्यमानानांसिंहनादंचकुर्वताम् ॥ शर्वरीराक्षसेंद्राणांरौद्रीवसमपद्यत ॥ ४१ ॥ आदिष्टावानरेंद्रास्तेसुग्रीवेणमहात्मना ॥ आसन्नंद्वारमासाद्ययुध्यध्वंचप्लवंगमाः ॥ ४२ ॥ यश्चवोवितथंकुर्यात्तत्रतत्राप्युपस्थितः ॥ सहंतव्योभिसंप्लुत्यराजशासनदूषकः ॥ ४३ ॥ तेषुवानरमुख्येषुदीप्तोल्कोज्वलपाणिषु ॥ स्थितेषुद्वारमाश्रित्यरावणंक्रोधआविशत् ॥ ४४ ॥ तस्यजृंभितविक्षेपाद्व्यामिश्रावैदिशोदश ॥ रूपवानिवरुद्रस्यमन्युर्गात्रेष्वदृश्यत ॥ ४५ ॥ सकुंभंचनिकुंभंचकुंभकर्णात्मजावुभौ ॥ प्रेषयामाससंक्रुद्धोराक्षसैर्बहुभिःसह ॥ ४६ ॥ यूपाक्षःशोणिताक्षश्चप्रजंघःकंपनस्तथा ॥ निर्ययुःकौंभकर्णाभ्यांसहरावणशासनात् ॥ ४७ ॥ शशासचैवतान्सर्वान्राक्षसान्समहाबलान् ॥ राक्षसागच्छताद्यैवसिंहनादंचनादयन् ॥ ४८ ॥ ततस्तुचोदितास्तेनराक्षसाज्वलितायुधाः ॥ लंकायांनिर्ययुर्वीराःप्रणदंतःपुनःपुनः ॥ ४९ ॥ रक्षसांभूषणस्थाभिर्भाभिःस्वाभिश्चसर्वशः ॥ चक्रुस्तेसप्रभंव्योमहरयश्चाग्निभिःसह ॥ ५० ॥ तत्रताराधिपस्याभाताराणांभातथैवच ॥ तयोराभरणाभाचज्वलिताद्यामभासयत् ॥ ५१ ॥

॥ ४४ ॥ तस्य रावणस्य भयक्रोधजं यज्जृंभितं विजृंभणं तदुत्थविक्षेपात् सशब्दमहावायुप्रवृत्त्या दश दिशो व्यामिश्रा व्याप्ताः रूपवान् रुद्रस्य गात्रेषु भ्रुकुटिचक्षुर्मुखादिष्वदृश्यत ॥ ४५ ॥ ४६ ॥ ४७ ॥ अद्यास्यां रात्र्यामेव गच्छतेति वानरानीकभयाय स्वयं सिंहनादं नादयन् कुर्वन् शशास ॥ ४८ ॥ ४९ ॥ सप्रभं निस्तिमिरम् ॥ ५० ॥ ताराधिपस्य चंद्रस्य ताराणां नक्षत्राणां तयोर्वानरराक्षसबलयोराभर

णाभा आभरणकांतिश्च ज्वलिता प्रकाशमाना द्यां सेनाद्वयमध्यगताकाशप्रदेशमभासयत ॥ ५१ ॥ उक्तश्लोकस्यैव व्याख्यानम् चंद्राभेत्यादि । ग्रहाणां नक्षत्राणाम् ॥ ५२ ॥ संसक्तं संबद्धं सलिलं यस्य सः ॥ ॥ ५३ ॥ उत्तमासिपरश्वधं परश्वधो द्विविधः असिरूपः कुठाररूपश्च तत्रासिरूपपरश्वधमित्यर्थः । तेनासिखड्गयोर्न पौनरुक्त्यम् ॥ ५४ ॥ ५५ ॥ ज्वलितप्रासं बाणवर्षणादुज्ज्वलितप्रासमित्यर्थ इति कतकः । हेमजालेति । हेमजालव्याप्तभुजामित्यर्थः । व्यावेष्टिताश्चालिताः परश्वधा यस्मिंस्तत् ॥ ५६ ॥ गंधादीनामुत्सेकत आधिक्यतः संमोदितो महाननिलो येन तत् ॥ ५७ ॥ ५८ ॥ संचचाल लंकायामिति शेषः ॥



चंद्राभाभूषणाभाचग्रहाणांज्वलिताचभा ॥ हरिराक्षससैन्यानिभ्राजयामाससर्वतः ॥ ५२ ॥ तत्रचार्धप्रदीप्तानांग्रहाणांसागरःपुनः ॥ भाभिः संसक्तसलिलश्चलोर्मिःशुशुभेध्रुवम् ॥ ५३ ॥ पताकाध्वजसंयुक्तमुत्तमासिपरश्वधम् ॥ भीमाश्वरथमातंगंनानापत्तिसमाकुलम् ॥ ५४ ॥ दीप्तशूल गदाखड्गप्रासतोमरकार्मुकम् ॥ तद्राक्षसबलंभीमंघोरविक्रमपौरुषम् ॥५५॥ ददृशेज्वलितप्रासंकिंकिणीशतनादितम् ॥ हेमजालाचितभुजंव्यावेष्टि तपरश्वधम् ॥ ५६ ॥ व्याघूर्णितमहाशस्त्रंबाणसंसक्तकार्मुकम् ॥ गंधमाल्यमधूत्सेकसंमोदितमहानिलम् ॥ ५७ ॥ घोरंशूरजनाकीर्णमहांबुधरनिः स्वनम् ॥ तद्दृष्ट्वाबलमायातंराक्षसानांदुरासदम् ॥ ५८ ॥ संचचालप्लवंगानांबलमुच्चैर्ननादच ॥ जवेनाप्लुत्यचपुनस्तद्बलंरक्षसांमहत् ॥ ५९ ॥ अभ्ययात्प्रत्यरिबलंपतंगाइवपावकम् ॥ तेषांभुजपरामर्शव्यामृष्टपरिघाशनि ॥ ६० ॥ राक्षसानांबलंश्रेष्ठंभूयःपरमशोभत ॥ तत्रोन्मत्ताइवोत्पेतुर्ह रयोथयुयुत्सवः ॥ ६१ ॥ तरुशैलैरभिघ्नंतोमुष्टिभिश्चनिशाचरान् ॥ तथैवापततांतेषांहरीणांनिशितैःशरैः ॥ ६२ ॥ शिरांसिसहसाजह्रूराक्ष साभीमविक्रमाः ॥ दशनैर्हृतकर्णाश्चमुष्टिभिर्भिन्नमस्तकाः ॥ शिलाप्रहारभग्नांगाविचेरुस्तत्रराक्षसाः ॥ ६३ ॥ तथैवाप्यपरेतेषांकपीनामसिभिः सितैः ॥ प्रवरानभितोजघ्नुर्घोररूपानिशाचराः ॥ ६४ ॥ घ्नंतमन्यंजघानान्यःपातयंतमपातयत् ॥ गर्हमाणंजगर्हान्योदशंतमपरोदशत ॥ ६५ ॥ देहीत्यन्योददात्यन्योददामीत्यपरःपुनः ॥ किंक्लेशयसितिष्ठेतितत्रान्योन्यंबभाषिरे ॥ ६६ ॥ विप्रलंभितशस्त्रंचविमुक्तकवचायुधम् ॥ समुद्यतम हाप्रासंमुष्टिशूलासिकुंतलम् ॥ ६७ ॥ प्रावर्ततमहारौद्रंयुद्धंवानररक्षसाम् ॥ वानरान्दशसप्तेतिराक्षसाजघ्नुराहवे ॥ ६८ ॥ विप्रलंभितवस्त्रंच विमुक्तकवचध्वजम् ॥ बलंराक्षसमालंब्यवानराःपर्यवारयन् ॥ इत्यार्षे श्रीमद्रा०वा०आ० यु० पंचसप्ततितमः सर्गः ॥ ७५ ॥



॥ ५९ ॥ तेषां रक्षसां भुजपरामर्शेन भुजबंधनेन व्यामृष्टा व्याघूर्णिताः परिघाशनयो यत्र तत् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ अपरे निशाचरास्तेषां कपीनां प्रवरान् जघ्नुः ॥ ६४ ॥ ६५ ॥ देहीति । युद्धमिति शेषः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ झेर्षमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचसप्ततितमः सर्गः ॥ ७५ ॥ कतकरी० ॥ ६८ ॥

स्याल्पीयस्त्वं ज्ञात्वा वानरा लंकां प्रविशेयुस्ते मा प्रवेक्ष्यन्त्यित्येतदर्थोयं रावणस्येश्वरेच्छया विचारः ॥ ७१ ॥ हताहता इति वीप्सा सर्व एव हता इत्यर्थः ॥ ७२ ॥ ओषधीशैलमिति दीर्घ आर्षः । आश्विन कृष्णाष्टम्यामिदम् ॥ ७३ ॥ गँच्छमानः ॥ कतकरी० ॥ ६७ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुःसप्ततितमः सर्गः ॥ ७४ ॥ तत इति । अर्थ्यमर्थादन पेतमथ्ये कर्तव्यं विज्ञापयन् ॥ १ ॥ निषूदिताः राघवाभ्यामिति शेषः तस्मादिदानीमुपनिर्हारं पररक्षां दातुं संपादयितुं नार्हतीति कतकः । उपनिर्हारं निष्क्रम्य युद्धप्रदानामिति तीर्थः । उपनिर्हारं युद्धावहारमस्माकं दातुं नार्हतीत्यर्थः । अनेनान्यदा युद्धावहारो जात इति ज्ञायत इत्यन्ये ॥ २ ॥ अतो ये ये महाबलाः संति लघवः क्षिप्रकारिणस्ते सर्वे उल्का गृहीत्वा लंकामभ्युत्पतंतु दाहायेति भावः ॥ ३ ॥ ततोस्तमिति । पूर्वदिवसापररात्रिशेषे उल्काहस्ताभ्यां हनूमद्विभीषणाभ्यां जांबवदन्वेषणं ततस्तन्नियोगत उषसि पुर्वताहरणाय गमनम् । अथाहरणं पुनश्च तत्प्रापणं पुनरागमनमिति त्रिंशद्घटिकामध्ये सर्वम् । ततः पुनः प्रदोषे हनुम

येह्यन्यंतेरणेतत्रराक्षसाःकपिकुंजरैः ॥ हताहतास्तुक्षिप्यंतेसर्वएवतुसागरे ॥ ७२ ॥ ततोहरिर्गंधवहात्मजस्तुतमोषधीशैलमुदग्रवेगः ॥ निनायवेगाद्धिमवंतमेवपुनश्चरामेणसमाजगाम ॥ ७३ ॥ इत्यार्षेश्रीमद्रा०वा०आ०युद्धकांडेचतुःसप्ततितमःसर्गः ॥ ७४ ॥ ततोब्रवीन्महातेजाःसुग्रीवोवानरेश्वरः ॥ अर्थ्यंविज्ञापयंश्चापिहनूमंतमिदंवचः ॥ १ ॥ यतोहतःकुंभकर्णःकुमाराश्चनिषूदिताः ॥ नेदानीमुपनिर्हाररंरावणोदातुमर्हति ॥ २ ॥ येयेमहाबलाःसंतिलघवश्चप्लवंगमाः ॥ लंकामभिपतंत्वाशुगृह्योल्काःप्लवगर्षभाः ॥ ३ ॥ ततोस्तंगतआदित्येरौद्रेतस्मिन्निशामुखे ॥ लंकामभिमुखाःसोल्काजग्मुस्तेप्लवगर्षभाः ॥४॥ उल्काहस्तैर्हरिगणैःसर्वतःसमभिद्रुताः ॥ आरक्षस्थाविरूपाक्षाःसहसाविप्रदुद्रुवुः ॥ ५ ॥ गोपुराट्टप्रतोलीषुचर्यासुविविधासुच ॥ प्रासादेषुचसंहृष्टाःससृजुस्तेहुताशनम् ॥ ६ ॥ तेषांगृहसहस्राणिददाहहुतभुक्तदा ॥ प्रासादाःपर्वताकाराःपतंतिधरणीतले ॥ ७ ॥ अगुरुर्दह्यतेतत्रपरंचैवसुचंदनम् ॥ मौक्तिकामणयःस्निग्धावज्रंचापिप्रवालकम् ॥ ८ ॥ क्षौमंचदह्यतेतत्रकौशेयंचापिशोभनम् ॥ आविकंविविधंचौर्णंकांचनंभांडमायुधम् ॥ ९ ॥ नानाविकृतसंस्थानंवाजिभांडपरिच्छदम् ॥ गजग्रैवेयकक्ष्याश्चरथभांडांश्चसंस्कृतान् ॥ १० ॥ तनुत्राणिचयोधानांहस्त्यश्वानांचचर्मच ॥ खड्गाधनूंषिज्यावाणास्तोमरांकुशशक्तयः ॥ ११ ॥

दादीनां लंकादाहगमनमिति कतकादयः ॥ ४ ॥ आरक्षा द्वाराणि तत्स्था द्वाररक्षिणो विरूपाक्षा राक्षसाः आरक्षो गुल्ममित्यन्ये ॥ ५ ॥ अट्टो गृहोपरितनं गृहम् । स्यादट्टः क्षौममस्त्रियामिति वा । प्रतोली रथ्या चर्या अल्परथ्या ॥ ६ ॥ तेषां वानराणां संबंधी हुतभुक् ददाह पतंति अपतन् ॥७॥ दह्यते दग्धः ॥ ८ ॥ और्णम् ऊर्णासूत्रनिर्मितं आविकं अविरोमनिर्मितम् ऊर्णात्वितरेषामपीति न पौनरुक्त्यं कांचनं भांडं सौवर्णमुपकरणम् ॥ ९ ॥ वाजिभांडपरिच्छदं वाजिनां भांडमलंकारः परिच्छदः पल्ययनादिश्च तन्नाना अनेकं विकृतसंस्थानं विचित्रविन्यासं रथभांडान् रथालंकारान् संस्कृतान्सम्यग्रचितान् भांडशब्दोलंकारमात्रवाची रथभांडेत्युक्तेः । अतएव वाजिभांडेत्यत्र वाजिग्रहणं चरितार्थं अश्वालंकारवाचित्वे तु तद्वैयर्थ्यं स्पष्टमेव । तत्त्वेपि कर्णावतंसादिवत्साहित्यबोधनार्थं तत्र सः । रथभांडेत्यत्र तु लाक्षणिक इत्यन्ये ॥१०॥११॥

णाभा आभरणकांतिश्च ज्वलिता प्रकाशमाना द्यां सेनाद्वयमध्यगताकाशप्रदेशमभासयत ॥ ५१ ॥ उक्तश्लोकस्यैव व्याख्यानम् चंद्राभेत्यादि । ग्रहाणां नक्षत्राणाम् ॥ ५२ ॥ संसक्तं संबद्धं सलिलं यस्य सः ॥ ॥ ५३ ॥ उत्तमासिपरश्वधं परश्वधो द्विविधः असिरूपः कुठाररूपश्च तत्रासिरूपपरश्वधमित्यर्थः । तेनासिखड्गयोर्न पौनरुक्त्यम् ॥ ५४ ॥ ५५ ॥ ज्वलितप्रासं बाणवर्षणादुज्ज्वलितप्रासमित्यर्थ इति कतकः । हेमजालेति । हेमजालव्याप्तभुजामित्यर्थः । व्यावेष्टिताश्चालिताः परश्वधा यस्मिंस्तत् ॥ ५६ ॥ गंधादीनामुत्सेकत आधिक्यतः संमोदितो महाननिलो येन तत् ॥ ५७ ॥ ५८ ॥ संचचाल लंकायामिति शेषः ॥

चंद्राभाभूषणाभाचग्रहाणांज्वलिताचभा ॥ हरिराक्षससैन्यानिभ्राजयामाससर्वतः ॥ ५२ ॥ तत्रचार्धप्रदीप्तानांग्रहाणांसागरःपुनः ॥ भाभिः संसक्तसलिलश्चलोर्मिःशुशुभेध्रुवम् ॥ ५३ ॥ पताकाध्वजसंयुक्तमुत्तमासिपरश्वधम् ॥ भीमाश्वरथमातंगंनानापत्तिसमाकुलम् ॥ ५४ ॥ दीप्तशूलगदाखड्गप्रासतोमरकार्मुकम् ॥ तद्राक्षसबलंभीमंघोरविक्रमपौरुषम् ॥५५॥ ददृशेज्वलितप्रासंकिंकिणीशतनादितम् ॥ हेमजालाचितभुजंव्यावेष्टितपरश्वधम् ॥ ५६ ॥ व्याघूर्णितमहाशस्त्रंबाणसंसक्तकार्मुकम् ॥ गंधमाल्यमधूत्सेकसंमोदितमहानिलम् ॥ ५७ ॥ घोरंशूरजनाकीर्णमहांबुधरनिःस्वनम् ॥ तद्दृष्ट्वाबलमायातंराक्षसानांदुरासदम् ॥ ५८ ॥ संचचालप्लवंगानांबलमुच्चैर्ननादच ॥ जवेनाप्लुत्यचपुनस्तद्बलंरक्षसांमहत् ॥ ५९ ॥ अभ्ययात्प्रत्यरिबलंपतंगाइवपावकम् ॥ तेषांभुजपरामर्शव्यामृष्टपरिघाशनि ॥ ६० ॥ राक्षसानांबलंश्रेष्ठंभूयःपरमशोभत ॥ तत्रोन्मत्ताइवोत्पेतुर्हरयोथयुयुत्सवः ॥ ६१ ॥ तरुशैलैरभिघ्नंतोमुष्टिभिश्चनिशाचरान् ॥ तथैवापततांतेषांहरीणांनिशितैःशरैः ॥ ६२ ॥ शिरांसिसहसाजह्रूराक्षसाभीमवि[illegible]ाः ॥ दशनैर्हृतकर्णाश्चमुष्टिभिर्भिन्नमस्तकाः ॥ शिलाप्रहारभग्नांगाविचेरुस्तत्रराक्षसाः ॥ ६३ ॥ तथैवाप्यपरेतेषांकपीनामसिभिःसितैः ॥ प्रवरानभितोजघ्नुर्घोररूपानिशाचराः ॥ ६४ ॥ घ्नंतमन्यंजघानान्यःपातयंतमपातयत् ॥ गर्हमाणंजगर्हान्योदशंतमपरोदशत् ॥ ६५ ॥ देहीत्यन्योददात्यन्योददामीत्यपरःपुनः ॥ किंक्लेशयसितिष्ठेतितत्रान्योन्यंबभाषिरे ॥ ६६ ॥ विप्रलंभितशस्त्रंचविमुक्तकवचायुधम् ॥ समुद्यतमहाप्रासंमुष्टिशूलासिकुंतलम् ॥ ६७ ॥ प्रावर्ततमहारौद्रंयुद्धंवानररक्षसाम् ॥ वानरान्दशसप्तेतिराक्षसाजघ्नुराहवे ॥ ६८ ॥ विप्रलंभितवस्त्रंचविमुक्तकवचध्वजम् ॥ बलंराक्षसमालंब्यवानराःपर्यवारयन् ॥ इत्यार्षे श्रीमद्रा०वा०आ० यु० पंचसप्ततितमः सर्गः ॥ ७५ ॥

॥ ५९ ॥ तेषां रक्षसां भुजपरामर्शेन भुजबंधनेन व्यामृष्टा व्याघूर्णिताः परिघाशनयो यत्र तत् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ अपरे निशाचरास्तेषां कपीनां प्रवरान् जघ्नुः ॥ ६४ ॥ ६५ ॥ देहीति । युद्धमिति शेषः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ झेर्षमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचसप्ततितमः सर्गः ॥ ७५ ॥ कतकरी० ॥ ६८ ॥

स्याल्पीयस्त्वं ज्ञात्वा वानरा लंकां प्रविशेयुस्ते मा प्रवेक्ष्यन्नित्येतदर्थोयं रावणस्येश्वरेच्छया विचारः ॥ ७१ ॥ हताहता इति वीप्सा सर्वे एव हता इत्यर्थः ॥ ७२ ॥ ओषधीशैलमिति दीर्घ आर्षः । आश्विन कृष्णाष्टम्यामिदम् ॥ ७३ ॥ गैच्छमानः ॥ कतकरी० ॥ ६७ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुःसप्ततितमः सर्गः ॥ ७४ ॥ तत इति । अर्घ्यमर्यादन पेतमग्रे कर्तव्यं विज्ञापयन् ॥ १ ॥ निषूदिताः राघवाभ्यामिति शेषः तस्मादिदानीमुपनिर्हारं परक्षां दातुं संपादयितुं नार्हतीति कतकः । उपनिर्हारं निष्क्रम्य युद्धप्रदानामिति तीर्थः । उपनिर्हारं युद्धावहारमस्माकं दातुं नार्हतीत्यर्थः । अनेनान्यदा युद्धावहारो जात इति ज्ञायत इत्यन्ये ॥ २ ॥ अतो ये ये महाबलाः संति लघवः क्षिप्रकारिणस्ते सर्वे उल्का गृहीत्वा लंकामभ्युत्पतंतु दाहायेति भावः ॥ ३ ॥ ततोस्तमिति । पूर्वदिवसापररात्रिशेषे उल्काहस्ताभ्यां हनूमद्बिभीषणाभ्यां जांबवदन्वेषणं ततस्तन्नियोगत उपसि पुर्वताहरणाय गमनम् । अथाहरणं पुनश्च तत्प्रापणं पुनरागमनमिति त्रिंशद्घटिकामध्ये सर्वम् । ततः पुनः प्रदोषे हनुम

येहन्यंतेरणेतत्रराक्षसाःकपिकुंजरैः ॥ हताहतास्तुक्षिप्यंतेसर्वएवतुसागरे ॥ ७२ ॥ ततोहरिर्गंधवहात्मजस्तुतमोषधीशैलमुदग्रवेगः ॥ निनायवेगाद्धिमवंतमेवपुनश्चरामेणसमाजगाम ॥ ७३ ॥ इत्यार्षेश्रीमद्रा०वा०आ०युद्धकांडेचतुःसप्ततितमःसर्गः ॥ ७४ ॥ ततोब्रवीन्महातेजाःसुग्रीवोवानरेश्वरः ॥ अर्थ्यंविज्ञापयंश्चापिहनूमंतमिदंवचः ॥ १ ॥ यतोहतःकुंभकर्णःकुमाराश्चनिषूदिताः ॥ नेदानीमुपनिर्हाररंरावणोदातुमर्हति ॥ २ ॥ येयेमहाबलाःसंतिलघवश्चप्लवंगमाः ॥ लंकामभिपतंत्वाशुगृह्योल्काःप्लवगर्षभाः ॥ ३ ॥ ततोस्तंगतआदित्येरौद्रेतस्मिन्निशामुखे ॥ लंकामभिमुखाःसोल्काजग्मुस्तेप्लवगर्षभाः ॥४॥ उल्काहस्तैर्हरिगणैःसर्वतःसमभिद्रुताः ॥ आरक्षस्थाविरूपाक्षाःसहसाविप्रदुद्रुवुः ॥ ५ ॥ गोपुराट्टप्रतोलीषुचर्यासुविविधासुच ॥ प्रासादेषुचसंहृष्टाःससृजुस्तेहुताशनम् ॥ ६ ॥ तेषांगृहसहस्राणिददाहहुतभुक्तदा ॥ प्रासादाःपर्वताकाराःपतंतिधरणीतले ॥ ७ ॥ अगुरुर्दह्यतेतत्रपरंचैवसुचंदनम् ॥ मौक्तिकामणयःस्निग्धावज्रंचापिप्रवालकम् ॥ ८ ॥ क्षौमंचदह्यतेतत्रकौशेयंचापिशोभनम् ॥ आविकंविविधंचौर्णंकांचनंभांडमायुधम् ॥ ९ ॥ नानाविकृतसंस्थानंवाजिभांडपरिच्छदम् ॥ गजग्रैवेयकक्ष्याश्चरथभांडांश्चसंस्कृतान् ॥ १० ॥ तनुत्राणिचयोधानांहस्त्यश्वानांचचर्मच ॥ खड्गाधनूंषिज्यावाणास्तोमरांकुशशक्तयः ॥ ११ ॥

दादीनां लंकादाहगमनमिति कतकादयः ॥ ४ ॥ आरक्षा द्वाराणि तत्स्था द्वाररक्षिणो विरूपाक्षा राक्षसाः आरक्षो गुल्ममित्यन्ये ॥ ५ ॥ अट्टो गृहोपरितनं गृहम् । स्यादट्टः क्षौममस्त्रियामिति वा । प्रतोली रथ्या चर्या अल्परथ्या ॥ ६ ॥ तेषां वानराणां संबंधी हुतभुक् ददाह पतंति अपतन् ॥७॥ दह्यते दग्धः ॥ ८ ॥ और्णम् ऊर्णासूत्रनिर्मितं आविकं अविरोमनिर्मितम् ऊर्णात्वितरेषामपीति न पौनरुक्त्यं कांचनं भांडं सौवर्णमुपकरणम् ॥ ९ ॥ वाजिभांडपरिच्छदं वाजिनां भांडमलंकारः परिच्छदः पल्ययनादिश्च तन्नाना अनेकं विकृतसंस्थानं विचित्रविन्यासं रथभांडान् रथालंकारान् संस्कृतान्सम्यग्रचितान् भांडशब्दोलंकारमात्रवाची रथभांडेत्युक्तेः । अतएव वाजिभांडेत्यत्र वाजिग्रहणं चरितार्थं अश्वालंकारवाचित्वे तु तद्वैयर्थ्यं स्पष्टमेव । तत्त्वेपि कर्णावतंसादिवत्साहित्यबोधनार्थं तत्र सः । रथभांडेत्यत्र तु लाक्षणिक इत्यन्ये ॥१०॥११॥

येनांजना देवी सुमजाः सुपुत्रवती ॥ १८ ॥ आर्यपुत्रौ राघवौ ॥ १९ ॥ आर्य जांबवन् ॥ २० ॥ २१ ॥ २२ ॥ जीविताशा ततो भवेत् जीवनहेतोस्तत एव लाभसंभवादितिभावः ॥ २३ ॥ २४ ॥ विव्यथितेंद्रियः विशेषेण व्यथितानींद्रियाणि यस्य सः ॥२५॥२६॥ विक्रमपर्याप्तः पर्याप्तविक्रमः ॥ २७ ॥ सादितौ पीडितौ ॥२८॥ सागरमित्युपरियोगे षष्ठ्यर्थे द्वितीया ॥ २९ ॥ कांचनं स्वर्णमयं अत्युग्र सिंहादिभिर्दुष्प्रवेशम् ऋषभं तदाख्यम् ॥ ३० ॥ तयोः शिखरयोः ऋषभकैलासशिखरयोरित्यर्थः ॥ ३१ ॥ ओषधयो दीप्ताः दीप्ता ओषधीरित्यर्थः ॥ ३२ ॥ सुवर्णकरणीं स्वर्णसमानवर्णस्य देहादेः करणीम् ।

अंजनासुप्रजायेनमातरिश्वाचसुव्रत ॥ हनूमान्वानरश्रेष्ठःप्राणान्धारयतेक्वचित् ॥ १८ ॥ श्रुत्वाजांबवतोवाक्यमुवाचेदंविभीषणः ॥ आर्यपुत्राव तिक्रम्यकस्मात्पृच्छसिमारुतिम् ॥ १९ ॥ नैवराजनिसुग्रीवेनांगदेनापिराघवे ॥ आर्यसंदर्शितःस्नेहोयथावायुसुतेपरः ॥ २० ॥ विभीषणवचः श्रुत्वाजांबवान्वाक्यमब्रवीत् ॥ शृणुनैर्ऋतशार्दूलयस्मात्पृच्छामिमारुतिम् ॥ २१ ॥ अस्मिञ्जीवतिवीरेतुहतमप्यहतंबलम् ॥ हनूमत्युज्झितप्राणे जीवंतोपिमृतावयम् ॥ २२ ॥ धरतेमारुतिस्तातमारुतप्रतिमोयदि ॥ वैश्वानरसमोवीर्येजीविताशाततोभवेत् ॥ २३ ॥ ततोवृद्धमुपागम्यविनयेनाभ्य वादयत् ॥ गृह्यजांबवतःपादौहनूमान्मारुतात्मजः ॥ २४ ॥ श्रुत्वाहनूमतोवाक्यंतदाविव्यथितेंद्रियः ॥ पुनर्जातमिवात्मानंमन्यतेप्लवगोत्तमः ॥ ॥ २५ ॥ ततोब्रवीन्महातेजाहनूमंतंसजांबवान् ॥ आगच्छहरिशार्दूलवानरांस्त्रातुमर्हसि ॥ २६ ॥ नान्योविक्रमपर्याप्तस्त्वमेषांपरमःसखा ॥ त्व त्पराक्रमकालोयंनान्यंपश्यामिकंचन ॥ २७ ॥ ऋक्षवानरवीराणामनीकानिप्रहर्षय ॥ विशल्यौकुरुचाप्येतौसादितौरामलक्ष्मणौ ॥ २८ ॥ गत्वा परममध्वानमुपर्युपरिसागरम् ॥ हिमवंतंनगश्रेष्ठंहनूमन्गंतुमर्हसि ॥ २९ ॥ ततःकांचनमत्युग्रमृषभंपर्वतोत्तमम् ॥ कैलासशिखरंचात्रद्रक्ष्यस्यरि निषूदन ॥ ३० ॥ तयोःशिखरयोर्मध्येप्रदीप्तमतुलप्रभम् ॥ सर्वौषधियुतंवीरद्रक्ष्यस्योषधिपर्वतम् ॥ ३१ ॥ तस्यवानरशार्दूलचतस्रोमूर्ध्निसंभवाः ॥ द्रक्ष्यस्योषधयोदीप्तादीपयंतीर्दिशोदश ॥ ३२ ॥ मृतसंजीवनींचैवविशल्यकरणीमपि ॥ सुवर्णकरणींचैवसंधानींचमहौषधीम् ॥ ३३ ॥ ताःसर्वाहनुम न्गृह्यक्षिप्रमागंतुमर्हसि ॥ आश्वासयहरीन्प्राणैर्योज्यगंधवहात्मज ॥ ३४ ॥ श्रुत्वाजांबवतोवाक्यंहनूमान्मारुतात्मजः ॥ आपूर्यतबलोद्धर्षैर्वायुवेगै रिवार्णवः ॥ ३५ ॥ सपर्वततटाग्रस्थःपीडयन्पर्वतोत्तमम् ॥ हनूमान्दृश्यतेवीरोद्वितीयइवपर्वतः ॥ ३६ ॥ हरिपादविनिर्भग्नोनिषसादसपर्वतः ॥ नशशाकतदात्मानंवोढुंभृशानिपीडितः ॥ ३७ ॥ तस्यपेतुर्नगाभूमौहरिवेगाच्चजज्वलुः ॥ शृंगाणिचव्यकीर्यंतपीडितस्यहनूमता ॥ ३८ ॥ तस्मिन्सं पीड्यमानेतुभग्नद्रुमशिलातले ॥ नशेकुर्वानराःस्थातुंघूर्णमानेनगोत्तमे ॥ ३९ ॥

सवर्णेति पाठे पूर्ववर्णसमानवर्णकरणीमित्यर्थः । संधानीं छिन्नशिरःकबंधयोरपि यथापूर्वं नाडीसंधानकरणीम् ॥ ३३ ॥ प्राणैर्योजयित्वा आश्वासयेत्यन्वयः ॥ ३४ ॥ बलोद्धर्षैर्बलोद्रेकैः ॥ ३५ ॥ पर्वततटाग्रस्थ त्रिकूटशिखरस्थः ॥ ३६ ॥ हरिपादविनिर्भग्नः तत्पादभाराक्रांतः निषसाद निविष्टोभूत् ॥ ३७ ॥ हरिवेगाद्धनूमत उत्पतनवेगात् नगा वृक्षाः पेतुः परस्परसंघर्षजाग्निवशतो जज्वलुश्च ॥ ३८ ॥ तस्मिंस्त्रिकूटपर्वते

घूर्णमाने नगोत्तमे वानराः स्थातुं न शेकुः त्रिकूटस्यैव युद्धभूमित्वात्तच्छिखरस्यैव च लंकात्वात् ॥ ३९ ॥ अतएव सा घूर्णितेत्यनेन लंकाक्षोभ उच्यते । प्रनृत्येव प्रवृत्तनृत्येव ॥ ४० ॥ ४१ ॥ वडवामुखव ज्वाज्वल्यमानं मुखं विवृत्य व्यादाय राक्षसांस्त्रासयन्नुग्रं उच्चैर्ननाद । यावदोषध्यानयनं तावद्रक्षोनिर्गमो मा भूदिति तेषां त्रासार्थं ननादेति भावः ॥ ४२ ॥ ४३ ॥ समीहत चिंतितवान् ॥ ४४ ॥ स पुच्छमि त्यनेन जातिवर्णनम् ॥ ४५ ॥ प्राकृतवानरान् त्रिकूटवने नित्यवासान्प्राकृतवानरान् ते क्षीणवेगाः अनुगतवृक्षखंडादयः ॥ ४६ ॥ भुजंगारिर्गरुडः ॥ ४७ ॥ ४८ ॥ जनान् जनपदान् ॥ ४९ ॥ ५० ॥ ५१ ॥

साघूर्णितमहाद्वाराप्रभग्नगृहगोपुरा ॥ लंकात्रासाकुलारात्रौप्रनृत्येवाभवत्तदा ॥ ४० ॥ पृथिवीधरसंकाशोनिपीड्यपृथिवीधरम् ॥ पृथिवींक्षोभयामाससार्णवांमारुतात्मजः ॥ ४१ ॥ पद्भ्यांतुशैलमाविध्यवडवामुखवन्मुखम् ॥ विवृत्योग्रंननादोच्चैस्त्रासयन्रजनीचरान् ॥४२ ॥ तस्यनानद्यमानस्यश्रुत्वानिनदमुत्तमम् ॥ लंकास्थाराक्षसव्याघ्रानशेकुःस्पंदितुंक्वचित् ॥ ४३ ॥ नमस्कृत्वाथरामायमारुतिर्भीमविक्रमः ॥ राघवार्थेपरंकर्मसमीहतपरंतपः ॥ ४४ ॥ सपुच्छमुद्यम्यभुजंगकल्पंविनम्यपृष्ठंश्रवणेनिकुच्य ॥ विवृत्यवक्त्रंवडवामुखाभमापुप्लुवेव्योम्निसचंडवेगः ॥ ४५ ॥ सवृक्षखंडांस्तरसाजहारशैलाञ्छिलाःप्राकृतवानरांश्च ॥ बाहूरुवेगोद्धुतसंप्रणुन्नास्तेक्षीणवेगाःसलिलेनिपेतुः ॥ ४६ ॥ सतौप्रसार्योरगभोगकल्पौभुजौभुजंगारिनिकाशवीर्यः ॥ जगामशैलंनगराजमग्र्यंदिशःप्रकर्पन्निववायुसूनुः ॥ ४७ ॥ ससागरंघूर्णितवीचिमालंतदंभसाभ्रामितसर्वसत्त्वम् ॥ समीक्ष्यमाणःसहसाजगामचक्रंयथाविष्णुकराग्रमुक्तम् ॥ ४८ ॥ सपर्वतान्पक्षिगणान्सरांसिनदीस्तटाकानिपुरोत्तमानि ॥ स्फीताञ्जनांस्तानपिसंप्रवीक्ष्यजगामवेगात्पितृतुल्यवेगः ॥ ४९ ॥ आदित्यपथमाश्रित्यजगामसगतश्रमः ॥ हनूमांस्त्वरितोवीरःपितुस्तुल्यपराक्रमः ॥ ५० ॥ जवेनमहतायुक्तोमारुतिर्वातरंहसा ॥ जगामहरिशार्दूलोदिशःशब्देननादयन् ॥ ५१ ॥ स्मरञ्जांबवतोवाक्यंमारुतिर्भीमविक्रमः ॥ ददर्शसहसाचापिहिमवंतंमहाकपिः ॥ ५२ ॥ नानाप्रस्रवणोपेतंबहुकंदरनिर्झरम् ॥ श्वेताभ्रचयसंकाशैःशिखरैश्चारुदर्शनैः ॥ शोभितंविविधैर्वृक्षैरगमत्पर्वतोत्तमम् ॥ ५३ ॥ सतंसमासाद्यमहानगेंद्रमतिप्रवृद्धोत्तमहेमशृंगम् ॥ ददर्शपुण्यानिमहाश्रमाणिसुरर्षिसंघोत्तमसेवितानि ॥ ५४ ॥ सब्रह्मकोशंरजतालयंचशक्रालयंरुद्रशरप्रमोक्षम् ॥ हयाननंब्रह्मशिरश्चदीप्तंददर्शवैवस्वतकिंकरांश्च ॥ ५५ ॥ वह्न्यालयंवैश्रवणालयंचसूर्यप्रभंसूर्यनिबंधनंच ॥ ब्रह्मालयंशंकरकार्मुकंचददर्शनाभिंचवसुंधरायाः ॥ ५६ ॥

स्मरन् जांबवतो वाक्यं तद्वाक्यस्मरणं वेगवशादोषध्यादिपर्वतमतीत्य गमननिवृत्त्यर्थम् ॥ ५२ ॥ ५३ ॥ सुरर्षिसंघोत्तमेति । उत्तमसुरर्षिसंघैरित्यर्थः ॥ ५४ ॥ तद्वद्देवतादिस्थानानां नामान्याह स ब्रह्मेति ब्रह्मकोशं भगवतो हिरण्यगर्भस्य स्थानं ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्ये इत्यादिश्रुतिसिद्धम् । रजतालयं हिरण्यगर्भापरमूर्तेः रजतनाभेः स्थानं रुद्रशरप्रमोक्षं यत्र स्थाने स्थित्वा रुद्रस्त्रिपुरसंहाराय शरं मुमोच तत्स्थानं हयाननं भगवतो हयग्रीवस्य स्थानं ब्रह्मशिरो ब्रह्मास्त्रदेवता तत्स्थानं तत्र तत्र नित्यसन्निहितान्वैवस्वतकिंकरांश्च ददर्श ॥ ५५ ॥ वह्न्यालयमिति । सूर्यनिबंधनं सूर्याणां यत्र स्थाने निबंधनं समावेशस्तत्स्थानं

अतएव तत्सूर्यप्रभं ब्रह्मालयं चतुर्मुखब्रह्मस्थानं शंकरकार्मुकं पिनाकाख्यराजस्थानं वसुंधराया नाभिं भूनाभिसंज्ञं प्राजापत्यं स्थानम् ॥ ५६ ॥ हिमवच्छिलां भगवतो रुद्रस्य तपःसमाधिपीठं तं वै वृषं जांबवदुपदिष्टम् ॥ ५७ ॥ वासवस्य मेघस्वरूपिणो देवराजस्य दूतः प्रेरको वायुरित्यर्थः विचयं मार्गणम् ॥ ५८ ॥ योजनसहस्राणि सहस्रशब्दोऽनेकोपलक्षणम् ॥ ५९ ॥ ६० ॥ ६१ ॥ किमेतदिति यद्राघवे कृतानुकंपो नासि एवं प्रकारमेतदौदासीन्यं किंबलादित्यर्थः । स्वबलादिति चेत्तत्राह पश्येति ॥ ६२ ॥ सनागं सगजं उन्ममाथ उत्पाटयामास ॥ ६३ ॥ अतः स तमिति ॥ ६४ ॥ तं तदित्यर्थः प्रतिभास्कराभः प्रति

कैलासमुग्रंहिमवच्छिलांचतंवैवृषंकांचनशैलमग्र्यम् ॥ प्रदीप्तसर्वौषधिसंप्रदीप्तंददर्शसर्वौषधिपर्वतेंद्रम् ॥ ५७ ॥ सतंसमीक्ष्यानलराशिदीप्तंविसिस्मियेवासवदूतसूनुः ॥ आप्लुत्यतंचौषधिपर्वतेंद्रंतत्रौषधीनांविचयंचकार ॥ ५८ ॥ सयोजनसहस्राणिसमतीत्यमहाकपिः ॥ दिव्यौषधिधरंशैलंव्यचरन्मारुतात्मजः ॥ ५९ ॥ महौषध्यस्ततःसर्वास्तस्मिन्पर्वतसत्तमे ॥ विज्ञायार्थिनमायांतंततोजग्मुरदर्शनम् ॥ ६० ॥ सतामहात्माहनुमानपश्यंश्चुकोपरोषाच्चभृशंननाद ॥ अमृष्यमाणोग्निसमानचक्षुर्महीधरेंद्रंतमुवाचवाक्यम् ॥ ६१ ॥ किमेतदेवंसुविनिश्चितंतेयद्राघवेनासिकृतानुकंपः ॥ पश्याद्यमद्बाहुबलाभिभूतोविकीर्णमात्मानमथोनगेंद्र ॥ ६२ ॥ सतस्यशृंगंसनगंसनागंसकांचनंधातुसहस्रजुष्टम् ॥ विकीर्णकूटंज्वलिताग्रसानुंप्रगृह्यवेगात्सहसोन्ममाथ॥ ६३ ॥ सतंसमुत्पाट्यखमुत्पपातवित्रास्यलोकान्ससुरासुरेंद्रान् ॥ संस्तूयमानःखचरैरनेकैर्जगामवेगाद्गरुडोग्रवेगः ॥६४॥ सभास्कराध्वानमनुप्रपन्नस्तंभास्करार्भंशिखरंप्रगृह्य ॥ बभौतदाभास्करसन्निकाशोरवेःसमीपेप्रतिभास्कराभः ॥ ६५ ॥ सतेनशैलेनभृशंरराजशैलोपमोगंधवहात्मजस्तु ॥ सहस्रधारेणसपावकेनचक्रेणखेविष्णुरिवार्पितेन ॥ ६६ ॥ तंवानराःप्रेक्ष्यतदाविनेदुःसतानपिप्रेक्ष्यमुदाननाद ॥ तेषांसमुत्कृष्टरवंनिशम्यलंकालयाभीमतरंविनेदुः ॥ ६७ ॥ ततोमहात्मानिपपाततस्मिन्शैलोत्तमेवानरसैन्यमध्ये ॥ हर्युत्तमेभ्यःशिरसाभिवाद्यविभीषणंतत्रचसस्वजेसः ॥ ६८ ॥ तावप्युभौमानुषराजपुत्रौतंगंधमाघ्रायमहौषधीनाम् ॥ बभूवतुस्तत्रतदाविशल्यावुत्तस्थुरन्येचहरिप्रवीराः ॥ ६९ ॥ सर्वेविशल्याविरुजाःक्षणेनहरिप्रवीराश्चहताश्चयेस्युः ॥ गंधेनतासांप्रवरौषधीनांसुप्तानिशांतेष्विवसंप्रबुद्धाः ॥ ७० ॥ यदाप्रभृतिलंकायांयुध्यंतेहरिराक्षसाः ॥ तदाप्रभृतिमानार्थमाज्ञयारावणस्यच ॥ ७१ ॥



सूर्यसदृशः रवेः समीपे इत्यनेनसूर्योदयोत्तरमेतदानयनमिति लभ्यते ॥ ६५ ॥ सपावकेन साग्निज्वालेन अर्पितेन स्वकरार्पितेन ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ यदि महौषधीनां गंधमाघ्राय राघवौ हरिप्रवीराश्च यथापूर्वमत्यंतं स्वस्थास्तदौषधिगंधस्य रक्षःसाधारणत्वात्तेषामनुत्थाने हेतुमाह यदेति । मानार्थं अर्थशब्दो निवृत्तिवाची शत्रूणां हतराक्षसेयत्ताज्ञानाभावार्थमित्यर्थः । तत्परिज्ञाने तु अवशिष्टबल

शेषः ॥ ५६ ॥ शनैर्नेत्रेषु ताडिता इत्यन्वयः । अन्योन्यं विविशुः अन्योन्यगात्रं समाश्लिष्य तस्थुः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ प्रसक्तं प्रकृतं मार्गं ब्रह्मास्त्रमाश्रित्य अस्माना बामेवार्दयति ॥ ६४ ॥ नष्टदेहोऽदृष्टदेहः ॥ ६५ ॥ नन्वदृष्टदेहस्यापि संहारसाधनैः शब्दवेध्यादिदिव्यास्त्रैर्हननं कार्यमिति चेन्न भगवतो ब्रह्मण आज्ञाया मारुतिनैवास्माभिरपि पालनौचित्येनैतत्सहनस्यैवौचित्या दित्याशयेनाह मन्ये इति । अचिंत्यः अचिंत्यवैभवः योऽस्य सकलसंसारस्य प्रभवः स्रष्टा चकारात्संहर्ता च स्वयंभूर्हिरण्यगर्भोऽस्ति तस्य भगवत एतदस्त्रम् एतदस्त्रवैभवमित्येव मन्ये जानामि अतस्तत्प्रवृत्तमिमं बाणाव पातं मया सहाव्यग्रमना भगवद्ध्यानैकचित्तो भूत्वा भगवद्ध्यानबलेन सहस्व धीमन्निति हेतुगर्भविशेषणं यतस्त्वमपि ब्रह्मध्यानसंपन्नस्तस्मात्सहस्व एवं हि भगवदनुग्रहादस्माकमपि जयो भविष्यति नान्यथेत्यर्थः

उदीक्षमाणागगनंकेचिन्नेत्रेषुताडिताः ॥ शनैर्विविशुरन्योन्यंपेतुश्चजगतीतले ॥ ५७ ॥ हनूमंतंचसुग्रीवमंगदंगंधमादनम् ॥ जांबवंतंसुषेणंचवेगद र्शिनमेवच ॥ ५८ ॥ मैंदंचाद्विविदंनीलंगवाक्षंगवयंतथा ॥ केसरिंहरिलोमानंविद्युद्दंष्ट्रंचवानरम् ॥ ५९ ॥ सूर्याननंज्योतिमुखंतथादधिमुखं हरिम् ॥ पावकाक्षंनलंचैवकुमुदंचैववानरम् ॥ ६० ॥ प्रासैःशूलैःशितैर्बाणैरिंद्रजिन्मंत्रसंहितैः ॥ विव्याधहरिशार्दूलान्सर्वांस्तान्राक्षसोत्तमः ॥ ॥ ६१ ॥ सवैगदाभिर्हरियूथमुख्यान्निर्भिद्यबाणैस्तपनीयवर्णैः ॥ ववर्षरामंशरवृष्टिजालैःसलक्ष्मणंभास्कररश्मिकल्पैः ॥ ६२ ॥ सबाणवर्षैर भिवृष्यमाणोधारानिपातानिवतानचिंत्य ॥ समीक्षमाणःपरमाद्भुतश्रीरामस्तदालक्ष्मणमित्युवाच ॥ ६३ ॥ असौपुनर्लक्ष्मणराक्षसेंद्रोमहास्त्र माश्रित्यसुरेंद्रशत्रुः ॥ निपातयित्वाहरिसैन्यमस्मान्छितैःशरैरर्दयतिप्रसक्तम् ॥ ६४ ॥ स्वयंभुवादत्तवरोमहात्मासमाहितोंतर्हितभीमकायः ॥ कथंनुशक्योयुधिनष्टदेहोनिहंतुमद्येंद्रजिदुद्यतास्त्रः ॥ ६५ ॥ मन्येस्वयंभूर्भगवानचिंत्यस्तस्यैतदस्त्रंप्रभवश्चयोस्य ॥ बाणावपातंत्वमिहाद्यधीमन्मया सहाव्यग्रमनाःसहस्व ॥ ६६ ॥ प्रच्छादयत्येषहिराक्षसेंद्रःसर्वाधिकःसायकवृष्टिजालैः ॥ एतच्चसर्वंपतिताग्र्यशूरंनभ्राजतेवानरराजसैन्यम् ॥ ६७ ॥ आवांतुदृष्ट्वापतितौविसंज्ञौनिवृत्तयुद्धौहतहर्षरोषौ ॥ ध्रुवंप्रवेक्ष्यत्यमरारिवासमसौसमासाद्यरणाग्र्यलक्ष्मीम् ॥ ६८ ॥ ततस्तुताविंद्रजितोस्त्रजालैर्ब भूवतुस्तत्रतदाविशस्तौ ॥ सचापितौतत्रविषादयित्वाननादहर्षाद्युधिराक्षसेंद्रः ॥ ६९ ॥ ततस्तदावानरसैन्यमेवंरामंचसंख्येसहलक्ष्मणेन ॥ निषूद यित्वासहसाविवेशपुरींदशग्रीवभुजाभिगुप्ताम् ॥ संस्तूयमानःसतुयातुधानैःपित्रेचसर्वंहृषितोभ्युवाच ॥ ७० ॥ इत्यार्षे श्रीम० वा० आ० युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ तयोस्तदासादितयोरणाग्रेमुमोहसैन्यंहरियूथपानाम् ॥ सुग्रीवनीलांगदजांबवंतोनचापिकिंचित्प्रतिपेदिरेते ॥ १ ॥

॥ ६६ ॥ पतिताग्र्यशूरं पतिता भुवि पतिता अग्र्यशूराः प्रशस्तवीरा यस्मिंस्तत् ॥ ६७ ॥ एतत्सहनस्यैवैतदुपरमोपायत्वमरीत्याह आवामिति । हतहर्षरोषौ अप्रकाशितहर्षरोषविकारौ अत एव विसंज्ञाविवावां पतितौ दृष्ट्वा रणाग्र्यलक्ष्मीं समासाद्य ध्रुवमसावमरारिवासं लंकां प्रवेक्ष्यति पश्चाद्यदस्माभिरनुष्ठेयं तत्करिष्याव इति शेषः । रणाग्र्येत्यादिना समूलनाशा शक्तिः सूचिता ॥ ६८ ॥ विशस्तौ पीडितौ ॥ ६९ ॥ ७० ॥ नार्थमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ कतकरी० ॥ ६६ ॥ तयोः राघवयोः रणाग्रे रणमुखे सादितयोर्निश्चेष्टीकृतयोः ॥ १ ॥

अतएव तत्सूर्यप्रभं ब्रह्मालयं चतुर्मुखब्रह्मस्थानं शंकरकार्मुकं पिनाकाख्यराजस्थानं वसुंधराया नाभिं भूनाभिसंज्ञं प्राजापत्यं स्थानम् ॥ ५६ ॥ हिमवच्छिलां भगवतो रुद्रस्य तपःसमाधिपीठं तं वै वृषं जांबवदुपदिष्टम् ॥ ५७ ॥ वासवस्य मेघस्वरूपिणो देवराजस्य दूतः प्रेरको वायुरित्यर्थः विचयं मार्गणम् ॥ ५८ ॥ योजनसहस्राणि सहस्रशब्दोऽनेकोपलक्षणम् ॥ ५९ ॥ ६० ॥ ६१ ॥ किमेतदिति यद्राघवे कृतानुकंपो नासि एवं प्रकारमेतदौदासीन्यं किंबलादित्यर्थः । स्वबलादिति चेत्तत्राह पश्येति ॥ ६२ ॥ सनागं सगजं उन्ममाथ उत्पाटयामास ॥ ६३ ॥ अतः स तमिति ॥ ६४ ॥ तं तदित्यर्थः प्रतिभास्कराभः प्रति

कैलासमुग्रंहिमवच्छिलांचतंवैवृषंकांचनशैलमग्र्यम् ॥ प्रदीप्तसर्वौषधिसंप्रदीप्तंददर्शसर्वौषधिपर्वतेंद्रम् ॥ ५७ ॥ सतंसमीक्ष्यानलराशिदीप्तंविसिस्मियेवासवदूतसूनुः ॥ आप्लुत्यतंचौषधिपर्वतेंद्रंतत्रौषधीनांविचयंचकार ॥ ५८ ॥ सयोजनसहस्राणिसमतीत्यमहाकपिः ॥ दिव्यौषधिधरंशैलंव्यचरन्मारुतात्मजः ॥ ५९ ॥ महौषध्यस्ततःसर्वास्तस्मिन्पर्वतसत्तमे ॥ विज्ञायार्थिनमायांतंततोजग्मुरदर्शनम् ॥ ६० ॥ सतामहात्माहनुमानपश्यंश्चुकोपरोषाच्चभृशंननाद ॥ अमृष्यमाणोग्निसमानचक्षुर्महीधरेंद्रंतमुवाचवाक्यम् ॥ ६१ ॥ किमेतदेवंसुविनिश्चितंतेयद्राघवेनासिकृतानुकंपः ॥ पश्याद्यमद्बाहुबलाभिभूतोविकीर्णमात्मानमथोनगेंद्र ॥ ६२ ॥ सतस्यशृंगंसनगंसनागंसकांचनंधातुसहस्रजुष्टम् ॥ विकीर्णकूटंज्वलिताग्रसानुंप्रगृह्यवेगात्सहसोन्ममाथ॥ ६३ ॥ सतंसमुत्पाट्यखमुत्पपातवित्रास्यलोकान्ससुरासुरेंद्रान् ॥ संस्तूयमानःखचरैरनेकैर्जगामवेगाद्गरुडोग्रवेगः ॥६४॥ सभास्कराध्वानमनुप्रपन्नस्तंभास्कराभंशिखरंप्रगृह्य ॥ बभौतदाभास्करसन्निकाशोरवेःसमीपेप्रतिभास्कराभः ॥ ६५ ॥ सतेनशैलेनभृशंरराजशैलोपमोगंधवहात्मजस्तु ॥ सहस्रधारेणसपावकेनचक्रेणखेविष्णुरिवार्पितेन ॥ ६६ ॥ तंवानराःप्रेक्ष्यतदाविनेदुःसतानपिप्रेक्ष्यमुदाननाद ॥ तेषांसमुत्कृष्टरवंनिशम्यलंकालयाभीमतरंविनेदुः ॥ ६७ ॥ ततोमहात्मानिपपाततस्मिञ्शैलोत्तमेवानरसैन्यमध्ये ॥ हर्युत्तमेभ्यःशिरसाभिवाद्यविभीषणंतत्रचसस्वजेसः ॥ ६८ ॥ तावप्युभौमानुषराजपुत्रौतंगंधमाघ्रायमहौषधीनाम् ॥ बभूवतुस्तत्रतदाविशल्यावुत्तस्थुरन्येचहरिप्रवीराः ॥ ६९ ॥ सर्वेविशल्याविरुजाःक्षणेनहरिप्रवीराश्चहताश्चयेस्युः ॥ गंधेनतासांप्रवरौषधीनांसुप्तानिशांतेष्विवसंप्रबुद्धाः ॥ ७० ॥ यदाप्रभृतिलंकायांयुध्यंतेहरिराक्षसाः ॥ तदाप्रभृतिमानार्थमाज्ञयारावणस्यच ॥ ७१ ॥

सूर्यसदृशः रवेः समीपे इत्यनेनसूर्योदयोत्तरमेतदानयनमिति लभ्यते ॥ ६५ ॥ सपावकेन साग्निज्वालेन अर्पितेन स्वकरार्पितेन ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ यदि महौषधीनां गंधमाघ्राय राघवौ हरिप्रवीराश्च यथापूर्वमत्यंतं स्वस्थास्तदौषधिगंधस्य रक्षःसाधारणत्वात्तेषामनुत्थाने हेतुमाह यदेति । मानार्थं अर्थशब्दो निवृत्तिवाची शत्रूणां हतराक्षसेयत्ताज्ञानाभावार्थमित्यर्थः । तत्परिज्ञाने तु अवशिष्टबल

त्रिशिरोतिकायौ च तान् ॥ १ ॥ २ ॥ संपरिपुप्लुवानं लिटः कानच् । शोकार्णवमग्नमित्यर्थः । रथर्षभः रथस्थानां श्रेष्ठः महारथ इत्यर्थः । तं रावणम् ॥३॥ हे तात तस्मान्मोहं गंतुं नार्हसि यत्र यस्मादिंद्रजिज्जीवति इंद्रारिरिंद्रजित् समरे इंद्रजिद्बाणाभिहतः प्राणानभिपातुं कश्चिदपि समर्थो नास्ति ॥ ४ ॥ मद्बाणनिर्भिन्नोत एव विकीर्णो देहो यस्य तम् ॥ ५ ॥ पौरुषदैवयुक्तां पौरुषेण सहजशौर्यबलेन दैवबलेन भगवद्ब्रह्मबलेन च युक्तां क्रियमाणाम् । आदिकर्मणि क्तः ॥ ६ ॥ ७ ॥ खरश्रेष्ठैः समाधीयते युद्धमेभिरिति समाधयो धनुःखड्गादयस्तैश्च युक्तम् ॥ ८ ॥ हरिरथ इंद्ररथः ॥ ९ ॥ संहर्षमाणा इत्यार्षम् । हृष्यमाणा

ततोहतास्तान्सहसानिशम्यराजामहाबाष्पपरिप्लुताक्षः ॥ पुत्रक्षयंभ्रातृवधंचघोरंविचिंत्यराजाविपुलंप्रदध्यौ ॥ २ ॥ ततस्तुराजानमुदीक्ष्यदीनंशोकार्णवेसंपरिपुप्लुवानम् ॥ रथर्षभोराक्षसराजसूनुस्तमिंद्रजिद्वाक्यमिदंबभाषे ॥ ३ ॥ नतातमोहंपरिगंतुमर्हसेयत्रेंद्रजिज्जीवतिनैर्ऋतेश ॥ नेंद्रारिबाणाभिहतोहिकश्चित्प्राणान्समर्थःसमरेऽभिपातुम् ॥ ४ ॥ पश्याद्यरामंसहलक्ष्मणेनमद्बाणनिर्भिन्नविकीर्णदेहम् ॥ गतायुषंभूमितलेशयानंशितैःशरैराचितसर्वगात्रम् ॥ ५ ॥ इमांप्रतिज्ञांशृणुशक्रशत्रोःसुनिश्चितांपौरुषदैवयुक्ताम् ॥ अद्यैवरामंसहलक्ष्मणेनसंतर्पयिष्यामिशरैरमोघैः ॥ ६ ॥ अद्येंद्रवैवस्वतविष्णुरुद्रसाध्याश्चवैश्वानरचंद्रसूर्याः ॥ द्रक्ष्यंतुमेविक्रममप्रमेयंविष्णोरिवोग्रंबलियज्ञवाटे ॥ ७ ॥ सएवमुक्त्वात्रिदशेंद्रशत्रुरापृच्छ्यराजानमदीनसत्त्वः ॥ समारुरोहानिलतुल्यवेगंरथंखरश्रेष्ठसमाधियुक्तम् ॥ ८ ॥ समास्थायमहातेजारथंहरिरथोपमम् ॥ जगामसहसातत्रयत्रयुद्धमरिंदमः ॥ ॥ ९ ॥ तंप्रस्थितंमहात्मानमनुजग्मुर्महाबलाः ॥ संहर्षमाणाबहवोधनुःप्रवरपाणयः ॥ १० ॥ गजस्कंधगताःकेचित्केचित्परमवाजिभिः ॥ व्याघ्रवृश्चिकमार्जारखरोष्ट्रैश्चभुजंगमैः ॥ ११ ॥ वराहैःश्वापदैःसिंहैर्जंबुकैःपर्वतोपमैः ॥ काकहंसमयूरैश्चराक्षसाभीमविक्रमाः ॥ प्रासमुद्गरनिस्त्रिंशपरश्वधगदाधराः ॥ १२ ॥ सशंखनिनदैःपूर्णैर्भेरीणांचापिनिःस्वनैः ॥ जगामत्रिदशेंद्रारिराजिंवेगेनवीर्यवान् ॥ १३ ॥ सशंखशशिवर्णेनच्छत्रेणारिपुसूदनः ॥ रराजप्रतिपूर्णेननभश्चंद्रमसायथा ॥ १४ ॥ वीज्यमानस्ततोवीरोहैमैर्हेमविभूषणः ॥ चारुचामरमुख्यैश्चमुख्यःसर्वधनुष्मताम् ॥ ॥ १५ ॥ ततस्त्विंद्रजितालंकासूर्यप्रतिमतेजसा ॥ रराजाप्रतिवीर्येणद्यौरिवार्केणभास्वता॥१६॥सतंप्राप्यमहातेजायुद्धभूमिमरिंदमः ॥ स्थापयामासरक्षांसिरथंप्रतिसमंततः ॥ १७ ॥ ततस्तुहुतभोक्तारंहुतभुक्सदृशप्रभः ॥ जुहुवेराक्षसश्रेष्ठोविधिवन्मंत्रसत्तमैः ॥ १८ ॥ सहविर्लाजसत्कारैर्माल्यगंधपुरस्कृतैः ॥ जुहुवेपावकंतत्रराक्षसेंद्रःप्रतापवान् ॥ १९ ॥

इत्यर्थः ॥ १० ॥ ११ ॥१२॥ आजि युद्धम् ॥ १३ ॥ शंखस्य शशिनश्च वर्ण इव वर्णो यस्य तत् ॥१४॥ हैमैर्हिरण्मयदंडैः ॥१५॥ १६ ॥ युद्धभूमिं युद्धजयसंपादकहोमसाधनभूमिम् । निकुंभिलास्थानमित्यर्थः ॥ १७ ॥ हुतभोक्तारम् अग्निम् । विधिस्तत्कल्पोक्तप्रकारः ॥१८॥ गंधमाल्यपुरस्कृतैर्लाजसत्कारैः लाजैः पावकं सत्कृत्य तत्र पावके वक्ष्यमाणसंस्कारसंस्कृतैर्हविर्भिर्वक्ष्यमाणच्छागरूपं जुहाव ॥ १९ ॥

शस्त्राण्येव शरपत्राणि काशविशेषाः परिस्तरणभूताः विभीतकाः । विभीतकवृक्षसंबंधिन्यः समिधः रक्तवस्त्राणि अभिचारकर्मणि तेषामेव विनियोगात् आसन्निति शेषः । स्रुवमित्यत्रासीदिति ॥ २० ॥ शरपत्रैः प्रागुक्तरूपैः जीवतो गलं जग्राह सजीवस्य होमार्थमिति शेषः ॥ २१ ॥ सकृदेवेति । सजीवस्य समग्रावयवस्य च्छागस्य सकृदेव महाहुत्या समिद्धस्य महार्चिषोग्नेः सकाशात्तानि लिंगानि बभूवुः । यानि पुरा स्वस्य विजयमदर्शयन् ॥ २२ ॥ तान्येवाह प्रदक्षिणेति ॥ २३ ॥ अस्त्रविशारदः स ब्राह्ममस्त्रमाहारयामास ब्रह्मणा पुनर्ब्रह्मास्त्रोपदेशमकारयत् । अथ धनुरादिकं सिद्धब्रह्मास्त्रमंत्रेणाभ्यमंत्रयत् ॥ २४ ॥

शस्त्राणिशरपत्राणिसमिधोथबिभीतकाः ॥ लोहितानिचवासांसिस्रुवंकार्ष्णायसंतथा ॥ २० ॥ सतत्राग्निंसमास्तीर्यशरपत्रैःसतोमरैः ॥ छागस्यकृष्णवर्णस्यगलंजग्राहजीवतः ॥ २१ ॥ सकृदेवसमिद्धस्यविधूमस्यमहार्चिषः ॥ बभूवुस्तानिलिंगानिविजयायान्यदर्शयन् ॥ २२ ॥ प्रदक्षिणावर्तशिखस्तप्तकांचनसन्निभः ॥ हविस्तत्प्रतिजग्राहपावकःस्वयमुत्थितः ॥ २३ ॥ सोस्त्रमाहारयामासब्राह्ममस्त्रविशारदः ॥ धनुश्चात्मरथंचैवसर्वंतत्राभ्यमंत्रयत् ॥ २४॥ तस्मिन्नाहूयमानेस्त्रेहूयमानेचपावके ॥ सार्कग्रहेंदुनक्षत्रंवितत्रासनभःस्थलम् ॥ २५ ॥ सपावकंपावकदीप्ततेजाहुत्वामहेंद्रप्रतिमप्रभावः ॥ सचापबाणासिरथाश्वशूलःखेंतर्दधेत्मानमचिंत्यवीर्यः ॥ २६ ॥ ततोहयरथाकीर्णंपताकाध्वजशोभितम् ॥ निर्ययौराक्षसबलंनर्दमानंयुयुत्सया ॥२७॥ तेशरैर्बहुभिश्चित्रैस्तीक्ष्णवेगैरलंकृतैः ॥ तोमरैरंकुशैश्चापिवानराञ्जघ्नुराहवे ॥२८॥ रावणिस्तुसुसंक्रुद्धस्तान्निरीक्ष्यनिशाचरान् हृष्टाभवंतोयुध्यंतुवानराणांजिघांसया ॥ २९ ॥ ततस्तेराक्षसाःसर्वेगर्जंतोजयकांक्षिणः ॥ अभ्यवर्षंस्ततोघोरान्वानराञ्छरवृष्टिभिः॥३०॥ सतुनालीकनाराचैर्गदाभिर्मुसलैरपि ॥ रक्षोभिःसंवृतःसंख्येवानरान्विचकर्षह ॥ ३१ ॥ तेवध्यमानाःसमरेवानराःपादपायुधाः ॥ अभ्यवर्षंतसहसारावणिंशैलपादपैः ॥ ३२ ॥ इंद्रजित्तुतदाक्रुद्धोमहातेजामहाबलः ॥ वानराणांशरीराणिव्यधमद्रावणात्मजः ॥ ३३ ॥ शरेणैकेनचहरीन्नवपंचचसप्तच ॥ विभेदसमरेक्रुद्धोराक्षसान्संप्रहर्षयन् ॥ ३४ ॥ सशरैःसूर्यसंकाशैःशातकुंभविभूषणैः ॥ वानरान्समरेवीरःप्रममाथसुदुर्जयः ॥ ३५ ॥ तेभिन्नगात्राःसमरेवानराःशरपीडिताः ॥ पेतुर्मथितसंकल्पाःसुरैरिवमहासुराः ॥ ३६ ॥

तस्मिन्नस्त्रे आहूयमाने तदस्त्रमंत्रदैवते त्रिमूर्तिरहस्यलक्षणे क्रियमाणावाहने तदुद्देशेन तन्मंत्रेण पावके हूयमाने च सति सार्कादिकं नभस्थलं तत्रासेति । नायमर्थवादः ॥ २५ ॥ अंतर्दधेत्मानमित्यत्राकारलोपश्छांदसः ॥ २६ ॥ तत इति । यागसमाप्त्यनंतरं तद्यागभूमेरित्यर्थः ॥ २७ ॥ २८ ॥ निशाचरान्समीक्ष्य आहेति शेषः । किमाह तदाह हृष्टा इति ॥ २९ ॥ ३० ॥ रक्षोभिः संवृतः राक्षससैन्योपरि मत्यासन्नाकाशदेशे स्थितः ॥ ३१ ॥ अभ्यवर्षंत तत्सैन्यस्थित्यनुमितस्थितिकदिगुद्देशेनेति शेषः । अन्यथांतर्धानगतत्वेनैतदसंभवात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ मथितसंकल्पाः संहृतयुद्धसंकल्पाः॥ ३६॥

अभ्यधावंत तद्दिगाभिमुखेनेति शेषः ॥ ३७ ॥ ३८ ॥ त्यक्तजीविताः त्यक्तजीवितेच्छाः सशिलायुधाः शिलारूपायुधैः सहिताः ॥ ३९ ॥ ४० ॥ व्यपोहत अपसारयतिस्म ॥ ४१ ॥ ४२ ॥ ४३ ॥

तेतपंतमिवादित्यंघोरैर्बाणगभस्तिभिः ॥ अभ्यधावंतसंक्रुद्धाःसंयुगेवानरर्षभाः ॥ ३७ ॥ ततस्तुवानराःसर्वेभिन्नदेहाविचेतसः ॥ व्यथिताविद्रवंतिस्मरुधिरेणसमुक्षिताः ॥ ३८ ॥ रामस्यार्थेपराक्रम्यवानरास्त्यक्तजीविताः ॥ नर्दंतस्तेनिवृत्तास्तुसमरेसाशिलायुधाः ॥ ३९ ॥ तेद्रुमैःपर्वताग्रैश्चशिलाभिश्चप्लवंगमाः ॥ अभ्यवर्षंतसमरेरावणिंसमवस्थिताः ॥ ४० ॥ तंद्रुमाणांशिलानांचवर्षंप्राणहरंमहत् ॥ व्यपोहतमहातेजारावणिःसमितिंजयः ॥ ४१ ॥ ततःपावकसंकाशैःशरैराशीविषोपमैः ॥ वानराणामनीकानिबिभेदसमरेप्रभुः ॥ ४२ ॥ अष्टादशशरैस्तीक्ष्णैःसविद्ध्वागंधमादनम् ॥ विव्याधनवभिश्चैवनलंदूरादवस्थितम् ॥४३॥ सप्तभिस्तुमहावीर्योमैंदंमर्मविदारणैः ॥ पंचभिर्विशिखैश्चैवगजंविव्याधसंयुगे ॥ ४४ ॥ जांबवंतंतुदशभिर्नीलंत्रिंशद्भिरेवच ॥ सुग्रीवमृषभंचैवसोंगदंद्विविदंतथा ॥ ४५ ॥ घोरैर्दत्तवरैस्तीक्ष्णैर्निष्प्राणानकरोत्तदा ॥ अन्यानपितदामुख्यान्वानरान्बहुभिःशरैः ॥४६॥ अर्दयामाससंक्रुद्धःकालाग्निरिवमूर्छितः ॥ सशरैःसूर्यसंकाशैःसुमुक्तैःशीघ्रगामिभिः ॥ ४७ ॥ वानराणामनीकानिनिर्ममंथमहारणे ॥ आकुलांवानरींसेनांशरजालेनपीडिताम् ॥ ४८ ॥ हृष्टःसपरयाप्रीत्याददर्शक्षतजोक्षिताम् ॥ पुनरेवमहातेजाराक्षसेंद्रात्मजोबली ॥ ४९ ॥ संसृज्यबाणवर्षंचशस्त्रवर्षंचदारुणम् ॥ ममर्दवानरानीकंपरितस्त्विन्द्रजिद्बली ॥ ५० ॥ स्वसैन्यमुत्सृज्यसमेत्यतूर्णंमहाहवेवानरवाहिनीषु ॥ अदृश्यमानःशरजालमुग्रंववर्षनीलांबुधरोयथांबु ॥ ५१ ॥ तेशक्रजिद्बाणविशीर्णदेहामायाहताविस्वरमुन्नदंतः ॥ रणेनिपेतुर्हरयोद्रिकल्पायथेंद्रवज्राभिहतानगेंद्राः ॥ ५२ ॥ तेकेवलंसंददृशुःशिताग्रान्बाणान्रणेवानरवाहिनीषु ॥ मायाविगूढंचसुरेंद्रशत्रुंनचात्रतंराक्षसमप्यपश्यन् ॥ ५३ ॥ ततःसुराक्षसोधिपतिर्महात्मासर्वादिशोबाणगणैःशिताग्रैः ॥ प्रच्छादयामासरविप्रकाशैर्विदारयामासचवानरेंद्रान् ॥ ५४ ॥ सशूलनिस्त्रिंशपरश्वधानिव्याविद्धदीप्तानलसप्रभाणि ॥ सविस्फुलिंगोज्ज्वलपावकानिववर्षतीव्रंप्लवगेंद्रसैन्ये ॥ ५५ ॥ ततोज्वलनसंकाशैर्बाणैर्वानरयूथपाः ॥ ताडिताःशक्रजिद्बाणैःप्रफुल्लाइवकिंशुकाः ॥ ५६ ॥

॥ ४४ ॥ ४५ ॥ दत्तवरैर्वरलब्धैः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ स्वसैन्यं स्वसैन्योपरिभागम् ॥ उत्सृज्य ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ प्रफुल्लाः किंशुका इवासन्निति

शेषः ॥ ५६ ॥ शनैर्नेत्रेषु ताडितां इत्यन्वयः । अन्योन्यं विविशुः अन्योन्यगात्रं समाश्लिष्य तस्थुः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ प्रसक्तं प्रकृतं प्राप्तं ब्रह्मास्त्रमाश्रित्य अस्माना वामेवार्दयति ॥ ६४ ॥ नष्टदेहोऽदृष्टदेहः ॥ ६५ ॥ नन्वदृष्टदेहस्यापि संहारसाधनैः शब्दवेध्यादिदिव्यास्त्रैर्हननं कार्यमिति चेन्न भगवतो ब्रह्मण आज्ञाया मारुतिनेवास्माभिरपि पालनौचित्येनैतत्सहनस्यैवौचित्या दित्याशयेनाह मन्ये इति । अचिंत्यः अचिंत्यवैभवः योस्य सकलसंसारस्य प्रभवः स्रष्टा चकारात्संहर्ता च स्वयंभूर्हिरण्यगर्भोस्ति तस्य भगवत एतदस्त्रम् एतदस्त्रवैभवमित्येव मन्ये जानामि अतस्तत्प्रवृत्तमिमं बाणाव पातं मया सहाव्यग्रमना भगवद्ध्यानैकचित्तो भूत्वा भगवद्ध्यानबलेन सहस्व धीमन्निति हेतुगर्भविशेषणं यतस्त्वमपि ब्रह्मध्यानसंपन्नस्तस्मात्सहस्व एवं हि भगवदनुग्रहादस्माकमपि जयो भविष्यति नान्यथेत्यर्थः

उदीक्षमाणागगनंकेचिन्नेत्रेषुताडिताः ॥ शनैर्विविशुरन्योन्यंपेतुश्चजगतीतले ॥ ५७ ॥ हनूमंतंचसुग्रीवमंगदंगंधमादनम् ॥ जांबवंतंसुषेणंचवेगद र्शिनमेवच ॥ ५८ ॥ मैंदंचाद्विविदंनीलंगवाक्षंगवयंतथा ॥ केसरिंहरिलोमानंविद्युद्दंष्ट्रंचवानरम् ॥ ५९ ॥ सूर्याननंज्योतिमुखंतथादधिमुखं हरिम् ॥ पावकाक्षंनलंचैवकुमुदंचैववानरम् ॥ ६० ॥ प्रासैःशूलैःशितैर्बाणैरिंद्रजिन्मंत्रसंहितैः ॥ विव्याधहरिशार्दूलान्सर्वांस्तान्राक्षसोत्तमः ॥ ॥ ६१ ॥ सवैगदाभिर्हरियूथमुख्यान्निर्भिद्यबाणैस्तपनीयवर्णैः ॥ ववर्षरामंशरवृष्टिजालैःसलक्ष्मणंभास्कररश्मिकल्पैः ॥ ६२ ॥ सबाणवर्षैर भिवृष्यमाणोधारानिपातानिवतानचिंत्य ॥ समीक्षमाणःपरमाद्भुतश्रीरामस्तदालक्ष्मणमित्युवाच ॥ ६३ ॥ असौपुनर्लक्ष्मणराक्षसेंद्रोब्रह्मास्त्र माश्रित्यसुरेंद्रशत्रुः ॥ निपातयित्वाहरिसैन्यमस्मान्छितैःशरैरर्दयतिप्रसक्तम् ॥ ६४ ॥ स्वयंभुवादत्तवरोमहात्मासमाहितोंतर्हितभीमकायः ॥ कथंनुशक्योयुधिनष्टदेहोनिहंतुमद्येंद्रजिदुद्यतास्त्रः ॥ ६५ ॥ मन्येस्वयंभूर्भगवानचिंत्यस्तस्यैतदस्त्रंप्रभवश्चयोस्य ॥ बाणावपातंत्वमिहाद्यधीमन्मया सहाव्यग्रमनाःसहस्व ॥ ६६ ॥ प्रच्छादयत्येषहिराक्षसेंद्रःसर्वादिशःसायकवृष्टिजालैः ॥ एतच्चसर्वंपतिताग्र्यशूरंनभ्राजतेवानरराजसैन्यम् ॥ ६७ ॥ आवांतुदृष्ट्वापतितौविसंज्ञौनिवृत्तयुद्धौहतहर्षरोषौ ॥ ध्रुवंप्रवेक्ष्यत्यमरारिवासमसौसमासाद्यरणाग्र्यलक्ष्मीम् ॥ ६८ ॥ ततस्तुताविंद्रजितोस्त्रजालैर्ब भूवतुस्तत्रतदाविशस्तौ ॥ सचापितौतत्रविषादयित्वाननादहर्षाद्युधिराक्षसेंद्रः ॥ ६९ ॥ ततस्तदावानरसैन्यमेवंरामंचसंख्येसहलक्ष्मणेन ॥ निषूद यित्वासहसाविवेशपुरींदशग्रीवभुजाभिगुप्ताम् ॥ संस्तूयमानःसतुयातुधानैःपित्रेचसर्वंहृषितोभ्युवाच ॥ ७० ॥ इत्यार्षे श्रीम० वा० आ० युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ तयोस्तदासादितयोरणाग्रेमुमोहसैन्यंहरियूथपानाम् ॥ सुग्रीवनीलांगदजांबवंतोनचापिकिंचित्प्रतिपेदिरेते ॥ १ ॥

॥ ६६ ॥ पतिताग्र्यशूरं पतिता भुवि पतिता अग्र्यशूराः प्रशस्तवीरा यस्मिंस्तत् ॥ ६७ ॥ एतत्सहनस्यैवैतदुपरमोपायत्वमस्तीत्याह आवामिति । हतहर्षरोषौ अप्रकाशितहर्षरोषविकारौ अत एव विसंज्ञाविवावां पतितौ दृष्ट्वा रणाग्र्यलक्ष्मीं समासाद्य ध्रुवमसावमरारिवासं लंकां प्रवेक्ष्यति पश्चाद्यदस्माभिरनुष्ठेयं तत्करिष्याव इति शेषः । रणाग्र्येत्यादिना समूलनाशा शक्तिः सूचिता ॥ ६८ ॥ विशस्तौ पीडितौ ॥ ६९ ॥ ७० ॥ नार्थमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिसप्ततितमः सर्गः ॥ ७३ ॥ कतकरी० ॥ ६६ ॥ तयोः राघवयोः रणाग्रे रणमुखे सादितयोर्निश्चेष्टीकृतयोः ॥ १ ॥

मोघान् व्यर्थान् ॥ ९४ ॥ वृष्यमाणः क्रियमाणवर्षः ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥
इष्टभागिनम् इष्टस्य भागः प्राप्तिस्तद्वंतम् इष्टमतिकायवधं प्राप्तवंतमित्यर्थः ॥ १०९ ॥ धेनुकेमानः ॥ त्रिशिरोतिकायदेवांतकनरांतकमहोदरमहापार्श्वानां पङ्क्तिर्दिनैर्भाद्राश्विनकृष्णपक्षांतेन

तान्मोघानभिसंप्रेक्ष्यलक्ष्मणःपरवीरहा ॥ अभ्यवर्षतवाणानांसहस्रेणमहायशाः ॥ ९४ ॥ सवृष्यमाणोबाणौघैरतिकायोमहाबलः ॥ अवध्यकवचःसंख्येराक्षसोनैवविव्यथे ॥ ९५ ॥ नशशाकरुजंकर्तुंयुधितस्यनरोत्तमः ॥ अथैनमभ्युपागम्यवायुर्वाक्यमुवाचह ॥ ९६ ॥ ब्रह्मदत्तवरोह्येषअवध्यकवचावृतः ॥ ब्राह्मेणास्त्रेणभिंध्येनमेषवध्योहिनान्यथा ॥ अवध्यएषह्यन्येषामस्त्राणांकवचीबली ॥ ९७ ॥ ततस्तुवायोर्वचनंनिशम्यसौमित्रिरिंद्रप्रतिमान्मवीर्यः ॥ समादधेवाणमथोग्रवेगंतद्ब्राह्ममस्त्रंसहसानियुज्य ॥ ९८ ॥ तस्मिन्वरास्त्रेतुनियुज्यमानेसौमित्रिणावाणवरेशिताग्रे ॥ दिशश्चचंद्रार्कमहाग्रहाश्चनभश्चतत्रासररासचोर्वी ॥ ९९ ॥ तंब्रह्मणोस्त्रेणनियुज्यचापेशरंसपुंखंयमदूतकल्पम् ॥ सौमित्रिरिंद्रारिसुतस्यतस्यससर्जवाणंयुधिवज्रकल्पम् ॥ १०० ॥ तंलक्ष्मणोत्सृष्टविवृद्धवेगंसमापतंतंश्वसनोग्रवेगम् ॥ सुपर्णवज्रोत्तमचित्रपुंखंतदातिकायःसमरेददर्श ॥ १०१ ॥ तंप्रेक्षमाणःसहसातिकायोजघानवाणैर्निशितैरनेकैः ॥ ससायकस्तस्यसुपर्णवेगस्तदातिवेगेनजगामपार्श्वम् ॥ १०२ ॥ तमागतंप्रेक्ष्यतदातिकायोवाणंप्रदीप्तांतककालकल्पम् ॥ जघानशक्त्यृष्टिगदाकुठारैःशूलैःशरैश्चाप्यविपन्नचेष्टः ॥ १०३ ॥ तान्यायुधान्यद्भुतविग्रहाणिमोघानिकृत्वासशरोग्निदीप्तः ॥ प्रगृह्यतस्यैवकिरीटजुष्टंतदातिकायस्यशिरोजहार ॥ १०४ ॥ तच्छिरःसशिरस्त्राणंलक्ष्मणेषुप्रमर्दितम् ॥ पपातसहसाभूमौशृंगंहिमवतोयथा ॥ १०५ ॥ तंभूमौपतितंदृष्ट्वाविक्षिप्तांवरभूषणम् ॥ बभूवुर्व्यथिताःसर्वेहतशेषानिशाचराः ॥ १०६ ॥ तेविषण्णमुखादीनाःप्रहारजनितश्रमाः ॥ विनेदुरुच्चैर्बहवःसहसाविस्वरैःस्वरैः ॥ १०७ ॥ ततस्तत्परितोयातानिरपेक्षानिशाचराः ॥ पुरीमभिमुखाभीताद्रवंतोनायकेहते ॥ १०८ ॥ प्रहर्षयुक्ताबहवस्तुवानराःप्रफुल्लपद्मप्रतिमाननास्तदा ॥ अपूजयँल्लक्ष्मणमिष्टभागिनंहतेरिपौभीमबलेदुरासदे ॥ १०९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

वध इत्यग्रे स्पष्टम् ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकसप्ततितमः सर्गः ॥ ७१ ॥ कतकरी० ॥ ६४ ॥ ॥ ७ ॥

अतिकायमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ दत्तवरैर्वरदत्तैः शरैर्यौ खरादिहंतारौ भ्रातरौ तौ बद्धौ यच्छरबंधनं सुरादिभिरपि मोक्तुं न शक्यं तस्मादपि शरबंधनाद्विमुक्तौ तत्प्रभावैः सहजस्वबलादिवैभवैरथवा मायया प्रतिमायाबलेन वा मोहनेन वा बंधकरनागानां मोहनेन वेति न जाने इत्युत्तरेण संबंधः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अप्रमत्तैश्चेति रक्ष्या युष्माभिरवशिष्टराक्षसैरिति शेषः । अशोकवनिका चेति । विशिष्य रक्ष्येति शेषः ॥ ११ ॥ निष्कामो वेति । पुरे अशोकवनिकायां चेति शेषः । नो युष्माकं युष्माभिरिति यावत् यत्रयत्र गुल्म इति । पृथक्स्थापित इति शेषः ॥ १२ ॥ पदं गतागतम् ॥ १३ ॥ १४ ॥

अतिकायंहतंश्रुत्वालक्ष्मणेनमहात्मना ॥ उद्वेगमगमद्राजावचनंचेदमब्रवीत् ॥ १ ॥ धूम्राक्षःपरमामर्षीसर्वशस्त्रभृतांवरः ॥ अकंपनःप्रहस्तश्चकुंभकर्णस्तथैवच ॥ २ ॥ एतेमहाबलावीराराक्षसायुद्धकांक्षिणः ॥ जेतारःपरसैन्यानांपरैर्नित्यापराजिताः ॥ ३ ॥ ससैन्यास्तेहतावीरारामेणाक्लिष्टकर्मणा ॥ राक्षसाःसुमहाकायानानाशस्त्रविशारदाः ॥ ४ ॥ अन्येचबहवःशूरामहात्मानोनिपातिताः ॥ प्रख्यातबलवीर्येणपुत्रेणेंद्रजितामम ॥ ५ ॥ तौभ्रातरौतदाबद्धौघोरैर्दत्तवरैःशरैः ॥ यन्नशक्यंसुरैःसर्वैरसुरैर्वामहाबलैः ॥ ६ ॥ मोक्तुंतद्बंधनंघोरंयक्षगंधर्वपन्नगैः ॥ तन्नजानेप्रभावैर्वामाययामोहनेनवा ॥ ७ ॥ शरबंधाद्विमुक्तौतौभ्रातरौरामलक्ष्मणौ ॥ येयोधानिर्गताःशूराराक्षसाममशासनात् ॥ ८ ॥ तेसर्वेनिहतायुद्धेवानरैःसुमहाबलैः ॥ तंनपश्याम्यहंयुद्धेयोऽद्यरामंसलक्ष्मणम् ॥ नाशयेत्सबलंवीरंससुग्रीवंविभीषणम् ॥ ९ ॥ अहोसुबलवान्रामोमहदस्त्रबलंचवै ॥ यस्यविक्रममासाद्यराक्षसानिधनंगताः ॥ १० ॥ अप्रमत्तैश्चसर्वत्रगुल्मैरक्ष्यापुरीत्वियम् ॥ अशोकवनिकाचैवयत्रसीताभिरक्ष्यते ॥ ११ ॥ निष्कामोवाप्रवेशोवाज्ञातव्यःसर्वदैवनः ॥ यत्रयत्रभवेद्गुल्मस्तत्रतत्रपुनःपुनः ॥ १२ ॥ सर्वतश्चापितिष्ठध्वंस्वैःस्वैःपरिवृताबलैः ॥ द्रष्टव्यंचपदंतेषांवानराणांनिशाचराः ॥ १३ ॥ प्रदोषेवार्धरात्रेवाप्रत्यूषेवापिसर्वशः ॥ नावज्ञातत्रकर्तव्यावानरेषुकदाचन ॥ १४ ॥ द्विषतांबलमुद्युक्तमापतत्किंस्थितंयथा ॥ ततस्तेराक्षसाःसर्वेश्रुत्वालंकाधिपस्यतत् ॥ १५ ॥ वचनंसर्वमातिष्ठन्यथावत्तुमहाबलाः ॥ १६ ॥ तान्सर्वान्हिसमादिश्यरावणोराक्षसाधिपः ॥ मन्युशल्यंवहन्दीनःप्रविवेशस्वमालयम् ॥ १७ ॥ ततःससंदीपितकोपवह्निर्निशाचराणामधिपोमहाबलः ॥ तदेवपुत्रव्यसनंविचिंतयन्मुहुर्मुहुश्चैवतदाविनिःश्वसन् ॥ १८ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेद्विसप्ततितमःसर्गः ॥ ७२ ॥ ततोहतान्राक्षसपुंगवांस्तान्देवांतकादित्रिशिरोतिकायान् ॥ रक्षोगणास्तत्रहतावशिष्टास्तेरावणायत्वरिताःशशंसुः ॥ १ ॥

द्रष्टव्यं च पदमित्युक्तं तत्र दर्शनप्रकारमाह द्विषतामिति उद्युक्तमुद्यमवत्किमापतत् आगमनशीलं किं लंकायामिति शेषः। यथा यथापूर्वं स्थितं स्थितिमत्किमित्येवंप्रकारेण सदा द्रष्टव्यमित्यर्थः ॥ १५ ॥ १६ ॥ मन्युशल्यं मन्युरूपं शल्यम् ॥ १७ ॥ १८ ॥ जर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मी० आदिकाव्ये युद्धकांडे द्विसप्ततितमः सर्गः ॥ ७२ ॥ कतकरी० ॥ ६५ ॥ तत इति । देवांतकादयश्च

विमृश्य विचार्य कर्तव्यमर्थं चिंतयामास ॥ ७४ ॥ तमेवार्थमाह साध्विति । अमोघबाणप्रयोगेण त्वं मे श्लाघ्योरिपुरसीत्येवमास्यं विदार्य प्रकटं यथा भवति तथा विधायाभिधाय भुजौ विनम्य वशे स्थापयित्वा रथोपस्थमास्थाय रथेन प्रचचारहेत्यन्वयः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ आत्मानं विशल्यं चकारेत्यत्र हेतुर्विभुरिति । विष्ण्वंशत्वानुसंधानवानित्यर्थः ॥ ८२ ॥ अस्त्रेणास्त्रमंत्रेण

साधुबाणनिपातेनश्लाघनीयोसिमेरिपुः ॥ विधायैवंविदार्यास्यंविनम्यचमहाभुजौ ॥ सरथोपस्थमास्थायरथेनप्रचचारह ॥ ७५ ॥ एकंत्रीन्पंचसप्तेतिसायकान्राक्षसर्षभः ॥ आददेसंदधेचापिविचकर्षोत्ससर्जच ॥ ७६ ॥ तेबाणाःकालसंकाशाराक्षसेंद्रधनुश्च्युताः ॥ हेमपुंखारविप्रख्याश्चक्रुर्दीप्तमिवांबरम् ॥ ७७॥ ततस्तान्राक्षसोत्सृष्टान्च्छरौघान्राघवानुजः ॥ असंभ्रान्तःप्रचिच्छेदनिशितैर्बहुभिःशरैः ॥ ७८ ॥ तान्च्छरान्युधिसंप्रेक्ष्यनिकृत्तान्रावणात्मजः ॥ चुकोपत्रिदशेंद्रारिर्जग्राहनिशितंशरम् ॥ ७९ ॥ ससंधायमहातेजास्तंबाणंसहसोत्सृजत् ॥ तेनसौमित्रिमायांतमाजघानस्तनांतरे ॥ ८० ॥ अतिकायेनसौमित्रिस्ताडितोयुधिवक्षसि ॥ सुस्रावरुधिरंतीव्रंमदंमत्तइवद्विपः ॥ ॥ ८१ ॥ सचकारतदात्मानंविशल्यंसहसाविभुः ॥ जग्राहचशरंतीक्ष्णमस्त्रेणापिसमादधे ॥ ८२॥ आग्नेयेनतदास्त्रेणयोजयामाससायकम् ॥ सजज्वालतदाबाणोधनुश्चास्यतदात्मनः ॥ ८३ ॥ अतिकायोतितेजस्वीरौद्रमस्त्रंसमाददे ॥ तेनबाणंभुजंगाभंहेमपुंखमयोजयत् ॥ ८४ ॥ तदस्त्रंज्वलितंघोरंलक्ष्मणःशरमाहितम् ॥ अतिकायायचिक्षेपकालदंडमिवांतकः ॥ ८५ ॥ आग्नेयास्त्राभिसंयुक्तंदृष्ट्वाबाणंनिशाचरः ॥ उत्ससर्जतदाबाणंरौद्रंसूर्यास्त्रयोजितम् ॥ ८६ ॥ तावुभावंबरेबाणावन्योन्यमभिजघ्नतुः ॥ तेजसासंप्रदीप्ताग्रौक्रुद्धाविवभुजंगमौ ॥ तावन्योन्यंविनिर्दह्यपेततुःपृथिवीतले ॥ ८७ ॥ निरर्चिषौभस्मकृतौनभ्राजेतेशरोत्तमौ ॥ तावुभौदीप्यमानौस्मनभ्राजेतेमहीतले ॥ ८८ ॥ ततोतिकायःसंक्रुद्धस्त्वाष्ट्रमैषीकमुत्सृजत् ॥ ततश्चिच्छेदसौमित्रिरस्त्रमैंद्रेणवीर्यवान् ॥ ८९ ॥ ऐषीकंनिहतंदृष्ट्वाकुमारोरावणात्मजः ॥ याम्येनास्त्रेणसंक्रुद्धोयोजयामाससायकम् ॥ ९० ॥ ततस्तदस्त्रंचिक्षेपलक्ष्मणायनिशाचरः ॥ वायव्येनतदस्त्रेणनिजघानसलक्ष्मणः ॥९१॥ अथैनंशरधाराभिर्धाराभिरिवतोयदः ॥ अभ्यवर्षतसंक्रुद्धोलक्ष्मणोरावणात्मजम् ॥९२॥ तेतिकायंसमासाद्यकवचेवज्रभूषिते ॥ भग्नाग्रशल्याःसहसापेतुर्बाणामहीतले ॥ ९३ ॥

तदेवाह आग्नेयेनेति ॥ ८३ ॥ ८४ ॥ आहितम् आहितदिव्यास्त्रशक्तिम् अस्त्ररूपं शरम् ॥ ८५ ॥ ८६ ॥ ८७ ॥ दीप्यमानौ तादृशावपि परस्पराभिघातान्न भ्राजेते ॥ ८८ ॥ त्वाष्ट्रं त्वष्टृदेवताकं ऐषीकाख्यम् ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ भग्नमग्रवर्ति शल्यं येषां ते ॥ ९३ ॥

मद्गतो मां प्राप्तः ॥ ५३ ॥ मतिस्तब्धोहंकारवान् निवर्तितुं नेच्छसि तदा तिष्ठ स त्वं प्राणान् परित्यज्य यमक्षयं गमिष्यसि ॥ ५४ ॥ ईश्वरायुधं त्रिशूलम् ॥५५॥५६॥५७॥ प्रधानः श्रेष्ठः कत्थनादात्मनः श्लाघामात्राद् सत्पुरुषाः श्लाघ्यगुणयुक्ता न भवंति आत्मनो बलं सामर्थ्यम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ बाणशल्यांतरोत्थितं बाणशल्यकृतच्छिद्राद्दुत्थितम् ॥ ६२ ॥ मृत्युं जानीहि पुरःस्थितस्य शत्रो

सुखप्रसुप्तंकालाग्निंविबोधयितुमिच्छसि ॥ न्यस्यचापंनिवर्तस्वप्राणान्नजहिमद्गतः ॥ ५३ ॥ अथवात्वंप्रतिस्तब्धोननिवर्तितुमिच्छसि ॥ तिष्ठप्राणान्परित्यज्यगमिष्यसियमक्षयम् ॥ ५४ ॥ पश्यमेनिशितान्बाणान्त्रिपुरदर्पनिषूदनान् ॥ ईश्वरायुधसंकाशांस्तप्तकांचनभूषणान् ॥ ५५ ॥ एषतेसर्पसंकाशोबाणःपास्यतिशोणितम् ॥ मृगराजइवक्रुद्धोनागराजस्यशोणितम् ॥ इत्येवमुक्त्वासंक्रुद्धःशरंधनुषिसंदधे ॥ ५६ ॥ श्रुत्वातिकायस्यवचःसरोषंसगर्वितंसंयतिराजपुत्रः ॥ ससंचुकोपातिबलोमनस्वीउवाचवाक्यंचततोबृहच्छ्रीः ॥ ५७ ॥ नवाक्यमात्रेणभवान्प्रधानोनकत्थनात्सत्पुरुषाभवंति ॥ मयिस्थितेधन्विनिबाणपाणौनिदर्शयस्वात्मबलंदुरात्मन् ॥ ५८ ॥ कर्मणासूचयात्मानंनविकत्थितुमर्हसि ॥ पौरुषेणतुयोयुक्तःसतुशूरइतिस्मृतः ॥ ५९ ॥ सर्वायुधसमायुक्तोधन्वीत्वंरथमास्थितः ॥ शरैर्वायदिवाप्यस्त्रैर्दर्शयस्वपराक्रमम् ॥ ६० ॥ ततःशिरस्तेनिशितैःपातयिष्याम्यहंशरैः ॥ मारुतःकालसंयुक्तंवृंतात्तालफलंयथा ॥६१॥ अद्यतेमामकाबाणास्तप्तकांचनभूषणाः ॥ पास्यंतिरुधिरंगात्राद्बाणशल्यांतरोत्थितम् ॥६२॥ बालोयमितिविज्ञायनचावज्ञातुमर्हसि ॥ बालोवायदिवावृद्धोमृत्युंजानीहिसंयुगे ॥ ६३ ॥ बालेनविष्णुनालोकास्त्रयःक्रांतास्त्रिविक्रमैः ॥ लक्ष्मणस्यवचःश्रुत्वाहेतुमत्परमार्थवत् ॥ अतिकायःप्रचुक्रोधबाणंचोत्तममाददे ॥ ६४ ॥ ततोविद्याधराभूतादेवदैत्यामहर्षयः ॥ गुह्यकाश्चमहात्मानस्तद्युद्धंददृशुस्तदा ॥ ६५ ॥ ततोतिकायःकुपितश्चापमारोप्यसायकम् ॥ लक्ष्मणायप्रचिक्षेपसंक्षिपन्निवचांबरम् ॥ ६६ ॥ तमापतंतंनिशितंशरमाशीविषोपमम् ॥ अर्धचंद्रेणचिच्छेदलक्ष्मणःपरवीरहा ॥ ६७ ॥ तंनिकृत्तंशरंदृष्ट्वाकृत्तभोगमिवोरगम् ॥ अतिकायोभृशंक्रुद्धःपंचबाणान्समादधे ॥ ६८ ॥ तान्च्छरान्संप्रचिक्षेपलक्ष्मणायनिशाचरः ॥ तानप्राप्तान्च्छितैर्बाणैश्चिच्छेदभरतानुजः ॥ ६९ ॥ सतान्च्छित्त्वाशितैर्बाणैर्लक्ष्मणःपरवीरहा ॥ आददेनिशितंबाणंज्वलंतमिवतेजसा ॥ ७० ॥ तमादायधनुःश्रेष्ठेयोजयामासलक्ष्मणः ॥ विचकर्षचवेगेनविससर्जचसायकम् ॥ ७१ ॥ पूर्णायतविसृष्टेनशरेणानतपर्वणा ॥ ललाटेराक्षसश्रेष्ठमाजघानसवीर्यवान् ॥७२॥ सललाटेशरोमग्नस्तस्यभीमस्यरक्षसः ॥ ददृशेशोणितेनाक्तःपन्नगेंद्रइवाचले ॥ ॥ ७३ ॥ राक्षसःप्रचकंपेऽथलक्ष्मणेषुप्रपीडितः ॥ रुद्रबाणहतंघोरंयथात्रिपुरगोपुरम् ॥ चिंतयामासचाश्वस्यविमृश्यचमहाबलः ॥ ७४ ॥

रिति शेषः ॥ ६३ ॥ बाल्यं न मतिबंधकं पराक्रमे इत्यत्र दृष्टांतमाह बालेनेति वामनेनेत्यर्थः ॥ ६४ ॥ ६५ ॥ सायकं चापमारोप्य बाणं धनुषि संधाय संक्षिपन्निव चांबरं बाणवेगेनांतरालस्थितमाकाशं ग्रसन्निव ॥ ६६ ॥६७॥६८॥६९॥ ७० ॥ ७१ ॥ पूर्णायतविसृष्टेन पूर्णाकर्षणपूर्वकं विसृष्टेन त्यक्तेन ललाटे आजघानेत्यन्वयः ॥ ७२ ॥ ७३ ॥ त्रिपुरगोपुरं त्रिपुरासुरपुरस्य गोपुरम् आश्वस्य संज्ञां प्राप्य

कृष्यतेनेनेति कर्षणः पाशादिरित्यर्थ इति तीर्थः ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ रविभास्वरो रथो दत्त इत्यनुकर्षः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ अस्मिन्नतिकाये क्षिप्रमित्यत्र हेतुः पुरेति । पुरा नयति नेष्यतीत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ समभिद्रवन्समभ्यद्रवन् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ यौवनदर्पितो हरिरिव तरुणसिंह इव ॥ ४३ ॥ वीरत्वादयुध्यमानं कंचिदपि न

यस्यवाहुंसमाश्रित्यलंकाभवतिनिर्भया ॥ तनयंधान्यमालिन्याअतिकायमिमंविदुः ॥ ३० ॥ एतेनाराधितोब्रह्मातपसाभावितात्मना ॥ अस्त्राणिचाप्यवाप्तानिरिपवश्चपराजिताः ॥ ३१ ॥ सुरासुरैरवध्यत्वंदत्तमस्मैस्वयंभुवा ॥ एतच्चकवचंदिव्यंरथश्चरविभास्वरः ॥ ३२ ॥ एतेनशतशोदेवादानवाश्चपराजिताः ॥ रक्षितानिचरक्षांसियक्षाश्चापिनिषूदिताः ॥ ३३ ॥ वज्रंविष्टंभितंयेनवाणैरिंद्रस्यधीमता ॥ पाशःसलिलराजस्ययुद्धेप्रतिहतस्तथा ॥ ३४ ॥ एषोतिकायोवलवान्राक्षसानामथर्षभः ॥ सरावणसुतोधीमान्देवदानवदर्पहा ॥ ३५ ॥ तदस्मिन्क्रियतांयत्नःक्षिप्रंपुरुषपुंगव ॥ पुरावानरसैन्यानिक्षयंनयतिसायकैः ॥ ३६ ॥ ततोतिकायोवलवान्प्रविश्यहरिवाहिनीम् ॥ विस्फारयामासधनुर्ननादचपुनःपुनः ॥ ३७ ॥ तंभीमवपुषंदृष्ट्वारथस्थंरथिनांवरम् ॥ अभिपेतुर्महात्मानःप्रधानायेवनौकसः ॥ ३८ ॥ कुमुदोद्विविदोमैंदोनीलःशरभएवच ॥ पादपैर्गिरिशृंगैश्चयुगपत्समभिद्रवन् ॥ ३९ ॥ तेषांवृक्षांश्चशैलांश्चशरैःकनकभूषणैः ॥ अतिकायोमहातेजाश्चिच्छेदास्त्रविदांवरः ॥ ४० ॥ तांश्चैवसर्वान्सहरीन्शरैःसर्वायसैर्बली ॥ विव्याधाभिमुखान्संख्येभीमकायोविशारदः ॥ ४१ ॥ तेऽर्दिताबाणवर्षेणभिन्नगात्राःपराजिताः ॥ नशेकुरतिकायस्यप्रतिकर्तुंमहाहवे ॥ ४२ ॥ तत्सैन्यंहरिवीराणांत्रासयामासराक्षसः ॥ मृगयूथमिवक्रुद्धोहरियौवनदर्पितः ॥ ४३ ॥ सराक्षसेंद्रोहरियूथमध्येनायुध्यमानंनिजघानकंचित् ॥ उत्पत्यरामंसधनुःकलापीसगर्वितंवाक्यमिदंबभाषे ॥ ४४ ॥ रथेस्थितोहंशरचापपाणिर्नप्राकृतंकंचनयोधयामि ॥ यस्यास्तिशक्तिर्व्यवसाययुक्तोददातुमेशीघ्रमिहाद्ययुद्धम् ॥ ४५ ॥ तत्तस्यवाक्यंब्रुवतोनिशम्यचुकोपसौमित्रिरमित्रहंता ॥ अमृष्यमाणश्चसमुत्पपातजग्राहचापंचततःस्मयित्वा ॥ ४६ ॥ क्रुद्धःसौमित्रिरुत्पत्यतूणादाक्षिप्यसायकम् ॥ पुरस्तादतिकायस्यविचकर्षमहद्धनुः ॥ ४७ ॥ पूरयन्समहींसर्वामाकाशंसागरंदिशः ॥ ज्याशब्दोलक्ष्मणस्योग्रस्त्रासयन्रजनीचरान् ॥ ४८ ॥ सौमित्रेश्चापनिर्घोषंश्रुत्वाप्रतिभयंतदा ॥ विसिस्मियेमहातेजाराक्षसेंद्रात्मजोवली ॥ ४९ ॥ तदातिकायःकुपितोदृष्ट्वालक्ष्मणमुत्थितम् ॥ आदायनिशितंवाणमिदंवचनमब्रवीत् ॥ ५० ॥ बालस्त्वमसिसौमित्रेविक्रमेष्वविचक्षणः ॥ गच्छकिंकालसंकाशंमांयोधयितुमिच्छसि ॥ ५१ ॥ नहिमद्बाहुसृष्टानांवाणानांहिमवानपि ॥ सोढुमुत्सहतेवेगमंतरिक्षमथोमही ॥ ५२ ॥

निजघान कलापी तूणीरवान् सगर्वितं सगर्वम् ॥ ४४ ॥ यस्य शक्तिरस्ति व्यवसाययुक्तश्च यः स युद्धं ददातु ॥ ४५ ॥ तत्तस्य वाक्यं रामं प्रत्युक्तं स्मयित्वा अनादृत्य । ष्मिङ् अनादरे इत्यर्थः ॥ ४६ ॥ आक्षिप्य आदाय ॥ ४७ ॥ मह्यादीन्पूरयन् राक्षसांस्त्रासयन् ज्या शब्द उदभूदिति शेषः ॥ ४८ ॥ प्रतिभयं भयंकरम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

मद्भतो मां माप्तः ॥ ५३ ॥ मतिस्तब्धोहंकारवान् निवर्तितुं नेच्छसि तदा तिष्ठ स त्वं माणान् परित्यज्य यमक्षयं गमिष्यसि ॥ ५४ ॥ ईश्वरायुधं त्रिशूलम् ॥५५॥५६॥५७॥ मधानः श्रेष्ठः कत्थनादात्मनः श्लाघामात्राद् सत्पुरुषाः श्लाघ्यगुणयुक्ता न भवंति आत्मनो बलं सामर्थ्यम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ बाणशल्यांतरोत्थितं बाणशल्यकृतच्छिद्रादुत्थितम् ॥ ६२ ॥ मृत्युं जानीहि पुरःस्थितस्य शत्रो

सुखप्रसुप्तंकालाग्निंविबोधयितुमिच्छसि ॥ न्यस्यचापंनिवर्तस्वप्राणान्नजहिमद्गतः ॥ ५३ ॥ अथवात्वंप्रतिस्तब्धोनानिवर्तितुमिच्छसि ॥ तिष्ठप्राणान्परित्यज्यगमिष्यसियमक्षयम् ॥ ५४ ॥ पश्यमेनिशितान्बाणान्रिपुदर्पनिषूदनान् ॥ ईश्वरायुधसंकाशांस्तप्तकांचनभूषणान् ॥ ५५ ॥ एषतेसर्पसंकाशोबाणःपास्यतिशोणितम् ॥ मृगराजइवक्रुद्धोनागराजस्यशोणितम् ॥ इत्येवमुक्त्वासंक्रुद्धःशरंधनुषिसंदधे ॥ ५६ ॥ श्रुत्वातिकायस्यवचःसरोषंसगर्वितंसंयतिराजपुत्रः ॥ ससंचुकोपातिबलोमनस्वीउवाचवाक्यंचततोबृहच्छ्रीः ॥ ५७ ॥ नवाक्यमात्रेणभवान्प्रधानोनकत्थनात्सत्पुरुषा भवंति ॥ भूमौस्थितेधन्विनिबाणपाणौनिदर्शयस्वात्मबलंदुरात्मन् ॥ ५८ ॥ कर्मणासूचयात्मानंनविकत्थितुमर्हसि ॥ पौरुषेणतुयोयुक्तःसतुशूरइतिस्मृतः ॥ ५९ ॥ सर्वायुधसमायुक्तोधन्वीत्वंरथमास्थितः ॥ शरैर्वायदिवाप्यस्त्रैर्दर्शयस्वपराक्रमम् ॥ ६० ॥ ततःशिरस्तेनिशितैःपातयिष्याम्यहंशरैः ॥ मारुतःकालसंयुक्तंवृंतात्तालफलंयथा ॥६१॥ अद्यतेमामकाबाणास्तप्तकांचनभूषणाः ॥ पास्यंतिरुधिरंगात्राद्बाणशल्यांतरोत्थितम् ॥६२॥ बालोयमितिविज्ञायनचावज्ञातुमर्हसि ॥ बालोवायदिवावृद्धोमृत्युंजानीहिसंयुगे ॥ ६३ ॥ बालेनविष्णुनालोकास्त्रयःक्रांतास्त्रिविक्रमैः ॥ लक्ष्मणस्यवचःश्रुत्वाहेतुमत्परमार्थवत् ॥ अतिकायःप्रचुक्रोधबाणंचोत्तममाददे ॥ ६४ ॥ ततोविद्याधराभूतादेवदैत्यामहर्षयः ॥ गुह्यकाश्चमहात्मानस्तद्युद्धंददृशुस्तदा ॥ ६५ ॥ ततोतिकायःकुपितश्चापमारोप्यसायकम् ॥ लक्ष्मणायप्रचिक्षेपसंक्षिपन्निवचांबरम् ॥ ६६ ॥ तमापतंतंनिशितंशरमाशीविषोपमम् ॥ अर्धचंद्रेणचिच्छेदलक्ष्मणःपरवीरहा ॥ ६७ ॥ तंनिकृत्तंशरंदृष्ट्वाकृत्तभोगमिवोरगम् ॥ अतिकायोभृशंक्रुद्धःपंचबाणान्समादधे ॥ ६८ ॥ तान्च्छरान्संप्रचिक्षेपलक्ष्मणायनिशाचरः ॥ तानप्राप्तांश्छितैर्बाणैश्चिच्छेदभरतानुजः ॥ ६९ ॥ सतांश्छित्त्वाशितैर्बाणैर्लक्ष्मणःपरवीरहा ॥ आददेनिशितंबाणंज्वलंतमिवतेजसा ॥ ७० ॥ तमादायधनुःश्रेष्ठेयोजयामासलक्ष्मणः ॥ विचकर्षचवेगेनविससर्जचसायकम् ॥ ७१ ॥ पूर्णायतविसृष्टेनशरेणानतपर्वणा ॥ ललाटेराक्षसश्रेष्ठमाजघानसवीर्यवान् ॥७२॥ सललाटेशरोमग्नस्तस्यभीमस्यरक्षसः ॥ ददृशेशोणितेनाक्तःपन्नगेंद्रइवाचले ॥ ॥ ७३ ॥ राक्षसःप्रचकंपेऽथलक्ष्मणेषुप्रपीडितः ॥ रुद्रबाणहतंघोरंयथात्रिपुरगोपुरम् ॥ चिंतयामासचाश्वस्यविमृश्यचमहाबलः ॥ ७४ ॥

रिति शेषः ॥ ६३ ॥ बाल्यं न मतिबंधकं पराक्रमे इत्यत्र दृष्टांतमाह बालेनेति वामनेनेत्यर्थः ॥ ६४ ॥ ६५ ॥ सायकं चापमारोप्य बाणं धनुषि संधाय संक्षिपन्निव चांबरं बाणवेगेनांतरालस्थितमाकाशं ग्रसन्निव ॥ ६६ ॥६७॥६८॥६९॥ ७० ॥ ७१ ॥ पूर्णायतविसृष्टेन पूर्णाकर्षणपूर्वकं विसृष्टेन त्यक्तेन ललाटे आजघानेत्यन्वयः ॥ ७२ ॥ ७३ ॥ त्रिपुरगोपुरं त्रिपुरासुरपुरस्य गोपुरम् आश्वस्य संज्ञां माप्य

यस्यास्ति सः ॥ २५ ॥ विसृष्टगात्रः श्लथगात्रः । विष्टंभितो निरुद्धपराक्रमः ॥ २६ ॥ २७ ॥ २८ ॥ पितृव्यं महोदरम् ॥ २९ ॥ १३० ॥ ३१ ॥ ३२ ॥ विददार विदारितवान् ॥ ३३ ॥ ३४ ॥
दिवः क्षिप्तामाकाशान्निर्गताम् असंगताम् अनर्गलगतिम् ॥ ३५ ॥ घोरसंकाशां भयंकरस्वरूपाम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ त्यक्तचेतनो विसंज्ञः ॥ ३९ ॥ १४० ॥ ४१ ॥ किरीटे कीरीटप्रदेशे ॥ ४२ ॥

ततःशरौघैरभिवृष्यमाणोविभिन्नगात्रःकपिसैन्यपालः ॥ नीलोबभूवाथविसृष्टगात्रोविष्टंभितस्तेनमहाबलेन ॥ २६ ॥ ततस्तुनीलःप्रतिलब्धसंज्ञः शैलंसमुत्पाट्यसवृक्षखंडम् ॥ ततःसमुत्पत्यमहोग्रवेगोमहोदरंतेनजघानमूर्ध्नि ॥ २७ ॥ ततःसशैलाभिनिपातभग्नोमहोदरस्तेनमहाद्रिपेन ॥ व्यामोहितोभूमितलेगतासुःपपातवज्राभिहतोयथाद्रिः ॥ २८ ॥ पितृव्यंनिहतंदृष्ट्वात्रिशिराश्चापमाददे ॥ हनूमंतंचसंक्रुद्धोविव्याधनिशितैःशरैः ॥ ॥ २९ ॥ सवायुसूनुःकुपिताश्चिक्षेपशिखरंगिरेः ॥ त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेदबहुधाबली ॥ १३० ॥ तद्व्यर्थंशिखरंदृष्ट्वाद्रुमवर्षंतदाकपिः ॥ विससर्जरणे[illegible]स्मिन्रावणस्यसुतंप्रति ॥ ३१ ॥ तमापतंतमाकाशेद्रुमवर्षंप्रतापवान् ॥ त्रिशिरानिशितैर्बाणैश्चिच्छेदचननादच ॥ ३२ ॥ हनूमांस्तुसमुत्पत्यहयंत्रिशिरसस्तदा ॥ विददारनखैःक्रुद्धोनागेंद्रंमृगराडिव ॥ ३३ ॥ अथशक्तिंसमासाद्यकालरात्रिमिवांतकः ॥ चिक्षेपानिलपुत्रायत्रिशिरारावणात्मजः ॥ ३४ ॥ दिवःक्षिप्तामिवोल्कांतांशक्तिंक्षिप्तामसंगताम् ॥ गृहीत्वाहरिशार्दूलोबभंजचननादच ॥ ३५ ॥ तांदृष्ट्वाघोरसंकाशांशक्तिंभग्नांहनूमता ॥ प्रहृष्टावानरगणाविनेदुर्जलदायथा ॥ ३६ ॥ ततःखड्गंसमुद्यम्यत्रिशिराराक्षसोत्तमः ॥ निचखानतदाखड्गंवानरेंद्रस्यवक्षसि ॥ ३७ ॥ खड्गप्रहाराभिहतोहनूमान्मारुतात्मजः ॥ आजघानत्रिमूर्धानंतलेनोरसिवीर्यवान् ॥ ३८ ॥ सतलाभिहतस्तेनस्रस्तहस्तांबरोभुवि ॥ निपपातमहातेजास्त्रिशिरास्त्यक्तचेतनः ॥ ३९ ॥ सतस्यपततःखड्गंतमाच्छिद्यमहाकपिः ॥ ननादगिरिसंकाशस्त्रासयन्सर्वराक्षसान् ॥ १४० ॥ अमृष्यमाणस्तंघोषमुत्पपातनिशाचरः ॥ उत्पत्यचहनूमंतंताडयामासमुष्टिना ॥ ४१ ॥ तेनमुष्टिप्रहारेणसंचुकोपमहाकपिः ॥ कुपितश्चनिजग्राहकिरीटेराक्षसर्षभम् ॥ ४२ ॥ सतस्यशीर्षाण्यसिनाशितेनकिरीटजुष्टानिसकुंडलानि ॥ क्रुद्धःप्रचिच्छेदसुतोनिलस्यत्वष्टुःसुतस्येवशिरांसिशक्रः ॥ ४३ ॥ तान्यायताक्षाण्यगसन्निभानिप्रदीप्तवैश्वानरलोचनानि ॥ पेतुःशिरांसींद्ररिपोःपृथिव्यांज्योतींषिमुक्तानियथैंद्रमार्गात् ॥ ४४ ॥ तस्मिन्हतेदेवरिपौत्रिशीर्षेहनूमताशक्रपराक्रमेण ॥ नेदुःप्लवंगाःप्रचचालभूमीरक्षांस्यथोदुद्रुविरेसमंतात् ॥ ४५ ॥ हतंत्रिशिरसंदृष्ट्वायुद्धोन्मत्तंतथैवच ॥ हतौप्रेक्ष्यदुराधर्षौदेवांतकनरांतकौ ॥ ४६ ॥ चुकोपपरमामर्षीमत्तोराक्षसपुंगवः ॥ जग्राहार्चिष्मतींचापिगदांसर्वायसींतदा ॥ ४७ ॥

न्वष्टुः सुतस्य विश्वरूपस्य ॥ ४३ ॥ आयताक्षाणि आयतेंद्रियाणि ॥ ४४ ॥ ४५ ॥ युद्धोन्मत्तं महोदरं तथैव च हतमिति शेषः । एतद्वधो हनूमता कृत इत्यनुवादबलाद्द्रष्टव्यम् ॥ ४६ ॥ मत्तस्तदाख्यो

महापार्श्वः ॥ ४७ ॥ ४८ ॥ ऐरावतादयो दिग्गजाः ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ १६० ॥ ६१ ॥ ६२ ॥ भिन्नार्णवसन्निकाशमिति क्रियाविशेषणम् ॥ १६३ ॥ गर्तकमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वा० आदिकाव्ये युद्धकांडे सप्ततितमः सर्गः ॥ ७० ॥ कतकरी० ॥ ६३ ॥ स्वबलमिति ॥ १ ॥ पितृव्यौ

हेमपट्टपरिक्षिप्तांमांसशोणितफेनिलाम् ॥ विराजमानांविपुलांशत्रुशोणिततर्पिताम् ॥ ४८ ॥ तेजसासंप्रदीप्ताग्रांरक्तमाल्यविभूषिताम् ॥ ऐरावतमहापद्मसार्वभौमभयावहाम् ॥ ४९ ॥ गदामादायसंक्रुद्धोमत्तोराक्षसपुंगवः ॥ हरीन्समभिदुद्रावयुगांताग्निरिवज्वलन् ॥ १५० ॥ अथर्षभःसमुत्पत्य वानरोरावणानुजम् ॥ मत्तानीकमुपागम्यतस्थौतस्याग्रतोवली ॥ ५१ ॥ तंपुरस्तात्स्थितंदृष्ट्वावानरंपर्वतोपमम् ॥ आजघानोरसिक्रुद्धोगदयावज्रकल्पया ॥ ५२ ॥ सतयाभिहतस्तेनगदयावानरर्षभः॥भिन्नवक्षाःसमाधूतःसुस्रावरुधिरंबहु ॥ ५३ ॥ ससंप्राप्यचिरात्संज्ञामृषभोवानरेश्वरः ॥ क्रुद्धो विस्फुरमाणौष्ठोमहापार्श्वमुदैक्षत ॥ ५४ ॥ सवेगवान्वेगवदभ्युपेत्यतंराक्षसंवानरवीरमुख्यः ॥ संवर्त्यमुष्टिंसहसाजघानबाह्वंतरेशैलनिकाशरूपः ॥ ॥ ५५ ॥ सकृत्तमूलःसहसैववृक्षःक्षितौपपातक्षतजोक्षितांगः ॥ तांचास्यघोरांयमदंडकल्पांगदांप्रगृह्याशुतदाननाद ॥ ५६ ॥ मुहूर्तमासीत्सगतासुकल्पःप्रत्यागतात्मासहसासुरारिः ॥ उत्पत्यसंध्याभ्रसमानवर्णस्तंवारिराजात्मजमाजघान ॥ ५७ ॥ समूर्छितोभूमितलेपपातमुहूर्तमुत्पत्यपुनःससंज्ञः ॥ तामेवतस्याद्रिवराद्रिकल्पांगदांसमाविध्यजघानसंख्ये ॥ ५८ ॥ सातस्यरौद्रासमुपेत्यदेहंरौद्रस्यदेवाध्वरविप्रशत्रोः ॥ बिभेदवक्षःक्षतजंचभूरिसुस्रावधात्वंभइवाद्रिराजः ॥ ५९ ॥ अभिदुद्राववेगेनगदांतस्यमहात्मनः ॥ तांगृहीत्वागदांभीमामाविध्यचपुनःपुनः ॥ १६० ॥ मत्तानीकंमहात्मासजघानरणमूर्धनि ॥ सस्वयागदयाभग्नोविशीर्णदशनेक्षणः ॥ ६१ ॥ निपपाततदामत्तोवज्राहतइवाचलः ॥ विशीर्णनयनोभूमौगतसत्त्वोगतायुषः ॥ पतितेराक्षसेतस्मिन्विद्रुतंराक्षसंबलम् ॥ ६२ ॥ तस्मिन्हतेभ्रातरिरावणस्यतन्नैर्ऋतानांबलमर्णवाभम् ॥ त्यक्तायुधंकेवलजीवितार्थंदुद्रावभिन्नार्णवसन्निकाशम् ॥ १६३ ॥ इत्यार्षे श्रीमद्रामायणे वा०आ०यु०सप्ततितमः सर्गः ॥ ७० ॥ स्वबलंव्यथितंदृष्ट्वातुमुलंलोमहर्षणम् ॥ भ्रातॄंश्चनिहतान्दृष्ट्वाशक्रतुल्यपराक्रमान् ॥ १ ॥ पितृव्यौचापिसंदृश्यसमरेसंनिपातितौ ॥ युद्धोन्मत्तंचमत्तंचभ्रातरौराक्षसोत्तमौ ॥ २ ॥ चुकोपचमहातेजाब्रह्मदत्तवरोयुधि॥अतिकायोद्रिसंकाशोदेवदानवदर्पहा ॥ ३ ॥ सभास्करसहस्रस्यसंघातमिवभास्वरम् ॥ रथमारुह्यशक्रारिरभिदुद्राववानरान् ॥ ४ ॥ सविस्फार्यतदाचापंकिरीटीमृष्टकुंडलः ॥ नामसंश्रावयामासननादचमहास्वनम् ॥५॥ तेनसिंहप्रणादेननामविश्रावणेनच ॥ ज्याशब्देनचभीमेनत्रासयामासवानरान् ॥ ६ ॥ तेदृष्ट्वादेहमाहात्म्यंकुंभकर्णोयमुत्थितः ॥ भयार्तावानराःसर्वेसंश्रयंतेपरस्परम् ॥ ७ ॥

काविस्यत्राह युद्धोन्मत्तं चेत्यादि । भ्रातरावन्योन्यं भ्रातरौ एतदुक्तिः परस्परसौहार्दातिशयमतिपादनाय ॥ २ ॥ ३ ॥ सूर्यसहस्रसमुदायवद्भास्वरम् ॥ ४ ॥ ५ ॥ ६ ॥ कुंभकर्णोयमुत्थित इति मन्य

मानाः परस्परं संश्रयंते रक्षणार्थामिति शेषः ॥ ७ ॥ ते रूपमालोक्य ते इव वानरा इव विद्रवन्तीति तच्छब्दद्वयनिर्वाहः इवेति शेषः ॥ ८ ॥ ९ ॥ १० ॥ सांत्वयित्वा मा भैष्टेत्युक्त्वा ॥ ११ ॥ हरिलोचनः सिंहदृष्टिः ॥ १२ ॥ १३ ॥ रथशक्तीभिरिति दीर्घ आर्षः । रथस्थाभिः शक्तिभिरित्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ ध्वजशृंगेत्यादिना राहुध्वजत्वमुक्तम् ॥ १७ ॥ हेमपृष्ठं हेमसदृशपृष्ठभागम् त्रिनतमिति माग्व्या

तेतस्यरूपमालोक्ययथाविष्णोस्त्रिविक्रमे ॥ भयाद्वानरयोधास्तेविद्रवंतिततस्ततः ॥ ८ ॥ तेऽतिकायंसमासाद्यवानरामूढचेतसः ॥ शरण्यंशरणं जग्मुर्लक्ष्मणाग्रजमाहवे ॥ ९ ॥ ततोतिकायंकाकुत्स्थोरथस्थंपर्वतोपमम् ॥ ददर्शधन्विनंदूराद्गर्जंतंकालमेघवत् ॥ १० ॥ सतंदृष्ट्वामहाकायं राघवस्तुसुविस्मितः ॥ वानरान्सांत्वयित्वाचविभीषणमुवाचह ॥ ११ ॥ कोऽसौपर्वतसंकाशोधनुष्मान्हरिलोचनः ॥ युक्तेहयसहस्रेणविशाले स्यंदनेस्थितः ॥ १२ ॥ सएषनिशितैःशूलैःसुतीक्ष्णैःप्रासतोमरैः ॥ अर्चिष्मद्भिर्वृतोभातिभूतैरिवमहेश्वरः ॥ १३ ॥ कालजिह्वाप्रकाशाभिर्यएषो भिविराजते ॥ आवृतोरथशक्तीभिर्विद्युद्भिरिवतोयदः ॥ १४ ॥ धनूंषिचास्यसज्जानिहेमपृष्ठानिसर्वशः ॥ शोभयंतिरथश्रेष्ठंशक्रचापमिवांबरम् ॥ १५ ॥ यएषरक्षःशार्दूलोरणभूमिंविराजयन् ॥ अभ्येतिरथिनांश्रेष्ठोरथेनादित्यवर्चसा ॥ १६ ॥ ध्वजशृंगप्रतिष्ठेनराहुणाभिविराजते ॥ सूर्यरश्मिप्रभैर्बाणै र्दिशोदशविराजयन् ॥ १७ ॥ त्रिनतंमेघनिर्ह्रादंहेमपृष्ठमलंकृतम् ॥ शतक्रतुधनुप्रख्यंधनुश्चास्यविराजते ॥ १८ ॥ सध्वजःसपताकश्चसानुकर्षोमहारथः चतुःसादिसमायुक्तोमेघस्तनितनिःस्वनः ॥ १९ ॥ विंशतिर्दशचाष्टौचतूणास्यरथमास्थिताः ॥ कार्मुकाणिचभीमानिज्याश्चकांचनपिंगलाः ॥ २० ॥ द्वौचखड्गौचपार्श्वस्थौप्रदीप्तौपार्श्वशोभितौ ॥ चतुर्हस्तत्सरुचितौव्यक्तहस्तदशायतौ ॥ २१ ॥ रक्तकंठगुणोधीरोमहापर्वतसन्निभः ॥ कालःकाल महावक्त्रोमेघस्थइवभास्करः ॥ २२ ॥ कांचनांगदनद्धाभ्यांभुजाभ्यामेषशोभते ॥ शृंगाभ्यामिवतुंगाभ्यांहिमवान्पर्वतोत्तमः ॥ २३ ॥ कुंडलाभ्या मुभाभ्यांचभातिवक्त्रंसुभीषणम् ॥ पुनर्वस्वंतरगतःपरिपूर्णोनिशाकरः ॥ २४ ॥ आचक्ष्वमेमहाबाहोत्वमेनंराक्षसोत्तमम् ॥ यंदृष्ट्वावानराःसर्वे भयार्ताविद्रुतादिशः ॥ २५ ॥ सपृष्टोराजपुत्रेणरामेणामिततेजसा ॥ आचचक्षेमहातेजाराघवायविभीषणः ॥ २६ ॥ दशग्रीवोमहातेजाराजावै श्रवणानुजः ॥ भीमकर्मामहात्माहिरावणोराक्षसेश्वरः ॥ २७ ॥ तस्यासीद्वीर्यवान्पुत्रोरावणप्रतिमोबले ॥ वृद्धसेवीश्रुतबलःसर्वास्त्रविदुषांवरः ॥ २८ ॥ अश्वपृष्ठेनागपृष्ठेखड्गेधनुषिकर्षणे ॥ भेदेसांत्वेचदानेचनयेमंत्रेचसंमतः ॥ २९ ॥

ख्यातम् ॥ १८ ॥ सादिनः सारथयः ॥ १९ ॥ तूणा अस्येति च्छेदः ॥ २० ॥ पार्श्वशोभितौ स्वपार्श्वशोभितौ चतुर्हस्तप्रमाणाभ्यां त्सरुभ्यां खड्गमुष्टिभ्यां चितौ व्यक्तं दशहस्तपरिमाणेनायतौ ॥ २१ ॥ रक्तकंठ गुणः रक्तकंठ माल्यः कालः कृष्णवर्णः कालस्य मृत्योरिव महद्वक्त्रं यस्य सः ॥ २२ ॥ २३ ॥ पुनर्वस्वोरंतरं मध्यं तत्र गतः ॥ २४ ॥ २५ ॥ २६ ॥ २६ ॥ २७ ॥ २८ ॥ धनुषि कर्षण इतिपाठे

भिरितएव पुनरंगैर्हस्तपादादिभिरासन्ना भूत्वा युद्धं चक्रुः ॥ ५७ ॥ ५८ ॥ आक्षिप्य बलाद्धत्वा ॥ ५९ ॥ ६० ॥

कृष्यतेनेनेति कर्षणः पाशादिरित्यर्थ इति तीर्थः ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ रविभास्वरो रथो दत्त इत्यनुकर्षः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ अस्मिन्नतिकाये क्षिप्रमित्यत्र हेतुः पुरेति । पुरा नयति नेष्यतीत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ समभिद्रवन्समभ्यद्रवन् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ यौवनदर्पितो हरिरिव तरुणसिंह इव ॥ ४३ ॥ वीरत्वादयुध्यमानं कंचिदपि न

यस्यबाहुंसमाश्रित्यलंकाभवतिनिर्भया ॥ तनयंधान्यमालिन्याअतिकायमिमंविदुः ॥ ३० ॥ एतेनाराधितोब्रह्मातपसाभावितात्मना ॥ अस्त्राणिचाप्यवाप्तानिरिपवश्चपराजिताः ॥ ३१ ॥ सुरासुरैरवध्यत्वंदत्तमस्मैस्वयंभुवा ॥ एतच्चकवचंदिव्यंरथश्चरविभास्वरः ॥ ३२ ॥ एतेनशतशोदेवादानवाश्चपराजिताः ॥ रक्षितानिचरक्षांसियक्षाश्चापिनिषूदिताः ॥ ३३ ॥ वज्रंविष्टंभितंयेनबाणैरिंद्रस्यधीमता ॥ पाशःसलिलराजस्ययुद्धेप्रतिहतस्तथा ॥३४॥ एषोतिकायोबलवान्राक्षसानामथर्षभः ॥ सरावणसुतोधीमान्देवदानवदर्पहा ॥ ३५ ॥ तदस्मिन्क्रियतांयत्नःक्षिप्रंपुरुषपुंगव ॥ पुरावानरसैन्यानिक्षयंनयतिसायकैः ॥ ३६ ॥ ततोतिकायोबलवान्प्रविश्यहरिवाहिनीम् ॥ विस्फारयामासधनुर्ननादचपुनःपुनः ॥ ३७ ॥ तंभीमवपुषंदृष्ट्वारथस्थंरथिनांवरम् ॥ अभिपेतुर्महात्मानःप्रधानायेवनौकसः॥३८॥कुमुदोद्विविदोमैंदोनीलःशरभएवच ॥ पादपैर्गिरिशृंगैश्चयुगपत्समभिद्रवन् ॥ ॥३९॥ तेषांवृक्षांश्चशैलांश्चशरैःकनकभूषणैः ॥ अतिकायोमहातेजाश्चिच्छेदास्त्रविदांवरः ॥ ४० ॥ तांश्चैवसर्वान्सहरीन्शरैःसर्वायसैर्बली ॥ विव्याधाभिमुखान्संख्येभीमकायोविशारदः ॥ ४१ ॥ तेऽर्दिताबाणवर्षेणभिन्नगात्राःपराजिताः ॥ नशेकुरतिकायस्यप्रतिकर्तुंमहाहवे ॥ ४२ ॥ तत्सैन्यंहरिवीराणांत्रासयामासराक्षसः॥मृगयूथमिवक्रुद्धोहरियौवनदर्पितः ॥ ४३ ॥ सराक्षसेंद्रोहरियूथमध्येनायुध्यमानंनिजघानकंचित् ॥ उत्पत्यरामंसधनुःकलापीसगर्वितंवाक्यमिदंबभाषे ॥ ४४ ॥ रथेस्थितोहंशरचापपाणिर्नप्राकृतंकंचनयोधयामि ॥ यस्यास्तिशक्तिर्व्यवसाययुक्तोददातुमेशीघ्रमिहाद्ययुद्धम् ॥ ४५ ॥ तत्तस्यवाक्यंब्रुवतोनिशम्यचुकोपसौमित्रिरमित्रहंता ॥ अमृष्यमाणश्चसमुत्पपातजग्राहचापंचततःस्मयित्वा ॥ ४६ ॥क्रुद्धःसौमित्रिरुत्पत्यतूणादाक्षिप्यसायकम् ॥ पुरस्तादतिकायस्यविचकर्षमहद्धनुः ॥ ४७ ॥ पूरयन्समहींसर्वामाकाशंसागरंदिशः ॥ ज्याशब्दोलक्ष्मणस्योग्रस्त्रासयन्रजनीचरान् ॥ ४८ ॥ सौमित्रेश्चापनिर्घोषंश्रुत्वाप्रतिभयंतदा ॥ विसिस्मियेमहातेजाराक्षसेंद्रात्मजोबली ॥ ४९ ॥ तदातिकायःकुपितोदृष्ट्वालक्ष्मणमुत्थितम् ॥ आदायनिशितंबाणमिदंवचनमब्रवीत् ॥ ५० ॥ बालस्त्वमसिसौमित्रेविक्रमेष्वविचक्षणः ॥ गच्छकिंकालसंकाशंमांयोधयितुमिच्छसि ॥ ५१ ॥ नहिमद्बाहुसृष्टानांबाणानांहिमवानपि ॥ सोढुमुत्सहतेवेगमंतरिक्षमथोमही ॥ ५२ ॥

निजघान कलापी तूणीरवान् सगर्वितं सगर्वम् ॥ ४४ ॥ यस्य शक्तिरस्ति व्यवसाययुक्तश्च यः स युद्धं ददातु ॥ ४५ ॥ तत्तस्य वाक्यं रामं प्रत्युक्तं स्मयित्वा अनादृत्य । ष्मिङ् अनादरे इडार्षः ॥ ४६ ॥ आक्षिप्य आदाय ॥ ४७ ॥ मह्यादीन्पूरयन् राक्षसांस्त्रासयन् ज्या शब्द उदभूदिति शेषः ॥ ४८ ॥ प्रतिभयं भयंकरम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

क्ष्वेडितास्फोटितानां च तैरित्यर्थः ॥ ३९ ॥ ४० ॥ समुद्यतशिलानगं समुद्यताः शिला नगा वृक्षाश्रयेन तत् ॥ ४१ ॥ ४२ ॥ ४३ ॥ प्रतिनर्दंत प्रत्यनर्दंत ॥ ४४ ॥ परहर्षं शत्रुहर्षम् अमृष्यमाणाः ॥४५॥ ॥ ४६ ॥ केचिद्द्रुमशिलायुधा इति स्वभावोक्तिः । तादृशाः प्लवंगमा रक्षःसैन्येषु संक्रुद्धा आकाशमाविश्य चेरुः केचिद्विपुलस्कंधान्द्रुमान् गृहीत्वोर्व्यां चेरुः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ शैलशृंगा

जगृहुश्चमहात्मानोनिर्यातायुद्धदुर्मदाः ॥ क्ष्वेडितास्फोटितानांवैसंचचालेवमेदिनी ॥ ३९ ॥ रक्षसांसिंहनादैश्चसंस्फोटितमिवांबरम् ॥ तेभिनिष्क्रम्यमुदितााराक्षसेंद्रामहाबलाः ॥ ४० ॥ ददृशुर्वानरानीकंसमुद्यताशिलानगम् ॥ हरयोपिमहात्मानोददृशूराक्षसंबलम् ॥ ४१ ॥ हस्त्यश्वरथसंबाधंकिंकिणीशतनादितम् ॥ नीलजीमूतसंकाशंसमुद्यतमहायुधम् ॥४२॥ दीप्तानलरविप्रख्यैर्नैर्ऋतैःसर्वतोवृतम् ॥ तद्दृष्ट्वाबलमायातंलब्धलक्षाःप्लवंगमाः ॥ ४३॥ समुद्यतमहाशैलाःसंप्रणेदुर्मुहुर्मुहुः ॥ अमृष्यमाणारक्षांसिप्रतिनर्दंतवानराः ॥ ४४ ॥ ततःसमुत्कृष्टरवंनिशम्यरक्षोगणावानरयूथपानाम् ॥ अमृष्यमाणाःपरहर्षमुग्रंमहाबलाभीमतरंप्रणेदुः॥४५॥तेराक्षसबलंघोरंप्रविश्यहरियूथपाः ॥ विचेरुरुद्यतैःशैलैर्नगाःशिखरिणोयथा ॥४६॥ केचिदाकाशमाविश्यकेचिदुर्व्यांप्लवंगमाः ॥ रक्षःसैन्येषुसंक्रुद्धाःकेचिद्द्रुमशिलायुधाः ॥ ४७ ॥ द्रुमांश्चविपुलस्कंधान्गृह्यवानरपुंगवाः ॥ तद्युद्धमभवद्घोरंरक्षोवानरसंकुलम् ॥ ४८ ॥ तेपादपशिलाशैलैश्चक्रुर्वृष्टिमनूपमाम् ॥ बाणौघैर्वार्यमाणाश्चहरयोभीमविक्रमाः ॥ ४९ ॥ सिंहनादान्विनेदुश्चरणेराक्षसवानराः ॥ शिलाभिश्चूर्णयामासुर्यातुधानान्प्लवंगमाः ॥ ५० ॥ निर्जघ्नुःसंयुगेक्रुद्धाःकवचाभरणावृतान् ॥ केचिद्रथगतान्वीरान्गजवाजिगतानपि ॥ ५१ ॥ निर्जघ्नुःसहसावीरान्यातुधानान्प्लवंगमाः ॥ शैलशृंगान्वितांगास्तेमुष्टिभिर्वांतलोचनाः ॥५२॥ चेलुःपेतुश्चनेदुश्चतत्रराक्षसपुंगवाः ॥ राक्षसाश्चशरैस्तीक्ष्णैर्विभिदुःकपिकुंजरान् ॥ ५३ ॥ शूलमुद्गरखड्गैश्चजघ्नुःप्रासैश्चशक्तिभिः ॥ अन्योन्यंपातयामासुःपरस्परजयैषिणः ॥ ५४ ॥ रिपुशोणितदिग्धांगास्तत्रवानरराक्षसाः ॥ ततःशैलैश्चखड्गैश्चविसृष्टैर्हरिराक्षसैः ॥ ५५ ॥ मुहूर्तेनावृताभूमिरभवच्छोणितोक्षिता ॥ विकीर्णैःपर्वताकारैरक्षोभिरभिमर्दितैः ॥ आसीद्वसुमतीपूर्णातदायुद्धमदान्वितैः ॥ ५६ ॥ आक्षिताःक्षिप्यमाणाश्चभग्नशैलैश्चवानरैः ॥ पुनरंगैस्तदाचक्रुर्वानरायुद्धमद्भुतम् ॥ ५७ ॥ वानरान्वानरैरेवजघ्नुस्तेनैर्ऋतर्षभाः ॥ राक्षसान्राक्षसैरेवजघ्नुस्तेवानराअपि ॥ ५८ ॥ आक्षिप्यचशिलाःशैलाञ्जघ्नुस्तेराक्षसास्तदा ॥ तेषांचाच्छिद्यशस्त्राणिजघ्नूरक्षांसिवानराः ॥ ५९ ॥ निर्जघ्नुःशैलशृंगैश्चबिभिदुश्चपरस्परम् ॥ सिंहनादान्विनेदुश्चरणेराक्षसवानराः ॥ ६० ॥ छिन्नवर्मतनुत्राणाराक्षसावानरैर्हताः ॥ रुधिरंप्रस्रुतास्तत्ररससारमिवद्रुमाः ॥ ६१ ॥ रथेनचरथंचापिवारणेनापिवारणम् ॥ हयेनचहयंकेचिन्निर्जघ्नुर्वानरारणे ॥ ६२ ॥

न्वितांगाः गिरिशिखरैर्व्याप्तदेहाः मुष्टिभिः मुष्टिप्रहारैर्वांतलोचनाः बहिर्निर्गतलोचनाः ॥५२॥५३॥५४॥ ५५ ॥ ५६ ॥ आक्षिताः क्षिप्यमाणा इति नियुद्धप्रकारकथनं भग्नशैलैश्च वानरैः राक्षसभग्नस्वयुद्धसाधनशैलाद्विभिरतएव पुनरंगैर्हस्तपादादिभिरासन्ना भूत्वा युद्धं चक्रुः ॥ ५७ ॥ ५८ ॥ आक्षिप्य बलाद्गृहीत्वा ॥ ५९ ॥ ६० ॥ प्रस्रुताः स्रुतवंतः रससारो निर्यासः ॥ ६१ ॥ ६२ ॥

॥६३॥ पर्वतास्तैर्निरस्तपर्वतैः द्रुमच्छिन्नैः छिन्नद्रुमैः विकीर्णा व्याप्ता॥६४॥गर्वितहृष्टचेष्टाः संजातगर्वा हृष्टाश्चेष्टा येषां ते नानायुधाः द्रुमशैलदंतनखादिनानाप्रहरणयुताः॥६५॥प्रहृष्यमाणेषु प्रहृष्यत्सु वलीमुखेषु वानरेषु॥६६॥६७॥६८॥६९॥ मार्गो युद्धार्थं गमनमार्गः पतितैर्वानरैरभिसंवृतो मांसशोणितकर्दमः सन् ददृशे दृष्टः॥ ७०॥७१॥७२॥७३॥७४॥७५॥७६॥७७॥७८॥ स्वस्थाः स्वस्थचित्तेंद्रियाः वानरश्रेष्ठाः

क्षुरप्रैरर्धचंद्रैश्चभल्लैश्चनिशितैःशरैः ॥ राक्षसावानरेन्द्राणांबिभिदुःपादपाञ्छिलाः ॥ ६३ ॥ विकीर्णाःपर्वतास्तैश्चद्रुमाच्छिन्नैश्चसंयुगे ॥ हतैश्चकपिरक्षोभिर्दुर्गमावसुधाभवत् ॥ ६४ ॥ तेवानरागर्वितहृष्टचेष्टाःसंग्राममासाद्यभयंविमुच्य ॥ युद्धंस्मसर्वेसहराक्षसैस्तेनानायुधाश्चक्रुरदीनसत्त्वाः ॥ ६५ ॥ तस्मिन्प्रवृत्तेतुमुलेविमर्देप्रहृष्यमाणेषुवलीमुखेषु ॥ निपात्यमानेषुचराक्षसेषुमहर्षयोदेवगणाश्चनेदुः ॥ ६६ ॥ ततोहयंमारुततुल्यवेगमारुह्यशक्तिंनिशितांप्रगृह्य ॥ नरांतकोवानरसैन्यमुग्रंमहार्णवंमीनइवाविवेश ॥ ६७ ॥ सवानरान्सप्तशतानिवीरःप्रासेनदीप्तेनविनिर्बिभेद॥ एकःक्षणेनेंद्ररिपुर्महात्माजघानसैन्यंहरिपुंगवानाम् ॥ ६८ ॥ ददृशुश्चमहात्मानंहयपृष्ठप्रतिष्ठितम् ॥ चरंतंहरिसैन्येषुविद्याधरमहर्षयः ॥ ६९ ॥ सतस्यददृशेमार्गोमांसशोणितकर्दमः॥ पतितैःपर्वताकारैर्वानरैरभिसंवृतः ॥ ७० ॥ यावद्विक्रमितुंबुद्धिंचक्रुःप्लवगपुंगवाः ॥ तावदेतानतिक्रम्यनिर्बिभेदनरांतकः ॥ ७१ ॥ ददाहहरिसैन्यानिवनानीवविभावसुः ॥ यावदुत्पाटयामासुर्वृक्षाञ्शैलान्वनौकसः ॥७२॥ तावत्प्रासहताःपेतुर्वज्रकृत्ताइवाचलाः ॥ ज्वलंतंप्रासमुद्यम्यसंग्रामांतेनरांतकः ॥ ७३ ॥ दिक्षुसर्वासुबलवान्विचचारनरांतकः ॥ प्रमृद्नन्सर्वतोयुद्धेप्रावृट्कालेयथानिलः ॥ ७४ ॥ नशेकुर्धावितुंवीरानस्थातुंस्पंदितुंकुतः॥ उत्पतंतंस्थितंयांतंसर्वान्विव्याधवीर्यवान् ॥ ७५ ॥ एकेनांतककल्पेनप्रासेनादित्यतेजसा ॥ भग्नानिहरिसैन्यानिनिपेतुर्धरणीतले ॥ ७६ ॥ वज्रनिष्पेषसदृशंप्रासस्याभिनिपातनम् ॥ नशेकुर्वानराःसोढुंतेविनेदुर्महास्वनम् ॥ ७७ ॥ पततांहरिवीराणांरूपाणिप्रचकाशिरे ॥ वज्रभिन्नाग्रकूटानांशैलानांपततामिव ॥ ७८ ॥ येतुपूर्वंमहात्मानःकुंभकर्णेनपातिताः ॥ तेस्वस्थावानरश्रेष्ठाःसुग्रीवमुपतस्थिरे ॥ ७९ ॥ प्रेक्षमाणःससुग्रीवोददृशेहरिवाहिनीम् ॥ नरांतकभयत्रस्तांविद्रवंतींयतस्ततः ॥ ८० ॥ विद्रुतांवाहिनींदृष्ट्वासददर्शनरांतकम् ॥ गृहीतप्रासमायांतंहयपृष्ठप्रतिष्ठितम् ॥ ८१ ॥ दृष्ट्वोवाचमहातेजाःसुग्रीवोवानराधिपः ॥ कुमारमंगदंवीरंशक्रतुल्यपराक्रमम् ॥ ८२ ॥ गच्छैनंराक्षसंवीरंयोसौतुरगमास्थितः ॥भक्षयंतंपरबलंक्षिप्रंप्राणैर्वियोजय ॥ ८३ ॥ सभर्तुर्वचनंश्रुत्वानिष्पपातांगदस्तदा ॥ अनीकान्मेघसंकाशादंशुमानिववीर्यवान् ॥ ८४ ॥ शैलसंघातसंकाशोहरीणामुत्तमोंगदः ॥ रराजांगदसन्नद्धःसधातुरिवपर्वतः ॥ ८५ ॥ निरायुधोमहातेजाःकेवलंनखदंष्ट्रवान् ॥ नरांतकमभिक्रम्यवालिपुत्रोऽब्रवीद्वचः ॥ ८६ ॥ तिष्ठकिंप्राकृतैरेभिर्हरिभिस्त्वंकरिष्यसि ॥ अस्मिन्वज्रसमस्पर्शंप्रासंक्षिपममोरसि ॥ ८७ ॥

अंगदादयः॥७९॥८०॥८१॥८२॥गच्छैनं राक्षसेमिति हंतुमिति शेषः॥८३॥मेघसंकाशादनीकात् स्वसेनामध्यात्॥८४॥अंगदेन दिव्यभुजाभरणेन सन्नद्धो युक्तः॥८५॥८६॥अस्मिन्ममोरसि क्षिपेत्यन्वयः॥८७॥

॥ ८८ ॥ वालिपुत्रमभिगम्य प्रासमुत्ससर्ज स प्रासः भग्नोभवद्भूमौ पपात च ॥ ८९ ॥ ९० ॥ स्फुटिताक्षितारः स्फुटिता विशीर्णा अक्ष्णस्तारा कनीनिका यस्य सः ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ मुष्टिना निर्भिन्नमत एव निमग्नं वक्षो यस्य सः ज्वालाः अभिघातोत्था वमन् ॥ ९५ ॥ ९६ ॥ राममनःप्रहर्षणं राममनसः प्रहर्षणं सोपि रामोपि । अथातिभीमकर्मांगदः पुनश्च युद्धे युद्धनिमित्तं हर्षितो बभूव

अङ्गदस्यवचःश्रुत्वाप्रचुक्रोधनरांतकः ॥ संदश्यदशनैरोष्ठंनिःश्वस्यचभुजंगवत् ॥ अभिगम्यांगदंक्रुद्धोवालिपुत्रंनरांतकः ॥८८॥ सप्रासमाविध्यतदां गदायसमुज्वलंतंसहसोत्ससर्ज ॥ सवालिपुत्रोरसिवज्रकल्पेबभूवभग्नोन्यपतच्चभूमौ ॥ ८९ ॥ तंप्रासमालोक्यतदाविभग्नंसुपर्णकृत्तोरगवीर्यकल्पम् ॥ तलंसमुद्यम्यसवालिपुत्रस्तुरंगमस्याभिजघानमूर्ध्नि ॥ ९० ॥ निमग्नपादःस्फुटिताक्षितारोनिष्क्रांतजिह्वोचलसन्निकाशः ॥ सतस्यवाजीनिपपात भूमौतलप्र[illegible]विकीर्णमूर्धा ॥ ९१ ॥ नरांतकःक्रोधवशंजगामहतंतुरंगंपतितंसमीक्ष्य ॥ समुष्टिमुद्यम्यमहाप्रभावोजघानशीर्षेयुधिवालिपुत्रम् ॥ ॥ ९२ ॥ अथांगदोमुष्टिविशीर्णमूर्धासुस्रावतीव्रंरुधिरंभृशोष्णम् ॥ मुहुर्विजज्वालमुमोहचापिसंज्ञांसमासाद्यविसिस्मियेच ॥ ९३ ॥ अथांगदो मृत्युसमानवेगंसंवर्त्यमुष्टिंगिरिशृंगकल्पम् ॥ निपातयामासतदामहात्मानरांतकस्योरसिवालिपुत्रः ॥ ९४ ॥ समुष्टिनिर्भिन्ननिमग्नवक्षाज्वालावम ञ्शोणितदिग्धगात्रः ॥ नरांतकोभूमितलेपपातयथाऽचलोवज्रनिपातभग्नः ॥ ९५ ॥ तदांतरिक्षेत्रिदशोत्तमानांवनौकसांचैवमहाप्रणादः ॥ बभूवत स्मिन्निहतेऽग्र्यवीर्येनरांतकेवालिसुतेनसंख्ये ॥ ९६ ॥ अथांगदोराममनःप्रहर्षणंसुदुष्करंतंकृतवान्हिविक्रमम् ॥ विसिस्मियेसोप्यथभीमकर्मा पुनश्चयुद्धेसबभूवहर्षितः ॥ ९७ ॥ नरांतकंहतंदृष्ट्वाचुक्रुशुर्नैर्ऋतर्षभाः ॥ देवांतकस्त्रिमूर्धाचपौलस्त्यश्चमहोदरः ॥ ९८॥ आरूढोमेघसंकाशंवारणें द्रंमहोदरः ॥ वालिपुत्रंमहावीर्यमभिदुद्राववेगवान् ॥ ९९ ॥ भ्रातृव्यसनसंतप्तस्तदादेवांतकोबली ॥ आदायपरिघंघोरमंगदंसमभिद्रवत् ॥ १००॥ रथमादित्यसंकाशंयुक्तंपरमवाजिभिः ॥ आस्थायात्रिशिरावीरोवालिपुत्रमथाभ्यगात् ॥१॥ सत्रिभिर्देवदर्पघ्नैराक्षसेन्द्रैरभिद्रुतः ॥ वृक्षमुत्पाटयामास महाविटपमंगदः ॥ २ ॥ देवांतकायतंवीरश्चिक्षेपसहसांगदः ॥ महावृक्षंमहाशाखंशक्रोदीप्तामिवाशनिम् ॥ ३ ॥

तुष्टः सन्सन्नद्धो बभूवेत्यर्थः ॥९७॥ अत्र सर्गविच्छेदो बहुषु पुस्तकेषु न दृश्यते इत्यस्माभिरपि न कृतः । पूर्वोत्तरवाक्ययोरेककर्तृकयुद्धवर्णनादिति कतकः ॥ ९८ ॥९९॥ १०० ॥१॥ २ ॥ दीप्तामशनिमिव

वृक्षं चिक्षेप ॥ ३ ॥ त्रिशिरास्तमिति । देवांतकाय प्रक्षिप्तं वृक्षं तत्सहायार्थमिति शेषः ॥ ४ ॥ ५ ॥ ६ ॥७॥८॥९॥ अस्य महागजं महोदरस्य गजम् ॥ ११० ॥११॥१२॥ लाक्षारसेन समानो वर्णो यस्य तद्रुधिरम् ॥ १३ ॥१४॥ अजिह्मगैः ऋजुगामिभिः ॥१५॥१६॥१७॥१८॥ गिरेः शिरः पर्वतस्य शृंगम् । विजृंभितं त्रिशिरसः पर्वतशिखरभेदनरूपं जृंभणमालोक्य ॥१९॥तं परिघहस्तं देवांतकम्॥१२०॥



त्रिशिरास्तंप्रचिच्छेदशरैराशीविषोपमैः ॥ सवृक्षंकृतमालोक्यउत्पपाततदांगदः ॥ ४ ॥ सववर्षततोवृक्षाञ्शिलाश्चकपिकुंजरः ॥ तान्प्रचिच्छेदसं क्रुद्धस्त्रिशिरानिशितैःशरैः ॥ ५ ॥ परिघाग्रेणतान्वृक्षान्बभंजसमहोदरः ॥ त्रिशिराश्चांगदंवीरमभिदुद्रावसायकैः ॥ ६ ॥ गजेनसमभिद्रुत्यवालिपुत्रं महोदरः ॥ जघानोरसिसंक्रुद्धस्तोमरैर्वज्रसन्निभैः ॥ ७ ॥ देवांतकश्चसंक्रुद्धःपरिघेणतदांगदम् ॥ उपगम्याभिहत्याशुव्यपचक्रामवेगवान् ॥ ८ ॥ सत्रिभिर्नैर्ऋतश्रेष्ठैर्युगपत्समभिद्रुतः ॥ नविव्यथेमहातेजावालिपुत्रःप्रतापवान् ॥ ९ ॥ सवेगवान्महावेगंकृत्वापरमदुर्जयः ॥ तलेनसमभिद्रुत्य जघानास्यमहागजम् ॥ ११० ॥ पेततुर्नयनेतस्यविननाशसकुंजरः ॥ विषाणंचास्यनिष्कृष्यवालिपुत्रोमहाबलः ॥ ११ ॥ देवांतकमभि द्रुत्यताडयामाससंयुगे ॥ सविह्वलस्तुतेजस्वीवातोद्धूतइवद्रुमः ॥ १२ ॥ लाक्षारससवर्णंचसुस्रावरुधिरंमहत् ॥ अथाश्वस्यमहातेजाःकृच्छ्राद्दे वांतकोबली ॥ १३ ॥ आविध्यपरिघंवेगादाजघानतदांगदम् ॥ परिघाभिहतश्चापिवानरेंद्रात्मजस्तदा ॥ १४ ॥ जानुभ्यांपतितोभूमौपुनरेवो त्पपातह ॥ तमुत्पतंतंत्रिशिरास्त्रिभिर्बाणैरजिह्मगैः ॥ १५ ॥ घोरैर्हरिपतेःपुत्रंललाटेभिजघानह ॥ ततोंगदंपरिक्षिप्तंत्रिभिर्नैर्ऋतपुंगवैः ॥ १६ ॥ हनूमानथवि[illegible]नीलश्चापिप्रतस्थतुः ॥ ततश्चिक्षेपशैलाग्रंनीलस्त्रिशिरसेतदा ॥ १७ ॥ तद्रावणसुतोधीमान्बिभेदनिशितैःशरैः ॥ तद्बाणशतनिर्भिन्नं विदारितशिलातलम् ॥ १८ ॥ सविस्फुलिंगंसज्वालंनिपपातगिरेःशिरः ॥ सविजृंभितमालोक्यहर्षाद्देवांतकोबली ॥ १९ ॥ परिघेणाभिदुद्रावमारुतात्मज माहवे ॥ तमापतंतमुत्पत्यहनूमान्कपिकुंजरः ॥ १२० ॥ आजघानतदामूर्ध्निवज्रकल्पेनमुष्टिना ॥ शिरसिप्राहरद्वीरस्तदावायुसुतोबली ॥ नादेनाकंप यच्चैवराक्षसान्समहाकपिः ॥ २१ ॥ समुष्टिनिष्पिष्टविभिन्नमूर्धानिर्वांतदंताक्षिविलंबिजिह्वः ॥ देवांतकोराक्षसराजसूनुर्गतासुरुर्व्यांसहसापपात ॥ ॥ २२ ॥ तस्मिन्हतेराक्षसयोधमुख्येमहाबलेसंयतिदेवशत्रौ ॥ क्रुद्धस्त्रिशीर्षानिशितास्त्रमुग्रंववर्षनीलोरसिबाणवर्षम् ॥ २३ ॥ महोदरस्तुसंक्रुद्धः कुंजरंपर्वतोपमम् ॥ भूयःसमधिरुह्याशुमंदरंरश्मिवानिव ॥ २४ ॥ ततोबाणमयंवर्षंनीलस्योपर्यपातयत् ॥ गिरौवर्षंतडिच्चक्रंसगर्जन्निवतोयदः ॥ २५ ॥



॥ २१ ॥ निर्वांता बहिर्निर्गता दंता अक्षिणी विलंबिजिह्वा च यस्य सः ॥ २२ ॥ २३ ॥ भूयः समधिरुह्येति । युद्धागमनवेळायामारूढगजस्यांगदेन हतत्वादिति भावः ॥ २४ ॥ तडिच्चक्रं चापमिंद्रधनुश्च

त्यर्थः॥२२॥अपि च धार्मिकस्य निष्कासनफलमिदमित्याह तस्यायमित्यादि॥२३॥२४॥घोरैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टषष्टितमः सर्गः ॥६८॥ कतकरी० ॥ ६२ ॥ एवमिति । विलपमानस्य विलपतः श्रुत्वा विलापमिति शेषः ॥ १ ॥ एवमेव देवदानवदर्पहा कालाग्निमतिम इत्याद्युक्तमकारेण महावीर्यो हतो दैवादिति शेषः । सत्पुरुषाः शूराः ॥ २ ॥ ईदृशं त्रैलोक्यविजयसमर्थं शोचसि शोकवंतं करोषि ॥ ३ ॥ ४ ॥ असकृत्त्वया विशस्ता इत्यन्वयः । वित्रस्ता इतिपाठे वित्रासिता इत्यर्थः ॥ ५ ॥ ६ ॥ नरको विष्णुनेति । अयं सिंहिकायां विप्र

तस्यायंकर्मणःप्राप्तोविपाकोममशोकदः ॥ यन्मयाधार्मिकःश्रीमान्सानिरस्तोविभीषणः ॥ २३ ॥ इतिबहुविधमाकुलांतरात्माकृपणमतीवविलप्य कुंभकर्णम् ॥ न्यपतदपिदशाननोभृशार्तस्तमनुजमिंद्ररिपुंहतंविदित्वा ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥ एवंविलपमानस्यरावणस्यदुरात्मनः ॥ श्रुत्वाशोकाभिभूतस्यत्रिशिरावाक्यमब्रवीत् ॥ १ ॥ एवमेवमहावीर्योहतोनस्तातमध्यमः ॥ नतुसत्पुरुषाराजन्विलपंतियथाभवान् ॥२॥ नूनंत्रिभुवनस्यापिपर्याप्तस्त्वमसिप्रभो ॥ सकस्मात्प्राकृतइवशोचस्यात्मानमीदृशम् ॥३॥ ब्रह्मदत्तास्तिशक्तिःकवचंसायकोधनुः ॥ सहस्रखरसंयुक्तोरथोमेघसमस्वनः ॥ ४ ॥ त्वयाऽसकृद्विशस्त्रेणविशस्तादेवदानवाः ॥ ससर्वायुधसंपन्नो राववंशास्तुमर्हसि ॥ ५ ॥ कामंतिष्ठमहाराजनिर्गमिष्याम्यहंरणे ॥ उद्धरिष्यामितेशत्रून्गरुडःपन्नगानिव ॥ ६ ॥ शंबरोदेवराजेननरकोविष्णुना यथा ॥ तथाद्यशयितारामोमयायुधिनिपातितः ॥ ७ ॥ श्रुत्वात्रिशिरसोवाक्यंरावणोराक्षसाधिपः ॥ पुनर्जातमिवात्मानंमन्यतेकालचोदितः ॥८॥ श्रुत्वात्रिशिरसोवाक्यंदेवांतकनरांतकौ ॥ अतिकायश्चतेजस्वीबभूवुर्युद्धहर्षिताः ॥ ९ ॥ ततोहमहमित्येवगर्जंतोनैर्ऋतर्षभाः ॥ रावणस्यसुतावीराः शक्रतुल्यपराक्रमाः ॥ १० ॥ अंतरिक्षगताःसर्वेसर्वेमायाविशारदाः ॥ सर्वेत्रिदशदर्पघ्नाःसर्वेसमरदुर्मदाः ॥ ११ ॥ सर्वेसुबलसंपन्नाःसर्वेविस्तीर्णकीर्तयः ॥ सर्वेसमरमासाद्यनश्रूयंतेस्मनिर्जिताः ॥ १२ ॥ देवैरपिसगंधर्वैःसकिन्नरमहोरगैः ॥ सर्वेस्त्रविदुषोवीराःसर्वेयुद्धविशारदाः ॥ १३ ॥ सर्वेप्रवरविज्ञानाःसर्वेलब्धवरास्तथा ॥ १४ ॥ सतैस्तथाभास्करतुल्यदर्शनैःसुतैर्वृतःशत्रुबलश्रियार्दनैः ॥ रराजराजामघवान्यथामरैर्वृतोमहादानवदर्पनाशनैः ॥ १५ ॥ सपुत्रान्संपरिष्वज्यभूषयित्वाचभूषणैः ॥ आशीर्भिश्चप्रशस्ताभिःप्रेषयामासवैरणे ॥ १६ ॥ युद्धोन्मत्तंचमत्तंचभ्रातरौचापि रावणः ॥ रक्षणार्थंकुमाराणांप्रेषयामाससंयुगे ॥ १७ ॥

विप्रचित्तेर्जातो नरको भौमात्रकात्कृष्णहतादन्य इति तीर्थः ॥ ७ ॥ पुनर्जातमिवात्मानं मन्यते । त्रिशिरसो वचनमात्रेण संतुष्टो बभूव । ननु कुंभकर्णसाध्येर्थे कथं रावणस्य तस्माज्जयप्रत्याशया संतोषस्तत्राह कालचोदित इति । तत्राशमवृत्तकालात्मकभगवत्प्रेरणया पुनस्तस्य युद्धबुद्धचतुपरम इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ अंतरिक्षे गतं गमनं येषां ते ॥ ११ ॥ विस्तीर्णकीर्तयः विशालकीर्तयः ॥ १२ ॥ १३ ॥ प्रवरविज्ञानाः श्रेष्ठज्ञानवंतः ॥ १४ ॥ शत्रूणां बलस्य श्रीणां चार्दनैरित्यर्थे श्रियार्दनैरित्यार्षम् ॥ १५ ॥ आशीर्भिरित्यस्य संयुज्येति शेषः ॥१६॥ युद्धोन्मत्तमत्तशब्दौ महोदरमहापार्श्वयोः पर्यायनामनी ॥१७॥

॥ १८ ॥ सर्वौषधीभिः आयुधप्रहारनिवारकौषधिविशेषैः ॥ १९ ॥ २० ॥ २१ ॥ सवितेवास्तमूर्धनीत्यनेन शीघ्रं नाशः सूचितः ॥ २२ ॥ २३ ॥ विद्युद्भिरुल्काभिः सहितः ॥ २४ ॥ कांचनपर्वतैः शिखरभूतैर्युक्तो हिमवानिव ॥ २५ ॥ २६ ॥ सुसंयुक्तं सुसंयुक्ताश्वम् । सानुकर्षं रथाक्षोपरि कूबराधारतया स्थापितो दारुविशेषोनुकर्षः । अनुकर्षो दार्वधस्थमित्यमरः । सकूबरं कूबरस्तु युगंधरः ॥ २७ ॥ २८ ॥



तेभिवाद्यमहात्मानंरावणंलोकरावणम् ॥ कृत्वाप्रदक्षिणंचैवमहाकायाःप्रतस्थिरे ॥ १८ ॥ सर्वौषधीभिर्गंधैश्चसमालभ्यमहाबलाः ॥ निर्जग्मुर्नैर्ऋतश्रेष्ठाःषडेतेयुद्धकांक्षिणः ॥ १९ ॥ त्रिशिराश्चातिकायश्चदेवांतकनरांतकौ ॥ महोदरमहापार्श्वौनिर्जग्मुःकालचोदिताः ॥ २० ॥ ततःसुदर्शनंनागंनीलजीमूतसन्निभम् ॥ ऐरावतकुलेजातमारुरोहमहोदरः ॥ २१ ॥ सर्वायुधसमायुक्तस्तूणीभिश्चाप्यलंकृतः ॥ रराजगजमास्थायसवितेवास्तमूर्धनि ॥ ॥ २२ ॥ हयोत्तमसमायुक्तंसर्वायुधसमाकुलम् ॥ आरुरोहरथश्रेष्ठंत्रिशिरारावणात्मजः ॥ २३ ॥ त्रिशिरारथमास्थायविरराजधनुर्धरः ॥ सविद्युदुल्कःसज्वालःसेंद्रचापइवांबुदः ॥ २४ ॥ त्रिभिःकिरीटैस्त्रिशिराःशुशुभेसरथोत्तमे ॥ हिमवानिवशैलेंद्रस्त्रिभिःकांचनपर्वतैः ॥ २५ ॥ अतिकायोतितेजस्वीराक्षसेंद्रसुतस्तदा ॥ आरुरोहरथश्रेष्ठंश्रेष्ठःसर्वधनुष्मताम् ॥ २६ ॥ सुचक्राक्षंसुसंयुक्तंसानुकर्षंसकूबरम् ॥ तूणीबाणासनैर्दीप्तंप्रासासिपरिघाकुलम् ॥ ॥ २७ ॥ सकांचनविचित्रेणकिरीटेनविराजता ॥ भूषणैश्चबभौमेरुःप्रभाभिरिवभासयन् ॥ २८ ॥ सरराजरथेतस्मिन्राजसूनुर्महाबलः ॥ वृतोनैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः ॥ २९ ॥ हयमुच्चैःश्रवःप्रख्यंश्वेतंकनकभूषणम् ॥ मनोजवंमहाकायमारुरोहनरांतकः ॥ ३० ॥ गृहीत्वाप्रासमुल्काभंविरराजनरांतकः ॥ शक्तिमादायतेजस्वीगुहःशिखिगतोयथा ॥ ३१ ॥ देवांतकःसमादायपरिघंहेमभूषणम् ॥ परिगृह्यगिरिंदोर्भ्यांवपुर्विष्णोर्विडंबयन् ॥ ३२ ॥ महापार्श्वोमहातेजागदामादायवीर्यवान् ॥ विरराजगदापाणिःकुबेरइवसंयुगे ॥ ३३ ॥ तेप्रतस्थुर्महात्मानोऽमरावत्याःसुराइव ॥ तान्गजैश्चतुरंगैश्चरथैश्चांबुदनिःस्वनैः ॥ ३४ ॥ अनुत्पेतुर्महात्मानोराक्षसाःप्रवरायुधाः ॥ तेविरेजुर्महात्मानःकुमाराःसूर्यवर्चसः ॥ ३५ ॥ किरीटिनःश्रियाजुष्टाग्रहादीप्ताइवांबरे ॥ प्रगृहीताबभौतेषांछत्राणामावलिःशिवा ॥ ३६ ॥ शरदभ्रप्रतीकाशाहंसावलिरिवांबरे ॥ मरणंवापिनिश्चित्यशत्रूणांवापराजयम् ॥ ३७ ॥ इतिकृत्वामतिंवीराःसंजग्मुःसंयुगार्थिनः ॥ जगर्जुश्चप्रणेदुश्चचिक्षिपुश्चापिसायकान् ॥ ३८ ॥



॥ २९ ॥ ३० ॥ ३१ ॥ परिघं समादाय स्थितो देवांतको दोर्भ्यां गिरिं समुद्रमथने मंदरगिरिं परिगृह्य स्थितस्य विष्णोर्वपुर्विडंबयन्विरराजेत्यनुकर्षः ॥ ३२ ॥ ३३ ॥ अमरावत्याः सुरा इव लंकायाः प्रतस्थुरित्यन्वयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ निश्चित्य निश्चयेन मरणं शत्रुपराजयं वा करिष्याम इति शेषः ॥ ३७ ॥ चिक्षिपुः शत्रुविषयाक्षेपवचनान्यूचुः सायकानित्यस्य जगृहुरित्यनेनान्वयः ॥ ३८ ॥

शक्राशन्योरिव शक्राशनेरिव वा भीमो विक्रमो यस्य तं कुंभकर्णं जगाम ॥ ६७ ॥ चले गते चारुणी रमणीये कुंडले यस्मात्तच्चलचारुकुंडलम् ॥ ६८ ॥ कुंभकर्णशिर इति । कुंडलाभ्यामलंकृतं विना कृतम् । अलं भूषणपर्याप्तिशक्तिवारणवाचक मित्यमरः । कुंभकर्णस्य शिरः । आरात्रौ प्रातःकाले आदित्ये उदिते गगनमध्यस्थचंद्रमा इव निष्प्रभं भातीत्यर्थः । अयं श्लोकः प्रक्षिप्त इति बहवः ॥ ६९ ॥ उच्चं प्राकारं लंकाया इति शेषः । शिरः कर्तनवेगोत्थितं लंकायां पपात देहस्तु कर्तनवेगाविलुठन्समुद्रे पपात पतितः । यद्यपि । तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिवरोपमम् ॥ स पपात महावीरो दिव्यास्त्राभिहतो रणे ॥ तं दृष्ट्वा वृत्रसंकाशं कुंभकर्णं तरस्विनम् ॥ गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयादितिमहाभारतोक्त्या लक्ष्मणतः कुंभकर्णवधः प्रतीयते तथापि न विरोधः । रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात् अतएव पूर्वं लक्ष्मणानुच

ससायकोराघवबाहुचोदितोदिशःस्वभासादशसंप्रकाशयन् ॥ विधूमवैश्वानरभीमदर्शनोजगामशक्राशनिभीमविक्रमम् ॥ ६७ ॥ सतन्महापर्वतकूटसन्निभंसुवृत्तदंष्ट्रंचलचारुकुंडलम् ॥ चकर्तरक्षोधिपतेःशिरस्तदायथैववृत्रस्यपुरापुरंदरः ॥ ६८ ॥ कुंभकर्णशिरोभातिकुंडलालंकृतंमहत् ॥ आदित्येऽभ्युदितेरात्रौ[मध्य]स्थइवचंद्रमाः ॥ ६९ ॥ तद्रामबाणाभिहतंपपातरक्षःशिरःपर्वतसन्निकाशम् ॥ बभंजचर्यागृहगोपुराणिप्राकारमुच्चंतमपातयच्च ॥ ॥१७०॥ तच्चातिकायंहिमहत्प्रकाशंरक्षस्तदातोयनिधौपपात ॥ ग्राहान्परान्मीनवरान्भुजंगमान्ममर्दभूमिंचतथाविवेश ॥ ७१॥ तस्मिन्हतेब्राह्मणदेवशत्रौमहाबलेसंयतिकुंभकर्णे ॥ चचालभूर्भूमिधराश्चसर्वेहर्षाच्चदेवास्तुमुलंप्रणेदुः ॥ ७२ ॥ ततस्तुदेवर्षिमहर्षिपन्नगाःसुराश्चभूतानिसुपर्णगुह्यकाः ॥ सयक्षगंधर्वगणानभोगताःप्रहर्षितारामपराक्रमेण ॥ ७३ ॥ ततस्तुतेतस्यवधेनभूरिणामनस्विनोनैर्ऋतराजबांधवाः ॥ विनेदुरुच्चैर्व्यथितारघूत्तमंहरिंसमीक्ष्यैवयथामतंगजाः ॥ ७४ ॥ सदेवलोकस्यतमोनिहत्यसूर्योयथाराहुमुखाद्विमुक्तः ॥ तथाव्यभासीद्धरिसैन्यमध्येनिहत्यरामोयुधिकुंभकर्णम् ॥ १७५ ॥ प्रहर्षमीयुर्बहवश्चवानराःप्रबुद्धपद्मप्रतिमैरिवाननैः ॥ अपूजयन्राघवमिष्टभागिनंहतेरिपौभीमबलेनृपात्मजम् ॥७६॥ सकुंभकर्णंसुरसैन्यमर्दनंमहत्सुयुद्धेषुकदाचनाजितम् ॥ ननंदहत्वाभरताग्रजोरणेमहासुरंवृत्रमिवामराधिपः ॥ १७७ ॥ इत्यार्षेश्रीमद्रा० वा० आ० यु० सप्तषष्टितमःसर्गः ॥ ६७ ॥ कुंभकर्णंहतंदृष्ट्वाराघवेणमहात्मना ॥ राक्षसाराक्षसेंद्रायरावणायन्यवेदयन् ॥ १ ॥

र इत्यत्र लक्ष्मणसहित इति व्याख्यातम् । प्राधान्यात्त्वत्र रामस्यैव तद्धंतृत्वोक्तिः । लक्ष्मणसाहित्येन हननात्तु व्यासो लक्ष्मणस्य हंतृत्वमुक्तवान् ॥ १७० ॥ ७१ ॥ ॥ ७२ ॥ ७२ ॥ भूरिणा महता ॥ ७४ ॥ देवलोकस्य आकाशस्य मध्ये इति शेषः । व्यभासीत् विशेषेण भाति स्म ॥ ७५ ॥ प्रबुद्धपद्मप्रतिमैरिव प्रबुद्धपद्मरूपैरिव । अतो नेवशब्दवैयर्थ्यम् । इष्टभागिनम् इष्टप्राप्तिमंतम् ॥ ७६ ॥ कदाचन न कदाप्यजयवंतम् ॥ १७७ ॥ सँच्छायमानः ॥ धनुरमानः ॥ २०९ ॥ कतकरी० ॥ ६१ ॥ अत्र दिनद्वयेन कुंभकर्णोत्थानं ततः सप्तमवासरे वध इति भाद्रपदपूर्णिमायामेतद्वध इति प्राग्संमतिपूर्वकमग्रे स्फुटीभविष्यति ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥ कुंभकर्णमिति ॥ १ ॥

॥ १८ ॥ सर्वौषधीभिः आयुधप्रहारनिवारकौषधिविशेषैः ॥ १९ ॥ २० ॥ २१ ॥ सवितेवास्तमूर्धनीत्यनेन शीघ्रं नाशः सूचितः ॥ २२ ॥ २३ ॥ विद्युद्भिरुल्काभिः सहितः ॥ २४ ॥ कांचनपर्वतैः शिखरभूतैर्युक्तो हिमवानिव ॥ २५ ॥ २६ ॥ सुसंयुक्तं सुसंयुक्ताश्वम् । सानुकर्षं रथाक्षोपरि कूबराधारतया स्थापितो दारुविशेषोनुकर्षः । अनुकर्षो दार्वधस्थमित्यमरः । सकूबरं कूबरस्तु युगंधरः ॥ २७ ॥ २८ ॥



तेभिवाद्यमहात्मानंरावणंलोकरावणम् ॥ कृत्वाप्रदक्षिणंचैवमहाकायाःप्रतस्थिरे ॥ १८ ॥ सर्वौषधीभिर्गंधैश्चसमालभ्यमहाबलाः ॥ निर्जग्मुर्नैर्ऋतश्रेष्ठाःषडेतेयुद्धकांक्षिणः ॥ १९ ॥ त्रिशिराश्चातिकायश्चदेवांतकनरांतकौ ॥ महोदरमहापार्श्वौनिर्जग्मुःकालचोदिताः ॥ २० ॥ ततःसुदर्शनंनागंनीलजीमूतसन्निभम् ॥ ऐरावतकुलेजातमारुरोहमहोदरः ॥ २१ ॥ सर्वायुधसमायुक्तस्तूणीभिश्चाप्यलंकृतः ॥ रराजगजमास्थायसवितेवास्तमूर्धनि॥ ॥ २२ ॥ हयोत्तमसमायुक्तंसर्वायुधसमाकुलम् ॥ आरुरोहरथश्रेष्ठंत्रिशिरारावणात्मजः ॥२३॥ त्रिशिरारथमास्थायविरराजधनुर्धरः ॥ सविद्युदुल्कःसज्वालःसेंद्रचापइवांबुदः ॥ २४ ॥ त्रिभिःकिरीटैस्त्रिशिराःशुशुभेसरथोत्तमे ॥ हिमवानिवशैलेंद्रस्त्रिभिःकांचनपर्वतैः ॥ २५ ॥ अतिकायोतितेजस्वीराक्षसेंद्रसुतस्तदा ॥ आरुरोहरथश्रेष्ठंश्रेष्ठःसर्वधनुष्मताम् ॥ २६ ॥ सुचक्राक्षंसुसंयुक्तंसानुकर्षंसकूबरम् ॥ तूणीबाणासनैर्दीप्तंप्रासासिपरिघाकुलम् ॥ ॥ २७ ॥ सकांचनविचित्रेणकिरीटेनविराजता ॥ भूषणैश्चबभौमेरुःप्रभाभिरिवभासयन् ॥ २८ ॥ सरराजरथेतस्मिन्राजसूनुर्महाबलः ॥ वृतोनैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः ॥ २९ ॥ हयमुच्चैःश्रवःप्रख्यंश्वेतंकनकभूषणम् ॥ मनोजवंमहाकायमारुरोहनरांतकः ॥ ३० ॥ गृहीत्वाप्रासमुल्काभंविरराजनरांतकः ॥ शक्तिमादायतेजस्वीगुहःशिखिगतोयथा ॥ ३१ ॥ देवांतकःसमादायपरिघंहेमभूषणम् ॥ परिगृह्यगिरिंदोर्भ्यांवपुर्विष्णोर्विडंबयन् ॥ ३२ ॥ महापार्श्वोमहातेजागदामादायवीर्यवान् ॥ विरराजगदापाणिःकुबेरइवसंयुगे ॥ ३३ ॥ तेप्रतस्थुर्महात्मानोऽमरावत्याःसुराइव ॥ तान्गजैश्चतुरंगैश्चरथैश्चांबुदनिःस्वनैः ॥ ३४ ॥ अनूत्पेतुर्महात्मानोराक्षसाःप्रवरायुधाः ॥ तेविरेजुर्महात्मानःकुमाराःसूर्यवर्चसः ॥ ३५ ॥ किरीटिनःश्रियाजुष्टाग्रहादीप्ताइवांबरे ॥ प्रगृहीताबभौतेषांशस्त्राणामावलिःशिवा ॥ ३६ ॥ शरदभ्रप्रतीकाशाहंसावलिरिवांबरे ॥ मरणंवापिनिश्चित्यशत्रूणांवापराजयम् ॥ ३७ ॥ इतिकृत्वामतिंवीराःसंजग्मुःसंयुगार्थिनः ॥ जगर्जुश्चप्रणेदुश्चचिक्षिपुश्चापिसायकान् ॥ ३८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ परिघं समादाय स्थितो देवांतको दोर्भ्यां गिरिं समुद्रमथने मंदरगिरिं परिगृह्य स्थितस्य विष्णोर्वपुर्विडंबयन्विरराजेत्यनुकर्षः ॥ ३२ ॥ ३३ ॥ अमरावत्याः सुरा इव लंकायाः प्रतस्थुरित्यन्वयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ निश्चित्य निश्चयेन मरणं शत्रुपराजयं वा करिष्याम इति शेषः ॥ ३७ ॥ चिक्षिपुः शत्रुविषयाक्षेपवचनान्यूचुः सायकानित्यस्य जगृहुरित्यनेनान्वयः ॥ ३८ ॥

शक्राशन्योरिव शक्राशनेरिव वा भीमो विक्रमो यस्य तं कुंभकर्णं जगाम ॥ ६७ ॥ चले गते चारुणी रमणीये कुंडले यस्मात्तच्चलचारुकुंडलम् ॥ ६८ ॥ कुंभकर्णशिर इति । कुंडलाभ्यामलंकृतं विना कृतम् । अलं
भूषणपर्याप्तिशक्तिवारणवाचक मित्यमरः । कुंभकर्णस्य शिरः । आरात्रौ प्रातःकाले आदित्ये उदिते गगनमध्यस्थचंद्रमा इव निष्प्रभं भातीत्यर्थः । अयं श्लोकः प्रक्षिप्त इति बहवः ॥ ६९ ॥ उच्चं प्राकारं लंकाया
इति शेषः । शिरः कर्तनवे गोत्थितं लंकायां पपात देहस्तु कर्तनवेगाविलुठन्समुद्रे पपात पतितः । यद्यपि । तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिवरोपमम् ॥ स पपात महावीरो दिव्यास्त्राभिहतो रणे ॥ तं दृष्ट्वा वृत्रसंकाशं
कुंभकर्णं तरस्विनम् ॥ गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयादितिमहाभारतोक्त्या लक्ष्मणतः कुंभकर्णवधः प्रतीयते तथापि न विरोधः । रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात् अतएव पूर्वं लक्ष्मणानुच

ससायकोराघवबाहुचोदितोदिशःस्वभासादशसंप्रकाशयन् ॥ विधूमवैश्वानरभीमदर्शनोजगामशक्राशनिभीमविक्रमम् ॥ ६७ ॥ सतन्महापर्वतकूटस
न्निभंसुवृत्तदंष्ट्रंचलचारुकुंडलम् ॥ चकर्तरक्षोधिपतेःशिरस्तदायथैववृत्रस्यपुरापुरंदरः ॥ ६८ ॥ कुंभकर्णशिरोभातिकुंडलालंकृतंमहत् ॥ आदित्येऽ
भ्युदितेरात्रौमध्यस्थइवचंद्रमाः ॥ ६९ ॥ तद्रामबाणाभिहतंपपातरक्षःशिरःपर्वतसन्निकाशम् ॥ बभंजचर्यागृहगोपुराणिप्राकारमुच्चंतमपातयच्च ॥
॥ १७० ॥ तच्चातिकायंहिमहत्प्रकाशंरक्षस्तदातोयनिधौपपात ॥ ग्राहान्परान्मीनवरान्भुजंगमान्ममर्दभूमिंचतथाविवेश ॥ ७१ ॥ तस्मिन्हतेब्राह्मणदे
वशत्रौमहाबलेसंयतिकुंभकर्णे ॥ चचालभूर्भूमिधराश्चसर्वेहर्षाच्चदेवास्तुमुलंप्रणेदुः ॥ ७२ ॥ ततस्तुदेवर्षिमहर्षिपन्नगाःसुराश्चभूतानिसुपर्णगुह्यकाः ॥
सयक्षगंधर्वगणानभोगताःप्रहर्षितारामपराक्रमेण ॥ ७३ ॥ ततस्तुतेतस्यवधेनभूरिणामनस्विनोनैर्ऋतराजबांधवाः ॥ विनेदुरुच्चैर्व्यथितारघूत्तमंह
रिंसमीक्ष्यैवयथामतंगजाः ॥ ७४ ॥ सदेवलोकस्यतमोनिहत्यसूर्योयथाराहुमुखाद्विमुक्तः ॥ तथाव्यभासीद्धरिसैन्यमध्येनिहत्यरामोयुधिकुंभकर्ण
म् ॥ १७५ ॥ प्रहर्षमीयुर्बहवश्चवानराःप्रबुद्धपद्मप्रतिमैरिवाननैः ॥ अपूजयन्राघवमिष्टभागिनंहतेरिपौभीमबलेनृपात्मजम् ॥ ७६ ॥ सकुंभकर्णंसुरसै
न्यमर्दनंमहत्सुयुद्धेषुकदाचनाजितम् ॥ ननंदहत्वाभरताग्रजोरणेमहासुरंवृत्रमिवामराधिपः ॥ १७७ ॥ इत्यार्षेश्रीमद्रा० वा० आ० यु० सप्तष
ष्टितमःसर्गः ॥ ६७ ॥ कुंभकर्णंहतंदृष्ट्वाराघवेणमहात्मना ॥ राक्षसाराक्षसेंद्रायरावणायन्यवेदयन् ॥ १ ॥

र इत्यत्र लक्ष्मणसहित इति व्याख्यातम् । प्राधान्यात्त्वत्र रामस्यैव तद्धंतृत्वोक्तिः । लक्ष्मणसाहित्येन हननात्तु व्यासो लक्ष्मणस्य हंतृत्वमुक्तवान् ॥ १७० ॥ ७१ ॥ ॥ ७२ ॥ ७२ ॥
भूरिणा महता ॥ ७४ ॥ देवलोकस्य आकाशस्य मध्ये इति शेषः । व्यभासीत् विशेषेण भाति स्म ॥ ७५ ॥ प्रबुद्धपद्मप्रतिमैरिव प्रबुद्धपद्मरूपैरिव । अतो नेवशब्दवैयर्थ्यम् । इष्टभा
गिनम् इष्टप्राप्तिमंतम् ॥ ७६ ॥ कदाचन न कदाप्यजयवंतम् ॥ १७७ ॥ सँच्छ्रायमानः ॥ धनुरमानः ॥ २०९ ॥ कतकरी० ॥ ६१ ॥ अत्र दिनद्वयेन कुंभकर्णोत्थानं ततः सप्तमवासरे वध इति भाद्रपदपू
र्णिमायामेतद्वध इति प्राग्संमतिपूर्वकमग्रे स्फुटीभविष्यति ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥ कुंभकर्णमिति ॥ १ ॥

कालसंकाशः कुंभकर्णः कालकर्म मृत्युः समुद्रमर्धप्रविष्टेन कबंधरूपेण कायेनोपलक्षितः । मुहूर्तं प्रतपित्वा विक्रम्य ॥ २ ॥ ३ ॥ निकृत्तनासाकर्णत्वादिगुणेन शरीरेण शिरोलक्षणेन लंकाद्वारं रुद्ध्वा पर्वतोपमः कुंभकर्णो रामतेजसा प्रशांत इति पूर्वश्लोकेनान्वयः ॥ ४ ॥ अगंडभूतः । अशिरःपाणिपादस्तु कबंधोऽगंड उच्यते । विवृतो विवृतकायः अवस्त्रत्वात् । दावदग्धो द्रुम इव प्रशांत इत्यन्वयः ॥ ५ ॥ ६ ॥ देवांतकादयो रावणपुत्राः ॥ ७ ॥ महोदरमहापार्श्वौ विमातृजौ भ्रातरौ तस्य ॥ ८ ॥ ९ ॥ १० ॥ बांधवानां च शल्यमनुद्धृत्येन्वयः ॥ ११ ॥ अहं नास्मि अहमपि मृतप्राय इत्यर्थः । सुरासुरात्सुरासुरेभ्यः ॥ १२ ॥ १३ ॥

राजन्सकालसंकाशःसंयुक्तःकालकर्मणा ॥ विद्राव्यवानरींसेनांभक्षयित्वाचवानरान् ॥ २ ॥ प्रतपित्वामुहूर्तंतुप्रशांतोरामतेजसा ॥ कायेनार्धप्रविष्टेनसमुद्रंभीमदर्शनम् ॥ ३ ॥ निकृत्तनासाकर्णेनविक्षरद्रुधिरेणच ॥ रुद्ध्वाद्वारंशरीरेणलंकायाःपर्वतोपमः ॥ ४ ॥ कुंभकर्णस्तवभ्राताकाकुत्स्थशरपीडितः ॥ अगंडभूतोविवृतोदावदग्धइवद्रुमः ॥ ५ ॥ श्रुत्वाविनिहतंसंख्येकुंभकर्णंमहाबलम् ॥ रावणःशोकसंतप्तोमुमोहचपपातच ॥ ६ ॥ पितृव्यंनिहतंश्रुत्वादेवांतकनरांतकौ ॥ त्रिशिराश्चातिकायश्चरुरुदुःशोकपीडिताः ॥ ७ ॥ भ्रातरंनिहतंश्रुत्वारामेणाक्लिष्टकर्मणा ॥ महोदरमहापार्श्वौशोकाक्रान्तौबभूवतुः ॥ ८ ॥ ततःकृच्छ्रात्समासाद्यसंज्ञांराक्षसपुंगवः ॥ कुंभकर्णवधाद्दीनोविललापाकुलेंद्रियः ॥ ९ ॥ हावीररिपुदर्पघ्नकुंभकर्णमहाबल ॥ त्वंमांविहायवैदैवाद्यातोसियमसादनम् ॥ १० ॥ ममशल्यमनुद्धृत्यबांधवानांमहाबल ॥ शत्रुसैन्यंप्रताप्यैकःक्वमांसंत्यज्यगच्छसि ॥ ॥ ११ ॥ इदानींखल्वहंनास्मियस्यमेपतितोभुजः ॥ दक्षिणोयंसमाश्रित्यनबिभेमिसुरासुरात् ॥ १२ ॥ कथमेवंविधोवीरोदेवदानवदर्पहा ॥ कालाग्निप्रतिमोह्यद्यराघवेणरणेहतः ॥ १३ ॥ यस्यतेवज्रनिष्पेषोनकुर्याद्व्यसनंसदा ॥ सकथंरामबाणार्तःप्रसुप्तोसिमहीतले ॥ १४ ॥ एतेदेवगणाःसार्धमृषिभिर्गगनेस्थिताः ॥ निहतंत्वांरणेदृष्ट्वानिनदंतिप्रहर्षिताः ॥ १५ ॥ ध्रुवमद्यैवसंहृष्टालब्धलक्षाःप्लवंगमाः ॥ आरोक्ष्यंतीहदुर्गाणिलंकाद्वाराणिसर्वशः ॥ १६ ॥ राज्येननास्तिमेकार्यंकिंकरिष्यामिसीतया ॥ कुंभकर्णविहीनस्यजीवितेनास्तिमेमतिः ॥ १७ ॥ यद्यहंभ्रातृहंतारंनहन्मियुधिराघवम् ॥ ननुमेमरणंश्रेयोनचेदंव्यर्थजीवितम् ॥ १८ ॥ अद्यैवतंगमिष्यामिदेशंयत्रानुजोमम ॥ नहिभ्रातॄन्समुत्सृज्यक्षणंजीवितुमुत्सहे ॥ १९ ॥ देवाहिमांहसिष्यंतिदृष्ट्वापूर्वापकारिणम् ॥ कथमिंद्रंजयिष्यामिकुंभकर्णहतेत्वयि ॥ २० ॥ तदिदंमामनुप्राप्तंविभीषणवचःशुभम् ॥ यदज्ञानान्मयातस्यनगृहीतंमहात्मनः ॥ २१ ॥ विभीषणवचस्तावत्कुंभकर्णप्रहस्तयोः ॥ विनाशोयंसमुत्पन्नोमांव्रीडयतिदारुणः ॥ २२ ॥

वज्रनिष्पेषस्तदाघातोपि यस्य व्यसनं दुःखं न कुर्यात् ॥ १४ ॥ १५ ॥ लब्धलक्षाः लब्धावसराः ॥ १६ ॥ जीविते नास्ति मे मतिः सजीवतयावस्थाने बुद्धिर्नास्तीत्यर्थः ॥ १७ ॥ १८ ॥ भ्रातॄनित्यनेन खरादयोप्यनुस्मृता इति ज्ञायते ॥ १९ ॥ २० ॥ २१ ॥ यावद्यदारभ्य कुंभकर्णप्रहस्तयोर्दारुणोयं विनाश उत्पन्नस्तावत्तदारभ्य विभीषणवचो मां व्रीडयतीत्यर्थः । इष्टं भ्रातृवचो न गृहीतमिति लज्जितोस्मी

कृच्छ्रगतत्वेपि मया नायं मोचयितुमुचित इत्याह मया त्विति॥७९॥कांक्षिष्ये प्रतीक्षिष्ये । तस्मात्क्षणं प्रतीक्षिष्ये इति पाठांतरम् । मोक्षितस्य कृतमोक्षणस्य विक्रमं तु द्रक्ष्यामीति शेषः॥८०॥८१॥पुष्पाग्र्यव र्षैरुत्तमपुष्पवर्षैः ॥ ८२ ॥ लाजगंधोदवर्षैः सिच्यमानः दैवगत्या मोहनिवृत्तये सुग्रीव इति शेषः ॥ ८३ ॥ ८४ ॥ संप्रति कर्तुं सम्यक्प्रतिकर्तुम् ॥ ८५ ॥ खरैस्तीक्ष्णैः कराग्रैर्नखैः कर्णौ लुलुंचेति शेषः

मयातुमोक्षितस्यास्यसुग्रीवस्यमहात्मनः ॥ अप्रीतिश्चभवेत्कष्टाकीर्तिनाशश्चशाश्वतः ॥ ७९ ॥ तस्मान्मुहूर्तंकांक्षिष्येविक्रमंमोक्षितस्यतु ॥ भिन्नं चवानरानीकंतावदाश्वासयाम्यहम् ॥८०॥ इत्येवंचिंतयित्वाथहनूमान्मारुतात्मजः ॥ भूयःसंस्तंभयामासवानराणांमहाचमूम् ॥ ८१ ॥ सकुंभकर्णो थविवेशलंकांस्फुरंतमादायमहाहरिंतम् ॥ विमानचर्यागृहगोपुरस्थैःपुष्पाग्र्यवर्षैरभिपूज्यमानः ॥ ८२ ॥ लाजगंधोदवर्षैस्तुसेव्यमानःशनैःशनैः ॥ राजवीथ्यास्तुशीतत्वात्संज्ञांप्रापमहाबलः ॥ ८३ ॥ ततःससंज्ञामुपलभ्यकृच्छ्राद्बलीयसस्तस्यभुजांतरस्थः ॥ अवेक्षमाणःपुरराजमार्गंविचिंतयामा समुहुर्महात्मा ॥८४॥ एवंगृहीतेनकथंनुनामशक्यंमयासंप्रतिकर्तुमद्य ॥ तथाकरिष्यामियथाहरीणांभविष्यतीष्टंचहितंचकार्यम् ॥८५॥ ततःकराग्रैः सहसासमेत्यराजाहरीणाममरेंद्रशत्रोः ॥ खरैश्चकर्णौदशनैश्चनासांददंशपादैर्विददारपार्श्वौ ॥ ८६ ॥ सकुंभकर्णोहृतकर्णनासोविदारितस्तेनरदैर्नखै श्च ॥ रोषाभिभूतःक्षतजार्द्रगात्रःसुग्रीवमाविध्यपिपेषभूमौ ॥ ८७ ॥ सभूतलेभीमबलाभिपिष्टःसुरारिभिस्तैरभिहन्यमानः ॥ जगामखंकंदुकवज्जवे नपुनश्चरामेणसमाजगाम ॥८८॥ कर्णनासाविहीनस्तुकुंभकर्णोमहाबलः ॥ रराजशोणितोत्सिक्तोगिरिःप्रस्रवणैरिव ॥ ८९ ॥ शोणितार्द्रोमहाकायो राक्षसोभीमदर्शनः ॥ आमर्षाच्छोणितोद्गारीशुशुभेरावणानुजः ॥ ९० ॥ नीलांजनचयप्रख्यःससंध्यइवतोयदः ॥ युद्धायाभिमुखोभीमोमनश्चक्रेनि शाचरः ॥ ९१ ॥ गतेचतस्मिन्सुरराजशत्रुःक्रोधात्प्रदुद्रावरणायभूयः ॥ अनायुधोस्मीतिविचिंत्यरौद्रोघोरंतदामुद्गरमाससाद ॥ ९२ ॥ ततः सपुर्याःसहसामहात्मानिष्क्रम्यतद्वानरसैन्यमुग्रम् ॥ बभक्षरक्षोयुधिकुंभकर्णःप्रजायुगांताग्निरिवप्रवृद्धः ॥ ९३ ॥ बुभुक्षितःशोणितमांसगृध्नुःप्रवि श्यतद्वानरसैन्यमुग्रम् ॥ चखादरक्षांसिहरीन्पिशाचानृक्षांश्चमोहाद्युधिकुंभकर्णः ॥ यथैवमृत्युर्हरतेयुगांतेसभक्षयामासहरींश्चमुख्यान् ॥ ९४ ॥ एकंद्वौ त्रीन्बहून्क्रुद्धोवानरान्सहराक्षसैः ॥ समादायैकहस्तेनप्रचिक्षेपत्वरन्मुखे ॥ ९५ ॥ संप्रस्रवत्तदामेदःशोणितंचमहाबलः ॥ वध्यमानोनगेंद्राग्रैर्भक्षया मासवानरान् ॥ ९६ ॥ तेभक्ष्यमाणाहरयोरामंजग्मुस्तदागतिम् ॥ कुंभकर्णोभृशंक्रुद्धःकपीन्खादन्प्रधावति ॥९७॥ शतानिसप्तचाष्टौचविंशत्त्रिंशत्तथै वच ॥ संपरिष्वज्यबाहुभ्यांखादन्विपरिधावति॥ ९८ ॥ मेदोवसाशोणितादिग्धगात्रःकर्णावसक्तग्रथितांत्रमालः ॥ ववर्षशूलानिसुतीक्ष्णदंष्ट्रःकालो युगांतस्थइवप्रवृद्धः ॥ ९९ ॥

पादैः पादनखैः ॥ ८६ ॥ ८७ ॥ सुरारिभिः राक्षसैः ॥ ८८ ॥ ८९ ॥ ९० ॥ नीलांजनेत्यनेननिध्यंजनादिव्यावृत्तिः ॥ ९१ ॥ ९२ ॥ ९३ ॥ रक्षआदेरपि खादने हेतुर्मोहादिति । मद्यादिनेव रक्त पानजमदैवबश्यादिति भावः । यथा मृत्युर्हरते तथा स भक्षयामासेत्यर्थः ॥९४॥९५॥ संप्रस्रवत् अडभाव आर्षः । भक्षितवानरसंबंधिशोणितादि ॥९६॥ गतिं शरणम् ॥९७॥९८॥ कर्णावसक्तेत्यनेनाधोभागे एव

कर्णलुंचनं सुग्रीवेण कृतमिति गम्यते । कर्णावसक्ता ग्रथिताः परस्परसंलग्ना अंत्रमाला यस्य सः ॥९९॥१००॥१॥ पीड्यमानः स राक्षसस्तदस्त्रं विशेषमस्त्रांतरेण विगतशेषं चकारेत्यर्थः ॥२॥३॥४॥५॥६॥७॥

तस्मिन्कालेसुमित्रायाःपुत्रःपरबलार्दनः ॥ चकारलक्ष्मणःक्रुद्धोयुद्धंपरपुरंजयः ॥ १०० ॥ सकुंभकर्णस्यशरान्शरीरेसप्तवीर्यवान् ॥ निचखानाददे चान्यान्विससर्जचलक्ष्मणः ॥ १ ॥ पीड्यमानस्तदस्त्रंतुविशेषंतत्सराक्षसः ॥ ततश्चुकोपबलवान्सुमित्रानंदवर्धनः ॥ २ ॥ अथास्यकवचंशुभ्रंजांबूनदमयंशुभम् ॥ प्रच्छादयामासशरैःसंध्याभ्रमिवमारुतः ॥ ३ ॥ नीलांजनचयप्रख्यःशरैःकांचनभूषणैः ॥ आपीड्यमानःशुशुभेमेघैःसूर्यइवांशुमान् ॥ ४ ॥ ततःसराक्षसोभीमःसुमित्रानंदवर्धनम् ॥ सावज्ञमेवप्रोवाचवाक्यंमेघौघनिःस्वनः ॥ ५ ॥ अंतकस्याप्यकष्टेनयुधिजेतारमाहवे ॥ युध्यतामामभीतेनख्यापितावीरतात्वया ॥६॥ प्रगृहीतायुधस्येहमृत्योरिवमहामृधे ॥ तिष्ठन्नप्यग्रतःपूज्यःकिमुयुद्धप्रदायकः ॥ ७ ॥ ऐरावतंसमारूढोवृतःसर्वामरैःप्रभुः ॥ नैवशक्रोपिसमरेस्थितपूर्वःकदाचन॥८॥अद्यत्वयाहंसौमित्रेबालेनापिपराक्रमैः ॥ तोषितोगंतुमिच्छामित्वामनुज्ञाप्यराघवम् ॥ ९ ॥ यत्तुवीर्यबलोत्साहैस्तोषितोऽहंरणेत्वया ॥ राममेवैकमिच्छामिहंतुंयस्मिन्हतेहतम् ॥ ११० ॥ रामेमयात्रनिहतेयेन्येस्थास्यंतिसंयुगे ॥ तानहंयोधयिष्यामिस्वबलेनप्रमाथिना ॥ ११ ॥ इत्युक्तवाक्यंतद्रक्षःप्रोवाचस्तुतिसंहितम् ॥ मृधेघोरतरंवाक्यंसौमित्रिःप्रहसन्निव ॥ १२ ॥ यस्त्वंशक्रादिभिर्देवैरसह्यःप्राप्यपौरुषम् ॥ तत्सत्यंनान्यथावीरदृष्टस्तेद्यपराक्रमः ॥ १३ ॥ एषदाशरथीरामस्तिष्ठत्यद्रिरिवाचलः ॥ इतिश्रुत्वाह्यनादृत्यलक्ष्मणंसनिशाचरः ॥ १४ ॥ अतिक्रम्यचसौमित्रिंकुंभकर्णोमहाबलः ॥ राममेवाभिदुद्रावकंपयन्निवमेदिनीम् ॥ १५ ॥ अथदाशरथीरामोरौद्रमस्त्रंप्रय[illegible]न् ॥ कुंभकर्णस्यहृदयेससर्जनिशितान्छरान् ॥ १६ ॥ तस्यरामेणविद्धस्यसहसाभिप्रधावतः ॥ अंगारमिश्राःक्रुद्धस्यमुखान्निश्चेरुरर्चिषः ॥ १७ ॥ रामास्त्रविद्धोघोरंवैनदन्राक्षसपुंगवः ॥ अभ्यधावततंक्रुद्धोहरीन्विद्रावयन्रणे ॥१८॥ तस्योरसिनिमग्नास्तेशरावर्हिणवाससः॥ हस्ताच्चास्यपरिभ्रष्टागदाचोर्व्यांपपातह ॥ १९ ॥ आयुधानिचसर्वाणिविप्रकीर्यंतभूतले॥ सनिरायुधमात्मानंयदामेनेमहाबलः ॥ १२० ॥ मुष्टिभ्यांचकराभ्यांचचकारकदनंमहत् ॥ सबाणैरतिविद्धांगःक्षतजेनसमुक्षितः ॥ रुधिरंपरिसुस्रावगिरिःप्रस्रवणंयथा॥ २१ ॥ सतीव्रेणचकोपेनरुधिरेणचमूर्छितः ॥ वानरान्राक्षसानृक्षान्खादन्सपरिधावति ॥२२॥ अथशृंगंसमाविध्यभीमंभीमपराक्रमः ॥ चिक्षेपराममुद्दिश्यबलवानंतकोपमः ॥ अप्राप्तमंतरारामःसप्तभिस्तमजिह्मगैः ॥ २३ ॥

॥ ८ ॥ ९ ॥ ११० ॥ ११॥१२॥१३॥१४॥१५॥१६॥१७॥ अभ्यधावत तं रामं विसृज्येति शेषः ॥ १८ ॥ ते रौद्रास्त्रप्रयोजिताः शराः ॥१९॥१२० ॥ प्रस्रवणं निर्झरः ॥ २१ ॥२२॥२३॥

ततो धर्मात्मा रामस्तस्य महत्तच्छृंगमंतरा मध्ये मार्गे सप्तभिरजिह्मगत्वादिगुणविशिष्टैः शरैश्चिच्छेद ॥ २४ ॥ २५ ॥ योगानुपायान् अनेन वधकाले लक्ष्मणसाहित्यं रामस्य गम्यते ॥ २६ ॥ २७ ॥
॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ राक्षसं रुष्टोयमिति मत्वा वेगेन समुत्पपात ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ लक्ष्मणानुचरः बहुव्रीहिः लक्ष्मणसहितः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

ततस्तुरामोधर्मात्मातस्यशृंगंमहत्तदा ॥ शरैःकांचनचित्रांगैश्चिच्छेदभरताग्रजः ॥ २४ ॥ तन्मेरुशिखराकारैर्द्योतमानमिवश्रिया ॥ द्वेशतेवानरा
णांचपतमानमपातयत् ॥ २५ ॥ तस्मिन्कालेसधर्मात्मालक्ष्मणोराममब्रवीत् ॥ कुंभकर्णवधेयुक्तोयोगान्परिमृशन्बहून् ॥ २६ ॥ नैवायंवानरा
न्राजन्नविजानातिराक्षसान् ॥ मत्तःशोणितगंधेनस्वान्परांश्चैवखादते ॥ २७ ॥ साध्वेनमधिरोहंतुसर्वतोवानरर्षभाः ॥ यूथपाश्चयथामुख्यास्तिष्ठंत्व
स्मिन्समंततः ॥ २८ ॥ अप्ययंदुर्मतिःकालेगुरुभारप्रपीडितः ॥ प्रचरन्राक्षसोभूमौनान्यान्हन्यात्प्लवंगमान् ॥ २९ ॥ तस्यतद्वचनंश्रुत्वाराजपु
त्रस्यधीमतः ॥ तेसमारुरुहुर्हृष्टाःकुंभकर्णंमहाबलाः ॥ ३० ॥ कुंभकर्णस्तुसंक्रुद्धःसमारूढैःप्लवंगमैः ॥ व्यधूनयत्तान्वेगेनदुष्टहस्तीवहस्तिपान् ॥
॥ ३१ ॥ तान्दृष्ट्वानिर्धुतान्रामोरुष्टोऽयमितिराक्षसम् ॥ समुत्पपातवेगेनधनुरुत्तममाददे ॥ ३२ ॥ क्रोधरक्तेक्षणोधीरोनिर्दहन्निवचक्षुषा ॥ राघवो
राक्षसंवेगादभिदुद्राववेगितः ॥ ३३ ॥ यूथपान्हर्षयन्सर्वान्कुंभकर्णबलार्दितान् ॥ ३४ ॥ सचापमादायभुजंगकल्पंदृढज्यमुग्रंतपनीयचित्रम् ॥
हरीन्समाश्वास्यसमुत्पपातरामोनिबद्धोत्तमतूणबाणः ॥ ३५ ॥ सवानरगणैस्तैस्तुवृतःपरमदुर्जयैः ॥ लक्ष्मणानुचरोवीरःसंप्रतस्थेमहाबलः ॥ ३६ ॥
सददर्शमहात्मानंकिरीटिनमरिंदमम् ॥ शोणितावृतरक्ताक्षंकुंभकर्णंमहाबलम् ॥ ३७ ॥ सर्वान्समभिधावंतंयथारुष्टंदिशागजम् ॥ मार्गमाणंहरीन्क्रुद्धं
राक्षसैःपरिवारितम् ॥ ३८ ॥ विंध्यमंदरसंकाशंकांचनांगदभूषणम् ॥ स्रवंतंरुधिरंवक्त्राद्वर्षमेघमिवोत्थितम् ॥ ३९ ॥ जिह्वयापरिलिह्यंतंसृक्किणीशो
णितोक्षिते ॥ मृद्नंतंवानरानीकंकालांतकयमोपमम् ॥ १४० ॥ तंदृष्ट्वाराक्षसश्रेष्ठंप्रदीप्तानलवर्चसम् ॥ विस्फारयामासतदाकार्मुकंपुरुषर्षभः ॥ ४१ ॥
सतस्यचापनिर्घोषात्कुपितोराक्षसर्षभः ॥ अमृष्यमाणस्तंघोषमभिदुद्रावराघवम् ॥ ४२ ॥ ततस्तुवातोद्धतमेघकल्पंभुजंगराजोत्तमभोगबाहुः ॥
तमापतंतंधरणीधराभमुवाचरामोयुधिकुंभकर्णम् ॥ ४३ ॥ आगच्छरक्षोधिपमाविषादमवस्थितोहंप्रगृहीतचापः ॥ अवेहिमांराक्षसवंशनाशनंयस्त्वं
मुहूर्ताद्भविताविचेताः ॥ ४४ ॥ रामोयमितिविज्ञायजहासविकृतस्वनम् ॥ अभ्यधावतसंक्रुद्धोहरीन्विद्रावयन्रणे ॥ ४५ ॥ दारयन्निवसर्वेषांहृदया
निवनौकसाम् ॥ प्रहस्यविकृतंभीमंसमेघस्तनितोपमम् ॥ ४६ ॥ कुंभकर्णोमहातेजाराघवंवाक्यमब्रवीत् ॥ नाहंविराधोविज्ञेयोनकबंधःखरोनच ॥
नवालीनचमारीचःकुंभकर्णःसमागतः ॥ ४७ ॥

कालांतकयमानामवस्थाकृतो भेद इति तीर्थः ॥ १४० ॥ ४१ ॥ ४२ ॥ भुजंगराजस्य शेषस्योत्तमो भोगस्तद्वद्बाहुर्यस्य सः ॥ ४३ ॥ हे रक्षोधिप विषादं मा आगच्छ योहं प्रगृहीतचापः स्थितस्तं
मां राममवेहि तस्मान्मामेवागच्छ मुहूर्तात्त्वं विचेता निर्जीवो मृतो भवितेति युधि रामः कुंभकर्णमुवाचेत्यन्वयः ॥ ४४ ॥ रामोयमिति विज्ञाय रामवचसेति शेषः ॥ ४५ ॥ ४६ ॥ ४७ ॥

॥ ४८ ॥ विकर्णनास इत्येतावन्मात्रेण मामवज्ञातुं दुर्बल इत्यवगंतुं नार्हसि नहि विराधादिवदहं लीलया त्वया सुयोधः अतो मयि यत्नवान् भवेत्यर्थः । ननु कथं न दुर्बलस्तत्राह स्वल्पापीति ॥ ४९ ॥
॥ १५० ॥ न व्यथते न विव्यथे ॥ ५१ ॥ व्यथयां प्रचक्रुरित्यार्ष आमंतस्य व्यवहितप्रयोगः ॥ ५२ ॥ वारिधाराः पर्वत इव सायकान् शरीरेण पिबन्निति योजना । एतेन सर्वे सायकाः शरीरे मग्ना

पश्यमेमुद्गरंभीमंसर्वकालायसंमहत् ॥ अनेननिर्जितादेवादानवाश्चपुरामया ॥ ४८ ॥ विकर्णनासइतिमांनावज्ञातुंत्वमर्हसि ॥ स्वल्पापिहिनमेपी डाकर्णनासाविनाशनात् ॥ ४९ ॥ दर्शयेक्ष्वाकुशार्दूलवीर्यंगात्रेषुमेनघ ॥ ततस्त्वांभक्षयिष्यामिदृष्टपौरुषविक्रमम् ॥ १५० ॥ सकुंभकर्णस्यवचो निशम्यरामःसपुंखान्विससर्जबाणान् ॥ तैराहतोवज्रसमप्रवेगैर्नचुक्षुभेनव्यथतेसुरारिः ॥५१॥ यैःसायकैःसालवरानिकृत्तावालीहतोवानरपुंगवश्च ॥ तेकुंभकर्णस्यतदाशरीरंवज्रोपमानव्यथयांप्रचक्रुः ॥५२ ॥ सवारिधाराइवसायकांस्तान्पिबञ्शरीरेणमहेंद्रशत्रुः ॥ जघानरामस्यशरप्रवेगंव्यावि ध्यतंमुद्गरमुग्रवेगम् ॥ ५३ ॥ ततस्तुरक्षःक्षतजावलिप्तंवित्रासनंदेवमहाचमूनाम् ॥ व्याविध्यतंमुद्गरमुग्रवेगंविद्रावयामासचमूंहरीणाम् ॥ ५४ ॥ वायव्यमादायततोपरास्त्रंरामःप्रचिक्षेपनिशाचराय ॥ समुद्गरंतेनजहारबाहुंसकृत्तबाहुस्तुमुलंननाद ॥ ५५ ॥ सतस्यबाहुर्गिरिशृंगकल्पःसमुद्गरो राघवबाणकृत्तः ॥ पपाततस्मिन्हरिराजसैन्येजघानतांवानरवाहिनींच ॥ ५६ ॥ तेवानराभग्नहतावशेषाःपर्यंतमाश्रित्यतदाविषण्णाः ॥ प्रपीडितांगा ददृशुःसुघोरंनरेंद्ररक्षोधिपसन्निपातम् ॥ ५७ ॥ सकुंभकर्णोस्त्रनिकृत्तबाहुर्महासिकृत्ताग्रइवाचलेंद्रः ॥ उत्पाटयामासकरेणवृक्षंततोभिदुद्रावरणेनरें द्रम् ॥ ५८ ॥ तंतस्यबाहुंसहतालवृक्षंसमुद्यतंपन्नगभोगकल्पम् ॥ ऐंद्रास्त्रयुक्तेनजघानरामोबाणेनजांबूनदचित्रितेन ॥ ५९ ॥ सकुंभकर्ण स्यभुजोनिकृत्तःपपातभूमौगिरिसन्निकाशः ॥ विचेष्टमानोनिजघानवृक्षाञ्शैलाञ्शिलावानरराक्षसांश्च ॥१६०॥ तंछिन्नबाहुंसमवेक्ष्यरामःसमापतंतं सहसानदं[illegible] द्वावर्धचंद्रौनिशितौप्रगृह्यचिच्छेदपादौयुधिराक्षसस्य ॥ ६१ ॥ तौतस्यपादौप्रदिशोदिशश्चगिरेर्गुहाश्चैवमहार्णवंच ॥ लंकांचसेनांक पिराक्षसानां[illegible]नादयंतौविनिपेततुश्च ॥ ६२ ॥ निकृत्तबाहुर्विनिकृत्तपादोविदार्यवक्त्रंवडवामुखाभम् ॥ दुद्रावरामंसहसाभिगर्जन्राहुर्यथाचंद्रमिवांत रिक्षे ॥ ६३ ॥ अपूरयत्तस्यमुखंशिताग्रैरामःशरैर्हेमपिनद्धपुंखैः ॥ संपूर्णवक्त्रोनशशाकवक्तुंचुकूजकृच्छ्रेणमुमूर्च्छचापि ॥ ६४ ॥ अथाददेसूर्यमरी चिकल्पंसब्रह्मदंडांतककालकल्पम् ॥ अरिष्टमैंद्रंनिशितंसुपुंखंरामःशरंमारुततुल्यवेगम् ॥१६५॥ तंवज्रजांबूनदचारुपुंखंप्रदीप्तसूर्यज्वलनप्रकाशम् ॥ महेंद्रवज्राशनितुल्यवेगंरामःप्रचिक्षेपनिशाचराय ॥ ६६ ॥

अपि न व्यथयंतीति दर्शितम् । उग्रवेगं तं मुद्गरं व्याविध्य भ्रामयित्वा रामस्य शरप्रवेगं जघान ॥ ५३ ॥ ततो रामं मुक्त्वा हरीणां चमूं विद्रावयामास ॥ ५४ ॥ समुद्गरं मुद्गरसहितम् । तेन वायव्यास्त्रेण ॥ ५५ ॥ ५६ ॥ भग्नहतावशेषाः भग्नसमुद्गरपतितबाहुहतावशिष्टाः पर्यंतमाश्रित्य समुद्गरबाहुपातप्रदेशसमीपमाश्रित्य विषण्णाः स्थिताः ॥ ५७ ॥ करेण कृत्तेतरेण ॥ ५८ ॥ ५९ ॥ विचेष्टमानः भूमा विति शेषः ॥ १६० ॥ ६१ ॥ विनादयंतौ दिगादीन्प्रतिध्वनयंतौ ॥ ६२ ॥ ६३ ॥ चुकूज अवर्णेन शब्देनेति शेषः ॥ ६४ ॥ अरिष्टं रिपूणामशुभदम् ॥ ६५ ॥ ६६ ॥

॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ लंकामलयात् लंकासमीपवर्तिमलयात् ॥ ६६ ॥ ६७ ॥ अभिगृह्य कक्षपुटे कृत्वा जहार सैन्यमध्यादन्यदेशं निनाय ॥ ६८ ॥ विशेषेण उच्छ्रितान्यु
न्नतानि घोराणि शृंगाणि यस्य सः ॥ ६९ ॥ ततस्तमादाय जगामेति । लंकामिति शेषः । त्रिदिवालयानां निनादं दुःखजं शृण्वन् ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ अथवैष वानरः



तच्छैलशृंगंसहसाविभिन्नंभुजांतरेतस्यतदाविशाले ॥ ततोविषेदुःसहसाप्लवंगारक्षोगणाश्चापिमुदाविनेदुः ॥ ६० ॥ सशैलशृंगाभिहतश्चुकोपननादरो
षाद्विवृत्यवक्त्रम् ॥ व्याविध्यशूलंचतडित्प्रकाशंचिक्षेपहर्यृक्षपतेर्वधाय ॥६१॥ तत्कुंभकर्णस्यभुजप्रणुन्नंशूलंशितंकांचनदामयष्टिम् ॥ क्षिप्रंसमुत्पत्य
निगृह्यदोर्भ्यांबभंजवेगेनसुतोऽनिलस्य ॥ ६२ ॥ कृतंभारसहस्रस्यशूलंकालायसंमहत् ॥ बभंजजानुमारोप्यतदाहृष्टःप्लवंगमः ॥ ६३ ॥ शूलंभग्नं
हनुमतादृष्ट्वावानरवाहिनी ॥ हृष्टाननादबहुशःसर्वतश्चापिदुद्रुवे ॥ ६४ ॥ बभूवाथपरित्रस्तोराक्षसोविमुखोऽभवत् ॥ सिंहनादंचतेचक्रुःप्रहृष्टावनगो
चराः ॥ मारुतिंपूजयांचक्रुर्दृष्ट्वाशूलंतथागतम् ॥६५॥ सतत्तथाभग्नमवेक्ष्यशूलंचुकोपरक्षोधिपतिर्महात्मा ॥ उत्पाट्यलंकामलयात्सशृंगंजघानसुग्री
वमुपेत्यतेन ॥ ६६ ॥ सशैलशृंगाभिहतोविसंज्ञःपपातभूमौयुधिवानरेंद्रः ॥ तंवीक्ष्यभूमौपतितंविसंज्ञंनेदुःप्रहृष्टायुधियातुधानाः ॥ ६७ ॥ समभ्युपे
त्याद्भुतघोरवीर्यसकुंभकर्णोयुधिवानरेंद्रम् ॥ जहारसुग्रीवमभिप्रगृह्ययथानिलोमेघमिवप्रचंडः ॥ ६८ ॥ सतंमहामेघनिकाशरूपमुत्पाट्यगच्छन्यु
धिकुंभकर्णः ॥ रराजमेरुप्रतिमानरूपोमेरुर्यथाव्युच्छ्रितघोरशृंगः ॥ ६९ ॥ ततस्तमादायजगामवीरःसंस्तूयमानोयुधिराक्षसेंद्रः ॥ शृण्वन्निनादं
त्रिदिवालयानांप्लवंगराजग्रहविस्मितानाम् ॥ ७० ॥ ततस्तमादायतदासमेनेहरींद्रमिंद्रोपममिंद्रवीर्यः ॥ अस्मिन्हृतेसर्वमिदंहृतंस्यात्सराघवंसैन्य
मितींद्रशत्रुः ॥ ७१ ॥ विद्रुतांवाहिनींदृष्ट्वावानराणामितस्ततः ॥ कुंभकर्णेनसुग्रीवंगृहीतंचापिवानरम् ॥ ७२ ॥ हनूमांश्चिंतयामासमतिमान्मारुता
त्मजः ॥ एवंगृहीतेसुग्रीवेकिंकर्तव्यंमयाभवेत् ॥ ७३ ॥ यद्धिन्याय्यंमयाकर्तुंतत्करिष्याम्यसंशयम् ॥ भूत्वापर्वतसंकाशोनाशयिष्यामिराक्षसम् ॥
॥ ७४ ॥ मयाहतेसंयतिकुंभकर्णेमहाबलेमुष्टिविशीर्णदेहे ॥ विमोचितेवानरपार्थिवेचभवंतुहृष्टाःप्लवगाःसमग्राः ॥ ७५ ॥ अथवास्वयमप्येषमोक्षं
प्राप्स्यतिवानरः ॥ गृहीतोऽयंयदिभवेत्त्रिदशैःसासुरोरगैः ॥ ७६ ॥ मन्येनतावदात्मानंबुध्यतेवानराधिपः ॥ शैलप्रहाराभिहतःकुंभकर्णेनसंयुगे ॥
॥ ७७ ॥ अयंमुहूर्तात्सुग्रीवोलब्धसंज्ञोमहाहवे ॥ आत्मनोवानराणांचयत्पथ्यंतत्करिष्यति ॥ ७८ ॥



वानरराजो महाबलत्वात्स्वयमेव कुंभकर्णान्मोक्षं प्राप्स्यति यदि न मोचयिष्यत्यात्मानं तदा मोचयितव्यो मयेति क्षणमात्रं प्रतीक्ष्य स्थितः । सासुरोरगैस्त्रिदशैर्गृहीतोपि यद्ययं भवेत्तथापि महाबलत्वात्स्वयमेव
मोक्षं प्राप्स्यति किं पुनरनेन राक्षसापसदेनेति भावः ॥ ७६ ॥ कथं तर्हि नेदानीं मोचयतीत्यत्राह मन्ये इति । मोहवशादात्मानं परेण गृहीतं न बुध्यत इति मन्ये इत्यर्थः ॥ ७७ ॥ ७८ ॥

॥ ४८ ॥ विकर्णनास इत्येतावन्मात्रेण मामवज्ञातुं दुर्बल इत्यवगंतुं नार्हसि नहि विराधादिवदहं लीलया त्वया सुयोधः अतो मयि यत्नवान् भवेत्यर्थः । ननु कथं न दुर्बलस्तत्राह स्वल्पापीति ॥ ४९ ॥ ॥ १५० ॥ न व्यथते न विव्यथे ॥ ५१ ॥ व्यथयां प्रचक्रुरित्यार्षं आमंतस्य व्यवहितप्रयोगः ॥ ५२ ॥ वारिधाराः पर्वत इव सायकान् शरीरेण पिबन्निति योजना । एतेन सर्वे सायकाः शरीरे मग्ना

पश्यमेमुद्गरंभीमंसर्वकालायसंमहत् ॥ अनेननिर्जितादेवादानवाश्चपुरामया ॥ ४८ ॥ विकर्णनासइतिमांनावज्ञातुंत्वमर्हसि ॥ स्वल्पापिहिनमेपीडाकर्णनासाविनाशनात् ॥ ४९ ॥ दर्शयेक्ष्वाकुशार्दूलवीर्यंगात्रेषुमेनघ ॥ ततस्त्वांभक्षयिष्यामिदृष्टपौरुषविक्रमम् ॥ १५० ॥ सकुंभकर्णस्यवचोनिशम्यरामःसपुंखान्विससर्जबाणान् ॥ तैराहतोवज्रसमप्रवेगैर्नचुक्षुभेनव्यथतेसुरारिः ॥५१॥ यैःसायकैःसालवरानिकृत्तावालीहतोवानरपुंगवश्च ॥ तेकुंभकर्णस्यतदाशरीरंवज्रोपमानव्यथयांप्रचक्रुः ॥ ५२ ॥ सवारिधाराइवसायकांस्तान्पिबञ्शरीरेणमहेंद्रशत्रुः ॥ जघानरामस्यशरप्रवेगंव्याविध्यतंमुद्गरमुग्रवेगम् ॥ ५३ ॥ ततस्तुरक्षःक्षतजावलिप्तंवित्रासनंदेवमहाचमूनाम् ॥ व्याविध्यतंमुद्गरमुग्रवेगंविद्रावयामासचमूंहरीणाम् ॥ ५४ ॥ वायव्यमादायततोपरास्त्रंरामःप्रचिक्षेपनिशाचराय ॥ समुद्गरंतेनजहारबाहुंसकृत्तबाहुस्तुमुलंननाद ॥ ५५ ॥ सतस्यबाहुर्गिरिशृंगकल्पःसमुद्गरोराघवबाणकृत्तः ॥ पपाततस्मिन्हरिराजसैन्येजघानतांवानरवाहिनींच ॥ ५६ ॥ तेवानराभग्नहतावशेषाःपर्यंतमाश्रित्यतदाविषण्णाः ॥ प्रपीडितांगादद्दृशुःसुघोरंनरेंद्ररक्षोधिपसन्निपातम् ॥ ५७ ॥ सकुंभकर्णोस्त्रनिकृत्तबाहुर्महासिकृत्ताग्रइवाचलेंद्रः ॥ उत्पाटयामासकरेणवृक्षंततोभिदुद्रावरणेनरेंद्रम् ॥ ५८ ॥ तंतस्यबाहुंसहतालवृक्षंसमुद्यतंपन्नगभोगकल्पम् ॥ ऐंद्रास्त्रयुक्तेनजघानरामोबाणेनजांबूनदचित्रितेन ॥ ५९ ॥ सकुंभकर्णस्यभुजोनिकृत्तःपपातभूमौगिरिसन्निकाशः ॥ विचेष्टमानोनिजघानवृक्षाञ्शैलाञ्शिलावानरराक्षसांश्च ॥१६०॥ तंछिन्नबाहुंसमवेक्ष्यरामःसमापतंतंसहसानदं[illegible] द्वावर्धचंद्रौनिशितौप्रगृह्यचिच्छेदपादौयुधिराक्षसस्य ॥ ६१ ॥ तौतस्यपादौप्रदिशोदिशश्चगिरेर्गुहाश्चैवमहार्णवंच ॥ लंकांचसेनांकपिराक्षसानांविनादयंतौविनिपेततुश्च ॥ ६२ ॥ निकृत्तबाहुर्विनिकृत्तपादोविदार्यवक्त्रंवडवामुखाभम् ॥ दुद्रावरामंसहसाभिगर्जन्राहुर्यथाचंद्रमिवांतरिक्षे ॥ ६३ ॥ अपूरयत्तस्यमुखंशिताग्रैरामःशरैर्हेमपिनद्धपुंखैः ॥ संपूर्णवक्त्रोनशशाकवक्तुंचुकूजकृच्छ्रेणमुमूर्च्छचापि ॥ ६४ ॥ अथाददेसूर्यमरीचिकल्पंसब्रह्मदंडांतककालकल्पम् ॥ अरिष्टमैंद्रंनिशितंसुपुंखंरामःशरंमारुततुल्यवेगम् ॥१६५॥ तंवज्रजांबूनदचारुपुंखंप्रदीप्तसूर्यज्वलनप्रकाशम् ॥ महेंद्रवज्राशनितुल्यवेगंरामःप्रचिक्षेपनिशाचराय ॥ ६६ ॥

अपि न व्यथयंतीति दर्शितम् । उग्रवेगं तं मुद्गरं व्याविध्य भ्रामयित्वा रामस्य शरप्रवेगं जघान ॥ ५३ ॥ ततो रामं मुक्त्वा हरीणां चमूं विद्रावयामास ॥ ५४ ॥ समुद्गरं मुद्गरसहितम् । तेन वायव्यास्त्रेण ॥ ५५ ॥ ५६ ॥ भग्नहतावशेषाः भग्नसमुद्गरपतितबाहुहतावशिष्टाः पर्यंतमाश्रित्य समुद्गरबाहुपातप्रदेशसमीपमाश्रित्य विषण्णाः स्थिताः ॥ ५७ ॥ करेण कृत्तेतरेण ॥ ५८ ॥ ५९ ॥ विचेष्टमानः भूमाविति शेषः ॥ १६० ॥ ६१ ॥ विनादयंतौ दिगादीन्प्रतिध्वनयंतौ ॥ ६२ ॥ ६३ ॥ चुकूज अवर्णेन शब्देनेति शेषः ॥ ६४ ॥ अरिष्टं रिपूणामशुभदम् ॥ ६५ ॥ ६६ ॥

भूमानंदं भोक्ष्यामोऽनुभविष्यामः। जीवितं वीरलोकस्य मोक्ष्याम इतिपाठोऽपांक्तो नापि तत्रार्थसामंजस्यम्। तत्र हि ब्रह्मलोकस्य वसुमूल्यभूतं जीवितं मोक्ष्याम इत्यर्थं तीर्थ आह ॥ २५ ॥ ननु कथमपि जयप्रत्याशाभावेन स्थित्या न प्रयोजनमत आह न कुंभकर्ण इति ॥ २६ ॥ उद्दिष्टा महावीरेषु गणिता बहवो वयमेकेन भग्नाः पलायनेन यदि प्राणान् रक्षामहे तदा यशो नाशं गमिष्यति। यद्वोद्दिष्टा एते पलायिता इति जनैर्निर्दिष्टा इत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ अनुमानैर्नागपाशमुक्तिसप्ततालभेदरूपैर्जयानुमापकैः ॥ ३१ ॥ आज्ञाप्रतीक्षा युद्धानुज्ञाप्रतीक्षाः ॥ ३२ ॥ इति श्रीरामाभिरामे श्रीरा

नकुंभकर्णःकाकुत्स्थंदृष्ट्वाजीवन्गमिष्यति ॥ दीप्यमानमिवासाद्यपतंगोज्वलनंयथा ॥ २६॥ पलायनेनचोद्दिष्टाःप्राणान्रक्षामहेवयम् ॥ एकेनबहवो भग्नायशोनाशंगमिष्यति ॥ २७ ॥ एवंब्रुवाणंतंशूरमंगदंकनकांगदम् ॥ द्रवमाणास्ततोवाक्यमूचुःशूरविगर्हितम् ॥२८॥ कृतंनःकदनंघोरंकुंभकर्णे नरक्षसा ॥ नस्थानकालोगच्छामोदयितंजीवितंहिनः ॥ २९॥ एतावदुक्त्वावचनंसर्वेतेभेजिरेदिशः ॥ भीमंभीमाक्षमायांतंदृष्ट्वावानरयूथपाः ॥३०॥ द्रवमाणास्ततःशूरा अंगदेनवलीमुखाः॥ सांत्वनैश्चानुमानैश्चततःसर्वेनिवर्तिताः॥ ३१ ॥ प्रहर्षमुपनीताश्चवालिपुत्रेणधीमता ॥ आज्ञाप्रतीक्षास्तस्थुश्च सर्वेवानरयूथपाः ॥३२॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे षट्षष्टितमःसर्गः ॥६६॥ तेनिवृत्तामहाकायाःश्रुत्वांगदवचस्तदा नैष्ठिकींबुद्धिमास्थायसर्वेसंग्रामकांक्षिणः ॥ १ ॥ समुदीरितवीर्यास्तेसमारोपितविक्रमाः ॥ पर्यवस्थापितावाक्यैरंगदेनबलीयसा ॥ २ ॥ प्रयाता श्चगताहर्षमरणेकृतनिश्चयाः ॥ चक्रुःसुतुमुलंयुद्धंवानरास्त्यक्तजीविताः ॥३॥ अथवृक्षान्महाकायाःसानूनिसुमहांतिच ॥ वानरास्तूर्णमुद्यम्यकुंभकर्ण मभिद्रवन् ॥ ४ ॥ कुंभकर्णःसुसंक्रुद्धोगदामुद्यम्यवीर्यवान् ॥ धर्षयन्समहाकायःसमंताद्व्यक्षिपद्रिपून् ॥५॥ शतानिसप्तचाष्टौचसहस्राणिचवानराः॥ प्रकीर्णाःशेरतेभूमौकुंभकर्णेनताडिताः ॥ ६ ॥ षोडशाष्टौचदशचविंशत्रिंशत्तथैवच ॥ परिक्षिप्यचबाहुभ्यांखादन्सपरिधावति ॥ भक्षयन्भृशसंक्रुद्धो गरुडःपन्नगानिव ॥ ७ ॥ कृच्छ्रेणचसमाश्वस्ताःसंगम्यचततस्ततः ॥ वृक्षाद्रिहस्ताहरयस्तस्थुःसंग्राममूर्धनि ॥ ८ ॥ ततःपर्वतमुत्पाट्यद्विविदः प्लवगर्षभः ॥ दुद्रावगिरिशृंगाभंविलंबइवतोयदः ॥ ९ ॥ तंसमुत्पाट्यचिक्षेपकुंभकर्णायवानरः ॥ तमप्राप्यमहाकायंतस्यसैन्येपतत्ततः ॥ १० ॥ ममर्दाश्वान्गजांश्चापिरथांश्चापिगजोत्तमान् ॥ तानिचान्यानिरक्षांसिएवंचान्यद्गिरेःशिरः ॥ ११ ॥

मीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षट्षष्टितमः सर्गः ॥ ६६ ॥ ॥ अत्र सर्गावच्छेदोऽसांप्रदायिकः एकप्रकरणत्वाद् वृत्तभेदाभावाच्चेति कतकः। उक्तार्थानुवादस्ते निवृत्ता इति। नैष्ठिकीं स्थिरां निष्ठानाशस्तत्संबंधिनीं मरणपर्यवसायिनीमित्यर्थ इति तीर्थः ॥ १ ॥ समुदीरितवीर्याः समुदीरितविक्रमाः कथितात्मीयपूर्वपराक्रमाः समारोपितविक्रमा इति गृहीतविक्रमाः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥ विशेषेण लंबत इति विलंबः ॥ ९ ॥ तमप्राप्य तं कुंभकर्णं तस्य कुंभकर्णस्य सैन्ये ॥ १० ॥ तानि प्रसिद्धानि च रक्षांस्युद्दिश्य अन्यदेकं गिरेः शिरः शृंगं चिक्षेप ॥ ११ ॥

॥ १२ ॥ रथिनो राक्षसः शरैर्वानरेंद्राणां शिरांसि जघ्नुः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ हरीणामनीकं कर्म तस्य कुंभकर्णस्य पुरस्तात् ॥ १७ ॥ तेन हनुमन्मुक्तगिरिशृंगेण संचुक्षुभे ॥ १८ ॥ १९ ॥ ननाद भीमं शूलाभिघातजरुजेति शेषः । युगांते मेघस्तनितस्य यः स्वनस्तदुपमम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ स्पर्शानिव मालादिस्पर्शानिव वेदयानो



तच्छैलवेगाभिहतंहताश्वंहतसारथिम् ॥ रक्षसांरुधिरक्लिन्नंबभूवायोधनंमहत् ॥ १२ ॥ रथिनोवानरेंद्राणांशरैःकालांतकोपमैः ॥ शिरांसिनंदतां जह्नुःसहसाभीमनिःस्वनाः ॥ १३ ॥ वानराश्चमहात्मानःसमुत्पाट्यमहाद्रुमान् ॥ रथानश्वान्गजानुष्ट्रान्राक्षसानभ्यसूदयन् ॥ १४ ॥ हनूमाञ्छैलशृंगाणिशिलाश्चविविधान्द्रुमान् ॥ ववर्षकुंभकर्णस्यशिरस्यंबरमास्थितः ॥ १५ ॥ तानिपर्वतशृंगाणिशूलेनसबिभेदह ॥ बभंजवृक्षवर्षंचकुंभकर्णो महाबलः ॥ १६ ॥ ततोहरीणांतदनीकमुग्रंदुद्रावशूलंनिशितंप्रगृह्य ॥ तस्थौसतस्यापततःपुरस्तान्महीधराग्रंहनुमान्प्रगृह्य ॥ १७ ॥ सकुंभकर्णं कुपितोजघानवेगेनशैलोत्तमभीमकायम् ॥ संचुक्षुभेतेनतदाभिभूतोमेदार्द्रगात्रोरुधिरावसिक्तः ॥ १८ ॥ सशूलमाविध्यतडित्प्रकाशंगिरिर्यथाप्रज्वलिताग्निशृंगम् ॥ बाह्वंतरेमारुतिमाजघानगुहोचलंक्रौंचमिवोग्रशक्त्या ॥ १९ ॥ सशूलनिर्भिन्नमहाभुजांतरःप्रविह्वलःशोणितमुद्वमन्मुखात् ॥ ननादभीमंहनुमान्महाहवेयुगांतमेघस्तनितस्वनोपमम् ॥ २० ॥ ततोविनेदुःसहसाप्रहृष्टारक्षोगणास्तंव्यथितंसमीक्ष्य ॥ प्लवंगमास्तुव्यथिताभयार्ताःप्रदुद्रुवुःसंयतिकुंभकर्णात् ॥ २१ ॥ ततस्तुनीलोबलवान्पर्यवस्थापयन्बलम् ॥ प्रविचिक्षेपशैलाग्रंकुंभकर्णायधीमते ॥ २२ ॥ तदापतंतंसंप्रेक्ष्यमुष्टिनाभिजघानह ॥ मुष्टिप्रहाराभिहतंतच्छैलाग्रंव्यशीर्यत ॥ सविस्फुलिंगंसज्वालंनिपपातमहीतले ॥ २३ ॥ ऋषभःशरभोनीलोगवाक्षोगंधमादनः ॥ पंचवानरशार्दूलाःकुंभकर्णमुपाद्रवन् ॥ २४ ॥ शैलैर्वृक्षैस्तलैःपादैर्मुष्टिभिश्चमहाबलाः ॥ कुंभकर्णंमहाकायंनिजघ्नुःसर्वतोयुधि ॥ २५ ॥ स्पर्शानिवप्रहारांस्तान्वेदयानोनविव्यथे ॥ ऋषभंतुमहावेगंबाहुभ्यांपरिषस्वजे ॥ २६ ॥ कुंभकर्णभुजाभ्यांतुपीडितोवानरर्षभः ॥ निपपातर्षभोभीमःप्रमुखागतशोणितः ॥ २७ ॥ मुष्टिनाशरभंहत्वाजानुनानीलमाहवे ॥ आजघानगवाक्षंतुतलेनेंद्ररिपुस्तदा ॥ २८ ॥ दत्तप्रहारव्यथितामुमुहुःशोणितोक्षिताः ॥ निपेतुस्तेतुमेदिन्यांनिकृत्ताइवकिंशुकाः ॥ २९ ॥ तेषुवानरमुख्येषुपातितेषुमहात्मसु ॥ वानराणांसहस्राणिकुंभकर्णंप्रदुद्रुवुः ॥ ३० ॥ तंशैलमिवशैलाभाःसर्वेतुप्लवगर्षभाः ॥ समारुह्यसमुत्पत्यददंशुःप्लवगर्षभाः ॥ ३१ ॥ तंनखैर्दशनैश्चापिमुष्टिभिर्बाहुभिस्तथा ॥ कुंभकर्णंमहाबाहुंनिजघ्नुःप्लवगर्षभाः ॥ ३२ ॥ सवानरसहस्रैस्तुविचितःपर्वतोपमः ॥ रराजराक्षसव्याघ्रोगिरिरात्मरुहैरिव ॥ ३३ ॥

जानन् ॥ २६ ॥ प्रमुखेति । प्रकर्षेण मुखे आगतं शोणितं यस्य सः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ विचितो व्याप्तः । मूर्च्छित इति पाठांतरम् । आत्मरुहैर्वृक्षैः ॥ ३३ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ वज्रहस्तात्मजस्य वालिनः पुत्रोंगदः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ तदापतंतं पुंस्त्वमार्षम् ॥

बाहुभ्यांवानरान्सर्वान्प्रगृह्यसमहाबलः ॥ भक्षयामाससंक्रुद्धोगरुडःपन्नगानिव ॥ ३४ ॥ प्रक्षिप्ताःकुंभकर्णेनवक्रेपातालसन्निभे ॥ नासापुटाभ्यांसं
जग्मुःकर्णाभ्यांचैववानराः ॥ ३५ ॥ भक्षयन्भृशसंक्रुद्धोहरीन्पर्वतसन्निभः ॥ बभंजवानरान्सर्वान्संक्रुद्धोराक्षसोत्तमः ॥ ३६ ॥ मांसशोणितसं
क्लेदांकुर्वन्भूमिंसराक्षसः ॥ चचारहरिसैन्येषुकालाग्निरिवमूर्छितः ॥ ३७ ॥ वज्रहस्तोयथाशक्रःपाशहस्तइवांतकः ॥ शूलहस्तोबभौयुद्धेकुंभकर्णो
महाबलः ॥ ३८ ॥ यथाशुष्काण्यरण्यानिग्रीष्मेदहतिपावकः ॥ तथावानरसैन्यानिकुंभकर्णोददाहसः ॥ ३९ ॥ ततस्तेवध्यमानास्तुहतयूथाः
प्लवंगमाः ॥ वानराभयसंविग्नाविनेदुर्विकृतैःस्वरैः ॥ ४० ॥ अनेकशोवध्यमानाःकुम्भकर्णेनवानराः ॥ राघवंशरणंजग्मुर्व्यथिताभिन्नचेतसः ॥४१॥
प्रभग्नान्वानरान्दृष्ट्वावज्रहस्तात्मजात्मजः ॥ अभ्यधावतवेगेनकुंभकर्णंमहाहवे ॥ ४२ ॥ शैलशृंगंमहद्गृह्यविनदन्समुहुर्मुहुः ॥ त्रासयन्राक्षसान्सर्वा
न्कुंभकर्णपदानुगान् ॥ ४३ ॥ चिक्षेपशैलशिखरंकुंभकर्णस्यमूर्धनि ॥ सतेनाभिहतोमूर्ध्निशैलेनेंद्ररिपुस्तदा ॥ ४४ ॥ कुंभकर्णःप्रजज्वालकोपे
नमहतातदा ॥ सोभ्यधावतवेगेनवालिपुत्रममर्षणम् ॥ ४५ ॥ कुंभकर्णोमहानादस्त्रासयन्सर्ववानरान् ॥ शूलंससर्जवैरोषादंगदेतुमहाबलः ॥ ४६॥
तदापतंतंबलवान्युद्धमार्गविशारदः ॥ लाघवान्मोक्षयामासबलवान्वानरर्षभः ॥ ४७ ॥ उत्पत्यचैनंतरसातलेनोरस्यताडयत् ॥ सतेनाभिहतः
कोपात्प्रमुमोहाचलोपमः ॥ ४८ ॥ सलब्धसंज्ञोऽतिबलोमुष्टिंसंगृह्यराक्षसः ॥ अपहासेनाविक्षेपविसंज्ञःसपपातह ॥ ४९ ॥ तस्मिन्प्लवगशार्दूलेनिसं
ज्ञेपतितेभुवि ॥ तच्छूलंसमुपादायसुग्रीवमभिदुद्रुवे ॥ ५० ॥ तमापतंतंसंप्रेक्ष्यकुंभकर्णंमहाबलम् ॥ उत्पपाततदावीरःसुग्रीवोवानराधिपः ॥५१॥
सपर्वताग्रमुत्क्षिप्यसमाविध्यमहाबलः ॥ अभिदुद्राववेगेनकुंभकर्णंमहाबलम् ॥ ५२ ॥ तमापतंतंसंप्रेक्ष्यकुंभकर्णःप्लवंगमम् ॥ तस्थौविवृत्तसर्वां
गोवानरेंद्रस्यसंमुखः ॥ ५३ ॥ कपिशोणितदिग्धांगंभक्षयंतंमहाकपीन् ॥ कुंभकर्णंस्थितंदृष्ट्वासुग्रीवोवाक्यमब्रवीत् ॥ ५४ ॥ पातिताश्चत्वयावीराः
कृतंकर्मसुदुष्करम् ॥ भक्षितानिचसैन्यानिप्राप्तंतेपरमंयशः ॥ ५५ ॥ त्यजतद्वानरानीकंप्राकृतैःकिंकरिष्यसि ॥ सहस्वैकंनिपातंमेपर्वतस्यास्य
राक्षस॥५६॥ तद्वाक्यंहरिराजस्यसत्त्वधैर्यसमन्वितम्॥श्रुत्वाराक्षसशार्दूलःकुंभकर्णोऽब्रवीद्वचः॥५७॥प्रजापतेस्तुपौत्रस्त्वंतथैवर्क्षरजःसुतः ॥ धृतिपौ
रुषसंपन्नस्तस्माद्गर्जसिवानर॥५८॥सकुंभकर्णस्यवचोनिशम्यव्याविध्यशैलंसहसामुमोच ॥ तेनाजघानोरसिकुंभकर्णंशैलेनवज्राशनिसन्निभेन॥५९॥

॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ प्रजापतेः पौत्रः चतुर्मुखजृंभणजनितऋक्षरजःपुत्रत्वात्सुग्रीवस्य महापौरुषम् ॥ ५८ ॥ आविध्य संतोल्य ॥ ५९ ॥

॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ लंकामलयात् लंकासमीपवर्तिमलयात् ॥ ६६ ॥ ६७ ॥ अभिगृह्य कक्षपुटे कृत्वा जहार सैन्यमध्यादन्यदेशं निनाय ॥ ६८ ॥ विशेषेण उच्छ्रितान्यु न्नतानि घोराणि शृंगाणि यस्य सः ॥ ६९ ॥ ततस्तमादाय जगामेति । लंकामिति शेषः । त्रिदिवालयानां निनादं दुःखजं शृण्वन् ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ अथवैष वानरः



तच्छैलशृंगंसहसाविभिन्नंभुजांतरेतस्यतदाविशाले ॥ ततोविषेदुःसहसाप्लवंगारक्षोगणाश्चापिमुदाविनेदुः ॥ ६० ॥ सशैलशृंगाभिहतश्चुकोपननादरो षाच्चविवृत्यवक्त्रम् ॥ व्याविध्यशूलंचतडित्प्रकाशंचिक्षेपहर्यृक्षपतेर्वधाय ॥६१॥ तत्कुंभकर्णस्यभुजप्रणुन्नंशूलंशितंकांचनदामयष्टिम् ॥ क्षिप्रंसमुत्पत्य निगृह्यदोर्भ्यांबभंजवेगेनसुतोऽनिलस्य ॥ ६२ ॥ कृतंभारसहस्रस्यशूलंकालायसंमहत् ॥ बभंजजानुमारोप्यतदाहृष्टःप्लवंगमः ॥ ६३ ॥ शूलंभग्नं हनुमताहृष्ट्वावानरवाहिनी ॥ हृष्टाननादबहुशःसर्वतश्चापिदुद्रुवे ॥ ६४ ॥ बभूवाथपरित्रस्तोराक्षसोविमुखोऽभवत् ॥ सिंहनादंचतेचक्रुःप्रहृष्टावनगो चराः ॥ मारुतिंपूजयांचक्रुर्दृष्ट्वाशूलंतथागतम् ॥६५॥ सतत्तथाभग्नमवेक्ष्यशूलंचुकोपरक्षोधिपतिर्महात्मा ॥ उत्पाट्यलंकामलयात्सशृंगंजघानसुग्री वमुपेत्यतेन ॥ ६६ ॥ सशैलशृंगाभिहतोविसंज्ञःपपातभूमौयुधिवानरेंद्रः ॥ तंवीक्ष्यभूमौपतितंविसंज्ञंनेदुःप्रहृष्टायुधियातुधानाः ॥ ६७ ॥ समभ्युपे त्याद्भुतघोरवीर्यंसकुंभकर्णोयुधिवानरेंद्रम् ॥ जहारसुग्रीवमभिप्रगृह्ययथानिलोमेघमिवप्रचंडः ॥ ६८ ॥ सतंमहामेघनिकाशरूपमुत्पाट्यगच्छन्यु धिकुंभकर्णः ॥ रराजमेरुप्रतिमानरूपोमेरुर्यथाव्युच्छ्रितघोरशृंगः ॥ ६९ ॥ ततस्तमादायजगामवीरःसंस्तूयमानोयुधिराक्षसेंद्रः ॥ शृण्वन्निनादं त्रिदिवालयानांप्लवंगराजग्रहविस्मितानाम् ॥ ७० ॥ ततस्तमादायतदासमेनेहरींद्रमिंद्रोपममिंद्रवीर्यः ॥ अस्मिन्हृतेसर्वमिदंहृतंस्यात्सराघवंसैन्य मितींद्रशत्रुः ॥ ७१ ॥ विद्रुतांवाहिनींदृष्ट्वावानराणामितस्ततः ॥ कुंभकर्णेनसुग्रीवंगृहीतंचापिवानरम् ॥ ७२ ॥ हनूमांश्चिंतयामासमतिमान्मारुता त्मजः ॥ एवंगृहीतेसुग्रीवेकिंकर्तव्यंमयाभवेत् ॥ ७३ ॥ यद्धिन्याय्यंमयाकर्तुंतत्करिष्याम्यसंशयम् ॥ भूत्वापर्वतसंकाशोनाशयिष्यामिराक्षसम् ॥ ॥ ७४ ॥ मयाहतेसंयतिकुंभकर्णेमहाबलेमुष्टिविशीर्णदेहे ॥ विमोचितेवानरपार्थिवेचभवंतुहृष्टाःप्लवगाःसमग्राः ॥ ७५ ॥ अथवास्वयमप्येषमोक्षं प्राप्स्यतिवानरः ॥ गृहीतोऽयंयदिभवेत्त्रिदशैःसासुरोरगैः ॥ ७६ ॥ मन्येनतावदात्मानंबुध्यतेवानराधिपः ॥ शैलप्रहाराभिहतःकुंभकर्णेनसंयुगे ॥ ॥ ७७ ॥ अयंमुहूर्तात्सुग्रीवोलब्धसंज्ञोमहाहवे ॥ आत्मनोवानराणांचयत्पथ्यंतत्करिष्यति ॥ ७८ ॥

वानरराजो महाबलत्वात्स्वयमेव कुंभकर्णान्मोक्षं प्राप्स्यति यदि न मोचयिष्यत्यात्मानं तदा मोचयितव्यो मयेति क्षणमात्रं प्रतीक्ष्य स्थितः । सासुरोरगैस्त्रिदशैर्गृहीतोपि यद्ययं भवेत्तथापि महाबलत्वात्स्वयमेव मोक्षं प्राप्स्यति किं पुनरनेन राक्षसापसदेनेति भावः ॥ ७६ ॥ कथं तर्हि नेदानीं मोचयतीत्यत्राह मन्ये इति । मोहवशादात्मानं परेण गृहीतं न बुध्यत इति मन्ये इत्यर्थः ॥ ७७ ॥ ७८ ॥

राघमूलं हंतव्य इत्याह नापराध्यंतीति । ते नापराध्यंति स्वत इति शेषः । किंतु सा जातिर्वानरजातिरस्मद्विधानां पुरोयानानां विभूषणमलंकारः ॥ ४४ ॥ अतस्तैः सह पुररोधस्य मूलं राघव एव हंतव्यस्त स्मिन्हते सर्वं हतं भवति अतस्तमेव युधि वधिष्यामि ॥ ४५ ॥ रक्षसः वाक्यं श्रुत्वेति शेषः । नादं चक्रुः राक्षसा इति शेषः ॥ ४६ ॥ ४७ ॥ गर्दभारुणाः गर्दभधूम्राः ॥ ४८ ॥ सज्वालकवलैः सांगार पिंडैः ॥४९॥ नयनं वामम् ॥५०॥५१॥ अचिंतयन् अगणयन् ॥५२॥ तद्वहनक्षमवाहनाभावात् पद्भ्यामिति ॥५३॥५४॥५५॥५६॥ विपुलपरिघवानिति । शूलवदिदमप्यस्यायुधं किंकरदंडवान् किंकराः

पुररोधस्यमूलंतुराघवःसहलक्ष्मणः ॥ हतेतस्मिन्हतंसर्वंतंवधिष्यामिसंयुगे ॥ ४५ ॥ एवंतस्यब्रुवाणस्यकुंभकर्णस्यरक्षसः ॥ नादंचक्रुर्महाघोरंकंपयं तइवार्णवम् ॥४६॥ तस्यनिष्पततस्तूर्णंकुंभकर्णस्यधीमतः ॥ बभूवुर्घोररूपाणिनिमित्तानिसमंततः ॥४७॥ उल्काशनियुतामेघावभूवुर्गर्दभारुणाः॥ ससागरवनाचैववसुधासमकंपत ॥ ४८॥ घोररूपाःशिवानेदुःसज्वालकवलैर्मुखैः ॥ मंडलान्यपसव्यानिबबंधुश्चविहंगमाः ॥४९॥ निष्पपातचगृध्रो स्यशूलेवैप[illegible]च्छतः ॥ प्रास्फुरन्नयनंचास्यसव्योबाहुरकंपत ॥५०॥ निष्पपाततदाचोल्काज्वलंतीभीमनिःस्वना ॥ आदित्योनिष्प्रभश्चासीन्नवा तिचसुखोनिलः ॥ ५१ ॥ अचिंतयन्महोत्पातानुदितान्रोमहर्षणान् ॥ निर्ययौकुंभकर्णस्तुकृतांतबलचोदितः ॥ ५२ ॥ सलंघयित्वाप्राकारंपद्भ्यां पर्वतसन्निभः ॥ सददर्शघनप्रख्यंवानरानीकमद्भुतम् ॥ ५३ ॥ तेदृष्ट्वाराक्षसश्रेष्ठंवानराःपर्वतोपमम् ॥ वायुनुन्नाइवघनाययुःसर्वादिशस्तदा ॥ ५४ ॥ तद्वानरानीकमतिप्रचंडंदिशोद्रवद्भिन्नमिवाभ्रजालम् ॥ सकुंभकर्णःसमवेक्ष्यहर्षान्ननादभूयोघनवद्घनाभः ॥ ५५ ॥ तेतस्यघोरंनिनदंनिशम्ययथा निनादंदिविवारिदस्य ॥ पेतुर्धरण्यांबहवःप्लवंगानिकृत्तमूलाइवशालवृक्षाः ॥ ५६ ॥ विपुलपरिघवान्सकुंभकर्णोरिपुनिधनायविनिःसृतोमहात्मा ॥ कपिगणभयमाददत्सुभीमंप्रभुरिवकिंकरदंडवान्युगांते ॥ ५७ ॥ इत्यार्षे श्रीम० वा० आ० युद्धकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥ सलंघयित्वाप्रा कारंगिरिकूटोपमोमहान् ॥ निर्ययौनगरात्तूर्णंकुंभकर्णोमहाबलः ॥ १ ॥ ननादचमहानादंसमुद्रमभिनादयन् ॥ विजयन्निवनिर्घातान्विधमन्नि वपर्वतान् ॥ २ ॥ तमवध्यंमघवतायमेनवरुणेनवा ॥ प्रेक्ष्यभीमाक्षमायांतंवानराविप्रदुद्रुवुः ॥ ३ ॥ तांस्तुविप्रद्रुतान्दृष्ट्वाराजपुत्रोंगदोब्रवीत् ॥ नलंनीलंगवाक्षंचकुमुदंचमहाबलम् ॥ ४ ॥ आत्मनस्तानिविस्मृत्यवीर्याण्यभिजनानिच ॥ क्वगच्छतभयत्रस्ताःप्राकृताहरयोयथा ॥ ५ ॥ साधुसौ म्यानिवर्तध्वंकिंप्राणान्परिरक्षथ ॥ नालंयुद्धायवैरक्षोमहतीयंविभीषिका ॥ ६ ॥

संहारपरिकराः कालदंडा अस्य संति तथा युगांते प्रभुः कालाग्निरुद्र इव विनिःसृतः ॥ ५७ ॥ सँमॆमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥ कतकरी० ॥ ६० ॥ स इति ॥ १ ॥ निर्घातान् अशनिघोषान् ॥ २ ॥ ३ ॥ ४ ॥ आत्मनः आत्मसंबंधीनि वीर्याणि पराक्रमान् ॥ ५ ॥ एतद्रक्षोयुद्धायास्माभिर्नालं न समर्थम् ॥ ६ ॥

॥ ७ ॥ ८ ॥ निवर्त्य निवृत्ता भूत्वा ॥ ९ ॥ प्रांशुभिरुच्चैः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ नावलोकयन् अग्रपृष्ठदेशं नालोकितवंतः ॥ १४ ॥ १५ ॥ स्थलानि प्रदुद्रुवुरित्यनुकर्षः ॥ १६ ॥ निपेतुः युद्धार्थमिति शेषः ॥ १७ ॥ १८ ॥ युद्धे भग्नानां वो युष्माकं सर्वां महीं परिक्रम्यापि गत्वापि स्थानं प्रतिष्ठां न पश्यामि । सुग्रीवाज्ञां विना गतानां वध एव सर्वथेति भावः । अतः सर्वे निवर्तध्वम् ॥ १९ ॥ हेऽसंगगतिपौरुषाः निरायुधानां पाषाणवृक्षाद्यायुधरहितानां द्रवतां दारा उपहसिष्यंति स स्वदारापहासो जीवतां युष्माकं घातो मृत्योरप्यधिकदुःखदो भविष्यति ॥ २० ॥ यद्यस्माद्वीर्यं पराक्रमं त्यक्त्वा भीताः संतः प्रधावत ततोऽनार्याः स्वामिद्रोहिणः खलु ॥ २१ ॥ वो युष्माकं जनसंसदि यानि विकत्थनानि सोदग्राणि स्वस्वोदग्रताप्रतिपादनसहितानि च स्वामिहितकराणि च कृतानि तानि

महतीमुत्थितामेनांराक्षसानांविभीषिकाम् ॥ विक्रमाद्विधमिष्यामोनिवर्तध्वंप्लवंगमाः ॥ ७ ॥ कृच्छ्रेणतुसमाश्वस्यसंगम्यचततस्ततः ॥ वृक्षान्गृहीत्वाहरयःसंप्रतस्थूरणाजिरे ॥ ८ ॥ तेनिवर्त्यतुसंरब्धाःकुंभकर्णंवनौकसः ॥ निर्जघ्नुःपरमक्रुद्धाःसमदाइवकुंजराः ॥ ९ ॥ प्रांशुभिर्गिरिशृंगैश्चशिलाभिश्चमहाबलाः ॥ पादपैःपुष्पिताग्रैश्चहन्यमानोनकंपते ॥ १० ॥ तस्यगात्रेषुपतिताभिद्यंतेबहवःशिलाः ॥ पादपाःपुष्पिताग्राश्चभग्नाःपेतुर्महीतले ॥ ११ ॥ सोपिसैन्यानिसंक्रुद्धोवानराणांमहौजसाम् ॥ ममंथपरमायत्तोवनान्यग्निरिवोत्थितः ॥ १२ ॥ लोहिताद्रास्तुबहवःशेरतेवानरर्षभाः निरस्ताःपतिताभूमौताम्रपुष्पाइवद्रुमाः ॥ १३ ॥ लंघयन्तःप्रधावन्तोवानरानावलोकयन् ॥ केचित्समुद्रेपतिताःकेचिद्गगनमास्थिताः ॥ १४ ॥ वध्यमानास्तुतेवीराराक्षसेनचलीलया ॥ सागरंयेनतेतीर्णाःपथातेनैवदुद्रुवुः ॥ १५ ॥ तेस्थलानितदानिम्नंविवर्णवदनाभयात् ॥ ऋक्षावृक्षान्समारूढाः केचित्पर्वतमाश्रिताः ॥ १६ ॥ निपेतुःकेचिदपरेकेचिन्नैवावतास्थिरे ॥ केचिद्भूमौनिपतिताःकेचित्सुप्तामृताइव ॥ १७ ॥ तान्समीक्ष्यांगदोभग्नान्वानरानिदमब्रवीत् ॥ अवतिष्ठतयुध्यामोनिवर्तध्वंप्लवंगमाः ॥ १८ ॥ भग्नानांवोनपश्यामिपरिक्रम्यमहीमिमाम् ॥ स्थानंसर्वेनिवर्तध्वंकिंप्राणान्परिरक्षथ ॥ १९ ॥ निरायुधानांक्रमतामसंगगतिपौरुषाः ॥ दाराह्युपहसिष्यंतिसवैघातःसुजीवताम् ॥ २० ॥ कुलेषुजाताःसर्वेस्मिन्विस्तीर्णेषुमहत्सुच ॥ क्वयूयंछतभयत्रस्ताःप्राकृताहरयोयथा ॥ अनार्याःखलुयद्भीतास्त्यक्त्वावीर्यंप्रधावत ॥ २१ ॥ विकत्थनानिवायानिभवद्भिर्जनसंसदि ॥ तानिवःक्वनुयातानिसोदग्राणिहितानिच ॥ २२ ॥ भीरोःप्रवादाःश्रूयंतेयस्तुजीवतिधिक्कृतः ॥ मार्गःसत्पुरुषैर्जुष्टःसेव्यतांत्यज्यतांभयम् ॥ २३ ॥ शयामहेवानिहताःपृथिव्यामल्पजीविताः ॥ प्राप्नुयामोब्रह्मलोकंदुष्प्रापंचकुयोधिभिः ॥ २४ ॥ अवाप्नुयामःकीर्तिंवानिहत्वाशत्रुमाहवे ॥ निहतावीरलोकस्यभोक्ष्यामोवसुवानराः ॥ २५ ॥

सर्वाण्यद्यायुध्यतां क यातानि ॥ २२ ॥ यः सत्पुरुषैर्धिक्कृतो जीवति तस्य जीवनं धिगित्येवं भीरूणां वीरैः क्रियमाणाः प्रवादा धिक्काररूपाः श्रूयंते मरणादप्यधिकदुःखदाः अतो भयं त्यज्यतां सत्पुरुषैर्जुष्टो मार्गो युद्धं सेव्यताम् ॥ २३ ॥ हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीमित्याशयवानाह शयामहे इति श्लोकद्वयेन । यदि दैवगत्या निहताः शयामहे तदा कुयोधिभिर्दुष्प्रापं ब्रह्मलोकं प्राप्नुयामः । वाशब्दो व्यवस्थितविकल्पे ॥ २४ ॥ शत्रुमाहवे निहत्वा निहत्य कीर्तिं वा प्राप्नुयामः । उक्तमर्थं दार्ढ्याय पुनराह निहता इति । निहताश्चेद्वीरलोकस्य वीरैः सूर्यद्वारा प्राप्यस्य ब्रह्मलोकस्य वसु धनं हिरण्यगर्भ

नतु वीराणामित्यर्थः । शृण्वतां सादितमिदं त्वद्विधानामितिपाठे विक्लवत्वादिगुणानां त्वद्विधानां वचः शृण्वतामिदं सादितम् । ईदृशं दुःखं प्राप्तं भवतीत्यर्थ इति तीर्थः ॥ ५ ॥ एवमादिपापिष्ठमंत्रैरयं राजा नाशित इत्याह युद्ध इति । युद्धे प्राप्तकाले सति कापुरुषैः कुत्सितैर्भीरुभिः पुरुषैः प्राङ्मंत्रकाले प्रियवादिभिः अतएव तदा राजानमनुगच्छद्भिर्भवद्भिः एतद्राज्ञः सर्वं कृत्यं नाशितमित्यर्थः ॥ ६ ॥ किं नाशितं तदाह राजशेषेति । यदेवमतः राजानमिममासाद्य सुहृच्चिह्नं सौहार्दमच्छादितम् । अमित्रकममित्रकार्यं कृतमिति शेषः ॥ ७ ॥ किं वृथा प्रलापेन इदानीं युद्धस्यैव न्याय्यत्वात्तदेव

युद्धेकापुरुषैर्नित्यंभवद्भिःप्रियवादिभिः ॥ राजानमनुगच्छद्भिःसर्वंकृत्यंविनाशितम् ॥ ६ ॥ राजशेषाकृतालंकाक्षीणःकोशोबलंहतम् ॥ राजानमिममासाद्यसुहृच्चिह्नममित्रकम् ॥ ७ ॥ एषनिर्याम्यहंयुद्धमुद्यतःशत्रुनिर्णये ॥ दुर्नयंभवतामद्यसमीकर्तुंमहाहवे ॥ ८ ॥ एवमुक्तवतोवाक्यंकुंभकर्णस्य[illegible]तः ॥ प्रत्युवाचततोवाक्यंप्रहसन्राक्षसाधिपः ॥ ९ ॥ महोदरोयंरामात्तुपरित्रस्तोनसंशयः ॥ नहिरोचयतेतातयुद्धंयुद्धविशारद ॥ १० ॥ कंश्चिन्मेत्वत्समोनास्तिसौहृदेनबलेनच ॥ गच्छशत्रुवधायत्वंकुंभकर्णजयायच ॥ ११ ॥ शयानःशत्रुनाशार्थंभवान्संबोधितोमया ॥ अयंहिकालःसुमहान्राक्षसानामरिंदम ॥ १२ ॥ संगच्छशूलमादायपाशहस्तइवांतकः ॥ वानरान्राजपुत्रौचभक्षयादित्यतेजसौ ॥ १३ ॥ समालोक्यतुतेरूपंविद्रविष्यंतिवानराः ॥ रामलक्ष्मणयोश्चापिहृदयेप्रस्फुटिष्यतः ॥ १४ ॥ एवमुक्त्वामहातेजाःकुंभकर्णंमहाबलम् ॥ पुनर्जातमिवात्मानंमेनेराक्षसपुंगवः ॥ १५ ॥ कुंभकर्णबलाभिज्ञोजानंस्तस्यपराक्रमम् ॥ बभूवमुदितोराजाशशांकइवनिर्मलः ॥ १६ ॥ इत्येवमुक्तःसंहृष्टोनिर्जगाममहाबलः ॥ राज्ञस्तुवचनंश्रुत्वायोद्धुमुद्युक्तवांस्तदा ॥ १७ ॥ आददेनिशितंशूलंवेगाच्छत्रुनिबर्हणं ॥ सर्वकालायसंदीप्तंतप्तकांचनभूषणम् ॥ १८ ॥ इंद्राशनिसमप्रख्यंवज्रप्रतिमगौरवम् ॥ देवदानवगंधर्वयक्षपन्नगसूदनम् ॥ १९ ॥ रक्तमाल्यमहादामंस्वतश्चोद्गतपावकम् ॥ आदायविपुलंशूलंशत्रुशोणितरंजितम् ॥ २० ॥ कुंभकर्णोमहातेजारावणंवाक्यमब्रवीत् ॥ गमिष्याम्यहमेकाकीतिष्ठत्विहबलंमहत् ॥ २१ ॥ अद्यतान्क्षुधितःक्रुद्धोभक्षयिष्यामिवानरान् ॥ कुंभकर्णवचःश्रुत्वारावणोवाक्यमब्रवीत् ॥ २२ ॥

करोमीत्याह एष इति । युद्धं प्रत्युद्यतोहं शत्रुनिर्णये तन्निमित्तं निर्यामि भवतां दुर्मंत्रिणां दुर्नयं दुर्मंत्रमूलानर्थमाहवेन समीकर्तुं यामीत्यनुकर्षः ॥ ८ ॥ धीमत इति श्रुत्वेति शेषः ॥ ९ ॥ महाशयं स्वयमेवाह महोदरोयमिति । तातेत्युपलालने ॥ १० ॥ ११ ॥ अयं कालो युद्धगमनायेति शेषः ॥ १२ ॥ १३ ॥ प्रस्फुटिष्यतः विदीर्णे भविष्यतः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ सर्वं कालायसं सर्वेष्ववयवेषु दंडादिष्वपि कालायसनिर्मितम् ॥ १८ ॥ इंद्राशनिसमा प्रख्या कांतिर्यस्य तम् ॥ १९ ॥ रक्तमाल्यान्येव महादामानि यस्य तम् । स्वतश्चोद्गतपातकं उद्गतार्चिषम् ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ २४ ॥ स्रजं कांचनीं मणिकृतांतरां मणिरचितमध्यदेशाम् ॥ ॥ २५ ॥ अंगुलीवेष्टान् अंगुलीयकानि ॥ २६ ॥ २७ ॥ निष्कमुरोभूषणम् ॥ २८ ॥ श्रोणीसूत्रं कटिसूत्रम् ॥ २९ ॥ भारसहं युद्धेऽभिघातसहं निवातम् । शस्त्राभेद्यं तु यद्वर्म तन्निवातमुदाहृतम् । आबध्यमानः आबध्नन् आर्षो विकरणव्यत्ययः ॥ ३० ॥ सर्वाभरणसन्नांगः सर्वाभरणयुक्तसर्वांगः नद्धांग इति पाठांतरम् । त्रिषु विक्रमेषु पादन्यासेषु कृतोत्साहः ॥ ३१ ॥ ३२ ॥ ३३ ॥ अंबुदस्वनैः स्यंदनैश्च सह प्रेषयामासेति योजना ॥ ३४ ॥ अनुजग्मुरिति । रावणप्रेषिता इति शेषः । सर्पादिभिर्वाहनैर्जग्मुः ॥

सैन्यैःपरिवृतोगच्छशूलमुद्गरपाणिभिः ॥ वानराहिमहात्मानःशूराःसुव्यवसायिनः ॥ २३ ॥ एकाकिनंप्रमत्तंवानयेयुर्दशनैःक्षयम् ॥ तस्मात्परमदुर्धर्षःसैन्यैःपरिवृतोव्रज ॥ रक्षसामहितंसर्वंशत्रुपक्षंनिषूदय ॥ २४ ॥ अथासनात्समुत्पत्यस्रजंमणिकृतांतराम् ॥ आबबंधमहातेजाःकुंभकर्णस्य रावणः ॥ २५ ॥ अंगदान्यंगुलीवेष्टान्वराण्याभरणानिच ॥ हारंचशशिसंकाशमाबबंधमहात्मनः ॥२६॥ दिव्यानिचसुगंधीनिमाल्यदामानिरावणः गात्रेषुसज्जयामासश्रोत्रयोश्चास्यकुंडले ॥ २७ ॥ कांचनांगदकेयूरनिष्काभरणभूषितः ॥ कुंभकर्णोबृहत्कर्णःसुहुतोग्निरिवावभौ ॥ २८ ॥ श्रोणीसूत्रेणमहतामेचकेनविराजता ॥ अमृतोत्पादनेनद्धोभुजंगेनेवमंदरः ॥२९ ॥ सकांचनंभारसहंनिवातंविद्युत्प्रभंदीप्तमिवात्मभासा ॥ आबध्यमानःकवचंरराजसंध्याभ्रसंवीतइवाद्रिराजः ॥ ३० ॥ सर्वाभरणसर्वांगःशूलपाणिःसराक्षसः ॥ त्रिविक्रमकृतोत्साहोनारायणइवावभौ ॥ ३१ ॥ भ्रातरंसंपरिष्वज्यकृत्वाचापिप्रदक्षिणम् ॥ प्रणम्यशिरसातस्मैप्रतस्थेसमहाबलः ॥३२॥ तमाशीर्भिःप्रशस्ताभिःप्रेषयामासरावणः ॥ शंखदुंदुभिनिर्घोषैःसैन्यैश्चापिवरायुधैः ॥ ३३ ॥ तंगजैश्चतुरंगैश्चस्यंदनैश्चांबुदस्वनैः ॥ अनुजग्मुर्महात्मानोरथिनोरथिनांवरम् ॥ ३४ ॥ सर्पैरुष्ट्रैःखरैश्चैवसिंहद्विपमृगद्विजैः ॥ अनुजग्मु[illegible]घोरंकुंभकर्णंमहाबलम् ॥३५॥सपुष्पवर्षैरवकीर्यमाणोधृतातपत्रःशितशूलपाणिः ॥ महोत्कटःशोणितगंधमत्तोविनिर्ययौदानवदेवशत्रुः ॥ ॥ ३६ ॥ [illegible]तयश्चबहवोमहानादामहाबलाः ॥ अन्वयूराक्षसाभीमाभीमाक्षाःशस्त्रपाणयः ॥ ३७ ॥ रक्ताक्षाःसुबहुव्यामानीलांजनचयोपमाः ॥ शूलानुद्यम्यखड्गांश्चनिशितांश्चपरश्वधान् ॥३८॥ भिंदिपालांश्चपरिघान्गदाश्चमुसलानिच ॥ तालस्कंधांश्चविपुलान्क्षेपणीयान्दुरासदान् ॥ ३९ ॥ अथान्यद्वपुरादायदारुणंघोरदर्शनम् ॥ निष्पपातमहातेजाःकुंभकर्णोमहाबलः ॥४०॥ धनुःशतपरीणाहःसषट्शतसमुच्छ्रितः ॥ रौद्रःशकटचक्राक्षोमहापर्वतसन्निभः ॥४१॥ सन्निपत्यचरक्षांसिदग्धशैलोपमोमहान् ॥ कुंभकर्णोमहावक्त्रःप्रहसन्निदमब्रवीत् ॥ ४२ ॥ अद्यवानरमुख्यानांतानियूथानिभागशः ॥ निर्दहिष्यामिसंक्रुद्धःपतंगानिवपावकः ॥४३॥ नापराध्यंतिमेकामंवानरावनचारिणः ॥ जातिरस्मद्विधानांसापुरोद्यानविभूषणम् ॥४४॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ स करयोर्बाह्वोस्ततयोस्तिर्यगंतरालं व्यामः सुबहुव्यामाः सुतरां बहुव्यामप्रमाणाः ॥ ३८ ॥ ३९ ॥ अथान्यत्सालंकारसौम्यादन्यत् ॥ ४० ॥ तस्यैव प्रदर्शनं धनुःशतेति । परिणाहो विशालता तिर्यग्देहप्रमाणमिदं षट्शतधनुःप्रमाण ऊर्ध्वोच्छ्रायः ॥ ४१ ॥ सन्निपत्य व्यूह्य ॥ ४२ ॥ ४३ ॥ वानरमुख्यानां यूथानि हनिष्यामीत्युक्त्वा निरपराधास्ते न हंतव्याः किंतु राम एव सर्वाप

देवादयोपि मयि क्रुद्धे महीतलें शयिष्यंति किं पुनर्नरवानरा इत्यर्थः ॥ ५१ ॥ ५२ ॥ वरुणालयं समुद्रम् ॥ ५३ ॥ ५४ ॥ सुखावहम् उत्तरोत्तरमधिकसुखजनकं सुखम् ॥ ५५ ॥ ५६ ॥ पैर्ममानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिषष्टितमः सर्गः ॥६३॥ कतकरी० ॥ ५८ ॥ अथाविचारकारी रावण इति । यदुक्तमसहाय एव योत्स्यामीति च तदुभयं दूषयति महोदर इत्याह तदिति । अतिकायस्य कुंभकर्णस्य तत्तेन मकारेणोक्तं वचनं श्रुत्वा महोदर उवाच ॥ १ ॥ कुले महाकुले जातोपि धृष्टोऽवलिप्तस्त्वं प्राकृतदर्शनः सन्सर्वकृत्यं कर्तव्यं वेदितुं न शक्नोषि ॥२॥ न स वेद नयानयाविति कुंभकर्णोक्तं दूषयति नहीति । राजा नयानयौ उचितकृत्याकृत्ये न जानाति इति न, किंतु जानीत एवेत्यर्थः । त्वं तु कैशोरकाद्बाल्याद्धृष्टः सन्नेवं वक्तुमिच्छसि । केवलं कर्तुमिच्छसि इतिपाठे असहायतया रामेण युद्धमिति शेषः ॥ ३ ॥ राजा तु सर्वं वेत्तीत्याह स्थानमिति । स्थानं वृद्धिक्षयराहित्येन यथाप्राप्तस्वरूपेऽवस्थानम् । आत्मनो वृद्धिं परेषां हानिं च राजा

यमंचशमयिष्यामिभक्षयिष्यामिपावकम् ॥ आदित्यंपातयिष्यामिसनक्षत्रंमहीतले ॥ ५२ ॥ शतक्रतुंवधिष्यामिपास्यामिवरुणालयम् ॥ पर्वतांश्चूर्णयिष्यामि[illegible]यिष्यामिमेदिनीम् ॥ ५३ ॥ दीर्घकालंप्रसुप्तस्यकुंभकर्णस्यविक्रमम् ॥ अद्यपश्यंतुभूतानिभक्ष्यमाणानिसर्वशः ॥ नत्विदंत्रिदिवंसर्वमाहारोममपूर्यते ॥ ५४ ॥ वधेनतेदाशरथेःसुखावहंसुखंसमाहर्तुमहंव्रजामि ॥ निहत्यरामंसहलक्ष्मणेनखादामिसर्वान्हरियूथमुख्यान् ॥ ५५ ॥ रमस्वराजन्पिबचाद्यवारुणींकुरुष्वकृत्यानिविनीयदुःखम् ॥ मयाद्यरामेगमितेयमक्षयंचिरायसीतावशगाभविष्यति ॥ ५६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥ तदुक्तमतिकायस्यबलिनोबाहुशालिनः ॥ कुंभकर्णस्यवचनंश्रुत्वोवाचमहोदरः ॥ ॥ १ ॥ कुंभकर्णकुलेजातोधृष्टःप्राकृतदर्शनः ॥ अवलिप्तोनशक्नोषिकृत्यंसर्वत्रवेदितुम् ॥ २ ॥ नहिराजानजानीतेकुंभकर्णनयानयौ ॥ त्वंतुकैशोरकाद्धृष्टःकेवलंवक्तुमिच्छसि ॥३॥ स्थानंवृद्धिंचहानिंचदेशकालविधानवित् ॥ आत्मनश्चपरेषांचबुध्यतेराक्षसर्षभः ॥ ४ ॥ यत्त्वशक्यंबलवतावक्तुंप्राकृतबुद्धिना ॥ आनुपासितवृद्धेनकःकुर्यात्तादृशंनरः ॥ ५ ॥ यांस्तुधर्मार्थकामांस्त्वंब्रवीषिपृथगाश्रयान् ॥ अवबोद्धुंस्वभावेननहिलक्षणमस्तितान् ॥ ६ ॥ कर्मचैवहिसर्वेषांकारणानांप्रयोजनम् ॥ श्रेयःपापीयसांचात्रफलंभवतिकर्मणाम् ॥ ७ ॥

बुध्यते । किंच देशकालविधानविद्देशकालयोरुचितकर्तव्यवित् ॥ ४ ॥ सर्वथा राज्ञोऽविवेको नास्तीत्याह यत्त्वशक्यमिति । अनुपासितवृद्धेनातएव प्राकृतबुद्धिना केवलं बलवता यत्तु कर्तुमशक्यं तादृशं को बुधो राजा कुर्यात् न कोपि ॥ ५ ॥ एतावता प्रथमं वै महाराज कृतमेतदचिंतितम् । केवलं वीर्यदर्पेण नानुबंधो विचारित इति कुंभकर्णोक्तं दूषणं परिहृतम् । अथ त्रिषु चैतेषु यच्छ्रेष्ठमित्यादिना धर्म एव सेव्यो नतु कामस्तद्विरुद्ध इति यदुक्तं तत्राह यांस्त्विति । यांश्च धर्मादीन् पृथगाश्रया धर्मादयः परस्परविरुद्धा नैकानुष्ठेया इति ब्रवीषि तान् धर्मादीन्स्वभावेन तत्त्वतोऽवबोद्धुं ते लक्षणं सामर्थ्यं नह्यस्ति ॥ ६ ॥ कुत इत्यत्र सर्वस्याप्येकानुष्ठेयत्वादेवेत्याह कर्म चैवेति । सर्वेषां कारणानां सुखसाधनानां त्रिवर्गलक्षणानां कर्मैव प्रयोजनं प्रयोजकमुत्पादकम् । न ह्यक्रियस्य कश्चन पुरुषार्थो धर्मादिः । एवमेकपुरुषयत्नसाध्यानां श्रेयः पापीयसां कर्मणां शुभाशुभव्यापाराणां फलमत्रैकस्मिन्नेव कर्तरि भवति । एवं च विरुद्धयोरपि धर्मकामयोरेकानुष्ठेयत्वदर्शनाद्धर्म एवानुष्ठेयो, नतु तद्विरुद्धः काम इति । त्वदुक्तमयुक्तमिति भावः ॥ ७ ॥

तत्र पुरुषयत्नसाध्येष्वप्येषु धर्मार्थयोः कामात्कश्चिद्विशेषोस्तीत्याह निःश्रेयसेति । धर्मार्थौ निःश्रेयसफलावेव संतौ कामनाविशेषेणेतरावपि स्वर्गाभ्युदयफलावपि भवतः । अत्र धर्मशब्देनार्थनिरपेक्षो जपध्यानादिः । अर्थशब्देन चार्थसाध्यो यागदानादिः । यज्ञो दानं तपश्चैव पावनानि मनीषिणामिति भगवद्वचनात्तेषां चित्तशुद्धिद्वारा मोक्षसाधनत्वमस्ति । कामस्तु न कदापि निःश्रेयसफल इति भावः । तयोरपरमपि कामाद्विशेषमाह अधर्मानर्थयोरिति । जपादिरूपे क्रियामये वा नित्यधर्मे लुप्ते सति अधर्मानर्थौ प्राप्तौ भवतस्तयोश्च सतोः प्रात्यवायिकं विहिताकरणप्रयुक्तप्रत्यवायजन्यं फलं पुंसः प्राप्तं भवति । न तु काम्याकरणे प्रत्यवाय इति भावः ॥ ८ ॥ कीदृशं तत्फलं तत्राह ऐहलौकिकेति । इहलोके परत्र च भवं कर्म कर्मफलम् । इह ऋणदारिद्र्यादिरूपं परत्र नरकयातनादिरूपं निषेव्यते अनुभूयते । एवं धर्मफलमपि । अथ कामस्य धर्मार्थाभ्यां वैलक्षण्यमाह कर्माणीति । कामं तत्पुरुषार्थसिद्धिमुद्दिश्य कर्माणि यत्नेनास्थितोनुतिष्ठन्नपि कल्पानि शुभानि तु विशिष्य अत्रापि साक्षाल्लभते न तु धर्मार्थवत्कालांतरे लोकांतरे वा । एवं च धर्मार्थकामा एकेनैव सेव्याः । धर्मविरुद्धो यदि कामस्तदा स स्वतपोविक्रमादिना समाधेयः । नहि भिक्षुकाः संतीति स्थाल्यो नाधिश्रियंत इति न्यायादिति भावः ॥ ९ ॥ इदानीमनभिज्ञाय शास्त्रार्थमित्यादिना दुर्मंत्रिसंबंधस्त्याज्य इत्युक्तं तत्परिहरति तत्रेति । तत्र त्रयाणाम् एकानुष्ठेयत्वे सिद्धे सति राज्ञा इदं कामपुरुषार्थसाधनं कार्यं कर्तुं योग्यम् । तथा हृदि क्लृप्तं निश्चितं च नोस्माकं मंत्रिणां मतमनुमतं च बलवद्विषये न्याय्यत्वस्योक्तत्वात् । अतो राज्ञि नास्मासु च किंचिदचातुर्यम् । अथ साहसप्रवृत्तिरूपं प्रागुक्तदोषमुद्धरति शत्रौ हीति । शत्रौ हि प्रसिद्धं साहसं बलवतो बलात्प्रवृत्तिरूपम् । अत्रैतदनुष्ठाने किमिवापनीयते कोपनयो न कोपि उचितमेव कृतमित्यर्थः । यत्तु तीर्थेनोक्तं धर्माधर्मयोर्हिताहितसाधनत्वं निश्चित्य परदाराहरणरूपाधर्मात् राज्ञो दुःखमित्युक्तं तद्धर्माधर्मयोर्हिताहितफलनियमाभावादसंगतमित्याह यांस्तु धर्मायेति । पृथगाश्रयात् पृथक्फ[illegible]स्त्वदसि तान्स्वभावेनावबोद्धुं स्वरूपतो ज्ञातुं लक्ष्यतेनेनेति लक्षणं कारणं च नास्ति सुखफलकयागादिधर्मानुष्ठानेपि तात्कालिकशरीरायासदर्शनात् । दुःखजनकपरदारगमनादावपि तात्कालिकसुखदर्शनाच्चेति भावः । तदेव प्रदर्शयति कर्म चेति । सर्वेषां कारणानां सुखानामित्यर्थः । कर्म कर्ममात्रं प्रयोजनं प्रयोजकं साधकमित्यर्थः । अत्रास्मिन्पुण्यकर्मणि फलं भवति अश्रेयोपीति शेषः । पापीयसां कर्मणां श्रेयः सुखं च फलं भवति । एतदेव विशदयति निःश्रेयसेति । धर्मार्थौ तत्साधनीभूते कर्मणी इतरौ अधर्मानर्थौ तत्साधनभूते कर्मणीतियावत् । निःश्रेयसफलावेव चतुर्विधकर्माण्यपि श्रेयस्कराण्येवेत्यर्थः । किंतु कदाचिदधर्मानर्थयोः प्रात्यवायिकं प्रत्यवायकारणकं दुःखं फलं सुखं च । प्राप्यत इति प्राप्तिः कर्मणि क्तिन् । प्राप्यं भवतीत्यर्थः । एतेनाधर्मानर्थयोः सुखदुःखोभयफलत्वमुक्तं धर्मार्थयोरव्यवस्थितफलमुक्त्वा कामस्याप्याह ऐहलौकिकेति । इहलोकपरलोकोपयोगि कर्म धर्मार्थरूपं निषेव्यते तत्फलं चानुभूयते तथा काममास्थितोपि यथेच्छाचारोपि कल्पानि शुभानि कर्माणि कर्मफलानि लभते । एवं च विहितमेव शुभदं निषिद्धमशुभदमिति नियमो नेति भावः । एतत्पक्षानुसारेणैव सीताहरणं रावणेन कृतमस्माभिश्चानुमतमित्याह तत्रेति । तथा सति इदं कार्यं सीताहरणरूपं राज्ञा हृदि निश्चितमस्माभिरनुमतं च । किं च शत्रुविषये रावणने यत्साहसं कृतं तत्किमिव न किमपीत्यर्थः । अत्र साहसविषये अपनीयतां पृथक्कृत्य प्रदर्श्यताम् अत्र । पक्षे रावणेनाविचार्य कृतं किमपि दर्शयितुं न शक्यमित्यर्थ इति पंचश्लोकीव्याख्यानं तन्न धर्माद्दुःखस्याधर्मात्सुखस्य सर्वासंमतत्वात् । यदपि उक्तं यागादौ नांतरीयकं दुःखमिति तन्न तस्य धर्मस्य फलं, किंतु प्राक्कृतकर्मांतरस्यैव, एवमधर्मविषयेपि । अनया रीत्या सर्वं पलालप्रायतया दूष्यतां मतिमद्भिरित्यलम् ॥ १० ॥

निःश्रेयसफलावेवधर्मार्थावितरावपि ॥ अधर्मानर्थयोःप्राप्तंफलंचप्रात्यवायिकम् ॥ ८ ॥ ऐहलौकिकपारक्यंकर्मपुंभिर्निषेव्यते ॥ कर्माण्यपितुकल्पानिलभतेकाममास्थितः ॥ ९ ॥ तत्रक्लृप्तमिदंराज्ञाहृदिकार्यंमतंचनः ॥ शत्रौहिसाहसंयत्तत्किमिवात्रापनीयते ॥ १० ॥

अथेदानीमेव मां राजन् व्यादिश अहमुत्सादयिष्यामीत्यादिनाऽसहायतया यो रिपुसंहारवाद उक्तस्तं दूषयति एकस्यैवेति । एकस्यासहायस्यैवाभियाने यो हेतुः स्वबललक्षणः प्राहृत उक्तस्तत्रापि यदनुपपन्नम् उपप त्तिरहितम् अतएवासाधुवचोस्ति तत्ते वक्ष्यामि ॥ ११ ॥ अनुपपत्तिमेवाह येनेति । येनातिबला हतास्तं राघवमित्यन्वयः ॥ १२ ॥ जनस्थाने तेन ये निर्जिता विद्राविताස्तानद्यापि भीतानत्र पुरे विद्यमानान् राक्षसान्न पश्यसि किम् ॥ १३ ॥ सिंहमिव सुप्तं सर्पमिव च बुद्ध्वापि प्रबोधयितुमिच्छसि अहो ते मौर्ख्यमिति भावः ॥ १४ ॥ १५ ॥ इदं सर्वं बलं शत्रोः प्रतिसमासने प्रतिमुखावस्थाने संशयस्थं संशयितजी वनविषयम् अत्र एकस्य गमनं न मे रोचत इत्यन्वयः ॥ १६ ॥ हीनार्थो हीनबलोऽसहायः सन्कः पुमान्समृद्धार्थं ससहायं जीवितत्यागे निश्चितं स्वप्राणं तृणीकृत्य शत्रुसंहारादिदृढोद्योगं रिपुं प्राकृतं यथा प्राकृतमिवोक्त विशेषणरहितमिव वशमानेतुमिच्छति ॥ १७ ॥ १८ ॥ ॥ १९ ॥ पूर्वमेव वैदेहीं लब्ध्वापि त्वं किमर्थं विलंबसे तद्भोगायेति शेषः । भोगार्थं सीतया वशगया भाव्यमिति यदीच्छसि तदा सीता ते वशगा

एकस्यैवाभियानेतुहेतुर्यःप्राहृतस्त्वया ॥ तत्राप्यनुपपन्नंतेवक्ष्यामियदसाधुच ॥ ११ ॥ येनपूर्वंजनस्थानेबहवोतिबलास्तदा ॥ राक्षसाराघवंध्वस्ताः कथमेको[illegible]ष्यसि ॥ १२ ॥ येपूर्वंनिर्जितास्तेनजनस्थानेमहौजसः ॥ राक्षसांस्तान्पुरेसर्वान्भीतानद्यनपश्यसि ॥ १३ ॥ तंसिंहमिवसंक्रुद्धं रामंदशरथात्मजम् ॥ सर्पसुप्तमहोबुद्ध्वाप्रबोधयितुमिच्छसि ॥ १४ ॥ ज्वलंतंतेजसानित्यंक्रोधेनचदुरासदम् ॥ कस्तंमृत्युमिवासह्यमासादयितुमर्हति ॥ १५ ॥ संशयस्थमिदंसर्वंशत्रोःप्रतिसमासने ॥ एकस्यगमनंतातनहिमेरोचतेभृशम् ॥ १६ ॥ हीनार्थस्तुसमृद्धार्थंकोरिपुंप्राकृतंयथा ॥ निश्चितं जीवितत्यागेवशमानेतुमिच्छति ॥ १७ ॥ यस्यनास्तिमनुष्येषुसदृशोराक्षसोत्तम ॥ कथमाशंससेयोद्धुंतुल्येनेंद्रविवस्वतोः ॥ १८ ॥ एवमुक्त्वातुसंरब्धं कुंभकर्णंमहोदरः ॥ उवाचरक्षसांमध्येरावणंलोकरावणम् ॥ १९ ॥ लब्ध्वापुरस्ताद्वैदेहींकिमर्थंत्वंविलंबसे ॥ यदीच्छसितदासीतावशगातेभविष्यति ॥ २० ॥ दृष्टःकश्चिदुपायोमेसीतोपस्थानकारकः ॥ रुचितश्चेत्स्वयाबुद्ध्याराक्षसेंद्रततःशृणु ॥ २१ ॥ अहंद्विजिह्वःसंह्रादीकुंभकर्णोवितर्दनः ॥ पंचरामवधायैतेनिर्यांतीत्यवघोपय ॥ २२ ॥ ततोगत्वावयंयुद्धंदास्यामस्तस्ययत्नतः ॥ जेष्यामोयदितेशत्रून्नोपायैःकार्यमस्तिनः ॥ २३ ॥ अथजीवतिनःशत्रुर्वयंचकृतसंयुगाः ॥ ततःसमभिपत्स्यामोमनसायत्समीक्षितम् ॥ २४ ॥ वयंयुद्धादिहैष्यामोरुधिरेणसमुक्षिताः ॥ विदार्यस्वतनुंबाणै रामनामांकितैःशरैः ॥ २५ ॥

भविष्यति ॥ २० ॥ कुतस्तत्राह दृष्ट इति । सीतोपस्थानस्य सीतानुकूल्यस्य कारकः साधनं कश्चिदुपायो मे मया दृष्टोस्ति तं शृणु । तं श्रुत्वा स्वया बुद्ध्या पर्यालोच्य रुचितश्चेत्तमनुतिष्ठेति शेषः ॥ २१ ॥ तमुपायमाह अहमिति । पंचैते निर्यांतीत्यवघोषय ॥ २२ ॥ ततो गत्वा तस्य रामस्य युद्धं दास्यामः । यदि दैवात्तव शत्रून् जेष्यामस्तदा नोस्माकमुपायैः सीतावशीकरणोपायानुष्ठानैर्न किंचित्कृत्यमस्ति । रामं शस्त्राशनिवृत्त्या स्वत एव तदानुकूल्यस्य सिद्धत्वादिति भावः ॥ २३ ॥ अथ पक्षांतरे नोस्माकं शत्रुरस्माभिरसाध्यनाशत्वाद्यदि जीवति कृतसंयुगा वयं च यदि जीवाम ततो मनसा यत्समीक्षितं तत्सम भिपत्स्यामः प्राप्स्यामः ॥ २४ ॥ किं तत्तत्राह वयमिति । स्वतनुं रामनामांकितैर्बाणैर्विदार्य कृतविदारणां संपाद्य यावत्प्राणसंकटं युद्ध्वेत्यर्थः । एवं युद्ध्वा रुधिरोक्षिता युद्धात्परावृत्त्येहैष्यामः ॥ २५ ॥

वादिनः इत्येवं मिथ्यावादिनः त्वं नः कामं प्रपूरय जित्वा आगतानिव संमानय ॥ २६ ॥ ॥ २७ ॥ प्रीतो नाम नामेत्यपरमार्थे । प्रीत इव भूत्वेत्यर्थः । परिवारान् दासीदासान् ॥ २८ ॥ योधेभ्यो बहु देयं देहीति शेषः । मुदितः पिब मुदित इव पिब ॥ २९ ॥ कौलीने जनवादे रामादयो भक्षिता इत्येवंरूपे विश्रुते लोकमुखतः सीतयेति शेषः ॥ ३० ॥ आश्वास्य भर्तृविपत्तिदुःखितामिति शेषः ॥ ३१ ॥ उपधया वंचनया भूयोधिकं सीतायाः शोकोनुबंधो यस्यामुपधायां तया अकामा तादृश्यपि ॥ ३२ ॥ रमणीयम् अनुवर्तितुं योग्यम् ॥ ३३ ॥ गमिष्यति त्वद्वशत्वमिति शेषः ॥ ३४ ॥ एतन्मम दर्शनेन मत्या सुनीतं निश्चितः सुखोपायः । युद्धं तु नोपाय इत्याह रामं दृष्ट्वैव तद्दर्शनमात्रेणैवानर्थो वधो भवेत् । यदेवमतो युद्धे रामदर्शनार्थं मोत्सुको भूः इहैव स्थितस्य ते महान्सुखस्य लाभोऽयुद्धेन सेत्स्यति ॥ ३५ ॥

भक्षितोराघवोस्माभिर्लक्ष्मणश्चेतिवादिनः ॥ ततःपादौग्रहीष्यामस्त्वन्नःकामंप्रपूरय ॥ २६ ॥ ततोऽवघोषयपुरेगजस्कंधेनपार्थिव ॥ हतोरामःसह भ्रात्रासंसैन्यइतिसर्वतः ॥२७॥ प्रीतोनामततोभूत्वाभृत्यानांत्वमरिंदम ॥ भोगांश्चपरिवारांश्चकामान्वसुचदापय ॥ २८ ॥ ततोमाल्यानिवासांसिवी राणामनुलेपनम् ॥ देयंचबहुयोधेभ्यःस्वयंचमुदितःपिब ॥ २९ ॥ ततोस्मिन्बहुलीभूतेकौलीनेसर्वतोगते ॥ भक्षितःससुहृद्रामोराक्षसैरितिविश्रुते ॥ ॥ ३० ॥ प्रविश्याश्वास्यचापित्वंसीतांरहसिसांत्वयन् ॥ धनधान्यैश्चकामैश्चरत्नैश्चैनांप्रलोभय ॥ ३१ ॥ अनयोपधयाराजन्भूयःशोकानुबंधया ॥ अकामात्वद्वशंसीतानष्टनाथागमिष्यति ॥ ३२ ॥ रमणीयंहिभर्तारंविनष्टमधिगम्यसा ॥ नैराश्यात्स्त्रीलघुत्वाच्चत्वद्वशंप्रतिपत्स्यते ॥ ३३ ॥ सापुरा सुखसंवृद्धासुखार्हादुःखकर्षिता ॥ त्वय्यधीनंसुखंज्ञात्वासर्वथैवागमिष्यति ॥ ३४ ॥ एतत्सुनीतंममदर्शनेनरामंहिदृष्ट्वैवभवेदनर्थः ॥ इहैवतेसेत्स्य तिमोत्सुकोभूर्महानयुद्धेनसुखस्यलाभः ॥ ३५ ॥ अनष्टसैन्योह्यनवाप्तसंशयोरिपुंत्वयुद्धेनजयञ्जनाधिप ॥ यशश्चपुण्यंचमहान्महीपतिःश्रियंचकी र्तिंचचिरंसमश्नुते ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥ सतथोक्तस्तुनिर्भर्त्स्यकुं भकर्णोमहोदरम् ॥ अब्रवीद्राक्षसश्रेष्ठंभ्रातरंरावणंततः ॥ १ ॥ सोहंतवभयंघोरंवधात्तस्यदुरात्मनः ॥ रामस्याद्यप्रमार्जामिनिर्वैरोहिसुखीभव ॥ ॥ २ ॥ गर्जंतिनवृथाशूरानिर्जलाइवतोयदाः ॥ पश्यसंपद्यमानंतुगर्जितंयुधिकर्मणा ॥३॥ नमर्षयंतिचात्मानंसंभावयितुमात्मना ॥ अदर्शयित्वाशू रास्तुकर्मकुर्वंतिदुष्करम् ॥ ४ ॥ विक्लवानांह्यबुद्धीनांराज्ञांपंडितमानिनाम् ॥ रोचतेत्वद्वचोनित्यंकथ्यमानंमहोदर ॥ ५ ॥

स्वोक्तोपायानुष्ठानमेव ते सुखावहमित्युपसंहरति अनष्टेति ॥ ३६ ॥ चैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥ कतकरी० ॥ ॥ ५९ ॥ स तथोक्त इति । युद्धं न कर्तव्यमित्युक्तः ॥ १ ॥ निर्वैरः अशत्रुः ॥ २ ॥ वृथा न गर्जंति शत्रोरसमक्षं स्वशौर्यं वृथा न कत्थंते । युधि कर्मणा संपद्यमानं तु मे गर्जितं पश्य ॥ ३ ॥ आत्मना आत्मानं संभावयितुं श्लाघयितुं न मर्षयंति न सहंते नेच्छंतीति यावत् । अपि तु अदर्शयित्वा वाचा स्वसामर्थ्यमप्रकाश्य दुष्करं कर्म कुर्वंति ॥ ४ ॥ अशूरत्वरूपवैक्लव्यादिगुणानां त्वद्वचो युद्धनिवृत्तिपरं रोचते

वाक्यमब्रवीत् ॥ १२ ॥ सुमहान्कालो गत इति शेषः । मया संमंत्र्य गमनानंतरमिति भावः । सुमहानित्यनेन ब्रह्मकृतावधिभूतषण्मासादप्याधिकः कालो गत इति सूच्यते । शयिता ह्येष षण्मासानेकाहं जागरिष्यत इति तु षण्मासादर्वाक् जागरणाभावपरम् । मंत्रं कृत्वा प्रसुप्तोयमितस्तु नवमेहनीति पद्यं तु प्रक्षिप्तं तत्राहःपदं मासपरं वेत्युक्तम् । अन्यथा षण्मासादर्वाक्कदापि जागरणाभावेन तावत्कालस्य तत्स्वापे नियतत्वात्ततोर्वाङ्मासद्वयादिमध्ये एतत्प्रवृत्तौ सुमहानित्युक्तेरसंगत्यापत्तेः । अनेन मंत्रं कृत्वा सुप्तस्याष्टनवमासरूपः कालो गत इति गम्यते । अनेनापि युद्धस्य षण्मासाधिककालव्यापिता सूचिता भवतीति ज्ञायते ॥ १३ ॥ ॥ १४ ॥ स्वलंकायां स्वीयद्वीपे वानरैकार्णवं कृतं वानरमयैकार्णववत्कृतम् ॥ १५ ॥ वानराणां क्षयं न पश्यामि, तिष्ठतु क्षयो युद्धे मदीयै रक्षोभिर्जितपूर्वा अपि न दृश्यंते ॥ १६ ॥ १७ ॥ सर्वे क्षपिताः नाशिताः कोशा ऐश्वर्याणि यस्य तं मामभ्युपपद्यानुगृह्य त्रायस्व ॥ १८ ॥ १९ ॥ परा संभावना कार्यसिद्धिप्रत्याशा मे त्वय्यस्तीति शेषः । प्रतिव्यूह्य प्रातिभव्यं कृत्वा ॥ २० ॥ वीर्यमातिष्ठ वीर्यमवलंबस्व ॥ २१ ॥

अयंतेसुमहान्कालःशयानस्यमहाबल ॥ सुषुप्तस्त्वंनजानीषेममरामकृतंभयम् ॥ १३ ॥ एषदाशरथिःश्रीमान्सुग्रीवसहितोबली ॥ समुद्रंलंघयित्वातुकुलं नःपरिकृंतति ॥ १४ ॥ हंतपश्यस्वलंकायांवनान्युपवनानिच ॥ सेतुनासुखमागत्यवानरैकार्णवंकृतम् ॥ १५ ॥ येराक्षसामुख्यतमाहतास्तेवानरैर्युधि ॥ वानराणांक्षयंयुद्धेनपश्यामिकथंचन ॥ नचापिवानरायुद्धेजितपूर्वाःकदाचन ॥ १६ ॥ तदेतद्भयमुत्पन्नंत्रायस्वेहमहाबल ॥ नाशयत्वमिमानद्यतदर्थंबोधितोभवान् ॥ १७ ॥ सर्वक्षपितकोशंचसत्वमभ्युपपद्यमाम् ॥ त्रायस्वेमांपुरींलंकांबालवृद्धावशेषिताम् ॥ १८ ॥ भ्रातुरर्थेमहाबाहोकुरुकर्मसुदुष्करम् ॥ मयैवंनोक्तपूर्वोहिभ्राताकश्चित्परंतप ॥ १९ ॥ त्वय्यस्तिममचस्नेहःपरासंभावनाचमे ॥ देवासुरेषुयुद्धेषुबहुशोराक्षसर्षभ ॥ त्वयादेवाःप्रतिव्यूह्यनिर्जिताश्चामरायुधि ॥ २० ॥ तदेतत्सर्वमातिष्ठवीर्यंभीमपराक्रम ॥ नहितेसर्वभूतेषुदृश्यतेसदृशोबली ॥ २१ ॥ कुरुष्वमेप्रियहितमेतदुत्तमंयथाप्रियंप्रियरणबांधवप्रिय ॥ स्वतेजसाव्यथयसपत्नवाहिनींशरद्घनंपवनइवोद्यतोमहान् ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ तस्यराक्षसराजस्यनिशम्यपरिदेवितम् ॥ कुंभकर्णोबभाषेदंवचनंप्रजहासच ॥ १ ॥ दृष्टोदोषोहियोस्माभिःपुरामंत्रविनिर्णये ॥ हितेष्वनभियुक्तेनसोयमासादितस्त्वया ॥ २ ॥ शीघ्रंखल्वभ्युपेतंत्वांफलंपापस्यकर्मणः ॥ निरयेष्वेवपतनंयथादुष्कृतकर्मणः ॥ ३ ॥ प्रथमंवैमहाराजकृत्यमेतदचिंतितम् ॥ केवलंवीर्यदर्पेणनानुबंधोविचारितः ॥ ४ ॥

हे प्रियरण हे बांधवप्रिय यथाप्रियं स्वप्रीत्यनुसारेण प्रियहितमुत्तमं हितं कुरुष्व ॥ २२ ॥ खैरैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ कतकरी० ॥ ५७ ॥ प्रजहास च विभीषणवचोनंगीकारफलं प्राप्तं दुरात्मनेति हासः ॥ १ ॥ तदेव प्रकाशयति दृष्ट इति । मंत्रविनिर्णये विभीषणेन सह मंत्रविचारकाले हितेषु हितवादिषु अनभियुक्तेन अश्रद्दधानेन सोयमासादितः मया विभीषणेन च दृष्टः सर्वनाशप्राप्तिरूपदोष इत्यर्थः ॥ २ ॥ लोके क्रमेण दोषं पुरुषाः प्रपद्यंते, त्वां त्वत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इति न्यायेन शीघ्रमेव परदारग्रहणरूपदुष्कर्मणः फलं प्राप्तमित्याह शीघ्रमिति । अभ्युपेतं प्राप्तं जातं यथा पापस्य प्रथमं निरयेष्वेव पतनं तद्वत् ॥ ३ ॥ प्रथमम् एतत्कृत्यं सर्वनाशप्राप्तिरूपं केवलं वीर्यदर्पेण न चिंतितम् अनुबंधो दोषोत्पादोपि न विचा

वादिनः इत्येवं मिथ्यावादिनः त्वं नः कामं प्रपूरय जित्वा आगतानिव संमानय ॥ २६ ॥ ॥ २७ ॥ मीतो नाम नामेत्यपरमार्थे । मीत इव भूत्वेत्यर्थः । परिवारान् दासीदासान् ॥ २८ ॥ योधेभ्यो बहु देयं देहीति शेषः । मुदितः पिब मुदित इव पिब ॥ २९ ॥ कौलीने जनवादे रामादयो भक्षिता इत्येवंरूपे विश्रुते लोकमुखतः सीतयेति शेषः ॥ ३० ॥ आश्वास्य भर्तृविपत्तिदुःखितामिति शेषः ॥ ३१ ॥ उपधया वंचनया भूयोधिकं सीतायाः शोकोनुबंधो यस्यामुपधायां तया अकामा तादृश्यपि ॥ ३२ ॥ रमणीयम् अनुवर्तितुं योग्यम् ॥ ३३ ॥ गमिष्यति त्वद्वशत्वमिति शेषः ॥ ३४ ॥ एतन्मम दर्शनेन मत्या सुनीतं निश्चितः सुखोपायः । युद्धं तु नोपाय इत्याह रामं दृष्ट्वैव तद्दर्शनमात्रेणैवानर्थो वधो भवेत् । युदेवमतो युद्धे रामदर्शनार्थं मोत्सुको भूः इहैव स्थितस्य ते महान्सुखस्य लाभोऽयुद्धेन सेत्स्यति ॥ ३५ ॥

भक्षितोराघवोस्माभिर्लक्ष्मणश्चेतिवादिनः ॥ ततःपादौग्रहीष्यामस्त्वन्नःकामंप्रपूरय ॥ २६ ॥ ततोऽवघोषयपुरेगजस्कंधेनपार्थिव ॥ हतोरामःसह भ्रात्रासमैन्यइतिसर्वतः ॥२७॥ प्रीतोनामततोभूत्वाभृत्यानांत्वमरिंदम ॥ भोगांश्चपरिवारांश्चकामान्वसुचदापय ॥ २८ ॥ ततोमाल्यानिवासांसिवी राणामनुलेपनम् ॥ देयंचबहुयोधेभ्यःस्वयंचमुदितःपिब ॥ २९ ॥ ततोस्मिन्बहुलीभूतेकौलीनेसर्वतोगते ॥ भक्षितःससुहृद्रामोराक्षसैरितिविश्रुते ॥ ॥ ३० ॥ प्रविश्याश्वास्यचापित्वंसीतांरहसिसांत्वयन् ॥ धनधान्यैश्चकामैश्चरत्नैश्चैनांप्रलोभय ॥ ३१ ॥ अनयोपधयाराजन्भूयःशोकानुबंधया ॥ अकामात्वद्वशंसीतानष्टनाथागमिष्यति ॥ ३२ ॥ रमणीयंहिभर्तारंविनष्टमधिगम्यसा ॥ नैराश्यात्स्त्रीलघुत्वाच्चत्वद्वशंप्रतिपत्स्यते ॥ ३३ ॥ सापुरा सुखसंवृद्धासुखार्हादुःखकर्षिता ॥ त्वय्यधीनंसुखंज्ञात्वासर्वथैवागमिष्यति ॥ ३४ ॥ एतत्सुनीतंममदर्शनेनरामंहिदृष्ट्वैवभवेदनर्थः ॥ इहैवतेसेत्स्य तिमोत्सुकोभूर्महानयुद्धेनसुखस्यलाभः ॥ ३५ ॥ अनष्टसैन्योह्यनवाप्तसंशयोरिपुंत्वयुद्धेनजयञ्जनाधिप ॥ यशश्चपुण्यंचमहान्महीपतिःश्रियंचकी र्तिंचचिरंसमश्नुते ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥ सतथोक्तस्तुनिर्भर्त्स्यकुं भकर्णोमहोदरम् ॥ अब्रवीद्राक्षसश्रेष्ठंभ्रातरंरावणंततः ॥ १ ॥ सोहंतवभयंघोरंवधात्तस्यदुरात्मनः ॥ रामस्याद्यप्रमार्ज्मिनिर्वैरोहिसुखीभव ॥ ॥ २ ॥ गर्जंतिनवृथाशूरानिर्जलाइवतोयदाः ॥ पश्यसंपद्यमानंतुगर्जितंयुधिकर्मणा ॥३॥ नमर्षयंतिचात्मानंसंभावयितुमात्मना ॥ अदर्शयित्वाशू रास्तुकर्मकुर्वंतिदुष्करम् ॥ ४ ॥ विक्लवानांह्यबुद्धीनांराज्ञांपंडितमानिनाम् ॥ रोचतेत्वद्वचोनित्यंकथ्यमानंमहोदर ॥ ५ ॥

स्वोक्तोपायानुष्ठानमेव ते सुखावहमित्युपसंहरति अनष्टेति ॥ ३६ ॥ चैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥ कतकरी० ॥ ॥ ५९ ॥ स तथोक्त इति । युद्धं न कर्तव्यमित्युक्तः ॥ १ ॥ निर्वैरः अशत्रुः ॥ २ ॥ वृथा न गर्जंति शत्रोरसमक्षं स्वशौर्यं वृथा न कत्थंते । युधि कर्मणा संपद्यमानं तु मे गर्जितं पश्य ॥ ३ ॥ आत्मना आत्मानं संभावयितुं श्लाघयितुं न मर्षयंति न सहंते नेच्छंतीति यावत् । अपि तु अदर्शयित्वा वाचा स्वसामर्थ्यमप्रकाश्य दुष्करं कर्म कुर्वंति ॥ ४ ॥ अशूरत्वरूपवैक्लव्यादिगुणानां त्वद्वचो युद्धनिवृत्तिपरं रोचते

वाक्यमब्रवीत् ॥ १२ ॥ सुमहान्कालो गत इति शेषः । मया संमंत्र्य गमनानंतरमिति भावः । सुमहानित्यनेन ब्रह्मकृतावधिभूतषण्मासादप्याधिकः कालो गत इति सूच्यते । शयिता ह्येष षण्मासानेकाहं जागरिष्यत इति तु षण्मासादर्वाक् जागरणाभावपरम् । मंत्रं कृत्वा प्रसुप्तोयमितस्तु नवमेहनीति पद्यं तु प्रक्षिप्तं तत्राहःपदं मासपरं वेत्युक्तम् । अन्यथा षण्मासादर्वाक्दापि जागरणाभावेन तावत्कालस्य तत्स्वापे नियतत्वात्तोर्वाङ्मासद्वयादिमध्ये एतत्प्रवृत्तौ सुमहानित्युक्तेरसंगत्यापत्तेः । अनेन मंत्रं कृत्वा सुप्तस्याष्टनवमासरूपः कालो गत इति गम्यते । अनेनापि युद्धस्य षण्मासाधिककालव्यापिता सूचिता भवतीति ज्ञायते ॥ १३ ॥ ॥ १४ ॥ स्वलंकायां स्वीयद्वीपे वानरैकार्णवं कृतं वानरमयैकार्णववत्कृतम् ॥ १५ ॥ वानराणां क्षयं न पश्यामि, तिष्ठतु क्षयो युद्धे मदीयै रक्षोभिर्जितपूर्वा अपि न दृश्यंते ॥ १६ ॥ १७ ॥ सर्वे क्षपिताः नाशिताः कोशा ऐश्वर्याणि यस्य तं मामभ्युपपद्यानुगृह्य त्रायस्व ॥ १८ ॥ १९ ॥ परा संभावना कार्यसिद्धिप्रत्याशा मे त्वय्यस्तीति शेषः । प्रतिव्यूह्य प्रातिभट्यं कृत्वा ॥ २० ॥ वीर्यमातिष्ठ वीर्यमवलंबस्व ॥ २१ ॥

अयंतेसुमहान्कालःशयानस्यमहाबल ॥ सुषुप्तस्त्वंनजानीषेममरामकृतंभयम् ॥ १३ ॥ एषदाशरथिःश्रीमान्सुग्रीवसहितोबली ॥ समुद्रंलंघयित्वातुकुलं[illegible]ःपरिकृंतति ॥ १४ ॥ हंतपश्यस्वलंकायांवनान्युपवनानिच ॥ सेतुनासुखमागत्यवानरैकार्णवंकृतम् ॥ १५ ॥ येराक्षसामुख्यतमाहतास्तेव[illegible]युधि ॥ वानराणांक्षयंयुद्धेनपश्यामिकथंचन ॥ नचापिवानरायुद्धेजितपूर्वाःकदाचन ॥ १६ ॥ तदेतद्भयमुत्पन्नंत्रायस्वेहमहाबल ॥ नाशयत्वमिमानद्यतदर्थंबोधितोभवान् ॥ १७ ॥ सर्वक्षपितकोशंचसत्वमभ्युपपद्यमाम् ॥ त्रायस्वेमांपुरींलंकांबालवृद्धावशेषिताम् ॥ १८ ॥ भ्रातुरर्थेमहाबाहोकुरुकर्मसुदुष्करम् ॥ मयैवंनोक्तपूर्वोहिभ्राताकश्चित्परंतप ॥ १९ ॥ त्वय्यस्तिममचस्नेहःपरासंभावनाचमे ॥ देवासुरेषुयुद्धेषुबहुशोराक्षसर्षभ ॥ त्वयादेवाःप्रतिव्यूह्यनिर्जिताश्चामरायुधि ॥ २० ॥ तदेतत्सर्वमातिष्ठवीर्यंभीमपराक्रम ॥ नहितेसर्वभूतेषुदृश्यतेसदृशोबली ॥ २१ ॥ कुरुष्वमेप्रियहितमेतदुत्तमंयथाप्रियंप्रियरणबांधवप्रिय ॥ स्वतेजसाव्यथयसपत्नवाहिनींशरद्घनंपवनइवोद्यतोमहान् ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ तस्यराक्षसराजस्यनिशम्यपरिदेवितम् ॥ कुंभकर्णोबभाषेदंवचनंप्रजहासच ॥ १ ॥ दृष्टोदोषोहियोस्माभिःपुरामंत्रविनिर्णये ॥ हितेष्वनभियुक्तेनसोयमासादितस्त्वया ॥ २ ॥ शीघ्रंखल्वभ्युपेतंत्वांफलंपापस्यकर्मणः ॥ निरयेष्वेवपतनंयथादुष्कृतकर्मणः ॥ ३ ॥ प्रथमंवैमहाराजकृत्यमेतदचिंतितम् ॥ केवलंवीर्यदर्पेणनानुबंधोविचारितः ॥ ४ ॥

हे प्रियरण हे बांधवप्रिय यथाप्रियं स्वप्रीत्यनुसारेण प्रियहितमुत्तमं हितं कुरुष्व ॥ २२ ॥ खैरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥ कनककरी० ॥ ५७ ॥ प्रजहास च विभीषणवचोनंगीकारफलं प्राप्तं दुरात्मनेति हासः ॥ १ ॥ तदेव प्रकाशयति दृष्ट इति । मंत्रविनिर्णये विभीषणेन सह मंत्रविचारकाले हितेषु हितवादिषु अनभियुक्तेन अश्रद्दधानेन सोयमासादितः मया विभीषणेन च दृष्टः सर्वनाशप्राप्तिरूपदोष इत्यर्थः ॥ २ ॥ लोके क्रमेण दोषं पुरुषाः प्रपद्यंते, त्वां त्वत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इति न्यायेन शीघ्रमेव परदारग्रहणरूपदुष्कर्मणः फलं प्राप्तमित्याह शीघ्रमिति । अभ्युपेतं प्राप्तं जातं यथा पापस्य प्रथमं निरयेष्वेव पतनं तद्वत् ॥ ३ ॥ प्रथमम् एतत्कृत्यं सर्वनाशप्राप्तिरूपं केवलं वीर्यदर्पेण न चिंतितम् अनुबंधो दोषोत्पादोपि न विचा

रितः इदं दुष्टं कर्म तस्य चैवं फलं भावीति द्वयमपि न विचारितमित्यर्थः । दोषोत्पादेऽनुबंधः स्यादित्यमरः ॥ ४ ॥ पूर्वकार्याणि पूर्वकर्तव्यकार्याणि यः पश्चात्कुर्यात् तथोत्तरकार्याणि च पूर्वम् । स नयानयौ न वेद अत्र पूर्वकार्यं विचारः पश्चात्कार्यं सीताहरणम् ॥ ५ ॥ तदेव प्रपंचयति देशेति । उचितदेशकालरहितानि विपरीतकालदेशयुक्तानि त्वत्कृततत्कर्मवद्दुष्यंति दुःखाय भवंति । अप्रयतेषु असावधानेषु असंस्कृते ष्वग्निषु च हवींषीव ॥ ६ ॥ अथ यथाकालदेशप्रयुक्तात्सिद्धिमाह त्रयाणामिति । क्षयवृद्धिस्थानलक्षणानां निश्चयपूर्वं कर्तव्यानां कर्मणां सामादीनां योगं प्रयोगं सचिवैः सह पंचधा पंचप्रकारं समयं प्रयोगसाधन विचारं कृत्वा यः प्रपद्यते स सम्यक् पथि वर्तते समीचीने नीतिमार्गे वर्तते तानि पंचप्रकारसाधनानि । कर्मणामारंभोपायः १ पुरुषद्रव्यसंपत् २ देशकालविभागः ३ विपत्तिप्रतीकारः ४ कार्यसिद्धिश्चेति ५ सम्य गित्यव्ययम् ॥ ७ ॥ एवं वर्तमानस्य प्रथमं बुद्धिसिद्धिः फलमित्याह यथागममिति । यथागमं नीतिशास्त्रमनतिक्रम्य यो राजा सचिवैः सह समयं चिकीर्षति क्षयादिकालोचितसामादिकर्मविचारमुक्तपंचप्रकारतत्प्र योगसाधनसंपत्तिविचारं च कर्तुमिच्छति तद्यथा । आत्मोपचयपरहानिसमये दंडोपयोगि यानम् । आत्मपरयोर्बलसाम्ये संधानम् । परोपचयात्महानिसमयेदानपूर्वं समाश्रयणमिति । बुद्ध्या स्वबुद्ध्या सचिवैः सह

यःपश्चात्पूर्वकार्याणिकुर्यादैश्वर्यमास्थितः ॥ पूर्वंचोत्तरकार्याणिनसवेदनयानयौ ॥ ५ ॥ देशकालविहीनानिकर्माणिविपरीतवत् ॥ क्रियमाणा निदुष्यंतिहवींष्यप्रयतेष्विव ॥ ६ ॥ त्रयाणांपंचधायोगंकर्मणांयःप्रपद्यते ॥ सचिवैःसमयंकृत्वासंसम्यग्वर्ततेपथि ॥ ७ ॥ यथागमंचयोराजासमयं चचिकीर्षति ॥ बुध्यतेसचिवैर्बुद्ध्यासुहृदश्चानुपश्यति ॥ ८ ॥ धर्ममर्थंहिकामंवासर्वान्वारक्षसांपते ॥ भजतेपुरुषःकालेत्रीणिद्वंद्वानिवापुनः ॥ ९ ॥ त्रिषुचैतेषुयच्छ्रेष्ठंश्रुत्वातन्नावबुध्यते ॥ राजावाराजमात्रोवाव्यर्थंतस्यबहुश्रुतम् ॥ १० ॥ उपप्रदानंसांत्वंचभेदंकालेचविक्रमम् ॥ योगंचरक्षसांश्रे ष्ठतावुभौचनयानयौ ॥ ११ ॥ कालेधर्मार्थकामान्यःसंमंत्र्यसचिवैःसह ॥ निषेवेतात्मवाँल्लोकेनसव्यसनमाप्नुयात् ॥ १२ ॥ हितानुबंधमालो क्यकुर्यात्कार्यमिहात्मनः ॥ राजासहार्थतत्त्वज्ञैःसचिवैर्बुद्धिजीविभिः ॥ १३ ॥ अनभिज्ञायशास्त्रार्थान्पुरुषाःपशुबुद्धयः ॥ प्रागल्भ्याद्वक्तुमिच्छं तिमंत्रिष्वभ्यंतरीकृताः ॥ १४ ॥

सुहृदश्चानुपश्यति अयं सुहृत् हितवक्ता अयं प्रभोः सुखमात्रजननेच्छया वदति न सुहृदित्यनुपश्यति कार्यवशेन विचारयति स बुध्यते कर्तव्याकर्तव्यविवेकबुद्धिं प्राप्नोति ॥ ८ ॥ अथ बुद्धिफलं पुरुषार्थसिद्धिरित्याह धर्ममिति । हिश्चार्थे काले तत्र प्रातर्धर्मसेवा ततोऽपराह्णेऽर्थसेवा रात्रौ कामसेवेति स्वस्वकाले त्रीणि धर्मादीनि भजते युवराजादिस्तु द्वंद्वानि वा द्वंद्वान्येव धर्मकामद्विकान्येव भजते अवांतरभेदाद्बहुत्वम् । सेवत इत्यर्थः ॥ ९ ॥ अथ धर्मविरुद्धे कामे प्राप्ते धर्म एव सेव्य इत्याह त्रिष्विति । एतेषु त्रिषु धर्मादिषु सर्वमूलत्वाद्यच्छ्रेष्ठं धर्मरूपं वस्तु तदाप्तेभ्यः श्रुत्वापि नावबुध्यते विरोधे धर्मस्यैवानुष्ठेयत्वं न बुध्यते । यो राजा महाराजो राजमात्रं युवराजः तस्य बहुश्रुतं व्यर्थम् ॥ १० ॥ सांत्वं साम एवं दानादिचतुष्कम् योगमुक्तपंचविधप्रयोगसाधनसंपादनम् । तावुभौ नयानयौ प्रसिद्धौ प्रयोगाप्रयोगकालौ धर्मादींश्च काले सचिवैः सह संमंत्र्यात्मवान् जितेंद्रियो भूत्वा निषेवतेऽनुतिष्ठति स व्यसनं नाप्नुयात् ॥ ११ ॥ १२ ॥ किंच स एव राजापि भवतीत्याह हितानुबंधमिति । य उच्यमानगुणैः सचिवैः सह हितानुबंधं शुभमुदर्कफलमा लोक्य विचार्यात्मनः कार्यं कुर्यात्स राजा भवतीत्यन्वयः ॥ १३ ॥ अथोत्तममंत्रिविभीषणादिमतमपहाय दुर्मंत्रिभिर्मंत्रणमूलः सर्वानर्थ इत्याह अनभिज्ञायेति । प्रागल्भ्याच्छब्दरचनामात्रसामर्थ्यात् ॥ १४ ॥

अशास्त्रविदुषामित्यस्यैव व्याख्या अर्थशास्त्रानभिज्ञानामिति । अथापि विपुलां श्रियं केवलं हठादेवेच्छतां वचनं न कार्यमित्यन्वयः ॥ १५ ॥ राजभिर्मंत्रकाले दुर्मंत्रिनिरासः सर्वथा कार्य इत्याह अहितं चेति । धाष्ट्यात्साहसाद्ये जल्पंति ते मंत्रबाह्या अवश्यं कर्तव्याः ॥ १६ ॥ विनाशयंत इति । केचन दुर्मंत्रिणो भर्तारं त्वां नाशयंतः हेतौ शता । तत्र नाशनिमित्तम् ॥ विपरीतानि कृत्यानि कारयंति । केचित्सुमंत्रिणो दुर्मंत्रफलं तव नाशं पश्यंतो बुधैः सर्वज्ञैस्तव शत्रुभिः सहिताः स्वरक्षणं कुर्वंतीति शेषः ॥ १७ ॥ सुमंत्रित्वदुर्मंत्रित्वनिर्णयः कथं तत्राह तानिति । मंत्रनिर्णये चिकीर्षिते तान्मित्रसंकाशान् अमित्रान् उपसंहितान् उत्कोचादिना शत्रुवशीकृतान्सचिवसंकाशान्व्यवहारेण तत्तन्मंत्रनार्थक्रियालक्षणव्यवहारेण जानीयात् ॥ १८ ॥ चपलस्य आपातसुखजनकवचनसंतुष्टस्य सहसा अविचारेण कृत्यानि अनुप्रधावतः कुर्वतः अन्ये शत्रवः क्षिप्रं खं रंध्रं मपद्यंते । द्विजाः पक्षिणः स्कंदशक्तिविदारितक्रौंचस्य क्रौंचाख्याचलस्य खं रंध्रमिव ॥ १९ ॥ अवज्ञाय अवमत्य स्थानाद्राजपदव्याः व्यवरोप्यते निवर्त्यते ॥ २० ॥ प्रियया

अशास्त्रविदुषांतेषांकार्यंनाभिहितंवचः ॥ अर्थशास्त्रानभिज्ञानांविपुलांश्रियमिच्छताम् ॥ १५ ॥ अहितंचहिताकारंधाष्ट्याज्जल्पंतियेनराः ॥ अवश्यं मंत्रबाह्यास्ते[illegible]र्तव्याःकृत्यदूषकाः ॥ १६ ॥ विनाशयंतोभर्तारंसहिताःशत्रुभिर्बुधैः ॥ विपरीतानिकृत्यानिकारयंतीहमंत्रिणः ॥ १७ ॥ तान्भर्ता मित्रसंकाशान[illegible]मित्रान्मंत्रनिर्णये ॥ व्यवहारेणजानीयात्सचिवानुपसंहितान् ॥ १८ ॥ चपलस्येहकृत्यानिसहसानुप्रधावतः ॥ क्षिप्रमन्येप्रपद्यंते क्रौंचस्यखमिवद्विजाः ॥ १९ ॥ योहिशत्रुमवज्ञायआत्मानंनाभिरक्षति ॥ अवाप्नोतिहिसोऽनर्थान्स्थानाच्चव्यवरोप्यते ॥ २० ॥ यदुक्तमिहते पूर्वंप्रिययामेनुजेनच ॥ तदेवनोहितंवाक्यंयथेच्छसितथाकुरु ॥२१॥ तत्तुश्रुत्वादशग्रीवःकुंभकर्णस्यभाषितम् ॥ भ्रुकुटिंचैवसंचक्रेक्रुद्धश्चैनमभाषत ॥ २२ ॥ मान्योगुरुरिवाचार्यःकिंमांत्वमनुशाससि ॥ किमेवंवाक्श्रमंकृत्वायद्युक्तंतद्विधीयताम् ॥ २३ ॥ विभ्रमाच्चित्तमोहाद्वाबलवीर्याश्रयेणवा ॥ नाभिपन्नमिदानींयद्व्यर्थातस्यपुनःकथा ॥ २४ ॥ अस्मिन्कालेतुयद्युक्तंतदिदानींविचिंत्यताम् ॥ ममापनयजंदुःखंविक्रमेणसमीकुरु ॥ २५ ॥ यदि खल्वस्तिमेस्नेहोविक्रमंवाधिगच्छसि ॥ यदिकार्यंममैतत्तेहृदिकार्यतमंमतम् ॥ २६ ॥ ससुहृद्योविपन्नार्थंदीनमभ्युपपद्यते ॥ सबंधुर्योपनीतेषुसा हाय्यायोपकल्पते ॥ २७ ॥

मंदोदर्या मेऽनुजेन विभीषणेन समानार्थे च तयोर्वाक्ये इति मंदोदरीवाक्यं न पृथगुक्तम् । स्वमतिसदृशमतित्वान्मेनुज इत्युक्तम् ॥ २१ ॥ २२ ॥ अहं तव गुरुरिव निषेककर्तेव आचार्य इव द्वितीयजन्मद इव च मान्यः एवं वाक्श्रमं कृत्वा किं फलं न किमपि अतोऽत्र काले यद्युक्तं तद्विधीयताम् ॥ २३ ॥ किं च त्वदुक्तं सत्यमेव, तथापि गते जले सेतुबंधवदेषा कथा व्यर्थेत्यनुष्ठेयमनुतिष्ठेत्याह विभ्रमादिति । विभ्रमो विपरीतज्ञानं चित्तमोहोऽज्ञानं तदादिदोषेण युष्मदुक्तं हितं तत्काले नाभिपन्नं नांगीकृतमिदानीमतीतकालस्य पुनः कथा व्यर्थेत्यर्थः ॥ २४ ॥ यद्येवमतोस्मिन्निति अपनयजम् अनीतिजम् । विक्रमेण वीर्येण ॥ २५ ॥ विक्रमं वेत्यस्य स्वस्मिन्नित्यादिः । एतत्कार्यं युद्धानुष्ठानरूपं यदि कार्यतममतिशयेनानुष्ठातुं योग्यं कार्यमिति तव संमतं तदा युद्धं कुर्विति संबंधः ॥ २६ ॥ किं च यदि सुहृत्त्वं बन्धुत्वमेवेदं कार्यमित्याह स इति । विपन्नार्थं विनष्टसर्वकार्यम् । अत एव दीनम् । अभ्युपपद्यतेऽनुगृह्णाति स एव सुहृद् बंधुत्वेप्येतदेव न्याय्यमित्याह स इति । अपनीतेषु अनीतिमार्गस्थेषु ॥ २७ ॥

धीरदारुणं इच्छा चेत्कुर्वित्युक्तेर्धीरत्वं स सुहृद्य इत्युक्तेर्दारुणत्वम् ॥ २८ ॥ २९ ॥ संतापमुपपद्य प्राप्य अलं तापो न कार्य इत्यर्थः ॥ ३० ॥ एतद्दैन्यं यत्कृते यन्निमित्तम् ॥ ३१ ॥ सर्वावस्थां सुखदुःखादिसर्वावस्थां गतं प्राप्तं त्वां प्रतीति शेषः । विष्णोरभक्तिकावस्था सर्वावस्थेति गीयत इत्यन्ये ॥ ३२ ॥ यन्मम पराक्रमस्य सदृशम् अस्मिन्काले च स्निग्धेन बंधुना कर्तुं योग्यं तन्मया क्रियमाणं शत्रूणां कदनं पश्य ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ दाशरथिं जिघांसुभिरस्माभिः परिसांत्वितोपि कथं व्यथसे ॥ ३९ ॥ व्यथाहेतुर्नास्तीत्याह मामिति । मां निहत्य तदनंतरं

तमथैवंब्रुवाणंसवचनंधीरदारुणम् ॥ रुष्टोऽयमितिविज्ञायशनैःश्लक्ष्णमुवाचह ॥ २८ ॥ अतीवहिसमालक्ष्यभ्रातरंक्षुभितेंद्रियम् ॥ कुंभकर्णःशनैर्वाक्यंवभाषेपरिसांत्वयन् ॥ २९ ॥ शृणुराजन्नवहितोममवाक्यमरिंदम ॥ अलंराक्षसराजेंद्रसंतापमुपपद्यते ॥ रोषंचसंपरित्यज्यस्वस्थोभवितुमर्हसि ॥३०॥ नैतन्मनसिकर्तव्यंमयिजीवतिपार्थिव ॥ तमहंनाशयिष्यामियत्कृतेपरितप्यते ॥३१॥ अवश्यंचहितंवाच्यंसर्वावस्थागतंमया ॥ बंधुभावादभिहितंभ्रातृस्नेहाच्चपार्थिव ॥ ३२ ॥ सदृशंयच्चकालेस्मिन्कर्तुंस्नेहेनबंधुना ॥ शत्रूणांकदनंपश्यक्रियमाणंमयारणे ॥ ३३ ॥ अद्यपश्यमहाबाहोमयासमरमूर्धनि ॥ हतेरामेसहभ्रात्राद्रवंतींहरिवाहिनीम् ॥३४॥ अद्यरामस्यतद्दृष्ट्वामयानीतंरणाच्छिरः ॥ सुखीभवमहाबाहोसीताभवतुदुःखिता ॥ ॥ ३५ ॥ अद्यरामस्यपश्यंतुनिधनंसुमहत्प्रियम् ॥ लंकायांराक्षसाःसर्वेयेतेनिहतबांधवाः ॥ ३६ ॥ अद्यशोकपरीतानांस्वबंधुवधशोचिनाम् ॥ शत्रोर्युधिविनाशेनकरोम्यश्रुप्रमार्जनम् ॥ ३७॥ अद्यपर्वतसंकाशंससूर्यमिवतोयदम् ॥ विकीर्णंपश्यसमरेसुग्रीवंप्लवगेश्वरम् ॥ ३८ ॥ कथंचराक्षसैरेभिर्मयाचपरिसांत्वितः ॥ जिघांसुभिर्दाशरथिंव्यथसेत्वंसदानघ ॥ ३९ ॥ मांनिहत्यकिलत्वांहिनिहनिष्यतिराघवः ॥ नाहमात्मनिसंतापंगच्छेयंराक्षसाधिप ॥ ४० ॥ कामंत्विदानीमपिमांव्यादिशत्वंपरंतप ॥ नपरःप्रेक्षणीयस्तेयुद्धायातुलविक्रम ॥ ४१ ॥ अहमुत्सादयिष्यामिशत्रूंस्तवमहा[illegible] ॥ यदिशक्रोयदियमोयदिपावकमारुतौ ॥ ४२ ॥ तानहंयोधयिष्यामिकुबेरवरुणावपि ॥ गिरिमात्रशरीरस्याशितशूलधरस्यमे ॥ ॥ ४३ ॥ नर्दतस्तीक्ष्णदंष्ट्रस्यबिभीयाद्वैपुरंदरः ॥ अथवात्यक्तशस्त्रस्यमृद्नतस्तरसारिपून् ॥ ४४ ॥ नमेप्रतिमुखःकश्चित्स्थातुंशक्तोजिजीविषुः ॥ नैवशक्त्यानगदयानासिनानिशितैःशरैः ॥४५॥ हस्ताभ्यामेवसंरभ्यहनिष्यामिसवज्रिणम् ॥ यदिमेमुष्टिवेगंसराघवोद्यसहिष्यति ॥ ४६ ॥ ततःपास्यंतिवाणौघारुधिरंराघवस्यमे॥ चिंतयातप्यसेराजन्किमर्थंक्षयितिष्ठति ॥ ४७ ॥ सोहंशत्रुविनाशायतवनिर्यातुमुद्यतः ॥ मुंचरामाद्भयंघोरंनिहनिष्यामिसंयुगे ॥ ४८ ॥ राघवंलक्ष्मणंचैवसुग्रीवंचमहाबलम् ॥ हनूमंतंचरक्षोघ्नंयेनलंकाप्रदीपिता ॥ ४९ ॥ हरींश्चभक्षयिष्यामिसंयुगेसमुपस्थिते ॥ असाधारणमिच्छामितवदातुंमहद्यशः ॥ ५० ॥ यदिचेंद्राद्भयंराजन्यदिचापिस्वयंभुवः ॥ अपिदेवाःशयिष्यंतेमयिक्रुद्धेमहीतले ॥ ५१ ॥

किल त्वां निहनिष्यति । तत्र ममैव हननं तेनाशक्यम् अतएवाह नात्मनि स्वविषये संतापं रामविषयं भयं गच्छेयम् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ मे मुष्टिवेगं राघवो यदि सहिष्यति तदा राघवस्य वाणौघा मे रुधिरं पास्यंति तत्सहनमेव तस्याशक्यमिति भावः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥५०॥ इंद्रादिभ्योपि यदि भयं तथापि तवासाधारणं यशो जयनं दातुमिच्छामि तद्भय हतवो

॥१६॥१७॥ विजज्वाळ रुधिरप्रवाहैर्ज्वालाव्याप्त इव बभूव॥१८॥१९॥नित्यशः प्रतिदिनम्॥२०॥रक्षांस्याव्हाहयामास गायत्रीलक्षणेन मंत्रेणाज्ञु हावेत्यर्थः॥२१॥आश्वस्तो जातविश्रंभः परमसंभ्रांत इति यावत्॥ ॥२२॥पौलस्त्येन विश्रवसा मृतकल्पः शयिष्यसे इति। अयंशापः स्वतुं वर्षाण्यनेकानि देवदेव ममेप्सितम्॥ एवमस्त्विति तं चोक्त्वा प्रहृष्टास्ते ।दिवौकस इति तपश्चर्यानंतरं प्रार्थनालब्धबहुवार्षिकनिद्रासमनंतरकाल इति बोध्यम्। मृतकल्पः शयिष्यस इति शापस्य तपश्चर्याद्यसंभवात्। पूर्वं जातमात्रेणेत्युक्तिस्तु तपोविशिष्टतया जातमात्रेणेत्यर्थिका ॥ २३ ॥ २४ ॥ प्रवृद्धः प्रवर्द्धित इत्यर्थः। कांचनः कांचनफलकः फल काले कांचनरूपफलप्राप्तिकाले निकृत्यते छिद्यते साक्षात्स्वकं नप्तारमेवं शप्तुं न न्याय्यम्॥ २५ ॥ पुनरपि रावण आह न मिथ्येति। अतोयं स्वप्स्यत्येव न संशयः जाग्रणे जागरणे गुणाभाव आर्षः। कालः

तस्यनानद्यमानस्यकुंभकर्णस्यरक्षसः ॥ श्रुत्वानिनादंवित्रस्ताःप्रजाभूयोवितत्रसुः ॥ १६ ॥ ततःक्रुद्धोमहेंद्रस्यकुंभकर्णोमहाबलः ॥ निष्कृष्यै रावतादंतंजघानोरसिवासवम् ॥ १७॥ कुंभकर्णप्रहारार्तोविजज्वालसवासवः ॥ ततोविषेदुःसहसादेवाब्रह्मर्षिदानवाः ॥ प्रजाभिःसहशक्रश्चययौ स्थानंस्व[illegible]ः ॥१८॥ कुंभकर्णस्यदौरात्म्यंशशंसुस्तेप्रजापतेः ॥ प्रजानांभक्षणंचापिशशंसुस्तेदिवौकसाम् ॥ आश्रमध्वंसनंचापिपरस्त्रीहरणंतथा ॥ १९ [illegible]ःप्रजायदित्वेषभक्षयिष्यतिनित्यशः ॥ अचिरेणैवकालेनशून्योलोकोभविष्यति ॥ २० ॥ वासवस्यवचःश्रुत्वासर्वलोकपितामहः ॥ रक्षांस्यावाहयामासकुंभकर्णंददर्शह ॥ २१ ॥ कुंभकर्णंसमीक्ष्यैववितत्रासप्रजापतिः ॥ कुंभकर्णमथाश्वस्तःस्वयंभूरिदमब्रवीत् ॥ २२ ॥ ध्रुवंलोक विनाशायपौलस्त्येनासिनिर्मितः ॥ तस्मात्त्वमद्यप्रभृतिमृतकल्पःशयिष्यसे ॥ २३ ॥ ब्रह्मशापाभिभूतोथनिपपाताग्रतःप्रभोः ॥ ततःपरमसंभ्रांतो रावणोवाक्यमब्रवीत् ॥ २४ ॥ प्रवृद्धःकांचनोवृक्षःफलकालेनिकृत्यते ॥ ननप्तारंस्वकंन्याय्यंशप्तुमेवंप्रजापते ॥ २५ ॥ नमिथ्यावचनश्चत्वं स्वप्स्यत्येवनसंशयः ॥ कालस्तुक्रियतामस्यशयनेजाग्रणेतथा ॥ २६ ॥ रावणस्यवचःश्रुत्वास्वयंभूरिदमब्रवीत् ॥ शयिताह्येषषण्मासमेकाहंजाग रिष्यति॥ २७ ॥ एकेनाह्नात्वसौवीरश्चरन्भूमिंबुभुक्षितः ॥ व्यात्तास्योभक्षयेल्लोकान्संवृद्धइवपावकः ॥ २८ ॥ सोसौव्यसनमापन्नःकुंभकर्णमबो धयत् ॥ त्वत्पराक्रमभीतश्चराजासंप्रतिरावणः ॥ २९ ॥ सएषनिर्गतोवीरःशिबिराद्भीमविक्रमः ॥ वानरान्भृशसंक्रुद्धोभक्षयन्परिधावति ॥ ३० ॥ कुंभकर्णंप्रतीक्ष्यैवहरयोद्यप्रदुद्रुवुः ॥ कथमेनंरणेक्रुद्धंवारयिष्यंतिवानराः ॥ ३१ ॥ उच्यंतांवानराःसर्वेयंत्रमेतत्समुच्छ्रितम् ॥ इतिविज्ञायहरयोभ विष्यंतीहानिर्भयाः ॥ ३२ ॥

कालनियमः ॥ २६ ॥ षण्मासं त्ववश्यं शयिता न तु ततो न्यूनम्। आधिकं तु न निवार्यते तद्बीजमुक्तं जागरणं त्वेकाहमेव सत्यत्याहिते कार्ये इति शेषः। अतएवेंद्रलोकनयाय रावणस्य कुंभकर्णेन सहगमने प्रथमदिने मधुपुरे वास उक्तो द्वितीयदिने कैलासे यत्र रंभायां बलाद्रावणस्य प्रवृत्तिस्तदनंतरम्। कुंभकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यत इत्यादिना तृतीयदिवसादिषु युद्धमुक्तम् तेन युद्धप्रसंगेऽनेकदिनमपि जाग रणं प्रतीयते ॥ २७ ॥ २८ ॥ इदानीं तस्याकाले बोधननिमित्तमाह सोसाविति ॥ २९ ॥ शिबिरात्स्वगृहात् भक्षयन् हेतौ शता। भक्षार्थमित्यर्थः ॥ ३० ॥ पुना रामः पृच्छति कथमेनमिति ॥ ३१ ॥ विभीषण उत्तरमाह उच्यतामिति। समुच्छ्रितं रावणेन मायया विभीषिकार्थं निर्मितं किंचिद्यंत्रमात्रम् अतो न किंचिदेतादित्येव वानरा उच्यंतां मया स्वामिभिश्च, न तु रावणानुजत्वादिकामित्यर्थः। एवं च

कार्यसिद्धिरित्याह इतीति । इह एतस्मिन्विषये ॥ ३२ ॥ हेतुमद्युक्तिमत् सुमुखोद्गतं वानरलोकस्य सौमुख्यसंपादनायोद्गतमुपादिष्टं वचः प्रागुक्तं श्रुत्वा नीलं प्रति वाक्यमुवाच ॥ ३३ ॥ यथापूर्वं द्वारनिरोधे नियुंक्ते गच्छेति । अनेन रावणपलायनोत्तरं मध्येऽवहारः सूचितः ॥ ३४ ॥ शैलशृंगादीन्युपसंहरन् उपसंहरंतः संचिन्वंतो भवंतस्तिष्ठंत्विति शेषः ॥ ३५ ॥ ३६ ॥ ३७ ॥ रामवाक्यं यंत्रमात्रमिदमित्येवं रूपं जितकाशिनो निर्भयाः परवाहिनीं पुराद्बहिः पुरीपरिसररक्षिणीं राक्षससेनामित्यर्थः ॥ ३८ ॥ शैलोद्यतेति । उद्यतशैलं वृक्षहस्तं च गिरेः समीपानुगतं पर्वताग्रवर्तिलंकायाः परितो वर्तमानत्वात्तत्त्वं महन्महादेशव्यापि संस्थानवत् ॥ ३९ ॥ धैर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये वाल्मीकीये आदिकाव्ये युद्धकांडे एकषष्टितमः सर्गः ॥ ६१ ॥ कतकरी० ॥ ५६ ॥ अथ रावणेन कुंभकर्णनियोजनं स त्विति

विभीषणवचःश्रुत्वाहेतुमत्सुमुखोद्गतम् ॥ उवाचराघवोवाक्यंनीलंसेनापतिंतदा ॥ ३३ ॥ गच्छसैन्यानिसर्वाणिव्यूह्यतिष्ठस्वपावके ॥ द्वाराण्यादायलंकायाश्चर्याश्चास्याथसंक्रमान् ॥ ३४ ॥ शैलशृंगाणिवृक्षांश्चशिलाश्चाप्युपसंहरन् ॥ भवंतःसायुधाःसर्वेवानराःशैलपाणयः ॥ ३५ ॥ राघवेणसमादिष्टोनीलोहरिचमूपतिः ॥ शशासवानरानीकंयथावत्कपिकुंजरः ॥ ३६ ॥ ततोगवाक्षःशरभोहनूमानंगदस्तथा ॥ शैलशृंगाणिशैलाभागृहीत्वाद्वारमभ्ययुः ॥ ३७ ॥ रामवाक्यमुपश्रुत्यहरयोजितकाशिनः ॥ पादपैरर्दयन्वीरावानराःपरवाहिनीम् ॥ ३८ ॥ ततोहरीणांतदनीकमुग्रंराजशैलोद्यतवृक्षहस्तम् ॥ गिरेःसमीपानुगतंयथैवमहन्महांभोधरजालमुग्रम् ॥ ३९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकषष्टितमःसर्गः ॥ ६१ ॥ सतुराक्षसशार्दूलोनिद्रामदसमाकुलः ॥ राजमार्गंश्रियाजुष्टंययौविपुलविक्रमः ॥ १ ॥ राक्षसानांसहस्रैश्चवृतःपरमदुर्जयः ॥ गृहेभ्यःपुष्पवर्षेणकीर्यमाणस्तदाययौ ॥ २ ॥ सहेमजालविततंभानुभास्वरदर्शनम् ॥ ददर्शविपुलंरम्यंराक्षसेंद्रनिवेशनम् ॥ ३ ॥ सतत्तदासूर्यइवाभ्रजालंप्रविश्यरक्षोधिपतेर्निवेशनम् ॥ ददर्शदूरेग्रजमासनस्थंस्वयंभुवंशक्रइवासनस्थम् ॥ ४ ॥ भ्रातुःसभवनंगत्वारक्षोगणसमन्वितः ॥ कुंभकर्णः[illegible]ासैरकंपयतमेदिनीम् ॥ ५ ॥ सोभिगम्यगृहंभ्रातुःकक्ष्यामभिविगाह्यच ॥ ददर्शोद्विग्नमासीनंविमानेपुष्पकेगुरुम् ॥ ६ ॥ अथदृष्ट्वादशग्रीवःकुंभकर्णमुपस्थितम् ॥ तूर्णमुत्थायसंहृष्टःसन्निकर्षमुपानयत् ॥ ७ ॥ अथासीनस्यपर्यंकेकुंभकर्णोमहाबलः ॥ भ्रातुर्ववंदेचरणौकिंकृत्यमितिचाब्रवीत् ॥ ८ ॥ पुनःसमुदितोत्पत्यरावणःपरिषस्वजे ॥ सभ्रात्रासंपरिष्वक्तोयथावच्चाभिनंदितः ॥ ९ ॥ कुंभकर्णःशुभंदिव्यंप्रतिपेदेवरासनम् ॥ सतदासनमाश्रित्यकुंभकर्णोमहाबलः ॥ १० ॥ संरक्तनयनःक्रोधाद्रावणंवाक्यमब्रवीत् ॥ किमर्थमहमादृत्यत्वयाराजन्प्रबोधितः ॥ ॥ ११ ॥ शंसकस्माद्भयंतेत्रकोवाप्रेतोभविष्यति ॥ भ्रातरंरावणःक्रुद्धंकुंभकर्णमवस्थितम् ॥ रोषेणपरिवृत्ताभ्यांनेत्राभ्यांवाक्यमब्रवीत् ॥ १२ ॥

॥ १ ॥ गृहेभ्यस्तत्तद्गृहवर्तिस्त्रीहस्तेभ्यः निर्गतेनेति शेषः ॥ २ ॥ भानुवत्सूर्यवद्भास्वरं दर्शनं यस्य तत् भानुभिः सूर्यकिरणैर्भास्वरं दर्शनं यस्येति च । रत्नेषु सूर्यकिरणसंबंधादधिकतेजोवत्त्वं गृहस्येति भावः । इदमेव युक्तम् ॥ ३ ॥ ४ ॥ ५ ॥ कक्ष्यामभि विगाह्य द्वाराणि तीर्त्वा ॥ ६ ॥ उपस्थितं प्राप्तम् ॥ ७ ॥ ८ ॥ समुदितोत्पत्य स रावणो मुदितः समुत्पत्यासनादुत्थायेत्यर्थः । संधिरार्षः ॥ ९ ॥ १० ॥ क्रोधादकाले उद्बोधनकोपात् । कोपादिति पाठांतरम् । तदेव दर्शयति किमर्थमिति । आदृत्य यत्नं कृत्वा ॥ ११ ॥ प्रेतो भविष्यति मया निहत इति शेषः । रोषेणेषत्परिवृत्ताभ्यां नेत्राभ्यामुपलक्षितं कुंभकर्णमिदं

यतो निद्रापगमाभावेनाकालबोधनादिति भावः ॥ ६६ ॥ आदृत्य आदरपूर्वम् । यत्नपूर्वमितियावत् ॥ ६७ ॥ अन्येभ्यः शत्रुभ्यः यदर्थं यद्भयनिवृत्तये ॥ ६८ ॥ ६९ ॥ अर्थतत्त्वेन याथार्थ्येन ॥ ७० ॥ ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ननिंद्रादिभिरपि दुष्करपीडनमस्मत्पुरं कथं वानरैः पीडितं तत्राह एकेनेति ॥ ७५ ॥ संयुगे मुक्तः जीवन्मृत इत्युक्त्वेति शेषः ॥ ७६ ॥ यत्र कृतः यामवस्थां न

किमर्थमहमादृत्यभवद्भिःप्रतिबोधितः ॥ कच्चित्सुकुशलंराज्ञोभयंवानेहकिंचन ॥ ६७ ॥ अथवाध्रुवमन्येभ्योभयंपरमुपस्थितम् ॥ यदर्थमेवत्वरितै र्भवद्भिःप्रतिबोधितः ॥ ६८ ॥ अद्यराक्षसराजस्यभयमुत्पाटयाम्यहम् ॥ दारयिष्येमहेंद्रंवाशीतयिष्येतथानलम् ॥ ६९ ॥ नह्यल्पकारणेसुप्तंबोध यिष्यतिमादृशम् ॥ तदाख्यातार्थतत्त्वेनमत्प्रबोधनकारणम् ॥ ७० ॥ एवंब्रुवाणंसंरब्धंकुंभकर्णमरिंदमम् ॥ यूपाक्षःसचिवोराज्ञःकृतांजलिरभाषत ॥ ७१ ॥ ननोदेवकृतंकिंचिद्भयमस्तिकदाचन ॥ मानुषान्नोभयंराजंस्तुमुलंसंप्रबाधते ॥ ७२ ॥ नदैत्यदानवेभ्योवाभयमस्तिननःक्वचित् ॥ यादृशंमानुषंराजन्भयमस्मानुपस्थितम् ॥ ७३ ॥ वानरैःपर्वताकारैर्लंकेयंपरिवारिता ॥ सीताहरणसंतप्ताद्रामान्नस्तुमुलंभयम् ॥ ७४ ॥ एकेनवान रेणेयंपूर्वंदग्धामहापुरी ॥ कुमारोनिहतश्चाक्षःसानुयात्रःसकुंजरः ॥ ७५ ॥ स्वयंरक्षोधिपश्चापिपौलस्त्योदेवकंटकः ॥ व्रजेतिसंयुगेमुक्तोरामेणा दित्यवर्चसा ॥ ७६ ॥ यन्नदेवैःकृतोराजानापिदैत्यैर्नदानवैः ॥ कृतःसइहरामेणविमुक्तःप्राणसंशयात् ॥ ७७ ॥ सयूपाक्षवचःश्रुत्वाभ्रातुर्युधिपराभवम् ॥ कुंभकर्णोविवृत्ताक्षोयूपाक्षमिदमब्रवीत् ॥ ७८ ॥ सर्वमद्यैवयूपाक्षहरिसैन्यंसलक्ष्मणम् ॥ राघवंचरणेजित्वाततोद्रक्ष्यामिरावणम् ॥ ७९ ॥ राक्षसांस्तर्पयिष्यामिहरीणांमांसशोणितैः ॥ रामलक्ष्मणयोश्चापिस्वयंपास्यामिशोणितम् ॥ ८० ॥ तत्तस्यवाक्यंब्रुवतोनिशम्यसगर्वितंरोषविवृद्धदो षम् ॥ महोदरोनैर्ऋतयोधमुख्यःकृतांजलिर्वाक्यमिदंबभाषे ॥ ८१ ॥ रावणस्यवचः श्रुत्वागुणदोषौविमृश्यच ॥ पश्चादपिमहाबाहोशत्रून्युधि विजेष्यसि ॥ ८२ ॥ महोदरवचः श्रुत्वाराक्षसैःपरिवारितः ॥ कुंभकर्णोमहातेजाःसंप्रतस्थेमहाबलः ॥ ८३ ॥ सुप्तमुत्थाप्यभीमाक्षंभीमरूपपराक्रमम् ॥ राक्षसास्त्वरिताजग्मुर्दशग्रीवनिवेशनम् ॥ ८४ ॥ तेभिगम्यदशग्रीवमासीनंपरमासने ॥ ऊचुर्बद्धांजलिपुटाःसर्वएवनिशाचराः ॥ ८५ ॥ कुंभकर्णः प्रबुद्धोसौभ्रातातेराक्षसेश्वर ॥ कथंतत्रैवनिर्यातुद्रक्ष्यसेतमिहागतम् ॥ ८६ ॥ रावणस्त्वब्रवीद्धृष्टोराक्षसांस्तानुपस्थितान् ॥ द्रष्टुमेनमिहेच्छामियथान्यायं चपूज्यताम् ॥ ८७ ॥ तथेत्युक्त्वातुतेसर्वेपुनरागम्यराक्षसाः ॥ कुंभकर्णमिदंवाक्यमूचूरावणचोदिताः ॥ ८८ ॥ द्रष्टुंत्वांकांक्षतेराजासर्वराक्षसपुंगवः ॥ गमनेक्रियतांबुद्धिर्भ्रातरंसंप्रहर्षय ॥ ८९ ॥ कुंभकर्णस्तुदुर्धर्षोभ्रातुराज्ञायशासनम् ॥ तथेत्युक्त्वामहावीर्यःशयनादुत्पपातह ॥ ९० ॥ प्रक्षाल्यवदनंहृष्टः स्नातःपरमहर्षितः ॥ पिपासुस्त्वरयामासपानंबलसमीरणम् ॥ ९१ ॥

भाषितः स रामेण कृतस्तामवस्थां भापितः प्राणसंशयात्तयावस्थया प्राप्तो विमुक्तश्च ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ सगर्वितं सगर्वम् । रोषेण विवृद्धो दोषो दुर्नयरूपो यस्य तम् ॥ ८१ ॥ ८२ ॥ संप्रतस्थे प्रस्थानमुपचक्रमे ॥ ८३ ॥ ८४ ॥ ८५ ॥ तत्रैव स्थितो युद्धाय निर्यातु आहोस्विदिहागतं द्रक्ष्यसे ॥ ८६ ॥ पूज्यतां स इति शेषः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ बलसमीरणं बलवृ

द्धिकरम् ॥ ९१ ॥ उपहारयन् उपाहारयन् ॥ ९२ ॥ ईषत्समुत्कटो मत्तः तावन्मधुपानेनापीषदेव समुत्कटो मत्तश्चेत्यर्थः ॥ ९३ ॥ ९४ ॥ वपुषा देहकांत्या ॥ ९५ ॥ अप्रमेयत्वे हेतुर्गिरिशृंगकल्पत्वम् ॥ ९६ ॥ ९७ ॥ आत्मतेजसा आदित्यं स्पृशंतमिव तत्सदृशमितियावत् । मायो दिनद्वयेनास्य जागरः ॥ ९८ ॥ दंधमानाः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये

ततस्तेत्वरितास्तत्रराक्षसारावणाज्ञया ॥ मद्यंभक्ष्यांश्चविविधान्क्षिप्रमेवोपहारयन् ॥ ९२ ॥ पीत्वाघटसहस्रेद्वेगमनायोपचक्रमे ॥ ईषत्समुत्कटो मत्तस्तेजोबलसमन्वितः ॥ ९३ ॥ कुंभकर्णोवभौरुष्टःकालांतकयमोपमः ॥ भ्रातुःसभवनंगच्छन्रक्षोबलसमन्वितः ॥ कुंभकर्णःपदन्यासैरकंपयतमे दिनीम् ॥ ९४ ॥ सराजमार्गंवपुषाप्रकाशयन्सहस्ररश्मिर्धरणीमिवांशुभिः ॥ जगामतत्रांजलिमालयावृतःशतक्रतुर्गेहमिवस्वयंभुवः ॥ ९५ ॥ तंराजमार्गस्थममित्रघातिनंवनौकसस्तेसहसाबहिःस्थिताः ॥ दृष्ट्वाप्रमेयंगिरिशृंगकल्पंवितत्रसुस्तेसहयूथपालैः ॥ ९६ ॥ केचिच्छरण्यंशरणंस्मरामं व्रजंतिकेचिद्व्यथिताःपतंति ॥ केचिद्दिशश्चव्यथिताःपतंतिकेचिद्भयार्ताभुविशेरतेस्म ॥ ९७ ॥ तमद्रिशृंगप्रतिमंकिरीटिनंस्पृशंतमादित्यमिवात्मते जसा ॥ वनौकसःप्रेक्ष्यविवृद्धमद्भुतंभयार्दितादुद्रुविरेयतस्ततः ॥ ९८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे षष्टितमः सर्गः ॥ ६० ॥

ततोरामोमहातेजाधनुरादायवीर्यवान् ॥ किरीटिनंमहाकायंकुंभकर्णंददर्शह ॥ १ ॥ तंदृष्ट्वाराक्षसश्रेष्ठंपर्वताकारदर्शनम् ॥ क्रममाणमिवाकाशंपुरा नारायणंयथा ॥ २ ॥ सतोयांबुदसंकाशंकांचनांगदभूषणम् ॥ दृष्ट्वापुनःप्रदुद्रावबानराणांमहाचमूः ॥ ३ ॥ विद्रुतांवाहिनींदृष्ट्वावर्धमानंचराक्षसम् ॥ सविस्मितमिदंरामोविभीषणमुवाचह ॥ ४ ॥ कोसौपर्वतसंकाशःकिरीटीहरिलोचनः ॥ लंकायांदृश्यतेवीरःसविद्युदिवतोयदः ॥ ५ ॥ पृथिव्यांकेतुभूतो सौमहानेकोत्रदृश्यते ॥ यंदृष्ट्वावानराःसर्वेविद्रवंतियतस्ततः ॥ ६ ॥ आचक्ष्वसुमहान्कोसौरक्षोवायदिवासुरः ॥ नमयैवंविधंभूतंदृष्टपूर्वंकदाचन ॥ ७ ॥ संपृष्टोराजपु[illegible]रामेणाक्लिष्टकर्मणा ॥ विभीषणोमहाप्राज्ञःकाकुत्स्थमिदमब्रवीत् ॥ ८ ॥ येनवैवस्वतोयुद्धेवासवश्चपराजितः ॥ सैषविश्रवसःपुत्रः कुंभकर्णःप्र[illegible]वान् ॥ अस्यप्रमाणसदृशोराक्षसोन्योनविद्यते ॥ ९ ॥ एतेनदेवायुधिदानवाश्चयक्षाभुजंगाःपिशिताशनाश्च ॥ गंधर्वविद्याधरपन्नगा श्चसहस्रशोराघवसंप्रभग्नाः ॥ १० ॥ शूलपाणिंविरूपाक्षंकुंभकर्णंमहाबलम् ॥ हंतुंनशेकुस्त्रिदशाःकालोऽयमितिमोहिताः ॥ ११ ॥ प्रकृत्याह्येषते जस्वीकुंभकर्णोमहाबलः ॥ अन्येषांराक्षसेंद्राणांवरदानकृतंबलम् ॥ १२ ॥ बालेनजातमात्रेणक्षुधार्तेनमहात्मना ॥ भक्षितानिसहस्राणिप्रजानांसु बहून्यपि ॥ १३ ॥ तेषुसंभक्ष्यमाणेषुप्रजाभयनिपीडिताः ॥ यांतिस्मशरणंशक्रंतमप्यर्थंन्यवेदयन् ॥ १४ ॥ सकुंभकर्णंकुपितोमहेंद्रोजघानवज्रेणशिते नवज्री ॥ सशक्रवज्राभिहतोमहात्माचचालकोपाच्चभृशंननाद ॥ १५ ॥

युद्धकांडे षष्टितमः सर्गः ॥ ६० ॥ ॥ छ ॥ कतकटी० ॥ ५५ ॥ ततो राम इति ॥ १ ॥ पर्वताकारं दर्शनं यस्य तं दृष्ट्वा यत्तो बभूवेति शेषः ॥ २ ॥ सतोयेति सजलमेघसंकाशमित्यर्थः ॥ ३ ॥ ४ ॥ हरिलोचनः कपिलनेत्रः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ प्रकृत्येति स्वभावतः पराभिभवसामर्थ्यवान् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

॥ ३८ ॥ किरीटकूटं किरीटसमूहम् ॥३९॥ हताः प्रवीरा यस्य तथा तस्माद्युद्धधर्मज्ञानात् व्यवस्य ज्ञात्वा ॥१४०॥ इतो रणात्प्रयाहीति योजना जानामि अनुजानामि प्रेक्ष्यासि प्रेक्षिष्यासि ॥४१॥ ४२ ॥ ॥ ४३ ॥ ४४॥ अयं रावणपराभवस्तन्मासीयशुक्लषष्ठ्यां सायंकाले ॥ भौवर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥ कृतकरी० ॥ ५४ ॥ ७ ॥ ॥ स इति ॥ १ ॥ २ ॥ ब्रह्मदंडो युगांतसमुत्थितोऽग्निवर्णो धूमकेतुः । यद्वा ब्रह्मास्त्रम् अमोघत्वेन साम्यं राघवबाणानामिति कर्माणि शेषे षष्ठी ॥ ३ ॥ ४ ॥

तंविह्वलंतंप्रसमीक्ष्यरामःसमाददेदीप्तमथार्धचंद्रम् ॥ तेनार्कवर्णंसहसाकिरीटंचिच्छेदरक्षोधिपतेर्महात्मा ॥ ३८ ॥ तंनिर्विषाशीविषसन्निकाशंशांतार्चिषंसूर्यमिवाप्रकाशम् ॥ गतश्रियंकृत्तकिरीटकूटमुवाचरामोयुधिराक्षसेंद्रम् ॥ ३९ ॥ कृतंत्वयाकर्ममहत्सुभीमंहतप्रवीरश्चकृतस्त्वयाहम् ॥ तस्मात्परिश्रांतइतिव्यवस्यनत्वांशरैर्मृत्युवशंनयामि ॥ ४० ॥ प्रयाहिजानामिरणार्दितस्त्वंप्रविश्यरात्रिंचरराजलंकाम् ॥ आश्वास्यनिर्याहिरथीसधन्वी तदाबलंप्रेक्ष्य[illegible]सिमेरथस्थः ॥ ४१ ॥ सएवमुक्तोहतदर्पहर्षोनिकृत्तचापःसहताश्वसूतः ॥ शरार्दितोभग्नमहाकिरीटोविवेशलंकांसहसास्मराजा ॥४२॥ तस्मिन्प्र[illegible]नीचेंद्रेमहाबलेदानवदेवशत्रौ ॥ हरीन्विशल्यान्सहलक्ष्मणेनचकाररामःपरमाहवाग्रे ॥ ४३ ॥ तस्मिन्प्रभग्नेत्रिदशेंद्रशत्रौसुरासुराभूतगणादिशश्च ॥ ससागराःसर्वमहोरगाश्चतथैवभूम्यंबुचराःप्रहृष्टाः ॥ ४४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनषष्टितमः सर्गः ॥ ५९ ॥ सप्रविश्यपुरींलंकांरामबाणभयार्दितः ॥ भग्नदर्पस्तदाराजाबभूवव्यथितेंद्रियः ॥ १ ॥ मातंगइवसिंहेनगरुडेनेवपन्नगः ॥ अभिभूतोभवद्राजाराघवेणमहात्मना ॥ २ ॥ ब्रह्मदंडप्रतीकानांविद्युच्चलितवर्चसाम् ॥ स्मरन्राघवबाणानांविव्यथेराक्षसेश्वरः ॥३॥ सकांचनमयंदिव्यमाश्रित्यपरमासनम् ॥ विप्रेक्षमाणोरक्षांसिरावणोवाक्यमब्रवीत् ॥ ४ ॥ सर्वंतत्खलुमेमोघंयत्तप्तंपरमंतपः ॥ यत्समानोमहेंद्रेणमानुषेणविनिर्जितः ॥ ५ ॥ इदंतद्ब्रह्मणोघोरंवाक्यंमामभ्युपस्थितम् ॥ मानुषेभ्योविजानीहिभयंत्वमितितत्तथा ॥ ६ ॥ देवदानवगंधर्वैर्यक्षराक्षसपन्नगैः ॥ अवध्यत्वंमयाप्रोक्तंमानुषेभ्योनयाचितम् ॥ ७ ॥ तमिमंमानुषंमन्येरामंदशरथात्मजम् ॥ इक्ष्वाकुकुलजातेनअनरण्येनयत्पुरा ॥ ॥ ८ ॥ उत्पत्स्यतिहिमद्वंशपुरुषोराक्षसाधम ॥ यस्त्वांसपुत्रंसामात्यंसबलंसाश्वसारथिम् ॥ ९ ॥ निहनिष्यतिसंग्रामेत्वांकुलाधमदुर्मते ॥ शप्तोहंवेदवत्याचयथासाधर्षितापुरा ॥ १० ॥ सेयंसीतामहाभागाजाताजनकनंदिनी ॥ उमानंदीश्वरश्चापिरंभावरुणकन्यका ॥ ११ ॥

महेंद्रेण समान इति यत्तदपि मोघं निरर्थकं तत्र हेतुर्मानुषेणेति ॥ ५ ॥ मानुषेभ्यस्तव भयमिति यदुक्तं तद्घोरं वाक्यं तदर्थो मामुपस्थितं तत्तथा संपत्स्यते चेति शेषः ॥ ६ ॥ ननु भगवता तथा भयोपदेशः कुतस्तत्राह देवेत्यादि । यस्मान्मनुष्येभ्यो न याचितं तस्मात्तेभ्यो भयं जानीहीत्युक्तमित्यन्वयः ॥ ७ ॥ यो मानुषो भयहेतुरुक्तस्तमिमं दशरथात्मजमेव मन्ये । तत्रेदृशानिश्चये हेतुमाह इक्ष्वाकुकुलेत्यादि ॥८॥ कुलाधम स्वकुलाधम राक्षसकुलाधमेति यावत् इतीति शेषः । शप्तोहमित्युभयान्वयि वेदवत्या च शप्त इत्यन्वयः । शापहेतुमाह यथा यतः । सा धर्षिता ॥ ९ ॥ १० ॥ सेयं वेदवत्येव जनकनंदिनीत्यर्थः ।

भयकारणं शापांतरमाह उमेति ॥ ११ ॥ यथोक्ता मन्नाशनिमित्तं शापं यथोक्तवंतस्तदद्य मया प्राप्तम् । यदूचुस्तन्मयेति पाठांतरम् । तत्रोमाशापः कैलासशिखरचालनवेलायां रावणस्य स्त्रीनिमित्तं मरणमित्ये वंरूप इत्याहुः । नंदीश्वरशापस्तु "यस्माद्वानरमूर्तिं मां दृष्ट्वा राक्षसदुर्मते । मौर्ख्यान्मामवजानीषे परिहासं च मुंचसि ॥ तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यंति वधार्थं हि कुलस्य तव वानराः" इति । रंभेत्यनेन रंभानिमित्तनलकूबरशाप उच्यते । "यदा त्वकामां कामार्तो धर्षयिष्यसि योषितम् । मूर्धा ते सप्तधा रक्षः शकलीभविता तदा" इति । वरुणकन्यका पुंजिकस्थला तन्निमित्तश्च ब्रह्मशापः स्त्रीधर्षणे मरणरूपः तदुक्तस्यावश्यप्राप्तौ हेतुर्न मिथ्येति । ऋषिपदेन तपोयुक्ता उच्यंते एतदेवोक्तं मद्भयनिमित्तं समागम्य ज्ञात्वा यत्नमित्यादि भयस्य निश्चितत्वान्निवृत्तियत्नं कुरुतेत्यर्थः ॥१२॥ कोसौ यत्नो योस्माभिः कार्यस्तत्राह राक्षसा इति । चर्यागोपुरे व्याख्याते अप्रतिमगांभीर्योनुपमगांभीर्यः ॥ १३ ॥ कुंभकर्णविबोधनाशयं कविराहसमरे इति । आत्मानं पराजितं प्रहस्तं च निषूदितम् ॥१४॥ ज्ञात्वा एवं स्वस्य बलक्षये सहायार्हं भीमबलं रक्षःकुंभकर्णं ज्ञात्वा भीमं बलमादिदेशेत्यावृत्त्यान्वयः । कुंभकर्णबोधनार्थमिति शेषः ॥१५॥१६॥ एतदुत्तरं स हि संख्ये इत्येव श्लोक इति कतकस्वरसः । क्वचित्तु । सार्धश्लोकद्वयमधिकं पठ्यते द्वारेष्वित्यादि । नव

यथोक्तास्तन्मयाप्राप्तंनमिथ्याऋषिभाषितम् ॥ एतदेवसमागम्ययत्नंकर्तुमिहार्हथ ॥ १२ ॥ राक्षसाश्चापितिष्ठंतुचर्यागोपुरमूर्धसु ॥ सचाप्रतिमगांभीर्योदेवदानवदर्पहा ॥ १३ ॥ ब्रह्मशापाभिभूतस्तुकुंभकर्णोविबोध्यताम् ॥ समरेजितमात्मानंप्रहस्तंचनिषूदितम् ॥ १४ ॥ ज्ञात्वारक्षोभीमबलमादिदेशमहाबलः ॥ द्वारेषुयत्नःक्रियतांप्राकारश्चाधिरुह्यताम् ॥१५॥ निद्रावशसमाविष्टःकुंभकर्णोविबोध्यताम् ॥ सुखंस्वपितिनिश्चिंतःकामोपहतचेतनः ॥ १६ ॥ नवसप्तदशाष्टौचमासान्स्वपितिराक्षसः ॥ मंत्रंकृत्वाप्रसुप्तोयमितस्तुनवमेहनि ॥ १७ ॥ सहिसंख्येमहाबाहुःककुदंसर्वरक्षसाम् ॥ वानरान्राजपुत्रौचक्षिप्रमेवहनिष्यति ॥ १८ ॥ एषकेतुःपरंसंख्येमुख्योवैसर्वरक्षसाम् ॥ कुंभकर्णःसदाशेतेमूढोग्राम्यसुखेरतः ॥ १९ ॥ रामेणाभिनिरस्तस्यसंग्रामेऽस्मिन्सुदारुणे ॥ भविष्यतिनमेशोकःकुंभकर्णेविबोधिते ॥ २० ॥ किंकरिष्याम्यहंतेनशक्रतुल्यबलेनहि ॥ ईदृशेव्यसनेघोरेयोनसाह्यायकल्पते ॥ २१ ॥ तेतुतद्वचनंश्रुत्वाराक्षसेंद्रस्यराक्षसाः ॥ जग्मुःपरमसंभ्रांताःकुंभकर्णनिवेशनम् ॥ २२ ॥ तेरावणसमादिष्टामांसशोणितभोजनाः ॥ गंधमाल्यंमहद्भक्ष्यमादायसहसाययुः ॥ २३ ॥ तांप्रविश्यमहाद्वारांसर्वतोयोजनायताम् ॥ कुंभकर्णगुहांरम्यांपुष्पगंधप्रवाहिनीम् ॥ २४ ॥

सप्त दशाष्टौ च मासान्स्वपिति राक्षस इति इदं निद्रायामनियमपरं वाक्यम् । शयिता ह्येष षण्मासानेकाहं जागरिष्यत इति तु षण्मासादर्वाक् न कदापि जागरणं तदुत्तरमपि तदेकाहमेवेति जागरण एव कालनियमपरं न तु शयने नियमपरम् । स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितमिति तद्वरप्रार्थनस्योत्तरे वक्ष्यमाणत्वात् । तत्रैव रामं प्रत्यगस्त्यवाक्याच्च । तत्र निद्रां समाविष्टः कुंभकर्णो महाबलः । बहून्यब्दसहस्राणि शयानो न च बुध्यत इति । केचित्तु नव सप्त षोडश तन्मध्ये दशानामष्टौ त्यागेऽवशिष्टषण्मासान्स्वपितीत्यर्थ इत्याहुः । तथा एतदुत्तरं मंत्रं कृत्वा प्रसुप्तोयमितस्तु नवमेहनीत्यर्थं पठ्यते तत् । यच्च तस्य इतो युद्धप्रारंभदिनात्प्राक्तने नवमे हनीतिव्याख्यानं तदसंगतमेव । अयं ते सुमहान्कालः शयानस्य महाबलेत्यनेन षण्मासादधिकत्वस्य सांप्रतनिद्रायां प्रतीतेः अहःशब्दो लक्षणया मासपरो वा एतच्चाग्रे स्फुटी करिष्यते ॥ १७ ॥ उक्तमेवाभिप्रायं रावण आह स हीति । सर्वरक्षसां ककुदं श्रेष्ठं नित्यनपुंसकं ककुदमिति । तेन स महाबाहुरित्यनेन समानाधिकरण्यमविरुद्धम् ॥ १८ ॥ परं केतुः अतिप्रकाशवीर्य इत्यर्थः ॥ १९ ॥ २० ॥ ननु त्वद्दुःखनाशसमर्थस्यापि कथमुद्बोधनमुचितं भवेत्तत्राह किं करिष्यामीति । व्यसने दुःखे ॥ २१ ॥ २२ ॥ २३ ॥ सर्वतः प्राक्प्रत्यग्दक्षिणोत्तरतश्चेत्यर्थः । कुंभकर्णगुहां पातालवद्देवनिर्मितं भूबिलमित्यर्थः ॥ २४ ॥

प्रतिष्ठमानाः परिवृत्य गच्छंतः ॥२५॥ रत्नकांचनकुट्टिमां रत्नकांचननिबद्धभूतलयुक्ताम् ॥२६॥२७॥ ऊर्ध्वलोमांचिततनुम् ऊर्ध्वलोमयुक्तशरीरं श्वामयंतं परिवर्तयंतं जनानिति शेषः ॥२८॥२९॥३०॥३१॥ ॥ ३२ ॥ ३३ ॥ अथ क्रमेण मंदमध्यतीव्रानुपायानाह लिलिपुरिति । लेपनं चक्रुः आश्वासयामासुः घ्रापयामासुः ॥ ३४ ॥ ३५ ॥ ३६ ॥ नेदुरिति । चिक्षिपुः हस्तैस्तच्छरीरस्य प्रणोदनं चक्रुः ॥ ३७ ॥

कुंभकर्णस्यानिःश्वासादवधूतामहाबलाः ॥ प्रतिष्ठमानाःकृच्छ्रेणयत्नात्प्रविविशुर्गुहाम् ॥ २५ ॥ तांप्रविश्यगुहांरम्यांरत्नकांचनकुट्टिमाम् ॥ ददृशुर्नैर्ऋतव्याघ्राःशयानंभीमविक्रमम् ॥ २६ ॥ तेतुतंविकृतंसुप्तंविकीर्णमिवपर्वतम् ॥ कुंभकर्णमहानिद्रंसमेताःप्रत्यबोधयन् ॥२७॥ ऊर्ध्वलोमांचिततनुंश्वसंतमिवपन्नगम् ॥ भ्रामयंतंविनिःश्वासैःशयानंभीमविक्रमम् ॥ २८ ॥ भीमनासापुटंतंतुपातालविपुलाननम् ॥ शयनेन्यस्तसर्वांगंमेदोरुधिरगंधिनम् ॥ २९ ॥ कांचनांगदनद्धांगंकिरीटेनार्कवर्चसम् ॥ ददृशुर्नैर्ऋतव्याघ्रंकुंभकर्णमरिंदमम् ॥ ३० ॥ ततश्चक्रुर्महात्मानःकुंभकर्णस्यचाग्रतः ॥ भूतानमेरु[illegible]राशिंपरमतर्पणम् ॥ ३१ ॥ मृगाणांमहिषाणांचवराहाणांचसंचयान् ॥ चक्रुर्नैर्ऋतशार्दूलाराशिमन्नस्यचाद्भुतम् ॥ ३२ ॥ ततःशोणितकुंभांश्चमांसानिविविधानिच ॥ पुरस्तात्कुंभकर्णस्यचक्रुस्त्रिदशशत्रवः॥ ३३ ॥ लिलिपुश्चपरार्ध्येनचंदनेनपरंतपम् ॥ दिव्यैराश्वासयामासुर्माल्यैर्गंधैश्चगंधिभिः ॥ ३४ ॥ धूपंगंधांश्चससृजुस्तुष्टुवुश्चपरंतपम् ॥ जलदाइवचानेदुर्यातुधानास्ततस्ततः ॥ ३५ ॥ शंखांश्चपूरयामासुःशशांकसदृशप्रभान् ॥ तुमुलंयुगपच्चापिविनेदुश्चाप्यमर्षिताः ॥ ३६ ॥ नेदुरास्फोटयामासुश्चिक्षिपुस्तेनिशाचराः ॥ कुंभकर्णविबोधार्थंचक्रुस्तेविपुलंस्वरम् ॥ ॥ ३७ ॥ सशंखभेरीपणवप्रणादंसास्फोटितक्ष्वेलितसिंहनादम् ॥ दिशोद्रवंतस्त्रिदिवंकिरंतःश्रुत्वाविहंगाःसहसानिपेतुः ॥३८॥ यदाभृशंतैर्निनदैर्महात्मानकुंभकर्णोबुबुधेप्रसुप्तः ॥ ततोभुशुंडीर्मुसलानिसर्वेरक्षोगणास्तेजगृहुर्गदाश्च ॥ ३९ ॥ तंशैलशृंगैर्मुसलैर्गदाभिर्वक्षःस्थलेमुद्गरमुष्टिभिश्च ॥ सुखप्रसुप्तंभुविकुंभकर्णंरक्षांस्युदग्राणितदानिजघ्नुः ॥ ४० ॥ तस्यानिःश्वासवातेनकुंभकर्णस्यरक्षसः ॥ राक्षसाःकुंभकर्णस्यस्थातुंशेकुर्नचाग्रतः ॥ ॥ ४१ ॥ ततःपरिहितागाढंराक्षसाभीमविक्रमाः ॥ मृदंगपणवान्भेरीःशंखकुंभगणांस्तथा ॥ ४२ ॥ दशराक्षससाहस्रंयुगपत्पर्यवारयत् ॥ नीलांजनचयाकारंतेतुतंप्रत्यबोधयन् ॥ ४३ ॥ अभिघ्नंतोनदंतश्चनचसंबुबुधेतदा ॥ यदाचैनंनशेकुस्तेप्रतिबोधयितुंतदा ॥ ४४ ॥ ततोगुरुतरंयत्नंदारुणंसमुपाक्रमत् ॥ अश्वानुष्ट्रान्खरान्नागाञ्जघ्नुर्दंडकशांकुशैः ॥ ४५ ॥

त्रिदिवं व्योम किरंतः उद्गच्छंतः ॥ ३८ ॥ भुशुंडीः मुद्गरविशेषान् ॥ ३९ ॥ ४० ॥ ४१ ॥ गाढं परिहिताः परिहितवाससः कुंभगणान्कुंभवाद्यानि वादयामासुरिति शेषः । ततः प्रपूरिता गाढं राक्षसैर्भीमविक्रमैरिति पांक्तः पाठः । तत्र गुहेति शेषः । उत्तरार्द्धं राक्षसा इत्यादि ॥ ४२ ॥ दश राक्षससाहस्रं दश राक्षससहस्राणि ॥ ४३ ॥ ४४ ॥ जघ्नुः तदुपरि संचारेण तदुद्बोधनार्थमिति शेषः ॥ ४५ ॥

[illegible] स्वपराक्रमाचितानि तानि कर्माणि यद्यपि सृजसि ॥ ८५ ॥ तथापि मया मुक्तोऽस्त्रप्रयोजितोयं सायकस्त्वां जीविताद्भ्रंशयिष्यति ॥ ८६ ॥ ८७ ॥ ८८ ॥ पितुरग्नेर्माहात्म्यसंयोगात् न

सर्वत्र सर्वप्राणै ल्वेन महाकाष्ठानां स्थूणादीनां कटंकरैः समूहैः । कटंकटैरितिपाठः । कटंकटः स्तंभभेद इति तीर्थः ॥ ४७ ॥ मृष्टकांचनकोणानां मृष्टकांचननिर्मिता कोणा वादनदंडा यासां तादृशीनां भेरीणां सहस्रमित्यर्थः । आर्ष समासः ॥४८॥ शापस्य ब्रह्मशापस्य ॥४९॥५०॥५१॥२२॥ पातयन् अपातयन् ॥५३॥५४॥ परं स्पर्शं स्पर्शनज्ञानं माप्याबुध्यत ॥५५॥ उक्तार्थानुवादः स पात्यमानैरिति॥५६॥

भेरीशंखमृदंगांश्चसर्वप्राणैरवादयन् ॥ निजघ्नुश्चास्यगात्राणिमहाकाष्ठकटंकरैः ॥ ४६ ॥ मुद्गरैर्मुसलैश्चापिसर्वप्राणसमुद्यतैः ॥ तेननादेनमहतालंकासर्वाप्रपूरिता ॥ सपर्वतवनासर्वासोपिनैवप्रबुध्यत ॥ ४७ ॥ ततोभेरीसहस्रंतुयुगपत्समहन्यत ॥ मृष्टकांचनकोणानामसक्तानांसमंततः ॥ ४८ ॥ एवमप्यतिनिद्रस्तुयदानैवप्रबुध्यत ॥ शापस्यवशमापन्नस्ततःक्रुद्धानिशाचराः ॥ ४९ ॥ ततःकोपसमाविष्टाःसर्वेभीमपराक्रमाः ॥ तद्रक्षोबोधयिष्यंतश्चक्रुरन्येपराक्रमम् ॥ ५० ॥ अन्येभेरीःसमाजघ्नुरन्येचक्रुर्महास्वनम् ॥ केशानन्येप्रलुलुपुःकर्णानन्येदशंतिच ॥ ५१ ॥ उदकुंभशतानन्येसमसिंचंतकर्णयोः ॥ नकुंभकर्णःपस्पंदेमहानिद्रावशंगतः ॥ ५२ ॥ अन्येचबलिनस्तस्यकूटमुद्गरपाणयः ॥ मूर्ध्निवक्षसिगात्रेषुपातयन्कूटमुद्गरान् ॥ ॥ ५३ ॥ रज्जुबंधनबद्धाभिःशतघ्नीभिश्चसर्वशः ॥ वध्यमानोमहाकायोनप्राबुध्यतराक्षसः ॥५४॥ वारणानांसहस्रंचशरीरेस्यप्रधावितम् ॥ कुंभकर्णस्तदाबुद्धास्पर्शंपरमबुध्यत ॥ ५५ ॥ सपात्यमानैर्गिरिशृंगवृक्षैरचिंतयंस्तान्विपुलान्प्रहारान् ॥ निद्राक्षयात्क्षुद्भयपीडितश्चविजृंभमाणःसहसोत्पपात ॥ ५६ ॥ सनागभोगाचलशृंगकल्पौविक्षिप्यबाहूजितवज्रसारौ ॥ विवृत्यवक्त्रंवडवामुखाभंनिशाचरोसौविकृतंजजृंभे ॥ ५७ ॥ तस्यजाजृंभमाणस्यवक्त्रंपातालसन्निभम् ॥ ददृशेमेरुशृंगाग्रेदिवाकरइवोदितः ॥ ५८ ॥ सजृंभमाणोतिबलःप्रबुद्धस्तुनिशाचरः ॥ निःश्वासश्चास्यसंजज्ञेपर्वतादिवमारुतः [illegible] ॥ रूपमुत्तिष्ठतस्तस्यकुंभकर्णस्यतद्बभौ ॥ युगांतेसर्वभूतानिकालस्येवदिधक्षतः ॥ ६० ॥ तस्याग्निदीप्तसदृशेविद्युत्सदृशवर्चसी ॥ ददृशातेमहे[illegible]नेदीप्ताविवमहाग्रहौ ॥ ६१ ॥ ततस्त्वदर्शयन्सर्वान्भक्ष्यांश्चविविधान्बहून् ॥ वराहान्महिषांश्चैवबभक्षसमहाबलः ॥६२॥ आदद्बुभुक्षितोमांसंशोणितंतृषितोपिबत् ॥ मेदःकुंभांश्चमद्यांश्चपपौशक्ररिपुस्तदा ॥ ६३ ॥ ततस्तृप्तइतिज्ञात्वासमुत्पेतुर्निशाचराः ॥ शिरोभिश्चप्रणम्यैनंसर्वतःपर्यवारयन् ॥ ६४ ॥ निद्राविशदनेत्रस्तुकलुषीकृतलोचनः ॥ चारयन्सर्वतोदृष्टिंतानुवाचनिशाचरान् ॥ ६५ ॥ ससर्वान्सांत्वयामासनैर्ऋतान्नैर्ऋतर्षभः ॥ बोधनाद्विस्मितश्चापिराक्षसानिदमब्रवीत् ॥ ६६ ॥

॥ ५७ ॥ जाजृंभमाणस्य पुनःपुनर्जृंभां कुर्वतः वक्त्रमंतःपातालसन्निभं ददृशे उपरि तु मेरुशृंगाग्रे उदितो दिवाकर इव ददृशे महाशरीरस्थत्वात् ॥५८॥ ५९ ॥ ६० ॥ अग्निदीप्तसदृशे दीप्ताग्निसदृशे ॥६१॥ अदर्शयन् राक्षसा इति शेषः । दर्शितांश्चतान्स बभक्ष ॥ ६२ ॥ आदत् अदेर्लङ् ॥ ६३ ॥ समुत्पेतुः संमुखमाजग्मुः ॥ ६४ ॥ निद्रया विशदे ईषदुन्मीलिते नेत्रे यस्य सः ॥ ६५ ॥ विस्मित इति स्वभा

समाश्वस्तः नीलेन सह युद्धकाले प्राप्तसमाश्वासः पुनर्युद्धेप्सुर्नीलेन सह युद्धाय संसक्तं रावणं विप्रेक्षमाणो रावणं प्रति अन्येन युध्यमानस्याभिधावनमयुक्तमितीदं वचोऽब्रवीत् ॥ ७१ ॥ ७२ ॥ ७३ ॥ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ध्वजाग्रादिषु तं दृष्ट्वेति शेषः । रावणकिरीटे स्थितेर्युद्धे केनापि दुष्करत्वाल्लक्ष्मणादयस्त्रयोपि विस्मिताः ॥ ७९ ॥ न केवलं स्वपक्ष्या एवापि तु

हनूमानपितेजस्वीसमाश्वस्तोमहामनाः ॥ विप्रेक्षमाणोयुद्धेप्सुःसरोषमिदमब्रवीत् ॥ ७१ ॥ नीलेनसहसंयुक्तंरावणंराक्षसेश्वरम् ॥ अन्येनयुद्धयमानस्यनयुक्तमभिधावनम् ॥ ७२ ॥ रावणोथमहातेजास्तंशृंगंसप्तभिःशरैः ॥ आजघानसुतीक्ष्णाग्रैस्तद्विशीर्णंपपातह ॥ ७३ ॥ तद्विशीर्णंगिरेःशृंगं दृष्ट्वाहरिचमूपतिः ॥ कालाग्निरिवजज्वालकोपेनपरवीरहा ॥ ७४ ॥ सोश्वकर्णद्रुमाञ्शालांश्चूतांश्चापिसुपुष्पितान् ॥ अन्यांश्वविविधान्वृक्षान्नीलश्चिक्षेपसंयुगे ॥ ७५ ॥ सतान्वृक्षान्समासाद्यप्रतिचिच्छेदरावणः ॥ अभ्यवर्षच्चघोरेणशरवर्षेणपावकिम् ॥ ७६ ॥ अभिवृष्टःशरौघेणमेघेनेवमहाबलः ॥ ह्रस्वंकृत्वा[illegible]रूपंध्वजाग्रेनिपपातह ॥ ७७ ॥ पावकात्मजमालोक्यध्वजाग्रेसमवस्थितम् ॥ जज्वालरावणःक्रोधात्ततोनीलोननादच ॥ ७८ ॥ ध्वजाग्रेधनुपश्चाग्रेकिरीटाग्रेचतंहरिम् ॥ लक्ष्मणोथहनूमांश्चरामश्चापिसुविस्मिताः ॥ ७९ ॥ रावणोपिमहातेजाःकपिलाघवविस्मितः ॥ अस्त्रमाहारयामासदीप्तमाग्नेयमद्भुतम् ॥ ८० ॥ ततस्तेचुक्रुशुर्हृष्टालब्धलक्षाःप्लवंगमाः ॥ नीललाघवसंभ्रांतंदृष्ट्वारावणमाहवे ॥ ८१ ॥ वानराणांचनादेनसंरब्धोरावणस्तदा ॥ संभ्रमाविष्टहृदयोनकिंचित्प्रत्यपद्यत ॥ ८२ ॥ आग्नेयेनापिसंयुक्तंगृहीत्वारावणःशरम् ॥ ध्वजशीर्षस्थितंनीलमुदैक्षतनिशाचरः ॥ ८३ ॥ ततोऽब्रवीन्महातेजारावणोराक्षसेश्वरः ॥ कपेलाघवयुक्तोसिमाययापरयासह ॥ ८४ ॥ जीवितंखलुरक्षस्वयदिशक्तोसिवानर ॥ तानितान्यात्मरूपाणिसृजसित्वमनेकशः ॥ ८५ ॥ तथापित्वांमयामुक्तःसायकोस्त्रप्रयोजितः ॥ जीवितंपरिरक्षंतंजीविताद्भ्रंशयिष्यति ॥ ८६ ॥ एवमुक्त्वामहाबाहूरावणोराक्षसेश्वरः ॥ संधायबाणमस्त्रेणचमूपतिमताडयत् ॥ ८७ ॥ सोस्त्रमुक्तेनबाणेननीलोवक्षसिताडितः ॥ निर्दह्यमानःसहसासपपातमहीतले ॥ ८८ ॥ पितृमाहात्म्यसंयोगादात्मनश्चापितेजसा ॥ जानुभ्यामपतद्भूमौनतुप्राणैर्व्ययुज्यत ॥ ८९ ॥ विसंज्ञंवानरंदृष्ट्वा दशग्रीवोरणोत्सुकः ॥ रथेनांबुदनादेनसौमित्रिमभिदुद्रुवे ॥ ९० ॥

शत्रू रावणोपीत्याह रावणोपीति ॥ ८० ॥ नीललाघवसंभ्रांतं रावणं दृष्ट्वा लब्धलक्षाः लब्धहर्षविषया अतएव हृष्टाः प्लवंगमाश्चुक्रुशुः ॥ ८१ ॥ संरब्धः क्रुद्धः ॥ ८२ ॥ ८३ ॥ मायया वंचनया ॥ ८४ ॥ आत्मरूपाणि आत्मयोग्यानि स्वपराक्रमोचितानि तानि कर्माणि यद्यपि सृजसि ॥ ८५ ॥ तथापि मया मुक्तोऽस्त्रप्रयोजितोयं सायकस्त्वां जीविताद्भ्रंशयिष्यति ॥ ८६ ॥ ८७ ॥ ८८ ॥ पितुरग्नेर्माहात्म्यसंयोगात् न

ह्यस्त्राभिमंत्रितो बाणोग्निं दग्धुमर्हति । वियुज्यत व्ययुज्यत ॥ ८९ ॥ ९० ॥ तं सौमित्रिं वारयित्वेति । सर्वं कपिबलमिति शेषः ॥ ९१ ॥ अवेहि पश्य ॥ ९२ ॥ ९३ ॥ अंतगामी अंतं नाशं प्राप्स्यतीत्यंतगामी भविष्यति णिनिः । मया सह युद्धाय प्राणनाशार्थमागमनाद्विपरीतबुद्धिर्दुर्बुद्धिः संसाद्यमानः पीड्यमानः ॥ ९४ ॥ अविस्मयानः तद्विक्रमादिदर्शनेपि स्मयरहितः उद्वृत्ता अतितैक्ष्ण्याद तिस्थौल्याद्त्युत्कटा शिता तीक्ष्णाग्रदंष्ट्रा यस्य ॥ ९५ ॥ जानामीति । चौर्यसीताहरणेनैवेति भावः । मोघविकत्थनेन व्यर्थात्मश्लाघनेन ॥ ९६ ॥ ९७ ॥ ९८ ॥ स रा

आसाद्यरणमध्येतुवारयित्वास्थितोज्वलन् ॥ धनुर्विस्फारयामासराक्षसेंद्रःप्रतापवान् ॥ ९१ ॥ तमाहसौमित्रिरदीनसत्त्वोविस्फारयंतंधनुरप्रमेयम् ॥ अवेहिमामद्यनिशाचरेंद्रनवानरांस्त्वंप्रतियोद्धुमर्हसि ॥ ९२ ॥ सतस्यवाक्यंप्रतिपूर्णघोषंज्याशब्दमुग्रंचनिशम्यराजा ॥ आसाद्यसौमित्रिमुपस्थितं तंरोषान्वितंवाचमुवाचरक्षः ॥ ९३ ॥ दिष्ट्यासिमेराघवदृष्टिमार्गंप्राप्तोंतगामीविपरीतबुद्धिः ॥ अस्मिन्क्षणेयास्यसिमृत्युलोकंसंसाद्यमानोममबाणजालैः ॥ ९४ ॥ तमाहसौमित्रिरविस्मयानोगर्जंतमुद्वृत्तशिताग्रदंष्ट्रम् ॥ राजन्नगर्जंतिमहाप्रभावाविकत्थसेपापकृतांवरिष्ठ ॥ ९५ ॥ जानामिवीर्यं तवराक्षसेंद्रबलंप्रतापंचपराक्रमंच ॥ अवस्थितोहंशरचापपाणिरागच्छकिंमोघविकत्थनेन ॥ ९६ ॥ सएवमुक्तःकुपितःससर्जरक्षोधिपःसप्तशरान्सुपुंखान् ॥ ताँल्लक्ष्मणःकांचनचित्रपुंखैश्चिच्छेदबाणैर्निशिताग्रधारैः ॥ ९७ ॥ तान्प्रेक्षमाणःसहसानिकृत्तान्निकृत्तभोगानिवपन्नगेंद्रान् ॥ लंकेश्वरःक्रोधवशंजगामससर्जचान्यान्निशितान्पृषत्कान् ॥ ९८ ॥ सबाणवर्षंतुववर्षतीव्रंरामानुजःकार्मुकसंप्रयुक्तम् ॥ क्षुरार्धचंद्रोत्तमकर्णभल्लैःशरांश्चचिच्छेदनचुक्षुभेच ॥९९॥ सबाणजालान्यपितानितानिमोघानिपश्यंस्त्रिदशारिराजः ॥ विसिस्मियेलक्ष्मणलाघवेनपुनश्चबाणान्निशितान्मुमोच॥१००॥ सलक्ष्मण[illegible]शितान्शिताग्रान्महेंद्रतुल्योशनिभीमवेगान् ॥ संधायचापज्वलनप्रकाशान्ससर्जरक्षोधिपतेर्वधाय ॥१॥ सतान्प्रचिच्छेदहिराक्षसेंद्रःशितान्छराँल्लक्ष्मणमाजघान ॥ शरेणकालाग्निसमप्रभेणस्वयंभुदत्तेनललाटदेशे ॥ २ ॥ सलक्ष्मणोरावणसायकार्तश्चचालचापंशिथिलंप्रगृह्य ॥ पुनश्चसंज्ञांप्रतिलभ्यकृच्छ्राच्चिच्छेदचापंत्रिदशेन्द्रशत्रोः ॥ ३ ॥ निकृत्तचापंत्रिभिराजघानबाणैस्तदादाशरथिःशिताग्रैः ॥ ससायकार्तोविचचालराजाकृच्छ्राच्चसंज्ञांपुनरासखाद॥ ४ ॥ सकृत्तचापःशरताडितश्चमेदार्द्रगात्रोरुधिरावसिक्तः ॥ जग्राहशक्तिंस्वयमुग्रशक्तिःस्वयंभुदत्तांयुधिदेवशत्रुः ॥५॥ सतांसधूमानलसन्निकाशांवित्रासनींसंयतिवानराणाम् ॥ चिक्षेपशक्तिंतरसाज्वलंतींसौमित्रयेराक्षसराष्ट्रनाथः ॥ ६ ॥

मानुजो रावणोपरि बाणवर्षं ववर्ष तदीयान् शरांश्च क्षुरादिभिश्चिच्छेद । न चुक्षुभे च, चान्न स्वस्थानतश्चचाल ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ मेदार्द्रगात्र इति संधिरार्षः । अथ रावणः प्राणांतापदं प्राप्तः प्रकारांतरेण जीवननिर्वाहमसंभाव्य ब्रह्मदत्ताममोघां शक्तिं जग्राहेत्याह जग्राहेति ॥ ५ ॥ सधूमानलसन्निकाशां सधूमानलसदृशीम् । राक्षसराष्ट्रनाथो रावणः ॥६॥

तथापि सेति । ब्राह्मत्वेनामोघत्वादित्यर्थः ॥ ७ ॥ शक्तिमानपि महाबलवानपि शक्तिसमाहतः सन् जज्वाल । पपातेति पाठांतरम् । विह्वलंतं विकलं भवंतं राजा रावणस्तरसा बलेन लक्ष्मणं भुजाभ्यां जग्राह । इंद्रजिद्बद्धयोरपि पुनरुत्थानदर्शनादिदानीमपि पुनरुज्जीवनभयेन गृहीत्वा समुद्रे प्रक्षेपणीयस्तत्र गते रामोऽसहायो नंक्ष्यत्येवेत्याशयेनायमारंभः ॥ ८ ॥ न चोद्धर्तुमशक्नोदित्याह हिमवानिति । येन रावणेन सुरासुरैः सहिता हिमवदादयोपि भुजाभ्यामुद्धर्तुं शक्यमभूत्तेन भरतानुजः संख्ये उद्धर्तुं शक्यो नाभूत् ॥ ९ ॥ कुतस्तत्राह शक्त्येति । अमोघया ब्रह्मदत्तया स्तनांतरे आहतः सौमित्रिर्विष्णोरमीमांस्यं निःसंशयविष्णुभागत्ववंतमियत्तया चिंतयितुमशक्यं वा विष्णोर्भागमात्मानं प्रत्यनुस्मरत् अन्वस्मरत । न हि स्वीयं स्वं हिनस्तीत्याशयेन ब्रह्मशक्तिमूलापत्राणार्थं भगवत्तेजोंश एवाहमस्मीति ध्यातवान् । नटवदंगीकृतमनुष्यत्वस्येतरेषां दृढमतीत्यर्थं परं न सर्वदा तथा ध्यानम् । एवं च ब्रह्मभावनया लक्ष्मणेन स्वशरीरस्य गरीयस्त्वमापादितमित्युक्तं भवति ॥ ११० ॥ तत इति । तथानुसंधानमहिमत इत्यर्थः । अथानंतरमुच्यमानविशेषणमेनं सौमित्रिं बाहुभ्यां पीडयित्वा लंघने चालनेपि न प्रभुरभवत् न समर्थोऽभवत् किं पुनरुद्धरणे इति भावः ॥ ११ ॥ ततः सौमित्रिक्लेशनात्क्रुद्धो वायुसुत इत्यर्थः ॥ १२ ॥

तामापतंतीं [illegible]ानुजोस्त्रैर्जघानबाणैश्चहुताग्निकल्पैः ॥ तथापिसातस्यविवेशशक्तिर्भुजांतरंदाशरथेर्विशालम् ॥ ७ ॥ सशक्तिमाञ्छक्तिसमाहतः सञ्जज्वालवा[illegible]रघुप्रवीरः ॥ तंविह्वलंतंसहसाभ्युपेत्यजग्राहराजातरसाभुजाभ्याम् ॥ ८ ॥ हिमवान्मंदरोमेरुस्त्रैलोक्यंवासहामरैः ॥ शक्यंभुजाभ्यामुद्धर्तुंनशक्योभरतानुजः ॥ ९ ॥ शक्त्याब्राह्म्यातुसौमित्रिस्ताडितोपिस्तनांतरे ॥ विष्णोरमीमांस्यभागमात्मानंप्रत्यनुस्मरत् ॥ ११० ॥ ततोदानवदर्पघ्नंसौमित्रिंदेवकंटकः ॥ तंपीडयित्वाबाहुभ्यांनप्रभुर्लंघनेभवत् ॥ ११ ॥ ततः क्रुद्धोवायुसुतोरावणंसमभिद्रवत् ॥ आजघानोरसिक्रुद्धो वज्रकल्पेनमुष्टिना ॥ १२ ॥ तेनमुष्टिप्रहारेणरावणोराक्षसेश्वरः ॥ जानुभ्यामगमद्भूमौचचालचपपातच ॥ १३ ॥ आस्यैश्चनेत्रैःश्रवणैःपपातरुधिरंबहु ॥ विघूर्णमानोनिश्चेष्टोरथोपस्थउपाविशत ॥ १४ ॥ विसंज्ञोमूर्छितश्चासीन्नचस्थानंसमालभत ॥ विसंज्ञंरावणंदृष्ट्वासमरेभीमविक्रमम् ॥ ॥ ११५ ॥ ऋषयोवानराश्चैवनेदुर्देवाश्चसासुराः ॥ हनूमानथतेजस्वीलक्ष्मणंरावणार्दितम् ॥ १६ ॥ आनयद्राघवाभ्याशंबाहुभ्यांपरिगृह्यतम् ॥ वायुसूनोःसुहृत्त्वेनभक्त्यापरमयाचसः ॥ शत्रूणामप्यकंप्योपिलघुत्वमगमत्कपेः ॥ ११७ ॥

जानुभ्यां रथपृष्ठरूपायां भूमौ अगमत् एवं भूमौ पपात चचाल चलितसंज्ञोभूदित्यर्थः ॥ १३ ॥ आस्यैरिति बहुत्वं दशाननत्वात् अस्येति शेषः । यतो रुधिरं पपात अतो विघूर्णमान इत्यादि ॥ १४ ॥ विसंज्ञो गतचेतनः मूर्छितः स्वविषयग्रहाशक्तश्रोत्रादिकरणग्रामः । न च स्थानमवस्थितिस्थानं समालभत् ज्ञातवान् ॥ १५ ॥ नेदुः संतोषादिति शेषः । सासुराः रावणस्य देववदसुरेष्वपि क्लेशकरत्वेन तेषामपि वैरित्वात् ॥ १६ ॥ राघवाभ्याशमानयदित्युक्तम् । कथमेव सुग्रहत्वं लक्ष्मणस्येत्यत्राह वायुसूनोरिति । सुहृत्त्वेन सखित्वेन परमभक्त्या च लक्ष्मणः शत्रूणामकंप्योपि वायुसूनोर्लघुत्वमगमत् । शत्रूणामित्यनेन लक्ष्मणोद्धरणसमये रावणस्यानुचरैः साहाय्यं कृतमिति गम्यते । इदं च भक्तमात्रसुग्रहत्वं भगवतो भगवदवताराणां च स्वभावसिद्धमेवेति बोध्यम् । एवं च रामलक्ष्मणयोरज्ञानशक्तिमत्त्वतात्पर्यतया भासमानानि वचनानि मानुषवेषनिर्वहणमात्रपराणीति बोध्यम् । तदुक्तं भागवते "मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ॥ कुतोन्यथा स्यू रमतः स्व आत्मन्सीताकृतानि व्यसनानीश्वरस्य"

इति मर्त्यशिक्षणं तत्फलकमित्यर्थः । आत्मनि ईश्वरस्येत्यनेन लाघवगौरवमाघयोरविरोध उक्तः ॥ १७ ॥ तं समुत्सृज्य ब्रह्मत्वेन ध्यानात्तत्समुत्सर्गः स्थानं स्थितिम् ॥ १८ ॥ १९ ॥ पुनर्विष्णोर्भागमात्मानस्मरन्नाश्वस्तः मामाश्वासेंद्रियग्रामः विशल्यो नीरुक्सर्वगात्र आसीदिति शेषः ॥ १२० ॥ समभिद्रवच्छीघ्रमभ्यद्रवत् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ दुद्राव शीघ्रमगमत् ॥ २५ ॥ २६ ॥ क गत्वेति योजना न कापीत्यर्थः ॥ २७ ॥ तदेवाह यदीति । यद्यपींद्रादीन् शरणं गमिष्यसि दशधा दिशो दशप्रकारा दिशो वा तदंतान्वा अद्य गमिष्यसि तथापि तत्र गतोपि मे मत्तो न विमोक्ष्यसे ।

तंसमुत्सृज्यसाशक्तिःसौमित्रिंयुधिनिर्जितम् ॥ रावणस्यरथेतस्मिन्स्थानंपुनरुपागमत् ॥ १८ ॥ रावणोपिमहातेजाःप्राप्यसंज्ञांमहाहवे ॥ आददेनिशितान्बाणाञ्जग्राहचमहद्धनुः ॥ १९ ॥ आश्वस्तश्चविशल्यश्चलक्ष्मणःशत्रुसूदनः ॥ विष्णोर्भागममीमांस्यमात्मानंप्रत्यनुस्मरन् ॥ १२० ॥ निपातितमहावीरांवानराणांमहाचमूम् ॥ राघवस्तुरणेदृष्ट्वारावणंसमभिद्रवत् ॥ २१ ॥ अथैनमनुसंक्रम्यहनूमान्वाक्यमब्रवीत् ॥ ममपृष्ठंसमारुह्यराक्षसंशास्तुमर्हसि ॥२२॥ विष्णुर्यथागरुत्मंतमारुह्यामरवैरिणम् ॥ तच्छ्रुत्वाराघवोवाक्यंवायुपुत्रेणभाषितम् ॥ २३ ॥ अथारुरोहसहसाहनूमंतंमहाकपिम् ॥ रथस्थंरावणंसंख्येददर्शमनुजाधिपः ॥ २४ ॥ तमालोक्यमहातेजाःप्रदुद्रावसरावणम् ॥ वैरोचनमिवक्रुद्धोविष्णुरभ्युद्यतायुधः ॥ २५ ॥ ज्याशब्दमकरोत्तीव्रंवज्रनिष्पेषनिष्ठुरम् ॥ गिरागंभीरयारामोराक्षसेंद्रमुवाचह ॥ २६ ॥ तिष्ठतिष्ठममत्वंहिकृत्वाविप्रियमीदृशम् ॥ क्कनुराक्षसशार्दूलगत्वामोक्षमवाप्स्यसि ॥ २७ ॥ यदींद्रवैवस्वतभास्करान्वास्वयंभुवैश्वानरशंकरान्वा ॥ गमिष्यसित्वंदशधादिशोवातथापिमेनाद्यगतोविमोक्ष्यसे ॥ २८ ॥ यश्चैपशक्त्यानिहतस्त्वयाद्यगच्छन्विषादंसहसाभ्युपेत्य ॥ सएषरक्षोगणराजमृत्युःसपुत्रपौत्रस्यतवाद्ययुद्धे ॥ २९ ॥ एतेनचात्यद्भुतदर्शनानिशरैर्जनस्थानकृतालयानि ॥ चतुर्दशान्यात्तवरायुधानिरक्षःसहस्राणिनिषूदितानि ॥ १३० ॥ राघवस्यवचःश्रुत्वाराक्षसेंद्रोमहाबलः ॥ वायुपुत्रंमहावेगंवहंतंराघवंरणे ॥ ३१ ॥ रोषेण महताविष्टःपूर्ववैरमनुस्मरन् ॥ आजघानशरैर्दीप्तैःकालानलशिखोपमैः ॥ ३२ ॥ राक्षसेनाहतेतस्यताडितस्यापिसायकैः ॥ स्वभावतेजोयुक्तस्यभूयस्तेजोभ्यवर्धत ॥ ३३ ॥ ततोरामोमहातेजारावणेनकृतव्रणम् ॥ दृष्ट्वाप्लवगशार्दूलंक्रोधस्यवशमेयिवान् ॥ ३४ ॥ तस्याभिसंक्रम्यरथंसचक्रंसाश्वध्वजच्छत्रमहापताकम् ॥ ससारथिंसाशनिशूलखड्गंरामःप्रचिच्छेदशितैःशराग्रैः ॥३५॥ अथेंद्रशत्रुंतरसाजघानबाणेनवज्राशनिसन्निभेन ॥ भुजांतरेव्यूढसुजातरूपेवज्रेणमेरुंभगवानिवेंद्रः ॥३६॥ योवज्रपाताशनिसन्निपातान्नचुक्षुभेनापिचचालराजा सरामबाणाभिहतोभृशार्तश्चचालचापंचमुमोचवीरः ॥ १३७ ॥

दश वा दिशो वा इतिपाठे दशापि दिश इत्यर्थः । वाशब्दोऽप्यर्थे ॥ २८ ॥ एवं परमक्रोधे हेतुमाह य इति । अद्य त्वया युद्धं गच्छन्नसौ लक्ष्मणस्त्वया शक्त्या निहतस्ताडितः सन्सहसा विषादं गतोऽतोऽभ्युपेत्य प्रतिज्ञाय स एषोहं तद्दुःखशांतये सपुत्रपौत्रस्य ते संख्ये मृत्युर्भविष्यामीति शेषः ॥ २९ ॥ एतेन मया तावकानि रक्षांसि निषूदितानि ॥ १३० ॥ ३१ ॥ ३२ ॥ भूयस्तेजःशौर्यं विवृद्धमभूत ॥ ३३ ॥ ३४ ॥ अभिसंक्रम्य संयुक्तो भूत्वा ॥ ३५ ॥ व्यूढं विशालम् । सुजातरूपं राजार्हमहाभरणचंदनादिभिः प्रशस्ताकारं तस्मिन् ॥ ३६ ॥ वज्रपातश्चाशनिसन्निपातश्चेति समाहारैकवत्त्वम् ॥१३७॥

धनुर्ज्यापोरेणात्मानं रक्ष ॥४९॥५०॥५१॥५२॥५३॥५४॥ पंचशाखः पंचांगुलियुक्तः तव देहे चिरोषितं भूतात्मानं तव देहाद्विधमिष्यति अपहरिष्यति ॥५५॥५६॥ कीर्तिं हनूमानपि रावणं प्रहतवानित्येवं रूपां कीर्तिं ज्ञातविक्रांतं ज्ञातपराक्रमम्॥५७॥रावणस्य वच इति । ज्ञातविक्रमं नाशयिष्यामीत्येवंरूपम् । पूर्वं मयाप्रहतमक्षं तन्नामानं सुतं स्मर मत्पराक्रमज्ञानायेति शेषः।पूर्वमेव ज्ञातत्वादिदानीं किमपि मद्विक्रमविषये

राघवस्यवचःश्रुत्वासंपरिष्वज्यपूज्यच ॥ अभिवाद्यचरामायययौसौमित्रिराहवे ॥ ५० ॥ सरावणंवारणहस्तबाहुंददर्शभीमोद्यतदीप्तचापम् ॥ प्रच्छादयंतंशरवृष्टिजालैस्तान्वानरान्भिन्नविकीर्णदेहान् ॥ ५१ ॥ तमालोक्यमहातेजाहनूमान्मारुतात्मजः ॥ निवार्यशरजालानिविदुद्रावसराव णम् ॥ ५२ ॥ रथंतस्यसमासाद्यबाहुमुद्यम्यदक्षिणम् ॥ त्रासयन्रावणंधीमान्हनूमान्वाक्यमब्रवीत् ॥ ५३ ॥ देवदानवगंधर्वैर्यक्षैश्चसहराक्षसैः ॥ अवध्यत्वंत्वयाप्राप्तंवानरेभ्यस्तुतेभयम् ॥ ५४ ॥ एषमेदक्षिणोबाहुःपंचशाखःसमुद्यतः ॥ विधमिष्यतितेदेहेभूतात्मानंचिरोषितम् ॥ ५५ ॥ श्रुत्वा हनूमतोवाक्यंरावणोभीमविक्रमः ॥ संरक्तनयनःक्रोधादिदंवचनमब्रवीत् ॥ ५६ ॥ क्षिप्रंप्रहरनिःशंकंस्थिरांकीर्तिमवाप्नुहि ॥ ततस्त्वांज्ञातविक्रांतं नाशयिष्यामिवानर ॥५७॥ रावणस्यवचःश्रुत्वावायुसूनुर्वचोब्रवीत् ॥ प्रहतंहिमयापूर्वमक्षंतवसुतंस्मर ॥ ५८ ॥ एवमुक्तोमहातेजारावणोराक्षसे श्वरः ॥ आजघानानिलसुतंतलेनोरसिवीर्यवान् ॥ सतलाभिहतस्तेनचचालचमुहुर्मुहुः ॥ ५९ ॥ स्थितोमुहूर्ततेजस्वीस्थैर्यंकृत्वामहामतिः ॥ आज घानचसंक्रुद्धस्तलेनैवामरद्विषम् ॥ ६० ॥ ततःसतेनाभिहतोवानरेणमहात्मना ॥ दशग्रीवःसमाधूतोयथाभूमिचलेऽचलः ॥ ६१ ॥ संग्रामेतंतथादृ ष्ट्वारावणंतलताडितम् ॥ ऋषयोवानराःसिद्धानेदुर्देवाःसुरासुरैः ॥ ६२ ॥ अथाश्वास्यमहातेजारावणोवाक्यमब्रवीत् ॥ साधुवानरवीर्येणश्लाघनीयो सिमेरिपुः [illegible] ॥ रावणेनैवमुक्तस्तुमारुतिर्वाक्यमब्रवीत् ॥ धिगस्तुममवीर्यंस्ययत्त्वंजीवसिरावण ॥ ६४ ॥ सकृत्तुप्रहरेदानींदुर्बुद्धेकिंविकत्थसे ॥ ततस्त्वामामिकामुष्टिर्नयिष्यतियमक्षयम् ॥ ६५ ॥ ततोमारुतिवाक्येनकोपस्तस्यप्रजज्वले ॥ संरक्तनयनोयत्नान्मुष्टिमावृत्यदक्षिणम् ॥ पातयामा सवेगेनवानरोरसिवीर्यवान् ॥ ६६ ॥ हनूमान्वक्षसिव्यूढेसंचचालपुनःपुनः ॥ विह्वलंतंतदादृष्ट्वाहनूमंतंमहाबलम् ॥ ६७ ॥ रथेनातिरथःशीघ्रंनीलं प्रतिसमभ्यगात् ॥ राक्षसानामधिपतिर्दशग्रीवःप्रतापवान् ॥ ६८ ॥ पन्नगप्रतिमैर्भीमैःपरमर्माभिभेदनैः ॥ शरैरादीपयामासनीलंहरिचमूपतिम् ॥ ॥ ६९ ॥ सशरौघसमायस्तोनीलोहरिचमूपतिः ॥ करेणैकेनशैलाग्रंरक्षोधिपतयेसृजत् ॥ ७० ॥

ज्ञातव्यं नास्तीति भावः॥५८॥५९॥६०॥ समाधूतः कंपितः भूमिचले भूमिकंपे॥६१॥ तथा ताडितं विसंज्ञतापर्यंतताडनदुःखवंतम् । नेदुः संतोषादिति शेषः॥६२॥६३॥वीर्यस्य धिक् वीर्यं धिगित्यर्थः । यत्त्वं जीवसि मत्तलताडितोपीत्यर्थः ॥ ६४ ॥ ६५ ॥ ६६ ॥ व्यूढेऽतिविशाले वक्षसि हतो हनूमान्संचचाल ॥ ६७ ॥ ६८ ॥ ६९ ॥ रक्षोधिपतयेऽसृजत् तत्प्रहारं दत्तवानित्यर्थः । समायस्तः खेदितः ॥ ७० ॥

इति मर्त्यशिक्षणं तत्फलकमित्यर्थः । आत्मनि ईश्वरस्येत्यनेन लाघवगौरवभाष्योराविरोध उक्तः ॥ १७ ॥ तं समुत्सृज्य ब्रह्मत्वेन ध्यानात्तत्समुत्सर्गः स्थानं स्थितिम् ॥ १८ ॥ १९ ॥ पुनर्विष्णोर्भागमात्मान स्मरन्नाश्वस्तः प्राणाश्वासेंद्रियग्रामः विशल्यो नीरुक्सर्वगात्र आसीदिति शेषः ॥ १२० ॥ समभिद्रवच्छीघ्रमभ्यद्रवत् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ दुद्राव शीघ्रमगमत् ॥ २५ ॥ २६ ॥ क गत्वेति योजना न कापीत्यर्थः ॥ २७ ॥ तदेवाह यदीति । यद्यपींद्रादीन् शरणं गमिष्यसि दशधा दिशो दशप्रकारा दिशो वा तदंतान्वा अद्य गमिष्यसि तथापि तत्र गतोपि मे मत्तो न विमोक्ष्यसे ।

तंसमुत्सृज्यसाशक्तिःसौमित्रिंयुधिनिर्जितम् ॥ रावणस्यरथेतस्मिन्स्थानंपुनरुपागमत् ॥ १८ ॥ रावणोपिमहातेजाःप्राप्यसंज्ञांमहाहवे ॥ आददेनिशितान्बाणाञ्जग्राहचमहद्धनुः ॥ १९ ॥ आश्वस्तश्चविशल्यश्चलक्ष्मणःशत्रुसूदनः ॥ विष्णोर्भागममीमांस्यमात्मानंप्रत्यनुस्मरन् ॥ १२० ॥ निपातितमहावीरांवानराणांमहाचमूम् ॥ राघवस्तुरणेदृष्ट्वारावणंसमभिद्रवत् ॥ २१ ॥ अथैनमनुसंक्रम्यहनूमान्वाक्यमब्रवीत् ॥ ममपृष्ठंसमारुह्यराक्षसंशास्तुमर्हसि ॥२२॥ विष्णुर्यथागरुत्मंतमारुह्यामरवैरिणम् ॥ तच्छ्रुत्वाराघवोवाक्यंवायुपुत्रेणभाषितम् ॥ २३ ॥ अथारुरोहसहसाहनूमंतंमहाकपिम् ॥ रथस्थंरावणंसंख्येददर्शमनुजाधिपः ॥ २४ ॥ तमालोक्यमहातेजाःप्रदुद्रावसरावणम् ॥ वैरोचनमिवक्रुद्धोविष्णुरभ्युद्यतायुधः ॥ २५ ॥ ज्याशब्दमकरोत्तीव्रंवज्रनिष्पेषनिष्ठुरम् ॥ गिरागंभीरयारामोराक्षसेंद्रमुवाचह ॥ २६ ॥ तिष्ठतिष्ठममत्वंहिकृत्वाविप्रियमीदृशम् ॥ क्वनुराक्षसशार्दूलगत्वामोक्षमवाप्स्यसि ॥ २७ ॥ यदींद्रवैवस्वतभास्करान्वास्वयंभुवैश्वानरशंकरान्वा ॥ गमिष्यसित्वंदशधादिशोवातथापिमेनाद्यगतोविमोक्ष्यसे ॥ २८ ॥ यश्चैषशक्त्यानिहतस्त्वयाद्यगच्छन्विषादंसहसाभ्युपेत्य ॥ सएषरक्षोगणराजमृत्युःसपुत्रपौत्रस्यतवाद्ययुद्धे ॥ २९ ॥ एतेनचात्यद्भुतदर्शनानिशरैर्जनस्थानकृतालयानि ॥ चतुर्दशान्यात्तवरायुधानिरक्षःसहस्राणिनिषूदितानि ॥ १३० ॥ राघवस्यवचःश्रुत्वाराक्षसेंद्रोमहाबलः ॥ वायुपुत्रंमहावेगं[illegible]राघवंरणे ॥ ३१ ॥ रोषेण महताविष्टःपूर्ववैरमनुस्मरन् ॥ आजघानशरैर्दीप्तैःकालानलशिखोपमैः ॥ ३२ ॥ राक्षसेनाहतेतस्यताडितस्यापि[illegible]यकैः ॥ स्वभावतेजोयुक्तस्यभूयस्तेजोभ्यवर्धत ॥ ३३ ॥ ततोरामोमहातेजारावणेनकृतव्रणम् ॥ दृष्ट्वाप्लवगशार्दूलंक्रोधस्यवशमेयिवान् ॥ ३४ ॥ तस्याभिसंक्रम्यरथंसचक्रंसाश्वध्वजच्छत्रमहापताकम् ॥ ससारथिंसाशनिशूलखड्गंरामःप्रचिच्छेदशितैःशराग्रैः ॥३५॥ अथेंद्रशत्रुंतरसाजघानबाणेनवज्राशनिसन्निभेन ॥ भुजांतरेव्यूढसुजातरूपेवज्रेणमेरुंभगवानिवेंद्रः ॥३६॥ योवज्रपाताशनिसन्निपातान्नचुक्षुभेनापिचचालराजा सरामबाणाभिहतोभृशार्तश्चचालचापंचमुमोचवीरः ॥ १३७ ॥

दश वा दिशो वा इतिपाठे दशापि दिश इत्यर्थः । वाशब्दोऽप्यर्थे ॥ २८ ॥ एवं परमक्रोधे हेतुमाह य इति । अद्य त्वया युद्धं गच्छन्नसौ लक्ष्मणस्त्वया शक्त्या निहतस्ताडितः सन्सहसा विषादं गतोऽतोऽभ्युपेत्य प्रतिज्ञाय स एषोहं तद्दुःखशांतये सपुत्रपौत्रस्य ते संख्ये मृत्युर्भविष्यामीति शेषः ॥ २९ ॥ एतेन मया तावकानि रक्षांसि निषूदितानि ॥ १३० ॥ ३१ ॥ ३२ ॥ भूयस्तेजःशौर्यं विवृद्धमभूत ॥ ३३ ॥ ३४ ॥ अभिसंक्रम्य संयुक्तो भूत्वा ॥ ३५ ॥ व्यूढं विशालम् । सुजातरूपं राजार्हमहाभरणचंदनादिभिः प्रशस्ताकारं तस्मिन् ॥ ३६ ॥ वज्रपातश्चाशनिसन्निपातश्चेति समाहारैकवत्त्वम् ॥ १३७॥

तदेवाह प्राप्ता इति ॥५८॥ सलक्ष्मणेन रामेण समेत्य प्रशस्यमानोत एव प्रहृष्टरूपोतिप्रहृष्टः । प्रशंसायां रूपम् ॥५९॥ तत्पंचम्यां प्रहस्तवधः ॥ धर्ममानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टपंचाशः सर्गः ॥ ५८ ॥ ॥ कतकरी० ॥ ५३ ॥ ॥छ॥ ॥ तस्मिन्निति । प्रहस्ते इत्यर्थः । प्लवंगमानामृषभेण नीलेन ॥१ ॥ पावकसूनुशस्तं नीलेन हतम् ॥२ ॥ निर्जरा देवाः॥३॥ रिपवे रिपुभ्यस्तेषु रिपुषु अवज्ञा एते कपयः किं करिष्यंतीत्येवंरूपा न कार्या । यैरिंद्रबलसादनो मे सैन्यपालो वानररूपैः सूदितः ॥४॥ अविचारयन् रिपुबलं तृणीकुर्वन् रणशीर्षे रणमूर्धानं युद्धभूमिमि

ततस्तुनीलोविजयीमहाबलःप्रशस्यमानःसुकृतेनकर्मणा ॥ समेत्यरामेणसलक्ष्मणेनप्रहृष्टरूपस्तुबभूवयूथपः ॥ ५९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टपंचाशः सर्गः॥५८॥ तस्मिन्हतेराक्षससैन्यपालेप्लवंगमानामृषभेणयुद्धे ॥ भीमायुधंसागरवेगतुल्यंविदुद्रुवे राक्षसराजसैन्यम् ॥ १ ॥ गत्वातुरक्षोधिपतेःशशंसुःसेनापतिंपावकसूनुशस्तम् ॥ तच्चापितेषांवचनंनिशम्यरक्षोधिपःक्रोधवशंजगाम ॥ २॥ संख्ये प्रहस्तंनिहतंनिशम्यक्रोधार्दितःशोकपरीतचेताः ॥ उवाचतात्राक्षसयूथमुख्यानिंद्रोयथानिर्जरयूथमुख्यान् ॥ ३ ॥ नावज्ञारिपवेकार्यायैरिंद्रबलसादनः ॥ सूदितःसैन्यपालोमेसानुयात्रःसकुंजरः ॥ ४ ॥ सोहंरिपुविनाशायविजयायाविचारयन् ॥ स्वयमेवगमिष्यामिरणशीर्षंतदद्भुतम् ॥ ५ ॥ अद्य तद्वानरानीकंरामंचसहलक्ष्मणम् ॥ निर्दहिष्यामिबाणौघैर्वनंदीप्तैरिवाग्निभिः ॥६॥ सएवमुक्त्वाज्वलनप्रकाशंरथंतुरंगोत्तमराजियुक्तम् ॥ प्रकाशमानं वपुषाज्वलंतंसमारुरोहामरराजशत्रुः ॥ ७ ॥ सशंखभेरीपणवप्रणादैरास्फोटितक्ष्वेडितसिंहनादैः ॥ पुण्यैःस्तवैश्चापिसुपूज्यमानस्तदाययौराक्षस राजमुख्यः ॥ ८ ॥ सशैलजीमूतनिकाशरूपैर्मांसाशनैःपावकदीप्तनेत्रैः ॥ बभौवृतोराक्षसराजमुख्योभूतैर्वृतोरुद्रइवामरेशः ॥ ९ ॥ ततोनगर्याः सहसामहौजानिष्क्रम्यतद्वानरसैन्यमुग्रम् ॥ महार्णवाभ्रस्तनितंददर्शसमुद्यतंपादपशैलहस्तम् ॥ १० ॥ तद्राक्षसानीकमतिप्रचंडमालोक्यरामो भुजगेंद्रबाहुः ॥ विभीषणंशस्त्रभृतांवरिष्ठमुवाचसेनानुगतःपृथुश्रीः ॥ ११ ॥ नानापताकाध्वजछत्रजुष्टंप्रासासिशूलायुधशस्त्रजुष्टम् ॥ कस्येदमक्षो भ्यमभीरुजुष्टंसैन्यंमहेंद्रोपमनागजुष्टम् ॥ १२ ॥ ततस्तुरामस्यनिशम्यवाक्यंविभीषणःशक्रसमानवीर्यः ॥ शशंसरामस्यबलप्रवेकंमहात्मनां राक्षसपुंगवानाम् ॥ १३ ॥ योसौगजस्कंधगतोमहात्मानवोदिताकोँपमताम्रवक्त्रः ॥ संकंपयन्नागशिरोभ्युपैतिह्यकंपनंत्वेनमवेहिराजन् ॥ १४ ॥ योसौरथस्थोमृगराजकेतुर्धुन्वन्धनुःशक्रधनुःप्रकाशम् ॥ करीवभात्युग्रविवृत्तदंष्ट्रःसइंद्रजिन्नामवरप्रधानः ॥ १५ ॥

त्यर्थः॥५॥६॥तुरंगोत्तमराजियुक्तम् अनेन बह्वश्वयुक्तत्वं रथस्योक्तम् । वपुषा ज्वलंतम् अतएव स्वभासा प्रकाशमानम्॥७॥आस्फोटितानि भुजास्फालनानि क्ष्वेडितानि स्वशौर्यप्रकाशकशब्दाः आस्फोटितादीन्यत्र सैनिकानाम् ॥ ८ ॥ ९ ॥ महार्णवस्य अभ्रस्य महामेघस्येव च स्तनितं यस्य तत् ॥१०॥ सेनयानुगतः सेनानुगतः ॥११॥ ध्वजच्छत्रे तुगभाव आर्षः । महेंद्रोपमनागजुष्टं महेंद्रपर्वतसदृशगजयुक्तम् अभीरुभी रक्षोभिर्जुष्टम् ॥ १२ ॥ बलप्रवेकं बलश्रेष्ठम् ॥ १३ ॥ महात्मा महादेहः अयमकंपनः पूर्वहतादन्य इति बोध्यम् । स्वशरीरभारात्स्वारूढनागस्य गजस्य शिरः संकंपयन्नेति ॥ १४ ॥ उग्रा विवृत्ता दंष्ट्रा यस्य

सः । तथा वरेण ब्रह्मदत्तवरेण प्रधानो राक्षसश्रेष्ठः ॥ १५ ॥ विंध्याचलास्ताचलमहेंद्रपर्वतकल्पः शरीरेण अतुल्यमानमनुपमप्रमाणम् ॥ १६ ॥ घंटानिनदैः प्रणादो यस्य तं खरं क्रूरं गजमारुह्य गर्जति ॥ १७ ॥ भांडमश्वाभरणम् । कांचनानि चित्रभांडानि यस्य तमश्वम् । पिशाचनामा ॥ १८ ॥ किंकरभूतो वज्रवेगो यस्मिंस्तम् । त्रिशिरा अत्रापि कश्चित् त्रिशिराः ॥ १९ ॥ कुंभस्तन्नामा ॥ २० ॥ जांबूनदवज्रजुष्टं जांबूनदेन वज्रैर्हीरकादिरत्नैश्च युक्तम् अतएव दीप्तम् । सधूमं नीलमणिकांत्या सधूमामिव ॥२१॥ पावकवद्दीप्तं रूपं यस्य तम् । नगशृंगयोधी । प्रतियोद्ध्रभावात् भुजकंडूनिवृत्त्यर्थमिति भावः ॥२२॥

यश्चैषविंध्यास्तमहेंद्रकल्पोधन्वीरथस्थोऽतिरथोतिवीरः ॥ विस्फारयंश्चापमतुल्यमानंनाम्नातिकायोतिविवृद्धकायः ॥ १६ ॥ योसौनवार्कोदितताम्रचक्षुरारुह्यघंटानिनदप्रणादम् ॥ गजंखरंगर्जतिवैमहात्मामहोदरोनामसएषवीरः ॥ १७ ॥ योसौहयंकांचनचित्रभांडमारुह्यसंध्याभ्रगिरिप्रकाशः ॥ प्रासंसमुद्यम्यमरीचिनद्धंपिशाचएषोशनितुल्यवेगः ॥ १८ ॥ यश्चैषशूलंनिशितंप्रगृह्यविद्युत्प्रभंकिंकरवज्रवेगम् ॥ वृषेंद्रमास्थायशशिप्रकाशमायातियोसौत्रिशिरायशस्वी ॥ १९ ॥ असौचजीमूतनिकाशरूपःकुंभःपृथुव्यूढसुजातवक्षाः ॥ समाहितःपन्नगराजकेतुर्विस्फारयन्यातिधनुर्विधुन्वन् ॥ २० ॥ यश्चैषजांबूनदवज्रजुष्टंदीप्तंसधूमंपरिघंप्रगृह्य ॥ आयातिरक्षोबलकेतुभूतोयोसौनिकुंभोऽद्भुतवीरकर्मा ॥ २१ ॥ यश्चैषचापासिशरौघजुष्टंपताकिनंपावकदीप्तरूपम् ॥ रथंसमास्थायविभात्युदग्रोनरांतकोसौनगशृंगयोधी ॥ २२ ॥ यश्चैषनानाविधघोररूपैर्व्याघ्रोष्ट्रनागेंद्रमृगाश्ववक्त्रैः ॥ भूतैर्वृतोभातिविवृत्तनेत्रैर्योसौसुराणामपिदर्पहंता ॥२३॥ यत्रैतदिंदुप्रतिमंविभातिच्छत्रंसितंसूक्ष्मशलाकमग्र्यम् ॥ अत्रैवरक्षोधिपतिर्महात्माभूतैर्वृतोरुद्रइवावभाति ॥ २४ ॥ असौकिरीटीचलकुंडलास्योनगेंद्रविंध्योपमभीमकायः ॥ महेंद्रवैवस्वतदर्पहंतारक्षोधिपःसूर्यइवावभाति ॥ २५ ॥ प्रत्युवा[illegible]रामोविभीषणमरिंदमः ॥ अहोदीप्तमहातेजारावणोराक्षसेश्वरः ॥ २६ ॥ आदित्यइवदुष्प्रेक्ष्योरश्मिभिर्भातिरावणः ॥ नव्यक्तंलक्षयेह्यस्यरूपंतेजःसमावृतम् ॥ २७ ॥ देवदानववीराणांवपुर्नैवंविधंभवेत् ॥ यादृशंराक्षसेंद्रस्यवपुरेतद्विराजते ॥ २८ ॥ सर्वेपर्वतसंकाशाःसर्वेपर्वतयोधिनः ॥ सर्वेदीप्तायुधधरायोधास्तस्यमहात्मनः ॥ २९ ॥ विभातिरक्षोराजोसौप्रदीप्तैर्भीमदर्शनैः ॥ भूतैःपरिवृतैस्तीक्ष्णैर्देहवद्भिरिवांतकः ॥ ३० ॥ दिष्ट्यायमद्यपापात्मामममद्दृष्टिपथंगतः ॥ अद्यक्रोधंविमोक्ष्यामिसीताहरणसंभवम् ॥३१॥ एवमुक्त्वाततोरामोधनुरादायवीर्यवान् ॥ लक्ष्मणानुचरस्तस्थौसमुद्धृत्यशरोत्तमम् ॥ ३२॥

योसौ कोसौ तत्राह यः सुराणामपि दर्पहा रावण इति शेषः । भूतैर्भूतगणैः ॥ २३ ॥ कासौ तत्राह यत्रेति । यत्र देशे इंदुप्रतिमत्वादिगुणकं छत्रं भाति अत्रैव रक्षोधिपतिः । भूतैर्भूतगणैः ॥ २४ ॥ नगेंद्रो यो विंध्यस्तद्वद्भीमः कायो यस्य सः ॥ २५ ॥ २६ ॥ न व्यक्तं लक्षये इत्यत्र हेतुस्तेजःसमावृतमिति । रूपं सूक्ष्मावयवसंस्थानम् ॥२७॥२८॥२९॥ देहवद्भिः प्रशस्तदेहैः ॥३०॥३१॥३२॥

द्वारेषु लंकायाश्चतुर्ष्वपि द्वारेषु चर्या महामार्गाः गृहं मूलायतनं तस्य गोपुराणि बहिर्द्वारमासादाः सुनिर्वृताः सुखिनः निर्विशंका निर्भयाः ॥ ३३ ॥ इदं छिद्रं रणभूमौ सपरिवारस्याग मनरूपम् ॥ ॥ ३४ ॥ अर्णवौघं समुद्रजलसमूहम् ॥ ३५ ॥ दीप्ता इषवश्चापश्च यस्य तम् ॥ ३६ ॥ शृंगशब्दोर्धर्चादिः पुंस्यपि ॥ ३७ ॥ ३८ ॥ ३९ ॥ शक्राशनिस्पर्शवच्छरीरः सुग्रीवमासाद्य प्राप्य अर्थात्तमेव

ततःसरक्षोधिपतिर्महात्मारक्षांसितान्याहमहाबलानि ॥ द्वारेषुचर्यागृहगोपुरेषुसुनिर्वृतास्तिष्ठतनिर्विशंकाः ॥ ३३ ॥ इहागतंमांसहितंभवद्भिर्वनौकस श्छिद्रमिदंविदित्वा ॥ शून्यांपुरींदुष्प्रसहांप्रमथ्यप्रधर्षयेयुःसहसासमेताः ॥ ३४ ॥ विसर्जयित्वासचिवांस्ततस्तान्गतेषुरक्षःसुयथानियोगम् ॥ व्यदा रयद्वानरसागरौघंमहाझषःपूर्णमिवार्णवौघम् ॥ ३५ ॥ तमापतंतंसहसासमीक्ष्यदीप्तेषुचापंयुधिराक्षसेंद्रम् ॥ महत्समुत्पाट्यमहीधराग्रंदुद्रावरक्षो धिपतिंहरीशः ॥३६॥ तच्छैलशृंगंबहुवृक्षसानुंप्रगृह्यचिक्षेपनिशाचराय ॥ तमापतंतंसहसासमीक्ष्यचिच्छेदबाणैस्तपनीयपुंखैः ॥ ३७ ॥ तस्मिन्प्रवृ द्धोत्तमसानुवृक्षेशृंगेविदीर्णेपतितेपृथिव्याम् ॥ महाहिकल्पंशरमंतकाभंसमाददेराक्षसलोकनाथः ॥ ३८ ॥ सतंगृहीत्वाऽनिलतुल्यवेगंसविस्फु लिंगज्वलनप्रकाशम् ॥ बाणंमहेंद्राशनितुल्यवेगंचिक्षेपसुग्रीववधायरुष्टः ॥ ३९ ॥ ससायकोरावणबाहुमुक्तःशक्राशनिस्पर्शवपुःप्रकाशम् ॥ सुग्री वमासाद्यविभेदवेगाद्गुहेरिताक्रौंचमिवोग्रशक्तिः ॥ ४० ॥ ससायकार्तोविपरीतचेताःकूजन्पृथिव्यांनिपपातवीरः ॥ तंवीक्ष्यभूमौपतितंविसंज्ञंनेदुः प्रहृष्टायुधियातुधानाः ॥४१॥ ततोगवाक्षोगवयःसुषेणस्त्वथर्षभोज्योतिमुखोनलश्च ॥ शैलान्समुत्पाट्यविवृद्धकायाःप्रदुद्रुवुस्तंप्रतिराक्षसेंद्रम्॥४२॥ तेषांप्रहारान्सचकारमोघान्रक्षोधिपोबाणशतैःशिताग्रैः ॥ तान्वानरेंद्रानपिबाणजालैर्बिभेदजांबूनदचित्रपुंखैः ॥ तेवानरेंद्रास्त्रिदशारिबाणैर्भिन्नानिपे तुर्भुविभीमकायाः ॥ ४३ ॥ ततस्तुतद्वानरसैन्यमुग्रंप्रच्छादयामाससबाणजालैः ॥ तेवध्यमानाःपतिताश्चवीरानानद्यमानाभयशल्यविद्धाः ॥ शाखामृगारावणसायकार्ताजग्मुःशरण्यंशरणंस्मरामम् ॥ ४४ ॥ ततोमहात्मासधनुर्धनुष्मानादायरामःसहसाजगाम ॥ तंलक्ष्मणःप्रांजलिरभ्युपे त्यउवाचरामंपरमार्थयुक्तम् ॥ ४५ ॥ काममार्यसुपर्याप्तोवधायास्यदुरात्मनः ॥ विधमिष्याम्यहंचैतमनुजानीहिमांविभो ॥ ४६ ॥ तमब्रवीन्महाते जारामःसत्यपराक्रमः ॥ गच्छयत्नपरश्चापिभवलक्ष्मणसंयुगे ॥ ४७ ॥ रावणोहिमहावीर्योरणेऽद्भुतपराक्रमः ॥ त्रैलोक्येनापिसंक्रुद्धोदुष्प्रसह्यो नसंशयः ॥ ४८ ॥ तस्यच्छिद्राणिमार्गस्वस्वच्छिद्राणिचलक्षय ॥ चक्षुषाधनुषात्मानंगोपायस्वसमाहितः ॥ ४९ ॥

विभेद । गुहेरितोग्रशक्तिः क्रौंचमिव ॥ ४० ॥ विपरीतचेताः अचेता इति यावत् ॥ ४१ ॥ ४२ ॥ ४३ ॥ भयमेव शल्यं तेन विद्धाः शरण्यं रामं शरणं जग्मुः ॥ ४४ ॥ धनुष्मान्प्रशस्तधनुष्कः सः धनुरादायेत्यन्वयः ॥ ४५ ॥ पर्याप्तोहमिति शेषः ॥ ४६ ॥ ४७ ॥ त्रैलोक्येनापि तद्वर्तिदेवादिसमूहैरित्यर्थः ॥ ४८ ॥ छिद्राणि प्रहारावसरान् स्वच्छिद्राणि चेत्यस्य गोपायेति शेषः । चक्षुषा स्वच्छिद्रं च लक्षय सम्यगवलोकय ततो धनुषा

धनुर्ज्यापरेणात्मानं रक्ष ॥४९॥५०॥५१॥५२॥५३॥५४॥ पंचशाखः पंचांगुलियुक्तः तव देहे चिरोषितं भूतात्मानं तव देहाद्विधमिष्यति अपहरिष्यति ॥५५॥५६॥ कीर्तिं हनूमानपि रावणं प्रहृतवानित्येवं रूपां कीर्तिं ज्ञातविक्रांतं ज्ञातपराक्रमम्॥५७॥रावणस्य वच इति । ज्ञातविक्रमं नाशयिष्यामीत्येवं रूपम् । पूर्वं मयाप्रहतमक्षं तन्नामानं सुतं स्मर मत्पराक्रमज्ञानायेति शेषः।पूर्वमेव ज्ञातत्वादिदानीं किमपि मद्विक्रमविषये

राघवस्यवचःश्रुत्वासंपरिष्वज्यपूज्यच ॥ अभिवाद्यचरामायययौसौमित्रिराहवे ॥ ५० ॥ सरावणंवारणहस्तबाहुंददर्शभीमोद्यतदीप्तचापम् ॥ प्रच्छादयंतंशरवृष्टिजालैस्तान्वानरान्भिन्नविकीर्णदेहान् ॥ ५१ ॥ तमालोक्यमहातेजाहनूमान्मारुतात्मजः ॥ निवार्यशरजालानिविदुद्रावसराव णम् ॥ ५२ ॥ रथंतस्यसमासाद्यबाहुमुद्यम्यदक्षिणम् ॥ त्रासयन्रावणंधीमान्हनूमान्वाक्यमब्रवीत् ॥ ५३ ॥ देवदानवगंधर्वैर्यक्षैश्चसहराक्षसैः ॥ अवध्यत्वंत्वयाप्राप्तंवानरेभ्यस्तुतेभयम् ॥ ५४ ॥ एषमेदक्षिणोबाहुःपंचशाखःसमुद्यतः ॥ विधमिष्यतितेदेहेभूतात्मानंचिरोषितम् ॥ ५५ ॥ श्रुत्वा हनूमतोवाक्यंरावणोभीमविक्रमः ॥ संरक्तनयनःक्रोधादिदंवचनमब्रवीत् ॥ ५६ ॥ क्षिप्रंप्रहरनिःशंकंस्थिरांकीर्तिमवाप्नुहि ॥ ततस्त्वांज्ञातविक्रांतं नाशयिष्यामिवानर ॥५७॥ रावणस्यवचःश्रुत्वावायुसूनुर्वचोब्रवीत् ॥ प्रहृतंहिमयापूर्वमक्षंतवसुतंस्मर ॥ ५८ ॥ एवमुक्तोमहातेजारावणोराक्षसे श्वरः ॥ आजघानानिलसुतंतलेनोरसिवीर्यवान् ॥ सतलाभिहतस्तेनचचालचमुहुर्मुहुः ॥ ५९ ॥ स्थितोमुहूर्तंतेजस्वीस्थैर्यंकृत्वामहामतिः ॥ आज घानचसंक्रुद्धस्तलेनैवामरद्विषम् ॥ ६० ॥ ततःसतेनाभिहतोवानरेणमहात्मना ॥ दशग्रीवःसमाधूतोयथाभूमिचलेऽचलः ॥ ६१ ॥ संग्रामेतंतथादृ ष्ट्वारावणंतलताडितम् ॥ ऋषयोवानराःसिद्धानेदुर्देवाःसुरासुरैः ॥ ६२ ॥ अथाश्वास्यमहातेजारावणोवाक्यमब्रवीत् ॥ साधुवानरवीर्येणश्लाघनीयो सिमेरिपुः [illegible] ॥ रावणेनैवमुक्तस्तुमारुतिर्वाक्यमब्रवीत् ॥ धिगस्तुममवीर्यंस्ययत्त्वंजीवसिरावण ॥ ६४ ॥ सकृत्तुप्रहरेदानींदुर्बुद्धेकिंविकत्थसे ॥ ततस्त्वामार्भिकोमुष्टिर्नयिष्यतियमक्षयम् ॥ ६५ ॥ ततोमारुतिवाक्येनकोपस्तस्यप्रजज्वले ॥ संरक्तनयनोयत्नान्मुष्टिमावृत्यदक्षिणम् ॥ पातयामा सवेगेनवानरोरसिवीर्यवान् ॥ ६६ ॥ हनूमान्वक्षसिव्यूढेसंचचालपुनःपुनः ॥ विह्वलंतंतदादृष्ट्वाहनूमंतंमहाबलम् ॥ ६७ ॥ रथेनातिरथःशीघ्रंनीलं प्रतिसमभ्यगात् ॥ राक्षसानामधिपतिर्दशग्रीवःप्रतापवान् ॥ ६८ ॥ पन्नगप्रतिमैर्भीमैःपरमर्माभिभेदनैः ॥ शरैरादीपयामासनीलंहरिचमूपतिम् ॥ ॥ ६९ ॥ सशरौघसमायस्तोनीलोहरिचमूपतिः ॥ करेणैकेनशैलाग्रंरक्षोधिपतयेसृजत् ॥ ७० ॥

ज्ञातव्यं नास्तीति भावः॥५८॥५९॥६०॥ समाधूतः कंपितः भूमिचले भूमिकंपे॥६१॥ तथा ताडितं विसंज्ञतापर्यंतताडनदुःखवंतम् । नेदुः संतोषादिति शेषः॥६२॥६३॥वीर्यस्य धिक् वीर्यं धिगित्यर्थः । यत्त्वं जीवसि मत्तलताडितोपीत्यर्थः ॥ ६४ ॥ ६५ ॥ ६६ ॥ व्यूढेऽतिविशाले वक्षसि हतो हनूमान्संचचाल ॥ ६७ ॥ ६८ ॥ ६९ ॥ रक्षोधिपतयेऽसृजत् तत्प्रहारं दत्तवानित्यर्थः । समायस्तः खेदितः ॥ ७० ॥

तुहूषंतं होतुमिच्छंतम् ॥ १६ ॥ बलाध्यक्षान्सर्वबलाध्यक्षेण स्वेन बलनियोजनाधिकृतपुरुषानित्यर्थः ॥१७॥१८॥१९॥२०॥२१॥२२॥ संग्रामसज्जाः संग्रामाय सन्नद्धाः धारयन् अधारयन अभिमंत्रितस्रज इत्यनुकर्षः । उत्सृज्य वाहनानीति शेषः ॥ २३ ॥ २४ ॥ सज्जकल्पितं सर्वायुधसमेततया कल्पितम् । सम्यक्समीचीनः सूतो यस्य तम् ॥ २५ ॥ सुवरूथं वरूथो रथगुप्तिः स्वपस्करं शोभनरथांगम् ॥ २६ ॥

एवमुक्त्वातुभर्तारंरावणंवाहिनीपतिः ॥ उवाचेदंबलाध्यक्षान्प्रहस्तःपुरतःस्थितान् ॥ १७ ॥ समानयतमेशीघ्रंराक्षसानांमहाबलम् ॥ मद्बाणाग्नांतुवेगेनहतानांतुरणाजिरे ॥ १८ ॥ अद्यतृप्यंतुमांसादाःपक्षिणःकाननौकसः ॥ तस्यतद्वचनंश्रुत्वाबलाध्यक्षामहाबलाः ॥१९॥ बलमुद्योजयामासुस्तस्मिन्राक्षसमंदिरे ॥ साबभूवमुहूर्तेनभीमैर्नानाविधायुधैः ॥ २० ॥ लंकाराक्षसवीरैस्तैर्गजैरिवसमाकुला ॥ हुताशनंतर्पयतांब्राह्मणांश्चनमस्यताम् ॥ ॥ २१ ॥ आज्यगंधप्रतिवहःसुरभिर्मारुतोववौ ॥ स्रजश्चविविधाकाराजगृहुस्त्वभिमंत्रिताः ॥ २२ ॥ संग्रामसज्जाःसंहृष्टाधारयन्राक्षसास्तदा ॥ सधनुष्काः कवचिनोवेगादुत्सृज्यराक्षसाः ॥ २३ ॥ रावणंप्रेक्ष्यराजानंप्रहस्तंपर्यवारयन् ॥ अथामंत्र्यतुराजानंभेरीमाहत्यभैरवाम् ॥ २४ ॥ आरुरोहरथंयुक्तःप्रहस्तःसज्जकल्पितम् ॥ हयैर्महाजवैर्युक्तंसम्यक्सूतंसुसंयतम् ॥२५॥ महाजलदनिर्घोषंसाक्षाच्चंद्रार्कभास्वरम् ॥ उरगध्वजदुर्धर्षंसुवरूथंस्वपस्करम् ॥२६॥ सुवर्णजालसंयुक्तंप्रहसंतमिवश्रिया ॥ ततस्तंरथमास्थायरावणार्पितशासनः ॥ २७ ॥ लंकायानिर्ययौतूर्णंबलेनमहतावृतः ॥ ततोदुंदुभिनिर्घोषःपर्जन्यनिनदोपमः ॥ वादित्राणांचनिनदःपूरयन्निवमेदिनीम् ॥ २८ ॥ शुश्रुवेशंखशब्दश्चप्रयातेवाहिनीपतौ ॥ निनदंतःस्वरान्घोरान्राक्षसाजग्मुरग्रतः ॥ २९ ॥ भीमरूपामहाकायाःप्रहस्तस्यपुरःसराः ॥ नरांतकःकुंभहनुर्महानादःसमुन्नतः ॥ प्रहस्तसचिवाह्येतेनिर्ययुःपरिवार्यतम् ॥ ३० ॥ व्यूढेनैवसुघोरेणपूर्वद्वारात्सनिर्ययौ ॥ गजयूथनिकाशेनबलेनमहतावृतः ॥ ३१ ॥ सागरप्रतिमौघेनवृतस्तेनबलेनसः ॥ प्रहस्तोनिर्ययौक्रुद्धःकालांतकयमोपमः ॥ ३२ ॥ तस्यनिर्याणघोषेणराक्षसानांचनर्दताम् ॥ लंकायांसर्वभूतानिनिनेदुर्विकृतैःस्वरैः ॥३३॥ व्यभ्रमाकाशमाविश्यमांसशोणितभोजनाः ॥ मंडलान्यपसव्यानिखगाश्चक्रूरथंप्रति ॥ ३४ ॥ वमंतिपावकज्वालाःशिवाघोरावववाशिरे ॥ अंतरिक्षात्पपातोल्कावायुश्चपरुषंववौ ॥३५॥ अन्योन्यमभिसंरब्धाग्रहाश्चनचकाशिरे ॥ मेघाश्चखरनिर्घोषारथस्योपरिरक्षसः ॥३६॥ ववर्षूरुधिरंचास्यसिषिचुश्चपुरःसरान्॥ केतुमूर्धनिगृध्रस्तुविलीनोदक्षिणामुखः ॥ ३७ ॥

॥ २७ ॥ दुंदुभिनिर्घोष इत्यादेः शुश्रुवे इत्यनेनान्वयः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ तस्य दुर्निमित्तान्याह व्यभ्रमित्यादि । मांसशोणितभोजनाः खगा अपसव्यानि मंडलानि अपगतसव्यभागे विश्रांतिर्येषु मंडलेषु भ्रामणेषु तान्यपसव्यानि प्रदक्षिणानि । गृध्रादीनां प्रदक्षिणमपि दुर्निमित्तमिति कतकः ॥ ३४ ॥ ३५ ॥ ३६ ॥ केतूपरि लीनत्वादिगुणको गृध्रो नदन् शब्दं कुर्वन्नभयतः

पार्श्वे कंडूयमान इति शेषः । तथाकुर्वन्नस्य समग्रां संपूर्णां प्रभां मुखादिशोभां जयश्रियं चाहरत् ॥ ३७ ॥ सूतस्य सूतवंशजस्य सारथेः हयसादिनोऽश्वशिक्षकस्य प्रतोदस्तोत्रम् ॥ ३८ ॥ ३९ ॥ ॥ ४० ॥ ४१ ॥ रक्षोगणवनौकसामित्यस्य निनादः श्रूयत इत्युत्तरेण संबंधः ॥ ४२॥४३॥४४ ॥ भौवर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तपंचाशः सर्गः॥५७॥कतकरी०॥५२॥तत इति । सस्मितम् एवं सेनया किलास्मान् भीषयतीति स्मितम् ॥१॥२॥३॥ लंकायामित्यादि । राक्षसेंद्रसंबंधिलंकास्थबलस्य तृतीयभागेन संवृत इत्यर्थः ॥४॥५॥प्रहस्तमभि



नदत्तुभयतःपार्श्वेसमग्रांश्रियमाहरत् ॥ सारथेर्बहुशश्चात्रसंग्राममनिवर्तिनः ॥ ३८ ॥ प्रतोदोन्यपतद्धस्तात्सूतस्यहयसादिनः ॥ निर्याणश्रीश्चया चस्याद्रास्वराचसुदुलभा ॥ ३९ ॥ साननाशमुहूर्तेनसमेचस्खलिताहयाः ॥ प्रहस्तंतंहिनिर्यातंप्रख्यातगुणपौरुषम् ॥ युधिनानाप्रहरणाकपिसेना ऽभ्यवर्तत ॥ ४० ॥ अथघोषःसुतुमुलोहरीणांसमजायत ॥ वृक्षानारुजतांचैवगुर्वीर्वैगृह्णतांशिलाः ॥ ४१ ॥ नदतांराक्षसानांचवानराणांचगर्जताम् ॥ उभेप्रमुदितेसैन्येरक्षोगणवनौकसाम् ॥ ४२ ॥ वेगितानांसमर्थानामन्योन्यवधकांक्षिणाम् ॥ परस्परंचाह्वयतांनिनादःश्रूयतेमहान् ॥ ४३ ॥ ततःप्रहस्तःकपिराजवाहिनीमभिप्रतस्थेविजयायदुर्मतिः ॥ विवृद्धवेगश्चविवेशितांचमूंयथासुमूर्षुःशलभोविभावसुम् ॥ ४४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥ ततःप्रहस्तंनिर्यातंदृष्ट्वारणकृतोद्यमम् ॥ उवाचसस्मितंरामोविभीषणमरिंदमः ॥ ॥ १ ॥ कएषसुमहाकायोबलेनमहतावृतः ॥ आगच्छतिमहावेगःकिंरूपबलपौरुषः ॥ २ ॥ आचक्ष्वमेमहाबाहोवीर्यवंतंनिशाचरम् ॥ राघवस्यवचः श्रुत्वाप्रत्युवाचविभीषणः ॥ ३ ॥ एषसेनापतिस्तस्यप्रहस्तोनामराक्षसः ॥ लंकायांराक्षसेंद्रस्यत्रिभागबलसंवृतः ॥ वीर्यवानस्त्रविच्छूरःसुप्रख्यात पराक्रमः ॥ ४ ॥ ततःप्रहस्तंनिर्यातंभीमंभीमपराक्रमम् ॥ गर्जतंसुमहाकायंराक्षसैरभिसंवृतम् ॥ ५ ॥ ददर्शमहतीसेनावानराणांबलीयसाम् ॥ अभिसंजातघोषाणांप्रहस्तमभिगर्जताम् ॥ ६ ॥ खड्गशक्त्यृष्टिशूलाश्चबाणानिमुसलानिच ॥ गदाश्चपरिघाःप्रासाविविधाश्चपरश्वधाः ॥ ७ ॥ धनूंपिचविचित्राणिराक्षसानांजयैषिणाम् ॥ प्रगृहीतान्यराजंतवानरानभिधावताम् ॥८॥ जगृहुःपादपांश्चापिपुष्पितांस्तुगिरींस्तथा ॥ शिलाश्चविपुला दीर्घायोद्धुकामाःप्लवंगमाः ॥ ९ ॥ तेषामन्योन्यमासाद्यसंग्रामःसुमहानभूत् ॥ बहूनामश्मवृष्टिंचशरवर्षंचवर्षताम् ॥ १० ॥ बहवोराक्षसायुद्धेबहून्वा नरपुंगवान् ॥ वानराराक्षसांश्चापिनिजघ्नुर्बहवोबहून् ॥ ११ ॥ शूलैःप्रमथिताःकेचित्केचित्तुपरमायुधैः ॥ परिघैराहताःकेचित्केचिच्छिन्नाःपरश्वधैः॥ ॥ १२ ॥ निरुच्छ्वासाःपुनःकेचित्पतिताजगतीतले ॥ विभिन्नहृदयाःकेचिदिषुसंधानसादिताः ॥ १३ ॥ केचिद्द्विधाकृताःखड्गैःस्फुरंतःपतिताभुवि ॥ वानराराक्षसैःशूरैःपार्श्वतश्चविदारिताः ॥ १४ ॥

तदभिमुखेन गर्जतां वानराणां महती सेना निर्यातं प्रहस्तं ददर्शेति संबंधः ॥६॥७॥८॥ गिरींस्तथा जगृहुरित्यनुकर्षः । गिरिश्रृंगाणीति यावत् ॥ ९ ॥ १० ॥ ११ ॥ परमायुधैश्चक्रैः । चक्रं तु परमायुधमिति कोशः ॥ १२ ॥ इषूणां संधानं सम्यग्विसर्जनं तेन सादिताः खंडिताः । संधानसंधिता इति पाठे इषव एव संधानानि बंधनरज्जवस्तैः संधिताः संस्यूता इत्यर्थः ॥ १३ ॥ स्फुरंत उच्छलंतः ॥ १४ ॥

॥ १५ ॥ वमन् अवमन् । वेमुरिति पाठांतरम् ॥ १६ ॥ १७ ॥ वीरमार्गमनुव्रताः वीरमार्गोऽपराङ्मुखत्वलक्षणस्तमनुव्रता अनुगताः अभीतवत् अभीतार्हाणि ॥ १८ ॥ १९ ॥ तेषामिति । निर्धारणे षष्ठी ॥ ॥ २० ॥ समुन्नतं तदाख्यम् अपोथयत् ॥ २१ ॥ महानादस्य तदाख्यस्य ॥ २२ ॥ तारेणासाद्य संबध्य युयुधे इति शेषः । ततः स तारस्तस्य कुंभहनोर्महता वृक्षेण प्राणान्संत्याजयत् समत्याजयत् ॥ २३ ॥ तत्कर्म क्षणादेव सचिवचतुष्टयमारणकर्म ॥ २४ ॥ उभयोः सेनयोरितस्ततो भ्रमणेनावर्त इव संजज्ञे क्षुभितस्य सागरस्य निःस्वन इव निःस्वनश्च जज्ञे ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ युद्धभूमिं नदीत्वेन वर्ण

वानरैश्चापिसंक्रुद्धैराक्षसौघाःसमंततः ॥ पादपैर्गिरिशृंगैश्चसंपिष्टावसुधातले ॥ १५ ॥ वज्रस्पर्शतलैर्हस्तैर्मुष्टिभिश्चहताभृशम् ॥ वमञ्छोणितमास्येभ्योविशीर्णवदनेक्षणाः ॥ १६ ॥ आर्तस्वनंचस्वनतांसिंहनादंचनर्दताम् ॥ बभूवतुमुलःशब्दोहरीणांरक्षसामपि ॥ १७ ॥ वानराराक्षसाःक्रुद्धावीरमार्गमनुव्रताः ॥ विवृत्तवदनाःक्रूराश्चक्रुःकर्माण्यभीतवत् ॥ १८ ॥ नरांतकःकुंभहनुर्महानादःसमुन्नतः ॥ एतेप्रहस्तसचिवाःसर्वेजघ्नुर्वनौकसः ॥ ॥ १९ ॥ तेषांनिपततांशीघ्रंनिघ्नतांचापिवानरान् ॥ द्विविदोगिरिशृंगेणजघानैकंनरांतकम् ॥ २० ॥ दुर्मुखःपुनरुत्थायकपिःसविपुलद्रुमम् ॥ राक्षसंक्षिप्रहस्तंतुसमुन्नतमपोथयत् ॥ २१ ॥ जांबवांस्तुसुसंक्रुद्धःप्रगृह्यमहतींशिलाम् ॥ पातयामासतेजस्वीमहानादस्यवक्षसि ॥२२॥ अथकुंभहनुस्तत्रतारेणासाद्यवीर्यवान् ॥ वृक्षेणमहतासद्यःप्राणान्संत्याजयद्रणे ॥ २३ ॥ अमृष्यमाणस्तत्कर्मप्रहस्तोरथमाश्रितः ॥ चकारकदनंघोरंधनुष्पाणिर्वनौकसाम् ॥ २४ ॥ आवर्तइवसंजज्ञेसेनयोरुभयोस्तदा ॥ क्षुभितस्याप्रमेयस्यसागरस्येवनिःस्वनः ॥ २५ ॥ महताहिशरौघेणराक्षसोरणदुर्मदः ॥ अर्दयामाससंक्रुद्धोवानरान्परमाहवे ॥ २६ ॥ वानराणांशरीरैस्तुराक्षसानांचमेदिनी ॥ बभूवातिचिताघोरैःपर्वतैरिवसंवृता ॥ २७ ॥ सामहीरुधिरौघेणप्रच्छन्नासंप्रकाशते ॥ संछन्नामाधवेमासिपलाशैरिवपुष्पितैः ॥२८॥ हतवीरौघवप्रांतुभग्नायुधमहाद्रुमाम् ॥ शोणितौघमहातोयांयमसागरगामिनीम् ॥ २९ ॥ यकृत्प्लीहमहापंकांविनिकीर्णांत्रशैवलाम् ॥ भिन्नकायशिरोमीनामंगावयवशाद्वलाम् ॥ ३० ॥ गृध्रहंसवराकीर्णांकंकसारससेविताम् ॥ मेदःफेनसमाकीर्णामावर्तस्वननिःस्वनाम् ॥ ३१ ॥ तांकापुरुषदुस्तारांयुद्धभूमिमयींनदीम् ॥ नदीमिवघनापायेहंससारससेविताम् ॥ ३२ ॥ राक्षसाःकपिमुख्यास्तेतेरुस्तांदुस्तरांनदीम् ॥ यथापद्मरजोध्वस्तांनालिनींगजयूथपाः ॥ ३३ ॥ ततःसृजंतंबाणौघान्प्रहस्तंस्यंदनेस्थितम् ॥ ददर्शतरसानीलोविधमंतंप्लवंगमान् ॥३४॥ उद्धूतइववायुःखेमहदभ्रबलंबलात् ॥ समीक्ष्याभिद्रुतंयुद्धेप्रहस्तोवाहिनीपतिः ॥३५॥

यति हतेत्यादि । वप्रं तटम् । यम एव सागरस्तद्गामिनीम् ॥ २९ ॥ यकृत्प्लीहानौ हृदयदक्षिणभागस्थमांसविशेषौ ॥ ३० ॥ ३१ ॥ युद्धभूमिमयीं तद्रूपां नदीं प्रवर्तयित्वा घनापाये हंसादिसेवितां नदीमिव तां ते तेरुः ॥ ३२ ॥ पद्मरजोयुतां यथा गजयूथपास्तेरुस्तथेत्यर्थः ॥ ३३ ॥ तत उच्यमानगुणं प्रहस्तं नीलो ददर्श ॥ ३४ ॥ वाहिनीपतिः प्रहस्तः खे उद्धूतो वायुर्महदभ्रबलमिव बलवदभ्रमिव युद्धेऽभिद्रुतं स्वं

मत्याभिमुख्येनागच्छंतं नीलं समीक्ष्य तं नीलमेवाभिदुद्रुवे ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ अपारयन्वारयितुमशक्तः सन् शारदं वर्षं गोवृषस्य शरत्काले मावल्यं कालस्वभावात् । वर्षस्य त्वन्यथा तत एव तेन नातिक्लेशकरस्तस्य शरवर्ष इति सूचितम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ सुतीक्ष्णाभिर्दंष्ट्राभी राक्षसानामप्यस्ति दंष्ट्रामाबल्यम् ॥ ४७ ॥ विक्रांतविजयौ मांसमाय

रथेनादित्यवर्णेननीलमेवाभिदुद्रुवे ॥ सधनुर्धन्विनांश्रेष्ठोविकृष्यपरमाहवे ॥ ३६ ॥ नीलायव्यसृजद्बाणान्प्रहस्तोवाहिनीपतिः ॥ तेप्रेत्यविशिखानीलंविनिर्भिद्यसमाहिताः ॥ ३७ ॥ महींजग्मुर्महावेगारोषिताइवपन्नगाः ॥ नीलःशरैरभिहतोनिशितैर्ज्वलनोपमैः ॥३८॥ सतंपरमदुर्धर्षमापतंतंमहाकपिः ॥ प्रहस्तंताडयामासवृक्षमुत्पाट्यवीर्यवान् ॥ ३९ ॥ सतेनाभिहतःक्रुद्धोनर्दन्राक्षसपुंगवः ॥ ववर्षशरवर्षाणिप्लवंगानांचमूपतौ ॥ ४० ॥ तस्यबाणगणानेवराक्षसस्यदुरात्मनः ॥ अपारयन्वारयितुंप्रत्यगृह्णान्निमीलितः ॥ यथैवगोवृषोवर्षंशारदंशीघ्रमागतम् ॥४१॥ एवमेवप्रहस्तस्यशरवर्षान्दुरासदान् ॥ निमीलिताक्षःसहसानीलःसेहेदुरासदान् ॥ ४२ ॥ रोषितःशरवर्षेणसालेनमहतामहान् ॥ प्रजघानहयान्नीलःप्रहस्तस्यमहाबलः ॥४३॥ ततोरोषपरीतात्माधनुस्तस्यदुरात्मनः ॥ बभंजतरसानीलोननादचपुनःपुनः ॥४४॥ विधनुःसकृतस्तेनप्रहस्तोवाहिनीपतिः ॥ प्रगृह्यमुसलंघोरंस्यंदनादवपुप्लुवे ॥४५॥ तावुभौवाहिनीमुख्यौजातवैरौतरस्विनौ ॥ स्थितौक्षतजसिक्तांगौप्रभिन्नाविवकुंजरौ ॥ ४६ ॥ उल्लिखंतौसुतीक्ष्णाभिर्दंष्ट्राभिरितरेतरम् ॥ सिंहशार्दूलसदृशौसिंहशार्दूलचेष्टितौ ॥४७॥ विक्रांतविजयौवीरौसमरेष्वनिवर्तिनौ ॥ कांक्षमाणौयशःप्राप्तुंवृत्रवासवयोरिव ॥ ४८ ॥ आजघानतदानीलंललाटेमुसलेनसः ॥ प्रहस्तःपरमायत्तस्ततःसुस्रावशोणितम् ॥ ४९ ॥ ततःशोणितदिग्धांगःप्रगृह्यचमहातरुम् ॥ प्रहस्तस्योरसिक्रुद्धोविससर्जमहाकपिः ॥ ५० ॥ तमचिंत्यप्रहारंसप्रगृह्यमुसलंमहत् ॥ अभिदुद्रावबलिनंबलान्नीलंप्लवंगमम् ॥ तमुग्रवेगंसंरब्धमापतंतंमहाकपिः ॥ ५१ ॥ ततःसंप्रेक्ष्यजग्राहमहावेगोमहाशिलाम् ॥ तस्ययुद्धाभिकामस्यमृधेमुसलयोधिनः ॥५२॥ प्रहस्तस्याशिलांनीलोमूर्ध्नितूर्णमपातयत् ॥ नीलेनकपिमुख्येनविमुक्तामहतीशिला ॥ बिभेदबहुधाघोराप्रहस्तस्यशिरस्तदा ॥ ५३ ॥ सगतासुर्गतश्रीकोगतसत्त्वोगतेंद्रियः ॥ पपातसहसाभूमौछिन्नमूलइवद्रुमः ॥ ५४ ॥ विभिन्नशिरसस्तस्यबहुसुस्रावशोणितम् ॥ शरीरादपिसुस्रावगिरेःप्रस्रवणोयथा ॥ ५५ ॥ हतेप्रहस्तेनीलेनतदकंप्यंमहाबलम् ॥ राक्षसानामहृष्टानांलंकामभिजगामह ॥ ५६ ॥ नशेकुःसमवस्थातुंनिहतेवाहिनीपतौ ॥ सेतुबंधंसमासाद्यविशीर्णंसलिलंयथा ॥५७॥ हतेतस्मिंश्चमूमुख्येराक्षसास्तेनिरुद्यमाः ॥ रक्षःपतिगृहंगत्वाध्यानमूकत्वमागताः ॥ प्राप्ताःशोकार्णवंतीव्रंविसंज्ञाइवतेभवन् ॥ ५८ ॥

विजयौ ॥ ४८ ॥ परमायत्तः परमोद्युक्तः ॥ ४९ ॥ ५० ॥ अचिंत्य अचिंतयित्वा ॥ ५१ ॥ ५२ ॥ तूर्णं मुसलप्रहारात्पूर्वमेवेत्यर्थः । प्रहस्तस्य शिरो बहुधा बिभेद ॥ ५३ ॥ ५४ ॥ विभिन्नशिरसो गिरेः प्रस्रवणो निर्झरः ॥ ५५ ॥ ५६ ॥ विशीर्णं भग्नं सेतुबंधमित्यन्वयः ॥ ५७ ॥ ध्यानमूकत्वं ध्यानेन देवताध्यानेन ये मूका मौनिनस्तेषां भावस्तत्त्वम् । भयदुःखमोहैः किमपि वक्तुं नाशक्नुवन्नित्यर्थः ।

तषां वानराणां तेजसा आदित्य इव दुष्प्रेक्षोभूदिति शेषः ॥ ९ ॥ रथवहनकर्तॄणां हयानामकस्मान्निर्हेतुकमेव दैन्यमागच्छत् मन इति शेषः ॥ १० ॥ सुदिने वर्षादिकृतदुर्दिनमसक्तिरहिते ॥ ११ ॥ १२ ॥ अचिंत्येत्यार्षम् ॥ १३ ॥ १४ ॥ १५ ॥ समभित्यक्ता देहिन आत्मानो यैस्ते आत्मरक्षानिरपेक्षा इति यावत् ॥ १६ ॥ १७ ॥ अरुणवर्णाभं धूम्रवर्णस्य वस्तुन आभा यस्मिंस्तत् अरुणशब्दो धूम्रपर्या

अकंपनस्ततस्तेषामादित्यइवतेजसा ॥ तस्यनिर्धावमानस्यसंरब्धस्ययुयुत्सया ॥ ९ ॥ अकस्माद्दैन्यमागच्छद्धयानांरथवाहिनाम् ॥ विस्फुरन्नयनं चास्यसव्यंयुद्धाभिनंदिनः ॥ १० ॥ विवर्णोमुखवर्णश्चगद्गदश्चाभवत्स्वनः ॥ अभवत्सुदिनेकालेदुर्दिनंरूक्षमारुतम् ॥ ११ ॥ ऊचुःखगमृगाःसर्वे वाचःक्रूराभयावहाः ॥ ससिंहोपचितस्कंधःशार्दूलसमविक्रमः ॥ १२ ॥ तानुत्पातानचिंत्यैवनिर्जगामरणाजिरम् ॥ तथानिर्गच्छतस्तस्यरक्षसः सहराक्षसैः ॥१३॥ बभूवसुमहान्नादःक्षोभयन्निवसागरम् ॥ तेनशब्देनवित्रस्तावानराणांमहाचमूः ॥ १४ ॥ द्रुमशैलप्रहाराणांयोद्धुंसमुपतिष्ठताम् ॥ तेषांयुद्धंमहारौद्रंसंजज्ञेकपिरक्षसाम् ॥ १५ ॥ रामरावणयोरर्थेसमभित्यक्तदेहिनः ॥ सर्वेह्यतिवलाःशूराःसर्वेपर्वतसन्निभाः ॥ १६ ॥ हरयो राक्षसाश्चैवपरस्परजिघांसया ॥ तेषांविनर्दतांशब्दःसंयुगेऽतितरस्विनाम् ॥ १७ ॥ शुश्रावसुमहान्कोपादन्योन्यमभिगर्जताम् ॥ रजश्चारुणवर्णाभं सुभीममभवद्भृशम् ॥ १८ ॥ उद्धतंहरिरक्षोभिःसंरुरोधदिशोदश ॥ अन्योन्यंरजसातेनकौशेयोद्धतपांडुना ॥ १९ ॥ संवृतानिचभूतानिददृशुर्न रणाजिरे ॥ नध्वजोनपताकावाचर्मवातुरगोपिवा ॥ २० ॥ आयुधंस्यंदनोवापिददृशेतेनरेणुना ॥ शब्दश्चसुमहांस्तेषांनर्दतामभिधावताम् ॥ २१ ॥ श्रूयतेतुमुलेयुद्धेनरूपाणिचकाशिरे ॥ हरीनेवसुसंरुष्टाहरयोजघ्नुराहवे ॥ २२ ॥ राक्षसाराक्षसांश्चापिनिजघ्नुस्तिमिरेतदा ॥ तेपरांश्चविनिघ्नंतः स्वांश्चवानरराक्षसाः ॥२३॥ रुधिरार्द्रांतदाचक्रुर्महींपंकानुलेपनाम् ॥ ततस्तुरुधिरौघेणसिक्तंव्यपगतंरजः ॥२४॥ शरीरशवसंकीर्णाबभूवचवसुंधरा ॥ द्रुमशक्तिगदाप्रासैःशिलापरिघतोमरैः ॥ २५ ॥ राक्षसाहरयस्तूर्णंजघ्नुरन्योन्यमोजसा ॥ बाहुभिःपरिघाकारैर्युध्यंतःपर्वतोपमान् ॥ २६ ॥ हरयोभीमकर्माणोराक्षसाञ्जघ्नुराहवे ॥ राक्षसास्त्वभिसंक्रुद्धाःप्रासतोमरपाणयः ॥२७॥ कपीन्निजघ्निरेतत्रशस्त्रैःपरमदारुणैः ॥ अकंपनःसुसंक्रुद्धो राक्षसानांचमूपतिः ॥ २८ ॥ संहर्षयतितान्सर्वान्राक्षसान्भीमविक्रमान् ॥ हरयस्त्वपिरक्षांसिमहाद्रुममहाश्मभिः ॥ २९ ॥ विदारयंत्यभिक्रम्यश स्त्राण्याच्छिद्यवीर्यतः ॥ एतस्मिन्नंतरेवीराहरयःकुमुदोनलः ॥ ३० ॥ मैंदश्चपरमक्रुद्धश्चक्रुर्वेगमनुत्तमम् ॥ तेतुवृक्षैर्महावीराराक्षसानांचमूमुखे ॥३१॥

योपि ॥ १८ ॥ कौशेयोद्धतपांडुना उद्धतकौशेयवदीषत्पांडुरवर्णेन ॥ १९ ॥ भूतानि कपिरक्षोलक्षणप्राणिनः ॥ २० ॥ आयुधादि न ददृशे इत्यन्वयः ॥ २१ ॥ शब्द एव श्रूयते न च रूपाणि चकाशिरे सुसंरुष्टाः सुतरां सम्यक् क्रुद्धाः ॥२२॥२३॥२४॥ शरीरशवसंकीर्णा शवरूपैः शरीरैः संकीर्णा ॥२५॥२६॥२७॥२८॥ संहर्षयति समहर्षयत् ॥२९॥ शस्त्राण्याच्छिद्यवानराः परहस्तादिति शेषः ॥३०॥३१॥

योगेमानः ॥ नानाप्रहरणैर्भृशमित्यत्र सर्वावच्छेदः प्रमादादिति कतकः ॥३२॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचपंचाशः सर्गः ॥ ५५ ॥ छ ॥ तदिति ॥ १ ॥ २ ॥ ३ ॥ एते चेत्यस्य यत्रेत्यादिः बलवंतो वा वाशब्दो वैशब्दस्यार्थे ॥ ४ ॥ एतान्निहंतुमिच्छामि प्रथमतः स्वसेनारक्षणार्थं ततः परबलं हनिष्यामीति शेषः । तदेवाह एतैरिति ॥ ५ ॥ ६ ॥ ७ ॥

कदनंसुमहच्चक्रुर्लीलयाहरिपुंगवाः ॥ ममंथूराक्षसान्सर्वैर्नानाप्रहरणैर्भृशम् ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे पंचपंचाशः सर्गः ॥ ५५ ॥ तद्दृष्ट्वासुमहत्कर्मकृतंवानरसत्तमैः ॥ क्रोधमाहारयामासयुधितीव्रमकंपनः ॥ १ ॥ क्रोधमूर्छितरूपस्तुधुन्वन्परमकार्मुकम् ॥ दृष्ट्वातुकर्मशत्रूणांसारथिंवाक्यमब्रवीत् ॥ २ ॥ तत्रैवतावत्त्वरितोरथंप्रापयसारथे ॥ एतेचबलिनोघ्नंतिसुबहून्राक्षसान्रणे ॥ ३ ॥ एतेचबलवंतोवाभीमकोपाश्चवानराः ॥ द्रुमशैलप्रहरणास्तिष्ठंतिप्रमुखेमम ॥ ४ ॥ एतान्निहंतुमिच्छामिसमरश्लाघिनोह्यहम् ॥ एतैःप्रमथितंसर्वंरक्षसांदृश्यतेबलम् ॥५॥ ततःप्रचलिताश्वेनरथेनरथिनांवरः ॥ हरीनभ्यपतद्दूराच्छरजालैरकंपनः ॥ ६ ॥ नस्थातुंवानराःशेकुःकिंपुनर्योद्धुमाहवे ॥ अकंपनशरैर्भग्नाःसर्वएवाभिदुद्रुवुः ॥ ७ ॥ तान्मृत्युवशमापन्नानकंपनशरानुगान् ॥ समीक्ष्यहनुमाञ्ज्ञातीनुपतस्थेमहाबलः ॥ ८ ॥ तंमहाप्लवगंदृष्ट्वासर्वेतेप्लवगर्षभाः ॥ समेत्यसमरेवीराःसहिताःपर्यवारयन् ॥ ९ ॥ व्यवस्थितंहनूमंतंतेदृष्ट्वाप्लवगर्षभाः ॥ बभूवुर्बलवंतोहिबलवंतमुपाश्रिताः ॥१०॥ अकंपनस्तुशैलाभंहनूमंतमवस्थितम् ॥ महेंद्रइवधाराभिःशरैरभिववर्षह ॥ ११ ॥ अचिंतयित्वाबाणौघाञ्शरीरेपातितान्कपिः ॥ अकंपनवधार्थायमनोदध्रेमहाबलः ॥ १२ ॥ सप्रहस्यमहातेजाहनूमान्मारुतात्मजः ॥ अभिदुद्रावतद्रक्षःकंपयन्निवमेदिनीम् ॥ १३ ॥ तस्याथनर्दमानस्यदीप्[illegible]स्यतेजसा ॥ बभूवरूपंदुर्धर्षंदीप्तस्येवविभावसोः ॥ १४ ॥ आत्मानंत्वप्रहरणंज्ञात्वाक्रोधसमन्वितः ॥ शैलमुत्पाटयामासवेगेनहरिपुंगवः ॥ १५ ॥ गृहीत्वासुमहाशैलंपाणिनैकेनमारुतिः ॥ सविनद्यमहानादंभ्रामयामासवीर्यवान् ॥१६॥ ततस्तमभिदुद्रावराक्षसेंद्रमकंपनम् ॥ पुराहिनमुचिंसंख्येवज्रेणेवपुरंदरः ॥ १७ ॥ अकंपनस्तुतद्दृष्ट्वागिरिशृंगंसमुद्यतम् ॥ दूरादेवमहाबाणैरर्धचंद्रैर्व्यदारयत् ॥ १८ ॥ तंपर्वताग्रमाकाशेरक्षोबाणविदारितम् ॥ विकीर्णपतितंदृष्ट्वाहनूमान्क्रोधमूर्छितः ॥ १९ ॥ सोश्वकर्णंसमासाद्यरोषदर्पान्वितोहरिः ॥ तूर्णमुत्पाटयामासमहागिरिमिवोच्छ्रितम् ॥ २० ॥ तंगृहीत्वामहास्कंधंसोश्वकर्णंमहाद्युतिः ॥ प्रगृह्यपरयाप्रीत्याभ्रामयामासभूतले ॥२१॥ प्रधावन्नुरुवेगेनबभंजतरसाद्रुमान् ॥ हनूमान्परमक्रुद्धश्चारणैर्दारयन्महीम् ॥ २२ ॥

ज्ञातीन्कुमुदनलादीन् उपतस्थे स्वस्थानादिति शेषः ॥ ८ ॥ ते प्लवगर्षभाः कुमुदादयः ॥ ९ ॥ ते बलवंतो बभूवुर्यतो बलवंतमुपाश्रिताः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ अप्रहरणमायुधहीनम् ॥ १५ ॥ १६ ॥ पुरा हीति प्रसिद्धौ ॥ १७ ॥ तद्दृष्ट्वा हनूमन्मुक्तं शैलशृंगम् ॥ १८ ॥ तं तदित्यर्थः । क्रोधमूर्छितोभूदिति शेषः ॥ १९ ॥ २० ॥ २१ ॥ चारणैः चरणन्यासैः ॥ २२ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ प्ररूढः सानुमानिव बहुशराचितशरीरत्वात् प्ररूढबहुवृक्षो गिरिरिव जनैर्ददृश इत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ क्षितिकंपे भूकंपकाले ॥ ३१ ॥ ३२ ॥ श्रम
जलैः स्वेदजलैः ॥ ३३ ॥ भयादन्योन्यं प्रमथ्नंतो द्वारदेशे संमर्दं कुर्वाणाः ॥ ३४ ॥ ३५ ॥ सोपि यथार्हमनुकूलतोऽनुकूलदर्शनवचनालिंगनैः संप्रत्यपूजयत् ॥ ३६ ॥ यथाप्राणं यावद्बलं सप्राणानेव चकृषुः

गजांश्चसगजारोहान्सरथान्रथिनस्तथा ॥ जघानहनुमान्भीमान्राक्षसांश्चपदातिगान् ॥ २३ ॥ तमंतकमिवक्रुद्धंसद्रुमंप्राणहारिणम् ॥ हनूमंतम
भिप्रेक्ष्यराक्षसाविप्रदुद्रुवुः ॥ २४ ॥ तमापतंतंसंक्रुद्धंराक्षसानांभयावहम् ॥ ददर्शाकंपनोवीरश्चुक्षोभचननादच ॥ २५ ॥ सचतुर्दशभिर्बाणैर्निशितैर्दे
हदारणैः ॥ निर्बिभेदमहावीर्यंहनूमंतमकंपनः ॥ २६ ॥ सतथाविप्रकीर्णस्तुनाराचैःशितशक्तिभिः ॥ हनूमान्ददृशेवीरःप्ररूढइवसानुमान् ॥ २७ ॥
विरराजमहावीर्योमहाकायोमहाबलः ॥ पुष्पिताशोकसंकाशोविधूमइवपावकः ॥ २८ ॥ ततोन्यंवृक्षमुत्पाट्यकृत्वावेगमनुत्तमम् ॥ शिरस्यभिजघा
नाशुराक्षसेंद्रमकंपनम् ॥ २९ ॥ सवृक्षेणहतस्तेनसक्रोधेनमहात्मना ॥ राक्षसोवानरेंद्रेणपपातचममारच ॥ ३० ॥ तंदृष्ट्वानिहतंभूमौराक्षसेंद्रम
कंपनम् ॥ व्यथिताराक्षसाःसर्वेक्षितिकंपइवद्रुमाः ॥ ३१ ॥ त्यक्तप्रहरणाःसर्वेराक्षसास्तेपराजिताः ॥ लंकामभियुस्त्रासाद्वानरैस्तैरभिद्रुताः ॥३२॥
तेमुक्तकेशाःसंभ्रांताभग्नमानाःपराजिताः ॥ भयाच्छ्रमजलैरंगैःप्रस्रवद्भिर्विदुद्रुवुः ॥ ३३ ॥ अन्योन्यंतेप्रममथ्नंतोविविशुर्नगरंभयात् ॥ पृष्ठतस्तेतुसं
मूढाःप्रेक्षमाणामुहुर्मुहुः ॥ ३४ ॥ तेषुलंकांप्रविष्टेषुराक्षसेषुमहाबलाः ॥ समेत्यहरयःसर्वेहनूमंतमपूजयन् ॥ ३५ ॥ सोपिप्रहृष्टस्तान्सर्वान्हरी
न्संप्रत्यपूजयत् ॥ हनूमान्सत्त्वसंपन्नोयथार्हमनुकूलतः ॥ ३६ ॥ विनेदुश्चयथाप्राणंहरयोजितकाशिनः ॥ चकृषुश्चपुनस्तत्रसप्राणानेवराक्षसान् ॥
॥ ३७ ॥ सवीरशोभामभजन्महाकपिःसमेत्यरक्षांसिनिहत्यमारुतिः ॥ महासुरंभीमममित्रनाशनंविष्णुर्यथैवोरुबलंचमूमुखे ॥ ३८ ॥ अपूजयन्दे
वगणास्तदाकपिंस्वयंचरामोतिबलश्चलक्ष्मणः ॥ तथैवसुग्रीवमुखाःप्लवंगमाविभीषणश्चैवमहाबलस्तदा ॥३९॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये
आदिकाव्ये युद्धकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ अकंपनवधंश्रुत्वाक्रुद्धोवैराक्षसेश्वरः ॥ किंचिद्दीनमुखश्चापिसचिवांस्तानुदैक्षत ॥ १ ॥

प्राणनाशार्थमिति शेषः ॥ ३७ ॥ यथा विष्णुरुरुबलं बलवंतं महाबलं मधुकैटभादिरूपं हत्वा वीरशोभामभजत्तथैवेत्यर्थः ॥ ३८ ॥ रामादयोप्यपूजयन्नित्यनुकर्षः ॥ ३९ ॥ [illegible] ॥
॥ शोभमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकांडे षट्पंचाशः सर्गः ॥ ५६ ॥ क०क०टी० ॥ ५१ ॥ अथ प्रहस्तनिर्गमः अकंपनवधमिति ॥ १ ॥

पूर्वदिवसे पूर्वाह्णे । सर्वान् गुल्मान्सेनाव्यूहविशेषान् ॥२॥३॥४॥ पुरस्योपनिविष्टस्य अतिसमीपनिविष्टशत्रुबलस्येत्यर्थः । अतएव सहसा बलात्कारेण पीडितस्य अन्ययुद्धादन्यकर्तृकयुद्धाद्धेतोर्मोक्षमुपरोधमोक्षं न मपश्यामि ॥ ५ ॥ ६ ॥ अतः अस्माद्गुल्मात् ॥ ७ ॥ द्रविष्याति पलायिष्यते ॥ ८ ॥ ९ ॥ अवशः वशं मभुत्वं तद्रहितः । वशमिच्छाप्रभुत्वयोरिति विश्वः । अतएव निरालंबः ॥ १० ॥ ननु युद्धे मज्जीवनेपि संदेहात्कथं निरालंबो वशमेष्यतीत्युच्यते तत्राह आपदिति । युद्धे आपत् मृतिः संशयिता संदेहविषया श्रेयो विजयस्तु तव न संशयितो न संदेहविषयः तवातिबलत्वाद्बहुशो दृष्टविजयत्वाच्च । इंद्र जिद्वत् श्रेयःप्राप्तिरेवोत्कटकोटिका । किंच श्रेयो न संदिग्धं युद्धे जीवने मरणे च श्रेयःसत्त्वात् । जीवने राज्यं मृतावुत्तमलोकः । अतोत्र युद्धप्रवृत्तिरेव निःसंशयीकृता । यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः॥

सतुध्यात्वामुहूर्तंतुमंत्रिभिःसविचार्यच ॥ ततस्तुरावणःपूर्वदिवसेराक्षसाधिपः ॥ पुरींपरिययौलंकांसर्वान्गुल्मानवेक्षितुम् ॥ २ ॥ तांराक्षसगणैर्गुप्तांगुल्मैर्बहुभिरावृताम् ॥ ददर्शनगरींराजापताकाध्वजमालिनीम् ॥ ३ ॥ रुद्धांतुनगरींदृष्ट्वारावणोराक्षसेश्वरः ॥ उवाचात्महितंकालेप्रहस्तंयुद्धकोविदम् ॥ ४ ॥ पुरस्योपनिविष्टस्यसहसापीडितस्यह ॥ नान्यंयुद्धात्प्रपश्यामिमोक्षंयुद्धविशारद ॥ ५ ॥ अहंवाकुंभकर्णोवात्वंवासेनापतिर्मम ॥ इंद्रजिद्वानिकुंभोवावहेयुर्भारमीदृशम् ॥ ६ ॥ सत्वंबलमतःशीघ्रमादायपरिगृह्यच ॥ विजयायाभिनिर्याहियत्रसर्वेवनौकसः ॥ ७ ॥ निर्याणादेवतूर्णंचचलिताहरिवाहिनी ॥ नर्दतांराक्षसेंद्राणांश्रुत्वानादंद्रविष्यति ॥ ८ ॥ चपलाह्यविनीताश्चचलचित्ताश्चवानराः ॥ नसहिष्यंतितेनादंसिंहनादमिवद्विपाः ॥ ९ ॥ विद्रुतेचबलेतस्मिन्रामःसौमित्रिणासह ॥ अवशस्तुनिरालंबःप्रहस्तवशमेष्यति ॥ १० ॥ आपत्संशयिताश्रेयोनात्रनिःसंशयीकृता ॥ प्रतिलोमानुलोमंवायत्तुनोमन्यसेहितम् ॥ ११ ॥ रावणेनैवमुक्तस्तुप्रहस्तोवाहिनीपतिः ॥ राक्षसेंद्रमुवाचेदमसुरेंद्रमिवोशना ॥ १२ ॥ राजन्मंत्रितपूर्वंनःकुशलैःसहमंत्रिभिः ॥ विवादश्चापिनोवृत्तःसमवेक्ष्यपरस्परम् ॥ १३ ॥ प्रदानेनतुसीतायाःश्रेयोव्यवसितंमया ॥ अप्रदानेपुनर्युद्धंदृष्टमेवतथैवनः॥१४॥ सोहंदानैश्चमानैश्चसततंपूजितस्त्वया ॥ सांत्वैश्चविविधैःकालेकिंनकुर्यांहितंतव ॥१५॥ नहिमेजीवितंरक्ष्यंपुत्रदारधनानिच ॥ त्वंपश्यमांजुहूषंतंत्वदर्थेजीवितंयुधि ॥ १६ ॥

तमेव कालं युद्धस्य प्रवदंति मनीषिण इत्यादिशास्त्रादिति भावः । मम त्वद्य युद्धमेव हितं प्रतिभाति । प्रकारांतरमस्ति चेद्ब्रूहीत्याह प्रतिलोमेत्यादि । मनोनुकूलं वा भवतु प्रतिकूलं वा यत्तु नो हितं मन्यसे तद्वदेति शेषः ॥ ११ ॥ १२ ॥ कुशलैर्मंत्रिभिर्विभीषणमाल्यवदादिभिर्यदा मंत्रितं तदा नः परस्परं परस्परमतं समवेक्ष्य विवादोऽनैकमत्यं वृत्तम् ॥ १३ ॥ सीताप्रदानेनैव श्रेय इति च तदा व्यवसितं निश्चितम् । अप्रदाने च युद्धं दृष्टं तत्तथैव न इदानीं प्राप्तम् ॥ १४ ॥ अतः परं तु यत्प्राप्तमस्माकं युद्धं तदेव मयानुष्ठेयमित्याह सोहमिति । तव प्रियं न कुर्यां किम् अपि तु कुर्यामेव ॥ १५ ॥ युधि जीवितं

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ सा शिला तस्य चक्रादिसहितं रथं प्रमथ्य भुवि निपपात । कूबरोऽत्री युगंधरः । अवप्लुतिकाले रथे त्यक्तशरासनसहितम् ॥ २९ ॥ रथं भग्नं रथम् । रक्षसां कदनं चक्रे स्वसेनारक्षणार्थमिति शेषः । स्कंधः स्थूलशाखा विटपः सूक्ष्मा सा ॥ ३० ॥ भूत्वेत्यस्य पतिता इति शेषः ॥ ३१ ॥ ३२ ॥ अभिद्रवद् अभ्यद्रवत् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

धूम्राक्षस्तुधनुष्पाणिर्वानरान्रणमूर्धनि ॥ हसन्विद्रावयामासदिशस्ताञ्छरवृष्टिभिः ॥ २५ ॥ धूम्राक्षेणार्दितंसैन्यंव्यथितंप्रेक्ष्यमारुतिः ॥ अभ्यवर्ततसंक्रुद्धःप्रगृह्यविपुलांशिलाम् ॥ २६ ॥ क्रोधाद्द्विगुणताम्राक्षःपितुस्तुल्यपराक्रमः ॥ शिलांतांपातयामासधूम्राक्षस्यरथंप्रति ॥ २७ ॥ आपतंतींशिलांदृष्ट्वागदामुद्यम्यसंभ्रमात् ॥ रथादाप्लुत्यवेगेनवसुधायांव्यतिष्ठत ॥ २८ ॥ साप्रमथ्यरथंतस्यनिपपातशिलाभुवि ॥ सचक्रकूबरमुखंसध्वजंसशरासनम् ॥ २९ ॥ सत्यक्त्वातुरथंतस्यहनूमान्मारुतात्मजः ॥ रक्षसांकदनंचक्रेसस्कंधविटपैर्द्रुमैः ॥ ३० ॥ विभिन्नशिरसोभूत्वाराक्षसारुधिरोक्षिताः ॥ द्रुमैःप्रमथिताश्चान्येनिपेतुर्धरणीतले ॥ ३१ ॥ विद्राव्यराक्षससैन्यंहनूमान्मारुतात्मजः ॥ गिरेःशिखरमादायधूम्राक्षमभिदुद्रुवे ॥ ॥ ३२ ॥ तमापतंतंधूम्राक्षोगदामुद्यम्यवीर्यवान् ॥ विनर्दमानःसहसाहनूमंतमभिद्रवत् ॥ ३३ ॥ तस्यक्रुद्धस्यरोषेणगदांतांबहुकंटकाम् ॥ पातयामासधूम्राक्षोमस्तकेऽथहनूमतः ॥ ३४ ॥ ताडितःसतयातत्रगदयाभीमवेगया ॥ सकपिर्मारुतबलस्तंप्रहारमचिंतयन् ॥ ३५ ॥ धूम्राक्षस्यशिरोमध्येगिरिशृंगमपातयत् ॥ सविस्फारितसर्वांगोगिरिशृंगेणताडितः ॥ ३६ ॥ पपातसहसाभूमौविकीर्णइवपर्वतः ॥ धूम्राक्षंनिहतंदृष्ट्वाहतशेषानिशाचराः ॥ त्रस्ताःप्रविविशुर्लंकांवध्यमानाःप्लवंगमैः ॥ ३७ ॥ सतुपवनसुतोनिहत्यशत्रून्क्षतजवहाःसरितश्चसंविकीर्य ॥ रिपुवधजनितश्रमोमहात्मामुदमगमत्कपिभिःसुपूज्यमानः ॥ ३८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्विपंचाशः सर्गः ॥ ५२ ॥

धूम्राक्षंनिहतंश्रुत्वारावणोराक्षसेश्वरः ॥ क्रोधेनमहताविष्टोनिःश्वसन्नुरगोयथा ॥ १ ॥ दीर्घमुष्णंविनिःश्वस्यक्रोधेनकलुषीकृतः ॥ अब्रवीद्राक्षसंक्रूरंवज्रदंष्ट्रंमहाबलम् ॥ २ ॥ गच्छत्वंवीरनिर्याहिराक्षसैःपरिवारितः ॥ जहिदाशरथिंरामंसुग्रीवंवानरैःसह ॥ ३ ॥ तथेत्युक्त्वाद्रुततरंमायावीराक्षसेश्वरः ॥ निर्जगामबलैःसार्धंबहुभिःपरिवारितः ॥ ४ ॥ नागैरश्वैःखरैरुष्ट्रैःसंयुक्तःसुसमाहितः ॥ पताकाध्वजचित्रैश्चबहुभिःसमलंकृतः ॥ ५ ॥ ततोविचित्रकेयूरमुकुटेनविभूषितः ॥ तनुत्रंचसमावृत्यसधनुर्निर्ययौद्रुतम् ॥ ६ ॥ पताकालंकृतंदीप्तंतप्तकांचनभूषितम् ॥ रथंप्रदक्षिणंकृत्वासमारोहच्चमूपतिः ॥ ७ ॥ ऋष्टिभिस्तोमरैश्चित्रैःश्लक्ष्णैश्चमुसलैरपि ॥ भिंदिपालैश्चचापैश्चशक्तिभिःपट्टिशैरपि ॥ ८ ॥ खड्गैश्चक्रैर्गदाभिश्चनिशितैश्चपरश्वधैः ॥ पदातयश्चनिर्यांतिविविधाःशस्त्रपाणयः ॥ ९ ॥ विचित्रवाससःसर्वेदीप्ताराक्षसपुंगवाः ॥ गजामदोत्कटाःशूराश्चलंतइवपर्वताः ॥ १० ॥

धूम्राक्षवधो भाद्रशुक्लद्वितीयायामित्याहुः ॥ ईर्लमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्विपंचाशः सर्गः ॥ ५२ ॥ कतकरी० ॥ ४९ ॥ धूम्राक्षमिति ॥ १ ॥ ॥ २ ॥ गच्छनिर्याहीत्याभ्यां सर्वथा गंतव्यमिति बोध्यते ॥ ३ ॥ ४ ॥ बहुभिर्बलाध्यक्षैरिति शेषः ॥ ५ ॥ तनुत्रं कवचम् । समावृत्य आमुच्य ॥ ६ ॥ ७ ॥ ऋष्टिः सूक्ष्मखड्गः ऋष्ट्याद्युपलक्षिताः

पदातयो निर्यातीत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ तोमरांकुशपाणिभी रूढा आरूढा युद्धकुशला ये गजास्ते च निर्याता इत्यन्वयः । लक्षणसंयुक्ता अन्ये अश्वाश्च शूरा रूढा निर्याताः ॥ ११ ॥ विप्रस्थितं विशेषेण कृतप्रस्थानम् । सविद्युतः नीलस्य रक्षोवलस्य स्वर्णभूषणवहुलत्वात्सविद्युन्मेघोपमेयत्वम् ॥१२॥ निःसृताः राक्षसा इति शेषः ॥ १३ ॥ दुर्निमित्तरूपमशुभमेवाहाकाशादिति । विघनान्निर्मेघात् ॥ १४ ॥ घोरा मृगा रक्षसां निधनं व्याहरंत व्याहरन् ॥ १५ ॥ औत्पातिकान् अशुभसूचकान् ॥ १६ ॥ विद्रवतः विशेषेण स्वसंमुखमागच्छतः पूरयन्पूरयंतः आर्षमेकवचनम् ॥ १७ ॥ तुमुलं रणसंकटम् ॥ १८ ॥

तेयुद्धकुशलारूढास्तोमरांकुशपाणिभिः ॥ अन्येलक्षणसंयुक्ताःशूरारूढामहाबलाः ॥ ११ ॥ तद्राक्षसबलंसर्वंविप्रस्थितमशोभत ॥ प्रावृट्कालेयथा मेघानर्दमानाःसविद्युतः ॥ १२ ॥ निःसृतादक्षिणद्वारादंगदोयत्रयूथपः ॥ तेषांनिष्क्रममाणानामशुभंसमजायत ॥ १३ ॥ आकाशाद्विघनात्तीव्राउल्मुकान्यपतंस्तदा ॥ वमंतःपावकज्वालाःशिवाघोरावबाशिरे ॥ १४ ॥ व्याहरंतमृगाघोरारक्षसांनिधनंतदा ॥ समापतंतोयोधास्तुप्रास्खलंस्तत्रदारुणम् ॥ १५ ॥ एतानौत्पातिकान्दृष्ट्वावज्रदंष्ट्रोमहाबलः ॥ धैर्यमालंब्यतेजस्वीनिर्जगामरणोत्सुकः ॥ १६ ॥ तांस्तुविद्रवतोदृष्ट्वावानराजितकाशिनः ॥ प्रणेदुःसुमहानादान्दिशःशब्देनपूरयन् ॥१७॥ ततःप्रवृत्तंतुमुलंहरीणांराक्षसैःसह ॥ घोराणांभीमरूपाणामन्योन्यवधकांक्षिणाम् ॥ ॥१८॥ निष्पतंतोमहोत्साहाभिन्नदेहशिरोधराः ॥ रुधिरोक्षितसर्वांगान्यपतन्धरणीतले ॥१९॥ केचिदन्योन्यमासाद्यशूराःपरिघबाहवः ॥ चिक्षिपुर्विविधाञ्छस्त्रान्समरेष्वनिवर्तिनः ॥२०॥ द्रुमाणांचशिलानांचशस्त्राणांचापिनिःस्वनः ॥ श्रूयतेसुमहांस्तत्रघोरोहृदयभेदनः ॥ २१ ॥ रथनेमिस्वनस्तत्रधनुषश्चापिघोरवत् ॥ शंखभेरीमृदंगानांवभूवतुमुलःस्वनः ॥२२॥ केचिदस्त्राणिसंत्यज्यबाहुयुद्धमकुर्वत ॥ तलैश्चचरणैश्चापिमुष्टिभिश्चद्रुमैरपि ॥ ॥२३॥ जानुभिश्चहताःकेचिद्भग्नदेहाश्चराक्षसाः ॥ शिलाभिश्चूर्णिताःकेचिद्वानरैर्युद्धदुर्मदैः ॥२४॥ वज्रदंष्ट्रोथतंदृष्ट्वारणेवित्रासयन्हरीन् ॥ चचारलोकसंहारेपाशहस्तइवांतकः ॥ २५ ॥ बलवंतोऽस्त्रविदुषोनानाप्रहरणारणे ॥ जघ्नुर्वानरसैन्यानिराक्षसाःक्रोधमूर्छिताः ॥२६॥ जघ्नेतान्राक्षसान्सर्वान्धृष्टोवायुसुतोरणे ॥ क्रोधेनद्विगुणाविष्टःसंवर्तकइवानलः ॥ २७ ॥ तान्राक्षसगणान्सर्वान्वृक्षमुद्यम्यवीर्यवान् ॥ अंगदःक्रोधताम्राक्षःसिंहःक्षुद्रमृगानिव ॥ २८ ॥ चकारकदनंघोरंशक्रतुल्यपराक्रमः ॥ अंगदाभिहतास्तत्रराक्षसाभीमविक्रमाः ॥ २९ ॥ विभिन्नशिरसःपेतुर्निकृत्ताइवपादपाः ॥ रथैश्चित्रैर्ध्वजैरश्वैःशरीरैर्हरिरक्षसाम् ॥ ३० ॥ रुधिरौघेणसंछन्नाभूमिर्भयकरीतदा ॥ हारकेयूरवस्त्रैश्चच्छत्रैश्चसमलंकृता ॥ ३१ ॥

॥ १९ ॥ २० ॥ हृदयभेदनः भयंकर इत्यर्थः ॥ २१ ॥ २२ ॥ अस्त्राणि संत्यज्य सर्वाण्यस्त्राणि प्रयुज्य तदनंतरमस्त्राभावाद्बाहुयुद्धमकुर्वत ॥ २३ ॥ २४ ॥ वज्रदंष्ट्रोथ तं दृष्ट्वा स्वसेनाविनाशमित्यर्थः । लोकसंहारे तन्निमित्तम् ॥ २५ ॥ अस्त्रविदुषः अस्त्रविद्वांस इत्यर्थः ॥ २६ ॥ संवर्तके प्रलयकाले ॥ २७ ॥ तान् राक्षसगणान्निजघानेति शेषः ॥ २८ ॥ २९ ॥ ३० ॥ भयकरी भयंकरी अभूदिति शेषः ।

मुमभाव आर्षः ॥ ३१ ॥ पवनेनांबुदो यथेत्युत्तरं सर्गच्छेदः कचित्सोऽयुक्तो वृत्तभेदप्रकरणभेदाद्यभावादिति कतकः ॥ ३२ ॥ रेवमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिपंचाशः सर्गः ॥ ५३ ॥ स्वबलस्य चेति ॥ १ ॥ २ ॥ ३ ॥ वानराणामिति निर्धारणे षष्ठी ॥ ४ ॥ तत्र वीरक्षयकारणे तस्मिन्प्रसिद्धे आयोधने युद्धे ॥ ५ ॥ ६ ॥ तद्राक्षसगणानां तच्छब्देन वानराः वानरराक्षसगणानामित्यर्थः ॥ ७ ॥ छिन्नैः पादैर्बाहुभिरुपलक्षिताः ॥ ८ ॥ बलाः वायसाः कंकादिभिराढ्या व्याप्ता इत्यर्थः ॥ ९ ॥ १० ॥ निशाचरं नैशाचरमित्यर्थः ॥ ११ ॥ प्राभज्यंत

भूमिर्भातिरणेतत्रशारदीवयथानिशा ॥ अंगदस्यचवेगेनतद्राक्षसबलंमहत् ॥ प्राकंपततदातत्रपवनेनाम्बुदोयथा ॥ ३२ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिपंचाशः सर्गः ॥ ५३ ॥ स्वबलस्यचघातेनअंगदस्यबलेनच ॥ राक्षसःक्रोधमाविष्टोवज्रदंष्ट्रोमहाबलः ॥ १ ॥ विस्फार्यचधनुर्घोरंशक्राशनिसमप्रभम् ॥ वानराणामनीकानिप्राकिरच्छरवृष्टिभिः ॥२॥ राक्षसाश्चापिमुख्यास्तेरथैश्चसमवस्थिताः ॥ नानाप्रहरणाः शूराःप्रायुध्यंततदारणे ॥ ३ ॥ वानराणांचशूरास्तुतेसर्वेप्लवगर्षभाः ॥ अयुध्यंतशिलाहस्ताःसमवेताःसमंततः ॥ ४ ॥ तत्रायुधसहस्राणितस्मिन्नायोधनेभृशम् ॥ राक्षसाःकपिमुख्येषुपातयांचक्रिरेतदा ॥ ५ ॥ वानराश्चैवरक्षःसुगिरिवृक्षान्महाशिलाः ॥ प्रवीराःपातयामासुर्मत्तवारणसन्निभाः ॥ ॥ ६ ॥ शूराणांयुध्यमानानांसमरेष्वनिवर्तिनाम् ॥ तद्राक्षसगणानांचसुयुद्धंसमवर्तत ॥ ७ ॥ अभग्नशिरसःकेचिच्छिन्नैःपादैश्चबाहुभिः ॥ शस्त्रैरर्दितदेहास्तुरुधिरेणसमुक्षिताः ॥ ८ ॥ हरयोराक्षसाश्चैवशेरतेगांसमाश्रिताः ॥ कंकगृध्रबलाढ्याश्चगोमायुकुलसंकुलाः ॥ ९ ॥ कबंधानिसमुत्पेतुर्भीरूणांभीषणानिवै ॥ भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्चभूतले ॥ १० ॥ वानराराक्षसाश्चापिनिपेतुस्तत्रभूतले ॥ ततोवानरसैन्येनहन्यमानंनिशाचरम् ॥ ११ ॥ प्राभज्यतबलंसर्वंवज्रदंष्ट्रस्यपश्यतः ॥ राक्षसान्भयवित्रस्तान्हन्यमानान्प्लवंगमैः ॥ १२ ॥ दृष्ट्वासरोषताम्राक्षोवज्रदंष्ट्रःप्रतापवान् ॥ प्रविवेशधनुष्पाणिस्त्रासयन्हरिवाहिनीम् ॥ १३ ॥शरैर्विदारयामासकंकपत्रैरजिह्मगैः ॥ बिभेदवानरांस्तत्रसप्ताष्टौनवपंचच ॥ विव्याधपरमक्रुद्धोवज्रदंष्ट्रःप्रतापवान् ॥ १४ ॥ त्रस्ताःसर्वेहरिगणाःशरैःसंकृत्तदेहिनः ॥ अंगदंसंप्रधावंतिप्रजापतिमिवप्रजाः ॥ १५ ॥ ततोहरिगणान्भग्नान्दृष्ट्वावालिसुतस्तदा ॥ क्रोधेनवज्रदंष्ट्रंतमुदीक्षंतमुदैक्षत ॥ १६ ॥ वज्रदंष्ट्रोऽगदश्चोभौयोयुध्येतेपरस्परम् ॥ चेरतुःपरमक्रुद्धौहरिमत्तगजाविव॥१७॥ ततःशरसहस्रेणहरिपुत्रंमहाबलम् ॥ जघानमर्मदेशेषुशरैराग्निशिखोपमैः ॥ १८ ॥ रुधिरोक्षितसर्वांगोवालिसूनुर्महाबलः ॥ चिक्षेपवज्रदंष्ट्रायवृक्षंभीमपराक्रमः ॥ १९ ॥ दृष्ट्वापतंतंवृक्षमसंभ्रांतश्चराक्षसः ॥ चिच्छेदबहुधासोपिमथितःप्रापतद्भुवि ॥ २० ॥ तंदृष्ट्वावज्रदंष्ट्रस्यविक्रमंप्लवगर्षभः ॥ प्रगृह्यविपुलंशैलंचिक्षेपचननादच ॥ २१ ॥ तमापतंतंदृष्ट्वासरथादाप्लुत्यवीर्यवान् ॥ गदापाणिरसंभ्रांतःपृथिव्यांसमतिष्ठत ॥ २२ ॥

भज्यंत ॥ १२ ॥ १३ ॥ सप्ताष्टौ नव पंच च वानरान् एकेनैव शरेण बिभेदेत्यर्थः ॥ १४ ॥ संप्रधावंति धावंति स्म ॥ १५ ॥ क्रोधेनोदीक्षंतं क्रोधेनोदैक्षत ॥ १६ ॥ योयुध्येते पुनःपुनर्युद्धमकुरुतामित्यर्थः । हरिमत्तगजाविव हरिरिह शार्दूलः सिंहेन गजस्य युद्धासंभवात् । स्वप्नेपि सिंहदर्शनेन गजानां मरणादिति कतकः ॥ १७ ॥ हरिपुत्रं वालिपुत्रम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

॥२३॥२४॥२५ ॥ २६ ॥ २७ ॥ २८ ॥ पुष्पफलैर्हस्तधृतवृक्षीयैस्तैर्युत आसीत् ॥ २९ ॥ आर्षभं चर्म ऋषभचर्मनिर्मितं फलकं चर्मणा च परिष्कृतं कोशरूपेणेत्यर्थः । जग्राह वज्रदंष्ट्रोंगदश्चेति शेषः ॥ ३० ॥ ३१ ॥ व्रणैः समुत्थैः तत्समुत्थितै रुधिरैरित्यर्थः ॥ ३२ ॥ ३३ ॥ खड्गेनाच्छिद्य गृहीतेन वज्रदंष्ट्रीयेण ॥ ३४ ॥ ३५ ॥ ३६ ॥ महितः पूजितः ॥ ३७ ॥ छंलैमानः ॥ तच्तृतीयायां

अंगदेनशिलाक्षिप्तागत्वातुरणमूर्धनि ॥ सचक्रकूबरंसाश्वंप्रममाथरथंतदा ॥ २३ ॥ ततोऽन्यच्छिखरंगृह्यविपुलंद्रुमभूषितम् ॥ वज्रदंष्ट्रस्यशिरसिपातयामासवानरः ॥ २४ ॥ अभवच्छोणितोद्गारीवज्रदंष्ट्रःसुमूर्च्छितः ॥ मुहूर्तमभवन्मूढोगदामालिंग्यनिःश्वसन् ॥२५॥ सलब्धसंज्ञोगदयावालिपुत्रमवस्थितम् ॥ जघानपरमक्रुद्धोवक्षोदेशेनिशाचरः ॥ २६ ॥ गदांत्यक्त्वाततस्तत्रमुष्टियुद्धमकुर्वत ॥ अन्योन्यंजघ्नतुस्तत्रतावुभौहरिराक्षसौ ॥ २७ ॥ रुधिरोद्गारिणौतौतुप्रहारैर्जनितश्रमौ ॥ बभूवतुःसुविक्रांतावंगारकबुधाविव ॥ २८ ॥ ततःपरमतेजस्वीअंगदःप्लवगर्षभः ॥ उत्पाट्यवृक्षंस्थितवानासीत्पुष्पफलैर्युतः ॥ २९ ॥ जग्राहचार्षभंचर्मखड्गंचविपुलंशुभम् ॥ किंकिणीजालसंछन्नंचर्मणाचपरिष्कृतम् ॥३०॥ चित्रांश्चरुचिरान्मार्गांश्चेरतुःकपिराक्षसौ ॥ जघ्नतुश्चतदान्योन्यंनर्दंतौजयकांक्षिणौ ॥३१॥ व्रणैःसमुत्थैःशोभेतांपुष्पिताविवकिंशुकौ ॥ युध्यमानौपरिश्रांतौजानुभ्यामवनींगतौ ॥ ३२ ॥ निमेषांतरमात्रेणअंगदःकपिकुंजरः ॥ उदतिष्ठतदीप्ताक्षोदंडाहतइवोरगः ॥ ३३ ॥ निर्मलेनसुधौतेनखड्गेनास्यमहच्छिरः ॥ जघानवज्रदंष्ट्रस्यवालिसूनुर्महाबलः ॥३४॥ रुधिरोक्षितगात्रस्यबभूवपतितंद्विधा ॥ तच्चतस्यपरीताक्षंशुभंखड्गहतंशिरः॥३५॥ वज्रदंष्ट्रंहतंदृष्ट्वाराक्षसाभयमोहिताः ॥ त्रस्ताह्यभ्यद्रवँल्लंकांवध्यमानाःप्लवंगमैः ॥ विषण्णवदनादीनाह्रियाकिंचिदवाङ्मुखाः ॥ ३६ ॥ निहत्यतंवज्रधरःप्रतापवान्सवालिसूनुःकपिसैन्यमध्ये ॥ जगामहर्षंमहितोमहाबलःसहस्रनेत्रस्त्रिदशैरिवावृतः ॥३७॥ इत्यार्षे श्रीम० वाल्मी० आदि० युद्ध० चतुष्पंचाशः सर्गः ॥ ५४ ॥

वज्रदंष्ट्रंहतंश्रुत्वावालिपुत्रेणरावणः ॥ बलाध्यक्षमुवाचेदंकृतांजलिमुपस्थितम् ॥ १ ॥ शीघ्रंनिर्यांतुदुर्धर्षाराक्षसाभीमविक्रमाः ॥ अकंपनंपुरस्कृत्यसर्वशस्त्रास्त्रकोविदम् ॥२॥ एषशास्ताचगोप्ताचनेताचयुधिसत्तमः ॥ भूतिकामश्चमेनित्यंनित्यंचसमरप्रियः ॥ ३ ॥ एषजेष्यतिकाकुत्स्थौसुग्रीवंचमहाबलम् ॥ वानरांश्चापरान्घोरान्हनिष्यतिनसंशयः ॥ ४ ॥ परिगृह्यसतामाज्ञांरावणस्यमहाबलः ॥ स्वबलंप्रेरयामासतदालघुपराक्रमः॥ ॥ ५ ॥ ततोनानाप्रहरणाभीमाक्षाभीमदर्शनाः ॥ निष्पेतूराक्षसामुख्याबलाध्यक्षप्रचोदिताः ॥ ६ ॥ रथमास्थायविपुलंतप्तकांचनभूषणम् ॥ मेघाभोमेघवर्णश्चमेघस्वनमहास्वनः ॥ ७ ॥ राक्षसैःसंवृतोघोरैस्तदानिर्यात्यकंपनः ॥ नहिकंपयितुंशक्यःसुरैरपिमहामृधे ॥ ८ ॥

वज्रदंष्ट्रवधः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुःपंचाशः सर्गः ॥ ५४ ॥ कतकरीत्या ॥ ५० ॥ बलाध्यक्षं महस्तम् ॥ १ ॥ २ ॥ शास्ता शत्रूणां गोप्ता स्वबलस्य नेता नायको युद्धस्य ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ मेघाभः मेघसमानदेहप्रमाणः मेघवर्णस्तद्वन्नीलवर्णः मेघस्य स्वन इव महान्स्वनो यस्य स तथा ॥ ७ ॥ निर्याति याति स्म ॥ ८ ॥

संपादितः गरुडेन तु स्वरूपत एवेति बोध्यम् ॥ ४० ॥ ४१ ॥ व्यतिक्रांतौ लंघितवंतौ ॥ ४२ ॥ यथा तातं दशरथं स्वावतारोचितं कश्यपप्रजापत्यंशम् अजं च पितामहं चतुर्मुखब्रह्मांशम् मे हिरण्यगर्भात्मन स्तदंशस्य ॥ ४३ ॥ को भवानिति । अयं प्रश्नोपि मनुष्यशरीरोचितव्यवहार एव तत्सत्यत्वमत्यापनार्थः । अत्र रामसमीपागमनपर्यंतं पक्ष्याकारेणैवागत्य सन्निधिमात्रेणं नागबंधनं च निरस्य राघवस्पर्शनाद्यर्थं पुरुषाकारेण व्यवहृतवानिति बोध्यम् । तदाह रूपसंपन्न इति । दिव्यरूपसंपन्न इत्यर्थः ॥४४॥ हर्षपर्याकुलेक्षणं राममुवाचेत्यन्वयः॥४५॥ अहं सखेति सखित्वात्सुग्रीवादिवद्देवसाह्यकरणार्थमागत इति भावः ॥४६॥ इदं च साहाय्यं मदेकसाध्यमित्याह असुरा वेति ॥ ४७ ॥ ४८ ॥ रक्षोमायया शरभूता एते नागास्त्वदाश्रया इति बहुव्रीहिः । त्वां प्राप्ता इत्यर्थः ॥ ४९ ॥ मम दुर्नयैरित्यादिना यदात्मनिंदनं कृतं तत्परिहरति

भवत्प्रसादाद्व्यसनंरावणिप्रभवंमहत् ॥ उपायेनव्यतिक्रांतौशीघ्रंचबलिनौकृतौ ॥ ४२ ॥ यथातातंदशरथंयथाऽजंचपितामहम् ॥ तथाभवंतमासाद्यहृदयंमेप्रसीदति ॥ ४३ ॥ कोभवान्रूपसम्पन्नोदिव्यस्रगनुलेपनः ॥ वसानोविरजेवस्त्रेदिव्याभरणभूषितः ॥ ४४ ॥ तमुवाचमहातेजावैनतेयोमहाबलः ॥ पतत्रिराजःप्रीतात्माहर्षपर्याकुलेक्षणम् ॥ ४५ ॥ अहंसखातेकाकुत्स्थप्रियःप्राणोबहिश्चरः ॥ गरुत्मानिहसंप्राप्तोयुवयोःसाह्यकारणात्॥॥४६॥ असुरावामहावीर्यावानरावामहाबलाः ॥ सुराश्चापिसगंधर्वाःपुरस्कृत्यशतक्रतुम् ॥४७॥ नेमंमोक्षयितुंशक्ताःशरबंधंसुदारुणम् ॥ मायाबलादिंद्रजितानिर्मितंक्रूरकर्मणा ॥ ४८ ॥ एतेनागाःकाद्रवेयास्तीक्ष्णदंष्ट्राविषोल्बणाः ॥ रक्षोमायाप्रभावेणशरभूतास्त्वदाश्रयाः ॥ ४९ ॥ सभाग्यश्चासिधर्मज्ञरामसत्यपराक्रम ॥ लक्ष्मणेनसहभ्रात्रासमरेरिपुघातिना ॥ ५० ॥ इमंश्रुत्वातुविक्रांतस्त्वरमाणोहमागतः ॥ सहसैवावयोःस्नेहात्सखित्वमनुपालयन् ॥ ५१ ॥ मोक्षितौचमहाघोरादस्मात्सायकबंधनात् ॥ अप्रमादश्चकर्तव्योयुवाभ्यांनित्यमेवहि ॥ ५२ ॥ प्रकृत्याराक्षसाःसर्वेसंग्रामेकूटयोधिनः ॥ शूराणांशुद्धभावानांभवतामार्जवंबलम् ॥ ५३ ॥ तन्नविश्वसनीयंवोराक्षसानांरणाजिरे ॥ एतेनैवोपमानेननित्यंजिह्माहिराक्षसाः ॥ ५४ ॥ एवमुक्त्वातदारामंसुपर्णःसमहाबलः ॥ परिष्वज्यचसुस्निग्धमाप्रष्टुमुपचक्रमे ॥ ५५॥ सखेराघवधर्मज्ञरिपूणामपिवत्सल ॥ अभ्यनुज्ञातुमिच्छामिगमिष्यामियथासुखम् ॥ ५६ ॥ नचकौतूहलंकार्यंसखित्वंप्रतिराघव ॥ कृतकर्मारणेवीरसखित्वंप्रतिवेत्स्यसि ॥ ५७ ॥ बालवृद्धावशेषांतुलंकांकृत्वाशरोर्मिभिः ॥ रावणंतुरिपुंहत्वासीतांत्वमुपलप्स्यसे॥५८॥इत्येवमुक्त्वावचनंसुपर्णःशीघ्रविक्रमः॥रामंचनीरुजंकृत्वामध्येतेषांवनौकसाम्॥५९॥

सभाग्य इति । अनुकूलतरशुभदैववानसि समरे समरविषये॥५०॥इमं वृत्तांतं नागबंधवृत्तांतं श्रुत्वा देवतानां मुखादिति शेषः । स्नेहादेवागतः ॥५१॥ स्नेहादेव च युवां मोक्षितौ मोचितौ । अप्रमादः सावधानता ॥ ५२ ॥ ५३ ॥ तन्न विश्वसनीयम् यथा वयमृजवो धर्मपरास्तथा पुरुषत्वाविशेषाद्रक्षांस्यपि तथैवेति कल्पितं रक्षोगतमार्जवं न विश्वसिनव्यमित्यर्थः । उक्तमेवार्थमनुभवतः स्पष्टीकरोति एतेनैवेति । इंद्रजित्कापट्येनैवेत्यर्थः ॥ ५४ ॥ आप्रष्टुं गमनानुज्ञां कारयितुम् ॥ ५५ ॥ ५६ ॥ मदुक्तसखित्वं प्रति लोकप्रतारणायापि विस्मयो न कार्य इत्याह नचेति । अनुवेत्स्यसि एतैः सर्वैः सहेति शेषः ॥ ५७ ॥

॥ ५८ ॥ ५९ ॥ प्रदक्षिणं कृत्वेत्यनेन दिव्यदेवतावतारो राम इति सर्वान्प्राकृतकपीन्प्रत्यपि बोधितम् ॥ ६० ॥ ६१ ॥ यथापुरं यथापूर्वम् ॥ ६२ ॥ ६३ ॥ ६४ ॥ निशीथे यथा वनानां नादस्तथा वानराणां नाद इत्यर्थः । अत्र स्थाने दिनद्वयं युद्धावहार इत्याग्निवेश्यः ॥ ६५ ॥ मैत्तैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचाशः सर्गः ॥ ५० ॥कतकरी० ॥ ४७ ॥ अथ श्रुतवानरनादेन रावणेन धूम्राक्षप्रेषणम् तेषामिति । राक्षसैर्विभीषणादिभिः ॥ १ ॥ स्निग्धगंभीरत्वेन दुःखमूलरोदनादिशब्दव्यावृत्तिः ॥ २ ॥ यथा यस्मादित्यर्थः ।

प्रदक्षिणंततःकृत्वापरिष्वज्यचवीर्यवान् ॥ जगामाकाशमाविश्यसुपर्णःपवनोयथा ॥ ६० ॥ नीरुजौराघवौदृष्ट्वाततोवानरयूथपाः ॥ सिंहनादंतदाने दुर्लांगूलंदुधुवुश्चते ॥ ६१ ॥ ततोभेरीःसमाजघ्नुर्मृदंगांश्चाप्यवादयन् ॥ दध्मुःशंखान्संप्रहृष्टाःक्ष्वेलंत्यापियथापुरम् ॥ ६२ ॥ अपरेस्फोट्यविक्रांतावा नरानगयोधिनः ॥ द्रुमानुत्पाट्यविविधांस्तस्थुःशतसहस्रशः ॥ ६३ ॥ विसृजंतोमहानादांस्त्रासयंतोनिशाचरान् ॥ लंकाद्वाराण्युपाजग्मुर्युद्धकामाः प्लवंगमाः ॥ ६४ ॥ तेषांसुभीमस्तुमुलोनिनादोबभूवशाखामृगयूथपानाम् ॥ क्षयेनिदाघस्ययथावनानांनादःसुभीमोनदतांनिशीथे ॥ ६५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे पंचाशः सर्गः ॥ ५० ॥ तेषांतुतुमुलंशब्दंवानराणांमहौजसाम् ॥ नर्दतांराक्षसैःसार्धंतदाशुश्रा वरावणः ॥१॥ स्निग्धगंभीरनिर्घोषंश्रुत्वातंनिनदंभृशम् ॥ सचिवानांततस्तेषांमध्येवचनमब्रवीत् ॥२॥ यथाऽसौसंप्रहृष्टानांवानराणासुपस्थितः ॥ बहूनांसुमहान्नादोमेघानामिवगर्जताम् ॥ ३ ॥ सुव्यक्तंमहतीप्रीतिरेतेषांनात्रसंशयः ॥ तथाहिविपुलैर्नादैश्चुक्षुभेलवणार्णवः ॥ ४ ॥ तौतुबद्धौशरैस्ती क्ष्णैर्भ्रातरौरामलक्ष्मणौ ॥ अयंचसुमहान्नादःशंकांजनयतीवमे ॥ ५ ॥ एवंचवचनंचोक्त्वामंत्रिणोराक्षसेश्वरः ॥ उवाचनैर्ऋतांस्तत्रसमीपपरिवर्तिनः ॥ ६ ॥ ज्ञायतांतूर्णमेतेषांसर्वेषांचवनौकसाम् ॥ शोककालेसमुत्पन्नेहर्षकारणमुत्थितम् ॥ ७ ॥ तथोक्तास्तेतुसंभ्रांताःप्राकारमधिरुह्यच ॥ ददृशुः पालितांसेनांसुग्रीवेणमहात्मना ॥ ८ ॥ तौचमुक्तौसुघोरेणशरबंधेनराघवौ ॥ समुत्थितौमहाभागौविषेदुःसर्वराक्षसाः ॥ ९ ॥ संत्रस्तहृदयाःसर्वे प्राकारादवरुह्यते ॥ विवर्णाराक्षसाघोराराक्षसेंद्रमुपस्थिताः ॥ १० ॥ तदप्रियंदीनमुखारावणस्यचराक्षसाः ॥ कृत्स्नंनिवेदयामासुर्यथावद्वाक्यको विदाः ॥ ११ ॥ यौताविंद्रजितायुद्धेभ्रातरौरामलक्ष्मणौ ॥ निबद्धौशरबंधेननिष्प्रकंपभुजौकृतौ ॥ १२ ॥ विमुक्तौशरबंधेनदृश्येतेतौरणाजिरे ॥ पाशानिवगजौछित्त्वागजेंद्रसमविक्रमौ ॥ १३ ॥ तच्छ्रुत्वावचनंतेषांराक्षसेंद्रोमहाबलः ॥ चिंताशोकसमाक्रांतोविवर्णवदनोऽभवत् ॥ १४ ॥ घोरैर्द त्तवरैर्बद्धौशरैराशीविषोपमैः ॥ अमोघैःसूर्यसंकाशैःप्रमथ्येंद्रजितायुधि ॥ १५ ॥

एवमेषां नादः समुत्थितः ॥ ३ ॥ तस्मादेषां महती प्रीतिर्जातेति मन्ये । तत्रैव युक्त्यंतरम् तथा हीति ॥ ४ ॥ शंकां बंधमोक्षणशंकां जनयतीवजनयत्येव ॥ ५ ॥ ६ ॥ किं हर्षकारणमुत्थितं तज्ज्ञायताम् ॥ ७ ॥ प्राकारमधिरुह्येति । अनेनात्रावहारः सूचितः ॥ ८ ॥ समुत्थितौ दृष्ट्वेति शेषः ॥ ९॥१०॥११॥१२॥१३॥ १४ ॥ दत्तवरैः वरे दत्ता दत्तवरास्तैः चिरकालदुश्चरतपसा वरप्राप्तैरित्यर्थः । युधि

ममध्य बद्धावित्यन्वयः ॥ १५ ॥ संशयस्थं इंद्रजिद्बलमवष्टभ्य स्थितस्य मे एतद्बलस्य वैफल्यात्मायोस्माकमपजय इति मन्ये इत्यर्थः ॥१६॥ तदेवाह निष्फला इति । यैः शरैरिंद्रजित्मयुक्तैः संग्रामेममारिपूणां जीवितमादत्तं ते निष्फलाः संवृत्ताः खलु तस्मात्संशयस्थमिदम् ॥ १७ ॥ १८ ॥ १९ ॥ परिक्रम्य रावणं प्रदक्षिणीकृत्य ॥ २० ॥ तद्वारं रावणगृहद्वारम् अभिनिष्क्रम्य ततो निर्गम्य युयुत्सतः पुंसः किं चिरेण विलंबेन विलंबो व्यर्थ इत्यर्थः ॥ २१ ॥ २२ ॥ बद्धघंटाः मासशक्त्यादिष्विति शेषः ॥ २३ ॥ गदादिभिरुपलक्षिताः ॥ २४ ॥ २५ ॥ समलंकृतैरिति रथध्वजयोर्विशेषणम् । सुवर्णजालविहितैस्तेन

तदस्त्रबंधमासाद्ययदिमुक्तौरिपूमम ॥ संशयस्थमिदंसर्वमनुपश्याम्यहंबलम् ॥१६॥ निष्फलाःखलुसंवृत्ताःशराःपावकतेजसः ॥ आदत्तंयैस्तुसंग्रामे रिपूणांजीवितंमम ॥ १७ ॥ एवमुक्त्वातुसंक्रुद्धोनिःश्वसन्नुरगोयथा ॥ अब्रवीद्रक्षसांमध्येधूम्राक्षंनामराक्षसम् ॥ १८ ॥ बलेनमहतायुक्तोराक्षसैर्भीम विक्रमैः ॥ त्वंवधायाशुनिर्याहिरामस्यसहवानरैः ॥ १९ ॥ एवमुक्तस्तुधूम्राक्षोराक्षसेंद्रेणधीमता ॥ परिक्रम्यततःशीघ्रंनिर्जगामनृपालयात् ॥ २० ॥ अभिनिष्क्रम्यतद्वारंबलाध्यक्षमुवाचह ॥ त्वरयस्वबलंशीघ्रंकिंचिरेणयुयुत्सतः ॥ २१ ॥ धूम्राक्षवचनंश्रुत्वाबलाध्यक्षोबलानुगः ॥ बलमुद्योजयामास रावणस्याज्ञयाभृशम् ॥ २२ ॥ तेबद्धघंटाबलिनोघोररूपानिशाचराः ॥ विनर्दमानाःसंहृष्टाधूम्राक्षंपर्यवारयन् ॥ २३ ॥ विविधायुधहस्ताश्च शूलमुद्गरपाणयः ॥ गदाभिःपट्टिशैर्दंडैरायसैर्मुसलैरपि ॥ २४ ॥ परिघैर्भिंदिपालैश्चभल्लैःपाशैःपरश्वधैः ॥ निर्ययूराक्षसाघोरानर्दंतोजलदायथा ॥ ॥ २५ ॥ रथैःकवचिनस्त्वन्येध्वजैश्चसमलंकृतैः ॥ सुवर्णजालविहितैःखरैश्चविविधाननैः ॥ २६ ॥ हयैःपरमशीघ्रैश्चगजैश्चैवमदोत्कटैः ॥ निर्ययुर्नै र्ऋतव्याघ्राव्याघ्राइवदुरासदाः ॥ २७ ॥ मृगसिंहमुखैर्युक्तंखरैःकनकभूषितैः ॥ आरुरोहरथंदिव्यंधूम्राक्षःखरनिःस्वनः ॥ २८ ॥ सनिर्यातोमहावी र्योधूम्राक्षोराक्षसैर्वृतः ॥ हसन्वैपश्चिमद्वाराद्धनूमान्यत्रतिष्ठति ॥ २९ ॥ रथप्रवरमास्थायखरयुक्तंखरस्वनम् ॥ प्रयांतंतुमहाघोरंराक्षसंभीमदर्शनम् ॥ ॥ ३० ॥ अंतरिक्षगताःक्रूराःशकुनाःप्रत्यषेधयन् ॥ रथशीर्षेमहाभीमोगृध्रश्चनिपपातह ॥३१॥ ध्वजाग्रेग्रथिताश्चैवनिपेतुःकुणपाशनाः ॥ रुधिरार्द्रो महान्श्वेतःकबंधःपतितोभुवि ॥ ३२ ॥ विस्वरंचोत्सृजन्नादान्धूम्राक्षस्यनिपातितः ॥ ववर्षरुधिरंदेवःसंचचालचमेदिनी ॥ ३३ ॥ प्रतिलोमंववौ वायुर्निर्घातसमनिःस्वनः ॥ तिमिरौघावृतास्तत्रदिशश्चनचकाशिरे ॥३४॥ सतूत्पातांस्ततोदृष्ट्वाराक्षसानांभयावहान् ॥ प्रादुर्भूतान्सुघोरांश्चधूम्राक्षो व्यथितोभवत् ॥ मुमुहूराक्षसाःसर्वेधूम्राक्षस्यपुरःसराः ॥ ३५ ॥ ततःसुभीमोबहुभिर्निशाचरैर्वृतोभिनिष्क्रम्यरणोत्सुकोबली ॥ ददर्शतांराघवबाहुपा लितांमहौघकल्पांबहुवानरींचमूम् ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकपंचाशः सर्गः ॥ ५१ ॥

विहितालंकारैः ॥ २६ ॥ २७ ॥ २८ ॥ पश्चिमद्वाराद् यत्र द्वारे हनूमान् रोधकस्तस्मादेव पश्चिमद्वाराद्धनूमता योद्धुं निर्गतः ॥ २९ ॥ ३० ॥ शकुना दुःशकुनाः प्रत्यषेधयन् मृत्युसूचनेनेतिशेषः ॥३१॥ ग्रथिता मालावत्परस्परसक्ताः कुणपाशना गृध्राः ॥ ३२ ॥ धूम्राक्षस्य समीपे निपातितो निपतितः कबंध इति शेषः ॥ ३३ ॥ प्रतिलोमं प्रतिकूलम् ॥ ३४ ॥ ३५ ॥ अभिनिष्क्रम्य पुरादिति शेषः । महौघः प्रलयसमु द्रस्तत्कल्पाम् ॥ ३६ ॥ चूर्ण्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकपंचाशः सर्गः ॥ ५१ ॥

जनितोद्धर्षाः
कतकरी० ॥ ४८ ॥ धूम्राक्षमिति ॥ १ ॥ २ ॥ भूमिसमीकृताः भूम्या समतां मापिता हता इति यावत् ॥ ३ ॥ घोरसंकाशैः घोररूपैः ॥ ४ ॥ संश्रितैर्गृहीतैः ॥ ५ ॥
संजातोत्साहाः अभीतवन्निर्भयाः संतः ॥ ६ ॥ शूलनिर्भिन्नदेहिनः इन्नंतत्वमार्षम् ॥ ७ ॥ ८ ॥ ९ ॥ जितकाशिभिर्जितभयैर्जितश्रासैर्वा ॥ १० ॥ द्रुमै राशीकृताः द्रुमप्रहारैर्हत्वा राशीकृता
इत्यर्थः ॥ ११ ॥ १२ ॥ गजेंद्रैर्मृतगजेंद्रशरीरैः ॥ १३ ॥ करजैर्नखैः ॥ १४ ॥ मूढा मूर्च्छिताः ॥ १५ ॥ १६ ॥ अवपोथिता हिंसिताः ॥ १७ ॥ १८ ॥ १९ ॥ विह्वलंतो

धूम्राक्षंप्रेक्ष्यनिर्यांतंराक्षसंभीमविक्रमम् ॥ विनेदुर्वानराःसर्वेप्रहृष्टायुद्धकांक्षिणः ॥ १ ॥ तेषांसुतुमुलंयुद्धंसंजज्ञेकपिरक्षसाम् ॥ अन्योन्यंपादपैर्घोरै
र्निघ्नतांशूलमुद्गरैः ॥ २ ॥ राक्षसैर्वानराघोराविनिकृत्ताःसमंततः ॥ वानरैराक्षसाश्चापिद्रुमैर्भूमिसमीकृताः ॥ ३ ॥ राक्षसास्त्वभिसंक्रुद्धावानरान्नि
शितैःशरैः ॥ विव्यधुर्घोरसंकाशैःकंकपत्रैरजिह्मगैः ॥ ४ ॥ तेगदाभिश्चभीमाभिःपट्टिशैःकूटमुद्गरैः ॥ घोरैश्चपरिघैश्चित्रैस्त्रिशूलैश्चापिसंश्रितैः ॥५॥
विदार्यमाणारक्षोभिर्वानरास्तेमहाबलाः ॥ अमर्षजनितोद्धर्षाश्चक्रुःकर्माण्यभीतवत् ॥६॥ शरनिर्भिन्नगात्रास्तेशूलनिर्भिन्नदेहिनः ॥ जगृहुस्तेद्रुमांस्तत्र
शिलाश्चहरियूथपाः ॥ ७ ॥ तेभीमवेगाहरयोनर्दमानास्ततस्ततः ॥ ममंथूराक्षसान्वीरान्नामानिचबभाषिरे ॥ ८ ॥ तद्बभूवाद्भुतंघोरंयुद्धंवानररक्षसा
म् ॥ शिलाभिर्विविधाभिश्चबहुशाखैश्चपादपैः ॥ ९ ॥ राक्षसामथिताःकेचिद्वानरैर्जितकाशिभिः ॥ ववमूरुधिरंकेचिन्मुखैरुधिरभोजनाः ॥ १० ॥
पार्श्वेषुदारिताःकेचित्केचिद्राशीकृताद्रुमैः ॥ शिलाभिश्चूर्णिताःकेचित्केचिद्दंतैर्विदारिताः ॥११॥ ध्वजैर्विमथितैर्भग्नैःखड्गैश्चविनिपातितैः ॥ रथैर्विध्वं
सिताःकेचिद्व्यथितारजनीचराः ॥ १२ ॥ गजेंद्रैःपर्वताकारैःपर्वताग्रैर्वनौकसाम् ॥ मथितैर्वाजिभिःकीर्णंसारोहैर्वसुधातलम् ॥ १३ ॥ वानरैर्भीम
विक्रांतैराप्लुत्योत्प्लुत्यवेगितैः ॥ राक्षसाःकरजैस्तीक्ष्णैर्मुखेषुविनिदारिताः ॥ १४ ॥ विषण्णवदनाभूयोविप्रकीर्णशिरोरुहाः ॥ मूढाःशोणितगंधेन
निपेतुर्धरणीतले ॥ १५ ॥ अन्येतुपरमक्रुद्धाराक्षसाभीमविक्रमाः ॥ तलैरेवाभिधावंतिवज्रस्पर्शसमैर्हरीन् ॥ १६ ॥ वानरैःपातयंतस्तेवेगितावे
गवत्तरैः ॥ मुष्टिभिश्चरणैर्दंतैःपादपैश्चावपोथिताः ॥ १७ ॥ सैन्यंतुविद्रुतंदृष्ट्वाधूम्राक्षोराक्षसर्षभः ॥ रोषेणकदनंचक्रेवानराणांयुयुत्सताम् ॥ १८ ॥
प्रासैःप्रमथिताःकेचिद्वानराःशोणितस्रवाः ॥ मुद्गरैराहताःकेचित्पतिताधरणीतले ॥ १९ ॥ परिघैर्मथिताःकेचिद्भिंदिपालैश्चदारिताः ॥ पट्टिशैर्म
थिताःकेचिद्विह्वलंतोगतासवः ॥ २० ॥ केचिद्विनिहताभूमौरुधिरार्द्रावनौकसः ॥ केचिद्विद्रावितानष्टाःसंक्रुद्धैराक्षसैर्युधि ॥ २१ ॥ विभिन्नहृदयाः
केचिदेकपार्श्वेनशायिताः ॥ विदारितास्त्रिशूलैश्चकेचिदांत्रैर्विनिःसृताः ॥ २२ ॥ तत्सुभीमंमहद्युद्धंहरिराक्षससंकुलम् ॥ प्रबभौशस्त्रबहुलंशिलापा
दपसंकुलम् ॥ २३ ॥ धनुर्ज्यातंत्रिमधुरंहिक्कातालसमन्वितम् ॥ मंदस्तनितगीतंतद्युद्धगांधर्वमाबभौ ॥ २४ ॥

विवशाः ॥ २० ॥ २१ ॥ आंत्रैर्विनिःसृताः निःसृतांत्रा इत्यर्थः । आंत्राणि पुरीतत इति कतकः ॥ २२ ॥ २३ ॥ युद्धगांधर्वं युद्धरूपसंगीतविद्या तद्रूपकोपपादकं धनुरित्यादि ।
धनुर्ज्यारूपा या तंत्री वीणा तया मधुरम् । तंत्रिमधुरमिति ह्रस्व आर्षः । हिक्का अश्वहेषा तद्रूपतालेन युक्तम् । मंदानां मंदाख्यगजविशेषाणां स्तनितं बृंहितमेव गीतं यत्र तत् ॥ २४ ॥

रोपि अस्मिन्काले ईदृशे विषमंकाले ॥३६॥ यदेवमतस्तस्मादित्यादि । हितं तत्समाश्वासनम् ॥३७॥ यदि तव सेनासमाश्वासने धैर्यं नास्ति तदा तदहं करिष्यामि त्वया तु रामो रक्षणीय इत्याह अथवेति । संज्ञाविपर्ययो मोहो यावत्तावत्पर्यंतम् । मोहमात्रमेवानयोर्न त्वन्यसंभावनेत्याह लब्धसंज्ञाविति । नौ आवयोः ॥३८॥ व्यपनेष्यत इतीममेवार्थं स्पष्टयति नैतदिति । रामस्य नैतत्किंचन अपायकरणमित्यर्थः । कुतस्त त्राहं न चेति। मुमूर्षाभावे लिंगमाह नहीति । या गतायुषां दुर्लभा सा लक्ष्मीरेनं न हास्यति इदानीं न जहात्येवाग्रेपि न हास्यतीत्यर्थः॥ ३९॥स्वकं बलं स्वकं माणम् । अहं यावत्सैन्यानि सर्वाणि पुनःस्थापयामिस्थिराणि

तस्मादुत्सृज्यवैक्लव्यंसर्वकार्यविनाशनम् ॥ हितंरामपुरोगाणांसैन्यानामनुचिंतय ॥ ३७ ॥ अथवारक्ष्यतांरामोयावत्संज्ञाविपर्ययः ॥ लब्धसंज्ञौ हिकाकुत्स्थौभयंनौव्यपनेष्यतः ॥ ३८ ॥ नैतत्किंचनरामस्यनचरामोमुमूर्षति ॥ नह्येनंहास्यतेलक्ष्मीर्दुर्लभायागतायुषाम् ॥ ३९ ॥ तस्मादाश्वासयात्मानंबलंचाश्वासयस्वकम् ॥ यावत्सैन्यानिसर्वाणिपुनःसंस्थापयाम्यहम् ॥ ४० ॥ एतेहिफुल्लनयनास्त्रासादागतसाध्वसाः ॥ कर्णेकर्णेप्रकथिताहरयोहरिसत्तम ॥ ४१ ॥ मांतुदृष्ट्वाप्रधावंतमनीकंसंप्रहर्षितम् ॥ त्यजंतुहरयस्त्रासंभुक्तपूर्वामिवस्रजम् ॥ ४२ ॥ समाश्वास्यतुसुग्रीवंराक्षसेंद्रोविभीषणः ॥ विद्रुतंवानरानीकंतत्समाश्वासयत्पुनः ॥ ४३ ॥ इंद्रजित्तुमहामायःसर्वसैन्यसमावृतः ॥ विवेशनगरींलंकांपितरंचाभ्युपागमत् ॥ ४४ ॥ तत्ररावणमासाद्यअभिवाद्यकृतांजलिः ॥ आचचक्षेप्रियंपित्रेनिहतौरामलक्ष्मणौ ॥ ४५ ॥ उत्पपाततोहृष्टःपुत्रंचपरिषस्वजे ॥ रावणोरक्षसांमध्ये श्रुत्वाशत्रूनिपातितौ ॥ ४६ ॥ उपाघ्रायचतंमूर्ध्निपप्रच्छप्रीतमानसः ॥ पृच्छतेचयथावृत्तंपित्रेतस्मैन्यवेदयत् ॥ ४७ ॥ यथातौशरबंधेननिश्चेष्टौ निष्प्रभौकृतौ ॥ ४८ ॥ सहर्षवेगानुगतांतरात्माश्रुत्वागिरंतस्यमहारथस्य ॥ जहौत्वरंदाशरथेःसमुत्थंप्रहृष्टवाचाभिननंदपुत्रम् ॥ ४९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्चत्वारिंशः सर्गः ॥४६॥ तस्मिन्प्रविष्टेलंकायांकृतार्थेरावणात्मजे ॥ राघवंपरिवार्याथररक्षुर्वानरर्षभाः ॥१ ॥ हनुमानंगदोनीलःसुषेणःकुमुदोनलः ॥ गजोगवाक्षःपनसःसानुप्रस्थोमहाहरिः ॥ २ ॥ जांबवानृषभःसुंदोरंभःशतबलिःपृथुः ॥ व्यूढानीकाश्चयत्ताश्चद्रुमानादायसर्वतः ॥ ३ ॥ वीक्षमाणादिशःसर्वास्तिर्यगूर्ध्वंचवानराः ॥ तृणेष्वपिचचेष्टत्सुराक्षसाइतिमेनिरे ॥ ४ ॥

करोमि तावदात्मानमात्मप्राणं चाश्वासय ॥४०॥ एते फुल्लनयनत्वादिगुणका हरयः कर्णे कर्णे प्रकथिताः रामविपद्विषयप्रकथनवंतो भवंति हरिसत्तम सुग्रीव ॥ ४१ ॥ अनीकगत्याश्वासनार्थं मां धावंतं दृष्ट्वा तुसंप्रहर्षितं माप्रहर्षमनीकं तद्रूपा हरयो भुक्तपूर्वां स्रजमिव त्रासं त्यजंतु ॥ ४२ ॥ समाश्वास्य उक्तरीत्येति शेषः ॥४३॥४४॥४५॥४६॥४७॥४८॥४९॥ धावमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥कतकरी०॥४३॥ तस्मिन्निति ॥ १ ॥ २ ॥ व्यूढानि गरुडाद्याकार व्यूहवंत्यनीकानि येषां ते ॥ ३ ॥ राक्षसा इत्यस्यागता इति शेषः ॥४॥

सीतारक्षणीः सीतारक्षिका राक्षसीराजुहाव ता राक्षस्यस्त्रिजटा च तमुपस्थिताः ॥ ५ ॥ ६ ॥ आख्यात कथयत रणे हतौ राघवौ तस्यैतद्दर्शयध्वम् ॥ ७ ॥ यदाश्रयात् अवष्टब्धा गर्विता ॥ ८ ॥ निर्विशंका रामशंकारहिता निरुद्विग्ना निःशोका निरपेक्षा रामो मिलिष्यतीत्याशारहिता ॥ ९ ॥ अवेक्ष्य विनिवृत्ता प्रत्यागता सा च सा तु अन्यां मत्तोन्यां रामरूपां गतिं प्राप्यवस्त्वपश्यती अनपेक्षा रामापेक्षारहिता ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ पताकाध्वजमालिनीं लंकां चारयामास रणस्थौ तौ द्रष्टुमिति शेषः ॥ १४ ॥ घोषणप्रकारो राघवो लक्ष्मणश्चेति ॥ १५ ॥ सर्वं बद्धित्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥

रावणश्चापिसंहृष्टोविसृज्यैंद्रजितंसुतम् ॥ आजुहावततःसीतारक्षणीराक्षसीस्तदा ॥ ५ ॥ राक्षस्यस्त्रिजटाचापिशासनात्तमुपस्थिताः ॥ ताउवाचततो हृष्टोराक्षसीराक्षसाधिपः ॥ ६ ॥ हतावैंद्रजिताख्यातवैदेह्यारामलक्ष्मणौ ॥ पुष्पकंतत्समारोप्यदर्शयध्वंरणेहतौ ॥ ७ ॥ यदाश्रयादवष्टब्धानेयं मामुपतिष्ठते ॥ सोस्याभर्तासहभ्रात्रानिहतोरणमूर्धनि ॥ ८ ॥ निर्विशंकानिरुद्विग्नानिरपेक्षाचमैथिली ॥ मामुपस्थास्यतेसीतासर्वाभरणभूषिता ॥ ॥ ९ ॥ अद्यकालवशंप्राप्तंरणेरामंसलक्ष्मणम् ॥ अवेक्ष्यविनिवृत्तासाचान्यांगतिमपश्यती ॥ अनपेक्षाविशालाक्षीमामुपस्थास्यतेस्वयम् ॥ १० ॥ तस्यतद्वचनंश्रुत्वारावणस्यदुरात्मनः ॥ राक्षस्यस्तास्तथेत्युक्त्वाजग्मुर्वैयत्रपुष्पकम् ॥ ११ ॥ ततःपुष्पकमादायराक्षस्योरावणाज्ञया ॥ अशोकवनिकास्थांतांमैथिलींसमुपानयन् ॥ १२ ॥ तामादायतुराक्षस्योभर्तृशोकपराजिताम् ॥ सीतामारोपयामासुर्विमानंपुष्पकंतदा ॥ १३ ॥ ततःपुष्पकमारोप्यसीतांत्रिजटयासह ॥ रावणश्चारयामासपताकाध्वजमालिनीम् ॥ १४ ॥ प्राघोषयतहृष्टश्चलंकायांराक्षसेश्वरः ॥ राघवोलक्ष्मणश्चैवहताविंद्रजितारणे ॥ १५ ॥ विमानेनापिगत्वातुसीतात्रिजटयासह ॥ ददर्शवानराणांतुसर्वंसैन्यंनिपातितम् ॥ १६ ॥ प्रहृष्टमनसश्चापिददर्शपिशिताशनान् ॥ वानरांश्चातिदुःखार्तान्रामलक्ष्मणपार्श्वतः ॥ १७ ॥ ततःसीताददर्शोभौशयानौशरतल्पगौ ॥ लक्ष्मणंचैवरामंचविसंज्ञौशरपीडितौ ॥ १८ ॥ विध्वस्तकवचौवीरौविप्रविद्धशरासनौ ॥ सायकैश्छिन्नसर्वांगौशरस्तंबमयौक्षितौ ॥ १९ ॥ तौदृष्ट्वाभ्रातरौतत्रप्रवीरौपुरुषर्षभौ ॥ शयानौपुंडरीकाक्षौ कुमाराविवपावकी ॥ २० ॥ शरतल्पगतौवीरौतथाभूतौनरर्षभौ ॥ दुःखार्ताकरुणंसीतासुभृशंविललापह ॥ २१ ॥ भर्तारमनवद्यांगीलक्ष्मणंचासितेक्षणा ॥ प्रेक्ष्यपांसुषुचेष्टंतौरुरोदजनकात्मजा ॥ २२ ॥ सबाष्पशोकाभिहतासमीक्ष्यतौभ्रातरौदेवसुतप्रभावौ ॥ वितर्कयंतीनिधनंतयोःसादुःखान्वितावाक्यमिदंजगाद ॥ २३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ भर्तारंनिहतंदृष्ट्वालक्ष्मणंचमहाबलम् ॥ विललापभृशंसीताकरुणंशोककर्शिता ॥ १ ॥ ऊचुर्लाक्षणिकायेमांपुत्रिण्यविधवेतिच ॥ तेऽद्यसर्वेहतेरामेज्ञानिनोऽनृतवादिनः ॥ २ ॥

विप्रविद्धशरासनौ भ्रष्टधनुष्कौ शरस्तवः शरसमूहस्तन्मयौ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ वितर्कयंती चिंतयंतीत्येव ॥ २३ ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकाड, सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ कतकरी० ॥ ४४ ॥ विललापेति । सर्वज्ञापि देवी राक्षसानां मानुषबुद्धिस्थैर्याय नटवद्विललापेवेत्यर्थः । निहतं निहतमिव स्थितम् ॥ १ ॥ लाक्षणिकाः

सामुद्रिकलक्षणज्ञाः ॥ २ ॥ अयमव पांक्तः पाठ इति कतकः । यज्वनोऽश्वमेधादियागकर्तुः । सत्रिणः बहुदिनसाध्यबहुकर्तृकयागकर्तुः ॥ ३ ॥ वीरपार्थिवपत्नीनां पूजनीयामिति शेषः । भर्तृपूजितां सुमंगलीं ये प्राहुः ॥ ४ ॥ सम्यक् श्रवणं यस्मिन्निति संश्रवणं सन्निधिस्तस्मिन्मत्समक्षमिति यावत् । कार्तांतिका ज्योतिःकृतांतविदः शुभाम् अविधवाम् । ज्ञानिन इति च्छेदः ॥ ५ ॥ यैर्लक्षणैः स्त्रियो नरेंद्रैः पतिभिः सहाधिराज्येभिषिच्यंते तानीमानि पद्मानि पाणिपादवर्तिरेखारूपपद्मानि मयि वर्तंत इति शेषः ॥ ६ ॥ यैरलक्षणैर्भाग्यदुर्लभा दुर्लभभाग्या वैधव्यं यांति तान्यात्मनो न पश्यामि । सुलक्षणानि पश्यंत्यपि हतलक्षणा निष्फललक्षणा जातास्मीति शेषः । इदं पद्यं प्रक्षिप्तमिति बहवः ॥ ७ ॥ लक्षणैर्लक्षणज्ञैस्तत्प्रतिपादकशास्त्रैश्च । सत्यनामानि अमोघफलानि । तानि शास्त्राणि तत्प्रतिपादितलक्षणानि च ॥ ८ ॥ असंहते अपरस्पराश्लिष्टे ॥ ९ ॥ शंखे नयनोपांत्यभागौ ललाटफलके इति कतकः । चितौ उपचितौ अनुवृत्ताः आनुपूर्व्येण वृत्तत्वगुणयुक्ताः समाः सममध्याः ॥ १० ॥ अविरलौ परस्परसंसक्तौ मग्नचूचुकौ

यज्वनोमहिषींयेमामूचुःपत्नींचसत्रिणः ॥ तेऽद्यसर्वेहतेरामेज्ञानिनोऽनृतवादिनः ॥ ३ ॥ वीरपार्थिवपत्नीनांयेविदुर्भर्तृपूजिताम् ॥ तेऽद्यसर्वेहतेरामे ज्ञानिनोऽनृतवादिनः ॥ ४ ॥ ऊचुःसंश्रवणेयेमांद्विजाःकार्तांतिकाःशुभाम् ॥ तेऽद्यसर्वेहतेरामेज्ञानिनोऽनृतवादिनः ॥५॥ इमानिखलुपद्मानिपादयो र्वैकुलस्त्रियः ॥ आधिराज्येऽभिषिच्यंतेनरेंद्रैःपतिभिःसह ॥ ६ ॥ वैधव्यंयांतियैर्नार्योऽलक्षणैर्भाग्यदुर्लभाः ॥ नात्मनस्तानिपश्यामिपश्यंतीहतल क्षणा ॥ ७ ॥ सत्यनामानिपद्मानिस्त्रीणामुक्तानिलक्षणैः ॥ तान्यद्यनिहतेरामेवितथानिभवंतिमे ॥ ८ ॥ केशाःसूक्ष्माःसमानीलाभ्रुवौचासंहतेमम ॥ वृत्तेचारोमकेजंघेदंताश्चाविरलामम ॥ ९ ॥ शंखेनेत्रेकरौपादौगुल्फावूरूसमौचितौ ॥ अनुवृत्तनखाःस्निग्धाःसमाश्चांगुलयोमम ॥ १० ॥ स्तनौचा विरलौपीनौमामकौमग्नचूचुकौ ॥ मग्नाचोत्सेधनीनाभिःपार्श्वोरस्कंचमेचितम् ॥ ११ ॥ ममवर्णोमणिनिभोमृदून्यंगरुहाणिच ॥ प्रतिष्ठितांद्वादश भिर्मामूचुःशुभलक्षणाम् ॥ १२ ॥ समग्रयवमच्छिद्रंपाणिपादंचवर्णवत् ॥ मंदस्मितेत्येवचमांकन्यालाक्षणिकाविदुः ॥१३॥ आधिराज्येभिषेकोमे ब्राह्मणैःपतिनासह ॥ कृतांतकुशलैरुक्तंतत्सर्वंवितथीकृतम् ॥१४॥ शोधयित्वाजनस्थानंप्रवृत्तिमुपलभ्यच ॥ तीर्त्वासागरमक्षोभ्यंभ्रातरौगोष्पदेहतौ ॥१५॥

निमग्नाग्रभागौ । उत्सेधनी उन्नतपर्यंतप्रदेशा पार्श्वे चोरस्कं च स्वार्थे कः तत्पार्श्वोरस्कम् । प्राण्यंगत्वादेकवचनम् । चितम् उपचितम् ॥ ११ ॥ वर्णः कांतिः मणिनिभः शाणघृष्टमणिवदुज्ज्वलः । अंगरुहाणि रोमाणि । द्वादशभिः प्रतिष्ठितां पादद्वयवर्त्यंगुलिदशकं द्वे पादतले च एवं द्वादशभिः सुप्रतिष्ठितां सुस्पष्टभूमिकाम् एवं केशादिपादांतलक्षणैर्मां शुभलक्षणामूचुः ॥ १२ ॥ समग्रयवमंगुलिपर्वमध्यगसमग्रयवप्रमा णद्विद्विरेखावत् । अच्छिद्रं नीरंध्रांगुल्यंतरालम् ॥ वर्णवत्प्रशस्तकांति । मंदस्मिता मंदस्मितवत्स्वरूपसुलक्षणवती । कन्यालाक्षणिकाः कन्यावर्तिसामुद्रिकलक्षणज्ञाः ॥ १३ ॥ कृतांतनिपुणैर्ज्योतिःशास्त्रसिद्धां तज्ञैः । आधिराज्येभिषेको भावीत्युक्तमित्यन्वयः ॥ १४ ॥ सागरं समुद्रं राक्षससेनासागरं चाक्षोभ्यं तीर्त्वा गोष्पदेऽल्पावशिष्टसैन्ये हतावित्यर्थः । अनेन बहुदिनयुद्धोत्तरमल्पावशिष्टे सैन्ये कतिपययूथपरूपेऽयं

शरबंध इति लभ्यते ॥ १५ ॥ प्रत्यपद्यत प्रत्यपद्येताम् । एकवचनमार्षम् । नन्वितः पूर्वं तत्किमिदानीं न स्मृतमिति शेषः ॥ १६ ॥ १७ ॥ १८ ॥ कालस्य शुभाशुभफलप्रापकस्य तत्प्रापणेऽतिभारो नास्ति अतस्तदुपस्थापितफलनिर्वर्तको यः कृतांतो दैवं स न सुदुर्जयः । सामान्यरूपस्यार्थस्य विशेषेण समर्थनरूपोर्थांतरन्यासः । प्रकृतकथनरूपो यत्रेत्यादिः यत्र यस्मादित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥ एवंदशां प्राप्तस्य कथं जीवनं तत्राह कारणानीति । महांति इदानीमपि सजीवत्वोपपादकानि सदृशानि अनुभूतैस्तुल्यानि दृष्टसंवादानि यथेमौ जीवत इति प्रतिपद्येयास्तथा कारणानि वक्ष्यामी त्यन्वयः ॥ २३ ॥ तान्येव व्यतिरेकमुखेनाह नहीति । पतौ पत्यौ निहते सति योधानां मुखानि क्षणेन शत्रुं हनिष्यामः क गच्छतीत्येवं कोपेन व्याप्तानि न भवंति हर्षपर्युत्सुकानि हर्षजनकमोहशांतिदर्शनो

ननुवारुणमाग्नेयमैंद्रंवायव्यमेवच ॥ अस्त्रंब्रह्मशिरश्चैवराघवौप्रत्यपद्यत ॥ १६ ॥ अदृश्यमानेनरणेमाययावासवोपमौ ॥ ममनाथावनाथायां निहतौरामलक्ष्मणौ ॥ १७ ॥ नहिदृष्टिपथंप्राप्यराघवस्यरणेरिपुः ॥ जीवन्प्रतिनिवर्तेतयद्यपिस्यान्मनोजवः ॥ १८ ॥ नकालस्यातिभारोस्ति कृतांतश्चसुदुर्जयः ॥ यत्ररामःसहभ्रात्राशेतेयुधिनिपातितः ॥ १९ ॥ नशोचामितथारामंलक्ष्मणंचमहारथम् ॥ नात्मानंजननींचापियथाश्वश्रूंतप स्विनीम् ॥ २० ॥ सातुचिंतयतेनित्यंसमाप्तव्रतमागतम् ॥ कदाद्रक्ष्यामिसीतांचलक्ष्मणंचसराघवम् ॥ २१ ॥ परिदेवयमानांतांराक्षसीत्रिजटाब्रवीत् ॥ माविषादंकृथादेविभर्तायंतवजीवति ॥ २२ ॥ कारणानिचवक्ष्यामिमहांतिसदृशानिच ॥ यथेमौजीवतोदेविभ्रातरौरामलक्ष्मणौ ॥ २३ ॥ नहि कोपपरीतानिहर्षपर्युत्सुकानिच ॥ भवंतियुधियोधानांमुखानिनिहतेपतौ ॥ २४ ॥ इदंविमानंवैदेहिपुष्पकंनामनामतः ॥ दिव्यंत्वांधारयेन्नेदंयद्येतौ गतजीवितौ ॥ २५ ॥ हतवीरप्रधानाहिगतोत्साहानिरुद्यमा ॥ सेनाभ्रमतिसंख्येषुहतकर्णेवनौर्जले ॥ २६ ॥ इयंपुनरसंभ्रांतानिरुद्विग्नातपस्विनि ॥ सेनारक्षतिकाकुत्स्थौमयाप्रीत्यानिवेदितौ ॥ २७ ॥ सात्वंभवसुविस्रब्धाअनुमानैःसुखोदयैः ॥ अहतौपश्यकाकुत्स्थौस्नेहादेतद्ब्रवीमिते ॥ २८ ॥ अनृतंनोक्तपूर्वंमेनचवक्ष्यामिमैथिलि ॥ चारित्रसुखशीलत्वात्प्रविष्टासिमनोमम ॥ २९ ॥ नेमौशक्यौरणेजेतुंसेंद्रैरपिसुरासुरैः ॥ तादृशंदर्शनंदृष्ट्वामया चोदीरितंतव ॥ ३० ॥ इदंतुसुमहच्चित्रंशरैःपश्यस्वमैथिलि ॥ विसंज्ञौपतितावेतौनैवलक्ष्मीर्विमुंचति ॥ ३१ ॥ प्रायेणगतसत्त्वानांपुरुषाणांगतायुषाम् ॥ दृश्यमानेषुवक्त्रेषुपरंभवतिवैकृतम् ॥ ३२ ॥

त्सुकानि न भवंति अपि तु रुदंति केवलम् । नैवं प्रकृतेऽतो जीवतीति निश्चिनु ॥ २४ ॥ इतोप्येवमेवेत्याह इदं विमानमिति ॥ २५ ॥ पुनर्लिंगांतरमाह हतेति । हतो वीरः शूरः प्रधानो राजा यस्याः सा भ्रमति इतस्ततो व्याकुला भवति हतकर्णा हतकर्णधाराधिष्ठितफलका हतकर्णधारा वा ॥ २६ ॥ तस्य विपर्यये पर्यवसानं दर्शयति इयं पुनरिति । निवेदितौ निवेदितजीवनौ तुभ्यं कृतौ ॥ २७ ॥ २८ ॥ चारित्रेण पातिव्रत्येन सुखशीलत्वात्सुखावहत्वान्मन्मनःसुखावहस्वभावत्वान्मन्मनः प्रविष्टासि हृदयंगमासीत्यर्थः । अतएव तत्सर्वं स्वस्वामिनो रावणस्य विरुद्धमपि मया तवोक्तमिति भावः ॥ २९ ॥ तादृशं दर्शनं जीवनसूचकमनयोः सैनिकानां चाकारं दृष्ट्वा मया तवानयोर्जीवनमुदीरितं निवेदितम् । दृश्यत इति दर्शनः कर्मणि ल्युट् । राजभोजनाः शालय इतिवत् ॥ ३० ॥ लक्ष्मीर्नैव वियुज्यत इतिपाठेपि न

मुंचतीत्येवार्थः ॥ ३१ ॥ ३२ ॥ रामलक्ष्मणयोरर्थे शोकं त्यज एवं प्रसन्नमुखाभ्यामजीवितुं जीवनराहित्येनावस्थातुमशक्यम् अतो जीवतीति निश्चिन्विति शेषः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ सर्गमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥ कतकरी० ॥ ४५ ॥ घोरेणेति ॥ १ ॥ २ ॥ स्थिरत्वादतिदृढगात्रत्वात् सत्त्वयोगान्महाबलयुक्तत्वात् संदानितोपि बद्धोपि ॥ ३ ॥ गाढमर्पितं शरैर्गाढबद्धम् ॥ ४ ॥ ५ ॥ सचिवः सहायः सांपरायिको युद्धे साधुयुद्धार्ह इति यावत् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ यो मया

त्यजशोकंचदुःखंचमोहंचजनकात्मजे ॥ रामलक्ष्मणयोरर्थेनाद्यशक्यमजीवितुम् ॥३३॥ श्रुत्वातुवचनंतस्याःसीतासुरसुतोपमा ॥ कृतांजलिरुवाचेमामेवमस्त्वितिमैथिली ॥३४॥ विमानंपुष्पकंतत्तुसन्निवर्त्यमनोजवम् ॥ दीनात्रिजटयासीतालंकामेवप्रवेशिता ॥३५॥ ततस्त्रिजटयासार्धंपुष्पकादवरुह्यसा ॥ अशोकवनिकामेवराक्षसीभिःप्रवेशिता ॥३६॥ प्रविश्यसीताबहुवृक्षखंडांतांराक्षसेंद्रस्यविहारभूमिम् ॥ संप्रेक्ष्यसंचिंत्यचराजपुत्रौपरंविषादंसमुपाजगाम ॥ ३७ ॥ इत्यार्षे श्रीम०वा०आ०यु० अष्टचत्वारिंशः सर्गः ॥४८॥ घोरेणशरबंधेनबद्धौदशरथात्मजौ ॥ निःश्वसंतौयथानागौशयानौरुधिरोक्षितौ ॥ १ ॥ सर्वेतेवानरश्रेष्ठाःससुग्रीवमहाबलाः ॥ परिवार्यमहात्मानौतस्थुःशोकपरिप्लुताः ॥ २ ॥ एतस्मिन्नंतरेरामःप्रत्यबुध्यतवीर्यवान् ॥ स्थिरत्वात्सत्त्वयोगाच्चशरैःसंदानितोपिसन् ॥ ३ ॥ ततोदृष्ट्वासरुधिरंनिषण्णंगाढमर्पितम् ॥ भ्रातरंदीनवदनंपर्यदेवयदातुरः ॥ ४ ॥ किंनुमेसीतयाकार्यंलब्धयाजीवितेनवा ॥ शयानंयोद्यपश्यामिभ्रातरंयुधिनिर्जितम् ॥ ५ ॥ शक्यासीतासमानारीमर्त्यलोकेविचिन्वता ॥ नलक्ष्मणसमोभ्रातासचिवःसांपरायिकः ॥ ६ ॥ परित्यक्ष्याम्यहंप्राणान्वानराणांतुपश्यताम् ॥ यदिपंचत्वमापन्नःसुमित्रानंदवर्धनः ॥७॥ किंनुवक्ष्यामिकौसल्यांमातरंकिंनुकैकयीम् ॥ कथमंबांसुमित्रांचपुत्रदर्शनलालसाम् ॥ ८ ॥ विवत्सांवेपमानांचवेपंतींकुररीमिव ॥ कथमाश्वासयिष्यामियदियास्यामितंविना ॥ ९ ॥ कथंवक्ष्यामिशत्रुघ्नंभरतंचयशस्विनम् ॥ मयासहवनंयातोविनातेनाहमागतः ॥ १० ॥ उपालंभंनशक्ष्यामिसोढुमंबासुमित्रया ॥ इहैवदेहंत्यक्ष्यामिनहिजीवितुमुत्सहे ॥ ११ ॥ धिङ्मांदुष्कृतकर्माणमनार्यंमत्कृतेह्यसौ ॥ लक्ष्मणःपातितःशेतेशरतल्पेगतासुवत् ॥ १२ ॥ त्वंनित्यंसुविषण्णंमामाश्वासयसिलक्ष्मण ॥ गतासुर्नाद्यशक्तोसिमामार्तमभिभाषितुम् ॥ १३ ॥ येनाद्यबहवोयुद्धेनिहताराक्षसाःक्षितौ ॥ तस्यामेवाद्यशूरस्त्वंशेषेविनिहतःशरैः ॥ १४ ॥ शयानःशरतल्पेऽस्मिन्सशोणितपरिप्लुतः ॥ शरभूतस्ततोभासिभास्करोऽस्तमिवव्रजन् ॥१५॥ बाणाभिहतमर्मत्वान्नशक्नोषीहभाषितुम् ॥ रुजाचाब्रुवतोयस्यदृष्टिरागेणसूच्यते ॥ १६ ॥

सह वनं गतस्तेन लक्ष्मणेन विनागतोहं किं वक्ष्यामि ॥ १० ॥ अंबासुमित्रयेति । क्रियमाणमिति शेषः ॥ ११ ॥ १२ ॥ गतासुर्गतासुरिव ॥ १३ ॥ १४ ॥ शरभूतः शरैर्व्याप्तशरीरत्वाच्छररूपं प्राप्तः अस्तं व्रजन् भास्कर इव तल्लग्नैर्निःसरद्रुधिरव्याप्तशराः किरणस्थानीयाः ॥ १५ ॥ अब्रुवतोपि यस्य रुजा व्यथाद्दृष्ट्या रागेण अन्ययां मुखशोभया च सूच्यते दृष्टीत्यनेन दर्शनशक्तिमत्त्वं सूच्यते ॥ १६ ॥

यमक्षयं यमगृहं यास्यामीत्यन्वयः । यथायं मात्रादिषु स्नेहमपर्यालोच्यैव मामनुगतस्तथाहमपि तत्स्नेहं त्यक्त्वानुयास्यामीति भावः ॥ १७ ॥ इष्टो बंधुजनो यस्य सः ॥ १८ ॥ विप्रियमहितं कदाचन श्रावितं तु इति न संस्मरे न स्मरामीत्यर्थः ॥ १९ ॥ य एकवेगेन पंच बाणशतानि विससर्ज कार्तवीर्यस्तस्मात्कार्तवीर्यात्सहस्रबाहोरयं द्विबाहुरेकेन वेगेन तावतो बाणान्विसृजन्नधिक इत्यर्थः ॥ २०॥२१॥ विभीषणो राजा न कृत इति यत् यतस्तस्मात्तद्विभीषणमभिषेक्ष्यामीति मिथ्याप्रलप्तं प्रलपितं मां प्रधक्ष्यति ॥ २२ ॥ सत्त्वहीनं शोकवता मया बलहीनम् ॥ २३ ॥ नीलेनेत्यादौ सहेति शेषः ॥ २४ ॥ हनुमदादिभिर्मे दर्थे यत्कृतं तेन तुष्यामि ॥ २५ ॥ २६ ॥ हरिभिर्युद्धं कृतमिति पूर्वेण संबंधः ॥ २७ ॥ अतिप्रबलसहायेनापि दैवं दुर्जयमित्याह न चातिक्रमितुमिति । वयस्यः केवलसखा । सुहृदुपक्रियामूलसखा ॥ २८ ॥

यथैदमांवनंयान्तमनुयातोमहाद्युतिः ॥ अहमप्यनुयास्यामितथैवैनंयमक्षयम् ॥ १७ ॥ इष्टबंधुजनोनित्यंमांचनित्यमनुव्रतः ॥ इमामद्यगतोऽवस्थां ममानार्यस्यदुर्नयैः ॥ १८ ॥ सुरुष्टेनापिवीरेणलक्ष्मणेननसंस्मरे ॥ परुषंविप्रियंचापिश्रावितंतुकदाचन ॥ १९ ॥ विससर्जैकवेगेनपंचबाणशता नियः ॥ इष्वस्त्रेष्वधिकस्तस्मात्कार्तवीर्याच्चलक्ष्मणः ॥२०॥ अस्त्रैरस्त्राणियोहन्याच्छक्रस्यापिमहात्मनः ॥ सोयमुर्व्यांहतःशेतेमहार्हशयनोचितः ॥ ॥ २१ ॥ तत्तुमिथ्याप्रलप्तंमांप्रधक्ष्यतिनसंशयः ॥ यन्मयानकृतोराजाराक्षसानांविभीषणः ॥ २२ ॥ अस्मिन्मुहूर्तेसुग्रीवप्रतियातुमिहार्हसि ॥ सत्त्वहीनंमयाराजन्रावणोभिभविष्यति ॥ २३ ॥ अंगदंतुपुरस्कृत्यससैन्यंसपरिच्छदम् ॥ सागरंतरसुग्रीवनीलेनचनलेनच ॥ २४ ॥ कृतंहिसुमहत्कर्मयदन्यैर्दुष्करंरणे ॥ ऋक्षराजेनतुष्यामिगोलांगूलाधिपेनच ॥ २५ ॥ अंगदेनकृतंकर्ममैंदेनाद्विविदेनच ॥ युद्धंकेसरिणासंख्येघोरंसंपातिना कृतम् ॥ २६ ॥ गवयेनगवाक्षेणशरभेणगजेनच ॥ अन्यैश्चहरिभिर्युद्धंदुर्धरैस्त्यक्तजीवितैः ॥२७॥ नचातिक्रमितुंशक्यंदैवंसुग्रीवमानुषैः ॥ यत्तुशक्यं वयस्येनसुहृदावापरंमम ॥ २८ ॥ कृतंसुग्रीवतत्सर्वंभवताधर्मभीरुणा ॥ मित्रकार्यंकृतमिदंभवद्भिर्वानरर्षभाः ॥ २९ ॥ अनुज्ञातामयासर्वेयथेष्टंगंतुमर्हथ ॥ शुश्रुवुस्तस्ययेसर्वेवानराःपरिदेवितम् ॥ वर्तयांचक्रिरेऽश्रूणिनेत्रैःकृष्णेतरेक्षणाः ॥ ३० ॥ ततःसर्वाण्यनीकानिस्थापयित्वाविभीषणः ॥ आजगामगदापाणिस्त्वरितंयत्रराघवः ॥ ३१ ॥ तंदृष्ट्वात्वरितंयांतंनीलांजनचयोपमम् ॥ वानरादुद्रुवुःसर्वेमन्यमानास्तुरावणिम् ॥ ३२ ॥ इत्यार्षे श्रीमद्रा०वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनपंचाशःसर्गः ॥४९॥ अथोवाचमहातेजाहरिराजोमहाबलः ॥ किमियंव्यथितासेनामूढवातेवनौजले ॥१॥ सुग्रीवस्यवचःश्रुत्वावालिपुत्रोंगदोब्रवीत् ॥ नत्वंपश्यसिरामंचलक्ष्मणंचमहारथम् ॥ २ ॥

अधर्मभीरुणेति च्छेद इति तीर्थस्तद्विफलमेव धर्मभीरुणेति च्छेदेपि धर्मत्यागाद्भीरुणेति व्याख्यातुं शक्यत्वात् ॥ २९ ॥ परिदेवितं परिदेवनप्रवृत्तं वचः कृष्णेतरेक्षणाः पिंगाक्षाः ॥ ३० ॥ ३१ ॥ तं दूरपलायित सेनाः परावर्त्य स्थापयित्वा गतम् । वानरा दुद्रुवुः सुग्रीवसमीपस्था इति शेषः ॥ ३२ ॥ खेंगमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनपंचाशः सर्गः ॥४९॥ कतकरी० ॥४६॥ मूढवाता दिग्व्यामोहकरवात्या वातवती मूढेति भावे निष्ठा ॥१॥ सुग्रीवस्य वचः सेनापलायनप्रश्नहेतुरूपम् । अंगदस्तु प्रस्तुतमेवनिमित्तमाह नत्वमिति । एवं

विशेष णकौ दशरथात्मजौ न पश्यसि किम् एतदेवनिमित्तमिति वृथा प्रश्न इति भावः ॥ २ ॥ ३ ॥ सुग्रीवो नेदमिदानीं पलायननिमित्तमित्याह अथेति । इदं पलायनानिमित्तं त्वदुक्तनिमित्तान्यनिमित्तहीनमिति न मन्ये किंतु केनचित्सांप्रतिकेन पलायनहेतुना भयेन भवितव्यमित्यर्थः ॥ ४ ॥ तदेव स्पष्टयति विषण्णेति विषण्णवदनास्त्यक्तप्रहरणाश्च संत एतावत्पर्यंतमिहैव स्थिताः संप्रति तु इतो दिशः प्रति पलायंते तत्तु त्रासात्सांप्रतिकादेव नान्यथेत्यर्थः ॥ ५ ॥ न लज्जंते शूरगर्हिते पलायने क्रियमाणे न लज्जां प्राप्नुवंतीत्यर्थः । पृष्ठतः वर्तमानपदार्थानितिशेषः । विप्रकर्षंति पलायनप्रतिरोधकानिति शेषः ॥ ६ ॥ वर्धया मास विजयी भवेति वचनेनेति भावः ॥ ७ ॥ वानरभीषणं वानराणां भयनिमित्तम् ॥ ८ ॥ ९ ॥ पर्यवस्थापय प्रतिष्ठापय १० ॥ ११ ॥ १२ ॥ लक्ष्मणस्य तु लक्ष्मणस्य च ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

शरजालाचितौवीरावुभौदशरथात्मजौ ॥ शरतल्पेमहात्मानौशयानौरुधिरोक्षितौ ॥ ३ ॥ अथाब्रवीद्वानरेंद्रःसुग्रीवःपुत्रमंगदम् ॥ नानिमित्तमिदं मन्येभवितव्यंभयेनतु ॥ ४ ॥ विषण्णवदनाह्येतेत्यक्तप्रहरणादिशः ॥ पलायंतेत्रहरयस्त्रासादुत्फुल्ललोचनाः ॥ ५ ॥ अन्योन्यस्यनलज्जंतेननिरीक्षंतिपृष्ठतः ॥ विप्रकर्षंतिचान्योन्यंपतितंलंघयंतिच ॥ ६ ॥ एतस्मिन्नंतरेवीरोगदापाणिर्विभीषणः ॥ सुग्रीवंवर्धयामासराघवंचजयाशिषा ॥ ७ ॥ विभीषणंचसुग्रीवोदृष्ट्वावानरभीषणम् ॥ ऋक्षराजंमहात्मानंसमीपस्थमुवाचह ॥ ८ ॥ विभीषणोयंसंप्राप्तोयंदृष्ट्वावानरर्षभाः ॥ द्रवंत्यागतसंत्रासारावणात्मजशंकया ॥ ९ ॥ शीघ्रमेतान्सुसंत्रस्तान्बहुधाविप्रधावितान् ॥ पर्यवस्थापयाख्याहिविभीषणमुपस्थितम् ॥१०॥ सुग्रीवेणैवमुक्तस्तुजांबवानृक्षपार्थिवः ॥ वानरान्सान्त्वयामाससन्निवर्त्यप्रधावतः ॥ ११ ॥ तेनिवृत्ताःपुनःसर्वेवानरास्त्यक्तसाध्वसाः ॥ ऋक्षराजवचःश्रुत्वातंचदृष्ट्वाविभीषणम् ॥ १२ ॥ विभीषणस्तुरामस्यदृष्ट्वागात्रंशरैश्चितम् ॥ लक्ष्मणस्यतुधर्मात्माबभूवव्यथितस्तदा ॥ १३ ॥ जलक्लिन्नेनहस्तेनतयोर्नेत्रेविमृज्यच ॥ शोकसंपीडितमनारुरोदविललापच ॥ १४ ॥ इमौतौसत्त्वसंपन्नौविक्रांतौप्रियसंयुगौ ॥ इमामवस्थांगमितौराक्षसैःकूटयोधिभिः ॥ १५ ॥ भ्रातृपुत्रेणचैतेनदुष्पुत्रेणदुरात्मना ॥ राक्षस्याजिह्मयाबुद्ध्यावंचितावृजुविक्रमौ ॥ १६ ॥ शरैरिमावलंविद्धौरुधिरेणसमुक्षितौ ॥ वसुधायामिमौसुप्तौदृश्येतेशल्यकाविव ॥ १७ ॥ ययोर्वीर्यमुपाश्रित्यप्रतिष्ठाकांक्षितामया ॥ ताविमौदेहनाशायप्रसुप्तौपुरुषर्षभौ ॥ १८ ॥ जीवन्नद्यविपन्नोस्मिनष्टराज्यमनोरथः ॥ प्राप्तप्रतिज्ञश्चरिपुःसकामोरावणःकृतः ॥ १९ ॥ एवंविलपमानंतंपरिष्वज्यविभीषणम् ॥ सुग्रीवःसत्त्वसंपन्नोहरिराजोऽब्रवीदिदम् ॥२०॥ राज्यंप्राप्स्यसिधर्मज्ञलंकायांनेहसंशयः ॥ रावणःसहपुत्रेणस्वकामंनेहलप्स्यते ॥ २१ ॥ गरुडाधिष्ठितावेतावुभौराघवलक्ष्मणौ ॥ त्यक्त्वामोहंवधिष्येतेसगणंरावणंरणे ॥ २२ ॥ तमेवंसांत्वयित्वातुसमाश्वास्यतुराक्षसम् ॥ सुषेणंश्वशुरंपार्श्वेसुग्रीवस्तमुवाचह ॥ २३ ॥

शल्यकः श्वाविद् ॥ १७ ॥ प्रतिष्ठाराज्येस्थितिः ॥ १८ ॥ अद्यजीवन्नपिविपन्नोस्मिमृतोस्मिप्राप्तप्रतिज्ञो निर्वृत्तसीतापरित्यागाभावप्रतिज्ञःसकामः पूर्णमनोरथश्चपुत्रेणकृतः ॥ १९ ॥ २० ॥ रावणः पुत्रेण सह स्वकामं स्वमनोरथमिह लंकायां न लप्स्यते ॥ २१ ॥ कुतस्तत्राह गरुडाधिष्ठिताविति । गरुडोपासकतया विज्ञातावित्यर्थः । तीर्थस्तु न रुजा पीडितावेताविति पठित्वा न मरणपर्यवसायिरुजा पीडिताविमौ किंतु मोहमात्रं प्राप्तौ अतस्त्यक्त्वेत्येवं व्याचष्टे ॥ २२ ॥ तमेवं सांत्वयित्वा गरुडानुग्रहसंभावनयेत्यर्थः । सांत्वयित्वेत्यस्यैवार्थकथनं समाश्वास्य त्विति । अनेन सुग्रीववाक्येन रामविषयं स्वस्य भगवदवतारत्वज्ञानं सूचितम् ॥ २३ ॥

यावल्लब्धसंज्ञौ भविष्यतस्तावदनयोरक्षार्थमेतौ गृहीत्वा शूरैर्हरिगणैः सह किष्किंधां गच्छ ॥ २४ ॥ २५ ॥ एतद्वाक्यं रक्षणोपायबोधकं वाक्यम् । तदेवाह देवासुरमिति ॥ २६ ॥ स्पृश्यत इति स्पर्शो विषयः शरसंस्पर्शे शरविषये लक्ष्यवेधनरूपे कोविदानपि शस्त्रविदुषोपि मुहुर्मुहुश्छादयंतो माययेंद्रजिद्वदात्मानं प्रच्छादयंतो जघ्नुः ॥ २७ ॥ आर्तत्वादिधर्मवतोपि तान् बृहस्पतिर्विद्याभिर्गरुडादिध्यानरूपामृतजीवनीभिस्ताहशीभिरोषधीभिश्च चिकित्सति अचिकित्सत् ॥ २८ ॥ अस्तु किं प्रकृते तत्राह तानीति ॥ २९ ॥ ननु ज्ञाने किलानयनं तत्राह हरयस्त्विति । संपात्यादयो हरयः । पार्वती पर्वतप्रतिष्ठिते ते ओषधी विजानंति । पार्वती इति द्विवचनमार्षम् । तयोर्नामाह संजीवेति । विशल्यां विशल्यकरणीम् देवेन ब्रह्मणा निर्मिताम् ॥ ३० ॥ क पर्वते ते तत्राह चंद्रश्चेति । क्षीरोदे तौ पर्वतौ स्तः तयोश्च ओषध्यौ ।

सहशूरैर्हरिगणैर्लब्धसंज्ञावरिंदमौ ॥ गच्छत्वंभ्रातरौगृह्यकिष्किंधांरामलक्ष्मणौ ॥ २४ ॥ अहंतुरावणंहत्वासपुत्रंसहबांधवम् ॥ मैथिलीमानयिष्यामिशक्रोनष्टामिवश्रियम् ॥ २५ ॥ श्रुत्वैतद्वानरेंद्रस्यसुषेणोवाक्यमब्रवीत् ॥ देवासुरंमहायुद्धमनुभूतंपुरातनम् ॥ २६ ॥ तदास्मदानवादेवान्शरसंस्पर्शकोविदान् ॥ निजघ्नुःशस्त्रविदुषश्छादयंतोमुहुर्मुहुः ॥ २७ ॥ तानार्तान्नष्टसंज्ञांश्चगतासूंश्चबृहस्पतिः ॥ विद्याभिर्मंत्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २८ ॥ तान्यौषधान्यानयितुंक्षीरोदंयांतुसागरम् ॥ जवेनवानराःशीघ्रंसंपातिपनसादयः ॥ २९ ॥ हरयस्तुविजानंतिपार्वतीतेमहौषधी ॥ संजीवकरणींदिव्यांविशल्यांदेवनिर्मिताम् ॥ ३० ॥ चंद्रश्चनामद्रोणश्चक्षीरोदेसागरोत्तमे ॥ अमृतंयत्रमथितंतत्रतेपरमौषधी ॥ ३१ ॥ तौतत्रविहितौदेवैःपर्वतौतौमहोदधौ ॥ अयंवायुसुतोराजन्हनूमांस्तत्रगच्छतु ॥ ३२ ॥ एतस्मिन्नंतरेवायुर्मेघाश्चापिसविद्युतः ॥ पर्यस्यसागरेतोयंकंपयन्निवपर्वतान् ॥ ३३ ॥ महतापक्षवातेनसर्वेद्वीपमहाद्रुमाः ॥ निपेतुर्भग्नविटपाःसलिलेलवणांभसि ॥ ३४ ॥ अभवन्पन्नगास्त्रस्ताभोगिनस्तत्रवासिनः ॥ शीघ्रंसर्वाणियादांसिजग्मुश्चलवणार्णवम् ॥ ३५ ॥ ततोमुहूर्तादगरुडंवैनतेयंमहाबलम् ॥ वानरादहशुःसर्वेज्वलंतमिवपावकम् ॥ ३६ ॥ तमागतमभिप्रेक्ष्यनागास्तेविप्रदुद्रुवुः ॥ यैस्तुतौपुरुषौबद्धौशरभूतैर्महाबलैः ॥ ३७ ॥ ततःसुपर्णःकाकुत्स्थौस्पृष्ट्वाप्रत्यभिनंद्यच ॥ विममर्शचपाणिभ्यांमुखेचंद्रसमप्रभे ॥ ३८ ॥ वैनतेयेनसंस्पृष्टास्तयोस्संरुरुहुर्व्रणाः ॥ सुवर्णेचतनूस्निग्धेतयोराशुबभूवतुः ॥ ३९ ॥ तेजोवीर्यंबलंचौजउत्साहश्चमहागुणाः ॥ प्रदर्शनंचबुद्धिश्चस्मृतिश्चद्विगुणातयोः ॥ ४० ॥ तावुत्थाप्यमहातेजागरुडोवासवोपमौ ॥ उभौचसस्वजेहृष्टोरामश्चैनमुवाचह ॥ ४१ ॥

कोनाम सागरोत्तमस्तत्राह अमृतमिति ॥ ३१ ॥ यद्यपि पनसादयो जानंति तथापि शीघ्रमागमनार्थं वायुसुतो यातु ॥ ३२ ॥ एतस्मिन्नंतरे ओषध्यानयनवार्ताकाले सागरे तोयं पर्यस्य अतिलहरीयोगि कृत्वा पर्वतान्कंपयन् पक्षवायुरभूत्सविद्युतो मेघाश्चासन् ॥ ३३ ॥ सर्वे द्वीपाः लवणसमुद्रांतर्वर्तिनः ॥ ३४ ॥ तत्र वासिनो मलयवासिनो भोगिनो महाकाया यादांसि सर्वाणि लवणार्णवं जग्मुः भयादंतर्मग्नानीत्यर्थः ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ प्रत्यभिनंद्य विजयाशिषा प्रतिपूज्य मुखे रामलक्ष्मणयोः ॥ ३८ ॥ संरुरुहुः यथापूर्वं संरूढमांसा अभूवन् सुवर्णे शोभनकांतियुक्ते तनू शरीरे ॥ ३९ ॥ तेजः पराभिभवसामर्थ्यम् । वीर्यम् पराक्रमः बलं शारीरम् । ओजः कांतिः । उत्साहः प्रसिद्धः । प्रदर्शनं शब्दानुमानाभ्यां परोक्षार्थनिश्चयः । बुद्धिरपरोक्षनिश्चयः । द्विगुणा वैनतेयस्पर्शात्पूर्वतोप्यधिका अत्रान्यैर्देवैरवतीर्य भगवतो रामस्य मूलमूर्तेराज्ञयोपकारः

॥ २२ ॥ २३ ॥ २४ ॥ घोरा सा निशा भूयो घोरतरा बभूव ॥ २५ ॥ २६ ॥ भक्षयन् अभक्षयन् ॥ २७ ॥ अंगदेन हताश्वोऽतएव महायस्तो महाखेदं माप्त इंद्रजित्तु तत्रैवांतरधीयतेत्यन्वयः ॥ २८ ॥ २९ ॥ यत इंद्रजितो युधि प्रभावं विदुरतस्तेनांगदेन तमिंद्रजितं प्रधर्षितं दृष्ट्वा महात्मानं तमंगदं दृष्ट्वा तुष्टाः ॥३०॥३१॥३२॥३३॥३४॥३५॥ शरबंधेन शरपरिणतनागपाशबंधेन अयं शरबंधो भाव्द्रंक्ष्यांत्यश्लिषु इत्यग्रे निरूपयिष्यामः ॥३६॥ अभिहतौ बद्धौ ॥३७॥ उक्तानुवादः प्रकाशेत्यादि । समुपाजगाम उपचक्रमे । भ्रूभंगमात्रेण सर्वजगत्संहर्तुरपि भगवतो नागपाशबंधनसहनं स्वकृतमर्यादारूपब्रह्मवरदान

निमेषांतरमात्रेणघोरैरग्निशिखोपमैः ॥ दिशश्चकारविमलाःप्रदिशश्चमहारथः ॥ २२ ॥ येत्वन्येराक्षसावीरारामस्याभिमुखेस्थिताः ॥ तेपिनष्टाः समासाद्यपतंगाइवपावकम् ॥ २३ ॥ सुवर्णपुंखैर्विशिखैःसंपतद्भिःसमंततः ॥ बभूवरजनीचित्राखद्योतैरिवशारदी ॥ २४ ॥ राक्षसानांचनिनदैर्भेरीणांचैवनिस्वनैः ॥ साबभूवनिशाघोराभूयोघोरतराभवत् ॥ २५ ॥ तेनशब्देनमहताप्रवृद्धेनसमंततः ॥ त्रिकूटःकंदराकीर्णःप्रव्याहरदिवाचलः ॥ ॥ २६ ॥ गोलांगूलामहाकायास्तमसातुल्यवर्चसः ॥ संपरिष्वज्यबाहुभ्यांभक्षयन्रजनीचरान् ॥ २७ ॥ अंगदस्तुरणेशत्रून्निहंतुंसमुपस्थितः ॥ इंद्रजित्तुरथंत्यक्त्वाहताश्वोहतसारथिः ॥ अंगदेनमहायस्तस्तत्रैवांतरधीयत ॥ २८ ॥ तत्कर्मवालिपुत्रस्यसर्वेदेवाःसहर्षिभिः ॥ तुष्टुवुःपूजनार्हस्यतौचोभौरामलक्ष्मणौ ॥ २९ ॥ प्रभावंसर्वभूतानिविदुरिंद्रजितोयुधि ॥ ततस्तेनमहात्मानंदृष्ट्वातुष्टाःप्रधर्षितम् ॥ ३० ॥ ततःप्रहृष्टाःकपयःससुग्रीवविभीषणाः ॥ साधुसाध्वितिनेदुश्चदृष्ट्वाशत्रुंपराजितम् ॥ ३१ ॥ इंद्रजित्तुतदानेननिर्जितोभीमकर्मणा ॥ संयुगेवालिपुत्रेणक्रोधंचक्रेसुदारुणम् ॥ ॥ ३२ ॥ सोंतर्धानगतःपापोरावणीरणकर्शितः ॥ ब्रह्मदत्तवरोवीरोरावणिःक्रोधमूर्च्छितः ॥ ३३ ॥ अदृश्योनिशितान्बाणान्मुमोचाशनिवर्चसः ॥ रामंचलक्ष्मणंचैवघोरैर्नागमयैःशरैः ॥ ३४ ॥ बिभेदसमरेक्रुद्धःसर्वगात्रेषुराघवौ ॥ माययासंवृतस्तत्रमोहयन्राघवौयुधि ॥ ३५ ॥ अदृश्यःसर्वभूतानांकूटयोधीनिशाचरः ॥ बबंधशरबंधेनभ्रातरौरामलक्ष्मणौ ॥ ३६ ॥ तौतेनपुरुषव्याघ्रौक्रुद्धेनाशीविषैःशरैः ॥ सहसाभिहतौवीरौतदाप्रेक्षंतवानराः ॥ ३७ ॥ प्रकाशरूपस्तुयदानशक्तस्तौबाधितुंराक्षसराजपुत्रः ॥ मायांप्रयोक्तुंसमुपाजगामबबंधतौराजसुतौदुरात्मा ॥ ३८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडेचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ सतस्यगतिमन्विच्छन्राजपुत्रःप्रतापवान् ॥ दिदेशातिबलोरामोदशवानरयूथपान् ॥१॥ द्वौसुषेणस्यदायादौनीलंचप्लवगाधिपम् ॥ अंगदंवालिपुत्रंचशरभंचतरस्विनम् ॥ २ ॥ द्विविदंचहनूमंतंसानुप्रस्थंमहाबलम् ॥ ऋषभंचर्षभस्कंधमादिदेशपरंतपः ॥ ३ ॥ तेसंप्रहृष्टाहरयोभीमानुद्यम्यपादपान् ॥ आकाशंविविशुःसर्वेमार्गमाणादिशोदश ॥ ४ ॥

पालनार्थम् । विशेषेणापि नित्यमात्मानं स्मरतो रावणस्य रावणेश्च परमभक्ततया कीर्तिर्लोकेषु वृद्ध्यर्थं चेति तत्त्वम् ॥ ३८ ॥ उद्दंगमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ कतकरी० ॥ ४१ ॥ उक्तस्यैव राघवयोरिंद्रजित्कृतबंधनस्य प्रपंचः स इति । तस्य इंद्रजितो गतिमवस्थानप्रदेशमन्विच्छन् ज्ञातुमिच्छन् दिदेश आदिदेश ॥ १ ॥२॥३॥४॥

परमास्त्रेण ब्रह्मास्त्रेण मंत्रितैरिषुभिर्वारयामास ॥ ५ ॥ ६ ॥ आवेशयामास प्रवेशयामास ॥ ७ ॥ निरंतरशरीरौ तु कृताविति शेषः ॥ ८ ॥ क्षतजमार्गेण क्षतेन व्रणेन जातो यो मार्गस्तेन ॥ ९ ॥ १० ॥ अनालक्ष्यमशक्यदर्शनम् ॥ ११ ॥ प्रापितौ बंधनमिति शेषः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ न शेकतुरवेक्षितुं तादृशाविव स्थितौ मनुष्यत्वनाटनायेति बोध्यम् ॥ १६ ॥ १७ ॥ १८ ॥ वीरशयने युद्धभूमौ शरवेष्टितसर्वांगौ शरभूतसर्पवेष्टितसर्वगात्रौ ॥१९॥ अविद्धं वेधरहितम् अंगुलमंगुलप्रमाणमंतरमवकाशो नाभूत् । आकराग्रात् कराग्रमभिव्याप्याध्वस्तमक्षोभितम् । अस्तब्धमितिपाठेचेष्टावत् । अजिह्मगै

तेषांवेगवतांवेगमिषुभिर्वेगवत्तरैः ॥ अस्त्रवित्परमास्त्रेणवारयामासरावणिः ॥ ५ ॥ तंभीमवेगाहरयोनाराचैःक्षतविक्षताः ॥ अंधकारेनदहृशुर्मेघैः सूर्यमिवावृतम् ॥ ६ ॥ रामलक्ष्मणयोरेवसर्वदेहभिदःशरान् ॥ भृशमावेशयामासरावणिःसमितिंजयः ॥ ७ ॥ निरंतरशरीरौतुतावुभौरामलक्ष्मणौ ॥ क्रुद्धेनेंद्रजितावीरौपन्नगैःशरतांगतैः ॥ ८ ॥ तयोःक्षतजमार्गेणसुस्रावरुधिरंबहु ॥ तावुभौचप्रकाशेतेपुष्पिताविवकिंशुकौ ॥ ९ ॥ ततःपर्यंतरक्ताक्षोभिन्नांजनचयोपमः ॥ रावणिर्भ्रातरौवाक्यमंतर्धानगतोब्रवीत् ॥१०॥ युध्यमानमनालक्ष्यंशक्रोपित्रिदशेश्वरः ॥ द्रष्टुमासादितुंवापिनशक्तः किंपुनर्युवाम् ॥ ११ ॥ प्रापिताविषुजालेनराघवौकंकपत्रिणा ॥ एषरोषपरीतात्मानयामियमसादनम् ॥ १२ ॥ एवमुक्त्वातुधर्मज्ञौभ्रातरौरामलक्ष्मणौ ॥ निर्बिभेदशितैर्बाणैःप्रजहर्षननादच ॥ १३ ॥ भिन्नांजनचयश्यामोविस्फार्यविपुलंधनुः ॥ भूयएवशरान्घोरान्विससर्जमहामृधे ॥ १४ ॥ ततोमर्मसुमर्मज्ञोमज्जयन्निशिताञ्छरान् ॥ रामलक्ष्मणयोर्वीरोननादचमुहुर्मुहुः ॥ १५ ॥ बद्धौतुशरबंधेनतावुभौरणमूर्धनि ॥ निमेषांतरमात्रेणनशेकतुरवेक्षितुम् ॥ १६ ॥ ततोविभिन्नसर्वांगौशरशल्याचितौकृतौ ॥ ध्वजाविवमहेंद्रस्यरज्जुमुक्तौप्रकंपितौ ॥ १७ ॥ तौसंप्रचलितौवीरौमर्मभेदेनकर्शितौ ॥ निपेततुर्महेष्वासौजगत्यांजगतीपती ॥ १८ ॥ तौवीरशयनेवीरौशयानौरुधिरोक्षितौ ॥ शरवेष्टितसर्वांगावार्तौपरमपीडितौ ॥ १९ ॥ नह्यविद्धंतयोर्गात्रेबभूवांगुलमंतरम् ॥ नानिर्विण्णंनचाध्वस्तमाकराग्रादजिह्मगैः ॥ २० ॥ तौतुक्रूरेणनिहतौरक्षसाकामरूपिणा ॥ असृक्सुस्रुवतुस्तीव्रं जलंप्रस्रवणाविव ॥ २१ ॥ पपातप्रथमंरामोविद्धोमर्मसुमार्गणैः ॥ क्रोधादिंद्रजितायेनपुराशक्रोविनिर्जितः ॥ २२ ॥ रुक्मपुंखैःप्रसन्नाग्रैरजोगतिभिराशुगैः ॥ नाराचैरर्धनाराचैर्भल्लैरंजलिकैरपि ॥ विव्याधवत्सदंतैश्चसिंहदंष्ट्रैःक्षुरैस्तथा ॥ २३ ॥ सवीरशयनेशिश्येविज्यमाविध्यकार्मुकम् ॥ भिन्नमुष्टिपरीणाहंत्रिनतंरुक्मभूषितम् ॥ २४ ॥ बाणपातांतरेरामंपातितंपुरुषर्षभम् ॥ सतत्रलक्ष्मणोदृष्ट्वानिराशोजीवितेऽभवत् ॥ २५ ॥



र्बाणैरनिर्विण्णमविदारितं चांगं नाभूत् ॥२०॥ प्रस्रवणौ प्रस्रवणाख्यपर्वताविव ॥२१॥ इंद्रजित्त्वं कुतस्तत्राह येनेति ॥२२॥ रजोगतिभिर्वायुना विस्तीर्यमाणरजोवन्नीरंध्रं संपतद्भिः अर्धनाराचैरर्धे भागे नाराच तुल्यैः अंजलिकैरंजल्याकारमुखैः वत्सदंतादयस्तत्तदाकाराः ॥ २३ ॥ आविध्य त्यक्त्वा भिन्नो मुष्टिपरीणाहो मुष्टिप्रदेशो मुष्टिग्रहणं वा यस्य । त्रिषु स्थानेषु निम्नम् ॥२४॥ बाणपातांतरे शरतल्पमध्ये॥२५॥

॥ २६ ॥ २७ ॥ २८ ॥ दीर्घमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये पंचचत्वारिंशः सर्गः ॥ ४५ ॥ कतकरी० ॥ ४२ ॥ द्यां पृथिवीं च वीक्ष माणा
अतिभयादिति शेषः। संततौ व्याप्तौ ॥ १ ॥ देवे इंद्रे वृष्ट्वेव कृतकर्मणि तस्मिन् राक्षस उपरते सति ॥ २ ॥ ३ ॥ ४ ॥ रुधिरस्य स्रावः प्रवाहस्तेन दिग्धांगौ ॥ ५ ॥ ६ ॥ ७ ॥ मायया च्छन्नमेनं

रामंकमलपत्राक्षंशरण्यंरणतोषिणम् ॥ शुशोचभ्रातरंदृष्ट्वापतितंधरणीतले ॥ २६ ॥ हरयश्चापितंदृष्ट्वासंतापंपरमंगताः ॥ शोकार्ताश्चुक्रुशुर्घोरमश्रुपूरितलोचनाः ॥ २७ ॥ बद्धौतुतौवीरशयेशयानौतेवानराःसंपरिवार्यतस्थुः ॥ समागतावायुसुतप्रमुख्याविषादमार्ताःपरमंचजग्मुः ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे पंचचत्वारिंशः सर्गः ॥ ४५ ॥ ततोद्यांपृथिवींचैववीक्षमाणावनौकसः ॥ ददृशुःसंततैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १ ॥ वृष्ट्वेवोपरतेदेवेकृतकर्मणिराक्षसे ॥ आजगामाथतंदेशंससुग्रीवोविभीषणः ॥ २ ॥ नीलश्चद्विविदोमैंदःसुषेणःकुमुदोंगदः ॥ तूर्णंहनुमतासार्धमन्वशोचंतराघवौ ॥ ३ ॥ अचेष्टौमंदनिःश्वासौशोणितेनपरिप्लुतौ ॥ शरजालचितौस्तब्धौशयानौशरतल्पगौ ॥ ४ ॥ निःश्वसंतौ यथासर्पौनिश्चेष्टौदीनविक्रमौ ॥ रुधिरस्रावदिग्धांगौतपनीयाविवध्वजौ ॥५॥ तौवीरशयनेवीरौशयानौमंदचेष्टितौ ॥ यूथपैःस्वैःपरिवृतौबाष्पव्याकुललोचनैः ॥ ६ ॥ राघवौपतितौदृष्ट्वाशरजालसमन्वितौ ॥ बभूवुर्व्यथिताःसर्वेवानराःसविभीषणाः ॥ ७ ॥ अंतरिक्षंनिरीक्षंतोदिशःसर्वाश्चवानराः ॥ नचैनंमाययाछन्नंददृशूरावणिंरणे ॥ ८ ॥ तंतुमायाप्रतिच्छन्नंमाययैवविभीषणः ॥ वीक्षमाणोददर्शाग्रेभ्रातुःपुत्रमवस्थितम् ॥ तमप्रतिमकर्माणमप्रतिद्वंद्वमाहवे ॥ ९ ॥ददर्शांतर्हितंवीरंवरदानाद्विभीषणः ॥ तेजसायशसाचैवविक्रमेणचसंयुतः ॥ १० ॥ इंद्रजित्त्वात्मनःकर्मतौशयानौसमीक्ष्यच ॥ उवाचपरमप्रीतोहर्षयन्सर्वराक्षसान् ॥ ११ ॥ दूषणस्यचहंतारौखरस्यचमहाबलौ ॥ सादितौमामकैर्बाणैर्भ्रातरौरामलक्ष्मणौ ॥ १२ ॥ नेमौमोक्षयितुंशक्यावेतस्मादिषुबंधनात् ॥ सर्वैरपिसमागम्यसर्षिसंघैःसुरासुरैः ॥ १३ ॥ यत्कृतेचिंतयानस्यशोकार्तस्यपितुर्मम ॥ अस्पृष्ट्वाशयनं गात्रैस्त्रियामायातिशर्वरी ॥ १४ ॥ कृत्स्नेयंयत्कृतेलंकानदीवर्षास्विवाकुला ॥ सोयंमूलहरोनर्थःसर्वेषांशमितोमया ॥ १५ ॥ रामस्यलक्ष्मणस्यैवसर्वेषांचवनौकसाम् ॥ विक्रमानिष्फलाःसर्वेयथाशरदितोयदाः ॥ १६ ॥

रावणिं वानरा न ददृशुः ॥ ८ ॥ किंतु मायाप्रतिच्छन्नं तं भ्रातुः पुत्रं रावणिं विभीषण एव मायया ददर्श ॥ ९ ॥ वरदानाद्ब्रह्मवरदानलब्धयांतर्धानविद्ययांतर्हितम् ॥ १० ॥ आत्मनः कर्म समीक्ष्य शयानौ तौ च समीक्ष्य ॥ ११ ॥ १२ ॥ १३ ॥ यत्कृते ययो राघवयोर्निमित्तम् तद्वधेनेति यावत् । गात्रैः शयनमस्पृष्ट्वैव त्रियामा रात्रिर्याति अनिद्र एव निशाः क्षपयतीत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥

यूथपान्वानराणामिति शेषः । ताडयदताडयत् ॥१७॥१८॥ हनूमत उपरीति शेषः ॥१९॥२०॥ त्वरमाणः त्वरां वेगं कुर्वन् ॥२१॥२२॥२३॥ निशामयत पश्यत ॥२४॥२५॥२६॥२७॥२८॥ तयोः शरीरे सायकैश्चिते सर्वाण्यंगान्युपांगानि च सायकैश्चितानि दृष्ट्वा ॥२९॥ सबाष्पवदनं बाष्पसहितवदनम् ॥३०॥ एवंप्रायाणि एवंविधः प्रायो बाहुल्यं येषां तानि प्रायेणैवंविधानीत्यर्थः । नैष्ठिको नित्यैकांतः भाग्यशेषेण सहिताः सभाग्यशेषास्तेषां भावस्तत्ता भाग्यशेषसाहित्यं तद्वैशिष्ट्यं यद्यस्माकमित्यर्थः ॥ ३१ ॥ अनाथमशरणं मां च पर्यवस्थापय आश्वासय । तव तु स्वतंत्रं राज्यमप्यस्ति अहं त्वगतिरेवेति भावः ॥ ३२ ॥

एवमुक्त्वातुतान्सर्वान्राक्षसान्परिपश्यतः ॥ यूथपानपितान्सर्वांस्ताडयत्सचरावणिः ॥ १७ ॥ नीलंनवभिराहत्यमैंदंसद्विविदंतथा ॥ त्रिभिस्त्रिभिरमित्रघ्नस्ततापपरमेषुभिः ॥ १८ ॥ जांबवंतंमहेष्वासोविद्धाबाणेनवक्षसि ॥ हनूमतोवेगवतोविससर्जशरान्दश ॥ १९ ॥ गवाक्षंशरभंचैवतावप्यमितविक्रमौ ॥ द्वाभ्यांद्वाभ्यांमहावेगोविव्याधयुधिरावणिः ॥ २० ॥ गोलांगूलेश्वरंचैववालिपुत्रमथांगदम् ॥ विव्याधबहुभिर्बाणैस्त्वरमाणोथरावणिः ॥ २१ ॥ तान्वानरवरान्भित्त्वाशरैरग्निशिखोपमैः ॥ ननादबलवांस्तत्रमहासत्त्वःसरावणिः ॥ २२ ॥ तानर्दयित्वाबाणौघैस्त्रासयित्वाचवानरान् ॥ प्रजहासमहाबाहुर्वचनंचेदमब्रवीत् ॥ २३ ॥ शरबंधेनघोरेणमयाबद्धौचमूमुखे ॥ सहितौभ्रातरावेतौनिशामयतराक्षसाः ॥ २४ ॥ एवमुक्तास्तुतेसर्वेराक्षसाःकूटयोधिनः ॥ परंविस्मयमापन्नाःकर्मणातेनहर्षिताः ॥ २५ ॥ विनेदुश्चमहानादान्सर्वेतेजलदोपमाः ॥ हतोरामइतिज्ञात्वारावणिंसमपूजयन् ॥ २६ ॥ निष्पंदौतुतदादृष्ट्वाभ्रातरौरामलक्ष्मणौ ॥ वसुधायांनिरुच्छ्वासौहतावित्यन्वमन्यत ॥ २७ ॥ हर्षेणतुसमाविष्टइंद्रजित्समितिंजयः ॥ प्रविवेशपुरींलंकांहर्षयन्सर्वनैर्ऋतान् ॥ २८ ॥ रामलक्ष्मणयोर्दृष्ट्वाशरीरेसायकैश्चिते ॥ सर्वाणिचांगोपांगानिसुग्रीवंभयमाविशत् ॥ २९ ॥ तमुवाचपरित्रस्तंवानरेंद्रंविभीषणः ॥ सबाष्पवदनंदीनंक्रोधव्याकुललोचनम् ॥ अलंत्रासेनसुग्रीवबाष्पवेगोनिगृह्यताम् ॥ ३० ॥ एवंप्रायाणियुद्धानिविजयोनास्तिनैष्ठिकः ॥ सभाग्यशेषतास्माकंयदिवीरभविष्यति ॥ ३१ ॥ मोहमेतौप्रहास्येतेमहात्मानौमहाबलौ ॥ पर्यवस्थापयात्मानमनाथंमांचवानर ॥ सत्यधर्माभिरक्तानांनास्तिमृत्युकृतंभयम् ॥ ३२ ॥ एवमुक्त्वाततस्तस्यजलक्लिन्नेनपाणिना ॥ सुग्रीवस्यशुभेनेत्रेप्रममार्जविभीषणः ॥ ३३ ॥ ततःसलिलमादायविद्ययापरिजप्यच ॥ सुग्रीवनेत्रेधर्मात्माप्रममार्जविभीषणः ॥ ३४ ॥ विमृज्यवदनंतस्यकपिराजस्यधीमतः ॥ अब्रवीत्कालसंप्राप्तमसंभ्रांतमिदंवचः ॥ ३५ ॥ नकालःकपिराजेंद्रवैक्लव्यमवलंबितुम् ॥ अतिस्नेहोपिकालेऽस्मिन्मरणायोपकल्पते ॥ ३६ ॥

॥ ३३ ॥ ततः सामान्यतः प्रमार्जनानंतरम् । विद्यया तिरस्करणीविद्या तिरस्कारकविद्यया परिजप्य परिवीक्ष्येतिपाठेप्ययमेवार्थः । राक्षसमायापरिज्ञानेन धैर्यसंपादनं चैतत्प्रमार्जनस्य फलम् । वस्तुतस्ततः सलिलमिति श्लोको बहुपुस्तकेषु नास्तीति प्रायेण प्रक्षिप्तोयम् । तेनेंद्रजितं ददर्शेति तत्कार्यप्रकाशकोत्तरवाक्याभावात् ॥ ३४ ॥ कालसंप्राप्तं कालौचित्येन प्राप्तम् ॥ ३५ ॥ अतिस्नेहोपि अतिस्नेहमूलरोदनादिव्यापा

देवासुरे तद्युद्धे ॥ ४१ ॥ ४२ ॥ वृक्षा मृदूनां युद्धसाधनानि पर्वताग्रादीनि क्रूरक्रूरतराणामिति विवेकः ॥ ४३ ॥ राजन् रावण जय जयेति रक्षसामुक्तिः स्वस्वनामरूपां कथां शब्दं चोक्त्वा वानरान् व्यदारयन्निति संबंधः ॥४४॥ अत्र राक्षसास्त्वपरे इत्यर्धं प्रक्षिप्तमिति कतकः ॥ ४५ ॥ ४६ ॥ ४७ ॥ एतद्युद्धोत्तरं मत्यवहारः सेनाया इति भारताल्लभ्यते । ततः मत्यवहारोभूत्सैन्यानां रावणाज्ञया ॥ ततो निविशमानांस्तान्सैनिकान् रावणानुगाः ॥ अभिजग्मुर्गणा एके पिशाचक्षुद्ररक्षसाम् ॥ ततोभिपततां तेषामदृश्यानां दुरात्मनाम् ॥ अंतर्धानवधं तज्ज्ञश्चकार स विभीषण इति तत्रोक्तम् ॥ उत्सेवमानः ॥

एतस्मिन्नंतरेघोरःसंग्रामःसमपद्यत ॥ रक्षसांवानराणांचयथादेवासुरेपुरा ॥ ४१ ॥ तेगदाभिःप्रदीप्ताभिःशक्तिशूलपरश्वधैः ॥ निजघ्नुर्वानरान्सर्वान्कथयंतःस्वविक्रमान् ॥ ४२ ॥ तथावृक्षैर्महाकायाःपर्वताग्रैश्चवानराः ॥ निजघ्नुस्तानिरक्षांसिनखैर्दन्तैश्चवेगिनः ॥ ४३ ॥ राजाजयतिसुग्रीवइतिशब्दोमहानभूत् ॥ राजन्जयजयेत्युक्त्वास्वस्वनामकथांततः ॥ ४४ ॥ राक्षसास्त्वपरेभीमाःप्राकारस्थामहींगतान् ॥ वानरान्भिदिपालैश्चशूलैश्चैवव्यदारयन् ॥ ४५ ॥ वानराश्चापिसंक्रुद्धाःप्राकारस्थान्महींगताः ॥ राक्षसान्पातयामासुःखमाप्लुत्यस्वबाहुभिः ॥ ४६ ॥ ससंप्रहारस्तुमुलोमांसशोणितकर्दमः ॥ रक्षसांवानराणांचसंबभूवाद्भुतोपमः ॥ ४७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

युध्यतांतुततस्तेषांवानराणांमहात्मनाम् ॥ रक्षसांसंबभूवाथबलरोषःसुदारुणः ॥१॥ तेहयैःकांचनापीडैर्गजैश्चाग्निशिखोपमैः ॥ रथैश्चादित्यसंकाशैःकवचैश्चमनोरमैः ॥ २ ॥ निर्ययूराक्षसावीरानादयंतोदिशोदश ॥ राक्षसाभीमकर्माणोरावणस्यजयैषिणः ॥ ३ ॥ वानराणामपिचमूर्बृहतीजयमिच्छताम् ॥ अभ्यधावततांसेनांरक्षसांघोरकर्मणाम् ॥ ४ ॥ एतस्मिन्नंतरेतेषामन्योन्यमभिधावताम् ॥ रक्षसांवानराणांचद्वंद्वयुद्धमवर्तत ॥ ५ ॥ अंगदेनेंद्रजित्सार्धंवालिपुत्रेणराक्षसः ॥ अयुध्यतमहातेजास्त्र्यंबकेणयथांधकः ॥ ६ ॥ प्रजंघेनचसंपातिर्नित्यंदुर्धर्षणोरणे ॥ जंबुमालिनमारब्धोहनुमानपिवानरः ॥ ७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्विचत्वारिंशः सर्गः ॥ ४२ ॥ ॥ कतकरी० ॥ ३९ ॥ बलरोषः परस्परबलदर्शनजो रोषः । एतावद्दिनयुद्धेपि बहव एव निर्वृतीत्येवं रोष इति भावः ॥ १ ॥ कांचनापीडैः कांचनभूषणवद्भिः अग्निशिखोपमैस्तद्वद्दुर्धर्षैः ॥ २ ॥ निर्ययुरिति । अनेनवाल्मीकिनापि मत्यवहारो ध्वनितः ॥ ३ ॥ ४ ॥ अन्योन्यमभिधावताम् द्वंद्वयुद्धार्थमिति भावः ॥ ५ ॥ नन्विन्द्र द्वंद्वयुद्धान्याह अंगदेनेति ॥ ६ ॥ प्रजंघेन तदाख्यरक्षसा । संपातिस्तु त्रिभिर्बाणैः प्रजंघेन समाहत इतिलिंगात् । दुर्धर्षणः दुःसहः आरब्धो युद्धमारब्धवान् ॥ ७ ॥

शत्रुघ्नेन तदाख्यरक्षसामित्रघ्नेनेति कचित्पाठः ॥८॥९॥ १० ॥ ११ ॥ राक्षसाभ्यां वज्रमुष्ट्यशनिप्रभाभ्याम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ केशैः शाद्वलवत्यः केशशाद्वलाः शरीराण्येव संघाटाः काष्ठसंचयास्तद्वहाः प्रसुस्रुः प्रसुस्रुवुरित्यर्थः ॥ १७ ॥ अनुक्रांतानां क्रमेण युद्धकथनमाजघानेति । शत्रुसैन्यविदारणमित्यंगदविशेषणम् ॥ १८ ॥ तस्येंद्रजितः तस्य रथं तस्यैव गदया स्वापहतया जघान ॥ १९ ॥ अश्वकर्णो वृक्षविशेषः । तेन प्रजंघमाजघान संपातिरित्यनुकर्षः ॥ २० ॥ रथस्था शक्तिः रथशक्तिः ॥ २१ ॥ तेन रक्षसा सह तस्य रथं प्रममाथ

संगतस्तुमहाक्रोधोघोराक्षसोरावणानुजः ॥ समरेतीक्ष्णवेगेनशत्रुघ्नेनविभीषणः ॥ ८ ॥ तपननगजःसार्धंराक्षसेनमहाबलः ॥ निकुंभेनमहातेजानीलोपिसमयुध्यत ॥९॥ वानरेंद्रस्तुसुग्रीवःप्रघसेनसुसंगतः ॥ संगतःसमरेश्रीमान्विरूपाक्षेणलक्ष्मणः ॥१०॥ अग्निकेतुःसुदुर्धर्षोरश्मिकेतुश्चराक्षसः॥ मित्रघ्नोयज्ञकोपश्चरामेणसहसंगताः ॥ ११ ॥ वज्रमुष्टिश्चमैंदेनाद्विविदेनाशनिप्रभः ॥ राक्षसाभ्यांसुघोराभ्यांकपिमुख्यौसमागतौ ॥ १२ ॥ वीरःप्रतपनोघोरोराक्षसोरणदुर्धरः ॥ समरेतीक्ष्णवेगेननलेनसमयुध्यत ॥ १३ ॥ धर्मस्यपुत्रोबलवान्सुषेणइतिविश्रुतः ॥ सविद्युन्मालिनासार्धमयुध्यतमहाकपिः ॥ १४ ॥ वानराश्चापरेघोराराक्षसैरपरैः सह ॥ द्वंद्वंसमीयुःसहसायुद्धायचबहुभिःसह ॥ १५ ॥ तत्रासीत्सुमहद्युद्धंतुमुलंरोमहर्षणम् ॥ रक्षसांवानराणांचवीराणांजयमिच्छताम् ॥ १६ ॥ हरिराक्षसदेहेभ्यःप्रसृताःकेशशाद्वलाः ॥ शरीरसंघाटवहाःप्रसुस्रुःशोणितापगाः ॥ १७ ॥ आजघानेंद्रजित्क्रुद्धोवज्रेणेवशतक्रतुः ॥ अंगदंगदयावीरंशत्रुसैन्यविदारणम् ॥ १८ ॥ तस्यकांचनचित्रांगंरथंसाश्वंससारथिम् ॥ जघानगदयाश्रीमानंगदोवेगवान्हरिः ॥ १९ ॥ संपातिस्तुप्रजंघेनत्रिभिर्बाणैःसमाहतः ॥ निजघानाश्वकर्णेनप्रजंघंरणमूर्धनि ॥ २० ॥ जंबुमालीरथस्थस्तुरथशक्त्यामहाबलः ॥ बिभेदसमरेक्रुद्धोहनुमंतंस्तनांतरे ॥ २१ ॥ तस्यतंरथमास्थायहनूमान्मारुतात्मजः ॥ प्रममाथतलेनाशुसहतेनैवरक्षसा ॥ २२ ॥ नदन्प्रतपनोघोरोनलंसोभ्यनुधावत ॥ नलःप्रतपनस्याशुपातयामासचक्षुषी ॥ २३ ॥ भिन्नगात्रःशरैस्तीक्ष्णैःक्षिप्रहस्तेनरक्षसा ॥ ग्रसंतमिवसैन्यानिप्रघसंवानराधिपः ॥ २४ ॥ सुग्रीवःसप्तपर्णेननिजघानजवेनच ॥ प्रपीड्यशरवर्षेणराक्षसंभीमदर्शनम् ॥२५॥ निजघानविरूपाक्षंशरेणैकेनलक्ष्मणः ॥ अग्निकेतुश्चदुर्धर्षोरश्मिकेतुश्चराक्षसः ॥ मित्रघ्नोयज्ञकोपश्चराममादीपयच्छरैः ॥ २६ ॥ तेषांचतुर्णांरामस्तुशिरांसिसमरेशरैः ॥ क्रुद्धश्चतुर्भिश्चिच्छेदघोरैरग्निशिखोपमैः ॥ २७ ॥ वज्रमुष्टिस्तुमैंदेनमुष्टिनानिहतोरणे ॥ पपातसरथःसाश्वःसुराट्टइवभूतले ॥ २८ ॥ निकुंभस्तुरणेनीलंनीलांजनचयप्रभम् ॥ निर्बिभेदशरैस्तीक्ष्णैःकरैर्मेघमिवांशुमान् ॥ २९ ॥ पुनःशरशतेनाथक्षिप्रहस्तोनिशाचरः ॥ बिभेदसमरेनीलंनिकुंभःप्रजहासच ॥ ३० ॥ तस्यैवरथचक्रेणनीलोविष्णुरिवाहवे ॥ शिरश्चिच्छेदसमरेनिकुंभस्यचसारथेः ॥ ३१ ॥



तेन जंबुमाली मृत इति गम्यते ॥ २२ ॥ २३ ॥ तीक्ष्णैः शरैर्भिन्नगात्रो नलः प्रतपनस्य चक्षुषी पातयामास नखैराकृष्येति शेषः । ग्रसंतमित्यादिना प्रघससुग्रीवयोः ॥ २४ ॥ सप्तपर्णो वृक्षविशेषः ॥ २५ ॥ २६ ॥ चतुर्भिश्चिच्छेद नाधिकैरित्यर्थः ॥ २७ ॥ अट्टः क्षौममिति कतकः । विमानमित्यन्ये ॥ २८ ॥ २९ ॥ ३० ॥ रथस्य चक्रं रथचक्रम् । निकुंभस्य च निकुंभस्य

तत्सारथेश्च शिरश्चिच्छेद ॥ ३१ ॥ वज्राशनिसमस्पर्शः तथाक्रूरमुष्टिप्रहार इत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ अपक्रम्यावरुह्य ॥ ३७ ॥ ३८ ॥ ३९ ॥ अचिंत्याचिंतयित्वा तां पूर्वं गृहीतां शिलाम् ॥ ४० ॥ ४१ ॥ दिवौकसैर्देवैः आर्षः प्रयोगः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ अस्तमयाभिकांक्षिणः रात्रौ रक्षसां बलाधिक्यात् ॥ ४७ ॥ उत्सँवर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिचत्वारिंशः सर्गः ॥४३॥ कतकरी० ॥ ४० ॥ युध्यतामिति ॥१॥ निशायुद्धं प्रवृत्तम् । परस्परं बहुसेनादर्शनजदोषादिति भावः । पौषपौर्णमास्यां

वज्राशनिसमस्पर्शोद्विविदश्वसमप्रभम् ॥ जघानगिरिशृंगेणमिषतांसर्वरक्षसाम् ॥ ३२ ॥ द्विविदंवानरेंद्रंतुद्रुमयोधिनमाहवे ॥ शरैरशनिसंकाशैः सविव्याधाशनिप्रभः ॥ ३३ ॥ सशरैरभिविद्धांगोद्विविदःक्रोधमूर्छितः ॥ सालेनसरथंसाश्वंनिजघानाशनिप्रभम् ॥ ३४ ॥ विद्युन्मालीरथस्थस्तुशरैः कांचनभूषणैः ॥ सुषेणंताडयामासननादचमुहुर्मुहुः ॥ ३५ ॥ तंरथस्थमथोदृष्ट्वासुषेणोवानरोत्तमः ॥ गिरिशृंगेणमहतारथमाशुन्यपातयत् ॥ ॥ ३६ ॥ लाघवेनतुसंयुक्तोविद्युन्मालीनिशाचरः ॥ अपक्रम्यरथात्तूर्णंगदापाणिःक्षितौस्थितः ॥ ३७ ॥ ततःक्रोधसमाविष्टःसुषेणोहरिपुंगवः ॥ शिलांसुमहतींगृह्यनिशाचरमभिद्रवत् ॥ ३८ ॥ तमापतंतंगदयाविद्युन्मालीनिशाचरः ॥ वक्षस्यभिजघानाशुसुषेणंहरिपुंगवम् ॥ ३९ ॥ गदाप्रहारंतं घोरमचिंत्यप्लवगोत्तमः ॥ तांतूष्णींपातयामासतस्योरसिमहामृधे ॥ ४० ॥ शिलाप्रहाराभिहतोविद्युन्मालीनिशाचरः ॥ निष्पिष्टहृदयोभूमौ गतासुर्निपपातह ॥ ४१ ॥ एवंतैर्वानरैःशूरैःशूरास्तेरजनीचराः ॥ द्वंद्वेविमथितास्तत्रदैत्याइवदिवौकसः ॥ ४२ ॥ भल्लैश्चान्यैर्गदाभिश्चशक्तितो मरसायकैः ॥ अपविद्धैश्चापिरथैस्तथासांग्रामिकैर्हयैः ॥४३ ॥ निहतैःकुंजरैर्मत्तैस्तथावानरराक्षसैः ॥ चक्राक्षयुगदंडैश्चभग्नैर्धरणिसंश्रितैः ॥ ४४ ॥ बभूवायोधनंघोरंगोमायुगणसेवितम् ॥ कबंधानिसमुत्पेतुर्दिक्षुवानररक्षसाम् ॥ ४५ ॥ विमर्देतुमुलेतस्मिन्देवासुररणोपमे ॥ ४६ ॥ निहन्यमानाह रिपुंगवैस्तदानिशाचराःशोणितगंधमूर्च्छिताः ॥ पुनःसुयुद्धंतरसासमाश्रितादिवाकरस्यास्तमयाभिकांक्षिणः ॥ ४७ ॥ इत्यार्षेश्रीम०वाल्मी० आदि०युद्ध०त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ युध्यतामेवतेषांतुतदावानररक्षसाम् ॥ रविरस्तंगतोरात्रिःप्रवृत्ताप्राणहारिणी ॥ १ ॥ अन्योन्यंबद्धवै राणांघोराणांजयमिच्छताम् ॥ संप्रवृत्तंनिशायुद्धंतदावानररक्षसाम् ॥ २ ॥ राक्षसोसीतिहरयोवानरोसीतिराक्षसाः ॥ अन्योन्यंसमरेजघ्नुस्तस्मिंस्तम सिदारुणे ॥ ३ ॥

सुवेलारोहणस्य स्पष्टप्रतीतेः तेनाविभागादिना पौषकृष्णेतीते माघशुक्लप्रतिपदि युद्धारंभे बहुदिनपर्यंतं संकुलं युद्धं सामन्येनोक्तं तदुत्तरदिने चेदं निशायुद्धं प्रवृत्तम् । ततो जज्ञे महायुद्धं संकुलं कपि रक्षसाम् । मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूदिति पाद्मोक्तेः । अत्र प्रकरणे तमसि दुष्पारे तमसि दारुणे इति वारंवारं वाल्मीक्युक्तेरिदं रात्रियुद्धं कृष्णपक्षांत्यदिनेप्विति प्रतीयते । अत्र तत्त्वम् वक्ष्यामः ॥२॥ ३॥

... ॥ ३९ ॥ ३९ ॥ प्राकारं निपात्यापानावधा इति । सेनाप्रवेशाय बहिः प्राकारं भक्त्वा स्थिताः एतस्मिन्नंतरे बहिःप्राकारं भंक्त्वा

हत इदं हंतेर्लोटि मध्यमपुरुषबहुवचनम् । हननं कुरुतेत्यर्थः । दारय विदारणं कुरु । एहि आगच्छ । कथं विद्रवसि कथं पलायसे । एवं तुमुलः शब्दस्तस्मिन्सैन्ये शुश्रुवे ॥ ४ ॥ कालाः कृष्णवर्णाः कांचनसन्नाहाः सुवर्णकवचाः ॥५॥६॥७॥ अक्षोभयन्निति पदम् । पताकाध्वजिनः पताकोपेतध्वजवंतः ॥८॥९॥ प्रवराणि श्रेष्ठानि ॥१०॥ रथनेमिसमुद्धतं रजो युध्यतां कर्णनेत्राणि रुरोध ॥११॥१२॥ स्तनमानानां स्तनताम् शस्तानां हिंसितानाम् ॥१३॥ कामरूपिभिरुपलक्षिता मेदिनी शस्त्राण्येव पुष्पापहारो यस्यां तादृशीव आसीद् ॥ १४ ॥ शोणितानामास्रावैः कर्दमो यस्यां सा ॥१५॥ कालरात्री संहार

हतदारयचैहीतिकथंविद्रवसीतिच ॥ एवंसुतुमुलःशब्दस्तस्मिन्सैन्येतुशुश्रुवे ॥ ४ ॥ कालाःकांचनसन्नाहास्तस्मिंस्तमसिराक्षसाः ॥ संप्रदृश्यंतशैलेंद्रादीप्तौषधिवनाइव ॥ ५ ॥ तस्मिंस्तमसिदुष्पारेराक्षसाःक्रोधमूर्च्छिताः ॥ परिपेतुर्महावेगाभक्षयंतः प्लवंगमान् ॥ ६ ॥ तेहयान्कांचनापीडान्ध्वजांश्चाशीविषोपमान् ॥ आप्लुत्यदशनैस्तीक्ष्णैर्भीमकोपाव्यदारयन् ॥ ७ ॥ वानरावलिनोयुद्धेऽक्षोभयन्राक्षसींचमूम् ॥ कुंजरान्कुंजरारोहान्पताकाध्वजिनोरथान् ॥ ८ ॥ चकर्षुश्चददंशुश्चदशनैःक्रोधमूर्च्छिताः ॥ लक्ष्मणश्चापिरामश्चशरैराशीविषोपमैः ॥ ९ ॥ दृश्यादृश्यानिरक्षांसिप्रवराणिनिजघ्नतुः ॥ तुरंगखुरविध्वस्तंरथनेमिसमुत्थितम् ॥ १० ॥ रुरोधकर्णनेत्राणियुध्यतांधरणीरजः ॥ वर्तमानेतथाघोरेसंग्रामेलोमहर्षणे ॥ रुधिरौघामहाघोरानद्यस्तत्रविसुस्रुवुः ॥ ११ ॥ ततोभेरीमृदंगानांपणवानांचनिःस्वनः ॥ शंखनेमिस्वनोन्मिश्रःसंबभूवाद्भुतोपमः ॥ १२॥ हयानांस्तनमानानांराक्षसानांचनिःस्वनः ॥ शस्तानांवानराणांचसंबभूवात्रदारुणः ॥ १३ ॥ हतैर्वानरमुख्यैश्चशक्तिशूलपरश्वधैः ॥ निहतैःपर्वताकारैराक्षसैःकामरूपिभिः ॥ १४ ॥ शस्त्रपुष्पोपहाराचतत्रासीद्युद्धमेदिनी ॥ दुर्ज्ञेयादुर्निवेशाचशोणितास्रावकर्दमा ॥ १५ ॥ सावभूवनिशाघोराहरिराक्षसहारिणी ॥ कालरात्रीवभूतानांसर्वेषांदुरतिक्रमा ॥ १६ ॥ ततस्तेराक्षसास्तत्रतस्मिंस्तमसिदारुणे ॥ राममेवाभ्यवर्तंतसंहृष्टाःशरवृष्टिभिः ॥१७॥ तेषामापततांशब्दःक्रुद्धानामपिगर्जताम् ॥ उद्वर्तइवसत्त्वानांसमुद्राणामभूत्स्वनः ॥ १८ ॥ तेषांरामःशरैःषड्भिःषड्जघाननिशाचरान् ॥ निमेषांतरमात्रेणशरैरग्निशिखोपमैः ॥ १९ ॥ यज्ञशत्रुश्चदुर्धर्षोमहापार्श्वमहोदरौ ॥ वज्रदंष्ट्रोमहाकायस्तौचोभौशुकसारणौ ॥ २० ॥ तेतुरामेणबाणौघैःसर्वमर्मसुताडिताः ॥ युद्धादपसृतास्तत्रसावशेषायुषोभवन् ॥ २१ ॥



रात्रिः ॥ १६ ॥ १७ ॥ उद्वर्तं प्रलयकाले ॥ १८ ॥ षड्भिः षडिति प्रधानानिति शेषः ॥ १९ ॥ ते षड्गण्यंते यज्ञशत्रुरिति । दुर्धर्ष इति यज्ञशत्रोर्विशेषणम् । महाकाय इति वज्रदंष्ट्रस्य । इमौ शुकसारणौ चारत्वेन प्रेषिताभ्यामन्यावेवेति बहवः । ताविति पदस्वारस्याच्चारत्वेन प्रेषितावेवेमौ राज्ञा धिक्कृतावपि राजसन्निधिं परित्यज्य युद्धे मृतावित्यन्ये ॥ २० ॥ यतः सावशेषायुषोऽतो युद्धादपसृता अभवन् ॥२१॥

॥ ३ ॥ कपिलीकृतां कपिलवर्णवत्सदृशीकृताम् ॥ ४ ॥ ५ ॥ मुदितः पुप्लुवे नामशब्दो वाक्यालंकारे प्राकारसमीपामिति शेषः । रामाधिरूढवानरप्लवनं रामे उपचर्यते ॥ ६ ॥ मनसा जगाम सस्मार ॥७॥ मत्कृते मन्निमित्तं शोकसंतप्तापि पीड्यते मदर्थं रामस्यैवं महाक्लेशो जायत इति खिन्ना भवतीत्यर्थः ॥ ८ ॥ निपीड्यमानां उक्तरीत्येति शेषः । आज्ञापयत् आज्ञप्तवान् ॥ ९ ॥ संघर्षमाणाः अग्रे भवितुं परस्परं स्पर्धमानाः ॥ १० ॥ विकिराम विदारयाम ॥ ११ ॥ गिरिशृंगाणि सूक्ष्माणि । शृंगं स्यात्पर्वतस्याग्रे शिखरे खंडशैलके इति निघंटुः ॥ १२ ॥ प्रेक्षतः प्रेक्षंतमनादृत्येत्यर्थः । राघवस्य प्रियो यः कामो

सददर्शावृतांलंकांसशैलवनकाननाम् ॥ असंख्येयैर्हरिगणैःसर्वतोयुद्धकांक्षिभिः ॥ ३॥ सदृष्ट्वावानरैःसर्वैर्वसुधांकपिलीकृताम् ॥ कथंक्षपयितव्याः स्युरितिचिंतापरोभवत् ॥ ४ ॥ सचिंतयित्वासुचिरंधैर्यमालंव्यरावणः ॥ राघवंहरियूथांश्चददर्शायतलोचनः ॥ ५ ॥ राघवःसहसैन्येनमुदितो नामपुप्लुवे ॥ लंकांददर्शगुप्तांवैसर्वतोराक्षसैर्वृताम् ॥ ६ ॥ दृष्ट्वादाशरथिर्लंकांचित्रध्वजपताकिनीम् ॥ जगाममनसासीतांदूयमानेनचेतसा ॥ ७ ॥ अत्रसामृगशावाक्षीमत्कृतेजनकात्मजा ॥ पीड्यतेशोकसंतप्ताकृशास्थंडिलशायिनी ॥ ८ ॥ निपीड्यमानांधर्मात्मावैदेहीमनुचिंतयन् ॥ क्षिप्रमाज्ञापयद्रामोवानरान्द्विषतांवधे ॥ ९ ॥ एवमुक्तेतुवचसिरामेणाक्लिष्टकर्मणा ॥ संघर्षमाणाःप्लवगाःसिंहनादैरपूरयन् ॥ १० ॥ शिखरैर्विकिरामैतांलंकांमुष्टिभिरेववा ॥ इतिस्मदधिरेसर्वेमनांसिहरियूथपाः ॥ ११ ॥ उद्यम्यगिरिशृंगाणिमहांतिशिखराणिच ॥ तरूंश्चोत्पाट्यविविधांस्तिष्ठंतिहरियूथपाः ॥१२॥प्रेक्षतोराक्षसेंद्रस्यतान्यनीकानिभागशः ॥ राघवप्रियकामार्थंलंकामारुरुहुस्तदा ॥ १३ ॥ तेताम्रवक्त्राहेमाभारामार्थेत्यक्तजीविताः॥ लंकामेवाभ्यवर्तंतसालभूधरयोधिनः ॥ १४ ॥ तेद्रुमैःपर्वताग्रैश्चमुष्टिभिश्चप्लवंगमाः ॥ प्राकाराग्राण्यसंख्यानिममंथुस्तोरणानिच ॥ १५ ॥ परिखान्पूरयंतश्चप्रसन्नसलिलाशयान् ॥ पांसुभिःपर्वताग्रैश्चतृणैःकाष्ठैश्चवानराः ॥ १६ ॥ ततःसहस्रयूथाश्चकोटियूथाश्चयूथपाः ॥ कोटियूथशताश्चान्येलंकामारुरुहुस्तदा ॥१७॥ कांचनानिप्रमर्दंतस्तोरणानिप्लवंगमाः ॥ कैलासशिखराग्राणिगोपुराणिप्रमथ्यच॥ १८ ॥ आप्लवंतःप्लवंतश्चगर्जंतश्चप्लवंगमाः ॥ लंकांतामभिधावंतिमहावारणसन्निभाः ॥ १९ ॥ जयत्युरुबलोरामोलक्ष्मणश्चमहाबलः ॥ राजाजयतिसुग्रीवोराघवेणाभिपालितः ॥२०॥ इत्येवंघोषयंतश्चगर्जंतश्चप्लवंगमाः ॥ अभ्यधावंतलंकायाःप्राकारंकामरूपिणः ॥२१॥ वीरबाहुःसुबाहुश्चनलश्चपनसस्तथा ॥ निपीड्योपनिविष्टास्तेप्राकारंहरियूथपाः ॥ एतस्मिन्नंतरेचक्रुःस्कंधावारनिवेशनम्॥ २२ ॥

मनोरथस्तत्सिद्ध्यर्थम् आरुरुहुर्लंकां लंकाप्राकारमित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ परिखानिति पुंस्त्वमार्षम् ॥ १६ ॥ १७ ॥ कांचनानि तन्मयानि कैलासशिखराग्राणि तद्वदुच्चावचानि गोपुराणि ॥१८॥ आप्लवंतः समंतात्प्लवंतः प्लवंतः प्राकाराभिमुखं प्लवंतः ॥ १९ ॥ २० ॥ २१ ॥ प्राकारं निपीड्योपनिविष्टा इति । सेनाप्रवेशार्थं बहिः प्राकारं भंक्त्वा स्थिताः एतस्मिन्नंतरे बहिःप्राकारं भंक्त्वा

सेनाप्रवेशसमये स्कंधावारस्य सेनानिवशस्य निवेशनं व्यूहभावेन स्थापनम् ॥ २२ ॥ तत्प्रकारः पूर्वद्वारमित्यादि । पूर्वादिशब्दा ईशानाग्निनिर्ऋतिवायुदिक्पराः नीलादीनां साक्षात्पूर्वादिद्वारनिरोधकतायाः प्रागुक्तत्वात् एवं च तदुपोद्बलनार्थमेषां तत्तत्कोणे स्थितिः । पूर्वद्वारं पूर्वद्वारोपदिशमित्यर्थः ॥ २३ ॥ तस्यैव ईशानदिग्वर्तिकुमुदस्यैव ॥ २४ ॥ २५ ॥ २६ ॥ सुग्रीवश्चेति । अयं च वायुकोणस्थ इति प्रागेवोक्तम् ॥ २७ ॥ २८ ॥ २९ ॥ यत्र महाबलो रामस्तत्र तस्थावित्यन्वयः ॥ ३० ॥ गवाक्ष इति । अयं गवाक्षो रामपार्श्वस्थगवाक्षादन्यो ज्ञेयः ॥ ३१ ॥ ३२ ॥ एतद्वाक्यं निर्याणाज्ञावाक्यम् भीमनिर्घोषं

पूर्वद्वारंतुकुमुदःकोटिभिर्दशभिर्वृतः ॥ आवृत्यबलवांस्तस्थौहारिभिर्जितकाशिभिः ॥ २३ ॥ सहायार्थेंतुतस्यैवनिविष्टःप्रसभोहरिः ॥ पनसश्चमहाबाहुर्वानरैरभिसंवृतः ॥ २४ ॥ दक्षिणद्वारमासाद्यवीरःशतवलिःकपिः ॥ आवृत्यबलवांस्तस्थौविंशत्याकोटिभिर्वृतः ॥ २५ ॥ सुषेणःपश्चिमद्वारंगत्वातारापिताबली ॥ आवृत्यबलवांस्तस्थौकोटिकोटिभिरावृतः ॥२६॥ उत्तरद्वारमागम्यरामःसौमित्रिणासह ॥ आवृत्यबलवांस्तस्थौसुग्रीवश्चहरीश्वरः ॥ २७ ॥ गोलांगूलोमहाकायोगवाक्षोभीमदर्शनः ॥ वृतःकोट्यामहावीर्यस्तस्थौरामस्यपार्श्वतः ॥ २८ ॥ ऋक्षाणांभीमकोपानांधूम्रःशत्रुनिवर्हणः ॥ वृतःकोट्यामहावीर्यस्तस्थौरामस्यपार्श्वतः ॥ २९ ॥ सन्नद्धस्तुमहावीर्योगदापाणिर्विभीषणः ॥ वृतोयत्तैस्तुसचिवैस्तस्थौयत्रमहाबलः ॥ ३० ॥ गजोगवाक्षोगवयःशरभोगंधमादनः ॥ समंतात्परिधावंतोररक्षुर्हरिवाहिनीम् ॥ ३१ ॥ ततःकोपपरीतात्मारावणोराक्षसेश्वरः ॥ निर्याणंसर्वसैन्यानांद्रुतमाज्ञापयत्तदा ॥ ३२ ॥ एतच्छ्रुत्वातदावाक्यंरावणस्यमुखेरितम् ॥ सहसाभीमनिर्घोषमुद्घुष्टंरजनीचरैः ॥ ३३ ॥ ततःप्रबोधिताभेर्यश्चंद्रपांडुरपुष्कराः ॥ हेमकोणैरभिहताराक्षसानांसमंततः ॥ ३४ ॥ विनेदुश्चमहाघोषाःशंखाःशतसहस्रशः ॥ राक्षसानांसुघोराणांमुखमारुतपूरिताः ॥ ३५ ॥ तेबभुःशुभनीलांगाःसशंखारजनीचराः ॥ विद्युन्मंडलसन्नद्धाःसबलाकाइवांबुदाः ॥ ३६ ॥ निष्पतंतिततःसैन्याहृष्टारावणचोदिताः ॥ समयेपूर्यमाणस्यवेगाइवमहोदधेः ॥ ३७ ॥ ततोवानरसैन्येनमुक्तोनादःसमंततः ॥ मलयःपूरितोयेनससानुप्रस्थकंदरः ॥३८॥ शंखदुंदुभिनिर्घोषःसिंहनादस्तरस्विनाम् ॥ पृथिवींचांतरिक्षंचसागरंचाभ्यनादयत् ॥ ३९ ॥ गजानांबृंहितैःसार्धंहयानांहेषितैरपि ॥ रथानांनेमिनिर्घोषैरक्षसांपदनिःस्वनैः ॥ ४० ॥

यथा तथा रजनीचरैरुद्घुष्टम् उद्घोषितमभूत् ॥ ३३ ॥ चंद्रवत्पांडुराणि पुष्कराणि मुखानि यासां ताः । पुष्करं करिहस्ताग्रे वाद्यभांडमुखे जल इत्यमरः । हेमकोणैरभिहताः स्वर्णमयवादनदंडाभिहताः ॥३४॥ ॥ ३५ ॥ विद्युन्मंडलसन्नद्धत्वस्थाने राक्षसेषु भूषणभूषितत्वं ज्ञेयम् ॥ ३६ ॥ सैन्याः । सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते इत्यमरः । समये मलयकाले पूर्यमाणस्य महामेघैरिति शेषः । वेगास्तरंगाः॥ ॥३७॥येन अतिदूरवर्ती मलयोपि पूरितः स्यात्तादृशो नादो मुक्तः । सानुर्महाप्रस्थः प्रस्थः क्षुद्रः॥३८॥अभ्यनादयत्प्रतिध्वनियुक्तानकरोत् ॥३९॥गजानां बृंहितैरित्यादीनामभ्यनादयन्नित्यनेनान्वयः ॥ ४० ॥

प्राप्तो विभीषण इदं लंकैश्वर्यमकंटकं त्वद्रूपकंटकरहितं ध्रुवं प्राप्नोति। तत्प्राप्तियोग्यतां धर्मात्मेत्यादिविशेषणैर्दर्शयति। धर्मात्मा धर्मप्रधानो नित्यं धर्मचित्तश्च। इदमैश्वर्यस्य साक्षान्निदानम्। राक्षसश्रेष्ठेत्यनेन त्वदनंतरं न्यायप्राप्तं तस्य राज्यमिति दर्शितम्। श्रीमानित्यनेन तदैश्वर्यप्रापकाशेषलक्षणवत्त्वम्। मां प्राप्येत्यनेन तत्प्रापकसमग्रसामग्रीसंपद्दर्शिता ॥ ६८ ॥ ननु मयि जीवति कथं लंकैश्वर्यप्राप्तिस्तस्येत्यत्राह नहीति। अधर्मेणान्यायेन न शक्यमित्यत्र हेतुर्मूर्खसहायेनेति। विभीषणाय मया राज्यस्य दत्तत्वात्तव तद्भोगो न न्याय्य इति भावः ॥ ६९ ॥ शरणव्रजने तु जीवितमेकांशेन राज्यं च तवापि दास्यामि तदभावे तु दंडाधिकारिणा मया सर्वथा वध्यस्त्वम् युद्धवधश्च। परमं हितं तवेति परमदयालुर्भगवांस्तदेवोपदिशति युद्धयस्वेति। मा माम् धृतिं कृत्वा युध्यस्व। युध्यस्व मा धृतिं कृत्वेति पांक्तः पाठः। मच्छरैः पापशोधनाधिकृतस्य मम शरैः रणे शांतः समाप्तस्तत एव हेतोः शांत आजन्मकृतात्पापात्पूतो भविष्यसि। दर्शननामस्मरणैः पापशोधनफलक एवायमवतारस्तत्त्वेन ज्ञायते। तथाज्ञानाभावेपि मत्तो मरणे

नहिराज्यमधर्मेणभोक्तुंक्षणमपित्वया ॥ शक्यंमूर्खसहायेनपापेनाविदितात्मना ॥६९॥ युध्यस्वमाधृतिंकृत्वाशौर्यमालंब्यराक्षस ॥ मच्छरैस्त्वंरणे शांतस्ततःशांतोभविष्यसि ॥ ७० ॥ यद्याविशसिलोकांस्त्रीन्पक्षीभूतोनिशाचर ॥ ममचक्षुःपथंप्राप्यनजीवन्प्रतियास्यसि ॥ ७१ ॥ ब्रवीमित्वां हितंवाक्यंक्रियतामौर्ध्वदेहिकम् ॥ सुदृष्टाक्रियतांलंकाजीवितंतेमयिस्थितम् ॥ ७२ ॥ इत्युक्तःसतुतारेयोरामेणाक्लिष्टकर्मणा ॥ जगामाकाशमाविश्यमूर्तिमानिवहव्यवाट् ॥ ७३ ॥ सोतिपत्यमुहूर्तेनश्रीमान्रावणमंदिरम् ॥ ददर्शासीनमव्यग्रंरावणंसचिवैःसह ॥ ७४ ॥ ततस्तस्याविदूरेणनिपत्यहरिपुंगवः ॥ दीप्ताग्निसदृशस्तस्थावंगदःकनकांगदः ॥७५॥ तद्रामवचनंसर्वमन्यूनाधिकमुत्तमम् ॥सामात्यंश्रावयामासनिवेद्यात्मानमात्मना ॥७६॥ दूतोहंकोशलेंद्रस्यरामस्याक्लिष्टकर्मणः ॥ वालिपुत्रोंगदोनामयदितेश्रोत्रमागतः ॥ ७७ ॥ आहत्वांराघवोरामःकौसल्यानंदवर्धनः ॥ निष्पत्यप्रतियुध्यस्वनृशंसपुरुषोभव ॥ ७८ ॥ हंतास्मित्वांसहामात्यंसपुत्रज्ञातिबांधवम् ॥ निरुद्विग्नास्त्रयोलोकाभविष्यंतिहतेत्वयि ॥ ७९ ॥ देवदानवयक्षाणांगंधर्वोरगरक्षसाम् ॥ शत्रुमद्योद्धरिष्यामित्वामृषीणांचकंटकम् ॥ ८० ॥ विभीषणस्यचैश्वर्यंभविष्यतिहतेत्वयि ॥ नचेत्सत्कृत्यवैदेहींप्रणिपत्यप्रदास्यसि ॥ ८१ ॥ इत्येवंपरुषंवाक्यंब्रुवाणेहरिपुंगवे ॥ अमर्षवशमापन्नोनिशाचरगणेश्वरः ॥ ८२ ॥ ततःसरोषमापन्नःशशाससचिवांस्तदा॥गृह्यतामितिदुर्मेधावध्यतामितिचासकृत् ॥८३॥ रावणस्यवचःश्रुत्वादीप्ताग्निमिवतेजसा ॥ जगृहुस्तंततोघोराश्चत्वारोरजनीचराः॥८४॥

किंचित्कालोत्तरमुत्तमक्षत्रियकुले जन्मप्राप्तिरिति भावः ॥ ७० ॥ पुनरपि धैर्याय वधनिश्चयमवलंब्यैतदुचितकृत्यं कुर्विंत्युपदिशति यदीति। न स देशोस्ति यत्र न मे चक्षुःप्राप्तिरिति भावः ॥ ७१ ॥ देहादूर्ध्वं प्राप्त ऊर्ध्वदेहः परलोकस्तत्र हितं दानादिकं और्ध्वदेहिकम् सुदृष्टा क्रियतां इतः परं दर्शनाभावात् ॥ ७२ ॥ मूर्तिमान्हव्यवाडिति। वानरवेषोग्निरित्यर्थः ॥ ७३ ॥ अतिपत्य अतिक्रम्य मार्गमिति शेषः ॥ ७४ ॥ ७५ ॥ तद्रामवचनमिति। संक्षेपकथनं वक्ष्यमाणस्य ॥ ७६ ॥ तस्यैव प्रपंचो दूतोहमिति। यदीत्यसंदिग्धे संदिग्धवचनम् वेदाः प्रमाणं चेदितिवत्। श्रोत्रमागत एव एतेन स्वस्य स्वीयानां च बलादि तुभ्यं न वाच्यमेव त्वया ज्ञातत्वादिति भावः ॥ ७७ ॥ निष्पत्य पुरान्निष्क्रम्य पुरुषो भव शूरो भव ॥ ७८ ॥ ७९ ॥ ८० ॥ वैदेहीं सत्कृत्य क्षमापनं कृत्वा मां प्रणिपत्य न चेत्प्रदास्यसि तद

त्वयि हते विभीषणस्यैश्वर्यं भविष्यति ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ग्राहयामास स्वेच्छया ग्रहणं कारयामास । किमर्थमिदं तत्राह बलमित्यादि ॥ ८५ ॥ बलमेव दर्शयति स तानित्यादि ॥ ८६ ॥ ॥ ८७ ॥ वालिपुत्रः प्रासादशिखरं ददर्शेति शेषः । दृष्ट्वा च तच्चक्राम पदाक्रांतवान् ॥ ८८ ॥ तदाक्रांतं च प्रासादशिखरं पश्यतो दशग्रीवस्य पफाल शतधा विशीर्णमभूत् ॥ ८९ ॥ ९० ॥ ९१ ॥ पश्य ज्ञिति । एकोपि समग्रं मम बलं पराभूय निर्भयं गच्छति एवंविधेष्वनेकेषु मन्नाशोद्यतेषु कथं जीवनमिति पर्यालोचयन्नित्यर्थः ॥ ९२ ॥ युद्धायैवाभिवर्तत अभ्यवर्तत ॥ ९३ ॥ ९४ ॥ पर्यक्रामत सर्वबलर



ग्राहयामासतारेयःस्वयमात्मानमात्मवान् ॥ बलंदर्शयितुंवीरोयातुधानगणेतदा ॥ ८५ ॥ सतान्बाहुद्वयासक्तानादायपतगानिव ॥ प्रासादंशैलसंकाशमुत्पपातांगदस्तदा ॥ ८६ ॥ तस्योत्पतनवेगेननिर्धूतास्तत्रराक्षसाः ॥ भूमौनिपतिताःसर्वेराक्षसेंद्रस्यपश्यतः ॥ ८७ ॥ ततःप्रासादशिखरंशैलशृंगमिवोन्नतम् ॥ चक्रामराक्षसेंद्रस्यवालिपुत्रःप्रतापवान् ॥ ८८ ॥ पफालचतदाक्रान्तंदशग्रीवस्यपश्यतः ॥ पुराहिमवतःशृंगंवज्रेणेवविदारितम् ॥ ॥ ८९ ॥ भंक्त्वाप्रासादशिखरंनामविश्राव्यचात्मनः ॥ विनद्यसुमहानादमुत्पपातविहायसा ॥ ९० ॥ व्यथयन्राक्षसान्सर्वान्हर्षयंश्चापिवानरान् ॥ सवानराणांमध्येतुरामपार्श्वमुपागतः ॥९१॥ रावणस्तुपरंचक्रेक्रोधंप्रासादधर्षणात् ॥ विनाशंचात्मनःपश्यन्निःश्वासपरमोभवत् ॥ ९२ ॥ रामस्तुबहुभिर्हृष्टैर्विनदद्भिःप्लवंगमैः ॥ वृतोरिपुवधाकांक्षीयुद्धायैवाभिवर्तत ॥ ९३ ॥ सुषेणस्तुमहावीर्योगिरिकूटोपमोहरिः ॥ बहुभिःसंवृतस्तत्रवानरैःकामरूपिभिः ॥ ९४॥ सतुद्वाराणिसंयम्यसुग्रीववचनात्कपिः ॥ पर्यक्रामतदुर्धर्षोनक्षत्राणीवचंद्रमाः ॥ ९५ ॥ तेषामक्षौहिणिशतंसमवेक्ष्यवनौकसाम् ॥ लंकामुपनिविष्टानांसागरंचाभिवर्तताम् ॥ ९६ ॥ राक्षसाविस्मयंजग्मुस्त्रासंजग्मुस्तथापरे ॥ अपरेसमरेहर्षाद्धर्षमेवोपपेदिरे ॥ ९७ ॥ कृत्स्नंहिकपिभिर्व्याप्तंप्राकारपरिखांतरम् ॥ ददृशूराक्षसादीनाःप्राकारंवानरीकृतम् ॥ ९८ ॥ हाहाकारमकुर्वंतराक्षसाभयमागताः ॥ ९९ ॥ तस्मिन्महाभीषणकेप्रवृत्तेकोलाहलेराक्षसराजयोधाः ॥ प्रगृह्यरक्षांसिमहायुधानियुगांतवाताइवसंविचेरुः ॥१००॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीये आदिकाव्ये युद्धकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥ ततस्तेराक्षसास्तत्रगत्वारावणमंदिरम् ॥ न्यवेदयन्पुरींरुद्धांरामेणसहवानरैः ॥ १ ॥ रुद्धांतुनगरींश्रुत्वाजातक्रोधोनिशाचरः ॥ विधानंद्विगुणंश्रुत्वाप्रासादंचाप्यरोहत ॥ २ ॥

क्षार्थं सर्वद्वारवृत्तांतग्रहणार्थं च नक्षत्राणि अश्विन्यादीनि ॥ ९५ ॥ अक्षौहिणिशतम् आर्षो ह्रस्वः अक्षादूहिन्यामिति वृद्धिः । यावंतोऽक्षौहिण्यां गजाश्वरथिपदातयस्तत्संख्या वानरा इत्यर्थः । शतशब्दोनंतवाची सागरं चाभिवर्तताम् सागरपर्यंतमभिव्याप्यवर्तमानानामित्यर्थः ॥ ९६ ॥ ९७ ॥ वानरीकृतं वानररूपनिर्मितरूपमिव कृतम् ॥ ९८ ॥ ९९ ॥ राक्षसराजयोधरूपाणि रक्षांसीत्यर्थः ॥ १०० ॥ अनंतंप्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकचत्वारिंशः सर्गः ॥ ४१ ॥ ॥ कतकरी० ॥ ३८ ॥ तत इति ॥ १ ॥ विधानम् द्वाराणां रक्षाविधानमित्यर्थः ॥ २ ॥

एतस्मिन्नंतरे सुग्रीवादात्मानं बलतो मोचयितुमशक्यत्वावसरे मायाबलमारब्धुमुपसंपेदे उपचक्रमे तं उपक्रांतमायं ज्ञात्वा ॥२७॥ जितकाशी जितश्वासः वंचितः क गत इत्यज्ञातहरिराजगमनः ॥ २८ ॥ प्राप्ता संग्रामकीर्तिर्येन तदेव दर्शयति निशिचरपतिमाजौ श्रमेण योजयित्वेति । निशिचरेत्यार्षम् । अतिविशालं गगनमतिदूरं लंघयित्वेत्यर्थः ॥ २९ ॥ उक्तमर्थमुपसंहरति स इति । तरुमृगा वानरास्तद्गणमुख्या हनूमदादयः ॥ ३० ॥ नंगमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चत्वारिंशः सर्गः ॥ ४० ॥ कतकरी० ॥ ३७ ॥ तस्मिन्सुग्रीवे निमित्तानि क्षतजादिरूपाणि युद्धचिह्नानि ॥ १ ॥ जनेश्वराः नृपाः ॥ २ ॥ संशये स्थाप्येति । अतिघोरशत्रुसमीपं गतः कथमागमिष्यति राजेति बहुचिंतामग्नं कृत्वा ॥ ३ ॥ इदानीं घोरयुद्धप्राप्तौ एवंविधमस्माभिः सहासंमंत्र्य कार्यमितः

एतस्मिन्नंतरेरक्षोमायावलमथात्मनः ॥ आरब्धुमुपसंपेदेज्ञात्वातंवानराधिपः ॥ २७ ॥ उत्पपाततदाकाशंजितकाशीजितक्लमः ॥ रावणःस्थितएवात्रहरिराजेनवंचितः ॥ २८ ॥ अथहरिवरनाथःप्राप्तसंग्रामकीर्तिर्निशिचरपतिमाजौयोजयित्वाश्रमेण ॥ गगनमतिविशालंलंघयित्वार्कसूनुर्हरिगणवलमध्येरामपार्श्वंजगाम ॥ २९ ॥ सइतिसवितृसूनुस्तत्रतत्कर्मकृत्वापवनगतिरनीकंप्राविशत्संप्रहृष्टः ॥ रघुवरनृपसूनोर्वर्धयन्युद्धहर्षंतरुमृगगणमुख्यैःपूज्यमानोहरींद्रः ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चत्वारिंशः सर्गः ॥ ४० ॥ अथतस्मिन्निमित्तानिदृष्ट्वालक्ष्मणपूर्वजः ॥ सुग्रीवंसंपरिष्वज्यरामोवचनमब्रवीत् ॥ १ ॥ असंमंत्र्यमयासार्धंतदिदंसाहसंकृतम् ॥ एवंसाहसयुक्तानिनकुर्वंतिजनेश्वराः ॥ ॥ २ ॥ संशयेस्थाप्यमांचेदंवलंचेमंविभीषणम् ॥ कष्टंकृतमिदंवीरसाहसंसाहसप्रिय ॥ ३ ॥ इदानींमाकृथावीरएवंविधमरिंदम ॥ त्वयिकिंचित्समापन्नेकिंकार्यंसीतयाममम ॥ ४ ॥ भरतेनमहावाहोलक्ष्मणेनयवीयसा ॥ शत्रुघ्नेनचशत्रुघ्नस्वशरीरेणवापुनः ॥ ५ ॥ त्वयिचानागतेपूर्वमितिमेनिश्चितामतिः ॥ जानतश्चापितेवीर्यंमहेंद्रवरुणोपम ॥ ६ ॥ हत्वाहंरावणंयुद्धेसपुत्रवलवाहनम् ॥ अभिषिच्यचलंकायांविभीषणमथापिच ॥ ७ ॥ भरतेराज्यमारोप्यत्यक्ष्येदेहंमहावल ॥ तमेवंवादिनंरामंसुग्रीवःप्रत्यभाषत ॥ ८ ॥ तवभार्यापहर्तारंदृष्ट्वाराघवरावणम् ॥ मर्षयामिकथंवीरजानन्विक्रममात्मनः ॥ ९ ॥

परं मा कृथाः त्वयि किंचित्समापन्ने दैवात्तवापमानादिप्राप्ताविर्त्यथः । नाश्लीलं कीर्तयेदित्युक्तेरेवं वादः ॥ ४ ॥ ५ ॥ त्वयि चानागते पूर्वं त्वदागमनात्पूर्वम् यदि तव विपत्तिः स्यात्तर्हीति शेषः इति वक्ष्यमाणप्रकारा मतिर्मे निश्चिताभूत् । भगवन्कथमेवं मयि तव प्राकृत इव शंकेत्यत्राह जानतश्चापीति अतिस्नेहपापशंकीतिन्यायादित्याशयः ॥ ६ ॥ तां मतिं दर्शयति हत्वेति । अभिषिच्येति प्रतिज्ञायाः श्लाघनीयत्वादित्याशयः ॥ ७ ॥ महाबलेत्यंतं मतिकथनम् ॥ ८ ॥ आत्मनो विक्रमं स्वस्य परपराक्रमसंहारसामर्थ्यं जानन्स्वानुभवेनावगच्छन् ॥ कथं मर्षयामि न कथमपीत्यर्थः ॥ ९ ॥

अभिनंद्य सौहृदस्यातिबलसंपत्तेश्चेदमेव युक्तमिति श्लाघां कृत्वेत्यर्थः । लक्ष्मिसंपन्नामिति ह्रस्व आर्षः ॥ १० ॥ शीतमुदकं तद्वतो जलाशयान् फलवंति वनानि च परिगृह्य बलौघं व्यूह्य व्यूहविशेषपूर्वं संविभज्य विभागेन स्थापयित्वा ॥ ११ ॥ व्याख्यातमाया इमे श्लोकाः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८॥ यच्च नक्षत्राण्यभिवर्तंते प्रकाशगत्यादिकं तच्च यथावन्न दृश्यते इत्यन्वयः । हे लक्ष्मण

इत्येवंवादिनंवीरमभिनंद्यचराघवः ॥ लक्ष्मणंलक्ष्मिसंपन्नमिदंवचनमब्रवीत् ॥ १० ॥ परिगृह्योदकंशीतंवनानिफलवंतिच ॥ बलौघंसंविभज्येमं व्यूह्यतिष्ठामलक्ष्मण ॥ ११ ॥ लोकक्षयकरंभीमंभयंपश्याम्युपस्थितम् ॥ निबर्हणंप्रवीराणामृक्षवानररक्षसाम् ॥ १२॥ वाताहिपरुषंवांतिकंपतेचवसुंधरा ॥ पर्वताग्राणिवेपंतेनदंतिधरणीधराः ॥ १३ ॥ मेघाःक्रव्यादसंकाशाःपुरुषाःपरुषस्वराः ॥ क्रूराःक्रूरंप्रवर्षंतेमिश्रंशोणितबिंदुभिः ॥ १४ ॥ रक्तचंदनसंकाशासंध्यापरमदारुणा ॥ ज्वलच्चनिपतत्येतदादित्यादग्निमंडलम् ॥ १५ ॥ आदित्यमभिवाश्यंतिजनयंतोमहद्भयम् ॥ दीनादीनस्वराः क्रूराअप्रशस्तामृगद्विजाः ॥ १६ ॥ रजन्यामप्रशस्तश्चसंतापयतिचंद्रमाः ॥ कृष्णरक्तांशुपर्यंतोयथालोकस्यसंक्षये ॥ १७ ॥ ह्रस्वोरूक्षोप्रशस्तश्चपरिवेषःसुलोहितः ॥ आदित्यमंडलेनीलंलक्ष्मलक्ष्मणदृश्यते ॥ १८॥ दृश्यतेनयथावच्चनक्षत्राण्यभिवर्तंते ॥ युगांतमिवलोकस्यपश्यलक्ष्मणशंसति ॥१९॥ काकाःश्येनास्तथागृध्रानीचैःपरिपतंतिच ॥ शिवाश्चाप्यशुभावाचःप्रवदंतिमहास्वनाः ॥२०॥ शैलैःशूलैश्चखड्गैश्चविमुक्तैःकपिराक्षसैः ॥ भविष्यत्यावृताभूमिर्मांसशोणितकर्दमा ॥ २१ ॥ क्षिप्रमद्यदुराधर्षांपुरींरावणपालिताम् ॥ अभियामजवेनैवसर्वतोहरिभिर्वृतः ॥ २२ ॥ इत्येवंतुवदन्वीरोलक्ष्मणंलक्ष्मणाग्रजः ॥ तस्मादवातरच्छीघ्रंपर्वताग्रान्महाबलः ॥ २३ ॥ अवतीर्यतुधर्मात्मातस्माच्छैलात्सराघवः ॥ परैःपरमदुर्धर्षंददर्शबलमात्मनः ॥ २४ ॥ सन्नह्यतुससुग्रीवःकपिराजबलंमहत् ॥ कालज्ञोराघवःकालेसंयुगायाभ्यचोदयत् ॥२५॥ ततःकालेमहाबाहुर्बलेनमहतावृतः॥ प्रविष्टःपुरतोधन्वीलंकामभिमुखःपुरीम् ॥ २६ ॥ तौविभीषणसुग्रीवौहनूमाञ्जांबवान्नलः ॥ ऋक्षराजस्तथानीलोलक्ष्मणश्चान्वयुस्तदा ॥ २७ ॥ ततःपश्चात्सुमहतीपृतनर्क्षवनौकसाम् ॥ प्रच्छाद्यमहतींभूमिमनुयातिस्मराघवम् ॥ २८ ॥ शैलशृंगाणिशतशःप्रवृद्धांश्चमहीरुहान् ॥ जगृहुःकुंजरप्रख्यावानराःपरवारणाः ॥ २९ ॥ तौत्वदीर्घेणकालेनभ्रातरौरामलक्ष्मणौ ॥ रावणस्यपुरींलंकामासेदतुररिंदमौ ॥३०॥ पताकामालिनींरम्यामुद्यानवनशोभिताम् ॥ चित्रवप्रांसुदुष्प्रापामुच्चैःप्राकारतोरणाम् ॥ ३१ ॥

उक्तदुर्निमित्तजालं लोकस्य युगांतं शंसतीव पश्य ॥ १९ ॥ श्येनादयो नीचैर्निपपंति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ससुग्रीवः सुग्रीवसहितः कपिराजबलं संनह्य कृतसन्नाहं कृत्वा काले ज्योतिःशास्त्रोक्तकाले संयुगाय युद्धायाभ्यचोदयत् ॥ २५ ॥ काले स्वरशास्त्रोक्ते युद्धयोग्ये काले प्रविष्टः प्रवेष्टुं प्रस्थितः ॥ २६ ॥ २७ ॥ ऋक्षवनौकसां पृतनेति च्छेदः ॥ २८ ॥ परवारणाः शत्रुनिवारकाः

॥ २९ ॥ ३० ॥ ३१ ॥ यथानिदेशं रामनिदेशमनतिक्रम्य संपीड्य लंकां रुद्ध्वा ॥ ३२ ॥ तस्यैव प्रपंचो लंकाया इति । उत्तरद्वारं रुरोध तद्द्वारनिरोधकमात्मबलं जुगोप च ॥ ३३ ॥ उक्तमेवार्थं स्थैर्यायाह लंकामिति ॥ ३४ ॥ तद्द्वारं तद्द्वाररोधिकां सेनाम् ॥ ३५ ॥ ३६ ॥ लघूनामल्पवीर्याणाम् दानवैः पातालमिव गुप्तं राक्षसैर्गुप्तं द्वारमित्यन्वयः । विन्यस्तानि युद्धकाले यथोचितपरिग्रहार्थमिति शेषः ॥३७॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ मध्यमे गुल्मे अतिदुर्जयरावणेंद्रजिदधिष्ठितयोरुत्तरपश्चिमद्वारयोर्मध्ये वायुदिशि तदुभयद्वारनिरोधकानां मध्यमणिन्यायेन साहाय्यं कर्तुं सुग्रीवः समतिष्ठतेत्यर्थः ॥ ४१ ॥ सर्वैर्हरिश्रेष्ठै

तांसुरैरपिदुर्धर्षारामवाक्यप्रचोदिताः ॥ यथानिदेशंसंपीडचन्यविशंतवनौकसः ॥ ३२ ॥ लंकायास्तूत्तरद्वारंशैलशृंगमिवोन्नतम् ॥ रामःसहानुजो धन्वीजुगोपचरुरोधच ॥ ३३ ॥ लंकामुपनिविष्टस्तुरामोदशरथात्मजः ॥ लक्ष्मणानुचरोवीरःपुरींरावणपालिताम् ॥ ३४ ॥ उत्तरद्वारमासाद्ययत्र तिष्ठतिरावणः ॥ नान्योरामाद्धितद्द्वारंसमर्थःपरिरक्षितुम् ॥ ३५ ॥ रावणाधिष्ठितंभीमंवरुणेनेवसागरम् ॥ सायुधैराक्षसैर्भीमैरभिगुप्तंसमंततः ॥ ॥ ३६ ॥ लघूनांत्रासजननंपातालमिवदानवैः ॥ विन्यस्तानिचयोधानांबहूनिविविधानिच ॥ ३७ ॥ ददर्शायुधजालानितथैवकवचानिच ॥ पूर्वं तुद्वारमासाद्यनीलोहरिचमूपतिः ॥ ३८॥ अतिष्ठत्सहमैंदेनद्विविदेनचवीर्यवान् ॥ अंगदोदक्षिणद्वारंजग्राहसुमहाबलः ॥ ३९ ॥ ऋषभेणगवाक्षेण गजेनगवयेनच ॥ हनूमान्पश्चिमद्वारंररक्षबलवान्कपिः ॥ ४० ॥ प्रजंघतरसाभ्यांचवीरैरन्यैश्चसंगतः ॥ मध्यमेचस्वयंगुल्मेसुग्रीवःसमतिष्ठत ॥ ॥४१॥ सहसर्वैर्हरिश्रेष्ठैःसुपर्णपवनोपमैः ॥ वानराणांतुषट्त्रिंशत्कोट्यःप्रख्यातयूथपाः ॥ ४२ ॥ निपीड्योपनिविष्टाश्चसुग्रीवोयत्रवानरः ॥ शासनेनतुरामस्यलक्ष्मणःसविभीषणः ॥ ४३ ॥ द्वारेद्वारेहरीणांतुकोटिंकोटीन्र्यवेशयत् ॥ पश्चिमेनतुरामस्यसुषेणःसहजांबवान् ॥ ४४ ॥ अदूरान्मध्यमे गुल्मेतस्थौबहुबलानुगः ॥ तेतुवानरशार्दूलाःशार्दूलाइवदंष्ट्रिणः ॥ गृहीत्वाद्रुमशैलाग्रान्हृष्टायुद्धायतस्थिरे ॥ ४५ ॥ सर्वेविकृतलांगूलाःसर्वेदंष्ट्रानखायुधाः ॥ सर्वेविकृतचित्रांगाःसर्वेचविकृताननाः ॥४६॥ दशनागबलाःकेचित्केचिद्दशगुणोत्तराः ॥ केचिन्नागसहस्रस्यबभूवुस्तुल्यविक्रमाः॥४७॥ संतिचौघबलाःकेचित्केचिच्छतगुणोत्तराः ॥ अप्रमेयबलाश्चान्येतत्रासन्हरियूथपाः ॥ ४८ ॥ अद्भुतश्चविचित्रश्चतेषामासीत्समागमः ॥ तत्रवानरसैन्यानांशलभानामिवोद्गमः ॥ ४९ ॥ प्रतिपूर्णमिवाकाशंसंपूर्णेवचमेदिनी ॥ लंकामुपनिविष्टैश्चसंपतद्भिश्चवानरैः ॥ ५० ॥ शतंशतसहस्राणांपृतनानां वनौकसाम् ॥ लंकाद्वाराण्युपाजग्मुरन्येयोद्धुंसमंततः ॥ ५१ ॥

द्वारनिरोधनियुक्तेभ्योऽवशिष्टैः सख्यातयूथपाः षट्त्रिंशत्कोट्यः । असंख्यातयूथपानां तत्सेनानां च गणनाभाव इति भावः ॥ ४२ ॥ ४३ ॥ द्वारनिरोधनियुक्तसेनाप्रमाणमाह द्वारे इति ॥४४॥ [illegible] पृष्ठभागावष्टंभेन ॥४५॥ विकृतलांगूलाः क्रोधामर्षवशादिति शेषः ॥४६॥ दशगुणोत्तराः शतनागबलाः । नागसहस्रस्य नागसहस्रेण ॥४७॥ ओघबलाः ओघसंख्यनागबलाः ॥४८॥ [illegible] इति शेषः ॥ ४९ ॥ संपतद्भिराकाशं पूर्णं निविष्टैर्मेदिनी पूर्णा ॥ ५० ॥ ऋक्षवनौकसां शतसहस्राणाम् शतकोटिरित्यर्थः । एवं च कोटिसंख्याः पृतनाः लंकाद्वाराण्युपाजग्मुः । [illegible]

एते पूर्वनियुक्ताधिका इति बोध्यम् । अन्येवशिष्टाः समंततो युद्धं पारितो योद्धुं जग्मुः ॥ ५१ ॥ स गिरिस्त्रिकूटः अयुतानां सहस्रं च पुरीं तामभ्यवर्तत सर्वद्वारवर्तिस्वसेनासर्ववृत्तांतग्रहणार्थं संचरतामिति शेषः ॥ ५२ ॥ ५३ ॥ ५४ ॥ बलौघस्य वानरीयस्य अभिवर्ततोऽभिवर्तमानस्य भिन्नस्य सागरस्य कृतसेतुविभेदनस्य । अभूतोपमेयम् ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ आनंतर्यमनंतरकर्तव्यमभिप्रेप्सुः प्राप्तुमिच्छुः क्रमयोगार्थतत्त्ववित्सामाद्युपायानां क्रमयोगं क्रममयोगं तत्साध्यमर्थं तत्त्वं तत्प्रयोजनं च वेत्ति सः विभीषणस्यानुमते स्थित इति शेषः । यदि रावणो भवंतं शरणमुपेयात्तदा लंकाराज्यं तस्यैव देयमिति विभीषणमते स्थित इत्यर्थः । राजधर्ममनुस्मरन् सामादिष्वुपायसाध्येऽर्थे दंडो न मोक्तव्यः । प्रजानाशहेतुरित्येवंरूपं राजधर्ममनुचिंतयन् ॥ ५९ ॥ इदं वक्ष्यमाणमंगदमाहूयाब्रवीत् ॥ ६० ॥ लंघयित्वा

आवृतःसगिरिःसर्वैस्तैःसमंतात्प्लवंगमैः ॥ अयुतानांसहस्रंचपुरींतामभ्यवर्तत ॥५२॥ वानरैर्बलवद्भिश्चबभूवद्रुमपाणिभिः ॥ सर्वतःसंवृतालंकादुष्प्रवेशापिवायुना ॥ ५३ ॥ राक्षसाविस्मयंजग्मुःसहसाभिनिपीडिताः ॥ वानरैर्मेघसंकाशैःशक्रतुल्यपराक्रमैः ॥ ५४ ॥ महाञ्छब्दोभवत्तत्रबलौघस्याभिवर्ततः ॥ सागरस्येवभिन्नस्ययथास्यात्सलिलस्वनः ॥ ५५ ॥ तेनशब्देनमहतासप्राकारासतोरणा ॥ लंकाप्रचलितासर्वासशैलवनकानना ॥ ॥ ५६ ॥ रामलक्ष्मणगुप्तासासुग्रीवेणचवाहिनी ॥ बभूवदुर्धर्षतरासर्वैरपिसुरासुरैः ॥ ५७ ॥ राघवःसन्निवेश्यैवस्वसैन्यंरक्षसांवधे ॥ संमंत्र्यमंत्रिभिःसार्धंनिश्चित्यचपुनःपुनः ॥५८॥ आनंतर्यमभिप्रेप्सुःक्रमयोगार्थतत्त्ववित् ॥ विभीषणस्यानुमतेराजधर्ममनुस्मरन् ॥५९ ॥ अंगदंवालितनयंसमाहूयेदमब्रवीत् ॥ गत्वासौम्यदशग्रीवंब्रूहिमद्वचनात्कपे ॥ ६० ॥ लंघयित्वापुरींलंकांभयंत्यक्त्वागतव्यथः ॥ भ्रष्टश्रीकंगतैश्वर्यंमुमूर्षानष्टचेतनम् ॥६१॥ ऋषीणांदेवतानांचगंधर्वाप्सरसांतथा ॥ नागानामथयक्षाणांराज्ञांचरजनीचर ॥ ६२ ॥ यच्चपापंकृतंमोहादवलिप्तेनराक्षस ॥ नूनंतेविगतोदर्पःस्वयंभूवरदानजः ॥ ६३ ॥ यस्यदंडधरस्तेहंदाराहरणकर्शितः ॥ दंडंधारयमाणस्तुलंकाद्वारेव्यवस्थितः ॥ ६४ ॥ पदवींदेवतानांचमहर्षीणांचराक्षस ॥ राजर्षीणांचसर्वेषांगमिष्यसियुधिस्थिरः ॥ ६५ ॥ बलेनयेनवैसीतांमाययाराक्षसाधम ॥ मामतिक्रमयित्वात्वंहृतवांस्तन्निदर्शय ॥ ॥ ६६ ॥ अराक्षसमिमंलोकंकर्तास्मिनिशितैःशरैः ॥ नचेच्छरणमभ्येषितामादायतुमैथिलीम् ॥ ६७ ॥ धर्मात्माराक्षसश्रेष्ठःसंप्राप्तोयंविभीषणः ॥ लंकैश्वर्यमिदंश्रीमान्ध्रुवंप्राप्नोत्यकंटकम् ॥ ६८ ॥

समुद्रम् गतव्यथो निरुपद्रवः भयं त्यक्त्वा त्वद्बलं तृणीकृत्य लंकामुपारुणधामिति शेषः अतो भ्रष्टेत्यादि तादृशं ब्रूहीत्यन्वयः ॥ ६१ ॥ ६२ ॥ यच्च पापं कृतं प्राणांतनानाप्रकारपीडनं तत्करणीभूतः स्वयंभूवरदानजो दर्पस्ते तत्संबंधी अद्य विगतः ॥ ६३ ॥ दंडं धारयमाणः निरुच्छ्वासं पुरोपरोधरूपनिग्रहं कुर्वाणः ॥ ६४ ॥ ऋष्यादीनां पदवीं गमिष्यसि तद्वत्त्वापि मरणं भविष्यतीति भावः ! किंच युधि स्थित्वे स्वयंभूपासकस्य ते तदनुग्रहान्मत्तो मरणे पुण्यलोकप्राप्तिस्त्वेवेति भावः । राजभिर्धृतदंडास्तु कृत्वा पापानि मानवाः ॥ निर्मलाः स्वर्गमायांति संतः सुकृतिनो यथेत्युक्तेः ॥ ६५ ॥ युद्धचस्व मा पलायितो भूरित्याह बलेनेत्यादि ॥ ६६ ॥ यदि मरणभीत्या युयुत्सा नास्ति तदापि ते हितं ब्रवीमीत्याह अराक्षसमिति ॥ ६७ ॥ शरणगतिं विना जीवनं राज्यं च सुतरां दुर्लभमित्याह धर्मात्मेत्यादि । इहागत्य मां शरणं

विधिज्ञं कार्यविदम् ॥ २ ॥ अध्यारोहामहे आरोक्ष्यामहे ॥ ३ ॥ मरणांताय मरणपर्यंतदुःखमनुभवितुम् ॥ ४ ॥ राक्षस्या रक्षःसंबंधिन्या नीचया क्रूरया तत्सीताहरणरूपम् ॥ ५ ॥ संमंत्रयन्संचिंतयन् चित्रसानुं सुवेलमित्यन्वयः ॥ ६ ॥ ७ ॥ वायुवेगप्रवणाः वायुवेगगतयः ॥ ८ ॥ यत्र राघवः येन राघव आरूढ इत्यर्थः ॥ ९ ॥ शिखरे तस्येति । स्थित्वेति शेषः । खे आकाशे विषक्तां रचितामिव ॥ १० ॥ रक्षार्थं प्राकारवरसंस्थैर्निशाचरैरपरं प्राकारं कृतमिव ददृशुः ॥ ११ ॥ १२ ॥ प्रतिरंजितः प्रतिप्रापितरागः । पूर्णचन्द्रप्रदीप्ता क्षपेत्यनेन पौषशुक्लचतुर्दश्यां पूर्णिमायां वा सुवेलारोहणमिति बोध्यम् ।

विभीषणंचधर्मज्ञमनुरक्तंनिशाचरम् ॥ मंत्रज्ञंचविधिज्ञंचश्लक्ष्णयापरयागिरा ॥ २ ॥ सुवेलंसाधुशैलेंद्रमिमंधातुशतैश्चितम् ॥ अध्यारोहामहेसर्वे वत्स्यामोत्रनिशामिमाम् ॥ ३ ॥ लंकांचालोकयिष्यामोनिलयंतस्यरक्षसः ॥ येनमेमरणांतायहृताभार्यादुरात्मना ॥ ४ ॥ येनधर्मोनविज्ञातोनवृत्तं नकुलंतथा ॥ राक्षस्यानीचयाबुद्ध्यायेनतद्गर्हितंकृतम् ॥ ५ ॥ एवंसंमंत्रयन्नेवसक्रोधोरावणंप्रति ॥ रामःसुवेलमासाद्यचित्रसानुमुपारुहत् ॥ ६ ॥ पृष्ठतोलक्ष्मणश्चैनमन्वगच्छत्समाहितः ॥ सशरंचापमुद्यम्यसुमहद्विक्रमेरतः ॥ ७ ॥ तमन्वारोहत्सुग्रीवःसामात्यःसविभीषणः ॥ तेवायुवेगप्रवणास्तं गिरिंगिरिचारिणः ॥ ८ ॥ अध्यारोहंतशतशःसुवेलंयत्रराघवः ॥ तेत्वदीर्घेणकालेनगिरिमारुह्यसर्वतः ॥ ९ ॥ ददृशुःशिखरेतस्यविषक्तामिवखेपु रीम् ॥ तांशुभांप्रवरद्वारांप्राकारवरशोभिताम् ॥ १० ॥ लंकांराक्षससंपूर्णांददृशुर्हरियूथपाः ॥ प्राकारवरसंस्थैश्चतथानीलैश्चराक्षसैः ॥ ददृशुस्तेह रिश्रेष्ठाःप्राकारमपरंकृतम् ॥ ११ ॥ तंदृष्ट्वावानराःसर्वेराक्षसान्युद्धकांक्षिणः ॥ मुमुचुर्विविधान्नादांस्तस्यरामस्यपश्यतः ॥ १२ ॥ ततोस्तमगमत्सूर्यः संध्ययाप्रतिरंजितः ॥ पूर्णचंद्रप्रदीप्ताचक्षपासमतिवर्तत ॥ १३ ॥ ततःसरामोहरिवाहिनीपतिर्विभीषणेनप्रतिनंद्यसत्कृतः ॥ सलक्ष्मणोयूथपयूथसं युतःसुवेलपृष्ठेन्यवसद्यथासुखम् ॥ १४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टात्रिंशःसर्गः ॥ ३८ ॥ तांरात्रिमुषितास्तत्रसुवेले हरियूथपाः ॥ लंकायांददृशुर्वीरावनान्युपवनानिच ॥ १ ॥ समसौम्यानिरम्याणिविशालान्यायतानिच ॥ दृष्टिरम्याणितेदृष्ट्वाबभूवुर्जातविस्मयाः ॥ २ ॥ चंपकाशोकवकुलशालतालसमाकुला ॥ तमालपनसच्छन्नानागमालासमावृता ॥ ३ ॥ हिंतालैरर्जुनैर्नीपैःसप्तपर्णैःसुपुष्पितैः ॥ तिलकैः कर्णिकारैश्चपाटलैश्चसमंततः ॥ ४ ॥

सुवेलाग्रे रामः सैन्यं न्यवेशयदित्यग्रिमश्लोकेः । अत्र पूर्णचन्द्रत्वोक्तिः पूर्णकल्पत्वादिति ॥ १३ ॥ १४ ॥ अर्वेकमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टात्रिंशः सर्गः ॥ ३८ ॥ कतकरी० ॥ ३५ ॥ तामिति ॥ १ ॥ समसौम्यानि आयामविस्ताराभ्यां समानि समभूतलानि च दुष्टमृगाद्युपद्रवराहित्येन सौम्यानि अतएव क्रीडादौ रम्याणीत्यर्थ इति तीर्थः । समसाम्यानीति पाठः । समप्रदेशे साम्यसंस्थानानि रम्याणि मृगाद्युपद्रवराहित्यादिति कतकः । विशालानि विपुलानि आयतानि दीर्घाणि दृष्टिरम्याणि चक्षुःप्रियाणि ॥ २ ॥ चंपकेत्यादि लंका

विशेषणम् । नागमाला नागवृक्षपंक्तिः ॥ ३ ॥ ४ ॥ द्रुमैरुपलक्षिता दृश्यैर्दृष्टिप्रियवस्तुभिरुपलक्षिता ॥ ५ ॥ दृश्यान्येवाह विचित्रेति ॥ ६ ॥ अगमा वृक्षाः ॥ ७ ॥ सर्वे ऋतवो यस्मिंस्तत्सर्वर्तुकम् ॥८॥ बर्हिणैर्मयूरैः परभृताः कोकिलाः । वननिर्झरे निर्झरयुते वने राजदंतादिः ॥ ९ ॥ कोकिलैराकुलाः खंडा वृक्षखंडा येषु तानि वनोपवनानि अग्रेपि बहुव्रीहिरेव ॥ १० ॥ ११ ॥ १२ ॥ प्राणसमत्वेन मंदता । अन्ये तु वनोपवनप्रवेष्टृव्यतिरिक्ताः यथान्निष्क्रम्य लंकां जग्मुः ॥ १३ ॥ १४ ॥ १५ ॥ वारणाः वनगजाः ॥ १६ ॥ एकमखंडम् । दिविस्पृशं दिविस्पृक् पूर्वपदे हृद्युभ्यां चेति ङेरलुक् स्पृशेः

शुशुभेपुष्पिताग्रैश्चलतापरिगतद्रुमैः ॥ लंकावहुविधैर्दिव्यैर्यथेंद्रस्यामरावती ॥ ५ ॥ विचित्रकुसुमोपेतैरक्तकोमलपल्लवैः ॥ शाद्वलैश्चतथानीलै श्चित्राभिर्वनराजिभिः ॥ ६ ॥ गंधाढ्यान्यतिरम्याणिपुष्पाणिचफलानिच ॥ धारयंत्यागमास्तत्रभूषणानीवमानवाः ॥ ७॥ तच्चैत्ररथसंकाशंमनोज्ञंनं दनोपमम् ॥ वनंसर्वर्तुकंरम्यंशुशुभेषट्पदायुतम् ॥ ८ ॥ दात्यूहकोयष्टिबकैर्नृत्यमानैश्चबर्हिणैः ॥ रुतंपरभृतानांचशुश्रुवेवननिर्झरे ॥ ९ ॥ नित्यमत्त विहंगानिभ्रमराचरितानिच ॥ कोकिलाकुलखंडानिविहंगाभिरुतानिच ॥ १० ॥ भृंगराजाभिगीतानिकुररस्वनितानिच ॥ विविशुस्तेततस्ता निवनान्युपवनानिच ॥ ११ ॥ हृष्टाःप्रमुदितावीराहरयःकामरूपिणः॥तेषांप्रविशतांतत्रवानराणांमहौजसाम् ॥१२॥ पुष्पसंसर्गसुरभिर्ववौप्राणसमो निलः॥ अन्येतुहरिवीराणांयूथान्निष्क्रम्ययूथपाः॥सुग्रीवेणाभ्यनुज्ञातालंकांजग्मुःपताकिनीम् ॥ १३॥ वित्रासयंतोविहगान्ग्लापयंतोमृगद्विपान् ॥ कंपयंतश्चतांलंकांनादैःस्वैर्नदतांवराः॥१४॥कुर्वंतस्तेमहावेगामहींचरणपीडिताम्॥रजश्चसहसैवोर्ध्वंजगामचरणोत्थितम् ॥१५॥ ऋक्षाःसिंहाश्चमहि षावारणाश्चमृगाःखगाः ॥ तेनशब्देनवित्रस्ताजग्मुर्भीतादिशोदश ॥ १६ ॥ शिखरंतुत्रिकूटस्यप्रांशुचैकंदिविस्पृशम् ॥ समंतात्पुष्पसंछन्नंमहारजतस न्निभम् ॥ १७॥ शतयोजनविस्तीर्णंविमलंचारुदर्शनम् ॥ श्लक्ष्णंश्रीमन्महच्चैवदुष्प्रापंशकुनैरपि ॥ १८ ॥ मनसापिदुरारोहंकिंपुनःकर्मणाजनैः ॥ निविष्टातस्यशिखरेलंकारावणपालिता ॥ १९ ॥ दशयोजनविस्तीर्णाविंशद्योजनमायता ॥ सापुरीगोपुरैरुच्चैःपांडुरांबुदसन्निभैः ॥ कांचनेनचशाले नराजतेनचशोभते ॥ २० ॥प्रासादैश्चविमानैश्चलंकापरमभूषिता ॥ घनैरिवातपापायेमध्यमंवैष्णवंपदम् ॥ २१ ॥ यस्यांस्तंभसहस्रेणप्रासादः समलंकृतः ॥ कैलासशिखराकारोदृश्यतेखमिवोल्लिखन् ॥२२॥ चैत्यःसराक्षसेंद्रस्यबभूवपुरभूषणम् ॥ शतेनरक्षसांनित्यंयःसमग्रेणरक्ष्यते ॥ २३॥

कमत्ययश्चार्षः । समंतात्परित इत्यर्थः । महारजतं स्वर्णम् ॥ १७ ॥ शतयोजनेति । अनेकयोजनेत्यर्थः । श्लक्ष्णं कुट्टिमभूमिवत् ॥ १८ ॥ १९ ॥ दशयोजनेति । इदं च लंकारूपमहादुर्गांतर्वर्तिरावणवास स्थानभूतांतर्दुर्गपरम् । शतयोजनविस्तीर्णा त्रिंशद्योजनमायतेत्यत्रैवान्यत्र स्थले उक्तेः । कांचनेन राजतेन शालेन प्राकारेण ॥२०॥प्रासादभूषितत्वे उपमानम् घनैरित्यादि । मध्यमं वैष्णवं पदम् आकाशमित्यर्थः ॥ २१ ॥ तत्र रावणगृहं प्रासादविशेषेण लक्ष्यत इत्याह यस्यामिति । स्तंभसहस्रेण निर्मित इति शेषः ॥ २२ ॥ स एष पुरभूषणं प्रासादो राक्षसेंद्रस्य चैत्य आलयः चैत्यमायतनं तुल्ये पुंस्त्वमार्षम् । सम

ग्रेण रक्षसां शतेन समग्रसन्नाहवता अनेकेनेत्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ नगरीं दृष्ट्वेति शेषः ॥ २६ ॥ २७ ॥ उच्छ्रैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ कतकरी० ॥३६॥ योजनद्वयमंडलं योजनद्वयविस्तरम् ॥१॥२॥३ ॥ श्वेतचामरे पर्यंते वीज्यमाने यस्य विजयच्छत्रेण श्वेतच्छत्रेण राजचिह्नेन शोभितम् ॥ ४ ॥ हेमसंछादितांबरं हेममालोपरचितहंसादिचित्रैः संछादितमंबरमंतरीयवासो यस्य ऐरावतविषाणाग्रकरणकैरुत्कृष्टैर्विलेखनैर्जातः किणो वक्षसि यस्य तम् ॥ ५ ॥ शशलोहितं शशरुधिरं तत्सदृशरागवता रक्तवाससोत्तरीयवस्त्रेण संवीतम् ॥ ६ ॥ पश्यतां पश्यतोऽनादृत्येत्यर्थः ॥ ७ ॥ सत्त्वेन सत्त्वकार्योत्साहेन अचलाग्रात्सुवेलाग्राद्गोपुरस्थले रावणावस्थितिस्थाने ॥ ८ ॥ ९ ॥ पार्थिवेंद्रस्य तेजसानुगृहीतेन मया न

मनोज्ञांकांचनवतींपर्वतैरुपशोभिताम् ॥ नानाधातुविचित्रैश्चउद्यानैरुपशोभिताम् ॥ २४ ॥ नानाविहगसंघुष्टांनानामृगनिषेविताम् ॥ नानाकुसुमसंपन्नांनानाराक्षससेविताम् ॥ २५ ॥ तांसमृद्धांसमृद्धार्थोलक्ष्मीवाँल्लक्ष्मणाग्रजः ॥ नगरींत्रिदिवप्रख्यांविस्मयंप्रापवीर्यवान् ॥ २६ ॥ तांरत्नपूर्णांबहुसंविधानांप्रासादमालाभिरलंकृतांच ॥ पुरींमहायंत्रकवाटमुख्यांददर्शरामोमहताबलेन ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वा० आदिकाव्ये युद्धकांडे एकोनचत्वारिंशःसर्गः ॥ ३९ ॥ ततोरामःसुवेलाग्रंयोजनद्वयमंडलम् ॥ उपारोहत्ससुग्रीवोहरियूथैःसमन्वितः ॥ १ ॥ स्थित्वामुहूर्तंतत्रैवदिशोदशविलोकयन् ॥ त्रिकूटशिखरेरम्येनिर्मितांविश्वकर्मणा ॥ २॥ ददर्शलंकांसुन्यस्तांरम्यकाननशोभिताम् ॥ तस्यांगोपुरशृंगस्थंराक्षसेंद्रंदुरासदम् ॥३॥ श्वेतचामरपर्यंतंविजयच्छत्रशोभितम् ॥ रक्तचंदनसंलिप्तंरक्ताभरणभूषितम् ॥ ४ ॥ नीलजीमूतसंकाशंहेमसंछादितांबरम् ॥ ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ५ ॥ शशलोहितरागेणसंवीतंरक्तवाससा ॥ संध्यातपेनसंछन्नंमेघराशिमिवांबरे ॥ ६ ॥ पश्यतांवानरेंद्राणांराघवस्यापिपश्यतः ॥ दर्शनाद्राक्षसेंद्रस्यसुग्रीवःसहसोत्थितः ॥ ७ ॥ क्रोधवेगेनसंयुक्तःसत्त्वेनचबलेनच ॥ अचलाग्रादथोत्थायपुप्लुवेगोपुरस्थले ॥ ८ ॥ स्थित्वामुहूर्तंसंप्रेक्ष्यनिर्भयेनांतरात्मना ॥ तृणीकृत्यचतद्रक्षःसोऽब्रवीत्परुषंवचः ॥ ९ ॥ लोकनाथस्यरामस्यसखादासोस्मिराक्षसः ॥ नमयामोक्ष्यसेऽद्यत्वंपार्थिवेंद्रस्यतेजसा ॥ १० ॥ इत्युक्त्वासहसोत्पत्यपुप्लुवेतस्यचोपरि ॥ आकृष्यमुकुटंचित्रंपातयामासतद्भुवि ॥ ११ ॥ समीक्ष्यतूर्णमायांतंबभाषेतंनिशाचरः ॥ सुग्रीवस्त्वंपरोक्षंमेहीनग्रीवोभविष्यसि ॥ १२ ॥ इत्युक्त्वोत्थायतंक्षिप्रंबाहुभ्यामाक्षिपत्तले ॥ कंदुवत्ससमुत्थायबाहुभ्यामाक्षिपद्धरिः ॥ १३ ॥ परस्परंस्वेदविदिग्धगात्रौपरस्परंशोणितरक्तदेहौ ॥ परस्परंश्लिष्टनिरुद्धचेष्टौपरस्परंशाल्मलिकिंशुकाविव ॥ १४ ॥

मोक्ष्यसे रामाभिमायेण सखा स्वामिमायेण दास इति बोध्यम् ॥ १० ॥ उत्पत्य गोपुरादिति शेषः । तस्योपरि पुप्लुवे प्लुत्यागत इत्यर्थः । चित्रमद्भुतं तत्प्रसिद्धं मुकुटमाकृष्य शिरसो गृहीत्वा भुवि पातयामास तत्पातयित्वा स्वयं भूमौ पपात ॥ ११ ॥ तूर्णमायांतं पुनर्भूतलादिति शेषः । मे परोक्षमेव त्वं सुग्रीवः इदानीं मद्दृष्टचग्रे हीनग्रीवो भविष्यसि ॥ १२ ॥ तले भूतले क्रीडायां तलाहतकंदुको यथा द्रागुत्तिष्ठति तद्वत्समुत्थाय बाहुभ्यामाक्षिपद् भूमाविति शेषः ॥ १३ ॥ शोणितेन रुधिरेण रक्तवर्णौ देहौ ययोस्तौ परस्परं श्लिष्टौ श्लिष्टत्वादेव तौ च तौ निरुद्धचेष्टौ शाल्मलिकिंशुकाविव

पुष्पिताविति शेषः ॥ १४ ॥ अरत्निघातैर्निष्कनिष्ठमुष्टिघातैः । अरत्निस्तु निष्कनिष्ठेन मुष्टिनेत्यमरः । असह्यरूपं अत्यंतासह्यम् ॥ १५ ॥ नियुद्धं बाहुयुद्धम् । विनम्य पादक्रमात्पादविक्षेपाद्धेतोः । गोपुरवेदिलग्नौ भूपतिताविति्यर्थः ॥ १६ ॥ सालनिखातमध्ये प्राकारपरिखयोर्मध्ये । निघातेतिपाठेप्ययमेवार्थः । अभिनिःश्वसंतौ मुहूर्तं स्थित्वालिंग्येत्यन्वयः ॥ १७ ॥ बाहुरूपैर्योक्त्रैः रज्जुभिः संयोजयामासतुर्बंधतुः । संरंभः क्रोधः शिक्षा नियुद्धाभ्यासः बलं सहजं प्राणीयं तैः संयुक्तौ ॥ १८ ॥ पोतो बालः । संवेदनं प्रेरणम् ॥ १९ ॥ व्यायामो नियुद्धोत्साहः ॥ २० ॥ वारयंत्येभिः प्रतिगजानिति वारणो महागजः । द्वितीय वारणशब्दः करिहस्तवाची करिकराभैरित्यर्थः । परवारणो मत्तगजः । मंडलमार्गम् मंडलाकारत्वसाधको मार्गो गतिभेदः ॥ २१ ॥ भक्षार्थे भक्षरूपप्रयोजननिमित्तं यथा क्रुद्धाववतस्थाते तथेत्यर्थः ॥ २२ ॥ विचित्राणि मंडलानि चारिकरणखंडमहामंडलाख्यमंडलभेदात् । तानि तु एकपादप्रचारेण चारिसंज्ञं तु मंडलम् ॥ विपादक्रमणं यत्र करणाख्यं तु मंडलम् ॥ करणानां समायोगात्खंडमंडलमीरितम् ॥ खंडैस्त्रि

मुष्टिप्रहारैश्चतलप्रहारैररत्निघातैश्चकराग्रघातैः ॥ तौचक्रतुर्युद्धमसह्यरूपंमहाबलौराक्षसवानरेंद्रौ ॥ १५ ॥ कृत्वानियुद्धंभृशमुग्रवेगौकालंचिरंगोपुरवेदिमध्ये ॥ उत्क्षिप्यचोत्क्षिप्यविनम्यदेहौपादक्रमाद्गोपुरवेदिलग्नौ ॥ १६ ॥ अन्योन्यमापीड्यविलग्नदेहौतौपेततुःसालनिखातमध्ये ॥ उत्पेततुर्भूमितलंस्पृशंतौस्थित्वामुहूर्तंत्वभिनिःश्वसंतौ ॥ १७ ॥ आलिंग्यचालिंग्यचबाहुयोक्त्रैःसंयोजयामासतुराहवेतौ ॥ संरंभशिक्षाबलसंप्रयुक्तौसुचेरतुः संप्रतियुद्धमार्गे ॥ १८ ॥ शार्दूलसिंहाविवजातदंष्ट्रौगजेंद्रपोताविवसंप्रयुक्तौ ॥ संहत्यसंवेद्यचतौकराभ्यांतौपेततुर्वैयुगपद्धरायाम् ॥ १९ ॥ उद्यम्य चान्योन्यमधिक्षिपंतौसंचक्रमातेबहुयुद्धमार्गे ॥ व्यायामशिक्षाबलसंप्रयुक्तौक्लमंनतौजग्मतुराशुवीरौ ॥ २० ॥ बाहूत्तमैर्वारणवारणाभैर्निवारयंतौपरवारणाभौ ॥ चिरेणकालेनभृशंप्रयुद्धौसंचेरतुर्मंडलमार्गमाशु ॥ २१ ॥ तौपरस्परमासाद्ययत्तावन्योन्यसूदने ॥ मार्जाराविवभक्षार्थेऽवतस्थाते मुहुर्मुहुः ॥ २२ ॥ मंडलानिविचित्राणिस्थानानिविविधानिच ॥ गोमूत्रकाणिचित्राणिगतप्रत्यागतानिच ॥ २३ ॥ तिरश्चीनगतान्येवतथावक्रगतानिच ॥ परिमोक्षंप्रहाराणांवर्जनंपरिधावनम् ॥ २४ ॥ अभिद्रवणमाप्लावमवस्थानंसविग्रहम् ॥ परावृत्तमपावृत्तमपद्रुतमवप्लुतम् ॥ २५ ॥ उपन्यस्तमपन्यस्तंयुद्धमार्गविशारदौ ॥ तौविचेरतुरन्योन्यंवानरेन्द्रश्चरावणः ॥ ॥ २६ ॥

भिश्चतुर्भिर्वा महामंडलमीरितमिति भरतोक्तानि । विविधानि स्थानानि वैष्णवं समपादं च वैशाखं मंडलं तथा ॥ प्रत्यालीढमनालीढं स्थानान्येतानिषण्नृणामिति भरतोक्तानि । पादयोः पूर्वापरविक्षेपतिर्यग्विक्षेपादि विन्यासविशेषरूपाणीति तीर्थः । गोमूत्रकाणि गोमूत्ररेखाकारकुटिलगमनानि । चित्राणि गतप्रत्यागतानि नानाप्रकारापसर्पणोपसर्पणानि ॥ २३ ॥ तिरश्चीनगतानि तिर्यग्गतानि । वक्रगतानि सव्यापसव्यसंचारणानि । प्रहाराणां परदत्तप्रहाराणाम् । परिमोक्षं स्थानचलनादिना व्यर्थीकरणम् । वर्जनं स्वप्रहारवैफल्यापादकस्थाने तद्वर्जनम् । परिधावनं एकस्य तिष्ठतः परितो धावनं भ्रमणमित्यर्थः ॥ २४ ॥ अभिद्रवणं अभिमुखेन शीघ्रगमनम् । आप्लवनमीषदीषद्गमनम् । अवस्थानं कृत्वा कृत्वा गमनमिति यावत् । सविग्रहमवस्थानं विगृह्याभिमुख्येनावस्थानम् । परावृत्तं पराङ्मुखगमनम् । अपावृत्तं पार्श्वतोपसरणम् । अपद्रुतं परस्परजान्वादि ग्रहायावनतकायतया धावनम् । अवप्लुतं प्रतिभटं पादेन प्रहर्तुमभिगमनम् ॥ २५ ॥ उपन्यस्तं परेण स्वबाह्वोरग्रहाय स्वोरःसमीपस्थानम् । अपन्यस्तं प्रतिभटबाहुग्रहणार्थं स्वबाहुप्रसारणम् । कुर्वंतौ तौ विचेरतुरित्यन्वयः ॥ २६ ॥

वैरपि या सुदुर्जया श्रूयते सेयम् ॥ ४ ॥ कार्यसिद्धिं शत्रुहननरूपकार्यसिद्धिं पुरस्कृत्य तदुपायनिश्चयाय मंत्रः क्रियताम् । नित्यं यत्र रावणः सन्निहितः सेयं लंकेति शेषः ॥५॥ अग्राम्यपदवत् अग्राम्यार्थपदवत् अपशब्दहीनं च पुष्कलार्थं बह्वर्थाल्पशब्दम् ॥ ६ ॥ ७ ॥ यच्च विधानं विहितं पुररक्षार्थमिति शेषः । समुपस्थिताः मम समीपं प्राप्ताः ॥ ८ ॥ ९ ॥ पूर्वं द्वारमित्यन्वयः ॥ १० ॥ ११ ॥ राक्षसानां सहस्रैरित्यादिरावणविशेषणम् ॥ १२ ॥ परमसंविग्नः शुकसारणावेदितमहाबलस्मरणादंतःकरणेऽतिभीतः ॥ १३ ॥ १४ ॥ १५ ॥ तद्बलाधिष्ठातृंस्तदुचितैः स्वबलैः प्रतिरोधकानुपदिश्य तत्रत्यबलस्य समाधिकन्यूनतापरिज्ञानाय तत्परिच्छेदमाह गजानामिति । गजयोधिनामित्यर्थः । रथानां रथिनामयुतं दशसाहस्रम् । साग्रकोटिः किंचिल्लक्षसंख्याधिका कोटिरित्यर्थः ॥१६॥ आततायिनः शस्त्रपाणयः एते यूथपा

कार्यसिद्धिंपुरस्कृत्यमंत्रयध्वंविनिर्णये ॥ नित्यंसन्निहितोयत्ररावणोराक्षसाधिपः ॥ ५ ॥ अथतेषुब्रुवाणेषुरावणावरजोऽब्रवीत् ॥ वाक्यमग्राम्यपदवत्पुष्कलार्थंविभीषणः ॥ ६ ॥ अनलःपनसश्चैवसंपातिःप्रमतिस्तथा ॥ गत्वालंकांममामात्याःपुरींपुनरिहागताः ॥ ७ ॥ भूत्वाशकुनयःसर्वेप्रविष्टाश्च रिपोर्बलम् ॥ विधानंविहितंयच्चतद्दृष्ट्वासमुपस्थिताः ॥ ८ ॥ संविधानंयथाहुस्तेरावणस्यदुरात्मनः ॥ रामतद्ब्रुवतःसर्वंयाथातथ्येनमेशृणु ॥ ९ ॥ पूर्वंप्रहस्तःसबलोद्वारमासाद्यतिष्ठति ॥ दक्षिणंचमहावीर्यौमहापार्श्वमहोदरौ ॥ १० ॥ इंद्रजित्पश्चिमंद्वारंराक्षसैर्बहुभिर्वृतः ॥ पट्टिशासिधनुष्मद्भिःशूलमुद्गरपाणिभिः ॥ ११ ॥ नानाप्रहरणैःशूरैरावृतोरावणात्मजः ॥ राक्षसानांसहस्रैस्तुबहुभिःशस्त्रपाणिभिः ॥ १२ ॥ युक्तःपरमसंविग्नोराक्षसैःसहमंत्रवित् ॥ उत्तरंनगरद्वारंरावणःस्वयमास्थितः ॥ १३ ॥ विरूपाक्षस्तुमहताशूलखड्गधनुष्मता ॥ बलेनराक्षसैःसार्धंमध्यमंगुल्ममाश्रितः ॥ १४ ॥ एतानेवंविधान्गुल्मांल्लंकायांसमुदीक्ष्यते ॥ मामकामंत्रिणःसर्वेशीघ्रंपुनरिहागताः ॥ १५ ॥ गजानांदशसाहस्रंरथानामयुतंतथा ॥ हयानामयुतेद्वेचसाग्रांकोटिंचरक्षसाम् ॥ १६ ॥ विक्रांताबलवंतश्चसंयुगेष्वाततायिनः ॥ इष्टाराक्षसराजस्यनित्यमेतेनिशाचराः ॥ १७ ॥ एकैकस्यात्र युद्धार्थेराक्षसस्यविशांपते ॥ परीवारःसहस्राणांसहस्रमुपतिष्ठति ॥१८॥ एतांप्रवृत्तिंलंकायांमंत्रिप्रोक्तांविभीषणः ॥ एवमुक्त्वामहाबाहूराक्षसांस्तानदर्शयत् ॥ १९ ॥ लंकायांसचिवैःसर्वंरामायप्रत्यवेदयत् ॥ रामंकमलपत्राक्षमिदमुत्तरमब्रवीत् ॥ २० ॥ रावणावरजःश्रीमान्रामप्रियचिकीर्षया ॥ कुबेरंतुयदारामरावणःप्रतियुद्ध्यति ॥ २१ ॥ षष्टिःशतसहस्राणितदानिर्यांतिराक्षसाः ॥ पराक्रमेणवीर्येणतेजसासत्त्वगौरवात् ॥ सदृशाह्यत्रदर्पेणरावणस्यदुरात्मनः ॥ २२ ॥ अत्रमन्युर्नकर्तव्यःकोपयेत्वांनभीषये ॥ समर्थोह्यसिवीर्येणसुराणामपिनिग्रहे ॥ २३ ॥

गणिताः ॥ १७ ॥ सहस्राणां सहस्रम् अनेकलक्षमित्यर्थः । एकैकस्य राक्षसस्य परिवाराः पैर्युद्धार्थे उक्तसंख्या उपतिष्ठंति ते ॥१८॥ एतां मंत्रिप्रोक्तां प्रवृत्तिम् एवंप्रकारेणोक्त्वा तान् राक्षसान् अनलादींश्चतुरो मंत्रिणोदर्शयत् ॥ १९ ॥ तैः सचिवैः करणभूतैः सर्वलंकाया यद्वृत्तं तत्प्रत्यवेदयत् तदुत्तरं राममिदमब्रवीच्च ॥ २० ॥ २१ ॥ षष्टिः शतसहस्राणि षष्टिलक्षमित्यर्थः । इदानीं बह्वधिकमित्यर्थः । पराक्रमादिना रावणस्य सदृशाः सत्त्वगौरवाद्धैर्यातिशयाच्च तत्सदृशाः ॥ २२ ॥ अत्र रावणबलवर्णनविषये मन्युः स्वांतःकरणे दैन्यमपि रोषश्च न कार्यो रावणवत् यतस्त्वां रावणं प्रति रोषये इत्यर्थः । तत्र हेतुमाह समर्थ

इति ॥ २३ ॥ यस्मात्तेन तत्तद्वारेषु सर्वा सेना विभज्य स्थापिता तत्तस्माद्भवानपि इदं वानरानीकं तद्वदेव विभागेन व्यूह्य व्यूहितेन चतुरंगेण बलेन वृतं रावणं निर्मथिष्यसि ॥ २४ ॥ २५ ॥ प्रहस्तं प्रति योद्धा प्रहस्तस्य सेनापतेः प्रतियोद्धा ॥ २६ ॥ २७ ॥ हनूमान् पश्चिमद्वारमिति । तस्येंद्रजिद्द्वारत्वात्तदुचितमहाबलनियोजनं तदेवौचित्यमाह अप्रमेयात्मा ॥ २८ ॥ विप्रकारो वधः ॥ २९ ॥ सर्वान् लोकान् परिक्रमाति दिग्विजयाय अहं तस्य वधे धृतः कृतप्रतिज्ञो यतोऽतोहमेवोत्तरं द्वारं प्रवेक्ष्यामीत्युत्तरश्लोकेन योजना ॥ ३० ॥ ३१ ॥ ३२ ॥ अथ वानराणामपि कामरूपतया रूपांतरकरणे युद्धे स्वीयपरकीयविवेकासंभवादाह नचैवेति । संज्ञा नित्यवानररूपधारणसंकेतः । एवं चास्मान्सप्त हित्वा मनुष्याकारो निःशंकं वध्यः । वानररूपधारी वानरैर्युध्यते तदा वध्य एवेति भावः ॥ ३३ ॥ संकेतप्रकारमाह वानरा एवेति । वो युष्माकं स्वजने स्वजनत्वपरिज्ञाने वानरा एव वानरत्वविशिष्टा एव चिह्नं तद्वैशिष्ट्यमेव चिह्नमित्यर्थः । मानुषेण रूपेणेति शेषः ॥ ३४ ॥ के सप्त तत्राहाहमिति । आ

तद्भवांश्चतुरंगेणबलेनमहतावृतम् ॥ व्यूह्येदंवानरानीकंनिर्मथिष्यसिरावणम् ॥ २४ ॥ रावणावरजेवाक्यमेवंब्रुवतिराघवः ॥ शत्रूणांप्रतिघातार्थ मिदंवचनमब्रवीत् ॥ २५ ॥ पूर्वद्वारंतुलंकायानीलोवानरपुंगवः ॥ प्रहस्तंप्रतियोद्धास्याद्वानरैर्बहुभिर्वृतः ॥२६॥ अंगदोवालिपुत्रस्तुबलेनमहतावृतः ॥ दक्षिणेबाधतांद्वारेमहापार्श्वमहोदरौ ॥२७॥ हनूमान्पश्चिमद्वारंनिष्पीड्यपवनात्मजः ॥ प्रविशत्वप्रमेयात्माबहुभिःकपिभिर्वृतः ॥२८॥ दैत्यदानवसं घानामृषीणांचमहात्मनाम् ॥ विप्रकारप्रियःक्षुद्रोवरदानबलान्वितः ॥२९॥ परिक्रामतियःसर्वाँल्लोकान्संतापयन्प्रजाः ॥ तस्याहंराक्षसेंद्रस्यस्वयमे ववधेधृतः ॥ ३० ॥ उत्तरंनगरद्वारमहंसौमित्रिणासह ॥ निपीड्याभिप्रवेक्ष्यामिसबलोयत्ररावणः ॥ ३१ ॥ वानरेंद्रश्चबलवानृक्षराजश्चवीर्यवान् ॥ राक्षसेंद्रानुजश्चैवगुल्मेभवतुमध्यमे ॥ ३२ ॥ नचैवमानुषंरूपंकार्यंहरिभिराहवे ॥ एषाभवतुनःसंज्ञायुद्धेस्मिन्वानरेबले ॥ ३३ ॥ वानराएववश्चिह्नं स्वजनेऽस्मिन्भविष्यति ॥ वयंतुमानुषेणैवसप्तयोत्स्यामहेपरान् ॥ ३४ ॥ अहमेवसहभ्रात्रालक्ष्मणेनमहौजसा ॥ आत्मनापंचमश्चायंसखामम विभीषणः ॥ ३५ ॥ सरामःकृत्यसिद्ध्यर्थमेवमुक्त्वाविभीषणम् ॥ सुवेलारोहणेबुद्धिंचकारमतिमान्प्रभुः ॥ ३६ ॥ रमणीयतरंदृष्ट्वासुवेलस्यगिरे स्तटम् ॥३७॥ ततस्तुरामोमहताबलेनप्रच्छाद्यसर्वांपृथिवींमहात्मा ॥ प्रहृष्टरूपोभिजगामलंकांकृत्वामतिंसोरिवधेमहात्मा ॥३८॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्येयुद्धकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ सतुकृत्वासुवेलस्यमतिमारोहणंप्रति ॥ लक्ष्मणानुगतोरामःसुग्रीवमिदमब्रवीत् ॥ १ ॥

त्मना पंचमः मंत्रिचतुष्टयसहितो विभीषण इत्यर्थः ॥ ३५ ॥ रक्षसामपि संस्थानं मनुष्यवदेवेति इत एव ज्ञायते । कतककृत्तु रक्षोरूपाणामपि तेषां मानुषत्वेन प्रच्छादनं स्वार्थानुरोधेन परेषामपरिज्ञानार्थं च । तदेवाह कृत्यसिद्ध्यर्थं विभीषणमेवमुक्त्वेति । मानुषरूपेण स्वसमीपे स्थित्वा योद्धव्यमित्युक्त्वेत्यर्थः इत्याह । सुवेलारोहणे बुद्धिं चकार तस्य दुर्गत्वाद्रात्रौ तत्रावस्थानस्य सुखत्वाच्च । मतिमान्मतिमिति पाठे मतिमर्थनिर्धारणात्मिकां बुद्धिमित्यर्थः । अर्थनिर्धारणं मतिरिति तीर्थः ॥ ३६ ॥३७॥ ३८ ॥ एतदग्रे ततस्तु राम इति पद्यं पठंति तत्र वक्ष्यमाणसंग्रहो नाप्युक्तानुवादो नाप्यत्र प्रकरणविच्छेद इतीमं श्लोकं वृथा प्रक्षिप्यात्र सर्गच्छेदं कुर्वंति भ्रांता इति कतककृत् ॥ सँगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ स त्विति ॥ १ ॥

१ मध्यमपुरुषत्वमार्षमिति भूषणे ।

विचरंति गृहेषु मध्ये इति शेषः ॥ ३१ ॥ चीचीकूचीति शब्दानुकारः । कलहैषिभिः पक्ष्यंतरैर्निर्जिताः ग्रथिताः पतंति परस्परमावध्य पतंति ॥ ३२ ॥ प्रत्यादित्यं सूर्याभिमुखीभूय रुदंति रुदंत इव रटंती त्यर्थः ॥ ३३ ॥ कालः कालरूपः स पुरुषः सर्वेषां गृहाणि काले काले संध्याकालेषु सर्वेषां नो गृहाण्यन्वेक्षते ॥ ३४ ॥ एतदग्रे रामं मन्यामहे विष्णुमित्यादिश्लोकद्वयं प्रक्षिप्तमिति प्राचीनैर्न व्याख्यातमिति कतकः । ज्ञात्वेति अस्य रामस्य कर्माणि एतानि निमित्तानि च ज्ञात्वा आयतिक्षमं उत्तरकालसुखदं यत्कर्म तदवधार्य यदुचितं तत्क्रियताम् ॥ ३५ ॥ तस्य तस्मै रावणायेत्यर्थः । मनः परीक्ष्य मदुक्तमस्मै न रोचत इति ज्ञात्वेत्यर्थः । तूष्णीं बभूव किमपि नोवाच ॥ ३६ ॥ अर्चलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ ॥ छ ॥

चीचीकूचीतिवाशंतःशारिकावेश्मसुस्थिताः ॥ पतंतिग्रथिताश्चापिनिर्जिताःकलहैषिभिः ॥ ३२ ॥ पाक्षिणश्चमृगाःसर्वेप्रत्यादित्यंरुदंतिते ॥ करालो विकलोमुंडःपुरुषःकृष्णपिंगलः ॥ ३३ ॥ कालोगृहाणिसर्वेषांकालेकालेऽन्ववेक्षते ॥ एतान्यन्यानिदुष्टानिनिमित्तान्युत्पतंतिच ॥ ३४ ॥ " रामं मन्यामहेविष्णुंमानुषंरूपमास्थितम् ॥ नहिमानुषमात्रोसौराघवोदृढविक्रमः ॥ १ ॥ येनबद्धःसमुद्रेचसेतुःसपरमाद्भुतः ॥ कुरुष्वनरराजेनसंधिंरामे णरावण ॥ २ ॥ " ज्ञात्वाऽवधार्यकर्माणिक्रियतामायतिक्षमम् ॥ ३५ ॥ इदंवचस्तस्यनिगद्यमाल्यवान्परीक्ष्यरक्षोधिपतेर्मनःपुनः ॥ अनुत्तमे पूत्तमपौरुषोवलीवभूवतूष्णींसमवेक्ष्यरावणम् ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥

तत्तुमाल्यवतोवाक्यंहितमुक्तंदशाननः ॥ नमर्षयतिदुष्टात्माकालस्यवशमागतः ॥ १ ॥ सबद्धाभ्रुकुटिंवक्रेक्रोधस्यवशमागतः ॥ अमर्षात्परिवृत्ताक्षो माल्यवंतमथाब्रवीत् ॥ २ ॥ हितबुद्ध्यायदहितंवचःपरुषमुच्यते ॥ परपक्षंप्रविश्यैवनैतच्छ्रोत्रगतंमम ॥ ३ ॥ मानुषंकृपणंराममेकंशाखामृगा श्रयम् ॥ समर्थंमन्यसेकेनत्यक्तंपित्रावनाश्रयम् ॥ ४ ॥ रक्षसामीश्वरंमांचदेवानांचभयंकरम् ॥ हीनंमांमन्यसेकेनअहीनंसर्वविक्रमैः ॥ ५ ॥ वीरद्वेषेणवाशंकेपक्षपातेनवारिपोः ॥ त्वयाहंपरुषाण्युक्तोममप्रोत्साहनेनवा ॥ ६ ॥ प्रभवंतंपदस्थंहिपरुषंकोऽभिभाषते ॥ पंडितःशास्त्रतत्त्वज्ञोवि नाप्रोत्साहनेनवा ॥ ७ ॥ आनीयचवनात्सीतांपद्महीनामिवश्रियम् ॥ किमर्थंप्रतिदास्यामिराघवस्यभयादहम् ॥ ८ ॥ वृतंवानरकोटीभिःससुग्रीवं सलक्ष्मणम् ॥ पश्यकैश्चिदहोभिश्चराघवंनिहतंमया ॥ ९ ॥ द्वंद्वेयस्यनतिष्ठंतिदैवतान्यपिसंयुगे ॥ सकस्माद्रावणोयुद्धेभयमाहारयिष्यति ॥ १० ॥

॥ कतकरी० ॥ ३३ ॥ तत्त्विति ॥ १ ॥ २ ॥ परपक्षं तत्प्राबल्यं प्रविश्यैव परिगृह्यैव वस्तुतोऽहितं वचः परुषं हितबुद्ध्या यदुच्यते नैतन्मम श्रोत्रगतं मच्छ्रोत्रेण नैव गृहीतम् ॥ ३ ॥ कुतस्तत्राह मानुष मिति ॥ ४ ॥ हीनं विक्रमैरित्यनुषज्यते ॥ ५ ॥ यत्त्वयाहं परुषाण्युक्तस्तत्तु वीरद्वेषेण वा वीरे मयि द्वेषेण वा आहोस्विद्रिपौ पक्षपातेन वा मम प्रोत्साहनेन शत्रुप्रशंसायां क्रोधादुद्धाय प्रवर्तिष्यत इति प्रवर्त नेन वा हेतुनेति शंके न तु वाक्यस्य यथाश्रुतार्थे तात्पर्यमित्यर्थः ॥ ६ ॥ तदेव समर्थयन्नाह प्रभवंतमिति । प्रभवंतं युद्धादिसमर्थं पदस्थं अव्याहतस्वराज्यस्थं राजानं विना प्रोत्साहनं रिपुवधप्रवृत्तिप्रेरणाप्रयो जनं विना पंडितत्वादिगुणविशिष्टः कः परुषमभिभाषते न कोपीति निश्चयः । वाशब्दो निश्चये ॥ ७ ॥ पद्महीनामित्यनेन लक्ष्मीत्वाभावबोधनमत्युपादेयत्वबोधनं च ॥ ८ ॥ ९ ॥ १० ॥

एवमपि रामस्य महत्त्वेपि द्विधा भज्येयं इतरवेणुवत् नं नमेयं वेतसवत् सहज आजानसिद्धः।ननु दोषश्चेत्त्यज्यतां तत्राह स्वभाव इति।नह्यग्निः कदापि शीतलो भवतीति भावः॥ ११॥ननु रामः कथं मानुष इत्युच्यते समुद्रे सेतोर्मनुष्यासाध्यत्वादत आह यदीति । तावत्प्रथमतो रामेण समुद्रे सेतुर्बद्ध इति विस्मयो यदि कोत्र विस्मयः यतः स यदृच्छया दैवगत्या घुणाक्षरन्यायेन नतु स्वसामर्थ्येनेत्यर्थः येन सेतुबंधनेन ते इदं भयमागतम् ॥ १२ ॥ १३ ॥ संरब्धं युद्धे संरंभवंतम् रुष्टं कुपितम् उत्तरं वाक्यं न प्रत्यपद्यत ॥ १४ ॥ अभ्यनुज्ञातो रावणेन ॥ १५ ॥ १६ ॥ गुप्तिप्रकारो व्यादिदेशेति ॥ १७ ॥ महामायमित्यादींद्रजि

द्विधाभज्येयमप्येवंनननमेयंतुकस्यचित् ॥ एषमेसहजोदोषःस्वभावोदुरतिक्रमः ॥ ११ ॥ यदितावत्समुद्रेतुसेतुर्बद्धोयदृच्छया ॥ रामेणविस्मयःकोत्रयेनतेभयमागतम् ॥ १२ ॥ सतुतीर्त्वार्णवंरामःसहवानरसेनया ॥ प्रतिजानामितेसत्यंनजीवन्प्रतियास्यति ॥ १३ ॥ एवंब्रुवाणंसंरब्धंरुष्टंविज्ञायरावणम् ॥ व्रीडितोमाल्यवान्वाक्यंनोत्तरंप्रत्यपद्यत ॥ १४ ॥ जयाशिषातुराजानंवर्धयित्वायथोचितम् ॥ माल्यवानभ्यनुज्ञातोजगामस्वंनिवेशनम् ॥ १५ ॥ रावणस्तुसहामात्योमंत्रयित्वाविमृश्यच ॥ लंकायास्तुतदागुप्तिंकारयामासराक्षसः ॥ १६ ॥ व्यादिदेशचपूर्वस्यांप्रहस्तंद्वारिराक्षसम् ॥ दक्षिणस्यांमहावीर्यौमहापार्श्वमहोदरौ ॥ १७ ॥ पश्चिमायामथद्वारिपुत्रमिंद्रजितंतदा ॥ व्यादिदेशमहामायंराक्षसैर्बहुभिर्वृतम् ॥ १८ ॥ उत्तरस्यांपुरद्वारिव्यादिश्यशुकसारणौ ॥ स्वयंचात्रगमिष्यामिमंत्रिणस्तानुवाचह ॥ १९ ॥ राक्षसंतुविरूपाक्षंमहावीर्यपराक्रमम् ॥ मध्यमेऽस्थापयद्गुल्मेबहुभिःसहराक्षसैः ॥ २० ॥ एवंविधानंलंकायांकृत्वाराक्षसपुंगवः ॥ कृतकृत्यमिवात्मानंमन्यतेकालचोदितः ॥ २१ ॥ विसर्जयामासततःसमंत्रिणोविधानमाज्ञाप्यपुरस्यपुष्कलम् ॥ जयाशिषामंत्रिगणेनपूजितोविवेशसोंतःपुरमृद्धिमन्महत् ॥ २२ ॥ इत्यार्षे श्रीम० वाल्मी० आदि० युद्धकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ नरवानरराजानौसतुवायुसुतःकपिः ॥ जांबवानृक्षराजश्चराक्षसश्चविभीषणः ॥ १ ॥ अंगदोवालिपुत्रश्चसौमित्रिःशरभःकपिः ॥ सुषेणःसहदायादोमैंदोद्विविदएवच ॥ २ ॥ गजोगवाक्षःकुमुदोनलोथपनसस्तथा ॥ अमित्रविषयंप्राप्ताःसमवेताःसमर्थयन् ॥ ३ ॥ इयंसालक्ष्यतेलंकापुरीरावणपालिता ॥ सासुरोरगगंधर्वैःसर्वैरपिसुदुर्जया ॥ ४ ॥

द्विशेषणम् ॥ १८ ॥ व्यादिश्य तन्मुखतो वृत्तांतश्रवणोत्तरं तौ तिरस्कृत्येत्यर्थः । अत्र उत्तरद्वारे स्वयं च स्वयमेव गमिष्यामीति तान्मंत्रिण उवाच ॥ १९ ॥ वीर्यं क्रमणसामर्थ्यं मध्यमे पुरमध्यवर्तिनि सेनासन्निवेशेऽस्थापयत् ॥ २० ॥ २१ ॥ जयाशिषा जयाशीर्बोधकशब्दैः ॥ २२ ॥ रुरुमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ कतकटी० ॥ ३४ ॥ नरेति । रामसुग्रीवौ । टजभाव आर्षः ॥ १ ॥ सहदायादः सबंधुः ॥ २ ॥ अमित्रविषयं शत्रुदेशम् । समर्थयन्मंत्रमकुर्वन् ॥ ३ ॥ मंत्रप्रकारः इयमिति । असुरादिसहितैः सर्वैर्दे

शेषः ॥ १ ॥ चिकीर्षंती कर्तुमिच्छंती सखी सरमा वच उवाचेत्यन्वयः ॥ २ ॥ अहं प्रतिच्छन्ना गत्वा कुशलं कुशलावेदकं त्वद्वाक्यं रामे निवेद्य पुनः प्रतिच्छन्ना निवर्तितुमुत्सहेयमित्युवाच ॥ ३ ॥ स्वस्यास्तथासामर्थ्यं दर्शयति नहीति ॥ ४ ॥ तां सरमामित्यन्वयः एवं ब्रुवाणां दूतत्वेच्छुम् । पूर्वशोकाभिपन्नया आश्वासनात्पूर्वं जातेन शोकेनेषद्युक्तया ॥ ५ ॥ अथ सीता शूर्पणखाया इवास्या अपि रामसमीपगमनमनुचितमिति विचार्य तत्सामर्थ्यश्लाघापूर्वं तामुचितकृत्ये नियोजयति समर्थेति । अवगच्छाद्य कर्तव्यमिति पांक्तः पाठ इति कतकः । अंतरशब्दस्तादर्थ्ये । मदंतरे मदर्थे यत्कर्तव्यं त्वया कर्तुं योग्यं तादृशं कर्तव्यं कृत्यं मयोच्यमानमवगच्छ ॥ ६ ॥ मत्प्रियं कर्तव्यमिति यदि तव बुद्धिः स्थिरास्ति तदोच्यत इति शेषः । स्थिरैव निःशंकं ब्रूहीत्युक्ता चाह ज्ञातुमिति । इतो गत्वा रावणः किं करोतीति रावणं ज्ञातुमि

ततस्तस्याहितंसख्याचिकीर्षंतीसखीवचः ॥ उवाचकालेकालज्ञास्मितपूर्वाभिभाषिणी ॥ २॥ उत्सहेयमहंगत्वात्वद्वाक्यमसितेक्षणे ॥ निवेद्यकुशलं रामेप्रतिच्छन्नानिवर्तितुम् ॥ ३ ॥ नहिमेक्रममाणायानिरालंबेविहायसि ॥ समर्थोगतिमन्वेतुंपवनोगरुडोपिवा ॥ ४ ॥ एवंब्रुवाणांतांसीतासरमामिदमब्रवीत् ॥ मधुरंश्लक्ष्णयावाचापूर्वशोकाभिपन्नया ॥ ५ ॥ समर्थागगनंगंतुमपिचत्वंरसातलम् ॥ अवगच्छाद्यकर्तव्यंकर्तव्यंतेमदंतरे ॥ ६ ॥ मत्प्रियंयदिकर्तव्यंयदिबुद्धिःस्थिरातव ॥ ज्ञातुमिच्छामितंगत्वाकिंकरोतीतिरावणः ॥ ७ ॥ सहिमायाबलःक्रूरोरावणःशत्रुरावणः ॥ मांमोहयतिदुष्टात्मापीतमात्रेववारुणी ॥ ८ ॥ तर्जापयतिमांनित्यंभर्त्सापयतिचासकृत् ॥ राक्षसीभिःसुघोराभिर्योमांरक्षतिनित्यशः ॥ ९ ॥ उद्विग्नाशंकिताचास्मिनस्वस्थंचमनोमम ॥ तद्भयाच्चाहमुद्विग्नाअशोकवनिकांगता ॥ १० ॥ यदिनामकथातस्यनिश्चितंवापियद्भवेत् ॥ निवेदयेथाःसर्वंतद्वरोमेस्यादनुग्रहः ॥ ११ ॥ साप्येवंब्रुवतींसीतांसरमामृदुभाषिणी ॥ उवाचवचनंतस्याःस्पृशंतीबाष्पविक्लवम् ॥ १२ ॥ एषतेयद्यभिप्रायस्तस्माद्गच्छामिजानकि ॥ गृह्यशत्रोरभिप्रायमुपावर्तामिमैथिलि ॥ १३ ॥ एवमुक्त्वाततोगत्वासमीपंतस्यरक्षसः ॥ शुश्रावकथितंतस्यरावणस्यसमंत्रिणः ॥ १४ ॥ साश्रुत्वानिश्चयंतस्यनिश्चयज्ञादुरात्मनः ॥ पुनरेवागमत्क्षिप्रमशोकवनिकांशुभाम् ॥ १५ ॥ साप्रविष्टाततस्तत्रददर्शजनकात्मजाम् ॥ प्रतीक्षमाणांस्वामेवभ्रष्टपद्मामिवश्रियम् ॥ १६ ॥ तांतुसीतापुनःप्राप्तांसरमांप्रियभाषिणीम् ॥ परिष्वज्यचसुस्निग्धंददौचस्वयमासनम् ॥ १७ ॥ इहासीनासुखंसर्वमाख्याहिममतत्त्वतः ॥ क्रूरस्यनिश्चयंतस्यरावणस्यदुरात्मनः ॥ १८ ॥ एवमुक्तातुसरमासीतयावेपमानया ॥ कथितंसर्वमाचष्टरावणस्यसमंत्रिणः ॥ १९ ॥

च्छामि ॥ ७ ॥ पीतमात्रा सद्यः पीता ॥ ८ ॥ तर्जापयतीति । तर्जभर्त्साभ्यां तत्करोतीति णिचि पुगार्षः । अवाचिकी भीषिका तर्जनम् । वाचिकी तु सा भर्त्सनम् । राक्षसीभिरिति द्वारकथनम् । रक्षति अत्र रुध्यते ॥ ९ ॥ उद्विग्नेति । कथमुद्विग्नेत्यत्राह तद्भयादिति । अशोकवनिकां गताप्यहं तद्भयादुद्विग्नास्मि ॥ १० ॥ कथा मद्विमोक्षविषया कथा यदि नाम भवेत् अपि वा तदभावविषया स्यात् अनयोर्यन्निश्चितं तत्सर्वं मे निवेदयेथाः तदा मे वरः श्रेष्ठोनुग्रहः स्यात् । एतदनुकूलमेवोत्तरं वक्ष्यति न त्वामुत्सहते मोक्तुमिति ॥ ११ ॥ बाष्पविक्लवं तस्या वदनं स्पृशंती परिमार्जयंती ॥ १२ ॥ उपावर्तामि परावृत्यागच्छामि ॥ १३ ॥ १४ ॥ १५ ॥ स्वामेव प्रतीक्षमाणां कदा आगमिष्यति सरमेति तदागमं प्रतीक्षमाणामित्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ समंत्रिणो रावणस्य सर्वं कथितं परस्परालापमाचष्ट ॥ १९ ॥

जनन्या मात्रा अतिस्निग्धेन मांत्रि वृद्धेन च रावणो बृहद्वचः सर्वथा हितत्वाद्वचसो बृहत्त्वम् । तदुक्त्वा चोदितो बोधितः॥२०॥तद्वाक्यमाह दीयतामिति। सत्कारपूर्वं दीयतामित्यर्थः । निदर्शनं तत्पराक्रमविषय इति शेषः । जनस्थानेऽद्भुतं खरादिवधरूपं यत्कृतं तदेव पर्याप्तम् । प्रमाणांतरानपेक्षं निदर्शनं तत्पराक्रमस्येत्यर्थः॥२१॥किंच रामानुचरो हनूमानेव सर्वराक्षसजयसमर्थ इत्याह लंघनं चेति । दर्शनं सीताया इति शेषः । मानुषः पुरुषः तस्माद्धनूमान् रामो वानरो मनुष्यो वा न अपि तु देवावतार इति भावः ॥ २२ ॥ बहुबोधितो बहुप्रकारं बोधितः । अर्थपरः उत्तरोत्तरमर्थार्जनतत्परः परमलुब्ध इत्यर्थः ॥ २३ ॥ युद्धेऽमृतो मरणमप्राप्तः ततः प्राक् त्वां मोक्तुं त्यक्तुं नोत्सहति । हि प्रसिद्धम् । तस्य सामात्यस्यैष निश्चयो वर्तते ॥ २४ ॥ मृत्युलोभान्मृत्युकृतवंचनया सर्वेषां राक्षसानामात्मनो रावणस्य च वधेन रामेण

जनन्याराक्षसेंद्रोवैत्वन्मोक्षार्थंबृहद्वचः ॥ अतिस्निग्धेनवैदेहिमंत्रिवृद्धेनचोदितः ॥ २० ॥ दीयतामभिसत्कृत्यमनुजेंद्रायमैथिली ॥ निदर्शनंते पर्याप्तंजनस्थानेयदद्भुतम् ॥ २१ ॥ लंघनंचसमुद्रस्यदर्शनंचहनूमतः ॥ वधंचरक्षसांयुद्धेकःकुर्यान्मानुषोयुधि ॥ २२ ॥ एवंसमंत्रिवृद्धैश्चमात्राचब हुबोधितः ॥ नत्वामुत्सहतेमोक्तुमर्थमर्थपरोयथा ॥२३॥ नोत्सहत्यमृतोमोक्तुंयुद्धेत्वामितिमैथिलि ॥ सामात्यस्यनृशंसस्यनिश्चयोह्येषवर्तते॥२४॥ तदेषांसुस्थिराबुद्धिर्मृत्युलोभादुपस्थिता ॥ भयान्नशक्तस्त्वांमोक्तुमनिरस्तःसंयुगे ॥ २५ ॥ राक्षसानांचसर्वेषामात्मनश्चवधेनहि ॥ निहत्यरावणंसं ख्येसर्वथानिशितैःशरैः ॥ प्रतिनेष्यतिरामस्त्वामयोध्यामसितेक्षणे ॥२६॥ एतस्मिन्नंतरेशब्दोभेरीशंखसमाकुलः ॥ श्रुतोवैसर्वसैन्यानांकंपयन्धरणी तलम् ॥ २७ ॥ श्रुत्वातुतंवानरसैन्यनादंलंकागताराक्षसराजभृत्या ॥ हतौजसोदैन्यपरीतचेष्टाःश्रेयोनपश्यन्तिनृपस्यदोषात् ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चतुस्त्रिंशः सर्गः ॥ ३४ ॥ ॥ तेनशंखविमिश्रेणभेरीशब्देननादिना ॥ उपयातिमहाबाहूरामःपरपुरं जयः ॥ १ ॥ तंनिनादंनिशम्याथरावणोराक्षसेश्वरः ॥ मुहूर्तंध्यानमास्थायसचिवानभ्युदैक्षत ॥ ॥ २ ॥ अथतान्सचिवांस्तत्रसर्वानाभाष्यरावणः ॥ सभांसन्नादयन्सर्वानित्युवाचमहाबलः ॥३॥ जगत्संतापनःक्रूरोगर्हयन्राक्षसेश्वरः ॥ तरणंसागरस्यास्यविक्रमंबलपौरुषम् ॥ ४ ॥ यदुक्तवंतोरामस्य भवंतस्तन्मयाश्रुतम् ॥ भवतश्चाप्यहंवेद्मियुद्धेसत्यपराक्रमान् ॥ तूष्णीकानीक्षतोन्योऽन्यंविदित्वारामविक्रमम् ॥ ५ ॥ ततस्तुसुमहाप्राज्ञोमाल्यवान्ना मराक्षसः ॥ रावणस्यवचःश्रुत्वाइतिमातामहोब्रवीत् ॥ ६ ॥

युद्धेऽनिरस्तः सन् रामतो मृत्युभयाद्धयं प्राप्य न त्वां मोक्तुं शक्तः नोत्सहत इत्यर्थः ॥ २५ ॥ तर्हि मम निर्गमोऽसंभवीत्यत आह निहत्येति ॥ २६ ॥ भेरीशंखसमाकुलः तच्छब्दसमाकुलः सर्वसैन्यानां शब्दः श्रुतः ॥ २७ ॥ नृपस्य रावणस्य दोषादन्यायात् श्रेयो न पश्यंति नष्टजीविताशा अभवन्नित्यर्थः ॥ २८ ॥ हरेर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुस्त्रिंशः सर्गः ॥ ३४ ॥ कतकरी० ॥ ३२ ॥ उपयाति स्म लंकामिति शेषः ॥ १ ॥ २ ॥ आभाष्य आमंत्र्य ॥ ३ ॥ रामबलमहं जानामीति सचिवान्स्तुवन्नाह जगदिति । जगत्संतापयतीति जगत्संतापनः अगर्हयन्निति च्छेदः अस्य रामस्य ॥४॥ तूष्णीकानिति । अद्य रामविक्रमं विदित्वा अन्योन्यमीक्षतस्तूष्णीकान्निरुत्साहान्पश्यामीदं किमिति शेषः ॥ ५ ॥ मातुः पैतामह इतिपाठे रावणमातुः पितामहपुत्रस्तस्याः पिते

न्यर्थ इति तीर्थः ॥ ६ ॥ तद्वाक्यमाह विद्यास्विति । विद्यासु चतुर्दशसु अभिविनीतः शिक्षितः नयानुगो नीतिमार्गगः ॥ ७ ॥ तां नीतिमेवाह संदधान इति । कालेन संधानविग्रहोचितकालानुसारेण ॥ ८ ॥ कश्च तयोः कालस्तत्राह हीयमानेनेति । क्षीयमाणेन समेन च कर्त्रा संधिः कार्यः । ज्यायान्प्रबलो विग्रहं कुर्वीत । सर्वथा शत्रुं नावमन्येत नोपेक्षेतेत्यर्थः ॥ ९ ॥ एवं हि स्वपक्षवृद्धिर्भवतीत्युक्तम् । स्वपक्षे वर्धनं कुर्वन्निति तत्तस्माद्धीयमानस्य तव बलवता रामेण संधिर्मह्यं रोचते । संधानोपायमाह यदर्थमिति । सीतार्थमित्यर्थः । अभियुक्तः परैः स्वयं वाभिनिविष्टोसि ॥ १० ॥ शत्रोर्वृद्धिः स्वक्षयश्च संधानकालस्तत्राद्यः स्पष्ट एवेत्याह तस्येति ॥ ११ ॥ अथ स्वपक्षक्षयं दर्शयितुं सामान्यतो जगतः क्षयवृद्धिहेतुमाह असृजदिति । भगवान्पितामहः सुराणामसुराणां च हिताहितप्राप्तिपरिहारार्थौ विधिनिषेधरूपौ द्वावेव पक्षावसृजत् । किंविषयौ तौ तत्राह धर्माधर्मौ तदाश्रयौ तयोर्विधिनिषेधयोः क्रमादाश्रयौ विषयौ । विधिविषयो धर्मो निषेधविषयश्चाधर्मः ॥ १२ ॥ तत्रामराणां धर्मस्तद्विषयो विधिः पक्षः । राक्षसा राजसा असुरास्तामसा इति भेदः ॥ १३ ॥ अथ तयोः कालविशेषेणाभिभवानभिभवौ दर्शयति धर्मो वै इत्यादि । यदा कृतं युगमभूत्तदा तस्मादेव कालाद्धेतोः प्रवृद्धो धर्मोऽधर्मं ग्रसतेऽभिभवति । वै प्रसिद्धम् । यदा तिष्यः कलिः

विद्यास्वभिविनीतोयोराजाराजन्नयानुगः ॥ सशास्तिचिरमैश्वर्यमरींश्चकुरुतेवशे ॥ ७ ॥ संदधानोहिकालेनविगृह्णंश्चारिभिःसह ॥ स्वपक्षेवर्धनंकुर्वन्महदैश्वर्यमश्नुते ॥ ८ ॥ हीयमानेनकर्तव्योराज्ञासंधिःसमेनच ॥ नशत्रुमवमन्येतज्यायान्कुर्वीतविग्रहम् ॥ ९ ॥ तन्मह्यंरोचतेसंधिःसहरामेणरावण ॥ यदर्थमभियुक्तोसिसीतातस्मैप्रदीयताम् ॥ १० ॥ तस्यदेवर्षयःसर्वेगंधर्वाश्चजयैषिणः ॥ विरोधंमागमस्तेनसंधिस्तेतेनरोचताम् ॥ ११ ॥ असृजद्भगवान्पक्षौद्वावेवहिपितामहः ॥ सुराणामसुराणांचधर्माधर्मौतदाश्रयौ ॥ १२ ॥ धर्मोहिश्रूयतेपक्षअमराणांमहात्मनाम् ॥ अधर्मोरक्षसांपक्षोह्यसुराणांचराक्षस ॥ १३ ॥ धर्मोवैग्रसतेऽधर्मंयदाकृतमभूद्युगम् ॥ अधर्मोग्रसतेधर्मंतदातिष्यःप्रवर्तते ॥ १४ ॥ तत्त्वयाचरतालोकान्धर्मोपिनिहतोमहान् ॥ अधर्मःप्रगृहीतश्चतेनास्मद्बलिनःपरे ॥ १५ ॥ सप्रमादात्प्रवृद्धस्तेऽधर्मोहिर्ग्रसतेहिनः ॥ विवर्धयतिपक्षंचसुराणांसुरभावनः ॥ १६ ॥

प्रवर्तते तदा तत एव हेतोरधर्मो धर्मं ग्रसते कलौ पादेन धर्मस्थितेः । तथाहि सर्वदा सुखसाधनं धर्म एकरूप एव । अधर्मस्त्रिधा । धर्मान्यस्तद्विरोधी तदभावश्चेति । तत्राद्यः शाक्तादिधर्ममार्गे दृष्टो धर्माभासः । द्वितीयो हत्यादिलक्षणः । अंत्यः स्वस्वविहितनित्यधर्मलोपात्मा । कृते त्रिविधाधर्माभाव एव । त्रेतादौ क्रमादेकद्वित्रिभिरधर्मैः संवलनं धर्मस्य । एवं च कलावधर्माभिभूते पादत्रयत्वादेकपादेन धर्मस्य वृत्तिरक्षता । एवं च धर्मतो देवत्वमधर्मतो राक्षसत्वादीति सूचितम् । नन्वधर्मस्य रक्षोऽसुरधर्मत्वे रक्षोसुराणां धर्मफलैश्वर्यजयादि कथमितिचेच्छृणु देवाः केवलधर्मपराः रक्षोसुराः काम्यराजसतामसधर्ममात्रपराः तादृशधर्मं मनुतिष्ठनोपि तानुक्तत्रिप्रकाराधर्मो न मुंचत्येव रजस्तमःप्रकृतित्वात् । अतो धर्मकरणेन सुखिनोऽपि ते काम्यत्वेन सांततया धर्मफलांतेऽधर्मफलभोगभाज इति न दोषः॥१४॥अस्तु तावता प्रकृते किमायातं तत्राह तत्त्वयेति । तदित्यव्ययम् । तत्तादृशो निखिलैश्वर्यादिसाधनो धर्मो लोकान् दिग्विजयाय चरता निहतः यज्ञदानतपसां विघ्नं चरता तस्य नाशः कृतः अधर्मश्च प्रगृहीतः अनेकद्विजदेवर्ष्यादिपीडनेनेति शेषः । तेन कारणेन अस्मत् अस्मत्तः परे शत्रवो बलिनः । धर्महान्यधर्मपरिग्रहयोरभावात् ॥१५॥ अधर्मजानर्थं दर्शयति स इति । ते तव प्रमादाच्चित्तदोषात्प्राक्संपादित इदानीं प्रवृद्धोऽधर्मरूपोऽहिर्नोस्मान् ग्रसते । सुरैर्भावनं

॥ ३६ ॥ राक्षसीं सीतासमीपवर्तिनीम् ॥ ३७ ॥ ३८॥३९॥४०॥४१॥ शिरस्तत्प्रियदर्शनम् रामशिरोवत्प्रियदर्शनमित्यर्थः । अंतरधीयत अपागच्छत्

नित्यानुष्ठानं यस्य धर्मस्य सोसौ धर्मः सुराणां तदंशभूतानां परेषां पक्षं विवर्धयति ॥ १६ ॥ रावणस्याधर्मपरिग्रहं प्रपंचयति विषयेष्विति । विषयेषु स्त्रीवारुण्यादिषु प्रसक्तेन तत एव यत्किंचित्कारिणा निर्मर्यादं यथेष्टं कुर्वता त्वया ऋषीणामुद्वेगः क्रोधो जनितः ॥ १७ ॥ ननु किं तेषां क्रोधेन तत्राह तेषामिति । तेषां प्रभावः क्रोधजस्तापः प्रदीप्तपावक इव दुर्धर्षो दुःसहः । कुतो दुःसहता तत्प्रभावस्य तत्राह तपसेति । धर्मस्यानुग्रहे अनुग्रहः संबंधस्तत्संपादने रताः ॥ १८ ॥ मुख्यैर्यज्ञैर्ध्यानिरूपैः ब्रह्मघोषान्वेदघोषानुदीरयम् उदैरयन् कृतवंतः ॥ १९ ॥ दिशो विप्रद्रुतास्तदुदीरितब्रह्मघोषेण राक्षसा इति शेषः । स्तनयित्नुर्बलाहकः उष्णो ग्रीष्मस्तद्वते रवाविति शेषः ॥ २० ॥ धूम उत्तिष्ठतीति शेषः ॥ २१ ॥ नन्वन्यराक्षसांस्तत्तपः संतापयतु मया तु ब्रह्मणः सकाशादवध्यत्ववरो लब्ध इति चेत्तत्राह देवेति ॥ २२ ॥ वानरादयो न

विषयेषुप्रसक्तेनयत्किंचित्कारिणात्वया ॥ ऋषीणामग्निकल्पानामुद्वेगोजनितोमहान् ॥ १७ ॥ तेषांप्रभावोदुर्धर्षःप्रदीप्तइवपावकः ॥ तपसाभावितात्मानोधर्मस्यानुग्रहेरताः ॥ १८ ॥ मुख्यैर्यज्ञैर्यजंत्येतेतैस्तैर्यत्तेद्विजातयः ॥ जुह्वत्यग्नींश्चविधिवद्वेदांश्चोच्चैरधीयते ॥ अभिभूयचरक्षांसिब्रह्मघोषानुदीरयन् ॥ १९ ॥ दिशोविप्रद्रुताःसर्वेस्तनयित्नुरिवोष्णगे ॥ ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ २० ॥ आवृत्यरक्षसांतेजोधूमोव्याप्यदिशोदश ॥ तेषुतेषुचदेशेषुपुण्येष्वेवधृतव्रतैः ॥ २१ ॥ चर्यमाणंतपस्तीव्रंसंतापयतिराक्षसान् ॥ देवदानवयक्षेभ्योगृहीतश्चवरस्त्वया ॥ २२ ॥ मनुष्यावानराऋक्षागोलांगूलामहाबलाः ॥ बलवंतइहागम्यगर्जंतिदृढविक्रमाः ॥ २३ ॥ उत्पातान्विविधान्दृष्ट्वाघोरान्बहुविधान्बहून् ॥ विनाशमनुपश्यामिसर्वेषांरक्षसामहम् ॥ २४ ॥ खराभिस्तनिताघोरामेघाःप्रतिभयंकराः ॥ शोणितेनाभिवर्षंतिलंकामुष्णेनसर्वतः ॥ २५ ॥ रुदतांवाहनानांचप्रपतंत्यश्रुबिंदवः ॥ रजोध्वस्ताविवर्णाश्चनप्रभांतियथापुरम् ॥ २६ ॥ व्यालागोमायवोगृध्रावाश्यंतिचसुभैरवम् ॥ प्रविश्यलंकामारामेसमवायांश्चकुर्वते ॥ २७ ॥ कालिकाःपांडुरैर्दंतैःप्रहसंत्यग्रतःस्थिताः ॥ स्त्रियःस्वप्नेषुमुष्णंत्योगृहाणिप्रतिभाष्यच ॥ २८ ॥ गृहाणांबलिकर्माणिश्वानःपर्युपसेवते ॥ खरागोषुप्रजायंतेमूषकानकुलेषुच ॥ २९ ॥ मार्जाराद्वीपिभिःसार्धंसूकराःशुनकैःसह ॥ किन्नराराक्षसैश्चापिसमेयुर्मानुषैःसह ॥ ३० ॥ पांडुरारक्तपादाश्चविहगाःकालचोदिताः ॥ राक्षसानांविनाशायकपोताविचरंतिच ॥ ३१ ॥

देवादय इति भावः ॥ २३ ॥ किंच दुर्निमित्तैरप्यस्माकमनर्थप्राप्तिरनुमीयत इत्याह उत्पातानिति । बहुविधान् दिव्यांतरिक्षभौमभेदभिन्नान्बहूननेकान् ॥ २४ ॥ खराभिस्तनिताः दुःश्रवशब्दवंतः । लंकामित्यनेन स्वपक्षानर्थः सूचितः ॥ २५ ॥ यथापुरं यथापूर्वम् अनतिक्रमेऽव्ययीभावः । न प्रभांति दिश इति शेषः । वाहनानीत्यन्ये ॥ २६ ॥ व्यालाः मांसादाः पशवः । सर्पो मांसात्पशुर्व्याल इति कोशः । समवायान्यूथान् ॥ २७ ॥ कालिकाः महाकाल्यः स्त्रियः स्वप्नेषु गृहाणि तद्वर्तिद्रव्यजातं मुष्णंत्योऽग्रतः स्थिताः प्रतिभाष्य प्रतिकूलभाषणं कृत्वा पांडुरैर्दंतैरुपलक्षिताः प्रहसंति ॥ २८ ॥ बलिकर्माणि देवपूजासाधनघृतदध्यन्नपानादीनि श्वभिः स्पृश्यंते । बलिहरणानि श्वान एव भुंजते न तु वायसा इत्यर्थ इत्यन्ये ॥ २९ ॥ द्वीपिभिः शार्दूलैः समेयुर्मिथुनीभावं जग्मुः ॥ ३० ॥ पांडुरत्वादिगुणविशिष्टाः कपोता विहगा

तीरं संपीड्य रामः सन्निविष्ट इत्यन्वयः ॥ १९ ॥ बलं रामसेना चरितं चारितम् । तद्बलमिति शेषः ॥ २० ॥ यत्र रामः सलक्ष्मणस्तद्देशऽस्य बलं हतम् ॥२१॥ चक्रान् स्वल्पान् चक्राणीति पुंनिरुक्तेः । एतानि उद्यम्योद्यम्य ते पट्टिशादयो वानरेषु पातिताः । ऋष्टयः सूक्ष्मखड्गाः ॥ २२ ॥ २३ ॥ कृतहस्तेन शिक्षितहस्तेनासक्तं यथा तथा छिन्नम् ॥ २४ ॥ समुत्पत्य यदृच्छयांगतोपि निगृहीतः ॥ २५ ॥ २६ ॥

अथाध्वनिपरिश्रांतमर्धरात्रेस्थितंबलम् ॥ सुखसुतंसमासाद्यचरितंप्रथमंचरैः ॥ २० ॥ तत्प्रहस्तप्रणीतेनबलेनमहतामम ॥ बलमस्यहतंरात्रौयत्र रामःसलक्ष्मणः ॥२१॥ पट्टिशान्परिघांश्चक्रानृष्टीन्दंडान्महायुधान् ॥ बाणजालानिशूलानिभास्वरान्कूटमुद्गरान् ॥ २२ ॥ यष्टीश्चतोमरान्प्रासां श्चक्राणिमुसलानिच ॥ उद्यम्योद्यम्यरक्षोभिर्वानरेषुनिपातिताः ॥ २३ ॥ अथसुप्तस्यरामस्यप्रहस्तेनप्रमाथिना ॥ असक्तंकृतहस्तेनशिरश्छिन्नं महासिना ॥ २४ ॥ विभीषणःसमुत्पत्यनिगृहीतोयदृच्छया ॥ दिशंप्रव्राजितःसैन्यैर्लक्ष्मणःप्लवगैःसह ॥ २५ ॥ सुग्रीवोग्रीवयासीतेभग्नयाप्लवगा धिपः ॥ निरस्तहनुकःसीतेहनूमाव्राक्षसैर्हतः ॥ २६ ॥ जांबवानथजानुभ्यामुत्पतन्निहतोयुधि ॥ पट्टिशैर्बहुभिश्छिन्नोनिकृत्तःपादपोयथा ॥ २७ ॥ मैंदश्चद्विविदश्चोभौतौवानरवरर्षभौ ॥ निःश्वसंतौरुदंतौचरुधिरेणपरीवृतौ ॥ २८ ॥ असिनाव्यायतौछिन्नौमध्येह्यरिनिषूदनौ ॥ अनुष्वनतिमे दिन्यांपनसःपनसोयथा ॥ २९ ॥ नाराचैर्बहुभिश्छिन्नःशेतेदर्यांदरीमुखः ॥ कुमुदस्तुमहातेजानिष्कूजन्सायकैर्हतः ॥ ३० ॥ अंगदोबहुभिश्छिन्नः शैरासाद्यराक्षसैः ॥ परितोरुधिरोद्गारीक्षितौनिपतितोऽगदः ॥ ३१ ॥ हरयोमथितानागैरथजालैस्तथापरे ॥ शयानामृदितास्तत्रवायुवेगैरिवांबुदाः ॥ ३२ ॥ प्रसृताश्चपरेत्रस्ताहन्यमानाजघन्यतः ॥ अनुद्रुतास्तुरक्षोभिःसिंहैरिवमहाद्विपाः ॥ ३३ ॥ सागरेपतिताःकेचित्केचिद्गगनमाश्रिताः ॥ ऋक्षावृक्षानुपारूढावानरैर्व्यतिमिश्रिताः ॥ ३४ ॥ सागरस्यचतीरेषुशैलेषुचवनेषुच ॥ पिंगलास्तेविरूपाक्षैराक्षसैर्बहवोहताः ॥ ३५ ॥ एवंतवहतो भर्तासमैन्यौममसेनया ॥ क्षतजार्द्ररजोध्वस्तमिदंचास्याहृतंशिरः ॥ ३६ ॥ ततःपरमदुर्धर्षोरावणोराक्षसेश्वरः ॥ सीतायामुपशृण्वंत्यांराक्षसीमिदम ब्रवीत् ॥ ३७ ॥ राक्षसंक्रूरकर्माणंविद्युज्जिह्वंसमानय ॥ येनतद्राघवशिरःसंग्रामात्स्वयमाहृतम् ॥ ३८ ॥ विद्युज्जिह्वस्तदागृह्यशिरस्तत्सशरासनम् ॥ प्रणामंशिरसाकृत्वारावणस्याग्रतःस्थितः ॥ ३९ ॥ तमब्रवीत्ततोराजारावणोराक्षसंस्थितम् ॥ विद्युज्जिह्वंमहाजिह्वंसमीपपरिवर्तिनम् ॥ ४० ॥ अग्रतःकुरुसीतायाःशीघ्रंदाशरथेःशिरः ॥ अवस्थांपश्चिमांभर्तुःकृपणांसाधुपश्यतु ॥ ४१ ॥ एवमुक्तंतुतद्रक्षःशिरस्तत्प्रियदर्शनम् ॥ उपनि क्षिप्यसीतायाःक्षिप्रमंतरधीयत ॥ ४२ ॥

॥ २७ ॥ २८ ॥ २९ ॥ कुमुदस्तु महातेजा निष्कूजन्सायकैर्हत इति पांक्तः पाठः ॥ ३० ॥ राक्षसैरासाद्य प्राप्य छिन्नः ॥ ३१ ॥ ३२ ॥ जघन्यतोऽनुद्रुता इत्यन्वयः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ राक्षसीं सीतासमीपवर्तिनीम ॥ ३७ ॥ ३८॥३९॥४०॥४१॥ शिरस्तत्प्रियदर्शनम् रामशिरोवत्प्रियदर्शनमित्यर्थः । अंतरधीयत अपागच्छत् । स्त्रीगोष्ठ्यां स्थातुमयुक्तत्वधियेति भावः ॥ ४२ ॥

चिक्षेप आचकर्ष ॥ ४३ ॥ ४४ ॥ स विद्युजिह्वेनेति छंदोवशात्तकारलोपः । विनिकीर्यमाणः विकिरन्नित्यर्थः ॥ ४५ ॥ अशैर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ कतकरीत्या ॥ २९ ॥ ॥ सेति । हनूमताख्यातं सुग्रीवप्रतिसंसर्गं सुग्रीवरामसंबंधं रावणकल्पितवानरवधस्योपपादकं स्मृत्वेति शेषः ॥ १ ॥ भर्तृसदृशमिति विभक्तिविपरिणामेन सर्वत्रान्वेति । केशांतदेशं ललाटं तं केशांतवर्तिनम् ॥ २ ॥ अभिज्ञानैर्लक्षणैः ॥ ३ ॥ ४ ॥ आर्येण रामेणेत्यन्वयः चीरवसनं दत्त्वा त्वया सह प्रव्राजित इत्यन्वयः ॥५॥६॥ समुपास्थाय स्वसमीपे स्थापयित्वा । समुपाघ्रायेति पाठांतरम् ॥७॥ वीरव्रतं सुदृढं पितृवाक्यपालनव्रतम् । ते तव नाशादिमां पश्चिमावस्थां गतास्मि तामवस्थामाह विधवा कृतेति ॥८॥ नार्या भर्तुर्मरणं प्रथमं वैगुण्यं मुख्योऽनर्थः ।

रावणश्चापिचिक्षेपभास्वरंकार्मुकंमहत् ॥ त्रिषुलोकेषुविख्यातंरामस्यैतदितिब्रुवन् ॥ ४३ ॥ इदंतत्तवरामस्यकार्मुकंज्यासमावृतम् ॥ इहप्रहस्ते नानीतंतंहत्वानिशिमानुषम् ॥ ४४ ॥ सविद्युजिह्वेनसहैवतच्छिरोधनुश्चभूमौविनिकीर्यमाणः ॥ विदेहराजस्यसुतांयशस्विनींततोऽब्रवीत्तांभवमे वशानुगा ॥ ४५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ सासीतातच्छिरोदृष्ट्वातच्चकार्मुकमुत्तमम् ॥ सुग्रीवप्रतिसंसर्गमाख्यातंचहनूमता ॥ १ ॥ नयनेमुखवर्णंचभर्तुस्तत्सदृशंमुखम् ॥ केशान्केशांतदेशंचतंचचूडामणिंशुभम् ॥ २ ॥ एतैःसर्वैरभि ज्ञानैरभिज्ञायसुदुःखिता ॥ विजगर्हेऽत्रकैकेयींक्रोशंतीकुररीयथा ॥ ३ ॥ सकामाभवकैकेयिहतोयंकुलनंदनः ॥ कुलमुत्सादितंसर्वंत्वयाकलहशी लया ॥ ४ ॥ आर्येणकिंनुकैकेय्याःकृतंरामेणविप्रियम् ॥ यन्मयाचीरवसनंदत्त्वाप्रव्राजितोवनम् ॥ ५ ॥ एवमुक्तातुवैदेहीवेपमानातपस्विनी ॥ जगामजगतींबालाछिन्नातुकदलीयथा ॥ ६ ॥ सामुहूर्तात्समाश्वस्यपरिलभ्याथचेतनाम् ॥ तच्छिरःसमुपास्थायविललापायतेक्षणा ॥ ७ ॥ हाहता स्मिमहाबाहोवीरव्रतमनुव्रत ॥ इमांतेपश्चिमावस्थांगतास्मिविधवाकृता ॥ ८ ॥ प्रथमंमरणंनार्याभर्तुर्वैगुण्यमुच्यते ॥ सुवृत्तःसाधुवृत्तायाःसंवृत्तस्त्वं ममाग्रतः ॥ ९ ॥ महद्दुःखंप्रपन्नायाममग्नायाःशोकसागरे ॥ योहिमामुद्यतस्त्रातुंसोपित्वंविनिपातितः ॥ १० ॥ साश्वश्रूर्ममकौसल्यात्वयापुत्रेणराघव ॥ वत्सलातेयथाधेनुर्विवत्सावत्सलाकृता ॥ ११ ॥ उद्दिष्टंदीर्घमायुस्तेदैवज्ञैरपिराघव ॥ अनृतंवचनंतेषामल्पायुरसिराघव ॥ १२ ॥ अथवानश्यतिप्रज्ञा प्राज्ञस्यापिसतस्तव ॥ पचत्येनंतथाकालोभूतानांप्रभवोह्ययम् ॥ १३ ॥ अदृष्टंमृत्युमापन्नःकस्मात्त्वंनयशास्त्रवित् ॥ व्यसनानामुपायज्ञः कुशलोह्यसिवर्जने ॥ १४ ॥

यत्तु भर्तुः प्रथमं मरणं नार्या वैगुण्यं दुश्चरित्रमूलमित्यर्थस्तन्न एवं हि सर्वविधवानामसतीत्वापत्तेः । संवृत्तः अतीतः ॥९॥ महद्दुःखं प्रपन्नाया मम मरणमेव वरमिति शेषः । हि यतो यस्त्वं मा त्रातुमुद्यतः सोपि त्वं विनिपातितो राक्षसैरिति शेषः॥ १०॥ सा वत्सला मम श्वश्रूस्त्वया पुत्रेण राक्षसहतेन वत्सला धेनुरिव विवत्सा कृता ॥ ११ ॥ दैवज्ञैर्वसिष्ठादिभिरिति शेषः यतोल्पायुरसि अतस्तेषां वचनं मिथ्या ॥ १२ ॥ अथ वेति । अथेति प्रश्ने प्राज्ञस्य सतस्तवापि । प्रज्ञा नश्यत्यथ नाशं प्राप्ता किम् येन प्रज्ञादौर्बल्यात् सुप्तोऽरिवशं प्राप्त इति शेषः । वा अथवा हि यतः कालो भूतानां प्रभवः प्रभवाय हेतुस्तस्मादयमेनं प्राणिनं तथा पचति तत्तत्कर्म फलं प्रापयति । काल ईश्वरः अतः प्राज्ञोपि त्वमप्राज्ञो जात इति भावः॥ १३॥ हि यतस्त्वं व्यसनानां वर्जने उपायज्ञस्तदनुष्ठाने कुशलश्चासि तस्मात्कस्माद्धेतोरदृष्टं पूर्वमज्ञातं मृत्युमापन्नः अत्र हेतुं नं पश्यामीति

भावः॥१४॥ मया कालरात्र्येत्यन्वयः रौद्रत्वादिविशिष्टया मया कालरात्र्या संपरिष्वज्य आच्छिद्य बलात्कृत्य तथा त्वं हतो यथा नष्ट इति भावः ॥१५॥ मां विहाय प्रियां नारीमिव पृथिवीमालिंग्य शेषे॥१६॥
मया सह तव त्वयार्चितं मत्प्रियं ते धनुरिदमेतादृशं जातमिति शेषः॥१७॥ सर्वैः पितृभिः सार्धं स्थितेन दशरथेन स्वर्गे त्वं समागत इत्यन्वयः॥१८॥ दिवि नक्षत्रभूतम् । त्रिशंकोस्तथात्वाच्छत्रिन्यायेन वंशस्य
तथात्वम् । महता पितृवचःपालनरूपेण कर्मणा कृतम् । तथा पुण्यमासाद्य आत्मनः प्रियं पुण्यं राजर्षिवंशं समुपेक्षसे त्यक्त्वा गच्छस्येतदन्याय्यमित्यर्थः ॥ १९ ॥२०॥ पाणिं गृह्णता त्वया त्वया सह चरिष्यामि
धर्मादिकमिति यत्संश्रुतं प्रतिज्ञातं तत्स्मर । अतो दुःखितां मामपि नय ॥ २१ ॥ २२ ॥ कल्याणैर्मंगलैः रुचिरं यत्त्वच्छरीरं तदेतावत्कालपर्यंतं मयैव परिष्वक्तं तत्तत्र शरीरमद्य क्रव्यादैर्विपरिकृष्यते॥२३॥

यथात्वंसंपरिष्वज्यरौद्रयाऽतिनृशंसया ॥ कालरात्र्यामयाच्छिद्यहृतःकमललोचनः ॥ १५ ॥ इहशेषेमहाबाहोमांविहायतपस्विनीम् ॥ प्रियामिव यथानारींपृथिवींपुरुषर्षभ ॥ १६ ॥ अर्चितंसततंयत्नाद्गंधमाल्यैर्मयातव ॥ इदंतेमत्प्रियंवीरधनुःकांचनभूषितम् ॥ १७ ॥ पित्रादशरथेनत्वंश्वशुरेणममानघ ॥ सर्वैश्चपितृभिःसार्धंनूनंस्वर्गेसमागतः ॥ १८ ॥ दिविनक्षत्रभूतंचमहत्कर्मकृतंतथा ॥ पुण्यंराजर्षिवंशंत्वमात्मनःसमुपेक्षसे ॥ १९ ॥ किंमांनप्रेक्षसेराजन्किंवानप्रतिभाषसे ॥ बालांबालेनसंप्राप्तांभार्यांमांसहचारिणीम् ॥ २० ॥ संश्रुतंगृह्णतापाणिंचरिष्यामीतियत्त्वया ॥ स्मरतन्ममकाकुत्स्थनयमामपिदुःखिताम् ॥ २१ ॥ कस्मान्मामपहायत्वंगतोगतिमतांवर ॥ अस्माँल्लोकादमुंलोकंत्यक्त्वामामपिदुःखिताम् ॥२२॥ कल्याणैरुचिरंगात्रंपरिष्वक्तंमयैवतु ॥ क्रव्यादैस्तच्छरीरंतेनूनंविपरिकृष्यते ॥ २३ ॥ अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ॥ अग्निहोत्रेणसंस्कारंकेनत्वंनतुलप्स्यसे॥२४॥प्रव्रज्यामुपपन्नानांत्रयाणामेकमागतम् ॥ परिप्रेक्ष्यतिकौसल्यालक्ष्मणंशोकलालसा ॥ २५ ॥ सतस्याःपरिपृच्छंत्यावधंमित्रबलस्यते ॥ तवचाख्यास्यतेनूनंनिशायांराक्षसैर्वधम् ॥ २६ ॥ सात्वांसुप्तंहतंज्ञात्वामांचरक्षोगृहंगताम् ॥ हृदयेनावदीर्णेननभविष्यतिराघव ॥ २७ ॥ ममहेतोरनार्यायाअनघःपार्थिवात्मजः ॥ रामःसागरमुत्तीर्यवीर्यवान्गोष्पदेहतः ॥ २८ ॥ अहंदाशरथेनोढामोहात्स्वकुलपांसनी ॥ आर्यपुत्रस्यरामस्यभार्यामृत्युरजायत ॥ २९ ॥ नूनमन्यांमयाजातिंवारितंदानमुत्तमम् ॥ याहमद्यैवशोचामिभार्यासर्वातिथेरिह ॥ ३० ॥

अग्निहोत्रेण वैतानाग्निना संस्कारं केन हेतुना न लप्स्यसे न लभसे ॥ २४ ॥ प्रव्रज्यां प्रवासमुपपन्नानां त्रयाणामस्माकं मध्ये एकं लक्ष्मणमित्यन्वयः परिप्रेक्ष्यति द्रक्ष्यतीत्यर्थः ॥ २५ ॥ मित्रबलस्य वानरबलस्य ॥ २६ ॥ अवदीर्णेन विदीर्णेनोपलक्षिता सती नूनं न भविष्यति म्रियतेत्यर्थः ॥ २७ ॥ सागरमुत्तीर्य गोष्पदे हतस्तल्लंघनाशक्त्येति या लोकवार्ता तत्तुल्यमिदं जातमित्यर्थः ॥ २८ ॥ दाशरथेन दशरथपुत्रेण अनार्यः । मृत्युरजायत मृत्युरूपा जाता ॥२९॥ अन्यां जातिमन्यस्मिन् जन्मनि उत्तमं दानं कन्यादानं गोभूहिरण्यादिदानं च वारितं न कृतम् । सर्वातिथेः सर्वातिथिप्रियस्य इह काले देशे॥३०॥

समानय योजय ॥ ३१ ॥ ३२ ॥ ३३ ॥ तत्र अशोकवनिकायां राक्षसः प्रहस्तप्रेषितोऽनीकस्थो द्वाररक्षी राक्षसो भर्तारं स्वामिनमभिचक्रामाभिक्रम्यार्यपुत्र विजयस्वेति प्रसाद्याभिवाद्य च कृतांजलिः समुपस्थितः । आर्यपुत्रशब्दो यद्यपि स्त्रीभिर्भर्तारि प्रयुज्यते प्रायेण तथापि पूजामात्रे सामान्यतः प्रयोगोपि बोध्यः ॥ ३४ ॥ ३५ ॥ ३६ ॥ नन्वनवसरे कथं प्रस्थापितवांस्तत्राह नूनमिति । राजभावाद्राजकार्याभिप्रायज्ञानाद्धेतोरनवसरप्राप्तावपि क्षमान्वित महाराज नूनं निश्चितम् आत्ययिकम् अत्यावश्यकं किंचित्कार्यमस्ति तस्मादागत्य तेषां त्वं दर्शनं कुरु । क्षमान्वितेति पांक्तः पाठः ॥ ३७ ॥ मंत्रिणां दर्शनम् उद्दिश्येति शेषः ॥ ३८ ॥ सर्वं समर्थ्यैव गत्वा दुष्टमंत्रिभिरेकांते सर्वं कृत्यं विचार्येत्यर्थः । सभां प्रविश्य विदधे एकांते कृतमंत्रोचितव्यापारमिति शेषः ॥ ३९ ॥ निर्याणसमनंतरमेवेति योजना

साधुघातयमांक्षिप्रंरामस्योपरिरावण ॥ समानयपतिंपत्न्याकुरुकल्याणमुत्तमम् ॥ ३१ ॥ शिरसामेशिरश्चास्यकायंकायेनयोजय ॥ रावणानुगमिष्यामिगतिंभर्तुर्महात्मनः ॥ ३२ ॥ इतिविदुःखसंतप्ताविललापायतेक्षणा ॥ भर्तुःशिरोधनुश्चैवददर्शजनकात्मजा ॥ ३३ ॥ एवंलालप्यमानायांसीतायांतत्रराक्षसः ॥ अभिचक्रामभर्तारमनीकस्थःकृतांजलिः ॥ ३४ ॥ विजयस्वार्यपुत्रेतिसोभिवाद्यप्रसाद्यच ॥ न्यवेदयदनुप्राप्तंप्रहस्तंवाहिनीपतिम् ॥ ३५ ॥ अमात्यैःसहितःसर्वैःप्रहस्तस्त्वामुपस्थितः ॥ तेनदर्शनकामेनअहंप्रस्थापितःप्रभो ॥ ३६ ॥ नूनमस्तिमहाराजराजभावात्क्षमान्वित ॥ किंचिदात्ययिकंकार्यंतेषांत्वंदर्शनंकुरु ॥ ३७ ॥ एतच्छ्रुत्वादशग्रीवोराक्षसप्रतिवेदितम् ॥ अशोकवनिकांत्यक्त्वामंत्रिणांदर्शनंययौ ॥ ३८ ॥ सतुसर्वंसमर्थ्यैवमंत्रिभिःकृत्यमात्मनः ॥ सभांप्रविश्यविदधेविदित्वारामविक्रमम् ॥ ३९ ॥ अंतर्धानंतुतच्छीर्षंतच्चकार्मुकमुत्तमम् ॥ जगामरावणस्यैवनिर्याणसमनंतरम् ॥ ४० ॥ राक्षसेंद्रस्तुतैःसार्धंमंत्रिभिर्भीमविक्रमैः ॥ समर्थयामासतदारामकार्यविनिश्चयम् ॥ ४१ ॥ अविदूरस्थितान्सर्वान्बलाध्यक्षान्हितैषिणः ॥ अब्रवीत्कालसदृशोरावणोराक्षसाधिपः ॥ ४२ ॥ शीघ्रंभेरीनिनादेनस्फुटंकोणाहतेनमे ॥ समानयध्वंसैन्यानिवक्तव्यंचनकारणम् ॥ ४३ ॥ ततस्तथेतिप्रतिगृह्यतद्वचस्तदैवदूताःसहसामहद्बलम् ॥ समानयंश्चैवसमागतंचन्यवेदयन्भर्तरियुद्धकांक्षिणि ॥ ४४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ सीतांतुमोहितांदृष्ट्वासरमानामराक्षसी ॥ आससादाथवैदेहींप्रियांप्रणयिनीसखी ॥ १ ॥ मोहितांराक्षसेंद्रेणसीतांपरमदुःखिताम् ॥ आश्वासयामासतदासरमामृदुभाषिणी ॥ २ ॥ साहितत्रकृतामित्रंसीतयारक्ष्यमाणया ॥ रक्षंतीरावणादिष्टासानुक्रोशादृढव्रता ॥ ३

मायामयत्वादिति भावः ॥ ४० ॥ रामकार्यविनिश्चयं रामविषयं स्वकर्तव्यनिश्चयम् ॥ ४१ ॥ ४२ ॥ स्फुटं कोणाहतेन उल्बणवादनदंडाहतेन कारणं न वक्तव्यमिति भावः । राजा आह्वयते इत्येतावदेव वक्तव्यं नत्वेतदर्थमितीति भावः ॥ ४३ ॥ अत्र सीताप्रलापः स्वस्य मानुषधर्मप्रकटनायेति बोध्यम् ॥ ४४ ॥ विर्भुमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ कतकरी० ॥ ३० ॥ सीतां त्विति । विभीषणपत्नीयं सरमा सा तु सीतायां भक्तिमती सा हि रावणेन ज्ञातसात्त्विकभावातिभर्त्सनेन नाशमाशंक्य सीताश्वासनार्थं संदिष्टेति बोध्यम् । प्रणयिनी स्नेहवती सखी सरमेत्यन्वयः ॥ १ ॥ २ ॥ ननु राक्षसी कथं सखी कथं चाश्वासयेदत आह सा हीति । तत्र अशोकवनिकायां रावणादिष्टा । अत्र बीजमुक्तम् अत एव राक्षसीभ्यो नित्यं रक्षंती सरमा

रक्ष्यमाणया सीतया आत्मनः स्वस्याः मित्रं कृता सखी संपादिता । तत्र योग्यतामाह सानुक्रोशेत्यादि । दुःखितेषु सदया दृढव्रता प्राणैरपि ममेयं रक्षणीयेति दृढप्रतिज्ञा ॥ ३ ॥ उपावृत्य श्रमनाशार्थं लुठित्वा ध्वस्तां पीडितामध्वश्रमेण शोकेन च ॥ ४ ॥ रावणेन यत्त्वमुक्ता यच्च रावणं प्रति स्वयं त्वयोक्तं साधु पातय मां क्षिप्रमित्यादि तत्सर्वं मया परिश्रुतम् ॥ ५ ॥ ननु विभीषणस्य विरुद्धकोटौ गतत्वात्तत्पत्न्या त्वया रावणसन्निधौ स्थित्वा कथं श्रुतं तत्राह लीनयेति । गहनेऽशोकवनमध्ये पूर्वमस्य मायाकृतवृत्तांतं श्रुतवत्या त्वद्रक्षणरूपकार्यार्थमागत्य लीनया गुप्तं स्थितया रावणाद्भयमुत्सृज्य स्थितया सर्वं श्रुतं नहि मे रावणाद्भयं तेनैव तव रक्षणे नियुक्तत्वात्तज्ज्ञातित्वाच्च । ततोऽन्यैवैषा सरमेत्यन्ये ॥ ६ ॥ स रावणो यत्कृते यन्निमित्तं संभ्रांतो निष्क्रांतस्तदपि अभिनिष्क्रम्य बहिर्गत्वा मया विदितं ज्ञातम् ॥ ७ ॥ तस्य पश्चादपि कथने बाधकाभावेनादौ राममोहं निवर्तयति न शक्यमिति । सौप्तिकं सुप्तिकालयुद्धम् । तत्र हेतुर्विदितात्मनः जितनिद्रालस्यादिदोषचित्तस्येत्यर्थः । पुरुषव्याघ्रे सर्वातिशायिशौर्यवति अतएव तस्मिन्वधो

सादद्दर्शसखीसीतांसरमानष्टचेतनाम् ॥ उपावृत्योत्थितांध्वस्तांवडवामिवपांसुषु ॥ ४ ॥ तांसमाश्वासयामाससखीस्नेहेनसुव्रताम् ॥ उक्तायद्रावणेनत्वंप्रत्युक्तश्चस्वयंत्वया ॥ ५ ॥ लीनयागहनेशून्येभयमुत्सृज्यरावणात् ॥ तवहेतोर्विशालाक्षिनहिमेरावणाद्भयम् ॥ ६ ॥ ससंभ्रांतश्चनिष्क्रांतोयत्कृतेराक्षसेश्वरः ॥ तत्रमेविदितंसर्वमभिनिष्क्रम्यमैथिलि ॥ ७ ॥ नशक्यंसौप्तिकंकर्तुंरामस्यविदितात्मनः ॥ वधश्चपुरुषव्याघ्रेतस्मिन्नैवोपपद्यते ॥ ८ ॥ नत्वेवंवानराहंतुंशक्याःपादपयोधिनः ॥ सुरादेवर्षभेणेवरामेणहिसुरक्षिताः ॥ ९ ॥ दीर्घवृत्तभुजःश्रीमान्महोरस्कःप्रतापवान् ॥ धन्वीसन्नहनोपेतोधर्मात्माभुविविश्रुतः ॥ १० ॥ विक्रांतोरक्षितानित्यमात्मनश्चपरस्यच ॥ लक्ष्मणेनसहभ्रात्राकुलीनोनयशास्त्रवित् ॥ ११ ॥ हंतापरबलौघानामचिंत्यबलपौरुषः ॥ नहतोराघवःश्रीमान्सीतेशत्रुनिबर्हणः ॥ १२ ॥ अयुक्तबुद्धिकृत्येनसर्वभूतविरोधिना ॥ इयंप्रयुक्तारौद्रेणमायामायाविनात्वयि ॥ १३ ॥ शोकस्तेविगतःसर्वकल्याणंत्वामुपस्थितम् ॥ ध्रुवंत्वांभजतेलक्ष्मीःप्रियंतेभवतिशृणु ॥ १४ ॥ उत्तीर्यसागरंरामःसहवानरसेनया ॥ सन्निविष्टःसमुद्रस्यतीरमासाद्यदक्षिणम् ॥ १५ ॥ दृष्टोमेपरिपूर्णार्थःकाकुत्स्थःसहलक्ष्मणः ॥ सहितैःसागरांतस्थैर्बलैस्तिष्ठतिरक्षितः ॥ १६ ॥ अनेनप्रेपितायेचराक्षसालघुविक्रमाः ॥ राघवस्तीर्णइत्येवंप्रवृत्तिस्तैरिहाहृता ॥ १७ ॥ सतांश्रुत्वाविशालाक्षिप्रवृत्तिंराक्षसाधिपः ॥ एषमंत्रयतेसर्वैःसचिवैःसहरावणः ॥ १८ ॥ इतिब्रुवाणासरमाराक्षसीसीतयासह ॥ सर्वोद्योगेनसैन्यानांशब्दंशुश्रावभैरवम् ॥ १९ ॥ दंडनिर्घातवादिन्याःश्रुत्वाभेर्यामहास्वनम् ॥ उवाचसरमासीतामिदंमधुरभाषिणी ॥ २० ॥ सन्नाहजननीह्येषाभैरवाभीरुभेरिका ॥ भेरीनादंचगंभीरंशृणुतोयदनिस्वनम् ॥ २१ ॥

नोपपद्यते ॥ ८ ॥ सर्ववानरहननमप्यशक्यमित्याह नत्वेवमिति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ननु प्रत्यक्षतो हते कथं न हतस्तत्राह अयुक्तेति । अयुक्ता अनुचिता बुद्धिः कृत्यं च यस्य तेन रौद्रेण रावणेन ॥ १३ ॥ शोको विगतः कल्याणं चोपस्थितम् । कुतस्तत्राह हे भवति ते प्रियं प्रियवचनम् ॥ १४ ॥ १५ ॥ दृष्टो मे मया दृष्ट इत्यर्थः । स्वगृहवर्त्यूर्ध्वगृहमारुह्येति शेषः । खेचरीत्वाद्बहिर्निर्गत्येति शेषो वा । सागरांतस्थैः सागरस्तीरस्थैः सहितैः संगतैर्बलैः सह स्वमहिम्ना रक्षितस्तिष्ठति ॥ १६ ॥ अथ रावणस्य निष्क्रमहेतुमाह अनेनेति । प्रेपितास्ते राघवस्तीर्ण इति प्रवृत्तिर्वार्ता इहाहृता ॥ १७ ॥ तां प्रवृत्तिं राघवस्य सवलोत्तरणप्रवृत्तिम् । इतो निर्गत्येति शेषः । मंत्रयते विचारयति ॥ १८ ॥ शब्दं सिंहनादम् ॥ १९ ॥ २० ॥ सन्नाहो युद्धाय सन्नहनम् ॥ भेरीनादं शृणु रामबले युद्धाय सन्नाहकमिति शेषः ॥ २१ ॥

युज्यंते रथेनेति शेषः ॥२२॥२३॥ प्रसन्नानां शाणोल्लेखननिर्मलानाम् । चर्म फलकम् वर्म कवचम् ॥२४॥२५॥ नानावर्णैर्नीलपीतादिभिः समुत्थितां प्रभां विसृजतां चर्मादीनां प्रभा पश्येत्यावृत्त्यान्वयः ॥ २६ ॥ एतदुत्तरं वनं निर्दहत इत्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः । संभ्रम इति । एष संभ्रमो रक्षसामेवातो रक्षसां तुमुलं लोमहर्षणं भयमागतं विद्धि अर्थाच्छोकघ्नी श्रीस्त्वां भजतीति विद्धि ॥ २७ ॥ अथ दैत्यानां निकटस्थां लक्ष्मीं यथा वासवो हतवानेवं रामो रावणं समरे हत्वा तव भर्ता त्वामवजित्य शत्रुगृहादवसुच्याधिगमिष्यति ॥ २८ ॥ रक्षःसु विक्रमिष्यति च । यथा शत्रुघ्नो वासवो विष्णुनोपेंद्रेण सह शत्रुषु

कल्प्यंतेमत्तमातंगायुज्यंतेरथवाजिनः ॥ दृश्यंतेतुरगारूढाःप्रासहस्ताःसहस्रशः ॥ २२ ॥ तत्रतत्रचसन्नद्धाःसंपतंतिसहस्रशः ॥ आपूर्यंतेराजमार्गाः सैन्यैरद्भुतदर्शनैः ॥ २३ ॥ वेगवद्भिर्नदद्भिश्चतोयौघैरिवसागरः ॥शस्त्राणांचप्रसन्नानांचर्मणांवर्मणांतथा ॥ २४ ॥ रथवाजिगजानांचराक्षसेंद्रानुयायिनाम् ॥ संभ्रमोरक्षसामेषहृषितानांतरस्विनाम् ॥ २५ ॥ प्रभांविसृजतांपश्यनानावर्णसमुत्थिताम् ॥ २६ ॥ "वनंनिर्दहतोघर्मेयथारूपंविभावसोः ॥ घंटानांशृणुनिर्घोषंरथानांनेमिनिःस्वनम् ॥ १ ॥ हयानांह्रेषमाणानांशृणुतूर्यध्वनिंतथा ॥ उद्यतायुधहस्तानांराक्षसेंद्रानुयायिनाम् ॥ ॥२॥" संभ्रमोरक्षसामेषतुमुलंलोमहर्षणम् ॥ श्रीस्त्वांभजतिशोकघ्नीरक्षसांभयमागतम् ॥ २७ ॥ रामःकमलपत्राक्षोदैत्यानामिववासवः ॥ अवजित्य जितक्रोधस्त्वमचिंत्यपराक्रमः ॥ रावणंसमरेहत्वाभर्तात्वाऽधिगमिष्यति ॥ २८ ॥ विक्रमिष्यतिरक्षस्सुभर्तातेसहलक्ष्मणः ॥ यथाशत्रुषुशत्रुघ्नोविष्णुनासहवासवः ॥ २९ ॥ आगतस्यहिरामस्यक्षिप्रमंकगतांसतीम् ॥ अहंद्रक्ष्यामिसिद्धार्थांत्वांशत्रौविनिपातिते ॥ ३० ॥ अस्राण्यानंदजानित्वंवर्तयिष्यसिजानकि ॥ समागम्यपरिष्वक्तातस्योरसिमहोरसः ॥ ३१ ॥ अचिरान्मोक्ष्यतेसीतेदेवितेजघनंगताम् ॥ धृतामेकांबहून्मासान्वेणींरामोमहाबलः ॥ ३२ ॥ तस्यदृष्ट्वामुखंदेविपूर्णचंद्रमिवोदितम् ॥ मोक्ष्यसेशोकजंवारिनिर्मोकमिवपन्नगी ॥ ३३ ॥ रावणंसमरेहत्वानचिरादेवमैथिलि ॥ त्वयासमग्रःप्रिययासुखार्होलप्स्यतेसुखम् ॥ ३४ ॥ सभाजितात्वंरामेणमोदिष्यसिमहात्मना ॥ सुवर्षेणसमायुक्तायथासस्येनमेदिनी ॥ ३५ ॥ गिरिवरमभितोविवर्तमानोहयइवमंडलमाशुयःकरोति ॥ तमिहशरणमभ्युपैहिदेविदिवसकरंप्रभवोह्ययंप्रजानाम् ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ अथतांजातसंतापांतेनवाक्येनमोदिताम् ॥ सरमाह्लादयामासमहींदग्धामिवांभसा ॥ १ ॥

विक्रांतवांस्तथा ते भर्ता विक्रमिष्यतीत्यन्वयः ॥ २९ ॥ ३० ॥ तस्योरसि अस्राणि वर्तयिष्यसीत्यन्वयः ॥ ३१ ॥ जघनं गतां जघनदेशं प्राप्तां वेणीमित्यन्वयः ॥ ३२ ॥ ३३ ॥ समग्रः सहितः ॥ ३४ ॥ ॥ ३५ ॥ गिरिवरं मेरुमभितो विवर्तमानः परिवर्तमानो हय इव यो मंडलं मंडलाकारगतिमाशु करोति तं दिवसकरं ते कुलदैवतं शरणमभ्युपैहि । हि यतोऽयं प्रजानां सुखदुःखहान्योरिति शेषः प्रभवः ॥ ३६ ॥ अर्चलमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ कतकरी० ॥ ३१ ॥ तेन वाक्येन रावणवाक्येन । अंभसा मेघपंक्तिरिवेति

स्थितिकालत्वात्पुरुषव्यूह आसीत् ॥ १२ ॥ पुरायाति आयास्यति ॥ १३ ॥ १४ ॥ १५ ॥ चरिता भवता दवगत्या घोषणार्थं प्रणयनेनेति भावः ॥ १६ ॥ १७ ॥ तथा तदनुसारेण ॥ ॥ १८ ॥ १९ ॥ गद्गदो जांबवतः क्षेत्रद्वारा पिता । यद्यपि जांबवान् जृंभमाणस्य मम वक्त्रादजायतेति भगवन्मुखादस्योत्पत्तिः श्रुता तथापि जृंभणसमये उद्गताया भगवच्छक्तेर्गद्गदक्षेत्रमाविश्य तेन रूपेण परिणामाददोषः ॥ २० ॥ अन्यः पुत्रो धूम्रः शतक्रतोर्गुरुपुत्रो बृहस्पतिपुत्र इत्यर्थः । अयं केसरीति शेषः । यस्य केसरिणः पुत्रेण हनूमता एकेन रक्षसां कदनं कृतं पूर्वमित्यर्थः ॥ २१ ॥ २२ ॥ मृत्युः सृष्टः

पुरप्राकारमायातिक्षिप्रमेकतरंकुरु ॥ सीतांवापिप्रयच्छाशुयुद्धंवापिप्रदीयताम् ॥ १३ ॥ मनसातत्तदाप्रेक्ष्यतच्छ्रुत्वाराक्षसाधिपः ॥ शार्दूलंसुमहद्वाक्यमथोवाचसरावणः ॥ १४॥ यदिमांप्रतियुद्ध्यंतेदेवगंधर्वदानवाः ॥ नैवसीतांप्रदास्यामिसर्वलोकभयादपि ॥ १५ ॥ एवमुक्त्वामहातेजारावणः पुनरब्रवीत् ॥ चरिताभवतासेनाकेत्रशूराःप्लवंगमाः ॥ १६ ॥ किंप्रभाःकीदृशाःसौम्यवानरायेदुरासदाः ॥ कस्यपुत्राश्चपौत्राश्चतत्त्वमाख्याहिसुव्रत ॥ ॥ १७ ॥ तथात्रप्रतिपत्स्यामिज्ञात्वातेषांवलावलम् ॥ अवश्यंखलुसंख्यानंकर्तव्यंयुद्धमिच्छता ॥ १८ ॥ अथैवमुक्तःशार्दूलोरावणेनोत्तमश्चरः ॥ इदंवचनमारेभेवक्तुंरावणसन्निधौ ॥ १९ ॥ अथर्क्षरजसःपुत्रोयुधिराजन्सुदुर्जयः ॥ गद्गदस्याथपुत्रोत्रजांबवानितिविश्रुतः ॥ २० ॥ गद्गदस्याथपुत्रोऽन्योगुरुपुत्रःशतक्रतोः ॥ कदनंयस्यपुत्रेणकृतमेकेनरक्षसाम् ॥ २१ ॥ सुषेणश्चात्रधर्मात्मापुत्रोधर्मस्यवीर्यवान् ॥ सौम्यःसोमात्मजश्चात्रराजन्दधिमुखःकपिः ॥ २२ ॥ सुमुखोदुर्मुखश्चात्रवेगदर्शीचवानरः ॥ मृत्युर्वानररूपेणनूनंसृष्टःस्वयंभुवा ॥२३॥ पुत्रोहुतवहस्यात्रनीलःसेनापतिःस्वयम् ॥ अनिलस्यतुपुत्रोत्रहनूमानितिविश्रुतः ॥ २४ ॥ नप्ताशक्रस्यदुर्धर्षोवलवानंगदोयुवा ॥ मैंदश्चद्विविदश्चोभौवलिनावश्विसंभवौ ॥ २५ ॥ पुत्रावैवस्वतस्याथपंचकालांतकोपमाः ॥ गजोगवाक्षोगवयःशरभोगंधमादनः ॥ २६ ॥ दशवानरकोट्यश्चशूराणांयुद्धकांक्षिणाम् ॥ श्रीमतांदेवपुत्राणां शेषंनाख्यातुमुत्सहे ॥ २७ ॥ पुत्रोदशरथस्यैषसिंहसंहननोयुवा ॥ दूषणोनिहतोयेनखरश्चत्रिशिरास्तथा ॥ २८ ॥ नास्तिरामस्यसदृशोविक्रमेषुविक्रश्चन ॥ विराधोनिहतोयेनकवंधश्चांतकोपमः ॥२९॥ वक्तुंनशक्तोरामस्यगुणान्कश्चिन्नरःक्षितौ ॥ जनस्थानगतायेनतावंतोराक्षसाहताः ॥३०॥ लक्ष्मणश्चात्रधर्मात्मामातंगानामिवर्षभः ॥ यस्यवाणपथंप्राप्यनजीवेदपिवासवः ॥ ३१ ॥ श्वेतोज्योतिर्मुखश्चात्रभास्करस्यात्मसंभवौ ॥ वरुणस्याथपुत्रोथहेमकूटःप्लवंगमः ॥ ३२ ॥ विश्वकर्मसुतोवीरोनलःप्लवगसत्तमः ॥ विक्रांतोवेगवानत्रवसुपुत्रःसदुर्धरः ॥ ३३ ॥ राक्षसानांवरिष्ठश्चतवभ्राताविभीषणः ॥ प्रतिगृह्यपुरींलंकांराघवस्यहितेरतः ॥ ३४ ॥

सुमुखादयो मृत्युतुल्या इत्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ पंचयमपुत्रपरिगणनं गज इत्यादि ॥ २६ ॥ दश वानरकोट्य इति । वानरेति लुप्तषष्ठीबहुवचनांतम् । तद्विशेषणं शूराणामित्यादि । नाख्यातुमुत्सहे अशक्यगणनत्वात् ॥ २७ ॥ २८ ॥ २९ ॥ यतो दूषणादयस्तेन निहता अतस्तस्य गुणान्वक्तुं न कोपि शक्त इत्यन्वयः ॥ ३० ॥ ३१ ॥ ३२ ॥ दुर्धरस्तदाख्यः ॥ ३३ ॥ ३४ ॥

भवान् गतिः प्रमाणं निर्णायक इति यावत् । नन्वत्र धर्मपुत्रः सुषेणो वैवस्वतपुत्रौ शरभगंधमादनावुभौ बालकांडे वरुणात्सुषेणः पर्जन्याच्छरभः कुबेराद्गंधमादन उक्त इतिचेन्न । तत्तत्संज्ञकानामनेकेषामपि सत्त्वान्न विरोधइति तीर्थः ॥३५॥ अॅमॅलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिंशः सर्गः ॥३०॥ कतकरीत्या ॥२८॥ तत इति ॥१॥ सचिवानुपमंत्रिणः ॥२॥ आयांतु युष्मद्वदनादिति शेषः ॥ ३ ॥ ४ ॥ यत्तदनंतरं क्षमं सीतामायाविति शेषः ॥ ५ ॥ ततः स्वांतःपुरप्रवेशानंतरं मायाविनं प्रशस्तमायावंतं महामायं तादृशमायाप्रयोगकर्तारम् ॥ ६ ॥ मायाविनं विद्युज्जिह्वमब्रवीच्च वचनमाह मोहयिष्यावहे इति ॥ ७ ॥ मां त्वं समुपतिष्ठस्व मत्समीपमागच्छेत्यर्थः ॥ ८ ॥ रावणे रावणायेत्यर्थः ॥ ९ ॥ कुब्जायै कैकेयीव तस्य विद्युज्जिह्वस्यानर्थे आनुकूल्यात्तुष्टः सन्

इतिसर्वंसमाख्यातंतथावैवानरंबलम् ॥ सुवेलेधिष्ठितंशैलेशेषकार्येभवान्गतिः ॥ ॥३५॥ इत्यार्षे श्री० वा० आदिकाव्ये युद्धकांडे त्रिंशः सर्गः ॥३०॥

ततस्तमक्षोभ्यबलंलंकायांनृपतेश्वराः ॥ सुवेलेराघवंशैलेनिविष्टंप्रत्यवेदयन् ॥ १ ॥ चाराणांरावणःश्रुत्वाप्राप्तंराममंमहाबलम् ॥ जातोद्वेगोऽभवत्किंचित्सचिवानिदमब्रवीत् ॥ २ ॥ मंत्रिणःशीघ्रमायांतुसर्वेवैसुसमाहिताः ॥ अयंनोमंत्रकालोहिसंप्राप्तइतिराक्षसाः ॥ ३ ॥ तस्यतच्छासनंश्रुत्वामंत्रिणोऽभ्यागमन्द्रुतम् ॥ ततःसमंत्रयामासराक्षसैःसचिवैःसह ॥ ४ ॥ मंत्रयित्वातुदुर्धर्षःक्षमंयत्तदनंतरम् ॥ विसर्जयित्वासचिवान्प्रविवेशस्वमालयम् ॥ ५ ॥ ततोराक्षसमादायविद्युज्जिह्वंमहाबलम् ॥ मायाविनंमहामायंप्राविशद्यत्रमैथिली ॥ ६ ॥ विद्युज्जिह्वंचमायाज्ञमब्रवीद्राक्षसाधिपः ॥ मोहयिष्यावहेसीतांमाययाजनकात्मजाम् ॥७ ॥ शिरोमायामयंगृह्यराघवस्यनिशाचर ॥ मांत्वंसमुपतिष्ठस्वमहच्चसशरंधनुः ॥ ८ ॥ एवमुक्तस्तथेत्याहविद्युज्जिह्वोनिशाचरः ॥ दर्शयामासतांमायांसुप्रयुक्तांसरावणे ॥ ९ ॥ तस्यतुष्टोऽभवद्राजाप्रददौचविभूषणम् ॥ अशोकवनिकायांचसीतादर्शनलालसः ॥१०॥ नैर्ऋतानामधिपतिःसंविवेशमहाबलः ॥ ततोदीनामदीनार्हांददर्शधनदानुजः ॥ ११ ॥ अधोमुखींशोकपरामुपविष्टांमहीतले ॥ भर्तारंसमनुध्यांतीमशोकवनिकांगताम् ॥१२॥ उपास्यमानांघोराभिराक्षसीभिरदूरतः ॥ उपसृत्यततःसीतां प्रहर्षंनामकीर्तयन् ॥ १३ ॥ इदंचवचनंधृष्टमुवाचजनकात्मजाम् ॥ सांत्व्यमानामयाभद्रेयमाश्रित्यविमन्यसे ॥ १४ ॥ खरहंतासतेभर्ताराघवःसमरेहतः ॥ छिन्नंतेसर्वथामूलंदर्पश्चनिहतोमया ॥१५ ॥ व्यसनेनात्मनःसीतेममभार्याभविष्यसि ॥ विसृजेतांमतिंमूढेकिंमृतेनकरिष्यसि ॥ १६ ॥ भवस्वभद्रेभार्याणांसर्वासामीश्वरीमम ॥ अल्पपुण्येनिवृत्तार्थेमूढेपंडितमानिनि ॥ शृणुभर्तृवधंसीतेघोरंवृत्रवधंयथा ॥ १७ ॥ समायातःसमुद्रांतंहंतुंमांकिलराघवः ॥ वानरेंद्रप्रणीतेनबलेनमहतावृतः ॥ १८ ॥ सन्निविष्टःसमुद्रस्यपीड्यतीरमथोत्तरम् ॥ बलेनमहतारामोव्रजत्यस्तंदिवाकरे ॥ १९ ॥

भूषणं प्रददौ ॥ १० ॥ संविवेश प्रविवेश ॥ ११ ॥ १२ ॥ प्रहर्षं नाम कीर्तयन् नामेत्यपरमार्थे अपरमार्थभूतं रामजयजं प्रहर्षं कीर्तयन् ॥ १३ ॥ १४ ॥ ते मूलमस्मदपरिग्रहनिदानं सर्वथा सर्वप्रकारेण च्छिन्नं ते दर्पश्च मया निहतः ॥ १५ ॥ एवंकरणेन किं ते जातं तत्राह व्यसनेनेति । आत्मनस्तव व्यसनेन मम भार्या भविष्यसि गत्यंतराभावात्स्वयमेवेति शेषः । एतां मतिं रामविषयां मतिम् ॥१६॥ भवस्व भवेत्यर्थः । निवृत्तार्थे निवृत्तो रामरूपोर्थो यस्यास्तादृशि कथमिदं त्वया साधितमिति चेदुपायेनेत्याह शृण्विति ॥ १७ ॥ प्रणीतेन आनीतेन ॥ १८ ॥ अस्तं दिवाकरे व्रजति महाबलेन समुद्रस्योत्तरं

वैदेह्यास्तव चाभिगंतान्वेषी समीपमागतश्चेत्यर्थः ॥ ९ ॥ १० ॥ सततगो वायुः ॥ ११ ॥ १२ ॥ प्रतियास्यति भूलोकवर्तिफलैरिति शेषः ॥ १३ ॥ अनासाद्य भास्करमिति शेषः । भास्करोदयने इति बहुव्रीहिः ॥ १४ ॥ १५ ॥*आगमयोगेन सह हनूमन्नामनिमित्तभूतपूर्ववृत्तांतेन सहेत्यर्थः ॥ १६ ॥ धूमकेतुरग्निः येन जाज्वल्यते प्रज्वलितः कृतः त्वत्तेजोरुद्धोपि यत्पुच्छं प्राप्य प्रज्वलितः लंकायां

ज्येष्ठःकेसरिणःपुत्रोवातात्मजइतिश्रुतः ॥ हनूमानितिविख्यातोलंघितोयेनसागरः ॥ १० ॥ कामरूपोहरिश्रेष्ठोबलरूपसमन्वितः ॥ अनिवार्यं गतिश्चैवयथासततगःप्रभुः ॥११॥ उद्यंतंभास्करंदृष्ट्वाबालःकिलबुभुक्षितः ॥ त्रियोजनसहस्रंतुअध्वानमवतीर्यहि ॥ १२ ॥ आदित्यमाहरिष्यामिनमे क्षुत्प्रतियास्यति ॥ इतिनिश्चित्यमनसापुप्लुवेबलदर्पितः ॥१३॥ अनाधृष्यतमंदेवमपिदेवर्षिराक्षसैः ॥ अनासाद्यैवपतितोभास्करोदयनेगिरौ॥१४॥ पतितस्यकपेरस्यहनुरेकाशिलातले ॥ किंचिद्भिन्नादृढहनुर्हनूमानेपतेनवै ॥१५॥ सत्यमागमयोगेनममैषविदितोहरिः ॥ नास्यशक्यंबलंरूपंप्रभावो वानुभाषितुम् ॥ १६ ॥ एषआशंसतेलंकामेकोमथितुमोजसा ॥ येनजाज्वल्यतेसौवैधूमकेतुस्तवाद्यवै ॥ लंकायांनिहितश्चापिकथंविस्मरसेक पिम् ॥ १७ ॥ यस्यैषोनंतरःशूरःश्यामःपद्मनिभेक्षणः ॥ इक्ष्वाकूणामतिरथोलोकेविश्रुतपौरुषः ॥ १८ ॥ यस्मिन्नचलतेधर्मोयोधर्मंनातिवर्तते ॥ योब्राह्ममस्त्रंवेदांश्चवेदवेदविदांवरः ॥ १९ ॥ योभिंद्याद्गगनंबाणैर्मेदिनींचापिदारयेत् ॥ यस्यमृत्योरिवक्रोधःशक्रस्येवपराक्रमः ॥२०॥ यस्यभार्या जनस्थानात्सीताचापिहृतात्वया ॥ सएषरामस्त्वांराजन्योद्धुंसमभिवर्तते ॥ २१ ॥ यस्यैषदक्षिणेपार्श्वेशुद्धजांबूनदप्रभः ॥ विशालवक्षास्ताम्राक्षो नीलकुंचितमूर्धजः ॥२२॥ एषोहिलक्ष्मणोनामभ्रातुःप्रियहितेरतः ॥ नयेयुद्धेचकुशलःसर्वशस्त्रभृतांवरः ॥ २३ ॥ अमर्षीदुर्जयोजेताविक्रांतश्चजयी बली ॥ रामस्यदक्षिणोबाहुर्नित्यंप्राणोबहिश्चरः ॥ २४ ॥ नह्येषराघवस्यार्थेजीवितंपरिरक्षति ॥ एषैवाशंसतेयुद्धेनिहंतुंसर्वराक्षसान् ॥ २५ ॥ यस्यसव्यमसौपक्षंरामस्याश्रित्यतिष्ठति ॥ रक्षोगणपरिक्षिप्तोराजाह्येषविभीषणः ॥ २६ ॥ श्रीमताराजराजेनलंकायामभिषेचितः ॥ त्वामसौप्र तिसंरब्धोयुद्धायैषोभिवर्तते ॥ २७ ॥

निहितो निक्षिप्तश्च ॥ १७ ॥ रामं वर्णयति यस्यैष इति । यस्य दर्शितस्य हनूमतोनंतरः समीपवर्ती ॥ १८ ॥ १९ ॥ गगनं बाणैर्भिंद्यात् ॥ सर्वदुष्करमपि तस्य सुकरमिति तात्पर्यम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ यस्य प्राग्वर्णितस्य रामस्य सव्यं पक्षमाश्रित्य तिष्ठतीत्यन्वयः । रक्षोगणेन परिक्षिप्तो व्याप्तः । गणशब्देन चत्वार एव ॥ २६ ॥ राजराजेन रामेणाभिषेचित इत्यन्वयः ।

एषोसौ त्वां प्रति युद्धायाभिवर्तते ॥ २७ ॥ सुग्रीववर्णनं यं त्विति ॥२८ ॥ अतिबभ्राज अतिक्रम्यातिशयेन बभ्राजेत्यर्थः ॥ २९ ॥ ३० ॥ पुष्करं पद्मम् ॥ ३१ ॥ ३२ ॥ अथ सर्वबलसंख्यां दर्शयितुं संख्यास्वरूपं निदर्शयति शतमिति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ अथ बलसंख्यामाह एवं कोटीति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ प्रज्वलितग्रहोपमां प्रज्वलितग्रहज्वालोपमाम् ॥४२॥

यंतुपश्यसितिष्ठंतंमध्येगिरिमिवाचलम् ॥ सर्वशाखामृगेंद्राणांभर्तारममितौजसम् ॥ २८ ॥ तेजसायशसाबुद्ध्याबलेनाभिजनेनच ॥ यःकपीनतिबभ्राजहिमवानिवपर्वतः ॥ २९ ॥ किष्किंधांयःसमध्यास्तेदुर्गांसगहनद्रुमाम् ॥ दुर्गांपर्वतदुर्गम्यांप्रधानैःसहयूथपैः ॥ ३० ॥ यस्यैषाकांचनीमालाशोभतेशतपुष्करा ॥ कांतादेवमनुष्याणांयस्यांलक्ष्मीःप्रतिष्ठिता ॥ ३१ ॥ एतांमालांचतारांचकपिराज्यंचशाश्वतम् ॥ सुग्रीवोवालिनंहत्वारामेणप्रतिपादितः ॥ ३२ ॥ शतंशतसहस्राणांकोटिमाहुर्मनीषिणः ॥ शतंकोटिसहस्राणांशंकुरित्यभिधीयते ॥ ३३ ॥ शतंशंकुसहस्राणांमहाशंकुरितिस्मृतः ॥ महाशंकुसहस्राणांशतंवृंदमिहोच्यते ॥ ३४ ॥ शतंवृंदसहस्राणांमहावृंदमितिस्मृतम् ॥ महावृंदसहस्राणांशतंपद्ममिहोच्यते ॥ ॥ ३५ ॥ शतंपद्मसहस्राणांमहापद्ममितिस्मृतम् ॥ महापद्मसहस्राणांशतंखर्वमिहोच्यते ॥ ३६ ॥ शतंखर्वसहस्राणांसमुद्रमभिधीयते ॥ शतंसमुद्रसाहस्रमोघमितिविश्रुतम् ॥ ३७ ॥ एवंकोटिसहस्रेणशंकूनांचशतेनच ॥ महाशंकुसहस्रेणतथावृन्दशतेनच ॥ ३८ ॥ महावृंदसहस्रेणतथापद्मशतेनच ॥ महापद्मसहस्रेणतथाखर्वशतेनच ॥ ३९ ॥ समुद्रेणचतेनैवमहौघेनतथैवच ॥ एषकोटीमहौघेनसमुद्रसदृशेनच ॥ ४० ॥ विभीषणेनवीरेणसचिवैःपरिवारितः ॥ सुग्रीवोवानरेंद्रस्त्वांयुद्धार्थमनुवर्तते ॥ महाबलवृतोनित्यंमहाबलपराक्रमः ॥ ४१ ॥ इमांमहाराजसमीक्ष्यवाहिनीमुपस्थितांप्रज्वलितग्रहोपमाम् ॥ ततःप्रयत्नःपरमोविधीयतांयथाजयःस्यान्नपरैःपराभवः ॥ ४२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये युद्धकांडे अष्टाविंशः सर्गः ॥ २८ ॥ शुकेनतुसमादिष्टान्दृष्ट्वासहरियूथपान् ॥ लक्ष्मणंचमहावीर्यंभुजंरामस्यदक्षिणम् ॥ १ ॥ समीपस्थंचरामस्यभ्रातरंचविभीषणम् ॥ सर्ववानरराजंचसुग्रीवंभीमविक्रमम् ॥ २ ॥ अंगदंचापिबलिनंवज्रहस्तात्मजात्मजम् ॥ हनूमंतंचविक्रांतंजांबवंतंचदुर्जयम् ॥ ॥ ३ ॥ सुषेणंकुमुदंनीलंनलंचप्लवगर्षभम् ॥ गजंगवाक्षंशरभंमैंदंचद्विविदंतथा ॥ ४ ॥ किंचिदाविग्नहृदयोजातक्रोधश्वरावणः ॥ भर्त्सयामासतौवीरौकथांतेशुकसारणौ ॥ ५ ॥ अधोमुखौतौप्रणतावब्रवीच्छुकसारणौ ॥ रोषगद्गदयावाचासंरब्धंपरुषंतथा ॥ ६ ॥ नतावत्सदृशंनामसचिवैरुपजीविभिः ॥ विप्रियंनृपतेर्वक्तुंनिग्रहेप्रग्रहेप्रभोः ॥ ७ ॥

सर्वमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टाविंशः सर्गः ॥ २८ ॥ कतकरी० ॥ २६ ॥ शुकेनेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ कथांते वृत्तांतश्रवणसमाप्तिसमये भर्त्सयामास । स्वकीयभीताकारगोपनार्थोयं व्यापारः ॥ ५ ॥ अधोमुखौ भर्त्सनेनेति शेषः ॥६॥ उच्यमानविशेषणस्य नृपतेः पुरस्तादुपजीविभिर्विप्रियं वक्तुं तावन्न सदृशं मग्रहे अनुग्रहे॥७॥

तदेव विभियं दर्शयति रिपूणामिति । युद्धायाभिवर्ततामभिमुखतया वर्तमानानाम् ॥ स्तवं बलोत्कर्षकथनम् । अप्रस्तवे तत्प्रश्नाभावे वक्तुं सदृशं युक्तं नाम काकुरत्र अपित्वयुक्तमेव । के यूथपाः कियद्बलमिति विचार्य वक्तव्यमिति प्रेषिते तावन्मात्रं वाच्यम् अपृष्टं तु तेषां प्राबल्यमेकैको नाशयितुं शक्त इत्यादि वक्तुं न युक्तमित्यर्थः ॥ ८ ॥ आचार्य उपनीयवेदाध्यापकः । गुरवः पित्रादयः । वृद्धा ज्ञान वयोवृद्धाः । वां युवाभ्याम् अनुजीव्य ग्राह्यांशो न गृह्यते न गृहीतः ॥ ९ ॥ गृहीतो वा न विज्ञातः विस्मृत इत्यर्थः । ज्ञातविस्मरणमपि युवयोर्नसंभावितमित्याह भार इति । अज्ञानस्य भारो वाह्यते अज्ञानवा हुल्यमेव वर्तते न ज्ञानलेशोपीति भावः । धरामि राज्यमिति शेषः । राज्यभ्रंशस्य परमकारणं भवादृशदुर्मतिसंगस्तत्र सत्यपि तन्मूलानर्थे एतावत्कालं यत्तयोर्बलेन तिरस्कृत इत्यर्थः ॥ १० ॥ युवाभ्यां

रिपूणांप्रतिकूलानांयुद्धार्थमभिवर्तताम् ॥ उभाभ्यांसदृशंनामवक्तुमप्रस्तवेस्तवम् ॥ ८ ॥ आचार्योगुरवोवृद्धावृथावांपर्युपासिताः ॥ सारंयद्राजशास्त्राणामनुजीव्यंनगृह्यते ॥ ९ ॥ गृहीतोवानविज्ञातोभारोज्ञातस्यवाह्यते ॥ ईदृशैःसचिवैर्युक्तोमूर्खैर्दिष्ट्याधराम्यहम् ॥ १० ॥ किंनुमृत्योर्भयंनास्तिमांवक्तुंपरुषंवचः ॥ यस्यमेशासतोजिह्वाप्रयच्छतिशुभाशुभम् ॥ ११॥ अप्येवदहनंस्पृष्ट्वावनेतिष्ठंतिपादपाः ॥ राजदंडपरामृष्टास्तिष्ठंतेनापराधिनः ॥ १२ ॥ हन्यामहंत्विमौपापौशत्रुपक्षप्रशंसिनौ ॥ यदिपूर्वोपकारैर्मेक्रोधोनमृदुतांव्रजेत् ॥ १३ ॥ अपध्वंसतनश्यध्वंसन्निकर्षादितोमम ॥ नहिवांहंतुमिच्छामिस्मराम्युपकृतानिवाम् ॥ हतावेवकृतघ्नौद्वौमयिस्नेहपराङ्मुखौ ॥१४॥ एवमुक्तातुसव्रीडौतौदृष्ट्वाशुकसारणौ ॥ रावणंजयशब्देनप्रतिनंद्याभिनिःसृतौ ॥ १५ ॥ अब्रवीच्चदशग्रीवःसमीपस्थंमहोदरम् ॥ उपस्थापयमेशीघ्रंचारानितिनिशाचरः ॥ महोदरस्तथोक्तस्तुशीघ्रमाज्ञापयच्चरान् ॥ १६॥ ततश्चाराःसंत्वरिताःप्राप्ताःपार्थिवशासनात् ॥ उपस्थिताःप्रांजलयोवर्धयित्वाजयाशिषः ॥ १७ ॥ तानब्रवीत्ततोवाक्यंरावणोराक्षसाधिपः ॥ चरान्प्रत्यायिकाञ्छूरान्धीरान्विगतसाध्वसान् ॥ १८ ॥ इतोगच्छतरामस्यव्यवसायंपरीक्षितुम् ॥ मंत्रेष्वभ्यंतरायेऽस्यप्रीत्यातेनसमागताः ॥ १९ ॥ कथंस्वपितिजागर्तिकिमद्यचकरिष्यति ॥ विज्ञायनिपुणंसर्वमागंतव्यमशेषतः ॥ २० ॥

स्वनाशमप्यविज्ञाय दुर्वच उक्तमित्याह किं न्विति । शासतो राज्ञो यस्य मे जिह्वा तदुक्तिः शुभाशुभं निग्रहानुग्रहं प्रयच्छति तं मां परुषं वचो वक्तुमुत्सहेथे यतस्तद्युवयोर्मृत्योर्भयं किं तु नास्ति यदि स्यात्त न्नुवाथे इत्यर्थः ॥ ११ ॥ अप्रतिक्रियानर्थो राजद्रोह इत्याह अप्येवेत्यादि । राजदोषपरामृष्टाः राजक्रोधविषयाः ॥ १२ ॥ पूर्वोपकारैर्युद्धादौ कृतैः ॥ १३ ॥ अपध्वंसत मत्सभाप्रवेशाद्भ्रष्टा भवत । मे सन्निकर्षान्नश्यध्वमदर्शनं गच्छत । क्रोधवशाद्वचनव्यत्यासो न दोषाय । हतावेव विनापि शिरश्छेदं धिक्कारादेवेति शेषः ॥ १४ ॥ प्रतिनंद्याभिनिःसृतौ अयमेव तयो राक्षसत्वप्रापकशापस्यांत इत्यन्यत्र स्पष्टम् ॥ १५ ॥ १६ ॥ १७ ॥ चरान् चारान्प्रत्यायिकान्प्रत्यय एव प्रत्यायस्तद्वत् इत्यर्थः । अत इनिठनौ । विश्वासोपेतानित्यर्थः ॥ १८ ॥ मंत्रेषु विचारेषु अभ्यंतराः परमांतरंगमंत्रिणः ॥ १९ ॥ २० ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ शार्दूलः प्रधानचारो ग्राहितो विभीषणेनेति शेषः । एको ग्राहित इत्यत्र हेतुः पापोयमिति । अतिदुष्ट इत्यर्थः ॥ २६ ॥ सोपि शार्दूलोपि । परे शार्दूलसहाय भूतास्ते च मोचिताः ॥ २७ ॥ २८ ॥ बहिर्नित्यचराः स्वदेशाद्बहिः परवृत्तांतपरिज्ञानाय नित्यप्रवृत्ताः सुवेलसमीपवासिरामबलं तं रावणं न्यवेदयन् ॥ २९ ॥ अर्धेरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ ॥ छ ॥ कतकरी० ॥ २७ ॥ ॥ तत इति ॥ १ ॥ चाराणां वचनादिति शेषः । तद्वचनाद्रामं प्रति प्राप्तं



चारेणविदितःशत्रुःपंडितैर्वसुधाधिपैः ॥ युद्धेस्वल्पेनयत्नेनसमासाद्यनिरस्यते ॥ २१ ॥ चारास्तुतेतथेत्युक्काप्रहृष्टाराक्षसेश्वरम् ॥ शार्दूलमग्रतः कृत्वाततश्चक्रुःप्रदक्षिणम् ॥ २२ ॥ ततस्तंतुमहात्मानंचाराराक्षससत्तमम् ॥ कृत्वाप्रदक्षिणंजग्मुर्यत्ररामःसलक्ष्मणः ॥ २३ ॥ तेसुवेलस्यशैलस्य समीपेरामलक्ष्मणौ ॥ प्रच्छन्नाददृशुर्गत्वाससुग्रीवविभीषणौ ॥ २४ ॥ प्रेक्षमाणाश्चमूंतांचबभूवुर्भयविह्वलाः ॥ तेतुधर्मात्मनादृष्टाराक्षसेंद्रेणराक्षसाः ॥ २५ ॥ विभीषणेनतत्रस्थानिगृहीतायदृच्छया ॥ शार्दूलोग्राहितस्त्वेकःपापोयमितिराक्षसः ॥ २६ ॥ मोक्षितःसोपिरामेणवध्यमानःप्लवंगमैः ॥ अनृशंसेनरामेणमोक्षिताराक्षसाःपरे ॥ २७ ॥ वानरैरर्दितास्तेतुविक्रान्तैर्लघुविक्रमैः ॥ पुनर्लंकामनुप्राप्ताःश्वसंतोनष्टचेतसः ॥ २८ ॥ ततोदशग्रीवमुपस्थितास्तेचराबहिर्नित्यचरानिशाचराः ॥ गिरेःसुवेलस्यसमीपवासिनंन्यवेदयन्भीमबलंमहाबलाः ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनत्रिंशः सर्गः ॥ २९ ॥ ततस्तमक्षोभ्यबलंलंकाधिपतयेचराः ॥ सुवेलेराघवंशैलेनिविष्टंप्रत्यवेदयन् ॥ १ ॥ चाराणांरावणःश्रुत्वाप्राप्तंरामंमहाबलम् ॥ जातोद्वेगोभवत्किंचिच्छार्दूलंवाक्यमब्रवीत् ॥ २ ॥ अयथावच्चतेवर्णोदीनश्चासिनिशाचर ॥ नासिकच्चिदमित्राणांक्रुद्धानांवशमागतः ॥ ३ ॥ इतितेनानुशिष्टस्तुवाचंमंदमुदीरयत् ॥ तदाराक्षसशार्दूलंशार्दूलोभयविक्लवः ॥ ४ ॥ नतेचारयितुंशक्याराजन्वानरपुंगवाः ॥ विक्रांताबलवंतश्चराघवेणचरक्षिताः ॥ ५ ॥ नापिसंभाषितुंशक्याःसंप्रश्नोत्रनलभ्यते ॥ सर्वतोरक्ष्यतेपंथावानरैःपर्वतोपमैः ॥ ६ ॥ प्रविष्टमात्रेज्ञातोहंबलेतस्मिन्विचारिते ॥ बलाद्गृहीतोरक्षोभिर्बहुधाऽस्मिविचारितः ॥ ७ ॥ जानुभिर्मुष्टिभिर्दंतैस्तलैश्चाभिहतोभृशम् ॥ परिणीतोस्मिहरिभिर्बलमध्येअमर्षणैः ॥ ८ ॥ परिणीयचसर्वत्रनीतोहंरामसंसदि ॥ रुधिरस्राविदीनांगोविह्वलश्चलितेंद्रियः ॥ ९ ॥ हरिभिर्वध्यमानश्चयाचमानःकृतांजलिः ॥ राघवेणपरित्रातोमामेतिचयदृच्छया ॥ १० ॥ एषशैलशिलाभिस्तुपूरयित्वामहार्णवम् ॥ द्वारमाश्रित्यलंकायारामस्तिष्ठतिसायुधः ॥ ११ ॥ गरुडव्यूहमास्थायसर्वतोहरिभिर्वृतः ॥ मांविसृज्यमहातेजालंकामेवातिवर्तते ॥ १२ ॥

लंकासमीपमागतं श्रुत्वेत्यन्वयः ॥ २ ॥ अमित्राणां वशमागतोसि कच्चिदिति ॥ ३ ॥ तेन अनुशिष्टः पृष्ट इत्यर्थः ॥ ४ ॥ चारयितुं चारैर्विचारयितुम् ॥ ५ ॥ यतः संभाषितुमशक्या अतोत्र संप्रश्नो विचारहेतु पर्यनुयोगो न लभ्यते ॥ ६ ॥ विचारिते विचारयितुं प्रक्रांते रक्षोभिर्विभीषणपरिवारैर्विचारितो बहुप्रकारगत्या चालितः ॥ ७ ॥ परिणीतोस्मि हनूमानिव घोषणार्थमितस्ततो नीतोस्मि ॥ ८ ॥ तदेवाह परिणीय च सर्वत्रेति । रुधिरस्रावी चासौ दीनांगश्चेति कर्मधारयः ॥ ९ ॥ यदृच्छया दृष्टेन रामेण मा मा वध्यतामिति परित्रातः ॥ १० ॥ ११ ॥ गरुडव्यूहमास्थायेति प्रस्थानार्थम् । पूर्वं तु

किंत्वेक एव योद्धुमिच्छतीत्यर्थः ॥ ३३ ॥ ३४ ॥ महौजसा महता तेजसा ॥ ३५ ॥ ३६ ॥ पनसवर्णनम् । यस्तु मेघ इत्यादिना ॥ ३७ ॥ भेरीणां नाद इव यस्य सन्नादः श्रूयत इति शेषः ॥ ३८ ॥ ॥ ३९ ॥ एनं पनसं शतार्धं शतसहस्रसंख्यानां पंचाशल्लक्षसंख्यं यूथपाः पर्युपासते येषां यूथानि भागशः प्रत्येकं संतीति शेषः ॥ ४० ॥ ॥ ४१ विनतवर्णनं यस्तु भीमामिति ॥ ४२ ॥ क्रथनवर्णनम् त्वामाह्वयतीत्यादि ॥ ४३ ॥ विक्रांता बलवंतश्च यस्य यूथपा इति शेषः । यथास्य यूथपास्तथैव तेषां भागशः प्रत्येकं यूथानि च संतीति शेषः ॥ ४४ ॥ गवयवर्णनम् यस्तु गैरिकेत्यादि ॥ ४५ ॥ ४६ ॥

प्रकंपतेचरोषेणतिर्यक्चपुनरीक्षते ॥ पश्यलांगूलविक्षेपंक्ष्वेडत्येषमहाबलः ॥ ३४ ॥ महौजसावीतभयोरम्यंसाल्वेयपर्वतम् ॥ राजन्सततमध्यास्ते शरभोनामयूथपः ॥ ३५ ॥ एतस्यबलिनःसर्वेविहारानामयूथपाः ॥ राजञ्छतसहस्राणिचत्वारिंशत्तथैवच ॥ ३६ ॥ यस्तुमेघइवाकाशंमहानावृत्य तिष्ठति ॥ मध्येवानरवीराणांसुराणामिववासवः ॥ ३७ ॥ भेरीणामिवसन्नादोयस्यैषश्रूयतेमहान् ॥ घोषःशाखामृगेंद्राणांसंग्राममभिकांक्षताम् ॥ ॥ ३८ ॥ एषपर्वतमध्यास्तेपारियात्रमनुत्तमम् ॥ युद्धेदुष्प्रसहोनित्यंपनसोनामयूथपः ॥ ३९ ॥ एनंशतसहस्राणांशतार्धंपर्युपासते ॥ यूथपायूथपश्रे ष्ठंयेषांयूथानिभागशः ॥ ४० ॥ यस्तुभीमांप्रवल्गंतींचमूंतिष्ठतिशोभयन् ॥ स्थितांतीरेसमुद्रस्यद्वितीयइवसागरः ॥ ४१ ॥ एषदर्दुरसंकाशोविनतो नामयूथपः ॥ पिबंश्चरतियोवेणांनदीनामुत्तमांनदीम् ॥ ४२ ॥ षष्टिःशतसहस्राणिबलमस्यप्लवंगमाः ॥ त्वामाह्वयतियुद्धायक्रथनोनामवानरः ॥ ४३ ॥ विक्रांताबलवंतश्चयथायूथानिभागशः ॥ यस्तुगैरिकवर्णाभंवपुःपुष्यतिवानरः ॥ ४४ ॥ अवमत्यसदासर्वान्वानरान्बलदर्पितः ॥ गवयो नामतेजस्वीत्वांक्रोधादभिवर्तते ॥ ४५ ॥ एनंशतसहस्राणिसप्ततिःपर्युपासते ॥ एषैवाशंसतेलंकांस्वेनानीकेनमर्दितुम् ॥ ४६ ॥ एतेदुष्प्रसहावी रायेषांसंख्यानविद्यते ॥ यूथपायूथपश्रेष्ठास्तेषांयूथानिभागशः ॥४७॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे षड्विंशःसर्गः॥२६॥ तांस्तुतेसंप्रवक्ष्यामिप्रेक्षमाणस्ययूथपान् ॥ राघवार्थेपराक्रांतायेनरक्षंतिजीवितम् ॥ १॥ स्निग्धायस्यबहुव्यामादीर्घलांगूलमाश्रिताः ॥ ताम्राःपीताः सिताःश्वेताःप्रकीर्णाघोरकर्मणः ॥ २ ॥

येषां यूथपाना संख्या न विद्यते भागशः संतीति शेषः ॥४७॥ सैवर्मानः ॥ अत्र सर्गच्छेदोऽपांक्तो वृत्तभेदाभावादेकप्रकरणत्वाच्चेति कतकः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षड्विंशः सर्गः ॥ २६ ॥ तानिति । ये जीवितं न रक्षंति ॥ १ ॥ स्निग्धा इत्यादि हरवर्णनमिति कतकः। तारस्येत्यन्ये । बहुव्यामाः यस्य लांगूलाश्रिता बाला बहुव्यामत्वादिगुणकाः ॥२॥

मगृहीता उत्क्षिप्ताः एष हरो नामेत्यन्वयः । हरो गोलांगूलजातिः ॥ ३ ॥ ४ ॥ धूम्रवर्णनम् नीलानित्यादि ॥ ५ ॥ अनिर्देश्यान् अशक्यनामगणनान् परं पारमिव परपारस्थरेणूनिव ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अथ जांबवद्वर्णनं यवीयानिति । अस्य धूम्रस्य कनिष्ठ इत्यर्थः । यो भ्रात्रा समान इत्यन्वयः ॥ १० ॥ गुरुवर्ती सद्गुरूपासकः । अनेन सर्वसिद्धिमत्त्वमुक्तम् ॥ ११ ॥ साह्यं साहाय्यम् । देवासुरे युद्धे इति वैर इति वा शेषः ॥ १२ ॥ अथ तत्सैन्यवर्णनं आरुह्योति ॥ १३ ॥ रोमशा अधिकरोमवंतः । रक्षःपिशाचसादृश्यं क्रौर्येण ॥ १४ ॥ दंभवर्णनम् यं एनमिति । प्लवमानं लीलार्थमिति

प्रगृहीताःप्रकाशंतेसूर्यस्येवमरीचयः ॥ पृथिव्यांचानुकृष्यंतेहरोनामैषवानरः ॥३॥ यंपृष्ठतोनुगच्छंतिशतशोथसहस्रशः ॥ वृक्षानुद्यम्यसहसालंकारोहणतत्पराः ॥ ४ ॥ यूथपाहरिराज्यस्यकिंकराःसमुपस्थिताः ॥ नीलानिवमहामेघांस्तिष्ठंतोयांस्तुपश्यसि ॥५॥ असितांजनसंकाशान्युद्धेसत्यपराक्रमान् ॥ असंख्येयाननिर्देशान्परंपारमिवोदधेः ॥ ६ ॥ पर्वतेषुचयेकेचिद्विषयेषुनदीषुच ॥ एतेत्वामभिवर्ततेराजन्नृक्षाःसुदारुणाः ॥ ७ ॥ एषांमध्येस्थितोराजाभीमाक्षोभीमदर्शनः ॥ पर्जन्यइवजीमूतैःसमंतात्परिवारितः ॥ ८ ॥ ऋक्षवंतंगिरिश्रेष्ठमध्यास्तेनर्मदांपिबन् ॥ सर्वर्क्षाणामधिपतिर्धूम्रोनामैषयूथपः ॥ ९ ॥ यवीयानस्यतुभ्रातापश्यैनंपर्वतोपमम् ॥ भ्रात्रासमानोरूपेणविशिष्टश्चपराक्रमे ॥ १० ॥ सएषजांबवान्नाममहायूथपयूथपः ॥ प्रशांतोगुरुवर्तीचसंप्रहारेष्वमर्षणः ॥ ११ ॥ एतेनसाह्यंतुमहत्कृतंशक्रस्यधीमता ॥ देवासुरेजांबवतालब्धाश्चवहवोवराः ॥१२॥ आरुह्यपर्वताग्रेभ्योमहाभ्रविपुलाःशिलाः ॥ मुंचंतिविपुलाकारानमृत्योरुद्विजंतिच ॥ १३ ॥ राक्षसानांचसदृशाःपिशाचानांचरोमशाः ॥ एतस्यसैन्याबहवोविचरंत्यमितौजसः ॥ १४ ॥ यएनमभिसंरब्धंप्लवमानमवस्थितम् ॥ प्रेक्षंतेवानराःसर्वेस्थितंयूथपयूथपम् ॥ १५ ॥ एषराजन्सहस्राक्षंपर्युपास्तेहरीश्वरः ॥ बलेनवलसंयुक्तोरंभोनामैषयूथपः ॥ १६ ॥ यःस्थितंयोजनेशैलंगच्छन्पार्श्वेनसेवते ॥ ऊर्ध्वंतथैवकायेनगतःप्राप्नोतियोजनम् ॥ १७ ॥ यस्मात्तुपरमंरूपंचतुष्पात्सुनविद्यते ॥ श्रुतःसन्नादनोनामवानराणांपितामहः ॥ १८ ॥ येनयुद्धंतदादत्तंरणेशक्रस्यधीमता ॥ पराजयश्चनप्राप्तःसोयंयूथपयूथपः ॥ १९ ॥ यस्यविक्रममाणस्यशक्रस्येवपराक्रमः ॥ एषगंधर्वकन्यायामुत्पन्नःकृष्णवर्त्मना ॥ २० ॥ तदादेवासुरेयुद्धेसाह्यार्थंत्रिदिवौकसाम् ॥ यत्रवैश्रवणोराजाजंबूमुपनिषेवते ॥ २१ ॥ योराजापर्वतेन्द्राणांवहुकिन्नरसेविनाम् ॥ विहारसुखदोनित्यंभ्रातुस्तेराक्षसाधिप ॥ २२ ॥ तत्रैषरमतेश्रीमान्वलवान्वानरोत्तमः ॥ युद्धेष्वकत्थनोनित्यंक्रथनोनामयूथपः ॥ २३ ॥

शेषः । स्थितं लीलार्थमेव पुनः स्थितम् ॥ १५ ॥ १६ ॥ सन्नादनवर्णनं यः स्थितमिति । यो योजने स्थितं शैलं पार्श्वेन सेवते । एतेन योजनव्यायामदेह इत्युक्तम् । ऊर्ध्वमपि योजनं कायेन कायप्रमाणेन गतो व्याप्तः सन्नूर्ध्ववर्तिपदार्थं प्राप्नोति स्पृशति ॥ १७ ॥ १८ ॥ १९ ॥ अथ क्रथनवर्णनं यस्येति । कृष्णवर्त्मना अग्निना ॥ २० ॥ त्रिदिवौकसां साह्यार्थमुत्पन्न इत्यन्वयः । वैश्रवणो राजा यत्र गिरौ जंबूमुपनिषेवते यः पर्वतो बहवः किन्नराः सेवका येषां तेषां पर्वतेंद्राणां राजा यश्च ते भ्रातुर्विहारसुखदः ॥ २१ ॥ २२ ॥ तत्र गिरौ कैलासे वसति । अकत्थनः आत्मश्लाघारहितः कार्येणैव परा

क्रमप्रदर्शकः ॥ २३ ॥ २४ ॥ अथ प्रमाथिवर्णनम् । यो गंगामिति । गंगामनु गंगासमीपे हस्तिवानरयोर्वैरं गजाकारशंबसादनासुरस्य हनुमत्पित्रा केसरिणा वधात्पूर्वमुत्पन्नमिति पौराणिकी गाथा ॥ २५ ॥ नेता प्रभुः ॥ २६ ॥ हैमवतीं नदीं गंगामनु वर्तमानमुशीरबीजाख्यं पर्वतमाश्रित्य यो रमते इत्यन्वयः ॥ २७ ॥ शतसहस्राणां सहस्रं सप्तहलक्षामिति यावत् ॥ २८ ॥ २९ ॥ दुर्धरः शत्रुभिर्धर्तुमशक्यः । प्रमाथिनं विशिष्य बोधयाति वातेनेवेति ॥ ३० ॥ तरस्विवानरसंबंधि यस्यानीकं संरब्धं पश्यसि यस्यानीकेनोद्धतं बहुलं रजोऽरुणाभं धूम्रवर्णं पवनेन समंततो बहुशो विवर्तमानं क्षिप्यमाणं यत्र यत्स

वृतःकोटिसहस्रेणहरीणांसमवस्थितः ॥ एषैवाशंसतेलंकांस्वेनानीकेनमर्दितुम् ॥ २४ ॥ योगंगामनुपर्यैतित्रासयन्गजयूथपान् ॥ हस्तिनांवानराणां चपूर्ववैरमनुस्मरन् ॥ २५ ॥ एषयूथपतिर्नेतागर्जन्गिरिगुहाशयः ॥ गजान्रोधयतेवन्यानारुजंश्चमहीरुहान् ॥ २६ ॥ हरीणांवाहिनीमुख्योनदींहै मवतीमनु ॥ उशीरबीजमाश्रित्यमंदरंपर्वतोत्तमम् ॥ २७ ॥ रमतेवानरश्रेष्ठोदिविशक्रइवस्वयम् ॥ एनंशतसहस्राणांसहस्रमभिवर्तते ॥ २८ ॥ वीर्य विक्रमदृप्तानांनर्दतांबाहुशालिनाम् ॥ सएषनेताचैतेषांवानराणांमहात्मनाम् ॥ २९ ॥ सएषदुर्धरोराजन्प्रमाथीनामयूथपः ॥ वातेनेवोद्धतंमेघंयमे नमनुपश्यसि ॥ ३० ॥ अनीकमपिसंरब्धंवानराणांतरस्विनाम् ॥ उद्धूतमरुणाभासंपवनेनसमंततः ॥ ३१ ॥ विवर्तमानंबहुशोयत्रैतद्बहुलंरजः ॥ एतेसितमुखाघोरागोलांगूलामहाबलाः ॥ ३२ ॥ शतंशतसहस्राणिदृष्ट्वावैसेतुबंधनम् ॥ गोलांगूलंमहाराजगवाक्षंनामयूथपम् ॥ ३३ ॥ परिवार्या भिनर्दंतेलंकांमर्दितुमोजसा ॥ भ्रमराचरितायत्रसर्वकालफलद्रुमाः ॥ ३४ ॥ यंसूर्यस्तुल्यवर्णाभमनुपर्यैतिपर्वतम् ॥ यस्यभासासदाभांतितद्वर्णा मृगपक्षिणः ॥ ३५ ॥ यस्यप्रस्थंमहात्मानोनत्यजंतिमहर्षयः ॥ सर्वकामफलावृक्षाःसर्वेफलसमन्विताः ॥ ३६ ॥ मधूनिचमहार्हाणियस्मिन्पर्व तसत्तमे ॥ तत्रैपरमतेराजन्रम्येकांचनपर्वते ॥ ३७ ॥ मुख्योवानरमुख्यानांकेसरीनामयूथपः ॥ षष्टिर्गिरिसहस्राणिरम्याःकांचनपर्वताः ॥ ३८ ॥ तेषांमध्येगिरिवरस्त्वमिवानवरक्षसाम् ॥ तत्रैकेकपिलाःश्वेतास्ताम्रास्यामधुपिंगलाः ॥ ३९ ॥

मीपे पश्यसि स एष प्रमाथीत्यन्वयः ॥ ३१ ॥ गवाक्षवर्णनम् । एतेसितेत्यादि ॥ ३२ ॥ शतं शतसहस्राणि शतलक्षमित्यर्थः । सेतुबंधनं नलसमीपे तत्सहायतया स्थित्वा सेतुबंधनकर्तारम् ॥ ३३ ॥ केसरि वर्णनम् । भ्रमरेत्यादि । यत्र पर्वते सर्वकाले फलंति तादृशा द्रुमाः संति ॥ ३४ ॥ यं सूर्यस्तुल्यवर्णाभं स्वतुल्यवर्णकांतियुक्तं पर्वतमनु पर्येति प्रदक्षिणं करोति । मृगपक्षिणस्तद्वर्तिमृगादयः ॥ ३५ ॥ सर्वकामेति काम्यंत इति कामा विषयाः सर्वेषां भोगार्हस्रक्चंदनाभरणवस्त्रादिरूपफलप्रदाः ॥ ३६ ॥ कांचनपर्वतो महामेरुः ॥ ३७ ॥ शतवलिवर्णनं षष्टिरित्यादि ॥ ३८ ॥ तेषां मध्ये गिरिवरः

सावर्णिमेरुनामास्ति तत्र सावर्णिमेरौ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ते वानरास्ते तव लंकां समीक्ष्य मर्दयंतीव मर्दयंत इव तिष्ठंति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ नर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तविंशः सर्गः ॥ २७ ॥ कतकरी० ॥ २५ ॥ सारणानुक्तं किंचिच्छुको वक्तीत्याह सारणस्येति । तत्सर्वं बलमा

निवसंत्यंतिमगिरौतीक्ष्णदंष्ट्रानखायुधाः ॥ सिंहाइवचतुर्दंष्ट्राव्याघ्राइवदुरासदाः ॥ ४० ॥ सर्वेवैश्वानरसमाज्वलदाशीविषोपमाः ॥ सुदीर्घांचितलांगूलामत्तमातंगसन्निभाः ॥ ४१ ॥ महापर्वतसंकाशामहाजीमूतनिःस्वनाः ॥ वृत्तपिंगलनेत्राहिमहाभीमगतिस्वनाः ॥ ४२ ॥ मर्दयंतीवतेसर्वेतस्थुर्लंकांसमीक्ष्यते ॥ एषचैषामधिपतिर्मध्येतिष्ठतिवीर्यवान् ॥ ४३ ॥ जयार्थीनित्यमादित्यमुपतिष्ठतिवीर्यवान् ॥ नाम्नापृथिव्यांविख्यातोराजन्शतबलीतियः ॥ ४४ ॥ एषैवाशंसतेलंकांस्वेनानीकेनमर्दितुम् ॥ विक्रांतोबलवाञ्छूरःपौरुषेस्वेव्यवस्थितः ॥ ४५ ॥ रामप्रियार्थंप्राणानांदयांनकुरुतेहरिः ॥ गजोगवाक्षोगवयोनलोनीलश्चवानरः ॥ ४६ ॥ एकैकमेवयोधानांकोटिभिर्दशभिर्वृतः ॥ तथान्येवानरश्रेष्ठाविंध्यपर्वतवासिनः ॥ नशक्यंतेबहुत्वात्तुसंख्यातुंलघुविक्रमाः ॥ ४७ ॥ सर्वेमहाराजमहाप्रभावाःसर्वेमहाशैलनिकाशकायाः ॥ सर्वेसमर्थाःपृथिवींक्षणेनकर्तुंप्रविध्वस्तविकीर्णशैलाम् ॥ ४८ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तविंशः सर्गः ॥२७॥ सारणस्यवचःश्रुत्वारावणंराक्षसाधिपम् ॥ बलमादिश्यतत्सर्वंशुकोवाक्यमथाब्रवीत् ॥ १ ॥ स्थितान्पश्यसियानेतान्मत्तानिवमहाद्विपान् ॥ न्यग्रोधानिवगांगेयान्सालान्हैमवतानिव ॥ २ ॥ एतेदुष्प्रसहाराजन्बलिनःकामरूपिणः ॥ दैत्यदानवसंकाशायुद्धेदेवपराक्रमाः ॥ ३ ॥ एषांकोटिसहस्राणिनवपंचचसप्तच ॥ तथाशंकुसहस्राणितथावृंदशतानिच ॥ ४ ॥ एतेसुग्रीवसचिवाःकिष्किंधानिलयाःसदा ॥ हरयोदेवगंधर्वैरुत्पन्नाःकामरूपिणः ॥ ५ ॥ यौतौपश्यसितिष्ठंतौसमानौदेवरूपिणौ ॥ मैंदश्चद्विविदश्चैवताभ्यांनास्तिसमोयुधि ॥ ६ ॥ ब्रह्मणासमनुज्ञाताअमृतप्राशिनावुभौ ॥ आशंसेतेयथालंकामेतौमर्दितुमोजसा ॥ ७ ॥ यंतुपश्यसितिष्ठंतंप्रभिन्नमिवकुंजरम् ॥ योबलात्क्षोभयेत्क्रुद्धःसमुद्रमपिवानरः ॥ ८ ॥ एषोऽभिगंतालंकायांवैदेह्यास्तवचप्रभो ॥ एनंपश्यपुरादृष्टंवानरंपुनरागतम् ॥ ९ ॥

दिश्य तूष्णीं स्थितवतः सारणस्य वचः श्रुत्वा स्थितं रावणं शुकोब्रवीत् ॥ १ ॥ गांगेयान् गंगातटोत्पन्नान् । अनपत्येपि ढगार्षः ॥ २ ॥ ३ ॥ एषां कोटीति सुग्रीवसचिवसंख्या । सर्वबलसंख्यां तु सर्गांते वक्ष्यति ॥ ४ ॥ ५ ॥ यौ ताविति मैंदद्विविदविषयम् ॥ ६ ॥ समनुज्ञाता इत्यत्र लोपः शाकल्यस्येति लोपः । समनुज्ञातावित्यर्थः ॥७॥ हनुमंतं वर्णयति यं त्विति । प्रभिन्नं मत्तम् ॥ ८ ॥ एष लंकाय

वज्रवान् वज्रवत्त्वगुणः ॥ २५ ॥ २६ ॥ विभीषणगृहीतावित्यनेन तत्त्यागस्तव महतेऽनर्थायेति सूचितम् ॥ २७ ॥ यत्र यस्मादेते वक्ष्यमाणाश्चत्वार एकस्थानगता एकत्र मिलितास्तस्मात्त एते शक्ता इति योजना ॥ २८ ॥ २९ ॥ ३० ॥ उत्पाट्य संक्रामयितुं निखातशालास्तंभमिवोपरि कृत्वा पुनः प्रतिष्ठापयितुमित्यर्थः ॥ ३१ ॥ ३२ ॥ योद्धुमिच्छतां ध्वजिनी दुर्धर्षेत्यन्वयः । यदेवमतोलमिति ॥ ३३ ॥ गंडुमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकांडे पंचविंशः सर्गः ॥ २५ ॥ कतकरी० ॥ २४ ॥ तदिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

क्रोधंभीममहंमोक्ष्येससैन्येत्वयिरावण ॥ श्वःकाल्येवज्रवान्वज्रंदानवेष्विववासवः ॥ २५ ॥ इतिप्रतिसमादिष्टौराक्षसौशुकसारणौ ॥ जयेतिप्रतिनंद्यै नंराघवंधर्मवत्सलम् ॥ २६ ॥ आगम्यनगरींलंकामब्रूतांराक्षसाधिपम् ॥ विभीषणगृहीतौतुवधार्थंराक्षसेश्वर ॥ २७ ॥ दृष्ट्वाधर्मात्मनामुक्तौरामेणा मिततेजसा ॥ एकस्थानगतायत्रचत्वारःपुरुषर्षभाः ॥ २८ ॥ लोकपालसमाःशूराःकृतास्त्राद्दृढविक्रमाः ॥ रामोदाशरथिःश्रीमाँल्लक्ष्मणश्चविभीषणः ॥ २९॥ सुग्रीवश्चमहातेजामहेंद्रसमविक्रमः ॥ एतेशक्ताःपुरींलंकांसप्राकारांसतोरणाम् ॥ ३० ॥ उत्पाट्यसंक्रामयितुंसर्वेतिष्ठंतुवानराः ॥ यादृशंत द्धिरामस्यरूपंप्रहरणानिच ॥ ३१ ॥ वधिष्यतिपुरींलंकामेकस्तिष्ठंतुतेत्रयः ॥ रामलक्ष्मणगुप्तासासुग्रीवेणचवाहिनी ॥ बभूवदुर्धर्षतरासर्वैरपिसुरा सुरैः ॥ ३२ ॥ प्रहृष्टयोधाध्वजिनीमहात्मनांवनौकसांसंप्रतियोद्धुमिच्छताम् ॥ अलंविरोधेनशमोविधीयतांप्रदीयतांदाशरथायमैथिली ॥ ३३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे पंचविंशः सर्गः ॥२५॥ तद्वचःसत्यमक्लीबंसारणेनाभिभाषितम् ॥ निशम्यरावणोराजापर्य भाषतसारणम् ॥ १ ॥ यदिमामभियुंजीरन्देवगंधर्वदानवाः ॥ नैवसीतामहंदद्यांसर्वलोकभयादपि ॥२॥ त्वंतुसौम्यपरित्रस्तोहरिभिःपीडितोभृशम् ॥ प्रतिप्रदानमद्यैवसीतायाःसाधुमन्यसे ॥३॥ कोहिनामसपत्नोमांसमरेजेतुमर्हति ॥ इत्युक्त्वापरुषंवाक्यंरावणोराक्षसाधिपः ॥४॥ आरुरोहततःश्रीमा न्प्रासादंहिमपांडुरम्॥बहुतालसमुत्सेधंरावणोथदिदृक्षया॥५॥ताभ्यांचराभ्यांसहितोरावणःक्रोधमूर्च्छितः॥पश्यमानःसमुद्रंतंपर्वतांश्चवनानिच ॥६॥ ददर्शपृथिवीदेशंसुसंपूर्णंप्लवंगमैः ॥ तदपारमसह्यंचवानराणांमहाबलम् ॥७॥ आलोक्यरावणोराजापरिपप्रच्छसारणम्॥एषांकेवानरामुख्याःकेशूराः केमहाबलाः ॥८ ॥ केपूर्वमभिवर्तंतेमहोत्साहाःसमंततः ॥ केषांशृणोतिसुग्रीवःकेवायूथपयूथपाः ॥ ९ ॥ सारणाचक्ष्वमेसर्वेकिंप्रभावाःप्लवंगमाः ॥ सारणोराक्षसेंद्रस्यवचनंपरिपृच्छतः॥१०॥आबभाषेऽथमुख्यज्ञोमुख्यांस्तत्रवनौकसः॥एषयोऽभिमुखोलंकांनर्दंस्तिष्ठतिवानरः॥११॥ यूथपानांसहस्रे णशतेनपरिवारितः॥यस्यघोषेणमहतासप्राकारासतोरणा॥१२॥लंकाप्रतिहतासर्वासशैलवनकानना॥ सर्वशाखामृगेंद्रस्यसुग्रीवस्यमहात्मनः॥१३॥

बहुतालसमुत्सेधं अनेकतालप्रमाणोन्नतम् । दिदृक्षया वानरबलदर्शनेच्छया ॥ ५ ॥ चराभ्यां चाराभ्यां पश्यमानः पश्यन् ॥ ६ ॥ वानराणां महाबलं च ददर्शेत्यन्वयः ॥ ७ ॥ ८ ॥ केषां शृणोति वच इति शेषः । यूथपयूथपाः महाप्रधानाः ॥ ९ ॥ वचनम् उत्तरमाबभाषे इत्यन्वयः ॥ १० ॥ ११ ॥ सहस्रेण शतेन लक्षेणेत्यर्थः ॥१२॥ यूथपसंख्याया एव गणनम् । सुग्रीवस्य बलाग्रे च यस्तिष्ठति एष नील

इत्यन्वयः ॥ १३ ॥ अथांगदवर्णनं बाहू इति । प्रगृह्य उपगम्य पद्भ्यां महीं गच्छति नरवदिति शेषः ॥ १४ ॥ १५ ॥ १६ ॥ अभिषेचितोऽभिषिक्तः ॥ १७ ॥ पराक्रांतः पराक्रमितुमुद्यतः ॥ १८ ॥ यद्धनूमता जनकात्मजा दृष्टा सा सर्वा मतिरेतस्यांगदस्य मंत्रमूलेति शेषः ॥ १९ ॥ बहूनि यूथानि परिगृह्य स्वेनानीकेन त्वामभियाति ॥ २० ॥ वालिसुतस्यानु पश्चात् । सेतुहेतुः सेतुकर्ता ॥ २१ ॥ अथ श्वेतवर्णनम् । ये त्विति । गात्राणि विष्टभ्य क्ष्वेलां कुर्वंति एनं श्वेतम् चंदनवासिनः ॥ २२ ॥ एषैव एष एव संधिरार्षः ॥ २३ ॥ सुग्रीवमागम्य पुनर्गच्छतीत्यनेन रावणदर्शनसमये कार्यार्थं सुग्रीवसमी



बलाग्रेतिष्ठतेवीरोनीलोनामैषयूथपः ॥ बाहूप्रगृह्ययःपद्भ्यांमहींगच्छतिवीर्यवान् ॥१४॥ लंकामभिमुखःकोपादभीक्ष्णंचविजृंभते ॥ गिरिश्रृंगप्रतीकाशःपद्मकिंजल्कसन्निभः ॥ १५ ॥ स्फोटयत्यतिसंरब्धोलांगूलंचपुनःपुनः ॥ यस्यलांगूलशब्देनस्वनंतिप्रदिशोदश ॥ १६ ॥ एषवानरराजेनसुग्रीवेणाभिषेचितः ॥ युवराजोंगदोनामत्वामाह्वयतिसंयुगे ॥ १७ ॥ वालिनःसदृशःपुत्रःसुग्रीवस्यसदाप्रियः ॥ राघवार्थेपराक्रांतःशक्रार्थेवरुणोयथा ॥ १८ ॥ एतस्यसामतिःसर्वायद्दृष्टाजनकात्मजा ॥ हनूमतावेगवताराघवस्यहितैषिणा ॥ १९ ॥ बहूनिवानरेंद्राणामेषयूथानिवीर्यवान् ॥ परिगृह्याभियातित्वांस्वेनानीकेनमर्दितुम् ॥ २० ॥ अनुवालिसुतस्यापिबलेनमहतावृतः ॥ वीरस्तिष्ठतिसंग्रामेसेतुहेतुरयंनलः ॥ २१ ॥ येतुविष्टभ्यगात्राणिक्ष्वेडयंतिनदंतिच ॥ यएनमनुगच्छंतिवीराश्चंदनवासिनः ॥ २२ ॥ एषैवाशंसतेलंकांस्वेनानीकेनमर्दितुम् ॥ श्वेतोरजतसंकाशश्चपलोभीमविक्रमः ॥ २३ ॥ बुद्धिमान्वानरःशूरस्त्रिषुलोकेषुविश्रुतः ॥ तूर्णंसुग्रीवमागम्यपुनर्गच्छतिवानरः ॥ २४ ॥ विभजन्वानरींसेनामनीकानिप्रहर्षयन् ॥ यःपुरागोमतीतीरेरम्यंपर्यैतिपर्वतम् ॥ २५ ॥ नाम्नासंरोचनोनामनानानगयुतोगिरिः ॥ तत्रराज्यंप्रशास्त्येषकुमुदोनामयूथपः ॥२६॥ योसौशतसहस्राणिसहस्रंपरिकर्षति ॥ यस्यवालाबहुव्यामादीर्घलांगूलमाश्रिताः ॥ २७ ॥ ताम्राःपीताःसिताःश्वेताःप्रकीर्णाघोरदर्शनाः ॥ अदीनोवानरश्चंडःसंग्राममभिकांक्षति ॥ एषैवाशंसतेलंकांस्वेनानीकेनमर्दितुम् ॥ २८ ॥ यस्त्वेषसिंहसंकाशःकपिलोदीर्घकेसरः ॥ निभृतःप्रेक्षतेलंकांदिधक्षन्निवचक्षुषा ॥ २९ ॥ विंध्यंकृष्णगिरिंसह्यंपर्वतंचसुदर्शनम् ॥ राजन्सततमध्यास्तेसरंभोनामयूथपः ॥ ३० ॥ शतंशतसहस्राणांत्रिंशच्चहरिपुंगवाः ॥ ३१ ॥ यंयांतंवानराघोराश्चंडाश्चंडपराक्रमाः ॥ परिवार्यानुगच्छंतिलंकांमर्दितुमोजसा ॥ ३२ ॥ यस्तुकर्णौविवृणुतेजृंभतेचपुनःपुनः ॥ नतुसंविजतेमृत्योर्नचसेनांप्रधावति ॥ ३३ ॥

पमागत्य गतवानिति ज्ञायते ॥ २४ ॥ यः पुरेत्यादिना कुमुदवर्णनम् । रम्यं रम्याख्यम् ॥ २५ ॥ अस्यैव संरोचन इति नामांतरम् ॥ २६ ॥ चण्डवर्णनम् । योसाविति ॥ २७ ॥ २८ ॥ रंभवर्णनम् यस्त्विति । निभृत एकाग्रः ॥ २९ ॥ ३० ॥ ३१ ॥ यं यांतमनुगच्छंतीत्यन्वयः ॥ ३२॥ शरभवर्णनम् । यस्तु कर्णाविति । मृत्योर्न संविजते नोद्वेगं गच्छति तथा वरदानादिति शेषः । न च सेनामिति ।

स चेति । विराधादिहंतेत्यनेन तवापि हंतेति सूचितम् । पदं स्थानमन्विष्यागतः प्राप्तः ॥ ३० ॥ रक्षांसि निर्धूय तृणीकृत्य ॥ ३१ ॥ ३२ ॥ संधिः संधानं नास्त्येव ॥ ३३ ॥ पुरा आयांति आयास्यंति । पुरायोगे भविष्यति लट् । एकतरं वक्ष्यमाणयोरन्यतरत् ॥ ३४ ॥ ३५ ॥ सर्वस्य राक्षसलोकस्य रणभयप्राप्तेरपीत्यर्थः ॥ ३६ ॥ समभिधावंति धाविष्यंति ॥ ३७ ॥ ३८ ॥ आदास्ये तिरस्करिष्यामि ॥ ३९ ॥ वेद जानाति ॥ ४० ॥ पश्यति दृष्टवान् ॥ ४१ ॥ पुरा पूर्वं मम वीर्यं न जानाति नाज्ञासीत् । शरकोणैः । शररूपवादनदंडैः प्रवादिताम् ॥४२॥ ज्याशब्द एव तुमुलः शब्दो यस्यास्ताम् आर्तः आर्त शब्दरूपो हा हतोस्मीत्यादिको गीतरूपो महान्स्वनो यस्यास्तां नाराचतलरव एव सन्नादो यस्यास्ताम् । अत्र तुमुलमहास्वनसन्नादशब्दैर्वीणाया मंद्रमध्यताराः शब्दा उक्ताः नदीरूपा या अहितवाहिनी सेना तद्रूपं

सकृत्वासागरेसेतुंतीर्त्वाचलवणोदधिम् ॥ एषरक्षांसिनिर्धूयधन्वीतिष्ठतिराघवः ॥ ३१ ॥ ऋक्षवानरसंघानामनीकानिसहस्रशः ॥ गिरिमेघनिकाशानांछादयंतिवसुंधराम् ॥ ३२ ॥ राक्षसानांबलौघस्यवानरेंद्रबलस्यच ॥ नैतयोर्विद्यतेसंधिर्देवदानवयोरिव ॥ ३३ ॥ पुराप्राकारमायांतिक्षिप्रमेकतरंकुरु ॥ सीतांचास्मैप्रयच्छाशुयुद्धंवापिप्रदीयताम् ॥ ३४ ॥ शुकस्यवचनंश्रुत्वारावणोवाक्यमब्रवीत् ॥ रोषसंरक्तनयनोनिर्दहन्निवचक्षुषा ॥ ३५ ॥ यदिमांप्रतियुद्ध्येरन्देवगंधर्वदानवाः ॥ नैवसीतांप्रदास्यामिसर्वलोकभयादपि ॥ ३६ ॥ कदासमभिधावंतिमामकाराघवंशराः ॥ वसंतेपुष्पितंमत्ताभ्रमराइवपादपम् ॥ ३७ ॥ कदाशोणितदिग्धांगंदीप्तैःकार्मुकविच्युतैः ॥ शरैरादीपयिष्यामिउल्काभिरिवकुंजरम् ॥३८॥ तच्चास्यबलमादास्येबलेनमहतावृतः ॥ ज्योतिषामिवसर्वेषांप्रभामुद्यन्दिवाकरः ॥ ३९ ॥ सागरस्येवमेवेगोमारुतस्येवमेबलम् ॥ नचदाशरथिर्वेदतेनमांयोद्धुमिच्छति ॥ ४० ॥ नमेतूणीशयान्बाणान्सविषानिवपन्नगान् ॥ रामःपश्यतिसंग्रामेतेनमांयोद्धुमिच्छति ॥ ४१ ॥ नजानातिपुरावीर्यंममयुद्धेसराघवः ॥ ममचापमयींवीणांशरकोणैःप्रवादिताम् ॥ ४२ ॥ ज्याशब्दतुमुलांघोरामार्तगीतमहास्वनाम् ॥ नाराचतलसन्नादांनदीमहितवाहिनीम् ॥ ४३ ॥ अवगाह्यमहारंगंवादयिष्याम्यहंरणे ॥ ४४ ॥ नवासवेनापिसहस्रचक्षुषायुद्धेऽस्मिशक्योवरुणेनवास्वयम् ॥ यमेनवाधर्षयितुंशराग्निनामहाहवेवैश्रवणेनवास्वयम् ॥ ४५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्विंशः सर्गः ॥ २४ ॥ सबलेसागरंतीर्णेरामेदशरथात्मजे ॥ अमात्यौरावणःश्रीमानब्रवीच्छुकसारणौ ॥ १ ॥ समग्रंसागरंतीर्णंदुस्तरंवानरंबलम् ॥ अभूतपूर्वंरामेणसागरेसेतुबंधनम् ॥ २ ॥ सागरेसेतुबंधंतंनश्रद्दध्यांकथंचन ॥ अवश्यंचापिसंख्येयंतन्मयावानरंबलम् ॥ ३ ॥

महारंगमवगाह्य रणे वादयिष्यामि ॥ ४३ ॥ ४४ ॥ न शक्यो जेतुमिति शेषः ॥ ४५ ॥ अर्णवेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्विंशः सर्गः ॥२४॥ कतकरी० ॥ २३ ॥ रावणः शुकसारणाख्यावमात्यावब्रवीत् । अमात्यत्वेन विशेषणादयं शुकोन्यः । पूर्वप्रेषितशुकोक्तवृत्तांतज्ञानपूर्वकं प्रेषणाच्चेति कतकादयः ॥ १ ॥ सर्वं वानरबलं तीर्णं सागरे सेतुबंधनं च कृतमेतद्वयमप्यभूतपूर्वम् ॥ २ ॥ सागरे सेतुबंधनं न श्रद्दध्यां समुद्रस्य विराडुदरत्वेन जीवव्रातैरशक्यबंधनत्वात् जीवविशेषत्वाच्च रामस्येत्याशयः । रामोपि विराडेव नान्य इति बुद्धिस्तु रजस्तमःप्रधा

नत्वान्न तस्येति दिक् ॥ ३ ॥ परिमाणं चेत्यादीनां तत्त्वतो ज्ञातुमर्हथ इत्यनेन संबन्धः । ये च मुख्यास्तानीति शेषः ॥ ४ ॥ ये पूर्वमभिवर्तंते अग्रेसरा इत्यर्थः ॥ ५ ॥ सागरे संबद्धे सलिलार्णवे लवणजले समुद्रे निवेशं सेनानिवेशम् ॥ ६ ॥ प्रहरणान्यायुधानि ॥ ७ ॥ ८ ॥ ९ ॥ नाध्यगच्छेतां नाशक्नुवाताम् ॥ १० ॥ तत्र हेतुमाह तत्स्थितमित्यादिना ॥ ११ ॥ ददृशाते ददृशतुः ॥ १२ ॥ प्रतिच्छन्नो हरिरूपेण गृहीत्वाचचक्षे गृहीत्वोपनीयाचचक्षे ॥ १३ ॥ १४ ॥ तौ रामं दृष्ट्वा व्यथितौ जीविते निराशौ चाभूताम् ॥ १५ ॥ रावणप्रहितौ तत्प्रेषितौ ॥ १६ ॥ प्रहसन्सेतुबंधनेन जनस्थाने निरपेक्षं

भवंतौवानरंसैन्यंप्रविश्यानुपलक्षितौ ॥ परिमाणंचवीर्यंचयेचमुख्याःप्लवंगमाः ॥ ४ ॥ मंत्रिणोयेचरामस्यसुग्रीवस्यचसंगताः ॥ येपूर्वमभिवर्ततेये चशूराःप्लवंगमाः ॥ ५ ॥ सचसेतुर्यथाबद्धःसागरेसलिलार्णवे ॥ निवेशंचयथातेषांवानराणांमहात्मनाम् ॥ ६ ॥ रामस्यव्यवसायंचवीर्यंप्रहरणानिच ॥ लक्ष्मणस्यचवीरस्यतत्त्वतोज्ञातुमर्हथः ॥ ७ ॥ कश्चसेनापतिस्तेषांवानराणांमहात्मनाम् ॥ तच्चज्ञात्वायथातत्त्वंशीघ्रमागंतुमर्हथः ॥ ८ ॥ इतिप्रतिसमादिष्टौराक्षसौशुकसारणौ ॥ हरिरूपधरौवीरौप्रविष्टौवानरंबलम् ॥ ९ ॥ ततस्तद्वानरंसैन्यमचिंत्यंलोमहर्षणम् ॥ संख्यातुंनाध्यगच्छेतांतदातौशुकसारणौ ॥ १० ॥ तत्स्थितंपर्वताग्रेषुनिर्झरेषुगुहासुच ॥ तरमाणंचतीर्णंचततुंकामंचसर्वशः ॥ ११ ॥ निविष्टंनिविशच्चैवभीमनादंमहाबलम् ॥ तद्बलार्णवमक्षोभ्यंददृशातेनिशाचरौ ॥१२॥ तौददर्शमहातेजाःप्रतिच्छन्नौविभीषणः ॥ आचचक्षेसरामायगृहीत्वाशुकसारणौ ॥१३॥ तस्यैतौराक्षसेंद्रस्यमंत्रिणौशुकसारणौ ॥ लंकायाःसमनुप्राप्तौचारौपरपुरंजय ॥ १४ ॥ तौदृष्ट्वाव्यथितौरामंनिराशौजीवितेतथा ॥ कृतांजलिपुटौभीतौवचनंचेदमूचतुः ॥ १५ ॥ आवामिहागतौसौम्यरावणप्रहितावुभौ ॥ परिज्ञातुंबलंसर्वंतदिदंरघुनंदनः ॥ १६ ॥ तयोस्तद्वचनंश्रुत्वारामोदशरथात्मजः ॥ अब्रवीत्प्रहसन्वाक्यंसर्वभूतहितेरतः ॥ १७॥ यदिदृष्टंबलंसर्वंवयंवासुसमाहिताः ॥ यथोक्तंवाकृतंकार्यंछंदतःप्रतिगम्यताम् ॥१८॥ अथकिंचिददृष्टंवाभूयस्तद्द्रष्टुमर्हथः ॥ विभीषणोवाकात्स्न्र्येनपुनःसंदर्शयिष्यति ॥ १९ ॥ नचेदंग्रहणंप्राप्यभेतव्यंजीवितंप्रति ॥ न्यस्तशस्त्रौगृहीतौचनदूतौवधमर्हतः ॥ २० ॥ प्रच्छन्नौचविमुंचेमौचारौरात्रिंचरावुभौ ॥ शत्रुपक्षस्यसततंविभीषणविकर्षिणौ ॥ २१ ॥ प्रविश्यमहतींलंकांभवद्भ्यांधनदानुजः ॥ वक्तव्योरक्षसांराजायथोक्तंवचनंमम ॥ २२ ॥ यद्बलंत्वंसमाश्रित्यसीतांमेहृतवानसि ॥ तद्दर्शययथाकामंससैन्यश्चसबांधवः ॥ २३ ॥ श्वःकाल्येनगरींलंकांसप्राकारांसतोरणाम् ॥ रक्षसांचबलंपश्यशरैर्विध्वंसितंमया ॥ २४ ॥

खरादिवधेन च न मद्बलज्ञानं वृत्तमिति प्रहासः ॥ १७ ॥ वयमिति । रामेण निर्देशः सुग्रीवादिसहितस्य स्वस्य सुसमाहिताः ज्ञातबलाः यथोक्तं रावणोक्तमनतिक्रम्य वाचेत् । छंदतः स्वेच्छया ॥ १८ ॥ विभीषणो वा यस्माद्विशिष्य भवतां भयमिति शेषः ॥ १९ ॥ न्यस्तशस्त्रत्वाद्येकैकमप्यवधे हेतुः किमुत समुदितमिति भावः ॥ २० ॥ प्रच्छन्नौ च गूढतया रंध्रान्वेषिणावपि शत्रुपक्षस्य रावणशत्रुपक्षस्य सुग्रीवादिरूपस्य सततं विकर्षिणौ भेदादिपरावपि इमौ रात्रिंचरौ हे विभीषण विमुंच ॥ २१ ॥ अथ रामः प्रतिसंदिशति प्रविश्येति ॥ २२ ॥ २३ ॥ श्वः काल्ये श्वः प्रातःकाले ॥ २४ ॥

द्दष्वनसद्दशानुन्मूल्योत्पाट्योद्धृत्योजह्रुः । तरूनित्यस्योत्तरेण संबंधः ॥ ५४ ॥ ५५ ॥ यंत्रैःसुखाहरणसाधनैः ॥ ५६ ॥ अवासर्पद् अधः पपातेत्यर्थः ॥ ५७ ॥ सूत्राणीति आकर्षणार्थमिति शेषः । सेतो रवक्रत्वायेति वा शेषः । शतयोजनमायतं दीर्घं महासेतुं नलश्चक्रे इत्युत्तरेणान्वयः ॥ ५८ ॥ ५९ ॥ विचिन्वंति आहरणीयवृक्षादिकम् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ पंच

तालान्दाडिमगुल्मांश्चनारिकेलविभीतकान् ॥ करीरान्बकुलान्निंबान्समाजह्रुरितस्ततः ॥ ५५ ॥ हस्तिमात्रान्महाकायाःपाषाणांश्चमहाबलाः ॥ पर्वतांश्चसमुत्पाटचयंत्रैःपरिवहंतिच ॥ ५६ ॥ प्रक्षिप्यमाणैरचलैःसहसाजलमुद्धृतम् ॥ समुत्ससर्पचाकाशमवासर्पत्ततःपुनः ॥ ५७ ॥ समुद्रंक्षोभयामासुर्निपतंतःसमंततः ॥ सूत्राण्यन्येप्रगृह्णंतिह्यायतंशतयोजनम् ॥ ५८ ॥ नलश्चक्रेमहासेतुंमध्येनदनदीपतेः ॥ सतदाक्रियतेसेतुर्वानरैर्घोरकर्मभिः ॥ ५९ ॥ दंडानन्येप्रगृह्णंतिविचिन्वंतितथापरे ॥ वानरैःशतशस्तत्ररामस्याज्ञापुरःसरैः ॥ ६० ॥ मेघाभैःपर्वताभैश्च तृणैःकाष्ठैर्बबंधिरेपुष्पिताग्रैश्चतरुभिःसेतुंबध्नंतिवानराः ॥ ६१ ॥ पाषाणांश्चगिरिप्रख्यान्गिरीणांशिखराणिच ॥ दृश्यंतेपरिधावंतोगृह्यदानवसन्निभाः ॥ ६२ ॥ शिलानांक्षिप्यमाणानांशैलानांतत्रपात्यताम् ॥ बभूवतुमुलःशब्दस्तदातस्मिन्महोदधौ ॥ ६३ ॥ कृतानिप्रथमेनाह्नायोजनानिचतुर्दश ॥ प्रहृष्टैर्गजसंकाशैस्त्वरमाणैःप्लवंगमैः ॥ ६४ ॥ द्वितीयेनतथैवाह्नायोजनानितुविंशतिः ॥ कृतानिप्लवगैस्तूर्णंभीमकायैर्महाबलैः ॥ ६५ ॥ अह्नातृतीयेनतथायोजनानितुसागरे ॥ त्वरमाणैर्महाकायैरेकविंशतिरेवच ॥ ६६ ॥ चतुर्थेनतथाचाह्नाद्वाविंशतिरथापिवा ॥ योजनानिमहावेगैःकृतानित्वरितैस्ततः ॥ ६७ ॥ पंचमेनतथाचाह्नाप्लवगैःक्षिप्रकारिभिः ॥ योजनानित्रयोविंशत्सुवेलमधिकृत्यवै ॥ ६८ ॥ सवानरवरःश्रीमान्विश्वकर्मात्मजोबली ॥ बबंधसागरेसेतुंयथाचास्यापितातथा ॥ ६९ ॥ सनलेनकृतःसेतुःसागरेमकरालये ॥ शुशुभेसुभगःश्रीमान्स्वातीपथइवांबरे ॥ ७० ॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ आगम्यगगनेतस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७१ ॥ दशयोजनविस्तीर्णंशतयोजनमायतम् ॥ ददृशुर्देवगंधर्वानलसेतुंसुदुष्करम् ॥ ७२ ॥ आप्लवंतःप्लवंतश्चगर्जंतश्चप्लवंगमाः ॥ तमचिंत्यमसह्यंचह्यद्भुतंलोमहर्षणम् ॥ ७३ ॥ ददृशुःसर्वभूतानिसागरेसेतुबंधनम् ॥ तानिकोटिसहस्राणिवानराणांमहौजसाम् ॥ ७४ ॥ बध्नंतःसागरेसेतुंजग्मुःपारंमहोदधेः ॥ विशालःसुकृतःश्रीमान्सुभूमिःसुसमाहितः ॥ ७५ ॥ अशोभतमहान्सेतुःसीमंतइवसागरे ॥ ततःपरेसमुद्रस्यगदापाणिर्विभीषणः ॥ ७६ ॥ परेषामभियानार्थमतिष्ठत्सचिवैःसह ॥ सुग्रीवस्तुततःप्राहरामंसत्यपराक्रमम् ॥ ७७ ॥ हनूमंतंत्वमारोहअंगदंत्वथलक्ष्मणः ॥ अयंहिविपुलोवीरसागरोमकरालयः ॥ ७८ ॥ वैहायसौयुवामेतौवानरौधारयिष्यतः ॥ अग्रतस्तस्यसैन्यस्यश्रीमान्रामःसलक्ष्मणः ॥ ७९ ॥

दिनैः शतयोजनं बबंध सुवेलम् सामीप्ये सुशब्दस्याव्ययीभावः । वेलासमीपं परपारसमीपमधिकृत्येत्यर्थः ॥ ६८ ६९ ॥ स्वातीपथश्छायापथः ॥ ७० ॥ ७१ ॥ ७२ ॥ गर्जंतः प्लवंगमाश्च ददृशुः अचिंत्यमचिंत्यरचनम् असह्यं भगवत्संबंधं विना केनाप्यशक्यकरणम् ॥ ७३ ॥ ७४ ॥ बध्नंत इति लिंगव्यत्यय आर्षः ॥ ७५ ॥ ७६ ॥ परेषां राक्षसानाम् ॥ ७७ ॥ ७८ ॥ वैहायसौ आकाशगतिमन्तौ ॥ ७९ ॥

सुग्रीवेण समन्वितो रामो धन्वी अग्रतो जगाम । अनेन सुग्रीवस्य व्योममार्गगमनं सिद्धम् ॥ ८० ॥ ८१ ॥ तरंती हरिवाहिनी महता स्वीयेन घोषेण सागरस्य भीमं घोषमंतर्दधे तिरोहितवती ॥ ८२ ॥ तीरे परतीरे निविविशे निवेशिता ॥ ८३ ॥ अथ समुद्रे सेतुबंधनहृष्टैर्देवैस्तदानीमेव रामस्य राज्याभिषेकः कृतो रामेण विभीषणस्येवेत्याह तदद्भुतमिति । राघवकर्म राघवाज्ञाजन्यत्वात् तन्नामग्रहणजन्यत्वाच्च सुशुभैर्जलैः आकाशगंगादिजलैः ॥ ८४ ॥ अभिषिच्याशिर्वादं च कुर्वंति जयस्वेत्यादि । इतीवेत्यतीवेत्यर्थकम् । नरदेवा ब्राह्मणाः ॥ ८५ ॥ आमोदमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये



जगामधन्वीधर्मात्मासुग्रीवेणसमान्वितः ॥ अन्येमध्येनगच्छंतिपार्श्वतोन्येप्लवंगमाः ॥ ८० ॥ सलिलंप्रपतंत्यन्येमार्गमन्येप्रपेदिरे ॥ केचिद्वैहायसगताःसुपर्णाइवपुप्लुवुः ॥ ८१ ॥ घोषेणमहताघोषंसागरस्यसमुच्छ्रितम् ॥ भीममंतर्दधेभीमातरंतीहरिवाहिनी ॥ ८२ ॥ वानराणांहिसातीर्णावाहिनीनलसेतुना ॥ तीरेनिविविशेराज्ञाबहुमूलफलोदके ॥ ८३ ॥ तदद्भुतंराघवकर्मदुष्करंसमीक्ष्यदेवाःसहसिद्धचारणैः ॥ उपेत्यरामंसहसामहर्षिभिस्तमभ्यषिंचन्सुशुभैर्जलैःपृथक् ॥ ८४ ॥ जयस्वशत्रून्नरदेवमेदिनींससागरांपालयशाश्वतीःसमाः ॥ इतीवरामंनरदेवसत्कृतंशुभैर्वचोभिर्विविधैरपूजयन् ॥ ८५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्वाविंशः सर्गः ॥ २२ ॥ निमित्तानिनिमित्तज्ञोदृष्ट्वालक्ष्मणपूर्वजः ॥ सौमित्रिंसंपरिष्वज्यइदंवचनमब्रवीत् ॥ १ ॥ परिगृह्योदकंशीतंवनानिफलवंतिच ॥ बलौघंसंविभज्येमंव्यूह्यतिष्ठेमलक्ष्मण ॥ २ ॥ लोकक्षयकरंभीमंभयंपश्याम्युपस्थितम् ॥ प्रबर्हणंप्रवीराणामृक्षवानररक्षसाम् ॥ ३ ॥ वाताश्चकलुषावांतिकंपतेचवसुंधरा ॥ पर्वताग्राणिवेपंतेपतंतिचमहीरुहाः ॥ ४ ॥ मेघाःक्रव्यादसंकाशाःपरुषाःपरुषस्वनाः ॥ क्रूराःक्रूरंप्रवर्षंतिमिश्रंशोणितबिंदुभिः ॥ ५ ॥ रक्तचंदनसंकाशासंध्यापरमदारुणा ॥ ज्वलतःप्रपतत्येतदादित्यादग्निमंडलम् ॥ ६ ॥ दीनादीनस्वराःक्रूराःसर्वतोमृगपक्षिणः ॥ प्रत्यादित्यंविनर्दंतिजनयंतोमहद्भयम् ॥ ७ ॥ रजन्यामप्रकाशस्तुसंतापयतिचंद्रमाः ॥ कृष्णरक्तांशुपर्यंतोलोकक्षयइवोदितः ॥ ८ ॥ ह्रस्वोरूक्षोऽप्रशस्तश्चपरिवेषस्तुलोहितः ॥ आदित्येविमलेनीलंलक्ष्मलक्ष्मणदृश्यते ॥ ९ ॥ रजसामहताचापिनक्षत्राणिहतानिच ॥ युगांतमिवलोकानांपश्यशंसंतिलक्ष्मण ॥ १० ॥

युद्धकांडे द्वाविंशः सर्गः ॥ २२ ॥ कतकरीत्या एकविंशः ॥ २१ ॥ अथ रामस्य घोरनिमित्तदर्शनमाह निमित्तानीति । वक्ष्यमाणानीत्यर्थः ॥ १ ॥ संविभज्य व्यूह्य ऋक्षगोलांगूलवानरविभागं कृत्वा तस्य व्यूहं च कृत्वेत्यर्थः ॥ २ ॥ भयं भयनिमित्तम् ॥ ३ ॥ कलुषा रजोव्याप्ताः ॥ ४ ॥ क्रव्यादसंकाशाः गृध्रगोमायुश्येनादिसदृशास्तद्वद्धूसरवर्णाः अतएव परुषाश्चक्षुरुद्वेजकाः ॥ ५ ॥ ६ ॥ प्रत्यादित्यं सूर्यसंमुखम् ॥ ७ ॥ चन्द्रमाः संतापयति सोष्णकिरण इत्यर्थः । कृष्णरक्तेत्यादिना परिवेषविशेष उक्तः ॥ ८ ॥ ह्रस्वत्वादिगुणकः परिवेष आदित्ये दृश्यते ॥ ९ ॥ नक्षत्राणि हतानीति रात्रिकाल इति शेषः ॥ १० ॥

महाभयान्महाभयजनकान्नादान् ॥ ११ ॥ अधुना दृश्यमाननिमित्तानां फलमाह शैलैरित्यादि ॥ १२ ॥ १३ ॥ रामो जनरमणो राम इत्यन्वयः ॥ १४ ॥ धृतानां निश्चितबुद्धीनाम् ॥ १५ ॥ कर्मणा धैर्येण परं प्रति प्रस्थानलक्षणेन चेष्टाभिः कायव्यापारैश्च तुतोषेत्यन्वयः ॥ १६ ॥ आर्तपमानः ॥ कतकरी० ॥ २२ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रयोविंशः सर्गः ॥ २३ ॥ सेति । सा वीराणां समितिः समागमो राज्ञा व्यवस्थिता रामेण कृतव्यूहा विरराज शुभनक्षत्रा शारदी पौर्णमासी शशिनेव ॥ १ ॥ तेन बलौघेन पीड्यमाना वसुंधरा सेनाया

काकाःश्येनास्तथानीचागृध्राःपरिपतंतिच ॥ शिवाश्चाप्यशुभान्नादान्नदंतिसुमहाभयान् ॥ ११ ॥ शैलैःशूलैश्चखड्गैश्चविमुक्तैःकपिराक्षसैः ॥ भविष्यत्यावृताभूमिर्मांसशोणितकर्दमा ॥ १२ ॥ क्षिप्रमद्यैवदुर्धर्षांपुरींरावणपालिताम् ॥ अभियामजवेनैवसर्वैर्हरिभिरावृताः ॥ १३ ॥ इत्येवमुक्त्वाधन्वी सरामःसंग्रामधर्षणः ॥ प्रतस्थेपुरतोरामोलंकामभिमुखोविभुः ॥ १४ ॥ सविभीषणसुग्रीवाःसर्वेतेवानरर्षभाः ॥ प्रतस्थिरेविनर्दंतोधृतानांद्विषतांवधे ॥ १५ ॥ राघवस्यप्रियार्थंतुसुतरांवीर्यशालिनाम् ॥ हरीणांकर्मचेष्टाभिस्तुतोषरघुनंदनः ॥ १६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये युद्धकांडेत्रयोविंशःसर्गः ॥ २३ ॥ सावीरसमितीराज्ञाविरराजव्यवस्थिता ॥ शशिनाशुभनक्षत्रापौर्णमासीवशारदी ॥ १ ॥ प्रचचालचवेगेनत्रस्ताचैववसुंधरा ॥ पीड्यमानाबलौघेनतेनसागरवर्चसा ॥ २ ॥ ततःशुश्रुवुराकृष्टंलंकायांकाननौकसः ॥ भेरीमृदंगसंघुष्टंतुमुलंलोमहर्षणम् ॥ ३ ॥ बभूवुस्तेनघोषेणसंहृष्टाहरियूथपाः ॥ अमृष्यमाणास्तद्घोषंविनेदुर्घोषवत्तरम् ॥ ४ ॥ राक्षसास्तत्प्लवंगानांशुश्रुवुस्तेपिगर्जितम् ॥ नर्दतामिवदृप्तानांमेघानामंबरेस्वनम् ॥ ५ ॥ दृष्ट्वादाशरथिर्लंकांचित्रध्वजपताकिनीम् ॥ जगाममनसासीतांदूयमानेनचेतसा ॥ ६ ॥ अत्रसामृगशावाक्षीरावणेनोपरुध्यते ॥ अभिभूताग्रहेणेवलोहितांगेनरोहिणी ॥ ७ ॥ दीर्घमुष्णंचनिःश्वस्यसमुद्वीक्ष्यचलक्ष्मणम् ॥ उवाचवचनंवीरस्तत्कालहितमात्मनः ॥ ८ ॥ आलिखंतीमिवाकाशमुत्थितांपश्यलक्ष्मण ॥ मनसेवकृतांलंकांनगाग्रेविश्वकर्मणा ॥ ९ ॥ विमानैर्बहुभिर्लंकासंकीर्णारचितापुरा ॥ विष्णोःपदमिवाकाशंछादितंपांडुभिर्घनैः ॥ १० ॥ पुष्पितैःशोभितालंकावनैश्चित्ररथोपमैः ॥ नानापतगसंघुष्टफलपुष्पोपगैःशुभैः ॥ ११ ॥

वेगेन प्रचचाल त्रिस्ता च ॥ २ ॥ आकृष्टमाक्रोशम् ॥ ३ ॥ घोषवत्तरमतिशयितध्वनिमत् ॥ ४ ॥ अंबरे मेघानां स्वनमिव तेपि राक्षसाः प्लवंगानां तद्गर्जितं शुश्रुवुः ॥ ५ ॥ मनसा जगाम सस्मारेत्यर्थः ॥ ६ ॥ स्मरणप्रकारोत्र सेति । उपरुध्यते उपरुद्धा तिष्ठति । लोहितांगोऽङ्गारकः ॥ ७ ॥ आत्मनस्तत्कालहितं लंकादर्शनकाले आत्मनः प्रीतिकरं दिव्यपुरीदर्शनजसंतोषद्योतकमिति यावत् ॥ ८ ॥ तदेवाह आलिखंतीमित्यादि ॥ ९ ॥ विमानैः सप्तभूमिकप्रासादैः संकीर्णा निबिडा । तत्रोपमा पांडुभिर्घनैः संकीर्णं विष्णोर्व्यापनशीलस्य वायुमयस्य ब्रह्मणः पदं प्रचारस्थानमाकाशमिव ॥ १० ॥ ११ ॥

कोकिलाकुलखंडानि तदाकुलवृक्षखंडानि दोधवीति कंपयति ॥ १२ ॥ विभजत् व्यभजत् ॥ १३ ॥ बलाद्वानरबलात् आदाय स्वबलं गृहीत्वा नीलेन सहांगद उरसि उच्यमानपुरुषव्यूहस्योरसि तिष्ठेदिति कपिसेनां शशास ॥१४॥ वानरौघसमावृत ऋषभो वानरवाहिन्या दक्षिणं पार्श्वमाश्रितस्तिष्ठेदित्यन्वयः ॥१५॥१६॥ यत्तः सावधानः ॥१७॥ जांबवदादयस्त्रयोपि ऋक्षा जघनं पश्चार्धं लोकस्य भूलोकस्य पश्चार्धं पश्चिमदिशं तेजसावृतः प्रचेता इव ॥१८॥१९॥ मर्दयितुमिच्छवो मिमर्दयिषवः ॥२०॥ शिखरैर्गिरिशिखरैर्विकिराम विक्षिपाम नाशयामेति यावत् ॥२१॥ शुक एष विमुच्यतामिति । पूर्वं मुच्यतां दूत आगत

पश्यमत्तविहंगानिप्रलीनभ्रमराणिच ॥ कोकिलाकुलखंडानिदोधवीतिशिवोऽनिलः ॥ १२ ॥ इतिदाशरथीरामोलक्ष्मणंसमभाषत ॥ बलंचतत्र विभजच्छास्त्रदृष्टेनकर्मणा ॥ १३ ॥ शशासकपिसेनांतांबलादादायवीर्यवान् ॥ अंगदःसहनीलेनतिष्ठेदुरसिदुर्जयः ॥ १४ ॥ तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः ॥ आश्रितोदक्षिणंपार्श्वमृषभोनामवानरः ॥ १५॥ गंधहस्तीवदुर्धर्षस्तरस्वीगंधमादनः ॥ तिष्ठेद्वानरवाहिन्याःसव्यंपक्षमधिष्ठितः ॥ १६ ॥ मूर्ध्निस्थास्याम्यहंयत्तोलक्ष्मणेनसमन्वितः ॥ जांबवांश्चसुषेणश्चवेगदर्शीचवानरः ॥ १७ ॥ ऋक्षमुख्यामहात्मानःकुक्षिंरक्षंतुतेत्रयः॥जघनं कपिसेनायाःकपिराजोऽभिरक्षतु ॥ पश्चार्धमिवलोकस्यप्रचेतास्तेजसावृतः ॥ १८ ॥ सुविभक्तमहाव्यूहामहावानररक्षिता ॥ अनीकिनीसाविबभौ यथाद्यौःसाभ्रसंप्लवा ॥१९॥ प्रगृह्यगिरिशृंगाणिमहतश्चमहीरुहान् ॥ आसेदुर्वानरालंकांमिमर्दयिषवोरणे ॥ २० ॥ शिखरैर्विकिरामैनांलंकांमुष्टिभिरेववा ॥ इतिस्मदधिरेसर्वेमनांसिहरिपुंगवाः ॥ २१ ॥ ततोरामोमहातेजाःसुग्रीवमिदमब्रवीत् ॥ सुविभक्तानिसैन्यानिशुकएषविमुच्यताम् ॥ २२ ॥ रामस्यतुवचःश्रुत्वावानरेंद्रोमहाबलः ॥ मोचयामासतंदूतंशुकंरामस्यशासनात् ॥ २३ ॥ मोचितोरामवाक्येनवानरैश्चनिपीडितः ॥ शुकःपरमसंत्रस्तोरक्षोधिपमुपागमत् ॥ २४ ॥ रावणःप्रहसन्नेवशुकंवाक्यमुवाचह ॥ किमिमौतेसितौपक्षौलूनपक्षश्चदृश्यसे ॥ २५ ॥ कच्चिन्नानेकचित्तानांतेपांत्वं वशमागतः ॥ ततःसभयसंविग्नस्तेनराज्ञाभिचोदितः ॥ वचनंप्रत्युवाचेदंराक्षसाधिपमुत्तमम् ॥ २६ ॥ सागरस्योत्तरेतीरेऽब्रुवंतेवचनंतथा ॥ यथासंदेशमक्लिष्टंसांत्वयञ्श्लक्ष्णयागिरा ॥ २७ ॥ क्रुद्धैस्तैरहमुत्प्लुत्यदृष्टमात्रःप्लवंगमैः ॥ गृहीतोस्म्यपिचारब्धोहंतुंलोप्तुंचमुष्टिभिः ॥ २८ ॥ नतेसंभाषितुंशक्याःसंप्रश्नोत्रनविद्यते ॥ प्रकृत्याकोपनास्तीक्ष्णावानराराक्षसाधिप ॥ २९ ॥ सचहंताविराधस्यकबंधस्यखरस्यच ॥ सुग्रीवसहितोरामः सीतायाःपदमागतः ॥ ३० ॥



इत्यत्र ताडनादिदुःखान्मुच्यतामित्येवार्थः । तेन बद्धा स्थापित इत्यवगम्यते ॥ २२ ॥ २३ ॥ २४ ॥ प्रहसन्नेव लूनपक्षत्वादिविकृताकारं दृष्ट्वा प्रहासः । इमौ ते पक्षौ सितौ बद्धौ किम् अतः लूनपक्षश्च दृश्यसे ॥ २५ ॥ अनेकचित्तानां चंचलचित्तानां वानराणाम् ॥ २६ ॥ सागरस्योत्तरे तीरे स्थित्वा श्लक्ष्णया गिरा वानरान्सांत्वयन् अक्लिष्टं ते वचनं यथासंदेशं तथाऽब्रुवम् ॥ २७ ॥ अहं तथाब्रुवन् लोप्तुं पक्षभागे छेत्तुं मुष्टिभिर्हंतुं चारब्धः ॥ २८ ॥ ते कृतपरिभवाः संभाषितुं न शक्याः अत्र परिभवे संप्रश्नो विचारो नास्ति इदमेतावत्कार्यमिति मर्यादा नास्तीत्यर्थः । तदेव स्मारयति प्रकृत्येति ॥ २९ ॥ अधुना विज्ञाप्यमाह

जरावृद्धं जरायुक्तं वृद्धं चिरकालिकं चिरकालिकोपि कश्चिदौषधसिद्ध्यादिना जरारहितो भवेत् अचिरकालिकोपि कश्चित् शापादिना जरावानित्युभयोपादानम् । किंतु न हता यदि बलमस्तीति शेषः । न बुध्यसे स्वबलीमिति शेषः ॥ २७ ॥ रघुश्रेष्ठं महाबलत्वादिगुणकं न बुध्यसे इत्यर्थः ॥ २८ ॥ अयं स्वामिसंदेशप्रापणमात्रकृत्यो दूत एव न किंतु गुप्ततया परबलपरीक्षाप्रवृत्तिश्चार एव ॥ २९ ॥ कुतस्तत्राह तुलितं हीति । एवंप्रमाणमेवंव्यूहमिति सर्वं परिच्छिन्नमित्यर्थः ॥ ३० ॥ राज्ञा सुग्रीवेण ॥ ३१ ॥ लुप्येते छिद्येते ॥ ३२ ॥ रात्रिशब्दोऽहोरात्रपरः । यद्दिने मरिष्यामि यद्दिने च जातवानस्मि तदंतरे काले जन्ममरणावधिकाले यन्मयाऽशुभं कृतं तत्सर्वं त्वमुपपद्येथाः त्वं प्राप्नुयाः । यदीह त्वयाऽनिवारितताडनो जीवितं जह्याम् ॥ ३३ ॥ ३४ ॥ अवगुमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे विंशः सर्गः ॥ २० ॥ कतकश्री० ॥ १९ ॥ तत इति । महोदधेरंजलिं कृत्वा प्राङ्मुखो वरप्रार्थनाय प्रतिशिश्ये शयनं कृतवान् ॥ १ ॥ २ ॥ मण्यादिमुक्ताप्रवरांतानि भूषणानि

महाबलंमहात्मानंदुराधर्षंसुरैरपि ॥ नबुध्यसेरघुश्रेष्ठंयस्तेप्राणान्हरिष्यति ॥२८॥ ततोब्रवीद्वालिसुतोप्यंगदोहरिसत्तमः ॥ नायंदूतोमहाप्राज्ञचारकः प्रतिभातिमे ॥ २९ ॥ तुलितंहिबलंसर्वमनेनतवतिष्ठता ॥ गृह्यतांमागमल्लंकामेतद्धिममरोचते ॥ ३० ॥ ततोराज्ञासमादिष्टाःसमुत्पत्यवलीमुखाः ॥ जगृहुश्चवबंधुश्चविलपंतमनाथवत् ॥ ३१ ॥ शुकस्तुवानरैश्चंडैस्तत्रतैःसंप्रपीडितः ॥ व्याचुक्रोशमहात्मानंरामंदशरथात्मजम् ॥ लुप्येतेमेबलात्पक्षौ भिद्येतेमेतथाक्षिणी ॥ ३२ ॥ यांचरात्रिंमरिष्यामिजायेरात्रिंचयामहम् ॥ एतस्मिन्नंतरेकालेयन्मयाह्यशुभंकृतम् ॥ सर्वंतदुपपद्येथाजह्यांचेद्यदिजीवितम् ॥ ३३ ॥ नाघातयत्तदारामःश्रुत्वातत्परिदेवितम् ॥ वानरानब्रवीद्रामोमुच्यतांदूतआगतः ॥ ३४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे विंशः सर्गः ॥ २० ॥ ततःसागरवेलायांदर्भानास्तीर्यराघवः ॥ अंजलिंप्राङ्मुखःकृत्वाप्रतिशिश्येमहोदधेः ॥ १ ॥ बाहुंभुजंगभोगाभमुपधायारिसूदनः ॥ जातरूपमयैश्चैवभूषणैर्भूषितंसदा ॥ २ ॥ मणिकांचनकेयूरमुक्ताप्रवरभूषणैः ॥ भुजैःपरमनारीणामभिमृष्टमनेकधा ॥ ३ ॥ चंदनागुरुभिश्चैवपुरस्तादभिसेवितम् ॥ बालसूर्यप्रकाशैश्चचंदनैरुपशोभितम् ॥ ४ ॥ शयनेचोत्तमांगेनसीतायाःशोभितंपुरा ॥ तक्षकस्येवसंभोगंगंगाजलनिषेवितम् ॥ ५ ॥ संयुगेयुगसंकाशंशत्रूणांशोकवर्धनम् ॥ सुहृदांनंदनंदीर्घंसागरांतव्यपाश्रयम् ॥ ६ ॥ अस्यताचपुनःसव्यंज्याघातविहतत्वचम् ॥ दक्षिणोदक्षिणंबाहुंमहापरिघसन्निभम् ॥ ७ ॥ गोसहस्रप्रदातारंह्युपधायभुजंमहत् ॥ अद्यमेतरणंवाथमरणंसागरस्यवा ॥ ८ ॥

येषु तैः परमनारीणाम् एकदारव्रतत्वेनेतरस्त्रीप्रसंगाभावादुत्तमधात्रीजनानां भुजैरनेकधा स्नपनालंकरणादिकालेऽभिमृष्टं स्पृष्टं बाहुभिरित्यन्वयः ॥३॥ पुरस्तात्पूर्वं बालसूर्यप्रकाशैरतिरक्तैश्चंदनैः कुंकुमैरिति यावदित्यर्थः ॥४॥ शयने तत्काले सीताया उत्तमांगेन शिरसा रामभुजार्पितेन शोभितम् । तक्षकस्य संभोगं शरीरं गंगाजलेन निषेवितम् । स्थितगंगाजलमित्यर्थः । अत्र गंगाजलस्थाने सीतागौरत्वात्पवित्रत्वाच्च ॥५॥ संयुगे शत्रूणां शोकवर्धनम् । युगसंकाशं युगवद्दीर्घं दीर्घं दीर्घकालं सुहृदां नंदनं सुखप्रापकं सागरांतभूचक्रस्य व्यपाश्रयं प्रतिष्ठाभूतम् ॥ ६ ॥ पुनःपुनः सव्यमस्यता शरान्विसृजता ज्याघातेन विहता त्वग्यत्र तादृशं सर्वेभ्योभ्य उत्तमं गोसहस्रप्रदातारं दक्षिणं बाहुं भुजं तदवच्छिन्नं कूर्परादुपरिदेशो भुज इत्याहुः । उपधाय दक्षिणः स्वयमधिशिश्ये इत्यन्वयः ॥ ७ ॥ पुनर्बाहुभुजशब्दप्रयोगः पूर्वस्य व्यवहिततया

विशेषप्रतिपत्त्यर्थः । अद्य त्रिदिनमुपासनया प्रसन्नस्य सागरस्य प्रसादेन मे ससैन्यस्य तरणं वापि स्यात् ततः परमुपेक्षणे सागरस्य मत्तो मरणमेव स्यादिति धृतिं कृत्वानिश्चित्येति योजना ॥ ८ ॥ मुनि मौनी महोदधिमुद्दिश्येति शेषः ॥ ९ ॥ अभिजग्मतुः अभिजग्मुः ॥ १० ॥ स अंगुल्यग्रेण तान् हन्यामित्यादिना प्रकटितवीर्यः । नयज्ञः सामाद्युपायानां यथोचितं प्रयोक्ता धर्मवत्सलः शरणागतरक्षणरूपे धर्मे प्रीतिमान् । उपासत उपास्त ॥ ११ ॥ शरणागतत्वेपि फलप्रदानाभिमुख्याभावात्सागरस्य सापराधत्वमाह नचेति । मंदो मंदबुद्धिः ॥ १२ ॥ समुद्रस्य क्रुद्धः समुद्राय क्रुद्धः ॥ १३ ॥ अवलेपो गर्वः वर्तत इति शेषः । प्रशमश्चित्तशांतिः । क्षमा शक्यप्रतिक्रियापराधसहिष्णुता । आर्जवं कौटिल्याभावः ॥ १४ ॥ एवं सतां गुणाः निर्गुणेषु दयागुणहीनेषु अवलिप्तेषु तद्विषये असामर्थ्यफला

इतिरामोधृतिंकृत्वामहाबाहुर्महोदधिम् ॥ अभिशिश्येचविधिवत्प्रयतोऽत्रस्थितोमुनिः ॥ ९ ॥ तस्यरामस्यसुप्तस्यकुशास्तीर्णेमहीतले ॥ नियमा दप्रमत्तस्यनिशास्तिस्रोऽभिजग्मतुः ॥१०॥ सत्रिरात्रोषितस्तत्रनयज्ञोधर्मवत्सलः ॥ उपासततदारामःसागरंसरितांपतिम् ॥ ११ ॥ नचदर्शयतेरूपं मंदोरामस्यसागरः ॥ प्रयतेनापिरामेणयथार्हमभिपूजितः ॥ १२॥ समुद्रस्यततःक्रुद्धोरामोरक्तांतलोचनः ॥ समीपस्थमुवाचेदंलक्ष्मणंशुभलक्षणम् ॥ १३ ॥ अवलेपःसमुद्रस्यनदर्शयतियःस्वयम् ॥ प्रशमश्चक्षमाचैवआर्जवंप्रियवादिता ॥१४॥ असामर्थ्यफलाह्येतेनिर्गुणेषुसतांगुणाः ॥ आत्मप्रशं सिनंदुष्टंधृष्टंविपरिधावकम् ॥ १५ ॥ सर्वत्रोत्सृष्टदंडंचलोकःसत्कुरुतेनरम् ॥ नसाम्नाशक्यतेकीर्तिर्नसाम्नाशक्यतेयशः ॥ १६ ॥ प्राप्तुंलक्ष्मणलो केस्मिञ्जयोवारणमूर्धनि ॥ अद्यमद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् ॥ १७ ॥ निरुद्धतोयंसौमित्रेप्लवद्भिःपश्यसर्वतः ॥ भोगिनांपश्यभोगानिमयाभि न्नानिलक्ष्मण ॥ १८ ॥ महाभोगानिमत्स्यानांकरिणांचकरानिह ॥ सशंखशुक्तिकाजालंसमीनमकरंतथा ॥ १९ ॥ अद्ययुद्धेनमहतासमुद्रंपरिशो षये ॥ क्षमयाहिसमायुक्तंमामयंमकरालयः ॥ २० ॥ असमर्थंविजानातिधिक्क्षमामीदृशेजने ॥ नदर्शयतिसाम्नामेसागरोरूपमात्मनः ॥ २१ ॥ चापमानयसौमित्रेशरांश्चाशीविषोपमान् ॥ समुद्रंशोषयिष्यामिपद्भ्यांयांतुप्लवंगमाः ॥ २२ ॥

सर्वशक्तियुक्तोपि दुष्टविषये प्रशमादिपरश्चेत्तमशक्तं मन्यंत इत्यर्थः । अतोऽयं दंडस्यैव विषय इति भावः । आत्मप्रशंसिनं शौर्यादिगुणाभावेपि तद्वत्तया श्लाघमानं दुष्टं दुश्चरित्रं धृष्टं अधर्मप्रवृत्तौ साहसिकं विपरिधावकं इतस्ततः स्वगुणख्यापनाय परिधावनशीलम् ॥ १५ ॥ सर्वत्र प्राणिमात्रे उत्सृष्टदंडं कृतदंडं सत्कुरुते । बहु मन्यते कीर्तिर्देशांतरख्यातिर्यशः स्वदेशख्यातिर्न शक्यते प्राप्तुमित्यन्वयः ॥ १६ ॥ रणभूमौ जयो वा न प्राप्तुं शक्य इत्यनुकर्षः । मद्बाणनिर्भिन्नैरतएव मृत्वा सर्वतः प्लवद्भिर्मत्स्यादिभिर्निरुद्धतोयं प्रच्छादिततोयं भोगिनां भोगानि शरीराणि ॥ १७ ॥ १८ ॥ मत्स्यानां महाभोगानि महाशरीराणि करिणां जलकरिणां करान् भिन्नान् पश्येति शेषः । शंखजालशुक्तिकाजालसहितं समुद्रमित्यन्वयः ॥ १९ ॥ युद्धेन महारेण ॥२०॥ असमर्थं स्वविनये इति शेषः ॥२१॥ स्ववैभवमवष्टभ्याह चापमिति॥२२॥

वेलासु तीरेषु कृतमर्यादं तदलंघने कृतनियमम् ॥ २३ ॥ निर्मर्यादं लंघितवेलम् ॥ २४ ॥ २५ ॥ घोरं धनुः शनैः संपीड्य संपीडनपूर्वं सज्जं कृत्वा जगत्कंपयित्वा ज्यांघोषेणेति शेषः ॥ २६ ॥ २७ ॥
समुद्रस्य तोयवेगः संक्षोभः समारुतरवो बाणगणप्रवर्तितमारुतशब्दसहितः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ सौमित्रिरुत्पत्योपगम्य विनिःश्वसंतं रामं मामेत्युक्त्वा समुद्रसत्त्वनाशनं न कार्यमि
त्युक्त्वा धनुरालंबे धृतवानित्यर्थः ॥ ३३ ॥ एतद्विनापि क्षोभणं विनापि साधुवृत्तं समीचीनोपायमेव दीर्घं यथा भवति तथा पश्यतु ॥ ३४ ॥ कष्टमिति ब्रुवद्भिर्ऋष्यादिभिर्महता स्वरेण मा मेत्युक्त्वा शब्दो

अद्याक्षोभ्यमपिक्रुद्धःक्षोभयिष्यामिसागरम् ॥ वेलासुकृतमर्यादंसहस्रोर्मिसमाकुलम् ॥ २३ ॥ निर्मर्यादंकरिष्यामिसायकैर्वरुणालयम् ॥ महार्णवंक्षो
भयिष्येमहाद्दानवसंकुलम् ॥ २४ ॥ एवमुक्त्वाधनुष्पाणिःक्रोधविस्फारितेक्षणः ॥ बभूवरामोदुर्धर्षोयुगांताग्निरिवज्वलन् ॥ २५ ॥ संपीड्यचधनुर्घो
रंकंपयित्वाशनैर्जगत् ॥ मुमोचविशिखानुग्रान्वज्रानिवशतक्रतुः ॥ २६ ॥ तेज्वलंतोमहावेगास्तेजसासायकोत्तमाः ॥ प्रविशंतिसमुद्रस्यजलंवित्र
स्तपन्नगम् ॥ २७ ॥ तोयवेगःसमुद्रस्यसमीनमकरोमहान् ॥ सबभूवमहाघोरःसमारुतरवस्तथा ॥ २८ ॥ महोर्मिजालचलितःशंखजालसमावृतः ॥
सधूमःपरिवृत्तोर्मिःसहसासीन्महोदधिः ॥ २९ ॥ व्यथिताःपन्नगाश्चासन्दीप्तास्यादीप्तलोचनाः ॥ दानवाश्चमहावीर्याःपातालतलवासिनः ॥ ३० ॥
ऊर्मयःसिंधुराजस्यसनक्रमकरास्तथा ॥ विंध्यमंदरसंकाशाःसमुत्पेतुःसहस्रशः ॥ ३१ ॥ आघूर्णिततरंगौघःसंभ्रांतोरगराक्षसः ॥ उद्वर्तितमहाग्राहः
सघोषोवरुणालयः ॥ ३२ ॥ ततस्तुतंराघवमुग्रवेगंप्रकर्षमाणंधनुरप्रमेयम् ॥ सौमित्रिरुत्पत्यविनिःश्वसंतंमामेतिचोक्त्वाधनुराललंबे ॥ ३३ ॥
एतद्विनापिह्युदधेस्तवाद्यसंपत्स्यतेवीरतमस्यकार्यम् ॥ भवद्विधाःक्रोधवशंनयांतिदीर्घंभवान्पश्यतुसाधुवृत्तम् ॥ ३४ ॥ अंतर्हितैश्चापितथांऽतरिक्षेब्रह्मर्षि
भिश्चैवसुरर्षिभिश्च ॥ शब्दःकृतःकष्टमितिब्रुवद्भिर्मामेतिचोच्चैर्महतास्वरेण ॥ ३५ ॥ इत्यार्षे श्रीम०वा०आ०यु०एकविंशः सर्गः ॥ २१ ॥ अथो
वाचरघुश्रेष्ठःसागरंदारुणंवचः ॥ अद्याहंशोषयिष्यामिसपातालंमहार्णवम् ॥ १ ॥ शरनिर्दग्धतोयस्यपरिशुष्कस्यसागर ॥ मयानिहतसत्त्वस्यपां
सुरुत्पद्यतेमहान् ॥ २ ॥ मत्कार्मुकनिसृष्टेनशरवर्षेणसागर ॥ परंतीरंगमिष्यंतिपद्भिरेवप्लवंगमाः ॥ ३ ॥ विचिन्वन्नाभिजानासिपौरुषंनापिविक्रमम् ॥
दानवालयसंतापंमत्तोनामगमिष्यसि ॥ ४ ॥ ब्राह्मेणास्त्रेणसंयोज्यब्रह्मदंडनिभंशरम् ॥ संयोज्यधनुषिश्रेष्ठेविचकर्षमहाबलः ॥ ५ ॥ तस्मिन्विकृष्टे
सहसाराघवेणशरासने ॥ रोदसीसंपफालेवपर्वताश्चचकंपिरे ॥ ६ ॥ तमश्चलोकमावव्रेदिशश्चनचकाशिरे ॥ प्रतिचुक्षुभिरेचाशुसरांसिसरितस्तदा ॥ ७ ॥

हाहाशब्दः कृत इत्यर्थः ॥ ३५ ॥ मार्गमाणः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकविंशः सर्गः ॥ २१ ॥ कतकरी० ॥ २० ॥ एवं प्राणिपीडावहे क्षोभ
निवारिते शोषणप्रतिज्ञां संपादयितुमुद्युंक्तेऽथेति ॥ १ ॥ निहतानि सत्त्वानि यादांसि यस्य । उत्पद्यते वर्तमानसामीप्ये लट् ॥ २ ॥ ३ ॥ विचिन्वन् जलादिवृद्ध्या वृद्धियुक्तः सन् हे दानवालय पूर्वोक्तहेतोर्मत्तः
संतापं प्राणनाशनिबंधनं गमिष्यसि नाम प्रसिद्धौ इत्युक्त्वेति शेषः ॥ ४ ॥ अस्त्रेण तन्मंत्रेण संयोज्य अभिमंत्र्य एवमभिमंत्रितं शरं धनुषि संयोज्य ॥ ५ ॥ संपफालेव विशशरतुरिव एकवचनमार्षम् ॥ ६ ॥ ७ ॥

नक्षत्रैः सह तिर्यक्संगतौ यथाप्राप्तपूर्वापरमार्गप्रतिरोधाद्दक्षिणोत्तरमार्गगामिनावभूतामित्यर्थः । भास्करांशुभिरादीप्तमपि तमसा संवृतमाकाशमासीदिति शेषः । अनेन विरुद्धयोस्तेजस्तिमिरयोः सामानाधिकरण्यरूप उत्पातः सूचितः ॥ ८ ॥ निर्घाता अशनयः निर्जग्मुः निःसृताः ॥ ९ ॥ दिव्यमारुतपंक्तयः परिवहादिवातस्कंधाः वपुःप्रकर्षेण महावेगेन ववुः । बभंज चेति मारुतपंक्तिरिति शेषः । उद्वहन्मारुतसमूह इति शेषः । अग्रेप्येष एव कर्ता ॥ १० ॥ ११ ॥ ते पतमाना महाशनयः महावेगत्वादिगुणा वैद्युतानग्नीन्मुमुचुः । अशनेः समम् अशनिघोषतुल्यघोषम् ॥ १२ ॥ संत्रस्तानि भीतानि उद्विजंति कंपमानानि शिश्यिरे शयितान्यभूवन् नोत्थातुं समर्थानीत्यर्थः ॥ १३ ॥ तदेव विवृणोति संप्रविव्यथिरे इति ॥ १४ ॥ संप्लवः प्रलयस्ततोन्यत्रापि योजनं व्यतिचक्राम ॥ १५ ॥ तं प्रसिद्धम् उच्यमानविशेषणं तं दक्षिणदे

तिर्यक्चसहनक्षत्रैःसंगतौचंद्रभास्करौ ॥ भास्करांशुभिरादीप्तंतमसाचसमावृतम् ॥ ८ ॥ प्रचकाशेतदाकाशमुल्काशतविदीपितम् ॥ अंतरिक्षाच्च निर्घातानिर्जग्मुरतुलस्वनाः ॥ ९ ॥ वपुःप्रकर्षेणववुर्दिव्यमारुतपंक्तयः ॥ बभंजचतदावृक्षाञ्जलदानुद्वहन्मुहुः ॥ १० ॥ आरुजंश्चैवशैलाग्राण्छिखराणिबभंजच ॥ दिविचस्पृग्महावेगाःसंहताःसमहास्वनाः ॥ ११ ॥ मुमुचुर्वैद्युतानग्नींस्तेमहाशनयस्तदा ॥ यानिभूतानिदृश्यानिचुक्रुशुश्चाशनेःसमम् ॥ १२ ॥ अदृश्यानिचभूतानिमुमुचुर्भैरवस्वनम् ॥ शिश्यिरेचाभिभूतानिसंत्रस्तान्युद्विजंतिच ॥ १३ ॥ संप्रविव्यथिरेचापिनचपस्पंदिरेभयात् ॥ सहभूतैःसतोयोर्मिःसनागःसहराक्षसः ॥ १४ ॥ सहसाभूत्ततोवेगाद्भीमवेगोमहोदधिः ॥ योजनंव्यतिचक्रामवेलामन्यत्रसंप्लवात् ॥ १५ ॥ तंतथा समतिक्रांतंनातिचक्रामराघवः ॥ तमुद्धतममित्रघ्नोरामोनदनदीपतिम् ॥ १६ ॥ ततोमध्यात्समुद्रस्यसागरःस्वयमुत्थितः ॥ उदयाद्रिमहाशैलान्मेरोरिवदिवाकरः ॥ १७ ॥ पन्नगैःसहदीप्तास्यैःसमुद्रःप्रत्यदृश्यत ॥ स्निग्धवैदूर्यसंकाशोजांबूनदविभूषणः ॥ १८ ॥ रक्तमाल्यांबरधरःपद्मपत्रनिभेक्षणः ॥ सर्वपुष्पमयींदिव्यांशिरसाधारयन्स्रजम् ॥ १९ ॥ जातरूपमयैश्चैवतपनीयविभूषणैः ॥ आत्मजानांचरत्नानांभूषितोभूषणोत्तमैः ॥ २० ॥ धातुभिर्मंडितःशैलोविविधैर्हिमवानिव ॥ आघूर्णिततरंगौघःकालिकानिलसंकुलः ॥ २१ ॥ गंगासिंधुप्रधानाभिरापगाभिःसमावृतः ॥ सागरःसमुपक्रम्यपूर्वमामंत्र्यवीर्यवान् ॥ अब्रवीत्प्रांजलिर्वाक्यंराघवंशरपाणिनम् ॥ २२ ॥ पृथिवीवायुराकाशमापोज्योतिश्चराघव ॥ स्वभावेसौम्यतिष्ठंतिशाश्वतंमार्गमाश्रिताः ॥ २३ ॥ तत्स्वभावोममाप्येषयदगाधोहमप्लवः ॥ विकारस्तुभवेद्गाधएतत्तेप्रवदाम्यहम् ॥ २४ ॥

शस्थं नदनदीपतिं दृष्ट्वा राघवो रामो नातिचक्राम न चचाल अस्त्रं न परावर्तितवानित्यर्थः । अस्त्रं न त्यक्तवानिति वा ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ जातरूपं सुवर्णं तपनीयं तप्तकांचनमधिकवर्णं स्वोदरजातरत्नखचितभूषणोत्तमैर्भूषितः ॥ २० ॥ अतएव विविधधातुभिर्मंडितः शैल इव कालिकानिलैर्मेघवातैः संकुलः । मेघजाले च कालिका ॥ २१ ॥ समुपक्रम्य उपगम्य पूर्वमामंत्र्य हे रामेति प्रथमं संबोध्य शरपाणिनं शरपाणिम् ॥ २२ ॥ एतावत्कालमनागमने स्वीयमगाधत्वमेव कारणमिति सूचयितुं सामान्यतो भूतस्थितिमाह पृथिवीति । पृथ्वीस्वभावः काठिन्याद्धारणम् । वायोः सदासंचारतः संयोजनवियोजने । आकाशस्यावकाशदानम् । अपां स्यंदनं संश्लेषणं च । ज्योतिषः प्रकाशभस्मीकरणे । शाश्वतं मार्गमनादिं ब्रह्मसृष्टं स्वरूपस्थितिप्रकारमास्थिताः संतः स्वे स्वे भावे तिष्ठंति ॥ २३ ॥ तत्तस्मादहमप्यगाधत्वाशक्यतरणत्वरूपाशक्यप्लवत्वादि

युधा संग्रामेण न शक्यो जेतुमिति शेषः । वैश्रवणेन पालितेत्यनेन पुष्पकवल्लंकापि भगवता कुबेराय दत्तेति सूचितम्॥२१॥परंमानः॥इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रयोदशःसर्गः॥ १३ ॥ कतकरी० ॥१२॥ अथ विभीषणः प्रहस्तादिवचोऽतिदुर्मंत्र इत्याह निशाचरेंद्रस्येति । वाक्यं रावणस्य गर्जितानि कुंभकर्णस्य अर्थयुक्तं वास्तवार्थम् ॥ १ ॥ वृत इति । अहिमध्यदेहोत्र भोगः बाह्वंतरं हृदयभाग एव भोगराशिः शरीरपरिणाहो यस्य सः चिंतैव विषं यस्य शोभनं स्मितमेव तीक्ष्णं दंष्ट्रा यस्य अनुचितकृत्यदर्शनादिजं स्मितं तस्याः पंचांगुल्य एव पंचशिरांसि यस्य स चासावतिकायश्च

नवासवेनापिसहस्रचक्षुषायुधास्मिशक्योवरुणेनवापुनः॥ मयात्वियंबाहुवलेननिर्जितापुरापुरीवैश्रवणेनपालिता ॥ ॥ २१ ॥ इत्यार्षेश्रीम० वाल्मीकीये आदिकाव्ये युद्धकांडे त्रयोदशः सर्गः ॥ १३ ॥ ॥ निशाचरेंद्रस्यनिशम्यवाक्यंसकुंभकर्णस्यचगर्जितानि ॥ विभीषणोराक्षसराजमुख्यमुवाच वाक्यंहितमर्थयुक्तम् ॥ १ ॥ वृतोहिबाह्वंतरभोगराशिश्चिंताविषःसुस्मिततीक्ष्णदंष्ट्रः ॥ पंचांगुलीपंचशिरोऽतिकायःसीतामहाहिस्तवकेनराजन् ॥ २ ॥ यावन्नलंकांसमभिद्रवंतिवलीमुखाःपर्वतकूटमात्राः ॥ दंष्ट्रायुधाश्चैवनखायुधाश्चप्रदीयतांदाशरथायमैथिली ॥ ३ ॥ यावन्नगृह्णंतिशिरांसिबाणारामेरितराक्षसपुंगवानाम् ॥ वज्रोपमावायुसमानवेगाःप्रदीयतांदाशरथायमैथिली ॥ ४ ॥ नकुंभकर्णेंद्रजितौचराजंस्तथामहापार्श्वमहोदरौवा ॥ निकुंभकुंभौचतथातिकायःस्थातुंसमर्थायुधिराघवस्य ॥ ५ ॥ जीवंस्तुरामस्यनमोक्ष्यसेत्वंगुप्तःसवित्राप्यथवामरुद्भिः ॥ नवासवस्यांकगतोनमृत्योर्नभोनपातालमनुप्रविष्टः ॥ ६ ॥ निशम्यवाक्यंतुविभीषणस्यततःप्रहस्तोवचनंवभाषे ॥ ननोभयंविद्मनदैवतेभ्योनदानवेभ्योप्यथवाकदाचित् ॥ ७ ॥ नयक्षगंधर्वमहोरगेभ्योभयंनसंख्येपतगोरगेभ्यः ॥ कथंनुरामाद्भविताभयंनोनरेंद्रपुत्रात्समरेकदाचित् ॥ ८ ॥ प्रहस्तवाक्यंत्वहितंनिशम्यविभीषणोराजहितानुकांक्षी ॥ ततोमहार्थंवचनंबभाषेधर्मार्थकामेषुनिविष्टबुद्धिः ॥ ९ ॥ प्रहस्तराजाचमहोदरश्चत्वंकुंभकर्णश्चयथार्थजातम् ॥ ब्रवीतरामंप्रतितन्नशक्यंयथागतिःस्वर्गमधर्मबुद्धेः ॥ १० ॥ वधस्तुरामस्यमयात्वयाचप्रहस्तसर्वैरपिराक्षसैर्वा ॥ कथंभवेदर्थविशारदस्यमहार्णवंतर्तुमिवाप्लवस्य ॥ ११ ॥ धर्मप्रधानस्यमहारथस्यइक्ष्वाकुवंशप्रवरस्यराज्ञः ॥ पुरोस्यदेवाश्चतथाविधस्यकृत्येषुशक्तस्यभवंतिमूढाः ॥ १२ ॥

एवंभूतः सीतामहाहिः तव केन वृतो बद्धः कंठे इति शेषः । यद्वा केन हेतुना वृतो गृहीत इत्यर्थः ॥ २ ॥ वलीमुखेति वानरनाम । पर्वतकूटमात्राः पर्वतशिखरप्रमाणाः ॥ ३ ॥ ४ ॥ ५ ॥ जीवंस्तु रामस्य न मोक्ष्यसे सन्निधिं प्राप्येति शेषः ॥ ६ ॥ दैवतेभ्यो नोऽस्माकं भयमिति वयं न विद्म ॥७॥ संख्ये युद्धे ॥ ८ ॥ ९ ॥ प्रहस्तेति । यथा यादृशमर्थजातं रामं प्रति यूयं ब्रवीत ब्रूत तन्न शक्यं कर्तुमिति शेषः । यथाऽधर्मबुद्धेः स्वर्गमुद्दिश्य गतिरशक्या ॥ १० ॥ तर्तुं शक्तिरिति शेषः ॥११॥ तथाविधस्य उक्त स्वभावस्य कृत्येषु रणमुखस्थसकललोकसंहारकृत्येषु शक्तस्य पुरो युधि देवाश्च देवा अपि विमूढा भवंति॥१२॥

यावत्ते कायं भित्त्वा बाणाः पुनस्तदिषुधिं न प्रविशंति तेनैव हेतुना तावत् हे प्रहस्त त्वं विकत्थसे वृथात्मश्लाघां करोपि रावणस्य पुरस्तादिति शेषः ॥ १३ ॥ प्राणांतिकाः प्राणांतपीडाकरास्ते कायं भित्त्वा यावन्न प्रविशंति इषुधिं तावद्विकत्थसे ॥ १४ ॥ त्रिशीर्षस्त्रिशिराः त्वं वेति प्रहस्तनिर्देशः ॥ १५ ॥ १६ ॥ व्यसनैः कामव्यसनैरभिभूतः अमित्रप्रतिमैः शत्रुतुल्यैः राक्षसनाशनार्थे राक्षसकुलना शनिमित्तमन्वास्यते सेव्यते ॥ १७ ॥ अनंतभोगेन अपरिच्छिन्नदेहबलेन परिक्षिप्तं पाशेनेव वेष्टितम् । रघुनाथेन वैरकरणं महासर्पवेष्टनमिवेति निदर्शनालंकारोत्र व्यंग्यः ॥ १८ ॥ यावदिति वाक्यालंकारे । केशग्रहणात्केशग्रहणपर्यंतमप्यनुचितं कृत्वा निगृह्य राजा रक्षितव्यः भूतैर्गृहीतः पुमांस्तदाप्तैरिव ॥ १९ ॥ सुवारिणा सुचरित्ररूपवारिमता राघवसागरेण प्रच्छाद्यमानो निमज्ज्यमानः पुनश्च काकु त्स्थरूपपाताल

तीक्ष्णानतावत्तवकंकपत्रादुरासदाराघवविप्रमुक्ताः ॥ भित्त्वाशरीरंप्रविशंतिबाणाःप्रहस्ततेनैवविकत्थसेत्वम् ॥ १३ ॥ भित्त्वानतावत्प्रविशंतिकायं प्राणांतिकास्तेशनितुल्यवेगाः ॥ शिताःशराराघवविप्रमुक्ताःप्रहस्ततेनैवविकत्थसेत्वम् ॥ १४ ॥ नरावणोनातिबलस्त्रिशीर्षोनकुंभकर्णस्यसुतोनि कुंभः ॥ नचेंद्रजिद्दाशरथिंप्रवोढुंत्वंवारणेशक्रसमंसमर्थाः ॥१५॥ देवांतकोवापिनरांतकोवातथातिकायोतिरथोमहात्मा ॥ अकंपनश्चापिसमानसारः स्थातुंनशक्तायुधिराघवस्य ॥ १६ ॥ अयंचराजाव्यसनाभिभूतोमित्रैरमित्रप्रतिमैर्भवद्भिः ॥ अन्वास्यतेराक्षसनाशनार्थेतीक्ष्णःप्रकृत्याह्यसमीक्ष्य कारी ॥ १७ ॥ अनंतभोगेनसहस्रमूर्ध्नानागेनभीमेनमहाबलेन ॥ बलात्परिक्षिप्तमिमंभवंतोराजानमुत्क्षिप्यविमोचयंतु ॥ १८ ॥ यावद्धिकेशग्रह णात्सुहृद्भिःसमेत्यसर्वैःपरिपूर्णकामैः ॥ निगृह्यराजापरिरक्षितव्योभूतैर्यथाभीमबलैर्गृहीतः ॥ १९ ॥ सुवारिणाराघवसागरेणप्रच्छाद्यमानस्तरसा भवद्भिः ॥ युक्तस्त्वयंतारयितुंसमेत्यकाकुत्स्थपातालमुखेपतन्सः ॥ २० ॥ इदंपुरस्यास्यसराक्षसस्यराज्ञश्चपथ्यंससुहृज्जनस्य ॥ सम्यग्घिवाक्यं स्वमतंब्रवीमिनरेंद्रपुत्रायददातुमैथिलीम् ॥ २१ ॥ परस्यवीर्यंस्वबलंचबुद्ध्वास्थानंक्षयंचैवतथैववृद्धिम् ॥ तथास्वपक्षेप्यनुमृश्यबुद्ध्यावदेत्क्षमंस्वा मिहितंसमंत्री ॥ २२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेचतुर्दशःसर्गः ॥ १४ ॥ ॥ बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्ययत्नेन विभीषणस्य ॥ ततोमहात्मावचनंबभाषेतत्रेंद्रजिन्नैरृतयूथमुख्यः ॥ १ ॥ किंनामतेतातकनिष्ठवाक्यमनर्थकंवैवहुभीतवच्च ॥ अस्मिन्कुलेयोपिभवे न्नजातःसोपीदृशंनैववदेन्नकुर्यात् ॥ २ ॥

मुखे पतन्सोयं राजा भवद्भिः समेत्य तारयितुं युक्तः ॥ २० ॥ मैथिलीं रावण इति शेषः ॥ २१ ॥ स्थानं बलादेर्यथापूर्वमुपचयापचयराहित्येन स्थितिः तदपेक्षयापचयः क्षयः तत उपचयो वृद्धिः । प्रकृतेहि परस्य वानरसहायतया संपत्त्युपचयो वर्तते अस्माकं तु खरनाशलंकादाहादिकृतोऽपचयः एतत्सर्वं बुद्ध्यानुमृश्य स्वामिहितं वदेत्स मंत्री न यूयमित्यर्थः ॥ २२ ॥ खेरंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्दशः सर्गः ॥ १४ ॥ कतकरी० ॥ १३ ॥ बृहस्पतेर्गुरुणेत्यर्थः । यत्नेन निशम्य दुःखेन श्रुत्वा महात्मा महामनाः ॥ १ ॥ तात कनिष्ठेत्यसमस्तं

भीतवद्भीतस्येव अनर्थकमनुपादेयं वाक्यं किं नाम कस्मादुच्यते । अस्मिन्कुले पौलस्त्यकुले यो जातो न भवेदपि तु सहजदुर्बलत्वादिमति मनुष्यादिकुले सोपीदृशं वचो न वदेत् ईदृशं च न कुर्यात् । करोतेः
क्रियासामान्यवचनत्वान्न चिंतयेदित्यर्थः । एवं च हीनजातेरपि हीनस्तव व्यापार इति भावः ॥ २ ॥ तदेवाह सत्त्वेनेति । सत्त्वं बलं वीर्यं पराक्रमणशक्तिः पराक्रमस्तत्कार्यं शौर्यं रणादपराङ्मुखत्वं धैर्यं
तत्कारणं स्थैर्यं तेजः स्मृत्या भयंकरत्वम् एतैर्गुणैरेकों विभीषण एव तातस्य कनिष्ठोऽस्मिन्कुले मुक्तः ॥ ३ ॥ हे भीरो प्राकृतेनैकेनापि राक्षसेन रणे तौ राजपुत्रौ हि यतो निहंतुं शक्यौ अतस्तौ किं नाम
गृहीत्वाऽस्मान्कुतो भीषयसे व्यर्थमेव । न तावता बिभीम इत्यर्थः ॥ ४ ॥ तदेवाह त्रिलोकेति । भूमितले निविष्टः स्वर्गात्प्रच्याव्य भूमौ वंदीकृत्य स्थापितः भयार्पिताः भयं अर्पितं येषु ते मद्दत्तभयाः सर्वे
देवगणाः दिशः प्रपन्नाः प्राप्ताः ॥ ५ ॥ ६ ॥ कथं न शक्तो निग्रह इति शेषः ॥ ७ ॥ ८ ॥ हे तात पुत्र तव मंत्रे निश्चयो नास्ति कृत्याकृत्यविचारनिश्चयसामर्थ्यं नास्ति यतस्त्वमद्याप्यविपक्वबुद्धिः अप्राप्तज्ञानपरि

सत्त्वेनवीर्येणपराक्रमेणधैर्येणशौर्येणचतेजसाच ॥ एकःकुलेस्मिन्पुरुषोविमुक्तोविभीषणस्तातकनिष्ठएषः ॥ ३ ॥ किंनामतौमानुषराजपुत्रावस्माकमे
केनहिराक्षसेन ॥ सुप्राकृतेनापिनिहंतुमेतौशक्यौकुतोभीषयसेस्मभीरो ॥४॥ त्रिलोकनाथोननुदेवराजःशक्रोमयाभूमितलेनिविष्टः ॥ भयार्पिताश्चापि
दिशःप्रपन्नाःसर्वेतदादेवगणाःसमग्राः ॥ ५ ॥ ऐरावतोनिःस्वनमुन्नदन्सनिपातितोभूमितलेमयातु ॥ विकृष्यदंतौतुमयाप्रसह्यवित्रासितादेवगणास्स
मग्राः ॥ ६ ॥ सोहंसुराणामपिदर्पहंतादैत्योत्तमानामपिशोकहर्ता ॥ कथंनरेंद्रात्मजयोर्नशक्तोमनुष्ययोःप्राकृतयोःसुवीर्यः ॥७॥ अथेंद्रकल्पस्यदुरा
सदस्यमहौजसस्तद्वचनंनिशम्य॥ततोमहार्थंवचनंबभाषेविभीषणःशस्त्रभृतांवरिष्ठः ॥ ८ ॥ नतातमंत्रेतवनिश्चयोस्तिबालस्त्वमद्याप्यविपक्वबुद्धिः ॥
तस्मात्त्वयाप्यात्मविनाशनायवचोऽर्थहीनंबहुविप्रलप्तम् ॥ ९ ॥ पुत्रप्रवादेनतुरावणस्यत्वमिंद्रजिन्मित्रमुखोसिशत्रुः ॥ यस्येदृशंराघवतोविनाशं
निशम्यमोहादनुमन्यसेत्वम् ॥ १० ॥ त्वमेववध्यश्चसुदुर्मतिश्चसचापिवध्योयइहानयत्त्वाम् ॥ बालंदृढंसाहसिकंचयोऽद्यप्रावेशयन्मंत्रकृतांसमी
पम् ॥ ११ ॥ मूढोऽप्रगल्भोऽविनयोपपन्नस्तीक्ष्णस्वभावोल्पमतिर्दुरात्मा ॥ मूर्खस्त्वमत्यंतसुदुर्मतिश्चत्वमिंद्रजिद्बालतयाब्रवीषि ॥ १२ ॥
कोब्रह्मदंडप्रतिमप्रकाशानर्चिष्मतःकालनिकाशरूपान् ॥ सहेतबाणान्यमदंडकल्पान्समक्षमुक्तान्युधिराघवेण ॥ १३ ॥

पाकचित्तो बाल एव तस्मात्त्वयाऽर्थहीनमनुपादेयमात्मविनाशनाय बहु विप्रलप्तम् एकेनापि हंतुं शक्य इति वृथा प्रलपितम् ॥ ९ ॥ हे इंद्रजित्पुत्रप्रवादेन पुत्रशब्देनोपलक्षितस्त्वं मित्रमुखो मित्रवदवभासमानो
वस्तुतः शत्रुरेवासि तदेवाह यस्य रावणस्य राघवत ईदृशं विनाशं निशम्यापि मोहात्त्वमनुमन्यसे न वारयसि ॥ १० ॥ तस्मात्त्वमेव वध्यः पुत्रोपि सन् यश्च वृद्धानां मंत्रकृतां समीपं प्रावेशयत् यश्चानयत्
आगमनार्थं प्रेरितवान्सोपि वध्यः ॥ ११ ॥ मूढः कृत्याकृत्यविवेकहीनः अतएवाप्रगल्भो मतिप्रागल्भ्यहीनः अविनयेनोपपन्नो युक्तः अल्पमतिर्दीर्घदर्शनानर्हबुद्धिः दुरात्मा कामादिदुष्टांतःकरणः मूर्खः साहसप्रवृत्ति
परः उक्तरीत्याऽत्यंतसुदुर्मतिश्च॥१२॥ब्रह्मदंडेन चतुर्मुखकरगृहीतेन प्रतिमा अमोघानर्गलसंहारशक्त्या समानास्तत्सप्रकाशाश्च तान् । तस्यैव विवरणमर्चिष्मत इति । कालनिकाशरूपान्कालाग्नितुल्यरूपान्॥१३॥

रत्नानि श्रेष्ठवस्तूनि निवेद्य समर्प्य ॥१४॥ अर्भकेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रा० तिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचदशः सर्गः ॥ १५ ॥ कतकरी० ॥ १४ ॥ सुनिविष्टं सुनिविष्टार्थतत्त्वम् ॥ १ ॥ सपत्नेनापि सह वसेत् । न तु मित्रप्रवादेन मित्रपदव्यवहार्येण शत्रुसेविना शत्रुपक्षपातिना वसेत् । सपत्ने चित्तस्य द्वेषकोट्यैव प्रतिष्ठा । मित्रप्रवादे तु द्वेष्यत्वेन स्निग्धत्वेन चेति परमदुःखमिति तत्सहवासनिषेधः । शत्रुसेविनेत्यनेनास्य भगवद्भक्तत्वं सूचितम् ॥ २ ॥ शीलं स्वभावं जानामि । तदेव विवृणोति हृष्यंतीति ॥ ३ ॥ प्रधानं ज्येष्ठत्वादिना प्राप्तराज्यं साधकं राज्यरक्षादेरिति शेषः । वैद्यं विद्यावंतम् अवमन्यंते गुणवत्त्वेपि गुणान्न गृह्णंति शूरं परिभवंति च रंध्रमन्विष्येतिं शेषः ॥ ४ ॥ ज्ञातयो ज्ञातिरूपाः आततायिनः । अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ॥ क्षेत्रदारहरश्चैव षडेते आतता

धनानिरत्नानिसुभूषणानिवासांसिदिव्यानिमणींश्चचित्रान् ॥ सीतांचरामायनिवेद्यदेवींवसेमराजन्निहवीतशोकाः ॥ १४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये युद्धकांडे पंचदशःसर्गः ॥ १५ ॥ सुनिविष्टंहितंवाक्यमुक्तवंतंविभीषणम् ॥ अब्रवीत्परुषंवाक्यंरावणःकालचोदितः ॥ १ ॥ वसेत्सहसपत्नेनक्रुद्धेनाशीविषेणच ॥ नतुमित्रप्रवादेनसंवसेच्छत्रुसेविना ॥ २ ॥ जानामिशीलंज्ञातीनांसर्वलोकेषुराक्षस ॥ हृष्यंतिव्यसनेष्वेतेज्ञातीनांज्ञातयःसदा ॥ ३ ॥ प्रधानंसाधकंवैद्यंधर्मशीलंचराक्षस ॥ ज्ञातयोप्यवमन्यंते शूरंपरिभवंतिच ॥४॥ नित्यमन्योन्यसंहृष्टाव्यसनेष्वाततायिनः ॥ प्रच्छन्नहृदयाघोराज्ञातयस्तुभयावहाः ॥ ५ ॥ श्रूयंतेहस्तिभिर्गीताःश्लोकाःपद्मवनेपुरा ॥ पाशहस्तान्नरान्दृष्ट्वाशृणुष्वगदतोमम ॥ ६ ॥ नाग्निर्नान्यानिशस्त्राणिननःपाशाभयावहाः ॥ घोराः स्वार्थप्रयुक्तास्तुज्ञातयोनोभयावहाः ॥ ७ ॥ उपायमेतेवक्ष्यंतिग्रहणेनात्रसंशयः ॥ कृत्स्नाद्भयाज्ज्ञातिभयंसुकष्टंविदितंचनः ॥८॥ विद्यतेगोषुसंपन्नंविद्यतेज्ञातितोभयम् ॥ विद्यतेस्त्रीषुचापल्यंविद्यतेब्राह्मणेतपः ॥९॥ ततोनेष्टमिदंसौम्ययदहंलोकसत्कृतः ॥ ऐश्वर्यमभिजातश्चरिपूणांमूर्ध्निचस्थितः ॥ १० ॥ यथापुष्करपत्रेषुपतितास्तोयबिंदवः ॥ नश्लेषमभिगच्छंतितथानार्येषुसौहृदम् ॥ ११ ॥ यथाशरदिमेघानांसिंचतामपिगर्जताम् ॥ नभवत्यंबुसंक्लेदस्तथानार्येषुसौहृदम् ॥ १२ ॥

यिनः । ते प्रच्छन्नहृदयाः प्रच्छन्नं तत्कार्यं प्रवृत्ता अतएव घोरा अन्योन्यं व्यसनेष्वापत्सु संहृष्टा भवंति अतएव ता ज्ञातयो भयावहाः ॥ ५ ॥ ज्ञातिभीतिं हास्तिगीतेन स्पष्टयति श्रूयंत इति । हस्तिभिः पद्मवनवर्तिदिव्यवनगजैः स्वबंधनाय प्रवृत्तान्पाशहस्तान्दृष्ट्वा पुरा पूर्वं हस्तिभिर्गीता ये श्लोकाः श्रूयंते तान् गदतो मम वक्त्राच्छृणु ॥ ६ ॥ स्वार्थप्रयुक्ताः स्वार्थपरा हस्तिपकाद्याज्ञाकरणे उत्तमभोजनलाभादिस्वार्थपराः ॥ ७ ॥ एते मज्ज्ञातिभूताः पूर्वगृहीता गजाः वक्ष्यंति करिष्यंतीत्यर्थः । नो विदितं च शतशोनुभूतं चेत्यर्थः ॥ ८ ॥ संपन्नं हव्यकव्यसाधनसंपत् ॥ ९ ॥ तत इति रावणवाक्यम् । अहं लोकसत्कृत इति यत्तत्ते नेष्टं न प्रियमिति मन्ये तथैश्वर्यमास्यादिकमपि ॥ १० ॥ अनार्येषु क्रूरस्वभावेषु ॥ ११ ॥ यथा गर्जतां सिंचतामपि मेघानां संबंधे पृथिव्या अम्बुसंक्लेदोंबुव्याप्तता न भवति तथानार्येषु सौहृदं निष्फलमिति भावः ।

॥ ११ ॥ सीतासमर्पणं विना राघवजयोपायो विचार्यतामिति बोधयितुं तस्या दुस्त्यजत्वमाह इयं चेति । रक्षोभिश्चारितः सेवितोय उद्देशो देशो जनस्थानलक्षणस्तस्मात् ॥ १२ ॥ सीतासदृशी अन्या मे न तथा न मनोहरेत्यर्थः ॥ १३ ॥ हेम्ना निर्मितं यद्बिंबं प्रतिमा तन्निभा । मायेवेति । प्रतिक्षणमपूर्वाश्चर्यावहो वस्तुविशेषो माया ॥ १४ ॥ १५ ॥ हुताग्निरर्चिःसंकाशामित्यर्धेपि दृष्ट्वा दीप्यते मे शरीरज इत्यनुषज्यते । उन्नता नासिका यस्मिंस्तत् ॥ १६ ॥ अवशोऽस्वाधीन एव तस्या वदनं पश्यन् एयिवान्प्राप्तवान् । यत्किंचिद्विषयनिमित्तक्रोधहर्षकालयोरपि समानेन तावप्यभिभूयांतःप्रवृत्तेन दुर्वर्णकरणेन कांतिनाशकेन तदप्राप्तिजयोः शोकसंतापयोर्नित्येन नित्यप्रवर्तकेन । ननु स्वनगरे स्थितायां तस्यां किमित्येवं दुःखभोगोऽत आह सा त्विति । सा तु संवत्सरं कालं तत्समाप्तिपर्यंतं रामं प्रतीक्षमाणा ममास्पर्शमयाचत मयापि तथास्त्विति प्रतिज्ञातम् । बलात्कारे शापान्मरणभिया स्वेनैव कृतं समयं तद्याचितत्वेन ब्रूत इत्यत्र वस्तुतत्त्वम् । न हि सीता एवं याचितुमर्हतीति अतएव पूर्वं सा मे न शय्यामारोढुमिच्छत्यलसगामिनीति सामान्येनैवोक्तम्

अयंहिसुप्तःषण्मासान्कुंभकर्णोमहाबलः ॥ सर्वशस्त्रभृतांमुख्यःसइदानींसमुत्थितः ॥ ११ ॥ इयंचदंडकारण्याद्रामस्यमहिषीप्रिया ॥ रक्षोभिश्चरितोद्देशादानीताजनकात्मजा ॥ १२ ॥ सामेनशय्यामारोढुमिच्छत्यलसगामिनी ॥ त्रिषुलोकेषुचान्यामेनसीतासदृशीतथा ॥ १३ ॥ तनुमध्यापृथुश्रोणीशरदिंदुनिभानना ॥ हेमबिंबनिभासौम्यामायेवमयनिर्मिता ॥ १४ ॥ सुलोहिततलौश्लक्ष्णौचरणौसुप्रतिष्ठितौ ॥ दृष्ट्वाताम्रनखौतस्यादीप्यतेमेशरीरजः ॥ १५ ॥ हुताग्निरर्चिःसंकाशामेनांसौरीमिवप्रभाम् ॥ उन्नसंविमलंवल्गुवदनंचारुलोचनम् ॥ १६ ॥ पश्यंस्तदवशस्तस्याःकामस्यवशमेयिवान् ॥ क्रोधहर्षसमानेनदुर्वर्णकरणेनच ॥ १७ ॥ शोकसंतापनित्येनकामेनकलुषीकृतः ॥ सातुसंवत्सरंकालंमामयाचतभामिनी ॥ १८ ॥ प्रतीक्षमाणाभर्तारंराममायतलोचना ॥ तन्मयाचारुनेत्रायाःप्रतिज्ञातंवचःशुभम् ॥ १९ ॥ श्रांतोहंसततंकामाद्यातोहयइवाध्वनि ॥ कथंसागरमक्षोभ्यंतरिष्यंतिवनौकसः ॥ २० ॥ बहुसत्त्वझषाकीर्णंतौवादशरथात्मजौ ॥ अथवाकपिनैकेनकृतंनःकदनंमहत् ॥ २१ ॥ दुर्ज्ञेयाःकार्यगतयोब्रूतयस्ययथामति ॥ मानुषान्नोभयंनास्तितथापितुविमृश्यताम् ॥ २२ ॥ तदादेवासुरेयुद्धेयुष्माभिःसहितोऽजयम् ॥ तेमेभवंतश्चतथासुग्रीवप्रमुखान्हरीन् ॥ ॥ २३ ॥ परेपारेसमुद्रस्यपुरस्कृत्यनृपात्मजौ ॥ सीतायाःपदवींप्राप्यसंप्राप्तौवरुणालयम् ॥ २४ ॥

॥ १७ ॥ १८ ॥ १९ ॥ नन्वेवं संवत्सरानंतरं त्वद्वशे भविष्यत्येव रामस्य विहाप्रसक्तिरेवेति का ते चिंतेत्याशंक्याल्पोपि रिपुर्नोपेक्ष्य इति नीतिशास्त्रपर्यालोचनया मंत्रे प्रेरयामीत्याह कथमपीत्यर्थः ॥ २० ॥ अथापि संभावनास्तीत्याह । अथवेति । एकेनापि कपिना महत्कदनं कृतम् ॥ २१ ॥ अतः कार्यगतयो दुर्ज्ञेयास्तस्माद्यस्य यथामति यद्भाति तद्ब्रूत । नन्वेककपितो भीतस्य रामादधिकमेव ते भयमिति भयहेतुः सीता त्यज्यतामित्याशंक्य भयाभावमाह मानुषादिति ॥ २२ ॥ भयाभावहेतुमाह तदेति । यैर्युष्माभिः सहितो देवानजयं ते भवंतो मे तथा च तथैव संति अतो मानुषान्न भयं यद्यपि तथापि विमृश्यतां विचार्यतामिति पूर्वश्लोकेनान्वयः । विमर्शे हेतुमाह सुग्रीवेति । नृपात्मजौ दूतेन वरुणालयमतिक्रम्य सीतायाः पदवीं प्राप्यान्विष्य सुग्रीवप्रमुखान्हरीन्पुरस्कृत्य समुद्रस्य परे पारे संप्राप्ताविति श्रुतम् ॥ २३ ॥ २४ ॥

अतःपरं यथा सीता अदेया यथा च दशरथात्मजौ वध्यौ तथैव मंत्रो भवद्भिर्मंत्र्यताम्। अथ सुनीतं सुनिश्चितं मंत्रतत्त्वमभिधीयताम् ॥२५॥ निश्चितप्राय एव शत्रुजय इत्याह नहीति। जगति लोके कस्यचिदिंद्रा देरप्यस्मज्जये शक्तिं न पश्यामि अन्यस्य मनुष्यरूपशत्रोर्वानरैः सह सागरं तीर्त्वाऽस्मज्जये शक्तिप्रसंगमपि न पश्यामि अतो निश्चयेन सर्वथा ममैव जय इति योजना ॥ २६ ॥ अथ कुंभकर्णो भ्रातुरन्यायमूला नर्थप्राप्तिदर्शनात्क्रुद्ध आहेत्याह तस्येति। परिदेवितं कामशोकप्रलापं प्रचुक्रोध महाराजः सन्नीदृशं सभायां प्रलपतीति क्रोधः ॥ २७ ॥ तदेव वचनमाह यदा त्विति। यदा सलक्ष्मणस्य रामस्य सीता सकृत्स मीक्ष्यैव तात्कालिकापातविचारं कृत्वैव प्रसह्य हृता तदैव ते चित्तं यमुना यामुनं ह्रदमिव सुनिश्चितं भजेत् निश्चयभजनार्हं यथा यमुना पृथिव्यामवतारसमये एव स्वह्रदं पूरयति कालांतरे तु समुद्रं गतत्वात्तज्ज लस्य तत्पूरणासंभव एवमस्माभिः सह विचारस्य स एव काल इदानीं त्वनर्थनिश्चयो जात एवेति विचारो निष्फल इति क्रोधजा व्यंग्योक्तिः ॥ २८ ॥ व्यंग्यतयोक्तमेव साक्षादप्याह सर्वमिति। यदेतद्वंचना त्पूर्वं प्रसह्य परदारहरणादिकृतमेतत्सर्वं महाराज तवाप्रतिममनुचितम् इदानीं विचारोपि निष्फल इत्याह विधीयेतेति। अस्य कर्मणः करणमुद्दिश्य प्रवृत्तिकाल एव यद्यस्माभिः सह मंत्रयेत तदा विधीयेतास्माभि

अदेयाचयथासीतावध्यौदशरथात्मजौ ॥ भवद्भिर्मंत्र्यतांमंत्रःसुनीतंचाभिधीयताम् ॥ २५ ॥ नहिशक्तिंप्रपश्यामिजगत्यन्यस्यकस्यचित् ॥ सागरं वानरैस्तीर्त्वानिश्चयेनजयोमम ॥ २६ ॥ तस्यकामपरीतस्यनिशम्यपरिदेवितम् ॥ कुंभकर्णःप्रचुक्रोधवचनंचेदमब्रवीत् ॥ २७ ॥ यदातुरामस्य सलक्ष्मणस्यप्रसह्यसीताखलुसाइहाहृता ॥ सकृत्समीक्ष्यैवसुनिश्चितंतदाभजेतचित्तंयमुनेवयामुनम् ॥ २८ ॥ सर्वमेतन्महाराजकृतमप्रतिमंतव ॥ विधीयेतसहास्माभिरादावेवास्यकर्मणः ॥ २९ ॥ न्यायेनराजकार्याणियःकरोतिदशानन ॥ नससंतप्यतेपश्चान्निश्चितार्थमतिर्नृपः ॥ ३० ॥ अनुपायेनकर्माणिविपरीतानियानिच ॥ क्रियमाणानिदुष्यंतिहवींष्यप्रयतेष्विव ॥ ३१ ॥ यःपश्चात्पूर्वकार्याणिकर्माण्यभिचिकीर्षति ॥ पूर्वंचापरका र्याणिसनवेदनयानयौ ॥ ३२ ॥ चपलस्यतुकृत्येषुप्रसमीक्ष्याधिकंबलम् ॥ छिद्रमन्येप्रपद्यंतेक्रौंचस्यखमिवद्विजाः ॥ ३३ ॥

रस्य निवारणमिति शेषः। इदानीं क्रियमाणो विचारस्तु गतजलसेतुबन्धनसम इति भावः ॥ २९ ॥ अथ मंत्रिभिरसंमन्त्र्य कृतं निंद्यकर्म पश्चात्परितापाय भवतीत्याह न्यायेनेति। प्रथमं मंत्रिभिः सह निश्चि तार्थमतिर्भूत्वा यो नृपतिर्न्यायेन राजकार्याणि करोति स तत्कार्यं कृत्वा पश्चान्न संतप्यते ॥ ३० ॥ अन्यथा व्यतिरेकमप्याह अनुपायेनेति। मंत्रिभिः सह सामाद्युपायविचारानालंबनेन मोहात्स्वयमेव यानि विपरीतान्यन्यायकृत्यानि करोति तानि तथाक्रियमाणानि दुष्यंति कश्मलं प्रापयंति अप्रयतेषु अभिचारत्वादपवित्रेषु यागेषु हुतानि हवींषीव तानि तु प्रत्यगेनमभिचारस्तृणुते इति कर्तारं कश्मलं प्रापयंत्येव तद्वदिदं कर्मापाततः सुखमिव भासमानमपि परिणामे दुःखायैवेति भावः ॥ ३१ ॥ यथाकालं यस्य कर्मानारंभः स मूर्ख इत्याह य इति। पूर्वकार्याणि प्रथमकर्तव्यानि कर्माणि पश्चादभिचिकीर्षति एवं पश्चात्कर्त व्यानि पूर्वं करोति स नयानयौ न वेद। साम्नि प्रथमं प्रयोक्तव्ये दंडं दंडे पश्चात्प्रयोक्तव्ये साम चेत्यर्थः। यद्वा विचारानंतरं कर्मकरणमुचितं तद्वैपरीत्यं कुर्वंस्तु नीत्यनीत्यज्ञानीत्यर्थः ॥ ३२ ॥ विषयचपलस्य बलमप्यप्रयोजनमित्याह चपलस्येति अन्ये शत्रवः परस्याधिकं बलं प्रसमीक्ष्यापि कृत्येषु चपलस्य तस्य निग्रहाय क्षिप्रं रंध्रं प्रपद्यंते द्विजा हंसा अलंघ्यस्यापि क्रौंचपर्वतस्य लंघनाय कुमारशक्तिकृतं खं रंध्रमिव ॥ ३३ ॥

पूर्वं कर्म कृतवतस्तवैतावत्कालं जीवनमतिभाग्यवशादित्याह त्वयेति । येन त्वयाऽप्रतिचिंतितं भाविफलचिंतारहितं यदिदं महत्कार्यं प्रबलदारहरणरूपमारब्धं तं त्वां रामोऽतिप्रबलोपि दिष्ट्या नावधीत् विषमिश्रमामिषं भोज्यं वस्तु भोक्तारं यथा हंति तद्वदित्यर्थः ॥ ३४ ॥ एवंगते स्वकर्तव्यमाह तस्मादिति । यस्मात्त्वया परैः प्रबलशत्रुभिरप्रतिममनुचितं कर्मारब्धं यतश्च सामदानेनेच्छसि मारीचेनेवास्माभिरपि राजत्वात्ते चित्तमनुसर्तव्यमेव तस्मादहं तव शत्रून्हत्वा तव कार्यं समीकरिष्यामि संपादयिष्यामि । यद्वा त्वया समीकरिष्यामि त्वं यथा युद्धं करिष्यसि तथाहमपि परैर्योत्स्यामि न तु विभीषणवत्त्वां त्यक्ष्यामीति व्यंग्यम् ॥ ३५ ॥ उक्तमेव राज्ञः प्रीतयेऽभ्यस्यति सत्यत्वप्रत्यायनाय अहमिति । यदि शक्रविवस्वंतौ तत्तद्देवतारूपौ स्यातां तथापि तावहं योधयिष्यामीत्यन्वयः ॥ ३६ ॥ गिरिमात्रशरीरस्य गिरिप्रमाणदेहस्य ॥ ३७ ॥ पुनरिति । यदि मां स राम एकेन शरेणाहत्य पुनर्द्वितीयेन शरेण निहनिष्यति यावत् ततः पूर्वमेव तस्य रुधिरं पास्यामि काममाश्वस ॥ ३८ ॥ ते सुखावहं जयं दाशरथेर्वधेन तवाह

त्वयेदंमहदारब्धंकार्यमप्रतिचिंतितम् ॥ दिष्ट्यात्वांनावधीद्रामोविषमिश्रमिवामिषम् ॥ ३४ ॥ तस्मात्त्वयासमारब्धंकर्मह्यप्रतिमंपरैः ॥ अहंसमीकरिष्यामिहत्वाशत्रूंस्तवानघ ॥ ३५ ॥ अहमुत्सादयिष्यामिशत्रूंस्तवनिशाचर ॥ यदिशक्रविवस्वंतौयदिपावकमारुतौ ॥ तावहंयोधयिष्यामिकुबेरवरुणावपि ॥ ३६ ॥ गिरिमात्रशरीरस्यमहापरिघयोधिनः ॥ नर्दतस्तीक्ष्णदंष्ट्रस्यबिभीयाद्वैपुरंदरः ॥ ३७ ॥ पुनर्मांसद्वितीयेनशरेणनहनिष्यति ॥ ततोहंतस्यपास्यामिरुधिरंकाममाश्वस ॥ ३८ ॥ वधेनवैदाशरथेःसुखावहंजयंतवाहर्तुमहंयतिष्ये ॥ हत्वाचरामंसहलक्ष्मणेनखादामिसर्वान्हरियूथमुख्यान् ॥ ३९ ॥ रमस्वकामंपिबचाग्र्यवारुणींकुरुष्वकार्याणिहितानिविज्वरः ॥ मयातुरामेगमितेयमक्षयंचिरायसीतावशगाभविष्यति ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे द्वादशः सर्गः ॥ १२ ॥ रावणंक्रुद्धमाज्ञायमहापार्श्वोमहाबलः ॥ मुहूर्तमनुसंचिंत्यप्रांजलिर्वाक्यमब्रवीत् ॥ १ ॥ यःखल्वपिवनंप्राप्यमृगव्यालनिषेवितम् ॥ नपिबेन्मधुसंप्राप्यसनरोबालिशोभवेत् ॥ २ ॥ ईश्वरस्येश्वरःकोस्तितवशत्रुनिबर्हण ॥ रमस्वसहवैदेह्याशत्रूनाक्रम्यमूर्धसु ॥ ३ ॥ बलात्कुक्कुटवृत्तेनप्रवर्तस्वमहाबल ॥ आक्रम्याक्रम्यसीतांवैतांभुंक्ष्वचरमस्वच ॥ ४ ॥

माहर्तुं कर्तुं यतिष्ये फलं तु दैवायत्तमिति भावः । खादामि खादिष्ये ॥ ३९ ॥ ४० ॥ अनर्वमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्वादशः सर्गः ॥ १२ ॥ कृतकरीत्या एकादशः सर्गः ॥ ११ ॥ क्रुद्धमाज्ञाय अप्रतिमं कर्म कृतमिति कुंभकर्णवचःश्रवणेनेति शेषः । मुहूर्तमनुसंचिंत्य न्याय्ये भ्रातुर्वचस्यपि मनोऽननुकूलतयैवं कोपश्चेदस्माकं तथोक्तौ शिरश्छेद एव स्यादिति मनोनुकूलमेव वाच्यमिति संचिन्त्य ॥ १ ॥ यः खलु पुरुषो मृगव्यालनिषेवितं दुष्प्रवेशं वनं प्राप्य तत्र च मधु संप्राप्य तन्मधु न पिबेत्स बालिशो मूर्खः । एतेन प्रथमं रामाश्रमो दुरासदस्तं प्राप्य तत्र तत्स्त्रियं च प्राप्य तद्भोगाभावो न युक्त इति सूचितम् ॥ २ ॥ ननु बलात्परदारसंभोगोऽधर्मत्वादीश्वराज्ञाविरोधीत्यत्राह ईश्वरस्येति । धर्मफलप्रवर्तकानां यमादीनामपि त्वमीश्वरोऽतस्तेयं विचारोऽनुचित इत्यर्थः ॥ ३ ॥ आनुकूल्ये कथं भोगस्तत्राह बलादिति । कुक्कुटवृत्तेन कुक्कुटीनां कामिकुक्कुटसंयोगे क्रोधो जातिधर्म इति वात्स्यायनः । अथापि संक्रुद्धाः कुक्कुटीरनुभुज्य कुक्कुटा यथा सुखिन

स्तद्दत्त्वमपि भवेदर्थः । तदेव दर्शयति आक्रम्येति ॥ ४ ॥ अथ स्वाभिलषिते सिद्धे प्रथमतो भयमेव न महातेजस्त्वात् । अथापि तन्निमित्तं भयं प्राप्नुयात्तदापि तत्सुप्रतिविधेयमेव त्वयेत्याह लब्धकामस्येति । प्राप्तं प्राप्तकालं सावधानदशाप्राप्तकालम् अप्राप्तकालं वा कामभोगाद्यसावधानदशां प्राप्तं वा ५ ॥ कथमेवं बलं नस्तत्राह कुंभकर्ण इति ॥ ६ ॥ एवमस्माकमेव प्राबल्याच्चतुर्थोपाय एवास्माभिरादरणीय इत्याह उपप्रदानामिति । कुशलैर्नीतिकुशलैः कृतं विषयविशेष इति शेषः ॥ ७ ॥ ८ ॥ ९ ॥ रहस्यं प्रमुषितद्रव्यवद्गुप्तं चिरवृत्तं यन्मया पुरावाप्तं बलादुपभोगस्याशक्यकरणतानिमित्तम् आत्मनः किंचिद्वस्तु तदाख्यास्ये ॥ १० ॥ तदेवाह पितामहस्येति । चंचूर्यमाणां मद्दर्शनभीतिवशान्निलीयगतिमतीम् ॥ ११ ॥ ततो दर्शनोत्तरं प्रसह्य विवसना कृता सा मया भुक्ता लोलिता गजेनेति शेषः ॥ १२ ॥

लब्धकामस्यतेपश्चादागमिष्यतिकिंभयम् ॥ प्राप्तमप्राप्तकालंवासर्वंप्रतिविधास्यते ॥ ५ ॥ कुंभकर्णःसहास्माभिरिंद्रजिच्चमहाबलः ॥ प्रतिषेधयितुं शक्तौसवज्रमपिवज्रिणम् ॥ ६ ॥ उपप्रदानंसांत्वंवाभेदंवाकुशलैःकृतम् ॥ समतिक्रम्यदंडेनसिद्धिमर्थेषुरोचये ॥ ७ ॥ इहप्राप्तान्वयंसर्वाञ्छत्रूंस्तव महाबल ॥ वशंशस्त्रप्रतापेनकरिष्यामोनसंशयः ॥ ८ ॥ एवमुक्तस्तदाराजामहापार्श्वेनरावणः ॥ तस्यसंपूजयन्वाक्यमिदंवचनमब्रवीत् ॥ ९ ॥ महापार्श्वप्रवदतोरहस्यंकिंचिदात्मनः ॥ चिरवृत्तंतदाख्यास्येयद्वाप्तंपुरामया ॥ १० ॥ पितामहस्यभवनंगच्छंतींपुंजिकस्थलीम् ॥ चंचूर्यमाणामद्राक्षमाकाशेग्निशिखामिव ॥ ११ ॥ साप्रसह्यमयाभुक्ताकृताविवसनाततः ॥ स्वयंभूभवनंप्राप्तालोलितानलिनीयथा ॥ १२ ॥ तच्चतस्यतथामन्ये ज्ञानमासीन्महात्मनः ॥ अथसंकुपितोवेधामामिदंवाक्यमब्रवीत् ॥ १३ ॥ अद्यप्रभृतियामन्यांबलान्नारींगमिष्यसि ॥ तदातेशतधामूर्धाफलिष्यतिनसंशयः ॥ १४ ॥ इत्यहंतस्यशापस्यभीतःप्रसभमेवताम् ॥ नारोहयेबलात्सीतांवैदेहींशयनेशुभे ॥ १५ ॥ सागरस्येवमेवेगोमारुतस्येवमेगतिः ॥ नैतद्दाशरथिर्वेदह्यासादयतितेनमाम् ॥ १६ ॥ कोहिसिंहमिवासीनंसुप्तंगिरिगुहाशये ॥ क्रुद्धंमृत्युमिवासीनंसंबोधयितुमिच्छति ॥ १७ ॥ नमत्तोनिर्गतान्बाणान्द्विजिह्वान्पन्नगानिव ॥ रामःपश्यतिसंग्रामेतेनमामभिगच्छति ॥ १८ ॥ क्षिप्रंवज्रसमैर्बाणैःशतधाकार्मुकच्युतैः ॥ राममादीपयिष्यामिउल्काभिरिवकुंजरम् ॥ १९ ॥ तच्चास्यबलमादास्येबलेनमहतावृतः ॥ उदितःसविताकालेनक्षत्राणांप्रभामिव ॥ २० ॥

तच्च मम चरितं महात्मनस्तस्य मन्ये निश्चितं ज्ञातमासीत् । मन्ये इति तिङंतप्रतिरूपकमव्ययम् । मन्ये शंके ध्रुवं प्रायो निश्चयार्था अमी मता इति कतकः ॥ १३ ॥ फलिष्यति विशीर्णो भविष्यति । कचि देवमेव कुबेरपुत्रनलकूबरशापोपि रंभानिबंधनः श्रूयते । तत्रोपपत्तिश्चिंत्या । अस्य प्रथमत्वे तस्यां बलात्कारासंभवात् । तस्य प्रथमत्वेऽस्यां बलात्कारासंभवादिति केचित् । नलकूबरशापस्य तपोबलेनाकिंचित्करत्वादयमेव शापो ब्रह्मास्त्रवदप्रतिक्रियः पाश्चात्य इत्यन्ये ॥ १४ ॥ १५ ॥ अथ महापार्श्वोक्तस्वप्राबल्यमेव श्लाघते सागरस्येत्यादि । दाशरथिर्हि यस्मादेतन्मे बलं न वेद तेन मामासादयति ॥ १६ ॥ को हि ज्ञातमद्बल इति शेषः । गिरिगुहारूपे आशये निवासे आसीनमेव सुप्तसिंहमिव ॥ १७ ॥ न पश्यति न पश्यति स्म ॥ १८ ॥ आदीपयिष्यामि धक्ष्यामि ॥ १९ ॥ २० ॥

शिखरे द्वारे इति विश्वः ॥ ५ ॥ ६ ॥ तेजोभिर्विस्तृता रश्मयो येषां संति तादृशमणिमानित्यर्थः ॥ ७ ॥ ८ ॥ सुमनोक्षतैः पुष्पाक्षतैः पूजितान् दधिपात्रैः सर्पिर्भिश्च युक्तहस्तानिति शेषः । मंत्रान्वेदं ब्राह्मणं विदंति तान् ॥ ९ ॥ १० ॥ राजदृष्टिसंपन्नं पुरःप्रदेशवर्तिराजदृष्ट्या बोधितपरिग्रहं च आसनं जगाम प्राप तत्रोपविवेशेति यावत् । समुदाचारं विजयी भवेत्यादिविजयप्रयोगादिविनयप्रकाशकमाचारं प्रयुज्य कृत्वा ॥ ११ ॥ विजने मंत्रिव्यतिरिक्तजनरहिते ॥ हेतुनिश्चितं युक्तिभिर्निश्चितार्थम् ॥ १२ ॥ सांत्वेन भ्रातरं प्रसाद्य उपस्थितक्रमः अनुष्ठितवंदनादिक्रियाक्रमः दृष्टं लोकपरावरं भावप्राधान्याच्छ्रैष्ठ्या श्रैष्ठ्यं येन सः देशकालार्थसंवादीति देशकालोचिततत्तदर्थानुसारीत्यर्थकं वचनविशेषणम् ॥ १३ ॥ तदेव वचनमाह यदेति ॥ १४ ॥ तानि निमित्तान्याह सस्फुलिंग इति । अग्निर्मथनादिनोत्पत्तिकाले

गंधर्वाणामिवावासमालयंमरुतामिव ॥ रत्नसंचयसंबाधंभवनंभोगिनामिव ॥ ६ ॥ तंमहाभ्रमिवादित्यस्तेजोविस्तृतरश्मिवान् ॥ अग्रजस्यालयं वीरःप्रविवेशमहाद्युतिः ॥ ७ ॥ पुण्यान्पुण्याहघोषांश्चवेदविद्भिरुदाहृतान् ॥ शुश्रावसुमहातेजाभ्रातुर्विजयसंश्रितान् ॥ ८ ॥ पूजितान्दधिपात्रैश्चसर्पिर्भिःसुमनोक्षतैः ॥ मंत्रवेदविदोविप्रान्ददर्शसमहाबलः ॥ ९ ॥ सपूज्यमानोरक्षोभिर्दीप्यमानंस्वतेजसा ॥ आसनस्थंमहाबाहुर्ववंदेधनदानुजम् ॥ १० ॥ सराजदृष्टिसंपन्नमासनंहेमभूषितम् ॥ जगामससमुदाचारंप्रयुज्याचारकोविदः ॥ ११ ॥ सरावणंमहात्मानंविजनेमंत्रिसन्निधौ ॥ उवाचहितमत्यर्थंवचनं हेतुनिश्चितम् ॥ १२ ॥ प्रसाद्यभ्रातरंज्येष्ठंसांत्वेनोपस्थितक्रमः ॥ देशकालार्थसंवादिदृष्टलोकपरावरः ॥ १३ ॥ यदाप्रभृतिवैदेहीसंप्राप्तेहपरंतप ॥ तदाप्रभृतिदृश्यन्तेनिमित्तान्यशुभानिनः ॥ १४ ॥ सस्फुलिंगःसधूमार्चिःसधूमकलुषोदयः ॥ मंत्रसंधुक्षितोप्यग्निर्नसम्यगभिवर्धते ॥ १५ ॥ अग्निष्टेष्व ग्निशालासुतथाब्रह्मस्थलीषुच ॥ सरीसृपाणिदृश्यंतेहव्येषुचपिपीलिकाः ॥ १६ ॥ गवांपयांसिस्कन्नानिविमदावरकुंजराः ॥ दीनमश्वाःप्रहेषंते नवग्रासाभिनंदिनः ॥ १७ ॥ खरोष्ट्राश्वतराराजन्भिन्नरोमाःस्रवंतिच ॥ नस्वभावेवतिष्ठंतेविधानैरपिचिंतिताः ॥ १८ ॥ वायसाःसंघशःक्रूराव्याहरं तिसमंततः ॥ समवेताश्चदृश्यंतेविमानाग्रेषुसंघशः ॥ १९ ॥ गृध्राश्चपरिलीयंतेपुरीमुपरिपीडिताः ॥ उपपन्नाश्चसंध्येद्वेव्याहरंत्यशिवंशिवाः ॥ २० ॥ क्रव्यादानांमृगाणांचपुरीद्वारेषुसंघशः ॥ श्रूयंतेविपुलाघोषाःसविस्फूर्जितनिःस्वनाः ॥ २१ ॥ तदेवंप्रस्तुतेकार्येप्रायश्चित्तमिदंक्षमम् ॥ रोचयेवीरवै देहीराघवायप्रदीयताम् ॥ २२ ॥ इदंचयदिवामोहाल्लोभाद्वाव्याहृतंमया ॥ तत्रापिचमहाराजनदोषंकर्तुमर्हसि ॥ २३ ॥

सधूमकलुषोदयः धूमकलुषो य उदयस्तत्सहितः उत्पत्त्यनंतरं प्रणयनकाले सस्फुलिंगः सधूमार्चिः ॥ १५ ॥ अग्निष्टेषु महानसादिषु अग्निशालासु अग्निहोत्रगृहेषु ब्रह्मस्थलीषु वेदाध्ययनस्थानेषु सरीसृपाणि सर्पाः । लिंगव्यत्यय आर्षः ॥ १६ ॥ स्कन्नानि शुष्काणि । स्कंदिर्गतिशोषणयोः नवग्रासाभिनंदिनः अनेन कृतभोजना अपि बुभुक्षिता इति सूच्यते ॥ १७ ॥ भिन्नरोमाः ऊर्ध्वरोमाणः अदंतत्वमार्षम् । स्रवंति च अश्रूणीति शेषः विधानैश्चिकित्साकर्मभिश्चिंतिताः पर्यालोच्यमाना अपि स्वभावे प्रकृतौ नावतिष्ठंते ॥ १८ ॥ १९ ॥ पुरीमुपरि पुर्या उपरि द्वे संध्ये द्वयोः संध्ययोः उपपन्नाः समीपं प्राप्ताः ॥ २० ॥ क्रव्यादा मृगा वृकादयः । चस्त्वर्थे । सविस्फूर्जितनिःस्वनाः विस्फूर्जितसदृशनिःस्वनाः ॥ २१ ॥ प्रस्तुते कार्ये अवश्यकर्तव्यदुर्निमित्तशांतिविधौ प्रायश्चित्तं दुर्निमित्तसूचितपापशोधनम् ॥ २२ ॥ रावणस्यातिक्रूरत्वाद्वस्तुतो

स्तद्दत्त्वमपि भवेदित्यर्थः । तदेव दर्शयति आक्रम्येति ॥ ४ ॥ अथ स्वाभिलषिते सिद्धे प्रथमतो भयमेव न महातेजस्त्वात् । अथापि तन्निमित्तं भयं प्राप्नुयात्तदापि तत्सुप्रतिविधेयमेव त्वयेत्याह लब्धकामस्येति । प्राप्तं प्राप्तकालं सावधानदशाप्राप्तकालम् अप्राप्तकालं वा कामभोगाद्यसावधानदशां प्राप्तं वा ५ ॥ कथमेवं बलं नस्तत्राह कुंभकर्ण इति ॥ ६ ॥ एवमस्माकमेव प्राबल्याच्चतुर्थोपाय एवास्माभिरादरणीय इत्याह उपप्रदानामिति । कुशलैर्नीतिकुशलैः कृतं विषयविशेष इति शेषः ॥ ७ ॥ ८ ॥ ९ ॥ रहस्यं प्रमुषितद्रव्यवद्गुप्तं चिरवृत्तं यन्मया पुरावाप्तं बलादुपभोगस्याशक्यकरणतानिमित्तम् आत्मनः किंचिद्वस्तु तदाख्यास्ये ॥ १० ॥ तदेवाह पितामहस्येति । चंचूर्यमाणां मद्दर्शनभीतिवशान्निलीयगतिमतीम् ॥ ११ ॥ ततो दर्शनोत्तरं प्रसह्य विवसना कृता सा मया भुक्ता लोलिता गजेनेति शेषः ॥ १२ ॥

लब्धकामस्यतेपश्चादागमिष्यतिकिंभयम् ॥ प्राप्तमप्राप्तकालंवासर्वंप्रतिविधास्यते ॥ ५ ॥ कुंभकर्णःसहास्माभिरिंद्रजिच्चमहाबलः ॥ प्रतिषेधयितुं शक्तौसवज्रमपिवज्रिणम् ॥ ६ ॥ उपप्रदानंसांत्वंवाभेदंवाकुशलैःकृतम् ॥ समतिक्रम्यदंडेनसिद्धिमर्थेषुरोचये ॥ ७ ॥ इहप्राप्तान्वयंसर्वाञ्छत्रूंस्तव महाबल ॥ वशंशस्त्रप्रतापेनकरिष्यामोनसंशयः ॥ ८ ॥ एवमुक्तस्तदाराजामहापार्श्वेनरावणः ॥ तस्यसंपूजयन्वाक्यमिदंवचनमब्रवीत् ॥ ९ ॥ महापार्श्वनिबोधत्वंरहस्यंकिंचिदात्मनः ॥ चिरवृत्तंतदाख्यास्येयद्वाप्तंपुरामया ॥ १० ॥ पितामहस्यभवनंगच्छंतींपुंजिकस्थलीम् ॥ चंचूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११ ॥ साप्रसह्यमयाभुक्ताकृताविवसनाततः ॥ स्वयंभूभवनंप्राप्तालोलितानलिनीयथा ॥ १२ ॥ तच्चतस्यतथामन्ये ज्ञानमासीन्महात्मनः ॥ अथसंकुपितोवेधामामिदंवाक्यमब्रवीत् ॥ १३ ॥ अद्यप्रभृतियामन्यांबलान्नारींगमिष्यसि ॥ तदातेशतधामूर्धाफलिष्य तिनसंशयः ॥ १४ ॥ इत्यहंतस्यशापस्यभीतःप्रसभमेवताम् ॥ नारोहयेबलात्सीतांवैदेहींशयनेशुभे ॥ १५ ॥ सागरस्येवमेवेगोमारुतस्येवमे गतिः ॥ नैतद्दाशरथिर्वेदह्यासादयतितेनमाम् ॥ १६ ॥ कोहिसिंहमिवासीनंसुप्तंगिरिगुहाशये ॥ क्रुद्धंमृत्युमिवासीनंसंबोधयितुमिच्छति ॥ १७ ॥ नमत्तोनिर्गतान्बाणान्द्विजिह्वान्पन्नगानिव ॥ रामःपश्यतिसंग्रामेतेनमामभिगच्छति ॥ १८ ॥ क्षिप्रंवज्रसमैर्बाणैःशतधाकार्मुकच्युतैः ॥ राममादीप यिष्यामिउल्काभिरिवकुंजरम् ॥ १९ ॥ तच्चास्यबलमादास्येबलेनमहतावृतः ॥ उदितःसविताकालेनक्षत्राणांप्रभामिव ॥ २० ॥

तच्च मम चरितं महात्मनस्तस्य मन्ये निश्चितं ज्ञातमासीत् । मन्ये इति तिङंतप्रतिरूपकमव्ययम् । मन्ये शंके ध्रुवं प्रायो निश्चयार्था अमी मता इति कतकः ॥ १३ ॥ फलिष्यति विशीर्णो भविष्यति । कचिदेवमेव कुबेरपुत्रनलकूबरशापोपि रंभानिबंधनः श्रूयते । तत्रोपपत्तिश्चिंत्या । अस्य प्रथमत्वे तस्यां बलात्कारासंभवात् । तस्य प्रथमत्वेऽस्यां बलात्कारासंभवादिति केचित् । नलकूबरशापस्य तपोबलेनाकिंचित्करत्वादयमेव शापो ब्रह्मास्त्रवदप्रतिक्रियः पाश्चात्य इत्यन्ये ॥ १४ ॥ १५ ॥ अथ महापार्श्वोक्तस्वप्राबल्यमेव श्लाघते सागरस्येत्यादि । दाशरथिर्हि यस्मादेतन्मे बलं न वेद तेन मामासादयति ॥ १६ ॥ को हि ज्ञातमद्बल इति शेषः । गिरिगुहारूपे आशये निवासे आसीनमेव सुप्तसिंहमिव ॥ १७ ॥ न पश्यति न पश्यति स्म ॥ १८ ॥ आदीपयिष्यामि धक्ष्यामि ॥ १९ ॥ २० ॥

शिखरे द्वारे इति विश्वः ॥ ५ ॥ ६ ॥ तेजोभिर्विस्तृता रश्मयो येषां संति तादृशमणिमानित्यर्थः ॥ ७ ॥ ८ ॥ सुमनोक्षतैः पुष्पाक्षतैः पूजितान् दधिपात्रैः सर्पिर्भिश्च युक्तहस्तानिति शेषः । मंत्रान्वेदं ब्राह्मणं विदंति तान् ॥ ९ ॥ १० ॥ राजदृष्टिसंपन्नं पुरःप्रदेशवर्तिराजदृष्ट्या बोधितपरिग्रहं च आसनं जगाम प्राप तत्रोपविवेशेति यावत् । समुदाचारं विजयी भवेत्यादिविजयप्रयोगादिविनयप्रकाशकमाचारं प्रयुज्य कृत्वा ॥ ११ ॥ विजने मंत्रिव्यतिरिक्तजनरहिते ॥ हेतुनिश्चितं युक्तिभिर्निश्चितार्थम् ॥ १२ ॥ सांत्वेन भ्रातरं प्रसाद्य उपस्थितक्रमः अनुष्ठितवंदनादिक्रियाक्रमः दृष्टं लोकपरावरं भावप्राधान्याच्छ्रैष्ठ्या श्रैष्ठ्यं येन सः देशकालार्थसंवादीति देशकालोचिततत्तदर्थानुसारीत्यर्थकं वचनविशेषणम् ॥ १३ ॥ तदेव वचनमाह यदेति ॥ १४ ॥ तानि निमित्तान्याह सस्फुलिंग इति । अग्निमंथनादिनोत्पत्तिकाले

गंधर्वाणामिवावासमालयंमरुतामिव ॥ रत्नसंचयसंबाधंभवनंभोगिनामिव ॥ ६ ॥ तंमहाभ्रमिवादित्यस्तेजोविस्तृतरश्मिवान् ॥ अग्रजस्यालयं वीरःप्रविवेशमहाद्युतिः ॥ ७ ॥ पुण्यान्पुण्याहघोषांश्चवेदविद्भिरुदाहृतान् ॥ शुश्रावसुमहातेजाभ्रातुर्विजयसंश्रितान् ॥ ८ ॥ पूजितान्दधिपात्रैश्चस र्पिर्भिःसुमनोक्षतैः ॥ मंत्रवेदविदोविप्रान्ददर्शसमहाबलः ॥ ९ ॥ सपूज्यमानोरक्षोभिर्दीप्यमानंस्वतेजसा ॥ आसनस्थंमहाबाहुर्ववंदेधनदानुजम् ॥ १० ॥ सराजदृष्टिसंपन्नमासनंहेमभूषितम् ॥ जगामससमुदाचारंप्रयुज्याचारकोविदः ॥ ११ ॥ सरावणंमहात्मानंविजनेमंत्रिसन्निधौ ॥ उवाचहितमत्यर्थंवचनं हेतुनिश्चितम् ॥ १२ ॥ प्रसाद्यभ्रातरंज्येष्ठंसांत्वेनोपस्थितक्रमः ॥ देशकालार्थसंवादिदृष्टलोकपरावरः ॥ १३ ॥ यदाप्रभृतिवैदेहीसंप्राप्तेहपरंतप ॥ तदाप्रभृतिदृश्यन्तेनिमित्तान्यशुभानिनः ॥ १४ ॥ सस्फुलिंगःसधूमार्चिःसधूमकलुषोदयः ॥ मंत्रसंधुक्षितोऽप्यग्निर्नसम्यगभिवर्धते ॥ १५ ॥ अग्निष्टेष्व ग्निशालासुतथाब्रह्मस्थलीषुच ॥ सरीसृपाणिदृश्यंतेहव्येषुचपिपीलिकाः ॥ १६ ॥ गवांपयांसिस्कन्नानिविमदावरकुंजराः ॥ दीनमश्वाःप्रहेषंते नवग्रासाभिनंदिनः ॥ १७ ॥ खरोष्ट्राश्वतराराजन्भिन्नरोमाःस्रवंतिच ॥ नस्वभावेवतिष्ठंतेविधानैरपिचिंतिताः ॥ १८ ॥ वायसाःसंघशःक्रूरान्व्याहरं तिसमंततः ॥ समवेताश्चदृश्यंतेविमानाग्रेषुसंघशः ॥ १९ ॥ गृध्राश्चपरिलीयंतेपुरीमुपरिपीडिताः ॥ उपपन्नाश्चसंध्येद्वेव्याहरंत्यशिवंशिवाः ॥ २० ॥ क्रव्यादानांमृगाणांचपुरीद्वारेषुसंघशः ॥ श्रूयंतेविपुलाघोषाःसविस्फूर्जितनिःस्वनाः ॥ २१ ॥ तदेवंप्रस्तुतेकार्येप्रायश्चित्तमिदंक्षमम् ॥ रोचयेवीरवै देहीराघवायप्रदीयताम् ॥ २२ ॥ इदंचयदिवामोहाल्लोभाद्वाव्याहृतंमया ॥ तत्रापिचमहाराजनदोषंकर्तुमर्हसि ॥ २३ ॥

सधूमकलुषोदयः धूमकलुषो य उदयस्तत्सहितः उत्पत्त्यनंतरं प्रणयनकाले सस्फुलिंगः सधूमार्चिः ॥ १५ ॥ अग्निष्टेषु महानसादिषु अग्निशालासु अग्निहोत्रगृहेषु ब्रह्मस्थलीषु वेदाध्ययनस्थानेषु सरीसृपाणि सर्पाः । लिंगव्यत्यय आर्षः ॥ १६ ॥ स्कन्नानि शुष्काणि । स्कंदिर्गतिशोषणयोः नवग्रासाभिनंदिनः अनेन कृतभोजना अपि बुभुक्षिता इति सूच्यते ॥ १७ ॥ भिन्नरोमाः ऊर्ध्वरोमाणः अदंतत्वमार्षम् । स्रवंति च अश्रूणीति शेषः विधानैश्चिकित्साकर्मभिश्चिंतिताः पर्यालोच्यमाना अपि स्वभावे प्रकृतौ नावतिष्ठंते ॥ १८ ॥ १९ ॥ पुरीमुपरि पुर्या उपरि द्वे संध्ये द्वयोः संध्ययोः उपपन्नाः समीपं प्राप्ताः ॥ २० ॥ क्रव्यादा मृगा वृकादयः । चस्त्वर्थे । सविस्फूर्जितनिःस्वनाः विस्फूर्जितसदृशनिःस्वनाः ॥ २१ ॥ प्रस्तुते कार्ये अवश्यकर्तव्यदुर्निमित्तशांतिविधौ प्रायश्चित्तं दुर्निमित्तसूचितपापशोधनम् ॥ २२ ॥ रावणस्यातिक्रूरत्वाद्वस्तुतो

हितस्यापि तेनानिष्टवद्ग्रहणसंभवात्कोपं क्षमापयति इदं चेति । मोहः कार्यतत्त्वापरिज्ञानम् । लोभाज्जीवनलोभात् दोषं मयि दुष्टत्वबुद्धिम् ॥ २३ ॥ अयं दोषः सीतापहारदोषस्तन्मूलदुर्निमित्तदोषश्चेत्यर्थः । सर्वस्य जनस्येत्यादि तृतीयार्थे षष्ठी । सर्वेण जनेन रक्षआदिरूपेणोपलक्ष्यते दृश्यते । यद्वा सर्वस्य राक्षसादिरूपस्यैतद्दुर्निमित्तफलमुपलक्ष्यत इत्यर्थः ॥ २४ ॥ ननु त्वदतिरिक्तः कोपीमं मंत्रं न वदति । त्वमेव कथं ब्रवीषीत्यत आह प्रापणे इति । अस्य मंत्रस्य प्रापणे यद्यपि त्वद्भयात्सर्वे मंत्रिणो निवृत्तास्तथापि मया भ्रात्रा यद्दृष्टं श्रुतं वा तत्सर्वं हितमवश्यं वाच्यमेव समानसुखभागित्वात् ॥ २५ ॥ स्वमंत्रिणां स्वभ्रातृमंत्रिणाम् ॥ २६ ॥ व्यतीतकाले आयतौ उत्तरकाले संप्रति वर्तमानकाले च च क्षमं हितम् उपस्थितज्वरः प्राप्तक्रोधः प्रसंगवान्सीताविषयकामप्रसंगवान् ॥ २७ ॥ कुतश्चिद्दुर्निमित्तात्तत्सूच्यशत्रोश्चेत्यर्थः ॥ २८ ॥ २९ ॥ धैर्यमानः ॥

अयंहिदोषःसर्वस्यजनस्यास्योपलक्ष्यते ॥ रक्षसांराक्षसीनांचपुरस्यांतःपुरस्यच ॥ २४ ॥ प्रापणेचास्यमंत्रस्यनिवृत्ताःसर्वमंत्रिणः ॥ अवश्यंच मयावाच्यंयद्दृष्टमथवाश्रुतम् ॥ संविधाययथान्यायंतद्भवान्कर्तुमर्हति ॥ २५ ॥ इतिस्वमंत्रिणांमध्येभ्राताभ्रातरमूचिवान् ॥ रावणंरक्षसांश्रेष्ठंपथ्यमेतद्विभीषणः ॥ २६ ॥ हितंमहार्थंमृदुहेतुसंहितंव्यतीतकालायतिसंप्रतिक्षमम् ॥ निशम्यतद्वाक्यमुपस्थितज्वरःप्रसंगवानुत्तरमेतदब्रवीत् ॥ २७ ॥ भयंनपश्यामिकुतश्चिदप्यहंनराघवःप्राप्स्यतिजातुमैथिलीम् ॥ सुरैःसहेंद्रैरपिसंगरेकथंममाग्रतःस्थास्यतिलक्ष्मणाग्रजः ॥ २८ ॥ इत्येवमुक्त्वासुरसैन्यनाशनोमहाबलःसंयतिचंडविक्रमः ॥ दशाननोभ्रातरमाप्तवादिनंविसर्जयामासतदाविभीषणम् ॥ २९ ॥ इत्यार्षे श्रीमद्वा० वाल्मी० आदि० युद्धकांडेदशमःसर्गः ॥ १० ॥ सबभूवकृशोराजामैथिलीकाममोहितः ॥ असन्मानाच्चसुहृदांपापःपापेनकर्मणा ॥ १ ॥ अतीवकामसंपन्नोवैदेहीमनुचिंतयन् ॥ अतीतसमयेकालेतस्मिन्वैयुधिरावणः ॥ अमात्यैश्चसुहृद्भिश्चप्राप्तकालममन्यत ॥ २ ॥ सहेमजालविततंमणिविद्रुमभूषितम् ॥ उपगम्यविनीताश्वमारुरोहमहारथम् ॥ ३ ॥ तमास्थायरथश्रेष्ठंमहामेघसमस्वनम् ॥ प्रययौरक्षसांश्रेष्ठोदशग्रीवःसभांप्रति ॥ ४ ॥ असिचर्मधरायोधाःसर्वायुधधरास्ततः ॥ राक्षसाराक्षसेंद्रस्यपुरस्तात्संप्रतस्थिरे ॥ ५ ॥ नानाविकृतवेषाश्चनानाभूषणभूषिताः ॥ पार्श्वतःपृष्ठतश्चैनंपरिवार्ययुस्तदा ॥ ६ ॥ रथैश्चातिरथाःशीघ्रंमत्तैश्चवरवारणैः ॥ अनूत्पेतुर्दशग्रीवमाक्रीडद्भिश्चवाजिभिः ॥ ७ ॥

॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे दशमः सर्गः ॥ १० ॥ कतकस्तु नवमः ॥ ९ ॥ कृशत्वे हेतुर्मैथिलीकाममोहित इति । मैथिलीविषयकामेन मोहितः हेत्वंतरं सुहृदां विभीषणादीनामसन्मानाज्जुगुप्सनात् । पापत्वे हेतुः पापेन कर्मणेति तच्च परदारापहाररूपम् ॥ १ ॥ तस्मिन्काले रावणो युधि युद्धेऽतीतसमयेपि विभीषणोक्तरीत्याऽनवसरदुस्थेप्यमात्यादिभिर्विभीषणातिरिक्तैः सह युद्धमेव प्राप्तकालं काममोहितत्वादमन्यत ॥ २ ॥ अस्यैव निश्चयाय सभाप्रस्थानं सहेमेत्यादि ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ आक्रीडद्भिः

गतिभेदेन क्रीडां कुर्वद्भिः ॥ ७ ॥ ततः प्रस्थानोत्तरम् ॥ ८ ॥ ९ ॥ आतपत्रं छत्रम् ॥ १० ॥ अलंकाराय हेमनिर्मिता मंजर्यौ गर्भे ययोस्ते शुद्धस्फटिकविग्रहे तेनातिशुक्ले ॥ ११ ॥ सव्यदक्षिणे समाहारद्वंद्वः सव्यदक्षिणपार्श्वयोरित्यर्थः ॥ १२ ॥ १३ ॥ विरचिताम् विश्वकर्मणेति शेषः सुवर्णरजतास्तीर्णा तैः कृतकुट्टिमामित्यर्थः विशुद्धाः स्फटिका अंतरे मध्ये शोभार्थं यस्याः सा ॥ १४ ॥ विराजमानो वपुषेति प्रवेष्टृरावणविशेषणम् रुक्मालंकृतपट्टवस्त्रमुत्तरच्छदो यस्यास्ताम् षड्भिः पिशाचशतैः षट्शतपिशाचैरभिगुप्तां रक्षिताम् सदाप्रभां रत्नप्रभयेति शेषः ॥ १५ ॥ तस्याः सभायाः मध्ये स रावणः वैदूर्यरत्ननिर्मितं

गदापरिघहस्ताश्चशक्तितोमरपाणयः ॥ ततस्तूर्यसहस्राणांसंजज्ञेनिःस्वनोमहान् ॥ ८ ॥ तुमुलःशंखशब्दश्चसभांगच्छंतिरावणे ॥ सनेमिघोषेणमहान्सहसाभिनिनादयन् ॥ ९ ॥ राजमार्गंश्रियाजुष्टंप्रतिपेदेमहारथः ॥ विमलंचातपत्रंचप्रगृहीतमशोभत ॥ १० ॥ पांडुरंराक्षसेंद्रस्यपूर्णस्ताराधिपोयथा ॥ हेममंजरिगर्भेचशुद्धस्फटिकविग्रहे ॥ ११ ॥ चामरव्यजनेतस्यरेजतुःसव्यदक्षिणे ॥ तेकृतांजलयःसर्वेरथस्थंपृथिवीस्थिताः ॥ १२ ॥ राक्षसाराक्षसश्रेष्ठंशिरोभिस्तंववंदिरे ॥ राक्षसैःस्तूयमानःसञ्जयाशीर्भिररिंदमः ॥ १३ ॥ आससादमहातेजाः सभांविरचितां तदा ॥ सुवर्णरजतास्तीर्णांविशुद्धस्फटिकांतराम् ॥ १४ ॥ विराजमानोवपुषारुक्मपट्टोत्तरच्छदाम् ॥ तांपिशाचशतैःषड्भिरभिगुप्तांसदाप्रभाम् ॥ १५ ॥ प्रविवेशमहातेजाःसुकृतांविश्वकर्मणा ॥ तस्याःसवैदूर्यमयंप्रियकाजिनसंवृतम् ॥१६॥ महत्सोपाश्रयंभेजेरावणःपरमासनम् ॥ ततःशशासेश्वरवद्दूताँल्लघुपराक्रमान् ॥ १७ ॥ समानयतमेक्षिप्रमिहैतान्राक्षसानिति ॥ कृत्यमस्तिमहज्जानेकर्तव्यमितिशत्रुभिः ॥ १८ ॥ राक्षसास्तद्वचःश्रुत्वालंकायांपरिचक्रमुः ॥ अनुगेहमवस्थायविहारशयनेषुच ॥ उद्यानेषुचरक्षांसिचोदयंतोह्यभीतवत् ॥१९॥ तेरथांतचराएकेदृप्तानेकेदृढान्हयान् ॥ नागानेकेऽधिरुरुहुर्जग्मुश्चैकेपदातयः॥२०॥सापुरीपरमाकीर्णारथकुंजरवाजिभिः ॥ संपतद्भिर्विरुरुचेगरुत्मद्भिरिवांबरम् ॥ २१ ॥ तेवाहनान्यवस्थाययानानिविविधानिच ॥ सभांपद्भिःप्रविविशुःसिंहागिरिगुहामिव ॥२२॥ राज्ञःपादौगृहीत्वातुराज्ञातेप्रतिपूजिताः ॥ पीठेष्वन्येबृसीष्वन्येभूमौकेचिदुपाविशन् ॥२३॥ तेसमेत्यसभायांवैराक्षसाराजशासनात् ॥ यथार्हमुपतस्थुस्तेरावणंराक्षसाधिपम् ॥ २४ ॥ मंत्रिणश्चयथामुख्यानिश्चितार्थेषुपंडिताः ॥ अमात्याश्चगुणोपेताःसर्वज्ञाबुद्धिदर्शनाः ॥ २५ ॥

प्रियकाख्यमृगसंबंधिना परममृदुनाजिनेन संवृतम् ॥ १६ ॥ सोपाश्रयं सोपधानम् ईश्वरवत् ईश्वरार्हम् ॥ १७ ॥ शत्रुभिर्महत्कृतं कर्तव्यमस्ति इति जाने अतो राक्षसान्समानयतेति शशास ॥ १८ ॥ राक्षसा दूतरूपाः अनुगेहमवस्थाय प्रविश्य विहारादिषु व्यासक्तान्यपि रक्षांसि रावणाज्ञया अभीतवत्तदर्थं चोदयंतः संतो लंकायां परिचक्रमुः ॥ १९ ॥ ते आहूता राक्षसाः रथांतचराः रथश्रेष्ठसंचारिणः जग्मुरिति शेषः । हयानित्यत्राधिरुरुहुरित्यपकर्षः ॥ २० ॥ परमा आकीर्णा ॥ २१ ॥ २२ ॥ बृसी वृत्तासनम् ॥ २३ ॥ २४ ॥ यथामुख्याः यथायोगं तत्तन्मंत्रविषये मुख्याः निश्चितार्थेषु । भावे निष्ठा आहिताग्न्यादिः ।

अर्थनिश्चयेष्वित्यर्थः । अमात्या उपमंत्रिणः सर्वज्ञाः सर्वशास्त्रज्ञाः । बुद्धिर्दर्शनं चक्षुर्येषांते ॥ २५ ॥ सर्वार्थस्य निश्चयायेति शेषः सुखाय क्षेमाय क्षेमं विचारयितुम् ॥ २६ ॥ सुयुग्यं शोभना युग्या अश्वा यस्मिंस्तम् संसदं सभाम् ॥ २७ ॥ नामग्रहणपूर्वकं नमस्कारः कार्य इति सदाचारः । व्यग्रचित्ततया राज्ञः स्वागमनज्ञापनाय वा तेभ्यः सभामागतेभ्यः सभ्येभ्यः पृथग्ददौ तत्तदासनस्थानं बोधितवान् ॥२८॥ तेषां राक्षसानां यानि परार्ध्यागुरुचंदनानि स्रजश्च तेषां गन्धा वायुसंबंधात्प्रवबुः ॥ २९ ॥ संसिद्धार्थाःसम्पूर्णमनोरथाः ॥३०॥ समितौ समागमे । समितिः सागरेसाम्ये सभायामपि संगमे ॥ ३१ ॥ पैडमानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकादशः सर्गः ॥ ११ ॥ कतकरीत्या दशमः ॥ १० ॥ स इति ॥ १ ॥ कृतविद्याः शिक्षितास्त्रशस्त्रविद्याः चतुर्विधाः

समीयुस्तत्रशतशःशूराश्चबहवस्तथा ॥ सभायांहेमवर्णायांसर्वार्थस्यसुखायवै ॥ २६ ॥ ततोमहात्माविपुलंसुयुग्यंरथंवरंहेमविचित्रितांगम् ॥ शुभं समास्थाययथौयशस्वीविभीषणःसंसदमग्रजस्य ॥ २७ ॥ सपूर्वजायावरजःशशंसनामाथपश्चाच्चरणौववंदे ॥ शुकःप्रहस्तश्चतथैवतेभ्योददौयथार्हं पृथगासनानि ॥ २८ ॥ सुवर्णनानामणिभूषणानांसुवाससांसंसदिराक्षसानाम् ॥ तेषांपरार्ध्यागुरुचंदनानांस्रजांचगंधाःप्रवबुःसमंतात् ॥ २९ ॥ नचुक्रुशुर्नानृतमाहकश्चित्सभासदोनापिजजल्पुरुच्चैः ॥ संसिद्धार्थाःसर्वएवोग्रवीर्याभर्तुःसर्वेददृशुश्चाननंते ॥ ३० ॥ सरावणःशस्त्रभृतांमनस्विनां महाबलानांसमितौमनस्वी ॥ तस्यांसभायांप्रभयाचकाशेमध्येवसूनामिववज्रहस्तः ॥३१॥ इत्यार्षे श्रीमद्रा० वा० आ० युद्धकाण्डे एकादशः सर्गः ॥ ११ ॥ ॥ सतांपरिषदंकृत्स्नांसमीक्ष्यसमितिंजयः ॥ प्रबोधयामासतदाप्रहस्तंवाहिनीपतिम् ॥ १ ॥ सेनापतेयथातेस्युःकृतविद्याश्चतुर्विधाः ॥ योधानगररक्षायांतथाव्यादेष्टुमर्हसि ॥ २ ॥ सप्रहस्तःप्रणीतात्माचिकीर्षन्राजशासनम् ॥ विनिक्षिप्यबलंसर्वंबहिरंतश्चमंदिरे ॥ ३ ॥ ततोविनि क्षिप्यबलंसर्वंनगरगुप्तये ॥ प्रहस्तःप्रमुखेराज्ञोनिषसादजगादच ॥ ४ ॥ विहितंबहिरंतश्चबलंबलवतस्तव ॥ कुरुष्वाविमनाःक्षिप्रंयदभिप्रेतमस्तिते ॥ ५ ॥ प्रहस्तस्यवचःश्रुत्वाराजाराज्यहितैषिणः ॥ सुखेप्सुःसुहृदांमध्येव्याजहारसरावणः ॥ ६ ॥ प्रियाप्रियेसुखेदुःखेलाभालाभेहिताहिते ॥ धर्मकामार्थकृच्छ्रेषुयूयमर्हथवेदितुम् ॥ ७ ॥ सर्वकृत्यानियुष्माभिःसमारब्धानिसर्वदा ॥ मंत्रकर्मनियुक्तानिनजातुविफलानिमे ॥ ८ ॥ ससोमग्रहनक्षत्रैर्मरुद्भिरिववासवः ॥ भवद्भिरहमत्यर्थंवृतःश्रियमवाप्नुयाम् ॥९॥ अहंतुखलुसर्वान्वःसमर्थयितुमुद्यतः ॥ कुंभकर्णस्यतुस्वप्नान्नेममर्थमचोदयम् ॥१०॥

रथिहस्तिसादिपदातिरूपेण चतुर्विधा ये योधा वसंति ते यथा नगररक्षायां सावधानाः स्युस्तथा तान् व्यादेष्टुमर्हसि । अनेन समुद्रतीरे रामागमनं चारमुखेन ज्ञातवानिति गम्यते ॥ २ ॥ प्रणीतात्मा सावधानचित्तः मंदिरे पुरे ॥ ३ ॥ तदेवाह नगरगुप्तये इति ॥ ४ ॥ अविमना अव्याकुलचित्तः ॥ ५ ॥ राज्यहितैषिणः प्रहस्तस्येत्यन्वयः ॥ ६ ॥ प्रियादिविषये धर्मादिविषयकृच्छ्रेषु संकटेषु च यूयं वेदितुमर्हथ कर्तव्यकृत्यामिति शेषः ॥ ७ ॥ मंत्रकर्मनियुक्तानि मंत्रकरणपूर्वं नियुक्तानि प्रेरितानि युष्माभिः समारब्धानि मे सर्वकृत्यानि सर्वदा सफलान्येव । जातु कदाचिदपि विफलानि न ॥ ८ ॥ ९ ॥ समर्थयितुं सर्वाभिमते मन्त्रे नियोजयितुं तत्र मां नियोजयंत्विति बोधयितुमुद्यतः पूर्वोक्तमप्यर्थं पुनरुक्तवानित्यर्थः । किं च कुंभकर्णस्य स्वप्नात्स्वापाद्धेतोरिममर्थं नाचोदयं नावेदयम् । इदानीमुत्थितस्य तस्यापि बोधनार्थं पुनरुक्तिरित्यर्थः ॥ १० ॥

यस्मिंस्तं बलसागरं शाल्मलीद्रुमैर्यातनावृक्षैर्मंडितं सागरोपि द्वीपेषु वृक्षमंडितो भवति । कालपाश एव महत्यो वीचयो यस्य तम् ॥ १३ ॥ १४ ॥ प्रतिषेधितः पराङ्मुखः कृतः । ते त्वया सर्वे लोकाः सर्वे राक्षसाः सुतोषिताः प्रीणिताः ॥ १५ ॥ एवं दिव्यं जयमुक्त्वा भौमं जयमाहुः क्षत्रियैरिति । उच्यमानगुणैः क्षत्रियैर्वसुमती पूर्णासीत् ॥ १६ ॥ तेपि प्रसह्य त्वया हताः । राघवस्तु रणे तेषां वीर्यादिभिर्न समोऽतस्तद्वधे का चिंतेति भावः ॥ १७ ॥ एवं रावणं प्रशस्य तत्पुत्रं स्तुवंति तिष्ठ वेति । हे महाराज तव मनुष्यो लक्ष्यं किं तस्मात्त्वं तूष्णीमेव तिष्ठ श्रमेण किं फलम् । वानरानेक एवेंद्रजिल्क्षपयिष्यति । महाराजेति द्विरुक्तिरादरात् ॥ १८ ॥ कथमस्यैवं सामर्थ्यं तत्राहुः अनेन चेति । माहेश्वरं महेश्वरप्रीतिकरम् इष्टा कृत्वा ॥ १९ ॥ देवबलं सागरत्वेन रूपयति शक्तीत्यादि । विनिकीर्णानि व्याप्तानि ॥२०॥ महत् महांतम् ॥ २१ ॥ २२ ॥ पितामहस्य चतुर्मुखस्य रुद्रस्य यदिज्यातो लब्धवरस्तन्नियोगात्तदाज्ञया सर्वस्य जगतः प्रजापतिः पिता भगवांश्चतुर्मुखरुद्रः पितामहो भगवान् हिरण्यगर्भः प्रपितामहः

महाज्वरेणदुर्धर्षंयमलोकमहार्णवम् ॥ अवगाह्यत्वयाराजन्यमस्यबलसागरम् ॥ १४ ॥ जयश्चविपुलःप्राप्तोमृत्युश्चप्रतिषेधितः ॥ सुयुद्धेनचतेसर्वेलोकास्तत्रसुतोषिताः ॥ १५ ॥ क्षत्रियैर्बहुभिर्वीरैःशक्रतुल्यपराक्रमैः ॥ आसीद्वसुमतीपूर्णामहद्भिरिवपादपैः ॥ १६ ॥ तेषांवीर्यगुणोत्साहैर्नसमोराघवोरणे ॥ प्रसह्यतेत्वयाराजन्हताःसमरदुर्जयाः ॥ १७ ॥ तिष्ठवाकिंमहाराजश्रमेणतववानरान् ॥ अयमेकोमहाराजइंद्रजित्क्षपयिष्यति ॥ १८ ॥ अनेनचमहाराजमाहेश्वरमनुत्तमम् ॥ इष्ट्वायज्ञंवरोलब्धोलोकेपरमदुर्लभः ॥ १९ ॥ शक्तितोमरमीनंचविनिकीर्णांत्रशैवलम् ॥ गजकच्छपसंबाधमश्वमण्डूकसंकुलम् ॥ २० ॥ रुद्रादित्यमहाग्राहंमरुद्वसुमहोरगम् ॥ रथाश्वगजतोयौघंपदातिपुलिनंमहत् ॥ २१ ॥ अनेनहिसमासाद्यदेवानांबलसागरम् ॥ गृहीतोदैवतपतिर्लंकांचापिप्रवेशितः ॥ २२ ॥ पितामहनियोगाच्चमुक्तःशंबरवृत्रहा ॥ गतस्त्रिविष्टपंराजन्सर्वदेवनमस्कृतः ॥ २३ ॥ तमेवत्वंमहाराजविसृजेन्द्रजितंसुतम् ॥ यावद्वानरसेनांतांसरामांनयतिक्षयम् ॥ २४ ॥ राजन्नापद्युक्तेयमागताप्राकृताज्जनात् ॥ हृदिनैवत्वयाकार्यात्वंवधिष्यसिराघवम् ॥२५॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तमःसर्गः ॥७॥ ततोनीलांबुदप्रख्यःप्रहस्तोनामराक्षसः ॥ अब्रवीत्प्रांजलिर्वाक्यंशूरःसेनापतिस्तदा ॥ १ ॥ देवदानवगंधर्वाःपिशाचपतगोरगाः ॥ सर्वेधर्षयितुंशक्याःकिंपुनर्मानवौरणे ॥ २ ॥ सर्वेप्रमत्ताविश्वस्तावंचिताःस्महनूमता ॥ नहिमेजीवतोगच्छेज्जीवन्सवनगोचरः ॥ ३ ॥

अतएवादित्यरुद्रवसुप्रधानाः सर्वश्राद्धदेवताः सर्वयज्ञदेवताः ससुरासुरसर्वप्रजोपास्यस्य सर्वस्वभूताश्चेति कतकः । शंबरं वृत्रं हंति सः ॥ २३ ॥ क्षयं यावन्नयति नेष्यतीत्यर्थः ॥२४॥ प्राकृतान्नरवानररूपाज्जनात् आगता संभाविताागमना इयमापद्विपत्तच्चिंता ते अयुक्ता कर्तुमयोग्या । सर्वथैषा चिंता त्वया हृदि नैव कार्या यतस्त्वं राघवं वधिष्यस्येव ॥ २५ ॥ मंखेमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तमः सर्गः ॥ ७ ॥ तत इति ॥ १ ॥ २ ॥ नन्विदानीमेव वानरेणैकेनैव धर्षणे कृते कथं धर्षयितुं शक्या इति वचोऽत आह सर्वे इति प्रमत्ता भोगादिपरवशाः विश्वस्ताः शत्रुधर्षणासंभवबुद्ध्या निःशंकतया स्थिताः अतएव हनूमता वंचिताः स्म । आर्षो विसर्गलोप इति कतकः । प्रामादिकः परिभवो न न्यूनतायै इति भावः । मे जीवत

इत्यार्षी षष्ठी । प्रमादाद्यभावविशिष्टजीवनवति मयि प्रहरते सति स जीवन्न गच्छेदित्यर्थः ॥ ३ ॥ करोमि करिष्यामि ॥ ४ ॥ आत्मापराधजं सीतापहरणापराधजम् ॥ ५ ॥ न क्षमणीयं क्षमितुं न युक्तम् प्रतिक्रियैव कर्तव्येति भावः । इदं पदार्थमाह सर्वेषामिति ॥ ६ ॥ भूयः पुनः पुरस्यांतःपुरस्य चायं परिभवो दाहरूपो न क्षमणीय इत्यनुषंगः । वानरेंद्रप्रधर्षणं तज्जं राक्षसेन्द्रस्य दुःख महमेक एव गत्वा भीत्या सागरादीनपि प्रविष्टान्वानरान्हत्वा निवर्तयिष्यामि प्रधर्षणदुःखं निवर्तयिष्यामि ॥ ७ ॥ ८ ॥ मांसशोणिताभ्यां स्वसंबद्धाभ्यां दूषितं भयजनकम् ॥ ९ ॥ कृपणेन दीनेन प्रकाशसं चारे भयाद्रात्रौ कृतकार्येण वा तपस्विना शोच्येन हनूमता किम् । अलक्ष्यस्य तस्य हननेन न प्रयोजनमिति भावः । कृपणादिशब्दानां पारुष्यमात्रे तात्पर्यं नत्वर्थे मातृगाम्यादिगालिदानवत् । तर्हिको हंतव्य

सर्वांसागरपर्यंतांसशैलवनकाननाम् ॥ करोम्यवानरांभूमिमाज्ञापयतुमांभवान् ॥ ४ ॥ रक्षांचैवविधास्यामिवानराद्रजनीचर ॥ नागमिष्यतितेदुः खंकिंचिदात्मापराधजम् ॥ ५ ॥ अब्रवीत्तसंक्रुद्धोदुर्मुखोनामराक्षसः ॥ इदंनक्षमणीयंहिसर्वेषांनःप्रधर्षणम् ॥ ६ ॥ अयंपरिभवोभूयःपुरस्यांतः पुरस्यच ॥ श्रीमतोराक्षसेंद्रस्यवानरेंद्रप्रधर्षणम् ॥ ७ ॥ अस्मिन्मुहूर्तेगत्वैकोनिवर्तिष्यामिवानरान् ॥ प्रविष्टान्सागरंभीममंबरंवारसातलम् ॥ ८ ॥ ततोऽब्रवीत्सुसंक्रुद्धोवज्रदंष्ट्रोमहाबलः ॥ प्रगृह्यपरिघंघोरंमांसशोणितदूषितम् ॥ ९ ॥ किंनोहनूमताकार्यंकृपणेनतपस्विना ॥ रामेतिष्ठतिदुर्धर्षेसुग्रीवेपिसलक्ष्मणे ॥ १० ॥ अद्यरामंससुग्रीवंपरिघेणसलक्ष्मणम् ॥ आगमिष्यामिहत्वैकोविक्षोभ्यहरिवाहिनीम् ॥ ११ ॥ इदंममापरंवाक्यंशृणुराजन्यदीच्छसि ॥ उपायकुशलोह्येवजयेच्छत्रूनतंद्रितः ॥ १२ ॥ कामरूपधराःशूराःसुभीमाभीमदर्शनाः ॥ राक्षसानांसहस्राणिराक्षसाधिपनिश्चिताः ॥ १३ ॥ काकुत्स्थमुपसंगम्यविवृतंमानुषंवपुः ॥ सर्वेह्यसंभ्रमाभूत्वाब्रुवंतुरघुसत्तमम् ॥ १४ ॥ प्रेषिताभरतेनैवभ्रात्रातवयवीयसा ॥ सहिसेनांसमुत्थाप्यक्षिप्रमेवोपयास्यति ॥ १५ ॥ ततोवयमितस्तूर्णंशूलशक्तिगदाधराः ॥ चापबाणासिहस्ताश्चत्वरितास्तत्रयामहे ॥ १६ ॥ आकाशेगणशःस्थित्वाहत्वातांहरिवाहिनीम् ॥ अश्मशस्त्रमहावृष्ट्याप्रापयामयमक्षयम् ॥ १७ ॥ एवंचेदुपसर्पेतामनयंरामलक्ष्मणौ ॥ अवश्यमपनीतेनजहतामेवजीवितम् ॥ १८ ॥ कौंभकर्णिस्ततोवीरोनिकुंभोनामवीर्यवान् ॥ अब्रवीत्परमक्रुद्धोरावणंलोकरावणम् ॥ १९ ॥ सर्वेभवंतस्तिष्ठंतुमहाराजेनसंगताः ॥ अहमेकोहनिष्यामिराघवंसहलक्ष्मणम् ॥ २० ॥

स्तत्राह रामे तिष्ठति अहते तिष्ठति सति किमनेन हतेनेत्यर्थः ॥ १० ॥ यदेवमतोऽद्य राममिति ॥ ११ ॥ इदंपदार्थमाह उपायेति ॥ १२ ॥ ततः किम् तत्राह कामेति । कामरूपेत्यादिषु पुंस्त्वमार्षम् ॥ ॥ १३ ॥ ततोऽपि किम् तत्राह काकुत्स्थमिति । विवृतं स्पष्टम् वपुः धृत्वेति शेषः ॥ १४ ॥ भरतप्रेषितत्ववचनेनापि किम् तत्राह स हीति । सेनां वानरसेनां समुत्थाप्य युंक्त्वा स्वीयबुद्ध्या क्षिप्रमेवोपयास्य त्यस्मानिति शेषः ॥ १५ ॥ ततः किमिति प्रश्ने । मध्ये मार्गे प्रहरामेति बकवद्धरणमंत्रमाह तत इति यामेति लोडुत्तमः ॥ १६ ॥ १७ ॥ उक्तमंत्रात्कार्यसिद्धिमाह एवं चेदिति । एवमस्मदुक्तमुपश्रुत्य यद्येषोनुजानाति तदा सर्वथास्मदीयमनयं कैतवमुपसर्पेतां प्राप्नुयातां ततश्चापनीतेन कैतवकृतप्रहारेणावश्यमेव जीवितं जहतां जहेतामिति यावत् ॥ १८ ॥ कौंभकर्णिः कुंभकर्णापत्यम् ॥ १९ ॥ २० ॥

अत्र वानरान् अस्यां सेनायां स्थितान्वानरानित्यर्थः ॥ २१ ॥ सृक्कामोष्ठप्रांतम् ॥ २२ ॥ वारुणं मधु मद्यम् । एतेन क्षौद्रव्यावृत्तिः ॥ २३ ॥ २४ ॥ वैरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायण तिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टमः सर्गः ॥ ८ ॥ कतकरीत्यात्र सर्गाविच्छेदः । तत इति । कौंभकर्णिरेवायं निकुंभः परैः सहितस्तं पुनराह ॥१॥२॥३॥ सुबाणानीति बहुव्रीहिः । विपुलांबुभान् निर्मलनलकांतीन् ॥४॥ समुत्पत्योत्थाय॥५॥ किमब्रुवंस्तदाह अद्येति ॥६॥ विभीषणस्तान्सर्वान्वारयित्वा पुनः प्रत्युपवेश्य स्थापयित्वा रावणं प्रति प्रांजलिर्भूत्वा वाक्यमब्रवीत् ॥ ७ ॥ त्रिभिरुपायैः सामदानभेदरूपैः तस्यार्थस्य प्राप्त्यर्थमिति शेषः । तान्नीतिशास्त्रोक्तान् विक्रमकालानाहुः मनीषिणो नीतिशास्त्रज्ञाः ॥ ८ ॥ तानेव कालानाह प्रमत्तेषु असावधानेषु अभियुक्तेषु शत्र्वंतराक्रांतेषु दैवेन महतेषु महारोगादिनेति शेषः ।

सुग्रीवंसहनूमंतंसर्वांश्चैवात्रवानरान् ॥ ततोवज्रहनुर्नामराक्षसःपर्वतोपमः ॥ २१ ॥ क्रुद्धःपरिलिहन्सृक्कांजिह्वयावाक्यमब्रवीत् ॥ स्वैरंकुर्वंतुकार्याणिभवंतोविगतज्वराः ॥ २२ ॥ एकोहंभक्षयिष्यामितांसर्वांहरिवाहिनीम् ॥ स्वस्थाःक्रीडंतुनिश्चिताःपिबंतुमधुवारुणम् ॥ २३ ॥ अहमेकोवधिष्यामिसुग्रीवंसहलक्ष्मणम् ॥ सांगदंचहनूमंतंसर्वांश्चैवात्रवानरान् ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टमः सर्गः ॥ ८ ॥ ततोनिकुंभोरभसःसूर्यशत्रुर्महाबलः ॥ सुप्तघ्नोयज्ञकोपश्चमहापार्श्वमहोदरौ ॥ १ ॥ अग्निकेतुश्चदुर्धर्षोरश्मिकेतुश्चराक्षसः ॥ इंद्रशत्रुश्चबलवांस्ततोवैरावणात्मजः ॥ २ ॥ प्रहस्तोथविरूपाक्षोवज्रदंष्ट्रोमहाबलः ॥ धूम्राक्षोथनिकुंभश्चदुर्मुखश्चैवराक्षसाः ॥ ३ ॥ परिघान्पट्टिशाञ्छूलान्प्रासाञ्छक्तिपरश्वधान् ॥ चापानिचसुबाणानिखड्गांश्चविपुलांबुभान् ॥ ४ ॥ प्रगृह्यपरमक्रुद्धाःसमुत्पत्यचराक्षसाः ॥ अब्रुवन्रावणंसर्वेप्रदीप्ताइवतेजसा ॥ ५ ॥ अद्यरामंवधिष्यामःसुग्रीवंचसलक्ष्मणम् ॥ कृपणंचहनूमंतंलंकायेनप्रधर्षिता ॥ ६ ॥ तान्गृहीतायुधान्सर्वान्वारयित्वाविभीषणः ॥ अब्रवीत्प्रांजलिर्वाक्यंपुनःप्रत्युपवेश्यतान् ॥ ७ ॥ अप्युपायैस्त्रिभिस्तातयोर्थःप्राप्तुंनशक्यते ॥ तस्यविक्रमकालांस्तान्युक्तानाहुर्मनीषिणः ॥ ८ ॥ प्रमत्तेष्वभियुक्तेषुदैवेनप्रहतेषुच ॥ विक्रमास्तातसिध्यंतिपरीक्ष्याविधिनाकृताः ॥९॥ अप्रमत्तंकथंतंतुविजिगीषुंबलेस्थितम् ॥ जितरोषंदुराधर्षंतंधर्षयितुमिच्छथ ॥ १० ॥ समुद्रंलंघयित्वातुघोरंनदनदीपतिम् ॥ गतिंहनूमतोलोकेकोविद्यात्तर्कयेतवा ॥ ११ ॥ बलान्यपरिमेयानिवीर्याणिचनिशाचराः ॥ परेषांसहसावज्ञानकर्तव्याकथंचन ॥ १२ ॥ किंचराक्षसराजस्यरामेणापकृतंपुरा ॥ आजहारजनस्थानाद्यस्यभार्यांयशस्विनः ॥ १३ ॥

परीक्ष्य उक्तविक्रमप्रवृत्तिनिमित्तसत्तां परीक्ष्येत्यर्थः ॥ ९ ॥ प्रकृतो विक्रमानर्ह एव काल इत्याह अप्रमत्तमिति । विजिगीषुम् अनेन शत्र्वंतरराहित्यम् बले दैवबले स्थितम् जितरोषमित्यनेन मौर्ख्यराहित्यम् दुराधर्षत्वेन दिव्यास्त्रसंपदुक्ता ॥ १० ॥ को विद्यात् मनसापि कः प्राप्नुयात् तर्कयेत हनूमति एवं चेष्टां संभावयेत् ॥ ११ ॥ एवमेव हनूमदादेर्बलान्यपरिमेयानि वीर्याणि पराक्रमाश्च सर्वलोकातिगा इति जानीध्वेति शेषः । अतो हे निशाचराः परेषां सहसा द्रागवज्ञा न कार्या ॥ १२ ॥ किंचास्मास्वेवान्यायो न रामे इत्याह किंचेति । यशस्विनो यस्य भार्यां जनस्थानादाजहार तेन रामेण राक्षसराजस्य पुरा

पूर्वं किमपकृतं कोऽपकारः कृतो न कोपि ॥ १३ ॥ ननु खरादिहननरूपोऽपकारः कृत इति चेत्तत्राह खर इति । खरो रामेण निहत इति यदुच्यते तदा शृणु अतिवृत्तस्तु स इति । स्वस्थानमतिक्रम्य तद्देशं गत्वा तत्पीडायै प्रवृत्त इति तेन स हतः । तादृशस्य हननं च न्याय्यमेवेत्याह अवश्यमिति ॥ १४ ॥ एतन्निमित्तं खरादिवधनिमित्तमाहृता वैदेही यदि तदा एतन्निमित्तमेव वैदेह्या हरणनिमित्तमेव नः सुमहद्भयं भवेद्भावि एतन्निमित्तमित्यत्र तंत्रम् । अतो भयहेतुः सा परित्याज्या कलहार्थे कलहफलके कस्मिंश्चित्कर्मणि कृते किं नु फलमिति शेषः अनर्थ एवेत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ बंधुत्वाद्भ्रातृत्वात् ॥ २० ॥ नवाग्रपुंखान् नवान्युज्ज्वलान्यग्राणि फलभागाः पुंखभागाश्च येषां पुरा सृजति स्रक्ष्यति ततः पुरा प्राङ् मैथिली दीयताम् ॥ २१ ॥ २२ ॥ तान्सर्वान्प्रहस्तादिदुर्मं

खरोयद्यतिवृत्तस्तुसरामेणहतोरणे ॥ अवश्यंप्राणिनांप्राणारक्षितव्यायथाबलम् ॥ १४ ॥ एतन्निमित्तंवैदेहीभयंनःसुमहद्भवेत् ॥ आहृतासापरित्याज्याकलहार्थेकृतेनुकिम् ॥ १५ ॥ नतुक्षमंवीर्यवतातेनधर्मानुवर्तिना ॥ वैरंनिरर्थकंकर्तुंदीयतामस्यमैथिली ॥ १६ ॥ यावन्नसगजांसाश्वांबहुरत्नसमाकुलाम् ॥ पुरींदारयतेबाणैर्दीयतामस्यमैथिली ॥ १७ ॥ यावत्सुघोरामहतीदुर्धर्षाहरिवाहिनी ॥ नावस्कन्दतिनोलंकांतावत्सीताप्रदीयताम् ॥ ॥ १८ ॥ विनश्येद्धिपुरीलंकाशूराःसर्वेचराक्षसाः ॥ रामस्यदीयतांपत्नीनस्वयंयदिदीयते ॥ १९ ॥ प्रसादयेत्वांबंधुत्वात्कुरुष्ववचनंमम ॥ हितंतथ्यंत्वहंब्रूमिदीयतामस्यमैथिली ॥ २० ॥ पुराशरत्सूर्यमरीचिसन्निभान्नवाग्रपुंखान्सुदृढान्नृपात्मजः ॥ सृजत्यमोघान्विशिखान्वधायतेप्रदीयतांदाशरथायमैथिली ॥ २१ ॥ त्यजाशुकोपंसुखधर्मनाशनंभजस्वधर्मंरतिकीर्तिवर्धनम् ॥ प्रसीदजीवेमसपुत्रबांधवाःप्रदीयतांदाशरथायमैथिली ॥२२॥ विभीषणवचःश्रुत्वारावणोराक्षसेश्वरः ॥ विसर्जयित्वातान्सर्वान्प्रविवेशस्वकंगृहम् ॥ २३ ॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येयुद्धकांडे नवमः सर्गः ॥ ९ ॥ ततःप्रत्युषसिप्राप्तेप्राप्तधर्मार्थनिश्चयः ॥ राक्षसाधिपतेर्वेश्मभीमकर्माविभीषणः ॥ १ ॥ शैलाग्रचयसंकाशंशैलशृंगमिवोन्नतम् ॥ सुविभक्तमहाकक्षंमहाजनपरिग्रहम् ॥ २ ॥ मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् ॥ राक्षसैश्चाप्तपर्याप्तैःसर्वतःपरिरक्षितम् ॥ ३ ॥ मत्तमातंगनिःश्वासैर्व्याकुलीकृतमारुतम्॥शंखघोषमहाघोषंतूर्यसंबाधनादितम् ॥४॥ प्रमदाजनसंबाधंप्रजल्पितमहापथम् ॥ तप्तकांचननिर्यूहंभूषणोत्तमभूषितम् ॥५॥

त्रिणो विभीषणं च ॥ २३ ॥ गैरमानः ॥ अत्राष्टमसर्गसमाप्तिः कतकरीत्या ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे नवमः सर्गः ॥ ९ ॥ प्रत्युषसि प्रातःकाले प्राप्ते प्राप्तो धर्मार्थयोर्निश्चयो येन स विभीषणो राक्षसाधिपते रावणस्य वेश्म वासभूतं वक्ष्यमाणविशेषणमग्रजस्यालयं प्रविवेशेति सतमश्लोकस्थेनान्वयः । भीमकर्मा रावणसमीपे सीता देयेति दुष्करवचनवक्ता ॥ १ ॥ शैलाग्राणां शैलशृंगाणां चयः समूहस्तत्संकाशम् । बहुप्रासादवत्त्वादेवं वादः ॥ २ ॥ अनुष्ठितमितिपाठेप्यधिष्ठितमित्येवार्थः । आप्तैर्हितैः पर्याप्तैः कार्यनिर्वहणसमर्थैः ॥ ३ ॥ व्याकुलीकृतमारुतं मिश्रीकरणेन वात्यारूपमापादितो बाह्यमारुतो यत्र तम् । तूर्याणां संबाधो नैबिड्यं तेन नादितम् ॥ ४ ॥ प्रजल्पितमहापथम् । आदिकर्मणि क्तः प्रातःकालत्वात्प्रारब्धजल्पमहामार्गम् निर्यूहो द्वारम् । निर्यूहः

धातुभ्यः गैरिकादिभ्यः ॥७६॥७७॥ के पुष्पितास्तत्राह केतक्य इत्यादि । गंधपूर्णा गंधाढ्याः इदं सर्वविशेषणम् । कुंदगुल्माः कुन्दानां गुल्माः ॥७८॥ वंजुलो वानीरः ॥७९॥ कोविदारः पीतकुरंटकः ॥८०॥ ॥ ८१ ॥ भीयमाणे रक्तपुष्पदर्शनेनेति शेषः ॥ ८२ ॥ ८३ ॥ ८४ ॥ तत्र सह्यागिरिप्रांते ॥ ८५ ॥ तस्य सह्यस्य मलयस्य च ॥ ८६ ॥ अमृतगंधीनि अमृतोपमानि अयं चतुर्थो वासः ॥ ८७ ॥ ८८ ॥

अधिकंशैलराजस्तुधातुभिस्तुविभूषितः ॥ धातुभ्यःप्रसृतोरेणुर्वायुवेगेनघट्टितः ॥ ७६ ॥ सुमहद्वानरानीकंछादयामाससर्वतः ॥ गिरिप्रस्थेषुरम्येषुसर्वतःसंप्रपुष्पिताः ॥ ७७ ॥ केतक्यःसिंदुवाराश्चवासंत्यश्चमनोरमाः ॥ माधव्योगंधपूर्णाश्चकुंदगुल्माश्चपुष्पिताः ॥ ७८ ॥ चिरिविल्वामधूकाश्चवंजुलावकुलास्तथा ॥ रंजकास्तिलकाश्चैवनागवृक्षाश्चपुष्पिताः ॥७९॥ चूताःपाटलिकाश्चैवकोविदाराश्चपुष्पिताः ॥ मुचुलिंदार्जुनाश्चैवशिंशपाःकुटजास्तथा ॥८०॥ हिंतालास्तिनिशाश्चैवचूर्णकानीपकास्तथा ॥ नीलाशोकाश्चसरलाअंकोलाःपद्मकास्तथा ॥ ८१ ॥ प्रीयमाणैःप्लवंगैस्तुसर्वेपर्याकुलीकृताः ॥ वाप्यस्तस्मिन्गिरौरम्याःपल्वलानितथैवच ॥ ८२ ॥ चक्रवाकानुचरिताःकारंडवनिषेविताः ॥ प्लवैःक्रौंचैश्चसंकीर्णावराहमृगसेविताः ॥ ८३ ॥ ऋक्षैस्तरक्षुभिःसिंहैःशार्दूलैश्चभयावहैः ॥ व्यालैश्चबहुभिर्भीमैःसेव्यमानाःसमंततः ॥ ८४ ॥ पद्मैःसौगंधिकैःफुल्लैःकुमुदैश्चोत्पलैस्तथा ॥ वारिजैर्विविधैःपुष्पैरम्यास्तत्रजलाशयाः ॥ ८५ ॥ तस्यसानुषुकूजंतिनानाद्विजगणास्तथा ॥ स्नात्वापीत्वोदकान्यत्रजलेक्रीडंतिवानराः ॥ ८६ ॥ अन्योन्यंप्लावयंतिस्मशैलमारुह्यवानराः ॥ फलान्यमृतगंधीनिमूलानिकुसुमानिच ॥ ८७ ॥ बभंजुर्वानरास्तत्रपादपानांमदोत्कटाः ॥ द्रोणमात्रप्रमाणानिलंवमानानिवानराः ॥ ८८ ॥ ययुःपिबंतःस्वस्थास्तेमधूनिमधुपिंगलाः ॥ पादपानवभंजंतोविकर्षंतस्तथालताः ॥ ८९ ॥ विधमंतोगिरिवरान्प्रययुःप्लवगर्षभाः ॥ वृक्षेभ्योन्येतुकपयोनंदंतोमधुदर्पिताः ॥ ९० ॥ अन्येवृक्षान्प्रपद्यंतेप्रपिबंत्यपिचापरे ॥ बभूववसुधातैस्तुसंपूर्णाहरिपुंगवैः ॥ यथाकलमकेदारैःपक्वैरिववसुंधरा ॥ ९१ ॥ महेंद्रमथसंप्राप्यरामोराजीवलोचनः ॥ आरुरोहमहाबाहुःशिखरंद्रुमभूषितम् ॥९२॥ ततःशिखरमारुह्यरामोदशरथात्मजः ॥ कूर्ममीनसमाकीर्णमपश्यत्सलिलाकुलम् ॥ ९३ ॥ तेसह्यंसमतिक्रम्यमलयंचमहागिरिम् ॥ आसेदुरानुपूर्व्येणसमुद्रंभीमनिःस्वनम् ॥९४॥ अवरुह्यजगामाशुवेलावनमनुत्तमम् ॥ रामोरमयतांश्रेष्ठःससुग्रीवःसलक्ष्मणः ॥ ९५ ॥ अथधौतोपलतलांतोयौघैस्सहसोत्थितैः ॥ वेलामासाद्यविपुलांरामोवचनमब्रवीत् ॥ ९६ ॥

॥ ८९ ॥ ९० ॥ पीतमधुभिर्हरिभिरावृतभुवः उपमा यथेति । पक्वैः पक्वफलैः कलमकेदारैर्व्रीहिक्षेत्रैर्यथा भाति । इवशब्दस्तथार्थे तथा तैः पूर्णा वसुधा बभूव ॥ ९१ ॥ ९२ ॥ ९३ ॥ तत्रानुक्तमपि वासत्रयमन्यद्बोध्यम् आग्निवेश्योक्तेः । ते सर्वे वानरा आनुपूर्व्येण सेनासन्निवेशक्रमेण ॥९४॥ अवरुह्य महेंद्रादित्यर्थः ॥ ९५ ॥ सहसोत्थितैर्लहरीरूपेणागतैस्तोयौघैर्धौतं क्षालितमुपलतलं यस्याः ताम् ॥९६॥

या पूर्वमुपस्थिता चिंता तरणविषया सेदानीमपि प्रवर्तत इति शेषः ॥ ९७ ॥ अतीरः अलभ्यपरतीरः । अनुपायेन उपायरूपालंबनहीनेन ॥ ९८ ॥ मंत्रो विचारः ॥ ९९ ॥ १०० ॥ १ ॥ स्वां स्वां सेनां समुत्सृज्य कश्चिदपि कुतोपि हेतोर्मा व्रजेत् यतो नोस्माकं छन्नं रक्षोमायाकृतत्वाद्गूढं भयमस्तीति ज्ञेयम्। सावधानतया स्थेयमिति बोधितम्। अतोद्य शूराः सर्वे वानराः सेनारक्षार्थं गच्छंतु सेनायाश्चतुर्दिक्षु गत्वा तत्र स्थित्वा तां रक्षंत्वित्यर्थः ॥ २ ॥ ३ ॥ मधुपांडवो मधुपिंगला वानरा एव जलं यस्य सः मधुशब्दसमभिव्याहारात्पांडुशब्दः पिंगलवर्णवाची ज्ञेयः ॥ ४ ॥ ५ ॥ समुद्रशब्दमंतर्धाय सैन्यसंनाहस्य सैन्यसंचारस्य शब्दः शुश्रुवे ॥ ६ ॥ त्रिधा निविष्टा ऋक्षगोलांगूलवानररूपत्रियूथभेदेन ऋक्षगोलांगूलानामपि वानरावांतरजातित्वात्सर्वेषां वानरत्वेनाप्युक्तिर्नासंगता । त्रिधा निविष्टा त्रिवलया निविष्टे

एतेवयमनुप्राप्ताःसुग्रीववरुणालयम् ॥ इहेदानींविचिंतासायानःपूर्वमुपस्थिता ॥ ९७ ॥ अतःपरमतीरोयंसागरःसरितांपतिः ॥ नचायमनुपायेनश क्यस्तारितुमर्णवः ॥ ९८ ॥ तदिहैवनिवेशोस्तुमंत्रःप्रस्तूयतामिह ॥ यथेदंवानरबलंपरंपारमवाप्नुयात् ॥ ९९ ॥ इतीवसमहाबाहुःसीताहरणकर्शितः ॥ रामःसागरमासाद्यवासमाज्ञापयत्तदा ॥ १०० ॥ सर्वाःसेनानिवेश्यंतांवेलायांहरिपुंगव ॥ संप्राप्तोमंत्रकालोनःसागरस्येहलंघने ॥ १ ॥ स्वांस्वांसे नांसमुत्सृज्यमाचकश्चित्कुतोव्रजेत् ॥ गच्छंतुवानराःशूराज्ञेयंछन्नंभयंचनः ॥ २ ॥ रामस्यवचनंश्रुत्वासुग्रीवःसहलक्ष्मणः ॥ सेनांनिवेशयत्तीरेसागर स्यद्रुमायुते ॥३॥ विरराजसमीपस्थंसागरस्यचतद्बलम् ॥ मधुपांडुजलःश्रीमान्द्वितीयइवसागरः ॥ ४ ॥ वेलावनमुपागम्यततस्तेहरिपुंगवाः ॥ निविष्टाश्चपरंपारंकांक्षमाणामहोदधेः ॥ ५ ॥ तेषांनिविशमानानांसैन्यसन्नाहनिःस्वनः ॥ अंतर्धायमहानादमर्णवस्यप्रशुश्रुवे ॥६॥ सावानराणांध्व जिनीसुग्रीवेणाभिपालिता॥त्रिधानिविष्टामहतीरामस्यार्थपराऽभवत् ॥ ७ ॥ सामहार्णवमासाद्यहृष्टावानरवाहिनी ॥ वायुवेगसमाधूतंपश्यमाना महार्णवम् ॥ ८ ॥ दूरपारमसंबाधंरक्षोगणनिषेवितम् ॥ पश्यंतोवरुणावासंनिषेदुर्हरियूथपाः ॥ ९ ॥ चंडनक्रग्राहघोरंक्षपादौदिवसक्षये ॥ हसंत मिवफेनौघैर्नृत्यंतमिवचोर्मिभिः ॥ ११० ॥ चंद्रोदयेसमुद्धूतंप्रतिचंद्रसमाकुलम् ॥ चंडानिलमहाग्राहैःकीर्णंतिमितिमिंगिलैः ॥ ११ ॥ दीप्तभोगै रिवाकीर्णंभुजंगैर्वरुणालयम् ॥ अवगाढंमहासत्त्वैर्नानाशैलसमाकुलम् ॥ १२ ॥ सुदुर्गंदुर्गमार्गंतमगाधमसुरालयम् ॥ मकरैर्नागभोगैश्चविगाढावात लोलिताः ॥ १३ ॥ उत्पेतुश्चनिपेतुश्चप्रहृष्टाजलराशयः ॥ अग्निचूर्णमिवाविद्धंभास्वरांबुमहोरगम् ॥ सुरारिनिलयंघोरंपातालविषयंसदा ॥ १४ ॥

त्यन्ये ॥ ७ ॥ पश्यमाना पश्यंती हृष्टाभूदिति शेषः ॥ ८ ॥ असंबाधं मध्ये गिर्याद्याश्रयरहितं वक्ष्यमाणसकलविशेषणं वरुणावासं पश्यंतो निषेदुरित्यन्वयः ॥ ९ ॥ चण्डनक्ररूपैर्ग्राहैर्महाघोरम् क्षपादौ दिव सक्षये तेन प्रदोषकाले चन्द्रोदये प्रवृद्धफेनौघैर्हसंतमिव स्थितम् उपलक्षणमिदं ऊर्मिभिर्नृत्यंतमिव स्थितम् ॥ ११० ॥ समुद्धूतं वृद्धम् ऊर्मिस्थप्रतिचन्द्रैः समाकुलं व्याप्तम्। चण्डानिलतुल्यवेगैर्जलचरैर्महाग्राहैः तिमिः। अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायत इति लक्षितः। तिमिंगिलस्तन्निगरणशक्तः। तैः कीर्णं व्याप्तम् ॥ ११ ॥ दीप्तभोगैरुज्ज्वलदेहैर्भुजंगैराकीर्णं वरुणालयं पातालमिव ॥ १२ ॥ सुदुर्गं शोभ नानि लंकादीनि दुर्गाणि यस्मिन्। दुर्गमार्गं दुष्प्रापमार्गम्। दुष्प्रापपरपारमाप्युपायमित्यर्थः ॥१३॥ जलराशय ऊर्मिरूपाः भास्वराः फणामणिभिर्भासमाना अम्बुमहोरगा जलसर्पा यस्मिंतत् अतएवाग्निचूर्णं विस्फु

लिंगरूपमाविद्धं क्षिप्रमिवात्र दृश्यत इति शेषः । सदा पाताळविषयं पातालगोचरं सागरम् ॥१४॥ अम्बरमख्यं वैपुल्यातलत्वैः तैरेव चांबरं सागरोपमम् । उपमेयोपमालंकारः । एवं सति यत्फलति तद्वाच्यवृत्त्याह निर्विशेषं परस्परातिरिक्तसदृशरहितम् ॥ १५ ॥ तयोरेव समानधर्मांतरमाह संपृक्तमिति । संसृष्टं तुल्यमित्यर्थः । नभोंभसोस्तुल्यरूपत्वात्ताराररत्नसमाकुले मुक्ताश्रेष्ठैर्नक्षत्रश्रेष्ठैश्च समाकुले समुद्रनभसी ताहग्रूपे परस्पर सदृशरूपे दृश्येते ॥ १६ ॥ समुत्पतितमेघस्यांबरस्य वीचिमालाकुलस्य सागरस्य चेत्यन्वयः ॥ १७ ॥ सक्ताः निरंतराः ॥ १८ ॥ वायुना विषक्तं संबद्धम् । अतएव रत्नौघक्षेपकोर्मिमयजलसन्नादवंतम् अतएव कुद्धमुत्पतंतमिव स्थितम् ॥ १९ ॥ जलाशयः समुद्रः ॥ १२० ॥ भ्रांतानां घूर्णतामूर्मिजालानां सन्नादो यत्र तम् । अतएव मलोलं मचलमिव स्थितम् ॥ १२१ ॥ येरैपमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्थः सर्गः ॥ ४ ॥ स्वारक्षा सुकृतमासमंताद्रक्षणं यस्याः सा सुसमाहिता सम्यग्रचिता ॥ १ ॥ २ ॥ ३ ॥ अथ समुद्रवेलावनाद्युद्दीपकदर्शनात् परतीर

सागरंचांवरप्रख्यमंवरंसागरोपमम् ॥ सागरंचांवरंचेतिनिर्विशेषमदृश्यत ॥ १५ ॥ संपृक्तंनभसाप्यंभःसंपृक्तंचनभोंऽभसा ॥ तादृग्रूपेस्मदृश्येते ताराररत्नसमाकुले ॥ १६ ॥ समुत्पतितमेघस्यवीचिमालाकुलस्यच ॥ विशेषोनद्वयोरासीत्सागरस्यांबरस्यच ॥ १७ ॥ अन्योन्यैराहताःसक्ताः सस्वनुर्भीमनिःस्वनाः ॥ ऊर्मयःसिंधुराजस्यमहाभेर्यइवांबरे ॥ १८ ॥ रत्नौघजलसन्नादंविषक्तमिववायुना ॥ उत्पतंतमिवक्रुद्धंयादोगणसमाकुलम् ॥ १९ ॥ ददृशुस्तेमहात्मानोवाताहतजलाशयम् ॥ अनिलोद्धूतमाकाशेप्रलपंतमिवोर्मिभिः ॥ १२० ॥ ततोविस्मयमापन्नाहरयोददृशुःस्थिताः ॥ भ्रांतोर्मिजालसन्नादंप्रलोलमिवसागरम् ॥ १२१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्थः सर्गः ॥ ४ ॥ सातुनीलेनविधिवत्स्वारक्षासुसमाहिता ॥ सागरस्योत्तरेतीरेसाधुसाविनिवेशिता ॥ १ ॥ मैंदश्चद्विविदश्चोभौतत्रवानरपुंगवौ ॥ विचेरतुश्चतांसेनांरक्षार्थंसर्वतोदिशम् ॥ २ ॥ निविष्टायांतुसेनायांतीरेनदनदीपतेः ॥ पार्श्वस्थंलक्ष्मणंदृष्ट्वारामोवचनमब्रवीत् ॥ ३ ॥ शोकश्चकिलकालेनगच्छताह्यपगच्छति ॥ ममचापश्यतःकांतामहन्यहनिवर्धते ॥ ४ ॥ नमेदुःखंप्रियादूरेनमेदुःखंहृतेतिच ॥ एतदेवानुशोचामिवयोस्याह्यतिवर्तते ॥ ५ ॥ वाहिवातयतःकांतांतांस्पृष्ट्वामामपिस्पृश ॥ त्वयिमेगात्रसंस्पर्शश्चंद्रेदृष्टिसमागमः ॥ ६ ॥ तन्मेदहतिगात्राणिविषंपीतमिवाशये ॥ हानाथेतिप्रियासामांह्रियमाणायदब्रवीत् ॥ ७ ॥

स्वसीतास्मृत्या शोचति शोकश्चेति । गच्छता कालेन इष्टांतरवियोगजः शोकोपि गच्छतीति प्रसिद्धिर्मम प्रियाविरहजे शोके तु विपरीतमित्याह मम चेति । चस्त्वर्थे ॥ ४ ॥ नन्वचिरात्प्रत्याहरिष्यामः किं शोकेनेत्यत्र तत्रैव विप्रचिंतया दुःखमित्याह न मे इति । प्रिया दूरे स्थितेति मे दुःखं नास्ति । स्त्रीधर्मेदिवसवत् । तथा हृतेत्यपि नदुःखम् प्रबलदुष्कर्मवशं प्राप्तत्वात् । अपि तु अस्या वयः प्राणावस्थितिकालो तिवर्तते मासद्वयमात्रं जीवनमित्युक्तेः । तत्रापि बहुदिवसात्ययात् । यद्वा वयो यौवनमिति प्राकृतवद्वादः ॥ ५ ॥ यतो यस्यां दिशि कांता तद्दिशि वाहि गच्छ तत्र स्थितां तां स्पृष्ट्वा मामपि स्पृश । किमेतावता तवेत्यत्राह त्वयीति । कांतास्पर्शवति त्वयि मे गात्रसंस्पर्शो निदाघतप्तदृष्टेश्चंद्रे समागमो यथाऽखिलदृष्टितापशामक एवं त्वत्स्पर्शो गात्रीयाखिलतापशामक इत्यर्थः । निदर्शनात्रालंकारः ॥ ६ ॥ अथ हेत्वन्त

या पूर्वमुपस्थिता चिंता तरणविषया सेदानीमपि प्रवर्तत इति शेषः ॥ ९७ ॥ अतीरः अलभ्यपरतीरः । अनुपायेन उपायरूपालंबनहीनेन ॥ ९८ ॥ मंत्रो विचारः ॥ ९९ ॥ १०० ॥ १ ॥ स्वां स्वां सेनां समुत्सृज्य कश्चिदपि कुतोपि हेतोर्मा व्रजेत् यतो नोस्माकं छन्नं रक्षोमायाकृतत्वाद्गूढं भयमस्तीति ज्ञेयम् । सावधानतया स्थेयमिति बोधितम् । अतोद्य शूराः सर्वे वानराः सेनारक्षार्थं गच्छंतु सेनायाश्चतुर्दिक्षु गत्वा तत्र स्थित्वा तां रक्षंत्वित्यर्थः ॥ २ ॥ ३ ॥ मधुपांडवो मधुपिंगला वानरा एव जलं यस्य सः मधुशब्दसमभिव्याहारात्पांडुशब्दः पिंगलवर्णवाची ज्ञेयः ॥ ४ ॥ ५ ॥ समुद्रशब्दमंतर्धाय सैन्यसंनाहस्य सैन्यसंचारस्य शब्दः शुश्रुवे ॥ ६ ॥ त्रिधा निविष्टा ऋक्षगोलांगूलवानररूपत्रियूथभेदेन ऋक्षगोलांगूलानामपि वानरावांतरजातित्वात्सर्वेषां वानरत्वेनाप्युक्तिर्नासंगता । त्रिधा निविष्टा त्रिवलया निविष्टे

एतेवयमनुप्राप्ताःसुग्रीववरुणालयम् ॥ इहेदानींविचिंतासायानःपूर्वमुपस्थिता ॥ ९७ ॥ अतःपरमतीरोयंसागरःसरितांपतिः ॥ नचायमनुपायेनशक्यस्तारितुमर्णवः ॥ ९८ ॥ तदिहैवनिवेशोस्तुमंत्रःप्रस्तूयतामिह ॥ यथेदंवानरबलंपरंपारमवाप्नुयात् ॥ ९९ ॥ इतीवसमहाबाहुःसीताहरणकर्शितः ॥ रामःसागरमासाद्यवासमाज्ञापयत्तदा ॥ १०० ॥ सर्वाःसेनानिवेश्यंतांवेलायांहरिपुंगव ॥ संप्राप्तोमंत्रकालोनःसागरस्येहलंघने ॥ १ ॥ स्वांस्वांसेनांसमुत्सृज्यमाचकश्चित्कुतोव्रजेत् ॥ गच्छंतुवानराःशूराज्ञेयंछन्नंभयंचनः ॥ २ ॥ रामस्यवचनंश्रुत्वासुग्रीवःसहलक्ष्मणः ॥ सेनांनिवेशयत्तीरेसागरस्यद्रुमायुते ॥ ३ ॥ विरराजसमीपस्थंसागरस्यचतद्बलम् ॥ मधुपांडुजलःश्रीमान्द्वितीयइवसागरः ॥ ४ ॥ वेलावनमुपागम्यततस्तेहरिपुंगवाः ॥ निविष्टाश्चपरंपारंकांक्षमाणामहोदधेः ॥ ५ ॥ तेषांनिविशमानानांसैन्यसन्नाहनिःस्वनः ॥ अंतर्धायमहानादमर्णवस्यप्रशुश्रुवे ॥ ६ ॥ सावानराणांध्वजिनीसुग्रीवेणाभिपालिता ॥ त्रिधानिविष्टामहतीरामस्यार्थपराऽभवत् ॥ ७ ॥ सामहार्णवमासाद्यहृष्टावानरवाहिनी ॥ वायुवेगसमाधूतंपश्यमानामहार्णवम् ॥ ८ ॥ दूरपारमसंबाधंरक्षोगणनिषेवितम् ॥ पश्यंतोवरुणावासंनिषेदुर्हरियूथपाः ॥ ९ ॥ चंडनक्रग्राहघोरंक्षपादौदिवसक्षये ॥ हसंतमिवफेनोघैर्नृत्यंतमिवचोर्मिभिः ॥ ११० ॥ चंद्रोदयेसमुद्धूतंप्रतिचंद्रसमाकुलम् ॥ चंडानिलमहाग्राहैःकीर्णंतिमितिमिंगिलैः ॥ ११ ॥ दीप्तभोगैरिवाकीर्णंभुजंगैर्वरुणालयम् ॥ अवगाढंमहासत्त्वैर्नानाशैलसमाकुलम् ॥ १२ ॥ सुदुर्गंदुर्गमार्गंतमगाधमसुरालयम् ॥ मकरैर्नागभोगैश्चविगाढावातलोलिताः ॥ १३ ॥ उत्पेतुश्चनिपेतुश्चप्रहृष्टाजलराशयः ॥ अग्निचूर्णमिवाविद्धंभास्वरांबुमहोरगम् ॥ सुरारिनिलयंघोरंपातालविषयंसदा ॥ १४ ॥

त्यन्ये ॥ ७ ॥ पश्यमाना पश्यंती हृष्टाभूदिति शेषः ॥ ८ ॥ असंबाधं मध्ये गिर्याद्याश्रयरहितं वक्ष्यमाणसकलविशेषणं वरुणावासं पश्यंतो निषेदुरित्यन्वयः ॥ ९ ॥ चण्डनक्ररूपैर्ग्राहैर्महाघोरम् क्षपादौ दिवसक्षये तेन प्रदोषकाले चन्द्रोदये प्रवृद्धफेनौघैर्हसंतमिव स्थितम् उपलक्षणमिदं ऊर्मिभिर्नृत्यंतमिव स्थितम् ॥ ११० ॥ समुद्धूतं वृद्धम् ऊर्मिस्थप्रतिचन्द्रैः समाकुलं व्याप्तम् । चण्डानिलतुल्यवेगैर्जलचरैर्महाग्राहैः तिमिः । अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायत इति लक्षितः । तिमिंगिलस्तन्निगरणशक्तः । तैः कीर्णं व्याप्तम् ॥ ११ ॥ दीप्तभोगैरुज्ज्वलदेहैर्भुजंगैराकीर्णं वरुणालयं पातालमिव ॥ १२ ॥ सुदुर्गं शोभनानि लंकादीनि दुर्गाणि यस्मिन् । दुर्गमार्गं दुष्प्रापमार्गम् । दुष्प्रापपरपारमाप्त्युपायमित्यर्थः ॥ १३ ॥ जलराशय ऊर्मिरूपाः भास्वराः फणामणिभिर्भासमाना अम्बुमहोरगा जलसर्पा यस्मिंतत् अतएवाग्निचूर्णं विस्फु

रेण शोकः तन्मे इति । ह्रियमाणा सा हा नाथेति यदब्रवीत्तदेव अनुमानेन मे आशये चित्ते स्थितमिति शेषः । पीतं विषमिव मे गात्राणि दहति ॥ ७ ॥ रात्रिंदिवमिति निपातः ॥ ८ ॥ सौमित्रे त्वमत्रैव तिष्ठेति शेषः । भवता विनाहमेक एवार्णवमवगाह्य स्वप्स्ये । एवं सति प्रज्वलन्कामो जले सुप्तं न दहेत् जलस्याग्निविरोधित्वात् । मनोमूलकामस्य सुप्तौ मनउपरमेणोपरमाच्चेति भावः । भवता विनेत्युक्तिरेकाकित्वेन निद्राप्राप्त्यै ॥९॥ यद्यस्मादहं सा च वामोरूरेकां धरणिमाश्रितौ । एतत्कामयमानस्य बहु एतेन जीवितुं शक्यम् । कामुक एव शय्यासनेन यथा जीवति तथा एतेनापि जीवितुं शक्यम् । एकभूलोकस्थत्वेन लाभसंभवसत्त्वादिति भावः ॥१०॥ यथा सोदकस्य केदारस्योपस्नेहेन संबंधेन निरुदकोपि केदारस्तत्स्थं धान्यं जीवति न शुष्यति । तद्वत्तस्या जीवनवार्ताश्रवणेनाहमपि जीवामि ॥११॥ स्फीतां श्रियमिव समृद्धां

तद्वियोगेंधनवतातच्चिंताविमलार्चिषा ॥ रात्रिंदिवंशरीरंमेदह्यतेमदनाग्निना ॥ ८ ॥ अवगाह्यार्णवंस्वप्स्येसौमित्रेभवताविना ॥ एवंचप्रज्वलन्कामो नमांसुतंजलेदहेत् ॥ ९ ॥ बह्वेतत्कामयानस्यशक्यमेतेनजीवितुम् ॥ यदहंसानवामोरूरेकांधरणिमाश्रितौ ॥ १० ॥ केदारस्येवकेदारःसोदकस्य निरूदकः ॥ उपस्नेहेनजीवामिजीवंतींयच्छृणोमिताम् ॥ ११ ॥ कदानुखलुसुश्रोणींशतपत्रायतेक्षणाम् ॥ विजित्यशत्रून्द्रक्ष्यामिसीतांस्फीतामिव श्रियम् ॥ १२ ॥ कदासुचारुदंतोष्ठंतस्याःपद्ममिवाननम् ॥ ईषदुन्नाम्यपास्यामिरसायनमिवातुरः ॥ १३ ॥ तौतस्याःसहितौपीनौस्तनौतालफलोपमौ ॥ कदानुखलुसोत्कंपौहसंत्यामांभजिष्यतः ॥ १४ ॥ सानूनमसितापांगीरक्षोमध्यगतासती ॥ मन्नाथानाथहीनेवत्रातारंनाधिगच्छति ॥ १५ ॥ कथंजनकराजस्यदुहितामममचप्रिया ॥ राक्षसीमध्यगाशेतेस्नुषादशरथस्यच ॥१६॥ अविक्षोभ्याणिरक्षांसिसाविधूयोत्पतिष्यति ॥ विधूयजलदान्नीलाञ्शशिलेखाशरत्स्विव ॥१७॥ स्वभावतनुकानूनंशोकेनानशनेनच ॥ भूयस्तनुतरासीतादेशकालविपर्ययात् ॥१८॥ कदानुराक्षसेंद्रस्यनिधायोरसिसायकान् ॥ शोकंप्रत्याहरिष्यामिशोकमुत्सृज्यमानसम् ॥ १९ ॥ कदानुखलुमेसाध्वीसीताऽमरसुतोपमा ॥ सोत्कंठाकंठमालंब्यमोक्ष्यत्यानंदजंजलम् ॥ २० ॥ कदाशोकमिमंघोरंमैथिलीविप्रयोगजम् ॥ सहसाविप्रमोक्ष्यामिवासःशुक्लेतरंयथा ॥ २१ ॥ एवंविलपतस्तस्यतत्ररामस्यधीमतः ॥ दिनक्षयान्मंदवपुर्भास्करोस्तमुपागतः ॥ २२ ॥ आश्वासितोलक्ष्मणेनरामःसंध्यामुपासत ॥ स्मरन्कमलपत्राक्षींसीतांशोकाकुलीकृतः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे पंचमः सर्गः ॥ ५ ॥

॥ लंकायांतुकृतंकर्मघोरंदृष्ट्वाभयावहम् ॥ राक्षसेंद्रोहनुमताशक्रेणेवमहात्मना ॥ अब्रवीद्राक्षसान्सर्वान्ह्रियाकिंचिदवाङ्मुखः ॥ १ ॥

राज्यलक्ष्मीमिव ॥१२॥ रसायनं पारदादि ॥१३॥१४॥१५॥१६॥ अविक्षोभ्याणि दुराधर्षाणि रक्षांसि विधूय मद्भाग्यात् तेषां विधूननं कृत्वोत्पतिष्यतीति संबंधः ॥१७॥ स्वभावतनुका प्रकृत्या कृशशरीरा देशकालविपर्ययात्प्राचीनदुष्कर्मवशप्राप्तदुःखसाधनदेशकालसंबंधात् ॥ १८ ॥ प्रत्याहरिष्यामि जानक्या इति शेषः । मानसं मनसि वर्तमानं प्रत्याहरणसंभावनया प्रागपि शोकोत्सर्गात् त्वः साधुत्वम् ॥ १९ ॥ मे कंठमालंब्येत्यन्वयः ॥ २० ॥ शुक्लेतरं मलिनम् ॥ २१ ॥ विलपतो रामस्य विलापं श्रुत्वेत्यर्थः ॥ २२ ॥ सीतां स्मरन् । हेतौ शतृप्रत्ययः । तत्स्मरणाद्धेतोः शोकाकुलीकृतो रामो लक्ष्मणेनाश्वासितः ॥ ॥ २३ ॥ गैरमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकाण्डे पंचमः सर्गः ॥ ५ ॥ ॥ अथ कविना हनूमत्प्रतिनिवृत्तिं समुद्रतीरे रामानयनपर्यंता

लिंगरूपमाविद्धं क्षिप्तमिवात्र दृश्यत इति शेषः । सदा पातालविषयं पातालगोचरं सागरम् ॥१४॥ अम्बरप्रख्यं वैपुल्यातलत्वैः तैरेव चांबरं सागरोपमम् । उपमेयोपमालंकारः । एवं सति यत्फलति तद्वाच्यवृत्त्याह निर्विशेषं परस्परातिरिक्तसदृशरहितम् ॥ १५ ॥ तयेरेव समानधर्मांतरमाह संपृक्तमिति । संसृष्टं तुल्यमित्यर्थः । नभोंभसोस्तुल्यरूपत्वात्ताररत्नसमाकुले मुक्ताश्रेष्ठैर्नक्षत्रश्रेष्ठैश्च समाकुले समुद्रनभसी तादृग्रूपे परस्पर सदृशरूपे दृश्येते ॥ १६ ॥ समुत्पतितमेघस्यांबरस्य वीचिमालाकुलस्य सागरस्य चेत्यन्वयः ॥ १७ ॥ सक्ताः निरंतराः ॥ १८ ॥ वायुना विषक्तं संबद्धम् । अतएव रत्नौघक्षेपकोर्मिमयजलसन्नादवंतम् अतएव क्रुद्धमुत्पतंतमिव स्थितम् ॥ १९ ॥ जलाशयः समुद्रः ॥ १२० ॥ भ्रांतानां घूर्णतामूर्मिजालानां सन्नादो यत्र तम् । अतएव प्रलोलं प्रचलमिव स्थितम् ॥ १२१ ॥ यैरैप्रमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्थः सर्गः ॥ ४ ॥ स्वारक्षा सुकृतमासमंताद्रक्षणं यस्याः सा सुसमाहिता सम्यग्रचिता ॥ १ ॥ २ ॥ ३ ॥ अथ समुद्रवेलावनाद्युद्दीपकदर्शनात् परतीर

सागरंचांवरप्रख्यमंबरंसागरोपमम् ॥ सागरंचांबरंचेतिनिर्विशेषमदृश्यत ॥ १५ ॥ संपृक्तंनभसाप्यंभःसंपृक्तंचनभोंऽभसा ॥ तादृग्रूपेस्मदृश्येते ताराररत्नसमाकुले ॥ १६ ॥ समुत्पतितमेघस्यवीचिमालाकुलस्यच ॥ विशेषोनद्वयोरासीत्सागरस्यांबरस्यच ॥ १७ ॥ अन्योन्यैराहताःसक्ताः सस्वनुर्भीमनिःस्वनाः ॥ ऊर्मयःसिंधुराजस्यमहाभेर्यइवांबरे ॥ १८ ॥ रत्नौघजलसन्नादंविषक्तमिववायुना ॥ उत्पतंतमिवक्रुद्धंयादोगणसमाकुलम् ॥ १९ ॥ ददृशुस्तेमहात्मानोवाताहतजलाशयम् ॥ अनिलोद्धूतमाकाशेप्रलपंतमिवोर्मिभिः ॥ १२० ॥ ततोविस्मयमापन्नाहरयोददृशुःस्थिताः ॥ भ्रांतोर्मिजालसन्नादंप्रलोलमिवसागरम् ॥ १२१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्थः सर्गः ॥ ४ ॥ सातुनीलेनविधिवत्स्वारक्षासुसमाहिता ॥ सागरस्योत्तरेतीरेसाधुसाविनिवेशिता ॥ १ ॥ मैंदश्चद्विविदश्चोभौतत्रवानरपुंगवौ ॥ विचेरतुश्चतांसेनांरक्षार्थंसर्वतोदिशम् ॥ २ ॥ निविष्टायांतुसेनायांतीरेनदनदीपतेः ॥ पार्श्वस्थंलक्ष्मणंदृष्ट्वारामोवचनमब्रवीत् ॥ ३ ॥ शोकश्चकिलकालेनगच्छताह्यपगच्छति ॥ ममचापश्यतःकांतामहन्यहनिवर्धते ॥ ४ ॥ नमेदुःखंप्रियादूरेनमेदुःखंहृतेतिच ॥ एतदेवानुशोचामिवयोस्याह्यतिवर्तते ॥ ५ ॥ वाहिवातयतःकांतातांस्पृष्ट्वामामपिस्पृश ॥ त्वयिमेगात्रसंस्पर्शश्चंद्रेदृष्टिसमागमः ॥ ६ ॥ तन्मेदहतिगात्राणिविषंपीतमिवाशये ॥ हानाथेतिप्रियासामांह्रियमाणायदब्रवीत् ॥ ७ ॥

स्यसीतास्मृत्या शोचति शोकश्चेति । गच्छता कालेन इष्टांतरवियोगजः शोकोपि गच्छतीति प्रसिद्धिर्मम प्रियाविरहजे शोके तु विपरीतमित्याह मम चेति । चरस्त्वर्थे ॥ ४ ॥ नन्वचिरात्प्रत्याहरिष्यामः किं शोकेनेत्यत्र तत्रैव विघ्नचिंतया दुःखमित्याह न मे इति । प्रिया दूरे स्थितेति मे दुःखं नास्ति । स्त्रीधर्मदिवसवत् । तथा हृतेत्यपि नदुःखम् प्रबलदुष्कर्मवशं प्राप्तत्वात् । अपि तु अस्या वयः प्राणावस्थितिकालो तिवर्तते मासद्वयमात्रं जीवनमित्युक्तेः । तत्रापि बहुदिवसात्ययात् । यद्वा वयो यौवनमिति प्राकृतवद्वादः ॥ ५ ॥ यतो यस्यां दिशि कांता तद्दिशि वाहि गच्छ तत्र स्थितां तां स्पृष्ट्वा मामपि स्पृश । किमेतावता तवेत्यत्राह त्वयीति । कांतास्पर्शवति त्वयि मे गात्रसंस्पर्शो निदाघतप्तदृष्टेश्चंद्रे समागमो यथाऽखिलदृष्टितापशामक एवं त्वत्स्पर्शो गात्रीयाखिलतापशामक इत्यर्थः । निदर्शनात्रालंकारः ॥ ६ ॥ अथ हेत्वन्त

मुपवर्ण्य तन्निवृत्त्यनंतरकालिकः सभयरावणव्यापार उपवर्ण्यते वाचः क्रमवृत्तित्वात् । लंकायामिति । हनुमता शक्रेणेव कृतं कर्म दृष्ट्वा राक्षसानब्रवीत् ॥ १ ॥ ह्रीबीजमाह धर्षितेति । आक्रांतेत्यर्थः । वानर मात्रेण एकेन निरायुधेन चेत्यर्थः ॥ २ ॥ आविला क्षुभिता ॥ ३ ॥ वो भद्रमस्तु किं करिष्यामि अनंतरं वो युष्माकं किं युक्तं योग्यानुष्ठानं किं रोचत इति शेषः । यत्कर्मानुष्ठितं नः समर्थं भवेद्यच्च कृतं सुकृतं सम्यगनुष्ठितं श्लाघनीयं भवेत्तदुच्यताम् ॥ ४ ॥ सर्वतः समर्थस्य तव को विचार इत्यत्र राजनीतिरियमित्याह मंत्रमूलमिति । मनस्विनः शूराः ॥ ५ ॥ स्वस्योत्तममभुत्वमत्यायनशेषतया मंत्रत्रैविध्या त्प्रभुत्रैविध्यमाह त्रिविधा इति । पुरुषाः मंत्रापेक्षिणः प्रभुपुरुषाः समवेतानां संकीर्णरूपाणां लक्षणज्ञानं विना विवेक्तुमशक्यानां गुणदोषौ उत्तमानां गुणो मध्यमानां गुणदोषावधमानां दोषश्चेति विवेकः ॥ ६ ॥ यस्य मंत्र उच्यमानलक्षणैस्त्रिभिः संयुक्तो भवति । यो वा मित्रादिभिस्त्रिभ्योधिकैरपि सहितो मंत्रयित्वा कर्मारंभान्प्रवर्तयेत् । दैवे दैवसहाये च यत्नं कुरुते तमुत्तमं पुरुषमाहुः ॥ ७ ॥ ८ ॥ एकोर्थमिति ।

धर्षिताचप्रविष्टाचलंकादुष्प्रसहापुरी ॥ तेनवानरमात्रेणदृष्टासीताचजानकी ॥ २ ॥ प्रासादोधर्षितश्चैत्यःप्रवराराक्षसाहताः ॥ आविलाचपुरीलंकासर्वाहनुमताकृता ॥ ३ ॥ किंकरिष्यामिभद्रंवःकिंवोयुक्तमनंतरम् ॥ उच्यतांनःसमर्थंयत्कृतंचसुकृतंभवेत् ॥ ४ ॥ मंत्रमूलंचविजयंप्रवदंतिमनस्विनः ॥ तस्माद्वैरोचयेमंत्रंरामंप्रतिमहाबलाः ॥ ५ ॥ त्रिविधाःपुरुषालोकेउत्तमाधममध्यमाः ॥ तेषांतुसमवेतानांगुणदोषौवदाम्यहम् ॥ ६ ॥ मंत्रस्त्रिभिर्हिसंयुक्तःसमर्थैर्मंत्रनिर्णये ॥ मित्रैर्वापिसमानार्थैर्बांधवैरपिवाधिकैः ॥ ७ ॥ सहितोमंत्रयित्वायःकर्मारंभान्प्रवर्तयेत् ॥ दैवेचकुरुतेयत्नंतमाहुःपुरुषोत्तमम् ॥ ८ ॥ एकोर्थंविमृशेदेकोधर्मेप्रकुरुतेमनः ॥ एकःकार्याणिकुरुतेतमाहुर्मध्यमंनरम् ॥ ९ ॥ गुणदोषौननिश्चित्यत्यक्त्वादैवव्यपाश्रयम् ॥ करिष्यामीतियःकार्यमुपेक्षेत्सनराधमः ॥ १० ॥ यथेमेपुरुषानित्यमुत्तमाधममध्यमाः ॥ एवंमंत्रोपिविज्ञेयउत्तमाधममध्यमः ॥ ११ ॥ ऐकमत्यमुपागम्यशास्त्रदृष्टेनचक्षुषा ॥ मंत्रिणोयत्रनिरतास्तमाहुर्मंत्रमुत्तमम् ॥ १२ ॥ बह्वीरपिमतीर्गत्वामंत्रिणामर्थनिर्णयः ॥ पुनर्यत्रैकतांप्राप्तःसमंत्रोमध्यमःस्मृतः ॥ १३ ॥ अन्योन्यमतिमास्थाययत्रसंप्रतिभाष्यते ॥ नचैकमत्येश्रेयोस्तिमंत्रःसोऽधमउच्यते ॥ १४ ॥ तस्मात्सुमंत्रितंसाधुभवंतोमतिसत्तमाः ॥ कार्यंसंप्रतिपद्यंतामेतत्कृत्यंमतंमम ॥ १५ ॥

विचारोस्य गुणः । इतरनिरपेक्षतादोषः ॥ ९ ॥ गुणदोषौ युक्तायुक्तत्वहिताहितादिकमिष्टैः सह न निश्चित्य दैवव्यपाश्रयं त्यक्त्वा दैवोपेक्षां कृत्वा कार्यं करिष्यामीत्युपक्रम्य तदप्यंते उपेक्षेत् निवर्तयेत्स नराधमः ॥ १० ॥ यद्वशात्प्रभुत्रैविध्यमुक्तं तस्य मंत्रस्यापीदानीं त्रैविध्यमाह यथेति ॥ ११ ॥ तानेव मंत्रप्रकारानाह ऐकमत्यमिति । शास्त्रदृष्टेन नीतिशास्त्रप्रतिपादितेन चक्षुषा नयचक्षुषा मंत्रिणो यत्र मंत्रे ऐकमत्यमुपागम्य निरताः प्रतिष्ठितास्तं मंत्रमुत्तममाहुः ॥ १२ ॥ बह्वीर्मतीर्गत्वा बहुविरुद्धमतिविषयतां प्राप्येत्यर्थः । पुनर्वैमत्यानंतरं राजभीत्याद्युपाधितो यत्र मंत्रे एकतामैकमत्यं प्राप्तः स मंत्रो मध्यमः ॥ १३ ॥ अन्योन्यमतिं भिन्नभिन्नमतिमास्थाय यत्र मंत्रे समंतात्प्रति प्रतिस्पर्धया भाष्यते कथंचित्कष्टेनैकमत्येपि श्रेयश्च नास्ति स मंत्रोऽधमः ॥ १४ ॥ उपसंहरति तस्मादिति ! यत्कार्यं सुमंत्रितं भवति । तदेव साधु भवति । भवंतश्च मंत्रे मत्या सत्तमाः श्रेष्ठा अतो यत्कार्यं सुमंत्रितं साधु भवति तत्कार्यं संप्रतिपद्यंताम् ऐकमत्येन निश्चिन्वंतु । यदेव भवद्भिर्निश्चितं तदेव मम कृत्यं कर्तुं योग्यं मतमिष्टम् ॥ १५ ॥

विचारमयोनिका शत्रुभीतिश्च निश्चितास्माकमित्याह वानराणामिति । अभ्येतीति वर्तमानसामीप्ये लट् । अचिरादागमिष्यत्येवेत्यर्थः ॥ १६ ॥ ननु कथं दुस्तरे सागरे स्थिते रामागमनशंकेत्यत्राह तरिष्यतीति । सुव्यक्तं सुखं तरिष्यति । प्रथमांतपाठे सगरस्य गोत्रापत्यं सागर इति रामविशेषणम् । तदा सागरमिति द्वितीयांतमन्यत्पदमध्याहार्यम् । को वा तरणोपायस्तस्येत्यत्राह तरसेति । बलेन तपोबलसहजबलदिव्यास्त्राणामन्यतमेनेत्यर्थः । बलैर्वानरबलैरनुगैः सुग्रीवादिभिश्च सहितः ॥ १७ ॥ तदेवाह समुद्रमिति । अन्यस्सेतुबंधनं तस्मिन्नेकस्मिन्वानरे एवंविधे एवंविधव्यापारे सति बहुभिर्वानरैः सह रामे विरुद्धे कार्ये विरुद्धं कर्तुमुद्यते सति यन्मम पुरे सैन्ये च हितं तत्सर्वं संमंत्र्यताम् ॥ १८ ॥ जैयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षष्ठः सर्गः ॥ ६ ॥ ॥ ७ ॥

वानराणांहिवीराणांसहस्रैःपरिवारितः ॥ रामोऽभ्येतिपुरींलंकामस्माकमुपरोधकः ॥ १६ ॥ तरिष्यतिचसुव्यक्तंराघवःसागरंसुखम् ॥ तरसायुक्तरूपेणसानुजःसबलानुगः ॥ १७ ॥ समुद्रमुच्छोषयतिवीर्येणान्यत्करोतिवा ॥ तस्मिन्नेवंविधेकार्येविरुद्धोवानरैःसह ॥ हितंपुरेचसैन्येचसर्वंसंमंत्र्यतांमम ॥ १८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आ० युद्धकांडेषष्ठःसर्गः ॥ ६ ॥ इत्युक्ताराक्षसेंद्रेणराक्षसास्तेमहाबलाः ॥ ऊचुःप्रांजलयःसर्वेरावणंराक्षसेश्वरम् ॥ १ ॥ द्विषत्पक्षमविज्ञायनीतिबाह्यास्त्वबुद्धयः ॥ राजन्परिघशक्त्यृष्टिशूलपट्टिशकुंतलम् ॥ २ ॥ सुमहन्नोबलंकस्माद्विषादंभजतेभवान् ॥ त्वयाभोगवतींगत्वानिर्जिताःपन्नगायुधि ॥३॥ कैलासशिखरावासीयक्षैर्बहुभिरावृतः ॥ सुमहत्कदनंकृत्वावश्यस्तेधनदःकृतः ॥४॥ समहेश्वरसख्येनश्लाघमानस्त्वयाविभो ॥ निर्जितःसमरेरोषाल्लोकपालोमहाबलः ॥ ५ ॥ विनिपात्यचयक्षौघान्विक्षोभ्यविनिगृह्यच ॥ त्वयाकैलासशिखराद्विमानमिदमाहृतम् ॥ ६ ॥ मयेनदानवेंद्रेणत्वद्भयात्सख्यमिच्छता ॥ दुहितातवभार्यार्थेदत्ताराक्षसपुंगव ॥ ७ ॥ दानवेंद्रोमहाबाहोवीर्योत्सिक्तोदुरासदः ॥ विगृह्यवशमानीतःकुंभीनस्याःसुखावहः ॥ ८ ॥ निर्जितास्तेमहाबाहोनागागत्वारसातलम् ॥ वासुकिस्तक्षकःशंखोजटीचवशमाहृताः ॥ ९ ॥ अक्षयाबलवंतश्चशूरालब्धवराःपुनः ॥ त्वयासंवत्सरेयुद्धासमरेदानवाविभो ॥ १० ॥ स्वबलंसमुपाश्रित्यनीतावशमरिंदम ॥ मायाश्चाधिगतास्तत्रबह्वयोवैराक्षसाधिप ॥ ११ ॥ शूराश्चबलवंतश्चवरुणस्यसुतारणे ॥ निर्जितास्तेमहाभागचतुर्विधबलानुगाः ॥ १२ ॥ मृत्युदंडमहाग्राहंशाल्मलीद्रुममंडितम् ॥ कालपाशमहावीचिंयमकिंकरपन्नगम् ॥ १३ ॥

तत्रादौ दुर्मंत्रिणां दुर्मंत्रमाह इत्युक्ता इति । यतो नीतिबाह्या अतएवाबुद्धयस्ते राक्षसा द्विषत्पक्षस्य रामसुग्रीवादेर्बलमविज्ञाय ज्ञात्वापि मोहादविगणय्य वा प्रांजलयः संतो रावणमूचुः ॥ १ ॥ तदेवाह राजन्निति । ऋष्टिरसिः ॥ २ ॥ ३ ॥ उच्यमानगुणो धनदस्ते त्वया सुमहत्कदनं युद्धं कृत्वा वश्यः कृतः ॥ ४ ॥ तदेव प्रपंच्यते स इति । स धनदः महेश्वरसख्येन हेतुना स्वयं श्लाघमानोपि लोकपालोपि त्वया समरे रोषान्निर्जितः ॥ ५ ॥ न जयमात्रमपि तु सर्वस्वापहारोपीत्याह विनिपात्येति । इदं विमानं पुष्पकम् ॥ ६ ॥ मयदुहिता मंदोदरी ॥ ७ ॥ कुंभीनसी रावणस्वसेति तीर्थः । तस्याः सुखावहो भर्तेत्यर्थः ॥ ८ ॥ जटी नागविशेषः ॥ ९ ॥ दानवाः कालकेयाः तत्र तैः सह वासान्मायाश्चाधिगताः प्राप्ताः ॥ १० ॥ ११ ॥ चतुर्विधबलं रथगजतुरगपादातरूपम् ॥ १२ ॥ मृत्युदंडरूपो महाग्राहो

॥ ४३ ॥ पूर्णार्थप्रतिभानवान्पूर्णस्य अर्थस्य कार्यस्य शकुनैः प्रतिभानवान् ज्ञानवान् करिष्यमाणस्य कार्यस्य पूर्णत्वज्ञानवानित्यर्थः । परिपूर्णार्थमिति रामविशेषणम् ॥ ४४ ॥ ४५ ॥ सेनामनुवाति सेनापृष्ठभागेन वाति मृदुहितसुखपदैः क्रमेण मांद्यशैत्यसौरभाण्युक्तानि ॥ ४६ ॥ पूर्णा विच्छेदरहिता वल्गवः श्रोत्रसुखाः स्वरा येषां ते ॥ ४७ ॥ भार्गवो भृगुपुत्र उशना शुक्रोपि प्रसन्नार्चिस्त्वामनुगतोस्ति शुक्रमौढ्यं नास्तीत्युक्तं भवति । यत्तु पुरः शुक्रभावो ध्वनित इति तन्न दक्षिणोत्तरगंतॄणां कदापि पुरः शुक्रप्रसक्तेरभावात् । ब्रह्मराशिर्ध्रुवः ब्रह्मणां सप्तर्षीणां राशिः पुंजीभावो यस्मिन्स तथा तस्माद्विशुद्धोऽभ्रादिमालिन्यरहितः तत्पुंजीभावमेव दर्शयति शुद्धा अभ्रादिहीना शुद्धं ध्रुवं प्रदक्षिणं कुर्वाणा अर्चिष्मंतः प्रशस्तार्चिषो भूत्वा प्रकाशंते ॥ ४८ ॥ सपुरोहितः भगवद्विश्वामित्रसृष्टस्वसमीपवर्तिसप्तर्षिमंडलमध्यवर्तिवसिष्ठसहित इत्यर्थः । ईदृशस्त्रिशंकुरस्माकं पितामहोस्माकं पुरो भाति तस्य दक्षिणदिक्स्थत्वात् । पितामहः पुरोस्माकमिति पांक्तः पाठ इति कतकः ॥ ४९ ॥ इक्ष्वाकूणां परं नक्षत्रं कुलनक्षत्रं विमले अंगार

जगामरामोधर्मात्माससैन्योदक्षिणांदिशम् ॥ तमंगदगतोरामंलक्ष्मणःशुभयागिरा ॥४३॥ उवाचपरिपूर्णार्थंपूर्णार्थप्रतिभानवान् ॥ हतामवाप्यवैदेहींक्षिप्रंहत्वाचरावणम् ॥४४॥ समृद्धार्थःसमृद्धार्थामयोध्यांप्रतियास्यसि ॥ महांतिचनिमित्तानिदिविभूमौचराघव ॥ ४५ ॥ शुभानितवपश्यामिसर्वाण्येवार्थसिद्धये ॥ अनुवातिशिवोवायुःसेनांमृदुहितःसुखः ॥ ४६ ॥ पूर्णवल्गुस्वराश्चेमेप्रवदंतिमृगद्विजाः ॥ प्रसन्नाश्चदिशःसर्वाविमलश्चदिवाकरः ॥४७॥ उशनाचप्रसन्नार्चिरनुत्वांभार्गवोगतः ॥ ब्रह्मराशिर्विशुद्धश्चशुद्धाश्चपरमर्षयः ॥ अर्चिष्मंतःप्रकाशंतेध्रुवंसर्वेप्रदक्षिणम् ॥ ४८ ॥ त्रिशंकुर्विमलोभातिराजर्षिःसपुरोहितः ॥ पितामहःपुरोस्माकमिक्ष्वाकूणांमहात्मनाम् ॥ ४९ ॥ विमलेचप्रकाशेतेविशाखेनिरुपद्रवे ॥ नक्षत्रंपरमस्माकमिक्ष्वाकूणांमहात्मनाम् ॥ ५० ॥ नैर्ऋतंनैर्ऋतानांचनक्षत्रमतिपीडयते ॥ मूलोमूलवतास्पृष्टोधूप्यतेधूमकेतुना ॥ ५१ ॥ सर्वंचैतद्विनाशायराक्षसानामुपस्थितम् ॥ कालेकालगृहीतानांनक्षत्रंग्रहपीडितम् ॥ ५२ ॥ प्रसन्नाःसुरसाश्चापोवनानिफलवंतिच ॥ प्रवांतिनाधिकागंधायथर्तुकुसुमाद्रुमाः ॥५३॥ व्यूढानिकपिसैन्यानिप्रकाशंतेधिकंप्रभो ॥ देवानामिवसैन्यानिसंग्रामेतारकामये ॥ एवमार्यसमीक्ष्यैतत्प्रीतोभवितुमर्हसि ॥५४॥ इतिभ्रातरमाश्वास्यहृष्टःसौमित्रिरब्रवीत् ॥ अथावृत्यमहींकृत्स्नांजगामहरिवाहिनीम् ॥५५॥ ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैरपि ॥ कराग्रैश्चरणाग्रैश्चवानरैरुद्धतंरजः ॥५६॥ भीममंतर्दधेलोकंनिवार्यसवितुःप्रभाम् ॥ सपर्वतवनाकाशंदक्षिणांहरिवाहिनीम् ॥ ५७ ॥

कादिदुष्टग्रहाक्रमणरहिते ॥ ५० ॥ अथ नैर्ऋतनक्षत्रपीडामाह नैर्ऋतं निर्ऋतिदेवताकम् मूलः मूलमिति यावत् । आर्षं पुंस्त्वम् । अतिपीड्यते अत्यंतं पीड्यते । केन तत्राह मूलवतेति । मूलवतोच्चैर्दंडाकारतयोत्थितेन धूमकेतुना स्पृष्टो धूप्यते संजाततापो भवति॥५१॥यतः कालेऽतकाले कालगृहीतानां मृत्युगृहीतानां नक्षत्रं ग्रहपीडितं शन्यंगारकराह्वादिग्रहपीडितं भवतीति शेषः॥५२॥उशना चेत्याद्येतदंतं सह्ये किंचित्कालं विश्रम्य फलमूलादि भुक्त्वा पुना रात्रौ गमनकाले लक्ष्मणेन प्रदर्श्यंते । अतएव वक्ष्यति सा स्म याति दिवारात्रमिति । सुरसा आपः सरसीष्विति शेषः । गंधाः अजंतः । गंधवंतो वायवोऽधिका न प्रवांति मंदं वांतीत्यर्थः । द्रुमाःस्वस्वर्तुमनतिक्रम्य जातकुसुमाः ॥ ५३ ॥ आमयशब्देन दुःखत्वाद्वधो लक्ष्यते । तारकस्य तारकासुरस्यामयो विनाशो यस्मिंस्तादृशे संग्रामे देवसेनान्या व्यूढानि देवानां सैन्यानीव प्रकाशंते ॥ ५४ ॥ सौमित्रिः स्वयं निमित्तैराश्वस्य हृष्टः सन् भ्रातरमब्रवीत् । आश्वास्येतिवापाठः ॥ ५५॥ ऋक्षादयः कर्तारः कराग्रादीनि करणानि ॥५६॥ उद्धतं भीमं रजो लोकमंतर्दधे । अंतर्हितमकरोत् ।

दक्षिणां दिशमिति शेषः ॥ ५७ ॥ ५८ ॥ सर्वाणि नदीस्त्रोतांसि विपरीतवत् वैपरीत्येन सस्यंदुः यथाऽभ्रेषु धावत्सु चंद्रो धावतीव तद्वत्सेनागतिर्नदीप्रवाहेषु भ्रांत्या भाति स्मेत्यर्थ इति कतकः । वस्तुतो नदीषु वानराणां प्रवाहाभिमुखं तरणे तैराहतानि जलानि विपरीतवहनानीत्यर्थः ॥ ५९ ॥ साविशत् अयं द्वितीयो वास इति प्रतीयते ॥ ६० ॥ पुनर्यात्रामाह समावृत्येति ॥ ६१ ॥ समारोपितविक्रमः एवमेव मया कर्तव्यमित्यसाध्येप्यर्थे चित्तसंक्रमितविक्रमप्रकाराः ॥ ६२ ॥ विविधान्प्रकारान् तानेवाह तत्रेति ॥ ६३ ॥ वानराणां हर्षादिजनितशब्दः किलकिला । प्रास्फोटयन्पुच्छानि भूमावताडयन् ॥ ६४ ॥ विक्षिप्य

छादयंतीययौभीमाद्यामिवांबुदसंततिः ॥ उत्तरंत्याश्वसेनायाःसततंबहुयोजनम् ॥ ५८ ॥ नदीस्रोतांसिसर्वाणिसस्यंदुर्विपरीतवत् ॥ सरांसिविमलांभांसिद्रुमाकीर्णांश्चपर्वतान् ॥ ५९ ॥ समान्भूमिप्रदेशांश्चवनानिफलवंतिच ॥ मध्येनचसमंताच्चतिर्यक्चाधश्चसाविशत् ॥ ६० ॥ समावृत्यमहींकृत्स्नांजगाममहतीचमूः ॥ तेहृष्टवदनाःसर्वेजग्मुर्मारुतरंहसः ॥ ६१ ॥ हरयोराघवस्यार्थेसमारोपितविक्रमाः ॥ हर्षवीर्यबलोद्रेकान्दर्शयंतःपरस्परम् ॥ ६२ ॥ यौवनोत्सेकजाद्दर्पाद्विविधांश्चक्रुरध्वनि ॥ तत्रकेचिद्द्रुतंजग्मुरुत्पेतुश्चतथापरे ॥ ६३ ॥ केचित्किलकिलांचक्रुर्वानरावनगोचराः ॥ प्रास्फोटयंश्चपुच्छानिसन्निजघ्नुःपदान्यपि ॥ ६४ ॥ भुजान्विक्षिप्यशैलांश्चद्रुमानन्येबभंजिरे ॥ आरोहंतश्चशृंगाणिगिरीणांगिरिगोचराः ॥ ६५ ॥ महानादान्प्रमुंचंतिक्ष्वेडामन्येप्रचक्रिरे ॥ ऊरुवेगैश्चममृदुर्लताजालान्यनेकशः ॥ ६६ ॥ जृंभमाणाश्चविक्रांताविचिक्रीडुःशिलाद्रुमैः ॥ ततःशतसहस्रैश्चकोटिभिश्चसहस्रशः ॥ ६७ ॥ वानराणांसुघोराणांश्रीमत्परिवृतामही ॥ सास्मयातिदिवारात्रंमहतीहरिवाहिनी ॥ ६८ ॥ प्रहृष्टमुदिताःसर्वेसुग्रीवेणाभिपालिताः ॥ वानरास्त्वरितायांतिसर्वेयुद्धाभिनंदिनः ॥ प्रमोक्षयिषवःसीतांमुहूर्तंक्वापिनावसन् ॥ ६९ ॥ ततःपादपसंबाधंनानावनसमायुतम् ॥ सह्यपर्वतमासाद्यवानरास्तेसमारुहन् ॥ ७० ॥ काननानिविचित्राणिनदीप्रस्रवणानिच ॥ पश्यन्नपिययौरामःसह्यस्यमलयस्यच ॥ ७१ ॥ चंपकांस्तिलकांश्चूतान्प्रसेकान्सिंदुवारकान् ॥ तिनिशान्करवीरांश्चभंजंतिस्मप्लवंगमाः ॥ ७२ ॥ अशोकांश्चकरंजांश्चप्लक्षन्यग्रोधपादपान् ॥ जंबुकामलकान्नागान्भंजंतिस्मप्लवंगमाः ॥ ७३ ॥ प्रस्तरेषुचरम्येषुविविधाःकाननद्रुमाः ॥ वायुवेगप्रचालिताःपुष्पैरवकिरंतितान् ॥ ७४ ॥ मारुतःसुखसंस्पर्शोवातिचंदनशीतलः ॥ षट्पदैरनुकूजद्भिर्वनेषुमधुगंधिषु ॥ ७५ ॥

प्रसार्य ॥ ६५ ॥ ममृदुः मृदितवंतः ॥ ६६ ॥ ६७ ॥ श्रीमत् लुप्ततृतीयांतं श्रीमद्भिरित्यर्थः अयं तृतीयो वासः दिवारात्रं मध्यरात्रे एव याममात्रं वास इत्याशयः ॥ ६८ ॥ प्रमोक्षयिषवः मोक्षशब्दात्तत्करोतीति णौ सन्यार्षेऽभ्यासलोपे उभयत्र च रूपम् । प्रमोचयितुमिच्छावत इत्यर्थः नावसन् दिवेति शेषः ॥ ६९ ॥ सह्यपर्वतं तत्पर्वतदक्षिणभागं तमासाद्य ते वानराः समारुहंस्तच्छिखरमिति शेषः ॥ ७० ॥ सह्यपर्वतमासेदुर्मलयं च मही धरमिति पाठांतरं तीर्थसंमतम् ॥ ७१ ॥ ७२ ॥ ७३ ॥ प्रस्तरेषु पाषाणेषु स्थितानिति शेषः ॥ ७४ ॥ षट्पदैरनुकूजद्भिरुपलक्षितो मारुतो वाति ॥ ७५ ॥

अनुत्तमाः प्रशस्ताः ॥ २५ ॥ प्रयुतं दशलक्षम् ॥ २६ ॥ कुलपुत्राः किंकराः । यद्वा योद्धृसत्कुले प्रसूताः ॥ २७ ॥ मध्यमं स्कंधं पुरमध्यसेनानिवेशस्थानम् । साग्रा कोटिः सपादकोटिः ॥ २८ ॥ यद्येवंदुर्गा लंका कथमस्मद्बलसाध्येति शंकां निराचष्टे ते मयेति । ते संक्रमाः परिखामार्गा मया भग्नाः परिखाश्च अवपूरिताः शिलेष्टकादिभिरिति शेषः । येन बलैकदेशक्षयोपि कृत इत्यर्थः ॥ २९ ॥ येन केन स्वाम्युक्तेष्वन्यतमेन समुद्रं तराम तत्रैवं सति वानरैः स्वयमेव लंका हतेत्युपधार्यतां निश्चीयताम् ॥ ३० ॥ किंचाशेषतरणोपायचिंता व्यर्थैव प्रबलैर्वक्ष्यमाणैरेव कार्यसिद्धिरित्याह अंगद इत्यादि । एतेंगदादय एव लंकां भित्त्वा सीतामानेष्यंति किं बलशेषेण तवेत्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥ एवमिति । प्रधानैरेव कार्यसाधनमिष्टं चेत्क्षिप्रमिदानीमेवानयतेत्याज्ञापय । यदि बलानां सर्वसंग्रहं बलसंमेलनमुद्दिश्य बलानामपि पारनयनमिष्टं तदा युक्तेन यात्रोचितेन मुहूर्तेन प्रस्थानं स्वयात्रामभिरोचय ॥ ३४ ॥ वैंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये

प्रयुतंरक्षसामत्रपश्चिमद्वारमाश्रितम् ॥ चर्मखड्गधराःसर्वेंतथासर्वास्त्रकोविदाः ॥२६॥ न्यर्बुदंरक्षसामत्रउत्तरद्वारमाश्रितम् ॥ रथिनश्चाश्ववाहाश्चकुलपुत्राःसुपूजिताः ॥ २७ ॥ शतशोथसहस्राणिमध्यमंस्कंधमाश्रिताः ॥ यातुधानादुराधर्षाःसाग्रकोटिश्चरक्षसाम् ॥ २८ ॥ तेमयासंक्रमाभग्नाःपरिखाश्चावपूरिताः ॥ दग्धाचनगरीलंकाप्राकाराश्चावसादिताः ॥२९॥ येनकेनतुमार्गेणतरामवरुणालयम् ॥ हतेतिनगरीलंकावानरैरुपधार्यताम् ॥ ३० ॥ अंगदोद्विविदोमैंदोजांबवान्पनसोनलः ॥ नीलःसेनापतिश्चैवबलशेषेणकिंतव ॥ ३१ ॥ प्लवमानाहिगत्वातांरावणस्यमहापुरीम् ॥ सपर्वतवनांभित्त्वासखातांचसतोरणाम् ॥ ३२ ॥ सप्राकारांसभवनामानयिष्यंतिराघव ॥ ३३ ॥ एवमाज्ञापयक्षिप्रंबलानांसर्वसंग्रहम् ॥ मुहूर्तेनतुयुक्तेनप्रस्थानमभिरोचय ॥ ३४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेतृतीयःसर्गः ॥ ३ ॥ श्रुत्वाहनूमतोवाक्यंयथावदनुपूर्वशः ॥ ततोऽब्रवीन्महातेजारामःसत्यपराक्रमः ॥ १ ॥ यन्निवेदयसेलंकांपुरींभीमस्यरक्षसः ॥ क्षिप्रमेनांवधिष्यामिसत्यमेतद्ब्रवीमिते ॥ २ ॥ अस्मिन्मुहूर्तेसुग्रीवप्रयाणमभिरोचय ॥ युक्तोमुहूर्तेविजयेप्राप्तोमध्यंदिवाकरः ॥ ३ ॥ सीतांहत्वातुतद्यातुक्वासौयास्यतिजीवितः ॥ सीताश्रुत्वाभियानंमेआशामेष्यतिजीविते ॥ जीवितांतेऽमृतंस्पृष्ट्वापीत्वामृतमिवातुरः ॥ ४ ॥

युद्धकांडे तृतीयः सर्गः ॥ ३ ॥ अनुपूर्वशः अनुक्रमेण ॥ १ ॥ तत्रांगदादिमुखेन कार्यनिर्वहणमशक्यं मत्वा तत्परोचनाय तदंगीकुर्वन्निव स्वमतमाह यदिति । रक्षस एनां पुरीं क्षिप्रमेव वधिष्यामीति यन्निवेदयसे तत्सत्यमेव तथा ते शक्तिरस्त्येव तथापि ते तुभ्यं स्वमतं ब्रवीमीत्यर्थः ॥ २ ॥ तदेवाह अस्मिन्निति । सुग्रीवप्रयाणमिति षष्ठीतत्पुरुषः । तमेवाह । यतो मध्यमह्नो दिवाकरः प्राप्तोऽतो विजये विजयप्रदेऽभिजिदाख्ये मुहूर्ते युक्तो मे निर्गम इति शेषः । एतदुत्तरम् अस्मिन्मुहूर्ते विजये प्राप्ते मध्यं दिवाकर इत्यर्धमधिकं कतकस्वरसात् ॥ ३ ॥ एतन्मुहूर्तप्रस्थितस्य ध्रुवो विजय इत्याह सीतामिति । तद्रक्षः सीतां हत्वा कामं यातु स्वदेशमिति शेषः । अथाप्यसौ जीवितः सन् कर्तरि निष्ठा जीवन् भूत्वा कयास्यति न क्वापि । अविलंबं यात्राप्रयोजनमाह सीतेति । श्रुत्वा सिद्धादिमुखतः जीविताशाप्राप्तौ दृष्टांतः । आतुरो जीवितांते जीवितनाशप्राप्तौ अमृतम् अमृतत्वसाधनं दिव्यौषधं स्पृष्ट्वा द्रवरूपममृतं पीत्वा च यथा जीविताशामेति तद्वत् । जीवितांतेमृतं स्पृष्ट्वा पीत्वाविषमिवातुर इतिपांक्तः पाठः ॥ ४ ॥

ईदृशानि द्वाराणि संतीत्यन्वयः ॥ ११ ॥ तत्र तेषु द्वारेषु इषवश्च उपलाश्च तत्प्रक्षेपकयंत्राणि तैर्द्वारैरागतं परसैन्यं तत्र तेषु द्वारेषु प्रतिनिवार्यंते ॥ १२ ॥ उक्तयंत्रैः संस्कृताः सज्जाः कालायसमया अयःसारमयाः शतमेकप्रयोगेण घ्नंतीति शतघ्न्यः चतुर्हस्तप्रमाणलोहकंटकयुता मुद्गरविशेषाः शतघ्न्यः । शतघ्नी च चतुर्हस्ता लोहकंटकिनी गदेति वैजयंती ॥ १३ ॥ प्राकारो रत्नखचित इत्याह मणीति ॥ १४ ॥ परिखाः पुरोपांतखाताः ॥ १५ ॥ द्वारेषु चतुर्षु तासां परिखाणां मध्ये संक्रमा मंचरूपेण बद्धाः परमायताः अतिविस्तृतमार्गाः गृहपंक्तिभिः प्राकारशिरोगृहपंक्तिभिः उपेता इत्यनुकर्षः ॥ १६ ॥ तत्र तेषु संक्रमेषु परसैन्यागते सति ते संक्रमास्तैर्यंत्रैः प्राकारोपरि प्रतिष्ठापितैर्यंत्रैस्त्रायंते रक्ष्यंते । ह्रियंते इतिपाठे ते संक्रमा नाश्यंत इत्यर्थः । तैर्यंत्रैस्तासु परिखासु तत्समीपं प्राप्तानि परसैन्यानि समंततोवकीर्यंते क्षिप्यंते ॥ १७ ॥ एको मुख्यः संक्रमः प्राकारमध्यवर्ती साक्षात्पुरप्रवेशसाधनभूतोऽकंप्यः दुर्भेदः । तत्र हेतुर्बलवान् बहुलबलकृतरक्षः दृढो दृढप्रतिष्ठानः । तदेव दर्शयति कांचनैरिति ॥ १८ ॥ एवं पुरस्वरूप

तत्रेषूपलयंत्राणिबलवंतिमहांतिच ॥ आगतंप्रतिसैन्यंतैस्तत्रप्रतिनिवार्यंते ॥ १२ ॥ द्वारेषुसंस्कृताभीमाःकालायसमयाःशिताः ॥ शतशोरचितावीरैःशतघ्न्योरक्षसांगणैः ॥ १३ ॥ सौवर्णस्तुमहांस्तस्याःप्राकारोदुष्प्रधर्षणः ॥ मणिविद्रुमवैदूर्यमुक्ताविरचितांतरः ॥ १४ ॥ सर्वतश्चमहाभीमाःशीततोयामहाशुभाः ॥ अगाधाग्राहवत्यश्चपरिखामीनसेविताः ॥१५॥ द्वारेषुतासांचत्वारःसंक्रमाःपरमायताः ॥ यंत्रैरुपेतावहुभिर्महद्भिर्गृहपंक्तिभिः ॥ १६ ॥ त्रायंतेसंक्रमास्तत्रपरसैन्यागतेसति ॥ यंत्रैस्तैरवकीर्यंतेपरिखाःसुसमंततः ॥ १७॥ एकस्त्वकंप्योबलवान्संक्रमःसुमहादृढः ॥ कांचनैर्बहुभिःस्तंभैर्वेदिकाभिश्चशोभितः ॥ १८ ॥ स्वयंप्रकृतिमापन्नोयुयुत्सूरामरावणः ॥ उत्थितश्चाप्रमत्तश्चबलानामनुदर्शने ॥ १९ ॥ लंकापुनर्निरालंबादेवदुर्गाभयावहा ॥ नादेयंपार्वतंचान्यंकृत्रिमंचचतुर्विधम् ॥ २० ॥ स्थितापारेसमुद्रस्यदूरपारस्यराघव ॥ नौपथश्चापिनास्त्यत्रनिरुद्देशश्चसर्वशः ॥ २१ ॥ शैलाग्रेरचितादुर्गासापूर्देवपुरोपमा ॥ वाजिवारणसंपूर्णालंकापरमदुर्जया ॥ २२ ॥ परिखाश्चशतघ्न्यश्चयंत्राणिविविधानिच ॥ शोभयंतिपुरींलंकांरावणस्यदुरात्मनः ॥ २३ ॥ अयुतंरक्षसामत्रपूर्वद्वारंसमाश्रितम् ॥ शूलहस्तादुराधर्षाःसर्वेखड्गाग्रयोधिनः ॥ २४ ॥ नियुतंरक्षसामत्रदक्षिणद्वारमाश्रितम् ॥ चतुरंगेणसैन्येनयोधास्तत्राप्यनुत्तमाः ॥ २५ ॥

मुक्त्वा पुरपतेः स्वरूपमाह स्वयमिति । युयुत्सुरपि प्रकृतिमापन्नः अक्षुब्धांतःकरणोऽतिधीर इति यावत् । बलानामनुदर्शने उत्थित उद्युक्तः अप्रमत्तः सावधानश्च ॥ १९ ॥ निरालंबा अतिश्लक्ष्णमहोच्चगिरिशिखरप्रतिष्ठितत्वेनारोहणालंबनरहिता देवदुर्गा देवनिर्मितदुर्गरूपिणी अतएव भयावहा नादेयं दुर्गं तत्पर्वतसंभूतनद्या चतुर्दिक्ष्वावरणात् पार्वतं त्रिकूटरूपं कृत्रिमं प्राकाररूपं चतुष्प्राकारवत्त्वेन प्राकाररूपं चतुर्विधं दुर्गमस्तीति शेषः ॥ २० ॥ तत्रान्यदप्याह स्थितेति । दूरपारस्य दूरे पारं परतीरं यस्य नौपथो नौमार्गः । अत्र समुद्रे सर्वशो निरुद्देशः प्रदेशविभागरहितः समुद्र इति शेषः । निरादेश इतिपाठे निरादेशः सर्वदिक्संचाररहितप्रदेशः ॥ २१ ॥ २२ ॥ २३ ॥ शूलहस्ता एव न केवलमपि तु खड्गाग्रयोधिनः खड्गैरग्रेयुद्ध्यंते तादृशाः ॥ २४ ॥ नियुतं लक्षं चतुरंगेण सैन्येनोपलक्षिता योधास्तत्रापि दक्षिणद्वारेपि संति

ममताराबलमस्तीत्याहोत्तरेति । योक्ष्यते चंद्र इति शेषः ॥ पुनर्वसुजातस्य हस्तो वधतारा उत्तरा च सीताया जन्मतारा बद्धस्य जन्मतारायां तन्मोचनार्थयात्रायामवश्यं तन्मुक्तिरिति भावः । अद्य अमांतमानेन मार्गशीर्षकृष्णाष्टम्यां कृष्णसप्तम्यां वा मार्गशीर्षपूर्णिमोत्तरं तदन्यतरस्मिन्नुत्तराभावात् अभिप्रयामेति प्रश्ने लोट् ॥ ५ ॥ ६ ॥ मनोरथं मनोरथविषयं विजयं समनुप्राप्तमिव शंसतीत्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥ शीतानि काननवारीणि यस्मिंस्तादृशेन पथा सेनापते नील सेनां नयेत्यन्वयः ॥ १० ॥ दूषयेयुर्विषादिनेति शेषः । नित्यमुद्यतः सदा सावधानः सन् ॥ ११ ॥ वनदुर्गेषु वनात्मकेषु दुर्गेषु वनेषु अदुर्गवनेषु

उत्तराफाल्गुनीह्यद्यश्वस्तुहस्तेनयोक्ष्यते ॥ अभिप्रयामसुग्रीवसर्वानीकसमावृताः ॥ ५ ॥ निमित्तानिचपश्यामियानिप्रादुर्भवंतिवै ॥ निहत्यरावणं सीतामानयिष्यामिजानकीम् ॥ ६ ॥ उपरिष्टाद्धिनयनंस्फुरमाणमिमंमम ॥ विजयंसमनुप्राप्तंशंसतीवमनोरथम् ॥ ७ ॥ ततोवानरराजेनलक्ष्मणेनसुपूजितः ॥ उवाचरामोधर्मात्मापुनरप्यर्थकोविदः ॥ ८ ॥ अग्रेयातुबलस्यास्यनीलोमार्गमवेक्षितुम् ॥ वृतःशतसहस्रेणवानराणांतरस्विनाम् ॥ ॥ ९ ॥ फलमूलवतानीलशीतकाननवारिणा ॥ पथामधुमताचाशुसेनांसेनापतेनय ॥ १० ॥ दूषयेयुर्दुरात्मानःपथिमूलफलोदकम् ॥ राक्षसाः पथिरक्षेथास्तेभ्यस्त्वंनित्यमुद्यतः ॥ ११ ॥ निम्नेषुवनदुर्गेषुवनेषुचवनौकसः ॥ अभिप्लुत्याभिपश्येयुःपरेषांनिहितंबलम् ॥ १२ ॥ यत्तुफल्गुबलंकिंचित्तदत्रैवोपपद्यताम् ॥ एतद्धिकृत्यंघोरंनोविक्रमेणप्रयुज्यताम् ॥ १३ ॥ सागरौघनिभंभीममग्रानीकंमहाबलाः ॥ कपिसिंहाःप्रकर्षंतुशतशोथसहस्रशः ॥ १४ ॥ गजश्चगिरिसंकाशोगवयश्चमहाबलः ॥ गवाक्षश्चाग्रतोयातुगवांदृप्तइवर्षभः ॥ १५ ॥ यातुवानरवाहिन्यावानरःप्लवतांपतिः ॥ पालयन्दक्षिणंपार्श्वमृषभोवानरर्षभः ॥ १६ ॥ गंधहस्तीवदुर्धर्षस्तरस्वीगंधमादनः ॥ यातुवानरवाहिन्याःसव्यंपार्श्वमधिष्ठितः ॥ १७ ॥ यास्यामिबलमध्येहंबलौघमभिहर्षयन् ॥ अधिरुह्यहनूमंतमैरावतमिवेश्वरः ॥ १८ ॥ अंगदेनैपसंयातुलक्ष्मणश्चांतकोपमः ॥ सार्वभौमेनभूतेशोद्रविणाधिपतिर्यथा ॥ १९ ॥ जांबवांश्चसुषेणश्चवेगदर्शीचवानरः ॥ ऋक्षराजोमहाबाहुःकुक्षिंरक्षंतुतेत्रयः ॥ २० ॥ राघवस्यवचःश्रुत्वासुग्रीवोवाहिनीपतिः ॥ व्यादिदेशमहावीर्यान्वानरान्वानरर्षभः ॥ २१ ॥ तेवानरगणाःसर्वेसमुत्पत्यमहौजसः ॥ गुहाभ्यःशिखरेभ्यश्चआशुपुप्लुविरेतदा ॥ २२ ॥ ततोवानरराजेनलक्ष्मणेनचपूजितः ॥ जगामरामोधर्मात्माससैन्योदक्षिणांदिशम् ॥ २३ ॥ शतैःशतसहस्रैश्चकोटिभिश्चायुतैरपि ॥ वारणाभैश्चहरिभिर्ययौपरिवृतस्तदा ॥ २४ ॥

च निम्नभूमौ निहितं गुप्तमहारार्थं लीनतया स्थापितम् ॥ १२ ॥ यत्तु फल्गु निःसारं बलं बालवृद्धादिलक्षणं युद्धानर्हं तदत्रैव किष्किंधायामेवोपपद्यतां तिष्ठतु । हि यस्मादेतन्नः कृत्यं युद्धरूपं घोरमतो विक्रमेण विक्रमोपपन्नबलेन प्रयुज्यतां यात्रेति शेषः ॥ १३ ॥ १४ ॥ कपिसिंहानेवाह गजश्चेति ॥ १५ ॥ १६ ॥ यस्य मदगंधादन्ये गजाः पलायंते स गंधहस्ती ॥ १७ ॥ ईश्वर इंद्रः ॥ १८ ॥ अंगदेन वाहनभूतेन सार्वभौमः कुबेरदिग्गजः भूतेशः कुबेरः यक्षेशत्वात् ॥ १९ ॥ ऋक्षराजो जांबवानित्यन्वयःकुक्ष्युपलक्षितं सेनापुच्छभागम् ॥ २० ॥ २१ ॥ गुहाभ्यः शिखरेभ्यः पूर्वस्वस्थितिप्रदेशेभ्यः ॥ २२ ॥ २३ ॥ २४ ॥

दक्षिणां दिशमिति शेषः ॥ ५७ ॥ ५८ ॥ सर्वाणि नदीस्रोतांसि विपरीतवत् वैपरीत्येन सस्यंदुः यथाऽभ्रेषु धावत्सु चंद्रो धावतीव तद्वत्सेनागतिर्नदीप्रवाहेषु भ्रांत्या भाति स्मेत्यर्थ इति कतकः । वस्तुतो नदीषु वानराणां प्रवाहाभिमुखं तरणे तैराहतानि जलानि विपरीतवहनानीत्यर्थः ॥ ५९ ॥ साविशत् अयं द्वितीयो वास इति प्रतीयते ॥ ६० ॥ पुनर्यात्रामाह समावृत्येति ॥ ६१ ॥ समारोपितविक्रमः एवमेव मया कर्तव्यमित्यसाध्येप्यर्थे चित्तसंक्रमितविक्रमप्रकाराः ॥ ६२ ॥ विविधान्प्रकारान् तानेवाह तत्रेति ॥ ६३ ॥ वानराणां हर्षादिजनितशब्दः किलकिला । प्रास्फोटयन्पुच्छानि भूमावताडयन् ॥ ६४ ॥ विक्षिप्य

छादयंतीययौभीमाद्यामिवांबुदसंततिः ॥ उत्तरंत्याश्चसेनायाःसततंबहुयोजनम् ॥ ५८ ॥ नदीस्रोतांसिसर्वाणिसस्यंदुर्विपरीतवत् ॥ सरांसिविमलांभांसिद्रुमाकीर्णांश्चपर्वतान् ॥ ५९ ॥ समान्भूमिप्रदेशांश्चवनानिफलवंतिच ॥ मध्येनचसमंताच्चतिर्यक्चाधश्चसाविशत् ॥ ६० ॥ समावृत्यमहींकृत्स्नांजगाममहतीचमूः ॥ तेहृष्टवदनाःसर्वेजग्मुर्मारुतरंहसः ॥ ६१ ॥ हरयोराघवस्यार्थेसमारोपितविक्रमाः ॥ हर्षवीर्यबलोद्रेकान्दर्शयंतःपरस्परम् ॥ ६२ ॥ यौवनोत्सेकजाद्दर्पाद्विविधांश्चक्रुरध्वनि ॥ तत्रकेचिद्द्रुतंजग्मुरुत्पेतुश्चतथापरे ॥ ६३ ॥ केचित्किलकिलांचक्रुर्वानरावनगोचराः ॥ प्रास्फोटयंश्चपुच्छानिसन्निजघ्नुःपदान्यपि ॥ ६४ ॥ भुजान्विक्षिप्यशैलांश्चद्रुमानन्येवभंजिरे ॥ आरोहंतश्चशृंगाणिगिरीणांगिरिगोचराः ॥ ६५ ॥ महानादान्प्रमुंचंतिक्ष्वेडामन्येप्रचक्रिरे ॥ ऊरुवेगैश्चममृदुर्लताजालान्यनेकशः ॥ ६६ ॥ जृंभमाणाश्चविक्रांताविचिक्रीडुःशिलाद्रुमैः ॥ ततःशतसहस्रैश्चकोटिभिश्चसहस्रशः ॥ ६७ ॥ वानराणांसुघोराणांश्रीमत्परिवृतामही ॥ सास्मयातिदिवारात्रंमहतीहरिवाहिनी ॥ ६८ ॥ प्रहृष्टमुदिताःसर्वेसुग्रीवेणाभिपालिताः ॥ वानरास्त्वरितायांतिसर्वेयुद्धाभिनंदिनः ॥ प्रमोक्षयिषवःसीतांमुहूर्तंक्वापिनावसन् ॥ ६९ ॥ ततःपादपसंबाधंनानावनसमायुतम् ॥ सह्यपर्वतमासाद्यवानरास्तेसमारुहन् ॥ ७० ॥ काननानिविचित्राणिनदीप्रस्रवणानिच ॥ पश्यन्नपिययौरामःसह्यस्यमलयस्यच ॥ ७१ ॥ चंपकांस्तिलकांश्चूतान्प्रसेकान्सिंदुवारकान् ॥ तिनिशान्करवीरांश्चभंजंतिस्मप्लवंगमाः ॥ ७२ ॥ अशोकांश्चकरंजांश्चप्लक्षन्यग्रोधपादपान् ॥ जंबुकामलकान्नागान्भंजंतिस्मप्लवंगमाः ॥ ७३ ॥ प्रस्तरेषुचरम्येषुविविधाःकाननद्रुमाः ॥ वायुवेगप्रचलिताःपुष्पैरवकिरंतितान् ॥ ७४ ॥ मारुतःसुखसंस्पर्शोवातिचंदनशीतलः ॥ षट्पदैरनुकूजद्भिर्वनेषुमधुगंधिषु ॥ ७५ ॥

प्रसार्य ॥ ६५ ॥ ममृदुः मृदितवंतः ॥ ६६ ॥ ६७ ॥ श्रीमत् लुप्ततृतीयांतं श्रीमद्भिरित्यर्थः अयं तृतीयो वासः दिवारात्रं मध्यरात्रे एव याममात्रं वास इत्याशयः ॥ ६८ ॥ प्रमोक्षयिषवः मोक्षशब्दात्तत्करोतीति णौ सन्यार्षेऽभ्यासलोपे उप्रत्यये च रूपम् । प्रमोचयितुमिच्छावत इत्यर्थः नावसन् दिवेति शेषः ॥ ६९ ॥ सह्यपर्वतं तत्पर्वतदक्षिणभागं तमासाद्य ते वानराः समारुहंस्तच्छिखरमिति शेषः ॥ ७० ॥ सह्यपर्वतमासेदुर्मलयं च मही धरमिति पाठांतरं तीर्थसंमतम् ॥ ७१ ॥ ७२ ॥ ७३ ॥ प्रस्तरेषु पाषाणेषु स्थितानिति शेषः ॥ ७४ ॥ षट्पदैरनुकूजद्भिरुपलक्षितो मारुतो वाति ॥ ७५ ॥

ईदृशानि द्वाराणि संतीत्यन्वयः ॥ ११ ॥ तत्र तेषु द्वारेषु इषवश्च उपलाश्च तत्प्रक्षेपकयंत्राणि तैर्द्वारैरागतं परसैन्यं तत्र तेषु द्वारेषु प्रतिनिवार्यते ॥ १२ ॥ उक्तयंत्रैः संस्कृताः सज्जाः कालायसमया अयःसारमयाः शतमेकप्रयोगेण घ्नंतीति शतघ्न्यः चतुर्हस्तप्रमाणलोहकंटकयुता मुद्गरविशेषाः शतघ्न्यः । शतघ्नी च चतुर्हस्ता लोहकंटकिनी गदेति वैजयंती ॥ १३ ॥ प्राकारो रत्नखचित इत्याह मणीति ॥ १४ ॥ परिखाः पुरोपांतखाताः ॥ १५ ॥ द्वारेषु चतुर्षु तासां परिखाणां मध्ये संक्रमा मंचरूपेण वद्धाः परमायताः अतिविस्तृतमार्गाः गृहपंक्तिभिः प्राकारशिरोगृहपंक्तिभिः उपेता इत्यनुकर्षः ॥ १६ ॥ तत्र तेषु संक्रमेषु परसैन्यागते सति ते संक्रमास्तैर्यंत्रैः प्राकारोपरि प्रतिष्ठापितैर्यंत्रैस्त्रायंते रक्ष्यंते । ह्रियंते इतिपाठे ते संक्रमा नाश्यंत इत्यर्थः । तैर्यंत्रैस्तासु परिखासु तत्समीपं प्राप्तानि परसैन्यानि समंततोवकीर्यंते क्षिप्यंते ॥ १७ ॥ एको मुख्यः संक्रमः प्राकारमध्यवर्ती साक्षात्पुरप्रवेशसाधनभूतोऽकंप्यः दुर्भेदः । तत्र हेतुर्बलवान् बहुलबलकृतरक्षः दृढो दृढप्रतिष्ठानः । तदेव दर्शयति कांचनैरिति ॥ १८ ॥ एवं पुरस्वरूप

तत्रेषूपलयंत्राणिवलवंतिमहांतिच ॥ आगतंप्रतिसैन्यंतैस्तत्रप्रतिनिवार्यते ॥ १२ ॥ द्वारेषुसंस्कृताभीमाःकालायसमयाःशिताः ॥ शतशोरचितावीरैःशतघ्न्योरक्षसांगणैः ॥ १३ ॥ सौवर्णस्तुमहांस्तस्याःप्राकारोदुष्प्रधर्षणः ॥ मणिविद्रुमवैदूर्यमुक्ताविरचितांतरः ॥ १४ ॥ सर्वतश्चमहाभीमाःशीततोयामहाशुभाः ॥ अगाधाग्राहवत्यश्चपरिखामीनसेविताः ॥१५॥ द्वारेषुतासांचत्वारःसंक्रमाःपरमायताः ॥ यंत्रैरुपेतावहुभिर्महद्भिर्गृहपंक्तिभिः ॥ १६ ॥ त्रायंतेसंक्रमास्तत्रपरसैन्यागतेसति ॥ यंत्रैस्तैरवकीर्यंतेपरिखाःसुसमंततः ॥ १७॥ एकस्त्वकंप्योवलवान्संक्रमःसुमहादृढः ॥ कांचनैर्वहुभिःस्तंभैर्वेदिकाभिश्चशोभितः ॥ १८ ॥ स्वयंप्रकृतिमापन्नोयुयुत्सूरामरावणः ॥ उत्थितश्चाप्रमत्तश्चवलानामनुदर्शने ॥ १९ ॥ लंकापुनर्निरालंबादेवदुर्गाभयावहा ॥ नादेयंपार्वतंचान्यंकृत्रिमंचचतुर्विधम् ॥ २० ॥ स्थितापारेसमुद्रस्यदूरपारस्यराघव ॥ नौपथश्चापिनास्त्यत्रनिरुद्देशश्चसर्वशः ॥ २१ ॥ शैलाग्रेरचितादुर्गासापूर्देवपुरोपमा ॥ वाजिवारणसंपूर्णालंकापरमदुर्जया ॥ २२ ॥ परिखाश्चशतघ्न्यश्चयंत्राणिविविधानिच ॥ शोभयंतिपुरींलंकांरावणस्यदुरात्मनः ॥ २३ ॥ अयुतंरक्षसामत्रपूर्वद्वारंसमाश्रितम् ॥ शूलहस्तादुराधर्षाःसर्वेखड्गाग्रयोधिनः ॥ २४ ॥ नियुतंरक्षसामत्रदक्षिणद्वारमाश्रितम् ॥ चतुरंगेणसैन्येनयोधास्तत्राप्यनुत्तमाः ॥ २५ ॥

मुक्त्वा पुरपतेः स्वरूपमाह स्वयमिति । युयुत्सुरपि प्रकृतिमापन्नः अक्षुब्धांतःकरणोऽतिधीर इति यावत् । बलानामनुदर्शने उत्थित उद्युक्तः अप्रमत्तः सावधानश्च ॥ १९ ॥ निरालंबा अतिश्लक्ष्णमहोच्चगिरिशिखरप्रतिष्ठितत्वेनारोहणालंबनरहिता देवदुर्गा देवनिर्मितदुर्गरूपिणी अतएव भयावहा नादेयं दुर्गं तत्पर्वतसंभूतनद्या चतुर्दिक्ष्वावरणात् पार्वतं त्रिकूटरूपं कृत्रिमं प्राकाररूपं चतुष्प्राकारवत्त्वेन प्राकाररूपं चतुर्विधं दुर्गमस्तीति शेषः ॥ २० ॥ तत्रान्यदप्याह स्थितेति । दूरपारस्य दूरे पारं परतीरं यस्य नौपथो नौमार्गः । अत्र समुद्रे सर्वशो निरुद्देशः प्रदेशविभागरहितः समुद्र इति शेषः । निरादेश इतिपाठे निरादेशः सर्वदिक्संचाररहितप्रदेशः ॥ २१ ॥ २२ ॥ २३ ॥ शूलहस्ता एव न केवलमपि तु खड्गाग्रयोधिनः खड्गैरग्रेयुद्ध्यंते तादृशाः ॥ २४ ॥ नियुतं लक्षं चतुरंगेण सैन्येनोपलक्षिता योधास्तत्रापि दक्षिणद्वारेपि संति

अनुत्तमाः प्रशस्ताः ॥ २५ ॥ प्रयुतं दशलक्षम् ॥ २६ ॥ कुलपुत्राः किंकराः । यद्वा योद्धृसत्कुले प्रसूताः ॥ २७ ॥ मध्यमं स्कंधं पुरमध्यसेनानिवेशस्थानम् । साग्रा कोटिः सपादकोटिः ॥ २८ ॥ यद्येवंदुर्गा लंका कथमस्मद्बलसाध्येति शंकां निराचष्टे ते मयेति । ते संक्रमाः परिखामार्गा मया भग्नाः परिखाश्च अवपूरिताः शिलेष्टकादिभिरिति शेषः । येन बलैकदेशक्षयोपि कृत इत्यर्थः ॥ २९ ॥ येन केन स्वाम्युक्तेष्वन्यतमेन समुद्रं तराम तत्रैवं सति वानरैः स्वयमेव लंका हतेत्युपधार्यतां निश्चीयताम् ॥ ३० ॥ किंचाशेषतरणोपायचिंता व्यर्थैव प्रबलैर्वक्ष्यमाणैरेव कार्यसिद्धिरित्याह अंगद इत्यादि । एतेंगदादय एव लंकां भित्त्वा सीतामानेष्यंति किं बलशेषेण तवेत्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥ एवमिति । प्रधानैरेव कार्यसाधनमिष्टं चेत्क्षिप्रमिदानीमेवानयतेत्याज्ञापय । यदि बलानां सर्वसंग्रहं बलसंमेलनमुद्दिश्य बलानामपि पारनयनमिष्टं तदा युक्तेन यात्रोचितेन मुहूर्तेन प्रस्थानं स्वयात्रामभिरोचय ॥ ३४ ॥ वैंगमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये

प्रयुतंरक्षसामत्रपश्चिमद्वारमाश्रितम् ॥ चर्मखड्गधराःसर्वेतथासर्वास्त्रकोविदाः ॥२६॥ न्यर्बुदंरक्षसामत्रउत्तरद्वारमाश्रितम् ॥ रथिनश्चाश्ववाहाश्चकुलपुत्राःसुपूजिताः ॥ २७ ॥ शतशोथसहस्राणिमध्यमंस्कंधमाश्रिताः ॥ यातुधानादुराधर्षाःसाग्रकोटिश्चरक्षसाम् ॥ २८ ॥ तेमयासंक्रमाभग्नाःपरिखाश्चावपूरिताः ॥ दग्धाचनगरीलंकाप्राकाराश्चावसादिताः ॥२९॥ येनकेनतुमार्गेणतरामवरुणालयम् ॥ हतेतिनगरीलंकावानरैरुपधार्यताम् ॥ ३० ॥ अंगदोद्विविदोमैंदोजांबवान्पनसोनलः ॥ नीलःसेनापतिश्चैवबलशेषेणकिंतव ॥ ३१ ॥ प्लवमानाहिगत्वातांरावणस्यमहापुरीम् ॥ सपर्वतवनांभित्त्वासखातांचसतोरणाम् ॥ ३२ ॥ सप्राकारांसभवनामानयिष्यंतिराघव ॥ ३३ ॥ एवमाज्ञापयक्षिप्रंबलानांसर्वसंग्रहम् ॥ मुहूर्तेनतुयुक्तेनप्रस्थानमभिरोचय ॥ ३४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेतृतीयःसर्गः ॥ ३ ॥ श्रुत्वाहनूमतोवाक्यंयथावदनुपूर्वशः ॥ ततोब्रवीन्महातेजारामःसत्यपराक्रमः ॥ १ ॥ यन्निवेदयसेलंकांपुरींभीमस्यरक्षसः ॥ क्षिप्रमेनांवधिष्यामिसत्यमेतद्ब्रवीमिते ॥ २ ॥ अस्मिन्मुहूर्तेसुग्रीवप्रयाणमभिरोचय ॥ युक्तोमुहूर्तेविजयेप्राप्तोमध्यंदिवाकरः ॥ ३ ॥ सीतांहृत्वातुतद्यातुक्वासौयास्यतिजीवितः ॥ सीताश्रुत्वाभियानंमेआशामेष्यतिजीविते ॥ जीवितांतेऽमृतंस्पृष्ट्वापीत्वामृतमिवातुरः ॥ ४ ॥

युद्धकांडे तृतीयः सर्गः ॥ ३ ॥ अनुपूर्वशः अनुक्रमेण ॥ १ ॥ तत्रांगदादिमुखेन कार्यनिर्वहणमशक्यं मत्वा तत्प्ररोचनाय तदंगीकुर्वन्निव स्वमतमाह यदिति । रक्षस एनां पुरीं क्षिप्रमेव वधिष्यामीति यन्निवेदयसे तत्सत्यमेव तथा ते शक्तिरस्त्येव तथापि ते तुभ्यं स्वमतं ब्रवीमीत्यर्थः ॥ २ ॥ तदेवाह अस्मिन्निति । सुग्रीवप्रयाणमिति षष्ठीतत्पुरुषः । तमेवाह । यतो मध्यमह्नो दिवाकरः प्राप्तोऽतो विजये विजयप्रदेऽभिजिदाख्ये मुहूर्ते युक्तो मे निर्गम इति शेषः । एतदुत्तरम् अस्मिन्मुहूर्ते विजये प्राप्ते मध्यं दिवाकर इत्यर्धमधिकं कतकस्वरसात् ॥ ३ ॥ एतन्मुहूर्तप्रस्थितस्य ध्रुवो विजय इत्याह सीतामिति । तद्रक्षः सीतां हृत्वा क्वामं यातु स्वदेशमिति शेषः । अथाप्यसौ जीवितः सन् कर्तरि निष्ठा जीवन् भूत्वा कयास्यति न क्वापि । अविलंबं यात्राप्रयोजनमाह सीतेति । श्रुत्वा सिद्धादिमुखतः जीविताशाप्राप्तौ दृष्टांतः । आतुरो जीवितांते जीवितनाशप्राप्तौ अमृतम् अमृतत्वसाधनं दिव्यौषधं स्पृष्ट्वा द्रवरूपममृतं पीत्वा च यथा जीविताशामेति तद्वत् । जीवितांतेमृतं स्पृष्ट्वा पीत्वाविषमिवातुर इतिपांक्तः पाठः ॥ ४ ॥

नमतारावलमस्तीत्याहोत्तरेति । योक्ष्यते चंद्र इति शेषः ॥ पुनर्वसुजातस्य हस्तो वधतारा उत्तरा च सीताया जन्मतारा बद्धस्य जन्मतारायां तन्मोचनार्थयात्रायामवश्यं तन्मुक्तिरिति भावः । अद्य अमांतमानेन मार्गशीर्षकृष्णाष्टम्यां कृष्णसप्तम्यां वा मार्गशीर्षपूर्णिमोत्तरं तदन्यतरस्मिन्नुत्तरालाभात् अभिप्रयामेति प्रश्ने लोट् ॥ ५ ॥ ६ ॥ मनोरथं मनोरथविषयं विजयं समनुप्राप्तमिव शंसतीत्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥ शीतानि काननवारीणि यस्मिंस्तादृशेन पथा सेनापते नील सेनां नयेत्यन्वयः ॥ १० ॥ दूषयेयुर्विषादिनेति शेषः । नित्यमुद्यतः सदा सावधानः सन् ॥ ११ ॥ वनदुर्गेषु वनात्मकेषु दुर्गेषु वनेषु अदुर्गवनेषु

उत्तराफाल्गुनीह्यद्यश्वस्तुहस्तेनयोक्ष्यते ॥ अभिप्रयामसुग्रीवसर्वानीकसमावृताः ॥ ५ ॥ निमित्तानिचपश्यामियानिप्रादुर्भवंतिवै ॥ निहत्यरावणं सीतामानयिष्यामिजानकीम् ॥ ६ ॥ उपरिष्टाद्धिनयनंस्फुरमाणमिमंमम ॥ विजयंसमनुप्राप्तंशंसतीवमनोरथम् ॥ ७ ॥ ततोवानरराजेनलक्ष्मणेनसुपूजितः ॥ उवाचरामोधर्मात्मापुनरप्यर्थकोविदः ॥ ८ ॥ अग्रेयातुबलस्यास्यनीलोमार्गमवेक्षितुम् ॥ वृतःशतसहस्रेणवानराणांतरस्विनाम् ॥ ॥ ९ ॥ फलमूलवतानीलशीतकाननवारिणा ॥ पथामधुमताचाशुसेनांसेनापतेनय ॥ १० ॥ दूषयेयुर्दुरात्मानःपथिमूलफलोदकम् ॥ राक्षसाः पथिरक्षेथास्तेभ्यस्त्वंनित्यमुद्यतः ॥ ११ ॥ निम्नेषुवनदुर्गेषुवनेषुचवनौकसः ॥ अभिप्लुत्याभिपश्येयुःपरेषांनिहितंबलम् ॥ १२ ॥ यत्तुफल्गुबलंकिंचित्तदत्रैवोपपद्यताम् ॥ एतद्धिकृत्यंघोरंनोविक्रमेणप्रयुज्यताम् ॥ १३ ॥ सागरौघनिभंभीममग्रानीकंमहाबलाः ॥ कपिसिंहाःप्रकर्षंतुशतशोथसहस्रशः ॥ १४ ॥ गजश्चगिरिसंकाशोगवयश्चमहाबलः ॥ गवाक्षश्चाग्रतोयातुगवांदृप्तइवर्षभः ॥ १५ ॥ यातुवानरवाहिन्यावानरःप्लवतांपतिः ॥ पालयन्दक्षिणंपार्श्वमृषभोवानरर्षभः ॥ १६ ॥ गंधहस्तीवदुर्धर्षस्तरस्वीगंधमादनः ॥ यातुवानरवाहिन्याःसव्यंपार्श्वमधिष्ठितः ॥ १७ ॥ यास्यामिबलमध्येहंबलौघमभिहर्षयन् ॥ अधिरुह्यहनूमंतमैरावतमिवेश्वरः ॥ १८ ॥ अंगदेनैषसंयातुलक्ष्मणश्चांतकोपमः ॥ सार्वभौमेनभूतेशोद्रविणाधिपतिर्यथा ॥ १९ ॥ जांबवांश्चसुषेणश्चवेगदर्शीचवानरः ॥ ऋक्षराजोमहाबाहुःकुक्षिंरक्षंतुतेत्रयः ॥ २० ॥ राघवस्यवचःश्रुत्वासुग्रीवोवाहिनीपतिः ॥ व्यादिदेशमहावीर्योवानरान्वानरर्षभः ॥ २१ ॥ तेवानरगणाःसर्वेसमुत्पत्यमहौजसः ॥ गुहाभ्यःशिखरेभ्यश्चआशुपुप्लुविरेतदा ॥ २२ ॥ ततोवानरराजेनलक्ष्मणेनचपूजितः ॥ जगामरामोधर्मात्माससैन्योदक्षिणांदिशम् ॥ २३ ॥ शतैःशतसहस्रैश्चकोटिभिश्चायुतैरपि ॥ वारणाभैश्चहरिभिर्ययौपरिवृतस्तदा ॥ २४ ॥

च निम्नभूमौ निहितं गुप्तमहारार्थं लीनतया स्थापितम् ॥ १२ ॥ यत्तु फल्गु निःसारं बलं बालवृद्धादिलक्षणं युद्धानर्हं तदत्रैव किष्किंधायामेवोपपद्यतां तिष्ठतु । हि यस्मादेतन्नः कृत्यं युद्धरूपं घोरमतो विक्रमेण विक्रमोपपन्नबलेन प्रयुज्यतां यात्रेति शेषः ॥ १३ ॥ १४ ॥ कपिसिंहानेवाह गजश्चेति ॥ १५ ॥ १६ ॥ यस्य मदगंधादन्ये गजाः पलायंते स गंधहस्ती ॥ १७ ॥ ईश्वर इंद्रः ॥ १८ ॥ अंगदेन वाहनभूतेन सार्वभौमः कुबेरदिग्गजः भूतेशः कुबेरः यक्षेशत्वात् ॥ १९ ॥ ऋक्षराजो जांबवानित्यन्वयः कुक्ष्युपलक्षितं सेनापुच्छभागम् ॥ २० ॥ २१ ॥ गुहाभ्यः शिखरेभ्यः पूर्वस्वस्थितिप्रदेशेभ्यः ॥ २२ ॥ २३ ॥ २४ ॥

हर्षप्रमोदयोर्बाह्याभ्यंतरकृतो भेदः ॥ २५ ॥ आप्लवंतः समंताद्रक्षणार्थं प्लवमानाः प्लवंतः अग्रे शोधनार्थं गच्छंतः । क्ष्वेला तु सिंहनादः स्यादिति निघंटुः । गर्जो मेघादिसदृशः शब्दः निनादः सामान्यशब्दः । ॥ २६ ॥ लीलार्थं महावृक्षानुद्वहंतो मंजरीपुंजधारिणश्च जग्मुरित्यनुकर्षः ॥ २७ ॥ निर्वहंति विनोदार्थमेकमेके वहंति तथा क्षिपंति च स्वमारूढं भूमौ पातयंति पतंतश्च भवंति केवलं गच्छंतीत्यर्थः अन्ये उत्पतंति आकाशमार्गे गच्छंति ॥ २८ ॥ नोस्माकम् अस्माभिरिति यावत् । कृत्यानां कर्तरि वेति षष्ठी ॥ २९ ॥ पुरस्तादृषभ इति । अयमृषभो दक्षिणपार्श्वविनियुक्तादन्यो नीलसहकारी ॥ ३० ॥ ॥ ३१ ॥ सर्वां वाहिनीमवष्टभ्यैको ररक्ष समंततो भ्रमन् रक्षति स्मेत्यर्थः ॥ ३२ ॥ केसर्यादीनां चतुर्णां द्वौ द्वौ तस्य दक्षिणं वामं चैकैकं पार्श्वमभिरक्षत इत्यर्थ इति कतकः । एष गजः पूर्वभागानियुक्तादन्य

तंयांतमनुयांतीसामहतीहरिवाहिनी ॥ हृष्टाःप्रमुदिताःसर्वेसुग्रीवेणाभिपालिताः ॥ २५ ॥ आप्लवंतःप्लवंतश्चगर्जंतश्चप्लवंगमाः ॥ क्ष्वेलंतोनिनदंतश्चजग्मुर्वैदक्षिणांदिशम् ॥ २६ ॥ भक्षयंतःसुगंधीनिमधूनिचफलानिच ॥ उद्वहंतोमहावृक्षान्मंजरीपुंजधारिणः ॥ २७ ॥ अन्योन्यंसहसादृप्तानिर्वहंतिक्षिपंतिच ॥ पतंतश्चोत्पतंत्यन्येपातयंत्यपरेपरान् ॥ २८ ॥ रावणोनोनिहंतव्यःसर्वेचरजनीचराः ॥ इतिगर्जंतिहरयोराघवस्यसमीपतः ॥२९॥ पुरस्तादृषभोनीलोवीरःकुमुदएवच ॥ पंथानंशोधयंतिस्मवानरैर्बहुभिःसह ॥३०॥ मध्येतुराजासुग्रीवोरामोलक्ष्मणएवच ॥ बलिभिर्बहुभिर्भीमैर्वृतःशत्रुनिबर्हणः ॥ ३१ ॥ हरिःशतबलिर्वीरःकोटिभिर्दशभिर्वृतः ॥ सर्वामेकोह्यवष्टभ्यररक्षहरिवाहिनीम् ॥३२॥ कोटीशतपरीवारःकेसरीपनसोगजः ॥ अर्कश्चबहुभिःपार्श्वमेकंतस्याभिरक्षति ॥ ३३ ॥ सुषेणोजांबवांश्चैवऋक्षैर्बहुभिरावृतौ ॥ सुग्रीवंपुरतःकृत्वाजघनंसंररक्षतुः ॥३४॥ तेषांसेनापतिर्वीरोनीलोवानरपुंगवः ॥ संयतश्चरतांश्रेष्ठस्तद्बलंपर्यवारयत् ॥ ३५ ॥ बलीमुखःप्रजंघश्चजंभोथरभसःकपिः ॥ सर्वतश्चययुर्वीरास्त्वरयंतःप्लवंगमान् ॥ ३६ ॥ एवंतेहरिशार्दूलागच्छंतिबलदर्पिताः ॥ अपश्यंतगिरिश्रेष्ठंसह्यंगिरिशतायुतम् ॥ ३७ ॥ सरांसिचसुफुल्लानितटाकानिवराणिच ॥ रामस्यशासनंज्ञात्वाभीमकोपस्यभीतवत् ॥ ३८ ॥ वर्जयन्नगराभ्याशांस्तथाजनपदानपि ॥ सागरौघनिभंभीमंतद्वानरबलंमहत् ॥३९ ॥ निःससर्पमहाघोरंभीमघोषमिवार्णवम् ॥ तस्यदाशरथेःपार्श्वेशूरास्तेकपिकुंजराः ॥ ४० ॥ तूर्णमापुप्लुवुःसर्वेसदश्वाइवचोदिताः ॥ कपिभ्यामुह्यमानौतौशुशुभातेनरर्षभौ ॥ ४१ ॥ महद्भ्यामिवसंस्पृष्टौग्रहाभ्यांचंद्रभास्करौ ॥ ततोवानरराजेनलक्ष्मणेनसुपूजितः ॥ ४२ ॥

इतितीर्थः ॥ ३३ ॥ सुषेणजांबवंतौ प्रायः सेनामध्ये वर्तमानं सुग्रीवं पुरः कृत्वा जघनं सेनापुच्छभागं संररक्षतुः ॥ ३४ ॥ पर्यवारयत् नगरादिपीडाराहित्यं यथा भवति तथा परिवार्यानयदित्यर्थः ॥ ३५ ॥ सर्वतः वेगातिशयादिति भावः ॥ ३६ ॥ गच्छंति गच्छंतश्च सह्यमपश्यंत सरआदीनि चापश्यंत। अत्र प्रथमदिनवास इति ज्ञायते ॥ ३७ ॥ भीतवत् भीताः संत इत्यर्थः ॥ ३८ ॥ वर्जयेत् वर्जयित्वागच्छत् ॥ ३९ ॥ भीमघोषमर्णवमिव अर्धचर्चादिरर्णवः । निःससर्प सह्यतो निःसृतम् ॥४०॥४१॥ महद्भ्यां ग्रहाभ्यां राहुकेतुभ्यां संस्पृष्टौ अर्धभागे स्पृष्टौ चन्द्रभास्कराविव । महद्भ्यामर्धसंस्पृष्टाविति पाठांतरम् ॥४२॥

अमरावतीं समासाद्येति नवाक्षरपादतार्षी ॥ २५ ॥ ॥ २६ ॥ २७ ॥ सहस्रमनेकेऽनुचरा येषां ते सहस्रानुचराः ॥ २८ ॥ २९ ॥ ३० ॥ अराक्षसी राक्षसजातिभिन्ना ॥ ३१ ॥ ३२ ॥ मात्रा दत्ताः मात्रा नर्मदयेच्छया दत्ता इत्यर्थः । भगदैवतं नक्षत्रमुत्तराफाल्गुनी ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ स्वक्षी मधुरदृग्युताक्षी यक्षीवरा यक्षीश्रेष्ठा तयोपमीयते सा यक्षीवरोपमा



लंकादुर्गंसमासाद्यराक्षसैर्बहुभिर्वृताः भविष्यथदुराधर्षाः शत्रूणांशत्रुसूदनाः ॥ २७ ॥ विश्वकर्मवचः श्रुत्वाततस्तेराक्षसोत्तमाः ॥ सहस्रानुचराभूत्वा गत्वातामवसन्पुरीम् ॥ २८ ॥ दृढप्राकारपरिखांहैमैर्गृहशतैर्वृताम् ॥ लंकामवाप्यतेहृष्टान्यवसन्रजनीचराः ॥ २९ ॥ एतस्मिन्नेवकालेतुयथाकामं चराघव ॥ नर्मदानामगंधर्वीबभूवरघुनंदन ॥ ३० ॥ तस्याःकन्यात्रयंह्यासीद्ह्रीश्रीकीर्तिसमद्युति ॥ ज्येष्ठक्रमेणसातेषांराक्षसानामराक्षसी ॥ ३१ ॥ कन्यास्ताःप्रददौहृष्टापूर्णचंद्रनिभाननाः ॥ त्रयाणांराक्षसेंद्राणांतिस्रोगंधर्वकन्यकाः ॥ ३२ ॥ दत्तामात्रामहाभागानक्षत्रेभगदैवते ॥ कृतदारास्तुते रामसुकेशतनयास्तदा ॥ ३३ ॥ चिक्रीडुःसहभार्याभिरप्सरोभिरिवामराः ॥ ततोमाल्यवतोभार्यासुंदरीनामसुंदरी ॥३४॥ सतस्यांजनयामासयदप त्यंनिबोधतत् ॥ वज्रमुष्टिर्विरूपाक्षोदुर्मुखश्चैवराक्षसः ॥ ३५ ॥ सुप्तघ्नोयज्ञकोपश्चमत्तोन्मत्तौतथैवच ॥ अनलाचाभवत्कन्यासुंदर्यांरामसुंदरी ॥ ३६ ॥ सुमालिनोपिभार्यासीत्पूर्णचंद्रनिभानना ॥ नाम्नाकेतुमतीरामप्राणेभ्योपिगरीयसी ॥ ३७ ॥ सुमालीजनयामासयदपत्यंनिशाचरः ॥ केतुमत्यांमहाराजतन्निबोधानुपूर्वशः ॥ ३८ ॥ प्रहस्तोकंपनश्चैवविकटःकालिकामुखः ॥ धूम्राक्षश्चैवदंडश्चसुपार्श्वश्चमहाबलः ॥ ३९ ॥ संह्रादिः प्रघसश्चैवभासकर्णश्चराक्षसः ॥ राकापुष्पोत्कटाचैवकैकसीचशुचिस्मिताः ॥ कुंभीनसीचइत्येतेसुमालेःप्रसवाःस्मृताः ॥ ४० ॥ मालेस्तुवसुदानाम गंधर्वीरूपशालिनी ॥ भार्यासीत्पद्मपत्राक्षीस्वक्षीयक्षीवरोपमा ॥ ४१ ॥ सुमालेरनुजस्तस्यांजनयामासयत्प्रभो ॥ अपत्यंकथ्यमानंतुमयात्वं शृणुराघव ॥ ४२ ॥ अनलश्चानिलश्चैवहरःसंपातिरेवच ॥ एतेविभीषणामात्यामालेयास्तेनिशाचराः ॥ ४३ ॥ ततस्तुतेराक्षसपुंगवास्त्रयोनिशाचरैः पुत्रशतैश्चसंवृताः ॥ सुरान्सहेंद्रानृपिनागयक्षान्बवाधिरेतान्बहुवीर्यदर्पिताः ॥ ४४ ॥ जगद्भ्रमंतोऽनिलवद्दुरासदारणेषुमृत्युप्रतिमानतेजसः ॥ वरप्र दानादपिगर्विताभृशंक्रतुक्रियाणांप्रशमंकराःसदा ॥ ४५ ॥ इत्यार्षे श्रीमद्रा० वाल्मी०आदि० उत्तरकांडे पंचमः सर्गः ॥ ५ ॥

॥४१॥४२॥ मालेयाः इतश्चानिल इति टक् ॥४३॥४४॥ प्रशमंकरा इत्यार्षः खच् ॥४५॥ शोभमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तराकांडे पंचमःसर्गः ॥५॥

हर्षप्रमोदयोर्बाह्याभ्यंतरकृतो भेदः ॥ २५ ॥ आप्लवंतः समंताद्रक्षणार्थं प्लवमानाः प्लवंतः अग्रे शोधनार्थं गच्छंतः । क्ष्वेला तु सिंहनादः स्यादिति निघंटुः । गर्जो मेघादिसदृशः शब्दः निनादः सामान्यशब्दः । ॥ २६ ॥ लीलार्थं महावृक्षानुद्वहंतो मंजरीपुंजधारिणश्च जग्मुरित्यनुकर्षः ॥ २७ ॥ निर्वहंति विनोदार्थमेकमेके वहंति तथा क्षिपंति च स्वमारूढं भूमौ पातयंति पतंतश्च भवंति केवलं गच्छंतीत्यर्थः अन्ये उत्पतंति आकाशमार्गे गच्छंति ॥ २८ ॥ नोस्माकम् अस्माभिरिति यावत् । कृत्यानां कर्तरि वेति षष्ठी ॥ २९ ॥ पुरस्तादृषभ इति । अयमृषभो दक्षिणपार्श्वविनियुक्तादन्यो नीलसहकारी ॥ ३० ॥ ॥ ३१ ॥ सर्वां वाहिनीमवष्टभ्यैको ररक्ष समंततो भ्रमन् रक्षति स्मेत्यर्थः ॥ ३२ ॥ केसर्यादीनां चतुर्णां द्वौ द्वौ तस्य दक्षिणं वामं चैकैकं पार्श्वमभिरक्षत इत्यर्थ इति कतकः । एष गजः पूर्वभागानियुक्तादन्य

तंयांतमनुयांतीसामहतीहरिवाहिनी ॥ हृष्टाःप्रमुदिताःसर्वेसुग्रीवेणाभिपालिताः ॥ २५ ॥ आप्लवंतःप्लवंतश्चगर्जंतश्चप्लवंगमाः ॥ क्ष्वेलंतोनिनदंतश्चजग्मुर्वैदक्षिणांदिशम् ॥ २६ ॥ भक्षयंतःसुगंधीनिमधूनिचफलानिच ॥ उद्वहंतोमहावृक्षान्मंजरीपुंजधारिणः ॥ २७ ॥ अन्योन्यंसहसादृप्तानिर्वहंतिक्षिपंतिच ॥ पतंतश्चोत्पतंत्यन्येपातयंत्यपरेपरान् ॥ २८ ॥ रावणोनोनिहंतव्यःसर्वेचरजनीचराः ॥ इतिगर्जंतिहरयोराघवस्यसमीपतः ॥२९॥ पुरस्तादृषभोनीलोवीरःकुमुदएवच ॥ पंथानंशोधयंतिस्मवानरैर्बहुभिःसह ॥३०॥ मध्येतुराजासुग्रीवोरामोलक्ष्मणएवच ॥ बलिभिर्बहुभिर्भीमैर्वृतःशत्रुनिबर्हणः ॥ ३१ ॥ हरिःशतबलिर्वीरःकोटिभिर्दशभिर्वृतः ॥ सर्वामेकोह्यवष्टभ्यररक्षहरिवाहिनीम् ॥३२॥ कोटीशतपरीवारःकेसरीपनसोगजः ॥ अर्कश्चबहुभिःपार्श्वमेकंतस्याभिरक्षति ॥ ३३ ॥ सुषेणोजांबवांश्चैवऋक्षैर्बहुभिरावृतौ ॥ सुग्रीवंपुरतःकृत्वाजघनंसंररक्षतुः ॥३४॥ तेषांसेनापतिर्वीरोनीलोवानरपुंगवः ॥ संयतश्चरतांश्रेष्ठस्तद्बलंपर्यवारयत् ॥ ३५ ॥ बलीमुखःप्रजंघश्चजंभोथरभसःकपिः ॥ सर्वतश्चययुर्वीरास्त्वरयंतःप्लवंगमान् ॥ ३६ ॥ एवंतेहरिशार्दूलागच्छंतिबलदर्पिताः ॥ अपश्यंतगिरिश्रेष्ठंसह्यंगिरिशतायुतम् ॥ ३७ ॥ सरांसिचसुफुल्लानितटाकानिवराणिच ॥ रामस्यशासनंज्ञात्वाभीमकोपस्यभीतवत् ॥ ३८ ॥ वर्जयन्नगराभ्याशांस्तथाजनपदानपि ॥ सागरौघनिभंभीमंतद्वानरबलंमहत् ॥३९ ॥ निःससर्पमहाघोरंभीमघोषमिवार्णवम् ॥ तस्यदाशरथेःपार्श्वेशूरास्तेकपिकुंजराः ॥ ४० ॥ तूर्णमापुप्लुवुःसर्वेसदश्वाइवचोदिताः ॥ कपिभ्यामुह्यमानौतौशुशुभातेनरर्षभौ ॥ ४१ ॥ महद्भ्यामिवसंस्पृष्टौग्रहाभ्यांचंद्रभास्करौ ॥ ततोवानरराजेनलक्ष्मणेनसुपूजितः ॥ ४२ ॥

इतितीर्थः ॥ ३३ ॥ सुषेणजांबवंतौ प्रायः सेनामध्ये वर्तमानं सुग्रीवं पुरः कृत्वा जघनं सेनापुच्छभागं संररक्षतुः ॥ ३४ ॥ पर्यवारयत् नगरादिपीडाराहित्यं यथा भवति तथा परिवार्यानयदित्यर्थः ॥ ३५ ॥ सर्वतः वेगातिशयादिति भावः ॥ ३६ ॥ गच्छंति गच्छंतश्च सह्यमपश्यंत सरआदीनि चापश्यंत। अत्र प्रथमदिनवास इति ज्ञायते ॥ ३७ ॥ भीतवत् भीताः संत इत्यर्थः ॥ ३८ ॥ वर्जयेत् वर्जयित्वागच्छत् ॥ ३९ ॥ भीमघोषमर्णवमिव अर्धचंद्रादिरर्णवः । निःससर्प सह्यतो निःसृतम् ॥४०॥४१॥ महद्भ्यां ग्रहाभ्यां राहुकेतुभ्यां संस्पृष्टौ अर्धभागे स्पृष्टौ चन्द्रभास्कराविव । महद्भ्यामर्धसंस्पृष्टाविति पाठांतरम् ॥४२॥

यास्त्रिमंत्रास्त्रिवेदाश्च आमयत्रयं वातपित्तश्लेष्मरूपम् अत्रोपमाचतुष्टये स्थिरत्वतेजस्वित्वापरिमितसामर्थ्यहिंसकत्वानि साधारणधर्माः ॥७॥ व्याधयोपेक्षिता इव उपेक्षिता अचिकित्सिता व्याधय इवेत्यर्थः । संधिरार्षः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ दिशसे ददासि अजेया जेतुमनर्हाः प्रभविष्णवःयणार्षः प्रभव इति यावत् परस्परमनुव्रताः अनुरक्ताश्च भवामेत्यनुकर्षः ॥१४ ॥ ब्रह्मलोकाय तं प्राप्तुं ब्राह्मणवत्सलः तेषां

त्रयःसुकेशस्यसुतास्त्रेताग्निसमतेजसः ॥ विवृद्धिमगमंस्तत्रव्याधयोपेक्षिताइव ॥ ८ ॥ वरप्राप्तिंपितुस्तेतुज्ञात्वैश्वर्यंतपोबलात् ॥ तपस्तप्तुंगतामेरुं भ्रातरःकृतनिश्चयाः ॥ ९ ॥ प्रगृह्यनियमान्घोरान्राक्षसानृपसत्तम ॥ विचेरुस्तेतपोघोरंसर्वभूतभयावहम् ॥ १० ॥ सत्यार्जवशमोपेतैस्तपोभिर्भुवि दुर्लभैः ॥ संतापयंतस्त्रींल्लोकान्सदेवासुरमानुषान् ॥ ११ ॥ ततोविभुश्चतुर्वक्त्रोविमानवरमाश्रितः ॥ सुकेशपुत्रानामंत्र्यवरदोस्मीत्यभाषत ॥१२॥ ब्रह्माणंवरदंज्ञात्वासेंद्रैर्देवगणैर्वृतम् ॥ ऊचुःप्रांजलयःसर्वेवेपमानाइवद्रुमाः ॥ १३ ॥ तपसाराधितोदेवयदिनोदिशसेवरम् ॥ अजेयाःशत्रुहंतारस्तथैवचिरजीविनः ॥ प्रभविष्णवोभवामेतिपरस्परमनुव्रताः ॥ १४ ॥ एवंभविष्यथेत्युक्त्वासुकेशतनयान्विभुः ॥ सययौब्रह्मलोकायब्रह्माब्राह्मणवत्सलः ॥ ॥ १५ ॥ वरंलब्ध्वातुतेसर्वेरामरात्रिंचरास्तदा ॥ सुरासुरान्प्रबाधंतेवरदानसुनिर्भयाः ॥ १६ ॥ तैर्बाध्यमानास्त्रिदशाःसर्षिसंघाःसचारणाः॥त्रातारं नाधिगच्छंतिनिरयस्थायथानराः ॥ १७ ॥ अथतेविश्वकर्माणंशिल्पिनांवरमव्ययम् ॥ ऊचुःसमेत्यसंहृष्टाराक्षसारघुसत्तम ॥ १८ ॥ ओजस्तेजोबलवतांमहतामात्मतेजसा ॥ गृहकर्ताभवानेवदेवानांहृदयेप्सितम् ॥ १९ ॥ अस्माकमपितावत्त्वंगृहंकुरुमहामते ॥ हिमवंतमुपाश्रित्यमेरुंमंदरमेववा ॥ २० ॥ महेश्वरगृहप्रख्यंगृहंनःक्रियतांमहत् ॥ विश्वकर्माततस्तेषांराक्षसानांमहाभुजः ॥ २१ ॥ निवासंकथयामासशक्रस्येवामरावतीम् ॥ दक्षिणस्योदधेस्तीरेत्रिकूटोनामपर्वतः ॥२२॥ सुवेलइतिचाप्यन्योद्वितीयोराक्षसेश्वरः ॥ शिखरेतस्यशैलस्यमध्यमेंऽबुदसन्निभे ॥ २३ ॥ शकुनैरपिदुष्प्रापेटंकच्छिन्नचतुर्दिशि ॥ त्रिंशद्योजनविस्तीर्णाशतयोजनमायता ॥२४॥स्वर्णप्राकारसंवीताहेमतोरणसंवृता ॥ मयालंकेतिनगरीशक्राज्ञतेननिर्मिता॥ २५ ॥ तस्यांवसतदुर्धर्षायूयंराक्षसपुंगवाः ॥ अमरावतींसमासाद्यसेंद्राइवदिवौकसः ॥ २६ ॥

स्वमुखजत्वाज्ज्येष्ठत्वाच्च तेषु वात्सल्यम् ॥ १५ ॥ १६ ॥ १७ ॥ अथ ते माल्यवदादयः अव्ययं चिरजीविनम् ॥ १८ ॥ ओजस्तेजोबलवतामत एव महतां देवानां भवानेवात्मतेजसा आत्मसामर्थ्येन गृहकर्ता सत्वमस्माकमपि हृदयेप्सितं गृहं कुर्विति सम्बन्धः ॥ १९ ॥ २० ॥ २१॥२२॥ द्वितीयस्तत्सदृश इत्यर्थः । मध्यमे शिखर इति सम्बन्धः ॥ २३ ॥ शकुनैरपि दुष्प्रापे इत्यत्र हेतुष्टंकच्छिन्नचतुर्दिशि ॥२४॥

अमरावतीं समासाद्येति नवाक्षरपादतार्षी ॥ २५ ॥ ॥ २६ ॥ २७ ॥ सहस्रमनेकेऽनुचरा येषां ते सहस्रानुचराः ॥ २८ ॥ २९ ॥ ३० ॥ अराक्षसी राक्षसजातिभिन्ना ॥ ३१ ॥ ३२ ॥ मात्रा दत्ताः मात्रा नर्मदयेच्छया दत्ता इत्यर्थः । भगदैवतं नक्षत्रमुत्तराफाल्गुनी ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ स्वक्षी मधुरदृग्युताक्षी यक्षीवरा यक्षीश्रेष्ठा तयोपमीयते सा यक्षीवरोपमा

लंकादुर्गंसमासाद्यराक्षसैर्बहुभिर्वृताः भविष्यथदुराधर्षाःशत्रूणांशत्रुसूदनाः ॥ २७ ॥ विश्वकर्मवचःश्रुत्वाततस्तेराक्षसोत्तमाः ॥ सहस्रानुचराभूत्वा गत्वातामवसन्पुरीम् ॥ २८ ॥ दृढप्राकारपरिखांहैमैर्गृहशतैर्वृताम् ॥ लंकामवाप्यतेहृष्टान्यवसन्रजनीचराः ॥ २९ ॥ एतस्मिन्नेवकालेतुयथाकामं चराघव ॥ नर्मदानामगंधर्वीबभूवरघुनंदन ॥ ३० ॥ तस्याःकन्यात्रयंह्यासीद्धीश्रीकीर्तिसमद्युति ॥ ज्येष्ठक्रमेणसातेषांराक्षसानामराक्षसी ॥ ३१ ॥ कन्यास्ताःप्रददौहृष्टापूर्णचंद्रनिभाननाः ॥ त्रयाणांराक्षसेंद्राणांतिस्रोगंधर्वकन्यकाः ॥ ३२ ॥ दत्तामात्रामहाभागानक्षत्रेभगदैवते ॥ कृतदारास्तुते रामसुकेशतनयास्तदा ॥ ३३ ॥ चिक्रीडुःसहभार्याभिरप्सरोभिरिवामराः ॥ ततोमाल्यवतोभार्यासुंदरीनामसुंदरी ॥३४॥ सतस्यांजनयामासयदप त्यंनिबोधतत् ॥ वज्रमुष्टिर्विरूपाक्षोदुर्मुखश्चैवराक्षसः ॥ ३५ ॥ सुप्तघ्नोयज्ञकोपश्चमत्तोन्मत्तौतथैवच ॥ अनलाचाभवत्कन्यासुंदर्यारामसुंदरी ॥ ३६ ॥ सुमालिनोपिभार्यासीत्पूर्णचंद्रनिभानना ॥ नाम्नाकेतुमतीरामप्राणेभ्योपिगरीयसी ॥ ३७ ॥ सुमालीजनयामासयदपत्यंनिशाचरः ॥ केतुमत्यांमहाराजतन्निबोधानुपूर्वशः ॥ ३८ ॥ प्रहस्तोकंपनश्चैवविकटःकालिकामुखः ॥ धूम्राक्षश्चैवदंडश्चसुपार्श्वश्चमहाबलः ॥ ३९ ॥ संह्रादिः प्रघसश्चैवभासकर्णश्चराक्षसः ॥ राकापुष्पोत्कटाचैवकैकसीचशुचिस्मिताः ॥ कुंभीनसीचइत्येतेसुमालेःप्रसवाःस्मृताः ॥ ४० ॥ मालेस्तुवसुदानाम गंधर्वीरूपशालिनी ॥ भार्यासीत्पद्मपत्राक्षीस्वक्षीयक्षीवरोपमा ॥ ४१ ॥ सुमालेरनुजस्तस्यांजनयामासयत्प्रभो ॥ अपत्यंकथ्यमानंतुमयात्वं शृणुराघव ॥ ४२ ॥ अनलश्चानिलश्चैवहरःसंपातिरेवच ॥ एतेविभीषणामात्यामालेयास्तेनिशाचराः ॥ ४३ ॥ ततस्तुतेराक्षसपुंगवास्त्रयोनिशाचरैः पुत्रशतैश्चसंवृताः ॥ सुरान्सहेंद्रानृषिनागयक्षान्वबाधिरेतान्बहुवीर्यदर्पिताः ॥ ४४ ॥ जगद्भ्रमंतोऽनिलवद्दुरासदारणेषुमृत्युप्रतिमानतेजसः ॥ वरप्र दानादपिगर्विताभृशंक्रतुक्रियाणांप्रशमंकराःसदा ॥ ४५ ॥ इत्यार्षे श्रीमद्रा० वाल्मी०आदि० उत्तरकांडे पंचमः सर्गः ॥ ५ ॥

॥४१॥४२॥ मालेयाः इतश्चानित्र इति ढक् ॥४३॥४४॥ प्रशमंकरा इत्यार्षः खच् ॥४५॥ शोभमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तराकांडे पंचमःसर्गः ॥५॥

पार्श्वेन परिवर्ततमित्यन्वयः ॥ ३४ ॥ संप्रयुक्तौ युद्धाय संमुखतया स्थितौ ॥ ३५ उद्वृत्तगंगा उद्वेलगंगेत्यर्थः । वानरबलमानंदेन राक्षसबलं शोकेनेति शेषः ॥ ३६ ॥ चैलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तनवतितमः सर्गः ॥ ९७ ॥ कतकरी० ॥ ८९ ॥ अन्योन्यं हन्यमाने ते बले सूपक्षीणे सुतरामुपक्षयवती बभूवतुः । सरसी इव संधिरार्षः ॥ १ ॥ २ ॥

स्फुरंतंपरिवर्तंतंपार्श्वेनरुधिरोक्षितम् ॥ करुणंचविनर्दंतंददृशुःकपयोरिपुम् ॥ ३४ ॥ तथातुतौसंयतिसंप्रयुक्तौतरस्विनौवानरराक्षसानाम् ॥ बलार्णवौसस्वनतुश्चभीमौमहार्णवौद्वाविवभिन्नसेतू ॥ ३५ ॥ विनाशितंप्रेक्ष्यविरूपनेत्रंमहाबलंतंहरिपार्थिवेन ॥ बलंसमेतंकपिराक्षसानामुद्वृत्तगंगाप्रतिमंबभूव ॥ ३६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥ हन्यमानेबलेतूर्णमन्योन्यंतेमहामृधे ॥ सरसीवमहाघर्मेसूपक्षीणेबभूवतुः ॥ १ ॥ स्वबलस्यतुघातेनविरूपाक्षवधेनच ॥ बभूवद्विगुणंक्रुद्धोरावणोराक्षसाधिपः ॥ २ ॥ प्रक्षीणंस्वबलंदृष्ट्वावध्यमानंवलीमुखैः ॥ बभूवास्यव्यथायुद्धेदृष्ट्वादैवविपर्ययम् ॥ ३ ॥ उवाचचसमीपस्थंमहोदरमनंतरम् ॥ अस्मिन्कालेमहाबाहोजयाशात्वयिमेस्थिता ॥४॥ जहिशत्रुचमूंवीरदर्शयाद्यपराक्रमम् ॥ भर्तृपिंडस्यकालोयंनिर्वेष्टुंसाधुयुध्यताम् ॥ ५ ॥ एवमुक्तस्तथेत्युक्त्वाराक्षसेंद्रोमहोदरः ॥ प्रविवेशारिसेनांसपतंगइवपावकम् ॥ ६ ॥ ततःसकदनंचक्रेवानराणांमहाबलः ॥ भर्तृवाक्येनतेजस्वीस्वेनवीर्येणचोदितः ॥७॥ वानराश्चमहासत्त्वाःप्रगृह्यविपुलाःशिलाः ॥ प्रविश्यारिबलंभीमंजघ्नुस्तेसर्वराक्षसान् ॥ ८ ॥ महोदरःसुसंक्रुद्धःशरैःकांचनभूषणैः ॥ चिच्छेदपाणिपादोरुवानराणांमहाहवे ॥ ९ ॥ ततस्तेवानराःसर्वेराक्षसानांमहामृधे ॥ दिशोदशद्रुताःकेचित्केचित्सुग्रीवमाश्रिताः ॥ १० ॥ प्रभग्नंसमरेदृष्ट्वावानराणांमहाबलम् ॥ अभिदुद्रावसुग्रीवोमहोदरमनंतरम् ॥ ११ ॥ प्रगृह्यविपुलांघोरांमहीधरसमांशिलाम् ॥ चिक्षेपचमहातेजास्तद्वधायहरीश्वरः ॥ १२ ॥ तामापतंतींसहसाशिलांदृष्ट्वामहोदरः ॥ असंभ्रांतस्ततोबाणैर्निर्बिभेदततःशिलाम् ॥ १३ ॥ रक्षसातेनबाणौघैर्निकृत्तासासहस्रधा ॥ निपपाततदाभूमौगृध्रचक्रमिवाकुलम् ॥ १४ ॥ तांतुभिन्नांशिलांदृष्ट्वासुग्रीवःक्रोधमूर्च्छितः ॥ सालमुत्पाट्यचिक्षेपतंसचिच्छेदनैकधा ॥ १५ ॥ शरैश्चविददारैनंशूरःपरबलार्दनः ॥ सददर्शततःक्रुद्धःपरिघंपतितंभुवि ॥ १६ ॥ आविध्यतुसतंदीप्तंपरिघंतस्यदर्शयन् ॥ परिघेणोग्रवेगेनजघानास्यहयोत्तमान् ॥ १७ ॥ तस्माद्धतहयाद्वीरःसोपप्लुत्यमहारथात् ॥ गदांजग्राहसंक्रुद्धोराक्षसोथमहोदरः ॥ १८ ॥

॥ ३ ॥ ४ ॥ भर्तृपिंडस्य स्वामिकृतान्नादिप्रदानोपकारस्य निर्वेष्टुं प्रत्युपकारं कर्तुम् ॥ ५ ॥ ६ ॥ भर्तृवाक्येन चोदितः स स्वेन वीर्येण कदनं चक्रे ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अनंतरं सन्निहितमित्यर्थ इति तीर्थः ॥ ११ ॥ १२ ॥ १३ ॥ आकुलं गृध्रचक्रमिव निपपात शिलाया अनेकधा भग्नत्वात्तत्सादृश्यम् ॥ १४ ॥॥ १५ ॥ स सुग्रीवः ॥ १६ ॥ दीप्तं परिघमाविध्य भ्रामयित्वा हस्तलाघवं तस्मै

दर्शयंस्तद्धयान् जघान॥१७॥१८॥समीयतुः संगतौ बभूवतुः॥१९॥भास्करवदाभासते सा भास्कराभासा ताम् ॥२०॥आपतंतीं गदां दृष्ट्वेति शेषः। समुद्यम्य परिघमिति शेषः ॥२१॥ गदा पपात स परिघश्च भिन्न इत्यर्थः ॥ २२ ॥ २३ ॥ स सुग्रीवः तं मुसलम्। सोपि महोदरोपि ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ जहार जह्रतुः ॥ २८ ॥ २९ ॥ दक्षिणमंडलं च सुतूर्णं संपरीयतुरकुरुताम् ॥ ३० ॥ वीर्येण श्लाघत इति वीर्यश्लाघी ॥ ३१ ॥ सुग्रीवफलके लग्नं खड्गमुत्कर्षतो महोदरस्य शिरः खड्गेन जहार ॥ ३२ ॥ निकृत्तशिरसो राक्षसेंद्रस्य बलं तद्राक्षसेंद्रशिरो दृष्ट्वा तत्र स्थाने न दृश्यते पलायितमिति यावत् ॥

गदापरिघहस्तौतौयुधिवीरौसमीयतुः ॥ नर्दंतौगोवृषप्रख्यौघनाविवसविद्युतौ ॥ १९ ॥ ततःक्रुद्धौगदांतस्यचिक्षेपरजनीचरः ॥ ज्वलंतींभास्करा भासांसुग्रीवायमहोदरः ॥ २० ॥ गदांतांसुमहाघोरामापतंतींमहाबलः ॥ सुग्रीवोरोषताम्राक्षःसमुद्यम्यमहाहवे ॥ २१ ॥ आजघानगदांतस्यपरिघे णहरीश्वरः ॥ पपाततरसाभिन्नःपरिघस्तस्यभूतले ॥ २२ ॥ ततोजग्राहतेजस्वीसुग्रीवोवसुधातलात् ॥ आयसंमुसलंघोरंसर्वतोहेमभूषितम् ॥२३॥ सतमुद्यम्यचिक्षेपसोप्यस्यप्राक्षिपद्गदाम् ॥ भिन्नावन्योन्यमासाद्यपेततुस्तौमहीतले ॥ २४ ॥ ततोभिन्नप्रहरणौमुष्टिभ्यांतौसमीयतुः ॥ तेजो बलसमाविष्टौदीप्ताविवहुताशनौ ॥ २५ ॥ जघ्नतुस्तौतदान्योन्यंनदंतौचपुनःपुनः ॥ तलैश्चान्योन्यमासाद्यपेततुश्चमहीतले ॥२६॥ उत्पेततुस्तदा तूर्णंजघ्नतुश्चपरस्परम् ॥ भुजैश्चिक्षिपतुर्वीरावन्योन्यमपराजितौ ॥२७॥ जग्मतुस्तौश्रमंवीरौबाहुयुद्धेपरंतपौ ॥ जहारचतदाखड्गमदूरपरिवर्तिनम्॥ ॥ २८ ॥ ततोरोषपरीतांगौनदंतावभ्यधावताम् ॥ उद्यतासीरणेहृष्टौयुद्धेशस्त्रविशारदौ ॥ २९ ॥ दक्षिणंमंडलंचोभौसुतूर्णंसंपरीयतुः ॥ अन्योन्यम भिसंक्रुद्धौजयेप्रणिहितावुभौ ॥ ३० ॥ सतुशूरोमहावेगोवीर्यश्लाघीमहोदरः ॥ महावर्मणितंखड्गंपातयामासदुर्मतिः ॥ ३१ ॥ लग्नमुत्कर्षतःखड्गंखड्गे नकपिकुंजरः ॥ जहारसशिरस्त्राणंकुंडलोपगतंशिरः ॥ ३२ ॥ निकृत्तशिरसस्तस्यपतितस्यमहीतले ॥ तद्बलंराक्षसेंद्रस्यदृष्ट्वातत्रनदृश्यते ॥३३॥ हत्वातंवानरैःसार्धंननादमुदितोहरिः ॥ चुक्रोधचदशग्रीवोबभौहृष्टश्चराघवः ॥ ३४ ॥ विषण्णवदनाःसर्वेराक्षसादीनचेतसः ॥ विद्रवंतिततःसर्वेभय वित्रस्तचेतसः ॥ ३५ ॥ महोदरंतंविनिपात्यभूमौमहागिरेःकीर्णमिवैकदेशम् ॥ सूर्यात्मजस्तत्ररराजलक्ष्म्यासूर्यःस्वतेजोभिरिवाप्रधृष्यः ॥ ३६ ॥ अथविजयमवाप्यवानरेंद्रःसमरमुखेसुरसिद्धयक्षसंघैः ॥ अवनितलगतैश्चभूतसंघैर्हरुषसमाकुलितैर्निरीक्ष्यमाणः ॥ ३७ ॥ इत्यार्षे श्रीमद्रा० वाल्मी कीयेआदिकाव्येयुद्धकांडेअष्टनवतितमःसर्गः ॥ ९८ ॥



॥ ३३ ॥ ३४ ॥ सर्वे विषण्णवदना दीनचेतसश्च बभूवुरिति शेषः। भयवित्रस्तचेतसः भयकंपितचित्ताः सर्वे विद्रवंति व्यद्रवन् ॥ ३५ ॥ कीर्णं शीर्णम् ॥ ३६ ॥ हर्षपदस्थाने हरुषेति पाठश्छंदो नुरोधात्। बभूवेति शेषः ॥ ३७ ॥ सँलँमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टनवतितमः सर्गः ॥ ९८ ॥ कतकरी० ॥ ९० ॥ ॥ छ ॥

महोदरे इति । सुग्रीवेण महोदरे निहते सति तद्वधकर्तारं सुग्रीवं महापार्श्वः समीक्ष्य ॥ १ ॥ अंगदचमूं क्षोभयामास ॥ २ ॥ वृंतं प्रसवबंधनम् ॥ ३ ॥ ४ ॥ विषादेन विमुखाः ॥ ५ ॥
॥ ६ ॥ ससूतस्यंदनात् हतसूतसहितरथादित्यर्थः ॥ ७ ॥ ऋक्षराजो जांबवान् ॥ ८ ॥ गिरिशृंगाभां शिलां गृहीत्वाऽश्वान् जघान अनंतरं स्यंदनं तं बभंज ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ दूरस्थितस्य

महोदरेतुनिहतेमहापार्श्वोमहाबलः ॥ सुग्रीवेणसमीक्ष्याथक्रोधात्संरक्तलोचनः ॥१॥ अंगदस्यचमूंभीमांक्षोभयामासमार्गणैः ॥ सवानराणांमुख्याना
मुत्तमांगानिराक्षसः ॥ २ ॥ पातयामासकायेभ्यःफलंवृंतादिवानिलः ॥ केषांचिदिषुभिर्बाहूंश्चिच्छेदाथसराक्षसः ॥३॥ वानराणांसुसंरब्धःपार्श्वंकेषां
चिदाक्षिपत् ॥ तेर्दिताबाणवर्षेणमहापार्श्वेनवानराः ॥४॥ विषादविमुखाःसर्वेबभूवुर्गतचेतसः ॥ निशम्यबलमुद्विग्नमंगदोराक्षसार्दितम् ॥ ५ ॥ वेगंचक्रे
महावेगःसमुद्रइवपर्वसु ॥ आयसंपरिघंगृह्यसूर्यरश्मिसमप्रभम् ॥ ६ ॥ समरेवानरश्रेष्ठोमहापार्श्वेन्यपातयत् ॥ सतुतेनप्रहारेणमहापार्श्वोविचेतनः ॥
ससूतःस्यंदनात्तस्माद्विसंज्ञश्चापतद्भुवि ॥ ७ ॥ तस्यर्क्षराजस्तेजस्वीनीलांजनचयोपमः ॥ निष्पत्यसुमहावीर्यःस्वयूथान्मेघसन्निभात् ॥ ८ ॥ प्रगृह्य
गिरिशृंगाभांक्रुद्धःसविपुलांशिलाम् ॥ अश्वाञ्जघानतरसाबभंजस्यंदनंचतम् ॥ ९ ॥ मुहूर्ताल्लब्धसंज्ञस्तुमहापार्श्वोमहाबलः ॥ अंगदंबहुभिर्बाणैर्भू
यस्तंप्रत्यविध्यत ॥ १० ॥ जांबवंतंत्रिभिर्बाणैराजघानस्तनांतरे ॥ ऋक्षराजंगवाक्षंचजघानबहुभिःशरैः ॥ ११ ॥ गवाक्षंजांबवंतंचसदृष्ट्वाशरपीडि
तौ ॥ जग्राहपरिघंघोरमंगदःक्रोधमूर्च्छितः ॥ १२ ॥ तस्यांगदःसरोषाक्षोराक्षसस्यतमायसम् ॥ दूरस्थितस्यपरिघंरविरश्मिसमप्रभम् ॥ १३ ॥
द्वाभ्यांभुजाभ्यांसंगृह्यभ्रामयित्वाचवेगवत् ॥ महापार्श्वायचिक्षेपवधार्थंवालिनःसुतः ॥१४॥ सतुक्षिप्तोबलवतापरिघस्तस्यरक्षसः ॥ धनुश्चसशरंहस्ता
च्छिरस्त्राणंचपातयत् ॥ १५ ॥ तंसमासाद्यवेगेनवालिपुत्रःप्रतापवान् ॥ तलेनाभ्यहनत्क्रुद्धःकर्णमूलेसकुंडले ॥ १६ ॥ सतुक्रुद्धोमहावेगोमहापार्श्वो
महाद्युतिः ॥ करेणैकेनजग्राहसुमहांतंपरश्वधम् ॥ १७ ॥ तंतैलधौतंविमलंशैलसारमयंदृढम् ॥ राक्षसःपरमक्रुद्धोवालिपुत्रेन्यपातयत् ॥ १८ ॥
तेनवामांसफलकेभृशंप्रत्यवपातितम् ॥ अंगदोमोक्षयामाससरोषःसपरश्वधम् ॥ १९ ॥ सवीरोवज्रसंकाशमंगदोमुष्टिमात्मनः ॥ संवर्तयत्ससंक्रुद्धः
पितुस्तुल्यपराक्रमः ॥ २० ॥ राक्षसस्यस्तनाभ्याशेमर्मज्ञोहृदयंप्रति ॥ इंद्राशनिसमस्पर्शंसमुष्टिंविन्यपातयत् ॥ २१ ॥ तेनतस्यनिपातेनराक्ष
सस्यमहामृधे ॥पफालहृदयंचास्यसपपातहतोभुवि ॥ २२ ॥ तस्मिन्विनिहतेभूमौतत्सैन्यंसंप्रचुक्षुभे ॥ अभवच्चमहान्क्रोधःसमरेरावणस्यतु ॥२३॥

राक्षसस्य वधार्थं परिघं द्वाभ्यां भुजाभ्यां संगृह्य गृहीत्वा भ्रामयित्वा च महापार्श्वाय चिक्षेपेत्यन्वयः ॥ १३ ॥ १४ ॥ तस्य रक्षसो हस्तात्सशरं धनुश्चादेकं हस्तं शिरस्त्राणं चापातयत् । अतएवाग्रे वक्ष्यति करेणैकेनेति ॥ १५ ॥१६॥१७॥ तैलधौतं तेनातितीक्ष्णम् । शैलसारोयस्तन्मयम् ॥१८॥ मोक्षयामास मोचीचकार ॥१९॥ संवर्तयत्समवर्तयत् बबंधेत्यर्थः ॥२०॥२१॥ पफाल विशीर्णम् ॥२२॥२३॥

वानराणां सिंहनादो लंकां स्फोटयन्निव विदारयन्निवोदभूदिति शेषः । इंद्रेण सह देवानामिवांगदेन सह वानराणां सिंहनादः समभवत् ॥ २४ ॥ २५ ॥ मॅखॅमानः ॥ इति श्रीरामाभिराम श्रीरामीये रामायण तिलके वाल्मीकीये आदिकाव्ये युद्धकांडे नवनवतितमः सर्गः ॥ ९९ ॥ कतकरी० ॥ ९१ ॥ महोदरेति । हतौ दृष्ट्वा स रावणः क्रुद्धो जात इति शेषः ॥ १ ॥ २ ॥ रुद्धस्य नगरस्य वानरबलैरिति शेषः दुःखमपनेष्याम्येव ॥३॥ मूलोच्छेदं करिष्यामीत्याशयेन रामं सर्वाश्रयमहावृक्षत्वेन निरूपयति रामवृक्षमिति । सीता पुष्पं यस्य सः स चासौ तेनैव पुष्पेण सर्वेषां वानराणां तत्तत्कर्मजफलप्रदस्तम् । सुग्रीवादयः

वानराणांप्रहृष्टानांसिंहनादःसुपुष्कलः ॥ स्फोटयन्निवशब्देनलंकांसाट्टालगोपुराम् ॥ सहेंद्रेणेवदेवानांनादःसमभवन्महान् ॥ २४ ॥ अथेंद्रशत्रु त्रिदशालयानांवनौकसांचैवमहाप्रणादम् ॥ श्रुत्वासरोषंयुधिराक्षसेंद्रःपुनश्चयुद्धाभिमुखोवतस्थे ॥ २५ ॥ इत्यार्षे श्रीमद्रा० वा० आ० युद्धकाण्डे नवनवतितमःसर्गः ॥ ९९ ॥ महोदरमहापार्श्वौहतौदृष्ट्वासरावणः ॥ तस्मिंश्चनिहतेवीरेविरूपाक्षेमहाबले ॥ १ ॥ आविवेशमहान्क्रोधोरावणंतुमहा मृधे ॥ सूतंसंचोदयामासवाक्यंचेदमुवाचह ॥ २ ॥ निहतानाममात्यानांरुद्धस्यनगरस्यच ॥ दुःखमेवापनेष्यामिहत्वातौरामलक्ष्मणौ ॥ ३ ॥ रामवृक्षंरणेहन्मिसीतापुष्पफलप्रदम् ॥ प्रशाखायस्यसुग्रीवोजांबवान्कुमुदोनलः ॥ ४ ॥ द्विविदश्चैवमैंदश्चअंगदोगंधमादनः ॥ हनूमांश्चसुषे णश्चसर्वेचहरियूथपाः ॥ ५ ॥ सदिशोदशघोषेणरथस्यातिरथोमहान् ॥ नादयन्प्रययौतूर्णंराघवंचाभ्यधावत ॥ ६ ॥ पूरितातेनशब्देनसनदीगिरि कानना ॥ संचचालमहीसर्वात्रस्तसिंहमृगद्विजा ॥ ७ ॥ तामसंसुमहाघोरंचकारास्त्रंसुदारुणम् ॥ निर्ददाहकपीन्सर्वांस्तेप्रपेतुःसमंततः ॥ ८ ॥ उत्पपातरजोघोरंभग्नैस्तैःसंप्रधावितैः ॥ नहितत्सहितुंशेकुर्ब्रह्मणानिर्मितंस्वयम् ॥ ९ ॥ तान्यनीकान्यनेकानिरावणस्यशरोत्तमैः ॥ दृष्ट्वाभग्नानिश तशोराघवःपर्यवस्थितः ॥ १० ॥ ततोराक्षसशार्दूलोविद्राव्यहरिवाहिनीम् ॥ सददर्शततोरामंतिष्ठंतमपराजितम् ॥ ११ ॥ लक्ष्मणेनसहभ्रात्रा विष्णुनावासवंयथा ॥ आलिखंतमिवाकाशमवष्टभ्यमहद्धनुः ॥ १२ ॥ पद्मपत्रविशालाक्षंदीर्घबाहुमरिंदमम् ॥ ततोरामोमहातेजाःसौमित्रिसहितो बली ॥ १३ ॥ वानरांश्चरणेभग्नानापतंतंचरावणम् ॥ समीक्ष्यराघवोहृष्टोमध्येजग्राहकार्मुकम् ॥ १४ ॥ विस्फारयितुमारेभेततःसधनुरुत्तमम् ॥ महावेगंमहानादंनिर्भिंदन्निवमेदिनीम् ॥ १५ ॥ रावणस्यचबाणौघैरामविस्फारितेनच ॥ शब्देनराक्षसास्तेनपेतुश्चशतशस्तदा ॥ १६ ॥

प्रशाखा यस्य तं प्रशाखासहितं हन्मीति शेषः ॥ ४ ॥ ५ ॥ इत्युक्त्वा रथस्य घोषेण दश दिशो नादयन् ॥ ६ ॥ ७ ॥ तामसमस्त्रं तमोग्रहदेवताकमस्त्रम् ॥ ८ ॥ ब्रह्मणा स्वयं निर्मितं तामसमस्त्रं सहितुं सोढुं न शेकुः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ राघवो हृष्टः एकः शिष्टः शत्रुर्दृग्गोचरं प्राप्त इति हर्षः ॥ १४ ॥ १५ ॥ रावणबाणौघै रामविस्फारितेन च यः शब्दस्तेन पेतुः ॥ १६ ॥

स्वर्गरू पिणं स्वर्गो निरंतिशयसुखं तस्य रूपं यस्यास्ति निरतिशयसुखहेतुभूतमित्यर्थः ॥२४॥ यत्त्वं यासि तत्र शोभनमित्यन्वयः ॥२५॥ त्रैलोक्ये यः प्रभुः स्यात्स मदन्यो नैवेत्यर्थः तेन त्रैलोक्यप्रभोर्ममान्यार्थ मुपेक्षा न युक्तेति भावः ॥ २६ ॥ त्रैलोक्यस्य भर्तुरपि भर्ता विधाता च तं मां भजस्वेत्यर्थः ॥ २७ ॥ २८ ॥ अन्येभ्योऽपि यदि धर्षणं प्राप्नुयां तदापि त्वया रक्ष्या अत एवं वक्तुं नार्हसि ॥ २९ ॥ चरणाधोमुखीं चरणावलोकनेनाधोमुखतया स्थिताम् ॥ ३० ॥ सुतस्य इंद्रजित इत्यर्थः ॥ ३१ ॥ धर्मतः संकेतधर्मतः ॥ ३२ ॥ धर्मतो धर्मानुष्ठानविषये ॥ ३३ ॥ कृतसंकेता कृतरतिसंकेता ॥ ३४ ॥ यथा

सुवर्णचक्रप्रतिमंस्वर्णदामचितंपृथु ॥ अध्यारोक्ष्यतिकस्तेऽद्यजघनंस्वर्गरूपिणम् ॥ २४ ॥ मद्विशिष्टःपुमान्कोद्यशक्रोविष्णुरथाश्विनौ ॥ मामतीत्यहियत्त्वंयासिभीरुनशोभनम् ॥ २५ ॥ विश्रमत्वंपृथुश्रोणिशिलातलमिदंशुभम् ॥ त्रैलोक्येयःप्रभुश्चैवमदन्योनैवविद्यते ॥ २६ ॥ तदेवंप्रांजलिःप्रह्वोयाचतेत्वांदशाननः ॥ भर्तुर्भर्ताविधाताचत्रैलोक्यस्यभजस्वमाम् ॥ २७ ॥ एवमुक्ताऽब्रवीद्रंभावेपमानाकृतांजलिः ॥ प्रसीदनार्हसेवक्तुमीदृशंत्वंहिमेगुरुः ॥ २८ ॥ अन्येभ्योपित्वयारक्ष्याप्राप्नुयांधर्षणंयदि ॥ तद्धर्मतःस्नुषातेहंतत्त्वमेतद्ब्रवीमिते ॥ २९ ॥ अथाब्रवीद्दशग्रीवश्चरणाधोमुखींस्थिताम् ॥ रोमहर्षमनुप्राप्तांदृष्टमात्रेणतांतदा ॥ ३० ॥ सुतस्ययदिमेभार्याततस्त्वंहिस्नुषाभवेः ॥ बाढमित्येवसारंभाप्राहरावणमुत्तरम् ॥ ३१ ॥ धर्मतस्तेसुतस्याहंभार्याराक्षसपुंगव ॥ पुत्रःप्रियतरःप्राणैर्भ्रातुर्वैश्रवणस्यते ॥ ३२ ॥ विख्यातस्त्रिषुलोकेषुनलकूबरइत्ययम् ॥ धर्मतोयोभवेद्विप्रःक्षत्रियोवीर्यतोभवेत् ॥ ३३ ॥ क्रोधाद्यश्चभवेदग्निःक्षांत्याचवसुधासमः ॥ तस्यास्मिकृतसंकेतालोकपालसुतस्यवै ॥ ३४ ॥ तमुद्दिश्यतुमेसर्वंविभूषणमिदंकृतम् ॥ यथातस्यहिनान्यस्यभावोमांप्रतितिष्ठति ॥३५॥ तेनसत्येनमांराजन्मोक्तुमर्हस्यरिंदम ॥ सहितिष्ठतिधर्मात्मामांप्रतीक्ष्यसमुत्सुकः ॥ ३६ ॥ तत्रविघ्नंतुतस्येहकर्तुंनार्हसिमुंचमाम् ॥ सद्भिराचरितंमार्गंगच्छराक्षसपुंगव ॥ ३७ ॥ माननीयोममत्वंहिपालनीयातथास्मिते ॥ एवमुक्तोदशग्रीवःप्रत्युवाचविनीतवत् ॥ ३८ ॥ स्नुषास्मियदवोचस्त्वमेकपत्नीष्वयंक्रमः ॥ देवलोकस्थितिरियंसुराणांशाश्वतीमता ॥ ३९ ॥ पतिरप्सरसांनास्तिनचैकस्त्रीपरिग्रहः ॥ एवमुक्त्वासतांरक्षोनिवेश्यचशिलातले ॥ ४० ॥ कामभोगाभिसंरक्तोमैथुनायोपचक्रमे ॥ साविमुक्ताततोरंभाभ्रष्टमाल्यविभूषणा ॥ ४१ ॥ गजेंद्राक्रीडमथितानदीवा[illegible]लतांगता ॥ [illegible]ताकुलकेशांताकरवेपितपल्लवा ॥ ४२ ॥

[illegible]स्य भावो मां प्रति तिष्ठति तथा ममापि भावस्तं प्रति तिष्ठतीति शेषः नान्यस्य[illegible]रीमा[illegible] [illegible]धसस्मिन्वक्रः॥ ३८॥स्नुषास्मि यदिति। स्नुषास्मीति यदवोच इत्यर्थः देवलोकस्थितिर्देवलोकमर्यादा ॥ ३९॥ इयमितीदंशब्दार्थः पतिरिति। अप्सरसां नियतः पतिर्नास्ति सुराणामप्येकाप्सर[illegible] [illegible]रेतानंद्रज्यो[illegible] ॥ विमुक्ता संभोगानंतरमिति शेषः ॥ ४१ ॥ करवेपितपल्लवा वेपितकरपल्लवा

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ परिणामिता यापिता इहेति देवानामिवांगदेन सह वानराणां सिंहनादः भयवशान्न दोषाय ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ध्यानं संप्रविवेश एतदुक्तार्थः
...त्योऽसत्यो वेति जिज्ञासार्थमिति भावः ॥ ५२ ॥ सर्वमुपस्पृश्य चक्षुरादींद्रियगं ... ॥ ९१ ॥ महोदरेति । हतौ द्वं ... ५५ ॥ सप्तधा तस्येति सप्तधातुवशात्सप्तप्रकारेण विशकली भविता लुट् ॥ ५६ ॥ दुंदुभि
व... दयः संतोषात् ॥ ५७ ॥ तमेव संतोषहेतुमाह ज्ञात्वेति । लोकगतिं लोकस्... ...तप। डामूलदुदरः ... । सीता ... सो मृत्युं च ज्ञात्वेत्यर्थः ॥ ५८ ॥ नाकामास्वभ्यरोचयत् इदं वचनं सीतादेव्या अक्षतत्वस्य

प...नेनावधूतेवलताकुसुमशालिनी ॥ सावेपमानालज्जंतीभी...ताकरकृतांजा... ॥४३ ॥ नलकूबरमासाद्यपादयोर्निपपातह ॥ तदवस्थांचतांदृष्ट्वाम हात्मानलकूबरः ॥ ४४ ॥ अब्रवीत्किमिदंभद्रेपादयोःपतितासिमे ॥ सावैनिःश्वसमानातुवेपमानाकृतांजलिः ॥ ४५ ॥ तस्मैसर्वंयथातत्त्वमाख्या तुमुपचक्रमे ॥ एषदेवदशग्रीवःप्राप्तोगंतुंत्रिविष्टपम् ॥ ४६ ॥ तेनसैन्यसहायेननिशेयंपरिणामिता ॥ आयांतीतेनदृष्टास्मित्वत्सकाशमरिंदम ॥४७॥ गृहीतातेनपृष्टास्मिकस्यत्वमितिरक्षसा ॥ मयातुसर्वंयत्सत्यंतस्मैसर्वंनिवेदितम् ॥ ४८ ॥ काममोहाभिभूतात्मानाश्रौषीत्तद्वचोमम ॥ याच्यमानो मयादेवस्नुषातेहमितिप्रभो ॥ ४९ ॥ तत्सर्वंपृष्ठतःकृत्वाबलात्तेनास्मिधर्षिता ॥ एवंत्वमपराधंमेक्षंतुमर्हसिसुव्रत ॥ ५० ॥ नहितुल्यंबलंसौम्य स्त्रियाश्चपुरुषस्यहि ॥ एतच्छ्रुत्वातुसंक्रुद्धस्तदावैश्रवणात्मजः ॥ ५१ ॥ धर्षणांतांपरांश्रुत्वाध्यानंसंप्रविवेशह ॥ तस्यतत्कर्मविज्ञायतदावैश्र वणात्मजः ॥ ५२ ॥ मुहूर्तात्क्रोधताम्राक्षस्तोयंजग्राहपाणिना ॥ गृहीत्वासलिलंसर्वमुपस्पृश्ययथाविधि ॥ ५३ ॥ उत्ससर्जतदाशापंराक्षसें द्रायदारुणम् ॥ अकामातेनयस्मात्त्वंबलाद्भद्रेप्रधर्षिता ॥ ५४ ॥ तस्मात्सयुवतीमन्यांनाकामामुपयास्यति ॥ यदाह्यकामांकामार्तोधर्षयिष्यतियो पितम् ॥ ५५ ॥ मूर्धातुसप्तधातस्यशकलीभवितातदा ॥ तस्मिन्नुदाहृतेशापेज्वलिताग्निसमप्रभे ॥ ५६ ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिश्चखाच्च्युता॥ पितामहमुखाश्चैवसर्वेदेवाःप्रहर्षिताः ॥ ५७ ॥ ज्ञात्वालोकगतिंसर्वांतस्यमृत्युंचरक्षसः ॥ श्रुत्वातुसदशग्रीवस्तंशापंरोमहर्षणम् ॥ ५८ ॥ नारीषुमै थुनीभावंनाकामास्वभ्यरोचयत् ॥ तेननीताःस्त्रियःप्रीतिमापुःसर्वाःपतिव्रताः ॥ नलकूबरनिर्मुक्तंशापंश्रुत्वामनःप्रियम् ॥ ५९ ॥ इत्यार्षेश्रीमद्रा मायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेषड्विंशःसर्गः ॥२६॥ कैलासंलंघयित्वातुससैन्यबलवाहनः ॥ आससादमहातेजाइंद्रलोकंदशाननः ॥ १॥ तस्यराक्षससैन्यस्यसमंताढुपयास्यतः ॥ देवलोकेबभौशब्दोभिद्यमानार्णवोपमः ॥ २ ॥ श्रुत्वातुरावणंप्राप्तमिंद्रश्चलितआसनात् ॥ देवानथाब्रवी त्तत्रसर्वानेवसमागतान् ॥ ३ ॥ आदित्यांश्चवसून्रुद्रान्साध्यांश्चसमरुद्गणान् ॥ सज्जाभवतयुद्धार्थंरावणस्यदुरात्मनः ॥ ४ ॥ एवमुक्तास्तुशक्रेणदेवाः शक्रसमायुधि ॥ सन्नद्धासुमहासत्त्वायुद्धश्रद्धासमन्विताः ॥५॥ सतुदीनःपरित्रस्तोमहेंद्रोरावणंप्रति ॥ विष्णोःसमीपमागत्यवाक्यमेतदुवाचह ॥६॥

सम्यक् रामं प्रति बोधनार्थं तेन रावणेन नीताः प्राक् स्वांतःपुरं नीताः पतिव्रताः स्त्रियश्च तं स्वेष्टं शापं श्रुत्वा प्रीतिमापुः ॥५९॥ धोमेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे षड्विंशः सर्गः ॥ २६ ॥ अथ युद्धे सुमालिवधः कैलासमिति । कैलासं लंघयित्वा इंद्रलोकमाससाद तस्य मेरूपरि प्रतिष्ठितत्वात् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ रावणं प्रति परित्रस्तः भगवद्वचनस्य

परिपालनीयत्वादिति भावः ॥ ६ ॥ ७ ॥ बलवत्त्वे हेतुमाह वरप्रदानादिति ॥ ८ ॥ तद्बलं अपरिमितं तावकं बलमाश्रित्य यथा दग्धास्तथा रावणस्यापि वधोपाययत्नं कुरु मे आख्याहि ॥ ९ ॥ देवेति देवे
शेति च विष्णुसंबोधनं गतिः रक्षकः परायणमाश्रयः ॥ १० ॥ ११ ॥ १२ ॥ तत्तस्मान्मम यथा जयः स्यात्तथा तत्त्वमुपायमाचक्ष्व स्वयमेव वा योत्स्यसे तद्ब्रूहीति शेषः ॥ १३ ॥ मे वचनमिति शेषः

विष्णोकथंकरिष्यामिरावणंराक्षसंप्रति ॥ अहोतिबलवद्रक्षोयुद्धार्थमभिवर्तते ॥ ७ ॥ वरप्रदानाद्बलवान्नखल्वन्येनहेतुना ॥ तत्तुसत्यंवचःकार्यं
यदुक्तंपद्मयोनिना ॥ ८ ॥ तद्यथानमुचिर्वृत्रोबलिर्नरकशंबरौ ॥ त्वद्बलंसमवष्टभ्यमयादग्धास्तथाकुरु ॥ ९ ॥ नह्यन्योदेवदेवेशत्वदृतेमधुसू
दन ॥ गतिःपरायणंचापित्रैलोक्येसचराचरे ॥ १० ॥ त्वंहिनारायणःश्रीमान्पद्मनाभःसनातनः ॥ त्वयेमेस्थापितालोकाःशक्रश्चाहंसुरेश्वरः ॥ ११ ॥
त्वयासृष्टमिदंसर्वंत्रैलोक्यंसचराचरम् ॥ त्वामेवभगवन्सर्वेप्रविशंतियुगक्षये ॥ १२ ॥ तदाचक्ष्वयथातत्त्वंदेवदेवममस्वयम् ॥ असिचक्रसहायस्त्वं
योत्स्यसेरावणंप्रति ॥ १३ ॥ एवमुक्तःसशक्रेणदेवोनारायणःप्रभुः ॥ अब्रवीन्नपरित्रासःकर्तव्यःश्रूयतांचमे ॥ १४ ॥ नतावदेषदुष्टात्माशक्योजेतुं
सुरासुरैः ॥ हंतुंचापिसमासाद्यवरदानेनदुर्जयः ॥ १५ ॥ सर्वथातुमहत्कर्मकरिष्यतिबलोत्कटः ॥ राक्षसःपुत्रसहितोदृष्टमेतन्निसर्गतः ॥ १६ ॥ यत्तु
मांत्वमभाषिष्ठायुध्यस्वेतिसुरेश्वर ॥ नाहंतंप्रतियोत्स्यामिरावणंराक्षसंयुधि ॥ १७ ॥ नाहत्वासमरेशत्रुंविष्णुःप्रतिनिवर्तते ॥ दुर्लभश्चैवकामोद्यवरगुप्ता
द्धिरावणात् ॥ १८ ॥ प्रतिजानेचदेवेंद्रत्वत्समीपेशतक्रतो ॥ भवितास्मियथास्याहंरक्षसोमृत्युकारणम् ॥ १९ ॥ अहमेवनिहंतास्मिरावणंसपुरः
सरम् ॥ देवतानंदयिष्यामिज्ञात्वाकालमुपागतम् ॥ २० ॥ एतत्तेकथितंतत्त्वंदेवराजशचीपते ॥ युद्धयस्वविगतत्रासःसुरैःसार्धंमहाबल ॥ २१ ॥
ततोरुद्राःसहादित्यावसवोमरुतोऽश्विनौ ॥ सन्नद्धानिर्ययुस्तूर्णंराक्षसानभितःपुरात् ॥ २२ ॥ एतस्मिन्नंतरेनादःशुश्रावरजनीक्षये ॥ तस्यरावणसै
न्यस्यप्रयुद्धस्यसमंततः ॥ २३ ॥ तेप्रबुद्धामहावीर्याअन्योन्यमभिवीक्ष्यवै ॥ संग्राममेवाभिमुखाअभ्यवर्ततहृष्टवत् ॥ २४ ॥ ततोदैवतसैन्यानांसंक्षोभः
समजायत ॥ तदक्षयंमहासैन्यंदृष्ट्वासमरमूर्धनि ॥ २५ ॥ ततोयुद्धंसमभवद्देवदानवरक्षसाम् ॥ घोरंतुमुलनिर्ह्रादंनानाप्रहरणोद्यतम् ॥ २६ ॥ एत
स्मिन्नंतरेशूराराक्षसाघोरदर्शनाः ॥ युद्धार्थंसमवर्ततसचिवारावणस्यते ॥ २७ ॥ मारीचश्चप्रहस्तश्चमहापार्श्वमहोदरौ ॥ अकंपनोनिकुंभश्चशुकःसारण
एव च ॥ २८ ॥ संह्रादोधूमकेतुश्चमहादंष्ट्रोघटोदरः ॥ जंबुमालीमहाह्रादोवि[illegible]क्षश्चराक्षसः ॥ २९ ॥ सुप्तघ्नोयज्ञकोपश्चदुर्मुखोदूषणःखरः ॥ त्रिशिराः
करवीराक्षःसूर्यशत्रुश्चराक्षसः ॥ ३० ॥

[illegible] त्रवक्ष[illegible]

॥ १४ ॥ वरदानेन दुर्जय एष युधि समासाद्य सुरासुरैर्जेतुं हंतुं च न शक्यः ॥ [illegible] धसस्मिन्नवक्रो [illegible] ज्ञानशक्त्या दृष्टमवगतम् ॥ १६ ॥ प्रतियोत्स्यामि इदानीमिति शेषः ॥ १७ ॥ १८ ॥
यथा भवितास्मि तथा प्रतिजाने इत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ अभितः [illegible] रितानंदज्योत्स्ने [illegible] ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ करवीराक्षः करवीर

पुष्पसहशनेत्रः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ देवानामिवांगदेन सह वानराणां सिंहनादः क्रुद्धानां सुराणां राक्षसैः सह युद्धं समभवदिति योजना ॥ ३७ ॥ ३८ ॥ ३९ ॥



महाकायोतिकायश्चदेवांतकनरांतकौ ॥ एतैःसर्वैःपरिवृतो महावीर्यैर्महाबलैः ॥ ३१ ॥ रावणस्यार्यकःसैन्यंसुमालीप्रविवेशह ॥ सदैवतगणान्सर्वा न्नानाप्रहरणैःशितैः ॥ ३२ ॥ व्यध्वंसयत्ससंक्रुद्धोवायुर्जलधरानिव ॥ तद्दैवतबलंरामहन्यमानंनिशाचरैः ॥३३॥ प्रणुन्नंसर्वतोदिग्भ्यःसिंहनुन्नामृगा इव ॥ एतस्मिन्नंतरेशूरोवसूनामष्टमोवसुः ॥ सावित्रइतिविख्यातःप्रविवेशरणाजिरम् ॥३४॥ सैन्यैःपरिवृतोहृष्टैर्नानाप्रहरणोद्यतैः ॥ त्रासयञ्छत्रुसै न्यानिप्रविवेशरणाजिरम् ॥३५॥ तथादित्यौमहावीर्यौत्वष्टापूषाचतौसमम् ॥ निर्भयौसहसैन्येनतदाप्राविशतांरणे ॥३६॥ ततोयुद्धंसमभवत्सुराणां सहराक्षसैः ॥ क्रुद्धानांरक्षसांकीर्तिंसमरेष्वनिवर्तिनाम् ॥ ३७ ॥ ततस्तेराक्षसाःसर्वेविबुधान्समरेस्थितान् ॥ नानाप्रहरणैर्घोरैर्जघ्नुःशतसहस्रशः ॥ ॥ ३८ ॥ देवाश्चराक्षसान्घोरान्महाबलपराक्रमान् ॥ समरेविमलैःशस्त्रैरुपनिन्युर्यमक्षयम् ॥ ३९ ॥ एतस्मिन्नंतरेरामसुमालीनामराक्षसः ॥ नानाप्रह रणैःक्रुद्धस्तत्सैन्यंसोभ्यवर्तत ॥४०॥ सदैवतबलंसर्वंनानाप्रहरणैःशितैः ॥ व्यध्वंसयतसंक्रुद्धोवायुर्जलधरंयथा ॥४१॥ तेमहाबाणवर्षैश्चशूलप्रासैः सुदारुणैः ॥ हन्यमानाःसुराःसर्वेनव्यतिष्ठंतसंहताः ॥ ४२ ॥ ततोविद्राव्यमाणेषुदैवतेषुसुमालिना ॥ वसूनामष्टमःक्रुद्धःसावित्रोवैव्यवस्थितः ॥ ॥ ४३ ॥ संवृतःस्वैरथानीकैःप्रहरंतंनिशाचरम् ॥ विक्रमेणमहातेजावारयामाससंयुगे ॥ ४४ ॥ ततस्तयोर्महद्युद्धमभवल्लोमहर्षणम् ॥ सुमालिनो वसोश्चैवसमरेष्वनिवर्तिनोः ॥ ४५ ॥ ततस्तस्यमहाबाणैर्वसुनासुमहात्मना ॥ निहतःपन्नगरथःक्षणेनविनिपातितः ॥ ४६ ॥ हत्वातुसंयुगेतस्यरथं बाणशतैश्चितम् ॥ गदांतस्यवधार्थायवसुर्जग्राहपाणिना ॥ ४७ ॥ ततःप्रगृह्यदीताग्रांकालदंडोपमांगदाम् ॥ तांमूर्ध्निपातयामाससावित्रोवैसुमा लिनः ॥ ४८ ॥ सातस्योपरिचोल्काभापतंतीविबभौगदा ॥ इंद्रप्रमुक्तागर्जंतीगिराविवमहाशनिः ॥४९॥ तस्यनैवास्थिनशिरोनमांसंददृशेतदा ॥ गदयाभस्मतांनीतंनिहतस्यरणाजिरे ॥५०॥ तंदृष्ट्वानिहतंसंख्येराक्षसास्तेसमंततः ॥ व्यद्रवन्सहिताःसर्वेक्रोशमानाःपरस्परम् ॥ विद्राव्यमाणावसु नाराक्षसानावतस्थिरे ॥ ५१ ॥ इत्यार्षे श्रीमद्रा० वाल्मी०आदि०उत्तरकांडे सप्तविंशः सर्गः ॥ २७ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ तस्य सुमालिनः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ येमेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तविंशः सर्गः ॥ २७ ॥

सुमालिनमिति ॥ १ ॥ २ ॥ तां सेनां देवसेनाम् ॥ ३ ॥ ४ ॥ आविद्धय वेधं प्राप्य वित्रस्तान् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तेषां देवरक्षसां सदृशं बल वीर्यानुरूपं युद्धमभवत् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ प्रव्यथिता लोका भूरादयस्तत्प्रनाश्च तमः संजज्ञे रावणपुत्रमाययेति शेषः ॥ १५ ॥ तं शचीसुतं हित्वेति शेषः ॥ १६ ॥ विपर्यस्तं

सुमालिनंहतंदृष्ट्वावसुनाभस्मसात्कृतम् ॥ स्वसैन्यंविद्रुतंचापिलक्षयित्वाऽर्दितंसुरैः ॥ १ ॥ ततःस्वबलवान्क्रुद्धोरावणस्यसुतस्तदा ॥ निवर्त्य राक्षसान्सर्वान्मेघनादोव्यवस्थितः ॥ २ ॥ सरथेनमहार्हेणकामगेनमहारथः ॥ अभिदुद्रावसेनांतांवनान्यग्निरिवज्वलन् ॥ ३ ॥ ततःप्रविशतस्तस्य विविधायुधधारिणः ॥ विदुद्रुवुर्दिशःसर्वादर्शनादेवदेवताः ॥४॥ नबभूवतदाकश्चिद्युयुत्सोरस्यसंमुखे ॥ सर्वानाविद्धयवित्रस्तांस्ततःशक्रोब्रवीत्सुरान् ॥ ५ ॥ नभेतव्यंनगंतव्यंनिवर्तध्वंरणेसुराः ॥ एषगच्छतिपुत्रोमेयुद्धार्थमपराजितः ॥ ६ ॥ ततःशक्रसुतोदेवोजयंतइतिविश्रुतः ॥ रथेनाद्भुतकल्पे नसंग्रामेसोभ्यवर्तत ॥ ७ ॥ ततस्तेत्रिदशाःसर्वेपरिवार्यशचीसुतम् ॥ रावणस्यसुतंयुद्धेसमासाद्यप्रजघ्निरे ॥ ८ ॥ तेषांयुद्धंसमभवत्सदृशंदे वरक्षसाम् ॥ महेंद्रस्यचपुत्रस्यराक्षसेंद्रसुतस्यच ॥ ९ ॥ ततोमातलिपुत्रस्यगोमुखस्यसरावणिः ॥ सारथेःपातयामासशरान्कनकभूषणान् ॥ १० ॥ शचीसुतश्चापितथाजयंतस्तस्यसारथिम् ॥ तंचापिरावणिःक्रुद्धःसमंतात्प्रत्यविध्यत ॥११॥ सहिक्रोधसमाविष्टोबलीविस्फारितेक्षणः ॥ रावणिःशक्रतनयंशरवर्षैरवाकिरत् ॥ १२ ॥ ततोनानाप्रहरणाञ्छितधारान्सहस्रशः ॥ पातयामाससंक्रुद्धःसुरसैन्येषुरावणिः ॥१३ ॥ शतघ्नीमुसल प्रासगदाखड्गपरश्वधान् ॥ महांतिगिरिशृंगाणिपातयामासरावणिः ॥ १४ ॥ ततःप्रव्यथितालोकाःसंजज्ञेचतमस्ततः ॥ तस्यरावणपुत्रस्यशत्रुसैन्या निनिघ्नतः ॥ १५ ॥ ततस्तद्दैवतबलंसमंतात्तंशचीसुतम् ॥ बहुप्रकारमस्वस्थमभवच्छरपीडितम् ॥१६॥ नाभ्यजानंतचान्योन्यंरक्षोवादेवताथवा॥ तत्रतत्रविपर्यस्तंसमंतात्परिधावत ॥ १७ ॥ देवादेवान्निजघ्नुस्तेराक्षसाराक्षसास्तथा ॥ संमूढास्तमसाच्छन्नाव्यद्रवन्नपरेतथा ॥ १८ ॥ एतस्मिन्नं तरेवीरःपुलोमानामवीर्यवान् ॥ दैत्येंद्रस्तेनसंगृह्यशचीपुत्रोपवाहितः ॥ १९ ॥ संगृह्यतंतुदौहित्रंप्रविष्टःसागरंतदा ॥ आर्यकःसहितस्यासीत्पुलोमाये नसाशची ॥ २० ॥ ज्ञात्वाप्रणाशंतुतदाजयंतस्याथदेवताः ॥ अप्रहृष्टास्त[illegible]र्वाव्यथिताःसंप्रदुद्रुवुः ॥ २१ ॥ रावणिस्त्वथसंक्रुद्धोबलैःपरिवृतः स्वकैः ॥ अभ्यधावतदेवांस्तान्मुमोचचमहास्वनम् ॥ २२ ॥ [illegible] त्रिवक्ष[illegible]

विशीर्णं परिधावत पर्यधावत ॥ १७ ॥ १८ ॥ तेन जयंतमातामहेन पुलोम्ना [illegible] हितानंद्रज्य[illegible]निः ॥ २० ॥ प्रणाशमदर्शनं व्यथिता अत एवाप्रहृष्टाः खिन्नाः ॥ २१ ॥ २२ ॥

पुष्पसहशनेत्रः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ देवानामिवांगदेन सह वानराणां सिंहनादः क्रुद्धानां सुराणां राक्षसैः सह युद्धं समभवदिति योजना ॥ ३७ ॥ ३८ ॥ ३९ ॥



महाकायोतिकायश्चदेवांतकनरांतकौ ॥ एतैःसर्वैःपरिवृतो महावीर्यमहाबलः । सीत ३१ ॥ रावणस्यार्यकःसैन्यंसुमालीप्रविवेशह ॥ सदैवतगणान्सर्वा न्नानाप्रहरणैःशितैः ॥ ३२ ॥ व्यध्वंसयत्ससंक्रुद्धोवायुर्जलधरानिव ॥ तद्दैवतबलंरामहन्यमानंनिशाचरैः ॥३३॥ प्रणुन्नंसर्वतोदिग्भ्यःसिंहनुन्नामृगा इव ॥ एतस्मिन्नंतरेशूरोवसूनामष्टमोवसुः ॥ सावित्रइतिविख्यातःप्रविवेशरणाजिरम् ॥३४॥ सैन्यैःपरिवृतोहृष्टैर्नानाप्रहरणोद्यतैः ॥ त्रासयञ्छत्रुसै न्यानिप्रविवेशरणाजिरम् ॥३५॥ तथादित्यौमहावीर्यौत्वष्टापूषाचतौसमम् ॥ निर्भयौसहसैन्येनतदाप्रविशतांरणे ॥३६॥ ततोयुद्धंसमभवत्सुराणां सहराक्षसैः ॥ क्रुद्धानांरक्षसांकीर्तिसमरेष्वनिवर्तिनाम् ॥ ३७ ॥ ततस्तेराक्षसाःसर्वेविबुधान्समरेस्थितान् ॥ नानाप्रहरणैर्घोरैर्जघ्नुःशतसहस्रशः ॥ ॥ ३८ ॥ देवाश्चराक्षसान्घोरान्महाबलपराक्रमान् ॥ समरेविमलैःशस्त्रैरुपनिन्युर्यमक्षयम् ॥ ३९ ॥ एतस्मिन्नंतरेरामसुमालीनामराक्षसः ॥ नानाप्रह रणैःक्रुद्धस्तत्सैन्यंसोभ्यवर्तत ॥४०॥ सदैवतबलंसर्वंनानाप्रहरणैःशितैः ॥ व्यध्वंसयतसंक्रुद्धोवायुर्जलधरंयथा ॥४१॥ तेमहाबाणवर्षैश्चशूलप्रासैः सुदारुणैः ॥ हन्यमानाःसुराःसर्वेनव्यतिष्ठंतसंहताः ॥ ४२ ॥ ततोविद्राव्यमाणेषुदैवतेषुसुमालिना ॥ वसूनामष्टमःक्रुद्धःसावित्रोवैव्यवस्थितः ॥ ॥ ४३ ॥ संवृतःस्वैरथानीकैःप्रहरंतंनिशाचरम् ॥ विक्रमेणमहातेजावारयामाससंयुगे ॥ ४४ ॥ ततस्तयोर्महद्युद्धमभवल्लोमहर्षणम् ॥ सुमालिनो वसोश्चैवसमरेष्वनिवर्तिनोः ॥ ४५ ॥ ततस्तस्यमहाबाणैर्वसुनासुमहात्मना ॥ निहतःपन्नगरथःक्षणेनविनिपातितः ॥ ४६ ॥ हत्वातुसंयुगेतस्यरथं बाणशतैश्चितम् ॥ गदांतस्यवधार्थायवसुर्जग्राहपाणिना ॥ ४७ ॥ ततःप्रगृह्यदीप्ताग्रांकालदंडोपमांगदाम् ॥ तांमूर्ध्निपातयामाससावित्रोवैसुमा लिनः ॥ ४८ ॥ सातस्योपरिचोल्काभापतंतीविबभौगदा ॥ इंद्रप्रमुक्तागर्जंतीगिराविवमहाशनिः ॥४९॥ तस्यनैवास्थिनशिरोनमांसंददृशेतदा ॥ गदयाभस्मतांनीतंनिहतस्यरणाजिरे ॥५०॥ तंदृष्ट्वानिहतंसंख्येराक्षसास्तेसमंततः ॥ व्यद्रवन्सहिताःसर्वेक्रोशमानाःपरस्परम् ॥ विद्राव्यमाणावसु नाराक्षसानावतस्थिरे ॥ ५१ ॥ इत्यार्षे श्रीमद्रा० वाल्मी०आदि०उत्तरकांडे सप्तविंशः सर्गः ॥ २७ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ तस्य सुमालिनः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ येमेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तविंशः सर्गः ॥ २७ ॥

सुमालिनमिति ॥ १ ॥ २ ॥ तां सेनां देवसेनाम् ॥ ३ ॥ ४ ॥ आविद्ध्य वेधं प्राप्य वित्रस्तान् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तेषां देवरक्षसां सदृशं बल
वीर्यानुरूपं युद्धमभवत् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ प्रव्यथिता लोका भूरादयस्तत्प्रजाश्च तमः संजज्ञे रावणपुत्रमाययेति शेषः ॥ १५ ॥ तं शचीसुतं हित्वेति शेषः ॥ १६ ॥ विपर्यस्तं

सुमालिनंहतंदृष्ट्वावसुनाभस्मसात्कृतम् ॥ स्वसैन्यंविद्रुतंचापिलक्षयित्वाऽर्दितंसुरैः ॥ १ ॥ ततःस्वबलवान्क्रुद्धोरावणस्यसुतस्तदा ॥ निवर्त्य
राक्षसान्सर्वान्मेघनादोव्यवस्थितः ॥ २ ॥ सरथेनमहार्हेणकामगेनमहारथः ॥ अभिदुद्रावसेनांतांवनान्यग्निरिवज्वलन् ॥ ३ ॥ ततःप्रविशतस्तस्य
विविधायुधधारिणः ॥ विदुद्रुवुर्दिशःसर्वादर्शनादेवदेवताः ॥४॥ नबभूवतदाकश्चिद्युयुत्सोरस्यसंमुखे ॥ सर्वानाविद्धचवित्रस्तांस्ततःशक्रोब्रवीत्सुरान्
॥ ५ ॥ नभेतव्यंनगंतव्यंनिवर्तध्वंरणेसुराः ॥ एषगच्छतिपुत्रोमेयुद्धार्थमपराजितः॥ ६ ॥ ततःशक्रसुतोदेवोजयंतइतिविश्रुतः ॥ रथेनाद्भुतकल्पे
नसंग्रामेसोभ्यवर्तत ॥ ७ ॥ ततस्तेत्रिदशाःसर्वेपरिवार्यशचीसुतम् ॥ रावणस्यसुतंयुद्धेसमासाद्यप्रजघ्निरे ॥ ८ ॥ तेषांयुद्धंसमभवत्सदृशंदे
वरक्षसाम् ॥ महेंद्रस्यचपुत्रस्यराक्षसेंद्रसुतस्यच ॥ ९ ॥ ततोमातलिपुत्रस्यगोमुखस्यसरावणिः ॥ सारथेःपातयामासशरान्कनकभूषणान् ॥
॥ १० ॥ शचीसुतश्चापितथाजयंतस्तस्यसारथिम् ॥ तंचापिरावणिःक्रुद्धःसमंतात्प्रत्यविध्यत ॥११॥ सहिक्रोधसमाविष्टोबलीविस्फारितेक्षणः ॥
रावणिःशक्रतनयंशरवर्षैरवाकिरत् ॥ १२ ॥ ततोनानाप्रहरणाञ्छितधारान्सहस्रशः ॥ पातयामाससंक्रुद्धःसुरसैन्येषुरावणिः ॥१३ ॥ शतघ्नीमुसल
प्रासगदाखड्गपरश्वधान् ॥ महांतिगिरिशृंगाणिपातयामासरावणिः ॥ १४ ॥ ततःप्रव्यथितालोकाःसंजज्ञेचतमस्ततः ॥ तस्यरावणपुत्रस्यशत्रुसैन्या
निनिघ्नतः ॥ १५ ॥ ततस्तद्दैवतबलंसमंतात्तंशचीसुतम् ॥ बहुप्रकारमस्वस्थमभवच्छरपीडितम् ॥१६॥ नाभ्यजानंतचान्योन्यंरक्षोवादेवताथवा॥
तत्रतत्रविपर्यस्तंसमंतात्परिधावत ॥ १७ ॥ देवादेवान्निजघ्नुस्तेराक्षसान्राक्षसास्तथा ॥ संमूढास्तमसाच्छन्नाव्यद्रवन्नपरेतथा ॥ १८ ॥ एतस्मिन्नं
तरेवीरःपुलोमानामवीर्यवान् ॥ दैत्येंद्रस्तेनसंगृह्यशचीपुत्रोपवाहितः ॥ १९॥ संगृह्यतंतुदौहित्रंप्रविष्टःसागरंतदा ॥ आर्यकःसहितस्यासीत्पुलोमाये
नशची ॥ २० ॥ ज्ञात्वाप्रणाशंतुतदाजयंतस्याथदेवताः॥ अप्रहृष्टास्ततःसर्वाव्यथिताःसंप्रदुद्रुवुः ॥ २१ ॥ रावणिस्त्वथसंक्रुद्धोबलैःपरिवृतः
स्वकैः ॥ अभ्यधावतदेवांस्तान्मुमोचचमहास्वनम् ॥ २२ ॥ [illegible] ...धसस्मिन्...

...वर्णाणि परिधावत पर्यधावत ॥ १७ ॥ १८ ॥ तेन जयंतमातामहेन पुलोम्ना [illegible] ...तानंद्रज्योनष्टेभ्यः ॥ २० ॥ प्रणाशमदर्शनं व्यथिता अत एवाप्रहृष्टाः खिन्नाः ॥ २१ ॥ २२ ॥

विद्रुतं पलायनम् ॥२३॥२४॥ तत इंद्रस्य तद्रथारोहणानंतरं वायुचपला वायुव ... वानामिवांगदेन सह वानराणां सिंहना... ताः गगने प्रवृत्ताः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ युद्धात् युद्ध
सं...नाद् समुपाविशत्तूष्णीमास्त ॥ ३२ ॥ ३३ ॥ कुंभकर्णस्त्विति । अस्य जाग... ॥ ९१ ॥ ...रेति । हतौ ...गरणमित्यतो ज्ञायते नानाप्रहरणोद्यतः उद्यतनानाप्रहरणः केनाभ्यपद्यत केन युद्धं कृतवा
... १९ । सीत...



हष्ट्वैप्रणाशंपुत्रस्यदैवतेषुचविद्रुतम् ॥ मातलिंचाहदेवेशोरथःसमुपनीयताम् ॥ २३ ॥ सतुदिव्योमहाभीमःसज्जएवमहारथः ॥ उपस्थितोमातलि नावाह्यमानोमहाजवः ॥ २४ ॥ ततोमेघारथेतस्मिंस्तडित्वंतोमहाबलाः ॥ अग्रतोवायुचपलानेदुःपरमनिःस्वनाः ॥ २५ ॥ नानावाद्यानिवाद्यंतगंधर्वाश्चसमाहिताः ॥ ननृतुश्चाप्सरःसंघानिर्यातेत्रिदशेश्वरे ॥ २६ ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यांसमरुद्गणैः ॥ वृतोनानाप्रहरणैर्निर्ययौत्रिदशाधिपः ॥ २७ ॥ निर्गच्छतस्तुशक्रस्यपरुषःपवनोववौ ॥ भास्करोनिष्प्रभश्चैवमहोल्काश्चप्रपेदिरे ॥ २८ ॥ एतस्मिन्नंतरेशूरोदशग्रीवःप्रतापवान् ॥ आरुरोहरथंदिव्यंनिर्मितंविश्वकर्मणा ॥ २९ ॥ पन्नगैःसुमहाकायैर्वेष्टितंलोमहर्षणैः ॥ येषांनिःश्वासवातेनप्रदीप्तमिवसंयुगे ॥ ३० ॥ दैत्यैर्निशाचरैश्चैवसरथःपरिवारितः ॥ समराभिमुखोदिव्योमहेंद्रंसोभ्यवर्तत ॥ ३१ ॥ पुत्रंतंवारयित्वातुस्वयमेवव्यवस्थितः ॥ सोपियुद्धाद्विनिष्क्रम्यरावणिःसमुपाविशत् ॥ ३२ ॥ ततोयुद्धंप्रवृत्तंतुसुराणांराक्षसैःसह ॥ शस्त्राणिवर्षतांतेषांमेघानामिवसंयुगे ॥ ३३ ॥ कुंभकर्णस्तुदुष्टात्मानानाप्रहरणोद्यतः ॥ नाज्ञायततदाराजन्युद्धंकेनाभ्यपद्यत ॥ ३४ ॥ दंतैःपादैर्भुजैर्हस्तैःशक्तितोमरमुद्गरैः ॥ येनतेनैवसंक्रुद्धस्ताडयामासदेवताः ॥ ३५ ॥ सतुरुद्रैर्महाघोरैःसंगम्याथनिशाचरः ॥ प्रयुद्धस्तैश्चसंग्रामेक्षतःशस्त्रैर्निरंतरम् ॥३६॥ ततस्तद्राक्षसंसैन्यंप्रयुद्धंसमरुद्गणैः ॥ रणेविद्रावितंसर्वंनानाप्रहरणैस्तदा ॥ ३७ ॥ केचिद्विनिहताःकृत्ताश्चेष्टंतिस्ममहीतले ॥ वाहनेष्ववसक्ताश्चस्थिताएवापरेरणे ॥ ३८ ॥ रथान्नागान्खरानुष्ट्रान्पन्नगांस्तुरगांस्तथा ॥ शिशुमारान्वराहांश्चपिशाचवदनानपि ॥ ३९ ॥ तान्समालिंग्यबाहुभ्यांविष्टब्धाःकेचिदुत्थिताः ॥ देवैस्तुशस्त्रसंभिन्नाम्म्रिरेचनिशाचराः ॥ ४० ॥

निति नाज्ञायतापि तु प्रायेण सर्वेणाप्ययुध्यतेत्यर्थः ॥ ३४ ॥ अपि च प्रहरणनियमोपि नास्तीत्याह दंतैरिति ॥ ३५ ॥ प्रयुद्धः कृतप्रकृष्टयुद्धः ॥ ३६ ॥ समरुद्गणैर्देवैरिति शेषः ॥ ३७ ॥ कृत्ताश्छिन्नाः केचिन्मोहाद्वाहनेभ्यो निपतितदेहा अपि वाहनेष्ववसक्ता एव स्थिता इत्यर्थः ॥ ३८ ॥ तदेवाह रथानिति ॥ ३९ ॥ रथादीन्बाहुभ्यां समालिंग्य विष्टब्धाः केचिदुत्थिताः मूर्च्छिताः कालेन गतमूर्च्छा उत्थिताः

मम्रिरे मृताः ॥ ४० ॥ चित्रकर्म इत्येवसंधिरार्षः । यथा सिद्धमायानिर्मितं चित्रकर्म आश्चर्यकरं तथैव तेषां परसंप्लवो रणसंमर्द आभाति स्म ॥ ४१ ॥ ४२ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ सर्वं हि तमसा वृतं उभयशरवर्षकृतसर्वदिक्छादनेनेति भावः ॥ ४८ ॥ ह्र्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टाविंशः सर्गः ॥ २८ ॥ देवाश्च राक्षसाश्च देवराक्षसाः ॥ १ ॥ २ ॥ ३ ॥ परसैन्यस्यांतो यावत् तावन्मां मध्येन परसेनामध्यमार्गेण नयस्व ॥ ४ ॥ ५ अथोपरि सर्वेषामुपरिष्टादित्यर्थः ॥ ६ ॥ अथ देवसेनामध्यप्रवेशे कथं भविष्यतीति

चित्रकर्मइवाभातिसर्वेषांरणसंप्लवः ॥ निहतानांप्रसुप्तानांराक्षसानांमहीतले ॥ ४१ ॥ शोणितोदकनिष्पंदाकाकगृध्रसमाकुला ॥ प्रवृत्तासंयुगमुखेशस्त्रग्राहवतीनदी ॥ ४२ ॥ एतस्मिन्नंतरेक्रुद्धोदशग्रीवःप्रतापवान् ॥ निरीक्ष्यतुबलंसर्वंदैवतैर्विनिपातितम् ॥ ४३॥ सतप्रतिविगाह्याशुप्रवृद्धंसैन्यसागरम् ॥ त्रिदशान्समरेनिघ्नञ्शक्रमेवाभ्यवर्तत ॥ ४४ ॥ ततःशक्रोमहच्चापंविस्फार्यसुमहास्वनम् ॥ यस्यविस्फारनिर्घोषैःस्तनंतिस्मदिशोदश ॥ ४५ ॥ तद्विकृष्यमहच्चापमिंद्रोरावणमूर्धनि ॥ पातयामाससशरान्पावकादित्यवर्चसः ॥ ४६ ॥ तथैवचमहाबाहुर्दशग्रीवोनिशाचरः ॥ शक्रंकार्मुकविभ्रष्टैःशरवर्षैरवाकिरत् ॥ ४७ ॥ प्रयुध्यतोरथतयोर्बाणवर्षैःसमंततः ॥ नाज्ञायततदाकिंचित्सर्वंहितमसावृतम् ॥ ४८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडेअष्टाविंशः सर्गः ॥ २८ ॥ ततस्तमसिसंजातेसर्वेतेदेवराक्षसाः ॥ आयुद्ध्यंतबलोन्मत्ताःसूदयंतःपरस्परम् ॥ १ ॥ इंद्रश्चरावणश्चैवरावणिश्चमहाबलः ॥ तस्मिंस्तमोजालवृतेमोहमीयुर्नतेत्रयः ॥ २ ॥ सतुदृष्ट्वाबलंसर्वंरावणोनिहतंक्षणात् ॥ क्रोधमभ्यगमत्तीव्रंमहानादंचमुक्तवान् ॥ ३ ॥ क्रोधात्सूतंचदुर्धर्षःस्यंदनस्थमुवाचह ॥ परसैन्यस्यमध्येनयावदंतोनयस्वमाम् ॥ ४ ॥ अद्यैवत्रिदशान्सर्वान्विक्रमैःसमरेस्वयम् ॥ नानाशस्त्रमहासारैर्नयामियमसादनम् ॥ ५ ॥ अहमिंद्रंवधिष्यामिधनदंवरुणंयमम् ॥ त्रिदशान्विनिहत्याशुस्वयंस्थास्याम्यथोपरि ॥ ६ ॥ विषादोनैवकर्तव्यःशीघ्रंवाहयमेरथम् ॥ द्विःखलुत्वांब्रवीम्यद्ययावदंतंनयस्वमाम् ॥ ७ ॥ अयंसनंदनोदेशोयत्रवर्तामहेवयम् ॥ नयमामद्यतत्रत्वमुदयोयत्रपर्वतः ॥ ८ ॥ तस्यतद्वचनंश्रुत्वातुरगान्समनोजवान् ॥ आदिदेशाथशत्रूणांमध्येनैवचसारथिः ॥ ९ ॥ तस्यतंनिश्चयंज्ञात्वाशक्रोदेवेश्वरस्तदा ॥ रथस्थःसमरस्थस्तान्देवान्वाक्यमथाब्रवीत् ॥ १० ॥ सुराःशृणुतमद्वाक्यंयत्तावन्ममरोचते ॥ जीवन्नेवदशग्रीवःसाधुरक्षोनिगृह्यताम् ॥ ११ ॥ एषह्यतिबलःसैन्येरथेनपवनोजसा ॥ गमिष्यतिप्रवृद्धोर्मिःसमुद्रइवपर्वणि ॥ १२ ॥ नह्येषहंतुंशक्योद्यवरदानात्सुनिर्भयः ॥ तद्ग्रहीष्यामहेरक्षोयत्ताभवतसंयुगे ॥ १३ ॥ यथाबलौनिरुद्धेतुत्रैलोक्यंभुज्यतेमया [illegible] ॥ एवमेतस्यपापस्यनिरोधोममरोचते ॥ १४ ॥

द्विरुक्तं सारथिं पुनरप्याह द्विः खल्विति । द्विर्वारं ब्रवीमि तत्कथं न नयसीति [illegible] अन्तस्य दुर्ज्ञेयत्वादाह अयमिति । नंदनमारभ्योदयपर्वतांतं सेना तिष्ठतीति भावः ॥ ८ ॥ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ [illegible] ॥ यथा बलौ बलिदैत्ये निरुद्धे कृतनिरोधे [illegible] स्य निरोधस्त्रैलोक्यरक्षार्थं मम कर्तव्यत्वेन रोचते इत्यब्रवीदिति पूर्वेण सम्बन्धः ॥ १४ ॥

विद्रुतं पलायनम् ॥२३॥२४॥ तत इंद्रस्य तद्रथारोहणानंतरं वायुचपला वायु... ...ताः गगने प्रवृत्ताः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ युद्धात् युद्ध... ...त्तात् समुपाविशत्तूष्णीमास्त ॥ ३२ ॥ ३३ ॥ कुंभकर्णस्त्विति । अस्य जाग... ...वानामिवांगदेन सह वानराणां सिंहनाद... ...जागरणमित्यतो ज्ञायते नानाप्रहरणोद्यतः उद्यतनानाप्रहरणः केनाभ्यपद्यत केन युद्धं कृतवा... ॥ १९ ॥ ...रेति । हतौ ... ...८ । सीता...

दृष्ट्वाप्रणाशंपुत्रस्यदैवतेषुचविद्रुतम् ॥ मातलिंचाहदेवेशोरथःसमुपनीयताम् ॥ २३ ॥ सतुदिव्योमहाभीमःसज्जएवमहारथः ॥ उपस्थितोमातलिनावाह्यमानोमहाजवः ॥ २४ ॥ ततोमेघारथेतस्मिंस्तडित्त्वंतोमहाबलाः ॥ अग्रतोवायुचपलानेदुःपरमनिःस्वनाः ॥ २५ ॥ नानावाद्यानिवाद्यंतगंधर्वाश्चसमाहिताः ॥ ननृतुश्चाप्सरःसंघानिर्यातेत्रिदशेश्वरे ॥ २६ ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यांसमरुद्गणैः ॥ वृतोनानाप्रहरणैर्निर्ययौत्रिदशाधिपः ॥ २७ ॥ निर्गच्छतस्तुशक्रस्यपरुषःपवनोववौ ॥ भास्करोनिष्प्रभश्चैवमहोल्काश्चप्रपेदिरे ॥ २८ ॥ एतस्मिन्नंतरेशूरोदशग्रीवःप्रतापवान् ॥ आरुरोहरथंदिव्यंनिर्मितंविश्वकर्मणा ॥ २९ ॥ पन्नगैःसुमहाकायैर्वेष्टितंलोमहर्षणैः ॥ येषांनिःश्वासवातेनप्रदीप्तमिवसंयुगे ॥ ३० ॥ दैत्यैर्निशाचरैश्चैवसरथःपरिवारितः ॥ समराभिमुखोदिव्योमहेंद्रंसोभ्यवर्तत ॥ ३१ ॥ पुत्रंतंवारयित्वातुस्वयमेवव्यवस्थितः ॥ सोपियुद्धाद्विनिष्क्रम्यरावणिःसमुपाविशत् ॥ ३२ ॥ ततोयुद्धंप्रवृत्तंतुसुराणांराक्षसैःसह ॥ शस्त्राणिवर्षतांतेषांमेघानामिवसंयुगे ॥ ३३ ॥ कुंभकर्णस्तुदुष्टात्मानानाप्रहरणोद्यतः ॥ नाज्ञायततदाराजन्युद्धंकेनाभ्यपद्यत ॥ ३४ ॥ दंतैःपादैर्भुजैर्हस्तैःशक्तितोमरमुद्गरैः ॥ येनतेनैवसंक्रुद्धस्ताडयामासदेवताः ॥ ३५ ॥ सतुरुद्रैर्महाघोरैःसंगम्याथनिशाचरः ॥ प्रयुद्धस्तैश्चसंग्रामेक्षतःशस्त्रैर्निरंतरम् ॥३६॥ ततस्तद्राक्षसंसैन्यंप्रयुद्धंसमरुद्गणैः ॥ रणेविद्रावितंसर्वंनानाप्रहरणैस्तदा ॥ ३७ ॥ केचिद्विनिहताःकृत्ताश्चेष्टंतिस्ममहीतले ॥ वाहनेष्ववसक्ताश्चस्थिताएवापरेरणे ॥ ३८ ॥ रथान्नागान्खरानुष्ट्रान्पन्नगांस्तुरगांस्तथा ॥ शिशुमारान्वराहांश्चपिशाचवदनानपि ॥ ३९ ॥ तान्समालिंग्यबाहुभ्यांविष्टब्धाःकेचिदुत्थिताः ॥ देवैस्तुशस्त्रसंभिन्नाम्रम्रिरेचनिशाचराः ॥ ४० ॥

...निति नाज्ञायतापि तु प्राप्तेन सर्वेणाप्ययुध्यतेत्यर्थः ॥ ३४ ॥ अपि च प्रहरणनियमोपि नास्तीत्याह दंतैरिति ॥ ३५ ॥ प्रयुद्धः कृतप्रकृष्टयुद्धः ॥ ३६ ॥ समरुद्गणैर्देवैरिति शेषः ॥ ३७ ॥ कृत्ताश्छिन्नाः केचिन्मोहाद्वाहनेभ्यो निपतितदेहा अपि वाहनेष्ववसक्ता एव स्थिता इत्यर्थः ॥ ३८ ॥ तदेवाह रथानिति ॥ ३९ ॥ रथादीन्बाहुभ्यां समालिंग्य विष्टब्धाः केचिदुत्थिताः मूर्च्छिताः कालेन गतमूर्च्छा उत्थिताः

मब्रवीत् ॥ २ ॥ शोकमुदीरयन् जनयन् ॥३॥ प्राणैः प्राणेभ्यः ॥ ४ ॥ ५ ॥ लज्जतीवेति परस्मैपदमार्षम् ॥६॥ स्वप्नयाने स्वप्ने इत्यर्थे आर्षमस्य साधुत्वम् ॥७॥ भ्रातरं निहतमित्यादिसार्धश्लोकः कविवाक्यम् । विष्टनंतं विकृतशब्दं कुर्वंतम् ॥ ८ ॥ रणपांसुषु लुठंतमिति शेषः । तादृशं भ्रातरं दृष्ट्वा विजयोपि मे न प्रियायेत्यर्थः ॥ ९ ॥ १०॥ यत्रायमितियतः कारणादित्यर्थः ॥११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

एषरावणवीर्येणलक्ष्मणःपतितोभुवि ॥ सर्पवच्चेष्टतेवीरोममशोकमुदीरयन् ॥ ३ ॥ शोणितार्द्रमिमंवीरंप्राणैःप्रियतरंमम ॥ पश्यतोममकाशक्तिर्योद्धुं पर्याकुलात्मनः ॥ ४ ॥ अयंससमरश्लाघीभ्रातामेशुभलक्षणः ॥ यदिपंचत्वमापन्नःप्राणैर्मेकिंसुखेनवा ॥ ५ ॥ लज्जतीवहिमेवीर्यंभ्रश्यतीवकराद्धनुः ॥ सायकाव्यवसीदंतिदृष्टिर्बाष्पवशंगता ॥ ६ ॥ अवसीदंतिगात्राणिस्वप्नयानेनृणामिव ॥ चिंतामेवर्धतेतीव्रामुमूर्षापिचजायते ॥ ७ ॥ भ्रातरंनिहतं दृष्ट्वारावणेनदुरात्मना ॥ विनष्टंतंतुदुःखार्तमर्मण्यभिहतंभृशम् ॥ ८ ॥ परंविषादमापन्नोविललापाकुलेंद्रियः ॥ भ्रातरंनिहतंदृष्ट्वालक्ष्मणंरणपांसुषु ॥ ९ ॥ विजयोपिहिमेशूरनप्रियायोपकल्पते ॥ अचक्षुर्विषयश्चंद्रःकांप्रीतिंजनयिष्यति ॥ १० ॥ किंमेयुद्धेनकिंप्राणैर्युद्धकार्यंनविद्यते ॥ यत्रायं निहतःशेतेरणमूर्धनिलक्ष्मणः ॥ ११ ॥ यथैवमांवनंयांतमनुयातिमहाद्युतिः ॥ अहमप्यनुयास्यामितथैवैनंयमक्षयम् ॥ १२ ॥ इष्टबंधुजनोनित्यं मांसनित्यमनुव्रतः ॥ इमामवस्थांगमितोराक्षसैःकूटयोधिभिः ॥ १३ ॥ देशेदेशेकलत्राणिदेशेदेशेचबांधवाः ॥ तंतुदेशंनपश्यामियत्रभ्रातासहोदरः ॥ १४ ॥ किंनुराज्येनदुर्धर्षलक्ष्मणेनविनामम ॥ कथंवक्ष्याम्यहंत्वंबांसुमित्रांपुत्रवत्सलाम् ॥ १५ ॥ उपालंभंनशक्ष्यामिसोढुंदत्तंसुमित्रया ॥ किंनुवक्ष्यामिकौसल्यांमातरंकिंनुकैकयीम् ॥ १६ ॥ भरतंकिंनुवक्ष्यामिशत्रुघ्नंचमहाबलम् ॥ सहतेनवनंयातोविनातेनागतःकथम् ॥१७॥ इहैवमरणं श्रेयोनतुबंधुविगर्हणम् ॥ किंमयादुष्कृतंकर्मकृतमन्यत्रजन्मनि॥१८॥येनमेधार्मिकोभ्रातानिहतश्चाग्रतःस्थितः ॥ हाभ्रातर्मनुजश्रेष्ठशूराणांप्रवरप्रभो ॥१९॥ एकाकीकिंनुमांत्यक्त्वापरलोकायगच्छसि ॥ विलपंतंचमांभ्रातःकिमर्थंनावभाषसे ॥२०॥ उत्तिष्ठपश्यकिंशेषेदीनंमांपश्यचक्षुषा ॥ शोकार्तस्यप्रमत्तस्यपर्वतेषुवनेषुच ॥ २१ ॥ विषण्णस्यमहाबाहोसमाश्वासयितामम ॥ राममेवंब्रुवाणंतुशोकव्याकुलितेंद्रियम् ॥ २२ ॥ आश्वासयन्नुवाचेदंसुषेणःपरमंवचः ॥ त्यजेमांनरशार्दूलबुद्धिंवैक्लव्यकारिणीम् ॥ २३ ॥ शोकसंजननींचिंतांतुल्यांबाणैश्चमूमुखे ॥ नैवपंचत्वमापन्नोलक्ष्मणोलक्ष्मिवर्धनः ॥ २४ ॥ नह्यस्यविकृतंवक्त्रंनचश्यामत्वमागतम् ॥ सुप्रभंचप्रसन्नंचमुखमस्यनिरीक्ष्यताम् ॥ २५ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ बाणैः शत्रुप्रेषितैस्तुल्यां न पंचत्वं मृतिमापन्नः श्वासाद्यनुभवात् ॥ २४ ॥ नापि मरिष्यति लक्षणाभावादित्याह नह्यस्येति ॥ २५ ॥

पद्मपत्रतलौ पद्मपत्रवद्रक्तवर्णकरतलवंतौ ॥२६॥ भूतले प्रसुप्तस्य स्रस्तगात्रस्येव मुहुर्मुहुः कंपमानस्य हृदयममुं सोच्छ्वासमाख्याति ॥२७॥२८॥२९॥ योसौ जांबवता ते कथितस्तमोषधिपर्वतं गत्वा तस्य दक्षिणशिखरे जातामोषधीमानय ॥ ३० ॥ सावर्ण्यकरणीं पूर्ववर्णसमानवर्णकरणीम् ॥ ३१ ॥ अजानंस्ता महौषधीरिति पूर्वदृष्टानामप्यपरिचये पुराणांतरोक्तकालनेमियुद्धकृतचित्तचांचल्यं हेतुरिति बोध्यम् ॥ ३२ ॥ ॥ ३३ ॥ अस्मिंस्तु शिखरे इति। अस्मिन्नेव शिखरे जातां तामोषधीं प्रतर्केणावगच्छामि हि यतः सुषेण एवमेवं लक्षणशिखरे तामब्रवीत् ॥ ३४॥ अगृह्येति। अत्र शिखरेऽस्तीत्येतावन्मात्रमेव जानामि इयं विशल्य

पद्मपत्रतलौहस्तौसुप्रसन्नेचलोचने ॥ नेदृशंदृश्यतेरूपंगतासूनांविशांपते ॥ २६॥ विषादंमाकृथावीरसप्राणोयमरिंदम ॥ आख्यातितुप्रसुप्तस्यस्रस्तगात्रस्यभूतले ॥ २७ ॥ सोच्छ्वासंहृदयंवीरकंपमानंमुहुर्मुहुः ॥ एवमुक्त्वामहाप्राज्ञःसुषेणोराघवंवचः ॥ २८ ॥ समीपस्थमुवाचेदंहनूमंतंमहाकपिम् ॥ सौम्यशीघ्रमितोगत्वापर्वतंहिमहोदयम् ॥ २९ ॥ पूर्वंतुकथितोयोसौवीरजांबवतातव ॥ दक्षिणेशिखरेजातांमहौषधिमिहानय ॥३०॥ विशल्यकरणींनाम्नासावर्ण्यकरणींतथा ॥ संजीवकरणींवीरसंधानींचमहौषधीम् ॥ ३१ ॥ संजीवनार्थंवीरस्यलक्ष्मणस्यत्वमानय ॥ इत्येवमुक्तोहनुमान्गत्वाचौषधिपर्वतम्॥चिंतामभ्यगमच्छ्रीमानजानंस्तामहौषधीः ॥ ३२ ॥ तस्यबुद्धिःसमुत्पन्नामारुतेरमितौजसः ॥ इदमेवगमिष्यामिगृहीत्वाशिखरंगिरेः ॥ ॥ ३३ ॥ अस्मिंस्तुशिखरेजातामोषधींतांसुखावहाम् ॥ प्रतर्केणावगच्छामिसुषेणोह्येवमब्रवीत् ॥३४॥ अगृह्ययदिगच्छामिविशल्यकरणीमहम् ॥ कालात्ययेनदोषःस्याद्वैक्लव्यंचमहद्भवेत् ॥ ३५ ॥ इतिसंचिंत्यहनुमान्गत्वाक्षिप्रंमहाबलः ॥ आसाद्यपर्वतश्रेष्ठंत्रिःप्रकंप्यगिरेस्तटम् ॥ ३६ ॥ फुल्लनानातरुगणंसमुत्पाट्यमहाबलः ॥ गृहीत्वाहरिशार्दूलोहस्ताभ्यांसमतोलयत् ॥३७॥ सनीलमिवजीमूतंतोयपूर्णंनभस्तलात् ॥ उत्पपातगृहीत्वातुहनूमान्शिखरंगिरेः ॥ ३८ ॥ समागम्यमहावेगःसंन्यस्यशिखरंगिरेः ॥ विश्रम्यकिंचिद्धनुमान्सुषेणमिदमब्रवीत् ॥ ३९ ॥ ओषधीर्नावगच्छामिताअहंहरिपुंगव ॥ तदिदंशिखरंकृत्स्नंगिरेस्तस्याहृतंमया ॥ ४० ॥ एवंकथयमानंतुप्रशस्यपवनात्मजम् ॥ सुषेणोवानरश्रेष्ठोजग्राहोत्पाट्यचौषधीः ॥ ४१ ॥ विस्मितास्तुबभूवुस्तेसर्वेवानरपुंगवाः ॥ दृष्ट्वातुहनुमत्कर्मसुरैरपिसुदुष्करम् ॥ ४२ ॥ ततःसंक्षोदयित्वातामोषधींवानरोत्तमः ॥ लक्ष्मणस्यददौनस्तःसुषेणःसुमहाद्युतिः ॥ ४३ ॥ सशल्यःससमाघ्रायलक्ष्मणःपरवीरहा ॥ विशल्योविरुजःशीघ्रमुदतिष्ठन्महीतलात् ॥ ४४ ॥

करणीति विशिष्य न जानामि अनुभवाभावात् अतस्तां विशल्यकरणीं लक्ष्मणस्य स प्राणत्वादवश्यमपेक्षितां यद्यगृहीत्वा अन्यां वा तदाभासां गृहीत्वा गच्छामि तदा महद्वैक्लव्यम् अचतुराज्ञत्वादिदोषः स्यात् विचारकरणे तु कालात्ययेन लक्ष्मणस्य प्राणनाशो दोषः स्यात् ॥ ३५॥ इत्येवमादिकं संचिंत्य त्रिः प्रकंप्य स्वेन पुरा स्थापितस्यापि पुनरुत्पाटनार्थं त्रिः कंपनम् । पूर्वं संगृहीतौषधीनां मूर्च्छितयूथपेषु व्ययात्पुनरस्य प्रेषणमिति बोध्यम् ॥ ३६ ॥ ३७ ॥ गिरेः शिखरं गृहीत्वा स्वखात्प्रभ उत्पपात ॥ ३८ ॥ संन्यस्य सुषेणसमीप इति शेषः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ संक्षोदयित्वा संमर्द्येत्यर्थः ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ एह्येहीति । उत्थितं लक्ष्मणं राम एह्येहीत्यब्रवीत् ॥ ४६ ॥ ४७ ॥ ४८ ॥ शिथिलया वाचा खिन्नः को हि मे जीवितेनार्थ इत्येवंरूपया रावणवधविभीषणराज्यदानप्रतिज्ञाशैथिल्यकरया वाचा खिन्न इत्यर्थः ॥ ४९ ॥ तदेवाह तामिति । तां मदुक्तरूपाम् ॥ ५० ॥ ५१ ॥ मत्कृते नैराश्यमुपगंतुं नालं न युक्तम् । दैवाद्विपत्तावपीतिशेषः । प्रतिज्ञामनुपालय दैवगत्या ममापि स्वस्थतया स्वस्थचित्तः सन्प्रतिज्ञां पालय ॥ ५२ ॥५३॥ कृतकर्मा अद्यतनकर्तव्यांशे कृतलोकानुग्रहः यावदस्तं न यातीत्यनेनाश्विनशुक्लप्रतिपद्येषा वार्तेति गम्यते ॥५४॥५५॥ शेंमेंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके

तमुत्थितंतुहरयोभूतलात्प्रेक्ष्यलक्ष्मणम् ॥ साधुसाध्विातिसुप्रीतालक्ष्मणंप्रत्यपूजयन्॥४५॥ एह्येहीत्यब्रवीद्रामोलक्ष्मणंपरवीरहा ॥ सस्वजेगाढमालिंग्यबाष्पपर्याकुलेक्षणः ॥ ४६ ॥ अब्रवीच्चपरिष्वज्यसौमित्रिंराघवस्तदा ॥ दिष्ट्यात्वांवीरपश्यामिमरणात्पुनरागतम् ॥ ४७ ॥ नहिमेजीवितेनार्थःसीतयाचजयेनवा ॥ कोहिमेजीवितेनार्थस्त्वयिपंचत्वमागते ॥ ४८ ॥ इत्येवंब्रुवतस्तस्यराघवस्यमहात्मनः ॥ खिन्नःशिथिलयावाचालक्ष्मणोवाक्यमब्रवीत् ॥ ४९ ॥ तांप्रतिज्ञांप्रतिज्ञायपुरासत्यपराक्रम ॥ लघुःकश्चिदिवासत्वोनैवंत्वंवक्तुमर्हसि ॥ ५० ॥ नहिप्रतिज्ञांकुर्वंतिवितथांसत्यवादिनः ॥ लक्षणंहिमहत्त्वस्यप्रतिज्ञापरिपालनम् ॥ ५१ ॥ नैराश्यमुपगंतुंचनालंतेमत्कृतेनघ ॥ वधेनरावणस्याद्यप्रतिज्ञामनुपालय ॥ ५२ ॥ नजीवन्यास्यतेशत्रुस्तवबाणवशंगतः ॥ नर्दतस्तीक्ष्णदंष्ट्रस्यसिंहस्येवमहागजः ॥ ५३ ॥ अहंतुवधमिच्छामिशीघ्रमस्यदुरात्मनः ॥ यावदस्तंनयात्येषकृतकर्मादिवाकरः ॥ ५४ ॥ यदिवधमिच्छसिरावणस्यसंख्येयदिचकृतांहितवेच्छसिप्रतिज्ञाम् ॥ यदितवराजसुताभिलापआर्यकुरुचवचोममशीघ्रमद्यवीर ॥५५॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येयुद्धकांडे द्व्यधिकशततमः सर्गः ॥१०२॥ लक्ष्मणेनतुतद्वाक्यमुक्तंश्रुत्वासराघवः ॥ संदधेपरवीरघ्नोधनुरादायवीर्यवान् ॥ १ ॥ रावणायशरान्घोरान्विससर्जचमूमुखे ॥ अथान्यंरथमास्थायरावणोराक्षसाधिपः ॥ २ ॥ अभ्यधावतकाकुत्स्थंस्वर्भानुरिवभास्करम् ॥ दशग्रीवोरथस्थस्तुरामंवज्रोपमैःशरैः ॥ आजघानमहाशैलंधाराभिरिवतोयदः ॥ ३ ॥ दीप्तपावकसंकाशैःशरैःकांचनभूषणैः ॥ अभ्यवर्षद्रणेरामोदशग्रीवंसमाहितः ॥ ४ ॥ भूमौस्थितस्यरामस्यरथस्थस्यचरक्षसः ॥ नसमंयुद्धमित्याहुर्देवगंधर्वकिन्नराः ॥ ॥ ५ ॥ ततोदेववरःश्रीमाञ्छ्रुत्वातेषांवचोमृतम् ॥ आहूयमातलिंशक्रोवचनंचेदमब्रवीत् ॥ ६ ॥

वाल्मीकीये आदिकाव्ये युद्धकांडे द्व्यधिकशततमः सर्गः ॥१०२॥ कतकरी० ॥९४॥ लक्ष्मणेनेति ॥१॥ रावणाय शरान्विससर्ज । अथान्यं रथमित्यनेन चात्र स्थाने रावणेन शुक्राज्ञया जयनि मित्तं निकुंभिलायामारब्धहोमकर्मणो वानरद्वारा हिंसनं पुराणांतरोक्तमनुसंधेयमिति सूचितम् । पूर्वं रणात्पलायनोक्त्या रावणोद्देश्यकशरविसर्गस्य रणभूमावसंभवादाश्विनप्रतिपन्मध्याह्ने एतद्युद्धप्रवृत्तिः ॥ २ ॥ ३ ॥ ४ ॥५॥६॥

मम रथेन शीघ्रं रघूत्तमं याहि भूतलं यातः प्राप्तश्च आहूय रघूत्तमं संबोधनपूर्वकं देवराजरथोयमिति बोधयित्वा महद्देवहितं कुर्वित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ कांचनापीडैः स्वर्णाभरणैः श्वेतप्रकीर्णकैः सितचामराद्यलंकारवद्भिः । चामरं तु प्रकीर्णकमित्यमरः ॥ १० ॥ देवराजरथो योस्तीति शेषः । तमारुह्येत्युत्तरेण संबंधः ॥ ११ ॥ देवराजेन संदिष्टः शीघ्रं गच्छेत्याज्ञप्तो मातलिरित्यन्वयः ।

रथेनममभूमिष्ठंशीघ्रंयाहिरघूत्तमम् ॥ आहूयभूतलंयातःकुरुदेवहितंमहत् ॥ ७ ॥ इत्युक्तोदेवराजेनमातलिर्देवसारथिः ॥ प्रणम्यशिरसादेवंततो वचनमब्रवीत ॥ ८ ॥ शीघ्रंयास्यामिदेवेंद्रसारथ्यंचकरोम्यहम् ॥ ततोहयैश्चसंयोज्यहरितैःस्यंदनोत्तमम् ॥ ततःकांचनचित्रांगःकिंकिणीशतभूषितः ॥ ९ ॥ तरुणादित्यसंकाशोवैदूर्यमयकूबरः ॥ सदश्वैःकांचनापीडैर्युक्तःश्वेतप्रकीर्णकैः ॥१०॥ हरिभिःसूर्यसंकाशैर्हेमजालविभूषितैः ॥ रुक्मवेणुध्वजःश्रीमान्देवराजरथोवरः ॥ ११ ॥ देवराजेनसंदिष्टोरथमारुह्यमातलिः ॥ अभ्यवर्ततकाकुत्स्थमवतीर्यत्रिविष्टपात् ॥ १२॥ अब्रवीच्चतदारामं सप्रतोदोरथेस्थितः ॥ प्रांजलिर्मातलिर्वाक्यंसहस्राक्षस्यसारथिः ॥ १३ ॥ सहस्राक्षेणकाकुत्स्थरथोयंविजयायते ॥ दत्तस्तवमहासत्त्वश्रीमञ्छत्रुनिबर्हण ॥ १४ ॥ इदमैंद्रंमहच्चापंकवचंचाग्निसन्निभम् ॥ शराश्चादित्यसंकाशाःशक्तिश्चविमलाशिवा ॥१५॥ आरुह्येमंरथंवीरराक्षसंजहिरावणम्॥ मयासारथिनादेवमहेंद्रइवदानवान् ॥ १६ ॥ इत्युक्तःसंपरिक्रम्यरथंतमभिवाद्यच ॥ आरुरोहतदारामोलोकाँल्लक्ष्म्याविराजयन्॥ १७ ॥ तद्बभौ चाद्भुतंयुद्धंद्वैरथंरोमहर्षणम् ॥ रामस्यचमहाबाहोरावणस्यचरक्षसः ॥१८॥ सगांधर्वेणगांधर्वंदैवंदैवेनराघवः ॥ अस्त्रंराक्षसराजस्यजघानपरमास्त्रवित् ॥ १९ ॥ अस्त्रंतुपरमंघोरंराक्षसंराक्षसाधिपः ॥ ससर्जपरमक्रुद्धःपुनरेवनिशाचरः ॥ २० ॥ तेरावणधनुर्मुक्ताःशराःकांचनभूषणाः ॥ अभ्यवर्ततकाकुत्स्थंसर्पाभूत्वामहाविषाः ॥ २१ ॥ तेदीप्तवदनादीप्तंवमंतोज्वलनंमुखैः ॥ राममेवाभ्यवर्तंतव्यादितास्याभयानकाः ॥ २२ ॥ तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः ॥ दिशश्चसंतताःसर्वाविदिशश्चसमावृताः ॥ २३ ॥ तान्दृष्ट्वापन्नगान्रामःसमापततआहवे ॥ अस्त्रंगारुत्मतंघोरंप्रादुश्चक्रेभयावहम् ॥ २४ ॥ तेराघवधनुर्मुक्तारुक्मपुंखाःशिखिप्रभाः ॥ सुपर्णाःकांचनाभूत्वाविचेरुःसर्पशत्रवः ॥ २५॥ तेतान्सर्वाञ्शराञ्जघ्नुःसर्परूपान्महाजवान् ॥ सुपर्णरूपारामस्यविशिखाःकामरूपिणः ॥ २६ ॥ अस्त्रेप्रतिहतेक्रुद्धोरावणोराक्षसाधिपः ॥ अभ्यवर्षत्तदारामंघोराभिःशरवृष्टिभिः ॥ ॥ २७ ॥ ततःशरसहस्रेणराममक्लिष्टकारिणम् ॥ अर्दयित्वाशरौघेणमातलिंप्रत्यविध्यत ॥ २८ ॥ चिच्छेदकेतुमुद्दिश्यशरेणैकेनरावणः ॥ पातयित्वारथोपस्थेरथात्केतुंचकांचनम् ॥ २९ ॥

पूर्वाज्ञया वस्तुसन्नीकरणं पुनराज्ञया मनुष्यलोकं प्रति चलनमिति बोध्यम् ॥ १२ ॥ १३ ॥ १४ ॥ इदं दत्तमित्यनुषज्यते ॥ १५ ॥ १६ ॥ संपरिक्रम्य प्रदक्षिणीकृत्य ॥ १७ ॥ द्वैरथं द्वौ रथौ ययोस्तौ द्विरथौ तयोरिदं द्वैरथम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ व्यादितास्या व्यात्तवदनाः ॥२२॥२३॥ प्रादुश्चक्रे प्रयुयुजे ॥ २४ ॥ शिखिप्रभा अग्निप्रभाः ॥२५॥२६॥२७॥२८॥ केतुमुद्दिश्य प्रक्षिप्त

नैकेन शरेण केतुं चिच्छेद छिन्नं च तं रथाद्रथोर्ध्वदेशाद्रथोपस्थे पातयित्वा ॥२९॥ अश्वानपि जघान ॥३०॥३१॥ अथ रामभयावहानुत्पातानाह प्राजापत्यमिति । प्रजापतिदैवत्यनक्षत्रभूतां रोहिणीमित्यर्थः ॥ ॥३२॥३३॥ दिवाकरं स्पृशन्निवोत्पपात अत्युच्चोर्मिर्जात इत्यर्थः । शस्त्रवर्णः कृष्णांतर्मंडलः ॥३४॥ कबंधांकः कबंधोंके यस्य सः ॥३५॥ विशाखं विशाखाख्यनक्षत्रम् एते उत्पाता रामस्य तथा मनुष्यधर्म

ऐंद्रानपिजघानाश्वाञ्छरजालेनरावण ॥ विषेदुर्देवगंधर्वचारणादानवैःसह ॥ ३० ॥ राममार्तंतदादृष्ट्वासिद्धाश्चपरमर्षयः ॥ व्यथितावानरेंद्राश्चबभूवुः सविभीषणाः ॥ ३१ ॥ रामचंद्रमसंदृष्ट्वाग्रस्तंरावणराहुणा ॥ प्राजापत्यंचनक्षत्रंरोहिणींशशिनःप्रियाम् ॥ ३२ ॥ समाक्रम्यबुधस्तस्थौप्रजानाम हितावहः ॥ सधूमपरिवृत्तोर्मिःप्रज्वलन्निवसागरः ॥ ३३ ॥ उत्पपाततदाक्रुद्धःस्पृशन्निवदिवाकरम् ॥ शस्त्रवर्णःसुपरुषोमंदरश्मिर्दिवाकरः ॥३४॥ अदृश्यतकबंधांकःसंसक्तोधूमकेतुना ॥ कोसलानांचनक्षत्रंव्यक्तमिंद्राग्निदैवतम् ॥३५॥ आहत्यांगारकस्तस्थौविशाखामपिचांबरे ॥ दशास्योविंश तिभुजःप्रगृहीतशरासनः ॥ ३६ ॥ अदृश्यतदशग्रीवोमैनाकइवपर्वतः॥ निरस्यमानोरामस्तुदशग्रीवेणरक्षसा ॥ ३७ ॥ नाशक्नोदभिसंधातुंसायका न्रणमूर्धनि ॥ सकृत्वाभ्रुकुटिंक्रुद्धःकिंचित्संरक्तलोचनः ॥ ३८ ॥ जगामसुमहाक्रोधंनिर्दहन्निवराक्षसान् ॥ तस्यक्रुद्धस्यवदनंदृष्ट्वारामस्यधीमतः ॥ सर्वभूतानिवित्रेसुःप्राकंपतचमेदिनी ॥ ३९ ॥ ॥ सिंहशार्दूलवाञ्छैलःसंचचालचलद्रुमः ॥ बभूवचापिक्षुभितःसमुद्रःसरितांपतिः ॥ ४० ॥ खरा श्चखरनिर्घोषागगनेपरुषाघनाः ॥ औत्पातिकाश्चनर्दंतःसमंतात्परिचक्रमुः ॥४१ ॥ रामंदृष्ट्वासुसंक्रुद्धमुत्पातांश्चैवदारुणान् ॥ वित्रेसुःसर्वभूतानिराव णस्याभवद्भयम् ॥ ४२ ॥ विमानस्थास्तदादेवागंधर्वाश्चमहोरगाः ॥ ऋषिदानवदैत्याश्चगरुत्मंतश्चखेचराः ॥ ४३ ॥ ददृशुस्तेतदायुद्धंलोकसंवर्त संस्थितम् ॥ नानाप्रहरणैर्भीमैःशूरयोःसंप्रयुध्यतोः ॥ ४४ ॥ ऊचुःसुरासुराःसर्वेतदाविग्रहमागताः ॥ प्रेक्षमाणामहायुद्धंवाक्यंभक्त्याप्रहृष्टवत्॥४५॥ दशग्रीवंजयेत्याहुरसुराःसमवस्थिताः ॥ देवाराममथोचुस्तेत्वंजयेतिपुनःपुनः ॥ ४६ ॥ एतस्मिन्नंतरेक्रोधाद्राघवस्यचरावणः ॥ प्रहर्तुकामोदु ष्टात्मास्पृशन्प्रहरणंमहत् ॥ ४७ ॥

नटनसूचका इति बोध्यम्॥ ३६॥ ३७॥ ३८॥क्रुद्धः स रामः सुमहाक्रोधं जगाम तादृशक्रोधप्राप्तौ स्वजनार्तिर्भूतवैपरीत्यं रावणपराक्रमश्च निमित्तम् ॥ ३९॥चलद्रुम इति बहुव्रीहिः । महद्रुम इति पाठांतरम् ॥४०॥ औत्पातिकाः उत्पातप्रवृत्ताः ॥ ४१ ॥ ४२ ॥ ४३ ॥ लोकानां संवर्तः प्रलयस्तद्वत्संस्थितं संख्यानं यस्य तत् ॥ ४४ ॥ विग्रहमागताः रामरावणपक्षपाताद्विरोधपूर्वकमभिनिवेशं प्राप्ताः प्रहृष्टवत्प्रहृष्टाः संतः ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ कूटैः शूलस्य दलत्रयशिखरैः ॥ ४८ ॥ अग्निचयोग्निसमूहः ॥ ४९ ॥ ५० ॥ अनीकैः अनेकानीकसंख्यैः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ त्वां निहत्य रक्षसां समं करोमि रक्षोभिः समं करिष्यामीत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ वारयामास प्रथमं वेगभंगं कृतवानित्यर्थः ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ बाणवद्भिः शब्दायमानैः

वज्रसारंमहानादंसर्वशत्रुनिवर्हणम् ॥ शैलशृंगनिभैःकूटैश्चित्तदृष्टिभयावहम् ॥ ४८ ॥ सधूममिवतीक्ष्णाग्रंयुगांतान्निचयोपमम् ॥ अतिरौद्रमनासाद्यं कालेनापिदुरासदम् ॥ ४९ ॥ त्रासनंसर्वभूतानांदारणंभेदनंतथा ॥ प्रदीप्तइवरोषेणशूलंजग्राहरावणः ॥ ५० ॥ तच्छूलंपरमक्रुद्धोजग्राहयुधिवीर्यवान् ॥ अनीकैःसमरेशूरैराक्षसैःपरिवारितः ॥ ५१ ॥ समुद्यम्यमहाकायोननादयुधिभैरवम् ॥ संरक्तनयनोरोषात्स्वसैन्यमभिहर्षयन् ॥ ५२ ॥ पृथिवींचांतरिक्षंचदिशश्चप्रदिशस्तथा ॥ प्राकंपयत्तदाशब्दोराक्षसेंद्रस्यदारुणः ॥५३॥ अतिकायस्यनादेनतेनतस्यदुरात्मनः ॥ सर्वभूतानिवित्रेसुः सागरश्चप्रचुक्षुभे ॥ ५४ ॥ सगृहीत्वामहावीर्यःशूलंतद्रावणोमहत् ॥ विनद्यसुमहानादंरामंपरुषमब्रवीत् ॥ ५५ ॥ शूलोयंवज्रसारस्तेरामरोषान्मयोद्यतः ॥ तवभ्रातृसहायस्यसद्यःप्राणान्हरिष्यति ॥ ५६ ॥ रक्षसामद्यशूराणांनिहतानांचमूमुखे ॥ त्वांनिहत्यरणश्लाघीकरोमितरसासमम् ॥५७॥ तिष्ठेदानींनिहन्मित्वामेषशूलेनराघव ॥ एवमुक्त्वासचिक्षेपतच्छूलंराक्षसाधिपः ॥५८॥ तद्रावणकरान्मुक्तंविद्युन्मालासमावृतम् ॥ अष्टघंटंमहानादं वियद्गतमशोभत ॥ ५९ ॥ तच्छूलंराघवोदृष्ट्वाज्वलंतंघोरदर्शनम् ॥ ससर्जविशिखान्रामश्चापमायम्यवीर्यवान् ॥ ६० ॥ आपतंतंशरौघेणवारयामास राघवः ॥ उत्पतंतंयुगांताग्निंजलौघैरिववासवः ॥ ६१ ॥ निर्ददाहसतान्बाणान्रामकार्मुकनिःसृतान् ॥ रावणस्यमहाशूलःपतंगानिवपावकः ॥ ॥ ६२ ॥ तान्दृष्ट्वाभस्मसाद्भूतान्छूलसंस्पर्शचूर्णितान् ॥ सायकानंतरिक्षस्थान्राघवःक्रोधमूर्च्छितः ॥ ६३ ॥ सतांमातलिनानीतांशक्तिंवासवसंमताम् ॥ जग्राहपरमक्रुद्धोराघवोरघुनंदनः ॥ ६४ ॥ सातोलिताबलवताशक्तिर्घंटाकृतस्वना ॥ नभःप्रज्वालयामासयुगांतोल्केवसप्रभा ॥ ६५ ॥ साक्षिप्ताराक्षसेंद्रस्यतस्मिन्छूलेपपातह ॥ भिन्नशक्त्यामहाञ्शूलोनिपपातगतद्युतिः ॥ ६६ ॥ निर्बिभेदततोबाणैर्हयानस्यमहाजवान् ॥ रामःक्षिप्रैर्महावेगैर्बाणवद्भिरजिह्मगैः ॥ ६७ ॥ निर्बिभेदोरसितदारावणंनिशितैःशरैः ॥ राघवःपरमायत्तोललाटेपत्रिभिस्त्रिभिः ॥ ६८ ॥ सशरैर्भिन्नसर्वांगोगात्रप्रस्रुतशोणितः ॥ राक्षसेंद्रसमूहस्थःफुल्लाशोकइवाबभौ ॥६९॥ सरामबाणैरतिविद्धगात्रोनिशाचरेंद्रःक्षतजार्द्रगात्रः ॥ जगामखेदंचसमाजमध्ये क्रोधंचचक्रेसुभृशंतदानीम् ॥ ७० ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेत्र्यधिकशततमःसर्गः ॥ १०३ ॥

॥ ६७ ॥ ६८ ॥ गात्रेभ्यः प्रस्रुतं शोणितं यस्य सः समूहस्थः समूहतया स्थितः बहुशिरःपाणित्वात्तथात्वम् ॥ ६९ ॥ ७० ॥ नंसौमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्र्यधिकशततमः सर्गः ॥ १०३ ॥ कतकरी० ॥ ९५ ॥

स तु तेनेति ॥ १ ॥ २ ॥ अंबरात्पातिताभिर्धाराभिस्तोयदस्तटाकमिव स रावणो राघवं बाणधारासहस्रैः पूरयन्नभ्यर्दयदितिशेषः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अन्योन्यं नोपलक्षयतामित्यन्वयः ॥ ९ ॥ प्रहस्येति ॥ कोपविकारजोयं प्रहासः ॥ १० ॥ अज्ञानादविवेकान्मत्स्वरूपाज्ञानाच्च तस्मात्त्वं वीर्यवान्नासि च मत्क्रोधदीपकेन तेन पापेन शीघ्रं विनंक्ष्यसीत्यर्थः ॥ ११ ॥ १२ ॥ विनाथासु

सतुतेनतदाक्रोधात्काकुत्स्थेनार्दितोभृशम् ॥ रावणःसमरश्लाघीमहाक्रोधमुपागमत् ॥ १ ॥ सदीप्तनयनोमर्षाच्चापमुद्यम्यवीर्यवान् ॥ अभ्यर्दयत्सुसंक्रुद्धोराघवंपरमाहवे ॥ २ ॥ बाणधारासहस्रैस्तुसतोयदइवांबरात् ॥ राघवंरावणोबाणैस्तटाकमिवपूरयन् ॥ ३ ॥ पूरितःशरजालेनधनुर्मुक्तेनसंयुगे ॥ महागिरिरिवाकंप्यःकाकुत्स्थोनप्रकंपते ॥ ४ ॥ सशरैःशरजालानिवारयन्समरेस्थितः ॥ गभस्तीनिवसूर्यस्यप्रतिजग्राहवीर्यवान् ॥ ५ ॥ ततःशरसहस्राणिक्षिप्रहस्तोनिशाचरः ॥ निजघानोरसिक्रुद्धोराघवस्यमहात्मनः ॥ ६ ॥ सशोणितसमादिग्धःसमरेलक्ष्मणाग्रजः ॥ दृष्टःफुल्लइवारण्येसुमहान्किंशुकद्रुमः ॥ ७ ॥ शराभिघातसंरब्धःसोभिजग्राहसायकान् ॥ काकुत्स्थःसुमहातेजायुगांतादित्यवर्चसः ॥ ८ ॥ ततोन्योन्यंसुसंरब्धौतावुभौरामरावणौ ॥ शरांधकारेसमरेनोपलक्षयतांतदा ॥ ९ ॥ ततःक्रोधसमाविष्टोरामोदशरथात्मजः ॥ उवाचरावणंवीरःप्रहस्यपरुषंवचः ॥ १० ॥ ममभार्याजनस्थानादज्ञानाद्राक्षसाधम ॥ हृतातेविवशायस्मात्तस्मात्त्वंनासिवीर्यवान् ॥ ११ ॥ मयाविरहितांदीनांवर्तमानांमहावने ॥ वैदेहींप्रसभंहृत्वाशूरोहमितिमन्यसे ॥ १२ ॥ स्त्रीषुशूरविनाथासुपरदाराभिमर्शनम् ॥ कृत्वाकापुरुषंकर्मशूरोहमितिमन्यसे ॥ १३ ॥ भिन्नमर्याद निर्लज्जचारित्रेष्वनवस्थित ॥ दर्पान्मृत्युमुपादायशूरोहमितिमन्यसे ॥ १४ ॥ शूरेणधनदभ्रात्राबलैःसमुदितेनच ॥ श्लाघनीयंमहत्कर्मयशस्यंचकृतंत्वया ॥ १५ ॥ उत्सेकेनाभिपन्नस्यगर्हितस्याहितस्यच ॥ कर्मणःप्राप्नुहीदानींतस्याद्यसुमहत्फलम् ॥ १६ ॥ शूरोहमितिचात्मानमवगच्छसिदुर्मते नैवलज्जास्तितेसीतांचौरवद्व्यपकर्षतः ॥ १७ ॥ यदिमत्सन्निधौसीताधर्षितास्यात्त्वयाबलात् ॥ भ्रातरंतुखरंपश्येस्तदामत्सायकैर्हतः ॥ १८ ॥ दिष्ट्यासिममंदात्मंश्चक्षुर्विषयमागतः ॥ अद्यत्वांसायकैस्तीक्ष्णैर्नयामियमसादनम् ॥ १९ ॥ अद्यतेमच्छरैश्छिन्नंशिरोज्वलितकुंडलम् ॥ क्रव्यादाव्यपकर्षंतुविकीर्णंरणपांसुषु ॥ २० ॥ निपत्योरसिगृध्रास्तेक्षितौक्षितस्यरावण ॥ पिबंतुरुधिरंतर्षाद्बाणशल्यांतरोत्थितम् ॥ २१ ॥ अद्यमद्बाणभिन्नस्यगतासोःपतितस्यते ॥ कर्षंत्वंत्राणिपतगागरुत्मंतइवोरगान् ॥ २२ ॥ इत्येवंसवदन्वीरोरामःशत्रुनिबर्हणः ॥ राक्षसेंद्रंसमीपस्थंशरवर्षैरवाकिरत् ॥ २३ ॥

असन्निहितनाथासु स्त्रीषु शूरेत्यन्वयः ॥ १३ ॥ १४ ॥ श्लाघनीयं यशस्यं च महत्कर्म कृतं त्वयेति व्यंग्योक्तिः ॥ १५ ॥ तदेव स्पष्टमाह उत्सेकेनेति । गर्वेणाभिपन्नस्यानुष्ठितस्य अहितस्य इहामुत्रानर्थरूपस्य ॥ १६ ॥ १७ ॥ तदा तदैव ॥ १८ ॥ १९ ॥ २० ॥ तर्षात्पिपासया बाणशल्यांतरोत्थितं बाणानां यानि शल्यानि तत्कृतादंतराच्छिद्रादुत्थितम् ॥ २१ ॥ २२ ॥ २३ ॥

रामस्य वीर्यादि द्विगुणं बभूवापकारस्मरणादिति शेषः ॥ २४ ॥ अस्त्राणि प्रादुर्बभूवुः अस्त्रदेवताः सन्निहिता अभूवन् प्रहर्षादस्त्रदेवतासन्निधिनात् ॥ २५ ॥ भूयोभ्यधिकम् ॥ २६ ॥ राघवाद्रावणस्य राघवोन्मुक्तादिति वा विघूर्णहृदयो विकलहृदयः ॥ २७ ॥ विक्लवेन विसंज्ञेनांतरात्मना यदा वीर्यं तत्कार्यं नारेभे शस्त्रं शस्त्रप्रयोगं च नारेभे तदा रामोस्य न प्रत्यकरोत् संहाराय नातिष्ठदिति भावः ॥ २८ ॥ अपि तु मूर्च्छातः प्रागेव क्षिप्ताः शरा अस्य रावणस्य मरणार्थाय मरणरूपप्रयोजनाय प्रवर्तंते स्म एवमस्य मृत्युकालोभ्यवर्तत उपस्थितः ॥ २९ ॥ मृत्युकाले उपस्थितेऽस्य रथं सूतोपवाहयत् ॥ ३० ॥ ३१ ॥ येोगेमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुरधिकशततमः सर्गः ॥ १०४ ॥ ॥ ॥ स तु मोहादिति

बभूवद्विगुणंवीर्यंबलंहर्षश्चसंयुगे ॥ रामस्यास्त्रबलंचैवशत्रोर्निधनकांक्षिणः ॥ २४ ॥ प्रादुर्बभूवुरस्त्राणिसर्वाणिविदितात्मनः ॥ प्रहर्षाच्चमहातेजाःशीघ्रहस्ततरोभवत् ॥ २५ ॥ शुभान्येतानिचिह्नानिविज्ञायात्मगतानिसः ॥ भूयएवार्दयद्रामोरावणंराक्षसांतकृत् ॥ २६॥ हरीणांचाश्मनिकरैःशरवर्षैश्चराघवात् ॥ हन्यमानोदशग्रीवोविघूर्णहृदयोभवत् ॥ २७ ॥ यदाचशस्त्रंनारेभेनचकर्षशरासनम् ॥ नास्यप्रत्यकरोद्वीर्यंविक्लवेनांतरात्मना ॥२८॥ क्षिप्ताश्चाशुशरास्तेनशस्त्राणिविविधानिच ॥ मरणार्थायवर्तंतेमृत्युकालोभ्यवर्तत ॥२९॥ सूतस्तुरथनेतास्यतदवस्थंनिरीक्ष्यतम् ॥शनैर्युद्धादसंभ्रांतोरथंतस्यापवाहयत् ॥ ३० ॥ रथंचतस्याथजवेनसारथिर्निवार्यभीमंजलदस्वनंतदा ॥ जगामभीत्यासमरान्महीपतिंनिरस्तवीर्यंपतितंसमीक्ष्य ॥ ॥ ३१ ॥ इत्यार्षे श्रीमद्रा०वा० आ० युद्धकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥ सतुमोहात्सुसंक्रुद्धःकृतांतबलचोदितः ॥ क्रोधसंरक्तनयनोरावणःसूतमब्रवीत् ॥ १ ॥ हीनवीर्यमिवाशक्तंपौरुषेणविवर्जितम् ॥ भीरुंलघुमिवासत्त्वंविहीनमिवतेजसा ॥ २ ॥ विमुक्तमिवमायाभिरस्त्रैरिवबहिष्कृतम् ॥ मामवज्ञायदुर्बुद्धेस्वयाबुद्ध्याविचेष्टसे ॥ ३ ॥ किमर्थंमामवज्ञायमच्छंदमनवेक्ष्यच ॥ त्वयाशत्रुसमक्षंमेरथोयमपवाहितः ॥ ४ ॥ त्वयाद्यहिममानार्यचिरकालमुपार्जितम् ॥ यशोवीर्यंचतेजश्चप्रत्ययश्चविनाशितः ॥ ५ ॥ शत्रोःप्रख्यातवीर्यस्यरंजनीयस्यविक्रमैः ॥ पश्यतोयुद्धलुब्धोहंकृतःकापुरुषस्त्वया ॥६॥ यत्त्वंकथमिदंमोहान्नचेद्वहसिदुर्मते ॥ सत्योयंप्रतितर्कोमेपरेणत्वमुपस्कृतः ॥७॥ नहितद्विद्यतेकर्मसुहृदोहितकांक्षिणः ॥ रिपूणांसदृशंत्वेतद्यत्त्वयैतदनुष्ठितम्॥८॥निवर्तयरथंशीघ्रंयावन्नापैतिमेरिपुः ॥ यदिवाध्युषितोसित्वंस्मर्यंतेयदिमेगुणः ॥ ९ ॥ एवंपरुषमुक्तस्तुहितबुद्धिरबुद्धिना ॥ अब्रवीद्रावणंसूतोहितंसानुनयंवचः॥१०॥नभीतोस्मिनमूढोस्मिनोपजप्तोस्मिशत्रुभिः॥नप्रमत्तोनानिःस्नेहोविस्मृतानचसात्क्रिया ॥११॥

शत्रुमोहेन मुक्त इति शेषः ॥ १ ॥ हीनवीर्यं हीनबलम् अशक्तम् अस्त्रादिप्रयोगसामर्थ्यहीनं लघुमल्पचित्तम् असत्यमधीरं तेजः पराभिभवसामर्थ्यम् ॥ २ ॥ अवज्ञायावमत्य स्वबुद्ध्या स्वेच्छया ॥ ३ ॥ मच्छंदं मदभिप्रायम् ॥ ४ ॥ प्रत्ययो मद्विषयो लोकस्य शूरत्वविश्वासः ॥ ५ ॥ शत्रोः पश्यतः सतस्त्वयाहं कापुरुषः कुत्सितपुरुषः कृतः ॥ ६ ॥ यद्यतस्त्वमिमं रथं कथमपि चेन्नोद्वहसि मोहादपि अज्ञानादपि शत्रोरभिमुखं न प्रापयसि स त्वं परेणोपस्कृत उत्कोचेन विकारं प्रापित इत्येवं मे प्रतितर्कः सत्यः उपादैकृतैर्थैः करोतेः सुट् ॥ ७ ॥ नहि तत्त्वनुष्ठितं कर्म सुहृदो विद्यते भवति यत्त्वयानुष्ठितं तथा प्रवाहनकर्मेत्यर्थः ॥ ८ ॥ अध्युषितश्चिरकालं मत्समीपे स्थितः मे गुणः मत्कृतोपकार इत्यर्थः ॥ ९ ॥ हितबुद्धिः सूतः ॥ १० ॥ नोपजप्तः उपजापं भेदं न प्रापितः सत्क्रिया त्वत्कृतेति शेषः ॥ ११ ॥

यशश्च परिरक्षता जीवनरक्षणेनात्मीयं त्वदीयं च यशो रक्षतेत्यर्थः । स्नेहप्रसन्नमनसा स्नेहार्द्रहृदयेन रथापवाहनं शूरत्वात्तवाप्रियमपि हितमिति निश्चित्य कृतम् ॥ १२ ॥ अस्मिन्नर्थे युद्धादपोहनरूपे कार्ये अनार्यो लघुरिव अविमृश्यकारी क्षुद्र इव दोषतो गंतुं दोषवत्त्वेन ज्ञातुं नार्हसि मयि दुष्टबुद्धिं कर्तुं नार्हसीत्यर्थः ॥ १३ ॥ कुतस्तत्राह श्रूयतामिति यदुत्तरं प्रतिदास्यामि तच्छ्रूयतां यन्निमित्तं रथो निवर्तितस्त च श्रूयतां रथो रथवेगः चंद्रोदयेन प्रवृद्धसमुद्रांभोभिर्नदीवेग इव संयुगे संयुगान्निवर्तितः ॥ १४ ॥ रणकर्मणा युद्धेन वीर्यसौमुख्यं वीर्यकार्यं प्रति सौमुख्यं वीर्यसौमुख्यं प्रकर्षं शत्रोरपेक्षयाधिक्यम् । प्रहारमितिपाठे शत्रुविषयकमित्यर्थः ॥ १५ ॥ १६ ॥ निमित्तानि दुर्निमित्तानि अभिपन्नेषु जातेषु अप्रदक्षिणं प्रतिकूलं लक्षयामीति संबंधः ॥ १७ ॥ ननु संत्विमानि किं तवैतद्विचारेणेत्याशंक्याह देशेत्यादिना । लक्षणानि शुभाशुभनिमित्तानि इंगितानि मुखप्रसादवैवर्ण्यादिचेष्टाश्च दैन्यमनुत्साहः ॥ १८ ॥ स्थलं समं निम्नं नीचं तस्यैव विवरणं समानीत्यादि । अंतरदर्शनं महाराय च्छिद्रदर्शनम् ॥ १९ ॥ उपयानापयाने रथस्य

मयातुहितकामेनयशश्चपरिरक्षता ॥ स्नेहप्रसन्नमनसाहितमित्यप्रियंकृतम् ॥ १२ ॥ नास्मिन्नर्थेमहाराजत्वंमांप्रियहितेरतम् ॥ कश्चिल्लघुरिवानार्यो दोषतोगंतुमर्हसि ॥ १३ ॥ श्रूयतांप्रतिदास्यामियन्निमित्तंमयारथः ॥ नदीवेगइवांभोभिःसंयुगेविनिवर्तितः ॥१४॥ श्रमंतत्रावगच्छामिमहतारणकर्मणा ॥ नहितेवीर्यसौमुख्यंप्रकर्षंनोपधारये ॥ १५ ॥ रथोद्वहनखिन्नाश्चभग्नामेरथवाजिनः ॥ दीनाघर्मपरिश्रांतागावोवर्षहताइव ॥ १६ ॥ निमित्तानिचभूयिष्ठंयानिप्रादुर्भवंतिनः ॥ तेषुतेष्वभिपन्नेषुलक्षयाम्यप्रदक्षिणम् ॥ १७ ॥ देशकालौचविज्ञेयौलक्षणानींगितानिच ॥ दैन्यंहर्षश्चखेदश्चरथिनश्चमहाबल ॥ १८ ॥ स्थलनिम्नानिभूमेश्चसमानिविषमाणिच ॥ युद्धकालश्चविज्ञेयःपरस्यांतरदर्शनम् ॥ १९ ॥ उपयानापयानेचस्थानंप्रत्यवसर्पणम् ॥ सर्वमेतद्रथस्थेनज्ञेयंरथकुटुंबिना ॥ २० ॥ तवविश्रामहेतोस्तुतथैषांरथवाजिनाम् ॥ रौद्रंवर्जयताखेदंक्षमंकृतमिदंमया ॥ २१ ॥ स्वेच्छयानमयावीररथोयमपवाहितः ॥ भर्तुःस्नेहपरीतेनमयेदंयत्कृतंप्रभो ॥२२॥आज्ञापययथातत्त्वंवक्ष्यस्यरिनिषूदन॥तत्करिष्याम्यहंवीरगतानृण्येनचेतसा ॥ २३ ॥ संतुष्टस्तेनवाक्येनरावणस्तस्यसारथेः ॥ प्रशस्यैनंबहुविधंयुद्धलुब्धोब्रवीदिदम् ॥ २४ ॥ रथंशीघ्रमिमंसूतराघवाभिमुखंनय ॥ नाहत्वासमरेशत्रून्निवर्तिष्यतिरावणः ॥ २५ ॥ एवमुक्त्वारथस्थस्यरावणोराक्षसेश्वरः ॥ ददौतस्यशुभंह्येकंहस्ताभरणमुत्तमम् ॥ श्रुत्वारावणवाक्यानिसारथिःसंन्यवर्तत॥२६॥ततोद्रुतंरावणवाक्यचोदितःप्रचोदयामासहयान्ससारथिः॥सराक्षसेंद्रस्यततोमहारथःक्षणेनरामस्यरणाग्रतोभवत्॥२७॥ इत्यार्षे श्रीमद्रा०वा०आ०यु० पंचाधिकशततमः सर्गः॥१०५॥ततोयुद्धपरिश्रांतंसमरेचिंतयास्थितम्॥रावणंचाग्रतोदृष्ट्वायुद्धायसमुपस्थितम् ॥१॥

रिपुसमीपप्रापणनिवर्तने तत्कालावितियावत् स्थानं स्थैर्येणावस्थानं प्रत्यपसर्पणम् अभिमुखस्थितस्यैव पृष्ठतोपसरणं रथकुटुंबिना रथनिर्वाहकेण सारथिना ॥ २० ॥ रौद्रं क्रूरं खेदं वर्जयता परिहरता ॥२१॥ स्वेच्छया निमित्तं विना मया यदिदं कृतं तद्भर्तृस्नेहपरीतेन तद्व्याप्तेनैव कृतम् ॥२२॥ यथा त्वं तत्कार्यस्वरूपं वक्ष्यसि तत्करिष्यामि गतानृण्येन दत्तऋणत्रयेण क्वापि मनो न बध्नतेत्यर्थः॥२३॥२४॥ ॥ २५ ॥ २६ ॥ महारथ इति कर्मधारयः । रणाग्रतः रणेऽग्रत संमुख इत्यर्थः । रणेग्रत इति पाठांतरम् ॥ २७ ॥ सँरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणातिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचाधिकशततमः सर्गः ॥ १०५ ॥ अथ रावणवैभवं दृष्ट्वा त्रस्तमिव भगवंतं रामं भगवद्ब्रह्मदत्तरावणवैभवनिवर्तनस्य भगवद्ब्रह्मानुग्रहैकसाध्यत्वात्तदनुग्रहासिद्धये विद्यामंडलऋषिरगस्त्यो ब्रह्मरूपादित्यहृदयदेवता

कत्वादादित्यहृदयाख्यं स्तोत्रमुपदिशति स्मेत्याह ततो युद्धेत्यादि । अस्य स्तोत्रस्यागस्त्य ऋषिरनुष्टुप्छंदः आदित्यहृदयभूतो भगवान् ब्रह्मा देवता निरस्ताशेषविघ्नतया ब्रह्मविद्यासिद्धौ सर्वत्रजयसिद्धौ च विनियोगः । अस्य षडंगं प्रणवेन रश्मिमते नम इत्यनेन वा गायत्र्या षडंगमित्यन्ये । ततो युद्धेत्यादित्वरस्वेत्यंतं स्तोत्रम् एवं भयनाटनं तन्मूलकमगस्त्यादुपदेशग्रहणं लोकानुग्रहाय लोकस्य जयसाधनवस्तुप्रकाशनार्थमिति तत्त्वं युद्धपरिश्रांतमनेकाहोरात्रयुद्धपरिश्रांतं तमिव स्थितं समरे समरविषये चिंतया प्रवलोयमारिः कथं जेतव्य इति चिंतया युक्तं सारथिनापवाहितं रावणं प्रातर्युद्धायाग्रतो रामसंमुखे समुपस्थितं दृष्ट्वा स्थितं धनुरवष्टभ्य स्थितं रामम् ॥ १ ॥ दैवतैः समागम्य मिलित्वा रणं द्रष्टुमभ्यागतो भगवानगस्त्योंतर्यामिभगवत्प्रेरणया देवनियोगतश्चोक्तविशेषणं राममुपागम्योद्यति भास्करेब्रवीत् ॥ २ ॥ किमब्रवीत्तदाह राम रामेत्यादि । येन स्तोत्रेण सर्वानरीन्विजेष्यासि तद्गुह्यं रहस्यं सनातनं प्रवाहानादिभूतम् अनेन स्वकल्पितत्वनिरासः शृणु ॥ ३ ॥ आदित्यहृदयं य एषोंतरादित्ये हिरण्मय इत्याद्यशेषश्रुतिप्रसिद्धं ब्रह्म तद्देवताकत्वात्तदाख्यं स्तोत्रं पुण्यं पुण्यजनकम् अनेन पारत्रिकं फलमुक्तं सर्वशत्रुविनाशनं जयावहमित्यैहिकं फलं जपं जप्यत इति जपं स्तोत्रं परमफलमाह अक्षयं परमं शिवम् अपवर्गरूपं तत्प्रदमित्यर्थः । कदा तत्राह नित्यं यदि नित्यवत्फलनिरपेक्षं तदा तत्फलमिति भावः । जपेन्नित्यमिति पाठांतरम् ॥ ४ ॥ ऐहिकानि फलांतराणि सर्वमंगलमांगल्यं सर्वमंगलरूपाणामपि मंगलप्रदम् ॥ ५ ॥ रश्मिमंतं पंचेंद्रियद्वारानेकज्ञानरश्मिमन्तं ज्योतीरूपरश्मिमंतं च रश्मिशब्दो भक्तवाची तद्वंतं तन्मध्ये भासमानमित्यर्थं तीर्थं आह रश्मिमते नमः१समुद्यंतं लोकान् क्रियासु प्रवर्तयंतम् उदयगिरावुदयं प्राप्तं च समुद्यते नमः २ एवं नमोंता

दैवतैश्चसमागम्यद्रष्टुमभ्यागतोरणम् ॥ उपगम्याब्रवीद्राममगस्त्योभगवांस्तदा ॥२॥ रामरामहाबाहोशृणुगुह्यंसनातनम् ॥ येनसर्वानरीन्वत्ससमरे विजयिष्यसे ॥३॥ आदित्यहृदयंपुण्यंसर्वशत्रुविनाशनम् ॥ जयावहंजपंनित्यमक्षयंपरमंशिवम् ॥४॥ सर्वमंगलमांगल्यंसर्वपापप्रणाशनम् ॥ चिंताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥ रश्मिमंतंसमुद्यंतंदेवासुरनमस्कृतम् ॥ पूजयस्वविवस्वंतंभास्करंभुवनेश्वरम् ॥ ६ ॥ सर्वदेवात्मकोह्येषतेजस्वीरश्मिभावनः ॥ एषदेवासुरगणाँल्लोकान्पातिगभस्तिभिः ॥७॥ एषब्रह्माचविष्णुश्चशिवःस्कंदःप्रजापतिः ॥ महेंद्रोधनदःकालोयमःसोमोह्यपांपतिः॥८॥

एतेऽस्य नमस्कारार्चनमंत्रा इत्युच्यंते देवैः सात्त्विकवृत्तिभिः असुरैः राजसतामसवृत्तिभिश्च नमस्कृतं साक्षिचैतन्यत्वेन नित्यमुपजीवितम् इंद्रविरोचनादीनामविशेषादुपास्यं च देवासुरनमस्कृताय नमः ३ विवस्वान्विशेषेण वसुमान् पृषोदरादित्वादुकारलोपः वसुनिधिरित्यर्थः । सकलव्यवहाराधिष्ठानत्वाद्वसुमंतं स्वोदयेन सकलव्यवहारप्रवर्तकत्वाच्च वसुमत्त्वं विवस्वते नमः ४ भास्करं ज्ञानज्ञेयभासः करोति इति भास्करम् । तस्य भासा सर्वमिदं विभातीति श्रुतेः । भास्कराय नमः ५ भुवनानां मूलादिब्रह्मरंध्रांतयोगाधारभूमीनामीश्वरमधिष्ठातारं भूराद्यशेषभुवनानां प्रकाशकतयेश्वरं च भुवनेश्वराय नमः ६ ॥ ६ ॥ रश्मिमदादिशब्दप्रतिपाद्यस्य ब्रह्मत्वं स्फुटयन्नाह सर्वेति । हि यस्मात्सर्वदेवोपादानकारणत्वादेष सर्वदेवात्मकः इद्रं सर्वात्मकत्वोपलक्षणं सर्वदेवात्मकाय नमः ७ तेजस्वी सर्वभासनसमर्थतेजोयुक्तः तेजस्विने नमः ८ रश्मिभिर्ज्ञानरश्मिभिः सर्वं वस्तुजातं भावयति सत्तास्फूर्तिमत्संपादयति सः रश्मिभिर्योगिनो भावयति ब्रह्मलोकं प्रापयतीत्यर्थ इत्यन्ये । रश्मिभावनाय नमः ९ एष एतन्मंडलवर्ती देवासुरगणांस्तेषां लोकांश्च गभस्तिभिर्ज्ञानज्ञेयरश्मिभिः पाति । याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति इति श्रुतेर्वृष्टिद्वारा ऽन्नहविरादिदानेन देवादिगणाल्लोकान्मनुष्यादींश्च यः पाति देवासुरगणलोकपालाय नमः१० अत्रैष पातीत्युक्त्या सूर्यस्य पुरतः स्थितत्वनिर्देशेन सूर्योदयकाले एतत्स्तोत्रदानमिति लभ्यते ॥ ७ ॥ एषः एषोंतरादित्ये हिरण्मयः पुरुष इति श्रुतेर्योगजनितसाक्षात्कारविषयः पुरो दृश्यमानश्च ब्रह्मा निस्तुलैश्वर्यविद्यास्रष्टृत्वशक्तिः ब्रह्मणे नमः ११ विष्णुः स्वसृष्टपरिपालनप्रयोजनकतया परिगृहीतविष्णुमूर्तिर्नारायणः विष्णवे नमः १२ शिवोऽपरिमितकल्याणपुण्यस्वभावः मृगपरश्वादिचिह्नो भगवान्महादेवश्च शिवाय नमः १३ जीवज्योतिर्द्वारा सर्वाणींद्रियाणि स्कंदतीति

स्कंदः भगवान्मयूरवाहनश्च स्कंदाय नमः १४ प्रजानां जन्यवस्तूनां स्वामी स्वशक्तिद्वारा सर्वोत्पादनत्वात् दशयज्ञायुधचिह्नो भगवान् यज्ञेश्वरश्च प्रजापतये नमः १५ महेंद्रः इदि परमैश्वर्ये ग्रन् सर्वधातुभ्यः । परमैश्वर्यकाष्ठां प्राप्तः वज्रहस्तत्वादिचिह्नो देवराजश्च महेंद्राय नमः १६ धनं चैतन्यं सर्वानुग्रहाय सर्वस्यांतर्ददाति स्थापयतीति धनदः अन्नादो वसुदान इत्युक्तसकलफलदः कुबेरश्च धनदाय नमः १७ कालः बुद्धिवृत्तिजातमपरोक्षतया कलयतीति कालः मंडलस्पंदानुमेयः क्रियापरिच्छेदकश्च कालः कालाय नमः १८ यमयतीति यमः सर्वांतर्यामी । यमो वैवस्वतो राजा यस्तवैष हृदिस्थितः तेन चेदविवादस्ते मा गंगां मा कुरून्गमः । अविवादो भेदाभाव इति मनुः । पितृपतिश्च यमाय नमः १९ सोमः उमा उः केवलनिपातः मा प्रभा उ सर्वदा प्रभया सहितः सोमो भगवानर्धनारीश्वरश्च । सोमः पवते जनिता मतीनामिति श्रुतेः । सर्वकारणं सोमशब्दवाच्यम् उमया शक्त्या प्रकृत्याख्यया सहित इत्यर्थमन्ये । सोमाय नमः २० आपः सत्त्वं चित्तात्मकं तस्यांतःकरणोपाधिवशतोनंतस्य पतिः वरुणश्च अपांपतये नमः २१ ॥ ८ ॥ पितरो बीजप्रदास्तद्रूपोयं सर्वेषां बीजप्रदः । तासां ब्रह्ममहद्योनिरहंबीजप्रदः पितेत्युक्तेः । बहुत्वं पूजार्थं कव्यवाहनादयः पितृदेवताश्च पितृदेवतायै नमः २२ वसुरहमर्थः अष्टौ वसवश्च वसुमूर्तये नमः २३ साध्याः प्राधान्येन योगिनः प्रसाधनीयत्वात्साध्याः देवगणविशेषाश्च साध्याः साध्यमूर्तये नमः २४ अश्विनौ अश्नोतेर्वन्प्रत्ययांतोऽश्वशब्दः सर्वव्याप्तौ देवभिषजौ च अश्विमूर्तये नमः २५ मरुत् मृङ् प्राणत्यागेऽस्य धातोरुतिप्रत्ययांतं रूपम् अनर्थमारक एकोनपंचाशत्संख्यमरुद्गणश्च मरुन्मूर्तये नमः २६ मनुत इति मनुः सर्वज्ञ आदिराजश्च मनवे नमः २७ वातीतिवायुः वा गतिगंधनयोः गतिर्ज्ञानं ज्ञापनं च ज्ञाता ज्ञापकश्च पंचवृत्तिः प्राणश्च वायुमूर्तये नमः २८ वहेर्निः वह्निः स्वे महिम्नि स्वयं प्रतिष्ठितो भूत्वा स्वस्मिन्सर्वं सारं वहतीति वह्निः अग्निश्च वह्नये नमः २९ प्रजायंते जीवात्मनेति प्रजाः प्रकृष्टजानिमंतो विभू

पितरोवसवःसाध्याअश्विनौमरुतोमनुः ॥ वायुर्वह्निःप्रजाःप्राणऋतुकर्ताप्रभाकरः ॥ ९ ॥ आदित्यःसवितासूर्यःखगःपूषागभस्तिमान् ॥
सुवर्णसदृशोभानुर्हिरण्यरेतादिवाकरः ॥१०॥ हरिदश्वःसहस्रार्चिस्सप्तसप्तिर्मरीचिमान् ॥ तिमिरोन्मथनःशंभुस्त्वष्टामार्तंडकोंशुमान् ॥११॥

त्यध्यायोक्ता देवाश्च प्रजारूपाय नमः ३० प्राणयतीति प्राणः । न प्राणेन नापानेन मर्त्यो जीवति कश्च न इतरेणतु जीवंति यस्मिन्नेता उपाश्रिता इति श्रुतेः । प्राणयात्राप्रवर्तकः प्राणः प्राणाय नमः ३१ ऋतूनां ज्ञानानां कर्ता उपादानं वसंताद्यृतुकर्ता संवत्सरात्मा कालश्च ऋतुकर्त्रे नमः ३२ ऋतुः सुदर्शनः काल इति सहस्रनामसु पाठात् ऋतुरितिपाठे भिन्नं पदमिति तीर्थः । कर्ता सकलजगत्कर्ता प्रभाकरो भास्करवत् शब्दस्याप्यर्थतादात्म्येन देवता स्वरूपत्वाद्भास्करप्रभाकरयोः शब्दयोः शब्दभेदेन मूर्त्यंतरत्वं ज्ञेयं प्रभाकराय नमः ३३ ॥ ९ ॥ यस्मात्सर्वमादत्ते एतस्मादादित्य इत्यौपनिषद्व्युत्पत्त्याऽशेषविषयभोक्ता आदित्यः मंडलादित्यो मंडलाभिमानी अदितिपुत्रश्च आदित्याय नमः ३४ सविता षूङ् प्राणिप्रसवे अंतःकरणोपाधिनाऽपरिमितचिदात्मवर्गस्रष्टा रश्मिभिः पर्जन्यादिप्रवृत्त्या तत्तदन्नादिस्रष्टा सवित्रे नमः ३५ सर्तेः सूर्यः सर्वगः । सूर्य एकाकी चरतीति श्रुतेः । कर्मप्रेरको वा सूर्याय नमः ३६ खं परमाकाशं हृदयाकाशं च गच्छतीति खगः खगाय नमः ३७ पुष्णातीति पूषा स्थितिकर्ता पूष्णे नमः ३८ गभस्तिमान् रश्मिवत्समानार्थः शब्दभेदान्मूर्तिभेदः । यद्वा गभस्तिभिः सर्वव्यापिनी लक्ष्मीरतद्वान् । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तमेति । पराशरस्मृतेः गभस्तिमते नमः ३९ सुवर्णसदृशः आत्मलाभान्न परं विद्यत इति श्रुतेः सुवर्णसदृशनिधिलाभतुल्यलाभः । आ प्रणखात्सर्व एव सुवर्ण इति श्रुतेः । सुवर्णसदृशमूर्तिश्च सुवर्णसदृशाय नमः ४० सुपर्णस्तपन इतिपाठे । द्वासुपर्णा इति श्रुतेः । सुपर्णत्वं ब्रह्मणः तपतीति तपन इति तीर्थः । भानुर्भासकः भानवे नमः४१ हिरण्यं तेजः प्रज्ञारूपं तद्रेतो जगदुत्पत्तिबीजं यस्य सः यद्वा हिरण्यं रेतोंडोत्पादकं द्रव्यं यस्य सः यद्वा हिरण्यं तत्साधनं पारद एव रेतो यस्येत्यर्थः । हिरण्यरेतसे नमः ४२ अक्षराधिक्यमार्षं दिवेत्यव्ययं प्रकाशवाचकं प्रकाशं करोतीति दिवाकरः दिवाकराय नमः ४३ ॥१०॥ हरितो दिशोऽश्नोति व्याप्नोतीति हरिदश्वः श्यामवर्णाश्वश्च हरिदश्वाय नमः ४४

सहस्राण्यनंतान्यर्चींषि ज्ञानानि यस्य सः यद्वा सहस्रसंख्याकानि अर्चींषि रश्मयो यस्य सहस्रार्चिषे नमः ४५ सप्तसप्तिः । सप्तशीर्षण्याः प्राणा इंद्रियाणि द्वे चक्षुषी द्वे श्रोत्रे द्वे नासिके वाक्चैकेति सप्त प्राणाः प्रभवंति तस्मादिति श्रुतेः सप्तप्राणानां सप्तिः प्रवृत्तिर्यतः सः सप्तसंख्याश्वश्च । हयसैंधवसप्तय इति कोशः । सप्तसप्तये नमः ४६ मरीचिमच्छब्दो गभस्तिमच्छब्देन व्याख्यातः मरीचिमते नमः ४७ अज्ञानल क्षणं तिमिरमुन्मथातीति तिमिरोन्मथनः अंधकारनाशनश्च । तिमिरोन्मथनाय नमः ४८ शमपवर्गादिरूपं सुखमस्माद्भवतीति शंभुः शंभवे नमः ४९ त्वक्षति तनू करोति भक्तानामुत्पत्तिप्रलयरूपानर्थप्रवाहदुःख मिति त्वष्टा देववर्धकिश्च त्वष्ट्रे नमः ५० मृतमचेतनमंडं ब्रह्मांडं जीवयतीति मार्तंडः स एव मार्तंडकः मार्तण्डकाय नमः ५१ अंशुमान्मरीचिमत्पर्यायः अंशुमान्सर्वव्यापकः अशूव्याप्ताविति धातुः । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेरिति तीर्थः अंशुमते नमः ५२ ॥ ११ ॥ हिरण्यगर्भे । सकलजगदुत्पत्तिस्थितिलयकर्ता ब्रह्मविष्णुरुद्ररूपो हिरण्यगर्भः भगवते हिरण्यगर्भाय नम इति द्वादशाक्षरी आदित्यहृदयरहस्यमिति कतकः ५३ शिशिरः शीतः सुखस्वभावः शिशिराय नमः ५४ तपनः तप ऐश्वर्ये स्वभावत एव सर्वेश्वर इत्यर्थः । तपनाय नमः ५५ अहस्करो दिवाकरपर्यायः अहस्कराय नमः ५६ रौति उपदिशति हिरण्यगर्भादिभ्य इति रविः । यो वेदांश्चप्रहिणोति तस्मा इति श्रुतेः । रवये नमः ५७ अग्निः कालाग्निरुद्रो गर्भे यस्य सोऽग्निगर्भः नारायणाद्रुद्रो जायतेति श्रुतेः अग्निगर्भाय नमः ५८ दिति र्नाशो न विद्यते यस्याः सा अदितिर्ब्रह्मविद्या तस्याः पुत्रस्तल्लभ्यत्वात् आदित्यश्च अदितेः पुत्राय नमः ५९ शं च खं च शंखः परमानंदगगनात्मेत्यर्थः शंखाय नमः ६० शिशिरं जाड्यं मंदबुद्धित्वं नाशय तीति शिशिरनाशनः हिमनाशकश्च शिशिरनाशनाय नमः ६१ ॥ १२ ॥ व्योमनाथः आकाशकर्ता । आत्मन आकाशः संभूत इति श्रुतेः व्योमनाथाय नमः ६२ तमोभेदी तिमिरोन्मथनपर्यायः तमोभेदिने

हिरण्यगर्भःशिशिरस्तपनोहस्करोरविः ॥ अग्निगर्भोदितेःपुत्रःशंखःशिशिरनाशनः ॥ १२ ॥ व्योमनाथस्तमोभेदीऋग्यजुःसामपारगः ॥ घनवृ ष्टिरपांमित्रोविंध्यवीथीप्लवंगमः ॥ १३॥ आतपीमंडलीमृत्युःपिंगलःसर्वतापनः ॥ कविर्विश्वोमहातेजारक्तःसर्वभवोद्भवः ॥१४॥ नक्षत्रग्रहताराणाम धिपोविश्वभावनः॥ तेजसामपितेजस्वीद्वादशात्मन्नमोस्तुते॥१५॥ नमःपूर्वायगिरयेपश्चिमायाद्रयेनमः ॥ ज्योतिर्गणानांपतयेदिनाधिपतयेनमः॥१६॥

नमः ६३ ऋगादीनां पारस्तत्तदुपनिषत्तद्गतस्तदेकप्रतिपाद्यः ऋग्यजुःसामपारगाय नमः ६४ घनाऽधिका वृष्टिः सकलकर्मफलदानरूपा यस्मात्सः घना संपूर्णा वृष्टिर्यस्मादिति च घनवृष्टये नमः ६५ अपां सात्वि कानां मित्रश्चैतन्यदानेनोपकर्ताऽपां मित्रः जलानामुत्पादकश्च अपां मित्राय नमः ६६ विंध्यं गहनं दुर्गं एवं च दुर्गे सौषुम्ने ब्रह्मनाडीमार्गे प्लवंगमः शीघ्रगंता किं च विंध्यवीथी सूर्यमार्गस्तेन शीघ्रगंता च विंध्य वीथीप्लवंगमाय नमः ६७ ॥ १३ ॥ आतपी आसमंतात्तपो जगन्निर्माणसंकल्पः सोस्यास्तीत्यातपी तप आलोचने आतपिने नमः ६८ मंडलं किरणसमूहस्तद्वान् यद्वा मंड्यतेऽनेनेति मंडलं कौस्तुभादि तद्वान् मंडलिने नमः ६९ मृत्युः सर्वमृत्युसंपादकः । अमुमाहुः परं मृत्युमिति श्रुतेः । मृत्यवे नमः ७० पिंगलः पिंगलनाडी प्रवर्तनेन कर्ममार्गप्रवर्तक इत्यर्थः। पीतवर्णश्च पिंगलाय नमः ७१ सर्वतापनः सर्वसंहर्ता तप दाहे सर्वतापनाय नमः ७२ कविः सर्वज्ञः कवयिता च कवये नमः ७३ विश्वो विश्वरूपः विश्वमेवेदं पुरुष इति श्रुतेः । विश्वस्मै नमः ७४ महत्तेजः स्वरूपं यस्य सः महातेजसे नमः ७५ रक्तः पालनेन सर्वरंजकः रक्तवर्णश्च रक्ताय नमः ७६ सर्वभवोद्भवः सर्वकार्यवर्गोत्पत्तिहेतुः सर्वभवोद्भवाय नमः ७७ ॥ १४ ॥ नक्षत्रादीनामंतर्यामितयाऽधिपः प्रवर्तकः नक्षत्रग्रहताराधिपाय नमः ७८ विश्वभावनः सर्वो द्भवपर्यायः विश्वभावनाय नमः ७९ तेजसामग्न्यादितेजसामपि सत्ता स्फूर्तिसाधकश्चिन्मयतेजोरूपः । येन सूर्यस्तपति तेजसेद्ध इति श्रुतेः । तेजसामपि तेजस्विने नमः ८० द्वादशात्मन् द्वादशमासस्वरूप मागनुसंतसर्वमूर्तिरूपाय तुभ्यं नम इत्यर्थः । द्वादशात्मने नमः ॥ ८१ ॥ १५ ॥ पूर्वाय गिरये तदंतर्यामिणे इत्यर्थः । पूर्वाय गिरये नमः ८२ एवं पश्चिमायाद्रये इति पश्चिमायाद्रये नमः ८३ ज्योतिर्गणानां पतये

नक्षत्रग्रहताराधिपपर्यायः ज्योतिर्गणानां पतये नमः ८४ दिनाधिपतये इति दिवाकरपर्यायः दिनाधिपतये नमः ८५ ॥ १६ ॥ जयाय ब्रह्मलोकांतसकलजयप्रदाय जयाख्यब्रह्मद्वारपालमूर्तये च जयमूर्तये नमः ८६ जयभद्राय ब्रह्मलोकादिजयप्राप्यं यद्भद्रं भूमानंदस्तदात्मकाय जयभद्राख्यद्वितीयद्वारपालमूर्तये च जयभद्राय नमः ८७ इमावेव शापवशतोऽवतीर्णौ रावणकुम्भकर्णौ हर्यश्वो हरिदश्वपर्यायः हर्यश्वाय नमः ८८ सहस्रांशो इति सहस्रार्चिःपर्यायः सहस्रमनंता जीवा अंशवोंशा यस्य सः । ममैवांशो जीवलोके जीवभूत इति स्मृतेः सहस्रांशवे नमः ८९ आदरातिशयाय नमः शब्दस्य द्विरुक्तिः आदित्येतिनाम्नः प्राधान्यबोधनाय तस्य द्विरुक्तिः आदित्याय नमः ९० ॥ १७ ॥ उग्राय इन्द्रियनिग्राहकाय रुद्ररूपाय च उग्राय नमः ९१ वीराय इंद्रियप्रवर्तने स्वतंत्राय त्रिपुरसंहारक्षमपराक्रमयुताय च वीराय नमः ९२ सारं प्रणवस्तत्प्रतिपाद्याय सारंगाय नमः ९३ पद्मं हृदयकमलं बाह्यं च पद्मं तद्बोधकाय पद्मप्रबोधाय नमः ९४ प्रचंडाय सर्वसमर्थाय अतिकोपनाय च प्रचंडाय नमः ९५ ॥ १८ ॥ ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणामीशाय स्वामिने । सृष्टिस्थित्यंतकरणीं ब्रह्मविष्णुशिवात्मिकाम् ॥ स संज्ञां याति भगवानेक एव जनार्दन इति स्मृतेः । मातरादौ ब्रह्माच्युतेशानश्च ब्रह्मेशानाच्युतेशाय नमः ९६ सूरः सूर्यपर्यायः सूराय नमः ९७ आदित्यस्यांतरं वर्चो ज्ञानं तद्रूपाय आदित्यवर्चसे नमः ९८ भास्वते चिद्‌चित्प्रकाशवते भास्वते नमः ९९ सर्वभक्षाय सर्वं विषयजातं भक्षयतीति सर्वभक्षस्तस्मै । यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन इति श्रुतेः । सर्वभाक्षाय नमः १०० रुदुःखं तन्मूलौ रागद्वेषौ तन्मूलाज्ञानं च विद्रावयतीति रुद्रस्तस्येदं रौद्रम् अज्ञानसंहारसमर्थज्ञानाकारायेत्यर्थः । रौद्रवपुषे नमः १०१ ॥ १९ ॥ तमोघ्नहिमघ्नौ

जयायजयभद्रायहर्यश्वायनमोनमः ॥ नमोनमःसहस्रांशोआदित्यायनमोनमः ॥१७॥ नमउग्रायवीरायसारंगायनमोनमः ॥ नमःपद्मप्रबोधायप्रचंडायनमोस्तुते ॥ १८॥ ब्रह्मेशानाच्युतेशायसूरायादित्यवर्चसे ॥ भास्वतेसर्वभक्षायरौद्रायवपुषेनमः ॥१९॥ तमोघ्नायहिमघ्नायशत्रुघ्नायामितात्मने॥ कृतघ्नघ्नायदेवायज्योतिषांपतयेनमः ॥२०॥ तप्तचामीकराभायहरयेविश्वकर्मणे ॥ नमस्तमोभिनिघ्नायरुचयेलोकसाक्षिणे ॥ २१ ॥ नाशयत्येषवैभूतं तमेवसृजतिप्रभुः ॥ पायत्येषतपत्येषवर्षत्येषगभस्तिभिः ॥२२॥ एषसुप्तेषुजागर्तिभूतेषुपरिनिष्ठितः ॥ एषचैवाग्निहोत्रंचफलंचैवाग्निहोत्रिणाम्॥२३॥

तिमिरोन्मथनशिशिरनाशनपर्यायौ तमोघ्नाय नमः १०२ हिमघ्नाय नमः १०३ शत्रुर्देहाहंभावः निजतत्त्वभगवदनुसंधानजसौख्येन तस्य शातनात्तस्य हंता रिपुऋणगदादिहंता च शत्रुघ्नाय नमः १०४ अमितात्मने कालदेशपरिच्छेदरहितस्वरूपाय अमितात्मने नमः १०५ कृतघ्नघ्नाय कृतं चेतनत्वलक्षणं भगवत्कृतमुपकारं घ्नंति विस्मरंति ते कृतघ्ना भगवद्विमुखा अज्ञाः संसारिणस्तान्संसारानर्थप्रापणेन हंति तादृशाय कृतघ्नघ्नाय नमः १०६ देवाय चिदानंदज्योतिःस्वरूपाय अजागतकृत्यस्य निजोदयेन प्रवर्तनशीलश्च देवाय नमः १०७ ज्योतिषां पतये इति ज्योतिर्गणानां पतये इत्येतत्पर्यायः ज्योतिषां पतये नमः १०८ ॥ २० ॥ तप्तचामीकराभाय सुवर्णसदृशायेत्येतत्पर्यायः तप्तचामीकराभाय नमः १०९ हरत्यशेषमज्ञानं तत्कार्यं चेति हरिस्तस्मै हरये नमः ११० विश्वं सर्वं कर्म यस्य तस्मै । सर्वकर्मा सर्वकाम इति स्मृतेः । विश्वकर्मणे नमः १११ तमोभिनिघ्नस्तमोनिघ्नपर्यायः तमोभिनिघ्नाय नमः ११२ रुचये चिल्लक्षणदीप्तिमते रुचये नमः ११३ लोक्यत इति लोको दृश्यप्रपंचस्तत्साक्षिणे साक्षात्तद्द्रष्ट्रे लोकानां पापपुण्यकर्मसाक्षिणे च लोकसाक्षिणे नमः ११४ ॥ २१ ॥ एष इत्युक्तार्थः भूतं प्रपंचं प्रतिसुप्ति नाशयति भूतं प्राणिजातं तत्तदायुरंते नाशयति स्वदिनांते च नाशयति तेन भूतनाशाय नमः ११५ तमेव उक्तमेव उक्तभूतं जागरादौ अहरादौ च सृजति भूतस्रष्ट्रे नमः ११६ प्रभुः प्रकर्षेण स्वशक्तिवैभवेन सकलप्रपंचात्मना भवतीति प्रभुः सकलप्रपंचस्य साक्षादधिष्ठाता च प्रभवे नमः ११७ पायति शोषयति गभस्तिभिः पायते नमः ११८ तपति नाशयति तपते नमः ११९ वर्षति सृजति वर्षते नमः १२० ॥ २२ ॥ एष करणेषु सुप्तेषु उपरतेषु स्वयमनुपरतशक्तिनित्यचिद्रूपो जागर्ति निजमंडला दर्शनतः

प्राणिषु सुप्तेषु तदगोचरदेशस्थे स्वमंडले जागर्ति च सुप्तेषु जाग्रते नमः १२१ भूतेषु परिनिष्ठितः अंतर्यामितया स्थितः भूतेषु परिनिष्ठिताय नमः १२२ अग्नयः पंचेंद्रियलक्षणाः पंचाग्नयस्तेषु होत्रं होमस्तत्तद्विषयानुभवरूपः अग्निहोत्राय नमः १२३ अग्निहोत्रिणां बाह्याभ्यंतराग्निहोत्रानुष्ठातॄणां प्राप्यं यत्स्वर्गापवर्गरूपं फलं तत्प्रदश्च अग्निहोत्रिणां फलदाय नमः १२४ ॥ २३ ॥ देवाः क्रतुदेवा अष्टौ वसव एकादश रुद्रा इत्यादि क्रमेणोपदिष्टास्त्रयस्त्रिंशद्देवाः क्रतवः सोमाद्यश्वमेधांताः क्रतुफलं श्रुत्युक्तं स्वर्गादि । किं च सर्वेषु लोकेषु प्राणिषु यानि कृत्यानि क्रियास्तत्साधनानि च ऋत्विग्यजमानसमिदाज्यपश्वादीनि तैर्निजभक्तद्विजानां संघटने परमप्रभुः परमसमर्थः परमसमर्थाय भगवते ब्रह्मणे नमः १२५ एवं पंचविंशत्युत्तरशतसंख्या भगवत्पूजारहस्यनाममंत्रा इति कतकः । सर्वदेवात्मको ह्येष इत्यारभ्य लोकसाक्षिणे इत्यंताष्टोत्तरशतसंख्या एवादित्यहृदयस्तोत्रनाममंत्रा इति तीर्थः ॥ २४ ॥ एवं कथितस्य स्तोत्रस्य फलमाह एनमिति । आदित्यहृदयस्तवं कीर्तयन् आपदादिषु कश्चिदपि द्विजो नावसीदति न दुःखनिमग्नो भवति यद्वैनमादित्यहृदयार्थभूतं सूर्यमापदादिनिमित्तेषु उक्तैर्नाममंत्रैर्विशिष्य कीर्तयन् स्तुवन्नावसीदति अत्रापदकालमृत्युः कृच्छ्रं

देवाश्चक्रतवश्चैवक्रतूनांफलमेवच ॥ यानिकृत्यानिलोकेषुसर्वेषुपरमप्रभुः ॥ २४ ॥ एनमापत्सुकृच्छ्रेषुकांतारेषुभयेषुच ॥ कीर्तयन्पुरुषःकश्चिन्नावसीदतिराघव ॥ २५ ॥ पूजयस्वैनमेकाग्रोदेवदेवंजगत्पतिम् ॥ एतत्त्रिगुणितंजप्त्वायुद्धेषुविजयिष्यति ॥ २६ ॥ अस्मिन्क्षणेमहाबाहोरावणंत्वंजहिष्यसि ॥ एवमुक्त्वाततोगस्त्योजगामसयथागतम् ॥ २७॥ एतच्छ्रुत्वामहातेजानष्टशोकोभवत्तदा ॥ धारयामाससुप्रीतोराघवःप्रयतात्मवान् ॥ ॥ २८॥ आदित्यंप्रेक्ष्यजप्त्वेदंपरंहर्षमवाप्तवान् ॥ त्रिराचम्यशुचिर्भूत्वाधनुरादायवीर्यवान् ॥ २९ ॥ रावणंप्रेक्ष्यहृष्टात्माजयार्थंसमुपागमत् ॥ सर्वयत्नेनमहतावृतस्तस्यवधेऽभवत् ॥ ३० ॥ अथरविरवदन्निरीक्ष्यरामंमुदितमनाःपरमंप्रहृष्यमाणः ॥ निशिचरपतिसंक्षयंविदित्वासुरगणमध्यगतोवचस्त्वरेति ॥ ३१ ॥ इत्यार्षे श्रीमद्रा० वा० आ० यु० षडुत्तरशततमःसर्गः ॥ १०६ ॥ सारथिःसरथंहृष्टःपरसैन्यप्रधर्षणम् ॥ गंधर्वनगराकारंसमुच्छ्रितपताकिनम् ॥ १ ॥ युक्तंपरमसंपन्नैर्वाजिभिर्हेममालिभिः ॥ युद्धोपकरणैःपूर्णंपताकाध्वजमालिनम् ॥ २ ॥ ग्रसंतमिवचाकाशंनादयंतंवसुंधराम् ॥ प्रणाशंपरसैन्यानांस्वसैन्यस्यप्रहर्षणम् ॥ ३ ॥ रावणस्यरथंक्षिप्रंचोदयामाससारथिः ॥ तमापतंतंसहसास्वनवंतंमहाध्वजम् ॥ ४ ॥

ज्वरादिदुःखम् । भयं चोरादिनिमित्तम् ॥ २५ ॥ यद्देवमतः पूजयस्वैनमादित्यहृदयार्थं देवदेवं देवानां ब्रह्मविष्णुरुद्राणामपि देवमुपास्यं जगतां जनिमृतिधर्मिणां भूरादिलोकानां संसारमात्रस्य च पतिम् एतदादित्यहृदयं स्तोत्रं त्रिगुणितं संजातत्रिगुणं यथा तथा जप्त्वा विजयिष्यति विनेष्यति रिपून् जन इति शेषः ॥ २६ ॥ २७ ॥ नष्टशोको नष्टो रावणविषयचिंतारूपः शोको यस्य सः ॥ २८ ॥ इदं शीघ्रसिद्धिकरं स्तोत्रं जप्त्वा हृष्टात्मा प्रातर्युद्धायागतं रावणं प्रेक्ष्य जयार्थं मनसा भगवंतमगमत् ध्यातवान् ॥ २९ ॥ ३० ॥ अथ रविः रामं निरीक्ष्य निशाचरपतिसंक्षयं तत्कालं विदित्वा स्वलीलामूर्त्या सुरगणमध्यगतः सन्साक्षात्त्वरेति वचोऽवदत् ॥ ३१ ॥ केलमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षडुत्तरशततमः सर्गः ॥ १०६ ॥ कतकरी० ॥ ९८ ॥ स सारथिः रावणस्य सारथिर्हृष्टः सद्धुच्यमानगुणं रथं चोदयामासेत्यन्वयः । गंधर्वनगराकारं तद्वदाश्चर्यदर्शनम् ॥ १ ॥ परमसंपन्नैः परमैः रथवहनोचिताश्वगुणैर्जवादिभिः संपन्नैः पताकाध्वजानां मालाऽस्मिन्नस्तिति तम् अनेन ध्वजबाहुल्यमुक्तम् । समुच्छ्रितपताकिनमित्यनेन च तदौन्नत्यमुक्तम् ॥ २ ॥ प्रणाशं प्रणाशकरम् ॥ ३ ॥ द्वितीयरथसारथिशब्दौ अनेकविशेषणव्यवधानात्पूर्वोक्ताविस्मरणार्थौ तदनुवादकावेव ॥ ४ ॥

॥५॥ तडित्पताकागहनं तडित्तुल्यपताकाभिर्गहनं संकीर्णम् । दर्शितेंद्रायुधप्रभं दर्शिता इंद्रायुधस्य प्रभा येन तम् । दर्शितेंद्रायुधायुधमितिपाठे दर्शितानींद्रायुधेन सदृशान्यायुधानि येन तमित्यर्थः ॥ ६ ॥ ७ ॥ वज्राभिमृष्टस्य वज्राभिहतस्य दीर्यतो गिरेः स्वनस्य सदृशस्वनम् । बालचंद्रवन्नतम् ॥ ८ ॥ ९ ॥ यथानुभूयमानप्रकारेणापसव्यं प्रदक्षिणं महता रथवेगेन पतताऽनेन रावणेन समरे आत्मानं मां हंतुं मतिः कृता प्रथमप्रादक्षिण्येन रथसंचारलक्षणभूमिभिंत्तसंपादनेनेति शेषः ॥ १० ॥ तत्तस्मादप्रमादं सावधानत्वम् आतिष्ठासनस्थैर्येण रिपो रावणस्य रथं प्रति प्रत्युद्गच्छ प्रादक्षिण्येनैवेति शेषः ॥ ११ ॥ अविक्लवादिचतुर्गुणयुक्तं यथा तथा द्रुतं रथं प्रचोदय अविक्लवत्वमभीरुत्वम् असंभ्रांतत्वं रणक्षोभादक्षुभितचित्तत्वम् अव्यग्रमश्वीयहृदयेक्षणं यत्र रश्मिसंचारनियतं रश्मिसंचारे नैपुण्यं तत्तत्कालानुगुण्येन संयमनमोचनव्यवस्थावत्त्वम् ॥ १२ ॥ यस्मात्पुरंदररथोचितस्त्वं यद्यपि कामं न समाधेयो न शिक्षणीयः अथापि युयुत्सुरेकाग्रोहं स्मारये सहजं सारथ्यकर्म स्मारये न शिक्षये ॥ १३ ॥ १४ ॥ अपसव्यं प्रदक्षिणप्रचारं व्यवधूनयत्

रथंराक्षसराजस्यनरराजोददर्शह ॥ कृष्णवाजिसमायुक्तंयुक्तंरौद्रेणवर्चसा ॥५॥ दीप्यमानमिवाकाशेविमानंसूर्यवर्चसम् ॥ तडित्पताकागहनंदर्शितेंद्रायुधप्रभम् ॥ ६ ॥ शरधाराविमुंचंतंधाराधरमिवांबुदम् ॥ सदृष्ट्वामेघसंकाशमापतंतंरथंरिपोः ॥ ७ ॥ गिरेर्वज्राभिमृष्टस्यदीर्यतःसदृशस्वनम् ॥ विस्फारयन्वैवेगेनबालचंद्रानतंधनुः ॥ ८ ॥ उवाचमातलिंरामःसहस्राक्षस्यसारथिम् ॥ मातलेपश्यसंरब्धमापतंतंरथंरिपोः ॥ ९ ॥ यथापसव्यंपततावेगेनमहतापुनः ॥ समरेहंतुमात्मानंतथाऽनेनकृतामतिः ॥ १० ॥ तदप्रमादमातिष्ठप्रत्युद्गच्छरथंरिपोः ॥ विध्वंसयितुमिच्छामिवायुर्मेघमिवोत्थितम् ॥ ११ ॥ अविक्लवमसंभ्रांतमव्यग्रहृदयेक्षणम् ॥ रश्मिसंचारनियतंप्रचोदयरथंद्रुतम् ॥१२॥ कामंनत्वंसमाधेयःपुरंदररथोचितः ॥ युयुत्सुरहमेकाग्रःस्मारयेत्वानाशिक्षये ॥ १३ ॥ परितुष्टःसरामस्यतेनवाक्येनमातलिः ॥ प्रचोदयामासरथंसुरसारथिरुत्तमः ॥ १४ ॥ अपसव्यंततःकुर्वन्रावणस्यमहारथम् ॥ चक्रसंभूतरजसारावणंव्यवधूनयत् ॥ १५ ॥ ततःक्रुद्धोदशग्रीवस्ताम्रविस्फारितेक्षणः ॥ रथप्रतिमुखंरामंसायकैरवधूनयत् ॥ ॥ १६ ॥ धर्षणामर्षितोरामोधैर्यंरोषेणलंभयन् ॥ जग्राहसुमहावेगमैंद्रंयुधिशरासनम् ॥ १७ ॥ शरांश्चसुमहावेगान्सूर्यरश्मिसमप्रभान् ॥ तदुपोढंमहद्युद्धमन्योन्यवधकांक्षिणोः ॥ परस्पराभिमुखयोर्दृप्तयोरिवसिंहयोः ॥ १८ ॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ समीयुर्द्वैरथंद्रष्टुंरावणक्षयकांक्षिणः ॥१९॥ समुत्पेतुरथोत्पातादारुणारोमहर्षणाः ॥ रावणस्यविनाशायराघवस्योदयायच ॥ २० ॥ ववर्षरुधिरंदेवोरावणस्यरथोपरि ॥ वातामंडलिनस्तीव्राव्यपसव्यंप्रचक्रमुः ॥२१॥ महद्गृध्रकुलंचास्यभ्रममाणंनभस्थले ॥ येनयेनरथोयातितेनतेनप्रधावति ॥ २२ ॥ संध्ययाचावृतालंकाजपापुष्पनिकाशया ॥ दृश्यतेसंप्रदीप्तेवदिवसेपिवसुंधरा ॥२३॥ सनिर्घातामहोल्काश्चसंप्रपेतुर्महास्वनाः ॥ विषादयंस्तेरक्षांसिरावणस्यतदाहिताः ॥२४॥

अकंपयत् ॥ १५ ॥ रथेन प्रतिमुखं संमुखं रथप्रतिमुखम् ॥ १६ ॥ धर्षणेनामर्षितः रोषेण सह धैर्यं युद्धारभटीं लंभयन्प्रापयन्निंद्रस्येदमैंद्रं शरासनं जग्राह किं चैंद्रं पारमेश्वरम् इदि परमैश्वर्यं इत्युक्तेः निजायुधं जग्राहेत्यर्थः ॥ १७ ॥ तत्तदा महद्युद्धमुपोढमारब्धमभूत् ॥ १८ ॥ द्वाभ्यां रथाभ्यां प्रवर्तितं द्वयोरथयोरिदं वा द्वैरथं युद्धं द्रष्टुं समीयुर्मिलित्वागताः ॥ १९ ॥ २० ॥ उत्पातानाह ववर्षेति । मंडलिनो वाता वात्यारूपा इत्यर्थः । तीव्रास्तीव्रवेगाः व्यपसव्यं विगतमपसव्यं प्रदक्षिणं यथा तथा वामावर्ता इत्यर्थः ॥ २१ ॥ येन येनेति मार्गेणेत्यर्थः । गृध्रकुलस्य मृतमांसभोजिनो रावणेन सहागमनेन रावणस्यासन्नमरणं सूच्यते ॥ २२ ॥ जपापुष्पनिकाशया संध्ययावृता लंका संप्रदीप्तेव दृश्यते अकालेपीति शेषः । तदेवाह दिवसेपीति । वसुंधरेति लंकाविशेषणम् ॥ २३ ॥ संप्रपेतुः रावणस्य पुरस्तादिति शेषः । तदा तस्मिन्काले

अहिता अनर्थसूचकाः ॥ २४ ॥ वसुंधरा लंकापर्यंतभूः गृहीता इवेति भयात् स्तब्धा इति शेषः ॥ २५ ॥ पर्वतस्य धातव इव ताम्रादिरूपाः सूर्यस्य रश्मयो रावणस्याग्रे पतिताः संतो दृश्यंत इति संबंधः ॥२६॥ अस्य मुखमीक्षंत्य इत्यन्वयः ॥ २७ ॥ दृष्टिविलोपनम् अशक्योद्वीक्षणत्वम् ॥ २८ ॥ इंद्राशनय इत्यनेन आयुधाशनिव्यावृत्तिः ॥ २९ ॥ ३० ॥ तद्रथं रावणरथं प्रति ॥ ३१ ॥ तुल्यमग्निं च वारि च जघनेभ्य इत्याद्युक्तप्रकारेणेति शेषः ॥ ३२ ॥ ३३ ॥ ३४ ॥ परमसंहृष्टो लक्ष्मणो मातलिर्वेति शेषः ॥ ३५ ॥ ३६ ॥ तौलैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये

रावणश्चयतस्तत्रप्रचचालवसुंधरा ॥ रक्षसांचप्रहरतांगृहीताइवबाहवः ॥ २५ ॥ ताम्राःपीताःसिताःश्वेताःपतिताःसूर्यरश्मयः ॥ दृश्यंतेरावणस्याग्रे पर्वतस्येवधातवः ॥ २६ ॥ गृध्रैरनुगताश्चास्यवमंतोज्वलनंमुखैः ॥ प्रणेदुर्मुखमीक्षंत्यःसंरब्धमशिवंशिवाः ॥ २७ ॥ प्रतिकूलंववौवायूरणेपांसून्समुत्किरन् ॥ तस्यराक्षसराजस्यकुर्वन्दृष्टिविलोपनम् ॥ २८ ॥ निपेतुरिंद्राशनयःसैन्येचास्यसमंततः ॥ दुर्विषह्यस्वराघोरंविनाजलधरोदयम् ॥ २९ ॥ दिशश्चप्रदिशःसर्वाबभूवुस्तिमिरावृताः ॥ पांसुवर्षेणमहतादुर्दर्शंचनभोभवत् ॥ ३० ॥ कुर्वंत्यःकलहंघोरंसारिकास्तद्रथंप्रति ॥ निपेतुःशतशस्तत्रदारुणादारुणारुताः ॥ ३१ ॥ जघनेभ्यःस्फुलिंगाश्चनेत्रेभ्योश्रूणिसंततम् ॥ मुमुचुस्तस्यतुरगास्तुल्यमग्निंचवारिच ॥ ३२ ॥ एवंप्रकाराबहवःसमुत्पाताभयावहाः ॥ रावणस्यविनाशायदारुणाःसंप्रजज्ञिरे ॥ ३३ ॥ रामस्यापिनिमित्तानिसौम्यानिचशिवानिच ॥ बभूवुर्जयशंसीनिप्रादुर्भूतानिसर्वशः ॥ ३४ ॥ निमित्तानीहसौम्यानिराघवस्यजयायवै ॥ दृष्ट्वापरमसंहृष्टोहतंमेनेचरावणम् ॥३५॥ ततोनिरीक्ष्यात्मगतानिराघवोरणेनिमित्तानिनिमित्तकोविदः ॥ जगामहर्षंचपरांचनिर्वृतिंचकारयुद्धेह्यधिकंचविक्रमम् ॥३६॥ इत्यार्षे श्रीमद्रा०वा०आ०यु० सप्तोत्तरशततमः सर्गः ॥१०७॥

ततःप्रवृत्तंसुक्रूरंरामरावणयोस्तदा ॥ सुमहद्द्वैरथंयुद्धंसर्वलोकभयावहम् ॥१॥ ततोराक्षससैन्यंचहरीणांचमहद्बलम् ॥ प्रगृहीतप्रहरणंनिश्चेष्टंसमवर्तत ॥ २ ॥ संप्रयुद्धौतुतौदृष्ट्वाबलवन्नरराक्षसौ ॥ व्याक्षिप्तहृदयाःसर्वेपरंविस्मयमागताः ॥ ३ ॥ नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धयः ॥ तस्थुःप्रेक्ष्यचसंग्रामंनाभिजग्मुःपरस्परम् ॥ ४ ॥ रक्षसांरावणंचापिवानराणांचराघवम् ॥ पश्यतांविस्मिताक्षाणांसैन्यंचित्रमिवाबभौ ॥ ५ ॥ तौतुतत्रनिमित्तानिदृष्ट्वाराघवरावणौ ॥ कृतबुद्धीस्थिरामर्षौयुयुधातेह्यभीतवत् ॥ ६ ॥ जेतव्यमितिकाकुत्स्थोमर्तव्यमितिरावणः ॥ धृतौस्ववीर्यसर्वस्वंयुद्धेऽदर्शयतांतदा ॥ ७ ॥ ततःक्रोधाद्दशग्रीवःशरान्संधायवीर्यवान् ॥ मुमोचध्वजमुद्दिश्यराघवस्यरथेस्थितम् ॥ ८ ॥

युद्धकांडे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥ कतकरीं० ॥ ९९ ॥ तत इति । द्वैरथं व्याख्यातम् सुमहत् अनेकदिनव्यापि ॥ १ ॥ प्रगृहीतप्रहरणमपि निश्चेष्टं समवर्तत निवृत्तोद्योगमेवातिष्ठत तद्युद्धदर्शनपारवश्यादिति शेषः ॥ २ ॥ तदेवाह संप्रयुद्धाविति सम्यग्युद्धारंभप्रवृत्तौ ॥ ३ ॥ भुजैरुपलक्षिता इति शेषः । नाभिजग्मुः महर्तुं परस्परमिति शेषः ॥ ४ ॥ विस्मिताक्षाणां विस्मयपरवशेंद्रियाणां हरिरक्षसामिति शेषः । चित्रमिव चित्रलिखितमिव ॥५॥ कृतबुद्धी युद्धविषये निश्चितबुद्धी अभीतवदभीतार्हम् ॥ ६ ॥ निश्चयमाह जेतव्यमिति मर्तव्यमितिमृत्युरूपशत्रौ प्रहर्तव्यमित्यर्थ इति कतकः । इति धृतौ एवं निश्चयवंतौ अदर्श

यतामिति च्छेदः ॥७॥८॥ रथशक्तिं दिव्यरथवैभवं रथावयवविशेषं वा परामृश्य प्राप्य तन्महिम्ना केवलं धरणीतले पेतुः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ स्खलनाद्यभावे स्वस्थहृदयत्वे च हेतु दिंव्या इति॥ १५॥पद्मनालैः पद्मदंडैः॥ १६॥ १७॥ गिरिशृंगादीनां पातनं कुतस्तत्राहमायाविहितमिति। एतद्गिरिवृक्षादिवर्षं शस्त्रवर्षं मुक्तगदादिशस्त्रवर्षम् ॥ १८॥ भीमप्रतिस्वनो यस्मिंस्तत् नैकशस्त्रमयं नानाशस्त्रप्रचुरं तद्वर्षं प्रागुक्तशस्त्रवर्षम्॥ १९॥ राघवरथं विमुच्यक्रोधातिशयेन युक्तत्वाल्लक्ष्यभूतं रामरथमतिक्रम्य वानरे बलेऽपतत् ॥ २०॥ निःसंगेन प्राणाशासंगरहितेन तत्परं तदनंतरम्। व्यायच्छमानं व्यायच्छंतं प्रवर्तयंतम् ॥ २१॥

तेशरास्तमनासाद्यपुरंदररथध्वजम् ॥ रथशक्तिंपरामृश्यनिपेतुर्धरणीतले ॥ ९ ॥ ततोरामोपिसंक्रुद्धश्चापमाकृष्यवीर्यवान् ॥ कृतप्रतिकृतंकर्तुं मनसासंप्रचक्रमे ॥ १० ॥ रावणध्वजमुद्दिश्यमुमोचनिशितंशरम् ॥ महासर्पमिवासह्यंज्वलंतंस्वेनतेजसा ॥ ११ ॥ रामश्चिक्षेपतेजस्वीकेतुमु द्दिश्यसायकम् ॥ जगामसमहींभित्त्वादशग्रीवध्वजंशरः ॥ १२ ॥ सनिकृत्तोपतद्भूमौरावणस्यंदनध्वजः ॥ ध्वजस्योन्मथनंदृष्ट्वारावणःसमहाबलः॥ ॥ १३ ॥ संप्रदीतोभवत्क्रोधादमर्षात्प्रदहन्निव ॥ सरोषवशमापन्नःशरवर्षंववर्षह ॥ १४ ॥ रामस्यतुरगान्दीप्तैःशरैर्विव्याधरावणः ॥ तेदिव्याह रयस्तत्रनास्खलन्नापिबभ्रमुः ॥ १५ ॥ बभूवुःस्वस्थहृदयाःपद्मनालैरिवाहताः ॥ तेषामसंभ्रमंदृष्ट्वावाजिनांरावणस्तदा ॥ १६ ॥ भूयएवसुसंक्रुद्धः शरवर्षंमुमोचह ॥ गदाश्चपरिघांश्चैवचक्राणिमुसलानिच ॥ १७॥ गिरिशृंगाणिवृक्षांश्चतथाशूलपरश्वधान् ॥ मायाविहितमेतत्तुशस्त्रवर्षमपातयत् ॥ सहस्रशस्तदाबाणानश्रांतहृदयोद्यमः ॥ १८॥ तुमुलंत्रासजननंभीमंभीमप्रतिस्वनम् ॥ तद्वर्षमभवद्युद्धेनैकशस्त्रमयंमहत् ॥१९॥ विमुच्यराघवरथं समंताद्वानरेबले ॥ सायकैरंतरिक्षंचचकारसुनिरंतरम् ॥ २० ॥ मुमोचचदशग्रीवोनिःसंगेनांतरात्मना ॥ व्यायच्छमानंतंदृष्ट्वातत्परंरावणंरणे ॥ ॥ २१ ॥ प्रहसन्निवकाकुत्स्थःसंदधेनिशितान्छरान् ॥ समुमोचततोबाणान्छतशोथसहस्रशः ॥ २२ ॥ तान्दृष्ट्वारावणश्चक्रेस्वशरैःखंनिरंतरम् ॥ ताभ्यांनियुक्तेनतदाशरवर्षेणभास्वता ॥ २३ ॥ शरबद्धमिवाभातिद्वितीयंभास्वदंबरम् ॥ नानिमित्तोभवद्बाणोनानिर्भेत्तानानिष्फलः ॥२४॥ अन्यो न्यमभिसंहत्यनिपेतुर्धरणीतले ॥ तथाविसृजतोर्बाणान्रामरावणयोर्मृधे ॥ २५ ॥

॥२२॥२३॥ शरबद्धं शररचितं द्वितीयमंबरमित्यर्थः। भास्वत् भासमानम्। नानिमित्तः निमित्तं लक्ष्यमप्राप्य वर्तमानो नास्ति न निष्फलः लक्ष्यवेधपरप्रयुक्तवारणान्यतरप्रयोजनहीनो नाभवत् नानिर्भेत्ता अभेत्ता न नातियत्न इतिपाठे परप्रयुक्तनिवारणाय यत्नातिक्रांतो न निवारणाय प्रयुक्तो निवारयत्येवेत्यर्थः ॥२४॥ बाणान्विसृजतोस्तयोर्बाणा अन्योन्यमभिसंहत्य स्वस्वप्रयोगकार्यं कृत्वैव धरणीतले निपेतुः ॥ २५ ॥

सव्यं च दक्षिणं च सव्यदक्षिणम् अत्यंतसंयोगे द्वितीया उभयपार्श्वयोरविच्छिन्नं शरानस्यंतौ निरुच्छ्वासं नीरंध्रम् ॥२६॥ कृतस्यानुकृतं प्रतिक्रिया तत्करणशीलौ ॥२७॥२८॥ तुमुलं रोमहर्षणम् एतदनंतरं प्रयुध्यमानावित्येकं श्लोकं प्रक्षिप्यात्र सर्गावच्छेदं कुर्वंति तदयुक्तम् । पश्चादपि तुमुलयुद्धस्यैव सत्त्वादेकप्रकरणत्वाच्च अनवच्छेदस्यैव बहुषु पुस्तकेषु दर्शनाच्चेति कतकः॥२९॥ सर्गः॥१०८॥३०॥३१॥३२॥सारथ्यजां सूतकर्मनैपुण्यजाम् अर्दयन् बभूवेति शेषः ॥३३॥३४॥ सासारौ धारासंपात आसारस्तत्सहितौ ॥३५॥३६॥३७॥ प्रत्यपसर्पयत् प्रत्यपसर्पणं नामात्यकाभिमुख्यानामेव पश्चार्धेनापसर्पणम् ॥३८॥३९॥

प्रायुद्ध्येतामविच्छिन्नमस्यंतौसव्यदक्षिणम् ॥ चक्रतुश्चशरैर्घोरैर्निरुच्छ्वासमिवांबरम् ॥२६॥ रावणस्यहयान्रामोहयान्रामस्यरावणः ॥ जघ्नतुस्तौ तदान्योन्यंकृतानुकृतकारिणौ ॥ २७ ॥ एवंतुतौसुसंक्रुद्धौचक्रतुर्युद्धमुत्तमम् ॥ मुहूर्तमभवद्युद्धंतुमुलंरोमहर्षणम् ॥ २८ ॥ प्रयुध्यमानौसमरे महाबलौशितैःशरैःरावणलक्ष्मणाग्रजौ ॥ ध्वजावपातेनसराक्षसाधिपोभृशंप्रचुक्रोधतदारघूत्तमे ॥ २९ ॥ सर्गः ॥ १०८ ॥ तौतथायुध्यमानौतुसमरे रामरावणौ ॥ ददृशुःसर्वभूतानिविस्मितेनांतरात्मना ॥ ३० ॥ अर्दयंतौतुसमरेतयोस्तौस्यंदनोत्तमौ ॥ परस्परमभिक्रुद्धौपरस्परमभिद्रुतौ ॥३१॥ परस्परवधेयुक्तौघोररूपौबभूवतुः ॥ मंडलानिचवीथीश्चगतप्रत्यागतानिच ॥ ३२ ॥ दर्शयंतौबहुविधांसूतौसारथ्यजांगतिम् ॥ अर्दयन्रावणं रामोराघवंचापिरावणः ॥ ३३ ॥ गतिवेगंसमापन्नौप्रतिवेगनिवर्तने ॥ क्षिपतोःशरजालानितयोस्तौस्यंदनोत्तमौ ॥ ३४ ॥ चेरतुःसंयुगमहींसासारौ जलदाविव ॥ दर्शयित्वातदातौतुगतिंबहुविधांरणे ॥ ३५ ॥ परस्परस्याभिमुखौपुनरेवचतस्थतुः ॥ धुरंधुरेणरथयोर्वक्त्रंवक्त्रेणवाजिनाम् ॥ ३६ ॥ पताकाश्चपताकाभिःसमीयुःस्थितयोस्तदा ॥ रावणस्यततोरामोधनुर्मुक्तैःशितैःशरैः ॥ ३७ ॥ चतुर्भिश्चतुरोदीप्तान्हयान्प्रत्यपसर्पयत् ॥ सक्रोधवशमापन्नोहयानामपसर्पणे ॥ ३८ ॥ मुमोचनिशितान्बाणान्राघवायदशाननः ॥ सोतिविद्धोबलवतादशग्रीवेणराघवः ॥ ३९ ॥ जगामनविकारंचनचापिव्यथितोभवत् ॥ चिक्षेपचपुनर्बाणान्वज्रसारसमस्वनान् ॥ ४० ॥ सारथिंवज्रहस्तस्यसमादिश्यदशाननः ॥ मातलेस्तुमहावेगाः शरीरेपतिताःशराः ॥ ४१ ॥ नसूक्ष्ममपिसंमोहंव्यथांवाप्रददुर्युधि ॥ तयाधर्षणयाक्रुद्धोमातलेर्नतथात्मनः ॥४२॥ चकारशरजालेनराघवोविमुखं रिपुम् ॥ विंशतिंत्रिंशतिंषष्टिंशतशोथसहस्रशः ॥ ४३ ॥ मुमोचराघवोवीरःसायकान्स्यंदनेरिपोः ॥ रावणोपिततःक्रुद्धोरथस्थोराक्षसेश्वरः ॥ ४४॥ गदामुसलवर्षेणरामंप्रत्यर्दयद्रणे ॥ तत्प्रयुक्तंपुनर्युद्धंतुमुलंरोमहर्षणम् ॥ ४५ ॥ गदानांमुसलानांचपरिघाणांचनिःस्वनैः ॥ शराणांपुंखवातैश्चक्षुभिताःसप्तसागराः ॥ ४६ ॥ क्षुब्धानांसागराणांचपातालतलवासिनः ॥ व्यथितादानवाःसर्वेपन्नगाश्चसहस्रशः ॥ ४७ ॥ चकंपेमेदिनीकृत्स्नासशैलवनकानना ॥ भास्करोनिष्प्रभश्चासीन्नववौचापिमारुतः ॥४८॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ चिंतामापेदिरेसर्वेसकिन्नरमहोरगाः॥४९॥

चिक्षेप रावणः क्षिप्तवान् ॥४०॥४१॥ मातलेर्व्यथां न प्रददुः देवत्वेन दिव्यशक्तिमत्त्वात् अथवर्षणकाले रावणेन प्रक्षिप्तानामतिवेगसामर्थ्ययोगाच्च यथा मातलेर्धर्षणया क्रुद्धस्तथा आत्मनो धर्षणया न क्रुद्धः ॥ ४२ ॥ अतएव रिपुं विमुखं चकार ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ क्षुब्धानां सागराणामधोदेशवर्तिपातालवासिनो व्यथिता जाता इति शेषः ॥ ४७ ॥ ४८ ॥ ४९ ॥

॥५०॥ जपंतो वदंतः॥५१॥ वचननमस्कारमाह गंधर्वाप्सरसामिति। अनूपममिति दीर्घ आर्षः। दृष्ट्वा युद्धमनूपममित्युंनरं सागरं चांबरप्रख्यमंबरं सागरोपममिति पाठे सागरं नैल्यवैपुल्यादिनांबरप्रख्यमाकाशतुल्यमिति वक्तुं शक्यम् एवमंबरमपि सागरोपममिति शक्यम्। रामरावणयोर्युद्धं तु तदतिरिक्तादृशयुद्धासंभवात् स्वतुल्यमित्येव वक्तुं शक्यम्। तेनानुपमत्वं फलतीत्यनन्वयोत्राळंकारः। पूर्वार्धे तूपमेयोपमेति कतकः। सागरशब्दे लिंगव्यत्यय आर्षः। अर्धर्चादिर्वा सः। गगनं गगनाकारं सागरः सागरोपम इतिपाठे अयेद्वेप्यनन्वय एवेति बोध्यम्। एवंब्रुवंतो गंधर्वादिसंघास्तद्युद्धं ददृशुः रामरावणं तत्कर्तृकमित्यर्थः॥५२॥५३॥ ततस्तद्वाक्यश्रवणानंतरम् ॥५४॥ शिरोच्छिदत एकैकश इति शेषः। सकृद्दशशिरसां छेदे तु न पुनः प्ररोह इति कतकः॥५५॥ तस्यैव सदृशं यद्भूमौ पतितं तस्यैव सदृशानित्यर्थः॥५६॥५७॥ एवमेव शतं छिन्नमितिपाठः।

स्वस्तिगोब्राह्मणेभ्योस्तुलोकास्तिष्ठंतुशाश्वताः ॥ जयतांराघवःसंख्येरावणंराक्षसेश्वरम् ॥ ५० ॥ एवंजपंतोऽपश्यंस्तेदेवाःसर्षिगणास्तदा ॥ रामरावणयोर्युद्धंसुघोरंरोमहर्षणम् ॥ ५१ ॥ गंधर्वाप्सरसांसंघाददृष्ट्वायुद्धमनूपमम् ॥ सागरंचांबरप्रख्यमंबरंसागरोपमम् ॥ ५२ ॥ रामरावणयोर्युद्धंरामरावणयोरिव ॥ एवंब्रुवंतोददृशुस्तद्युद्धंरामरावणम् ॥ ५३ ॥ ततःक्रोधान्महाबाहूरघूणांकीर्तिवर्धनः ॥ संधायधनुषारामःशरमाशीविषोपमम् ॥ ५४ ॥ रावणस्यशिरोच्छिंदच्छ्रीमज्ज्वलितकुंडलम् ॥ तच्छिरःपतितंभूमौदृष्टंलोकैस्त्रिभिस्तदा ॥५५॥ तस्यैवसदृशंचान्यद्रावणस्योत्थितंशिरः ॥ तत्क्षिप्रंक्षिप्रहस्तेनरामेणक्षिप्रकारिणा ॥ ५६ ॥ द्वितीयंरावणशिरश्छिन्नंसंयतिसायकैः ॥ छिन्नमात्रंचतच्छीर्षंपुनरेवप्रदृश्यते ॥ ५७ ॥ तदप्यशनिसंकाशैश्छिन्नंरामस्यसायकैः ॥ एवमेवशतंछिन्नंशिरसांतुल्यवर्चसाम् ॥ ५८ ॥ नचैवरावणस्यांतोदृश्यतेजीवितक्षये ॥ ततःसर्वास्त्रविद्वीरःकौसल्यानंदवर्धनः ॥ ५९ ॥ मार्गणैर्बहुभिर्युक्तश्चिंतयामासराघवः ॥ मारीचोनिहतोयैस्तुखरोयैस्तुसदूषणः ॥ ६० ॥ क्रौंचावटेविराधस्तुकबंधोदंडकावने ॥ यैःसालागिरयोभिन्नावालीचक्षुभितोऽम्बुधिः ॥ ६१ ॥ तइमेसायकाःसर्वेयुद्धेप्रात्ययिकामम ॥ किंतुतत्कारणंयेनरावणेमंदतेजसः ॥ ६२ ॥ इतिचिंतापरश्चासीदप्रमत्तश्चसंयुगे ॥ ववर्षशरवर्षाणिराघवोरावणोरसि ॥ ६३ ॥ रावणोपिततःक्रुद्धोरथस्थोराक्षसेश्वरः ॥ गदामुसलवर्षेणरामंप्रत्यर्दयद्रणे ॥ ६४ ॥ तत्प्रवृत्तंमहद्युद्धंतुमुलंरोमहर्षणम् ॥ अंतरिक्षेचभूमौचपुनश्चगिरिमूर्धनि ॥ ६५ ॥ देवदानवयक्षाणांपिशाचोरगरक्षसाम् ॥ पश्यतांतन्महद्युद्धंसर्वरात्रमवर्तत ॥ ६६ ॥

तुल्य वर्चसां तुल्याकाराणां शिरसां शतं रामेण च्छिन्नम् एवं च भगवतः सर्वतोभद्रचक्रपद्शतं रामेण रावणीयशिरःशतकमलैः पूजितमिति कतकः ॥५८॥ रावणस्य जीवितक्षयेऽन्तो निश्चयो न दृश्यते॥५९॥ ॥ ६० ॥ क्रौंचावटे क्रौंचवनसंबन्धिन्यवटे श्वभ्रे॥ ६१ ॥ प्रात्ययिकाः अमोघत्वेन निश्चिताः ॥ ६२ ॥ ६३ ॥ ६४ ॥ अंतरिक्षे चेत्यादिरथयोः कामगत्वात्तत्र तत्र कियत्कालं स्थितेरिति भावः ॥६५॥ सर्वरात्रं जातावेकवचनम्। तेनानेकाहोरात्रानित्यर्थः। वस्तुतः शवर्गे सकारस्तृतीयस्तेन त्रय उच्यंते यवर्गे च वकारश्चतुर्थस्तेन चत्वार उच्यंते मिलित्वा सप्तरात्रमित्यर्थः। सप्तरात्रमेव च तयोर्द्वैरथं युद्धमिति

वक्ष्यमाणपाद्मकालिकापुराणयोः स्पष्टमिति दिक् ॥ ६६ ॥ तदेवाह नैव रात्रिमिति ॥ ६७ ॥ तयोर्मध्ये राघवस्य जयमनवेक्ष्याद्दृष्ट्वा स सुरवरस्य सारथिरिति । रणे रतो रणरतः रणरतश्चासौ रामश्च तम् ॥ ॥ ६८ ॥ हुतैमानम् ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे नवोत्तरशततमः सर्गः ॥ १०९ ॥ एवमनुवर्तसे एतत्मतिभयमनुसरसीत्यर्थः ॥ १ ॥ अस्मै एनं प्रति ॥ २ ॥ ३ ॥ ब्रह्मदत्तं ब्रह्मणेंद्राय दत्तम् इंद्रेणागस्त्यद्वारा रामाय दत्तम् ॥ ४ ॥ ब्रह्मदत्तशब्दस्योक्त एवार्थः स्पष्टी क्रियते ब्रह्मणेत्यादि ॥ ५ ॥ अस्य बाणस्य ब्रह्मानुग्रहवैशिष्ट्यमाह यस्येति । वाजेषु

नैवरात्रिंनदिवसंनमुहूर्तंनचक्षणम् ॥ रामरावणयोर्युद्धंविराममुपगच्छति ॥ ६७ ॥ दशरथसुतराक्षसेंद्रयोस्तयोर्जयमनवेक्ष्यरणेसराघवस्य ॥ सुरवरथसारथिर्महात्मारणरतराममुवाचवाक्यमाशु ॥६८॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे नवोत्तरशततमः सर्गः ॥१०९॥ अथसंस्मारयामासमातलीराघवंतदा ॥ अजानन्निवकिंवीरत्वमेनमनुवर्तसे ॥ १ ॥ विसृजास्मैवधायत्वमस्त्रंपैतामहंप्रभो ॥ विनाशकालःकथितोयःसुरैःसोद्यवर्तते ॥ २ ॥ ततःसंस्मारितोरामस्तेनवाक्येनमातलेः ॥ जग्राहसशरंदीप्तंनिःश्वसंतमिवोरगम् ॥ ३ ॥ यंतस्मैप्रथमंप्रादादगस्त्योभगवानृषिः ॥ ब्रह्मदत्तंमहद्बाणममोघंयुधिवीर्यवान् ॥ ४ ॥ ब्रह्मणानिर्मितंपूर्वमिंद्रार्थममितौजसा ॥ दत्तंसुरपतेःपूर्वंत्रिलोकजयकांक्षिणः ॥ ५ ॥ यस्यवाजेषुपवनःफलेपावकभास्करौ ॥ शरीरमाकाशमयंगौरवेमेरुमंदरौ ॥ ६ ॥ जाज्वल्यमानंवपुषासुपुंखंहेमभूषितम् ॥ रजसासर्वभूतानांकृतंभास्करवर्चसम् ॥ ७ ॥ सधूममिवकालाग्निंदीप्तमाशीविषोपमम् ॥ नरनागाश्ववृंदानांभेदनंक्षिप्रकारिणम् ॥ ८ ॥ द्वाराणांपरिघाणांचगिरीणांचापिभेदनम् ॥ नानारुधिरदिग्धांगंमेदोदिग्धंसुदारुणम् ॥ ९ ॥ वज्रसारंमहानादंनानासमितिदारणम् ॥ सर्ववित्रासनंभीमंश्वसंतमिवपन्नगम् ॥ १० ॥ कंकगृध्रबकानांचगोमायुगणरक्षसाम् ॥ नित्यभक्ष्यप्रदंयुद्धेयमरूपंभयावहम् ॥ ११ ॥ नंदनंवानरेंद्राणांरक्षसामवसादनम् ॥ वाजितंविविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥ १२ ॥ तमुत्तमेषुंलोकानामिक्ष्वाकुभयनाशनम् ॥ द्विषतांकीर्तिहरणंप्रहर्षकरमात्मनः ॥ १३ ॥ अभिमंत्र्यततोरामस्तंमहेषुंमहाबलः ॥ वेदप्रोक्तेनविधिनासंदधेकार्मुकेबली ॥ १४ ॥ तस्मिन्संधीयमानेतुराघवेणशरोत्तमे ॥ सर्वभूतानिसंत्रेसुश्चचालचवसुंधरा ॥ १५ ॥

वेगसाधनपक्षेषु तत्र तत्र पवनादीनामधिदेवतात्वेनावस्थानं बोध्यम् । शरीरं मध्यभाग आकाशमयम् आसमंतात्काशते प्रकाशते इत्याकाशो ब्रह्मा भगवान् भूताकाशो वा तेन व्याप्तिसामर्थ्यम् । पवनवत्त्वेन गतिसामर्थ्यम् । पावकादिमत्त्वेन दुःसहत्वम् । तर्हि लघुः स्यात्तत्राह गौरवे इति ॥ ६ ॥ सर्वभूतानां पृथिव्यादीनाम् । तेजसा सारांशेन ॥ ७ ॥ क्षिप्रकारिणं शीघ्रभेदकारिणम् ॥ ८ ॥ द्वाराणां गोपुराणाम् ॥ ९ ॥ नानासमितिदारणमित्यन्वर्थं नाम भगवत्कृतं रामबाणस्य ॥ १० ॥ ११ ॥ गरुत्मतो वाजैः पक्षैः ॥ १२ ॥ इक्ष्वाकुः रामस्तत्पक्षाणां भयनाशनं तमुत्तमेषुमभिमंत्र्येत्यनेनान्वयः ॥ १३ ॥ अभिमंत्र्य ब्रह्मास्त्रविद्यया वेदो धनुर्वेदस्तेन प्रोक्तो यो मुष्टिदृष्टिस्थितिसं

धानादीनां विधिर्विधानं मार्गस्तेनेत्यर्थः ॥ १४ ॥ १५ ॥ परमायत्तः परमयत्नवान् ॥ १६ ॥ वज्रिबाहिति । वज्रितुल्यबलरामबाहुविनिःसृत इत्यर्थः । वज्रकवचबद्धामेत्यादि वा वस्तुतो वज्रिबाहुविसर्जितो वज्र इव दुर्धर्ष इत्यर्थः । ॥ १७ ॥ १८ ॥ १९ ॥ निभृतवत् विनीतवत् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ अभिपेतुस्तान्मद्रुतराक्षसानित्यर्थः ॥ २४ ॥ हताश्रयत्वात् हत आश्रयो येषां तत्त्वात् बाष्पप्रस्रवणैर्मुखैः करुणैः शोकवद्भिरुपलक्षिताः संतो लंकामभ्यपतन् ॥ २५ ॥ तद्वधम् तं वधमित्यर्थः ॥ २६ ॥ २७ ॥ दुरावापा आप्तुमशक्या ॥ २८ ॥ राघवस्तवसंयुक्ता साधुसाध्विति वाक् गगनेपि शुश्रुवे ॥ २९ ॥ ३० ॥ राक्षसपुंगवं हत्वा

सरावणायसंक्रुद्धोभृशमायम्यकार्मुकम् ॥ चिक्षेपपरमायत्तःशरंमर्मविदारणम् ॥ १६ ॥ सवज्रइवदुर्धर्षोवज्रिबाहुविसर्जितः ॥ कृतांतइवचावार्यो न्यपतद्रावणोरसि ॥ १७ ॥ सविसृष्टोमहावेगःशरीरांतकरःपरः ॥ बिभेदहृदयंतस्यरावणस्यदुरात्मनः ॥ १८ ॥ रुधिराक्तःसवेगेनशरीरांतकरः शरः ॥ रावणस्यहरन्प्राणान्विवेशधरणीतलम् ॥ १९ ॥ सशरोरावणंहत्वारुधिरार्द्रीकृतच्छविः ॥ कृतकर्मानिभृतवत्सतूणींपुनराविशत् ॥ २० ॥ तस्यहस्ताद्धतस्याशुकार्मुकंचापिसायकम् ॥ निपपातसहप्राणैर्भ्रश्यमानस्यजीवितात् ॥ २१ ॥ गतासुर्भीमवेगस्तुनैर्ऋतेंद्रोमहाद्युतिः ॥ पपातस्यं दनाद्भूमौवृत्रोवज्रहतोयथा ॥ २२ ॥ तंदृष्ट्वापतितंभूमौहतशेषानिशाचराः ॥ हतनाथाभयत्रस्ताःसर्वतःसंप्रदुद्रुवुः ॥ २३ ॥ सर्वतश्चाभिपेतुस्तान्वा नराद्रुमयोधिनः ॥ दशग्रीववधंदृष्ट्वाविजयंराघवस्यच ॥ २४ ॥ आर्दितावानरैर्हृष्टैर्लंकामभ्यपतन्भयात् ॥ हताश्रयत्वात्करुणैर्बाष्पप्रस्रवणै र्मुखैः ॥ २५ ॥ ततोविनेदुःसंहृष्टावानराजितकाशिनः ॥ वदंतोराघवजयंरावणस्यचतद्वधम् ॥ २६ ॥ अथांतरिक्षेव्यनदत्सौम्यस्त्रिदशदुंदुभिः ॥ दिव्यगंधवहस्तत्रमारुतःसुसुखोववौ ॥ २७ ॥ निपपातांतरिक्षाच्चपुष्पवृष्टिस्तदाभुवि ॥ किरंतीराघवरथंदुरवापामनोहरा ॥ २८ ॥ राघवःस्तवसं युक्तागगनेचविशुश्रुवे ॥ साधुसाध्वितिवागग्र्यादेवतानांमहात्मनाम् ॥ २९ ॥ आविवेशमहान्हर्षोदेवानांचारणैःसह ॥ रावणेनिहतेरौद्रेसर्वलोकभयं करे ॥ ३० ॥ ततःसकामंसुग्रीवमंगदंचविभीषणम् ॥ चकारराघवःप्रीतोहत्वाराक्षसपुंगवम् ॥ ३१ ॥ ततःप्रजग्मुःप्रशमंमरुद्गणादिशःप्रसेदुर्विमलं नभोभवत् ॥ महीचकंपेनचमारुतोववौस्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ३२ ॥ ततस्तुसुग्रीवविभीषणांगदाःसुहृद्विशिष्टाःसहलक्ष्मणास्तदा ॥ समेत्यहृष्टाविजयेनराघवंरणेभिरामंविधिनाभ्यपूजयन् ॥ ३३ ॥ सतुनिहतरिपुःस्थिरप्रतिज्ञःस्वजनबलाभिवृतोरणेबभूव ॥ रघुकुलनृपनंदनोमहौ जास्त्रिदशगणैरभिसंवृतोमहेंद्रः ॥ ३४ ॥

सुग्रीवादिकं सकामं संपूर्णकामं चकार रावणवधेन रामकार्ये सिद्धे किल तेषां राज्यं शाश्वतं प्रतिष्ठितं भवति ॥ ३१ ॥ मही न चकंपे मारुतो न ववौ क्रूर इति शेषः । मही चकंपे न हीतिपाठे मारुतो ववौ सुख इति शेषः । स्थिरप्रभश्चेति । अनेनाश्विनशुक्लनवम्यां यामावशेषदिने इति बोधितम् ॥ ३२ ॥ रणेभिरामं रणविषये सर्वजगत्पूजनीयपराक्रमम् ॥ ३३ ॥ रामः स्वजनबलाभिवृतो बभूव महेंद्रश्च त्रिदशग

णाभिसंवृतो बभूव ॥ २४ ॥ अत्र युद्धदिवसगणनायां कतकतीर्थौ । पूर्वं सुवेलारोहणदिने । ततोस्तमगमत्सूर्यः संध्यया प्रतिरंजितः । पूर्णचन्द्रप्रदीप्ता च क्षपा समतिवर्तते इत्युक्तेस्तद्दिनं चतुर्दशीपूर्णिमान्यतरदिति स्पष्टम् । ततः कृष्णप्रतिपदि युद्धारंभस्तस्यामेव रात्रौ नागपाशबंधतद्विमोक्षौ । द्वितीयायां धूम्राक्षवधः । तृतीयायां वज्रदंष्ट्रस्य । चतुर्थ्यामकंपनस्य । पंचम्यां प्रहस्तस्य । षष्ठ्यां रावणभंगः । सप्तम्यां कुंभकर्णवधः । अष्टम्यामतिकायादेः । नवम्यामिंद्रजितो ब्रह्मास्त्रप्रयोगः । दशम्यां दिवा निकुंभवधः । तद्रात्रौ मकराक्षवधः । एकादश्यादित्रयोदश्यंतदिनत्रयेण इंद्रजिद्वधः । चतुर्दश्यां मूलबलवधः । अमायां रावणयुद्धारंभतद्वधाविति पंचदशदिनानि सर्वं युद्धमिति । अत्रेदं वक्तव्यं केयं कृष्णप्रतिपत् माघकृष्णस्य वा चैत्रकृष्णस्य वा । नाद्यः चैत्रे पुष्यनक्षत्रेऽयोध्यातो वनं प्रति रामस्य प्रस्थानमिति स्पष्टमयोध्याकांडे । चैत्रे पुष्यश्च शुक्लपक्ष एव तत्रापि नवम्यादिदिनत्रये एवेति स्पष्टमेव ज्योतिषादौ । तत्र नवमी रिक्तात्वादभिषेकायोग्या दशम्येव तु पूर्णत्वाद्योग्या । एवं च चैत्रशुक्लदशम्यां प्रस्थानम् । तत्र माघकृष्णामायां युद्धसमाप्तौ तदुत्तरपंचम्यां भरद्वाजाश्रमागमनम् । पूर्णे चतुर्दशे वर्षे पंचम्यां लक्ष्मणाग्रजः ॥ भरद्वाजाश्रमं प्राप्य ववंदे नियतो मुनिमिति वक्ष्यमाणत्वात् । तत्र च न चतुर्दशवर्षसमाप्तिरिति भगवतः प्रतिज्ञाहानिः । पूर्णे चतुर्दशे वर्षे इत्युक्तेरसंगतिश्च । युद्धोत्तरं तावत्कालं लंकायामवस्थानस्यालाभाच्च । चैत्रशुक्लपंचम्यां तत्रागमनेपि पंचदिनन्यूनतैवेति तद्धानिस्तदवस्थैव । तदुत्तरद्वितीयदिने एवायोध्याप्रवेशस्य लाभाच्च । अमांतमानेन चैत्रकृष्णोत्तरपंचम्यां तदाश्रमगतावपि चतुर्दशवर्षतो बहुदिनाधिक्येन चतुर्दशवर्षसमाप्तिदिनेऽयोध्यानागमे मया प्राणा देया इति भरतप्रतिज्ञाहानिः । सा च प्रतिज्ञा चित्रकूटे रामसन्निधावित्ययोध्याकांडांते स्पष्टं । एतेन चैत्रकृष्णप्रतिपदि युद्धारंभस्तच्छुक्लप्रतिपदि रावणसंस्कार इति तीर्थोक्तिश्चैत्रकृष्णस्येत्यंत्योपि परास्तः । पूर्णिमांतमानेन तिथिबद्धद्वादशमासैर्वर्षगणने पंचदिनानां न्यूनत्वात् । अमांतमानेन चैत्रकृष्णग्रहणे बहुदिनाधिक्यम् । सावनमानेन षष्ठ्युत्तरत्रिशतदिनैर्वर्षगणने तु तिथिबद्धवर्षात् तत्र षट्दिनाधिक्येन चतुर्दशवर्षाणां चतुरशीत्यहोरात्रवृद्ध्या बहुदिनन्यूनतैव । किंच महाभारते

## इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे दशाधिकशततमः सर्गः ॥ ११० ॥

युधिष्ठिरवनवासे त्रयोदशवर्षमिते किंचित्कालादर्वागेव तेषां प्राकट्ये दुर्योधनेन तदसमाप्तौ एषां प्राकट्येन पुनस्तावत्पर्यंतं पुनरेतैर्वनवासः कर्तव्यो भविष्यतीति भीष्मं प्रत्युक्ते भीष्मवाक्यं विराटपर्वणि । पंचमे पंचमे वर्षे द्वौ मासावुपजायतः ॥ एषामप्यधिका मासाः पंच च द्वादश क्षपाः ॥ त्रयोदशानां वर्षाणामिति मे धीयते मतिः ॥ सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम् ॥ एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः ॥ येषां युधिष्ठिरो राजा कस्माद्धर्मपराङ्मुखा इति ॥ एवं चेदृशव्यवहारे तिथिबद्धद्वादशमासैरेव वर्षगणना । अधिकमासगणना चोचितैव । एवं चाधिकमासगणनायां धर्महानौ न्याय्यत्वे च स्थिते कस्माद्रामस्तानुपेक्षेत् भरतो वा तान्न गणयेत् । एवं चामांतमानेन चतुर्दशी याश्विनकृष्णे पूर्णिमांतमानेन कार्तिककृष्णे षष्ठ्यां तत्समाप्तिरित्यायाति । अन्यथा चैत्रशुक्लदशम्यामारब्धस्य वनवासस्य षष्ठ्यां चतुर्दशवर्षसमाप्तिर्न कथमप्युपपद्यते । तद्गणने तु एकादश दिनन्यूनषण्मासानां चतुर्दशवर्षेषु वृद्धावुपपद्यत एव सा । तस्माद्द्वादशसमाप्त्युत्तरं त्रयोदशे किंचिद्व्यतीते अरण्यकांडोक्तास्मद्रीत्या फाल्गुनाष्टम्यां रावणकृतसीतापहारः । ततश्चतुर्दशे किंचिद्व्यतीते रामस्य लंकासमीपगमनम् । वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगमेति सीतोक्तिः सावनमानेन स्वहरणदिनतः कालगणनया । तत्र पूर्णचन्द्रप्रदीप्ता चेति रामोक्त्या पौषशुक्लचतुर्दश्यां पूर्णिमायां वा त्रिकूटशिखरप्राप्ती रामस्य । किं च हनूमतो लंकाप्रवेशोत्तरं सीतादर्शनकाले हिमव्यपायेन च शीतरश्मिरभ्युत्थितोनैकसहस्ररश्मिरिति वाक्येन द्वौ मासौ रक्षितव्यौ मे योवधिस्ते मया कृत इति रावणवाक्येन मार्गशुक्लदशम्युत्तरं हनूमतो लंकाप्रवेशो दिनद्वयांतरे लभ्यते इति निरूपितं सुंदरकांडे । ततो मार्गकृष्णेऽष्टम्यां राघवप्रस्थानस्यान्यत्रोक्तत्वेन पौषपौर्णिमात्वमेवोचितं तत्प्राप्तिदिनस्य । ततो दश पंच दिनानि सेनानिवेशदूतप्रेषणादिना गतानि । ततो युद्धारंभस्तत्र तदारभ्य भाद्रश्रावणोभयामांतं लंकापुराद्बहिः सेनयोः संकुलं युद्धम् । ततो बहुराक्षसक्षयेण भीता राक्षसा लंकां प्रविष्टा इति तद्दिनेऽवहारः । तदुत्तरप्रतिपदि रात्राविंद्रजित्कृतशरबंध इत्यादि । अतएव शरबंधबद्धराघवदर्शनकाले सीतावाक्यम् ।

तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हताविति । अनेन बहुदिनयुद्धेन बहुषु राक्षसेषु क्षयितेषु कतिपययूथपरूपेऽत्यल्पावशिष्टे सैन्ये तयोः शरबंध इति लभ्यते । तथा अयं ते सुमहान्काल शयानस्य महाबलेति कुंभकर्णं प्रति रावणोक्त्या सांप्रततनिद्रायाः षण्मासाधिकत्वप्रतीतेरप्येवमेवोचितं निरूपितं चैतत्प्राक् । सेतुबंधादिवृत्तांतं त्वं न जानीषे इति कुंभकर्णं प्रति रावणोक्त्या पूर्वमंत्रकरणोत्तरं मध्ये जागरणाभावस्य प्रतीतेः । किंच शरबंधनदिनं न कृष्णप्रतिपद्, तस्याः पूर्णिमोत्तरत्वेन संपूर्णरात्रौ चंद्रसत्तया तस्मिंस्तमसि दारुणे इत्याद्युक्तेरसंगत्यापत्तेरतः सा शुक्लप्रतिपद्वाच्या । एवं चामांतपक्षमात्रं युद्धमित्यस्यात्यंतमसंगत्यापत्तिः । यत्तु अमायामेव रावणवध इति तत्तु न युक्तम् । इंद्रजिद्वधोत्तरम् अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् ॥ कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृत इति रावणं प्रति सुपार्श्वस्योक्त्या चतुर्दश्यां रावणप्रेषितबलवधोत्तरम मायां निर्गतरावणेन रामलक्ष्मणयोर्युद्धे रात्रौ लक्ष्मणस्य शक्तिघातोत्तरं रावणलंकाप्रवेशस्योक्ततया ततो लक्ष्मणचिकित्सोत्तरं पुना रामरावणयुद्धस्य वाल्मीकिनैव स्पष्टमुक्ततया तदसंभवात् । किं च आदित्यहृदय स्यादित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवानित्यनेन सूर्यदर्शनोत्तरं जपस्योक्ततया रावणमरणोत्तरं स्थिरप्रभश्चाप्यभवद्दिवाकर इत्युक्त्या दिवा तद्वधप्रतीत्या च चिरकालयुद्धोत्तरं लक्ष्मणे शक्तिघातस्य तदर्थमोषधीपर्वतानयनस्य चोक्तत्वेनामारात्रौ शक्तिघातप्रतीत्या रणाद्रावणापगमस्य प्रतीत्या च तद्विरोधात् । तथा पाद्मे-ततो जज्ञे महायुद्धं संकुलं कपिरक्षसाम् । मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्य भूत् ॥ प्रतिपदि शुक्लप्रतिपदीत्यर्थः । उक्तयुक्तेः । ततो निशि समागम्य मायावी शक्रजिद्बली । बबंध नागपाशैस्तौ राघवौ च हरिव्रजान् ॥ ततश्चिरकालसंकुलयुद्धोत्तरम् । अन्यथा तस्यां निशीत्येव वदेत् । अग्रे द्वितीयेह्नि षष्ठ्यामिति चोक्त्या दारुणे तमसीति रामायणोक्त्या च भाद्रश्रावणोभयामोत्तरप्रतिपद्येतदिति बोध्यम् । वैनतेयस्तदाभ्येत्य तानि चास्त्राण्यमोचयत् । द्वितीयेहनि धूम्राक्षं हनूमान्निज घान वै ॥ तृतीयेह्नि वज्रदंष्ट्रं खड्गाच्चिच्छेद चांगदः । जघान हनुमान् भूयश्चतुर्थेऽहन्यकंपनम् ॥ प्रहस्तं पंचमीतिथ्यां नीलश्चिच्छेद मूर्धनि । रावणः परिभूतोभूत् षष्ठ्यां रामेण धन्विना ॥ अथ लंकेश्वरः खिन्नः कुंभकर्णं सहोदरम् । शैलमुद्गरघाताश्वधावनाद्यैरबोधयत् ॥ जघान तं कुंभकर्णं रामः सप्तमवासरे । इदं बोधनं दिनद्वयेन तं बोधितं कुंभकर्णं सप्तमवासरे बोधनोत्तरं सप्तमवासरे इत्यर्थः । यत्तु बोधनं षष्ठ्यां रात्रौ सप्तम्यां चैतद्वध इति तन्न, तदुत्थापने उक्तस्यातिप्रयासस्य रात्रिमात्रेणासंभवात् । रावणमंदिरगमनकाले सूर्यप्रभया रावणमंदिरस्यातिभास्वरत्ववर्णनेन मंत्रादिना सप्तम्यां युद्धासंभवात् । इंद्रजितो दिन त्रयेण वधोऽस्य यामषट्केनेत्यस्यासंगतत्वाच्च । एवं च भाद्रपूर्णिमायामेतद्वधः । जघान लक्ष्मणोन्येद्युरतिकायं दशास्यजम् ॥ बबंधान्येद्युरिंद्रारिर्ब्रह्मास्त्रेण नृपो कपीन् ॥ हनूमता समानीतो महौषधमहीधरः । तस्यानिलस्पर्शवशात्सर्वे ते समुत्थिताः ॥ अन्येद्युः कपिराट् कुंभं निकुंभं वायुजोऽवधीत् । तस्यां निशि रघुश्रेष्ठो जघान मकरेक्षणम् ॥ मायासीतावधं चक्रे शक्रजिद्रणमूर्धनि । तेन खिन्नोभवद्रामं आश्वस्तो लक्ष्मणेन सः ॥ त्रयोदशाहे सौमित्रिस्त्रिदिनं योधयन्बली । जघान शक्रजेतारं रामध्यानेन हेतुना ॥ अन्येद्युः अन्येषु दिवसेषु । अत्रातिकायग्रहणं त्रिशिरोदेवांतकनरांतकमहोदरमहापार्श्वोपलक्षणम् । लक्ष्मणग्रहणमंगदहनूमतोरप्युपलक्षणम् । एवं षड्भिर्दिनैः षण्णां वधः । पूर्वं क्रमेणैव तद्वधोक्तेः । अन्येद्युः सप्तम्याम् । पर्वतानयनमष्टम्याम् । अन्येद्युर्नवम्याम् । तस्यां निशि नवमीरात्रौ तदंते मायासीतावधः । ततो दशमीचतुर्थयाममारभ्य त्रयोदशीचतुर्थयामपर्यंतमिंद्रजिद्वधः । ततोवधीन्मूलबलं चतुर्दश्यां रघूद्वहः । दर्शेथ निर्ययौ राजा योद्धुं रामेण संयुगे ॥ चतुरंगबलैः सार्धं मंत्रिभिर्दशकंधरः । छत्रचामरसंयुक्तः सर्वाभरणभूषितः ॥ महारथगतो द्वारादुत्तरान्निर्ययौ बहिः । आगतो रक्षसां राजा ब्रह्मघ्नो देवकंटकः ॥ योद्धुं रघुवरेणेति शुश्रुवे कलहध्वनिः । तत्र युद्धं समभवद्वानराणां च रक्षसाम् ॥ रामरावणयोश्चैव तथा सौमित्रिणा सह । शक्तिं चिक्षेप संक्रुद्धः सोनुजं प्रति रावणः ॥ वक्षसा धारयामास सौमित्रिस्तां वियद्गताम् । तया स बाध्यमानः सन्पपात धरणीतले ॥ हनूमता जीवितोभूद्दोषध्यानयनात्पुनः । ततः क्रुद्धो महातेजा राघवो राक्षसांतकः ॥ जघान राक्षसान्सर्वान् शरैः कालांतकोपमैः । भयात्प्रदुद्राव रणे लंकां प्रति निशाचरः ॥ जगद्धाममयं पश्यन्निर्वेदात्स्वगृहं विशत् । निकुंभिलां ततः प्राप्य होमं चक्रे जिगीषया ॥ ध्वंसितं वानरेंद्रैस्तदभिचारात्मकं रिपोः । पुनरुत्थाय पौलस्त्यो रामेण सह योधितुम् ॥ दिव्यं स्यंदनमारुह्य राक्षसैर्निर्ययौ बहिः ॥ इदं निर्गमनमाश्विनशुक्लप्रतिपदि । ततः शतमखो दिव्यं रथं हर्यश्वसंयुतम् । राघवाय स्वसूतेन प्रेषयामास भक्तिमान् ॥ तं तु मातलिनानीतमारुह्य रथसत्तमम् । स्तूयमानः सुरगणैर्युयुधे तेन रक्षसा ॥ ततो युद्धमभूद्घोरं रामरावणयोर्महत् । सप्ताह्निकमहोरात्रं शस्त्रास्त्रैरतिभीषणैरिति ॥ ततो मातलिरथागमनदिनोत्तरम् । एवं

च नवम्यां तद्वधः । तदुक्तं कालिकापुराणे । रामस्यानुग्रहार्थं वै रावणस्य वधाय च । रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ॥ ततस्तु त्यक्तनिद्रा सा नंदायामाश्विने सिते । जगाम नगरीं लंका यत्रासीद्राघवः
पुरा ॥ आगत इति शेषः । इदं चागमनं रात्र्यंते तदैव मातलिरथागमनम् । तत्र गत्वा महादेवी तदा तौ रामलक्ष्मणौ । युद्धेन योजयामास स्वयमंतर्हितांबिका । राक्षसाना वानराणां जग्ध्वा सा मांसशोणितम् ।
रामरावणयोर्युद्धं सप्ताहं सा न्ययोजयत् ॥ व्यतीते सप्तमे रात्रे नवम्यां रावणं ततः । रामेण घातयामास महामाया जगन्मयी ॥ यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत । तावत्तु अष्टरात्राणि सैर्वेदेवैः सुपूजिता ॥
निहते रावणे वीरे नवम्यां सकलैः सुरैः । विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः ॥ सकलैः सुरैरित्यस्य सहेति शेषः । रामरावणबाणैस्तु युद्धं चावेक्ष्य भीतिदम् । तृतीयायां तु लंकायाः पूर्वोत्तरदिशि स्थितम् ॥
स्वातिनक्षत्रयुक्तायां भीतं सुरबलं महत् । शांत्यर्थं वारयामास देवेंद्रो वचनाद्धरेः ॥ शांत्यर्थं भयशांत्यर्थम् । ततस्तु श्रवणेनाथ दशम्यां चंडिकां शुभाम् । विसृज्य चक्रे शांत्यर्थं बलनीराजनं हरिः ॥ रिपुजनितभ
यशांत्यर्थमित्यर्थः । नीराजितबलः शक्रस्तत्र रामं सलक्ष्मणम् । संभाष्य प्रययौ स्वर्गं सहदेवैः शचीपतिः ॥ इति वृत्तं पुराकल्पे मनोः स्वायंभुवेंतरे । पुराकल्पे यथा वृत्तं प्रतिकल्पं तथैव तु ॥ प्रवर्तते स्वयं देवी
दैत्यानां नाशनाय वै । स्वायंभुवमन्वंतररूपे पुराकल्पे इत्यर्थः । प्रतिकल्पं प्रतिमन्वंतरमित्यर्थः । जलप्लवसामान्येन तत्रापि कल्पव्यवहारात् । प्रतिकल्पं भवेद्रामो रावणश्चापि राक्षसः । तथैव जायते युद्धं तथैव
त्रिदशागमः ॥ एवं रामसहस्राणि रावणानां तथैव च । भवितव्यानि भूतानि तेषु देवी प्रवर्तते ॥ तां पूजंति सुराः सर्वे बलं नीराजयंति च । तथैव च नराः सर्वे कुर्युः पूजां यथाविधि ॥ बलनीराजनं राजा कुर्या
द्बलविवृद्धये। इति । इह च ब्रह्मबोधिता महादेवी अग्नौ प्रविष्टा सीतैव भगवच्छक्तिरूपेति प्रतिभाति । अतएव ब्रह्मवैवर्ते प्रथमेंशविभागे प्रतिकल्पं विष्णोश्चरितं कीदृशमिति नारदप्रश्ने ब्रह्मवाक्यम् । स एव भगवान्नूनं
प्रतिमन्वंतरं मुने ॥ वधाय दुष्टदैत्यानां भूमिभारकृतां भुवि ॥ कलिद्वापरयोः संधौ भविष्यति न संशयः । प्रतिकल्पं त्वेवमेव भविष्यति न संशय इति । सहस्रकृत्वो रामोपि भाविता ब्रह्मणो दिने इति ब्रह्म
वैवर्ते प्रथमविभागस्थे राधां प्रति कृष्णवाक्ये । दिने इति जातावेकवचनं दिनेष्वित्यर्थः । पूर्वं प्रतिमन्वंतरमित्युक्तेः । प्रतिचतुर्युगं रामाद्यवतार इति तु न युक्तम् । चतुर्विंशतितमचतुर्युग्यां रामावतारस्य अष्टाविं
शतितमचतुर्युग्यां कृष्णावतारस्य हरिवंशे पुराणांतरे च प्रसिद्धत्वादिति दिक् । आग्निवेश्यरामायणमिति प्रसिद्धग्रंथेषु रामः पंचदशे वर्षे षड्वर्षामपि मैथिलीम् ॥ उपयेमे त्वयोध्यायां द्वादशाब्दानुवासयः ॥ सप्त
विंशतिमे वर्षे वनवासमकल्पयत् ॥ अष्टादश तु वर्षाणि सीतायास्तु तदाभवन् ॥ त्रिरात्रमुदकाहारश्चतुर्थेह्नि फलाशनः ॥ पंचमे चित्रकूटे तु रामो वासमकारयत् ॥ अथ त्रयोदशे वर्षे पंचवट्यां महामनाः ॥
रामो विरूपयामास घोरां शूर्पणखां वने ॥ ततो माघे सिताष्टम्यां मुहूर्ते वृंदसंज्ञके ॥ राघवाभ्यां विना सीतां जहार दशकंधरः ॥ माघे शुक्लचतुर्दश्यामितिपाठांतरम् । मार्गशुक्लदशम्यां तु वसंतीं रावणालये ॥ संपा
तिर्दशमे मासे आचख्यौ वानरेषु ताम् ॥ एकादश्यां महेंद्राद्रावप्लुत्वे शतयोजनम् ॥तद्रात्रिशेषे सीताया दर्शनं हि हनूमतः ॥ द्वादश्यां शिंशपावृक्षे हनूमान्पर्यवस्थितः ॥ तस्यां निशायां सीताया विश्वासालापसत्कथाः ॥
अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्तत ॥ वधो ह्यक्षकुमारस्य वनविध्वंसनं तथा ॥ ब्रह्मास्त्रेण चतुर्दश्यां बद्धः शक्रजिता कपिः ॥वह्निना पुच्छयुक्तेन लंकाया दहनं तथा॥ पौर्णमास्यां महेंद्राद्रौ पुनरागमनं कपेः॥
मार्गासितप्रतिपदः पंचाभिः पथि वासरैः ॥ पुनरागम्य षष्ठेह्नि ध्वस्तं मधुवनं च तैः ॥ सप्तम्यां प्रत्यभिज्ञानदानं शुद्धिनिवेदनम् ॥ अष्टम्युत्तरफल्गुन्यां मुहूर्ते विजयाभिधे ॥ मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघ
वस्य तु ॥ वासरे सप्तमेऽम्भोधौ स्कंधावारनिवेशनम् ॥ पौषशुक्लप्रतिपदस्तृतीया यावदंबुधेः ॥ उपस्थानं ससैन्यस्य राघवस्य बभूव ह ॥ विभीषणश्चतुर्थ्यां वै रामेण सह संगतः ॥ समुद्रतरणार्थाय पंचम्यां मंत्र
उद्गमः ॥ प्रायोपवेशनं चक्रे रामो दिनचतुष्टयम् ॥समुद्रवरलाभश्च सेतूपायप्रकीर्तनम् ॥ सेतोर्दशम्यामारंभस्त्रयोदश्यां समापनम् ॥ चतुर्दश्यां सुवेलाग्रे रामः सैन्यं न्यवेशयत् ॥ पौर्णमास्या द्वितीयांतं त्रिदिनैः सैन्य
तारणम् ॥ तृतीयाद्या दशम्यंतं मंत्रो गुल्मनिवेशने ॥ शुकसारणयोः सैन्यप्रातिरेकादशे दिने ॥ माघसितायाम् द्वादश्यां सैन्यसंख्या कृता तु वै॥सारणेन कपीनां तु सारासारोपवर्णनम् ॥ त्रयोदश्याद्यमां यावल्लं
कायां दिवसैस्त्रिभिः ॥ रावणः सैन्यसंख्यानं रणायोत्साहनं तथा ॥ ययावथांगदो दौत्यं माघशुक्लादिवासरे ॥ माघशुक्लद्वितीयादिदिनैः सप्तभिरेव तु ॥ रक्षसां वानराणां च युद्धमासीत्सुदारुणम् ॥ माघशुक्लन
वम्यां तु रात्राविंद्रजिता रणे ॥ रामलक्ष्मणयोर्नागपाशैर्बंधो बभव ह ॥ नागपाशविमोक्षार्थं दशम्यां गरुडोभ्यगात् ॥ अत्रावहारः कथितो दशम्यादिदिनद्वयम् ॥ द्वादश्यामांजनेयेन धूम्राक्षस्य वधः कृतः ॥ त्रयोदश्यां

तु तेनैव निहतोकंपनो रणे ॥ माघशुक्लचतुर्दश्या यावत्कृष्णादिवासरम् ॥ त्रिदिनेन प्रहस्तस्य नीलेन विहितो वधः ॥ माघासितद्वितीयायाश्चतुर्थ्यंतं त्रिभिर्दिनैः ॥ रामेण तुमुले युद्धे रावणो द्रावितो रणात् । पंचम्यास्त्वष्टमी यावद्रावणेन प्रबोधितः ॥ कुंभकर्णः समुत्तस्थावत्रायुद्धं चतुर्दिनम् ॥ कुंभकर्णो दिनैः षड्भिर्नवम्यास्तु चतुर्दशीम् ॥ रामेण निहतो युद्धे बहुवानरभक्षकः ॥ अमावास्यादिने शोकादवहारो बभूव ह ॥ फाल्गुनादिप्रतिपदश्चतुर्थ्यंतदिनैस्ततः ॥ नरांतकप्रभृतयो निहताः पंच राक्षसाः ॥ पंचम्याः सप्तमी यावदतिकायवधस्त्र्यहात् ॥ अष्टम्या द्वादशी यावन्निहतौ दिनपंचकात् ॥ निकुंभकुंभावूर्ध्वं तु मकराक्षश्चतुर्दिनैः ॥ फाल्गुनस्य द्वितीयायां कृष्णे शक्रजिता जितम् । तृतीयायास्तु सप्तम्यां हरयः पंचवासरात् ॥ ओषध्यानयने व्यग्रास्तदासीदवहारकः ॥ तत्र त्रयोदशीं यावद्दिनैः षड्भिस्तु शक्रजित् ॥ लक्ष्मणे न हतो युद्धे विश्रितोभिचरन् क्रमात् ॥ चतुर्दश्यां दशग्रीवो रणदीक्षाविधिक्रमात् ॥ अमावास्यां ययौ वीरो युद्धाय दशकंधरः ॥ चैत्रशुक्लप्रतिपदः पंचमीदिनपंचकैः ॥ रावणस्य प्रधानानां युध्यतामभवत्क्षयः ॥ चैत्रषष्ठ्यष्टमी यावन्महापार्श्वादिमारणम् ॥ चैत्रशुक्लनवम्यां तु सौमित्रेः शक्तिभेदनम् ॥ द्रोणाद्रिरांजनेयेन लक्ष्मणार्थमुपाहृतः ॥ दशम्यामवहारोभूद्रात्रौ युद्धं नृरक्षसोः ॥ एकादश्यां तु रामाय रथो मातलिसारथिः ॥ अष्टादशदिने रामो द्वैरथे रावणं वधीत् ॥ द्वादश्याः शुक्लपक्षस्य यावत्कृष्णचतुर्दशीम् ॥ माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम् ॥ अष्टाशीतिदिनं युद्धं मध्ये पंचदशाहकम् ॥ युद्धावहारं संग्रामस्त्रिसप्ततिदिनान्यभूत् ॥ संस्कारो रावणादीनाममा

भ्रातरंनिहतंदृष्ट्वाशयानंनिर्जितंरणे ॥ शोकवेगपरीतात्माविललापविभीषणः ॥ १ ॥ वीरविक्रांतविख्यातप्रवीणनयकोविद ॥ महार्हशयनोपेतकिंशेषेनिहतोभुवि ॥ २ ॥ निक्षिप्यदीर्घौनिश्चेष्टौभुजावंगदभूषितौ ॥ मुकुटेनापवृत्तेनभास्कराकारवर्चसा ॥ ३ ॥ तादिदंवीरसंप्राप्तंयन्मयापूर्वमीरितम् ॥ काममोहपरीतस्ययत्तन्नरुचितंतव ॥ ४ ॥ यन्नदर्पात्प्रहस्तोवानेंद्रजिन्नापरेजनाः ॥ नकुंभकर्णोतिरथोनातिकायोनरांतकः ॥ नस्वयंबहुमन्येथास्तस्योदर्कोयमागतः ॥ ५ ॥ गतःसेतुःसुनीतानांगतोधर्मस्यविग्रहः ॥ गतःसत्त्वस्यसंक्षेपःसुहस्तानांगतिर्गता ॥ ६ ॥

वास्यादिनेभवत् ॥ वैशाखादितिथौ रामः सुवेलं पुनरागमत् ॥ अभिषिक्तो द्वितीयायां लंकाराज्ये विभीषणः । सीताशुद्धिस्तृतीयायां देवेभ्यो वरलंभनम् ॥ वैशाखस्य चतुर्थ्यां तु रामः पुष्पकमास्थितः ॥ पूर्णे चतुर्दशे वर्षे पंचम्यां माधवस्य तु ॥ भरद्वाजाश्रमं रामः ससीतः पुनरागमत् ॥ नंदिग्रामे तु षष्ठ्यां वै भरतेन समागतः ॥ सप्तम्यामभिषिक्तोसावयोध्यायां रघूत्तमः ॥ जानकी रामसहिता रावणस्य निवेशने ॥ मनु १४ मासान् स्थिता पक्षदशवासरसंज्ञितेति । तत्तु सर्वांशे अनिश्चितप्रामाण्यम् । कालिकापुराणादिविरोधात् इदं कल्पांतरविषयमिति न युक्तम् । तद्विरोधादेव तस्मात्क्रियाविरोधे पुराणेषु उपसंहार एव न्याय्यः, शाखांतरोक्तांगोपसंहारवत् । यथा कुंभकर्णवधोत्र रामेणोक्तो भारते लक्ष्मणेन तादृशे विषये न तु कल्पभेदेन व्यवस्था । जन्मविषये एव तु हरिवंशोक्ता सेति बोध्यम् ॥ ३४ ॥ वर्द्धमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे दशोत्तरशततमः सर्गः ॥ ११० ॥ कतकरी० ॥ १०१ ॥ अथ विभीषणविलापः भ्रातरमिति ॥ १ ॥ प्रवीण समर्थ ॥ २ ॥ अपवृत्तेन रामबाणैस्त्याजितेन मुकुटेनोपलक्षितः ॥ ३ ॥ यन्मया पूर्वमीरितं त्वन्निधनांतसर्वरक्षोनाशरूपं तदिदं संप्राप्तम उक्तस्यैव विवरणं काममोहेति । काममोहपरीतस्य ते यन्मे वचो न रुचितम् ॥ ४ ॥ यच्च प्रहस्तादयो दर्पाद्गर्वान्न बहुमन्यंत स्वयं च वचो न बहु मन्येथास्तस्योदर्क उत्तरकालिकविपाक आगतः प्राप्तः ॥ ५ ॥ सुनीतानां धार्मिकाणां सेतुर्गतः । विग्रहः स्वरूपम् । सत्त्वस्य बलस्य संक्षेपः संग्रहस्थानम् । सुहस्तानां वीराणाम् । गतिर्गता प्राप्ता त्वयेति शेषः ॥ ६ ॥

अस्मिन् भूमौ पतिते सति आदित्यभूमिपातादितुल्यं दृश्यते । व्यवसायः प्रवृत्तिलक्षणो धर्मः निरुद्यमः त्वत्तुल्याश्रयाभावान्निर्व्यापारोभूदित्यर्थः ॥ ७ ॥ रणे त्वयि पांसुषु प्रसुप्त इव जाते इह लंकाया वर्तमानस्य गतसत्त्वस्य गताधारबलस्य लोकस्य किं शेषं न किमपि सर्वं नष्टमित्यर्थः ॥ ८ ॥ धृतिर्धैर्यमेव प्रवाला यस्य सः । प्रसभो हठ एवाग्र्यं पुष्पं यस्य सः । तप एव बलं यस्य सः । शौर्यमेव निबद्धं दृढावस्थितिसाधनं मूलं यस्य सः ॥ ९ ॥ विषाणं दंतः कुलं पितृपैतामहादयस्तेषां वंशः समूह एव वंशः पृष्ठावयवविशेषो यस्य सः । वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेपि चेति विश्वः । कोपापरगात्रः कोप एवापरगात्रं पादाद्यवयवा यस्य सः । प्रसादहस्तः प्रसादः प्रसन्नतैव हस्तः शुंडादंड इत्यर्थः । इक्ष्वाकुसिंहेन रामरूपसिंहेनावगृहीतः पातितो देहो यस्य सः ॥ १० ॥ पराक्रमोत्साहरूपं विजृंभितमर्चिर्यस्य सः । क्रोधजो निःश्वास एव धूमो यस्य सः । स्वबलमेव प्रतापो दाहशक्तिर्यस्य सः अत एव प्रतापवान् ॥ ११ ॥ सिंहर्क्षाः राक्षसास्त एव लांगूलं ककुद्विषाणे च यस्य सः । सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा

आदित्यःपतितोभूमौमग्नस्तमसिचंद्रमाः ॥ चित्रभानुःप्रशांतार्चिर्व्यवसायोनिरुद्यमः ॥ अस्मिन्निपतितेवीरेभूमौशस्त्रभृतांवरे ॥ ७ ॥ किंशेषमिहलोकस्यगतसत्त्वस्यसंप्रति ॥ रणेराक्षसशार्दूलेप्रसुप्तइवपांसुषु ॥ ८ ॥ धृतिप्रवालःप्रसभाग्र्यपुष्पस्तपोबलःशौर्यनिबद्धमूलः ॥ रणेमहान्राक्षसराजवृक्षःसंमर्दितोराघवमारुतेन ॥ ९ ॥ तेजोविषाणःकुलवंशवंशःकोपप्रसादापरगात्रहस्तः ॥ इक्ष्वाकुसिंहावगृहीतदेहःसुप्तःक्षितौरावणगंधहस्ती ॥ १० ॥ पराक्रमोत्साहविजृंभितार्चिर्निःश्वासधूमःस्वबलप्रतापः ॥ प्रतापवान्संयतिराक्षसाग्निर्निर्वापितोरामपयोधरेण ॥ ११ ॥ सिंहर्क्षलांगूलककुद्विषाणःपराभिजिद्गंधनगंधवाहः ॥ रक्षोवृषश्चापलकर्णचक्षुःक्षितीश्वरव्याघ्रहतोवसन्नः ॥ १२ ॥ वदंतंहेतुमद्वाक्यंपरिदृष्टार्थनिश्चयम् ॥ रामःशोकसमाविष्टमित्युवाचविभीषणम् ॥ १३ ॥ नायंविनष्टोनिश्चेष्टःसमरेचंडविक्रमः ॥ अत्युन्नतमहोत्साहःपतितोयमशंकितः ॥ १४ ॥ नैवंविनष्टाःशोच्यंतेक्षत्रधर्मव्यवस्थिताः ॥ वृद्धिमाशंसमानायेनिपतंतिरणाजिरे ॥ १५ ॥ येनसेंद्रास्त्रयोलोकास्त्रासितायुधिधीमता ॥ अस्मिन्कालसमायुक्तेनकालःपरिशोचितुम् ॥ १६ ॥ नैकांतविजयोयुद्धेभूतपूर्वःकदाचन ॥ परैर्वाहन्यतेवीरःपरान्वाहंतिसंयुगे ॥ १७ ॥ इयंहिपूर्वैःसंदिष्टागतिःक्षत्रियसंमता ॥ क्षत्रियोनिहतःसंख्येनशोच्यइतिनिश्चयः ॥ १८ ॥ तदेवंनिश्चयंदृष्ट्वातत्त्वमास्थायविज्वरः ॥ यदिहानंतरंकार्यंकल्प्यंतदनुचिंतय ॥ १९ ॥

उर्णापिनो मता इति निघंटुः । पराभिजित्परजेता । गंधने पराक्रमाद्युत्साहे गंधवाहो वायुतुल्यः । गंधनगंधवाह इति पांक्तः पाठः । गंधहस्तीति पाठे मत्तगजतुल्यः । रक्षोवृषो रावणः । चापलं धर्मादिविषयस्खलनमेव कर्णचक्षुर्यस्य । क्षितीश्वरव्याघ्रो रामव्याघ्रः ॥ १२ ॥ परिदृष्टः प्रकाशमानोऽर्थनिश्चयो यस्मात्तत् ॥ १३ ॥ अयं समरे निश्चेष्टोऽशक्तो भूत्वा न विनष्टः । अपि तु चंडविक्रमत्वादिगुण एक एवायम् । अशंकितो मृत्युशंकारहित एव दैवात्पतितः ॥ १४ ॥ किं ततस्तत्राह नैवमिति । वृद्धिं जयादिकमाशंसमानाः संतो ये रणाजिरे निपतंति । क्षत्रधर्मस्थिता एवं विनष्टास्ते न शोच्यंते पुण्यलोकप्राप्तेरिति भावः ॥ १५ ॥ कालसमायुक्ते कालधर्मसंबद्धे एवं दुर्गुणयुक्तस्य मरणमेव सम्यगिति भावः ॥ १६ ॥ न भूतपूर्व इत्येतदेवोपपादयति परैरिति ॥ १७ ॥ इयं हि या गतिरनेन प्राप्ता इयं गतिः पूर्वैर्मन्वादिभिः संदिष्टा उपदिष्टा । क्षत्रियसंमता क्षत्रियपूजितो तमा गतिरेव । अतः संख्ये हतः क्षत्रियो न शोच्य इति निश्चयः ॥ १८ ॥ तत्तस्मादेवं निश्चयं दृष्ट्वा ज्ञात्वा तत्त्वमास्थाय निश्चितत्त्वमवलंब्यात्र यत्कल्प्यमनु

ध्येयं तदनुचिंतय । सत्त्वमास्थायेति पाठे सत्त्वगुणमास्थायेत्यर्थः ॥ १९ ॥ २० ॥ विमर्देषु युद्धेषु ॥ २१ ॥ वनीपकेषु याचकेष्वनेन दत्तानि दानानीति शेषः । निभृताः नितरां पोषिताः ॥ २२ ॥ एषोहिताग्निरित्यार्षः संधिः । आहिताग्निरितिच्छेदः । वेदांतगः अधीतोपनिषत्कः । कर्मसु अग्निहोत्रादिषु अग्र्यशूरः परमानुष्ठाता परमकर्मठ इत्यर्थः ॥ २३ ॥ तस्य स्वर्गीयं स्वर्गार्हम् आधानं विधानं प्रेतकृत्यम् ॥ २४ ॥ तवैव ममापि स्नेहविषयोतः संस्कारविषयां शंकां मा कुर्वित्यर्थः ॥ २५ ॥ मैस्वैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकादशाधिकशततमः

तमुक्तवाक्यंविक्रांतंराजपुत्रंविभीषणः ॥ उवाचशोकसंतप्तोभ्रातुर्हितमनंतरम् ॥ २० ॥ योयंविमर्देष्वविभग्नपूर्वःसुरैःसमस्तैरपिवासवेन ॥ भवंतमासाद्यरणेविभग्नोवेलामिवासाद्ययथासमुद्रः ॥ २१ ॥ अनेनदत्तानिवनीपकेषुभुक्ताश्चभोगानिभृताश्चभृत्याः ॥ धनानिमित्रेषुसमर्पितानिवैराण्यमित्रेषुनिपातितानि ॥ २२ ॥ एषोहिताग्निश्चमहातपाश्चवेदांतगःकर्मसुचाग्र्यशूरः ॥ एतस्ययत्प्रेतगतस्यकृत्यंतत्कर्तुमिच्छामितवप्रसादात् ॥२३॥ सतस्यवाक्यैःकरुणैर्महात्मासंबोधितःसाधुविभीषणेन ॥ आज्ञापयामासनरेंद्रसूनुःस्वर्गीयमाधानमदीनसत्त्वः ॥ २४ ॥ मरणांतानिवैराणिनिवृत्तंनःप्रयोजनम् ॥ क्रियतामस्यसंस्कारोममाप्येषयथातव ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकादशाधिकशततमःसर्गः ॥ १११ ॥ रावणंनिहतंदृष्ट्वाराघवेणमहात्मना ॥ अंतःपुराद्विनिष्पेतूराक्षस्यःशोककर्शिताः ॥ १ ॥ वार्यमाणाःसुबहुशोवेष्टंत्योरणपांसुषु ॥ विमुक्तकेश्यःशोकार्तागावोवत्सहतायथा ॥ २ ॥ उत्तरेणविनिष्क्रम्यद्वारेणसहराक्षसैः ॥ प्रविश्यायोधनंघोरंविचिन्वंत्योहतंपतिम् ॥ ३ ॥ आर्यपुत्रेतिवादिन्योहानाथेतिचसर्वशः ॥ परिपेतुःकबंधांकांमहींशोणितकर्दमाम् ॥४॥ ताबाष्पपरिपूर्णाक्ष्योभर्तृशोकपराजिताः ॥ करिण्यइवनर्दंत्यःकरेण्वोहतयूथपाः ॥५॥ ददृशुस्तामहाकायंमहावीर्यंमहाद्युतिम् ॥ रावणंनिहतंभूमौनीलांजनचयोपमम् ॥६॥ ताःपतिंसहसादृष्ट्वाशयानंरणपांसुषु ॥ निपेतुस्तस्यगात्रेषुच्छिन्नावनलताइव ॥ ७ ॥ बहुमानात्परिष्वज्यकाचिदेनंरुरोदह ॥ चरणौकाचिदालंब्यकाचित्कंठेऽवलंब्यच ॥८॥ उत्क्षिप्यचभुजौकाचिद्भूमौसुपरिवर्तते ॥ हतस्यवदनंदृष्ट्वाकाचिन्मोहमुपागमत् ॥ ९ ॥ काचिदंकेशिरःकृत्वारुरोदमुखमीक्षती ॥ स्नापयंतीमुखंबाष्पैस्तुषारैरिवपंकजम् ॥ १० ॥ एवमार्ताःपतिंदृष्ट्वारावणंनिहतंभुवि ॥ चुक्रुशुर्बहुधाशोकाद्भूयस्ताःपर्यदेवयन् ॥ ११ ॥ येनवित्रासितःशक्रोयेनवित्रासितोयमः ॥ येनवैश्रवणोराजापुष्पकेणवियोजितः ॥ १२ ॥ गंधर्वाणामृषीणांचसुराणांचमहात्मनाम् ॥ भयंयेनरणेदत्तंसोयंशेतेरणेहतः ॥ १३ ॥असुरेभ्यःसुरेभ्योपिपन्नगेभ्योपिवातथा ॥ भयंयोनविजानातितस्येदंमानुषाद्भयम् ॥ १४ ॥ अवध्योदेवतानांयस्तथादानवरक्षसाम् ॥ हतःसोयंरणेशेतेमानुषेणपदातिना ॥ १५ ॥

सर्गः ॥ १११ ॥ कतकरी० ॥१०२॥ रावणमिति ॥ १ ॥ वार्यमाणाः पांसुवेष्टनाद्बहुशो निवार्यमाणा अपि रणपांसुषु वेष्टंत्यः । वत्सहताः हतवत्साः । अयमत्याप्तवियोगजशोकमात्रे दृष्टांतः ॥ २ ॥ ३ ॥ ४ ॥ हतयूथपाः करेण्व इव ददृशुः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ सुपरिवर्तते लुंठति स्म ॥ ९ ॥ स्नापयंतीत्यत्र वैकल्पिकत्वात्पक्षे मित्वाभावः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

असत्त्वः कश्चिदिव दुर्बलः प्राकृतप्राणीव लंभितः प्रापितः ॥ १६ ॥ १७ ॥ सुहृदां वाक्यमिति शेषः । एता वयं आत्मा च ते त्वया इदानीं समम् एककाल एव पातितः ॥ १८ ॥ हितं वाक्यं ब्रुवाणोपि यत्परुषितस्तत्फलं दृष्टमित्यर्थः ॥ १९ ॥ यदि ते त्वया सीता निर्यातिता समर्पिता स्यात्तदा नः इदं व्यसनं न स्यात् ॥ २० ॥ भ्राता वृत्तकामो निष्पन्नमनोरथः स्ववाक्यकरणात् । मित्रकुलं मित्रपक्षः वय मविधवाः स्याम शत्रवश्च सकामा न स्युः ॥ २१ ॥ २२ ॥ एवं रावणीयस्वेच्छाचरणस्य नाशहेतुतामुक्त्वेदानीं तन्निरासपूर्वकं दैवस्य तत्कारणत्वं दर्शयंति नेति । कामं पर्याप्तम् । तव न कामकारो न त्वादिच्छा प्रवर्तितोयं व्यवहारः । कुतो यतो दैवं सर्वं प्राणिजातं चेष्टयते तत्तत्कर्मानुसारेणातो दैवहतमेव केनचिन्निमित्तेन हन्यते ॥ २३ ॥ ते तव रणे वानराणां राक्षसानां तव चायं विनाशो दैवादुपागतः ॥ २४ ॥ अर्थेन

योनशक्यःसुरैर्हन्तुंनयक्षैर्नासुरैस्तथा ॥ सोयंकश्चिदिवासत्त्वोमृत्युंमर्त्येनलंभितः ॥ १६ ॥ एवंवदंत्योरुरुदुस्तस्यतादुःखिताःस्त्रियः ॥ भूयएवचदुःखार्ताविलेपुश्चपुनःपुनः ॥१७॥ अशृण्वतातुसुहृदांसततंहितवादिनाम् ॥ मरणायाहृतासीताराक्षसाश्चनिपातिताः॥एताःसममिदानींतेवयमात्माचपातितः ॥ १८ ॥ ब्रुवाणोपिहितंवाक्यमिष्टोभ्राताविभीषणः ॥ दृष्टंपरुषितोमोहात्त्वयात्मवधकांक्षिणा ॥ १९ ॥ यदिनिर्यातितातेस्यात्सीतारामायमैथिली ॥ ननःस्याद्व्यसनंघोरमिदंमूलहरंमहत् ॥ २० ॥ वृत्तकामोभवेद्भ्रातारामोमित्रकुलंभवेत् ॥ वयंचाविधवाःसर्वाःसकामानचशत्रवः ॥ २१ ॥ त्वयापुनर्नृशंसेनसीतांसंरुंधताबलात् ॥ राक्षसावयमात्माचत्रयंतुल्यंनिपातितम् ॥ २२ ॥ नकामकारःकामंवातवराक्षसपुंगव ॥ दैवंचेष्टयतेसर्वंहतंदैवेनहन्यते ॥ २३ ॥ वानराणांविनाशोयंराक्षसानांचतेरणे ॥ तवचैवमहाबाहोदैवयोगादुपागतः ॥ २४ ॥ नैवार्थेनचकामेनविक्रमेणनचाज्ञया॥ शक्यादैवगतिर्लोकेनिवर्तयितुमुद्यता ॥ २५ ॥ विलेपुरेवंदीनास्ताराक्षसाधिपयोषितः ॥ कुरर्यइवदुःखार्ताबाष्पपर्याकुलेक्षणाः ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे द्वादशाधिकशततमः सर्गः ॥ ११२ ॥ तासांविलपमानानांतदाराक्षसयोषिताम् ॥ ज्येष्ठपत्नीप्रियादीनाभर्तारंसमुदैक्षत ॥ १ ॥ दशग्रीवंहतंदृष्ट्वारामेणाचिंत्यकर्मणा ॥ पतिंमंडोदरीतत्रकृपणापर्यदेवयत् ॥ २ ॥ ननुनाममहाबाहोतववैश्रवणानुज ॥ क्रुद्धस्यप्रमुखेस्थातुंत्रस्यत्यपिपुरंदरः ॥ ३ ॥ ऋषयश्चमहांतोपिगंधर्वाश्चयशस्विनः ॥ ननुनामतवोद्वेगाच्चारणाश्चदिशोगताः ॥ ४ ॥ सत्वंमानुषमात्रेणरामेणयुधिनिर्जितः ॥ नव्यपत्रपसेराजन्किमिदंराक्षसेश्वर ॥ ५ ॥ कथंत्रैलोक्यमाक्रम्यश्रियावीर्येणचान्वितम् ॥ अविषह्यंजघानत्वांमानुषोवनगोचरः ॥ ६ ॥ मानुषाणामविषयेचरतःकामरूपिणः ॥ विनाशस्तवरामेणसंयुगेनोपपद्यते ॥ ७ ॥ नचैतत्कर्मरामस्यश्रद्दधामिचमूमुखे ॥ सर्वतःसमुपेतस्यतवतेनाभिमर्षणम् ॥ ८ ॥

धनेन कामेनेच्छया आज्ञया मर्यादाव्यवस्थापनशक्त्या उद्यता फलोन्मुखीभूता ॥ २५ ॥ २६ ॥ चैरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्वादशाधिकशततमः सर्गः ॥ ११२ ॥ कतककरी० ॥ १०३ ॥ तासामिति ॥ १ ॥ मंडोदरी मंडनभूतोदरी कृशोदरीत्यर्थः । मंदोदरीति पाठेप्ययमेवार्थः ॥ २ ॥ पुरंदरोपि त्रस्यति ॥ ३ ॥ तवोद्वेगात्त्वत्त उद्वेगं प्राप्य ॥ ४ ॥ वीर्येण त्रैलोक्यमाक्रम्य श्रियान्वितं त्वां मानुषो जघानेति यदत्र किमिति न व्यपत्रपसे ॥ ५ ॥ ६ ॥ मानुषाणामविषये अगोचरे लंकाद्वीपरूपे देशे इत्यर्थः ॥ ७ ॥ सर्वतः समुपेतस्य जयोपेतस्य तव तेन

रामेण यदभिमर्षणं प्रधर्षणमेतद्रामस्य कर्मेति न श्रद्दधामि ॥ ८ ॥ ननु प्रत्यक्षसिद्धे कथमश्रद्धेत्यरुच्या पक्षांतरमथवेति । तव नाशायाप्रतितर्किताम् अचिंतनीयोपपत्तिकां मायां विधाय कृतांतो रामरूपेणागत इति मन्ये इति शेषः ॥ ९ ॥ अथवा रामरूपेण वासवेन त्वं धर्षितोसि । एतन्नोपपद्यत इत्याह वासवस्येति । महाबलत्वादिविशेषणं त्वां द्रष्टुमपि वासवस्य तु कुतः शक्तिः ॥ १० ॥ अतो व्यक्तमित्यादि । सत्यमेव मंदोदरी आनीते भगवत्कृपया महायोगी स्वाभाविकसर्वशक्तियुक्तः परमात्मा आत्मनामप्यात्मा सर्वांतर्यामीत्यर्थः । य आत्मनि तिष्ठन्नात्मानमंतरोयमयतीति श्रुतेः सनातनः सदास्तित्वयुक्तः ॥ ११ ॥ अनादिमध्यनिधनः जन्मवृद्धिनाशहीनः महतः परमो महान्महतो महीयान् तमसः परमः प्रकृतेः प्रवर्तकः । तपसः परम इति पाठे सर्वतः फलद इत्यर्थः । धाता स्रष्टा यतो वा इमानि भूतानि जायंत इत्युक्तेः । इदानीं विग्रहगुणानाह शंखेत्यादि ॥ १२ ॥ नित्यश्रीरनपायिलक्ष्मीकः अजय्यो जेतुमशक्यः शाश्वतोपक्षयरहितः ध्रुवः परिणामशून्यः अनेन षड्भावविकारशून्यत्वमुक्तम् । महायोगित्वादिविशेषणविशिष्टो यो विष्णुः स

अथवारामरूपेणकृतांतःस्वयमागतः ॥ मायांतवविनाशायविधायाप्रतितर्किताम् ॥ ९ ॥ अथवावासवेनत्वंधर्षितोसिमहाबल ॥ वासवस्यतुकाशक्तिस्त्वांद्रष्टुमपिसंयुगे ॥ १० ॥ महाबलंमहावीर्यंदेवशत्रुंमहौजसम् ॥ व्यक्तमेषमहायोगीपरमात्मासनातनः ॥ ११ ॥ अनादिमध्यनिधनोमहतः परमोमहान् ॥ तमसःपरमोधाताशंखचक्रगदाधरः ॥ १२ ॥ श्रीवत्सवक्षानित्यश्रीरजय्यःशाश्वतोध्रुवः ॥ मानुषंरूपमास्थायविष्णुःसत्यपराक्रमः ॥ १३ ॥ सर्वैःपरिवृतोदेवैर्वानरत्वमुपागतैः ॥ सर्वलोकेश्वरःश्रीमान्लोकानांहितकाम्यया ॥ १४ ॥ सराक्षसपरीवारंदेवशत्रुंभयावहम् ॥ इंद्रियाणिपुराजित्वाजितंत्रिभुवनंत्वया ॥ १५ ॥ स्मरद्भिरिवतद्वैरमिंद्रियैरेवनिर्जितः ॥ यदैवहिजनस्थानेराक्षसैर्बहुभिर्वृतः ॥ १६ ॥ खरस्तुनिहतोभ्रातातदारामोनमानुषः ॥ यदैवनगरींलंकांदुष्प्रवेशांसुरैरपि ॥ १७ ॥ प्रविष्टोहनुमान्वीर्यात्तदैवव्यथितावयम् ॥ क्रियतामविरोधश्चराघवेणेतियन्मया ॥ १८ ॥ उच्यमानंनगृह्णासितस्येयंव्युष्टिरागता ॥ अकस्माच्चाभिकामोसिसीतांराक्षसपुंगव ॥ १९ ॥ ऐश्वर्यस्यविनाशायदेहस्यस्वजनस्यच ॥ अरुंधत्याविशिष्टांतांरोहिण्याश्चापिदुर्मते ॥ २० ॥ सीतांधर्षयतामान्यांत्वयाह्यसदृशंकृतम् ॥ वसुधायाहिवसुधांश्रियाःश्रींभर्तृवत्सलाम् ॥ २१ ॥ सीतांसर्वानवद्यांगीमरण्येविजनेशुभाम् ॥ आनयित्वातुतांदीनांछद्मनात्मस्वदूषणम् ॥ २२ ॥ अप्राप्यतंचैवकामंमैथिलीसंगमेकृतम् ॥ पतिव्रतायास्तपसानूनंदग्धोसिमेप्रभो ॥ २३ ॥ तदैवयन्नदग्धस्त्वंधर्षयंस्तनुमध्यमाम् ॥ देवाबिभ्यतितेसर्वेसेंद्राःसाग्निपुरोगमाः ॥ २४ ॥

एव राम इत्यर्थः ॥ १३ ॥ १४ ॥ सराक्षसपरीवारं राक्षसरूपपरीवारसहितम् । हतवानितिशेषः । देवशत्रुं भयावहमित्यनेन भगवतो वैषम्यनैर्घृण्ये परिहृते अवतारप्रयोजनं रावणवधप्रयोजनं च देवभयनिवृत्तिरूपं दर्शितम् । पुरा भगवदुद्देशेन तपोनुष्ठानकाले ॥ १५ ॥ तद्वैरं स्वजयनिमित्तं वैरं स्मरद्भिरिंद्रियैरकर्मप्रवृत्तिसंपादनेन निर्जितः ॥१६॥१७॥१८॥ व्युष्टिः फलम् । सीतां प्रति अभिकामः कामुकः ॥१९॥२०॥ मान्यामुपास्यदेवतां वसुधायाः सर्वक्षमावन्निदर्शनभूताया वसुधां निदर्शनभूमिम् । एवं सर्वसौभाग्ययुक्तानां निदर्शनभूतश्रियोपि निदर्शनभूताम् ॥ २१ ॥ छद्मना आनयित्वा आनीय आत्मस्वदूषणम्, स्वशब्दः स्वीयवाची । आत्मनः स्वकुलस्य नाशनं कृतमिति शेषः ॥ २२ ॥ मैथिलीसंगमे कृतं तं काममप्राप्य पतिव्रतायास्तस्यास्तपसा नूनं निश्चयेन दग्धोसि मे प्रभो मे भर्तः ॥ २३ ॥ तां धर्षयंस्तदैव धर्षणसमय

एव न दग्ध इति यत् येन माहात्म्येन देवा बिभ्यति तेन माहात्म्येनेत्यर्थः ॥ २४ ॥ काले परिपाकसमये पर्यागते सति ॥ २५ ॥ शुभं सुखम् । पापं दुःखम् ॥ २६ ॥ तुभ्यं तव ततः सीतातोपि ॥२७॥ मैथिली कुलादिना मदधिका न मत्तुल्यापि नाथापि तत्तु तथात्वं तु त्वं मोहान्न बुध्यसे ॥ २८ ॥ अलक्षणोऽनिमित्तः मैथिलीकृतलक्षणः मैथिलीकृतं लक्षणं निमित्तं यस्य सः मैथिलीहेतुक इत्यर्थः ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ श्रिया उपलक्षितेति शेषः ॥ ३२ ॥ ३३ ॥ सैवाहं सौभाग्यलक्षणवत्येव तव वधादन्येव विधवेव संवृत्तेत्यर्थः । अत्रान्येवेतीवकारेण देवस्थित्या वस्तुतोऽवैधव्यं सूचितम् । सुभ्रु शोभनभ्रू

अवश्यमेवलभतेफलंपापस्यकर्मणः ॥ भर्तःपर्यागतेकालेकर्तानास्त्यत्रसंशयः ॥ २५ ॥ शुभकृच्छुभमाप्नोतिपापकृत्पापमश्नुते ॥ विभीषणःसुखं प्राप्तस्त्वंप्राप्तःपापमीदृशम् ॥ २६॥ संत्यन्याःप्रमदास्तुभ्यंरूपेणाभ्यधिकास्ततः ॥ अनंगवशमापन्नस्त्वंतुमोहान्नबुद्ध्यसे ॥ २७ ॥ नकुलेननरूपेणनदाक्षिण्येनमैथिली ॥ मयाधिकावातुल्यावातत्तुमोहान्नबुद्ध्यसे ॥ २८ ॥ सर्वदासर्वभूतानांनास्तिमृत्युरलक्षणः ॥ तवतद्वदयंमृत्युर्मैथिलीकृतलक्षणः ॥ २९ ॥ सीतानिमित्तजोमृत्युस्त्वयादूरादुपाहृतः ॥ मैथिलीसहरामेणविशोकाविहरिष्यति ॥ ३० ॥ अल्पपुण्यात्वहंघोरेपतिताशोकसागरे ॥ कैलासेमंदरेमेरौतथाचैत्ररथेवने ॥ ३१ ॥ देवोद्यानेषुसर्वेषुविहृत्यसहितात्वया ॥ विमानेनानुरूपेणयायाम्यतुलयाश्रिया ॥ ३२ ॥ पश्यंतीविविधान्देशांस्तांस्तांश्चित्रस्रगंवरा ॥ भ्रंशिताकामभोगेभ्यःसास्मिवीरवधात्तव ॥ ३३ ॥ सैवान्येवास्मिसंवृत्ताधिग्राज्ञांचंचलांश्रियम् ॥ हाराजन्सुकुमारंतेसुभ्रुसुत्वक्समुन्नसम् ॥ ३४ ॥ कांतिश्रीद्युतिभिस्तुल्यमिंदुपद्मदिवाकरैः ॥ किरीटकूटोज्ज्वलितंताम्रास्यंदीप्तकुंडलम् ॥ ३५ ॥ मदव्याकुललोलाक्षंभूत्वायत्पानभूमिषु ॥ विविधस्रग्धरंचारुवल्गुस्मितकथंशुभम् ॥ ३६ ॥ तदेवाद्यतवैवंहिवक्त्रंनभ्राजतेप्रभो ॥ रामसायकनिर्भिन्नं रक्तंरुधिरविस्रवैः ॥३७॥ विशीर्णमेदोमस्तिष्कंरूक्षंस्यंदनरेणुभिः ॥ हापश्चिमामेसंप्राप्तादशावैधव्यदायिनी ॥ ३८ ॥ यामयासीन्नसंबुद्धाकदाचिदपिमंदया ॥ पितादानवराजोमेभर्तामेराक्षसेश्वरः ॥ ३९ ॥ पुत्रोमेशक्रनिर्जेताइत्यहंगर्विताभृशम् ॥ दृप्तारिमथनाःक्रूराःप्रख्यातबलपौरुषाः ॥४०॥

युतम् । सुत्वक् शोभनत्वगिंद्रियस्थानम् ॥३४॥ कांतिराह्लादकरी प्रभा तया चंद्रतुल्यम् । श्रीरुज्ज्वलता तया पद्मवत् द्युतिः पराभिभवसामर्थ्यं तेजस्तेन रवितुल्यम् । कूटः समूहः ताम्रास्यं ताम्रोष्ठम् ॥३५॥ पानभूमिषु मदव्याकुललोलाक्षं भूत्वा यदभ्राजतेति शेषः । चारु सुंदरम् । वल्गु चंचलम् । स्मितकथं स्मितोपेतकथायुतम् ॥ ३६ ॥ तदेव ते वक्त्रम् एवमेव कथामापन्नं न भ्राजते तामवस्थामाह रामेति । रक्तं रक्तवर्णम् ॥ ३७ ॥ विशीर्णं मेदोस्थिगतमांसं मस्तिष्कं मज्जा च यस्य तत् सा वैधव्यदा पश्चिमा दशा मे मया संप्राप्ता ॥ ३८ ॥ या मया संबुद्धा नासीत् दानवराजो मयः ॥ ३९ ॥ अहं गर्विता विशेष

पतिपुत्रपितृत्वात् दुष्टारिमथनत्वादिधर्मा मम नाथास्त्रातारः संतीति मम ध्रुवा दृढा मतिरासीत् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ श्वाविधः शल्यकस्य शलकैः कंटकैरिव लग्नैर्बाणैर्निरंतरं कृतमिति शेषः ॥ ४५ ॥ तथा मर्मसु स्वर्पितैर्बाणैः संछिन्नस्नायुबंधनम् । रुधिरच्छवि तत्संबंधेन रक्तकांति ॥ ४६ ॥ वज्रप्रहारमभितो विकीर्णः पर्वत इव ते शरीरं विकीर्णम् । हा खेदं स्वप्न इवेदं कथं सत्यमेव जातम् ॥ ४७ ॥ वसु रत्नम् महत् अत्यर्थम् ॥ ४८ ॥ ४९ ॥ साधुभूतानां साधुजनानां विदारणम् ओजसा बलेन दृप्तवाक्यानां गर्विष्ठवचसाम् ॥ ५० ॥ ५१ ॥ आहवे निग्रहीतारं जेतारमिति यावत् ॥ ५२ ॥

अकुतश्चिद्भयानाथाममेत्यासीन्मतिर्ध्रुवा ॥ तेषामेवंप्रभावाणांयुष्माकंराक्षसर्षभाः ॥ ४१ ॥ कथंभयमसंबुद्धंमानुषादिदमागतम् ॥ स्निग्धेंद्रनीलनीलंतुप्रांशुशैलोपमंमहत् ॥ ४२ ॥ केयूरांगदवैदूर्यमुक्ताहारस्रगुज्ज्वलम् ॥ कांतंविहारेष्वधिकंदीतंसंग्रामभूमिषु ॥ ४३ ॥ भात्याभरणभाभिर्यद्विद्युद्भिरिवतोयदः ॥ तदेवाद्यशरीरंतेतीक्ष्णैर्नैकशरैश्चितम् ॥ ४४ ॥ पुनर्दुर्लभसंस्पर्शंपरिष्वक्तुंनशक्यते ॥ श्वाविधःशललैर्युक्तंलग्नैर्बाणैर्निरंतरम् ॥ ४५ ॥ स्वर्पितैर्मर्मसुभृशंसंछिन्नस्नायुबंधनम् ॥ क्षितौनिपतितंराजन्श्यामंवैरुधिरच्छवि ॥ ४६ ॥ वज्रप्रहारमभितोविकीर्णइवपर्वतः ॥ हास्वप्नःसत्यमेवेदंत्वंरामेणकथंहतः ॥ ४७ ॥ त्वंमृत्योरपिमृत्युःस्याःकथंमृत्युवशंगतः ॥ त्रैलोक्यवसुभोक्तारंत्रैलोक्योद्वेगदंमहत् ॥ ४८ ॥ जेतारंलोकपालानांक्षेप्तारंशंकरस्यच ॥ दृप्तानांनिग्रहीतारमाविष्कृतपराक्रमम् ॥ ४९ ॥ लोकक्षोभयितारंचसाधुभूतविदारणम् ॥ ओजसादृप्तवाक्यानांवक्तारंरिपुसन्निधौ ॥ ५० ॥ स्वयूथभृत्यगोप्तारंहंतारंभीमकर्मणाम् ॥ हंतारंदानवेंद्राणांयक्षाणांचसहस्रशः ॥ ५१ ॥ निवातकवचानांतुनिग्रहीतारमाहवे ॥ नैकयज्ञविलोप्तारंत्रातारंस्वजनस्यच ॥ ५२ ॥ धर्मव्यवस्थाभेत्तारंमायास्रष्टारमाहवे ॥ देवासुरनृकन्यानामाहर्तारंततस्ततः ॥ ५३ ॥ शत्रुस्त्रीशोकदातारंनेतारंस्वजनस्यच ॥ लंकाद्वीपस्यगोप्तारंकर्तारंभीमकर्मणाम् ॥ ५४ ॥ अस्माकंकामभोगानांदातारंरथिनांवरम् ॥ एवंप्रभावंभर्तारंदृष्ट्वारामेणपातितम् ॥ ५५ ॥ स्थिरास्मियादेहमिमंधारयामिहतप्रिया ॥ शयनेषुमहार्हेषुशयित्वाराक्षसेश्वर ॥ ५६ ॥ इहकस्मात्प्रसुप्तोसिधरण्यांरेणुगुंठितः ॥ यदामेतनयःशस्तोलक्ष्मणेनेंद्रजिद्युधि ॥ ५७ ॥ तदात्वभिहतातीव्रमद्यत्वस्मिन्निपातिता ॥ साहंबंधुजनैर्हीनाहीनानाथेनचत्वया ॥ ५८ ॥ विहीनाकामभोगैश्चशोचिष्येशाश्वतीःसमाः ॥ प्रपन्नोदीर्घमध्वानंराजन्नद्यसुदुर्गमम् ॥ ५९ ॥ नयमामपिदुःखार्तांनवर्तिष्येत्वयाविना ॥ कस्मात्त्वंमांविहायेहकृपणांगंतुमिच्छसि ॥ ६० ॥ दीनांविलपतींमंदांकिंचमांनाभिभाषसे ॥ दृष्ट्वानखल्वभिक्रुद्धोमामिहानवगुंठिताम् ॥ ६१ ॥ निर्गतांनगरद्वारात्पद्भ्यामेवागतांप्रभो ॥ पश्येष्टदारदारांस्तेभ्रष्टलज्जावगुंठनान् ॥ ६२ ॥ बहिर्निष्पतितान्सर्वान्कथंदृष्ट्वानकुप्यसि ॥ अयंक्रीडासहायस्तेऽनाथोलालप्यतेजनः ॥ ६३ ॥ नचैनमाश्वासयसिकिंवानबहुमन्यसे ॥ यास्त्वयाविधवाराजन्कृतानैकाःकुलस्त्रियः ॥ ६४ ॥

॥ ५३ ॥ ५४ ॥ एवंप्रभावं त्वां हतं दृष्ट्वा हतप्रिया इमं देहं धारयामि अतः स्थिरा कठिनहृदयास्मीति जाने ॥ ५५ ॥ ५६ ॥ ५७ ॥ तदा त्वभिहता अभिघातमात्रं प्राप्ता अद्य तु निपातितास्मि ॥ ५८ ॥ ५९ ॥ ६० ॥ अनवगुंठितां भ्रष्टावगुंठनाम् ॥ ६१ ॥ भ्रष्टं लज्जारक्षकमवगुंठनं येषां तान् ॥ ६२ ॥ ६३ ॥ नैकाः कुलस्त्रियः ऋष्यादीनामिति शेषः ॥ ६४ ॥

यच्छप्तस्तत्फलं त्वं परवशं शत्रुवशं गतः॥६५॥त्वया विप्रकृताभिःकृतापकाराभिस्तदापकारसमये यच्छप्तं तत्फलमागतं विप्रकृतानां पतिव्रतानामश्रूण्यकस्मात्किंचिदनर्थकारणं विना भूतलं न पतंतीति योयं प्रवादः प्रायशो जने चरति प्रवर्तते स सत्यं त्वां प्रति जातः तवानर्थकर एव जात इत्यर्थः ॥६६॥६७॥ शौटीर्यमानिना वीरमानिना ॥६८॥ कातर्यं कातरत्वम् ॥६९॥ पक्वलक्षणं पक्वस्य आसन्नविनाशस्य लक्षणमित्यर्थः ॥ ७० ॥ मे देवरो विभीषणो राक्षसानां विनाश आगत इति यदब्रवीत्तदागतमिति शेषः ॥ ७१ ॥ व्यसनेन स्त्रीप्रसक्तिलक्षणेन प्रसंगिना प्रसक्तिमता ॥ ७२ ॥ त्वत्कृतेनार्थोऽशेषैश्वर्यलक्षणो निवृत्तः

पतिव्रताधर्मरतागुरुशुश्रूषणेरताः ॥ ताभिःशोकाभितप्ताभिःशप्तःपरवशंगतः ॥ ६५ ॥ त्वयाविप्रकृताभिश्चतदाशप्तस्तदागतम् ॥ प्रवादःसत्यमेवायंत्वांप्रतिप्रायशोनृप ॥ ६६ ॥ पतिव्रतानांनाकस्मात्पतंत्यश्रूणिभूतले ॥ कथंचनामतेराजँल्लोकानाक्रम्यतेजसा ॥ ६७ ॥ नारीचौर्यमिदंक्षुद्रंकृतंशौटीर्यमानिना ॥ अपनीयाश्रमाद्रामंयन्मृगच्छद्मनात्त्वया ॥ ६८ ॥ आनीतारामपत्नीसाअपनीयचलक्ष्मणम् ॥ कातर्यंचनतेयुद्धेकदाचित्संस्मराम्यहम् ॥ ६९ ॥ तत्तुभाग्यविपर्यासान्नूनंतेपक्वलक्षणम् ॥ अतीतानागतार्थज्ञोवर्तमानविचक्षणः ॥ ७० ॥ मैथिलीमाहृतांदृष्ट्वाध्यात्वानिःश्वस्यचायतम् ॥ सत्यवाक्समहाबाहोदेवरोमेयदब्रवीत् ॥ ७१ ॥ अयंराक्षसमुख्यानांविनाशःप्रत्युपस्थितः ॥ कामक्रोधसमुत्थेनव्यसनेनप्रसंगिना ॥ ७२ ॥ निवृत्तस्त्वत्कृतेनार्थःसोयंमूलहरोमहान् ॥ त्वयाकृतमिदंसर्वमनाथंराक्षसंकुलम् ॥ ७३ ॥ नहित्वंशोचितव्योमेप्रख्यातबलपौरुषः ॥ स्त्रीस्वभावात्तुमेबुद्धिःकारुण्येपरिवर्तते ॥ ७४ ॥ सुकृतंदुष्कृतंचत्वंगृहीत्वास्वांगतिंगतः ॥ आत्मानमनुशोचामित्वद्विनाशेनदुःखिताम् ॥ ७५ ॥ सुहृदांहितकामानांनश्रुतंवचनंत्वया ॥ भ्रातॄणांचैवकात्स्न्येंनहितमुक्तंदशानन ॥ ७६ ॥ हेत्वर्थयुक्तंविधिवच्छ्रेयस्करमदारुणम् ॥ विभीषणेनाभिहितंनकृतंहेतुमत्त्वया ॥ ७७ ॥ मारीचकुंभकर्णाभ्यांवाक्यंममपितुस्तथा ॥ नकृतंवीर्यमत्तेनतस्येदंफलमीदृशम् ॥ ७८ ॥ नीलजीमूतसंकाशपीतांबरशुभांगद ॥ स्वगात्राणिविनिक्षिप्यकिंशेषेरुधिरावृतः ॥ ७९ ॥ प्रसुप्तइवशोकार्तांकिंमांनप्रतिभाषसे ॥ महावीर्यस्यदक्षस्यसंयुगेष्वपलायिनः ॥८०॥ यातुधानस्यदौहित्रींकिंमांनप्रतिभाषसे ॥ उत्तिष्ठोत्तिष्ठकिंशेषेनवेपरिभवेकृते ॥ ८१ ॥ अद्यवैनिर्भयालंकांप्रविष्टाःसूर्यरश्मयः ॥ येनसूदयसेशत्रून्समरेसूर्यवर्चसा ॥ ८२ ॥ वज्रंवज्रधरस्येवसोयंतेसततार्चितः ॥ रणेबहुप्रहरणोहेमजालपरिष्कृतः ॥ ८३ ॥ परिघोव्यवकीर्णस्तेबाणैश्छिन्नःसहस्रधा ॥ प्रियामिवोपसंगृह्यकिंशेषेरणमेदिनीम् ॥८४॥ अप्रियामिवकस्माच्चमांनेच्छस्यभिभाषितुम् ॥ धिगस्तुहृदयंयस्यामभेदंनसहस्रधा ॥८५॥

यतः सोयं परस्त्रीप्रसक्तिरूपो मूलहरोऽनर्थ इति शेषः ॥ ७३ ॥ ७४ ॥ दुःखितां संप्राप्तदुःखाम् ॥ ७५ ॥ सुहृदां मारीचादीनाम् ॥ ७६ ॥ अदारुणं सौम्यं हेत्वर्थयुक्तं हेतुप्रयोजनाभ्यां सहितं हेतुमत्त्र कृतं फलवत्त्वानुष्ठितमित्यर्थः ॥ ७७ ॥ मारीचकुंभकर्णाभ्यामभिहितमिति शेषः ॥ ७८ ॥ विनिक्षिप्य भूतले इति शेषः ॥ ७९ ॥ ८० ॥ यातुधानस्य सुमालेः ॥ ८१ ॥ ८२ ॥ ते त्वया सततमर्चितः

पूजितः बहुप्रहरणो बहुहंता ॥ ८३ ॥ ८४ ॥ ८५ ॥ फलते स्फुटति ॥ ८६ ॥ कश्मला मूर्च्छासन्ना पीडिता ॥ ८७ ॥ ८८ ॥ दशाविभागस्य पुण्यपरिपाकदशाविशेषस्य पर्याये विनाशे राज्ञां चंचलाः श्रियस्ते न विदिताः किम् एवं लोकानां स्थितिरध्रुवा चंचलेत्यपि ते किं न विदितम् ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ प्रश्रितं राममनोनुकूलं यथा तथा रामं प्रत्युवाच त्यक्तो धर्मो व्रतं च येन तम् अनृतमनृतवादिनम् ॥ ९३ ॥ ९४ ॥ गुरुगौरवात्पूज्योपि उक्तदोषान्मत्तः पूजां नार्हते नार्हति । हे राम सर्व मनुजाः पूर्वं भ्रातुरसंस्कारश्रवणान्मां नृशंस इति वक्ष्यंति पश्चात्तस्यागुणान् श्रुत्वा पुनः सुकृतं सम्यक्कृतमित्येवं वक्ष्यंति ॥ ९५ ॥ ९६ ॥ तवापीति । सुग्रीवस्येव तवापि प्रियं राज्याभिषेकलक्षणं मया कार्यं कर्तव्यं हि यतस्त्वत्प्रभावान्मया जितम् ॥ ९७ ॥ तस्मादवश्यं क्षमम् अभिषेकसंपादनयोग्यं यत्कृत्यं प्रेत

त्वयिपंचत्वमापन्नेफलतेशोकपीडितम् ॥ इत्येवंविलपंतीसाबाष्पपर्याकुलेक्षणा ॥ ८६ ॥ स्नेहोपस्कन्नहृदयातदामोहमुपागमत् ॥ कश्मलाभिहतासन्नाबभौसारावणोरसि ॥ ८७ ॥ संध्यानुरक्तेजलदेदीप्ताविद्युदिवोज्ज्वला ॥ तथागतांसमुत्थाप्यसपत्न्यस्तांभृशातुराः ॥ ८८ ॥ पर्यवस्थापयामासूरुदत्योरुदतींभृशम् ॥ किंतेनविदितादेविलोकानांस्थितिरध्रुवा ॥ ८९ ॥ दशाविभागपर्यायेराज्ञांवैचंचलाःश्रियः ॥ इत्येवमुच्यमानासासशब्दंप्ररुरोदह ॥ ९० ॥ स्नपयंतीतदास्रेणस्तनौवक्त्रंसुनिर्मलम् ॥ एतस्मिन्नंतरेरामोविभीषणमुवाचह ॥ ९१ ॥ संस्कारःक्रियतांभ्रातुःस्त्रीगणःपरिसांत्व्यताम् ॥ तमुवाचततोधीमान्विभीषणइदंवचः ॥ ९२ ॥ विमृश्यबुद्ध्याप्रश्रितंधर्मार्थसहितंहितम् ॥ त्यक्तधर्मव्रतंक्रूरंनृशंसमनृतंतथा ॥ ९३ ॥ नाहमर्होस्मिसंस्कर्तुंपरदाराभिमर्शनम् ॥ भ्रातृरूपोहिमेशत्रुरेषसर्वाहितेरतः ॥ ९४ ॥ रावणोनार्हतेपूजांपूज्योपिगुरुगौरवात् ॥ नृशंसइतिमांरामवक्ष्यंतिमनुजाभुवि ॥ ९५ ॥ श्रुत्वातस्यागुणान्सर्वेवक्ष्यंतिसुकृतंपुनः ॥ तच्छ्रुत्वापरमप्रीतोरामोधर्मभृतांवरः ॥ ९६ ॥ विभीषणमुवाचेदंवाक्यज्ञंवाक्यकोविदः ॥ तवापिमेप्रियंकार्यंत्वत्प्रभावान्मयाजितम् ॥ ९७ ॥ अवश्यंतुक्षमंवाच्योमयात्वंराक्षसेश्वर ॥ अधर्मानृतसंयुक्तःकामंत्वेषनिशाचरः ॥ ॥ ९८ ॥ तेजस्वीबलवाञ्छूरःसंग्रामेषुचनित्यशः ॥ शतक्रतुमुखैर्देवैःश्रूयतेनपराजितः ॥ ९९ ॥ महात्माबलसंपन्नोरावणोलोकरावणः ॥ मरणांतानिवैराणिनिर्वृत्तंनःप्रयोजनम् ॥ १०० ॥ क्रियतामस्यसंस्कारोममाप्येषयथातव ॥ त्वत्सकाशान्महाबाहोसंस्कारंविधिपूर्वकम् ॥ १ ॥ क्षिप्रमर्हतिधर्मेणत्वंयशोभाग्भविष्यसि ॥ राघवस्यवचःश्रुत्वात्वरमाणोविभीषणः ॥ २ ॥ संस्कारयितुमारेभेभ्रातरंरावणंहतम् ॥ सप्रविश्यपुरींलंकांराक्षसेंद्रोविभीषणः ॥ ३ ॥

निर्हारलक्षणं तन्मया त्वं वाच्यः । यद्यप्ययं त्वदुक्तदोषवांस्तथापि गुणबाहुल्यात्संस्कार्य एवेत्याह अधर्मेत्यादि ॥ ९८ ॥ ९९ ॥ त्वच्छत्रुत्वादसंस्कार्य इति चेत्तत्राह मरणांतानीति । नः सात्त्विकानामस्माकं प्रयोजनं वैरनिर्यातनरूपं निर्वृत्तं संपन्नमतः परं न वैरप्रयोजनमस्ति ॥ १०० ॥ यदेवमतोस्य संस्कारः क्रियतामिति । एष यथा तव भ्राता संस्कारादिना तवानुग्राह्यस्तथा ममाप्यनुग्राह्य एव । चतुर्विधमुक्तिष्वेकापि नास्य । तदुक्तं विष्णुपुराणे-हिरण्यकशिपोर्विष्णुरयमित्येवं न मनस्यभूत् दशाननत्वेप्यनंगपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपदर्शनमेवासीत् नायमच्युत इत्यासक्तिर्विपद्यतोंतःकरणस्य मानुषबुद्धिरेव केवलमभूदिति । अतएव रावणकुंभकर्णयोः शिशुपालदंतवक्ररूपेण जन्म श्रूयते । न हि भगवत्सालोक्यं प्राप्तयोरपि जन्म भवति, किं तु ब्रह्मणा सह मुक्तिरेवेति सिद्धांतः ॥ १ ॥ यशोभागिति । रामवा

क्येन त्यक्तवैरो भ्रातरं संस्कृतवानिति ख्यातिरेव भविष्यतीत्यर्थः ॥ २ ॥ ३ ॥ निर्यापयति स्मेति शेषः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ द्विजाः राक्षसद्विजाः स्तुवद्भिर्वंदिजनैरभिनंदितमभिनंदितमिव रावणं शिबिकामारोप्य द्विजा ययुरिति शेषः ॥ ८ ॥ पताकादिभिश्चित्रितां शिबिकां वाहकैरुत्थाप्य विभीषणादयः काष्ठानि गृहीत्वा दक्षिणामुखाः श्मशानमार्गं भेजिरे ॥ ९ ॥ ११० ॥ शरणाभिगताः आधारस्थान कुंडस्थाः ॥ ११ ॥ प्लवमानानि चलनाभ्यासाभावात्त्वरया च प्लवमानानीव ॥ १२ ॥ पद्मको गंधवृक्षः ब्राह्म्या वेदमार्गानुगतक्रियया रंकुः कृष्णसारमृगस्तत्संबंधि रांकवं तेनास्तरणेनावृतां चितां संवर्तयामासुः चक्रुः ॥१३॥ पितृमेधं पितृमेधविहितं कर्म प्रचक्रुः तत्प्रकारो वेदिं चेत्यादि । दक्षिणाप्राचीं चिताया दक्षिणप्राग्देशे इत्यर्थः । यथास्थानं पावकं च प्रचक्रुः दक्षिणपूर्वदेशे आहवनीयं निदधाति उत्तरपश्चिमे गार्हपत्यं दक्षिण

रावणस्याग्निहोत्रंतुनिर्यापयतिसत्वरम् ॥ शकटान्दारुरूपाणिअग्नीन्वैयाजकांस्तथा ॥४॥ तथाचंदनकाष्ठानिकाष्ठानिविविधानिच ॥ अगुरूणिसुगंधीनिगंधांश्चसुरभींस्तथा ॥ ५ ॥ मणिमुक्ताप्रवालानिनिर्यापयातिराक्षसः ॥ आजगाममुहूर्तेनराक्षसैःपरिवारितः ॥ ६ ॥ ततोमाल्यवतासार्धंक्रियामेवचकारसः ॥ सौवर्णींशिबिकांदिव्यामारोप्यक्षौमवाससम् ॥ ७ ॥ रावणंराक्षसाधीशमश्रुपूर्णमुखाद्विजाः ॥ तूर्यघोषैश्चविविधैस्तुवद्भिश्चाभिनंदितम् ॥ ८ ॥पताकाभिश्चचित्राभिःसुमनोभिश्चचित्रिताम् ॥ उत्क्षिप्यशिबिकांतांतुविभीषणपुरोगमाः ॥ ९ ॥ दक्षिणाभिमुखाःसर्वेगृह्यकाष्ठानिभेजिरे ॥ अग्नयोदीप्यमानास्तेतदाध्वर्युसमीरिताः ॥ ११० ॥ शरणाभिगताःसर्वेपुरस्तात्तस्यतेययुः ॥ अंतःपुराणिसर्वाणिरुदमानानिसत्वरम् ॥११॥ पृष्ठतोनुययुस्तानिप्लवमानानिसर्वतः ॥ रावणंप्रयतेदेशेस्थाप्यतेभृशदुःखिताः ॥ १२ ॥ चितांचंदनकाष्ठैश्चपद्मकोशीरचंदनैः ॥ ब्राह्म्यासंवर्तयामासूरांकवास्तरणावृताम् ॥ १३ ॥ प्रचक्रूराक्षसेंद्रस्यपितृमेधमनुत्तमम् ॥ वेदिंचदक्षिणाप्राचींयथास्थानंचपावकम् ॥ १४ ॥ पृषदाज्येनसंपूर्णंस्रुवंस्कंधेप्रचिक्षिपुः ॥ पादयोःशकटंप्रापुरूर्वोश्चोलूखलंतदा ॥ १५ ॥ दारुपात्राणिसर्वाणिअरणिंचोत्तरारणिम् ॥ दत्त्वातुमुसलंचान्यंयथास्थानंविचक्रमुः ॥ १६ ॥ शास्त्रदृष्टेनविधिनामहर्षिविहितेनच ॥ तत्रमेध्यंपशुंहत्वाराक्षसेंद्रस्यराक्षसाः ॥ १७ ॥ परिस्तरणिकांराज्ञोघृताक्तांसमवेशयन् ॥ गंधैर्माल्यैरलंकृत्यरावणंदीनमानसाः ॥ १८ ॥ विभीषणसहायास्तेवस्त्रैश्चविविधैरपि ॥ लाजैरवकिरंतिस्मबाष्पपूर्णमुखास्तथा ॥ १९ ॥ सददौपावकंतस्यविधियुक्तंविभीषणः ॥ स्नात्वाचैवार्द्रवस्त्रेणतिलान्दर्भविमिश्रितान् ॥ १२० ॥

पश्चिमे दक्षिणाग्निमिति सूत्रोक्तस्थानमनतिक्रम्येत्यर्थः ॥ १४ ॥ पृषदाज्येन सदध्याज्येन संपूर्णेनोपलक्षितं स्रुवं स्कंधे स्कंधदेशे प्रचिक्षिपुः । यद्यपि नासिके स्रुवावित्यापस्तंबेनोक्तं तथापि सूत्रांतरात्स्कंधेपि निक्षेपः स्रुवस्य बोध्यः, तथा पादयोः शकटमूर्वोरुलूखलमिति च सूत्रांतरादेव बोध्यम् ॥ १५ ॥ दारुपात्रादि सर्वं सूत्रोक्ततत्तत्स्थाने दत्त्वा अन्यं मुसलं चातुर्मास्यमुसलं यथास्थानं दत्त्वा च विचक्रमुः पितृमेधं चक्रुः ॥ १६ ॥ शास्त्रदृष्टेन श्रुतिदृष्टेन महर्षिविहितेन कल्पसूत्रकृद्दृषिविहितेन ॥ १७ ॥ परिस्तीर्यंते मुखमनयेति परिस्तरणिका वपा तां राक्षसेंद्रस्य मुखे समवेशयन् । वपास्य मुखं प्रोर्णोतीति सूत्रात् । तीर्थस्तु अनुस्तरणिकीं राज इति पठित्वानुस्तरणिकीं राजगवीं तामालभ्य तच्चर्मणा यजमानमास्तृतवंत इत्यर्थः । मृतायानुस्तरणीं घ्नंतीति श्रुतेरित्याह ॥ १८ ॥ वस्त्रैश्चेति अलंकृत्येत्यनुकर्षः ॥ १९ ॥ १२० ॥

विधिपूर्वकं मदाय स्थित इति शेषः । ननु निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा तदनुज्ञातं महाभागं पंचभूतानि रावणम् ॥ शरीरधातवो ह्यस्य मांसं रुधिरमेव च । नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यतेति महाभारते उक्तत्वेन कस्य वाल्मीकिना श्मशानानयनपूर्वकं दाह उक्त इति चेन्न तस्य रामबाणतेजोवर्णनविषयेऽत्युक्त्यलंकारपरत्वादिति वदंति ॥ २१ ॥ गम्यतामित्युक्त्वेत्यर्थः । रावणपत्नीरिति शेषः ॥ २२ ॥ ॥ २३ ॥ १२४ ॥ अयं संस्कारो नवम्यामेव सायंकाले । वैरैर्यैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥ ॥ कतकरी० ॥ १०४ ॥ ते रावणेति ॥ १ ॥ सुग्रीवस्य मंत्रितं सेनारंभेलनसीतान्वेषणादिसर्वकार्यसाधकं मंत्रसामर्थ्यम् ॥२॥ मारुतिलक्ष्मणयो रामेऽनुरागं वीर्यं च ॥३॥ इंद्रदत्तम् ॥ इंद्रप्रेषितम् ॥४॥

उदकेनचसंमिश्रान्प्रदायविधिपूर्वकम् ॥ ताःस्त्रियोनुनयामाससांत्वयित्वापुनःपुनः ॥ २१ ॥ गम्यतामितिताःसर्वाविविशुर्नगरंततः ॥ प्रविष्टासुपुरीं स्त्रीपुराक्षसेंद्रोविभीषणः ॥ रामपार्श्वमुपागम्यसमतिष्ठद्विनीतवत् ॥ २२ ॥ रामोपिसहसैन्येनससुग्रीवःसलक्ष्मणः ॥ हर्षंलेभेरिपुंहत्वावृत्रंवज्रधरो यथा ॥ २३ ॥ ततोविमुच्यासशरंशरासनंमहेंद्रदत्तंकवचंसतन्महत् ॥ विमुच्यरोषंरिपुनिग्रहात्ततोरामःससौम्यत्वमुपागतोऽरिहा ॥ १२४ ॥ इत्यार्षे श्रीमद्रामायणे वा०आ०यु०त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥ तेरावणवधंदृष्ट्वादेवगंधर्वदानवाः ॥ जग्मुःस्वैःस्वैर्विमानैस्तेकथयंतः शुभाःकथाः ॥ १ ॥ रावणस्यवधंघोरंराघवस्यपराक्रमम् ॥ सुयुद्धंवानराणांचसुग्रीवस्यचमंत्रितम् ॥ २ ॥ अनुरागंचवीर्यंचमारुतेर्लक्ष्मणस्यच ॥ पतिव्रतात्वंसीतायाहनूमतिपराक्रमम् ॥ ३ ॥ कथयंतोमहाभागाजग्मुर्हृष्टायथागतम् ॥ राघवस्तुरथंदिव्यमिंद्रदत्तंशिखिप्रभम् ॥ ४ ॥ अनुज्ञाप्यम हाबाहुर्मातलिंप्रत्यपूजयत् ॥ राघवेणाभ्यनुज्ञातोमातलिःशक्रसारथिः ॥ ५ ॥ दिव्यंतंरथमास्थायदिवमेवोत्पपातह ॥ तस्मिंस्तुदिवमारूढेसरथेर थिनांवरः ॥ ६ ॥ राघवःपरमप्रीतःसुग्रीवंपरिषस्वजे ॥ परिष्वज्यचसुग्रीवंलक्ष्मणेनाभिवादितः ॥ ७ ॥ पूज्यमानोहरिगणैराजगामबलालयम् ॥ अथोवाचसकाकुत्स्थःसमीपपरिवर्तिनम् ॥ ८ ॥ सौमित्रिंमित्रसंपन्नंलक्ष्मणंशुभलक्षणम् ॥ विभीषणमिमंसौम्यलंकायामभिषेचय ॥ ९ ॥ अनुरक्तं चभक्तंचतथापूर्वोपकारिणम् ॥ एषमेपरमःकामोयदिमंरावणानुजम् ॥ १० ॥ लंकायांसौम्यपश्येयमभिषिक्तंविभीषणम् ॥ एवमुक्तस्तुसौमित्री राघवेणमहात्मना ॥ ११ ॥ तथेत्युक्त्वासुसंहृष्टःसौवर्णंघटमाददे ॥ तंघटंवानरेन्द्राणांहस्तेदत्त्वामनोजवान् ॥ १२ ॥ व्यादिदेशमहासत्त्वःसमुद्रस लिलंतदा ॥ अतिशीघ्रंततोगत्वावानरास्तेमनोजवाः ॥ १३ ॥

अनुज्ञाप्य रथं नयेत्याज्ञां दत्त्वा । यद्यपि भारते सीताया आगमनोत्तरं रथादवतरणं भगवत उक्तं तथापि तत्र पौर्वापर्यक्रमे तात्पर्याभावान्न क्षतिः ॥ ५ ॥ ६ लक्ष्मणेनाभिवादितो राघवः ॥७॥ बलालयं सेना निवेशस्थानम् अथ त्रिभिर्दिनैर्दशरात्रैकादशाहद्वादशाहकर्तव्यक्रिया समाप्तौ चतुर्थेऽहनीत्यर्थः । नात्र दशाहमाशौचमिति भ्रमितव्यम् । उद्यतैराहवे शस्त्रैः क्षत्रधर्ममृतस्य तु । सद्यः संतिष्ठते यज्ञस्तथाशौचमितिस्थि तिरिति मनूक्तेः ॥ ८ ॥ लंकायामभिषेचय रावणसिंहासने साक्षादिति शेषः ॥ ९ ॥ १० ॥ ११ ॥ तं घटं हस्ते इति जातावेकवचनं मनोजवान्वानरान् व्यादिदेश ॥१२॥ समुद्रसलिलं तदानयनम् ॥१३॥

समुद्र चतुःसमुद्रेभ्य इत्यर्थः । परमासने विभीषणं संस्थाप्य तमभ्यषिंचत् ॥ १४ ॥ १५ ॥ मंत्रदृष्टेन वेददृष्टेन ॥ १६ ॥ भक्ता ये चास्य विभीषणस्यामात्यव्यतिरिक्ता भक्तास्तेपीत्यर्थः ॥ १७ ॥ ॥ १८ ॥ प्रकृतयः प्रकृतीः स्वपुरराष्ट्रमनाः ॥ १९ ॥ पौरास्तस्मै विभीषणायाजह्रुः रामसमीपगमनवेलायामिति शेषः तानुपहृतान्पदार्थान् ॥ २० ॥ लक्ष्मणाय च न्यवेदयत् प्रतिकाम्या इच्छा ॥ २१ ॥ ततः अभिषेकोत्तरं दिनद्वये तस्य प्रजासांत्वनोत्तरं रामपूजार्थमागते विभीषणे तत्पूजां कृत्वा नगरं गते सति सप्तने दिने इत्यर्थः ॥ २२ ॥ अनुज्ञाप्य पुराधिपतित्वात्कर्तव्येर्थे तदनुज्ञापेक्षणम आदौ सीतां प्रति

आगतास्तुजलंगृह्यसमुद्राद्वानरोत्तमाः ॥ ततस्त्वेकंघटंगृह्यसंस्थाप्यपरमासने ॥१४॥ घटेनतेनसौमित्रिरभ्यषिंचद्विभीषणम् ॥ लंकायांरक्षसांमध्ये राजानंरामशासनात् ॥ १५ ॥ विधिनामंत्रदृष्टेनसुहृद्गणसमावृतः ॥ अभ्यषिंचंस्तदासर्वेराक्षसावानरास्तथा ॥ १६ ॥ प्रहर्षमतुलंगत्वातुष्टुवूराममेव हि ॥ तस्यामात्याजहृषिरेभक्तायेचास्यराक्षसाः ॥ १७ ॥ दृष्ट्वाभिषिक्तंलंकायांराक्षसेंद्रंविभीषणम् ॥ राघवःपरमांप्रीतिंजगामसहलक्ष्मणः ॥१८॥ सांत्वयित्वाप्रकृतयस्ततोराममुपागमत् ॥ दध्यक्षतान्मोदकांश्चलाजाःसुमनसस्तथा ॥१९॥ आजह्रुरथसंहृष्टापौरास्तस्मैनिशाचराः ॥ सतान्गृही त्वादुर्धर्षोराघवायन्यवेदयत् ॥ २० ॥ मांगल्यंमंगलंसर्वंलक्ष्मणायचवीर्यवान् ॥ कृतकार्यंसमृद्धार्थंदृष्ट्वारामोविभीषणम् ॥ प्रतिजग्राहतत्सर्वंतस्यै वप्रतिकाम्यया ॥ २१ ॥ ततःशैलोपमंवीरंप्रांजलिंप्रणतंस्थितम् ॥ उवाचेदंवचोरामोहनूमंतंप्लवंगमम् ॥ २२ ॥ अनुज्ञाप्यमहाराजमिमंसौम्यविभी षणम् ॥ प्रविश्यनगरींलंकांकौशलंब्रूहिमैथिलीम् ॥ २३ ॥ वैदेह्यैमांकुशलिनंससुग्रीवंसलक्ष्मणम् ॥ आचक्ष्ववदतांश्रेष्ठरावणंचहतंरणे ॥ २४ ॥ प्रियमेतदिहाख्याहिवैदेह्यास्त्वंहरीश्वर ॥ प्रतिगृह्यतुसंदेशमुपावर्तितुमर्हसि ॥ २५ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीये आदिकाव्ये युद्धकांडेचतुर्दशा धिकशततमःसर्गः ॥ ११४ ॥ इतिप्रतिसमादिष्टोहनूमान्मारुतात्मजः ॥ प्रविवेशपुरींलंकांपूज्यमानोनिशाचरैः ॥ १ ॥ प्रविश्यचपुरींलंकामनु ज्ञाप्यविभीषणम् ॥ ततस्तेनाभ्यनुज्ञातोहनूमान्वृक्षवाटिकाम् ॥ २ ॥ संप्रविश्ययथान्यायंसीतायाविदितोहरिः ॥ ददर्शमृजयाहीनांसातंकांरोहिणी मिव ॥ ३ ॥ वृक्षमूलेनिरानंदांराक्षसीभिःपरीवृताम् ॥ निभृतःप्रणतःप्रह्वःसोभिगम्याभिवाद्यच ॥ ४ ॥ दृष्ट्वासमागतंदेवीहनूमंतंमहाबलम् ॥ तूष्णी मास्ततदादृष्ट्वास्मृत्वाहृष्टाभवत्तदा ॥ ५ ॥ सौम्यंतस्यामुखंदृष्ट्वाहनूमान्प्लवगोत्तमः ॥ रामस्यवचनंसर्वमाख्यातुमुपचक्रमे ॥ ६ ॥ वैदेहिकुशली रामःसुग्रीवःसहलक्ष्मणः ॥ कुशलंत्वाहसिद्धार्थोहतशत्रुरमित्रजित् ॥ ७ ॥ विभीषणसहायेनरामेणहरिभिःसह ॥ निहतोरावणोदेविलक्ष्मणेनचवी र्यवान् ॥ ८ ॥ प्रियमाख्यामितेदेविभूयश्चत्वांसभाजये ॥ तवप्रभावाद्धर्मज्ञेमहान्रामेणसंयुगे ॥ ९ ॥

कुशलप्रश्नस्ततः स्वकुशलनिवेदनम ॥ २३ ॥ २४ ॥ संदेशं वैदेह्याः प्रतिसंदेशमित्यर्थः ॥ २५ ॥ मखैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्दशा धिकशततमः सर्गः ॥ ११४ ॥ कतकरी० ॥ १०५ ॥ इति प्रतीति सीतां प्रति समादिष्ट इत्यर्थः ॥ १ ॥ २ ॥ मृजया स्नानादिसंस्कारेण सातंकां ग्रहपीडासहिताम् ॥ ३ ॥ निभृतो निश्चलः प्रह्वोनम्रः अभिवाद्य च स्थित इति शेषः ॥ ४ ॥ ५ ॥ ६ ॥ कुशलं त्वा त्वामाहेत्यर्थः ॥ ७ ॥ ८ ॥ कोसौ संदेशस्तत्राह प्रियमिति । हे देवि ते प्रियमाख्यामि त्वां भूयः सभाजये प्रीणयामि तव प्रभावात्तव पा

तिवल्यवैभवात्संयुगे रामेणायं महान्विजयो लब्धः ॥९॥ १० ॥ तव निर्जये शत्रोरिति शेषः । धृतेन कृतनिश्चयेन एषा प्रतिज्ञा शत्रुं हत्वा सीतां प्रत्यानेष्यामीत्येवंरूपा ॥ ११ ॥ संभ्रमो भयं वर्तत्या वर्तमानया यतो विभीषणविधेयं लंकैश्वर्यं कृतं तस्मात्त्वं स्वगृहे एव परिवर्तसे अत आश्वसिहि ॥ १२ ॥ अयं चाभ्येति संहृष्ट इति पाठः । अयं विभीषणः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ क्षणांतरं क्षणरूपकालावकाशमात्रम् ॥ १७ ॥ न केवलं हर्षवशादेव निर्वाक्या किं तु प्रियाख्यातुस्तव तत्सदृशदेयवस्त्वभावादपीत्याह नहीति । प्रत्यभिनंदनं देयवस्तु आख्यानकस्य त्वत्कृतप्रियाख्यानकस्य सदृशं नास्तीत्यर्थः स्वार्थे कः ॥ १८ ॥ उक्तमेवानंदवशात्पुनराह न चेति । ईदृशप्रियाख्याने यत्तस्य सदृशं समं तव दातुं योग्यं तत्पृथिव्यामपि न पश्यामि ॥ १९ ॥ एतद्भाषितं त्वदुक्तं प्रत्यभिनंदनत्वेन हिरण्यादिकं नार्हति

लब्धोयंविजयःसीतेस्वस्थाभवगतज्वरा ॥ रावणश्चहतःशत्रुर्लंकाचैववशीकृता ॥ १० ॥ मयाह्यलब्धनिद्रेणधृतेनतवनिर्जये ॥ प्रतिज्ञैषाविनिस्तीर्णा बद्ध्वासेतुंमहोदधौ॥११॥संभ्रमश्चनकर्तव्योवर्तंत्यारावणालये ॥ विभीषणविधेयंहिलंकैश्वर्यमिदंकृतम्॥१२॥तदाश्वसिहिविस्रब्धंस्वगृहेपरिवर्तसे॥अयं चाभ्येतिसंहृष्टस्त्वद्दर्शनसमुत्सुकः ॥१३॥ एवमुक्तातुसादेवीसीताशशिनिभानना ॥ प्रहर्षेणावरुद्धासाव्याहर्तुंनशशाकह ॥ १४ ॥ ततोऽब्रवीद्धरिवरः सीतामप्रतिजल्पतीम् ॥ किंत्वंचिंतयसेदेविकिंचमांनाभिभाषसे ॥ १५ ॥ एवमुक्ताहनुमतासीताधर्मपथेस्थिता ॥ अब्रवीत्परमप्रीताबाष्पगद्गदया गिरा ॥ १६ ॥ प्रियमेतदुपश्रुत्यभर्तुर्विजयसंश्रितम् ॥ प्रहर्षवशमापन्नानिर्वाक्यास्मिक्षणान्तरम् ॥ १७ ॥ नहिपश्यामिसदृशंचिन्तयंतीप्लवंगम ॥ आख्यानकस्यभवतोदातुंप्रत्यभिनंदनम् ॥ १८ ॥ नचपश्यामिसदृशंपृथिव्यांतवकिंचन ॥ सदृशंयत्प्रियाख्यानेतवदत्त्वाभवेत्सुखम् ॥ १९ ॥ हिरण्यंवासुवर्णंवारत्नानिविविधानिच ॥ राज्यंवात्रिषुलोकेषुएतन्नार्हतिभाषितम् ॥ २० ॥ एवमुक्तस्तुवैदेह्याप्रत्युवाचप्लवंगमः ॥ प्रगृहीतांजलिर्हर्षात्सीतायाःप्रमुखेस्थितः ॥ २१ ॥ भर्तुःप्रियहितेयुक्तेभर्तुर्विजयकांक्षिणि ॥ स्निग्धमेवंविधंवाक्यंत्वमेवार्हस्यनिंदिते ॥ २२ ॥ "तवैतद्वचनंदेवित्वत्तोर्हामिप्रियंमहत् ॥ रत्नौघाद्विविधाच्चापिदेवराज्याद्विशिष्यते ॥ १ ॥ अर्थतश्चमयाप्राप्तादेवराज्यादयोगुणाः ॥ हतशत्रुंविजयिनंरामंपश्यसिसुस्थिरम् ॥ २ ॥" तस्यतद्वचनंश्रुत्वामैथिलीजनकात्मजा ॥ ततःशुभतरंवाक्यमुवाचपवनात्मजम् ॥ २३ ॥ अतिलक्षणसंपन्नंमाधुर्यगुणभूषणम् ॥ बुद्ध्याह्यष्टांगयायुक्तंत्वमेवार्हसिभाषितुम् ॥ २४ ॥ श्लाघनीयोऽनिलस्यत्वंसुतःपरमधार्मिकः ॥ बलंशौर्यंश्रुतंसत्त्वंविक्रमोदाक्ष्यमुत्तमम् ॥ २५ ॥

अतएव तत्प्रियवचने देयं वस्तु लोके नास्तीत्यर्थः ॥२०॥ २१ ॥ स्निग्धं स्नेहोपेतम् एवंविधम् अशक्यमीतिदानमित्येवंरूपं त्वमेव भाषितुमर्हसि नान्या अतस्त्वया सर्वोत्तरं यदिदं वचनमुक्तं तदेव परमं प्रत्यभिनंदनमिति शेषः ॥ २२ ॥ एतदुत्तरं तवैतद्वचनमित्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः ॥ २३ ॥ अतिलक्षणसम्पन्नम् आकांक्षायोग्यतादिलक्षणसंपन्नं व्याकरणलक्षणसंपन्नं च माधुर्यं च श्रवणमात्रेणानंदजनकत्वं तद्रूपगुण एव भूषणं यस्य तत् । अष्टांगया शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणा इत्युक्ताष्टांगबुद्ध्या युक्तम् ॥ २४ ॥ बलमायाससहिष्णुता शौर्यं युद्धोत्साहः

सत्त्वं शारीरः सारः ॥ २५ ॥ तेजः पराभिभवसामर्थ्यम् एवमाद्या बहवो गुणास्त्वय्येव संति नान्यत्र ॥ २६ ॥ असंभ्रांतः स्तुत्याऽविकृतचित्तः विनीतवत् विनीतार्हम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ एतद्वरम् अपकारिराक्षसीगणवधरूपम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ राजसंश्रयादेव राजवश्यानां पराज्ञया कुर्वतीनां शुभमशुभं वेति शेषः ॥३६॥ पुरस्ताद्दुष्कृतेन पूर्वदुष्कृतेनेत्यर्थः ॥३७॥ ॥ ३८ ॥ रावणस्य दासीनामेतत्तर्जनादिकं दशायोगात्कर्मपरिपाककालसंबंधात्प्राप्तव्यमिति मया निश्चितम् अतस्तत्कालसंबंधादेव दुर्बलेवाहं तन्मर्षयामीत्यर्थः ॥ ३९ ॥ राक्षसीतर्जने राजाज्ञामूलत्वमन्वयव्यतिरेकाभ्यां दर्शयति आज्ञप्ता इति ॥ ४० ॥ ईदृशे विषये क्षमैवोचितेति इतिहासमुखेनाह अयमिति ॥ ४१ ॥ श्लोकमेवाह न पर इति । कश्चिदरण्ये व्याघ्रानुद्रुतः कश्चिद्व्याधो ऋक्षारूढं वृक्षमारुहत् वृक्षमूल

तेजःक्षमाधृतिःस्थैर्यंविनीतत्वंनसंशयः ॥ एतेचान्येचबहवोगुणास्त्वय्येवशोभनाः ॥ २६ ॥ अथोवाचपुनःसीतामसंभ्रांतोविनीतवत् ॥ प्रगृहीतांजलिर्हर्षात्सीतायाःप्रमुखेस्थितः ॥ २७ ॥ इमास्तुखलुराक्षस्योयदित्वमनुमन्यसे ॥ हंतुमिच्छामिताःसर्वायाभिस्त्वंतर्जितापुरा ॥ २८ ॥ क्लिश्यंतींपतिदेवांत्वामशोकवनिकांगताम् ॥ घोररूपसमाचाराःक्रूराः क्रूरतरेक्षणाः ॥२९॥ इहश्रुतामयादेविराक्षस्योविकृताननाः ॥ असकृत्परुषैर्वाक्यैर्वदंत्योरावणाज्ञया ॥ ३० ॥ विकृताविकृताकाराःक्रूराःक्रूरकचेक्षणाः ॥ इच्छामिविविधैर्घातैर्हंतुमेताःसुदारुणाः ॥ ३१ ॥ राक्षस्योदारुणकथावरमेतत्प्रयच्छमे ॥ मुष्टिभिःपार्ष्णिघातैश्चविशालैश्चैवबाहुभिः ॥ ३२ ॥ जंघाजानुप्रहारैश्चदंतानांचैवपीडनैः ॥ भक्षणैःकर्णनासानांकेशानांलुंचनैस्तथा ॥ ३३ ॥निपात्यहंतुमिच्छामितवविप्रियकारिणीः ॥ एवंप्रहारैर्बहुभिःसंप्रहार्ययशस्विनि ॥ ३४ ॥ घातयेतीव्ररूपाभिर्याभिस्त्वंतर्जितापुरा ॥ इत्युक्तासाहनुमताकृपणादीनवत्सला ॥ ३५ ॥ हनूमंतमुवाचेदंचिंतयित्वाविमृश्यच ॥ राजसंश्रयवश्यानांकुर्वतीनांपराज्ञया ॥ ३६ ॥ विधेयानांचदासीनांकःकुप्येद्वानरोत्तम ॥ भाग्यवैषम्यदोषेणपुरस्ताद्दुष्कृतेनच ॥ ३७ ॥ मयैतत्प्राप्यतेसर्वंस्वकृतंह्युपभुज्यते ॥ मैवंवदमहाबाहोदैवीह्येषापरागतिः ॥३८॥ प्राप्तव्यंतुदशायोगान्मयैतदितिनिश्चितम् ॥ दासीनांरावणस्याहंमर्षयामीहदुर्बला ॥ ३९ ॥ आज्ञप्ताराक्षसेनेहराक्षस्यस्तर्जयंतिमाम् ॥ हतेतस्मिन्नकुर्वंतितर्जनंमारुतात्मज ॥ ४० ॥ अयंव्याघ्रसमीपेतुपुराणोधर्मसंहितः ॥ ऋक्षेणगीतःश्लोकोस्तितंनिबोधप्लवंगम ॥ ४१ ॥ नपरःपापमादत्तेपरेषांपापकर्मणाम् ॥ समयोरक्षितव्यस्तुसंतश्चारित्रभूषणाः ॥ ४२ ॥

गश्च व्याघ्रो वृक्षस्थम् ऋक्षं वन्यानामस्माकं शत्रुममुं व्याधं वृक्षात्पातयेत्यब्रवीत् एवमुक्तो ऋक्षः स्वावस्थानगतमेनं न पातयिष्यामि तथात्वे धर्महानिः स्यादित्युक्त्वा सुष्वाप सुप्तं ऋक्षं पातयेति व्याघ्रनोदितो व्याधो ऋक्षमपातयत्स ऋक्षोऽभ्यासबलेन शाखांतरमवलंब्य नापतत् तदनंतरं कृतापराधमेनं पातयेति पुनर्व्याघ्रेणोक्तोपि ऋक्षो बहुशः कृतापराधमप्येनं तुभ्यं न दास्यामीत्यभिधाय ररक्षेति पौराणिकी गाथेति तीर्थस्तत्रत्योयं श्लोकः । परेषां पापकर्मणां परानुद्दिश्य पापं कुर्वतां परः प्राज्ञः पुरुषः पापं प्रत्यपकाररूपं नादत्ते न करोति समयः अपकर्तृष्वपि प्रत्यपकारवर्जनरूप आचारो रक्षितव्य एव हि यतः संतश्चारित्रभूषणाः ॥४२॥

पापानां वा शुभानां वेति शुभेष्विव पापेषु वधार्हेष्वपि आर्येण कारुण्यं कार्यं कर्तव्यम् । इतरौ वा शब्दौ वाक्यालंकारे । ननु सापराधेष्ववश्यं दंडः कार्योऽत आह न कश्चिदिति । कश्चिदपि नापराध्यतीति न सर्वोऽप्यपराध्यत्येवेत्यर्थः । तस्मात्सर्वत्र दयैवोचितेति भावः ॥ ४३ ॥ राक्षसानां परहिंसैव स्वभाव इत्यतोपि न वध्या इत्याह लोकेति । अशोभनं दंडनम् ॥४४॥४५॥४६॥४७॥४८॥४९॥५०॥५१॥ येमेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचदशाधिकशततमः सर्गः ॥ ११५ ॥ कतक० ॥ १०६ ॥ तमुवाचेति ॥१॥ आरंभ उद्योगः कर्मणां सेतुबंधरावणव

पापानांवाशुभानांवावधार्हाणामथापिवा ॥ कार्यंकारुण्यमार्येणनकश्चिन्नापराध्यति ॥ ४३ ॥ लोकहिंसाविहाराणांक्रूराणांपापकर्मणाम् ॥ कुर्वतामपिपापानिनैवकार्यमशोभनम् ॥ ४४ ॥ एवमुक्तस्तुहनुमान्सीतयावाक्यकोविदः ॥ प्रत्युवाचततःसीतांरामपत्नीमनिंदिताम् ॥४५॥ युक्तारामस्यभवतीधर्मपत्नीगुणान्विता ॥ प्रतिसंदिशमांदेविगमिष्येयत्रराघवः ॥ ४६ ॥ एवमुक्ताहनुमतावैदेहीजनकात्मजा ॥ साब्रवीद्द्रष्टुमिच्छामिभर्तारंभक्तवत्सलम् ॥ ४७ ॥ तस्यास्तद्वचनंश्रुत्वाहनूमान्मारुतात्मजः ॥ हर्षयन्मैथिलींवाक्यमुवाचेदंमहामतिः ॥ ४८ ॥ पूर्णचंद्रमुखंरामंद्रक्ष्यस्यद्यसलक्ष्मणम् ॥ स्थितमित्रंहतामित्रंशचीवेंद्रंसुरेश्वरम् ॥ ४९ ॥ तामेवमुक्त्वाभ्राजंतींसीतांसाक्षादिवश्रियम् ॥ आजगाममहातेजाहनूमान्यत्रराघवः ॥ ॥ ५० ॥ सपदिहरिवरस्ततोहनूमान्प्रतिवचनंजनकेश्वरात्मजायाः ॥ कथितमकथयद्यथाक्रमेणत्रिदशवरप्रतिमायराघवाय ॥ ५१ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीये आदिकाव्येयुद्धकांडे पंचदशाधिकशततमः सर्गः ॥ ११५ ॥ तमुवाचमहाप्राज्ञःसोभिवाद्यप्लवंगमः ॥ रामंकमलपत्राक्षंवरंसर्वधनुष्मताम् ॥ १ ॥ यन्निमित्तोयमारंभःकर्मणांयःफलोदयः ॥ तांदेवींशोकसंतप्तांद्रष्टुमर्हसिमैथिलीम् ॥ २ ॥ साहिशोकसमाविष्टाबाष्पपर्याकुलेक्षणा ॥ मैथिलीविजयंश्रुत्वाद्रष्टुंत्वामभिकांक्षति ॥ ३ ॥ पूर्वकात्प्रत्ययाच्चाहमुक्तोविश्वस्तयातया ॥ द्रष्टुमिच्छामिभर्तारमितिपर्याकुलेक्षणा ॥ ॥ ४ ॥ एवमुक्तोहनुमतारामोधर्मभृतांवरः ॥ आगच्छत्सहसाध्यानमीषद्बाष्पपरिप्लुतः ॥ ५ ॥ सदीर्घमभिनिःश्वस्यजगतीमवलोकयन् ॥ उवाचमेघसंकाशंविभीषणमवस्थितम् ॥ ६ ॥ दिव्यांगरागांवैदेहींदिव्याभरणभूषिताम् ॥ इहसीतांशिरःस्नातामुपस्थापयमाचिरम् ॥ ७ ॥ एवमुक्तस्तुरामेणत्वरमाणोविभीषणः ॥ प्रविश्यांतःपुरंसीतांस्त्रीभिःस्वाभिरचोदयत् ॥ ८ ॥ ततःसीतांमहाभागांदृष्ट्वोवाचविभीषणः ॥ मूर्ध्निबद्धांजलिःश्रीमान्विनीतोराक्षसेश्वरः ॥ ९ ॥ दिव्यांगरागावैदेहिदिव्याभरणभूषिता ॥ यानमारोहभद्रंतेभर्तात्वांद्रष्टुमिच्छति ॥ १० ॥ एवमुक्तातुवैदेहीप्रत्युवाचविभीषणम् ॥ अस्नात्वाद्रष्टुमिच्छामिभर्तारंराक्षसेश्वर ॥ ११ ॥

धादीनां यः फलोदयः फलरूपः ॥२॥३॥ पूर्वकात्प्रत्ययात्संदेशकालिकादात्मीयोयमिति विश्वासाद्भर्तारं द्रष्टुमिच्छामीत्यहमुक्तस्ततः पर्याकुलेक्षणा आसीदिति शेषः ॥४॥ ध्यानमागच्छत् परगृहोषितायां परगृहे महान् लोकापवादो निर्दोषायाः परित्यागे च महान् दोष इति कार्यदौस्थ्यात्किं कर्तव्यमिति चिंतयामासेत्यर्थः । वस्तुतो मुख्यसीतालाभोऽग्नेः कथं स्यादिति चिंतात्र ॥॥५॥६॥ दिव्यांगरागामिति तैस्तस्या रूपाधिक्याभिव्यक्तौ ईदृश्यर्थेऽयं मे उद्यम इति सर्वान् ज्ञापयितुमेवं वादः ॥ ७ ॥ ८ ॥ ततः स्वस्त्रीणां तत्समीपगमनानंतरम् ॥९॥१०॥ अस्नात्वा द्रष्टुमिच्छामि भर्त्राज्ञां विनापि स्नानमकृत्वैव द्रष्टुमिच्छामीत्यर्थः॥ ११ ॥

तस्यास्तद्वचनं स्नानाद्यनंगीकारवचनं यथा राम आह तथा कर्तुमर्हसि । तां दृष्ट्वा चारुसर्वांगीं यानस्थां शोककर्शिताम् ॥ मलोपचितसर्वांगीं जटिलां कृष्णवाससम् ॥ उवाच रामो वैदेहीं परामर्शविशंकित इति भारते तु मलोपचितेत्यर्धं पूर्वमिति शेषः ॥ १२ ॥ भर्तृभक्त्या आवृताऽन्विता ॥ १३ ॥ १४ ॥ स्त्रीयुक्तवाहनवहनोचितैः परीक्षितैरित्यर्थः ॥ १५ ॥ ज्ञात्वापि विभीषणगमनं ज्ञात्वापि ध्यानमास्थितं अतः परं किं वक्तव्यं किं कर्तव्यमितिचिंतायुक्तमित्यर्थः ॥ १६ ॥ रोषं सर्वानर्थमूलयानया किल ससुहृद्भ्रातृकेणेदं बहुदुःखमनुभूतमिति रोषः । यद्वा रावणगृहे चिरोषितव्यनिमित्तक आरोपितो रोषो भाविश पयोपयोगी चिरवियुक्ताया अद्य दर्शनमिति हर्षः । चिरकालं मत्प्रतीक्षयानया बहुदुःखमनुभूतमिति दैन्यम् ॥ १७ ॥ अहृष्टः उक्तधर्मत्रयाक्रांतत्वात्मकटहर्षरहितः ॥ १८ ॥ १९ ॥ उत्सारणं जनस्येति

तस्यास्तद्वचनंश्रुत्वाप्रत्युवाचविभीषणः ॥ यथाहरामोभर्तातेतत्तथाकर्तुमर्हसि ॥ १२ ॥ तस्यतद्वचनंश्रुत्वामैथिलीपतिदेवता ॥ भर्तृभक्त्यावृतासाध्वीतथेतिप्रत्यभाषत ॥ १३ ॥ ततः सीतांशिरःस्नातांसंयुक्तांप्रतिकर्मणा ॥ महार्हाभरणोपेतांमहार्हांबरधारिणीम् ॥ १४ ॥ आरोप्यशिबिकांसीतांराक्षसैर्वहनोचितैः ॥ राक्षसैर्बहुभिर्गुप्तामाजहारविभीषणः ॥ १५ ॥ सोभिगम्यमहात्मानंज्ञात्वापिध्यानमास्थितम् ॥ प्रणतश्चप्रहृष्टश्चप्राप्तांसीतांन्यवेदयत् ॥ १६ ॥ तामागतामुपश्रुत्यरक्षोगृहचिरोषिताम् ॥ रोषंहर्षंचदैन्यंचराघवःप्रापशत्रुहा ॥ १७ ॥ ततोयानगतांसीतांसविमर्शंविचारयन् ॥ विभीषणमिदंवाक्यमहृष्टोराघवोऽब्रवीत् ॥ १८ ॥ राक्षसाधिपतेसौम्यनित्यंमद्विजयेरत ॥ वैदेहीसन्निकर्षंमेक्षिप्रंसमभिगच्छतु ॥ १९ ॥ तस्यतद्वचनंश्रुत्वाराघवस्यविभीषणः ॥ तूर्णमुत्सारणंतत्रकारयामासधर्मवित् ॥ २० ॥ कंचुकोष्णीषिणस्तत्रवेत्रझर्झरपाणयः ॥ उत्सारयंतस्तान्योधान्समंतात्परिचक्रमुः ॥ २१ ॥ ऋक्षाणांवानराणांचराक्षसानांचसर्वशः ॥ वृंदान्युत्सार्यमाणानिदूरमुत्तस्थुरंततः ॥ २२ ॥ तेषामुत्सार्यमाणानांनिःस्वनःसुमहानभूत् ॥ वायुनोद्धूयमानस्यसागरस्येवनिःस्वनः ॥ २३ ॥ उत्सार्यमाणान्दृष्ट्वाथजगत्यांजातसंभ्रमान् ॥ दाक्षिण्यात्तदमर्षाच्चवारयामासराघवः ॥ २४ ॥ संरंभाच्चाब्रवीद्रामश्चक्षुषाप्रदहन्निव ॥ विभीषणंमहाप्राज्ञंसोपालंभमिदंवचः ॥ २५ ॥ किमर्थंमामनादृत्यक्लिश्यतेयंत्वयाजनः ॥ निवर्तयैनमुद्वेगंजनोयंस्वजनोमम ॥ २६ ॥ नगृहाणिनवस्त्राणिनप्राकारस्तिरस्क्रिया ॥ नेदृशाराजसत्कारावृत्तमावरणंस्त्रियः ॥ २७ ॥

शेषः ॥ २० ॥ वेत्रैर्वेत्रयष्टिभिर्झर्झरास्ताडनशब्दवंतः पाणयो येषाम् ॥ २१ ॥ उत्तस्थुः उत्थाय जग्मुः ॥ २२ ॥ २३ ॥ दाक्षिण्यात्स्वभक्तवानरसेनासु दाक्षिण्यात्कृपाविशेषात् तदमर्षात मदाज्ञां विनोत्सारयतीति विभीषणेऽमर्षः ॥ २४ ॥ संरंभात्कोपात् ॥ २५ ॥ एनमुद्वेगं निवर्तयास्य जनस्येति शेषः । कथमेवं युज्यते तत्राह जनोयमिति । स्वजनः भ्रात्रादिस्वजनसदृश एव ॥ २६ ॥ किं च व्यर्थोयं जनापसरणप्रयास इत्याह न गृहाणीति । गृहादित्रयं तिरस्क्रिया आवरणम् ईदृशा जनापसरणादिव्यापारा न स्त्रिया आवरणं किंतु राजसत्कार एव केवलं छत्रचामरादिवत् किं तर्ह्यावरणं तत्राह वृत्तमेवावरणमिति ॥ २७ ॥

अपि चेदानीं दर्शनमपि नास्या दोषायेत्याह व्यसनेष्विति । व्यसनं विपत्तिकालः कृच्छ्रं पीडा ॥ २८ ॥ प्रकृते दर्शनस्यादोषत्वसाधकं धर्ममाह सैषेऽति ॥ २९ ॥ पश्यंतु वैदेहीमित्यनुकर्षः ॥ ३० ॥ सविमर्शः एवं वादादस्यां प्रायेणाभिमानो नास्ति जिघृक्षा च नास्ति यदि तौ स्यातां तदा राजपत्न्योचितमुपचारमनुमन्येतैवेति चिंतायुक्त इत्यर्थः ॥ ३१ ॥ अनयैव बुध्या लक्ष्मणादेरपि व्यथा ॥ ३२ ॥ लज्जयावलीयंती जनसमक्षभर्तृसमीपस्थितिजन्यलज्जयावलीयंती संकोचं गच्छंती ॥ ३३ ॥ विस्मयादिति बहुमित्रपरिवारसंपत्तिदर्शनजो विस्मयः प्रियदर्शनजो हर्षः ॥ ३४ ॥ समपनुदत्समपानुदत् ॥ ३५ ॥ मेऽहमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षोडशाधिकशततमः सर्गः ॥ ११६ ॥ ॥ छ ॥ कतकरी० ॥ १०७ ॥ तां त्विति ॥१॥ एषा त्वं शत्रुं

व्यसनेषुनकृच्छ्रेषुनयुद्धेषुस्वयंवरे ॥ नक्रतौनोविवाहेवादर्शनंदूष्यतेस्त्रियः ॥ २८ ॥ सैषाविपद्गताचैवकृच्छ्रेणचसमन्विता ॥ दर्शनेनास्तिदोषोस्यामत्समीपेविशेषतः ॥ २९ ॥ विसृज्यशिबिकांतस्मात्पद्भ्यामेवापसर्पतु ॥ समीपेममवैदेहींपश्यंत्वेतेवनौकसः ॥ ३० ॥ एवमुक्तस्तुरामेणसविमर्शोविभीषणः ॥ रामस्योपानयत्सीतांसन्निकर्षंविनीतवत् ॥ ३१ ॥ ततोलक्ष्मणसुग्रीवौहनूमांश्चप्लवंगमः ॥ निशम्यवाक्यंरामस्यबभूवुर्व्यथिताभृशम् ॥ ३२ ॥ लज्जयात्ववलीयंतीस्वेषुगात्रेषुमैथिली ॥ विभीषणेनानुगताभर्तारंसाऽभ्यवर्तत ॥ ३३ ॥ विस्मयाच्चप्रहर्षाच्चस्नेहाच्चपतिदेवता ॥ उदैक्षतमुखंभर्तुःसौम्यंसौम्यतरानना ॥ ३४ ॥ अथसमपनुदन्मनःक्लमंसासुचिरमदृष्टमुदीक्ष्यवैप्रियस्य ॥ वदनमुदितपूर्णचंद्रकांतंविमलशशांकनिभाननातदासीत् ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेषोडशाधिकशततमःसर्गः ॥ ११६ ॥ तांतुपार्श्वेस्थितांप्रह्वांरामःसंप्रेक्ष्यमैथिलीम् ॥ हृदयांतर्गतंभावंव्याहर्तुमुपचक्रमे ॥ १ ॥ एषासिनिर्जिताभद्रेशत्रुंजित्वारणाजिरे ॥ पौरुषाद्यदनुष्ठेयंमयैतदुपपादितम् ॥ २ ॥ गतोस्म्यंतममर्षस्यधर्षणासंप्रमार्जिता ॥ अवमानश्चशत्रुश्चयुगपन्निहतौमया ॥ ३ ॥ अद्यमेपौरुषंदृष्टमद्यमेसफलःश्रमः ॥ अद्यतीर्णप्रतिज्ञोहंप्रभवाम्यद्यचात्मनः ॥ ४ ॥ यात्वंविरहितानीताचलचित्तेनरक्षसा ॥ दैवसंपादितोदोषोमानुषेणमयाजितः ॥ ५ ॥ संप्राप्तमवमानंयस्तेजसानप्रमार्जति ॥ कस्तस्यपौरुषेणार्थोमहताप्यल्पचेतसः ॥ ६ ॥ लंघनंचसमुद्रस्यलंकायाश्चापिमर्दनम् ॥ सफलंतस्यचश्लाघ्यमद्यकर्महनूमतः ॥ ७ ॥ युद्धेविक्रमतश्चैवहितंमंत्रयतस्तथा ॥ सुग्रीवस्यससैन्यस्यसफलोद्यपरिश्रमः ॥ ८ ॥ विभीषणस्यचतथासफलोद्यपरिश्रमः ॥ विगुणंभ्रातरंत्यक्त्वायोमांस्वयमुपस्थितः ॥ ९ ॥ इत्येवंवदतःश्रुत्वासीतारामस्यतद्वचः ॥ मृगीवोत्फुल्लनयनाबभूवाश्रुपरिप्लुता ॥ १० ॥ पश्यतस्तांतुरामस्यसमीपेहृदयप्रियाम् ॥ जनवादभयाद्राज्ञोबभूवहृदयंद्विधा ॥ ११ ॥

जित्वा निर्जिता शत्रोः मत्याहृता पौरुषात्पुरुषयत्नात् ॥ २ ॥ अमर्षस्य क्रोधस्यांतं गतः धर्षणा शत्रुकृतस्वदारहरणलक्षणाभिभवः ॥ ३ ॥ अद्य मे पौरुषं दृष्टं लोकैरिति शेषः । तीर्णप्रतिज्ञः तीर्णा रावणवधविषया प्रतिज्ञा येन सः ॥ ४ ॥ मया विरहिता या त्वं चलचित्तेन रक्षसा नीता असौ दैवसंपादितस्तव दोषो मानुषेण मनुष्यसाध्यपराक्रमेण मया जितोपनीतः ॥ ५ ॥ ॥ ६ ॥ अद्य सफलमित्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥ इत्येवं वदत इत्यर्थात्त्वया मे प्रयोजनं नास्तीति प्रतिफलनाद्दुःखेनाश्रुपरिप्लुता बभूव ॥ १० ॥ तद्रूपदर्शनादंगीकारबुद्धिः जनवादभयात्त्यागबुद्धिः भाव

संधिरत्र ॥ ११ ॥ १२ १३ ॥ जीवलोकस्य दुराधर्षेत्यन्वयः इल्वलवातापिभयादिति शेषः । रावणभयात्प्राणिमात्रस्य दुराधर्षा युद्धेन निर्जिता॥ १४ ॥ १५ ॥ अपवादं स्वदारापहारिणं हंतुं नाशक्नोदित्य पवादं परिमार्जता न्यंगं नीचत्वं परिमार्जतेदं कृतमिति शेषः ॥ १६ ॥ नेत्रातुरस्य नेत्ररोगिणः ॥ १७ ॥ १८ ॥ सुहल्लोभेन सुहच्चिरकालस्निग्ध इति लोभो जिघृक्षा यस्य तेन ॥ १९ ॥ रावणस्य दुष्टेन चक्षुषा कामोपहतनेत्रेण दृष्टाम् एवं च विषान्नवदग्राह्यामित्यर्थः ॥ २० ॥ २१॥ कृतबुद्धिना निश्चितबुद्धिना अस्मदीयेषु यत्र कुत्रापि तिष्ठेत्याह लक्ष्मण इत्यादि ॥ २२ ॥ यथा वा सुखं स्वमातृपितृकुले वे

सीतामुत्पलपत्राक्षींनीलकुंचितमूर्धजाम् ॥ अवदद्वैवरारोहांमध्येवानररक्षसाम् ॥ १२ ॥ यत्कर्तव्यंमनुष्येणधर्षणांप्रतिमार्जता ॥ तत्कृतंरावणं हत्वामयेदंमानकांक्षिणा ॥ १३ ॥ निर्जिताजीवलोकस्यतपसाभावितात्मना ॥ अगस्त्येनदुराधर्षामुनिनादक्षिणेवदिक् ॥ १४ ॥ विदितश्चास्तुभद्रं तेयोऽयंरणपरिश्रमः ॥ सुतीर्णःसुहृदांवीर्यान्नत्वदर्थंमयाकृतः ॥ १५॥ रक्षतातुमयावृत्तमपवादंचसर्वतः ॥ प्रख्यातस्यात्मवंशस्यन्यंगंचपरिमार्जता ॥ १६॥ प्राप्तचारित्रसंदेहाममप्रतिमुखेस्थिता ॥ दीपोनेत्रातुरस्येवप्रतिकूलासिमेदृढा ॥१७॥ तद्गच्छत्वाऽनुजानेद्ययथेष्टंजनकात्मजे ॥ एतादशदि शोमद्रेकार्यमस्तिनमेत्वया ॥ १८ ॥ कःपुमांस्तुकुलेजातःस्त्रियंपरगृहोषिताम् ॥ तेजस्वीपुनरादद्यात्सुहल्लोभेनचेतसा ॥ १९ ॥ रावणांकपरिक्लिष्टां दृष्टांदुष्टेनचक्षुषा ॥ कथंत्वांपुनरादद्यांकुलंव्यपदिशन्महत् ॥२०॥ यदर्थंनिर्जितामेत्वंसोऽयमासादितोमया ॥ नास्तिमेत्वय्यभिष्वंगोयथेष्टंगम्यता मिति ॥ २१ ॥ तदद्यव्याहृतंभद्रेमयैतत्कृतबुद्धिना ॥ लक्ष्मणेवाथभरतेकुरुबुद्धिंयथासुखम् ॥ २२ ॥ शत्रुघ्नेवाथसुग्रीवेराक्षसेवाविभीषणे ॥ निवे शयमनःसीतेयथावासुखमात्मनः ॥ २३ ॥ नहित्वांरावणोदृष्ट्वादिव्यरूपांमनोरमाम् ॥ मर्षयत्यचिरंसीतेस्वगृहेपर्यवस्थिताम् ॥ २४ ॥ ततःप्रियार्हे श्रवणातदप्रियंप्रियादुपश्रुत्याचिरस्यमानिनी ॥ मुमोचबाष्पंरुदतीतदाभृशंगजेंद्रहस्ताभिहतेववल्लरी ॥ २५ ॥ इत्यार्षेश्रीमद्रा०वाल्मी०आदिकाव्ये युद्धकांडेसप्तदशाधिकशततमःसर्गः ॥ ११७ ॥ एवमुक्तातुवैदेहीपरुषंरोमहर्षणम् ॥ राघवेणसरोषेणश्रुत्वाप्रव्यथिताभवत् ॥ १ ॥ सातदाऽश्रुतपूर्वंहि जनेमहतिमैथिली ॥ श्रुत्वाभर्तुर्वचोघोरंलज्जयावनताभवत् ॥ २ ॥ प्रविशंतीवगात्राणिस्वानिसाजनकात्मजा ॥ वाक्छरैस्तैःसशल्येवभृशमश्रू ण्यवर्तयत् ॥ ३ ॥ ततोबाष्पपरिक्लिन्नंप्रमार्जतीस्वमाननम् ॥ शनैर्गद्गदयावाचाभर्तारमिदमब्रवीत् ॥४॥ किंमामसदृशंवाक्यमीदृशंश्रोत्रदारुणम् ॥ रूक्षंश्रावयसेवीरप्राकृतःप्राकृतामिव ॥ ५ ॥ नतथास्मिमहाबाहोयथामामवगच्छसि ॥ प्रत्ययंगच्छमेस्वेनचारित्रेणैवतेशपे ॥ ६ ॥

त्यर्थः ॥ २३ सर्वलोकस्य मम च त्वयि वृत्तः संदेहो दुर्निवार इत्याह न हि त्वामित्यादि ॥ २४ ॥ प्रियार्हश्रवणा प्रियश्रवणार्हेत्यर्थः । गजेंद्रहस्ताभिहता वल्लरी यथा तथा बाष्पं मुमोचेत्यर्थः ॥ २५ ॥ शेरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥ ॥ कनकरी० ॥ १०८ ॥ एवमिति ॥१॥ जने महति महाजनसन्निधा वित्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ असदृशं त्वया वक्तुं मया श्रोतुं चायोग्यं रूक्षं परुषमतएव श्रोत्रदारुणं श्रवणकटु ॥ ५ ॥ यथा त्वमवगच्छसि दुष्टेयमिति तथा नास्मि स्वेन चारित्रेण पातिव्रत्यलक्षणेन ते शपे

शपथेन तव प्रत्ययं संपादयिष्ये ततो मे प्रत्यय गच्छ ॥ ६ ॥ पृथक्स्त्रीणां प्रचारेण चारित्रदर्शनेन हेतुना जातिं स्त्रीजातिं परिशंकसे दुष्टा मन्यसे इदमनुचितमिति शेषः । यदि ते त्वयाहं परीक्षिता तदेमां शंकां त्यज ॥ ७ ॥ ननु काते परीक्षा रक्षोंगस्पृष्टायास्तत्राह यदहमिति । विवशाऽस्वाधीना सतां गात्रसंस्पर्शं गतास्मि प्राप्तास्मि । तत्र मे कामकारो न इच्छापूर्वकता न । तत्र बलात्स्पर्शे दैवमेवापराध्यति अपराधं कारितवत् दैवमेवात्र कारणं न मेऽत्रापराध इति भावः ॥ ८ ॥ स्वतो दोषजनकं कर्म तु मे नास्तीत्याह मदधीनमिति । परैर्ग्रहीतुमशक्यमित्यर्थः । पराधीनेषु परैर्ग्रहीतुं शक्येषु दैवाधीनेषु च यस्या रक्षायास्मितदधीनानिगात्राणि तथैव तदर्थमेवैषां निर्माणात् । हृदयं तु तदीयमेवात्रापीति भावः ॥९॥ सहयुगपत्संवृद्धोभावः परस्परानुरागलक्षणस्तेन संसर्गेण चिरकालसहवासेन चयद्यहं ते त्वयागुणवत्त्वेन न विज्ञातातेन त्वदज्ञानेन हेतुनाहं शाश्वतं हता चिरकालं दुःखमग्नाकृता ॥१०॥ अवलोककः अवलोकितुमन्वेष्टुमित्यर्थः । तदा किं न त्वया विसर्जिता पुनरंगीकाराभावं किमिति न श्राविता॥११॥ तदोक्तौ को विशेषस्तत्राह प्रत्यक्ष

पृथक्स्त्रीणांप्रचारेणजातिंत्वंपरिशंकसे ॥ परित्यजैनांशंकांतुयदितेऽहंपरीक्षिता ॥ ७ ॥ यदहंगात्रसंस्पर्शंगतास्मिविवशाप्रभो ॥ कामकारोनमेतत्र दैवंतत्रापराध्यति ॥ ८ ॥ मदधीनंतुयत्तन्मेहृदयंत्वयिवर्तते ॥ पराधीनेषुगात्रेषुकिंकरिष्याम्यनीश्वरी ॥ ९ ॥ सहसंवृद्धभावेनसंसर्गेणचमानद ॥ यदितेहंनविज्ञाताहतातेनास्मिशाश्वतम् ॥ १० ॥ प्रेषितस्तेमहावीरोहनूमानवलोककः ॥ लंकास्थाहंत्वयाराजन्किंतदानाविसर्जिता ॥ ११ ॥ प्रत्यक्षंवानरस्यास्यतद्वाक्यसमनंतरम् ॥ त्वयासंत्यक्तयावीरत्यक्तंस्याज्जीवितंमया ॥ १२ ॥ नवृथातेश्रमोऽयंस्यात्संशयेन्यस्यजीवितम् ॥ सुहृज्जनपरिक्लेशोनचायंविफलस्तव ॥१३॥ त्वयातुनृपशार्दूलरोषमेवानुवर्तता ॥ लघुनेवमनुष्येणस्त्रीत्वमेवपुरस्कृतम् ॥१४॥ अपदेशोमेजनकान्नोत्पत्तिर्वसुधातलात् ॥ ममवृत्तंचवृत्तज्ञबहुतेनपुरस्कृतम् ॥ १५ ॥ नप्रमाणीकृतःपाणिर्बाल्येममनिपीडितः ॥ ममभक्तिश्चशीलंचसर्वंतेपृष्ठतःकृतम् ॥ १६ ॥ इतिब्रुवंतीरुदतीबाष्पगद्गदभाषिणी ॥ उवाचलक्ष्मणंसीतादीनंध्यानपरायणम् ॥ १७ ॥ चितांमेकुरुसौमित्रेव्यसनस्यास्यभेषजम् ॥ मिथ्यापवादोपहतानाहंजीवितुमुत्सहे॥ १८ ॥ अप्रीतेनगुणैर्भर्त्रात्यक्तायाजनसंसदि ॥ याक्षमामेगतिर्गंतुंप्रवेक्ष्येहव्यवाहनम् ॥१९॥ एवमुक्तस्तुवैदेह्यालक्ष्मणःपरवीरहा ॥ अमर्षवशमापन्नोराघवंसमुदैक्षत ॥ २० ॥

मिति । एवं च तदैव जीवत्यागे एतावत्पर्यंतं महती त्वद्वियोगव्यथा न स्यादिति भावः ॥ १२ ॥ जीवितं संशये न्यस्य युद्धे जयस्य संदिग्धत्वात्संशये प्रतिष्ठाप्य योऽयं वृथा श्रमः कृतः स न कर्तव्यः स्यात् । तथा विफलः सुहृज्जनपरिक्लेशश्च न कर्तव्यो भवेत् ॥ १३ ॥ स्त्रीत्वमेव प्राकृतसाधारणस्त्रीजातिरेव पुरस्कृतं चिंतिता ॥ १४ ॥ मेऽपदेशो वैदेहीत्यादिव्यवहारो जनकाज्जनकयज्ञभूमिसंबंधमात्रात् नोत्पत्तिर्जनकादित्यनुकर्षः । कुतस्तर्हि सा तत्राह वसुधातलात् । एवं मनुष्ययोन्यनुत्पत्तिरप्राकृतस्त्रीत्वोपपादिकोक्ता । तथा मे बहुमानार्हं वृत्तं चारित्रं च ते त्वया न पुरस्कृतम् अपरित्यागे हेतुत्वेन न विचारितम् ॥१५॥ किं च बाल्ये कृतं धर्मप्रजोद्देश्यकं पाणिग्रहणमपि त्वया परित्यागे न प्रमाणीकृतम् ॥ १६ ॥ १७ ॥ १८ ॥ गुणैरप्रीतेन भर्त्रा जनसंसदि त्यक्ताया या गतिः क्षमा तां गतिं गंतुं हव्यवाहनं प्रवेक्ष्ये । अप्रीतस्य

गुणैर्भर्तुरितिपाठांतरम् । तत्रापि शेष षष्ठी ॥ १९ ॥ २० ॥ मनश्छंदं मनोभिप्रायम् । आकारसूचितं भ्रूभंगाद्याकारसूचितम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ राघवः शुद्धचारित्रामदुष्टामेव मां यदि दुष्टां जानाति । अहं तथा चेव् अदुष्टा चेत्पावको मां सर्वतः पातु । केशांबरादिकमपि मा धाक्षीदित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ सा तप्तेत्यादि । एतदर्थमेव स्नाताया अलंकारयुताया आनयनं कारितम् ॥ २९ ॥ सर्वाणि रूपाणि सर्वाणि भूतानि । सर्वाणि रूपाणि विचित्य धीर इत्यादौ तद्बोधकतया प्रसिद्धो रूपशब्दः ॥ ३० ॥ ३१ ॥ वसोर्धारां संततां घृतधाराम् ॥ ३२ ॥ शप्तां शापं प्राप्तामत एव त्रिदिवान्निरये मनुष्ययोन्यादौ पतंतीम् ॥ ३३ ॥ अद्भुतोपमः आश्चर्यमित्युपमाज्ञानं यत्प्रवृत्तौ सः ॥ ३४ ॥ वर्तमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये

सविज्ञायमनश्छंदंरामस्याकारसूचितम् ॥ चितांचकारसौमित्रिर्मतेरामस्यवीर्यवान् ॥२१॥ नहिरामंतदाकश्चित्कालांतकयमोपमम् ॥ अनुनेतुमथो वक्तुंद्रष्टुंवाप्यशकत्सुहृत् ॥ २२ ॥ अधोमुखंस्थितंरामंततःकृत्वाप्रदक्षिणम् ॥ उपावर्ततवैदेहीदीप्यमानंहुताशनम् ॥२३॥ प्रणम्यदैवतेभ्यश्चब्राह्मणेभ्यश्चमैथिली ॥ बद्धांजलिपुटाचेदमुवाचाग्निसमीपतः ॥ २४ ॥ यथामेहृदयंनित्यंनापसर्पतिराघवात् ॥ तथालोकस्यसाक्षीमांसर्वतःपातुपावकः ॥ २५ ॥ यथामांशुद्धचारित्रांदुष्टांजानातिराघवः ॥ तथालोकस्यसाक्षीमांसर्वतःपातुपावकः ॥ २६ ॥ एवमुक्त्वातुवैदेहीपरिक्रम्यहुताशनम् ॥ विवेशज्वलनंदीप्तंनिःशंकेनांतरात्मना ॥ २७ ॥ जनश्चसुमहांस्तत्रबालवृद्धसमाकुलः ॥ ददर्शमैथिलींदीप्तांप्रविशंतींहुताशनम् ॥ २८ ॥ सातप्तनवहेमाभातप्तकांचनभूषणा ॥ पपातज्वलनंदीप्तंसर्वलोकस्यसन्निधौ ॥ २९ ॥ ददृशुस्तांविशालाक्षींपतंतींहव्यवाहनम् ॥ सीतांसर्वाणिरूपाणिरुक्मवेदिनिभांतदा ॥ ३० ॥ ददृशुस्तांमहाभागांप्रविशंतींहुताशनम् ॥ ऋषयोदेवगंधर्वायज्ञेपूर्णाहुतीमिव ॥ ३१ ॥ प्रचुक्रुशुःस्त्रियःसर्वास्तांदृष्ट्वाहव्यवाहने ॥ पतंतींसंस्कृतांमंत्रैर्वसोर्धारामिवाध्वरे ॥ ३२ ॥ ददृशुस्तांत्रयोलोकादेवगंधर्वदानवाः ॥ शप्तांपतंतींनिरयेत्रिदिवाद्देवतामिव ॥ ३३ ॥ तस्यामग्निंविशंत्यांतुहाहेतिविपुलःस्वनः ॥ रक्षसांवानराणांचसंबभूवाद्भुतोपमः ॥ ३४ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीयेआ० युद्धकांडे अष्टादशाधिकशततमःसर्गः ॥ ११८ ॥ ततोहिदुर्मनारामःश्रुत्वैववदतांगिरः ॥ दध्यौमुहूर्तंधर्मात्माबाष्पव्याकुललोचनः ॥ १ ॥ ततोवैश्रवणोराजायमश्चपितृभिःसह ॥ सहस्राक्षश्चदेवेशोवरुणश्चजलेश्वरः ॥ २ ॥ षडर्धनयनःश्रीमान्महादेवोवृषध्वजः ॥ कर्तासर्वस्यलोकस्यब्रह्माब्रह्मविदांवरः ॥ ३ ॥

युद्धकांडे अष्टादशाधिकशततमः सर्गः ॥ ११८ ॥ कतकरी० ॥ १०९ ॥ ततो हीति । एवं वदतां हाहेति वदतां सर्वेषामार्ता गिरः श्रुत्वा ततो हि तत एव दुर्मनाः खिन्नचित्तो रामो बाष्पव्याकुललोचनः प्राकृतस्त्रीवत्सीता एतदनर्हेति तद्वियोगनो बाष्पव्याकुललोचनो भूत्वा मुहूर्तं दध्यौ किमुक्तं किं कृतं किं चातः परं कर्तव्यमिति चिंतापरो बभूव ॥१॥ अत्रावसरे दिक्पालसहितो रुद्रो हिरण्यगर्भश्च रामानुग्रहाय समागता इत्याह तत इत्यादि ॥२॥ षडर्धनयनः श्रीमान् षडर्धनयनस्त्रिनेत्र इत्यर्थः । सर्वलोकस्य ब्रह्मलोकपर्यंतं सर्वलोकवर्तिपदार्थानां स्रष्टा ब्रह्मविदां चतुर्मुखप्रजापतिविष्णुदेवराजादिदिक्पालवसिष्ठाद्यर्षितत्संतान

जाह्मणा ब्रह्मविदस्तेषां वरो ज्येष्ठो हिरण्यगर्भः । यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । इति श्रुतेर्हिरण्यगर्भः समवर्तताग्रे इतिश्रुतेश्च ॥ ३ ॥ एते सर्वे विमानैर्लंकामागत्य राघवमभिजग्मुः ॥ ४ ॥ प्रगृह्य उद्यम्य । भारते त्वाग्निप्रवेशं सीताया अनुक्त्वा रामस्य चारित्रसंदेहे सीतादुःखं दृष्ट्वा वाय्वग्निवरुणाद्युक्त्यैव सीतांगीकार उक्तस्तत्रानुक्तोप्यग्निप्रवेशो मध्ये द्रष्टव्य इत्याहुः । पाद्मे तु सा तेन गर्हिता साध्वी विवेश ज्वलनं तदेत्युक्तम् ॥५॥ कर्ता सर्वस्येति.। मनुष्यदेहे राघवे सर्वलोककर्तृत्वाद्युक्तिर्मूलस्वरूपाभिप्रायेण ज्ञानविदामौपनिषदज्ञानवताम् देवगणा इंद्रादयस्तेषां श्रेष्ठम् विष्णुमुखा वै देवा इति श्रुतेः ॥६॥ ऋतधामेत्यादिश्लोकत्रयं कतकासम्मतम् । तीर्थस्त्वेवं व्याचष्टे पूर्वं पूर्वस्मिन्कल्पे सृष्टेः पूर्वं वा वसूनां मध्ये ऋतधामा नाम वसुः आदिकर्ता अंडांडाधिपतिरूपादिसृष्टिकर्ता । स्वयंप्रभुः इतरानियम्यः ॥ ७ ॥ अष्टमो रुद्रो महादेवः । साध्यानामपि पंचमः वीर्यवान्नामा । विराड्रूपं वर्णयति अश्विनौ चेत्यादि ॥८॥ अंते चादौ चेत्यनेनं सर्वभूततत्त्वं त्वमेवेति सूचितम् ॥९॥ लोकपालैरिंद्रादिब्रह्मांतैः पूर्वोक्तैः लोकस्य भूलोकस्येदानीं साक्षात्स्वामी राघवो रघुकुलजः ॥ १० ॥ अथ ब्रह्मानुग्रहादेव ब्रह्मविद्यौन्मुख्यस्य श्रुत्यादिसिद्धतया तदौन्मुख्यस्यात्मानं नावबुध्यसे इति ब्रह्मणैव कृतत्वात्तज्जिज्ञासुरिव स्वीयानां स्वस्वरूपबोधनाय ब्रह्माणं

एतेसर्वेसमागम्यविमानैःसूर्यसन्निभैः ॥ आगम्यनगरींलंकामभिजग्मुश्चराघवम् ॥४॥ ततःसहस्ताभरणान्प्रगृह्यविपुलान्भुजान् ॥ अब्रुवंस्त्रिदशश्रेष्ठाराघवंप्रांजलिंस्थितम् ॥ ५ ॥ कर्तासर्वस्यलोकस्यश्रेष्ठोज्ञानविदांविभुः ॥ उपेक्षसेकथंसीतांपतंतींहव्यवाहने ॥ कथंदेवगणश्रेष्ठमात्मानंनावबुद्ध्यसे ॥ ६ ॥ ऋतधामावसुःपूर्वंवसूनांचप्रजापतिः ॥ त्रयाणामपिलोकानामादिकर्तास्वयंप्रभुः ॥ ७ ॥ रुद्राणामष्टमोरुद्रःसाध्यानामपिपंचमः ॥ अश्विनौचापिकर्णौतेसूर्याचंद्रमसौदृशौ ॥ ८ ॥ अंतेचादौचमध्येचदृश्यसेचपरंतप ॥ उपेक्षसेचवैदेहींमानुषःप्राकृतोयथा ॥९ ॥ इत्युक्तोलोकपालैस्तैःस्वामीलोकस्यराघवः ॥ अब्रवीत्त्रिदशश्रेष्ठान्रामोधर्मभृतांवरः ॥ १० ॥ आत्मानंमानुषंमन्येरामंदशरथात्मजम् ॥ सोहंयश्चयतश्चाहंभगवांस्तद्ब्रवीतुमे ॥ ११ ॥ इतिब्रुवाणंकाकुत्स्थंब्रह्माब्रह्मविदांवरः ॥ अब्रवीच्छृणुमेवाक्यंसत्यंसत्यपराक्रम ॥ १२ ॥ भवान्नारायणोदेवःश्रीमांश्चक्रायुधःप्रभुः ॥ एकशृंगोवराहस्त्वंभूतभव्यसपत्नजित् ॥ १३ ॥ अक्षरंब्रह्मसत्यंचमध्येचांतेचराघव ॥ लोकानांत्वंपरोधर्मोविष्वक्सेनश्चतुर्भुजः ॥ १४ ॥

गुरुमज्ञ इवोपासददित्याहात्मानमिति । अहमात्मानमात्मस्वरूपं सामान्यतोहंत्वेन प्रतीयमानं दशरथपुत्रं रामनामकं मनुष्यजातीयपिंडमेव मन्ये न तु ततोतिरिक्तं किंचिद्वेद्मि । भवद्भिरप्युक्तं स्वात्मानम् नावबुध्यसे इति । एवं च सोहमेवंभूताहंबुद्धिमान् यश्च परमार्थतो यत्तत्त्वो यतश्च यत्प्रकृतिकश्च तत्सर्वं भगवान्सर्वज्ञः परमगुरुर्मे मह्यमज्ञाय जिज्ञासवे ब्रवीतूपदिशतु । अयमेव ब्रह्मविद्योपदेशमार्गः सर्वत्र श्रुतिस्मृतिषु प्रसिद्धः ॥ ११ ॥ इतिब्रुवाणं जिज्ञासवे मह्यं ब्रवीत्विति ब्रुवाणं वाक्यं देहदेहितत्त्वोपदेशरूपम् ॥ १२ ॥ नारं जीवसमूहोऽयनं स्थानं यस्य स विराड्रूपो नारायणपदवाच्यो यः स त्वमसि । देवः स्वप्रकाशः । विराट्चिह्नान्याह चक्रेति । इदं शंखगदादेरप्युपलक्षणम् एकशृंगो वराह एकदंष्ट्रो धरणीवराहः । अयं विराड् विष्णुमूर्तेर्भेदः । भूतभव्यसपत्नजिद्भूतभव्यकालरूपो यः सपत्नो जनिमृतिहेतुत्वात्तं जयति स नित्य इतियावत् ॥ १३ ॥ तदेवाह अक्षरमिति । यदक्षरं मध्ये चांते चादादौ च सत्यमप्रच्युतस्वरूपं तत्त्वं यद्ब्रह्म तदेव त्वमसीति शेषः । लोकानां धर्माधिकृतप्राणिनां त्वमेव परमो धर्मः । यज्ञो वै विष्णुरित्या

दिश्रुतेरश्वमेधांतधर्मस्त्वमेव विष्वंचः सर्वगताः सेनानियामकगणा यस्य चतुर्भुजः शत्रुनिरसनदक्षभुजचतुष्टयवान् ॥ १४ ॥ शार्ङ्गधन्वा कालरूपं शार्ङ्गं धनुर्यस्य । हृषीकेश इति । हृषीकाणामिंद्रियाणामीशो नियंता । पुरुष इति पुरूणि फलानि सनोति ददाति स पुरुषः । पुरुहृदयपुंडरीके शेत इति वा पूर्णत्वाद्वा पुरुषः । तेनेदं पूर्णं पुरुषेण सर्वमितिश्रुतेः । पुरुषोत्तमः यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः ॥ अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम इतिस्मृतेः । अजितःपाप्मनाऽरिभिश्चाजितः खड्गधृक् विद्याख्यनंदकखड्गधृक् । विष्णुः सर्वव्यापकः । कृष्णस्तद्वर्णः बृहद्बल इति अशेषब्रह्मांडस्य लीलाकंदुकवद्धारणक्षमबृहद्बलः ॥१५॥ सेनानी राजसेनापतिश्च । ग्रामणीर्मंत्री । सर्वं जगत्त्वमेव । बुद्धिर्निश्चयात्मिका । क्षमा भक्तापराधसहिष्णुता । दम इंद्रियनिग्रहः । तद्धर्मकत्वात्तदात्मत्वव्यपदेशः । प्रभावाप्ययौ सृष्टिप्रलयौ तत्कारणत्वात्तद्व्यपदेशः । उपेंद्रादयस्तवैव मूर्तिभेदाः ॥ १६ ॥ प्रजापतिरिंद्रमसृजतेत्युक्तेरिंद्रः कर्म सृष्टिर्यस्य स इंद्रकर्मा । महेंद्रः सकलेशिता । पद्मं वैराजं नाभौ यस्य सः । रणांतकृत् रणे शत्रूणां नाशकर्ता । शरण्यं शरणत्वेन प्राप्यम् । शरणं रक्षकं च त्वामेवाहुः परित्राणाय साधूनामित्युक्तेः ॥ १७ ॥ सहस्रशृंगोऽनेकशाखामयशृंगवान् । वेदात्मा वेदस्वरूपः । शतशीर्षोऽनेकविधिमयशिरोयुक्तः । महर्षभः श्रेष्ठतमः शिशुमारप्रजापतिरूप इत्यर्थ

शार्ङ्गधन्वाहृषीकेशःपुरुषःपुरुषोत्तमः ॥ अजितःखड्गधृग्विष्णुःकृष्णश्चैवबृहद्बलः ॥ १५ ॥ सेनानीर्ग्रामणीःसर्वंत्वंबुद्धिस्त्वंक्षमादमः ॥ प्रभवश्चाव्ययश्चत्वमुपेंद्रोमधुसूदनः ॥ १६ ॥ इंद्रकर्मामहेंद्रस्त्वंपद्मनाभोरणांतकृत् ॥ शरण्यंशरणंचत्वामाहुर्दिव्यामहर्षयः ॥ १७ ॥ सहस्रशृंगोवेदात्माशतशीर्षोमहर्षभः ॥ त्वंत्रयाणांहिलोकानामादिकर्तास्वयंप्रभुः ॥ १८ ॥ सिद्धानामपिसाध्यानामाश्रयश्चासिपूर्वजः ॥ त्वंयज्ञस्त्वंवषट्कारस्त्वमोंकारःपरात्परः ॥ १९ ॥ प्रभवंनिधनंचापिनोविदुःकोभवानिति ॥ दृश्यसेसर्वभूतेषुगोषुचब्राह्मणेषुच ॥ २० ॥ दिक्षुसर्वासुगगनेपर्वतेषुनदीषुच ॥ सहस्रचरणःश्रीमान्शतशीर्षःसहस्रदृक् ॥२१॥ त्वंधारयसिभूतानिपृथिवींसर्वपर्वतान् ॥ अंतेपृथिव्याःसलिलेदृश्यसेत्वंमहोरगः ॥ २२ ॥ त्रींल्लोकान्धारयन्रामदेवगंधर्वदानवान्अहंतेहृदयंरामजिह्वादेवीसरस्वती ॥ २३ ॥ देवारोमाणिगात्रेषुब्रह्मणानिर्मिताःप्रभो ॥ निमेषस्तेस्मृताराात्रिरुन्मेषोदिवसस्तथा ॥ २४ ॥

इति कतकः । त्रयाणां लोकानां सर्वप्रजानामित्यर्थः । स्वयंप्रभुः अनन्यप्रेर्यः ॥ १८ ॥ सिद्धानामारूढानां साध्यानामारुरुक्षूणामाश्रयः प्राप्यः । पूर्वजश्चासि । अहमस्मि प्रथमजा ऋतस्येत्यादिश्रुतेः ॥ १९ ॥ तव प्रभावाद्यपि न जानंति को भवानिति वेदंतया न जानंति सार्वात्म्येन स्तौति दृश्यस इति । सर्वभूतेषु गोष्वित्यादि उत्तमचेतनेष्वर्पात्यर्थः । दृश्यसेंऽतर्यामितया श्रूयसे ॥ २० ॥ अत्यंतमचेतनेष्वपि त्वमंतर्यामीत्याह दिक्ष्विति ॥ २१ ॥ त्वमेव सहस्रचरणत्वादिविशिष्टानंतरूपो भूत्वा पृथिव्यादींस्तद्धर्तिभूतानि च धारयसि तथांते अहरंते पृथिव्या उपरिवर्तिनि सलिले त्वं महोरगशयनो दृश्यसे एवं च पृथिव्या अध उपरि च प्रतिष्ठितस्त्वशक्तिस्त्वमित्युक्तम् ॥ २२ ॥ हे राम त्रीन्लोकान् धारयन् त्वं विराट् नारायणोसीत्यर्थः । एतेन यतश्चाहमुत्पन्न इति प्रश्नस्योत्तरं दत्तम् एवं देहत्वमुपादिश्य देहित्वमुपदिशति अहं ते हृदयमिति । हे राम ते रामोपग्रहस्य तव हृदयं सर्वाधारभूतमांतरं त्वदात्मतत्त्वमहमेव ज्ञानस्वरूपः महाकाश इव घटाकाशस्य तव जिह्वा मन्निर्मिता वाग्देवी सरस्वती ॥ २३ ॥ देवा इंद्रियदेवा दिग्वातार्का

दयस्तव गात्रेषु श्रोत्रादिषु ब्रह्मणा मया निर्मिताः रोमाणि च निर्मितान्योषधिवनस्पत्यादिनेति शेषः । मेषोन्मेषौ च रात्रिदिवसत्वेन प्रसिद्धौ ॥ २४ ॥ संस्काराः संस्क्रियंते बंध्यंत एभिर्लोका इति संस्काराः प्रवृत्तिनिवृत्तिबोधकाः नैतदस्तीति । त्वया विना यदस्ति तत्किमपि नेत्यर्थः । कार्यकारणरूपं सर्वं जगत्ते शरीरं स्थैर्यमशेषप्रजानित्यधारणसामर्थ्यं वसुधातलं भूतलं त्वमेव ॥ २५ ॥ ते कोपोग्निः ते प्रसादः सोमः त्वया वामनात्मनावतीर्णेन पुरा पूर्वं त्रिभिर्विक्रमैस्त्रयो लोका भूर्भुवःस्वःस्वरूपाः क्रांताः ॥२६॥ बलिं बद्ध्वा महेंद्रश्च राजा कृतः । सीता लक्ष्मीः प्रसिद्धविष्णुपत्न्यभिन्नतत्त्वत्वात् यो विष्णुः स भवान् देवः प्रकाशरूपः कृष्णः कृष्णवर्णः प्रजापतिस्तदभिन्नतत्त्वः ॥ २७ ॥ स एव त्वं रावणस्य वधाय मानुषीं तनुं प्रविष्टोसि माययेति शेषः । एवंतत्त्वेन त्वया तदिदं रावणवधरूपं नः सर्वेषां देवानां कार्यं कृतम् ॥२८॥ अथ वृत्तानुष्ठानानुवादपूर्वं वर्तिष्यमाणकर्तव्यमाह निहत इति । रावणो निहतः । एवं चावतारकार्यं निवृत्तमतःपरं महाराज्येन किंचित्कालं प्रहृष्टः सन् दिवं परनाकाख्यं ब्रह्मलोकमाक्रम प्राप्नुहि एवं सिद्धकार्यत्वात्ते वीर्यं बलममोघं तन्मूलाः पराक्रमाश्च न मोघा न निष्फला अपि तु सफला एवेत्यर्थः ॥ २९ ॥ अथ रामस्य सर्वोपास्यत्वं सर्वाभीष्टसिद्धिप्रदत्वं चाहामोघमिति । हे राम ते दर्शनमेवंमूर्तेस्ते दर्शनं सुग्री

संस्कारास्त्वभवन्वेदानैतदस्तित्वयाविना ॥ जगत्सर्वंशरीरंतेस्थैर्यंतेवसुधातलम् ॥ २५ ॥ अग्निःकोपःप्रसादस्तेसोमःश्रीवत्सलक्षणः ॥ त्वयालोकास्त्रयःक्रांताःपुरास्वैर्विक्रमैस्त्रिभिः ॥२६॥ महेंद्रश्चकृतोराजाबलिंबद्ध्वासुदारुणम् ॥ सीतालक्ष्मीर्भवान्विष्णुर्देवःकृष्णःप्रजापतिः ॥ २७ ॥ वधार्थंरावणस्येहप्रविष्टोमानुषींतनुम् ॥ तदिदंनस्त्वयाकार्यंकृतंधर्मभृतांवर ॥ २८ ॥ निहतोरावणोरामप्रहृष्टोदिवमाक्रम ॥ अमोघंदेववीर्यंतेनतेमोघाःपराक्रमाः ॥ २९ ॥ अमोघंदर्शनंरामअमोघस्तवसंस्तवः ॥ अमोघास्तेभविष्यंतिभक्तिमंतोनराभुवि ॥ ३० ॥ येत्वांदेवंध्रुवंभक्ताःपुराणंपुरुषोत्तमम् ॥ प्राप्नुवंतितथाकामानिहलोकेपरत्रच ॥ ३१ ॥ इममार्षस्तवंदिव्यमितिहासंपुरातनम् ॥ येनराःकीर्तयिष्यंतिनास्तितेषांपराभवः ॥ ३२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये युद्धकाण्डे एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥ एतच्छ्रुत्वाशुभंवाक्यंपितामहसमीरितम् ॥ अंकेनादायवैदेहीमुत्पपातविभावसुः ॥ १ ॥ विधूयाथचितांतांतुवैदेहींहव्यवाहनः ॥ उत्तस्थौमूर्तिमानाशुगृहीत्वाजनकात्मजाम् ॥ २ ॥

वादीनाममोघम् एवं कालांतरे श्रुत्वा चित्ततद्ग्रहणामप्यमोघम् ऐहिकामुष्मिकसकलफलसाधनं तव संस्तवो रामनारायणेत्येवं रूपोऽमोघः सकलेष्टदः ये च त्वयि भक्तिमंतः सोहमेवेति गौणवृत्त्या त्वदुपासकास्तवाहमिति वोपासकास्तेप्यमोघं संसारमार्गमतिक्रांताः सत्यसंकल्पत्वादिमंतः संतो मल्लोकप्राप्तिरूपामोघफला भविष्यंति किं पुनर्ये सर्वात्मना त्वदभेदध्यानवंत इत्यर्थः ॥ ३० ॥ उक्तमर्थमुपसंहरति दार्ढ्याय ये त्वामिति ॥३१॥ इदानीं तत्पैरतत्स्तोत्रपाठफलमुपदिशति इममिति । ऋषिर्वेदस्तदुक्तसगुणनिर्गुणब्रह्मविद्याप्रतिपादकत्वादार्षः स चासौस्तवश्चेत्यार्षस्तवस्तम् अतएव दिव्यं पुरातनं पुरावृत्तप्रतिपादकम् इतिहासम् अनादिसिद्धपुरातनब्रह्मविद्याप्रतिपादकत्वात् एवंभूतं ब्रह्मविद्यास्तवं ये कीर्तयिष्यंति तेषां पराभवः परैरिहामुत्र लोकशत्रुभिः पुत्रदारादिभिः पापैश्चाभिभव आक्रमणं नास्ति न भविष्यति च ॥ ३२ ॥ फलैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥ कतकरी० ॥ ११० ॥ एतदिति । पितामहसमीरितं शुभं परमशोभनं निजब्रह्मत्वप्रतिपादकं वाक्यं श्रुत्वा ध्यात्वा च प्रसन्नतयावस्थानकाले इति शेषः । अंकेनादाय रयिं च पुत्रांश्चादादग्निर्मह्यमिति श्रुत्यर्थमपरोक्षमेव संपादयन्नित्यर्थः ॥ १ ॥ मूर्तिमान् स्रुक् स्रुवादिचिह्ननिजमूर्तियुक्तः ॥ २ ॥

॥ ३ ॥ अक्लिष्टेति अग्निसंबंधेऽपीति शेषः । तथारूपां पूर्वानुभूतशोभायुक्ताम् ॥ ४ ॥ तदा दानसमये लोकस्य मनोवाक्कायैर्लौककृतपुण्यपापकर्मणः साक्षी साक्षाद्द्रष्टा सर्वदेहांतर्वैश्वानरात्मना नित्यप्रतिष्ठितत्वादिति भावः । एषा या मयि रावणहरणकाले प्रविष्टा सैव एवं हि कूर्मपुराणानुसारेण व्याख्यातं तच्च प्राङ्निरूपितं पापं रावणस्पर्शरूपमपि ॥ ५ ॥ सुवृत्ता वृत्तशौटीर्यं त्वां मनआदिभिः प्रत्येकं समुदितैश्च नात्यचरत् ॥ ६ ॥ एषा या इदानीं मयि प्रविष्टा ॥ ७ ॥ रुद्धा निरुद्धस्वच्छंदगमनादिव्यवहारा गुप्ता परिहृतस्वजनदर्शना त्वच्चित्ता त्वयि चित्तं यस्याः सा अतएव त्वत्परायणा त्वद्गतिः ॥ ८ ॥ तद्रक्षो नाचिंतयत नागण यत तत्र हेतुरंतरात्मनस्त्वद्गतत्वम् एवं च यत्प्रतिबिंबस्याप्येवं व्यवस्था तद्बिंबस्य शुद्धत्वं किं वक्तव्यमिति ध्वनिः ॥ ९ ॥ विशुद्धभावां विशुद्धांतराम् अतएव निष्पापां न किंचिदिति । मन्नियोगानंतरं प्रतिग्राह्या

तरुणादित्यसंकाशांतप्तकांचनभूषणाम् ॥ रक्तांबरधरांबालांनीलकुंचितमूर्धजाम् ॥ ३ ॥ अक्लिष्टमाल्याभरणांतथारूपामनिंदिताम् ॥ ददौरामायवैदेहीमंकेकृत्वाविभावसुः ॥ ४ ॥ अब्रवीत्तुतदारामंसाक्षीलोकस्यपावकः ॥ एषातेरामवैदेहीपापमस्यांनविद्यते ॥ ५ ॥ नैववाचानमनसानैवबुद्ध्यानचक्षुषा ॥ सुवृत्तावृत्तशौटीर्यंनत्वामत्यचरच्छुभा ॥ ६ ॥ रावणेनापनीतैषावीर्योत्सिक्तेनरक्षसा ॥ त्वयाविरहितादीनाविवशानिर्जनेसती ॥ ७ ॥ रुद्धाचांतःपुरेगुप्तात्वच्चित्तात्वत्परायणा ॥ रक्षितारा‍क्षसीभिश्चघोराभिर्घोरबुद्धिभिः ॥ ८ ॥ प्रलोभ्यमानाविविधंतर्ज्यमानाचमैथिली ॥ नाचिंतयततद्रक्षस्त्वद्गतेनांतरात्मना ॥ ९ ॥ विशुद्धभावांनिष्पापांप्रतिगृह्णीष्वमैथिलीम् ॥ नकिंचिदभिधातव्याअहमाज्ञापयामिते ॥ ॥ १० ॥ ततःप्रीतमनारामःश्रुत्वैवंवदतांवरः ॥ दध्यौमुहूर्तंधर्मात्माहर्षव्याकुललोचनः ॥ ११ ॥ एवमुक्तोमहातेजाधृतिमानुरुविक्रमः ॥ उवाचत्रिदशश्रेष्ठंरामोधर्मभृतांवरः ॥ १२ ॥ अवश्यंचापिलोकेषुसीतापावनमर्हति ॥ दीर्घकालोषिताहीयंरावणांतःपुरेशुभा ॥ १३ ॥ बालिशोबतकामात्मारामोदशरथात्मजः ॥ इतिवक्ष्यतिमांलोकोजानकीमविशोध्यहि ॥ १४ ॥ अनन्यहृदयांसीतांमच्चित्तपरिरक्षिणीम् ॥ अहमप्यवगच्छामिमैथिलींजनकात्मजाम् ॥ १५ ॥ इमामपिविशालाक्षींरक्षितांस्वेनतेजसा ॥ रावणोनातिवर्तेतवेलामिवमहोदधिः ॥ १६ ॥ नचशक्तःसुदुष्टात्मामनसापिहिमैथिलीम् ॥ प्रधर्षयितुमप्राप्यांदीप्तामग्निशिखामिव ॥ १७ ॥ नेयमर्हतिवैक्लव्यंरावणांतःपुरेसती ॥ अनन्याहिमयासीताभास्करस्यप्रभायथा ॥ १८ ॥

नवेति संदेहो न गृह्णामीति निषेधश्च न कर्तव्य इत्यर्थः । कुत एवं तत्राहाज्ञापयामि ते इति । एवमुक्तिस्तु रामेण स्वस्वरूपाज्ञाननटनात्तदनुसारेण रुद्रमूर्तेर्भगवतोऽग्नेरपीति मंतव्यम् ॥ १० ॥ दध्यौ किमिहोचितं वक्तव्यमिति ध्यातवानिति शेषः ॥ ११ ॥ १२ ॥ पावनं स्वार्थण्यंताद्भावे ल्युट् शुद्धिमित्यर्थः । जानकीमविशोध्य ग्राहिणं मां रावणांतःपुरे दीर्घकालोषितां तां दशरथात्मजो यद्गृहीतवान् तत्स कामात्मा कामपरतंत्रचित्तो बालिशो भूलोकव्यवहारापरिज्ञो यतोऽत इति लोको मां वक्ष्यति ततः शुद्ध्यर्थमग्निप्रवेशो मयानुमत इति शेषः ॥ १३ ॥ १४ ॥ इयं शुद्धेति हृदये जानाम्येवेत्याहानन्येति मच्चित्तपरिरक्षिणीं मद्गतचित्तत्वेनात्मनो दोषपरिरक्षणशीलाम् ॥ १५ ॥ स्वेन तेजसा पातिव्रत्येन ॥ १६ ॥ प्रधर्षयितुं न शक्तः अतएवाप्राप्याम् अशक्यग्रहां तत्र निदर्शनं दीप्तामिति ॥ १७ ॥ वैक्लव्यं कातर्यपीडाम् अनन्या

हीति । अर्धो वा एष आत्मनो यत्पत्नीति श्रुतेः । शक्तिशक्तिमतोरभेदाच्च अनेनाग्निदत्ताया रावणस्पर्शाद्यभावः स्पष्टमेवोक्तः ॥ १८ ॥ १९ ॥ सर्वेषां वो वचः सीताग्रहणविषयं मे हितं मयाऽवश्यं कार्यं कर्तुं योग्यं स्निग्धानां मयि स्नेहवतां लोकमान्यानामशेषजगत्पूज्यानाम् एवं पूर्वोक्तकारेण हितं वदताम् ॥ २० ॥ २१ ॥ कैरैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे विंशोत्तरशततमः सर्गः ॥ १२० कतकरी० ॥ १११ ॥ एतद्वाक्यं श्रुत्वा युष्मदाज्ञया सीतामंगीकरोम्येवेत्युक्तं वाक्यं श्रुत्वा ततः सीताग्रहणनियोगानुष्ठानातंतरम् ॥ १ ॥ महावक्षः हे महोरस्क ॥ २ ॥ तमो दुःखम् ॥ ३ ॥ आश्वास्येति । अयोध्यां गत्वेति शेषः ॥ ४ ॥ कुले कुलपरिपालननिमित्तं वंशं संतानं दशवर्षसहस्राणि दशवर्षशतानि च वत्स्यामि मानुषे लोक इत्यवतारात्पूर्वं प्रतिज्ञासत्त्वात्प्राप्य राज्य

विशुद्धात्रिषुलोकेषुमैथिलीजनकात्मजा ॥ नविहातुंमयाशक्याकीर्तिरात्मवतायथा ॥ १९ ॥ अवश्यंचमयाकार्यंसर्वेषांवोवचोहितम् ॥ स्निग्धानांलोकनाथानामेवंचवदतांहितम् ॥ २० ॥ इत्येवमुक्त्वाविजयीमहाबलःप्रशस्यमानःस्वकृतेनकर्मणा ॥ समेत्यरामःप्रिययामहायशाःसुखंसुखार्होऽनुबभूवराघवः ॥ २१ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आदिकाव्ये युद्धकांडे विंशोत्तरशततमःसर्गः ॥ १२० ॥ एतच्छ्रुत्वाशुभंवाक्यंराघवेणानुभाषितम् ॥ ततःशुभतरंवाक्यंव्याजहारमहेश्वरः ॥ १ ॥ पुष्कराक्षमहाबाहोमहावक्षःपरंतप ॥ दिष्ट्याकृतमिदंकर्मत्वयाधर्मभृतांवर ॥२॥ दिष्ट्यासर्वस्यलोकस्यप्रवृद्धंदारुणंतमः ॥ अपवृत्तंत्वयासंख्येरामरावणजंभयम् ॥३॥ आश्वास्यभरतंदीनंकौसल्यांचयशस्विनीम् ॥ कैकेयींचसुमित्रांचदृष्ट्वालक्ष्मणमातरम् ॥ ४ ॥ प्राप्यराज्यमयोध्यांचनंदयित्वासुहृज्जनम् ॥ इक्ष्वाकूणांकुलेवंशंस्थापयित्वामहाबल ॥ ५ ॥ इष्ट्वातुरगमेधेनप्राप्यचानुत्तमंयशः ॥ ब्राह्मणेभ्योधनंदत्त्वात्रिदिवंगंतुमर्हसि ॥ ६ ॥ एषराजादशरथोविमानस्थःपितातव ॥ काकुत्स्थमानुषेलोकेगुरुस्तवमहायशाः ॥ ७ ॥ इंद्रलोकंगतःश्रीमांस्त्वयापुत्रेणतारितः ॥ लक्ष्मणेनसहभ्रात्रात्वमेनमभिवादय ॥ ८ ॥ महादेववचःश्रुत्वाराघवःसहलक्ष्मणः ॥ विमानशिखरस्थस्यप्रणाममकरोत्पितुः ॥ ९ ॥ दीप्यमानंस्वयालक्ष्म्याविरजोंबरधारिणम् ॥ लक्ष्मणेनसहभ्रात्राददर्शपितरंप्रभुः ॥ १० ॥ हर्षेणमहताविष्टोविमानस्थोमहीपतिः ॥ प्राणैःप्रियतरंदृष्ट्वापुत्रंदशरथस्तदा ॥ ११ ॥ आरोप्यांकेमहाबाहुर्वरासनगतःप्रभुः ॥ बाहुभ्यांसंपरिष्वज्यततोवाक्यंसमाददे ॥ ॥ १२ ॥ नमेस्वर्गोबहुमतःसमानश्चसुरर्षभैः ॥ त्वयारामविहीनस्यसत्यंप्रतिशृणोमिते ॥ १३ ॥ कैकेय्यायानिचोक्तानिवाक्यानिवदतांवर ॥ तवप्रव्राजनार्थानिस्थितानिहृदयेमम ॥ १४ ॥ त्वांतुदृष्ट्वाकुशलिनंपरिष्वज्यसलक्ष्मणम् ॥ अद्यदुःखाद्विमुक्तोस्मिनीहारादिवभास्करः ॥ १५ ॥ तारितोहंत्वयापुत्रसुपुत्रेणमहात्मना ॥ अष्टावक्रेणधर्मात्माकहोलोब्राह्मणोयथा ॥ १६ ॥

मित्याद्युक्तम् ॥ ५ ॥ तुरगमेधेनेष्ट्वा भगवंतं प्रजापतिमिति शेषः । अनुत्तमं यशो महद्यश इत्यादिकं प्रजापतिनाम । तस्य नाम महद्यश इति श्रुतेः अश्वमेधफलं च तत्प्राप्तिरेव प्रजापतिं वा एष ईप्सतीत्याहुः । योऽश्वमेधेन यजत इति श्रुतेरिति कतकः । त्रिदिवं भूःस्वःपदापेक्षया तृतीयं दिवं ब्रह्मलोकम् ॥ ६ ॥ एष इति । पुरःस्थस्यापि देवदेहपरिग्रहेणाज्ञायमानतयांगुल्या निर्देशः ॥ ७ ॥ ८ ॥ विमानशिखरस्थस्य विमानोपरि प्रतिष्ठितस्य ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ सुरर्षभैः समानोपि स्वर्गो न बहुमतः ॥ १३ ॥ १४ ॥ १५ ॥ अष्टावक्रपिता कहोलनामर्षिः पुत्रेण स्वधर्मेण तारित इति पौराणिकी कथा ॥ १६ ॥

पिहितं पुरुषोत्तमम् आच्छादितं मत्पुत्रत्वेनेति शेषः ॥१७॥१८॥१९॥ द्रष्टुमिच्छेयं स्वलोकस्थ एव सन्निति शेषः ॥ २० ॥ २१ ॥ २२ ॥२३॥ घोरः स शापः सपुत्रां कैकेयीं यथा न स्पृशेत्तथा प्रसादं कुरु ॥२४॥२५॥२६॥स्वर्गं महिमानं च प्राप्स्यसीत्यनुकर्षः॥२७॥२८॥२९॥एतद्रामरूपं वस्तुत जानीहीति शेषः । यद्देवानां हृदयमुक्तम् । देवानां हृदयं ब्रह्मान्वविंददितिश्रुत्या । देवहृदयत्वेनोपदिष्टं तथा देवानां गुह्यं एतद्वै महोपनिषदं देवानां गुह्यमिति श्रुत्या देवगुह्यत्वेनोपदिष्टं ब्रह्मसंमितं ब्रह्मणा । अंतरास्मिन्निमे लोका इत्यादिश्रुत्याप्रतिपादितम् । अक्षरम् अशेषजगत्कारणतया नित्यं यद्ब्रह्मास्ति ब्रह्मशब्दतंत्रे॥ ३० ॥ यत एवंभूतो रामो

इदानींचविजानामियथासौम्यसुरेश्वरैः ॥ वधार्थंरावणस्येहपिहितंपुरुषोत्तमम् ॥ १७ ॥ सिद्धार्थाखलुकौसल्यायात्वांरामगृहंगतम् ॥ वनान्निवृत्तंसंहृष्टाद्रक्ष्यतेशत्रुसूदनम् ॥ १८ ॥ सिद्धार्थाःखलुतेरामनरायेत्वांपुरींगतम् ॥ राज्येचैवाभिषिक्तंचद्रक्ष्यंतेवसुधाधिपम् ॥ १९ ॥ अनुरक्तेनबलिनाशुचिनाधर्मचारिणा ॥ इच्छेयंत्वामहंद्रष्टुंभरतेनसमागतम् ॥ २० ॥ चतुर्दशसमाःसौम्यवनेनिर्यातितास्त्वया ॥ वसतासीतयासार्धंमत्प्रीत्या लक्ष्मणेनच ॥ २१ ॥ निवृत्तवनवासोसिप्रतिज्ञापूरितात्वया ॥ रावणंचरणेहत्वादेवताःपरितोषिताः ॥ २२ ॥ कृतंकर्मयशःश्लाघ्यंप्राप्तंतेशत्रुसूदन ॥ भ्रातृभिःसहराज्यस्थोदीर्घमायुरवाप्नुहि ॥ २३ ॥ इतिब्रुवाणंराजानंरामःप्रांजलिरब्रवीत् ॥ कुरुप्रसादंधर्मज्ञकैकेय्याभरतस्यच ॥ २४ ॥ सपुत्रांत्वांत्यजामीतियदुक्ताकेकयीत्वया ॥ सशापःकेकयींघोरःसपुत्रांनस्पृशेत्प्रभो ॥ २५ ॥ तथेतिसमहाराजोराममुक्त्वाकृतांजलिम् ॥ लक्ष्मणंचपरिष्वज्यपुनर्वाक्यमुवाचह ॥ २६ ॥ धर्मप्राप्स्यसिधर्मज्ञयशश्चविपुलंभुवि ॥ रामेप्रसन्नेस्वर्गंचमहिमानंतथोत्तमम् ॥ २७ ॥ रामंशुश्रूषभद्रंतेसुमित्रानंदवर्धन ॥ रामःसर्वस्यलोकस्यहितेष्वभिरतःसदा ॥ २८ ॥ एतेसेंद्रास्त्रयोलोकाःसिद्धाश्चपरमर्षयः ॥ अभिवाद्यमहात्मानमर्चंतिपुरुषोत्तमम् ॥ २९ ॥ एतत्तदुक्तमव्यक्तमक्षरंब्रह्मसंमितम् ॥ देवानांहृदयंसौम्यगुह्यंरामःपरंतपः ॥३०॥ अवाप्तंधर्माचरणंयशश्चविपुलंत्वया ॥ एनंशुश्रूषताव्यग्रंवैदेह्यासहसीतया ॥ ३१ ॥ इत्युक्त्वालक्ष्मणंराजास्नुषांबद्धांजलिंस्थिताम् ॥ पुत्रीत्याभाष्यमधुरंशनैरेनामुवाचह ॥ ३२ ॥ कर्तव्योनतुवैदेहिमन्युस्त्यागमिमंप्रति ॥ रामेणेदंविशुद्ध्यर्थंकृतंवैत्वद्धितैषिणा ॥ ३३ ॥ सुदुष्करमिदंपुत्रितवचारित्रलक्षणम् ॥ कृतंयत्तेऽन्यनारीणांयशोह्यभिभविष्यति ॥ ३४ ॥ नत्वंकामंसमाधेयाभर्तृशुश्रूषणंप्रति ॥ अवश्यंतुमयावाच्यमेषतेदैवतंपरम् ॥ ३५ ॥ इतिप्रतिसमादिश्यपुत्रौसीतांचराघवः ॥ इंद्रलोकंविमानेनययौदशरथोनृपः ॥३६॥ विमानमास्थायमहानुभावःश्रियाचसंहृष्टतनुर्नृपोत्तमः ॥ आमंत्र्यपुत्रौसहसीतयाचजगामदेवप्रवरस्यलोकम् ॥ ३७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे एकविंशाधिकशततमः सर्गः ॥ १२१ ॥ प्रतिप्रयातेकाकुत्स्थेमहेंद्रःपाकशासनः ॥ अब्रवीत्परमप्रीतोराघवंप्रांजलिंस्थितम् ॥ १ ॥

ब्रह्मादिभिस्त्वत्समक्षमेवोक्तः अत एनं शुश्रूषता त्वया सर्वधर्माचरणं प्राप्तं ब्रह्मज्ञधर्मे सर्वधर्मान्तर्भावस्य संवर्गविद्यायामुक्तत्वादिति भावः ॥३१॥ ३२ ॥ इमं त्यागं प्रति यथेष्टं गम्यतामित्युक्तरूपम् ॥ ३३ ॥ ३४ ॥ यद्यपि भर्तृशुश्रूषां प्रति त्वं न समाधेया न प्रार्थनापूर्वं नियोज्या तत्र ते स्वतः प्रवृत्तिसत्त्वात् अथापि मया गुरुत्वादवश्यं वाच्यं तदेवाह ते दैवतं परमिति ॥ ३५ ॥ ३६ ॥ ३७ ॥ संलंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकविंशाधिकशततमः सर्गः ॥१२१॥ कतकरी० ॥१२२॥ काकुत्स्थे दशरथे महेंद्रस्तत्सहितो ब्रह्मा इत्यर्थः । सत्यसंकल्पस्य तस्मिन्नेव प्रसिद्धेः

वानराणां संकल्पमात्रेणोत्थानस्य वक्ष्यमाणत्वात् । भारतेपि ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा । समुत्तस्थुर्महाराज वानरा लब्धचेतस इत्युक्तम् । पाद्मेपि पितामहवरात्तूर्णं जीवयामास तान्नृप इति । प्रांजलिं स्थितं राघवं प्रतीति शेषः ॥ १ ॥ अस्माकं दर्शनं कृतोपकारस्य तवामोघं प्रत्युपकारेण चरितार्थं भवत्विति शेषः । तेन यतः प्रीतियुक्तास्तेनेत्यर्थः ॥ २ ॥ ३ ॥ यद्वचनं वक्ष्यामि तत्सत्यं कुरु ॥ ४ ॥ पराक्रां

अमोघंदर्शनंरामतवास्माकंनरर्षभ ॥ प्रीतियुक्ताःस्मतेनत्वंब्रूहियन्मनसेप्सितम् ॥ २ ॥ एवमुक्तोमहेंद्रेणप्रसन्नेनमहात्मना ॥ सुप्रसन्नमनाहृष्टोवचनं प्राहराघवः ॥ ३ ॥ यदिप्रीतिःसमुत्पन्नामयितेविबुधेश्वर ॥ वक्ष्यामिकुरुमेसत्यंवचनंवदतांवर ॥ ४ ॥ ममहेतोःपराक्रांतायेगतायमसादनम् ॥ तेसर्वेजीवितंप्राप्यसमुत्तिष्ठंतुवानराः ॥ ५ ॥ मत्कृतेविप्रयुक्तायेपुत्रैर्दारैश्चवानराः ॥ तान्प्रीतमनसःसर्वान्द्रष्टुमिच्छामिमानद ॥ ६ ॥ विक्रान्ताश्चापिशूराश्चनमृत्युंगणयंतिच ॥ कृतयत्नाविपन्नाश्चजीवयैतान्पुरंदर ॥ ७ ॥ मत्प्रियेष्वभिरक्ताश्चनमृत्युंगणयंतिये ॥ त्वत्प्रसादात्समेयुस्तेवरमेतमहं वृणे ॥ ८ ॥ नीरुजोनिर्व्रणांश्चैवसंपन्नबलपौरुषान् ॥ गोलांगूलांस्तथर्क्षांश्चद्रष्टुमिच्छामिमानद ॥ ९ ॥ अकालेचापिपुष्पाणिमूलानिचफलानिच ॥ नद्यश्चविमलास्तत्रतिष्ठेयुर्यत्रवानराः ॥ १० ॥ श्रुत्वातुवचनंतस्यराघवस्यमहात्मनः ॥ महेंद्रःप्रत्युवाचेदंवचनंप्रीतिसंयुतम् ॥ ११ ॥ महानयं वरस्तातयस्त्वयोक्तोरघूत्तम ॥ द्विर्मयानोक्तपूर्वंचतस्मादेतद्भविष्यति ॥ १२ ॥ समुत्तिष्ठंतुतेसर्वेहतायेयुधिराक्षसैः ॥ ऋक्षाश्चसहगोपुच्छैर्निकृत्ताननबाहवः ॥ १३ ॥ नीरुजोनिर्व्रणाश्चैवसंपन्नबलपौरुषाः ॥ समुत्थास्यंतिहरयःसुप्तानिद्राक्षयेयथा ॥ १४ ॥ सुहृद्भिर्बांधवैश्चैवज्ञातिभिःस्वजनेनच ॥ सर्वएवसमेष्यंतिसंयुक्ताःपरयामुदा ॥ १५ ॥ अकालपुष्पशबलाःफलवंतश्चपादपाः ॥ भविष्यंतिमहेष्वासनद्यश्चसलिलायुताः ॥ १६ ॥ सव्रणैःप्रथमंगात्रैरिदानींनिर्व्रणैःसमैः ॥ ततःसमुत्थिताःसर्वेसुप्त्वेवहरिसत्तमाः ॥ १७ ॥ बभूवुर्वानराःसर्वेकिंत्वेतदितिविस्मिताः ॥ काकुत्स्थंपरिपूर्णार्थंदृष्ट्वासर्वेसुरोत्तमाः ॥ १८ ॥ अब्रुवन्परमप्रीताःस्तुत्वारामंसलक्ष्मणम् ॥ गच्छायोध्यामितोराजन्विसर्जयचवानरान् ॥ १९ ॥ मैथिलींसांत्वयस्वैनामनुरक्तांयशस्विनीम् ॥ भ्रातरंभरतंपश्यत्वच्छोकाद्व्रतचारिणम् ॥ २० ॥ शत्रुघ्नंचमहात्मानंमातॄःसर्वाःपरंतप ॥ अभिषेचयचात्मानंपौरान्गत्वाप्रहर्षय ॥ २१ ॥



ताः कृतपराक्रमाः ॥ ५ ॥ विप्रयुक्ताः जीवितनाशेनेति भावः ॥ ६ ॥ ७ ॥ मत्प्रियेषु मत्प्रियकृत्येषु त्वत्प्रसादात्समेयुस्ते स्वजनैरिति शेषः ॥ ८ ॥ ९ ॥ उत्थितानां सर्वदा सुखलाभाय वरांतरं अकाले चापीति ॥ १० ॥ ११ ॥ महानिति एकस्यापि मृतस्य पुनरुज्जीवनं दुष्करमपरिमितमृतजीवनं तु मदतिरिक्ताशक्यमिति भावः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ ततः समुत्थिताः देवराजस्यानुग्रह

रूपसंकल्पानंतरम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ वासमाज्ञापयत् यथापूर्वमाज्ञापयदित्यर्थः ॥ २३ ॥ यद्यपि रामेणापीच्छामात्रेणैतत्सुकरं तथापि गृहीतमनुष्यदेहत्वात्तत्स्वरूपगोपनाय संद्रब्रह्मद्वारा तथा कृतमिति 'ध्येयम् येप्यमृतवृष्ट्या इंद्रेण सर्वसमुत्थानं कृतमिति वदंति तत्पक्षेपि रावणसंस्कारदिने सर्वरक्षसां दाहादिसंस्कारपूर्वकं भस्मनः समुद्रे प्रक्षेपान्न तदुत्थानशंका।पूर्वं युद्धकाले एव मृतानां समुद्रे प्रक्षेप इति मूल एव पूर्वमुक्तत्वाच्च । अन्येतु स श्लोकस्तत्राधुनिकप्रक्षिप्तः। न ह्योषधिगंधमात्रेण सर्वेषां विशल्यता किं तु चूर्णीकृत्य तस्य दानेनेति प्रागेवोक्तम् । तथा च तदभावान्न तेषां विशल्यता मृतानां गंधाघ्राणाभावाच्च रावणस्य तथाज्ञाया अश्रवणाच्चेत्याहुः ॥ २४ ॥ वैरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे द्वाविंशाधिकशततमः सर्गः ॥ १२२ ॥

एवमुक्त्वासहस्राक्षोरामंसौमित्रिणासह ॥ विमानैःसूर्यसंकाशैर्ययौहृष्टःसुरैःसह ॥ २२ ॥ अभिवाद्यचकाकुत्स्थःसर्वांस्तांस्त्रिदशोत्तमान् ॥ लक्ष्मणेनसहभ्रात्रावासमाज्ञापयत्तदा ॥ २३ ॥ ततस्तुसालक्ष्मणरामपालितामहाचमूर्हृष्टजनायशस्विनी ॥ श्रियाज्वलंतीविरराजसर्वतोनिशाप्रणीतेवहिशीतरश्मिना ॥ २४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेद्वाविंशाधिकशततमःसर्गः ॥ १२२ ॥ तांरात्रिमुषितंरामंसुखोदितमरिंदमम् ॥ अब्रवीत्प्रांजलिर्वाक्यंजयंपृष्ट्वाविभीषणः ॥ १ ॥ स्नानानिचांगरागाणिवस्त्राण्याभरणानिच ॥ चंदनानिचमाल्यानिदिव्यानिविविधानिच ॥ २ ॥ अलंकारविदश्चैतानार्यःपद्मनिभेक्षणाः ॥ उपस्थितास्त्वांविधिवत्स्नापयिष्यंतिराघव ॥३॥ एवमुक्तस्तुकाकुत्स्थःप्रत्युवाचविभीषणम्॥ हरीन्सुग्रीवमुख्यांस्त्वंस्नानेनोपनिमंत्रय ॥ ४ ॥ सतुताम्यतिधर्मात्मामममहेतोःसुखोचितः ॥ सुकुमारोमहाबाहुर्भरतःसत्यसंश्रयः ॥५॥ तंविनाकैकेयीपुत्रंभरतंधर्मचारिणम् ॥ नमेस्नानंबहुमतंवस्त्राण्याभरणानिच ॥६॥ एतत्पश्ययथाक्षिप्रंप्रतिगच्छामतांपुरीम् ॥ अयोध्यांगच्छतोह्येषपंथाःपरमदुर्गमः ॥ ७ ॥ एवमुक्तस्तुकाकुत्स्थंप्रत्युवाचाविभीषणः ॥ अह्नात्वांप्रापयिष्यामितांपुरींपार्थिवात्मज ॥ ८ ॥ पुष्पकंनामभद्रंतेविमानंसूर्यसन्निभम् ॥ ममभ्रातुःकुबेरस्यरावणेनबलीयसा ॥ ९ ॥ हृतंनिर्जित्यसंग्रामेकामगंदिव्यमुत्तमम् ॥ त्वदर्थंपालितंचेदंतिष्ठत्यतुलविक्रम ॥१०॥ तदिदंमेघसंकाशंविमानमिहतिष्ठति ॥ येनयास्यसियानेनत्वमयोध्यांगतज्वरः ॥ ११ ॥ अहंतेयद्यनुग्राह्योयदिस्मरसिमेगुणान् ॥ वसतावदिहप्राज्ञयद्यस्तिमयिसौहृदम् ॥ १२ ॥ लक्ष्मणेनसहभ्रात्रावैदेह्याभार्ययासह ॥ अर्चितःसर्वकामस्त्वंततोरामगमिष्यसि ॥ १३ ॥ प्रीतियुक्तस्यविहितांससैन्यःससुहृद्गणः ॥ सत्क्रियांराममेतावद्गृहाणत्वंमयोद्यताम् ॥ १४ ॥

कलकरी० ॥१२३॥ तां रात्रिमिति यत्र दिने ब्रह्मादयो जग्मुस्तत्संबंधिन्यां रात्रावित्यर्थः ॥ सुखोदितं सुखप्रबुद्धम् जयं पृष्ट्वा जयशब्दं प्रयुज्य ॥ १ ॥ स्नानानि स्नानसाधनसुगंधतैलादीनि ॥२॥ अलंकारविदः अलंकरणक्रियासमर्थाः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ प्रतिगच्छामेति लोट् ॥ ७ ॥ ८ ॥ ९ ॥ त्वदर्थं पालितं चेदं तिष्ठति हतेपि रावणे इति शेषः ॥ १० ॥ तदिदमिति लंकायां वर्तमानस्यापि पुष्पकस्यात्युन्नततया शिबिरस्थैरपि दृश्यमानत्वादिदमिति प्रत्यक्षवन्निर्देशः इह लंकायाम् ॥ ११ ॥ वस तावदिहेति एकदिवसमिति शेषः ॥ १२ ॥ १३ ॥ विहितां शास्त्रविहितां मयोद्यतां मयोपकृप्तां मे मत्तः ॥ १४ ॥

न खल्वाज्ञापयामि ते अत्र हेतुः मेष्योहमिति ॥ १५ ॥ १६ ॥ साचिव्यं मंत्रसाहाय्यं सर्वात्मना च चेष्टाभिरिति । कायवाङ्मनोभिः कृतयुद्धचेष्टाभिः परेणोत्तमेन सौहार्देनोत्तमेन चेत्येव कचित्पाठः ॥ १७ ॥ अथाप्येतद् अत्र स्थित्वा त्वत्सत्कारस्वीकारं न कुर्यामिति न विशिष्यकायमव परं त्वत्स्वीकारे हेतुमाह तं त्विति यस्य वचनं मया न कृतं तं त्विति योजना ॥ १८ ॥ १९ ॥ सह द्रष्टुं त्वरते मन इत्यनुषंगः ॥ २० ॥ अनुमानये कृतानुमतिको यथा भवसि. तथा प्रार्थये इत्यर्थः ॥ २१ ॥ २२ ॥ एवमुक्त इति राघवस्य वचः श्रुत्वा राक्षसेंद्रो विभीषणः तद्विमानं समादाय तूर्णं मति निवर्ततेति कचित्पाठः ॥२३॥

प्रणयाद्बहुमानाच्चसौहार्देनचराघव ॥ प्रसादयामिप्रेष्योहंनखल्वाज्ञापयामिते ॥ १५ ॥ एवमुक्तस्ततोरामःप्रत्युवाचविभीषणम् ॥ रक्षसांवानराणां चसर्वेषामेवशृण्वताम् ॥ १६ ॥ पूजितोस्मित्वयावीरसाचिव्येनपरेणच ॥ सर्वात्मनाचचेष्टाभिःसौहार्देनपरेणच ॥ १७ ॥ नखल्वेतन्नकुर्यांतेवचनं राक्षसेश्वर ॥ तंतुमेभ्रातरंद्रष्टुंभरतंत्वरतेमनः ॥१८॥ मांनिवर्तयितुंयोसौचित्रकूटमुपागतः ॥ शिरसायाचतोयस्यवचनंनकृतंमया ॥१९॥ कौसल्यां चसुमित्रांचकैकेयींचयशस्विनीम् ॥ गुहंचसुहृदंचैवपौरान्जानपदैःसह ॥ २० ॥ अनुजानीहिमांसौम्यपूजितोस्मिविभीषण ॥ मन्युर्नखलुकर्त व्यःसखेत्वांचानुमानये ॥ २१ ॥ उपस्थापयमेशीघ्रंविमानंराक्षसेश्वर ॥ कृतकार्यस्यमेवासःकथंस्यादिहसंमतः ॥ २२ ॥ एवमुक्तस्तुरामेणराक्षसेंद्रो विभीषणः ॥ विमानंसूर्यसंकाशमाजुहावत्वरान्वितः ॥ २३ ॥ ततःकांचनचित्रांगंवैदूर्यमणिवेदिकम् ॥ कूटागारैःपरिक्षिप्तंसर्वतोरजतप्रभम् ॥२४॥ पांडुराभिःपताकाभिर्ध्वजैश्चसमलंकृतम् ॥ कांचनंकांचनैर्हर्म्यैर्हेमपद्मविभूषितैः ॥ २५ ॥ प्रकीर्णकिंकिणीजालैर्मुक्तामणिगवाक्षकम् ॥ घंटाजालैः परिक्षिप्तंसर्वतोमधुरस्वनम् ॥ २६ ॥ तंमेरुशिखराकारंनिर्मितंविश्वकर्मणा ॥ बृहद्भिर्भूषितंहर्म्यैर्मुक्तारजतशोभितैः ॥ २७ ॥ तलैःस्फटिकचित्रांगैर्वै दूर्यैश्चवरासनैः ॥ महार्हास्तरणोपेतैरुपपन्नंमहाधनैः ॥ २८ ॥ उपस्थितमनाधृष्यंतद्विमानंमनोजवम् ॥ निवेदयित्वारामायतस्थौतत्रविभीषणः ॥ ॥ २९ ॥ तत्पुष्पकंकामगमंविमानमुपस्थितंभूधरसन्निकाशम् ॥ दृष्ट्वातदाविस्मयमाजगामरामःससौमित्रिरुदारसत्त्वः ॥ ३० ॥ इत्यार्षेश्रीमद्रामा वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रयोविंशाधिकशततमः सर्गः ॥ १२३ ॥

कूटागारैः शालागृहैः ॥ २४ ॥ पताकाः सूक्ष्मध्वजाः हेमकृतपद्मभूषितैः कांचनैर्हर्म्यैः कांचनं कांचनमयमिव ॥ २५ ॥ मुक्तामणिभिः कृता गवाक्षा यस्मिंस्तत् ॥ २६ ॥ २७ ॥ २८ ॥ उपस्थितं विमानं निवेदयित्वा विज्ञाप्य ॥ २९ ॥ ३० ॥ नंगैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रयोविंशाधिकशततमः सर्गः ॥ १२३ ॥ कतकरी० ॥ ११४ ॥

अविदूरे स्थितत्वादिविशेषणो विभीषणः पुष्पकमुपस्थितमासन्नं कृत्वा तं राममित्युवाच ॥१॥ कथमुवाचेत्यतः अब्रवीदिति ॥२॥ तं किं करोमीत्युक्तवंतं उपशृण्वतो लक्ष्मणस्याग्रे इति शेषः ॥ ३ ॥ कृतं प्रयत्नेन कर्म युद्धकर्म यैस्ते अर्थैः विचित्रान्नपानवस्त्रादिभिः ॥ ४ ॥ अमीभिः सह लंका निर्जितेत्यनेन तव लंकाप्राप्तिर्वानरपराक्रमादेवेत्युक्तं प्राणभयं त्यक्त्वा हृष्टैर्युद्धोत्साहवद्भिः ॥ ५ ॥ ६ ॥ यथा यथान्यायं त्वया कृतज्ञेन नंद्यमाना निर्वृताः सुखिनो भविष्यंति ॥ ७ ॥ त्वां तत्सत्कारसमर्थं तेषां च सत्कारप्रियत्वं ज्ञात्वैव त्वां तत्सत्कारे नियुंज इत्याह त्यागिनमिति । उचितविषये इति शेषः । संग्रहीतारं यथाकालं यथान्यायं रत्नादेरिति शेषः ॥ ८ ॥ सर्वैः रतिगुणैर्दानमानादिलक्षणैस्सेनारमणगुणैर्हीनं वृथैवाहवेऽभिहंतारं घातयंतं नृपतिं संविग्ना सेना हे नरेश्वर त्यजति त्यजतेव अतो दानादिनैते सत्कार्या एवेति भावः ॥ ९ ॥ रत्नार्थै

उपस्थितंतुतंकृत्वापुष्पकंपुष्पभूषितम् ॥ अविदूरेस्थितोराममित्युवाचविभीषणः ॥ १ ॥ सतुबद्धांजलिपुटोविनीतोराक्षसेश्वरः ॥ अब्रवीत्त्वरयोपेतः किंकरोमीतिराघवम् ॥ २ ॥ तमब्रवीन्महातेजालक्ष्मणस्योपशृण्वतः ॥ विमृश्यराघवोवाक्यमिदंस्नेहपुरस्कृतम् ॥ ३ ॥ कृतप्रयत्नकर्माणःसर्वएववनौकसः ॥ रत्नैरर्थैश्चविविधैःसंपूज्यंतांविभीषण ॥ ४ ॥ सहामीभिस्त्वयालंकानिर्जिताराक्षसेश्वर ॥ हृष्टैःप्राणभयंत्यक्त्वासंग्रामेष्वनिवर्तिभिः ॥ ५ ॥ तइमेकृतकर्माणःसर्वएववनौकसः ॥ धनरत्नप्रदानैश्चकर्मैषांसफलंकुरु ॥ ६ ॥ एवंसंमानिताश्चैतेनंद्यमानायथात्वया ॥ भविष्यंतिकृतज्ञेननिर्वृताहरियूथपाः ॥ ७ ॥ त्यागिनंसंग्रहीतारंसानुक्रोशंजितेंद्रियम् ॥ सर्वेत्वामभिगच्छंतिततःसंबोधयामिते ॥ ८ ॥ हीनंरतिगुणैःसर्वैरभिहंतारमाहवे ॥ सेनात्यजतिसंविग्नानृपतिंतंनरेश्वर ॥ ९ ॥ एवमुक्तस्तुरामेणवानरांस्तान्विभीषणः ॥ रत्नार्थसंविभागेनसर्वानेवाभ्यपूजयत् ॥ १० ॥ ततस्तान्पूजितान्दृष्ट्वारत्नार्थैर्हरियूथपान् ॥ आरुरोहतदारामस्तद्विमानमनुत्तमम् ॥ ११ ॥ अंकेनादायवैदेहींलज्जमानांमनस्विनीम् ॥ लक्ष्मणेनसहभ्रात्राविक्रांतेनधनुष्मता ॥ १२ ॥ अब्रवीत्सविमानस्थःपूजयन्सर्ववानरान् ॥ सुग्रीवंचमहावीर्यंकाकुत्स्थःसविभीषणम् ॥ १३ ॥ मित्रकार्यंकृतमिदंभवद्भिर्वानरर्षभाः ॥ अनुज्ञातामयासर्वेयथेष्टंप्रतिगच्छत ॥ १४ ॥ यत्तुकार्यंवयस्येनस्निग्धेनचहितेनच ॥ कृतंसुग्रीवतत्सर्वंभवताऽधर्मभीरुणा ॥ १५ ॥ किष्किंधांप्रतियाह्याशुस्वसैन्येनाभिसंवृतः ॥ स्वराज्येवसलंकायांमयादत्तोविभीषण ॥ नत्वांधर्षयितुंशक्ताःसेंद्राअपिदिवौकसः ॥ १६ ॥ अयोध्यांप्रतियास्यामिराजधानींपितुर्मम ॥ अभ्यनुज्ञातुमिच्छामिसर्वानामंत्रयामिवः ॥ १७ ॥ एवमुक्तास्तुरामेणहरींद्राहरयस्तथा ॥ ऊचुःप्रांजलयःसर्वेराक्षसश्चविभीषणः ॥ १८ ॥ अयोध्यांगंतुमिच्छामःसर्वान्नयतुनोभवान् ॥ मुद्युक्ताविचरिष्यामोवनान्युपवनानिच ॥ १९ ॥ दृष्ट्वात्वामभिषेकार्द्रंकौसल्यामभिवाद्यच ॥ अचिरादागमिष्यामःस्वगृहान्नृपसत्तम ॥ २० ॥ एवमुक्तस्तुधर्मात्मावानरैःसविभीषणैः ॥ अब्रवीद्वानरान्रामःससुग्रीवविभीषणान् ॥ २१ ॥ प्रियात्प्रियतरंलब्धंयदहंससुहृज्जनः ॥ सर्वैर्भवद्भिःसहितःप्रीतिंलप्स्येपुरींगतः ॥ २२ ॥

रत्नैरर्थैर्धनैश्च संविभागेन यथार्हमंशकल्पनयेत्यर्थः । सर्ववानरपूजार्थं दिनद्वयं वासः । भारतेपि ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः । तत्रैवोवास धर्मात्मा सहितस्तत्र वानरैः । अथैतान्वानरान् दृष्ट्वा स संमान्याभिपूज्य च ॥ विसर्जयामास तदा रत्नैः संतोष्य सर्वशइत्युक्तम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ अधर्मभीरुणेति च्छेदः ॥ १५ ॥ सेंद्रा दिवौकसोपि न त्वां धर्षयितुं शक्ता मत्प्रसादादितिभावः न त्वन्य एव किल राक्षसानां भयम् ॥ १६ ॥ १७ ॥ १८ ॥ मुद्युक्ताः हर्षयुक्ताः ॥ १९ ॥ अभिषेकार्द्रं त्वां दृष्ट्वा तेनैव संवेशामस्माकं मातरं कौसल्यामभिवाद्य च ॥ २० ॥ २१ ॥ प्रियात्प्रियतरं प्रथमतः

कृतकृत्यस्यायोध्याप्रवेशनमेव प्रियं तत्रापि सुहृद्भिर्भवद्भिः सहितो भरतादिभिः सह प्रीतिं लप्स्ये राज्याभिषेकसंतोषं लप्स्ये इत्यर्थः ॥ २२ ॥ २३ ॥ ॥ २४ ॥ परमासनमुत्तमयानम् ॥ २५ ॥ हंसयुक्तेनेति हंसशब्देन वाहकत्वाकारेण निर्मितहंसप्रतिमा उच्यत इति व्याख्यातारः । प्रहृष्टो प्रहृष्टरोमा प्रतीतः प्रहृष्टचित्तः ॥२६॥ असंबाधमित्यनेनविमानस्य वैपुल्यमुक्तम् ॥२७॥ छँरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्विंशाधिकशततमः सर्गः ॥ १२४ ॥ कतकरी० ॥ ११५ ॥ अनुज्ञातमिति ॥१॥ पातयित्वा संचार्य ॥२॥३॥ आयोधनं युद्धभूमिं महद्विशसनं

क्षिप्रमारोहसुग्रीवविमानंसहवानरैः ॥ त्वमप्यारोहसामात्योराक्षसेंद्रविभीषण ॥ २३ ॥ ततःसपुष्पकंदिव्यंसुग्रीवःसहवानरैः ॥ आरुरोहमुदायुक्तः सामात्यश्चविभीषणः ॥ २४ ॥ तेष्वारूढेषुसर्वेषुकौबेरंपरमासनम् ॥ राघवेणाभ्यनुज्ञातमुत्पपातविहायसम् ॥ २५ ॥ खगतेनविमानेनहंसयुक्तेनभास्वता ॥ प्रहृष्टश्चप्रतीतश्चबभौरामःकुबेरवत् ॥ २६ ॥ तेसर्वेवानरर्क्षाश्चराक्षसाश्चमहाबलाः ॥ यथासुखमसंबाधंदिव्येतस्मिन्नुपाविशन् ॥ ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे चतुर्विंशाधिकशततमः सर्गः ॥ १२४ ॥ अनुज्ञातंतुरामेणतद्विमानमनुत्तमम्॥ हंसयुक्तंमहानादमुत्पपातविहायसम् ॥ १ ॥ पातयित्वाततश्चक्षुःसर्वतोरघुनंदनः ॥ अब्रवीन्मैथिलींसीतांरामःशशिनिभाननाम् ॥ २ ॥ कैलासशिखराकारेत्रिकूटशिखरेस्थिताम् ॥ लंकामीक्षस्ववैदेहिनिर्मितांविश्वकर्मणा ॥ ३ ॥ एतदायोधनंपश्यमांसशोणितकर्दमम् ॥ हरीणांराक्षसानांच सीतेविशसनंमहत् ॥ ४ ॥ एषदत्तवरःशेतेप्रमाथीराक्षसेश्वरः ॥ तवहेतोर्विशालाक्षिनिहतोरावणोमया ॥ ५ ॥ कुंभकर्णोत्रनिहतःप्रहस्तश्चनिशाचरः ॥ धूम्राक्षश्चात्रनिहतोवानरेणहनूमता ॥ ६ ॥ विद्युन्मालीहतश्चात्रसुषेणेनमहात्मना ॥ लक्ष्मणेनेंद्रजिच्चात्ररावणिर्निहतोरणे ॥ ७ ॥ अंगदेनात्रनिहतोविकटोनामराक्षसः ॥ विरूपाक्षश्चदुष्प्रेक्षोमहापार्श्वमहोदरौ ॥ ८ ॥ अकंपनश्चनिहतोबलिनोऽन्येचराक्षसाः ॥ त्रिशिराश्चातिकायश्चदेवांतकनरांतकौ ॥ ९ ॥ युद्धोन्मत्तश्चमत्तश्चराक्षसप्रवरावुभौ ॥ निकुंभश्चैवकुंभश्चकुंभकर्णात्मजौबली ॥१०॥ वज्रदंष्ट्रश्चदंष्ट्रश्चबहवोराक्षसाहताः॥ मकराक्षश्चदुर्धर्षोमयायुधिनिपातितः ॥ ११ ॥ अकंपनश्चनिहतःशोणिताक्षश्चवीर्यवान् ॥ यूपाक्षश्चप्रजंघश्चनिहतौतुमहाहवे ॥ १२ ॥ विद्युज्जिह्वोत्रनिहतोराक्षसोभीमदर्शनः ॥ यज्ञशत्रुश्चनिहतःसुप्तघ्नश्चमहाबलः ॥ १३ ॥ सूर्यशत्रुश्चनिहतोब्रह्मशत्रुस्तथापरः ॥ अत्रमंदोदरीनामभार्यातंपर्यदेवयत् ॥ १४ ॥ सपत्नीनांसहस्रेणसाग्रेणपरिवारिता ॥ एतत्तुदृश्यतेतीर्थंसमुद्रस्यवरानने ॥ १५ ॥ यत्रसागरमुत्तीर्यतांरात्रिमुषितावयम् ॥ एषसेतुर्मयाबद्धःसागरेलवणार्णवे ॥ १६ ॥

वधसाधनभूतम् ॥४॥ प्रमाथी प्रमथनशीलः एष इति तत्तद्युद्धभूमिप्रदर्शनं अग्रेपि सर्वत्र तत्तद्युद्धभूमिप्रदर्शनमेव अत्युच्चस्थत्वाद्विमानस्य सर्वयुद्धभूमिप्रत्यक्षं युगपत् ॥५॥६॥७॥ अंगदेन विकटो हत इत्यनुवादात्तदपि जातमिति बोध्यम् ॥८॥९॥बली बलिनौ ॥१०॥ दंष्ट्रनामा कश्चित् अनुवादात् ॥११॥१२॥१३॥१४॥ साग्रेण सहस्रादप्यधिकयुक्तेन तीर्थमवतारः॥१५॥यत्रावतारे तां रात्रिं समुद्रोत्तरणदिवसरात्रिम् ॥१६॥

नलसेतुर्मन्नियुक्तनलकृतः सेतुर्नलसेतुः सुदुष्करस्तदतिरिक्तेनेतिभावः । अथ वरुणालयत्वादिविशेषणं सागरं पश्य ॥ १७ ॥ अथ सागरमध्यप्रदेशागमनकाले मैनाकं दर्शयति हिरण्यनाभमिति । कांचनं कांचनप्रचुरं तद्वर्णं च ॥ १८ ॥ एतन्मैनाकपर्वतस्वरूपं समुद्रस्य कुक्षौ वर्तते इति शेषः । एतदित्यावर्तते एतत्स्कंधावारनिवेशनं सेनानिवेशनं समुद्रोत्तरतीरस्थमिति शेषः ॥ १९ ॥ अत्र पूर्वमिति । अत्र सेतुमूले पूर्वं सेतुबंधनात्पूर्वं विभुर्महादेवो मम रामस्य प्रसादमकरोत् मत्स्थापितत्वेनात्र स्थितोभूत् सेतोर्निर्विघ्नतासिद्ध्यै समुद्रप्रसादानंतरं शिवस्थापनं रामेण कृतमिति गम्यते अत्र स्थले महात्मनः सागरस्य तीर्थं सेतुनिर्माणमूलप्रदेशत्वात् सेतुबंध इति ख्यातं भविष्यतीति शेषः । तथा त्रैलोक्येन पूजितं च भविष्यति ॥ २० ॥ एतत्पवित्रं दर्शनात्सर्वपापविशोधनं विशिष्य महापातकस्यापि नाशनम् । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहतीति स्मृतेः । कूर्मपुराणे रामचरिते तु अत्र स्थाने स्पष्टमेव लिंगस्थापनमुक्तं त्वत्स्थापितलिंगदर्शनेन ब्रह्महत्यादिपापक्षयो भविष्यतीति महादेववरदानं च स्पष्टमेवोक्तं तत एवावधार्य पूर्वं महादेवः

तवहेतोर्विशालाक्षिनलसेतुःसुदुष्करः ॥ पश्यसागरमक्षोभ्यंवैदेहिवरुणालयम् ॥ १७ ॥ अपारमिवगर्जंतंशंखशुक्तिसमाकुलम् ॥ हिरण्यनाभंशैलेंद्रंकांचनंपश्यमैथिलि ॥ १८ ॥ विश्रमार्थंहनुमतोभित्त्वासागरमुत्थितम् ॥ एतत्कुक्षौसमुद्रस्यस्कंधावारनिवेशनम् ॥ १९ ॥ अत्रपूर्वंमहादेवःप्रसादमकरोद्विभुः ॥ एतत्तुदृश्यतेतीर्थंसागरस्यमहात्मनः ॥ २० ॥ सेतुबंधइतिख्यातंत्रैलोक्येनचपूजितम् ॥ एतत्पवित्रंपरमंमहापातकनाशनम् ॥ २१ ॥ अत्रराक्षसराजोयमाजगामविभीषणः ॥ एषासादृश्यतेसीतेकिष्किंधाचित्रकानना ॥ २२ ॥ सुग्रीवस्यपुरीरम्यायत्रवालीमयाहतः ॥ अथदृष्ट्वापुरींसीताकिष्किंधांवालिपालिताम् ॥ २३ ॥ अब्रवीत्प्रश्रितंवाक्यंरामंप्रणयसाध्वसा ॥ सुग्रीवप्रियभार्याभिस्ताराप्रमुखतोनृप ॥ २४ ॥ अन्येषांवानरेंद्राणांस्त्रीभिःपरिवृताह्यहम् ॥ गंतुमिच्छेसहायोध्यांराजधानींत्वयासह ॥ २५ ॥ एवमुक्तोथवैदेह्याराघवःप्रत्युवाचताम् ॥ एवमस्त्वितिकिष्किंधांप्राप्यसंस्थाप्यराघवः ॥ २६ ॥ विमानंप्रेक्ष्यसुग्रीवंवाक्यमेतदुवाचह ॥ ब्रूहिवानरशार्दूलसर्वान्वानरपुंगवान् ॥ २७ ॥ स्त्रीभिःपरिवृताःसर्वेह्ययोध्यांयान्तुसीतया ॥ तथात्वमेभिःसर्वाभिःस्त्रीभिःसहमहाबल ॥ २८ ॥ अभित्वरयसुग्रीवगच्छामःप्लवगाधिप ॥ एवमुक्तस्तुसुग्रीवोरामेणामिततेजसा ॥ २९ ॥ वानराधिपतिःश्रीमांस्तैश्चसर्वैःसमावृतः ॥ प्रविश्यांतःपुरंशीघ्रंताराम्युद्वीक्ष्यसोब्रवीत् ॥ ३० ॥ प्रियेत्वंसहनारीणांवानराणांमहात्मनाम् ॥ राघवेणाभ्यनुज्ञातामैथिलीप्रियकाम्यया ॥ ३१ ॥ त्वरत्वमभिगच्छामोगृह्यवानरयोषितः ॥ अयोध्यांदर्शयिष्यामःसर्वादशरथस्त्रियः ॥ ३२ ॥

प्रसादमकरोत् ततः सेतुबंधनं जातमित्यक्षरार्थः ॥ २१ ॥ अत्र राक्षसराज आजगाम अत्र सेतुबंधतीर्थे चित्रकानना मधुवनादिदिव्यकाननोपेता या दृश्यते एषा सुग्रीवस्य पुरी किष्किन्धा ॥ २२ ॥ २३ ॥ प्रणयसाध्वसा प्रणयः साध्वसं च भर्तुः स्वेष्टे प्रवर्तननिमित्तं यस्याः सा तारा प्रमुखतः ताराप्रमुखाभिः सुग्रीवस्य प्रियाभिर्भार्याभिः परिवृता गंतुमिच्छे इच्छामि अत्रैतदर्थमेकदिनवासः । अतएव भरतेंगदस्य यौवराज्याभिषेकोप्येतद्दिने उक्तः ॥ २४ ॥ २५ ॥ एवमस्त्विति तामुक्त्वा किष्किन्धां प्राप्य तत्र विमानं संस्थाप्य सुग्रीवं प्रेक्ष्य एतद्वक्ष्यमाणमुवाच तदेवाह ब्रूहीति ॥ २६ ॥ २७ ॥ २८ ॥ अभित्वरय गंतुमिति शेषः ॥ २९ ॥ ३० वानराणां नारीणां सह ताभिः सहेत्यर्थः । षष्ठी आर्षी ॥ ३१ ॥ वानरयोषितो गृह्य गृहीत्वा गंतुं त्वरां कुरु सर्वाभिः सह गच्छामस्तासामयोध्यां दर्शयिष्यामः ॥ ३२ ॥

॥ ३३ ॥ सुग्रीवेणाभ्यनुज्ञाता यूयं सर्वैर्वानरैः स्वस्वभर्तृभिः सह गंतुं त्वरयतेति शेषः । किं च भवतीभिरयोध्यादर्शनेन ममापि प्रियं कार्यं तद्दर्शनं ममापि प्रियमिति भावः ॥ ३४ ॥ प्रवेशं चेति पश्याम इति शेषः । दशरथस्त्रीणां विभूतिमैश्वर्यं च पश्यामः ॥ ३५ ॥ नेपथ्यविधिरलंकारविधिः प्रदक्षिणकरणं विमानस्य ॥ ३६ ॥ अत्र ताभिः सहोत्थितमित्यनेनाश्विनचतुर्थ्यां किष्किन्धायामुषित्वा पंचम्यां ततः प्रस्थानमिति गम्यते उपरि पंचम्यां भरद्वाजाश्रमप्रवेशस्य वक्ष्यमाणत्वात् ॥३७॥३८॥३९॥४०॥ अस्यास्तीरं पंपायास्तीरे ॥४१॥ अत्र पंपोत्तरदेशे वनस्पतिर्जटायोरावासन्यग्रोधः ॥४२॥४३॥ एतत्तदाश्रमपदं

सुग्रीवस्यवचःश्रुत्वातारासर्वांगशोभना ॥ आहूयचाब्रवीत्सर्वावानराणांतुयोषितः ॥ ३३ ॥ सुग्रीवेणाभ्यनुज्ञातागंतुंसर्वैश्चवानरैः ॥ ममचापिप्रियं कार्यमयोध्यादर्शनेनच ॥ ३४ ॥ प्रवेशंचैवरामस्यपौरजानपदैःसह ॥ विभूतिंचैवसर्वासांस्त्रीणांदशरथस्यच ॥ ३५ ॥ तारयाचाभ्यनुज्ञाताः सर्वावानरयोषितः ॥ नेपथ्यविधिपूर्वंतुकृत्वाचापिप्रदक्षिणम् ॥ ३६ ॥ अध्यारोहन्विमानंतत्सीतादर्शनकांक्षया ॥ ताभिःसहोत्थितंशीघ्रंविमानंप्रेक्ष्यराघवः ॥ ३७ ॥ ऋष्यमूकंसमीपेतुवैदेहींपुनरब्रवीत् ॥ दृश्यतेसौमहान्सीतेसविद्युदिवतोयदः ॥ ३८ ॥ ऋष्यमूकोगिरिवरःकांचनैर्धातुभिर्वृतः ॥ अत्राहंवानरेंद्रेणसुग्रीवेणसमागतः ॥ ३९ ॥ समयश्चकृतःसीतेवधार्थंवालिनोमया ॥ एषासादृश्यतेपंपानलिनीचित्रकानना ॥ ४० ॥ त्वयाविहीनोयत्राहंविललापसुदुःखितः ॥ अस्यास्तीरेमयादृष्टाशबरीधर्मचारिणी ॥ ४१ ॥ अत्रयोजनबाहुश्चकबंधोनिहतोमया ॥ दृश्यतेसौ जनस्थानेश्रीमान्सीतेवनस्पतिः ॥ ४२ ॥ जटायुश्चमहातेजास्तवहेतोर्विलासिनि ॥ रावणेनहतोयत्रपक्षिणांप्रवरोबली ॥ ४३ ॥ एतत्तदाश्रमपदमस्माकंवरवर्णिनि ॥ पर्णशालातथाचित्रादृश्यतेशुभदर्शने ॥ ४४ ॥ यत्रत्वंराक्षसेंद्रेणरावणेनहृतावलात् ॥ एषागोदावरीरम्याप्रसन्नसलिलाशुभा ॥ ४५ ॥ अगस्त्यस्याश्रमश्चैवदृश्यतेकदलीवृतः ॥ दृश्यतेचैववैदेहिशरभंगाश्रमोमहान् ॥ ४६ ॥ उपायतःसहस्राक्षोयत्रशक्रःपुरंदरः ॥ एतेते तापसादेविदृश्यंतेतनुमध्यमे ॥४७॥ अत्रिःकुलपतिर्यत्रसूर्यवैश्वानरोपमः ॥ अस्मिन्देशेमहाकायोविराधोनिहतोमया ॥ ४८ ॥ अत्रसीतेत्वयादृष्टा तापसीधर्मचारिणी ॥ असौसुतनुशैलेंद्रश्चित्रकूटःप्रकाशते॥४९॥अत्रमांकैकयीपुत्रःप्रसादयितुमागतः॥एषासायमुनारम्यादृश्यतेचित्रकानना॥५०॥ भरद्वाजाश्रमःश्रीमान्दृश्यतेचैषमैथिलि ॥ इयंचदृश्यतेगंगापुण्यात्रिपथगानदी॥५१॥शृंगवेरपुरंचैतद्गुहोयत्रसखामम ॥ एषासादृश्यतेसीतेराजधानी पितुर्मम ॥ अयोध्यांकुरुवैदेहिप्रणामंपुनरागता ॥ ५२ ॥ ततस्तेवानराःसर्वेराक्षसाःसविभीषणाः ॥ उत्पत्योत्पत्यसंहृष्टास्तांपुरींददृशुस्तदा ॥५३॥

पंचवट्याश्रमस्थानमित्यर्थः ॥ ४४ ॥ यत्र यस्यां पर्णशालायाम् ॥ ४५ ॥ अगस्त्याश्रमो दृश्यते एतत्समीप एव प्रागुपदिष्टःस्वाश्रमः ॥ ४६ ॥ एते ते तापसाः पूर्वानुभूता इत्यर्थः ॥ ४७ ॥ कुलपतिराश्रमस्वामी । कुलमन्वयसंघातगृहोत्पत्त्याश्रमेषु चेत्यजयः ॥ ४८ ॥ तापसी अत्रिपत्नी ॥ ४९ ॥ ५० ॥ ५१ ॥ यत्र मम सखा गुहस्तच्छृंगवेरपुरमेतद्दृश्यते इति शेषः । एषा सा मम पितुः राजधानी अयोध्या दृश्यते

गंगातीरवर्तिभरद्वाजाश्रमप्रदेशगे विमाने तस्यात्युन्नतव्योमप्रदेशवृत्तित्वादयोध्यादिदर्शनम् अयोध्यां प्रति प्रणामं कुरु ॥ ५२ ॥ ५३ ॥ विशालकक्ष्यां विशालरथ्याम् ॥ ५४ ॥ वैशेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे पंचविंशोत्तरशततमः सर्गः ॥ १२५ ॥ कतकरी० ॥ ११६ ॥ पूर्णे इति पंचम्यां चतुर्दशे वर्षे पूर्णे सति तद्दिने भरद्वाजाश्रमं प्राप्य मुनिं भरद्वाजं ववंदे ॥ १ ॥ पुरेऽयोध्यायां सुभिक्षं चानामयं च सुभिक्षानामयं सुभिक्षमन्नसमृद्धिः अनामयं स्यादारोग्यं शृणोषि कच्चित् शिष्यादिमुखेनेति शेषः ॥ २ ॥ स भरतो युक्तः प्रजापालने समाहित इत्यर्थः । स्मितपूर्वं सर्वज्ञोपि भगवानजानन्निव मां पृच्छतीति स्मितकरणं प्रहृष्टवत्प्रहृष्टार्हम् ॥ ३ ॥ ते पादुके पुरस्कृत्य सर्वं कुशलं गृहे च पुरे च संपादयन् भरतस्त्वां प्रतीक्षते ॥ ४ ॥ ५ ॥ ६ ॥ उच्यमानविशेषणं त्वां

ततस्तुतांपांडुरहर्म्यमालिनींविशालकक्ष्यांगजवाजिभिर्वृताम् ॥ पुरीमपश्यन्प्लवगाःसराक्षसाःपुरींमहेंद्रस्ययथामरावतीम् ॥ ५४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे पंचविंशोत्तरशततमःसर्गः ॥ १२५ ॥ पूर्णेचतुर्दशेवर्षेपंचम्यांलक्ष्मणाग्रजः ॥ भरद्वाजाश्रमंप्राप्यववंदेनियतोमुनिम् ॥ १ ॥ सोऽपृच्छदभिवाद्यैनंभरद्वाजंतपोधनम् ॥ शृणोषिकच्चिद्भगवन्सुभिक्षानामयंपुरे ॥ २ ॥ कच्चित्सयुक्तोभरतोजीवंत्यपिचमातरः ॥ एवमुक्तस्तुरामेणभरद्वाजोमहामुनिः ॥ प्रत्युवाचरघुश्रेष्ठंस्मितपूर्वंप्रहृष्टवत् ॥ ३ ॥ आज्ञावशत्वेभरतोजटिलस्त्वांप्रतीक्षते ॥ पादुकेतेपुरस्कृत्यसर्वंचकुशलंगृहे ॥ ४ ॥ त्वांपुराचीरवसनंप्रविशंतंमहावनम् ॥ स्त्रीतृतीयंच्युतंराज्याद्धर्मकामंचकेवलम् ॥ ५ ॥ पदातिंत्यक्तसर्वस्वंपितृनिर्देशकारिणम् ॥ सर्वभोगैःपरित्यक्तंस्वर्गच्युतमिवामरम् ॥ ६ ॥ दृष्ट्वातुकरुणापूर्वंममासीत्समितिंजय ॥ कैकयीवचनेयुक्तंवन्यमूलफलाशिनम् ॥ ॥ ७ ॥ सांप्रतंतुसमृद्धार्थंसमित्रगणबांधवम् ॥ समीक्ष्यविजितारिंचममाभूत्प्रीतिरुत्तमा ॥ ८ ॥ सर्वंचसुखदुःखंतेविदितंममराघव ॥ यत्त्वयाविपुलंप्राप्तंजनस्थाननिवासिना ॥ ९ ॥ ब्राह्मणार्थेनियुक्तस्यरक्षतःसर्वतापसान् ॥ रावणेनहृताभार्याबभूवेयमनिंदिता ॥ १० ॥ मारीचदर्शनंचैवसीतोन्मथनमेवच ॥ कबंधदर्शनंचैवपंपाभिगमनंतथा ॥ ११ ॥ सुग्रीवेणचतेसख्यंयत्रवालीहतस्त्वया ॥ मार्गणंचैववैदेह्याःकर्मवातात्मजस्यच ॥ १२ ॥ विदितायांचवैदेह्यांनलसेतुर्यथाकृतः ॥ यथाचादीपितालंकाप्रहृष्टैर्हरियूथपैः ॥ १३ ॥ सपुत्रबांधवामात्यःसबलःसहवाहनः ॥ यथाचनिहतःसंख्येरावणोबलदर्पितः ॥ १४ ॥ यथाचनिहतेतस्मिन्रावणेदेवकंटके ॥ समागमश्चत्रिदशैर्यथादत्तश्चतेवरः ॥ १५ ॥

दृष्ट्वा मम पुरा करुणादैन्यमासीत् ॥ ७ ॥ सांप्रतं तु समृद्धत्वादिगुणं समीक्ष्य मम उत्तमा प्रीतिरभून्नातेत्यर्थः ॥ ८ ॥ सर्वं ते सुखं दुःखं च विदितमित्येतत्प्रकाशयति यत्त्वयेति । जनस्थाननिवासिना त्वया यद्विपुलं खरवधादिना दुःखं प्राप्तं तन्मया विदितम् ॥ ९ ॥ तदनंतरं ब्राह्मणार्थे ब्रह्मविदां ब्रह्मर्षीणां प्रयोजने रक्षाप्रयोजने नियुक्तस्यात एव सर्वतापसान् रक्षतस्तव भार्येयं हृता बभूवेत्येतच्च मे विदितम् ॥ १० ॥ मारीचदर्शनं रावणस्य सीतापहारार्थमिति शेषः । सीतोन्मथनं सीताया राक्षसीभिर्लंकायां क्लेशनम् ॥ ११ ॥ वातात्मजस्य कर्म समुद्रलंघनादिलंकादहनांतम् ॥ १२ ॥ प्रहृष्टैर्हरियूथपैर्लंकादीपितेति

यत् इंद्रजिद्वधानंतरं कृतं तच्च विदितम् ॥ १३ ॥ १४ ॥ १५ ॥ इतो मदाश्रमान्मे शिष्याः प्रवृत्याख्याः तव प्रवृत्तिमुदंतमाचक्षते प्रवृत्त्याख्यास्तथाभूताः संतस्तव पुरीमयोध्यां संपतंति अतस्त्वत्पुरीवृत्तांतोपि ज्ञायत इति शेषः ॥ १६ ॥ अहमपीति त्रिदशा इवेति भावः दृश्चि ददामि अर्घ्यं प्रतिगृहाण मया दातुं प्रतिज्ञातस्य वरस्य वरणात्पूर्वमिति शेषः ॥ १७ ॥ बाढमित्येव प्रतिगृह्येति शेषः ॥ १८ ॥ वरमाह कालेति ॥ १९ ॥ अयोध्यां प्रति गच्छतो मम मार्गे एवं वृक्षादयो भवंतु वानराणां विश्रामार्थमिति शेषः ॥ २० ॥ २१ ॥ २२ ॥ जयंतीति जितः स्वर्गजित इव मुदान्वितास्ते प्रसिद्धा वानराः कामा द्यथेच्छमुपाश्नंति स्म ॥ २३ ॥ गैरेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे षड्विंशोत्तरशततमः सर्गः ॥ १२६ ॥ कतकरी० ॥ ११७ ॥ पंचम्यां चतुर्दशवर्षस्य पूर्णत्वात्तद्दिने भरद्वाजाश्रमे विलंबस्य प्राप्तत्वात् चतुर्दशसमाप्तौ यदि त्वां न पश्यामि तदा हुताशनं प्रवेक्ष्यामीति भरतोक्तेर्भरतस्य स्वागमननिवेदनाय हनूमत्प्रेषणं कृतवानित्याह अयोध्यां त्विति ।

सर्वंममैतद्विदितंतपसाधर्मवत्सल ॥ संपतंतिचमेशिष्याःप्रवृत्त्याख्याःपुरीमितः ॥ १६ ॥ अहमप्यत्रतेदद्मिवरंशस्त्रभृतांवर ॥ अर्घ्यंप्रतिगृहाणेदमयोध्यांश्वोगमिष्यसि ॥ १७ ॥ तस्यतच्छिरसावाक्यंप्रतिगृह्यनृपात्मजः ॥ बाढमित्येवसंहृष्टःश्रीमान्वरमयाचत ॥ १८ ॥ अकालफलिनोवृक्षाःसर्वेचापिमधुस्रवाः ॥ फलान्यमृतगंधीनिबहूनिविविधानिच ॥ १९ ॥ भवंतुमार्गेभगवन्नयोध्यांप्रतिगच्छतः ॥ तथेतिचप्रतिज्ञातेवचनात्समनंतरम् ॥ २० ॥ अभवन्पादपास्तत्रस्वर्गपादपसन्निभाः ॥ निष्फलाःफलिनश्चासन्विपुष्पाःपुष्पशालिनः ॥२१॥ शुष्काःसमग्रपत्रास्तेनगाश्चैवमधुस्रवाः ॥ सर्वतोयोजनास्त्रीणिगच्छतामभवंस्तदा ॥ २२ ॥ ततःप्रहृष्टाःप्लवगर्षभास्तेबहूनिदिव्यानिफलानिचैव ॥ कामादुपाश्नंतिसहस्रशस्तेमुदान्विताःस्वर्गजितोमुदेव ॥ २३ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकाण्डेषड्विंशोत्तरशततमःसर्गः॥१२६॥ अयोध्यांतुसमालोक्यचिंतयामासराघवः ॥ प्रियकामःप्रियंरामस्ततस्त्वरितविक्रमः ॥ १ ॥ चिंतयित्वाततोदृष्टिंवानरेषुन्यपातयत् ॥ उवाचधीमांस्तेजस्वीहनूमंतंप्लवंगमम् ॥२॥ अयोध्यांत्वरितोगत्वाशीघ्रंप्लवगसत्तम ॥ जानीहिकच्चित्कुशलीजनोनृपतिमंदिरे ॥ ३ ॥ शृंगवेरपुरंप्राप्यगुहंगहनगोचरम् ॥ निषादाधिपतिंब्रूहिकुशलंवचनान्मम॥४॥श्रुत्वातुमांकुशलिनमरोगंविगतज्वरम् ॥ भविष्यतिगुहःप्रीतःसममात्मसमःसखा॥५॥ अयोध्यायाश्चतेमार्गंप्रवृत्तिंभरतस्यच निवेदयिष्यतिप्रीतोनिषादाधिपतिर्गुहः ॥६॥भरतस्तुत्वयावाच्यःकुशलंवचनान्मम ॥ सिद्धार्थंशंसमांतस्मैसभार्यंसहलक्ष्मणम् ॥७॥ हरणंचापिवैदेह्याःरावणेनबलीयसा ॥ सुग्रीवेणचसंवादंवालिनश्चवधंरणे ॥८॥ मैथिल्यन्वेषणंचैवयथाचाधिगतात्वयालंघयित्वामहातोयमापगापतिमव्ययम् ॥९॥

समालोक्य भरद्वाजाश्रमे विमानादवतरणसमये इति भावः । सुग्रीवादीनां सम्यक् शिष्टाचारकरणाय सुहृद्रूपतदाकारज्ञानाय च पूर्वं हनूमत्प्रेषणम् । अतएव पाद्मे पंचम्यामेव विसृष्टहनुमत्प्रवेशसमये भरतवर्णनमेवं कृतम् । अग्निप्रवेशे सोद्योगकाले भ्रातुरनागमात् । न्यवेदयत्तदा तस्मै श्रीरामागमनोत्सवमिति । किं च प्रियकाम इति। सुग्रीवादीनां प्रियकामः अयोध्यायां सर्वतत्प्रियपूरणकामस्तेषां प्रियं यथा भवति तथा चिंतयामास कर्तव्यजातमिति शेषः ॥ १ ॥ २ ॥ यथा क्षिप्रमयोध्या प्राप्यते तथा त्वरितः सन्नयोध्यां गच्छ । नृपतिमंदिरे वर्तमानः सर्वोपि जनः कुशलीति जानीहि ॥ ३ ॥ गहनं काननं गोचरो देशो यस्य तं मम कुशलं मद्वचनाद्ब्रूहि ॥४॥ आत्मसमः स्वसदृशस्तत्त्वज्ञानित्वात् ॥५॥६॥ सिद्धार्थं निर्व्यूढपितृवचनपरिपालनरूपप्रयोजनम् ॥ ७ ॥८॥ यथा त्वयाधिगता अस्खलितव्रता यथा दृष्टेत्यर्थः ॥९॥

उपयानं पुनः स्वयमस्मत्समीपागमनं वानरसेनया सह समुद्रतीरगमनं वा सागरस्य स्वरूपेण प्रत्यक्षतो दर्शनं दर्शनदानम् ॥ १० ॥ महेंद्रादिकर्तृकं वरदानं वानरसमुत्थानरूपम् अत्र ब्रह्मवरुणयो रपि वरदानकर्तृत्वोक्तेः पूर्वं महेंद्रसहितो ब्रह्मेति व्याख्यातम् ॥ ११ ॥ उपयातं नगरसमीपमागतम् ॥ १२ ॥ १३ ॥ एतच्छ्रुत्वा एवंप्रकारं मदागमनं श्रुत्वा यमाकारं खेदानंदसूचकमाकारं स आकारो यच्चापि भरतस्य मां प्रति कर्तव्यं तच्च वेदितव्यम् ॥ १४ ॥ तदेवाह ज्ञेया इति । मुखवर्णेन भीतिखेदोचितविकाससंकोचाद्याकारेणेत्यर्थः । तत्त्वेन याथार्थ्येन वृत्तांता ज्ञेया इत्यन्वयः ॥ १५ ॥ ननु तादृशसौहृदवति कोन्यथाशंकायाः प्रसंगोऽत आह सर्वकामेत्यादि । पितृपैतामहं तत्क्रमेणागतं नावर्तयेत् अनेन भ्रातर एवं शंक्या इति लोकान्बोधयति ॥ १६ ॥ तस्य राज्याकांक्षा चेत्किं करिष्यतीत्याशंक्य स एव राज्यं प्रशा

उपयानंसमुद्रस्यसागरस्यचदर्शनम् ॥ यथाचकारितःसेतूरावणश्चयथाहतः ॥ १० ॥ वरदानंमहेंद्रेणब्रह्मणावरुणेनच ॥ महादेवप्रसादाच्चपि त्रामससमागमम् ॥ ११ ॥ उपयातंचमांसौम्यभरतायनिवेदय ॥ सहराक्षसराजेनहरीणामीश्वरेणच ॥ १२ ॥ जित्वाशत्रुगणान्रामःप्राप्यचानुत्तमं यशः ॥ उपायातिसमृद्धार्थःसहमित्रैर्महाबलैः ॥ १३ ॥ एतच्छ्रुत्वायमाकारंभजतेभरतस्ततः ॥ सचतेवेदितव्यःस्यात्सर्वंयच्चापिमांप्रति ॥ १४ ॥ ज्ञेयाःसर्वेचवृत्तांताभरतस्येंगितानिच ॥ तत्त्वेनमुखवर्णेनदृष्ट्याव्याभाषितेनच ॥ १५ ॥ सर्वकामसमृद्धंहिहस्त्यश्वरथसंकुलम् ॥ पितृपैतामहंराज्यं कस्यनावर्तयेन्मनः ॥ १६ ॥ संगत्याभरतःश्रीमान्राज्येनार्थीस्वयंभवेत् ॥ प्रशास्तुवसुधांसर्वामखिलांरघुनंदनः ॥ १७ ॥ तस्यबुद्धिंचविज्ञाय व्यवसायंचवानर ॥ यावन्नदूरंयाताःस्मःक्षिप्रमागंतुमर्हसि ॥ १८ ॥ इतिप्रतिसमादिष्टोहनूमान्मारुतात्मजः ॥ मानुषंधारयन्रूपमयोध्यांत्वरि तोययौ ॥ १९ ॥ अथोत्पपातवेगेनहनूमान्मारुतात्मजः ॥ गरुत्मानिववेगेनजिघृक्षन्नुरगोत्तमम् ॥ २० ॥ लंघयित्वापितृपथंविहगेंद्रालयंशुभम् ॥ गंगायमुनयोर्भीमंसमतीत्यसमागमम् ॥ २१ ॥ शृंगवेरपुरंप्राप्यगुहमासाद्यवीर्यवान् ॥ सवाचाशुभयाहृष्टोहनूमानिदमब्रवीत् ॥ २२ ॥ सखा तुतवकाकुत्स्थोरामःसत्यपराक्रमः ॥ ससीतःसहसौमित्रिःसत्वांकुशलमब्रवीत् ॥२३॥ पंचमीमद्यरजनीमुषित्वावचनान्मुनेः ॥ भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैवराघवम् ॥ २४ ॥ एवमुक्त्वामहातेजाःसंप्रहृष्टतनूरुहः ॥ उत्पपातमहावेगाद्वेगवानविचारयन् ॥ २५ ॥ सोऽपश्यद्रामतीर्थंचनदींवालु किनींतथा ॥ वरूथींगोमतींचैवभीमंशालवनंतथा ॥२६॥ प्रजाश्चबहुसाहस्रीःस्फीतान्जनपदानपि ॥ सगत्वादूरमध्वानंत्वरितःकपिकुंजरः ॥ २७ ॥

स्त्वित्याह संगत्येति । संगत्या चिरकालपरिचयेन कैकयीसंगत्या वा यदि कैकयीवत्स्वयमपि राज्येनार्थी भवेत् तर्हि स एव वसुधां शास्तु वयं यत्र क्वापि तपसा कालं नेष्याम इति शेषः ॥ १७ ॥ यावत् अस्मदा श्रमाद्दूरं याता न स्मः । अयोध्याया अतिसमीपं न प्राप्ताः स्म इति यावत् । क्षिप्रमागंतुमर्हसि तावदिति शेषः ॥ १८ ॥ मानुषमित्यर्धं संक्षेपः ॥ १९ ॥ तस्यैव प्रपंच उत्पपातेत्यादि ॥ २० ॥ पितृपथं वायुमार्गं मंतरिक्षमित्यर्थः । तद्विशेषणं विहगेंद्रालयं श्रेष्ठविहगानां संचारस्थानम् ॥ २१ ॥ २२ ॥ २३ ॥ अद्य पंचमीं पंचमीसम्बन्धिनीं रजनीं रजनीमुषित्वा अद्य स्थित्वा श्वो गमिष्यसीति भरद्वाजानुज्ञातं राघवं श्वः प्रात रेव द्रक्ष्यसि ॥ २४ ॥ संप्रहृष्टतनूरुहः जगदानंदरामसेवकत्वलाभेनेति भावः । अविचारयन् अध्वश्रममिति शेषः ॥ २५ ॥ रामतीर्थं परशुरामतीर्थं वालुकिनीं तदाख्यां शालवनं शालवृक्षवनम् ॥२६॥२७॥

सुराधिपस्योपवने नंदनाख्ये चैत्ररथं कुबेरोद्यानं चात्र द्रष्टव्यम् ॥ २८ ॥ स्वलंकृतै रममाणैः पुत्रपौत्रैः सहिताभिः स्त्रीभिर्गृह्यमाणपुष्पानिति द्रुमविशेषणम् ॥२९॥३०॥॥३१॥ भावितात्मानं ध्यातपरमात्मानम् अतएव ब्रह्मर्षिसमतेजसम् ॥ ३२ ॥ चातुर्वर्ण्यस्य लोकस्य स्वार्थे ष्यञ् । चतुर्वर्णरूपस्य लोकस्य ॥३३॥ बलमुख्यैर्बलाध्यक्षैः युक्तः काषायांबरधारिभिः । यथा राजा तथा प्रजेति न्यायात् ॥ तदेवाह न हि ते इति ॥३४॥ परिभोक्तुं परित्यज्यभोक्तुम् । द्वितीय इवशब्दो वाक्यालंकारे इवेति वैकत्र पाठः । देवहंधं मनुष्यदेहसंबंधवंतम् ॥३५॥३६॥ शोकं त्यज सुदारुणमित्यनेनास्य पाप्नोक्तोग्निप्रवेशोद्यमः सूचित इति

आससादद्रुमान्फुल्लान्नंदिग्रामसमीपगान् ॥ सुराधिपस्योपवनेयथाचैत्ररथेद्रुमान् ॥ २८ ॥ स्त्रीभिःसपुत्रैःपौत्रैश्चरममाणैःस्वलंकृतैः ॥ क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनांबरम् ॥ २९ ॥ ददर्शभरतंदीनंकृशमाश्रमवासिनम् ॥ जटिलंमलदिग्धांगंभ्रातृव्यसनकर्शितम् ॥ ३० ॥ फलमूला शिनंदांतंतापसंधर्मचारिणम् ॥ समुन्नतजटाभारंवल्कलाजिनवाससम् ॥ ३१ ॥ नियतंभावितात्मानंब्रह्मर्षिसमतेजसम् ॥ पादुकेतेपुरस्कृत्यप्रशासं तंवसुंधराम् ॥ ३२ ॥ चातुर्वर्ण्यस्यलोकस्यत्रातारंसर्वतोभयात् ॥ उपस्थितममात्यैश्चशुचिभिश्चपुरोहितैः ॥ ३३ ॥ बलमुख्यैश्चयुक्तैश्चकाषायां बरधारिभिः ॥ नहितेराजपुत्रंतंचीरकृष्णाजिनांबरम् ॥ ३४ ॥ परिभोक्तुंव्यवस्यंतिपौरावैधर्मवत्सलाः ॥ तंधर्ममिवधर्मज्ञंदेहबंधमिवापरम् ॥ ३५ ॥ उवाचप्रांजलिर्वाक्यंहनूमान्मारुतात्मजः ॥ वसंतंदंडकारण्येयंत्वंचीरजटाधरम् ॥३६॥ अनुशोचसिकाकुत्स्थंसत्वांकौशलमब्रवीत् ॥ प्रियमाख्या मितेदेवशोकंत्यजसुदारुणम् ॥ ३७ ॥ अस्मिन्मुहूर्तेभ्रात्रात्वंरामेणसहसंगतः ॥ निहत्यरावणंरामःप्रतिलभ्यचमैथिलीम् ॥ ३८ ॥ उपयाति समृद्धार्थःसहमित्रैर्महाबलैः ॥ लक्ष्मणश्चमहातेजावैदेहीचयशस्विनी ॥ सीतासमग्रारामेणमहेंद्रेणशचीयथा ॥ ३९ ॥ एवमुक्तोहनुमताभरतः कैकयीसुतः ॥ पपातसहसाहृष्टोहर्षान्मोहमुपागमत् ॥ ४० ॥ ततोमुहूर्तादुत्थायप्रत्याश्वस्यचराघवः ॥ हनूमंतमुवाचेदंभरतःप्रियवादिनम् ॥४१॥ अशोकजैःप्रीतिमयैःकपिमालिंग्यसंभ्रमात् ॥ सिषेचभरतःश्रीमान्विपुलैरश्रुबिंदुभिः ॥४२॥ देवोवामानुषोवात्वमनुक्रोशादिहागतः ॥ प्रियाख्यान स्यतेसौम्यददामिब्रुवतःप्रियम् ॥ ४३ ॥ गवांशतसहस्रंचग्रामाणांचशतंपरम् ॥ सकुंडलाःशुभाचाराभार्याःकन्यास्तुषोडश ॥४४॥ हेमवर्णाःसुनासो रूःशशिसौम्याननाःस्त्रियः ॥ सर्वाभरणसंपन्नाःसंपन्नाःकुलजातिभिः ॥४५॥ निशम्यरामागमनंनृपात्मजःकपिप्रवीरस्यतदाद्भुतोपमम् ॥ प्रहर्षितो रामदिदृक्षयाभवत्पुनश्चहर्षादिदमब्रवीद्वचः ॥ ४६ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेसप्तविंशाधिकशततमःसर्गः ॥ १२७ ॥

बोध्यम् ॥ ३७ ॥ अस्मिन्मुहूर्ते अचिरादित्यर्थः संगतो भविष्यसीति शेषः ॥ ३८ ॥ ३९ ॥ उत्कटहर्षोपि चित्तवैवश्यहेतुरिति कृत्वा पपातेत्यादि ॥ ४० ॥ ४१ ॥ अशोकजैर्हर्षजैरित्यश्रुबिंदुभिरित्यनेना न्वितम् ॥ ४२ ॥ अनुक्रोशात्कृपया प्रियाख्यानस्य कर्तरि ल्युट् । प्रियाख्यानकर्तुः किं प्रियं ददामि एतत्प्रियाख्यानसमं न किंचित्पश्यामीति भावः ॥ ४३ ॥ ४४ ॥ ४५ ॥ निशम्य महर्षितो रामदिदृक्षया अत्र युक्तोभवदिति शेषः ॥ ४६ ॥ तैर्वैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे सप्तविंशाधिकशततमः सर्गः ॥ १२७ ॥ कतकरी० ॥ ११८ ॥

बहूनि वर्षाणि सुमहद्वनं गतस्य मम नाथस्य कीर्तनं शृणोम्यहम् ॥ १ ॥ अत इयं लौकिकी गाथा कल्याणीति मां प्रति मां प्रतिभाति बतेति हर्षे तां गाथामाह एतीति ॥ २ ॥ सह मित्रैरित्यस्य सुग्रीवादिमित्रसहित रित्यर्थं तन्मुखादवगत्य पृच्छति राघवस्येति । किमाश्रित्य किं निमित्तमाश्रित्येत्यर्थः ॥ ३ ॥ बृस्यां तापसासने ॥ ४ ॥ यथा शब्दानां तवानुभवसिद्ध इत्यर्थः । मातू राज्ञा वरौ दत्तौ तत एव राज्ञा रामः प्रव्राजित इति यथा तवानुभवसिद्धमित्यर्थः । एवमग्रेपि ॥ ५ ॥ राजगृहात्तदाख्यात्केकयपुरात् ॥ ६ ॥ ७ ॥ विसर्जितं रामेणेति शेषः ॥ ८ ॥ ९ ॥ परिद्यूनं परिक्षीणं पीडितमितियावत् ॥ १० ॥

बहूनिनामवर्षाणिगतस्यसुमहद्वनम् ॥ शृणोम्यहंप्रीतिकरंममनाथस्यकीर्तनम् ॥ १ ॥ कल्याणीबतगाथेयंलौकिकीप्रतिभातिमाम् ॥ एतिजीवंतमानंदोनरंवर्षशतादपि ॥ २ ॥ राघवस्यहरीणांचकथमासीत्समागमः ॥ कस्मिन्देशेकिमाश्रित्यतत्त्वमाख्याहिपृच्छतः ॥ ३ ॥ सपृष्टोराजपुत्रेणबृस्यांसमुपवेशितः ॥ आचचक्षेततःसर्वंरामस्यचरितंवने ॥ ४ ॥ यथाप्रव्राजितोरामोमातुर्दत्तौवरौतव ॥ यथाचपुत्रशोकेनराजादशरथोमृतः ॥ ५ ॥ यथादूतैस्त्वमानीतस्तूर्णंराजगृहात्प्रभो ॥ त्वयायोध्यांप्रविष्टेनयथाराज्यंनचेप्सितम् ॥ ६ ॥ चित्रकूटगिरिंगत्वाराज्येनामित्रकर्शनः ॥ निमंत्रितस्त्वयाभ्रातार्धर्ममाचरतासताम् ॥ ७ ॥ स्थितेनराज्ञोवचनेयथाराज्यंविसर्जितम् ॥ आर्यस्यपादुकेगृह्ययथासिपुनरागतः ॥ ८ ॥ सर्वमेतन्महाबाहोयथावद्विदितंतव ॥ त्वयिप्रतिप्रयातेतुयद्वृत्तंतन्निबोधमे ॥ ९ ॥ अपयातेत्वयितदासमुद्भ्रांतमृगद्विजम् ॥ परिद्यूनमिवात्यर्थंतद्वनंसमपद्यत ॥ १० ॥ तद्धस्तिमृदितंघोरंसिंहव्याघ्रमृगाकुलम् ॥ प्रविवेशाथविजनंसमहद्दंडकावनम् ॥ ११ ॥ तेषांपुरस्ताद्बलवान्गच्छतांगहनेवने ॥ विनदन्सुमहानादंविराधःप्रत्यदृश्यत ॥ १२ ॥ तमुत्क्षिप्यमहानादमूर्ध्वबाहुमधोमुखम् ॥ निखातेप्रक्षिपंतिस्मनदंतमिवकुंजरम् ॥ १३ ॥ तत्कृत्वादुष्करंकर्मभ्रातरौरामलक्ष्मणौ ॥ सायाह्नेशरभंगस्यरम्यमाश्रममीयतुः ॥ १४ ॥ शरभंगेदिवंप्राप्तेरामःसत्यपराक्रमः ॥ अभिवाद्यमुनीन्सर्वान्जनस्थानमुपागमत् ॥ ॥ १५ ॥ चतुर्दशसहस्राणिजनस्थाननिवासिनाम् ॥ हतानिवसतातत्रराघवेणमहात्मना ॥ १६ ॥ एकेनसहसंगम्यरामेणरणमूर्धनि ॥ अह्नश्चतुर्थभागेननिःशेषाराक्षसाःकृताः ॥ १७ ॥ महाबलामहावीर्यास्तपसोविघ्नकारिणः ॥ निहताराघवेणाजौदंडकारण्यवासिनः ॥ १८ ॥ राक्षसाश्चविनिष्पिष्टाःखरश्चनिहतोरणे ॥ दूषणंचाग्रतोहत्वात्रिशिरास्तदनंतरम् ॥ १९ ॥ पश्चाच्छूर्पणखानामरामपार्श्वमुपागता ॥ ततोरामेणसंदिष्टोलक्ष्मणःसहसोत्थितः ॥ २० ॥ प्रगृह्यखड्गंचिच्छेदकर्णनासेमहाबलः ॥ ततस्तेनार्दिताबालारावणंसमुपागता ॥ २१ ॥ रावणानुचरोघोरोमारीचोनामराक्षसः ॥ लोभयामासवैदेहींभूत्वारत्नमयोमृगः ॥ २२ ॥

तत्तदनंतरम् ॥ ११ ॥ १२ ॥ निखाते गर्ते प्रक्षिपंति स्म प्रक्षिप्तवंतावित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ अह्नश्चतुर्थभागेन इदं च राक्षसार्दनयुद्धसन्नाहसीतागुहाप्रेषणादिसर्वव्यापारापेक्षया । युद्धकालस्त्वर्धाधिकमुहूर्तेनेत्यारण्यकांडे उक्तः ॥ १७ ॥ १८ ॥ १९ ॥ ननु रक्षसां वधे को हेतुस्तत्राह पश्चादिति । जनस्थानोपागमानंतरमित्यर्थः ॥ २० ॥ कर्णनासे चिच्छेद । ततस्तत्प्रेरितचतुर्दश

सहस्ररक्षसां वध इति शेषः ततः रूपादिविधानंतरम् तेन लक्ष्मणेन पूर्वमर्दिता सा बाला मूर्खा रावणमुपागमत् ॥ २१ ॥ २२ ॥ मृगमिति शेषः । दृष्ट्वा राममब्रवीत् । तदेवाह अयं मृगो गृह्यतां गृहीतेनानेन आश्रमो मनोहरो भविष्यति ॥ २३ ॥ अनुधावति अनुधावतिस्म ॥२४॥२५॥ २६ ॥ सहसा बालात्कारेण ॥२७॥ विस्मिता ददृशुः सुग्रीवादय इति भावः ॥२८॥ तत इति । अनेन मार्गे क्वचित्स्थापितं गुप्ते देशे आसीत्स्मृतिमात्रेण वा तदुपस्थानं बोध्यम् ॥२९॥ तदा तत इत्यर्थः । सुवर्णपरिष्कारे सुवर्णप्राकारे ॥३०॥३१॥ तृणवदचिंतयंती अगणयंती ॥३२॥३३॥३४॥ कबंधवचनान्निहतदग्धकबंधवच

सारामममब्रवीद्दृष्ट्वावैदेहीगृह्यतामिति ॥ अयंमनोहरःकांतआश्रमोनोभविष्यति॥ २३॥ ततोरामोधनुष्पाणिर्मृगंतमनुधावति ॥ सतंजघानधावंतंशरेणानतपर्वणा ॥ २४ ॥ अथसौम्यदशग्रीवोमृगयांयातिराघवे ॥ लक्ष्मणेचापिनिष्क्रांतेप्रविवेशाश्रमंतदा ॥ २५ ॥ जग्राहतरसासीतांग्रहःखेरोहिणीमिव ॥ त्रातुकामंततोयुद्धेहत्वागृध्रंजटायुषम् ॥ २६ ॥ प्रगृह्यसहसासीतांजगामाशुसराक्षसाम् ॥ ततस्त्वद्भुतसंकाशाःस्थिताःपर्वतमूर्धनि ॥ २७॥ सीतांगृहीत्वागच्छंतंवानराःपर्वतोपमाः ॥ ददृशुर्विस्मिताकारारावणंराक्षसाधिपम् ॥२८॥ ततःशीघ्रतरंगत्वातद्विमानंमनोजवम् ॥ आरुह्यसहवैदेह्यापुष्पकंसमहाबलः ॥ २९ ॥ प्रविवेशतदालंकांरावणोराक्षसेश्वरः ॥ तांसुवर्णपरिष्कारेशुभेमहतिवेश्मनि ॥ ३० ॥ प्रवेश्यमैथिलींवाक्यैःसांत्वयामाससरावणः ॥ तृणवद्भाषितंतस्यतंचनैर्ऋतपुंगवम् ॥ ३१ ॥ अचिंतयंतीवैदेहीह्यशोकवनिकांगता ॥ न्यवर्ततततदारामोमृगंहत्वातदावने॥३२॥ निवर्तमानःकाकुत्स्थोदृष्ट्वागृध्रंसविव्यथे ॥ गृध्रंहतंतदादृष्ट्वारामःप्रियतरंपितुः ॥३३॥ मार्गमाणस्तुवैदेहींराघवःसहलक्ष्मणः ॥गोदावरीमनुचरन्वनोद्देशांश्चपुष्पितान् ॥ ३४ ॥ आसेदतुर्महारण्येकबंधंनामराक्षसम् ॥ ततःकबंधवचनाद्रामःसत्यपराक्रमः ॥ ३५ ॥ ऋष्यमूकगिरिंगत्वासुग्रीवेणसमागतः ॥ ततःसमागमःपूर्वंप्रीत्याहार्दोव्यजायत ॥ ३६ ॥ भ्रात्रानिरस्तःक्रुद्धेनसुग्रीवोवालिनापुरा ॥ इतरेतरसंवादात्प्रगाढःप्रणयस्तयोः ॥ ३७ ॥ रामःस्वबाहुवीर्येणस्वराज्यंप्रत्यपादयत् ॥ वालिनंसमरेहत्वामहाकायंमहाबलम् ॥ ३८ ॥ सुग्रीवःस्थापितोराज्येसहितःसर्ववानरैः ॥ रामायप्रतिजानीतेराजपुत्र्यास्तुमार्गणम् ॥३९॥ आदिष्टावानरेंद्रेणसुग्रीवेणमहात्मना ॥ दशकोट्यःप्लवंगानांसर्वाःप्रस्थापितादिशः ॥४०॥ तेषांनोविप्रनष्टानांविंध्येपर्वतसत्तमे ॥ भृशंशोकाभितप्तानांमहान्कालोत्यवर्तत ॥ ४१ ॥ भ्रातातुगृध्रराजस्यसंपातिर्नामवीर्यवान् ॥ समाख्यातिस्मवसतींसीतांरावणमंदिरे ॥ ४२ ॥

नादित्यर्थः ॥ ३५ ॥ तयोः पूर्वं परस्परसान्निध्यात्पूर्वं रामस्य श्रवणेन सुग्रीवस्य दूराद्दर्शनेन हार्दः समागमो मानसं सख्यं जातामित्यर्थः ॥ ३६ ॥ तत्र हेतुमाह भ्रात्रेति । अतस्तयोः परस्परसंवादात्प्रगाढः प्रणय आसीत् ॥३७॥३८॥ रामायेति । अत्र क्रमो न विवक्षितः ॥३९॥ आदिष्टा नियुक्ताः॥४०॥विप्रनष्टानां बिलप्रवेशानंतरं निर्गममार्गमजानताम् । विप्रकृष्टानामितिपाठेऽतीतकालानामित्यर्थः॥४१॥४२॥

ज्ञातिनामित्यत्र दीर्घाभाव आर्षः ॥ ४३ ॥ ४४ ॥ मार्गे सीतासकाशाच्चूडामणिं लब्ध्वेत्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ उद्युज्यते जयोनेनेति उद्योगं बलं तयोजयिष्यन्योत्सहयिष्यन् ॥४८॥४९॥५०॥५१॥५२॥५३॥ मुनिसन्निधावद्य वसंतं श्वो द्रष्टुमर्हसि आश्विनशुक्लचतुर्दश्यामश्विनी तद्दिने इति पष्ठ्यां पुष्यस्य संभवः । पूर्णिमायामश्विन्यामपि एकर्क्षक्षयेण वा ॥ ५४ ॥ कृतांजलिः रामं स्मृत्वेति शेषः मे मनोरथः पूर्णः खल्वित्युवाच॥५५॥शेषेमानः॥इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे अष्टाविंशाधिकशततमःसर्गः॥१२८॥कतकरी० ॥११९॥

सोहंदुःखपरीतानांदुःखंतज्ज्ञातिनांनुदन् ॥ आत्मवीर्यंसमास्थाययोजनानांशतंप्लुतः ॥ तत्राहमेकामद्राक्षमशोकवनिकांगताम् ॥४३॥कौशेयवस्त्रांमलिनांनिरानंदांदृढव्रताम् ॥ तयासमेत्यविधिवत्पृष्ट्वासर्वमनिंदिताम् ॥ ४४ ॥ अभिज्ञानंमयादत्तंरामनामांगुलीयकम् ॥ अभिज्ञानंमणिंलब्ध्वाचरितार्थोहमागतः ॥ ४५ ॥ मयाचपुनरागम्यरामस्याक्लिष्टकर्मणः ॥ अभिज्ञानंमयादत्तमर्चिष्मान्समहामणिः ॥४६॥ श्रुत्वातांमैथिलींरामस्त्वाशशंसेचजीवितम् ॥ जीवितांतमनुप्राप्तःपीत्वामृतमिवातुरः ॥४७॥ उद्योजयिष्यन्नुद्योगंदध्रेलंकावधेमनः ॥ जिघांसुरिवलोकांतेसर्वाँल्लोकान्विभावसुः ॥ ॥ ४८ ॥ ततःसमुद्रमासाद्यनलंसेतुमकारयत् ॥ अतरत्कपिवीराणांवाहिनीतेनसेतुना ॥ ४९ ॥ प्रहस्तमवधीन्नीलःकुंभकर्णंतुराघवः ॥ लक्ष्मणोरावणसुतंस्वयंरामस्तुरावणम् ॥ ५० ॥ सशक्रेणसमागम्ययमेनवरुणेनच ॥ महेश्वरस्वयंभूभ्यांतथादशरथेनच ॥ ५१ ॥ तैश्चदत्तवरःश्रीमानृषिभिश्चसमागतैः ॥ सुरर्षिभिश्चकाकुत्स्थोवराँल्लेभेपरंतपः ॥ ५२ ॥ सतुदत्तवरःप्रीत्यावानरैश्चसमागतः ॥ पुष्पकेणविमानेनकिष्किंधामभ्युपागमत् ॥ ॥५३॥ तांगंगांपुनरासाद्यवसंतंमुनिसन्निधौ ॥ अविघ्नंपुष्ययोगेनश्वोरामंद्रष्टुमर्हसि ॥ ५४ ॥ ततःसवाक्यैर्मधुरैर्हनूमतोनिशम्यहृष्टोभरतःकृतांजलिः ॥ उवाचवाणींमनसःप्रहर्षिणींचिरस्यपूर्णःखलुमेमनोरथः ॥ ५५ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेअष्टाविंशाधिकशततमःसर्गः ॥१२८॥ श्रुत्वातुपरमानंदंभरतःसत्यविक्रमः ॥ हृष्टमाज्ञापयामासशत्रुघ्नंपरवीरहा ॥ १ ॥ दैवतानिचसर्वाणिचैत्यानिनगरस्यच ॥ सुगंधमाल्यैर्वादित्रैरर्चन्तुशुचयोनराः ॥ २ ॥ सूताःस्तुतिपुराणज्ञाःसर्वेवैतालिकास्तथा ॥ सर्वेवादित्रकुशलागणिकाश्चैवसर्वशः ॥ ३ ॥ राजदारास्तथामात्याःसैन्याःसेनांगनागणाः ॥ ब्राह्मणाश्चसराजन्याःश्रेणीमुख्यास्तथागणाः॥४॥ अभिनिर्यांतुरामस्यद्रष्टुंशशिनिभंमुखम् ॥ भरतस्यवचःश्रुत्वाशत्रुघ्नःपरवीरहा ॥ ५ ॥ विष्टीरनेकसाहस्रीश्चोदयामासभागशः ॥ समीकुरुतनिम्नानिविषमाणिसमानिच ॥ ६ ॥

परमानंदं तत्करं वच इति शेषः ॥ १ ॥ दैवतानि कुलदैवतानि नगरस्य चैत्यानि साधारणदेवतायतनानि अर्चंतु अर्चयंतु ॥ २ ॥ स्तुतिपुराणज्ञा इति सूतलक्षणरूपं सूतविशेषणं वैतालिका वंशावलीकीर्तिकाः ॥ ३ ॥ राजदारा मातरः सैन्याः राजभवनाद्बहिर्मितोभ्यंतराः सेनागणा आटविकांतसेनाभेदास्तथांगनागणाः श्रेणी नानाजातीयसंघः ॥ ४ ॥ ५ ॥ विष्टीर्भृति हरान् भागशो विभज्येति शेषः । विषमाणि

स्थलानि अल्पुन्नतदेशाः समानि च स्थानानि निरस्यंताम् । अयं भेदो निराक्रियतां सर्वं समं क्रियतामितियावत् ॥६॥ इतो नंदिग्रामात्परं यावदयोध्यां तावत् एव गंतव्यदेशत्वादिति भावः ॥ ७ ॥ समुच्छ्रितपताका रथ्याः कर्म ॥ ८ ॥ सूर्यस्योदयनं प्रति श्वः सूर्योदयकाले यथा सर्वं सज्जं भवति तथा कुरुतेत्यर्थः । विरलपुष्पबंधाः स्रजः निबिडपुष्पबंधं दाम मुक्तपुष्पाणि बंधरहितानि पुष्पाणि पुष्पविशेषणं सुवर्णैरिति । पंचवर्णकैः पंचवर्णकल्पितैरलंकारैः ॥ ९ ॥ १० ॥ धृष्ट्याद्योष्ट मंत्रिणो निर्ययुः उदयात्पूर्वं यथोक्तराजमार्गसत्कारं कृत्वा प्रातर्निर्ययुरित्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ नैगमाः वणिजः ।

स्थानानिचनिरस्यंतांनंदिग्रामादितःपरम् ॥ सिंचंतुपृथिवींकृत्स्नांहिमशीतेनवारिणा ॥ ७ ॥ ततोभ्यवकिरंत्वन्येलाजैःपुष्पैश्चसर्वतः ॥ समुच्छ्रितपताकास्तुरथ्याःपुरवरोत्तमे ॥ ८ ॥ शोभयंतुचवेश्मानिसूर्यस्योदयनंप्रति ॥ स्रग्दाममुक्तपुष्पैश्चसुवर्णैःपंचवर्णकैः ॥ ९ ॥ राजमार्गमसंबाधंकिरंतुशतशोनराः ॥ ततस्तच्छासनंश्रुत्वाशत्रुघ्नस्यमुदान्विताः ॥ १० ॥ धृष्टिर्जयंतोविजयःसिद्धार्थश्चाथसाधकः ॥ अशोकोमंत्रपालश्चसुमंत्रश्चापिनिर्ययुः ॥११॥ मत्तैर्नागसहस्रैश्चसध्वजैःसुविभूषितैः ॥ अपरेहेमकक्षाभिःसगजाभिःकरेणुभिः ॥ १२ ॥ निर्ययुस्तुरगाक्रांतारथैश्चसुमहारथाः ॥ शक्त्यृष्टिपाशहस्तानांसध्वजानांपताकिनाम् ॥ १३ ॥ तुरगाणांसहस्रैश्चमुख्यैर्मुख्यतरान्वितैः ॥ पदातीनांसहस्रैश्चवीराःपरिवृताययुः ॥ १४ ॥ ततोयानान्युपारूढाःसर्वादशरथस्त्रियः ॥ कौसल्यांप्रमुखेकृत्वासुमित्रांचापिनिर्ययुः ॥१५॥ द्विजातिमुख्यैर्धर्मात्माश्रेणीमुख्यैःसनैगमैः ॥ माल्यमोदकहस्तैश्चमंत्रिभिर्भरतोवृतः ॥ १६ ॥ शंखभेरीनिनादैश्चवंदिभिश्चाभिनंदितः ॥ आर्यपादौगृहीत्वातुशिरसाधर्मकोविदः ॥१७॥ पांडुरंछत्रमादायशुक्लमाल्योपशोभितम् ॥ शुक्लेचवालव्यजनेराजार्हेहेमभूषिते ॥ १८ ॥ उपवासकृशोदीनश्चीरकृष्णाजिनांबरः ॥ भ्रातुरागमनंश्रुत्वातत्पूर्वंहर्षमागतः ॥ १९ ॥ प्रत्युद्ययौतदारामंमहात्मासचिवैःसह ॥ अश्वानांखुरशब्दैश्चरथनेमिस्वनेनच ॥ २० ॥ शंखदुंदुभिनादेनसंचचालेवमेदिनी ॥ गजानांबृंहितैश्चापिशंखदुंदुभिनिःस्वनैः ॥ २१॥ कृत्स्नंतुनगरंतत्तुनंदिग्राममुपागमत् ॥ समीक्ष्यभरतोवाक्यमुवाचपवनात्मजम् ॥२२॥ कच्चिन्नखलुकापेयीसेव्यतेचलचित्तता ॥ नहिपश्यामिकाकुत्स्थंराममार्यपरंतपम् ॥ २३ ॥ कच्चिन्नचानुदृश्यंतेकपयःकामरूपिणः ॥ अथैवमुक्तेवचनेहनुमानिदमब्रवीत् ॥ २४ ॥ अर्थ्यंविज्ञापयन्नेवभरतंसत्यविक्रमम् ॥ सदाफलान्कुसुमितान्वृक्षान्प्राप्यमधुस्रवान् ॥ २५ ॥

वैदेहकःसार्थवाहो नैगमो वाणिजो वणिगित्यमरः ॥ १६ ॥ आर्यपादौ श्रीरामपादुके ॥ १७ ॥ १८ ॥ उपवासकृश इत्यनेन रामादेरपि किंचित्कालमुपवासोनुमेयः । तत्पूर्वम् आगमनश्रवणपूर्वकम् ॥ १९ ॥ ॥ २० ॥ २१ ॥ २२ ॥ यावन्न दूरं यातोस्मि क्षिप्रमागंतुमर्हसीति हनूमंतं प्रति रामोक्तेर्भरते सर्वां कथामुक्त्वा पुना रामसमीपं गत्वा रामं प्रति भरतवृत्तांतं निवेद्य पुनर्नंदिग्रामं प्रति रामाज्ञया गते एतद्भरतवचस्तं प्रतीति बोध्यम् । कापेयी कपिस्वभावप्रयुक्ता चलचित्तता न सेव्यते नानुष्ठीयते कच्चित् मिथ्या नोच्यते कच्चिदित्यर्थः । कुत एवं शंका तत्राह न हीति ॥ २३ ॥ २४ ॥ एवं मिथ्यावादित्वशं

कायां तन्निवृत्तयेऽर्थ्यमर्थादनपेतं विज्ञापयन्निदमब्रवीत् सदाफलत्वादिविशिष्टान् वृक्षान्प्राप्य प्रहृष्टानां वनौकसां भूमौ निःस्वनः श्रूयतेऽतस्त्वं प्रयाहीति शेषः ॥ २५ ॥ वृक्षाणां तथाविधत्वं कुतस्तत्राह भरद्वाजप्रसा देनेति । तेनापि कथमेवं शक्यं तत्राह तस्य चेति । भरद्वाजस्य चेत्यर्थः वासवेनेति । तत्तपःप्रसादितेनेत्यर्थः ॥ २६ ॥ यदेवमतः ससैन्यस्य तव रामस्य च भरद्वाजेन सर्वगुणान्वितमातिथ्यं कृतम् ॥ २७ ॥ यतो ध्वनिः श्रूयतेऽतः सा सेना गोमतीं तरतीति मन्ये । वालुकीमितिपाठांतरम् । क्षणानंतरमाह रजोवर्षमिति ॥२८॥ क्षणोत्तरमाह तदेतदिति ॥ २९ ॥ मनसा ब्रह्मनिर्मितं ब्रह्मणा स्रष्टृत्वसाम्याद्विश्वकर्मणा निर्मितम् ॥३०॥ एतद्दिव्यं मनोजवं विमानं प्रसादेन ब्रह्मणः प्रसादेन धनदस्य भवतीति शेषः । परेण तपसा लेभे यत्कुबेरः पितामहादिति सुंदरकांडोक्तेः ॥ ३१ ॥ एतस्मिन्विमाने राघवौ सुग्रीवो विभीषणश्च

भरद्वाजप्रसादेनमत्तभ्रमरनादितान् ॥ तस्यचैववरोदत्तोवासवेनपरंतप ॥ २६ ॥ ससैन्यस्यतदातिथ्यंकृतंसर्वगुणान्वितम् ॥ निःस्वनःश्रूयतेभीमः प्रहृष्टानांवनौकसाम् ॥ २७ ॥ मन्येवानरसेनासानदींतरतिगोमतीम् ॥ रजोवर्षंसमुद्भूतंपश्यसालवनंप्रति ॥ २८ ॥ मन्येसालवनंरम्यंलोलयंतिप्लवंगमाः ॥ तदेतद्दृश्यतेदूराद्विमानंचंद्रसन्निभम् ॥ २९ ॥ विमानंपुष्पकंदिव्यंमनसाब्रह्मनिर्मितम् ॥ रावणंबांधवैःसार्धंहत्वालब्धंमहात्मना ॥ ॥ ३० ॥ तरुणादित्यसंकाशंविमानंरामवाहनम् ॥ धनदस्यप्रसादेनदिव्यमेतन्मनोजवम् ॥ ३१ ॥ एतस्मिन्भ्रातरौवीरौवैदेह्यासहराघवौ ॥ सुग्रीवश्चमहातेजाराक्षसश्चविभीषणः ॥ ३२ ॥ ततोहर्षसमुद्भूतोनिःस्वनोदिवमस्पृशत् ॥ स्त्रीबालयुववृद्धानांरामोयमितिकीर्तिते ॥ ३३ ॥ रथकुंजरवाजिभ्यस्तेवतीर्यमहींगताः ॥ ददृशुस्तंविमानस्थंनराःसोममिवांबरे ॥ ३४ ॥ प्रांजलिर्भरतोभूत्वाप्रहृष्टोराघवोन्मुखः ॥ यथार्थेनार्घ्यपाद्याद्यैस्ततोराममपूजयत् ॥ ३५ ॥ मनसाब्रह्मणासृष्टेविमानेभरताग्रजः ॥ रराजपृथुदीर्घाक्षोवज्रपाणिरिवामरः ॥ ३६ ॥ ततोविमानाग्रगतंभरतोभ्रातरंतदा ॥ ववंदेप्रणतोरामंमेरुस्थमिवभास्करम् ॥ ३७ ॥ ततोरामाभ्यनुज्ञातंतद्विमानमनुत्तमम् ॥ हंसयुक्तंमहावेगंनिपपातमहीतलम् ॥ ३८ ॥ आरोपितोविमानंतद्भरतःसत्यविक्रमः ॥ राममासाद्यमुदितःपुनरेवाभ्यवादयत् ॥३९॥ तंसमुत्थायकाकुत्स्थश्चिरस्याक्षिपथंगतम् ॥ अंकेभरतमारोप्यमुदितःपरिषस्वजे ॥ ४० ॥ ततोलक्ष्मणमासाद्यवैदेहींचपरंतपः ॥ अथाभ्यवादयत्प्रीतोभरतोनामचाब्रवीत् ॥ ४१ ॥ सुग्रीवंकेकयीपुत्रोजांबवंतमथांगदम् ॥ मैंदंचद्विविदंनीलमृषभंचैवसस्वजे ॥ ४२ ॥ सुषेणंचनलंचैवगवाक्षंगंधमादनम् ॥ शरभंपनसंचैवपरितःपरिषस्वजे ॥ ४३ ॥

तिष्ठतीति शेषः ॥ ३२ ॥ ३३ ॥ तत आसन्ने भरतादयस्तं ददृशुरित्याह ददृशुरिति ॥ ३४ ॥ यथार्थेन स्वागतेन अन्वर्थेन स्वागतेनेत्यर्थः । यस्यागमनं परमकल्याणं तत्स्वागतमित्यर्थानुगतिमतेत्यर्थः ॥ ॥३५॥३६॥३७॥३८॥ अभ्यवादयत् अभ्यवंददित्यर्थः ॥३९॥४०॥ लक्ष्मणमासाद्य वंदमानं लक्ष्मणं परिष्वंगादिना संभाव्य । अन्येद्युः पांचजन्यात्मा कैकेय्यां भरतोऽभवत् ॥ तदन्येद्युः सुमित्रायामनंतात्मा च लक्ष्मणः ॥ सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत्प्रिये इति पाद्मे शिवोक्तेः वैदेहीमभ्यवादयत् अभ्यवंदत् । परंतु यद्यपि लक्ष्मणो भरतात्कनिष्ठो वयसा स्पष्टं वेदं जन्मप्रकरणे । तथापि ज्येष्ठानुवर्तनेन स्वापेक्षयाधिकगुणत्वेन स्वव्यवहारेण ज्येष्ठानुवृत्तिरेवं कर्तव्येति भरतं प्रत्युपदेशदानेन च गुरुत्वबुद्ध्या तस्य नतिकृतैव । किं च कौसल्यायै प्रथमं दत्तपायसांशजत्वाल्लक्ष्मणस्य ज्येष्ठत्वम् । ततो हि कैकेय्यै पायसार्धदानं तदंशजश्च शत्रुघ्न

इति स एव भरतात्कनिष्ठः ॥ अतएव वैदेहीं चेति चकारः स्वरसतः संगच्छते । अतएव च शत्रुघ्नकृतो लक्ष्मणनमस्कार उपपद्यते । तयोर्युगपदुत्पन्नत्वादित्याहुः ॥४१॥४२॥४३॥४४॥ ४५ ॥ पंचमो भ्राता भ्रातृविषयकपंचत्वसंख्यापूरणः सौहृदात्तत्पूर्वकोपकारात् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ कैकेयीं च यशस्विनीं अस्या मनोदार्ढ्येन राजा नरकात्तारितो देवा ब्रह्मर्षयश्च परमं सुखं प्रापिता रामस्य च यशो जगत्प्रथित एषा यशस्विन्येव ॥ ५० ॥ ५१ ॥ व्याकोशानि विकसितानि ॥ ५२ ॥५३॥ एतत् एतावत्कालं मया रक्षितं न्यासभूतं मयि स्थितं राज्यं मया ते निर्यातितं तुभ्यं निवेदितम् ॥५४॥५५॥५६॥

तेकृत्वामानुषंरूपंवानराःकामरूपिणः ॥ कुशलंपर्यपृच्छंस्तेप्रहृष्टाभरतंतदा ॥ ४४ ॥ अथाब्रवीद्राजपुत्रःसुग्रीवंवानरर्षभम् ॥ परिष्वज्यमहाते जाभरतोधर्मिणांवरः ॥ ४५ ॥ त्वमस्माकंचतुर्णांवैभ्रातासुग्रीवपंचमः ॥ सौहृदाज्जायतेमित्रमपकारोरिलक्षणम् ॥ ४६ ॥ विभीषणंचभरतःसांत्ववाक्यमथाब्रवीत् ॥ दिष्ट्यात्वयासहायेनकृतंकर्मसुदुष्करम् ॥ ४७ ॥ शत्रुघ्नश्चतदाराममभिवाद्यसलक्ष्मणम् ॥ सीतायाश्चरणौवीरोविनयादभ्यवादयत् ॥ ४८ ॥ रामोमातरमासाद्यविवर्णांशोककर्शिताम् ॥ जग्राहप्रणतःपादौमनोमातुःप्रहर्षयन् ॥४९॥ अभिवाद्यसुमित्रांचकैकेयींचयशस्विनीम् ॥ समातृश्चततःसर्वाःपुरोहितमुपागमत् ॥ ५० ॥ स्वागतंतेमहाबाहोकौसल्यानंदवर्धन ॥ इतिप्रांजलयःसर्वेनागरारामम्ब्रुवन् ॥५१॥ तान्यंजलिसहस्राणिप्रगृहीतानिनागरैः ॥ व्याकोशानीवपद्मानिददर्शभरताग्रजः ॥ ५२ ॥ पादुकेतेतुरामस्यगृहीत्वाभरतःस्वयम् ॥ चरणाभ्यांनरेंद्रस्ययोजयामासधर्मवित् ॥५३॥ अब्रवीचतदारामंभरतःसकृतांजलिः ॥ एतत्तेसकलंराज्यंन्यासंनिर्यातितंमया ॥ ५४ ॥ अद्यजन्मकृतार्थंमेसंवृत्तश्चमनोरथः ॥ यत्त्वांपश्यामिराजानमयोध्यांपुनरागतम् ॥ ५५ ॥ अवेक्षतांभवान्कोशंकोष्ठागारंगृहंबलम् ॥ भवतस्तेजसासर्वंकृतंदशगुणंमया ॥ ५६ ॥ तथाब्रुवाणंभरतंदृष्ट्वातंभ्रातृवत्सलम् ॥ मुमुचुर्वानरावाष्पंराक्षसश्चविभीषणः ॥ ५७ ॥ ततःप्रहर्षाद्भरतमंकमारोप्यराघवः ॥ ययौतेनविमानेनससैन्योभरताश्रमम् ॥५८॥ भरताश्रममासाद्यससैन्योराघवस्तदा ॥ अवतीर्यविमानाग्रादवतस्थेमहीतले ॥५९॥ अब्रवीचतदारामस्तद्विमानमनुत्तमम् ॥ वहवैश्रवणंदेवमनुजानामिगम्यताम् ॥ ६० ॥ ततोरामाभ्यनुज्ञातंतद्विमानमनुत्तमम् ॥ उत्तरांदिशमुद्दिश्यजगामधनदालयम् ॥६१॥ विमानंपुष्पकंदिव्यंसंगृहीतंतुरक्षसा ॥ अगमद्धनदंवेगाद्रामवाक्यप्रचोदितम् ॥६२॥ पुरोहितस्यात्मसखस्यराघवोबृहस्पतेःशक्रइवामराधिपः ॥ निपीड्यपादौपृथगासनेशुभेसदैवतेनोपविवेशवीर्यवान् ॥६३॥ इत्यार्षेश्रीमद्रामायणेवाल्मी०आदि०युद्धकाण्डेएकोनत्रिंशाधिकशततमःसर्गः ॥१२९॥ शिरस्यंजलिमाधाय कैकेयीनंदिवर्धनः ॥ बभाषेभरतोज्येष्ठंरामंसत्यपराक्रमम् ॥१॥ पूजितामामिकामातादत्तंराज्यमिदंमम ॥ तद्ददामिपुनस्तुभ्यंयथात्वमददामम ॥२॥

विभीषणश्च बाष्पं मुमोच ईदृशा अपि भ्रातरः संतीत्यानंदेन स्वस्य तद्वैपरीत्यजशोकेन च ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ पुरोहितस्यात्मसखस्येति वासिष्ठपुत्रस्य सुयज्ञस्येत्यर्थः । आत्मसमस्येतिपाठांतरम् । ब्रह्मज्ञत्वादिति भावः वसिष्ठस्येत्यर्थ इति तीर्थः ॥ ६३ ॥ गतमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे एकोनत्रिंशाधिकशततमः सर्गः ॥ १२९ ॥ कतकरी० ॥ १२० ॥ शिरसीति ॥ १ ॥ त्वया मामिका माता पूजिता तदुक्तवनवासानुष्ठानात् मया चित्रकूटे तव समर्पितमिदं राज्यं त्वं पुनश्चित्रकूट एव मम दत्तवान्

तत्पुनस्तुभ्यमहं ददामि । ननु कथं दत्तस्य पुनर्दानं तत्राह यथेति । यथा त्वं मद्दत्तं राज्यं मह्यमददास्तथा मयापि त्वद्दत्तं तुभ्यं दीयते इत्यर्थः ॥ २ ॥ ननु त्वद्दत्तराज्यभोगमहं करिष्यामि राज्यं तु त्वमेव पालयेत्यत्राह धुरमिति । एकाकिना स्वसमानधूर्वहबलीवर्दांतररहितेन बलीयसा वृषभेण बलीवर्देन न्यस्तां क्षिप्तां किशोरवत्पार्श्ववर्तिवडवाबालवत्सो यथा वोढुं नोत्सहते तथा गुरुं राज्यस्य भारं वोढुं नाहमुत्सहे ॥ ३ ॥ नोत्सहे इत्यत्र हेतुमाह वारीति । महता वारिवेगेन भिन्नः क्षरन्सेतुर्यथा दुर्निबंधो बद्धुमशक्य एवमसंवृतमशक्यसंवरणं राज्यच्छिद्रं चोरादिनिबंधनं दुर्निबंधनं बद्धुमशक्यमित्येव मन्येऽहमिति शेषः ॥ ४ ॥ तव मार्गं रक्षणीयरक्षणचातुर्यम् ॥ ५ ॥ अंतर्निवेशने गृहारामे कश्चिद्वृक्ष आरोपितः स महत्त्वादिगुणविशिष्टश्च जातस्ततः स पुष्पितो भूत्वा फलान्यदर्शयन् यदि विशीर्यंत विशीर्णपुष्पो वा स्वरूपतो वा विशीर्णो भवति ततोस्य फलस्य हेतोर्येन रोपितः स तदारोपणादिक्लेशस्यार्थं फलं नानुभवेदिति स यथा वृथा प्रयासः ॥ ६ ॥ ७ ॥ एषोपमा तव हे महाबाहो यदि त्वं भक्तान् भृत्यानस्मान्न शाधि तदेति शेषः

धुरमेकाकिनान्यस्तांवृषभेणबलीयसा ॥ किशोरवद्गुरुंभारंनवोढुमहमुत्सहे ॥ ३ ॥ वारिवेगेनमहताभिन्नःसेतुरिवक्षरन् ॥ दुर्बंधनमिदंमन्येराज्यच्छिद्रमसंवृतम् ॥ ४ ॥ गतिंखरइवाश्वस्यहंसस्येवचवायसः ॥ नान्वेतुमुत्सहेवीरतवमार्गमरिंदम ॥ ५ ॥ यथाचारोपितोवृक्षोजातश्चांतर्निवेशने ॥ महानपिदुरारोहोमहास्कंधःप्रशाखवान् ॥ ६ ॥ शीर्येतपुष्पितोभूत्वानफलानिप्रदर्शयन् ॥ तस्यनानुभवेदर्थंयस्यहेतोःसरोपितः ॥ ७ ॥ एषोपमामहाबाहोत्वमर्थंवेत्तुमर्हसि ॥ यद्यस्मान्मनुजेंद्रत्वंभर्ताभृत्यान्नशाधिहि ॥८॥ जगदद्याभिषिक्तंत्वामनुपश्यतुराघव ॥ प्रतपंतमिवादित्यंमध्याह्नेदीप्ततेजसम् ॥ ९ ॥ तूर्यसंघातनिर्घोषैःकांचीनूपुरनिःस्वनैः ॥ मधुरैर्गीतशब्दैश्चप्रतिबुद्ध्यस्वशेष्वच ॥ १० ॥ यावदावर्ततेचक्रंयावतीचवसुंधरा ॥ तावत्त्वमिहलोकस्यस्वामित्वमनुवर्तय ॥ ११ ॥ भरतस्यवचःश्रुत्वारामःपरपुरंजयः ॥ तथेतिप्रतिजग्राहनिषसादासनेशुभे ॥१२॥ ततःशत्रुघ्नवचनान्निपुणाःश्मश्रुवर्धनाः ॥ सुखहस्ताःसुशीघ्राश्चराघवंपर्यवारयन् ॥ १३ ॥ पूर्वंतुभरतेस्नातेलक्ष्मणेचमहाबले ॥ सुग्रीवेवानरेंद्रेचराक्षसेंद्रेविभीषणे ॥ ॥ १४ ॥ विशोधितजटःस्नातश्चित्रमाल्यानुलेपनः ॥ महार्हवसनोपेतस्तस्थौतत्रश्रियाज्वलन् ॥ १५ ॥ प्रतिकर्मचरामस्यकारयामासवीर्यवान् ॥ लक्ष्मणस्यचलक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६ ॥ प्रतिकर्मचसीतायाःसर्वादशरथस्त्रियः ॥ आत्मनैवतदाचक्रुर्मनस्विन्योमनोहरम् ॥ १७ ॥ ततोवानरपत्नीनांसर्वासामेवशोभनम् ॥ चकारयत्नात्कौसल्याप्रहृष्टापुत्रवत्सला ॥ १८ ॥ ततःशत्रुघ्नवचनात्सुमंत्रोनामसारथिः ॥ योजयित्वाभिचक्रामरथंसर्वांगशोभनम् ॥ १९ ॥ अर्क्यकमलसंकाशंदिव्यंदृष्ट्वारथंस्थितम् ॥ आरुरोहमहाबाहूरामःपरपुरंजयः ॥ २० ॥

तमर्थं त्वं वेत्तुमर्हसि अन्यापदेशवचनार्थमित्यर्थः । राज्ञा प्रजापालनार्थं महता यत्नेनोत्पाद्य संवर्धितेन त्वया प्रजापालनं संपादनीयं तदकरणे तु तादृशवृक्षतुल्यस्त्वमिति भावः ॥ ८ ॥ यदेवमतो जगदद्येत्यादि ॥ ९ ॥ तूर्यघोषादिभी राजोपचारैः प्रतिबुद्ध्यस्व शेष्व चेत्यर्थः ॥ १० ॥ चक्रं ज्योतिश्चक्रं यावदावर्तते अनेन कालावधिरुच्यते यावती च वसुंधरेति देशावधिरुच्यते ॥ ११ ॥ प्रतिजग्राह भरतस्य वच इति शेषः ॥ १२ ॥ श्मश्रुवर्धनास्तच्छेदका नापिता इत्यर्थः । वर्धनं छेदनेथ द्वे आनंदनसभाजन इत्यमरः ॥ १३ ॥ पूर्वं त्विति । अत्र भरतलक्ष्मणयोः स्नानाद्यभिधानकाले शत्रुघ्नस्य तदनभिधानं तु स्ना नव्यापारपितृत्वात् उपलक्षणं वा॥१४॥१५॥ इक्ष्वाकुकुलवर्धनः शत्रुघ्नः॥१६॥प्रतिकर्मालंकरणम् आत्मनैव न सैरंध्रीहस्तेनेत्यर्थः ॥१७॥ शोभनमलंकरणम् ॥ १८ ॥ अभिचक्राम समीपमाजगाम॥१९॥२०॥

दिव्यनिभैर्दिव्यकांतिभिर्वस्त्रैर्युक्तौ जग्मतुः रथस्थं राममनुजग्मतुरित्यर्थः ॥ २१ ॥ २२ ॥ अयोध्यायां चेति तस्मिन्नंतरे इत्यादिः । पुरोहितं वसिष्ठम् अर्थवत्प्रयोजनोत्तमवत् रामाभिषेकोपयुक्तमशे षविचारं चक्रुरित्यर्थः ॥ २३ ॥ तदेवाह अशोक इत्यादि । अशोकादयो रामवृद्धचर्थं नगरस्य च वृत्त्यर्थं संगताः मंत्रयन्नमंत्रयन् ॥ २४ ॥ तदेवाह सर्वमेवेति कर्तुमर्हथेति भृत्यान्प्रत्युक्तिः ॥ २५ ॥ मंत्रिणः पुरोहितश्चैवं संदिश्य निर्ययुः ॥ २६ ॥ २७ ॥ लक्ष्मणो व्यजनं तालवृंतमयम् ॥ २८ ॥ अपरं श्वेतं वालव्यजनं विभीषणो जगृहे ॥ २९ ॥ ३० ॥ ३१ ॥ नवनागसहस्राणि नवसहस्रसंख्याक



सुग्रीवोहनुमांश्चैवमहेंद्रसदृशद्युती ॥ स्नातौदिव्यनिभैर्वस्त्रैर्जग्मतुःशुभकुंडलौ ॥ २१ ॥ सर्वाभरणजुष्टाश्चययुस्ताःशुभकुंडलाः ॥ सुग्रीवपत्न्यः सीताचद्रष्टुंनगरमुत्सुकाः ॥ २२ ॥ अयोध्यायांचसचिवाराज्ञोदशरथस्यच ॥ पुरोहितंपुरस्कृत्यमंत्रयामासुरर्थवत् ॥ २३ ॥ अशोकोविजयश्चैव सिद्धार्थश्चसमाहिताः ॥ मंत्रयन्रामवृद्ध्यर्थंवृत्त्यर्थंनगरस्यच ॥२४॥ सर्वमेवाभिषेकार्थंजयार्हस्यमहात्मनः ॥ कर्तुमर्हथरामस्ययद्यन्मंगलपूर्वकम् ॥ ॥ २५ ॥ इतितेमंत्रिणःसर्वेसंदिश्यचपुरोहितः ॥ नगरान्निर्ययुस्तूर्णंरामदर्शनबुद्धयः ॥ २६ ॥ हरियुक्तंसहस्राक्षोरथमिंद्रइवानघः ॥ प्रययौरथमा स्थायरामोनगरमुत्तमम् ॥ २७ ॥ जग्राहभरतोरश्मीञ्शत्रुघ्नश्छत्रमाददे ॥ लक्ष्मणोव्यजनंतस्यमूर्ध्निसंवीजयंस्तदा ॥ २८ ॥ श्वेतंचवालव्यजनं जगृहेपरितःस्थितः ॥ अपरंचंद्रसंकाशंराक्षसेंद्रोविभीषणः ॥ २९ ॥ ऋषिसंघैस्तदाकाशेदेवैश्चसमरुद्गणैः ॥ स्तूयमानस्यरामस्यशुश्रुवेमधुरध्व निः ॥ ३० ॥ ततःशत्रुंजयंनामकुंजरंपर्वतोपमम् ॥ आरुरोहमहातेजाःसुग्रीवःप्लवगर्षभः ॥ ३१ ॥ नवनागसहस्राणियुरास्थायवानराः ॥ मानुषंविग्रहंकृत्वासर्वाभरणभूषिताः ॥ ३२ ॥ शंखशब्दप्रणादैश्चदुंदुभीनांचनिःस्वनैः ॥ प्रययौपुरुषव्याघ्रस्तांपुरींहर्म्यमालिनीम् ॥ ३३ ॥ ददृशुस्ते समायांतंराघवंसपुरःसरम् ॥ विराजमानंवपुषारथेनातिरथंतदा ॥ ३४ ॥ तेवर्धयित्वाकाकुत्स्थंरामेणप्रतिनंदिताः ॥ अनुजग्मुर्महात्मानंभ्रातृभिः परिवारितम् ॥ ३५ ॥ अमात्यैर्ब्राह्मणैश्चैवतथाप्रकृतिभिर्वृतः ॥ श्रियाविरुरुचेरामोनक्षत्रैरिवचंद्रमाः ॥ ३६ ॥ सपुरोगामिभिस्तूर्यैस्तालस्वस्तिकपा णिभिः ॥ प्रव्याहरद्भिर्मुदितैर्मंगलानिवृतोययौ ॥ ३७ ॥ अक्षतंजातरूपंचगावःकन्याःसहद्विजाः ॥ नरामोदकहस्ताश्चरामस्यपुरतोययुः ॥३८॥

गजानित्यर्थः ॥ ३२ ॥ शंखशब्दप्रणादैः शंखशब्दैर्जनानां हर्षप्रणादैश्चेत्यर्थः । तदुक्तं पाद्मे आगतो रावणद्वेषी कुम्भकर्णखरांतकः ॥ अतिकायेंद्रजिच्छेत्ता महर्षिजनरक्षकः ॥ समाप्तदेवताकार्यः सीतेशो लक्ष्म णानुजः ॥ सत्यैकनिरतः शास्ता परदारसहोदरः ॥ सुग्रीवराज्यदो धन्वी रावणानुजराज्यदः ॥ शरणागतसंत्राता धर्मस्थापनतत्परः ॥ रामो दाशरथिः श्रीमान् भगवान् भरताग्रजः ॥ शरण्यो राम इत्येवं शुश्रुवे काहलध्वनिरिति ॥ ३३ ॥ ते नागराः ॥ ३४ ॥ ते नागराःवर्धयित्वा आशीर्भिरिति शेषः ॥ ३५ ॥ ३६ ॥ तूर्यैस्तूर्यवादकैः स्वस्तिकश्च तालवदेव करतलधार्यः मंगलानि प्रव्याहरद्भिरित्यन्वयः ॥ ३७ ॥ अक्षतादिकं

मंगलार्थं जातरूपमक्षतं संपादितहारिद्रादिवर्णविशेषमित्यर्थः अक्षतादीनां पुरतो यानं तद्ग्राहिपुरुषद्वारा ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ अभ्युच्छ्रयन् अभ्युदश्रयन् ॥ ४२ ॥ ४३ ॥ पितुर्भवनमासाद्य तत्र महात्मनः सुग्रीवादीन्मुख्यान्प्रवेश्य कौसल्याद्या अभिवादय वानरैरिति शेषः इति भरतमब्रवीदिति सम्बन्धः । तत्र पूर्वं सुग्रीवादिप्रवेशबीजमुक्तं पाद्मे । स्वं श्रीमद्भवनं रामो भक्तपादाब्जरेणुभिः ॥ शुद्धीकर्तुमनाः राजा हनूमंतमकल्मषम् ॥ विभीषणं च सुग्रीवं गुहं प्रावेशयत्तदेति आपाततस्तु कौसल्यादिप्रमाणकरणं फलमिति भाति आंतरं मुख्यं तु पाद्मोक्तं बोध्यम् । पूर्वं तु रामेण एकांत एव तद्वंदनं कृतं न तु सर्वसमक्ष

सख्यंचरामःसुग्रीवेप्रभावंचानिलात्मजे ॥ वानराणांचतत्कर्मह्याचचक्षेऽथमंत्रिणाम् ॥ ३९ ॥ श्रुत्वाचविस्मयंजग्मुरयोध्यापुरवासिनः ॥ वानराणां चतत्कर्मराक्षसानांचतद्बलम् ॥ ४० ॥ द्युतिमानेतदाख्यायरामोवानरसंयुतः ॥हृष्टपुष्टजनाकीर्णामयोध्यांप्रविवेशसः॥४१॥ ततोह्यभ्युच्छ्रयन्पौराः पताकाश्चगृहेगृहे ॥ ऐक्ष्वाकाध्युषितंरम्यमाससादपितुर्गृहम् ॥ ४२ ॥ अथाब्रवीद्राजपुत्रोभरतंधर्मिणांवरम् ॥ अर्थोपहितयावाचामधुरंरघुनंदनः ॥ ॥ ४३ ॥ पितुर्भवनमासाद्यप्रवेश्यचमहात्मनः ॥ कौसल्यांचसुमित्रांचकैकेयीमभिवादय ॥ ४४ ॥ तच्चमद्भवनंश्रेष्ठंसाशोकवनिकंमहत् ॥ मुक्तावै दूर्यसंकीर्णंसुग्रीवायनिवेदय ॥ ४५ ॥ तस्यतद्वचनंश्रुत्वाभरतःसत्यविक्रमः ॥ हस्तेगृहीत्वासुग्रीवंप्रविवेशतमालयम् ॥ ४६ ॥ ततस्तैलप्रदीपां श्चपर्यंकास्तरणानिच ॥ गृहीत्वाविविशुःक्षिप्रंशत्रुघ्नेनप्रचोदिताः ॥ ४७ ॥ उवाचचमहातेजाःसुग्रीवंराघवानुजः ॥ अभिषेकायरामस्यदूतानाज्ञापय प्रभो ॥ ४८ ॥ सौवर्णान्वानरेंद्राणांचतुर्णांचतुरोघटान् ॥ ददौक्षिप्रंससुग्रीवःसर्वरत्नविभूषितान् ॥ ४९ ॥ तथाप्रत्यूषसमयेचतुर्णांसागरांभसाम्॥ पूर्णैर्घटैःप्रतीक्षध्वंतथाकुरुतवानराः ॥ ५० ॥ एवमुक्तामहात्मानोवानरावारणोपमाः ॥ उत्पेतुर्गगनंशीघ्रंगरुडाइवशीघ्रगाः ॥ ५१ ॥ जांबवांश्चहनू मांश्चवेगदर्शीचवानरः ॥ ऋषभश्चैवकलशाञ्जलपूर्णानथानयन् ॥ ५२ ॥ नदीशतानांपंचानांजलंकुंभैरुपाहरन् ॥ पूर्वात्समुद्रात्कलशंजलपूर्णमथा नयत् ॥५३॥ सुषेणःसत्त्वसंपन्नःसर्वरत्नविभूषितम् ॥ ऋषभोदक्षिणात्तूर्णंसमुद्राज्जलमानयत् ॥ ५४ ॥ रक्तचंदनकर्पूरैःसंवृतंकांचनंघटम् ॥ गवयः पश्चिमात्तोयमाजहारमहार्णवात् ॥ ५५ ॥ रत्नकुंभेनमहताशीतंमारुतविक्रमः ॥ उत्तराच्चजलंशीघ्रंगरुडानिलविक्रमः ॥ ५६ ॥

मिति गम्यते ॥ ४४ ॥ ४५ ॥ ४६ ॥ ततः शत्रुघ्नेन प्रचोदिता राजभवनरक्षका अभ्यंतरप्रदेशप्रदर्शनार्थं तैलप्रदीपान् गृहीत्वा भरतसुग्रीवयोः पुरः प्रविविशुः ॥ ४७ ॥ उवाचेति रामभवनप्रदर्शनानंतरमिति शेषः राघवानुजो भरतः ॥ ४८ ॥ चतुर्णां चतुःसागरगामिनां जांबवदादीनाम् ॥ ४९ ॥ चतुर्णां सागरांभसां तैः पूर्णैर्घटैः सहिताः प्रत्यूषसमये यथाऽस्मान्प्रतीक्षध्वं प्रतीक्षिष्यध्वं तथा कुरुतेति योजना ॥५०॥५१॥ जांबवांश्चेति अत्र चकारैः सुषेणगवयादि पंचशतवानरपरिग्रहः तद्वक्ष्यति नदीशतानां पंचानामिति । अतएव सुषेणगवययोः समुद्रजलाहर्तृत्वेन वक्ष्यमाणेन न विरोधः ॥५२॥५३॥५४॥५५॥५६॥

आनिन्ये हनूमान् तत्प्रसिद्धं नदीतीर्थसागराणां जलम् ॥५७॥ श्रेष्ठाय पुरोहितायवसिष्ठाय ॥५८॥ प्रयतः प्रयत्नवान् रत्नमयेपीठे रत्नसिंहासने ससीत सीतासहितम् ॥५९॥६०॥ प्रसन्नेननिर्मलेनसकलवैदिकमंत्रमंत्रित्त्वादतिपवित्रेण च सलिलेन नरव्याघ्रमभ्यषिंचन् ॥६१॥ ऋत्विग्भिरित्यादि अत्र वसिष्ठादयः प्रयोजककर्तारः कन्याभिः षोडशसंख्याभिः अभ्यषिंचन् अभ्यषेचयन् ते वसिष्ठादयः नैगमा वणिजः ॥६२॥ नभसिस्थितैः सर्वदेवसहितैर्लोकपालैर्देवतैः सर्वौषधिरसैरभ्यषेचयन् वसिष्ठादयः ॥ ६३ ॥ येनकिरीटेनमनुरभिषिक्तो युक्तः ॥ ६४ ॥ अन्ववायोवंशः येनवसिष्ठेनतद्वंशे राजान उच्यमानगुणायां सभायामभिषेचिताः ॥ ६५ ॥ तस्यां

आजहारसधर्मात्मानीलःसर्वगुणान्वितः ॥ ततस्तैर्वानरश्रेष्ठैरानीतंप्रेक्ष्यतज्जलम् ॥ ५७ ॥ अभिषेकायरामस्यशत्रुघ्नःसचिवैःसह ॥ पुरोहितायश्रेष्ठायसुहृद्भ्यश्चन्यवेदयत् ॥ ५८ ॥ ततःसंप्रयतोवृद्धोवसिष्ठोब्राह्मणैःसह ॥ रामंरत्नमयेपीठेससीतंसंन्यवेशयत् ॥ ५९ ॥ वसिष्ठोविजयश्चैवजाबालिरथकाश्यपः ॥ कात्यायनोगौतमश्चवामदेवस्तथैवच ॥ ६० ॥ अभ्यषिंचन्नरव्याघ्रंप्रसन्नेनसुगंधिना ॥ सलिलेनसहस्राक्षंवसवोवासवंयथा ॥ ॥ ६१ ॥ ऋत्विग्भिर्ब्राह्मणैःपूर्वंकन्याभिर्मंत्रिभिस्तथा ॥ योधैश्चैवाभ्यषिंचंस्तेसंप्रहृष्टैःसनैगमैः ॥ ६२ ॥ सर्वौषधिरसैश्चापिदैवतैर्नभसिस्थितैः ॥ चतुर्भिर्लोकपालैश्चसर्वैर्देवैश्चसंगतैः ॥ ६३ ॥ ब्रह्मणानिर्मितंपूर्वंकिरीटंरत्नशोभितम् ॥ अभिषिक्तःपुरायेनमनुस्तंदीप्ततेजसम् ॥ ६४ ॥ तस्यान्ववायेराजानःक्रमाद्येनाभिषेचिताः ॥ सभायांहेमक्लृप्तायांशोभितायांमहाधनैः ॥ ६५ ॥ रत्नैर्नानाविधैश्चैवचित्रितायांसुशोभनैः ॥ नानारत्नमयेपीठेकल्पयित्वायथाविधि ॥ ६६ ॥ किरीटेनततःपश्चाद्वसिष्ठेनमहात्मना ॥ ऋत्विग्भिर्भूषणैश्चैवसमयोक्ष्यतराघवः ॥ ६७ ॥ छत्रंतस्यचजग्राहशत्रुघ्नःपांडुरंशुभम् ॥ श्वेतंचवालव्यजनंसुग्रीवोवानरेश्वरः ॥ ६८ ॥ अपरंचंद्रसंकाशंराक्षसेंद्रोविभीषणः ॥ मालांज्वलंतींवपुषाकांचनींशतपुष्कराम् ॥ ६९ ॥ राघवायददौवायुर्वासवेनप्रचोदितः ॥ सर्वरत्नसमायुक्तंमणिभिश्चविभूषितम् ॥ ७० ॥ मुक्ताहारंनरेंद्रायददौशक्रप्रचोदितः ॥ प्रजगुर्देवगंधर्वाननृतुश्चाप्सरोगणाः ॥७१ ॥ अभिषेकेतदर्हस्यतदारामस्यधीमतः ॥ भूमिःसस्यवतीचैवफलवंतश्चपादपाः ॥ ७२ ॥ गंधवंतिचपुष्पाणिबभूवूराघवोत्सवे ॥ सहस्रशतमश्वानांधेनूनांचगवांतथा ॥ ७३ ॥ ददौशतवृषान्पूर्वंद्विजेभ्योमनुजर्षभः ॥ त्रिंशत्कोटीर्हिरण्यस्यब्राह्मणेभ्योददौपुनः ॥ ७४ ॥ नानाभरणवस्त्राणिमहार्हाणिचराघवः ॥ अर्करश्मिप्रतीकाशांकांचनींमणिविग्रहाम् ॥ ७५ ॥ सुग्रीवायस्रजंदिव्यांप्रायच्छन्मनुजाधिपः ॥ वैदूर्यमयचित्रेचचंद्ररश्मिविभूषिते ॥ ७६ ॥

सभायां पीठे दीप्ततेजसं रामं कल्पयित्वोपवेश्य यथाविध्यभिषिच्य ॥६६॥पश्चादभिषेकानंतरं तेन किरीटेन तेन वासिष्ठेन राघवः समयोक्ष्यत संयुक्तः कृतः ऋत्विग्भिश्च भूषणैः संयुक्तः कृतः आर्षो लङ् ॥६७॥६८॥ शतपुष्करा शतपद्मनिर्मिताम् ॥ ६९ ॥ ७० ॥ शक्रप्रचोदित इति वायुरित्यनुकृष्यते वायुद्वारा दिव्यां स्वीयां कांचनमालां मुक्ताहारं च भगवान्महेंद्रो ददावित्यर्थः ॥७१॥ तदर्हस्य देवगीतनृत्ताद्यर्हस्य अभिषेके सतीत्यर्थः ॥ ७२ ॥ सहस्रशतं लक्षं धेनूनां गवां नवप्रसूतगवामित्यर्थः । शतशब्दोऽनंतवाची वा ॥ ७३ ॥ पूर्वं गवादिदानानि कृत्वा तदनंतरं भूयसीत्वेन त्रिंशत्कोटीर्हिरण्यं ददौ ॥ ७४ ॥ ७५ ॥ ७६॥

॥ ७७ ॥ ७८ ॥ अवेक्षमाणा तत्कृतमुपकारं चिंतयंती प्रददौ प्रदातुमियेषेत्यर्थः । आत्मनः कंठाद्धारमवमुच्य दित्सया भर्त्रनुमतये भर्तारमवैक्षत ॥ ७९ ॥ ८० ॥ अथ भर्त्रनुमत्यनंतरं सा वायुपुत्राय ददाविति शेषः ॥ ८१ ॥ तत्र हेतुः पौरुषादि तेजआदि च यत्र हनूमति नित्यदा नित्यं आर्षो दाप्रत्ययः॥८२॥८३॥८४॥८५॥कामैः स्रक्चंदनान्नपानाद्यैः॥८६॥वीक्ष्य मैंदद्विविदनीलान् दृष्ट्वातेभ्यः सर्वान्काम गुणान् अत्युत्तमान् रत्नादीन्ददौ ॥ ८७॥८८॥८९ ॥ लब्ध्वा कुलधनमिति । स्वकुलधनं लंकाराज्यमित्यर्थः यत्तु इक्ष्वाकुकुलदैवतं रंगं विमानमिति तन्न पाठेनतारसमाप्तिसमये तद्दानस्योक्तत्वात् । तथा च तत्र

वालिपुत्रायधृतिमानंगदायांगदेददौ ॥ मणिप्रवरजुष्टंतंमुक्ताहारमनुत्तमम् ॥ ७७ ॥ सीतायैप्रददौरामश्चंद्ररश्मिसमप्रभम् ॥ अरजेवाससीदिव्ये शुभान्याभरणानिच ॥ ७८ ॥ अवेक्षमाणावैदेहीप्रददौवायुसूनवे ॥ अवमुच्यात्मनःकंठाद्धारंजनकनंदिनी ॥७९॥ अवैक्षतहरीन्सर्वान्भर्तारंचमुहुर्मुहुः ॥ तामिंगितज्ञःसंप्रेक्ष्यबभाषेजनकात्मजाम् ॥ ८० ॥ प्रदेहिसुभगेहारंयस्यतुष्टासिभामिनि ॥ अथसावायुपुत्रायतंहारमसितेक्षणा ॥ ८१ ॥ तेजोधृतिर्यशोदाक्ष्यंसामर्थ्यंविनयोनयः ॥ पौरुषंविक्रमोबुद्धिर्यस्मिन्नेतानिनित्यदा ॥८२॥ हनूमांस्तेनहारेणशुशुभेवानरर्षभः ॥ चंद्रांशुचयगौरेणश्वेताभ्रेणयथाचलः ॥ ८३॥ सर्वेवानरवृद्धाश्चयेचान्येवानरोत्तमाः ॥ वासोभिर्भूषणैश्चैवयथार्हंप्रतिपूजिताः ॥ ८४ ॥ विभीषणोथसुग्रीवोहनूमाञ्जांबवांस्तथा ॥ सर्वेवानरमुख्याश्चरामेणाक्लिष्टकर्मणा ॥ ८५ ॥ यथार्हंपूजिताःसर्वैःकामैरत्नैश्चपुष्कलैः ॥ प्रहृष्टमनसःसर्वेजग्मुरेवयथागतम् ॥ ८६ ॥ ततोद्विविदमैंदाभ्यांनीलायचपरंतपः ॥ सर्वान्कामगुणान्वीक्ष्यप्रददौवसुधाधिपः ॥ ८७ ॥ दृष्ट्वासर्वेमहात्मानस्ततस्तेवानरर्षभाः ॥ विसृष्टाःपार्थिवेंद्रेणकिष्किंधांसमुपागमन् ॥ ८८ ॥ सुग्रीवोवानरश्रेष्ठोदृष्ट्वारामाभिषेचनम् ॥ पूजितश्चैवरामेणकिष्किंधांप्राविशत्पुरीम् ॥ ८९ ॥ विभीषणोपिधर्मात्मासहतैर्नैर्ऋतर्षभैः ॥ लब्ध्वाकुलधनंराजालंकांप्रायान्महायशाः ॥ ९० ॥ सराज्यमखिलंशासन्निहतारिर्महायशाः ॥ राघवःपरमोदारःशशासपरयामुदा ॥ उवाचलक्ष्मणंरामोधर्मज्ञंधर्मवत्सलः ॥ ९१ ॥ आतिष्ठधर्मज्ञमयासहेमांगांपूर्वराजाध्युषितांबलेन ॥ तुल्यंयथात्वांपितृभिःपुरस्तात्तैर्यौवराज्येधुरमुद्वहस्व ॥ ९२ ॥

विभीषणं प्रति रामवचनं यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी।तावद्रमस्व राज्यस्थः काले मम पदं व्रज।इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे । श्रीरंगस्वामिनंस्वार्चामिक्ष्वाकुकुलदैवतम्।रंगं विमानमादाय लंकां प्रायाद्विभीषण इति ॥९०॥ शासन् दुष्टनिग्रहं कुर्वन् शशास पलयामास ॥ ९१ ॥ चतुरंगबलेन सह पूर्वराजाध्युषितामिमां गां मया सहातिष्ठ । पूर्वे राजानो मन्वादयस्तैरध्युषितां पालितां कीदृशमास्थानं मया भुवः कर्तव्यं भवता सहेत्यत्राह तुल्यमित्यादि । पुरस्तान्महाराज्याभिषेकात्पूर्वं पितृभिः स्वपितृभिस्तुल्यं यथा भवति तथा तैर्या यौवराज्ये धूर्धृता तां धुरमुद्वहस्व आत्मना सह वनवासे दुःखानुभवाद्राज्ये

सहसुखानुभवार्थं लक्ष्मणं प्रति यौवराज्यप्रार्थनेति भावः॥९२॥सर्वात्मना पर्यनुनीयमानः ज्येष्ठे भरते विद्यमानेऽहं यौवराज्यानर्ह इति निषेधे क्रियमाणेपि पुनः पुनरनुनीयमान इत्यर्थः । नियुज्यमानोपि न्यायप्रा
प्तस्वीययौवराज्येन भरतेनानुनीयमानोपि योगं यौवराज्यसंसर्गं नोपैति नेच्छति स्म । ततो भरतं यौवराज्येभ्यषेचयत् ॥ ९३ ॥ पौंडरीकाश्वमेधेत्यादिरुत्तरकांडार्थसंक्षेपः । पौंडरीकाश्वमेधाभ्यामिति सामान्यत

सर्वात्मनापर्यनुनीयमानोयदानसौमित्रिरुपेतियोगम् ॥ नियुज्यमानोभुवियौवराज्येततोऽभ्यषिंचद्भरतंमहात्मा ॥ ९३ ॥ पौंडरीकाश्वमेधाभ्यांवा
जिमेधेनचासकृत् ॥ अन्यैश्चविविधैर्यज्ञैरयजत्पार्थिवात्मजः ॥ ९४ ॥ राज्यंदशसहस्राणिप्राप्यवर्षाणिराघवः ॥ दशाश्वमेधानाजह्रेसदश्वान्भूरिद
क्षिणान् ॥ ९५ ॥ आजानुलंबिबाहुःसमहावक्षाःप्रतापवान् ॥ लक्ष्मणानुचरोरामःशशासपृथिवीमिमाम् ॥ ९६ ॥ राघवश्चापिधर्मात्माप्राप्यराज्यम
नुत्तमम् ॥ ईजेबहुविधैर्यज्ञैःससुतभ्रातृबांधवः ॥ ९७ ॥ नपर्यदेवन्विधवानचव्यालकृतंभयम् ॥ नव्याधिजंभयंचासीद्रामेराज्यंप्रशासति ॥ ९८ ॥
निर्दस्युरभवल्लोकोनानर्थंकश्चिदस्पृशत् ॥ नचस्मवृद्धावालानांप्रेतकार्याणिकुर्वते ॥ ९९ ॥ सर्वंमुदितमेवासीत्सर्वोधर्मपरोऽभवत् ॥ राममेवानुपश्यं
तोनाभ्यहिंसन्परस्परम् ॥ १०० ॥ आसन्वर्षसहस्राणितथापुत्रसहस्रिणः ॥ निरामयाविशोकाश्चरामेराज्यंप्रशासति ॥ १०१ ॥ नित्यमूलानित्यफ
लास्तरवस्तत्रपुष्पिताः ॥ कामवर्षीचपर्जन्यःसुखस्पर्शश्चमारुतः ॥ २ ॥ स्वकर्मसुप्रवर्तंतेतुष्टाःस्वैरेवकर्मभिः ॥ आसन्प्रजाधर्मपरारामेशासतिनानृ
ताः ॥ ३ ॥ सर्वेलक्षणसंपन्नाःसर्वेधर्मपरायणाः ॥ दशवर्षसहस्राणिरामोराज्यमकारयत् ॥ ४ ॥ धर्म्यंयशस्यमायुष्यंराज्ञांचविजयावहम् ॥
आदिकाव्यमिदंचार्षंपुरावाल्मीकिनाकृतम् ॥ ५ ॥ यःशृणोतिसदालोकेनरःपापात्प्रमुच्यते ॥ पुत्रकामश्चपुत्रान्वैधनकामोधनानिच ॥ ६ ॥ लभते
मनुजोलोकेश्रुत्वारामाभिषेचनम् ॥ महींविजयतेराजारिपूंश्चाप्याधितिष्ठति ॥ ७ ॥ राघवेणयथामातासुमित्रालक्ष्मणेनच ॥ भरतेनचकैकेयीजी
वत्पुत्रास्तथास्त्रियः ॥ ८ ॥ श्रुत्वारामायणमिदंदीर्घमायुश्चविंदति ॥ रामस्यविजयंचेमंसर्वमक्लिष्टकर्मणः ॥ ९ ॥ शृणोतियइदंकाव्यंपुरावाल्मी
किनाकृतम् ॥ श्रद्दधानोजितक्रोधोदुर्गाण्यतितरत्यसौ ॥ ११० ॥ समागम्यप्रवासांतेरमंतेसहबांधवैः ॥ शृण्वंतियइदंकाव्यंपुरावाल्मीकिनाकृतम् ॥
॥ ११ ॥ तेप्रार्थितान्वरान्सर्वान्प्राप्नुवंतीहराघवात् ॥ श्रवणेनसुराःसर्वेप्रीयंतेसंप्रशृण्वताम् ॥ १२ ॥ विनायकाश्चशाम्यंतिगृहेतिष्ठतियस्यवै ॥
विजयेतमहींराजाप्रवासीस्वस्तिमान्भवेत् ॥ १३ ॥

उक्त्वा तत्रैव विशेषमाह वाजिमेधेन चासकृदिति ॥९४॥ ९५ ॥९६॥ ९७ ॥९८॥९९॥१०० ॥ वर्षसहस्राणि आसन् जना इति शेषः ॥१०१॥२॥३॥४॥आर्षं ऋषिर्वेदस्तत्संबंधि वेदोपबृंहणमितियावत
पुरा पुरातनम् ॥ ५ ॥ ६ ॥ रामाभिषेचनं तदवधिकमित्यर्थः । रिपूनधितिष्ठति तान्विजयते इत्यर्थः ॥ ७ ॥ ८ ॥ ९॥११०॥११॥ संप्रशृण्वतामिति पाठः ॥ १२ ॥ विनायकाः विघ्नकारिणो देवगणवि

शेषाः ॥ १३ ॥ स्त्रियो रजस्वलाः शुद्धस्नानानंतरं षोडशदिनावधि ॥ १४ ॥१५॥ सदेत्यनेन कालत्रयेपीत्यर्थः ॥१६॥१७॥१८॥१९ ॥ ये ऋषिणा कृतां मुनिनाकृतां रामस्य संहितां रामायणमित्यर्थः । लिखंति च चात् शृण्वंति त्रिविष्टपे ब्रह्मलोके ॥ शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा ॥ स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदेति वचनात् । अत्र फलश्रुतिश्लोकाः कतकव्याख्याने नोपलभ्यंते ॥ १२० ॥ १२१ ॥ १२२ ॥ रेखांयेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये युद्धकांडे त्रिंशदधिकशततमः सर्गः ॥ १३० ॥ कतकरीत्या एकविंशत्यधिकशततमः

प्रणम्यशिरसा स्त्रियोरजस्वलाःश्रुत्वापुत्रान्सूयुरनुत्तमान् ॥ पूजयंश्चपठंश्चैनमितिहासंपुरातनम् ॥ १४ ॥ सर्वपापैःप्रमुच्येतदीर्घमायुरवाप्नुयात् ॥ प्रणम्यशिरसा नित्यंश्रोतव्यंक्षत्रियैर्द्विजात् ॥ १५ ॥ ऐश्वर्यंपुत्रलाभश्चभविष्यतिनसंशयः ॥ रामायणमिदंकृत्स्नंशृण्वतःपठतःसदा ॥ १६ ॥ प्रीयतेसततंरामः सहिविष्णुःसनातनः ॥ आदिदेवोमहाबाहुर्हरिर्नारायणःप्रभुः ॥ १७ ॥ एवमेतत्पुरावृत्तमाख्यानंभद्रमस्तुवः ॥ प्रव्याहरतविस्रब्धंबलंविष्णोःप्रवर्धताम् ॥ १८ ॥ देवाश्चसर्वेतुष्यंतिग्रहणाच्छ्रवणात्तथा ॥ रामायणस्यश्रवणेतृप्यंतिपितरःसदा ॥ १९ ॥ भक्त्यारामस्ययेचेमांसंहितामृषिणाकृताम् ॥ येलिखंतीहचनरास्तेषांवासस्त्रिविष्टपे ॥ २० ॥ कुटुंबवृद्धिंधनधान्यवृद्धिंस्त्रियश्चमुख्याःसुखमुत्तमंच ॥ श्रुत्वाशुभंकाव्यमिदंमहार्थंप्राप्नोतिसर्वांभुविचार्थसिद्धिम् ॥ १२१ ॥ आयुष्यमारोग्यकरंयशस्यंसौभ्रातृकंबुद्धिकरंशुभंच ॥ श्रोतव्यमेतन्नियमेनसद्भिराख्यानमोजस्करमृद्धिकामैः ॥ १२२ ॥ हरिःओम् ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकांडे सर्वजनपरिवृतस्यराजाधिराजस्यश्रीरामचंद्रस्यपट्टाभिषेकभद्रारव्यंनामत्रिंशदधिकशततमःसर्गः ॥ १३० ॥ "इतिश्रीगोमतीतीरनैमिषारण्याश्रमेधसततंतुवाटगतमुनींद्रद्विजेंद्रादिवसुधाधिपेंद्रपरिवृतस्यमुनिवृंदारकवृंदवंद्यमानकोरकाकारचरणयुगलस्यसद्भ्रातृसन्मित्रसन्मंत्रिसहितस्यसाकेतपुरवराधीश्वरस्यदीनानांदैन्यहरणउदीर्णवीर्योत्सिक्तस्यरावणवधार्थं देवैःप्रार्थितस्यरघुकुलतिलकसंभूतस्यश्रीसीताविशेषकस्यलक्ष्मीपतेः साम्यांशस्यलक्ष्मीवतोराजाधिराजस्यलोकाभिरामस्यनिकटोक्तयोःश्रीरामात्मजयोरादिकविशिष्ययोः कुशलवयोराख्याने श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्रिकायांसंहितायांश्रीमद्युद्धकांडेपंचविंशोह्निवर्तमानकथाप्रसंगःसमाप्तः ॥ अतःपरमुत्तरकांडम् ॥ तस्यायमाद्यःश्लोकः ॥ प्राप्तराज्यस्यरामस्यराक्षसानांवधेकृते ॥ आजग्मुर्मुनयःसर्वे राघवंप्रतिनंदितुम् ॥ १ ॥

सर्गः ॥ १२१ ॥ निर्मलं कतकक्षोदादपि रामायणार्णवम् ॥ अत्यंतं निर्मलं चक्रे रामः स्वमतिवाससा ॥ १ ॥ भट्टनागेशपूज्येन सेतुः श्रीरामवर्मणा ॥ कृतः सर्वोपकृतये श्रीमद्रामायणांबुधौ ॥ २ ॥ युद्धे हतो दशग्रीवः सगर्वो वीतकल्मषः । पश्यन् रामात्मकं विश्वं स्वयं रामो बभूव ह ॥ ३ ॥ युद्धे युद्धादिभिः श्रांतान्वानरान्प्रतिपूज्य च । स्वानंदेनास्थितोयोध्यां रामः पातु स सर्वतः ॥ ४ ॥

इदं श्रीमद्रामायणं सतिलकटीकं युद्धकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालये मुद्रितम् । संवत् १९६२, शके १८२७.

अथ माल्यवदापीडितदेवगणस्य विष्णुनाऽभयदानं श्रुत्वा नारायणप्रेरकदेवगणवधे तेषां प्रवृत्तिः तैर्वध्यमाना इति ॥ १ ॥ २ ॥ ३ ॥ प्रजाध्यक्षस्य भगवतः प्रजापतेःप्रजा देवनरतिर्यगादिरूपाः रिपुबाधनैः रिपूणां बाधनं बाधस्तैर्हेतुभिरित्यर्थः ॥ ४ ॥ शरणानि शरणार्हाणि देवपित्रतिथिपशुपक्ष्यादिरक्षणार्हाणि देवान्प्रच्याव्य ये सर्वे स्वर्गे देववत्क्रीडंति ॥ ५ ॥ समरे संग्रामे उद्धर्ष उत्साहो येषां ते ॥ ६ ॥ ॥ ७ ॥ अशिवमसौम्यं रौद्रमिति यावत् । रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्याशिवान्येति श्रुतेः ॥८॥ सुकेशं प्रति साक्षेपः सुकेशस्य स्वेनोज्जीवितत्वान्माल्यवदादीनां तत्पुत्रत्वात्स्वकर्तृकतत्संहारस्यानौ

तैर्वध्यमानादेवाश्चऋषयश्चतपोधनाः ॥ भयार्ताःशरणंजग्मुर्देवदेवंमहेश्वरम् ॥ १ ॥ जगत्सृष्ट्यंतकर्तारमजमव्यक्तरूपिणम् ॥ आधारंसर्वलोकानामाराध्यंपरमंगुरुम् ॥ २ ॥ तेसमेत्यतुकामारिंत्रिपुरारिंत्रिलोचनम् ॥ ऊचुःप्रांजलयोदेवाभयगद्गदभाषिणः ॥ ३ ॥ सुकेशपुत्रैर्भगवन्पितामहवरोद्धतैः ॥ प्रजाध्यक्षप्रजाःसर्वाबाध्यंतेरिपुबाधनैः ॥ ४ ॥ शरणान्यशरण्यानिआश्रमाणिकृतानिनः ॥ स्वर्गाच्चदेवान्प्रच्याव्यस्वर्गेक्रीडंतिदेववत् ॥ ५ ॥ अहंविष्णुरहंरुद्रोब्रह्माहंदेवराडहम् ॥ अहंयमश्चवरुणश्चंद्रोहंरविरप्यहम् ॥ ६ ॥ इतिमालीसुमालीचमाल्यवांश्चैवराक्षसाः ॥ बाधंते समरोद्धर्षायेचतेषांपुरःसराः ॥ ७ ॥ तन्नोदेवभयार्तानामभयंदातुमर्हसि ॥ अशिवंवपुरास्थायजहिवैदेवकंटकान् ॥८ ॥ इत्युक्तस्तुसुरैःसर्वैःकपर्दीनीललोहितः ॥ सुकेशंप्रतिसापेक्षःप्राहदेवगणान्प्रभुः ॥९॥ अहंतान्नहनिष्यामिममावध्याहितेसुराः॥ किंतुमंत्रंप्रदास्यामियोवैतान्निहनिष्यति ॥१० ॥ एतमेवसमुद्योगंपुरस्कृत्यमहर्षयः ॥ गच्छध्वंशरणंविष्णुंहनिष्यतिसतान्प्रभुः ॥ ११॥ ततस्तुजयशब्देनप्रतिनंद्यमहेश्वरम् ॥ विष्णोःसमीपमाजग्मुर्निशाचरभयार्दिताः ॥ १२ ॥ शंखचक्रधरंदेवंप्रणम्यबहुमान्यच ॥ ऊचुःसंभ्रांतवद्वाक्यंसुकेशतनयान्प्रति ॥ १३ ॥ सुकेशतनयैर्देवत्रिभिस्त्रेताग्निसन्निभैः ॥ आक्रम्यवरदानेनस्थानान्यपहृतानिनः ॥ १४ ॥ लंकानामपुरीदुर्गात्रिकूटशिखरेस्थिता ॥ तत्रस्थिताःप्रबाधंतेसर्वान्नःक्षणदाचराः ॥ ॥ १५ ॥ सत्वमस्माद्धितार्थायजहितान्मधुसूदन ॥ शरणंत्वांवयंप्राप्तागतिर्भवसुरेश्वर ॥१६ ॥ चक्रकृत्तास्यकमलान्निवेदययमायवै ॥ भयेष्वभयदोस्माकंनान्योस्तिभवताविना ॥ १७ ॥ राक्षसान्समरेहृष्टान्सानुबंधान्मदोद्धतान् ॥ नुदत्वंनोभयंदेवनीहारमिवभास्करः ॥ १८ ॥ इत्येवंदैवतैरुक्तोदेवदेवोजनार्दनः ॥ अभयंभयदोऽरीणांदत्त्वादेवानुवाचह ॥ १९ ॥ सुकेशंराक्षसंजानेईशानवरदर्पितम् ॥ तांश्चास्यतनयाञ्जानेयेषांज्येष्ठःसमाल्यवान् ॥ २० ॥ तानहंसमतिक्रांतमर्यादान्राक्षसाधमान् ॥ निहनिष्यामिसंक्रुद्धःसुराभवतविज्वराः ॥ २१॥ इत्युक्तास्तेसुराःसर्वेविष्णुनाप्रभविष्णुना ॥ यथावासंययुर्हृष्टाः प्रशंसंतोजनार्दनम् ॥ २२ ॥ विबुधानांसमुद्योगंमाल्यवांस्तुनिशाचरः ॥ श्रुत्वातौभ्रातरौवीराविदंवचनमब्रवीत् ॥ ॥ २३ ॥ अमराऋषयश्चैवसंगम्यकिलशंकरम् ॥ अस्मद्वधंपरीप्संतइदंवचनमब्रुवन् ॥ २४ ॥

चित्यंमन्वान इत्यर्थः॥९॥ममाऽवध्याः उक्तहेतोर्वधानर्हाः मंत्रमुपायम्॥१०॥एतमेव समुद्योगं न तु कालांतरीयमित्यर्थः॥११॥१२॥संभ्रांतवत्संभ्रांतार्हंसुकेशतनयान्प्रति तानुद्दिश्येत्यर्थः ॥१३॥१४॥१५॥१६॥ ॥ १७ ॥ सानुबंधान्सानुचरान् राक्षसान् नहीति शेषः नो भयं च नुद ॥ १८॥१९ ॥ २० ॥ अतिक्रांतमर्यादान्मर्यादा वध्यावध्यव्यवस्था ॥ २१॥२२ ॥ तौ भ्रातरौ सुमालिमालिनौ ॥ २३ ॥ परीप्संतः

इच्छंतः ॥ २४ ॥ पदे पदे प्रतिक्षणम् ॥ २५ ॥ प्रजापते दुष्टनिग्रहद्वारा प्रजारक्षक ॥२६॥२७॥ शिरः करं च धुन्वानः विषवृक्षोपीति न्यायेन स्ववधानर्हा इत्याशयेनेति भावः ॥२८॥ तदेवाह अवध्या इति ॥ २९ ॥ ३० ॥ ते देवाः मंत्रमवाप्येत्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥ चिंतार्हत्वं दर्शयति हिरण्येत्यादि ॥ ३४ ॥ ३५ ॥ अपराजिता इति च्छेदः ॥ ३६ ॥ ३७ ॥ ३८ ॥ अश्विनाविव वास

सुकेशतनयादेववरदानबलोद्धताः ॥ बाधंतेऽस्मान्समुद्वृत्ताघोररूपाःपदेपदे ॥ २५ ॥ राक्षसैरभिभूताःस्मोनशक्ताःस्मप्रजापते ॥ स्वेषुसद्मसुसंस्थातुं भयात्तेषांदुरात्मनाम् ॥ २६ ॥ तदस्माकंहितार्थायजहितांश्चत्रिलोचन ॥ राक्षसान्हुंकृतेनैवदहप्रदहतांवर ॥ २७ ॥ इत्येवंत्रिदशैरुक्तोनिशम्यांधकसूदनः ॥ शिरःकरंचधुन्वानइदंवचनमब्रवीत् ॥ २८ ॥ अवध्याममतेदेवाःसुकेशतनयारणे ॥ मंत्रंतुवःप्रदास्यामियस्तान्वैनिहनिष्यति ॥२९॥ योसौचक्रगदापाणिःपीतवासाजनार्दनः ॥ हरिर्नारायणःश्रीमाञ्छरणंतंप्रपद्यथ ॥ ३० ॥ हरादवाप्यतेमंत्रंकामारिमभिवाद्यच ॥ नारायणालयंप्राप्यतस्मैसर्वंन्यवेदयन् ॥ ३१ ॥ ततोनारायणेनोक्तादेवाइंद्रपुरोगमाः ॥ सुरारींस्तान्हनिष्यामिसुराभवतनिर्भयाः ॥ ३२ ॥ देवानांभयभीतानांहरिणाराक्षसर्षभौ ॥ प्रतिज्ञातोवधोऽस्माकंचिंत्यतांयदिहक्षमम् ॥ ३३ ॥ हिरण्यकशिपोर्मृत्युरन्येषांचसुरद्विषाम् ॥ नमुचिःकालनेमिश्चसंह्रादोवीरसत्तमः ॥ ३४ ॥ राधेयोबहुमायीचलोकपालोऽथधार्मिकः ॥ यमलार्जुनौचहार्दिक्यःशुंभश्चैवनिशुंभकः ॥ ३५ ॥ असुरादानवाश्चैवसत्त्ववंतोमहाबलाः ॥ सर्वेसमरमासाद्यनश्रूयंतेऽपराजिताः ॥ ३६ ॥ सर्वैःक्रतुशतैरिष्टंसर्वेमायाविदस्तथा ॥ सर्वेसर्वास्त्रकुशलाःसर्वेशत्रुभयंकराः ॥ ३७ ॥ नारायणेननिहताः शतशोथसहस्रशः ॥ एतज्ज्ञात्वातुसर्वेषांक्षमंकर्तुमिहार्हथ ॥दुःखंनारायणंजेतुंयोनोहंतुमिहेच्छति ॥ ३८ ॥ ततःसुमालीमालीचश्रुत्वामाल्यवतोवचः ॥ ऊचतुर्भ्रातरंज्येष्ठमश्विनाविववासवम् ॥ ३९ ॥ स्वधीतंदत्तमिष्टंचऐश्वर्यंपरिपालितम् ॥ आयुर्निरामयंप्राप्तंसुधर्मःस्थापितःपथि ॥४०॥ देवसागरमक्षोभ्यंशस्त्रैःसमवगाह्यच ॥ जिताद्विषोह्यप्रतिमास्तन्नोमृत्युकृतंभयम् ॥ ४१ ॥ नारायणश्चरुद्रश्चशक्रश्चापियमस्तथा ॥ अस्माकंप्रमुखेस्थातुंसर्वेबिभ्यतिसर्वदा ॥ ४२ ॥ विष्णोर्द्वेषस्यनास्त्येवकारणंराक्षसेश्वर ॥ देवानामेवदोषेणविष्णोःप्रचलितंमनः ॥ ४३ ॥

वमिति । भगांशाविवेति पाठे भगस्तदंशोऽर्यमा ताविवेत्यर्थः ॥ ३९ ॥ निरामयं नीरोगं सुधर्मः शोभनो धर्मः पथि स्थापितः प्राक्सम्यगनुष्ठितैरध्ययनादिभिरिति शेषः । यतो द्विषो देवा जितास्तत्तस्मादस्माकं मृत्युकृतं भयं नास्तीत्यर्थः । कर्तव्यावशेषाभावान्मृत्यावपि न क्षतिरिति भावः ॥ ४० ॥ ४१ ॥ ४२ ॥ विष्णोर्द्वेषस्य कारणं नास्ति अस्माभिस्तदपराधाकरणादिति भावः । विष्णोर्दोषश्च नास्त्यत्रकारणम् ।

राक्षसेश्वरेति पाठे विष्णोरस्मद्वधप्रतिज्ञायां यः कारणं स्यात्तादृशो विष्णोः सहजो द्वेषो नास्तीत्यर्थः । कथं तर्हीदानीमस्मासु द्वेषो विष्णोरत आह देवानामिति दोषेणोपजापेन ॥ ४३ ॥ जिघांसामः । स्वार्थे सन्नर्थः हन्म इत्यर्थः ॥४४॥४५॥४६॥४७॥ खरादयो वाहनानि ॥४८॥ सृमरो गवयः । सृमरचमरयोर्नीलश्वेतपुच्छयोगाद्भेद इति तीर्थः॥४९॥ लंकाविपर्ययं लंकानाशं लंकालयानि भूतानि तत्रत्यानि दैवतानि

तस्माद्वयैवसहिताःसर्वेऽन्योन्यसमावृताः ॥ देवानेवजिघांसामोयेभ्योदोषः समुत्थितः ॥ ४४ ॥ एवंसंमन्त्र्यबलिनःसर्वसैन्यमुपासिताः ॥ उद्योगंघो षयित्वातुसर्वेनैर्ऋतपुंगवाः ॥ ४५ ॥ युद्धायनिर्ययुःक्रुद्धाजंभवृत्रादयोयथा ॥ इतितेराममसंमंत्र्यसर्वोद्योगेनराक्षसाः ॥ ४६ ॥ युद्धायनिर्ययुःसर्वे महाकायामहाबलाः ॥ स्यंदनैर्वारणैश्चैवहयैश्चकरिसन्निभैः ॥ ४७ ॥ खरैर्गोभिरथोष्ट्रैश्चशिशुमारैर्भुजंगमैः ॥ मकरैःकच्छपैर्मीनैर्विहंगैर्गरुडोपमैः ॥ ॥ ४८ ॥ सिंहैर्व्याघ्रैर्वराहैश्चसृमरैश्चमरैरपि ॥ त्यक्त्वालंकांगताःसर्वेराक्षसाबलगर्विताः ॥ ४९ ॥ प्रयातादेवलोकाययोद्धुंदैवतशत्रवः ॥ लंकाविपर्य यंदृष्ट्वायानिलंकालयान्यथ ॥ ५० ॥ भूतानिभयदर्शीनिविमनस्कानिसर्वशः ॥ रथोत्तमैरुह्यमानाःशतशोथसहस्रशः॥५१॥ प्रयाताराक्षसास्तूर्णंदे वलोकंप्रयत्नतः ॥ रक्षसामेवमार्गेणदैवतान्यपचक्रमुः ॥५२॥ भौमाश्चैवांतरिक्षाश्चकालाज्ञप्ताभयावहाः ॥ उत्पाताराक्षसेन्द्राणामभवायसमुत्थिताः ॥ ५३ ॥ अस्थीनिमेघाववृषुरुष्णंशोणितमेवच ॥ वेलांसमुद्राश्चोत्क्रांताश्चेलुश्चाप्यथभूधराः ॥ ५४ ॥ अट्टहासान्विमुंचंतोघननादसमस्वनाः ॥ वाश्यंत्यश्चशिवास्तत्रदारुणंघोरदर्शनाः ॥ ५५ ॥ संपतंत्यथभूतानिदृश्यंतेचयथाक्रमम् ॥ गृध्रचक्रंमहच्चात्रप्रज्वालोद्गारिभिर्मुखैः ॥५६॥ रक्षोगणस्यो परिष्टात्परिभ्रमतिकालवत् ॥ कपोतारक्तपादाश्चसारिकाविद्रुतायुयुः ॥ ५७ ॥ काकावाश्यंतितत्रैवबिडालायद्विपादिकाः ॥ उत्पातांस्ताननादृत्यरा क्षसावलदर्पिताः ॥ ५८ ॥ यांत्येवननिवर्ततेमृत्युपाशावपाशिताः ॥ माल्यवांश्चसुमालीचमालीचसुमहाबलः ॥ ५९ ॥ पुरस्सराराक्षसानांज्वलि ताइवपावकाः ॥ माल्यवंतंतुतेसर्वेमाल्यवंतमिवाचलम् ॥६०॥ निशाचराआश्रयंतिधातारमिवदेवताः ॥ तद्बलंराक्षसेंद्राणांमहाभ्रघननादितम् ॥६१॥ जयेप्सयादेवलोकंययौमालिवशेस्थितम् ॥ राक्षसानांसमुद्योगंतंतुनारायणःप्रभुः ॥ ६२ ॥

विमनस्कान्यासन् ॥५०॥५१॥ रक्षसामेव मार्गेण तथात्रया संहैवापचक्रमुरागताः ॥ ५२ ॥ कालाज्ञप्ताः कालप्रेरिता भौमादय उत्पाताः ॥ ५३ ॥ ५४ ॥ घननादेन मेघस्वनेन समः स्वनो येषांते विमुंचंत इत्यस्य जाता इति शेषः । एवं वाश्यंत्य इत्यस्यापि ॥५५॥ गृध्रचक्रं गृध्रसमूहः ॥ ५६ ॥५७॥५८॥ मृत्युपाशैरवपाशिताः संजातबंधनाः ॥५९॥ माल्यवंतमचलं माल्यवदाख्यकुलपर्वतम् ॥ ६० ॥ महाभ्रघननादितं

महाभ्रमेघसमूहवन्नादितं संजातनादम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ श्रोणिसूत्रं खड्गबंधनभूतम् ॥ ६५ ॥ ॥ ६६ ॥ ६७ ॥ ६८ ॥ सुपर्णपक्षानिलेन नुन्नपक्षं क्षोभितबलं चलोपलं चला उपला यस्य तत् ॥ ६९ ॥ विग्रह आकारः ॥ ७० ॥ नर्दमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे षष्ठः सर्गः ॥ ६ ॥ अथ राक्षसोपरुद्धेन हरिणा तद्विद्रावणं नारायणगिरिमिति रूपकमिदम्



देवदूतादुपश्रुत्यचक्रेयुद्धेतदामनः ॥ ससज्जायुधतूणीरोवैनतेयोपरिस्थितः ॥ ६३ ॥ आसाद्यकवचंदिव्यंसहस्रार्कसमद्युति ॥ आवध्यशरसंपूर्णेइषुधी विमलेतदा ॥ ६४ ॥ श्रोणिसूत्रंचखड्गंचविमलंकमलेक्षणः ॥ शंखचक्रगदाशार्ङ्गखड्गांश्चैववरायुधान् ॥६५॥ संपूर्णगिरिसंकाशंवैनतेयमथास्थितः ॥ राक्षसानामभावायययौतूर्णतरंप्रभुः ॥ ६६ ॥ सुपर्णपृष्ठेसबभौश्यामःपीतांबरोहरिः ॥ कांचनस्यगिरेःशृंगेसतडित्तोयदोयथा ॥ ६७ ॥ ससिद्धदेवर्षिमहोरगैश्चगंधर्वयक्षैरुपगीयमानः ॥ समाससादासुरसैन्यशत्रुश्चक्रासिशार्ङ्गायुधशंखपाणिः ॥ ६८ ॥ सुपर्णपक्षानिलनुन्नपक्षंभ्रमत्पताकंप्रविकीर्णशस्त्रम् ॥ चचालतद्राक्षसराजसैन्यंचलोपलंनीलमिवाचलाग्रम् ॥ ६९ ॥ ततःशितैःशोणितमांसरूषितैर्युगांतवैश्वानरतुल्यविग्रहैः ॥ निशाचराः संपरिवार्यमाधवंवरायुधैर्निर्बिभिदुःसहस्रशः ॥ ७० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे षष्ठःसर्गः ॥ ६ ॥ नारायणगिरिं तेतुगर्जंतोराक्षसांबुदाः ॥ अर्दयंतोस्त्रवर्षेणवर्षेणेवाद्रिमंबुदाः ॥ १ ॥ श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तंचरोत्तमैः ॥ वृतोंऽजनगिरीवायंवर्षमाणैःपयोधरैः ॥ २ ॥ शलभाइवकेदारंमशकाइवपावकम् ॥ यथामृतघटंदंशामकराइवचार्णवम् ॥ ३ ॥ तथारक्षोधनुर्मुक्तावज्रानिलमनोजवाः ॥ हरिंविशंति स्मशरालोकाइवविपर्यये ॥ ४ ॥ स्यंदनैःस्यंदनगतागजैश्चगजमूर्धगाः ॥ अश्वारोहास्तथाश्वैश्चपादाताश्चांबरेस्थिताः ॥ ५ ॥ राक्षसेंद्रागिरिनिभाः शरैःशक्त्यृष्टितोमरैः ॥ निरुच्छ्वासंहरिंचक्रुःप्राणायामाइवद्विजम् ॥ ६ ॥ निशाचरैस्ताड्यमानोमीनैरिवमहोदधिः ॥ शार्ङ्गमायम्यदुर्धर्षोराक्षसेभ्योऽसृजच्छरान् ॥ ७ ॥ शरैःपूर्णायतोत्सृष्टैर्वज्रकल्पैर्मनोजवैः ॥ चिच्छेदविष्णुर्निशितैःशतशोथसहस्रशः ॥ ८ ॥ विद्राव्यशरवर्षेणवर्षंवायुरिवोत्थितम् ॥ पांचजन्यंमहाशंखंप्रदध्मौपुरुषोत्तमः ॥ ९ ॥



॥ १ ॥ श्यामः सन्नवदातो निर्मलः अंजनगिरिरिवेति । विभक्तिलोप आर्षस्ततः संधिः ॥ २ ॥ अमृतघटं क्षौद्रघटं दंशा वनमक्षिका इत्यर्थः ॥ ३ ॥ वज्रानिलमनोजवाः वज्रासारा अनिलमनोवत् जवो वेगो येषां ते विपर्यये मलयकाले लोका यथा हरिं विशंति तद्वत् ॥ ४ ॥ स्यंदनादिभिः सह अंबरे स्थितास्तद्गताः ॥ ५ ॥ हरिं निरुच्छ्वासं चक्रुः ॥ ६ ॥ ७ ॥ पूर्णायतोत्सृष्टैः पूर्णाकृष्णतयोत्सृष्टैः वज्रकल्पैर्वज्रवदकुंठैः ॥ ८ ॥ ९ ॥

अंबुजः शंखः सर्वमाणेन सर्वबलेन शंखराडिति विशेषणं ध्मातो वादितः ॥ १० ॥११॥ भवन् अभवन् शंखरावितेन शंखशब्देन दुर्बलाः क्षीणबलाः । स्वार्येणिः ॥१२॥१३॥१४॥ स्वर्णधाराः गैरिकधाराः गैरिकेपि सुवर्ण स्यात् ॥ १५ ॥ रवांश्चापि अपिना माणांश्च वैष्णवो विष्णूत्पादितः ॥ १६ ॥ शिरोधरान्कंठान्धूतान्कंपितान् ॥ १७ ॥ १८ ॥ विनिर्मुक्ताः विनिर्मोक्तुं मक्रांताः शरा आसन्निति पृथग्योज्यम् । अथ नारायणेरितात् नारायणव्यापारत इषवो निर्धावंति सहस्रशः शतशः ॥ १९ ॥ २० ॥ द्वीपी क्षुद्रव्याघ्रः आखवो मूषिकाः ॥ २१ ॥ महीतले शायिताः अनुद्धुत्येति शेषः ॥ २२ ॥ २३ ॥ राक्षसं रक्षःसंबंधि

सोंबुजोहरिणाध्मातःसर्वप्राणेनशंखराट् ॥ ररासभीमनिर्ह्रादस्त्रैलोक्यंव्यथयन्निव ॥ १० ॥ शंखराजरवःसोथत्रासयामासराक्षसान् ॥ मृगराजइवारण्येसमदानिवकुंजरान् ॥ ११ ॥ नशेकुरश्वाःसंस्थातुंविमदाकुंजराभवन् ॥ स्यंदनेभ्यश्च्युतावीराःशंखरावितदुर्बलाः ॥ १२ ॥ शार्ङ्गचापविनिर्मुक्तावज्रतुल्याननाःशराः ॥ विदार्यतानिरक्षांसिसुपुंखाविविशुःक्षितिम् ॥ १३ ॥ भिद्यमानाःशरैःसंख्येनारायणकरच्युतैः ॥ निपेतूराक्षसाभूमौशैलावज्रहताइव ॥ १४ ॥ व्रणानिपरगात्रेभ्योविष्णुचक्रकृतानिहि ॥ असृक्क्षरंतिधाराभिःस्वर्णधाराइवाचलाः ॥ १५ ॥ शंखराजरवश्चापिशार्ङ्गचापरवस्तथा ॥ राक्षसानांरवांश्चापिग्रसतेवैष्णवोरवः ॥ १६ ॥ तेषांशिरोधरान्धूतान्छरध्वजधनूंषिच ॥ रथान्पताकास्तूणीरांश्चिच्छेदसहरिःशरैः ॥ १७ ॥ सूर्यादिवकराघोरावार्योघाइवसागरात् ॥ पर्वतादिवनागेंद्राधारौघाइवचांबुदात् ॥ १८ ॥ तथाशार्ङ्गविनिर्मुक्ताःशरानारायणेरितात् ॥ निर्धावंतीषवस्तूर्णंशतशोथसहस्रशः ॥ १९ ॥ शरभेणयथासिंहाःसिंहेनद्विरदायथा ॥ द्विरदेनयथाव्याघ्राव्याघ्रेणद्वीपिनोयथा ॥ २० ॥ द्वीपिनेवयथाश्वानःशुनामार्जारकायथा ॥ मार्जारेणयथासर्पाःसर्पेणचयथाखवः ॥ २१ ॥ तथातेराक्षसाःसर्वेविष्णुनाप्रभविष्णुना ॥ द्रवंतिद्राविताश्चान्येशायिताश्चमहीतले ॥ २२ ॥ राक्षसानांसहस्राणिनिहत्यमधुसूदनः ॥ वारिजंपूरयामासतोयदंसुरराडिव ॥ २३ ॥ नारायणशरत्रस्तंशंखनादसुविह्वलम् ॥ ययौलंकामभिमुखंप्रभग्नंराक्षसंबलम् ॥ २४ ॥ प्रभग्नेराक्षसबलेनारायणशराहते ॥ सुमालीशरवर्षेणनिववाररणेहरिम् ॥ २५ ॥ सतुतंछादयामासनीहारइवभास्करम् ॥ राक्षसाःसत्त्वसंपन्नाःपुनर्धैर्यंसमादधुः ॥ २६ ॥ अथसोभ्यपतद्रोषाद्राक्षसोबलदर्पितः ॥ महानादंप्रकुर्वाणोराक्षसाञ्जीवयन्निव ॥ २७ ॥ उत्क्षिप्यलंबाभरणंधुन्वन्करमिवद्विपः ॥ ररासराक्षसोहर्षात्सतडित्तोयदोयथा ॥ २८ ॥ सुमालेर्नर्दतस्तस्यशिरोज्वलितकुंडलम् ॥ चिच्छेदयंतुरश्वाश्चभ्रांतास्तस्यतुरक्षसः ॥ २९ ॥ तैरश्वैर्भ्राम्यतेभ्रांतैःसुमालीराक्षसेश्वरः ॥ इंद्रियाश्वैःपरिभ्रांतैर्धृतिहीनोयथानरः ॥ ॥ ३० ॥ ततोविष्णुंमहाबाहुंप्रपतंतंरणाजिरे ॥ हतेसुमालेरश्वैश्चरथेविष्णुरथंप्रति ॥ मालीचाभ्यद्रवद्युक्तःप्रगृह्यसशरासनम् ॥ ३१ ॥ मालेर्धनुश्च्युतावाणाःकार्तस्वरविभूषिताः ॥ विविशुर्हरिमासाद्यक्रौंचंपत्ररथाइव ॥ ३२ ॥

॥ २४ ॥ निववार वारयामास ॥ २५ ॥ २६ ॥ २७ ॥ लंबाभरणं लंबमानमाभरणम् उत्क्षिप्य विमुच्य द्विपः करमिव शुंडादंडमिव ॥ २८ ॥ यंतुःशिरश्चिच्छेद ततस्तस्याश्वा नष्टसारथित्वादनवस्थितगतिका आसन्नित्यर्थः ॥ २९ ॥ भ्राम्यते भ्राम्यते स्म ॥ ३० ॥ सुमाले रथेऽश्वैर्हृते इतस्ततोऽपकृष्यमाणेसति रथादवप्लुत्य विष्णुरथं प्रति धनुः मगृह्य युक्तोऽभ्यद्रवत् ॥ ३१ ॥ क्रौंचं क्रौंचाद्रिं पत्ररथाः पक्षिणः ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ नागाः सर्पाः ॥ ३५ ॥ मालिमौलिं मालिमुकुटम् ॥ ३६ ॥ ३७ ॥ गरुडानां पक्षिणामीशानं गरुडम् ईशानमंतक इव श्वेतारण्ये मार्कंडेयरक्षणार्थं कस्यचिद्राज्ञो रक्षणार्थं च ईशानांतकयो र्युद्धमभूत्तदांतकेन रुद्रोपरि आयुधप्रक्षेपः कृत इति पुराणप्रसिद्धेयं कथा ॥ ३८ ॥ ३९ ॥ मालिना गरुडेन मालिताडनपराङ्मुखगरुडेन देवे पराङ्मुखे कृत इत्यन्वयः ॥४०॥ हरिहयानुज इंद्रानुजः तिर्यगिति विमुखे पक्षीशे तिर्यग्वलितग्रीवमास्थाय स्थित्वा ॥ ४१ ॥ मालेर्जिघांसया चक्रमुत्ससर्ज कालचक्रनिभं दिनमासादिरूपेण परिवर्तमानकालचक्रसदृशं तेनाप्रतिघात्यत्वमुक्तम् ॥ ४२ ॥ ४३ ॥ सर्वप्राणसमीरितः

अर्द्यमानःशरैःसोथमालिमुक्तैःसहस्रशः ॥ चुक्षुभेनरणेविष्णुर्जितेंद्रियइवाधिभिः ॥ ३३ ॥ अथमौर्वीस्वनंकृत्वाभगवान्भूतभावनः ॥ मालिनंप्रति बाणौघान्ससर्जासिगदाधरः ॥ ३४ ॥ तेमालिदेहमासाद्यवज्रविद्युत्प्रभाःशराः ॥ पिबंतिरुधिरंतस्यनागाइवसुधारसम् ॥ ३५ ॥ मालिनंविमुखं कृत्वाशंखचक्रगदाधरः ॥ मालिमौलिंध्वजंचापंवाजिनश्चाप्यपातयत् ॥ ३६ ॥ विरथस्तुगदांगृह्यमालीनक्तंचरोत्तमः ॥ आपुप्लुवेगदापाणिर्गिर्य ग्रादिवकेसरी ॥ ३७ ॥ गदयागरुडेशानमीशानमिवचांतकः ॥ ललाटदेशेभ्यहनद्वज्रेणेंद्रोयथाचलम् ॥ ३८ ॥ गदयाभिहतस्तेनमालिनागरुडो भृशम् ॥ रणात्पराङ्मुखंदेवंकृतवान्वेदनातुरः ॥ ३९ ॥ पराङ्मुखेकृतेदेवेमालिनागरुडेनवै ॥ उदतिष्ठन्महान्शब्दोरक्षसामभिनर्दताम् ॥ ४० ॥ रक्षसांरुवतांरावंश्रुत्वाहरिहयानुजः ॥ तिर्यगास्थायसंक्रुद्धःपक्षीशेभगवान्हरिः ॥ ४१ ॥ पराङ्मुखोप्युत्ससर्जमालेश्चक्रंजिघांसया ॥ तत्सूर्यमंडला भासंस्वभासाभासयन्नभः ॥४२॥ कालचक्रनिभंचक्रंमालेःशीर्षमपातयत् ॥ तच्छिरोराक्षसेंद्रस्यचक्रोत्कृत्तंविभीषणम् ॥ पपातरुधिरोद्गारिपुराराहु शिरोयथा ॥४३॥ ततःसुरैःसंप्रहृष्टैः सर्वप्राणसमीरितः ॥ सिंहनादरवोमुक्तःसाधुदेवेतिवादिभिः ॥ ४४ ॥ मालिनंनिहतंदृष्ट्वासुमालीमाल्यवानपि ॥ सबलौशोकसंतप्तौलंकामेवप्रधावितौ ॥४५॥ गरुडस्तुसमाश्वस्तःसन्निवृत्त्ययथापुरा ॥ राक्षसान्द्रावयामासपक्षवातेनकोपितः ॥ ४६ ॥ चक्रकृत्ता स्यकमलागदासंचूर्णितोरसः ॥ लांगलग्लपितग्रीवामुसलैर्भिन्नमस्तकाः ॥ ४७ ॥ केचिच्चैवासिनाछिन्नास्तथान्येशरताडिताः ॥ निपेतुरंबरात्तूर्णं राक्षसाःसागरांभसि ॥ ४८ ॥ नारायणोपीषुवराशनीभिर्विदारयामासधनुर्विमुक्तैः ॥ नक्तंचरान्धूतविमुक्तकेशान्यथाशनीभिःसतडिन्महाभ्रः ॥४९॥ भिन्नातपत्रंपतमानशस्त्रंशरैरपध्वस्तविनीतवेषम् ॥ विनिःसृतांत्रंभयलोलनेत्रंबलंतदुन्मत्ततरंबभूव ॥५०॥ सिंहार्दितानामिवकुंजराणांनिशाचराणां सहकुंजराणाम् ॥ रवाश्चवेगाश्चसमंबभूवुःपुराणसिंहेनविमर्दितानाम् ॥ ५१ ॥ तेवार्यमाणाहरिबाणजालैःस्वबाणजालानिसमुत्सृजंतः ॥ धावंतिन क्तंचरकालमेघावायुप्रणुन्नाइवकालमेघाः ॥ ५२ ॥ चक्रप्रहारैर्विनिकृत्तशीर्षाःसंचूर्णितांगाश्चगदाप्रहारैः ॥ असिप्रहारैर्द्विविधाविभिन्नाःपतंतिशै लाइवराक्षसेंद्राः ॥ ५३ ॥

सर्वबलेन प्रवर्तितः ॥ ४४ ॥ ४५ ॥ ४६ ॥ लांगलेन हलेन ग्लपिता हता ग्रीवा येषां ते ॥ ४७ ॥ ४८ ॥ अशनीभिरितिदीर्घ आर्षः । मुक्तविधूतकेशान् मुक्तकेशान्विधूतकेशांश्च ॥ ४९ ॥ शरैरपध्वस्तो दूरीकृतो विनीतवेषः सौम्यवेषो यस्य तत् उन्मत्ततरम् अतिशयेन विस्मृतस्वपरविवेकम् ॥ ५० ॥ पुराणसिंहेन नृसिंहेन ॥ ५१ ॥ समुत्सृजंतस्त्यक्तवंतः ॥ ५२ ॥ द्विविधा विभिन्नाः द्विविधया प्रकारद्वयेन

विभिन्नाः खंडिताः ॥ ५३ ॥ भूमंडलमिति शेषः । तन्निरंतरं व्याप्तं ददृशे ॥ ५४ ॥ वँशेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तमः सर्गः ॥ ७ ॥
अथ सुमालिमाल्यवतोः पराजितयोर्लंकां विहाय पातालप्रवेशः हन्यमाने इति पृष्ठत इति अनुद्रुत्येति शेषः एत्यइवेत्यसंधिरार्षः । अर्णवो वेलामेत्य यथा निवर्तते तथा निवृत्त इत्यर्थः ॥ १ ॥ २ ॥ योस्मान्हंसि
स त्वं न जानीषे इत्यन्वयः । यथेतरः प्राकृतजन इव ॥ ३ ॥ पराङ्मुखवधरूपं पापं स हंता इतो देहाद्गतः सन्स्वर्गं न लभते । स हंता न हत इतिपाठे हतो दैवहत इत्यर्थः ॥ ४ ॥ तत्तव बलं अहं यथा

विलंबमानैर्मणिहारकुंडलैर्निशाचरैर्नीलबलाहकोपमैः ॥ निपात्यमानैर्ददृशेनिरंतरंनिपात्यमानैरिवनीलपर्वतैः ॥ ५४ ॥ इत्यार्षे श्रीमद्रामायणे वा० आ० उ० सप्तमःसर्गः ॥ ७ ॥ हन्यमानेबलेतस्मिन्पद्मनाभेनपृष्ठतः ॥ माल्यवान्सन्निवृत्तोथवेलामेत्यइवार्णवः ॥ १ ॥ संरक्तनयनःक्रोधाच्चलन्मौलिर्निशाचरः ॥ पद्मनाभमिदंप्राहवचनंपुरुषोत्तमम् ॥२॥ नारायणनजानीषेक्षात्रधर्मंपुरातनम् ॥ अयुद्धमनसोभीतानस्मान्हंसियथेतरः ॥ ३ ॥ पराङ्मुखवधंपापंयःकरोतिसुरेश्वर ॥ सहंतानगतःस्वर्गंलभतेपुण्यकर्मणाम् ॥ ४ ॥ युद्धश्रद्धाथवातेऽस्तिशंखचक्रगदाधर ॥ अहंस्थितोस्मिपश्यामिबलंदर्शययत्तव ॥ ५ ॥ माल्यवंतंस्थितंदृष्ट्वामाल्यवंतमिवाचलम् ॥ उवाचराक्षसेंद्रंतंदेवराजानुजोबली ॥ ६ ॥ युष्मत्तोभयभीतानांदेवानांवैमयाऽभयम् ॥ राक्षसोत्सादनंदत्तंतदेतदनुपाल्यते ॥ ७ ॥ प्राणैरपिप्रियंकार्यंदेवानांहिसदामया ॥ सोहंवोनिहनिष्यामिरसातलगतानपि ॥ ८ ॥ देवदेवंब्रुवाणंतंरक्तांबुरुहलोचनम् ॥ शक्त्याबिभेदसंक्रुद्धोराक्षसेंद्रोभुजांतरे ॥९॥ माल्यवद्भुजनिर्मुक्ताशक्तिर्घंटाकृतस्वना ॥ हरेरुरसिबभ्राजमेघस्थेवशतह्रदा ॥ १० ॥ ततस्तामेवचोत्कृष्यशक्तिंशक्तिधरप्रियः ॥ माल्यवंतंसमुद्दिश्यचिक्षेपांबुरुहेक्षणः ॥ ११ ॥ स्कंदोत्सृष्टेवसाशक्तिर्गोविंदकरनिःसृता ॥ कांक्षंतीराक्षसंप्रायान्महोल्केवांजनाचलम् ॥ १२ ॥ सातस्योरसिविस्तीर्णेहारभारावभासिते ॥ आपतद्राक्षसेंद्रस्यगिरिकूटइवाशनिः ॥ १३ ॥ तयाभिन्नतनुत्राणःप्राविशद्विपुलंतमः ॥ माल्यवान्पुनराश्वस्तस्तस्थौगिरिरिवाचलः ॥ १४ ॥ ततःकालायसंशूलंकंटकैर्बहुभिश्चितम् ॥ प्रगृह्याभ्यहनद्देवंस्तनयोरंतरेदृढम् ॥ १५ ॥

पश्यामि तथा दर्शयेत्यर्थः ॥ ५ ॥ अथ पराङ्मुखवधदोषः स्वप्रतिज्ञापालनप्रवृत्तस्य नास्तीत्याह उवाचेत्यादि ॥६॥ मया भयभीतानां देवानामभयं वै दत्तं तदेतदभयदानं राक्षसोत्सादनं कुर्वता मयाऽनुपाल्यते
॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ शक्तिधरो गुहः स प्रियो यस्य तस्य प्रियो वा ॥ ११ ॥ १२ ॥ हारभारो हारसमूहस्तेनावभासिते गिरिकूटे गिरिशृंगे ॥ १३ ॥ तमः मोहम् ॥ १४ ॥ १५ ॥

रणरक्तो रणप्रियः अपक्रांतः पृष्ठतः परावृत्तः ॥१६॥१७॥ वायुः शुष्कपर्णचयं यथा व्यपोहति तथा राक्षसं पक्षवातेन व्यपोहयत् ॥१८॥ दृश्य दृष्ट्वा ॥ १९ ॥ २० ॥ २१ ॥ सहपत्नयः सस्त्रीकाः ॥ २२ ॥ सालकटंकटे सालकटंकटा माल्यवदादेः पितामही विद्युत्केशपत्नी तदीये वंशे वृद्धाच्छाभाव आर्षः । सुमालिनं समासाद्याश्रित्य राक्षसाः स्थिताः ॥ २३ ॥ पौलस्त्याः पुलस्त्यवंश्याः त्वया ये कुंभकर्णादयो हतास्तेभ्यस्तथा रावणाच्च माल्यवदादयो बलवत्तराः ॥ २४ ॥ तर्हि किं मे माशस्त्यं भवद्भिरुच्यते तत्राह न चान्य इति । तदपि माशस्त्यं तवैवेति भावः । राक्षसान्हंता । तृन् न लोकेति षष्ठीनिषेधः । देवकं

तथैवरणरक्तस्तुसुप्टिनावासवानुजम् ॥ ताडयित्वाधनुर्मात्रमपक्रांतोनिशाचरः ॥ १६ ॥ ततोंबरेमहाञ्च्छब्दःसाधुसाध्वितिचोत्थितः ॥ आहत्यराक्षसोविष्णुंगरुडंचाप्यताडयत् ॥ १७ ॥ वैनतेयस्ततःक्रुद्धःपक्षवातेनराक्षसम् ॥ व्यपोहद्बलवान्वायुःशुष्कपर्णचयंयथा ॥ १८ ॥ द्विजेंद्रपक्षवातेनद्रावितंदृश्यपूर्वजम् ॥ सुमालीस्वबलैःसार्धंलंकामभिमुखोययौ ॥ १९ ॥ पक्षवातबलोद्धूतोमाल्यवानपिराक्षसः ॥ स्वबलेनसमागम्ययययौलंकांह्रियावृतः ॥ २० ॥ एवंतेराक्षसारामहरिणाकमलेक्षण ॥ बहुशःसंयुगेभग्नाहतप्रवरनायकाः ॥ २१ ॥ अशक्नुवंतस्तेविष्णुंप्रतियोद्धुंबलार्दिताः ॥ त्यक्त्वालंकांगतावस्तुंपातालंसहपत्नयः ॥ २२ ॥ सुमालिनंसमासाद्यराक्षसंरघुसत्तम ॥ स्थिताःप्रख्यातवीर्यास्तेवंशेसालकटंकटे ॥ २३ ॥ येत्वयानिहतास्तेतुपौलस्त्यानामराक्षसाः ॥ सुमालीमाल्यवान्मालीयेचतेपांपुरःसराः ॥ सर्वएतेमहाभागारावणाद्बलवत्तराः ॥ २४ ॥ नचान्योराक्षसान्हंतासुरारीन्देवकंटकान् ॥ ऋतेनारायणंदेवंशंखचक्रगदाधरम् ॥ २५ ॥ भवान्नारायणोदेवश्चतुर्बाहुःसनातनः ॥ राक्षसान्हंतुमुत्पन्नोह्यजय्यःप्रभुरव्ययः ॥ २६ ॥ नष्टधर्मव्यवस्थानांकालेकालेप्रजाकरः ॥ उत्पद्यतेदस्युवधेशरणागतवत्सलः ॥ २७ ॥ एषामयातवनराधिपराक्षसानामुत्पत्तिरद्यकथितासकलायथावत् ॥ भूयोनिबोधरघुसत्तमरावणस्यजन्मप्रभावमतुलंससुतस्यसर्वम् ॥ २८ ॥ चिरात्सुमालीव्यचरद्रसातलंसराक्षसोविष्णुभयार्दितस्तदा ॥ पुत्रैश्चपौत्रैश्चसमन्वितोबलीततस्तुलंकामवसद्धनेश्वरः ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टमःसर्गः ॥ ८ ॥ कस्यचित्त्वथकालस्यसुमालीनामराक्षसः ॥ रसातलान्मर्त्यलोकंसर्वंवैविचचारह ॥ १ ॥ नीलजीमूतसंकाशस्तप्तकांचनकुंडलः ॥ कन्यांदुहितरंगृह्यविनापद्ममिवश्रियम् ॥ २ ॥ राक्षसेंद्रःसतुतदाविचरन्वैमहीतले ॥ तदापश्यत्सगच्छंतंपुष्पकेणधनेश्वरम् ॥ ३ ॥

टकान्देवपीडाकरान्देशवशत्रून् यस्त्वं हंता स नारायणमृते नारायणं विनान्यो न केवलमनुष्यो न ॥२५॥ उक्तमेवार्थमन्वयमुखेनाह भवानिति । उत्पन्नो मायया गृहीतदेहः ॥२६॥२७॥२८॥२९॥ धेरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टमः सर्गः ॥ ८ ॥ रसातलादिति । निःसृत्येति शेषः ॥ १ ॥ कन्याम् अविवाहितां विनापद्मं पद्मं त्यक्त्वा स्थिताम् ॥ २ ॥ ३ ॥

अमरसंकाशं ऋषिपुत्रत्वेपि प्राप्तदेवस्वरूपम् ॥ ४ ॥ तं दृष्ट्वा पुनः रसातलं प्रविष्ट इत्यर्थः । रसातलात्प्रविष्टः सन्मर्त्यलोकमितिपाठे उक्तानुवाद एवायं इत्येवं चिंतयामासेत्यन्वयः ॥ ५ ॥ ६ ॥ ७ ॥ प्रत्या
ख्यानाद्भीतैः प्रत्याख्यानशंकया भीतैर्न वरैः परिगृह्यसे याच्यसे । यद्वा प्रत्याख्यानभीतैरस्माभिस्त्वं वरैर्न प्रतिगृह्यसे प्रतिग्रहं न कार्यसे ॥ ८ ॥ त्वत्कृते तव विशिष्टवरलाभार्थं यंत्रिताः कृतप्रयासाः धर्मबुद्धयः
विवाहधर्मसिद्धिनिमित्तं विचारवंतः ॥ ९ ॥ कन्यापितृत्वस्य दुःखत्वमेवाह न ज्ञायत इति । को वरयेदिति न ज्ञायते इति दुःखम् ॥ १० ॥ वरणानंतरमपि दुःखमेवेत्याह मातुः कुलमिति । संशये स्थाप्य

गच्छंतंपितरंद्रष्टुंपुलस्त्यतनयंविभुम् ॥ तंदृष्ट्वामरसंकाशंगच्छंतंपावकोपमम् ॥ ४ ॥ रसातलंप्रविष्टःसन्मर्त्यलोकात्सविस्मयः ॥ इत्येवंचिंतया
मासराक्षसानांमहामतिः ॥ ५ ॥ किंकृत्वाश्रेयइत्येवंवर्धेमहिकथंवयम् ॥ नीलजीमूतसंकाशस्तप्तकांचनकुंडलः ॥ ६ ॥ राक्षसेंद्रःसतुतदाचिंतय
त्सुमहामतिः ॥ अथाब्रवीत्सुतांरक्षःकैकसींनामनामतः ॥ ७ ॥ पुत्रिप्रदानकालोऽयंयौवनंव्यतिवर्तते ॥ प्रत्याख्यानाच्चभीतैस्त्वंनवरैःपरि
गृह्यसे ॥ ८ ॥ त्वत्कृतेचवयंसर्वेयंत्रिताधर्मबुद्धयः ॥ त्वंहिसर्वगुणोपेताश्रीःसाक्षादिवपुत्रिके ॥ ९ ॥ कन्यापितृत्वंदुःखंहिसर्वेषांमानकांक्षिणाम् ॥
नज्ञायतेचकःकन्यांवरयेदितिकन्यके ॥ १० ॥ मातुःकुलंपितृकुलंयत्रचैवचदीयते ॥ कुलत्रयंसदाकन्यासंशयेस्थाप्यतिष्ठति ॥ ११ ॥
सात्वंमुनिवरंश्रेष्ठंप्रजापतिकुलोद्भवम् ॥ भजविश्रवसंपुत्रिपौलस्त्यंवरयस्वयम् ॥ १२ ॥ ईदृशास्तेभविष्यंतिपुत्राःपुत्रिनसंशयः ॥ तेजसाभा
स्करसमोयादृशोयंधनेश्वरः ॥ १३ ॥ सातुतद्वचनंश्रुत्वाकन्यकापितृगौरवात् ॥ तत्रगत्वाचसातस्थौविश्रवायत्रतप्यते ॥ १४ ॥ एतस्मिन्नंतरे
रामपुलस्त्यतनयोद्विजः ॥ अग्निहोत्रमुपातिष्ठच्चतुर्थइवपावकः ॥ १५ ॥ अविचिंत्यतुतांवेलांदारुणांपितृगौरवात् ॥ उपसृत्याग्रतस्तस्यचरणाधो
मुखीस्थिता ॥ १६ ॥ विलिखंतीमुहुर्भूमिमंगुष्ठाग्रेणभामिनी ॥ सतुतांवीक्ष्यसुश्रोणींपूर्णचंद्रनिभाननाम् ॥ १७ ॥ अब्रवीत्परमोदारोदीप्यमानांस्वते
जसा ॥ भद्रेकस्यासिदुहिताकुतोवात्वमिहागता ॥ किंकार्यंकस्यवाहेतोस्तत्त्वतोब्रूहिशोभने ॥ १८ ॥

तिष्ठति कथमस्याश्चारित्रभ्रंशो न भविष्यतीत्येवं कुलत्रयं चिंताक्रांतं भवतीत्यर्थः ॥ ११ ॥ सा त्वं विश्रवसं भज सेवस्व सेवनेन च भर्तृत्वेन वरय ॥ १२ ॥ कीदृशास्तत्राह यादृशोयं धनेश्वर इति ॥ १३ ॥
॥ १४ ॥ उपातिष्ठत्प्रदोषेऽग्निहोत्रं कृतवानित्यर्थः ॥ १५ ॥ दारुणां तां वेलां प्रदोषकालमित्यर्थः । पितृगौरवादुपसृत्य महाबलपराक्रमत्वेन ख्यातस्य सुमालिनः पुत्री अहमतो न प्राकृतेनर्षिणाऽनादरणीयेत्या
शयेनेत्यर्थः । चरणमवलोकयदधःप्रवर्तितं मुखं यस्याः सा चरणाधोमुखी स्थिता ॥ १६ ॥ अंगुष्ठाग्रेण मुहुर्भूमिं लिखंती अधोमुखी स्थितेति सम्बन्धः ॥ १७ ॥ किं कार्यमस्माभिरनुष्ठेयं त्वं कस्य हेतोः किन्नि

मित्तमिहागता ॥ १८ ॥ मे मतं अभिमतं भर्त्रपेक्षालक्षणं तस्य लज्जावशात्स्ववाचा कथनमनुचितमिति भावः ॥ १९ ॥ स्ववक्तव्यांशमाह किं त्विति ॥ २० ॥ कारणमागमनकारणम् ॥ २१ ॥ तदेवाह सुतेति ॥२२॥ दारुणान् क्रूरस्वभावान्दारुणाभिजनाः क्रूरबंधवो राक्षसरूपाः प्रिया येषां तान् ॥२३॥२४॥ भगवन्ब्रह्मवादिनस्त्वत्त ईदृशान्पुत्रान्नेच्छामि अत उत्तमपुत्रार्थं प्रसादं कर्तुमर्हसीत्यन्वयः ॥२५॥२६॥



एवमुक्तातुसाकन्याकृतांजलिरथाब्रवीत् ॥ आत्मप्रभावेणमुनेज्ञातुमर्हसिमेमतम् ॥ १९ ॥ किंतुमांविद्धिब्रह्मर्षेशासनात्पितुरागताम् ॥ कैकसी नामनाम्नाहंशेषंत्वंज्ञातुमर्हसि ॥ २० ॥ सतुगत्वामुनिर्ध्यानंवाक्यमेतदुवाचह ॥ विज्ञातंतेमयाभद्रेकारणंयन्मनोगतम् ॥ २१ ॥ सुताभिलाषो मत्तस्तेमत्तमातंगगामिनि ॥ दारुणायांतुवेलायांयस्मात्त्वंमामुपस्थिता ॥ २२ ॥ शृणुतस्मात्सुतान्भद्रेयादृशाञ्जनयिष्यसि ॥ दारुणान्दारुणा कारान्दारुणाभिजनप्रियान् ॥ २३ ॥ प्रसविष्यसिसुश्रोणिराक्षसान्क्रूरकर्मणः ॥ सातुतद्वचनंश्रुत्वाप्रणिपत्याब्रवीद्वचः ॥ २४ ॥ भगवन्नी दृशान्पुत्रांस्त्वत्तोहंब्रह्मवादिनः ॥ नेच्छामिसुदुराचारान्प्रसादंकर्तुमर्हसि ॥ २५ ॥ कन्ययात्वेवमुक्तस्तुविश्रवामुनिपुंगवः ॥ उवाचकैकसींभूयः पूर्णेंदुरिवरोहिणीम् ॥ २६ ॥ पश्चिमोयस्तवसुतोभविष्यतिशुभानने ॥ ममवंशानुरूपःसधर्मात्माचनसंशयः ॥ २७ ॥ एवमुक्तातुसाकन्यारा मकालेनकेनचित् ॥ जनयामासबीभत्संरक्षोरूपंसदारुणम् ॥ २८ ॥ दशग्रीवंमहादंष्ट्रंनीलांजनचयोपमम् ॥ ताम्रोष्ठंविंशतिभुजंमहास्यंदीप्तमूर्धजम् ॥ २९ ॥ तस्मिञ्जातेततस्तस्मिन्सज्वालकवलाःशिवाः ॥ क्रव्यादाश्चापसव्यानिमंडलानिप्रचक्रमुः ॥ ३० ॥ ववर्षरुधिरंदेवोमेघाश्चखरनिः स्वनाः ॥ प्रबभौनचसूर्योवैमहोल्काश्चापतन्भुवि ॥ ३१ ॥ चकंपेजगतीचैववबुर्वाताःसुदारुणाः ॥ अक्षोभ्यःक्षुभितश्चैवसमुद्रःसरितांपतिः ॥ ३२ ॥ अथनामाकरोत्तस्यपितामहसमःपिता ॥ दशग्रीवःप्रसूतोऽयंदशग्रीवोभविष्यति ॥ ३३ ॥ तस्यत्वनंतरंजातःकुंभकर्णोमहाबलः ॥ प्रमाणाद्यस्यविपुलंप्रमाणंनेहविद्यते ॥ ३४ ॥ ततःशूर्पणखानामसंजज्ञेविकृतानना ॥ विभीषणश्च धर्मात्माकैकस्याःपश्चिमःसुतः ॥ ३५ ॥ तस्मि ञ्जातेमहासत्त्वेपुष्पवर्षंपपातह ॥ नभःस्थानेदुंदुभयोदेवानांप्राणदंस्तथा ॥ वाक्यंचैवांतरिक्षेचसाधुसाध्वितितत्तदा ॥ ३६ ॥ तौतुतत्रमहारण्येववृधा तेमहौजसौ ॥ कुंभकर्णदशग्रीवौलोकोद्वेगकरौतदा ॥३७॥ कुंभकर्णःप्रमत्तस्तुमहर्षीन्धर्मवत्सलान् ॥ त्रैलोक्येनित्यासंतुष्टोभक्षयन्विचचारह ॥३८॥

पश्चिमः कनिष्ठः स ममवंशानुरूपो धर्मात्मा चेति न संशयः ॥२७॥२८॥२९॥ सज्वालकवलाः ज्वालारूपस्यांतर्गतकवलसहिताः ॥३०॥३१॥३२॥ दशग्रीव इति । कामरूपत्वाच्चांतःपुरादौएकवक्त्रत्वं द्विभुजत्वं चास्येति बोध्यम् ॥३३॥३४॥ अंतरिक्षे साधु साध्विति वाक्यं तदासीदिति शेषः ॥३५॥३६॥ तत्र महारण्ये पितुर्विश्रवस आश्रमारण्ये ॥ ३७ ॥ नित्यासंतुष्टः कियदपि भक्षणे न कदाचिदपि संतुष्टः॥३८॥

स्वाध्यायनियताहारः स्वाध्यायनियतो नियताहारश्चेत्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ आत्मानमीदृशं पश्य कुबेरवद्दिव्यवैभवरहितं प्राकृतरक्षोरूपमित्यर्थः ॥ ४२ ॥ तस्माद्दशग्रीवेति ॥ ४३ ॥ ४४॥४५॥ तपसे तपोर्थं धृतमानसः निश्चितांतःकरणः ॥४६॥ इति कृत्वा इतिबुद्धिं कृत्वा अध्यवस्य तथा निश्चित्य च ॥४७॥४८॥ र्हर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तर

विभीषणस्तुधर्मात्मानित्यंधर्मव्यवस्थितः ॥ स्वाध्यायनियताहारउवासविजितेंद्रियः ॥ ३९ ॥ अथवैश्रवणोदेवस्तत्रकालेनकेनचित् ॥ आगतः पितरंद्रष्टुंपुष्पकेणधनेश्वरः ॥ ४० ॥ तंदृष्ट्वाकैकसीतत्रज्वलंतमिवतेजसा ॥ आगम्यराक्षसीतत्रदशग्रीवमुवाचह ॥ ४१ ॥ पुत्रवैश्रवणंपश्यभ्रातरंते जसावृतम् ॥ भ्रातृभावेसमेचापिपश्यात्मानंत्वमीदृशम् ॥ ४२ ॥ दशग्रीवतथायत्नंकुरुष्वामितविक्रम ॥ यथात्वमपिमेपुत्रभवेर्वैश्रवणोपमः ॥ ४३ ॥ मातुस्तद्वचनंश्रुत्वादशग्रीवःप्रतापवान् ॥ अमर्षमतुलंलेभेप्रतिज्ञांचाकरोत्तदा ॥४४॥ सत्यंतेप्रतिजानामिभ्रातृतुल्योऽधिकोऽपिवा ॥ भविष्याम्यो जसाचैवसंतापंत्यजहृद्गतम् ॥ ४५ ॥ ततःक्रोधेनतेनैवदशग्रीवःसहानुजः ॥ चिकीर्षुर्दुष्करंकर्मतपसेधृतमानसः ॥४६॥ प्राप्स्यामितपसाकाममिति कृत्वाऽध्यवस्यच ॥ आगच्छदात्मसिद्ध्यर्थंगोकर्णस्याश्रमंशुभम् ॥ ४७ ॥ सराक्षसस्तत्रसहानुजस्तदातपश्चचारातुलमुग्रविक्रमः ॥ अतोषयच्चापि पितामहंविभुंददौसतुष्टश्चवराञ्जयावहान् ॥ ४८ ॥ इत्यार्षे श्रीमद्रा०वा०आ०उत्तरकांडे नवमः सर्गः ॥९॥ अथाब्रवीन्मुनिरामःकथंतेभ्रातरोवने ॥ कीदृशंतुतदाब्रह्मंस्तपस्तेपुर्महाबलाः ॥ १ ॥ अगस्त्यस्त्वब्रवीत्तत्ररामंसुप्रीतमानसम् ॥ तांस्तान्धर्मविधींस्तत्रभ्रातरस्तेसमाविशन् ॥२॥ कुंभकर्ण स्ततोयत्तोनित्यंधर्मपथेस्थितः ॥ ततापग्रीष्मकालेतुपंचाग्नीन्परितःस्थितः ॥ ३ ॥ मेघांबुसिक्तोवर्षासुवीरासनमसेवत ॥ नित्यंचाशिशिरेकाले जलमध्यप्रतिश्रयः ॥ ४ ॥ एवंवर्षसहस्राणिदशतस्यापचक्रमुः ॥ धर्मेप्रयतमानस्यसत्पथेनिष्ठितस्यच ॥ ५ ॥ विभीषणस्तुधर्मात्मानित्यंधर्मपरः शुचिः ॥ पंचवर्षसहस्राणिपादेनैकेनतस्थिवान् ॥ ६ ॥ समाप्तेनियमेतस्यननृतुश्चाप्सरोगणाः ॥ पपातपुष्पवर्षंचतुष्टुवुश्चापिदेवताः ॥ ७ ॥ पंचवर्षसहस्राणिसूर्यंचैवान्ववर्तत ॥ तस्थौचोर्ध्वशिरोबाहुःस्वाध्यायेधृतमानसः ॥ ८ ॥

कांडे नवमः सर्गः ॥ ९ ॥ भ्रातरो रावणकुंभकर्णविभीषणाः ॥ १ ॥ तांस्तान् धर्मविधीन् धर्मानुष्ठानानि ॥ २ ॥ संक्षेपेणोक्तं प्रपंचयति कुंभकर्ण इत्यादि । वह्निभिः सूर्यपंचमैरितिपाठे सूर्यः पंचमो येषां तै र्वह्निभिरित्यर्थः । पंचाग्नीन्परितः स्थित इति पाठेपि सूर्यसहिता एव पंचाग्नयः ॥३॥ वामोरूपरि दक्षिणजंघां प्रतिष्ठाप्य स्थितिर्वीरासनं जलमध्यं प्रतिश्रय आवासो यस्य सः ॥ ४॥५॥६॥७॥ सूर्यानुवृत्तिमाह

ऊर्ध्वशिरोबाहुरिति ॥ ८ ॥ स्वर्गस्थस्य देवस्य नंदन इवेत्यनेन तपःप्रवृत्तिसंतोषो दर्शितः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ मे मत्तः ॥ १७ ॥ १८ ॥ उक्तमेव वरं सापेक्षमाह सुपर्णेति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ भूयोन्यः शुभो वरो दीयते तच्छृणु ॥ २३ ॥ २४ ॥ अन्यं वरं च वितरामीत्युक्तं तमेवाह छंदत इति मनसा यद्यथेप्सितं रूपं तत्तच्छंदत

एवंविभीषणस्यापिस्वर्गस्थस्येवनंदने ॥ दशवर्षसहस्राणिगतानिनियतात्मनः ॥ ९ ॥ दशवर्षसहस्रंतुनिराहारोदशाननः ॥ पूर्णेवर्षसहस्रेतुशिरश्चाग्नौ जुहावसः ॥ १० ॥ एवंवर्षसहस्राणिनवतस्यातिचक्रमुः ॥ शिरांसिनवचाप्यस्यप्रविष्टानिहुताशनम् ॥ ११ ॥ अथवर्षसहस्रेतुदशमेदशमंशिरः ॥ छेत्तुकामेदशग्रीवेप्राप्तस्तत्रपितामहः ॥ १२ ॥ पितामहस्तुसुप्रीतःसार्धंदेवैरुपस्थितः ॥ तवतावद्दशग्रीवप्रीतोस्मीत्यभ्यभाषत ॥१३॥ शीघ्रंवरयधर्मज्ञवरोयस्तेभिकांक्षितः ॥ कंतेकामंकरोम्यद्यनवृथातेपरिश्रमः ॥ १४ ॥ अथाब्रवीद्दशग्रीवःप्रहृष्टेनांतरात्मना ॥ प्रणम्याशिरसादेवंहर्षगद्गदया गिरा ॥ १५ ॥ भगवन्प्राणिनांनित्यंनान्यत्रमरणाद्भयम् ॥ नास्तिमृत्युसमःशत्रुरमरत्वमहंवृणे ॥ १६ ॥ एवमुक्तस्तदाब्रह्मादशग्रीवमुवाचह ॥ नास्तिसर्वामरत्वंतेवरमन्यंवृणीष्वमे ॥ १७ ॥ एवमुक्तेतदारामब्रह्मणालोककर्तृणा ॥ दशग्रीवउवाचेदंकृतांजलिरथाग्रतः ॥ १८ ॥ सुपर्णनागयक्षाणांदैत्यदानवरक्षसाम् ॥ अवध्योहंप्रजाध्यक्षदेवतानांचशाश्वत ॥ १९ ॥ नहिचिंताममान्येषुप्राणिष्वमरपूजित ॥ तृणभूताहिते मन्ये प्राणिनोमानुषादयः ॥२०॥ एवमुक्तस्तुधर्मात्मादशग्रीवेणरक्षसा ॥ उवाचवचनंदेवःसहदेवैःपितामहः ॥२१॥ भविष्यत्येवमेतत्तेवचोराक्षसपुंगव ॥ एवमुक्त्वातुतंरामदशग्रीवंपितामहः ॥ २२ ॥ शृणुचापिवरोभूयःप्रीतस्येहशुभोमम ॥ हुतानियानिशीर्षाणिपूर्वमग्नौत्वयानघ ॥ २३ ॥ पुनस्तानिभविष्यंतितथैवतवराक्षस ॥ वितरामीहतेसौम्यवरंचान्यंदुरासदम्॥२४॥ छंदतस्तवरूपंचमनसायद्यथेप्सितम् ॥ एवंपितामहोक्तेचदशग्रीवस्यरक्षसः॥ ॥ २५ ॥ अग्नौहुतानिशीर्षाणिपुनस्तान्युत्थितानिवै ॥ एवमुक्त्वातुतंरामदशग्रीवंपितामहः ॥ २६ ॥ विभीषणमथोवाचवाक्यंलोकपितामहः ॥ विभीषणत्वयावत्सधर्मसंहितबुद्धिना ॥ २७ ॥ परितुष्टोस्मिधर्मात्मन्वरंवरयसुव्रत ॥ विभीषणस्तुधर्मात्मावचनंप्राहसांजलिः ॥ २८ ॥ वृतः सर्वगुणैर्नित्यंचंद्रमाराश्मिभिर्यथा ॥ भगवन्कृतकृत्योहंयन्मेलोकगुरुःस्वयम् ॥ २९ ॥

इच्छामात्रेण भविष्यति ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ हे भगवन्लोकगुरुः उत्पत्तिज्ञप्तिदाता भवान्यन्मह्यं प्रीत एतेनैवाहं कृतकृत्योस्मि सर्वगुणैः पुरुषार्थैर्वृतश्चास्मि त्वत्प्रीतेरेव सर्वपुरुषार्थसाधनत्वात् ॥२९॥

अथापि यदि प्रसन्नेन त्वयावश्यं कश्चिद्वरो दातव्यस्तदा तं वरं शृणु परमापद्गतस्य सांसारिकव्यवहारतः परमामापदं प्राप्तस्यापि मम धर्मे नारायणे मतिर्भवेत् रामो विग्रहवान्धर्म इत्युक्तेरत्र धर्मपदेन नारायणः । अन्यथा सा सा भवतु धर्मिष्ठेत्यनेन पौनरुक्त्यं स्यात् ॥ ३० ॥ अशिक्षितं सद्गुरूपदेशं विनापीत्यर्थः ब्रह्मास्त्रं ब्रह्मविद्या येति एतद्वरणमशेषब्रह्मविद्यासिद्धिप्रतिबंधकनिवृत्तये ॥ ३१ ॥ एतल्लाभाय तत्तद्धर्मं च पालये पालयेयं परमोदार परमदातः ॥ ३२ ॥ ईदृशस्य वरस्य परमकत्वं स्वयमेवाह नहीति ॥ ३३ ॥ राक्षसयोनौ जातस्यापि यतोऽधर्मे बुद्धिर्न जायते ततः प्रीतोहममरत्वं ते ददामि एवमप्रार्थितममरत्वं ब्रह्मणः सकाशाद्धर्मबलाल्लब्धं विभीषणेनेति निष्कामतया देवोपासनं सर्वार्थसाधनमिति बोध्यम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ एष दुर्मतिस्त्रीन्लोकांस्त्रासयतीति जानीषे तदेव दर्शयति नंदने इति ॥ ३७ ॥

प्रीतेनयदिदातव्योवरोमेशृणुसुव्रत ॥ परमापद्गतस्यापिधर्मेममममतिर्भवेत् ॥ ३० ॥ अशिक्षितंचब्रह्मास्त्रंभगवन्प्रतिभातुमे ॥ यायामेजायतेबुद्धिर्येषुयेष्वाश्रमेषुच ॥ ३१ ॥ सासाभवतुधर्मिष्ठातंतंधर्मंचपालये ॥ एपमेपरमोदारवरःपरमकोमतः ॥ ३२ ॥ नहिधर्माभिरक्तानांलोकेकिंचनदुर्लभम् ॥ पुनःप्रजापतिःप्रीतोविभीषणमुवाचह ॥ ३३ ॥ धर्मिष्ठत्वंयथावत्सतथाचैतद्भविष्यति ॥ यस्माद्राक्षसयोनौतेजातस्यामित्रनाशन ॥३४॥ नाधर्मेजायतेबुद्धिरमरत्वंददामिते ॥ इत्युक्त्वाकुंभकर्णायवरंदातुमवस्थितम् ॥ ३५ ॥ प्रजापतिंसुराःसर्वेवाक्यंप्रांजलयोऽब्रुवन् ॥ नतावत्कुंभकर्णायप्रदातव्योवरस्त्वया ॥३६॥ जानीषेहियथालोकांस्त्रासयत्येषदुर्मतिः ॥ नंदनेऽप्सरसःसप्तमहेंद्रानुचरादश ॥३७॥ अनेनभक्षिताब्रह्मन्नृषयोमानुषास्तथा ॥ अलब्धवरपूर्वेणयत्कृतंराक्षसेनतु ॥ ३८ ॥ यद्येषवरलब्धःस्याद्भक्षयेद्भुवनत्रयम् ॥ वरव्याजेनमोहोऽस्मैदीयताममितप्रभ ॥ ॥ ३९ ॥ लोकानांस्वस्तिचैवंस्याद्भवेदस्यचसंमतिः ॥ एवमुक्तःसुरैर्ब्रह्माचिंतयत्पद्मसंभवः ॥ ४० ॥ चिंतिताचोपतस्थेऽस्यपार्श्वेदेवीसरस्वती ॥ प्रांजलिःसातुपार्श्वस्थाप्राहवाक्यंसरस्वती ॥ ४१ ॥ इयमस्म्यागतादेवकिंकार्यंकरवाण्यहम् ॥ प्रजापतिस्तुतांप्राप्तांप्राहवाक्यंसरस्वतीम् ॥ ४२ ॥ वाणित्वंराक्षसेंद्रस्यभववाग्देवतेप्सिता ॥ तथेत्युक्त्वाप्रविष्टासाप्रजापतिरथाब्रवीत् ॥ ४३ ॥ कुंभकर्णमहाबाहोवरंवरययोमतः ॥ कुंभकर्णस्तुतद्वाक्यंश्रुत्वावचनमब्रवीत् ॥४४॥ स्वप्तुंवर्षाण्यनेकानिदेवदेवममेप्सितम् ॥ एवमस्त्वितितंचोक्त्वाप्रायाद्ब्रह्मासुरैःसमम्॥४५॥देवीसरस्वतीचैवराक्षसंतंजहौपुनः ॥ ब्रह्मणासहदेवेषुगतेषुचनभःस्थलम् ॥ ४६ ॥ विमुक्तोसौसरस्वत्यास्वांसंज्ञांचततोगतः ॥ कुंभकर्णस्तुदुष्टात्माचिंतयामासदुःखितः ॥४७॥

॥ ३८ ॥ मोहोऽज्ञानम् ॥ ३९ ॥ एवं मोहदानेनैव लोकानां स्वस्ति स्यात् अस्य संमतिः संमाननं च स्यात् अचिंतयद्देवीमिति शेषः ॥ ४० ॥ ४१ ॥ ४२ ॥ अस्यास्ये देवतेप्सिता देवानामिष्टा वाग्भव याचतः कुंभकर्णस्य वदनाद्देवानुकूला निस्सरेत्यर्थः । अथाब्रवीत्सरस्वतीप्रवेशानंतरमित्यर्थः ॥ ४३ ॥ तद्वाक्यं ब्रह्मवाक्यम् ॥ ४४ ॥ एवमित्यत्र षण्मासादर्वाग्जागरणं नेति नियमः तदधिका निद्रा तु भवत्येवेति वरस्वरूपं बोध्यम् । अत एव षण्मासान्स्वपितीति पूर्वं विभीषणोक्त्या वर्षाण्यनेकानीति कुंभकर्णोक्त्या च न पूर्वोक्तस्य विरोधः ॥ ४५ ॥ ४६ ॥ स्वां संज्ञां यथाप्राप्तस्वबुद्धिं गतः प्राप्तः ॥ ४७ ॥

॥ ४८ ॥ श्लेष्मातकवनं तत्पुरं पितुस्तपोवनम् ॥ ४९ ॥ धेर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे दशमः सर्गः ॥१०॥ अथ धनदमपसार्य रावणस्य लंकाप्रवेशः सुमालीति ॥ १ ॥ तस्य सचिवाः सुमालिनः सचिवाः ॥ २ ॥ ३ ॥ ४ ॥ यत्कृते यद्विष्णुभयनिमित्ततः तद्भयं नोऽस्माकं गतम् ॥ ५ ॥ ६ ॥ निवेशिता अधिष्ठिता ॥ ७ ॥ सामादिना

ईदृशंकिमिदंवाक्यंममाद्यवदनाच्च्युतम् ॥ अहंव्यामोहितोदेवैरितिमन्येतदागतैः ॥ ४८ ॥ एवंलब्धवराःसर्वेभ्रातरोदीप्ततेजसः ॥ श्लेष्मातकवनं गत्वातत्रतेन्यवसन्सुखम् ॥ ३९ ॥ इत्या० श्रीमद्रा०वा०आ०उत्तरकांडे दशमः सर्गः ॥ १० ॥ सुमालीवरलब्धांस्तुज्ञात्वाचैतान्निशाचरान् ॥ उदतिष्ठद्भयंत्यक्त्वासानुगःसरसातलात् ॥ १ ॥ मारीचश्चप्रहस्तश्चविरूपाक्षोमहोदरः ॥ उदतिष्ठन्सुसंरब्धाःसचिवास्तस्यरक्षसः ॥ २ ॥ सुमाली सचिवैःसार्धंवृतोराक्षसपुंगवैः ॥ अभिगम्यदशग्रीवंपरिष्वज्येदमब्रवीत् ॥ ३ ॥ दिष्ट्यातेवत्ससंप्राप्तश्चिंतितोयंमनोरथः ॥ यस्त्वंत्रिभुवनश्रे ष्ठाल्लब्धवान्वरमुत्तमम् ॥ ४ ॥ यत्कृतेचवयंलंकांत्यक्त्वायातारसातलम् ॥ तद्गतंनोमहाबाहोमहद्विष्णुकृतंभयम् ॥ ५ ॥ असकृत्तद्भयाद्भग्नाः परित्यज्यस्वमालयम् ॥ विद्रुताःसहिताःसर्वेप्रविष्टाःस्मरसातलम् ॥ ६ ॥ अस्मदीयाचलंकेयंनगरीराक्षसोषिता ॥ निवेशितातवभ्रात्राधनाध्यक्षे णधीमता ॥ ७ ॥ यदिनामात्रशक्यंस्यात्साम्नादानेनवानघ ॥ तरसावामहाबाहोप्रत्यानेतुंकृतंभवेत् ॥ ८ ॥ त्वंचलंकेश्वरस्तातभविष्यसिनसं शयः ॥ त्वयाराक्षसवंशोयंनिमग्नोपिसमुद्धृतः ॥ ९ ॥ सर्वेषांनःप्रभुश्चैवभविष्यसिमहाबल ॥ अथाब्रवीद्दशग्रीवोमातामहमुपस्थितम् ॥ १० ॥ वित्तेशोगुरुरस्माकंनार्हसेवक्तुमीदृशम् ॥ साम्नाहिराक्षसेंद्रेणप्रत्याख्यातोगरीयसा ॥ ११ ॥ किंचिन्नाहतदारक्षोज्ञात्वातस्यचिकीर्षितम् ॥ कस्य चित्त्वथकालस्यवसंतंरावणंततः ॥ १२ ॥ प्रहस्तःप्रश्रितंवाक्यमिदमाहसरावणम् ॥ दशग्रीवमहाबाहोनार्हसेवक्तुमीदृशम् ॥ १३ ॥ सौभ्रात्रंना स्तिशूराणांशृणुचेदंवचोमम ॥ अदितिश्चदितिश्चैवभगिन्यौसहितेहिते ॥ १४ ॥ भार्येपरमरूपिण्यौकश्यपस्यप्रजापतेः ॥ अदितिर्जनयामासदे वांस्त्रिभुवनेश्वरान् ॥ १५ ॥ दितिस्त्वजनयद्दैत्यान्कश्यपस्यात्मसंभवान् ॥ दैत्यानांकिलधर्मज्ञपुरेयंवसनार्णवा ॥ १६ ॥ सपर्वतामहीवीरतेऽ भवन्प्रभविष्णवः ॥ निहत्यतांस्तुसमरेविष्णुनाप्रभविष्णुना ॥ १७ ॥ देवानांवशमानीतंत्रैलोक्यमिदमव्ययम् ॥ नैतदेकोभवानेवकारिष्यतिविपर्य यम् ॥ १८ ॥ सुरासुरैराचरितंतत्कुरुष्ववचोमम ॥ एवमुक्तोदशग्रीवःप्रहृष्टेनांतरात्मना ॥ १९ ॥ चिंतयित्वामुहूर्तंवैबाढमित्येवसोब्रवीत् ॥ सतुतेनैवहर्षेणतस्मिन्नहनिवीर्यवान् ॥ २० ॥

लंकां प्रत्यानेतुं यदि नाम शक्यं स्यात्तदा नः कार्यं कृतं भवेत् ॥ ८ ॥ ९ ॥ १० ॥ नार्हसे ज्येष्ठनिरसनं वक्तुं नार्हसीत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ अदितिदिती भिन्नोदरभगिन्यौ ते सहिते हिते परस्परानुरक्ते भूत्वा कश्यपस्य भार्येऽभूतामिति शेषः ॥ १४ ॥ १५ ॥१६॥ ते दैत्याः पुरा प्रभविष्णवोऽभवन्पश्चाद्विष्णुना तान्दैत्यान्निहत्य ॥१७॥ विपर्ययं भ्रातृद्रोहरूपम् ॥१८॥१९॥ तस्मिन्नहनि

प्रहस्तोपदेशादिन एव ॥ २० ॥ वनं लंकासमीपवनं गतस्त्रिकूटस्थो भूत्वा प्रहस्तं दौत्येन प्रेषयामास ॥ २१ ॥ २२ ॥ २३ ॥ त्वया निवेशिताऽधिष्ठिता तां यदि भवान्नो दद्यात्तर्हि मम प्रीतिः कृता भवेत् ॥ २४ ॥ २५ ॥ २६ ॥ दशाननो यद्ब्रवीति तद्वचनं मम मुखाच्छृणिवति शेषः ॥ २७ ॥ २८ ॥ तेनेति येन पूर्वं राक्षसैर्भुक्ता तेन हेतुना सांप्रतं दीयतां सोयमर्थो विज्ञाप्यते ॥ २९ ॥

वनंगतोदशग्रीवःसहतैःक्षणदाचरैः ॥ त्रिकूटस्थःसतुतदादशग्रीवोनिशाचरः ॥ २१ ॥ प्रेषयामासदौत्येनप्रहस्तंवाक्यकोविदः ॥ प्रहस्तशीघ्रंग च्छत्वंब्रूहिनैर्ऋतपुंगव ॥ २२ ॥ वचसाममवित्तेशंसामपूर्वमिदंवचः ॥ इयंलंकापुरीराजन्राक्षसानांमहात्मनाम् ॥ २३ ॥ त्वयानिवेशितासौ म्यनैतद्युक्तंतवानघ ॥ तद्भवान्यदिनोह्यद्यदद्यादतुलविक्रम ॥ २४ ॥ कृताभवेन्ममप्रीतिर्धर्मश्चैवानुपालितः ॥ सतुगत्वापुरींलंकांधनदेनसुर क्षिताम् ॥ २५ ॥ अब्रवीत्परमोदारंवित्तपालमिदंवचः ॥ प्रेषितोहंतवभ्रात्रादशग्रीवेणसुव्रत ॥ २६ ॥ त्वत्समीपंमहाबाहोसर्वशस्त्रभृतांवर ॥ वचनं ममवित्तेशयद्ब्रवीतिदशाननः ॥ २७ ॥ इयंकिलपुरीरम्यासुमालिप्रमुखैःपुरा ॥ भुक्तपूर्वाविशालाक्षराक्षसैर्भीमविक्रमैः ॥ २८ ॥ तेनविज्ञाप्यतेसो यंसांप्रतंविश्रवात्मज ॥ तदेषादीयतांतातयाचतस्तस्यसामतः ॥ २९ ॥ प्रहस्तादपिसंश्रुत्यदेवोवैश्रवणोवचः ॥ प्रत्युवाचप्रहस्तंतंवाक्यंवाक्य विदांवरः ॥ ३० ॥ दत्तामभेयंपित्रातुलंकाशून्यानिशाचरैः ॥ निवेशिताचमेरक्षोदानमानादिभिर्गुणैः ॥ ३१ ॥ ब्रूहिगच्छदशग्रीवंपुरीराज्यंचयन्मम ॥ तवाप्येतन्महाबाहोभुंक्ष्वराज्यमकंटकम् ॥ ३२ ॥ अविभक्तंत्वयासार्धंराज्यंयच्चापिमेवसु ॥ एवमुक्त्वाधनाध्यक्षोजगामपितुरंतिकम् ॥ ३३ ॥ अभिवाद्यगुरुंप्राहरावणस्यतदीप्सितम् ॥ एषतातदशग्रीवोदूतंप्रेषितवान्मम ॥ ३४ ॥ दीयतांनगरीलंकापूर्वंरक्षोगणोषिता ॥ मयात्रयदनुष्ठेयं तन्ममाचक्ष्वसुव्रत ॥ ३५ ॥ ब्रह्मर्षिस्त्वेवमुक्तोसौविश्रवामुनिपुंगवः ॥ प्रांजलिंधनदंप्राहशृणुपुत्रवचोमम ॥ ३६ ॥ दशग्रीवोमहाबाहुरुक्तवान्म मसन्निधौ ॥ मयानिर्भर्त्सितश्चासीद्बहुशोक्तःसुदुर्मतिः ॥ ३७ ॥ सक्रोधेनमयाचोक्तोध्वंससेचपुनःपुनः ॥ श्रेयोभियुक्तंधर्म्यंचशृणुपुत्रवचोमम ॥ ३८ ॥ वरप्रदानसंमूढोमान्यामान्यंसुदुर्मतिः ॥ नवेत्तिममशापाच्चप्रकृतिंदारुणांगतः ॥ ३९ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ मम राज्यं वसु च त्वयाऽविभक्तमस्त्विति शेषः एवं त्वदीयमपि ममेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ बहुशोक्त इति संधिरार्षः ॥ ३७ ॥ ध्वंससे ध्वस्तधर्मन्यायमर्यादो नाशसे इत्यर्थः ॥ ३८ ॥ मम शापात्तन्मातृदर्शनकालकृतात् ॥ ३९ ॥

निवासार्थं निवेशय पुरमिति शेषः ॥ ४० ॥ सूर्यसंकाशैः सूर्यवदुज्वलैः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ एवं प्रहस्तवचः श्रुत्वा रावणः प्रहृष्टात्माऽभवदिति शेषः ॥ ४५ ॥ यतस्त्यक्त्वेनां गतस्ततोस्माभिः सहसा तां प्रविश्य धर्मं प्रतिपालयेति प्रहस्तेनोक्तो रावणस्तां प्रविवेश ॥ ४६ ॥ ४७ ॥ ४८ ॥ निकामपूर्णा अत्यंतपूर्णा ॥ ४९ ॥ शशिविमले

तस्माद्गच्छमहाबाहोकैलासंधरणीधरम् ॥ निवेशयनिवासार्थंत्यक्तालंकांसहानुगः ॥ ४० ॥ तत्रमंदाकिनीरम्यानदीनामुत्तमानदी ॥ कांचनैःसूर्य संकाशैःपंकजैःसंवृतोदका ॥ ४१ ॥ कुमुदैरुत्पलैश्चैवअन्यैश्चैवसुगंधिभिः ॥ तत्रदेवाःसगंधर्वाःसाप्सरोरगकिन्नराः ॥ ४२ ॥ विहारशीलाःसततं रमंतेसर्वदाश्रिताः ॥ नहिक्षमंतवानेनवैरंधनदरक्षसा ॥ जानीषेहियथानेनलब्धःपरमकोवरः ॥ ४३ ॥ एवमुक्तोगृहीत्वातुतद्वचःपितृगौरवात् ॥ सदारपुत्रः सामात्यःसवाहनधनोगतः ॥ ४४ ॥ प्रहस्तोऽथदशग्रीवंगत्वावचनमब्रवीत् ॥ प्रहृष्टात्मामहात्मानंसहामात्यंसहानुजम् ॥ ४५ ॥ शून्यासानगरीलंकात्यक्त्वैनांधनदोगतः ॥ प्रविश्यतांसहास्माभिःस्वधर्मंतत्रपालय ॥ ४६ ॥ एवमुक्तोदशग्रीवःप्रहस्तेनमहाबलः ॥ विवेशनगरींलंकांभ्रातृभिःसबलानुगैः ॥ ४७ ॥ धनदेनपरित्यक्तांसुविभक्तमहापथाम् ॥ आरुरोहसदेवारिःस्वर्गंदेवाधिपोयथा ॥ ४८ ॥ सचाभिषिक्तःक्षणदाचरैस्तदानिवेशयामासपुरींदशाननः ॥ निकामपूर्णाचबभूवसापुरीनिशाचरैर्नीलबलाहकोपमैः ॥ ४९ ॥ धनेश्वरस्त्वथपितृवाक्यगौरवान्न्यवेशयच्छशिविमलेगिरौपुरीम् ॥ स्वलंकृतैर्भवनवरैर्विभूषितांपुरंदरःस्वरिवयथामरावतीम् ॥ ५० ॥ इत्यार्षे श्रीमद्रा० वा० आ० उत्तरकांडे एकादशः सर्गः ॥ ११ ॥ ॥ छ ॥ राक्षसेंद्रोऽभिषिक्तस्तुभ्रातृभिःसहितस्तदा ॥ ततःप्रदानंराक्षस्याभगिन्याःसमचिंतयत् ॥ १ ॥ ददौतांकालकेंद्रायदानवेंद्रायराक्षसीम् ॥ स्वसांशूर्पणखांनामविद्युज्जिह्वायराक्षसः ॥ २ ॥ अथदत्त्वास्वयंरक्षोमृगयामटतेस्मतत् ॥ तत्रापश्यत्ततोराममयंनामदितेःसुतम् ॥ ३ ॥ कन्यासहायंतंदृष्ट्वादशग्रीवोनिशाचरः ॥ अपृच्छत्कोभवानेकोनिर्मनुष्यमृगेवने ॥ ४ ॥ अनयामृगशावाक्ष्याकिमर्थंसहतिष्ठसि ॥ मयस्तदाब्रवीद्रामपृच्छंतंतंनिशाचरम् ॥ ५ ॥ श्रूयतांसर्वमाख्यास्येयथावृत्तमिदंतव ॥ हेमानामाप्सरास्तत्रश्रुतपूर्वायदित्वया ॥ ६ ॥ दैवतैर्ममसादत्तापौलोमीवशतक्रतोः ॥ तस्यांसक्तमनाह्यासंदशवर्षशतान्यहम् ॥ ७ ॥ साचदैवतकार्येणत्रयोदशसमागताः ॥ वर्षचतुर्दशंचैवततोहेममयंपुरम् ॥८॥

गिरौ कैलासे पुरंदरस्येव तदामरावतीमितिपाठोऽयुक्तश्छंदोभंगाभावाय ॥ ५० ॥ ॥ नॉमॅमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकादशः सर्गः ॥ ११ ॥ अथ इंद्रजिदुत्पत्तिः राक्षसेंद्र इति ॥ १ ॥ २ ॥ रामेति संबुद्धिः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ गता देवलोकमिति शेषः । ततस्त्रयोदश समाः वर्षाणि गतानि चतुर्दशं च तद्विरहितस्य गतमित्यनुकर्षः

हेममयं सुवर्णमचुरम् ॥ ८ ॥ मायया विचित्रनिर्माणशक्त्या निर्मितम् ॥ ॥ तस्याः कुक्षौ हेमाया गर्भे इत्यर्थः ॥ १० ॥ मार्गितुं प्राप्तोस्मि मानकांक्षिणां अभिमानेच्छून। दुःखं अभिमाननिवर्तकत्वात् ॥११॥ अस्यां हेमायाम् ॥ १२ ॥ मायावी तन्नामकः ॥ १३ ॥ १४ ॥ पौलस्त्यतनय इत्युक्तमेवार्थं स्पष्टमाह मुनेरिति । यो मुनिर्विश्रवा ब्रह्मणस्तृतीयापत्यं तस्य भगवतो विश्रवसोहं तनय इत्यर्थः ॥ १५ ॥ तं महर्षेस्तनयं ज्ञात्वा दुहितरं तस्मै दातुं रोचयामास तत्र वै महाकुलप्रसूतत्वज्ञानकाले ॥ १६ ॥ १७ ॥ धृता धृतगर्भा प्रसूतेत्यर्थः ॥ १८ ॥ १९ ॥ तपोधनाज्जातशापाभिज्ञः दारुणप्रकृतिर्भविष्यतीति

वज्रवैदूर्यचित्रंचमाययानिर्मितंमया ॥ तत्राहमवसंदीनस्तयाहीनःसुदुःखितः ॥ ९ ॥ तस्मात्पुराद्दुहितरंगृहीत्वावनमागतः ॥ इयंममात्मजाराजं स्तस्याःकुक्षौविवर्धिता ॥ १० ॥ भर्तारमनयासार्धमस्याःप्राप्तोस्मिमार्गितुम् ॥ कन्यापितृत्वंदुःखंहिसर्वेषांमानकांक्षिणाम् ॥ ११ ॥ कन्याहिद्वे कुलेनित्यंसंशयेस्थाप्यतिष्ठति ॥ पुत्रद्वयंममाप्यस्यांभार्यायांसंबभूवह ॥ १२ ॥ मायावीप्रथमस्तातदुंदुभिस्तदनंतरः ॥ एवंतेसर्वमाख्यातंयाथातथ्ये नपृच्छतः ॥ १३ ॥ त्वामिदानींकथंतातजानीयांकोभवानिति ॥ एवमुक्तंतुतद्रक्षोविनीतमिदमब्रवीत् ॥ १४ ॥ अहंपौलस्त्यतनयोदशग्रीवश्चनामतः ॥ मुनेर्विश्रवसोयस्तुतृतीयोब्रह्मणोभवत् ॥ १५ ॥ एवमुक्तस्तदारामराक्षसेंद्रेणदानवः ॥ महर्षेस्तनयंज्ञात्वामयोदानवपुंगवः ॥ १६ ॥ दातुंदुहितरंतस्मैरो चयामासतत्रवै ॥ करेणतुकरंतस्याग्राहयित्वामयस्तदा ॥ १७ ॥ प्रहसन्प्राहदैत्येंद्रोराक्षसेंद्रमिदंवचः ॥ इयंममात्मजाराजन्हेमयाप्सरसाधृता ॥ ॥ १८ ॥ कन्यामंदोदरीनामपत्न्यर्थंप्रतिगृह्यताम् ॥ बाढमित्येवतंरामदशग्रीवोभ्यभाषत ॥ १९ ॥ प्रज्वाल्यतत्रचैवाग्निमकरोत्पाणिसंग्रहम् ॥ सहितस्यमयोरामशापाभिज्ञस्तपोधनात् ॥ २० ॥ विदित्वातेनसादत्तातस्यपैतामहंकुलम् ॥ अमोघांतस्यशक्तिंचप्रददौपरमाद्भुताम् ॥ २१ ॥ परेणतपसालब्धांजघ्निवाँल्लक्ष्मणंयया ॥ एवंसकृत्वादारान्वैलंकायाईश्वरःप्रभुः ॥ २२ ॥ गत्वातुनगरींभार्येभ्रातृभ्यांसमुपाहरत् ॥ वैरोचनस्यदौ हित्रींवज्रज्वालेतिनामतः ॥ २३ ॥ तांभार्यांकुंभकर्णस्यरावणःसमकल्पयत् ॥ गंधर्वराजस्यसुतांशैलूषस्यमहात्मनः ॥ २४ ॥ सरमांनामधर्म ज्ञांलेभेभार्यांविभीषणः ॥ तीरेतुसरसोवैतुसंजज्ञेमानसस्यहि ॥ २५ ॥ सरस्तदामानसंतुववृधेजलदागमे ॥ मात्रातुतस्याःकन्यायाःस्नेहेनाक्रंदितं वचः ॥ २६ ॥ सरोमावर्धतेत्युक्तंततःसासरमाऽभवत् ॥ एवंतेकृतदारावैरेमिरेतत्रराक्षसाः ॥ २७ ॥ स्वांस्वांभार्यामुपादायगंधर्वाइवनंदने ॥ ततो मंदोदरीपुत्रंमेघनादमजीजनत् ॥ २८ ॥

श्रुतशापवृत्तांत इत्यर्थः ॥ २० ॥ तेन हेतुना यद्यस्मै इयं कन्या न दीयते तदा दारुणप्रकृतित्वान्मां निगृह्य बलादपि ग्रहीष्यतीति ज्ञानेन महाकुलप्रसूतत्वज्ञानेन चेत्यर्थः ॥ २१ ॥ लब्धां मयेनेति शेषः ॥२२॥ भ्रातृभ्यां सह समुपाहरत् हतवान् उदवाहयदिति पाठांतरम् ॥ २३ ॥ २४ ॥ सरमाया विभीषणपत्न्या नाम निर्वक्ति तीरेत्विति ॥ २५ ॥ तदास्या मानससरस्तीर उत्पत्तिकाले मानसं सरो जलदागमनि

मित्तस्तच्छिशुपर्यंतं ववृधे ततो भीतायाः कन्याया आक्रंदितं श्रुत्वा तस्या मात्रा कन्यास्नेहेन सरो मा वर्धतेत्युक्तं ततः सा कन्या सरमाऽभवत् पृषोदरादित्वात्साधुः ॥२६॥२७॥ २८ ॥ २९ ॥ जलधरोपमः जलधरनादोपमः ॥ ३० ॥ ३१ ॥ ३२ ॥ रंदमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे द्वादशः सर्गः ॥ १२ ॥ लोकेश्वरेण ब्रह्मणा उत्सृष्टा प्रेषिता रूपिणी: कुंभादिरूपेण रूपवती समभवत्याज्ञा ॥१॥२॥ विश्वकर्मवत्तत्सदृशाः विस्तीर्णं योजनं तिर्यङ्मानेनेति शेषः । ततस्तिर्यङ्मानात् एवं च युद्धकांडे यद्योजनायतामित्युक्तं तद्द्विगुणयोजनायतामित्यर्थकं बोध्यम् ॥ ३॥

सएषइंद्रजिन्नामयुष्माभिरभिधीयते ॥ जातमात्रेणहिपुरातेनरावणसूनुना ॥ २९॥ रुदतासुमहान्मुक्तोनादोजलधरोपमः ॥ जडीकृताचसालंकात स्यनादेनराघव ॥ ३० ॥ पितातस्याकरोन्नाममेघनादइतिस्वयम् ॥ सोवर्धततदारामरावणांतःपुरेशुभे ॥ ३१ ॥ रक्ष्यमाणोवरस्त्रीभिश्छन्नःकाष्ठै रिवानलः ॥ मातापित्रोर्महाहर्षंजनयन्रावणात्मजः ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे द्वादशः सर्गः ॥ १२ ॥ अथलोकेश्वरोत्सृष्टातत्रकालेनकेनचित् ॥ निद्रासमभवत्तीव्राकुंभकर्णस्यरूपिणी ॥ १ ॥ ततोभ्रातरमासीनंकुंभकर्णोब्रवीद्वचः ॥ निद्रामांबाधते राजन्कारयस्वममालयम् ॥ २ ॥ विनियुक्तास्ततोराज्ञाशिल्पिनोविश्वकर्मवत् ॥ विस्तीर्णंयोजनंस्निग्धंततोद्विगुणमायतम् ॥ ३ ॥ दर्शनीयंनिरा बाधंकुंभकर्णस्यचक्रिरे ॥ स्फाटिकैःकांचनैश्चित्रैःस्तंभैःसर्वत्रशोभितम् ॥ ४ ॥ वैदूर्यकृतसोपानंकिंकिणीजालकंतथा ॥ दांततोरणविन्यस्तंवज्रस्फ टिकवेदिकम् ॥५॥ मनोहरंसर्वसुखंकारयामासराक्षसः ॥ सर्वत्रसुखदंनित्यंमेरोःपुण्यांगुहामिव ॥६॥ तत्रनिद्रांसमाविष्टःकुंभकर्णोमहाबलः ॥ बहून्य ब्दसहस्राणिशयानोनचबुद्ध्यते ॥७ ॥ निद्राभिभूतेतुतदाकुंभकर्णेदशाननः ॥ देवर्षियक्षगंधर्वान्संजघ्नेहिनिरंकुशः ॥ ८ ॥ उद्यानानिविचित्राणिनं दनादीनियानिच ॥ तानिगत्वासुसंक्रुद्धोभिनत्तिस्मदशाननः ॥ ९ ॥ नदींगजइवक्रीडन्वृक्षान्वायुरिवक्षिपन् ॥ नगान्वज्रइवोत्सृष्टोविध्वंसय तिराक्षसः ॥ १० ॥ यथावृत्तंतुविज्ञायदशग्रीवंधनेश्वरः ॥ कुलानुरूपंधर्मज्ञोवृत्तंसंस्मृत्यचात्मनः ॥ ११ ॥ सौभ्रात्रदर्शनार्थंतुदूतंवैश्रवणस्तदा ॥ लंकांसंप्रेषयामासदशग्रीवस्यवैहितम् ॥ १२ ॥ सगत्वानगरींलंकामाससादविभीषणम् ॥ मानितस्तेनधर्मेणपृष्टश्चागमनंप्रति ॥१३॥ पृष्ट्वाचकुशलं राज्ञोज्ञातीनांचविभीषणः ॥ सभायांदर्शयामासतमासीनंदशाननम् ॥ १४ ॥ सदृष्ट्वातत्रराजानंदीप्यमानंस्वतेजसा ॥ जयेतिवाचासंपूज्यतूष्णीं समभिवर्तते ॥ १५ ॥ सतत्रोत्तमपर्यंकेवरास्तरणशोभिते ॥ उपविष्टंदशग्रीवंदूतोवाक्यमथाब्रवीत् ॥ १६ ॥

॥४॥ किंकिणीजालकं किंकिणीनां जालानि यस्मिंस्तत् दांततोरणं दंतविकारतोरणं तस्य विन्यस्तं विन्यासो यत्र तत् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ आत्मनः कुलानुरूपं वृत्तं संस्मृत्येति बोधनीय त्वेनेति शेषः ॥ ११ ॥ सौभ्रात्रदर्शनार्थं तद्दर्शयितुं हितमिति । वक्तुमिति शेषः ॥ १२ ॥ आगमनं प्रति कार्यमिति शेषः ॥ १३ ॥ राज्ञः धनदस्य तं कुबेरदूतम् ॥ १४ ॥ तूष्णीं समभिवर्तते क्षणमात्र

मिति शेषः ॥ १५ ॥ १६ ॥ उभयोर्मातापित्रोः कुलस्य तयोर्वृत्तस्य च सदृशम् ॥ १७ ॥ साधु सम्यक् एतावत्पर्याप्तम् एतावदेव पापमलम् इतः परं चारित्रसंग्रहः कृत्यः कार्यः । तदेव दार्ढ्याय पुनराह साध्विति । व्यवस्थानं व्यवस्थितिः । यदि शक्यते इत्यनेन क्रूरत्वान्नियोगबुद्धिर्व्यावर्त्यते । कतकस्तु कृतश्चारित्रसंग्रह इति पठित्वा साधु सम्यक्चारित्रसंग्रहः आचारसंग्रहः कृतः संपादितश्चेदेतावदेव पर्याप्तमि हामुत्राभ्युदयाय अस्यैव विवरणं साध्वित्याह ॥ १८ ॥ उपदेशप्रयोजकमसद्वृत्तं दृश्यते श्रूयते चेत्याह दृष्टमिति । मे मया त्वत्तस्त्वन्निमित्तो देवतानां समुद्योगः प्रतिक्रियासंपादनविषय इति शेषः ॥ १९ ॥ यद्यपि त्वयाहं निराकृतोथापि मम त्वं रक्ष्य एव । तत्र हेतुः सापराधोपीति । स्वबांधवैः पित्रादिभिः ॥ २० ॥ त्वद्रक्षणहेतोरेवाहं त्विति । रौद्रं रुद्रप्रसादकरम् ॥ २१ ॥ २२ ॥ किमिति देव्यां चक्षु

राजन्वदामितेसर्वंभ्रातातवयदब्रवीत् ॥ उभयोःसदृशंवीरवृत्तस्यचकुलस्यच ॥ १७ ॥ साधुपर्याप्तमेतावत्कृतश्चारित्रसंग्रहः ॥ साधुधर्मैर्व्यवस्थानं क्रियतांयदिशक्यते ॥ १८ ॥ दृष्टंमेनंदनंभग्नमृषयोनिहताःश्रुताः ॥ देवतानांसमुद्योगस्त्वत्तोराजन्मयाश्रुतः ॥ १९ ॥ निराकृतश्चबहुशस्त्वयाहं राक्षसाधिप ॥ सापराधोपिबालोहिरक्षितव्यःस्वबांधवैः ॥ २० ॥ अहंतुहिमवत्पृष्ठंगतोधर्ममुपासितुम् ॥ रौद्रंव्रतंसमास्थायनियतोनियतेंद्रियः ॥ ॥ २१ ॥ तत्रदेवोमयादृष्टउमयासहितःप्रभुः ॥ सव्यंचक्षुर्मयादैवात्तत्रदेव्यांनिपातितम् ॥ २२ ॥ कान्वेषेतिमहाराजनखल्वन्येनहेतुना ॥ रूपंचानुप मंकृत्वारुद्राणीतत्रतिष्ठति ॥ २३ ॥ देव्यादिव्यप्रभावेणदग्धंसव्यंममेक्षणम् ॥ रेणुध्वस्तमिवज्योतिःपिंगलत्वमुपागतम् ॥ २४ ॥ ततोहमन्यद्विस्ती र्णंगत्वातस्यगिरेस्तटम् ॥ तूष्णींवर्षशतान्यष्टौसमधारंमहाव्रतम् ॥ २५ ॥ समाप्तेनियमेतस्मिंस्तत्रदेवोमहेश्वरः ॥ ततःप्रीतेनमनसाप्राहवाक्यमिदं प्रभुः ॥ २६ ॥ प्रीतोस्मितवधर्मज्ञतपसानेनसुव्रत ॥ मयाचैतद्व्रतंचीर्णंत्वयाचैवधनाधिप ॥ २७ ॥ तृतीयःपुरुषोनास्तियश्चरेद्व्रतमीदृशम् ॥ व्रतंसुदुष्करंह्येतन्मयैवोत्पादितंपुरा ॥ २८ ॥ तत्सखित्वंमयासौम्यरोचयस्वधनेश्वर ॥ तपसानिर्जितश्चैवसखाभवममानघ ॥ २९ ॥ देव्यादग्धं प्रभावेणयच्चसव्यंतवेक्षणम् ॥ पैंगल्यंयदवाप्तंहिदेव्यारूपनिरीक्षणात् ॥ ३० ॥ एकाक्षिपिंगलीत्येवनामस्थास्यतिशाश्वतम् ॥ एवंतेनसखित्वं चप्राप्यानुज्ञांचशंकरात् ॥ ३१ ॥ आगतेनमयाचैवंश्रुतस्तेपापनिश्चयः ॥ तदधर्मिष्ठसंयोगान्निवर्तकुलदूषणात् ॥ ३२ ॥ चिंत्यतेहिवधोपायःसर्षि संघैःसुरैस्तव ॥ एवमुक्तोदशग्रीवःकोपसंरक्तलोचनः ॥ ३३ ॥ हस्तान्दंतांश्चसंपिष्यवाक्यमेतदुवाचह ॥ विज्ञातंतेमयादूतवाक्यंयत्त्वंप्रभाषसे ॥ ॥ ३४ ॥ नैवत्वमसिनैवासौभ्राताऽयेनासिचोदितः ॥ हितंनैषममैतद्धिब्रवीतिधनरक्षकः ॥ ३५ ॥

निपातितं तत्राह कान्विति । अन्येन हेतुना विकारादिनेत्यर्थः कान्विति सूचितविस्मयहेतुमाह रूपं चेति ॥ २३ ॥ दग्धं नष्टं सव्येतरत्तु रेणुध्वस्तं रेणुस्पर्शकलुषीकृतं ज्योतिषा तेजसा पिंगलं तस्य भावस्त त्त्वम् । यद्वा कलुषितज्योतिरिव पिंगत्वं प्राप्तमित्यर्थः ॥ २४ ॥ समधारं समधारयम् ॥ २५ ॥ २६ ॥ एतद्व्रतं त्वदाचरितं महाव्रतम् ॥ २७ ॥ २८ ॥ रोचयस्व रुचितं वृणिष्वेत्यर्थः ॥ २९ ॥ पैंगल्यमिति । इतरदिति शेषः ॥ ३० ॥ एवं तेन शिवेन ॥ ३१ ॥ निवर्त निवर्तस्व ॥ ३२ ॥ ३३ ॥ वाक्यं विज्ञातं वाक्यतात्पर्यार्थो विज्ञातः ॥ ३४ ॥ येन भ्रात्रा चोदितोसौ भ्राता त्वं च नैवासि । न भविष्यसि

तत्र हेतुर्हितामिति । एष धनरक्षको मे हितं नैव ब्रवीति ॥ ३५ ॥ किं तर्हि ब्रवीतीत्यत्राह महेश्वरसखित्वमिति ॥ तद्रूपबलसंपदमित्यर्थः । कुबेरेण स्ववृत्तांतोक्तावपि रावणः स्वदुर्मत्या विपरीतं गृहीतवान्
यस्त्वयैतत्कुबेरमावल्यं भाषितं तन्नैव क्षमणीयं क्षमार्हम् ॥ ३६ ॥ एतावत्कालं मया तस्य मर्षितं क्षांतं तत् इति हेतोर्यतो मदंतरात्मा इतः पूर्वमयं ज्येष्ठो गुरुर्न हंतव्य इति मन्यते मन्यते स्म
ततो हेतोरित्यर्थः ॥ ३७ ॥ एषा मतिः कृता केत्यत्राह त्रीनिति ॥ ३८ ॥ एतन्मुहूर्तम् अस्मिन्मुहूर्ते तस्यैकस्य तु वैकृते वधप्रसंग इत्यर्थः ॥ ३९ ॥ एनं खड्गच्छिन्नं दूतं भक्षयितुमाज्ञां कृतवानिति शेषः

महेश्वरसखित्वंतुमूढःश्रावयतेकिल ॥ नैवेदंक्षमणीयंमेयदेतद्भाषितंत्वया ॥ ३६ ॥ यदेतावन्मयाकालंदूततस्यतुमर्षितम् ॥ नहंतव्योगुरुर्ज्येष्ठो मयायमितिमन्यते ॥ ३७ ॥ तस्यत्विदानींश्रुत्वामेवाक्यमेषाकृतामतिः ॥ त्रीँल्लोकानपिजेष्यामिबाहुवीर्यमुपाश्रितः ॥ ३८ ॥ एतन्मुहूर्तमेवाहं तस्यैकस्यतुवैकृते ॥ चतुरोलोकपालांस्तान्नयिष्यामियमक्षयम् ॥ ३९ ॥ एवमुक्त्वातुलंकेशोदूतंखड्गेनजघ्निवान् ॥ ददौभक्षयितुंह्येनंराक्षसानां दुरात्मनाम् ॥ ४० ॥ ततःकृतस्वस्त्ययनोरथमारुह्यरावणः ॥ त्रैलोक्यविजयाकांक्षीययौयत्रधनेश्वरः ॥ ४१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडेत्रयोदशः सर्गः ॥ १३ ॥ ततःससचिवैःसार्धंषड्भिर्नित्यबलोद्धतः ॥ महोदरप्रहस्ताभ्यांमारीचशुकसारणैः ॥ १ ॥ धूम्राक्षेणचवीरेणनित्यंसमरगर्धिना ॥ वृतः संप्रययौश्रीमान्क्रोधाल्लोकान्दहन्निव ॥ २ ॥ पुराणिसनदीःशैलान्वनान्युपवनानिच ॥ अतिक्रम्यमुहूर्तेन कैलासंगिरिमागमत् ॥ ३ ॥ सन्निविष्टंगिरौतस्मिन्राक्षसेंद्रंनिशम्यतु ॥ युद्धेप्सुंतंकृतोत्साहंदुरात्मानंसमंत्रिणम् ॥ ४ ॥ यक्षानशेकुःसंस्थातुंप्रमुखेतस्यरक्षसः ॥ राज्ञोभ्रातेतिविज्ञायगतायत्रधनेश्वरः ॥ ५ ॥ तेगत्वासर्वमाचख्युर्भ्रातुस्तस्यचिकीर्षितम् ॥ अनुज्ञाताययुर्हृष्टायुद्धायधनदेनते ॥ ६ ॥ ततोबलानांसंक्षोभोव्यवर्धतइवोदधेः ॥ तस्यनैर्ऋतराजस्यशैलंसंचालयन्निव ॥ ७ ॥ ततोयुद्धंसमभवद्यक्षराक्षससंकुलम् ॥ व्यथिताश्चाभवंस्तत्रसचिवाराक्षसस्यते ॥ ८ ॥ सदृष्ट्वातादृशंसैन्यंदशग्रीवोनिशाचरः ॥ हर्षनादान्बहून्कृत्वासक्रोधादभ्यभापत ॥ ९ ॥ येतुतेराक्षसेंद्रस्यसचिवाघोरविक्रमाः ॥ तेषांसहस्रमेकैकोयक्षाणांसमयोधयत् ॥ १० ॥ ततोगदाभिर्मुसलैरसिभिःशक्तितोमरैः ॥ हन्यमानोदशग्रीवस्तत्सैन्यंसमगाहत ॥ ११ ॥ सनिरुच्छ्वासवत्तत्रवध्यमानोदशाननः ॥ वर्षद्भिरिवजीमूतैर्धाराभिरवरुध्यत ॥ १२ ॥ नचकारव्यथांचैवयक्षशस्त्रैःसमाहतः ॥ महीधर इवांभोदैर्धाराशतसमुक्षितः ॥ १३ ॥

॥ ४० ॥ ४१ ॥ यैर्वैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे त्रयोदशः सर्गः ॥ १३ ॥ अथादौ कुबेरजयः तत इति ॥१॥२॥३॥ समंत्रिणं महोदरादिषण्मंत्रिसहितम् ॥ ४ ॥ न शेकुरित्यत्र हेतुः राज्ञो भ्रातेति । कुबेरस्य भ्रातेत्यर्थः ॥ ५ ॥ ६ ॥ तस्य नैर्ऋतराजस्य बलानां संक्षोभः शैलं कैलासं चालयन्निव व्यवर्धत उदधेः क्षोभो यथा ॥ ७ ॥ ८ ॥ हर्षनादान्हर्षजसिंहनादान् ॥ ९ ॥ ये रावणसचिवास्तेषामेकैकस्तेषां सहस्रसंख्यानां यक्षाणां सहस्रम् अयोधयत् ॥ १० ॥ ११ ॥ धाराभिः शस्त्रसमूहैः ॥ १२ ॥ धाराशतसमुक्षितः शस्त्रक्षतजन्यरुधिरधाराशत

समुक्षितः ॥ १३ ॥ १४ ॥ कक्षं तृणं तद्वद्विस्तीर्णं शुष्केंधनमिवाकुलं शुष्केंधने आकुलत्वं च झटिति वह्निव्याप्यत्वम् । यक्षसैन्यं वातेनादीप्तोऽग्निरिव रावणो ददाह ॥ १५ ॥ रावणेन सह वर्तमानैस्तै रमात्यैर्यक्षा अल्पावशेषाः कृताः ॥ १६ ॥ भग्ना भग्नगात्राः ॥ १७ ॥ कूला इति लिंगव्यत्ययः ॥ १८ ॥ भूतले धावतां परैर्हतानामथानंतरं स्वर्गं गच्छतां गत्वा तत्र स्थितानां व्योम्नि स्थित्वा युद्धं प्रेक्षतां प्रेक्षमाणानां ऋषिसंघानां च दिवि आकाशेऽन्तरं स्थातुमवकाशो न बभूव ॥ १९ ॥ २० ॥ २१ ॥ तेन संयोधकंटकाख्येन यक्षेण चक्रेण हतः पीडितो मारीचः शैलात्कैलासाद्भूतले पतितः संयोधानां

समहात्मासमुद्यम्यकालदंडोपमांगदाम् ॥ प्रविवेशततःसैन्यंनयन्यक्षान्यमक्षयम् ॥ १४ ॥ सकक्षमिवविस्तीर्णंशुष्केंधनमिवाकुलम् ॥ वातेनाग्निरिवादीप्तोयक्षसैन्यंददाहतत् ॥ १५ ॥ तैस्तुतत्रमहामात्यैर्महोदरशुकादिभिः ॥ अल्पावशेषास्तेयक्षाःकृतावातैरिवांबुदाः ॥ १६ ॥ केचित्समाहताभग्नाःपतिताःसमरेक्षितौ ॥ ओष्ठांश्चदशनैस्तीक्ष्णैरदशन्कुपितारणे ॥ १७ ॥ श्रांताश्चान्योन्यमालिंग्यभ्रष्टशस्त्रारणाजिरे ॥ सीदंतिचतदायक्षाःकूलाइवजलेनह ॥ १८ ॥ हतानांगच्छतांस्वर्गंयुध्यतामथधावताम् ॥ प्रेक्षतामृषिसंघानांबभूवनतदांतरम् ॥ १९ ॥ भग्नांस्तुतान्समालक्ष्ययक्षेंद्रांस्तुमहाबलान् ॥ धनाध्यक्षोमहाबाहुःप्रेषयामासयक्षकान् ॥ २० ॥ एतस्मिन्नंतरेरामविस्तीर्णबलवाहनः ॥ प्रेषितोन्यपतद्यक्षोनाम्नासंयोधकंटकः ॥ २१ ॥ तेनचक्रेणमारीचोविष्णुनेवरणेहतः ॥ पतितोभूतलेशैलात्क्षीणपुण्यइवग्रहः ॥ २२ ॥ ससंज्ञस्तुमुहूर्तेनसविश्रम्यनिशाचरः ॥ तंयक्षंयोधयामाससचभग्नःप्रदुद्रुवे ॥ २३ ॥ ततःकांचनचित्रांगंवैदूर्यरजतोक्षितम् ॥ मर्यादांप्रतिहाराणांतोरणान्तरमाविशत् ॥ २४ ॥ तंतुराजन्दशग्रीवंप्रविशंतंनिशाचरम् ॥ सूर्यभानुरितिख्यातोद्वारपालोन्यवारयत् ॥ २५ ॥ सवार्यमाणोयक्षेणप्रविवेशनिशाचरः ॥ यदातुवारितोरामनव्यतिष्ठत्सराक्षसः ॥ २६ ॥ ततस्तोरणमुत्पाट्यतेनयक्षेणताडितः ॥ रुधिरंप्रस्रवन्भातिशैलोधातुस्रवैरिव ॥ २७ ॥ सशैलशिखराभेणतोरणेनसमाहतः ॥ जगामनक्षतिंवीरोवरदानात्स्वयंभुवः ॥ २८ ॥ तेनैवतोरणेनाथयक्षस्तेनाभिताडितः ॥ नादृश्यततदायक्षोभस्मीकृततनुस्तदा ॥ २९ ॥ ततःप्रदुद्रुवुःसर्वेदृष्ट्वारक्षःपराक्रमम् ॥ ततोनदीर्गुहाश्चैवविविशुर्भयपीडिताः ॥ त्यक्तप्रहरणाःश्रांताविवर्णवदनास्तदा ॥ ३० ॥ इत्यार्षे श्रीमद्रा०वाल्मी० आदिकाव्ये उत्तरकांडे चतुर्दशःसर्गः ॥ १४ ॥

समक्षयोद्धॄणां कंटकः संहर्तेति संयोधकंटकः ॥ २२ ॥ स च यक्षश्च ॥ २३ ॥ मर्यादां जनप्रवेशावधिं प्रतीहाराणाम् । तोरणांतरं द्वारमध्यामिति तीर्थः । आविशद्रावण इति शेषः ॥ २४ ॥ २५ ॥ २६ ॥ धातुस्रवैर्युतः शैल इव ॥ २७ ॥ तोरणेन तोरणस्थदंडेन ॥ २८ ॥ भस्मीकृततनुरिति । चूर्णीकृततनुरित्यर्थः ॥ २९ ॥ ३० ॥ नंदैमानः ॥ इति श्रीरामा० श्रीरामीये रामायण० वा० आदि० उत्तरकांडे चतुर्दशः सर्गः ॥ १४ ॥

अथ पुष्पकग्रहः तत इति लक्ष्य लक्षयित्वा माणिचारो माणिभद्रः ॥१॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ते राक्षसाः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ताडित इति । तिसृभिः शक्तिभिस्ताडितो राक्षसेंद्रो गदया माणिभद्रस्य मुंकुटे मुकुटस्थले प्राहरत्तच्च मुकुटस्थलं तेन प्रहारेण पार्श्वमेकपार्श्वमागतं प्राप्तम् ॥ १४ ॥ सन्नादो रक्षसाम् ॥ १५ ॥ पद्मशंखसमावृतः शंखपद्मनिध्यभिमानिदेवसंवृतः शुक्रप्रौष्ठपदाभ्यां निधिरक्षकमंत्रिभ्यां सह धनाध्यक्षः मदद्दशे भ्रातरमिति संबंधः ॥ १६ ॥ शापाद्विश्रवसः कृताद्दारुणस्वभावो भविष्यतीति शापात् विभ्रष्टगौरवं वंदनादिप्रयोजकश्रेष्ठत्वगौरवरहितम् अकृतवंदना

ततस्ताँल्लक्ष्यवित्रस्तान्यक्षेंद्रांश्चसहस्रशः ॥ धनाध्यक्षोमहायक्षंमाणिचारमथाब्रवीत् ॥ १ ॥ रावणंजहियक्षेंद्रदुर्वृत्तंपापचेतसम् ॥ शरणंभववीराणां यक्षाणांयुद्धशालिनाम् ॥ २ ॥ एवमुक्तोमहाबाहुर्माणिभद्रःसदुर्जयः ॥ वृतोयक्षसहस्रैस्तुचतुर्भिःसमयोधयत् ॥ ३ ॥ तेगदामुसलप्रासैःशक्तितोमरमुद्गरैः ॥ अभिघ्नंतस्तदायक्षाराक्षसान्समुपाद्रवन् ॥ ४ ॥ कुर्वंतस्तुमुलंयुद्धंचरंतःश्येनवल्लघु ॥ बाढंप्रयच्छनेच्छामिदीयतामितिभाषिणः ॥ ५ ॥ ततो देवाःसगंधर्वाऋषयोब्रह्मवादिनः ॥ दृष्ट्वातत्तुमुलंयुद्धंपरंविस्मयमागमन् ॥ ६ ॥ यक्षाणांतुप्रहस्तेनसहस्रंनिहतंरणे ॥ महोदरेणचानिंद्यंसहस्रमपरं हतम् ॥ ७ ॥ क्रुद्धेनचतदाराजन्मारीचेनयुयुत्सुना ॥ निमेषांतरमात्रेणद्वेसहस्रेनिपातिते ॥ ८ ॥ क्वचयक्षार्जवंयुद्धंक्वचमायाबलाश्रयम् ॥ रक्षसां पुरुषव्याघ्रतेनतेऽभ्यधिकायुधि ॥ ९ ॥ धूम्राक्षेणसमागम्यमाणिभद्रोमहारणे ॥ मुसलेनोरसिक्रोधात्ताडितोनचकंपितः ॥ १० ॥ ततोगदांसमाविध्यमाणिभद्रेणराक्षसः ॥ धूम्राक्षस्ताडितोमूर्ध्निविह्वलःसपपातह ॥ ११ ॥ धूम्राक्षंताडितंदृष्ट्वापतितंशोणितोक्षितम् ॥ अभ्यधावतसंग्रामेमाणिभद्रंदशाननः ॥ १२ ॥ संक्रुद्धमभिधावंतंमाणिभद्रोदशाननम् ॥ शक्तिभिस्ताडयामासतिसृभिर्यक्षपुंगवः ॥ १३ ॥ ताडितोमाणिभद्रस्यमुकुटे प्राहरद्रणे ॥ त[illegible]यतेनप्रहारेणमुकुटंपार्श्वमागतम् ॥ १४ ॥ ततःप्रभृतियक्षोसौपार्श्वमौलिरभूत्किल ॥ तस्मिंस्तुविमुखीभूतेमाणिभद्रेमहात्मनि ॥ सन्नादःसुमहान्राजंस्तस्मिञ्शैलेव्यवर्धत ॥१५॥ ततोदूरात्प्रददृशेधनाध्यक्षोगदाधरः ॥ शुक्रप्रौष्ठपदाभ्यांचपद्मशंखसमावृतः ॥१६॥ सदृष्ट्वाभ्रातरं संख्येशापाद्विभ्रष्टगौरवम् ॥ उवाचवचनंधीमान्युक्तंपैतामहेकुले ॥ १७ ॥ यन्मयावार्यमाणस्त्वंनावगच्छसिदुर्मते ॥ पश्चादस्यफलंप्राप्यज्ञास्यसेनिरयंगतः ॥ १८ ॥ योहिमोहाद्विषंपीत्वानावगच्छतिदुर्मतिः ॥ सतस्यपरिणामांतेजानीतेकर्मणःफलम् ॥ १९ ॥ दैवतानिननंदंतिधर्मयुक्तेन केनचित् ॥ येनत्वमीदृशंभावंनीतस्तच्चनबुद्ध्यसे ॥ २० ॥

दिव्यवहारमितियावत् । पैतामहे कुले युक्तं तत्कुले उत्पत्तेर्युक्तं वचनमुवाचेत्यर्थः ॥ १७ ॥ वार्यमाणः असद्वृत्तादिति शेषः । नावगच्छसि अस्य मद्वचनाकरणस्य पूज्यपूजाव्यतिक्रमादिदोषस्य च फलं परिपाकं प्राप्य तद्वशान्निरयं गतो ज्ञास्यसे । अहं साधु न कृतवान्किं तु पापमेवेति परितप्स्यसे इत्यर्थः ॥ १८ ॥ तत्कालानवगतदुःखसाधनस्य कालांतरे फलपाकतो ज्ञाने दृष्टांतः यो हीति ॥ १९ ॥ दैवतानि ब्रह्मरुद्रादयः धर्मयुक्तेन केनचित्प्राकृतेन व्यापारेण त्वामिदानीं नाभिनंदति त्वयि विमुखा भवंति । संप्रति त्वयि धर्माभावाद्येन देवतानभिनंदनेन त्वमीदृशं भावं क्रूरं नीतः प्रापितः सन्नावबुद्ध्यसे ॥ २० ॥

तस्य मात्राद्यवमानस्य अत्र मात्रादिपदं पूज्योपलक्षणम् ॥२१॥ तपोर्जनं तपःसंपादनम् आत्मनो गतिम् आत्मनः कर्मसंपादितां गतिम् ॥२२॥ दुर्बुद्धेर्बुद्धिरहितस्य कस्यचित्कस्यापि पुरुषस्यच्छंदतः पित्रादिसेवां विना स्वेच्छामात्रेण मतिः शुभा मतिर्न जायतेऽतो मात्रादिसेवाहीनो यादृशं स्वदुर्मत्यनुरूपं दुष्कर्म कुरुते तादृशं तदनुरूपं निरयगामित्वादिरूपं फलमश्नुते प्राप्नोति ॥ २३ ॥ २४ ॥ एवमिति । एवं क्रूरकर्मा त्वं निरयगामी भविष्यसि यस्य ते ईदृशी मतिः अतस्त्वां न समभिभाषिष्ये एष वाऽसद्वृत्तेषु सद्वृत्तानां निर्णयः अनुष्ठेयनिश्चयः ॥ २५ ॥ एवमुक्ताः रावणवदेव यूयमप्यसंभाष्या इत्युक्ताः । तत एवं

मातरंपितरंविप्रमाचार्यंचावमन्यवै ॥ सपश्यतिफलंतस्यप्रेतराजवशंगतः ॥ २१ ॥ अध्रुवेहिशरीरेयोनकरोतितपोर्जनम् ॥ सपश्चात्तप्यतेमूढोमृतो गत्वात्मनोगतिम् ॥ २२ ॥ कस्यचिन्नहिदुर्बुद्धेश्छंदतोजायतेमतिः ॥ यादृशंकुरुतेकर्मतादृशंफलमश्नुते ॥ २३ ॥ ऋद्धिंरूपंबलंपुत्रान्वित्तंशूरत्वमेवच ॥ प्राप्नुवंतिनरालोकेनिर्जितंपुण्यकर्मभिः ॥ २४ ॥ एवंनिरयगामीत्वंयस्यतेमतिरीदृशी ॥ नत्वांसमभिभाषिष्येऽसद्वृत्तेष्वेषनिर्णयः ॥ २५ ॥ एवमुक्तास्ततस्तेनतस्यामात्याःसमाहताः ॥ मारीचप्रमुखाःसर्वेविमुखाविप्रदुद्रुवुः ॥ २६ ॥ ततस्तेनदशग्रीवोयक्षेंद्रेणमहात्मना ॥ गदयाभिहतोमूर्ध्निनचस्थानात्प्रकंपितः ॥ २७ ॥ ततस्तौराममनिघ्नंतौतदान्योन्यंमहामृधे ॥ नविह्वलौनचश्रांतौतावुभौयक्षराक्षसौ ॥ २८ ॥ आग्नेयमस्त्रंतस्मैसमुमोचधनदस्तदा ॥ राक्षसेंद्रोवारुणेनतदस्त्रंप्रत्यवारयत् ॥ २९ ॥ ततोमायांप्रविष्टोसौराक्षसीराक्षसेश्वरः ॥ रूपाणांशतसाहस्रंविनाशायचकारच ॥ ३० ॥ व्याघ्रोवराहोजीमूतःपर्वतःसागरोद्रुमः ॥ यक्षोदैत्यस्वरूपीचसोऽदृश्यतदशाननः ॥ ३१ ॥ बहूनिचकरोतिस्मदृश्यंतेनत्वसौततः ॥ प्रतिगृह्यततोराममहदस्त्रंदशाननः ॥ जघानमूर्ध्निधनदंव्याविध्यमहतींगदाम् ॥ ३२ ॥ एवंसतेनाभिहतोविह्वलःशोणितोक्षितः ॥ कृत्तमूलइवाशोकोनिपपातधनाधिपः ॥ ३३ ॥ ततःपद्मादिभिस्तत्रनिधिभिःसतदावृतः ॥ धनदोच्छ्वासितस्तैस्तुवनमानीयनंदनम् ॥ ३४ ॥ निर्जित्यराक्षसेंद्रस्तंधनदंहृष्टमानसः ॥ पुष्पकंतस्यजग्राहविमानंजयलक्षणम् ॥ ३५ ॥ कांचनस्तंभसंवीतंवैदूर्यमणितोरणम् ॥ मुक्ताजालप्रतिच्छन्नंसर्वकालफलद्रुमम् ॥३६॥ मनोजवंकामगमंकामरूपंविहंगमम् ॥ मणिकांचनसोपानंतप्तकांचनवेदिकम् ॥ ३७ ॥ देवोपवाह्यमक्षय्यंसदादृष्टिमनःसुखम् ॥ बह्वाश्चर्यंभक्तिचित्रंब्रह्मणापरिनिर्मितम् ॥ ३८ ॥ निर्मितंसर्वकामैस्तुमनोहरमनुत्तमम् ॥ नतुशीतंनचोष्णंचसर्वर्तुसुखदंशुभम् ॥ ३९ ॥ सतंराजासमारुह्यकामगंवीर्यनिर्जितम् ॥ जितंत्रिभुवनंमेनेदर्पोत्सेकात्सुदुर्मतिः ॥ जित्वावैश्रवणंदेवंकैलासात्समवातरत् ॥ ४० ॥

वचनानंतरं तेन धनदेन समाहतास्ताडिता मारीचप्रमुखाः सर्वे विमुखा युद्धविमुखा विप्रदुद्रुवुः ॥ २६ ॥ ततस्तद्विद्रावणानंतरं तेन धनदेन ॥ २७ ॥ २८ ॥ २९ ॥ राक्षसेश्वरो रावणः विनाशाय धनदनाशाय रूपाणां शतसाहस्रं चकार ॥ ३० ॥ रूपाण्याह व्याघ्र इति ॥ ३१ ॥ बहूनि शस्त्रवर्षाणि च करोति स्म तान्येव दृश्यंते न त्वसौ तथा मायाप्रयुक्तव्याघ्रादय एव दृश्यंते न त्वसौ ॥३२॥३३॥ निधिभिर्निधिदेवताभिः धनदोच्छ्वासित इति संधिरार्षः ॥३४॥ जयलक्षणं जयचिह्नं ख्यापयमिति शेषः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ब्रह्मणा विश्वकर्मणा ॥ ३८ ॥ ३९ ॥ ४० ॥

॥४१॥ येवेमानः ॥ कतकस्तु त्रयस्त्रिंशत्श्लोकसंख्यामत्रसर्गे लिलेख ॥ इति श्रीरा०श्रीरामीये रा०वा०आ०उत्तरकांडे पंचदशः सर्गः ॥ १५ ॥ स जित्वेति। महासेनस्य स्कंदस्य प्रसूतिर्यस्मिंस्तच्छरवणं ययौ ॥१॥२ ॥ विष्टंभितं निरुद्धसंचारम्॥३॥कामगं स्वामिचित्तानुकूलसंचारवत्कृतं निर्मितमिदं विष्टब्धं किं तदेवाह कस्मान्नागमदित्यचिंतयत्॥४॥मे ममेच्छया पुष्पकं न गच्छति तदिदं किं निमित्तमिति विचिंत्य स्वयमेव हेतुं तर्कयति पर्वतस्येति । पर्वतोपरि स्थितस्येत्यर्थः । कस्यचित्पुरुषस्येदं कर्म स्तंभनकर्म भवेत्॥५॥ मारीचोपि तदुक्तमेवानुवदति तत इति । पुष्पकं न गच्छतीति यत्रेदं निष्कारणम्॥६॥कारणमूह

सतेजसाविपुलमवाप्यतंजयंप्रतापवान्विमलकिरीटहारवान् ॥ रराजवैपरमविमानमास्थितोनिशाचरःसदसिगतोयथानलः ॥४१॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे पंचदशः सर्गः ॥ १५ ॥ सजित्वाधनदंरामभ्रातरंराक्षसाधिपः ॥ महासेनप्रसूतिंतद्ययौशरवणंमहत् ॥ ॥ १ ॥ अथापश्यद्दशग्रीवोरौक्मंशरवणंमहत् ॥ गभस्तिजालसंवीतंद्वितीयमिवभास्करम् ॥२॥ सपर्वतंसमारुह्यकंचिद्रम्यवनांतरम् ॥ प्रेक्षतेपुष्पकंतत्ररामविष्टंभितंतदा ॥ ३ ॥ विष्टब्धंकिमिदंकस्मान्नागमत्कामगंकृतम् ॥ अचिंतयद्राक्षसेंद्रःसचिवैस्तैःसमावृतः ॥ ४ ॥ किंनिमित्तमिच्छयामेनेदंगच्छतिपुष्पकम् ॥ पर्वतस्योपरिष्ठस्यकर्मेदंकस्यचिद्भवेत् ॥ ५ ॥ ततोऽब्रवीत्तदारामममारीचोबुद्धिकोविदः ॥ नेदंनिष्कारणंराजन्पुष्पकंयन्नगच्छति ॥ ६ ॥ अथवापुष्पकमिदंधनदान्नान्यवाहनम् ॥ अतोनिस्पंदमभवद्धनाध्यक्षविनाकृतम् ॥ ७ ॥ इतिवाक्यांतरेतस्यकरालःकृष्णपिंगलः वामनोविकटोमुंडीनंदीह्रस्वभुजोबली ॥ ८ ॥ ततःपार्श्वमुपागम्यभवस्यानुचरोब्रवीत् ॥ नंदीश्वरोवचश्चेदंराक्षसेंद्रमशंकितः ॥ ९ ॥ निवर्तस्वदशग्रीवशैलेक्रीडतिशंकरः ॥ सुपर्णनागयक्षाणांदेवगंधर्वरक्षसाम् ॥ १० ॥ सर्वेषामेवभूतानामगम्यःपर्वतःकृतः ॥ इतिनंदिवचःश्रुत्वाक्रोधात्कंपितकुंडलः ॥ ११ ॥ रोषात्तुताम्रनयनःपुष्पकादवरुह्यसः ॥ कोयंशंकरइत्युक्त्वाशैलमूलमुपागतः ॥ १२ ॥ सोऽपश्यन्नंदिनंतत्रदेवस्यादूरतःस्थितम् ॥ दीप्तंशूलमवष्टभ्यद्वितीयमिवशंकरम् ॥ १३ ॥ तंदृष्ट्वावानरमुखमवज्ञायसराक्षसः ॥ प्रहासंमुमुचेतत्रसतोयइवतोयदः ॥ १४ ॥ तंक्रुद्धोभगवान्नंदीशंकरस्यापरातनुः ॥ अब्रवीत्तत्रतद्रक्षोदशाननमुपस्थितम् ॥ १५ ॥ यस्माद्वानररूपंमामवज्ञायदशानन ॥ अशनीपातसंकाशमपहासंप्रमुक्तवान् ॥ ॥ १६ ॥ तस्मान्मद्वीर्यसंयुक्तामद्रूपसमतेजसः ॥ उत्पत्स्यंतिवधार्थंहिकुलस्यतववानराः ॥ १७ ॥ नखदंष्ट्रायुधाःक्रूरमनःसंपातरंहसः ॥ युद्धोन्मत्ताबलोद्रिक्ताःशैलाइवविसर्पिणः ॥ १८ ॥ तेतवप्रबलंदर्पमुत्सेधंचपृथग्विधम् ॥ व्यपनेष्यंतिसंभूयसहामात्यसुतस्यच ॥ १९ ॥ किंत्विदानींमयाशक्यंहंतुंत्वांहोनिशाचर ॥ नहंतव्योहतस्त्वंहिपूर्वमेवस्वकर्मभिः ॥ २० ॥

यित्वाहाथवेति । धनदान्नान्यवाहनं धनदादन्यस्य वाहनं नेत्यर्थः ॥ ७ ॥ ८ ॥ पार्श्वं रावणस्येति शेषः । अशंकित उपागम्याब्रवीदित्यन्वयः ॥ ९ ॥ १० ॥ कृत ईश्वरेच्छयेति शेषः ॥ ११ ॥ शैलमूलमुपागतः अंतरिक्षात्पर्वतं प्राप्त इत्यर्थः ॥ १२ ॥ १३ ॥ महासं मुमुचे कृतवानित्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ दर्पः आन्तरः उत्सेधः शारीरः ॥ १९ ॥ किं त्विति हे निशाचर ! त्वां

हंतुं यद्यपि मया शक्यमथापीदानीं न हंतव्यः भगवद्वचनानुपालनार्थेति शेषः । किं च त्वं पूर्वमेव स्वकर्मभिः स्वदुष्कृतैर्हत एवासि कालांतरे मद्रूपैरेव हंतव्यो भविष्यसीति भावः ॥ २० ॥ तद्वाक्यसमनंतरं देवदुंदुभ्यादिप्रवृत्तिस्तु तच्छापेन रावणवधनिश्चयजसंतोषात् ॥ २१ ॥ २२ ॥ यत्कृते यदाश्रयक्रीडानिमित्तं गच्छतो मम पुष्पकस्य गतिश्छिन्ना त्वया हे गोपते रुद्र ! तवेमं पर्वतमुन्मूलं करोमि ॥ २३ ॥ २४ ॥ पर्वते पर्वताधस्तात् ॥ २५ ॥ आश्लिष्टा आश्लिष्टवती कर्तरि क्तः ॥ २६ ॥ २७ ॥ तस्य पर्वताधोभागगता भुजाः पीडिता अभवन्निति शेषः ॥ २८ ॥ २९ ॥

इत्युदीरितवाक्येतुदेवेतस्मिन्महात्मनि ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिश्चखाच्च्युता ॥ २१ ॥ अचिंतयित्वासतदानंदिवाक्यंमहाबलः ॥ पर्वतंतुसमासाद्यवाक्यमाहदशाननः ॥ २२ ॥ पुष्पकस्यगतिश्छिन्नायत्कृतेममगच्छतः ॥ तमिमंशैलमुन्मूलंकरोमितवगोपते ॥ २३ ॥ केनप्रभावेणभवोनित्यंक्रीडतिराजवत् ॥ विज्ञातव्यंनजानीतेभयस्थानमुपस्थितम् ॥ २४ ॥ एवमुक्त्वाततोरामभुजान्विक्षिप्यपर्वते ॥ तोलयामासतंशीघ्रंसशैलःसमकंपत ॥२५॥ चालनात्पर्वतस्यैवगणादेवस्यकंपिताः ॥ चचालपार्वतीचापितदाश्लिष्टामहेश्वरम् ॥ २६ ॥ ततोराममहादेवोदेवानांप्रवरोहरः॥ पादांगुष्ठेनतंशैलंपीडयामासलीलया॥ २७॥ पीडितास्तुततस्तस्यशैलस्तंभोपमाभुजाः ॥ विस्मिताश्चाभवंस्तत्रसचिवास्तस्यरक्षसः ॥ २८ ॥ रक्षसातेनरोषाच्चभुजानांपीडनात्तथा ॥ मुक्तोविरावःसहसात्रैलोक्यंयेनकंपितम् ॥ २९ ॥ मेनिरेवज्रनिष्पेषंतस्यामात्यायुगक्षये ॥ तदावर्त्मसुचलितादेवाइंद्रपुरोगमाः ॥ ३० ॥ समुद्राश्चापिसंक्षुब्धाश्चलिताश्चापिपर्वताः ॥ यक्षाविद्याधराःसिद्धाःकिमेतदितिचाब्रुवन् ॥३१॥ तोषयस्वमहादेवंनीलकंठमुमापतिम् ॥ तमृतेशरणंनान्यंपश्यामोत्रदशानन ॥ ३२॥ स्तुतिभिःप्रणतोभूत्वातमेवशरणंव्रज ॥ कृपालुःशंकरस्तुष्टःप्रसादंतेविधास्यति ॥ ३३ ॥ एवमुक्तस्तदामात्यैस्तुष्टाववृषभध्वजम् ॥ सामभिर्विविधैःस्तोत्रैःप्रणम्यसदशाननः ॥ संवत्सरसहस्रंतुरुदतोरक्षसोगतम् ॥ ३४ ॥ ततःप्रीतोमहादेवःशैलाग्रेविष्ठितंप्रभुः ॥ मुक्त्वाचास्यभुजान्रामप्राहवाक्यंदशाननम् ॥ ३५ ॥ प्रीतोस्मितववीरस्यशौटीर्याच्चदशानन ॥ शैलाक्रांतेनयोमुक्तस्त्वयारावःसुदारुणः ॥ ३६ ॥ यस्माल्लोकत्रयंचैतद्रावितंभयमागतम् ॥ तस्मात्त्वंरावणोनामनाम्नाराजन्भविष्यसि ॥ ३७ ॥देवतामानुषायक्षायेचान्येजगतीतले ॥ एवंत्वामभिधास्यंतिरावणंलोकरावणम् ॥ ३८ ॥ गच्छपौलस्त्यविस्रब्धंपथायेनत्वमिच्छसि ॥ मयाचैवाभ्यनुज्ञातोराक्षसाधिपगम्यताम् ॥ ३९ ॥ एवमुक्तस्तुलंकेशःशंभुनास्वयमब्रवीत ॥ प्रीतोयदिमहादेववरंमेदेहियाचतः ॥ ४० ॥ अवध्यत्वंमयाप्राप्तंदेवगंधर्वदानवैः ॥ राक्षसैर्गुह्यकैर्नागैर्येचान्येबलवत्तराः ॥ ४१ ॥

तस्यामात्यास्तदीयं शब्दं युगक्षये जायमानं वज्रनिष्पेषं मेनिरे तदा तच्छब्दश्रवणकाले वर्त्मस्विति वर्त्मसु स्थिता देवा वर्त्मभ्यः प्रचलिता इत्यर्थः ॥ ३० ॥ ३१ ॥ अथ तन्मंत्रेण आहुस्तोषयस्वेति ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ शौटीर्यात् चास्तुतेः ॥ ३६ ॥ रावितं शब्दितम ॥ ३७ ॥ ३८ ॥ मयाभ्यनुज्ञातः पुष्पकेण गमनायेति शेषः असीति च अतो गम्यताम् ॥ ३९ ॥ यदि प्रीतो यदि च वरं

ददासि तदा याचतो मे देहीत्यर्थः ॥ ४० ॥ ४१ ॥ न गणे न गणयामीत्यर्थः । तत्र हेतुः स्वल्पा इति । स्वल्पबलवीर्या इत्यर्थः वांछितं चायुषः शेषं भगवद्दत्तदीर्घायुष्यायोभागो गतस्तस्माच्छेषमवशिष्ट मायुर्वांछितं तदेतैर्दुष्कर्मभिर्ययाऽविनष्टं भवति तथा प्रयच्छ तस्मिंश्चायुषि सर्वजयाय शस्त्रं च दिव्यं प्रयच्छ ॥ ४२ ॥ ४३ ॥ आयुषश्चावशेषं ददौ शापाद्यनाशयत्वेन ददावित्यर्थः ॥ ४४ ॥ इदं नावज्ञेयं शस्त्रमस्य पूज्यौदासीन्यं न कार्यमित्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ धैर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे षोडशः सर्गः ॥१६॥

मानुषान्नगणेदेवस्वल्पास्तेममसंमताः ॥ दीर्घमायुश्चमेप्राप्तंब्रह्मणस्त्रिपुरांतक ॥ वांछितंचायुषःशेषंशस्त्रंत्वंचप्रयच्छमे ॥ ४२ ॥ एवमुक्तस्ततस्ते नरावणेनसशंकरः ॥ ददौखड्गंमहादीप्तंचंद्रहासमितिश्रुतम् ॥ ४३ ॥ आयुषश्चावशेषंचददौभूतपतिस्तदा ॥ ४४ ॥ दत्त्वोवाचततःशंभुर्नावज्ञेय मिदंत्वया ॥ अवज्ञातंयदिहितेमामेवैष्यत्यसंशयः ॥ ४५ ॥ एवंमहेश्वरेणैवकृतनामासरावणः ॥ अभिवाद्यमहादेवमारुरोहाथपुष्पकम् ॥ ४६ ॥ ततोमहीतलंरामपर्यक्रामतरावणः ॥ क्षत्रियान्सुमहावीर्यान्बाधमानस्ततस्ततः ॥ ४७ ॥ केचित्तेजस्विनःशूराःक्षत्रियायुद्धदुर्मदाः ॥ तच्छासनम कुर्वंतोविनेशुःसपरिच्छदाः ॥ ४८ ॥ अपरेदुर्जयंरक्षोजानंतःप्राज्ञसंमताः ॥ जिताःस्मइत्यभाषंतराक्षसंबलदर्पितम् ॥ ४९ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीये आदिकाव्ये उत्तराकांडे षोडशः सर्गः ॥ १६ ॥ अथराजन्महाबाहुर्विचरन्पृथिवीतले ॥ हिमवद्वनमासाद्यपरिचक्रामरावणः ॥ १ ॥ तत्रापश्यतसवैकन्यांकृष्णाजिनजटाधराम् ॥ आर्षेणविधिनायुक्तांदीप्यंतींदेवतामिव ॥२॥ सदृष्ट्वारूपसंपन्नांकन्यांतांसुमहाव्रताम् ॥ काममोहपरी तात्मापप्रच्छप्रहसन्निव ॥ ३ ॥ किमिदंवर्तसेभद्रेविरुद्धंयौवनस्यते ॥ नहियुक्तातवैतस्यरूपस्यैवंप्रतिक्रिया ॥ ४ ॥ रूपंतेऽनुपमंभीरुकामोन्मादकरं नृणाम् ॥ नयुक्तंतपसिस्थातुंनिर्गतोह्येषनिर्णयः ॥ ५ ॥ कस्यासिकिमिदंभद्रेकश्चभर्तावरानने ॥ येनसंभुज्यसेभीरुसनरःपुण्यभाग्भुवि ॥ ६ ॥ पृच्छतःशंसमेसर्वंकस्यहेतोःपरिश्रमः ॥ एवमुक्तातुसाकन्यारावणेनयशस्विनी ॥ ७ ॥ अब्रवीद्विधिवत्कृत्वातस्यातिथ्यंतपोधना ॥ कुशध्वजोनाम पिताब्रह्मर्षिरमितप्रभः ॥ बृहस्पतिसुतःश्रीमान्बुद्ध्यातुल्योबृहस्पतेः ॥ ८ ॥ तस्याहंकुर्वतोनित्यंवेदाभ्यासंमहात्मनः ॥ संभूतावाङ्मयीकन्या नाम्नावेदवतीस्मृता ॥ ९ ॥

अथ वेदवत्या रावणस्य शापदानकथनपूर्वकं सैवेयं जनकात्मजेति कथनं अथ राजन्निति ॥ १ ॥ आर्षेण विधिना तपोनुष्ठानेन ॥ २ ॥ प्रहसन्निव अरण्ये मयाऽनाथा सुकन्या प्राप्तेति संतोषजः प्रहास इति कतकः ॥ ३ ॥ एवं प्रतिक्रिया इदमाचरणम् ॥ ४ ॥ निर्गतः प्रसिद्ध एष निर्णयो वृद्धानामिति शेषः ॥ ५ ॥ कस्यासि दुहितेति शेषः किमिदं व्रतमित्यर्थः ॥ ६ ॥ कस्य हेतोः किं फलनिमित्तम् ॥ ७ ॥ ८ ॥ वेदा भ्यासं कुर्वतो महात्मनस्तस्य सकाशात् वाङ्मयी वाङ्मयवेदमूर्तिः कन्याहं संभूताऽतएवाहं पित्रा नाम्ना वेदवतीति स्मृता भगवतः शक्तिर्लक्ष्मीरेव रावणवधाय रावणं शत्रुमत्रावतीर्णा अस्यावाङ्मयीत्वं सार्वात्म्याव

अतएव वक्ष्यति पितुर्मे विष्णुर्जामाताऽभिमेत इति ॥ ९ ॥ ते देवादयः वरणं रोचयंति रुचिः क्रियासामान्ये वरणं कुर्वंति स्मेत्यर्थः ॥ १० ॥ ११ ॥ अन्यस्य अन्यस्मै इत्यर्थः ॥१२॥१३॥१४॥१५॥
नारायणं नारस्य जीवसमूहस्यायनं नारा आपोऽयनं यस्येति वा तं प्रति गतं पितुर्मनोरथं सत्यं करोमीति इच्छया तं नारायणमेव हृदयेनोद्वहे ॥ १६ ॥ इति प्रतिज्ञां प्रागुक्तेच्छाविषयाविषय आरुह्य कृत्वा॥ १७॥

ततोदेवाःसगंधर्वायक्षराक्षसपन्नगाः ॥ तेचापिगत्वापितरंवरणंरोचयंतिमे ॥१०॥ नचमांसपितातेभ्योदत्तवान्राक्षसेश्वर ॥ कारणंतद्वदिष्यामिनिशामय
महाभुज ॥ ११ ॥ पितुस्तुममजामाताविष्णुःकिलसुरेश्वरः ॥ अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्यमेपिता ॥१२॥ दातुमिच्छतितस्मैतुतच्छ्रुत्वाबल
दर्पितः ॥ शंभुर्नामततोराजादैत्यानांकुपितोभवत् ॥ १३ ॥ तेनरात्रौशयानोमेपितापापेनहिंसितः ॥ १४ ॥ ततोमेजननीदीनातच्छरीरंपितुर्मम ॥
परिष्वज्यमहाभागाप्रविष्टाहव्यवाहनम् ॥ १५ ॥ ततोमनोरथंसत्यंपितुर्नारायणंप्रति ॥ करोमीतितमेवाहंहृदयेनसमुद्वहे ॥ १६ ॥ इतिप्रतिज्ञामा
रुह्यचरामिविपुलंतपः ॥ एततेसर्वमाख्यातंमयाराक्षसपुंगव ॥ १७ ॥ नारायणोममपतिर्नत्वन्यःपुरुषोत्तमात् ॥ आश्रयेनियमंघोरंनारायणपरी
प्सया ॥ १८ ॥ विज्ञातस्त्वंहिमेराजन्गच्छपौलस्त्यनंदन ॥ जानामितपसासर्वंत्रैलोक्येयद्धिवर्तते ॥ १९ ॥ सोऽब्रवीद्रावणोभूयस्तांकन्यांसुमहाव्र
ताम् ॥ अवरुह्यविमानाग्रात्कंदर्पशरपीडितः ॥ २० ॥ अवलिप्ताऽसिसुश्रोणियस्यास्तेमतिरीदृशी ॥ वृद्धानांमृगशावाक्षिभ्राजतेपुण्यसंचयः ॥२१॥
त्वंसर्वगुणसंपन्नानार्हसेवक्तुमीदृशम् ॥ त्रैलोक्यसुंदरीभीरुयौवनंतेऽतिवर्तते ॥ २२ ॥ अहंलंकापतिर्भद्रेदशग्रीवइतिश्रुतः ॥ तस्यमेभवभार्यात्वंभुं
क्ष्वभोगान्यथासुखम् ॥ २३ ॥ कश्चतावदसौयंत्वंविष्णुरित्यभिभाषसे ॥ वीर्येणतपसाचैवभोगेनचबलेनच ॥ समयानोसमोभद्रेयंत्वंकामयसेंगने
॥ २४ ॥ इत्युक्तवतितस्मिंस्तुवेदवत्यथसाब्रवीत् ॥ मामैवमितिसाकन्यातमुवाचनिशाचरम् ॥ २५ ॥ त्रैलोक्याधिपतिंविष्णुंसर्वलोकनमस्कृतम् ॥
त्वदृतेराक्षसेंद्रान्यःकोऽवमन्येतबुद्धिमान् ॥ २६ ॥ एवमुक्तस्तयातत्रवेदवत्यानिशाचरः ॥ मूर्धजेषुतदाकन्यांकराग्रेणपरामृशत् ॥ २७ ॥ ततोवेदवती
क्रुद्धाकेशान्हस्तेनसाच्छिनत् ॥ असिर्भूत्वाकरस्तस्याःकेशांश्छिन्नांस्तदाकरोत् ॥ २८ ॥ साज्वलंतीवरोषेणदहंतीवनिशाचरम् ॥ उवाचाग्निंसमा
धायमरणायकृतत्वरा ॥ २९ ॥ धर्षितायास्त्वयाऽनार्यनमेजीवितमिष्यते ॥ रक्षस्तस्मात्प्रवेक्ष्यामिपश्यतस्तेहुताशनम् ॥ ३० ॥ यस्मात्तुधर्षिता
चाहंत्वयापापात्मनावने ॥ तस्मात्तववधार्थंहिसमुत्पत्स्यत्यहंपुनः ॥ ३१ ॥

॥ १८ कथं विज्ञातस्तत्राह जानामीति ॥ १९ ॥ २० ॥ पुण्यसंचयः पुण्यसंग्रहणं वृद्धानामेव भ्राजते न तु युवत्या इत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ कश्चेति । मदपेक्षयाऽत्यल्पवीर्यादियुक्तः ॥ २४ ॥ मा
एवं विष्णुविषये वदेति शेषः ॥ २५ ॥ २६ ॥ २७ ॥ हस्तेन केशच्छेदः कथं तत्राहासिर्भूत्वेति ॥ २८ ॥ २९ ॥ धर्षितायाः केशस्पर्शेन स्त्रीभावं प्रापितायाः ॥ ३० ॥ पुनः समुत्पत्स्यति समुत्पत्स्ये

इत्यर्थः ॥ २१ ॥ व्ययः ब्रह्मवरदानादिदानीं तत्र मरणाभावेन वृथा व्यय इत्यर्थः ॥ २२ ॥ अयोनिजा भूत्वा धर्मिणो धर्मिष्ठस्य न्यायतः सुता भवेयम् ॥ २३ ॥ अत्रापि पुष्पवर्षं रावणनाशनिश्चयजसंतोषात् ॥ २४ ॥ सैषा कृतरावणवधप्रतिज्ञा वेदवत्येवेत्यर्थः । विष्णुस्त्वमिति । अनेन सीताया लक्ष्मीत्वं स्फुटमेवोक्तम् । तदुक्तं पराशरेण राघवत्वेभवत्सीता रुक्मिणी कृष्णजन्मनीति ॥ २५ ॥ यया वेदवत्या पूर्वं तदवतारे क्रोधहतो यः शत्रुः सोसौ शैलाभः पुनस्तयैव यथाप्रतिज्ञं त्वां पतिं प्राप्य पतिभूतस्य तवामानुषं वीर्यमुपाश्रयित्वोपाश्रित्य निहतः । अनेन सीतैव रावणवधे मुख्यं कारणं रामे तु हंतृत्वमारोपितमिति सूचितम् ॥ २६ ॥ भाविकल्पेष्वप्येवमेवावतारादिकल्पेन कल्पो व्याख्येय इति न्यायादित्याह एवमिति । एषा महाभागा एवमेव मर्त्येषु भाविषु हलमुखोत्कृष्टे क्षेत्रे पुनः पुनरुत्पत्स्यते उक्तप्रयोजनायेति शेषः उत्पत्तिरत्राविर्भावः । एतेन भगवतोपि तथावतारः सूचित एव ॥ २७ ॥ सीताविर्भावो वैशाखे शुक्लनवम्यामिति महासुंदरीतंत्रे उक्तम् । वैशाखे शुक्लनवम्यामुत्पन्ना सावनीसुता ॥ सीतामुखात्सा संजाता पालिता

नहिशक्यःस्त्रियाहंतुंपुरुषःपापनिश्चयः ॥ शापेत्वयिमयोत्सृष्टेतपसश्चव्ययोभवेत् ॥ ३२ ॥ यदित्वस्तिमयाकिंचित्कृतंदत्तंहुतंतथा ॥ तस्मात्त्वयोनिजासाध्वीभवेयंधर्मिणःसुता ॥ ३३ ॥ एवमुक्त्वाप्रविष्टासाज्वलितंजातवेदसम् ॥ पपातचदिवोदिव्यापुष्पवृष्टिःसमंततः ॥ ३४ ॥ सैषाजनकराजस्यप्रसूतातनयाप्रभो ॥ तवभार्यामहाबाहोविष्णुस्त्वंहिसनातनः ॥ ३५ ॥ पूर्वंक्रोधहतःशत्रुर्ययासौनिहतस्तया ॥ उपाश्रयित्वाशैलाभस्तववीर्यममानुषम् ॥ ३६ ॥ एवमेषामहाभागामर्त्येषूत्पत्स्यतेपुनः ॥ क्षेत्रेहलमुखोत्कृष्टेवेद्यामग्निशिखोपमा ॥ ३७ ॥ एषावेदवतीनामपूर्वमासीत्कृतेयुगे ॥ त्रेतायुगमनुप्राप्यवधार्थंतस्यरक्षसः ॥ उत्पन्नामैथिलकुलेजनकस्यमहात्मनः ॥ ३८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तदशः सर्गः ॥ १७ ॥ प्रविष्टायांहुताशंतुवेदवत्यांसरावणः ॥ पुष्पकंतुसमारुह्यपरिचक्राममेदिनीम् ॥ १ ॥ ततोमरुत्तंनृपतिंयजंतंसहदैवतैः ॥ उशीरबीजआसाद्यददर्शसतुरावणः ॥२॥ संवर्तोनामब्रह्मर्षिःसाक्षाद्भ्राताबृहस्पतेः ॥ याजयामासधर्मज्ञःसर्वैर्देवगणैर्वृतः ॥ ३ ॥ दृष्ट्वादेवास्तुतद्रक्षोवरदानेनदुर्जयम् ॥ तिर्यग्योनिंसमाविष्टास्तस्यधर्षणभीरवः ॥ ४ ॥ इंद्रोमयूरःसंवृत्तोधर्मराजस्तुवायसः ॥ कृकलासोधनाध्यक्षोहंसश्चवरुणोभवत् ॥ ५ ॥ अन्येष्वपिगतेष्वेवंदेवेष्वारिनिषूदन ॥ रावणःप्राविशद्यज्ञंसारमेयइवाशुचिः ॥ ६ ॥ तंचराजानमासाद्यरावणोराक्षसाधिपः ॥ प्राहयुद्धंप्रयच्छेतिनिर्जितोस्मीतिवावद ॥ ७ ॥ ततोमरुत्तोनृपतिःकोभवानित्युवाचतम् ॥ अवहासंततोमुक्त्वारावणोवाक्यमब्रवीत् ॥ ८ ॥

जनकेन च ॥ १ ॥ रामपत्नी महाभागा सीता नामेति विश्रुता ॥ तस्मिन्दिने रामभक्ताः श्रद्धाभक्तिसमन्विताः ॥ २ ॥ महोत्सवपराः सर्वे वित्तशाठ्यविवर्जिताः ॥ गीतवादित्रनृत्याद्यै रामभक्तिपरायणाः ॥ ३ ॥ वैशाखसितनवम्यां पुराणपठनं तथा ॥ लक्ष्मीसूक्तं पठंस्तत्र याति रामं सनातनम् ॥४॥ सौभाग्यं धनधान्यं च पुत्रसंततिविस्तृतम् ॥ रामप्रसादाल्लभते मुच्यते सर्वपातकादिति ॥५॥ उपसंहरति एषेति । आसीत्कृते युगे इत्यनंतरं त्रेतायुगमिति जनकस्योत्पन्ना न्यायतः पुत्रीत्वेनोत्पन्नेत्यर्थः ॥३८॥ ३ इंडमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तदशः सर्गः ॥१७॥ प्रविष्टायामिति ॥ १ ॥ उशीरबीजमिति देशनाम ॥ २ ॥ देवगणैर्वृतः अपरोक्षतया हविर्भागार्थमवस्थितैरिति शेषः ॥ ३ ॥ ४ ॥ ५ ॥ अन्येष्वपि देवेष्वेवंगतेषु तिर्यग्योनिस्वरूपं गतेष्वित्यर्थः ॥६॥७॥ मुक्त्वा कृत्वा ॥ ८ ॥

अकुतूहलभावेन मां दृष्ट्वाप्यविस्मयनिर्भयानादरभावेन यो नावगच्छसि तस्य तव प्रीतोस्मि ॥ ९ ॥ कोन्योऽस्ति न कोपि सर्वेपि जानंतीत्यर्थः ॥ १० ॥ अथ मरुत्तो व्याजस्तुत्याह धन्य इति ॥ ११ ॥ लोकेषु विद्यत इत्युत्तरमेकः श्लोकः प्रक्षिप्तः । उक्तार्थत्वादिति कतकः । कं त्वमिति केवलं पूज्यपूजारहितं कं धर्मं प्राक्चरित्वा वरं लब्धवानसि तथाविधोपि कश्चिद्धर्म इति चेत्र श्रुतपूर्व इत्याह श्रुतेति । या दृशं भाषसे ज्येष्ठपीडारूपं समाचारम् ॥ १२ ॥ १३ ॥ मार्गमावृणोद्रणायागतस्य रावणस्येति भावः ॥ १४ ॥ महानृपिः संवर्तः ॥ १५ ॥ माहेश्वरं तद्देवत्यं सत्रं यागः ॥ १६ ॥ मखमुखः मखसमा

अकुतूहलभावेनप्रीतोस्मितवपार्थिव ॥ धनदस्यानुजंयोमांनावगच्छसिरावणम् ॥ ९ ॥ त्रिषुलोकेषुकोन्योस्तियोनजानातिमेबलम् ॥ भ्रातरंयेन निर्जित्यविमानमिदमाहृतम् ॥ १० ॥ ततोमरुत्तःसनृपस्तंरावणमथाब्रवीत् ॥ धन्यःखलुभवान्येनज्येष्ठोभ्रातारणेजितः ॥ नत्वयासदृशःश्लाघ्य स्त्रिषुलोकेषुविद्यते ॥११॥ " नाधर्मसहितंश्लाघ्यंनलोकप्रतिसंहितम् ॥ कर्मदौरात्म्यकंकृत्वाश्लाघसेभ्रातृनिर्जयात् ॥ १ ॥ " कंत्वंप्राक्केवलंधर्मंच रित्वालब्धवान्वरम् ॥ श्रुतपूर्वंहिनमयाभाषसेयादृशंस्वयम् ॥ १२ ॥ तिष्ठेदानींनमेजीवन्प्रतियास्यसिदुर्मते ॥ अद्यत्वांनिशितैर्बाणैःप्रेषया मियमक्षयम् ॥१३॥ ततःशरासनंगृह्यसायकांश्चनराधिपः ॥ रणायनिर्ययौक्रुद्धःसंवर्तोमार्गमावृणोत् ॥१४॥ सोब्रवीत्स्नेहसंयुक्तंमरुत्तंतमहानृषिः ॥ श्रोतव्यंयदिमद्वाक्यंसंप्रहारोनतेक्षमः ॥ १५ ॥ माहेश्वरमिदंसत्रमसमाप्तंकुलंदहेत् ॥ दीक्षितस्यकुतोयुद्धंक्रोधित्वंदीक्षितेकुतः ॥ १६ ॥ संशय श्चजयेनित्यंराक्षसश्चसुदुर्जयः ॥ सनिवृत्तोगुरोर्वाक्यान्मरुत्तःपृथिवीपतिः ॥ विसृज्यसशरंचापंस्वस्थोमखमुखोभवत् ॥ १७ ॥ ततस्तंनिर्जितं मत्वाघोषयामासवैशुकः ॥ रावणोजयतीत्युच्चैर्हर्षान्नादंविमुक्तवान् ॥ १८ ॥ तान्भक्षयित्वातत्रस्थान्महर्षीन्यज्ञमागतान् ॥ वितृप्तोरुधिरैस्तेषांपुनः संप्रययौमहीम् ॥ १९ ॥ रावणेतुगतेदेवाःसेंद्राश्चैवदिवौकसः ॥ ततःस्वांयोनिमासाद्यतानिसत्त्वानिचाब्रुवन् ॥ २० ॥ हर्षात्तदाब्रवीदिंद्रोमयूरंनी लबर्हिणम् ॥ प्रीतोस्मितवधर्मज्ञभुजंगाद्धिनतेभयम् ॥ २१ ॥ इदंनेत्रसहस्रंतुयत्तद्बर्हेभविष्यति ॥ वर्षमाणेमयिमुदंप्राप्स्यसेप्रीतिलक्षणम् ॥ २२ ॥ एवमिंद्रोवरंप्रादान्मयूरस्यसुरेश्वरः ॥ २३ ॥ नीलाःकिलपुराबर्हामयूराणांनराधिप ॥ सुराधिपाद्वरंप्राप्यगताःसर्वेपिबर्हिणः ॥ २४ ॥ धर्मराजोब्रवी द्राममप्राग्वंशेवायसंप्रतिपक्षिस्तवास्मिसुप्रीतःप्रीतस्यवचनंशृणु ॥ २५ ॥ यथान्येविविधैरोगैःपीड्यंतेप्राणिनोमया ॥ ते न तेप्रभविष्यंतिमयिप्रीते नसंशयः ॥ २६ ॥ मृत्युतस्तेभयंनास्तिवरान्ममविहंगम ॥ यावत्त्वांनवधिष्यंतिनरास्तावद्भविष्यसि ॥ २७ ॥

दिन्मुखः ॥ १७ ॥ १८ ॥ वितृप्तः विशेषेण तृप्तः ॥ १९ ॥ स्वां योनिं स्वस्वप्रकृतिमासाद्य तानि सत्त्वानि प्राकार्यवशगृहीतमूर्तिजातीयप्राणिनः ॥ २० ॥ २१ ॥ प्रीतिलक्षणं मत्प्रीतिचिह्नम् ॥ २२ ॥ ॥२३॥ नीलाः किलेति । नेत्ररहिताः केवलं नीला इत्यर्थः ॥ २४ ॥ प्राग्वंशे प्राग्विर्गेहे ॥ २५ ॥ ते रोगाः ते तव मयि प्रीते सति न प्रभविष्यंति ॥२६॥ मृत्योरशक्यपरिहारत्वादाह यावदिति ॥२७॥

(निर्म भूत्वा धाभि

द्विषयस्थाः यमलोकस्थाः ॥ २८ ॥ २९ ॥ ३० ॥ मच्छरीरं जलं जलमूर्तित्वात्तस्य ॥ ३१ ॥ कृष्णनीलवर्णेनाग्रेऽग्रदेशे संवीताः माषाः शष्पं बालतृणं तदग्रवन्निर्मलाः कोमलश्यामवर्णा इत्यर्थः क्रोडं भुजांतरम् ॥ ३२ ॥ ३३ ॥ शिरो नित्यं सद्रव्यं स्वर्णवर्णमित्यर्थः । तदेवाह एष कांचनक इति । पूर्वं हि कृकलासा अंजनवर्णा इत्याहुः ॥ ३४ ॥ राज्ञा सह स्वभवनं गताः मरुत्तेन सह स्वगेभिर्थः ॥ ३५ ॥ शैलूमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टादशः सर्गः ॥ १८ ॥ अथेति ॥ १ ॥ २ ॥ एवमकुर्वतां युद्धं निर्जिताः स्मेति वचनं वाऽ

येचमद्विषयस्थावैमानवाःक्षुधयार्दिताः ॥ त्वयिभुक्तेसुतृप्तास्तेभविष्यंतिसबांधवाः ॥ २८ ॥ वरुणस्त्वब्रवीद्धंसंगंगातोयविचारिणम् ॥ श्रूयतांप्रीतिसंयुक्तंततःपत्ररथेश्वरम् ॥ २९ ॥ वर्णोमनोरमःसौम्यश्चंद्रमंडलसन्निभः ॥ भविष्यतितवोदग्रःशुद्धफेनसमप्रभः ॥ ३० ॥ मच्छरीरंसमासाद्यकांतोनित्यंभविष्यसि ॥ प्राप्स्यसेचातुलांप्रीतिमेतन्मेप्रीतिलक्षणम् ॥ ३१ ॥ हंसानांहिपुरारामननर्णःसर्वपांडुरः ॥ पक्षानीलाग्रसंवीताःक्रोडाःशष्पाग्रनिर्मलाः ॥ ३२ ॥ अथाब्रवीद्वैश्रवणःकृकलासंगिरौस्थितम् ॥ हैरण्यंसंप्रयच्छामिवर्णंप्रीतस्तवाप्यहम् ॥ ३३ ॥ सद्रव्यंचशिरोनित्यंभविष्यतितवाक्षयम् ॥ एषकांचनकोवर्णोमत्प्रीत्यातेभविष्यति ॥ ३४ ॥ एवंदत्त्वावरांस्तेभ्यस्तस्मिन्यज्ञोत्सवेसुराः ॥ निवृत्तेसहराज्ञातेपुनःस्वभवनंगताः ॥ ॥ ३५ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआदिकाव्येउत्तराकांडेऽष्टादशःसर्गः ॥ १८ ॥ अथजित्वामरुत्तंसप्रययौराक्षसाधिपः ॥ नगराणिनरेंद्राणांयुद्धकांक्षीदशाननः ॥ १ ॥ समासाद्यतुराजेंद्रान्महेंद्रवरुणोपमान् ॥ अब्रवीद्राक्षसेंद्रस्तुयुद्धंमेदीयतामिति ॥ २ ॥ निर्जिताःस्मेतिवाब्रूतएषमेहिसुनिश्चयः ॥ अन्यथाकुर्वतामेवंमोक्षोनैवोपपद्यते ॥ ३ ॥ ततस्त्वभीरवःप्राज्ञाःपार्थिवाधर्मनिश्चयाः ॥ मंत्रयित्वाततोऽन्योन्यंराजानःसुमहाबलाः ॥ ४ ॥ निर्जिताःस्मेत्यभाषंतज्ञात्वावरबलंरिपोः ॥ दुष्यंतःसुरथोगाधिर्गयोराजापुरूरवाः ॥ ५ ॥ एतेसर्वेऽब्रुवंस्तातनिर्जिताःस्मेतिपार्थिवाः ॥ अथायोध्यांसमासाद्यरावणोराक्षसाधिपः ॥ ६ ॥ सुगुप्तामनरण्येनशक्रेणेवामरावतीम् ॥ सतंपुरुषशार्दूलंपुरंदरसमंबले ॥ ७ ॥ प्राहराजानमासाद्ययुद्धंदेहीतिरावणः ॥ निर्जितोस्मीतिवाब्रूहित्वमेवंममशासनम् ॥ ८ ॥ अयोध्याधिपतिस्तस्यश्रुत्वापापात्मनोवचः ॥ अनरण्यस्तुसंक्रुद्धोराक्षसेंद्रमथाब्रवीत् ॥ ९ ॥ दीयतेद्वंद्वयुद्धंतेराक्षसाधिपतेमया ॥ संतिष्ठाक्षिप्रमायत्तोभवचैवंभवाम्यहम् ॥ १० ॥ अथपूर्वंश्रुतार्थेननिर्जितंसुमहद्बलम् ॥ निष्कामत्तन्नरेंद्रस्यबलंरक्षोवधोद्यतम् ॥ ११ ॥

कुर्वताम् । अन्यथा प्रकारांतरेण मोक्षो मदुपरोधान्नास्तीत्यर्थः ॥ ३ ॥ अभीरवः संतोऽपि राजानः पार्थिवाः पृथ्वीपतयो निर्जिताः स्मेत्यभाषंत ॥ ४ ॥ तानाह दुष्यंत इति । भिन्नभिन्नकालवर्तिनोपि दुष्यंतादयः स्वस्वकाले रावणं प्रति जितत्ववादं वरदानादुक्तवंतः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अहं चैवं भवामि आयत्तो भवामीत्यर्थः ॥ १० ॥ पूर्वं श्रुतार्थेन श्रुतरावणवृत्तांतेन निर्जितं भावे क्तः । निर्जयं प्रति

यत्सुमहद्बलं नियुक्तं तन्नरेंद्रस्य बलं रक्षोवधोद्यतं निष्कामत् निरक्रामत् ॥११॥१२॥१३॥ तस्य महीपतेर्बलं रावणबलं प्राप्य सुचिरं कालं युद्धोत्तममधिकं विक्रमं च कृत्वा तदा सर्वं प्राणश्यत ॥१४॥१५॥
प्रज्वलंतं रावणमासाद्य क्षिप्रमेवावशेषितम् अल्पावशिष्टं सत् तत्र रणे पावकं प्राप्य शलभा इव संकुलं नाशं प्राविशत्प्राप्तमभूत् ॥ १६ ॥ वनापगशतं वनं जलं तत्पूर्णनदीशतम् आर्षो ह्रस्वः ॥ १७ ॥ १८ ॥

नागानांदशसाहस्रंवाजिनांनियुतंतथा ॥ रथानांबहुसाहस्रंपत्तीनांचनरोत्तम ॥ १२ ॥ महींसंछाद्यनिष्क्रांतंसपदातिरथंरणे ॥ ततःप्रवृत्तंसुमहद्युद्धं युद्धविशारद ॥ १३ ॥ अनरण्यस्यनृपतेराक्षसेंद्रस्यचाद्भुतम् ॥ तद्रावणबलंप्राप्यबलंतस्यमहीपतेः ॥ १४ ॥ प्राणश्यततदासर्वंहव्यंहुतमिवानले ॥ युद्ध्वाचसुचिरंकालंकृत्वाविक्रममुत्तमम् ॥ १५ ॥ प्रज्वलंतंतमासाद्यक्षिप्रमेवावशेषितम् ॥ प्राविशत्संकुलंतत्रशलभाइवपावकम् ॥ १६ ॥ सोऽपश्यत्तन्नरेंद्रस्तुनश्यमानंमहाबलम् ॥ महार्णवंसमासाद्यवनापगशतंयथा ॥ १७ ॥ ततःशक्रधनुःप्रख्यंधनुर्विस्फारयन्स्वयम् ॥ आससादनरेंद्रस्तंरावणंक्रोधमूर्च्छितः ॥ १८ ॥ अनरण्येनतेऽमात्यामारीचशुकसारणाः ॥ प्रहस्तसहिताभग्नाव्यद्रवंतमृगाइव ॥ १९ ॥ ततोबाणशतान्यष्टौपातयामासमूर्धनि ॥ तस्यराक्षसराजस्यइक्ष्वाकुकुलनंदनः ॥ २० ॥ तस्यबाणाःपतंतस्तेचक्रिरेनक्षतंक्वचित् ॥ वारिधाराइवाभ्रेभ्यःपतंत्योगिरिमूर्धनि ॥ २१ ॥ ततोराक्षसराजेनक्रुद्धेननृपतिस्तदा ॥ तलेनाभिहतोमूर्ध्निसरथान्निपपातह ॥ २२ ॥ सराजापतितोभूमौविह्वलःप्रविवेपितः ॥ वज्रदग्धइवारण्येसालोनिपतितोयथा ॥ २३ ॥ तंप्रहस्यात्रवीद्रक्षइक्ष्वाकुंपृथिवीपतिम् ॥ किमिदानींफलंप्राप्तंत्वयामांप्रतियुद्ध्यता ॥ २४ ॥ त्रैलोक्येनास्तियोद्वंद्वंममदद्यान्नराधिप ॥ शंकेप्रसक्तोभोगेपुनश्शृणोषिबलंमम ॥ २५ ॥ तस्यैवंब्रुवतोराजामंदासुर्वाक्यमब्रवीत् ॥ किंशक्यमिहकर्तुंवैकालोहिदुरतिक्रमः ॥ २६ ॥ नह्यहंनिर्जितोरक्षस्त्वयाचात्मप्रशंसिना ॥ कालेनैवविपन्नोऽहंहेतुभूतस्तुमेभवान् ॥ २७ ॥ किंत्विदानींमयाशक्यंकर्तुंप्राणपरिक्षये ॥ नह्यहंविमुखोरक्षोयुध्यमानस्त्वयाहतः ॥ २८ ॥ इक्ष्वाकुपरिभावित्वाद्वचोवक्ष्यामिराक्षस ॥ यदिदत्तंयदिहुतंयदिमेसुकृतंतपः ॥ यदिगुप्ताःप्रजाःसम्यक्तदासत्यंवचोस्तुमे ॥ २९ ॥ उत्पत्स्यतेकुलेह्यस्मिन्निक्ष्वाकूणांमहात्मनाम् ॥ रामोदाशरथिर्नामयस्तेप्राणान्हरिष्यति ॥ ॥ ३० ॥ ततोजलधरोदग्रस्ताडितोदेवदुंदुभिः ॥ तस्मिन्नुदाहृतेशापेपुष्पवृष्टिश्चखाच्युता ॥ ३१ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ वज्रदग्धोऽशनिहतः ॥ २३ ॥ इक्ष्वाकुं तद्वंश्यमनरण्यं किं फलं प्राप्तं निर्जितोस्मीति वचनमनुक्तेति शेषः ॥ २४ ॥ २५ ॥ २६ ॥ अहं त्वया न निर्जितः किंतु प्राप्ते न कालेनैव विपन्न इत्यर्थः ॥ २७ ॥ २८ ॥ इक्ष्वाकुपरिभावित्वात् त्वदुक्तावमाननवाक्यस्य इक्ष्वाकु[illegible]रूपत्वादित्यर्थः । वचः शापरूपम् ॥ २९ ॥ ३० ॥ पुष्पवृष्टिरत्रापि प्राग्वत् ॥ ३१ ॥

॥ ३६ ॥ ० ॥

वृषायुध्यन्वृषाअयुध्यन्नित्यर्थः ॥ ५९ ॥ ६० ॥ दुर्बलेव बलरहितेव यथावेगं स्ववेगोचितं महर्तुमसमर्था स्वयमेव द्विधाभूता क्षितावपतत् । तत्र हेतुर्वरदानकृतत्राणे इति ॥ ६१ ॥ अपासर्पत् अपराङ्मुख एव पृष्ठतोगच्छत् निष्टनन् रुदन् ॥ ६२ ॥ ६३ ॥ ६४ ॥ साध्वीतिवादिन इति दीर्घ आर्षः ॥ ६५ ॥ ६६ ॥ ६७ ॥ आतपापाये वर्षाकाले ॥ ६८ ॥ सोत्ससर्जेत्यार्षं सहैव त्यक्तवंत इत्यर्थः ॥ ६९ ॥ अप्राप्तान्येव स्वसमीप

शृंगैरिववृषायुध्यन्दंताग्रैरिवकुंजरौ ॥ परस्परंविनिघ्नंतौनरराक्षससत्तमौ ॥५९॥ ततोर्जुनेनक्रुद्धेनसर्वप्राणेनसागदा ॥ स्तनयोरंतरेमुक्तारावणस्य महोरसि ॥ ६० ॥ वरदानकृतत्राणेसागदारावणोरसि ॥ दुर्बलेवयथावेगंद्विधाभूतापतत्क्षितौ ॥६१॥ सत्वर्जुनप्रयुक्तेनगदाघातेनरावणः ॥ अपासर्पद्धनुर्मात्रंनिषसादचनिष्टनन् ॥ ६२ ॥ सविह्वलंतदालक्ष्यदशग्रीवंततोऽर्जुनः ॥ सहसोत्पत्यजग्राहगरुत्मानिवपन्नगम् ॥ ६३ ॥ सतुबाहुसहस्रेणबलाद्गृह्यदशाननम् ॥ बबंधबलवान्राजाबलिंनारायणोयथा ॥ ६४ ॥ बध्यमानेदशग्रीवेसिद्धचारणदेवताः ॥ साध्वीतिवादिनःपुष्पैःकिरंत्यर्जुनमूर्धनि ॥ ६५ ॥ व्याघ्रोमृगमिवादायमृगराडिवकुंजरम् ॥ ररासहैहयोराजाहर्षादंबुदवन्मुहुः ॥ ६६ ॥ प्रहस्तस्तुसमाश्वस्तोदृष्ट्वाबद्धंदशाननम् ॥ सहसाराक्षसःक्रुद्धअभिदुद्रावहैहयम् ॥ ६७ ॥ नक्तंचराणांवेगस्तुतेषामापततांबभौ ॥ उद्धूतआतपापायेपयोदानामिवांबुधौ ॥ ६८ ॥ मुंचमुंचेतिभाषंतस्तिष्ठतिष्ठेतिचासकृत् ॥ मुसलानिचशूलानिसोत्ससर्जतदारणे ॥ ६९ ॥ अप्राप्तान्येवतान्याशुअसंभ्रांतस्तदार्जुनः ॥ आयुधान्यमरारिणांजग्राहारिनिषूदनः ॥ ७० ॥ ततस्तान्येवरक्षांसिदुर्धरैःप्रवरायुधैः ॥ भित्त्वाविद्रावयामासवायुरंबुधरानिव ॥७१॥ राक्षसांस्त्रासयामासकार्तवीर्योर्जुनस्तदा ॥ रावणंगृह्यनगरंप्रविवेशसुहृद्वृतः ॥ ७२ ॥ सकीर्यमाणःकुसुमाक्षतोत्करैर्द्विजैःसपौरैःपुरुहूतसन्निभः ॥ ततोर्जुनःस्वांप्रविवेशतांपुरींबलिंनिगृह्येवसहस्रलोचनः ॥ ७३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आ०उत्तरकांडे द्वात्रिंशः सर्गः ॥ ३२ ॥ रावणग्रहणंतत्तुवायुग्रहणसन्निभम् ॥ ततःपुलस्त्यःशुश्रावकथितंदिविदैवतैः ॥ १ ॥ ततःपुत्रकृतस्नेहात्कंप्यमानोमहाधृतिः ॥ माहिष्मतीपतिंद्रष्टुमाजगाममहानृषिः ॥२॥ सवायुमार्गमास्थायवायुतुल्यगतिर्द्विजः ॥ पुरींमाहिष्मतींप्राप्तोमनःसंपातविक्रमः ॥ ३ ॥ सोमरावतिसंकाशांहृष्टपुष्टजनावृताम् ॥ प्रविवेशपुरींब्रह्माइंद्रस्येवामरावतीम् ॥ ४ ॥

मनागतान्येवांतरिक्षस्थान्येवायुध [illegible] तान्यायुधानि रावणग्राहिकरव्यतिरिक्तकरैः धरः । समभावात्तयोर्युद्धं ॥ ७३ ॥ आगच्छमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकां[illegible] ॥ वासितार्थे करि[illegible] ३२ ॥ अथ [illegible] युयुधाते इति [illegible] ५२ ॥ ५३ ॥ ५४ ॥ अशनिरवेभ्यः अशोच्यमानः ॥ २ ॥ मनःसंपातविक्रमः मनस्तुल्यगतिः ॥ ३ ॥ अमरावतिसंकाशाम् आर्षो

[illegible] नाना [illegible] रावणेरो [illegible] कांचनाभं कांचनवर्णं चक्रे प्रकाशि

हस्वः ॥ ४ ॥ सदु [illegible] प्रत्यभिज्ञाय [illegible] ॥ ७ ॥ ईश्वरं ब्रह्माणम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ शिवं कुशलं पुल
स्त्योवाचेति संधिरार्षः ॥ [illegible] ॥ यस्य रावणस्य ॥ १५ ॥ पुत्रकस्येति [illegible] नाशितं स्वीयं नाम च रावणनिदित्येवं त्रैलोक्ये विश्रावितम् ॥ १६ ॥ न किंचिद्व
ऊचे किं तु क्रिया केवलमुत्तरमिति मुमोचैव महष्टवत् ब्रह्मपुत्रो मां प्रार्थितवानिति [illegible] युक्तः सन् ॥ [illegible] हिंसकं सख्यं परस्परहिंसाप्रवृत्तिनिवारणसाधनं साग्निकम् अग्निसाक्षित्वसहितम् ॥ १८ ॥ पुल

पादचारमिवादित्यंनिष्पतंतंसुदुर्दशम् ॥ ततस्तेप्रत्यभिज्ञायअर्जुनायन्यवेदयन् ॥ ५ ॥ पुलस्त्यइतिविज्ञायवचनाद्धैहयाधिपः ॥ शिरस्यंज
लिमाधायप्रत्युद्गच्छत्तपस्विनम् ॥६॥ पुरोहितोस्यगृह्यार्घ्यमधुपर्कंतथैवच ॥ पुरस्तात्प्रययौराज्ञःशक्रस्येवबृहस्पतिः ॥७॥ ततस्तमृषिमायांतमुद्यं
तमिवभास्करम् ॥ अर्जुनोदृश्यसंभ्रांतोववंदेंद्रइवेश्वरम् ॥ ८ ॥ सतस्यमधुपर्कंगांपाद्यमर्घ्यंनिवेद्यच ॥ पुलस्त्यमाहराजेंद्रोहर्षगद्गदयागिरा ॥ ९ ॥
अद्यैवममरावत्यातुल्यामाहिष्मतीकृता ॥ अद्याहंतुद्विजेंद्रत्वांयस्मात्पश्यामिदुर्दशम् ॥ १० ॥ अद्यमेकुशलंदेवअद्यमेकुशलंव्रतम् ॥ अद्यमेसफलं
जन्मअद्यमेसफलंतपः ॥११॥ यत्तेदेवगणैर्वंद्यौवंदेऽहंचरणौतव ॥ इदंराज्यमिमेपुत्राइमेदाराइमेवयम् ॥ ब्रह्मन्किंकुर्मिकिंकार्यमाज्ञापयतुनोभवान्॥
॥१२॥ तंधर्मेग्निषुपुत्रेषुशिवंपृष्ट्वाचपार्थिवम् ॥ पुलस्त्योवाचराजानंहैहयानांतथार्जुनम् ॥ १३ ॥ नरेंद्रांबुजपत्राक्षपूर्णचंद्रनिभानन ॥ अतुलंतेबलंये
नदशग्रीवस्त्वयाजितः ॥ १४ ॥ भयाद्यस्योपतिष्ठेतांनिष्पंदौसागरानिलौ ॥ सोयंमृधेत्वयाबद्धःपौत्रोमेरणदुर्जयः ॥ १५ ॥ पुत्रकस्ययशःपीतं
नामविश्रावितंत्वया ॥ मद्वाक्याद्याच्यमानोद्यमुंचवत्सदशाननम् ॥ १६ ॥ पुलस्त्याज्ञांप्रगृह्याथनकिंचनवचोर्जुनः ॥ मुमोचैवपार्थिवेंद्रो
राक्षसेंद्रंप्रहृष्टवत् ॥ १७ ॥ सतंप्रमुच्यत्रिदशारिमर्जुनः प्रपूज्यदिव्याभरणस्रगंबरैः॥ अहिंसकंसख्यमुपेत्यसाग्निकंप्रणम्यतंब्रह्मसुतंगृहंययौ ॥१८॥
पुलस्त्येनापिसंत्यक्तोराक्षसेंद्रःप्रतापवान् ॥ परिष्वक्तःकृतातिथ्योलज्जमानोविनिर्जितः ॥ १९ ॥ पितामहसुतश्चापिपुलस्त्योमुनिपुंगवः ॥ मोच
यित्वादशग्रीवंब्रह्मलोकंजगामह ॥ २० ॥ एवंसरावणःप्राप्तःकार्तवीर्यात्प्रधर्षणम् ॥ पुलस्त्यवचनाच्चापिपुनर्मुक्तोमहाबलः ॥ २१ ॥ एवंबलिभ्यो
बलिनःसंतिराघवनंदन ॥ नावज्ञाहिपरेकार्यायइच्छेच्छ्रेयआत्मनः ॥ २२ ॥ ततःसराजापिशिताशनानांसहस्रबाहोरुपलभ्यमैत्रीम् ॥ पुनर्नृपाणां
कदनंचकारचचारसर्वांपृथिवींचदर्पात् ॥ २३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे त्रयस्त्रिंशःसर्गः ॥ ३३ ॥ अर्जुनेनवि
मुक्तस्तुरावणोराक्षसाधिपः ॥ चचारपृथिवींसर्वामनिर्विण्णस्तथाकृतः ॥ १ ॥

स्त्येनापि संत्यक्तो गच्छ लंकामित्यनुज्ञातः अपिना अर्जुनेनापि त्यक्तो बंधनान्मुक्तः कृतातिथ्यः अर्जुनेनेति शेषः ॥ १९ ॥ २० ॥ २१ ॥ बलिभ्योपि बलिनः संति ईश्वरसृष्टेर्विचित्रत्वादित्याशयः । यः श्रेय
इच्छेत्तेन परे परस्मिन्नवज्ञा न कार्या ॥ २२ ॥ २३ ॥ लज्जमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ अथ रावणस्य वालिदर्श

नम् अर्जुनेनेति । अनिर्विण्णः कृतः पुलस्त्येन विमोच्यार्जुनसख्यं प्रापय्य तेन पूजयित्वा विसर्जितत्वात्पराभवजनितनिर्वेदरहितः कृत इत्यर्थः ॥ १ ॥ युद्धे ह्वयति युद्धनिमित्तमाह्वयतीत्यर्थः ॥ २ ॥ ३ ॥ वानरामात्याः वालिमंत्रिणः तानाह तार एकः तारापिता सुषेणः प्रभुर्युवराजः सुग्रीवश्चोवाच ॥ ४ ॥ किमूचुस्तदाह राक्षसेंद्रेति । ते तुभ्यं प्रतिबलोयुद्धं दातुमिति शेषः ॥ ५ ॥ चतुर्भ्यः समुद्रेभ्यश्चतुर्षु समुद्रेषु संध्यां सम्यग्ध्येयदेवतां ब्रह्मरूपामन्वास्य ध्यात्वा इदं मुहूर्तमस्मिन्मुहूर्ते आयाति ॥ ६ ॥ तेन ते युद्धमयोग्यमित्याह एतानिति ॥ ७ ॥ यद्वेति यद्यप्यर्थे यद्यप्यमृतरसः पीतो भवति तदा तथापि वालिनमासाद्य तव जीवितं तदंतं तत्समीपगमनपर्यंतम् ॥ ८ ॥ जगच्चित्रं सर्वाश्चर्यभूतम इमं वालिनं पश्य दुर्लभं ते भविष्यति जीवितमिति शेषः ॥ ९ ॥ १० ॥ तारं तारादीनित्यर्थः ॥ ११ ॥ संध्योपासनतत्परं सम्यग्ध्ये

राक्षसंवामनुष्यंवाशृणुतेयंबलाधिकम् ॥ रावणस्तंसमासाद्ययुद्धेह्वयतिदर्पितः ॥ २ ॥ ततःकदाचित्किष्किंधांनगरींवालिपालिताम् ॥ गत्वाह्वयतियुद्धायवालिनंहेममालिनम् ॥ ३ ॥ ततस्तुवानरामात्यास्तारस्तारापिताप्रभुः ॥ उवाचवानरोवाक्यंयुद्धप्रेप्सुमुपागतम् ॥ ४ ॥ राक्षसेंद्रगतोवालीयस्तेप्रतिबलोभवेत् ॥ कोन्यःप्रमुखतःस्थातुंतवशक्तःप्लवंगमः ॥ ५ ॥ चतुर्भ्योपिसमुद्रेभ्यःसंध्यामन्वास्यरावण ॥ इमंमुहूर्तमायातिवालीतिष्ठमुहूर्तकम् ॥ ६ ॥ एतानस्थिचयान्पश्ययएतेशंखपांडुराः ॥ युद्धार्थिनामिमेराजन्वानराधिपतेजसा ॥ ७ ॥ यद्वामृतरसःपीतस्त्वयारावणराक्षस ॥ तदावालिनमासाद्यतदंतंतवजीवितम् ॥ ८ ॥ पश्येदानींजगच्चित्रमिमंविश्रवसःसुत ॥ इदंमुहूर्तंतिष्ठस्वदुर्लभंतेभविष्यति ॥ ९ ॥ अथवात्वरसेमर्तुंगच्छदक्षिणसागरम् ॥ वालिनंद्रक्ष्यसेतत्रभूमिष्ठमिवपावकम् ॥ १० ॥ सतुतारंविनिर्भर्त्स्यरावणोलोकरावणः ॥ पुष्पकंतत्समारुह्यप्रययौदक्षिणार्णवम् ॥ ११ ॥ तत्रहेमगिरिप्रख्यंतरुणार्कनिभाननम् ॥ रावणोवालिनंदृष्ट्वासंध्योपासनतत्परम् ॥ १२ ॥ पुष्पकादवरुह्याथरावणोंजनसन्निभः ॥ ग्रहीतुंवालिनंतूर्णंनिःशब्दपदमव्रजत् ॥ १३ ॥ यदृच्छयातदादृष्टोवालिनापिसरावणः ॥ पापाभिप्रायकंदृष्ट्वाचकारनतुसंभ्रमम् ॥ १४ ॥ शशमालक्ष्यसिंहोवापन्नगंगरुडोयथा ॥ नचिंतयतितंवालीरावणंपापनिश्चयम् ॥ १५ ॥ जिघृक्षमाणमायांतंरावणंपापचेतसम् ॥ कक्षावलंबिनंकृत्वागमिष्येत्रीन्महार्णवान् ॥ १६ ॥ द्रक्ष्यंत्यरिंममांकस्थंस्रंसदूरुकरांबरम् ॥ लंबमानंदशग्रीवंगरुडस्येवपन्नगम् ॥ १७ ॥ इत्येवंमतिमास्थायवालीमौनमुपास्थितः ॥ जपन्वैनैगमान्मंत्रांस्तस्थौपर्वतराडिव ॥ १८ ॥ तावन्योन्यंजिघृक्षंतौहरिराक्षसपार्थिवौ ॥ प्रयत्नवंतौतत्कर्मईहतुर्बलदर्पितौ ॥ १९ ॥ हस्तग्राहंतुतंमत्वापादशब्देनरावणम् ॥ पराङ्मुखोपिजग्राहवालीसर्पमिवांडजः ॥ २० ॥

यब्रह्मध्यानतत्परम् ॥ १२ ॥ निःशब्दपदं निःशब्दः पदविक्षेपो यस्यां क्रियायां तूष्णीं ॥ १३ ॥ पापाद्रि ॥ तं पापाभिप्रायवंतम् ॥ १४ ॥ सिंहो वा सिंह इव ॥ १५ ॥ जिघृक्षमाणमित्यादिरित्येवमि त्यंतो वालिनो विचारः ॥ १६ ॥ [illegible] क्ष्यंति देवादय इति शेषः । ममांकस्थं कक्षस्थं ॥ समममासीत्तयोर्युद्धंयथ [illegible] करांबरं वस्त्रं च यस्य तं गरुडस्येति । अंकस्थमित्यनुकर्षः ॥ १७ ॥ नैगमान्वैदिकान् वाल्यादयो हि स्वयं [illegible] ॥ नाजु [illegible] यंस्तदर्थं ध्यायन [illegible] ॥ तत्क [illegible] पापाभिप्रायवंतं पादशब्देन मत्वा सूक्ष्मेण पादशब्देन पश्चादायांतं ज्ञात्वा पराङ्मुखोपि

॥ वासिता [illegible] व्यथाते इति शेषः ॥ ५२ ॥ ५३ ॥ ५४ ॥ अशनिरवेभ्यः अशनिपात

[illegible] ना नभ इव रावणेरे गदा कांचनाभं कांचनवर्णं चक्रे प्रकाशि

रोधवद्बुध्यतेनेनेति रोधः सेतुस्तद्वदित्यर्थः । क्रीडापयति क्रीडयति पुगार्षः ॥१८॥१९॥ निशम्य दृष्ट्वा अर्जुन इत्युक्त्वा अन्यस्यैवंविधसामर्थ्यासंभवयुक्त्यां ॥ २० ॥ २१॥ सरक्तपृषतां रक्तावदुसंहितो रवः शब्दः सकृदेव रावणमस्थानेन सहैवैकवारं च घनैः कृतः रक्तवर्षुकमेघानां सकृद्रावोप्युत्पात इति कतकः ॥ २२ ॥ २३ ॥ २४ ॥ पश्यते पश्यति स्म ॥ २५ ॥ इत्येवं वक्ष्यमाणप्रकारेण ॥ २६ ॥ ॥ २७ ॥ अर्जुनमंत्रिणो व्यंग्योक्त्या रावणं निंदंति युद्धस्येत्यादि । हे रावण त्वया साधुसम्यग्युद्धस्य कालो विज्ञातः । यस्त्वं क्षीवं मदपानमत्तं स्त्रीगतं स्त्रीगोष्ठीगतं साधु सम्यग्योद्धुमुत्सहसे । उक्तमेव

वृहत्सालप्रतीकाशःकोप्यसौराक्षसेश्वर ॥ नर्मदांरोधवद्बुद्ध्वाक्रीडापयतियोषितः ॥ १८ ॥ तेनबाहुसहस्रेणसन्निरुद्धजलानदी ॥ सागरोद्गारसंकाशानुद्गारान्सृजतेमुहुः ॥ १९ ॥ इत्येवंभाषमाणौतौनिशम्यशुकसारणौ ॥ रावणोर्जुनइत्युक्त्वासययौयुद्धलालसः ॥ २० ॥ अर्जुनाभिमुखेतस्मिन्रावणेराक्षसाधिपे ॥ चंडःप्रवातिपवनःसनादःसरजस्तथा ॥ २१ ॥ सकृदेवकृतोरावःसरक्तपृषतोघनैः ॥ महोदरमहापार्श्वधूम्राक्षशुकसारणैः ॥ २२ ॥ संवृतोराक्षसेंद्रस्तुतत्रागाद्यत्रचार्जुनः ॥ अदीर्घेणैवकालेनसतदाराक्षसोवली ॥ २३ ॥ तंनर्मदाह्रदंभीममाजगामांजनप्रभः ॥ सतत्रस्त्रीपरिवृतंवाशिताभिरिवद्विपम् ॥ २४ ॥ नरेंद्रंपश्यतेराजाराक्षसानांतदार्जुनम् ॥ सरोषाद्रक्तनयनोराक्षसेंद्रोबलोद्धतः ॥ २५ ॥ इत्येवमर्जुनामात्यानाहगंभीरयागिरा ॥ अमात्याःक्षिप्रमाख्यातहैहयस्यनृपस्यवै ॥ २६ ॥ युद्धार्थसमनुप्राप्तोरावणोनामनामतः ॥ रावणस्यवचःश्रुत्वामंत्रिणोथार्जुनस्यते ॥ २७ ॥ उत्तस्थुःसायुधास्तंचरावणंवाक्यमब्रुवन् ॥ युद्धस्यकालोविज्ञातःसाधुभोःसाधुरावण ॥ २८ ॥ यःक्षीवंस्त्रीगतंचैवयोद्धुमुत्सहसेनृपम् ॥ स्त्रीसमक्षगतंयत्त्वंयोद्धुमुत्सहसेनृपम् ॥ २९ ॥ क्षमस्वाद्यदशग्रीवउष्यतांरजनीत्वया ॥ युद्धश्रद्धातुयद्यस्तिश्वस्तातसमरेर्जुनम् ॥ ३० ॥ यदिवापित्वरातुभ्यंयुद्धतृष्णासमावृत ॥ निपात्यास्मान्रणेयुद्धमर्जुनेनोपयास्यसि ॥ ३१ ॥ ततस्तैरावणामात्यैरमात्यास्तेनृपस्यतु ॥ सूदिताश्चापितेयुद्धेभक्षिताश्चबुभुक्षितैः ॥ ३२ ॥ ततोहलहलाशब्दोनर्मदातीरगोबभौ ॥ अर्जुनस्यानुयात्राणांरावणस्यचमंत्रिणाम् ॥ ॥ ३३ ॥ इषुभिस्तोमरैःप्रासैस्त्रिशूलैर्वज्रकर्षणैः ॥ सरावणानर्दयंतःसमंतात्समभिद्रुताः ॥ ३४ ॥ हैहयाधिपयोधानांवेगआसीत्सुदारुणः ॥ सनक्रमीनमकरसमुद्रस्येवनिःस्वनः ॥३५॥ रावणस्यतुतेमात्याःप्रहस्तशुकसारणाः ॥ कार्तवीर्यबलंक्रुद्धानिर्हंतिस्मस्वतेजसा ॥ ३६ ॥ अर्जुनायतुतत्कर्मरावणस्यसमंत्रिणः ॥ क्रीडमानायकथितंपुरुषैर्भयविह्वलैः ॥ [illegible]७ ॥

स्पष्टं पुनराह स्त्रीसमक्षगतमिति । यत्तत्सम्यक्कालो विज्ञातः ॥ २८ ॥ २९ ॥ [illegible] समु[illegible]नाह: क्षमस्वे[illegible] त्युक्तिरी[illegible]वसे युद्धविलंबं क्षमस्व सहस्व उष्यताम् इहेति शेषः । युद्धेति पदं समरे श्रद्धा यद्यस्ति तदा श्वोर्जुनं युध्य युध्यस्व [illegible]दार्थ इति स्पष्टं श्रुतिस्मृतिविदाम् [illegible] ॥ हे युद्धतृष्णासमावृत यदि वा अथवा [illegible]पात्य अर्जुनेन युद्धं माप्स्यसि ॥ ३१ ॥ ३२ ॥ हलहलेति शब्दानुकारः अनुयात्रा अनुचरा मंत्रिण इत्यर्थः ॥ [illegible]ग्रहणं माप्त इति [illegible]विशेषः । सरावणान् र[illegible]दिताः [illegible]दितः कक्षनिक्षेपं मापितः ॥ ३६ ॥ ३७ [illegible] ३४ ॥ नक्रादिसहितसमुद्रस्येव स्वन आसीत् ॥ ३५ ॥ ३६ ॥ समंत्रिणो मंत्रिसहि

सहेति शेषः ॥ ४४ ॥ धर्षितो वालिना रा॰ यत्र तत्र स्म नीयते प्रतिदिवसं पूजार्थं राक्षसैरिति शेषः ॥४२॥ तल्लिंगं जांबूनदमयं नित्यपूजा
रावणं प्रांजलिं नि॰ ॰ पति ॰ंजालिं तद्गतीवशमित्यार्पो दीर्घः मूर्तिमद्भुत्तरकांडे चतुस्त्रिंशः सर्गः ॥ ३४ ॥ अथ ए॰ ॰षः ॥४४॥ धंवमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आ
लिंगम् ऐश्वर्यकामनया ।७ प्रश्ने उत्तरमाह रावणस्य ऐश्वर्यकामस्य सौवर्णलिंगपूजा कृतेत्यस्य विवरणमिदमाहेति ॥१॥ ॰ जेरासक्तम् आसंगं बंधनम् प्राप्य प्रतिस्रोतः प्रतिप्रवाहं प्रतिकूलमितियावत् ॥ प्रधावति ॥५॥
दिकाव्ये उत्तरकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ नर्मदेति ॥ १ ॥ २ ॥ ३ । ॰ ७ ॥ पश्यते पश्यति स्म ॥ ८ ॥ सागरोद्गारः चंद्रोदयकालिकसमुद्रपरिवृद्धिः तेन हि समु
कुशसंस्तरः कुशास्तरणं स तु तत्पुलिने कर्मनिमित्तं ऋषिगणकृतः ॥ ६ ॥ संप्रेषितइव रावणं प्रतीत्तिकाग्रत

रावणंप्रांजलियांतमन्वयुःसर्वराक्षसाः ॥ तद्गतीवशमापन्नामूर्तिमंतइवाचलाः ॥ ४१ ॥ यत्रयत्रचयातिस्मरावणोराक्षसेश्वरः ॥ जांबूनदमयंलिंगं तत्रतत्रस्मनीयते ॥ ४२ ॥ वालुकावेदिमध्येतुतल्लिंगंस्थाप्यरावणः ॥ अर्चयामासगंधैश्चपुष्पैश्चामृतगंधिभिः ॥ ४३ ॥ ततःसतामार्तिहरंपरंवरं वरप्रदंचंद्रमयूखभूषणम् ॥ समर्चयित्वासनिशाचरोजगौप्रसार्यहस्तान्प्रणनर्तचाग्रतः ॥४४॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकत्रिंशःसर्गः ॥ ३१ ॥ नर्मदापुलिनेयत्रराक्षसेंद्रःसदारुणः ॥ पुष्पोपहारंकुरुतेतस्माद्देशाददूरतः ॥ १ ॥ अर्जुनोजयतांश्रेष्ठोमाहिष्मत्याःपतिः प्रभुः ॥ क्रीडतेसहनारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥ तासांमध्यगतोराजाराजचतदार्जुनः ॥ करेणूनांसहस्रस्यमध्यस्थइवकुंजरः ॥३॥ जिज्ञासुः सतुबाहूनांसहस्रस्योत्तमंबलम् ॥ रुरोधनर्मदावेगंबाहुभिर्बहुभिर्वृतः ॥ ४ ॥ कार्तवीर्यभुजासक्तंतज्जलंप्राप्यनिर्मलम् ॥ कूलोपहारंकुर्वाणंप्रतिस्रोतः प्रधावति ॥ ५ ॥ समीननक्रमकरःसपुष्पकुशसंस्तरः ॥ सनर्मदांभसोवेगःप्रावृट्कालइवाबभौ ॥ ६ ॥ सवेगःकार्तवीर्येणसंप्रेषितइवांभसः ॥ पुष्पोपहारंसकलंरावणस्यजहारह ॥ ७ ॥ रावणोर्धसमाप्तंतमुत्सृज्यानियमंतदा ॥ नर्मदांपश्यतेकांतांप्रतिकूलांयथाप्रियाम् ॥८॥ पश्चिमेनतुतंदृष्ट्वासागरोद्गारसन्निभम् ॥ वर्धंतमंभसोवेगंपूर्वामाशांप्रविश्यतु ॥ ९ ॥ ततोनुद्भ्रांतशकुनांस्वभावेपरमेस्थिताम् ॥ निर्विकारांगनाभासामपश्यद्रावणोनदीम् ॥१०॥ सव्येतरकरांगुल्याह्यशब्दास्योदशाननः ॥ वेगप्रभवमन्वेष्टुंसोदिशच्छुकसारणौ ॥११॥ तौतुरावणसंदिष्टौभ्रातरौशुकसारणौ ॥ व्योमांतरगतौ वीरौप्रस्थितौपश्चिमामुखौ ॥ १२ ॥ अर्धयोजनमात्रंतुगत्वातौरजनीचरौ ॥ पश्येतांपुरुषंतोयेक्रीडंतंसहयोषितम् ॥ १३ ॥ बृहत्सालप्रतीकाशंतोयव्याकुलमूर्धजम् ॥ मदरक्तांतनयनंमदव्याकुलचेतसम् ॥१४॥ नदींबाहुसहस्रेणरुंधंतमरिमर्दनम् ॥ गिरिंपादसहस्रेणरुंधंतमिवमेदिनीम् ॥१५॥ बालानां वरनारीणांसहस्रेणसमावृतम् ॥ समदानांकरेणूनांसहस्रेणेवकुंजरम् ॥ १६ ॥ तमद्भुततरंदृष्ट्वाराक्षसौशुकसारणौ ॥ सन्निवृत्तावुपागम्यरावणंतमथोचतुः ॥ १७ ॥

द्वा नद्यस्तत्समीपदेशे विपरीतप्रवाहाः कियंत इति प्रसिद्धम् । पश्चिमेन मार्गेण पूर्वामाशां प्रविश्य वर्धंतमंभसो वेगं दृष्ट्वा प्रतिकूलां कांतां प्रियामिव नर्मदां पश्यति स्मेत्यन्वयः । पूर्वामाशां प्रविश्यति इतिपाठे रावण इति शेषः । तस्य कियद्दूरे वृद्धिरिति निर्णयार्थमिति भावः । ततः पूर्वदिशि तस्मात्प्रविश्यतीत्येवपाठो युक्तः कतकसंमतश्च ॥ ९ ॥ १० ॥ सव्येतरकरांगुल्या दक्षिणहस्तांगुल्या शीघ्रान्वेषणद्योतका भिनयं कृत्वा अन्वेष्टुमदिशत् ॥ ११ ॥ व्योमांतरगतौ आकाशमार्गगौ ॥ १२ ॥ पश्येतामपश्यताम् ॥ १३ ॥ १४ ॥ मेदिनीं पादसहस्रेण रुंधंतं गिरिमिव संस्थितम् ॥ १५ ॥ १६ ॥ १७ ॥

तद्दिगवलोकनरहितोपि ... वणवादशब्देन ... ॥ दृष्ट्वातं मंत्रिभिः ... पूज्यमानं निशाचरैः ॥ २२ ॥ मुमोक्षयिषव इति । मोक्षशब्दादुत्तत्करोतीतिण्यंतात्सन् । खमाणाः क्रोशंतः ॥ २३ ॥ २४ ॥ अशक्नुवंतः ... दम् ॥ २५ ॥ यतः पर्वतेंद्रा अपि वालिनः ... स्यवाणरवेणच ॥ संचचा ... जीवनमेप्सुः मार्गी तस्य मार्गादपक्रामतीति किं वक्तव्यम् ॥ २६ ॥ अपक्षिगणसंपातान् यावता कालेन वाली गच्छति तावता कालेन पक्षिगणैरप्यप्राप्यान्सागरान् क्रमशो ... क्रामतीति शेषः । सर्वां ... वीरा ... संध्याकालध्येयदेवतारूपं ब्रह्मावंदत ॥ २७ ॥ सरावणः कक्षस्थरावणसहितः ॥ २८ ॥ तस्मिन्सन्ध्यामुपासित्वा स्नात्वेत्यादि । दक्षिणसमुद्रतटेपि जपन्वै नैगमान्मंत्रानित्युक्तेः ... समुद्रचतुष्टयेपि प्रातः ... कालस्य उदयात्पूर्वं परतश्च मिलित्वा त्रिमुहूर्तात्मकस्य मध्ये चतुःसमुद्रतटावच्छेदेन किंचित्कि

ग्रहीतुकामंतंगृह्यरक्षसामीश्वरंहरिः ॥ खमुत्पपातवेगेनकृत्वाकक्षावलंबिनम् ॥ २१ ॥ तंचपीडयमानंतुवितुदंतंनखैर्मुहुः ॥ जहाररावणंवालीपवनस्तोयदंयथा ॥२२॥ अथतेराक्षसामात्याह्रियमाणेदशानने ॥ मुमोक्षयिषवोवालिंरवमाणाअभिद्रुताः ॥२३॥ अन्वीयमानस्तैर्वालीभ्राजतेऽम्बरमध्यगः॥ अन्वीयमानोमेघौघैरंवरस्थइवांशुमान् ॥ २४ ॥ तेऽशक्नुवंतःसंप्राप्तुंवालिनंराक्षसोत्तमाः ॥ तस्यबाहूरुवेगेनपरिश्रांताव्यवस्थिताः ॥ २५ ॥ वालिमार्गादपाक्रामन्पर्वतेंद्राहिगच्छतः ॥ किंपुनर्जीवनप्रेप्सुर्बिभ्रद्वैमांसशोणितम् ॥ २६ ॥ अपक्षिगणसंपातान्वानरेंद्रोमहाजवः ॥ क्रमशःसागरान्सर्वान्संध्याकालमवंदत ॥ २७ ॥ संपूज्यमानोयातस्तुखचरैःखचरोत्तमः ॥ पश्चिमंसागरंवालीआजगामसरावणः ॥ २८ ॥ तस्मिन्संध्यामुपासित्वास्नात्वाजप्त्वाचवानरः ॥ उत्तरंसागरंप्रायाद्वहमानोदशाननम् ॥ २९ ॥ बहुयोजनसाहस्रंवहमानोमहाहरिः ॥ वायुवच्चमनोवच्चजगामसहशत्रुणा ॥ ३० ॥ उत्तरेसागरेसंध्यामुपासित्वादशाननम् ॥ वहमानोगमद्वालीपूर्वंवैसमहोदधिम् ॥ ३१ ॥ तत्रापिसंध्यामन्वास्यवासविःसहरीश्वरः ॥ किष्किंधामभितोगृह्यरावणंपुनरागमत् ॥ ३२ ॥ चतुर्ष्वपिसमुद्रेषुसंध्यामन्वास्यवानरः ॥ रावणोद्वहनश्रांतःकिष्किंधोपवनेपतत् ॥ ३३ ॥ रावणंतुमुमोचाथस्वकक्षात्कपिसत्तमः ॥ कुतस्त्वमितिचोवाचप्रहसन्रावणंमुहुः ॥ ३४ ॥ विस्मयंतुमहद्गत्वाश्रमलोलनिरीक्षणः ॥ राक्षसेंद्रोहरींद्रंतमिदंवचनमब्रवीत् ॥ ३५ ॥ वानरेंद्रमहेंद्राभराक्षसेंद्रोस्मिरावणः ॥ युद्धेप्सुरिहसंप्राप्तःसचाद्यासादितस्त्वया ॥ ३६ ॥ अहोबलमहोवीर्यमहोगांभीर्यमेवच ॥ येनाहंपशुवद्गृह्यभ्रामितश्चतुरोर्णवान् ॥ ३७ ॥ एवमश्रांतवद्वीरशीघ्रमेवचवानर ॥ मांचैवोद्वहमानस्तुकोन्योवीरभविष्यति ॥ ३८ ॥ त्रयाणामेवभूतानांगतिरेषाप्लवंगम ॥ मनोनिलसुपर्णानांतवचात्रनसंशयः ॥ ३९ ॥

चित्काळं ध्येयब्रह्मणो ध्याननियमस्तत्प्रतिपादकमंत्रस्मरणनियमश्च वालिन इति गम्यते । ईदृशं व्रतं च महेंद्रो रावणस्य समूलनाशाय पुत्रद्वारानुतिष्ठतीति बोध्यम् । यत्तु तस्य दक्षिणसमुद्रे शौचं पश्चिमे स्नानमुत्तरे आपोहिष्ठादिमंत्रैर्मार्जनं पूर्वसमुद्रेऽर्घ्यादीत्येवं संध्यावंदनशेषानुष्ठानत्वाच्चतुर्षु समुद्रेषु संध्यामन्वास्येत्युक्तिरिति कतकतीर्थादयस्तज्जपन्वै नैगमान्मंत्रानिति दक्षिणसमुद्रस्नानकालोक्त्या विरुध्यते । मदुक्तरीत्या सामंजस्याच्च । संध्याकाले गायत्र्यर्थब्रह्मणो ध्यानमेव प्रधानं स एव संध्यापदार्थ इति स्पष्टं श्रुतिस्मृतिविदाम् ॥ २९ ॥ ३० ॥ ३१ ॥ वासवापत्यं वासविः ॥ ३२ ॥ ३३ ॥ प्रहसन्निति । मां निग्रहीतुं दुरात्मा स्वयमेव ग्रहणं प्राप्त इति तोषात्प्रहासः ॥ ३४ ॥ ३५ ॥ आसादितः कक्षनिक्षेपं प्रापितः ॥ ३६ ॥ ३७ ॥ अश्रांतवत् अश्रांतः सन् मां पर्वतसमानभारम् ॥ ३८ ॥ ३९ ॥

रोधवद्बुध्यतेनेनेति रोधः सेतुस्तद्वदित्यर्थः । क्रीडापयति क्रीडयति पुगार्षः ॥१८॥१९॥ निशम्य दृष्ट्वा अर्जुन इत्युक्त्वा अन्यस्यैवंविधसामर्थ्यासंभवयुक्त्यां ॥ २० ॥ २१॥ सरक्तपृषतां रक्ताबदुंसंहितो रॉवः शब्दः सकृदेव रावणप्रस्थानेन सहैवैकवारं च घनैः कृतः रक्तवर्षुकमेघानां सकृद्रावोप्युत्पात इति कतकः ॥ २२ ॥ २३ ॥ २४ ॥ पश्यते पश्यति स्म ॥ २५ ॥ इत्येवं वक्ष्यमाणप्रकारेण ॥ २६ ॥ ॥ २७ ॥ अर्जुनमंत्रिणो व्यंग्योक्त्या रावणं निंदंति युद्धस्येत्यादि । हे रावण त्वया साधुसम्यग्युद्धस्य कालो विज्ञातः । यस्त्वं क्षीबं मदपानमत्तं स्त्रीगतं स्त्रीगोष्ठीगतं साधु सम्यग्योद्धुमुत्सहसे । उक्तमेव

बृहत्सालप्रतीकाशःकोप्यसौराक्षसेश्वर ॥ नर्मदांरोधवद्बुद्ध्वाक्रीडापयतियोषितः ॥ १८ ॥ तेनबाहुसहस्रेणसन्निरुद्धजलानदी ॥ सागरोद्गारसंकाशानुद्गारान्सृजतेमुहुः ॥ १९ ॥ इत्येवंभाषमाणौतौनिशम्यशुकसारणौ ॥ रावणोर्जुनइत्युक्त्वासययौयुद्धलालसः ॥ २० ॥ अर्जुनाभिमुखेतस्मिन्रावणेराक्षसाधिपे ॥ चंडःप्रवातिपवनःसनादःसरजस्तथा ॥ २१ ॥ सकृदेवकृतोरावःसरक्तपृषतोघनैः ॥ महोदरमहापार्श्वधूम्राक्षशुकसारणैः ॥ २२ ॥ संवृतोराक्षसेंद्रस्तुतत्रागाद्यत्रचार्जुनः ॥ अदीर्घेणैवकालेनसतदाराक्षसोवली ॥ २३ ॥ तंनर्मदाह्रदंभीममाजगामांजनप्रभः ॥ सतत्रस्त्रीपरिवृतंवाशिताभिरिवद्विपम् ॥ २४ ॥ नरेंद्रंपश्यतेराजाराक्षसानांतदार्जुनम् ॥ सरोषाद्रक्तनयनोराक्षसेंद्रोबलोद्धतः ॥ २५ ॥ इत्येवमर्जुनामात्यानाहगंभीरयागिरा ॥ अमात्याःक्षिप्रमाख्यातहैहयस्यनृपस्यवै ॥ २६ ॥ युद्धार्थंसमनुप्राप्तोरावणोनामनामतः ॥ रावणस्यवचःश्रुत्वामंत्रिणोथार्जुनस्यते ॥ २७ ॥ उत्तस्थुःसायुधास्तंचरावणंवाक्यमब्रुवन् ॥ युद्धस्यकालोविज्ञातःसाधुभोःसाधुरावण ॥ २८ ॥ यःक्षीबंस्त्रीगतंचैवयोद्धुमुत्सहसेनृपम् ॥ स्त्रीसमक्षगतंयत्त्वंयोद्धुमुत्सहसेनृपम् ॥ २९ ॥ क्षमस्वाद्यदशग्रीवउष्यतांरजनीत्वया ॥ युद्धश्रद्धातुयद्यस्तिश्वस्तातसमरेर्जुनम् ॥ ३० ॥ यदिवापित्वरातुभ्यंयुद्धतृष्णासमावृत ॥ निपात्यास्मान्रणेयुद्धमर्जुनेनोपयास्यसि ॥ ३१ ॥ ततस्तैरावणामात्यैरमात्यास्तेनृपस्यतु ॥ सूदिताश्चापितेयुद्धेभक्षिताश्चबुभुक्षितैः ॥ ३२ ॥ ततोहलहलाशब्दोनर्मदातीरगोबभौ ॥ अर्जुनस्यानुयात्राणांरावणस्यचमंत्रिणाम् ॥ ३३ ॥ इषुभिस्तोमरैःप्रासैस्त्रिशूलैर्वज्रकर्षणैः ॥ सरावणानर्दयंतःसमंतात्समभिद्रुताः ॥ ३४ ॥ हैहयाधिपयोधानांवेगआसीत्सुदारुणः ॥ सनक्रमीनमकरसमुद्रस्येवनिःस्वनः ॥३५॥ रावणस्यतुतेमात्याःप्रहस्तशुकसारणाः ॥ कार्तवीर्यबलंक्रुद्धानिर्दहंतिस्मस्वतेजसा ॥ ३६ ॥ अर्जुनायतुतत्कर्मरावणस्यसमंत्रिणः ॥ क्रीडमानायकथितंपुरुषैर्भयविह्वलैः ॥ ३७ ॥

स्पष्टं पुनराह स्त्रीसमक्षगतमिति । यत्तत्सम्यक्कालो विज्ञातः ॥ २८ ॥ २९ ॥ [illegible] नाह: क्षमस्वेति [illegible] गरुंधेत [illegible] वसे युद्धविलंबं क्षमस्व सहस्व उष्यताम् इहेति शेषः । युद्धेति पदं समरे श्रद्धा यद्यस्ति तदा श्वोर्जुनं युध्य युध्यस्व समावृ॥ हे युद्धतृष्णासमावृत यदि वा अथवा [illegible] कुंजरम् ॥ [illegible] दांतमद्भुततर [illegible] त्य अर्जुनेन युद्धं प्राप्स्यसि ॥ ३१ ॥ ३२ ॥ हलहलेति शब्दानुकारः अनुयात्रा अनुचरा मंत्रिण इत्यर्थः ॥ [illegible] दृशे विपर्गतप्रवाहाः विशेषः । सरावणान् [illegible] पार्श्वसहितान् [illegible] पूर्वामाशां प्रविश्य वर्धतमंभसो वेगं दृष्ट्वा [illegible] ३४ ॥ नक्रादिसहितसमुद्रस्येव स्वन आसीत् ॥ ३५ ॥ ३६ ॥ समंत्रिणो मंत्रिसहि

तम्

पूर्वदिशि तस्मात्प्रविश्यतीत्येवपाठो युक्तः क

१२ ॥ पश्येतामपश्यताम् ॥ १३ ॥

तस्य रावणस्य ॥ ३४ ॥ [illegible] भेतव्यमित्युक्त्वेति शेषः [illegible] अंजनो [illegible] अपि वालि [illegible] रूपकम् युगांते प्रलयकाले ॥ ३९ ॥ अभिदुद्राव द्रावयामास ॥४०॥ बाहुविक्षेपकरणां बाहुभिर्विक्षेपकरणं भ्रमी गच्छति तास्ताम् ॥ गारुडं वेगं गरुडसदृशवेगम् आ [illegible] क्रमशो [illegible] इति शेषः । स [illegible] ॥ विंध्यपर्वतोऽर्कमार्गं रुद्ध्वा स्थित इति पौराणिकी कथा ॥ ४२ ॥ अस्य प्रेषयन्नस्य संहारार्थं क्षिपन् ॥ ४३ ॥ अशोकापीडम् अशोकपुष्पशिखा तत्संनिभः ॥ ४४ ॥ गतवि[illegible] ॥ ४[illegible] येपि [illegible] ग्रा[illegible]तैरुच्छ्रय उत्क्षेपो यस्यास्ताम् ॥ ४६ ॥ शैल इव स्थितो निपपात ॥ ४७ ॥ ४८ ॥ ४९ ॥

श्रुत्वानभेतव्यमितिस्त्रीजनंसतदार्जुनः ॥ उत्ततारजलात्तस्माद्गंगातोयादिवाञ्जनः ॥ ३८ ॥ क्रोधदूषितनेत्रस्तुसतदार्जुनपावकः ॥ प्रजज्वालमहाघोरोयुगांतइवपावकः ॥ ३९ ॥ सतूर्णतरमादायवरहेमांगदोगदाम् ॥ अभिदुद्रावरक्षांसितमांसीवदिवाकरः ॥ ४० ॥ बाहुविक्षेपकरणांसमुद्यम्यमहागदाम् ॥ गारुडंवेगमास्थायआपपातैवसोर्जुनः ॥ ४१ ॥ तस्यमार्गंसमारुध्यविंध्योर्कस्येवपर्वतः ॥ स्थितोविंध्यइवाकंप्यःप्रहस्तोमुसलायुधः ॥ ४२ ॥ ततोस्यमुसलंघोरंलोहबद्धंमदोद्धतः ॥ प्रहस्तःप्रेषयन्क्रुद्धोररासचयथांतकः ॥ ४३ ॥ तस्याग्रेमुसलस्याग्निरशोकापीडसन्निभः ॥ प्रहस्तकरमुक्तस्यबभूवप्रदहन्निव ॥४४॥ आधावमानंमुसलंकार्तवीर्यस्तदार्जुनः ॥ निपुणंवंचयामासगदयागतविक्लवः ॥ ४५ ॥ ततस्तमभिदुद्रावसगदोहैहयाधिपः ॥ भ्रामयाणोगदांगुर्वींपंचबाहुशतोच्छ्रयाम् ॥ ४६ ॥ ततोहतोतिवेगेनप्रहस्तोगदयातदा ॥ निपपातस्थितःशैलोवज्रिवज्रहतोयथा ॥ ४७ ॥ प्रहस्तंपतितंदृष्ट्वामारीचशुकसारणाः ॥ समहोदरधूम्राक्षाअपसृष्टारणाजिरात् ॥ ४८ ॥ अपक्रांतेष्वमात्येषुप्रहस्तेचनिपातिते ॥ रावणोभ्यद्रवत्तूर्णमर्जुनंनृपसत्तमम् ॥ ४९ ॥ सहस्रबाहोस्तद्युद्धंविंशद्बाहोश्चदारुणम् ॥ नृपराक्षसयोस्तत्रआरब्धंरोमहर्षणम् ॥ ५० ॥ सागराविवसंक्षुब्धौचलमूलाविवाचलौ ॥ तेजोयुक्ताविवादित्यौप्रदहंताविवानलौ ॥ ५१ ॥ बलोद्धतौयथानागौवासितार्थेयथावृषौ ॥ मेघाविवविनर्दंतौसिंहाविवबलोत्कटौ ॥५२॥ रुद्रकालाविवक्रुद्धौतौतदाराक्षसार्जुनौ ॥ परस्परंगदांगृह्यताडयामासतुर्भृशम् ॥५३॥ वज्रप्रहारानचलायथाघोरान्विषेहिरेगदाप्रहारांस्तौतत्रसेहातेनरराक्षसौ ॥ ५४ ॥ यथाशनिरवेभ्यस्तुजायतेथप्रतिश्रुतिः ॥ तथातयोर्गदापोथैर्दिशःसर्वाःप्रतिश्रुताः ॥ ५५ ॥ अर्जुनस्यगदासातुपात्यमानाऽहितोरसि ॥ कांचनाभंनभश्चक्रेविद्युत्सौदामनीयथा ॥ ५६ ॥ तथैवरावणेनापिपात्यमानामुहुर्मुहुः ॥ अर्जुनोरसिनिर्भातिगदोल्केवमहागिरौ ॥ ५७ ॥ नार्जुनःखेदमायातिनराक्षसगणेश्वरः ॥ सममासीत्तयोर्युद्धंयथापूर्वंबलींद्रयोः ॥५८॥

॥ ५० ॥ ५१ ॥ वासितार्थे करिणीरूपप्रयोजनाय युयुधाते इति शेषः ॥ ५२ ॥ ५३ ॥ ५४ ॥ अशनिरवेभ्यः अशनिपातध्वनिभ्यः प्रतिश्रुतिः प्रतिध्वनिः गदापोथैर्गदापातैः प्रतिश्रुताः प्रतिध्वनिमत्यः ॥५५॥ अहितोरसि रावणोरसि सौदामनी विद्युत् विशेषेण द्योतमाना नभ इव रावणोरो गदा कांचनाभं कांचनवर्णं चक्रे प्रकाशितं चक्रे इति यावत् ॥ ५६ ॥ ५७ ॥ न राक्षसगणेश्वरः खेदमायाति ॥ ५८ ॥

ततः पतितैरुदकैः साट्टहासमिव ॥ १६ ॥ स्फटिकमातिमं जलं स्यंदमानाभिर्नदीभिः कृत्वा चलजिह्वाभिः फणाभिरुपलक्षितमनंतमिव विष्ठितं उत्क्रामंतम् ऊर्ध्वं व्यामुवानम् ॥ १७ ॥ १८ ॥ चलानि उपलेषु जलानि यस्यास्ताम् ॥ १९ ॥ २० ॥ २१ ॥ अथ नर्मदां स्त्रीत्वेन वर्णयति फुल्लेति ॥ २२ ॥ जनानां जलावगाहे सुखस्पर्शरूपगुणो यस्यास्ताम् ॥ २३ ॥ २४ ॥ २५ ॥ नर्मदां गंगेयमिति प्रख्याय प्रशस्य अनेन नर्मदायास्तद्वत्पापनाशकत्वं तत्तटकृतशिवपूजादेर्महाफलत्वं गंगायाः सर्वोत्कृष्टत्वं च सूचितम् ॥ २६ ॥ सलीलं सविलासं कांचनं तन्मयम् ॥ २७ ॥ चंद्रायति चंद्र इवाचरति आर्षं परस्मैपदम् ॥ २८ ॥

स्वस्त्रीभिःक्रीडमानैश्चस्वर्गभूतंमहोच्छ्रयम् ॥ नदीभिःस्यंदमानाभिःस्फटिकप्रतिमंजलम् ॥१७॥फणाभिश्चलजिह्वाभिरनंतमिवाविष्ठितम् ॥ उत्क्रामं तंदरीवंतंहिमवत्सन्निभंगिरिम् ॥१८॥ पश्यमानस्ततोविंध्यंरावणोनर्मदांययौ ॥ चलोपलजलांपुण्यांपश्चिमोदधिगामिनीम् ॥ १९ ॥ महिषैःसृमरैः सिंहैःशार्दूलर्क्षगजोत्तमैः ॥ उष्णाभितप्तैस्तृषितैःसंक्षोभितजलाशयाम् ॥ २० ॥ चक्रवाकैःसकारंडैःसहंसजलकुक्कुटैः ॥ सारसैश्चसदामत्तैःकूजद्भिः सुसमावृताम् ॥ २१ ॥ फुल्लद्रुमकृतोत्तंसांचक्रवाकयुगस्तनीम् ॥ विस्तीर्णपुलिनश्रोणींहंसावलिसुमेखलाम् ॥ २२ ॥ पुष्परेण्वनुलिप्तांगींजलफे नामलांशुकाम् ॥ जलावगाहसुस्पर्शांफुल्लोत्पलशुभेक्षणाम् ॥ २३ ॥ पुष्पकादवरुह्याशुनर्मदांसरितांवराम् ॥ इष्टामिववरांनारीमवगाह्यदशाननः ॥ २४ ॥ सतस्याःपुलिनेरम्येनानामुनिनिषेविते ॥ उपोपविष्टःसचिवैःसार्धंराक्षसपुंगवः ॥ २५ ॥ प्रख्यायनर्मदांसोथगंगेयमितिरावणः ॥ नर्म दादर्शनेहर्षमाप्तवान्सदशाननः ॥ २६ ॥ उवाचसचिवांस्तत्रसलीलंशुकसारणौ ॥ एषरश्मिसहस्रेणजगत्कृत्वेवकांचनम् ॥ २७ ॥ तीक्ष्णतापकरः सूर्योनभसोमध्यमास्थितः ॥ मामासीनंविदित्वैवचंद्रायतिदिवाकरः ॥ २८ ॥ नर्मदाजलशीतश्चसुगंधिःश्रमनाशनः ॥ मद्भयादनिलोह्येषवात्यसौ सुसमाहितः ॥ २९ ॥ इयंचापिसरिच्छ्रेष्ठानर्मदाशर्मवर्धिनी ॥ नक्रमीनविहंगोर्मिःसभयेवांगनास्थिता ॥ ३० ॥ तद्भवंतःक्षताःशस्त्रैर्नृपे न्द्रसमैर्युधि ॥ चंदनस्यरसेनेवरुधिरेणसमुक्षिताः ॥ ३१ ॥ तेयूयमवगाहध्वंनर्मदांशर्मदांशुभाम् ॥ सार्वभौममुखामत्तागंगामिवमहागजाः ॥ ॥ ३२ ॥ अस्यांस्नात्वामहानद्यांपाप्मनोविप्रमोक्ष्यथ ॥ अहमप्यद्यपुलिनेशरदिंदुसमप्रभे ॥ ३३ ॥ पुष्पोपहारंशनकैःकरिष्यामिकपर्दिनः ॥ राव णेनैवमुक्तास्तुप्रहस्तशुकसारणाः ॥ ३४ ॥ समहोदरधूम्राक्षानर्मदांविजगाहिरे ॥ राक्षसेंद्रगजैस्तैस्तुक्षोभितानर्मदानदी ॥ ३५ ॥ वामनांजन पद्माद्यैर्गंगाइवमहागजैः ॥ ततस्तेराक्षसाःस्नात्वानर्मदायांमहाबलाः ॥ ३६ ॥ उत्तीर्यपुष्पाण्याजह्रुर्बल्यर्थंरावणस्यतु ॥ नर्मदापुलिनेहृद्येशुभ्राभ्रसह शप्रभे ॥ ३७ ॥ राक्षसैस्तुमुहूर्तेनकृतःपुष्पमयोगिरिः ॥ [illegible]पुष्पेपूपहृतेष्वेवं[illegible]राक्षसेश्वरः ॥ ३८ ॥ अवतीर्णोनदींस्नातुंगंगामिवमहागजः ॥ तत्रस्नात्वाचविधिवज्जप्त्वाजप्यमनुत्तमम् ॥ ३९ ॥ नर्मदा[illegible]मदेव[illegible]पुरावणः ॥ ततःक्लिन्नांबरंत्यक्त्वाशुक्लवस्त्रसमावृतः ॥ ४० ॥

॥ २९ ॥ नक्रादियुक्[illegible]हस्तिप्रतिष्ठ[illegible] ॥ ३० ॥ ३१ ॥ अवगाहध्वं [illegible] ॥ [illegible]तुकर [illegible] दिग्गजादयः महापद्म इति पाठांतरम् । महापद्मो दिग्गजः ॥ ३२ ॥ ३३ ॥ ३४ ॥ राक्षसेंद्रा एव गजाः ॥ ३५ ॥ वामनाद्या दिग्गजाः गंगा इव महागजैः [illegible] दिभूतेनायं [illegible] रावणकर्तृकशिवपूजार्थम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

रावणं प्रांजलिं नि[illegible] अशक्नुवंति [illegible] प्रांजलिं तद्वतीवशमित्यार्षो दीर्घः मूर्तिम[illegible]थः [illegible] पिन्[illegible] [illegible] धर्षी[illegible] [illegible]त्र तत्र स्म नीयते प्रतिदिवसं पूजार्थं राक्षसैरिति शेषः ॥ ४२ ॥ तल्लिंगं जांबूनदमयं नित्यपूजा लिंगम् ऐश्वर्यकामनया । [illegible] तावत् [illegible] रावणस्य ऐश्वर्यकामस्य सौवर्णलिंगपूजा[illegible] राडुपूज्यमानोनिशाचरैः [illegible] ॥ ४४ ॥ धैर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकत्रिंशः सर्गः ॥ ३१ ॥ नर्मदेति ॥ १ ॥ २ ॥ ३ [illegible] [illegible]मति शेषः । स[illegible] पंचच[illegible]तैरासक्तम् आसंगं बंधनम् प्राप्य प्रतिस्रोतः प्रतिप्रवाहं प्रतिकूलमितियावत् ॥ प्रधावति ॥ ५ ॥ कुशसंस्तरः कुशास्तरणं स तु तत्पुलिने कर्मनिमित्तं ऋषिगणकृतः ॥ ६ ॥ संप्रेषितं [illegible]व रावणं प्रतीतिात [illegible] ७ ॥ पश्यते पश्यति स्म ॥ ८ ॥ सागरोद्गारः चंद्रोदयकालिकसमुद्रपरिवृद्धिः तेन हि समु

रावणंप्रांजलिंयांतमन्वयुःसर्वराक्षसाः ॥ तद्गतीवशमापन्नामूर्तिमंतइवाचलाः ॥ ४१ ॥ यत्रयत्रचयातिस्मरावणोराक्षसेश्वरः ॥ जांबूनदमयंलिंगं तत्रतत्रस्मनीयते ॥ ४२ ॥ वालुकावेदिमध्येतुतल्लिंगंस्थाप्यरावणः ॥ अर्चयामासगंधैश्चपुष्पैश्चामृतगंधिभिः ॥ ४३ ॥ ततःसतामार्तिहरंपरंवरं वरप्रदंचंद्रमयूखभूषणम् ॥ समर्चयित्वासनिशाचरोजगौप्रसार्यहस्तान्प्रणनर्तचाग्रतः ॥ ४४ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकत्रिंशःसर्गः ॥ ३१ ॥ नर्मदापुलिनेयत्रराक्षसेंद्रःसदारुणः ॥ पुष्पोपहारंकुरुतेतस्माद्देशाददूरतः ॥ १ ॥ अर्जुनोजयतांश्रेष्ठोमाहिष्मत्याःपतिःप्रभुः ॥ क्रीडतेसहनारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥ तासांमध्यगतोराजारराजचतदार्जुनः ॥ करेणूनांसहस्रस्यमध्यस्थइवकुंजरः ॥ ३ ॥ जिज्ञासुःसतुबाहूनांसहस्रस्योत्तमंबलम् ॥ रुरोधनर्मदावेगंबाहुभिर्बहुभिर्वृतः ॥ ४ ॥ कार्तवीर्यभुजासक्तंतज्जलंप्राप्यनिर्मलम् ॥ कूलोपहारंकुर्वाणंप्रतिस्रोतःप्रधावति ॥ ५ ॥ समीननक्रमकरःसपुष्पकुशसंस्तरः ॥ सनर्मदांभसोवेगःप्रावृट्कालइवाबभौ ॥ ६ ॥ सवेगःकार्तवीर्येणसंप्रेषितइवांभसः ॥ पुष्पोपहारंसकलंरावणस्यजहारह ॥ ७ ॥ रावणोर्धसमाप्तंतमुत्सृज्यनियमंतदा ॥ नर्मदांपश्यतेकांतांप्रतिकूलांयथाप्रियाम् ॥ ८ ॥ पश्चिमेनतुतंदृष्ट्वासागरोद्गारसन्निभम् ॥ वर्धंतमंभसोवेगंपूर्वामाशांप्रविश्यतु ॥ ९ ॥ ततोनुद्भ्रांतशकुनांस्वभावेपरमेस्थिताम् ॥ निर्विकारांगनाभासामपश्यद्रावणोनदीम् ॥ १० ॥ सव्येतरकरांगुल्याह्यशब्दास्योदशाननः ॥ वेगप्रभवमन्वेष्टुंसोदिशच्छुकसारणौ ॥ ११ ॥ तौतुरावणसंदिष्टौभ्रातरौशुकसारणौ ॥ व्योमांतरगतौवीरौप्रस्थितौपश्चिमामुखौ ॥ १२ ॥ अर्धयोजनमात्रंतुगत्वातौरजनीचरौ ॥ पश्येतांपुरुषंतोयेक्रीडंतंसहयोषितम् ॥ १३ ॥ बृहत्सालप्रतीकाशंतोयव्याकुलमूर्धजम् ॥ मदरक्तांतनयनंमदव्याकुलचेतसम् ॥ १४ ॥ नदींबाहुसहस्रेणरुंधंतमरिमर्दनम् ॥ गिरिंपादसहस्रेणरुंधंतमिवमेदिनीम् ॥ १५ ॥ बालानांवरनारीणांसहस्रेणसमावृतम् ॥ समदानांकरेणूनांसहस्रेणेवकुंजरम् ॥ १६ ॥ तमद्भुततरंदृष्ट्वाराक्षसौशुकसारणौ ॥ सन्निवृत्तावुपागम्यरावणांतमथोचतुः ॥ १७ ॥

द्गा नद्यस्तत्समीपदेशे विपरीतप्रवाहाः कियंत इति प्रसिद्धम् । पश्चिमेन मार्गेण पूर्वामाशां प्रविश्य वर्धंतमंभसो वेगं दृष्ट्वा प्रतिकूलां कांतां प्रियामिव नर्मदां पश्यति स्मेत्यन्वयः । पूर्वामाशां प्रविश्यति इतिपाठे रावण इति शेषः । तस्य कियद्दूरे वृद्धिरिति निर्णयार्थमिति भावः । ततः पूर्वदिशि तस्मात्प्रविश्यतीत्येवपाठो युक्तः कतकसंमतश्च ॥ ९ ॥ १० ॥ सव्येतरकरांगुल्या दक्षिणहस्तांगुल्या शीघ्रान्वेषणद्योतकाभिनयं कृत्वा अन्वेष्टुमदिशत् ॥ ११ ॥ व्योमांतरगतौ आकाशमार्गगौ ॥ १२ ॥ पश्येतामपश्यताम् ॥ १३ ॥ १४ ॥ मेदिनीं पादसहस्रेण रुंधंतं गिरिमिव संस्थितम् ॥ १५ ॥ १६ ॥ १७ ॥

तुभ्यं तव ॥ ४० ॥ नौ आवयोः ॥ ४१ ॥४२॥४३॥ आगतैः सहेति शेषः ॥ ४४ ॥ धर्षितो वालिना रावणः पश्चात्पावकनिकटे भ्राता कृतः सोदरभावतया स्नेहः कृतः ॥४५॥ ४६ ॥ तुभ्रमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुस्त्रिंशः सर्गः ॥ ३४ ॥ अथ रावणवाल्यपेक्षयापि हनूमतो बलवत्त्वं मन्यमानेन रामेण महाबलो हनूमान्सुग्रीवार्थे वालिनं किं न हतवानिति प्रश्ने उत्तरमाह अपृच्छतेति दक्षिणाशा दक्षिणदिक् अपृच्छतेत्यस्य विवरणमिदमाहेति ॥ १ ॥ अतुलमनुपमम् एताभ्याम् एतयोः षष्ठ्यर्थे चतुर्थी आर्षी एतयोर्बलं हनूमता तद्बलेन न सममित्यर्थः

सोहंदृष्टबलस्तुभ्यमिच्छामिहरिपुंगव ॥ त्वयासहचिरंसख्यंसुस्निग्धंपावकाग्रतः ॥ ४० ॥ दाराःपुत्राःपुरंराष्ट्रंभोगाच्छादनभोजनम् ॥ सर्वमेवाविभक्तंनौभविष्यतिहरीश्वर ॥ ४१ ॥ ततःप्रज्वालयित्वाग्निंतावुभौहरिराक्षसौ ॥ भ्रातृत्वमुपसंपन्नौपरिष्वज्यपरस्परम् ॥ ४२ ॥ अन्योन्यंलंबितकरौततस्तौहरिराक्षसौ ॥ किष्किंधांविशतुर्हृष्टौसिंहौगिरिगुहामिव ॥ ४३ ॥ सतत्रमासमुषितःसुग्रीवइवरावणः ॥ अमात्यैरागतैर्नीतस्त्रैलोक्योत्सादनार्थिभिः ॥ ४४ ॥ एवमेतत्पुरावृत्तंवालिनारावणःप्रभो ॥ धर्षितश्चकृतश्चापिभ्रातापावकसन्निधौ ॥ ४५ ॥ बलमप्रतिमंरामवालिनोऽभवदुत्तमम् ॥ सोपित्वयाविनिर्दग्धःशलभोवह्निनायथा ॥ ४६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुस्त्रिंशः सर्गः ॥३४॥ अपृच्छततदारामोदक्षिणाशाश्रयंमुनिम् ॥ प्रांजलिर्विनयोपेतइदमाहवचोर्थवत् ॥ १ ॥ अतुलंबलमेतद्वैवालिनोरावणस्यच ॥ नत्वेताभ्यांहनुमतासमंत्वितिमतिर्मम ॥ २ ॥ शौर्यंदाक्ष्यंबलंधैर्यंप्राज्ञतानयसाधनम् ॥ विक्रमश्चप्रभावश्चहनूमतिकृतालयाः ॥ ३ ॥ दृष्ट्वैवसागरंवीक्ष्यसीदंतींकपिवाहिनीम् ॥ समाश्वास्यमहाबाहुर्योजनानांशतंप्लुतः ॥ ४ ॥ धर्षयित्वापुरींलंकांरावणांतःपुरंतदा ॥ दृष्टासंभाषिताचापिसीताह्याश्वासितातथा ॥ ५ ॥ सेनाग्रगामंत्रिसुताःकिंकरारावणात्मजः ॥ एतेहनुमतातत्रएकेनविनिपातिताः ॥ ६ ॥ भूयोबंधाद्विमुक्तेनभाषयित्वादशाननम् ॥ लंकाभस्मीकृतायेनपावकेनेवमेदिनी ॥ ७ ॥ नकालस्यनशक्रस्यनविष्णोर्वित्तपस्यच ॥ कर्माणितानिश्रूयंतेयानियुद्धेहनूमतः ॥ ८ ॥ एतस्यबाहुवीर्येणलंकासीताचलक्ष्मणः ॥ प्राप्तामयाजयश्चैवराज्यंमित्राणिबांधवाः ॥ ९ ॥ हनुमान्यदिमेनस्याद्वानराधिपतेःसखा ॥ प्रवृत्तिमपिकोवेत्तुंजानक्याःशक्तिमान्भवेत् ॥ १० ॥ किमर्थंवाल्यनेनैवसुग्रीवप्रियकाम्यया ॥ तदावैरेसमुत्पन्नेनदग्धोवीरुधोयथा ॥ ११ ॥

॥ २ ॥ न केवलं बलमेवाधिकं किं त्वन्यदपीत्याह शौर्यमिति । दाक्ष्यं क्षिप्रकारित्वं बलं शारीरं धैर्यं [illegible] प्राज्ञता शीघ्रं कार्याकार्यनिर्णेतृता नयसाधनं राजनीतिकृत्यसंपादनम् ॥ ३ ॥ तानेव गुणानाह दृष्ट्वेति । सागरं वीक्ष्य [illegible] कपिवाहिनीं दृष्ट्वा तां समाश्वास्य योजनशतं [illegible] पाशबंधात् ॥७॥ यानि कर्माणि हनूमतो दृष्टानि तानि कालस्य यमस्येंद्रादेश्च न श्रूयंते ॥८॥ लंका माता विभीषणा[illegible] । लक्ष्मणप्राप्ति[illegible] ॥ [illegible] ॥१०॥ वीरुध इत्यकारांतो वृक्षवाची । किमर्थं वालिघातेनेतिपाठे सुग्रीवप्रियकाम्यया वालि [illegible] दिभूतेनायं शरः

प्रांजलिं नि॰ ... पं प्रति ... नंजालिं तद्वृतीवशमित्यार्षो दीर्घः मूर्तिम ... थः अशक्नुवत ... नित्यपूजा

याते किमर्थं न प्रवृत्तर्थकामनया ... रणाभ्यां गूढऐश्वर्यकामस्य स्वै तर्लिंगपूजा ... लिमन्त्रैः पूज्यमानं निशाचरैः ... घटी ... स्वयमेव राम ऊहति नहीति जीवितेष्टं जीवितादपि प्रियम् ॥ १२ ॥ हनूमति तद्विषये

पृष्टमेतत्सर्वं कथयेत्यन्वयः ॥ एकत्रिंश ॥ १४ ॥ यद्ब्रवीषीति आत्मनो बलं न ज ॥ ... भीति शेषः । स ... ॥ तदेवाह अमोघेति ॥ १६ ॥ बाल्यतया बाल्यभावेन अज्ञानतेवेत्यर्थः । अनेनास्यते

॥ १७ ॥ निशामय शृणु ॥ १८ ॥ सूर्यदत्तवरेण स्वर्णः स्वर्णरूपः सुमेरुः स ॥ संप्रोक्तः ॥ १९ ॥ प्रतीतिति ... द्धा ॥ २० ॥ शालिशूकनिभाभासं शाल्यग्रसमानवर्णं प्रासूत प्रसूतवती ॥ २१ ॥ शर

नहिवेदितवान्मन्येहनूमानात्मनोबलम् ॥ यद्दृष्टवान्जीवितपत्यंक्लिश्यंतंवानचलप्रभम् ॥१२॥ एतन्मेभगवन्सर्वंहनूमतिमहामुने ॥ विस्तरेणयथातत्त्वं कथयामरपूजित ॥ १३ ॥ राघवस्यवचःश्रुत्वाहेतुयुक्तमृषिस्ततः ॥ हनूमतःसमक्षंतमिदंवचनमब्रवीत् ॥ १४ ॥ सत्यमेतद्रघुश्रेष्ठयद्ब्रवीषिहनूमति॥ नबलेविद्यतेतुल्योनगतौनमतौपरः ॥ १५ ॥ अमोघशापैःशापस्तुदत्तोस्यमुनिभिःपुरा ॥ नवेत्ताहिबलंसर्वंबलीसन्नरिमर्दन ॥ १६ ॥ बाल्येप्यते नयत्कर्मकृतंराममहाबल ॥ तन्नवर्णयितुंशक्यमितिबाल्यतयास्यते ॥ १७ ॥ यदिवास्तित्वभिप्रायःसंश्रोतुंतवराघव ॥ समाधायमतिंरामनिशाम यवदाम्यहम् ॥ १८ ॥ सूर्यदत्तवरस्वर्णःसुमेरुर्नामपर्वतः ॥ यत्रराज्यंप्रशास्त्यस्यकेसरीनामवैपिता ॥१९॥ तस्यभार्याबभूवेष्टाह्यंजनेतिपरिश्रुता ॥ जनयामासतस्यांवैवायुरात्मजमुत्तमम् ॥ २० ॥ शालिशूकनिभाभासंप्रासूतेमंतदांजना ॥ फलान्याहर्तुकामावैनिष्क्रांतागहनेचरा ॥२१॥ एषमातु र्वियोगाच्चक्षुधयाचभृशार्दितः ॥ रुरोदशिशुरत्यर्थंशिशुःशरवणेयथा ॥२२॥ तदोद्यंतंविवस्वंतंजपापुष्पोत्करोपमम् ॥ ददर्शफललोभाच्चह्युत्पपातर विंप्रति ॥ २३ ॥ बालार्काभिमुखोबालोबालार्कइवमूर्तिमान् ॥ ग्रहीतुकामोबालार्कंप्लवतेंबरमध्यगः ॥२४॥ एतस्मिन्प्लवमानेतुशिशुभावेहनूमति ॥ देवदानवयक्षाणांविस्मयःसुमहानभूत् ॥ २५ ॥ नाप्येवंवेगवान्वायुर्गरुडोनमनस्तथा ॥ यथायंवायुपुत्रस्तुक्रमतेंबरमुत्तमम् ॥२६॥ यदितावच्छिशो रस्यईदृशोगतिविक्रमः ॥ यौवनंबलमासाद्यकथंवेगोभविष्यति ॥ २७ ॥ तमनुप्लवतेवायुःप्लवंतंपुत्रमात्मनः ॥ सूर्यदाहभयाद्रक्षंस्तुषारचयशीतलः ॥ २८ ॥ बहुयोजनसाहस्रंक्रामत्येवगतोंबरम् ॥ पितुर्बलाच्चबाल्याच्चभास्कराभ्याशमागतः ॥ २९ ॥ शिशुरेषत्वदोषज्ञइतिमत्वादिवाकरः ॥ कार्यं चास्मिन्समायत्तमित्येवंनददाहसः ॥ ३० ॥ यमेवदिवसंह्येषग्रहीतुंभास्करंप्लुतः ॥ तमेवदिवसंराहुर्जिघृक्षतिदिवाकरम् ॥ ३१ ॥ अनेनचपरामृष्टे राहुःसूर्यरथोपरि ॥ अपक्रांतस्ततस्त्रस्तोराहुश्चंद्रार्कमर्दनः ॥ ३२ ॥ इंद्रस्यभवनंगत्वासरोषःसिंहिकासुतः ॥ अब्रवीद्भ्रुकुटिंकृत्वादेवंदेवगणैर्वृतम् ॥ ३३ ॥ बुभुक्षापनयंदत्वाचंद्रार्कौममवासव ॥ किमिदंतत्त्वयादत्तमन्यस्यबलवृत्रहन् ॥ ३४ ॥

वणे शिशुः कुमारस्वामीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ शिशुभावे बाल्यावस्थायां हनूमति प्लवमाने सति ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ दोषज्ञो विद्वान्स न भवतीत्यदोषज्ञस्तत्र हेतुः शिशुरिति ॥ ३० ॥ ३१ ॥ सूर्यरथोपरि तदुपरितनप्रदेशे अनेन हनूमता परामृष्टः स्पृष्टो राहुस्ततो मंडलात्त्रस्तः सन्नपक्रांतः ॥३२॥३३ ॥ हे वासव चन्द्रार्कौ मम यथा कालं बुभुक्षापनयं बुभुक्षापनीयतेनेनेति व्युत्पत्त्यात्रं

दत्त्वा तदन्नम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ श्रृंगारधारिणं नानाशृंगारधारिणं स्वर्णघंटाशब्दरूपाट्टहासवंतम् ॥३७॥ करींद्रमैरावतम् अनेन हनुमता सह यत्र देशे सूर्यस्तं प्रायात् ॥३८॥ अतिरभसेनातिवेगेनागात् वासवादपि पूर्वमिति शेषः । अनेन हनूमता स राहुः ॥ ३९ ॥ ४० ॥ एवमवेक्ष्य महाशैलकूटवद्बृहत्तरमवेक्ष्य मुखशेष इति राहोः स्वरूपकथनम् ॥ ४१ ॥४२ ॥ प्रागेवालक्षितं स्वरं राहुदर्शनात्पूर्वमेवायं राहोः स्वर इति निश्चितम् ॥ ४३ ॥ इदमपि महत्फलमिति मत्वा हस्तिराजानम् ऐरावतम् ॥ ४४ ॥४५ ॥ हस्तांतात् हस्ताग्रात् ॥ ४६ ॥ वामा हनुः हनुशब्दः स्त्रियाम् तत्परा हनुरिति कोशात् ॥४७॥

अद्याहंपर्वकालेतुजिघृक्षुःसूर्यमागतः ॥ अथान्योराहुरासाद्यजग्राहसहसारविम् ॥ ३५ ॥ सराहोर्वचनंश्रुत्वावासवःसंभ्रमान्वितः ॥ उत्पपातासनं हित्वाउद्वहन्कांचनींस्रजम् ॥ ३६ ॥ ततः कैलासकूटाभंचतुर्दंतंमदस्रवम् ॥ श्रृंगारधारिणंप्रांशुंस्वर्णघंटाट्टहासिनम् ॥ ३७ ॥ इंद्रःकरींसमारुह्यराहुं कृत्वापुरःसरम् ॥ प्रायाद्यत्राभवत्सूर्यःसहानेनहनूमता ॥ ३८ ॥ अथातिरभसेनागाद्राहुरुत्सृज्यवासवम् ॥ अनेनचसवैदृष्टःप्रधावञ्छैलकूटवत् ॥ ॥ ३९ ॥ ततःसूर्यंसमुत्सृज्यराहुंफलमवेक्ष्यच ॥ उत्पपातपुनर्व्योमग्रहीतुंसिंहिकासुतम् ॥ ४० ॥ उत्सृज्यार्कमिमंरामप्रधावंतंप्लवंगमम् ॥ अवेक्ष्यै वंपरावृत्तोमुखशेषःपराङ्मुखः ॥ ४१ ॥ इंद्रमाशंसमानस्तुत्रातारंसिंहिकासुतः ॥ इंद्रइंद्रेतिसंत्रासान्मुहुर्मुहुरभाषत ॥ ४२ ॥ राहोर्विक्रोशमानस्यप्रागेवालक्षितंस्वरम् ॥ श्रुत्वेंद्रोवाचमाभैषीरहमेनंनिषूदये ॥ ४३ ॥ ऐरावतंततोदृष्ट्वामहत्तदिदमित्यपि ॥ फलंतंहस्तिराजानमभिदुद्रावमारुतिः ॥ ॥ ४४ ॥ तथास्यधावतोरूपमैरावतजिघृक्षया ॥ मुहूर्तमभवद्घोरमिंद्राग्न्युपरिभास्वरम् ॥ ४५ ॥ एवमाधावमानंतुनातिक्रुद्धःशचीपतिः ॥ हस्तां तादतिमुक्तेनकुलिशेनाभ्यताडयत् ॥ ४६ ॥ ततोगिरौपपातैषइंद्रवज्राभिताडितः ॥ पतमानस्यचैतस्यवामाहनुरभज्यत ॥ ४७ ॥ तस्मिंस्तुपतिते चापिवज्रताडनविह्वले ॥ चुक्रोधेंद्रायपवनःप्रजानामहितायसः ॥ ४८ ॥ प्रचारंसतुसंगृह्यप्रजास्वंतर्गतःप्रभुः ॥ गुहांप्रविष्टःस्वसुतंशिशुमादाय मारुतः ॥ ४९ ॥ विण्मूत्राशयमावृत्यप्रजानांपरमार्तिकृत् ॥ रुरोधसर्वभूतानियथावर्षाणिवासवः ॥ ५० ॥ वायुप्रकोपाद्भूतानिनिरुच्छ्वासानिसर्व तः ॥ संधिभिर्भिद्यमानैश्चकाष्ठभूतानिजज्ञिरे ॥ ५१ ॥ निस्स्वाध्यायवषट्कारंनिष्क्रियंधर्मवर्जितम् ॥ वायुप्रकोपात्त्रैलोक्यंनिरयस्थमिवाभवत् ॥ ॥ ५२ ॥ ततः[illegible]ःसगंधर्वाःसदेवासुरमानुषाः ॥ प्रजापतिंसमाधावन्दुःखिताश्चसुखेच्छया ॥ ५३ ॥ ऊचुःप्रांजलयोदेवामहोदरनिभोदराः ॥ त्वयातुभगवन्सृष्टाःप्रजानाथचतुर्विधाः ॥ ५४ ॥ त्वयादत्तोयमस्माकमायुषःपवनःपतिः ॥ सोस्मान्प्राणेश्वरोभूत्वाकस्मादेषोद्यसत्तम ॥ ५५ ॥ रुरोधदुःखंजनयन्नंतःपुरइवस्त्रियः ॥ तस्मात्त्वांशरणंप्राप्ता [illegible]युनोपहताव[illegible] ५६ ॥

॥ ४८ ॥ प्रचारं [illegible] प्रचारं संगृह्य संक्षिप्य अंतर्गतः सर्वदेहां[illegible] [illegible]मदेव[illegible] । कर्ता ॥ ४९ ॥ रुरोध निरुद्धस्वगतिप्रचारमकरोत् एवंविधार्थस्य देवशक्यत्वे दृष्टांतो यथेति । वासवो यथा वर्षा[illegible] हस्तप्रतिष्टं[illegible] ॥ [illegible]यनं ॥ [illegible]तुकर[illegible]रोत्तमैः सृष्टं [illegible]स्थमिव अतिशयितदुःखवादित्यर्थः ॥ ५२ ॥ ५३ ॥ महोदरेति । महोदररोगग्रस्तोदरव[illegible] [illegible]दिभूतेनायं श[illegible]

[illegible]चार्हि नि[illegible] [illegible]पं प्रति [illegible]ञ्जर्हि नदतीवशमित्यार्षो दीर्घः मूर्तिम[illegible]थः
दुदरं येषां ते ॥ ५[illegible] अशक्नुवंत [illegible] [illegible]मनया [illegible] १७ ॥ कारण॥ [illegible] [illegible]चेत्कांगपूजालिमिन्द्र [illegible]त्रिपूज्यमा[illegible]नेशाचं [illegible] धर्षि[illegible]क्रोध तत्कारणं पुनरभाषत ॥ ५८ ॥ ५९ ॥ ६० ॥ दारुभिः समत्वां याति क्षणमपि न
चलतीत्यर्थः ॥ ६१ ॥ ६[illegible] [illegible]भेदः शूलादिरोगमदः गमिष्याम अप्रसाद्येत [illegible] [illegible]भ्रांति शेषः । स[illegible] [illegible]ते ॥ ६४ ॥ सदागतेर्वायोः गंधर्वर्क्षपियक्षेति गुरुलघुभेद आर्षः ॥ ६५ ॥ शतैर्मानः ॥ इति
श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे पंचत्रिंशः सर्गः ॥ ३५ ॥ प्रतीतितात [illegible] ॥ १ ॥ स्त्रक्तपनीयेति । तपनीयस्रगित्यर्थः त्रिरुपस्थाय न्यपतत् उपस्थानपूर्वकं त्रिः साष्टांगं

वायुसंरोधजंदुः[illegible]दंनोनुदद्दुःखहन् ॥ एतत्प्रजानांश्रुत्वातुप्रजानाथःप्रजापतिः ॥ ५७॥ कारणादितिचोक्त्वासौप्रजाःपुनरभाषत ॥ यस्मिंश्चकारणे वायुश्चुक्रोधचरुरोध व ॥ ५८ ॥ प्रजाःशृणुध्वंतत्सर्वंश्रोतव्यंचात्मनःक्षमम् ॥ पुत्रस्तस्यामरेशेनइंद्रेणाद्यनिपातितः ॥५९॥ राहोर्वचनमास्थायततः सकुपितोऽनिलः ॥ अशरीरःशरीरेषुवायुश्चरतिपालयन् ॥ ६० ॥ शरीरंहिविनावायुंसमतांयातिदारुभिः ॥ वायुःप्राणःसुखंवायुर्वायुःसर्वमिदंजगत् ॥ ॥ ६१ ॥ वायुनासंपरित्यक्तंनसुखंविंदतेजगत् ॥ अद्यैवचपरित्यक्तंवायुनाजगदायुषा ॥ ६२ ॥ अद्यैवतेनिरुच्छ्वासाःकाष्ठकुड्योपमाःस्थिताः ॥ तद्यामस्तत्रयत्रास्तेमारुतोरुक्प्रदोहिनः ॥ माविनाशंगमिष्यामअप्रसाद्यादितेःसुतम् ॥ ६३॥ ततःप्रजाभिःसहितःप्रजापतिःसदेवगंधर्वभुजंगगुह्यकैः जगामयत्रास्यतितत्रमारुतःसुतंसुरेंद्राभिहतंप्रगृह्यसः ॥ ६४ ॥ ततोर्कवैश्वानरकांचनप्रभंसुतंतदोत्संगगतंसदागतेः ॥ चतुर्मुखोवीक्ष्यकृपामथा करोत्सदेवगंधर्वर्क्षपियक्षराक्षसैः ॥ ६५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडेपंचत्रिंशः सर्गः ॥ ३५ ॥ ततःपितामहं दृष्ट्वावायुपुत्रवधार्दितः ॥ शिशुकंतंसमादायउत्तस्थौधातुरग्रतः ॥ १ ॥ चलत्कुंडलमौलिस्रक्तपनीयविभूषणः ॥ पादयोर्न्यपतद्वायुस्त्रिरुपस्थायवे धसे ॥ २ ॥तंतुवेदविदातेनलंबाभरणशोभिना ॥ वायुमुत्थाप्यहस्तेनशिशुंतंपरिमृष्टवान् ॥ ३ ॥ स्पृष्टमात्रस्ततःसोथसलीलंपद्मजन्मना ॥ जल सिक्तंयथासस्यंपुनर्जीवितमाप्तवान् ॥ ४ ॥ प्राणवंतमिमंदृष्ट्वाप्राणोगंधवहोमुदा ॥ चचारसर्वभूतेषुसन्निरुद्धंयथापुरा ॥५॥ मरुद्रोधाद्विनिर्मुक्तास्ताः प्रजामुदिताभवन् ॥ शीतवातविनिर्मुक्ताःपद्मिन्यइवसांबुजाः ॥६॥ ततस्त्रियुग्मस्त्रिककुत्त्रिधामात्रिदशार्चितः ॥ उवाचदेवताब्रह्मामारुतप्रियकाम्यया ॥ ७॥ भोमहेंद्राग्निवरुणामहेश्वरधनेश्वराः ॥ जानतामपिवःसर्वंवक्ष्यामिश्रूयतांहितम् ॥ ८ ॥ अनेनशिशुनाकार्यंकर्तव्यंवोभविष्यति ॥ तद्ददध्वं वरान्सर्वेमारुतस्यास्यतुष्टये ॥ ९ ॥



मणतवानित्यर्थः ॥ २ ॥ वेदविदा अनादितोशेषवेदार्थविदा लंबाभरणशोभिना हस्तेन वायुमुत्थाप्य परिमर्शः स्पर्शः ॥ ३ ॥ ४ ॥ सर्वभूतेषु सन्निरुद्धं संत्यक्तनिरोधं यथा भवति तथा यथापुरा यथापूर्वं प्राणापा नात्मना चचार ॥५॥६॥ त्रियुग्मः त्रीणि युग्मानि यस्य सः तानि यशोवीर्ये ऐश्वर्यश्रियौ ज्ञानवैराग्ये च त्रिककुत्त्रिमूर्तिप्रधानः त्रिधामा त्रिलोकस्थानः ॥ ७ ॥ वक्ष्यामि श्रूयतामिति गुरुवैषम्यमार्षम् ॥८॥९॥

कुशेशयमयीं कांचनपद्ममयीम् ॥ १० ॥ ११ ॥ अहं मालापूर्वं वरं दास्यामि ॥ १२ ॥ शतिकां कलां शततममंशम् ॥ १३ ॥ शास्त्रं शास्त्राध्ययनं तदर्थज्ञानं च ॥ १४ ॥ १५ ॥ तुष्ट अविषाद मित्यार्षोऽसंधिः ॥ १६ ॥ १७ ॥ मदायुधानां शूलादिपाशुपतास्त्रांतानाम् ॥ १८ ॥ १९ ॥ महात्मा महानात्मा यस्य स ब्रह्मज्ञ इति यावत् । सर्वेषां ब्रह्मास्त्रांतानां ब्रह्मदंडो ब्रह्मर्षिक्रियमाणः संहारो

ततःसहस्रनयनःप्रीतियुक्तःशुभाननः ॥ कुशेशयमयींमालामुत्क्षिप्येदंवचोऽब्रवीत् ॥ १० ॥ मत्करोत्सृष्टवज्रेणहनुरस्ययथाहतः ॥ नाम्नावैकपिशार्दूलोभविताहनुमानिति ॥ ११ ॥ अहमस्यप्रदास्यामिपरमंवरमद्भुतम् ॥ इतःप्रभृतिवज्रस्यममावध्योभविष्यति ॥ १२ ॥ मार्तंडस्त्वब्रवीत्तत्र भगवांस्तिमिरापहः ॥ तेजसोस्यमदीयस्यददामिशतिकांकलाम् ॥ १३ ॥ यदाचशास्त्राण्यध्येतुंशक्तिरस्यभविष्यति ॥ तदास्यशास्त्रंदास्यामिये नवाग्मीभविष्यति ॥१४॥ वरुणश्चवरंप्रादान्नास्यमृत्युर्भविष्यति ॥ वर्षायुतशतेनापिमत्पाशादुदकादपि ॥ १५ ॥ यमोदंडादवध्यत्वमरोगत्वंच दत्तवान् ॥ वरंददामिसंतुष्टअविषादंचसंयुगे ॥ १६ ॥ गदेयंमामिकानैनंसंयुगेषुवधिष्यति ॥ इत्येवंधनदःप्राहतदाह्येकाक्षिपिंगलः ॥ १७ ॥ मत्तो मदायुधानांचअवध्योयंभविष्यति ॥ इत्येवंशंकरेणापिदत्तोस्यपरमोवरः ॥१८॥ विश्वकर्माचदृष्ट्वेमंबालंप्रतिमहारथः ॥ मत्कृतानिचशस्त्राणियानि दिव्यानितानिच ॥ तैरवध्यत्वमापन्नश्चिरजीवीभविष्यति ॥ १९ ॥ दीर्घायुश्चमहात्माचब्रह्मातंप्राब्रवीद्वचः ॥ सर्वेषांब्रह्मदंडानामवध्यत्वंभविष्यति ॥ २० ॥ ततःसुराणांतुवरैर्दृष्ट्वाह्येनमलंकृतम् ॥ चतुर्मुखस्तुष्टमनावायुमाहजगद्गुरुः ॥ २१ ॥ अमित्राणांभयकरोमित्राणामभयंकरः ॥ अजेयोभविितापुत्रस्तवमारुतमारुतिः ॥ २२ ॥ कामरूपःकामचारीकामगःप्लवतांवरः ॥ भवत्यव्याहतगतिःकीर्तिमांश्चभविष्यति ॥२३॥ रावणोत्सादनार्थानिरामप्रीतिकराणिच ॥ रोमहर्षकराण्येवकर्ताकर्माणिसंयुगे ॥ २४ ॥ एवमुक्त्वातमामंत्र्यमारुतंत्वमरैःसह ॥ यथागतंययुःसर्वेपितामहपुरोगमाः ॥ २५ ॥ सोपिगंधवहःपुत्रंप्रगृह्यगृहमानयत् ॥ अंजनायास्तमाख्यायवरदत्तंविनिर्गतः ॥ २६ ॥ प्राप्यरामवरानेषवरदानबलान्वितः ॥ जवेनात्मनिसंस्थेनसोऽपूर्णःइवार्णवः ॥ २७ ॥ तरसापूर्यमाणोपितदावानरपुंगवः ॥ आश्रमेषुमहर्षीणामपराध्यतिनिर्भयः ॥ २८ ॥ स्रुग्भांडान्यग्निहोत्राणिवल्कलानांश्चपार्थिवान् ॥ भग्नविच्छिन्नविध्वस्तान्संशांतानांकरोत्ययम् ॥ २९॥ एवंविधानिकर्माणिप्रावर्ततमहाबलः ॥ सर्वेषांब्रह्मदंडानामवध्यःशंभुनाकृतः ॥ ३० ॥

...पोतः

...देयकः शापो न भविष्यति ... ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ ... मदेव... । अमरैः परिवारदेवगणैः वरदत्तं दत्तवरम् ॥ २५ ॥ २६ ॥२७॥२८॥ स्रुग्भांडानि यज्ञोपकरणानि अग्निहोत्र... दस्तप्रतिष्ठं... भग्नविच्छि... ॥ ... कुतुकर ... सम्यक् शांतानां शांतिप्रधानानामृषीणामितियावत् ॥ २९ ॥ प्रावर्तत प्रावर्तयदित्यर्थः । शं... ...दिभूतेनायं शं...

भुना ब्रह्मणा ॥ [illegible] अशक्नुवंत [illegible]नामिति शेषः । तस्य ब्रह्मणः शक्तितो [illegible] धमिति शेषः ॥ ३१ ॥ ३२ ॥ क्रोधो जिघांसा मन्युरमर्षः अतिक्रुद्धा अतिमन्यवश्च न भवंतीत्यर्थः ॥ ३३ ॥ तदीर्घेति । तद्दर्ल[illegible]र्थः ॥ ३४ ॥ हततेजौजा अपहृतस्ववीर्यबल [illegible] ॥ ३५ ॥ ऋक्षरजस इत्यकारांतः ॥ ३६ ॥ ३७ ॥ वालिनः पदे यौवराज्ये ॥ ३८ ॥ अद्वैधम् एकमकारम् आबाल्यं बाल्यमारभ्य ॥ ३९ ॥ यदा वैरमुत्थितं तदैव हनुमान् शापवशादेवात्मनो बलं न [illegible] ॥ ४० ॥ ननु हनूमतो ज्ञानाभावेपि सुग्रीवः किमिति न बोधितवांस्तत्राह न ह्येष इति । वालिना भ्राम्य माण एव सुग्रीवोपि त[illegible]देत्यनुकर्षः । तदपि देवकार्यं यावदेव तदा तु जांबवता स्मारितः समुद्रतीरे तत् ज्ञातवान् । उक्तमेव पुनराह देवेति ॥ ४१ ॥ तदा सुग्रीवविपत्समये आहृतबलः अपहृतस्वबलपरि ज्ञानः । अतएव रणे [illegible]ः सिंह इव सहितः सुग्रीवसहितोयमास्थितः स्थित एव नतु युद्धं कृतवानिति । सिंहः कुंजररुद्धेवेति पाठांतरम् । तत्र संधिरार्षः ॥ ४२ ॥ पराक्रमः महत्स्वपि युद्धकार्येपूत्साहः

जानंतऋषयःसर्वेसहंतेतस्यशक्तितः ॥ तथाकेसरिणात्वेपवायुनासोंजनीसुतः ॥३१॥ प्रतिषिद्धोपिमर्यादांलंघयत्येववानरः ॥ ततोमहर्षयःक्रुद्धाभृग्वंगिरसवंशजाः ॥ ३२ ॥शेपुरेनंरघुश्रेष्ठनातिक्रुद्धातिमन्यवः ॥ बाधसेयत्समाश्रित्यबलमस्मान्प्लवंगम ॥ ३३ ॥ तद्दीर्घकालंवेत्तासिनास्माकंशापमोहितः ॥ यदातेस्मार्यतेकीर्तिस्तदातेवर्धतेबलम् ॥ ३४ ॥ ततस्तुहृततेजौजामहर्षिवचनौजसा ॥ एषोश्रमाणितान्येवमृदुभावंगतोचरत् ॥ ३५ ॥ अथर्क्षरजसोनामवालिसुग्रीवयोःपिता ॥ सर्ववानरराजासीत्तेजसाइवभास्करः ॥ ३६ ॥ सतुराज्यंचिरंकृत्वावानराणांमहेश्वरः ॥ ततस्त्वृक्षरजानामकालधर्मेणयोजितः ॥ ३७ ॥ तस्मिन्नस्तमितेचाथमंत्रिभिर्मंत्रकोविदैः ॥ पित्र्येपदेकृतोवालीसुग्रीवोवालिनःपदे ॥ ३८ ॥ सुग्रीवेणसमंत्वस्यअद्वैधंछिद्रवर्जितम् ॥ आबाल्यंसख्यमभवदनिलस्याग्निनायथा ॥ ३९ ॥ एपशापवशादेवनवेदबलमात्मनः ॥ वालिसुग्रीवयोर्वैरंयदारामसमुत्थितम् ॥ ४० ॥ नह्येषरामसुग्रीवोभ्राम्यमाणोपिवालिना ॥ देवजानातिनह्येषबलमात्मनिमारुतिः ॥ ४१ ॥ ऋषिशापाहृतबलस्तदैवकपिसत्तमः ॥ सिंहःकुंजररुद्धोवाआस्थितःसहितोरणे ॥ ४२ ॥ पराक्रमोत्साहमतिप्रतापसौशील्यमाधुर्यनयानयैश्च ॥ गांभीर्यचातुर्यसुवीर्यधैर्यैर्हनूमतःकोप्यधिकोस्तिलोके ॥ ४३ असौपुनर्व्याकरणंग्रहीष्यन्सूर्योन्मुखःप्रष्टुमनाःकपींद्रः ॥ उद्यद्गिरेरस्तगिरिंजगामग्रंथंमहद्धारयनप्रमेयः ॥ ४४ ॥ ससूत्रवृत्त्यर्थपदंमहार्थससंग्रहंसिद्ध्यतिवैकपींद्रः ॥ नह्यस्यकश्चित्सदृशोस्तिशास्त्रेवैशारदेछंदगतौतथैव ॥ ४५ ॥

उत्साहपदेनेतरकार्यविषयः सः मतिरर्थनिर्धारणं प्रतापः प्रभावः सौशील्यं सुस्वभावत्वं माधुर्यं वाचि नयानयौ तत्परिज्ञाने प्रवृत्तिनिवृत्ती इत्यन्ये गांभीर्यमापद्यक्षोभः सुवीर्यं स्वरक्षणेन परपराभवः धैर्यमकंप्यचित्तता हनूमत एतैर्गुणैः कोप्यधिको न कोपीत्यर्थः ॥ ४३ ॥ उद्यद्गिरेरुदयगिरेः महद्ग्रंथं धारयन् अर्थतः पाठतश्च गृह्णन् । धारयनप्रमेय इति नुडभाव आर्षः । सूर्यसाम्मुख्यार्थं तावद्गमनम् ॥ ४४ ॥ कोसौ ग्रंथस्तत्राहससूत्रेति । सूत्रमष्टाध्यायीलक्षणं वृत्तिस्तात्कालिकसूत्रवृत्तिः अर्थपदं सूत्रार्थबोधकपदवद्वार्तिकं महार्थं महाभाष्यं पतंजलिकृतं ससंग्रहं व्याडिकृतसंग्रहाख्यग्रंथसहितं सिध्यति वै सिद्धो भवति शास्त्रांतरेष्वपीत्यर्थः । तदेवाह न ह्यस्य सदृशः शास्त्रे कश्चित् छंदगतौ पूर्वोत्तरमीमांसामुखेन वेदार्थनिर्णये वैशारदे वैदुष्ये विशिष्य नवमव्याकरणकर्ता हनुमानिति च प्रसिद्धिरिति कतकः ॥ ४५ ॥

उक्तमेव स्पष्टयति सर्वास्विति । अयं गुरुं मस्पर्धते मवीविविक्षोर्युगांते भूमिमाप्लावयितुं तां मकर्षेण विशेषेण वेष्टुमिच्छोः । मवी इति दीर्घ आर्षः । लोकक्षये युगांतकाले ॥ ४६ ॥ एषेव एष इव संधिरार्षः । अन्येपि सृष्टाः । तन्नियोंगदः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ मम एतद्वक्ष्यमाणलक्षणं विज्ञाप्यमस्ति अत आगतस्पृहोहं यद्वदामि तद्भवद्भिर्मत्कृते मन्निमित्तमनुकंपया कर्तव्यम् ॥५४॥

सर्वासुविद्यासुतपोविधानेप्रस्पर्धतेऽयंहिगुरुंसुराणाम् ॥ प्रवीविविक्षोरिवसागरस्यलोकान्दिधक्षोरिवपावकस्य ॥ लोकक्षयेष्वेवयथांतकस्यहनूमतः स्थास्यतिकःपुरस्तात् ॥ ४६ ॥ एषेवचान्येचमहाकपींद्राःसुग्रीवमैंदद्विविदाःसनीलाः ॥ सतारतारेयनलाःसरंभास्त्वत्कारणाद्रामसुरैर्हिसृष्टाः ॥ ॥ ४७ ॥ गजोगवाक्षोगवयःसदंष्ट्रोमैंदःप्रभोज्योतिमुखोनलश्च ॥ एतेचऋक्षाःसहवानरेंद्रैस्त्वत्कारणाद्रामसुरैर्हिसृष्टाः ॥ ४८ ॥ तदेतत्कथितंसर्वं यन्मांत्वंपरिपृच्छसि ॥ हनूमतोबालभावेकर्मैतत्कथितंमया ॥ ४९ ॥ श्रुत्वागस्त्यस्यकथितंरामःसौमित्रिरेवच ॥ विस्मयंपरमंजग्मुर्वानरराक्षसैः सह ॥ ५० ॥ अगस्त्यस्त्वब्रवीद्रामंसर्वमेतच्छ्रुतंत्वया ॥ दृष्टःसंभाषितश्चासिरामगच्छामहेवयम् ॥ ५१॥ श्रुत्वैतद्राघवोवाक्यमगस्त्यस्योग्रतेजसः प्रांजलिःप्रणतश्चापिमहर्षिमिदमब्रवीत्॥ ५२ ॥ अद्यमेदेवतास्तुष्टाःपितरःप्रपितामहाः ॥ युष्माकंदर्शनादेवनित्यंतुष्टाःसबांधवाः ॥ ५३ ॥ विज्ञाप्यं तुममैतद्धियद्वदाम्यागतस्पृहः ॥ तद्भवद्भिर्ममकृतेकर्तव्यमनुकंपया॥५४॥पौरजानपदान्स्थाप्यस्वकार्येष्वहमागतः॥क्रतूनहंकरिष्यामिप्रभावाद्भवतां सताम् ॥ ५५ ॥ सदस्याममयज्ञेषुभवंतोनित्यमेवतु ॥ भविष्यथमहावीर्याममानुग्रहकांक्षिणः ॥५६ ॥ अहंयुष्मान्समाश्रित्यतपोनिर्धूतकल्मषान् ॥ अनुगृहीतः पितृभिर्भविष्यामिसुनिर्वृतः ॥ ५७ ॥ तदागंतव्यमनिशंभवद्भिरिहसंगतैः ॥ अगस्त्याद्यास्तुतच्छ्रुत्वाऋषयःसंशितव्रताः ॥ ५८ ॥ एवमस्त्वितितंप्रोच्यप्रमातुमुपचक्रमुः ॥ एवमुक्त्वागताःसर्वेऋषयस्तेयथागतम् ॥ ५९ ॥ राघवश्चतमेवार्थंचिंतयामासविस्मितः ॥ ततोस्तंभास्करे यातेविसृज्य नृप वानरान् ॥ ६० ॥ संध्यामुपास्यविधिवत्तदानरवरोत्तमः ॥ प्रवृत्तायांरजन्यांतुसोंतःपुरचरोभवत् ॥ ६१ ॥ इत्यार्षे श्रीमद्रामायणे वा० आ० उत्तरकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ अभिषिक्तेतुकाकुत्स्थेधर्मेणविदितात्मनि ॥ व्यतीतायानिशापूर्वापौराणांहर्षवर्धिनी ॥ १ ॥ तस्यां रजन्यांव्युष्टायांप्रश्चपार्थिवबोधकाः ॥ वंदिनःसमुपातिष्ठन्सौम्यानृपतिवेश्मनि ॥२॥ तेरक्तकंठिनःसर्वेकिंनराइवशिक्षिताः॥ तुष्टुवुर्नृपतिंवीरंयथावत्सं प्रहर्षिणः ॥ ३ ॥ वीरसौम्यप्रबुध्यस्वकौसल्याप्रीतिवर्धन ॥ जगद्धिसर्वंस्वपितित्वयिसुप्तेनराधिप ॥ ४ ॥

अहमागतो वनवासात्पौरादीन्स्वकार्येषु स्थाप्य क्रतून्करिष्यामि ॥ ५५ ॥ सदस्याः ऋषिः दर्शिनः महावीर्या मदेव श्रोवीर्ययुक्ताः ॥ ५६ ॥ युष्मानाश्रित्यानिशं सुनिर्वृतोहं पितृभिरनुगृहीतो भविष्यामि ॥ ५७ ॥ तदा आगंतव्यमिति च्छेदः ॥ ५८ ॥ ५९ ॥ तमेवार्थं यागरूपम् ॥ ६० ॥ ६१ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे षट्त्रिंशः सर्गः ॥ ३६ ॥ ऋषिगणा अभिषेकर ... विसृष्टाः ततो ... ॥ १ ॥ ... अभरत्ता च व्यतीतेरयन्वयः ॥ २॥ रक्तकंठिनो मधुरकंठाः ॥ ३ ॥ त्वयि सुप्ते ब्राह्मे मुहूर्ते ... दिभूतेनायं शरः

उत्थाय धर्मानुष्ठानर[illegible] ...नामिदि[illegible] नस्य ब्रह्मणः शक्तितो [illegible] तत्पूजा[illegible] पूज्यमाना नंशा[illegible] समः प्रजापरिपालन इति भाव. ॥ ५ ॥ ६ ॥ ईदृशं सौम्यत्वं त्वद्वृत्तिसौम्यत्वं चंद्रे नान्यत्र पूर्वमभूवन्निति शेषः भवितारि[illegible] ॥ [illegible]षः ॥ ७ ॥ ८ ॥ एताश्चान्याश्च उक्त[illegible] [illegible] डुराच्छादनं उत्तराच्छादनपटः ॥ ११ ॥ सलिलं गृहीत्वेति शेषः । शौचाद्यर्थमिति भावः ॥ १२ ॥ देवागारं देवपूजागृहम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ [illegible] दिता नाम तन्नामीतितत[illegible] कराः ॥ १८ ॥ विंशतिर्वानराः । सुग्रीवांगदहनुमज्जांबवत्सुषेणतारनीलनलमैंदद्विविदकुमुदशरभ

विक्रमस्तेयथावि[illegible] रूपंचैवाश्विनोरिव ॥ बुद्ध्याबृहस्पतेस्तुल्यःप्रजापतिसमोह्यसि ॥ ५ ॥ क्षमातेपृथिवीतुल्यातेजसाभास्करोपमः ॥ वेगस्ते वायुनातुल्यो[illegible] [illegible]दधेरिव ॥ ६ ॥ अप्रकंप्योयथास्थाणुश्चंद्रेसौम्यत्वमीदृशम् ॥ नेदृशाःपार्थिवाःपूर्वंभवितारोनराधिप ॥ ७ ॥ यथात्वमसिदुर्धर्षो धर्मनित्यःप्रजाहितः ॥ नत्वांजहातिकीर्तिश्चलक्ष्मीश्चपुरुषर्षभ ॥ ८ ॥ श्रीश्चधर्मश्चकाकुत्स्थत्वयिनित्यंप्रतिष्ठितौ ॥ एताश्चान्याश्चमधुरावंदिभिः परिकीर्तिताः ॥ ९ ॥ सूताश्चसंस्तवैर्दिव्यैर्बोधयंतिस्मराघवम् ॥ स्तुतिभिःस्तूयमानाभिःप्रत्यबुध्यतराघवः ॥ १० ॥ सतद्विहायशयनंपांडुराच्छादनास्तृतम् ॥ उत्तस्थौनागशयनाद्धरिर्नारायणोयथा ॥ ११ ॥ समुत्थितंमहात्मानंप्रह्वाःप्रांजलयोनराः ॥ सलिलंभाजनैःशुभ्रैरुपतस्थुःसहस्रशः ॥ ॥ १२ ॥ कृतोदकःशुचिर्भूत्वाकालेहुतहुताशनः ॥ देवागारंजगामाशुपुण्यमिक्ष्वाकुसेवितम् ॥ १३ ॥ तत्रदेवान्पितॄन्विप्रानर्चयित्वायथाविधि॥ बाह्यकक्षांतरंरामोनिर्जगामजनैर्वृतः ॥ १४ ॥ उपतस्थुर्महात्मानोमंत्रिणःसपुरोहिताः ॥ वसिष्ठप्रमुखाःसर्वेदीप्यमानाइवाग्नयः ॥ १५ ॥ क्षत्रियाश्च महात्मानोनानाजनपदेश्वराः ॥ रामस्योपाविशन्पार्श्वेशक्रस्येवयथामराः ॥ १६ ॥ भरतोलक्ष्मणश्चात्रशत्रुघ्नश्चमहायशाः ॥ उपासांचक्रिरेहृष्टावेदात्रयइवाध्वरम् ॥ १७ ॥ याताःप्रांजलयोभूत्वाकिंकरामुदिताननाः ॥ मुदितानामपार्श्वस्थाबहवःसमुपाविशन् ॥ १८ ॥ वानराश्चमहावीर्याविंशतिःकामरूपिणः ॥ सुग्रीवप्रमुखारामसुपासंतेमहौजसः ॥ १९ ॥ विभीषणश्चरक्षोभिश्चतुर्भिःपरिवारितः॥उपासतेमहात्मानंधनेशमिवगुह्यकः ॥२०॥ तथानिगमवृद्धाश्चकुलीनायेचमानवाः ॥ शिरसावंद्यराजानमुपासंतेविचक्षणाः ॥ २१ ॥ तथापरिवृतोराजाश्रीमद्भिर्ऋषिभिर्वरैः ॥ राजभिश्चमहावीर्यैर्वानरैश्चसराक्षसैः ॥ २२ ॥ यथादेवेश्वरोनित्यमृषिभिः समुपास्यते ॥ अधिकस्तेनरूपेणसहस्राक्षाद्विरोचते ॥ २३ ॥ तेषांसमुपविष्टानांतास्ताः सुमधुराःकथाः ॥ कथ्यंतेधर्मसंयुक्ताः पुराणज्ञैर्महात्मभिः ॥२४॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये उत्तरकांडे सप्तत्रिंशः सर्गः ॥ ३७॥

शतवलिगंधमादनगजगवाक्षगवयधूम्ररंभज्योतिमुखा विंशतिः प्रधानवानरा इत्यर्थः इति कतकः ॥ १९ ॥ २० ॥ २१ ॥ ऋषिभिः ऋषयोत्र वसिष्ठाद्याः ॥ २२ ॥ तेन रूपेण सर्वलोकोपास्यत्वाकारेण ॥ २३ ॥ २४ ॥ वर्तमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तत्रिंशः सर्गः ॥ ३७ ॥ एतदुत्तरं वालिसुग्रीवोत्पत्तीतिहासो रावणस्य श्वेतद्वीपगमनेतिहासश्च कतिपयैः सर्गैरगस्त्योक्तितया क्वचित्पुस्तकेषु दृश्यते ते तु पूर्वसर्गांत एवागस्त्यस्य स्वाश्रमगमनकथनादसंगताः कतकतीर्थाद्यनादृतत्वाच्च मयापि न व्याख्याताः ॥

चंद्रमास्तिष्ठतेयत्रनक्षत्रग्रहसंयुतः ॥ शतंशतसहस्राणिरश्मयश्चंद्रमंडलात् ॥ १६ ॥ प्रकाशयंतिलोकांस्तुसर्वसत्त्वसुखावहाः ॥ ततोदृष्ट्वादशग्रीवंचं द्रमानिर्दहन्निव ॥ १७ ॥ सतुशीताग्निनाशीघ्रंप्रादहद्रावणंतदा ॥ नासहंस्तस्यसचिवाःशीताग्निभयपीडिताः ॥ १८ ॥ रावणंजयशब्देनप्रहस्तो ऽथैनमब्रवीत् ॥ राजञ्शीतेनवध्यामोनिवर्तामइतोवयम् ॥ १९ ॥ चंद्ररश्मिप्रतापेनरक्षसांभयमाविशत् ॥ स्वभावएषराजेंद्रशीतांशोर्दहनात्मकः ॥ ॥ २० ॥ एतच्छ्रुत्वाप्रहस्तस्यरावणःक्रोधमूर्च्छितः ॥ विस्फार्यधनुरुद्यम्यनाराचैस्तमपीडयत् ॥ २१ ॥ अथब्रह्मातदागच्छत्सोमलोकंत्वरान्वितः ॥ दशग्रीवमहाबाहोसाक्षाद्विश्रवसःसुत ॥ २२ ॥ गच्छशीघ्रमितःसौम्यमाचंद्रंपीडयस्ववै ॥ लोकस्यहितकामोवैद्विजराजोमहाद्युतिः ॥ २३ ॥ मंत्रंचसंप्रदास्यामिप्राणात्ययगतिर्यदा ॥ यस्त्वेतंसंस्मरेन्मंत्रंनासौमृत्युमवाप्नुयात् ॥ २४ ॥ एवमुक्तोदशग्रीवःप्रांजलिर्देवमब्रवीत् ॥ यदितुष्टोसिमे देवलोकनाथमहाव्रत ॥ २५ ॥ यदिमंत्रश्चमेदेयोदीयतांममधार्मिक ॥ यंजप्त्वाहंमहाभागसर्वदेवेषुनिर्भयः ॥ २६ ॥ असुरेषुचसर्वेषुदानवे षुपतत्रिषु ॥ त्वत्प्रसादात्तुदेवेशस्यामजेयोनसंशयः ॥ २७ ॥ एवमुक्तोदशग्रीवंब्रह्मावचनमब्रवीत् ॥ प्राणात्ययेपुजप्तव्योननित्यंराक्षसाधिप ॥२८॥ अक्षसूत्रंगृहीत्वातुजपेन्मंत्रमिमंशुभम् ॥ जप्त्वातुराक्षसपतेत्वमजेयोभविष्यसि ॥ २९ ॥ अजप्त्वाराक्षसपतेनतेसिद्धिर्भविष्यति ॥ शृणुमंत्रंप्रवक्ष्या मियेनराक्षसपुंगव ॥ ३० ॥ मंत्रस्यकीर्तनादेवप्राप्स्यसेसमरेजयम् ॥ नमस्तेदेवदेवेशसुरासुरनमस्कृत ॥ ३१ ॥ भूतभव्यमहादेवहरिपिंगललो चन ॥ बालस्त्वंवृद्धरूपीचवैयाघ्रवसनच्छद ॥ ३२ ॥ अर्चनीयोसिदेवत्वंत्रैलोक्यप्रभुरीश्वरः ॥ हरोहरितनेमींचयुगांतदहनोबलः ॥ ३३ ॥ गणेशोलोकशंभुश्चलोकपालोमहाभुजः ॥ महाभागोमहाशालीमहादंष्ट्रीमहेश्वरः ॥ ३४ ॥ कालश्चबलरूपीचनीलग्रीवोमहोदरः ॥ देवांतगस्तपों तश्चपशूनांपतिरव्ययः ॥ ३५ ॥ शूलपाणिर्वृषःकेतुर्नेतागोप्ताहरोहरिः ॥ जटीमुंडीशिखंडीचलकुटीचमहायशाः ॥ ३६ ॥ भूतेश्वरोगणाध्यक्षः सर्वात्मासर्वभावनः ॥ सर्वगःसर्वहारीसस्रष्टाचगुरुरव्ययः ॥३७॥ कमंडलुधरोदेवःपिनाकीधूर्जटिस्तथा ॥ माननीयश्चओंकारोवरिष्ठोज्येष्ठसामगः॥ मृत्युश्चमृत्युभूतश्चपारियात्रश्चसुव्रतः ॥ ३८ ॥ ब्रह्मचारीगुहावासीवीणापणवतूणवान् ॥ अमरोदर्शनीयश्चबालसूर्यनिभस्तथा ॥३९॥ श्मशानवासी भर्गवानुमापतिरनिंदितः ॥ भगस्याक्षिनिपातीचपूष्णोदशनननाशनः ॥ ४० ॥ ज्वरहर्तापाशहस्तःप्रलयःकालएवच ॥ उल्कामुखोग्निकेतुश्चमुनिर्दी प्तोविशांपतिः ॥ ४१ ॥ उन्मादोवेपनकरश्चतुर्थोलोकसत्तमः ॥ वामनोवामदेवश्चप्राक्प्रदक्षिणवामनः ॥ ४२ ॥ भिक्षुश्चभिक्षुरूपीचत्रिजटीकुटिलः स्वयम् ॥ शक्रहस्तप्रतिष्टंभीवसूनांस्तंभनस्तथा ॥ ४३ ॥ [illegible]क्रतुकर[illegible] मधुकलोचनः ॥ वानस्पत्योवाजसनोनित्यमाश्रमपूजितः ॥४४॥

[illegible] दिभूतेनायं शरः

जगद्धाताचकर्ताचपुरुषःशाश्वतोध्रुवः ॥ धर्माध्यक्षोविरूपाक्षः ... ॥ ४५ ॥ त्रिनेत्रोवहुरूपश्चसूर्यायुतसमप्रभः ॥ देवदेवोतिदेवश्चचंद्रांकितजटस्तथा ॥ ४६ ॥ नर्तकोलासकश्चैवपूर्णेंदुसदृशाननः ॥ ब्रह्मण्यश्चशरण्यश्चसर्वजीवमयस्तथा ॥ ४७ ॥ सर्वतूर्यनिनादीचसर्वबंधविमोक्षकः ॥ मोहनोवंधनश्चैवसर्वदानिधनोत्तमः ॥ ४८ ॥ पुष्पदंतोविभागश्चमुख्यःसर्वहरस्तथा ॥ हरिश्मश्रुर्धनुर्धारीभीमोभीमपराक्रमः ॥ ४९ ॥ मयोप्रोक्तमिदंपुण्यंनामाष्टशतमुत्तमम् ॥ सर्वपापहरंपुण्यंशरण्यंशरणार्थिनाम् ॥ ५० ॥ जप्तमेतद्दशग्रीवकुर्याच्छत्रुविनाशनम् ॥ ५१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुर्थः सर्गः ॥ ४ ॥ दत्त्वातुरावणस्यैवंवरंसकमलोद्भवः ॥ पुनरेवागमत्क्षिप्रंब्रह्मलोकंपितामहः ॥ १ ॥ रावणोपिवरंलब्ध्वापुनरेवागमत्तथा ॥ केनचित्त्वथकालेनरावणोलोकरावणः ॥ २ ॥ पश्चिमार्णवमागच्छत्साचिवैःसहराक्षसः ॥ द्वीपस्थोदृश्यतेतत्रपुरुषःपावकप्रभः ॥ ३ ॥ महाजांबूनदप्रख्यएकएवव्यवस्थितः ॥ दृश्यतेभीषणाकारोयुगांतानलसन्निभः ॥ ४ ॥ देवानामिवदेवेशोग्रहाणामिवभास्करः ॥ शरभाणांयथासिंहोहस्तिष्वैरावतोयथा ॥ ५ ॥ पर्वतानांयथामेरुःपारिजातश्चशाखिनाम् ॥ तथातंपुरुषंदृष्ट्वास्थितंमध्येमहाबलम् ॥ ६ ॥ अब्रवीच्चदशग्रीवोयुद्धंमेदीयतामिति ॥ अभवत्तस्यसादृष्टिर्ग्रहमालाइवाकुला ॥ ७ ॥ दंतान्संदशतःशब्दोयंत्रस्येवाभिभिद्यतः ॥ जगर्जोच्चैःसबलवान्सहामात्योदशाननः ॥ ८ ॥ सगर्जन्विविधैर्नादैर्लंबहस्तंभयानकम् ॥ दंष्ट्रालंविकटंचैवकंबुग्रीवंमहोरसम् ॥ ९ ॥ मंडूककुक्षिंसिंहास्यंकैलासशिखरोपमम् ॥ पद्मपादतलंभीमंरक्तालुकरांबुजम् ॥ १० ॥ महानादंमहाकायंमनोनिलसमंजवे ॥ भीममाबद्धतूणीरंसघंटंबद्धचामरम् ॥ ११ ॥ ज्वालामालापरिक्षिप्तंकिंकिणीजालनिःस्वनम् ॥ मालयास्वर्णपद्मानांकंठदेशेऽवलंबया ॥ १२ ॥ ऋग्वेदमिवशोभंतंपद्ममालाविभूषितम् ॥ सोंजनाचलसंकाशंकांचनाचलसन्निभम् ॥ १३ ॥ प्राहरद्राक्षसपतिःशूलशक्त्यृष्टिपट्टिशैः ॥ द्वीपिनासर्सिंहइवऋषभेणेवकुंजरः ॥ १४ ॥ सुमेरुरिवनागेंद्रैर्नदीवेगैरिवार्णवः ॥ अकंपमानःपुरुषोराक्षसंवाक्यमब्रवीत् ॥ १५ ॥ युद्धश्रद्धांहितेरक्षोनाशयिष्यामिदुर्मते ॥ रावणस्यचयोवेगःसर्वलोकभयंकरः ॥ १६ ॥ तथावेगसहस्राणिसंश्रितानितमेवहि ॥ धर्मस्तस्यतपश्चैवजगतःसिद्धिहेतुकौ ॥ १७ ॥ ऊरूह्याश्रित्यतस्थातेमन्मथःशिश्नमाश्रितः ॥ विश्वेदेवाःकटीभागेमरुतोवस्तिपार्श्वयोः ॥ १८ ॥ मध्येष्टौवसवस्तस्यसमुद्राःकुक्षितःस्थिताः ॥ पार्श्वादिषुदिशःसर्वाःसर्वसंधिषुमारुतः ॥ १९ ॥ पृष्ठंचभगवान्रुद्रोहृदयंचपितामहः ॥ पितरश्चाश्रिताःपृष्ठंहृदयंचपितामहाः ॥ २० ॥ गोदानानिपवित्राणिभूमिदानानियानिच ॥ सुवर्णवरदानानिकक्षलोमानुगानिच ॥ २१ ॥ हिमवान्हेमकूटश्चमंदरोमेरुरेवच ॥ नरंतुतंसमाश्रित्यअस्थिभूताव्यवस्थिताः ॥ २२ ॥

पाणिर्वज्रोभवत्तस्यशरीरेद्यौरवस्थिता ॥ कृकाटिकायांसंध्याचजलवाहाश्चयेवनाः ॥ २३ ॥ बाहूधाताविधाताचतथाविद्याधरादयः ॥ शेषश्चवासु
किश्चैवविशालाक्षइरावतः ॥ २४ ॥ कंबलाश्वतरौचोभौकर्कोटकधनंजयौ ॥ सचघोरविषोनागस्तक्षकःसोपतक्षकः ॥ २५ ॥ करजानाश्रिताश्चैव
विषवीर्यमुमुक्षवः ॥ अग्निरास्यमभूत्तस्यस्कंधौरुद्रैरधिष्ठितौ ॥ २६ ॥ पक्षमासर्तवश्चैवदंष्ट्रयोरुभयोःस्थिताः ॥ नासेकुहूरमावास्याछिद्रेषुवायवः
स्थिताः ॥ २७ ॥ श्रीवातस्याभवद्देवीवाणीचापिसरस्वती ॥ नासत्यौश्रवणेचोभौनेत्रेचशशिभास्करौ ॥ २८ ॥ वेदांगानिचयज्ञाश्चताराख्पाणिया
निच ॥ सुवृत्तानिचवाक्यानितेजांसिचतपांसिच ॥ २९ ॥ एतानिनररूपस्यतस्यदेहाश्रितानिवै ॥ तेनवज्रप्रहारेणलब्धमात्रेणलीलया ॥ ३० ॥
पाणिनापीडितंरक्षोनिपपातमहीतले ॥ पतितंराक्षसंज्ञात्वाविद्राव्यसनिशाचरान् ॥ ३१ ॥ ऋग्वेदप्रतिमःसोथपद्ममालाविभूषितः ॥ प्रविवेशचपातालं
निजंपर्वतसन्निभः ॥ ३२ ॥ उत्थायचदशग्रीवआहूयसचिवान्स्वयम् ॥ क्वगतःसहसाब्रूतप्रहस्तशुकसारणाः ॥ ३३ ॥ एवमुक्तारावणेनराक्षसास्ते
तदाब्रुवन् ॥ प्रविष्टःसनरोनैवदेवदानवदर्पहा ॥ ३४ ॥ अथसंगृह्यवेगेनगरुत्मानिवपन्नगम् ॥ सतुशीघ्रंबिलद्वारंसंप्रविश्यचदुर्मतिः ॥ ३५ ॥ प्रविवे
शचतद्द्वारंरावणोनिर्भयस्तदा ॥ सप्रविश्यचपश्यद्वैनीलांजनचयोपमान् ॥ ३६ ॥ केयूरधारिणःशूरान्रक्तमाल्यानुलेपनान् ॥ वरहाटकरत्नाद्यै
र्विविधैश्चविभूषितान् ॥ ३७ ॥ दृश्यंतेतत्रनृत्यंत्यस्तिस्रःकोट्योमहात्मनाम् ॥ नृत्योत्सवावीतभयाविमलाःपावकप्रभाः ॥ ३८ ॥ नृत्यंत्यःपश्यते
तांस्तुरावणोभीमविक्रमः ॥ द्वारस्थोरावणस्तत्रतासुकोटिपुनिर्भयः ॥ ३९ ॥ यथादृष्टःसतुनरस्तुल्यांस्तानपिसर्वशः ॥ एकवर्णानेकवेषानेकरूपा
न्महौजसः ॥ ४० ॥ चतुर्भुजान्महोत्साहांस्तत्रापश्यत्सराक्षसः ॥ तांस्तुदृष्ट्वादशग्रीवऊर्ध्वरोमावभूवह ॥ ४१ ॥ स्वयंभुवादत्तवरस्ततःशीघ्रंवि
निर्ययौ ॥ अथापश्यत्परंतत्रपुरुषंशयनेस्थितम् ॥ ४२ ॥ पांडुरेणमहार्हेणशयनासनवेश्मना ॥ शेतेसपुरुषस्तत्रपावकेनावगुंठितः ॥ ४३ ॥
दिव्यस्रगनुलेपाचदिव्याभरणभूषिता ॥ दिव्यांबरधरासाध्वीत्रैलोक्यस्यैकभूषणम् ॥ ४४ ॥ वालव्यजनहस्ताचदेवीतत्रव्यवस्थिता ॥ लक्ष्मीदेवी
सपद्मांविभ्राजतेलोकसुन्दरी ॥ ४५ ॥ प्रविष्टःसतुलङ्केशोदृष्ट्वातांचारुहासिनीम् ॥ जिघृक्षुःसहसासाध्वींसिंहासनसमास्थिताम् ॥ ४६ ॥ विना
[illegible]चिवैस्तत्ररावणोदुर्मतिस्तदा ॥ हस्तेग्रहीतुमन्विच्छन्मन्मथेनवशीकृतः ॥ ४७ ॥ सुप्तमाशीविषंयद्वद्रावणःकालनोदितः ॥ अथसुप्तोमहाबाहुः
[illegible]वकेनावगुंठितः ॥ ग्रहीतुकामंतंज्ञात्वाव्यपविद्धपटंतदा ॥ ४८ ॥ जहासोच्चैर्भृशंदेवस्तंदृष्ट्वाराक्षसाधिपम् ॥ ४९ ॥ तेजसासहसादीप्तोरावणोलो
करावणः ॥ कृत्तमूलोयथाशाखीनिपपातमहीतले ॥ ५० [illegible] दृष्ट्वा [illegible] नंचेदमब्रवीत् ॥ उत्तिष्ठराक्षसश्रेष्ठमृत्युस्तेनाद्यविद्यते ॥ ५१ ॥
[illegible] दिभूतेनायं शरः

प्रजापतिवरोरक्ष्यस्तेनजीवसिराक्षस ॥ गच्छरावणविस्र [illegible] ॥ लब्धसंज्ञोमुहूर्तेनरावणोभयमाविशत ॥ एवमुक्तस्तदो [illegible]त्थायरावणोदेवकंटकः ॥ ५३ ॥ लोमहर्षणमापन्नोह्यब्रवीत्तंमहाद्युतिम् ॥ का[illegible]भवान्वीर्यसंपन्नोयुगांतानलसन्निभः ॥ ५४ ॥ ब्रूहित्वंकोभवान्देवकुतो [illegible]वाप्यवस्थितः ॥ एवमुक्तस्ततोदेवोरावणेनदुरात्मना ॥ ५५ ॥ प्रत्युवाचहसन्देवोमेघगंभीरयागिरा ॥ किंतेमयादशग्रीववध्योसिनचिरान्मम ॥ ॥ ५६ ॥ एवमुक्तोदशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत् ॥ प्रजापतेस्तुवचनान्नाहंमृत्युपथंगतः ॥५७ ॥ नसजातोजनिष्योवाममतुल्यःसुरेष्वपि ॥ प्रजापतिवरंयोहिलंघयेद्वीर्यमाश्रितः ॥ ५८ ॥ नतत्रपरिहारोस्तिप्रयत्नश्चापिदुर्बलः ॥ त्रैलोक्येतंनपश्यामियोमेकुर्याद्वरंवृथा ॥ ५९ ॥ अमरोऽहंसुरश्रेष्ठते नमांनाविशद्भयम् ॥ अथापिचभवेन्मृत्युस्त्वद्धस्तान्नान्यतःप्रभो ॥ ६० ॥ यशस्यंश्लाघनीयंचत्वद्धस्तान्मरणंमम ॥ अथास्यगात्रेसंपश्यद्रावणो भीमविक्रमः ॥ ६१ ॥ तस्यदेवस्यसकलंत्रैलोक्यंसचराचरम् ॥ आदित्यामरुतःसाध्यावसवोथाश्विनावपि ॥ ६२ ॥ रुद्राश्चपितरश्चैवयमोवैश्रवणस्तथा ॥ समुद्रागिरयोनद्योवेदाविद्यास्त्रयोग्नयः ॥ ६३ ॥ ग्रहास्तारागणाव्योमसिद्धागंधर्वचारणाः ॥ महर्षयोवेदविदोगरुडोथभुजंगमाः ॥ ६४ ॥ येचान्येदेवतासंघाःसंस्थितादैत्यराक्षसाः ॥ गात्रेषुशयनस्थस्यदृश्यंतेसूक्ष्ममूर्तयः ॥ ६५ ॥ आहरामोथधर्मात्माह्यगस्त्यंमुनिसत्तमम् ॥ द्वीपस्थः पुरुषःकोसौतिस्रःकोट्यस्तुकाश्वताः ॥ ६६ ॥ शयानःपुरुषःकोसौदैत्यदानवदर्पहा ॥ रामस्यवचनंश्रुत्वाह्यगस्त्योवाक्यमब्रवीत् ॥ ६७ ॥ श्रूयतामभिधास्यामिदेवदेवसनातन ॥ भगवान्कपिलोनामद्वीपस्थोनरउच्यते ॥६८॥ येतुनृत्यंतिवैतत्रस्वरास्तेतस्यधीमतः ॥ तुल्यतेजःप्रभावास्ते कपिलस्यनरस्यवै ॥ ६९ ॥ नासौक्रुद्धेनदृष्टस्तुराक्षसःपापनिश्चयः ॥ नबभूवतदातेनभस्मसाद्रामरावणः ॥ ७० ॥ खिन्नगात्रोनरप्रख्योरावणः पतितोभुवि ॥ वाक्छरैस्तंविभेदाशुरहस्यंपिशुनोयथा ॥ ७१ ॥ अथदीर्घेणकालेनलब्धसंज्ञःसराक्षसः ॥ आजगाममहातेजायत्रतेसचिवाःस्थिताः ॥ ७२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तराकांडे पंचमः सर्गः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एतदंतं भक्षितम् । अथ लंकागतेन हतभर्तृकायाः स्वसुराश्वासनम् निवर्तमान इति ॥ १ ॥ रक्ष इति संबुद्धिः । कन्या अनूढा स्त्री सभर्तृका ॥ २ ॥ ३ ॥ अभ्यर्चिषां तुलयन् शोकाग्निना भयेन च संभवो यस्य तद्बाष्पजं जलं मुमुचुः ॥ ४ ॥ भयं शोकः अशिवाश्रु दुःखाश्रु च यासां ताभिर्विमानमापूरितं नदीभिः सागर इव ॥ ५ ॥ ६ ॥ वज्रयुता वेदिर्वज्रवेदिस्तन्मध्यसमप्रभाः मध्यभागे इति भावः । यद्वा वज्रतुल्यवर्णा वेदिः पीतवर्णा भ्रमरिका अतिसूक्ष्मकटिप्रदेशविशेषस्तन्मध्ये इत्यादिरर्थः ॥ ७ ॥ ८ ॥ ९ ॥ सन्निरुद्धा अग्नयो यस्मिंस्तादृशमग्निहोत्रमग्निकुंडमिव पुष्पकं भाति ॥ १० ॥ चिंतयती चिंतयंती बभू

निवर्तमानःसंहृष्टोरावणःसदुरात्मवान् ॥ जह्रेपथिनरेंद्रर्षिदेवदानवकन्यकाः ॥ १ ॥ दर्शनीयांहियांरक्षःकन्यांस्त्रींवाथपश्यति ॥ हत्वाबंधुजनंतस्याविमानेतांरुरोधसः ॥ २ ॥ एवंपन्नगकन्याश्चराक्षसासुरमानुषीः ॥ यक्षदानवकन्याश्चविमानेसोध्यरोपयत् ॥ ३ ॥ ताहिसर्वाःसमंदुःखान्मुमुचुर्बाष्पजंजलम् ॥ तुल्यमग्न्यर्चिषांतत्रशोकाग्निभयसंभवम् ॥ ४ ॥ ताभिःसर्वानवद्याभिर्नदीभिरिवसागरः ॥ आपूरितंविमानंतद्भयशोकाशिवाश्रुभिः ॥ ५ ॥ नागगंधर्वकन्याश्चमहर्षितनयाश्चयाः ॥ दैत्यदानवकन्याश्चविमानेशतशोऽरुदन् ॥ ६ ॥ दीर्घकेश्यःसुचार्वंग्यःपूर्णचंद्रनिभाननाः ॥ पीनस्तनतटामध्येवज्रवेदिसमप्रभाः ॥ ७ ॥ रथकूबरसंकाशैःश्रोणीदेशैर्मनोहराः ॥ स्त्रियःसुरांगनाप्रख्यानिष्टप्तकनकप्रभाः ॥ ८ ॥ शोकदुःखभयत्रस्ताविह्वलाश्चसुमध्यमाः ॥ तासांनिःश्वासवातेनसर्वतःसंप्रदीपितम् ॥ ९ ॥ अग्निहोत्रमिवाभातिसन्निरुद्धाग्निपुष्पकम् ॥ दशग्रीववशंप्राप्तास्तास्तुशोकाकुलाःस्त्रियः ॥ १० ॥ दीनवक्रेक्षणाःश्यामामृग्यःसिंहवशाइव ॥ काचिच्चिंतयतीतत्रकिंनुमांभक्षयिष्यति ॥ ११ ॥ काचिद्दध्यौसुदुःखार्ताअपिमांमारयेदयम् ॥ इतिमातॄःपितॄन्स्मृत्वाभर्तॄन्भ्रातॄंस्तथैवच ॥ १२ ॥ दुःखशोकसमाविष्टाविलेपुःसहिताःस्त्रियः ॥ कथंनुखलुमेपुत्रोभविष्यतिमयाविना ॥ १३ ॥ कथंमाताकथंभ्रातानिमग्नाःशोकसागरे ॥ हाकथंनुकरिष्यामिभर्तुस्तस्मादहंविना ॥ १४ ॥ मृत्योप्रसादयामित्वांनयमांदुःखभागिनीम् ॥ किंनुतद्दुष्कृतंकर्मपुरादेहांतरेकृतम् ॥ १५ ॥ एवंस्मदुःखिताःसर्वाःपतिताःशोकसागरे ॥ नखल्विदानींपश्यामोदुःखस्यास्यांतमात्मनः ॥ १६ ॥ अहोधिङ्मानुषंलोकंनास्तिखल्वधमःपरः ॥ यद्दुर्बलाबलवताभर्तारोरावणेननः ॥ १७ ॥ सूर्येणोदयताकालेनक्षत्राणीवनाशिताः ॥ अहोसुबलवद्रक्षोवधोपायेषुरज्यते ॥ १८ ॥ अहोदुर्वृत्तमास्थायनात्मानंवैजुगुप्सते ॥ सर्वथासदृशस्तावद्विक्रमोस्यदुरात्मनः ॥ १९ ॥

वेति शेषः ॥ ११ ॥ १२ ॥ १३ ॥ तस्माद्भर्तुर्विना कृताहं कथं नु करिष्यामि [illegible] नुकूल्यमिति शेषः [illegible] ॥ १५ ॥ १६ ॥ नास्त्यधमः परः मानुषाल्लोकादिति शेषः । तत्रैव हेतुर्यद्दुर्बला इति ॥ १७ ॥ [illegible] पायेषु वधसंपादकेषु उपायेषु शस्त्रपातादिषु ॥ १८ ॥ जुगुप्सते निंदति अ[illegible] विक्रमः स[illegible] [illegible] तपःसंपादितभगवत्प्रसादस्येति शेषः ॥ १९ ॥

[illegible]

त्रोतिदेवश्चचं
निमो

…वभाभू…

परक्यासु परकीयासु ॥२०॥२१॥२२॥२३॥२४॥२५॥ भद्रे मे मह्यं किं दु… शाननः ॥ ब्रह्मण्यश्चशरण्य…
…या स्वयमेव हतास्मि ॥२९॥ न नु इति पृथक्पदे जामाता नाम समरेष्वपि रक्षे… न काकु… विभागश्चसुर… …शोपि विशिष्य न ज्ञायत इति सूच्यते॥२६॥२७॥२८॥ यतो मे भर्ता हतोऽतोहं बंधुना
॥ …३ ॥ ३४ ॥ अस्मिन्काले तु यत्प्राप्तम् कर्तव्यत्वेनेति शेषः ॥ ३५ ॥ भ्रा… …का। भ…॥३०॥३१॥ न भेतव्यं च सर्वशः बांधवादिभ्योपि मा भैषीः स्वैरं चरेत्यर्थ इति तीर्थः ॥३२॥
…तृष्वसेयस्य खरस्य …पे पार्श्वतो वस तत्समीपे वसेत्यर्थः । मम राज्यपारवश्येन त्वत्संमाननेऽवकाशाभाव इति भावः

इदं…स्वसदृशंकर्मपरदाराभिमर्शनम्॥यस्मादेषपरक्यासुरमतेराक्षसाधमः॥२०॥ तस्माद्धैस्त्रीकृतेनैववधंप्राप्स्यातिदुर्मतिः ॥ सतीभिर्वरनारीभिरेवंवाक्ये
भ्युदीरिते ॥२१॥ नेदुर्दुंदुभयःखस्थाःपुष्पवृष्टिःपपातच ॥ शप्तःस्त्रीभिःसतुसमंहतौजाइवनिष्प्रभः ॥२२॥ पतिव्रताभिःसाध्वीभिर्बभूवविमनाइव ॥
एवंविलपितंतासांशृण्वन्राक्षसपुंगवः ॥ २३ ॥ प्रविवेशपुरींलंकांपूज्यमानोनिशाचरैः ॥ एतस्मिन्नंतरेघोराराक्षसीकामरूपिणी ॥२४॥ सहसापति
ताभूमौभगिनीरावणस्यसा ॥ तांस्वसारंसमुत्थाप्यरावणःपरिसांत्वयन् ॥२५॥ अब्रवीत्किमिदंभद्रेवक्तुकामासिमांद्रुतम् ॥ साबाष्पपरिरुद्धाक्षीरक्ताक्षी
वाक्यमब्रवीत्॥२६॥कृतास्मिविधवाराजंस्त्वयाबलवताबलात् ॥ एतेराजंस्त्वयावीर्याद्दैत्याविनिहतारणे॥२७॥कालकेयाइतिख्याताःसहस्राणिचतुर्द
श ॥ प्राणेभ्योपिगरीयान्मेतत्रभर्तामहाबलः ॥ २८ ॥ सोपित्वयाहतस्तातरिपुणाभ्रातृगंधिना ॥ त्वयास्मिनिहताराजन्स्वयमेवहिबंधुना ॥२९॥
राजन्वैधव्यशब्दंचभोक्ष्यामित्वत्कृतेह्यहम् ॥ ननुनामत्वयारक्ष्योजामातासमरेष्वपि ॥ ३० ॥ सत्वयानिहतोयुद्धेस्वयमेवनलज्जसे ॥ एवमुक्तो
दशग्रीवोभगिन्याक्रोशमानया ॥ ३१ ॥ अब्रवीत्सांत्वयित्वातांसामपूर्वमिदंवचः ॥ अलंवत्सेरुदित्वातेनभेतव्यंचसर्वशः ॥ ३२ ॥ दानमा
नप्रसादैस्त्वांतोषयिष्यामियत्नतः ॥ युद्धप्रमत्तोव्याक्षिप्तोजयकांक्षीक्षिपञ्शरान् ॥ ३३ ॥ नाहमज्ञासिषंयुध्यन्स्वान्परान्वापिसंयुगे ॥ जामातरं
नजानेस्मप्रहरन्युद्धदुर्मदः ॥ ३४ ॥ तेनासौनिहतःसंख्येमयाभर्तातवस्वसः ॥ अस्मिन्कालेतुयत्प्राप्तंतत्करिष्यामितेहितम् ॥ ३५ ॥ भ्रातुरैश्वर्य
युक्तस्यखरस्यवसपार्श्वतः ॥ चतुर्दशानांभ्राताते सहस्राणांभविष्यति ॥ ३६ ॥ प्रभुःप्रयाणेदानेचराक्षसानांमहाबलः ॥ तत्रमातृष्वसेयस्तेभ्रातायंवै
खरःप्रभुः ॥ ३७ ॥ भविष्यतितवादेशंसदाकुर्वन्निशाचरः ॥ शीघ्रंगच्छत्वयंवीरोदंडकान्परिरक्षितुम् ॥ ३८ ॥ दूषणोस्यबलाध्यक्षोभविष्य
तिमहाबलः ॥ तत्रतेवचनंशूरःकरिष्यतितदाखरः ॥ ३९ ॥ रक्षसांकामरूपाणांप्रभुरेषभविष्यति ॥ एवमुक्त्वादशग्रीवःसैन्यमस्यादिदेशह ॥ ४० ॥
चतुर्दशसहस्राणिरक्षसांवीर्यशालिनाम् ॥ स तैःपरिवृतःस वैराक्षसैर्वीरदर्शनैः ॥ ४१ ॥ आगच्छतखरःशीघ्रंदंडकानकुतोभयः ॥ सतत्रकारयामा
सराज्यंनिहतकंटकम् ॥ साचशूर्पणखातत्रन्यवसद्दंडकेवने ॥ ४२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेचतुर्विंशःसर्गः ॥ २४॥

॥ ३६ ॥ प्रयाणे प्रेषणे दानेऽन्नवस्त्रादिदाने प्रभुस्ते भ्रातेत्यन्वयः ॥ ३७ ॥ तवादेशं सदा कुर्वन्भविष्यति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ रेवंमानः ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये
रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुर्विंशः सर्गः ॥ २४ ॥ ॥ छ ॥

स त्विति ॥ १ ॥ निकुंभिला लंकापश्चिमद्वारदेशवर्तिकर्म सिद्धिहेतुभूतं काननम् ॥ २ ॥ चैत्यं देवायतनं विष्ठितं प्रवृत्तम् ॥ ३ ॥ कमंडलुः शिखा ध्वजो दंडश्च यस्य तम् अर्शआद्यजंतम् । दंडकमण्डलुयुक्तमित्यर्थः । अनेन ब्रह्मचर्यं सूचितं न तु ब्रह्मचर्याश्रमः । अग्निष्टोमयाजित्वस्यानुपदमेव वक्ष्यमाणत्वात् ॥४॥५॥ उशना त्वब्रवीदिति । पुत्रस्य यजमानत्वेन मौनित्वात्सोवददिति भावः । यज्ञसंपत्समृद्धये यजमानस्य मौनात्यागेन तत्समृद्धिर्भवति ॥ ६ ॥ ते प्रसिद्धास्ते सप्त यज्ञाः ॥७॥ तदेवाह अग्निष्टोम इति ॥ ८॥ पशुपतेः रुद्रात् ॥९॥१०॥११॥१२॥ पुत्रोहं च त्वां दिदृक्षन् स्थितः ॥१३॥ न शोभनं कृतमित्यत्र हेतुः पूजिता

सतुदत्त्वादशग्रीवोबलंघोरंखरस्यतत् ॥ भगिनींचसमाश्वास्यहृष्टःस्वस्थतरोभवत् ॥ १ ॥ ततोनिकुंभिलानामलंकोपवनमुत्तमम् ॥ तद्राक्षसेंद्रो बलवान्प्रविवेशसहानुगः ॥ २ ॥ ततोयूपशताकीर्णंसौम्यचैत्योपशोभितम् ॥ ददर्शविष्ठितंयज्ञंश्रियासंप्रज्वलन्निव ॥ ३ ॥ ततःकृष्णाजिनधरं कमंडलुशिखाध्वजम् ॥ ददर्शस्वसुतंतत्रमेघनादंभयावहम् ॥ ४ ॥ तंसमासाद्यलंकेशःपरिष्वज्याथबाहुभिः ॥ अब्रवीत्किमिदंवत्सवर्तसेब्रूहि तत्त्वतः ॥ ५ ॥ उशनात्वब्रवीत्तत्रयज्ञसंपत्समृद्धये ॥ रावणंराक्षसश्रेष्ठंद्विजश्रेष्ठोमहातपाः ॥ ६ ॥ अहमाख्यामितेराजन्श्रूयतांसर्वमेवतत् ॥ यज्ञास्तेसप्तपुत्रेणप्राप्तास्तेबहुविस्तराः ॥ ७ ॥ अग्निष्टोमोश्वमेधश्चयज्ञोबहुसुवर्णकः ॥ राजसूयस्तथायज्ञोगोमेधोवैष्णवस्तथा ॥ ८ ॥ माहेश्वरेप्रवृत्तेतुयज्ञेपुंभिःसुदुर्लभे ॥ वरांस्तेलब्धवान्पुत्रःसाक्षात्पशुपतेरिह ॥ ९ ॥ कामगंस्यंदनंदिव्यमंतरिक्षचरंध्रुवम् ॥ मायांचतामसींनामययासंपद्यते तमः ॥ १० ॥ एतयाकिलसंग्रामेमाययाराक्षसेश्वर ॥ प्रयुक्तयागतिःशक्यानहिज्ञातुंसुरासुरैः ॥ ११ ॥ अक्षयाविषुधीबाणैश्चापंचापिसुदुर्जयम् ॥ अस्त्रंचबलवद्राजञ्छत्रुविध्वंसनंरणे ॥ १२ ॥ एतान्सर्वान्वराँल्लब्ध्वापुत्रस्तेऽयंदशानन ॥ अद्ययज्ञसमाप्तौचत्वांदिदृक्षन्स्थितोह्यहम् ॥ १३ ॥ ततोऽब्रवीद्दशग्रीवोनशोभनमिदंकृतम् ॥ पूजिताःशत्रवोयस्माद्द्रव्यैरिंद्रपुरोगमाः ॥ १४ ॥ एहीदानींकृतंयद्धिसुकृतंतन्नसंशयः ॥ आगच्छसौम्यगच्छामःस्वमेवभवनंप्रति ॥ १५ ॥ ततोगत्वादशग्रीवःसपुत्रःसविभीषणः ॥ स्त्रियोवतारयामाससर्वास्ताबाष्पगद्गदाः ॥ १६ ॥ लक्षिण्योरत्नभूताश्चदेवदानवरक्षसाम् ॥ तस्यतासुमतिंज्ञात्वाधर्मात्मावाक्यमब्रवीत् ॥ १७ ॥ ईदृशैस्त्वंसमाचारैर्यशोर्थकुलनाशनैः ॥ धर्षणंप्राणिनांज्ञात्वास्वमतेनविचेष्टसे ॥ १८ ॥ ज्ञातींस्तान्धर्षयित्वेमास्त्वयानीतावरांगनाः ॥ त्वामतिक्रम्यमधुनाराजन्कुंभीनसीहृता ॥ १९ ॥ रावणस्त्वब्रवीद्वाक्यंनावगच्छामिकिंत्विदम् ॥ कोयंयस्तुत्वयाख्यातोमधुरित्येवनामतः ॥ २० ॥

...ते । तपसैव ब्रह्मादयो देवास्तोषणीया न त्विद्रादिभिर्णनोपेतयागेनेति भावः ॥ १४ ॥ ... ॥ ... रीदृशं कृतेतमः सृष्टः ॥ ... दतः परं मा कुर्विति भावः ॥१५॥१६॥ लक्षिण्यः सुलक्षणयुक्ताः रत्नभूता उत्तमवस्तुभूताः ॥ १७ ॥ ज्ञात्वा तेषां पापजनकत्वं ज्ञात्वापि स्वमतेन उल्लंघितधर्मन्यायमर्याद ... दिभूतेनायं शरः ... नीतिस्त्रीबंधून् ॥१९॥ नावगच्छामि नेमं वृत्तांतं जानामि किं त्विदं कथं संपन्नम् ॥ २०॥

अस्य पापस्य कर्मणः परदारग्रहणरूपस्य फलं स्वीयस्वसुर्मध्वसुरेण बलाद्धरणरूपं ...नमाभूः ... योन्विदेवश्चचं ... ने
...वमुक्तं सुमालिभ्राता माल्यवानस्मन्मातुर्ज्येष्ठः पितेत्यस्माकमार्यकः सः तस्य कन्या ... शाननः ॥ ब्रह्मण्यश्चशरण्यः नेदं बोध्यम् अस्मन्मातामहस्य सुता कैकसी तज्ज्येष्ठा भगिनी पुष्पोत्कटा कनिष्ठा कुंभीनसीति
... स्वकनिष्ठमातृत्वात अत एषा शूर्पणखावत् अनला कन्या कुंभीनसी धर्मतो न्यायेन स्वसा भवति ॥ ... कन्या विभागश्चसुरान्यपत्यभूतकुंभीनस्या अन्या इति सा च कुंभीनसी अस्माकं मातृष्वसुः कन्या भवति अनलाया
स्मृतेति अंतर्जलोषिते तपोर्थमिति शेषः ॥ २५ ॥ सहसंमतान्प्रसिद्धान् स्थितांश्चेत्यर्थः ॥ २६ ॥ ... यज्ञप्रवृत्ते तेन दीक्षावत्त्वाद्युद्धप्रवृत्तिनिवारणम् । यज्ञप्रमत्त इतिपाठे यज्ञेन प्रमत्ते स्वगृहकृत्यवि
मधौ ... हरणं श्रुत्वाप्यस्माभिः क्षांतमेव न तु स हतः ॥ २७ ॥ कुतस्तत्राह यस्मादिति भ्रातृभिरिति

विभीषणस्तुसंक्रुद्धोभ्रातरंवाक्यमब्रवीत् ॥ श्रूयतामस्यपापस्यकर्मणःफलमागतम् ॥ २१ ॥ मातामहस्ययोस्माकंज्येष्ठोभ्रातासुमालिनः ॥ माल्यवानितिविख्यातोवृद्धःप्राज्ञोनिशाचरः ॥ २२ ॥ पिताज्येष्ठोजनन्यानोह्यस्माकंचार्यकोभवत् ॥ तस्यकुंभीनसीनामदुहितुर्दुहिताऽभवत् ॥ २३ ॥ मातृष्वसुरथास्माकंसाचकन्यानलोद्भवा ॥ भवत्यस्माकमेवैषाभ्रातॄणांधर्मतःस्वसा ॥ २४ ॥ साहृतामधुनाराजन्राक्षसेनबलीयसायज्ञप्रवृत्तेपुत्रेतुमयिचांतर्जलोपिते ॥ २५ ॥ कुंभकर्णोमहाराजनिद्रामनुभवत्यथ ॥ निहत्यराक्षसश्रेष्ठानमात्यानिहसंमतान् ॥ २६ ॥ धर्षयित्वाहृताराजन्गुप्ताप्यंतःपुरेतव ॥ श्रुत्वापितन्महाराजक्षांतमेवहतोनसः ॥ २७ ॥ यस्मादवश्यंदातव्याकन्याभर्त्रेहिभ्रातृभिः ॥ तदेतत्कर्मणोह्यस्यफलंपापस्यदुर्मतेः ॥ २८ ॥ अस्मिन्नेवाभिसंप्राप्तंलोकेविदितमस्तुते ॥ विभीषणवचःश्रुत्वाराक्षसेंद्रःसरावणः ॥ २९ ॥ दौरात्म्येनात्मनोद्धूतस्तप्तांभाइवसागरः ॥ ततोब्रवीद्दशग्रीवःक्रुद्धःसंरक्तलोचनः ॥३०॥ कल्प्यतांमेरथःशीघ्रंशूराःसज्जीभवंतुनः ॥ भ्रातामेकुंभकर्णश्चयेचमुख्यानिशाचराः ॥३१॥ वाहनान्यधिरोहंतुनानाप्रहरणायुधाः ॥ अद्यतंसमरेहत्वामधुंरावणनिर्भयम् ॥ ३२ ॥ सुरलोकंगमिष्यामियुद्धाकांक्षीसुहृद्वृतः ॥ अक्षौहिणीसहस्राणिचत्वार्यग्र्याणिरक्षसाम् ॥ ३३ ॥ नानाप्रहरणान्याशुनिर्ययुर्युद्धकांक्षिणाम् ॥ इंद्रजित्त्वग्रतःसैन्यात्सैनिकान्परिगृह्यच ॥३४॥ जगामरावणोमध्येकुंभकर्णश्चपृष्ठतः ॥ विभीषणश्चधर्मात्मालंकायांधर्ममाचरन् ॥ ३५ ॥ शेषाःसर्वेमहाभागाययुर्मधुपुरंप्रति ॥ खरैरुष्ट्रैर्हयैर्दीप्तैःशिशुमारैर्महोरगैः ॥ ३६ ॥ राक्षसाःप्रययुःसर्वेकृत्वाकाशंनिरंतरम् ॥ दैत्याश्चशतशस्तत्रकृतवैराश्चदेवतैः ॥ ३७ ॥ रावणंप्रेक्ष्यगच्छंतमन्वगच्छन्हिपृष्ठतः ॥ सतुगत्वामधुपुरंप्रविश्यचदशाननः ॥ ३८ ॥

गुरुपरं तदेतत् ब्राह्मादिन्याय्यविधिं विना बलात्कन्याहरणरूपं अस्य कर्मणः परदारहरणरूपस्य पापस्य ॥ २८ ॥ अस्मिन्नेव अस्मिन् क्षण एव अभिसंप्राप्तं फलत्वेन प्राप्तं ते इदं कर्म तत्कालं तत्फलप्राप्तिश्च लोके विदितमस्तु परदाराहरणस्य झटिति फलदतेति ज्ञात्वा लोकस्ततो निवर्त्स्यत इति भावः ॥ २९ ॥ आत्मना कृतेन दौरात्म्येनोद्धूतः पीडितः तप्तांभाः सागर इव जातः अतितप्तो जात इत्यर्थः ॥ ३० ॥ ॥ ३१ ॥ रावणनिर्भयं रावणान्निर्भयम् ॥ ३२ ॥ अग्र्याणि मुख्यानि ॥ ३३ ॥ सैन्यादग्रतः सर्वसैन्यस्य पुरस्तात्सेनासमवेताः सैनिकास्तान्परिगृह्य ययौ ॥ ३४ ॥ कुंभकर्णस्तद्दिने दैवाल्लब्धजागरो युद्धाय

उ. ८० ।
प्र. स० ५
उ. ...
स० २५

॥ ३३ ॥

निर्गत इति बोध्यं लंकायां धर्ममाचरंस्तत्रैव स्थित इत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ प्रह्वांजलिः कृतनम्रत्वचिह्नांजलिः ॥ ३९ ॥ तां पादपतितां स्वसारं कुंभीनसीमुत्थापयामास ॥ ४० ॥ किं चापीति अन्यदपि प्रियमित्यर्थः ॥४१॥ ईदृशं भयं भर्तृवधसमानम् ॥४२॥४३॥४४॥४५॥४६॥४७॥४८॥ अर्थाय प्रयोजनाय कल्पयितुं साहाय्यं संपादयितुं युक्तं स्निग्धस्य मत्प्रेक्षया त्वयि स्निग्धस्य भजमानस्य

नददर्शमधुंतत्रभगिनींतत्रदृष्टवान् ॥ साचप्रह्वांजलिर्भूत्वाशिरसाचरणौगता ॥ ३९ ॥ तस्यराक्षसराजस्यत्रस्ताकुंभीनसीतदा ॥ तांसमुत्थापयामा सनभेतव्यमितिब्रुवन् ॥ ४० ॥ रावणोराक्षसश्रेष्ठःकिंचापिकरवाणिते ॥ साब्रवीद्यदिमेराजन्प्रसन्नस्त्वंमहाभुज ॥ ४१ ॥ भर्तारंनममेहाद्यहंतुमर्ह सिमानद ॥ नहीदृशंभयंकिंचित्कुलस्त्रीणामिहोच्यते ॥ ४२ ॥ भयानामपिसर्वेषांवैधव्यंव्यसनंमहत् ॥ सत्यवाग्भवराजेंद्रमामवेक्षस्वयाचती म् ॥ ४३ ॥ त्वयाप्युक्तंमहाराजनभेतव्यमितिस्वयम् ॥ रावणस्त्वब्रवीद्धृष्टःस्वसारंतत्रसंस्थिताम् ॥ ४४ ॥ क्वचासौतवभर्तावैममशीघ्रंनिवेद्यताम् ॥ सहतेनगमिष्यामिसुरलोकंजयायहि ॥ ४५ ॥ तवकारुण्यसौहार्दान्निवृत्तोस्मिमधोर्वधात् ॥ इत्युक्तासासमुत्थाप्यप्रसुप्तंतंनिशाचरम् ॥ ४६ ॥ अब्रवीत्संप्रहृष्टेवराक्षसीसापतिंवचः ॥ एषप्राप्तोदशग्रीवोममभ्रातामहाबलः ॥४७॥ सुरलोकजयाकांक्षीसाहाय्येत्वांवृणोतिच ॥ तदस्यत्वंसहायार्थं सबंधुर्गच्छराक्षस ॥ ४८ ॥ स्निग्धस्यभजमानस्ययुक्तमर्थायकल्पितुम् ॥ तस्यास्तद्वचनंश्रुत्वातथेत्याहमधुर्वचः ॥ ४९ ॥ ददर्शराक्षसश्रेष्ठं यथान्यायमुपेत्यसः ॥ पूजयामासधर्मेणरावणंराक्षसाधिपम् ॥ ५० ॥ प्राप्यपूजांदशग्रीवोमधुवेश्मनिवीर्यवान् ॥ तत्रचैकांनिशामुष्यगमनायोप चक्रमे ॥ ५१ ॥ ततःकैलासमासाद्यशैलंवैश्रवणालयम् ॥ राक्षसेंद्रोमहेंद्राभःसेनामुपनिवेशयत् ॥ ५२ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ दिकाव्येउत्तरकांडेपंचविंशःसर्गः ॥ २५ ॥ सतुतत्रदशग्रीवःसहसैन्येनवीर्यवान् ॥ अस्तंप्राप्तेदिनकरेनिवासंसमरोचयत् ॥ १ ॥ उदितेविमलेचं द्रेतुल्यपर्वतवर्चसि ॥ प्रसुप्तंसुमहत्सैन्यंनानाप्रहरणायुधम् ॥ २ ॥ रावणस्तुमहावीर्योनिषण्णःशैलमूर्धनि ॥ सददर्शगुणांस्तत्रचंद्रपादपशोभितान् ॥ ॥ ३ ॥ कर्णिकारवनैर्दीप्तैःकदंबबकुलैस्तथा ॥ पद्मिनीभिश्चफुल्लाभिर्मंदाकिन्याजलैरपि ॥ ४ ॥ चंपकाशोकपुन्नागमंदारतरुभिस्तथा ॥ चूतपाट लैर्लोध्रैश्चप्रियंग्वर्जुनकेतकैः ॥ ५ ॥

...नाः

...ये जामातृभावं भजतः ॥ ४९ ॥ यथान्यायम् उपचारपूर्वम् ॥५०॥५१॥ ... भिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे पंचविंशः सर्गः ॥२५॥
अथ रावणस्य नलकूबरशापप्राप्तिः स तु तत्रेति ॥ १ ॥ तुल्यपर्वतवर्चसि स्वति ...२॥राजानः क्षत्रियाब्राह्मणाश्चराजभवनं म...लासपर्वतीयसकलकामभोगार्हधर्मान् ॥ ३ ॥ पद्मिन्यः सरांसि तासां फुल्लत्वं तत्कालोचि...
... । स्वयंभूर्जन्मरहितः अ... विष्णुर्व...
... मध्यादयं प्रोत्तमः ...
... टालक दिभ्रे ... जयसंदेहा...

तविकासवत्कह्लारादिनिर्बोध्यम् ॥ ४ ॥ ५ ॥ ईदृशे वनांतरे प्रजगुरित्यन्वयः [illegible] मधुरकंठध्वनयः समं स्वस्त्रीभिरिति शेषः यत्र कैलासे ॥ ७ ॥ ८ ॥ ९ ॥ वासयंति अ[illegible]वासयंति सुगंधं कुर्वंति मधुमाधवगंधिनः वसंतीयसर्वपुष्पसुगंधयः ॥ १० ॥ [illegible]लंतम ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ मंदारेति मंदारैः कल्पवृक्षकुसुमैः कृताऽलंकारा मू[illegible]ाः कचा यस्याः सा दिव्योत्सवाय दिव्यरतये कृत आरंभो गमनरूपो यया ॥ [illegible]५ ॥ रतिप्राभृतं य[illegible]भूतम् ॥ १६ ॥ विशेषकैः हरिचंदनादिकल्पितैः कपोलादिषु चित्रकैः षडर्तुकुसुमोद्भवैः । गुण

तगरैर्नारिकेरैश्चप्रियालपनसैस्तथा ॥ एतैरन्यैश्चतरुभिरुद्भासितवनांतरे ॥ ६ ॥ किन्नरामदनेनार्तारक्तामधुरकंठिनः ॥ समंसंप्रजगुर्यत्रमनस्तुष्टिविवर्धनम् ॥ ७ ॥ विद्याधरामदक्षीबामदरक्तांतलोचनाः ॥ योषिद्भिःसहसंक्रांताश्चिक्रीडुर्जहृषुश्चवै ॥ ८ ॥ घंटानामिवसन्नादःशुश्रुवेमधुरस्वनः ॥ अप्सरोगणसंघानांगायतांधनदालये ॥ ९ ॥ पुष्पवर्षाणिमुंचंतोनगाःपवनताडिताः ॥ शैलंतंवासयंतीवमधुमाधवगंधिनः ॥ १० ॥ मधुपुष्परजःपृक्तंगंधमादायपुष्कलम् ॥ प्रववौवर्धयन्कामंरावणस्यसुखोऽनिलः ॥ ११ ॥ गेयात्पुष्पसमृद्ध्याचशैत्याद्वायोर्गिरेर्गुणात् ॥ प्रवृत्तायांरजन्यांचचंद्रस्योदयनेनच ॥ १२ ॥ रावणःसमहावीर्यःकामस्यवशमागतः ॥ विनिःश्वस्यविनिःश्वस्यशशिनंसमवैक्षत ॥ १३ ॥ एतस्मिन्नंतरेतत्रदिव्याभरणभूषिता ॥ सर्वाप्सरोवरारंभापूर्णचंद्रनिभानना ॥ १४ ॥ दिव्यचंदनलिप्तांगीमंदारकृतमूर्धजा ॥ दिव्योत्सवकृतारंभादिव्यपुष्पविभूषिता ॥ १५ ॥ चक्षुर्मनोहरंपीनंमेखलादामभूषितम् ॥ समुद्वहंतीजघनंरतिप्राभृतमुत्तमम् ॥ १६ ॥ कृतैर्विशेषकैरार्द्रैःषडर्तुकुसुमोद्भवैः ॥ बभावन्यतमेवश्रीःकांतिश्रीद्युतिकीर्तिभिः ॥ १७ ॥ नीलंसतोयमेघाभंवस्त्रंसमवगुंठिता ॥ यस्यावक्त्रंशशिनिभंभ्रुवौचापनिभेशुभे ॥ १८ ॥ ऊरूकरिकराकारौकरौपल्लवकोमलौ ॥ सैन्यमध्येनगच्छंतीरावणेनोपलक्षिता ॥ १९ ॥ तांसमुत्थायगच्छंतींकामबाणवशंगतः ॥ करेगृहीत्वालज्जंतींस्मयमानोभ्यभाषत ॥ २० ॥ क्वगच्छसिवरारोहेकांसिद्धिंभजसेस्वयम् ॥ कस्याभ्युदयकालोयंयस्त्वांसमुपभोक्ष्यते ॥ २१ ॥ त्वदाननरसस्याद्यपद्मोत्पलसुगंधिनः ॥ सुधामृतरसस्येवकोद्यतृप्तिंगमिष्यति ॥ २२ ॥ स्वर्णकुंभनिभौपीनौशुभौभीरुनिरंतरौ ॥ कस्योरस्थलसंस्पर्शंदास्यतस्तेकुचाविमौ ॥ २३ ॥

आर्षः । षडृतुकुसुमकल्पितैरलंकारैः कांत्या प्रत्यवयवशोभारूपसौंदर्येण श्रिया आभरणसंपदा द्युत्या लावण्येन कीर्त्या च अन्यतमा । स्वार्थे तमः । अन्या श्रीरिव लक्ष्मीरिव बभावित्यर्थः ॥ १७ ॥ समवगुंठिता प्रावृतवती ॥ १८ ॥ १९ ॥ गच्छंतीं तां समुत्थाय करे गृहीत्वाऽभ्यभाषतेत्यन्वयः ॥ २० ॥ कां सिद्धिं कस्य संभोगसिद्धिम् ॥ २१ ॥ आननरसस्य अधरामृतेनेत्यर्थः ॥ २२ ॥ २३ ॥

[illegible] उत्तरं हीति । ज्येष्ठेन भरतेन त्वया वाभिहिते उत्तरं न वक्तव्यं वक्तुमनर्हमेव । किं च तन्मूलकं त्वयाऽधर्मसहितमत एव परलोकविवार्जितमाभिषेकशासनं कृतम् । तच्च दु[illegible] [illegible] ॥ गंगातीरे
सोहं भरतोक्तेः प्रथमं कृतोत्तरवचनः हे काकुत्स्थ तव ज्येष्ठस्योकेरभिषेकं प्रतीच्छेरयस्याः द्वितीयमुत्तरमिति हेतोर्न वक्ष्यामि कुतस्तत्राह मा द्वितीयेनेति यथा भरते जिगमिषत्यहं गां[illegible] [illegible] र्थः ॥ [illegible]
कापत्तिरूपो दंडः पतितस्तथेदानीं त्वयाभिषेकं प्रतीच्छेत्युक्ते तदनंगीकारोत्तरेण द्वितीयेन मम दंडो मा निपतेदिति॥७॥यदेवमतो हे राजन्नहमस्य तव कामकारोभीष्टानियोगकर्तास्मि [illegible] नामंत [illegible]
ष्ठिते राज्याभिषेकस्वीकारेऽधर्मं नहि ममाधर्मसंबंधो यथा न भवेत्तथा कुरु इहामुत्र सर्वलोकस्य मय्यन्याय्यकारित्वबुद्धिं परिहर॥८॥एवमुक्तेस्वातंत्र्यं विहायाभिषेकांगीकारवाक्ये उक्ते ॥ ९ [illegible] चिता ॥ मूर्द्

सोहंद्वितीयंकाकुत्स्थनवक्ष्यामीतिचोत्तरम् ॥ माद्वितीयेनदंडोवैनिपतेन्मयिमानद ॥ ७ ॥ कामकारोह्यहंराजंस्तवास्यपुरुषर्षभ [illegible] धर्मेनयमे काकुत्स्थमत्कृतेरघुनंदन ॥ ८ ॥ एवमुक्तेतुशूरेणशत्रुघ्नेनमहात्मना ॥ उवाचरामःसंहृष्टोभरतंलक्ष्मणंतथा ॥ ९ ॥ संभारानभिषे[illegible] यंत समाहिताः ॥ अद्यैवपुरुषव्याघ्रमभिषेक्ष्यामिराघवम् ॥ १० ॥ पुरोधसंचकाकुत्स्थनैगमानृत्विजस्तथा ॥ मंत्रिणश्चैवतान्सर्वानानयतम् ॥ [illegible] ज्ञया ॥ ११ ॥ राज्ञःशासनमाज्ञायतथाऽकुर्वन्महारथाः ॥ अभिषेकसमारंभंपुरस्कृत्यपुरोधसम् ॥ १२ ॥ प्रविष्टाराजभवनंराजानोब्राह्मणाः [illegible] ॥ ततोभिषेकोववृधेशत्रुघ्नस्यमहात्मनः ॥ १३ ॥ संप्रहर्षकरःश्रीमान्राघवस्यपुरस्यच ॥ अभिषिक्तस्तुकाकुत्स्थोबभौचादित्यसन्निभः ॥ १४ ॥ सोऽभि षिक्तःपुरास्कंदःसेंद्रैरिवदिवौकसैः ॥ अभिषिक्तेतुशत्रुघ्नेरामेणाक्लिष्टकर्मणा ॥ १५ ॥ पौराःप्रमुदिताश्चासन्ब्राह्मणाश्चबहुश्रुताः ॥ कौसल्याचसुमित्रा चमंगलंकेकयीतथा ॥ १६ ॥ चक्रुस्ताराजभवनेयाश्चान्याराजयोषितः ॥ ऋषयश्चमहात्मानोयमुनातीरवासिनः ॥ १७ ॥ हतंलवणमाशंसुःशत्रु घ्नस्याभिषेचनात् ॥ ततोभिषिक्तंशत्रुघ्नमंकमारोप्यराघवः ॥ उवाचमधुरांवाणींतेजस्तस्याभिपूरयन् ॥ १८ ॥ अयंशरस्त्वमोघस्तेदिव्यःपरपुर ञ्जयः ॥ अनेनल[illegible] सुदुष्टंतासिरघुनंदन ॥ १९ ॥ सृष्टःशरोयंकाकुत्स्थयदाशेतेमहार्णवे ॥ स्वयंभूरजितोदिव्योयंनापश्यन्सुरासुराः ॥ २० ॥ अदृश्यःसर्वभू[illegible] [illegible] शरोत्तमः ॥ सृष्टःक्रोधाभिभूतेनविनाशार्थंदुरात्मनोः ॥ २१ ॥ मधुकैटभयोर्वीरविघातेसर्व[illegible] णाम् ॥ स्रष्टुकामेनलो कांस्त्रींस्तोचान[illegible] ता ॥ २२ ॥

[illegible] ॥१०॥११॥ [illegible] अभिषेकोपकरणवंतं पुरोधसं पुरस्कृत्य॥ १२॥राजानः क्षत्रियाब्राह्मणाश्चराजभवनं प्रविष्टाः॥१३॥१४॥१५॥१६ [illegible] आभाव [illegible] ॥ [illegible]
[illegible] ॥१८॥अयं [illegible] ॥१९॥शरस्यामोघत्वहेतुमाह स[illegible] । स्वयंभूर्जन्मरहितः अ[illegible] विष्णुर्यदा प्रलयकाले महार्णवे शेते [illegible] [illegible]
महार्णवे शयनं च [illegible] तत्रा [illegible] कनकः । [illegible] यथा [illegible] शरोत्तमः सृष्टः ॥ २० ॥ तदा किम[illegible] उत्तरकांडे [illegible] ॥ [illegible]
[illegible] तस्याः सृष्टे [illegible] तृतीया [illegible] दिभूतेनायं शरः सृष्टः सत्यसं[illegible] समन्वितं शुश्रान[illegible] १ ॥ नैगम[illegible] जयसंदेहान्

अभिषिक्तत्वाच्छत्रुघ्नेष्वौष्यम् ॥ ४ ॥ ५ ॥ ईदृशे वनांतरे मनगुरिल्हरात तो ... अभीगार्थं जनानां भोग्यभोगस्थानादिसंपादनद्वारा भोगगिरिरिति शेषः यत्र कैलासे ॥ ७ ॥ ८ ॥ ९ ॥ वासयंति ... वि ष्णुत्वं दृढीकृतम् ॥ २ माधवगंधिनः वसंति सर्गुणकानां ह्रासो भवेदिति अल्प ... महास्त्रप्रयोगेण तन्मात्रह ... न शाम्यति किं तु भूतानि संहरति ॥ मंदारैरिति मंदारैः कल्पवृक्षकुसुमैः कृताऽलंकरणादपि लवणस्य महाबलत्वेन दियोत्सवाय दिव्यत्वमुक्तम् ॥ २४ ॥ अथ निकुंभिलाय समाप्तयागस्येंद्रजित इव गृहीतशूलस्य तस्य दुर्जयत्वान्निकुंभिलानिरोधः ल्पितैः कपोलादिषु चित्रकैः षड्ऋतुकुसुमोद्भवैः । गु... र्ह तमित्यन्वयः ॥ २५ ॥ ... ७ ॥ आयुधविनाकृतं आयुधरहितं युद्धयस ... । तत्प्रकारमाह अप्रविष्टमिति । पुरमप्रविष्टं प्रतीक्षन्पूर्वमेव द्वा ... आहापवि ष्टं चेति ॥ २९ ॥ ... त्या कृतमनुष्ठितं भवति तदाऽवश्यं विनाशमुपयास्यति ॥ ३० ॥ विपर्ययः परिहारः ननु किमनेन निर्बंधेन बाणेन शूलं छित्वा ... स्यामि तत्राह श्रीमत इति ।

प्रेयालपनस्तौ हत्वाजनमे ... ॥ विद्याधरांस्तथा ॥ अनेनशरमुख्येनततोलोकांश्चकारसः ॥ २३ ॥ नायंमयाशरःपूर्वंरावणस्यवधार्थिना ॥ मुक्तःशत्रुघ्नभू तानांमहान्ह्रासोभवेत्तदा ॥ २४ ॥ यच्चतस्यमहच्छूलंत्र्यंबकेणमहात्मना ॥ दत्तंशत्रुविनाशायमघोरायुधमुत्तमम् ॥ २५ ॥ तत्सन्निक्षिप्यभवने पूज्यमानंपुनःपुनः ॥ दिशःसर्वाःसमासाद्यप्राप्नोत्याहारमुत्तमम् ॥ २६ ॥ यदातुयुद्धमाकांक्षन्यदिकश्चित्समाह्वयेत् ॥ तदाशूलंगृहीत्वातुभस्मरक्षः करोतिहि ॥ २७ ॥ सत्वंपुरुषशार्दूलतमायुधविनाकृतम् ॥ अप्रविष्टंपुरंपूर्वंद्वारितिष्ठधृतायुधः ॥ २८ ॥ अप्रविष्टंचभवनंयुद्धायपुरुषर्षभ ॥ आह्वये थामहाबाहोततोहंतासिराक्षसम् ॥ २९ ॥ अन्यथाक्रियमाणेतुअवध्यःसभविष्यति ॥ यदित्वेवंकृतंवीरविनाशमुपयास्यति ॥ ३० ॥ ... सर्व माख्यातंशूलस्यचविपर्ययः ॥ श्रीमतःशितिकंठस्यकृत्यंहिदुरतिक्रमम् ॥ ३१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उ... ॥ ष्टितमः सर्गः ॥ ६३ ॥ एवमुक्त्वाचकाकुत्स्थंप्रशस्यचपुनःपुनः ॥ पुनरेवापरंवाक्यमुवाचरघुनंदनः ॥ १ ॥ इमान्यश्वसहस्राणिचत्वा रथानांद्विसहस्रेचगजानांशतमुत्तमम् ॥ २ ॥ अंतरापणवीथ्यश्चनानापण्योपशोभिताः ॥ अनुगच्छंतुकाकुत्स्थंतथैवनटनर्तकाः ॥ ३ ॥ ... स्यनियुतंपुरुषर्षभ ॥ आदायगच्छशत्रुघ्नपर्याप्तधनवाहनः ॥ ४ ॥ बलंचसुभृतंवीरहृष्टपुष्टमनुद्धतम् ॥ संभाषासंप्रदानेनरंजयस्व ... संस्पर्शंदास्यतस्ते

कृत्यं शूलमाहात्म्यं दुरतिक्रमं अतिक्रमितुमशक्यं शक्तावप्यनुचितं चेत्यर्थः । ईश्वरकृतमर्यादापालनार्थमेवास्मदवतारादिति भावः ॥ ३१ ॥ कलौमानः । इति श्रीरामाभिरामे ... कीये आदिकाव्ये उत्तरकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥ अथ शत्रुघ्नप्रस्थानम् एवमिति । प्रशस्य स्तुत्वा ॥ १ ॥ २ ॥ अंतरा नगरमध्यवर्तिन्यो या आपणवीथ्यो वीथ्यो ... आपणः क्रयविक्रयार्हद्रव्यैरुपशोभिताः युक्ताः अनुगच्छंतु । नानावर्णोपशोभिता इति पाठे नानावर्णैर्ब्राह्मणादिभिरुपशोभिता इत्यर्थ इति कतकः । पण्येतिपाठ एव युक्तः । नटाः ... बभावित्यर्थः ॥ १७ ॥ समवगुंठि ता ... यकर्तारः ॥ ३ ॥ सुवर्णस्य उत्कृष्टवर्णस्य नियुतं लक्षमित्येके । दशलक्षमित्यन्ये । पर्याप्तधनवाहनः जीवनपर्याप्तधनः युद्धपर्याप्तवाहन इत्यर्थः ॥ ४ ॥ बलं सुभृतं हृष्ट ... वरामृतेनेत्यर्थः ॥ २२ ॥ २३ ॥

...तया कुरु वेतनादिप्रदानेनेत्यर्थः । किं च संभाषायाः सम्यग्वचनस्य संप्रदानेनोक्त्या रंजय तव् ॥ ५ ॥ किमेवं बलादरेण तत्राह न ह्यर्था इति । यत्र रिपुसंकटे भृत्यानि... नानः ... इत्व ॥ गंगातीरे आदर्तव्या इत्यर्थः ॥ ६ ॥ ननु किं सेनया तर्हि लवणेन योत्स्यामि नेत्याहात इति । अतोऽयोध्याया इदानीमेव महतीं चमूं प्रस्थाप्य एक एव त्वं मधुनो वनं मधोर्वनं गच्छ ... आ ...र्थः ॥ ग्रीष्मकाल एव प्रस्थाय जाह्नवीमुत्तीर्य किंचित्कालं तत्र स्थित्वा तद्बलं तत्रैव संस्थाप्य स्वयमेक एव मधुवनं प्राप्य वर्षाप्रादुर्भावे लवणं जहीति ॥ ७ ॥ तदेवाह यथेति । ... ॥ ...नामंत तथागच्छेः ॥ ८ ॥ तस्य लवणस्यान्योऽशंकिततया तदुपरोधकव्यतिरिक्तो मृत्युर्नास्तीत्येतदुपपादयति दर्शनमिति । युद्धाकांक्षी समायातीति तत्कर्तृकज्ञानविषयो यो भवेदित्यर्थः ... चित ॥ मुख्य

नह्यर्थास्तत्रतिष्ठंतेनदारानचबांधवाः ॥ सुप्रीतोभृत्यवर्गस्तुयत्रतिष्ठतिराघव ॥ ६ ॥ अतोहृष्टजनाकीर्णांप्रस्थाप्यमहतींचमूम् ... एक... धनेनय... णिर्गच्छत्वंमधुर्वनम् ॥ ७ ॥ यथात्वांनप्रजानातिगच्छंतंयुद्धकांक्षिणम् ॥ लवणस्तुमधोःपुत्रस्तथागच्छेरशंकितम् ॥ ८॥ नतस्य...वारयत श्चिद्दिपुरुषर्षभ ॥ दर्शनंयोभिगच्छेतसवध्योलवणेनहि ॥ ९ ॥ सग्रीष्मअपयातेतुवर्षारात्रउपागते ॥ हन्यास्त्वंलवणंसौम्यसहिकाल...न्वितम् ॥ ॥ १० ॥ महर्षीस्तुपुरस्कृत्यप्रयांतुतवसैनिकाः ॥ यथाग्रीष्मावशेषेणतरेयुर्जाह्नवीजलम् ॥ ११ ॥ तत्रस्थाप्यबलंसर्वंनदीतीरेसमाहि... धनुषासार्धंगच्छत्वंलघुविक्रम ॥१२ ॥ एवमुक्तस्तुरामेणशत्रुघ्नस्तान्महाबलान् ॥ सेनामुख्यान्समानीयततोवाक्यमुवाचह ॥ १३ ॥ एतेवोगणिताबासायत्रतत्रनिवत्स्यथ ॥ स्थातव्यंचाविरोधेनयथाबाधानकस्यचित् ॥ १४ ॥ तथातांस्तुसमाज्ञाप्यप्रस्थाप्यचमहद्बलम् ॥ कौसल्यांच सुमित्रांचकैकेयींचाभ्यवादयत् ॥ १५ ॥ रामंप्रदक्षिणीकृत्यशिरसाभिप्रणम्यच ॥ लक्ष्मणंभरतंचैवप्रणिपत्यकृतांजलिः ॥ १६ ॥ पुरोहितंवसिष्ठंचशत्रुघ्नः प्रयतात्मवान् ॥ रामेणचाभ्यनुज्ञातःशत्रुघ्नःशत्रुतापनः ॥ प्रदक्षिणमथोकृत्वानिर्जगाममहाबलः ॥ १७ ॥ निर्याप्यसेनामथसोग्रतस्तदागजेंद्रवाजिप्रवरौघसंकुलाम् ... मानःसनरेंद्रपार्श्वतःप्रतिप्रयातोरघुवंशवर्धनः ॥ १८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुःषष्टितमः सर्गः ॥ प्रस्थाप्यचबलंसर्वंमासमात्रोषितःपथि ॥ एकएवाशुशत्रुघ्नोजगामत्वरितंतदा ॥ १ ॥

युद्धकालो नायमित्याह ... ॥ ... रात्रे वर्षाकाले वर्षासु केपि युद्धार्थं न यतंत इति निर्भयो निःशूल एव चरत्यतः स एवास्य वधकाल इति भावः ॥ ... ॥ ... तरसाधनार्थमेव प्रथमतः ... मनं कार्यमित्याह महर्षीनिति ॥ ११ ॥ तत्र जाह्नवीपरतीरे अग्रतः ततः परभूते मार्गे धनुषा सार्धं नान्येन बलेने... अभाव... ॥ नमि... कार्या बासा गणिता ... तत्राविरोधेन स्थातव्यं तदेव यथेति । इदं सैनिकान्प्रति वाक्यम् ॥ १४ ॥ अनेन केवल... उत्तरकांडे ... ॥ ...युष्माक ज्ञायते ॥ १५ ॥ ... रामीये ... ... तिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे चतु... समन्वितं शुभान्... १ ॥ नैगम... जयसंदेहाभा...

यामुषित्वा पश्चादेक च्छ ... ल्मीक्य. . .नातिः । मस्था शा मासमात्रोषितः अयोध्यायामिति शेषः । पथ्येक एवासहाय ... ज ... ...नेनेत्रश्चचं ...वात ॥ ४ ॥ ५ ॥ इदमाश्रमं २ ... ॥ ४ ॥ य स्वमेव स्वीयमेव ॥ ६ ॥ ७ ॥ पूर्वा ...शविभूतीयमित्यार्षः संधिः । आश्रमसमीपतः पूर्वा पूर्वमदेशे दृश्यमाना तु शेषः यत्र कैलासे ॥ ७ ॥ ८ ॥ ९ ॥ वारकस्य यजमानस्येत्यर्थः॥ ८॥ यस्य न दि...माधवगंधितायतनं बभूव तच्छृणु॥ ९॥ १०॥ चंक्रूर्यमाणं मुहुर्मुहुश्चरंतम् ॥ ११॥ १२॥ निर्मृगं कृतं वनं च दृष्ट्वेत्यनुकर्षः ॥ १३ ॥ ॥ मंदारेति मंदारैः कल्पवृक्षकुसुमैः कृताऽलंकृतं ...श्रितैः कपोलादिषु चित्रकैः ...प्रमोदैः दिव्योत्सव

द्विरात्रमंतरेशूर ॥ ... दनः ॥ वाल्मीकेराश्रमंपुण्यमगच्छद्वासमुत्तमम् ॥ २ ॥ सोभिवाद्यमहात्मानंवाल्मीकिं... ॥ कृतांजलिरथो भूत्वावाक्यमेत... ३ ॥ भगवन्वस्तुमिच्छामिगुरोःकृत्यादिहागतः ॥ श्वःप्रभातेगमिष्यामिप्रतीचींदारुणांदिशम् ॥ ४ ॥ शत्रुघ्नस्यवचः श्रुत्वाप्रहस्यमुनिपुंगवः ... प्रत्युवाचमहात्मानंस्वागतंतेमहायशः ॥ ५ ॥ स्वमाश्रममिदंसौम्यराघवाणांकुलस्यवै ॥ आसनंपाद्यमर्घ्यंचनिर्विशंकः प्रतीच्छमे ॥ ६ ॥ प्रतिगृह्यतदापूजांफलमूलंचभोजनम् ॥ भक्षयामासकाकुत्स्थस्तृप्तिंचपरमांगतः ॥ ७ ॥ सभुक्त्वाफलमूलंचमहर्षितमुवाचह ॥ पूर्वायज्ञविभूतीयंकस्याश्रमसमीपतः ॥ ८ ॥ तत्तस्यभाषितंश्रुत्वावाल्मीकिर्वाक्यमब्रवीत् ॥ शत्रुघ्नशृणुयस्येदंबभूवायतनंपुरा ॥ ९ ॥ युष्माकंपूर्वकोराजासौदासस्तस्यभूपतेः ॥ पुत्रोवीर्यसहोनामवीर्यवानतिधार्मिकः ॥ १० ॥ सबालएवसौदासोमृगयामुपचक्रमे ॥ चंक्रूर्यमाणंददृशेसशूरो राक्षसद्वयम् ॥ ११ ॥ शार्दूलरूपिणौघोरौमृगान्बहुसहस्रशः ॥ भक्षमाणावसंतुष्टौपर्याप्तिंनैवजग्मतुः ॥ १२ ॥ सतुतौराक्षसौदृष्ट्वानिर्मृगंचवनं कृतम् ॥ क्रोधेनमहताविष्टोजघानैकंमहेषुणा ॥ १३ ॥ विनिपात्यतमेकंतुसौदासःपुरुषर्षभः ॥ विज्वरोविगतामर्षोहतंरक्षोह्युदैक्षत ॥ १४ ॥ ...क्षमाणंतंदृष्ट्वास... तंतस्यरक्षसः ॥ संतापमकरोद्घोरंसौदासंचेदमब्रवीत् ॥ १५ ॥ यस्मादनपराधंतंसहायंममजघ्निवान् ॥ तस्मात्तवापि... ...स्यामिप्रतिक्रियां ॥ १६ ॥ एवमुक्त्वातुतद्रक्षस्तत्रैवांतरधीयत ॥ कालपर्याययोगेनराजामित्रसहोभवत् ॥ १७ ॥ राजापियजतेयज्ञं ... ॥ १८ ॥ ऊरूक पतः ॥ अश्वमेधं महायज्ञंतंवसिष्ठोप्यपालयत् ॥ १८ ॥ तत्रयज्ञोमहानासीद्बहुवर्षगणायुतः ॥ समृद्धःपरयालक्ष्म्यादेवयज्ञसमः ... गृहीत्वालज्जंतीं अथावसानेयज्ञस्यपूर्ववैरमनुस्मरन् ॥ वसिष्ठरूपीराजानमितिहोवाचराक्षसः ॥ २० ॥ अद्ययज्ञावसानांतेसामिषंभोजनंमम ॥ ... दीननरसस्यावप वैनात्रकार्याविचारणा ॥ २१ ॥ तच्छ्रुत्वाव्याहृतंवाक्यंरक्षसाब्रह्मरूपिणा ॥ सूदान्संस्कारकुशलानुवाचपृथिवीपतिः ॥ २२ ॥ ...लसंस्पर्शदास्यतस्ते यथाभवतिभोजनम् ॥ तथाकुरुतशीघ्रंवैपरितुष्येद्यथागुरुः ॥ २३ ॥ शासनात्पार्थिवेंद्रस्यमूदः संभ्रांतमानसः ॥ तच्चरक्षःपुनस्तत्रसूदोभ

...क्षमाणं तं राजानं दृष्ट्वा संतापमकरोत् ॥ १५ ॥ १६ ॥ कालपर्याययोगेन बहुकालानंतरं प्राप्यराज्यमापककर्मवशेन मित्रसहो राजा भवद्वीर्यसहस्यैव मित्रसह इति ...यो ... लुप्तषष्ठीकम् । अस्याश्रमस्य समीपतो राजा यज्ञं यजते स्म ॥ १८ ॥ गणायुत इत्यत्राङ्म्श्लेषः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ संभ्रांतमानसः अभूदिति शेषैव बभावित्यर्थः ॥ १७ ॥ समवगुंठि... ...रामृतेनेत्यर्थः ॥ २... ॥ ...

मिति तत्र महानसे सूदांतरवेषं गृहीत्वामुख्यसूदेन पाकसमये मानुषं मांसं माचिक्षिपदिति शेषः ॥२४॥ अथानंतरं सूदवेषो राक्षसः पार्थिवाय मानुषमांसं पक्वं न्यवेदयत् इदमं ... ॥ २
राजापि सामिषं मानुष्यमप्यमानुषं तद्धविष्यमित्येव विज्ञाय पत्न्या सार्धं वसिष्ठायोपाहरत् ॥ २६ ॥ मानुषमामिषं भोजनागतं ज्ञात्वा भोजनरसवशेनेति भावः ॥
भोजनम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ वसिष्ठं शुद्धवसिष्ठं ब्रह्मरूपिणा मायावसिष्ठेन यदुक्तं सामिषभोजनप्रार्थनम् ॥ ३३ ॥ तद्रक्षसा विकृतं कृतमिति शेषः ।

समानुषमथोमांसंपार्थिवायन्यवेदयत् ॥ इदंस्वादुहविष्यंचसामिषंचान्नमाहृतम् ॥ २५ ॥ सभोजनंवसिष्ठायपत्न्यासार्धमुपाहरत् ... तं इक्ष्वाकुर्गंगातीरे
ष्ठसामिषंरक्षसाहृतम् ॥ २६ ॥ ज्ञात्वातदामिषंविप्रोमानुषंभोजनागतम् ॥ क्रोधेनमहताविष्टोव्याहर्तुमुपचक्रमे ॥ २७ ॥ यस्मात्त्वं ... आ ... र्यः ॥ ८ ... र्मे
तदातुमिच्छसि ॥ तस्माद्भोजनमेतत्तेभविष्यतिनसंशयः २८ ॥ ततःक्रुद्धस्तुसौदासस्तोयंजग्राहपाणिना ॥ वसिष्ठंशप्तुमारेभेभार्याच ॥ वारयेत
॥ २९ ॥ राजन्प्रभुर्यतोस्माकंवसिष्ठोभगवानृषिः ॥ प्रतिशप्तुंनशक्तस्त्वंदेवतुल्यंपुरोधसम् ॥ ३० ॥ ततःक्रोधमयंतोयंतेजोबलसमन्वितम् ॥
व्यसर्जयतधर्मात्माततःपादौसिषेचच ॥ ३१ ॥ तेनास्यराज्ञस्तौपादौतदाकल्माषतांगतौ ॥ तदाप्रभृतिराजासौसौदासःसुमहायशाः ॥ ३२ ॥
कल्माषपादःसंवृत्तःख्यातश्चैवतथानृपः ॥ सराजासहपत्न्यावैप्रणिपत्यमुहुर्मुहुः ॥ पुनर्वसिष्ठंप्रोवाचयदुक्तंब्रह्मरूपिणा ॥ ३३ ॥ तच्छ्रुत्वापार्थिवेंद्र
स्यरक्षसाविकृतंचतत् ॥ पुनःप्रोवाचराजानंवसिष्ठःपुरुषर्षभम् ॥३४॥ मयारोषपरीतेनयदिदंव्याहृतंवचः॥नैतच्छक्यंवृथाकर्तुंप्रदास्यामिचतेवरम् ॥
॥ ३५ ॥ कालोद्वादशवर्षाणिशापस्यांतोभविष्यति ॥ मत्प्रसादाच्चराजेंद्रअतीतंनस्मरिष्यसि ॥ ३६ ॥ एवंसराजातंशापमुपभुज्यारिसूदन ॥ प्रति
लेभेपुनाराज्यंप्रजाश्चैवान्वपालयत् ॥ ३७ ॥ तस्यकल्माषपादस्ययज्ञस्यायतनंशुभम् ॥ आश्रमस्यसमीपेऽस्मिन्यन्मांपृच्छसिराघव ॥ ३८ ॥
तस्यतांपार्थिवेंद्रस्यकथांश्रुत्वासुदारुणाम् ॥ विवेशपर्णशालायांमहर्षिमभिवाद्यच ॥३९॥ इ० श्रीमद्वा० वा० आ० उ० पंचषष्टितमः सर्गः ॥ ६५॥
यामेवरात्रिंशत्रुघ्नःपर्णशालांसमाविशत् ॥ तामेवरात्रिंसीतापिप्रसूतादारकद्वयम् ॥ १ ॥ ततोर्धरात्रसमयेबालकामुनिदारकाः ॥ वाल्मीकेःप्रियमाच
ख्युःसीतायाःप्र ... ॥ २ ॥ भगवन्रामपत्नीसाप्रसूतादारकद्वयम् ॥ ततोरक्षांमहातेजःकुरुभूतविनाशिनीम् ॥ ... माणोलवणंश्रुत्वामहर्षिः
समुपागमत् ॥ वा ... काशौदेवपुत्रौमहौजसौ ॥ ४ ॥ ... मासराक्षसः ॥ १८ ॥ चिरा
... न्वितः कालो व्यतीतश्चेदिति शेषः । अतीतं स्वीयं राजत्वं च न शापभोगकाले स्मरिष्यसि ॥ ३६ ॥ ३७ ॥ कल्माष ... वधायसानुबंधस्यसुमो
... तच्छूलंदीप्य ... ... उत्तरकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥ ... महात्मा ... बल
... अप्रमेयमनुत्तमम् ॥ २२ ॥ श्वःप्रभातेतुलव ... ॥ २ ॥ भूतविनाशिनीं चतुः षष्टिबालग्रहविनाशि ... ॥

... राजा नासि स त्वं पृथिवीमेव ... गमकृत्वा कथमिह देव ...
... ॥ १३ ॥ ... ॥ ११ ॥

॥ ५ ॥ भूतघ्नीं ॥ ६ ॥ ७ ॥ ४ ॥ ५ ॥ युक्तं तत्पर्यं । हाहे कुशमुष्टिक्षिल्प कुशमुष्टिं लवं चोपादाय रक्षां मददौ लूनकुशानामग्रभागः कु पुष्टित शेषः यत्र कैलासे ॥ ७ ॥ ८ ॥ ९ ॥ वाम्
शान्गृहीत्वा मध्ये द्विधा ... भागाभ्यां क्रमाज्ज्येष्ठकनिष्ठयोः प्रमार्जनपेल्कं तद्रूपं रक्षादानं वृद्धानां स्त्रीणां हस्ते इति बोध्यम् ॥ ६ ॥ निर्मा ॥ मंदारेति मंदारैः कल्पवृक्षकुसुमैः कृत ति नाम
भविष्यतीत्यर्थः ॥ ७ ॥ दिव्योत्सवार्थे इत्यर्थः । स लवेन कुशाधोभागमुष्टिना वृद्धाभिर्निर्मार्जनीयः सूतीगृहे क्षेत्रे प्रवेशाभावाद्वृद्धाभिरिति स लवेति ना लिपितैः कपोलादिषु चित्रकैः षड्तुकुसुमोद्भवैः दिवसे
कर्तव्यता न तु नाम ... विष्यतीति शेषपूरणम् ॥ ८ ॥ यमजातकौ यमजौ ॥ ९ ॥ समाहिता वृद्धास्ता मुनिहस्ताद् मुनिना दीयमानां रक्षां ज ... च गोत्रं च नाम च तत्र
नाम्नः करिष्यमाणत्वे संकीर्तनं भगवन् रामपत्नी सा प्रसूतेति मुनिदारकवचनश्रवणात् ॥ ११ ॥ ततस्तच्छ्रवणानंतरम् । पर्णशालां सीतायाः प्रसवपर्णशालां ... त्वा मातर्दिष्ट्या दैवयोगेन ते पुत्रज
... दासोभवेदिति ।

जगामतत्रहृष्टात्मादृ... वकुमारकौ ॥ भूतघ्नींचाकरोत्ताभ्यांरक्षांरक्षोविनाशिनीम् ॥ ५ ॥ कुशमुष्टिमुपादायलवंचैवतुसद्विजः ॥ वाल्मीकिःप्रददौ ताभ्यांरक्षांभूतविनाशिनीम् ॥६॥ यस्तयोःपूर्वजोजातःसकुशैर्मंत्रसत्कृतैः ॥ निर्मार्जनीयस्तुतदाकुशइत्यस्यनामतत ॥७॥ यश्चावरोभवेत्ताभ्यांलवेनसुसमाहितः ॥ निर्मार्जनीयोवृद्धाभिर्लवेतिचसनामतः ॥ ८ ॥ एवंकुशलवौनाम्नातावुभौयमजातकौ ॥ मत्कृताभ्यांचनामभ्यांख्यातियुक्तौभविष्यतः ॥ ९ ॥ तांरक्षांजगृहुस्ताश्चमुनिहस्तात्समाहिताः ॥ अकुर्वंश्चततोरक्षांतयोर्विगतकल्मषाः ॥ १० ॥ तथातांक्रियमाणांचवृद्धाभिर्गोत्रनामच ॥ संकीर्तनंचरामस्यसीतायाःप्रसवौशुभौ ॥ ११ ॥ अर्धरात्रेतुशत्रुघ्नःशुश्रावसुमहत्प्रियम् ॥ पर्णशालांततोगत्वामातर्दिष्ट्येतिचाब्रवीत् ॥ १२ ॥ तदातस्यप्रहृष्टस्यशत्रुघ्नस्यमहात्मनः ॥ व्यतीतावार्षिकीरात्रिःश्रावणीलघुविक्रमा ॥ १३ ॥ प्रभातेसुमहावीर्यःकृत्वापौर्वाह्णिकींक्रियाम् ॥ मुनिंप्रांजलिरामंत्र्यययौपश्चान्मुखःपुनः ॥ १४ ॥ सगत्वायमुनातीरंसप्तरात्रोषितःपथि ॥ ऋषीणांपुण्यकीर्तीनामाश्रमेवासमभ्ययात् ॥ १५ ॥ सतत्रमुनिभिःसार्धंभार्गवप्रमुखैर्नृपः ॥ कथाभिरभिरूपाभिर्वासंचक्रेमहायशाः ॥ १६ ॥ सकांचनाद्यैर्मुनिभिःसमेतैरघुप्रवीरोरजनींतदानीम् ॥ ... दाननेकैर्बहुभिर्महात्माविरामयन्मासनरेंद्रसूनुः ॥ १७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे पट्षष्टितमः सर्गः ॥ ६६ ॥ ... लसंस्पर्शदास्य

न्मेति शेष इत्यब्रवीदित्यर्थ इति कतकः । पर्णशालां गतो रात्रौ दिष्ट्या दिष्ट्येति चाब्रवीदितिपाठे स्वपर्णशालास्थः सर्वमिदं श्रुत्वा स्वात्मन्येव भाग्यं भाग्यमित्यब्रवीदित्यर्थः ... शालां
पूर्वमेव गत्वा स्थितस्ततः श्रवणानंतरं मातर्भाग्येनेदं तव पुत्रजन्मेति स्वात्मन्येवाब्रवीदित्यर्थो वक्तुं शक्यः रामानुज्ञां विना रामत्यक्तसंभाषणस्यानौचित्यादिति तीर्थः ॥
श्रावणी श्रावणमासी या दीर्घतरापि लघुविक्रमा शीघ्रगमना व्यतीता ॥ १३ ॥ मुनिं वाल्मीकिम् ॥ १४ ॥ १५ ॥ स तत्र यमुनातीरे यत्तु गंगातीर इति कत ... रिव बभावित्यर्थः ॥ १७ ॥ ... मैवर्गा
कांचनाद्यैरिति कांचनेति च्यवनस्य नामांतरम् । स भार्गवाद्यैरिति पाठांतरम् ॥ १७ ॥ सैयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये ... अधरामृतेनेत्यर्थः ॥ २ ॥ २३ ॥
सर्गः ॥ ...

अथ रात्र्यामिति प्रवृत्तायां जातायां लवणबलं शूलबलं पूर्वं शूलेन विनाशिताश्च के इति पप्रच्छेति संबन्धः ॥ १ ॥ २ ॥ ३ ॥ अस्य शूलस्य लवणस्य चासंख्येयानि क[illegible]मानः रूपाणि [illegible] इक्ष्वाकुवं[illegible]गातीरे मांधातरि यन्महत्कर्मास्य वृत्तं तच्छृणुष्व ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ शक्रस्यार्धासनेनार्धराज्येन च युक्तः पार्थिवो राजा भूत्वा सुरगणैर्वंद्यमानः स्थास्ये इति प्रतिज्ञां कृत्वा [illegible] ॥ ८ ॥

अथरात्र्यांप्रवृत्तायांशत्रुघ्नोभृगुनंदनम् ॥ पप्रच्छच्यवनंविप्रंलवणस्ययथाबलम् ॥ १ ॥ शूलस्यचबलंब्रह्मन्केचपूर्वंविनाशिता[illegible] ॥ मुख्ये नद्वंद्वयुद्धमुपागताः ॥ २ ॥ तस्यतद्वचनंश्रुत्वाशत्रुघ्नस्यमहात्मनः ॥ प्रत्युवाचमहातेजाश्च्यवनोरघुनंदनम् ॥ ३ ॥ असंख्येया[illegible]धेनेयस्य रघुनंदन ॥ इक्ष्वाकुवंशप्रभवयद्वृत्तंतच्छृणुष्वमे ॥ ४ ॥ अयोध्यायांपुराराजायुवनाश्वसुतोबली ॥ मांधाताइतिविख्यातस्त्रिषुलोके[illegible] सार्द् ॥ ५ ॥ सकृत्वापृथिवींकृत्स्नांशासनेपृथिवीपतिः ॥ सुरलोकमितोजेतुमुद्योगमकरोन्नृपः ॥ ६ ॥ इंद्रस्यचभयंतीव्रंसुराणांचमहात्मनाम् ॥ मांधातरिकृतोद्योगेदेवलोकजिगीषया ॥ ७ ॥ अर्धासनेनशक्रस्यराज्यार्धेनचपार्थिवः ॥ वंद्यमानःसुरगणैःप्रतिज्ञामध्यरोहत ॥ ८ ॥ तस्यपापमभिप्रायंविदित्वापाकशासनः ॥ सांत्वपूर्वमिदंवाक्यमुवाचयुवनाश्वजम् ॥ ९ ॥ राजात्वंमानुषेलोकेनतावत्पुरुषर्षभ ॥ अकृत्वापृथिवींवश्यांदेवराज्यमिहेच्छसि ॥ १० ॥ यदिवीरसमग्रातेमेदिनीनिखिलावशे ॥ देवराज्यंकुरुष्वेहसभृत्यबलवाहनः ॥ ११ ॥ इंद्रमेवंब्रुवाणंतंमांधातावाक्यमब्रवीत् ॥ क्वमेशक्रप्रतिहतंशासनंपृथिवीतले ॥ १२ ॥ तमुवाचसहस्राक्षोलवणोनामराक्षसः ॥ मधुपुत्रोमधुवनेनतेज्ञांकुरुतेऽनघ ॥ १३ ॥ तच्छ्रुत्वाविप्रियंघोरंसहस्राक्षेणभाषितम् ॥ व्रीडितोऽवाङ्मुखोराजाव्याहर्तुंनशशाकह ॥ १४ ॥ आमंत्र्यचसहस्राक्षंप्रायात्किंचिदवाङ्मुखः ॥ पुनरेवागमच्छ्रीमानिमंलोकंनरेश्वरः ॥ १५ ॥ सकृत्वाहृदयेऽमर्षंसभृत्यबलवाहनः ॥ आजगाममधोःपुत्रंवशेकर्तुमरिंदमः ॥ १६ ॥ सकांक्षमाणोलवणंयुद्धायपुरुषर्षभः ॥ दूतंसंप्रेष[illegible]लवणस्यसः ॥ १७ ॥ सगत्वाविप्रियाण्याहबहूनिमधुनःसुतम् ॥ वदंतमेवंतंदूतंभक्षयामासराक्षसः ॥ १८ ॥ चिरायमाणेदूतेतु[illegible]न्वितः ॥ अर्दयामासतद्रक्षःशरवृष्ट्यासमंततः ॥ १९ ॥ ततः प्रहस्यतद्रक्षःशूलंजग्राहपाणिना[illegible] वधायसानुबंधस्यमुमोचायुधमुत्तमम् [illegible] तच्छूलंदीप्यमानंतुसभृत्यबलवाहनम् ॥ भस्मीकृत्वानृपंभूयोलवणस्यागमत्करम् ॥ [illegible]महा[illegible]बलवाहनः ॥ शूलस[illegible]स्यअप्रमेयमनुत्तमम् ॥ २२ ॥ श्वःप्रभातेतुलवणंवधिष्यसिनसंशयः ॥ अगृहीतायुधं [illegible] ॥

॥ ९ ॥ ताव[illegible] राजा नासि स त्वं पृथि[illegible] वश[illegible]मकृत्वा कथमिह देवराज्यमिच्छसि ॥ १० ॥ यदि समग्रा मेदिनी ते [illegible] उत्तरकांडे [illegible] ॥ ११ ॥ ॥ १२ ॥ न ते[illegible] ॥ १३ ॥ [illegible] ॥ १८ ॥ चिरायमाणे विलंबं कुर्वाणे ॥ १९ ॥ २० ॥ २१ ॥ [illegible]समन्वितं [illegible] ॥ [illegible]जयसंदेहनि

[...]तत ता[...]ाननः [...]
मि॰ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ [...]युक्तं तत्सर्वं हाहेति कुशमुष्टिभिर्लवणं कुशमुष्टि [...] यत्र कैलासे ॥ ७ ॥ ८ ॥ ९ ॥ [...]प्रसादाग्र[...]
वृत्तये आह श्वः [...] द्विधा[...] [...]माधवगंधिनिभागार्थं ॥ २५ ॥ [...] तन्नंदरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि[...] ॥ उत्तर[...] ॥ मंदारेति मंदारैः कल्पवृक्षकुसुमैः [...]
लवणे कश्चिद्विजोऽयं ॥ ६७ ॥ दिव्योत्सव[...] [...] मध्याह्ने प्रतिनिवृत्तस्य युद्धविद्वानां कथामिति तेषां वचः शृण्वानस्य शत्रुघ्नस्य रजनी व्यतीता ॥ १ [...]लिपितैः कपोलादिषु चित्रकैः पत्र[...]य प्रातःकाले
॥ ३ ॥ ४ ॥ किमनेन[...] [...]दितः प्रेरितः ॥ २ ॥
[...] ॥ ५ ॥ ६ ॥ स्वयमासाद्य आगत्य मम मुखं कथमद्य प्रविष्टोसि ॥ ७ ॥ ८ ॥ गात्रैर्विनिष्पतन्विनिरपतन् म[...] ॥ १० ॥ [...] मे मत्तो
प्रसवपर्णशालि[...]त्वा मातादिष्ट्या दैवयोगेन [...]

लोकानांस्व[...]नभोयात्[...]त्कृतेकर्मणिचत्वया ॥ एतत्तेसर्वमाख्यातंलवणस्यदुरात्मनः ॥ २४ ॥ शूलस्यचबलंध[...] ॥ विना[...]श्चैवमां धातुर्यत्नेन[...]हृष्टात्माद[...] २५ ॥ त्वं श्वः प्रभातेलवणंमहात्मन्वधिष्यसेनात्रतुसंशयोमे ॥ शूलंविनानिर्गतमामिषार्थेध्रुवार्जयस्तेभवितानरेंद्र ॥२६॥ इत्यार्षेश्रीमद्रा[...]विना[...]कीयेआदिकाव्येउत्तरकांडेसप्तषष्टितमःसर्गः ॥ ६७ ॥ कथांकथयतस्तेषांजयंचाकांक्षतांशुभम् ॥ व्यतीतारजनीशीघ्रं शत्रुघ्नस्यमहात्मनः ॥ १ ॥ ततःप्रभातेविमलेतस्मिन्कालेसराक्षसः ॥ निर्गतस्तुपुराद्वीरोभक्ष्याहारप्रचोदितः ॥ २ ॥ एतस्मिन्नंतरेवीरउत्तीर्य यमुनांनदीम् ॥ तीर्त्वामधुपुरद्वारिधनुष्पाणिरतिष्ठत ॥ ३ ॥ ततोर्धदिवसेप्राप्तेक्रूरकर्मासराक्षसः ॥ अगच्छद्बहुसाहस्रंप्राणिनांभारमुद्वहन् ॥ ४ ॥ ततोददर्शशत्रुघ्नंस्थितंद्वारिधृतायुधम् ॥ तमुवाचततोरक्षःकिमनेनकरिष्यसि ॥ ५ ॥ ईदृशानांसहस्राणिसायुधानांनराधम ॥ भक्षितानिमयारोषात्कालेनानुगतोह्यसि ॥ ६ ॥ आहारश्चाप्यसंपूर्णोममायंपुरुषाधम ॥ स्वयंप्रविष्टोद्यमुखंकथमासाद्यदुर्मते ॥ ७ ॥ तस्यैवंभाषमाणस्यहसतश्चमुहुर्मुहुः ॥ शत्रुघ्नोवीर्यसंपन्नोरोषादश्रूण्यवासृजत ॥८॥ तस्यरोषाभिभूतस्यशत्रुघ्नस्यमहात्मनः ॥ तेजोमयामरीच्यस्तुसर्वगात्रैर्विनिष्पतन् ॥ ॥ ९ ॥ उवाचचसुसंक्रुद्धःशत्रुघ्नःसनिशाचरम् ॥ योद्धुमिच्छामिदुर्बुद्धेद्वंद्वयुद्धंत्वयासह ॥ १० ॥ पुत्रोदशरथस्याहंभ्रातारामस्यधीमतः ॥ शत्रुघ्नोनामशत्रुघ्नोवधकांक्षीतवागतः ॥ ११ ॥ तस्यमेयुद्धकामस्यद्वंद्वयुद्धंप्रदीयताम् ॥ शत्रुस्त्वंसर्वभूतानांनमेजीवन्गमिष्यसि [...] ॥१२॥ तस्मिंस्तथाब्रुवाणेतुराक्षसःप्रहसन्निव ॥ प्रत्युवाचनरश्रेष्ठंदिष्ट्याप्राप्तोसिदुर्मते ॥ १३ ॥ मममातृष्वसुर्भ्रातारावणोनामराक्षसः ॥ [...]दुर्बुद्धेस्त्रीहेतोःपुरुषाधम ॥ १४ ॥ तच्चसर्वंमयाक्षांतंरावणस्यकुलक्षयम् ॥ अवज्ञांपुरतःकृत्वामयायूयंविशेषतः ॥ १५ ॥ निहता[...]स्तृणं यथा ॥ भूताश्चैवभविष्याश्चयूयंचपुरुषाधमाः ॥ १६ ॥ तस्यतेयुद्धकामस्ययुद्धंदास्यामिदुर्मते ॥ तिष्ठत्वंचमुहूर्तंतुयावदायुधमा[...]

जीवन्न गमिष्यसि ॥ १२ ॥ १३ ॥ मम मातृष्वसुर्भ्राता कुंभीनसीसंबन्धतः शूर्पणखाऽस्यमातृष्वसा तद्भ्राता रावणः ॥ १४ ॥ मयाऽवज्ञां पुरतःकृत्वा यूयं विशेष[...] [...]रिव बभावित्यर्थः ॥ [...] अधरामृतेनेत्यर्थः ॥
[...] ॥ १५ ॥ [...]
भविष्याश्च यूयं वर्तमानाश्च पुरुषाधमाः सर्वेऽपि मे मया निहताः सुकरहननत्वं वर्तमानेषु व्यंग्यं परे तृणं यथा तथा परिभूताश्च मांधातृपरिभवेन परिभूता इति युष्मास्ववज्ञा[...] भवंतो न[...]

पश्यतो मे समक्षमिति शेषः ॥ १५ ॥ संस्प्रष्टुं शुद्धाचमनं कर्तुम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ हे देवसंमत देवतुल्य ईदृश आहार ईदृशो भावश्च कस्य स्यात् न कस्यापि अतो हेतोस्त्वयीदं द्वयं दृष्ट्वा आश्चर्यं मे वर्तते तस्मात्सर्वं तत्त्वतः श्रोतुमिच्छामि॥२०॥२१॥ कैरमानः इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तसप्ततितमः सर्गः ॥७७॥ श्रुत्वेति । सुखदुःख

पश्यतोमेतदाराम विमानादवरुह्यच ॥ तंशवंभक्षयामाससस्वर्गीरघुनंदन ॥ १५ ॥ ततोभुक्त्वायथाकाममांसंबहुसुपीवरम् ... तीर्यसरःस्वर्गीसं स्प्रष्टुमुपचक्रमे ॥ १६ ॥ उपस्पृश्ययथान्यायंसस्वर्गीरघुनंदन ॥ आरोढुमुपचक्रामविमानवरमुत्तमम् ॥ १७ ॥ तमहंदे... रोहंतमुदीक्ष्यवै अथाहमब्रुवंवाक्यंतमेवपुरुषर्षभ ॥१८॥ कोभवान्देवसंकाशआहारश्चविगर्हितः ॥ त्वयेदंभुज्यतेसौम्यकिमर्थंवक्तुमर्हसि ॥ ईदृश... कस्यस्यादीदृशो भावआहारोदेवसंमतः ॥ आश्चर्यंवर्ततेसौम्यश्रोतुमिच्छामितत्त्वतः ॥ नाहमौपयिकंमन्येतवभक्ष्यमिमंशवम् ॥ २० ॥ इत्येवमुक्तःसनरेंद्रनाकी कौतूहलात्सू...यागिराच ॥ श्रुत्वाचवाक्यंममसर्वमेतत्सर्वंतथाचाकथयन्ममेति ॥ २१ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडे सप्तसप्ततितमःसर्गः ॥ ७७ ॥ श्रुत्वातुभाषितंवाक्यंममरामशुभाक्षरम् ॥ प्रांजलिःप्रत्युवाचेदंसस्वर्गीरघुनंदन ॥ १ ॥ शृणुब्रह्मन्पुरावृत्तंममैतत्सुखदुःखयोः ॥ अनतिक्रमणीयंचयथापृच्छसिमांद्विज ॥ २ ॥ पुरावैदर्भकोराजापितामममहायशाः ॥ सुदेवइतिविख्यातस्त्रिषुलोकेषुवीर्यवान् ॥ ॥ ३ ॥ तस्यपुत्रद्वयंब्रह्मन्द्वाभ्यांस्त्रीभ्यामजायत ॥ अहंश्वेतइतिख्यातोयवीयान्सुरथोभवत् ॥ ४ ॥ ततःपितरिस्वर्यातेपौरामामभ्यषेचयन् ॥ तत्राहंकृतवान्राज्यंधर्म्यंचसुसमाहितः ॥ ५ ॥ एवंवर्षसहस्राणिसमतीतानिसुव्रत ॥ राज्यंकारयतोब्रह्मन्प्रजाधर्मेणरक्षतः ॥ ६ ॥ सोहंनिमित्तेकस्मिंश्चिद्विज्ञातायुर्द्विजोत्तम ॥ कालधर्मंहृदिन्यस्यततोवनमुपागमम् ॥ ७ ॥ सोहंवनमिदंदुर्गंमृगपक्षिविवर्जितम् ॥ तपश्चर्तुंप्रविष्टोस्मिसमीपेसरसः शुभे ॥ ८ ॥ ...राज्येअभिषिच्यमहीपतिम् ॥ इदंसरःसमासाद्यतपस्तप्तंमयाचिरम् ॥ ९ ॥ सोहंवर्षसहस्राणितपस्त्रीणिमहावने ॥ तप्त्वासुदुष्करं...ता ॥ ...किमनुत्तमम् ॥१०॥ तस्यमेस्वर्गभूतस्यक्षुत्पिपासेद्विजोत्तम ॥ बाधेतेपरमेवीरततोहंव्यथितेंद्रियः ॥११॥ गत्वात्रिभुवनश्रेष्ठंपितामहमुवं... ॥ ...गवन्ब्रह्मलोकोयंक्षुत्पिपासाविवर्जितः ॥ १२ ॥

योर्दिव्यदेहशवभक्षणनिमि... मिति शेषः । अनतिक्रमणीयमेव तत्कारणं यथा पृच्छसि तथा वक्ष्यामि शृण्विति सम्बन्धः ॥१॥२॥३॥४॥धर्म्यंधर्मादनपेतं यथा तथा कृतवान् ॥ ५ ॥ ६ ॥ कस्मिंश्चि न्निमित्ते केनचिल्लक्षणे... ज्ञात्वा॥७॥८॥९॥१०॥स्वर्गी भूत्वा ब्रह्मलोकं भूतस्य प्राप्तस्य॥११॥त्रिभुवनश्रेष्ठं तृतीये भुवने भूःस्वःपदापेक्षया तृतीयब्रह्मलोके श्रेष्ठं हिरण्यगर्भमित्यर्थः । समीपे ...

यदा त्रिष्वपि भुवनेषु ... २स् ॥ ४ ॥ ५ ... पासे अनुगे यस्य सः ॥ १३ ॥ ... स्वशरीरं त्वया पुष्टं केवलम् ॥१५॥ ते सूक्ष्मः लिंगव्यत्ययः अल्पमपि दत्तं दानं ते नास्ति देवपित्रतिथिषु किं तु तपएव
निषेवसे असेविष्टेति यावत् ... न्द्रियाणां चैकाग्र्यं मन्मात्रविषयकत्वरूपं त ... तपःफलं ब्रह्मलोकमाप्तिर्जाता तव स्वर्गगतः परस्वर्गगतः ॥१६॥ तेन मांसभक्षणेन ते वृत्तिः क्षुधादिनिवृत्तिर्भविष्यति ॥१७॥
विमोक्ष्यते विमोचयिष्यत ... दिव्योत्सवा ॥ १९ ॥ स्वशरीरमेव भगवदाज्ञया नित्योपस्थितमाहारं कुर्मि करोमि ॥२०॥ तदेवाह क्षयं नाभ्येतीति ॥२१॥ कृच्छ्रभूतस्य कृच्छ्रं प्राप्तस्य दृग्गोचरो मां कृच्छ्राद्विमोक्षयेत्यर्थः ।
ननु कथमहमगस्त्य इति ... त्राहान्येषामिति । कुंभयोनिं द्विजमृते भयादन्येषामत्र निर्मानुषे गतिर्नास्ति अतस्त्वमगस्त्य इति निर्णीतमिति भावः॥२२॥२३॥ ननु एतद्दानस्यान्नदानत्वाभावात्कथं पुनरेतद्दानेपि

कस्यायंकर्म ... तेयालद्पिपासानुगोह्यहम् ॥ आहारःकश्चमेदेवतन्मेब्रूहिपितामह॥१३॥पितामहस्तुमामाहतवाहारःसुदेवज॥ स्वादूनिस्वानिमांसा
नितानिभक्षय ... ॥ स्वशरीरंत्वयापुष्टंकुर्वतातपउत्तमम् ॥ अनुप्तंरोहतेश्वेतनकदाचिन्महामते ॥ १५ ॥ दत्तंनतेस्तिसूक्ष्मोपितपएव
निषेवसे ॥ तेनस्वर्गगतोवत्सबाध्यसेक्षुत्पिपासया ॥ १६ ॥ सत्वंसुपुष्टमाहारैःस्वशरीरमनुत्तमम् ॥ भक्षयित्वामृतरसंतेनवृत्तिर्भविष्यति ॥ १७ ॥
यदातुतद्वनंश्वेतअगस्त्यःसमहानृषिः ॥ आगमिष्यतिदुर्धर्षस्तदाकृच्छ्राद्विमोक्ष्यते ॥ १८ ॥ सहितारयितुंसौम्यशक्तःसुरगणानपि ॥ किंपुनस्त्वां
महाबाहोक्षुत्पिपासावशंगतम् ॥ १९ ॥ सोहंभगवतःश्रुत्वादेवदेवस्यनिश्चयम् ॥ आहारंगर्हितंकुर्मिस्वशरीरंद्विजोत्तम ॥ २० ॥ बहून्वर्षगणान्
ब्रह्मन्भुज्यमानमिदंमया ॥ क्षयंनाभ्येतिब्रह्मर्षेतृप्तिश्चापिममोत्तमा ॥ २१ ॥ तस्यमेकृच्छ्रभूतस्यकृच्छ्रादस्माद्विमोक्षय॥ अन्येषांनगतिर्ह्यत्रकुंभयो
निमृतेद्विजम् ॥ २२ ॥ इदमाभरणंसौम्यधारणार्थंद्विजोत्तम ॥ प्रतिगृह्णीष्वभद्रंतेप्रसादंकर्तुमर्हसि ॥ २३ ॥ इदंतावत्सुवर्णंचधनंवस्त्राणिचद्विज ॥
भक्ष्यंभोज्यंचब्रह्मर्षेददाम्याभरणानिच ॥ २४ ॥ सर्वान्कामान्प्रयच्छामिभोगांश्चमुनिपुंगव ॥ तारणेभगवन्मह्यंप्रसादंकर्तुमर्हसि ॥ २५ ॥ तस्याहं
स्वर्गिणोवाक्यंश्रुत्वादुःखसमन्वितम् ॥ तारणायोपजग्राहतदाभरणमुत्तमम् ॥ २६ ॥ मयाप्रतिगृहीतेतुतस्मिन्नाभरणेशुभे ॥ मानुषःपूर्वकोदेहो
राजर्षेर्विननाश ह ॥२७॥ प्रनष्टेतुशरीरेसौराजर्षिःपरयामुदा ॥ तृप्तःप्रमुदितोराजाजगामत्रिदिवंसुखम् ॥ २८ ॥ तेनेदंशक्रतुल्येन दिव्यमाभरणंमम॥
तस्मिन्निमित्तेकाकुत्स्थदत्तमद्भुतदर्शनम् ॥ २९ ॥ इति श्रीमद्रामायणेवाल्मी०आदिकाव्येउत्तरकांडेअष्टसप्ततितमः सर्गः ॥ ... तस्तदद्भुततमंवाक्यं
श्रुत्वागस्त्यस्यराघवः ॥ गौरवाद्विस्मयाच्चैवभूयःप्रष्टुंप्रचक्रमे ॥१॥ भगवंस्तद्वनंघोरंतपस्तप्यतियत्रसः ॥ श्वेतोवैदर्भको ... दमृगद्विजम् ॥२॥

दुःखमोक्षस्तत्राह इदमिति । अस्य सर्वदत्वादेतद्दानं सर्वदानात्मकमिति भावः॥२४॥तस्माद्यदिदं प्रयच्छामि तत्सर्वान्कामान्सर्वभोगांश्च प्रयच्छामीति जानीहि तारणे तारणाद ... ॥२६॥ मया प्रतिगृहीतेत
त्सुकृतबलादिति शेषः । ननाश ह पुनर्भक्षणाय नोपस्थितोभूदित्यर्थः॥२७॥प्रमुदितः क्षुत्पिपासारहितयाऽति संतोषं प्राप्तः॥२८॥तस्मिन्निमित्ते स्वतारणरूपे निमित्ते॥२९॥ ... इति श्रीरामाभिरामे श्रीरामीये
रामायणतिलकेवाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टसप्ततितमः सर्गः॥७८॥अथ रामेण वनस्य निर्जनत्वहेतुप्रश्ने तद्वर्णनम् तदिति । गौरवात्सर्वज्ञः सर्ववक्ता परमगुरुरिति संभावनयेत्यर्थः॥ १॥यत्र स तपस्तप्यति

तद्वनं कथममृगद्विजम् ॥ २ ॥ तादृशं तद्वनं तपश्चर्तुं चरितुं प्रविष्टः ॥ ३ ॥ ४ ॥ दंडधरो राजा प्रभुः वर्णाश्रमविभागतद्धर्मप्रवर्तनाधिकृतः ॥ ५ ॥ ६ ॥ ७ ॥ दंडेन क्षात्रियसहजधर्मभूतेन शिक्षणेन अकारणे च दंडं मा पातयेति शेषः ॥ ८ ॥ ननु परपीडावहो दंडः कथं कर्तुं युक्तस्तत्राह अपराधिष्विति । विधिवद्यथाशास्त्रम् । यथापराधं मुक्तः प्रवर्तित इत्यर्थः ॥ [illegible] ॥ कुर्वतः दंडमिति शेषः ॥ १० ॥ समाधिना प्रणवानुसंधानसहितचित्तैकाग्र्येण अतएव ब्रह्मलोकं जगाम ॥ ११ ॥ १२ ॥ बहुरूपैर्यज्ञदानतपोलक्षणैः ॥ १३ ॥ पूर्वजान् ज्येष्ठान् ॥ १४ ॥ दंडेति नाम [illegible] ज्ञत्वादन्वर्थावसायपूर्वकमि [illegible] याम् [illegible]

तद्वनंसकथंराजाशून्यंमनुजवर्जितम् ॥ तपश्चर्तुंप्रविष्टःसश्रोतुमिच्छामितत्त्वतः ॥ ३ ॥ रामस्यवचनंश्रुत्वाकौतूहलस[illegible] ॥ वाक्यंपरमतेजस्वीवक्तुमेवोपचक्रमे ॥ ४ ॥ पुराकृतयुगेराममनुर्दंडधरःप्रभुः ॥ तस्यपुत्रोमहानासीदिक्ष्वाकुःकुलनंदनः ॥ ५ ॥ त[illegible]राज्येनिक्षिप्यभुविदुर्जयम् ॥ पृथिव्यांराजवंशानांभवकर्तेत्युवाचतम् ॥ ६ ॥ तथैवचप्रतिज्ञातंपितुःपुत्रेणराघव ॥ ततःपरमसंतुष्टोमनु[illegible]चह ॥ ७ ॥ प्रीतोस्मिपरम[illegible]दारकर्ताचासिनसंशयः ॥ दंडेनचप्रजारक्षमाचदंडमकारणे ॥ ८ ॥ अपराधिषुयोदंडःपात्यतेमानवेषुवै ॥ सदंडोविधिवन्मुक्तःस्वर्गंनयतिपार्थि[illegible] ॥ ९ ॥ तस्माद्दंडेमहाबाहोयत्नवान्भवपुत्रक ॥ धर्मोहिपरमोलोकेकुर्वतस्तेभविष्यति ॥ १० ॥ इतितंबहुसंदिश्यमनुःपुत्रंसमाधिना ॥ जगामत्रिदिवंहृष्टोब्रह्मलोकंसनातनम् ॥ ११ ॥ प्रयातेत्रिदिवेतस्मिन्निक्ष्वाकुरमितप्रभः ॥ जनयिष्येकथंपुत्रानितिचिंतापरोभवत् ॥ १२ ॥ कर्मभिर्बहुरूपैश्चतैस्तैर्मनुसुतस्तदा ॥ जनयामासधर्मात्माशतंदेवसुतोपमान् ॥ १३ ॥ तेषामवरजस्तातसर्वेषांरघुनंदन ॥ मूढश्चाकृतविद्यश्चनशुश्रूषतिपूर्वजान् ॥ १४ ॥ नामतस्यचदंडेतिपिताचक्रेऽल्पतेजसः ॥ अवश्यंदंडपतनंशरीरेस्यभविष्यति ॥ १५ ॥ अपश्यमानस्तंदेशंघोरंपुत्रस्यराघव ॥ विंध्यशैवलयोर्मध्येराज्यंप्रादादरिंदम ॥ १६ ॥ सदंडस्तत्रराजाभूद्रम्येपर्वतरोधसि ॥ पुरंचाप्रतिमंरामन्यवेशयदनुत्तमम् ॥ १७ ॥ पुरस्यचाकरोन्नाममधुमंतमिति[illegible] पुरोहितंतूशनसंवरयामाससुव्रतम् ॥ १८ ॥ एवंसराजातद्राज्यमकरोत्सपुरोहितः ॥ प्रहृष्टमनुजाकीर्णंदेवराजोयथादिवि ॥ ॥ १९ ॥ ततः[illegible]पुत्रःसार्धंचतेनोशनसातदानीम् ॥ चकारराज्यंसुमहान्महात्माशक्रोदिवीवोशनसासमेतः ॥ २० ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीयेआ[illegible]ता उत्तराकांडएकोनाशीतितमःसर्गः ॥ ७९ ॥ एतदाख्यायरामायमहर्षिःकुंभसंभवः ॥ अस्यामेवापरंवाक्यंकथायामुपचक्रमे ॥ १ ॥

त्याहावश्यमिति ॥ १५ ॥ [illegible] पश्यमानः दंडराज्ययोग्यं घोरं देशमपश्यन्नित्यर्थः ॥ १६ ॥ पर्वतरोधसि पर्वततटप्राये ॥ १७ ॥ १८ ॥ १९ ॥ शक्रोत्र बलिः ॥ २० ॥ नारंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रा[illegible] आदिकाव्ये उत्तरकांडे एकोनाशीतितमः सर्गः ॥ ७९ ॥ एवमुक्तोपोद्घातां प्रकृतकथामाह एतदिति । अस्यामेवापरं वाक्यं उपक्रांतकथायामेव संबद्धम् । तत्पृष्टोत्तरभूत

मित्यर्थः ॥ १ ॥ दांता २ ॥ ४ ॥ ५ ॥ भार्गवः शुक्रस्तत्संबंधिनमाश्रमं ... नंदंगमत ॥ ३॥४॥५॥६ ॥ मोहेनरागमोहेनोन्मत्तस्य उचितानुचितविवेकरहितस्य ॥ ७ ॥ ८ ॥ ९ ॥ यदि वान्यत्का मभोगानुकूल्यं तर्हि धर्मदृष्टे दिवाधवगंधिनमार्गेण मां वरयस्व ॥ १० ॥ अन्यथा अवरणे घोराभिसंहितं महानर्थफलम् ॥ ११ ॥ याचितः पिता मा मां तव दास्यते इत्यन्वयः ॥ १२ ॥ १३ ॥ क्षेप्तुं विलंबं दिव्योत्सवा

ततःसदंडःका[illegible] वर्षगणायुतम् ॥ अकरोत्तत्रदांतात्माराज्यंनिहतकंटकम् ॥ २ ॥ अथकालेतुकस्मिंश्चिद्राजाभार्गवमाश्रमम् ॥ रमणीयमुपाक्रामच्चैत्रेमासि[illegible] ३ ॥ तत्रभार्गवकन्यांसरूपेणाप्रतिमांभुवि ॥ विचरंतींवनोद्देशेदंडोऽपश्यदनुत्तमाम् ॥ ४ ॥ सदृष्ट्वातांसदुर्मेधाअनंगशरपीडितः ॥ अभि[illegible]कन्यांवचनमब्रवीत् ॥ ५ ॥ कुतस्त्वमसिसुश्रोणिकस्यवासिसुताशुभे ॥ पीडितोहमनंगेनपृच्छामित्वांशुभानने ॥६॥ तस्यत्वेवंब्रुवाणस्यमोहोन्मत्तस्यकामिनः ॥ भार्गवीप्रत्युवाचेदंवचःसानुनयंत्विदम् ॥ ७ ॥ भार्गवस्यसुतांविद्धिदेवस्याक्लिष्टकर्मणः ॥ अरजांनामराजेंद्रज्येष्ठामाश्रमवासिनीम् ॥ ८ ॥ मामांस्पृशबलाद्राजन्कन्यापितृवशाह्यहम् ॥ गुरुःपितामेराजेंद्रत्वंचशिष्योमहात्मनः ॥ ९ ॥ व्यसनंसुमहत्क्रुद्धःसतेदद्यान्महातपाः ॥ यदिवान्यन्मयाकार्यंधर्मदृष्टेनसत्पथा ॥ १० ॥ वरयस्वनरश्रेष्ठपितरंमेमहाद्युतिम् ॥ अन्यथातुफलंतुभ्यंभवेद्घोराभिसंहितम् ॥ ११ ॥ क्रोधेनहिपितामेसौत्रैलोक्यमपिनिर्दहेत् ॥ दास्यतेचानवद्यांगतवमायाचितःपिता ॥ १२ ॥ एवंब्रुवाणामरजांदंडःकामवशंगतः ॥ प्रत्युवाचमदोन्मत्तःशिरस्याधायचांजलिम् ॥ १३ ॥ प्रसादंकुरुसुश्रोणिनकालंक्षेप्तुमर्हसि ॥ त्वत्कृतेहिममप्राणाविदीर्यंते वरानने ॥१४॥ त्वांप्राप्यतुवधोवापिपापंवापिसुदारुणम् ॥ भक्तंभजस्वमांभीरुभजमानंसुविह्वलम् ॥ १५ ॥ एवमुक्त्वातुतांकन्यांदोर्भ्यांप्राप्यबलाद्बली ॥ विस्फुरंतींयथाकामंमैथुनायोपचक्रमे ॥ १६ ॥ तमनर्थंमहाघोरंदंडःकृत्वासुदारुणम् ॥ नगरंप्रययावाशुमधुमंतमनुत्त[illegible] १७ ॥ अरजापिरुदंतीसाआश्रमस्याविदूरतः ॥ प्रतीक्षतेसुसंत्रस्तापितरंदेवसन्निभम् ॥१८॥ इत्यार्षे श्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये[illegible]कांडेअशीतितमः सर्गः ॥८०॥ सतन्मूहूर्तादुपश्रुत्यदेवर्षिरमितप्रभः ॥ स्वमाश्रमंशिष्यवृतःक्षुधार्तःसंन्यवर्तत ॥ १ ॥ सोपश्यदरजांदीनांरज[illegible]लसंवृताम् ॥ ज्योत्स्नामिवग्रहग्रस्तांप्रत्यूषेनविराजतीम् ॥ २ ॥ तस्यरोषःसमभवत्क्षुधार्तस्यविशेषतः ॥ निर्दहन्निवलोकांस्त्रीन्शिष्यांश्चैत[illegible] ३ ॥

कर्तुम् ॥ १४ ॥ त्वां प्राप्य यदि वधादिर्भवेत्तदा भवतु नामेति शेषः ॥ १५ ॥ विस्फुरंतीं विलुठंतीम् ॥ १६ ॥ १७ ॥ अरजापीति आकारांतं नाम । पितरं प्रतीक्षते स्म ॥ १८ ॥ जपमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अशीतितमः सर्गः ॥ ८० ॥ कथाशेषपूरणम् ॥ स इति । उपश्रुत्य शिष्यमुखादरजावृत्तांतमित्यर्थः ॥ १ ॥ प्रत्यूषे प्रातःकाले

न विराजतीमशोभमानाम् ॥ २ ॥ ३ ॥ विपरीतस्य विपरीतानुष्ठानवतः क्रुद्धान्मत्तो जायमानामग्निशिखासदृशीं विपत्तिं विनाशं पश्यध्वम् ॥ ४ ॥ अस्य क्षयः प्राप्तस्तत्र हेतुर्य इति ॥ ५ ॥ सामान्येनोक्तं विशेषेणाह यस्मादिति । ईदृशं मत्पुत्रीधर्षणरूपम् ॥ ६ ॥ ७ ॥ धक्ष्यते नाशयिष्यति ॥ ८ ॥ विलयं अगमन् विलयं गमिष्यंति ॥ ९ ॥ सवनुच्छ्रयं चराचर[illegible] उच्छ्रयत उद्भवतीत्युच्छ्रयः पांसुवर्षमिवालक्ष्यम् । प्रसिद्धमलयकालिकमहापांसुवर्षमिव प्राप्य सप्तरात्रं सप्तरात्रिपर्यंतमलक्ष्यं भविष्यति विनष्टपुरपौरजानपदं भविष्यतीत्यर्थः ॥ १० ॥ तमाश्रमनिवासिन[illegible]याम् [illegible] त्रिनम् जनपदांतेषु दंडजन पदसीमांतदेशेषु ॥ ११ ॥ सोऽश्रमावसथ इत्यार्षः संधिः स आश्रमनिवासीत्यर्थः एतावता कथं तदमृगद्विजमित्यस्योत्तरमुक्तम् ॥ १२ ॥ अथ निर्जनं वनं कथं त[illegible]पवादर्भः [illegible] स्योत्तरमाह स तथेति ।

पश्यध्वंविपरीतस्य दंडस्याविदितात्मनः ॥ विपत्तिंघोरसंकाशांक्रुद्धादग्निशिखामिव ॥ ४ ॥ क्षयोस्यदुर्मतेःप्राप्तःसानु[illegible]दृश[illegible]मनः ॥ यःप्रदीप्तांहुताशस्यशिखांवैस्प्रष्टुमर्हति ॥ ५ ॥ यस्मात्सकृतवान्पापमीदृशंघोरसंहितम् ॥ तस्मात्प्राप्स्यतिदुर्मेधाःफलंपापस्य[illegible] ॥ ६ ॥ सप्तरात्रेणराजासौसपुत्रबलवाहनः ॥ पापकर्मसमाचारोवधंप्राप्स्यतिदुर्मतिः ॥ ७ ॥ समंताद्योजनशतंविषयंचास्यदुर्मतेः ॥ धक्ष्यते[illegible]पांसुवर्षेणमहतापाकशासनः ॥ ८ ॥ सर्वसत्त्वानियानीहस्थावराणिचराणिच ॥ महतापांसुवर्षेणविलयंसर्वतोगमन् ॥ ९ ॥ दंडस्यविषयोयावत्तावत्सर्वंसमुच्छ्रयम् ॥ पांसुवर्षमिवालक्ष्यंसप्तरात्रंभविष्यति ॥ १० ॥ इत्युक्त्वाक्रोधताम्राक्षस्तमाश्रमनिवासिनम् ॥ जनंजनपदांतेषुस्थीयतामितिचाब्रवीत् ॥ ११ ॥ श्रुत्वातूशनसोवाक्यंसोश्रमावसथोजनः ॥ निष्क्रांतोविषयात्तस्मात्स्थानंचक्रेथवाह्यतः ॥ १२ ॥ सतथोक्त्वामुनिजनमरजामिदमब्रवीत् ॥ इहैववस दुर्मेधेआश्रमेसुसमाहिता ॥ १३ ॥ इदंयोजनपर्यंतंसरःसुरुचिरप्रभम् ॥ अरजेविज्वराभुंक्ष्वकालश्चात्रप्रतीक्ष्यताम् ॥ १४ ॥ त्वत्समीपेचयेसत्त्वावासमेष्यंतितांनिशाम् ॥ अवध्याःपांसुवर्षेणतेभविष्यंतिनित्यदा ॥ १५ ॥ श्रुत्वानियोगंब्रह्मर्षेःसाऽरजाभार्गवीतदा ॥ तथेतिपितरंप्राहभार्गवंभृशदुःखिता ॥ १६ ॥ इत्यु[illegible]भार्गवोवासमन्यत्रसमकारयत् ॥ तच्चराज्यंनरेंद्रस्यसभृत्यबलवाहनम् ॥ १७ ॥ सप्ताहाद्भस्मसाद्भूतंयथोक्तंब्रह्मवादिना ॥ तस्यासौदंडवि[illegible]लयोनृप ॥ १८ ॥ शप्तोब्रह्मर्षिणातेनवैधर्म्येसहितेकृते ॥ ततःप्रभृतिकाकुत्स्थदंडकारण्यमुच्यते ॥ १९ ॥ तपस्विनः स्थिताह्यत्रजन[illegible]ता[illegible]भवत् ॥ एतत्तेसर्वमाख्यातंयन्मांपृच्छसिराघव ॥ २० ॥ संध्यामुपासितुंवीरसमयोह्यतिवर्तते ॥ एतेमहर्षयःसर्वेपूर्णकुंभाः समंततः ॥ २१ ॥ [illegible]

वासयोग्यमाह सुसमाहि[illegible] [illegible]धिमती भूत्वेत्यर्थः । समाध्यनुष्ठाने निमित्तमाह दुर्मेधे इति । यस्माद्दंडधर्षणसहिष्णुर्दुर्मतिरस्यतस्तत्पापनिवृत्तये समाधिरावश्यक इति भावः ॥ १३ ॥ पांसुवर्षे कथं वासस्तत्राहेदमिति ॥ [illegible] पशुपक्ष्यादयो वासमेष्यंति सप्तरात्रमं[illegible]तीति शेषः । एवं चोद्यनेनानुग्रहेण सरः प्रदेशस्य सुखावासत्वादत्र तपसे प्रविष्ट इति भावः ॥ १५ ॥ १६ ॥ १७ ॥ तस्यासौ ध्वस्यपात [illegible] [illegible]यशीवल्लयोर्मध्ये इति शेषः ॥ १[illegible] [illegible]र्णधर्मपूर्णसौख्यसहिते कृते कृतयुगे तेन राज्ञा वैधर्म्ये धर्मवैपरीत्ये कृते सति यो ब्रह्मर्षिणा शप्तः सोसावित्यन्वयः

॥१९॥२०॥२१॥ ... २३ ॥ ४ ॥ ... र्माणः स रविर्ब्रह्मवित्तमैः सहितैस्तैः ... नन्तरंभ्यस्तं ब्राह्मणं ब्राह्मणपठितोपनिषद्बोधितज्ञानाभ्यासं तल्लक्षणां पूजां प्राप्येति शेषः रविरस्तं गतः॥२२॥ रेफैमानः ॥ इति श्रीरामाभिरामे श्रीरं... दिव्यतत्त्वदीपि... तिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकाशीतितमः सर्गः ॥८१ ॥ ऋषेरिति ॥ १॥ २ ॥ कंदमूलं कंदरूपं मूलम् औषधं जरापलितघ्नं दिव्यौषधम् ॥ ३ ॥ ४ ॥ प्रभाते उत्थाय काल्यं ... आह्निकं कृत्वा गमनाय अनुज्ञां ग्रहीतुमृषिं तत्समीपं समुपचक्राम जगाम ॥ ५ ॥ ६ ॥ आगमिष्यामि अतः परमपि यदाकांक्षा भविष्यतीति शेषः । महात्मनः सकाशादात्मनः पावनार्थमित्यर्थः ... वदति आत्मनः पावनार्थं गमिष्यामीति वदति परमभीतः एवं विनयवचनादिति शेषः । धर्मो योगधर्मो नेत्रं सर्वज्ञानसाधनं चक्षुर्यस्य सः ॥ ८ ॥ अथागस्त्यो रामस्य ब्रह्मत्वं हृदिकृत्याह पावनः सर्व ... । सर्वजीवानाम् क्षेत्रज्ञस्येश्वरज्ञानादिशुद्धिः परमा मतेति शास्त्रादित्याशयः । त्वमेवेत्यनेन सर्वपावनस्य भगवद्रूपत्वमेवोक्तम् ॥ ९ ॥ ये त्वां पश्यंति चित्ते स्वतत्त्वब्रह्मतया

कृतोदकानरव्याघ्रः ... पर्युपासते ॥ सतैर्ब्राह्मणमभ्यस्तंसहितैर्ब्रह्मवित्तमैः॥ रविरस्तंगतोरामगच्छोदकमुपस्पृश ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे एकाशीतितमः सर्गः ॥ ८१ ॥ ऋषेर्वचनमाज्ञायरामःसंध्यामुपासितुम् ॥ अपाक्रामत्सरःपुण्यमप्सरोगणसेवितम् ॥ १ ॥ तत्रोदकमुपस्पृश्यसंध्यामन्वास्यपश्चिमाम् ॥ आश्रमंप्राविशद्रामःकुंभयोनेर्महात्मनः ॥२॥ तस्यागस्त्योबहुगुणंकंदमूलंतथौषधम् ॥ शाल्यादीनिपवित्राणिभोजनार्थमकल्पयत् ॥ ३ ॥ सभुक्तवान्नरश्रेष्ठस्तदन्नममृतोपमम् ॥ प्रीतश्चपरितुष्टश्चतांरात्रिंसमुपाविशत् ॥ ४ ॥ प्रभाते काल्यमुत्थायकृत्वाह्निकमरिंदमः ॥ ऋषिंसमुपचक्रामगमनायरघूत्तमः ॥ ५ ॥ अभिवाद्याब्रवीद्रामोमहर्षिंकुंभसंभवम् ॥ आपृच्छेस्वाश्रमंगंतुं मामनुज्ञातुमर्हसि ॥ ६ ॥ धन्योस्म्यनुगृहीतोस्मिदर्शनेनमहात्मनः ॥ द्रष्टुंचैवागमिष्यामिपावनार्थमहात्मनः ॥ ७ ॥ तथावदतिकाकुत्स्थेवाक्यमद्भुतदर्शनम् ॥ उवाचपरमप्रीतोधर्मनेत्रस्तपोधनः ॥ ८ ॥ अत्यद्भुतमिदंवाक्यंतवरामशुभाक्षरम् ॥ पावनः सर्वभूतानांत्वमेवरघुनंदन ॥ ९ ॥ मुहूर्तमपिरामत्वांयेनुपश्यंतिकेचन ॥ पाविताःस्वर्गभूताश्चपूज्यास्तेत्रिदिवेश्वरैः ॥ १० ॥ येचत्वांघोरचक्षुर्भिःपश्यंतिप्राणिनोभुवि ... हतास्तेयमदंडेनसद्योनिरयगामिनः ॥ ११ ॥ ईदृशस्त्वंरघुश्रेष्ठपावनःसर्वदेहिनाम् ॥ भुवित्वांकथयंतोहिसिद्धिमेष्यंतिराघव ॥ १२ ॥ ... गच्छारिष्टमव्यग्रः पंथानमकुतोभयम् ॥ प्रशाधिराज्यंधर्मेणगतिर्हिजगतोभवान् ॥ १३ ॥

... पश्यंतीत्यर्थः । तव लीलावतारमूर्तिं विष्णुत्वेन चक्षुषा च ये पश्यंतीत्यर्थः । ते पाविताः त्वद्ध्यानदर्शनाभ्यामिति शेषः । अत एव देहान्ते स्वर्गभूताः परमपरं वा स्वर्गं ... सर्वदेवैः पूज्याः एवमनुकूलदृष्टेः फलमुक्तम् ॥ १० ॥ अथ प्रतिकूलदृष्टेस्तदाह ये चेति । प्राणिन इति सामान्योक्त्या तपः प्रभावे सत्यपि त्वद्द्वेषमात्रेण निरयगामितोक्ता परं तु ते सद्यस्त... गामिन इत्युक्त्या कालांतरे तादृशरीत्यापि त्वद्दर्शनमाहात्म्यात्ते स्वर्गमोक्षभाज इति सूचितम् ॥ ११ ॥ ईदृशः सकलकल्याणगुणः परमानंदरूपः सर्वदेहिनां पावनोसि अतः कालांतरे त्वां कथयंतस्तेऽधीरत कीर्तयंतोपि सिद्धिं ब्रह्मतारूपां चित्तशुद्धिद्वारा एष्यंति प्राप्स्यंति । किं च ईदृशस्त्वं पावन इतरविलक्षणपावनत्वस्वभावः ये त्वां रागद्वेषकामभयान्यतमैरपि कथयंतस्ते सिद्धिं मोक्षं गमिष्यंति ॥ १२ ॥ रिष्टं दुःखम् अरिष्टं सुखम् गतिः स्वर्गा

दिगतिसाधनम् ॥ १३ ॥ प्रग्रह उद्यतबाहुः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ मध्यकक्षां प्राप्येति शेषः ॥ १८ ॥ विसृज्य स्वरहितं कृत्वा विसर्जयित्वा कुबेरं वहेत्यनुज्ञाय ॥ १९ ॥ शब्दापयत दौवारिकेणाह्वयस्वेत्यर्थः बहुवचनमार्षम् आह्वानं कारयेत्यर्थः ॥ २० ॥ नरमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे द्व्यशीति[illegible]ः सर्गः ॥ ८२ ॥ अथ रामस्य राजसूयकरणेच्छा भरतेन क्षत्रियकुलनाशप्रसंगतो निवार्यते तच्छ्रुत्वेति ॥ १ ॥ २ ॥ द्विजकार्यं यथा प्रतिज्ञातं तथा तथ्यं कृतम् बाल उज्जीवित इत्यर्थः । धर्मसेतुं राजा राज[illegible]गाः सर्व [illegible] विधिना राज्ञामसाधारण[illegible]क्षणेनेति शेषः

एवमुक्तस्तुमुनिना प्रांजलिःप्रग्रहोनृपः ॥ अभ्यवादयतप्राज्ञस्तमृषिंसत्यशीलिनम् ॥ १४ ॥ अभिवाद्यऋषिश्रेष्ठंतांश्चस[illegible]ान् ॥ अध्यारोहत्तदव्यग्रःपुष्पकंहेमभूषितम् ॥ १५ ॥ तंप्रयांतंमुनिगणाआशीर्वादैःसमंततः ॥ अपूजयन्महेंद्राभंसहस्राक्षमिवामराः ॥ [illegible]यःसदृश्येरामःपुष्पकेहेमभूषिते ॥ शशीमेघसमीपस्थोयथाजलधरागमे ॥ १७ ॥ ततोर्धदिवसेप्राप्तेपूज्यमानस्ततस्ततः ॥ अयोध्यांप्राप्य[illegible]सुस्थोमध्यकक्षामवातरत् ॥ १८ ॥ ततोविसृज्यरुचिरंपुष्पकंकामगामिनम् ॥ विसर्जयित्वागच्छेतिस्वस्तितेस्त्वितिचप्रभुः ॥ १९ ॥ कक्षांतरोस्थसैक्षिप्रंद्वास्थंरामोब्रवीद्वचः ॥ ल[illegible]मणंभरतंचैवगत्वातौलघुविक्रमौ ॥ ममागमनमाख्यायशब्दापयतमाचिरम् ॥ २० ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये उत्तरकांडेद्व्यशीतितमःसर्गः ॥ ८२ ॥ तच्छ्रुत्वाभाषितंतस्यरामस्याक्लिष्टकर्मणः ॥ द्वाःस्थःकुमारावाहूयराघवायन्यवेदयत् ॥ १ ॥ दृष्ट्वातुराघवःप्राप्तावुभौभरतलक्ष्मणौ ॥ परिष्वज्यततोरामोवाक्यमेतदुवाचह ॥ २ ॥ कृतंमयायथातथ्यंद्विजकार्यमनुत्तमम् ॥ धर्मसेतुमथोभूयःकर्तुमिच्छामिराघवौ ॥ ३ ॥ अक्षयश्चाव्ययश्चैवधर्मसेतुर्मतोमम ॥ धर्मप्रवचनंचैवसर्वपापप्रणाशनम् ॥ ४ ॥ युवाभ्यामात्मभूताभ्यांराजसूयमनुत्तमम् ॥ सहितोयष्टुमिच्छामितत्रधर्मस्तुशाश्वतः ॥ ५ ॥ इष्ट्वातुराजसूयेनमित्रःशत्रुनिबर्हणः ॥ सुहुतेनसुयज्ञेनवरुणत्वमुपागमत् ॥ ६ ॥ सोमश्चराजसूयेनइष्ट्वाधर्मेणधर्मवित् ॥ प्राप्तश्चसर्वलोकेषुकीर्तिस्थानंचशाश्वतम् ॥ ७ ॥ अस्मिन्नहनियच्छ्रेयश्चिंत्यतांतन्मयासह ॥ हितंचायतियुक्तंचप्रयतौवक्तुमर्हथः ॥ ८ ॥ श्रुत्वातुराघवस्यैतद्वाक्यंवाक्यविशारदः ॥ भरतःप्रांजलिर्भूत्वावाक्यमेतदुवाचह ॥ ९ ॥ त्वयिधर्मःपरःसाधोत्वयिसर्वावसुंधरा ॥ प्रतिष्ठितामहाबाहोयशश्चामितविक्रम ॥ [illegible] ॥ महीपालाश्चसर्वेत्वांप्रजापतिमिवामराः ॥ निरीक्षंतेमहात्मानंलोकनाथंयथावयम् ॥ ११ ॥ पुत्राश्चपितृवद्राजन्पश्यंतित्वांमहाबल ॥ पृथि[illegible]भूतोसिप्राणिनामपिराघव ॥ १२ ॥ सत्वमेवंविधंयज्ञमाहर्तासिकथंनृप ॥ पृथिव्यांराजवंशानांविनाशोयत्रदृश्यते ॥ १३ ॥

[illegible]नूतं धर्ममर्यादाकरमित्यर्थः ॥ [illegible] बहुकालानुभवयोग्यफलत्वात् अव्ययः सजातीयधर्मांतरहेतुत्वात् राजसूयानुष्ठानमेवंभूतमिति किं वक्तव्यम् । यत्कीर्तनमपि विशिष्टफलमित्याहैवं धर्मप्रवचनं चेति । मर्यादाभूतराजसूयधर्मसंकीर्त[illegible]जस्वयं[illegible]नेमेवं वेदेति श्रुतेः ॥ ४ ॥ तत्र राजसूये शाश्वतो धर्मः क्षत्रियस्यासाधारणोऽक्षयकीर्तिहेतुधर्म इत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ हितमिह लोकसुखं आयतियुक्तम् उत्तरकाले च हितमित्यर्थः ॥ ८ ॥ ९ [illegible] [illegible]ता सार्वभौमत्वादित्याशयः ॥ [illegible] [illegible]मिममरा इव परमात्मत्वेन निरीक्षंत इत्यर्थः ॥ ११ ॥ पुत्राः पितृवत् पितरमिवेत्यर्थः ॥ १२ ॥ स त्वं सर्वप्रियः एवंविधत्वं [illegible] सर्गः ॥ ८४ ॥ अथ प्रकृतोपयुक्तेशप[illegible]

[illegible]त्मानं स्वतेजोमूर्तिम् ॥ ६ ॥ तृतीयो [illegible] ॥

दर्शयति पृथिव्यामिति ... २स् ॥ ४ ॥ ५ ... सर्वराजविजयपूर्वं साधनीयत्वात्त ... तु प्रवृत्तेषु पृथिव्यां ये क्षत्रियाः पौरुषमागताः शौर्यं प्राप्तास्तेषां सर्वेषां तत्र राजसूयार्थविजये सर्वप्रकोपजः संक्षयो ऽवश्यंभविता एवंविधं क्षो ... सर्वराजभिः पितृवदुपास्यमानः कथमाहर्तुमर्हसि सर्वथैवानुचितं तवेत्यर्थः ॥ १४ ॥ सर्वं तव वशे वर्तत इत्यन्वयः ॥ १५ ॥ १६ ॥ वचने वचनरूपे निमित्ते अनघेति संबुद्धिः ॥ १७ ॥ १ ... रस्मदभिप्रायात् अस्मदभिप्रायमेष्यतः अस्मच्चिकीर्षां प्राप्स्यत इत्यर्थः । निवर्तयामि अभिप्रायमिति शेषः । तत्र हेतुस्तव सुव्याहृतम् ॥ १९ ॥ तुरप्यर्थे । बालानामपि यद्वाक्यं युक्तमुचितं साधु ... तद्ग्राह्यमेव हि यस्मात्तस्मात्ते वाक्यमीदृशं शृणोमि ॥ २० ॥ नौरिमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे त्र्यशीति

पृथिव्यांयेचपुरु... पौरुषमागताः ॥ सर्वेषांभवितातत्रसंक्षयःसर्वकोपजः ॥ १४ ॥ सत्वंपुरुषशार्दूलगुणैरतुलविक्रम ॥ पृथिवींनार्हसेहंतुंवशेहि तववर्तते ॥ १५ ॥ ... एतत्तुतद्वाक्यंश्रुत्वाऽमृतमयंयथा ॥ प्रहर्षमतुलंलेभेरामःसत्यपराक्रमः ॥ १६ ॥ उवाचचशुभंवाक्यंकैकेय्यानंदवर्धनम् ॥ प्रीतोस्मिपरितुष्टोस्मितवाद्यवचनेऽनघ ॥ १७ ॥ इदंवचनमक्लीवंत्वयाधर्मसमागतम् ॥ व्याहृतंपुरुषव्याघ्रपृथिव्याःपरिपालनम् ॥ १८ ॥ एषत्वद स्मदभिप्रायाद्राजसूयात्क्रतूत्तमात् ॥ निवर्तयामिधर्मज्ञतवसुव्याहृतेनच ॥१९॥ लोकपीडाकरंकर्मनकर्तव्यंविचक्षणैः ॥ बालानांतुशुभंवाक्यंग्राह्यं लक्ष्मणपूर्वज ॥ तस्माच्छृणोमितेवाक्यंसाधुयुक्तंमहाबल ॥ २० ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ०उत्तरकांडेत्र्यशीतितमःसर्गः ॥ ८३ ॥

तथोक्तवतिरामेतुभरतेचमहात्मनि ॥ लक्ष्मणोथशुभंवाक्यमुवाचरघुनंदनम् ॥ १ ॥ अश्वमेधोमहायज्ञःपावनःसर्वपाप्मनाम् ॥ पावनस्तवदुर्धर्षोरो चतांरघुनंदन ॥२॥ श्रूयतेहिपुरावृत्तंवासवेसुमहात्मनि ॥ ब्रह्महत्यावृतःशक्रोहयमेधेनपावितः ॥ ३ ॥ पुराकिलमहाबाहोदेवासुरसमागमे ॥ वृत्रो नाममहानासीद्दैतेयोलोकसंमतः ॥४॥ विस्तीर्णोयोजनशतमुच्छ्रितस्त्रिगुणंततः ॥ अनुरागेणलोकांस्त्रीन्स्नेहात्पश्यतिसर्वतः ॥ ५ ॥ धर्मज्ञश्चकृतज्ञ श्चबुद्ध्याचपरिनिष्ठितः ॥ शशासपृथिवींस्फीतांधर्मेणसुसमाहितः ॥ ६ ॥ तस्मिन्प्रशासतितदासर्वकामदुघामही ॥ रसवंति... नानिमूलानिच फलानिच ॥ ७ ॥ अकृष्टपच्यापृथिवीसुसंपन्नामहात्मनः ॥ सराज्यंतादृशंभुंक्तेस्फीतमद्भुतदर्शनम् ॥ ८ ॥ तस्यबुद्धि... लसंतपः कुर्याम नु त्तमम् ॥ तपोहि... मंश्रेयःसंमोहमितरत्सुखम् ॥ ९ ॥

तमः सर्गः ॥ ८३ ॥ अथ लक्ष्मणेनाश्वमेध एव सर्वार्थसाधकोनुष्ठेय इत्युक्त्वा तदुपोद्घलकं वृत्रवधाख्यानं प्रस्तूयते तथेति ॥१॥ सर्वपाप्मनां पावनोस्तिं यतश्च स पावने ... नुष्ठातुमिति शेषः ॥२॥ अश्वमेधस्य सर्वपापशोधकत्वं सर्वं पाप्मानं तरति । तरति ब्रह्महत्यामितिश्रुतिसिद्धं बोधयितुं पुराणवृत्तांतमाह श्रूयते हीति । वासवे वासवविषये ॥ ३ ॥ देवासुरसमागमे देवासुरस्नेहकाले ॥ ४ ॥ ततस्त्रि गुणं योजनशतत्रयमित्यर्थः । त्रीन् लोकांस्तद्वर्तिप्राणिनोनुरागेण स्वीयत्वाभिमानेन हेतुना स्नेहात्संतोषयुक्तचक्षुषा पश्यति स्म ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इतरत्सुखं विषयसुखं संमोहं संमोहकरम् ॥ ९ ॥

मधुरेश्वरं मधुरश्चासौ तन्नामकत्वादीश्वरस्तम् ॥ १० ॥ परमार्तवत्परमार्तः सन् ॥ ११ ॥ १२ ॥ भूयः अतः परमपि धरिष्यंति भूतजातमिति शेषः । तावदस्य वशानुगाः सर्वे वयं देवगणा भविष्याम इति शेषः ॥ १३ ॥ क्षणं न भवेन्न जीवेदित्यर्थः ॥ १४ ॥ त्वत्संतोषेणैव तस्य सौख्यमित्याह यदा हीति । तदारभ्यैवेदं तस्य माहात्म्यमिति शेषः ॥ १५ ॥ त्वत्कृतेन रक्षणेनेति शेषः ॥ १६ ॥ वृत्रवातेन हेतुना तेषां साह्यमुपकारं कुरु हशब्दः पादपूरकः ॥ १७ ॥ यद्यपीदं सुरसाहाय्यकरणमन्येषामसुराणामसह्यं तथापि कुरु यस्मादगतीनामस्माकं सुराणां भवानेव गा[illegible] ॥ १८ ॥ दकैमानः ॥ इति

सनिक्षिप्यसुतंज[illegible]ष्टंपौरेषुमधुरेश्वरम् ॥ तपउग्रंसमातिष्ठत्तापयन्सर्वदेवताः ॥ १० ॥ तपस्तप्यतिवृत्रेतुवासवःपरमार्तव[illegible]ष्णुंसमुपसंक्रम्यवाक्यमेतदुवाचह ॥ ११ ॥ तपस्यतामहाबाहोलोकाःसर्वेविनिर्जिताः ॥ बलवान्सहिधर्मात्मानैनंशक्ष्यामिशासितुम् ॥ [illegible]द्यसौतपआतिष्ठेद्भूयएवसुरेश्वर ॥ यावल्लोकाधरिष्यंतितावदस्यवशानुगाः ॥ १३ ॥ तंचैनंपरमोदारमुपेक्षसिमहाबल ॥ क्षणंहिनभवेद्वृत्रः[illegible]यिसुरेश्वर ॥१४॥ यदाहिप्रीतिसंयोगंत्वयाविष्णोसमागतः ॥ तदाप्रभृतिलोकानांनाथत्वमुपलब्धवान् ॥ १५ ॥ सत्वंप्रसादंलोकानांकुरुष्वसुसमाहितः ॥ त्वत्कृतेनहिसर्वस्यात्प्रशांतमरुजंजगत् ॥ १६ ॥ इमेहिसर्वेविष्णोत्वांनिरीक्षंतेदिवौकसः ॥ वृत्रघातेनमहतातेषांसाह्यंकुरुष्वह ॥ १७ ॥ त्वयाहिनित्यशःसाह्यंकृतमेषांमहात्मनाम् ॥ असह्यमिदमन्येषामगतीनांगतिर्भवान् ॥ १८ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुरशीतितमः सर्गः ॥ ८४ ॥ लक्ष्मणस्यतुतद्वाक्यंश्रुत्वाशत्रुनिबर्हणः ॥ वृत्रघातमशेषेणकथयेत्याहसुव्रत ॥ १ ॥ राघवेणैवमुक्तस्तुसुमित्रानंदवर्धनः ॥ भूयएवकथांदिव्यांकथयामाससुव्रतः ॥२॥ सहस्राक्षवचःश्रुत्वासर्वेषांचदिवौकसाम् ॥ विष्णुर्देवानुवाचेदंसर्वानिंद्रपुरोगमान् ॥ ३ ॥ पूर्वंसौहृदबद्धोस्मिवृत्रस्येहमहात्मनः ॥ तेनयुष्मत्प्रियार्थंहिनाहंहन्मिमहासुरम् ॥ ४ ॥ अवश्यंकरणीयंचभवतांसुखमुत्तमम् ॥ तस्मादुपायमाख्यास्येसहस्राक्षोवधिष्यति ॥ ५ ॥ [illegible]त्तंकरिष्यामिआत्मानंसुरसत्तमाः ॥ तेनवृत्रंसहस्राक्षोवधिष्यतिनसंशयः ॥ ६ ॥ एकांशोवासवंयातुद्वितीयोवज्रमेवतु ॥ तृतीयोभूतलंय[illegible]ता ॥[illegible]हनिष्यति ॥ ७ ॥ तथाब्रुवतिदेवेशेदेवावाक्यमथाब्रुवन् ॥ एवमेतन्नसंदेहोयथावदसिदैत्यहन् ॥ ८ ॥ भद्रंतेस्तुगमिष्यामोवृत्रासुरवधैषि[illegible] ॥ [illegible]जस्वपरमोदारवासवंस्वेनतेजसा ॥ ९ ॥

श्रीरामा० श्रीरा० रा० वा० [illegible] चतुरशीतितमः सर्गः ॥ ८४ ॥ अथ प्रकृतोपयुक्तशेषकथापूरणं लक्ष्मणस्येति ॥ १ ॥ दिव्यां कथां प्रकृताम् ॥२॥३॥ पूर्वं युष्माभिस्तद्वधप्रार्थनात्पूर्वं सौहृदबद्धः प्रीतिबद्धः ॥४॥५॥ [illegible] आत्मानं स्वेनेनोमूर्तिम् ॥६॥ तृतीयो भूतलं यातु पतद्वृत्रदेहधारणार्थमित्यर्थः । इंद्रस्य वृत्रहननजब्रह्महत्यानिवृत्तिं यावद्भूलोकरक्षणार्थं चेत्यपि बोध्यम् ॥७॥८॥९॥

॥ १० ॥ तेजसा [illegible] ॥ ४ ॥ [illegible]न तेजसा भूतं व्याप्तं पिबंतमित्यादि तपआधिक्यपरम् ॥ ११ ॥ १२ ॥ १३ ॥ दीप्तेन दीप्यमानेन महार्चिषा महार्चिष्मदयःपिंडादिसदृशेन वज्रेण वज्रकृतच्छे देन हेतुना पतता वृत्रशिरसा [illegible] मुपागमत् ॥ १४ ॥ असंभाव्यं अनपराधिनस्तपस्यतस्तूष्णीं स्थितस्य वधमनुचितं चिंतयानो विबुधाधिपो लोकस्यांतं लोकालोकात्परं तमःप्रदेशं जगाम ब्रह्महत्याभिया पला यितोभूत् ॥१५॥ तमिंद्रमनुगमन [illegible] दभिमानिदेवतारूपेण इंद्रहतपुत्रेण त्वष्ट्रा मुनिना पुत्रेच्छया स्वाहेंद्रशत्रुर्वर्धस्वेति होमे कृते आहवनीयाज्जातो वृत्रो ब्राह्मण इति तमिंद्रं ब्रह्महत्याग्रस्तमिंद्रम् ॥ १६ ॥ १७ ॥ पूर्वजो जगतः पिता । [illegible] थमजा ऋतस्येति श्रुतेः । एवं कारणमूर्तिर्हिरण्यगर्भ एव सर्वभूतरक्षोद्देशेन विष्ण्वाकारत्वं पालनशक्तिप्राधान्येन प्राप्तः ॥ १८ ॥ यदर्थं विष्णुमूर्त्यवलंबनं तत्कार्यं ते कृतं दुष्ट

ततःसर्वेमहात्म [illegible] क्षपुरोगमाः ॥ तदरण्यमुपाक्रामन्यत्रवृत्रोमहासुरः ॥ १० ॥ तेपश्यंस्तेजसाभूतंतपंतमसुरोत्तमम् ॥ पिबंतमिवलोकांस्त्री न्निर्दहंतमिवांबरम् [illegible]॥ दृष्ट्वैवचासुरश्रेष्ठंदेवास्त्रासमुपागमन् ॥ कथमेनंवधिष्यामःकथंनस्यात्पराजयः ॥ १२ ॥ तेषांचिंतयतांतत्रसहस्राक्षः पुरंदरःवज्रंप्रगृह्यपाणिभ्यांप्राहिणोद्वृत्रमूर्धनि ॥ १३ ॥ कालाग्निनेवघोरेणदीप्तेनेवमहार्चिषा ॥ पततावृत्रशिरसाजगत्त्रासमुपागमत् ॥ १४ ॥ असंभाव्यंवधंतस्यवृत्रस्यविबुधाधिपः ॥ चिंतयानोजगामाशुलोकस्यांतंमहायशाः ॥ १५ ॥ तमिंद्रंब्रह्महत्याशुगच्छंतमनुगच्छति ॥ अपतच्चास्यगात्रे षुतामिंद्रंदुःखमाविशत् ॥ १६ ॥ हतारयःप्रनष्टेंद्रादेवाःसाग्निपुरोगमाः ॥ विष्णुंत्रिभुवनेशानंमुहुर्मुहुरपूजयन् ॥ १७ ॥ त्वंगतिःपरमेशानपूर्वजोजगतः पिता ॥ रक्षार्थंसर्वभूतानांविष्णुत्वमुपजग्मिवान् ॥ १८ ॥ हतश्चायंत्वयावृत्रोब्रह्महत्याचवासवम् ॥ बाधतेसुरशार्दूलमोक्षंतस्यविनिर्दिश ॥ १९ ॥ तेषांतद्वचनंश्रुत्वादेवानांविष्णुरब्रवीत् ॥ मामेवयजतांशक्रःपावयिष्यामिवज्रिणम् ॥२०॥ पुण्येनहयमेधेनमामिष्ट्वापाकशासनः ॥ पुनरेष्यतिदेवाना मिंद्रत्वमकुतोभयः ॥ २१ ॥ एवंसंदिश्यतांवाणींदेवानांचामृतोपमाम् ॥ जगामविष्णुर्देवेशःस्तूयमानस्त्रिविष्टपम् ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडेपंचाशीतितमःसर्गः ॥ ८५ ॥ तदावृत्रवधंसर्वमखिलेनसलक्ष्मणः ॥ कथयित्वानरश्रेष्ठःक[illegible] प्रचक्रमे ॥ १ ॥ ततोहतेमहावीर्येवृत्रेदेवभयंकरे ॥ ब्रह्महत्यावृतःशक्रःसंज्ञांलेभेनवृत्रहा ॥ २ ॥ सोन्तमाश्रित्यलोकानांनष्टसंज्ञोविचेतन[illegible]लंतत्रावसत्कंचिद्वे ष्टमानइवोरगः ॥ ३ ॥ अथनष्टेसहस्राक्षेउद्विग्नमभवज्जगत् ॥ भूमिश्चध्वस्तसंकाशानिःस्नेहाशुष्ककानना ॥ ४ ॥

वधेनैव शिष्टपालनादित्याह हतश्चेति॥ १९॥ माम् औपासनाग्निहोत्राद्यश्वमेधांताशेषयज्ञयजनीयं विशिष्याश्वमेधस्य साक्षाद्दैवतं मामेव शक्रो यजताम् इंद्राय स्वाहेत्यादिमंत्रैश्च [illegible] देवासुरे भावः ॥ २० ॥ २१ ॥ २२ ॥ स्तूयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे पंचाशीतितमः सर्गः ॥ ८५ ॥ अथाश्वमेधतो ब्रह्महत्यानिवृत्तिकथनेनाश्वमेधवै भवकथनेन च तद्यज्ञोत्साहनं तदेति । कथाशेषं प्रचक्रमे वक्तुमिति शेषः ॥ १ ॥ न संज्ञां लेभे ग्रहग्रस्तवत्परवशोभूदित्यर्थः ॥ २ ॥ कंचित्कालमवसदित्यन्वयः ॥ ३ ॥ नष्टे अदर्शनं प्राप्ते उद्विग्नं अराजकत्वात्

निस्नेहा इंद्राभावमूलावृष्ट्याऽनार्द्रा ॥४॥ तदेवाह निस्रोतस इति ॥५॥ समुपानयन् अवेदयन्स्मृतवंत इति यावत् ॥६॥७॥ तं देवेशं विष्णुमिंद्रं वा ॥८॥९॥१०॥ हे [illegible]रासदे ब्रह्महत्य आत्मानं चतुर्धा विभजेति तामूचुरित्यन्वयः ॥११॥ संदधौ चतुर्धा विभागं संपादितवती तथा कृत्वा देवेंद्रादन्यत्र स्थानं वरयामास दुर्वसा दुःखजनकवासवती ॥१२॥ तानि स्थानान्याह एकेनेति। [illegible] ॥ २[illegible]ान्मासान्पूर्णोदासु पूर्णोदकासु तेनान्यदाल्पोदकासु न क्षुद्रनदीषु वासः सोपि मत्यासत्त्या पूर्णोदकत्वकाले एव स च कालः। सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वला इत्युक्तः। दर्पघ्नी पापिनामिति शेषः [illegible] तुः कामचारिणीति। तेन गंगादिषु न वास इत्युक्तम् ॥१३॥ भूम्याम् ऊषररूपेण वासः ॥१४॥ दर्पघातिनी पुरुषसंभोगकरणसुखविघातिनी ॥१५॥ अदूषकान्ब्रह्मब्रह्मविद्याब्राह्मणब्रह्मलोकानां मार्गात[illegible] हद्द[illegible]करणरहितान् उक्तपदार्थेषु

निःस्रोतसस्तेस[illegible]तुह्रदाश्चसरितस्तथा ॥ संक्षोभश्चैवसत्त्वानामनावृष्टिकृतोभवत् ॥ ५ ॥ क्षीयमाणेतुलोकेस्मिन्संभ्रांतम[illegible]णाः ॥ यदुक्तंविष्णु नापूर्वंतंयज्ञंसमुपानयन् ॥ ६ ॥ ततःसर्वेसुरगणाःसोपाध्यायाःसहर्षिभिः ॥ तंदेशंसमुपाजग्मुर्यत्रेंद्रोभयमोहितः ॥ ७ ॥ [illegible]ासहस्राक्षमावृतं ब्रह्महत्यया ॥ तंपुरस्कृत्यदेवेशमश्वमेधंप्रचक्रिरे ॥ ८ ॥ ततोश्वमेधःसुमहान्महेंद्रस्यमहात्मनः ॥ ववृतेब्रह्महत्यायाः पावनार्थंनरेश्वर ॥९॥ ततोयज्ञे समाप्तेतुब्रह्म[illegible]ामहात्मनः ॥ अभिगम्याब्रवीद्वाक्यंक्वमेस्थानंविधास्यथ ॥ १० ॥ तेतामूचुस्ततोदेवास्तुष्टाःप्रीतिसमन्विताः ॥ चतुर्धाविभजात्मानमात्मनैवदुरासदे ॥ ११ ॥ देवानांभाषितंश्रुत्वाब्रह्महत्यामहात्मनाम् ॥ संदधौस्थानमन्यत्रवरयामासदुर्वसा ॥ १२ ॥ एकेनांशेनवत्स्यामिपूर्णोदासुनदीषुवै ॥ चतुरोवार्षिकान्मासान्दर्पघ्नीकामचारिणी ॥ १३ ॥ भूम्यामहंसर्वकालमेकेनांशेनसर्वदा ॥ वसिष्यामिनसंदेहःसत्येनैतद्ब्रवीमिवः ॥ ॥ १४ ॥ योयमंशस्तृतीयोमेस्त्रीषुयौवनशालिषु ॥ त्रिरात्रंदर्पपूर्णासुवसिष्येदर्पघातिनी ॥ १५ ॥ हंतारोब्राह्मणान्येतुमृषापूर्वमदूषकान् ॥ तांश्चतुर्थेनभागेनसंश्रयिष्येसुरर्षभाः ॥ १६ ॥ प्रत्यूचुस्तांततोदेवायथावदसिदुर्वसे ॥ तथाभवतुतत्सर्वंसाधयस्वयदीप्सितम् ॥ १७ ॥ ततःप्रीत्यान्विता देवाः सहस्राक्षंववंदिरे ॥ विज्वरःपूतपाप्माचवासवःसमपद्यत ॥ १८ ॥ प्रशांतंचजगत्सर्वंसहस्राक्षेप्रतिष्ठिते ॥ यज्ञंचाद्भुतसंकाशंतदाशक्रोभ्यपूजयत् ॥ १९ ॥ [illegible]अथताश्वमेधस्यप्रसादोरघुनंदन ॥ यजस्वसुमहाभागहयमेधेनपार्थिव ॥ २० ॥ इतिलक्ष्मणवाक्यमुत्तमंनृपतिरतीवमनोहरं महात्मा ॥ परि[illegible]तोषापहृष्टचेताःसनिशम्येंद्रसमानविक्रमौजाः ॥ २१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे षडशीतितमः सर्गः ॥ ८६ ॥ तच्छ्रुत्वालक्ष्मणेनोक्तंवाक्यंवाक्यविशारदः ॥ प्रत्युवाचमहातेजाःप्रहसन्राघवोवचः ॥ १ ॥

दृढविश्वासान् मृषापूर्वं मृषावादपूर्वं [illegible]ज्ञानस्थानादौ घातं कुर्वंति धिक्कारादि कुर्वंति लोहितादिस्रावं कुर्वंति कैमुतिकन्यायेनैव ये प्राणवियोगं कुर्वंति तांश्चतुर्थेन भागेन संश्रयिष्ये। यो लोहितं करद्यावतः प्रस्कन्नं पांसून्संगृह्णात [illegible] [illegible]लोकं न प्रजानात् ॥ तस्माद्ब्राह्मणाय नापगुरेत्र निहन्यान्न लोहितं कुर्यादिति श्रुतेः ॥ १६ ॥ १७ ॥ १८ ॥ यज्ञं विष्णुम् ॥ १९ ॥ २० ॥ २१ ॥ यंसंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये र[illegible] इत्यर्थः [illegible]के वाल्मीकीये आदिकाव्ये उत्तरकांडे षडशीतितमः सर्गः ॥ ८६ ॥ अथ रामोपि इलोपाख्यानेनाश्वमेधस्य राज्ञामशेषानर्थनिवृत्तिपूर्वकपरमेष्टसाधनत्वं दर्शयति

तदिति । अश्वमेधमाहात्म्यम[illegible] ॥ ५ लक्ष्मणस्तद्वैभवमुक्तवानिति भावेन हासः ॥ १ ॥ वृत्रघातं वाजिमेधफलं च यद्यथा वदसि तदेवमेवेत्यन्वयः ॥ २ ॥ अथ स्वस्य परिपूर्णाश्वमेधज्ञातृत्वज्ञापनायाह श्रूयते इति । बाह्लिर्देशविशेषः ॥ [illegible] ॥ ४ ॥ ५ ॥ भयार्तैत्वं कुतस्तत्राहाविभ्यन्निति । अविभयुरित्यर्थः । तत्र हेतुः सरोषस्येति ॥ ६ ॥ ७ ॥ ८ ॥ हत्वैव हत्वापीत्यर्थः ॥ ९ ॥ अयुतमयुतसंख्याकं वध्यमानमभूदिति शेषः । अथ यत्र [illegible]हासेनः स्कंदो जातस्तं देशमुपचक्रमे जगाम ॥ १० ॥ ११ ॥ गोपतिध्वजो वृषभध्वज आत्मानं स्त्रीरूपं कृत्वा तत्र पर्वते तिष्ठतीति शेषः । किमर्थमेवं तत्राह देव्याः

एवमेवनरश्रेष्ठयथा[illegible]सिलक्ष्मण ॥ वृत्रघातमशेषेणवाजिमेधफलंचयत् ॥२॥ श्रूयतेहिपुरासौम्यकर्दमस्यप्रजापतेः ॥पुत्रोबाह्लीश्वरःश्रीमानिलोनाम सुधार्मिकः॥३॥ [illegible] पृथिवींसर्वांवशेकृत्वामहायशाः॥राज्यंचैवनरव्याघ्रपुत्रवत्पर्यपालयत्॥४॥ सुरैश्चपरमोदारैर्दैतेयैश्चमहाधनैः॥ नागराक्षसगं धर्वैर्यक्षैश्चसुमहात्मभिः ॥ ५ ॥ पूज्यतेनित्यशःसौम्यभयार्तैरघुनंदन ॥ अबिभ्यंश्चत्रयोलोकाःसरोषस्यमहात्मनः ॥६॥ सराजाताद्दशोप्यासीद्धर्मे वीर्येचनिष्ठितः॥बुद्ध्याचपरमोदारोबाह्लीकेशोमहायशाः ॥७॥ सप्रचक्रेमहाबाहुर्मृगयांरुचिरेवने ॥ चैत्रेमनोरमेमासेसभृत्यबलवाहनः ॥८॥ प्रजघ्नेस नृपोऽरण्येमृगाञ्छतसहस्रशः ॥ हत्वैवतृप्तिर्नाभूच्चराज्ञस्तस्यमहात्मनः ॥९॥ नानामृगाणामयुतंवध्यमानंमहात्मना ॥ यत्रजातोमहासेनस्तंदेशमुपच क्रमे॥ १० ॥तस्मिन्प्रदेशेदेवेशशैलराजसुतांहरः ॥ रमयामासदुर्धर्षःसर्वैरनुचरैःसह ॥११॥ कृत्वास्त्रीरूपमात्मानमुमेशोगोपतिध्वजः ॥ देव्याःप्रिय चिकीर्षुःसंस्तस्मिन्पर्वतनिर्झरे ॥१२॥ यत्रयत्रवनोद्देशेसत्त्वाःपुरुषवादिनः॥वृक्षाःपुरुषनामानस्तेसर्वेस्त्रीजनाभवन्॥१३॥यच्चकिंचनतत्सर्वंनारीसंज्ञं बभूवह ॥ एतस्मिन्नंतरेराजासइलःकर्दमात्मजः ॥ १४ ॥ निघ्नन्मृगसहस्राणितंदेशमुपचक्रमे ॥ सदृष्ट्वास्त्रीकृतंसर्वंसव्यालमृगपक्षिणम् ॥ १५ ॥ आत्मानंस्त्रीकृतंचैवसानुगंरघुनंदन ॥ तस्यदुःखंमहच्चासीद्दृष्ट्वात्मानंतथागतम् ॥ १६ ॥ उमापतेश्चतत्कर्मज्ञात्वात्रासमुपागमत् ॥ ततोदेवंमहात्मानं शितिकंठंकपर्दिनम् ॥ १७ ॥ जगामशरणंराजासभृत्यबलवाहनः ॥ ततःप्रहस्यवरदःसहदेव्यामहेश्वरः ॥ १८ ॥ प्रज[illegible]सुतंवाक्यमुवाच वरदःस्वयम् ॥ उत्तिष्ठोत्तिष्ठराजर्षेकार्दमेयमहाबल ॥ १९ ॥ पुरुषत्वमृतेसौम्यवरंवरयसुव्रत ॥ ततःसराजाशोकार्तःप्रत्या[illegible]हात्मना ॥२०॥ स्त्रीभूतोसौनजग्राहवरमन्यंसुरोत्तमात् ॥ ततःशोकेनमहताशैलराजसुतांनृपः ॥ २१ ॥

मियं चिकीर्षुरिति ॥ १२ ॥ पुरुषवादिनः पुरुष इति वादो व्यपदेशो येषां ते पुंल्लिंगवत्त्वेन शब्दवाच्या ये पदार्थाः संति यच्चान्यत्किंचन नपुंसकवाच्यं तत्सर्वं नारीसं[illegible]दवाच्यत्वार्हं स्त्रीवेषं बभूव ॥ १३ ॥ १४ ॥ १५ ॥ सानुगमात्मानं स्त्रीकृतं स्त्रीरूपं कृतं दृष्ट्वा आत्मानं तथागतं तथावस्थां प्राप्तमात्मानं दृष्ट्वा इदमुत्तरान्वयि ॥ १६ ॥ तच्च आत्मनस्तादृशाव[illegible]मुमापतेः कर्म तदिच्छावशप्राप्तं ज्ञात्वा ॥ १७ ॥ १८ ॥ १९ ॥ पुरुषत्वमृते तद्विना प्रत्याख्यातः पुरुषत्वप्राप्तेरिति शेषः ॥ २० ॥ न च जग्राह स्त्रीभूत इतिपाठे गुरुवैषम्यमार्षम् । अन्यं वरं पुंस्त्वातिरिक्तं वरं न जग्राह । अन्यद्वाक्यमिति

पाठे पुंस्त्वातिरिक्तवरदातृवाक्यं न जग्राहेत्यर्थः ॥ २१ ॥ सर्वेणैवांतरात्मना मनोबुद्ध्यभिमानलक्षणेन सर्वेणांतःकरणेन प्रणिपत्य साष्टांगं प्रणिपत्येत्यर्थः । वराणामीशे अतएव लोकानां वरदे त्वं भामिनी असि ॥ २२ ॥ अतोऽमोघेत्यादि । सौम्येन चक्षुषाऽनुग्रह चक्षुषा मां भजानुगृहाण ॥ २३ ॥२४ ॥ स्त्रीपुंसोः समासांताभाव आर्षः । स्त्रीपुंसयोरावयोः सकाशाद्वरमिच्छसीति शेषः । तत्र वरदो देवोऽर्धस्य वरस्य दाता वरार्धस्याहं दात्री तस्माद्यावदिच्छसि तदर्धं मत्तो गृहाण ॥२५॥२६॥ उपासित्वा प्राप्य ॥२७ ॥ देवी स्वतोनुग्रहांतरं करोति राजन्निति ॥ २८ ॥ कार्दमिः क[illegible] ॥ २९ ॥ ३० ॥ नंलंमानः॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्ताशीतितमः सर्गः ॥ ८७ ॥ अथ कथावशेषप्रश्ने तत्प्रतिपादनं तां कथामिति ॥[illegible] इलस्य तस्य भावस्य

प्रणिपत्यउमां[illegible]सर्वेणैवांतरात्मना ॥ ईशेवराणांवरदेलोकानामसिभामिनी ॥ २२ ॥ अमोघदर्शनेदेवीभजसौम्येन[illegible] हृद्गतंतस्यराजर्षे र्विज्ञायहरसन्निधौ ॥ २३ ॥ प्रत्युवाचशुभंवाक्यंदेवीरुद्रस्यसंमता ॥ अर्धस्यदेवोवरदोवरार्धस्यतवाप्यहम् ॥ २४ ॥ तस्म[illegible]गत्वंस्त्रीपुंसोर्याव दिच्छसि ॥ तदद्भुततरंश्रुत्वादेव्यावरमनुत्तमम् ॥ २५ ॥ संप्रहृष्टमनाभूत्वाराजावाक्यमथाब्रवीत् ॥ यदिदेविप्रसंन्नामेरूपे[illegible]भुवि ॥ २६ ॥ मासंस्त्रीत्वमुपासित्वामासंस्यांपुरुषःपुनः ॥ ईप्सितंतस्यविज्ञायदेवीसुरुचिरानना ॥ २७ ॥ प्रत्युवाचशुभंवाक्यमेवमेवभविष्यति[illegible] राजन्पुरुषभूत स्त्वंस्त्रीभावंन[illegible]मरिष्यसि ॥ २८ ॥ स्त्रीभूतश्चपरंमासंनस्मरिष्यसिपौरुषम् ॥ एवंसराजापुरुषोमासंभूत्वाथकार्दमिः ॥ २९ ॥ त्रैलोक्यसुंदरीनारी मासमेकमिलाभवत् ॥ ३० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्ताशीतितमः सर्गः ॥ ८७ ॥ तांकथामैलसंबद्धां रामेणसमुदीरिताम् ॥ लक्ष्मणोभरतश्चैवश्रुत्वापरमविस्मितौ ॥१ ॥ तौरामंप्रांजलीभूत्वातस्यराज्ञोमहात्मनः ॥ विस्तरंतस्यभावस्यतदापप्रच्छतुः पुनः ॥ २ ॥ कथंसराजास्त्रीभूतोवर्तयामासदुर्गतिः ॥ पुरुषःसयदाभूतःकांवृत्तिंवर्तयत्यसौ ॥ ३ ॥ तयोस्तद्भाषितंश्रुत्वाकौतूहलसमन्वितम् ॥ कथयामासकाकुत्स्थस्तस्यराज्ञोयथागमम् ॥ ४ ॥ तमेवप्रथमंमासंस्त्रीभूत्वालोकसुंदरी ॥ ताभिःपरिवृतास्त्रीभिर्येऽस्यपूर्वपदानुगाः ॥ ५ ॥ तत्कानं नंविगाह्याशुविजह्रेलोकसुंदरी ॥ द्रुमगुल्मलताकीर्णंपद्भ्यांपद्मदलेक्षणा ॥ ६ ॥ वाहनानिचसर्वाणिसंत्यक्त्वावैसमंततः ॥ पर्वताभोगविवरेतस्मिन्रे मेइलातदा ॥ ७ ॥ अथतस्मिन्वनोद्देशेपर्वतस्याविदूरतः ॥ सरःसुरुचिरप्रख्यंनानापक्षिगणायुतम् ॥ ८ ॥ ददर्शसाइलातस्मिन्बुधंसोमसुतंतदा ॥ ज्वलंतंस्वनवपुषा[illegible]सोममिवोदितम् ॥ ९ ॥ तपंतंचतपस्तीव्रमंभोमध्येदुरासदम् ॥ यशस्करंकामकरंकारुण्येपर्यवस्थितम् ॥ १० ॥ सातंजलाशयंसर्वं क्षोभयामासविस्मिता ॥ सहतैःपूर्वपुरुषैःस्त्रीभूतैरघुनंदन ॥ ११ ॥ बुधस्तुतांसमीक्ष्यैवकामबाणवशंगतः ॥ नोपलेभेतदात्मानंसचचालतदांभसि ॥ १२ ॥

स्त्रीपुंसभावस्य ॥ २ ॥ स्त्रीभूतोत एव दुर्गतिः कथं वर्तयामास तत्कालमिति शेषः । तथा पुरुषभूतोसौ कां वृत्तिं वर्तयति ॥ ३ ॥ यथागमं यथाप्रागम् ॥ ४ ॥ लोकसुंदरी लोकेभ्यः सर्वस्त्रीलोकेभ्यः सुंदरी एवंभूतापि सा स्त्री परिवृता कास्ताः स्त्रियस्तत्राह येऽस्येति ॥ ५ ॥ ६ ॥ पर्वतानामाभोगो विस्तारस्तस्य विवरे पर्वतमध्यप्रदेशे ॥ ७ ॥ पर्वतस्याविदूरतः सरो ददर्शेत्यन्वयः । यत्रेश्वरराज्ञया स्त्रीत्वमासित्ततः परस्मिन्नविदूरे प्रदेशे इत्यर्थः । अत एव बुधस्य सरसि तपश्चरतः स्त्रीत्वामाविरिति बोध्यम् ॥ ८ ॥ ९ ॥ १० ॥ जलाशयं क्षोभयामास क्रीडयेति शेषः ॥ ११ ॥ आत्मानं नोपलेभे

आत्मध्यानं न प्राप्तवान् काममोहपरवशचित्तोभूदित्यर्थः । अंभसि स्थितः स चचाल ॥ १२ ॥ चित्तं समभ्यतिक्रामत् इलायामिति शेषः । इलाविषयचिंतां प्राप्तमभूदित्यर्थः ॥ १३ ॥ १४ ॥ यदि नान्यपरिग्रहः अन्यपरिग्रहत्वरहिता ॥ १५ ॥ शब्दापयत आह्वयत ॥ १६ ॥ १७ ॥ मधुरं संध्यादिकृतश्रुतिकटुत्वरहितं मधुराक्षरं टवर्गादिरहितम् ॥ १८ ॥ अपतिः पतिहीना ॥ १९ ॥ आव्यक्तपदं आसमंताद्व्यक्तानि पदानि यत्र तत् आवर्तनीविद्या सांग्रहणीपर्यायनामिका संवर्तविद्या ताम् आवर्तयति स्म तद्विद्यैकसाध्यप्रकृतप्रयोजनार्थमिति शेषः ॥ २० ॥ राज्ञः सकलमर्थं वृत्तांतं विदित्वा ध्यानयोगत इति शेषः ।

इलांनिरीक्षमाणस्तुत्रैलोक्यादधिकांशुभाम् ॥ चित्तंसमभ्यतिक्रामत्कान्वियंदेवताधिका ॥१३॥ नदेवीषुननागीषुनासुरीष्वप्सरस्सुच ॥ दृष्टपूर्वा मयाकाचिद्रूपेणानेनशोभिता ॥ १४ ॥ सदृशीयंममभवेद्यदिनान्यपरिग्रहः ॥ इतिबुद्धिंसमास्थायजलात्कूलमुपागमत् ॥ १५ ॥ आश्रमंसमुपागम्यततस्ताःप्रमदोत्तमाः ॥ शब्दापयतधर्मात्माताश्चैनंचववंदिरे ॥ ॥ १६ ॥ सताःपप्रच्छधर्मात्माकस्यैषालोकसुंदरी ॥ किमर्थमागताचैवसर्वमाख्यातमाचिरम् ॥ १७ ॥ शुभंतुतस्यतद्वाक्यंमधुरंमधुराक्षरम् ॥ श्रुत्वास्त्रियश्चताःसर्वाऊचुर्मधुरयागिरा ॥ १८ ॥ अस्माकमेषासुश्रोणीप्रभुत्वेवर्ततेसदा ॥ अपतिःकाननांतेषुसहास्माभिश्चरत्यसौ ॥ १९ ॥ तद्वाक्यमव्यक्तपदंतासांस्त्रीणांनिशम्यच ॥ विद्यामावर्तनींपुण्यामावर्तयतिसद्द्विजः ॥ ॥ २० ॥ सोर्थंविदित्वासकलंतस्यराज्ञोयथातथा ॥ सर्वाएवस्त्रियस्ताश्चबभाषेमुनिपुंगवः ॥ २१ ॥ अत्रकिंपुरुषीर्भूत्वाशैलरोधसिवत्स्यथ ॥ आवासस्तुगिरावस्मिन्छीघ्रमेवविधीयताम् ॥ २२ ॥ मूलपत्रफलैःसर्वावर्तयिष्यथनित्यदा ॥ स्त्रियःकिंपुरुषान्नामभर्तॄन्समुपलप्स्यथ ॥ २३ ॥ ताःश्रुत्वासोमपुत्रस्यस्त्रियःकिंपुरुषीकृताः ॥ उपासांचक्रिरेशैलंवध्वस्ताबहुलास्तदा ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टाशीतितमः सर्गः ॥ ८८ ॥ श्रुत्वाकिंपुरुषोत्पत्तिंलक्ष्मणोभरतस्तथा ॥ आश्चर्यमितिचाब्रूतामुभौरामंजनेश्वरम् ॥ १ ॥ अथरामः कथामेतांभूयएवमहायशाः ॥ कथयामासधर्मात्माप्रजापतिसुतस्यवै ॥ २ ॥ सर्वास्ताविद्रुताहष्ट्वाकिन्नरीर्ऋषिसत्तमः ॥ [illegible]गचरूपसंपन्नांतां स्त्रियंप्रहसन्निव ॥ ३ ॥

ताः स्त्रियः इलाव्यतिरिक्ता इति शेषः ॥ २१ ॥ किंपुरुषीर्भूत्वा किंपुरुषाख्यदेवयोनिस्त्रियो भूत्वात्रास्मिन् शैलरोधसि वत्स्यथ अस्मिन् गिरौ आवास उटजादिः शीघ्रमेव विधीयताम् ॥ २२ ॥ स्त्रियः किंपुरुषस्त्रियो यूयं किंपुरुषान्नाम प्रसिद्धान्भर्तॄन्समुपलप्स्यथान्विष्य प्राप्स्यथेत्यर्थः ॥ २३ ॥ किंपुरुषीकृताः बुधेन योगबलात्किंपुरुषस्त्रीकृताः शैलमुपशैलसमीपे आसांचक्रिरे ॥ २४ ॥ ॥ भैरेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टाशीतितमः सर्गः ॥ ८८ ॥ श्रुत्वेति किंपुरुषोत्पत्तिं किंपुरुषजातित्वेन तासां स्त्रीणामुत्पत्तिं ब्रूतामब्रुवताम् ॥ १ ॥ २ ॥ विद्रुताः गता दृष्ट्वा ।

विद्रुता इति पाठांतरम् । महसन्नेव सर्वासां स्वबुद्धया निराकरणात्महाद्यः ॥ ३ ॥ भक्त्याऽनुरागेण स्निग्धं स्नेहयुक्तं न केवलं चक्षुरेव तथाभूतम् ॥ ४ ॥ ५ ॥ कामचरी स्वतंत्रा ॥ ६ ॥ ७ ॥ ८ ॥ प्रजापतिसु
इलः ॥ ९ ॥ १० ॥ विस्मृतस्वकत्रीत्वादिवृत्तांतः पृच्छति भगवन्निति ॥ ११ ॥ नष्टसंज्ञस्य देवीप्रसादवशादिति भावः ॥ १२ ॥ अश्मवर्षेणेति । मायावचनमी[illegible]वाक्यानुरोधेनेति कतकः ॥ १३ ॥
॥ १४ ॥ तेन वाक्येनेति । इह यथासुखं वसेतिवाक्येन ॥ १५ ॥ अहं भृत्यैर्विना क्वतोपि स्वकं राज्यं न त्यक्षामि त्यक्तुं न शक्नोमि इह वासत इति शेषः । [illegible]इह क्षणमपि न वर्तयेयं नत्र
इहानुकर्षः । तस्मान्मां गमनाय समनुज्ञातुमर्हसि ॥ १६ ॥ उक्तमेव राज्योत्कंठाप्रदर्शनायाह सुत इति । प्रपत्स्यते मम राज्यं प्रति गमनाभावे इति शेषः ॥ १७ ॥ [illegible]यीयाम् [illegible]त्यान्भृत्यदारान्हित्वाऽहं न [illegible]पवादर्भः [illegible]

सोमस्याहंसुदा[illegible]तःसुतःसुरुचिरानने॥ भजस्वमांवरारोहेभक्त्यास्निग्धेनचक्षुषा ॥४॥ तस्यतद्वचनंश्रुत्वाशून्येस्वजनव[illegible] [illegible]लासुरुचिरप्रख्यं प्रत्युवाचमहाप्र[illegible]म् ॥ ५ ॥ अहंकामचरीसौम्यतवास्मिवशवर्तिनी ॥ प्रशाधिमांसोमसुतयथेच्छसितथाकुरु ॥ ६ ॥ [illegible]दद्भुतप्रख्यंश्रुत्वा हर्षमुपागतः ॥ सवैकामीसहतयारेमेचंद्रमसःसुतः ॥ ७ ॥ बुधस्यमाधवोमासस्तामिलांरुचिराननाम् ॥ गतोरमयतोत्यर्थं[illegible]तस्यकामिनः ॥ ८॥ अथमासेतुसंपूर्णेपूर्णेंदुसदृशाननः ॥ प्रजापतिसुतःश्रीमाञ्छयनेप्रत्यबुध्यत ॥ ९ ॥ सोपश्यत्सोमजंतत्रतपंतंसलिलाशये ॥ ऊर्ध्वबाहुनिरालंबं[illegible]राजाप्रत्यभाषत ॥ १० ॥ भगवन्पर्वतंदुर्गंप्रविष्टोस्मिसहानुगः ॥ नचपश्यामितत्सैन्यंक्वनुतेमामकागताः ॥ ११ ॥ तच्छ्रुत्वात स्यराजर्षेर्नष्टसंज्ञस्यभाषितम् ॥ प्रत्युवाचशुभंवाक्यंसांत्वयन्परयागिरा ॥ १२ ॥ अश्मवर्षेणमहताभृत्यास्तेविनिपातिताः ॥ त्वंचाश्रमपदेसुप्तो वातवर्षभयार्दितः ॥ १३ ॥ समाश्वसिहिभद्रंतेनिर्भयोविगतज्वरः ॥ फलमूलाशनोवीरनिवसेहयथासुखम् ॥ १४ ॥ सराजातेनवाक्येनप्रत्याश्वस्तो महामतिः ॥ प्रत्युवाचशुभंवाक्यंदीनोभृत्यजनक्षयात् ॥१५॥ त्यक्ष्याम्यहंस्वकंराज्यंनाहंभृत्यैर्विनाकृतः ॥ वर्तयेयंक्षणंब्रह्मन्समनुज्ञातुमर्हसि॥१६॥ सुतोधर्मपरोब्रह्मञ्ज्येष्ठोममममहायशाः ॥ शशबिंदुरितिख्यातःसमेराज्यंप्रपत्स्यते ॥ १७ ॥ नहिशक्ष्याम्यहंहित्वाभृत्यदारान्सुखान्वितान् ॥ प्रतिवक्तुंमहातेजाःकिंचिदप्यशुभंवचः ॥ १८ ॥ तथाब्रुवतिराजेंद्रेबुधःपरममद्भुतम् ॥ सांत्वपूर्वमथोवाचवासस्तइहरोचताम् ॥ १९ ॥ नसंतापस्त्वयाकार्यःकार्दमेयमहाबल ॥ संवत्सरोपितस्याथकारयिष्यामितेहितम् ॥ २० ॥ तस्यतद्वचनंश्रुत्वाबुधस्याक्लिष्टकर्मणः ॥ वासायविदधेबुद्धिंयदुक्तंब्रह्मवादिना ॥ २१ ॥ मासंसस्त्रीतदाभूत्वारमयत्यनिशंसदा ॥ मासंपुरुषभावेनधर्मबुद्धिंचकारसः ॥ २२ ॥ ततःसानवमेमासिइलासोमसुता त्सुतम् ॥ जनयामाससुश्रोणीपुरूरवसमूर्जितम् ॥ २३ ॥

शक्ष्यामि इह स्थातुमिति शेषः । यदेवमतो मां प्रति किंचिदप्यशुभम् इह वासनियोगलक्षणानिष्टं वक्तुं नार्हसीति शेषः ॥१८ ॥ अद्भुतमागम्याद्भुतकर्मसिद्धिजनकं परमं वचः सांत्वपूर्वं तव किंचित्कालवासेन सुखं भविष्यतीत्येवंवादपूर्वं ते इह वासो रोचतामित्युवाच॥१९॥२०॥यदुक्तं ब्रह्मवादिना तस्य तद्वचनं श्रुत्वेति सम्बन्धः ॥ २१॥२२ ॥ नवमे मासीति । न चैवं मध्ये पुरुषत्वावस्थायां गर्भदर्शनेन पूर्वावस्थास्मर णाभावकल्पनाचैतीवरान्यथाभावादिति । तदरवशादेव विद्यमानस्यापि गर्भस्थानेनाज्ञानमिति कल्पनेनादोषात् एतदनुपपत्त्यैव बुधस्य समागममारभ्य नवमे मासि सद्य एव गर्भग्रहणमप्रवादिति तीर्थः ॥ २३

आत्मध्यानं न प्राप्तवान् काममोहपरवशचित्तोभूदित्यर्थः । अंभसि स्थितः स चचाल ॥ १२ ॥ चित्तं समभ्यतिक्रामत् इलायामिति शेषः । इलाविषयचिंतां प्राप्तमभूदित्यर्थः ॥ १३ ॥ १४ ॥ यदि नान्यपरिग्रहः अन्यपरिग्रहत्वरहिता ॥ १५ ॥ शब्दापयत आह्वयत ॥ १६ ॥ १७ ॥ मधुरं संध्यादिकृतश्रुतिकटुत्वरहितं मधुराक्षरं टवर्गादिरहितम् ॥ १८ ॥ अपतिः पतिहीना ॥ १९ ॥ आव्यक्तपदं आसमंताद्व्यक्तानि पदानि यत्र तत् आवर्तनीविद्या सांग्रहणीपर्यायनामिका संवर्तविद्या ताम् आवर्तयति स्म तद्विद्यैकसाध्यप्रकृतप्रयोजनार्थमिति शेषः ॥ २० ॥ राज्ञः सकलमर्थं वृत्तांतं विदित्वा ध्यानयोगत इति शेषः ।

इलांनिरीक्षमाणस्तुत्रैलोक्यादधिकांशुभाम् ॥ चित्तंसमभ्यतिक्रामत्कान्वियंदेवताधिका ॥१३॥ नदेवीषुननागीषुनासुरीष्वप्सरस्सुच ॥ दृष्टपूर्वा मयाकाचिद्रूपेणानेनशोभिता ॥ १४ ॥ सदृशीयंममभवेद्यदिनान्यपरिग्रहः ॥ इतिबुद्धिंसमास्थायजलात्कूलमुपागमत् ॥ १५ ॥ आश्रमंसमुपागम्यततस्ताःप्रमदोत्तमाः ॥ शब्दापयतधर्मात्माताश्चैनंचववंदिरे ॥ ॥ १६ ॥ सताःपप्रच्छधर्मात्माकस्यैपालोकसुंदरी ॥ किमर्थमागताचैवसर्वमाख्यातमाचिरम् ॥ १७ ॥ शुभंतुतस्यतद्वाक्यंमधुरंमधुराक्षरम् ॥ श्रुत्वास्त्रियश्चताःसर्वाऊचुर्मधुरयागिरा ॥ १८ ॥ अस्माकमेषासुश्रोणीप्रभुत्वेवर्ततेसदा ॥ अपतिःकाननांतेषुसहास्माभिश्चरत्यसौ ॥ १९ ॥ तद्वाक्यमव्यक्तपदंतासांस्त्रीणांनिशम्यच ॥ विद्यामावर्तनींपुण्यामावर्तयातिसद्विजः ॥ ॥ २० ॥ सोर्थंविदित्वासकलंतस्यराज्ञोयथातथा ॥ सर्वाएवस्त्रियस्ताश्चबभाषेमुनिपुंगवः ॥ २१ ॥ अत्रकिंपुरुषीर्भूत्वाशैलरोधसिवत्स्यथ ॥ आवासस्तुगिरावस्मिञ्छीघ्रमेवविधीयताम् ॥ २२ ॥ मूलपत्रफलैःसर्वावर्तयिष्यथनित्यदा ॥ स्त्रियःकिंपुरुषान्नामभर्तॄन्समुपलप्स्यथ ॥ २३ ॥ ताःश्रुत्वासोमपुत्रस्यस्त्रियःकिंपुरुषीकृताः ॥ उपासांचक्रिरेशैलंवध्वस्ताबहुलास्तदा ॥ २४ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टाशीतितमः सर्गः ॥ ८८ ॥ श्रुत्वाकिंपुरुषोत्पत्तिंलक्ष्मणोभरतस्तथा ॥ आश्चर्यमितिचाब्रूतामुभौरामंजनेश्वरम् ॥ १ ॥ अथरामःकथामेतांभूयएवमहायशाः ॥ कथयामासधर्मात्माप्रजापतिसुतस्यवै ॥ २ ॥ सर्वास्ताविद्रुताद्दृष्ट्वाकिन्नरीर्ऋषिसत्तमः ॥ [illegible]गचरूपसंपन्नांतांस्त्रियंप्रहसन्निव ॥ ३ ॥

ताः स्त्रियः इलाव्यतिरिक्ता इति शेषः ॥ २१ ॥ किंपुरुषीर्भूत्वा किंपुरुषाख्यदेवयोनिस्त्रियो भूत्वात्रास्मिन् शैलरोधसि वत्स्यथ अस्मिन् गिरौ आवास उटजादिः शीघ्रमेव विधीयताम् ॥ २२ ॥ स्त्रियः किंपुरुषस्त्रियो यूयं किंपुरुषान्नाम प्रसिद्धान्भर्तॄन्समुपलप्स्यथान्विष्य प्राप्स्यथेत्यर्थः ॥ २३ ॥ किंपुरुषीकृताः बुधेन योगबलात्किंपुरुषस्त्रीकृताः शैलमुपशैलसमीपे आसांचक्रिरे ॥ २४ ॥ ॥ भैरेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टाशीतितमः सर्गः ॥ ८८ ॥ श्रुत्वेति किंपुरुषोत्पत्तिं किंपुरुषजातित्वेन तासां स्त्रीणामुत्पत्तिं ब्रूतामब्रुवताम् ॥ १ ॥ २ ॥ विद्रुताः गता दृष्ट्वा ।

विद्रुता इति पाठांतरम् । महसन्नेव सर्वासां स्वबुद्ध्या निराकरणात्महासः ॥ ३ ॥ भक्त्याऽनुरागेण स्निग्धं स्नेहयुक्तं न केवलं चक्षुषैव तथाभूतम् ॥ ४ ॥ ५ ॥ कामचरी स्वतंत्रा ॥ ६ ॥ ७ ॥ ८ ॥ प्रजापतिसु
इलः ॥ ९ ॥ १० ॥ विस्मृतस्वकस्त्रीत्वादिवृत्तांतः पृच्छति भगवन्निति ॥ ११ ॥ नष्टसंज्ञस्य दैवीप्रसादवशादिति भावः ॥ १२ ॥ अश्मवर्षेणेति । मायावचनमीश्वरवाक्यानुरोधेनेति कतकः ॥ १३ ॥
॥ १४ ॥ तेन वाक्येनेति । इह यथासुखं वसेतिवाक्येन ॥ १५ ॥ अहं भृत्यैर्विना कृतोपि स्वकं राज्यं न त्यक्षामि त्यक्तुं न शक्नोमि इह वासत इति शेषः । [illegible] हि क्षणमपि न वर्तयेयं नत्र
इहानुकर्षः । तस्मान्मां गमनाय समनुज्ञातुमर्हसि ॥ १६ ॥ उक्तमेव राज्योत्कंठाप्रदर्शनायाह सुत इति । प्रपत्स्यते मम राज्यं प्रति गमनाभावे इति शेषः ॥ १७ ॥ [illegible] स्यान्भृत्यदारान्हित्वाऽहं न

सोमस्याहंसुदर्शितः सुतः सुरुचिरानने ॥ भजस्वमांवरारोहेभक्त्यास्निग्धेनचक्षुषा ॥४॥ तस्यतद्वचनंश्रुत्वाशून्येस्वजनव[illegible]लासुरुचिरप्रख्यं
प्रत्युवाचमहाग्रहम् ॥५॥ अहंकामचरीसौम्यतवास्मिवशवर्तिनी ॥ प्रशाधिमांसोमसुतयथेच्छसितथाकुरु ॥६॥ [illegible] दद्भुतप्रख्यंश्रुत्वा
हर्षमुपागतः ॥ सवैकामीसहतयारेमेचंद्रमसःसुतः ॥७॥ बुधस्यमाधवोमासस्तामिलांरुचिराननाम् ॥ गतोरमयतोत्यर्थं[illegible]तस्यकामिनः ॥
॥८॥ अथमासेतुसंपूर्णेपूर्णेंदुसदृशाननः ॥ प्रजापतिसुतःश्रीमाञ्छयनेप्रत्यबुध्यत ॥९॥ सोपश्यत्सोमजंतत्रतपंतंसलिलाशये ॥ ऊर्ध्व
बाहुनिरालंबंराजाप्रत्यभाषत ॥१०॥ भगवन्पर्वतंदुर्गंप्रविष्टोस्मिसहानुगः ॥ नचपश्यामितत्सैन्यंक्वनुतेमामकागताः ॥११॥ तच्छ्रुत्वात
स्यराजर्षेर्नष्टसंज्ञस्यभाषितम् ॥ प्रत्युवाचशुभंवाक्यंसांत्वयन्परयागिरा ॥१२॥ अश्मवर्षेणमहताभृत्यास्तेविनिपातिताः ॥ त्वंचाश्रमपदेसुतो
वातवर्षभयार्दितः ॥१३॥ समाश्वसिहिभद्रंतेनिर्भयोविगतज्वरः ॥ फलमूलाशनोवीरनिवसेहयथासुखम् ॥१४॥ सराजातेनवाक्येनप्रत्याश्वस्तो
महामतिः ॥ प्रत्युवाचशुभंवाक्यंदीनोभृत्यजनक्षयात् ॥१५॥ त्यक्ष्याम्यहंस्वकंराज्यंनाहंभृत्यैर्विनाकृतः ॥ वर्तयेयंक्षणंब्रह्मन्समनुज्ञातुमर्हसि ॥१६॥
सुतोधर्मपरोब्रह्मञ्ज्येष्ठोममहायशाः ॥ शशबिंदुरितिख्यातःसमेराज्यंप्रपत्स्यते ॥१७॥ नहिशक्ष्याम्यहंहित्वाभृत्यदारान्सुखान्वितान् ॥
प्रतिवक्तुंमहातेजाःकिंचिदप्यशुभंवचः ॥१८॥ तथाब्रुवतिराजेंद्रेबुधःपरममद्भुतम् ॥ सांत्वपूर्वमथोवाचवासस्तइहरोचताम् ॥१९॥ नसंताप
स्त्वयाकार्यःकार्दमेयमहाबल ॥ संवत्सरोपितस्याद्यकारयिष्यामितेहितम् ॥२०॥ तस्यतद्वचनंश्रुत्वाबुधस्याक्लिष्टकर्मणः ॥ वासायविदधेबुद्धिंय
दुक्तंब्रह्मवादिना ॥२१॥ मासंसस्त्रीतदाभूत्वारमयत्यनिशंसदा ॥ मासंपुरुषभावेनधर्मबुद्धिंचकारसः ॥२२॥ ततःसानवमेमासिइलासोमसुता
त्सुतम् ॥ जनयामासस्सुश्रोणीपुरूरवसमूर्जितम् ॥२३॥

शक्ष्यामि इह स्थातुमिति शेषः । यदेवमतो मां प्रति किंचिदप्यशुभम् इह वासनियोगलक्षणानिष्टं वक्तुं नार्हसीति शेषः ॥१८ ॥ अद्भुतमागम्याद्भुतकर्मसिद्धिजनकं परमं वचः सांत्वपूर्वं तव किंचित्कालवासेन सुखं
भविष्यतीत्येवंवादपूर्वं ते इह वासो रोचतामित्युवाच ॥१९॥२०॥ यदुक्तं ब्रह्मवादिना तस्य तद्वचनं श्रुत्वेति सम्बन्धः ॥ २१॥२२ ॥ नवमे मासीति । न चैवं मध्ये पुरुषत्वावस्थायां गर्भदर्शनेन पूर्वावस्थास्मर
णाभावकल्पनार्थतीवरान्यथाभावासक्तिः । तद्धरबलादेव विद्यमानस्यापि गर्भस्यानेनाज्ञानमिति कल्पनेनादोषात् एतदनुपपत्त्यैव बुधस्य समागममारभ्य नवमे मासि सद्य एव गर्भग्रहणमत्राविति तीर्थः ॥ २३ ॥

जातमात्रं तत्क्षण एव पितृसमानाकारं पितृहस्ते उपनयनादिकृत्यार्थं न्यवेदयत्स्थापितवती ॥ २४ ॥ संवत्सरातरं संवत्सरांतरमाप्यपेक्षितावशिष्टमासत्रयपर्यंतम् ॥ २५ ॥ मंखैमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकोननवतितमः सर्गः ॥ ८९ ॥ तस्य पुरूरवसः जन्म ॥ १ ॥ सोमपुत्रस्य समीप इति शेषः किमकरोत्संवत्सरानंतरमिति शेषः । पुरूरवसः शशबिंदोश्च तत्पुत्रतयापश्चाज्जातपुरूरवसो राज्यमभून्न वेति मश्नार्थः ॥ २ ॥ प्रजापतिसुते तद्विषयाम् ॥ ३ ॥ ४ ॥ ५ ॥ सुहृदः स्वमित्रभूतान् ॥ ६ ॥ यथाभूतम् ईश्वराज्ञयानुभवसिद्धं

जातमात्रेतुसुश्रोणीपितुर्हस्तेन्यवेशयत् ॥ बुधस्यसमवर्णंचइलापुत्रंमहाबलम् ॥ २४ ॥ बुधस्तुपुरुषीभूतंसवैसंवत्सरांतरम् ॥ कथाभीरमयामासधर्मयुक्ताभिरात्मवान् ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे एकोननवतितमः सर्गः ॥ ८९ ॥ तथोक्तवतिरामे तुतस्यजन्मतदद्भुतम् ॥ उवाचलक्ष्मणोभूयोभरतश्चमहायशाः ॥ १ ॥ इलासासोमपुत्रस्यसंवत्सरमथोषिता ॥ अकरोत्किंनरश्रेष्ठतत्त्वंशंसितुमर्हसि ॥ २ ॥ तयोस्तद्वाक्यमाधुर्यंनिशम्यपरिपृच्छतोः ॥ रामःपुनरुवाचेदंप्रजापतिसुतेकथाम् ॥३॥ पुरुषत्वंगतेशूरेबुधःपरमबुद्धिमान् ॥ संवर्तंपरमोदारमाजुहावमहायशाः ॥ ४ ॥ च्यवनंभृगुपुत्रंचमुनिंचारिष्टनेमिनम् ॥ प्रमोदनंमोदकरंततोदुर्वाससंमुनिम् ॥ ५ ॥ एतान्सर्वान्समानीयवाक्यज्ञस्तत्त्वदर्शनः ॥ उवाचसर्वान्सुहृदोधैर्येणसुसमाहितान् ॥ ६ ॥ अयंराजामहाबाहुःकर्दमस्यइलःसुतः ॥ जानीतैनंयथाभूतंश्रेयोह्यत्रविधीयताम् ॥ ७ ॥ तेषांसंवदतामेवंद्विजैःसहमहात्मभिः ॥ कर्दमस्तुमहातेजास्तदाश्रममुपागमत् ॥ ८ ॥ पुलस्त्यश्चक्रतुश्चैववषट्कारस्तथैवच ॥ ओंकारश्चमहातेजास्तमाश्रममुपागमन् ॥ ९ ॥ तेसर्वेहृष्टमनसःपरस्परसमागमे ॥ हितैषिणोबाह्लिपतेःपृथग्वाक्यान्यथाब्रुवन् ॥ १० ॥ कर्दमस्त्वब्रवीद्वाक्यंसुतार्थंपरमंहितम् ॥ द्विजाःशृणुतमद्वाक्यंयच्छ्रेयःपार्थिवस्यहि ॥ ११ ॥ नान्यंपश्यामिभैषज्यमंतरावृषभध्वजम् ॥ नाश्वमेधात्परोयज्ञःप्रियश्चैवमहात्मनः ॥ १२ ॥ तस्माद्यजामहेसर्वेपार्थिवार्थेदुरासदम् ॥ कर्दमेनैवमुक्तास्तुसर्वएवद्विजर्षभाः ॥ १३ ॥ रोचयंतिस्मतंयज्ञंरुद्रस्याराधनंप्रति ॥ संवर्तस्यतुराजर्षिःशिष्यःपरपुरंजयः ॥१४॥ मरुत्तइतिविख्यातस्तंयज्ञंसमुपाहरत् ॥ ततोयज्ञोमहानासीद्बुधाश्रम[illegible]नृपतः ॥ १५ ॥ रुद्रश्चपरमंतोषमाजगाममहायशाः ॥ अथयज्ञेसमाप्तेतुप्रीतःपरमयामुदा ॥ १६ ॥ उमापतिर्द्विजान्सर्वानुवाचइलसन्निधौ ॥ [illegible]प्रीतोस्मिहयमेधेनभक्त्याचद्विज[illegible]त्तमाः ॥ १७ ॥ अस्यबाह्लिपतेश्चैवकिंकरोमिप्रियंशुभम् ॥ तथावदतिदेवेशेद्विजास्तेसुसमाहिताः ॥ [illegible] ॥ प्रसादयंतिदेवेशंयथास्यात्पुरुष[illegible]स्त्विला ॥ ततःप्रीतोमहादेवःपुरुषत्वंददौपुनः ॥ १९ ॥

स्त्रीपुंसरूपमकारद्वयं मासमेनंजानीत ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ वृषभध्वज एव स्वकृतशापनिवर्तनसमर्थस्तत्प्रीतिश्चाश्वमेधेन सर्वदेवताप्रीतिकरेणैवेत्याह नान्यमिति । न[illegible] [illegible]श्यामि । नान्यमित्येतद्विवृणोति अंतरा वृषभध्वजं नाश्वमेधात्परो यज्ञः राज्ञां ब्रह्महत्यांतसर्वपापनिवर्तकत्वादिति भावः । नन्वश्वमेधेन कथं वृषभध्वजसंतोषोऽत आह प्रिय एव महात्मनः । यद्य[illegible] [illegible]प्रजापतिदैवत्यत्वात्प्रजापतिप्रीतिकरः स तथापि हिरण्यगर्भावस्थाविशेषस्यैव रुद्रत्वान्न दोषः ॥ १२ ॥ १३ ॥ १४ ॥ तं यज्ञं समुपाहरत् इलयज्ञापेक्षितसंभारमुपाहृतवानित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ देवेशं प्रसादयंति स्म पुरुषत्वं [illegible]धीयताम् ॥

विनान्यं वरं वृणीष्वेति पूर्ववद्यथा न वदेत्तथा विशिष्य मसन्नमकुर्वन्नित्यर्थः । तदेवोक्तं यथा स्यादिति ॥ १९॥२० ॥ बाह्लिमुत्सृज्य ज्येष्ठपुत्रशशबिंदधिष्ठितामिति शेषः ॥ २१ ॥ बाह्लिम् अध्युवासेति शेषः ॥ २२ ॥ बधी उवासेति शेषः ॥ २३ ॥ २४ ॥ पौरुषम् पुरुषत्वम् ॥ २५ ॥ शेफमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्येमिता ... नवतितमः सर्गः ॥ ९० ॥
अथाश्वमेधयागाय नैमिषे भ्रातमेषणम् एतदिति । भ्रातृभ्यामिति चतुर्थी ॥१ ॥ अश्वमेधपुरस्कृतानश्वमेधप्रयोगसमर्थान् ॥ २ ॥ मंत्रयित्वा विचार्य समाधिना सावधानचित्ता ... विमोक्ष्यामि इति लक्ष्मणमा ... हीयाम् ... ापवादर्भः

इलायैसुमहातेजा इत्त्वाचांतरधीयत ॥ निवृत्तेहयमेधेचगतेचादर्शनंहरे ॥ २० ॥ यथागतंद्विजाःसर्वेतेऽगच्छन्दीर्घदर्शिनः ... राजातुबाह्लिमु त्सृज्यमध्यदेशेह्यनुत्तमम् ॥ २१ ॥ निवेशयामासपुरंप्रतिष्ठानंयशस्करम् ॥ शशबिंदुश्चराजर्षिर्बाह्लिंपरपुरंजयः ॥२२॥ प्रा... ोराजाप्रजापति सुतोवली ॥ सकालेप्राप्तवाँल्लोकमिलोब्राह्ममनुत्तमम् ॥ २३ ॥ ऐलःपुरूरवाराजाप्रतिष्ठानमवाप्तवान् ॥ ईदृशोह्यश्वमेधस्यप्र... रुषर्षभ ॥२४॥ स्त्रीपूर्वःपौरुषंलेभेयच्चान्यदपिदुर्लभम् ॥ २५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीयेआदिकाव्ये उत्तरकांडे नवतितमः सर्गः ॥ ९० ॥ एतदाख्या यकाकुत्स्थोभ्रातृभ्याममितप्रभः ॥ लक्ष्मणंपुनरेवाहधर्मयुक्तमिदंवचः ॥ १ ॥ वसिष्ठंवामदेवंचजाबालिमथकश्यपम् ॥ द्विजांश्चसर्वप्रवरानश्वमे धपुरस्कृतान् ॥ २ ॥ एतान्सर्वान्समानीयमंत्रयित्वाचलक्ष्मणः ॥ हयलक्षणसंपन्नंविमोक्ष्यामिसमाधिना ॥ ३ ॥ तद्वाक्यंराघवेणोक्तंश्रुत्वात्व रितविक्रमः ॥ द्विजान्सर्वान्समाहूयदर्शयामासराघवम् ॥ ४ ॥ तेदृष्ट्वादेवसंकाशंकृतपादाभिवंदनम् ॥ राघवंसुदुराधर्षमाशीर्भिःसमपूजयन् ॥ ५ ॥ प्रांजलिःसतदाभूत्वाराघवोद्विजसत्तमान् ॥ उवाचधर्मसंयुक्तमश्वमेधाश्रितंवचः ॥६॥ तेपिरामस्यतच्छ्रुत्वानमस्कृत्वावृषध्वजम् ॥ अश्वमेधंद्विजाः सर्वेपूजयंतिस्मसर्वशः॥७॥सतेषांद्विजमुख्यानांवाक्यमद्भुतदर्शनम् ॥ अश्वमेधाश्रितंश्रुत्वाभृशंप्रीतोऽभवत्तदा ॥ ८ ॥ विज्ञायकर्मतत्तेषांरामोलक्ष्मण मब्रवीत् ॥ प्रेषयस्वमहाबाहोसुग्रीवायमहात्मने ॥ ९ ॥ यथामहद्भिर्हरिभिर्बहुभिश्चवनौकसाम् ॥ सार्धमागच्छभद्रंतेअनुभोक्तुंमहोत्सवम् ॥ १० ॥ विभीषणश्चरक्षोभिःकामगैर्बहुभिर्वृतः॥ अश्वमेधंमहायज्ञमायात्वतुलविक्रमः॥११॥राजानश्चमहाभागायेमेप्रियचिकीर्षवः॥सानुगाःक्षिप्रमायांतुयज्ञभू मिनिरीक्षकाः॥१२॥ देशांतरगतायेचद्विजाधर्मसमाहिताः॥ आमंत्रयस्वतान्सर्वानश्वमेधायलक्ष्मण॥१३॥ऋषयश्चमहाबाहोआहूयंतांतपोधनाः॥ देशांतरगताःसर्वेसदाराश्चद्विजातयः॥१४॥ तथैवतालावचरास्तथैवनटनर्तकाः ॥ यज्ञवाटश्चसुमहान्गोमत्यानैमिषेवने॥१५॥आज्ञाप्यतांमहाबाहोत द्धिपुण्यमनुत्तमम् ॥ शांतयश्चमहाबाहोप्रवर्ततांसमंततः॥१६॥शतशश्चापिधर्मज्ञाःक्रतुमुख्यमनुत्तमम् ॥ अनुभूयमहायज्ञंनैमिषेरघुनंदन ॥ १७ ॥

हेति पूर्वेण सम्बन्धः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ वृषध्वजं रुद्रं त्रेताग्निरूपत्वाद्रुद्रस्य यज्ञनिर्विघ्नार्थं तन्नमस्कारः ॥ ७ ॥ ८ ॥ तत्कर्म विज्ञाय तत्कर्मकरणांगीकारं विज्ञाय ॥ ९ ॥ महद्भिर्हरिभिर्हनुमदादि भिः बहुभिश्च वनौकसां अनुचररूपाणां बहुभिः समुदायैरित्यर्थः । अनुभोक्तुं द्रष्टुं यथा यथाकालमागच्छ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ तालं गृहीत्वावचरास्तालावचराः नटाः सूत्रधाराः गोमत्या नद्यास्तीरे इति शेषः ॥ १५ ॥ आज्ञाप्यतां कार्यतां तद्धि नैमिषं वनम् ॥ १६ ॥ शतशोऽनेके धर्मज्ञाः नैमिषे महायज्ञं महांतोऽगभूता यज्ञा यस्य तं क्रतुमुख्यमनुभूय दृष्ट्वा कृतार्था भवंत्विति शेषः ॥ १७ ॥

: ॥ इति

अतः शीघ्रमामंत्र्यतां जनः स चास्माभिर्मानितः पूजितः संस्तुष्टः पुष्टश्च भूत्वा प्रतियास्यति ॥ १८ ॥ वपुष्मतां तंडुलानाम् अभग्नस्वरूपाणामित्यर्थः । शतं वाहानामनेकानि सहस्राणि अनेकलक्षं बलीवर्दादय इत्यर्थः । अयुतं वाहकं पशवः ॥ १९ ॥ अतोनुरूपम् उक्तान्नभोजनीयब्राह्मणभोजनानुरूपं स्नेहं घृततैलपयोदध्यादिकमित्यर्थः संक्षिप्तं गंधम् अघृष्टमेवेत्यर्थः ॥ २० ॥ हिरण्यस्य रजतस्य शतोत्तराः कोट्य इत्यनुकर्षः । समाधिना सावधानतया ॥ २१ ॥ अंतरा मार्गमध्ये तत्र तत्रापेक्षिता आपणवीथ्यस्तत्प्रवर्तका वणिज इत्यर्थः । सर्व इति । दुंदुभीन्समाघ्नंति वीणागाथिनो गायत इत्यादिकल्पसूत्रोक्तप्रयोगापेक्षिता यौवनशालिन इति । पुमान्स्त्रियेत्येकशेषः ॥ २२ ॥ २३ ॥ कर्मांतिकाः किंकराः अंतःपुराणि भरतादीनाम् ॥ २४ ॥ कांचनीं कांचनमयीं दीक्षायां दीक्षानिमित्तं कर्मणि ज्ञान् कर्मविषयज्ञानवत ऋषीन् । ज्ञो विद्वान्सोमज्ञेपि चेत्यमरः । न च पत्न्या अपि यजमानत्वाद्यज्ञस्वामित्वाच्च स्वामिनो यजमानस्य प्रतिनिधिप्रतिषेधात्कथं पत्न्याः प्रतिनिधिः स्वामिनोग्नेर्दैवतायाश्च शब्दात्कर्मणश्च प्रतिनिधिर्निवृत्त

तुष्टःपुष्टश्चसर्वोसौमानितश्चयथाविधि ॥ प्रतियास्यंतिधर्मज्ञशीघ्रमामंत्र्यतांजनः ॥ १८ ॥ शतंवाहसहस्राणांतंडुलानांवपुष्मताम् ॥ अयुतंतिलमुद्गस्यप्रयात्वग्रेमहाबल ॥ १९ ॥ चणकानांकुलित्थानांमाषाणांलवणस्यच ॥ अतोनुरूपंस्नेहंचगंधंसंक्षिप्तमेवच ॥ २० ॥ सुवर्णकोट्योबहुला हिरण्यस्यशतोत्तराः ॥ अग्रतोभरतःकृत्वागच्छत्वग्रेसमाधिना ॥२१॥ अंतरापणवीथ्यश्चसर्वेचनटनर्तकाः॥ सूदानार्यश्चबहवोनित्यंयौवनशालिनः ॥ २२ ॥ भरतेनतुसार्धंतेयांतुसैन्यानिचाग्रतः ॥ नैगमान्बालवृद्धांश्चद्विजांश्चसुसमाहिताः ॥२३॥ कर्मांतिकान्वर्धकिनःकोशाध्यक्षांश्चनैगमान् ॥ ममामातॄस्तथासर्वाःकुमारांतःपुराणिच ॥२४॥ कांचनींममपत्नींचदीक्षायांज्ञांश्चकर्मणि ॥ अग्रतोभरतःकृत्वागच्छत्वग्रेमहायशाः ॥ २५ ॥ उपकार्यांमहार्हांश्चपार्थिवानांमहौजसाम् ॥ सानुगानांनरश्रेष्ठव्यादिदेशमहाबलः ॥ २६ ॥ अन्नपानानिवस्त्राणिअनुगानांमहात्मनाम् ॥ भरतःसतदायातःशत्रुघ्नसहितस्तदा ॥ २७ ॥ वानराश्चमहात्मानःसुग्रीवसहितास्तदा ॥ विप्राणांप्रवराःसर्वेचक्रुश्चपरिवेषणम् ॥२८॥ विभीषणश्चरक्षोभिःस्त्रीभिश्चबहुभिर्वृतः ॥ ऋषीणामुग्रतपसांपूजांचक्रेमहात्मनाम् ॥२९॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे एकनवतितमः सर्गः ॥ ९१ ॥

तत्सर्वमखिलेनाशुप्रस्थाप्यभरताग्रजः ॥ हयंलक्षणसंपन्नंकृष्णसारंमुमोचह ॥ १ ॥

इत्यापस्तम्बसूत्रात् स्वामिनो यजमानस्य पत्न्या वा इति चेन्न । यस्य भार्यान्यदेशस्था नेष्यते पतिताथवा । अशक्ता प्रतिकूला वा तस्याः प्रतिनिधिक्रियेत्येवंविधे विषये प्रतिनि[illegible] । अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपासंत यावज्जीवमनुव्रताः । सौवर्णी वा षोडशपलैर्माषकैः षोडशैरपीति स्मृतेश्च । मृतायामपि भार्यायां वैदिकीं न त्यजेद्द्विजः । उपाधि[illegible]मे यावज्जीवं समापयेदिति विष्णुस्मृतेश्च । वस्तुतस्तु एषा सौवर्णी न प्रतिनिधिः देवताप्रतिमास्विव तत्त्वबुद्धिरेव न तु सादृश्यबुद्धिरत्रेति प्रतिनिधित्वाभावात् किं तु भगवत ऋषीणां चावाहनादिसामर्थ्यान्मन्त्रप्रभावकौशलेन च तत्त्वबुद्धेरेवोत्पादात् पत्नीकर्मनिर्वाहकत्वं च तत एव अत एव कांचनीं मम पत्नीमिति संगच्छते । एतेन काम्येष्वश्वमेधादिषु कथं प्रतिनिधिरिति परास्तमित्याहुः ॥ २५ ॥ उपका[illegible]र्याः स्थानानि ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥ धेरामानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकनवतितमः सर्गः ॥ ९१ ॥ अथाश्वमेधप्रवृत्तिः तत्सर्वमिति । यागोपकरणं सर्वमित्यर्थः ।

अखिलेनान्यूनतया जनेन वा कृष्णसारं कृष्णसारमृगसमानवर्णम् । यद्वा कृष्णवर्णं सर्वयज्ञपशुभ्यः सारभूतं चेत्यर्थः ॥ १ ॥ ऋत्विग्भिरीति । तं चतुःशता रक्षंति यज्ञस्या[torn]ाय । तथा शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्प्रोक्षतीति श्रुतेरिति भावः ॥ २ ॥ ३ ॥ उपहारानुपदाः ॥ ४ ॥ तेषामेव स्वरूपकथनमन्नेत्यादि । अथ राजसत्कारे भरतशत्रुघ्ननियोगःसुग्रीवादीनां [torn]णे विभीषणस्य ऋषिसत्कारे विनियोग इत्याह भरत इत्यादि ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ हयचर्या अश्वमेधयागानुष्ठानमित्यर्थ इति तीर्थकतकौ । हयमार्गगमनमित्यर्थमन्ये ॥ ९ ॥ यज्ञप्रवरमुत्त[torn]मानः ॥ इ[torn]शेषः । याचका यावत्तुष्यंति यावद्देहि देहीति शब्दादन्यः शब्दो नाभवत् ॥ १० ॥ ११ ॥ सर्वाणि दत्तानीत्यस्यैव प्रपंचो विविधानीति । यावदर्थिमुखाद्देहीति वचनं न निःसृतं भवति ॥ १२ ॥ ता[torn]ानसिद्धये [torn]दृश्यत ॥ १३ ॥ १४ ॥

ऋत्विग्भिर्लक्ष्मणंसार्धमश्वेचाविनियुज्यच ॥ ततोभ्यगच्छत्काकुत्स्थःसहसैन्येननमिषम् ॥ २ ॥ यज्ञवाटंमहाबाहुर्दृष्ट्वापरमकः । [torn]म् ॥ प्रहर्षमतुलं लेभेश्रीमानितिचसोत्रवीत् ॥ ३ ॥ नैमिषेवसतस्तस्यसर्वएवनराधिपाः ॥ आनिन्युरुपहारांश्चतान्रामःप्रत्यपूजयत् ॥ ४ ॥ [torn]न्नपानादिवस्त्राणिसर्वोपकरणानिच ॥ भरतःसहशत्रुघ्नोनियुक्तोराजपूजने ॥ ५ ॥ वानराश्चमहात्मानः सुग्रीवसहितास्तदा ॥ परिवेषणंचविप्राणांप्रयताःसंप्रचक्रिरे ॥ ६ ॥ विभीषणश्चरक्षोभिर्बहुभिःसुसमाहितः ॥ ऋषीणामुग्रतपसांकिंकरः समपद्यत ॥ ७ ॥ उपकार्यामहार्हाश्चपार्थिवानांमहात्मनाम् ॥ सानुगानांनरश्रेष्ठोव्यादिदेशमहाबलः ॥ ८ ॥ एवंसुविहितोयज्ञोह्यश्वमेधोह्यवर्तत ॥ लक्ष्मणेनसुगुप्तासाहयचर्याप्रवर्तत ॥ ९ ॥ ईदृशंराजसिंहस्ययज्ञप्रवरमुत्तमम् ॥ नान्यःशब्दोभवत्तत्रहयमेधेमहात्मनः ॥ १० ॥ छंदतोदेहिविस्रब्धोयावत्तुष्यंतियाचकाः ॥ तावत्सर्वाणिदत्तानिक्रतुमुख्येमहात्मनः ॥ ११ ॥ विविधानिचगौडानिखांडवानितथैवच ॥ ननिःसृतंभवत्योष्ठाद्वचनंयावदर्थिनाम् ॥ १२ ॥ तावद्वानररक्षोभिर्दत्तमेवाभ्यदृश्यत ॥ नकश्चिन्मलिनोवापिदीनोवाप्यथवाकृशः ॥ १३ ॥ तस्मिन्यज्ञवरेराज्ञोहृष्टपुष्टजनावृते ॥ येचतत्रमहात्मानोमुनयश्चिरजीविनः ॥ १४ ॥ नास्मरंस्तादृशंयज्ञंदानौघसमलंकृतम् ॥ यःकृत्यवान्सुवर्णेनसुवर्णंलभतेस्मसः ॥ १५ ॥ वित्तार्थीलभतेवित्तंरत्नार्थीरत्नमेवच ॥ हिरण्यानांसुवर्णानांरत्नानामथवाससाम् ॥ १६ ॥ अनिशंदीप्यमानानांराशिःसमुपदृश्यते ॥ नशक्रस्यनसोमस्ययमस्यवरुणस्यच ॥ १७ ॥ ईदृशोदृष्टपूर्वोनएवमूचुस्तपोधनाः ॥ सर्वत्रवानरास्तस्थुःसर्वत्रैवचराक्षसाः ॥ १८ ॥ वासोधनान्नकामेभ्यःपूर्णहस्तादुदुर्भृशम् ॥ ईदृशोराजसिंहस्ययज्ञःसर्वगुणान्वितः ॥ संवत्सरमथोसाग्रंवर्ततेनचहीयते ॥ १९ ॥ इत्यार्षे श्रीमद्रा०वाल्मी०आदि०उ०द्विनवतितमः सर्गः ॥ ९२ ॥

नास्मरंस्तादृशम् यज्ञम् । न चाप्यासीत्कदाचनेतिपाठे तादृशयज्ञ इतः पूर्वं नासीदित्याहुरिति शेषः ॥ १५ ॥ १६ ॥ उक्त एवार्थ आदराद्भ्यस्यते न शक्रस्येति ॥ १७ ॥ १८ ॥ वर्तते न च हीयते संवत्सरात्परमपीति शेषः । पुनःपुनरश्वमेधः प्रावर्ततेत्यर्थः । तावत्पर्यंतमेकाश्वमेधदीक्षेत्यन्ये ॥ १९ ॥ धूर्वमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे द्विनवतितमः सर्गः ॥ ९२ ॥

अथ यज्ञार्थमागतेन वाल्मीकिना कुशलवयो रामायणगाने नियोगः वर्तमाने इति । तथाभूते उक्तवंकोरे ॥ १ ॥ एकांते ऋषिवाटानामितिपाठे समीपे इति शेषः । ऋषिसंवात इतपाठ वाल्मीकिना सहागतो ऋषिसमूह इत्यर्थः । उटजानिति बहुवचनं बहुशिष्यत्वात ॥ २ ॥ शकटानन्नादिपूर्णान्फलमूलांश्च शोभनान् सर्वतो रुचिरे वाल्मीकिवाटेऽस्थापयन्नित्यर्थः । रुचिरोभूदिति शेषे इति कत कव्याख्यानुसारी पाठो मृग्यः क्वचित् । शकटैर्बहुभिः पूर्णैः फलमूलैश्च शोभनैः । वाल्मीकिवाटो रुचिरः शोभयन्निव सर्वत इतिपाठः स इत्यन्ये ॥ ३ ॥ शिष्यौ कुशलवौ ॥ ४ ॥ रथ्यासूपमार्गेषु ॥ ५ ॥ यत्र कर्म अश्वमेधयाग इत्यर्थः ॥ ६ ॥ अत्रास्मद्वाटसमीपपर्वताग्रे विद्यमानानि फलान्यास्वाद्य गायताम् । लोट्प्रथमपुरुषद्विवचनम् । यदायदा श्रमस्तदातदा भवंताविति शेषः ॥ ७ ॥ फलानि भुक्त्वा न

वर्तमानेतथाभूतेयज्ञेतुपरमाद्भुते ॥ सशिष्यआजगामाशुवाल्मीकिर्भगवानृषिः ॥ १ ॥ सदृष्ट्वादिव्यसंकाशंयज्ञमद्भुतदर्शनम् ॥ एकांतऋषिसंवातश्चकारउटजत्रशुभान् ॥ २ ॥ शकटांश्चबहून्पूर्णान्फलमूलांश्चशोभनान् ॥ वाल्मीकिवाटेरुचिरेस्थापयन्नविदूरतः ॥ ३ ॥ सशिष्यावब्रवीद्धृष्टोयुवांगत्वासमाहितौ ॥ कृत्स्नंरामायणंकाव्यंगायतांपरयामुदा ॥ ४ ॥ ऋषिवाटेषुपुण्येषुब्राह्मणावसथेषुच ॥ रथ्यासुराजमार्गेषुपार्थिवानांगृहेषुच ॥ ५ ॥ रामस्यभवनद्वारियत्रकर्मचकुर्वते ॥ ऋत्विजामग्रतश्चैवतत्रगेयंविशेषतः ॥ ६ ॥ इमानिचफलान्यत्रस्वादूनिविविधानिच ॥ जातानिपर्वताग्रेषुआस्वाद्यास्वाद्यगायताम् ॥ ७ ॥ नयास्यथःश्रमंवत्सौभक्षयित्वाफलान्यथ ॥ मूलानिचसुमृष्टानिनरागात्परिहास्यथः ॥ ८ ॥ यदिशब्दापयेद्रामःश्रवणायमहीपतिः ॥ ऋषीणामुपविष्टानांयथायोगंप्रवर्तताम् ॥ ९ ॥ दिवसेविंशतिःसर्गागेयामधुरयागिरा ॥ प्रमाणैर्बहुभिस्तत्रयथोद्दिष्टंमयापुरा ॥ १० ॥ लोभश्चापिनकर्तव्यःस्वल्पोपिधनवांछया ॥ किंधनेनाश्रमस्थानांफलमूलाशिनांसदा ॥ ११ ॥ यदिपृच्छेत्सकाकुत्स्थोयुवांकस्येतिदारकौ ॥ वाल्मीकेरथशिष्यौद्वौब्रूतमेवंनराधिपम् ॥ १२ ॥ इमास्तंत्रीःसुमधुराःस्थानंवाऽपूर्वदर्शनम् ॥ मूर्छयित्वासुमधुरंगायतांविगतज्वरौ ॥ १३ ॥ आदिप्रभृतिगेयंस्यान्नचावज्ञायपार्थिवम् ॥ पिताहिसर्वभूतानांराजाभवतिधर्मतः ॥ १४ ॥ तद्युवांहृष्टमनसौश्वःप्रभातेसमाहितौ ॥ गायतंमधुरंगेयंतंत्रीलयसमन्वितम् ॥ १५ ॥ इतिसंदिश्यबहुशोमुनिःप्राचेतसस्तदा ॥ वाल्मीकिःपरमोदारस्तूष्णीमासीन्महामुनिः ॥ १६ ॥ संदिष्टौमुनिनातेनताबुभौमैथिलीसुतौ ॥ तथैवकरवावेतिनिर्जग्मतुररिंदमौ ॥ १७ ॥

श्रमं यास्यथो नापि रागात् कंठमाधुर्यात्परिहास्यथः । नगराद्बहिरास्यथ इतिपाठे रात्रिकाले इति शेषः । उटजेष्वित्यर्थः । आस्यथः अवतिष्ठेताम् आसेरार्षे श्यन्परस्मैपदे ॥ [illegible] पयेदाह्वाययेत् ऋषीणामग्रे इति शेषः ॥ ९ ॥ दिवसे इति । तत्र रामायणे बहुभिः प्रमाणैर्नानासंख्यश्लोकैर्यथा पुरा मया सर्गादिष्टास्तेषु सर्गेषु दिवसे दिवसे विंशतिसर्गा गेयाः ॥ १० ॥ ११ [illegible] ल्मीकेः शिष्यौ स्व इत्येवमेव ब्रूतं नामुकदारकाविति ॥ १२ ॥ इमास्तंत्रीः वीणाशिरा इत्यर्थः । मधुरा मधुरशब्दाः अपूर्वदर्शनम् अपूर्वाणां स्वराणां दर्शनं यत्र तादृशं स्थानं षड्जादिस्वरभेदसि[illegible]दंडोपरिकल्पिताशिराधारकाष्ठपंक्तिरूपं तच्च मूर्छयित्वा तत्रापि नादव्याप्तिं कृत्वा सुमधुरं गायताम् ॥ १३ ॥ आदिप्रभृति संक्षेपमारभ्येत्यर्थः । पार्थिवं न चावज्ञाय स्थलांतर इव तत्समीपे लीलापरिहा[illegible]दिकं न कर्तव्यमित्यर्थः । तत्र हेतुः

पिता हीति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ भार्गवनीतिसंहितामश्विनाविव तौ तां वाणीं हृदये निवेश्य श्वो गातव्यमित्येवंरूपां गातुं समुत्सुकौ निशामृषिणा सहोषतुः ॥ १८ ॥ ईर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे त्रिननतितमः सर्गः॥९३॥ अथ रावनेण परिषदा सह रामायणश्रवणम् ताविति॥१॥ पूर्वाचार्यविनिर्मितां गायकानां गानसिद्धये पूर्वाचार्येण भरतेन निर्मितान् । पूर्वचर्या ततस्तत इतिपाठे ततस्ततोयोध्यावनादौ कृतं स्वकीयं पूर्वचरितमित्यर्थः । अपूर्वां प्रागश्रुताम् । पाठ्यजातिं पाठ्यस्य गेयस्य जातिं षड्जां [illegible] रूपामिति कतकः । पाठ्यजातमिति पठित्वा पाठ्यं नाम गानाधारस्य केवलवाक्यस्य स्वरूपोच्चारणमात्रमिति तीर्थ आह । गेयेन गानधर्मेण स्वरविशेषेण समलंकृतां प्रमाणैर्ध्वनिपारिच्छेदसाधनैर्द्रुतमध्यविलंबिताख्यैः [illegible] त्तिभिः प्रागुक्तस्थानैर्वा युक्तां तां गीतिं शुश्राव बालाभ्यां गीतां तां श्रुत्वा कौतूहलपरो विस्मयवानित्यर्थः ॥ २ ॥ ३ ॥ कर्मांतरे अश्वमेधप्रयोगाणां विरामकाले इत्यर्थः ॥ ४ ॥ स्वराणां षड्जादि[illegible]पवादर्भः उत्सुकान् रामायणश्रवणोत्सु

तामद्भुतांतौहृदयेकुमारौनिवेश्यवाणीमृषिभाषितांतदा ॥ समुत्सुकौतौसुखमूषतुर्निशांयथाश्विनौभार्गवनीतिसंहिताम् ॥ ९३ ॥ इत्यार्षे श्रीमद्रा० वाल्मी० आदिकाव्ये उत्तरकांडे त्रिनवतितमःसर्गः ॥ ९३ ॥ तौरजन्यांप्रभातायांस्नातौहुतहुताशनौ ॥ यथोक्तमृषिणापूर्वंसर्वं [illegible]गायताम् ॥१॥ तांसशुश्रावकाकुत्स्थःपूर्वाचार्यविनिर्मिताम् ॥ अपूर्वांपाठ्यजातिंचगेयेनसमलंकृताम् ॥२॥ प्रमाणैर्बहुभिर्बद्धांतंत्रीलयसमन्विताम् ॥ बालाभ्यांराघवःश्रुत्वाकौतूहलपरोभवत् ॥ ३ ॥ अथकर्मांतरेराजासमाहूयमहामुनीन् ॥ पार्थिवांश्चनरव्याघ्रः पंडितान्नैगमांस्तथा ॥ ४ ॥ पौराणिकान्शब्दविदोयेवृद्धाश्चद्विजातयः ॥ स्वराणांलक्षणज्ञांश्चउत्सुकान्द्विजसत्तमान् ॥ ५॥ लक्षणज्ञांश्चगांधर्वान्नैगमांश्चविशेषतः ॥ पादाक्षरसमासज्ञांश्छंदःसुपरिनिष्ठितान् ॥ ६ ॥ कलामात्राविशेषज्ञान्ज्योतिषेचपरंगतान् ॥ क्रियाकल्पविदश्चैवतथाकार्यविशारदान् ॥ ७ ॥ हेतूपचारकुशलान्हैतुकांश्चबहुश्रुतान् ॥ छंदोविदःपुराणज्ञान्वैदिकान्द्विजसत्तमान् ॥ ८ ॥ चित्रज्ञान्वृत्तसूत्रज्ञान्गीतनृत्यविशारदान्॥ एतान्सर्वान्समानीयगातारौसमवेशयत् ॥ ॥ ९ ॥ तेषांसंवदतांतत्रश्रोतॄणांहर्षवर्धनम् ॥ गेयंप्रचक्रतुस्तत्रतावुभौमुनिदारकौ ॥ १० ॥ ततःप्रवृत्तंमधुरंगांधर्वमतिमानुषम् ॥ नचतृप्तिंययुःसर्वेश्रोतारोगेयसंपदा ॥ ११ ॥ हृ[illegible]गणाःसर्वेपार्थिवाश्चमहौजसः ॥ पिबंतइवचक्षुर्भिःपश्यंतिस्मसुहुर्मुहुः ॥ १२ ॥ ऊचुःपरस्परंचेदंसर्वएवसमाहिताः ॥ उभौरामस्यसदृशौबि[illegible]प्रवोद्धृतौ ॥ १३ ॥

कान् ॥ ५ ॥ लक्षणज्ञान्सामुद्रिकलक्षणज्ञान् गांधर्वान्संगीतशास्त्रज्ञान् नैगमान्पौरान् पादाक्षराणां गुरुलघुप्रयोगलक्षणं समासं सम्बन्धं जानंति तान् छंदःसु वेदेषु गायत्र्यादिच्छंदःप्रतिपादकशास्त्रेषु ॥ ६ ॥ कलाः स्वरास्तेषां मात्रा एकद्वित्रिलक्षणास्तेषां विभागज्ञान् परंगतान् अंतर्ज्ञानवतः क्रियां तत्प्रतिपादकं कल्पसूत्रं च विदंति तान् कार्यविशारदान् आवापोद्धारादिकृत्यविशेषज्ञान् ॥७ ॥ हेतूपचारकुशलान्केवलव्यवहारकाले युक्तिप्रयोगसमर्थान् हैतुकान् तार्किकान् छंदो गायत्र्यादि वैदिकान् वैदिकपादादिलक्षणज्ञान् ॥ ८ ॥ चित्रज्ञान्गोमूत्रमुरजादिचित्रश्लोकनिबंधनचतुरान् वृत्तज्ञान् धर्मशास्त्रमुखेन सदाचारज्ञान् सूत्राणि पदवाक्यादिसूत्राणि तज्ज्ञान् एतानिति । एतेनाशेषविद्यास्थानं रामायणमिति दर्शितं समवेशयत्सर्वपरिषन्मध्ये गानायेति शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ बिंबाद्बिंबमिवोद्धृतौ बिंबांतरमिवोद्धृतौ ॥१३॥

जटिलौ: वल्कलधरौ यदि न स्यातां तदा राघवस्य गायतोश्च विशेषं नाधिगच्छाम इत्यूचुः ॥ १४ ॥ तत्र गेये नारददर्शितं पूर्वसर्गमादितः प्रवृत्तं कृत्वा ततःप्रभृति यावद्विंशतिसर्गानगायताम् अनेन प्रत्यहं सेक्षपरामायणमादितः कृत्वा यावद्रामायणसमाप्ति विंशतिसर्गाणां गानमिति तदर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ कुशीलवौ कुशलवौ विस्मितौ सकृदेव बहुदानतो विस्मयवंतौ ॥ १९ ॥ किमनेनेति क्षेपाशयमेव स्पष्टी कुरुतः वन्येनेति । निरतौ निरताहारौ नियताहाराविति यावत् । सुवर्णेन सुवर्णरूपेण हिरण्येन द्रव्येणेत्यर्थः ॥ २० ॥ २१ ॥ आगमं कुशलवयोस्तत्प्राप्तिकारणं तौ ताविति वीप्सा ॥ २२ ॥ प्रथमोदितस्तश्रुतविंशतिसर्गमध्ये श्रुतस्यव प्रमाणाद्यर्थस्यादराल्पश्ने पुनरताभ्यां प्रतिपादनं मुनिना च तदीयोत्तरत्वेन तत्प्रतिपादकग्रंथग्रथनं किं प्रमाणमित्यादि । महात्मनः कवेः का प्रतिष्ठा को विषय इत्यर्थः ।

हुते ॥

जटिलौयदिनस्यातांनवल्कल। २॥ ॥ विशेषंनाधिगच्छामोगायतोराघवस्यच ॥ १४ ॥ एवंप्रभापमाणेषुपौरजानपदेषुच ॥ प्रवृत्तमादितःपूर्वसर्गंनारददर्शितम् ॥ १५ ॥ ततःप्रभृतिसर्गांश्चयावद्विंशत्यगायताम् ॥ ततोपराह्णसमयेराघवःसमभाषत ॥ १६ ॥ श्रुत्वाविंशतिसर्गांस्तान्भ्रातरंभ्रातृवत्सलः ॥ अष्टादशसहस्राणिसुवर्णस्यमहात्मनोः ॥ १७ ॥ प्रयच्छशीघ्रंकाकुत्स्थयदन्यदभिकांक्षितम् ॥ ददौसशीघ्रंकाकुत्स्थोबालयोर्वैपृथक्पृथक् ॥ १८ ॥ दीयमानंसुवर्णंतुनागृह्णीतांकुशीलवौ ॥ ऊचतुश्चमहात्मानौकिमनेनेतिविस्मितौ ॥ १९ ॥ वन्येनफलमूलेननिरतौवनवासिनौ ॥ सुवर्णेनहिरण्येनकिंकरिष्यावहेवने ॥ २० ॥ तथातयोःप्रब्रुवतोःकौतूहलसमन्विताः ॥ श्रोतारश्चैवरामश्चसर्वएवसुविस्मिताः ॥ २१ ॥ तस्यचैवागमंरामःकाव्यस्यश्रोतुमुत्सुकः ॥ पप्रच्छतौमहातेजास्तावुभौमुनिदारकौ ॥ २२ ॥ किंप्रमाणमिदंकाव्यंकाप्रतिष्ठामहात्मनः ॥ कर्ताकाव्यस्यमहतःक्वचासौमुनिपुंगवः ॥ २३ ॥ पृच्छंतंराघवंवाक्यमूचतुर्मुनिदारकौ ॥ वाल्मीकिर्भगवान्कर्तासंप्राप्तोयज्ञसंविधम् ॥ येनेदंचरितंतुभ्यमशेषंसंप्रदर्शितम् ॥ २४ ॥ सन्निबद्धंहिश्लोकानांचतुर्विंशत्सहस्रकम् ॥ उपाख्यानशतंचैवभार्गवेणतपस्विना ॥ २५ ॥ आदिप्रभृतिवैराजन्पंचसर्गशतानिच ॥ कांडानिषट्कृतानीहसोत्तराणिमहात्मना ॥ २६ ॥

॥ १६ ॥

महात्मनोरितिपाठे महात्मनोर्भवतोः प्रतिष्ठा आश्रयः क इत्यर्थः । कर्ता काव्यस्येत्यत्र क इत्यनुकर्षः । क चासौ आस्ते इति शेषः ॥ २३ ॥ येन काव्येनाशेषमिदं तुभ्यं तद्दं ॥ [illegible]प्रदर्शित तस्य काव्यस्य कर्ता वाल्मीकिः क्वास्ते इत्यस्योत्तरं संप्राप्तो यज्ञसंविधम् । अनुस्वार आर्षः । यज्ञसदः सविधदेशं संप्राप्तस्तत्र तिष्ठतीति भावः । संविदमिति वा पाठ इति कश्चित् ॥ २४ ॥ [illegible]शत्सहस्रकमिति काव्यसंख्या उपाख्यानशतमिलोपाख्यानांतं भार्गवः कविः काव्यनिर्माणे तत्तुल्येनेत्यर्थः । यद्वा प्राचेतसत्वेनास्यापि भार्गवत्वं भृगोर्वरुणपुत्रत्वात् भृगोर्भ्राता भार्गव इत्यर्थ इत्यन्ये ॥ २५ ॥ यानि सोत्तराणि षट् कांडानीह कृतानि तत्सर्गसंख्या पंचशतानीति । उपलभ्यमानसर्गसंख्याधिक्यं तु केषांचिदेकैकस्य द्विसर्गत्वकरणेन लेखकप्रमादात् पंचसर्गशतानीति षट्कांडसंख्या चकारादुत्तरकांडसर्गसंख्यासमुच्चय इति कश्चित् ॥ २६ ॥

तव चरितमुद्दिश्यास्माकं गुरुणा कृतानि मतिष्ठा आजीवितमिति च्छेदः काव्यनायकस्य तव जीवितं यावद्यच्छुभाशुभं कर्म तस्य सर्वस्यात्र प्रतिष्ठानिबंधनं वर्तत इत्यर्थः ॥ २७ ॥ हे राजन्नस्य सर्वस्य श्रवणाय श्रवणं कर्तुं यदि बुद्धिः कृता तदा कर्मांतरे यागप्रयोगविरामसमये क्षणीभूतः सुखीभूतस्तच्छृणु ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ योगंमौनः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुर्नवतितमः सर्गः ॥ ९४ ॥ अथ सीतापरिग्रहेच्छया दूतमुखेन कर्तव्यांशप्रतिपादनं राम इति ॥ १ ॥ तस्मिन्गीते तस्मिन्नेव प्रबंधे सीताप्रसवोऽपत्यप्रतिपादककाव्यश्रवणेन कुशलवौ सीतापुत्राविति ज्ञात्वा न तु ततः पूर्वं कस्यचिन्मुखादित्यर्थः ॥ २ ॥ हे दूता इतो गच्छध्वं भगवतोंतिके गत्वा चैतन्मद्वचो ब्रूत ॥ ३ ॥ किं तदित्यत्राह यदीति । यदि मैथिली शुद्धसमाचारा अनुत्पन्नदोषा

कृतानिगुरुणास्माकमृषिणाचरितंतव ॥ प्रतिष्ठाजीवितंयावत्तावत्सर्वस्यवर्तते ॥ २७ ॥ यदिबुद्धिकृताराजञ्छ्रवणायम[राम अनेन] ॥ कर्मांतरेक्षणी भूतस्तच्छृणुष्वसहानुजः ॥ २८ ॥ बाढमित्यब्रवीद्रामस्तौचानुज्ञाप्यराघवौ ॥ प्रहृष्टौजग्मतुःस्थानेयत्रास्तेमुनिपुंगवः[गदभीतेन] ९ ॥ रामोपिमु निभिःसार्धंपार्थिवैश्चमहात्मभिः ॥ श्रुत्वातद्गीतिमाधुर्यंकर्मशालामुपागमत् ॥ ३० ॥ शुश्रावतत्तालयोपपन्नंसर्गान्वितंसस्वरशब्दयुक्तम् ॥ तंत्री लयव्यंजनयोगयुक्तंकुशीलवाभ्यांपरिगीयमानम् ॥ ३१ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुर्नवतितमःसर्गः ॥ ९४ ॥ रामोबहून्यहान्येवतद्गीतंपरमंशुभम् ॥ शुश्रावमुनिभिःसार्धंपार्थिवैःसहवानरैः ॥ १ ॥ तस्मिन्गीतेतुविज्ञायसीतापुत्रौकुशीलवौ ॥ तस्याःपरिषदो मध्येरामोवचनमब्रवीत् ॥ २ ॥ दूतान्शुद्धसमाचारानाहूयात्ममनीषया ॥ मद्वचोब्रूतगच्छध्वमितोभगवतोंतिके ॥ ३ ॥ यदिशुद्धसमाचाराय दिवावीतकल्मषा ॥ करोत्विहात्मनःशुद्धिमनुमान्यमहामुनिम् ॥ ४ ॥ छंदंमुनेश्चविज्ञायसीतायाश्चमनोगतम् ॥ प्रत्ययंदातुकामायास्ततःशं सतमेलघु ॥ ५ ॥ श्वःप्रभातेतुशपथंमैथिलीजनकात्मजा ॥ करोतुपरिषन्मध्येशोधनार्थंममैवच ॥ ६ ॥ कृत्वातुराघवस्यैतद्वचःपरममद्भुतम् ॥ दूताःसंप्रययुर्वाटंयत्रवैमुनिपुंगवः ॥ ७ ॥ तेप्रणम्यमहात्मानंज्वलंतममितप्रभम् ॥ ऊचुस्तेरामवाक्यानिमृदूनिमधुराणिच ॥ ८ ॥ तेषांतद्भाषि तंश्रुत्वारामस्यचमनोगतम् ॥ [illegible] ॥महातेजामुनिर्वाक्यमथाब्रवीत् ॥ ९ ॥ एवंभवतुभद्रंवोयथावदतिराघवः ॥ तथाकरिष्यतेसीतादैवतंहिपतिः स्त्रियः ॥ १० ॥ तथोक्तामुनिना[illegible]तामहौजसः ॥ प्रत्येत्यराघवंसर्वेमुनिवाक्यंबभाषिरे ॥ ११ ॥ ततःप्रहृष्टःकाकुत्स्थःश्रुत्वावाक्यंमहात्मनः ॥ ऋषींस्तत्रसमेतांश्चराज्ञश्चैवाभ्यभाषत ॥ १२ ॥ भगवंतःसशिष्यावैसानुगाश्चनराधिपाः ॥ पश्यंतुसीताशपथंयश्चैवान्योपिकांक्षते ॥ १३ ॥

यदिवेति तपोवनवासेन विनष्टदोषा वेत्यर्थः । महामुनिमनुमान्य तदनुमतिं गृहीत्वेत्यर्थः ॥ ४ ॥ छंदमभिप्रायं प्रत्ययं दातुकामाया मनोगतं प्रत्ययदानं यदि तदा तद्विज्ञाय ततो लघु शीघ्रं मे शंसत ॥ ५ ॥ यद्यपि सीताशुद्धिर्लंकायां ज्ञातपूर्वा तथापीदानीं प्राप्तापवादमार्जनेन सर्वलोकपुरतो ममैव स्त्रीसौंदर्यलुब्ध इति कलंकशोधनार्थं शुद्ध्यापि तया पुनः शपथः कार्य इत्याह श्वःप्रभात इति ॥ ६ ॥ ७ ॥ मृदूनि अपरुषाणि मधुराणि मधुराक्षराणि ॥ ८ ॥ ९ ॥ १० ॥ तथोक्ताः सीता तथैव करिष्यते इत्युक्ताः ॥ ११ ॥ १२ ॥ यश्चान्योपि सीतायां दोषारोपकर्ता योपि शपथमाकांक्षते सोपि पश्यत्वित्यर्थः ॥ १३ ॥

इत्यर्थः

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ क्षुपंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे पंचनवतितमः सर्गः ॥ ९५ ॥ अथ सम्मिलितनानादेशीयपरिष न्मध्ये सीतया सह वाल्मीकिरागत्य तत्त्वभूतार्थमत्यभिज्ञापनं करोति तस्यामिति । शब्दापयति आह्वयति स्म ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अश्मभूतमिवाचलं पर्वतवन्निश्चलं [...]येव ।



तस्यतद्वचनंश्रुत्वाराघवस्यमहात्मनः ॥ सर्वेषामृपिमुख्यानांसाधुवादोमहानभूत् ॥ १४ ॥ राजानश्चमहात्मानःप्रशंसंतिस्मराघवम् ॥ उपपन्नं नरश्रेष्ठत्वय्येवभुवि[ना]न्यतः ॥ १५ ॥ एवंविनिश्चयंकृत्वाश्वोभूतइतिराघवः ॥ विसर्जयामासतदासर्वांस्ताञ्छत्रुसूदनः ॥ १६ ॥ इतिसंप्रविचार्य राजसिंहःश्वोभूतेशपथस्यनिश्च[यं] ॥ [वि]विससर्जमुनीनृपांश्चसर्वान्समहात्मामहतोमहानुभावः ॥ १७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदि काव्ये उत्तरकांडे पंचनवतितमः [सर्गः] ॥ ९५ ॥ तस्यांरजन्यांव्युष्टायांयज्ञवाटंगतोनृपः ॥ ऋषीन्सर्वान्महातेजाःशब्दापयतिराघवः ॥ १ ॥ वसिष्ठोवामदेवश्चजावालिरथकाश्यपः ॥ विश्वामित्रोदीर्घतमादुर्वासाश्चमहातपाः ॥ २ ॥ पुलस्त्योपितथाशक्तिर्भार्गवश्चैववामनः ॥ मार्कंडेयश्चदी र्घायुर्मौद्गल्यश्चमहायशाः ॥ ३ ॥ गर्गश्चच्यवनश्चैवशतानंदश्चधर्मवित् ॥ भरद्वाजश्चतेजस्वीअग्निपुत्रश्चसुप्रभः ॥ ४ ॥ नारदःपर्वतश्चैवगौतम श्चमहायशाः ॥ एतेचान्येचवहवोमुनयःसंशितव्रताः ॥ ५ ॥ कौतूहलसमाविष्टाःसर्वएवसमागताः ॥ राक्षसाश्चमहावीर्यावानराश्चमहावलाः ॥ ६ ॥ सर्वएवसमाजग्मुर्महात्मानःकुतूहलात् ॥ क्षत्रियायेचशूद्राश्चवैश्याश्चैवसहस्रशः ॥ ७ ॥ नानादेशगताश्चैवब्राह्मणाःसंशितव्रताः ॥ सीताशपथवी क्षार्थंसर्वएवसमागताः ॥ ॥ ८ ॥ तदासमागतंसर्वमश्मभूतमिवाचलम् ॥ श्रुत्वामुनिवरस्तूर्णंससीतःसमुपागमत् ॥ ९ ॥ तमृषिंपृष्ठतः सीता अन्वगच्छदवाङ्मुखी ॥ कृतांजलिर्बाष्पकलाकृत्वारामंमनोगतम् ॥ १० ॥ तांदृष्ट्वाश्रुतिमायांतींब्रह्माणमनुगामिनीम् ॥ वाल्मीकेःपृष्ठतःसीतां साधुवादोमहानभूत् ॥ ११ ॥ ततोहलहलाशब्दःसर्वेषामेवमावभौ ॥ दुःखजन्मविशालेनशोकेनाकुलितात्मनाम् ॥१२॥ सा[धु रामे]तिकेचित्तुसाधु सीतेतिचापरे ॥ उभावेवचतत्रान्येप्रेक्षकाःसंप्रचुक्रुशुः ॥ १३ ॥ ततोमध्येजनौघस्यप्रविश्यमुनिपुंगवः ॥ सीतासहायोव[ल्मी]करितिहोवाचराघ वम् ॥ १४ ॥ इयंदाशरथेःसीतासुव्रताधर्मचारिणी ॥ अपवादात्परित्यक्तामामाश्रमसमीपतः ॥ १५ ॥ लोकापवाद[भीतस्य] [...]तवराममहाव्रत ॥ प्रत्ययंदास्यतेसीतातामनुज्ञातुमर्हसि ॥ १६ ॥

कौतुकदर्शनार्थमिति श्रुत्वा ॥ ९ ॥ १० ॥ ब्रह्माणमनुगामिनीं श्रुतिमिव वाल्मीकेः पृष्ठतस्तां सीतामायांतीं दृष्ट्वा अनयोपमया सीतायाः श्रुतेश्च सकलदोषराहित्येन प्रमाणत्वं दर्शितम् ॥ ११ ॥ एवं वक्ष्यमाणप्रकारेण दुःखजन्मना दुःखोत्पत्त्या विशालेन विस्तीर्णेन शोकेनाकुलात्मनां क्षुब्धांतःकरणानाम् ॥ १२ ॥ उभौ सीतारामौ साध्विति प्रचुक्रुशुः ॥ १३ ॥ १४ ॥ अपवादैर्हेतुभिर्ममाश्रमसमीपे त्यक्ता

इयं तव प्रत्ययं दास्यते तदनुज्ञातुमर्हसि ॥ १५ ॥ १६ ॥ यमजातकौ यमलतयोत्पन्नौ यथाहं प्रचेतसो दशम औरसः पुत्रो । यद्वा प्रचेतसो दशमः संतानपरंपरया पुत्रोऽपत्यमतोहमनृतं वाक्यं मनसापि न स्मरामि कथनं तु दूरे अत इमौ तव पुत्रकाविति मद्वाक्यं सत्यमेव जानीहीति शेषः ॥ १७ ॥ १८ ॥ अथ सीताचारित्रं प्रति मुनिना शपथकरणम् । बहुवर्षेति । यदि मैथिली दुष्टा तदा तपसः फलमहं न प्राप्नुयाम् ॥ १९ ॥ मन आदिना मम किल्बिषं न भूतपूर्वं मया किंचिदपि न कृतमित्यर्थः । यद्यपापा मैथिली तदा तस्य किल्बिषानाचरणस्य फलमश्नामि अश्नीयाम् अनेन संकल्पपूर्वनिषिद्धत्यागोपि धर्मायेति सूचितम् ॥ २० ॥ पंचसु भूतेषु श्रोत्रादिपंचेंद्रियेषु जग्राह गृहीतवान् ॥ २१ ॥ २२ ॥ दिव्येन दृष्टिविषयेण दिव्यज्ञानेन तव शुद्धा विदितापि त्वया लोकापवादभीतेन त्यक्तेत्यन्वयः ॥ २३ ॥

इमौतुजानकीपुत्रावुभौचयमजातकौ ॥ सुतौतवैवदुर्धर्षौसत्यमेतद्ब्रवीमिते ॥ १७ ॥ प्रचेतसोहंदशमःपुत्रोराघवनंदन ॥ नर[illegible]ाम्यनृतंवाक्यमिमौ तुतवपुत्रकौ ॥ १८ ॥ बहुवर्षसहस्राणितपश्चर्यामयाकृता ॥ नोपाश्नीयांफलंतस्यादुष्टेयंयदिमैथिली ॥१९॥ मनसाकर्मणावाचाभूतपूर्वंनकिल्बिषम् ॥ तस्याहंफलमश्नामिअपापामैथिलीयदि ॥ २० ॥ अहंपंचसुभूतेषुमनःषष्ठेषुराघव ॥ विचिंत्यसीताशुद्धेतिजग्राहवननिर्झरे ॥ २१ ॥ इयंशुद्धसमाचाराअपापापतिदेवता ॥ लोकापवादभीतस्यप्रत्ययंतवदास्यति ॥ २२ ॥ तस्मादियंनरवरात्मजशुद्धभावादिव्येनदृष्टिविषयेणमयाप्रदिष्टा ॥ लोकापवादकलुषीकृतचेतसायात्यक्तात्वयाप्रियतमाविदितापिशुद्धा ॥ २३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे षण्णवतितमः सर्गः ॥ ९६ ॥ वाल्मीकिनैवमुक्तस्तुराघवःप्रत्यभाषत ॥ प्रांजलिर्जगतोमध्येदृष्ट्वातांवरवर्णिनीम् ॥ १ ॥ एवमेतन्महाभागयथावदसिधर्मवित् ॥ प्रत्ययस्तुममब्रह्मंस्तववाक्यैरकल्मषैः ॥ २ ॥ प्रत्ययश्चपुरावृत्तोवैदेह्याःसुरसन्निधौ ॥ शपथश्चकृतस्तत्रतेनवेश्मप्रवेशिता ॥ ३ ॥ लोकापवादोवलवान्येनत्यक्ताहिमैथिली ॥ सेयंलोकभयाद्ब्रह्मन्नपापेत्यभिजानता ॥ परित्यक्तामयासीतातद्भवान्क्षंतुमर्हति ॥ ४ ॥ जानामिचेमौपुत्रौमेयमजातौकुश[illegible] ॥ शुद्धायांजगतीमध्येमैथिल्यांप्रीतिरस्तुमे ॥ ५ ॥ अभिप्रायंतुविज्ञायरामस्यसुरसत्तमाः ॥ सीतायाःशपथेतस्मिन्सर्वएवसमागताः [illegible] पितामहंपुरस्कृत्यसर्वएवसमागताः ॥ आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ ७ ॥

लंबमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे षण्णवतितमः सर्गः ॥ ९६ ॥ अथ सीतायाः शपथपूर्वं भूमिप्रवेशः वाल्मीकिनेति । एवमुक्तस्तव प्रत्ययं दास्यतीत्युक्तः ॥ १ ॥ एवमेतद्यद्यपि लंकायां सुरासुरसन्निधौ प्रत्ययो दत्तस्तव वाक्यैश्च शपथरूपैर्मम प्रत्ययो जात एव तथापि हे महाभाग ब्रह्मन् त्वं यथा वदसि तदेवमेव प्रत्ययं करोत्वित्यर्थः ॥ २ ॥ ॥ ३ ॥ किमर्थं तर्हि पुनः प्रत्ययकरणं तत्राह लोकेति । येन लोकापवादेन जानकी त्यक्ता स स लोकापवादो बलवान् अतस्तन्निवृत्तये पुनः प्रत्ययकरणमिति भावः । तत्रापि लोकवदेवास्यां शंकास्ति किं तत्र नेत्याह सेयमिति । अपापेत्यभिजानतापि मया लोकभयात्त्यक्ता ॥ ४ ॥ इमौ मे पुत्राविति च जानामि अथापि जगतो मध्ये शुद्धायामेव मैथिल्यां मे प्रीतिरस्तु ॥ ५ ॥ सीतायाः शपथे शपथप्रसंगे इत्यर्थः

॥ ६ ॥ ७ ॥ ८ ॥९॥ शुद्धायामिति । अस्य तथापीत्यादिः सीताशपथे तद्दर्शने संभ्रांता आद्दता इत्यर्थः ॥ १० ॥ शुभपुण्यशब्दौ शैत्यमांद्योपलक्षणौ दिव्यगंधः सन्निहितसर्वदेवशरीरवर्तिदिव्यचंदनमाल्य गंधः सुरश्रेष्ठः सर्वपुण्यपापसाक्षी ॥ ११ ॥ तदद्भुतं दिव्यगंधवायुवहनं सर्वराष्ट्रेभ्य आगता मानवा निरैक्षंत पूर्वं यथा कृतयुगे दिव्यगंधवायुस्पर्शनं तथा त्रेतायामप्यभूदित्यर्थः । रामसान्निध्यादनाश्चर्यमपि साधारणदृष्टयाश्चर्यमितीवशब्दः ॥ १२ ॥ ततः सीता चतुर्दशभुवनस्थजनानेकत्र मिलितान् दृष्ट्वा अपवादपरिहाराय शपथव्याजेन स्वपदं प्रवेष्टुकामाह सर्वानिति । काषायवासिनी तपस्युचितवासोधारिणी पातिव्रत्योचिताधोदृष्टिर्विवरयाचनाय महीनिरीक्षणार्थं च अत एवावाङ्मुखी ॥ १३॥ यथाहं राघवादन्यं मनसापि न चिंतये न चिंतयामीति सत्यं तथा सत्येन चिरकालवियोगेपि पातिव्रत्यपरिपालनक्लेशखिन्नायास्त जनितपरमदुःखसमाप्तये पुनरपि भुवं प्रवेष्टुं माधवी देवी माधवपत्नी भूदेवी विवरं रंध्रं दातुमर्हति एवमग्रेपि व्याख्येयम् ॥ १४ ॥ १५ ॥ अयं स्वपदप्रवेशोद्योगः सीताया भृगुप्रार्थनयोपेंद्रावतारे मानुषे

साध्याश्चदेवाःसर्वेतेसर्वेचपरमर्षयः ॥ नागाःसुपर्णाःसिद्धाश्चतेसर्वेहृष्टमानसाः ॥ ८ ॥ दृष्ट्वादेवानृषींश्चैवराघवःपुनरब्रवीत् ॥ प्रत्ययोमेनरश्रेष्ठऋषिवाक्यैरकल्मषैः ॥ ९ ॥ शुद्धायांजगतोमध्येवैदेह्यांप्रीतिरस्तुमे ॥ सीताशपथसंभ्रांताःसर्वएवसमागताः ॥ १० ॥ ततोवायुःशुभःपुण्योदिव्यगंधोमनोरमः ॥ तंजनौघंसुरश्रेष्ठोह्लादयामाससर्वतः ॥ ११ ॥ तदद्भुतमिवाचिंत्यंनिरैक्षंतसमाहिताः ॥ मानवाःसर्वराष्ट्रेभ्यःपूर्वंकृतयुगेयथा ॥ १२ ॥ सर्वान्समागतान्दृष्ट्वासीताकाषायवासिनी ॥ अब्रवीत्प्रांजलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥ १३ ॥ यथाहंराघवादन्यंमनसापिनचिंतये ॥ तथामेमाधवीदेवीविवरंदातुमर्हति ॥ १४ ॥ मनसाकर्मणावाचायथारामंसमर्चये ॥ तथामेमाधवीदेवीविवरंदातुमर्हति ॥ १५ ॥ यथैतत्सत्यमुक्तंमेवेद्मिरामात्परंनच ॥ तथामेमाधवीदेवीविवरंदातुमर्हति ॥ १६ ॥ तथाशपंत्यांवैदेह्यांप्रादुरासीत्तदद्भुतम् ॥ भूतलादुत्थितंदिव्यंसिंहासनमनुत्तमम् ॥ १७ ॥ ध्रियमाणंशिरोभिस्तुनागैरमितविक्रमैः ॥ दिव्यंदिव्येनवपुषादिव्यरत्नविभूषितैः ॥ १८ ॥

लोकंगीकृतपत्नीवियोगस्य प्रागुक्तास्मद्वीत्यांगीकृततदर्थवाल्मीकिशापस्य च रामस्याभिप्रायज्ञानादेव वाल्मीक्याश्रमगमनवदिति न रामप्रातिकूल्याचरणप्रसक्तिः सीताया इति बोध्यम् । अनंतरं रामस्य भूमिनाशपर्यंतं कोपोदयस्तु मनुष्यावतारनटनमात्रमित्यदोषः ॥ १६ ॥ शपंत्याम् एवं त्रिः शपंत्यां तदनिर्वाच्यमद्भुतं प्रादुरासीत् । किं तदद्भुतं तत्राह भूतलादुत्थितं नागैस्तक्षकादिभिः शिरोभिर्ध्रियमाणं सिंहासनमदृश्यतेति शेषः । दिव्येन वपुषा अमानुषरचनाविशेषेणोपलक्षितम् दिव्यरत्नभूषितैरनेकैरित्यर्थः । पाद्मे तु । नानारत्नमयं पीठं पृष्ठे कृत्वा खगेश्वरः रसातलादाविरभूद्विस्मयं जनयन्नृणाम् । तस्मिन्पीठे महादेवीं हस्ताभ्यां गृह्य मैथिलीम् । स्वागतेनाभिनंद्येमां सन्निवेश्य तिरोदधे ॥ सा च दिव्याप्सरोभिस्तु पूज्यमाना सनातनी । वैनतेयं समारुह्य अर्चिरादिपथाद्रमा ॥ दासीगणैः पूर्वभवैः संवृता जगदीश्वरी । संप्राप्ता परमं धाम योगिगम्यं सनातनम् । रसातलप्रविष्टां तां दृष्ट्वा सर्वे प्रचुक्रुशुरित्युक्तम् ॥ नागैर्ध्रियमाणं प्रादुर्भूतं दृष्ट्वा दिव्येन वपुषा गरुडो जग्राहेति शेषो बोध्यः । रसातलं प्रविशंतीमित्यस्य अदृश्यायां जायमानायामि

स्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ दिव्या स्वर्गभवा अतः परं भगवतोप्यागमनं शीघ्रमिति संतोषेण पुष्पवृष्टिः ॥ २० ॥ २१ ॥ २२ ॥ विस्मयादाश्चर्यमूकाभिवंदनव्यवहारान्नोपरेमिरे नोपरता बभूवुः ॥ २३ सर्वे स्थावरजंगमाश्चेतनाचेतनाः तत्राचेतना अपि सचेतना भूत्वा सीताया अयशो गतमिति संहृष्टा बभूवुः ॥ २४ ॥ अचेतसो विसंज्ञाः ॥ २५ ॥ सीताप्रवेशनं दृष्ट्वा तेषां मुन्यादीनां समागमः सम्बन्ध आसीत् हर्षादिभिरिति शेषः । यदेवं तस्मात्समं सर्वं जगत् मुहूर्तमत्यर्थं सम्मोहितमिव सम्मोहितमेवाभूत् ॥ २६ ॥ तैरुमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तनवतितमः सर्गः ॥ ९७ ॥ अथ रामस्य सीतांतर्धानजं क्रोधं भगवांस्तत्त्वबोधनेन शमयति रसातलमिति । साधु साध्वीति दीर्घ आर्षः ॥ १ ॥ दंडरूपं काष्ठं दंडकाष्ठं दीक्षितेन सोमक्रयपर्यंतं

तस्मिंस्तुधरणीदेवीबाहुभ्यांगृह्यमैथिलीम् ॥ स्वागतेनाभिनंद्यैनामासनेचोपवेशयत् ॥ १९ ॥ तामासनगतांदृष्ट्वाप्रविशंतींरसातलम् ॥ पुष्पवृष्टिरविच्छिन्नादिव्यासीतामवाकिरत् ॥ २० ॥ साधुकारश्चसुमहान्देवानांसहसोत्थितः ॥ साधुसाध्वितिवैसीतेयस्यास्तेशीलमीदृशम् ॥ २१ ॥ एवंबहुविधावाचोह्यंतरिक्षगताःसुराः ॥ व्याजहुर्हृष्टमनसोदृष्ट्वासीताप्रवेशनम् ॥ २२ ॥ यज्ञवाटगताश्चापिमुनयःसर्वएवते ॥ राजानश्चनरव्याघ्राविस्मयान्नोपरेमिरे ॥ २३ ॥ अंतरिक्षेचभूमौचसर्वेस्थावरजंगमाः ॥ दानवाश्चमहाकायाःपातालेपन्नगाधिपाः ॥ २४ ॥ केचिद्विनेदुःसंहृष्टाःकेचिद्ध्यानपरायणाः ॥ केचिद्रामंनिरीक्षंतेकेचित्सीतामचेतसः ॥२५॥ सीताप्रवेशनंदृष्ट्वातेषामासीत्समागमः ॥ तन्मुहूर्तमिवात्यर्थंसमंसंमोहितंजगत् ॥ २६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तनवतितमः सर्गः ॥ ९७ ॥ रसातलंप्रविष्टायांवैदेह्यांसर्ववानराः ॥ चुक्रुशुःसाधुसाध्वीतिमुनयोरामसन्निधौ ॥ १ ॥ दंडकाष्ठमवष्टभ्यवाष्पव्याकुलितेक्षणः ॥ अवाक्शिरादीनमनारामोह्यासीत्सुदुःखितः ॥२॥ सरुदित्वाचिरंकालंबहुशोवाष्पमुत्सृजन् ॥ क्रोधशोकसमाविष्टोरामोवचनमब्रवीत् ॥३॥ अभूतपूर्वंशोकंमेमनःस्प्रष्टुमिवेच्छति ॥ पश्यतोमेयथानष्टासीताश्रीरिवरूपिणी ॥४॥ साऽदर्शनंपुरासीतालंकांपारेमहोदधेः ॥ ततश्चापिमयानीताकिंपुनर्वसुधातलात् ॥ ५ ॥ वसुधेदेविभवतिसीतानिर्यात्यतांमम ॥ दर्शयिष्यामिवारोषंयथामामवगच्छसि ॥ ६ ॥ कामंश्वश्रूर्ममैवत्वंत्वत्सकाशात्तुमैथिली ॥ कर्षताफालहस्तेनजनकेनोद्धृतापुरा ॥ ७ ॥ तस्मान्निर्यात्यतांसीताविवरंवाप्रयच्छमे ॥ पातालेनाकपृ[illegible]सहितस्तया ॥ ८ ॥ आनयत्वंहितांसीतांमत्तोहंमैथिलीकृते ॥ नमेदास्यसिचेत्सीतांयथारूपांमहीतले॥९॥ सपर्वतवनांकृत्स्नांव्यथयिष्य[illegible]यतिम् ॥ नाशयिष्याम्यहंभूमिंसर्वमापोभवंत्विह॥१०॥एवंब्रुवाणेकाकुत्स्थेक्रोधशोकसमन्विते॥ ब्रह्मासुरगणैःसार्धमुवाचरघुनंदनम् ॥ ११ ॥ रामरामनसंतापंकर्तुमर्हसिसुव्रत ॥ स्मरत्वंपूर्वकंभावंमंत्रंचामित्रकर्शन ॥ १२ ॥

धारणीयमौदुंबरं दंडमवष्टभ्येत्यर्थः । एतदवष्टंभः शोकग्लानिवशात् ॥ २ ॥ ३ ॥ पूर्वं रावणेनासन्निधौ सीता नष्टा नाशमदर्शनं प्रापिता संप्रति तु पश्यतो मे पश्यंतं मामनादृत्य रूपिणी श्रीरिव सीता नष्टाऽदर्शनं प्रापिता यथा यतोतो मे मनः अभूतपूर्वं शोकं स्प्रष्टुमिवेच्छति ॥ ४ ॥ महोदधेः पारे लंकां गता सा सीताऽदर्शनं प्राप्ता ततः लंकातः ॥ ५ ॥ यथामामवगच्छसि मद्बलं वराहावतारादौ त्वमेव ज्ञातासीत्यर्थः ॥ ६ ॥ ७ ॥ विवरं वा प्रयच्छ प्रविश्य तया सह स्थातुमिति भावः ॥८॥ अहं मैथिलीकृते मत्तः प्राप्तमोह इत्यर्थः । महीतले प्रविष्टामिति शेषः ॥ ९ ॥ १० ॥ ११ ॥ ननु कथमिदानीं

संतापापगम इति चेत्तस्य स्वतत्त्वाज्ञाननटनादिमूलकत्वात् । स्वतत्त्वस्मरणनटनमेव कुर्वित्याह स्मर त्वं पूर्वकं भावमिति । वैष्णवमित्यर्थः । आत्मानं चेद्विजानीयादयमस्मीति पुरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेदितिश्रुतेः । मन्त्रं देवैः सहावतारसमये कृतं मानुषभावमूलरावणवधाश्वमेधयागांतसर्वकृत्यानां निर्वृत्तत्वेनेदानीं तत्त्वावरणनाटनेन फलाभाव इति भावः ॥ १२ ॥ ननु किं मां त्वं स्मारयसीत्यत्राह नेति । विस्मृततत्त्वमिव स्मरणं कुर्विति न प्रार्थयामि किंतु इमं मुहूर्तमस्मिन्काले हे दुर्धर्ष वैष्णवमात्मानम् इह जन्म प्राप्तवंतं स्मर ध्यानेन पश्येत्यर्थः । एतावत्पर्यंतं कार्यनिर्वाहाय मनुष्योहमिति ध्यानेन तथाभावं नाटितवानपि इदानीं तत्त्यजेत्यर्थः । तं खलु त्वामितिपाठे अनुत्तमं समाभ्यधिकरहितं ब्रह्मस्वरूपं तमुपनिषत्प्रसिद्धं स्मारयेयं स्मरणाय प्रार्थये । किं स्मर्तव्यत्वेन प्रार्थयसीत्यत्राह इममिति । पूर्ववदेवार्थः । भृंगकीटन्यायेन तद्ध्या[illegible]तस्तद्भावनाटनमि[illegible] । भगवतो रामस्य तथा नाटनाद्ब्रह्मापि स्मारयेयमित्यादि प्रयुक्तवानितिध्येयं नत्वेतावता भगवतो वस्तुतस्तद्भावप्राप्तिरिति ध्येयम् ॥ १३ ॥ मामाश्रिता सीता एवं गतेत्यपि न शोकः [illegible] सीतेति । विमला स्वत एव सर्वावद्यशून्या वस्तुतस्तस्यास्त्वदभिन्नत्वादिति भावः । तव पूर्वपरायणा तव प्रकृतिप्राप्तिसमुत्सुका त्वदाश्रयस्त्वदाश्रयण तद्रूपतपोबलात् नागलोकगमनव्याजेन नाग[illegible]लोकं सुखं प्रायात् । तपःपूर्वपरायणेतिपाठे पूर्वं वेदवतीदेहेनुष्ठिततपःशेषानुष्ठानपरायणेत्यर्थ इति कतकः । तदनुष्ठानं रावणवधादिरूपमेवेति भाति ॥

नखलुत्वांमहाबाहोस्मारयेयमनुत्तमम् ॥ इमंमुहूर्तंदुर्धर्षस्मरत्वंजन्मवैष्णवम् ॥ १३ ॥ सीताहिविमलासाध्वीतवपूर्वपरायणा ॥ नागलोकंसुखंप्रायात्त्वदाश्रयतपोबलात् ॥ १४ ॥ स्वर्गेतेसंगमोभूयोभविष्यतिनसंशयः ॥ अस्यास्तुपरिषन्मध्येयद्ब्रवीमिनिबोधतत् ॥ १५॥ एतदेवहिकाव्यंतेकाव्यानामुत्तमंश्रुतम् ॥ सर्वंविस्तरतोरामव्याख्यास्यतिनसंशयः ॥ १६ ॥ जन्मप्रभृतितेवीरसुखदुःखोपसेवनम् ॥ भविष्यदुत्तरंचेहसर्वंवाल्मीकिनाकृतम् ॥१७॥ आदिकाव्यमिदंरामत्वयिसर्वंप्रतिष्ठितम् ॥ नह्यन्योर्हतिकाव्यानांयशोभाग्राघवादृते ॥१८॥ श्रुतंतेपूर्वमेतद्धिमयासर्वंसुरैःसह ॥ दिव्यमद्भुतर[illegible]पंचसत्यवाक्यमनावृतम् ॥१९॥सत्वंपुरुषशार्दूलधर्मेणसुसमाहितः॥ शेषंभविष्यंकाकुत्स्थकाव्यंरामायणंशृणु॥२०॥उत्तरंनामकाव्यस्यशेषमत्रमहायशः ॥ तच्छृणुष्वमहातेजऋषिभिःसार्धमुत्तमम्॥२१॥नखल्वन्येनकाकुत्स्थश्रोतव्यमिदमुत्तमम्॥परमऋषिणावीरत्वयैवरघुनंदन॥२२॥

॥ १४ ॥ अस्याः संगमश्च ते भूयः स्वर्गे परस्वर्गे ब्रह्मलोके भविष्यति नान्यत्र । पारिषदिति लुप्तषष्ठ्यंतम् ॥ १५ ॥ एतत्काव्यमेवोत्तमं श्रुतं सर्वं ज्ञापनीयं विस्तरतो व्याख्यास्यति ज्ञापयिष्यति ॥ १६ ॥ कुत एवं तत्राह जन्मेति । सुखदुःखोपसेवनं सुखदुःखोपसेवाकथनरूपं भविष्यदुत्तरंचेतिसीतोपसंहारादुत्तरं यत्ते चरितं भविष्यति तत्सर्वमिह काव्ये त्रिकालज्ञेन कृतं कृतनिबंधनम् ॥ १७ ॥ त्वयि त्वच्चरितविषये त्वत्तो राघवादृतेऽन्यः काव्यानां यशोभाक् काव्यकाव्यशोभाक्कश्चिदपि नार्हति काव्यनाय कृतामिति भावः । अन्येषां वर्णनीयगुणशून्यत्वात्सर्वे कवयोद्यापि रामचरितमेव प्रायेणाश्रयंति ॥ १८ ॥ अस्य काव्यस्य महत्त्वं सर्वमहता मयैव परिग्रहादित्याह श्रुतमिति । ते एतत्त्वत्संबंधीदं काव्यं स्वस्य श्रोतव्यत्वे हेतुः सत्यवाक्यमिति । तत्रापिहेतुरनावृतामिति अविद्यामूलमलापरहितम् अत एव दिव्यं पूर्वं श्रुतं काव्यरूपिण्या देव्या मुखादेवेति शेषः॥१९॥ भविष्यं भविष्यद्विषयं शेषं शृणु ॥२०॥ किं तत्राह उत्तरं नामेति । उत्तराख्यो यः काव्यस्य शेषोऽस्ति तच्छृणुष्व हे महातेजः ऋषिभिर्ब्रह्मलोकस्थैर्ऋषिभिः ॥२१॥ अतिरहस्यत्वाच्च नायमंशः सर्वैः श्रोतव्य इत्याह नेति । परमऋषिणा परमराजर्षिणा त्वयैव श्रोतव्यं नान्येन लक्ष्मणादिनेत्यर्थः । एवं भगवतः परमादरः काव्यस्य स्वावतारविषयत्वादिति बोध्यम् ॥ २२ ॥

सबांधवैर्देवैः सहेत्यर्थः ॥ २३ ॥ तत्र सदसि ब्राह्मलौकिका ब्रह्मलोकार्हाः न्यवर्तंत उत्तरं श्रोतुमिति शेषः । ब्रह्मणा सह चलिता अपि पुनर्निवृत्ता इत्यर्थः ॥ २४ ॥ तदेवाहोत्तरमिति ॥ २५ ॥ ॥ २६ ॥ २७ ॥ पर्णशालामुपागमदितिपाठे यज्ञावसान एव सीतांतर्धानात् । ततः परं दीक्षितत्वाभावेनान्यत्र गंतुं शक्यत्वात्पुत्राभ्यां सह वाल्मीकिपर्णशालां रामः प्राप्तवानित्यर्थः । कर्मशालामुपागमदिति पाठांतरम् ॥ २८ ॥ हरमाणः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टनवतितमः सर्गः ॥ ९८ ॥ अथ राममातॄणां परलोकप्राप्तिः रजन्यामिति । गीयतामि

एतावदुक्त्वावचनंब्रह्मात्रिभुवनेश्वरः ॥ जगामत्रिदिवंदेवोदेवैःसहसबांधवैः ॥ २३ ॥ येचतत्रमहात्मानऋषयोब्राह्मलौकिकाः ॥ ब्रह्मणास मनुज्ञातान्यवर्ततमहौजसः ॥ २४ ॥ उत्तरंश्रोतुमनसोभविष्यंयच्चराघवे ॥ ततोरामःशुभांवाणींदेवदेवस्यभाषिताम् ॥ २५ ॥ श्रुत्वापरमतेजस्वी वाल्मीकिमिदमब्रवीत् ॥ भगवन्श्रोतुमनसऋषयोब्राह्मलौकिकाः॥२६॥भविष्यदुत्तरंयन्मेश्वोभूतेसंप्रवर्तताम् ॥ एवंविनिश्चयंकृत्वासंप्रगृह्यकुशीलवौ ॥ २७ ॥ तंजनौघंविसृज्याथपर्णशालामुपागमत् ॥ तामेवशोचतःसीतांसाव्यतीताचशर्वरी ॥२८॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टनवतितमः सर्गः ॥९८॥ रजन्यांतुप्रभातायांसमानीयमहामुनीन् ॥ गीयतामविशंकाभ्यांरामःपुत्रावुवाचह ॥१॥ ततःसमुपविष्टेषुमह र्षिषुमहात्मसु ॥ भविष्यदुत्तरंकाव्यंजगतुस्तौकुशीलवौ ॥ २ ॥ प्रविष्टायांतुसीतायांभूतलंसत्यसंपदा ॥ तस्यावसानेयज्ञस्यरामःपरमदुर्मनाः॥३॥ अपश्यमानोवैदेहींमेनेशून्यमिदंजगत ॥ शोकेनपरमायस्तोनशांतिमनसागमत् ॥ ४ ॥ विसृज्यपार्थिवान्सर्वान्‌ऋक्षवानरराक्षसान् ॥ जनौघंविप्रमु ख्यानांवित्तपूर्वंविसृज्यच ॥ ५ ॥ ततोविसृज्यतान्सर्वान्रामोराजीवलोचनः ॥ हृदिकृत्वासदासीतामयोध्यांप्रविवेशह ॥६॥ नसीतायाःपरांभार्यां वव्रेसरघुनंदनः ॥ यज्ञेयज्ञेचपत्न्यर्थंजानकीकांचनीभवत् ॥७ ॥ दशवर्षसहस्राणिवाजिमेधानथाकरोत् ॥ वाजपेयान्दशगुणांस्तथाबहुसुवर्ण कान् ॥ ८ ॥ अग्निष्टोमातिरात्राभ्यांगोसवैश्चमहाधनैः ॥ ईजेक्रतुभिरन्यैश्चसश्रीमानाप्तदक्षिणैः ॥९॥ एवंसकालःसुमहान्राज्यस्थस्यमहात्मनः ॥ धर्मेप्रयतमानस्यव्यतीयाद्रा[illegible] ॥ १० ॥ ऋक्षवानररक्षांसिस्थितारामस्यशासने ॥ अनुरंजंतिराजानोह्यहन्यहनिराघवम् ॥ ११ ॥ काले वर्षतिपर्जन्यःसुभिक्षंविमला[illegible] हृष्टपुष्टजनाकीर्णपुरंजनपदास्तथा ॥ १२ ॥ नाकालेम्रियतेकश्चिन्नव्याधिःप्राणिनांतथा ॥ नानर्थोविद्यतेक श्चिद्रामेराज्यंप्रशासति ॥ १३ ॥

तावुवाच अविशंकाभ्यां मत्पुत्रत्वविषयशंकारहिताभ्यां मातृवियोगदुःखरहिताभ्यां च ॥ १ ॥ २ ॥ सत्यसंपदा स्वस्य सत्यवैभवेन तस्य यज्ञस्यावसाने सीतानिर्याणोत्तरकाले ॥ ३ ॥ ४ ॥ वित्तपूर्वं वित्तदान पूर्वम् ॥ ५ ॥ ६ ॥ यज्ञे यज्ञे प्रतियज्ञं भवत् अभवत् ॥ ७ ॥ दशवर्षसहस्राणीति । यागकालमर्यादेयं न तु सीतावियोगानंतरं तावान्यागकाल इति कतकस्तत्र सीतावियोगानंतरं तावतो यागकालत्वे किं बाधकमिति चिंत्यं ननु भूमौ सीतागमनोत्तरमिति वक्तुं युक्तम् ॥ ८ ॥ ९ ॥ १० ॥ स्थिता स्थितानि अनुरंजंति अनुरंजयंति ॥ ११ ॥ सुभिक्षमभवदिति शेषः ॥ १२ ॥ १३ ॥

मलयकालानलाख्यम् ॥ ७ ॥ ८ ॥ दिवौकसो न स्मरंति निमेषमात्रेण त्रिकोटिगंधर्ववधोऽसंभाव्य इति स्थितवंतः ॥ ९ ॥ द्वे पुरोत्तमे तक्षशिलापुष्कलावताख्ये ॥ १० ॥ गंधर्वदेशे तक्षशिलायां तक्षं तक्षाख्यं पुत्रम् । गांधारदेशे पुष्कलावते नगरे पुष्कलम् ॥ ११ ॥ गुणविस्तरैर्हेतुभिरन्योन्यस्पर्धया अन्योन्यसंघर्षकृते कृतान्योन्यसंघर्षे अहमेव गुणोत्तरोमिति कृतान्योन्यविवादे इव दृश्यमाने इत्यर्थः ॥ १२ ॥ अकिल्बिषैर्धर्मन्यायोपेतैर्व्यवहारैः क्रयविक्रयादिव्यापारैः ॥ १३ ॥ विस्तरैरनुक्तपदार्थविस्तरैरुपशोभिते सुरुचिरैर्गृहमुख्यैरुपशोभिते विमानैः सप्तभूमिप्रासादैः ॥ १४ ॥ देवतायतनविस्तरैर्विस्तारैरित्यर्थः ॥ १५ ॥ ॥ १६ ॥ १७ ॥ स्वस्माद्यथावृत्तं गंधर्ववधं देशस्य निवेशनं च शशंस अस्य भरतस्य वाक्यं श्रुत्वा राघवो रामः प्रीतो बभूव ॥ १८ ॥ ईर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये

तेवद्धाःकालपाशेनसंवर्तेनविदारिताः ॥ क्षणेनाभिहतास्तेनतिस्रःकोट्योमहात्मना ॥ ८ ॥ तद्युद्धंतादृशंघोरंनस्मरंतिदिवौकसः ॥ निमेषांतरमात्रेणतादृशानांमहात्मनाम् ॥९॥ [illegible]पुसर्वेषुभरतःकेकयीसुतः ॥ निवेशयामासतदासमृद्धेद्वेपुरोत्तमे ॥१०॥ तक्षंतक्षशिलायांतुपुष्कलंपुष्कलावते गंधर्वदेशेरुचिरेगांधारविषयेच[illegible] ॥ ११ ॥ धनरत्नौघसंकीर्णेकाननैरुपशोभिते ॥ अन्योन्यसंघर्षकृतेस्पर्धयागुणविस्तरैः ॥ १२ ॥ उभेसुरुचिरप्रख्येव्यवहारैरकिल्बिषैः ॥ उद्यानयानसंपूर्णेसुविभक्तांतरापणे॥१३॥उभेपुरवरेरम्येविस्तरैरुपशोभिते ॥ गृहमुख्यैःसुरुचिरैर्विमानैर्बहुभिर्वृते ॥ ॥ १४ ॥ शोभितेशोभनीयैश्चदेवायतनविस्तरैः ॥ तालैस्तमालैस्तिलकैर्बकुलैरुपशोभिते ॥ १५ ॥ निवेश्यपंचभिर्वर्षैर्भरतोराघवानुजः ॥-पुनरायान्महाबाहुरयोध्यांकेकयीसुतः ॥१६ ॥ सोभिवाद्यमहात्मानंसाक्षाद्धर्ममिवापरम् ॥ राघवंभरतःश्रीमान्ब्रह्माणमिववासवः ॥१७॥ शशंसचयथावृत्तंगंधर्ववधमुत्तमम् ॥ निवेशनंचदेशस्यश्रुत्वाप्रीतोस्यराघवः ॥ १८॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे एकोत्तरशततमः सर्गः ॥१०१॥ तच्छ्रुत्वाहर्षमापेदेराघवोभ्रातृभिःसह ॥ वाक्यंचाद्भुतसंकाशंभ्रातॄन्प्रोवाचराघवः ॥ १ ॥ इमौकुमारौसौमित्रेतवधर्मविशारदौ ॥ अंगदश्चंद्रकेतुश्चराज्यार्थेदृढविक्रमौ ॥ २ ॥ इमौराज्येभिषेक्ष्यामिदेशःसाधुविधीयताम् ॥ रमणीयोह्यसंबाधोरमेतांयत्रधन्विनौ ॥ ३ ॥ नराज्ञांयत्रपीडास्यान्नाश्रमाणांविनाशनम् ॥ सदेशोदृश्यतांसौम्यनापराध्यामहेयथा ॥ ४ ॥ तथोक्तवतिरामेतुभरतःप्रत्युवाचह ॥ अयंकारुपथोदेशोरमणीयोनिरामयः ॥ ५ ॥ निवेश्यतांतत्रपुरमंगदस्यमहात्मनः ॥ चंद्रकेतोःसुरुचिरंचंद्रकांतंनिरामयम् ॥ ६ ॥ तद्वाक्यंभरतेनोक्तंप्रतिजग्राहराघवः तंचकृत्वावशेदेशमंगदस्यन्यवेशयत् ॥ ७ ॥ अंगदीयापुरीरम्याप्यंगदस्यनिवेशिता ॥ रमणीयासुगुप्ताचरामेणाक्लिष्टकर्मणा ॥ ८ ॥ चंद्रकेतोश्चमल्लस्यमल्लभूम्यांनिवेशिता ॥ चंद्रकांतेतिविख्याताद्दिव्यास्वर्गपुरीयथा ॥ ९ ॥

आदिकाव्ये उत्तरकांडे एकोत्तरशततमः सर्गः ॥ १०१ ॥ अथ लक्ष्मणकुमारयो राज्ये निवेशनम् तदिति । भ्रातृभिरिति बहुवचनं द्वित्वे आर्षम् ॥ १ ॥ हे सौमित्रे तवेमौ कुमारौ राज्यार्थे राज्यरक्षणविषये दृढविक्रमौ ॥ २ ॥ अत इमौ राज्येऽभिषेक्ष्यामि यत्रेमौ रमेतां तादृशो देशः साधु विधीयतां निरीक्ष्यताम् ॥ ३ ॥ नापराध्यामहे यथा कस्यापि भूतस्येति शेषः ॥ ४ ॥ कारुपथस्तदाख्यः पाश्चात्यौदीच्य देशविशेषः ॥ ५ ॥ तत्र देशेंऽगदस्य पुरमंगदीयेत्याख्यं निवेश्यताम् चन्द्रकेतोश्चन्द्रकांताख्यं पुरं निवेश्यताम् ॥ ६ ॥ वशे कृत्वा लक्ष्मणभरताभ्यां वशे कारयित्वांगदस्य पुरीं न्यवेशयत् ॥ ७ ॥ तत्र देशेंगदस्य पुरी रामेण निवेशिता लक्ष्मणद्वारेति शेषः ॥ ८ ॥ मल्लस्य दृढांगस्य चन्द्रकेतोर्मल्लभूम्यां तदाख्ये औत्तरे अस्यैव चन्द्रकांतिनामांतरम् तत्र चन्द्रकांताख्या पुरी निवेशिता ॥ ९ ॥

युद्धे दुराधर्षा रामादयोभिषेकं चक्रिरे अंगदचंद्रकेत्वोरिति शेषः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तथैवोष्य चंद्रकेतुसमीपे इति शेषः ॥ १४ ॥ न जज्ञाते नावगतवंतौ संधिरार्षः ॥ १५ ॥ दशसहस्राणि आयुस्त्वेकादशसहस्राणि इति स्पष्टमेव॥१६॥ धर्मपुरे धर्मसाधने पुरे अयोध्यायाम् । अयोध्या मथुरा माया काशी कांची अवंतिका ॥ पुरी द्वारवती चैव सप्तैता मोक्षदायका इति स्मृतेः ॥१७॥ संक्रमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥ अथ रामाय स्वीयवैष्णवधामागमनकालनिवेदनाय ब्रह्मणो दूतप्रेषणम् कस्यचिदिति । कस्यचित्का

ततोरामःपरांप्रीतिंलक्ष्मणोभरतस्तथा ॥ ययुर्युद्धेदुराधर्षाअभिषेकंचचक्रिरे ॥ १० ॥ अभिषिच्यकुमारौद्वौप्रस्थाप्यसुसमाहितौ ॥ अंगदंपश्चिमांभूमिंचंद्रकेतुमुदङ्मुखम् ॥ ११ ॥ अंगदंचापिसौमित्रिर्लक्ष्मणोनुजगामह ॥ चंद्रकेतोस्तुभरतःपार्ष्णिग्राहोबभूवह ॥ १२ ॥ लक्ष्मणस्त्वंगदीयायांसंवत्सरमथोषितः ॥ पुत्रेस्थितेदुराधर्षेअयोध्यांपुनरागमत् ॥ १३॥ भरतोपितथैवोष्यसंवत्सरमतोधिकम् ॥ अयोध्यांपुनरागम्यरामपादावुपास्तसः ॥ १४ ॥ उभौसौमित्रिभरतौरामपादावनुव्रतौ ॥ कालंगतमपिस्नेहान्नजज्ञातेऽतिधार्मिकौ ॥ १५ ॥ एवंवर्षसहस्राणिदशतेषांययुस्तदा ॥ धर्मेप्रयतमानानांपौरकार्येषुनित्यदा ॥१६॥ विहृत्यकालंपरिपूर्णमानसाःश्रियावृताधर्मपरेचसंस्थिताः ॥ त्रयःसमिद्धाहुतिदीप्ततेजसोहुताग्नयःसाधुमहाध्वरेत्रयः ॥ १७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे द्व्युत्तरशततमः सर्गः ॥१०२॥ कस्यचित्त्वथकालस्यरामेधर्मपरेस्थितेकालस्तापसरूपेणराजद्वारमुपागमत् ॥ १ ॥ दूतोह्यतिबलस्याहंमहर्षेरमितौजसः ॥ रामंदिदृक्षुरायातःकार्येणहिमहाबलः ॥ २ ॥ तस्यतद्वचनंश्रुत्वासौमित्रिस्त्वरयान्वितः ॥ न्यवेदयतरामायतापसंतंसमागतम् ॥ ३ ॥ जयस्वराजधर्मेणउभौलोकौमहाद्युते ॥ दूतस्त्वांद्रष्टुमायातस्तपसाभास्करप्रभः ॥ ४ ॥ तद्वाक्यंलक्ष्मणोक्तंवैश्रुत्वारामउवाचह ॥ प्रवेश्यतांमुनिस्तातमहौजास्तस्यवाक्यधृक् ॥ ५ ॥ सौमित्रिस्तुतथेत्युक्त्वाप्रावेशयततंमुनिम् ॥ ज्वलंतमिवतेजोभिःप्रदहंतमिवांशुभिः ॥ ६ ॥ सोभिगम्यरघुश्रेष्ठंदीप्यमानंस्वतेजसा॥ऋषिर्मधुरयावाचावर्धस्वेत्याहराघवम् ॥७॥ तस्मैरामोमहातेजाःपूजामर्घ्य[illegible]म् ॥ ददौकुशलमव्यग्रंप्रष्टुंचैवोपचक्रमे ॥ ८ ॥ पृष्टश्चकुशलंतेनरामेणवदतांवरः ॥ आसनेकांचनेदिव्येनिषसादमहायशाः ॥९॥ त[illegible]तोरामःस्वागतंतेमहामते ॥ प्रापयास्यचवाक्यानियतोदूतस्त्वमागतः ॥ १० ॥ चोदितोराजसिंहेनमुनिर्वाक्यमभाषत ॥ द्वंद्वेह्येतत्प्रवक्तव्यंहितवैयद्यवेक्षसे ॥ ११ ॥

लस्यापगमानंतरमिति शेषः । रामे धर्मपरे स्थिते कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १ ॥ अतिबलस्य महर्षेः जगत्प्राणरूपत्वाच्चतुर्वेदमुखत्वाच्च सत्यवचस्त्वाच्च ब्रह्मातिबलो महर्षिः ॥ २ ॥ ३ ॥ उभौ लोकौ जयस्वेत्युक्त्या परलोकप्रवेशकालसूचनम् ॥ ४ ॥ तस्य वाक्यधृक् यस्य दूतस्तस्याज्ञाधारीत्यर्थः ॥ ५ ॥ तेजोभिरंशुभिरित्येते पदे शरीरकांतिकिरणप्रतिपादके इति न पुनरुक्तिः ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ९ ॥ अस्य यस्य त्वं दूतस्तस्य वाक्यानि संदेशवाक्यानि प्रापयस्व निवेदय । तत्र हेतुर्यतो दूत इति ॥ १० ॥ द्वंद्वे रहस्ये हितं वै यद्यवेक्षसे देवानामिति शेषः । देवगोप्यगोपने हि देवानां हितं भवतीति

भावः ॥ ११ ॥ नैतावदेव किं त्वन्यापि प्रतिज्ञा कार्येत्याह य इति । यः शृणोत्यस्य तद्वचनं निरीक्षेद्वा मंत्रयिताराविति शेषः स तव वध्य इति कथमेवमतिक्रूरा प्रतिज्ञा तत्राह भवेदिति । तस्य मुनिमुख्यस्य वचनमेवं वै भवेत् उक्तसंकेतपूर्वमेव ब्रूहीत्येवाभवदित्यर्थः । यद्यवेक्षसे तथा संकेतपरिपालनमिति शेषः ॥ १२ ॥ प्रतिहारं द्वारपालं विसर्जयान्यतोपसारय ॥ १३ ॥ किमर्थं तत्राह समे इति । सौमित्रे मम ऋषेश्च द्वंद्वं रहस्यां वाचं यः शृणुयात् यश्च नौ पश्येद्वा स मे मम वध्य इति खलु समीरितं प्रतिज्ञातम् ॥ १४ ॥ संग्रहं सम्यगुक्तार्थग्रहणवंतम् ॥ १५ ॥ ते मनीषितं ये न वा समाहितः प्रेषितस्तस्य मनीषितं कथयस्व ममापि हृदि वर्तते किमेवंविधं रहस्यं तदवश्यं मया श्रोतव्यमिति शेषः । यद्वा त्वया वक्ष्यमाणं वैकुंठगमनं ममापि हृदि वर्तत इत्यर्थः ॥ १६ ॥ तर्कमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये [illegible]रकांडे त्र्युत्तरश[illegible] ॥ १०३ ॥ अथ ब्रह्मसंदेशकथनम् शृण्विति । यत्संदेशकथनार्थमहमागतस्तं संदेशं शृणु ॥ किं न येन संदेशः प्रेषितः स भगवान्पितामह एव न केवलं मुनिरेवेत्याह पितामहेनेति ॥ १ [illegible]तदूतोप्यहं त्वत्सम्बन्ध्येवेत्याह तवाहं पूर्वके भावे इति । पूर्वावस्थायां हिरण्यगर्भोत्पत्तिसमये हिरण्यगर्भावस्थायां वा कथमहं पुत्रस्तत्राह माया संभावितः । मायया संकल्पेन संभावित [illegible]तः सर्वसमाहरः सर्वं वस्तुसंहारकर्तेति तार्थः । कतकस्तु तवाहं पूर्वसद्भावे इति पाठः । पूर्वं सृष्टेः प्राक्सद्भावे । सदेव सोम्येदमग्र आसीदितिश्रुतेः ।

यःशृणोतिनिरीक्षेद्वासवध्योभवितातव ॥ भवेद्वैमुनिमुख्यस्यवचनंयद्यवेक्षसे ॥ १२ ॥ तथेतिचप्रतिज्ञायरामोलक्ष्मणमब्रवीत् ॥ द्वारितिष्ठमहाबाहोप्रतिहारंविसर्जय ॥१३॥ समेवध्यःखलुभवेद्वाचंद्वंद्वंसमीरितम् ॥ ऋषेर्ममचसौमित्रेपश्येद्वाशृणुयाच्चयः ॥१४॥ ततोनिक्षिप्यकाकुत्स्थोलक्ष्मणंद्वारिसंग्रहम् ॥ तमुवाचमुनेर्वाक्यंकथयस्वेतिराघवः ॥१५॥ तत्तेमनीषितंवाक्यंयेनवासिसमाहितः ॥ कथयस्वाविशंकस्त्वंममापिहृदिवर्तते ॥ १६ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे कालागमनंनामत्र्युत्तरशततमः सर्गः ॥ १०३ ॥ शृणुराजन्महासत्त्वयदर्थमहमागतः ॥ पितामहेनदेवेनप्रेषितोस्मिमहाबल ॥१॥ तवाहंपूर्वकेभावेपुत्रःपरपुरंजय ॥ मायासंभावितोवीरकालःसर्वसमाहरः ॥ २ ॥ पितामहश्चभगवानाहलोकपतिःप्रभुः ॥ समयस्तेकृतःसौम्यलोकान्संपरिरक्षितुम्॥३॥संक्षिप्यहिपुरालोकान्माययास्वयमेवहि ॥ महार्णवेशयानोऽप्सुमांत्वंपूर्वमजीजनः॥४॥

सत्तारूपब्रह्मभावे करिष्यमाणाखिलसंसारस्य सृष्टिस्थितिसंहारनिग्रहानुग्रहलक्षणपंचकृत्यनिर्वाहकः कालाख्यः क्षणधारारूपो नाडीदिनपक्षादिविभागनिर्वाहकः पुत्रो मायासंभावितस्त्वदीयमायापरिणाम इत्यर्थः शेषं प्राग्वत् । यद्यपि रामो हिरण्यगर्भांशविष्णोरेवावतारस्तथापि तस्य स्वस्वरूपांशेनावृतज्ञानत्वाद्वामदेववदेवं व्यपदेशेन दोष इत्याह । यत्तु कतकेन सद्भावशब्देन हिरण्यगर्भ उक्तस्तत्तुच्छमिति स्पष्टमेवाद्वैतविद्याविदाम् ॥ २ ॥ एवं स्वस्वरूपमुक्त्वा तत्संदेशमाह पितामहश्चेति । चतुर्मुखाज्जातानां प्रजापतीनां लोकपितृत्वाच्चतुर्मुखः पितामहः स लोकानां भूरादीनां पतिः पालयिता स यदाह तद्वदामीति शेषः । तदेवाह समयस्ते इति । भवंतु विगतज्वरा इत्यंतो ब्रह्मसंदेशः । लोकान् देवमनुष्यादीन् रावणादितो रक्षितुं यः समयः कृतः । दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमामित्येवंरूपकालविषयः कृतः स परिपूर्ण इति शेषः ॥ ३ ॥ अथ तत्त्वतो ज्ञातसत्स्वरूपस्य मम कथं मानुषदेहपरिग्रह इत्यत्र सप्रयोजनं तत्प्रक्रियामाह संक्षिप्येति । पुरा जगत्सृष्टेः पूर्वकाले मायया सर्वसंहारसमर्थस्वशक्त्या संक्षिप्य उपसंहृत्य एतेनाप्रयासेन सकलसंहारकर्तृत्वं ब्रह्मलक्षणमुक्तम् । स्वयमेवेत्यनेनास्य संहारस्य न रुद्रादिद्वारकत्वम् । तेषामपि संहार्यकोटिनिविष्टत्वादिति दर्शितम् ।

एवं संहारं कृत्वा महदहंकारपंचतन्मात्रादिसृष्टिद्वारेणैवं तां सृष्टिं कृत्वा तद्रूपे महार्णवे शयान इत्यनेनैवोदकशायित्वे लब्धे पुनरप्स्विति तदा पृथिवीतत्त्वाद्यभावप्रदर्शनार्थं मां पूर्वमजीजनः । यो ब्रह्माणं विदधाति पूर्वमिति श्रुतेः । हिरण्यगर्भसृष्टिद्वारा ब्रह्मांडसृष्टौ क्रियमाणायां तदंडान्ममोद्भव इत्यर्थः ॥ ४ ॥ तदुत्पत्तिप्रकारमाह भोगवंतमिति । ततःपरं सृष्टये स्रष्टव्यभूधरणक्षमं भोगवंतं प्रशस्तभोगम् अनंताख्यं नागमुदकेशयं मायया जनयित्वा तत्र च निर्माय स्थापयित्वा तदुरगे शयनवांस्त्वमभूः । अथ कर्दममायभूविग्रहस्थैर्याय महाबलौ द्वौ सत्त्वौ प्राणिनौ अजीजनः ॥ ५ ॥ कौ तौ तत्राह मधुं चेति । तत्र मधुर्मेदःप्रधानः कैटभोस्थिप्रधानः । तत्सृष्टिप्रयोजनमाह ययोरित्यादि । ययोर्वधानंतरम् इयं निर्मिता भूरस्थिचयैर्वृता सती पर्वतसंबाधा मेदोयुक्ततया वृक्षाद्युत्पत्त्युचितस्निग्धभूप्रदेशयुक्ततया मेदिनीति नाम्नाभूत् एवं च तस्याः प्रजासर्गयोग्यता सिद्धा ॥ ६ ॥ अथ चतुर्मुखसृष्टिः पद्मे इति । ततः स्वनिर्मितोरगेशयस्वविग्रहस्य नाभिप्रदेशे अर्कसंकाशमर्कप्रभं दिव्यं पद्ममुत्पाद्य तस्मिन्दिव्ये पद्मे मां चतुर्मुखमुत्पाद्य प्राजापत्यं सृष्टिरूपं कर्म मयि त्वया निवेशितमित्यन्वर्थं मे प्रजापतिरिति नाम ॥ ७ ॥ ततः सोहं त्वया संन्यस्तभारः संन्यस्तसृष्टिभारः स्वकार्यं सृष्टिलक्षणं संपाद्य तद्रक्षणमपश्यन् जगत्पतिं त्वामुपास्य यतो भवान्मम तेजस्करः सृष्टिसमर्थज्ञानक्रियाशक्तिमयतेजःप्रदोऽभूरतस्त्वमेव भूतेषु रक्षां विधत्स्वेति प्रार्थितवानिति शेषः ॥ ८ ॥ ततो हेतोः रक्षणस्य सर्वशक्तौ त्वय्येव निवेशितत्वहेतोः दुर्धर्षात्तस्माद्भावात् । ब्रह्मैव

भोगवंतंततेऽनागमनंतमुदकेशयम् ॥ माययाजनयित्वात्वंद्वौचसत्त्वौमहाबलौ ॥ ५ ॥ मधुंचकैटभंचैवययोरस्थिचयैर्वृता ॥ इयंपर्वतसंबाधामेदिनीचाभवत्तदा ॥ ६ ॥ पद्मेदिव्येऽर्कसंकाशेनाभ्यामुत्पाद्यमामपि ॥ प्राजापत्यंत्वयाकर्ममयिसर्वंनिवेशितम् ॥७॥ सोहंसंन्यस्तभारोहित्वामुपास्यजगत्पतिम् ॥ रक्षांविधत्स्वभूतेषुममतेजस्करोभवान् ॥ ८ ॥ ततस्त्वमसिदुर्धर्षात्तस्माद्भावात्सनातनात् ॥ रक्षांविधास्यन्भूतानांविष्णुत्वमुपजग्मिवान् ॥ ९ ॥ अदित्यांवीर्यवान्पुत्रोभ्रातॄणांवीर्यवर्धनः ॥ समुत्पन्नेषुकृत्येषुतेषांसाह्यायकल्पसे ॥१०॥ सत्वमुज्जास्यमानासुप्रजासुजगतोवर ॥ रावणस्यवधाकांक्षीमानुषेषुमनोदधाः ॥ ११ ॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ कृत्वावासस्यनियमंस्वयमेवात्मनापुरा ॥१२॥ सत्वंमनोमयःपुत्रःपूर्णायुर्मानुषेष्विह ॥ कालोनरवरश्रेष्ठसमीपमुपवर्तितुम् ॥१३॥ यदिभूयोमहाराजप्रजाइच्छस्युपासितुम् ॥वसवावीरभद्रंतेएवमाहपितामहः॥१४॥

भूतानां ज्येष्ठं तेन कोहंति स्पर्धितुमिति [illegible] वात् सनातनात्सकलसंसारमूलकारणत्वेन कालापरिच्छेद्यात् त्रिगुणमहत्तत्त्वाख्यहैरण्यगर्भभावात्सत्त्वप्राधान्येन विष्णुत्वं प्राप्तवान् ॥ ९ ॥ ततः अदित्यां वीर्यवान् दिव्यज्ञानक्रि[illegible]क्षणवीर्यवान् पुत्र[illegible]तॄणामदितिपुत्रेंद्रादीनां वीर्यवर्धन उपेंद्राख्योभूः स च तत्तत्कृत्यकाले तेषां साह्याय कल्पसे ॥ १०॥ अतः स त्वं सकलप्रजारक्षणासाधारणकृत्य उपेंद्रः सांप्रतं रावणेन प्रजासु उज्जास्यमानासु हिंस्यमानासु हे जगतो वर जगच्छ्रेष्ठ स्वयमेव सर्वलोकानुग्रहाय रावणस्य वधाकांक्षी भूत्वा दशवर्षसहस्राणि दशवर्षशतानि च । वासस्य नियमं परिच्छेदं पुरात्मना स्वयमेव कृत्वा मानुषेषु मानुषभावेषु मनोऽदधाः ॥ ११ ॥ १२ ॥ स त्वं मानुषेषु मनोमयः स्वसंकल्पमयः स्वसंकल्पादेव कस्यचित्पुत्रो जातः स च तत्र पूर्णायुः त्वत्संकल्पितायुषः पूर्णत्वमित्यर्थः । यद्वा श्रीमदादिगुरोस्तुरीयब्रह्मणो यस्य भासा सर्वमिदं विभातीत्यादि श्रुतिसिद्धस्य संकल्पमयो ज्येष्ठपुत्रो हिरण्यगर्भः कार्यब्रह्मरूपस्तदभिन्नस्वभूतब्रह्मण्यनावृतज्ञानः स्वसंकल्पादेव मानुषेष्वपि कस्यचित्पुत्रस्तत्रापि पूर्णायुर्जातो यदेवमतो हे नरवरश्रेष्ठायं कालस्ते समीपमुपगत्योपवर्तितुं विज्ञापयितुं प्रेषित इति शेषः ॥ १३ ॥ अस्मत्कृत्यमेतावत् अतः परं त्वं स्वतंत्रत्वाद्यदि भूयोपि प्रजा उपासितुमिह स्थित्वा रक्षितु

मिच्छसि तदा हे वीर राम वस ॥ १४ ॥ अथवा अथ चेत्स्वकृतनियममंगीकृत्य सुरलोकाय विजिगीषा सुरलोकं पालयितुं यदीच्छा तदोपेंद्ररूपेण विष्णुना देवाः सनाथा विगतज्वरा भवंत्वित्येवं पितामह आहेत्यन्वयः ॥ १५ ॥ कालसमीरितं दूतरूपकालोक्तं प्रहसन्निति अहमेव स्वकृतमर्यादां न त्यक्ष्यामि वृथायं संभ्रमः पितामहस्येति हासः सर्वसंहारं कालम् ॥ १६ ॥ देवदेवस्य सर्वदेवोपास्यस्य परममद्भुतं परमं मदभिप्रायप्रकाशकत्वात् वाक्यं श्रुत्वा महती प्रीतिर्जाता तवागमनसंभवा च महती प्रीतिर्जाता ॥ १७ ॥ एवं संदेशानुमोदनं कृत्वा प्रतिसंदेशमाह त्रयाणामिति । त्रयाणां भूर्भुवःस्वर्लोकानां कार्यार्थं प्रयोजनार्थं मम स्वेच्छामूलः संभव इति मयाप्यवगम्यते । यद्वा तत्तद्वेषधार्य्यपि नटस्तत्तद्वेषानुरूपं व्यवहरन्नपि आत्मानं जानात्येव तद्वत्सोहं यतो यस्माल्लोकादिहागतस्तमेव गमिष्यामि ॥ १८ ॥ हे संहाररूप काल त्वं मे हृद्गत एव प्राप्तोऽसि [illegible] गमने विचारणा नास्ति । हृद्गतो ह्यसि संप्राप्त इतिपाठे यो भावो मम हृद्गतः शुद्धब्रह्मात्मकः प्राप्तव्यत्वेन स मे प्राप्त एवास्ति तत्र मे न विचारणा ।

अथवाविजिगीषातेसुरलोकाय[illegible] ॥ सनाथाविष्णुनादेवाभवंतुविगतज्वराः ॥ १५ ॥ श्रुत्वापितामहेनोक्तंवाक्यंकालसमीरितम् ॥ राघवःप्रहसन्वाक्यंसर्वसंहारमब्रवीत् ॥ १६ ॥ श्रुत्वामेदेवदेवस्यवाक्यंपरममद्भुतम् ॥ प्रीतिर्हिमहतीजातातवागमनसंभवा ॥ १७ ॥ त्रयाणामपिलोकानांकार्यार्थंममसंभवः ॥ भद्रंतेस्तुगमिष्यामियतएवाहमागतः ॥ १८ ॥ हृद्गतोह्यसिसंप्राप्तोनमेतत्रविचारणा ॥ मयाहिसर्वकृत्येषुदेवानांवशवर्तिनाम् ॥ स्थातव्यंसर्वसंहारयथाह्याहपितामहः ॥ १९ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीये आदि० उत्तरकांडे कालवाक्यंनामचतुरधिकशततमःसर्गः॥१०४॥ तथातयोःसंवदतोर्दुर्वासाभगवानृषिः॥रामस्यदर्शनाकांक्षीराजद्वारमुपागमत् ॥ १ ॥ सोऽभिगम्यतुसौमित्रिमुवाचऋषिसत्तमः ॥ रामंदर्शयमेशीघ्रंपुरामेऽर्थोतिवर्तते ॥ २ ॥ मुनेस्तुभाषितंश्रुत्वालक्ष्मणःपरवीरहा ॥ अभिवाद्यमहात्मानंवाक्यमेतदुवाचह ॥ ३ ॥ किंकार्यंब्रूहिभगवन्कोह्यर्थःकिंकरोम्यहम् ॥ व्यग्रोहिराघवोब्रह्मन्मुहूर्तंपरिपाल्यताम् ॥ ४ ॥ तच्छ्रुत्वाऋषिशार्दूलःक्रोधेनकलुषीकृतः ॥ उवाचलक्ष्मणंवाक्यंनिर्दहन्निवचक्षुषा॥ ॥ ५ ॥ अस्मिन्क्षणेमांसौमित्रेरामायप्रतिवेदय ॥ विषयंत्वांपुरंचैवशापिष्येराघवंतथा ॥६॥ भरतंचैवसौमित्रेयुष्माकंयाचसंततिः ॥ नहिशक्ष्याम्यहंभूयोमन्युंधारयितुंहृदि ॥ ७ ॥

ननु तर्हि तदेव प्राप्यतां किमनेनोपेंद्रादिलोकगमनेन तत्राह मयाहीति । वशवर्तिनां मद्विधेयानां सर्वकृत्येषु स्थातव्यमतो यथा पितामह आह तथा करिष्यामीति शेषः । वशवर्तिनेति तृतीयांतपाठे देवानां सर्वकृत्येषु पितामहस्य वशवर्तिना स्थातव्यमित्यर्थः । प्रजारक्षणोद्देश्यकतपःकालिकमद्वरप्रदानादिति भावः ॥ १९ ॥ धेर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे चतुरधिकशततमः सर्गः ॥ १०४ ॥ एवं द्वंद्वकथासमये कालात्मकभगवत्प्रेरणया दुर्वाससः आगमनं तथेति ॥ १ ॥ मेर्थोऽतिवर्ततेऽतिक्रामति अतः पुरा पूर्वमेव शीघ्रं रामं दर्शय ॥ २ ॥ ३ ॥ किं कार्यं वक्तव्यं कोर्थः किं प्रयोजनं किं करोमि वर्तमानसामीप्ये लट् । किं करिष्ये कस्त एवं संकटकालस्तत्राह व्यपोहीति ॥४॥५॥ रामाय प्रतिवेदय यदि न प्रतिवेदयेस्तर्हि विषयादिकं शपे इत्यर्थः ॥६ ॥ ७ ॥

एकस्य मरणं मेस्तु द्वंद्वमध्ये पुरुषांतरसंदर्शकत्वे यथाप्रतिज्ञं मम वधस्य प्राप्तत्वादिति भावः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ वर्षसहस्रस्य अनशननियमपरिगृहीतवर्षसहस्रस्येत्यर्थः । यथासिद्धं यथोपपन्नम् ॥ १३ ॥ राघवः प्रीतमानसः मुनिकोपः परिहृत इति प्राप्तसंतोषः ॥ १४ ॥ १५ ॥ ततोनंतरं कालवाक्यानि मंत्रश्रोतुरावयोर्द्रष्टुश्च वधविषयकाणि ॥ १६ ॥ कालवाक्यानि बुद्ध्या निश्चित्य सभ्रातृभृत्यवर्गस्योपसंहारः कालप्राप्त उचित एवेति निश्चित्य ॥ १७ ॥ तन्मम भ्रातृभृत्यादिसर्वं नास्तीति च निश्चित्य तूष्णीमासीत् ॥ १८ ॥ ह्रियमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके

तच्छ्रुत्वाघोरसंकाशंवाक्यंतस्यमहात्मनः ॥ चिंतयामासमनसातस्यवाक्यस्यानिश्चयम् ॥ ८ ॥ एकस्यमरणंमेऽस्तुमाभूत्सर्वविनाशनम् ॥ इति बुद्ध्याविनिश्चित्यराघवायान्यवेदयत् ॥ ९ ॥ लक्ष्मणस्यवचःश्रुत्वारामःकालंविसृज्यच ॥ निःसृत्यत्वरितोराजाअत्रेःपुत्रंददर्शह ॥ १० ॥ सोभिवाद्यमहात्मानंज्वलंतामिवतेजसा ॥ किंकार्यमितिकाकुत्स्थःकृतांजलिरभाषत ॥ ११ ॥ तद्वाक्यंराघवेणोक्तंश्रुत्वामुनिवरःप्रभुः ॥ प्रत्याहरामं दुर्वासाःश्रूयतांधर्मवत्सल ॥ १२ ॥ अद्यवर्षसहस्रस्यसमाप्तिर्ममराघव ॥ सोहंभोजनमिच्छामियथासिद्धंतवानघ ॥ १३ ॥ तच्छ्रुत्वावचनंराजा राघवःप्रीतमानसः॥ भोजनंमुनिमुख्यायययथासिद्धमुपाहरत् ॥१४॥ सतुभुक्त्वामुनिश्रेष्ठस्तदन्नममृतोपमम् ॥साधुरामेतिसंभाष्यस्वमाश्रममुपागमत् ॥ १५ ॥ संस्मृत्यकालवाक्यानिततोदुःखमुपागमत् ॥ दुःखेनचसुसंतप्तःस्मृत्वातद्घोरदर्शनम् ॥ १६ ॥ अवाङ्मुखोदीनमनाव्याहर्तुंनशशाकह ॥ ततोबुद्ध्याविनिश्चित्यकालवाक्यानिराघवः ॥ १७ ॥ नैतदस्तीतिनिश्चित्यतूष्णीमासीन्महायशाः ॥ १८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे पंचोत्तरशततमः सर्गः ॥ १०५ ॥ अवाङ्मुखमथोदीनंदृष्ट्वासोमामिवाप्लुतम् ॥ राघवंलक्ष्मणोवाक्यंहृष्टोमधुरमब्रवीत् ॥ १ ॥ नसंतापंमहाबाहोमदर्थंकर्तुमर्हसि ॥ पूर्वनिर्माणबद्धाहिकालस्यगतिरीदृशी ॥ २ ॥ जहिमांसौम्यविस्रब्धंप्रतिज्ञांपरिपालय ॥ हीनप्रतिज्ञाःकाकुत्स्थप्रयांतिनरकंनराः ॥ ३ ॥ [illegible]प्रीतिर्महाराजयद्यनुग्राह्यतामयि ॥ जहिमांनिर्विशंकस्त्वंधर्मंवर्धयराघव ॥ ४ ॥ लक्ष्मणेनतथोक्तस्तुरामःप्रचलितेंद्रियः ॥ मंत्रिणःसमुप[illegible]चपुरोधसः ॥ ५ ॥ अब्रवीच्चतदावृत्तंतेषांमध्येसराघवः ॥ दुर्वासोभिगमंचैवप्रतिज्ञांतापसस्यच ॥ ६ ॥ तच्छ्रुत्वामंत्रिण[illegible]सर्वेसोपाध्या[illegible]नासत ॥ वसिष्ठस्तुमहातेजावाक्यमेतदुवाचह ॥ ७ ॥ दृष्टमेतन्महाबाहोक्षयंतेरोमहर्षणम् ॥ लक्ष्मणेनवियोगश्चतवराममहायशः ॥ ८ ॥

वाल्मीकीये आदिकाव्ये उत्तरकांडे पंचोत्तरशततमः सर्गः ॥ १०५ ॥ अथ लक्ष्मणविसर्जनम् अवाङ्मुखमिति । आप्लुतं राहुग्रस्तम् दृष्टः सुमंत्रवाक्यतः पूर्वमेव रामकर्तव्यस्वपरित्यागस्यावगतत्वाद्विषादरहित इत्यर्थः ॥ १ ॥ तदेवाह पूर्वेति पूर्वनिर्माणेन प्राग्भवीयकर्मणा बद्धा कल्पिता ईदृशी । संयोगा विप्रयोगांता मरणांतं च जीवितमित्युपदिष्टन्यायवतीत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ प्रचलितेंद्रियः त्यक्तावाङ्मुखमौनतया प्रवृत्तवाग्व्यापारः ॥ ५ ॥ ६ ॥ समासत तूष्णीं स्थिताः ॥ ७ ॥ दृष्टमेतत् क्षयं क्षय एव दृष्टः मया तपोबलेनेति शेषः मां द्रष्टुमागतेन त्वत्पित्रा पृष्टस्य मदाश्रमस्थदुर्वाससो मुखाच्चेति ॥ ८ ॥

स्यजे त्यादिना प्रतिज्ञापालनं धर्मः क्षत्रियस्य विशेषत इति सूचितम् ॥ ९ ॥१०॥ अभिपालनादभिरक्षणसिद्धिहेतोः लक्ष्मणेन विना चाद्य लक्ष्मणत्यागपूर्वकमद्यावस्थानेनेत्यर्थः ॥ ११॥१२॥ इष्टस्य त्यागो वा वधो वा तदुभयं साधूनां सममेवेति त्वां विसर्जये वधप्रतिज्ञापालनायेति भावः ॥ १३ ॥ रामेण भाषित इत्युक्तरीत्येति शेषः बाष्पव्याकुलितेंद्रियो रामवियोगासहिष्णुतया न तु स्वशरीरहानिभयेनेति भावः । तदेवाह स्वगृहं न प्रविवेश हेति । प्रायात्सरयूतीरमिति शेषः ॥ १४ ॥ सर्वस्रोतांसि सर्वेन्द्रियद्वाराणि ॥१५॥ युक्तं योगयुक्तम् । अभ्यकिरन्नभिवृष्टवंतः ॥१६॥ अदृश्यं योगबलादंतर्धानमुपगतम् । यद्वा दृश्यं यथा तथा सशरीरं लक्ष्मणं प्रगृह्य शक्रस्त्रिदिवं संविवेश । अनेन मनुष्यशरीरसंस्थानमेव देवशरीरसंस्थानं प्राप्तं नतु पूर्वशरीरपरित्यागः शरीरांतरपरिग्रहश्चेति सूचितम् । एतेन जन्मापि तथैवेति च सूचितम् ॥१७॥

त्यजैनंबलवान्[illegible]लोमाप्रति[illegible]कथाः ॥ प्रतिज्ञायांहिनष्टायांधर्मोहिविलयंव्रजेत् ॥ ९ ॥ ततोधर्मेविनष्टेतुत्रैलोक्यंसचराचरम् ॥ सदेवर्षिगणंसर्वं विनश्येत्तुनसंशयः ॥ १० [illegible] पुरुषशार्दूलत्रैलोक्यस्याभिपालनात् ॥ लक्ष्मणेनविनांचाद्यजगत्स्वस्थंकुरुष्वह ॥ ११ ॥ तेषांतत्समवेतानांवाक्यंधर्मार्थसंहितम् ॥ श्रुत्वापरिषदोमध्येरामोलक्ष्मणमब्रवीत् ॥ १२ ॥ विसर्जयेत्वांसौमित्रेमाभूद्धर्मविपर्ययः ॥ त्यागोवधोवाविहितःसाधूनांह्युभयंसमम् ॥ १३ ॥ रामेणभाषितेवाक्येबाष्पव्याकुलितेंद्रियः ॥ लक्ष्मणस्त्वरितःप्रायात्स्वगृहंनविवेशह ॥ १४ ॥ सगत्वासरयूतीरमुपस्पृश्यकृतांजलिः ॥ निगृह्यसर्वस्रोतांसिनिःश्वासंनमुमोचह ॥ १५ ॥ अनिःश्वसंतंयुक्तंतंसशक्राःसाप्सरोगणाः ॥ देवाःसर्षिगणाःसर्वेपुष्पैरभ्यकिरंस्तदा ॥ १६ ॥ अदृश्यंसर्वमनुजैःसशरीरंमहाबलम् ॥ प्रगृह्यलक्ष्मणंशक्रस्त्रिदिवंसंविवेशह ॥ १७ ॥ ततोविष्णोश्चतुर्भागमागतंसुरसत्तमाः ॥ हृष्टाःप्रमुदिताःसर्वेपूजयंतिस्मराघवम् ॥ १८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे लक्ष्मणवियोगोनामषडुत्तरशततमःसर्गः ॥ १०६ ॥

विसृज्यलक्ष्मणंरामोदुःखशोकसमन्वितः ॥ पुरोधसंमंत्रिणश्चनैगमांश्चेदमब्रवीत् ॥१॥ अद्यराज्येभिषेक्ष्यामिभरतंधर्मवत्सलम् ॥ अयोध्यायाःपतिंवीरंततोयास्याम्यहंवनम् ॥ २ ॥ प्रवेशयतसंभारान्माभूत्कालात्ययोयथा ॥ अद्यैवाहंगमिष्यामिलक्ष्मणेनगतांगतिम् ॥ ३ ॥ तच्छ्रुत्वाराघवेणोक्तंसर्वाःप्रकृतयोभृशम् ॥ मूर्धभिःप्रणताभूमौगतसत्त्वाइवाभवन् ॥ ४ ॥ भरतश्चविसंज्ञोभूच्छ्रुत्वाराघवभाषितम् ॥ राज्यंविगर्हयामासवचनंचेदमब्रवीत् ॥ ५ ॥ सत्येनाहंशपेराजन्स्वर्गभोगेनचैवहि ॥ नकामयेयथाराज्यंत्वांविनारघुनंदन ॥ ६ ॥

चतुर्भागं चतुर्थं भागम् । अत्र कतकः शेषसुपर्णविष्वक्सेनैः शेषशायी विष्णुः स्वमूर्त्या चतुर्भागवान् तत्र शेषांशो लक्ष्मणः गरुडांशो भरतः विष्वक्सेनांशः शत्रुघ्न इति । इदं पाद्मविरुद्धं तत्र हि भरतशत्रुघ्नौ शंखचक्रांशावित्युक्तमिति प्राग्दर्शितम् । गरुडस्य स्वरूपेणैव रामसविधे आगमनमुक्तं युद्धकांडे तेन विरुद्धं च ॥ १८ ॥ ईर्यमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे षडुत्तरशततमः सर्गः ॥ १०६ ॥ अथ भरतवचनेन कुशलवयो राज्याभिषेकपूर्वं प्रस्थापनं शत्रुघ्नाय दूतप्रेषणं च विसृज्येति ॥ १ ॥ भरतमयोध्यायाः पतिमभिषेक्ष्यामीति मनोरथं करोमि ततोहं वनं यास्यामि महाप्रस्थानविधिनेति शेषः ॥ २ ॥ संभारान्भरताभिषेकार्थान् ॥ ३ ॥ ४ ॥ ५ ॥ त्वां विना यथा राज्यं च त्वदाज्ञया यथानुक्रमप्राप्तमयोध्याराज्यं न कामये त्वां विना प्राप्येण स्वर्गभोगेन च

न कामये सुखभोगमिति शेषः । हे राजन्निममर्थं सत्येन शपे ॥ ६ ॥ तर्हि किं राज्यं शून्यमेवास्तु तत्राह इमाविति । उत्तरेषु उत्तरकोशलेषु ॥ ७ ॥ इदमस्माकं प्रवर्तमानं गमन गमनोद्योगं शत्रुघ्नस्य शीघ्रमाख्यातुं कथयितुं माचिरम् अविलंबं यथा भवति तथा दूता गच्छंतु । आख्यातु माचिरमित्यत्र तु मोनुस्वारलोप आर्षः ॥ ८ ॥ ९ ॥ एषामीप्सितं ज्ञात्वा यत्कार्यं यत्करणार्हं तत्कर्तव्यम् ॥ १० ॥ प्रकृतीजनमित्यत्र दीर्घ आर्षः ॥ ११ ॥ हे राम यत्र त्वं गमिष्यसि तत्र गच्छंतं त्वामनुगच्छामः ॥ १२ ॥ सत्पथं त्वया गम्यमानं स्वर्गमार्गमित्यर्थः ॥ १३ ॥ वयं त्वदेकशरणा यदि ते न त्याज्यास्तदा गम्य

इमौकुशीलवौराजन्नभिषिच्यनराधिप ॥ कोशलेषुकुशंवीरमुत्तरेषुयथालवम् ॥ ७ ॥ शत्रुघ्नस्यचगच्छंतुदूतास्त्वरितविक्रमाः ॥ इदंगमनमस्मांकंशीघ्रमाख्यातुमाचिरम् ॥ ८ ॥ तच्छ्रुत्वाभरतेनोक्तंदृष्ट्वाचापिह्यधोमुखान् ॥ पौरान्दुःखेनसंतप्तान्वसिष्ठोवाक्यमब्रवीत् ॥ ९ ॥ वत्सरामइमाःपश्यधरणींप्रकृतीर्गताः ॥ ज्ञात्वैषामीप्सितंकार्यमाचैषांविप्रियंकृथाः ॥ १० ॥ वसिष्ठस्यतुवाक्येनउत्थाप्यप्रकृतीजनम् ॥ किंकरोमीतिकाकुत्स्थस्सर्वान्वचनमब्रवीत् ॥ ११ ॥ ततःसर्वाप्रकृतयोरामंवचनमब्रुवन् ॥ गच्छंतमनुगच्छामोयत्ररामगमिष्यसि ॥ १२ ॥ पौरेषुयदितेप्रीतिर्यदिस्नेहोह्यनुत्तमः ॥ सपुत्रदाराःकाकुत्स्थसमंगच्छामसत्पथम् ॥ १३ ॥ तपोवनंवादुर्गंवानदीमंभोनिधिंतथा ॥ वयंतेयदिनत्याज्याःसर्वान्नोनयईश्वर ॥ १४ ॥ एषानःपरमाप्रीतिरेषनःपरमोवरः ॥ हृद्गतानःसदाप्रीतिस्तवानुगमनेनृप ॥ १५ ॥ पौराणांदृढभक्तिंचबाढमित्येवसोऽब्रवीत् ॥ स्वकृतांतंचान्ववेक्ष्यतस्मिन्नह्निराघवः ॥ १६ ॥ कोशलेषुकुशंवीरमुत्तरेषुतथालवम् ॥ अभिषिच्यमहात्मानावुभौरामःकुशीलवौ ॥ १७ ॥ अभिषिक्तौसुतावंकेप्रतिष्ठाप्यपुरेततः ॥ रथानांतुसहस्राणिनागानामयुतानिच ॥ दशचाश्वसहस्राणिएकैकस्यधनंददौ ॥ १८ ॥ बहुरत्नौबहुधनौहृष्टपुष्टजनाश्रयौ ॥ स्वेपुरेप्रेषयामासभ्रातरौतौकुशीलवौ ॥ १९ ॥ अभिषि[illegible]वीरौप्रस्थाप्यस्वपुरेतदा ॥ दूतान्संप्रेषयामासशत्रुघ्नायमहात्मने ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे सप्तोत्तर[illegible] सर्गः ॥ १०७ ॥ तेदूतारामवाक्येनचोदितालघुविक्रमाः ॥ प्रजग्मुर्मधुरांशीघ्रंचक्रुर्वासंनचाध्वनि ॥ १ ॥ ततस्त्रिभिरहोरात्रैःसंप्राप्यमधुरामथ ॥ शत्रुघ्नाययथातत्त्वमाचख्युःसर्वमेवतत् ॥ २ ॥

मानतपोवनाद्यन्यतमं तद् नः सर्वात्रय । तत्र हेतुरीश्वरेति । भगवदवतारत्वात्सर्वेस्वभक्तलोकनयनसमर्थो यतस्त्वमित्यर्थः ॥ १४ ॥ १५ ॥ पौराणामनुगमनविषयां दृढभक्तिमन्ववेक्ष्य स्वकृतांतं स्वकर्तव्यसिद्धांतं चान्ववेक्ष्य बाढमित्यब्रवीत ॥ १६ ॥ अभिषिच्य प्रस्थापयामासेति शेषः ॥ १७ ॥ पुरेऽयोध्यायां स्वसमीपे कोशलद्वयराज्यार्थमभिषिक्तौ सुतावंके प्रतिष्ठाप्य परिष्वज्य मूर्ध्न्युपाघ्राय च रथादिकं ददौ ॥ १८ ॥ १९ ॥ २० ॥ नैरंमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मी० आदि० उत्तरकांडे सप्ताधिकशततमः सर्गः ॥ १०७ ॥ अथानुगमनायागतानां शत्रुघ्नसुग्रीवविभीषणादीनामनुगमनावस्थानव्यवस्था ते दूता इति ॥ १ ॥ २ ॥

राघवस्य प्रतिज्ञां कालपुरुषं प्रति ब्रह्मलोकागमनप्रतिज्ञां पौरानुगमनं पौरानुगमनानुमतिम् ॥ ३ ॥ कुशस्य कुशावतीतिनाम्ना पुरी रामेण कृता ॥ ४ ॥ लवस्य च पुरी श्रावस्तीतिनाम्ना श्राविता लोके प्रसिद्धिं प्रापिता ॥५॥६॥ त्वर गमनाय त्वरितो भवेति । राजेति राजन्नित्यर्थः ॥ ७ ॥ कांचनं कांचनाख्यं यथावृत्तमब्रवीत् । लक्ष्मणत्यागस्य निर्हेतुकत्वशंकाव्यावृत्त्यर्थमिति भावः ॥ ८ ॥ विपर्यासं देहवियोगं भविष्यं भविष्यंतं ततः एतत्कथनानंतरम् ॥९ ॥ वैदिशं तदाख्यं नगरं धनं च युक्तं कृत्वा किंचिदधिकं ज्येष्ठाय कनिष्ठाय च समविभागं दत्त्वा॥१०॥११॥ मुनिभिः सार्धमासीनमिति शेषः ॥

लक्ष्मणस्यपरित्यागंप्रतिज्ञांराघवस्यच ॥ पुत्रयोरभिषेकंचपौरानुगमनंतथा ॥ ३ ॥ कुशस्यनगरीरम्याविंध्यपर्वतरोधसि ॥ कुशावतीतिनाम्ना साकृतारामेणधीम[illegible] ॥ ४ ॥ [illegible]स्तीतिपुरीरम्याश्राविताचलवस्यह ॥ अयोध्यांविजनांकृत्वाराघवोभरतस्तथा ॥ ५ ॥ स्वर्गस्यगमनोद्योगं कृतवंतौमहारथौ ॥ एवंसर्वंनिवे[illegible] [illegible]त्रायमहात्मने ॥ ६ ॥ विरेमुस्तेततोदूतास्त्वरराजेतिचाब्रुवन् ॥ तच्छ्रुत्वाघोरसंकाशंकुलक्षयमुपस्थितम् ॥ ॥ ७ ॥ प्रकृतीस्तुसमानीयकांचनंचपुरोधसम् ॥ तेषांसर्वंयथावृत्तमब्रवीद्रघुनंदनः ॥ ८ ॥ आत्मनश्चविपर्यासंभविष्यंभ्रातृभिःसह ॥ ततःपुत्रद्वयंवीरःसोभ्यषिंचन्नराधिपः ॥९॥ सुबाहुर्मधुरांलेभेशत्रुघातीचवैदिशम् ॥ द्विधाकृत्वातुतांसेनांमाधुरींपुत्रयोर्द्वयोः ॥ धनंचयुक्तंकृत्वावैस्थापयामासपार्थिवः ॥ १० ॥ सुबाहुंमधुरायांचवैदिशेशत्रुघातिनम् ॥ ययौस्थाप्यतदायोध्यांरथेनैकेनराघवः ॥ ११॥ सददर्शमहात्मानंज्वलंतमिवपावकम् ॥ सूक्ष्मक्षौमांबरधरंमुनिभिःसार्धमक्षयैः ॥ १२ ॥ सोभिवाद्यततोरामंप्रांजलिःप्रयतेंद्रियः ॥ उवाचवाक्यंधर्मज्ञंधर्ममेवानुचिंतयन् ॥१३॥ कृत्वाभिषेकंसुतयोर्द्वयोराघवनंदनः ॥ तवानुगमनेराजन्विद्धिमांकृतनिश्चयम् ॥ १४ ॥ नचान्यदद्यवक्तव्यमतोवीरनशासनम् ॥ विहन्यमानमिच्छामिमद्विधेनविशेषतः ॥ १५ ॥ तस्यतांबुद्धिमक्लीबांविज्ञायरघुनंदनः ॥ बाढमित्येवशत्रुघ्नंरामोवाक्यमुवाचह ॥ १६॥ तस्यवाक्यस्यवाक्यांतेवानराःकामरूपिणः ॥ ऋक्षराक्षससंघाश्चसमापेतुरनेकशः ॥ १७ ॥ सुग्रीवंतेपुरस्कृत्यसर्वएवसमागताः ॥ तंरामंद्रष्टुमनसःस्वर्गायाभिमुखंस्थितम् ॥ १८ ॥ देवपुत्राऋषिसुतागंधर्वाणांसुतास्तथा ॥ रामक्षयंविदित्वातेसर्वएवसमागताः ॥ १९ ॥ तवानुगमनेराजन्संप्राताःस्मसमागताः ॥ यदिरामविनास्माभिर्गच्छेस्त्वंपुरुषोत्तम ॥ २० ॥ यमदंडमिवोद्यम्यत्वयास्मविनिपातिताः ॥ एतस्मिन्नंतरेरामंसुग्रीवोपिमहाबलः ॥ २१ ॥ प्रणम्यविधिवद्वीरंविज्ञापयितुमुद्यतः ॥२२॥ अभिषिच्यांगदंवीरमागतोस्मिनरेश्वर ॥ तवानुगमनेराजन्विद्धिमांकृतनिश्चयम् ॥ २३ ॥ तैरेवमुक्तःकाकुत्स्थोबाढमित्यब्रवीत्स्मयन् ॥ विभीषणमथोवाचराक्षसेंद्रंमहायशाः ॥ २४ ॥

॥ १२ ॥ १३ ॥ १४॥ अन्यदद्य न वक्तव्यं मां नानुगच्छेति न वक्तव्यमित्यर्थः । अतोस्माद्वाक्यादधिकं हे वीर शासनं दंडो नेत्यर्थः । विलोक्यमानमिच्छामि त्वद्विधेन विशेषत इति पाठे त्वद्विधेन परमानुग्रहसमर्थेन विलोक्यमानमनुगृह्यमाणमेवेच्छामि आत्मानमिति शेष इत्यर्थः । विहन्यमानमिच्छामि मद्विधेन विशेषत इति पाठे हे वीर तव शासनं मद्विधेन विहन्यमानं नेच्छामीति संबंधः ॥१५॥१६॥तस्य वाक्यस्य वाक्यांते उच्चारणांते इत्यर्थः॥१७॥१८॥१९॥ समागताः मिलिताः॥२०॥ यमदंडमुद्यम्येव त्वया निपातिताः स्म हताः स्मेत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ एवं तेषामनुगमनवचः श्रुत्वा ब्रह्माज्ञा

परिपालनाय व्यवस्थामाह विभीषणमिति ॥ २४ ॥ तत्र विभीषणस्य ब्रह्मणाऽमरत्वप्रदानादिहावस्थानमेव शास्ति यावदिति । प्रजा धरिष्यंति स्थास्यंति तावत्त्वं स्वं स्वीयं देहं धरिष्यसि ॥ २५ ॥ २६ ॥ शासितः आज्ञप्तः ॥ २७ ॥ अत्र स्थाने पाद्मे विशेषः । तावद्रमस्व राज्यस्थः काले मम पदं व्रज । इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे ॥ श्रीरंगशायिनं स्वार्चामिक्ष्वाकुकुलदैवतम् । रंगं विमानमादाय लंकां प्रायाद्विभीषण इति । तदाह किं चेति । इदं सार्धश्लोकद्वयं प्रक्षिप्तमित्यन्ये ॥२८॥ २९ ॥ अथ हनुमतोपि ब्रह्मदत्तामरत्वात् यावद्रामकथाप्रचारं भूलोके तच्छ्रवणस्य प्रार्थितत्वात्तथा रामेणानुज्ञातत्वाच्च तं स्थापयति जीवित इति । जीवदवस्थाने कृतबुद्धिः कृतनिश्चयः । अतः स्वकृतां प्रतिज्ञां मावृथा कृथाः मा विलोपयेत्यर्थः ॥ ३० ॥ उक्तमेवार्थं स्पष्टयति मत्कथा इति ॥३१॥३२॥३३ ॥ एवं जांबवतोपि

यावत्प्रजाधरिष्यंतितावत्त्वंवैविभीषण ॥ राक्षसेंद्रमहावीर्यलंकास्थःस्वंधरिष्यसि ॥२५॥ यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी ॥ यावच्चमत्कथालोकेतावद्राज्यंतवास्त्विह ॥२६॥ शासितश्चसखित्वेनकार्यंतेममशासनम् ॥ प्रजाःसंरक्षधर्मेणनोत्तरंवक्तुमर्हसि ॥२७॥ किंचान्यद्वक्तुमिच्छामिराक्षसेंद्रमहाबल ॥ आराधयजगन्नाथमिक्ष्वाकुकुलदैवतम् ॥ २८ ॥ आराधनीयमनिशंदेवैरपिसवासवैः ॥ तथेतिप्रतिजग्राहरामवाक्यंविभीषणः ॥ राजाराक्षसमुख्यानांराघवाज्ञामनुस्मरन् ॥ २९ ॥ तमेवमुक्त्वाकाकुत्स्थोहनूमंतमथाब्रवीत् ॥ जीवितेकृतबुद्धिस्त्वंमाप्रतिज्ञांवृथाकृथाः ॥३०॥ मत्कथाःप्रचरिष्यंतियावल्लोकेहरीश्वर ॥ तावद्रमस्वसुप्रीतोमद्वाक्यमनुपालयन् ॥ ३१ ॥ एवमुक्तस्तुहनुमान्राघवेणमहात्मना ॥वाक्यंविज्ञापयामासपरंहर्षमवाप्य च ॥ ३२ ॥ यावत्तवकथालोकेविचरिष्यतिपावनी ॥ तावत्स्थास्यामिमेदिन्यांतवाज्ञामनुपालयन् ॥ जांबवंतंतथोक्त्वातुवृद्धंब्रह्मसुतंतदा ॥ ॥ ३३ ॥ मैंदंचद्विविदंचैवपंचजांबवतासह ॥ यावत्कलिश्चसंप्राप्तस्तावज्जीवतसर्वदा ॥ ३४ ॥ तदेवमुक्त्वाकाकुत्स्थःसर्वांस्तानृक्षवानरान् ॥ उवाचवाढंगच्छध्वंमयासार्धंयथोदितम् ॥ ३५ ॥ इत्यार्षे श्रीमद्रा० वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥ प्रभातायांतुशर्वर्यांपृथुवक्षामहायशाः ॥ र[illegible]लपत्राक्षःपुरोधसमथाब्रवीत् ॥ १ ॥ अग्निहोत्रंव्रजत्वग्रेदीप्यमानंसहद्विजैः ॥ वाजपेयातपत्रंचशोभमानंमहापथे ॥ २ ॥

ब्रह्मपुत्रत्वाद्ब्रह्मणैव दत्तामरत्वात्स्थापनं तथा मैंदद्विविदयोरपि तत्पित्राश्विनीकुमारानुग्रहेणामृतप्राशनात् स्थापनं जांबवंतमिति । ब्रह्मसुतं वृद्धं जांबवंतं मैंदं द्विविदं तथोक्त्वा प्राणान्धारयतेत्युक्त्वा तेषां देहत्यागकालं तत्रैवाह पंचेति । जांबवता सह ये पंच विभीषणहनूमन्मैंदद्विविदा अमरास्ते यूयं यावत्कलिः प्रलयरूपो नाशः कलियुगं च तावत्कालं जीवत तत्र हनूमद्विभीषणयोः प्रलये इतरेषां तु कलौ कृष्णावतारे नाश इति बोध्यम् ॥ ३४ ॥ तदिति । विभीषणादीन्प्रति एवमुक्त्वा इतरान्प्रति गमनानुज्ञामाहेत्यर्थः । सर्वांस्तान्पूर्वोक्तपंचव्यतिरिक्तान् ॥ ३५ ॥ शैलैर्मानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥ अथ महाप्रस्थानविधिना भगवति निर्याते सर्वेषां तदनुगमनं प्रभातायामिति ॥ १ ॥ वाजपेयातपत्रं तस्यैव धर्मानुष्ठाने साधनत्वात् राजचि

ह्रस्य च संत्यक्तत्वादिति भावः ॥ २ ॥ महाप्रस्थानं नाम परलोकगमनाय संकल्पपूर्वकं प्रस्थानं तदर्हति माहाप्रस्थानिकं विधिमुद्दिश्य यो धर्मः कर्तव्यस्तं धर्मं विधिवच्चकार ॥ ३ ॥ ब्रह्मावर्तयन्नित्यकारांतत्वमार्षम् । परं ब्रह्मेत्यर्थः प्रागगस्त्योपदिष्टं ब्रह्मसिद्धांतप्रधानमहामंत्रसर्वस्वं श्रीमद्ब्रह्महृदयमावर्तयन्सम्यङ्मनोवाग्वृत्तिभ्यामनुसंदधान इत्यर्थ इति कतकः । ब्रह्मप्रतिपादकोपनिषद आवर्तयन्नित्यर्थ इत्यन्ये । कुशान्गृहीत्वा अंगुलिविवरप्रसक्तान् कृत्वा प्रययौ वक्ष्यमाणलक्षणमहाप्रस्थानविधिनेति शेषः ॥ ४ ॥ तदेवाहाव्याहरन्निति । निश्चेष्टः किंचित्पदार्थदर्शनश्रवणस्पर्शनादिविषयकेंद्रियचेष्टारहितः निःसुखः पथिपादुकासुखमप्युपेक्ष्य शर्कराकंटकादिदुःखसहिष्णुः ॥ ५ ॥ पद्मा पद्महस्ता श्रीर्लक्ष्मीः महीदेवी ह्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतेः । अतो ह्रीर्मही व्यवसायो व्यवसायशक्तिः संहारशक्तिः ॥ ६ ॥ तथा संहारशक्तिसह

ततोवसिष्ठस्तेजस्वीसर्वंनिरवशे[illegible]चकारविधिवद्धर्मंमहाप्रस्थानिकंविधिम् ॥ ३ ॥ ततःसूक्ष्मांबरधरोब्रह्मआवर्तयन्परम् ॥ कुशान्गृहीत्वापाणिभ्यांसरयूंप्रययावथ ॥ ४ ॥ अव्याहरन्कचित्किंचिन्निश्चेष्टोनिःसुखःपथि ॥ निर्जगामगृहात्तस्माद्दीप्यमानोयथांशुमान् ॥ ५ ॥ रामस्यदक्षिणेपार्श्वेपद्माश्रीःसमुपाश्रिता ॥ सव्येपिचमहीदेवीव्यवसायस्तथाग्रतः ॥ ६ ॥ शरानानाविधाश्चापिधनुरायत्तमुत्तमम् ॥ तथायुधाश्चतेसर्वेययुःपुरुषविग्रहाः ॥ ७ ॥ वेदाब्राह्मणरूपेणगायत्रीसर्वरक्षिणी ॥ ओंकारोऽथवषट्कारःसर्वेराममनुव्रताः ॥ ८ ॥ ऋषयश्चमहात्मनःसर्वएवमहीसुराः ॥ अन्वगच्छन्महात्मानंस्वर्गद्वारमपावृतम् ॥ ९ ॥ तंयांतमनुगच्छंतिह्यंतःपुरचराःस्त्रियः ॥ सवृद्धबालदासीकाःसवर्षवरकिंकराः ॥१०॥ सांतःपुरश्चभरतःशत्रुघ्नसहितोययौ ॥ रामंगतिमुपागम्यसाग्निहोत्रमनुव्रतः ॥११॥ तेचसर्वेमहात्मानःसाग्निहोत्राःसमागताः ॥ सपुत्रदाराःकाकुत्स्थमनुजग्मुर्महामतिम् ॥१२॥ मंत्रिणोभृत्यवर्गाश्चसपुत्रपशुबांधवाः ॥ सर्वेसहानुगारामामन्वगच्छन्प्रहृष्टवत् ॥ १३ ॥ ततःसर्वाःप्रकृतयोहृष्टपुष्टजनावृताः ॥ गच्छंतमनुगच्छंतिराघवंगुणरंजिताः ॥ १४ ॥ ततःसस्त्रीपुमांसस्तेसपक्षिपशुबांधवाः ॥ राघवस्यानुगाःसर्वेहृष्टाविगतकल्मषाः ॥ १५ ॥ स्नाताःप्रमुदिताःसर्वेहृष्टपुष्टाश्चवानराः ॥ दृढंकिलकिलाशब्दैःसर्वेराममनुव्रतम् ॥ १६ ॥

कारिणामपि मूर्ततयोपासकत्वमाह शरा इति । एवं रौद्रशक्तिसेवा दर्शिता ॥ ७ ॥ अथ हैरण्यगर्भशक्तिसेवां दर्शयति वेदा इति । गायत्री सर्वरक्षिणी सर्ववेदतन्मूलयज्ञयज्ञाधिकृताशेषजगद्रक्षिका तस्या अपि मूलमोंकारोप्यनुगतः । अनेन सर्वज्ञानयोगो दर्शितः वषट्कारः कर्मयोगः ॥ ८ ॥ स्वर्गद्वारमपावृतं परस्वर्गस्य ब्रह्मलोकस्य द्वारमपावृतमनावृतं रामेण सहेंद्रलोकगमनद्वारा रामेण सहागतानां सर्वजंतूनां ब्रह्मलोकस्यैव प्राप्तेरिति बोध्यम् ॥ अतएव बहुशः प्रागुक्तम् । रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यतीति रामस्थितिलोकस्यैव ब्रह्मलोकत्वाच्च ॥ ९ ॥ वर्षवराः पंढाः ॥ १० ॥ सांतःपुरः अन्तःपुरस्त्रीसहितः गतिं सर्वलोकगतिंमुपागम्य समीपमागत्यानुव्रतः पश्चाच्चलित इत्यर्थः ॥ ११ ॥ महात्मानो ब्राह्मणाः ॥ १२ ॥ प्रहृष्टवत् देहविसर्जने समीपावस्थानलाभजःप्रहर्षःपुत्रैस्तु तल्लब्धमिति ॥ १३ ॥ १४ ॥ १५ ॥ दृढं दृढानुगमननिश्चयं किलकिलाश

दैरुपलक्षितं सर्वं वानरबलमिति शेषः ॥ १६ ॥ दीनो दीनाकृतिः व्रीडितः गते रामे कथमहं तिष्ठामीति लज्जावशान्न रामानुगमनं किंतु संतोषेणैवेत्यर्थः । समुदितं मिलितं सर्वं परमाद्भुतं परलोकगमनायैवंविधहर्षयुक्तमित्याश्चर्यकर मभूदित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ अंतर्धानगतानि भूतप्रेतपिशाचादीनि भद्रकाल्यादीनि च ॥ २० ॥ स्थावराणीति स्थावराणामनुगमनं भगवतो रामस्य सदयावलोकनेन तदानीं ज्ञानक्रियाशक्त्युद्भवादुपपद्यते ॥ २१ ॥ उच्छ्वसत्प्राणिमात्रमित्यर्थः स सुसूक्ष्ममपि न दृश्यते अननुयातमिति शेषः ॥ २२ ॥ रेकैर्मानः ॥ इति श्रीरामाभिरामेश्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे नवाधिकशततमः सर्गः ॥ १०९ ॥ अथ रामेण स्वस्वरूपं प्राप्य पश्चात्सर्वजंतूनां पितामहानुमत्या ब्रह्मलोकादर्वाचीने ब्रह्मलोकसमे संतानकलोके प्रापणम् अध्यर्धेति अर्धाधिकं योजनं गत्वेत्यर्थः पश्चान्मुखाश्रितां पश्चान्मुखेन स्वेनाश्रिताम् ॥ १ ॥

नतत्रकश्चिद्दीनोवाव्रीडितोवापिदुःखितः ॥ हृष्टंसमुदितंसर्वंबभूवपरमाद्भुतम् ॥ १७ ॥ द्रष्टुकामोथनिर्यांतंरामंजानपदोजनः ॥ यःप्राप्तःसोपिदृष्ट्वैव स्वर्गायानुगतोजनः ॥ १८ ॥ ऋक्षवानररक्षांसिजनाश्चपुरवासिनः ॥ आगच्छन्परयाभक्त्यापृष्ठतःसुसमाहिताः ॥ १९ ॥ यानिभूतानिनगरेप्यंतर्धानगतानिच ॥ राघवंतान्यनुययुःस्वर्गायसमुपस्थितम् ॥ २० ॥ यानिपश्यंतिकाकुत्स्थंस्थावराणिचराणिच ॥ सर्वाणिरामगमनेअनुजग्मुर्हितान्यपि ॥ २१ ॥ नोच्छ्वसत्तदयोध्यायांसुसूक्ष्ममपिदृश्यते ॥ तिर्यग्योनिगताश्चैवसर्वेरामममनुव्रताः ॥ २२ ॥ इत्यार्षेश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे नवाधिकशततमः सर्गः ॥ १०९ ॥ अध्यर्धयोजनंगत्वानदींपश्चान्मुखाश्रिताम् ॥ सरयूंपुण्यसलिलांददर्शरघुनंदनः ॥ १ ॥ तांनदीमाकुलावर्तांसर्वत्रानुसरन्नृपः ॥ आगतःसप्रजोरामस्तंदेशंरघुनंदनः ॥ २ ॥ अथतस्मिन्मुहूर्तेतुब्रह्मालोकपितामहः ॥ सर्वैःपरिवृतोदेवैर्ऋषिभिश्चमहात्मभिः ॥ ३ ॥ आययौयत्रकाकुत्स्थःस्वर्गायसमुपस्थितः ॥ वि[illegible]कोटीभिर्दिव्याभिरभिसंवृतः ॥ ४ ॥ दिव्यतेजोवृतंव्योमज्योतिर्भूतमनुत्तमम् ॥ स्वयंप्रभैःस्वतेजोभिःस्वर्गिभिःपुण्यकर्मभिः ॥ ५ ॥ पुण्यावातावबुश्चैवगंधवंतःसुखप्रदाः ॥ पपातपुष्पवृष्टिश्चदेवैर्मुक्तामहौघवत् ॥ ६ ॥ तस्मिंस्तूर्यशतैःकीर्णेगंधर्वाप्सर[illegible] ॥ सरयूसलिलंरामःपद्भ्यांसमुपचक्रमे ॥ ७ ॥ ततःपितामहोवाणीमंतरिक्षादभाषत ॥ आगच्छविष्णोभद्रंतेदिष्ट्याप्राप्तोसिराघव ॥ ८ ॥ [illegible]भिःसहदेवाभैःप्रविशस्वस्विकांतनुम् ॥ यामिच्छसिमहाबाहोतांतनुंप्रविशस्विकाम् ॥ ९ ॥

तं देशं स्वर्गप्रापकं देशम् ॥ २ ॥ तस्मिन्मुहूर्ते लोकपितामहो ब्रह्मा आययौ इत्युत्तरेणान्वयः । रामपरिकरस्य यथोचितलोकप्रापणार्थमिति शेषः ॥ ३ ॥ स्वर्गाय स्वर्गं गंतुम् ॥ ४ ॥ प्रथमतो दिव्यतेजसा व्याप्तं व्योम स्वयंप्रभैः स्वयमेव प्रकाशांतरनैरपेक्ष्येण प्रकाशमानैः स्वर्गिभिःस्वतेजोभिः किरणैरनुत्तममतिशयेन ज्योतिर्भूतं ज्योतिर्मयमभूदित्यर्थः ॥ ५ ॥ महौघवत् महासमृद्धिमदित्यर्थः ॥ ६ ॥ तूर्यशतैःसंकीर्णे तस्मिन्काले इत्यर्थः । गंधर्वाप्सरसंकुले गंधर्वाप्सरसःसंकुले इतियावत् । पद्भ्यां समुपचक्रमे गंतुमिति शेषः ॥ ७ ॥ अंतरिक्षात्समीपमागत्याभाषतेत्यर्थः । हे विष्णो लोकानुग्रहाय गृहीतविष्णुशरीर ब्रह्मन् राघवं दिष्ट्या प्राप्तोसि मायागृहीतदुःखमयवनटनयोग्यमनुष्यशरीरविसर्जनकालं प्राप्तोसि ते भद्रमस्तु कल्याणमस्तु अद्यागच्छ यतो लोकान्मनुष्यलोकं गतस्तं लोकमित्यर्थः ॥ ८ ॥ तदर्थं च देवाभैः देवस्य

तव सदृशैर्भ्रातृभिः सह स्विकां तनुं स्वतनुवदत्यंतप्रियं लोकं प्रविश । अत्र भ्रातृभिरिति बहुवचनेन लक्ष्मणस्यापि तदानीं तत्रागमनं सूचयतीति तीर्थः । कतकस्तु यद्यपि शत्रुघ्न एक एव सह गच्छति तथापि पुरोगतस्यसह गच्छतः पश्चादागमिष्यतश्च भ्रातुस्तत्र प्रवेशः सामान्येनायतनप्रवेश इत्युच्यते इति न विरोध इति व्याचख्यौ । भरतानुगमनं भगवद्देहविसर्जनदर्शनपर्यंतमिति च पूर्वसर्गे सांतःपुरश्च भरतः शत्रुघ्नसहितो ययाविति पद्ये व्याख्याति स्म च तत्र भरतस्य पश्चाद्गमने मूलमन्वेष्टव्यम् । पूजायां बहुवचनमित्यन्ये । ननु मदीयतनूनामनेकत्वात्काचित्प्रविशेत्युच्यते तत्राह यामिति ॥ ९ ॥ तदेव विशदयति वैष्णवीमिति । हे महातेजः वैष्णवीम् औपेंद्रीं यतो मनुष्यदेहस्तां वा प्रविश । यद्वाकाशं सनातनम् । यदा सनातनमाकाशं शुद्धब्रह्मरूपं वा प्रविश तद्रूपेण वा तिष्ठेत्यर्थः । आकाशशब्दा हि ब्रह्मणि तत्र तत्र श्रुतिषु प्रसिद्धः । कतकस्तु [illegible] तां महाते[illegible] प्रविश स्वयमिति पांक्तः पाठः । यामिच्छसीत्येतत्साकनमर्थं च प्रामादिकमित्याह । अग्रे च पितामहवच इति श्लोक इति तत्स्वरसः । तीर्थस्तु यद्वाकाशं सनातनमिति व्याख्यायातः परं ब्रह्म स्व[illegible] । लोकगतिः लोकानां स्वर्गादिकं गमयिता लोकैर्गम्यश्च त्वमेवेत्यर्थः । त्वां केचिदतिशयिततपःसंपन्ना अपि न प्रजानते ॥ १० ॥ तर्हि किम

वैष्णवींतांमहातेजोयद्वाकाशंसनातनम् ॥ त्वंहिलोकगतिर्देवनत्वां[illegible]प्रजानते ॥ १० ॥ ऋतेमायांविशालाक्षींतवपूर्वपरिग्रहाम् ॥ त्वामचिंत्यंमहद्भूतमक्षयंचाजरंतथा ॥ यामिच्छसिमहातेजस्तांतनुंप्रविशस्[illegible] ११ ॥ पितामहवचःश्रुत्वाविनिश्चित्यमहामतिः ॥ विवेशवैष्णवंतेजःसशरीरःसहानुजः ॥ १२ ॥ ततोविष्णुमयंदेवंपूजयंतिस्मदेवताः ॥ साध्यामरुद्गणाश्चैवसेंद्राःसाग्निपुरोगमाः ॥ १३ ॥ येचदिव्याऋषिगणागंधर्वाप्सरसश्चयाः ॥ सुपर्णनागयक्षाश्चदैत्यदानवराक्षसाः ॥ १४ ॥

ज्ञेय एव सर्वथा नेत्याह ऋते इति । मायां ज्ञानशक्तिरूपां विनाऽन्ये न जानंतीत्यर्थः । विशालाक्षीमित्यनेन तस्याः सर्वविषयता सूचिता पूर्वपरिग्रहां तेन सहजत्वं सूचितम् । श्रवणमनननिदिध्यासनादिना ईदृशी ज्ञानशक्तिर्येषां प्रादुर्भवति त एव त्वां जानंतीति तात्पर्यम् । तत्र तादृशज्ञानविषयं स्वरूपमाह त्वामिति । अचिंत्यं देशतः परिच्छेदशून्यम् अत एव महद्भुतं प्रातम् अविशेषात्सर्ववस्तुभिरिति शेषः । तेन वस्तुपरिच्छेदशून्यम् अक्षयं कालपरिच्छेदशून्यम् अजरं अविकारिणम् एवं स्तुत्वा प्रकृतं विज्ञापयति यामिति ॥ ११ ॥ अथ स्वसालोक्यकांक्षिणो जनान्संतानापरपर्यायं स्वलोकं प्रापय्य क्रमेण परमं पदं नेतुकामो दयालुर्भगवान्स्वतोप्यस्मानुत्तमं लोकं प्रापितवानिति तत्तोषायौपेंद्रं लोकमेव गच्छति स्मेत्याह पितामहेति । महामतिः सर्वज्ञो भगवान्विनीश्चित्य प्रागुक्तं निश्चयं कृत्वा सशरीरो वैष्णवं तेजो यज्ञज्वालावत्तेजोमयमौपेंद्रं विवेश अनेन तेजोमय एव देहो मायया मनुष्यदेहादिभिर्मनुष्यदेहत्वेन गृहीत इति ध्वनितम् । तेजःप्रवेशे जले जलवाद्विवेकेनाग्रहात्सहानुज इत्यनेनानुजशरीराणामपि तथैव तेजोमयत्वं सूचितम् । सशरीरशब्दबोधितस्वसाहचर्येण तेषामपि सशरीरप्रवेशबोधनात् ॥ १२ ॥ ततस्तत्प्रवेशात् विष्णुमयम् उपेंद्राभेदमापन्नं देवं देवताः पूजयंति स्म । कास्तादेवतास्तत्राह साध्या इत्यादि ॥ १३ ॥ १४ ॥

पौरुषेयत्वेन वेदतः किंचिन्न्यूनमित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ लोकेऽस्मिन्महीयते इत्यर्थः । प्रेत्य मरणोत्तरमपि इह च चात्परलोके इह लोके च महीयते इह लोके पूजा च कीर्त्यविच्छेदात् । ॥ ८ ॥ ९ ॥ ततः परमयोध्या केन रूपेण स्थितेति शंकानिवृत्तये भविष्यद्वृत्तांतरमाहायोध्यापीति । रम्या अयोध्यापुर्यपि बहून् वर्षगणान् शून्या सती कालांतर ऋषभं राजानमवाप्य निवासं जनाश्रयत्वमुपयास्याति । अत्र कतकः एवं चायोध्याविषयेऽभिषिक्तेन भरतेनायोध्यादेशो नंदिग्रामे स्थित्वैव रक्षित इति द्रष्टव्यमिति । तत्र मानं चिंत्यम् । सत्येन च शपे राजन् स्वर्गलाभेन चैवहि ॥ न कामये यथा राज्यं त्वां विना रघुनन्दनेति । पूर्वभरतोक्त्या विरुद्धं च तथा भरतश्चापि शत्रुघ्नस्तयोर्दारा उभे शुभे । राघवस्यानुगमने निश्चितार्थाः समाययुः । राघवस्तु चतुर्बाहुरभूत्तस्य कराब्जयोः । उभौ भरत

अपुत्रोलभतेपुत्रमधनोलभते[illegible] सर्वपापैःप्रमुच्येतपादमप्यस्ययःपठेत् ॥ ५ ॥ पापान्यपिचयःकुर्यादहन्यहनिमानवः ॥ पठत्येकमपिश्लोकंपापात्सपरिमुच्यते ॥ ६ ॥ वाचकायचदातव्यंवस्त्रंधेनुर्हिरण्यकम् ॥ वाचकेपरितुष्टेतुतुष्टाःस्युःसर्वदेवताः ॥ ७ ॥ एतदाख्यानमायुष्यंपठन्रामायणंनरः ॥ सपुत्रपौत्रोलोकेस्मिन्प्रेत्यचेहमहीयते ॥ ८ ॥ [illegible]रायणंगोविसर्गेमध्याह्नेवासमाहितः ॥ सायाह्नेवापराह्णेचवाचयन्नावसीदति ॥ ९ ॥ अयोध्यापिपुरीरम्याशून्यावर्षगणान्बहून् ॥ ऋषभंप्रा[illegible]नंनिवासमुपयास्यति ॥ १० ॥ एतदाख्यानमायुष्यंसभविष्यंसहोत्तरम् ॥ कृतवान्प्र[illegible]तसःपुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रसंहितायामुत्तरकांडे स्वर्गारोहणंनामैकादशोत्तरशततमः सर्गः ॥ १११ ॥ समाप्तं श्रीवाल्मीकीयं रामायणम् ॥

शत्रुघ्नौ शंखचक्रौ बभूवतुरिति पाद्मविरुद्धं चेत्यन्ये ॥ १० ॥ एतदिति । सभविष्यं भगवद्यानानंतरं भगवदयोध्यावृत्तांतकथनसहितम् । सहोत्तरं एतावदेतदाख्यानमित्यतः प्राक्तनोत्तरकांडसहितम् । प्रचेतसः पुत्रो वाल्मीकिः एतद्रामायणाख्यानं कृतवान् । प्रचेतसः पुत्र इत्यक्षराधिक्यमार्षत्वात् तद्ब्रह्मा हिरण्यगर्भोऽप्यन्वमन्यत सत्यशब्दतया वेदोपबृंहणतया सर्वार्थसाधकतया चांगीकृतवानिति सर्वेष्टसिद्धिः ॥ ११ ॥ कैंयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकादशाधिकशततमः सर्गः ॥ १११ ॥

इदं वाल्मीकीयरामायणे उत्तरकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालये मुद्रितम् । शके १८२७, संवत् १९६२.

तत्र सदृशैर्भ्रातृभिः सह स्विकां तनुं स्वतनुवदत्यंतप्रियं लोकं प्रविश । अत्र भ्रातृभिरिति बहुवचनेन लक्ष्मणस्यापि तदानीं तत्रागमनं सूचयतीति तीर्थः । कतकस्तु यद्यपि शत्रुघ्न एक एव सह गच्छति तथापि पुरोगतस्यसह गच्छतः पश्चादागमिष्यतश्च भ्रातुस्तत्र प्रवेशः सामान्येनायतनप्रवेश इत्युच्यते इति न विरोध इति व्याचख्यौ । भरतानुगमनं भगवद्देहविसर्जनदर्शनपर्यंतमिति च पूर्वसर्गे सांतःपुरश्च भरतः शत्रुघ्नसहितो ययाविति पद्ये व्याख्याति स्म च तत्र भरतस्य पश्चाद्गमने मूलमन्वेष्टव्यम् । पूजायां बहुवचनमित्यन्ये । ननु मदीयतनूनामनेकत्वात्काचित्प्रविशेत्युच्यते तत्राह यामिति ॥ ९ ॥ तदेव विशदयति वैष्णवीमिति । हे महातेजः वैष्णवीम् औपेंद्रीं यतो मनुष्यदेहस्तां वा प्रविश । यद्वाकाशं सनातनम् । यद्वा सनातनमाकाशं शुद्धब्रह्मरूपं वा प्रविश तद्रूपेण वा तिष्ठेत्यर्थः । आकाशशब्दो हि ब्रह्मणि तत्र तत्र श्रुतिषु प्रसिद्धः । कतकस्तु ॥ [illegible] तां महातेजो [illegible] प्रविश स्वयमिति पांक्तः पाठः । यामिच्छसीत्येतत्साकनमर्थं च प्रामादिकमित्याह । अग्रे च पितामहवच इति श्लोक इति तत्स्वरसः । तीर्थस्तु यद्वा काशं सनातनमिति व्याख्यायातः परं ब्रह्मा स्तौ[illegible] । लोकगतिः लोकानां स्वर्गादिकं गमयिता लोकैर्गम्यश्च त्वमेवेत्यर्थः । त्वां केचिदतिशयिततपःसंपन्ना अपि न प्रजानते ॥ १० ॥ तर्हि किम

वैष्णवींतांमहातेजोयद्वाकाशंसनातनम् ॥ त्वंहिलोकगतिर्देवनत्वां[illegible]प्रजानते ॥ १० ॥ ऋतेमायांविशालाक्षींतवपूर्वपरिग्रहाम् ॥ त्वामचिंत्यं महद्भूतमक्षयंचाजरंतथा ॥ यामिच्छसिमहातेजस्तांतनुंप्रविशस्व[illegible] ११ ॥ पितामहवचःश्रुत्वाविनिश्चित्यमहामतिः ॥ विवेशवैष्णवंतेजः सशरीरःसहानुजः ॥ १२ ॥ ततोविष्णुमयंदेवंपूजयंतिस्मदेवताः ॥ साध्यामरुद्गणाश्चैवसेंद्राःसाग्निपुरोगमाः ॥ १३ ॥ येचदिव्याऋषिगणागंधर्वा-प्सरसश्चयाः ॥ सुपर्णनागयक्षाश्चदैत्यदानवराक्षसाः ॥ १४ ॥

ज्ञेय एव सर्वथा नेत्याह ऋते इति । मायां ज्ञानशक्तिरूपां विनाऽन्ये न जानंतीत्यर्थः । विशालाक्षीमित्यनेन तस्याः सर्वविषयता सूचिता पूर्वपरिग्रहां तेन सहजत्वं सूचितम् । श्रवणमनननिदिध्यासनादिना ईदृशी ज्ञानशक्तिर्येषां प्रादुर्भवति त एव त्वां जानंतीति तात्पर्यम् । तत्र तादृशज्ञानविषयं स्वरूपमाह त्वामिति । अचिंत्यं देशतः परिच्छेदशून्यम् अत एव महद्भूतं प्राप्तम् अविशेषात्सर्ववस्तुभिरिति शेषः । तेन वस्तुपरिच्छेदशून्यम् अक्षयं कालपरिच्छेदशून्यम् अजरं अविकारिणम् एवं स्तुत्वा प्रकृतं विज्ञापयति यामिति ॥ ११ ॥ अथ स्वसालोक्यकांक्षिणो जनान्संतानापरपर्यायं स्वलोकं प्रापय्य क्रमेण परमं पदं नेतुकामो दयालुर्भगवान्स्वतोप्यस्मानुत्तमं लोकं प्रापितवानिति तत्तोयायौपेंद्रं लोकमेव गच्छति स्मेत्याह पितामहेति । महामतिः सर्वज्ञो भगवान्विनीश्चित्य प्रागुक्तं निश्चयं कृत्वा सशरीरो वैष्णवं तेजो यज्ञज्वालावत्तेजोमयमौपेंद्रं विवेश अनेन तेजोमय एव देहो मायया मनुष्यदेहादिभिर्मनुष्यदेहत्वेन गृहीत इति ध्वनितम् । तेजःप्रवेशे जले जलवादिवेकेनाग्रहात्सहानुज इत्यनेनानुजशरीराणामपि तथैव तेजोमयत्वं सूचितम् । सशरीरशब्दबोधितस्वसाहचर्येण तेषामपि सशरीरप्रवेशबोधनात् ॥ १२ ॥ ततस्तत्प्रवेशात् विष्णुमयम् उपेंद्राभेदमापन्नं देवं देवताः पूजयंति स्म । कास्तादेवतास्तत्राह साध्या इत्यादि ॥ १३ ॥ १४ ॥

सर्वमिति । त्वय्यत्रागते सर्वमिदं त्रिदिवस्थजनजातं पुष्टं प्रमुदितं सुसंपूर्णमनोरथं गतकल्मषं च जातमिति तैर्देवैः साधु साध्विति भाषितम् ॥ १५ ॥ अथ विष्णुः विष्णुशरीरसंक्रांतशरीरो महातेजा रामः पितामहमुवाच । किमुवाच तदाह एषां लोकमिति । त्वल्लोकप्राप्तिद्वारा प्रतिसंचरे त्वया सह मोक्षप्रापकं लोकम् एषां दातुमर्हसि ॥ १६ ॥ किमर्थमेवमेतन्मुक्तये यत्नस्तत्राह इमे हीति । यतो मम स्नेहादेते मामनुयाता अनुगमनं प्राप्ताः भक्ताः अत एव मे भजितव्या भजनीयाः मत्कृते मद्वियोगासहिष्णुतया त्यक्तात्मानस्त्यक्तशरीराः अत एषां तादृशलोकदानमुचितमिति भावः भक्ता हि भाषितव्या मे इति पाठे यत इमे भक्ता अत इमे भाषितव्याः एतत्प्रयोजनार्थं भवंतं प्रत्यवश्यं मया वक्तव्या इत्यर्थः ॥ १७ ॥ लोकगुरुः सर्वजगत्कर्ता वेदादिसर्वविद्योपदेष्टा च प्रभुः नित्यनैमित्तिकविहितनिषिद्धकर्मणां फलप्रापणे समर्थः इमे त्वया सह समागताः संतानकान्नाम लोकान् क्रमेण ब्रह्मलोकप्राप्तिद्वारा मुक्तिजनकान्यास्यंति ॥ १८ ॥ ननु कथं ब्रह्मविद्भ्यो ब्रह्मलोको वानरप्राप्यस्तत्राह यच्चेति । तिर्यग्गतमपि यत्किंचिद्यत्र क्वापि पदार्थे त्वामेव विष्णुमिति चिंतयत् यत्किंचित्पदार्थं विष्णुत्वेन भावयत् त्वयि विष्णौ भक्त्या युक्तं प्राणांस्त्यक्ष्यति तत्संतानकनामकलोकेषु वत्स्याति किंपुनर्वक्तव्यं य एते त्वदनुरागेण त्वदनुगमनपूर्वं प्राणांस्त्यजंति ते संतानकेषु वत्स्यंतीति ॥ १९ ॥

सर्वंपुष्टंप्रमुदितंसुसंपूर्णमनोरथम् ॥ साधुसाध्वितितैर्देवैस्त्रिदिवंगतकल्मषम् ॥ १५ ॥ अथविष्णुर्महातेजाःपितामहमुवाचह ॥ एषांलोकंजनौघानां दातुमर्हसिसुव्रत ॥ १६ ॥ इमेहिसर्वेस्नेहान्मामनुयातायशस्विनः ॥ भक्ताहिभजितव्याश्चत्यक्तात्मानश्चमत्कृते ॥ १७ ॥ तच्छ्रुत्वाविष्णुवचनंब्रह्मालोकगुरुःप्रभुः ॥ लोकान्संतानकान्नामयास्यंतीमेसमागताः ॥ [illegible] च्चतिर्यग्गतंकिंचित्त्वामेवमनुचिंतयत् ॥ प्राणांस्त्यक्ष्यतिभक्त्यातत्संतानेषुनिवत्स्यति ॥ १९ ॥ सर्वैर्ब्रह्मगुणैर्युक्तेब्रह्मलोकादनंतरे ॥ वानराश्चस्वकांयोनिमृक्षाश्चैवतथाययुः ॥ २० ॥ येभ्योविनिःसृताःसर्वेसुरेभ्यःसुरसंभवाः ॥ तेषुप्रविविशेचैवसुग्रीवःसूर्यमंडलम् ॥ २१ ॥ पश्यतांसर्वदेवानांस्वान्पितॄन्प्रतिपेदिरे ॥ तथाब्रुवतिदेवेशेगोप्रतारमुपागताः ॥ २२ ॥

कोऽसौ संतानकलोकस्तत्राह सर्वैरिति । सर्वै [illegible] सत्यसंकल्पत्वादिब्रह्मगुणैर्युक्ते ब्रह्मलोकादनंतरे तत्समीपस्थे । अनेन तत्र स्थितानामपि क्रमेण ब्रह्मलोकप्राप्त्या ब्रह्मणा सह मुक्तिः सूचिता एवं सामान्यतो वानराणां सांतानिकलोकप्राप्तिमुपदिश्य देवांशानां सुग्रीवादीनां तत्तद्देवादिरूपप्राप्तिमाह वानराश्चेति । वानराः सुग्रीवादयः ऋक्षाः जांबवदतिरिक्ताः स्विकां स्वीयां योनिं देवयोनिं स्वस्वदेवरूपं ययुः ॥ २० ॥ उक्तमेवार्थं स्पष्टयति येभ्य इति । सुरेभ्य इत्युपलक्षणं येभ्यो देवर्ष्यादिभ्यो ये विनिःसृतास्ते सुरसंभवाः स्वपितॄन्प्रतिपेदिरे तेषु मध्ये सुग्रीवः सूर्यमंडलं प्रविविशे । अत्र ययुः प्रतिपेदिरे इति निर्देशो भविष्यदर्थे अवतीर्य समाहृत्य स्वांशान्स्वीकुर्वते पुनरिति शास्त्राद् । उक्तार्थमुपसंहरति तथेति । देवेशे पितामहे तथोक्तवति आगच्छ प्रविश स्विकां तनुमित्युक्तवति इत्यर्थः गोप्रतारं गोप्रताराख्यं तीर्थं सारवमुपागताः संतः सर्वे हर्षपूर्णाश्रुविक्लवाः आनंदनाश्रुपूर्णतया विक्लववीक्षणाः सरयूं भेजिरे अथ यो यः प्राणी तदा सरयूजलमवगाह्य हृष्टवद्दृष्ट आसीत्स मानुषं देहमुत्सृज्य विमानमध्यरोहत तिर्यग्योनिगतानां शतानि अने

कानि सरयुजलं तदवगाहं प्राप्य प्रभासुराणि वपूंषि येषां तादृशानि भूत्वा त्रिदिवं जग्मुः दिव्या दिव्यवपुषः संतों दिव्येन वपुषा दीप्ता देवा इवाभवन् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अथ स्थावराणि चराणि च पश्वादीनि सरयूतोयं गत्वा तत्तोयविक्लेदं प्राप्य तत्तोयमज्जनं प्राप्य देवलोकमुपागमन् कल्पवृक्षकामगव्यादिस्वरूपं प्राप्तवंतीत्यर्थः ॥ २६ ॥ तस्मिन्सरयूजले समापन्नस्त्यक्तदेहास्तेपि सर्वे एतान् देहानंभसि निक्षिप्य स्वर्गं संतानकलोकरूपं विविशुः ॥ २७ ॥ ततः समागतान्दिव्यैर्देहैरंतरिक्षे स्वसमीपं प्राप्तान् दिवि तत्तदुचितस्वर्गे स्थापयित्वा स्वयं भगवदागमनाद्धृष्टैर्देवैः सह महत्त्रिदिवं स्वलोकं जगाम ॥ २८ ॥ हरेमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे दशोत्तरशततमः सर्गः ॥ ११० ॥ अथ तत्काव्यफलोपदेशः एतावदिति । सोत्तरं उत्तरकांडसहितम् । ब्रह्मणा चतुर्मुखेन स्वमद्वतारचारितविषयत्वात्पूजितम्।किं च ब्रह्मभिर्ब्रह्मर्षिभिः पूजितम् ब्रह्मणा स्वयं प्रवर्त्य वाल्मीकिना कारितत्वात्सर्वाख्यानेभ्यः प्रशस्तं रामायणमिति ख्यातम् ।

भेजिरेसरयूंसर्वेहर्षपूर्णाश्रुविक्लवाः ॥ अवगाह्याप्सुयोयोवैप्राणांस्त्यक्त्वाप्रहृष्टवत् ॥२३॥ मानुषंदेहमुत्सृज्यविमानंसोध्यरोहत ॥ तिर्यग्योनिगतानांचशतानिसरयूजलम् ॥ २४॥ संप्राप्यत्रिदिवंजग्मुःप्रभासुरवपूंषितु ॥ दिव्यादिव्येनवपुषादेवादीप्ताइवाभवन् ॥ २५ ॥ गत्वातुसरयूतोयंस्थावराणिचराणिच ॥ प्राप्यतत्तोयविक्लेदंदेवलोकमुपागमन् ॥ २६ ॥ तस्मिन्न्येपिसमापन्नाऋक्षवानरराक्षसाः ॥ तेपिस्वर्गंप्रविविशुर्देहान्निक्षिप्यचांभसि ॥ ॥ २७ ॥ ततःसमागतान्सर्वान्स्थाप्यलोकगुरुर्दिवि ॥ हृष्टैःप्रहृष्टैर्देवैर्जगामत्रिदिवंमहत् ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडेदशाधिकशततमः सर्गः ॥ ११० ॥ एतावदेतदाख्यानंसोत्तरंब्रह्मपूजितम् ॥ रामायणमितिख्यातंमुख्यंवाल्मीकिनाकृतम् ॥ १ ॥ ततःप्रतिष्ठितोविष्णुःस्वर्गलोकेयथापुरा ॥ येनव्याप्तमिदंसर्वंत्रैलोक्यंसचराचरम् ॥ २ ॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ नित्यंशृण्वंतिसंहृष्टाःकाव्यंरामायणंदिवि ॥ ३ ॥ इदमाख्यानमायुष्यंसौभाग्यंपापनाशनम् ॥ रामायणंवेदसमंश्राद्धेषुश्रावयेद्बुधः ॥ ४ ॥

परानंदमयो रामो ह्यायते श्रवणादिभिः । अतोऽस्य चाभिधा पुण्या रामायणमितीरिता । वाल्मीकिना कृतमेतदाख्यानमेतावदेव एतावत् श्लोकसर्गकांडसंख्याकमेव न न्यूनं नाधिकमित्यर्थः ॥ १ ॥ अथ पूर्वसर्गवृत्तानुवादपूर्वं काव्यस्यापवर्गांतसाधकत्वेन श्रोतव्यार्थत्वप्रतिपादनं तत इति । ततो भक्तजनस्य स्वर्गप्रापणानंतरं स्वयमपि विष्णुरूपेंद्रत्वं प्राप्तः स्वर्गलोके उपेंद्रलोके यथापुरा यथापूर्वं प्रतिष्ठितः । एवं तर्हि सपरिच्छेदः किं स नेत्याह येनेति । येन स चराचरं सर्वं त्रैलोक्यं जगदुपादानत्वेन व्याप्तम् । स्वर्गप्रतिष्ठितत्वं तु मनुष्यदेहधारणवन्मायिकमिति भावः ॥ २ ॥ ततः अस्य काव्यस्य जगदुपादानकारणावतारचरित्राख्यानत्वतो देवादयोपि दिव्यं रामायणं दिवि शृण्वंति ॥ ३ ॥ यत एवमत इदमाख्यानमायुष्यमिति श्रुतं पठितं च सदायुर्जनकमित्यर्थः । सौभाग्यं सौभाग्यवर्धनम् वेदसमं वेदवद्ब्रह्मविषयत्वेपि

निर्मलं कतकक्षोदादपि रामायणांबुधिम् । अत्यंतं निर्मलं चक्रे रामः स्वमतिवाससा ॥ १ ॥ रामो रामायणांभोधौ सेतुं कृत्वा सुविस्तृतम् । पाखंडिरक्षोवक्त्राणि ध्वस्तवान् साधुतोषकः ॥ २ ॥ उत्तरांतैः सुवर्णिते निषेधावधिके परे । सप्तमे राघवे रामे रतिरस्तु चिदात्मके ॥ ३ ॥ अथ रामायणश्रवणविधिर्लिख्यते । रामायणे श्रुते दद्याद्रथं हेममयं सुधीः । चतुर्भिर्वाजिभिर्युक्तं तथा क्षौमपताकया ॥ १ ॥ रत्नैश्च विविधैर्युक्तं किंकिणीनादनादितम् । संपादिते रथे सम्यग्धेनुं दद्यात्पयस्विनीम् ॥ २ ॥ ब्राह्मणान् भोजयेत्पश्चाच्छतमष्टोत्तरं सुधीः । एवंकृते विधाने च महाकाव्यं फलप्रदम् । रामायणं भवेन्नूनं नात्र कार्या विचारणा ॥ ३ ॥ श्रुत्वा रामायणं पुण्यं दद्याद्व्यासाय दक्षिणाम् । सुवर्णं धेनुसंयुक्तं वासांसि विविधानि च ॥ ४ ॥ कर्णयोः कुंडले दद्यादंगुलीयकमेवच । शय्यासनं तथा छत्रमुपानत्करकं तथा ॥ ५ ॥ भूमिदानं तथान्नस्य दानं तांबूलमेव च । भक्ष्यं भोज्यं च विविधं लेह्यं चोष्यं सहार्द्धिमत् ॥ ६ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च । लभते श्रवणादेवाध्यायस्यैकस्य मानवः ॥ ७ ॥ प्रयागाद्यानि तीर्थानि गंगाद्याः सरितस्तथा । नैमिषादीन्यरण्यानि कुरुक्षेत्रादिकान्यपि ॥ ८ ॥ कृतानि तेन लोकेऽस्मिन्येन रामायणं श्रुतम् । हेमभारं कुरुक्षेत्रे ग्रस्ते भानौ प्रयच्छति ॥ ९ ॥ यश्च रामायणं लोके शृणोति सम एव सः । सम्यक् श्रद्धासमायुक्तो लभते राघवीं कथाम् ॥ १० ॥ सर्वपापात्प्रमुच्येत विष्णुलोकं स गच्छति आदिकाव्यमिदं सर्वं पुरा वाल्मीकिना कृतम् ॥ ११ ॥ यः शृणोति सदा भक्त्या स गच्छेद्वैष्णवीं गतिम् । पुत्रदाराश्च वर्धंते संपदः संततिस्तथा । सत्यमेतद्विदित्वा तु श्रोतव्यं नियतात्मभिः ॥ १२ ॥ इति रामायणश्रवणविधिः ॥ रामं रामानुजं सीतां भरतं भरतानुजम् । सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः ॥ १ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकांजलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसांतकम् ॥ २ ॥ रामाय रामभद्राय रामचंद्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ३ ॥ मंगलं लेखकानां च [illegible] मंगलम् । मंगलं सर्वलोकानां भूमौ भूपतिमंगलम् ॥ ४ ॥

श्रीकृ[illegible]

पौरुषेयत्वेन वेदतः किंचिन्न्यूनमित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ लोकेऽस्मिन्महीयते इत्यर्थः । प्रेत्य मरणोत्तरमपि इह च चात्परलोके इह लोके च महीयते इह लोके पूजा च कीर्त्यविच्छेदाद् ॥ ॥ ८ ॥ ९ ॥ ततः परमयोध्या केन रूपेण स्थितेति शंकानिवृत्तये भविष्यद्वृत्तांतांतरमाहायोध्यापीति । रम्या अयोध्यापुर्यपि बहून् वर्षगणान् शून्या सती कालांतर ऋषभं राजानमवाप्य निवासं जनाश्रय त्वमुपयास्यति । अत्र कतकः एवं चायोध्याविषयेऽभिषिक्तेन भरतेनायोध्यादेशो नंदिग्रामे स्थित्वैव रक्षित इति द्रष्टव्यमिति । तत्र मानं चिंत्यम् । सत्येन च शपे राजन् स्वर्गलाभेन चैवहि ॥ न कामये यथा राज्यं त्वां विना रघुनन्दनेति । पूर्वभरतोक्त्या विरुद्धं च तथा भरतश्चापि शत्रुघ्नस्तयोर्दारा उभे शुभे । राघवस्यानुगमने निश्चितार्थाः समाययुः । राघवस्तु चतुर्बाहुरभूत्तस्य कराब्जयोः । उभौ भरत



अपुत्रोलभतेपुत्रमधनोलभते[illegible]सर्वपापैःप्रमुच्येतपादमप्यस्ययःपठेत् ॥ ५ ॥ पापान्यपिचयःकुर्यादहन्यहनिमानवः ॥ पठत्येकमपिश्लोकंपापात्सपरिमुच्यते ॥ ६ ॥ वाचकायचदातव्यंवस्त्रंधेनुहिरण्यकम् ॥ वाचकेपरितुष्टेतुतुष्टाःस्युःसर्वदेवताः ॥ ७ ॥ एतदाख्यानमायुष्यंपठन्रामायणंनरः ॥ सपुत्रपौत्रोलोकेस्मिन्प्रेत्यचेहमहीयते ॥ ८ [illegible]पायणंगोविसर्गेमध्याह्नेवासमाहितः ॥ सायाह्नेवापराह्णेचवाचयन्नावसीदति ॥ ९ ॥ अयोध्यापिपुरीरम्याशून्यावर्षगणान्बहून् ॥ ऋषभंप्र[illegible]नंनिवासमुपयास्यति ॥ १० ॥ एतदाख्यानमायुष्यंसभविष्यंसहोत्तरम् ॥ कृतवान्प्र[illegible]तसःपुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रसंहितायामुत्तरकांडे स्वर्गारोहणंनामैकादशोत्तरशततमः सर्गः ॥ १११ ॥ समाप्तं श्रीवाल्मीकीयं रामायणम् ॥

शत्रुघ्नौ शंखचक्रौ बभूवतुरिति पाद्मविरुद्धं चेत्यन्ये ॥ १० ॥ एतदिति । सभविष्यं भगवद्यानानंतरं भगवदयोध्यावृत्तांतकथनसहितम् । सहोत्तरं एतावदेतदाख्यानमित्यतः प्राक्तनोत्तरकांडसहितम् । प्रचेतसः पुत्रो वाल्मीकिः एतद्रामायणाख्यानं कृतवान् । प्रचेतसः पुत्र इत्यक्षराधिक्यमार्षत्वात् तद्ब्रह्मा हिरण्यगर्भोऽप्यन्वमन्यत सत्यशब्दतया वेदोपबृंहणतया सर्वार्थसाधकतया चांगीकृतवानिति सर्वेष्टसिद्धिः ॥ ११ ॥ कैंयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकादशाधिकशततमः सर्गः ॥ १११ ॥

इदं वाल्मीकीयरामायणे उत्तरकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालये मुद्रितम् । शके १८२७, संवत् १९६२.

इदं श्रीमद्रामायणे सतिलकटीके उत्तरकाण्डं
मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये
"श्रीवेङ्कटेश्वर" [illegible]म्) यन्त्रागारे मुद्रितम्।
संवत् १९६२, शके १८२७.

पौरुषेयत्वेन वेदतः किंचिन्न्यूनमित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ लोकेऽस्मिन्महीयते इत्यर्थः । प्रेत्य मरणोत्तरमपि इह च चात्परलोके इह लोके च महीयते इह लोके पूजा च कीर्त्यविच्छेदात् ॥ ॥ ८ ॥ ९ ॥ ततः परमयोध्या केन रूपेण स्थितेति शंकानिवृत्तये भविष्यद्वृत्तांतांतरमाहायोध्यापीति । रम्या अयोध्यापुर्यपि बहून् वर्षगणान् शून्या सती कालांतर ऋषभं राजानमवाप्य निवासं जनाश्रयत्वमुपयास्यति । अत्र कतकः एवं चायोध्याविषयेऽभिषिक्तेन भरतेनायोध्यादेशो नंदिग्रामे स्थित्वैव रक्षित इति द्रष्टव्यमिति । तत्र मानं चिंत्यम् । सत्येन च शपे राजन् स्वर्गलाभेन चैवहि ॥ न कामये यथा राज्यं त्वां विना रघुनन्दनेति । पूर्वभरतोक्त्या विरुद्धं च तथा भरतश्चापि शत्रुघ्नस्तयोर्दारा उभे शुभे । राघवस्यानुगमने निश्चितार्थाः समाययुः । राघवस्तु चतुर्बाहुरभूत्तस्य कराब्जयोः । उभौ भरत

अपुत्रोलभतेपुत्रमधनोलभतेध[illegible]सर्वपापैःप्रमुच्येतपादमप्यस्ययःपठेत् ॥ ५ ॥ पापान्यपिचयःकुर्यादहन्यहनिमानवः ॥ पठत्येकमपिश्लोकंपापात्सपरिमुच्यते ॥ ६ ॥ वाचकायचदातव्यंवस्त्रंधेनुर्हिरण्यकम् ॥ वाचकेपरितुष्टेतुतुष्टाःस्युःसर्वदेवताः ॥ ७ ॥ एतदाख्यानमायुष्यंपठन्रामायणंनरः ॥ सपुत्रपौत्रोलोकेस्मिन्प्रेत्यचेहमहीयते ॥ ८ [illegible]पायणंगोविसर्गेमध्याह्नेवासमाहितः ॥ सायाह्नेवापराह्णेचवाचयन्नावसीदति ॥ ९ ॥ अयोध्यापिपुरीरम्याशून्यावर्षगणान्बहून् ॥ ऋषभंप्र[illegible]नंनिवासमुपयास्यति ॥ १० ॥ एतदाख्यानमायुष्यंसभविष्यंसहोत्तरम् ॥ कृतवान्प्र[illegible]तसःपुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रसंहितायामुत्तरकांडे स्वर्गारोहणंनामैकादशोत्तरशततमः सर्गः ॥ १११ ॥ समाप्तं श्रीवाल्मीकीयं रामायणम् ॥

शत्रुघ्नौ शंखचक्रौ बभूवतुरिति पाद्माविरुद्धं चेत्यन्ये ॥ १० ॥ एतदिति । सभविष्यं भगवद्यानानंतरं भगवदयोध्यावृत्तांतकथनसहितम् । सहोत्तरं एतावदेतदाख्यानमित्यतः प्राक्तनोत्तरकांडसहितम् । प्रचेतसः पुत्रो वाल्मीकिः एतद्रामायणाख्यानं कृतवान् । प्रचेतसः पुत्र इत्यक्षराधिक्यमार्षत्वात् तद्ब्रह्मा हिरण्यगर्भोऽप्यन्वमन्यत सत्यशब्दतया वेदोपबृंहणतया सर्वार्थसाधकतया चांगीकृतवानिति सर्वेष्टसिद्धिः ॥ ११ ॥ कीयमानः ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे एकादशाधिकशततमः सर्गः ॥ १११ ॥

---

इदं वाल्मीकीयरामायणे उत्तरकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालये मुद्रितम् । शके १८२७, संवत् १९६२.

इदं श्रीमद्रामायणे सतिलकटीके उत्तरकाण्डं
मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये
"श्रीवेङ्कटेश्वर" [illegible]म्) यन्त्रागारे मुद्रितम्।
संवत् १९६२, शके १८२७.

॥ इति श्रीमद्रामायणे सतिलकटीके उत्तरकाण्डं समाप्तम् ॥

# अत्रेयमभ्यर्थना.

अस्माकं मुद्रणालये वेद-वेदान्त-धर्मशास्त्र-प्रयोग-योग-सांख्य-ज्योतिष-पुराणेतिहास--वैद्यक-मंत्र-स्तोत्र-कोश--काव्य-चम्पू--नाटकालं-कार--संगीत--नीति--कथाग्रंथाः, बहवः स्त्रीणां चोपयुक्ता ग्रंथाः, बृहज्ज्योतिषार्णवनामा बहुविचित्रचित्रितोऽयमपूर्वग्रन्थः। संस्कृतभाषया, हिन्दीमार्वाडचन्यतरभाषाग्रन्थास्तत्तच्छायाद्यर्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो याव-त्यस्सामग्र्यः, स्वस्वलौकिकव्यवहारोपयोगिचित्राचित्रितालिखितपत्रवत्पुस्तकानिच; मुद्रयित्वा प्रकाशन्ते सुलभेन मूल्येन विक्रयाय। येषां यत्राभिरुचिस्तत्तत्पुस्तकाद्युपलब्धये एवं नव्यतया स्वस्वपुस्तकानि सुमुद्रयिषुभिः सुलभयोग्यमौल[illegible]सकाक्षरैः स्वच्छोत्तमोत्तमपत्रेषु मुद्रिततत्पुस्तकानां स्वस्वसमयानुसा[illegible]ये च पत्रिकाद्वारातैः प्रेषणीयोऽस्मि। अधिकमस्मदीयसूचीपुस्तकानां भिन्नभिन्नविषयाणां प्रापणेन "श्रीवेङ्कटेश्वरसमाचार" पत्रिकाप्रापणद्वारा च ज्ञेयमिति शम्।

क्षेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालयाध्यक्षः--मुंबई.

KHEMRAJ SHRIKRISHNADAS, 'SHRIVENKATESHWAR'STEAM PRESS,

BOMBAY.

